श्री १०८ श्रीराधारमणो जयति ।



महर्षिप्रवर श्रीकृष्णद्वैपायनप्रणीतम्

# श्रीमद्भागवतम् ।

---

श्रीश्रीपादश्रीधरस्वामिकृतभावार्थदीपिका, श्रीराधारमणदास गोस्वामिविरचिता दीपिका दीपिनी, सटिप्पणी, श्रीमद्विशिष्टाद्वैतसिद्धान्तनिर्वाहकाचार्यप्रवर श्रीसुदर्शनसूरिकृतशुकपक्षीयसमाख्याटीका, तदनुगामिश्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका, श्रीमन्मध्वसिद्धान्तधुरन्धर श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली, श्रीमद्विष्णुस्वामिसिद्धान्तनिर्वाहकाचार्यप्रवरश्रीमद्वल्लभाचार्य्यकृतसुबोधिनी, श्रीगौडीयवैष्णवाचार्य्यप्रवरश्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भाख्यटीका, तदनुगामिश्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी, श्रीनिम्बार्कसम्प्रदायि-श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपाख्यटीका इति नवभिर्व्याख्याभिर्भाषानुवादेन च समलङ्कृतम् ।

---

तदिदम्

परमहंसपरिव्राजकाचार्य्यपूज्यपादश्रीमत्स्वामिप्रकाशानन्दसरस्वतीप्रवरशिष्येण,

**श्रीनित्यस्वरूपब्रह्मचारिणा**

सम्पादितम् ।

---

बङ्गदेशान्तर्गत ताडास भूपति श्रीराधाविनोद प्रेम सेवा परायण राजर्षिराय-

"श्रीवनमालिराय बहादुरस्य"

सम्पूर्णसाहाय्येन

प्रकाशितञ्च ।

तत्र

श्रीवृन्दावन श्रीरङ्गमन्दिरस्थ पं० भागवताचार्य द्वारा

---

तथा

काञ्चीमण्डलान्तर्वर्ति 'कान्नूर' पं० श्रीरङ्गाचार्यद्वारा च संशोध्य

श्रीवृन्दावनधामनि

स्वकीये "श्रीदेवकीनन्दन" यन्त्रालये

मुद्रापितम् ।

सम्वत् १९६४

# श्रीमद्भागवतम् ।

## एकादशस्कन्धः ।

### प्रथमोऽध्यायः ।

॥ ॐ नमो भगवते वासुदेवाय ॥

श्रीबादरायणिरुवाच ।

कृत्वा दैत्यवधं कृष्णः सरामो यदुभिर्वृतः ।
भुवोऽवतारयद्भारं (१) जविष्ठं जनयन् कलिम् ॥ १ ॥

ये कोपिताः सुबहु पाण्डुसुताः सपत्नैर्दुर्द्यूतहेलनकचग्रहणादिभिस्तान् ।
कृत्वा निमित्तमितरेतरतः समेतान् हत्वा (२) नृपान्निरहरत्क्षितिभारमीशः ॥ २ ॥

भूभारराजपृतना यदुभिर्निरस्य गुप्तैः स्वबाहुभिरचिन्तयदप्रमेयः ।
मन्येऽवनेर्ननु (३) गतोऽप्यगतं हि भारं यद्यादवं कुलमहो अविषह्यमास्ते ॥ ३ ॥

नैवान्यतः परिभवोऽस्य भवेत्कथञ्चिन्मत्संश्रयस्य विभवोन्नहनस्य नित्यम् ।
अन्तः कलिं यदुकुलस्य विधाय (४) वेणुस्तम्बस्य वह्निमिव शान्तिमुपैमि धाम ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

श्रीकृष्णाय नमः ॥

श्रीगणेशाय नमः ॥

ॐ नमः श्रीपरमहंसास्वादितचरणकमलचिन्मकरन्दाय भक्तजनमानसनिवासाय श्रीरामचन्द्राय ॥

विजयन्ते परानन्दकृष्णपादरजः स्रजः ।
या धृता मूर्ध्नि जायन्ते महेन्द्रादिमहः स्रजः ॥
एकैकत्रिंशताऽध्यायैर्मुक्तिरेकादशे ततः ।
आयन्तेयनिहासार्थैः समासव्यासरूपतः ॥
नारदो वसुदेवाय समासेन न्यवर्णयत् ।
भगवानुद्धवायाथ विस्तरेणोपपत्तिभिः ॥
तत्र तु प्रथमेऽध्याये यदुवंशस्य सङ्क्षयः ।
तपस्विनो गिरा शापात् मौसलव्यपदेशतः ॥

प्रवृत्तितः परानन्दकृष्णक्रीडाऽनुवर्णिता ।
सा निवृत्त्या परानन्दपदारोहोऽनुवर्ण्यते ॥

एवं तावद्दशमस्कन्धे भूभारावतारणाय निजाधिभूतिविभूषितयदुवंशस्य यदुवंशावतारितसकलसुरांशस्य भगवतः श्रीकृष्णस्य तदुचितप्रवृत्तिविडम्बनेन तदुद्भवमरणादिपराणां परेषामानन्दकारणं क्रीडा निरूपिता, अथेदानीमपरिमितयोगमायावैभवस्य भक्तानामात्मतत्त्वोपदेशपूर्वकं क्रीडार्थं भूतलेऽवतारितानां आधिकारिणां सुरांशानां मौसलापदेशेन तत्तदधिकारपदप्रापणपूर्वकं च ब्रह्माद्यनुग्रहाय निजपदारोहो निरूप्यते; तत्र कुरुक्षेत्रयात्रायामागतस्य वसुदेवस्य "कर्मणा कर्मनिर्हारो यथा स्यान्नस्तदुच्यताम्" इत्येवं कर्मयोगं पृच्छतो नारदादिभिः कर्मयोगो निरूपितः—

"कर्मणा कर्मनिर्हार एष साधु निरूपितः ।
यच्छ्रद्धयाप्तवित्तेन शुक्लेनेज्येत पूरुषः" ॥

---

(१) जविष्ठम् । (२) परान् । (३) गतोऽप्यगतोऽपि भारः । (४) वेणुवनस्थवह्निमिव विज० पाठाः ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

इत्यादिना तेन च विशुद्धसत्त्वस्य श्रीकृष्णरामौ परमेश्वरत्वे ज्ञातवतः षड्गर्भानयनाध्याये श्रीकृष्णेनात्मतत्त्वमुपादिष्टम्—

"सत्त्वो यः समवेतार्थे नातैतद्रूपमन्महे ।
यतः पुत्रान् समुद्दिश्य तत्त्वग्राम उदाहृतः" ॥

इत्यादिना तच्च विषयभोगातिशयेन पुनस्तिरोहितमासीत्तदेव इदानीं नारदमुखेन प्रथमं पञ्चाध्याय्या निरूप्यते; तत्र प्रथमेऽध्याये वैराग्योत्पादनाय यदुकुलस्य ब्रह्मशापापदेशेनात्युन्नतविषयसुखानामप्यनित्यता प्रतिपाद्यते, ततश्चतुर्भिर्निमिजायन्तेयसम्वादेन सपरिकरं परमतत्त्वनिरूपणम् । ततः षष्ठे भगवदुद्धवसम्वादप्रस्तावः ततस्त्रयोविंशत्या उद्धवं प्रति भगवतस्तत्त्वनिरूपणम् । ततो द्वाभ्यां मौसलक्रीडयैवमेकत्रिंशताऽध्यायैरेकादशस्कन्धस्य प्रवृत्तिः तस्य च यथामति व्याख्यानमारभ्यते, तत्र मौसलप्रसङ्गार्थं पूर्वस्कन्धार्थमनुवदति श्लोकद्वयेन, कृत्वेति । अवतारयदवतारयदित्यडागमो द्रष्टव्यः जविष्ठं वेगवत्तरमतिशीघ्रम् हिंसापर्यवसायिनमित्यर्थः । कलिं कलहम् ॥ १ ॥

एतन्निवृणोति—ये कोपिता इति । सपत्नैर्दुर्योधनादिभिः कोपिताः कोपं कारिताः सुबहु यथा भवति तथा बहुवारानित्यर्थः । तदेवाऽऽह—द्यूतहेलनकचग्रहणादिभिरिति । द्यूतं कपटद्यूतम् हेलनमवज्ञा कचग्रहणं दुःशासनेन द्रौपद्याः केशाकर्षणम् एतान्यादिर्येषां गरदानजतुगृहदाहादीनां तैः कृत्वा ये कोपितास्तान् पाण्डुसुतान्निमित्तं कृत्वा इतरेतरत उभयोः पक्षयोः समेतान् मिलितान्नृपान् हत्वा क्षितेर्भारं निरहरज्जहार यद्वा, ये कोपिताः यैश्च कोपितास्तानितरेतरतः परस्परं निमित्तं कृत्वेत्यन्वयः । ये तावत्प्रकटदैत्याः पूतनादयस्तान्स्वयमेव हतवान् ये तु दैत्या राजन्यच्छद्मना स्थितास्तान्परस्परं निमित्तं विधाय हत्वा भूभारमपाकृतवानित्यर्थः ॥ २ ॥

अपि च भूभारेत्यादि अन्याश्च भुवो भारभूता राजपृतनाः राज्ञां पृतनाः सेनाः राज्ञः तत्तेषां पृतनाश्चेति वा स्वबाहुभिर्गुप्तैः परिरक्षितैर्यदुभिर्विवाहादिच्छलेन निरस्य हत्वा बाहुभिरिति बहुवचनं वस्तुतश्चतुर्भुजाभिप्रायेण नन्वेवं कृष्णाश्रितेष्वेतानि ज्ञात्वा कथं तस्मै यादवान् न द्रुह्यन्ति स्म तत्राऽऽह—अप्रमेयः प्रमातुमशक्यः चिन्तामाह—मन्य इति । नन्विति वितर्के भवनभूमेर्भारो यद्यपि लोकप्रतीत्या गतस्तथाऽप्यहमगतमेव मन्ये हि निश्चितम् यत्स्मादविषह्यं सोढुमशक्यं यादवं कुलमित्यनेनैव स्ववंशत्वात्स्वयं हननमनुचितमिति सूचितम् ॥ ३ ॥

नहीदमन्यैर्योत्स्यतां तत्राऽऽह—नैवेति । अन्यतो देवादिभ्योऽपि यादवकुलस्य परिभवतिरस्कारो न भवेत् कुतः मत्संश्रयस्य मां संश्रयत इति मत्संश्रयं कुलं तस्य । किञ्च, नित्यं विभवोद्धतस्य विभवेजतुरगादिसमृद्ध्युच्छृङ्खलस्य । यद्वा, नहीदं किमिति संहर्तव्यम्? तत्राऽऽह—विभवोद्धतस्येति । तस्मादेवं करिष्ये इत्याह—अन्तःकलिमिति । शान्तिमुपशममुपैमि "वर्तमानसामीप्ये वर्तमानवद्वा" (३।३।१३१) उपैष्यामि तदनन्तरं धाम च वैकुण्ठाख्यमुपैष्यामीत्यर्थः ॥ ४ ॥

—

### श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी टिप्पणी ।

श्रीः श्रीराधारमणो जयति ।

श्रीचैतन्यं प्रपद्येऽहं साद्वैतं च सनित्यकम् ।
श्रीमद्गोपालभट्टं च षट्सन्दर्भप्रकाशकम् ॥
श्रीमद्भागवतं वन्दे सर्वशास्त्रप्रकाशकम् ।
तद्व्याख्यातॄन् गुरून् वन्दे श्रीधरस्वामिपादकान् ॥
गोस्वामि पितरं वन्दे श्रीगोवर्द्धनलालकम् ।
किशोरीमातरं वन्दे वृषभानुपुरोद्भवाम् ॥
पितुश्च पितरं वन्दे श्रीमज्जीवनलालकम् ।
मन्त्रराजोपदेशेन येन निस्तारितोऽस्म्यहम् ॥
पितामहीं प्रपद्येऽहं श्रीकृष्णकुवराभिधाम् ।
गीतगोविन्दकाव्यं हि यस्याः कण्ठे विराजते ॥

अथ भगवद्वाक्यत्वेन परमप्रामाण्यापन्नमेकादशस्कन्धं व्याकुर्वन् श्रीश्रीधरनामा यतीन्द्रः स्वोपास्यपादकमलस्य श्रीरघुनन्दनस्य प्रणतिलक्षणं मङ्गलं प्रत्यूहनिकरनिर्मूलकं शिष्यशिक्षार्थं निबध्नाति—ओं नम इति । श्रिया प्रेमसम्पत्त्या युक्ता ये भागवतपरमहंसास्तैराश्लादितश्चरणकमलयोर्मिलिन्दरूपो मकरन्दो यस्य तस्मै चिदानन्दापरपर्यायमनुकूलज्ञानमेव भक्तजनानां मानसमेव निवासो गृहं यस्य तस्मै श्रीरामाय नमः । श्रीभागवते परमप्रतिपाद्यस्य श्रीकृष्णस्य पादरजःसौभाग्यं वर्णयति—विजयन्त इति । "सच्चिदानन्दरूपाय कृष्णाय" इति श्रुतेः । परानन्दविग्रहो रूपं यः श्रीकृष्णस्तस्य पादरजसां सम्बन्धिन्यो याः स्रजो मालाः श्रेण्यो वा ता विजयन्ते सर्वोत्कर्षेण वर्तन्ते, कीदृशः? यास्तादृशस्रजः महेन्द्रादिभिर्मूर्ध्नि धृताः सत्यस्तेषां महेन्द्रादीनां महसामुत्सवानां स्रजः समूहाः जायन्ते तेभ्यस्तत्तत्पादोत्सवान् ददतीत्यर्थः । "मह उद्धव उत्सवः" इत्यमरः । पक्षे परानन्दस्तन्नामा स्वगुरुरेव कृष्णस्तस्य अन्यत सर्वं पूर्ववत् ॥ अथैकादशार्थं सामस्त्येन दर्शयति—उक्तेति । ततः प्रायिकक्रममनुसृत्य दशमे हरेः भूभुङ्निरोधवर्णनानन्तरम् एकादशे एकत्रिंशताध्यायैः शुकेन मुक्तिः समासव्यासरूपतः सङ्क्षेपविस्तारप्रकारेणोक्ता वर्णिता कैरैः? जायन्तेयाः जयन्तीनन्दनस्य ये नव योगेश्वरास्तेषां य इतिहासः पुरावृत्तं स आद्यो येषां तैरितिहासैर्द्वारभूतैः सङ्ग्रहवाक्यमुक्त्वा विवृतिवाक्यमाह—नारद इति । समासेन सङ्क्षेपेण मुक्तिं न्यवर्णयत् अथ नारदवर्णनानन्तरम् उपपत्तिभिर्युक्तिभिः तत्रैकत्रिंशदध्यायमध्ये यः प्रथमोऽध्यायस्तत्र तु उपक्षिप्तः वर्णयितुमारब्धः विरागाय विरागं जनयितुं प्रवृत्तेन, ऋषिसमागमानुकरणं कृत्वा परानन्दविग्रहस्य कृष्णस्य क्रीडा दशमेऽनुवर्णिता इदानीमेकादशे कामान् निषेवे द्वारवत्यां भक्तः साङ्ख्यमाश्रितः इत्युक्तेस्तस्याः प्रवृत्तेः सकाशान्निवृत्त्या परमानन्दपरं द्वारकायाम् अप्रकटप्रकाशे कृष्णस्यारोहो निरूप्यते शुकेनेति शेषः । एवं श्लोकैर्वर्णयित्वा पद्यद्वयेन तमेवार्थमाह एवमिति । निजविभूतिभिरैश्वर्यादिभिः विभूषितोऽलङ्कृतो यदुवंशो येन तस्य तत्र हेतुः यदुवंशेति यदुवंशेऽवतारिताः सकलसुरांशाः येन तस्य एतेन सुरांशेभ्यः यदुवंशस्य पृथक्त्वं व्यञ्जितं तदुक्तं पाद्मे कृष्णेन सत्यभामां प्रति "एते हि यादवाः सर्वे मद्गणा एव भामिनि । मत्तुल्यगुणशीलाश्च मत्तुल्याचारवादिनः"

एवं व्यवसितो राजन् ! सत्यसङ्कल्प ईश्वरः ।
शापव्याजेन विप्राणां सञ्जह्रे स्वकुलं विभुः ॥ ५ ॥
स्वमूर्त्या लोकलावण्यनिर्मुक्त्या लोचनं नृणाम् ।
गीर्भिस्ताः स्मरतां चित्तं पदैस्तानीक्षतां क्रियाः ॥ ६ ॥
आच्छिद्य कीर्त्तिं सुश्लोकां (१)वितत्य ह्यञ्जसा नु कौ ।
तमोऽनया तरिष्यन्तीत्यगात्स्वं पदमीश्वरः ॥ ७ ॥
राजोवाच ।
ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम् ।
विप्रशापः कथमभूद्वृष्णीनां कृष्णचेतसाम् ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हरणमुनिप्रेषणादीनान्तैरुपायैः सुमहद्ये पाण्डुसुताः दुर्योधन-शकुन्युलूकदुःशासनजयद्रथादिभिः सपत्नैः कोपिताः तान् निमित्तं कृत्वा समेतान् नृपानितरेतरतो हत्वा ईशः क्षितिभारं निरहरत् जहार ईश इति पदं भगवतः स्वातन्त्र्यं सर्वस्य तदायत्तत्वं च द्योतयति ॥ २ ॥

क्षितिभारनिर्हरणानन्तरं किं कृतवानित्यपेक्षायामाह—भूभारेति । अप्रमेयः साकल्येन प्रमातुमशक्यः अनन्तस्वरूपगुणा इत्यर्थः । स्वबाहुभिर्गुप्तैः परिरक्षितैः यदुभिः भूभारभूतानां राज्ञां पृतनाः निरस्य सुरांशैर्यादवैः असुरांशानां क्षत्रियाणां समूहाग्विनाशायित्येत्यर्थः । सचिन्तयत् चिन्तामेवाह—मन्ये इति, अवनेर्भारः गत इत्यहं मन्ये । ननु शङ्कायां यतः अद्यापि यादवं कुलमविषह्यमास्ते अतो अवनेर्भारमगतमपि मन्ये अवनौ यदुकुलं प्रवरं दृष्ट्वा तद्वंशवशात्पुनरप्यसुरा भारभूता असुरा अपि तत्प्रतीतिभावः । अतो यादवं कुलं भूमेर्भूयस्यसुरापतनशङ्काजनकत्वात् कृतकार्यत्वाच्चोपसंहर्त्तुमर्हामि ॥ ३ ॥

तत्संहारचिन्ताप्रकारमप्याह—नेति । अस्य यदुकुलस्य अन्यतोऽन्यस्मात् प्रतिभटेभ्यः किञ्चिदपि परिभवस्तिरस्कारः पराजयो नैव भवेत् तत्र हेतुमाह—विभवोत्थहलस्य निमित्तैर्विविधशस्त्रास्त्रादिभिः उद्दामतरस्य समृद्धस्य तत्रापि हेतु वदन् स्वकीयतया स्वयमपि हननमयुक्तमिति च सूचयन् यदुकुलं विशिनष्टि—मत्संश्रयस्येति । सा सत्यते इति मत्संश्रय तस्य गतोऽप्यभाव इत्याद—अन्त-कलिमिति । वेणुस्तम्बस्य अन्तर्मध्ये वह्नि तच्चाह हेतुमिव यदु-कुलस्य मध्ये कलिं कलहं तत्संहारहेतुं विधाय शान्तिं प्रशमं "शान्तिः प्रशममङ्गले" इति यादवः । उपैमीति वर्त्तमान-सामीप्ये वर्त्तमानवन्निर्देशः । उपैष्यामीत्यर्थः । तदनन्तरं धाम निजलोकमुपैष्यामीत्यर्थः । यद्वा, शान्तम् मङ्गलं धामेति योजना ॥ ४ ॥

भाषा टीका ।

श्रीरुक्मिणीदेवीसमेतश्रीद्वारकाधीशाय नमः ।

यो वेदान्तरहस्यस्य वेत्ता वेद्यः स्वयं हरिः ।
तमुद्धवोपदेष्टारं रुक्मिणीशमहं भजे ॥
एकादशस्कन्धभावबोधिनीं भक्ततोषिणीम् ।
भाषां भागवताचार्यः कुरुते हि यथामति ॥

श्रीबादरायणिरुवाच ।

श्रीशुकदेव जी बोले, कि—हे राजन् ! यदु लोग औ बलदेव जी सहित श्रीकृष्णचन्द्र ने दैत्यों को मारकर भूमि के भार को उतारा, परंच ऐसा उपाय रचा कि—जिस थोड़े ही काल में बड़ा हिंसा पर्यवसायी कलह पैदा हो ॥१

क्योंकि ? वैरी दुर्योधनादिकों ने कपट की द्यूत क्रीडा, तिरस्कार द्रौपदी के केश ग्रहण, इत्यादि दुष्ट चेष्टाओं से जिन पांडव को कुपित किये रहे। उन्हीं पांडवों को निमित्त बनाकर चारों तरफ से परस्पर में इकट्ठे होनेवाले राजाओं को मारकर श्रीकृष्णचन्द्र परमात्मा ने भूमि के भार को दूर किया ॥ २ ।

सो किस प्रकार ? कि—भूमि के भार रूप राजा लोगों की सेनाओं को अपने बाहु बल से रक्षित जो यदु लोग तिन के द्वारा नष्ट कराकर, अप्रमेय श्रीकृष्ण महाराज चिन्ता करते हुए, कि—अब मैं ऐसा समुझता हूं कि—भूमि का भार दूर होगया तो भी नहीं दूर होने के ही सदृश क्योंकि ? यह बड़ा असह्य यदुकुल तो बनाही है ॥ ३ ॥

और सदा वैभव से उच्छृंखल और मेरे आश्रय रहने वाले इस यदुकुल का अन्य किसी से पराभव नहीं होसकता है इस लिये इसी कुल के बीच में कलह कराकर जैसे कि बांस (तृणविशेष) में अग्नि को डाल कर नष्ट कर देते हैं इसी प्रकार इस कुल का संहार कर मैं अपने शांत धाम को प्राप्त होऊं ॥ ४ ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

व्यवसितः कृतनिश्चयः सञ्जह्रे उपसंहृतवान् ॥ ५ ॥
तदेवमवतारप्रयोजनं सर्वं सम्पाद्य स्वं लोकं जगामेत्याह

(१) [illegible] १२० पृ० ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

श्लोकद्वयेन—स्वमूर्त्येति । लोकानां लावण्यस्य निर्मुक्तिस्त्यागो यया यामपेक्ष्य लोकेषु लावण्यं नास्तीत्यर्थः । यद्वा, लोकेभ्यो लावण्यस्य निर्मुक्तिर्यतः यत्सम्पर्केण लोका लावण्यवन्तो भवन्तीत्यर्थः । तया स्वमूर्त्या नृणां लोचनमाच्छिद्याऽऽकृष्य ततोऽन्यस्यावलोकने लोचनस्याप्रवृत्तेः तथा स्वगीर्भिस्ता गिरः स्मरतां चित्तं चाऽऽच्छिद्य तथा पदैस्तत्र तत्राङ्कितैस्तानि पदानीक्षतामीक्षमाणानामन्यतो गमनादिकाः क्रियाश्चाऽऽच्छिद्य तदानीन्तनानां सर्वेषां चक्षुरादिप्रवृत्तीः स्वैकनिष्ठाः कृत्वेत्यर्थः ॥ ६ ॥

किञ्च, इत उपरि जनिष्यमाणानां संसारतरणाय क्षौ पृथिव्यां शोभनाः श्लोकाः सुश्लोकाः कवीनां यस्यां तां स्वकीर्तिं वितत्य विस्तार्यानया कीर्त्या अञ्जसा सुखेनैव नु निश्चितं तमस्तरिष्यन्तीत्यभिप्रेत्येश्वरः स्वं पदं स्थानमगादिति ॥ ७ ॥

अब्रह्मण्येभ्योऽदातृभ्यो वा असेवकेभ्यो वा विप्राः क्रुध्यन्ति वृष्णयस्तु न तथेत्याह, ब्रह्मण्यानामित्यादिना । किञ्च, कोपे जातेऽपि कृष्णचेतसां कथमभूत्कथं प्रादुर्भूदित्यर्थः ॥ ८ ॥

———

### श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनीटिप्पणी ।

तेषु शापाख्यमसाच्छापव्याजेनेत्युक्तम् उपसंहृतवान् अन्तर्धापितवान् ॥ ५ ॥

स्वमूर्त्येति युग्मकम् । त्यागशब्दस्य मुख्यार्थासम्भवादामपेक्षार्थगौरवमत इत्यर्थं इत्युक्तम् एतादृशगौरवादेव यद्वेति यत् सम्पर्केण यस्या मूर्तेरवलोकनादिसम्बन्धेन तदुक्तं श्रीदशमे "तत्र प्रवयसोऽप्यासन् युवानोऽतिबलौजसः । पिबन्तोऽक्षैर्मुकुन्दस्य मुखाम्बुजसुधां मुहुः" इति ततः श्रीमूर्तेः तत्र तत्र गोकुलमथुराद्वारकादिस्थानेषु तदानीन्तनानाम् अनन्तरकालीनानां चक्षुरादिवृत्तीः दर्शनाद्याकाराः तात्पर्यार्थत्वादित्यर्थं इत्युक्तं यदि तत्स्थानानामपि भविष्यतां कीर्तिश्रवणमात्रेण तत्पदप्राप्तिस्तदा परिकराणां यदूनां सुतरामेवेति पूर्वसिद्धान्त एव दर्शितः ॥ ६ ॥ ७ ॥

न तथाऽब्रह्मण्यादय न किन्तु ब्रह्मण्या एव एवेत्यर्थः । प्रथमं तादृशेषु कोप एव न स्यात् कथञ्चिज्जातेऽपि कोप इत्यपरार्थः ॥ ८ ॥

———

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ ५ ॥

स्वमूर्त्या लोकलावण्यामिति साच्छिद्येत्यन्वयः । निर्मुक्त्या कटाक्षमोक्षेण नृणां लोचनमाच्छिद्य पुंसां हृदयापहारि तत्कटाक्ष इत्यर्थः । ताः गिरः स्मरतां चित्तं गिरो मनोहारिण्य इत्यर्थः । पदैः पदन्यासैः मनोहारिभिः क्रियाः इतरविषयप्रवृत्तीराच्छिद्येत्यर्थः । सुश्लोक्यां श्लाघनीयां कीर्तिं वितत्य विस्तार्य अनया कीर्त्या ॥ ६—८ ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमिति । हे राजन् ! इत्थं व्यवसितः निश्चयवानीश्वरः अन्तःप्रविश्य नियन्ता [illegible] कुलनाशेऽपि हेतुगणम् सतो विप्राणामनन्तरं शा-तया शापमुत्पादितवानिति भावः । विप्राणां कर्तृणां यः शापस्तेन व्याजेन स्वकुलं यदुकुलं संजह्रे विनाशितवान् ॥५॥

तदेवमवतारप्रयोजनं सर्वं सम्पाद्य स्वं लोकं जगामेत्याह द्वाभ्याम् स्वमूर्त्येति । निरतिशयलावण्यवत्या स्वमूर्त्या स्वदिव्यविग्रहेण लोकलावण्यमाच्छिद्य आकृष्यापहृत्येति यावत् त्रिलोकवर्तिनस्य कृत्स्नस्य लावण्यस्य समुद्रे गोष्पदस्येवैतन्मूर्तिलावण्येऽन्तर्भूतत्वात्तन्मूर्तिदर्शनानन्तरं क्वापि लावण्यावभासाभाव इति भावः । तया निर्मुक्ता कटाक्षमोक्षेण नृणामालोकनमाच्छिद्य तत्कटाक्षमोक्षव्यतिरिक्तकटाक्षमोक्षाभावादिति भावः । गीर्भिर्वाग्भिस्ता गिरः स्मरतां चित्तमाच्छिद्येत्यर्थः । तद्वचनानां चित्तापहारित्वादिति भावः । पदैस्तत्र तत्राङ्कितैः पदैस्तानि पदानीक्षताम् ईक्षमाणानां क्रियाः अन्यतो गमनादिक्रियाश्चापहृत्येत्यर्थः । तदानीन्तनानां चक्षुरादिप्रवृत्तीः स्वैकनिष्ठाः कृत्वेति समुदायार्थः ॥६॥

किञ्च इत उपरि जनिष्यमाणानां संसारतरणाय क्षौ पृथिव्यां सुश्लोक्यां स्तुत्यां सत्कल्प्यामिति पाठे सञ्ज्ञेयां कीर्तिं वितत्य विस्तार्य अनया कीर्त्या भवाम्भस्तरणादिरूपया अञ्जसा सुखेनैव नु निश्चितं तमः तमःकार्यं संसारं तरिष्यन्तीत्यभिप्रेत्येश्वरः स्वपदं स्थानमगात् ॥ ७ ॥

शापव्याजेन विप्राणामित्युक्तं तत्र पृच्छति राजा—ब्रह्मण्यानामिति द्वाभ्याम् । वृष्णीनां ब्रह्म (विप्र) शापः कथमभूत्तेषां विप्रशाप इत्येतदत्यन्तासम्भावितमिति भावः । तत्र हेतुत्वेन तान् विशिनष्टि, ब्रह्मण्यानां ब्राह्मणे ब्रह्मकुले साधवो ब्रह्मण्या नित्यं ब्राह्मणसम्मानशीलानां कथं विप्रशाप इति भावः । ननु, ब्रह्मण्यानामपि लुब्धानां स सम्भाव्यतां तत्राह वदान्यानामिति तत्त्वेवमपि सततकृत्यमात्रप्रयुक्तमहदतिक्रमात्सम्भाव्यतां तत्राह नित्यं वृद्धोपसेविनामिति आस्तामेते गुणाः अयोग्य एव तदसम्भावनायामलमित्याशयेन विशिनष्टि—कृष्णचेतसामिति । कृष्णे चेतो येषां तेषां "न वासुदेवभक्तानामशुभं विद्यते क्वचित्" इत्याद्यभियुक्तोक्तेरिति भावः ॥ ८ ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

चिन्ताफलमाह—स्वर्गेति ॥ ५ ॥

पुनर्हरिणा किमकारीत्यत आह—स्वमूर्त्येति । ईश्वरः स्वपक्षगणादिरक्षकः किं कृतवान् लोकलावण्ये मनोहरेषु या बहुमानबुद्धिः तस्या निर्मुक्तिः यया सा तया स्वमूर्त्या नृणां लोचनमाच्छिद्य आकृष्य गीर्भिः सदूतां मूर्तिं स्मरतां नृणां चित्तमाच्छिद्य पदैः पादन्यासैः तां पश्यतां जनानां क्रियाः कर्माणि वाऽऽच्छिद्य यद्वा, पादसौन्दर्यातिशयातिशयानाम् अन्यक्रियासु मनो न चलतीति तादृशैः पदैराच्छिद्य ॥ ६ ॥

क्षौ भूमौ सुष्ठु श्लोकाः स्तुतिप्रबन्धाः सा सुश्लोका तां कीर्तिमञ्जसा तत्त्वेन वितन्वन् विस्तारयन् किं प्रयोजनमत्राह, तम इति । अनया कीर्त्या तमस्तरिष्यन्तीति कृत्वा ॥ ७ ॥

श्रुतविप्रशापो राजा यदूनां असम्भावितोऽयमिति भावेन पृच्छति—ब्रह्मण्यानामित्यादिना । शापासम्भवे ब्रह्मण्यादित्रयो हेतवः ॥ ८ ॥

———

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यो युष्मान् साक्षात्प्रष्टुं विलज्जती लज्जमानाऽस्मन्मुखेन पृच्छति प्रसोष्यन्ती आसन्नप्रसवा किंस्वित्संजनयिष्यति ? कन्यां वा पुत्रं वा तत् प्रब्रूत ॥ १५ ॥

प्रलब्धा वञ्चिताः ॥ १६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

अतः ब्रह्मशापस्यापि कपटस्य निमित्तस्य दुराचारादेः ॥ ९ ॥

ननु विप्रशापे ईश्वरस्य कृष्णस्येच्छैव परम्परया निमित्तमिति परिहरति—परीक्षिदाक्षेपं समाधत्ते—बिभ्रत् प्रकटयन् तत्सुमङ्गलकर्माचरणं तत् संहरणेच्छुर्यम् ॥ १० ॥

निमित्तं ब्राह्मणानां परीक्षार्थं कापट्येन प्रश्नरूपं कर्माथ यागाद्यर्थं कर्माणि दर्शनस्पर्शनसंलापादि चरित्राणि तैर्विप्रैः सह कुर्वन्ति व्याख्येयम् अन्यथा विशेषणासङ्गतिः स्यात् वैदिककर्मभ्यो वैलक्षण्यं द्योतयितुं लौकिकाचारात्मकानि कर्माणि विशिनष्टि—विशेषणैर्मण्डयति एतानि कृष्णकर्माणि सर्वतोमुखानि त्रिभिरपि विशेषणैर्विशिनष्टि ॥ ११ ॥

विश्वामित्र इति युग्मकम् । साम्बगीता " इति कृष्णेच्छयैव महात्मानः तथाभूता इति ज्ञेयम् । स्त्रीवेषैः स्त्र्युचितवस्त्रालङ्कारादिपरिधापनैः ॥ १२—१४ ॥

अमोघदर्शनाः । यथार्थज्ञानाः तत् कन्याजननं पुत्रजननम् ॥ १५ ॥

कुपिता इत्यत्रापि भगवदिच्छैव मुख्या हेतुरन्यथा कृष्णानन्दनेषु महाभागवतानां तेषां कोपासम्भवात् ह नृपेत्याश्चर्येण सम्बोधनम् ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एकात्मनाम् अन्योन्यमैकमत्यं प्राप्तानां भेदः अन्तरभेदः ॥ ९–१० ॥
निसृष्टाः भगवत्सङ्कल्पप्रेरिताः ॥ ११—२३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यदि कथञ्चित्प्राप्तः स तर्हि [illegible] किंनिमित्तः किन्निमित्तं कारणं यस्य सः हे द्विजसत्तम ! एकात्मनामैकमत्यं प्राप्तानां वृष्णीनां कथं भेदः कलहः [illegible] एकात्मनामित्यस्य विप्राणामिति विशेषणाध्याहारः एकात्मनां [illegible] समानेन सर्वेषु समचित्तानाम् ऋषीणां कथं भेदः यद्वा निग्रहनिदानभूतभेदशापः कथमभूदित्यर्थः । एतत्सर्वं मे [illegible] सर्वं प्रतिवक्तव्यं मह्यं वदस्व ॥ ९ ॥

स्वकुलं सांशुलीयो सर्वान्तरात्मनो भगवतः श्रीकृष्णस्य सङ्कल्पादेव विप्रशापोऽभूदित्याह श्रीशुकः—कर्माणीति । सुन्दरेति सामान्यप्रधानो निर्देशः सकलस्य सुन्दरस्य सौन्दर्यस्य सत्यात्मा वेशो यस्मिंस्तत्सुमङ्गलं वपुः कृत्वा धृत्वा बिभ्रदिति पाठान्तरं तदा बिभ्राणः कर्म सर्वमनानुष्ठं च चरितमाचरन् कुर्वन्

सुमङ्गलानीति कर्मविशेषणं च स्मरतां सुमङ्गलावहानीत्यर्थः । अत एवोदारा विपुला कीर्तिर्यस्य सः धाम द्वारवत्याख्यं स्थानमाक्रम्याधिष्ठाय आप्तकामोऽपि रममाणः स्थितः कृतस्य भूभारापहरणात्मकस्य शेषो यस्य सः कुलं यदुकुलं संहर्तुमैच्छत् ॥ १० ॥

कर्माणीति पुण्यनिवहानि पुण्यानि निवहन्ति प्रापयन्तीति तथा न केवलं तथा भूतान्येवापि तु गायतां जगतां सर्वकालमल कलियुगप्रयुक्तं पापं तदपहरन्तीति तथाऽत एव सुमङ्गलानि केवलसुखैकनिदानानि कर्माणि चरितानि कृत्वा वसुदेवस्य गेहे निवसता कालात्मना कालशरीरकतया संहारकेण भगवता विसृष्टाः प्रचोदिताः भगवत्सङ्कल्पप्रेरिता इत्यर्थः । मुनयः पिण्डारकं तीर्थविशेषं द्वारवतीसमीपस्थं समगमन् सत्यभगवद्दर्शनजहर्षयुक्ताः ययुरित्यर्थः ॥ ११ ॥

के ते ? इत्यत्राह—विश्वामित्र इति । नारदादयोऽन्ये च ॥१२॥

क्रीडन्त इति तत्र पिण्डारकान्तिके क्रीडन्तः तान् मुनीन् उपव्रज्य समीपमेत्य उपसङ्गृह्य पादसङ्ग्रहणं कृत्वा स्वयमविनीता अपि विनीतवत्पप्रच्छुः ॥ १३ ॥

ते वेषयित्वेत्याद्यर्थमर्थक्रमादुपसङ्गृह्येत्यतः प्राग्योज्यम् ते प्रसिद्धाः प्रश्नमवाहु—एषेति । हे विप्राः ! एषाऽसितेक्षणाऽङ्गना अन्तर्वत्नी गर्भिणी पुत्रकामा प्रसोष्यन्ती प्रसविष्यमाणा च स्वयम् साक्षाद्युष्मान् प्रष्टुं विलज्जन्त्यस्मन्मुखेन पृच्छति यूयममोघदर्शनाः अमोघं सत्यं दर्शनं येषां ते सर्वज्ञा इत्यर्थः । अतः किंस्विज्जनयिष्यति किं कन्यामुत पुत्रं वा तत् प्रब्रूत ॥१४॥१५॥

एवं प्रलब्धाः वञ्चिताः अवहेलिता इति यावत् अत एव कुपितास्तान् यदुकुमारानूचुः किमिति, ? हे मन्दाः यो युष्माकं कुलं नाशयतीति तथा तं मुसलं जनयिष्यतीति ॥१६॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यदोः कुलस्य यन्निमित्तः किंनिमित्तः यादृशः कीदृशः एकात्मनाम् एकमनस्कानां भेदो मिथो वैरलक्षणः ॥ ९ ॥

शुकः प्रश्नं प्रवदन् पुनरुक्तं करोति—बिभ्रदित्यादिना । सकल सुन्दरगुणानां सन्निवेशो धाम निधानस्थानं गृहमाश्रित्य गृहे स्थित्वेत्यर्थः ॥ १० ॥

प्रश्नं परिहरति—कर्माणीति । पुण्यनिवहानि पुण्यकारणानि [illegible] उग्रसेनस्तस्य गेहे उग्रसेनाधिकृतद्वारवत्यां निवसता कालात्मना कृष्णेन निसृष्टाः प्रेरिताः पिण्डारकं क्षेत्रं प्राप्ता इत्यन्वयः ॥ ११ ॥ १२ ॥

उपसंगृह्य सादरमिति शेषः ॥ १३ ॥

अन्तर्वत्नी गर्भिणी असितक्षणा नीलनेत्रा ॥ १४ ॥ १५ ॥

प्रलब्धाः वञ्चिताः " मदर्थे सहसा हेतुशून्ये प्रुकोऽपि साधनम् " इति यादवः । हे मन्दाः ! निर्भाग्याः ॥ १६ ॥

---

तच्छ्रुत्वा तेऽतिसन्त्रस्ता विमुच्य सहसोदरम् ।
साम्बस्य ददृशुस्तस्मिन् मुसलं खल्वयस्मयम् ॥ १७ ॥
किं कृतं मन्दभाग्यैर्नः किम्वदिष्यन्ति नो जनाः ।
इति विह्वलिता गेहानाऽऽदाय मुसलं ययुः ॥ १८ ॥
तच्चोपनीय सदसि परिम्लानमुखश्रियः ।
राज्ञ आवेदयाञ्चक्रुः सर्वयादवसन्निधौ ॥ १९ ॥
श्रुत्वाऽमोघं विप्रशापं दृष्ट्वा च मुशलं नृप !
विस्मिता भयसन्त्रस्ता बभूवुर्द्वारकौकसः ॥ २० ॥

भाषा टीका ।

दुर्वासा भृगु अंगिरा कश्यप वामदेव अत्रि वसिष्ठ और नारदादिक बहुत से रहे ॥ १२ ॥

यदु लोगों के कुमार खेलते २ मुनि लोगों के समीप आकर चरण छूकर अभिमान होकर भी बड़े नम्र सरी के बनकर मुनि लोगों से पूछते हुए ॥ १३ ॥

ये सब यदु कुमार जाम्बवती के पुत्र साम्ब को स्त्री के वसन भूषण पहिनाकर, स्त्री का भेष बनाकर मुनि लोगों के समीप आकर बोले, कि—हे विप्रो ! यह कृष्ण कटाक्ष वाली स्त्री गर्भवती है, और आप लोगों से पूँछती है ॥ १४ ॥

परन्तु साक्षात् आप लोगों से पूँछने में लज्जा करती है, इससे आप दिव्यदृष्टि वाले हैं आप लोग कहिये तो कि—यह पुत्र की कामना वाली है पर क्या जनैगी सो आप लोग कथन कीजिये ॥ १५ ॥

हे राजन् ! इस प्रकार जब यदु कुमारों ने उन को बहँकाये तब वे मुनि लोग कुपित होकर बोले, कि—हे मन्द हो ! यह तुमारे कुल के नाश करने वाले मूसल को पैदा करेगी ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्मिन्नुदरे अयस्मयं लोहमयम् ॥ १७ ॥
मन्दभाग्यैर्नोऽस्माभिः किमेतत्कृतम् ? नोऽस्मान् किम्वदिष्यन्तीति विह्वलिताः सन्तो मुसलमादाय गेहान् ययुः ॥ १८ ॥
राज्ञे उग्रसेनाय न तु श्रीकृष्णाय ॥ १९—२० ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

तच्छ्रुत्वा परमकं भावयं विमुच्य उच्छूनवसनकञ्चात् पृथक्कृत्य साम्बस्य सभारत्वेन ससंख्यवस्तुतयाऽऽहिति भाव । तस्मिन् मुसलाभाववति उदरे सहितति विस्मये अयस्मयं प्रापयन्त्या लोहमयम् ॥ १७ ॥

किं कर्माणि भीतानां पश्चात्तापवाक्यम् ॥ १८ ॥
उग्रसेनायेत्यपि श्रीकृष्णोपलक्षणेव ॥ १९ ॥
अमोघमवश्यं तात्स्थ्यापकार्यं मुसलञ्च दृष्ट्वा ॥ २० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तच्छ्रुत्वेति । तन्मुनिवचः श्रुत्वा ते यदुकुमारा अतीव सन्त्रस्ताः सहसा आशु साम्बस्योदरं विमुच्य तस्मिन्नुदरे अयस्मयम् लोहमयं मुसलं ददृशुः ॥ १७ ॥

मन्दभाग्यैरस्माभिः किम् एतत्कृतं नोऽस्माकं जनाः नोऽस्मान् प्रति किं वदिष्यन्तीत्येवं विह्वलिताः विशङ्कलितचित्ताः सन्तो मुसलमादाय गेहान् ययुः ॥ १८ ॥

ततस्तं मुसलं सदसि राजसभायाम् उपनीय परिम्लाना मुखश्रीर्येषां ते सर्वेषां यादवानां सन्निधौ राज्ञे उग्रसेनायाऽऽवेदयाञ्चक्रुः स्वकृतं सर्वं विज्ञापयामासुः ॥ १९ ॥

श्रुत्वेति अमोघमप्रतिहतं विप्रशापं श्रुत्वा मुसलं च दृष्ट्वा तावद्विस्मितास्ततो भयसंत्रस्ता भयेन कम्पितगात्राश्च बभूवुरित्यर्थः "त्रसी उद्वेगे" "ओविजी भयचलनयोः" इत्यनुशासनात् अन्यथा पौनरुक्त्यात् ॥ २० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तस्मिन्नुदरे ॥ १७ ॥
किं दुष्कृतम् ॥ १८-२१ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विमुच्य उच्छूनवसनसङ्घातपृथक्कृत्य साम्बस्य सभारतया ससंख्यवस्तुतयेति भावः ॥ १७—२४ ॥

तच्चूर्णयित्वा मुसलं यदुराजः स आहुकः ।
समुद्रसलिले प्रास्यल्लोहं चास्यावशेषितम् ॥ २१ ॥
कश्चिन्मत्स्योऽग्रसील्लोहं चूर्णानि तरलैस्ततः ।
उह्यमानानि वेलायां लग्नान्यासन् किलैरकाः ॥ २२ ॥
मत्स्यो गृहीतो मत्स्यघ्नैर्जालेनान्यैः सहार्णवे ।
तस्योदरगतं लोहं (१)सशल्ये लुब्धकोऽकरोत् ॥ २३ ॥
भगवान् ज्ञातसर्वार्थ ईश्वरोऽपि तदन्यथा ।
कर्तुं नैच्छद्विप्रशापं कालरूप्यन्वमोदत ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् एकादशस्कन्धे विप्रशापो नाम
प्रथमोऽध्यायः ॥ १ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

राज्ञे उग्रसेनायैव न तु श्रीकृष्णाय लज्जाभयाभ्यामिति भावः ॥ १९ ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सहसा सद्यः "सद्योऽर्थे सहसा हेतुशून्ये युक्तेऽपि साम्प्रतम्" इति यादवः । उदरं कलत्रं विमुच्य तस्मिन्नुदरे अयस्मयं लोहमयं मुसलं ददृशुः ॥ १७ ॥

मन्दभाग्यैर्नोऽस्माभिः किं कृतम् ? नोऽस्मान् किं वदिष्यन्तीति विह्वलिताः सन्तो मुसलमादाय गेहान् ययुः ॥ १८—२० ॥

भाषा टीका ।

बस इतना सुनकर यदु कुमार घबडाये, और जल्दी से साम्ब के उदर को खोलकर क्या देखते हैं, कि—उसमें एक लोह का मूसल निकला ॥ १७ ॥

तब तो बालक लोग पछताने लगे, कि—हम मन्द भागियों ने यह क्या किया ? और लोग हमसे क्या कहेंगे ? इस प्रकार बड़े विह्वल होकर उस मूसल को लेकर घर आये ॥ १८ ॥

सूख जिनका मुख रहा ऐसे वे यदु बालक, उग्रसेन महाराज की सभा में उस मूसल को लेजाकर सब यादव लोगों के सन्मुख उस वृत्तान्त को राजा से निवेदन करते हुए ॥ १९ ॥

हे नृप ! उस अमोघ ब्राह्मणों के शाप को सुनकर, और उस मूसल को देखकर द्वारका वासी बड़े विस्मय को प्राप्त होकर भय भीत होते हुए ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आहुक उग्रसेनः सोऽपि श्रीकृष्णमपृष्ट्वैव प्रास्यत् प्रक्षिप्तवान् अस्य मुसलस्य चूर्णीक्रियमाणस्यावशेषितं लोहं च प्रास्यत् ॥ २१ ॥

तरलैस्तरङ्गैः ॥ २२ ॥

अन्यैर्मत्स्यैः सह अर्णवे सागरे ॥ २३ ॥

ज्ञाताः सर्वेऽर्था येन सः ईश्वरोऽपि समर्थोऽपि सन्नन्यथा कर्तुं नैच्छत् किन्त्वन्वमोदत यतः कालरूपी ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
प्रथमोऽध्यायः ॥ १ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

स आवेदितः ॥ २१ ॥

उह्यमानानि इतस्ततः प्रक्षिप्यमाणानि सन्ति एव हेतोः वेलायां तटे लग्नानि एरकाः पटेरेति ख्यातास्तृणविशेषाः ॥ २२ ॥

स[illegible]जरेति प्रसिद्धः ॥ २३ ॥

ईश्वरोऽपि अन्यथा कर्तुं समर्थोऽपि नाद्रियत एव त- मित्यर्थः ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिविरचितायां दीपिकादीपिन्यां
टिप्पण्यां प्रथमोऽध्यायः ॥ १ ॥

(१) शल्येषुमिति विज० पा० ।

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ईश्वरोऽपि अन्यथा कर्तुं समर्थोऽपि ॥ २४ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
प्रथमोऽध्यायः ॥ १ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स यदूनां राजा आहुकः उग्रसेनः मुसलं सम्यक् चूर्णी कारयित्वा समुद्रसलिले प्रास्यत् प्राक्षिपत् अस्य मुसलस्य चूर्णीक्रियमाणस्यावशेषितं लोहशकलञ्च प्रास्यत ॥ २१ ॥

तस्मिन्निति । तस्मिन् समुद्रसलिले कश्चिन्मत्स्यः लोहं पातितं लोहशकलमग्रसीत् चूर्णानि तु तरलैस्तरङ्गैस्तत्र तत्र वेलायां तीरे ऊह्यमानानि प्राप्यमाणानि अत एव लग्नान्येरकाख्या दीर्घाः स्थूलाश्च धाराग्रयोपेतास्तृणविशेषा आसन् ॥ २२ ॥

मत्स्य इति । योऽग्रसील्लोहं स मत्स्यः अन्यैर्मत्स्यैः सह जालेन मत्स्यघ्नैर्गृहीतः लुब्धकस्तेषां मत्स्यघ्नानां मध्ये कश्चिल्लुब्धक इत्यर्थः । तस्य मत्स्यस्योदरगतं लोहं शल्ये शराग्रेऽकरोच्छराग्रे कारितवानित्यर्थः ॥ २३ ॥

भगवानिति । ज्ञाताः सर्वेऽर्थाः कालत्रयगोचराः येन स तं विप्रशापमन्यथाकर्तुं विफलीकर्तुमीश्वरः समर्थोऽपि तदन्यथा कर्तुं नैच्छत किन्तु कालरूपी हेतुगर्भमिदं कालरूपेण संहर्तुं कृतसङ्कल्पत्वादन्वमोदत ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
प्रथमोऽध्यायः ॥ १ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तरलैस्तरङ्गैः वेलायां तीरे लग्नानि संसक्तानि एरकाः दीर्घसूचीमुखतृणविशेषाः ॥ २२ ॥

शल्येषु शल्याख्यशरं लुब्धको व्याधः ॥ २३ ॥

सर्वेषामर्थः पुरुषार्थो यस्मात्स तथा सर्वार्थदर्श इति वा ॥२४॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
प्रथमोऽध्यायः ॥ १ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
प्रथमोऽध्यायः ॥ १ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

साम्बादीनां लज्जापि मा भूदिति सोऽप्याहुकः कृष्णमपृष्ट्वैव तन्मुसलं चूर्णयित्वा अवशेषितं लोहं च किञ्चिन्मात्रमेतत् किं किञ्चित्करमिति मत्वा सलिले प्रास्यत् ॥ २१ ॥

तरलैस्तरङ्गैः ॥ २२ ॥

अन्यैर्मत्स्यैः सह शल्ये शराग्रे स प्रसिद्धो लुब्धकः ॥ २३ ॥ २४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशस्य प्रथमः सङ्गतः सङ्गतः सताम् ॥ १ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स आहुकः उग्रसेनः मुसलं चूर्णयित्वा समुद्रसलिले प्रास्यत् प्राक्षिपत् अस्य मुसलस्य अवशेषितं लोहं च प्रास्यत् ॥ २१ ॥

तत्र लोहं मुसलशेषं मत्स्योऽग्रसीत् चूर्णानि तु तरलैस्तरङ्गैः ततस्तस्माद्देशात् ऊह्यमानानि वेलायां समुद्रतीरे लग्नानि एरका आसन् दीर्घसूचीमुखाग्रितृणविशेषाः बभूवुः ॥ २२ ॥

स मत्स्यः अन्यैर्मत्स्यैः सह मत्स्यघ्नैः गृहीतः तस्य मत्स्यस्योदरगतं निर्गतं लोहं शल्ये शराग्रे अकरोत्संयोजितवान् स प्रसिद्धः जराभिधः लुब्धको व्याधः ॥ २३ ॥

ईश्वरोऽपि सर्वं कर्तुं समर्थोऽपि ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
प्रथमाध्यायार्थप्रकाशः ॥ १ ॥

———

भाषा टीका ।

राजा श्रीउग्रसेन महाराज ने भी उस मूसल का चूर्ण कराकर समुद्र में डलवा दिया और उसका कुछ लोह अवशिष्ट रहा उसको भी समुद्र में डलवा दिया ॥ २१ ॥

उस लोह के टुकड़े को तो कोई मत्स्य निगल गया, और जो चूर्ण रहा सो तरंगों की टक्करों से किनारे पर लगकर एरका अर्थात जिसकी चटाई बिनी जाती है वह पटेर नामक तृण विशेष होगया ॥ २२ ॥

जिस मच्छ ने वह लोह निगला रहा, उस मच्छ को अन्य मत्स्यों के साथ मत्स्य मारने वालों ने जाल डालकर पकड़ा, और उसके पेट में निकला जो लोह तिसको लुब्धक ने अपने बाण के अग्र भाग में लगा लिया ॥ २३ ॥

श्रीकृष्ण भगवान् इन सब बातों को जानकर चुप लगा गये, और उन ब्राह्मणों के शाप को अन्यथा कर देने में आप समर्थ भी रहे तो भी आपने उलटने की इच्छा नहीं करी किन्तु आप स्वयं कालरूप भी तो हैं इस लिये अपने मनमें अनुमोदन किया ॥ २४ ॥

इति श्रीमद्भागवत एकादशस्कन्ध में प्रथम अध्याय की,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्ता ॥ १ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे प्रथमोऽध्यायः ॥ १ ॥

———:o:———

## द्वितीयोऽध्यायः ।

——:०:——

श्रीशुक उवाच ।
गोविन्दभुजगुप्तायां द्वारवत्यां कुरूद्वह ! ।
अवात्सीन्नारदोऽभीक्ष्णं कृष्णोपासनलालसः ॥ १ ॥
को नु राजन्निन्द्रियवान् मुकुन्दचरणाम्बुजम् ।
न भजेत्सर्वतो मृत्युरुपास्यममरोत्तमैः ॥ २ ॥
तमेकदा तु देवर्षिं वसुदेवो गृहागतम् ।
अर्चितं सुखमासीनमभिवाद्येदमब्रवीत् ॥ ३ ॥
वसुदेव उवाच ।
भगवन् ! भवतो यात्रा स्वस्तये सर्वदेहिनाम् ।
कृपणानां यथा पित्रोरुत्तमश्लोक(१)वर्त्मनाम् ॥ ४ ॥
भूतानां देवचरितं दुःखाय च सुखाय च ।
सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम् ॥ ५ ॥
भजन्ति ये यथा देवान् देवा अपि तथैव तान् ।
छायेव कर्मसचिवाः साधवो दीनवत्सलाः ॥६॥
ब्रह्मंस्तथाऽपि पृच्छामो धर्मान् भागवतांस्तव ।
यान् श्रुत्वा श्रद्धया मर्त्यो मुच्यते सर्वतो भयात् ॥ ७ ॥
अहं किल पुराऽनन्तं प्रजार्थो भुवि मुक्तिदम् ।
अपूजयं न मोक्षाय मोहितो देवमायया ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वितीये निमिजायन्तसंवादेनाऽऽह नारदः ।
धर्मान् भागवतान् भक्त्या वसुदेवाय पृच्छते ॥

अभीक्ष्णं प्रख्यापितोऽपि पुनः पुनरवात्सीदित्यर्थः । ननु, नारदस्य दक्षादिशापादेकत्र वासः कथमवतीत्याशङ्क्याह—गोविन्दभुजगुप्तायामिति । न तस्यां शापादेः प्रभाव इत्यर्थः । कृष्णोपासने लालसा औत्कण्ठ्यम् यस्य सः ॥ १ ॥

यद्भजनं मुक्तानामपीदृशामौत्सुक्यं तं को नाम न भजेदित्याह—को न्विति । इन्द्रियवानिति इन्द्रियवत्त्वमात्रमेव भजनाधिकारविशेषणमित्यर्थः । सर्वतः सर्वेष्वपि लोकेषु मृत्युर्यस्य सः ॥ २–३ ॥

यथा पित्रोर्यात्रा आगमनमपत्यानां स्वस्त्यै मङ्गलाय यथा चोत्तमश्लोकस्य वर्त्मभूतानां महतां यात्रा कृपणानां स्वस्तये तथा भगवद्रूपस्य भवतो यात्रा सर्वदेहिनां स्वस्तय इति ॥४॥

देवैरपि महतामुपमानमनुचितमित्याह—भूतानामिति । देवानां चरितमभिवृष्ट्यादिना भूतानां दुःखायाऽपि भवति त्वादृशां त्वया सदृशानाम् अच्युत आत्मा येषां तेषाम् ॥ ५ ॥

किञ्च, सुखं कुर्वन्तोऽपि देवा भजनानुसारेण कुर्वन्ति न तथा साधव इत्याह—भजन्तीति । छायेव यथा पुरुषो यावत्करोति तावदेव तस्य छायाऽपि तथा कर्मसचिवाः कर्मसहायाः ॥ ६ ॥

तदेवं यद्यपि भवत आगमनमात्रेणैव वयं कृतार्थास्तथाऽपि पृच्छामः तान्, यैर्धर्मैः प्रसङ्गो भगवत्कथानामित्यर्थः ॥७॥

---

(१) वर्त्मणाम् इति शुक० पाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तान् देवा अपि तथैव भजन्ति भजनानुगुणमेव सुखं यच्छन्ति न तु, निरवधिकमित्यर्थः। कुतः? यतः छायेव कर्मसचिवाः कर्मसहायास्ते यथा छाया वृद्धिह्रासवती (स्वयं) वर्धते ह्रसते च तद्वद्देवा अपि स्वसेवा(कर्म)तारतम्यरूपं कर्मैव तरतमफलभावेन सहायो येषां तथाभूता इत्यर्थः। साधवस्त्वाहुस्तु दीनवत्सला दीनेषु तापत्रयाभिभूतेषु वत्सलाः निरवशेषदुःखनिराचिकीर्षवः। यद्वा, छायेव परोपकाररूपकर्मसचिवाः अतः सर्वशरण्याः साधव इत्यर्थः ॥ ६ ॥

ब्रह्मन्निति। तदेवं यद्यपि तवागमनमात्रेण वयं कृतार्थास्तथापि पृच्छामः, किं तत्? भागवतान् धर्मान् तव यैर्धर्मैर्भगवान् प्रसन्नः स्यादित्यर्थः। किञ्च, यान् धर्मान् श्रुत्वा सर्वतः सर्वस्माद्दुर्वारसंसृतिभयान्मुच्यते ॥ ७ ॥

ननु, पुत्रीकृतपरमपुरुषस्त्वमितर इव किं निर्विद्यसे इत्यत आह—अहमिति। मुक्तिदमप्यनन्तं केवलं पुत्रकामोऽहमपूजयमाराधितवानस्मि न तु मोक्षायापूजयम् तत्र हेतुत्वेनात्मानं विशिनष्टि, देवस्य भगवतो मायया मोहितः (प्रतारितः) किमिति सूतिकागृहे भगवदुक्तिमनुस्मरति ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

अतः कतिपयैरध्यायैर्वसुदेवनारदसंवादच्छलेन हरेस्तत्त्वं तदवाप्तिसाधनं तदधिकारिणश्चाख्यास्यति निरूपयति; तत्र यादृच्छिकस्य नारदस्यान्तःपुरवासिना वसुदेवेन सह सङ्गमः कथं सञ्जाघटीतीति शङ्कां परिहर्तुमाह—गोविन्देति। वनवासिनो नारदस्य जनसङ्कुलपुरनिवासहेतुः कृष्णेति ॥ १ ॥

श्रोत्रादीन्द्रियशक्तिमतः पुंसोऽपि हरिभजनादिभक्त्यतिशयो जायते किं पुनः भगवद्विज्ञानतत्त्वस्य नारदस्येति भावेनाह, को न्विति। सर्वतो मृत्युः गम्या यस्य स तथा ॥ २ ॥

अस्तूक्तं प्रकृते किमत्राह—तमेकदेति ॥ ३ ॥

स्तुत्या सन्तोषोद्रेकात् श्रोतव्यार्थकथने सुखसुल्लाभो भवतीत्याशयेन नारदं स्तौति—भगवन्नित्यादिना। स्वस्तये इति चिरायेत्यादिप्रयोगवत्। यात्रा सञ्चरणं पित्रोर्यात्रा शिशूनाम उत्तमश्लोकः हरिः सः एव वर्त्म यस्य स तथा। यद्वा, उत्तमो हरिस्तस्य श्लोक इव श्लोको येषां ते तथा महान्तस्तेषां वर्त्म यस्य स तथा महत्समार्गानुवर्तीत्यर्थः। तस्य ॥ ४ ॥

ननु, सर्वभूतसुहृत्त्वे सात्त्विकत्वं प्रयोजकं तद्देवानामप्यस्त्यतः किं विशेषतः स्तूयत इति तत्राह—भूतानामिति। भूतानि त्रिविधानि सात्त्विकराजसतामसभिन्नाणीति; तत्र देवानां चरितं सात्त्विकभूतानां सुखायैव आत्मभजने बुद्धिमुत्पाद्य सुखलक्षणफलदानं तामसानां दुःखाय तद्विपर्ययबुद्धिमुत्पाद्य दुःखलक्षणफलदानं राजसानां सुखदुःखलक्षणमिश्रफलाय मिश्रकर्मबुद्धिमुत्पाद्य सुखादिमिश्रफलदानम् इदञ्च शब्दगृहीतं द्वितीयचशब्दः समुच्चयार्थः भवादृशानां चरितं न तथेत्याह—सुखायेति। एवशब्देन दुःखं व्यावर्तयति, अच्युतात्मनामित्यनेन व्यापारान्तरं निवारयति, हिशब्देन तेषां तदस्तीति सूचयति ॥ ५ ॥

देवानामात्मभजने बुद्धिमुत्पाद्यानुत्पाद्य च सुखादिफलदातृत्वमस्तीत्युक्तं तत्स्पष्टयति—भजन्तीति। ये पुरुषाः यथा येन प्रकारेण देवान् भजन्ति ते देवा अपि तथा कृतकर्मानुसारेण तान् पुरुषान् भजन्ति फलदानेन सम्बद्धा भवन्ति, न च देवेषु वैषम्यादिकमाशङ्कनीयमित्येतन्निदर्शनेन दर्शयति—छायेति। कर्मसचिवाः छायावत् पुरुषकृतकर्माधीना छाया यथा पुरुषानुकृता तथेत्यर्थः। भवादृशा न तथेत्याह, साधव इति—

आत्मनो भजने बुद्धिमुत्पाद्य फलदाः सुराः।
उत्तमानां जनानाञ्च निकृष्टानां विपर्ययः॥
शुभाशुभफलानान्तु कर्मणां विबुधाः सदा।
प्रवर्तका यथायोग्यमृषयः करुणां सदा॥
सुखमिच्छन्ति भूतानां प्रायो दुःखासहा नृणाम्।
तथापि तेभ्यः प्रवरा देवा एव हरेः प्रियाः॥

इत्येतदस्मिन्नर्थे प्रमाणम् ॥ ६ ॥

ननु, साधुभ्यो देवानामुत्तमत्वे अभीष्टार्थप्रश्नकरणात् प्रति स्यात्तथापि प्रश्नपरिहारस्य तत्रासामर्थ्यादिति तत्राह—ब्रह्मन्निति। यद्यपि देवाः प्रशस्ता निश्रेयसार्थिनस्तथापि मानुषत्वेनास्मद्दृष्टिगोचरत्वाद्युष्माकं तादृशश्रेयसार्थज्ञानसामर्थ्यात्तत्साधनपात्रत्वाच्च वयं तु तव त्वां धर्मान् पृच्छाम इत्यन्वयः। ननु, किमहिंसालक्षणो धर्म उत न्यायाचाराद्यन्यतम इत्यत्राह—भागवतानिति। भगवद्भक्तरूपत्वं तद्गुणमाह—यानिति। अनेन यच्छ्रवणमपि सर्वभयमोचकं किमुत तदनुष्ठानमिति दर्शितम् ॥ ७ ॥

भवता भगवत्प्रियधर्माचरणं कृतं किमधुना तद्विषयप्रश्न इति तत्राह—अहमिति ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अथ तदानन्तर्यप्राप्तं श्रीवसुदेवनारदसंवादं वक्तुं श्रीभगवदिच्छया तादृशानर्थसहकारित्वेऽपि श्रीनारदस्य द्वारकायामेव वासमासीदिति सहेतुकमाह—गोविन्देति। अर्भकाणां लोकवृत्तान्तजिज्ञासादिलीलया श्रीभगवता मुहुस्तत्र प्रस्थापितोऽपि पुनः पुनरवात्सीदित्यर्थः। कृष्णस्य उप समीपे आसने स्थितो लालसा यस्य तादृशः तद्भजनोत्कण्ठायामिति व्याख्यानान्तरमपि दर्शितम् ॥ १ ॥

अत्र तस्य साम्ये कैमुत्यं कोऽन्वित्यन्ति। अन्योऽपि कः इन्द्रियवानिन्द्रियवत्सु तद्गुणादिष्वपि तद्भजनसौख्यं वाञ्छितम् ततः सेन्द्रियो वा को न भजेदिति स्वभावत एव तद्योग्यं सर्वेषामित्यर्थः। विचारतः सर्वतो मत्युरिति तच्चेदं साधारणजनानामेव तद्भजनीयमित्यायातम् अपि तु मुक्तानामपीत्याह—उपास्यमिति। तदेवं त्रिविधमुमुक्षुमुक्तानामपि तद्भजनीयमिति स्थिते महाभक्तराजः श्रीनारदो वा कथं न भजेदिति भावः ॥ २—३ ॥

सर्वदेहिनां साधारणानां कृपणानाम् सर्वोत्कृष्टानाम् उत्तमश्लोकवर्त्मनां सर्वोत्कृष्टानामपि स्वस्तये भवतो यात्रा भवति यथा पित्रोरागमनं त्रिविधानामपि पुत्राणां स्वस्तये भवतीति ॥ ४ ॥

तथैवाह—भूतानामिति ॥ ५ ॥

कर्म चात्र भगवद्भजनमेव साधवस्तु न कर्मानुगताः प्रत्युत स्वानन्देन तदनिच्छेव दयालव इत्याह, साधव इति ॥ ६ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ननु, कृतार्थस्य तव तत्पृच्छायां नास्ति प्रयोजनमित्याशङ्क्याह—यानिति । तत्प्रसङ्गेन श्रुत्वा मर्त्योऽपि ॥ ७ ॥

अथ ब्रह्मशापभयेन श्रीकृष्णान्तरायभ्रमः व्यग्रः स्वप्रयोजनमपि निवेदयति—अहमिति द्वाभ्याम् । देवस्य भगवतो मायया कृपया मोहितस्तन्माधुरीवशीभूतो मोक्षायापि नापूजयं किमु तान्यस्मै किन्तु प्रजार्थं तद्रूपपुत्रप्राप्त्यय एव ॥ ८ ॥

———

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

द्वितीये वसुदेवेन पृष्टोऽभून्नारदो निमेः ।
प्रश्ने कविहरी धर्मान् वैष्णवान् प्रोचतुः क्रमात् ॥

अभीक्ष्णमवात्सीदिति कृष्णप्रभावादेव न तत्र दक्षशापः प्रभवतीति भावः ॥ १ ॥

यद्भजने मुक्तानामपीदृशौत्सुक्यं तं प्रभुः खलु को नु न भजेदित्याह—कोन्विति । इन्द्रियवानिति श्रोत्रादीन्द्रियवत्त्व एव तद्भजनेऽधिकार इति भावः । न केवलमीशितव्या जीवा एव न भजन्ति किन्त्वपरोत्तमैः रुद्राद्यैरपि ॥ २—३ ॥

सर्वदेहिनां साधारणानां कृपणानां सर्वनिकृष्टानाम् उत्तमश्लोकधर्मिणां सर्वोत्कृष्टानां भक्तानामपि स्वस्तये भवतो यात्रा आगमनं भवति यथा पित्रोर्यात्रा त्रिविधानामपि पुत्राणामिति सर्वभूतवात्सल्यं नारदस्य दर्शितम् ॥ ४ ॥

देवैरपि साधूनामुपमानमनुचितमित्याह—भूतानामिति । देवचरितमतिवृष्ट्यादिना दुःखायापि भवति ॥ ५ ॥

किञ्च, देवाः स्वार्थपरतयैव सुखयन्ति साधवस्तु न तथेत्याह—भजन्तीति । छाययेति यथा पुरुषो यादृक्करोति छायापि तस्य तथा, कर्मसचिवाः कर्मसहायाः ॥ ६ ॥

तथापीति यद्यपि तव दर्शनमात्रेणैव कृतार्था अभूमैव तथापीत्यर्थः । यान् श्रुत्वेति त्वद्दर्शनसम्भाषणरहितोऽपि मर्त्यो यान् श्रुत्वापि किमुताचर्य ॥ ७ ॥

ननु, त्वं तु कृतार्थ एवासि तत्राह—अहं किलेति । प्रजार्थ एव न तु मुक्त्यर्थः ॥ ८ ॥

———

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मुमुक्षुजनोपकाराय भगवत्प्राप्त्युपायतद्भक्तलक्षणतद्गुणस्वरूपादिकञ्च वसुदेवनारदसम्वादेन चतुरध्याय्या दर्शयति— तत्र तावत्पूर्वाध्यायान्ते यदुक्तम् "भगवान् ज्ञातसर्वार्थ ईश्वरोऽपि तदन्यथा । कर्त्तुं नैच्छद्विप्रशापम्" इति तदुक्तविप्रशापनैरर्थ्यसूचनं दर्शयति—गोविन्देति । यद्यपि दक्षादिशापान्नारदस्य नैकत्र वासस्तथापि नारदः अभीक्ष्णं गोविन्दभुजगुप्तायामवात्सीत् गोविन्दभुजगुप्तत्वात् तस्याः शापादेः प्रभुत्वं नास्तीति भावः । नारदस्य तत्र वासे हेतुमाह—कृष्णोपासनलालस इति । कृष्णोपासने लालसा प्रीत्यतिशयो यस्य सः ॥ १ ॥

यद्भजने भगवदवताराणां नारदादीनामपि लालसा तच्चरणं को नाम न भजेदित्याह—क इति । अमरा देवास्तेषूत्तमाः ब्रह्मशिवनारदादयः तैरपि मुकुन्दस्य मुक्तिदस्य चरणाम्बुजमुपास्यं सर्वतो मृत्युर्यस्य स इन्द्रियवान् इन्द्रियोपलक्षितज्ञानवान् को नु न भजेत् अपि तु (सर्वोऽपि) भजेदेवेत्यर्थः ॥ २ ॥

तं प्रीत्यतिशयेन कृष्णोपासनार्थं द्वारवत्यां निवसन्तम् एकदा तु गृहागतं तत्रार्चितं तदनन्तरं सुखमासीनं प्रश्नार्थं पुनरभिवाद्येदं वक्ष्यमाणमब्रवीत् ॥ ३ ॥

हे भगवन् ! पित्रोः जननिजनकयोः यात्रा आगमनं यथा अपत्यानां स्वस्तये मङ्गलाय भवति तथा भवतः सम्बन्धिना भवदुपदिष्टानामुत्तमश्लोकवर्त्मनाम् उत्तमकीर्तेर्हरेः धर्मभूतानां तत्प्रापकानाम् उत्तमश्लोको हरिर्वा उत्तमाः श्लोकाः प्रतिपादकाः यस्य भक्तियोगस्य स वा वर्त्म येषां तेषां यात्रा सर्वदेहिनां अथैषां स्थिरचरदेहवतां तथापि कृपणानां स्वस्तये भवति किमुत भवद्यात्रा तेषां स्वस्तये भवतीति वक्तव्यम् ॥ ४ ॥

यद्यपि महतां स्वार्थनैरपेक्ष्येणागमनं पित्रोस्तु न तथातोऽनुपमं महदागमनं तथापि स्वाभिजनकत्वसादृश्यात्सोपमं तदुक्तमधुना तु महच्चेष्टितस्य देवचेष्टितमप्युपमानं नास्तीत्याह, भूतानामिति । त्रिगुणकर्मभेदात् त्रिविधानां भूतानां सुखाय दुःखाय चशब्दात्तदुभयमिश्रीभावाय देवानां चरितं चेष्टितं भवति देवानां तत्तत्कर्मसापेक्षत्वात् साधूनाम् आगमनं हितोपदेशादि चरितं तु सर्वेषां भूतानां सुखायैव तत्र हेतुगर्भं विशेषणम् अच्युतात्मनामिति अच्युते हरौ आत्मा बुद्धिर्येषां तेषाम् ॥ ५ ॥

एतदेव विवृणोति—भजन्तीति । ये यथा येन सात्त्विकेन राजसेन तामसेन वा प्रकारेण देवान् भजन्ति तान् फलदानकाले देवा अपि तथैव भजन्ति तत्र हेतुगर्भं विशेषणं कर्मसचिवा इति तत्तत्कर्मसापेक्षा इत्यर्थः । तत्र दृष्टान्तमाह, छायेव छाया यथा स्वाश्रयापेक्षा तद्वत् साधवस्तु दीनवत्सलाः दीनाऽनुकम्पिनः न तु कर्मानुसारेण निग्रहानुग्रहपरा इत्यर्थः ॥ ६ ॥

एवं हि [illegible] भवदागमनमात्रेणास्मदादिकृतार्थतासिद्धौ धर्मप्रश्नापेक्षा नास्ति किं पुनस्तस्य भवत एवागमनमात्रेण कृतार्थतासिद्धौ धर्मप्रश्नापेक्षा नास्तीति वक्तव्यं तथापि हे ब्रह्मन् ! तत्र त्वां भागवतान् भगवद्धर्मान् पृच्छामः यतः जन्ममरणप्रवाहपतितः यान् धर्मान् श्रुत्वैव सर्वतो भयम् यस्मिन् तस्मात्संसाराज्जन्ममरणप्रवाहात् मुच्यते मुक्तो भवति किमुत तेषां धर्माणामनुष्ठाने मुच्यत इति वक्तव्यम् ॥ ७ ॥

ननु, भवता भागवता धर्माः अनुष्ठिता एव यतो भवत्पुत्रत्वेन भगवान् तव गृहेऽवतीर्णोऽतः किमर्थो धर्मप्रश्न इत्यत आह—अहमिति द्वयेन । अहं भुवि प्रजार्थः पुत्रप्रयोजनः सन् अनन्त त्रिविधपरिच्छेदशून्यं भगवन्तम् अपूजयम् पूजितवान् न तु मोक्षाय निःशेषकार्यकारणरूपप्रकृतिमण्डलनिःसरणपूर्वकभगवत्प्राप्तये तत्र हेतुमाह—मोहित इति देवमाययेति । देवस्य भगवतः मायया सङ्कल्परूपया मां पुत्रभावेन भजतोऽस्य मु[illegible]भिलाषान्तः प्रजार्थो मां तावद्भजतु न मुक्तिकामनया इत्येवंभूतया मोहितः मुक्त्युपायाद्वञ्चितः ॥ ८ ॥

———

यथा विचित्रव्यसनाद्भवद्भिर्विश्वतो भयात् ।
मुच्येमह्यञ्जसैवाद्धा तथा नः शाधि सुव्रत ! ॥ ९ ॥
श्रीशुक उवाच ।
राजन्नेवं कृतप्रश्नो वसुदेवेन धीमता ।
प्रीतस्तमाह देवर्षिर्हरेः संस्मारितो गुणैः ॥ १० ॥
नारद उवाच ।
सम्यगेतद्व्यवसितं भवता सात्वतर्षभ! ।
यत्पृच्छसे भागवतान् धर्मांस्त्वं विश्वभावनान् ॥ ११ ॥
श्रुतोऽनुपठितो ध्यात आदृतो वाऽनुमोदितः ।
सद्यः पुनाति सद्धर्मो देवविश्वद्रुहोऽपि हि ॥ १२ ॥
त्वया परमकल्याणः पुण्यश्रवणकीर्तनः ।
स्मारितो भगवानद्य देवो नारायणो मम ॥ १३ ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
आर्षभाणां च सम्वादं विदेहस्य महात्मनः ॥ १४ ॥
प्रियव्रतो नाम सुतो मनोः स्वायम्भुवस्य यः ।
तस्याग्नीध्रस्ततो नाभिर्ऋषभस्तत्सुतः स्मृतः ॥ १५ ॥

---

भाषा टीका ।

श्रीभागवतधर्मेभ्यो नमः ।

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—हे कुरूद्वह, हे राजन् ! श्रीकृष्ण की भुजाओं से रक्षित श्रीद्वारका पुरी में श्रीकृष्ण की उपासना की लालसा से नारदजी निरंतर वास करते हुए ॥ १ ॥

हे राजन्, सर्व लोकों में मृत्यु जिसके पीछे लगी है फिर ऐसा पुरुष कौन है, कि—जो इन्द्रियों को प्राप्त होकर ब्रह्मरुद्रादि देवताओं से उपास्य ऐसे मुकुन्द के चरणारविन्द को न भजन करै ॥ २ ॥

एक समय अपने महलों में आये हुए नारदजी का वसुदेवजी ने पूजन किया, और आसन पर बैठाये, और नारदजी को वन्दना कर वसुदेवजी इस प्रकार बोलते हुए ॥ ३ ॥

वसुदेव उवाच ॥

वसुदेवजी बोले, कि—हे भगवन् ! जैसे माता पिता का आगमन अपनी संतान के मंगल के लिये होता है, और जैसे, परमेश्वर के मार्ग रूप महात्मा लोगों का आगमन बिचारे कृपणों के मंगल के लिये होता है । इसी प्रकार यह आपका शुभागमन सर्व प्राणियों के मंगलार्थ है ॥ ४ ॥

देवताओं का चरित प्राणियों को सुख देने वाला है और दुःख देने वाला भी है, परन्तु आप सदृश अच्युत में चित्त लगाने वाले साधुओं का चरित तो सदा सुख ही के देने वाला है ॥ ५ ॥

जो लोग देवताओं को जिस प्रकार भजते हैं, वे देवलोग भी उनको उसी प्रकार भजते हैं । जैसे, कि पुरुष जितनी चेष्टा करता है छाया भी उतनी ही चेष्टा करती है इसी प्रकार पुरुष जितना कर्म करता है, देवता भी उतनी ही सहाय करते हैं । ऐसे साधु लोग नहीं होते हैं, किन्तु वे लोग तो बिना उपकार भी दीन मात्र को देखकर दया करते हैं ॥ ६ ॥

हे भगवन् ! इस रीति से हम तो आपके आगमन मात्र से ही कृतार्थ हुए, तो भी हे ब्रह्मन् ! मैं आप से भागवत धर्मों को पूछता हूं कि—जिनके सुनने मात्र से ही पुरुष सर्व भय से छूटजाता है ॥ ७ ॥

हे श्रीनारदजी ! मैंने तो पूर्व जन्म में इस पृथिवी पर मुक्ति देने वाले श्रीअनन्त भगवान् का संतान केही अर्थ पूजा, मोक्ष के लिये नहीं, क्योंकि ? मैं देवमाया से मोहित होगया ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अतो यथा मुच्येमहि तथा नोऽस्मान् शाधि । विचित्राणि व्यसनानि यस्मिन् संसारे तस्मात् संसारात् तथा विश्वतः सर्वतो भयं यस्मिंस्तस्मात् भवद्भिर्हेतुभूतैः अञ्जसाऽनायासेन अद्धा साक्षात् ॥ ९ ॥

तमाहुर्वासुदेवांशं मोक्षधर्मविवक्षया ।
अवतीर्णं सुतशतं तस्याऽऽसीद्ब्रह्मपारगम् ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

हरेर्गुणैर्वर्णनीयत्वेन प्रस्तुतैर्हरिः संस्मारित इत्यर्थः ॥ १० ॥

प्रीतिमाविष्करोति—सम्यगिति त्रिभिः । पृच्छसे पृच्छसि विश्वभावनान् सर्वशोधकान् ॥ ११ ॥

आदृतः प्रतिकरूपेण गृहीतः अनुमोदितः परैः क्रियमाणः संस्तुतः सद्धर्मो भागवतो धर्मः देव ! हे वसुदेवेत्यर्थः । यद्वा, देवेभ्यो विश्वस्मै च द्रुह्यन्ति ये तानपि ॥ १२ ॥

किञ्च, त्वया महानुपकारः कृत इत्याह—त्वयेति । पुण्ये श्रवणकीर्तने यस्य सः ॥ १३ ॥

अत्रापि भगवद्धर्मनिर्णयेऽपि विदेहस्य जनकस्य ॥ १४ ॥

आर्षभाणामुत्पत्तिं सान्वयां निरूप्य कथयति, प्रियव्रत इति सप्तभिः ॥ १५ ॥

मोक्षधर्मविवक्षया मोक्षधर्माणां प्रवर्तनेच्छया अवतीर्णं वासुदेवांशमाहुः तस्य च वेदपारगं सुतशतमासीत् ॥ १६ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

यतोऽहं मोक्षाय नापूजयमतः तस्मात् संसारात् साक्षात् "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति श्रुतेः विदेहमुक्तिं प्राप्तुम् इत्यर्थः ॥ ९ ॥

वर्णनीयत्वेन वक्तव्यत्वेन प्रस्तुतैः प्रकरणप्राप्तैर्गुणैः कर्तृभिः हरिं प्रति संस्मारितः ॥ १० ॥

प्रीतिमनुमोदनात्मकप्रसादं भागवतान् धर्मान् पृच्छसे इति यत् एतद्भवता सम्यक् व्यवसितं निश्चितमित्यन्वयः ॥ ११ ॥

पूर्वार्धं नामैकदेशस्य भामादिशब्दवत् नाम्नि लक्षणेत्यरुचौ पक्षान्तरं विश्वस्मै सर्वस्मै जीवमात्रायेत्यर्थः ॥ १२ ॥

नारायणो भागवतधर्मोपदेशे मम गुरुर्बदरीपतिर्नारायणर्षिः मां प्रति स्मारितः यतः कृष्णोपासनावेशेन तस्यापि विस्मृतिर्जाता ॥ १३ ॥

संवादं संवादरूपमितिहासम् ॥ १४ ॥

सान्वया सवंशा सुतान्वय इति च पाठद्वयं तस्य प्रियव्रतस्य ॥ १५ ॥

तम् ऋषभं तस्य ऋषभस्य ॥ १६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अञ्जसा सुखेन तथा नः अद्धा शाधि अञ्जसा शाधि ॥ ९—११ ॥

देवविश्वद्रुहोऽपि ॥ १२—१८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अतो यथा विचित्राणि व्यसनानि दुःखानि यस्मिंस्तस्मात् सर्वतो भयावहात्संसारार्णवात् अञ्जसा सुखेनाद्धा स्फुटम् मुच्येय मुक्तो भवेयं ( मुच्येय मुक्तो भवेयम् ) तथा हे सुव्रत ! नोऽस्मांच्छाधि शिक्षय ॥ ९ ॥

राजोवाच । हे राजन्नेवं श्रीमता वसुदेवेन कृतः प्रश्नो यस्य स देवर्षिः हरेर्गुणैर्वर्णनीयैः संस्मारितः " ययस्तात्स्मरतेः कर्मणि कः " तत एव प्रीतस्तं वसुदेवमाह ॥ १० ॥

तावत्प्रश्नमभिनन्दति— सम्यगित्यादिभिः त्रिभिः । हे सात्वतर्षभ ! तवैतत्सम्यग्व्यवसितं निश्चितं परमार्थविषयनिश्चयात्मकबुद्धिमांस्त्वमित्यर्थः । कुतः ? यद्यस्माद्भागवतान् धर्मान् पृच्छसे भागवतधर्मप्रश्नेन लिङ्गेन त्वां परमार्थविदमनुमनोमीति भावः तत्र हेतुत्वेन तान्विशिनष्टि—विश्वभावनान् जगदभ्युदयकरान् ॥ ११ ॥

किञ्च, श्रवणादिविषयः सन् सद्धर्मो भागवतधर्मः हे देव विश्वद्रुहः विश्वेभ्यो भूतेभ्यो द्रुह्यन्तीति तथा तानपि सद्य एव पुनाति ॥ १२ ॥

किञ्च, महानुपकारस्त्वया कृत इत्याह—त्वयेति । पुण्ये श्रवणं कीर्तनं च यस्य सः परमकल्याणः निःशेषमङ्गलदेवता भगवान्नारायणोऽधुना मम स्मारितः ॥ १३ ॥

इत्थं प्रश्नमभिनन्द्य तस्य विदेहार्षभसंवादात्मकम् उत्तरं वक्ष्यन् प्रस्तौति—अत्रापीति । अत्रापि त्वत्प्रश्ने महात्मनो विदेहस्य जनकस्यार्षभाणां च संवादं तद्रूपम् इतिहासम् उदाहरत्युत्तरत्वेन उदाहरन्ति (वदन्ति) त्वत्प्रश्नस्य विदेहप्रश्नतुल्यत्वात्तत्र यदुत्तरं तदेव त्वत्प्रश्नेऽप्युत्तरम् इत्यभिप्रायेणोदाहरन्तीत्युक्तम् ॥ १४ ॥

के त आर्षभाः ? इत्यत्रान्वयकथनेन तान् दर्शयति—प्रियव्रत इति सप्तभिः । स्वायम्भुवस्य स्वयम्भुवो ब्रह्मणः पुत्रस्य मनोः यः सुतः प्रियव्रतो नामासीत्तस्याग्नीध्रः सुत इति सम्बन्धः ॥ १५ ॥

तमृषभं मोक्षधर्मान् वक्तुमिच्छयाऽवतीर्णं वासुदेवांशमाहुः तस्यर्षभस्य सुतशतमासीत् कथम्भूतं ब्रह्मपारगं ब्रह्मशब्दस्तन्त्रेण वेदपरः परब्रह्मपरश्च पारशब्दस्तु यथावस्थितस्वरूपपरः उभयोरप्यानन्त्यात्तत्र केचिद्वेदपारगाः केचित्तु भगवत्पारगाश्चेति ज्ञेयम् ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नष्टपुत्रस्य जीवत्पुत्रमुखदर्शनाल्लोकाद्यावाप्तिः श्रूयते अतः कथं प्रजार्थ इति नित्यदाध्वनितिरिति तत्राह—यथेति । अस्मिन् भवे जन्मनि विचित्रव्यसनात् नानाक्लेशात् विश्वतो भयावहात् यथाऽञ्जसा क्षिप्रं मुच्येमहि तथा पुनरद्धा प्रत्यक्षं शाधीत्यन्वयः " अद्धा प्रत्यक्षतत्त्वयोः " इति यादवः । अनेन वसुदेवस्य पुत्रीभूतश्रीकृष्णमुखेन्दुदर्शनादशेषव्यसनाकुलसंसारान्मुक्तिर्निश्चि-

तेषां वै भरतो ज्येष्ठो नारायणपरायणः ।
विख्यातं वर्षमेतद्यन्नाम्ना भारतमद्भुतम् ॥ १७ ॥
स भुक्तभोगां त्यक्त्वेमां निर्गतस्तपसा हरिम् ।
उपासीनस्तत्पदवीं लेभे वै जन्मभिस्त्रिभिः ॥ १८ ॥
तेषां नव नवद्वीपपतयोऽस्य समन्ततः ।
कर्मतन्त्रप्रणेतार एकाशीतिर्द्विजातयः ॥ १९ ॥
नवाऽभवन् महाभागा मुनयो[1]ह्यर्थशंसिनः ।
श्रमणा वातरशना आत्मविद्याविशारदाः ॥ २० ॥
कविर्हरिरन्तरिक्षः प्रबुद्धः पिप्पलायनः ।
आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः ॥ २१ ॥
त एते भगवद्रूपं विश्वं सदसदात्मकम् ।
आत्मनोऽव्यतिरेकेण पश्यन्तो व्यचरन् महीम् ॥ २२ ॥
अव्याहतेष्टगतयः सुरसिद्धसाध्यगन्धर्वयक्षनरकिन्नरनागलोकान् ।
मुक्ताश्चरन्ति मुनिचारणभूतनाथविद्याधरद्विजगवां भुवनानि कामम् ॥ २३ ॥
त एकदा निमेः सत्रमुपजग्मुर्यदृच्छया ।
वितायमानमृषिभि[2]रजनाभे महात्मनः ॥ २४ ॥

भाषा टीका ।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि—हे राजन्! बड़े बुद्धिशाली वसुदेवजी ने जब ऐसा प्रश्न किया, तब देवर्षि श्रीनारदजी को श्रीहरि के गुणों का स्मरण हो आया, और नारदजी प्रसन्न होकर वसुदेवजी से कहने लगे ॥ १० ॥

नारद उवाच ।

श्रीनारदजी बोले, कि—हे यदुश्रेष्ठ! हे वसुदेवजी! यह तुमने बहुत ही अच्छा विचार किया, कि—जो विश्व को पवित्र करने वाले भागवत धर्मों का प्रश्न किया ॥ ११ ॥

हे वसुदेवजी! यह सद्धर्म अर्थात् भागवत धर्म कैसा है, कि—इसका श्रवण किया हो, पठन किया हो, ध्यान किया हो, आदर किया हो, अथवा अनुमोदन किया हो, आचरण की तब तो कहना ही क्या है, परंतु श्रवणादि से भी यह भागवत धर्म विश्व के द्रोह करने वालों को भी तत्काल पवित्र करता है ॥ १२ ॥

हे वसुदेवजी! तुम धन्य हो, तुमने भागवत धर्मों के प्रश्न करने से, पवित्र करने वाला श्रवण कीर्त्तन जिनका ऐसे परमकल्याण रूप भगवान् जो श्रीनारायण देव हैं, तिनका मुझको स्मरण करा दिया ॥ १३ ॥

इस भागवत धर्म के विषय में भी लोग इस प्राचीन इतिहास का उदाहरण देते हैं। इस इतिहास में श्रीऋषभदेव के पुत्र नव योगेश्वर और महात्मा श्रीविदेहराज राजा निमि का संवाद है ॥ १४ ॥

स्वायंभुव मनु के जो प्रियव्रत पुत्र हुए, तिनके आग्नीध्र हुए, तिन से नाभि महाराज, तिन नाभि महाराज के पुत्र श्रीऋषभ देवजी हुए हैं ॥ १५ ॥

उनको मोक्ष धर्म के प्रवर्त्तन करने की इच्छा से अवतार लेने वाले श्रीवासुदेव भगवान् के अंश रूप कहते हैं। उनके सौ १०० पुत्र वेद में पारंगत होते हुए ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

तेषामृषभसुतानां मध्ये नवयोगीश्वराणां चरितं वक्तुमितरेषां चरितं ततो विविच्याऽऽह—तेषामिति । एतदजनाभनाम वर्षं यस्य नाम्ना भारतमित्यद्भुतं विख्यातमासीत् एतेन तस्य धर्मातिरेको निरूपितः ॥ १७ ॥

इमां पृथ्वीं गृहादिसंगान् हरिमुपासीनः सेवमानः सन् ॥ १८ ॥

नव सुताः नवद्वीपपतयो नवानां ब्रह्मावर्तादिभूखण्डानां

(१) ह्यर्थसिनः (२) राजनाभा इति विज० पा० ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

पतयः अस्य भारतस्य वर्षस्य एकाशीतिसुताः कर्ममार्गप्रवर्त्तका ब्राह्मणा अभूवन् ॥ १९ ॥

अर्थशंसिनः परमार्थनिरूपकाः श्रमणाः श्रमवन्तः आत्माभ्यासे कृतश्रमा इत्यर्थः । वातरशना दिगम्बराः आत्मविद्यायां विशारदा निष्णाताः ॥ २० ॥ २१ ॥

तेषां पारमहंस्यचरितमाह—त एत इति द्वाभ्याम् । भगवद्रूपं विश्वं पश्यन्तः सदसदात्मकं स्थूलसूक्ष्मरूपम् तच्च स्वाऽव्यतिरेकेण पश्यन्तः ॥ २२ ॥

अव्याहता अप्रतिहता इष्टा अभिप्रेता गतिर्येषां ते मुक्ताः अनासक्ताः ॥ २३ ॥

महात्मनो निमेः वितायमानमनुष्ठीयमानम् अजनाभे भारतवर्षे ॥ २४ ॥

———

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

तेषां भरतादीनाम् एकोत्तरशततमानां तेभ्यो नवयोगिभ्यः विविच्य पृथक्कृत्य एतेन स्वनाम्ना वर्षस्थापनेन तस्य भरतस्य धर्मातिरेको धर्माधिक्यम् ॥ १७ ॥

तपसा ध्यानलक्षणेन "तप आलोचने" इत्यस्मात् "यस्य ज्ञानमयं तपः" इति श्रुतेः । मनइन्द्रियैकाग्र्येणेति वा "मनसश्चेन्द्रियाणाञ्च ह्यैकाग्र्यं परमं तपः" इति स्मृतेः ॥ १८ ॥

तेषाम् ऋषभसुतानां मध्ये ये नवसुतास्ते अस्य भारतवर्षस्य समन्ततो ये नव द्वीपाः ब्रह्मावर्तादिभूखण्डास्तेषां पतयो बभूवुरित्यन्वयः ॥ १९ ॥

विरत्र पादपूरणे रसनाशब्दस्य वस्त्रे लक्षणा "श्यामो हिरण्यरसनोऽर्ककिरीटजुष्ट" इत्यत्र चतुर्थे स्वामिभिरेव तथा व्याख्यानात् वातरसना इति गौडीय एव पाठो न तु स्वामिसम्मतः ॥ २० ॥

द्रुमिल इत्येव पाठः नतु द्रविड इति निरर्थकत्वेन सम्प्रदायानुपलम्भात् ॥ २१ ॥

भगवान् पर[illegible]विभुत्वतया रूपं यस्य तादृशं पश्यन्तः कालिकस्यापि[illegible] स्वतोऽनिरूपत्वात् तच्च ब्रह्मस्वरूपमपि स्वऽस्मा[illegible] त्वं पदार्थभेदेन स्थूलसूक्ष्मरूपं महदाद्याकाशादिरूपम् ॥ २२ ॥

सुनन्दादीनां भुवनानि च कामं यथेच्छम् ॥ २३ ॥

महात्मनो विमुक्तचित्तस्य "यदृच्छया स्वैरितया" इति भक्तकृपया यादृच्छिकत्वमभिप्रेतम् ऋत्विग्भिरनुष्ठीयमानम् ॥ २४ ॥

———

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

नव पुत्राः नवानां द्वीपानां पतयः ॥ १९—२१ ॥

सदसदात्मकम् आत्मनः परमात्मनः अव्यतिरिक्तम् शरीरतया नित्यसम्बन्धत्वेन ॥ २२—२६ ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तेषां शतसङ्ख्यानां ज्येष्ठो भरतः स च नारायणः परायणं परं प्राप्यम् उपायश्च यस्य सः एतदजनाभ नाम वर्षं यस्य नाम्ना भारतमित्यद्भुतं विख्यातमासीत् स भरत इति सम्बन्धः अनेन तस्य धर्मातिशय उक्तः ॥ १७ ॥

स भरतः भुक्ताः भोगाः यस्यां ताम् इमां स्ववशां पृथ्वीं त्यक्त्वा गृहान्निर्गतस्तपसा सर्वाश्रमोचितधर्मेण हरिमुपासीनस्त्रिभिर्जन्मभिस्तस्य हरेः पदवीं प्रकारं साधर्म्यमिति यावत् लेभे प्राप्तवान् वा (वै) इत्यनेन प्रसिद्धिः सूच्यते ॥ १८ ॥

तेषां भरतानुजानामेकोनशतसङ्ख्यानां मध्ये नव इलावर्त-ब्रह्मावर्तार्यावर्तमलयकेतुभद्रसेनेन्द्रस्पृग्विदर्भकीकटकनामानो नव समन्ततः समन्तादस्य भारतवर्षस्य ये नव द्वीपाः खण्डाः स्वतुल्यनामानः तेषामधिपतयः बभूवुरित्यर्थः । एकाशीतिसङ्ख्याकास्तु द्विजातयः कर्मतन्त्रप्रवर्त्तका बभूवुः ॥ १९ ॥

अवशिष्टा नव तु मुनयो बभूवुः तानेव निर्दिशति—महाभागा ज्ञानवैराग्यादिभाग्ययुक्ताः अर्थशंसिनः परमार्थनिरूपकाः श्रमणाः श्रमवन्तः अध्यात्मविद्यापरिश्रमयुक्ता इत्यर्थः । अत एवात्मविद्यायां विशारदाः प्रवीणाः वातरशना दिगम्बरा नतु नग्नाः ॥ २० ॥

नामान्येषां निर्दिशति—कविरिति ॥ २१ ॥

तेषां पारमहंस्यं चरितमाह—त इति द्वाभ्याम् । भगवद्रूपं विभुं चिदचिदात्मकं विश्वं परमात्मनोऽपृथग्भावेन पश्यन्तो व्यचरन् ॥ २२ ॥

अव्याहता अप्रतिहता इष्टा अभिमता गतिर्येषां ते मुक्ताः क्वाप्यनासक्ताः सुरादीनां लोकान् मुनिप्रभृतीनां भुवनानि स्थानानि च कामं यथेष्टं चरन्ति चकारादपि चरन्तीत्यभिप्रायेण वर्तमाननिर्देशः अनेन तेषां जनकस्य च कथं सङ्गमोऽभूदित्याशङ्का शमिता ॥ २३ ॥

तदेवाभिप्रेत्याह—त एकदेति । ते कदाचिद्यदृच्छया तत्र सञ्चरन्तः एकदा अजनाभे भारतवर्षे ऋत्विग्भिर्वितायमानमनुष्ठीयमानं महात्मनो निमेर्जनकस्य सत्रं यदृच्छयोपजग्मुः ॥ २४ ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यन्नाम्ना भारतमिति यस्य नाम्ना एतद्वर्षं भारतमिति विख्यातम् अद्भुतं पुण्यस्थानमित्यर्थः ॥ १७ ॥

तत्पदवीं तस्य हरेः पदवीम् सदनं लोकमित्यर्थः ॥ १८ ॥

तेषां मध्ये नवानां भूमण्डलस्य नवद्वीपपतयः आसन् तेषां मध्ये एकाशीतिसङ्ख्याता द्विजातयो बभूवुः किं कर्माणा इत्यत्राह—कर्मेति । कर्मतन्त्रप्रणेतारः कर्मकाण्डप्रणेतारः ॥ १९ ॥

तेषां मध्ये नव सङ्ख्याता मुनयोऽभवन् तत्रापि विशेषमाह, ऊर्ध्वमन्थिन इति । ऊर्ध्वं मन्था रेत एषामस्तीति ऊर्ध्वमन्थिनः ऊर्ध्वरेतसः सन्यासाश्रमधर्मिण इत्यर्थः । रूपमाह—श्रमणा इति, श्रमणा भिक्षवः तत्रापि विशेषमाह—वातरशना इति कौपीन एव रशना कटिसूत्रं येषान्ते तथा दिगम्बराः परमहंसा इत्यर्थः । आत्मविद्याया वेदान्तशास्त्र विशारदाः पटवः ॥ २० ॥

तान् दृष्ट्वा सूर्यसङ्काशान् महाभागवतान् नृप ! ।
यजमानोऽग्नयो विप्राः सर्व एवोपतस्थिरे ॥ २५ ॥
विदेहस्तानभिप्रेत्य नारायणपरायणान् ।
प्रीतः सम्पूजयाञ्चक्र आसनस्थान् यथाऽर्हतः ॥ २६ ॥
तान्रोचमानान् स्वरुचा ब्रह्मपुत्रोपमान्नव ।
पप्रच्छ परमप्रीतः प्रश्रयावनतो नृपः ॥ २७ ॥

विदेह उवाच ।

मन्ये भगवतः साक्षात्पार्षदान् वो मधुद्विषः ।
विष्णोर्भूतानि लोकानां पावनाय चरन्ति हि ॥ २८ ॥
दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः ।
तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम् ॥ २९ ॥
अत आत्यन्तिकं क्षेमं पृच्छामो भवतोऽनघाः ! ।
संसारेऽस्मिन् क्षणार्द्धोऽपि सत्सङ्गः शेवधिर्नृणाम् ॥ ३० ॥
धर्मान् भागवतान् ब्रूत यदि नः श्रुतये क्षमम् ।
यैः प्रसन्नः प्रपन्नाय दास्यत्यात्मानमप्यजः ॥ ३१ ॥

नारद उवाच ।

एवं ते निमिना पृष्टा वसुदेव ! महत्तमाः ।
प्रतिपूज्याब्रुवन् प्रीत्या ससदस्यर्त्विजं नृपम् ॥ ३२ ॥

भाषा टीका ।

तप से श्रीहरि की उपासना करते हुए तीन जन्मों में श्रीहरि की पदवी को प्राप्त होते हुए ॥ १८ ॥

अवशिष्ट जो रहे निन्यानवे (९९) पुत्र तिन में नव, पुत्र इस भारत वर्ष के नवद्वीपों ( खण्डों ) के पति हुए, और इक्यासी ८१ पुत्र कोई महदनुग्रहादिरूप कारण से कर्ममार्ग के प्रवृत्त करने वाले ब्राह्मण होते हुए ॥ १९ ॥

और भी शिष्ट रहे जो बड़भागी नव पुत्र वे नव योगेश्वर होते हुए, तथा परमार्थ के निरूपण करने वाले, आत्माभ्यास के विषे परिश्रम शाली, दिगंबर और वेदान्त विद्या में निष्णात होते हुए ॥ २० ॥

वे नव योगेश्वर ये हैं—कवि, हरि, अन्तरिक्ष, प्रबुद्ध, पिप्पलायन, आविर्होत्र, द्रुमिल, चमस, और करभाजन, ॥२१॥

ये नव योगेश्वर भगवद्रूप स्थूल सूक्ष्म इस विश्व को परमात्मा से अपृथक् सिद्ध देखते हुए, इस पृथिवी पर विचरते हुए ॥ २२ ॥

और इन योगेश्वर लोगों की अभीष्ट गति कहीं भी प्रतिहत नहीं होती है, ये योगेश्वर लोग, सुर सिद्ध साध्य गन्धर्व यक्ष नर किन्नर नाग इनके लोकों में; तथा मुनि चारण भूतनाथ श्रीमहादेवजी तथा विद्याधर द्विज और सुरभि प्रभृति गायें, इनके भुवनों में यथेष्ट विचरते रहते हैं, कहीं भी रुक नहीं सकते हैं ॥ २३ ॥

वे ही योगेश्वर एक समय इसी भारतवर्ष में विदेहराज महात्मा राजा निमि के यज्ञ में जिसमें कि—बहुत से ऋषि लोग अनुष्ठान कर रहे थे उसमें हरिइच्छा से पहुंच गये ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यजमानो निमिः अग्नय आहवनीयादयः विप्रा ऋत्विगादयः ॥ २५ ॥

अभिप्रेत्य ज्ञात्वा ॥ २६ ॥

स्वरुचैव रोचमानान्स्वाभरणादिप्रकाशैः ब्रह्मपुत्रोपमान् सनत्कुमारादिसदृशान् ॥ २७ ॥

परमप्रीत्या तद्दर्शनमभिनन्दति द्वाभ्याम्—मन्य इति । ननु, भगवतः पार्षदानां कथमत्रोपलब्धिस्तत्राह, विष्णोरिति । विष्णुभक्ता लोकपावनार्थं सर्वत्र पर्यटन्तीत्यर्थः ॥ २८ ॥

कविरुवाच ।

मन्येऽकुतश्चिद्भयमच्युतस्य पादाम्बुजोपासनमत्र नित्यम् ।
उद्विग्नबुद्धेरसदात्मभावाद्विश्वात्मना यत्र निवर्तते भीः ॥ ३३ ॥
ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये ।
अञ्जः पुंसामविदुषां विद्धि भागवतान् हि तान् ॥ ३४ ॥
यानास्थाय नरो राजन्! न प्रमाद्येत कर्हिचित् ।
धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह ॥ ३५ ॥
कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वाऽनुसृतस्वभावात् ।
करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत् ॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मर्त्यानामपि मानुषो देहो दुर्लभः तत्रापि वैकुण्ठप्रियदर्शनयोग्यत्वात् भवतां दर्शनं महद्भाग्यमासाद्य मया लब्धमिति भावः ॥ २९ ॥

अभीष्टं पृच्छति-अत इति द्वाभ्याम् । हे अनघाः! निरवद्याः! यतः क्षणार्द्धोऽपि सत्सङ्गः शेवधिर्निधिः मोक्षसुखदः अतः भवतः युष्मान् आत्यन्तिकं क्षेमं मोक्षोपायं मुख्यं भागवतधर्मं पृच्छामः ॥ ३० ॥

तथाऽनान्तरोपायानपि ब्रूतेत्याह-धर्मानिति । यदि नोऽस्माकं श्रुतये श्रवणाय क्षमं योग्यं भवति तर्हि भागवतान् यैः धर्मैः प्रसन्नः अजो नित्यमूर्तिः भगवान् प्रपन्नाय स्वशरणागताय "पद गतौ" इत्यस्य रूपम् आत्मानमपि दास्यति तान् ब्रूत ॥ ३१ ॥

ते सर्वे एवं निमिना पृष्टाः सदस्यैः ऋत्विग्भिश्च सह वर्त्तमानं निमिं प्रतिपूज्य अभिनन्द्य प्रीत्या अब्रुवन् कविमुखेनेति शेषः ॥ ३२ ॥

---

भाषाटीका ।

हे वसुदेवजी! उन सूर्य सदृश कान्ति वाले महाभागवतों को देखकर यजमान ( राजा निमि ) अग्नि और ब्राह्मण ये सबही उठ खड़े हुए ॥ २५ ॥

और विदेह राजा उनों को नारायण परायण जानकर बड़े प्रसन्न हुए, और उनको आसनों पर विराजमान कराकर यथा योग्य पूजा करने लगे ॥ २६ ॥

अपनी कान्ति से भ्राजमान भृगु सनकादिकों के सदृश उन योगेश्वरों से प्रसन्न और बड़े विनीत हो कर निमि राजा प्रश्न करते हुए ॥ २७ ॥

विदेह उवाच ॥

राजा निमि बोले, कि—मैं आप लोगों को साक्षात् मधुसूदन भगवान् के पार्षद जानता हूं । क्योंकि? विष्णुभक्त लोग लोकों के पवित्र करने के लिये सर्वत्र विचरते रहते हैं ॥ २८ ॥

जीवों को क्षण भंगुर भी यह मनुष्य देह बड़ा दुर्लभ है, परन्तु उस मनुष्य देह में भी वैकुंठप्रिय जो आप सदृश भागवत जन हैं तिनका दर्शन और भी दुर्लभ है ॥ २९ ॥

हे अनघ हो! हे योगेश्वर हो! इसी से हम आप लोगों से आत्यन्तिक क्षेम पूछते हैं, क्योंकि इस संसार में मनुष्यों को अर्द्धक्षण भी सत्पुरुषों का संग मिलना एक निधि मिलने तुल्य है ॥ ३० ॥

तस्मात् यदि हमारे श्रवण करने के योग्य होवें तो आप भागवत धर्मों का वर्णन कीजिये, क्योंकि—जिन धर्मों से प्रसन्न होकर गोविन्द अपने प्रपन्नजन को अपने आत्मा ( आप ) को भी देदेते हैं, अर्थात् आप भी अपने भक्तजन के होजाते हैं ॥ ३१ ॥

नारद उवाच ॥

नारदजी बोले, कि—हे वसुदेवजी! उन महत्तम भागवतों से जब राजा निमिने इस प्रकार पूंछा, तब वे भी राजा के वचन की प्रशंसा कर बड़ी प्रीति पूर्वक सभ्य लोग और ऋत्विज लोगों के सहित राजा निमि से बोलते हुए ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रथममात्यन्तिकं क्षेमं कथयति—मन्य इति । न कुतश्चिद्भयं यस्मात्तदकुतश्चिद्भयम् अत्र संसारेऽसदात्मभावादसति देहादावात्मभावनातो नित्यं सर्वदोद्विग्नबुद्धेः विश्वात्मना सर्वथा निःशेषं यत्र पादाम्बुजोपासने भीर्निवर्त्तते तत् ॥ ३३ ॥

भागवतधर्मलक्षणमाह—ये वै इति । सर्वादिमुखेन वर्णाश्रमादिधर्मादिधर्मानुक्त्वाऽतिरहस्यत्वात्स्वमुखेनैव भगवताऽविदुषामपि पुंसामञ्जः सुखेनैवाऽऽत्मलब्धये ये वै उपायाः प्रोक्तास्तान् भागवतान्धर्मान्विद्धि ॥ ३४ ॥

अञ्जःपदेनोक्तं सुकरत्वं विवृणोति-यानिति । यानास्थायाश्रित्य योगादिष्विव न प्रमाद्येत विघ्नैर्न विहन्येत किञ्च,

श्रीधरस्वामिकृतभावार्थदीपिका ।

निमील्य नेत्रे धावन्नपि इह एषु भागवतधर्मेषु न स्खलेत् निमीलनं नामाज्ञानम् यथाऽऽहुः ।

"श्रुतिस्मृती उभे नेत्रे विप्राणां परिकीर्तिते ।
एकेन विकलः काणो द्वाभ्यामन्धः प्रकीर्तितः" ॥ इति

अज्ञात्वापीत्यर्थः। यथा पदन्यासस्थानमनतिक्रम्य शीघ्र-गतेः पदन्यासेन गतिर्धावनं तद्वदत्रापि किञ्चित् किञ्चिदति-क्रम्य (अतिशीघ्रं परस्परानुष्ठान) अतिशीघ्रानुष्ठानं धावनम् तथा अनुतिष्ठन्नपि न स्खलेन्न प्रत्यवायी स्यात्तथा न पतेत्फलाच्च भ्रश्येत ब्राह्मणादीनामुक्तानपि धर्मान् कश्चिदकुर्वाणो भागवतधर्मान् श्रवणकीर्तनादीन् कुर्वाणस्तत्फलं प्राप्नुयादित्यर्थः ॥ ३५ ॥

ननु, केते भागवता धर्मा ईश्वरार्पितानि सर्वकर्माण्यपी-त्याह—कायेनेति । आत्मना चित्तेनाहङ्कारेण वा अनुसृतो यः स्वभावस्तस्मात् अयमर्थः न केवलं विधितः कृतमेवेति नियमः स्वभावानुसारिलौकिकमपीति तथा च भगवद्गीतासु—

"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय ! तत्कुरुष्व मदर्पणम्" ॥ इति

यद्वा । ननु, कायादीनामेव कर्म नात्मन इत्याशङ्क्याऽऽह-अध्यासेनानुसृताद्बुद्ध्यात्मनो वा स्वभावाद्यत्करोतीत्यर्थः । तत्सकलं परस्मै परमेश्वराय नारायणायेति समर्पयेत् तथा सति सकल-मपि कर्म भागवतो धर्मो भवतीति भावः ॥ ३६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

ननु, प्रथमप्रश्नस्य कविनैव किमित्युत्तरं दत्तं न हर्या-दिनेति चेदुच्यते कवेः प्रथमत्वात् प्रश्नस्यापि तथात्वात् प्रथ-मस्य साम्येन तेनैव तदुत्तरम् एवं हर्यादिष्वपि तत्तत् साम्यं ज्ञेयं वृत्तिवैचित्र्येण तु "कविः कल्पो निपुणाह्वक" इत्यत्र श्रीस्वामिभिरेव कविर्विद्वान् इति व्याख्यातत्वाद्विद्वच्छ्रेष्ठत्वेन वैदुष्यं यद्भागवतधर्मेणानेनात्यन्तिकक्षेमापादनम् "एषा बुद्धिमतां बुद्धिः मनीषा च मनीषिणाम्" इति न्यायात् तस्मात् कविरेवैतत् प्रश्नो-त्तरं कृतवान् तथैव पर परत्र व्याख्यास्यते अत्रासदात्मभावा-दित्यमुद्विग्नबुद्धेः पुंसः यत्र पादाम्बुजोपासने सर्वथा भीति-वर्जने तदच्युतस्य पादाम्बुजोपासनमेवाह—न कुतश्चिद्भय-मात्यन्तिकं क्षेमं मन्य इत्यन्वयः । उपासनं तद्रूपलीलास्फूर्त्या-दिकमेव निःशेषमित्यनेन तादृशोपासनासाधनावस्थायामपि क्रमशो भयनिवृत्तिर्दर्शिता ॥ ३३ ॥

स्वमुखेनेति "कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता । मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः" इत्यनुसारात् "श्रद्धामृतकथायां मे शश्वन्मदनुकीर्तनम्" इत्यादि वचनैः "यत् करोषि यदश्नासि" इत्यादि वचनैः स्वमुखेनैव भगवता श्रीकृष्णे-नोपाया ये प्रोक्तास्तान् भागवतान् धर्मान् विद्धि अवि-दुषां पुंसामिति कर्तरि षष्ठी आत्मलब्धये आत्मनः स्वस्य कर्मभूतस्य लब्धये प्राप्तये उपाया इति स्वरूपलक्षणं भगवत्-प्रोक्तत्वन्तु तटस्थलक्षणमिति ज्ञेयम् ॥ ३४ ॥

नर इति नृमात्रस्य तत्राधिकारिता निर्दिष्टा योगादिवदे-त्यत्रादिना कर्मतपःसाङ्ख्यज्ञानवैराग्यादिपरिग्रहः तत्र योगे सिद्धय एव विघ्नाः "अन्तरायान् वदन्त्येतान् युञ्जतो योगमुत्तमम्" इत्यादि वक्ष्यमाणत्वात् । कर्मणि तु मन्त्रादौ स्वरादि-वैगुण्यमेव विघ्नः "इन्द्रशत्रुः" इत्यादिवत् तपसि तु गर्व एव स "[illegible] कायसङ्कल्पवैकल्प" इत्युक्तेः । साङ्ख्ये तु ईश्वरामननात् माहात्म्याभाव एव स "सर्ववेदविरुद्धं च कपि-लोऽयं जगाद ह" इत्युक्तेः यथावदात्मानात्मविवेकासमर्थत्वे । ज्ञाने तु भगवदपराध एव स "जीवन्मुक्ता अपि पुनर्बन्धनं यान्ति कर्मभिः । यद्यचिन्त्यमहाशक्तौ भगवत्यपराधिनः" इति वासना-भाष्योक्तेऽपि भगवत्पारिशिष्टवचनात् "नानुव्रजति यो मोहा-द्व्रजन्तं जगदीश्वरम् । ज्ञानाग्निदग्धकर्मापि स भवेद्ब्रह्मराक्षसः." इत्यादि भारतादिस्मृतेश्च. वैराग्ये तु प्रसादाग्रहणमेव सः "प्रसादाग्रहणं विष्णोः" इति सेवापराधान्तर्गतत्वात् तदुक्तमभि-युक्तैः "प्रापञ्चिकतया बुद्ध्या हरिसम्बन्धिवस्तुनः । मुमुक्षुभिः परित्यागो वैराग्यं फल्गु कथ्यते" इति अत्रापि भगवद्धर्मेऽपि पूजनस्तवपाठादौ व्युत्क्रमादिनानुष्ठानमेव धावनं तथानु-तिष्ठन्नपि व्युत्क्रमादिना कुर्वन्नपि प्रत्यवायी पापांशभाक् न स्यात् फलात् भगवत्प्रसादलक्षणात् ॥ ३५ ॥

नन्विति शङ्का समाधानाभावः धर्मा इत्येतत्पर्यन्ता शङ्का ईश्वरेत्यादिसमाधानं सर्वकर्माण्यपि किं पुनः श्रवणादी-नीति तेषां मुख्यत्वख्यापनम् अर्पितकर्मणान्तु तद्द्वारत्वेन तत्त्वमिति व्यञ्जितं तदुक्तं पाद्मे "कुर्वाणा यत्र कर्माणि भगवच्छिक्षया सकृत् । गृणन्ति गुणनामानि कृष्णस्यानुस्मरन्ति च" इति पूर्वोक्तेः आत्मनोऽकर्तृत्वात् कथं कायादिकृतकर्मार्पणं समर्पयेत् परकृतस्य परेण समर्पणायोगादित्याशङ्क्य तद्-वशत्वेनैवास्य कर्तृता यद्यपि तथा सति समर्पितं स्यात् इति भावः इति [illegible] तत्र पापकर्मसमर्पणान्तु "मत्समो नास्ति पापात्मा नापराधी च कश्चन । परिहारेऽपि लज्जा मे किं ब्रुवे परमेश्वर" इति दैन्येन तन्निवेदनमेव ॥ ३६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

असदात्मभावात् असद्देहः देहात्माभिमानात् उद्विग्नबुद्धेः अच्युतपादाम्भोजोपासनकृताश्रयं भयं सर्वतोऽनिवा-रकं मन्ये यत्र उपासने कृते विश्वात्मना सर्वप्रकारेण भय निवर्तते ॥ ३३ ॥

न प्रमाद्येत् भगवद्धर्मनिष्ठानां न प्रमादोऽस्तीत्यर्थः । धावन्नपि मीलय नयने इति सर्वदा भगवानेव रक्षक इति तात्पर्यम् ॥ ॥ ३४—३५ ॥

अनुसृतस्वभावः अनुभूतसंस्कारवासनः यद्यत्करोतीति शास्त्रा-विरुद्धं लौकिकं च यद्यत्करोतीत्यर्थः ॥ ३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तमेवाह-मन्य इत्यादिना । तदर्थमेवोदित इत्यनेन तत्र तावदात्यन्तिकं क्षेमं तत्साधनं चाह कविः—मन्य इति । अत्र

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

जीवदशायां नित्यमच्युतस्य यत्पादाम्बुजोपासनं तदकाकुतश्चिद्भयं मन्ये न कुतश्चिद्भयं यस्मात्तथा भागामिदुःख(हेतु) दर्शनज प्रतिकूल ज्ञानं भयं कुतश्चिदपि तदभावस्तु मुक्तावेव सा चाच्युतपादाम्बुजोपासनादेवेत्युक्तं भवति । अनेनात्यन्तिकक्षेमो मुक्तिरेव तत्साधनं तु भगवत्पदाम्बुजोपासनमेव तदेव भागवतो धर्म इति च फलितम् । एतदेवोपपादयति भयमिति प्रकृतिपरिणामरूपे देहे आत्मभावाद्देहात्माभिमानादीश्वरतोऽपगतः भयप्रदा बुद्धिर्यस्य तस्य पुंसः एवं पूर्वावस्था कथिता यत्र यस्मिन्नच्युतस्य पादाम्बुजोपासने कृते सति सर्वात्मना सर्वप्रकारेण भीर्भयं निवर्त्तते निःशेषभयनिवृत्तिमान् मोक्षः स्यादित्यर्थः । यद्वा, कीदृशं तदुपासनमित्यत्राह—विश्वात्मना यत्रेति विश्वात्मनेति भावप्रधानो निर्देशः । विश्वस्य कृत्स्नस्य चिदचिदात्मकस्य जगत आत्मत्वेनान्तरात्मतया यदुपासने कृते सति इत्यर्थः । एवंच ब्रह्मभावाज्जीवदशायामपि भीर्भयं निवर्त्तते इति भावः ॥ ३३ ॥

ननु, सत्यं भगवदुपासनमेवात्यन्तिकक्षेमसाधनो भगवद्धर्म इति के के वा तदुपासनानुग्राहका भागवता धर्मा इत्यत आह—ये वा इति । अविदुषां पुंसामञ्जः सुखेनात्मलब्धये परमात्मप्राप्तये ये उपायाः श्रवणकीर्त्तनस्मरणपादसेवनार्चनवन्दनदास्यसख्यात्मनिवेदनादयः प्रोक्ताः पञ्चरात्रादिमुखेन कथितास्तानेव हि भागवतान् धर्मान् विद्धि । यद्वा, हि तान् उपासनानुग्राहकान् तानित्यध्याहृियते तान् भागवतान् विद्धीत्यर्थः ॥ ३४ ॥

तान् विशिनष्टि—यानिति । यान् भगवता प्रोक्तान् उपायानास्थाय सम्यक् तामनुतिष्ठन्नित्यर्थः हे राजन् ! कर्हिचिदपि न प्रमाद्येत उपायान्तरनिष्ठानामिव भगवद्धर्मनिष्ठानां प्रमादो नास्तीत्यर्थः विघ्नोपहतिर्नास्तीति भावः । तथा चोक्तम् भगवता "नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते" इति किञ्चेह भागवतधर्मेषु नेत्रे निमील्य धावन्नपि अयथावदाश्वनुतिष्ठन्नपीत्यर्थः न स्खलेत् इतस्ततो न सञ्चरेत् फलाद्विनाभूतः स्यात् न पतेच्च समरेषु महाराजपथे यथान्यत्र दृष्टान्तो अभिसंहितः यथा तस्मिन्नेत्रे निमील्य धावन्नपि न स्खलेन्न पतेच्च तद्वदित्यर्थः । तथा च स्मर्य्यते—

"याः क्रियाः सम्प्रयुक्ताः स्युरेकान्तगतमानसैः ।
ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम्" ॥

इति इतरोपायनिष्ठानां त्वयथावदनुष्ठितेभ्यस्तेभ्यः स्खलनं ततः पतनं चावश्यं भावीति सूचितम् ॥ ३५ ॥

कुतस्तस्य स्खलनादिशङ्कापि यतः सर्वशरीरेन्द्रियव्यापाराणां स्वान्तरात्मभूतपरमात्मप्रयोज्यत्वकर्तृकत्वानुसन्धानेनात्मनि कर्त्तृत्वाभिमानिनस्तदभिमानयुक्तस्खलनादिर्दूरापेत इत्यभिप्रेत्याह—कायेनेति । वाचा वागिन्द्रियेणेन्द्रियैर्वागिन्द्रियव्यतिरिक्तैर्ज्ञानकर्मेन्द्रियैरात्मना चित्तेनानुसृतः स्वभावः संसारवासना येन स तथाभूतोऽपीत्यर्थः । अनुसृतस्वभावादिति पाठे भावप्रधानो निर्देशः अनुसृतस्वप्रकृतिजगुणत्वादवश्यं कायादिभिः किञ्चित्करोति मनआदिभिः किञ्चित्सङ्कल्पयति अध्यवस्यति चेत्यर्थः । तथाचोक्तं भगवता—

"नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः" ॥

इति एवं च कायादिभिर्यद्यद्विहितमविहितमपि निषिद्धञ्च कर्म करोति तत्सर्वं नारायणायेति समर्पयेत्तादर्थ्यं चतुर्थ्यन्तनारायणपदोच्चारणेन तदर्थतामनुसन्दधीतेत्यर्थः—

"मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय ! तत्कुरुष्व मदर्पणम्" ॥

इत्युक्तं सर्वकर्मणामीश्वरार्पणं नामेदमेव यत्स्वान्तरात्मभूतपरमात्मार्थत्वानुसन्धानमिति आचार्यास्तु यद्यत्करोतीत्यस्य शास्त्राविरुद्धं लौकिकं वैदिकञ्च यद्यत् करोतीत्यर्थं इति व्याचख्युः ॥ ३६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अञ्जःशब्देति बहुवचनात् यद्भयमुत्पन्नं तदल्पबुद्धेरेकस्य बहुभिर्विचक्षणैर्युगपदुच्यमानवचनार्थावधारणं दुःशकमिति निधारयति अत्र संसारे अनित्यमङ्गलं देहादावहमित्याद्यात्मभावाद्बुद्धिमनुष्यः पुरुषस्य नित्यमच्युतस्य हेयोपादेयांशरहितस्य हरेः श्रीपादपद्मोपासनमकुतश्चिद्भयं न कुतश्चिद्भयं यस्मात्तथा तदहं मन्य इति मम राद्धान्त इत्यर्थः । विशिनष्टि विश्वात्मनेति यत्र यस्मिन्नुपासने कृते विश्वात्मना सर्वात्मना संसारभीर्निवर्तते तदेवानुष्ठेयं पुरुषेणेति ॥ ३३ ॥

हरेरङ्घ्रिनिषेवणमेव मुख्यो भागवतो धर्म इति मनसि निधाय तदङ्गत्वेनोच्यमाना येऽन्ये अपि भागवतधर्मा इत्याह—ये वा इति । आत्मलब्धये परमात्मज्ञानाय भागवतान् धर्मानिति शेषः ॥ ३४ ॥

न प्रमाद्येत अनवधानवान्न भवति "प्रमादोऽनवधानता" इत्यभिधानात् आत्मानात्मविवेकज्ञानवान् स्यादित्यर्थः । कथमित्यतोऽस्यार्थं लुप्तोपमामाह धावन्निति । यथा नेत्रे उन्मील्य धावन्निह शर्करावति स्थले न स्खलेन्न पतेत्तथा भागवतधर्मरथाधिरूढ ॥ ३५ ॥

भगवत्कथितोपायाधिकारिणः कीदृशा इति तत्राह—कायेनेति । स्वभाव यथावत्तामनुसृतोऽनुगतः मनसा सङ्कल्पाद्यधिकरणेन बुद्ध्या निश्चयज्ञानाधिकरणेन आत्मना मत्या मननलक्षणज्ञानाधिकरणेन अहं हरिमर्चयामीत्यादिलक्षणेनाहङ्कारेण वा कायादिना यद्वैदिकं लौकिकं करोति सर्वक्रियासु स्वस्यास्वातन्त्र्यज्ञानेन तत्सर्वं परस्मै नारायणायास्त्विति समर्पयेत् सोऽयमात्मप्रसादजनकत्वेन तज्ज्ञानोपाय इति भावः ॥ ३६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तन्मतमेव मन्यमान आह—मन्य इत्यादिभिः । न कुतश्चिद्भयं यस्मात्तदकुतश्चिद्भयम् आत्यन्तिकं क्षेमं नित्यं पादाम्बुजोपासनमनन्तरतत्स्फुरणादि विश्वात्मनेति तत्साधनावस्थायामपि भयाभाव निवृत्तिर्दर्शिता ॥ ३३ ॥

भागवतधर्मलक्षणमाह—ये वै इति । स्वयं भगवता "कालेन

भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययोऽस्मृतिः ।
तन्मायया‌ऽतो बुध आभजेत्तं भक्त्यैकयेशं गुरुदेवतात्मा ॥ ३७ ॥
अविद्यमानोऽप्यवभाति हि द्वयो ध्यातुर्धिया स्वप्नमनोरथौ यथा ।
तत्कर्म सङ्कल्पविकल्पकं मनो बुधो निरुन्ध्यादभयं ततः स्यात् ॥ ३८ ॥
शृण्वन्सुभद्राणि रथाङ्गपाणेर्जन्मानि कर्माणि च यानि लोके ।
गीतानि नामानि तदर्थकानि गायन् विलज्जो विचरेदसङ्गः ॥ ३९ ॥
एवं व्रतः स्वप्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः ।
हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः ॥ ४० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

"अनेकजन्मसंसिद्धस्ततो याति परां गतिम्" इति भगवद्वचनेन जन्मान्तरीयवर्णाश्रमधर्मनिष्ठासम्भवात् भागवतधर्मानुष्ठानेन सर्वपुरुषार्थोऽपि तस्य: किञ्च राजमार्गे प्रसिद्धे नेत्रे निमील्य धावन्नपि न स्खलेन्न पतेत् यथा तथा इहास्मिन् भागवते धर्मे—

"श्रुतिस्मृती उभे नेत्रे विप्राणां परिकीर्तिते ।
एकेन विकलः काणः द्वाभ्यामन्धः प्रकीर्तितः" ॥

इति स्मृत्युक्तेः । नेत्रे निमील्य श्रुतिस्मृत्युक्तं विधिं मङ्क्त्वापि धावन् अनुष्ठानक्रमे किञ्चित्किञ्चिदुल्लङ्घयन्नपि न स्खलेत् न प्रत्यवायी स्यात् न पतेत् न भ्रश्येत् अत्र इवार्थवाचकेन वाशब्देन यदिति व्यज्यते लुप्तोपमालङ्कारमाश्रित्य राजमार्गे इत्याक्षिप्यते ॥ ३५ ॥

के ते भागवता धर्मा इत्याकाङ्क्षायां शास्त्राचार्याज्ञया यथाशास्त्रमनुष्ठितं भगवत्यर्पितं सर्वं कर्म भागवतो धर्म इत्याह—कायेनेति । अनुसृतः शास्त्राचार्यैरनुगतो यः स्वभावस्तस्मात् कायेन वाचा वागिन्द्रियेण अन्यैरिन्द्रियैश्च मनसा वा मनसा हेतुभूतेन करणेन बुद्ध्या बोधनहेतुभूतेन करणेन आत्मना चिन्तनहेतुभूतेन करणेन वा यद्यद्वचनादिकं करोति तत्सर्वं परस्मै नारायणाय परब्रह्मणे मत्प्रेरकसमूहनियन्तृतायाश्चित्वाति समर्पयेत्—

"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय ! तत्कुरुष्व मदर्पणम्" ॥

इति श्रीमुखवचनाच्च एवं सति परस्मिन्नर्पितं शास्त्रीयं सर्वं कर्म भागवतो धर्म इति भावः ॥ ३६ ॥

———

भाषा टीका ।

कविरुवाच ॥

कवि नामक योगेश्वर बोले, कि—हे निमिराज ! हम तो इसी को आत्यन्तिक क्षेम मानते हैं, कि—इस संसार में सदा निर्भय अच्युत चरणारविन्द की उपासना करना, जिस उपासना के करने से असत् देहादिक में आत्माभिमान होने से उद्विग्न बुद्धिवाले पुरुष की सर्व प्रकार भय की निवृत्ति होजाती है ॥ ३३ ॥

जो उपाय भगवान् ने अपनी प्राप्ति के लिये स्वयं आपने कहे हैं, कि—जिनसे अविद्वान् पुरुष भी सुख पूर्वक आपको प्राप्त होसकै उनहीं उपायों को आप भागवत धर्म समुझो ॥ ३४ ॥

हे राजन् ! वे भागवत धर्म कैसे है ? कि—जिनका अनुष्ठान करता हुआ पुरुष कभी भी प्रमाद को नहीं प्राप्त हो सकता है । अर्थात् उपायान्तर निष्ठों की तरह भागवत धर्म निष्ठ पुरुषों का प्रमाद से कार्य प्रतिहत नहीं होता है, अन्य उपाय में लगने से तो किञ्चित् चूकने पर भी पतन होजाता है, परंच राज मार्ग में जैसे नेत्र निमीलन कर दौड़ने से भी नहीं गिरता है इसी प्रकार भागवत धर्मों के अनुष्ठान करने में नेत्र बंद कर दौड़ते पर भी पतन नहीं होता है । यहां पर श्रुति स्मृति दोनों का ज्ञान होना ही दोनों नेत्रों का खोलना है, और वर्णाश्रम के विहित धर्मों का नहीं उल्लंघन करना ही मार्ग में चलना है, किंतु भागवत धर्मनिष्ठ होकर श्रुति स्मृति का ज्ञान भी न करै तब मानों नेत्र बंद करना भया, और विहित धर्मों का बीच २ में उल्लंघन करना ही मानों दौड़ना भया, तथापि भागवत धर्म निष्ठको पतन का भय नहीं है क्योंकि—यह राज मार्ग का प्रभाव है ॥ ३५ ॥

काय वाणी मन इन्द्रिय बुद्धि चित्त अथवा अपने स्वभाव से जो २ कुछ शास्त्राविरुद्ध लौकिक और वैदिक कर्म करै, तिसको परम पुरुष श्रीनारायण को समर्पण करता जावै, अपने शरीरादि के व्यापारों को ऐसा मानै कि—मैं प्रयोज्य कर्त्ता हूं नारायण की प्रेरणा से इन कार्यों को करता हूं इस प्रकार स्वतंत्र कर्तृत्व का अनुसंधान न होने से तत्प्रयुक्त पतनादि इसको नहीं होगा । और कुत्सित कर्म से निवृत्ति तो स्वरूपानुसंधान से ही सिद्ध है ॥ ३६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, किमेवं परमेश्वरभजनेन अज्ञानकल्पितभयस्य आत्मैकनिवर्त्यत्वादित्याशङ्क्याह—भयमिति । यतो भयं तन्मायया अतो बुधो बुद्धिमांस्तमेवाऽऽभजेत् ननु, भयं देहाद्यभिनिवेशतो भवति स च देहाहङ्कारतः स च स्वरूपास्मरणात्किमत्र तस्य

श्रीधरस्वामिकृतभावार्थदीपिका ।

माया करोत्यत आह, ईशादपेतस्येति । ईशाद्विमुखस्य तन्मायया अस्मृतिर्भगवतः स्वरूपास्फूर्तिस्ततो विपर्ययो देहोऽहमस्मीति ततो द्वितीयाभिनिवेशाद्भयं भवति एवं हि प्रसिद्धं कोऽपि मायास्तु उक्तं च भगवता—

"दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" ॥ इति ।

एकयाऽव्यभिचारिण्या भक्त्या भजेत् किञ्च, गुरुदेवतात्मा गुरुरेव देवता ईश्वर आत्मा प्रेष्ठश्च यस्य तथाभूतः सन्नित्यर्थः ॥ ३७ ॥

ननु, विषयविक्षिप्तचित्तस्य कुतोऽव्यभिचारिणी भक्तिः सम्भवति? कुतस्तरामभयम? तत्र न तावद्द्वितीयो नाम वास्तवोऽस्ति किन्तु मनोविलासमात्रमतो मनो नियमेन भजनादभयं स्यादित्याह—अविद्यमानोऽपीति । द्वयः द्वैतप्रपञ्चः ध्यातुः पुंसो धिया मनसा स्वप्नश्च मनोरथश्च यथेत्यर्थः । तत्तस्मात्कर्माणि सङ्कल्पयति विकल्पयति च यन्मनस्तन्निरुन्ध्यान्नियच्छेत् ततश्च एकया भक्त्या भजनादभयं स्यादित्यर्थः ॥ ३८ ॥

एतदत्यन्ताशक्यमित्याशङ्क्य सुगमं मार्गमाह—शृण्वन्निति । तदर्थकानि तान्येव जन्मानि कर्माणि चाणो येषां तानि एतान्यपि साकल्येन ज्ञातुमशक्यानीत्याशङ्क्याऽऽह, यानि लोके गीतानि प्रसिद्धानि तानि शृण्वन् गायंश्च विचरेत् असङ्गो निःस्पृहः ॥ ३९ ॥

एवं च भजतः सर्वापेक्षितसाधनसिद्धियोगस्य संसारधर्मातीतां गतिमाह—एवमिति । एवं व्रतं वृत्तं यस्य सः स्वप्रियस्य हरेर्नामकीर्त्या जातोऽनुरागः प्रेम यस्य सः अत एव द्रुतचित्तः श्लथहृदयः कदाचिद्धक्तपराजितं भगवन्तमाकलय्योच्चैर्हसति एतावन्तं कालमुपेक्षितोऽस्मीति रोदिति अत्यौत्सुक्याद्रौति क्रोशति हे हरे ! मामनुगृहाणेति अतिहर्षेण गायति जितं जितमिति नृत्यति, किं हासितकृतपरान्पति प्रकाशयितुम? न, उन्मादवद्ग्रहगृहीतवत् लोकबाह्यः विवशः ॥ ४० ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

ज्ञानैकनिवर्त्यत्वात् रज्ज्वां भुजङ्गबुद्ध्या जातस्य भयस्य यथा रज्जुस्वरूपज्ञानेन निवृत्तिः स्यात् तथा स्वरूपाज्ञानकल्पितभयस्य स्वरूपज्ञानमात्रेण निराक्यत्वात् परमेश्वरभजनेन किमित्याक्षेपः स च देहाद्यभिनिवेशः सच देहाहङ्कारः स्वरूपास्फुरणात् स्वस्वरूपाज्ञानात् अत्र भयादिषु मध्ये माया किं कार्यं करोति तन्मायया तस्य भगवतो जगदधिकारिण्या यमवद्भक्तद्गदकारिणा कस्यां स्वरूपास्फूर्तिः जीवस्वरूपाविस्मृतिः कार्यते ततः स्वरूपास्फूर्तेः ततो विपर्ययात् गीतायां मामेव ये प्रपद्यन्ते इति स्वप्रपत्तेरेव मायानिवारकत्वेनाभिप्रेता ननु ज्ञानमात्रं तस्माज्ज्ञानेन ज्ञानं न वाक्यमात्रात् "रहूगणैतत्तपसा न याति न चेज्यया निर्वपणाद्गृहाद्वा" इत्याद्युक्तेः सर्वभयादिरोगस्य वैमुख्यनिदानत्वादेवेति ॥३७॥

नन्विति शङ्कासमाधानाभासस्तत्र नन्वित्यारभ्य कुतस्तराममयमित्येतत्पर्यन्तः शङ्काग्रन्थोऽन्यत् समाधानमिति अव्यभिचारिणी भक्तिर्यदि भक्तिमात्रे मायोपशान्तिपूर्वकस्वरूपज्ञानाविकम्भेन न स्यात्तदा कुतस्तराममयमित्यर्थः । तत्र तस्यामाशङ्कायाम् अतः विषयस्य मनोविलासमात्रत्वात् भजनात् मायादिनिवृत्तिद्वारा भयं स्यादित्यर्थः । अविद्यमानोऽपि वस्तुतोऽसन्नपि स्वप्नमनोरथौ यथेति असतोऽपि मनसा भाने दृष्टान्तः स्वप्नश्च मनोरथश्चेति विग्रहवाक्यं स्वप्नमनोरथौ यथेति पाठे सर्वोऽपि द्वन्द्वो विभाषयैकवद्भवतीति न्यायात् "ऊकालोऽज्झ्रस्वदीर्घप्लुतः" इति वदेकवचनं पुंस्त्वञ्च अत एवेत्यर्थः इत्युक्तं तस्माद्द्वैतप्रपञ्चस्य मनोविलासमात्रत्वात् सङ्कल्पविकल्पयोः सामान्यविशेषविचिन्तनत्वेन भेदो ज्ञेयः । ततश्च मनोनिरोधे सति एकया अव्यभिचारिण्या भक्त्या तच्छब्देन मनोनिरोध एव वाच्यः स्यादेकयेत्यादि किन्तु आर्थिकमेवाकृष्यत इत्यर्थं इत्युक्तम् ॥ ३८ ॥

एतन्मनोनिरोधेन भजनम् अत्यन्ताशक्यं दुष्कराणाङ्गमयत्वात् "अनुः पुंसामविदुषाम" इत्युक्तेः सुगममार्गमाह—अर्थो वाच्यार्थः "नागृहीतविशेषणा" इति न्यायेन तत्तज्जन्मकर्मकाणामपि वाच्यानि तत्र जन्मार्थकानि नामानि देवकीनन्दनो यशोदानन्दन इत्यादीनि कर्मार्थकानि तु कंसारिर्मुरारिर्मधुसूदन इत्यादीनीति ज्ञेयम् ॥ ३९ ॥

एषञ्च श्रवणकीर्त्तनादिप्रकारेण नत्वं जन्मकर्मनामश्रवणगानाद्याचरणाम् अत एव जातानुरागत्वात् कदाचिद्धामघन्यनादिषेलायां नामकीर्त्येति तृतीया श्रुत्या सर्वोङ्गसर्वो नामकीर्त्तनस्यैवानुरागजनने साधकतमत्वं दर्शितम् ॥ ४० ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भयं द्वितीयेति । द्वितीयाभिनिवेशात् अब्रह्मात्मकस्वतन्त्राभिनिवेशतः लोके सद्वितीयव्यवहारो हि स्वस्मात् शरीरव्यतिरिक्तद्वितीयपरः यथा देवदत्तः सद्वितीय आगत इत्युक्तेः शरीरमन्तरेण सद्वितीयत्वाद्युक्तं स्यान्न तु स्वशरीरेण "यस्यात्मा शरीरम्" इति श्रुतिश्च जीवानां परमात्मशरीरत्वोक्तेः स्वतन्त्राभिमान उक्तः अत एव ईशादपेतस्य भगवद्विमुखस्य विपर्ययस्मृतिः विपर्ययः देहात्माभिमानः तद्विषयस्मृतिः तन्मायया भगवदधीनया प्रकृत्या देहात्मभ्रान्तिरब्रह्मात्मकस्वतन्त्रात्मभ्रान्तिश्चेत्युभयविधापि भ्रान्तिः भगवन्मायायत्ता तस्मात्तन्निवृत्तये भगवन्तं भजेदित्यर्थः । गुरुदेवतात्मा गुरुरेव देवतेति बुद्धियुक्तस्य सः ॥ ३७ ॥

अविद्यमानोऽपि द्वितीयः द्वयः स्वतन्त्रात्मभ्रमश्चेत्युभयमविद्यमानमप्यामाणिकम् उभयविधभ्रमोऽपि मानसः अतस्तन्निवृत्तये कर्माणि सङ्कल्पविकल्पकं सङ्कल्पो देहादिरक्षणोचिन्ता विकल्पः स्रक्चन्दनादिचिन्तादिकतारः एतत्सर्वं मनःकृत तस्मात् मनो निरुन्ध्यादित्यर्थः । तत अभयं स्यात् भगवच्छरीरभूतोऽस्मीति बुद्धिः स्यादित्यर्थः ॥ ३८—३९ ॥

एवंव्रत इति बहुव्रीहिः स्वप्रियस्य स्वस्य प्रीतिविषयो भगवान् तस्य नामकीर्तनादित्यर्थः ॥ ४० ॥

———

खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन् ।
सरित्समुद्रांश्च हरेः शरीरं यत्किञ्च भूतं प्रणमेदनन्यः ॥ ४१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, स्वकृत्यार्पणादिनेश्वरभजने को हेतुरित्यत्राह-भयमिति । "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्रुतिप्रोक्तया मायया अनादिरूपया त्रिगुणया ईशादपेतस्य भगवत्पराङ्मुखस्य अस्मृतिः एव परस्यांशः "ममैवांशो जीवलोके" इति श्रुतिस्मृतिप्रसिद्ध-भगवदीयत्वस्मृत्यभावः भगवदीयत्वाभिमान इत्यर्थः । ततो विपर्ययः देहात्माभिमानः ततो द्वितीयाभिनिवेशतः द्वितीये अनात्मनि आत्मत्वाभिमानस्ततः भयं पुनः पुनः जन्ममरणलक्षणसंसारभयं स्यात् अतो हेतोः स्वकृत्यार्पणादिना एकया अव्यभिचारिण्या भक्त्या तमीशं भयनिवृत्तये आभजेत् । ननु, संसारस्तु हरिमायया भवति तद्भजनकारिचः कुतः स्यादित्यत्राह, गुरुदेवतात्मा बुध इति गुरौ उपदेशकर्तरि देवतायां उपदेष्टये उपास्ये भगवति आत्मा तद्भजन-कृतिचारिणा परा बुद्धिर्यस्य सः तयोः कृपया बुधः सन् ईशादपे-तस्य हेतुभूतायाः मायया उपास्योपासकयोश्च स्वरूपादिविस्मृतेः तमाभजेदित्यर्थः ॥ ३७ ॥

अभिमानद्वये हेतुभूतस्य मायाकार्यस्य मनसो नियमनं तन्नि-यमनफलञ्चाह-अविद्यमान इति । यथा स्वप्नमनोरथौ मत्यंस्यासत्-मात्ररूपौ जागरस्वप्नावस्थयोः अविद्यमानावपि कर्मविशेषफल-सिद्ध्यं परमेश्वरेण प्रवर्त्तितौ प्रतीयेते तथोक्ताभिमानयोर्द्वयः ज्ञानमेव मिथ्यमानापि ध्यातुरसिमन्तुर्द्धिया मनसा यतो अवभाति प्रतीयते तस्मात् कर्माणि सङ्कल्पयति विकल्पयति च यन्मनस्त-द्वधः निरुन्ध्यात् शास्त्रोक्तात्मानात्मपरमात्मतत्त्वानिष्ठं कृत्वोक्ता-भिमानद्वयाभिचारयेत् ततस्तत्त्वज्ञाने जाते भगवद्भजनेनाभयं स्यात् ॥ ३८ ॥

शास्त्रोक्ततत्त्वत्रयविवेकवतो निवृत्ताभिमानद्वयस्य कर्त्तव्य-विशेषमवस्थाविशेषञ्चाह—शृण्वन्निति त्रिभिः । रथाङ्गपाणेः चक्रहस्तस्य विष्णोः सुभद्राणि शृण्वतां कल्याणावहानि जन्मानि कर्माणि शृण्वन् कथयन् च तदर्थकानि जन्म-कर्माण्यवतरणानि गीतानि नामानि गायन् शृण्वन् च असङ्गः अनन्यासक्तिरहितो भूत्वा विचरेत् रथाङ्गपाणिजन्मादीना-मानन्त्य सूचयितुं तानि विशिनष्टि यानि लोके इति ॥ ३९ ॥

एवंव्रत इति । एवम्भूतं रथाङ्गपाणिजन्मादिश्रवणाद्यात्मकं व्रतं यस्य सः बुधः स्वप्रियस्य हरेर्नामनाम अतिजनेनापि जिह्वया गृह्यमाणानां या [illegible] सकलतपोयज्ञतीर्थस्नानादिफलदं परा तया जातानुरागः उत्पन्नप्रेमोद्रेकः अत एव द्रुतचित्त-उत्कलितत्वात्ततः अत एव लोकबाह्यलक्षणः उन्मादवत् ग्रहा-विष्टवत् मानापमानव्यवहारातीत इत्यर्थः । आत्मानं भगव-दीयत्वेन सतां अन्तोऽर्हंसति अनादिकालतो माया-मोहिततया भगवत्पराङ्मुखत्वात्मानं संस्मृत्य संस्मृत्य कदा-चित्कृतापराधवत् रोदिति कदाचिद्रौति क्रोशति भक्ति-प्रणयकं प्रति आक्रोश करोतीत्यर्थः । प्रेमातिशयेन गायति नृत्यति च ॥ ४० ॥

भाषा टीका ।

द्वितीय के अभिनिवेश से अर्थात् अपने आत्माको पर-मात्मा परतंत्र शरीर रूप न मानकर तत् व्यतिरिक्त स्वतन्त्रा त्माभिमान से भय होता है, अत एव श्रीहरि से विमुख पुरुष का देह में आत्माभिमान रूप विपर्यय होजाता है, तब पर-आत्मा का शरीर रूप यह मेरा आत्मा है इसका विस्मरण होजाता है, ये सब भी उनही की माया से होता है इसी हेतु से बुद्धिमान् पुरुष गुरु में देव बुद्धि रखकर एक भक्ति से उसी परमेश्वर को भजे, कि—जिससे माया दूर रहे ॥३७

भलाँ ईश्वर की माया से भी देह में आत्म बुद्धि और भग-वत्परतंत्र आत्मा में स्वतन्त्रात्म बुद्धि कैसे होसक्ती है तहां कहते हैं, कि—अनात्मभूत शरीर में आत्माभिमान और अस्वतंत्र आत्मा में स्वातंत्र्याभिमान ये दोनों अविद्यमान भी हैं, तो भी ध्याता पुरुष के मन से भान होते हैं । जैसे कि—स्वप्न का मनोरथ अस्थिर है, तो भी स्थिर सरीखा भान होता है । तस्मात् बुद्धिमान् पुरुष कर्मों का सङ्कल्पविकल्प करने वाले मनही का निरोध करै तब आपही अभय होजायगा ॥ ३८ ॥

यदि विचारो कि मन तो बड़ा चंचल है उसका निरोध कैसे होगा ? तहां उपाय बतलाते हैं, कि—श्रीचक्रपाणि भगवान् के सुन्दर मंगलरूप जन्म और कर्मों की कथाओं का श्रवण करता हुआ, और लोक में जो आपके तदर्थक नाम महात्माओं ने गाये हैं, उन नामों का गान करताहुआ, निःसंग और निर्लज्ज होकर संसार में विचरे ॥ ३९ ॥

इस प्रकार के व्रत को धारण कर अपने परम प्रिय परमानन्द के नाम सङ्कीर्तन से जब अनुराग उत्पन्न हो जाता है, तब उसी चित्त से कभी भगवान् को भक्तों से पराजित समझकर ऊंचे स्वर से हंसने लगता है, कभी उत्कण्ठा बढ़नेपर चिल्लाने लगता है, कभी हर्ष होने से गाने लगता है, कभी प्रभु में जीत गया ऐसा विचार कर नाचने लगता है, तो क्या ये सब औरों को दिखाने के लिये करता है ? नहीं, जैसे कोई उन्माद से विवश होजाय उसी प्रकार यह भक्त भी विवश होकर चेष्टा करता है ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च खमिति सत्त्वानि भूतानि आकाशादि यत्किञ्चिद्भूत-मात्रं हरेः शरीरमिति मत्वा प्रणमेत् सम्भावनायां लिङ् ॥ ४१ ॥

भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककालः ।
प्रपद्यमानस्य यथाऽश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् ॥ ४२ ॥
इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः ।
भवन्ति वै भागवतस्य राजंस्ततः परां शान्तिमुपैति साक्षात् ॥ ४३ ॥
( सन्न्यस्तदण्डः कृतभूतमैत्रो विगाढचेता भगवत्यधोक्षजे ।
पुनाति लोकत्रयमङ्घ्रिरेणुभिः शुद्धस्वभावस्तरणिर्यथोदितः ॥ ० ॥ ) इति वीर० म० पाठः ।

राजोवाच ।

अथ भागवतं ब्रूत यद्धर्मो यादृशो नृणाम् ।
यथा चरति यद्ब्रूते यैर्लिङ्गैर्भगवत्प्रियः ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वेवमारूढयोगानामपि बहुजन्मभिर्दुर्लभा गतिः कथं नामकीर्तनमात्रेणैकस्मिन्नेव जन्मनि भवेदित्याशङ्क्य सदृष्टान्तमाह, भक्तिरिति । प्रपद्यमानस्य हरिं भजतः पुंसो भक्तिः प्रेमलक्षणा परेशानुभवः प्रेमास्पदभगवद्रूपस्फूर्तिः तया निर्वृतस्य ततोऽन्यत्र गृहादिषु विरक्तिरित्येष त्रिक एककालो भजनसमकाल एव स्यात् यथाऽश्नतो भुञ्जानस्य तुष्टिः सुखं पुष्टिरुदरभरणं क्षुन्निवृत्तिश्च प्रतिग्रासं स्युः उपलक्षणमेतत् प्रातिस्विकमपि यथा स्युस्तद्वत् एवमेकस्मिन् भजने क्रियमाणे भक्त्यादित्रिके जायमाने अनुवृत्त्या भजतः परमप्रेमादि जायते बहुग्रासभोजन इव परमतुष्ट्यादि ॥ ४२ ॥

ततश्च भगवत्प्रसादेन कृतार्थो भवतीत्याह—इत्यच्युताङ्घ्रिमिति ॥ ४३ ॥

भागवतस्य भवन्तीत्युक्ते तस्य लक्षणं पृच्छति—अथेति । यद्धर्मो यस्मिन् धर्मे परिनिष्ठितः यादृशो यत्स्वभावः यथा चरति वर्तते ब्रूते वा यैश्च लिङ्गैर्भगवतः प्रियो भवति ॥ ४४ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी ।

हरेः शरीरं श्यामसुन्दरपीतवसनादिरूपं सम्भावनायां लिङ्ति अनुरागेण सर्वत्र तत्स्फूर्त्या तत्प्रणामः सम्भवत्येवेत्यर्थः । सर्वभूतेषु यः पश्येदिति वक्ष्यमाणत्वात् तत्र हेतुः अनन्यः स्फूर्त्यर्थान्तरशून्य इत्यर्थः । "या निशा सर्वभूतानाम्" इत्यादेः "नारायणमयं धीराः पश्यन्ति परमार्थिनः जगद्धनमयं लुब्धाः कामुकाः कामिनीमयम्" इत्यादेश्च ॥ ४१ ॥

इयं गतिः सर्वत्र तत्स्फूर्तिलक्षणा सदृष्टान्तामिति सदृष्टान्तं यथा स्यात्तथा प्रेमस्फूर्तिविरक्तीनां यौगपद्यमाह, तत्र जातानुराग इत्यनेन प्रेमोक्तं च वायुमित्यनेन स्फूर्तिः लोकबाह्य इत्यनेन च विरक्तिरिति अत्र तु तत् त्रयमुद्दिश्यैककालत्वमात्रं विधीयते 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायात् "प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः । अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः" इत्युक्तेश्च । तथा स्फुरणं ततो भगवद्रूपादन्यत्र अत्र भक्तितुष्ट्योः सुखरूपत्वात् साम्यम् परेशानुभवपुष्ट्योरात्मभरणरूपत्वात् साम्यम् विरक्तिक्षुदपाययोश्चान्यत्र वैतृष्ण्यरूपत्वात् साम्यमिति ज्ञेयम् ॥ ४२ ॥

ततश्च भक्त्यादित्रिकोत्पत्त्यनन्तरम् अनुवृत्त्याऽभ्यासेन परां शान्तिमात्यन्तिकं क्षेमम् ॥ ४३ ॥

तस्य भागवतस्य अथ तज्ज्ञानार्थम् अनन्तरमेव भागवतं ब्रूत यस्मिन् धर्मे परिनिष्ठितस्तं धर्मं ब्रूत यत्स्वभावस्तं स्वभावं ब्रूत यथा वर्तते तद्वर्तनं ब्रूत यद्ब्रूते तद्वचनं ब्रूत यैर्लिङ्गैस्तानि लिङ्गानि ब्रूत ॥ ४४ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सत्त्वानि जन्तूनि ॥ ४१ ॥

परेशानुभवः ईश्वरस्वरूपगुणादिविषयं तत्त्वज्ञानम् अन्यत्र शब्दादौ विरक्तिः तुष्टिः मनःप्रसादः पुष्टिः शरीरपोषणं क्षदपायः जाठराग्निना शरीरगतास्थ्यादिदाहः क्षुत्तन्निवृत्तिः अनुघासं प्रतिग्रासम् ॥ ४२ ॥

शान्तिम् अशनायापिपासाशोकमोहजरामरणाख्योर्मिषट्कप्रशमम् ॥ ४३ ॥

भागवत भगवद्भक्तं यद्धर्म इति श्रीभगवदर्चनसर्वकर्मार्पणरूपधर्मयुक्तः यादृशभावनायुक्तः चरतीति यद्वक्ष्यति यज्जानाति श्रीभगवत्प्रभावं तत्त्वत्रयं च मन्त्र श्रीभगवद्गुणान् लिङ्गानि च शङ्खचक्रधारणोर्ध्वपुण्ड्रधारणतुलसीकाष्ठादिपञ्चरात्रादिप्रसिद्धानि अन्यानि चेति प्रश्नार्थः ॥ ४४ ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

उपायान्तरमप्याह—खमिति। खमाकाशं सत्त्वानि जन्तून् आकाशादीनि यत् किञ्चिद्भूतमात्रं च हरेः शरीरमिति मत्वा प्रणमेत्, कथम्भूतः? अनन्यः स्वयमपृथक्सिद्धः स्वात्मन्यपि भगवच्छरीरतां भावयन्नित्यर्थः। इत्थं जगच्छरीरकब्रह्मभावनया शान्तं मनो निरुद्धं भवतीति भावः ॥ ४१ ॥

ननु, मनोनिरोधोपायानुष्ठानेनैवायुरत्यल्पमुपैति कदा वा मनोनिरोधः? कदा वा भगवद्भक्तिश्च स्यात्? इत्यत आह—भक्तिरिति। परेशानुभवः ईश्वरस्वरूपरूपगुणादिविषयं तत्त्वज्ञानं भक्तिः प्रीतिरूपं ध्यानमन्यत्र शब्दादिविषयेषु विरक्तिश्चेत्येतत्त्रिकं प्रपद्यमानस्यैककालं युगपदेव भवतीत्यर्थः। प्रपद्यमानस्येत्यनेन युगपद्भक्त्यादि(त्रिक)साधनतया भगवच्चरणारविन्दशरणागतिरत्रोपदिश्यते नन्वेकया प्रपत्त्यापि कथमेतत्त्रिकं युगपत् स्यादित्यत्र (तद्) दृष्टान्तमुखेनोपपादयति—तथाऽश्नत इत्यादिना भवन्ति वै भागवतस्येत्यन्तेन। तुष्टिरश्नत्तुष्टिः पुष्टिः शरीरपोषः क्षुदपायः जाठराग्निना शरीरगतधात्वादिदाहः क्षुत् तन्निवृत्तिश्चेत्येतत् त्रिकमनुघासं प्रति ग्रासमश्नतः भुञ्जानस्य युगपदेव भवतीति ॥ ४२ ॥

इतीति तथेत्यर्थः। भागवतस्य भगवत्प्रपन्नस्यानुवृत्त्या शनैरच्युताङ्घ्रिं भजतः पुंसः भक्तिर्विरक्तिर्भगवत्प्रबोधः परेशानुभवश्च भवन्ति, भवन्तु, ततः किमत आह—राजन्नित्यादि। हे राजन्! ततो भक्त्यादिरूपः साक्षात्परां शान्तिमशनायापिपासाशोकमोहजरामरणाख्योर्मिषट्कप्रशमं मोक्षमिति यावत् उपैति प्राप्नोति परं शान्तिमितिपाठे अशनायाद्यूर्मिषट्करहितं परं परमात्मानम् उपैति ॥ ४३ ॥

न केवलमित्थंभूतः स्वयमेवोपैत्यपितु अन्यानपि तत्प्राप्तियोग्यान् करोतीत्यभिप्रेत्याह—सन्त्यक्तेत्यादि इति। सन्त्यक्तदराङ्गभूतब्राह्यर्हितः भगवत्पदाम्बुजे विगाढं निमग्नं चेतो यस्य सः अत एव शुद्धस्वभावोऽङ्घ्रिरेणुभिर्लोकत्रयं पुनाति तत्र दृष्टान्तः यथोदितस्तरणिः सूर्यस्तद्वदित्यर्थः ॥ ० ॥

भवन्ति वै भागवतस्येत्युक्तं तस्य लक्षणं पृच्छति—अथेति। भागवतं भगवत्प्रपन्नं ब्रूत यद्धर्मः यो मोक्षधर्मो यस्य स इति बहुव्रीहिः नृणां मध्ये यादृशः यत्स्वभावः यथा चरति तस्याचारः कीदृश इति प्रश्नः यैर्लिङ्गैर्भगवत्प्रियः लक्ष्यत इति शेषः ॥ ४४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इदानीमेवंविधोपासकस्य हरेरुपासनार्थमधिष्ठानविशेषमाह—खं वायुमित्यादिना। खादीनां यानि यानि शब्दप्रवृत्तिनिमित्तानि तानि सर्वाणि हरेरधीनत्वेन तदेकनिष्ठगुणावेदकानि उपासकानां च ह्यसदोग्यतावशात् तत्तदधिष्ठानत्वाहुल्यं चोपयुज्यते. हरेरात्मस्थानत्वादेषु तदुपासनाविधानमिति भावेनाह—हरेरिति। यत्किञ्च भूतमुत्पन्नं तस्मिन् हरेः शरीरं विषयभोगायतनत्वाद्वा वासस्थानं "यः पृथिव्यां तिष्ठन् पृथिव्याः" इत्यादिश्रुतेः। प्रकर्षेण मनस्तद्गतं कुर्यात् किं तदभेदेन? नेत्याह, अनन्यमिति। अन्यः स्वामी न विद्यते यस्य सोऽनन्यः तं ब्रह्मादिप्राणित्वेन सर्वस्य तच्छरीरत्वात्तदभेदेन उपासनोऽप्यते चेतिचेन्न "सर्वं हरेर्वशत्वेन शरीरं तस्य भण्यते" इत्यादिविरोधात् ॥ ४१ ॥

एवं स्वाद्यधिष्ठानेषु सन्निहितस्य हरेरन्तर्यामित्वेन न तत्स्वामित्वेन चोपासना भक्त्यादिपुष्टिं करोति नान्यथेति सोदाहरणमाह, भक्तिरिति। स्वादिषु स्थितं हरिं प्रपद्यमानस्योपासीनस्य तथा परे परमात्मनि भक्तिः स्वं स्वस्मिन्ननुभवो स्वान्तःस्थज्ञानम् अन्यत्र संसारे विरक्तिरित्येव त्रिकः त्रिकत्वमङ्कुरवत् प्राप्त एककालः स्यादिति शेषः। यथा बुभुक्षोरश्नतः पुंसोऽनुग्रासं प्रतिकवलं क्षुदपायः पुष्टिरुदरपूर्तिलक्षणा तुष्टिरन्नस्वादुश्चेत्येतत्त्रयं स्यात् ॥ ४२ ॥

पूर्वोक्तार्थमनूद्य तत्फलमाह—इतीति। प्रीत्या भजतोऽस्यानन्तरं भगवत्प्रबोधः भगवद्वरोक्षज्ञानमनन्तरं पूर्वस्मादधिका समारविरक्तिरनन्तरम् अधिका भक्तिरित्येतानि साधनानि भागवतस्य भवन्तीति यस्मात्ततोऽनन्तरं साक्षात्तु परां भक्त्यालक्षणां परामुक्तां शान्तिं स्वयोग्यां मुक्तिमुपैतीत्यर्थः। अत्र पूर्वाधिक्यविशेषणवत् प्रबोधादीनां हेतुमद्भावकथनं न विरुद्धमिति ज्ञातव्यम् ॥ ४३ ॥

भगवत्सम्बन्धी भागवत इति सामान्यतो ज्ञातवतोऽपि विशेषविवक्षया लोकोपकाराय पृच्छति—अथेति। अथ प्राप्तावसरः पृच्छामीति शेषः। किं तत्राह, भागवतमिति। भागवतमुत्तममध्यमाधमसंज्ञं यद्धर्मः किं धर्मः यादृशः कीदृशः यथा कथम् ॥ ४४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

ततः श्रीभगवतः सर्वत्र स्फूर्तेः खं वायुमिति सत्त्वानि भूतानि आकाशादिकं यत्पश्यति तत्तदनुरागातिशयेन "जगद्धनमयं लुब्धाः कामुकाः कामिनीमयम्" इतिवत्स्वरः शरीरं श्यामसुन्दरपीतवसनादिरूपमेव पश्यन् प्रणमेत् तत्र तत्र भक्त्या नम्रात्मा भवतीत्यर्थः। तत्र हेतुः अनन्यः स्फूर्त्यन्तररहित इत्यर्थः। "या निशा सर्वभूतानाम्" इत्यादेः ॥ ४१ ॥

ननु, पूर्वं पादाम्बुजोपासनमित्यादिना तादृशतत्स्फूर्तिमयं फलमुद्दिष्टम् एवं व्रत इत्यादिना तत्प्रेम, लोकबाह्य इत्यनेन वैराग्यं चेति क्रमो गम्यते। स च न सम्भवति मिथः सापेक्षत्वात् योगपद्ये च परस्पराश्रयो दोषः स्यात् तदेतदाशङ्क्य योगपद्यमेव दृष्टान्तेन साधयति—भक्तिरिति। तत्र भक्तितुष्ट्योः सुखरूपत्वात् परेशानुभवपुष्ट्योस्तत्तदनुभवरूपत्वात् विरक्तिक्षुदपाययोरन्यत्र वैतृष्ण्यरूपत्वात्साम्यम् ॥ ४२ ॥

परां शान्तिम् आत्यन्तिकीं मुक्तिमित्यर्थः ॥ ४३ ॥

अथेति। अथानन्तरं भागवतं ब्रूत तज्ज्ञानार्थं स च नृणां मध्ये यद्धर्मो यः स्वभावस्तं कथानि ब्रूत यथा च स आचरति अनुतिष्ठति तदनुष्ठानं ब्रूत यद्ब्रूते तद्वचनं च ब्रूतेति मानसकायिकवाचिकलिङ्गपृच्छा। ननु, पूर्वं "शृण्वन् सुभद्राणि रथाङ्गपाणेः" इत्यादिग्रन्थेन तत्तल्लिङ्गं श्रीकविनैवोक्तम् सत्यं तथापि पुनस्तत्तदनुवादेन तेषु लिङ्गेषु यैर्लिङ्गैः स भागवतप्रियो यादृश उत्तममध्यमतादिभेदो विविक्तो भवति तानि लिङ्गानि विविच्य ब्रूहीत्यर्थः ॥ ४४ ॥

---

## हरिरुवाच ।

सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः ।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥ ४५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तत्र च—

"नारायणमयं धीराः पश्यन्ति परमार्थिनः ।
जगद्धनमयं लुब्धाः कामुकाः कामिनीमयम्" ॥

इति पौराणिकवाक्यस्योदाहरणीभवतीत्याह—खमिति । प्रणमेदिति सम्भावनायां लिङ् खवाय्वादिषु यत्र यत्र दृष्टिः पतेत्तत्र हरेः शरीरं श्यामसुन्दराकारमेव स्फुरति पश्यतीत्यर्थः । यद्वा, भक्तस्य फलप्राप्तिदशां निर्वर्ण्य पुनः साधनदशायां किञ्चिद्विवृणोति, खमिति । हरेः शरीरमधिष्ठानं ज्ञात्वा प्रणमेत प्रणाम्यं भवेत् न विद्यतेऽन्यः कृष्णं विना सेव्यो यस्य सः ॥ ४१ ॥

भक्तिमार्गेऽस्मिन्नतिसुखेन साधनदशायामपि फलप्राप्तिं सदृष्टान्तमाह-भक्तिः श्रवणकीर्त्तनादिः परेशस्येष्टदेवस्य कृष्णस्य यदा भवेत्तदैव अनुभवो माधुर्यास्वादोऽपि तदनुरूपो भवेत् तदैव अन्यत्र मायिकविषयसुखे विरक्तिरपि तदनुरूपा भवेदित्येवं त्रिक एककालः समकालोत्पन्न एव प्रपद्यमानस्य कृष्णं भजतो जनस्य भवति यथाऽश्नतो भुञ्जानस्य जनस्य तुष्टिः सुखं पुष्टिरुदरभरणं क्षुन्निवृत्तिश्च स्युः इति घासं प्रतिग्रासं स्युः उपलक्षणमेतत् प्रतिसिक्थमपि यथा स्युस्तद्वत् यथा भुञ्जानस्य किञ्चिन्मात्रायां तुष्टौ सत्यां किञ्चिन्मात्री पुष्टिः किञ्चिन्मात्र एव क्षुदपायस्तथैव भजतो जनस्य किञ्चिन्मात्रश्रवणकीर्त्तनादिभजने कृते किञ्चिन्मात्र एव परेशानुभवः किञ्चिन्मात्रैव विरक्तिश्च भवेत् यथैव च बहुभोजने सम्पूर्णा एव पुष्टितुष्टिक्षुदपायः तथैव बहुभजतः सम्पूर्णा एव भक्तिपरेश्वरानुभवविरक्तय इति किन्तु बहुभोजनासामर्थ्यं भवति बहु भजतस्तु भजनसामर्थ्यातिशयो भवतीति विशेषो द्रष्टव्यः ॥ ४२ ॥

उक्तमर्थमेव पूर्णीकुर्वन्नाह-इतीति । परां शान्तिमात्यन्तिकं क्षेमम् ॥ ४३ ॥

भागवतस्य भवन्तीत्युक्ते तस्य लक्षणं पृच्छति—अथेति, यद्धर्मो यत्स्वभाव इति मानसलिङ्गप्रश्नः यादृश इति तस्यैव तारतम्यप्रश्नः यथा आचरतीति कायिकलिङ्गप्रश्नः वदतीति वाचिकलिङ्गप्रश्नः किमेतैः प्रश्नैरिति चेदत आह, यैर्मानसादिलिङ्गैर्भगवत्प्रियोऽनुमीयते ॥ ४४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

खादिकं हरेः सर्वव्यापकस्य शरीरम् आवासभूतमिति मत्वा अनन्यः हर्येकशरणः सन् प्रणमेत् ॥ ४१ ॥

एवं प्रपन्नस्य भक्तिः भगवत्साक्षात्कारलक्षणा परा ज्ञानं संसारात् परमवैराग्यं च भवतीत्याह—भक्तिरिति । प्रपद्यमानस्य भक्त्यादित्रिकाश्रयस्य भगवन्तं शरणं गच्छतः भक्तिः परेशानुभवः अन्यत्र संसारे विरक्तिरित्येष त्रिकः एककालः शरणागतिसमकालः जायते यथा अनुघासं प्रतिग्रासम् अश्नतः भुञ्जानस्य तुष्टिः पुष्टिः क्षुदपायाः स्युः ॥ ४२ ॥

साधनत्रिकसम्पन्नस्य भगवत्प्राप्तिमाह—इतीति । परां शान्तिं भगवत्साधर्म्यलक्षणां मुक्तिमुपैति प्राप्नोति ॥ ४३ ॥

भक्त्युपायं श्रुत्वा मुक्त्यधिकारिणं पृच्छति—अथेति, भक्त्यादयो मुक्त्युपायाः भागवतस्य भवन्तीति भवद्भिरुक्तम् अथ नृणां मध्ये मुक्त्यधिकारिणं भागवतं ब्रूत यद्धर्मः यः उत्तमत्वादिलक्षणो धर्मो यस्य सः यादृशः यत्स्वभावः यथाऽऽचरति वदति यद्ब्रूते च यैर्लिङ्गैः भगवत्प्रियो भवति ॥ ४४ ॥

भाषा टीका ।

और यह भागवत धर्म निष्ठ क्या करता है, कि—आकाश वायु अग्नि जल पृथिवी तारागण और सब प्राणी तथा दिशायें द्रुमादिक एवं सरित् समुद्रादिकों को अथवा और जो कोई भूत प्राणी हैं तिन सबों को श्रीहरि का शरीर मानकर प्रणाम करता है, और सबों को प्रणाम करने पर भी भाव की शुद्धि होने से सर्वत्र भगवत्स्फूर्त्ति होने के कारण अनन्य ही रहता है ॥ ४१ ॥

जो पुरुष श्रीहरि के शरणागत होता है, उसको भक्ति, परमेश्वर का अनुभव, और अन्यत्र वैराग्य, ये तीनों बातें एक समय में होने लगती हैं । जैसे कि—भोजन करने वाले पुरुष को भोजन करते २ ही ग्रास २ में तुष्टि पुष्टि और क्षुधाकी निवृत्ति ये तीनों बातें साथ ही साथ होती जाती हैं ॥ ४२ ॥

हे राजन् ! इस प्रकार श्री अच्युत भगवान् के चरणारविन्द भजन करने वाले भागवत को श्रीहरि की अनुवृत्ति करने से भक्ति वैराग्य और भगवद्विषयक ज्ञान ये सब साथ ही साथ होजाते हैं, तदनन्तर साक्षात् परम शान्ति [मोक्ष] को को प्राप्त होजाता है ॥ ४३ ॥

राजोवाच ।

राजा निमि बोले, कि—हे प्रभो ! अब आप भागवतों के लक्षण कहो, कि भागवतों के कैसे धर्म होते हैं ? और भागवत लोग कैसे होते हैं ? और वे कैसे आचरण करते हैं ? और वे क्या बोलते हैं ? एवं वे भगवत् के प्यारे कौनसे चिह्नों से जाने जाते हैं ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यत्पृष्टं इत्यस्योत्तरमाह त्रयेण—सर्वभूतेष्विति । आत्मनः स्वस्य सर्वभूतेषु ब्रह्मभावेन सत्ताद्यं पश्येत् तथा ब्रह्मरूपे आत्मनि

ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च ।
प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ॥ ४६ ॥
अर्चायामेव हरये पूजां यः श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥ ४७ ॥
गृहीत्वापीन्द्रियैरर्थान् यो न द्वेष्टि न हृष्यति ।
विष्णोर्मायामिदं पश्यन् स वै भागवतोत्तमः ॥ ४८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अधिष्ठाने भूतानि च यः पश्येत् यद्वा "आततत्वात्प्रमातृत्वादात्मा हि परमो हरिः" इति तत्त्वोक्तेरात्मनो हरेः सर्वभूतेषु सर्वकारित्वेऽपि नियन्तृत्वेन वर्तमानस्य भगवद्भावं निरतिशयैश्वर्यमेव यः पश्येत् न तु तारतम्यम् तथाऽऽत्मनि हरावेव भूतानि च यः पश्येत् कथम्भूते भगवति अप्रच्युतैश्वर्यादिरूपे न पुनर्जड़मलिनभूताश्रयत्वेन जाड्यादिप्रसक्त्या ऐश्वर्यादिप्रच्युतिं पश्येत् स सर्वत्र परिपूर्णं भगवत्तत्त्वं पश्यन् भागवतोत्तम इत्यर्थः ॥ ४५ ॥

प्रेम च मैत्री च कृपा च उपेक्षा च ता ईश्वरादिषु चतुर्षु यः करोति स मध्यमो भागवतः एवम्भूतस्य भेदस्य दर्शनात् ॥ ४६ ॥

अर्चायां प्रतिमायां पूजामीहते करोति न तद्भक्तेष्वन्येषु च सुतरां न करोति प्राकृतः प्रकृतप्रारम्भः अधुनैव प्रारब्धभक्तिः शनैरुत्तमो भविष्यतीत्यर्थः ॥ ४७ ॥

पुनरपि त्रिभिः श्लोकैरुत्तमभागवतस्यैव लक्षणान्याह—गृहीत्वाऽपीति । श्रीवासुदेवात्मदृष्टया न गृह्णाति तावदिन्द्रियैरर्थान् गृहीत्वाऽपीत्यपिशब्दार्थः इदं विश्वम् ॥ ४८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

तत्र "हरिर्हरति पापानि" इति स्मृतेः हरिशब्दस्य परममुख्यावृत्तिः श्रीभगवत्येवेति भागवतलक्षणां च भगवतैव वक्तव्यं न तु स्वमुखेन स्वलक्षणां भागवतेन वक्तव्यमन्यथाऽऽत्मसम्भावनाप्रसङ्ग इति तन्नामत्वाद्धरिरेवोवाचेति ज्ञेयं तत्र मानसधर्मोत्तरमाह—स्वस्य त्वं पदार्थस्य ब्रह्मभावेन ब्रह्मास्मीति भावनया सर्वभूतेषु कल्पितेषु अधिष्ठानत्वेन समन्वयमनुस्यूतत्वम् अधिष्ठाने कल्पितानि न तु वास्तवानीति यः पश्येत् स भागवतोत्तम इत्यर्थः । पूर्वार्थे ब्रह्मज्ञानिलक्षणमुक्तं न तु भागवतलक्षणमिति आशङ्क्याह—आत्मनि इत्यादिना इत्यादिरत्र निस्वपरस्यापि ईश्वरत्वेन प्रवर्तते आततत्वात् सर्वव्यापकत्वात् मातृत्वात् सर्वज्ञातृत्वाच्चेत्यत्र स्वस्यात्मनाऽपि शक्तिः तस्य भगवद्भावस्य हरावेव भूतानि चेति "मत्स्थानि सर्वभूतानि" इति भगवदुक्तेः सर्वाण्यपि भगवत्येवाश्रितानि भूतानि यः पश्येत् इति सर्वस्य तद्व्याप्यत्वात्तदाधारत्वात्तत्कार्यत्वान्न कस्यापि स्वातन्त्र्येण सत्तां यः मन्येतेत्यर्थः जडानि मलिनानि च यानि भूतानि चराचरशरीराणि तान्याश्रयो यस्य तेषां चाश्रयस्तस्य भावस्तत्ता तया वा जाड्यमालिन्यादिप्रसक्त्या ऐश्वर्यादीनां प्रच्युतिं न पश्येत् स्वाभाविकाचिन्त्यशक्त्या मायाभिभावकत्वादिति भावः । "मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि" इति श्रीमदर्जुनवाक्यात् प्रेमविलासमयमर्थान्तरं तु सन्दर्भे द्रष्टव्यम् ॥ ४५ ॥

ईश्वरे परमेश्वरे यः प्रेमभक्तिं करोति तथा तदधीनेषु भक्तेषु च मैत्रीं बन्धुभावं "वैष्णवे बन्धुसत्कृत्या" इति भगवता वक्ष्यमाणत्वात् बालिशेषु भक्तिमजानत्सु कृपां "शोचे ततो विमुखचेतस इन्द्रियार्थमायासुखाय भरमुद्वहतो विमूढान्" इति श्रीप्रह्लादोक्तेः स्वस्य द्विषत्सु उपेक्षां चित्तास्त्रोभेणौदासीन्यं भक्तभगवद्द्वेषिषु तु चित्तक्षोभस्यावश्यकत्वादुपेक्षां तस्मादिव्यत्यागं "निन्दां भगवतः शृण्वन् तत्परस्य जनस्य वा । ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युतः" इति श्रीशुकोक्तेः । मध्यमत्वे हेतुमाह—एवम्भूतस्येति । मैत्रीकृपोपेक्षारूपस्य भेदस्य दर्शनात् न तु पूर्ववत् सर्वत्र तत्स्फूर्तिरिति मध्यमत्वम् ॥ ४६ ॥

मूले अर्चायामेवेति विशेषणसङ्गत्या एवकारस्यान्ययोगव्यवच्छेदार्थमाह—न तद्भक्तेष्विति । श्रद्धया लोकपरम्पराप्राप्तयैव न तु शास्त्रार्थविश्वासमय्या तस्यां यस्यात्मबुद्धिः कुणपे इत्यादि तथा "अर्चयित्वा तु गोविन्दं तदीयान्नार्चयेत्तु यः । न स भागवतो ज्ञेयः केवलं दाम्भिकः स्मृतः ॥" इति शास्त्रज्ञानसद्भावे तद्भक्तपूजाया आवश्यकत्वान्न तद्भक्तेष्विति कथं प्रयुञ्जीत तस्माद्भक्ताभासो गौणः कनिष्ठोऽयं जातप्रेमा शास्त्रीयश्रद्धावान् साधकस्तु मुख्यः कनिष्ठो ज्ञेयः ॥ ४७ ॥

अध्यात्मिकत्वात् परमपुरुषत्वात् मायां मायिकत्वाद्विश्वं पश्यन् जानन् ॥ ४८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पञ्चरात्रादिप्रसिद्धान्येतानि रहस्यानीति हृदि निधाय तेषां प्राप्त्यर्थम् अन्तरायैरेतदुपायभूतानि लक्षणानि दर्शयति, हरिः जीवस्य भगवच्छरीरत्वं भगवति आत्मनि भूतानि सजीवशरीराणि इति विशदयज्ञानवानित्यर्थः ॥ ४५ ॥

ईश्वरादिषु प्रेमादीनां क्रमेणान्वयः ॥ ४६ ॥

अर्चायामेव अन्येषु सूर्यादिषु स्थानेषु तद्भक्तेषु च श्रद्धया

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

नाति पूजाम् एवं न सेवारूपं कैङ्कर्यम् ईहते स प्राकृतः प्रकृतिसम्बन्धवश्यो भवति भक्त इतीति ॥ ४७ ॥

एवं भागवतमुक्त्वा अनन्तरवक्तव्याविश्वासविधोपयोगि-त्याह—गृहीत्वेत्यादिना । विष्णोः सम्बन्धीदं शरीरं विश्वं मायां तादृक्ष्यावशं पश्यन् ॥ ४८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कवेरनन्तरो हरिराह—सर्वभूतेष्विति । सर्वेष्वात्मसत्तया-वर्तेषु[भूतेषु]मात्मनः स्वस्य च औपश्लेषिकस्याधारस्य शेषत्व-विवक्षया षष्ठी आत्मनि चेत्यर्थः । भगवद्भावं भगवतः सद्भावं पश्येत् अनेन व्याप्तिरुक्ता आत्मनि परमात्मनि भगवति च भूतानि च पश्येदिति भगवत आधारत्वमुक्तं वासुदेवार्थमनु-सन्धत्तुत्तमभागवत इत्यर्थः । यद्वा, सर्वभूतेष्वात्मनश्च भगवद्भावं भावः प्रकारः भगवत्प्रकारत्वं भगवच्छरीरतया तदपृथक्सिद्ध-धर्मतां पश्येदित्यर्थः । उत्तरार्धं तु यथोक्तार्थमेव ॥ ४५ ॥

अनेन यज्ञमं इत्यस्योत्तरमुक्तं भवति भागवतोत्तम इत्युक्तं तर्हि मध्यमाधमौ कीदृशौ ? इत्यतस्तावाह द्वाभ्याम्—ईश्वर इति । ईश्वरे प्रेम ईश्वरस्य सर्वव्यापितया सर्वशरीरत्वमजानन् केवलं देवतेति बुद्धिं भक्त्या यः करोति स मध्यम इत्यर्थः । तदधीनेष्वी-श्वराधीनेषु भागवतेषु बालिशेष्वज्ञेषु भागवतेषु ईश्वरादिषु क्रमेण प्रेममैत्रीकृपोपेक्षाः यः करोति स मध्यम इत्यर्थः ॥ ४६ ॥

अर्चायामेवेति ग्रन्थो नार्चावतारार्चनापकर्षपरः किन्तु भागवतभक्तिरहितभगवदर्चार्चनस्य मन्दफलत्वपरः अर्चायां प्रतिमायामेव हरये पूजामीहते करोति तद्भक्तेषु हरिभक्तेषु नेहते अन्येषु च गोब्राह्मणाग्न्यादिषु च सुतरां न करोति स प्राकृतः भक्त अधमभक्त इत्यर्थः । प्राकृतोऽधुनैव प्रारब्धभक्तिरिति केचिद्व्याचक्षते ॥ ४७ ॥

पुनस्त्रिभिः श्लोकैरत्यर्हितत्वादुत्तमभागवतलक्षणान्येवाह, गृहीत्वेति । अथानिष्टानिष्टरूपान् विषयान् गृहीत्वा न मुह्यति मोहं न प्राप्नोति नाऽऽसक्तो भवतीति यावत. तत्र हेतुत्वेन विशि-नष्टि—इदम् दृष्टानिष्टजातं विष्णोर्मायां प्रकृतिपरिणामात्मकं पश्यन् अनिष्टविषयवदिष्टविषयस्यापि बन्धकत्वेन तस्य हेयत्वादिति भावः ॥ ४८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्र प्रथमप्रश्नं परिहरति—सर्वभूतेष्विति । सर्वभूतेषु स्थित-स्यात्मनः पूर्णस्य हरेः भगवान् सर्वगुणपूर्णः तस्य भावो भगवद्भावः सर्वगुणपूर्णतााम आत्मन्यात्मनि भगवति भूतानि च पश्येत् पश्यति सर्वभूतेष्वात्मनः स्वस्य भगवद्भावं प्राधान्यं पश्यन् भागवतोत्तम इत्यर्थस्य पूर्णत्वादात्मशब्द उक्तः कश्चित्-सर्वनरोत्तम इति वाक्यविरुद्धत्वादनादर्तव्यम् ॥ ४५ ॥

मध्यमभागवतमाह—ईश्वर इति । ईश्वरे प्रेम तदधीनेषु सत्सु मैत्रीं बालिशेषु अज्ञेषु कृपां द्विषत्सु उपेक्षां च्छाद्यात् सर्वस्य जगतस्तद्वशत्वं न जानाति ॥ ४६ ॥

अधमभागवतमाह—अर्चायामिति । एवशब्दनार्चाया अन्यत्र स्थितविष्णुज्ञानं तत्पूजां च व्यावर्तयति तद्भक्तेषु न केवलं पूजां नेहते अपितु तारतम्यं न जानाति अन्येषूपेक्षकेषु शत्रुषु द्वेष-प्रकारं न जानाति विष्णुज्ञानं च किञ्चिदुक्तत्वेन प्राकृतः प्रकृति-निर्मितं स्वर्गादिकं प्राप्तानायोग्यं याति मध्यमभक्तस्यापि स्वर्ग एव निरयो नैव ॥ ४७ ॥

यथाक्रमेणोक्तं प्रश्नं परिहरति—गृहीत्वेति । इमां लोक-यात्रां विष्णोर्मायाम् इच्छाधीनाम् पश्यन्निन्द्रियैरर्थाञ्छब्दादीन् विषयान् गृहीत्वापि योग्यतातिरेकाधिकं न द्वेष्टि न हृष्यति अथवेष यज्ञमं इत्यस्य परिहारः सदसत्सु यथायोग्यं हर्षद्वेषौ सदसतां बुद्धिहासकरो धर्मः—

> "सर्वं हरेर्वशत्वेन शरीरं तस्य भण्यते ।
> अनन्याधिपतित्वाच्च तदनन्यमुदीर्यते ॥
> तच्चाप्यभेदो जगतो विष्णोः पूर्णगुणस्य तु" ॥

इति एतद्धरेः शरीरं यत्किञ्च भूतं प्रणमेदनन्यमित्यत्र प्रमाणं—

> "पूर्णत्वादात्मशब्दोक्तः कश्चित्सर्वनरोत्तमः ।
> सोऽपि नारायणो नान्यः स च सर्वेषु संस्थितः ॥
> तद्वशा इतरे सर्वे श्रीब्रह्मशपुरस्सराः ।
> स एव तु स्वभक्तेषु स्थित्वाऽनुग्रहकारकः ॥
> सद्द्वेषज्ञानयन्ता च द्विषत्सु द्वेषकारकः ।
> तत्प्रेरितास्तदन्ये तु प्रियद्वेषादिकारिणः ॥
> अतस्तत्प्रेरणादेव प्रेमाद्या मम जज्ञिरे ।
> इति पश्यति यो बुद्ध्या स तु भागवतोत्तमः ॥
> सर्वाधिकं पूर्णविष्णुं क्षीरसागरवासिनम् ।
> ज्ञात्वा तत्र प्रेमयुक्तस्तद्भक्तेषु च मैत्रयुक् ॥
> कृपावांश्च तदज्ञेषु तद्द्वेषिणामुपेक्षकः ।
> तद्वशत्वं न जानाति सर्वस्य जगतोऽपि तु ॥
> तमाहुर्मध्यमं भक्तमर्चायामेव संस्थितम् ।
> विष्णुं ज्ञात्वा तदन्यत्र नैव जानाति यः पुमान् ॥
> तारतम्यं च तद्भक्ते जानाति कथञ्चन ।
> अवजानंश्च तद्भक्तानात्मनो भक्तिदर्पतः ॥
> उपेक्षकोऽपि वा तेषु न करोत्यथवापि तान् ।
> मानुषेषु यथाकश्चित्कश्चित्सुखः प्रदृश्यते ॥
> एवमेवाधमो विष्णोरन्या पश्यति चान्यतः ।
> ते तु भक्ताधमाः प्रोक्ताः स्वर्गादिफलभागिनः ॥
> ते विघ्नितो अधो यान्ति तद्भक्तानामुपेक्षकाः ।
> कुर्युर्विघ्नानपि द्वेष देवा वैनायकादिनः ॥
> पूजिता विष्णुभक्तिं च नाशयाकलतः सुराः ।
> उपेक्षकेषु देवानां भक्तिनाशं स्वयं हरिः ॥
> करोति तेन भिन्नाः संसरन्ति पुनः पुनः ।
> अधो वा यान्ति विद्वेषात्पूज्या देवाकलतः सदा ॥
> यस्तान्द्वेष्टि स तं द्वेष्टि यस्तानानु सचानु तम् ।
> एकान्त्यमागतं विद्धि देवैस्तद्भक्तिपूजितैः ॥
> उपेक्षकस्तु देवानां यद्वेव निरयोपमः ।
> तदा तु किमु भक्तद्वयमुपेक्षायां जनार्दने ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विष्णोरुपेन्द्रकं सर्वं विद्धि त्वस्याधिकं सुराः ।
पतत्यधस्तं तमसि हरिणा नैव पालितः ॥
भुङ्क्ते स्वर्गफलं नित्यं निरयं नैव गच्छति ।
विष्णोस्तु मध्यमो भक्तो जायते मानुषेषु च ॥
अनन्यदेवता यस्तु भजते पुरुषोत्तमम् ।
योऽन्यः संस्मरते देवा न योग्यो ह्यपि केशवम् ॥
यस्तूत्तमो भागवतः स मुक्तिं परमां व्रजेत् ।
विष्णुना सर्ववेद्येन मोदते स हि नित्यदा ॥

इति समाख्यानबलात्तिमत्सोयं सर्वभूतेष्वित्याद्युक्तार्थं इति विष्णुमायां विश्वेच्छाधीनाम्—

“विष्णोरिच्छानुसार्येतज्ज्ञात्वा योऽन्यथात्र चाधिकम् ।
दृश्यति ह्यपि वा यस्तु स वै भागवतोत्तमः” ॥

इत्येतद्गृहीत्वापीन्द्रियैरर्थानित्यर्थे मानम्—

“सतां वृद्धिकरो धर्मस्त्वसतां ह्रासकारणः ।
अयं तु निश्चितो धर्मो ह्यधर्मोऽन्यो विनिश्चितः ॥
हर्षः सत्सु तथा सत्सु धर्मो धर्मविपर्ययः ।
तेषां वृद्धौ तथा हानौ सर्वं ज्ञेयमशेषतः ॥
एतदर्थं च धर्माणां मर्यादा वैदिकादिका ।
मूलधर्मविरुद्धा तु सा न ग्राह्या कथञ्चन” ॥

इत्येतदपि गृहीत्वापीत्यत्र मानम् ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्रोत्तरं तत्तदनुभवद्वारा गम्येन मानसलिङ्गेन महाभागवतं लक्षयति—सर्वभूतेष्विति । “एवं व्रतः स्वप्रियनामकीर्त्या जातानुरागः” इति श्रीकविवाक्योक्तरीत्या यच्छ्रवणद्रुतहृत्संवेदनाद्यनुभावकानुरागवशात् खं वायुमग्निमित्यादि तदुक्तप्रकारेणैव चेतनाचेतनेषु सर्वभूतेषु आत्मनो भगवद्भावम् आत्माभीष्टो यो भगवदाविर्भावस्तं पश्यन्ननुभवति अतस्तानि च भूतानि आत्मनि स्वचित्ते स्फुरति यो भगवान् तस्मिन्नेव तदाश्रितत्वेनैवानुभवति एष भागवतोत्तमो भवति इत्यमेव श्रीव्रजदेवीभिरुक्तम् “वनलतास्तरव आत्मनि विष्णुं व्यञ्जयन्त्य इव पुष्पफलाढ्याः” इत्यादि यद्वा आत्मनो यो भगवति भावः प्रेमा तमेव चेतनाचेतनेषु भूतेषु पश्यति शेषं पूर्ववत् अत एव भक्तरूपतदधिष्ठानबुद्धिजातभक्त्या तानि नमस्करोतीति खं वायुमित्यादौ पूर्वमुक्तमिति भावः । तथैव चोक्तं ताभिरेव “नद्यस्तदा तदुपधार्य मुकुन्दगीतमावर्तलक्षितमनोभवभग्नवेगाः” इत्यादि श्रीपट्टमहिषीभिरपि “कुररि विलपसि त्वम्” इत्यादि अत्र न ब्रह्मज्ञानमभिधीयते भागवतैकतज्ज्ञानस्य तत्फलस्य च हेयत्वेन जीवभगवद्विभागाभावेन च भागवतत्वविरोधात् “अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे” इत्यादिकात्यन्तिकभक्तिलक्षणानुसारेण सुतरामुत्तमत्वविरोधाच्च तत्र निराकारेश्वरज्ञानं “प्रणयरसनया धृताङ्घ्रिपद्मः” इत्युपसंहारगतलक्षणपरमकाष्ठाविरोधादेवेति विवेचनीयम् ॥ ४५ ॥

अथ मानसभक्तिविशेषेणैव मध्यमभागवतं लक्षयति, ईश्वर इति । परमेश्वरे प्रेम करोति तस्मिन् भक्तियुक्तो भवतीत्यर्थः । तथा तदधीनेषु भक्तेषु च मैत्रीं बन्धुभावं बालिशेषु तद्भक्तिमजानत्सु उदासीनेषु कृपां यथोक्तं श्रीप्रह्लादेन “शोचे ततो विमुखचेतस इन्द्रियार्थमायासुखाय भरमुद्वहतो विमूढान्” इति आत्मनो द्विषत्सु उपेक्षां तदीयद्वेषेण चित्तक्षोभमौदासीन्यमित्यर्थः । तेनापि बालिशत्वेन कृपांशसद्भावात् यथैव श्रीप्रह्लादो हिरण्यकशिपौ भगवतो भागवतस्य वा द्विषत्सु तु स्वस्यापि चित्तक्षोभे तत्रानभिनिवेशमित्यर्थः । अत्र बालिशेषु कृपाया एव स्फुरणं द्विषत्सूपेक्षाया एव तु प्रागल्भ्यवशेन तत्र तत्प्रेमणो वा स्फुरणं ततो मध्यमत्वम् ॥ ४६ ॥

अथ भगवद्धर्माचरणरूपेण कायिकेन किञ्चिन्मानसेन च लिङ्गेन कनिष्ठं लक्षयति—अर्चायामिति । अर्चायां प्रतिमायामेव न तद्भक्तेषु अन्येषु च सुतरां न भगवत्प्रेमाभावात् भक्तमाहात्म्यज्ञानाभावात्सर्वोदरलक्षणभक्तगुणानुदयाच्च स प्राकृतः प्रकृतिप्रारब्धः अधुनैव प्रारब्धभक्तिरित्यर्थः । इयञ्च श्रद्धा न शास्त्रार्थावधारणजाता “यस्यात्मबुद्धिः कुणपे” इत्यादिशास्त्राज्ञानात् तस्माल्लोकपरम्पराप्राप्तैवेति पूर्ववत् अनन्यजातप्रेमा शास्त्रीयश्रद्धायुक्तः साधकस्तु मुख्यः कनिष्ठो ज्ञेयः ॥ ४७ ॥

पूर्वोक्तप्रकारेण भावं बहिरङ्गभक्तिविभागत्वाच्छेषमित्यर्थः । अत्रापि कायिकमानसयोः साङ्कर्यम् ॥ ४८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आत्मनः स्वस्य उपास्यो यो भगवांस्तस्य भावं विद्यमानतां सर्वभूतेषु यः पश्येत् यथा स क इति हिरण्यकशिपुना पृष्टः प्रह्लादः सर्वत्रैवेत्युक्त्वा स्तम्भेऽपि सत्यप्रभुर्दृश्यते इति स्वोपास्यं भगवन्तं दृष्टवानित्यर्थः । तथा आत्मन्यात्मीये आत्मोपास्ये भगवति च भूतानि पश्येत् यथा श्रीयशोदा कृष्णस्य जठरे एव सर्वभूतान्यपश्यत् । यद्वा, आत्मनि स्वमनसि स्फुरति यो भगवांस्तस्मिन्नेव भूतानि तद्विषयकप्रेमवन्ति यः पश्येत् यथा “वनलतास्तरव आत्मनि विष्णुं व्यञ्जयन्त्य इव पुष्पफलाढ्याः” इति “नद्यस्तदा तदुपधार्य मुकुन्दगीतम्” इत्यादिकं व्रजसुन्दर्यः । “कुररि विलपसि त्वम्” इति “क्षितिधर ! चिन्तयसे स्तनैर्विधर्तुम्” इत्यादिकं पट्टमहिष्यश्चोक्तवत्यः । अत एव आत्मनो भगवद्भावं सर्वभूतेषु यः पश्यति भावयन्ति च भूतानीत्यस्यार्थः सम्मतः सतामिति श्रीसनातनगोस्वामिचरणानां कारिका प्रसिद्धा अत्र पश्येदिति तया दर्शनयोग्यतैव विवक्षिता “शक्तिलिङ्गाच्च” ३।३।१।७२ इति लिङ् ननु तथा दर्शनस्य सार्वकालिकता तथात्वे नारदव्यासशुकादीनामप्यव्याप्तिः स्यात् नहि ते सर्वदैव सर्वत्र भगवन्तं पश्यन्ति किन्तु तद्दिदृक्षाधिक्य एवाऽनन्तदर्शनोत्कण्ठ्यमत्याधिकं यदा सर्वत्र तदेव कामुकाः कामिनीमयमिति न्यायेन सर्वं जगदेव भगवन्मयं पश्येत् तथैव “आत्मवन्मन्यते जगत्” इति न्यायेन सर्वभूतान्येव प्रेमोत्कण्ठ्यव्याकुलान्येव पश्येदिति ज्ञेयम् । अत्र दर्शनार्थत्वे व्याख्याते भगवतः सर्वभूताधेयत्वाधारत्वज्ञानवतः शास्त्रज्ञमात्रस्यैव भागवतोत्तमत्वं स्यादिति तत्र व्याख्यातम् ॥ ४५ ॥

देहेन्द्रियप्राणमनोधियां यो जन्माऽप्ययक्षुद्भयतर्षकृच्छ्रैः ।
संसारधर्मैरविमुह्यमानः स्मृत्या हरेर्भागवतप्रधानः ॥ ४९ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ईश्वरे सर्वोपास्ये भगवति प्रेम करोति तदेकतानात्मको भवतीत्यर्थः। तदधीनेषु स अधीनो येषां तेषु भक्तेषु मैत्रीं बन्धुभावं बालिशेषु तद्भक्तिमजानत्सु कृपामिति भरतव्यासशुकादीनामपि कृपायाः सार्वत्रिकत्वादर्शनात् येषु बालिशेषु कृपा भवतु इति तेष्वेवेति व्याख्येयम् "गिरयो मुमुचुस्तोयं क्वचिन्न मुमुचुः शिवम्" इति गिरिदृष्टान्तात् भगवन्तं द्विषत्सु उपेक्षां तत्र कृपाया वैफल्यदर्शनादिति भावः। आत्मानं द्विषत्सु तु बालिशत्वमननात् दूरतः स्थित्वैव तदशुभाननुध्यानमात्रमिति सदाचारः अत्र सर्वभूतेषु भगवद्दर्शनयोग्यता यस्य कदाचिदपि न दृष्टा तस्यैवैतल्लक्षणचतुष्टयवत्त्वे मध्यमत्वं यस्य तु सा दृष्टा तस्य तूत्तमत्वमेवेति विवेचनीयम् अत एव भागवतोत्तमेषु नारदादिष्वपि प्रेममैत्रीकृपोपेक्षा दृश्यन्ते एव ॥ ४६ ॥

अर्चायां प्रतिमायां हरये हरिं प्रीणयितुं न तद्भक्तेष्वपि अन्येषु च सुतरां प्राकृतः प्रकृतिप्रारम्भः अधुनैव प्रारब्धभक्तिः शनैरुत्तमो भविष्यतीत्यर्थः इति श्रीस्वामिचरणाः तदेवं त्रिविधस्त्रमों वाच्य इति प्रश्नयोरुत्तरमुक्तम् ॥ ४७ ॥

लक्षितस्योत्तमभागवतस्य जातिभेदादन्यान्यपि लक्षणानि सम्भवन्तीत्याह पुनरष्टभिः—गृहीत्वेति ॥ ४८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एवं पृष्टा मुनयः हरिमुखेनोत्तरमाहुः—सर्वभूतेष्वित्यादिभिः एकादशभिः श्लोकैः। तत्र प्रथमं हृत्स्योत्तरं त्रिभिः "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी" इत्यादिश्रुतिप्रसिद्धस्वात्मनः सर्वभूतकारणस्य भगवतः सर्वाश्वियेषु कार्यरूपेषु चराचरेषु यः भगवद्भावं पश्यत् असाधारणैश्चेतनत्वाचेतनत्वपरिच्छिन्नत्वादिभिर्धर्मैर्भिन्नेष्वपि कार्येषु कारणात्कार्यभूतानां पृथक्स्थितिप्रवृत्त्याद्यभावात् कारणाभिन्नत्वं पश्येत् "सर्वं खल्विदं ब्रह्म" इति श्रुतेः "तदनन्यत्वमारम्भणशब्दादिभ्यः"(२।१।१५) इति न्यायाच्च अतः सर्वभूतेषु भगवद्दृष्ट्या भगवति तु विशेषतः सप्रेममात्रं परमशान्तिहेतु करोति केवलाभेदभ्रान्तिनिवारणायाह—भूतानीति। आत्मनि जगदात्मनि भगवति स्वासाधारणैर्धर्मैः स्थितः पूर्वं सृष्ट्यनन्तरं च सूक्ष्मरूपेण स्थूलरूपेण च भूतानि पश्येत् "सदेव सोम्येदमग्र आसीत्" "एतस्मिन् द्यावापृथिव्यौ विधृतौ तिष्ठतः" इत्यादिश्रुतिभ्यः एष कार्यकारणयोर्जगद्ब्रह्मणोर्भेदाभेदसम्बन्धवित् भागवतोत्तमः जगद्ब्रह्मणोः केवलभेदस्वीकारे अभेदशास्त्रव्याकोपः केवलाभेदस्वीकारे च भेदशास्त्रव्याकोप इत्यलं विस्तरेण ॥ ४५ ॥

यस्तु यथार्थशास्त्रार्थज्ञानाभावात् यथा सद्धर्म्यमीश्वरादिषु प्रेम च मैत्री च कृपा च उपेक्षा च प्रेममैत्रीकृपोपेक्षाः करोति स मध्यमः भागवतः ॥ ४६ ॥

यस्तु मध्यमादप्यल्पज्ञानः आचार्यादिभ्यः अर्चापूजनमाहात्म्यं श्रुत्वा श्रद्धया अर्चायामेव हरये पूजामीहते तद्भक्तेषु हरिभक्तेषु तु नेहते अन्येषु भूतेषु च नेहते इति किं वक्तव्यम् स भक्तः प्राकृतः प्रकृतिप्रारब्धस्तत्र भवः कृतभजनारम्भ इत्यर्थः। एवकारेण सर्वगतत्वभक्तप्रियत्वादिभगवद्गुणान् स न जानातीति सूचितम्, अर्चायामेव हरये पूजामीहते इत्येतेन पतितेन भवेत् कामुकी न तत्परिचर्यामितिवत्प्राकृतभक्तस्वभावापकर्षः वर्णितः न त्वर्चापूजापकर्ष इति ज्ञेयम् ॥ ४७ ॥

प्रश्नकर्त्रानुत्तमभागवतस्य गुणान् पुनराहाष्टभिः तत्र तावत्कथं चरतीत्यस्य प्रश्नस्य हरिभजनावेशेन द्वेषहर्षमोहकामादिरहितश्चरतीत्युत्तरं चाह—गृहीत्वापीति त्रिभिः। प्रथमतस्तु हरिणामादिपरैः श्रोत्रादिभिरिन्द्रियैः शब्दादीन् गृह्णाति अथ कदाचिदसाधून् साधूंश्चार्थान् शब्दादीन् विषयान् गृहीत्वापि इदं सर्वं जगत् मायां प्रकृतिपरिणामात्मना वर्त्तमानां पश्यन् न द्वेष्टि न हृष्यति असाधूनामिव साधूनामपि विषयाणां बन्धकत्वादुपेक्षा युक्तैवेति भावः ॥ ४८ ॥

भाषा टीका।

हरिरुवाच।

हरि नामक योगेश्वर बोले, कि—सर्व भूत प्राणियों के विषें तथा अपने विषें भी भगवद्भाव देखे अर्थात् भगवान् का यह प्रकार है भगवान् प्रकारी है, ऐसे देखे, तथा सम्पूर्ण भूत प्राणियों को परमात्मा श्रीभगवान् के विषय में देखे अर्थात् सब का आधार परमात्मा को समुझै वही भागवतोत्तम है ॥ ४५ ॥

और जो ईश्वर में प्रेम, भक्तों में मित्रता, मूर्खों पर कृपा, और द्वेषियों पर उपेक्षा करनेवाला है वह मध्यम भागवत है ॥ ४६ ॥

जो अर्चा मूर्त्ति मात्र में श्रद्धा से हरि का पूजन करता है, अन्य हरि भक्तों के विषें नहीं करता वह प्राकृत भक्त है, अर्थात् अल्प भक्त है, पूर्ण भक्त नहीं है जो भागवतों में प्रीति पुरःसर भगवत्सेवा करता है ॥ ४७ ॥

भागवत धर्मनिष्ठ अधिकारी इन्द्रियों से विषयों का सेवन नहीं करता है, यदि विषयों का ग्रहण भी करै तो प्रिय अप्रिय विषयों में राग द्वेष जो नहीं करता है, और इस विश्व को भगवान् की माया से मुझना है, वह भागवतोत्तम है ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

किञ्च देहादीनां संसारधर्मैर्जन्माप्ययादिभिर्यो हरेः स्मृत्या ऽविमुह्यमानः सः भागवतप्रधानः तत्र देहस्य जन्माप्ययौ प्राणस्य क्षुत्पिपासे मनसो भयम् बुद्धेस्तर्षस्तृष्णा इन्द्रियाणां कृच्छ्रं श्रमस्ततैः ॥ ४९ ॥

न कामकर्मबीजानां यस्य चेतसि सम्भवः ।
वासुदेवैकनिलयः स वै भागवतोत्तमः ॥ ५० ॥
न यस्य जन्मकर्मभ्यां न वर्णाश्रमजातिभिः ।
सज्जतेऽस्मिन्नहंभावो देहे वै स हरेः प्रियः ॥ ५१ ॥
न यस्य स्वः पर इति वित्तेष्वात्मनि वा भिदा ।
सर्वभूतसमः शान्तः स वै भागवतोत्तमः ॥ ५२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कामश्च कर्माणि च बीजानि च वासनास्तेषाम् वासुदेव एवैकनिलय आश्रयो यस्य सः एतेन गृहीत्वापीत्यादिश्लोकत्रयेण द्वेषहर्षमोहकामादिरहितश्चरतीति यथा चरतीत्यस्योत्तरमुक्तम् ॥ ५० ॥

यैर्लिङ्गैर्भगवत्प्रिय इत्यस्योत्तरमाह—न यस्येति । जन्म सत्कुलम् कर्म तप आदि जातयोऽनुलोमप्रतिलोमजा मूर्धावसिक्तादयः अस्मिन् देहे अहङ्काररहितैः सत्कुलकर्मादिलिङ्गैर्हरेः प्रियो भवतीत्यर्थः ॥ ५१ ॥

वित्तेषु स्वीयं परकीयमिति आत्मनि स्वः पर इति ॥ ५२ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

संसारः जीवस्य जन्माद्यभिमानस्तज्जनकैर्देहादीनां धर्मैर्जन्माव्ययादिभिरित्यर्थः । तत्र देहादिमध्ये ॥ ४९ ॥

काम्यन्त इति कामाः विषयाः चरति वर्तत इति व्यवहाराक्रवर्तनस्योत्तरम् ॥ ५० ॥

मूर्धावसिक्तो क्षत्रियजातीयस्त्रियां ब्राह्मणाज्जातः अम्बष्ठो वैश्यात् क्षत्रियायां जातः अहङ्काररहिताः सत्कुलकर्मादय एव लिङ्गानीति तात्पर्यार्थविवक्षेत्यर्थः इत्युक्तम् ॥ ५१ ॥

आत्मनि स्व इति अहमन्योऽसावन्य इति ॥ ५२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

देहस्य जन्माप्ययौ प्राणस्य क्षुत् इन्द्रियाणां कृच्छ्राणि मनसो भयं तर्षः तृष्णा बुद्धेः एवम्भूतैः संसारधर्मैः सर्वेषां देहात्माभिमानरहित इत्यर्थः ॥ ४९ ॥

कामकर्मवासनानामुत्पत्तिः यस्य चेतसि मनसि न भवेत् श्रीवासुदेवाश्रयः अन्तर्यामित्वादिष्टत्वेन तदेव वसति ॥ ५० ॥

सत्कुलजन्म श्रौतस्मार्तकर्मभ्यां वर्णाश्रमविशिष्टजातिभिश्च देहनिष्ठाभिः अहम्भावो यस्य नास्ति देहनिष्ठक्षुद्रयादिकर्मवत् अवर्जनीयशास्त्रीयकर्माण्यपि कुर्वन्न तत्कृताऽहङ्कारविवशः आत्मनि देहपुत्रदारादिकं भिदा अब्रह्मात्मकत्वतन्त्रदृष्टिः ॥ ५१-५२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

देहेन्द्रियेति । यो हरेः स्मृत्या देहादीनां जन्मादिभिः संसारधर्मैरविमुह्यमानः सः प्रधान उत्तमो भागवत इति सम्बन्धः तत्र देहस्य जन्माप्ययौ उत्पत्तिविनाशौ प्राणस्य क्षुत् मनसो भयं बुद्धेस्तर्षः तृष्णा इन्द्रियाणां कृच्छ्रं श्रम इति योज्यम् ॥ ४९ ॥

यस्य चेतसि कामकर्मबीजानां काममूलकर्माण्येव बीजानि तेषां कामाश्च कर्माणि च बीजानि वासनाश्च तेषां वा कामकर्माणि काम्यकर्माणि तान्येव बीजानि संसृतिहेतुत्वात्तेषामिति वा न सम्भवः वासुदेव एक एव निलय आश्रयो यस्य सः ॥ ५० ॥

एवं गृहीत्वेत्यादिश्लोकत्रयेण द्वेषहर्षमोहकामादिरहितश्चरतीति यथा चरतीत्यस्योत्तरमुक्तं भवति । यैर्लिङ्गैर्भगवत्प्रिय इत्यस्योत्तरमाह—न यस्येति द्वाभ्याम् । तत्राद्योऽहङ्कारनिवृत्तिपरः द्वितीयस्तु ममकारनिवृत्तिपर इति विवेकः तत्र जन्म त्रिविधं यौनं सावित्रं [ शौक्ल ] याज्ञिकं चेति. कर्म गर्भाधानादिचौलान्तं वर्णो ब्राह्मणत्वादिः आश्रमो ब्रह्मचर्यादिः जातिर्देवत्वमनुष्यत्वादिः आभिर्देहगताभिर्निमित्तभूताभिर्यस्य देहेऽहम्भावो न सज्जते नासक्तो भवति नास्तीति यावत् स हरेः प्रियः प्रियतमः ॥ ५१ ॥

स्वो बन्धुः परः शत्रुः इति या भिदा तथा वित्तेष्वात्मनि देहे च भिदा ममेदं धनमन्यस्येदं मम शरीरमन्यस्येदं शरीरम् इति वा भिदा भेदः तत्प्रयुक्तं हिताहिताचरणं च यस्य नास्ति स भागवतोत्तम इति सम्बन्धः तदभावे हेतुत्वेन विशिनष्टि सर्वभूतसमः ब्रह्मात्मकत्वेनात्मनां ज्ञानैकाकारत्वेन देहानां प्रकृतिपरिणामरूपत्वेन सर्वभूतेषु समबुद्धिरित्यर्थः । तत्रापि हेतुः शान्तः जितान्तःकरणः समत्वेन शिक्षितमना इत्यर्थः अहम्ममाभिमानाद्यभावैर्लिङ्गैर्लक्ष्यत इति कैर्लिङ्गैरित्यस्योत्तरमुक्तं भवति वित्तेष्वात्मनि च भिदा नास्तीत्यनेन धनशरीरादावपि कार्पण्याद्यभावप्रतिपत्तिरभिप्रेता तत्त्वात्मभेदनिषेधनपरा भाति सर्वभूतसम इत्यनन्तरोक्तविरोधात् भूतशब्दो देहविशिष्टात्मपरः सर्वशब्देनापि बहुत्वमवगम्यते ॥ ५२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कैर्लिङ्गैरित्येतं प्रश्नं परिहरति—देहेन्द्रियप्राणधियामिति संसारधर्मैः संसारस्वभावैः देहादीनां जन्मादिकृच्छ्रैरविमुह्यमानः

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्त्वतस्तु तत्तत्त्वं यथावज्जानन् यो वर्त्तते स भागवतप्रधान इत्यन्वयः । तत्र हेतुमाह—स्मृत्येति । देहादीनामचेतनत्वेन जन्मादिकृच्छ्रानुभवोऽनुपपन्न इत्यतस्तात्पर्यार्थोऽन्यो युक्तो वक्तव्यः स क इत्याशङ्क्य—

"देहेन्द्रियप्राणाधियां त्रिधैव ह्यभिमानिनः ।
तत्रोत्तमा देवतास्ताः सर्वदोषविवर्जिताः ॥
गुणैः सर्वैः सुसम्पन्ना विरिञ्चादुत्तरोत्तरम् ।
मध्यमा गुणदोषैस्ता अधमा असुरा मताः ॥
ते सर्वे दोषसंयुक्ता आचित्तादुत्तरोत्तरम् ।
तेभ्योऽन्यो मानुषा जीवस्ताभ्यां देवासुरावपि ॥
जीवाभिमानिनश्चैव त्रिविधाः सम्प्रकीर्त्तिताः ।
जीवमान्युत्तमो ब्रह्मा मध्यमः स्वयमेव तु ॥
अधमः कलिरुद्दिष्टस्तत्र मध्यगतीचयोः ।
मृतिजन्मक्षुधादुःखसम्भूश्चाखिलमेव तु ॥
नोत्तमस्य तु जीवस्य देहादेश्च कथञ्चन ।
जन्मादिकृतदुःखन्तु देहमान्यसुरस्य हि ॥
सुखाद्यप्ययजं दुःखमसुरेन्द्रियमानिनः ।
क्षुन्निमित्तं तु यद्दुःखं प्राणमान्यसुरस्य तत् ॥
भयतर्षादिजं दुःखं मनोमान्यसुरस्य च ।
केवलञ्चान्तरं दुःखं बुद्धिमान्यसुरस्य तत् ॥
नीचोऽस्मीति तु यद्दुःखमहमान्यसुरस्य तत् ।
अतीतादेः स्मृतेर्दुःखं चित्तमान्यसुरस्य च ॥
जीवमान्यसुरस्यैव स्यात्सर्वं तत्समुदायतः ।
एवमेव सुखं देवेषूभयं मध्यमेषु च ॥
असुराणामधर्मस्य वृद्ध्या सुखमपीष्यते ।
देवानां नैव केनापि दुःखं प्रीतिस्तु धर्मतः ॥
अधर्मोऽपि प्रीतये स्यादसुराणां तमोगतेः ।
देवानां पुण्यपापाभ्यां सुखमेवोत्तरोत्तरम् ॥
तेषां दुःखादिकं किञ्चिदसुरावेशतो भवेत् ।
प्राणस्य नासुरावेशो हरिणा च समो हि सः ॥
सम्पूर्णानुग्रहाद्विष्णोः प्राणः पूर्णगुणो मतः ।
असुराणां सुखाद्याश्च देवावेशादुदीरिताः ॥
स्वतस्तु निर्गुणाः सर्वे सर्वदोषात्मका मताः ।
निश्चित्यैवं जगत्सर्वं स्वात्मानं च पृथक् स्थितम् ॥
सर्वतश्च पृथक् सन्तं विष्णुं सर्वोत्तमोत्तमम् ।
जानन्ति ये भागवतास्त उक्ता उत्तमोत्तमाः" ॥

इत्यनेन परिहृतेति ज्ञातव्यम् ॥ ४९ ॥

कामकर्मबीजान्यविद्याप्रकृत्यादीनि एषां कामादीनाम् ॥ ५० ॥

जन्मकर्मभ्यां ब्राह्मणादिजन्मना गुरुकुलवासादिकर्मणा ब्राह्मणादिवर्णैः ब्रह्मचर्याद्याश्रमैः ब्राह्मणत्वादिजातिभिश्च संज्ञिते सङ्केतिते यः कामकर्मबीजैरुत्पन्नस्तस्मिन्देहे यस्याहम्भावो ब्राह्मणोऽहमित्यादि लक्षणो नास्ति स भागवतोत्तम इति ॥ ५१ ॥

इदमप्येकं लक्षणमित्याह—न यस्येति । यस्य भागवतस्य चित्ते प्राकृतान्तःकरणे विद्यमाने संसारे स्वात्मनि केवलात्ममात्रे स्वरूपावस्थाने मोक्षे वा यः स्वो जीवः परः परमात्मेति जीवपरयोरभिदा अभेदो नास्ति अभेदज्ञानं नास्तीत्यर्थः । यश्च * सर्वभूतसमः ब्रह्मादिमानुषान्तानि भूतानि यथावत् तारतम्येन पश्यति स भागवतोत्तमः—

"न क्वापि जीवं विष्णोश्च संसृतौ मोक्ष एव वा ।
यः पश्यति सुरादींश्च यथोत्कर्षं प्रपश्यति ॥
स सर्वभूतसमदृग्विष्णोः सर्वोत्तमं स्मरन्" ।

इत्यतः—

"नैवं त्वयाऽनुमन्तव्यं हरो जीवो मयेति ह ।
सर्वभूतगुणैर्युक्तं देवं त्वं ज्ञातुमर्हसि" ॥

इत्यतश्च—

"नैवं त्वयाऽनुमन्तव्यं जीवात्माहमिति क्वचित् ।
सर्वैर्गुणैः सुसम्पन्नं देवं मां ज्ञातुमर्हसि" ॥

इत्यतश्च गमाणाहस्य स्वकीयपरकीयबुद्धिभेदो नास्तीत्यर्थो नोपपन्नः । किन्तूक्त इति शान्तो भगवन्निष्ठायुक्तः ॥ ५२ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ केवलमानसलिङ्गेनाह यावत्प्रकरणम्—यो हरेः स्मृत्या देहादीनां संसारधर्मैर्जन्माप्ययादिभिर्विमुह्यमानो न भवति स भागवतप्रधानः उक्तं च श्रीगीतासु—

"येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः" ॥

इति ॥ ४९ ॥ ५० ॥

एतादृशस्य अस्मिन् देहे अहम्भावो न भजते किन्तु भगवत्सेवौपयिके साध्ये देह एव भजत इत्यर्थः । स हरेः प्रियो भागवतोत्तम इति पूर्वेणैवान्वयः । प्रकरणार्थत्वात् हरेः प्रिय इति हि भागवतमात्रस्यापि भागवतत्वावेदनम् ॥ ५१ ॥

तथा वित्तेषु ममतास्पदमात्रेषु अत्र निवासात्मनि च स्वपक्षपातमात्रं निषिध्यते न वर्गाक्तिभेदः ॥ ५२ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

देहादीनां जन्मादिभिः संसारधर्मैरविमुह्यमानः तत्र देहस्य जन्माप्ययौ प्राणस्य क्षुत्पिपासे मनसो भयं बुद्धेस्तर्षः तृष्णा इन्द्रियाणां कृच्छ्रं श्रमस्तैः ॥ ४९ ॥

न कामेति चेतस्यादौ बीजानि वासना उत्पद्यन्ते ततः रूपादिविषयकः कामस्ततः कर्म इन्द्रियद्वारा तत्तद्व्यापारः एतत्त्रितयस्य यच्चेतसि न सम्भवः तदेव गृहीत्वापीत्यादिभिर्मद्व्यहर्षमोहशोकादिरहितश्च भवतीति यथा चरतीत्यस्योत्तरमुक्तम् अतःपरमध्यायसमाप्तिपर्यन्तं यद्धर्म इत्यस्योत्तरमेव प्रपञ्चयिष्यते ॥ ५० ॥

जन्म सत्कुलोद्भवत्वं कर्म अध्ययनादि जातयोऽम्बष्ठाद्याः एताभिर्यस्य देहे अहम्भावोऽहङ्कारो न भवति ॥ ५१ ॥

स्वः स्वपक्षः परो विपक्षः वित्तेष्वपि स्वस्यैवेदं वित्तं न परस्येति आत्मनि स्वशरीरे एव प्रीतिर्न परशरीरे इति ॥ ५२ ॥

* शत्रुषु शत्रुत्वेन मित्रेषु मित्रत्वेन उदासीनेषु उदासीनत्वेन ज्ञानं समत्वम् एतद्विपरीतं असमत्वम् ।

न कामकर्मबीजानां यस्य चेतसि सम्भवः ।
वासुदेवैकनिलयः स वै भागवतोत्तमः ॥ ५० ॥
न यस्य जन्मकर्मभ्यां न वर्णाश्रमजातिभिः ।
सज्जतेऽस्मिन्नहं भावो देहे वै स हरेः प्रियः ॥ ५१ ॥
न यस्य स्वः पर इति वित्तेष्वात्मनि वा भिदा ।
सर्वभूतसमः शान्तः स वै भागवतोत्तमः ॥ ५२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कामश्च कर्माणि च बीजानि च वासनास्तेषाम् वासुदेव एवैकनिलय आश्रयो यस्य सः एतेन गृहीत्वापीत्यादिश्लोकत्रयेण द्वेषहर्षमोहकामादिरहितश्चरतीति यथा चरतीत्यस्योत्तरमुक्तम् ॥ ५० ॥

यैर्लिङ्गैर्भगवत्प्रिय इत्यस्योत्तरमाह—न यस्येति । जन्म सत्कुलम् कर्म तप आदि जातयोऽनुलोमप्रतिलोमजा मूर्धावसिक्तादयः अस्मिन् देहे अहङ्काररहितैः सत्कुलकर्मादिलिङ्गैर्हरेः प्रियो भवतीत्यर्थः ॥ ५१ ॥

वित्तेषु स्वीयं परकीयमिति आत्मनि स्वः पर इति ॥ ५२ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

संसारः जीवस्य जन्माद्यभिमानस्तज्जनकैर्देहादीनां धर्मैर्जन्माप्ययादिभिरित्यर्थः । तत्र देहादिमध्ये ॥ ४९ ॥

कामयन्त इति कामाः विषयाः चरति वर्तत इति व्यवहारात्मकवर्त्तनस्योत्तरम् ॥ ५० ॥

मूर्धावसिक्तो क्षत्रियजातीयस्त्रियां ब्राह्मणाज्जातः अम्बष्ठो वैश्यात् क्षत्रियायां जातः अहङ्काररहिताः सत्कुलधर्मादय एव चिह्नानीति तात्पर्यार्थविवक्षेत्यर्थः इत्युक्तम् ॥ ५१ ॥

आत्मनि स्व इति अहन्त्याऽसाधारण्य इति ॥ ५२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

देहस्य जन्माप्ययौ प्राणस्य क्षुत् इन्द्रियाणां कृच्छ्राणि मनसो भयं तर्षः तृष्णा बुद्धेः पराभूतेः संसारधर्मैः मनोगा देहात्माभिमानरहित इत्यर्थः ॥ ४९ ॥

कामकर्मवासनानामुत्पत्तिः यस्य चेतसि मनसि न भवेत् श्रीवासुदेवाश्रयः अन्तर्यामिहरिदृष्ट्यैव तदेव पश्यति ॥ ५० ॥

सत्कुलजन्म श्रौतस्मार्त्तकर्मभ्यां वर्णाश्रमविशिष्टजातिभिश्च देहनिष्ठाभिः अहम्भावो यस्य नास्ति देहनिष्ठशुद्ध्यादिकर्मवत् अयजनीयशास्त्रीयकर्माण्यपि कुर्वन्न तत्कृताऽहङ्कारविवशः आत्मनि देहपुत्रदारादिक भिदा अब्रह्मात्मकत्वात्तस्य दृष्टिः ॥ ५१-५२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

देहेन्द्रियेति । यो हरेः स्मृत्या देहादीनां जन्मादिभिः संसारधर्मैरविमुह्यमानः सः प्रधान उत्तमो भागवत इति सम्बन्धः तत्र देहस्य जन्माप्ययौ उत्पत्तिविनाशौ प्राणस्य क्षुत् मनसो भयं बुद्धेस्तर्षः तृष्णा इन्द्रियाणां कृच्छ्रं श्रम इति योज्यम् ॥ ४९ ॥

यस्य चेतसि कामकर्मबीजानां कामश्च कर्माण्येव बीजानि तेषां कामाश्च कर्माणि च बीजानि वासनाश्च तेषां वा कामकर्माणि काम्यकर्माणि तान्येव बीजानि संसृतिहेतुत्वात्तेषामिति वा न सम्भवः वासुदेव एक एव निलय आश्रयो यस्य सः ॥ ५० ॥

एवं गृहीत्वेत्यादिश्लोकत्रयेण द्वेषहर्षमोहकामादिरहितश्चरतीति यथा चरतीत्यस्योत्तरमुक्तं भवति । यैर्लिङ्गैर्भगवत्प्रिय इत्यस्योत्तरमाह—न यस्येति द्वाभ्याम् । तत्राद्योऽहङ्कारनिवृत्तिपरः द्वितीयस्तु ममकारनिवृत्तिपर इति विवेकः तत्र जन्म त्रिविधं यौनं सावित्रं [ शौक्लं ] याज्ञिकं चेति, कर्म गर्भाधानादिश्मशानान्तं वर्णो ब्राह्मणत्वादिः आश्रमो ब्रह्मचर्यादिः जातिर्देवत्वमनुष्यत्वादिः आभिर्देहगताभिर्निमित्तभूताभिर्यस्य देहेऽहम्भावो न सज्जते नासक्तो भवति नास्तीति यावत् स हरेः प्रियः प्रियतमः ॥ ५१ ॥

स्वो बन्धुः पर शत्रु इति वा भिदा तथा वित्तेष्वात्मनि देहे च भिदा ममेदं धनमन्यस्येदं मम शरीरमन्यस्येदं शरीरम् इति वा भिदा भेदः तत्प्रयुक्तं हिताहिताचरणं च यस्य नास्ति स भागवतोत्तम इति सम्बन्धः तदभावे हेतुत्वेन विशिनष्टि सर्वभूतसमः ब्रह्मात्मकत्वेनात्मनां ज्ञानैकाकारत्वेन देहानां प्रकृतिपरिणामरूपत्वेन सर्वभूतेषु समबुद्धिरित्यर्थः । तत्रापि हेतुः शान्तः जितान्तःकरणः समत्वेन शिक्षितमना इत्यर्थः । अहंममाभिमानादिभिर्लिङ्गैर्लक्ष्यत इति कैर्लिङ्गैरित्यस्योत्तरमुक्तं भवति वित्तेष्वात्मनि च भिदा नास्तीत्यनेन धनशरीरादावपि काणत्वखञ्जत्वादिदर्शनतत्प्रतिपत्तिरभिप्रेता नत्वात्मभेदनिषेधः तथा सति सर्वभूतसम इत्यनन्तरोक्तिविरोधात् भूतशब्दो देहविशिष्टात्मपरः सर्वशब्देनापि बहुत्वमवगम्यते ॥ ५२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कैर्लिङ्गैरित्येतं प्रश्नं परिहरति—देहेन्द्रियप्राणधियामिति । संसारधर्मः संसारस्वभावैः देहादीनां जन्मादिकृच्छ्रैरविमुह्यमानः

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्त्वतस्तु तत्तत्त्वं यथावज्जानन् यो वर्तते स भागवतप्रधान इत्यन्वयः । तत्र हेतुमाह—स्मृत्येति । देहादीनामचेतनत्वेन जन्मादि-कृच्छ्रानुभवोऽनुपपन्न इत्यतस्तात्पर्यार्थोऽन्यो युक्तो वक्तव्यः स क इत्याशङ्का—

"देहेन्द्रियप्राणधियां त्रिधैव त्वभिमानिनः ।
तत्रोत्तमा देवतास्ताः सर्वदोषविवर्जिताः ॥
गुणैः सर्वैः सुसम्पन्ना विरिञ्चादुत्तरोत्तरम् ।
मध्यमागुणदोषैस्ता अधमा असुरा मताः ॥
ते सर्वे दोषसंयुक्ता आचित्तादुत्तरोत्तरम् ।
तेभ्योऽन्यो मानुषो जीवस्ताभ्यां देवासुरावपि ॥
जीवाभिमानिनश्चैव त्रिविधाः सम्प्रकीर्तिताः ।
जीवमान्युत्तमो ब्रह्मा मध्यमः स्वयमेव तु ॥
अधमः कलिरुद्दिष्टस्तत्र मध्यमनीचयोः ।
मृतिजन्मक्षुधादुःखप्रभृत्यखिलमेव तु ॥
नोत्तमस्य तु जीवस्य देहादेश्च कथञ्चन ।
जन्मादिकृतदुःखन्तु देहमान्यसुरस्य ह ॥
सुखाद्यप्ययजं दुःखमसुरेन्द्रियमानिनः ।
क्षुन्निमित्तं तु यद्दुःखं प्राणमान्यसुरस्य तत् ॥
भयतर्षादिजं दुःखं मनोमान्यसुरस्य च ।
केवलश्रान्तरं दुःखं बुद्धिमान्यसुरस्य तत् ॥
नीचोऽस्मीति तु यद्दुःखमहमान्यसुरस्य तत् ।
अतीतादेः स्मृतेर्दुःखं चित्तमान्यसुरस्य च ॥
जीवमान्यसुरस्यैव स्यात्सर्वं तत्समुदायतः ।
एवमेव सुखं देवेष्वभयं मध्यमेषु च ॥
असुराणामधर्मस्य वृद्ध्या सुखमपीष्यते ।
देवानां नैव केनापि दुःखं प्रीतिस्तु धर्मतः ॥
अधर्मोऽपि प्रीतये स्यादसुराणां तमोगतेः ।
देवानां पुण्यपापाभ्यां सुखमेवोत्तरोत्तरम् ॥
तेषां दुःखादिकं किञ्चिदसुरावेशतो भवेत् ।
प्राणस्य नासुरावेशो हरिणा च समो हि सः ॥
सम्पूर्णानुग्रहाद्विष्णोः प्राणः पूर्णगुणो मतः ।
असुराणां सुखाद्याश्च देवावेशादुदीरिताः ॥
स्वतस्तु निर्गुणाः सर्वे सर्वदोषात्मका मताः ।
भिन्नत्वेनैव जगत्सर्वं स्वात्मानं च पृथक् स्थितम् ॥
सर्वतश्च पृथक् सन्तं विष्णुं सर्वोत्तमोत्तमम् ।
जानन्ति ये भागवतास्त उक्ता वरमोत्तमाः" ॥

इत्यनेन परिहृतेति ज्ञातव्यम् ॥ ४९ ॥

कामकर्मबीजान्यविद्याप्रकृत्यादीनि एषां कामादीनाम् ॥ ५० ॥

जन्मकर्मभ्यां ब्राह्मणादिजन्मना गुरुकुलवासादिकर्मणा ब्राह्मणादिवर्णैः ब्रह्मचर्याद्याश्रमैः ब्राह्मणत्वादिजातिभिश्च संज्ञिते सङ्केतिते यः कामकर्मबीजैरुत्पन्नस्तस्मिन्देहे यस्याहम्भावो ब्राह्मणोऽहमित्यादि लक्षणो नास्ति स भागवतोत्तम इति ॥ ५१ ॥

इदमप्येकं लक्षणमित्याह—न यस्येति । यस्य भागवतस्य चित्ते प्राकृतान्तःकरणे विद्यमाने संसारे स्वात्मनि केवलात्म-भावे स्वरूपावस्थाने मोक्षे वा यः स्वो जीवः परः परमा-त्मेति जीवपरयोरभिदा अभेदो नास्ति अभेदज्ञानं नास्तीत्यर्थः । यश्च * सर्वभूतसमः ब्रह्मादिमानुषान्तानि भूतानि यथावत् तारतम्येन पश्यति स भागवतोत्तमः—

"न क्वापि जीवं विष्ण्वैक्ये संसृतौ मोक्ष एव वा ।
यः पश्यति सुरादींश्च यथोत्कर्षं प्रपश्यति ॥
स सर्वभूतसमदृग्विष्णुं सर्वोत्तमं स्मरन्" ।

इत्यतः—

"नैव त्वयाऽनुमन्तव्यं दशो जीवो मयेति ह ।
सर्वभूतगुणैर्युक्तं देवं त्वं ज्ञातुमर्हसि" ॥

इत्यतश्च—

"नैवं त्वयाऽनुमन्तव्यं जीवात्माहमिति क्वचित् ।
सर्वैर्गुणैः सुसम्पन्नं देवं मां ज्ञातुमर्हसि" ॥

इत्यतश्च गमागमाद्यस्य स्वकीयपरकीयबुद्धिभेदो नास्तीत्यर्थो नोपपन्नः । किन्तूक्त इति शान्तो भगवन्निष्ठायुक्तः ॥ ५२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ केवलमात्मलिङ्गेनाह यावत्प्रकरणम्—यो हरेः स्मृत्या देहादीनां संसारधर्मैर्जन्मादिभिर्विमुह्यमानो न भवति स भागवतप्रधानः उक्तं च श्रीगीतासु—

"येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः" ॥

इति ॥ ४९ ॥ ५० ॥

एतादृशस्य अस्मिन् देहे अहम्भावो न सज्जते किन्तु भगवत्सेवौपयिके साध्ये देह एव सज्जत इत्यर्थः । स हरेः प्रियो भागवतोत्तम इति पूर्वेणैवान्वयः । प्रकरणार्थत्वात् हरेः प्रिय इति हि भागवतमात्रस्याभिमानतात्पर्येण ॥ ५१ ॥

तथा वित्तेषु ममतास्पदमात्रेषु अत्र वित्तवदात्मनि च स्वपक्षपातमात्रं निषिध्यते न व्यक्तिभेदः ॥ ५२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

देहादीनां जन्मादिभिः संसारधर्मैरविमुह्यमानः तत्र देहस्य जन्माप्ययौ प्राणस्य क्षुत्पिपासे मनसो भयं बुद्धेस्तर्षः तृष्णा इन्द्रियाणां कृच्छ्रं श्रमस्तैः ॥ ४९ ॥

न कामेति चेतस्यादौ बीजानि वासना उत्पद्यन्ते ततः तद्यादिविषयकः कामस्ततः कर्म इन्द्रियद्वारा तत्तद्व्यापारः एतत्त्रितयस्य यन्नासि न सम्भवः तदेव गृहीत्वापीत्यादि-भिरुक्तैर्वर्णमोहक्रमादिरहितश्च भवतीति यथा चरतीत्यस्यो-त्तरमुक्तम् अतःपरमध्यायसमाप्तिपर्यन्तं यद्वर्म इत्यस्यो-त्तरमेव प्रपञ्चयिष्यते ॥ ५० ॥

जन्म सत्कुलोद्भवत्वं कर्म अध्ययनादि जातयोऽम्बष्ठाद्याः एताभिर्यस्य देहे अहम्भावोऽहङ्कारो न भवति ॥ ५१ ॥

स्वः स्वपक्षः परो विपक्षः वित्तेष्वपि स्वस्यैवेदं वित्तं न परस्येति आत्मनि स्वशरीरे एव प्रीतिर्न परशरीरे इति ॥ ५२ ॥

---

* शत्रुषु शत्रुत्वेन मित्रेषु मित्रत्वेन उदासीनेषु उदासीनत्वेन ज्ञानं समत्वम् एतद्विपरीतं असमत्वम् ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उरुविक्रमः परमात्मविशेषः ययोक्तौ उरुविक्रमौ तावङ्घ्री तयोः शाखा अङ्गुलयस्तासां नखमणयः नखा एव मणयः तेषां चन्द्रिकया ज्योत्स्नया निरस्तोऽपि उपसीदतां सेवमानानां हृदये ऽनुपसीदतां हृदि प्रभवति सः तापः कथं पुनः प्रभवतीत्यन्वयः ॥ ५४ ॥

स्खलनादिना अवशेनाभिहितः कथितः प्रणयरशनया भक्तिलक्षणपाशेन धृताङ्घ्रिपद्मः बद्धपादपद्मः यादृशो वक्तुम इत्यनयोः प्रश्नयोः परिहारौ धृतोर्ध्वपुण्ड्रत्वादिके सत्यनन्तगुणानामसङ्कीर्तनमत्रोक्ति "ये शङ्खचक्राङ्कितबाहुमूलाः" इत्यादिषु प्रसिद्धत्वादनुक्तमिति ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्वितीयोऽध्यायः ॥ २ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

किञ्च, त्रिभुवनेति । त्रिभुवनविभवाय किमुत तद्धेतवे इत्यर्थः "सर्वोऽपि द्वन्द्वो विभाषयैकवद्भवति" इति न्यायादेकवचनं कथं विचारात् न किन्त्वावेशादेवेत्याह—अकुण्ठा सङ्कोचगन्धरहिता स्मृतिर्यस्य सः तच्च तस्य युक्तमेवेत्याह, अजिते हरावेव आत्मा येषां तैर्ब्रह्मप्रभृतिभिः सुरादिभिरपि विमृग्यात् दुर्लभादित्यर्थः ॥ ५३ ॥

तदेव दृष्टान्तमुपपादयति—भगवत इति । चन्द्रिका आतापहारिणी दीप्तिः ॥ ५४ ॥

अत्र हरिः स्वयं न विसृजति तेन धृताङ्घ्रिपद्मश्चेति परस्परासक्तिर्दर्शिता सर्वत्र तत्प्रेमस्फूर्त्तिपत्ते तु तादृशगुणे तत्र भगवति को न रज्येदिति तदभिप्राय इति भावः । अत्र विशेषजिज्ञासायां भक्तिसन्दर्भो ऽन्वेषणीयः ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
द्वितीयोऽध्यायः ॥ २ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

त्रिभुवनविभवहेतवेऽपि त्रिलोकीराज्यप्रयोजनायापि न कुण्ठा प्रलोभयितुमशक्या स्मृतिर्यस्य सः "न पारमेष्ठ्यं न महेन्द्रधिष्ण्यम्" इत्यादौ "वाञ्छन्ति यत्पादरजः प्रपन्नाः" इत्यादिवचनात् अत एव लवार्द्धमपि निमिषार्द्धमपि भगवच्चरणारविन्दादन्यत्र न चलति कीदृशात् अजिते हरावेवात्मा येषां तथाभूतैरपि सुरादिभिर्दुर्लभात् किन्तु केवलं विमृग्यात् । यद्वा, अजितात्मानोऽजितेन्द्रिया ये सुरादयस्तैस्तु त्रिभुवनराज्यार्थं विमृग्यात् ॥ ५३ ॥

अपि च विषयाभिसन्धिना चलनं कामसन्तापे सति भवेत् स च कामसन्तापो महाभागवतानां न सम्भवेदित्याह—भगवत इति । उरुविक्रमौ च तौ अङ्घ्री च तयोः शाखा अङ्गुलयस्तासु नखानि तान्येव मणयस्तेषां चन्द्रिकाशीतला दीप्तिस्तया निरस्तः कामादितापो यस्मिन् तस्मिन्नुपसीदतां जनानां हृदि कथं पुनः स तापः प्रभवति चन्द्रे उदिते अर्कस्य ताप इव ॥ ५४ ॥

उक्तसमस्तलक्षणसारमाह—विसृजतीति । हरिरेव स्वयं साक्षात् यस्य हृदयकमलं न विसृजति न मुञ्चति तत्र कलमषकुञ्जराणां कुतो वार्त्तेत्याह यः स्खलनवशेनापि कदाचिदभिहितनामाऽपि अघौघं नाशयति किं पुनः सप्रेमाह्लादं येन प्रतिक्षणमभिभाषित इति भावः । एतेन यदुक्तं इत्यस्योत्तरमभिव्यञ्जितम् ननु, कथं तदीयहृदयमन्दिरान्न निर्गच्छति ? तत्राह—प्रणयरशनया धृतं हृदये बद्धम् अङ्घ्रिपद्मं यस्य सः यथा प्रेम वशीकृत्य यशोदया उदूखले बद्धस्तथा सर्वजीवान्मायाशृङ्खलया निबध्नन् स्वभक्तजीवैः प्रेमशृङ्खलया निबद्ध्यते इति भावः ॥ ५५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशे द्वितीयोऽयं सङ्गतः सङ्गतः सताम् ॥ २ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यः त्रिभुवनविभवहेतवे लोकत्रयैश्वर्यप्रयोजनायापि अजितात्मसुरादिभिः अजितः कामादिभिरनभिभूतः आत्मा मनो येषाम् अजिते अच्युते वा आत्मा येषां तैः सुरासुरैः विमृग्यादन्वेषणीयात् भगवत्पदारविन्दात् भजनीयात् लवार्द्धमपि निमिषार्द्धमपि न चलति स वैष्णवाग्र्यः तत्र हेतुं दर्शयति, अकुण्ठस्मृतिः लोकत्रयसुखमनित्यं भगवत्प्राप्तिसुखं नित्यमित्येवंरूपा अकुण्ठा अनपगता स्मृतिर्यस्य सः तथोक्तं भगवता—

"आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन ! ।
मामुपेत्य तु कौन्तेय ! पुनर्जन्म न विद्यते" ॥

इति ॥ ५३ ॥

न च कामादिसन्तप्तान्तःकरणतया भजनीयपदारविन्दात् चलनं शक्यमित्याह—भगवतः उरुः विस्तृतः विक्रमः विन्यासः ययोस्तौ उरुविक्रमौ तौ च अङ्घ्री च उरुविक्रमाङ्घ्री तयोः शाखा अङ्गुलयः तासु नखान्येव मणयः तच्चन्द्रिका शीतला दीप्तिः तया निरस्तः कामादितापो यस्मिन् तस्मिन् उपसीदताम् उपसन्नानां भागवतोत्तमानां हृदि सः कामादितापः कथं प्रभवति न कथमपीत्यर्थः । तत्र दृष्टान्तमाह—चन्द्र इवोदितेऽर्कताप इति ॥ ५४ ॥

यदुक्तं च इत्यस्योत्तरं दर्शयन् उक्तसमस्तलक्षणान्तरमाह, विसृजतीति । प्रणयरशनया दैन्यपाशेन धृताङ्घ्रिपद्मः दीनानां शरणागतानाम् अघौघं पापसमूहं नाशयतीति स तथा स्खलनजृम्भनादौ अवशेन "कमलनयन वासुदेव विष्णो मम शरणम्" इत्येवमभिहितः कथितः हरिः यस्य हृदयं साक्षात्स्वयमेव न विसृजति न मुञ्चति स भागवतप्रधान उक्तो भवति ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वितीयाध्यायार्थप्रकाशः ॥ २ ॥

———

भाषा टीका ।

भगवान् के विषय में चित्त लगाकर देवादिक जिनको ढूंढते हैं ऐसे भगवत् चरणारविन्द का अखंडित स्मरण करने वाला जो भागवत त्रिलोकी के राज्य के लिये भी अर्द्ध लव और अर्द्ध निमिष भी चलायमान नहीं होता है वह [वै]ष्णवों में अग्रगण्य है ॥ ५३ ॥

श्रीत्रिविक्रम भगवान् के चरण की शाखा रूप जो अंगुली हैं तिनके नख रूप मणियों की चांदिनी से कामादि [ता]प दूर भया है जिनका, ऐसे भजन करने वालों के हृदय में [सं]ताप कैसे होसका है ? जैसे, कि—रात्रि में चन्द्र के उदय [हो]ने पर सूर्य के संताप का संभव ही नहीं ॥ ५४ ॥

जिनके हृदय को साक्षात् श्रीहरि नहीं छोड़ते हैं, किन्तु अवश होकर नामोच्चारण करने मात्र से भी संपूर्ण पापों के पुंज का नाश कर देते हैं और जिसके प्रेम रूपी रस्सी से आपका श्रीचरण कमल बांधा गया है, ऐसा जो अधिकारी है वह भागवतों में प्रधान कहा गया है ॥ ५५ ॥

इति श्रीमद्भागवत एकादशस्कन्ध में द्वितीय अध्याय की,

श्रीवृन्दावनस्थ पं० भागवताचार्यकृत

भाषा टीका समाप्त ॥ २ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

———:*:———

## तृतीयोऽध्यायः ।

——:०:——

राजोवाच ।

परस्य विष्णोरीशस्य मायिनामपि मोहिनीम् ।
मायां वेदितुमिच्छामो भगवन्तो ब्रुवन्तु नः ॥ १ ॥
नानुतृप्ये जुषन् युष्मद्वचो हरिकथामृतम् ।
संसारतापनिस्तप्तो मर्त्यस्तत्तापभेषजम् ॥ २ ॥

अन्तरिक्ष उवाच ।

शुकपक्षीय वीरराघवीययोः पाठः ( निर्गुणे केवले साक्षादात्मनो यद्विपर्ययः ।
सैषा भगवतो माया ययेदं निर्ममे विभुः ॥ क ॥
इन्द्रियार्थभ्रमो जाग्रत्स्वप्नोऽन्तःकरणभ्रमः ।
सुप्तं तद्वासनाबीजं तुर्याऽमूर्त्तिस्तदन्वयः ॥ ख ॥
विशुद्धं ज्ञानमेवैकं मायया भासते त्रिधा ।
ग्राहककार्यैर्यथा स्वप्ने यत्तत्संवित्क्रियाफलम् ॥ ग ॥
वैतथ्याद्व्यभिचाराच्च मायात्रैविध्यमात्मनि ।
यथा मनोरथः स्वप्न इत्यामृश्योपशाम्यति ॥ घ ॥ )
एभिर्भूतानि भूतात्मा महाभूतैर्महाभुजः ।
ससर्जोच्चावचान्याद्यः[1] स्वमात्रात्मप्रसिद्धये ॥ ३ ॥
एवं सृष्टानि भूतानि प्रविष्टः पञ्चधातुभिः ।
एकधा दशधाऽऽत्मानं विभजन् जुषते गुणान् ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मायातत्तरणब्रह्मकर्मप्रश्नचतुष्टये ।
तृतीये तूत्तरं दत्तमार्षभैर्मुनिभिः पृथक् ॥

विष्णोर्मायामिदं पश्यन्नित्युक्तमतो मायां पृच्छति—परस्येति । हे भगवन्तः ! ॥ १ ॥

ननूक्तलक्षणो भागवतो भूत्वा कृतार्थः स्यात् किं बहुप्रश्नेन आह-नानुतृप्ये इति । संसारतापैर्नितरां तप्तोऽहं तस्य तापस्य भेषजं हरिकथामृतरूपं युष्मद्वचो जुषमाणो नानुतृप्यामि ॥२॥

मायायाः स्वरूपतो निरूपणासम्भवात्सृष्ट्यादिकार्यद्वारेण निरूपयितुमाह-एभिरिति । आद्यः पुरुषो यया शक्त्या भूतानामात्मा कारणभूतः एभिः स्वसृष्टैर्महाभूतैरुच्चावचानि भूतानि ससर्ज "एषा माया भगवतः" इति चरमश्लोकपादस्य प्रतिश्लोकमनुषङ्गः. किमर्थं ससर्ज ? स्वमात्रात्मप्रसिद्धये स्वं मिमीते प्रमिमीते उपास्ते यः स स्वमाता तस्याऽऽत्मनो जीवस्य प्रकृष्टायै सिद्धये । यद्वा, स्वांशभूतानां जीवानां मात्राप्रसिद्धये विषयभोगाय आत्मप्रसिद्धये मोक्षाय चेत्यर्थः । तदुक्तं वेदस्तुतौ—

"बुद्धीन्द्रियमनःप्राणान् जनानामसृजत्प्रभुः ।
मात्रार्थं च भवार्थं च आत्मने कल्पनाय च" ॥

इति ॥ ३ ॥

एवं जीवोपकरणार्थं पञ्चधातुभिर्महाभूतैः सृष्टानि भूतानि

---

(१) स्वयमात्मप्रसिद्धये इति विश० पाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

निर्गुणे सत्त्वादिगुणत्रयरहिते केवले विशुद्धे शरीरसम्बन्धरहिते साक्षात्स्वयंप्रकाशस्वरूपे विपर्ययः शरीरसम्बन्धगुणावद्धदेहात्मभ्रमादिरूपो यो विपर्ययस्तन्माया मायाकार्यमिति योजना कार्यकारणभावाद्यौपचारिकं सामानाधिकरण्यं निर्गुण इत्यनेन मायायास्त्रिगुणात्मकत्वं सूचितम् । केवल इत्यनेन देहेन्द्रियादिरूपेण परिणतत्वं सात्त्वादित्यनेन जडत्वम् अनेन मायास्वरूपमुक्तं विपर्यय इत्यनेन च मायाकार्यम् उक्तम् इदं निर्मम इत्यनेन महदादिपृथिव्यन्तस्य जगतस्तत्कार्यत्वसूचनात् आत्मनो विपर्ययः "सा वै भगवतो माया„ इत्यनेन देहात्माभिमानादिरूपस्य जीवभ्रमस्य तत्कार्यत्वसूचनात् (क)

तत्र भ्रमरूपकार्यं प्रपञ्चयितुं प्रकृतिकार्यदेहेन्द्रियादिसम्बन्धविनिर्मुक्ते जीवस्वरूपे भ्रमात्मकमवस्थात्रयसम्बन्धं तत्प्रयुक्तजाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयसम्बन्धं च वदन् भ्रमं प्रपञ्चयति, इन्द्रियार्थेति । जाग्रत्स्वप्नशब्दाभ्यां तदवस्थाभाग् लक्ष्यते तदा अयमर्थः जाग्रज्जाग्रदवस्थायाम् इन्द्रियार्थभ्रमः इन्द्रियैर्मनस्संयुक्तैरर्थेष्वनात्मास्थिररूपेषु देहादिष्वात्मत्वस्थिरत्वारोपादिभ्रमः स्यात् स्वप्नोऽन्तःकरणभ्रमः स्वप्नेऽन्तःकरणेन बाह्येन्द्रियासंयुक्तेन भ्रमः सोऽप्यस्थिरस्वाप्नशरीरादिषु स्थिरत्वादिबुद्धिरूपः इन्द्रियान्तःकरणपदाभ्यां तत्सम्बन्धवतोर्निराभवयोरसम्भवात्तदाश्रयभूतदेहसम्बन्धस्तत्प्रयुक्तजाग्रदाद्यवस्थात्रयञ्च फलितः सुषुप्तस्तु सत्त्वबीजं वासनारूपबीजमात्रावशेषितं विलुप्तबाह्याभ्यन्तरकरणव्यापारादिसुखित्वदुःखित्वादिज्ञानं सुखं सुषुप्तिरित्युच्यते तदपि प्रकृतिसम्बन्धप्रयुक्तं तत्कार्यमेवेत्यर्थः तदन्वयः इत्थं तिसृणामवस्थात्रयेणान्वयो यस्य तथाभूतः प्रत्यगात्मा तर्हि कदाऽवस्थात्रयान्वयविनिर्मुक्तिरित्यत्राह, तुर्योऽमूर्त्तिरिति । यदाऽमूर्त्तिः प्रकृतिपरिणामात्मकशरीराभावः मुक्त्यवस्था इति यावत् सा तुरीया देहसम्बन्धप्रयोज्यावस्थात्रयविनिर्मुक्त्यवस्थेत्यर्थः । अनेनावस्थात्रयान्वयस्य प्राकृतशरीरसम्बन्धप्रयुक्तत्वेनौपाधिकत्वादस्थिरत्वं सूचितं तस्मिन् स्थिरत्वप्रतीतिर्भ्रान्तिरूपेति (ख)

एतदेव स्वप्नदृष्टान्तेनोपपादयन् प्राकृतशरीरसम्बन्धेऽपि कारणमाह—विशुद्धम् इति । यद्यपि जीवस्य स्वरूपं विशुद्धं रागाद्यकल्पितम् एकं जाग्रदाद्यवस्थाभेदरहितं ज्ञानं ज्ञानैकरसं तथापि तन्मायया प्रकृतिपरिणामरूपदेहसम्बन्धेन निमित्तभूतेन ग्राहकार्थैस्त्रिधा जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रययुक्तमवभासते यथा स्वप्ने गजतुरगादिरस्थिरोऽपि स्थिरवदवभासते तद्वत् ग्राहकार्थैरित्यत्र ग्राहकमिन्द्रियम् आदिशब्देनान्तःकरणवासनाबीजरूपयोः सङ्ग्रहः यैरर्था गृह्यमाणास्तन्मूलदेहेन्द्रियान्तःकरणान्वयादिकं सर्वं तत्त्वविक्रियाफलं संविज्ञानस्वरूपे प्रत्यगात्मनि क्रियायाः सत्ताविपुण्यपापा (दिम) क्रियायाः फलमित्यर्थः (ग)

एतदेवोपपादयति वैतथ्यादिति । वैतथ्यादनित्यत्वात् मुक्त्यवस्थायामनुवृत्त्यभावाद्व्यभिचारादिदानीमपि कस्याञ्चिदवस्थायामवस्थान्तरस्यान्वयस्य व्यभिचाराच्चात्मनि मायात्रैविध्यं मायाकार्यमवस्थात्रैविध्यं क्रियाफलमित्यनुषज्यते नतु स्वाभाविकमित्यर्थः । कर्मफलत्वे दृष्टान्तमाह, यथा मनोरथः स्वप्ने इति । मनोरथशब्देन मनोरथविषयीभूतं सुखं लक्ष्यते यथा स्वाप्नं सुखम् अनित्यं क्रियाफलं तद्वदित्यर्थः । इत्यामृश्य एवं विमर्शे कृते सति उपशाम्यति बहिः क्षुद्रसुखार्थव्यापारान्निवृत्तो भवतीति (घ)

एवं प्रकृतिकार्यभ्रमं विस्तरेण उक्त्वाऽथ जगत्कर्तृत्वं प्रपञ्चयति—एभिरिति । आद्यः सर्वकारणभूतः स्वयमादावेव वर्तमानः महाभुजः परमपुरुषः भूतात्मा व्यष्टिसमष्ट्युभयविधभूतान्तरात्मा एभिः प्रत्यक्षादिप्रमाणप्रसिद्धैर्महाभूतैः पृथिव्यादिभिर्मात्राकार्यभूतैः समष्टिभिर्भूतानि उच्चावचानि उत्कृष्टापकृष्टानि च ससर्ज सृष्टेः प्रयोजनमाह, स्वमात्रात्मप्रसिद्धय इति । स्वस्य मात्राभूतानां शरीरभूतानाम् ( आत्मनां ) जीवानां प्रसिद्धये पुरुषार्थसिद्धये भगवदाराधनोपयुक्तकरणकलेवरादीनि लब्ध्वा भगवन्तमाराध्य निःश्रेयसं प्राप्तुमित्यर्थः ॥ ३ ॥

एवं तर्हि लब्धकरणकलेवराः सर्वेऽपि तमाराध्य निःश्रेयसं कुतो न प्रापुरित्यत आह—एवमिति । यद्यप्येवं स्वमात्रात्मप्रसिद्धये तथा पञ्चभिर्धातुभिर्महाभूतैः सृष्टान्यपि भूतानि शरीराणि प्रविष्टः प्रत्यगात्मा एकधा दशधा आत्मानं विभजन् ज्ञानकर्मेन्द्रियान्तःकरणैरात्मानं ज्ञानं विभजन् गुणान् शब्दादिविषयानेव भुङ्क्ते नतु परमपुरुषमाराधयतीति भावः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यस्य पूर्णस्य मायिनी ज्ञानिनी मोहिनी माया सृष्ट्यादिषु प्रवर्तमानाम् इच्छाशक्तिं जडप्रकृतिमेव च ॥ १ ॥

तत्रतत्र भागवते मायाविषयप्रश्नपरिहारावनेकधा कृतावित्यत्राश्रद्धेयमिदं नेति भावेनाह—नानुतृप्ये इति । हरेः कथामृतं यस्मिंस्तत्तथा तच्छ्रवणं संसारतापशान्तिकरम् औषधम् ॥ २ ॥

परिहारमपेक्ष्य प्रश्नः सकृत्कृत इत्यतः परिहारोऽपि मायात्रैविध्यविषय एवेति भावेनोपोद्घातं रचयति—एभिरित्यादिना । अयमत्र भावः आद्यो स्वयं परमात्मा स्वेच्छाक्षोभितया प्रकृत्या महदहङ्कारादिक्रमेण चतुर्विंशतितत्त्वानि सृष्ट्वा पुनस्तैरसमेतैः स्तुतः तान्यनुप्रविश्य संयोज्य तदुपादानत्वेन ब्रह्माण्डमुत्पाद्यान्तस्तैः सह प्रविश्य ब्रह्मादिपृथिव्यन्तानां तत्त्वानां रूपान्तराणि सृष्टैर्महाभूतैः पञ्चभिरुच्चावचानि शरीराणि ससर्ज त्रिविधान् जीवांस्त्रिविधैः शरीरैः संयोजयामास किं प्रयोजनमुद्दिश्येत्यत उक्तम् आत्मप्रसिद्धय इति आत्मनो हरेः प्रसिद्धिः ख्यातिः प्रतीतिः ज्ञानमिति यावत्तदर्थं परमात्मतत्त्वज्ञानायेत्यर्थः ॥ ३ ॥

जीवरूपया प्रकृत्या भोगायतने शरीरे स्थित्वा कर्मफलं भुङ्क्त इत्यद्वैतमतं प्रत्याह—एवं सृष्टेति । स परमात्मैकविधया त्रिविधैः पुनः सृष्ट्या स्थूलभावं प्राप्तैः पञ्चधातुभिर्महाभूतैः भूतानि शरीराणि सृष्ट्वा तत्तत्कर्मानुसारेण जीवेन सह तान्यनुप्रविश्यात्मानं स्वम् एकधा मनोनियन्तृरूपेण दशधा दशेन्द्रियनियामकरूपेण विभजन् विभक्तं कुर्वन् गुणान् विषयसारानानन्दानेव जुषत इत्यन्वयः । विभजन्नित्यनेन जीवात्मनामल्पशक्तित्वेन स्वात्मनो भिन्नत्वमवशत्वेन कर्मफलभोक्तृत्वं स्वस्य पूर्णशक्तित्वेन स्वातन्त्र्यं च व्यनक्ति ॥ ४ ॥

---

**गुणैर्गुणान् स भुञ्जान आत्मप्रद्योतितैः प्रभुः ।**
**मन्यमान इदं सृष्टमात्मानमिह सज्जते ॥ ५ ॥**

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

हरिकथामृतमिति तत्स्वभावत्वान्मायावर्णनेऽपि तत्प्रधानमेव तव वचो भवेदिति भावः ॥ १—२ ॥

तत्र एषा माया भगवत इत्युत्तरयिष्यमाणस्य सोपानमाह—एभिरित्यादि । एभिर्महदादिभिः क्रमेण सृष्टौ स्वमात्रेत्यस्य टीकायां भक्तार्थं एव सृष्टौ मुख्यः प्रयत्न इति प्रथमार्थे दर्शितम् एतदेव च वास्तवं प्रयत्नान्तरस्याऽऽनुषङ्गिकत्वात् ॥ ३ ॥

अत एव जुषते गुणानिति—

"गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः ।
न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः" ॥

इत्यादि न्यायेन तादृशभक्तानां स्वेष्टतद्विलासरूपानेव प्रीत्या सेवत इत्यर्थः ॥ ४ ॥

———

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मायातत्तरणादीशादिकृत्कर्माणि पृच्छते ।
राज्ञ प्रत्युत्तरायेषां तृतीये द्रुराषभाः ॥

विष्णोर्मायामिदं पश्यामत्युक्तवतां मायां पृच्छति, परस्येति ॥ १ ॥

नानुतृप्ये इति युष्मत्सङ्गार्थिनो मे युष्मद्वचोऽमृतपानलोभस्य तुर्योरत्वमेव प्रश्ने कारणं ज्ञेयमिति भावः ॥ २ ॥

गुणकार्याणां सृष्टिस्थितिसंहाराणां निरूपणेनैव गुणा निरूपिताः स्युर्गुणैश्च निरूपितैः स्वत एव गुणमयी माया निरूपिता स्यादित्यभिप्रायेणाह—एभिरिति । भूतात्मा परमेश्वरः उच्चावचानि भूतानि देवतिर्यगादीनि ससर्ज किमर्थं स्वमात्रात्मप्रसिद्धये जीवानां जीवानां मात्रायां विषयप्राप्तीनाम् आत्मनः स्वप्राप्तेश्च वा प्रकृष्टा सिद्धिस्तदर्थं यदुक्तं वेदस्तुतौ—

"बुद्धीन्द्रियमनःप्राणान् जनानामसृजत्प्रभुः ।
मात्रार्थं च भवार्थं च आत्मने कल्पनाय च" ॥

इति ॥ ३ ॥

सृष्टिमुक्त्वा स्थितिमाह—एवमिति त्रिभिः । पञ्चधातुभिर्महाभूतैः सृष्टानि भूतान्यन्तर्यामितया प्रविष्टः सन् एकधा मनसा दशधा बाह्येन्द्रियरूपेण आत्मानं विभजन् गुणान् तद्विषयान् जुषते जीवं जोषयति भोजयतीत्यर्थः ॥ ४ ॥

———

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं भगवत्प्राप्तौ साधनं भगवद्भजनाधिकारिणं भागवतं च श्रुत्वा अथ भगवत्प्राप्तौ प्रतिबन्धकभूतां मायां पृच्छति—हे भगवन्तः ! सर्वज्ञाः विष्णोर्मायामिदामिति प्रागुदाहृतां विष्णोर्या मायिनो बद्धजीवानामपि निश्चयेन मोहिनीम् अनेन बद्धजीवमपि वेदितुमिच्छाम अतो नोऽस्मभ्यं ब्रुवन्तु ॥ १ ॥

उक्तवक्ष्यमाणबहुविधप्रश्ने हेतुमाह—नानिवेति । संसारतापैस्तिग्मं मर्त्योऽहं तेषां तापानां भेषजम् औषधं हरिकथारूपममृतं यस्मिन् तद्युष्मद्वचो जुषमाणो नानुतृप्ये न तृप्यामि ॥ २ ॥

सृष्टिसंहारद्वारेण मायामाह—एभिरित्यादिना । तत्र सृष्टिं बद्धजीवश्चाह पञ्चभिः । आद्यः विश्वहेतुः भूतानामात्मान्तर्यामी यस्याः स्वशक्तिभूतायाः परिणामभूतैरेभिः स्वसृष्टैर्महाभूतैः उच्चावचानि भूतानि ससर्ज, एषा माया भगवत इत्यग्रिमेणान्वयः । भूतसृष्टिप्रयोजनमाह, स्वमात्रात्मप्रसिद्धये इति । स्वः स्वकीयः अंशभूतो जीवस्तस्य मात्रात्मप्रसिद्धये तत्र बुभुक्षोः मात्राप्रसिद्धये विषयभोगाय मुमुक्षोः आत्मप्रसिद्धये मोक्षाय ॥ ३ ॥

मुमुक्षुस्वभावः पूर्वाध्याये वर्णितः अत्र बुभुक्षुस्वभावमाह, एवमिति चतुर्भिः । एवं पञ्चधातुभिर्महाभूतैः सृष्टानि शरीराणि प्रविष्टः मायामोहितः बुभुक्षुः आत्मानम् एकधा मनसा मननशीलोऽस्मीत्येवं दशधा श्रोत्रादिभिः श्रोतृत्वादिधर्मैर्विभजन् गुणान् विषयान् जुषते भुङ्क्ते नतु मुमुक्षुवद्भगवन्तं भजते ॥ ४ ॥

———

### भाषाटीका ।

**राजोवाच ।**

राजा निमि बोले, कि—हे विप्रो ! अखिल निवन्ता परम पुरुष श्रीविष्णु की माया के जानने की मैं इच्छा करता हूं आप लोग मेरे लिये कथन कीजिये ॥ १ ॥

हरिकथा ऽमृत रूप आपके वचनों को सेवन करता हुआ मैं तृप्त नहीं होता हूं क्योंकि ? संसार के तापों में तप्त हुआ हूं और आपके वचन संसारताप की औषध रूप हैं ॥ २ ॥

**अन्तरिक्ष उवाच ।**

अन्तरिक्ष नामक योगेश्वर बोले, कि—हे महाभुज ! इन पञ्च महाभूतों से जगत्कारण परमात्मा ने देव मनुष्यादि रूप ऊंचे नीचे शरीरों को रचा, किस प्रयोजन के लिये, कि—केवल अपने शरीर भूत जीवों की प्रकृष्ट सिद्धि ( मोक्ष ) के लिये अर्थात् परमात्मा ने जीवों को निज आराधन द्वारा अपनी प्राप्ति के लिये जिस प्रकृति के विकार पञ्चभूतों से करण कलेवरादि प्रदान किये उस प्रकृति को ही माया जानो ॥ ३ ॥

इस प्रकार पञ्चभूतों से परमात्माके रचे हुए इन शरीरों में प्रविष्ट होकर यह जीव मन के द्वारा और इन्द्रियों के द्वारा आत्मका विभाग करता हुआ विषयों का सेवन करने लगा और परमात्मा के आराधन को भूल गया ॥ ४ ॥

———

### श्रीधरस्वामिकृतभावार्थदीपिका ।

स च जीव आत्मनाऽन्तर्यामिणा प्रद्योतितैर्गुणैरिन्द्रियैर्गुणान्विषयान् भुञ्जान इदं सृष्टं शरीरमात्मानं मन्यमान इह शरीरादौ सज्जते अत एव संसरतीति भावः ॥ ५ ॥

कर्माणि कर्मभिः कुर्वन् सनिमित्तानि देहभृत् ।
तत्तत्कर्मफलं गृह्णन् भ्रमतीह सुखेतरम् ॥ ६ ॥
इत्थं कर्मगतीर्गच्छन् बह्वभद्रवहाः पुमान् ।
आभूतसम्प्लवात्सर्गप्रलयावश्नुतेऽवशः ॥ ७ ॥
धातूपप्लव आसन्ने व्यक्तं द्रव्यगुणात्मकम् ।
अनादिनिधनः कालो ह्यव्यक्तायापकर्षति ॥ ८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, भुञ्जानः कथं सज्जते ? भुञ्जानो भोगसमाप्तौ मुच्यत इति चेत्तत्राऽऽह–कर्मभिः कर्मेन्द्रियैश्च सनिमित्तानि सवासनानि कर्माणि कुर्वंस्तत्तत्पूर्वकर्मफलं च गृह्णन्नयं देहभृत्भ्रमतीह संसारे न तु मुच्यते कथम्भूतं कर्मफलम् ? सुखेतरं सुखदुःखात्मकम् ॥ ६ ॥

कियन्तं कालं भ्रमति ? तत्राह– इत्थमिति । बहून्यभद्राणि वहन्तीति तथा ताः सर्गप्रलयावुत्पत्तिमरणे ॥ ७ ॥

एवं मायामयीं सृष्टिमुक्त्वा प्रलयं दर्शयितुमारभते, धातूनां महाभूतानामुपप्लवे नाशहेतावासन्ने व्यक्तं कार्यं द्रव्यं स्थूलं गुणाः सूक्ष्मं तदात्मकमव्यक्तायाऽव्यक्तं प्रति नेतुमाकर्षति ॥ ८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

स च खलु जीवः प्रभुः प्रभवंशत्वात् यत्किञ्चिज्ज्ञानादिशक्तियुक्तोऽपि ॥ ५ ॥

अत एव आसक्तत्वादेव संसरति जन्ममरणादिना भ्रमति, इह जगति सुखेतरमिति कर्मफलस्य विशेषणं सुखञ्च तदितरच्चेति विशेषणयोः कर्मधारयः पुंस्त्वमार्षम् ॥ ६ ॥

आभूतसम्प्लवात् भूतसम्प्लवमभिव्याप्य महाप्रलयपर्यन्तमित्यर्थः । आहूतेति क्वचित् पाठः । तत्र भकारस्य हकारादेशः छान्दसः अवशः प्रकृत्यधीनः ॥ ७ ॥

एवं मायामयीं सृष्टिमुक्त्वा तन्मयं प्रलयमाह–धात्विति । धारयन्ति शरीराणीति धातवो महाभूतानि तेषाम् आसन्ने सन्निधमाने सति स्थूलमाकाशादिकं सूक्ष्मं महदादिकं तद्रूपम् अव्यक्तं प्रधानं प्रति ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एतदाह, गुणकार्येषु विषयेष्विन्द्रियेषु च सत्त्वादिगुणपदस्य इदं सृष्टं देहादिकम् आत्मानं मन्यमानः आत्मना विद्यमानस्य प्रकाशितैर्गुणैरिन्द्रियैः स जीवः प्रभुरकर्मवश्योऽपि सज्जते ॥ ५ ॥

कर्मभिः पूर्वनष्टवासनाभिः सनिमित्तानि आत्महेतुकानि ईश्वरप्रेरितानि कर्माणि कुर्वन् जीवोऽयं सुखेतरं दुःखं तत्तत्कर्मफलं गृह्णन् तत्र तत्र भ्रमति ॥ ६ ॥

कर्मगतीर्देवादिगतीः गच्छन् पुमान् जीवः आभूतसम्प्लवात् प्रलयम् अभिव्याप्य जन्ममृत्यू अश्नुते अवशः गुणमयप्रकृतिवशः ॥ ७ ॥

एवञ्च व्यामोहापादिकां तां प्रतिपाद्य प्रलये तस्याः सूक्ष्मरूपेणाऽवस्थानं प्रपञ्चयति–धातूनामुपप्लवे नाशे आसन्ने प्राप्ते व्यक्तं स्थूलं कार्यं कालशरीरकः परमात्मा अव्यक्ताय अव्यक्तावस्थां सूक्ष्मावस्थां प्रत्याकर्षति द्रव्यं अविसमाष्टि गुणाः शब्दादयः तदात्मकं चिदचित्परिणामरूपम् इत्यर्थः ॥ ८—१० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र हेतुं वदन्नुपपादयति–गुणैरिति । स प्रभुर्जीवः भगवता सृष्टमिदं शरीरमात्मानं मन्यमानः अत एवात्मनान्तर्यामिणा परमपुरुषेण प्रधानिनैरापादितप्रवृत्तिधर्मैर्गुणैः गुणपरिणामभूतैरिन्द्रियैर्गुणान् शब्दादिविषयान् भुञ्जानः इह विषयेष्वेव सज्जते देहात्माभिमानकतन्मूलः पूर्वपूर्वविषयानुभवश्चोत्तरोत्तरविषयासक्तिहेतुरिति भावः ॥ ५ ॥

केवलमेवं न सज्जते किन्तु न मुच्यतीत्याह–कर्माणीति । इह संसारे देहभृज्जीवः कर्मभिः पूर्वपूर्वदेहार्जितकर्मवासनाभिः निमित्तभूताभिः सनिमित्तानि उत्तरोत्तरदेहनिमित्तभूतवासनासहितानि कर्माणि पुण्यपापात्मकानि कुर्वन् तत्तत्कर्मणां फलं सुखं दुःखं च गृह्णन्ननुभवन् सुखेतरं दुःखावर्कं यथा भवति तथा भ्रमति ॥ ६ ॥

इत्थं कियत्पर्यन्तं भ्रमतीत्यत आह–इत्थमिति । पुमान् जीवः इत्थं कर्मगतीः कर्मसम्पादितदेहान् गतिशब्दः प्रकारपरः देहस्याऽपृथक्सिद्धप्रकारत्वात् गच्छन् प्राप्नुवन् बहून्यभद्राणि दुःखानि वहतीति तथा अवशः प्रकृतिपरवशः आभूतसम्प्लवान्महाभूतप्रलयपर्यन्तं सर्गप्रलयौ उत्पत्तिमरणे तत्परम्परामित्यर्थः । अश्नुते प्राप्नोति ॥ ७ ॥

तर्हि कीदृशो भूतसम्प्लवः ? इति तस्य स्वरूपमावेदयन् तमुपपादयति–सार्धैस्त्रिभिर्धातूपप्लव इति । धातूपप्लव पञ्चमहा-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भूतोपसंहारे महाप्रलये आसन्ने सत्यनादिनिधनः आद्यन्तशून्यः कालः कालशरीरकः परमपुरुषः द्रव्यगुणात्मकं पञ्चभूतशब्दादिगुणात्मकं गुणक्षुभकभूतपरिणामात्मकं व्यक्तं स्थूलं विश्वमव्यक्ताव्यक्तं प्रति अव्यक्तं नामरूपविभागरहितं तमःशब्दवाच्यं सूक्ष्ममचिद्द्रव्यं तस्मात् नेतुमाकर्षति ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननिन्द्रियाणामशुभेषु विषयेष्वपि प्रवृत्तः तत्स्वपदवाशुभभोगोऽपि प्रसज्येत अतः कथं गुणानेव जुषते ? इत्यत आह—गुणैरिति । यो गुणानेव जुषत इति अन्वयः परमात्मात्मना प्रद्योतितैर्विषयाभिमुखत्वेन प्रेरितैर्गुणैरिन्द्रियैर्गुणान् भुञ्जानो वर्तत इत्यन्वयः । कदर्थपाविज्ञानया शुभमेव भुङ्क्ते कदापि नाशुभमिति स्वभवति, "नाशुभं च हरिः पिबेत्" इति स्मृतेः । एकस्मिन्नेव भोगायतने स्थितयोरनयोरेकस्य हरेर्गुणैकभोक्तृत्वे को हेतुरित्यत आह—प्रभुरिति "समर्थोऽधिपती प्रभुः" इति वचनात् सामर्थ्यमाधिपत्यं च निमित्तमित्यर्थः । अतस्त्वात्मतस्त्वयोः प्रमितसंसारानङ्गीकारे बाधकमाह, मन्यमान इति । इदमित्यव्ययम् "आत्मा वा इदम्" इति श्रुतेः । सर्वाधिकत्वेन वर्तमानं तं परमात्मानम् इदं सृष्टं देहवर्णनेनोत्पन्नम् इदं जीवाख्यं वक्ष्यति मन्यमानो जीव इह संसारे सज्जते मृतः परत्र तमसि मज्जत इत्यन्वयः ॥ ५ ॥

एतदेव विवृणोति—कर्माणीति । सनिमित्तानि पूर्वकर्मप्रवर्तनसंस्कारात्मबीजसहितानि कर्मभिर्व्यापारैः कर्मेन्द्रियैर्वा कुर्वन् सुखेतरं दुःखं प्रति भ्रमतीत्यन्वयः ।

"शरीरे होपहानेन गुणभोक्तारमीश्वरम् ।
शरीरस्थतया जीवं मन्यमानः पतत्यधः ॥
तत्सृष्टा हि सदा जीवा देहादेर्जनिमश्नुते ।
नित्यानन्दैकदेहोऽसौ विष्णुस्तत्त्वैकतानयोः" ॥

इत्यनेन प्रमितोऽयमर्थः ॥ ६ ॥

जीवपरयोर्भेददर्शिनः पुंसः कदा नु तमःप्रवेश इत्यतः प्रलयपर्यन्तमेव देहयोगवियोगलक्षणौ जन्ममृत्यू ततः परं तमःप्रवेश इत्याशयेनाह—इत्थमिति । कर्मतन्त्रीः कर्मनिर्मितयोनिलक्षणफलानि बहुत्वमङ्गलानि पापात्वादशुभात्मन्याखत इति बहुमङ्गलवहः आभूतसम्प्लवात् प्रलयपर्यन्तं सर्गप्रलयौ जन्ममरणे योगिपरब्रह्मस्तथा स्थानान्तरमात्मक भवतु इति—

"आभूतसम्प्लवाज्जन्मजीवितत्वं त्रिजानतः ।
ततः परस्तयोर्वश्मादुरत्यानं नैव तु कश्चित्" ॥

इतिवचनात् नरकाः पश्चाद्देहे तमसि पतनीत्यर्थः ॥ ७ ॥

एवमीश्वरमायानियताद्रव्यकाल सृष्टिं समासतोऽभिधाय प्रलयं सङ्क्षिप्याह—धातूपप्लव इति । धातूनां पृथिव्यादिपञ्चभूतानाम् उपप्लवे प्रलये द्रव्यगुणात्मक पञ्चभूतशब्दादिगुणमय व्यक्त प्रपञ्चम् अनादिनिधनः कालो विष्णुः अव्यक्ताय मूलप्रकृतये विकर्षति प्रकृत्यैकमेव कर्तुमिच्छतीत्यर्थः । "कालाख्यः कलनाद्विष्णुरव्यक्तमव्यक्तगं नयम्" इति वचनात् विष्णुरेव कालशब्देनोक्तः विकर्षतीत्यनेन कालशब्दोऽपि निरुक्तः ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सतु जीवः प्रभुः प्रकृष्टशरीरधारीत्याद्युत्ज्ञानादिशक्तियुक्तोऽपीत्यर्थः । तत्र कारणं तु "भयं द्वितीयाभिनिवेशतः" इत्यादावेव दर्शितम् । यद्वा, स आद्यः पुरुषः आत्मना प्रकाशितैर्गुणैः कालस्वभावादिभिर्हेतुभिरुदितान् गुणान् भक्तप्रेमतद्विलासान् भुञ्जान आस्वादयन् इदं सृष्टं भक्तशरीरम् आत्मानमात्मदेहमेव मन्यमान इह भक्तशरीरे सज्जते "साधवो हृदयं मह्यम्" इत्यादेः ॥ ५ ॥

साधारणजीवानां गतिमाह—कर्माणीति ॥ ६—१० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स च जीवः आत्मना अन्तर्यामिणा प्रद्योतितैर्गुणैरिन्द्रियैर्गुणान् विषयान् भुञ्जान इदं सृष्टं शरीरम् आत्मानं मन्यमान इह शरीरादौ सज्जते प्रभुः प्रकर्षेण देवतिर्यगादिषु गच्छतीति सः ॥ ५ ॥

ततश्च संसरतीत्याह—कर्मभिः कर्मेन्द्रियैः सनिमित्तानि सवासनानि कर्माणि कुर्वन् सुखेतरं सुखदुःखात्मकं कर्मफलं प्राप्नुवन् रमते इति नारकयोनावपि रमणदर्शनात् ॥ ६ ॥

कृतानामुक्तुतवस्तूनां सम्प्लवः प्रलयहतत्वपर्यन्तम् ॥ ७ ॥

संहारमाह—सार्धैस्त्रिभिः । धातूनां महाभूतानाम् उपप्लवे नाशहेतौ प्रलये आसन्ने सति व्यक्तं कार्यं द्रव्यगुणात्मकं द्रव्यं स्थूलं गुणः सूक्ष्मं तदात्मकम् अव्यक्ताव्यक्तं कारणं प्रति नेतुमाकर्षति ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स बुभुक्षुः प्रभुः शरीरस्वामी आत्मप्रद्योतितैः स्वप्रकाशितैः गुणैः हेतुभूतैः कर्मभिः । यद्वा, भगवत्प्रद्योतितैर्गुणैरिन्द्रियैः गुणान् विषयान्भुञ्जानः इदं भगवत्सृष्टं शरीरमात्मानं मन्यमानः इह देहादौ सज्जते ॥ ५ ॥

कर्मभिः पूर्वकृतैः हेतुभूतैः पुनः शुभाशुभानि सनिमित्तानि सवासनानि कुर्वन् सुखेतरं सुखं च तदितरं दुःखं च तत्तत्कर्मफलं तेषां तेषां शुभानामशुभानां च कर्मणां फलं गृह्णन् देहभृत् इह संसारे भ्रमति ॥ ६ ॥

बहूनि अमङ्गलानि वहन्तीति तथा ताः सर्गप्रलयौ जन्ममरणे ॥ ७ ॥

अथ संहारं दर्शयितुमारभते—धातूपप्लव इत्यादिना । धातूनां महाभूतानामुपप्लवे विनाशहेतावासन्ने उपस्थिते अनादिनिधनः आद्यन्तशून्यः कालः द्रव्यगुणात्मकं प्रकृतिगुणपरिणामं व्यक्तं कार्यं चिदचिद्रूपं जगत् अव्यक्ताय कारणभावाय अपकर्षति ॥ ८ ॥

---

भाषा टीका ।

वह जीवात्मा समर्थ होकर भी अन्तर्यामि से प्रकाशित

शतवर्षा ह्यनावृष्टिर्भविष्यत्युल्बणा भुवि ।
तत्कालोपचितोष्णार्को लोकांस्त्रीन् प्रतपिष्यति ॥ ९ ॥
पातालतलमारभ्य सङ्कर्षणमुखाऽनलः ।
दहन्नूर्ध्वशिखो विष्वग्वर्द्धते वायुनेरितः ॥ १० ॥
साम्वर्तको मेघगणो वर्षति स्म शतं समाः ।
धाराभिर्हस्तिहस्ताभिर्लीयते सलिले विराट् ॥ ११ ॥
ततो विराजमुत्सृज्य वैराजः पुरुषो नृप ! ।
अव्यक्तं विशते सूक्ष्मं निरिन्धन इवाऽनलः ॥ १२ ॥

### भाषा टीका ।

इन्द्रियों के विषयों को भोगता हुआ, इस परमात्मा के रचे हुए शरीर को ही आत्मा मानकर इसमें आसक्त होजाता है ॥५॥

कर्मेन्द्रियों से वासना प्राप्त कर्मों को करता हुआ, पूर्व किये हुये कर्मों के दुःखरूप फल को भोगता हुआ, यह देह धारी संसारी जीव इस संसार ही में देव मनुष्यादि योनियों में भ्रमता है मुक्त नहीं होता ॥ ६ ॥

इस प्रकार यह जीव बहुत अशुभ को प्राप्त करने वाली गति (देहों) को प्राप्त होता हुआ प्रकृति के वश होकर प्रलय पर्यंत बार २ जन्म मरण को प्राप्त होता रहता है ॥ ७ ॥

पञ्च महाभूतों का जब प्रलय काल में नाश होना समीप आजाता है तब द्रव्य गुणात्मक जो कार्य है तिसको अनादि निधन ( आद्यन्त रहित ) कालतत्त्व, नामरूप विभाग के अयोग्य सूक्ष्म अचित् द्रव्य जो अव्यक्त है तिसके प्रति आकर्षित करने लगता है ॥ ८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नाशहेतूनाह—शतवर्षेति । तस्मिन्काले उपचितश्चासावुष्णश्चासावर्कश्च । यद्वा, तेन कालेनोपचितमुष्णत्वं यस्य सः ॥९॥

ऊर्ध्वशिख ऊर्ध्वज्वालः विष्वक्परितः ॥ १० ॥

सांवर्तकः प्रलयकर्त्ता धाराभिस्तु बिन्दुभिः हस्तिहस्ताभिर्हस्तप्रमाणाभिः ॥ ११ ॥

तत उपाधिलयाद्वैराजः पुरुषोऽव्यक्तं कारणं प्रविशति ननु—

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परम्पदम् ॥"

इति स्मृतेः "यावदधिकारमवस्थितिराधिकारिकाणाम्" इति न्यायाच्च वैराजशब्दाभिधेयस्य च ब्रह्मणः परमभागवतत्वान्मोक्ष एव सङ्गच्छते नान्येषामिव कारणमात्रप्रवेशः ? सत्यम्, अश्वमेधादिना सत्यलोकं गतानामभक्तानामावृत्तिश्रवणाद्भक्तत्वे च ब्रह्मणोऽपि प्रकृतौ लयः पुनरुत्पत्तिश्चेति मोक्षशीलेऽप्यसूचनायैवमुक्तमित्यविरोधः । यद्वा, केनापि प्रमाणेन न व्यज्यत इत्यव्यक्तं ब्रह्मैव तत्प्रवेशेन च मोक्ष एवोक्त इति द्रष्टव्यम् ॥ १२ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

नाशहेतूननावृष्ट्यादीन् पूर्वार्धे "कर्मभिर्वर्धते तेजो ह्रसते च यथा रवेः" इत्युक्तेरर्कस्योपचितत्वासम्भवाद्धेति उष्णमिति भाव-प्रधानो निर्देशः अत एवोष्णत्वमिति व्याख्यातम् ॥ ९ ॥

ईरितः प्रेरितः ॥ १० ॥

तत्प्रमाणाभिः हस्तिशुण्डाकाराभिः ॥ ११ ॥

व्यष्टिजीवैः सहोपाधिलयात् व्यष्टिजीवानामपि लयो वैराज एव ज्ञेयः वैराजः समष्टिजीवः अव्यक्तं प्रकृतिं ते सर्वे ब्रह्मोपासकाः प्रतिसञ्चरे प्रलये परस्य द्वितीयपरार्द्धस्य कृतात्मानः शुद्धचित्ताः "यावदधिकारम्" इति ब्रह्मसूत्रं तस्यायमर्थः आधिकारिकाणां लोकस्थितिहेतुषु वेदप्रवर्त्तनचराचरसृष्ट्याद्यधिकारेषु नियुक्तानाम् अपान्तरतमो ब्रह्मादीनां यावदधिकारं लोकव्यवस्थासु स्वामित्वमधिकारस्तमनतिक्रम्य तत्प्रापकं प्रारब्धं यावदस्ति तावत्कालं जीवन्मुक्तत्वेनावस्थितिः प्रारब्धक्षये तु प्रतिबन्धकाभावाद्विदेहमुक्तिरित्यर्थः । अन्येषां कारणमिव लय-मित्यङ्गीकारे एवमुक्तं ब्रह्मणोऽपि प्रकृतिप्रविष्टत्वमुक्तं इत्यविरोधः अन्तरिक्षवाक्यस्य श्रुतिसूत्रयोश्च विरोधो नास्तीत्यर्थः पूर्वार्धे मोक्षशीलेऽप्यस्वलक्षणस्य प्रयोजनस्य कल्पनागौरवमतो यद्वेति यदि अव्यक्तशब्देन ब्रह्मैवोच्यते तदा तत्प्रवेशेन ब्रह्म-प्रवेशेन मोक्षस्यैवाभिहितत्वाच्छ्रुतिसूत्राभ्यां विरोध एव नास्तीति न कल्पनागौरवमिति स्वारस्यम् ॥ १२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वैराजोऽन्तर्यामी अनिरुद्धमूर्त्तिः स्थूलदेवतत्त्वस्यैवात्र लयोक्तिः देहदेहिनोरभेदात् तद्देहस्य सूक्ष्मे लय उक्तः ॥ ११ ॥

सार्द्धद्वाभ्यां भूतानां तामसाहङ्कारे लयः ॥ १२—१४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आकर्षणप्रकारमेवाह—शतवर्षेत्यादिना । तदाऽत्युल्बणाऽति :सहा तत्कालेन शतवर्षपरिमिताऽनावृष्टिकालेनोपचितं वर्द्धित- मुष्णं यस्य सः । यद्वा, तस्मिन्काले उपचितश्चासावुष्णश्चा- र्कश्च स इति समस्तपाठेऽर्थः ॥ ९ ॥

पातालेति । ऊर्ध्वशिखः ऊर्ध्वज्वालः वायुना ईरितः सङ्कर्षणः ।ष्वक् परितो वहन् वर्द्धते ॥ १० ॥

ततः सांवर्तकाख्यः प्रलयकृन्मेघगणः हस्तिहस्ताभिर्गजशुण्डो- पामिर्धाराभिः शतंवर्षाणि वर्षिष्यति ततो विराट् ब्रह्माण्डं ।लिले लीयते ॥ ११ ॥

ततो वैराजो विराडन्तर्वर्त्तिपुरुषो जीवः एकवचनम् एको ।हिरिनिवत् जात्यभिप्रायकं जीववर्ग इत्यर्थः । विराजं लीनं ब्रह्माण्डं विसृज्य सूक्ष्मं सूक्ष्मात्मरूपम् अव्यक्तं "तम आसीत्" इति तमः शब्दवाच्यं प्रधानं विशते इति संसर्गविशेषः उक्तः ननु अव्य- चेतनं प्रत्यचेतनस्य कारणत्वाभावादयमेव संसर्गविशेषो "अक्षरं तमसि लीयते" इति श्रुतावप्युच्यते निरिन्धन "इवानल" इति ज्ञानसङ्कोचोऽभिप्रेतः यथा निरिन्धनः काष्ठरहितोऽग्निः सङ्कु- चितो भवति तद्वत्सङ्कुचितज्ञान इत्यर्थः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सङ्क्षिप्योक्तं प्रलयमाविष्टो वक्ति—शतवर्षमिति । तत्कालेन तेन प्रलयकालेन उपचितः संवर्धितः उष्णो गुणो यस्य स तथा सचासावर्कश्च स तत्कालोपचितोष्णार्कः ॥ ९—१० ॥

विराट् ब्रह्माण्डम् ॥ ११ ॥

सलिले विलीनं ब्रह्माण्डमुत्सृज्य वैराजो ब्रह्माण्डान्तर्वर्ती पुरुषो ब्रह्मा अव्यक्तं परमात्मानं विशति अव्यक्तशब्दार्थं स्पष्टी- कुर्वन् तं विशिनष्टि, सूक्ष्ममिति । यद्वा, निरिन्धनोऽनलः सूक्ष्मं व्याप्तमग्निमिवेति ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सांवर्तकः तदग्निधूमाद्भवां सूर्याकृष्टरसेन च जातः ॥ ११ ॥

तत इति पूर्वं तु व्यष्टिजीवानामपि वैराज एव लयो ज्ञेयः वैराजोऽत्र समष्टिजीवः ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उपचितः प्रवृद्धः उष्णोऽत्युष्णः ॥ ९ ॥ १० ॥

संवर्तकः प्रलयकर्त्ता हस्तिशुण्डप्रमाणाभिः ॥ ११ ॥

ततश्चोपाधिलयात् वैराजः समष्टिजीवो ब्रह्मा व्यष्टिजीवानां तु वैराज एव पूर्वं लयो ज्ञेयः । अव्यक्तं प्रकृतिम् अत्र ब्रह्मणोऽपि कर्मिज्ञानिभक्तत्वेन त्रैविध्यात् कस्यचित् पुनरावृत्तिः कस्य- चिन्मुक्तिः कस्यचित्प्रेमवत्पार्षदत्वप्राप्तिश्चेति द्रष्टव्यम् "आब्रह्म भुवनाल्लोकाः पुनरावर्तिनोऽर्जुन !" इति विपर्ययश्च भवति ब्रह्मावस्थापरत्वयोरिति—

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" ॥

इत्यादि वचनेभ्यः ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विनाशहेतुमाह—शतवर्षेति । तत्कालेन प्रलयकालेनोपचितः संवर्द्धितः उष्णो गुणो यस्य स तत्कालोपचितोष्णः सचासा- वर्कश्च ॥ ९ ॥

सांवर्तकः प्रलयहेतुः विष्वक् परितः ॥ १० ॥

हस्तिहस्ताभिः हस्तिहस्ताकाराभिः विराट् चतुराननः- शरीरं सप्तावरणसंयुतं सलिले लीयते निश्चेष्टं पतति ॥ ११ ॥

ततः पतनानन्तरं वैराजो विराट्शरीराऽभिमानी पुरुषः चतुराननः निरिन्धनोऽनलः सूक्ष्मं कारणभूतमनलमिव अव्यक्तं प्रधानं विशते तेन सह सर्वेषां बद्धजीवानां प्रधाने प्रवेशोऽप्य- युक्तः तस्य भगवत्पुत्रत्वेन मुक्त्यधिकारित्वेऽपि यावत्तादृशोऽन्यो नोपलभ्यते तावत्स एव पुनःपुनः सृष्ट्यर्थमुत्पत्तिसंहारौ भजते इति भावः । अत एव द्वितीये स्कन्धे—

"एवं पुरा धारणयात्मयोनिर्नष्टां स्मृतिं प्रत्यवरुध्य तुष्टात् ।
तथा ससर्जेदममोघदृष्टिर्यथाप्ययात्प्राक् व्यवसायबुद्धिः" ॥

इति श्रीशुकेनोक्तम् अनेन तादृशपुरुषस्य दौर्लभ्यमप्युक्तम् तादृशपुरुषप्राप्तौ तु—

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" ॥

इति स्मृत्युक्तश्चतुराननमोक्षः सङ्गच्छते ॥ १२ ॥

---

भाषा टीका ।

यह काल किस प्रकार कार्यों को अव्यक्त के प्रति खींचता है, कि—प्रथम तो भूमि में सौ १०० वर्ष पर्यंत बड़ी घोर अनावृष्टि होती है, उस काल में तेजकी वृद्धि को प्राप्त होने वाले सूर्य तीनों लोकों को तपा देते हैं ॥ ९ ॥

उस समय में सङ्कर्षण भगवान् के मुख से जो अग्नि निकलता है उसकी ज्वालायें ऊपर को धकधकाती रहती हैं, और वह अग्नि पाताल के नीचे से लेकर वायु से प्रेरित होकर चारों तरफ जलाता हुआ बढ़ता है ॥ १० ॥

तदनन्तर सौ१०० वर्ष पर्यन्त सांवर्तक नामक मेघों का गण हस्ति की शुंडा के बराबर स्थूल धाराओं से वर्षा करते हैं, उस समय विराट् ब्रह्माके शरीर रूप जो त्रिलोकी है, वह जल में डूब जाती है ॥ ११ ॥

हे राजन् ! उस समय वैराज पुरुष अपने विराज शरीर को छोड़कर, सूक्ष्म अव्यक्त में प्रवेश करता है, जैसे निरिन्धन अग्नि अपने कारण में अन्तर्हित हो जाती है ॥ १२ ॥

---

(१)वायुना हृतगन्धाः भूः सलिलत्वाय कल्पते ।
सलिलं तद्धृतरसं ज्योतिष्ट्वायोपकल्पते ॥ १३ ॥
हृतरूपं तु तमसा वायौ ज्योतिः प्रलीयते ।
हृतस्पर्शोऽवकाशेन वायुर्नभसि लीयते ।
कालात्मना हृतगुणं नभ आत्मनि लीयते ॥ १४ ॥
इन्द्रियाणि मनो बुद्धिः सह वैकारिकैर्नृप ! ।
प्रविशन्ति ह्यहङ्कारं स्वगुणैरहमात्मनि ॥ १५ ॥
( यदान्यदात्मनः पश्यंस्ततो निष्टमसज्जनः ।
इयानेवात्मनो मोहः क्लेशात् क्लेशो भयाद्भयम् ॥ [ क )
यदा हि जन्मसंसारभेदान् गच्छन्ति नैगमाः ।
स्वस्तये निगमो नैषां सूर्योदय इवाऽसताम् ॥ ( ख )
छायाप्रत्याह्वयाभासा न सन्त्यविकृते सति ।
तत्रापि नास्ति साम्यर्थं भ्रान्त्या ज्ञानादृते स्वतः ॥ ( ग )
ज्ञानावलम्बनं तस्मादन्याभावादनावृतम् ।
अर्थाऽभावो पृथक् सिद्धेः सतः स्वप्नार्थ धीर्यथा ॥ ( घ )
एषा माया भगवतः सर्गस्थित्यन्तकारिणी ।
त्रिवर्णा वर्णिताऽस्माभिः किं भूयः श्रोतु मिच्छसि ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं विराजो लयमुक्त्वा तत्कारणानां महदादिपृथिव्यन्तानां प्रातिलोम्येन लयमाह—वायुनेति । वायोर्हि गन्धस्य संहारित्वं प्रसिद्धम् सांवर्त्तकेन वायुना हृतगन्धा अत एव गन्धस्य व्यञ्जकस्य गतत्वात्सलिलत्वाय कल्पते सलिले लीयत इत्यर्थः । तद्धृतरसं तेन वायुनैव हृतो रसो यस्य तत् ॥ १३ ॥

तमसश्च रूपतिरस्कारित्वं प्रसिद्धं सांवर्त्तकेन तमसा अवकाशेनाऽऽकाशेन स्वकारणेन कालात्मना शब्दस्य हि कालत एव नाशः प्रसिद्धस्तद्रूपेणाऽऽत्मना ईश्वरेण आत्मनि तामसाहङ्कारे ॥ १४ ॥

इन्द्रियाणि बुद्धिश्च राजसाहङ्कारं मनो वैकारिकैर्देवैः सह सात्त्विकाहङ्कारम् एवं त्रिविधैः स्वगुणैः स्वकार्यैः सहितोऽहं अहङ्कार आत्मनि महति स च प्रकृताविति द्रष्टव्यम् ॥ १५ ॥

त्रिवर्णा त्रिगुणा माया श्रवणाभीतं राजानं तन्निवृत्त्युपायश्रवणे स्वयं छन्दयति किम्भूय इति ॥ १६ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

सम्बर्त्तकेन प्रलयकर्त्रा वायुना तदाहिरावरणरूपेण अत एव गन्धस्य हृतत्वादेव व्यावर्त्तकस्य जलादिभ्यो भेदकस्य हृतगन्धेत्युपलक्षणं हृतस्पर्शा च काठिन्यस्य स्पर्शविशेषरूपत्वेन वायुगुणत्वात् स्पर्शस्यापि वायावेव प्रवेश इत्यर्थः ॥ १३ ॥

सम्बर्त्तकेन प्रलयकर्त्रा तमसा वाय्वावरणमारभ्य प्रकृत्यावरणव्यापकेन हृतं रूपं व्यावर्त्तकधर्मो यस्य तादृशं ज्योतिः स्वकारणेन स्वस्य वायोः कारणेनाऽऽकाशेन हृतः स्पर्शो यस्य स वायुः "चत्वारि स्पर्शवन्ति हि" इत्युक्तेः । आकाशे स्पर्शाभावादाकाशस्य स्पर्शहारित्वम् । कालात्मनेत्युक्तं हि यतः शब्दस्य क्षणत्रयरूपात् कालत एव नाशः प्रसिद्धः "शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात्" इति न्यायात् तस्मात्तद्रूपेण कालरूपेणात्मनेश्वरेण हृतो गुणः शब्दो यस्य तन्नभः ॥ १४ ॥

स्वकार्यैः स्वस्य त्रिविधाहङ्कारस्य कार्यैः भूतेन्द्रियबुद्धिमनोदेवैः सहितस्त्रिविधोऽहङ्कारो महत्तत्त्वे प्रविशति ॥ १५ ॥

एषा सृष्ट्यादिकार्यरूपा यतः सर्गादिकर्त्री तन्निवृत्त्युपायश्रवणं तस्या मायाया निवृत्तिस्मरणं तस्मिन्नुपायो भक्तियोगस्तस्य श्रवणं स्वयमन्तरीणश्छन्दयति इच्छां कारयति ॥ १६ ॥

(१) वारिणा हृतगन्धेति विज० पा० ।

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इन्द्रियाणि मनः बुद्धिः बुद्धिशब्देन महान् एतानि वैकारिकाणि एतैः सह राजसोऽहङ्कारः तदुत्पत्तौ सहकारी महङ्कारं प्रविशति स त्रिविधोऽहङ्कारश्चात्मनि ( महत्यात्मनि ) तच्छरीरिणि परमात्मनीत्यर्थः ॥ १५ ॥

एवं स्थूलसूक्ष्मावस्थाविशिष्टां परमात्मशरीरभूतां तां प्रदर्श्य पूर्वं स्वरूपतिरोधायकत्वेनोक्त्वा, परस्वरूपतिरोधायकत्वेनापि तां दर्शयितुम् एवम्भूतपरमात्मविज्ञानाभावादेव जीवस्य संसार इत्याह——चतुर्भिः । एवमुभयावस्थाविशिष्टचिदचिच्छरीरकादात्मनः सतः अन्यत् असत् अवर्त्तमानम् अन्यत्वेन भिन्नत्वेनावर्त्तमानम् अनिदम् अनिदंत्वावाचकं यद्यपि अतः जीवः अन्यत्पश्येत् अब्रह्मात्मकं पश्येदित्यर्थः तर्ह्येतावानेव आत्मनो मोहः धर्मभूतज्ञानावरणं क्लेशादनन्तरं क्लेशाद् भयादनन्तरं भयम् उभयञ्चेदम् अनिदम् असन्निमात्रस्वभावश्चेति ॥ क ॥

ननु, वेदोक्तकर्मसु वर्त्तमानानाम् अब्रह्मात्मकत्वदर्शनं नैव. कथं मोहादिरित्यत्राह—यदाहीति । नैगमाः यदा यदि केवलवेदोक्तकर्मनिष्ठाः स्वकर्तृत्वफलसङ्गेन कर्मकृतः तर्हि जन्मसंसारमेतान् देवतिर्यङ्मनुष्यादिरूपाणि गच्छन्ति अत एवां देहात्मस्वतन्त्रात्ममानिनां निगमः स्वस्तये शोभनसत्तायै “असन्नेव स भवति असद्ब्रह्मेति वेद चेत्” इति श्रुतेः । असतां चौरादीनां सूर्योदय इव स्वस्तये न भवतीत्यर्थः ॥ ख ॥

वेदोक्तकर्मणां ज्ञानाज्ञानकृतत्वेन सानुबन्धरूपानर्थकारित्वे दृष्टान्तमाह—छायेति । छाया स्तम्भे पिशाचादि भ्रमात्मिका प्रत्याह्वयः शून्यशिलागृहादिद्वारी प्रत्युत्तरकारी शब्दध्वनिाभासः जलस्थसूर्यप्रतिबिम्बस्यान्तर्गृहे तेजःपुञ्जः एते अविकृते विकाररहिते भयाज्ञानादिरहिते सति श्रेष्ठे महापुरुषे यथा न सन्ति भयादिकार्यकरा न सन्ति, अथवा सति द्रष्टव्ये तदाभितत्त्वेन वर्त्तमाना न सन्तीति काकुः । किन्तु, भयादिकर्त्तारो नेति पूर्ववत् सत्या एव ते इत्यर्थः । तथा ऽत्रापि दार्ष्टान्तिके अस्त्यर्थे भासितेऽवार्थो यस्मिन् तस्मिन् सर्वसत्यत्वप्रतिपादके वेदे अस्तीति सङ्कल्प इति वा सत्यानिपादके पुंसि या सा सर्वान्तरकल्याणरूपा स्वतः अज्ञानादेव धर्मभूतज्ञाननिष्ठा ज्ञानाद्भिन्ना नास्ति स्वहेतुकादज्ञानात्स्वस्वरूपपरस्वरूपाज्ञानादिति यावत् ऋते विना नास्ति न भवति अतः साऽस्वाभिनिर्देहात्मभ्रमस्वतन्त्रात्मभ्रमरूपाया भ्रान्त्या एवाहित वर्त्तन इति स्वतो ज्ञानात् भ्राम्त्या ऋते इति योजना ॥ ग ॥

तत्त्वज्ञानतत्कार्ययोरनिर्वचनीयत्वान्मिथ्यात्वादुब्रह्मैव सत्यं “नेह नानास्ति किञ्चन, इति श्रुत्युक्तम् इति चेत्तत्राह, ज्ञानस्याश्रयत्वनम् आश्रयः परमात्मा अथवा ज्ञानं जीवोऽवष्टव्धं व्याप्यते येन तदीश्वरस्वरूपम् अन्याभावादब्रह्मात्मकत्वाभावादनावृतम् अवाच्यम् । कथं तर्हि नानात श्रुतिः ? इत्यत्राह—अर्थाभावस्तु सतः ब्रह्मणः अपृथक्सिद्धविशेषणत्वेन श्रुत्योक्तः ननु मिथ्यात्वरूपः यथा स्वाप्नार्थविषयं ज्ञानं सत एव भवति ईश्वरसृष्टत्वात्सत्यमिति ॥ घ ॥

एवं प्रलयावस्थायां सूक्ष्मतया च मायां भगवच्छरीरतया वर्णयित्वा निगमयति—त्रिवर्णा त्रिगुणाभयद्रव्यरूपा भगवतो माया भगवच्छरीरभूता अत एव सर्गादिकारिणी इति तस्य उपवर्ण्यते कारणत्वासाधारणभगवल्लक्षणत्वात् ॥ १६ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं विराड्वैराजयोर्लयमभिधायाऽथ विराट्कारणानां महदादिपृथिव्यन्तानां प्रातिलोम्येन लयमाह—वायुनेति । वायोर्हि गन्धरसहारित्वं प्रसिद्धम् अतो वायुना सांवर्त्तकेन हृतो गन्धः पुण्यगन्धो यस्याः सा भूः पृथ्वी अत एव गन्धस्य व्यवस्थापकस्य गतत्वात्सलिलत्वाय कल्पते सलिलत्वमापद्यते सलिले लीयत इत्यर्थः । तद्धृतरसं तेन वायुनैव हृतो रसो यस्य तत्सलिलम् ॥ १३ ॥

तमसो रूपतिरस्कारित्वं प्रसिद्धम् अतः सांवर्त्तकेन तमसा हृतं रूपं यस्य तज्ज्योतिः अवकाशेन स्वकारणेनाऽऽसन्नलयेनाऽऽकाशेनेत्यर्थः । वायोर्ह्याकाशसञ्चारित्वं प्रसिद्धं हृतः स्पर्शो यस्य स वायुः नभस्याकाशे लीयते कालात्मना कालशरीरकेणेश्वरेण शब्दस्य कालन एव हि नाशः हृतः गुणः शब्दो यस्य तन्नभ आत्मनि लीयते आत्मशब्दः कारणपरः भूतादौ इत्यर्थः ॥ १४ ॥

इन्द्रियाणीति दशेन्द्रियाणि मनोबुद्धिश्च वैकारिकैरधिष्ठातृभिर्देवैः सहाऽहङ्कारं स्वकारणभूतं सात्त्विकाहङ्कारं प्रविशन्ति अहमहङ्कारस्त्रिविधोऽपि स्वगुणैः स्वकार्यैः सहितः आत्मनि कारणभूते महति प्रविशतीति एवमविपरिणामेन सम्बन्धः ॥ १५ ॥

एषेति, एषा भगवतो माया महत्तत्त्वस्यापि कारणभूतेति शेषः अतस्तस्यां विशतीति भावः । सर्गाद्युपयुक्ता त्रिवर्णा लोहितशुक्लकृष्णवर्णा रज सत्त्वतमोरूपगुणत्रयमयीत्यर्थः । अस्माभिरित्थं कथित. स्वरूप[illegible] [illegible] कृतमायास्वरूपतत्कार्यश्रवणस्य तन्निस्तारोपा[illegible] [illegible]मुत्पादयितुं चोदयति, किंपुनः श्रोतुमिच्छसीति ॥ १६ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

“सङ्क्षेपविस्तराभ्यां तु कथयन्ति मनीषिणः ।
बहुवारस्मृतेस्तस्य फलबाहुल्यकारणात्” ॥

इति वाक्यार्थं सफलं कुर्वन्नुक्तार्थं प्रपञ्चयति—वायुनेति । ज्योतिषा हृतरसं पीतरसं तमसा तमोगुणानुस्यूतेन वायुना अवकाशेन आकाशेन ॥ १३—१४ ॥

कालात्मना संहारमूर्त्तिना हरिणा हृत[illegible]गुणम् आत्मनि परमात्मनि पुनरपि विलापयति, इन्द्रियाणि [illegible] । अत्रेत्थं तात्पर्यं तमस्तामसाहङ्कारमाविशति तैजस[illegible]न्द्रियाणि मनो बुद्धिश्च वैकारिकैः इन्द्रियाभिमानिभिर्देवैः सह वैकारिक तैजसा[illegible]ख्यं अहङ्कारं प्रविशन्ति एवं त्रिविधोऽहमहङ्कारः स्वगुणैः स्वकार्यैः महात्मनि महत्तत्त्वं व्याप्नोति तन्महत्तत्त्वमात्मनि व्याप्त परमात्मनि प्रविष्टं भवति वैराजः पुरुषः पृथिव्यादीनि स्वकार्याणि व्युत्क्रमेण स्वस्वकारणेषु खादिषु विलाप्य स्वयञ्च तत्कारण-

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

गतत्वेन तत्तत्कार्यप्रवर्तकः तत्तत्कारणगतरूपैरेकीभूय मूल-रूपीसन्नाकाशवदतिसूक्ष्ममव्यक्तं प्रविशतीति ॥ १५ ॥

उपसंहरति, एषेति। भगवतः एषा माया प्रकृतेरिच्छा तदधीना प्रकृतिश्चास्माभिर्वर्णिता निमित्तोपादानत्वविलक्षणेति शेषः। कीदृशी त्रिवर्णा त्रयाणां गुणानां वर्णो वरणं यया हरेर्मत्या सृष्ट्यादौ सा तथा सत्त्वादित्रिगुणानां वर्णो भेदः स्वरूपत्वेन सम्बन्धो यस्याः सा तथा प्रकृतिः तदुक्तम्—

"त्रिवर्णा वरणादुक्ता त्रिगुणानां हरेर्मतिः।
गुणात्मकत्वात्प्रकृतिस्त्रिवर्णेति प्रकीर्त्यते।
तत्र तु प्रकृतिस्तस्यां तारका तु हरेर्मतिः।
उभयं विष्णुमायोक्तं ज्ञातव्यमुभयं तथा" ॥

इति बहूनां प्रस्तुतत्वादेषेत्यत्र किं परामृश्यत इति सन्देहपरिहारः कथमिति चेन्न—

"बहूनां सह निर्देश एकयाभिधमेव तु।
तथैवाभिधया तेषां परामृश्यैकमुच्यते" ॥

इति तदुपपत्तेः ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

वायुना तदूर्ध्वहिरावरणरूपेण हृतगन्धेति काठिन्यस्य तु स्पर्शविशेषरूपत्वाद्वायुगुणत्वेन तत्र तत्रैव प्रविशतीति भावः ॥ १३ ॥

तमसेति व्याख्यावरणमारभ्य प्रकृत्याऽऽवरणव्यापकेनेति ज्ञेयम् ॥ १४—१५ ॥

एषा ईश्वरकार्यरूपेत्यर्थः ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

एवं कार्यस्य समष्टिविराजो लयमुक्त्वा तत्कारणानां महदादि-पृथिव्यन्तानां तत्त्वानां प्रातिलोम्येन लयमाह—वायुनेति। वायोर्हि गन्धहरमहारित्वं प्रसिद्धं संवर्त्तकेन वायुना हृतगन्धा भूः पृथिवी सलिलत्वाय कल्पते सलिले लीयते इत्यर्थः। तद्धृतरसं तेन वायुनैव हृतो रसो यस्य तत् सलिलं सर्वमेव ॥ १३ ॥

तमसा सम्वर्त्तकेन हृतरूपमिति तमसो रूपापहारका-रित्वं प्रसिद्धमेवेति भावः। अवकाशेन आकाशेन स्वकारणेन कालात्मना कालरूपगेति शब्दस्य कालेन एव नाशः प्रसिद्धः आत्मनि तामसाहङ्कारे ॥ १४ ॥

इन्द्रियाणि बुद्धिश्च राजसाहङ्कारं मनो वैकारिकैर्देवैः सह सात्त्विकाहङ्कारम् एवं त्रिविधः स्वगुणैः स्वकार्यैः सहितः अहम-हङ्कारः आत्मनि महति सच महान् प्रकृताविति द्रष्टव्यम् ॥ १५ ॥

त्रिवर्णा त्रिगुणा माया प्रधानरूपा वर्णिता वाचिता अविद्यारूपायास्तु तस्या लक्षणम् "ऋतेऽर्थम्" इत्यनेन द्वितीय-स्कन्धे प्रोक्तम् ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

श्लोकाभ्यां विराट्शरीरलय उक्तः अथ तत्कारणभूतानां पृथिव्यादीनां लयमाह—वायुनेत्यादिना। याति गच्छतीति वायुः सलिलं तेन सलिलेन हृतगन्धा भूः सलिलत्वाय स्वकारण-भूतजलभावाय कल्पते तत् तेन ज्योतिषा हृतरसं सलि-लम् ॥ १३ ॥

तमसा तेजोलयस्थानतया तमोभूतेन वायुना हृतरूपं ज्योतिः अवकाशेन नभसा ॥ १४ ॥

कालस्य प्रलयकालस्य शक्तिभूतस्य आत्मा आश्रयः भग-वान् तेनेति सर्वत्र संयोजनीयम्, हृतगुणं स्वकारणेन ताम-साहंकारेण हृतशब्दम् आत्मनि स्वकारणे तामसाहङ्कारे इन्द्रि-याणि अहङ्कारं स्वकारणं राजसाहङ्कारम् मनो बुद्धिः वैका-रिकैः देवैः सह स्वकारणं सात्त्विकाहङ्कारम् अह त्रिविधोऽय-हङ्कारः स्वगुणैः स्वकार्यैः सह आत्मनि स्वकारणे महति सच मायायामिति द्रष्टव्यम्। सलिलत्वाय प्रकल्पते इत्यादिना-कार्यस्य कारणे प्रवेश उक्तो नतु स्वरूपाभावः एतेनापूर्व-तयोत्पन्नस्य कार्यस्य प्रलयोऽपि स्वरूपाभावः इति पक्षोऽ-प्रामाणिक इति द्योतितम् ॥ १५ ॥

अब्रह्मात्मकप्रधानवादं निराकुर्वन्नुपसंहरति—एषा माया भगवतः नतु स्वाधीनेत्यर्थः। त्रिवर्णा त्रिगुणा वर्णितेत्यनेन अनिर्वचनीया विष्णुमायेति पक्षस्य निर्मूलत्वं ज्ञायते ॥ १६ ॥

---

### भाषा टीका।

अब जिनसे यह ब्रह्माण्ड बना रहा उन प्रत्येक महा-भूतों के लय का प्रकार बतलाते हैं, कि—वायु जब भूमि के गन्ध को हरण कर लेता है तब गन्ध रूप असाधारण व्यावर्त्तक ( औरों से पृथक् करने वाला ) चिन्ह न रहने से वह भूमि जल में लीन होजाती है, इसी प्रकार जब जल के असाधारण रस रूप गुण को वायु हर लेता है तब वह जल भी ज्योति (तेज) में लीन हो जाता है ॥ १३ ॥

ऐसे ही प्रलयकालिकतम जब तेज के रूप को हर लेता है तब तेजभी वायु में लीन हो जाता है। और जब आकाश वायुके स्पर्श को हर लेता है तब वायु आकाश में लीन हो जाता है ॥१४॥

कालात्मक ईश्वर से जब आकाश का शब्द गुण हरण होताहै तब वह आकाश तामसाहंकार में लीन होजाता है। इन्द्रियों सहित बुद्धि राजसाहंकार में, इन्द्रियाभिमानी देवतों के सहित मन सात्त्विकाहंकार में लीन हो जाता है, हे नृप ! इसप्रकार त्रिविध गुण अर्थात् अपने कार्यों सहित अहंकार महत्तत्त्व में लीन हो जाता है, वह महत्तत्त्व भी प्रकृति में लीन हो जाता है ॥ १५ ॥

हे राजन् ! माया शब्द वाच्य यह त्रिगुण युक्त प्रकृति ही सृष्टि स्थिति प्रलय में सहकारिणी है जिसको तुमारे आगे वर्णन करी, अब तुम क्या श्रवण की इच्छा करते हो ॥ १६ ॥

---

राजोवाच ।

यथैतामैश्वरीं मायां दुस्तरामकृतात्मभिः ।
तरन्त्यञ्जः स्थूलधियो महर्ष इदमुच्यताम् ॥ १७ ॥

प्रबुद्ध उवाच ।

कर्माण्यारभमाणानां दुःखहत्यै सुखाय च ।
पश्येत्पाकविपर्यासं मिथुनीचारिणां नृणाम् ॥ १८ ॥
नित्यार्तिदेन वित्तेन दुर्लभेनाऽऽत्ममृत्युना ।
गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः ॥ १९ ॥
एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम् ।
(१)सतुल्यातिशयध्वंसं यथा मण्डलवर्तिनाम् ॥ २० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

एवमनुकम्पितस्तन्निवृत्त्युपायमेव पृच्छति—यथैतामिति । यद्यपि "तस्माद्भवाऽनो बुध आभजेत्तम्" इति भक्तिस्तत्तारकत्वेनोक्तैव तथापि किं भक्तिरेवान्योऽपि वा तत्रोपायोऽस्तीति ज्ञातुं पुनः प्रश्नः । अकृतात्मभिरवशीकृतान्तःकरणैः स्थूलधियः स्थूले शरीरे अहंधीर्येषां ते ॥ १७ ॥

भक्तिव्यतिरेकेण नान्यस्य उपाय इत्यभिप्रेत्य भक्तिमेव ससाधनां निरूपयति, तत्र प्रथमं वैराग्यद्वारा गुरूपसत्तिमाह, चतुर्भिः कर्माणीति । दुःखहत्यै दुःखप्रतीकाराय पाकविपर्यासं फलवैपरीत्यम् मिथुनीचारिणां मिथुनीभूय प्रवर्त्तमानानाम् ॥१८॥

कर्मभिः साधिता अपि वित्तादयो न सुखहेतव इति च पश्येदित्याह—नित्यार्तिदेनेति । आत्मनः स्वस्य मृत्युरूपेण चलैः अनित्यैरपायिभिश्च ॥ १९ ॥

एवं लोकं परमिति कर्मनिर्मितत्वान्नश्वरम् तथा च श्रुतिः "तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति । किञ्च, वर्त्तमानसमयेऽपि दुःखयुक्तं पश्येदित्याह, सतुल्यातिशयध्वंसं सह तुल्येनातिशयेन ध्वंसेन च वर्त्तमानम् अतस्तुल्ये स्पर्धाऽतिशयेऽसूया ध्वंसात्क्षोभनैर्भयादिकं च अपरिहार्यमित्यर्थः । यथा खण्डमण्डलपतीनां मिथः स्पर्धादि तद्वत् ॥ २० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपनी टिप्पणी ।

एवं प्रश्नेन अनुकम्पितः अन्तरिक्षेण कृपाविषयीकृतः ननु, "शृण्वन् सुभद्राणि" इत्यादिना तदुपायस्तूक्त एवेत्याशङ्क्याह—यद्यपीति । तत्तारकत्वेन मायातारकत्वेन तत्र मायातरणे अन्योऽस्तीति ज्ञानं व्यवच्छिद्यते "क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्" इत्यादेः ॥ १७ ॥

प्रबुद्धो हि मायाशयनाद्बुद्ध इत्युच्यते मायातरणोपायवर्णनन्तु तस्यैव सम्भवतीति प्रबुद्ध एव मायातरणोपायमुवाच । ससाधनां गुरूपसत्त्यादिसाधनसहितां भक्तिं प्रेमलक्षणां तत्र तेषु साधनेषु मध्ये ॥ १८ ॥

चलैरित्यस्य व्याख्यानं द्विविधं तत्राऽनित्यैर्नश्वरैः अपायिभिः विश्लेषवद्भिः ॥ १९ ॥

एवं ऐहिकलोकवत् कर्मनिर्मितमिति हेतुगर्भं विशेषणं तथा च नश्वरत्वे प्रमाणं लोको भोगः वर्त्तमानसमये भोगसमये मर्यादिषामित्यादिना चिन्तादैन्यपरिग्रहः ॥ २० ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ऐश्वरीं श्रीभगवच्छक्तिभूतां स्थूलधियः शरीरात्मबुद्धयः ॥१७॥

पाकविपर्यासं फलवैपरीत्यम् ॥ १८ ॥

कर्मफलवैपरीत्यमुक्त्वा विलक्ष्यापि गृहादिसाधकस्य तदाह—वित्तेन साधितैः का प्रीतिरिति योजना चलैर्नश्वरैः एवं नश्वरम् "णश अदर्शने" इति धातोः

"आविर्भावतिरोभावधर्मिकेष्वनपायि यत् ।
आविर्भावतिरोभावजन्मनाशविकल्पवत्" ॥

इत्युक्तं धर्मिणः स्वस्थानधर्मवतो द्रव्यस्य आविर्भावतिरोभावरूपं शास्त्रीयं सत्यत्वमेवोक्तम् ॥ १९-२० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तन्निस्तारोपायमेवेत्यभिप्रेत्य पृच्छति निमिः—यथैतामिति । यथा येन प्रकारेण येनोपायेनेति यावत् अकृतात्मभिरजितेन्द्रियैर्दुस्तरां स्थूलधियो मादृशा अञ्जः सुखेन तरन्ति तदिदमुच्यतां यद्यपि "बुध आभजेत्तं भक्त्यैकयेशम्" इति तन्निस्तारोपायः पुरैवोक्तस्तथापि स्थूलधियां भगवति हठाद्भक्तिर्नोदेतीति कदाचित्

(१) अतुल्यातिशयध्वंसमाद्यर्थेति विज० पा० ।

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रश्नाद्वयैव सम्पाद्या अतस्तत्प्रश्नाद्वीबुभुत्सयाऽत्र पुनः प्रश्न इत्यवगन्तव्यम् ॥ १७ ॥

इममभिप्रायमाविष्कुर्वन् लोकान् कर्मचितानित्यादि श्रुत्युक्तविधां प्रज्ञाद्वीमाह, प्रबुद्धः—कर्माणीत्यादिना । नावाभिर्वेदं विधत्ते कर्माणीति त्रिभिः । मिथुनीभूय वर्त्तमानानां नृणां दुःखहत्यै दुःखापाकरणाय सुखाय च कर्माण्यारभमाणानामपि पाकविपर्यासं पश्येद्विपर्यासहारायेष्टप्राप्तये चारब्धेभ्यः कर्मभ्यो दुःखप्राप्तिमेव पश्येदित्यर्थः ॥ १८ ॥

कर्मभिः साधिता अपि वित्तादयो न सुखहेतव इति च पश्येदित्याह-नित्यार्त्तिदेनेति । दुर्लभेनात्मन एवात्मनः स्वस्य मृत्युरूपेण मरणान्तसाहसकर्मसम्पाद्यत्वादिति भावः । अत एव नित्यमार्त्तिदेन स्वसम्पादनार्थदुःखदेन वित्तेन चलैरनित्यैर्गृहापत्यादिभिश्च साधितैरपि का प्रीतिः स्यान्न किञ्चित्सुखमित्यर्थः ॥ १९ ॥

एवमिति यथास्मिन् लोके वित्तगृहादिजन्यं सुखमनित्यमन्ततो दुःखनिमित्तमेव परं लोकं नश्वरं विद्यात्पारलौकिकमप्यनित्यं पश्येदित्यर्थः । तत्र हेतुत्वेन विशिनष्टि, कर्मणा निर्मितं सम्पादितं तथा च श्रुतिः "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति । किञ्च, विद्यमानदशायामपि दुःखात्मकं पश्येदित्याह-सतुल्यातिशयध्वंसम् इति । सह तुल्येनातिशयेन ध्वंसेन वर्त्तमानं तत्र सतुल्यत्वालोचनेनादराभावः सातिशयत्वालोचनेन तु निहीनता तत्प्रयुक्तमनोऽसुख्यं च ध्वंसालोचनेनात्वपरिहार्यं भयम् इत्यर्थः । यथा मण्डलवर्त्तिनां मण्डलेश्वराणां सुखं तद्वदिति ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रुतमायाविभवो राजा मायाशब्दवाच्यबन्धकशक्तिजयोपायं पृच्छति-यथेति । ईश्वरस्येयमैश्वरी तां मायां बन्धकशक्तिमज्ञास्तरसा तरन्त्येनं जीवं न संसारयामीत्यनुग्रहोन्मुखीं कारयन्ति अन्यथा अतितरां बद्धमेव कुर्वन्तीत्यर्थः ॥ १७ ॥

मायामन्तरङ्गोक्तेः प्रथमसाधनं विरक्तिरिति ज्ञापयन् प्रबुद्धः प्रश्नं परिहर्त्तुमुपक्रमते—कर्माणीति । पाकविपर्यासो नाम कर्मफलवैपरीत्यं दुःखनिवृत्तिं सुखावाप्तिञ्च मिथुनीचारिणां स्त्रीपुंसाम ॥ १८ ॥

नित्यादिसमृद्ध्या सुखोन्नतिः स्यादित्यत्राह-नित्येति ॥ १९ ॥

अनित्यफलत्वात्स्वर्गादयो हेया इत्याह-एवमिति । * अतुल्यातिशयैर्धर्मादधःपातनात् मण्डलवर्त्तिनां युद्धरङ्गे वर्त्तमानानां यथा प्रध्वंसः ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यद्यं तावत् भगवन् सुभद्राणीत्यादिना तदुपायं ज्ञातवन्त एव स्थूलधियः स्थूले कर्मण्यश्वमेधादावेव धीः प्रतीतिर्येषां ते यथा अञ्जस्तरन्तीत्यर्थः ॥ १७ ॥

अथ प्रथमतस्तेषां तत्र कर्मण्यनादरं जनयति—कर्माणीति त्रिभिः । अत्र दृष्टान्तो द्वाभ्यां दार्ष्टान्तिकमेकेनेति ॥ १८—२० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यद्यपि "तन्माययाऽतो बुध आभजेत्तम्" इत्युक्तेर्भक्त्यैव मायां तरन्तीति राज्ञा निश्चितमेव तदपि तत्रत्यान् विद्वन्मानिनः कर्मिणो दृष्ट्वा पृच्छति—यथेति । अकृतात्मभिरिति, "युगपर्वात्मयोः कृतम्" इति "पर्वाभिः परिपूर्णता" इत्यमरोक्तेरपूर्णत्वं मन्दत्वमतो मन्दधीभिर्दुस्तरामपि स्थूलधियः कर्मिप्रभृतयोऽञ्जः सुखेनैव यथा तरन्ति इदमुच्यतामिति शुनः पुच्छमालम्ब्य दुस्तरमपि समुद्रं सुखेन यथा तरन्ति तदुच्यतामिति कश्चित् कमपि यथा पृच्छति तथैव तत्रत्यान् कर्मिणः प्रति सकटाक्षभङ्गीकः प्रश्नोऽयं राज्ञो ज्ञेयः ॥ १७ ॥

कर्मिणो नैव मायां तरन्तीति साक्षादेव विवेकेन पश्येदित्याह-कर्माणीति त्रिभिः । पाकविपर्यासं फलविपर्ययम् ॥ १८ ॥

वित्तेन का प्रीतिर्न कापीत्यर्थः । तथैव तेन वित्तेनापि साधितैर्गृहादिभिश्च का प्रीतिर्वतश्चलैः ॥ १९ ॥

एवं लोकं परमिति तथा च श्रुतिः "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति किञ्च, भोगसमयेऽपि दुःखयुक्तं पश्येदित्याह, सतुल्यातिशयध्वंसं तुल्येनातिशयेन ध्वंसेन च सह वर्त्तमानं तत्र तुल्ये स्पर्द्धा अतिशये असूया ध्वंसे शोकः यथा मण्डलेश्वराणां मिथः स्पर्द्धादिदुःखम ॥ ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ भगवत्प्राप्तौ प्रतिबन्धकभूताया मायायाः प्रभावं श्रुत्वा राजर्षिस्तत्तरणोपायं पृच्छति—यथेति । ईश्वरस्य श्रीविष्णोः इयमैश्वरी ताम् अकृतात्मभिः अनात्मविद्भिः अञ्जः सुखेन स्थूलधियोऽपि स्थूले मायापरिणामे शरीरादौ धीर्येषां तेऽपि यथा तरन्ति तथेदं तरणोपायमुच्यताम ॥ १७ ॥

"मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति श्रीमुखोक्तं मायातरणोपायं भक्तियोगमाह-कर्माण्यारभमाणानामित्यादिद्वादशभिः । प्रथमतस्मात्परस्माच्च कर्मचिताल्लोकान्निर्वेदं कुर्यादित्याह-त्रिभिः । स्त्रीभिर्मिथुनीभूय प्रवर्त्तमानानां पाकेषु कर्मफलेषु विपर्यासं वैपरीत्यं पश्यत ॥ १८ ॥

देवाद्ययासङ्कल्पं सिद्धेष्वपि वित्तादिरूपेषु कर्मफलेषु नानादोषान्पश्येदित्याह-नित्यार्त्तिदेनेति ॥ १९ ॥

एवं परं लोकमपि नश्वरं विद्यात् नश्वरत्वे हेतुगर्भं विशेषणं कर्मनिर्मितमिति तथाच श्रुतिः "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति नश्वरत्वेऽपि बहुदोषयुक्तमित्याह, तुल्येन अतिशयेन ध्वंसेन च सह वर्त्तमानम् स्पर्द्धासूयाभयजनकमित्यर्थः । यथामण्डलेश्वराणामितरेतरं स्पर्द्धादि तद्वत् ॥ २० ॥

---

* मानुषेषु स्वापेक्षया तुल्यातिशयशून्यैः ।

तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ।
शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥ २१ ॥
तत्र भागवतान्धर्मान् शिक्षेद्गुर्वात्मदैवतः ।
अमाययाऽनुवृत्त्या यैस्तुष्येदात्माऽऽत्मदो हरिः ॥ २२ ॥
सर्वतो मनसोऽसङ्गमादौ सङ्गं च साधुषु ।
दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचितम् ॥ २३ ॥
शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवम् ।
ब्रह्मचर्यमहिंसां च समत्वं द्वन्द्वसञ्ज्ञयोः ॥ २४ ॥

भाषा टीका ।

राजो उवाच ।

राजा निमि बोले, कि—हे महर्षे ! अब आप कृपा कर कहें कि—जिन्होंने मन वश नहीं किया है ऐसे लोगों से दुस्तर इस ईश्वर की माया को जैसे स्थूलबुद्धि वाले भी अनायास तर जावें सो आप कथन करें ॥ १७ ॥

प्रबुद्ध उवाच ।

प्रबुद्ध नामक योगेश्वर बोले, कि—माया को तरने वाला पुरुष, दुःखनिवृत्ति और सुखकी प्राप्ति करने के लिये कर्मों के आरम्भ करने वाले तथा स्त्री पुरुष रूप मिथुन भाव को प्राप्त होकर प्रवृत्त होने वाले मनुष्यों के कर्मों के फलों के विपरीतपने को देखे, कि—कर्मों से दुःख की निवृत्ति या सुख की प्राप्ति होती है, कि नहीं ॥ १८ ॥

हे राजन् ! नित्य ही दुःखदायी आत्मा का नाश करने वाला तिस पर भी दुर्लभ इस प्रकार के इस द्रव्य से क्या प्रयोजन है, इसी तरह गृह अपत्य आप्त पशु इत्यादि चल पदार्थों के साधन करने से आत्मा को क्या प्रीति होती है ? कुछ भी नहीं इस प्रकार का तो यह लौकिक वैभव है, ॥ १९ ॥

अब इसी प्रकार परलोक के वैभव को कर्म निर्मित होने से नश्वर ( नाशवान् ) जाने, और जैसे यहां खण्डमंडलेश्वर राजाओं के लोकों में बराबरपन अधिकपन और अनित्यता रहती है इसी प्रकार लोकान्तरों में स्पर्धादि का दुःख है कहीं भी अनपायी सुख नहीं है ॥ २० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

उत्तमं श्रेयो ज्ञातुमिच्छुः शाब्दे ब्रह्मणि वेदाख्ये न्यायतो निष्णातं तत्त्वज्ञम् अन्यथा संशयनिरासकत्वायोगात् परे च ब्रह्मण्यपरोक्षानुभवेन निष्णातम् अन्यथा बोधसञ्चारायोगात् परब्रह्मनिष्णातत्वद्योतकमाह—उपशमाश्रयमिति ॥ २१ ॥

गुरुरेवाऽऽत्मा दैवतं च यस्य सः अनुवृत्त्या सेवया यैर्धर्मैः तुष्येत् आत्मा आत्मप्रदश्चोपासकानां यथा बलिप्रभृतीनाम् ॥ २२ ॥

यथोचितमिति हीनेषु दयां समेषु मैत्रीमुत्तमेषु प्रश्रयं च शिक्षेदित्यर्थः ॥ २३ ॥

शौचं बाह्यं मृज्जलादिभिः आभ्यन्तरं दम्भमानादि शिक्षेत् तपः स्वधर्माचरणम् तितिक्षां क्षमाम् मौनं वृथावाचामनुच्चारणम्, स्वाध्यायमधिकारानुरूपं वेदपाठादिकम् आर्जवं सरलतां ब्रह्मचर्यं यस्य यादृगुचितमृतुकाले स्वदारनियमादि अहिंसां भूतेष्वद्रोहम् द्वन्द्वसञ्ज्ञयोः शीतोष्णसुखदुःखादिरूपयोः समत्वं हर्षविषादराहित्यम् ॥ २४ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

तस्माद्विषयभोगस्याऽसारत्वात्ततो विरज्य गुरुं प्रपद्येतेति वैराग्यद्वारा गुरूपसत्तिः प्रोक्ता न्यायतो विचारतः तत्त्वज्ञं याथार्थ्येन वेत्तारम् अन्यथा शब्दब्रह्मणि निष्णातत्वाभावे पुनरन्यथा परब्रह्मणि निष्णातत्वाभावे सञ्चारः शिष्ये उपदिष्टज्ञानसङ्क्रमणं शब्दब्रह्मणि निष्णातत्वद्योतकं व्याख्यानोपपत्त्यादिना संशयच्छेदनमेव ॥ २१ ॥

तत्रेत्यादेः बहुवाक्यैकवाक्यत्वान्मध्येऽङ्कः बोद्धव्यः तत्र गुरूपसत्तौ सत्यां गुरोः सकाशात् अमायया निष्कपटया ॥ २२ ॥

तत्रादौ भक्तिहेतुभूतान् साक्षाद्भागवतधर्मानाह—सर्वत इति । चतुर्भिः । मूर्तेश्चलस्य विशिष्टपठपाठपानादित्यर्थं इत्युक्तम् ॥२३॥

कदम्भमानादिभिः दम्भमानाद्यभावैः यस्य गृहस्थादेः ॥ २४ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एतत् षट् एतन्नुष्यरूपादीनां पुनरनुदयात् वैराग्यं विवक्षितम्, एवं वैराग्यमुपदिश्य निगमयति । यस्मात् एवं तस्मात् गुरुं प्रपद्येतेति विधेयः अयं च अल्पकालजातभ्रंशगत्वकटाक्षात्मकहेतुनिष्पन्नवैराग्यद्वाराऽऽचार्यसम्बन्धात्मकप्राप्त्यर्थं विधायकः इति उत्तमं श्रेयः भक्तिरूपं प्रपत्तिरूपं वा ज्ञानं ज्ञानहेतुमाह—शाब्दे ब्रह्मणि वेदे ज्ञानेन परे च योगेन निष्णातमिति ॥ २१ ॥

गुर्वात्मदैवत इति पञ्चमोपायस्वरूपोपबृंहितत्वमभिप्रेति, आत्मद इति । ज्ञानिनामात्मत्वेन तेषामात्मानं वशीकरोतीति यैस्तुष्येदिति उक्तानेवाऽऽन्तरान् धर्मानाह—सर्वत इति । बाह्यानाह—शौचमिति । नामपुण्ड्रमन्त्रतापयागरूपपञ्चसंस्काराः शौचम्

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आचाररूपा वृत्तिरित्युक्तम् भारद्वाजेन, ताप इति तापः शङ्कापङ्कादिः मौनमात्मविचारः स्वाध्यायो मन्त्ररत्नानुसन्धानम् आर्जवं देवतान्तरपरित्यागेऽपि तदनिन्दनम् ब्रह्मचर्यं ब्रह्मविचारः अहिंसा याचाचर्यादिहिंसान्तरवर्जनम्, शास्त्रीयकर्माद्याचरणेऽवर्जनीयद्वन्द्वसहनम् ॥ २२—२४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्मादिति । तस्माद्देहलौकिकपारलौकिकसुखयोरेवंविधत्वात्तत्र सञ्जातनिर्वेदः उत्तमं श्रेयः तत्साधनं च ज्ञातुम् इच्छुर्गुरुं प्रपद्येत अभिगच्छेत् कथम्भूतम् ? शाब्दे परे च ब्रह्मणि निष्णातमागमयोगजन्यज्ञानवन्तमित्यर्थः । "भिन्ननावाश्रितः स्तब्धो यथा पारं न गच्छति । ज्ञानहीनं गुरुं प्राप्य कुतो मोक्षमवाप्नुयात्" इति भावः उभयनिष्ठत्वसूचकेन छिद्रेन निर्दिशति, उपशमाश्रयमिति । उपशमो रागद्वेषाद्यभावः तस्याश्रयमनेन 'श्रोत्रियं ब्रह्मनिष्ठम्" इति श्रौतं पदद्वयं व्याख्यातम् ॥ २१ ॥

तत्रेति । तत्र गुरुसन्निधौ गुरुरेवात्मनः स्वस्य दैवतं यस्य सः अमायया निष्कपटयाऽनुवृत्त्या आत्मार्पणेनैवया भागवतधर्मान् शिक्षेदभ्यसेदित्यर्थः । तान्निर्दिशति—धर्मैरात्मा सर्वान्तरात्मा आत्मद आत्मपर्यन्तप्रदाता यो हरिस्तुष्येत् ॥ २२ ॥

के ते धर्मा इत्यतस्तानाह—सर्वत इत्यादिना । आदौ तावत् सर्वतः सर्वत्र देहबन्धुवर्गेषु च मनसोऽसङ्गमनासक्तिं शिक्षेदित्यन्तानाम्, इति भागवतान् धर्मान् शिक्षन्, इत्युपरिष्टात् सम्बन्धः । भूतेषु यथोचितं दयां मैत्रीं प्रश्रयं च तत्र दीनेषु दयां समेषु मैत्रीम् उत्तमेषु प्रश्रयं विनयं चेति बोध्यम् ॥ २३ ॥

शौचं द्विविधं तत्र मृज्जलादिभिर्बाह्यमान्तरं विष्णुचिन्तनं तपः स्ववर्णाश्रमोचितधर्मानुष्ठानमनशनादिरूपं वा तितिक्षां द्वन्द्वसहिष्णुतां स्वाध्यायमध्ययनमार्जवं मनोवाक्कायानामैकरूप्यं ब्रह्मचर्यमृतिकालव्यतिरिक्तेषु स्त्रीसङ्गराहित्यम् अहिंसां भूतद्रोहराहित्यं द्वन्द्वसञ्ज्ञयोः शीतोष्णसुखदुःखादिषु समत्वमविकृतस्वभावत्वम् ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

इहामुत्र विरक्तेन पुरुषेण किं कार्यमत्राह—तस्मादिति ॥ २१ ॥

गुरुकुले किमनुष्ठेयमत्राह—तत्रेति । गुरुश्च आत्मा च दैवतं यस्य स तथा आत्मा विष्णुः मिथुनीचारिणामित्यनेनाऽमिथुनानामेव श्रेयो मोक्षो न मिथुनानामित्याक्षेपः—

"देवाः सजाया मुच्यन्ते मानुषा उभयात्मकाः ।
भिजया एव योगिनस्तेषां यावेव योग्यता ॥
तथा तथैव मुच्यन्ते नान्यथा तु कथञ्चन" ॥

इति वचनेन परिहृत इति हरिगुरुप्रसादसाधनमाह—अमाययेति ॥ २२ ॥

भागवतान्धर्मानाह—सर्वत इति । शिक्षेदित्यनुवर्तते साधवः एकविधा उत बहुविधाः एषु सङ्गः कर्तव्यः इति विधीयते इति सङ्गानेकविधा इत्युत्तरं तर्हि कतिविधा इत्यत्र त्रिविधा इति तत्रापि विशेषो बहुलः स एव ग्रन्थान्तरे विस्तृतः—

"सन्तस्तु त्रिविधाः प्रोक्ता उत्तमाधममध्यमाः ।
उत्तमा देवतास्तत्र ऋष्याद्या मध्यमा मताः ॥
अधमा मानुषोत्कृष्टास्ते चापि त्रिविधा मताः ।
तत्राधमेषु येषां तु सङ्गो विघ्नाय वै भवेत् ॥
येषामुत्तमसङ्गः स्यात्तेषां सङ्गं परित्यजेत् ।
आद्यो च तेषामपि च सङ्ग उत्तमसङ्गतेः ॥
साधनत्वात्तु त्याज्यो यदि त्यक्तुं न शक्यते ।
तदा तेऽपि तथा नेया यथा विघ्नो न वै भवेत् ॥
तदुत्तमसङ्गतेः क्वापि तदा दोषो न जायते ।
प्रयोजनाय तेषां तु सङ्गः सर्वात्मनेष्यते ॥
सर्वथा चैव देवेषु सङ्गो मुनिगणेषु च ।
साध्यो हितं विना नैव पुरुषार्थः क्वचिद्भवेत् ॥
विशेषतः श्रोत्रियेषु विना सङ्गं न मुच्यते ।
स्वनीचेषु तु देवेषु विना सङ्गं न पूर्यते ॥
तस्मात्सत्सूत्तमेष्वेषु सङ्गः कार्यो विशेषतः ।
अनाद्यनन्तकालेषु न च ह्यादेः कथञ्चन ।
सतां तदुत्तमेशोऽथ किमु विष्णौ परात्परे" ॥

इति । किञ्च, ज्ञानोत्पत्तावन्तरङ्गं सत्सङ्गेनैव यामन्तरेण विवक्षितार्थज्ञानसिद्धिर्न स्यात् अतो दुर्बलेनापि सा कार्या तदुक्तम्—

"बहुपेक्षा हि जिज्ञासुरतो वेदादिवृत्तये ।
किञ्चित्स्वस्यापि सङ्गी स्यादशक्ये सति वर्तते ॥
कृतकृत्यस्त्यजेत्सङ्गं सदा गुरुसुरादिषु ।
सङ्गीस्त्वाग्राह तत्सङ्गं विना स सुखभाग्भवेत् ॥
तस्मादनाद्यनन्तैव भक्तिर्गुरुसुरादिषु ।
अन्यत्र कृत्यावस्था स्यादिति सङ्गविनिर्णयः" ॥

इति ॥ २३—२४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ततः एवमेव कुर्वीतेत्याह—तस्मादित्यादिना ॥ २१ ॥

तत्र भागवतानित्युपक्रम्य आत्मा सर्वमूलस्वरूपत्वात्सम्यगानन्दरूपः "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इति श्रुतेः । तस्यापि दाता भक्तसात्कर्ता काम्यकर्माधिकारविषयमिदं प्रकरणम् इत्यापातताऽश्रद्धामाशङ्क्य श्रद्धाद्वारभूतानाह, सर्वत इत्यादिना । ततः श्रद्धान्तःकरणतया जातश्रद्धांस्तान् प्रति साक्षाद्भक्तिरूपानाह, श्रवणमित्यादिना । तत्र श्रवणमित्यादियुग्मकम् । ननु, पूर्वं यद्यज्ञादि कर्म कृतं यच्च दारादिकं द्रव्यं सञ्चितं तत्किं कर्तव्यं तत्राह, इष्टमिति । एवं पूर्वोक्तस्थावरजङ्गमयोः परिचर्या तत उत्कर्षेण नृषु ततः साधुषु ततः श्रीभागवतमात्रेषु यथार्हं शिक्षेत् कृष्ण एवात्मा नाथः परमप्रेमास्पदं येषां तेषु श्रीभागवतविशेषेषु तु सौहृदं शिक्षेत तत्तद्विशेषानुसन्धानेन क्रमेण मनस्यानयेदित्यर्थः ॥ २२—३० ॥

---

सर्वत्राऽऽत्मेश्वरान्वीक्षां[१] कैवल्यमनिकेतताम् ।
विविक्तचीरवसनं सन्तोषं येन केनचित् ॥ २५ ॥
श्रद्धां भागवते शास्त्रेऽनिन्दामन्यत्र चापि हि ।
[२] मनोवाक्कर्मदण्डं च सत्यं शमदमावपि ॥ २६ ॥
श्रवणं कीर्त्तनं ध्यानं हरेरद्भुतकर्मणः ।
जन्मकर्मगुणानां च तदर्थेऽखिलचेष्टितम् ॥ २७ ॥
इष्टं दत्तं*तपो जप्तं वृत्तं[३] यच्चाऽऽत्मनः प्रियम् ।
दारान्सुतान् गृहान् प्राणान्[४] *यत्परस्मै निवेदनम् ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अतः पूर्वप्रोक्ता भक्तिरेव संसारतारिणी सैव विविच्यते गुर्वाश्रयस्याह—तस्मादिति । शाब्दे ब्रह्मणि वेदे वेदतात्पर्यज्ञापके शास्त्रान्तरे च निष्णातं निपुणम् अन्यथा शिष्यस्य संशयच्छेदाभावे नैराश्ये च सति कस्यचित् भक्त्यशैथिल्यमपि सम्भवेत, परे ब्रह्मणि च निष्णातम् अपरोक्षानुभवसमर्थम् अन्यथा तत्कृपा सम्यक् फलवती न स्यात् परब्रह्मनिष्णातत्वद्योतकमाह, उपशमाश्रयं क्रोधलोभाद्यवशीभूतम् ॥ २१ ॥

तुर्यस्य द्योतकमाह—आत्माऽऽत्मदः आत्मनः स्वस्य आत्मानं श्रीविग्रहं ददाति द्रष्टुं स्प्रष्टुं साक्षात् परिचरितुं चेति भावः ॥ २२ ॥

यथोचितमिति हीनेषु दयां समेषु मैत्रीम् उत्तमेषु विनयं शिक्षेदित्यर्थः ॥ २३ ॥

शौचं बाह्यं मृज्जलादिभिः आभ्यन्तरं चादम्भमानादिभिः शिक्षेत् तपः कामक्रोधादिवेगधारणं तितिक्षां क्षमां मौनं वृथावागप्रयोगः स्वाध्याय भक्तिविधायकश्रीगोपालतापन्यादिपाठम् आर्जवं सारल्यं ब्रह्मचर्यं स्त्रीसङ्गत्यागम् अहिंसामद्रोहं द्वन्द्वसञ्ज्ञयोः मानापमानयोः समत्वं हर्षविषादराहित्यम् ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवमिहामुत्र निर्विण्णाः किं कुर्यादित्याकाङ्क्षायामाह—तस्मादिति । तस्माल्लोकद्वयस्य हेयत्वादुपादेयतया उत्तमं श्रेयः ज्ञातुमिच्छुः शाब्दे वेदाख्ये परे तद्वेद्ये च ब्रह्मणि निष्णातम् अत एव उपशमः आश्रयो यस्य तं गुरुं प्रपद्येत तथा च श्रुतिः "स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इति ॥ २१ ॥

तत्र गुरुसन्निधौ गुरुरेवात्मा दैवतं च यस्य सः अमायया ऽनुवृत्त्या दम्भवर्जितया सेवया यैरात्मप्रदः भगवद्भावापत्तिलक्षणामात्मप्रदः हरिः संसारक्लेशहरस्तुष्येत्तान् भागवतान् धर्मान् ॥२२॥

भागवतान्धर्मानाह—सर्वत इत्यादिना । सर्वतः सर्वत्र इहामुत्र मनसोऽसङ्गं शिक्षेत यथोचितमिति कनिष्ठेषु दयां तुल्येषु मैत्रीं श्रेष्ठेषु प्रश्रयं च शिक्षेदित्यर्थः । स्वाध्यायं यथाधिकारं वेदपाठादिकम् द्वन्द्वसञ्ज्ञयोः मानापमानादिरूपयोः समत्वं हर्षशोकादिराहित्यम् ॥ २३—२४ ॥

भाषा टीका ।

तस्मात् उत्तम श्रेय के जानने की इच्छा वाला शब्दब्रह्म और परब्रह्म में निष्णात समाहितचित्त शांत गुरु अर्थात् सदाचार्य के शरण जावे ॥ २१ ॥

वहां गुरु के समीप रहकर गुरु को अपना परम पूज्य देवता समुझ कर उनकी निष्कपट अनुवृत्ति ( सेवा ) करके भागवत धर्मों को सीखे, जिन भागवत धर्मों से आप अपने को देने वाले श्रीहरि संतुष्ट होते हैं ॥ २२ ॥

आचार्य संनिधि में निवास कर क्या सीखे, कि—आदि में तो सर्वत्र से मन को असङ्गी बनाकर साधुजनों में संग करावे, तथा प्राणियों में यथोचित हीन लोगों में दया सम लोगों में मैत्री तथा उत्तम लोगों में प्रश्रय ( नम्रता ) सीखे ॥ २३ ॥

और क्या सीखे, कि—मृत्तिका जल आदि से बाह्य शरीर की शुद्धि, भीतर की शुद्धि निर्दम्भ निर्मान मत्सरादिपना, इस प्रकार शौच तप तितिक्षा मौन स्वाध्याय आर्जव ब्रह्मचर्य अहिंसा तथा सुख दुःखादि द्वन्द्वों में सम रहना सीखे ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मेश्वरान्वीक्षां सच्चिद्रूपेणात्मान्वीक्षां नियन्तृरूपेणेश्वरान्वीक्षां च कैवल्यमेकान्तशीलत्वम् अनिकेततां गृहाद्यभिमानराहित्यम् विविक्तचीरवसनं विजनपतितानां वस्त्रखण्डानां शुद्धानां वा वल्कलानां परिधानम् ॥ २५ ॥

भागवते भगवत्प्रतिपादके अन्यत्र शास्त्रादौ या अनिन्दा ताम् मनसः प्राणायामैर्वाचो मौनेन, कर्मणोऽनीहया, दण्डम् सत्यं यथार्थभाषणम, शमदमावन्तःकरणबाह्येन्द्रियनिग्रहौ ॥२६॥

हरेर्जन्मकर्मगुणानां श्रवणादि तदर्थे हर्युद्देशेन सर्वं कर्म विशेषतश्च यजनादियत्तदर्थं शिक्षेत ॥ २७ ॥

इष्टं दत्तमित्यादयो भावे निष्ठाः वृत्तं सदाचारः आत्मनः प्रियं गन्धपुष्पादि दारादीनप्यालक्ष्य परस्मै परमेश्वराय निवेदनं तत्सेवकतया समर्पणं यच्छिक्षेत ॥ २८ ॥

( १ ) कैवल्यमनिकेतनम् । ( २ ) मनोवाक्कायदण्डं च । ( ३ ) पूर्त्तम् ( ४ )। परस्मै तन्निवेदयेदिति विज० पा० ।
* तपः पूर्त्तम् । * परस्मै तन्निवेदनमिति वीर० पा० ।

## श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

सच्चिद्रूपेणेति "अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् । आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्" इत्युक्तेः घटोऽस्ति पटोऽनुभूयत इति सत्तानुभूतिरूपेणात्मेक्षां ब्रह्मविचारं शिक्षेत नियन्तृरूपेण तु ईश्वरस्यान्तर्यामिणोऽन्वीक्षां विचारं शिक्षेदित्यर्थः । विविक्तपदस्य एकान्तशुद्धार्थद्वयवाचकत्वात् विजनपतितानामित्यादिव्याख्यानं चाससामित्यत्र वस्त्रखण्डानामित्येव पाठः । चीरशब्दस्य तत्रैव शक्तेः वल्कलानामिति तु व्याख्यया व्याख्यातम् ॥ २५ ॥

अन्यत्र शिवादिप्रतिपादकशास्त्रादौ आदिना तदन्यदेवतादिपरिग्रहः तदुक्तं "विष्णुरेव सदाराध्यः सर्वदेवेश्वरः पुमान् । इतरे ब्रह्मरुद्राद्याः नावज्ञेयाः कदाचन" इति कर्मणः कायिकव्यापारस्यानीहयाऽकामेन दण्डं तदुक्तमभियुक्तैः " नाऽकामस्य क्रिया काचिद्दृश्यते नेह कर्हिचित् । यद्यद्धि कुरुते जन्तुस्तत्तत् कामस्य चेष्टितम्" इति ॥ २६ ॥

जातभक्तानां साक्षाद्भक्तिरूपान् धर्मानाह—श्रवणमित्यादिचतुर्भिः । तत्रापि श्रवणमिति युग्मकम् इष्टादिकं तदर्थं शिक्षेत आत्मनः प्रियं गन्धादि तथा दारादीनप्यात्मीयं परस्मै यन्निवेदनं तच्छिक्षेदित्यन्वयः ॥ २७—२८ ॥

---

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सर्वत्र भगवन्नियम्यत्वाऽन्वीक्षणम् ॥ २५ ॥

मनोवाक्कर्मदण्डं त्रिदण्डधारणम् नान्तरं बहिश्चेति ॥ २६ ॥

तदर्थेऽखिलचेष्टितम् इत्यनेन सङ्कर्तृत्वफलानां श्रीभगवति समर्पणम् ॥ २७ ॥

उक्तसर्ववृत्तिनिदानम् श्रीभगवत्यात्माऽऽत्मीयभरन्यासरूपम् अङ्गिनमाह—इष्टमिति । प्राणानिति प्राणादिविशिष्टस्यात्मनः परस्मै परवासुदेवायेति विषयो दर्शितः एवमात्मनः आत्मीयस्य च भरन्यास एवाऽऽत्मनिक्षेपः प्रपत्तिन्यास इति पर्यायः ॥ २८ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सर्वत्रैकात्मतान्वीक्षां चेतनेष्वचेतनेषु च परमात्मा एक आत्मा ... आत्मेश्वरान्वीक्षाम् इति पाठे सर्वत्राचित्परिणामरूपदेवमनुष्यादिशरीरेष्वात्मनां जीवानां तेषाम् ईश्वरस्य चान्वीक्षणं ज्ञानैकाकारतया जीवान्वीक्षणं तदन्तर्यामितया ईश्वरान्वीक्षणमित्यर्थः । कैवल्यमपरिग्रहत्वम् अनिकेततां गृहाद्यभिमानराहित्यं विविक्तचीरवसनं विशुद्धानां चीराणां वल्कलानां वसनं परिधानं येन केनचिद्दैवाल्लब्धेनाऽन्नादिना सन्तोषश्च ॥ २५ ॥

भागवते भगवत्प्रतिपादके शास्त्रे श्रद्धामादरातिशयमन्यत्र देवतान्तरप्रतिपादकेऽनिन्दां निन्दावर्जनं मन आदीनां दण्डं तत्र मनसः प्राणायामैः वाचो मौनेनाऽनृतापरिभाषणेन कर्मणोऽनीहया दण्डं कायेति पाठे कायस्य कृच्छ्रोपवासादिभिः सत्यं भूतहितत्वं शमोऽन्तःकरणनिग्रहः दमो बाह्येन्द्रियनिग्रहः ॥ २६ ॥

अद्भुतं कर्म चेष्टितं यस्य तस्य हरेः जन्मादीनां श्रवणं कीर्तनं ध्यानं च तदर्थं भगवदर्थमखिलचेष्टितं तत्कार्यम् वाचेत्यादिना पुरस्तादेव दर्शितम् ॥ २७ ॥

इष्टादीनाऽऽत्मपरमपुरुषाय तन्निवेदनं तेषां इष्टादीनां निवेदनं समर्पणं तत्रेष्टं यागः दत्तं दानं तपः स्ववर्णाश्रमोचितधर्मानुष्ठानं पूर्तं वापीकूपादिकं वृत्तं स्मार्तं कर्म यच्चात्मनः प्रियं तदपि ॥ २८ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सर्वत्र देशकालादिष्वात्मनः स्वामिन ईश्वरस्याऽन्वीक्षां माहात्म्यानुकूलनिरीक्षणां कैवल्यमेकान्तित्वं प्रकृतिप्राकृतादिमिश्रराहित्यं च चीरवसनं वल्कलं सन्तोषमल्पबुद्धिम् ॥ २५ ॥

भागवतशास्त्रे वेदादितन्त्रे तदुक्तम्—

"श्रद्धां भागवते तन्त्रे वेदे भारतपञ्चमे ।
विष्णोरव्यवधानेन वक्तृत्वात्सर्वथा भवेत्" ॥

इति । अन्यत्र कलाविद्यासु ज्योतिःशास्त्रेषु अनिन्दां निन्दाराहित्यं यतीनामिति शेषः तदुक्तम्—

"कलाविद्यास्वनिन्दा च व्यवधानेन केशवे ।
प्रवेशाद्यतिभिः कार्या ह्यन्यथा निरयं व्रजेत्" ॥

इत्यादिना । श्रद्धामिति श्रद्धा सर्वसाधारणचेतनधर्मो गुणः श्रद्धास्तिक्यबुद्धिः सा द्विविधा अत्रोक्तमस्तीत्येका ममात्र प्रयोजनमस्तीत्यन्या तत्र प्रथमा यतेरपि कलासु कार्या न द्वितीया प्रयोजनाभावात् उभयञ्च पञ्चरात्रादिभगवच्छास्त्रेषु कार्यं तद्विरोधिषु शास्त्रेषु सर्वैरविशेषेण सदा निन्दा कार्या तद्भावेतम् एव परायणम् अतः सुरा एव तामश्रद्धां कुर्वन्ति सदाविज्ञाततात्पर्यत्वात् तदुक्तं "श्रद्धात्वास्तिक्यबुद्धिः स्यात्" इत्यादि "प्रतिपाद्यं तथापरम्" इत्यन्तेन । किञ्च, भगवच्छास्त्रविरोधिशास्त्राभ्यासेन अन्धं तमोऽपि श्रूयते "अन्धन्तमः प्रविशन्ति" इति श्रुतौ न केवलं यतेः कलाभ्यः प्रयोजनाभावः किन्त्वाल्पप्रज्ञस्य गृहिणोऽपीतीममर्थं हिशब्देन ध्वनयति "गृहिणोऽप्यल्पबोधस्य" इति वाक्यात् ॥ २६ ॥

हरेर्जन्मादीनां श्रवणं तदर्थं श्रवणार्थं अखिलचेष्टितम् अखिलव्यापारः तदर्थं भक्तिजननार्थं हरेरखिलचेष्टितमिति वा ॥ २७ ॥

यदात्मनः प्रियं यद्देहादिकञ्च तत्सर्वं परस्मै परमात्मने निवेदयेत् ॥ २८ ॥

---

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आत्मेश्वरस्य स्वेष्टदेवस्य सर्वाध्यक्षामीक्षणाऽभ्यासं कैवल्यमेकान्तचारित्वम् अनिकेततां गृहाद्यभिमानराहित्यं विविक्तानां शुद्धानां चीरवल्कलादीनां वसनं परिधानम् ॥ २५ ॥

अन्यत्र शास्त्रादौ या अनिन्दा तां मनोवाक्कायदण्डं मानसवाचिककायिकविकर्मराहित्यं सत्यं यथार्थभाषणं शमदमौ अन्तःकरणबाह्येन्द्रियनिग्रहौ ॥ २६ ॥

एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम्।
परिचर्यां चोभयत्र महत्सु नृषु साधुषु ॥ २९ ॥
परस्परानुकथनं पावनं भगवद्यशः।
मिथो रतिर्मिथस्तुष्टिर्निवृत्तिर्मिथ आत्मनः ॥ ३० ॥
स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम्।
(१)भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनुम् ॥ ३१ ॥
क्वचिद्रुदन्त्यच्युतचिन्तया क्वचिद्धसन्ति नन्दन्ति वदन्त्यलौकिकाः।
नृत्यन्ति गायन्त्यनुशीलयन्त्यजं भवन्ति तूष्णीं परमेत्य निर्वृताः ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

हरेर्जन्मकर्मगुणानां चकारान्नाम्नां तदर्थं तत्परिचर्यार्थमेव आत्मचेष्टितम् दन्तधावनादिराह्निकः सर्व एव व्यापारः ॥ २७ ॥

इष्टं विष्णुसंप्रदानको यागः दत्तं विष्णुवैष्णवसम्प्रदानकं दानं तप एकादश्यादिकव्रतं जप्तं विष्णुमन्त्रजपः वृत्तं सदाचारः (इष्टादिकं) यच्च आत्मनः स्वस्य प्रियं वस्तु तस्य परस्मै परमेश्वराय निवेदनं तच्च निवेदनं दारान्सुतान् दारादीन् यत् व्याप्नुवत् इयाः आत्मन्वय रूपं दारादीनां तत्सेवार्थमेव विनियोजनं यत् तच्छिक्षेदित्यर्थः ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

आत्मेश्वरयोर्जीवपरमेश्वरयोर्नियम्यनियन्त्रोः अन्वीक्षाम् अन्वीक्षणं केवलमेकान्तित्वं विविक्तचीरवसनं विविक्तानां शुद्धानां चीरखण्डानां वल्कलानां वा परिधानम् ॥ २५ ॥

अन्यत्राऽभागवते अनिन्दां मनोवाक्कायदण्डं मनसः प्राणायामेन वाचो मौनेन कायस्य अनीहया ॥ २६ ॥

हरेर्जन्मादीनां श्रवणादिकं शिक्षेत् तदर्थं हर्यर्थं अखिलचेष्टितं सर्वेषां मनोवाक्कायानां चेष्टितं च शिक्षेत् ॥ २७ ॥

इष्टमित्यादयः भावे निष्ठा वृत्तं सदाचारः आत्मनः प्रियं गन्धरसादि दारादीनप्याऽऽलक्ष्य परस्मै भगवते निवेदनं यत्तत् शिक्षेत् ॥ २८ ॥

भाषा टीका।

सर्वत्र चेतना चेतन मात्र वस्तुओं के विषे अपने ईश्वर की दृष्टि करै, कि जो कुछ देखने सुनने में आता है उसके भीतर बाहर नारायण ही व्याप्त होकर स्थित हैं, एवं एकान्त शील होकर रहै, और गृहादिकों में अभिमान रहित होय, गिरे पर चीर वा शुद्ध वल्कलों को पहिने, और जो कुछ प्राप्त होजावे उसी से संतोष करै ॥ २५ ॥

तथा भगवत्शास्त्र में श्रद्धा रक्खे, अन्य शास्त्र की निन्दा भी न करै, मन वाणी और कर्मों का प्राणायाम मौन और अनीहा से दंड रक्खे, यथार्थ भाषण करै, अन्तःकरण और बाह्य इन्द्रियों का निग्रह करै ॥ २६ ॥

अद्भुत कर्मा श्रीहरि के जन्म कर्म गुणों का श्रवण कीर्त्तन ध्यान करै, और अपने शरीर की समग्र चेष्टा श्रीहरि के निमित्त ही करै, ॥ २७ ॥

इष्ट दत्त तप जप वृत्त और भी जो गन्ध पुष्पादिक आपको प्रिय होय तिनको, एवं स्त्री पुत्र गृह प्राण और अन्य समस्त परिकर को परमात्मा के समर्पण करै, अर्थात् उन सबों में मदीयत्व बुद्धि को छोड़कर भगवदीयत्व बुद्धि करै और उन सबों को वैष्णव चिन्हों से भूषित करै॥ २८।

श्रीधरस्वामिकृतभावार्थदीपिका।

कृष्ण एवाऽऽत्मा नाथश्च येषां कृष्णश्च आत्मनो जीवस्य नाथो येषामिति वा तेषु उभयत्र स्थावरे जङ्गमे च या परिचर्या नाम विशेषतो नृषु तत्रापि साधुषु स्वधर्मशीलेषु ततोऽपि महत्सु श्रीभागवतेषु ॥ २९ ॥

तैश्च सह सङ्गम्य यत्पावनं भगवद्यशस्तस्य परस्परानुकथनं शिक्षेत्। यद्वा, यथा: प्रति तत्र संस्पर्धाविपरित्यागेन मिथो वा रतिः रमणं या च तुष्टिः सुखं या च निवृत्तिः समस्तदुःखनिवृत्तिस्तां च शिक्षेत् ॥ ३० ॥

एवं वर्तमानानां परमानन्दप्राप्तिमाह-स्मरन्त इति द्वयेन। भक्त्या साधनभक्त्या सञ्जातया प्रेमलक्षणया भक्त्या ॥ ३१ ॥

अजं हरिमनुशीलयन्ति तल्लीलामभिनयन्ति एवं परमेत्य प्राप्य निर्वृताः सन्तस्तूष्णीं भवन्ति ॥ ३२ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी।

देहनाथादावन्येऽपि प्रतीयन्ते जीवतत्त्वस्य नाथस्तु कृष्ण एवेति द्वितीयपक्षाभिप्रायः एवं पूर्वरीत्या तथाभूतेषु मनुष्येषु भक्तेषु सौहृदं प्रीतिञ्च शिक्षेत् तत्रापि नृष्वपि मध्ये तत्रापि स्वधर्मशीलेष्वपि महत् कृष्णात्मनाथयोश्च यथासङ्ख्यं साधनसाध्यभक्तिमत्त्वेन विशेषो ज्ञेयोऽन्यथा पौनरुक्त्यापत्तेः ॥२९॥

(१) भक्ता इति विजयध्वजपाठः।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

तैः भागवतैः श्रवणादिनिरतैः भगवत्सम्बन्धमन्तरा मिथो रत्यादेर्भक्तित्वासम्भवात् यत्तच्छब्दयोरध्याहारगौरवाच्च यद्वेति ॥ ३० ॥

एवं साधनभक्त्यनुष्ठानप्रकारेण परमानन्दस्वरूपस्य प्रेम्णः प्राप्तिम ॥ ३१ ॥

क्वचित् स्फूर्तिभङ्गे अच्युतस्य चिन्तया कदा मिलिष्यतीति भावनया रुदन्ति भक्तपराजितमाकलय्य हसन्ति नन्दन्ति भक्तवात्सल्यादिगुणान् प्रशंसन्ति अलौकिकाः विवशाः तूष्णीं भवन्तीति रसास्वादोद्देशः ॥ ३२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कृष्णात्मनाथेषु मनुष्येषु शास्त्रवश्येषु च सौहृदम् उभयत्र परिचर्यां सेवारूपाम् अनुवृत्तिरूपाम् अनिन्दामन्यत्रेति पूर्वोक्तस्मात् महत्सु आचार्येषु कीदृशेषु साधुषु भागवतधर्मपरेषु नृषु शास्त्रवश्येषु ॥ २९ ॥

परस्परम् अनु अनुकथ्यते यत् तादृशं पावनं भगवद्यशः श्रुत्वा मिथः प्रीतिः मिथः सन्तोषः मिथः निर्वृतिरानन्दः आत्मनः जीवस्य आत्मनः हरेरिति वा ॥ ३० ॥

भक्त्या साधनभक्त्या सञ्जातया फलभक्त्या ॥ ३१ ॥

फलभक्तिमेवाह—क्वचिदिति । लोकरीतिमतिक्रान्ताः परं परमात्मानम् एत्य ध्यानेन निर्वृतास्तूष्णीं भवन्ति ॥ ३२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कृष्ण एवात्मनाथो येषां तेषु मनुष्येषु सौहृदं तद्व्यतिरिक्तेषु उभयत्र चराचरात्मकेषु भूतेषु परिचर्यां बहुमतिं महत्सु साधुषु नृषु पावनं भगवद्यशः प्रति परस्परानुकथनं तत्र यशांसि वा मिथोरतिरनुरागः मिथस्तुष्टिः परस्परं तदनुभवजा तुष्टिः तया मिथ आत्मनो मनसः निर्वृत्याध्यात्मिकादितापत्रयनिर्वृत्तिस्तां शिक्षेदिति सम्बन्धः ॥२९–३०॥

स्मरन्त इति" भक्त्या साधनभक्त्या सञ्जातया भक्त्या प्रेमलक्षणया भक्त्या उत्पुलकां रोमोद्गमयुक्तां तनुं बिभ्रतीति यत्तच्छब्दाध्याहारेण सम्बन्धः एवमुत्तरश्लोकेऽपि ॥ ३१ ॥

अलौकिका लोकविलक्षणाः भजं भगवन्तमनुशीलयन्ति तत्स्वरूपध्यानादिकं परिशीलयन्तीत्यर्थः । एवं परं परमपुरुषम् एत्य मनसा प्राप्य निर्वृताः सुखिताः तूष्णीं भवन्तीति ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृष्णात्मैव नाथो येषां ते तथा मानुषेषु चापि सौहृदं शिक्षेत किमु देवादिषु उभयत्र भगवति भागवतेषु च महत्सु ब्रह्मादिदेवेषु च परिचर्यां नचैतावता पूर्यते साधुषु नृषु स्वोत्तमेष्वित्यर्थः ॥ २९ ॥

भगवद्यश उद्दिश्य परस्परानुकथनं रतिः सुखं तद्विषयं तुष्टिश्चात्र निर्वृत्तिश्च ॥ ३० ॥

रत्यादीनां परिपाकमाह—स्मरन्त इति । उत्पुलकामुद्गतपुलकाम् ॥ ३१ ॥

भागवतानां प्रवृत्तिप्रकारमाह—क्वचिदिति । परं भगवन्तं मनसा प्राप्यैव निर्वृताः ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

साधाङ्गिकफलमाह, स्मरन्त इति द्वयेन ॥ ३१—३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कृष्ण एवाऽऽत्मनाथः प्राणनाथो येषां तेषु मनुष्येषु सौहृदं स्नेहविशेषः उभयत्र श्रीभगवति तद्भक्तेषु च तेषु महत्सु स्वस्वादरणीयेषु तथा नृषु साधुषु साधुलोकेषु स्वतुल्येषु यथोचितं वा परिचर्यां तां शिक्षेदित्यर्थः ॥ २९ ॥

परस्परमेवानुकथनं यत्र तथाभूतं पावनं यत् भगवतो यशस्तदालम्ब्य मिथो रतिः संसर्गादिपरित्यागेन तत्रैव परस्परमनुमिथस्तुष्टिः परस्परसङ्गार्थं सुखम् आत्मनो मिथो निर्वृत्तिरिति भक्तिप्रतिकूलविषयभोगात् स्वस्वस्त्रीसम्भोगादिलक्षणात् स्वया चेन्निवृत्तं तर्हि मयाप्येतदारभ्य निवृत्तमित्येवं या भोगनिवृत्तिस्तां च शिक्षेत ॥ ३० ॥

एवं साधनभक्त्या साध्यभक्तिप्राप्तिमाह—स्मरन्त इति । भक्त्या साधनभक्त्या सञ्जातया भक्त्या प्रेमभक्त्या ॥ ३१ ॥

अद्यापि कृष्णो न प्राप्तस्तर्हि किं करोमि क्व गच्छामि कं पृच्छामि को मां तं प्रापयेदित्येवं चिन्तया रुदन्ति क्वचिद्धसन्तीति गोपवधूचौर्यार्थं तामस्यां रात्रौ कस्यचिद्गोपस्य प्राङ्गणे कोणस्थतरुतले निभृतत्य स्थितं कोऽसि त्वं रे कोऽसीति तस्या गुरुजनवाचा पलायितुं प्रवृत्तं कृष्णं स्फूर्तिप्राप्तमालक्ष्येत्यर्थः । नन्दन्ति तदपरोक्षानुभवेनानन्दं प्राप्नुवन्ति हा प्रभो ! एतावद्भिर्दिनैस्त्वामहं प्राप्तोऽस्मीति वदन्ति अलौकिकाः लोकातीताः अजं श्रीकृष्णम् अनुशीलयन्ति स्वीयश्रोत्रादीन्द्रियविषयीकुर्वन्ति एवं परं परमेश्वरम् एत्य प्राप्य निर्वृताः सन्तस्तूष्णीं भवन्ति ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कृष्ण एव आत्मा स्नेहविषयः नाथश्च येषां कृष्णो आत्मा मनो यस्य स नाथो येषामिति वा तेषु सौहृदं शिक्षेत तत्रापि विशेषतो मनुष्येषु तत्रापि साधुषु नृषु स्वधर्मशीलेषु तत्रापि महत्सु अतिशिष्टेषु उभयत्र हृदि श्रवणप्रामाद्ये च परिचर्यां च शिक्षेत् ॥ २९ ॥

एवं श्रीगुरुप्रसादाल्लब्धभगवद्धर्माणां भजनानन्दमाह—परस्परानुकथनमिति त्रिभिः । पावनं भगवद्यश उद्दिश्य परस्परानुकथनं तत्रात्मनः मिथो रतिः प्रीत्यतिशयः मिथस्तुष्टिः सन्तोषातिशयः निर्वृत्तिः शोकमोहाद्यपगमश्च स्यात् ॥ ३० ॥

भक्त्या साधनरूपया भक्त्या प्रेमविशेषलक्षणया ॥ ३१ ॥

इति भागवतान्धर्मान् शिक्षन्भक्त्या तदुत्थया ।
नारायणपरो मायामञ्जस्तरति दुस्तराम् ॥ ३३ ॥

राजोवाच ।

नारायणाभिधानस्य ब्रह्मणः परमात्मनः ।
निष्ठामर्हथ नो वक्तुं यूयं हि ब्रह्मवित्तमाः ॥ ३४ ॥

पिप्पलायन उवाच ।

स्थित्युद्भवप्रलयहेतुरहेतुरस्य यत्स्वप्नजागरसुषुप्तिषु सद्बहिश्च ।
देहेन्द्रियासुहृदयानि चरन्ति येन सञ्जीवितानि [1] तदवेहि परं नरेन्द्र ! ॥ ३५ ॥
[2] नैतन्मनो विशति वागुत चक्षुरात्मा प्राणेन्द्रियाणि च यथाऽनलमर्चिषः स्वाः ।
[3] शब्दोऽपि बोधकनिषेधतयाऽऽत्ममूलमर्थोक्तमाह यदृते न [4] निषेधसिद्धिः ॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं भगवन्तमेव ध्यानद्वारा प्राप्य निर्वृताः सुखिताः सन्तः तूष्णीं भवन्ति ॥ ३२ ॥

भाषा टीका ।

इस प्रकार कृष्णही जिनके आत्मा के नाथ हैं ऐसे मनुष्यों से सौहृद करै, तथा परिचर्या भी उभयत्र स्थावर जंगम में करै, तथापि महान् पुरुषों में मनुष्यों में साधुजनों में विशेष प्रीति से करै ॥ २९ ॥

पवित्र भगवत् यश को परस्पर में कहैं कहावैं, भगवज्जनों की परस्पर में प्रीति परस्पर में सन्तोष परस्पर में अपने आत्मा के आनंद की प्राप्ति करै इन समस्त सीखने योग्य वस्तुओं को गुरु संनिधि में रह कर सीखै ॥ ३० ॥

पापों के समुदायों के हरने वाले श्रीहरि का आप स्मरण करै, और अन्य भक्तजनों को करावै, इस प्रकार की साधन भक्ति से उत्पन्न होने वाली जो सिद्धा प्रेम लक्षणा भक्ति है जिससे समय २ में रोमाञ्च जिसमें हो आवे ऐसे शरीर को धारण करै ॥ ३१ ॥

जब इस प्रकार की निष्ठा को प्राप्त होजाते हैं उस समय वे भागवत जन कभी रोदन करते हैं कभी अच्युत की चिन्ता से हंसते हैं आनन्द को प्राप्त होते, बोलते हैं, नृत्य करते हैं गाते हैं, परमात्मविषयक विचार करते हैं, और कभी वे अलौकिक भक्तजन परमात्मा के अनुभव को प्राप्त होकर अति सुखित होकर चुप चाप बैठ रहते हैं ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

उपसंहरति—इतीति । भागवतधर्मोत्पन्नया भक्त्या ॥ ३३ ॥

नारायणपरो मायां तरतीत्युक्ते पृच्छति, नारायणाभिधानस्येति । निष्ठां स्वरूपम् । अयं भावः ब्रह्मैव तावन्नारायण इति भगवानिति परमात्मेति चोच्यते तदुक्तम्—

"वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" ॥

इति । तथा—

"नारायणे भगवति तदिदं विश्वमाहितम् ।
गृहीतमायोरुगुणः सर्गादावगुणः स्वतः" ॥

इत्यादिषु तत्र किमेभिः शब्दैर्निर्विशेषं तदेव वस्तूच्यते अस्ति वा कोऽपि विशेषांश इति ॥ ३४ ॥

अत्रोत्तरम् स्थित्युद्भवेति । अयमर्थः अस्य विश्वस्य स्थित्युद्भवप्रलयानां हेतुः स्वयं चाहेतुर्हेतुरहितः स नारायण इति परमेव तत्त्वमवेहि स्वप्नजागरसुषुप्तिषु सदनुवर्तमानं यत् वक्ष्यति च तुरीयं त्रिषु सन्ततमिति बहिश्च समाध्यादौ यत्सत् ब्रह्मेति परमेव तत्त्वमवेहि देहेन्द्रियप्राणमनांसि येन जीवितानि सन्ति चरन्ति प्रवर्तन्ते तत्परमात्मेति परमेव तत्त्वमवेहि एवं लक्षणभेदैर्नारायणादिनामभिरुच्यमानमपि परमेकमेव तत्त्वं जानीहि ॥ ३५ ॥

अवेहीत्यनेन विषयत्वं प्राप्तं निषेधति—नैतदिति । एतत्परं तत्त्वं मनो न विशति न विषयीकरोति वागुत वागपि चक्षुः आऽऽत्मा बुद्धिश्च प्राणाश्च क्रियाशक्त्या न प्राप्नुवन्ति चेन्द्रियाणि यथाऽनलं स्वाः स्वांशभूता अर्चिषो विस्फुलिङ्गादयो न प्रकाशयन्ति न दहन्ति च तथा जडासु मनआदिवृत्तिष्वभिव्यज्यमानस्याऽऽत्मप्रकाशस्य तत्तद्वृत्तिप्रकाशकस्य न तत्प्रकाशविषयत्वम् "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः" इति तथा "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इत्यादिश्रुतेः ननु "तं त्वौपनिषदं पुरुषं पृच्छामि" इति श्रुतेः । शब्दगोचरत्वं प्रतीयते तत्राऽऽह—शब्दोऽपीति । शब्दोऽप्यात्ममूलमात्मनि प्रमाणं सदर्थोक्तमर्थादुक्तं यथा भवति तथा आह न साक्षात् कुतः बोधकनिषेधतया स्वस्यैव बोधकस्य निषेधकत्वात् "यतो

(१) तदवेहि (२) नैतम् (३) शब्दोऽप्यबोधकनिषेधतया (४) निषेध्यसिद्धिः । इत्येवमवधीविजयध्वजपाठाः ।

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अकारणमाह—स्थित्युद्भवप्रलयहेतुरिति । अहेतुः स्वयंकारणरहितम् अस्य विश्वस्य यद्धेतुः एकवचनेन सहायान्तरनिरपेक्षं तच्चेतनाचेतनविलक्षणं नारायणाख्यं स्वयोक्तम् अयोहि यत्स्वप्नाद्यवस्थजीवेषु स्वाद्य स्थितमित्यर्थः । देहादिमत्ताप्रवृत्त्योरपि परमात्माधीनत्वमाह देहेन्द्रियेति । जगत्कारणं सर्वजीवान्तरात्मभूतं सकलपदार्थसत्ताप्रवृत्तिहेतुभूतं परं ब्रह्मेत्यर्थः ॥ ३५ ॥

इन्द्रियाद्यगोचरत्वमाह—नैतदिति । न विन्दति न प्रकाशयति आत्मा जीवः । यद्वा, चक्षुरात्मा ( चक्षुः स्वरूपं यस्य ) चक्षुः शरीरमित्यादिप्रकारेण परमात्मनः शरीरतया विशेषणभूतानि चक्षुरादीनि न प्रकाशयन्ति यथा ऽनलमर्चिषः स्वा इति अनलं तद्विशेषणभूता अर्चिष इवेत्यर्थः । शब्दोऽप्यात्ममूलं परमात्मनि प्रमाणं बोधकनिषेधतया "न चक्षुषा गृह्यते नापि वाचा" इति ग्राहकचक्षुराद्यगोचरत्वेन बोधयतीत्यर्थः । कथं बोधकनिषेधे कृते तत्प्रतिपादितं भवतीत्यत्राह—अर्थोक्तमाह अर्थवशादुक्तं भवति तदेवोपपादयति, यदृते न निषेधसिद्धिः यद्ब्रह्म ऋते विना चक्षुरादिनिषेधो न सिध्यति तद् ब्रह्म अर्थादुक्तं प्रतिपादयतीत्यर्थः ॥ ३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थंविधान् भागवतान् धर्मान् शिक्षन् तत्सन्नारायणपरः नारायणाराधननिष्ठः तदुत्थया नारायणाऽऽराधनोत्थया भक्त्या प्रेमात्मिकया दुस्तरामपि मायामञ्जः सुखेन तरति ॥ ३३ ॥

तदेवं प्रकृतिस्वरूपतत्कार्यनिरूपणप्रसङ्गात्पुरुषस्वरूपप्रकृतिसम्बन्धनिवर्तनोपायावुपपादितौ अत्र नारायणपरो मायां तरतीत्युक्तम् अत्र प्रकृतिपुरुषविलक्षणेश्वरस्वरूपनिश्चिचीषया पृच्छति, नारायणाभिधानस्येति । निष्ठामर्हन्तं नारायणाख्यपरमात्मानं स्वरूपनिश्चयमिति यावत् नोऽस्मभ्यं वक्तुमर्हथ तत्र हेतुर्ब्रह्मवित्तमाः ब्रह्मविदग्रेसराः ब्रह्मविच्छ्रेष्ठा इति शास्त्रार्थे तमप्यवस्य: ॥ ३४ ॥

यद्यपि समष्ट्यौ ... इति सृष्ट्यादिकर्ता नारायण इत्यवगतमेव तथापि ततो निमित्तकारणत्वमात्रमवगतमतस्तन्मात्रत्वाशङ्कानिराचिकीर्षयाऽभिन्नोपादानजगत्सृष्ट्यादिकारणत्वेनैव लक्षयति—स्थित्युद्भवेति, स्थितीति । स्थितिः रक्षा उद्भव उत्पत्तिः सृष्टिस्थितिप्रलयहेतुरिति पाठान्तरम् अस्य चिदचिदात्मकस्य जगतो यः सृष्ट्यादिहेतुः हेतुत्वं निमित्तोपादानसाधारणम् अहेतुः स्वस्य कारणान्तररहितः बहिःशब्देन स्वप्नाद्यवस्थाबहिर्भूतमुक्तावस्थोच्यते सद्वर्तमानं सर्वावस्थास्वपि जीवेष्वन्तरात्मतया स्वाद्य स्थित इत्यर्थः । देहादिमत्ताप्रवृत्त्योरपि परमात्माधीनत्वमाह—देहेन्द्रियेति । असुः प्राणः हृदयं मनः एतानि येन सञ्जीवितानि चरन्ति प्रवर्तन्ते तत्परमवेहि जानीहि जगत्कारणं सर्वदा जीवान्तरात्मभूतं सकलपदार्थसत्ताप्रवृत्तिहेतुभूतं परं ब्रह्मावेहीत्यर्थः ॥ ३५ ॥

देहेन्द्रियासुहृदयानि येन सञ्जीवितानि चरन्तीति तेषां तदधीनत्वोक्त्या इन्द्रियाद्यगोचरत्वं सूचितं तदेवोपपादयति, नैतदिति । वाग्वागिन्द्रियम् एतत्कर्मेन्द्रियाणामुपलक्षणम् तदधीन न विशति न विषयीकरोतीत्यर्थः । आत्मा जीवः । यद्वा, चक्षुरात्मा चक्षुः स्वरूपम् इन्द्रियाण्युपलक्षयतीन्द्रियव्यतिरिक्तानि श्रोत्रत्वगसनघ्राणानि यथा ऽनलमर्चिषः स्वा इति । "यस्य चक्षुः शरीरम्" इत्यादिप्रकारेण परमात्मशरीरतया विशेषणभूतानि चक्षुरादीनि न प्रकाशयन्ति, अनलं तद्विशेषणभूता अर्चिष इवेत्यर्थः । शब्दोऽपि वेदान्तभागोऽप्यात्ममूलं परमात्मनि प्रमाणं बोधकनिषेधतया "न चक्षुषा दृश्यते नापि वाचा" इति ग्राहकचक्षुराद्यगोचरत्वेनावबोधयतीत्यर्थः । श्रुतौ चक्षुषेति ज्ञानेन्द्रियाणामुपलक्षणं वाचेति कर्मेन्द्रियाणां कथं बोधकनिषेधे कृते तत्प्रतिपादितं भवतीत्यत्राह—अर्थोक्तमिति । अर्थवशादुक्तं भवति तदेवोपपादयति—यदृते न निषेधसिद्धिरिति । यद्ब्रह्म ऋते विना चक्षुरादिनिषेधो न सिध्यति तद्ब्रह्मार्थादुक्तमाह प्रतिपादयतीत्यर्थः । यद्वा, पूर्वोक्तेन प्रत्यक्षतन्मूलानुमानवेद्यत्वं प्रतिषिद्धम् एवं तर्हि तुच्छत्वापत्तिरत आह—शब्द इति । शब्दः प्रतिपादयतीत्यर्थः । अतो न तुच्छत्वशङ्केति भावः । "यद्वाचानभ्युदितं येन वागभ्युद्यते" इत्यनेन तु वागिन्द्रियाविषयत्वं तस्य तदधीनत्वं चोच्यते "यतो वाचो निवर्तन्ते" इत्यनेन त्वपरिच्छिन्नत्वादिमत्तया न प्रतिपाद्यते इति भावः । ननु, "न चक्षुषा गृह्यते" इत्यादिशब्दश्चक्षुरादीनां ब्रह्मबोधकत्वं निषेधति ननु स्वयं तत्प्रमापयति ततः कथं, शब्दः प्रमाणम् ? इत्यत आह—अपिबोधकनिषेधतयात्ममूलमर्थोक्तमाहेति । अपिशब्दो भिन्नक्रमः न चक्षुषा दृश्यते इत्यादेश्चक्षुरादिग्राहकान्तरनिषेधरूपतयाऽर्थोक्तम् पारिशेष्यादुक्तं पारिशेष्यन्यायसिद्धम् इत्यर्थः । तदात्ममूलं भावप्रधानो निर्देशः आत्मनः स्वस्य मूलत्वं ब्रह्मप्रमितिकारणत्वमपि आह प्रतिपादितवत्प्राय इत्यर्थः । यद्यपि "सत्यं ज्ञानमनन्तम्" इत्यादयो बहवः शब्दाः साक्षाद्ब्रह्मप्रतिपादकाः सन्त्येव तथापि यो ग्राहकान्तरनिषेधपरः शब्दः तस्यैव ब्रह्मप्रमापकत्वं पर्यवसाययितुमर्थोक्तमात्ममूलमाहेत्युक्तम् । ननु, व्युत्पत्तिग्रहस्य प्रत्यक्षादिमूलकत्वात् बोधकनिषेधस्य न चक्षुर्वेत्यादेरसङ्कोचात्स्वमूलत्वनिषेधपरतापि किं न स्यादित्यत आह—यदृते न निषेधसिद्धिरिति । यदृते यदात्ममूलं विना न निषेधसिद्धिः बोधकनिषेधो न सिध्यति । अयं भावः बोधकनिषेधोऽपि शब्दः स्वयं ब्रह्म विषयीकृत्यैव तत्र बोधकान्तराणि निषेधति—तत्रात्ममूलत्वस्यापि निषेधं स्यादिति विषयीकाराभावात् क्व बोधकान्तरनिषेधः अत आत्ममूलत्वाभावे निषेधस्यैवासिद्धेस्तत्सिद्ध्यन्यथानुपपत्त्या आत्ममूलत्वमप्याहेति ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उपसंहरति—इतीति । तदुत्थया भागवतधर्माभ्यासोद्रिक्तोत्थया ॥ ३३ ॥

ब्रह्मवित्तमाः हि यस्मात्तस्मात्पूर्वं ब्रह्मणो निष्ठां ब्रह्मादिजीवराशेरुत्कर्षं वक्तुमर्हथ "निष्ठोत्कर्षे व्यवस्थायां नाशेऽन्ते ब्रह्मयाच्ञयोः" इति यादवः ॥ ३४ ॥

तदुत्कर्षोऽपि जन्मादिकारणत्वेन स्वप्नाद्यवस्थाप्रवर्तकत्वेन तदुत्तमभूतशक्तित्वेन मनआदीन्द्रियाभिमानिदेवतानियन्तृत्वेन हि

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

जन्मादिरहितत्वेन ज्ञातुं शक्यत इत्याशयेन प्रश्नं परिहरति, स्थितीत्यादिना। योऽस्य जगतः स्थित्यादिहेतुः स्वस्य हेतुरन्यो नास्तीत्यहेतुः स्वप्नादिषु सन्निरीक्षकत्वेन स्थितः यश्च बहिः प्रलये मुक्तौ च वर्तमानः येन देहेन्द्रियादीनि चरन्ति वर्तन्ते हृदयं मनः सञ्जीवितानि यदधीनानि हे नरेन्द्र! तत्तत्त्वं परं सर्वस्मादुत्कृष्टम् अवेहीत्यन्वयः ॥ ३५ ॥

इतोऽपि हरिः सर्वोत्कृष्टः यतोऽस्य प्रसादं विना रुद्रादिभिर्वेद्यं न भवतीत्याह—नैतमिति। विशतिरत्र ज्ञानार्थः मनआदिशब्देन तदभिमानी लक्ष्यते अचेतनत्वेन ज्ञानक्रियासम्भवात् तथाचायमर्थः मनो रुद्रादिः एनं नारायणं न विशति न जानाति वागुत सरस्वत्यादिकमपि न विशतीत्यनुवर्तते चक्षुः सूर्यः आत्मा ब्रह्मा वायुश्चान्ये प्राणाद्यभिमानिनश्च न जानन्तीत्यर्थः। अपिशब्दात्तत्प्रसादेनैकदेशं जानन्तीति योऽर्थः तत्रोदाहरणमाह, यथेति। यथा स्वाः अर्चिषः प्रधानाग्नेः पुत्राः अनलं प्रधानाग्निं तदनुग्रहमन्तरेण न विशन्ति। ननु, नित्याऽवियोगित्वेन अनन्तवेदाद्यात्मत्वाच्च श्रीस्तं तु नार्हतीति तत्राह—शब्द इति। निर्दोषः शब्द आगम इति निर्दोषशब्दरूपाभिमानिनी लक्ष्मीः बोधकत्वाद्यत् अबोधकं परमेश्वरादितरल्लौकिकानन्दज्ञानादिकं यत्तस्य निषेधतया आनन्दो ब्रह्मेत्यत्रानन्दो ज्ञानरूपः नेदृशज्ञानरूप इत्यादि निषेधरूपेण आत्ममूलं स्वकारणं अर्थात्कथनतः परिशेषतः सिद्धत्वेनोक्तमाह अर्थशब्देनात्र परिशेषप्रमाणमुच्यते न लक्षणावृत्तिः। कथमत्राह, यत इति। यत्सर्वोत्तमलक्षणानन्दादिकं विना निषेध्यस्यैतस्य भवतीति निषेधवचनार्थस्य लौकिकानन्दादेः सिद्धिर्न स्यात् प्रत्यक्षादिप्रमाणसिद्धत्वात् साक्षित्व अतः परिशेषप्रमाणसिद्धया प्रमितमेवेत्यर्थः। प्रतीतार्थं परित्यज्याप्रतीतार्थकल्पनायां किं प्रमाणमितीयं शङ्का—

"ब्रह्माद्या यं न जानन्ति करणाद्यभिमानिनः।
जानन्त्यनुग्रहाच्चास्य प्रधानाग्नेर्यथाऽर्चिषः॥
श्रीप्रमुखा न समस्तस्य यमाह श्रीश्च न स्फुटम्।
वेदरूपा परं देवं वेदलक्षणयात्समस्ततः॥
आनन्दो नेदृशानन्द इत्युक्तेर्लौकिकतः परम्।
प्रतिभाति न चाभाति यथावद्दर्शनं विना"॥

इत्यनेन परिहर्तव्येति "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति च ॥ ३६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तदानुषङ्गिकं फलमाह—इतीति ॥ ३३ ॥

नारायणाभिधानस्येति तैः तत्र नारायण इति भगवानिति नारायण इतिनामा भगवानित्यर्थः। यद्वा, नारायणाभिधानस्य भगवतः ब्रह्मेति परमात्मेत्यादिप्रसिद्धतत्समुदायतृतीयतया पाठात् "नारायणो तुरीयाख्ये भगवच्छब्दशब्दिते" इत्यत्र स्पष्टीभावित्वाच्च निष्ठा तत्त्वम् ॥ ३४ ॥

प्रश्नक्रमेणैवोत्तरमाह—स्थितीति। यत् स्थित्यादिहेतुरहेतुश्च भवति यच्च जागरादिषु सद्रूपश्च भवति येन च देहादीनि सञ्जीवितानि सन्ति चरन्ति तदेकमेव परं तत्त्वं स्वप्रश्नक्रमेण नारायणादिरूपं विद्धीति योजनीयं तथापि ब्रह्मत्वस्पष्टीकरणाय विपर्ययेण व्याख्यायते तत्रैकत्वेन विवरणभेदेन तद्विशिष्टत्वेन च प्रतिपादनात् तथैव तत्तदुपासकपुरुषानुभवभेदाद्याविर्भावनाम्नोर्भेद इति तात्पर्यम् एतदुक्तं भवति स्वयमहेतुः स्वरूपशक्त्यैकविलासमयत्वेन तत्रोदासीनमपि प्रकृतिजीवप्रवर्तकावस्थपरमात्माऽपरपर्यायस्वांशकलया पुरुषद्वारा यदस्य सर्गस्थित्यादिहेतुर्भवति तद्भगवद्रूपं विद्धि पुनस्तेनैव येन हेतुकर्त्रा आत्मांशभूतजीवप्रवेशनद्वारा यदस्य सर्वस्थित्यादिहेतुर्भवति सञ्जीवितानि सन्ति देहादीनि तदुपलक्षणानि प्रधानानि सर्वाण्येव तत्त्वानि येनैव प्रेरिततयैव चरन्ति स्वस्वकार्ये प्रवर्तन्ते तत्परमात्मरूपं विद्धि तथा च "तस्मै नमो भगवते ब्रह्मणे परमात्मने" इत्यत्र करुणाकृता श्रीकृष्णस्तुतौ टीका च परमात्मने सर्वजीवनियन्त्रे इत्येषा। जीवस्यात्मत्वं तदपेक्षया तस्य परमत्वमित्यतः परमात्मशब्देन तत्सहयोगात् स एव व्यज्यत इति तत्तद्विशिष्टत्वेन ब्रह्मत्वमात्रं चैवमुपतिष्ठतीत्याह—स्वप्नेति। यदेव तत्त्वं स्वप्नादौ अन्वयेन स्थितं यच्च तद्बहिः शुद्धायां जीवावस्थायां तथा स्थितं ततः परत्रापि व्यतिरेकेण स्थितं स्वयमवशिष्टं तद्ब्रह्मरूपं विद्धीति ॥ ३५ ॥

परत्वमेवाह—नैतदिति। वाक् लौकिकी शब्दो वेदोऽपि सर्वैः स्वाभिधादिवृत्तिभिरुक्ततया यदाह तदपि बोधकानां मनआदीनां निषेधो यत्र तत्तया तेषामविषयतयैवेत्यर्थः। अप्राकृतानन्तस्वरूपगुणत्वादिति भावः। ननु सर्वथैव निःस्वरूपं निर्गुणं चेत्तदाह, आत्मनः स्वस्य मूलं कारणमिति यत इति यदि च सर्वेणैव वक्ति तदा निषेधो वा कुत्र कथं वा कुर्यादित्यर्थः ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

इति धर्मान् शिक्षन्निति स्मारयन्तश्चेत्येतद्वन्तानां धर्माणामनुष्ठानस्य शिक्षायां तदुत्तरेषां पुलकिततनुत्वरोदनादीनां त्वभिलाषस्य शिक्षायां कदाहमुत्पुलकिततनुर्भवेयमित्येतत्प्रकारकं तदुत्थया शिक्षित भक्तिजनितया भक्त्या उक्तलक्षणप्रेमभक्त्या मायां तरतीत्यानुषङ्गिकं फलमुक्तम् ॥ ३३ ॥

नारायणपर इति श्रुत्वा नारायणस्य स्वरूपं पृच्छति—नारायणेति। "नारायणे तुरीयाख्ये भगवच्छब्दशब्दिते" इत्युक्तनारायणाभिधानो यो भगवांस्तस्य निष्ठां स्वरूपम्। ननु, स तवेष्टदेव एव भगवति गुरूपदिष्टमार्गेण तत्स्वरूपं त्वं जानास्येवेति तत्राह—ब्रह्मण इति। स एव नारायणो ब्रह्म स एव परमात्मा अत एकस्वरूपस्यैव तस्य त्रितयत्वेन कथने कः प्रकारस्तमहं जिज्ञासे इति भावः ॥ ३४ ॥

प्रश्नक्रमेणैव प्रथमं नारायणं लक्षयति—स्थितीति। "जगृहे पौरुषं रूपं भगवान् महदादिभिः। सम्भूतं षोडशकलमादौ लोकसिसृक्षया" इत्याद्युक्तेः। पुरुषरूप एव अस्य विश्वस्य स्थित्युद्भवप्रलयानां हेतुः स्वयं अहेतुर्हेतुशून्यः श्यामसुन्दराकारश्चतुर्भुजाष्टभुजसहस्रभुज (द्विभुज) सच्चिदानन्दमूर्तिः परव्योमनाथभूमा-

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वासुदेवमहाविष्णुक्षीरोदशायिनृसिंहरामकृष्णादिनामा नारायणो यो भगवच्छब्दवाच्यः स्वप्नजागरणसुषुप्तिषु सत् अनुवर्त्तमानं बहिश्च समाधौ सत् व्यापकं वस्तु यदेव ब्रह्मशब्दवाच्यं देहेन्द्रियप्राणमनांसि सञ्जीवितानि येन परमात्मशब्दवाच्येन तत् परं परमेश्वरमेकमेव तत्त्वमवेहि ॥ ३५ ॥

भगवत्तत्त्वं मयोपास्यं मदनुभवस्तमेवास्ति किन्तु दुर्बोधं ब्रह्मतत्त्वं विस्तार्य्य कथयेत्यपेक्षायां ब्रह्मतत्त्वमाह—नैतदिति चतुर्भिः । तद् ब्रह्म मनो न विशति न विषयीकरोति वागुत वागपि चक्षुश्च आत्मा जीवश्च प्राणाश्च इन्द्रियाणि च यथा अनलं स्वाः स्वांशभूता अर्चिषो विस्फुलिङ्गादयो न प्रकाशयन्ति "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इत्यादि श्रुतेः ननु "तं त्वौपनिषदं पुरुषं पृच्छामि" इति श्रुतेः शब्दगोचरत्वं प्रतीयते तत्राह—शब्दोऽपि आत्मनः स्वस्य मूलं ब्रह्मबोधकनिषेधनयाह यस्य बोधकं किमपि नास्ति तद् ब्रह्मेत्येवं शिष्येवार्थादुक्तमर्थं प्रवक्ति न तु शब्देन इदं तदिति निर्देशनादित्यर्थः । "यद्वाचानभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि यन्मनो न मनुते न चक्षुषा पश्यति कश्चनैनं" मित्यादि श्रुतेः । ननु तर्हि नैवाह श्रुतिः किमिवमुच्यते अर्थोक्तमाहेति तत्राह—वदते इति । "अथात आदेशो नेति नेति अस्थूलमनणु यतो वाचो निवर्त्तन्ते" इत्यादि निषेधस्य अवधिभूतं यद्ब्रह्म श्रुते विना सिद्धिर्नास्ति सर्वस्य निषेधस्य सावधित्वादिति । ननु "तत्परं परमं ब्रह्म सर्वं विभजते जगत् । ममैव तद्घनं तेजो ज्ञातुमर्हसि भारत" इति हरिवंशोक्तेर्ब्रह्मज्योतिः सनातनमिति दशमोक्तेः "यस्य प्रभा प्रभवतो जगदण्डकोटिकोटिष्वशेषवसुधादिविभूतिभिन्नम् । तद्ब्रह्म" इति ब्रह्मसंहितोक्तेर्भगवदङ्गज्योतीरूपं चेद्ब्रह्म तर्हि कथं न मनआदिकं विषयीकरोतीति उच्यते भगवदङ्गज्योतिर्हि न मायिकं तृतीयं भूतं किन्तु मायातीतं सच्चिदानन्दरूपमेव वाङ्मनआदिकं तत् कथं स्वविषयीकर्त्तुं शक्नोतु "शब्दं ब्रह्म वपुर्दधासि । वन्दितं परमानन्दं पूर्णं ब्रह्मेति तव ब्रह्ममवस्थेश ! किमुतेच्छाभिमर्शिणः" इति सच्चिदानन्दविग्रह इत्याद्युक्तेर्भगवद्वपुरपि ब्रह्मैव यद्यपि तदपि तत्कृपाशक्त्या अनश्वयैव प्रापञ्चिकलोकगोचरीकृतम् अत एव नीलोत्पलदलश्यामादिशब्दवर्णितं यत्तदप्राकृतनीलोत्पलदलश्याममपि प्राकृतनीलोत्पलवर्णत्वेन भक्तेर्ध्यानमतास्थमपि तद्वपुः केवलमतर्क्यया तत्कृपयैव भक्तनयनयोराविर्भवति अतः प्रापञ्चिकलोकैर्नेत्रगोचरीकर्त्तुमशक्यं केवलं ब्रह्मोपासकैरेव साधनपरिपाके सत्यपि भगवदनुग्रहप्राप्त्यैव ब्रह्माकारेऽन्तःकरणेऽनुभूयत इत्यतो नेत्रोऽपि यन्मनो न मनुते इत्यादि दृश्यते तथ्यतया सुखयेत्याद्यवाहेति विवेचनीयम् ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवद्भक्त्या मायां तीर्त्वा परमानन्दं प्राप्नोतीत्याह—इतीति । इत्येवम्भूतान् भागवतान् धर्मान् शिक्षन् अभ्यस्यन् नारायणपरः नारायणोपासकः तदुत्थया नारायणप्रवर्त्तितया भक्त्या अन्यैर्दुस्तरामपि मायामञ्जोऽनायासेन तरति ॥ ३३ ॥

नारायणपरो मायामञ्जस्तरति दुस्तरामित्युक्तं तमेव ज्ञातुं पृच्छति । नारायणाभिधानस्येति । यतः यूयं ब्रह्मवित्सु श्रेष्ठाः अतः ब्रह्मपरमात्मादिशब्दवाच्यस्य नारायणाभिधानस्य समस्तनरसमूहाधारस्य परमपुरुषस्य निष्ठां तदसाधारणस्वरूपादिवर्णनेनोत्कर्षं नोऽस्मभ्यं वक्तुमर्हथ "निष्ठोत्कर्षं व्यवस्थया" मिति याद्वः ॥ ३४ ॥

विश्वहेतुत्वादिना भगवदुत्कर्षमाह—स्थित्युद्भवप्रलयहेतुरिति । अस्य चिदचिदात्मकस्य विश्वस्य स्थित्यादिहेतुः उपादानतया निमित्ततया च कारणं स्वयमहेतुः अन्यानिरपेक्षस्थितिप्रवृत्त्याश्रयः यत्स्वप्नादिषु तत्तज्जीवावस्थाप्रदत्वेन सत् बहिश्च सर्वाधारत्वादिना सत् येन देहादीनि सञ्जीवितानि सन्ति चरन्ति तत्परं पूर्णसर्वोत्कृष्टं परमपुरुषतत्त्वं हे नरेन्द्रावेहि जानीहि ॥ ३५ ॥

चेतनाचेतनानन्तगाह्यत्वेयत्तानवच्छिन्नत्ववेदैकवेद्यत्वादिधर्मवत्स्वरूपनिरूपणेन भगवदुत्कर्षमाह—नैतदिति । एतत्परं तत्त्वं मनः अन्तःकरणेन्द्रियं न विशति न विषयीकरोति प्राणेन्द्रियाणि प्राणः सर्वेन्द्रियनायकः इन्द्रियाणि बाह्यानि दशेन्द्रियाणि च न विशन्ति वाक्शब्देन कर्मेन्द्रियदेवतागणः चक्षुःशब्देन ज्ञानेन्द्रियदेवतागणः आत्मा जीवश्च सर्वेषां मनआदीनां स्वामी न विशति यथा अनलं तदंशभूताः अर्चिषः न विषयीकुर्वन्ति तद्वत् शब्दोऽपि सर्वज्ञो वेदस्तु आत्ममूलम् "अस्य महतो भूतस्य निश्वसितमेव यदृग्वेदो यजुर्वेदः सामवेद" इति श्रुतेः तद्गमनस्थानं परं तत्त्वं "सर्वे वेदा यत्पदमामनन्ति सर्वे वेदा यत्रैकीभवन्ति तन्त्वौपनिषदं पुरुषं पृच्छामि यतो वा इमानि भूतानि जायन्ते सत्यं ज्ञानमनन्त" मित्यादिवाक्यैः अर्थोक्तम् अर्थेन उक्तं यथास्यान्ति तथा प्रतिपाद्यतया आह किञ्च वदते "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह यद्वाचानभ्युदितं येन वागभ्युद्यते यन्मनो न मनुते न चक्षुषा पश्यति कश्चनैनं यस्याऽमतं तस्य मतम्मतं यस्य न वेद सः" इत्यादिशब्दं विना निषेधसिद्धिः परतत्त्वेयत्ताग्राहकनिराकरणसिद्धिर्न स्यादतस्तदियत्तानवच्छिन्नत्वमिद्ध्यर्थं तदियत्ताग्राहकनिराकरणतया चाहेत्यन्वयः । मनआदयो यत्र प्रकाशयन्ति वेदस्तु विषयतया इयत्ताग्राहकनिराकरणतया च यदाह तत्सर्वोत्कृष्टं परं तत्त्वमवेहीत्यर्थः ॥ ३६ ॥

---

भाषा टीका ।

इस प्रकार भागवत धर्मों को सीखता हुआ भागवत धर्मों से उत्पन्न होने वाली भक्ति से नारायण परायण होकर दुस्तर माया को भी पुरुष विना परिश्रम तर जाता है ॥ ३३ ॥

राजोवाच ।

राजा निमि बोले, कि—नारायण जिनका नाम ऐसे परमात्मा पद की निष्ठा अर्थात् स्वरूप को आप कथन करने को योग्य हैं क्योंकि ? आप लोग पूर्ण ब्रह्म ज्ञानी हैं ॥ ३४ ॥

पिप्पलायन उवाच ॥

पिप्पलायन नामक योगेश्वर बोले, कि—हे नरेन्द्र !

सत्त्वं रजस्तम इति त्रिवृदेकमादौ सूत्रं महानहमिति प्रवदन्ति जीवम् ।
ज्ञानक्रियार्थफलरूपतयोरुशक्ति ब्रह्मैव भाति सदसच्च तयोः परं यत् ॥ ३७ ॥
नात्मा जजान न मरिष्यति नैधतेऽसौ न क्षीयते सवनविद्व्यभिचारिणां हि ।
सर्वत्र शश्वदनपाय्युपलब्धिमात्रं प्राणो यथेन्द्रियबलेन विकल्पितं सत् ॥ ३८ ॥
अण्डेषु पेशिषु तरुष्वविनिश्चितेषु प्राणो हि जीवमुपधावति तत्र तत्र ।
सन्ने यदिन्द्रियगणेऽहमि च प्रसुप्ते कूटस्थ आशयमृते तदनुस्मृतिर्नः ॥ ३९ ॥
यर्ह्यब्जनाभचरणैषणयोरुभक्त्या चेतोमलानि विधमेद्गुणकर्मजानि ।
तस्मिन्विशुद्ध उपलभ्यत आत्मतत्त्वं साक्षाद्यथाऽमलदृशोः सवितृप्रकाशः ॥ ४० ॥

भाषा टीका ।

जो इस जगत् के सृष्टि स्थिति प्रलय का हेतु अर्थात् निमित्त और उपादान कारण है, और स्वयं अहेतु है अर्थात् जिसका अन्य कुछ कारण नहीं है, और जो जीव के सर्व अवस्थाओं में अन्तर्यामी होकर वर्त्तमान है तथा बाहर भी सर्वत्र व्याप्त है और जिसके चेताये हुए इन्द्रियें प्राण हृदय ये सब प्रवृत्त होरहे हैं वही नारायण है उसी को पर तत्त्व जानो ॥ ३५ ॥

फिर उस नारायणाख्य परब्रह्म का स्वरूप कैसा है, कि—जिसको मन नहीं जान सका है, वागादि कर्मेन्द्रियों के द्वारा जो नहीं ज्ञात होवे, एवं चक्षु बुद्धि प्राण और इन्द्रियें जिसको विषय नहीं कर सक्तीं हैं जैसे, कि महान् अग्नि को अग्नि की चिनगारी नहीं प्रकाशित करतीं हैं । इस प्रकार प्रत्यक्ष और तन्मूलक अनुमान से ज्ञात होना परमात्मा का निषिद्ध किया, यदि वह ब्रह्म किसी प्रमाण का ही विषय न भया तो वह गगन कुसुम सदृश तुच्छ ही होजायगा इस लिये ब्रह्म के विषय में शब्द ही प्रमाण है इस बात को प्रति पादन करते हैं, कि—"न चक्षुषा गृह्यते नापि वाचा" न ब्रह्म चक्षु से गृहीत होता है, न वागिन्द्रिय से इत्यादिक शब्द चक्षुरादि ग्राहकान्तरों के निषेध पूर्वक अर्थोक्त नाम परिशेषन्याय सिद्ध ब्रह्म को आत्ममूलत्व अर्थात् शब्द मूलत्व कहता है । क्योंकि ? जिस शब्द मूलता के विना चक्षुराद्यग्राह्यत्वरूप निषेध की भी सिद्धि तो नहीं होसक्ती है ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु तर्हि प्रमाणाविषयत्वादसदेव ब्रह्मेति प्रसज्येतात आह-सत्त्वमिति । सत्स्थूलं कार्यमसत्सूक्ष्मं कारणं तत्सर्वं ब्रह्मैव भाति कुतः यस्मात्तयोः सदसतोः परं कारणम् ननु कथमेकं बहुविधस्य कारणं तत्राऽऽह उरुशक्ति अनेकशक्तिमत् उरुमहती माया लक्षणा शक्तिर्यस्य तदिति वा बहुधा भानमेव दर्शयति आदौ यदेकं ब्रह्म तदेव सत्त्वरजस्तम इति त्रिवृत्प्रधानं प्रवदन्ति ततः क्रिया शक्त्या सूत्रं ज्ञानशक्त्या महानिति तदेव प्रवदन्ति ततः अहमिति जीवं जीवोपाधिमहङ्कारं च तदेव प्रवदन्ति ततश्च ज्ञानक्रियार्थफलरूपतया ज्ञानशब्देन देवताः क्रिया इन्द्रियाणि अर्था विषयाः फलं तत्प्रकाशः सुखादि वा तद्रूपतया ब्रह्मैव भाति नहि सर्वस्वरूपेण भातो भासमानस्य ब्रह्मणः कासिद्धौ प्रमाणापेक्षेति भावः ॥ ३७ ॥

ननु सर्वात्मकं चेद्ब्रह्म तर्हि सर्वस्य कार्यस्य जन्मादिविकारवत्त्वाद्ब्रह्मणोऽपि तत्प्रसङ्गः स्यादत आह–नात्मेति । आत्मा ब्रह्म न जजान न जातः जन्माभावादेव तदनन्तरास्तितालक्षणोऽपि विकारो नास्ति नैधते न वर्धते वृद्ध्यभावादेव विपरिणामोऽपि निरस्तः कुतः हि यस्माद्व्यभिचारिणामागमापायिनां बालयुवादिदेहानां सवनवित्तत्कालद्रष्टा न ह्यवस्थावतां द्रष्टा तदवस्थो भवतीत्यर्थः । ननु निरवयवः कोऽसावात्मा अत आह–उपलब्धिमात्रमिति तन्मात्रं तर्हि क्षणिकत्वेनास्थिरत्वात् अत आह सर्वत्रेति सर्वत्र देशे शश्वत्सर्वदा अनपायि अनुवर्तमानम् ननु नीलज्ञानं जातं पीतज्ञानं नष्टमिति प्रतीतेर्न ज्ञानस्यानपायित्वमत आह–इन्द्रियबलेनेति । सदेव ज्ञानमिन्द्रियबलेन विविधं कल्पितम् नीलाद्याकारा वृत्तय एव जायन्ते नश्यन्ति च न ज्ञानमिति भावः । व्यभिचारिष्वव्यभिचारे दृष्टान्तः प्राणो यथेति ॥ ३८ ॥

दृष्टान्तं विवृण्वन्निन्द्रियादिलयेन निर्विकारात्मोपलब्धिं दर्शयति—अण्डेष्विति । पेशिषु जरायुजेषु तरुषु उद्भिज्जेष्वविनिश्चितेषु स्वेदजेषु उपधावत्यनुवर्त्तते एवं दृष्टान्ते निर्विकारत्वं प्रदर्श्य दार्ष्टान्तिकेऽपि दर्शयति कथम् तदैवाऽऽत्मा अविकार इव प्रतीयते यदा जागरे इन्द्रियगणः यदा च स्वप्ने तत्संस्कारवानहङ्कारः यदा तु प्रसुप्तं तदा तस्मिन् प्रसुप्ते इन्द्रियगणे लीने अहमि अहङ्कारे च सन्ने कूटस्थो निर्विकार एवात्मा कुतः आशयमृते लिङ्गशरीरमुपाधिं विना विकारहेतोरुपाधेरभावादित्यर्थः नन्वहङ्कारपर्यन्तस्य सर्वस्य लये शून्यमेवावशिष्यत तत्कथं तदा कूटस्थ आत्मा अत आह—तदनुस्मृतिर्नः । तस्य दर्शनस्पर्शनादिविशेषज्ञानशून्यस्य सुखात्मनः सुषुप्तिसाक्षिणः स्मृतिर्नोऽस्माकं भवति एतावन्तं कालं सुखमहं सुप्तो न किञ्चिद्वेदिषमिति अतोऽननुभूतस्यास्मरणादस्त्येव सुषुप्तावात्मानुभवो विषयसम्बन्धाभावात्तु न स्पष्ट इति भावः । तथा च श्रुतिः "यद्वै-

श्रीधरस्वामिकृतभावार्थदीपिका।

तत्र पश्यन्ति पश्यन्वैतद्द्रष्टव्यं न पश्यति नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत" इति ॥ ३९ ॥

ननु यदि सुषुप्तौ कूटस्थात्मानुभवो भवेत्कथं पुनरपि संसारः स्यात् अविद्यातत्संस्काराणां विद्यमानत्वादिति चेत्सत्यं नहि तन्निवर्तकोऽनुभवो भवेदत आह—यर्हीति। त्रिसैषणादिविहाय केवलमब्जनाभस्यैव चरणोरुक्या वा बहुभक्तिरनया पुमांश्चेतसो मलानि विधमेत्क्षालयेत् येन एव वा कर्तृ स्वगतानि मलानि तया भक्त्या क्षालयेत् तदा तस्मिन्विशुद्धे चेतसि सति साक्षादव्यवधानेनाऽऽत्मतत्त्वमुपलभ्यते अमलयोर्दृशोः सत्योर्यथापूर्वमेव सिद्धः सवितृप्रकाश इति ॥ ४० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी।

नहि यदि शब्देन निषेध एव पर्यवसन्नम् इति शब्दस्य निषेध एव प्रामाण्यं न ब्रह्मणि तदा प्रमाणाविषयत्वान्निष्प्रमाणकत्वात् ब्रह्म नास्ति, किन्त्वप्रमाणकं तदसदिति भावः। ततः प्रधानकल्पनानन्तरम्। तदेव ब्रह्मैव ततः महत्कल्पनानन्तरं ततश्चाहङ्कारकल्पनानन्तरं देवताः सात्त्विकाहङ्कारकार्याः इन्द्रियाणि राजसाहङ्कारकार्याणि विषयास्तामसाहङ्कारकार्याः तत्प्रकाशः विषयप्रकाशः सुखादि सुखं सात्त्विकम् आदिना दुःखमोहयोः परिग्रहः सर्वस्वरूपेण प्रमाणप्रमेयादिरूपेण सतो भासमानस्य स्वप्रकाशत्वम् ॥ ३७ ॥

तत्प्रसङ्गः। जन्मादिविकारप्रसङ्गः तत्तत्कालद्रष्टा बाल्ययुवादिवयःसाक्षी अवस्थान्तरां देहानां तदवस्थः बाल्ययुवाद्यवस्थः उपलब्धिमात्रं क्षणिकत्वं क्षणिकविज्ञानवादी बौद्धः शङ्कते। नन्विति। सर्वदा सर्वस्मिन् काले अनुवर्तमानं नित्यत्वेनानुगतं पुनः शङ्कते नन्विति। अनपायित्वं नित्यत्वेनानुवर्तमानत्वं सदैव निर्बाध्यत्वमेव आयन्ते इति आश्रयमानां वृत्तीनामेव जन्मनाशौ नाधिष्ठानत्वेनानुगतस्य ज्ञानस्येत्यर्थः। व्यभिचारिषु बाल्यादिदेहेषु अन्वागमापायिदेहेऽप्यनन्वयव्यभिरूप आत्मा भिन्न इति प्रथमस्तर्कः तथा द्रष्टात्मा दृश्यदेहभिन्न इति द्वितीयोऽपि तर्क इति ज्ञेयम् ॥ ३८ ॥

निर्विकारात्मोपलब्धिं सुषुप्तौ निर्विशेषात्मानुभवम् अनुवर्तते उपाधित्वेनानुगच्छन्ति दृष्टान्ते प्राणे निर्विकारित्वम्, अण्डजादिषु अस्थिरत्वं दार्ष्टान्तिके प्राणदृष्टान्तेनोपपादनीयं शुद्धात्मनि कथमिति केन प्रकारेण निर्विकारत्वदर्शनमित्यर्थः प्रकारमेवाध्याहारेण व्याचष्टे-तदैवेति। मूले यदित्यव्ययं यदेत्यर्थः तस्यैव पुनर्मूले बीजमाये यदा चस्यावृत्तिः कृता तत्संस्कारवान् जागरवासनावान् स्वप्नावस्थाद्वयं विकारित्वप्रतीतिं मूलाक्षरैरेव संयोज्य निर्विकारत्वं मूलयोजनयाह—चक्षुरिवेति। प्रसुप्तमिति भावे क्तः जीवेन सुप्यते स्मेत्यर्थः। तस्मिन् जीवे प्रसुप्ते सति सर्वस्य स्थूलसूक्ष्मोपाधेः तदा सुषुप्त्यवस्थायां विशेषज्ञानशून्यस्य निर्विशेषज्ञानं वृत्तिज्ञानं तेन शून्यस्याखण्डात्मन इत्यर्थः। नोऽस्माकं जाग्रद्द्रष्टॄणां स्मृतिर्भासमयेन दर्शयति—एताविति। अतः जागरे तथा स्मरणात् पूर्वं नानुभूतं यत्तस्य स्मरणासम्भवादनुभवस्मरणयोश्च सामानाधिकरण्यात् सुषुप्त्यवस्थायामज्ञानसाक्षिसुखात्मनोऽनुभवोऽस्त्येव विषयेति स्वरूपातिरिक्तस्य विषयस्य देहेन्द्रियाद्युपाधेः सम्बन्धाभावात् स्वरूपमात्रानुभवो जाग्रदाद्यनुभववत्स्पष्ट इत्यर्थः। तथाच श्रुतिः सुषुप्तावात्मानुभवे प्रमाणं श्रुतिः यद्वैतदित्यादिका पश्यन्नलुप्तज्ञान एतात्मा तत्तदा सुषुप्तौ न पश्यतीति यत्तद्द्रष्टव्यं विषयं न पश्यतीत्यभिप्रायादेव सुषुप्तावप्यलुप्तज्ञानत्वे हेतुः। नहीति। हि यतः द्रष्टुः साक्षिणः दृष्टेः स्वरूपज्ञानस्य विपरिलोपो नाशो न विद्यते नाशायोग्यत्वादित्यर्थः। नहि प्रकाश्यनाशे सवितृप्रकाशो नश्यतीति भावः। तर्हि कुतो न पश्यति द्रष्टव्यस्य द्वितीयस्याभावादिति ज्ञेयं तदुक्तं भगवद्भाष्यकाराः अन्तरा चेति सूत्रव्याख्यानावसरे सुषुप्तं प्रकृत्य विषयाभावादियमचेतयमाना न चैतन्याभावादिति अयं साक्षिसाक्ष्यविभागेन तृतीयस्तर्कः सुखमात्रावशेषात् दुःखिप्रेमास्पदत्वविभागेन चतुर्थोऽपि तर्को ज्ञेयः। तदुक्तमभियुक्तैः "अन्वयव्यतिरेकाख्यस्तर्कः स्याच्चतुरात्मकः। आगमापायितदवधिभेदेन प्रथमो मतः। दृग्दृश्यविभागेन द्वितीयोऽपि मतस्तथा। साक्षिसाक्ष्यविभागेन तृतीयः सम्मतः सताम्। दुःखिप्रेमास्पदत्वेन चतुर्थः सुखबोधक" इति ॥ ३९ ॥

नन्विति। शङ्कासमाधानाभासः अविद्या न किञ्चिद्वेदिषमित्यनेनोक्तं मूलाज्ञानं तत्संस्कारा अज्ञानवासनाश्च तेषां विद्यमानत्वात् कूटस्थात्मानुभवेऽपि सुषुप्त्युपरमे पुनरपि संसारः स्यादिति योजना यर्हि पुनरपि संसारस्तर्हि तन्निवर्तकः अविद्यादिनाशकः त्रिसैषणादीत्यादिना पुत्रैषणालोकैषणयोः परिग्रहः अव्यवधानेन सूर्यमिव अविद्यादिव्यवधानाभावेन तथाच श्रुतिः "अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते" इति ॥ ४० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

सदसदात्मकसकलतत्त्वशरीरकं तद्विलक्षणं चेत्याह—सत्त्वं रज इति। त्रिवृत् गुणत्रयात्मकम् एकं प्रधानतत्त्वं कार्याणामाधारत्वात् सूत्रस्थानीयमिति तत्त्वानि वदन्ति जीवं ज्ञानक्रियार्थफलरूपतया प्रवदन्तीत्यन्वयः। ज्ञानपूर्वकक्रियया कर्मानुष्ठानेन साध्यः स्वर्गाद्यर्थो यस्य फलं सत्त्वा न क्रियार्थफलः तद्रूपतया भोक्तृत्वेन प्रवदन्ति सदसच्चेतनमचेतनं च अविच्छिन्नशक्ति ब्रह्मैव भाति चिदचिच्छरीरकं भाति प्रमाणैरवगम्यते तयोः परं चिदचिद्विलक्षणमित्यर्थः। एवं परमात्मनोऽप्यचिदचिच्छरीरकस्य सर्वविलक्षणत्वमुक्तम् ॥ ३७ ॥

अथ तच्छरीरभूतस्य जीवस्य षड्भावविकारराहित्यमुच्यते—नात्मेति। न मरिष्यति कालान्तरेऽपि न मरिष्यति अपक्षयो नाशात् पूर्वावस्था सर्वत्र देवादिशरीरेषु अनपायि आमोक्षात्प्रकाशस्वरूपमित्यर्थः। उपलब्धिमात्रं न कश्चिज्जडम् शरीरम् प्राणमतीति प्राणः प्राणसृष्टो वा यथेन्द्रियबलेन विकल्पितः सन् इन्द्रियव्यापारानुगुणं पश्यामि शृणोमीति चाक्षुषश्रावणादिविज्ञानविकल्पवान् ॥ ३८ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सर्वशरीरेषु प्रविशतोऽपि जीवस्यैकरूपत्वमाह—अण्डेष्विति । अण्डेषु पेशिषु मांसपिण्डेषु जरायुजशरीरेषु प्राणः सूक्ष्मशरीरधारकः जीवमुपधावति अहमिति अहङ्कारो मनोवृत्तिश्च अहङ्कारश्चित्तानामुपलक्षणम् अहङ्कारादिमनोवृत्तिषु उपरतास्वित्यर्थः । तदानीं सदा जीवो विद्यमानोऽपि अविद्यमान इव भवति न स्फुटतरः प्रकाशते इत्यर्थः । तत्र हेतुमाह । आशयमृते इति । तदनुस्मृतिर्नः जीवः अस्मिन्नासमन्तात् शेते इत्याशयः शरीरं शरीराभिमानेन विना तदनुस्मृतिः जीवविषयप्रत्यभिज्ञा न प्रकाशो न स्थूलोऽहं कृशोऽहमिति देहादिविशिष्टतयैव जीवस्य स्फुटावभासः अतः सुषुप्तावविशदावभास इत्यर्थः ॥ ३९ ॥

देहाद्युपाधिरहितं परिशुद्धं भगवदात्मकं यथावस्थितात्मकं स्वरूपं भक्तियोगनिर्मलेनैव मनसा साक्षात्क्रियत इत्याह— यर्हीति । एषणा इच्छा अन्वेषणा वा तस्मिन् चेतसि ॥४०-४२॥

———

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं प्रत्यक्षादिप्रमाणान्तरावेद्यं केवलं वेदान्तैकवेद्यं परं ब्रह्मेत्युक्तं यद्यपि "मनसा तु विशुद्धेन दृश्यते मनीषा मनसाभिक्लृप्त" इति योगपरिशुद्धमनसोऽपि प्रमाणत्वावगमात् शब्दैकवेद्यं ब्रह्म तथापि तस्यापि तत्र प्रामाण्यं शब्देनावगम्यत इति शब्दैकवेद्यमेव परं ब्रह्म प्रत्यक्षावेद्यत्वोक्त्या तदैव चिदचिद्विलक्षणत्वं सूचितम् । अथ तद्विलक्षणत्वमेव विशदयितुं चिदचिदात्मकसकलतत्त्वशरीरकत्वमाह—सत्त्वमिति । सत्त्वं रजस्तम इति त्रयाणां गुणानां वृत्तिमत् यस्मिंस्तदेकं त्रिगुणात्मकं यदेकं प्रधानं तत्त्वमित्यर्थः कथंभूतं सूत्रं कार्याणामाधारत्वात्सूत्रस्थानीयं यश्च तत्कार्यभूतो महानहङ्कारश्चेत्येतानि प्रवदन्ति तत्त्वत्वेन निरूपयन्तीत्यर्थः महच्छब्दस्तत्कार्याणां सर्वेषामुपलक्षणार्थः तथा जीवं च ज्ञानक्रियार्थफलरूपतया प्रवदन्ति ज्ञानक्रिया ज्ञानपूर्वककर्मानुष्ठानं तस्यार्थः प्रयोजनं स्वर्गादिः स एव फलं यस्य तद्रूपतया भोक्तृत्वेन प्रवदन्ति यद्वा ज्ञानशब्देन ज्ञानेन्द्रियाणि क्रियाशब्देन कर्मेन्द्रियाणि अर्थास्तद्विषयास्तेभ्यः फलं सुखदुःखादि यस्य तद्रूपतया विषयेन्द्रियसम्बन्धजन्यसुखदुःखादिभोक्तृत्वेन प्रवदन्ति एवं रूपं सचेतनमसदचेतनं च उरुशक्ति अचिन्त्यशक्ति ब्रह्मैव भाति चिदचिच्छरीरकं भाति प्रमाणैरवगम्यत इत्यर्थः । शरीरात्मभावनिबन्धनमिदं सामानाधिकरण्यमत एवाह—तयोः परं चिदचिद्विलक्षणं चेति सदसच्छब्दौ चेतनाचेतनपरौ तत्र सच्छब्दस्य प्रवृत्तौ निमित्तं स्वरूपान्यथाभावरूपविकाररहितत्वम् असच्छब्दस्य तु तद्वत्त्वं चेति विवेकः ॥ ३७ ॥

तत्र तावत्परमात्मशरीरभूते चिदचिद्वस्तुनि सच्छब्दस्य प्रवृत्तौ निमित्तभूतं स्वरूपतः षड्भावविकाररहितत्वमुपपादयति—नात्मेति । आत्मा जीवो न जजान न जायते नोत्पद्यत इत्यर्थः जन्माभावादेव तदनन्तरास्तित्वलक्षणविकारोऽपि नास्ति नैधते न वर्धते वृद्ध्यभावादेव परिणामोऽपि निरस्तः न मरिष्यति कालान्तरेऽपि न मरिष्यतादीनामपि न नश्यत्यसावात्मा न क्षीयते अपक्षयो नाशात्पूर्वावस्था कुतः हि यस्माद्व्यभिचारिणामागमापायिनां देहानां सवनवित् तत्तत्कालद्रष्टा न ह्यवस्थावतां द्रष्टा तदवस्थाभाग्भवतीत्यर्थः । सर्वत्र देवादिशरीरेषु शाश्वत्सदाऽनपायमोक्षात्मकनिसम्बन्धवानित्यर्थः उपलब्धिमात्रं ज्ञानमात्रस्वरूपं मात्रशब्देन कश्चिदपि जडत्वव्यावृत्तिः प्राणः शरीरं प्राणयति प्रवृत्तिनिष्ठं करोतीति तथा प्राणसंयुक्तो वा यथेन्द्रियवशेन विकल्पितः सन् इन्द्रियव्यापारानुगुणं पश्यामि शृणोमीति चाक्षुषश्रावणादिविज्ञानविकल्पवान् विकल्पितं सदिति पाठान्तरं तदा आत्मा जन्मादिरहितः कुतः यस्माज्जन्मादयः व्यभिचारिणामनित्यानां देहानामेवात्मा तु सवनानि सवनानि भूतभविष्यद्वर्तमानकालात्मकानि वेत्तीति तथा कालत्रयानुवर्ती नित्य इति यावत् सवनविदयमेव सच्छब्दवाच्यात्मनः स्पष्टयति सर्वत्र शश्वदनपायीति सदात्मा सर्वत्र शाश्वत्सर्वदाचानपायिस्वरूपं मूर्तिरहितं तत्र हेतुः उपलब्धिमात्रं ज्ञानैकस्वरूपं मात्रशब्देन जडव्यावृत्तिः जडमेव ह्यपायीति भावः । ननु ज्ञानादीनामपि चाक्षुषश्रावणादीनामपायित्वं दृष्टमत आह । इन्द्रियवशेन विकल्पितम् आत्मनो धर्मभूतं ज्ञानं तच्चक्षुरादीन्द्रियव्यापारवशाद्विकल्पितं चाक्षुषश्रावणादिभेदभिन्नं सदपायि न तु स्वरूपभूतज्ञानमिति भावः यथा प्राणः स्वत एकोऽपि प्राणापानादिवृत्तिभेदाद्विकल्पितस्तद्वदिति ॥ ३८ ॥

सर्वत्र शाश्वदनपायीत्युक्तं सर्वशरीरेषु धारकतया विशतो जीवस्वरूपस्यैकरूपत्वमेव प्रपञ्चयति । अण्डेष्विति । अण्डेषु पेशिषु मांसपिण्डेषु जरायुजशरीरेषु तरुष्वित्युद्भिज्जोपलक्षणम् अविनिर्भिन्नेषु स्वेदजेषु किं बहुना तत्र तत्र शरीरेषु प्राणो देहधारकः जीवमुपधावन्ननुवर्तते सर्वेषु शरीरेषु प्राणद्वारा धारकतया जीवः प्रविशति इत्यर्थः । कूटस्थः अत्र यत्तच्छब्दाध्याहारेण सम्बन्धः य हि जीवं प्राणा उपधावति स कूटस्थो निर्विकारः सततमेकरूप इति किमेवंविध आत्मा सर्वेषामनुभवसिद्धः नेत्याह—सन्नेति । सन्नः विशीर्णः विकारी चेति यावत् निर्विकारतया विद्यमानोऽप्यविद्यमान इव भवति न स्फुटतरं प्रकाशते इत्यर्थः । कदा तर्हि स्फुटतरात्मप्रकाशः कश्च प्रकाशाभावहेतुरित्यत्राह । इन्द्रियगणः अहमि अहङ्कारे च प्रसुप्ते ऽहंकारादिमनोवृत्तिषूपरतास्वित्यर्थः । आशेतेऽस्मिन्नित्याशयः शरीरं तमृते शरीरावभासेन विनेत्यर्थः । नोऽस्माकं जीवानामित्यर्थः यदा यदा तत्तदनुस्मृतिः यथावस्थितजीवस्वरूपविषयप्रकाशो भवतीत्यर्थः । इन्द्रियगणोऽहमि प्रसुप्ते आशयमृते इत्यनेन मनोवृत्तिशरीरावभासयोः स्फुटतरात्मप्रकाशाभावहेतुत्वं सूचितं सन्न इति सप्तम्यन्तपाठश्च दृश्यते तदेन्द्रियगणे सन्ने शब्दादिविषयप्रावण्यरहिते सति अहम्यहङ्कारे प्रसुप्ते लीने देहात्माभिमाने निवृत्ते सत्यत एवाशयमृते देहावभासं विना यथावदात्मस्वरूपप्रकाशो भवतीत्यर्थः ॥ ३९ ॥

कदा महदहङ्कारादिमनोवृत्तिनिवृत्तिः केन वा यथावत्तदनुस्मृतिरित्यत्राह — यर्हीति । अब्जनाभस्य भगवतश्चरणयोरेषणया [illegible]दिपरित्यागपूर्वकं भगवच्चरणाब्जैकैषणया या उरुम- [illegible]या भक्त्या रुद्धं नामाविच्छिन्नतत्त्वं गुणकर्मजानि सत्त्वादिगुण-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

सूक्ष्मपुण्यापुण्यात्मककर्मजानि चेतसो मलानि रागद्वेषादीनि विधमेन्नाशयेत्ततो विशुद्धे निर्मले तस्मिंश्चेतस्यात्मतत्त्वमात्मयाथात्म्यं साक्षादुपलभ्यते यथा दृगाश्रयस्य तस्य सवितृप्रकाश इव विशुद्धमिति पाठे देहाद्युपाधिरहितं परिशुद्धं भगवदात्मकं यथावस्थितमात्मस्वरूपं भक्तिनिर्मलेन मनसा साक्षात्क्रियत इत्यर्थः॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

मुमुक्षुणा विद्याविद्ये ज्ञातव्ये "विद्यां चाविद्यां च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते" इति श्रुतेस्तत्र विद्यां निरूप्य अविद्यां निरूपयति—सत्त्वमिति। जीवं हरे रूपमिति प्रवदन्त्यज्ञा इति शेषः। केचिदादौ स्थितमेकं त्रिवृत्त्रिगुणात्मकं प्रधानमिति सङ्गिरन्ते "प्रधानादिदमुत्पन्न"मिति श्रुतेः। सत्त्वं रजस्तम इति केचित् सूत्रं वायुर्महान् ब्रह्मा अहं रुद्र इत्येके हरेरूपमिति वदन्ति किं बहुना उरुशक्ति ब्रह्मैव ज्ञानक्रियार्थफलरूपतया ज्ञानक्रियाशब्देन ज्ञानकर्मेन्द्रियाण्यर्थशब्देन शब्दादिविषयाः फलशब्देन सुखदुःखे चोच्येते एषां रूपत्वेन भातीत्यपरे सदसत् कार्यकारणरूपत्वेनावभातीति। ननु 'सदसत्त्वाभव'दिति श्रुतेः कार्यकारणादिरूपदर्शनस्याविद्यात्वं कथमत्राह—तयोरिति। तयोः कार्यकारणयोः परं विलक्षणं भिन्नं ब्रह्मेति यद्यस्मात्तस्मात्तदात्मना दर्शनमविद्येत्यर्थः—

त्रिगुणात्मकं प्रधानं च रजः सत्त्वं तमस्तथा।
प्राणो महानहङ्कारो जीवास्तदभिमानिनः॥
ज्ञानात्मकानीन्द्रियाणि तथा कर्मात्मकानि च।
शब्दाद्यर्थाः सुखं दुःखमिति प्रोक्तं द्विधा फलम्॥
एतत्सर्वं हरेरूपमित्याहुर्ज्ञानदुर्बलाः।
स एव बहुशक्तित्वाद्भाति चैषां तथा तथा॥
एवं कारणकार्याख्यं समस्तं हरिमेव तु।
केचित्पश्यन्ति च व्यक्तं केचिदाहुरपण्डिताः॥
एवं कारणकार्येभ्यः परमानन्दरूपिणम्।
अज्ञानाद्बहुधा प्राहुरेकं सन्तं सुदुर्जनाः॥
रूप्यत्वाच्छ्रवणत्वाच्च तद्रूपं चैतदीर्यते।
न तु तस्य स्वरूपत्वान्निर्दोषानन्दरूपिणः॥
तथा जडाजडैक्यं स्यात्कुतः पूर्णाल्पयोर्द्वयोः।
पूर्णाल्पज्ञानयोश्चैव पूर्णशक्त्यल्पशक्तयोः॥
निर्दुःखदुःखान्वितयोः स्वतन्त्रपरतन्त्रयोः॥
अतः सर्वगुणैर्युक्तं सर्वदोषविवर्जितम्।
अन्याभेदेन विज्ञाय तम एव प्रपद्यते॥
निष्कृष्टं सर्वतो विष्णुं सर्वतश्च विलक्षणम्।
ज्ञात्वा पूर्णगुणं यान्ति मुक्तिं नास्त्यत्र संशयः॥

इति प्रमाणसिद्धत्वादुक्तपदार्थो ननु सदनुविद्धत्वात्सर्वस्य तद्रूपत्वमिति॥ ३७॥

किञ्च कार्यार्थमिलत्वे तद्वज्जन्मादिमत्त्वं प्रसज्यते न च तत्तथा तस्माद्भिन्नमेवेति युक्तिमाह—नात्माविति। कालत्रयसम्बन्धित्वान्नौपचारिकोऽयं निषेधः तथा जन्मादिमत्पदार्थस्थत्वेन तद्धर्मत्वं नौपचारिकं ब्रह्मण इत्यत्राह सर्वत्रेति। सर्वेषु जन्मादिमत्सु पदार्थेषु शश्वदेकविधं न विकारि अत एवानपायि विनाशरहितं तत्र हेतुगर्भविशेषणमुपलब्धिमात्रमिति। प्रकृत्यादिमिश्ररहितज्ञानात्मकत्वादित्यर्थः। सदेकत्वादसत्कल्पमिदमत्राह—इन्द्रियेति। सद्ब्रह्म इन्द्रियेषु दृश्यमानं दर्शनादिबलेन विकल्पितं विविधं कल्पितं दर्शनशक्तिं श्रवणशक्तिं ज्ञानशक्तिमिति कथमिव यथेन्द्रियगतः प्राण इन्द्रियशक्त्या दर्शनादिशक्तिप्रदत्वेन विकल्पित इति तदुक्तम्—

यथेन्द्रियगतः प्राणस्तेषां शक्त्या विकल्प्यते।
दृष्टिः श्रुतिश्चेति मतिर्वा ज्ञानदस्तथा॥
इत्यादिभेदतो वाच्य एक एव महाबलः।
दृष्ट्यादिशक्तिस्तस्यैव यतो नान्यस्य कस्यचित्॥
एवं सद्रूपकं ब्रह्म तत्तच्छक्त्या विकल्प्यते।
एकमेव महाशक्तिप्राणस्यापि बलप्रदम्॥

इति "जीव प्राणधारणे" इति धातोः हरेः जीवशब्दवाच्यत्वं प्राणस्यापि शक्तिप्रदत्वं च युज्यते—

अहं हि जीवसंज्ञो वै मयि जीवः समाहितः।
मैव त्वयानुमन्तव्यं इतो जीवो गतेति ह॥
अहं श्रेयो विधास्यामि यथाधिकारमीश्वरः॥

इति प्रमाणाद्दह्यमानगृहान्तरस्थितयोगिवत् ब्रह्मणोऽपि तत्तत्पदार्थस्थत्वेऽपि तद्दोषलेशसम्बन्धो नास्तीति युक्तम्॥ ३८॥

नानायोनिषु वर्तमानस्य जीवस्य देहाद्देहान्तरप्राप्तौ सुप्तौ वा स्वातन्त्र्यप्रतीतेरेकैकत्वानुपपत्त्या प्राणस्य शरीरान्तरसहायस्थानेऽपि परमात्माधीनत्वाच्च हरेः सर्वोत्कृष्टत्वमप्रतिहतत्वमिति भावेनाह। अण्डेष्विति—जीवस्तत्र तत्र तेषु तेषु अण्डेषु पक्ष्यादिकोशेषु तेषु तज्जन्येषु इत्युपलक्ष्यते पेशी जरायुस्तद्युक्तेषु पेशिषु जरायुजेष्वित्यर्थः—

पेशी जरायुरुद्दिष्टः सुवर्णा पेशी उच्यते।
मृत्पिण्डश्च पेशः स्यात्क्वचिच्छ्रुतमपीष्यते॥

इत्यभिधानं तरुषु उद्भिज्जेषु अवनिस्थितेषु स्वेदजेषु भूस्वेदेन जातमत्कुणादिशरीरेषु प्रवेदवत् पूर्वं देहं हित्वा प्राणं प्रविष्टं परमात्मानं प्रविष्टेन प्राणेन परमात्मना सहोपयाति गच्छति प्रविशति—

"देहाद्देहान्तरगतौ प्रविशेत्प्राणमेव तु।
जीवः प्राणः परात्मानमेवं सुप्तावपि स्फुटम्॥
तदन्या देवताः सर्वाः प्राणस्यैव वशे स्थिताः।
ईषच्च सुप्तयन्ति नैव मानुषजीववत्॥
स्वर्गस्थानां ततु स्वापः प्राणो देहेऽपि नाशिता।
मृतिसुप्तिप्रबोधादेर्नियन्ता हरिरेकराट्।
तमृते नैव चावस्था नावस्थावांश्च च स्मृतिः॥
ततस्तु देवदेवेशः प्राणः प्राणेश्वरो हरिः।
न हरेरीशिता त्वन्यः स हि सर्वाधिको मतः"॥

इति उक्तार्थं मानं मनइन्द्रियगुणे बुद्धीन्द्रियाणां गुणे शब्दादिविषयवृत्तिलक्षणव्यापारे क्षीणे सम्वृतेऽपहाय वाहङ्कारे च प्रसुप्ते सर्वेन्द्रियप्रवृत्त्युपरमेण देहाभिमानाभावलक्षणायां सुप्तौ प्राणं प्रविश्य कूटः प्राणेन कूटस्थे निर्विकारहृदयस्थे परमात्मन्यासः परमात्मनि विशिनष्टि। यमृत इति। य परमात्मानमृते तदनुस्मृतिः तस्यानुस्मृतिरेव न स्यात् एतावन्तं कालं सुखमस्वाप्समिति सुखं-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

परामर्शो न स्यादित्यर्थः । तथा परमात्मानुग्रहशक्तिमत्त्वेनाभिमानि-देवानां ज्ञानजनकशक्त्यभावो न दोषाय तदन्या देवताः सर्वा इत्युक्तत्वात् ॥ ३९ ॥

इदानीं सर्वोत्कृष्टत्वेन सर्वस्माद्भिन्नस्य सर्वोपकारकत्वेन प्रेष्ठस्य परमात्मतत्त्वस्यापरोक्ष्यं कथा नु स्यादिति सोदाहरणं तत्साधनमाह—यर्हीति । यर्हि यदा पद्मनाभचरणोपासनया अनुदिनं प्रवृद्धया भक्त्या चेतसः सत्त्वादिगुणकर्मजातानि मलानि विधमेत्परिहरेत्तदा तस्मिन् चेतसि शुद्धे आत्मतत्त्वं परमात्म-स्वरूपं साक्षादुपलक्ष्यते अपरोक्षीक्रियते कथमिव यथा सवितृप्रकाशोऽमलदृशो निर्मले चक्षुषि दृश्यत इति ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शक्तेस्तत्स्वाभाविकरूपत्वमाह—सत्यमिति । ब्रह्मैव स्वरूपशक्ति अनेकात्मशक्तिमद्भाति एवकारेण ब्रह्मण एव सा शक्तिर्न तु कल्पितेति स्वाभाविकरूपत्वं शक्तेर्बोधयति तत्र हेतुः यद्ब्रह्म परस्थूलं कार्यं पृथिव्यादिरूपम् अमलसूक्ष्मं कारणं प्रकृत्यादिरूपं तयोर्बहिरङ्गवैभवयोः परं स्वरूपवैभवं श्रीवैकुण्ठादिरूपं तटस्थवैभवं शुद्धजीवरूपं च अन्यथा तत्सद्भावासिद्धेः किंरूपतया तत्तद्रूपं ज्ञानक्रियार्थफलरूपतया महदादिलक्षणज्ञानशक्तिरूपत्वेन सूत्रादिलक्षणक्रियाशक्तिरूपत्वेन तन्मात्रादिलक्षणार्थरूपत्वेन प्रकृतिलक्षणतत्साम्यावस्थारूपत्वेन सदसद्रूपं फलरूपत्वेन तयोः परं तत्र फलं पुरुषार्थस्वरूपं स्ववैभवं भगवद्धाम विष्णुस्तु सद्गुणानां स्वरूपचिद्विलासं चिद्वस्तु च एतेन ज्ञानक्रियार्थरूपेणाद्यशक्तित्वं व्यञ्जितं शक्तेः स्वाभाविकरूपत्वं सप्रमाणं स्थापयति । आदौ यदेकं ब्रह्म तदेव सत्त्वं रजस्तम इति त्रिवृत् प्रधानं ततः क्रियाशक्त्या सूत्रं ज्ञानशक्त्या महानिति ततोऽहमहंकार इति तदेव च जीवं शुद्धस्वरूपं जीवात्मानं तदुपलक्षणकं वैकुण्ठादिवैभवं च प्रवदन्ति वेदाः ते च "सदेव सोम्येदमग्र आसी"दित्याद्याः आद्यावेकं तत्तत्तद्रूपं भाति शक्तेः स्वाभाविकत्वमायातम् अन्यथा असद्भावेनौपाधिकत्वायोगात् स्वरूपवैभवस्याङ्गत्वाङ्गत्वाभ्युपगमसिद्धत्वेऽपि सूर्यमण्डलस्य तद्रश्मिपरमाणुवृन्दरूपेण तत्सत्तया तद्य-सत्ताकत्वात्तदुपादानकत्व तदाविष्टत्वं च स्यात् "यस्य भासा सर्वमिदं विभाति" इति श्रुतेः शक्तेरचिन्त्यत्वं स्वाभाविकत्वं चोक्तं विष्णुपुराणे—

"निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः ।
कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते" ॥

इति मैत्रेयप्रश्नानन्तरं श्रीपराशर उवाच—

शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ।
भवन्ति तपसां श्रेष्ठ ! पावकस्य यथोष्णता ॥

इति अत्र श्रीस्वामिटीका च तदेवं ब्रह्मणः सृष्ट्यादिकर्तृत्वमुक्तं तत्राशङ्कते निर्गुणस्येति सत्त्वादिगुणरहितस्य अप्रमेयस्य देश-कालाद्यपरिच्छिन्नस्य शुद्धस्य सहकारिशून्यस्य अमलात्मनः रागादि-शून्यस्य एवम्भूतस्य ब्रह्मणः कथं सर्गादिकर्तृत्वमिष्यते एतद्विलक्षणस्यैव लोके घटादिषु कर्तृत्वादिदर्शनादित्यर्थः । परिहरति । शक्तय इति सार्द्धेन । लोके हि सर्वेषां भावानां पावकस्योष्णताशक्तिवदचिन्त्यज्ञानगोचराः शक्तयः सन्त्येव अचिन्त्या भिन्नाभिन्नत्वादिविकल्पैश्चिन्तयितुमशक्याः केवलमर्थापत्तिज्ञानगोचराः सन्ति ब्रह्मणः पुनस्ताः स्वभावभूताः स्वरूपादभिन्नाः शक्तयः "परास्य शक्तिर्विविधैव श्रूयते" इति श्रुतेः अतो मणिमन्त्रादिभिरग्न्यौष्ण्यवत् केनचिद्विहन्तुं न शक्यन्ते अत एव निरङ्कुशमैश्वर्यं तथा च श्रुतिः "स वा अयमस्य सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपति"रित्यादिः अत एवमतो ब्रह्मणो हेतोः सर्गाद्याः भवन्ति नात्र काचिदनुपपत्तिरित्यर्थः । किञ्च ब्रह्मपदेन सर्वं खल्विदं ब्रह्मेति प्रसिद्धं ऽव्यय सत्त्वादिगुण-मयमायावाच्यत्वमन्यतोऽपि निर्गुणस्येति प्राकृतगुणैरस्पृष्टस्व-भक्तीकृत्य तेषां बहिरङ्गत्वं स्वीकृतं तदेतदेव "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर"मित्येषा श्रुतिः स्वीचकार मायायाः तदपाश्रयामिभिन्नमहेश्वरत्वं मायाया बहिरङ्गाया आश्रय इति तां पराभूय स्थितमिति च लभ्यते तस्मात् पूर्ववदत्र शक्तेः स्वाभाविकत्वं मायादोषास्पृष्टत्वं च सिद्धम् अत एव श्रीगीतासु "ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते । सर्वतः पाणिपादं त"दित्यादिना अत्र विशेषः श्रीभगवत्सन्दर्भे दृश्यः अत्र प्रक्रिया एकमेव तत् परमतत्त्वं स्वाभाविकाचिन्त्यशक्त्या सर्वदैव स्वरूप-तद्रूपवैभवजीवप्रधानरूपेण चतुर्धावतिष्ठते सूर्यान्तर्मण्डलस्थतेज इव मण्डलतद्बहिर्गततद्रश्मितत्प्रतिच्छविरूपेण एवमेव श्रीविष्णुपुराणे—

एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा ।
परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् ॥

इति "यस्य भासा सर्वमिदं विभाती"ति श्रुतेः अत्र व्यापकत्वादिना तत्तत्समावेशाद्यनुपपत्तिश्च शक्तेरचिन्त्यत्वेनैव पराहता दुर्घटघटकत्वं ह्यचिन्त्यत्वं शक्तिश्च सा त्रिधा अन्तरङ्गा तटस्था बहिरङ्गा च तत्रान्तरङ्गया स्वरूपशक्त्याख्यया पूर्णेनैव स्वरूपेण वैकुण्ठादिरूपवैभवरूपेण च तदवतिष्ठते तटस्थया रश्मिस्थानीयचिदेकात्मशुद्धजीवरूपेण बहिरङ्गया मायाख्यया प्रतिच्छविगतवर्णशावल्यस्थानीयतदीयबहिरङ्ग-वैभवजडात्मप्रधानरूपेण च चतुर्धात्वम् अत एव तदात्मकत्वेन जीवस्यैव तटस्थशक्तित्वं प्रधानस्य च मायान्तर्भूतत्वमभिप्रेत्य शक्तित्रयं विष्णुपुराणे गणितम्—

"विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा ।
अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते ॥
तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ।
सर्वभूतेषु भूपाल ! तारतम्येन वर्तते" ॥ इति

अविद्या कर्म कार्यं यस्याः सा तत्संज्ञा मायेत्यर्थः । यद्यपीयं बहिरङ्गा तथाप्यस्यास्तटस्थशक्तिमयमपि जीवमावरितुं सामर्थ्यमस्तीत्याह—तयेति । तारतम्येन तत्कृतावरणस्य ब्रह्मादिस्थावरान्तेषु देहेषु लघुगुरुभावेन वर्तत इत्यर्थः । तदुक्तं "यथा

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु यदि सुषुप्तौ निर्विकारात्मानुभवो भवेत् कथं पुनरपि संसारः स्यात् अविद्यासंस्काराणां विद्यमानत्वादिति चेत् कदा तर्हि तद्रहितशुद्धात्मानुभावो भवेत्तत्र भक्तिमिश्रज्ञानपरिपाकेन प्रथमं शुद्धजीवानुभवः स्यात् ततो—

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥
भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥

इति भगवदुक्त्या भक्त्युत्थज्ञानेन तत्पदार्थस्य ब्रह्मणोऽपरोक्षानुभवस्ततो ब्रह्मसायुज्यमिति क्रमः यदि तु "यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च य"दिति" वाक्यबलात् ब्रह्मानुबुभूषुः केवलामेव भक्तिं कुर्यात्तदा "सत्यं दिशत्यर्थितमर्थितो नृणा" मिति न्यायेन ब्रह्मानुभवं प्राप्य भगवदनुभवमपि प्राप्नोतीत्याह—यर्हीति । यदा लब्धः कया भक्त्या चेतसो मलानि गुणकर्मजानि विभ्रमेत् नाशयेत् त्रैगुण्यापगमे नैष्कर्म्ये यथा भवेदित्यर्थः । कीदृश्या अब्जनाभस्य चरणारविन्दोपासनादेव पेयया कामना ध्रुवादीनामिवान्यकामनापि भवेत् यतः तदा तस्मिन् विशुद्धे चेतसि आत्मनस्तत्पदार्थस्य ब्रह्मणस्ततस्तत्प्रतिष्ठारूपस्य भगवतोऽपि तत्त्वमुपलभ्यते यथा अनलदृशोर्दृशोः पटलापगमे सति निर्मलयोः सत्योः सवितुः सूर्यस्य प्रकाशः साक्षादिति एवेन भक्तिमहिम्ना तत्प्रतिष्ठारूपः सवितापि सवितृमण्डल स्वदृश्यं पाणिपादादिविशिष्टो वाहनादिपरिकरसहितोऽपि उपलभ्यते ॥ ७४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ सर्वात्मत्वनिरूपणेन भगवदुत्कर्षमाह । सत्त्वमिति । यत् यस्य "प्रधानक्षेत्रज्ञपतिर्गुणेशः" इत्यादिश्रुतिवेद्यस्य ब्रह्मणः "एष परस्यांशः एष परस्य शक्ति" रित्याद्याः श्रुतयः चेतनशक्तिभूतं जीवं वदन्ति सत्त्वं रजस्तम इति त्रयाणां गुणानां वृद्धवृत्तियंत्र तदेकं कारणरूपमादौ पश्चाच्च किञ्चित् क्षुभितगुणं सूत्रं तदनन्तरं महानिति तदनन्तरमहं तदनन्तरं ज्ञानतया देवतारूपतया ज्ञानेन्द्रियरूपतया च कर्मेन्द्रियरूपेण क्रियारूपतया आकाशादिरूपेणार्थतया शब्दादिरूपेण फलतया अनेकरूपमचेतनशक्तिभूतं प्रधानम् "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर" मित्याद्याः श्रुतयो वदन्ति उभयशक्तिं चिदचिद्रूपानन्तशक्तिं ब्रह्मैव सदसच्च भाति सदसत्कार्यकारणरूपमचित्तत्त्वं चशब्दोदितं चित्तत्वञ्च ब्रह्मैव भाति एवकारेण अत्यन्तभेदवादिनां वेदार्थानभिज्ञत्वे वैशेषिकादयः प्रत्युक्ताः नहि "सर्वं खल्विदं ब्रह्म" त्यादीनि महावाक्यान्यभिन्नत्वेनान्यथा कर्तुं शक्यानि अतः चेतनमचेतनञ्च ब्रह्मशक्तिभूतं तत्त्वमुभयशक्तिमद्ब्रह्मपदार्थाद्विभिन्नैरपि विभक्तमात्मनामभिन्नेनात्यन्तपृथक्तया वक्तुमशक्यम् यथा पुरुषात्केशलोमादयः पृथिव्याः ओषध्यादयः मणिद्युमणयादेः प्रभादयो धर्माः केनाप्यत्यन्तभिन्नतया वक्तुमशक्याः । ननु तर्हि चेतनाचेतनगताः सर्वे दोषाः ब्रह्मण्येव स्युरित्यत्राह—तयोः परमिति । तयोः चेतनाचेतनयोः स्वासाधारणस्वरूपयोः स्वासाधारणेन स्वरूपेण परं विलक्षणं यथा केशलोमाद्यसाधारणरूपात् पुरुषरूपम् ओषध्यादिस्वरूपात्पृथिव्यादिस्वरूपं प्रभादिस्वरूपान्मण्यादिस्वरूपं विलक्षणमेव एवं सर्वशक्ति सर्वभिन्नाभिन्नं ब्रह्मेति सिद्धान्तः । तथा च श्रुतयः "एकः सन् बहुधा विचचार एको देवो बहुधा सन्निविष्टः त्वमेकोऽसि बहुधा बहून् प्रविष्ट इत्याद्याः—

एकत्वे सति नानात्वं नानात्वे सति चैकता ।
अचिन्त्यं ब्रह्मणो रूपं कस्तद्वेदितुमर्हति ॥

इतिमनुवाक्यम्—

केचिद्वहुत्वेन वदन्ति देवमेकात्मना केचिदमुं पुरातनम् ।
वेदान्तसंस्थापितसत्त्वयुक्तं द्रष्टुं तमीशं नयमुख्यताः स्मः ॥
अनेकमेव बहुधा वदन्ति श्रुतिस्मृतिन्यायविनिष्ठचित्ताः ।
आहुर्यमात्मानमजं पुराविदो द्रष्टुं तमीशं प्रतिसंयताः स्मः ॥

इति कैलासयात्रायां हरिवंशे घण्टाकर्णवाक्यम् "एकत्वेन पृथक्त्वेन बहुधा विश्वतो मुख"मिति भीष्मवाक्यम् "अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके २ । ३ । ४२) उभयव्यपदेशात्त्वहिकुण्डलवत् [ ३ । २ । २७ ] इत्यादिसूत्राणि च विस्तरस्तु वेदान्तकौस्तुभादौ द्रष्टव्यः ॥ ३७ ॥

सत्त्वं रजस्तम इति त्रिवृदेकमादौ सूत्रं महानहमित्यनेनोक्तशक्तिनो ब्रह्मणः अचिन्त्यशक्तेर्नित्यत्वपरिणामित्वादयो धर्मा दर्शिताः इदानीं तत्परिणामभूतानां देहादीनामागमापायित्वचिज्ज्ञेयत्वादीन् धर्मान् चिच्छक्तेर्जीवस्य नित्यत्वापरिणामित्वसुखदुःखभोक्तृत्वं भगवद्भक्तिविशोधितान्तःकरणोपलभ्यत्वं चाह—नात्मेत्यादिभिः । ननु सत्त्वरजस्तम इति त्रिवृदेकमादाविति प्रधानस्य नित्यत्वमिव जीवस्य नित्यत्वं नोक्तं लोकेऽपि देवदत्तो जातः मृत इति प्रसिद्धिरतो जीवः किं मर्त्यः इत्यत्राह—नेति । आत्मा जीवात्मा न जजान न जातः किन्तु देह एव जातः न मरिष्यति किन्तु देह एव मरिष्यति न वर्धते किन्तु देह एव वर्धते न क्षीयते किन्तु देह एव क्षीयते जीवस्य ज्ञातृत्वलक्षणं धर्मं वदन् देहविलक्षणत्वमाह—व्यभिचारिणां जन्ममरणवृद्धिक्षयशालिनां देहादीनां सघनवित् जन्मादिकालज्ञाता सर्वत्र सर्वेषु देहेषु शश्वत् सर्वदा अनपायी अविकारः सर्वत्र सश्वदुपलब्धिमात्रम् सर्वेषु देहेषु सदा ज्ञानमात्रम् अत्रोपलब्धिमात्रमितिपदेन स्वरूपभूतं ज्ञानं सघनविदित्यनेन तत्सम्भूतं ज्ञानमुपपादितम् तत्र तार्किकाः स्वरूपत आत्मानं जडं स्वीकृत्य तत्र ज्ञानं गुणमुत्पत्तिविनाशवदिति स्वीकुर्वन्ति बौद्धाः स्वरूपतोऽपि क्षणिकमाहुः तन्मतं निर्मूलत्वेन निराहत्य "प्रज्ञानघन एवायम् आत्मा न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते ऽविनाशित्वा" दिति वेदमूलं निजमतमाह—सविदिति । देहेषु उपलब्धिमात्रं जीवाख्यं ज्ञानं स्वरूपतो धर्मतश्च सदैव नतु क्षणिकम् तत्सम्भूतज्ञानस्यैकत्वेऽपि रूपज्ञानं शब्दज्ञानमित्येवं विषयभेदादनेकत्वप्रतीतिद्वारा धर्मिज्ञानमपि द्रष्टा भ्रान्तस्येव बहुधा प्रतीयते इत्याह—इन्द्रियबलेन विकल्पितमिति । तत्र दृष्टान्तः प्राणो यथेति यथा एक एव प्राणाख्यो वायुस्तत्तदिन्द्रियप्रवर्तकतया विकल्पितस्तद्वत् तस्माद्धर्मिज्ञानं धर्मभूतं ज्ञानं च नित्यमेवेति सिद्धान्तः । नीलज्ञानं जातं पीतज्ञानं नष्टमिति प्रतीतिस्तु विषयग्रहणत्यागनिबन्धना ज्ञाननाशाङ्गीकारे तु पुनः पीतपदार्थस्मरणाभावः स्यादिति दिक् ॥ ३८ ॥

अण्डेषु पक्ष्यादिकोशेषु पेशिषु मांसपिण्डेषु जरायुजेषु

राजोवाच ।

कर्मयोगं वदत नः पुरुषो येन संस्कृतः ।
विधूयेहाशु कर्माणि नैष्कर्म्यं विन्दते परम् ॥ ४१ ॥
एवं प्रश्नमृषीन् पूर्वमपृच्छं पितुरन्तिके ।
नाब्रुवन् ब्रह्मणः पुत्रास्तत्र कारणमुच्यताम् ॥ ४२ ॥

आविर्होत्र उवाच ।

कर्माकर्मविकर्मेति वेदवादो न लौकिकः ।
वेदस्य चेश्वरात्मत्वात्तत्र मुह्यन्ति सूरयः ॥ ४३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तदपु तदुपलक्षितेषूद्भिज्जेषु मनिनिश्चितेषु स्वेदजेषु यत्र यत्र यस्मिन् यस्मिन् कूटस्थः अयडुपेदयादिविकारिपदार्थागम एक रसः जीवः हि इमौ कर्मफलभोगाख्येन हेतुना उपधावति तत्र तत्र प्राणः प्राणप्रधानः षोडशकलः लिङ्गदेहः जीवं कूटस्थमुपधावति लिङ्गदेहविशिष्टः कर्मफलभोगाय चतुर्विधेषु सावकारेषु देहेष्वविकारी एव जीवः भ्रमतीत्यर्थः । ननु देहविलक्षणो जीवः क इत्यत्राह—यहीति । इन्द्रियगणे सुप्ते अहमि अहङ्कारे च प्रसुप्ते आशयं साहङ्कारं देहमृते तर्हि कूटस्थतया यत् यस्य जीवस्वरूपस्य अनुस्मृतिः एतावन्तं कालं सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति प्रत्यभिज्ञानं नोऽस्माकं जायते ततः देहविलक्षणो जीव इत्यर्थः ॥ ३९ ॥

ननु अनुस्मृत्यैव निश्चीयते साक्षात्तदुपलब्धिहेतुर्नास्ति किमत आह—यर्हीति । यर्हि यदा अब्जनाभचरणैषणया पद्मनाभपादपद्मसन्निधीच्छया वरुभक्तिर्बहुप्रकारा भक्तिस्तया गुणकर्मजानि सत्त्वादिगुणहेतुकशुभाशुभकर्मजानि चेतोमलानि मुमुक्षुर्विधमेत् विनाशयेत् तदा तस्मिन् चेतसि आत्मतत्त्वं जीवतत्त्वं साक्षादुपलभ्यते यथा अमलदृशः निर्मलदृष्टेः सवितृप्रकाशः ॥ ४० ॥

---

भाषा टीका।

सत्व रज और तम ये तीनों गुण सूक्ष्म रूप से जिसमें वर्त्तमान हैं उस प्रधान ( प्रकृति ) को कार्यों का आधार होने से आदि में सूत्र कहते हैं और जो उसके कार्य हैं उन्हीं को महत्तत्व और अहङ्कार कहते हैं और उस त्रिविध अहंकार से भूतादिकों की सृष्टि को भी उपलक्षण रूप से जानना चाहिये, इस प्रकार तो वह असत् अर्थात् अचेतन तत्व हुआ, और ज्ञानेन्द्रिय कर्मेन्द्रियों के द्वारा जो कुछ विषय ग्रहण करता है और फलों को भोगता है ऐसे जीव को सत् अर्थात् चेतन तत्व कहते हैं वह चेतनाचेतनात्मक अनंत शक्ति वाला ब्रह्मही सर्वत्र प्रकाशित होरहा है और वह ब्रह्म चेतनाचेतन से विलक्षण भी है ॥ ३७ ॥

जो चेतन और अचेतन परमात्मा का शरीर है तिनों में चेतन तत्व का स्वरूप कहते हैं, कि—जीवात्मा न उत्पन्न होता है, न मरता है, न वृद्धि को प्राप्त होता है, न कभी क्षीण होता है, और आगमापायी देहादि कों की अवस्थाओं का जानने वाला है, एवं सर्वत्र देव मनुष्यादि शरीरों में सदा अनपायी होकर रहने वाला है और ज्ञान स्वरूप है, यदि जीवात्मा ज्ञान स्वरूप है तब ज्ञान तो चाक्षुष श्रावणादि अपायी होते हैं वह आत्मा अनपायी कैसे भया? तहां यह समाधान है, कि—इन्द्रियों के द्वारा ज्ञान का विकल्प है स्वरूप भूत ज्ञान में नहीं है जैसे कि प्राण का स्थानों के भेद होने से विकल्प है ॥ ३८ ॥

अंडज जरायुज उद्भिज्ज और स्वेदज इन चतुर्विध शरीरों के मध्य में प्राण वायु जीव के पीछे गमन करता रहता है, अर्थात् प्राण वायु के द्वाराही जीवात्माधारवाले शरीरों में प्रवेश करता है और प्राण जीव का अनुवर्त्तन करता है जिस जीव का प्राण अनुवर्त्तन करता है वही कूटस्थनिर्विकार आत्मा है, क्या इस प्रकार का आत्मा सब के अनुभव सिद्ध है, तहां कहते हैं, कि—नहीं किन्तु जब इन्द्रिय गण शब्दादि विषय ग्रहणय रहित होजाता है और देहाभिमान निवृत्ति होजाता है तब पर अन्तःकरण के बिना जो शुद्ध आत्मा के स्वरूप का प्रकाश होता है उसी की हम जीव लोगों को स्मृति होती है ॥ ३९ ॥

तो फिर अहङ्कारादि अन्तःकरण की कब निवृत्ति हो सकती है और कब यथावत् उसकी स्मृति होती है, तहां कहते हैं कि—जब श्रीपद्मनाभ भगवान् के चरणारविन्द में प्रीतिवाली भक्ति से पुरुष गुण कर्मों से उत्पन्न होने वाले चित्त के मलों को दूर करता है उस समय उस विशुद्ध चित्त में आत्म तत्व साक्षात् उपलब्धि होता है, जैसे निर्मल दृष्टिवाले पुरुष को सूर्य का प्रकाश कार्यकारी होता है अन्ध पुरुष को नहीं तस्मात् ज्ञानरूप दृष्टि के आन्ध्य नाश के लिये अवश्य ही श्रीविष्णु भक्ति कर्त्तव्य है ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

भक्तेः कर्मयोगाधीनत्वात्तं पृच्छति—कर्मयोगमिति । नैष्कर्म्यं कर्मनिवृत्तिसाध्यं ज्ञानम् ॥ ४१ ॥

**परोक्षवादो वेदोऽयं बालानामनुशासनम् ।**
**कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा ॥ ४४ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रश्नान्तरमाह—एवमिति । प्रश्नं प्रष्टव्यमर्थं पितुरन्तिके ब्रह्मणः पुत्राः सनकादयः सर्वज्ञा अपि नाब्रुवन् ॥ ४२ ॥

गहनत्वद्योतनाय प्रथमं द्वितीयप्रश्नस्योत्तरमाह—कर्मेति । कर्म विहितम् अकर्म तद्विपरीतं निषिद्धम् विकर्म विगतं कर्म विहिताकरणम् एतत्त्रयं वेदवादो वैदिकशब्दगम्यम् न लौकिकः वेदस्येश्वरात्मत्वादीश्वरादुद्भूतत्वादपौरुषेयत्वादित्यर्थः । पुंवाक्यं हि वक्तुरभिप्रायतोऽर्थज्ञाने शक्यमपौरुषेये तु केवलं वाक्यपौर्वापर्येण तात्पर्यावधारणं तच्च दुष्करमिति तत्र कर्मादौ विद्वांसोऽपि मुह्यन्ति किमुतान्ये अतस्तव तदा बालत्वान्नैवाब्रुवन्निति ॥ ४३ ॥

दुर्ज्ञेयं वेदतात्पर्यमाह—परोक्षवाद इति । यत्रान्यथा स्थितोऽर्थः सङ्गोपयितुमन्यथा कथ्यते स परोक्षवादः तथा च श्रुतिः "तं वा एतं चतुर्हूतं सन्तम् चतुर्होतेत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः" इति परोक्षवादत्वमेवाऽऽह—कर्ममोक्षायेति । ननु स्वर्गाद्यर्थं कर्माणि विधत्ते न कर्ममोक्षार्थं तत्राह—बालानामनुशासनं यथा भवति तथा अत्र दृष्टान्तः अगदमौषधम् यथा पिता बालमगदं पाययन् खण्डलड्डुकादिभिः प्रलोभयन् पाययति ददाति च तानि नैतावताऽगदपानस्य तल्लाभः प्रयोजनमपि त्वारोग्यम् तथा वेदोऽप्यवान्तरफलैः प्रलोभयन् कर्ममोक्षायैव कर्माणि विधत्ते ॥ ४४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

भक्तेरिति । "कुर्वाणा यत्र कर्माणि भगवच्छिक्षया" इत्यादेः "यदत्र क्रियते कर्म भगवत्परितोषणम् । ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम्" इत्यादेश्च कर्माधीनत्वाद्भगवदर्पितकर्माधीनत्वादित्यर्थः । तं तादृशकर्मयोगं तेन कर्मयोगेन संस्कृतः शुद्धचित्तः सन् कर्मनिवृत्तिः कर्मणि कर्तृत्वाभिनिवेशाभावकतया साध्यं परं ज्ञानं तथाच श्रुतिः "अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते" इति ॥ ४१ ॥

यथा युष्मान् पृच्छामि एवं प्रष्टव्यमर्थं कर्मरूपं नाब्रुवन् कर्मयोगमिति शेषः मूले तत्र उत्तरदाने ॥ ४२ ॥

गहनत्वद्योतनाय । कर्मतत्त्वस्य दुर्ज्ञेयत्वज्ञापनाय द्वितीयप्रश्नस्य उत्तरदाने कारणप्रश्नस्य विहितं सन्ध्यावन्दनादि अकर्मत्वञ्च निरोधे नञ् असुराधर्मवत् अत एव तद्विपरीतं निषिद्धमिति व्याख्यातं तच्च सुरापानादि विकर्मशब्दस्य विहिताकरणत्वरूपोऽर्थस्तु नाचरेदित्यादौ विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति स इति वक्ष्यमाणमूलवाक्यादेव व्याख्यातः "शास्त्रयोनित्वात्" इति न्यायेनेश्वर एवात्मा कारणं यस्य तादृशत्वात् तत्र कर्मादिस्वरूपज्ञाने अपौरुषेयत्वस्य मोहहेतुत्वमुपपादयति । पुंवाक्यं हीति । अपौरुषेय अज्ञातज्ञात स्वतः सिद्धे वेदे तु पुरुषाभावात् कथमित्यादि याजनीय तदुक्तं शास्त्रैः "वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् । वेदाध्ययनसामान्यादधुनाध्ययनं यथा" इति तात्पर्यं वेदरहस्यम् अतः वेदतात्पर्यस्य दुर्ज्ञेयत्वात् तदा प्रश्नकाले बालत्वादिति पितुरन्तिके इति तदुक्तेरित्यर्थः ॥ ४३ ॥

अमितः प्रकटं सुज्ञेयं होत्रम् अग्निहोत्रोपलक्षितं कर्म यस्येति निरुक्त्या तद्वाचि तस्यैव योग्यत्वात् स एवोपाधेति ज्ञेयं यत्र यस्मिन् वादे तथाच श्रुतिः परोक्षवादे प्रमाणं श्रुतिः तं वा एतं प्रसिद्धं मन्त्रं पृथिवी होता द्यौरध्वर्युरित्यादिकं चतुर्हूतं चत्वारो होत्रादयो हूयन्ते श्रूयन्ते यत्र तादृशं सन्तमपि नाम्ना चतुर्होतेत्याचक्षते अथवा तस्य मन्त्रस्याभिमानि तेनात्मभूतः कश्चित् पुरुषः प्रत्युत्तरमुवाचेति स पुरुषश्चतुर्हूतस्तदीयनाम्ना मन्त्रोऽपि चतुर्हूत इत्युच्यते पूर्वतो प्रत्यक्षनामग्रहणमयुक्तमित्यभिप्रायेण हूतशब्दस्थाने होतृशब्दः एवं यद्यपि चतुर्हूतमित्येव निरुक्त्या लभ्यते ननु चतुर्होतेति तथापि परोक्षवदनस्वाभाव्याच्चतुर्होतेत्याचक्षते इत्यर्थः । विधिवाक्यन्तु प्रजाकामः चतुर्होत्रा यजेतेति ज्ञेयं परोक्षवदने हेतुमाह—परोक्षप्रिया इवेति । "परोक्षं च मम प्रियम्" इति मदुक्तेः कर्ममोक्षाय अनादिसिद्धकर्मपरम्पराविनाशायैव किमुत काम्यकर्मत्यागाय अशक्ते । नन्वेवमिति । स्वर्गकामो यजेतेत्यादौ यागेन स्वर्गं भावयेदित्यर्थात्मभावनया स्वर्गाद्यर्थमेव कर्माणि विधत्ते परोक्षसिद्धान्तमाह—बालानामिति । बालानामशुद्धचित्तत्वेन स्वाभाविकप्रवृत्तिप्रतिबन्धार्थमेवैतानि कर्माणि न तुच्छस्वर्गाद्यर्थमित्यजानतामित्यर्थः । अनुशासनं स्वर्गादिभिः प्रलोभनं यथा स्यात्तथा अत्रानुशासने अवान्तरफलैः गौणफलैः ॥ ४४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कर्म काम्यकर्म अकर्म कामनाराहित्यादफलं ज्ञानपूर्वकं कर्म विकर्म निषिद्धं वेदस्य चेश्वरात्मत्वात् आत्मीय इति ईश्वराभिप्रायरूपतया भगवत्त्वात् ॥ ४३ ॥

परोक्षवदतीति परोक्षवादः प्रत्यक्षाद्यगोचरार्थविषयः बालानामज्ञानामनुशासनं विविच्य ज्ञापनम् ॥ ४४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नारायणपरकर्मोत्थया भक्त्या मायामञ्जस्तरति दुस्तरामित्युक्तं स कीदृशो भगवदाराधनात्मकः कर्मयोगो यदुत्थया भक्त्या मायां तरेदिति पृच्छति—कर्मयोगमिति । नोऽस्मभ्यं वद निरूपय येन विज्ञातेनानुष्ठितेन च कर्मयोगेन संस्कृतः

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दुःखमयकर्ममोक्षार्थमेव गवर्त्तयितुं न तु भयमेव नाहशानुरूप-फलमेव वा दातुमिति गम्यते परमसुहृत्त्वात्तस्येत्यर्थः । तत्र दृष्टान्तः बालानां तादृशरूपभावानामगदं पित्रा तद्दान यथेति पिता च रोग-शान्त्यर्थमनौषधं पाययितुं नान्यथा प्रवर्त्तयति तत्तौषधपानमेव तस्योद्देश्यमित्यर्थः ॥ ४४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गुणकर्मजानि विधर्मविदिति श्रुत्वा भक्त्या ज्ञानेन च नैष्कर्म्यं स्यादिति मया ज्ञायत एव कर्मणापि नैष्कर्म्यं यथा स्यात्तथाह जिज्ञासे इत्याह—कर्मयोगमिति ॥ ४१ ॥

प्रश्नं पप्रच्छ यमर्थं पितुः इक्ष्वाकोः ब्रह्मणः पुत्राः सनकादयः सर्वज्ञा अपि ॥ ४२ ॥

कर्म खलु शास्त्रविहिताचरणम् अकर्म शास्त्रविहितानाचरणं विकर्म तु शास्त्रनिषिद्धाचरणम् ईश्वरात्मत्वात् "शब्दब्रह्म परब्रह्म ममोभे शाश्वती तनू" इति भगवदुक्तेरपौरुषेयवाक्यत्वादित्यर्थः । तत्र मुह्यन्तीति । पुंवाक्यं हि वक्तुरभिप्रायतोऽर्थज्ञानं सुशकम् अपौरुषेयं हि केवल वाक्यपौर्वापर्येणैव तात्पर्यावधारणं तच्च दुष्करमिति तत्र कर्मादौ विद्वांसोऽपि मुह्यन्ति किमुतान्ये अत-स्तव बालत्वात्तदा ते नाब्रुवन् ॥ ४३ ॥

दुर्बोधं वेदतात्पर्यमित्याह—परोक्षवाद इति । यत्रान्यथा स्थितो ऽर्थो भगवदभिप्रायज्ञैर्ऋषिभिः सङ्गोपयितुमन्यथा कृत्वोच्यते स परोक्षवादः यदुक्तं भगवता "परोक्षवादा ऋषयः परोक्षं च मम प्रिय"मिति परोक्षवादत्वमेवाह—कर्ममोक्षायेति । ननु स्वर्गा-द्यर्थं कर्माणि विधत्ते न कर्ममोक्षार्थं तत्राह—यथा अगदमौषधं बालानामनुशासनमाज्ञापनं येन तत् तथाहि यद्येतदौषधं पिबसि तदा ते खण्डलड्डुकं दास्यामीति प्रलोभ्य पिता बालान् निम्बरसं पाययति लड्डुकं च तेभ्यो ददात्यन्यथा पुनस्तत्पा-यनाशक्तेः किं त्वगदपानस्य न तल्लाभ एव प्रयोजनम् अपि त्वारोग्यम् एवं वेदोऽपि फलैः प्रलोभयन् कर्ममोक्षायैव कर्माणि विधत्ते ॥ ४४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उत्कोत्कर्षस्य सर्वात्मनः सर्वशक्तेः सर्वभिन्नाभिन्नस्य पर-ब्रह्मपरमात्मनारायणादिपदवाच्यस्य भगवतो ज्ञानं कर्मयोगेन शुद्धान्तःकरणेनाप्यतेऽतः कर्मयोगं पृच्छति—कर्मयोगमिति-तोऽस्मभ्यं कर्मयोगं वदन् निरूपयन् येन कर्मयोगेन पुरुषः संस्कृतः शुद्धान्तःकरणः सन् कर्माणि भगवज्ज्ञानोत्पत्तिविरोधीनि-विधूय परं परमेश्वरविषयं नैष्कर्म्यं निर्गतानि कर्माणि यतस्त-न्निष्कर्मं तदेव नैष्कर्म्यं ज्ञानं स्वार्थे ष्यञ् विन्दते प्राप्नोति ॥ ४१ ॥

प्रसङ्गात् प्रश्नान्तरमाह—एवमिति । एवमेव प्रश्नं प्रष्टव्यं कर्मयोगं पितुरिक्ष्वाकोरन्तिके तत्कर्मकर्तॄन् ऋषीनपृच्छं पृष्ट-वानस्मि ते तु ब्रह्मणः पुत्राः प्रजापतयः इक्ष्वाकुयाजकाः नाब्रु-वन् नैष्कर्म्योपयोगित्वेन नोक्तवन्तः तत्रावचने कारणं निमित्त-मुच्यताम् ॥ ४२ ॥

ईश्वरार्पितेन निष्कामकर्मानुष्ठानेन नैष्कर्म्यं जायते इति वक्तुं तादृशं कर्म ईश्वरज्ञानवर्जिताः इक्ष्वाकुयाजकाः न जानन्ती-त्याह—कर्मेति । कर्म विहितम् अकर्म विहिताकरणम् विकर्म निषि-द्धम् इत्थं कर्माकर्मविकर्मेति त्रिविधो वेदवादो वेदनिर्णयः न तु लौकिकः तत्र तस्मिन्वेदवादे सूरयो मुह्यन्ति "स्वर्गकामो यजेत अक्षय्यं ह वै चातुर्मास्ययाजिनः" इत्यादिवेदः कर्मफल-मक्षय्यमाहातो वेदः कर्मैकविषयः इत्येवं मोहं प्राप्नुवन्ति तत्र हेतुमाह—वेदस्य चेश्वरात्मत्वादिति । ईश्वरः सर्वेश्वरः आत्मा आश्रयः मुख्यो विषयो यस्य स तथा तस्य भावस्तत्त्वं तस्मात् एवंभूतवेदार्थज्ञानाभावात् "तमेतं वेदानुवचनेन ब्राह्मणा विविदि-षन्ति यज्ञेन दानेन तपसानाशकेने"ति श्रुत्युक्तरीत्या तद्विवि-दिषोत्पादनद्वारा कर्मणां नैष्कर्म्यं साधनत्वमनवधार्य इक्ष्वाकु-याजकाः भवत्पृष्टमर्थं नैवाब्रुवन्निति फलितोऽर्थः ॥ ४३ ॥

तर्हि "स्वर्गकामो यजेत अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवती"त्यादिवेदः किं विषय इत्यत्राह—परोक्षेति । परोक्ष-वादः परोक्षस्य लौकिकेन्द्रियाविषयस्य ब्रह्मणो वादः निर्णयो यस्मिन् स तथा ब्रह्मविषयः अयं वेदः बालानामज्ञानिनां विषयासक्तानामनुशासनं यथा भवति तथा कर्म मोक्षाय कर्मनिवृत्तये कर्मफलभूतसंसारनिवृत्तये कर्माणि विधत्ते स्वर्गादिना प्रलोभयन् निषिद्धाद्वारयितुं विहिते व्यापारे नियो-जयतीत्यर्थः । यथा भिषक् खण्डलड्डुकादिषु प्रलुब्धं बालं तैरेव प्रलोभयन् अपथ्याद्वारयन् अगदं पाययति तद्वत् ॥ ४४ ॥

---

भाषा टीका ।

राजोवाच ।

हे महर्षिगण ! जिस कर्मयोग के करने से मनुष्य संस्कार वाला होने से इस जन्म में सब पाप कर्मों को दूर करता है फिर परलोक में मोक्ष को प्राप्त होता है वही कर्मयोग हमको आप उपदेश करो ॥ ४१ ॥

इस प्रकार का प्रश्न मैंने पिता इक्ष्वाकु के सामने सनका-दिक मुनियों से किया था उन ब्रह्म पुत्रों ने उत्तर नहीं दिया उसका कारण भी कहिये ॥ ४२ ॥

आविर्होत्र उवाच ।

हे राजन् ! कर्म विकर्म अकर्म ऐसे तीन प्रकार से वेद में कहा है यह बात लौकिक नहीं है वेद के ईश्वर रूप होने से जिस में बड़े ज्ञानियों को भी मोह होजाता है जिसमें शास्त्र विहित जो वह कर्म है जो निषिद्ध वह अकर्म है विहितका न करना विकर्म है ॥ ४३ ॥

यह वेद का कथन छिपा हुआ है अज्ञानि मनुष्यों के शिक्षा के लिये ऐसा कथन है लौकिक कर्मों के छुटाने के लिये कास्यादि कर्मों का विधान किया है जैसे औषध खवाने के लिये बालक को मिश्री लड्डू का लोभ देते हैं तैसे ॥ ४४ ॥

नाचरेद्यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः ।
विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः ॥ ४५
वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे ।
नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः ॥ ४६ ॥
य आशु हृदयग्रन्थिं निर्जिहीर्षुः परात्मनः ।
विधिनोपचरेद्देवं तन्त्रोक्तेन च केशवम् ॥ ४७ ॥
लब्धानुग्रह आचार्यात्तेन सन्दर्शितागमः ।
महापुरुषमभ्यर्चेन्मूर्त्याऽभिमतयाऽऽत्मनः ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु कर्मणो मोक्षोऽपुरुषार्थस्तर्हि प्रथममेव कर्मत्यजनं न तदकरणे प्रत्यवायोऽस्तीत्यत आह—नाचरेदिति—अजितेन्द्रियत्वादज्ञः स्वयं यदि नाचरेत्तर्हि विकर्मणा कर्मानाचरणलक्षणेनाधर्मेण मृत्योरनन्तरं मृत्युमेव प्राप्नोति तथा च श्रुतिः "मृत्वा पुनर्मृत्युमापद्यन्ते अद्यमानाः स्वकर्मभिरि"ति ॥ ४५ ॥

तस्माद्वेदोक्तमेव कुर्वाणो न तु निषिद्धम् । ननु कर्मणि क्रियमाणे तत्फलासक्तिस्तत्फलं च स्यान्न तु नैष्कर्म्यरूपा सिद्धिरत आह—निःसंगोऽनभिनिवेशवान् ईश्वरेऽर्पितं न तु फलोद्देशेन ननु फलस्य श्रुतत्वात्कर्मणि कृते फलं भवेदेव न । रोचनार्थेति कर्मणि रुच्युत्पादनार्थमगदपाने खण्डलड्डुकादिवत् ततश्च कर्मभिः शुद्ध्या वेदार्थं सम्यग्विचारयति तदा च "यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात्प्रैति स कृपण" इत्यनात्मज्ञस्यैव कृपणतां "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेने"ति, यज्ञादीनां ज्ञानशेषतां चावधार्य निष्कामेषु कर्मसु प्रवर्त्तते ततश्च स्वर्गकामो यजेतेत्यादिभिः कामितस्यैव स्वर्गादेः फलत्वेनावगमादकामितोऽसौ न भवतीति नैष्कर्म्यसिद्धिर्भवतीति भावः ॥ ४६ ॥

वैदिकं कर्मयोगमुक्त्वा तान्त्रिकमाह—य आशु इति । परात्मनः परस्यैव सतः आत्मनो जीवस्य हृदयग्रन्थिमहंकारबन्धं निर्हर्तुमिच्छुः संस्तन्त्रोक्तेन च विधिना प्रकारेण भजेत् तन्त्रमागमः चकाराद्वैदिकेन सह समुच्चयमाह ॥ ४७ ॥

तमेव विधिमाह—लब्धानुग्रह इत्यादिना । तेनाऽऽचार्येण संदर्शित आगमोऽर्चनप्रकारो यस्य सः ॥ ४८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

प्रथममेव । चित्तशुद्धेः पूर्वमेव अजितेन्द्रियत्वात् इहामुत्रभोगाविरक्तत्वात् अतः स्वरूपज्ञानशून्यः भगवत्कथादौ श्रद्धात्मकज्ञानशून्यश्च यः स्वयं नाचरेत् किन्तु आत्मानं विज्ञं मत्वान्यान् शिक्षयेदिति स्वयं पदस्यार्थः कर्मानाचरणलक्षणेन तज्जन्येनाधर्मेण मृत्योरनन्तरं मृत्युं मृत्युपरम्परामित्यर्थः । वक्ष्यते च "तावत् कर्माणि कुर्वीत" इत्यादि तथाच विकर्माधर्मेण मृत्युपरम्पराप्राप्तौ प्रमाणं श्रुतिः स्वकर्मभिः वेदोक्तस्वधर्मैरकृतैः सद्भिः अद्यमानः पीड्यमानः अकृतानां तेषां पापजनकत्वात् यद्वा स्वकर्मभिः पीड्यमानः दुःखबुद्ध्या तानि त्यजन्नित्यर्थः ॥ ४५ ॥

तस्मात् । कर्मत्यागस्य मृत्युहेतुत्वात् तस्मिन् कर्मणि तत्फले कर्मफले नैष्कर्म्यरूपा कर्मनिवृत्तिसाध्यज्ञानस्वरूपा ममाभिनिवेशाभावात् अहं कर्त्तेत्यभिनिवेशशून्यः ततश्च फलश्रवणे सति तदा च सम्यक् विचारकाले "यो वा" इति श्रुतिः हे गार्गि! यो जनः एतदक्षरं कूटस्थं ब्रह्माविदित्वाऽज्ञात्वा अस्माल्लोकाल्लोकान्तरं विषयसुखस्पृहया गच्छति स कृपणो दीनस्तुच्छ इत्यर्थः । इत्यनेन प्रकारेण अनात्मज्ञस्य देहाभिमानिनोऽज्ञस्य कृपणतामवधार्य श्रुत्वा तं परोक्षम् एतं वेदान्तैकवेद्यं परमात्मानं ब्राह्मणा ब्रह्मचारिणो वेदानुवचनेन वेदाध्ययनोपलक्षितस्वधर्मेण विविदिषन्ति ज्ञातुमिच्छन्ति एवं वानप्रस्थाः तपसा श्रद्धया भक्तिरूपेण यज्ञेन च गृहस्थाः अनाशकेन भोजनसङ्कोचेन यतयो विविदिषन्ति इत्यस्य सकारपाठेऽनासक्त्या इति श्रुत्या ज्ञानशेषतां ज्ञानाङ्गत्वं चावधार्य "यज्ञादिश्रुतेरश्ववत्" इति न्यायात् ततश्च निष्कामकर्मप्रवृत्त्यनन्तरं स्वर्गकाम इति नियोज्यविशेषणे तस्य श्रुत्यर्थविचारेण निष्कामता चेत् स्वर्गस्याकामितत्वं कामित एव च स्वर्गादिः फलत्वेनावगम्यते येन स्वर्गं भावयेदिति तथाच संयोगपृथक्त्वन्यायेन वैदिककर्मणां विविदिषार्थत्वादीश्वरार्पणप्रभावाच्च नैष्कर्म्यापरपर्यायज्ञानभक्तिलक्षणा सिद्धिर्भवतीत्यर्थः । "भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्येनामुष्मिन्मनःकल्पनमेतदेव च नैष्कर्म्य"मिति श्रुतेः" यदत्र क्रियते कर्म भगवत्परितोषणम् । ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वित"मिति स्मृतेश्चेति ॥ ४६ ॥

वैदिकमिति । बालान् प्रति ज्ञानसाधनत्वेन वैदिकं कर्मयोगमुक्त्वा विज्ञान् प्रति तु तान्त्रिकं नारदपञ्चरात्राद्युक्तं साक्षाद्भक्त्यात्मकमर्चनलक्षणं कर्मयोगमाहेत्यर्थः । परस्यैवेति । वस्तुतोऽहङ्काराद्यस्पृष्टत्वेन हृदयात्तस्मात् परस्यैव ॥ ४७ ॥

तमेव विधिम् । तन्त्रोक्तमेव प्रकारं महापुरुषमित्युक्त्वा साम-

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

न्यतः सर्वासामपि प्राप्तौ आत्मनः स्वरूपाभिमततया प्रेष्ठयेत्युक्तम् ॥ ४८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वेदोक्तं यदि नाचरेत् यद्यपि कर्माण्याचरेत् तेनाधर्मेण मृत्योर्मृत्युमुपैति ॥ ४५ ॥

नैष्कर्म्यां बन्धकफलककर्मनिवृत्तिहेतुभूतां सिद्धिम् ज्ञानसम्पत्तिं लभते कर्मयोगो ज्ञानयोगहेतुरित्यर्थः । कर्मणामल्पफलत्वश्रुतिरर्थवाद इत्यर्थः ॥ ४६ ॥

तन्त्रोक्तेन चेति । भगवच्छास्त्रोक्तेन धर्मेण वर्णाश्रमधर्माणां समुच्चयवाची चशब्दः ॥ ४७ ॥

सन्दर्शितागमः सन्दर्शितमार्गः मूर्त्त्या विशिष्टमित्यर्थः ॥ ४८—५३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ नित्यनैमित्तिकयोरनभिसंहितफलयोर्भक्तियोगानुग्राहकतयानुष्ठेयत्वं वक्तुं तावत्तदननुष्ठाने प्रत्यवायमाह—नाचरेदिति । वेदोक्तं वेदविहितम् यदि नाचरेत्तथा विकर्माण्याचरेत्तेन विकर्मणा वेदविरुद्धकर्मानुष्ठानरूपेणावश्यकाननुष्ठानरूपेण वा अधर्मेण मृत्योः सकाशान्मृत्युमेवोपैति अज्ञोऽजितेन्द्रिय इत्यनेन निष्पन्नभक्तियोगप्रपत्तियोगान्यतरनिष्ठस्य जितेन्द्रियस्य कथञ्चिद्विरुद्धकर्मानुष्ठितमपि न बन्धकमिति सूचितं तथा च वक्ष्यति "स्वपादमूलं भजतः प्रियस्य" इत्यादिना ॥ ४५ ॥

तस्माद्वेदोक्तं नित्यं नैमित्तिकं काम्यं च कर्म ईश्वरे समर्पितम् यथा तथा कुर्वाण एव निःसङ्गः तत्तदवान्तरफलेषु सङ्गरहितः नैष्कर्म्यां नैष्कर्म्यहेतुभूतां बन्धकसफलकर्मनिवृत्तिहेतुभूतां सिद्धिं ज्ञानसम्पत्तिं लभते कर्मयोगो हि ज्ञानयोगहेतुरित्यर्थः । तर्हि किमर्थं तत्तत्फलानि श्रूयन्त इत्यत्राह—रोचनार्था फलश्रुतिरिति । कर्मणां फलवत्त्वश्रुतिरर्थवाद इत्यर्थः । ईश्वरेऽर्पितमित्यनेन कर्मणां फलसाधनत्वबुद्धिं परित्यज्येश्वराराधनताबुद्धिः कार्येति सूचितम् अनेन फलत्यागः फलितः निःसङ्ग इत्यनेन ममेदं कर्मेत्यात्मीयताबुद्धिस्त्याज्येति अनेन कर्तृत्वत्यागः तदेवं फलसङ्गकर्तृत्वत्यागपूर्वकमनुष्ठितं वैदिकं कर्म भक्तियोगनिर्वर्तकमित्युक्तं भवतीति ॥ ४६ ॥

अथ तान्त्रिकं कर्मयोगं निरूपयिष्यंस्तावत्तस्य वैदिककर्मयोगसमुच्चितस्यैवाचिराद्भक्तियोगनिष्पादकत्वमाह—य इति । अथ ननु यः पुमानात्मनः स्वस्य हृदयग्रन्थिमहंममाभिमानादिप्रकृतिसम्बन्धकार्यं तस्य ग्रन्थिवत् दुर्भेद्यत्वात्तत्त्वेन रूपणं निर्जिहीर्षुर्निर्हर्तुमिच्छुः तन्त्रोक्तेन च वैदिककर्मसमुच्चयवाची चशब्दः विधिना केशवं देवमुपचरेदाराधयेत् तान्त्रिकवैदिककर्मयोगाभ्यां भगवन्तमाराधयन्नाशु निष्पादितभक्तियोगः प्रकृतिसम्बन्धाद्विमुच्यत इत्यर्थः । परात्मन इतिपाठान्तरे परस्य देहाद्विलक्षणस्यात्मनः स्वस्य हृदयग्रन्थिमिति सम्बन्धः तन्त्रशब्देनात्र पञ्चरात्रभगवच्छास्त्रं विवक्षितम् ॥ ४७ ॥

काऽसौ तन्त्रोक्तविधिरित्यतस्तं निरूपयति—लब्धानुग्रह इत्यादिना । आचार्याल्लब्धानुग्रहः लब्धः अनुग्रहो येन सः तेनाचार्येण सन्दर्शितागमः सन्दर्शितपूजाप्रकारः आत्मनः स्वस्याभिमतया मूर्त्या विशिष्टं महापुरुषमभ्यर्चयेत् ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वेदस्यापौरुषेयत्वेन विप्रलम्भादिदोषाभावाद्वेदेनापि वेदोक्तं सुकर्मेत्याशङ्क्य भगवदुक्तं विकर्म तत् ज्ञानकृतमेव सुकर्म इति विविनक्ति—नाचरेदिति । अयं सर्वपूजितमिदमिष्टप्रदं दैवं न जानातीत्यज्ञः अत एवाजितेन्द्रियः विषयलम्पटः यो नरः पुरुषो वेदोक्तं कर्माचरेत्करोति स मृत्योर्मृत्युमतीव दुःखमुपैति केन कारणेनेत्यत उक्तं विकर्मणेति वेदोक्तकर्मणो विकर्मत्वं कुत इत्यत उक्तम् अधर्मेणेति—

"एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा" ॥

इति भीष्मोक्तेरनेवंवित्कर्मणा अधर्मत्वात् "यद्यनेवंवित् महत्पुण्यकर्म करोति तद्धास्यान्ततः क्षीयत एवेति श्रुतिं हि हृद्याद् आदधाति अनेनेश्वरार्पणमौषधमेव कर्मणो नश्वरफलरोगविनाशनं नित्यसुखहेतुरित्युक्तं भवति ॥ ४५ ॥

तर्हि "स्वर्गे लोके न भयं किंच नास्ति" इति श्रुतिः कथं संगच्छत इति तत्राह—रोचनार्थमिति । अल्पबुद्धेर्बहिर्मुखस्य योग्यस्य उत्तिष्ठापयिषुर्दयालुरिव माता बुद्ध्युपलालनार्थं गुडजिह्विकान्यायमनुसंदधाना मधुरं मुक्तिफलं गर्भीकृत्य स्वर्गादिरूपं मधुररसमिव प्रकाश्य तदर्थं कर्म विदधाना अधीतश्रुतवेदार्थस्य समुत्पन्नजिज्ञासस्य क्षयभङ्गुरफलत्वात्स्वर्गादौ वैराग्यमुत्पाद्य श्रीनारायणचरणारविन्दभक्तिमुत्पाद्य तदुपासनासंभूतसंवित्संजातप्रसादसुलभापवर्गे तात्पर्यपर्यवसायिनी फलश्रुतिः संगता भवतीति—

"अज्ञात्वा कुर्वतः कर्म स्खलनात्पापकारणम् ।
तदर्पयतो विष्णौ नैव पापाय तद्भवेत् ॥
मनोदोषविहीनस्य नतु दोषवतः क्वचित् ।
सत्सु केशवपूर्वेषु क्रमशो भक्तिहीनता ॥
असद्भक्तिस्तथा स्नेहो बहुमानमथापि वा ।
स्वोत्तमानां विनत्यागादात्मप्रियचिकीर्षया ॥
अधिकेष्वेव नीचोच्चभक्तिर्व्यत्यास एव वा ।
स्वोत्तमस्यात्मनश्चैव समस्नेहोऽथवा भवेत् ॥
कार्येषु बहुमानो वा आत्मनः समतापि वा ।
आधिक्ये किमु वक्तव्यमात्मनः शक्तिहापनम् ॥
शक्तस्याशक्तवत्कर्म मनोदोषा इतीरिताः" ।

इत्यनेनोक्ततात्पर्यार्थो बोद्धव्यः ॥ ४६ ॥

इदानीं भगवदर्चनप्रकारं कथयति । य आश्विति । तन्त्रोक्तेन पञ्चरात्रोक्तेन ॥ ४७ ॥

तन्त्रोक्तसंप्रदायमजानतः कथमर्चना घटत इति तत्राह—लब्धेति । अभ्यग्रमिति । क्रियाविशेषणं बहुकालं परीक्ष्याचार्य

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

लब्ध्वेत्यादिमर्थं वर्तते तेनाचार्येण संदर्शितागमः सम्यक् दर्शितशास्त्रसंप्रदायः ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्र यथा बालानां बालचिकित्सैव हिताय स्यात्तदतिक्रमस्त्वहिताय तथा तेषां कर्मतदतिक्रमौ भवानित्याह—नाचरेदिति । बालवदजितेन्द्रिय इहामुत्र भोगाविरक्तोऽपि वेदोक्तं यो नाचरेत् तथा यस्य न विद्यते श्री भगवत्कथादौ श्रद्धारूपा श्रीगुरुनिष्ठेव स च यो नाचरेत् सोऽपि नित्यनैमित्तिककर्माकरणजनिताधर्मेणैव मृत्योरनन्तरं मृत्युमुपैति न तु पुरुषेणेत्यर्थः । वक्ष्यते च "तावत्कर्माणि कुर्वीत"त्यादि ॥ ४५ ॥

ननु कर्म खलु सजातीयत्वात्कर्म वृद्धये एव भवेत् प्रत्युत कथं तन्मोक्षाय भवतु इत्याशङ्क्योभयत्रापि समाधत्ते—वेदोक्तमेवेति । तत्र क्रियमाणकर्मणयासङ्गं निरस्यति । निःसङ्ग इति । तत्फलावाप्ति निरस्यति—रोचनार्थेति । तदेतद्धेतुद्वयं कर्मवृद्धये दर्शितं तन्मोक्षाय हेतुः ईश्वरेऽर्पितामिति तत्सम्बन्धप्रभावेण संस्कृतत्वादिति भावः । आमयो यश्च भूतानामित्यादेः ॥४६॥

तदेवमपि बालान् प्रत्येवोक्तं विद्वान् प्रति तु श्रूयतामिति श्रीभगवद्वचनमेव प्राहयति—य आश्विति । चकारेण पाद्याद्युपचरणैर्वैदिकमन्त्रादीनपि गृह्णाति ॥ ४७ ॥

महापुरुषाऽऽपचने सामान्यतः सर्वस्या यस्याः कस्याश्चिद्वा मूर्त्तेः प्राप्तौ विशिष्याह—मूर्त्येति एकयाऽप्यभिमतयेति ॥४८-४९॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु कर्ममोक्षश्चेत् पुरुषार्थस्तर्हि प्रथममेव कर्मत्याज्यतामत आह—नाचरेदिति । यदि वेदोक्तं प्रातःस्नानसन्ध्यावन्दनादिकं कर्म नाचरेत्तदा "नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृ"दिति भगवदुक्तेर्दैहिकव्यापारं विना स्थातुमशक्यत्वादजितेन्द्रिय इतीन्द्रियजयाभावात् पशुरिव प्रातरारभ्यानियतभोजनस्त्रीसङ्गादिनिषिद्धपापनिरत एव स्यात् यतोऽज्ञः विवेकशून्यः ततश्च विकर्मणा निषिद्धाचरणलक्षणेनाधर्मेण मृत्योर्मृत्योस्सकाशात् मृत्युं नरकमेव प्राप्नोति तथाच श्रुतिः "मृत्योः पुनर्मृत्युमापद्यते अर्च्यमानः स्वकर्मभि"रिति ॥ ४५ ॥

अतएव परमकारुणिको वेदो भक्तिविमुखानां नराणां पशूनामिवेन्द्रियारामत्वानिशयवारणायैव तानुद्दिश्य कर्माणि फलदर्शनया रोचयंस्तथा विधत्ते यथा प्रातरारभ्य स्नानादिभिर्विहितानुष्ठानैर्दिक्कर्मणावसरमेव ते न प्राप्नुवन्ति । आमिषञ्च भोजनव्यवायादिषु प्रवर्त्तन पापेभ्यो भीषयमाणः स्वर्गात् भीषयाणान्तान्माम यस्येत्यथा तदाज्ञापालनात्मात्मार्थोऽपि ते नाऽमानायित्यभिलेयं वेदतात्पर्यमनधार्य स्वस्याजितेन्द्रियत्वं दुर्वारमालक्ष्य विवेकी कर्मैव कर्त्तुमर्हतीत्याह—वेदोक्तमेव । ननु कर्मणि क्रियमाणे तर्हि स्वतत्फलं चानर्थकस्तत्फलं च स्यात् नतु नैष्कर्म्यरूपा सिद्धिरत आह—निःसङ्गः कर्मणि फलं चाभिनिवेशवान् ईश्वरेऽर्पितमेव ।

ननु फलस्य श्रुतत्वात् कर्मणि कृते फलं भवेदेव । न रोचनार्थेति कर्मणि रुच्युत्पादनार्थैव । अगदपाने खण्डलड्डुकादिवत् ततश्च "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेनचे"ति यज्ञादीनां ज्ञानशेषतां चावधार्य निष्कामे कर्मणि प्रवर्त्तते ततश्च स्वर्गकामो यजेतत्यादिभिः कामितस्यैव स्वर्गादेः फलस्यानावगमादकामितोऽसौ न भवतीति परमेश्वरे कर्मार्पणमहिम्ना भक्तिमिश्रज्ञानजनकेन कर्मणापि नैष्कर्म्यासिद्धिर्भवेदिति भावः ॥ ४६ ॥

तदेवमपि बालान् प्रत्येवोक्तं विद्वान् प्रति तु श्रूयतामिति श्रीभगवद्वचनजिज्ञापयिषयाह—य आश्विति । परात्मनः वस्तुतो देहात् परस्यापात्मा जीवस्येति तस्य हृदयग्रन्थिमहङ्कारं निर्हर्त्तुमिच्छुर्भवेत् तन्त्र आगमस्तदुक्तेन चकाराद्वैदिकेन च ॥४७॥

तं विधिमाह—लब्ध्वेति सन्दर्शित आगमोऽर्चनप्रकारो यस्मै सः ॥ ४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निषिद्धानुष्ठानात्संसारं विहितानुष्ठानान्मुक्तिं चाह—क्रमात् नाचरेदिति द्वाभ्याम । विकर्मणा निषिद्धानुष्ठानेन मृत्योरनन्तरं मृत्युं प्राप्नोति पुनः पुनर्जन्ममरणलक्षणं संसारं प्राप्नोतीत्यर्थः ॥ ४५ ॥

स्वर्गकामो यजेत इत्यादिफलश्रुतिः रोचनार्था कर्मणि श्रद्धोत्पादिका अतो निःसङ्गः स्वर्गादिभोगेषु विगतसङ्कल्पमीश्वरे अर्पितम् यथा स्यात्तथा वेदोक्तं वेदविहितम् स्वाश्रमकर्म कुर्वाणः एतत्कारेण निषिद्धाद्दूरीभूतः नैष्कर्म्यं भगवज्ज्ञानं लभते तदनन्तरं सिद्धिं भगवद्भावापत्तिलक्षणां मुक्तिं लभते इत्यर्थः ॥ ४६ ॥

नैष्कर्म्यं भगवज्ज्ञानं लभत इत्युक्तं तत्र नैष्कर्म्यलाभानन्तरं मुक्तेः किं साधनान्तरमपेक्षितमुत नैष्कर्म्यादेव केवलान्मुक्तिरित्याकाङ्क्षायामाह—य इत्यादि । यः पूर्वोक्तनैष्कर्म्यलाभवान् परात्मनः देहेन्द्रियादिपरस्यात्मनः स्वस्य हृदयग्रन्थि संसारमूलभूतम हृदयस्थमहंममाभिमानं निर्जिहीर्षुर्निर्हर्तुमिच्छुश्चेत्तर्हि विधिना आशु केशवमुपचरेदित्यन्वयः । केशवकृपां विना नैष्कर्म्यमात्रेण हृदयग्रन्थिनिर्हारासंभवात्तदर्थं भक्त्याविश्वासोपचारितेनोपचारेण केशवमाशु तोषयेत् विलम्बे कृते तु विषयासक्त्या नैष्कर्म्यविलोपे सति केशवविमुखस्य संसारावर्ह पुनः स्यादिति भावः । कथंभूतेन विधिना तन्त्रोक्तेन पञ्चरात्राद्यागमोक्तेन चकाराच्छ्रौतेन ॥ ४७ ॥

विधिं दर्शयति—लब्ध्वेत्यादिना । अनुग्रहं दीक्षाम तेनाचार्येण सम्यक् दर्शितः आगमः अर्चनबोधकं शास्त्रं यस्य सः ॥ ४८ ॥

---

भाषा टीका ।

जो अज्ञानी पुरुष अजितेन्द्रिय होकर स्वयं वेदके कहे हुये आचरण को नहीं करता है वह विकर्म के करने से अधर्मी होकर वार वार जन्मता मरता रहता है ॥ ४५ ॥

शुचिः संमुखमासीनः प्राणसंयमनादिभिः ।
पिण्डं विशोध्य सन्यासकृतरक्षोऽर्चयेद्धरिम् ॥ ४९ ॥
अर्चादौ हृदये चापि यथालब्धोपचारकैः ॥
द्रव्यक्षित्यात्मलिङ्गानि निष्पाद्य प्रोक्ष्य चाऽऽसनम् ॥ ५० ॥
पाद्यादीनुपकल्प्याथ सन्निधाप्य समाहितः ॥
हृदादिभिः कृतन्यासो मूलमन्त्रेण चार्चयेत् ॥ ५१ ॥
साङ्गोपाङ्गां सपार्षदां तां तां मूर्तिं स्वमन्त्रतः ॥
पाद्यार्घ्याचमनीयाद्यैः स्नानवासोविभूषणैः ॥ ५२ ॥

भाषा टीका ।

वेद के कहे कर्म को करता हुआ फल की इच्छा छोड़ कर कर्म फल को ईश्वर में अर्पण करता रहै तो मनुष्य मोक्ष सिद्धि को प्राप्त होजाता है फल श्रुति जो शास्त्र में है उस को रोचनार्थ समझना चाहिये ॥ ४६ ॥

जो पुरुष शुद्ध अपने आत्मा की वासना रूपी हृदय ग्रंथी को खोलना चाहै वह तो वेद विधि से पंचरात्र की विधि से श्रीकेशव भगवान् का पूजन करे ॥ ४७ ॥

पहिले उत्तम आचार्य गुरू से दीक्षा लेकर उनसे शास्त्रोक्त पूजा विधि को पढ़कर रामकृष्णादि जिन मूर्तियों में अपनी प्रीति अधिक होवे उसी में महापुरुष श्रीनारायण की पूजा करे ॥ ४८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

मूर्तेः संमुखमासीनः आदिशब्देन भूतशुद्ध्यादिभिः पिण्डं देहं विशोध्य सन्न्यासैः सन्न्यासैःकृता रक्षा येन सः ॥ ४९ ॥

आदावेव द्रव्याणि पुष्पादीनि जन्त्वादिशोधनेन क्षितिं संमार्जनादिना आत्मानमव्यग्रतया लिङ्गं मूर्तिमनुलेपक्षालना-दिना निष्पाद्य योग्यानि कृत्वा ॥ ५० ॥

पाद्यादिपात्राण्युपकल्प्य सन्निधाप्य हृदि संपूजितं श्रीमूर्तौ ध्यात्वा हृदादिभिः हृदयशिरःशिखाकवचनेत्रास्त्रमन्त्रैर्मूलमन्त्रेण च देहे कृतन्यासो मूलमन्त्रेणार्चयेत् ॥ ५१ ॥

अङ्गानि हृदयादीन्युपाङ्गानि सुदर्शनादीनि तत्सहितां सपार्षदां सपरिवाराम् कैरुपचारैरर्चयेत्तदाह—पाद्येति । आदिशब्देन मधुपर्कमाचनं च ॥ ५२ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

भूतशुद्ध्यादिभिरित्यादिना तत्सेवोपयोगिपार्षदमूर्त्यावाहनपरिग्रहः भूतशुद्धिश्चाग्रे व्याख्यास्यते सन्न्यासैः केशवादिन्यासैः ॥ ४९ ॥

अर्चादाविति युग्मकं सन्निधाप्य यथावोऽस्थाने ध्यात्वा अर्चादावित्यादिना वक्ष्यमाणसूर्याधिष्ठानपरिग्रहः सन्निधाप्येत्यस्यैव व्याख्यानं श्रीमूर्तौ ध्यात्वेति हृदयेति हृदयाय नमः शिरसे स्वाहा शिखायै वषट् कवचाय हुं नेत्राभ्यां वौषट् अस्त्राय फट् इत्येवं मन्त्रैः मूलमन्त्रेण तं नमो भगवत इति द्वादशाक्षरेण स्वस्वगुरूपदिष्टमन्त्रेण वा ॥ ५०—५१ ॥

साङ्गोपाङ्गामिति युग्मकं तां तां स्वस्वाभीष्टां माधवपुष्पम् ॥ ५२—५३ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

शुचिरिति । शुचिः संमुखं मूर्तेरभिमुखं यथा तथा आसीनः प्राणसंयमनादिभिः आदिशब्देन भूतशुद्ध्यादिसंग्रहः पिण्डं देहं विशोध्य सद्भिर्न्यासैः कृता रक्षा येन सः ॥ ४९ ॥

अर्चादौ प्रतिमादौ आदिशब्देन वक्ष्यमाणाग्न्यर्कतोयातिथीनां संग्रहः हरिं यथा लब्धोपचारकैः सम्भावितैरुपचारसाधनैरर्चयेदिति सम्बन्धः।तत्रादावेव द्रव्यादीनि निष्पाद्य तत्र द्रव्याणि तुलसीचन्दनपुष्पादीनि प्रोक्षणादिना क्षितिं सम्मार्जनोपलेपनादिना आत्मानमव्यग्रतादिना यद्वा आत्मानं देहं तत्पन्न्यासादिना लिङ्गं भगवन्मूर्तिमनुलेपनक्षालनादिना निष्पाद्य योग्यानि कृत्वा ॥ ५० ॥

पाद्यादिपात्राण्युपकल्प्य समाहितः समाधिना सन्निधाप्य प्रतिमादौ भगवन्तमावाह्येत्यर्थः।हृदयादिभिर्मन्त्रैः कृतः न्यासो येन सः कृतहृदयादिन्यास इत्यर्थः।तथा मूलमन्त्रेण च कृतन्यासः मूलमन्त्रेणैवार्चयेदित्यर्थः ॥ ५१ ॥

अङ्गानि हृदयादीनि उपाङ्गानि सुदर्शनादीनि तत्सहितां सपार्षदां सपरिवारां तां तां मूर्तिं स्वस्वमन्त्रतः तत्तन्मूर्तिमन्त्रेणैवार्चयेत् कैरुपचारैरर्चयेदित्यत्राह—पाद्येति।आद्यशब्देन दन्तधावनजिह्वोल्लेखनतैलाऽभ्यङ्गोद्वर्तनस्नानशाटिकासमर्पणादिसंग्रहः वासो वस्त्रयुग्मं यज्ञोपवीतस्याप्येतदुपलक्षणम् ॥ ५२ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पिण्डं शरीरं सम्यक् मन्त्राक्षरन्यासेन कृतात्मरक्षः—
"परीक्ष्यैव गुरुः शिष्यं शिष्योऽपि गुरुमाश्रयेत्
अन्यथा नरकावेव प्रायश्चित्तं गुरोस्तथा" ॥

गन्धमाल्याक्षतस्रग्भिर्धूपदीपोपहारकैः ।
साङ्गं सम्पूज्य विधिवत्स्तवैः स्तुत्वा नमेद्धरिम् ॥ ५३ ॥
आत्मानं तन्मयं ध्यायन्मूर्तिं सम्पूजयेद्धरेः ।
शेषामाधाय शिरसि स्वधाम्न्युद्वास्य सत्कृतम् ॥ ५४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इत्यनेनाऽवमत्वमुभयोरप्यपेक्षितमिति मतोऽत्र क्रियाविशेषणत्वेन प्रयुक्तमिति ॥ ४९ ॥

अर्चाकारिणां बाहुविध्याद्धिष्ठानविशेषमाह—अर्चादाविति । द्रव्यलिङ्गं शिलाद्यं क्षितिलिङ्गं स्थण्डिलम् आत्मलिङ्गं मनोमयम्—

"द्रव्यलिङ्गं शिलाद्यं स्यादात्मलिङ्गं मनोमयम् ।
अथवा स्थण्डिलं चैव विष्णोर्लिङ्गं प्रकीर्तितम् ॥

इति अस्मादवमेवात्र विवक्षितोऽर्थः ॥ ५० ॥

हृदयादिकृतमन्त्रन्यासः साङ्गोपाङ्गामङ्गमन्त्रवाच्यमूर्तिभिः सहिताम् ॥ ५१—५३ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अर्चादाविति युग्मकम् पाद्यादीन्येव संनिधाप्य यथायोग्यस्थाने स्थापयित्वा मानसान्तरं श्रीमूर्तिरूपेण श्रीकृष्णं संनिधाप्येति वा ॥ ५० ॥ ५१ ॥

साङ्गोपाङ्गामिति युग्मकम् ॥ ५२ ॥ ५३ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्राणसंयमनं प्राणायामः आदिशब्दात् भूतशुद्ध्यादि पिण्डं देहं सद्भिर्न्यासैः कृता रक्षा येन सः ॥ ४९ ॥

यथा यथावत् द्रव्याणि पुष्पादीनि अम्बादिशोधनेन क्षितिं मार्जनादिना आत्मानमध्यप्रत्या लिङ्गं मूर्तिमनुलेपन्यासनादिना निष्पाद्य योग्यानि कृत्वा पाद्यादिपात्राण्युपकल्प्य हृदादिभिः हृदयशिरःशिखाकवचनेत्रास्त्रमन्त्रैर्मूलमन्त्रेण च कृतन्यासः ॥ ५० ॥ ५१ ॥

अङ्गानि हृदयादीनि उपाङ्गानि सुदर्शनादीनि तत्सहितां माल्यानि अर्थान्मुक्ताविहाराः "नाक्षतैरर्चयेद्विष्णुं न केतक्या महेश्वर" मिति निषेधात् अक्षता अनुपहताः स्रजः पुष्पमालाः ॥ ५२ ॥ ५३ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्नानादिना शुचिः मूर्तेः सम्मुखमासीनः प्राणसंयमनादिभिः प्राणायामभूतशुद्ध्यादिभिः पिण्डम् शरीरं विशोध्य सम्यक् मन्त्रपदवर्णादिविन्यासैः कृता रक्षा येन सः हरिमर्चयेत् ॥ ४९ ॥

द्रव्याणि पुष्पादीनि जलमादिशोधनेन क्षितिं संमार्जनादिना आत्मानं शौचादिना लिङ्गं मूर्त्तिं पूर्वसमर्पितपुष्पादिनिराकरणेन निष्पाद्य सुयोग्यानि कृत्वा यथा षड्ग्रोपचारकैः देशकालाद्यनुसारलब्धैः पूजोपकरणैः अर्चाहो मर्चयेदित्यग्रिमेणान्वयः ॥ ५० ॥

पाद्यादीनि पाद्यानि पात्राणि उपकल्प्य सन्निधाप्य हृदि सम्पूजिताम् श्रीमूर्त्तिं ध्यात्वा हृदादिन्यासः मूलमन्त्रेण च देव कृतन्यासः मूलमन्त्रेण हरिमर्चयेत् ॥ ५१ ॥

अङ्गैर्हृदयादिभिः उपाङ्गैः सुदर्शनादिभिः सहितां सपार्षदां सपरिवारां तां तां स्वस्य स्वस्याभिमतां मूर्तिं स्वमन्त्रतः पाद्याद्युपहारकान्तैरुपचारैरर्चयेदिति अध्याहृतेन पदेन साङ्गश्लोकस्यान्वयः आदिशब्देनानुक्तं मधुपर्कादिकम् संगृह्यते ॥ ५२ ॥ ॥

———

भाषा टीका ।

स्नानसंध्यादि से पवित्र होकर भगवान् की मूर्त्ति के सन्मुख बैठे फिर प्राणायाम भूतशुद्धि आदि से शरीर को शुद्ध करके अंगन्यासादि सब न्यासों को करे फिर दिग्बंधन से रक्षा करके श्रीहरि का पूजन करे ॥ ४९ ॥

मूर्त्ति आदि में पूजन करे वा हृदय में करे यदि मूर्ति का पूजन करे तो जो कुछ पूजा की सामग्री मिले तिसको पहिले रखलेवे फिर नैवेद्य पुष्पादिकों को तथा पृथिवी को अपने आत्माको तथा प्रतिमा को प्रोक्षणादि कों से पूजा योग्य करै और आसन का भी प्रोक्षण करे ॥ ५० ॥

पाद्य अर्घ्यादि कल्पना करके सावधानता से भगवान् का आवाहन करे फिर हृदयादिन्यास करके मूल मंत्र अष्टाक्षर आदि से पूजन करे ॥ ५१ ॥

हृदयादि अंग सुदर्शनादि उपाङ्गों के सहित और पार्षदों के सहित उन उन मूर्तियों को अपने मंत्र से पूजन करे पाद्य अर्घ्य आचमन मधुपर्क स्नान वस्त्र भूषणादिकों से अंग पूजा करे ॥ ५२ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

अक्षतादितिलकालङ्कारं नतु पूजायाम् "नाक्षतैरर्चयेद्विष्णुं न केतक्या महेश्वर" मिति निषेधात् उपहारो नैवेद्यम् ॥ ५३ ॥

शेषाम् । निर्माल्यम् स्वधाम्नि स्वस्थाने देवं हृदि मूर्तिं करण्डके स्थापयित्वा पूजान्नादि समापयेदिति शेषः ॥ ५४ ॥

एवमग्न्यर्कतोयादावतिथौ हृदये च यः ।
यजतीश्वरमात्मानमचिरान्मुच्यते हि सः ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे जायन्तेयोपाख्याने विदेहप्रश्ने
तृतीयोऽध्यायः ॥ ३ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तान्त्रिकं कर्मयोगमुपसंहरति—एवमिति ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
तृतीयोऽध्यायः ॥ ३ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

आत्मानं तन्मयं तद्याविष्टं ध्यायन् "नारायणमयं धीराः पश्यन्ति परमार्थिनः । जगद्धनमयं लुब्धाः कामुकाः कामिनीमय"मितिवत् स्वधाम्नि श्रीकृष्णमूर्तिं स्थाने स्थापयित्वा शयनलीलायमानत्वेन ध्यात्वा ॥ ५४ ॥

अर्चाशिलादिना गृहीतमन्याधिष्ठानमपि कथयन्नुपसंहरति—एवमिति ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिविरचितायां दीपिकादीपिन्या
टिप्पण्याम् तृतीयोऽध्यायः ॥ ३ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तन्मयम् । प्राचुर्ये मयट् तदन्तर्यामिकमित्यर्थः । शेषामाधाय भगवद्भक्तिप्रार्थ्यां पावनमन्नं भोजनार्थं ससत्कारं स्वीकृत्येत्यर्थः । स्वधाम्नि परमव्योमादौ ॥ ५४—५५ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
तृतीयोऽध्यायः ॥ ३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

माल्यानि पुष्पाणि दीपो नीराजनं तत्तदनन्तरस्य मधुपर्कस्याप्युपलक्षणम् उपहारो नैवेद्यं तैः साङ्गं सपरिवारं यथा विधि सम्पूज्य स्तवैः स्तोत्रैः स्तुत्वा प्रणमेत् ॥ ५३ ॥

तन्मयं प्राचुर्ये मयट् आराध्यमूर्त्यन्तर्यामिकमात्मानं ध्यायन् हरेः मूर्तिं सम्पूजयेत् शेषं भगवद्भुक्तावशिष्टं पावनमन्नं भोजनार्थं स्वीकृत्येति शेषः । शिरस्याधाय भगवते पूर्वं समर्पितं तुलसीपुष्पादिकं शिरसि ससत्कारं धृत्वेत्यर्थः । सत्कृतामिति भावे क्तः सबहुमानमित्यर्थः यद्वेत्थं सत्कृतं सम्पूजितं हरिं स्वधाम्नि परमव्योमादौ उद्वास्य स्थापयित्वा पूजाविधिं समापयेदिति शेषः ॥ ५४ ॥

एवं निरूपितं तान्त्रिकं कर्मयोगमुपसंहरति—एवमिति । अग्न्याद्यधिकरणेषु सर्वान्तरात्मानम् ईश्वरं यो यजेत्सोऽचिरान्निष्पन्नभक्तियोगः कर्मबन्धान्मुच्यते ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् ।
तृतीयोऽध्यायः ॥ ३ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तन्मयम् । तत्प्रधानम्—

"विष्णोर्भृत्योऽहमित्येवं सदा स्याद्भगवन्मयः ।
नैवाहं विष्णुरस्मीति विष्णुः सर्वेश्वरो ह्यजः" ॥

इति वचनात्स्वामित्वमेवार्थो ननु तत्स्वरूपत्वं स्वमात्मानमित्युक्तरत्रैक्यविधानादत्रापि स एवार्थः किं न स्यादितिचेन्न स्वं स्वतन्त्रमात्मानं स्वामिमित्यर्थोपपत्तेः—

स्वादानात्स्वात्मनो व्याप्त्या विष्णुः स्वात्मेति कथ्यते ।
न तु जीवस्वरूपत्वात्स हि विद्वदीश्वरः प्रभुः" ॥

इति प्रमाणोपेतत्वात् हिशब्देनास्यार्थस्य बहुप्रमाणप्रसिद्धिं द्योतयति ॥ ५४—५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
तृतीयोऽध्यायः ॥ ३ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आत्मानं तन्मयं तदाविष्टम् "कामुकाः कामिनीमयम्" इति वत् स्वधाम्नि श्रीकृष्णमूर्तेः स्थाने उद्वास्य उत्थाप्य शयनादिमुद्रया स्थापयित्वा यद्वा स्वधाम्नि प्रदेशविशेषे उद्वास्य इतः उत्थाप्य शयनलीलायमानत्वेन ध्यात्वा ॥ ५४ ॥

सम्भवेनान्यान्यपि पूजाङ्गान्याह—एवमिति ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तन्मयम् । उपास्यभगवदाकारमित्यहंग्रहोपासनोक्ता शेषां निर्माल्य सत्कृतं स्वं स्थापयित्वा उद्वास्य स्थापयित्वा पूजाविधिं समापयेदिति शेषः ॥ ५४ ॥

अचिरादिति पूर्वप्रोक्तात् कर्मयोगादयमहंग्रहोपासनाभक्तिमयस्तान्त्रिकः कर्मयोगः श्रेष्ठः किन्तु येवै भगवता प्रोक्ता इत्यनन्तरं "तत्र भागवतान् धर्मान् शिक्षे"दित्यनन्तरं च शुद्ध एव भक्तियोगः प्रोक्तो ज्ञेयः ॥ ५५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशे तृतीयोऽयं सङ्गतः सङ्गतः सताम् ॥ ३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सन्नगस्रजः स्वतरहिताः स्रजः उपहारो नैवेद्यम् एवमिव- विधसाङ्गम् हरिं सम्पूज्य स्तवैः स्तुत्वा नमेत् ॥ ५३ ॥

किङ्कुर्वन् हरेर्मूर्तिं सम्पूजयेत्तत्राह–आत्मानमिति । तन्मयं हरिप्रधानं ध्यायन् शेषां निर्माल्यम् सत्कृतमर्चितं हरिं स्वधाम्नि स्वस्थाने उद्वास्य स्थापयित्वा यथासुखं विहरे- दिति शेषः ॥ ५४ ॥

आत्मानं परमात्मानमन्तर्यामिणाम् ईश्वरं सर्वेश्वरम् यो यजति सः अचिरात् शीघ्रमेव मुच्यते संसारान्मुक्तो भवति ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
तृतीयाऽध्यायार्थप्रकाशः ॥ ३ ॥

---

भाषा टीका ।

चंदन पुष्प अक्षत माला धूप दीप नैवेद्य इत्यादिकों से अंग देवताओं के सहित विधि पूर्वक पूजन करके स्तोत्रों से स्तुति करै फिर नारायण को नमस्कार करे ॥ ५३ ॥

अपने को भगवन्मय ध्यान करके हरि की मूर्ति का पूजन करै फिर प्रसाद को मस्तक से लगाकर भगवान् का विसर्जन कर देवै ॥ ५४ ॥

इसी प्रकार से अग्नि सूर्य जल अतिथि वा अपने हृदय में अपने अंतर्यामी आत्मा ईश्वर को जो पूजता है सो थोड़े ही कालमे संसार बंधन से छूट जाता है ॥ ५५ ॥

इति श्रीमद्भागवत एकादश स्कन्ध तृतीयाऽध्याय
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्त ॥ ३ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥

—:*:—

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

॥ श्रीगोपीजनवल्लभाय नमः ॥

अथैकादशिताध्याये मुक्तिरेकादशो द्विधा ।
ब्रह्मभावः कृष्णयोगो हरेर्धर्मैस्तथाज्ञया ॥ १ ॥
अविद्या पञ्चपर्वा हि तन्नाशो प्रथमा भवेत् ।
प्रकृत्यतिक्रमे चान्या ततोऽध्यायास्तथा द्विधे ॥ २ ॥
जनकश्चोद्धवश्चैव सात्त्विको राजसस्तथा ।
पुष्टिमार्गस्य मुख्यत्वाद्विपरीता गतिर्गुणैः ॥ ३ ॥
मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः ।
जीवब्रह्मविभागेन द्विधा द्वयमुदीर्यते ॥ ४ ॥
तामसी राजसी चैके तत्राद्ये द्वयं मतम् ।
अंशाश्च भगवांश्चेति द्वितीयोऽपि द्विधा मतः ॥ ५ ॥
ततः पञ्चभिराद्या स्यात् चतुर्विंशतिभिः परा ।
एकैकेनेश्वरस्यान्ते स्याज्ज्यांशाभावतः परे ॥ ६ ॥
ममाहंमतिनाशार्थं प्रक्रियाद्वितयं मतम् ।
तयोरभिनवः पश्चात् कृतो भगवतेति च ॥ ७ ॥
ततश्च प्रथमेऽध्याये बीजद्वयमुदीर्यते ।
ब्रह्ममुक्तिर्निजेच्छातो वैराग्येणेतरस्य च ॥ ८ ॥
चतुर्थी मुक्तिपक्षश्च तदिच्छात इति स्थितिः ।

अथ व्याख्या तत्र बीजप्रकारेणेश्वरेच्छया मुक्तिप्रकारमाह-सप्तभिः। ईश्वरस्य मुक्तौ भूमेर्भारनिराकरणं बीजमिति तदाह-पञ्चभिः । एकैकेन त्रिभिश्चेति कायवाङ्मनसा कृतम् । तत्र कायिकमाह--

॥ श्रीशुक उवाच ॥

मू० कृत्वा दैत्यवधं कृष्णः सरामो यदुभिर्वृतः ।
भुवोऽवतारयद्भारं जविष्ठं जनयन् कलिम् ॥ १ ॥

नायमनुवादः किन्तु पूर्वत्रभूभाररूपदैत्यवधो निरूप्यते भूमिर्दृप्तनृपव्याजेत्यत्र राजानो दैत्या निरूपिताः ते यद्यपि कंसजरासन्धादयो भवन्ति तथापि तेषां वधो निरोधशेषत्वेन निरूपित इति भूभारहरणं च तेन जातमिति स्वतन्त्रतया तत्पुनरुच्यते अनुवादे कथवस्य प्राप्त्यभावः प्रक्रियातः पृथक् कृत्यफलान्तरसम्बन्धार्थं पुनः कथनम् एक एवार्थो बहुधा निरूप्यते भिन्नप्रयोजनायेति व्यवस्थापितं वाग्भे देवश्च इत्युपक्रम्य ते देवा वाच्यपक्रान्तायामित्यत्र तथा निर्णीतं वक्तव्यत्वाय । दैत्येति । प्रकारः पूर्वसिद्ध एव । कृष्ण इति । सङ्कर्षणांशचरित्रस्यैव स्कन्धार्थत्वात् यादवस्य भूभारनाशकत्वं तदाह । बलभद्रसहितो यादवैश्च सहित इति तत्रापि केशवत्वज्ञापनाय सराम इति भूभारहरणार्थमवतीर्णानन्तरहरणस्य जातत्वात्तदुपयोगं वक्तुं यदुभिरिति देवैरेतैः प्रार्थितो वा भूभारहरणार्थं देवत्वात् आसन्नस्य तु पीडायां स्वदेह एव स्वस्य भारः कः पुनः पीडकभार इति कलहजनने क्रोधावेशेन भारानुसन्धाननिराकरणार्थं सर्वत्र भूमौ कलिं जनयन् वेगवत्तरस्यैव तथात्वात् अतोऽक्लिष्टकर्मत्वाय कलिजननं वधो भूभारहरणायेति सिद्धं मेलादशोऽयं क्वचिद्दशमस्कन्धे निरूपितो येनानुवादशङ्कापि स्यात् यो वै भवातिभरमासुरवंशराज्ञामित्यत्रैतस्यैवानुवादः तेन दशमस्कन्धे अनुक्तमेव भूभाररूपदैत्यानां वधरूपं चरित्रमिहोच्यत इति सिद्धम् ॥ १ ॥

एवं कायिकमुक्त्वा वाचिकमाह—

मू० ये कोपिताः सुबहु पाण्डुसुताः सपत्नै—
र्दुर्द्यूतहेलनकचग्रहणादिभिस्तान् ।
कृत्वा निमित्तमितरेतरतः समेतान्—
हत्वा नृपान्निरहरत् क्षितिभारमीशः ॥ २ ॥

अक्लिष्टकर्मत्वाय स्वतो भगवत्सम्मुखमागता आधिदैविकरूपास्ते भगवता हताः ये तु दुर्योधनादयो भगवति विरोधमकृत्वैव परस्परं विरुद्धा भगवति तु समास्तत्र ये भगद्भावकं कुर्वन्ति तैरन्ये मारिता इति निरूप्यते । अस्य विस्तारो भारते प्रसिद्धः अनेकैरपराधैर्बहुशः कोपिताः लाक्षागृहादेरनुलयत्वदशायामज्ञातत्वात् दुर्द्यूतादिकमुक्तं द्यूतस्य कपटरूपत्वे ज्ञाते कोपो भवति ततोऽपि हेलनेन वणर्दासाः पाण्डवा जाता इति वाचनिकोऽपराधः द्रौपदीकेशाकर्षणं कायिकोऽपराधः मानसो वा प्रथमः कायिक इति केचित् केशाकर्षणस्य भावान्तरज्ञापकत्वात् साधनफलयोर्बहुकालत्वज्ञापनाय निर्देशानिर्देशौ कालान्तरे क्रियावद्वं भावाय सुबह्विति । शोभनत्वं हृदयस्थितिः पाण्डोः सुता इति वीरपुत्रत्वमविक्रमणाय स्वतः प्रतिक्रियासामर्थ्याय सपत्नैरिति तुल्यैरित्यर्थः । दुर्द्यूतादावादिशब्दः सजातीयबहुत्वाय भूमौ कलहत्पादितत्वान्निमित्तार्थमितरेतरतः अन्योऽन्यसापेक्षयोः प्रवेशः समेतत्वं ये कोपिता येश्च कोपितास्ते इतरेतरशब्दवाच्याः उभयेषां प्रार्थनया निमित्तत्वज्ञापनाय तस्मिन् निमित्तं तु कोपिता एव अन्येषामानुषङ्गिकत्वात् पाण्डवा एव कौरवाणामुपरि युद्धार्थमागता इति नृपव्याजान् अनृपान् वा कृत्वेन वा दैत्यवधे देवानां सुखित्वात् भारस्याभावात् कथापनं नृपाणां [illegible] तु ततोऽपि निरहरत् तेषां तत्सद्भावनिराकरणेनापि कार्यसिद्धौ तेषामेव निराकरणमीश्वरेच्छया निवर्तयितुमशक्यत्वादुपपन्नमित्याह ! ईश इति । गीतोपदेशनैतादृशि सिद्धम् ॥ २ ॥

भारानुसन्धानोपायान्वेषणकार्यकरणानि यद्वद् मानसं त्रिभिराह—तत्र भारानुसन्धानमाह—

मू० भूभारराजपृतना यदुभिर्निरस्य—
गुप्तैः स्वबाहुभिरचिन्तयदप्रमेयः ।
मन्येऽवनेर्ननु गतोऽप्यगतं हि भारं—
यद्यादवं कुलमहो अविषह्यमास्ते ॥ ३ ॥

मुख्याना [illegible] तः पाण्डवैश्च हतत्वाद्दशानामपि सकार्यत्वात् यदुभिः पृतनानिराकरणमुक्तं जरासन्धयवनशाल्वादीनां पृतनानामेव भारत्वं प्रकृतो [illegible] योगात् बहूनां करणत्वाय गुप्तबाहुत्वमाह । गुप्तैः स्वबाहुभिरिति । एवं भारानयनार्थमागतो गतो वा भार इति चिन्तां कृतवान् [illegible] अनीतो भारः कथमेव संदिग्ध इत्यत आह । अप्रमेय इति । [illegible] भगवानेव भार इति न सर्वजनीनः अप्रमेयत्वाद्भगवान् स्वार्थमागतैरजभटैः सर्वस्वभक्षणमिव जातमित्याह । मन्ये इति । पूर्वनिरूपितस्य भारस्य सहेतुकस्य गतत्वेऽपि निराकरणकर्तृणामेव हेतुत्वान्तरुद्रूपाभ्यतः स्वजातीयत्वाच्च समानविभक्तिकत्वं साधकानां बाधकत्वादाश्चर्यमहो इति पूर्वस्मादपि विशेषमाह । अविषह्यमिति । देवैर्भूम्या च निराकरणं कर्तुमशक्यमत आस्ते एव भारः सिद्धः ॥ ३ ॥

निराकरणोपायमाह—

मू० नैवान्यतः परिभवोऽस्य भवेत्कथञ्चिन्
मत्संश्रयस्य विभवोन्नहनस्य नित्यम् ।

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अलौकिकमन्त्रद्रष्टारो देवर्षयः ततोऽपि पुष्टिमार्गमन्त्रद्रष्ट्टत्वाद्वि-भूतित्वं वस्त्वर्थे प्रकृते त्वस्योपयोगः गृहागतमिति स्वाधीनता पूजितत्वमुत्तमप्रश्नोपयोगः भगवत्प्रेरणया समागतस्योपा-सनार्थमपि वैयर्थ्यं नास्तीति सुखमासीनमित्युक्तं पुनरभिवादनं गुरुत्वबोधकं वहुकालमारभ्य प्रक्ष्यामीति हृदि स्थितमिदमा निर्दिश्यते ॥ ३ ॥

प्रश्नमाह-षड्भिः—

॥ वसुदेव उवाच ॥

भगवच्छब्दवाच्याः षडर्था इति षट् श्लोकाः तत्र प्रोत्साहनं त्रिभिः प्रश्नश्च त्रिभिः तत्र प्रथमं नारदस्यैवासाधारणगुणैरेव प्रोत्साहयति—

मू० भगवन् ! भवतो यात्रा स्वस्तये सर्वदेहिनाम् ।
कृपणानां यथा पित्रोरुत्तमश्लोकवर्त्मनाम् ॥ ४ ॥

"ब्रह्म वेद ब्रह्मैव भवति यो यच्छ्रद्धः स एव सः" गुरुत्वाच्च भग-वन्निति सम्बोधनं "जगन्मित्रं हि नारदः" यात्रा आगमनं राजादि-सर्ववैलक्षण्याय सर्वदेहिनामित्युक्तं अतोऽपि निरपेक्षत्वात् अहिंसाप्रचुरधर्मबोधनात्संसारोद्धारकत्वाच्च देहाभिमानिना-मिति मुक्तवैलक्षण्यार्थं अत एव विचार्यं तेषां स्वतो हित-करणे दृष्टान्तः अकृपणानां सर्वतः सकलानामपि पित्रोरागमनम् स्वस्तये किं पुनः कृपणानामेव उभयोर्वियोगे ह्यतिकृपणाः स्वतः परमोत्कर्षार्थे विशेषणम् उत्तमश्लोकस्य मार्गभूतानां तत्र प्रविष्टानां भगवत्प्राप्तेर्निश्चितत्वात् तथा च नारदस्य त्रयो गुणाः सर्वमैत्री सर्वहितज्ञापकत्वं गोविन्दप्रापकत्वं चेति एकैकेनैव वयं कृतार्थाः किंपुनस्त्रिभिः; उपसंहारे बहुवचनं पूज्यार्थे व्यवहारे वा कृतदोषपरिहाराय च आगमनं तु भगवदिच्छयेति न कोऽपि विरोधः ॥ ४ ॥

कथं नारदागमनेनैवमित्याशङ्क्य देवर्षिविभूतित्वं प्रकट-यति—

मू० भूतानां देवचरितं दुःखाय च सुखाय च ।
सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम् ॥ ५ ॥

देवापेक्षया उत्तमत्वं सर्वेषां सुखैककारित्वेन विभूतित्वमग्रिम-श्लोके देवा हि द्विविधाः प्रवाहमर्यादाभेदेन तत्र प्रवाहदेवा वृष्ट्यादिकर्तारो भवन्ति; वृष्ट्यादिकं तु दुःखकरमपि प्रवाह-देवा अपि द्विविधाः बाह्याऽभ्यन्तरभेदेन सुखदुःखं च लौकिका-लौकिकं चकाराभ्यामलौकिके परिगृहीते वेदितव्ये भूतानि भूलोकस्थितजीवाः प्रकरणात् विशेषः चरित्रं तु स्वरूपतो महत् परं तु सुखदुःखजनकं च ऋषित्वं हि मन्त्र द्रष्टृत्वं मन्त्रास्तु सहजमपि धर्ममपेक्ष्य तमात्रसंबन्धः प्रतिबध्नन्ति तथा सहजमाधिदुःखं प्रतिबध्नन्तीति नात्र तिरोहितमिव सर्वजनीन-मित्याह-हीति । साधवः सदाचाराः मर्यादारक्षकाः लोकाचरणार्थं भगवता अधिकृता नारदतुल्याः पुष्टिमार्गस्था गोपिकातुल्या अच्युतात्मानः मन्त्रा अपि त्रिविधाः मर्यादास्थाः देवगुह्याः भगवद्वशीकरणरूपाः अतो भवन्तो भगवच्चिचारितं देवकृतं मर्यादया प्राप्तं च दुःखं मन्त्रप्रयोगेण दूरीकृत्य सुखमेव साधयन्तीत्यर्थः ॥ ५ ॥

विभूतित्वं वक्तुं ततोऽपि विशेषमाह—

मू० भजन्ति ये यथा देवान् देवा अपि तथैव तान् ।
छायेव कर्मसचिवाः साधवो दीनवत्सलाः ॥ ६ ॥

ननु, यज्ञे भगवदवयवभूता देवा "यन्न दुःखेन सम्भिन्न"मिति वाक्यानुसारेण सुखमेव प्रयच्छन्तीति चेत् न नहि एकेन यागे कृते तत्सम्बन्धिनां स्वर्गो भवति तथा अग्निष्टोमे कृते द्वादशा-हस्वर्गो भवति । ननु तेषां भगवदवयवभूतानां कथमेवमत आह, कर्मसचिवाः राजाधीना हि मन्त्रिणो भवन्तीति वेदमार्गस्थत-यैव नात्र किमपि विचारणीयं वैलक्षण्यमाह-साधवो दीनव-त्सला इति । चतुर्थपादः सिद्धान्त इति मन्त आत्मा ब्रह्मैव चेति चतुर्थः पादः नहि मंत्रेस्तथा कर्तुं शक्यं यथा आंशिका देवमेव करणे हेतुः वत्सं धान्ति जिह्वया आदद्ते इति कार्या-कार्यविचाराभावेन सहजस्नेहवन्तो वत्सलाः सामान्यवाक्यं विशेषपरमिति प्रकरणादवगन्तव्यं तस्माद्भवत्समागममात्रेणैव भगवदवतार इति सर्वेषां सर्वं सिद्धं भवतीति तद्गुणवर्ण-नेन प्रोत्साहनमुक्तम् ॥ ६ ॥

प्रश्नमाह—

मू० ब्रह्मंस्तथापि पृच्छामो धर्मान् भागवतांस्तव ।
यान् श्रुत्वा श्रद्धया मर्त्यो मुच्यते सर्वतो भयात् ॥ ७ ॥

ब्रह्मभावाभिलाषी विदितसर्ववृत्तान्तो विदितसाध्यसाधन-भावो धर्मान्पृच्छति, "कथमाचार्यवान् पुरुषो वेद"ति शास्त्रार्थ-त्वाच्च भगवतो ब्रह्मत्वभावनायामपि गुरुत्वस्य भगवताङ्गी-करणाच्च शास्त्रार्थसिद्धिः किन्तु अलयज्ञानमुपदिष्टं तेन जीव-न्मुक्तिन्यायेन ब्रह्मभावे जातेऽपि ब्रह्मभूतः प्रसन्नात्मेत्यादिनि-रूपितार्थस्यासिद्धेः भगवद्धर्माचरणेन तत्सिद्धिरिति प्रश्नः नारदस्य ब्रह्मभावो जात इति तथा सम्बोधनं स्तुतिमात्रत्वा-भावाय स्वस्यानुष्ठेयः स्वविचारितो भविष्यतीति तथापीति भवदागमनेनैव सिद्धोऽस्माकमर्थस्तथापि शास्त्रार्थपरिपालनाय पृच्छामः देवकीप्रभृतीनामप्ययमर्थोऽभिलषित इति बहुवचनं भाग-वतानिति प्रमाणतः स्वरूपतः फलतश्चेति त्रेधा नियतभगव-त्सम्बन्धान् तवेति श्रुत्वाप्यनुष्ठेयान् दुःखनिवर्तकत्वं तु तेषामि-दानीमेवाह-यान् श्रुत्वेति । उपायपरिज्ञाने हि निश्चिन्तता भवति श्रद्धया तदात्मत्वेन करणं सम्भवति मर्त्यं इति स्वभावतः सम्भवत्वं सर्वत इत्याध्यात्मिकादिभिः ॥ ७ ॥

ननु, दिव्यद्वादशसहस्रवर्षानन्तरं प्रसन्नो भगवान् कथं कर्दमस्य शुक्र इव न गुरुर्जात इतिचेत्तत्राह—

मू० अहं किल पुराऽनन्तं प्रजार्थो भुवि मुक्तिदम् ।
अपूजयं न मोक्षाय मोहितो देवमायया ॥ ८ ॥

अलौकिकज्ञानज्ञापकस्य देवकीजठराद्भूतस्य कुतो न गुरुत्वमित्यत आह-किलेति । प्रसिद्धार्थज्ञापकत्वेन न गुरुत्व प्रसि-द्धिस्तु जन्मन्यां सत्यमङ्कुलपत्त्वाद्यथापि पुत्रत्वमेव न गुरुत्वम् अस्मिन् जन्मनि प्रसिद्ध्यभावात् अत आह, पुरेति । ईश्वरपरि-चयाभावादुपदेशोऽनुचित इति आशङ्क्य सेवितत्वात्तदभावाद्-त्वेन परिचयः प्रकारे परं निशेषः प्रजार्थ इति भुवि मुक्तिद-मिति न क्रममुक्तिः न वा उभयार्थेन मोक्षार्थेति तपसा शुद्धचि-त्तस्य कथमेवमत आह—मोहित इति । प्रजासर्गे ब्रह्मणा आदिष्टो नत्वार्थकः प्रथमं सङ्कल्पश्च तदीत भगवतापि तथैव विचा-रितं ततो भगवत्साहाय्यादवर्याविद्यमानस्य प्रार्थ्यमानत्वाद्द्वितीयः

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततस्तपसा साधिकर्माचित्तशुद्धिः ततो भगवद्विचारितस्वान्यथा भावासम्भवान्मायामोहः यथा देवा अपि मुह्यन्ति सा देवमाया ॥८॥

ननु, कथमिदानीमन्यथा भविष्यतीत्याशङ्क्याह—

मू० यथा विचित्रव्यसनाद्भवद्भिर्विश्वतोभयात् ।
मुच्येम ह्यञ्जसैवाद्धा तथा नः शाधि सुव्रत ! ॥ ९ ॥

इदानीं विशेषप्रार्थना "वाञ्छेयं सद्गतिं पराम्" इति वचनात् भगवतः प्रतिबन्धकत्वम् अत्र दिव्यत्वमायकार्याण्युक्तस्वभावे हेतुमाह, विचित्रव्यसनादिति । भगवतः पुत्रत्वेन दिव्यतायामपि यदा व्यसनमन्यपुत्रादिसंसारचिन्ता तदा कदाचन निवृत्तिः तथा तस्य व्यसनस्यैकः प्रकारः व्यसनाभावार्थं परिगृहीतादपि व्यसनमिति विचित्रता जन्मान्तरे पुनः साधनसम्पत्तिः कीदृशी भवेदिति अस्मिन्नेव जन्मनाप्युक्तम् अधिकारोऽपि भयहेतुः तथा वैकुण्ठादप्यागमनम् अतः सर्वनिषेधायाह—सर्वतो भयादिति । अञ्जसेति अनायासेन आयासे हि चित्तस्योद्वेगात्पुनरावृत्तिर्भवेत् अद्धा साक्षात् परम्परया साधनाभावं यतो बाह्याभ्यन्तरभेदेन तत्रान्यसम्बन्धिमोक्षित्विष्य मोचनं सम्भवति । यथा स्वयं तथिष्यत्वर्थमाह—साक्षादिति । शासनं बालकशिक्षा नोपदेशमात्रेण कार्यसिद्धिः सुव्रतेति सम्बोधनं सर्वनिर्वाहाय आश्रितसर्वकार्यसिद्धिकरणाव्रतं भगवन्तमपि प्रार्थयित्वा सर्वं करिष्यतीति एवं त्रिभिः प्रश्नैः सिद्धः परीक्षितोऽपि ॥ ९ ॥

सावधानश्रवणाभिमुखं शुकवचनम्

शुक उवाच ॥

मू० राजन्नेवं कृतः प्रश्नो वसुदेवेन धीमता ।
प्रीतस्तमाह देवर्षिर्हरेः संस्मारितो गुणैः ॥ १० ॥

राजन्निति महत्त्वसम्बोधनं योग्यकथाश्रवणापनयोभयोर्गुणकथनं धीमता देवर्षिरिति सर्वथा धर्मासक्तान्तःकरणे हेतुः प्रीत इति हरेर्गुणैः पुत्रादिभावनानुवृत्त्यादिभिः सम्यक्त्वेन महात्म्यमिति स्मारितः तस्य पूर्ववृत्तान्तः सम्यक् ज्ञात इत्यर्थः ॥ १० ॥

उत्तरत्वेन शास्त्रं वक्तुं स्वयमत्यभिनन्दयमाह—त्रिभिः—
गुरुशिष्ययोर्मध्ये प्रवचनस्य स्तुतिर्वक्तव्या तत्र प्रथमं श्रोतुः पुरस्कारः—

श्रीनारद उवाच ॥

मू० सम्यगेतद्व्यवसितं भवता सात्वतर्षभ ।
यत्पृच्छसे भागवतान् धर्मांस्त्वं विश्वभावनान् ॥ ११ ॥

यदस्माभिर्वक्तव्यं भगवद्धर्माणां श्रवणानुष्ठाने कर्तव्ये इति सर्वशास्त्रार्थनिर्णयोऽयमिति च भगवद्धर्मोऽस्यैव कर्तव्यत्वाभावात् तदेतत् त्वयैव निश्चितं भावना भगवद्भक्ताः तदेवमतत्वं निश्चितमार्गवक्तृत्वात् विशेषतो गुरुत्वार्थञ्च पृच्छसे अनुवादे पुनर्भगवदीयत्वनिर्देशो भक्त्या विश्वविभवानुभावो येषामिति तदभावे मार्गान्तर इव कार्यासिद्धेः अनेन गुरोरभावे प्रश्नहेतुरप्युक्तः सामान्यतोऽपि श्रुतादन्तःकरणवृत्तिं सम्पादयन्ति ॥ ११ ॥

सर्वोत्कृष्टानुभावत्वं प्रश्नहेतुत्वेनोक्त्वा कैमुतिकन्यायेन तान् स्तौति—

मू० श्रुतोऽनुपठितो ध्यात आदृतो वाऽनुमोदितः ।
सद्यः पुनाति सद्धर्मो देवविश्वद्रुहोऽपि हि ॥ १२ ॥

सतो भगवद्भक्तस्यैकोऽपि धर्मो लोकवेदघातिनः सर्वथा बहिर्मुखानपि मायाभ्रमितानहो बहुनापि श्रुतमात्रः सद्यः पुनाति किम्पुनर्भगवद्धर्माणाम् माहात्म्यं वक्तव्यमित्यर्थः । यथा अजामिलो भगवत्सेवकानां पक्षपातलक्षणः स्वभावः "भूतानि विष्णोः सुरपूजितानि" इति न्यायेन श्रुतः पवित्रता लोके वेद च दुर्लभेति फलत्वेन कीर्तने श्रवणानन्तरमाविकीर्तनमनुपठनं ध्यानं मानसभङ्गावचाङ्गनैमोचरस्तथा करोतीति प्रथम आदृतो वेति पूर्वेण सह स्वातन्त्र्यविकल्पः आदरस्य प्रेमसहितत्वात् भिन्नकर्तृकश्रवणादावनुमोदनं मात्सर्याभावाय यदार्थे महतां काचिश्रुतथा भवति हीति नात्र प्रमाणान्तरमपेक्षते तस्मादत्र भगवत्सेवकधर्मोऽप्येतादृशः तत्र भगवद्धर्माणां किं माहात्म्यं वक्तव्यमित्यर्थः ॥ १२ ॥

अन्यापि कृतार्थतया समाजनमाह—

मू० त्वया परमकल्याणः पुण्यश्रवणकीर्तनः ।
स्मारितो भगवानद्य देवो नारायणो मम ॥ १३ ॥

भगवद्धर्मप्रश्ने सर्वत्र दुर्लभः तेषामपि सर्वदा पिहितं स्मरणादिप्रेमाभिभावे तु तेनैव पिहितं चित्तं सम्यक् प्रविष्टं स्मरति तद्विचारार्थं आत्ममिति सम्यक् स्मारित इत्यर्थः । कल्याणं विवाहादिपुण्यं गङ्गास्नानादि तथा ऐहिकामुष्मिकपुरुषार्थरूपता भवति । परमत्वं परमानन्दरूपत्वात् रूपनामविभेदेनेति वक्तुं श्रवणकीर्तन इत्युक्तं परत्वसाध्यभेदेन भगवानिति धर्मिनिर्देशः ऐहिकामुष्मिकानन्तरं फलत्वमपि भगवत आह—देवो नारायण इति । देवपक्षपातित्वाद्देवः अज्ञानकत्वाय नारायण इति । सर्वेषामपेक्षितः मम तु स्वामी सेव्य इत्यर्थः सेवाचामपि तिरोहित एवेत्यद्येति विशेषः ॥ १३ ॥

एवमभिनन्द्यमनुक्रम्य शास्त्रमारभते । अत्रापीत्यादि सदापय माङ्गलिमित्यन्तं गुरोः केवलवाक्याच्छास्त्रीयं प्रमाजनकमिति सिद्धं तत्र कथोपक्षेपमाह—

मू० अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
आर्षभाणां च संवादं विदेहस्य महात्मनः ॥ १४ ॥

अत्र धर्मप्रश्ने प्रथमार्थः सर्वथा न त्वयैव पृष्टः किन्तु पुरातनोऽपि अनेन फलस्यापि नियतत्वं ज्ञापितं कल्पान्तरीयत्व इति सूचयितुमुदाहरन्तीति जन्मान्तरस्थाः गुरवोऽन्ये च भगवतो ब्रह्मणो वा वाक्यं नोदाहृतम् उक्तविषयत्वात् पुरातनमिति नारदकल्पापेक्षया ऋषभदेवपुत्राणां विदेहस्य च इतरेतरयोगेन प्रत्येकं प्राधान्यार्थं वा चकारः अस्य निमेनवमस्कन्धोक्तादन्यत्वान्न चोच्यमप्रतिष्ठितत्वेन दूषणं श्रोतुर्धैर्यकथने प्रयोजनाभावादुक्तत्वमात्रं वक्तव्यं तदुक्तमभ्यर्हितं यद्यपि देहाभिमानाभावः भगवच्चित्तता चात्राप्युक्ता तादृशोऽयं वंशः यत्र भगवता स्वधर्माविर्भावः षट्सु कृतः शुकवंशवत् सप्तमी हि कथा भगवद्धर्मे प्रतिपादिका ॥ १४ ॥

तान् वक्तुं षट् पुरुषानाह—

मू० प्रियव्रतो नाम सुतो मनोः स्वायम्भुवस्य यः ।
तस्याग्नीध्रस्ततो नाभिर्ऋषभस्तत्सुतः स्मृतः ॥ १५ ॥

पञ्चमस्कन्धोक्तोऽयमिति वक्तुं तृतीयाद्यारम्भः सिद्धं रूपम् ॥ १५ ॥

सप्तमानामुत्पत्तिं वदन् पितुर्माहात्म्यपुरःसरमाह—

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तस्मादृषिविप्रयोः सहभावेनान्वये अनेन तेषां सहजोत्कर्षः प्रतिपादितः ॥ २५ ॥

पूजनमाह—

मू० विदेहस्तानभिप्रेत्य नारायणपरायणः ।
प्रीतःसम्पूजयाञ्चक्रे ह्यासनस्थान् यथार्हतः ॥ २६ ॥

तेषां ब्रह्मत्वेन भगवत्त्वेन च ज्ञानम् अतो राजनि विशेषणद्वयं विदेह इति नारायणपर इति च अग्रिमविशेषणस्य पूजाया-मप्युपयोग इति पश्चादिरूपणं दृष्ट्वैव प्रीतः तेनास्य तद्गतं सर्वं ज्ञातमिति सम्पन्नं सम्यक् पूजा यथा भगवतः बहुकाल-स्थित्यै आसनस्थानिति ज्येष्ठानुक्रमेण यथारुचि पदार्थदानं च ज्ञात्वा पूजनं तेषामित्युत्कर्षः ॥ २६ ॥

प्रश्नमाह—

मू० तान् रोचमानान् स्वरुचा ब्रह्मपुत्रोपमान्नव ।
पप्रच्छ परमप्रीतः प्रश्रयावनतो नृपः ॥ २७ ॥

प्रष्टव्यः पदार्थस्तेषु वर्तत इति बोधहेतुः स्वरुचा रोचमाना-निति रुच्युत्पादककान्तिमत्त्व ब्रह्मविदो भगवद्धर्मवत्त्वेन पितुः स्वस्य च मनसा कृता गुरवः सनकादय इति कथं तत्तुल्यत्वेन प्रश्न इत्याशङ्क्य तत्तुल्या एवेत्याह—ब्रह्मपुत्रोपमानिति । तथा-प्यनुचितानामुत्पन्नत्वेन समाधास्यते नवेति च वैकुण्ठस्थिता एवैते चत्वारोऽपि दुर्लभा लोके कुतो नवेति बहुकालमनो-रथसिद्धिर्भविष्यतीति परमप्रीतः आसक्त इत्युक्तं विनयेन नम्रता प्रश्ने फलहेतुः नृप इति देशकालादिसर्वचातुर्येण एवं तस्य प्रश्नपर्यन्तं नारदोक्तिरुक्ता राज्ञः प्रश्नमाह, चतुर्भिः । अभिनन्दनं द्वयेन द्वयेन च प्रश्नः भगवत्सेवकत्वेन भगव-द्धर्मवत्त्वेन च ज्ञानं तु ब्राह्मणानां सहजत्वात् स्तूयते तथैव प्रश्नोऽपि द्वयेन लब्धपरिपालनालब्धलाभाभ्याम् ॥ २७ ॥

तत्र प्रथमं भगवत्सेवकत्वेन तान् स्तौति—

जनक उवाच ॥

मू० मन्ये भगवतः साक्षात्पार्षदान्वो मधुद्विषः ।
विष्णोर्भूतानि लोकानां पावनाय चरन्ति हि ॥ २८ ॥

दर्शनादेव परमहंसा वैष्णवा इति ज्ञानं गोत्रादिप्रश्ने न कोऽपि पुरुषार्थः आगमनप्रयोजने सन्देहः स्वार्थमागमनं परार्थं वेति प्रथमो दर्शनादेव निवृत्तः परार्थे च प्राणिनो न स्वतः प्रवृत्तिः प्रेक्षापूर्वप्रवृत्तिश्रेयम् अतो भगवत्प्रेरणया ऽस्मदुद्धारार्थं समा-गतं तत्र बहिः सेवका राजसेवकाधिकारिणो भवन्ति । तेषामन्त-रङ्गैर्न सर्वं कार्यम् सिद्ध्यति अतः कृत्रिमवैकुण्ठादौ सनका-दय इवान्येऽपि तत्सदृशा भगवत्सभायां तिष्ठन्ति पार्षदसङ्गेऽपि केचन गच्छन्ति तांश्चद्धुरत्यर्थं साक्षादिति मुख्यानित्यर्थः । कस्मिन्न-वसरे पार्षदत्वं तत्राह—मधुद्विष इति । मधुकैटभौ हत्वा ब्रह्मणे वेदान् दत्तवान् हयग्रीवरूपेण ततश्च वेदरक्षावसरे सर्वेषां महतामवसरः अनेन तेषां वचनं न केनापि शास्त्रेण विरुद्ध-मिति ज्ञापितं कार्यार्थं भगवदाज्ञयाऽत्रागमनसम्भावनायामपि परिभ्रमणमयुक्तमित्याशङ्क्याह—विष्णोर्भूतानीति । पालकस्य सेवकाः यं गृह्णन्ति तं स्वसमानं कुर्वन्तीति भूतानि अथवा भगवदुत्पन्नानि गङ्गावत्सर्वपापनाशकत्वार्थं परिभ्रमन्तीत्यर्थः नात्र सन्देहः गङ्गैव दृष्टान्तः इति हरिणुक्तं भगवतैवोत्पाद्य प्रेषिता इत्युक्तं भवति ॥ २८ ॥

भगवद्धर्मवत्त्वेन तेषां प्रशंसा गङ्गातोऽप्याधिक्यार्थमाह—

मू० दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः ।
तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम् ॥ २९ ॥

अन्यथा सुदुर्लभमिदमिति न्यायेन स्वर्गापवर्गयोर्द्वारमिति च अत्रैव नृग्य इत्यादिवचनैश्च मानुषदेहो नौकास्थानीयं परं सन्तो नाविका इव यदि भवन्ति तदा फलं सिध्यति तथात्र प्रत्यक्षबाधः शाकुनीयः हेतुस्वरूपफलैः प्रत्यक्षैर्हि स भवति तत्र हेतुरप्रत्यक्ष एव फलं साधनाभावात् स्वरूपेऽपि बहवः पथिका इत्यादये विषमनद्यां प्राप्तनौका न नौकां सुलभां मन्यन्ते बहुभ्रमणेन प्राप्तत्वात् चतुरशीतिलक्षयोनिष्वेका मनुष्ययोनि-रिति युक्त्या बाधो निराकार्यः देहाभिमानस्य तामसत्वात्प्राज-समानुषदेहो दुर्लभ इत्यर्थः । क्षणेन भङ्गुरम् आरब्धनाशे न तिष्ठतीति मानुषदेहप्राप्तिःस्वस्य दुर्लभा दुर्लभेऽपि दुर्लभा भगवत्प्रियप्राप्तिः नवभावे प्राप्तापि स्वयं अनर्थहेतुश्चेति लोकप्रसिद्ध्यभावेऽपि स्वानुभवः प्रमाणमित्याह—मन्य इति । वैकुण्ठं स्थित्वा सर्वस्वरूपस्वधर्मान् दत्त्वा सेवकवात्सल्याय प्रेषयित्वा तत्प्रतीक्षया तिष्ठन्ति वैकुण्ठस्य प्रियाः ॥ २९ ॥

मह्यत्वं समागमः पुनः सम्भविष्यति येन विलम्बः कर्तव्यः किन्तु शरीरस्योपयोगः कर्तव्य एवेत्याशयेनाह—

मू० अत आत्यन्तिकं क्षेमं पृच्छामो भवतोऽनघाः ! ।
संसारेऽस्मिन् क्षणार्धोऽपि सत्सङ्गः शेवधिर्नृणाम् ॥ ३० ॥

विरोधिसहभावाभावे सति अनन्तत्वमात्यन्तिकत्वं क्षेमो लब्धस्य परिपालनं लब्धो हि दुर्लभो देहः सङ्गश्च स येनो-पायेन नित्यो भवेत्स वक्तव्य इत्यर्थः । भवत इति द्वितीयं कर्म पदार्थद्वयस्य दुर्लभत्वेऽपि प्रारम्भकपापसम्भवात्प्रारम्भकशरीरेण कार्यसिद्धिः अत अनघा ! इति सम्बोधनं प्रतिबन्धकाभावाय विष्णोर्भूतानीति हेतुः आत्यन्तिकक्षेमस्योत्कर्षं वक्तुं कैमुतिक-न्यायेनाह । संसारे स्मिन्निति । स्वव्यतिरिक्तानि क्षुद्राणि फलानि दातुं न बहुकालस्थितिरपेक्ष्यते निधिप्राप्तौ दारिद्र्यमिव ज्ञान-दानेन संसारदुःखनिवृत्तिरित्यर्थः । अतः सदिति सामान्यपदं नरत्वमेवाधिकारिविशेषणम् ॥ ३० ॥

अलब्धलाभं पृच्छति ॥

मू० धर्मान् भागवतान् ब्रूत यदि नः श्रुतये क्षमम् ।
यैः प्रसन्नः प्रपन्नाय दास्यत्यात्मानमप्यजः ॥ ३१ ॥

भागवतधर्माः कदापि न प्राप्ताः योगस्य क्षेमाभावे ह्यप्रयोज-कत्वम् अत आह—यदि नः श्रुतये क्षममिति । स्वरूपयोग्यतायां मच-च्छ्रवणतुल्यश्चेत्तदा धर्माणां तावद्वक्ता भवान् । धर्माणां योग-त्वाय पूर्वापेक्षया अधिकफलत्वमाह । यैः प्रसन्न इति । अनुष्ठितै-र्धर्मैर्भगवत्प्रसादो नियतः प्रपत्तिरधिकारिविशेषणमधिकं पूर्वश्लोके नरत्वमेवोक्तं ततोऽधिकमित्यर्थः । अन्यस्यात्मनिवेदिनो भगवा-नात्मानं न समर्पयति, प्रसादे कीर्त्यादिदानपुरः सरमात्म-दानं च धर्माणां हेतुत्वं वरं दूषणमिदऽप्यपीति प्रसादेऽपि प्रार्थ-नायाः क्रियमाणत्वात् अपिशब्देन भक्तसङ्गं धर्माणामनन्य-हेतुत्वाय न सम्बन्धेन प्रपच्छतीत्याह—अज इति ॥ ३१ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कृतम् अलौकिकतापहारी हि महर्षिः प्रतिपुरुषं उपायपरिज्ञानादेक एव निर्धारितमेकमुपायं वक्ति । एकवचनं स्थूलधियो बहिर्मुख ज्ञानमार्गकर्तृत्वा इत्यर्थः । तत्र स्थूलधियां तदग्रोपायो वक्तव्यः "मामेव ये प्रपद्यन्ते" इति एवकारेण सर्वेषामनुपायत्वं प्रतीयते स्थूलबुद्धि उपायान्तरोपायो वक्तव्य इति नाग्रहः किन्तु स्थूलबुद्धीनामपि यथा तदर्गा सिद्ध्यति तथोपायो वक्तव्यः तत्रोपायो नारायणपरत्वमेव तद्भक्तया सा भगवद्धर्मैर्भगवच्छास्त्रे साधनत्वेन प्रतिपादितैः तेन गुरुसेवया सा च गुरुशरणं गतस्य तच्छरणागमनं ऐहिकामुष्मिकफलभोगानिरागाभावे न भवति "न तस्य तत्त्वग्रहणाय" इति वचनात् । तत्रैहिकवैराग्यं साधनभेदेन तत्र लौकिकानि कर्माणि क्लिष्टं च परित्यजेत्युक्ते न परित्यजति ॥ १७ ॥

अनुभवस्य बहिर्मुखत्वमनुभवमेवाह—

प्रबुद्ध उवाच ।

मू० कर्माण्यारभमाणानां दुःखहत्यै सुखाय च ।
पश्येत्पाकविपर्यासं मिथुनीचारिणां नृणाम् ॥ १८ ॥

नृणामिति लौकिकानां मिथुनीचारिणामित्याग्रहः प्रथमतः "सुखमस्यात्मनो रूपम्" इति न्यायेन कर्म आरम्भ एव विपरीतं भवति कर्माणीति बहुवचनात्पुनःपुनरारम्भः कर्मणां दुःखमित्यनुभवः सुतरां फलाभावे अपेक्षितसुखकाङ्क्षोऽपि पुनःपुनरारम्भे गच्छति अनिष्टनिवृत्तिरपि विपर्ययेनैव पश्येत्—

"उपक्रमानुरोधेन स्वर्गं चापि तथा निधिः ।
सुख्याबाधकता भाग्या परकृष्टान एव हि ।
प्रवाहात्तु पृथक् ज्ञानं प्रतिकूलोऽन्तर्निश्चितः ।
शास्त्रतः सर्वनिष्कर्षो यस्य तस्यैवमुच्यते ॥
प्रवाहवर्तिना नात्र निवार्या इति मे मतिः ।

एवं स्त्री तत्सङ्गपरित्याग उक्तः ॥ १८ ॥

धनपरित्यागमाह—

मू० नित्यार्तिदेन वित्तेन दुर्लभेनात्ममृत्युना ।
गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः ॥ १९ ॥

"तांश्चिन्तनमारभ्य विनाशावधि दुःखदम् ।
मृत्युस्तु सुलभो लोके दुर्लभं धनमेव हि" ॥

धनमपि मृत्युरूपम् एतादृशेन का प्रीतिः तेन साधितैर्वा ममतापङ्क्षत्वात् अन्यथापि स्वैरान्तर्भावात् —

"भूम्यादिरूपपशवः सिद्धाः साधनानां गृहशोभना ।
देहे तु यस्य वैराग्यं स पूर्वत्र निरूपितः ॥ १९ ॥

पारलौकिकवैराग्यमाह—

मू० एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम् ।
सतुल्यातिशयध्वंसं यथा मण्डलवर्तिनाम् ॥ २० ॥

"अयथाज्ञानतो जातं वैदिकं स्मार्तमेव च ॥
पौराणं च तमो जातं फलं गृहबन्धं हि ॥
भक्षतृतीयाभावादि तथानन्दप्रभादि च ॥
समर्पितं प्रथं विष्णौ ततोऽपि फलितं तथा ॥
अतो नश्वरमित्युक्तं पृथक् भक्तिफलात् क्रमात् ॥
सतुल्यातिशयध्वंसमन्तःकरणादितः ॥
ज्ञानभक्तिफलं मोक्षं नाथं दोषस्ततो भवेत् ॥
ऐश्वर्यमाहिमेऽप्येवमिति दृष्टान्तरूपमहः ॥
रूपद्रूपादयो लोको मण्डलाधिपादयः ॥
लोकद्वयफलं यस्मादेवमेवेति निश्चयः ॥ २० ॥

अतो मोक्षफले हेतुभूतं तमाह हि—

मू० तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ।
शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥ २१ ॥

"निरालम्बं यथा लोके व्यालभ्रष्टं निगद्यते ॥
हरेः कृपानिधिशोऽपि गुरुहीनस्तथैव हि ॥
यथा भक्तिः स्वतन्त्रोक्ता गुरुसेवापि तादृशी ॥
जिज्ञासायोगमात्रस्य तथापि विनिगद्यते" ॥

यदेव पृच्छति तदेव वादिष्यतीति उत्तमं श्रेय इत्युक्तं च गुरुमुक्तः लोके ज्ञापकं रूपमुपरमाश्रयामिति सर्वसन्देहवारणाय वैधर्म्यात्तद्रूपमपेक्षाय चाभिनिष्णातत्वम् —

मार्गान्तरहितानां तु बाधको न समागमः ॥
प्रपञ्चितं तत्प्रथमे शुको व्यासो न नारदः ॥
सत्नमेव च कृष्णस्य दर्शनादौ तथापि तु ॥ २१ ॥

सर्वज्ञत्वात्सर्वं वदिष्यतीत्याशयेनाह—

मू० तत्र भागवतान् धर्मान् शिक्षेद्गुर्वात्मदैवतः ।
अमाययानुवृत्त्या यैस्तुष्येदात्मात्मदो हरिः ॥ २२ ॥

गुरोरात्मत्वे स्नेहः श्रद्धा भावान्तरेण ज्ञानं च देवतात्वे मन्त्रशास्त्रेऽप्युक्ता मन्त्रा गुरुमुखव्यतिरेकेण न फलन्तीति तत्र शिक्षगुरुसन्तोषोपायमाह, निष्कपटानुवृत्तिभिः भागवतधर्माणामेव शिक्षायां हेतुमाह, तुष्येदिति । स्वसन्तोषाभाव हेतुत्वेन सिद्ध्येत् फलदातुरन्तत्वेपि फलम् अतः स्वपर्यन्तमाहुकाः धर्मा इति किञ्चदुःखाभावोऽस्य तुष्टिकः ॥ २२ ॥

तत्र प्रथमं श्रोत्रव्येन प्रवाहान्निवृत्तिः कर्ममार्गप्रवेशः ज्ञानमार्गप्रवेशश्चोच्यते तदभावे भागवतधर्मानधिकारात् तत्र प्रथमं प्रवाहान्निवृत्तिमाह—

मू० सर्वतो मनसोऽसङ्गमादौ सङ्गं च साधुषु ।
दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचितम् ॥ २३ ॥

संसक्तिरूपं मनस आकर्षणं मनसा हि सर्वं भवतीति स्वानिष्ठः साधनेषु प्रथमसत्सङ्गः लोकानां परित्यागः पूर्वं च न सम्भवति, सन्निधेयमाह, दीनेषु दया समेषु मैत्री उत्तमेषु प्रश्रयः यथोचितमिति देशकालानुरोधः ॥ २३ ॥

कर्ममार्गप्रवेशमाह—

मू० शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवम् ।
ब्रह्मचर्यमहिंसां च समत्वं द्वन्द्वसंज्ञयोः ॥ २४ ॥

कर्म त्रिविधं कायिकादिभेदेन तत्र त्रयं त्रयमेकैकस्य । शौचं मृदादिभिः तपः कृच्छ्रादिः शीतादिसहनं तितिक्षा इति कायिकम् । वृथालापपरिवर्जनं वेदाभ्यासः सर्वत्र प्रियभाषणं वाचनिकम् । मानसे हि कामजयः क्रोधजयः वैषम्याभावश्चेति निरोधे हि द्वन्द्वेनैव तयोः संज्ञा निर्दिष्टा यथा सुखदुःखे प्रियाप्रिये इति ॥ २४ ॥

ज्ञानमार्गप्रवेशमाह—

मू० सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतताम् ।
विविक्तचीरवसनं सन्तोषं येन केनचित् ॥ २५ ॥

आत्मेश्वरयोरैक्ये सिद्धे तस्य सर्वत्र निरीक्षणं ज्ञानम्—

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सन्ने यदिन्द्रियगणेऽहमि च प्रसुप्ते ।
कूटस्थ आशयमृते तदनुस्मृतिर्नः ॥ ३९ ॥

देहान्तरसम्बन्धो जीवस्यास्तीति सिद्धं तत्र भोक्ता जीवः कर्त्ता प्राणः यदा जीव इन्द्रियाणि गृहीत्वा तत्र गच्छति तदा प्राणो हि जीवमुपधावति । अविनिश्चिताः स्वेदजाः क्षुद्राः ततश्च सङ्घातानुगमनं प्रयोजकं भवति । तथा च सङ्घाताभिन्नस्य न तत्कर्मसम्बन्ध इति भावः । सङ्घातादन्यदेव अनुभवमप्याह । सन्न इति । आधिभौतिकादिन्द्रियेषु पृथक् कृतः सुषुप्तौ पुनरिन्द्रियाहङ्कारयोरपि लयः तदा व्यापाराभावात् कूटस्थो भवत्यात्मा भेद हि प्रसुप्तकाले गमनम् अन्यथा अयमेव कूटवत् तिष्ठति स तिष्ठन्नीत्यात्माकमनुस्मरणं प्रमाणं "सुखमहमस्वाप्सम्" इति सर्वदोषरहितः कूटस्थ आत्मा सङ्घाते वर्त्तत इति सिद्धम् ॥ ३९ ॥

तस्य परत्वमाह—

मू० यर्ह्यब्जनाभचरणैषणयोरुभक्त्या ।
चेतो मलानि विधमेद्गुणकर्मजानि ॥
तस्मिन् विशुद्ध उपलभ्यत आत्मतत्त्वम् ।
साक्षाद्यथामलदृशोः सवितुः प्रकाशः ॥ ४० ॥

अन्तःकरणे शुद्धात्मानुभवः परमात्मनिष्ठा जगत्कारणविग्रहस्य भक्तिमार्गानुसारेणान्वेषणे यत्नेन भवति तत्पुनः प्रवृद्धमन्तःकरणमलानि दूरीकरोति भक्तेर्बहुफलत्वात् यर्हीत्युक्तं ज्ञानार्थं यतमानस्यैतद्भवति सामर्थ्यविशेषयुक्तस्यात्मनिवेशस्य भक्त्या अन्तःकरणनैर्मल्यं वाक्यात् प्रतिसिद्धान्तानिष्ठं वा तन्मार्गे साधनानां सूचयति, यर्हीति । विशुद्धत्वं मार्जनेन तेजःसम्पादने तद्धर्मं च प्रेमैव स्फुरितं वा प्रतिबिम्बो वेति सन्देह आह-साक्षादिति । तदवच्छेदेन तस्मिन्नाविर्भावे तेनैव ग्रहणम् ननु, जलेन तद्ग्रहणे विषयत्वं स्यात् प्रतिफलितेन ग्रहणेन प्रत्यक्षत्वं स्फुरणमात्रत्वे न पुरुषव्यापार इति चेत्तत्राह-यथेति । चक्षुरध्यात्मिकं रूपं तथा प्रकृतेऽप्यलौकिकमनाकृतं सवितुरिति स्वत एवोद्गतस्य प्रकाश इति सर्वदा स्फुरणम् अपराधीनता च चैतन्यानुसन्धानमित्यर्थः ॥ ४० ॥

मार्गत्रयेणाभयं श्रुतवतो राज्ञः कर्ममार्गे विशेषेण भगवतो बहुधा जिज्ञासमानस्य प्रश्नः—

राजोवाच ।

मू० कर्मयोगं वदत नः पुरुषो येन संस्कृतः ।
विधूयेहाशु कर्माणि नैष्कर्म्यं विन्दते परम् ॥ ४१ ॥

प्रथमपाद एव प्रश्नः तस्य स्वमार्गानुसारेण फलनिर्णयमाह त्रिभिः पादैः । संस्कारकर्मत्वमोक्षाः ऐहिकामुष्मिकगमनकर्मणा "अस्थि चैव तेन मांसञ्च यजमानः संस्कुरुते निर्वरुणत्वायेति च विरजमभिसम्पद्यते, ब्रह्मार्पणम्" इति च तस्य निर्णयो मार्गान्तराविरोधेन ज्ञातव्यः ॥ ४१ ॥

किञ्च, सन्देहान्तरमाह—

मू० एवं प्रश्नमृषीन् पूर्वमपृच्छं पितुरन्तिके ।
नाब्रुवन् ब्रह्मणः पुत्रास्तत्र कारणमुच्यताम् ॥ ४२ ॥

पूर्वं कर्मयोगेऽल्पः सन्देहः स्थितः त्यक्तकर्मणो दृष्ट्वा कृतः प्रश्नः परमिन्द्रवाक्यसमीपे ततः सन्देहः कर्मयोग एवासमीचीनः तेषामवक्तव्यो वा सर्वांशे परित्यागभयं वा "न बुद्धिभेदं जनयेत्" इति वा अतस्तत्र कारणमुच्यताम् ॥ ४२ ॥

कर्मनिर्धारणैर्वाक्याभिमतार्थत्वादेकस्यैवोत्तरमाह—

॥ आविर्होत्र उवाच ॥

सर्वे यदा यस्मिन् प्रकटा भवन्तीति तथा आदौ कर्मणां त्रैविध्यं प्रमाणं चाह—

मू० कर्माकर्मविकर्मेति वेदवादो न लौकिकः ।
वेदस्य चेश्वरात्मत्वात्तत्र मुह्यन्ति सूरयः ॥ ४३ ॥

विषया भिन्ना लौकिका वैदिकाश्च तत्र लौकिकाः प्रत्यक्षादिसमधिगम्याः वैदिकास्तु वेदैकसमधिगम्याः तत्र शब्दमूलानां न प्रत्यक्षादिकबाधकत्वं समानशब्देषु सन्देहः तत्रापि व्याख्याविच्छेद एव । प्रकृते तु कर्माकर्मविकर्माणि विहितं निषिद्धं विहिताकरणरूपं च वेदैकप्रसिद्धोऽयमर्थो न लौकिकः तत्र वेदे परंपरया शब्दार्थनिर्धारेऽप्यभिप्रायः सन्दिग्धः नच सन्दिग्धप्रमाणकः तदा तथात्व दोषः वेदस्तु ईश्वरः स्वात्मानं वदति तत्राभिप्रायसन्देहात् स्वरूपभ्रान्त्या प्रतीतेऽर्थे वक्तृतात्पर्यवर्णितः परस्परमतानुसन्धानेन मुग्धा भवन्ति तस्माद्वेदार्थनिर्धारार्थेन कल्पना युक्ता ॥ ४३ ॥

तत्र स्वमतेनाभिप्रायं वर्णयति—

मू० परोक्षवादो वेदोऽयं बालानामनुशासनम् ।
कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा ॥ ४४ ॥

अयं कर्मप्रतिपादको वेदः फलांशे परोक्षवादः कर्माभावसम्भवात् भवति फलभोगदशायां कर्माभावात् अन्यथा फलांशे लौकिकं स्यात् वस्तुतस्त्वलौकिका एव पश्चाद्योऽप्यस्यान्याम बालानुशासनपरत्वे तु तुल्यता लौकिकस्यैवृत्त्वात् मोक्षश्च फलानां मुख्यः "अष्टवर्षं ब्राह्मणमुपनयीत" इति बालानामनुशासनत्वं फलविचारे क्रियमाणेऽनालौकिकत्वेन समाधान किन्तु सुखस्य स्वाभावात्पां तथा च ब्रह्मात्मसुखस्य फलत्वे "सर्वेहोपरतिस्तनुः" इति न्यायेन स्वाभाविककर्मणां निवृत्तिरपेक्षिता सा चालौकिककर्मणा अन्यथा वेदस्य वैयर्थ्यापत्तेः । यथा रोगाधिकारे प्रवृत्त आयुर्वेदः तथा संसाराधिकारे वेदः अतो वैदिककर्मणा स्वाभाविककर्माणि निवर्त्तन्त इति सिद्धम् ॥ ४४ ॥

अकरणे बाधकमाह—

मू० नाचरेद्यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः ।
विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः ॥ ४५ ॥

"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते" चित्तवृत्तिनिरोधो योगश्च उभयाभावे वेदोक्तकर्माभावे च मृत्वा पुनर्मृत्युमापद्यते "अयमानाः स्वकर्मभि" इति न्यायेनानिष्टफलं स्यात स्वाभाविककर्मणा कथं वा पारलौकिकानिष्टफलत्वं तत्राह-विकर्मणा ह्यधर्मेणेति । बालोल्लङ्घनमपि योऽयं दोषः अधिकारिणः स्वेनैव अधर्मत्वे हेतुः स्वाभाविककर्मणां तु मृत्युप्राप्त्यनन्तरं जन्म अत्र तु यातना भुक्त्वा पुनर्मरणमिति विशेषः ॥ ४५ ॥

ननु, वेदोक्तकर्मकरणेऽपि न निस्तारः स्वाभाविकानामपि क्रियमाणत्वात् अविद्यापगमत सङ्कराभावात्प्रत्ये तथा कारणानां फलसाधकानि साधकानि श्रुतिलिङ्गादीनि श्रुतिर्वर्णाश्रमी मुमुक्षवो वा फलयोः तथा च बहुबाधकानां विद्यमानत्वाद्वर्णः प्रयासः इति चेत्तत्राह—

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मू० वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे ।
नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः ॥ ४६ ॥

वैदिको भूत्वा कर्मकरणे वैदिकमेव कुर्यात् यजनयाजनादिभिः अकरणात्कार्येषु निःसङ्गः उपक्रमविरोधान्न मानसः अर्पितमेव करोतीति न साधनवैगुण्यं वेदाभिप्रेतार्थकरणात्सिद्धिं प्राप्नोति तथात्वाभिप्रेतानां कथमभावस्तत्राह—रोचनार्थं रुच्युत्पादनार्थं बहूनि फलानि वेदे बोधितानि नतु तत्र तात्पर्यं कर्तुः फलाभिसन्धानाभावेन भविष्यन्तीति भावः ॥ ४६ ॥

एवं वैदिककर्मयोगनिष्ठस्योक्त्वा तन्त्रमार्गवर्तिनां निष्कर्मनिष्ठामाह—

मू० य आशु हृदयग्रन्थिं निर्जिहीर्षुः परात्मनः ।
विधिनोपचरेद्देवं तन्त्रोक्तेन च केशवम् ॥ ४७ ॥

लौकिककर्मानर्थस्य लौकिकैरेव निवृत्तिर्युक्तेति आशुत्वादयः सिद्धान्ताः प्रवृत्ताः तथापि श्रीहृदयग्रन्थिविच्छेदकः प्रकारो वैष्णवः परात्मनो विधिना च विभूत्यादिभजनप्रकारोऽत्र कथनपुष्टिमार्गीयोऽर्थः । तथाप्युक्तो तन्त्रोक्तप्रकारेणापि कृष्णमेव भजेत् अथवा सद्गुरुतो लब्ध्वा कथञ्चिदपि पुष्टिमार्गस्थितत्वात्केवलमेव भजेत् ॥ ४७ ॥

मार्गान्तरविरोधाभावं वदन् भजनप्रकारमाह—

मू० लब्ध्वानुग्रह आचार्यात्तेन सन्दर्शितागमः ।
महापुरुषमभ्यर्चेन्मूर्त्याभिमतयात्मनः ॥ ४८ ॥

दीक्षायामर्चाधिकारो निवर्तते अनुग्रहस्य प्राबल्यात् देवताविरोधः उपनयनादिकर्ता आचार्यः तदनुग्रहात् वेदविरोधः अन्येनाविरुद्धेनान्यस्य विकर्मत्वं स्वधर्मकरणे हि सर्वत्र दोषः आचार्याभिगम्यमार्गेण्या वा उद्दिष्टे फले न कर्मण्यनुपयोगः कर्तृसंस्कारत्वस्त्वन्यथापि भविष्यति आश्विनित्यवचनात्परलोकबाधकत्वम् अहङ्कारग्रन्थिनिवृत्तौ मुक्तिरिति सर्वमतसाधारण्यं फलम् आचार्यस्यागम एवं पञ्चरात्रादिः प्रदर्शितः महापुरुषः श्रीकृष्णः अभिमतया मूर्त्या प्रकारसहस्रमध्ये नवनीतचौर्यादिरूपेषु स्वभावो नियामकः ॥ ४८ ॥

पूर्वोक्तदोषाभावाय कर्तृशुद्धिमाह—

मू० शुचिः सम्मुख आसीनः प्राणसंयमनादिभिः ।
पिण्डं विशोध्य सन्न्यासकृतरक्षोऽर्चयेद्धरिम् ॥ ४९ ॥

शौचं स्मार्तं सम्मुखे आसीनः प्रतिमायाः आदिशब्देन भूतशुद्धिप्रकारा उक्ताः । न्यासेन देवतावाहनं रक्षायां बाधकनिवृत्तिः हरिं न प्रतिमाम् ॥ ४९ ॥

अत एवाधिकरणस्यावश्यकत्वं सर्वत्र उत्पत्तिनियमाभावमाह—

मू० अर्चादौ हृदये चापि यथालब्धोपचारकैः ।
द्रव्यक्षित्यात्मलिङ्गानि निष्पाद्य प्रोक्ष्य चासनम् ॥ ५० ॥

स्पष्टम् ॥ ५० ॥

अन्तरङ्गप्रकारमाह—

मू० पाद्यादीनुपकल्प्याथ सन्निधाप्य समाहितः ।
हृदादिभिः कृतन्यासो मूलमन्त्रेण चार्चयेत् ॥ ५१ ॥
पाद्यार्घ्याचमनीयाद्यैः स्नानवासोविभूषणैः ।
साङ्गां पाङ्गां च पार्षदां तां तां मूर्तिं स्वमन्त्रतः ॥ ५२ ॥

आदिशब्देनार्घ्याचमनीयादि अथ भिन्नक्रमेण विधानेन प्रवृत्तः सन्निधापनादिमुद्रया देवतासन्निधानं कृत्वा ततः सावधानः सन् हृदयादिकृतन्यासः अस्मिन् स्थाने मूलमन्त्रेण चार्चयेत् अङ्गानि चक्रादीनि उपाङ्गानि शङ्खादीनि पार्षदा सुनन्दादयः एवं साङ्गोपाङ्गां सपार्षदां हृदये पूजयेदिति पूर्वेण सम्बन्धः तामित्यनुकरणे पूर्वोक्तपादद्वयमत्रैवमाह, साङ्गोपाङ्गां सपार्षदां तां मूर्तिं स्वमन्त्रतः तां पूर्वोक्तप्रकारेण हृदयपूजितां मूर्तिरूपां बाह्यां कृत्वा । यजेदिति सम्बन्धः कथमेवमत आह—स्वमन्त्रतः आन्तरस्य बाह्यत्वं मन्त्रबलाद्भवति मन्त्रतस्तां मूर्तिमित्युद्देश्यविधेयभावः ॥ ५१ ॥ ५२ ॥

पूजाक्रममाह—सार्धेन—

मू० गन्धमाल्याक्षतस्रग्भिर्धूपदीपोपहारकैः ।
साङ्गं सम्पूज्य विधिवत्स्तवैः स्तुत्वा नमेद्धरिम् ॥ ५३ ॥

आदिशब्देन मधुपर्काऽवगाह्यैः अक्षता माला: कुङ्कुमाक्षता वा मनः क्रियासमाप्तिसूचकं स्तोत्रनमनं पूजायां प्रार्थयत इति कात्याप्रयोगः सर्वं भिन्नमिति वा समेवाभिप्रेत तस्य पूजा न कर्तव्येति ॥ ५३ ॥

कर्तृनियममाह—

मू० आत्मानं तन्मयं ध्यायन्मूर्तिं सम्पूजयेद्धरेः ।
शेषामाधाय शिरसि स्वधाम्न्युद्वास्य सत्कृतम् ॥ ५४ ॥

स्वस्वरूपं भगवद्रूप भावयन् भगवता व्याप्तं वा भूतौ भगवद्गमनोऽहित नतु स्वाभिमानिति ज्ञापयितुं निर्माल्यं शिरस्याधाय हृदये उद्वास्य तत्र पुनः सत्कृतमात्मानं तन्मयं ध्यायन्निति सम्बन्धः । सत्कृतमिति सर्वदा मन्त्रसम्बन्धनित्यत्वम् ॥ ५४ ॥

एवं स्थलान्तरेऽपि पूजां वदन् फलमाह—

मू० एवमग्न्यर्कतोयादावतिथौ हृदये च यः ।
यजतीश्वरमात्मानमचिरान्मुच्यते हि सः ॥ ५५ ॥

आदिशब्देन ब्राह्मणादिः हृदये चेति द्विरूपता भगवतो द्विरूपत्वं प्रतिपादयति सामर्थ्यमावश्यकत्वं च । यजतिरत्यन्तपर्यन्तं सन्ततिवक्ता हीति प्रमाणानुसन्धानं सर्वाधिष्ठापयति । अन्ते स्वरूपस्थित्यर्थं स इति ॥ ५५ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमद्वल्लभदीक्षितविरचितायाम्
एकादशस्कन्धविवरणे तृतीयाध्यायविवरणम् ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

———:*:———

॥ राजोवाच ॥

यानि यानीह कर्माणि यैर्यैः स्वच्छन्दजन्मभिः ।
चक्रे करोति कर्ता वा हरिस्तानि ब्रुवन्तु नः ॥ १ ॥

॥ द्रुमिल उवाच ॥

यो वा अनन्तस्य गुणाननन्ताननुक्रमिष्यन् स तु बालबुद्धिः ।
रजांसि भूमेर्गणयेत्कथञ्चित्कालेन नैवाखिलशक्तिधाम्नः ॥ २ ॥

भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् ।
स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः ॥ ३ ॥

यत्काय एष भुवनत्रयसन्निवेशो यस्येन्द्रियैस्तनुभृतामुभयेन्द्रियाणि ।
ज्ञानं स्वतः श्वसनतो बलमोज ईहा सत्त्वादिभिः स्थितिलयोद्भव आदिकर्ता ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्थे त्ववतारेहाप्रश्नस्योत्तरमुक्तवान् ।
अवन्तीनन्दनो नाम्ना द्रुमिलो नवसत्तमः ।

भूम्नोऽमितभवायाऽऽत्मन इत्यनेनाऽऽत्मनः प्रियमवतारं पूजयेदित्युक्तेऽवतारज्ञानमपेक्षितं तथा स्तवैः स्तुत्वा नमेद्धरिमित्युक्ते गुणकर्मज्ञानं चापेक्षितमतः पृच्छति—यानि यानीति । कर्ता करिष्यति ॥ १ ॥

त्वया पृष्टानि कालत्रयसम्बन्धिसकलावतारगुणकर्माणि कथयितुमशक्यानि संक्षेपतस्तु कानिचित्कथयिष्यामीत्याह—यो वा इत्यादिना । अनुक्रमिष्यन्गणयितुमिच्छति यः स तु बालानामिव बुद्धिर्यस्य स मन्दमतिः बालेन बाला वा सदृशी दर्शिनी बुद्धिर्यस्य मुग्धबुद्धिः कालेन महता कोऽपि महामतिः रजांसि गणयेद्धर्षाखिलशक्तिधाम्नः सर्वशक्त्याश्रयस्य भगवतो गुणांस्तु नैव गणयेत् तथा च श्रुतिः "विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि" इत्यादि ॥ २ ॥

तत्राऽऽद्यं पुरुषावतारमाह—भूतैरिति । यदा स्वसृष्टैर्भूतैर्विराजं ब्रह्माण्डं पुरं निर्माय तस्मिन् जीवतया प्रविष्टो न तु भोक्तृत्वेन प्रभूतपुण्यस्य जीवस्य तत्र भोक्तृत्वात् ॥ ३ ॥

तस्य गुणकर्माण्याह द्वयेन—यत्काय इति । यस्याधिष्ठेयः काय एषः काये इति सप्तमी वा तनुभृतां सर्वप्राण्यादिजीवानां ज्ञानकर्मेन्द्रियाणि यस्य स्वतः स्वरूपभूतात्सत्त्वात्तनुभृतां ज्ञानम् यस्य स्वतः सिद्धं ज्ञानमिति वा यस्य श्वसनतः प्राणाद्बलं देहशक्तिः ओज इन्द्रियशक्तिः ईहा क्रिया यस्य सत्त्वादिभिः स्थितिलयोद्भवे आदिकर्ता ॥ ४ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी ।

अवतारेहाप्रश्नस्य । अवतारलीलाप्रश्नस्य तत्तु मध्ये सप्तमः अतः अवतारगुणकर्मज्ञानानां पूजनेऽपेक्षितत्वात् तानि त्रिकाल-सम्बन्धीनि जन्मकर्माणीति ॥ १ ॥

द्रुमिल इति द्रुतुतमवतारैः स्फूर्तिः प्राप्तिः सह मिलतीति निरुक्तिपुरस्कारेण तस्यैव सर्वावतारगुणकर्मादिपरिपाट्यभिज्ञानात् स एवोवाचेति ज्ञेयं कोऽपि महामतिरिति कर्तुरासु-पात्तामः गणयेदपीति तद्रजसां सम्भवतीत्यर्थः तथा च विष्णोर्गुणानामगण्यत्वे प्रमाणं श्रुतिः यः कविः पार्थिवान्यपि रजांसि विममे गणितवान् सोऽपि विष्णोर्वीर्याणि कं कः प्रावोचं प्रावोचदित्यर्थः ॥ २ ॥

तत्र तेष्ववतारेषु मध्ये तस्मिन् ब्रह्माण्डे स्वांशेन अन्तर्यामि-रूपेण जीवतया नियन्तृरूपया प्रविष्टः न तु भोक्तृत्वेन अनश्नन्न-न्योऽभिचाकशीति इति श्रुतिविरोधात् "स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरिञ्चतामेति" इत्युक्तेः प्रभूतं प्रचुरं पुण्यं यस्य तस्य हिरण्यगर्भाख्यसमष्ट्यभिमानिनो जीवस्य तत्र ब्रह्माण्डे भोक्तृत्वात् भोक्तृत्वाधिकारात् यदा स्वांशेन विष्टस्तदा पुरुषाभिधानं पुरुषसञ्ज्ञामवापेति यदातदोः सम्बन्धः ॥ ३ ॥

अस्य पुरुषावतारस्य गर्भोदशायिनः यस्य ब्रह्माण्डमाविश्य च "हिरण्मयं स्वपञ्जलस्थित"मित्युक्तेः अधिष्ठेयो निवासः स्वस्थमपि तु नवीनोपासकानां चित्तस्थैर्यार्थं यस्य काये एष भुवन-

## श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

भुवनसन्निवेशः "पातालमेतस्य हि पादमूल"मित्यादिशास्त्रेण कल्पितः यस्य काय इति सप्तमी तृतीयार्थे यस्य कायेनैव भुवनत्रयसन्निवेशो भवति "भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभित" इत्यादेः ज्ञानकर्मेन्द्रियाणि यस्येन्द्रियैर्भवन्ति "वाचां वह्निर्मुखं क्षेत्र"मित्यादेः ज्ञान इत्यस्य व्याख्या स्वरूपभूतसत्त्वादिति यस्य स्वरूपभूतविशुद्धसत्त्वादेव तत्तुल्यं ज्ञानं भवति; पूर्वार्धे विशेष्यस्य सत्त्वस्याध्याहार उत्तरार्धे तु यस्य स्वतः सिद्धं ज्ञानमिति सर्वत्रैवमुक्तम् ॥ ४ ॥

---

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—३ ॥

उभयेन्द्रियाणि यस्येन्द्रियैः इन्द्रियशब्दो गौणः इन्द्रियवत्परिकरभूतं शेषभूतमित्यर्थः । बलं धारणसामर्थ्यम् ओजः प्रवृत्तिसामर्थ्यम् ईहा चेष्टा ॥ ४—६ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मूर्त्याभिमतयात्मन इत्यनेनात्मनः प्रियतमावतारं भक्तपूजयोर्दित्युक्तेऽवतारज्ञानमपेक्षितं तथा स्तवैः स्तुत्वा नमस्यामि इत्युक्ते गुणकर्मज्ञानं चापेक्षितं तत्र पृच्छति "यानि यानीति" यैः स्वच्छन्दजन्मभिः स्वेच्छावतारैरिह लोके कर्म करिष्यति स्वच्छन्देत्यनेनावताराणामकर्ममूलत्वमुक्तं तानि कालत्रयगोचरावतारसम्बन्धीनि चरितानि नोऽस्मभ्यं भवन्तो ब्रुवन्तु विस्तराद्वर्णयन्तु ॥ १ ॥

यानि यानि ब्रुवाणीति प्रश्नस्य साकल्यविषयतामाशङ्क्यानन्त्यात्तानि साकल्येन कथयितुं शक्यानि संक्षेपतः कानिचित्कथयिष्यामीत्याह-द्रुमिलः । य इति । अनन्तस्यापारिच्छिन्नस्वरूपस्वभावस्य भगवतो गुणानन्योऽनुक्रमिष्यद्गणयितुमिच्छति स तु बालानामिव बुद्धिर्यस्य सः मन्दमतिरित्यर्थः तत्र हेतुत्वेन तान्विशिनष्टि—अनन्तानीति । एतदेवोपपादयति । रजांसीति । कालेन महता कथञ्चित्केन चिद्यत्नेन भूमेरजांसि रेणून् गणयेत्सम्भाव्यतायां विभुः अखिलशक्तिधाम्नः विविधविचित्रशक्त्याश्रयस्य भगवतो गुणांस्तु नैव गणयेदानन्त्यादिति भावः अत्र "विष्णोर्नुकं वीर्याणि प्रावोचं यः पार्थिवानि विममे रजांसि" इति श्रुत्यर्थोऽभिसंहितः ॥ २ ॥

तावद्ब्रह्माण्डशरीरकवैराजपुरुषावतारमाह-भूतैरिति । आत्मना स्वेन सृष्टैर्भूतैः पृथिव्यादिभिः भूतग्रहणं चतुर्विंशतितत्त्वानामुपलक्षणं यदा विराजं ब्रह्माण्डरूपं पुरं विरच्य तस्मिन्पुरे स्वांशेन विष्टः धारकतयानुप्रविष्टः तदा आदिदेवो नारायणः पुरुषाभिधानं पुरुषाख्यामवाप अयं वैराजः पुरुषः स्वावताराणामाद्योऽवतार इत्यर्थः ॥ ३ ॥

अस्य गुणकर्माण्याह द्वाभ्याम् । यदिति । यस्य वैराजपुरुषस्य कायः ब्रह्माण्डात्मको देहः भुवनत्रयस्य सन्निवेशो यस्मिंस्तथाभूतः यस्येन्द्रियैः कारणभूतैस्तनुभृतां व्यष्टिसमष्टिजीवानामुभयेन्द्रियाणि ज्ञानकर्मोभयेन्द्रियाणि बभूवुः इन्द्रियसम्बन्धोक्त्या तज्ज्ञानस्येन्द्रियसापेक्षत्वशङ्कां निरस्यति । ज्ञानं स्वत इति । यस्यैवानुषज्यते अयमर्थः स्वतः स्वात्मस्वरूपानुबन्ध्यनुभूतं बलं धारणसामर्थ्यमोजः प्रवृत्तिसामर्थ्यम् । ईहा चेष्टा च भवति स एव सत्त्वादिभिः सत्त्वरजस्तमोभिः प्राकृतगुणैः स्वसृष्टैः स्थितिलयोद्भवे समाहारद्वन्द्वात्सप्तमी विश्वस्थित्यादिनिमित्त इत्यर्थः । आदिकर्ता आदिश्चासौ कर्ता च उपादानं निमित्तकारणं चेत्यर्थः ॥ ४ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वच्छन्दजन्मभिः स्वेच्छावतारैः कर्ता करिष्यति ॥ १ ॥

द्रुमिलः भगवद्गुणकर्मणामनन्तत्वात्प्रश्नो दुष्परिहर इति भावेनाह—यो वा इति ॥ २ ॥

नन्वेवं सल्लोके प्रश्नप्रतिवचने गुरुशिष्यभावो च न स्त इति दोषपरिहाराय यथाशक्ति प्रवक्ष्यामीत्यभिसन्धायाह-भूतैरिति । भूतैरित्युपलक्षणं महदहङ्कारौ पञ्च भूतानि च यदा ससर्ज तदा पुरुषाभिधानमवाप यदा च महदादिचतुर्विंशतितत्त्वैः विराजं ब्रह्माण्डाख्यं पुरं विरच्य स्वांशेन तस्मिन् प्रविष्टः तदा पुरुषाभिधानमवाप । यदा चात्मसृष्टैः पृथिव्यादिपञ्चभूतैः ब्रह्माण्डान्तःपुरं जात्येकवचनं पुराणि शरीराणि विरच्य स्वांशेन पुरुषरूपेण तस्मिन् विष्टः तदा पुरुषाभिधानमवाप—

"विष्णोस्तु पुरुषाख्यानि त्रीणि रूपाणि यो विदुः—
प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् ।
तृतीयं देहिनां देहे तानि ज्ञात्वा विमुच्यत" ॥

इति पुरुषरूपविष्णुज्ञानस्य मुक्तिहेतुत्वोक्तेः साक्षात्सन्निधानत्वानि पुरुषरूपाणि विष्णोरभिन्नानीति ज्ञातव्यं नरः पुरुषः तेन सृष्टं नारं तस्याश्रयो नारायणः नरसृष्टत्वान्नारं ब्रह्माण्डं तदाश्रयोऽपि नरस्य विद्यमानं नारं शरीरं तदाश्रयोऽपि संसारिव्यावृत्त्यर्थम् आदिदेव इति ॥ ३ ॥

एतदेव विशिनष्टि—यत्काय इति । भुवनत्रयसन्निवेशो यस्य काये शरीरे भगवच्छरीराधारत्वेन मतं इत्यर्थः । तनुभृतामुभयेन्द्रियाणि ज्ञानकर्मोत्पादकानीन्द्रियाणि यस्य इन्द्रियैः प्रेरितानि प्रवर्तन्ते अनेन शरीरान्तस्थत्वमुक्तं कथं प्रेरकत्वमित्यत उक्तं ज्ञानांशकेनेति ज्ञानस्वरूपेणान्तःशरीरं विष्टः न केवलं श्रवणादीनि यदिन्द्रियप्रेरितानि अपितु बलादीन्यपीत्याह-बलमिति । सत्त्वादिभिर्गुणैः स्थितिश्च लयश्च उद्भवश्च यस्मात्स तथा अत आदिकर्तेत्युच्यते ॥ ४ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पूर्वं शृण्वतां सुभद्राणि रथाङ्गपाणेरित्युक्तं तदनुसारेण मूर्त्याभिमतयात्मन इति स्तवैः स्तुत्वेति च ज्ञातुं शक्यते ततस्तदर्थमाह-यानि यानीति ॥ १—२ ॥

तत्र सामान्यतः पुरुषावतारमाह-भूतैरिति । आदिदेवो नारायणः श्रीभगवान् "नारायणे तुरीयाख्ये भगवच्छब्दशब्दित" इत्यादेः

### श्रीमद्ब्रह्मभाचार्यकृतसुबोधिनी ।

भवेदित्यर्थः । तथा च कोटिजन्मसहस्राणामपि भवेत् नारायणपादा-रविन्दसेवाकरणः इमवनिवृत्त्यर्थमेजमानान् प्रत्याह भवे हि स्वामि-सेवकभावोऽपगतः ततस्तुदवतया सोमहनभावतदेवबस्य ! इति सम्बोधनं भामैहेति इन्द्रादपि भयाभावः सूचितः स्वामिदचड-भवस्य कार्यार्थमागता अतिथयो भवन्ति घोरा यातुकाश्च निवृत्ति-मार्गे अतिथयोभवन्तीति पूर्वव्याख्यया: 'एतावज्जन्मसाफल्य' मित्यत्र निर्णीतं प्रमाणं न मनोरथः सिद्ध्यति तथाप्याश्रमधर्मेणातिथ्यं कर्तव्यमित्याह । गृहीत्वा नो बलिमस्मत्सम्बन्धिनीं पूजां ततः किमत आह । कुरुध्वमिति । मनोरथसिद्ध्यभावेऽपि परोपकारः सेवनी-यः । निवृत्तानां महती रीतिरेषा "गृहेषु वेप्यतिथय" इति न्या-यात् ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

गुणावतारानाह—आद्यावितिं । रजसा रजोगुणेन सर्गे सृष्टौ कर्मणि ज्ञानधनिर्ब्रह्मा अभूत् स्थितौ पालने कर्मणि विष्णुः द्विजानां तद्धर्माणां च सेतुः पालक इत्यर्थः । अप्ययाय संहारार्थम् ॥ ५ ॥

इत्येवं प्रकारेण नारायणो नर इति ऋषिप्रवरः समजनिष्ट नैष्कर्म्यलक्षणं कर्म उवाच चचार च ॥ ६ ॥

सहयूथपायम् अप्सरोगणादिभिः सह बदरिकाश्रमं गत्वा स्त्रीप्रेक्षणाख्यैव इषवो बाणास्तैरविध्यत् न तस्य महिमानं जानातीत्यनन्तमहिम्नः ॥ ७ ॥

अकृतमपराधं गतविस्मयः अहो अहं धीर इति विस्मिय-स्मयो गर्वस्तद्रहित इत्यर्थः । एजमानान् शापभिया कम्पमानान् मो विभोः ! समर्थ ! हे देवगणश्च मा भैष्ट बलिं पूजोपहारं शाकपत्रादिकमस्मदातिथ्यं गृह्णीत वयं सम्पन्ना एव भवमेति चेत् इमम् आश्रमम् अशून्यं कुरुध्वम् आतिथ्याभावे आश्रमः शून्यतुल्यः स्यादिति भावः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एतदेव विवृणोति—आद्यावितिं । आद्यौ स्थित्युत्पत्तेः पूर्वम् अस्य त्रिगुणात्मकस्य जगतः सर्गे नाद्यस्थे सप्तमी सर्गार्थं यस्य पुरुषस्य नियोजककर्तुः सम्बन्धी अंशभूतः रजसोपलक्षितः शतधृतिः नियोजककर्ता अभूत् तच्छब्दसम्बन्धाद्यच्छब्दलाभः यस्य क्रतुपतिर्यज्ञफलदः द्विजधर्मसेतुः त्रैवर्णिकधर्मविधारण-हेतुर्विष्णुः स्थावतारभूतः स्थितौ स्थित्यर्थमभूत् । शुद्धसत्त्वेनो-पलक्षित इति शेषः । यस्यांशभूतः तमसोपलक्षितः रुद्र अप्य-याय प्रलयाय अभूत् "सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः" इति ब्रह्मवचनात् । इति एतैर्ब्रह्मादिभिः नियोजककर्तृभिः सततं पुनःपुनः प्रजासु उद्भवादयो यतो नियोजकात्कर्तुर्भवन्ति स आद्यः पुरुष इत्यन्वयः ॥ ५ ॥

श्रीनरनारायणावतारं तच्चरितं चाह—धर्मस्येत्येकादशभिः । धर्मस्य धर्मात् दक्षस्य दुहितरि कन्यायां मूर्त्याम् ऋषिषु प्रवरः श्रेष्ठः प्रवरत्वे हेतुः प्रशान्त इति । नारायणः नर इति द्विरूपः अजनिष्ट जातः नैष्कर्म्यं भगवत्स्वरूपं लक्ष्यते साक्षात्क्रियते येन तत्कर्म भगवज्ज्ञानाचरणादिकं श्रीमन्नारदादिभ्यः उवाच स्वयं चचार योऽद्यापि ऋषिवर्यैः श्रीमन्नारदादिभिः निषेवि-ताङ्घ्रिः सन् तेभ्यः नैष्कर्म्यलक्षणं कर्म वदन् स्वयमाचरन् आस्ते ॥ ६ ॥

धाम स्थानं नैष्कर्म्यलक्षणकर्मानुष्ठानेन जिघृणीति विशङ्क्य अनन्तमहिम्नः अतत्प्रभाववित् इन्द्रः सगणं कामं तत्कर्मानुष्ठा-नविघातार्थं स्वयुक्तं नियोजितवान् तदनन्तरं स कामः बदरीमित्र-पाश्रयाते यः आश्रममप्सरआदिभिः सह गतः स्त्रीणां प्रेक्षणाख्यैरेषवो बाणास्तैरविध्यत् ॥ ७ ॥

गतविस्मयोऽपाकनगर्वः अकृतमपराधं बलिमातिथ्यम् इममा-श्रमम् अशून्यम् आतिथ्यप्रदानयुक्तं कुरुध्वम् ॥ ८ ॥

---

### भाषा टीका ।

पहिले इस संसार की सृष्टि के समय में भगवान् ने रजोगुण से ब्रह्मा का रूप धारण किया, फिर यज्ञपति होकर ब्राह्मणादिकों के धर्म के रक्षाकर्ता होकर सत्त्व गुण परिपूर्ण विष्णुरूप से इसका पालन किया फिर उनहीं आदि पुरुष ने इस संसार के नाश करने के लिये तमोगुण से रुद्रावतार धारण किया इस प्रकार से निरन्तर प्रजाओं में उत्पत्ति स्थिति प्रलय करते हैं ॥ ५ ॥

फिर दक्षकी पुत्री मूर्ती देवी के गर्भ में धर्म देवके सकाश से ऋषियों में श्रेष्ठ शांत मूर्ति नरनारायण रूप धारण करके प्रगट भये फिर मोक्ष के हेतु ज्ञान को नारदादिकों को उपदेश किया और आपने अनुष्ठान किया जो कि अभी पर्यन्त भी बदरीकाश्रम में ऋषि श्रेष्ठों से चरण सेवा को प्राप्त होकर विराज मान हैं ॥ ६ ॥

बदरीनारायण भगवान् की योग तपस्या देखकर इन्द्र को शंका भई की यह कोई महात्मा है मेरे इन्द्रपद को लेलेवैगा ऐसे डरकर काम देव को उसके देव गणों के सहित बदरिकाश्रम को भेजा, यह काम देव भी भगवान् की महिमा को नहीं जानता था सो उसने अप्सराओं को तथा वसन्त ऋतुको सुंदर पवन को वहां लेजाकर स्त्रियों के कटाक्ष रूप बाणों से बदरीनारायण को वेधन किया ॥७॥

जब उन सबों से भगवान् का कुछ भी विकार न भया तब वे सब शाप के भय से कांपने लगे तब भगवान् अभि-मान रहित होकर और यह इंद्र का व्यतिक्रम है ऐसा जान कर उन सबों से बोले कि हे कामदेव ! हे पवन ! हे देव स्त्रियो ! तुम लोग कुछ मत डरो यह भोजनादिक पदार्थ ग्रहण करो और इसी ठिकाने रहो यहां से मत जाओ ॥ ८ ॥

---

इत्थं ब्रुवत्यभयदे नरदेव ! देवाः सव्रीडनम्रशिरसः सघृणं तमूचुः ।
(१)नैतद्विभो ! त्वयि परेऽविकृते विचित्रं स्वारामधीरनिकरानतपादपद्मे ॥ ९ ॥
त्वां सेवतां सुरकृता बहवोऽन्तरायाः(२) स्वौको विलङ्घ्य परमं व्रजतां पदं ते ।
नान्यस्य बर्हिषि बलीन् ददतः स्वभागान् धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि ॥ १० ॥
क्षुत्तृट्त्रिकालगुणमारुतजैह्व्यशैश्न्यानस्मानपारजलधीनतितीर्य केचित् ।
क्रोधस्य यान्ति विफलस्य वशं पदे गोर्मज्जन्ति दुश्चरतपश्च वृथोत्सृजन्ति ॥ ११ ॥
इति प्रगृणतां तेषां स्त्रियोऽत्यद्भुतदर्शनाः ।
दर्शयामास शुश्रूषां स्वर्चिताः कुर्वतीर्विभुः ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

हे नरदेव ! अभयदे श्रीनारायणे इत्थं ब्रुवति सति देवाः कामादयः सव्रीडानि नम्राणि शिरांसि येषां ते लज्जाभरेणैवावनतशिरस्का इत्यर्थः । सघृणं यथा भवति तथा कृपां प्रार्थयन्त इत्यर्थः । कृपायुक्तं तमिति वा आहुः । परे मनोऽविकृते स्वारामाश्च ते धीराश्च तेषां निकरैरानतपादपद्मं यस्य तस्मिन् त्वय्येतत् क्रोधाद्यनुकम्पादि न विचित्रम् ॥ ९ ॥

अस्माकं त्वपराधाचरणं स्वभावत्वान्न चित्रमित्याहुः—त्वामिति । त्वां सेवमानानां सुरैरिन्द्रादिभिः कृता अन्तराया विघ्ना भवन्ति कस्मादित्यत आहुः—स्वौक इति । स्वस्थानं स्वर्गमतिक्रम्य परमं तव स्थानं व्रजतां नान्यस्य स्वामसेव-मानस्य कुतः ? बर्हिषि यज्ञे स्वभागान्पुरोडाशादीन्बलीन्करानिव कराद इव राज्ञे इन्द्रादिभ्यो ददतः अगच्छतः तर्हि किं मद्भक्ता विघ्नैरभिभूयन्ते ? नेत्याहुः, धत्त इति । यदीति निश्चये यतस्त्वं सर्वसुराधीश्वरोऽविता रक्षकोऽतोऽसौ विघ्नानां मूर्ध्नि पदमङ्घ्रिं धत्ते कुतः ? पुनस्तस्य विघ्नशङ्केति भावः ॥ १० ॥

त्वद्भक्तानां तु केवलं तपश्चरतां ईदृशी गतिः अस्माकं वा वशं यान्ति क्रोधस्य वा । तत्रापि अस्मत्कृताः कामोपभोगमपि तावद-नुभवन्ति क्रोधस्य वशाः पुनरतिमन्दा इत्याहुः—क्षुत्तृडिति । क्षुच्च तृट् च त्रिकालगुणाश्च शीतोष्णवर्षाणि च मारुतश्च प्राणो बाह्यो वा जैह्व्या जिह्वाभोगाश्च शैश्न्या गुह्योपभोगाश्च एतानस्मानपारजलधिरूपानतितीर्य विलङ्घ्य गोष्पदे मज्जन्ति कुतः ? यतः क्रोधस्य विफलस्य वशं यान्ति गच्छन्ति । किञ्च, अज्ञे मज्जन्तो यथा विवशाः सन्तो मस्तकारोपितं भारमुत्सृ-जन्ति तथा वृथैव न मोक्षाय न च भोगाय शापादिना दुश्चरं तप उत्सृजन्ति ॥ ११ ॥

स्त्रियो योगनिर्मिताः स्त्रीः शुश्रूषां कुर्वतीः स्वर्चिताः सम्यगलङ्कृतास्तेषां स्वयावधर्यादिदर्पोपशमाय दर्शयामास ॥ १२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

लज्जाया मनोधर्मत्वेन शिरःसु नम्रत्वस्यासम्भवात् स्वाहित्यस्य च लज्जानुभावत्वेनैव [ ! ] विवक्षितत्वाल्लज्जाभरेणैवेत्यादि आर्थिकार्थत्वेन व्याख्यातं क्रियाविशेषणं घृणाया विषयो न व्यक्तोऽत इत्थं इत्युक्तम् यतस्तत्र्यस्य व्यवहितपूर्वपरामर्शकत्वात् क्रोधानुकम्पा-दीनि व्याख्यातं तत्र प्रकृष्टत्वेनानेन क्रोधाभावरूपोऽर्थोऽपि व्यक्तः सा मैत्र्यनेन भवानभक्तुःसम्बन्धाच्छक्यपाऽनुकम्पोऽक्त्वा भाविना-तिष्ठं तदपि यदि पूर्वाहितत्वमेनोक्तम् ॥ ९ ॥

यदीति । यदि येदाः प्रमाणं स्युरितिवन्निश्चये यतस्त्वं भक्तानां निश्चयेन रक्षकोऽतोऽसौ भक्तो विघ्नान् अवतीत्यर्थः ॥ १० ॥

तत्र क्रोधवशगता अपि ते कामोपभोगमपीति यद्यपि कामो-पभोगस्तपःफलं न भवति तथापि अस्मदनुगमात्तु तुच्छमपि तत् अनुभवन्तीत्यपेरर्थः । क्रोधस्य गोष्पदत्वं स्वविषयघातमात्रेण तुच्छत्वात् जिह्वादिजयापेक्षया तुच्छत्वात्तुच्छफलत्वाच्च न तु विषयना-भवद्दुर्भरत्वम् । तदुक्तं सप्तमे "कामस्यान्तं हि क्षुत्तृड्भ्यां क्रोध-स्यैतत्फलोदयात् । जनो याति न लोभस्य जित्वा भुक्त्वा दिशो भुवः" इति क्रोधस्य गोष्पदत्वारोपेण तद्गताज्ञ मज्जनकर्तृत्वारोपेण तपसि मस्तकभारत्वमारोपितम् । वृथैवेत्यस्य व्याख्यानं न मोक्षा-येत्यादि ॥ ११ ॥

योगबलेन दर्शयामास ॥ १२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अविकृते विकाररहिते स्वारामधीराः आत्मारामावि-द्वांसः ॥ ९ ॥

स्वौकः स्वर्गलोको देवगृहं स्वर्गं विलङ्घ्येत्यर्थः ॥ १० ॥

अस्मानपारजलधीन् अस्मानेव जलधीन् इति पदे गोः गोष्पदे ॥ ११ ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे नरदेव ! अभयदे श्रीनारायणे इत्थं ब्रुवति सति देवाः कामादयः सव्रीडानि नम्राणि च शिरांसि येषां ते लज्जाभरेणावनतशिरस्का इत्यर्थः । सघृणं कृपायुक्तं यथा भवति तथा कृतापराधेऽस्मास्वनुकम्पां कृत्वा यथास्मान् रक्षेरित्यर्थः । तं श्रीनारा-

(१) नेयं विभो ! त्वयि परे विकृतिर्विचित्रा इति विज० पाठः (२) त्वां सेवतां बहवोऽन्तरायास्त्वौको विलङ्घ्य इति विज० पाठः ।

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

बहुप्रकारा विघ्नास्तत्कार्ये ततश्च किमपि कार्यं न सिद्ध्यतीत्यर्थः प्रवाहे बलिं दत्त्वा ततः स्वभागान् मर्यादायां नच ते सर्वत्र विघ्नकर्त्तारो दुर्जना इव तदाह—नान्यस्येति । अनन्यत्वेनैकत्वात् यद्यपि "वदन्तु चरित" इति स्ववचनेन भगवतोऽप्येतदभिमतं तथापि लोकापवादात् स्वयं वा वञ्चिता विघ्नस्थानां तदास्थानं प्राप्नोति कश्चिदित्यर्थः । विघ्नानां प्राचुर्ये किं कर्त्तव्यमत आह—यदि विघ्नमूर्ध्नीति विघ्नास्तत्कार्याणि तेषु मस्तके स्थापितवन्तः यदि तत्रैव तत्स्थापनं तर्हि तत्रैव पदं च धत्त इत्यर्थः । उत्तरवाक्यगतो यच्छब्दः तच्छब्दं नापेक्षते "तथा न ते माधव" इत्यत्र भगवदीया बान्धवा इव उदासीनाः सेव्यमानास्त्वत्रेति विशेषः ॥ १० ॥

एतद्दूरीकरणाय विघ्नानां माहात्म्यमाह परः सहस्रेष्वपि विघ्नेषु षाड्गमे प्रधानभूताः तत्राप्युत्तरोत्तराधिक्यं तदाह—क्षुदित्यादिना "समुद्र इव हि कामः" इति श्रुतेः । अग्न्यप्रकृतिकस्य कामस्य उत्तरणं कठिनम् अन्यथा यावज्जीवमनन्तजन्मसु बाधते तत्र सहन तरणा प्रतीकारो नवाग्नय अतः प्रतीकारसाधनानि कर्तृणां वशीकरणं चापत्तौ धर्म्म सर्वेषां मवशीकृतानामेव तरणादिशङ्का प्रतिनीयेति बहुकालसहने तथा न बाधन्त इति न दुर्वमाः कामे तु मग्नस्यैन्द्रियं सुखमस्ति क्रोधे तदपि न स्मरणस्य दुःखाभावहेतुत्वेऽपि न स्वकृते विशेषः क्रोधश्च दुःखात्मकः तदपि विवेकाभिमानवत एव क्रोधे सहनशक्तेव नास्ति वशीकृत एव भवतीत्याह—वशं यान्तीति । कामाविचारे क्रोधस्त्वनितुच्छः प्रवाहमर्यादायां स्थित्यभावात् विवेकविभूतित्वाच्च हेतोरत्यभावात् तदाह—गोः पदे मज्जन्तीति—विरुद्धवाक्यस्य पदैकदेशे मज्जन्तीत्यर्थः । कामः कायिकः क्रोधो वाचनिक इति सिद्धम् उभयोस्तारतम्यार्थं त्रिगुणवचनं कामे मग्नानां मर्यादाफलानुभावोऽस्ति क्रोधे तदपि नेत्याह—दुष्करतपश्च वृथोत्सृजन्तीति । मग्नः शिरोभारमिव स्वपरार्थोपयोगाभावात् वृथेति त्रिकालगुणाः शीतोष्णवर्षाः अतिशयेन तीर्त्वा गोष्पदे ईश्वरानिर्मिते एवं कामक्रोधाभावं भगवति दृष्ट्वा भक्तेष्वप्रार्थनस्यापौरुषत्वप्रतिषेधा स्तुतिरुक्ता ॥ ११ ॥

एवं ज्ञानमाचिन्त्यैश्वर्यज्ञानादिति तन्निराकरणाय स्त्रियो दर्शितवानित्याह—स्त्रीभिः कामजयो यस्य क्रोधस्याप्यर्चनेन हि उत्कर्षाधायकत्वेन सुमनोरित्यचिन्त्यता तेषां सतां तेऽस्य इति वा तेषामेव सर्वान्यस्य इति वा प्रयङ्गान्तरस्याः अन्यथा उर्वशीदानमनुचितं स्यात् कामादीनामपि विवेकविस्मारकत्वेनेव्यद्भुतत्वं दर्शनं याभ्यां ताः स्त्रीः अत्र्यंस कामादीनां पूजायां स्थापनायां ननु तूष्णीं भावेनापि सर्वसिद्धौ किमित्येवं कृतवानित्यत आह—विभुरिति । समर्थस्य हि भक्तैः क्रीडनं उचदित्यर्थः ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हे नरदेव ! भगवन् श्रीनारायणे इत्थं ब्रुवति सति देवाः कामादयः सघृणा कृपायुक्तं तं परं परमे निर्विकारे आरामाः आत्मारामाः ॥ ९ ॥

त्वद्भक्ता अपि त्वत्प्रसादादस्मानाक्रम्य गच्छन्ति, कुतः ? पुनरयं गच्छत्विच्छसीत्याहुः—त्वां सेवमानानां जनानां सुरैरिन्द्रादिभिः कृता अन्तराया अस्मदादयो विघ्ना बहवो भवन्ति इन्द्रादेर्विघ्नाः कथं क्रियन्ते तत्राहुः—ओक इति । स्वस्थानं स्वर्गं अतिक्रम्य परमं तव स्थानं व्रजतां विघ्नकरणं खलु मात्सर्यहेतुकमिदमिति भावः । नान्यस्य कर्मिप्रभृतेः कुतः यद्धि बली यज्ञे बलीन् पुरोडाशादीन् तत्तद्भागान् इन्द्रादिभ्यः करान् राज्ञे कर्षकस्येव ददतः तर्हि मद्भक्ता विघ्नैर्भ्रंश्यन्ति नेत्याहुः । धत्त इति । यद्यपीति भिन्नसंबन्धा वत्वं सर्वसुराधीश्वरोऽसि सत्यका रक्षकः सतोऽसौ विघ्नानां मूर्ध्नि पदं मकृद्धि धत्ते कुतः । पुनस्त्वमेव विघ्नक्रियेति भावः ॥ १० ॥

त्वद्भक्तिविमुखानां तपस्विनां तु इत्याहुः अस्माकं वा वश्या भवन्ति क्रोधस्य वा तत्राक्तभक्ताः कामोपभोगमपि तावदनुभवन्ति, क्रोधस्य वश्याः पुनरतिमन्दा इत्याहुः । क्षुत्तृडिति । क्षुच्च तृट् च त्रिकालगुणाः शीतोष्णवर्षाणि च मारुतस्पर्शादिन्द्रियभोग्यो मरुदादिरपश्च जैह्म्यो जिह्वाभोग्यश्च शैश्न्यः शिश्नभोग्यश्च एतान् अस्मान् अपारजलधिरूपान् अतितीर्य विलङ्घ्य गोष्पदे मज्जन्ति किञ्च, जले मज्जन्तो यथा निरवशीभूय मस्तकारोपितं धनभारमुत्सृजन्ति तथा वृथा न मोक्षाय न भोगाय शापादिना दुष्करं तपश्च विसृजन्ति ॥ ११ ॥

प्रगृह्यतां इतुयत्तास्मादाह स्त्रियः योगनिर्मिताः स्त्रीः शुश्रूषां स्वसेवां कुर्वतीरिव प्रकटीरित्यर्थः । तेषां स्वलावण्यादिदर्पशमनाय दर्शयामास ॥ १२ ॥ १३ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे नरदेव ! देवाः कामादयः सव्रीडानि नम्राणि शिरांसि येषां ते सघृणं कृपायुक्तं तं भगवन्तमूचुः । परे पूर्णे अविकृते क्रोधादिरहिते स्वारामे भवन्ति ये धीराः प्रसन्निष्ठाः तेषां निकरैः समूहैः आनतं पादपद्मं यस्य तस्मिन् एतत्कामक्रोधादिसंस्पृष्टत्वं न ॥ ९ ॥

भगवतः कामाद्यस्पृष्टत्वं कैमुतिकन्यायेनाहुः—त्वामिति । अन्यस्य भगवत्सेवकस्य यज्ञे बलीनि च स्वभागान् सुरेभ्यो ददतोऽपि सुरकृताः बहवः अन्तरायाः भवन्ति स्वौकः स्वस्थान सुरलोकं विलङ्घ्यापि ते परमं पदं स्थानं व्रजतां त्वां सेवमानानां तु सुरकृताः अन्तरायाः नेत्यन्वयः । न तत्रेति किं वक्तव्यं यदि तु विघ्नमूर्ध्नि पदं धत्ते प्रभुत्वं कुर्यास्तदा सेवक इति शेषः तदा त्वमविता रक्षकोऽस्येव ॥ १० ॥

भगवतस्तद्भक्तानां च कामक्रोधादिविवर्जितत्वं निरूप्य भगवद्भक्तानां कामादिवश्यत्वेनाकृतार्थत्वमाहुः—क्षुदिति । बहवस्तावत् क्षुत्तृडादिकामाभिभूताः नासिद्धा अकृतार्था एवं म्रियन्ते केचित्तु क्षुच्च तृट् च त्रिकालगुणाः त्रिधातुमोदगुणाः शीतोष्णवर्षाणि च मारुतश्च नानाविधजैह्वयाः जिह्वाभोगाश्च शैश्न्याः गुह्योपभोगाश्च तानस्मान् अपारजलधीन् जलधिवद्दुस्तरान् सुखबुद्ध्या तत्र तत्राशक्तैर्जनैः अकुमशक्यान् अतितीर्य विलङ्घ्य तत्र तत्रासक्ति अकृत्वापि गोष्पदे मज्जन्ति अत्यल्पे क्रोधनाशिन गर्ते पतन्ति तदेव स्पष्टयन्ताहुः—क्रोधस्य वशं यान्तीति । पुत्रशिष्यादिशिक्षार्थविषयकक्रोधव्यावृत्त्यर्थमाहु—विफलस्येति ।

(१ ते देवानुचरा दृष्ट्वा स्त्रियः श्रीरिव रूपिणीः ।
गन्धेन मुमुहुस्तासां रूपौदार्यहतश्रियः ॥ १३ ॥
तानाह देवदेवेशः प्रणतान् प्रहसन्निव ।
आसामेकतमां वृङ्ध्वं सवर्णां स्वर्गभूषणाम् ॥ १४ ॥
ओमित्यादेशमादाय नत्वा तं सुरवन्दिनः ।
उर्वशीमप्सरःश्रेष्ठां पुरस्कृत्य दिवं ययुः ॥ १५ ॥
इन्द्रायाऽनम्य सदसि शृण्वतां त्रिदिवौकसाम् ।
ऊचुर्नारायणबलं शक्रस्तत्रास विस्मितः ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अत एव तपः पृथोत्सृजन्ति चकारात् कोपविषयस्य जनस्य पापं गृह्णन्ति ॥ ११ ॥

तेषां कामादीनाम् इति इत्येवं गृणतां विभुः नारायणः स्त्रियः इच्छयाऽऽविःकृताः स्त्रीः भगवन्! आज्ञापयेत्येवं शुश्रूषां कुर्वतीः भगवतापि साधुमाध्वीति स्वर्चिताः सुष्ठु अर्चिताः अद्भुतदर्शनाः महदाश्चर्यदर्शनाः कामादिनियोजकेन्द्रादिदृष्टपूर्वात्यन्तमुत्कृष्टदर्शनाः स्वसौन्दर्यादिदर्पहराः दर्शयामास ॥ १२ ॥

भाषा टीका ।

हे नरदेव! परीक्षित जी! इस प्रकार से अभय देनेवाले भगवान् के कथन को सुनकर कामादिक देवता लज्जित होकर मस्तकों को नीचा करके बड़ी अधीनता से भगवान् से बोले, कि—हे प्रभो! यह ऐसी बात आप के विषय में कुछ आश्चर्य नहीं है, क्योंकि? आप माया से परे हैं और विकार रहित हैं केवल अपने आत्मस्वरूपही में रमण करने वाले और मुनिजन आप के चरण कमलों की सेवा करते हैं ॥ ९ ॥

जो पुरुष आप की सेवा करते हैं उनके ऊपर देवता लोग बहुत विघ्न करते हैं क्योंकि वे उपासक लोग देवताओं के स्थानों को भी लांघकर आप के परमपद को जाने वाले हैं, तिस से और जो लोग कर्मकांड में देवताओं को बली देते हैं तिनका विघ्न देवता नहीं करते हैं परन्तु तो भी यदि आप भक्तों की रक्षा करने वाले हो तो वे उपासक लोग विघ्न करने वालों के मस्तकपर पैर रखकर आप के स्थान को चले जाते हैं ॥ १० ॥

संसार में कोई तपस्या वाले ऐसे हैं कि जो क्षुधा तृषा और तीनों कालों के दुःख और गुण कृत दुःख पवन के जिह्वा रस के लिंग इंद्रिय के दुःख इस काम आदि अपार समुद्रों के पार उतर कर निष्फल केवल क्रोध के वश होजाते हैं सो गौ खुर के [illegible] जल में डूब जाते हैं बड़ी दुष्कर तपस्या को व्यर्थ ही छोड़ देते हैं ॥ ११ ॥

इस प्रकार से उन के स्तुती करनेही में भगवान् ने बड़ी अद्भुत रूप वाली स्त्रियों को दिखा दिया जोकि सुन्दर प्रसंशनीय थीं और शुश्रूषा कर ने में हाजिर होरहीं थीं ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

रूपिणीर्मूर्त्तिमतीः श्रीरिव ताः स्त्रियः स्त्रीर्दृष्ट्वा तासां तु रूपस्यौदार्येण महत्त्वेन हता श्रीः कान्तिर्येषां ते ॥ १३ ॥

वृङ्ध्वं वृणीध्वं [illegible] इति [illegible] आऽऽह सवर्णां समानरूपाम् [illegible] रूपीति [illegible] तथाऽपि स्वर्गस्य भूषणरूपाम् ॥ १४ ॥

सुरवन्दिनो देवभृत्याः ॥ १५ ॥

इन्द्राय इन्द्रं प्रति नारायणबलमूचुः [illegible] प्राप्तो विस्मितश्च तत्र विस्मित [illegible] ॥ १६ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपनी टिप्पणी ।

स्त्रियः स्त्रीः तासामुर्वश्यादीनाम् ॥ १३ ॥

तान् कामादीन् तेषां तिरस्कारं शमितं हासात्तौचित्यादिव्यञ्जनेन सुखप्रसादित्युत्यते । यद्वा, भगवदाराधनतपोनिष्ठानां न विघ्नाः प्रभवन्तीति प्रहसन् तथाच स्वेत्यनाधिकार्थं स्वर्गभूषणरूपामिति व्याख्यानाद्भूषणामित्येव पाठः ॥ १४ ॥

तु ओमित्यङ्गीकारं आदेशमाज्ञाम् ॥ १५ ॥

तत्र नारायणबलं विस्मितो बभूव ॥ १६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वृङ्ध्वं वृणीध्वम् ॥ १४—१६ ॥

(१ ता इति वी० रा० पाठः ।

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ता इति देवानुचराः कामादयः श्रीरिव रूपिणीः सुन्दरमूर्त्तिमतीः ता नारीर्दृष्ट्वा तासां रूपौदार्येण रूपसौन्दर्येण हृता श्रीः कान्तिर्येषां ते तासां गन्धेन शरीरसौरभ्येन मुमुहुः पारवश्यं प्रापुः ॥ १३ ॥

किञ्च, देवदेवो ब्रह्मा तस्यापीशः श्रीनारायणो नाम कामादीनाह-तत्रवाह, आसां स्त्रीणां मध्ये एकतमां वृणुध्वं वृणीध्वं क वयं वराकाः क चेमा इति चेत्तत्राह सवर्णां समानरूपाम इति न कास्वसमनुरूपा इति चेत्तत्राह, स्वर्गभूषणामिति । स्वर्गस्य भूषणरूपाम इति ॥ १४ ॥

ओमित्यादि मुनिवाक्यम ते सुरवन्दिनो देवभृत्याः कामादयः आदेशं भगवदाज्ञाम ओमित्यङ्गीकृत्य तं प्रणम्य च सर्वश्रीणाम-प्सरःश्रेष्ठामादाय तां च पुरस्कृत्याग्रतो निधाय दिवं स्वर्गं ययुः ॥ १५ ॥

गत्वा च किं चक्रुरिन्द्रश्च किं कृतवांस्तदाह-इन्द्रायेति । सदसि त्रिदिवौकसां देवानां शृण्वतां सताम इन्द्राय नमस्कृत्य श्रीनारायणस्य बलम ऊचुः शक्र इन्द्रस्तत्र तद्वाक्यैर्विस्मितः सन् तत्रास अभैषीत ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रूपिणीः प्रशस्तरूपाः ॥ १३ ॥

वृणुध्वं स्वीकुरुत ॥ १४ ॥

सुराणां वन्दिनः वन्दिग्रहणपटवः ॥ १५—१६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अदेयदानं वक्तुं तदपेक्षमाह—देवानुचरा अपि इन्द्रादयस्तः-परस्त्रीदर्शनेऽपि मोहाभावाय तादृशोऽपि सर्वजगत् श्रियो मूर्त्ति-मत्य इव ता जाता इति तासां पद्मकिञ्जल्कगन्धानां गन्धेनैव मोहं प्राप्ताः कुतः पुनः ज्ञानमित्यर्थः । श्रीरिति द्वितीया बहु-वचनं गन्धेनैव यत्र मोहः किं पुनः स्पर्शनादिभिरिति भावः । लोलुपतां वक्तुं विशेषणान्तरमाह—तासां रूपौदार्येण हृता श्रीर्येषामिति उत्तरस्यैवेदं पश्चया अलुक् श्रीर्द्विविधा: कान्ति-र्धनं चेति रूपेण कान्त्यापहारेण कान्तिनाशः औदार्येण च धनस्य च औदार्याभावे धनं शिलावत् अथवा रूपस्य यदौ-दार्यं तासां रूपसन्निधानमात्रेण सर्वे रूपवन्तो भवन्तीति पूर्वकान्तिनाशः ॥ १३ ॥

तेषामभिप्रायं ज्ञात्वा अदेयमपि दत्तवानित्याह—अधि-कारामिनिवेशं दृढं मत्वा सन्तुष्ट इव ददातीति देवानां देवा इन्द्रादयस्तेषामीश इति बर्वेदयापीन्द्रस्य मोमः अतः अपकारिभोगपर्यवसानान्न दद्यात् तेषां दोषाभावमाह—प्रण-तानिति । मोहमपि प्राप्य ते न पश्यन्तीत्यर्थः । अत एव दृष्टमपि भीतान् दृष्ट्वा जातमपि हास्यं दोषाभावायोपसंहृतमित्याह— प्रहसन्निवेति । भवतामिन्द्रस्य चोपकाराय सवर्णां स्वर्गभूषणा-मिति समानो वर्णो यस्या इति पञ्चमी ॥ १४ ॥

अननुभावप्रवृत्तिं वक्तुं हेतुमाह—ओमित्यङ्गीकारे आज्ञा-मादाय नमनेन सेवकत्वख्यापनं इत्यग्रहणे कीर्त्तिख्यापने च हेतुः वन्दिन इति अप्सरसमेतेषां सुखाय ॥ १५ ॥

अनुभावमाह—कामादिजयो वशीकरणम इन्द्रादिमानभङ्ग-श्चेति सर्वं तत्रासेति भयम यथाप्युक्तं करिष्यतीति चरित्रम विस्मयः । एवं देवविस्मापनं नारायणचरित्रमुक्त्वा क्रमेणोप-कारानुसारेण सर्वावतारान् सङ्क्षेपत आह—यावदध्यायसमाप्ति तत्र क्रियापेक्षया ज्ञानस्य प्राधान्यं तत्रापि प्राधान्यं सनकादीनां तेन प्रथमं हंसचरित्रं प्रबोधनाध्याये स्पष्टम ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तेषां पराभवदर्शनेन प्रहसन् इवेत्यतिगाम्भीर्येण प्रहासरोषो व्यञ्जितः वृणुध्वं वृणीध्वं क वयं वराकाः क चेमा इति चेत्तत्राह—सवर्णां समानवर्णां अस्मदभिन्नानां विभूतिरूपां प्राकृतामपि कामिनीत्यर्थः । तथापि स्वर्गस्य भूषैव भविष्यतीति, स्वर्गेति ॥ १४ ॥

आदेशमादाय आज्ञां गृहीत्वा सुरवन्दिनो देवभृत्याः ॥ १५ ॥

तत्रास अहो मया अपराद्धमिति भयं प्राप्तः ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

देवस्येन्द्रस्यानुचराः ते कामादयः रूपिणीः प्रशस्तरूपाः किं बहुना ? श्रीरिव श्रीसारूप्ययुक्ताः स्त्रियस्ताः स्त्रीर्दृष्ट्वा तासां रूपस्यौदार्येणोज्जृम्भितत्वेन हृता श्रीः कान्तिर्येषां ते तथाभूताः सन्तः तासां गन्धेन मुमुहुः ॥ १३ ॥

देवाः इन्द्रादयः तेषां देवाः ब्रह्मशिवादयः तेषामीशः इव-शब्दः स्वभावादेव प्रहसितमुखत्वं भगवतो द्योतयति-वृणुध्वं वृणी-ध्वम । ननु, मत्कुणेन गरुडस्येव मादृशैः एतासां स्वीकरणं न युक्तमित्यत्राह-सवर्णामिति । स्वसमानरूपाम । ननु, सवर्णा अस्मु नास्तीत्यत्राह—स्वर्गभूषणामिति । एकस्य प्राणिनस्तु का कथा सर्वोऽपि स्वर्गः आसां मध्ये एकतमाया अपि तुल्यो यद्यपि नास्ति तथापि स्वर्गालङ्कारतयैकां स्वीकुरुतेति फलितोऽर्थः ॥ १४ ॥

सुरस्येन्द्रस्य वन्दिनो भृत्याः ॥ १५ ॥

इन्द्राय इन्द्रं प्रति नामस्य प्रणम्य नारायणस्य बलमैश्वर्य-मूचुः तदा शक्रः विस्मितः तत्रास भीतश्च ॥ १६ ॥

---

### भाषा टीका ।

इन्द्र के सेवक उन काम देवादिकों ने अब रूपवती लक्ष्मी सरीकी उन स्त्रियों को देखा तब उनके रूपकी सुन्दरतासे इनकी श्रीहत होगई और उनके गन्ध से मोहित होगये ॥ १३ ॥

जब वे देवता नमस्कार करते थे तब भगवान् हसते सरीके उन से बोले कि इन अप्सराओं के मध्य में से एक किसी को अपनी श्री देख कर तुम लेजाओ जो कि तुमारे स्वर्ग की भूषण रूप हो जावेगी ॥ १४ ॥

हंसस्वरूप्यवददच्युत आत्मयोगं दत्तः कुमार ऋषभो भगवान् पिता नः ।
विष्णुः शिवाय जगतां कलयाऽवतीर्णस्तेनाऽऽहृता मधुभिदा श्रुतयो हयास्ये ॥ १७ ॥
गुप्तोऽप्यये मनुरिलौषधयश्च मात्स्ये क्रौडे हतो दितिज उद्धरताऽम्भसः क्ष्माम् ।
कौर्मे धृतोऽद्रिरमृतोन्मथने स्वपृष्ठे ग्राहात्प्रपन्नमिभराजममुञ्चदार्त्तम् ॥ १८ ॥
संस्तुन्वतोऽब्धिपतितान् श्रमणानृषींश्च शक्रं च वृत्रवधतस्तमसि प्रविष्टम् ।
देवस्त्रियोऽसुरगृहे पिहिता अनाथा जघ्नेऽसुरेन्द्रमभयाय सतां नृसिंहे ॥ १९ ॥
देवासुरे युधि च दैत्यपतीन् सुरार्थे हत्वाऽन्तरेषु भुवनान्यदधात्कलाभिः ।
भूत्वाऽथ वामन इमामहरद्बलेः क्ष्मां याच्ञाच्छलेन समदाददितेः सुतेभ्यः ॥ २० ॥

भाषा टीका ।

तब वे देव के मुख्य गण भगवान् की आज्ञा का अङ्गीकार करके नमस्कार करके सब अप्सरों मे श्रेष्ठ उर्वशी को ले आगे करके स्वर्ग को चले गये ॥ १५ ॥

इन्द्र की सभा मे जाकर नमस्कार करके सब देवतों के सुनतेही श्रीनारायण के प्रभाव को उनने वर्णन किया जिसको सुनकर इन्द्र भी विस्मय को प्राप्त होकर बहुत डरगये ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्यानप्यवतारांस्तच्चरितानि चाऽऽह–हंसस्वरूपीति । दत्तो दत्तात्रेयः कुमारः सनकादिः नः पिता ऋषभश्च विष्णुरेव कलयाऽवतीर्णः सन्नात्मयोगमवदत, तेन विष्णुना हयास्ये हयग्रीवावतारे मधुभिदा सता तत्र पातालतः सनातन्यः श्रुतय आहृताः ॥१७॥

इला पृथ्वी ओषधयश्च गुप्ताः क्रौडे च वाराहावतारे ग्राहादिन्द्रममुञ्चन्मोचयामास एवमादौ यत्रावतारे नाम नास्ति तत्र विष्णुः शिवाय जगतां कलयाऽवतीर्ण इत्यनुवर्तनीयम् ॥१८॥

संस्तुन्वतः स्तुतिं कुर्वाणान् ऋषीन्बालखिल्यान्कश्यपार्थं समिदाहरणे गोष्पदे निमग्नानिन्द्रेणोपहसितानुद्धृत्याऽऽपद्भ्योऽमोचयत् तमसि ब्रह्महत्यायां प्रविष्टं मोचयामास असुरगृहे पिहिता निरुद्धा या देवस्त्रियस्ताश्चामुञ्चदनेकावतारैः ॥ १९ ॥

अन्तरेषु सर्वमन्वन्तरेषु कलाभिर्मूर्तिभिर्भुवनान्यदधादपालयत् इमां क्ष्मां समदाददौ ॥ २० ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

आत्मयोगं ज्ञानयोगं तत्र हंसः सनकादिभ्यः दत्तो यदुप्रह्लादादिभ्यः कुमारो नारदाय ऋषभश्चास्मभ्यं ज्ञानयोगमवददिति यं ततः मधुरैस्यात् ॥ १७ ॥

गुप्त इति युगलकं हरिसञ्ज्ञकेऽवतारे ग्राहाद्गजेन्द्रं मोचयामास कुतो मोचयामित्यपेक्षायां कश्यपार्थमित्याद्यध्याहृतम् ॥ १८—१९ ॥

दधातेरप्यनेकार्थत्वेन अपालयदिति व्याख्यातम् अथेत्यर्थान्तरे ॥ २० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

दत्तः कुमारो दत्तात्रेयः अत्रापि भगवान् कलयावतीर्णः इत्यनुषङ्गः ॥ १७ ॥

मात्स्ये अप्यये प्रलये इलां भूमितरणम् अमुञ्चत अमोचयत् ॥ १८ ॥

पिहिता येनेत्यध्याहारः ॥ १९ ॥ २० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अन्यानप्यवतारांस्तच्चरित्राणि चाह–हंसस्वरूपीति । अच्युतो विष्णुर्हंसादिरूपेण जगतां शिवाय मङ्गलाय कलयाऽवतीर्णः सन्नात्मयोगं जीवात्मपरमात्मयाथात्म्यज्ञानयोगमवददुपादिष्टवान् इति सम्बन्धः । तत्र दत्तो दत्तात्रेयः कुमारः सनकादिः नोऽस्माकं कश्यादीनां पिता भगवानृषभश्च तेन विष्णुनैव हयास्ये हयग्रीवावतारे मधुभिदा मधुनामासुरस्याभिनादिति तथाभूतेन श्रुतयो वेदा अपहृता आनीताः ॥ १७ ॥

तथा मात्स्येऽवतारे मनुः सत्यव्रतः गुप्तो रक्षित इला पृथ्वी ओषधयश्चकारादृषयश्च गुप्ता इत्यर्थः । क्रौडे वराहावतारे ऽम्भसः प्रलयजलात् क्ष्मां भूमिम् उद्धरता विष्णुना दितिजो हिरण्याक्षो हतः कौर्मे कूर्मावतारेऽमृतोन्मथननिमित्तं स्वपृष्ठेऽद्रिर्मन्दरो धृतः तथा ग्राहाद्गजेन्द्रं शरणागतममुञ्चन्मोचयत् यत्रावतारनाम न दृश्यते तत्र विष्णुः शिवाय जगतां कलयावतीर्ण इत्यनुसन्धेयम् ॥ १८ ॥

संस्तुन्वतः स्तुतिं कुर्वाणानृषीन् वालखिल्यान्कश्यपार्थं समिदाहरणे गोष्पदे मग्नानिन्द्रेण उपहसितान् उद्धृत्यापद्भ्योऽमोचयत् तमसि ब्रह्महत्यायां प्रविष्टं मोचयामास असुरगृहे हिरण्यकशिपुगृहे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

पिहिता निरुद्धा या अनाथा देवस्त्रियस्ताश्चामोचयत् नृसिंहः सन् सतां साधूनामभयायासुरेन्द्रं हिरण्यकशिपुं जघ्ने हतवान् ॥ १९ ॥

देवासुरे युधि युद्धे सुरार्थे इन्द्राद्यर्थं दैत्यपतीन् हत्वाऽन्तरेषु सर्वमन्वन्तरेषु कलाभिर्मूर्तिभिरवतारैरिति यावत् भुवनान्यदधादपालयत् वामनो भूत्वा याच्ञा व्याजेन बलेः सकाशादिमां क्ष्मामहरत्तां चादितेः सुतेभ्यः इन्द्रादिभ्यः समदात्प्रायच्छत् ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ये ये हरेरवतारास्ते ते सर्वेऽप्येवंविधमाहात्म्यानुभाव इति ज्ञाप्यते—हंसस्वरूपीति। विष्णुः कलया हंसरूपेणावतीर्णो जगतां शिवायात्मयोगं परमात्मज्ञानमवदत् एवं दत्तात्रेयस्यैतदेव कुमारो नाम हरेरूपान्तरं सनत्कुमारादियोगीश्वरज्ञानोपदेष्टा—

"कुमारनामा तु हरिर्ब्रह्मचर्यवपुः स्वयम्।
सनत्कुमाराय परं प्रोवाच जगदीश्वरः" ॥

इत्यनया स्मृत्या—

"विष्णोः सनत्कुमाराख्याच्चतुर्थवुर्ज्ञानमुत्तमम्।
सनत्कुमारप्रमुखा योगिशाः परमेश्वरात्" ॥

इत्यनया श्लोकार्थः सिद्ध इति हयास्ये हयग्रीवावतारे तेन मधुभिद्धा श्रुतय आहृताः ॥ १७ ॥

मात्स्येऽवतारे इला भूमिर्गुप्ता अत्यये प्रलये सत्यव्रतो नाम मनुः सप्तऋषयश्च गुप्ताः अम्भसः क्ष्मामुद्धरतो हरेः क्रोड वराहावतारे दितिजो हिरण्याक्षो हतः अमृतोत्पत्तये क्षीरसमुद्रोन्मथने मन्दराद्रिः तापसो नाम हरिरिभराज आह्लादमुञ्चत् ॥ १८ ॥

व्यासावतारे संस्तुन्वतः श्रमणानृषीन्सङ्क्रान्तयोश्च संसाराब्धिपतितान् संसारात्त्वरममुमुचत्—

"सुपर्णा ऋषयो व्यासं नाथमाना ययुः सदा।
ध्वान्तं निवर्तयास्माकं मुमुक्षूनिति च वादिनः" ॥

इति वचनात्। व्यासावतारे इयं कथेति ज्ञायते नृसिंहे नरसिंहावतारे तमपि प्रविष्टं कर्तव्यमूढमिन्द्रं वृत्रवधतो दोषादमूमुचत् सतामभयायासुरेन्द्रं जघ्ने असुरगृहे पिहिताः अनाथाः देवस्त्रियः अप्सरसश्च व्यमोचयदिति—

"स्मरणात्तु नृसिंहस्य शक्रो मुक्तो वृत्रवधात्।
हिरण्यकहताश्चापि तथैवाप्सरसां गणाः" ॥

इति वचनसिद्धेयं कथा ॥ १९ ॥

उपेन्द्ररूपो हरिः देवासुरयुद्धे सुरार्थे दैत्यपतीन् हत्वा अन्तरेषु मन्वन्तरेषु भुवनान्यदधात् वामनो भूत्वा याच्ञाच्छलेन बलेरिमां क्ष्मामहरत् हृत्वा च तामदितेः सुतेभ्यः समदादित्यन्वयः तदुक्तं—

"उपेन्द्ररूपी भगवान्प्रतिमन्वन्तरं विभुः।
असुरान्हन्ति नियत आदिदैवे च वामनः" ॥

इति ॥ २० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तथाऽन्यानू प्रमाणपर्यन्तानाह—अच्युत इति। सर्वरूपेष्वपि स्वरूपादप्रच्युतः आनन्दरूप एव तत्तदाकारं प्रदर्शयतीत्यर्थः अवदच्युत आत्मतत्त्वमिति पूर्वार्द्धे सर्वत्रानुषङ्गः हंसदत्तात्रेयसनत्कुमारऋषभा ज्ञानकलावतीर्णाः तृतीयपादस्य सर्वत्रावतारेष्वनुषङ्गः फलवाक्यस्य कलयेति ज्ञानशक्त्या क्रियाशक्त्या वा जगतामिति त्रिलोकस्थानां तत्तदुपकारसिद्ध्यर्थं बहुवचनम्। अवतारास्त्रिविधाः सहजरूपाः समागताः शुद्धसत्त्वस्वरूपे आविर्भूताः अत एवेति च तत्र पुरुषः शरीरे नारायणः स्वतः शरीरे च तदन्ये शरीरे कृष्णः अत एकत्वाभिमाने आधाराधेयभावो निरभिमाने हंसस्तु आनन्दमयः प्रियशिरस्त्वादिरूपः हंसस्येव स्वरूपमस्यास्तीति हंसस्वरूपी अतोऽस्य भिन्नतया निर्देशः ततश्चत्वारः कुमारस्याविशेऽप्यवतारतुल्यत्वम् ऋषभे विशेषमाह—भगवान् पिता स इति। षड्गुणाविर्भावो भगवन्मार्गप्रवर्त्तकश्च अजनाभनाम्यवर्षादित्यैश्वर्यं परिपालनं वीर्यं शतक्रत्व इति धर्मो वा जनपद इति यशः जयन्त्यामिति श्रीः नायं देह इति ज्ञानं अवधूतीत इवेति वैराग्यम् अस्मज्जनतं भगवन्मार्गः तेनेति सहितस्तृतीयपादोऽग्रिमचतुर्षु ज्ञानप्राधान्येन वेदोद्धरणं हयग्रीवे मधुकैटभवधो वेदोद्धरणं च चरित्रं कर्णाभ्यामुत्पद्यमानौ शब्दमिन्द्रियमन्तर्मित्तोत्पन्नौ तद्वधेन तदुदरात् शब्दं निवेद्याहृताः श्रुतय इत्यर्थः। सर्वोऽपि प्रहर्णं पठते ज्ञानोपयोगाय प्रपञ्चस्य मधुत्वं [illegible] मायायेति तामसी माया तस्यामुत्पन्नः कैटभः प्रवाहपोषक इति तद्वधे मर्यादासिद्धिः ॥ १७ ॥

[illegible] —द्वाभ्याम्। वेदोद्धरणमात्स्यात् [illegible] अत्यये [illegible] मनुः इला ओषधयश्च [illegible] कृत्वा आहृता [illegible] [illegible] [illegible] [illegible] पृथिव्यामिमाविकारादिजानि च सत्रावतीयानि च [illegible] तथा कृता [illegible] कृष्णावतारादौ विकाराधिकाराय [illegible] तथा [illegible] भूमिसात्म्यात्तदनन्तरं वराहः दितिजो हिरण्याक्षः [illegible] अत एव [illegible] गौणा अम्भस [illegible] कृष्णावतारवत् मथ्योद्धरणसाम्यात् [illegible] कूर्मः [illegible] स्वपृष्ठ इति कालकृतश्रनादिदोषस [illegible] एवं देहाभिमानरहितान चतुर [illegible] चतुर्थपञ्चमषष्ठमन्वन्तरावतारान् कार्यसमाप्तौ वैकुण्ठगमनं [illegible] वैकुण्ठादागतान् [illegible] हरिर्गजेन्द्र [illegible] प्रपन्नार्तिमोचनामिति आर्त्युपपन्नेषु चतुर्थमन्वन्तरावतारचरित्रत्वेन गजेन्द्रस्य रूपत्वात् पञ्च [illegible] ज्ञायते प्राहस्य वैराग्यहेतुत्वाद [illegible] निर्देशः प्रपन्नामिति सङ्ग्रामे च प्रपन्नानामिति पुष्टित्वाददोषः अमोचयदिति वक्तव्ये सर्वकर्तृत्वादमुञ्चदिति आह प्रपन्नमोचने यस्य ब्रह्मक्षत्रेति विरुध्येतस्येत आह आर्त्तामिति नहि ते मोदनभूता आर्त्ताः पञ्चमन्वन्तरावतारावतारस्त्रीन् [illegible] तवात् उत्तरपूर्वकाण्डस्थान् इन्द्रं च आधिपत्यमिति [illegible] न्तरत्वात्तिरोहितं कश्यपस्याहरणासमये गोमूत्रपतितानामिति [illegible] गजेन्द्र इव तेषामवस्था गरुडेन नीयमानानां वा समुद्रे पात

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रकारेण भेदः स्तोत्रकरणं च भिन्नतया समागत्य ऋषीनमुञ्च-
दवानिति इन्द्रश्च तेनैवोद्धृत इति पुनश्चकारः वृत्रवधे प्रतीका-
रामावादसुरनार्ति प्राप्तः सोऽप्यागत्योद्धृत इति ज्ञातव्यं षष्ठे
मन्वन्तरावतारे अमृतं पाययित्वा बलिना इन्द्रासने गृहीते देवेषु
लीनेषु देवस्त्रियः असुरैः स्वस्वगृहे गुप्ताः तथापि नावतास्त-
तत उद्धृताः निरभिमानिनं नृसिंहमाह पूर्वेण तथात्वाच हिर-
ण्यकशिपुपीडासमभक्तभयोक्ता अनुसन्धेया सतामभयाय न
केवलं प्रह्लादस्य मर्यादास्थापनात् मन्वन्तरावताराणामाह अन्तेन
प्रामाण्यतः सर्वान् विशेषतः ॥ १८ ॥ १९ ॥

पुनरर्धेन वामनं सर्वेषु मन्वन्तरावतारेषु युद्धे दैत्यान् हत्वा
पुष्टिस्थत्वाद्देवार्थं त्रिभुवनरक्षणं चरित्रं चकारान्येष्वपि सङ्ग्रा-
मेषु रञ्जितनैवरिव देवाद्यध्यक्षप्रापणाय पतीनिति मन्वन्तरेषु
भिन्नता चतुर्दशत्वं च ज्ञापितं कलाभिः षड्भिः मन्वन्तरावता-
रेष्वां विलक्षणं वामनचरित्रमिति भिन्नप्रक्रमाबाधशङ्क्य-
मामिति सत्यममन्वन्तरे यत्तु मत्स्यकृतः प्रलयः स कल्पान्तरे
दक्षिणा योगे हृते वा सर्वेषां बीजरूपेण स्थितिः पश्चात्तुरुम
इति मन्वन्तरारम्भोऽपि तदैव बीजरूपधर्मोविशात्पूर्वंवत्कथा हर-
णांशः अतः बाल्यांशे दाने पुष्टित्वाद्दोषः मातृनाम्ना अवा-
नवृत्ते अतः वामनस्यैव वृद्ध्या त्रिविक्रमत्वात् वामन इत्युक्तं
अवतारनाम वामनस्वरूपेण हृता, किन्तु बलिसम्बन्धेन स्वस्व-
राजनं याञ्चात्र हेतुः याञ्चामूलकत्वाद्दानस्य स्वार्थत्वाभावाच्चतुर्भं
त्रिभिः क्रमैरसन्तुष्ट इत्यत्र प्रह्लादस्य तद्वावरणानीत्युक्तम् मदि-
मास्तपसा सन्तुष्टः अस्मिन् मन्वन्तरे केवलं पुरन्दरस्यैव न
प्राधान्यं पदत्रयस्य दानाभावाद्विमामित्युक्तम् ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हंसस्वरूपी हंसाकारः दत्तो दत्तात्रेयः कुमारः नः पिता-
ऋषभश्च विष्णुरेव कलयाऽवतीर्य्यः सन्नात्मयोगमवदत् तेन हयास्ये
हयग्रीवावतारे मधुभिदा सता ततः श्रुतय आहृताः ॥ १७ ॥

अप्यये प्रलये मनुः सत्यव्रतः इला पृथ्वी औषधयश्च गुप्ताः
क्रोडे वराहावतारे इभराजं गजेन्द्रम् अमुञ्चत् मोचया-
मास ॥ १८ ॥

संस्तुन्वतः ऋषीन् बालखिल्यान् कश्यपार्थे समिदाहरणे
गोष्पदे निमग्नान् इन्द्रेणोपहसितानुत्थाप्यामोचयत् शक्रञ्च
तमसि ब्रह्महत्यायां प्रविष्टममोचयत् पिहिता निरुद्धा देवस्त्रियः
प्रामोचयत् अनेकावतारैरिति शेषः ॥ १९ ॥

अन्तरेषु सर्वमन्वन्तरेषु अवधात् अपालयत् कलाभिर्मन्व-
न्तरावतारैः ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीहंसादीनवतारान् तच्चरित्राणि चाह-हंसस्वरूपीति। विष्णु-
रेव कलया हंसस्वरूपी दत्तादिनामकश्च अवतीर्य्यः सन् आत्मनः
'यद्विज्ञानेन सर्वं विज्ञातं भवति" तस्य इदस्य सम्बन्धियोगं ज्ञान-
योगं भक्तियोगं च अवदत् तेन विष्णुना हयास्ये अवतारे मधु-
भिदा सता ततः श्रुतयः आहृताः आनीताः ॥ १७ ॥

मात्स्ये मत्स्यावतारे अप्यये प्रलये मनुर्मुनेः रक्षितः इला
भूमिः औषधयः चकारात्सप्तर्षयः गुप्ताः अम्भसः समुद्धरता
विष्णुना क्रोडे वराहावतारे दितिजो हिरण्याक्षो हतः अमृता-
र्थमथने कौर्म्ये कूर्मावतारे अद्रिः मन्दराद्रिः स्वपृष्ठे धृतः ग्राहात्
गजेन्द्रममुञ्चत् मोचयामास विष्णुरवतीर्य इत्यनुवर्त्तते एवं
अत्रावतारनाम नोक्तं तत्रानुवर्तनीयम् ॥ १८ ॥

गरुडोपाख्यानप्रसिद्धान् अमधान् तपसातिक्षीणान् कश्यपाय
समिदाहरणे पलाशपत्रमूलयाहिकामेकैकां गृहीत्वा सूक्ष्मशरीरत्वेन
गोष्पदे पतितान् महद्भारवता इन्द्रेणोपहासितान् संस्तुन्वतः
स्तुतिं कुर्वाणान् बालखिल्यान् उद्धृत्यामुञ्चत् । वृत्रवधतो हेतोः
चकारात् विश्वरूपवधतो हेतोस्तमसि ब्रह्महत्यायां प्रविष्टममुञ्चत्
असुरगृहे पिहिताः निरुद्धाः वा देवस्त्रियस्तासाममुञ्चत् बहुभि-
रवतारैः सतां प्रह्लादादीनाम् ॥ १९ ॥

अन्तरेषु भुवनानि अवधात् अपालयत् ॥ २० ॥

---

### भाषा टीका ।

अच्युत भगवान् ने हंस स्वरूपी होकर ब्रह्मा को आत्म
योग का उपदेश किया दत्तात्रेय होकर यदु आदिकों को
ज्ञान दिया फिर हमारे पिता ऋषभ देव का रूप लिया जोकि
साक्षात् कला से सब के हित के वास्ते अवतीर्ण भये उन्हीं
ने हयग्रीव अवतार में मधुकैटभ को मार कर वेद लाकर
ब्रह्माजी को दिये ॥ १७ ॥

इन्होंने मात्स्य अवतार से सब औषधि और पृथिवी तथा
चाक्षुष मनु इनकी रक्षा करी वराहावतार से जल से पृथिवी
को उद्धार करते समय में हिरण्याक्ष को मारा कूर्मावतार में
समुद्र मंथन के समय अपने पीठ पर मंदर पर्वत को धारण
किया श्रीहरि अवतार में शरणागत गजराज को ग्राह से
छुड़ाया ॥ १८ ॥

किसी अवतार में स्तुति करते हुए समुद्र में पड़े विरक्त
ऋषियों की विपत्ति छुड़ाई और वृत्रासुर के वध करने से पाप
में प्रविष्ट इन्द्र का पाप दूर किया। नृसिंह अवतार में देव-
ताओं की स्त्री जो असुर के घर में घिरी थीं उनको छुटा
कर सत्पुरुषों को निर्भय करने के लिये हिरण्यकशिपु को
मारा ॥ १९ ॥

देवता असुरों के युद्धमें देवतों के वास्ते असुरोंको मारकर
फिर मन्वंतरों में कला अवतारों से संसार की रक्षा करी तदनंतर
वामन अवतार लेकर देवतों के वास्ते बलिसे पृथिवी को भिक्षमांगने
के छलसे इस भूमिको लेकर अदिती के पुत्रों को दिया ॥ २० ॥

निःक्षत्रियामकृत गां च त्रिःसप्तकृत्वो रामस्तु हैहयकुलाप्ययभार्गवाग्निः ।
सोऽब्धिं बबन्ध दशवक्त्रमहन् सलङ्कं सीतापतिर्जयति लोकमलघ्नकीर्तिः ॥ २१ ॥
भूमेर्भरावतरणाय यदुष्वजन्मा जातः करिष्यति सुरैरपि दुष्कराणि ।
वादैर्विमोहयति यज्ञकृतोऽतदर्हान् शूद्रान् कलौ क्षितिभुजो न्यहनिष्यदन्ते ॥ २२ ॥
एवं विधानि कर्माणि जन्मानि च जगत्पतेः ।
भूरीणि भूरियशसो वर्णितानि महाभुज ! ॥ २३ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् एकादशस्कन्धे
चतुर्थोऽध्यायः ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

हैहयानां कुलस्याप्ययाय भार्गवरूपोऽग्निः स रामो दाशरथिः सन् सलङ्कं लङ्कायां स्थितम् सच जयति वर्त्तमानकालीनोऽवतार इत्यर्थः ॥ २१ ॥

भाविनं रामकृष्णावतारमाह—भूमेरिति । बुद्धावतारमाह-वादैरिति । अतदर्हान् यज्ञानर्हान्दैत्यान्विमोहयिष्यति कल्क्यवतारमाह—शूद्रानिति । न्यहनिष्यन्निहनिष्यति ॥ २२ ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुर्थोऽध्यायः ॥ ४ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी ।

त्रिःसप्तकृत्वः एकविंशतिवारान् स रामो दाशरथिः सन्निति शार्ङ्गिणोरभेदाभिप्रायेण सलङ्कमिति सहार्थस्य द्वैविध्येऽपि विद्यमानमात्रत्वमभिप्रेत्य लङ्कायां स्थितमिति व्याख्यानम् । यद्वा, लङ्काशब्देन तत्स्थरक्षोगणो लक्ष्यते तथाच सपरिवारदशग्रीवमहन् ॥ २१ ॥

शूद्रान् । म्लेच्छान् कलेरन्ते ॥ २२ ॥

जगत्पतेरिति । तज्जन्मादीनामपि जगत्पालकत्वं व्यञ्जितं भूरियशस इति तेषां यशोमयत्वञ्च ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिविरचितायां दीपिकादीपनी
टिप्पण्याम् चतुर्थोऽध्यायः ॥ ४ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

हैहयेति । हैहयकुलाप्ययहेतुभूतो भार्गव इत्यर्थः ॥ २१ २३ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
चतुर्थोऽध्यायः ॥ ४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हैहयानां कुलस्याप्ययाय नाशाय भार्गवरूपोऽग्निः रामः परशुरामः त्रिःसप्तकृत्वः एकविंशतिवारान् गां भूमिं निःक्षत्रियां क्षत्रियरहितां चकार स विष्णुः सीतापतिर्भूत्वा लोकानां मलं पापं हन्तीति तथा सा कीर्त्तिर्यस्य सः दाशरथिः जयतीति वर्त्तमाननिर्देशस्य वर्त्तमानकालीनोऽयमवतार इत्यभिप्रायः ॥ २१ ॥

अथ भाविनोऽवतारानाह—भूमेरिति । अजन्मा कर्मायत्तोत्पत्तिरहितः भूमेर्भारावतारणाय यदुषु जातोऽवतीर्णः सन् सुरैरपि कर्तुमशक्यानि कर्माणि चेष्टितानि करिष्यति । बुद्धावतारं तत्कर्म चाह-वादैरिति । अतदर्हान्यज्ञानर्हानपि यज्ञकृतः यज्ञान् कुर्वाणान् वैदिकान् वादैर्वेदविरुद्धैर्मोहयिष्यति कल्क्यवतारं तत्कर्म चाह शूद्रानिति । कलौ कलियुगान्ते क्षितिभुजः शूद्रान्न्यहनिष्यत् निहनिष्यति ॥ २२ ॥ उपसंहरति । एवमिति ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
चतुर्थोऽध्यायः ॥ ४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निःक्षत्रिया क्षत्रियरहितां हैहयकुलाप्ययार्थं उज्ज्वलितभार्गवाग्निः भृगुकुलोत्थवह्निः लङ्कामहन्हतवान् दशवक्त्रं चाहन् हतवान् लोकं जयति ॥ २१ ॥

बुद्धो यज्ञकृतो वादैर्विमोहयति कल्की कलेरन्ते शूद्रान् क्षितिभुजोऽन्यहनिष्यत् ॥ २२ ॥

निगमयति । एवं विधानीति ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
चतुर्थोऽध्यायः ॥ ४ ॥

———

श्रीमच्छ्रीजीवगोस्वामिकृतक्रमसन्दर्भः ।

सवङ्कमिति । सङ्कर्षणतद्व्यूहसहितमित्यर्थः । जयतीति "जयति जननिवासः" इतिवत् ॥ २१ ॥

शूद्रानित्युभयत्रान्वयः पूर्वत्र उपासकान् परत्र म्लेच्छानित्यर्थः ॥ २२ ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

रामावतारमाह द्विरूपेण तुशब्दादवमावेश इति केचित् क्षत्रक्षत्रा-
वेशत्वात्तावतारप्रयोजनं स्पष्टं भीतानिलीनपलायितादिपरित्यागादेक-
विंशतिवारमुद्यमः तत्रापि पृथ्वीनिष्कण्टका कर्तव्येत्युद्यमः पुष्टि-
मार्गस्थिता न मर्यादापालका इति मारणं दत्तात्रेयोऽपि पुष्टिस्थः
रामौ तु मर्यादापालकौ ब्रह्मतेजसा क्षत्रिया उपसंहर्तुं शक्याः
भगवत्तेजसा वा तत्र स्वयं भगवान् पालकत्वात् क्षत्रियान्
हन्ति अत आह—भार्गवाग्निरिति । इध्मसाम्यादेकविंशत्य वेद-
लोकानां वा तावत्त्वाद्दुःखार्थमवतीर्णस्तावद्वारं ततः परं भग-
वान् प्रवर्तयिष्यतीति भावः । गुणात्रयकार्यत्वात्त्रिधा विभागे
सप्तधा भवति यद्वा सहस्रजिद्धैहय इति यादवानामपि मध्ये
हैहयोऽत्यमर्यादः तस्य कुलनाशार्थमिति अग्निप्राकट्यार्थं वेणुस्था-
नीयता उक्ता मुखभूततेजो भगवद्रूपं भृगौ स्थापितमिति तद-
वतीर्णभगवदवतारत्वमुच्यते परशुरामः "वैष्णवं तेज आसाद्य
समशामयत्" इति सिद्धान्तः एवं वैलक्षण्यात् तुशब्दः केचित् रूपक-
माहुः लौकिकास्ते स इति रामशब्देनो गृहीतः रामो वैश्वानरावतार
इत्यन्ये तस्य चरित्रं पञ्चविधम् अन्या लीला समुद्रबन्धनं रावण-
वधः सीतापतित्वं सर्वोत्कर्षेण सदा स्थितिः । चरित्रमात्रस्य
पापनाशकत्वमिति तत्र समुद्रबन्धनमलौकिकं पुरदाहरावणवध-
सहितरावणवधः अजेयत्वादमर्यादः मुख्यपुष्टिः सीतापतित्वं "स
वै पतिः स्यात्" इति न्यायेन च जयतीति स्वस्य विकाराद्य-
भावेन सर्वदोषविवर्जितत्वम् अन्यस्यापि दोषदूरीकरणं चारि-
त्रेण ॥ २१ ॥

शुद्धान् श्रीनवतारानाह कृष्णं सर्वावतारापेक्षया विशेषमाह, अजस्य
जात इति गुणातीतोऽप्याविर्भूत इत्यर्थः । गुणवान् कदाचिज्जाय-
तापि ननु बीजप्रयोजनाभावात् न कस्यचिदुत्पत्तिरित्यत आह,
यदुषु भरावतरणायेति यदुषु नवमस्कन्धे भक्तिरुक्ता तद्बीजं मदन-
क्रमभारहारायेति निमित्तं दशमस्कन्धे प्रपञ्चितमेतत् गुणाती-
तत्वे हेतुः सुरैरपि दुष्कराणीति अपिशब्दात् तिर्यग्भिः
गुणिनामशक्यं करोतीति अनेन चरित्राण्यनन्तानीति सूचितं
बुद्धावतारमाह, वादैर्विमोहयतीति । वादैरिति बहवो वादाः
सांप्रत सूत्राः अनर्हेषु यज्ञो मा गच्छत्विति मोहयामो दर्शितेरपथ
न दृढप्रतीतिर्भवतीति वादाः विशेषेण मोहो विपरीतधर्म-
बुद्धिः यज्ञकृत यज्ञार्थं स्वयमन्तर्हितो भगवान् यज्ञानन्तर्भाव-
मनुसन्धायं । कोऽयं पुरुषार्थ इत्याशङ्क्याह, अनर्हान् यज्ञानर्हान्
कलौ क्षितिशुद्ध्यभावे कुण्डगोलकबाहुल्ये वादैरेव तन्निश्चयः
आरजानकस्यैव वेदवेदार्थयोरन्यथा बुद्धिरित्यर्थः । त्रैगुण्यविषया
इति योगशास्त्रं योगिनस्तु मर्यादां प्रवाहनिवृत्तये आहुः गुणा-
भावान् पुरस्कृत्य निर्गुणान् करोतीत्यर्थः । अत एवायमेवार्थो
वार्तानित्यत्र निवृत्तः अतः परीक्षार्थं वेदनिन्देति सर्वं मुख्यं
कल्किचरित्रमाह, शूद्रानिति । क्षितिभोक्तृत्वमधमानां माऽभूदिति
वर्णाः कालव्यूहस्वरवादिकृताः ते क्रमशः क्रियमाणाः शुद्धत-
मसा शूद्रपर्यवसायिनो भवन्ति प्रान्तभागे कलौ हननम् ॥ २२ ॥

उपसंहरति । एवं विधानि धर्मसंस्थापनप्रकाराणि अनादिसिद्धो
धर्मो जन्मना स्थिरो भवति कर्मणा चोपघातनिवृत्तिः धर्मो हि
जगत् स्तम्भकः धर्मे रक्षिते रक्षितं जगत् स वै पतिः स्यादिति
स्वाभाविकजगत्पतिः प्रकारोऽपि बाहुल्यार्थमाह, भूरीणीति । तत्र हेतुः
भूरियशस इति धर्मार्थकाममोक्षभक्तिप्रपत्त्यादिपुरुषार्थेषु स्था-
पकत्वेन भूरीणि यशांसि यस्य तानि न केवलं गुणानि
कविभिरित्यर्थात् महाभुजेति क्रियाशक्तिप्राधान्यात् उक्तवि-
श्वासः ॥ २३ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमद्वल्लभदीक्षितविरचितायाम्
एकादशस्कन्धविवरणे चतुर्थाध्यायविवरणम् ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सवङ्कं लङ्कास्थसर्वैर्भीरुसहितमित्यर्थः । जयतीति । कथाया
अद्याप्यनन्तकालभवत्वात् तिमिरनाशदर्शितोद्योतः यक्तः ॥ २१ ॥

विमोहयति विमोहयिष्यति बुद्धः न्यहनिष्यत् निहनिष्यति
कल्किः ॥ २२ ॥ २३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशे चतुर्थोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हैहयकुलक्षयार्थं भार्गवाग्निः जमदग्न्याख्यादृग्गोत्राज्जातो
ऽग्निः रामः गां पृथिवीं निःक्षत्रियामकृत स विष्णुः दाश-
रथिः रामस्तु भूत्वा अब्धिं बबन्ध । सवङ्कं लङ्काधिपतिस्तत्सहा-
सुरसमूहपरः लङ्कागतासुरसमूहसहितं दशवक्त्रं रावणमहन्
सच सीतापतिर्लोके जयति ॥ २१ ॥

अजन्मा स्वयमवतारी बुद्धावतारे अनर्हान् यज्ञानर्हान् असुरान्
विमोहयति कल्क्यवतारे शूद्रान् क्षितिभुजो नृपान् कलौ
अन्ते न्यहनिष्यत् निहनिष्यति ॥ २२ ॥

वर्णितानि ऋषिभिस्तत्र तत्रेति शेषः ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
चतुर्थोऽध्यायार्थप्रकाशः ॥ ४ ॥

---

भाषा टीका ।

परशुराम अवतार में भगवान् ने हैहय राजा के कुल के नाश करने को भृगुवंश में जन्म लेकर अग्निवत् प्रकाशमान् होकर इस पृथिवी को एक बीसवार क्षत्रियों से रहित कर दिया उन्हीं भगवान् ने समुद्र को बांधकर लंका के राक्षसों के सहित रावण को मारा जिनके चरित्र के कथन से सब लोगों के पाप नष्ट होते हैं वे श्रीसीतापति रामचन्द्र जी इस समय अयोध्या में विराजमान हैं ॥ २१ ॥

फिर अजन्मा भी भगवान् पृथिवी के भार उतारने के लिये यदुवंश में अवतार लेकर देवताओं से भी नहीं होने वाले कार्यों को श्रीकृष्णावतार में करेंगे फिर बुद्ध अवतार में जो यज्ञ करने लायक नहीं हैं उन लोगों को वेद का मिथ्या वाद करके मोहित करेंगे फिर कलि के अन्त में कल्की अवतार लेकर शूद्र जाति के राजाओं को मारेंगे ॥२२॥

हे महाबाहु जनक जी ! बड़े भारी यशोंवाले जगत् पति भगवान् के इस प्रकार के बहुत से जन्म तथा कर्म शास्त्रकारों ने वर्णन किये हैं ॥ २३ ॥

इति श्रीमद्भागवत एकादश स्कन्ध चतुर्थोऽध्याय
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्त ॥ ४ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥

—:*:—

## अथ पञ्चमोऽध्यायः।

——:*:——

राजोवाच।

भगवन्तं हरिं प्रायो न भजन्त्यात्मवित्तमाः!।
तेषामशान्तकामानां का निष्ठाऽविजितात्मनाम्॥ १॥

चमस उवाच॥

मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह।
चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक्॥ २॥
य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम्।
न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यधः॥ ३॥
दूरे हरिकथाः केचिद्दूरे चाच्युतकीर्त्तनाः।
स्त्रियः शूद्रादयश्चैव तेऽनुकम्प्या भवादृशाम्॥ ४॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

पञ्चमे भक्तिहीनानां का निष्ठा को युगे युगे॥
पूजाविधिरिति प्रश्नद्वयस्योत्तरमुच्यते॥ १॥

त्वां सेवतां सुरकृता बहवोऽन्तराया इत्यनेन श्रीहरिभक्ता विघ्नमूर्ध्नि पदं दत्त्वा परां गतिं यान्ति अभक्तानां तु विघ्ना भवन्तीत्युक्तं तर्हि तेषां का गतिर्भवतीति पृच्छति—भगवन्तमिति। हे आत्मवित्तमाः! अविजितात्मनामत एवाशान्तकामानां का निष्ठा किं प्राप्यमित्यर्थः॥ १॥

स्वजनकस्य गुरोर्भगवतोऽनादराद्गुरुद्रोहिणो दुर्गतिं यान्तीति वक्तुं भगवतः सकाशाद्वर्णाश्रमाणामुत्पत्तिमाह—मुखादिति। गुणैः सत्त्वेन विप्रः सत्त्वरजोभ्यां क्षत्रियः रजस्तमोभ्यां वैश्यः तमसा शूद्र इति॥ २॥

एषां मध्ये येऽज्ञात्वा न भजन्ति ये च ज्ञात्वाऽप्यवजानन्ति आत्मनः प्रभवो जन्म यस्मात्तम् तदभजने कृतघ्नतामप्याह—ईश्वरमिति। स्थानाद्वर्णाश्रमाद्भ्रष्टाः॥ ३॥

तत्र येऽज्ञास्ते भवादृशानामनुग्राह्या इत्याह—दूर इति। दूरे हरिकथाश्रवणा येषां ते अत एव दूरे चाच्युतकीर्तनं येषां ते दूरे अच्युतकीर्तनाश्चेति वा॥ ४॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपनी टिप्पणी।

का निष्ठा किं प्राप्यं पूजाविधिः पूजाप्रकारः पूर्वाध्याये-नावसरसङ्गतिमाह—त्वां सेवतामित्यादिना। तेषामभक्तानां का गतिः किं प्राप्यम् अत एव अजितात्मत्वादेव॥ १॥

चमसशब्दस्य पात्रवाचकत्वात् कृपापात्राणां गतिवर्णनं सत्-पात्रेणैव कर्तुं शक्यमिति चमस एवोवाचेति ज्ञेयम्॥

मुखबाहूरुपादेभ्यः विप्रादयो यथासङ्ख्यं जज्ञिरे आश्रमेषु तु तदुपलक्षणमेव यथोक्तं "गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम। वक्षःस्थलाद्वने वासो न्यासः शीर्षणि च स्थितः" इति॥ २॥

आत्मप्रभवमिति गुरुद्रोह उक्तः। तदभजने भगवदभजने कृतघ्नतापीत्यपिशब्दः गुरुद्रोहं समुच्चिनोति॥ ३॥

तत्र अज्ञाऽवज्ञात्रोर्मध्ये अत एव हरिकथाश्रवणाऽभावादेव द्वितीयेऽर्थे अच्युतं कीर्तयन्तीति भक्ता एवोक्ताः॥ ४॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

आत्मवित्तमा इति सम्बोधनम् न भजन्ति इति द्वेषपर्यन्ततद-भजतामिति विवक्षितं प्रतिवचनानुगुणत्वात्॥ १—४॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

नान्यस्य बर्हिषि बलिं ददतः स्वभागानित्यनेन भगवन्तम-सेवमानानां सुरकृता विघ्ना न सन्तीत्युक्तं तत्र सर्वेषां भगवत्सुप्रसन्नत्वाविशेषेऽपि कुतः केषांचिदेव भगवत्सेवारुचिः केषांचित्तदभाव इत्यभजन्तश्च कीदृशाः कां वा गतिं यास्यन्तीति

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पृच्छति—भगवन्तमिति । यद्यपि मुमुक्षूणां शिष्योपदेशपरायणानां वार्त्तानुपयुक्तत्वान्न प्रष्टव्या तथापि यत्नेन तत्सङ्गपरिहाराय तत्प्रश्न इत्यभिप्रायम् आत्मवित्तमा ! इति सम्बोधनं तेषामविजितात्मनामजितेन्द्रियाणामत एवाशान्तकामानां का निष्ठा प्राप्तिः कुत्रावस्थितिः किं प्राप्य कस्तत्र हेतुः कीदृशाश्चेति प्रश्नाशयः प्रतिवचनानुगुण्यात् ॥ १ ॥

तत्र तावद्भगवत्सेवानर्चितत्वभावयोर्हेतुमसेवतां गतिं च सम्यगाह द्वाभ्याम् । मुखेति । पुरुषस्य चतुर्मुखशरीरकस्य भगवतः मुखबाहूरुपादेभ्यः गुणैः सत्त्वरजस्तमोभिरुपलक्षिताः पृथगमां कर्मणा विप्रादयः चत्वारो वर्णाश्चतुर्भिराश्रमैः सह जज्ञिरे गुणैरित्यनेन सात्त्विकानां भगवत्सेवारुचितान्येषामिति सूचितम् ॥ २ ॥

एषां चातुर्वर्ण्यचातुराश्रम्य व्यवस्थया व्यवस्थितानां मध्ये ये जनाः साक्षादात्मनां प्रभवं कारणभूतमीश्वरं सर्वनियन्तारं पुरुषं परमपुरुषं न भजन्ति अवजानन्ति देवतान्तरसमत्वेन मन्यन्ते तदेव ह्यवज्ञानं तथा चोक्तं भागवते तन्त्रे —

"यस्तु नारायणं देवं समत्वेनाभिमन्यते ।
स तु तेनावमानेन नरकान्नातिवर्तते" ॥

इति ते स्थानाद्वर्णाश्रमाद्भ्रष्टा अधः पतन्ति नरके पतन्ति आत्मप्रभवं न भजन्तीत्यनेन तेषां कृतघ्नता सूचिता ॥ ३ ॥

ननु, सत्यमात्मप्रभवत्वेश्वरत्वसर्वोत्कृष्टत्वादिज्ञाने सत्यपि तमभजतां कृतघ्नत्वादिदोषान्नरकपात इति ये तु तादृशज्ञानरहिताः केवलमज्ञास्तेषां का गतिरित्यत्राह—दूर इत्यादिना । दूरे हरिकथा तत्कथनं येषां ते दूरेऽच्युतकीर्त्तने येषां ते शास्त्रानधिकारादिति भावः । के त इत्यत्राह—स्त्रियः शूद्रादयश्च जनास्ते भवादृशां भागवतानामनुकम्प्याः दयनीयाः भागवतसंश्रयाश्चेत्तेऽपि मुच्यन्त एवेति भावः ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रुतभगवद्भक्तलोकविशेषो राजा भगवद्विमुखानां कस्मिन् स्थाने स्थितिरिति पृच्छति—भगवन्तमिति । हे आत्मवित्तमाः ! ॥ १ ॥

हरेः पितृत्वेनात्यन्तोपकर्तृत्वात्तद्भजनाभावो पातहेतुरिति तद्भक्तानां तमस्येव निष्ठेति वक्तुं भगवदवयवेभ्यो वर्णाश्रमाणामुत्पत्तिप्रकारमाह—मुखेति । शमादिगुणैः ॥ २ ॥

एषामुत्पन्नानां मध्ये आत्मप्रभवं स्वोत्पादकं पितरमित्यर्थः पितुर्द्रोहः स्थानात्कुमठादिलक्षणाद्भ्रष्टाः ॥ ३ ॥

श्रुत्याद्युपदेशाभावादविद्याकृतमेतेन हरिकथाश्रवणकीर्तनादिसाधनानां स्त्रीशूद्रादीनां अधःपातमाह—दूरे हरिकथा इति । भवादृशानामनुकम्प्याश्चेत् हरिकथाश्रवणादिधिकारिणः स्युरिति भावः । अच्युतस्य कीर्तनं येषामस्ति ते अच्युतकीर्तनाः ते च दूरे ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १ ॥

मुखबाह्विति विराट् तदन्तर्यामिणोरभेदोक्तिः मुखबाहूरुपादेभ्य इत्युपलक्षणमेवाश्रमेषु यथाक्रमम्—

"गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम ।
वक्षःस्थलाद्वने वासो न्यासः शीर्षणि संस्थितः" ॥

इति ॥ २ ॥

न भजन्त्यत एवावजानन्तीत्यर्थः । यद्वा, केचिदश्रुत्वा न भजन्ति केचिच्छ्रुत्वापि न भजन्ति चेदवजानन्त्येवेत्यर्थः । स्थानाद्वर्णाश्रमरूपात्स्वाश्रमाद्भ्रष्टाः सन्तः क्रमादधोऽधो गच्छन्तीत्यर्थः ॥ ३ ॥

तत्र पूर्वाननुग्राहयति—दूर इति ॥ ४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वक्ता श्रोता तथा वाक्यं त्रिभिरुक्तं विशेषतः ।
लोके सर्वत्रप्रवृत्तौ प्रामाण्यं कुण्ठितं भवेत् ॥
अतस्तत्साधकाध्यायश्चतुर्थोऽयमुदाहृतः ।
देशकालस्वभावानां निर्द्धारक उदाहृतः ॥
अस्यार्थो भगवद्देशे स्थितत्वाऽलौकिकगीतितः ।
निराकृत्यान्यथा वादान् शुकः कृष्णं भजेदिति ॥

स्वभावविजयाय भ्रमवादान् निराकर्तुं पृच्छति—भगवन्तमिति । सर्वेष्टसिद्धिः हरिमिति सर्वानिष्टनिवृत्तिः एतादृशमपि बाहुल्येन न भजन्ति आत्मविदः सर्वज्ञाः तत्रापि भगवन्मार्गविदः श्रेष्ठा इति सम्बोधनं ज्ञानयोगाभावाय विशेषणद्वयम् इह लोके परलोके वा किं फलमित्यर्थः । यद्यपि प्रवाहफलमेव फलमभजनमात्रे अपदोषतैव विगुणस्य गुणा इति परं प्रवाहस्य. किञ्चिज्ज्ञो न तिष्ठति निन्दामकुर्वाणा इति प्रश्नः । नन्वत्रापि निन्दाया निषिद्धत्वान्नरकपात इति कः सन्देह इति चेत् सत्यम् । भगवद्भक्तान् विकर्मस्थान् मत्वा धर्मस्थापनार्थं तान्निन्दन्ति प्रवाहफलमेव मास्त्विति सन्देहः अभजनयोग्यता हि निन्दया भवति अशान्तकामत्वात् प्रवाह एव स्थितिः अविजितेन्द्रियत्वान्निषिद्धकरणमपि वैदिकत्वाच्च सन्देहवृत्तिः अविजितेन्द्रियान् सकामानपि वेदस्तारयतीति मार्गान्तरस्थास्तु स्वभावत एव पतिता इति वैदिकस्यैव प्रश्नाभिप्रायः उत्तरमाह—चमसऋषिः । तेषां योगस्य तथात्वात् चमस उवाच सिद्धान्ता हि पञ्च तत्र वैष्णवा भजन्त्येव शैवा निन्दकाश्चेत्पापिनः पुनः साङ्ख्ययोगयोर्निषेध. एतेन एव कृत मतो वैदिका अज्ञाश्चावशिष्यन्ते प्रवाहपतिता लोकचतुराश्च ॥ १ ॥

तत्र प्रवाहपतितलोकचतुराणां गतिमाह—द्वाभ्याम् । संन्यासवानप्रस्थब्रह्मचारिगृहस्थाः वर्णा इव तथा सत्याश्रमस्थाने त्रैगुण्यं सत्त्वाद्ब्राह्मणाः रजसा क्षत्रियाः रजस्तमोभ्यां वैश्याः ॥ २—३ ॥

इति श्रीवल्लभाचार्यविरचितैकादशस्कन्धस्यैतावती विवृतिः ॥

---

कर्मण्यकोविदाः स्तब्धा मूर्खाः पण्डितमानिनः ।
वदन्ति चाटुकान् मूढा यया माध्व्या गिरोत्सुकाः ॥ ६ ॥
रजसा घोरसङ्कल्पाः कामुका अहिमन्यवः ।
दाम्भिका मानिनः पापा विहसन्त्यच्युतप्रियान् ॥ ७ ॥
वदन्ति तेऽन्योऽन्यमुपासितस्त्रियो गृहेषु मैथुन्यपरेषु चाशिषः ।
यजन्त्यसृष्टान्नविधानदक्षिणं वृत्त्यै परं घ्नन्ति पशूनतद्विदः ॥ ८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कर्मफलेषु सज्जन्ते कुतः? आम्नायेषु ये वादा अर्थवादास्तैः मोहकतया विद्यन्ते येषां ते तदुक्तं गीतासु—

"यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ ! नान्यदस्तीति वादिनः" ॥

इत्यादिना ॥ ५ ॥

भक्तिमार्गदार्ढ्याय तेषां मोहं प्रपञ्चयन्निन्दति, कर्मणीत्यादिना । अकोविदा यथा बन्धकं न भवति तथा कर्म कर्तुमज्ञाः सर्वाभिज्ञान्पृच्छन्ति यतः स्तब्धा अनम्राः स्तब्धत्वे हेतुः यतो मूर्खा अपि पण्डिता वयमिति मानवन्तः । अतः "अपाम सोमममृता अभूम अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति यत्र नोष्णं न शीतं स्यान्न ग्लानिर्नाप्यरामयः" इत्यादिकया यया माध्व्या गिरोत्सुकाः सन्तो मूढास्तया चाटुकान् अप्सरोभिः सह विहरिष्याम इत्यादिप्रियान् शब्दान्वदन्ति ॥ ६ ॥

किञ्च, तेषां कर्माभिनिवेशात्कामक्रोधदम्भादयो भवन्तीत्याह त्रयेण, रजसेति । घोरोऽभिचारादिः सङ्कल्पो येषां ते अहिवन्मन्युर्येषां ते ॥ ७ ॥

कामुकत्वं प्रपञ्चयति—वदन्तीति । उपासिताः स्त्रियो यैस्तेतु गृहेषु मैथुन्यं मिथुनसुखमेव परं तत्त्वमित्यादि येषु गृहेषु तेष्वाशिषो वदन्ति—

" इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम्" ॥

इत्याकाराः । दाम्भिकत्वं प्रपञ्चयति, यजन्तीति । असृष्टान्नविधानदक्षिणं न सृष्टं न सम्पादितमन्नविधानं दक्षिणा यस्मिन् यथा तथा यजन्ति तदा च वृत्त्यै जीविकार्थं परं केवलं पशून् घ्नन्ति अतद्विदो हिंसादोषानभिज्ञाः ॥ ८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

ज्ञानस्य लवेन लेशेन दुर्विदग्धाः नैपुण्याभावाद्बोधयितुमशक्याः अविज्ञातसत्त्वा[illegible] उपेक्षणीया इत्यर्थः । अर्थवादाः "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यादिलक्षणाः तत्र अर्थवादमुग्धत्वं पुष्पितां पुष्पवदापातरमणीयां प्रवदन्ति अकृष्टफलां वदन्ति वेदवादरताः वेदेषु येऽर्थवादास्तेष्वेव रताः अभिनिविष्टाः स्वर्गादन्यत् फलं नास्तीति वादिनः ॥ ५ ॥

अनिन्द्ये निन्दा निन्दयितुं न प्रवर्तते किन्तु विधेयं स्तोतुमिति न्यायेन विधेयस्य भक्तिमार्गस्य दृढीकरणाय तेषां काम्यकर्मिणां मीमांसकानाम् अतः पण्डितमानित्वात् सोमममृतमपाम पास्यामः अमृताः मरणशून्या भविष्यामः चातुर्मास्यसंज्ञकेन यागेन यष्टुं शीलं यस्य तस्य सुकृतमपूर्वम् अक्षयमविनश्वरम् । यत्र स्वर्गे ग्लानिर्बलक्षयः माध्व्या मादिकया ॥ ६ ॥

अभिनिवेशः स्वीकृतस्य पुनस्त्यागासहिष्णुत्वम् अभिचारैते मार्यतेऽनेनेत्यभिचारो मारणप्रयोगः आदिना परस्त्रीवशीकरणादिः ॥ ७ ॥

उपासिताः पादपतनादिभिः सेविताः आतिथ्यादि आतिथ्यमतिथियोग्यसत्कारः आदिनार्चनपुराणश्रवणादिपरिग्रहः मुखे चोऽभ्याहार्यो आशिष एव न तु ज्ञानवैराग्यादिवार्ताः असृष्टान्नविधानदक्षिणा अन्नविधानमन्नप्रदानं तत्सहिता दक्षिणा तथा च अन्नविधानाद्यभावे ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

श्रौतेन वेदसंयोगत्वेन ॥ ५ ॥ ६ ॥

अभिमन्यवः अभिमानपराः ॥ ७ ॥

उपासितस्त्रियः परतन्त्राः आशिषो वदन्ति तदुच्चारेण प्ररोचनां जनयन्तीत्यभिप्रायः असृष्टान्नविधानदक्षिणाः शोभावप्रदीयमानान्नादिकदक्षिणाः वृत्त्यै जीवनार्थम् ॥ ८ ॥ ९ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ये तु सत्यपि शास्त्राधिकारे तज्ज्ञानाभावाच्च मौढ्यात् न भजन्ति तेऽधः पतन्तीत्यभिप्रेत्याह—विप्र इति । विप्रादयस्त्रयः श्रौतेन वेदसंयोगाख्येन जन्मना तज्जन्यज्ञानेन च हरेः पदान्तिकं हरिचरणान्तिकप्राप्तिसाधनानुष्ठानयोग्यताधिकारं प्राप्ताः अथ तथापि मुह्यन्ति मोहं प्राप्नुवन्ति न हरिपादाब्जं भजन्ति, किन्तु स्वर्गाद्यर्थकर्मसु सज्जन्त इत्यर्थः । तत्र हेतुत्वेन विशिनष्टि—आम्नायवादिन इति । आम्नायेषु वेदेषु वादा अर्थवादास्तैः मोहकतया विद्यन्ते येषां ते तथा तदुक्तं भगवता—

श्रिया विभूत्याऽभिजनेन विद्यया त्यागेन रूपेण बलेन कर्मणा ।
जातस्मयेनान्धधियः सहेश्वरान् सतोऽवमन्यन्ति हरिप्रियान् खलाः ॥ ९ ॥
सर्वेषु शश्वत्तनुभृत्स्ववस्थितं यथा खमात्मानमभीष्टमीश्वरम् ।
वेदोपगीतं च न शृण्वतेऽबुधा मनोरथानां प्रवदन्ति वार्त्तया ॥ १० ॥
लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्नहि तत्र चोदना ।
व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा ॥ ११ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अपरेतु अधः पतिष्यन्ति अत एव ते भगवद्भजनविमुखा विप्रादयो विशिष्टजन्मकर्मादिभिः श्रेष्ठत्वाभिमानिनो दुःखाद्वयत्वादुपेक्षणीया इत्याह—विप्र इति चतुर्दशभिः । विप्रः राजन्यः वैश्यो वेति चार्थे अन्यतमा त्रैवर्णिकजन्मना तदनुरूपेण श्रौतेन श्रुतिप्रोक्तेनोपनयनपूर्वकवेदाध्ययनादिना हरेः "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादिश्रुतिवेद्यस्य परमात्मनः पदान्तिकं तच्छ्रवणमननध्यानदर्शनाधिकारं प्राप्ता अपि मुह्यन्ति मुकुन्दपादं परमात्मभजनादिकं विहाय संसारोपाये कर्मणि सज्जन्ते तत्र हेतुगर्भितविशेषणमाम्नायवादिन इति आम्नायेषु ये वादाः "अपाम सोमम्" इत्याद्या अर्थवादा मोहकतया छिद्यन्ते येषां ते तथा ॥ ५ ॥

तन्मोहं प्रपञ्चयति—कर्मणीत्यादिना । तमेतमात्मानं ब्राह्मणा विविदिषन्ति यज्ञेन" इत्यादिश्रुत्युक्तरीत्या ज्ञानाङ्गभूतं कर्मणि अकोविदाः कर्म अन्तःकरणशुद्धिद्वारा परमात्मश्रवणमननध्यानज्ञानोपयोगीति न जानन्ति । ननु, तत्त्वज्ञान् कुतो न पृच्छन्तीत्यत्राह—स्तब्धाः अनम्राः अनम्रत्वे हेतुमाह मूर्खाः पण्डितमानिन इति यद्यपि मूर्खाः अपण्डितास्तथापि वयं पण्डिता इति मानयन्तः "अपाम सोमममृता अभूम अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति यत्र नोष्णं न च शीतं स्यान्न ग्लानिर्नोऽप्यरातयः" इत्यादिकया यया माध्व्या कर्मफलात्मकमधुवादिन्या गिरोत्सुकाः भूत्वा चाटुकान् स्वर्गे विहरिष्याम इत्यादिश्रोत्रप्रियान् शब्दान् वदन्ति ॥ ६ ॥

घोरः अतिदारुणः सङ्कल्पो येषां ते कामुका विषयलुब्धाः अहिवन्मन्युर्येषां ते दाम्भिकाः स्वपूज्यत्वख्यापनार्थं कर्मप्रकाशकाः ॥ ७ ॥

पूर्वश्लोकार्थं विवृणोति—वदन्तीति द्वाभ्याम् । तत्र कामुकत्वं प्रपञ्चयति उपासिताः दानमानादिभिः पूजिताः स्त्रियो येनं तत् गुरवः एवं विधास्ते मैथुन्यं स्त्रीपुरुषसंयोगजं सुखमेव परम् न तु भगवद्भागवतसेवादिकं येषु गृहेषु तेषु स्थित्वा अन्योऽन्यमाशिषो वदन्ति कलत्रापत्यादिविषयकैः पञ्चयज्ञादिविषयकैश्च वाक्यप्रबन्धैः परस्परं स्वकीयां स्वकीयां कृतार्थतां बोधयन्ति दाम्भिकतां प्रपञ्चयति, यजन्त्यसृष्टान्नविधानदक्षिणम् इति अन्नञ्च विधानं विध्युक्तं कर्म च दक्षिणा च तेषां सृष्टः न सृष्टाः अन्नविधानदक्षिणाः यथा तथा यजन्ति पापत्वं प्रपञ्चयति । परं शिष्यादिकं वृत्त्यै जीविकार्थं घ्नन्ति भिक्षाभट-गामानयेत्येवं प्रेषयेति अपरविद्यायां नियोज्य संसारे च भ्रामयन्ति "इमाहिंसागतोः" इत्येव रूपम् घोरसङ्कल्पतां प्रपञ्चयति । घ्नन्तीति । तन्न्यतया पुनर्योजनीयम् अतद्विदः हिंसास्थानाभिज्ञाः पशून् घ्नन्ति हिंसन्ति स्वर्गसुखार्थमिति शेषः ॥ ८ ॥

---

### भाषा टीका ।

ब्राह्मण क्षत्रिय वैश्य लोग वेदाभ्यास से और जन्म के संस्कार से हरि के स्थान के समीप आनेके योग्य हैं जो केवल कर्मकाण्डवादिक में लगे हैं वे मोहित होजाते हैं ॥ ५ ॥

कर्म में चतुर तो नहीं हैं अभिमानी हैं मूर्ख हैं और पण्डित मानी केवल वेदों के स्वर्गादि के मिलने के मीठे वचनोंमे आनन्दित रहते हैं ॥ ६ ॥

रजोगुण से इनके संकल्प बड़े घोर होते हैं औ कामी हैं सर्प सरीके क्रोधी हैं दम्भ करनेवाले हैं अभिमानी हैं पापी हैं तिन्हीं से अच्युत प्रिय जो वैष्णव जन तिनकी हंसी करते हैं ॥ ७ ॥

केवल स्त्रियों की उपासना करनेवाले वे लोग आपस में कहते हैं कि घरों में तथा मैथुनादि सुखों में ही सर्वो... है और भी जिसमें विधि नहीं अन्नदान नहीं दक्षिणा नहीं ऐसे यज्ञों को करते हैं यज्ञों के मर्म को नहीं जानते केवल वृत्ति के वास्ते पशुओं को मारते हैं ॥ ८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

मानितां प्रपञ्चयति—श्रियेति । श्रिया धनादिसम्पदा विभूत्य... ऐश्वर्येण अयादिना जातो यः स्मयो गर्वस्तेनान्धा धियो येषां ईश्वरसहितान् सतोऽवमन्यन्ते ॥ ९ ॥

किञ्च, एवं वर्त्तमानास्ते येदुत्तरवाथे स्फुटमपि न जानन्... त्याह—सर्वेष्विति । केन रूपेणावस्थितं तदाह—स्वमात्मानमभीष्टमात्... तथा ईश्वरतया चावस्थितम् एवमप्यसङ्गतामाह—यथा ख... पुरुषार्थतामाह—अभीष्टम् स्फुटत्वमाह—वेदोपगीतं चेति । तस्कृत... वतो मनोरथानां व्यवायामिषमद्यसेवाविषयाणां वार्त्तया प्रवद... निवृत्तिपरं सन्तं वेदं प्रवृत्तिपरं वर्णयन्तीत्यर्थः ॥ १० ॥

ननु व्यवायादीनामपि "ऋतौ भार्यामुपेयादृतुकालेषु मधुपे... इत्यादिना विहितत्वाद्विहितमेवं निन्द्यते अत आह—लोक इति

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी।

नियमो देशादाविव तेन सः। प्रधानेन प्रयुक्तः स्यात् । सम्बन्धः प्रक्रियाक्रमिः" इति अतः नित्यप्राप्तत्वेनाप्राप्तांशपूरणलक्षणनियमविधेरसम्भवात् परिसङ्ख्यैवेति उभयस्य युगपत् प्राप्तौ इतरव्यावृत्तिपरो विधिः परिसङ्ख्याविधिः सैवेहेति लक्ष्यते उभय विधिसाङ्कर्यं नियमविधिद्वारैवेवं परिसङ्ख्येति समाधीयते तत्प्रकारमाह—न तावदिति। परिसङ्ख्याविधिना कर्तृभूतेन श्रुत्या वाक्यार्थेन करणेन तथा सति वाक्यार्थोऽसम्भवेन न विरोधिप्रसक्तिलक्षणाया निवृत्तिपरिभाषायां सति स्वार्थस्य श्रुतस्य वाक्यार्थस्य ऋतुगमनस्य त्यागः तथा परार्थस्य अश्रुतस्यानृतुगमनस्यानृतौ भार्यां नोपेयादित्येवं कल्पनेति दोषद्वयं शास्त्रव्यवहारेण प्रतीयत इति शब्दनिष्ठं तथा रागतः प्राप्तस्याऽनृतुगमनस्य बाध इत्येको दोषोऽर्थविचारात् फलित इत्यर्थनिष्ठ इत्येवं दोषत्रयं स्यात् यतो वाक्यार्थासम्भवादलक्षणातो निवृत्तिपरिभाषणे दोषत्रयम् अतस्तन्निर्धारणाय कश्चिदपूर्वविधिद्वारा तात्पर्यतः परिसंख्या क्वचित्तु नियमविधिद्वारा तत्र पूर्वमाह—कश्चिदिति कश्चिदश्वाभिधानीमादत्त इत्यादौ प्राप्यतः मन्त्रे श्रुतस्येति सामान्योक्त्या पक्षे प्राप्यतोऽश्वाभिधानीरसनाग्रहणलक्षणार्थस्याश्वाभिधानीमादत्त इति ग्रहणवाक्येन पुनः प्रापणानर्थकं व्यर्थम् अप्राप्ते शास्त्रमर्थवदिति न्यायात् इति हेतोः अपूर्वविधिद्वारा अपूर्वविधिसहस्रतया सर्वांशेनाश्वाभिधानीग्रहणं मानान्तरेणाप्राप्तमित्यपूर्वविधित्वं पाक्षिकतया स्वांशेन प्राप्तमिति नापूर्वविधिः सङ्कुच्यते इति तद्द्वारान्यस्य गर्दभरशनाग्रहणस्य निवृत्तिः फलतस्तात्पर्यतो भवति गर्दभाभिधानीं न गृह्णीयादिति तद्यथा तदेव दर्शयति श्रुतस्य यजीयपशोरिमां रसनामगृभ्णन् गृह्णीयात् इति इति सामान्यतो रसनाविधायकमन्त्रं पठित्वा अश्वाभिधानीमश्वोऽभिधीयतेऽवश्याप्यते यया तां रसनामादत्ते गृह्णीयादित्यत्र रसनालिङ्गतः रसनाशब्दसामर्थ्यात् रसनाद्वये गर्दभाश्वरसनयोर्विषये प्रयोगकाले प्राप्यतो मन्त्रस्य सम्यग्वा अवमश्वाभिधानीमेवाददीतेति मन्त्रार्थनिश्चायक इत्यर्थः। अयमश्वाभिधानीग्रहणविधिः परिसङ्ख्यात्वेनोच्यते पूर्वोक्तदोषत्रयनिवारणार्थं तत्र प्रकारमाहापूर्वविधिद्वारेति तत्र वृद्धसंमतिमाह। यथोक्तमिति। अयमश्वाभिधानीविधिर्व्याकारवत्यर्थेनाऽप्राप्तांशविधिरपूर्वविधिरेव मन्त्रस्य पाक्षिकविधायकत्वेऽपि सर्वांशेनाप्राप्तत्वात् तस्मात् अनन्तरोदर्शविधेर्हेतोर्मन्त्रार्थोऽपि अश्वाभिधानीमेवाददीतेति निश्चितः स्यात् अतोऽपूर्वविधिद्वारा फलेन तात्पर्येण गर्दभाभिधानीं न गृह्णीयादिति परिसङ्ख्योक्ताविशेषो नियमविधावप्यस्ति कुतः पुनः श्रुतेः अंशेन प्राप्तस्यैवाश्वाभिधानीग्रहणस्य पुनः श्रुतत्वात् अप्राप्तांशपूरणाभावादित्यर्थः। नियमविधिद्वारा परिसङ्ख्यां दर्शयति। क्वचिदिति। क्वचित् पञ्चनखभक्षणवाक्ये रागतः स्वाभाविकेच्छातो नित्यप्राप्तस्य पञ्चनखभक्षणादेः व्यवायादेः सम्बन्धे अप्राप्तांशस्य पूरणमेव यस्य स्वरूपं यस्य तस्य नियमफलस्याप्यभावात् परिसङ्ख्यापूर्वविध्यभावं समुन्नीनोति नियमविधिद्वारा नियमविधिसदृशतया फलतस्तात्पर्यतः परिसङ्ख्या भवति पञ्चनखेतराभक्ष्या इति दार्ष्टान्तिकमाह। तथात्रेति। अत्र ऋतौ भार्यामुपेयादित्यादौ अस्यानुवादद्वारा प्रमाणान्तरप्रतिपन्नानिदर्शनत्वेऽपि तदभावमात्रबोधको विधिरनुवादस्तद्द्वारा परिसङ्ख्यैव नापूर्वविधिः नापि नियमविधिरित्यर्थः। अनृतौ भार्यां नोपेयात् अहुतशेषं न भक्षयेत् सौत्रामणीव्यतिरिक्ते सुरां न गृह्णीयात् इत्येवं सर्वत्र परिसङ्ख्यैव तत्वपूर्वनियमयोरिव शास्त्रप्राप्तत्वेनावश्यकत्वमिति निवृत्तावेव तात्पर्यमित्यर्थः। तत्त्रयलक्षणमभियुक्तैरुक्तं "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र सम्प्राप्तौ परिसङ्ख्येति गीयते" इति अन्यदनिरोहितार्थम् ॥ ११ ॥

तदेवं पूर्वोक्तप्रकारेण धर्मद्वारा भगवत्परितोषकतदर्पितकर्मद्वारा ज्ञानभक्तिलक्षणपरमार्थप्रापकस्य इहोपभोगार्थम् पैतृकपुत्रकलत्राद्युपभोगार्थे विनियोगात् व्ययकरणात् आत्मसंलम्भोऽपि न कुतः पुनः भगवत्प्राप्तिरित्यपेरर्थः अपरोक्षज्ञानं मतः परोक्षज्ञानं शास्त्रीयं कलेवरस्येति सम्बन्धसामान्ये वा चतुर्थ्यर्थे षष्ठी तथा चाजहल्लक्षणया देहाद्यर्थमिति व्याख्यातम् ॥ १२ ॥

---

श्रीशुकदेवसूरिकृतशुकपक्षीयम्।

निर्दोषत्वे दृष्टान्तः व्यवस्थितिः तेष्विति शास्त्रस्य अप्राप्तार्थगोचरत्वात् रागप्राप्ता व्यवायादयो न विधेयाः। किन्तु व्यवस्थामात्रं शास्त्रकृत्यमित्यर्थः। तदेव विवृणोति, विवाहेति निवृत्तिः परदारादिभ्यो निवृत्तिः ॥ ११ ॥

यतः धर्मात् सविज्ञानं प्रकारवैविध्यज्ञानसहितं प्रजया प्रयोजनतया हेतुत्वं विवक्षितं प्रजार्थः ॥ १२—१४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

मानितां प्रपञ्चयति। श्रियेति। श्रीर्धनादिसम्पद्विभूतिरैश्वर्यं ग्रामाधिपत्यादिः अभिजनः सत्कुलप्रसूतत्वं त्यागो दानं रूपं देहसौष्ठवं बलं देहबलं कर्म श्रौतं स्मार्तं च एभिर्जातो यः स्मयो गर्वस्तेनान्धाऽविवेकिनो धीर्येषां ते सहेश्वरानीश्वरसहितान् हरेः प्रियान् भक्तानवमन्यन्ति यतः खलाः भूतहिंसापराः इत्यर्थः ॥ ९ ॥

सर्वेष्टं निरतिशयपुरुषार्थरूपं वेदोपगीतं वेदान्तवेद्यस्वरूपस्वभावम् ईश्वरं न च शृण्वते तद्वार्त्तां न शृण्वन्तीत्यर्थः। किन्तु मनोरथानां वार्त्तया प्रवदन्ति प्रवदन्तः कालं नयन्तीत्यर्थः। कुतः यतस्तेऽबुधा अज्ञाः वेदोपगीतं न शृण्वत इत्यनेन वेदार्थतत्त्वावगमोऽपि न तेषां विद्यते इति सूचितम् ॥ १० ॥

उपासितात्मिको गृहेषु मैथुन्यपरेष्विति व्यवायो निन्दितः वृत्त्यै परं घ्नन्ति पशूनतद्विद इति यागीयमांसभक्षणं तथा सुलभन्यायाद्यागीयसुरापानं निन्दाप्यभिप्रेता। श्रिया विभूत्येति वित्तनिन्दा च कृता। ननु, धर्मप्रजासम्पत्त्यर्थे "स्त्रियमुद्वहेत् ऋतावुपेयात् पशुमालभेत यजमानपञ्चमा इडां भक्षयन्ति हुतशेषमश्नीयात् सौत्रामण्यां सुराग्रहान् गृह्णाति प्रतिग्रहादिना धनमार्जयेत्" इत्यादिभिः शास्त्रैर्व्यवायादीनां नियमितत्वात्किमिति तन्निन्दा क्रियते इत्याशङ्क्याह—लोक इति। व्यवायः स्त्रीसङ्गः व्यवायादयो नित्यरागतो नित्यप्राप्ताः जन्तोः प्राणिमात्रस्यातस्तत्र तासु चोदना

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नित्यप्राप्तस्येत्यस्य नियमेत्यादिनान्वयः । तत्र हेतुः प्राप्तांशेति यथा पाक्षिकतयांशेनाप्राप्ताश्वाभिधानी सर्वांशेन पूर्य्यते तादृशत्वाभावादित्यर्थः । अत्रापि नियमविधिस्तत्सदृश एव ज्ञेयः गतस्तीति । विध्यभावेऽप्यनुज्ञाविषयाणां रागिणामप्यनुज्ञातिक्रमः स्यादेवेति भावः । अथवा लोक इति तथाहि—

"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र सम्प्राप्तौ परिसङ्ख्या विधीयते" ॥

अत्र विधिर्यथा "अहरहः सन्ध्यामुपासीत" इति इदं खलु सर्वथैव न प्राप्नोति अयमेवापूर्वविधिरित्युच्यते नियमो यथा "इमामगृभ्णन् रशनामृतस्य" इति मन्त्रेण ऋतस्य याज्ञिकपशोः रशनां रज्जुमगृभ्णन् अगृह्णन्नित्यर्थेन गर्दभाश्वाभिधान्योरेकतरस्यां स्वाच्छन्देन प्राप्तायां ब्राह्मणेन नियम्यते अश्वाभिधानीमादत्त इति परिसङ्ख्या च "पञ्च पञ्चनखा भक्ष्या" इति अत्र रागप्राप्तेषु प्रायः सर्वेष्वेव मांसवत्सु भक्ष्येषु पञ्चैव परिसङ्ख्यायन्ते तदनुरोधेन तावन्त एवाभ्यनुज्ञायन्ते नान्ये भक्षयितव्या इत्यर्थः । तत्र नियमे प्राप्त्यतोऽप्यर्थस्य प्रापणमनर्थकमिति ब्राह्मणेनापूर्वविधिनाऽन्यनिवृत्तिस्तात्पर्य्यतो भवति । अतः परिसङ्ख्या चात्र पर्य्यवसिता तन्त्रवार्त्तिके यथोक्तं "अप्राप्तविधिरेवागमतो मन्त्रश्च निश्चितः । परिसङ्ख्या फलेनोक्ता न विधेयः पुनः श्रुतेः" इति अयमश्वाभिधानीविधिरप्राप्तविधिरेव लकाररूपत्वात् तस्मात्तन्नो विधिर्मन्त्रार्थश्च निश्चितः अश्वाभिधानीमादद इतीति अतोऽत्र परिसङ्ख्यात्वमपि फलेन तात्पर्य्येण प्राप्तम् ननु, सामान्यतो मन्त्रप्राप्तस्य रशनाग्रहणस्याश्वाभिधानीमित्यनेन विशेष एवोक्तः अपरोऽपि श्राव्यत इति वाच्यं तत्राह—पुनः श्रुतेः पुनरुक्तत्वादनर्थकत्वादित्यर्थः । अथ परिसङ्ख्यायामिदं विविच्यते न तावत्परिसङ्ख्याविधिशब्देनान्यनिवृत्तिं वक्ति, तथा सति पञ्चनखभक्षणरूपस्य स्वार्थस्य त्यागः तदन्यनिवृत्तिरूपस्य परार्थस्य कल्पनं ततश्च प्राप्तस्य पञ्चनखीभक्षणरूपस्य बाधश्च स्यात् । तस्मादीदृशं नियमविधौ पाक्षिकतयांशेनाप्राप्ताश्वाभिधानीस्वीकारेण पूर्य्यते रागतो नित्यप्राप्तेषु नियमफलं तादृशत्वाभावाभिप्रायद्वारा तात्पर्य्यतः परिसङ्ख्या भवतीति तस्मादयमर्थः लोके व्यवायादयो जन्तोर्मनुष्यादेर्नित्याः रागत एव नित्यप्राप्ताः । तत्र व्यवायः स्वभावत एव आमिषमद्यं तु मनुष्यस्य परम्पराप्राप्तत्वादिति ज्ञेयम् । अतस्तत्र चोदना अपूर्वविधिर्नास्ति किन्तु तेषु रागिषु विवाहयज्ञसुराग्रहैर्व्यवस्थितिः क्रियते नियमद्वारा परिसङ्ख्या क्रियते तद्यथा विवाहेत्युक्तलक्षणां विवाह एव तत्रापि ऋतावेव व्यवायः कार्य्यः । यज्ञ एवामिषसेवा सुराग्रहे सौत्रामण्यामेव मद्यसेवेति । ननु, परिसङ्ख्यात्वे सति व्यवायादौ विधित्वमस्त्येव लिङ्गादिसद्भावात् ततस्ताः कथं निन्दया त्याज्यन्ते तत्राह—आसु व्यवायादिषु निवृत्तिरेवेष्टेति रागप्राप्तत्वादभ्यनुज्ञामात्रं क्रियते । नत्वपूर्वनियमयोरिव शास्त्रप्राप्तत्वादवश्यं कार्य्यत इति निवृत्तावेव तात्पर्य्यमित्यर्थः । ऋतुस्नाताया भार्य्यायाः परित्यागदोषश्रवणं तु विध्यतिक्रमात् विध्यनुपपत्तेः । नच वैराग्येणाभ्यनुज्ञातातिक्रमात् तत्राभ्यनुज्ञाया अभावात् किन्तु सत्यप्यभ्यनुज्ञातायामन्यस्यां रागादौ तादृश्यां स्वभार्य्यायामरुच्यादिनैवाप्रवृत्तेस्तदतिक्रमात् ततो भ्रूणहत्यापर्य्यवसानाच्च एवमामिषमद्ययोरपि ज्ञातव्यमिति ॥ ११ ॥ — ॥ १८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

श्रिया । धनादिसम्पत्त्या विभूत्या ऐश्वर्य्येण सतः साधून् अवमन्यन्ते ॥ ९ ॥

दृढतरं प्रबोध्यमाना अपि ते नैव प्रबोध्यन्ते इत्याह—सर्वेष्विति । यथा अस्माकमित्यस्मद्गृहम् अभीष्टमित्याराध्यत्वम् ईश्वरमित्यनाराधने सति दण्डदातृत्वं वेदोपगीतं चेति सर्वथा विख्यातत्वं चोक्तं न शृण्वत इति केन प्रकारेणोच्यत आह—मनोरथानां व्यवायामिषादिविषयाणां वार्त्तयेति भगवत्कथायां सद्भिः प्रवर्त्तितानामपि तत्र विषयभोगवार्त्तैर्बलात् पातयन्तीत्यर्थः । प्रवदन्तीति तदा स्वयमेव प्रकर्षेण वक्तारो भवन्ति ॥ १० ॥

ननु, व्यवायादीनामपि "ऋतौ भार्य्यामुपेयात् हुतशेषं भक्षयेत्" इत्यादिना विहितत्वात् किमिति ते निन्द्यन्ते तत्राह—लोक इति । व्यवायः स्त्रीसङ्गः आमिषमद्ययोर्मांसमदिरयोः सेवा भक्षणानि नित्या रागत एव नित्यप्राप्ताः तत्र व्यवायः स्वभावत एव आमिषमद्यसेवा मानुषस्य कुलपरम्पराप्राप्तत्वादिति ज्ञेयम् । अतस्तत्र तासु चोदना शास्त्रविधिर्नास्ति अप्राप्तप्रापणस्यैव विधित्वात् ननु "ऋतौ भार्य्यामुपेयात्" इत्यादिर्विधिरेष एवेति तत्राह, व्यवस्थितिरिति । तेषु व्यवायादिषु विवाहयज्ञसुराग्रहैर्व्यवस्थितिर्व्यवस्थैव दत्ता यदि स्त्रीमांसमद्यादिकं विना स्थातुं न शक्यते तदा विवाहविधया एव व्यवायः कार्य्यः । यज्ञ एवामिषसेवा सौत्रामण्यां सुराग्रहान् गृह्णातीति श्रुतेस्तत्रैव मद्यसेवा कार्य्येति तत्र तत्रैवाभ्यनुज्ञा दत्ता । ननु, वस्तुतो विधिः अत आसु व्यवायादिसेवासु निवृत्तिरेवेष्टा निवृत्तावेव शास्त्रस्य तात्पर्य्यमिति तथाहि भार्य्यामेवोपेयात् न स्त्रीमात्रम् ऋतावेवोपेयात् नान्यत्र, तत्रापि पञ्चपर्वातिरिक्तसमय एव रात्रावेव पुत्रकाम एवेति क्रमक्रमतो निवृत्तिरेवाभिप्रेता । अथ "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसङ्ख्या विधीयत" इत्यस्यार्थः प्रवृत्तिकर्मकनिष्ठानां मते यथा अत्यन्तमप्राप्तौ विधिः यत्र रागतो निष्ठान्तरतो वा सर्वथैवाप्राप्तिर्नास्ति स विधिरुच्यते यथा "अहरहः सन्ध्यामुपासीत" इति माघस्नानं प्रकुर्वीतेति निशि न स्नायात् चन्द्रग्रहे स्नायादिति अत्यन्ताप्राप्तिरहिते स्थले तु विधिर्न भवति किन्तु नियमः परिसङ्ख्या वा तत्र कुत्र वा नियमः कुत्र वा परिसङ्ख्येत्यत आह—पाक्षिके असति नियमः पाक्षिके अंशे असति निन्दा प्रायश्चित्तादि सति नियमः यथा "ऋतौ भार्य्यामुपेयात्" इति ऋतुसमये हि भार्य्यायां गमनं च रागप्राप्तं तत्रागमनांशे निन्दितो यथा—

"ऋतुस्नातान्तु यो भार्य्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः" ॥

इति स्मृतेः । अतोऽत्र नियम एव "ऋतौ भार्य्यामुपेयात्" एवेति ऋतौ भार्य्यागमनायोगो न कर्त्तव्य इति फलितार्थः । अथ तत्र च तन्मध्य इत्यर्थः । अन्यत्र च अन्यत्र तु अन्यस्मिन् भागे असति सति परिसङ्ख्या यथा "पञ्च पञ्चनखा भक्ष्याः" इति अत्र रागप्राप्ते पञ्चपञ्चनखभक्षणे च निन्दा न

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

श्रूयते । किन्तु तद्भिन्नरभक्षणा एव अतः पञ्चैव पञ्चनखा भक्ष्या नान्ये इति परिसङ्ख्ययैव अभ्यनुज्ञादान मात्रमतो मांसमात्रस्याभक्षणे नास्ति दोष इत्याख्यानम् । अथ निवृत्तकर्मैकनिष्ठानां मतेऽर्थो यथा अत्यन्तं सर्वथा अप्राप्तौ विधिः यथा "अहरहः सन्ध्यामुपासीत" इत्यादि पाक्षिके प्रापणे सति विधिरेव एकत्र कोटौ प्राप्तौ सत्यामन्यत्राप्राप्तौ च सत्यां नियम इत्यर्थः । यथा "इमामगृभ्णन् रशनामृतस्य" इति मन्त्रेण ऋतस्य यज्ञस्य रशनां रज्जुमगृभ्णन्नितीमामित्येकवचनेन गर्दभाश्वाभिधान्यो रशनयोरेकतरस्याः प्राप्तिर्वाच्यते । तत्र किमश्वाभिधान्यामुत गर्दभाभिधान्यामिति संशये नियम्यते अश्वाभिधानीमादत्त इति अश्वाभिधानीमेवादद्यान्न गर्दभाभिधानीमिति नियमे निषेधो वाक्यार्थः तदेवमपूर्वविधिरिति नियमविधिरिति द्वावप्येतौ विधी एव का खलु परिसङ्ख्येत्यपेक्षायामाह, तत्र च तन्मध्येऽपि तदर्थः अन्यत्र विधिनैव इतरत्र रागतश्चके प्राप्तौ सत्यां परिसङ्ख्या विधीयते । यथा रागतः सर्वमांसभक्षणप्राप्तौ पञ्चपञ्चनखेतरमांसानि सर्वाण्येव भक्ष्याणि भोक्तुः प्रत्यवायजनकानीत्यर्थः मांसभक्षणे पञ्चपञ्चनखमांसान्येव परिसङ्ख्यातानि अभ्यनुज्ञातानीति तत्रैव न प्रत्यवायः परिसङ्ख्याया अभ्यनुज्ञादानमात्रार्थत्वात् सर्वमांसाभक्षणा एव शास्त्रतात्पर्यं एवमेव भार्यामित्यभिगच्छेत् परकीयाम् ऋतावेव गच्छेन्नान्यत्रेत्यभ्यनुज्ञामात्रदानात् स्त्रीमात्रानभिगमन एव शास्त्रतात्पर्यम् ऋतुकालादिकायां भार्यायामगमने दोषश्रवणं तु न निषेधातिक्रमात् विध्यनुपपत्तेरिति मन्तव्यम् तस्यामसत्या स्वेच्छादिना वा तदनभिगमन एव दोषश्रवणमिति स्वामिचरणाः ॥ ११ ॥

तथा धनस्यापि इष्टोपभोगार्थमेव विनियोगादबुधा एव एते इत्याह-धनं चेति । धर्म एव एकमुत्कृष्टं फलं यस्य तत् यतो धर्मात् सविज्ञानमपरोक्षज्ञानमाहितं परोक्षज्ञानं भवेत् । मनु अनन्तरमेव शान्तिर्मोक्षो यस्मात्तत् एवम्भूतं धनं गृहेषु देहाद्यर्थं युञ्जन्ति ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मानित्वं विहसन्त्यच्युतप्रियानिति वाक्यार्थं च प्रपञ्चयति--श्रियेति श्रीः गृहकाञ्चनपश्वादिरूपा विभूतिः ऐश्वर्यमादिरूपा अभ्यादिना जातस्मयेन उत्पन्नेन मदेन अन्धधियो मलिनबुद्धयः खलाः सहेश्वरान् हरिसहितान् हरेः प्रियान् हरिर्वा प्रियो येषां तान्, अतः साधून् निरपराधान् अवमन्यन्ति अवजानन्ति ॥ ९ ॥

किञ्च, कामुकत्वेन स्वोपास्यरूपादिविषयाणां मनोरथानां पार्श्वोपलक्षिताः अबुधाः सदर्थानभिज्ञाः अत एव वेदोपगीतं वेदार्थभूतमीशं न प्रवदन्ति न च शृण्वते न शृणवन्ति इति मुख्यस्तेषां मोहः कथम्भूतं? सर्वेषु चराचरेषु अवस्थितम् "तत्सृष्ट्वा तदेवानुप्राविशत् अन्तः प्रविष्टः शास्ता जनानाम्" इत्यादिवेदं प्रपठन्तोऽपि तं न जानन्ति, अहो तेषां मोहाभिभूततेति भावः । पुनः कथम्भूतम् आत्मानामिति अन्तर्यामिणमित्यर्थः । "एष त आत्मान्तर्यामि" इति श्रुतेः । असङ्गतामाह, यथा खमिति । अभीष्टं परमपुरुषार्थरूपम् ॥ १० ॥

ननु, कामुकाः उपासितास्त्रिय इत्येव पुनःपुनः स्त्रीसङ्गः निन्द्यत्वेनोदाहृतः स किमनुपादेय एवेत्यत्र न केवलं स्त्रीसङ्गमात्रं वर्ज्यमपि तु स्त्रीसङ्गामिषभक्षणमद्यपानानि वर्ज्यानि तत्र तु नियमविधिद्वारा परिसङ्ख्याविधिवाक्यैः रागिणामभ्यनुज्ञामात्रं क्रियत इत्याह—लोके इति । लोके संसारे जन्तोः प्राणिमात्रस्य व्यवायामिषमद्यसेवास्तु नित्याः रागत एव नित्यप्राप्ताः तत्र तासु स्त्रीसङ्गमांसमद्यसेवासु चोदनाविधिर्नास्ति, अतः स्त्रीसङ्गमांसभक्षणमद्यपानानि वर्ज्यानि । ननु, "ऋतौ भार्यामुपेयात् हुतशेषं भक्षयेत् सौत्रामण्यां सुराग्रहान् गृह्णाति" इति विधिवाक्यानि सन्तीत्यत्रोच्यते अप्राप्तस्य प्रापको विधिरपूर्वविधिः यथा व्रीहीन् प्रोक्षतीति एवमुक्तवाक्यैर्न स्त्रीसङ्गमांसभक्षणमद्यपानानि विधीयन्ते, स्त्रीसङ्गादीनां रागत एव प्राप्तत्वात् अत उक्तवाक्यानि अपूर्वविधिरूपाणि न किन्तु मन्त्राधिकारिणां पशुवत् स्वाभाविकप्रवृत्तिनिवृत्तये अभ्यनुज्ञामात्रमेभिर्नियमविधिरूपैर्वाक्यैः क्रियते, एतदेवाह-व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरिति । तेषु स्त्रीसङ्गादिषु "ऋतौ भार्यामुपेयात्" इत्यादिवाक्यैर्विवाहादिभिः व्यवस्थितिर्नियमः क्रियते । तथाहि पक्षे प्राप्तस्य प्रापको विधिर्नियमविधिः यथा व्रीहीनवहन्तीति अनेनावघातस्य वैतुष्यार्थत्वं न प्रतिपाद्यते अन्वयव्यतिरेकसिद्धत्वात् किन्तु अवघातं विहायोपायान्तरेण यदा वैतुष्यं कर्तुमारभते तदा अवघातस्य तेनांशेनाऽप्राप्तत्वेऽनेनाप्राप्तांशपूरणमेव क्रियते तदोपायान्तरं परित्यज्यावघातेनैव वैतुष्यं कुर्यादिति नियमः । एवं विवाहविषये एव स्त्रीसङ्गः कर्त्तव्यः यज्ञ एवामिषं तथा सौत्रामण्यामेव मद्यसेवेति नियमः । ननु, नियमविधिनाऽप्यावश्यकत्वं व्यवायादीनां सिद्धमतो निन्दा न युक्तेति आह—आसु निवृत्तिरिष्टेति । व्यवायादीनां नित्यप्राप्ततयाऽप्राप्तांशाभावात् नियमविध्यसम्भव आसु व्यवायामिषमद्यसेवासु निवृत्तिः परिसङ्ख्यैवेष्टा उभयप्राप्तावितरव्यावृत्तिपरो विधिः परिसङ्ख्याविधिः यथा "पञ्च पञ्चनखा भक्ष्या" इति पञ्चनखाः "शशकः शल्लकी गोधा कूर्मः खड्गी च पञ्चमः" इति इदं हि वाक्यं न पञ्चनखभक्षणपरं तस्य रागतः प्राप्तत्वात् नियमपरमप्राप्तांशाभावात् अतः पञ्चनखभक्षणनिवृत्तिपरं तद्वदृतौ भार्यामुपेयादित्यादीन्यपि इतरव्यावृत्तिपराणि । ननु, तर्हि व्यवस्थितिरित्युक्तिरसङ्गता स्यादत्रोच्यते परिसङ्ख्याविधिः श्रुततोऽन्यव्यावृत्तिं न करोति यतः सा दोषत्रयग्रस्ता दोषत्रयं च श्रुतहानिरश्रुतकल्पनाप्राप्तबाधश्चेति श्रुतस्य पञ्चनखभक्षणस्य त्यागात् अश्रुतापञ्चनखभक्षणनिवृत्तेस्तु कल्पनात् प्राप्तस्य पञ्चनखभक्षणस्य बाधात् तस्मात्क्वचित्प्राप्तस्यतोऽन्यथैकस्य प्रापणमनर्थकमित्यपूर्वविधिद्वारा निवृत्तिः फलिता भवति । यथा "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इत्यत्र रशनालिङ्गतो गर्दभाश्वाभिधानीरशनाद्वये प्राप्तस्यतो मन्त्रस्यापूर्वविधिद्वारा परिसङ्ख्योच्यते तदाह तन्त्रवार्त्तिककारः "अप्राप्तिविधिरत्यन्तमतो मन्त्रस्य निश्चितः । परिसङ्ख्या फलेनोक्ता न विधिः पुनः श्रुतेरिति" पञ्च पञ्चनखा भक्ष्या इत्यादिस्तु नियमविधिद्वारा परिसङ्ख्याविधित्वं भवति तद्वदृतौ भार्यामित्यादीनामपि नियमद्वारा परिसङ्ख्याविधित्वात् रागिणामभ्यनुज्ञामात्रं तैः क्रियते । ननु, यद्युक्तवाक्यैः रागिणामभ्यनुज्ञामात्रं क्रियते तर्हि—

यद्घ्राणभक्षो विहितः सुरायास्तथा पशोरालभनं न हिंसा ।
एवं व्यवायः प्रजया न रत्या इमं विशुद्धं न विदुः स्वधर्मम् ॥ १३ ॥
ये त्वनेवंविदोऽसन्तः स्तब्धाः सदभिमानिनः ।
पशून् द्रुह्यन्ति विस्रब्धाः प्रेत्य खादन्ति ते च तान् ॥ १४ ॥
द्विषन्तः परकायेषु स्वात्मानं हरिमीश्वरम् ।
मृतके सानुबन्धेऽस्मिन् बद्धस्नेहाः पतन्त्यधः ॥ १५ ॥
ये कैवल्यमसम्प्राप्ता ये चातीताश्च मूढताम् ।
त्रैवर्गिका ह्यक्षणिका आत्मानं घातयन्ति ते ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

"ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः" ॥
इत्यादिदोषश्रवणात् न स्यादिति चेन्न गार्गी आदि दृष्टान्तेन तां नोपयात् तदा दोषश्रवणोपपत्तेः अत एव "यदहरेव विरजेत्तदहरेव परिव्रजेत् एतद्ध स्म वै तद्विद्वांसः आहुः ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहुवाञ्चक्रिरे एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति किं कर्मणा किं प्रजया किं धनेन" इत्यादिश्रुतयः सर्वतो वैराग्यमुपदिशन्तीत्यलं विस्तरेण ॥ ११ ॥

एवं भगवद्बहिर्मुखानां नानाविधं मोहमुक्त्वेदानीं धर्मद्वारा भगवत्प्रापकस्य धनस्यान्यथा व्ययं ये कुर्वन्ति तेषां मोहमाह—धनञ्चेति । धनो धर्मात् तीर्थयात्रामहत्सेवाहरिकथाश्रवणादिलक्षणात्सन्निधानं त्रिविधसाधनज्ञानसहितं साध्यभूतभगवद्गुणशक्तिस्वरूपादिविषयं ज्ञानमुत्पद्यते अनु ज्ञानलाभानन्तरं प्रशान्तिर्मोक्षलक्षणा भवति "ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति" इति श्रीमुखोक्तेश्च तीर्थयात्रामहत्सेवाहरिकथाश्रवणादिरूपः धर्म एकं फलं यस्य एवम्भूतं धनं च गृहेषु देहाद्यर्थं युञ्जन्ति प्रयुञ्जते । कलेवरस्य दुरन्तवीर्यमनिवार्यप्रभावं मृत्युं न पश्यन्ति अनुप्रशान्तीति पाठे ज्ञानविशेषणम् अनु अनन्तरं प्रशान्तिः प्रकृष्टा शान्तिः मोक्षलक्षणा यतस्तत् अथ ज्ञानस्यैव ध्रुवा स्मृतिरूपस्य परा भक्तिरूपत्वं यतः इति पदं धनवाचकं च यतः धनात् धर्मद्वारा ज्ञानं तत्तत्त्वं चेति योजना ॥ १२ ॥

---

भाषा टीका ।

धनादि सम्पत्ति से ऐश्वर्य से कुटुम्बी मनुष्यों से विद्या से दान देने से स्वरूप से बल से कामों से बड़े अभिमानी होकर बुद्धि से अन्धे होजाते हैं तब भगवान् नारायण को तथा उनके भक्त सत्पुरुष वैष्णवों को देखकर हँसते हैं क्योंकि वे सब दुर्जन हैं ॥ ९ ॥

जैसे आकाश सर्वत्र व्याप्त है तैसे सब देहधारियों में निरन्तर विराजमान अपने अत्यन्त प्रिय ईश्वर जिनको सब वेद गान करते हैं ऐसे ईश्वर विष्णु को जान सुनकर भी स्वर्गादि सुखों की बातों में रहते हैं ॥ १० ॥

इस संसार में मैथुन करना मांस खाना मद्य पीना यह तीन बात नित्य हैं अर्थात् सब को स्वभाव ही से प्यारे हैं इसके लिये किसी शास्त्र के आज्ञा करने की अपेक्षा नहीं है फिर जो शास्त्र विधान करता है तो यह जानना चाहिये कि "सिद्धौ सत्यामारम्भमाणो विधिर्नियमाय कल्प्यते" इस न्याय से इन तीनों विषयों के प्रचार का निवारण करने के लिये व्यवस्था से विवाह यज्ञादिकों में मात्र इनका सेवन करके कम प्रवृत्ति होनेसे फिर सर्वथा त्याग करने के लिये वेदादिकों में इनका कथन है ॥ ११ ॥

धन तो केवल धर्म के वास्ते है जिस धर्म के करने से शास्त्र ज्ञान अनुभव ज्ञान और शान्ति होती है, तिस धन को घर में लगाते हैं अपने शरीर का जो दुस्तर पराक्रमवाला मृत्यु है तिसका कोई भय नहीं करते हैं ॥१२।

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च, व्यवस्थयाऽपि व्यवायाद्यनुष्ठानं न यथेष्टमपि त्वन्यथैवेत्याह—यदिति । यद्यस्मात्सुराया आघ्राणभक्षोऽवघ्राणं च एव विहितो न पानं तथा पशोरालम्भनमेव विहितं नतु हिंसा यद्यपि देवतोद्देशेन यत्पशुहननं तदालम्भनं "वायव्यं श्वेतमालभेत" इत्यादिश्रुतेस्तु हिंसा "या वेदविहिता हिंसा न सा हिंसेति कीर्त्यते" इति वचनात् । मद्यप्रायोद्देशेन तु क्रियमाणं हननं लौकिकहननं तन्निषेध एव आलम्भनमेव विहितं न तु हिंसा अतो न यथेष्टमनुष्ठानमनुज्ञातमर्थः । व्यवायोऽपि प्रजया निमित्तभूतया न तु रत्यै अतो मनोरथवादिन इमं विशुद्धं स्वधर्मं न विदुरिति ॥ १३ ॥

एवं भगवत्पराङ्मुखानां बहुदोषतां प्रपञ्च्य तन्निष्ठां प्रपञ्चयति—ये त्विति । पश्चाभिः अनेवंविदः य एवं धर्मं विदन्ति ये ते विस्रब्धा निःशङ्काः अनेन मनोरथो भविष्यतीति विश्वस्ता या

## श्रीधरस्वामिकृतभावार्थदीपिका।

तद्वामीन्नमपोषणेन वा तैः पशुभिर्विश्वस्तास्ते च पशवः प्रेत्य अमुत्र तान् खादन्ति—

"मांसभक्षयिताऽमुत्र यस्य मांसमिहाद्म्यहम्।
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः" ॥

इति वचनात् ॥ १४ ॥

अभिचारादिना द्विषन्तः मृतके देहे सानुबन्धे पुत्रादिसहिते ॥ १५ ॥

अज्ञास्तत्त्वज्ञैरनुकल्पितमाहरन्ति तत्त्वज्ञास्तु कथम्: ये तु नात्यन्तमज्ञा न च तत्त्वज्ञास्तेऽन्तरालवर्तिनः पतन्तीत्याह—य इति। कैवल्यं तत्त्वज्ञानमसम्प्राप्ताः मूढतामत्यन्तजडताम् अत्र इतः त्रिवर्गप्रधानाः अक्षणिका उपशान्तिक्षणरहिता देहादिस्थैर्यबुद्धयो वा स्वयमेवात्मानं घातयन्ति ॥ १६ ॥

---

## श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी।

व्यवस्थयापि नियमविधिसदृशतयाऽपि अन्यथैव वक्ष्यमाणप्रकारेणैव गन्धाघ्राणालम्भनहिंसयोः को भेद इत्यपेक्षायामयमर्थः तथा च वेदाज्ञापालनार्थं शास्त्रविहितमालम्भनं तदनादरेण भक्षणार्थमेव हननं हिंसेति तयोर्भेदः अत्र तु वेदे तु अतः सुरापानादेः अवघ्राणाद्यर्थत्वात् अतो व्यवायादेः प्रजाद्यर्थत्वात् इमं चित्तशुद्ध्यर्थं वेदाज्ञापालनरूपम् ॥ १३ ॥

नाभिज्ञां तेषां बहिर्मुखानां प्राप्यम् अनेन पशुयागेन मांसेति अस्मिल्लोके यस्य पशोर्मांसमहमद्मि स पशुरमुत्र यमालये मां भक्षयिता भक्षयिष्यति एतन्मांसस्य मांसशब्दस्य मांसत्वं निरुक्तिं मनीषिणः प्रवदन्तीति स्मृतिवाक्यार्थः ॥ १४ ॥

स्वात्मानमेव परकायेष्वपि वसन्तमीश्वरं द्विषन्तः केनाऽभिचारादिना अभिचारः श्येनादिना हिंसा मारादिना लौकिकी हिंसा गृह्यते ॥ १५ ॥

अन्तरालवर्तिनः ज्ञानलवदुर्विदग्धाः उपशान्तिक्षणरहिताः क्षणमात्रमपि शान्तिशून्याः रजोऽविच्छिन्नतमनय इत्यर्थः। द्वितीयपक्षे सर्वं हि पदार्थजातं देहादि क्षणिकमेव नित्यप्रत्यये तथाऽभ्युपगमात् तथापि नास्ति तत्र क्षणिक क्षणिकत्वज्ञानं येषामिति देहादिस्थैर्यबुद्धय इति व्याख्यानम् ॥ १६ ॥

---

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

मृतके शरीरे ॥ १५—२२ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथ सुरामिषसेवाव्यवायानामुपयोगविशेषान्वदन् केषाञ्चित्तद्वानमाह—स्वप्राणभक्ष इति। सुरायाः यज्ञ इत्यादिः पशोरिकस्य भक्ष इत्यन्तः यज्ञे सुरायाः तथा पशोश्च भक्षः यज्ञीयसुरामिषसेवेत्यर्थः। स्वप्राणभक्षो विहितः प्राणः परमात्मा प्राणनहेतुत्वात् तथा च "श्रुतिः को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्" इति प्राणशरीरकत्वाद्वा तथा च श्रुतिः "मनोमयः प्राणशरीरनेता" इति स्वप्राणशरीरकस्य परमात्मनो भक्षणतया विहितः स्वयज्ञमाद्गुणयार्थं स्वप्राणशरीरकपरमात्मनो भक्षणतया यज्ञीयसुरामिषसर्वाविहितेत्यर्थः। यत् प्राणभक्ष इति पाठेऽवघ्राणात्मको भक्षः न तु पानादनात्मक इत्यर्थः। एवं चेत्र दुष्यति प्रत्युत विशुद्धो भवति अन्यथा तु दुष्यत्येवेति भावः। तथा च गीतं भगवता—

"यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्" ॥

इति च एवं चेदालम्भनं न हिंसात्मकं किन्तु पश्वात्मोज्जीवनात्मकं भवतीत्याह—आलम्भनं न हिंसेति। तथा च श्रुतिः "न वा उ एतन्म्रियसे न रिष्यसि देवान् इदेषि पथिभिः सुगेभिः यत्र यान्ति सुकृतो नापि दुष्कृतस्तत्र त्वा देवः सविता दधातु" इति प्रजयेत्यध्ययनेन व्यवतीति व्यवायस्य तृतीया न रत्यै न रतिसुखार्थम् एवं चेत्पितृऋणाद्विमुक्तो भवति। तथा च श्रुतिः "त्रिभिरृणवान् जायते" इत्युपक्रम्य प्रजया पितृभ्य इति इमं विशुद्धं स्वधर्मं न विदुः न रत्यै इति यदिममिति सम्बन्धः ॥ १३ ॥

इत्थमजानतां निष्ठां प्रपञ्चयन् गतिमाह—ये त्विति पञ्चभिः। एवंविधं धर्मं न विदुः [illegible] अतः एवासन्तः स्तब्धा अविनीताः सन्तोऽभिमानिनः [illegible] विश्रब्धा निःशङ्काः पशून् घ्नन्ति [illegible] पशुं [illegible] यासुपपद्यन्ते [illegible] स्वतर्पणार्थमिव्या कर्मणा हिंसिता ते च पशवः प्रेत्यामुत्र तान् द्रोग्धॄन् घातकान् खादन्ति ॥ १४ ॥

किञ्च, अभिचारादिना द्विषन्तः परकायेषु कृतो द्वेषस्तदन्तर्यामिनि स्वस्यात्मनि भगवत्येव पर्यवस्यतीत्यभिप्रायेण स्वात्मानम् ईश्वरम् इत्युक्तं सानुबन्धे पुत्रकलत्रादिसहिते मृतके शवतुल्ये स्वदेहे बद्धः निरूढः स्नेहो येषां तेऽधः नरके पतन्ति ॥ १५ ॥

किञ्च, एषां सद्गतिः सर्वथा दुर्लभेत्यभिप्रेत्याह—य इति। कैवल्यं ज्ञाननिष्ठामसम्प्राप्ताः मूढतां च अतीताः [illegible] त्रैवर्गिकाः त्रिवर्गप्रधाना अक्षणिकाः [illegible] देहादिस्थैर्यबुद्धयो वा स्वात्मानं घातयन्ति [illegible] ज्ञाननिष्ठान्तु कथं एव [illegible] प्राप्तेण कैवल्यमप्राप्ता ये [illegible] इत्युक्तम् आत्मानं घातयन्तीत्यस्यात्मनो [illegible] प्राप्नुवन्तीत्यर्थः ॥ १६ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

व्यवायादीनां यज्ञेषु विहितत्वमभिधायुक्तं तद्विधानप्रकारमाह—यत्घ्राणेति। अयमर्थः सुराया घ्राणभक्ष इति यत् स विवाहीनां देवयज्ञविशेषे विहितः। तथा पशोरालम्भनं न तु देवयज्ञ विहितं पशुनालम्भनमिति हिंसा न विहिता "न हिंस्यात्सर्वभूतानि" इति च यथा घ्राणभक्षादिकं विहितमेवं व्यवायः

एत आत्महनोऽशान्ता अज्ञाने ज्ञानमानिनः ।
सीदन्त्यकृतकृत्या वै कालध्वस्तमनोरथाः ॥ १७ ॥
हित्वात्यायासरचिता गृहापत्यसुहृच्छ्रियः ।
तमो विशन्त्यनिच्छन्तो वासुदेवपराङ्मुखाः ॥ १८ ॥

राजोवाच ।

कस्मिन् काले स भगवान् किं वर्णः कीदृशो नृभिः ।
नाम्ना वा केन विधिना पूज्यते तदिहोच्यताम् ॥ १९ ॥

करभाजन उवाच ।

कृतं त्रेता द्वापरं च कलिरित्येषु केशवः ।
नानावर्णाभिधाकारो नानैव विधिनेज्यते ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्रैवर्गिका धर्मार्थकामप्रधानाः क्षणिकाः देहाद्यनित्यत्ववादिनः क्षणिकास्त्रविपरीताः देहादिष्वेवंबुद्धयः आत्मानं नानात्वबुद्धयः घातयन्ति जीवन्मृता भवन्तीत्यर्थः—

"यश्च मूढतमो लोके यश्च बुद्धेः परं गतः ।
तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः" ॥

इति तृतीयस्कन्धस्थविदुरवचनाच्च ॥ १६ ॥

---

भाषा टीका ।

जैसे मदिरा का सूंघना मात्र भक्षण विहित है तैसे हि पशु का मंत्र से यज्ञ में वध ही विहित है न कि केवल हिंसा करना इसी प्रकार से मैथुन भी सन्तानों के वास्ते है न कि केवल मैथुन के वास्ते इस निर्मल धर्म को वे कर्मकाण्डी मीमांसक नहीं जानते हैं ॥ १३ ॥

जो कि इस प्रकार को नहीं जानने वाले असाधु हैं मनस्वी हैं सत्पुरुषों का अभिमान करते हैं और लोभ के विश्वास से पशुओं को मारते हैं उन को वे ही पशु दूसरे जन्म में मार कर खाते हैं ॥ १४ ॥

पराये शरीर में वर्तमान अपने आत्मा ईश्वर हरि का द्वेष करने वाले पुरुष मारनेवाले कुटुम्ब सहित इस देह में स्नेह करने से नरकों में गिरते हैं ॥ १५ ॥

जो पुरुष मोक्ष के ज्ञान को नहीं प्राप्त भये हैं और ज्ञा मूर्ख भी नहीं हैं किन्तु धर्म अर्थ कामों में लगे हैं वे पुरुष अपने आत्मा का घात करते हैं ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदाह—एत इति । आत्महनः आत्मापह्नवकर्त्तारः अज्ञाने कर्मणि तथा च श्रुतिः—

"असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः" ॥

इति ॥ १७ ॥

या गृहापत्यसुहृच्छ्रियस्ता हित्वा ॥ १८ ॥

तदेवं भगवद्भक्तिरेव कर्तव्येति स्थिते तत्र विशेषं पृच्छति, कस्मिन्काल इति । किंवर्णः कीदृग्वर्णवान् कीदृशः कीदृगाकारः केन वा नाम्ना केन वा विधिना ॥ १९ ॥

एषु कृतादिकालेषु नाना प्रकारा वर्णाभिधाकारा यस्य सः नानैव विधिना विविधेनैव मार्गेण ॥ २० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तदाह आत्मघातित्वमाह—तथा च श्रुतिः । काम्यकर्मिणामात्महन्तृत्वे प्रमाणं श्रुतिः । ईशावास्योपनिषदि आविद्यानिन्दायोऽयं मन्त्रः ते लोका इति तच्छब्दो यच्छब्दार्थे परमात्मभावमपेक्ष्य देवादयोऽप्यसुरास्तेषां स्वभूता असुर्या नाम शब्दोऽनर्थको निपातः लोकाः लोक्यन्ते दृश्यन्ते भुज्यन्ते इति स्वर्ग्याणि कर्मफलानि अन्धेनादर्शनात्मकेनाज्ञानेन तमसा आवृता आच्छादिताः तान् स्थावरान्तान् लोकान् ते जनाः प्रेत्य इमं देहं त्यक्त्वा यथाकर्म यथाश्रुतं गच्छन्ति, ते के ? ये केचिदात्महनः आत्मानं घ्नन्तीति आत्महनोऽविद्वांसः ते हि आत्मानं नित्यं हिंसन्ति अविद्यादोषेण विद्यमानस्यात्मनस्तिरस्करणात् ॥ १७ ॥

अत्यायासेन अतिश्रमेण रचिताः सम्पादिता या गृहापत्यसुहृच्छ्रियस्ता हित्वेति यच्छब्दोऽध्याहार्यः श्रिय इति प्रथमान्तमन्वयश्च स्यात् ॥ १८ ॥

तदेवमभक्तानिन्दया भक्तिमार्गावश्यकत्वं प्रकाश्य तत्र भक्तौ यस्य भक्तिः कर्तव्या स भगवान् इह जगति पूज्यते तत्कालवर्णाकारादि भवद्भिरुच्यताम् ॥ १९ ॥

तत्तत्कालीनयुगावतारवर्णपूजाविधानं सङ्क्षेपकथनं करोति करभाजनस्तु करावेव भाजनं यस्येति तथा "पाणिपात्रोदरा-

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

मत्रो मासिकेन न सङ्ग्रही" इत्युक्तेस्तु करभाजनो न सङ्ग्रहात्तथा भूतत्वात् स एवोवाचेति ज्ञेयम् इति चत्वारि युगानि सन्ति एषु कृतादिषु ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च, एत आत्महनः अशान्ताः अशनापिपासादिपीडिताः अज्ञाने सत्यपि ज्ञानमानिनः ज्ञानसद्भावाभिमानवन्तः कालेन ध्वस्ता मनोरथा येषां ते अत एवाकृतकृत्याः सीदन्ति जीवद्दशायां क्लिश्यन्ति इत्यर्थः ॥ १७ ॥

अत्यायासेन रचिताः सम्पादिताः गृहापत्यसुहृत्स्त्रीः हित्वा अनिच्छन्तोऽपि तमो नरकं विशन्ति वासुदेवपराङ्मुखास्तमो विशन्तीत्यनेन वासुदेवभक्तास्तु तत्पदं विशन्तीति सूचितम् ॥ १८ ॥

तत्र विशेषं पृच्छति, कस्मिन्निति । किं वर्णः कीदृग्विधवर्णवान् कीदृशः कीदृगाकारः केन वा नाम्ना केन वा विधिना पूज्यते तदेतत्सर्वं मिहाधुनोच्यताम् ॥ १९ ॥

कृतमिति एषु कृतादिकालेषु नानाप्रकारा वर्णाभिधाकारा यस्य सः नानैव विधिना विविधेनैव मार्गेण पूज्यते ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उभयेऽपि त्रैवर्गिकाः अधः पतन्तीत्युक्तं तत्र केषां कुत्र निपात इत्यतो अधोनिपातं निरूपयति । ये नद्यन्ति । तत्रोभयेषु त्रैवर्गिकेषु ये आत्महनः परमात्मानं क्षिपन्तः ते तमो विशन्तीत्यन्वयः । सीदन्त्यवशीर्यन्ति दुःखैकभाजो भवन्ति अशान्ता इत्यस्य विवरणं वासुदेवपराङ्मुखा इति अत्यायासरचितगृहादीन् हित्वा कालात्मना भगवता ध्वस्तः प्राप्तुं गमिष्याम इत्यादिमनोरथो येषां ते तथा अनुकूलारं ध्वासमोक्षजसुखसुखरहितं तमः विशन्ति ॥ १७ ॥ १८ ॥

मुमुक्षुभिः अधोक्षज इज्यनाय इति निर्णयाय तत्र राजा पृच्छति, कस्मिन्निति । तत्सर्वम् ॥ १९ ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कस्मिन्निति । नृभिः साधारणैरित्यर्थः । असाधारणानाममन्यावताराणां ह्युपासनायाः सर्वदा श्रुतत्वात् ॥ १९ ॥—२० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

"असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः" ॥

इति श्रुतस्तेषामधोगतिरित्याह—हित्वेति । या गृहापत्यसुहृच्छ्रियस्ता हित्वा त्यक्त्वा ॥ १८ ॥

एतादृशानामुद्धारो भगवदवतारं विना न सम्भवेदिति मनसि कृत्वा पृच्छति, । कस्मिन्निति । कीदृगाकारः ॥ १९—२० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जीवतामेव सकारणं क्लेशं प्रपञ्चयति, । येन इति । आत्महनः अज्ञातात्मतत्त्वा आत्माज्ञानमेवात्महननं तच्चातिगर्हितं दृष्टान्तकतयोक्तमीशावास्योपनिषदि—

"असुर्या नाम ते लोकाः अन्धेन तमसाऽऽवृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः" ॥

इति अज्ञाने परमवेद्यपरमात्मज्ञानभिन्ने कर्मज्ञानमेव परमं ज्ञानमित्यभिमानवन्तः कालेन ध्वस्ता मनोरथाः येषां ते अकृतकृत्याः असम्पादितमुक्त्युपायाः अतः कारणात् सीदन्त्यवसीदन्ति ॥ १७ ॥

मृतानां तु संसारप्रवेशमाह—हित्वेति । अत्यायासेनातिश्रमेण रचिताः सुसम्पादिताः वा गृहादिरूपाः श्रियः सम्पदस्ताः अनिच्छन्तोऽपि हित्वा वासुदेवपराङ्मुखास्तमो विशन्ति, जन्ममरणलक्षणं संसारं प्राप्नुवन्ति वासुदेवभक्तास्तु संसाराद्विमुच्यन्ते इति फलितोऽर्थः ॥ १८ ॥

वासुदेवभजने विशेषं पृच्छति । कस्मिन् काले इति । इह लोके कस्मिन् काले कस्मिन् युगे किं वर्णः कीदृग्वर्णः कीदृशः किमाकारः केन नाम्ना वा केन विधिना वा स वासुदेवः भगवान् नृभिः पूज्यते तत्सर्वमुच्यताम् ॥ १९ ॥

प्रत्युत्तरमाह—कृतमिति । एषु कृतादिषु नाना अनेकप्रकाराः वर्णाभिधाकारा यस्य सः श्रीवासुदेवः नानैव विधिना अनेकप्रकारेण विधिना इज्यते ॥ २० ॥

---

भाषा टीका ।

यह लोक सब आत्मघाती हैं और अशान्त हैं अज्ञान से ज्ञानमानने वाले हैं तब उनके सब मनोरथ काल के वश से नष्ट हो जाते हैं तब वे कृत कृत्य न होनेसे दुखी होते हैं ॥ १७ ॥

अति परिश्रम से अर्जन किये जो घर स्त्री पुत्र धन इन सबों को छोड कर नहीं भी छोडना चाहते हैं तोभी वासुदेव से विमुख होनेसे नरकों को चले ही जाते हैं ॥ १८ ॥

राजोवाच ।

हे श्रीनारायण भगवान् किस युग मे किसवर्णों को धारण करते हैं और कैसे स्वरूप के होते हैं किसनामको पाते हैं और किस विधिसे मनुष्यों से पूजित होते हैं सो आप मेरे से कहिये ॥ १९ ॥

करभाजन उवाच ।

सत्ययुग त्रेता द्वापर कलियुग इनचारों युगों में केशव भगवान नाना प्रकार के वर्णोंको तथा आकारोंको धारण करते हैं और नाना प्रकार की विधि से पूजित होते हैं ॥ २० ॥

तं तदा मनुजा देवं सर्वदेवमयं हरिम् ।
यजन्ति विद्यया त्रय्या धर्मिष्ठा ब्रह्मवादिनः ॥ २५ ॥
विष्णुर्यज्ञः पृश्निगर्भः सर्वदेव उरुक्रमः ।
वृषाकपिर्जयन्तश्च उरुगाय इतीर्यते ॥ २६ ॥
द्वापरे भगवान् श्यामः पीतवासा निजायुधः ।
श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः ॥ २७ ॥
तं तदा पुरुषं मर्त्या महाराजोपलक्षणम् ।
यजन्ति वेदतन्त्राभ्यां परं जिज्ञासवो नृप ! ॥ २८ ॥
नमस्ते वासुदेवाय नमः सङ्कर्षणाय च ।
प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः ॥ २९ ॥
नारायणाय ऋषये पुरुषाय महात्मने ।
विश्वेश्वराय विश्वाय सर्वभूतात्मने नमः ॥ ३० ॥
इति द्वापर उर्वीश ! स्तुवन्ति जगदीश्वरम् ।
नानातन्त्रविधानेन कलावपि यथा शृणु ॥ ३१ ॥
कृष्णवर्णं त्विषाऽकृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ।
यज्ञैः सङ्कीर्तनप्रायैर्यजन्ति हि सुमेधसः ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कस्मिन्काले इति प्रश्नस्योत्तरं कृते इति किं वर्णः इत्यस्य शुक्ल इति कीदृश इत्यस्य चतुर्बाहुरित्यादिना ॥ २१ ॥

केन विधिनेत्यस्य तपसेत्याद्युत्तरम् तपसा आलोचनात्मकेन ज्ञानेन ॥ २२ ॥

नाम नामभिरित्यस्योत्तरं हंस इत्यादि पद्यमुत्तरत्रापि ॥ २३ ॥

त्रिगुणा त्रिगुणिता मौञ्जी मेखला यस्य अग्निगुणात्मकः यज्ञमूर्तिः हिरण्यकेशः "हिरण्यश्मश्रुः हिरण्यकेशः" इति श्रुतिप्रोक्तः प्रकाशकेशः ॥ २४ ॥

भाषा टीका ।

कृतयुग में शुक्लवर्ण चारभुजा जटा वल्कल वस्त्र कृष्ण मृगचर्म यज्ञोपवीत तुलसी पद्माक्षादि माला दण्ड कमण्डलु धारण किये रूप से रहते हैं ॥ २१ ॥

उस काल में मनुष्य शान्त बड़े ज्ञानी होते हैं और वैर रहित सब के सुहृद सम दृष्टि वाले होकर तपस्या से शम दमादि से उन परमेश्वर का पूजन करते हैं ॥ २२ ॥

हंस सुपर्ण वैकुण्ठ धर्म योगेश्वर मनु ईश्वर पुरुष अव्यक्त परमात्मा इन नामों से गाये जाते हैं ॥ २३ ॥

वेही भगवान् त्रेता में लाल वर्ण वाले होकर चार भुजा तीन कटिमेखला सुवर्ण के रङ्ग के सुवर्ण केश तीनों वेद स्वरूपको धारण करते हैं होम के लिये स्रुक् स्रुवादिकों को हाथ में ग्रहण करते हैं ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रय्या विद्यया वेदत्रयोक्तकर्मभिः ॥ २५ ॥

पृश्निगर्भः पृश्निः सुतपसः प्रजापतेः पत्नी तस्याः पुत्रः वृषाकपिः स्मृतः सन् वर्षति कामानाकम्पयति क्लेशानिति तथा जयत्येव सर्वदा जयन्तः ॥ २६ ॥

श्यामोऽतसीपुष्पसङ्काशः निजानि चक्रादीन्यायुधानि यस्य सः श्रीवत्सो नाम वक्षसो दक्षिणभागे रोम्णां प्रदक्षिणावर्तः स आदिर्येषां कम्बुकण्ठादिलक्षणानां तैरङ्कैः चिह्नैर्लक्षणैरुपलक्षणैः कौस्तुभादिभिः ॥ २७ ॥

महाराजोपलक्षणं छत्रचामरादियुक्तम् वेदतन्त्राभ्यां वैदिकेनागमिकेन च मार्गेण यजन्ति पूजयन्ति परमेश्वरं जिज्ञासवः ॥ २८ ॥

तानाह । नमस्त इति ॥ २९—३० ॥

नानातन्त्रविधानेनेति कलौ तन्त्रमार्गस्य प्राधान्यं दर्शयति ॥ ३१ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

येन जन्मशतैः पूर्वं वासुदेवः समर्चितः ।
तन्मुखे हरिनामानि सदा तिष्ठन्ति भारत ॥

इत्यत्र सर्वापराधकृदपीत्यादिनामापराधभञ्जनस्तोत्रे च तस्मात्सर्वत्रैव युगे श्रीमत्कीर्त्तनस्य समानमेव सामर्थ्यं कलौ तु श्रीभगवता कृपया तद्ग्राह्यत इत्यपेक्ष्यैव तत्र तत्प्रशंसेति स्थितम् अत एव यद्यन्यापि भक्तिः कर्त्तव्या तदा तत्संयोगेनैवेत्युक्तम् यज्ञैः सङ्कीर्त्तनप्रायैरिति अत्र च स्वातन्त्र्येणैव नामकीर्त्तनमत्यन्तप्रशस्तम्—

हरेर्नाम हरेर्नाम हरेर्नामैव केवलम् ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥

इत्यादौ तस्मात्साधूक्तं कलिं सभाजयन्त्यार्या इत्यादिद्वयम् ॥ ३८ ॥ ३९ ॥

प्राय इति तेषु भक्तेष्वपराधिनो विरला इत्यर्थः ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रथममवतारः कलियुगवर्त्तिनो जनान् प्रायः कृष्णारामयोर्भजनमार्गमुपदिशत्यतस्तयोः स्तुतिमन्त्री आह द्वाभ्याम् । ध्येयं ध्यातुमर्हं सदेति नात्र कालदेशानियम इति भावः । इन्द्रियकुटुम्बादिभिर्यः परिभवस्तिरस्कारस्तं हन्तीत्यनुसंहितं फलमभीष्टदोहमित्यनुसंहितं तीर्थास्पदमिति ध्यानमात्रेण गङ्गादिसर्वतीर्थस्नानसिद्धेः कश्चो द्रव्यदेशक्रियादिजनितं दुर्वारमपराधमपि नाशकृत्तीर्थमिति भावः । तत्र सदाचारमाह । शिवविरिञ्चीति सुखसेव्यत्वमाह शरण्यमिति । भक्तवात्सल्यमाह-भृत्यार्त्तिहमिति । न च भृत्यानां परिचर्यादिकमप्यपेक्षत इत्याह हे प्रणतपालेति । भृत्याभिमानवन्तं प्रणतिमात्रेणैव पालयतीति भावः । भवाब्धिपोतमिति 'त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं भवाब्धि'मिति ब्रह्मोक्तेः भवाब्धिः कदा निस्तीर्ण इत्यपि त्वद्भृत्यो न जानातीति भावः । त्रेतायां तदवतारस्याध्ययनेनैव स्तुतिमन्त्री यथा हे महापुरुष हे परमहंस महामुनीन्द्र शिवविरिञ्चिनुतम् आचार्यहरिदासाभ्यां स्तुतमन्यत् समानम् ॥ ३३ ॥

अन्यैः सुदुस्त्यजा या सुरेप्सिता राज्यलक्ष्मीस्तां त्यक्त्वा यदिति य इत्यर्थः अरण्यमगात् किं राज्यश्रीफलस्यादर्शनेन न धर्मिष्ठः आर्यस्य गुरोर्दशरथस्य वचसा मनसा पितृवचनमुक्तं प्रेयसीप्रेमवशात्मं चाह दयितया सीतया ईप्सितं मायामृगं स्वर्णाकारं मृगं योऽन्वधावत् तस्य वन्दे श्रीपदपद्मं प्रसूनः प्रायोऽप्योऽपि दुस्त्यजा च सुरैरपि ईप्सितं राज्य स्वकान्तेन विराजमानत्वं यस्याः सा च या लक्ष्मीस्तां त्यक्त्वा वनं यः अरण्यमगात् तत्र हेतुः आर्यस्य पितुः वचसा तत्र सर्वमपि गार्हस्थ्यसुखं त्यक्त्वा गच्छामीति यज्ञोपवीतत्रोटनपूर्वकं यत् मातृवचनतेन धर्मिष्ठः धर्मेण इत्यर्थे अतिशयेन श्रेष्ठः विप्रवाक्यं मान्यतया मन्यते इति कृतशापस्वीकार इत्यर्थः । गत्वा किमकरोदित्यत आह । मायां अवधपुत्रबिम्बादिरूपां मृग्यतीति अन्वेषयतीति मायामृगः संसाराब्धिपो भक्तस्तमन्वधावत् कीदृशः दया अतिशयेनास्तीति दयी तस्य भावो दयिता तया हेतुना ईप्सितं स्वामीप्सितम् आलिङ्गनमिथ्या स्पर्शनं दृष्ट्वा संसाराब्धिपतितमपि तं प्रेमाब्धौ पातयितुमिति निरुपधिमहाकारुण्यं दर्शितम् ॥ ३४ ॥

युगानुरूपाभ्यां रूपनामभ्यां यदुक्तं भागवतामृते—

कृष्णते वर्णनामभ्यां शुक्लः सत्ययुगे हरिः ।
रक्तः श्यामः क्रमात् कृष्णस्त्रेतायां द्वापरे कलौ ॥

इति अत्र सत्यत्रेताद्वापरेषु हंससुपर्णेति विष्णुयज्ञेति वासुदेवसङ्कर्षणेत्यादि कीर्त्तनीया भगवन्नाममालावलीर्यथोक्ता तथा कलौ सा वर्त्तमानापि नोक्ता रहस्योद्घाटनाभावार्थमिति ज्ञेयम् ॥ ३५ ॥

चतुर्षु सत्यादिषु मध्ये कः श्रेष्ठ इत्यपेक्षायां कलिरेवेत्याह । कलिमिति । गुणज्ञाः कीर्त्तनप्रचाररूपं तद्गुणं जानन्तः तद्दोषाग्रहणात् सारभागिनः तस्य सारमात्र एव भागो वर्त्तते येषां ते । ननु कलेरपारदोषवत्त्वात् कथं ते सारभागमेव गृह्णन्तीत्यत आह कथा अपारगुणवत्त्वमपीत्याह । यत्रेति । सर्वः सर्वेष्टप्राप्यः यदुक्तम्—

ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम् ॥

इति ॥ ३६ ॥

सर्वलाभसारमाह । नह्यत इति । इह भवः प्राप्त्युपायेषु भ्राम्यतां श्रमं प्राप्नुवतां परमां शान्तिं भक्तिं परमामिति विशेषणोपन्यासात् ॥ ३७ ॥

साधुसङ्गजनिता केवला भक्तिः कलावेव प्रायेण वर्त्तत इत्याह । कृतादिष्विति । यत्र बहवो नारायणपरायणास्तत्र भुक्तिमात्रार्थिनस्तत्रापरदयं तेषां सङ्गतो भक्तिस्ततः प्रेमभक्तिश्च सम्भवेदित्याकाङ्क्षयेति भावः । चकारात् गौडोद्रयोः ॥ ३८—४०

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

"ऋग्वेदे सयजुर्वेदे तथैवाथर्वसामसु ।
पुराणे सोपनिषदे तथैव ज्योतिषेऽर्जुन—
सांख्ये च योगशास्त्रे च आयुर्वेदे तथैव च ॥

बहूनि मम नामानी"ति मोक्षधर्मे श्रीकृष्णवचनात् सर्वाणि नामानि—

सर्वं कृष्णः स्थावरं जङ्गमं च ।
विश्वात्मानं विश्वमेतं प्रणीहि ॥
यत् प्रशस्तं च लोकेषु पुण्यं यच्च शुभाशुभम्
तत्सर्वं केशवोऽचिन्त्यो विपरीतमतः परम् ॥

एतादृशः केशवोऽयं स्वयम्भूर्नारायणः परमश्चाव्ययश्च
मध्याद्यन्तो जगतस्तस्थुषश्च सर्वज्ञो यो भूतानां प्रभवश्चाव्ययश्चेति
राजधर्मे सञ्जयस्य देवमतस्य वचनात्सर्वाणि रूपाणि च—

पितामहादपि वरः शाश्वतः पुरुषो हरिः ।
कृष्णो जाम्बूनदाभासो व्यभ्रे सूर्य इवोदितः ॥
श्रीवत्साङ्को हृषीकेशः सर्वदैवतपूजितः ।
ब्रह्मा तस्योदरभवस्तथाहं च ललाटजः ॥
शिरोरुहेभ्यो ज्योतींषि रोमभ्यश्च सुरासुराः ।
ऋषयो देहसम्भूतास्तथा लोकाश्च शाश्वताः ॥

इति दानधर्मे शिववचनात् सर्वदेवपूजितत्वं सर्वकारणत्वं च—

देवर्षिभूताप्तनृणां पितृणां न किङ्करो नायमृणी च राजन् ! ।
सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्तम् ॥ ४१ ॥
स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः ।
विकर्म यच्चोत्पतितं कथञ्चिद्धुनोति सर्वं हृदि सन्निविष्टः ॥ ४२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मालिन्योश्च हन्ता च तथा रावणनाशनः ।
विभीषणस्य भगवान् राज्यदो वालिनाशनः—
सुग्रीवराज्यदाता च बलिराज्यापहारकः ॥

इति हरिवंशे गरुडवचनात् रामादिमूर्तिधारित्वं च श्रीकृष्णस्य प्रसिद्धम् अतो महापुरुषादिनामभिः शिवादिपूज्यत्वेन च श्रीरामावतारगुणवर्णनेन च कलौ श्रीकृष्णस्तोतव्यो मुमुक्षुभिरित्याशयेन स्तुतिमाह । ध्येयमित्यादि श्लोकद्वयेन । हे महापुरुष ! पुरुषसूक्तादिवेदैकवेद्य हे प्रणतपाल ! नानावतारैः भक्तपालने दक्षकृत ते चरणारविन्दं वन्दे कथम्भूतं ध्येयं ध्यातुं योग्यम् सदैवास्य सर्वत्र सत्त्वात् ध्येयत्वे हेतवः बाह्याऽभ्यन्तरैः शत्रुभिर्यः परिभवोऽनादरस्तं हन्तीति तथा तत् किञ्चाभीष्टदोहं मनोवाञ्छितपूरकम् किञ्च तीर्थास्पदं गङ्गाद्याश्रयत्वेन परमकीर्त्याश्रयत्वेन च परमशुद्धिहेतुभूतम् किञ्च शिवविरिञ्चिभ्यां नुतं स्तुतम् ननु ताभ्यां समर्थाभ्यां किमर्थं नुतं तत्राह । शरण्यमाश्रययोग्यं तयोरपि रक्षकमित्यर्थः । ननु शिवादिनुतमस्माकं दृग्गोचरः कथं स्यात्तत्राह । भृत्यार्तिहं सर्वभृत्यार्तिहरम् किं बहुना भवाब्धिपोतं संसारसमुद्रतारकम् ॥ ३३ ॥

हे धर्मिष्ठ ! धार्मिकवत्सा पितृवाक्येन वदरण्यमगात् अविचलितत्वात् सन्धिः दयितया प्रियया श्रीसीतया ईप्सितं मायामृगं मारीचं यदान्वधावत् तत्ते चरणारविन्दं वन्दे ॥ ३४ ॥

उपसंहरति । एवमिति । युगानुरूपाभ्यां युगानुसारेण प्रवृत्ताभ्यां वेदतन्त्रोक्तप्रकाराभ्याम् ॥ ३५ ॥

सारभागिनः सारग्राहिणः ॥ ३६ ॥

इह कलौ यतः सङ्कीर्तनात् यतः सङ्कीर्तनात्परमां शान्तिं मोक्षम् ॥ ३७ ॥

अत एव कृतादिषु संस्थिताः प्रजाः कलौ सम्भवं जन्मेच्छन्ति अत एव नारायणः "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते" इति श्रीमुखगीतः सर्वनरसमूहप्रवर्तको भगवान्वासुदेवः परायणं यासां ताः कलौ सम्भवं प्राप्य नामसङ्कीर्तनादिनारायणभक्तिनिष्ठां चाज्ञाचार्यानुग्रहात्प्राप्नुवन्तीत्यर्थः "यो वच्छ्रद्धः स एव सः" इति वचनात् ॥ ३८ ॥

तासां सम्भवस्थानान्याह क्वचित्क्वचिदित्यादिसार्द्धद्वाभ्याम् । क्वचित् क्वचित् श्रीमद्वृन्दावनपुरुषोत्तमक्षेत्रादिषु पुष्करप्रयागनैमिषारण्यादिषु क्षेत्रेषु च श्रीमथुरादिषु पुरीषु च सर्ववेदपुराणप्रसिद्धासु गङ्गायमुनासरस्वत्यादिनदीषु च भूरिशः बहुशः द्राविडेषु च वासुदेवे प्रायो भक्ताः भविष्यन्तीति सार्द्धयोरन्वयः ॥ ३९—४० ॥

भाषा टीका ।

हे शरणागतों के रक्षक आपका जो ध्यान करने को योग्य संसार का नाश करने वाला मनोरथ पूर्ण करने वाला तीर्थों के तुल्य पवित्र कारक महादेव ब्रह्मादिकों से नमस्कृत शरणागत रक्षक भक्तों का दुःख निवारक संसार सागर का जहाज ऐसा चरणार विन्द तिसको मैं वन्दना करता हूं ॥ ३३ ॥

श्रीरामावतार मे जो चरण धर्म कि निष्ठा करने से पिता के वचन पालने के वास्ते देवताओं के भी चाहना के योग्य राज्य लक्ष्मी को छोड़ कर जङ्गल को चला गया फिर जानकीजी के इच्छा करने से माया मृग के पीछे दौड़ा तिस चरणारविन्दको मैं वन्दन करता हूं ॥ ३४ ॥

इस प्रकार से युगों मे होनेवाले मनुष्य उन युगों के कर्म नाम रूपों से सम्पूर्ण कल्याणों के ईश्वर हरि भगवान् का पूजन करते हैं ॥ ३५ ॥

जो लोग गुणों के जानने वाले हैं सार भजने वाले हैं श्रेष्ठ हैं वे लोग कलियुग की प्रसंसा करते हैं क्योंकि इस युग में हरिनाम सङ्कीर्तनही से सर्वार्थ सिद्ध होते हैं ३६

इस संसार में भ्रमने वाले देह धारियों को इस से ज्यादा कोई लाभ नहीं है जिस नाम सङ्कीर्तनसे परम शान्ति प्राप्त होती है और संसार छूट जाता है ॥ ३७ ॥

हे राजन् ! सत्ययुगादि कों में भी प्रजा सब कलियुग में जन्म लेना चाहते हैं क्योंकि कलियुग में नारायण के परम भक्त पुरुष उत्पन्न होंगे करके ॥ ३८ ॥

हे महाराज ! कहीं कहीं पृथिवी में थोड़े २ होंगे द्राविड़ देशमे बहुत होंगे जहां कि ताम्रपर्णी नदी है कृतमाला है पयस्विनी है बड़ी पवित्र कावेरी महा नदी है हे मनुजेश्वर उहां के जो मनुष्य उन नदियों के जलों को पान करते हैं वे निर्मल बुद्धि वाले होकर नारायण वासुदेव के भक्त होते हैं उसदेश में भये भक्त आलवार स्वामी श्रीशठकोपस्वामी श्रीरामानुज स्वामी आदिक भये हैं ॥ ३९ ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

भक्तस्य विधिनिषेधनिवृत्तेः कृतकृत्यतामाह । देवर्षीति । आप्ताः पोष्याः कुटुम्बिन इतरे देवादयः एतेषां यथाऽभक्तः ऋणी सन् एव तेषां किंकरस्तदर्थं नित्यं पञ्चयज्ञादिकर्ता तथा च स्मृतिः "हीनजाति परिक्षीणमृणार्थं कर्मकारयेत्"इति अयन्तु न तथा कोऽसौ यः सर्वभावेन श्रीमुकुन्दं शरणं गतः कर्तं कृत्यं परित्यज्य यद्वा कर्तं भेदं परिहृत्य कृती केन इत्यस्मात् वासुदेवः सर्वमिति बुद्ध्येत्यर्थः ॥ ४१ ॥

नारद उवाच ॥

धर्मान् भागवतानित्थं श्रुत्वाऽथ मिथिलेश्वरः ।
जायन्तेयान्मुनीन्प्रीतः सोपाध्यायो ह्यपूजयत् ॥ ४३ ॥
ततोऽन्तर्दधिरे सिद्धाः सर्वलोकस्य पश्यतः ।
राजा धर्मानुपातिष्ठन्नवाप परमां गतिम् ॥ ४४ ॥
त्वमप्येतान् महाभाग ! धर्मान् भागवतान् श्रुतान् ।
आस्थितः भक्त्या युक्तो निःसङ्गो यास्यसे परम् ॥ ४५ ॥
युवयोः खलु दम्पत्योर्यशसा पूरितं जगत् ।
पुत्रतामगमद्यद्वां भगवानीश्वरो हरिः ॥ ४६ ॥
दर्शनालिङ्गनालापैः शयनासनभोजनैः ।
आत्मा वां पावितः कृष्णे पुत्रस्नेहं प्रकुर्वतोः ॥ ४७ ॥
वैरेण यं नृपतयः शिशुपालपौण्ड्रशाल्वादयो गतिविलासविलोकनाद्यैः ।
ध्यायन्त आकृतधियः शयनासनादौ तत्साम्यमापुरनुरक्तधियां पुनः किम् ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

विहितकर्मनिवृत्तिमुक्त्वा निषेधनिमित्तप्रायश्चित्तनिवृत्तिमाह । स्वपादमूलमिति । त्यक्तोऽन्यस्मिन्देहादौ देवतान्तरे वा भावो येन अत एव तस्य विकर्मणि प्रवृत्तिर्न सम्भवति यच्च कथंचित्प्रमादादिना उत्पतितं भवेत्तदपि हरिर्धुनोति ननु यमस्तत्र मन्येत तत्राह परेशः ननु 'श्रुतिस्मृती ममैवाज्ञे' इति भगवद्वचनात् स्वाज्ञाभङ्गं कथं सहेत तत्राह प्रियस्य ननु नायं पापक्षयार्थं भजते तत्राह हृदि सन्निविष्टः नहि वस्तु शक्तिरर्थितामपेक्षत इत्यर्थः ॥ ४२ ॥

जायन्तेयान् जयन्त्याः पुत्रान् ॥ ४३ ॥

उपातिष्ठन्ननुतिष्ठन् ॥ ४४ ॥

निःसंगो भूत्वा ॥ ४५ ॥

शास्त्रप्रक्रियेयमुक्ता युवां तु संगत एव कृतार्थावित्याह युवयोरिति । वां युवयोः ॥ ४६ ॥

नच सर्वकर्मार्पणादिभागवतधर्मैरन्येषामिव युवयोः सत्त्वशुद्धिरापादनीया पुत्रोपलालनेनैव भागवतधर्मसर्वस्वनिष्पत्तेरित्याह । दर्शनेति । कृष्णे पुत्र इति स्नेहं प्रकुर्वतोर्वां तस्य दर्शनादिभिरात्मा पावितः शोधितः ॥ ४७ ॥

एतदेव कैमुत्यन्यायेन स्फुटयति । वैरेणेति । यं शयनासनादौ वैरेणापि ध्यायन्तस्तस्य गतिविलासादिभिराकृतधियस्तदाकारा धीर्येषां ते तत्सारूप्यमापुः किं पुनर्वक्तव्यमनुरक्तधियां तत्साम्यं भवतीति ॥ ४८ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

इतरे पोष्यवर्गातिरिक्ताः पञ्च यज्ञाश्च "पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः । एते पञ्च महायज्ञाः ब्रह्मयज्ञादिसंज्ञकाः" इत्युक्ताः अतएव ऋणित्वादेव तेषां देवादीनां तदर्थम् ऋणापकरणार्थं तथाच कर्मानुष्ठाने ऋणात्वे प्रमाणं स्मृतिः हीनजातिः हीना उत्तमर्णसकाशाल्लिप्सया जातिर्यस्य तं परिक्षीणं दातुमसमर्थम् ऋणार्थम् ऋणानिवृत्त्यर्थं कर्मैव कारयेदिति मध्यकार्यो धूम इतिवद्यंशब्दोऽत्र निवृत्तिपरः अयं वक्ष्यमाणस्तु न तथा न ऋणी कर्तृशब्दस्य छल्यथावकत्वमप्रयुक्तमतो यद्वेति भेदं मुकुन्दादेवतादीनां स्वातन्त्र्यं परिहृत्य त्यक्त्वा इत्यमुक्तं गारुडे "अयं देवो मुनिर्वन्द्य एष ब्रह्मा बृहस्पतिः । इत्याद्या जायते तावद्यावन्नाराध्यते हरि"रिति अतएव वासुदेवः सर्वमिति बुद्ध्येत्यर्थं इत्युक्तं तथैवोक्तं श्रीमदर्जुनेन "सर्वं समाप्नोषि ततोऽसि सर्वः" इति तथाच सर्वस्य तदुपाध्यत्वात्तदायत्तवृत्तिकत्वात्तदभेदनिर्देशः यथा प्राणायत्तवृत्तिकत्वेनेन्द्रियाणामपि प्राणत्वनिर्देशः तथाच छान्दोग्ये पठ्यते न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते प्राणो ह्येवैतानि सर्वाणि भवन्तीति यत्तु कैश्चिन्नाधितसामानाधिकरण्यं स्वीकृतं तच्छ्रेयो मत इति भक्तिप्रकरणानुपयोगित्वात् श्रोदासहत्वाच्च त्यक्तं विश्वस्य मिथ्यात्वे हि तत्सङ्गच्छते तदेव तु न सम्भवति "तदेतदक्षयं नित्यं जगन्मुनिवराखिलं ब्रह्म सत्यं तपः सत्यं सत्यं चैव प्रजापतिः सत्याद्भूतानि जातानि सत्यं भूतमयं जगदिति तत्सत्यमाचक्षत इति नित्यो नित्यानां चेतनश्चेतनानामिति सत्यस्य सत्य"मिति च विष्णुपुराणभारतादिस्मृतिश्रुतिभिः कण्ठोक्त्या तत्सत्यत्वप्रतिपादनात् कविन्तया वर्णनं तु ज्ञानप्रकरणे युक्तमेव वेदान्तार्थमिति सुधीभिर्विभाव्यम ॥ ४१ ॥

अतएव अनन्यभावत्वादेव तस्यानन्यशरणस्य कथञ्चिदित्यस्याभिप्रायः विकर्मणीत्यादिः प्रमादोऽनवधानता आदिना

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

शुकपठया भक्तिर्विष्णोर्विष्णोरिच्छा गृह्यते यथा चित्रकेतौ तत्र हरिकर्तृकविकर्मधूननं परन्तु परेषां ब्रह्मादीनामपीशो नियन्ता तदाज्ञामननं यमस्य का शक्तिरिति भावः "भुक्तिमुक्ती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि न वैष्णव" इति सकलं वाक्यं गम्यम् अयं भक्तः अर्थितां पापक्षयार्थित्वम् ॥ ४२ ॥

जयन्त्याः पुत्रान् नवयोगेश्वरान् प्रीतः अनन्यशरणस्य माहात्म्यश्रुत्या हृष्टः सोपाध्याय इति तत्सङ्गिनामपि कृतार्थत्वोक्त्या साधुसङ्गमाहिमातिशयो व्यञ्जितः अपूजयदिति वैष्णवानां विष्णुवत् पूजनमभिप्रेतं नतु सत्कृतिमात्रम् "अर्चयित्वा तु गोविन्दं तदीयान्नार्चयेत्तु यः । न स भागवतो ज्ञेयः केवलं दाम्भिकः स्मृत" इत्यादि स्मृतेः ॥ ४३ ॥

ततः पूजनानन्तरं धर्मान् भागवतधर्मान् श्रवणकीर्तनादीन् परमां गतिं श्रीवैकुण्ठम् ॥ ४४ ॥

त्वमपि परं यास्यसे किं साधकभक्तवत् काका नेत्यर्थः सर्वतः परस्य श्रीकृष्णस्य नित्यप्राप्तत्वादिति भावः ॥ ४५ ॥

तथैव श्रीस्वामिचरणानामुत्थानिका शास्त्रप्रक्रियेत्यादि पूरितं कृतार्थतामापादितं पुत्रतामगमदिति प्रकटलीलाभिप्रायेण नित्यलीलायां "जयति जननिवास" इत्याद्यनुसारेण नित्यपुत्रत्वात् ॥ ४६ ॥

तथैव टीकाकृतामिष्टिः भक्त्येत्यादि भागवतधर्माणां यत् सर्वेषां सारभागो वात्सल्यमिति यावत् तस्य निष्पत्तेर्नित्यसिद्धः शोभितः ब्रह्मण्याद्यपराधाभासादपि दूरे रक्षित इत्युक्त्या भविष्यदपराधस्य तत्कालस्य च मायिकलीलामयत्वमभिव्यञ्जितम् ॥ ४७ ॥

एतदेव कृतार्थत्वमेव तत्साम्यं सच्चिदानन्दरूपत्वं भवति नित्यमेवास्तीति मोक्षेऽपि साम्योक्त्या ऐक्यमनादृतम् "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति चे"ति श्रीगीतोक्तेः "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम निरञ्जनः परमं साम्यमुपैती"ति मोक्षेऽपि भेदप्रतिपादकश्रुतेश्चेति ॥ ४८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कृतयुगेऽपि दुष्करं ध्यानं कलौ न सुकरम् अत्यन्तदुष्करं तत्कथं ध्यानेन विना मुक्तिरित्यपेक्षायां सुकरोपायं दर्शयति देवर्षीति ॥ ४१ ॥

प्रपन्नस्योत्तरपूर्वाघविरोधित्वमाह । स्वपादमूलमिति । भजतः संश्रयतः इत्यर्थः अन्यभावस्त्यागस्त्यक्तो येन स त्यक्तान्यभावः ॥ ४२-५२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यत्र सङ्कीर्तनेनैवेति सुकरोपायत्वेनोक्तं सङ्कीर्तनं प्रतिबन्धभूयस्त्वसम्भावनया दुष्करं मन्वानं राजानमालक्ष्य ततोऽपि सुकरं प्रपन्नत्वमुपायं तस्य पूर्वोत्तराघरूपसकलप्रतिबन्धकविरोधित्वं चाह द्वाभ्याम् । देवर्षीति । हे राजन्नयं देवादीनां पितॄणां च न ऋणी अत एव न तेषां किङ्करः नाभीष्टकारी तत्राताः पोष्याः कुटुम्बिनः इतरे देवादयः पञ्चमहायज्ञदेवताः कोऽसौ य इत्थं परिहृत्य उत्तमश्लोक इत्याह अपि यथा सम्प्रदायं परित्यागोऽपगन्तव्यः शरण्यं शरणार्हं मुकुन्दं सर्वात्मना सर्वभावेन प्राप्यप्रापकभावेन शरणं गतः सोऽयं न देवादीनामृणीत्यनेन संसृतिहेतुभूतमुक्तिविरोधिपूर्वाघविरोधित्वं प्रपन्नस्योक्तम् अनेन पूर्वाघविरोधित्वं फलितं न देवादीनां किङ्कर इत्यनेन तत्प्रीत्यावहकर्मस्वधिकारो व्युदस्तः परिहृत्य कर्तामित्यनेन देवपैतृकर्मरूपयज्ञादिकर्मसाध्यफलाभिसन्धिर्निरस्तः ॥ ४१ ॥

स्वपादमूलमिति । हरिराश्रितदुरितहरः परेशो भगवान् स्वपादमूलं भजतः संश्रयतः उपायोपेयभावेन स्वच्छाश्रयस्येत्यर्थः । त्यक्तः अन्यस्मिन् देवतान्तरादौ भाव उपायोपेयभावो येन स्वः तस्य प्रियस्य हेतुगर्भाण्येतानि विशेषणानि नहि निरतिशयप्रीतिविषयगतो दोषः प्रीतिमतो वैमुख्यापादकः किन्तु निराचिकीर्षा विषय एवेति भावः । विकर्म शास्त्रविरुद्धं कर्म कथञ्चित्प्रमादादिना उत्पतितं चेत्तत्सर्वं संनिविष्टो हरिर्धुनोतीति नाशयति ॥ ४२ ॥

धर्मानिति । धर्मानित्यादिनारदोक्तिः जायन्तेयान् जयन्त्याः पुत्रान्मुनीन्कव्यादीन् उपाध्यायैः सहितः प्रीतः सन् पूजयामास हि निश्चितम् ॥ ४३ ॥

तत इति । ततः सर्वस्य लोकस्य जनस्य पश्यतः सतः सिद्धाः कव्यादयः अन्तर्दधिरे राजा निमिः तद्धर्मान् सिद्धैरुपदिष्टाननुपातिष्ठन् परमां गतिं मुक्तिमवाप ॥ ४४ ॥

त्वमपीति । त्वमपि हे महाभाग ! वसुदेव श्रुतान्मत्त इति शेषः एतान् जायन्तेयजनकसंवादसम्बन्धिनान् भागवतान् धर्मानाश्रितः अनुतिष्ठन् श्रद्धया सिसाधयिषितत्वया युक्तः सहितः निःसङ्गः देहतदनुबन्धिषु आसक्तिरहितः अथ जीवदशा दृष्टयुपदेशाः ततः परम्पदमिति शेषः यास्यसे प्राप्स्यसि ॥ ४५ ॥

शास्त्रप्रक्रियेयमुक्ता युवां तु कृतार्थावेवेत्याह । युवयोरिति । कुतः यद्यस्मात् वां युवयोः पुत्रतामगमत्प्राप्तः अतो युवां कृतार्थाविति भावः ॥ ४६ ॥

तावन्मात्रेण कथं कृतार्थतेत्यत्राह । दर्शनेति । श्रीकृष्णे पुत्रस्नेहं प्रकुर्वतोर्वां युवयोस्तस्य दर्शनादिभिरात्मा पावितः शोधितः भगवत्प्राप्तियोग्यो निरस्ततत्प्राप्तिप्रतिबन्धकः कृत इत्यर्थः ॥ ४७ ॥

ननु देहानुबन्धिनि स्नेहो बन्धायैव भवेत्कथं श्रीकृष्णे यो पुत्रस्नेह आत्मपावनहेतुरित्यत्र विपक्षेऽलक्षणयादिति किं पुनर्न्यायेनाह । वैरेणेति । शिशुपालादयो नृपतयः शयनासनादौ यत् यस्मिन् श्रीकृष्णविषये वैरेणापि ध्यायन्तस्तस्य गतिविलासा- धैराकृताधियः तदाकारा धीर्येषां ते तत्साम्यं तत्साधर्म्यमापुः किं पुनर्वक्तव्यमनुरक्तधियां भवादृशानां तत्साम्यं भवतीति नहि कस्मिंश्चिद्वैरस्य तत्साम्यावहत्वं दृष्टं श्रीकृष्णे तु शिशुपालादीनां दृष्टं यतो वाञ्छितो वैरभाव एव निरतिशयानुभाववान् किं पुनः स्नेहभाव इति भावः ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

( देवर्षिपितृभूताप्तनृणां पूजकाश्च ये: ॥ ० ॥ )

सामान्यमुक्त्वा विशेषमाह । देवर्षीति । योऽसावाचार्यया परिचर्यया सर्वात्मना शरण्यं मुकुन्दं शरणं गतो भवति

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सोऽयं देवादीनां किङ्करो ऋणी च न भवति । सर्वात्मनेति ग्रन्थः तेषां किङ्करः ऋणी च भवेदं तात्पर्यं सर्वात्मना हरिभक्ताः सर्वथा हरिभक्ताः भक्ता इति त्रिविधाः तत्र देवताः सर्वात्मना भक्ताः देवाः सर्वथा भक्ताः तदितरे भक्ता इति अत्रापि ये ये भक्त्याधिकास्ते ते अपरेषां स्वामिन उत्तमर्णाश्च ततस्तेषां किङ्कर ऋणी च न स्यात्—

सर्वात्मना हरेर्भक्ता देवता एव केवलम् ।
देवास्तु सर्वथा भक्ता भक्ता एवेतरे स्मृताः ॥
हरिभक्त्यधिकेष्वेव किङ्करश्चाप्यृणी तथा ।
हरिभक्तो नेतरेषां वासुदेवस्वरूपाश्रयात् ॥
त्रिविध उत्तमर्णानि दानशालीतराणि च ।
दानदेभ्यो विमुच्येत नेतरेभ्यः कथञ्चन ॥
कथं देवाद्यनुपकृतो भवो मोक्षेऽपि वर्तयेत् ।
विश्वत्वात्तद्धर्मिणं हि स्वरूपं सर्वशो यतः ॥

इति स्मृतिश्चास्य गृहीता ॥ ४१ ॥

एवंविधस्यापि हरिभक्तस्य पूर्वादृष्टोपनतविकर्मणाधः पातः स्यादिति तत्राह । स्वपादमूलमिति । त्यक्तोऽन्यः स्वतन्त्रोऽहमिति भावो येन स तथा तस्य सर्वदा भगवदधीनोऽस्मीति भावयुक्तस्येत्यर्थः । कथञ्चिद्दुरदृष्टवशात् यदुत्पतितं विकर्म तद्धुनोति इतरभक्तैर्वा उदकादिभिरपि श्रीहरिस्मरणपूर्वकं पूज्या अन्यथा मोक्षो न स्यात् तदुक्तं—

उदकैश्च नमस्कारैः स्मृतिभिर्मनसा तथा ।
बलिभिश्चापि सम्पूज्या देवा मोक्षमभीप्सुभिः
मध्ये विष्णुमनुस्मृत्य नान्यथा तु कथञ्चन ।

इति तत्रापि प्राधान्येन श्रीहरिध्यानं कर्तव्यं तत्सन्निधानसम्बन्धविशेषाद्देवतास्मरणं—

प्राधान्येन हरिर्ध्येयस्तत्सम्बन्धात्सुरादयः ।
ध्येया नान्यत्र कामस्थापेक्षयाद्यनुपयोगिवत् ॥

इति विशेषवचनात् ॥ ४२ ॥

नारदः सिद्धेभ्यो भगवत्तत्त्वं विज्ञाय ततः राजा किमकरोदिति वसुदेवस्य हार्दं प्रश्नं परिहरति । धर्मानिति ॥ ४३—४६ ॥

आत्मा देहः ॥ ४७ ॥

मुक्तेरन्तरङ्गसाधनं भक्तिरेवेति दर्शयितुं वैरप्रधानासुरावेशाद्वैरिभिरभक्तानामपि भक्त्या स्वरूपयोग्यं फलं भवति किमुत नित्यानुरक्तबुद्धीनामिति कैमुत्यन्यायमाह । वैरेणेति । शिशुपालादिषु स्थिता असन्तस्तमोमात्रसत्त्वास्तत्स्वरूपयोग्यफलं नरकादिलक्षणमापुः तत्स्थाः सन्तस्तस्य हरेः साम्यं निर्दोषत्वादिलक्षणं फलमापुः अनुरक्तधियः केवलभक्ताः किं पुनः भक्तियोग्यफलमापुरिति किं वक्तव्यम् अतो भक्तिरेव मुक्तेरित्यर्थः

पौण्ड्रकादिषु दैत्येषु सुरांशाः सन्ति सर्वशः ।
बहुमानफलं विष्णोस्ते यान्त्यादाय सद्गतिम् ॥
विद्वेषस्य फलं यत्तु तदादायासुरास्तमः ।
यान्त्यतो नैव विद्वेषो विष्णौ कार्यः कथञ्चन ॥

इतिवचनात् प्रामाणिकोऽयमर्थः भागवतधियः स्वपुत्रौ तदाकारवन्तः ॥ ४८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तेषां न किङ्करः किन्तु भगवत एवेत्यनधिकारित्वं क्वचित् भेदमित्यर्थं ततो देवतादीनां स्वातन्त्र्यमिति यावत् एवमेवोक्तं गारुडे—

अयं देवो मुनिर्वन्द्य एष ब्रह्मा बृहस्पतिः ।
इत्याद्या जायते तावद्यावन्नार्चयते हरिम् ॥

इति ॥ ४१ ॥

न च विकर्मप्रायश्चित्तरूपकर्मान्तरं कर्तव्यं तस्य तच्छ्रद्धाया एव विकर्मप्रवृत्त्यभावात् कथञ्चिदापतितेऽपि विकर्मणि तदनुस्मरणेनैव प्रायश्चित्तस्यात्यानुषङ्गिकसिद्धेरित्याह । स्वपादमूलमिति । इति सर्वविघ्नत्वे हेतुः । त्यक्तान्यभावस्येति । त्यक्तोऽन्यत्र देवतान्तरे भावो भगवतीव भक्तियेन विकर्मधूनने हेतुः हरिः स्वभावत एव सर्वदोषहरः परेशः शक्तिश्चेत्यर्थः तत्रापि प्रियस्येत्यासक्तश्चेत्यर्थः ॥ ४२—४४ ॥

एवं तत्प्रश्नानुरूपमभ्यहितान् भगवद्धर्मानुक्त्वा तदीयसप्रियोजनोत्तरमाह । त्वमपीति । त्वमपि परं यादवेषु काका त्वं न मन्त्रत्यर्थः सर्वतः परस्य श्रीकृष्णस्य नित्यप्राप्तत्वादिति भावः ॥ ४५ ॥

किन्तु युवयोरिति जगदपि पूरितं कृतार्थतामापादितमित्यर्थः । तत्र हेतुः प्रकटलीलयापि यद्वां युवयोः पुत्रतामगात् ॥ ४६ ॥

ननु तथापि जयविजयवद्ब्रह्मणापराधाद्बिभेमि तत्राह— दर्शनेति । पावितः दोषाभासादपि दूरे रक्षित इत्यर्थः । तत्र हेतुः । कृष्ण इति । तत्रापि पुत्रस्नेहं प्रकुर्वतोरिति ताभ्याम् युवयोर्महद्देवान्तरमिति भावः ॥ ४७ ॥

आस्तां युवयोर्वार्ता श्रीकृष्णस्य सर्वोत्कृष्टभगवत्स्वभावत्वात्साधारणानुरक्तजनानामपि सुतरां तत्तुल्या गतिः किं पुनर्बन्धूनामिति तान् प्रतिश्लोकान्तं कैमुत्येनाह । वैरेणेति ॥ ४८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भक्तस्य नित्यनैमित्तिकश्राद्धतर्पणादिपञ्चयज्ञाद्यकरणेऽपि प्रत्यवायाभावं [illegible] नित्यमाह । देवर्षीति । आप्ता नरः पोष्याः पितृमातृभार्यादयः देवादयः पञ्चयज्ञदेवताः एतेषां कर्मणा यथा ऋणी अत एव तेषां किङ्करश्च तदर्थं नित्यं पञ्चयज्ञकर्त्ता तथा च स्मृतिः "हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत्" इति अयं तु न तथा कोऽसौ यः सर्वभावेन श्रीमुकुन्दं शरणं गतः यथा पृथ्वीपतिना स्वकिङ्करत्वेन गृहीतस्य जनस्य मण्डलेश्वराद्यनुवृत्तिर्न सम्भवेत् कर्त्तव्यं वर्णाश्रमविहितं कर्म त्यक्त्वा यद्वा कर्त्तव्यमेव त्यक्त्वेति यथा तरोर्मूलनिषेचनेनेति न्यायेन विष्णुपूजनं सम्पूज्य देवर्ष्यादयः साधु पूजिता एवेत्यत एव "मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते" इति वदता भगवता स्वभक्तस्य कर्माधिकारो दूरीकृतः ॥ ४१ ॥

विहितकर्मनिवृत्तिमुक्त्वा निषेधनिमित्तप्रायश्चित्तनिवृत्तिमाह । स्वपादमूलमिति । त्यक्तोऽन्यस्मिन् देवतान्तरे भावः सेव्यबुद्धिर्येन तस्य विकर्मणि प्रवृत्तिरेव न भवेत् कथञ्चित् प्रमादादिना

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कर्मोत्पत्तिम उत्पातरूपेण जातं चेत् तदपि हरिर्धुनोति ननु विकर्मवंति भूत्वे दण्डयन्त एव यमभटो दृश्यन्ते इति हरिरेव तं दण्डयन्तु न प्रियस्य भक्तस्य प्रियत्वादेवादण्ड्यत्वं परेशः इति एतदेव तस्य पारमेश्वर्यमिति भावः । ननु, नायं पापक्षयार्थं भजते तत्राह । हृदि सन्निविष्ट इति नहि वस्तुशक्तिर्बोधितामपेक्षत इति भावः ॥ ४२ ॥

आयन्तेयानू जयन्त्याः पुत्रान् ॥ ४३—४४ ॥

श्रीवसुदेवस्य नित्यसिद्धभगवत्पितृभावस्यापि भगवत इव नित्यमूर्तेरपि भगवदिच्छयैव भक्तिरसौत्कण्ठ्यनिमग्नस्य स्वस्मिन् प्राकृतनरत्वाभिमानमालक्ष्य तं प्राकृतनरमिवोपदेशमात्रश्लाघादिभिरानन्दयति । त्वमपीति षड्भिः । परं परमेश्वरं प्राप्स्यसि ॥ ४५—४७ ॥

ननु परमेश्वरे पुत्रबुद्धिरेवानर्थकारिणावयोरपराधोऽस्यादिति चेत्तमेवं प्रातिकूल्यभावेनापि कृष्णार्पितमनसा कृतार्थी भवन्ति किं पुनरानुकूल्यभावेन युष्मदादय इत्याह । वैरेणेति । गतिविलासादिषु विशिष्टा आकृतिः कृष्णस्याकारस्तन्मात्र एव ननु तन्माधुर्यधैर्येषां ते स्वीयशयनासनादिकर्माणि ध्यायन्तः सन्तः सारूप्यं सारूप्यं सायुज्यं च यथा योगमापुः अनुरक्तधियां युष्मदादीनां तु किं पुनस्तत् ततोऽप्यधिकं प्राप्यं तस्मादपराधस्तु युष्माकमेव नास्तीति भावः ॥ ४८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु वासुदेवनिष्ठस्य देवादिकार्येऽप्यधिकारोऽस्ति नवेत्यत आह । देवर्षीति । हे राजन् ! यः कर्तं कृत्यं परिहृत्य सर्वात्मना श्रीमुकुन्द एव मम स्थितिप्रवृत्तिहेतुः स एव प्राप्यः स एव तत्प्राप्त्युपाय इत्येवं सर्वः सम्पूर्णः अन्यत्र वृत्तिरहितः य आत्मा मनस्तेन शरण्यं शरणार्हं मुकुन्दं शरणं गतः स देवादीनाम् ऋणी न भवति अत एव किङ्करो न भवति ॥ ४१ ॥

स्वपादमूलं भजतः अहर्निशं, चिन्तयतः इदमेव निरपेक्षं प्रापकं चेति मत्वा सर्वतः अत एव त्यक्तः अन्यभावः पादमूलेतरे प्राप्ये प्रापके च भावो येन स तस्य अत एव प्रियस्य हृदयंगमस्य कथञ्चित् यज्ञरकादिप्रापकं विकर्मोत्पतितं यकारात् यत्स्वर्गादिप्रापकं कर्मोत्पतितं पादमूलासक्तस्य शुभफलके कर्मण्येव प्रवृत्तिर्नास्ति कुतः पुनरकर्मणोत्पत उक्तं कर्थाञ्चदिति तत्सर्वं स्वप्राप्तिकपटकम् हरिर्विधुनोति निराकरोति ॥ ४२ ॥

धर्मान्निरुपकलत्वां भगवद्भक्तमायोतत्तरणप्रकारादीनाम् आयन्तेयानू जयन्त्यपत्यान् ॥ ४३ ॥

आतिष्ठन् श्रद्धाविश्वासादिना अनुतिष्ठन् परमां भगवद्भावापत्तिम् ॥ ४४ ॥

निःसङ्गः फलाभिसन्धिरहितः सन् ॥ ४५ ॥

भवता लोकसङ्ग्रहार्थे यज्ञादिकं कृतं तथापि सामान्यपुरुषमिव भवन्तं प्रति—

त्वमप्येतान्महाभाग ! धर्मान्भागवताञ्छ्रुतान् ।
आस्थितः श्रद्धया युक्तो निःसङ्गो यास्यसे परम् ॥
इत्युक्तं भवान्तु सभार्यः कृतार्थ एवेत्याह । युवयोरिति । वां युवयोः ॥ ४६ ॥

कृतार्थतामाह । दर्शनेति । कृष्णे सदात्मजे पुत्र इतिस्नेहं प्रकुर्वतोर्वां युवाभ्यां दर्शनादिभिः आत्मा देहः पावितः शोधितः ॥ ४७ ॥

एवं श्रीवसुदेवस्य सभार्यस्य कृतार्थतामुक्त्वेदानीमन्येषामुक्तभागवतधर्मनिष्ठानां कैमुतिकन्यायेन मुक्तिमाह । वैरेणेति । यं श्रीकृष्णं शिशुपालादयो नृपाः शाल्वादयो वैरेणापि । ध्यायन्तोऽभ्यसन्तः श्रीकृष्णगतिविलासादौ आकृतधियः आकृता तत्तदाकारा धीर्येषां ते तस्य श्रीकृष्णसाम्यमापुः किं पुनर्वक्तव्यमनुरक्तधियां भागवतानां तत्साम्यं भवतीति ॥ ४८ ॥

———

भाषा टीका ।

हे राजन् ! देवता ऋषि सम्पूर्ण पितृगण इन सबों का वह पुरुष ऋणी नहीं होता है न किंकर होता है जोकि सब प्रकार सब के कर्तव्य को छोड़कर शरण रक्षक शरण्य मुकुंद की शरणागति को प्राप्त होता है ॥ ४१ ॥

तब परमात्मा हरि भी जो अपने चरण का भजन करता है प्रिय है अन्य भाव को छोड़ने वाला है तिसका जो कोई कुकर्म भूल से होजावे तो तिस सब को हृदय में स्थित होकर नाश कर देते हैं ॥ ४२ ॥

नारद उवाच ।

वे मिथिलेश्वर राजा इस प्रकार भागवत धर्मों को सुन कर प्रसन्न होकर जयन्ती पुत्र इन ऋषियों को उपाध्यायों को साथ लेकर पूजन करते भये ॥ ४३ ॥

तब तो सब लोगों के देखते ही वे सिद्ध लोग अंतर्धान होगये राजा भी उन धर्मों के अनुष्ठान करके मुक्ति को प्राप्त होगये ॥ ४४ ॥

हे महाभाग ! वसुदेवजी ! आप भी सुने हुवे इन धर्मों को श्रद्धा से आश्रय करके निःसङ्ग होके परमगति को प्राप्त होजाओगे ॥ ४५ ॥

तुम दोनों स्त्री पुरुषों के यश से संपूर्ण जगत पूरि रहा है जिससे कि भगवान् हरि ईश्वर तुमारे पुत्र होगये ॥ ४६ ॥

श्रीकृष्णजी के साथ दर्शन से आलिंगन से भाषण से शयन से आसन से आपने श्रीकृष्ण के साथ स्नेह किया है तिससे आत्मा को पवित्र कर लिया है ॥ ४७ ॥

शिशुपाल पौंड्र शाल्व आदि नृपति वैर से भी श्रीकृष्ण की गति विलास अवलोकनादिकों से उनका शयन आसनादिकों में ध्यान करने से उनकी समता को प्राप्त होगये तो फिर अनुराग करने वाले तो क्यों नहीं उनको प्राप्त होंगे ॥ ४८ ॥

———

माऽपत्यबुद्धिमकृथाः कृष्णे सर्वात्मनीश्वरे ।
मायामनुष्यभावेन गूढैश्वर्ये परेऽव्यये ॥ ४९ ॥
भूभारासुरराजन्यहन्तवे गुप्तये सताम् ।
अवतीर्णस्य निर्वृत्यै यशो लोके वितन्यते * ॥ ५० ॥
श्रीशुक उवाच ॥
एतच्छ्रुत्वा महाभागो वसुदेवोऽति विस्मितः ।
देवकी च महाभागा जहतुर्मोहमात्मनः ॥ ५१ ॥
इतिहासमिमं पुण्यं धारयेद्यः समाहितः ।
स विधूयेह शमलं ब्रह्मभूयाय कल्पते ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् एकादशस्कन्धे
पञ्चमोऽध्यायः ॥ ५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु पुत्रस्नेहश्चेन्मोक्षहेतुस्तर्हि सर्वे मुक्ताः स्युरित्याशङ्क्याह । मापत्यबुद्धिमिति । अपत्यबुद्धिं मा कृथाः अडागमश्छान्दसः ॥ ४९ ॥

ननु कथमीश्वरो मानुषः स्यात्कथं वा तस्य विश्वसृष्ट्यादिकर्तुः पूतनाशोषणादिकमाश्चर्यमिव निरूप्यते तत्राह । भूभारेति । भूभाररूपा असुरा एव राजन्यास्तेषां हन्तवे तान्हन्तुम् निर्वृत्यै मोक्षाय ॥ ५०—५१ ॥

इहास्मिन्नेव देहे शमलं मोहं विधूय ब्रह्मभूयया ब्रह्मत्वाय कल्पते ॥५२॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

अपत्यबुद्धिं पुत्रसामान्यमतिं मा कुरु मायेति कृपाप्रधानमनुष्यलीलाप्रकटनेन गूढं दुर्विज्ञेयमैश्वर्यं यस्य तस्मिन् ॥ ४९ ॥

अवतीर्णस्यास्य प्रपञ्चगोलोकादिति शेषः । तथा चाप्रसिद्धनराकृतिपरब्रह्मत्वं ननु पार्थिवमनुष्यत्वमिति भावः ॥ ५० ॥

एतच्छ्रुत्वेति पञ्चाध्यायीवर्णिततत्त्वं मोहं प्रकटलीलावेशेन प्राकृतापत्यमतिं ब्रह्मशापभवञ्च ॥ ५१ ॥

ब्रह्मत्वाय कल्पते योग्यो भवति जीवन्मुक्तः स्यादित्यर्थः ॥५२॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिविरचितायां दीपिकादीपिनी-
टिप्पण्याम् पञ्चमोऽध्यायः ॥ ५ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अत्रान्यस्मिन्नादर्शे ३८ श्लोके कलौ क्वचित् भक्ता भविष्यन्तीत्यनेनान्वयः द्राविडेषु च भूरिशः बहुशः बहवः इत्यर्थं अन्यत्र कलौ प्रायशो भक्ता इति द्राविडेषु भूरिशः सर्वस्मिन् कलौ सर्वस्मिन् द्राविडे चेति तत्र हेतुत्वेन पिबन्ति जलं तासामित्युक्तिः इत्यधिकपाठो दृश्यते ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु सत्यमेतद्यत्कृष्णो लोकविलक्षणः सोऽपि प्राकृतो मम पुत्र इत्यत आह । मेति । कृष्णे केवलमपत्यबुद्धिं मा कृथाः न कुरु अडागमश्छान्दसः तत्र हेतुत्वेन विशिनष्टि । योगीश्वराणां विविधविचित्रशक्तिमतामपीश्वरेऽस्यैवामानुषाणि चेष्टितानि त्वयैव दृष्टानीति भावः । परे प्रकृतिविलक्षणेऽव्यये तदन्तरात्मतयावस्थितत्वेऽपि तद्गतदोषसंस्पर्शरहिते स्वरूपतः स्वभावतश्च विकाररहिते च नन्वेवंविधश्चेत्तदसाधारणचेष्टः किं न दृश्यत इत्यत आह । मायामनुष्यभावेन मायया सङ्कल्पात्मिकया हेतुभूतया यो मनुष्यभावः मनुष्याकारः तेन गूढमैश्वर्यम् ईश्वरासाधारणाकारो यस्य तस्मिन् ॥ ४९ ॥

किं तर्हि मायामनुष्यभावप्रयोजनमित्यत आह । भूभारेति

* वितन्वतीति वीरराघव० विज० पाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भुवो भाररूपा असुराः असुरसम्पदमभिजाता राजन्यास्तेषां निहत्यै विनाशाय सतां साधूनां गुप्तये परित्राणाय चावतीर्णो ऽस्य लोकस्य निर्वृत्यै सुखाय यशः कीर्तिं लोके जगति वितन्वतिं सम्पन्नमिदं शृण्वतः कीर्तयतश्च जनस्य निरतिशयानन्द-प्रापणाय कीर्तिं विस्तारयति कृष्णेऽपत्यबुद्धिं मा कृथा इति सम्बन्धः ॥ ५० ॥

एतावितिः। एतत्सारस्तोकमात्मनः मोहं तस्मिन्नपत्यबुद्ध्यात्मकं जहतुः ॥ ५१ ॥

प्रकृतेतिहासश्रवणादिफलमाहाइतिहासमिति। पुण्यं यशतां पुण्यावहं शृण्वतां च यः पुमान् समाहितचित्तो धारयेच्छ्रवणादि-पूर्वकमितिहासार्थमनुतिष्ठेत् सोऽस्मिन्नेव जन्मनि शमलं भगवत्-प्राप्तिप्रतिबन्धकं पापं विधूय ब्रह्मभूयाय ब्रह्मभूयं ब्रह्मभावः ब्रह्मसा-धर्म्यमिति यावत् तस्मै कल्पते तत्साधर्म्यं प्राप्नोतीत्यर्थः ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उक्तार्थमुपसंहरन् कृष्णेऽपत्यबुद्धिं विहाय सर्वेश्वरबुद्धि-रेव कर्तव्येत्याह। मापत्यबुद्धिमिति ॥ ४९ ॥

हन्तवे हन्तुं "हन्तवा उ" इति श्रुतिः अस्य विश्वस्य ५०-५१

ब्रह्मभूयाय स्वस्वयोग्यपूर्णानन्दत्वाय ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

सर्वत्र हेतुः मापत्येति। अपत्यसाधारणबुद्धिं मा कुरु यतः कृष्णे "कृषिर्भूवाचक" इत्यादिलक्षणे अत एव सर्वात्मनि सर्वा-वतारिणि अत एवेश्वरे सर्ववशीकर्तरि अत एव परे तथापि मायेति कृपाप्रधानमनुष्यलीलाप्रकटनेन गूढं ज्ञातुमशक्यमै-श्वर्यं यस्य तस्मिन् अत एवाव्यय इति यद्वा ननु तर्हि पुत्रस्नेहं प्रकुर्वतोरिति कथं पुत्रोचितः स्नेहः तस्मिन् श्लाघितं तत्राह। मेति। अपत्यबुद्धिमा अकृथाः किन्तु कुरुथेवेत्यर्थः तत्र हेतुः कृष्ण इत्यादि लक्षणेऽपि मायेत्यादिरूप इति पूर्व-वत् ॥ ४९ ॥

कृपाप्रधानत्वमेवाह। भूमारेति ॥ ५० ॥

ततश्च एताविति। मोहं ब्रह्मणापभयमयम् ॥ ५१ ॥

ब्रह्मभूयाय सर्वबृहत्तमत्वाय कल्पेत परमभक्त्यापत्तेः ॥५२॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तस्मात्त्वया अनुरक्तायियेव माऽयं नतृदासितव्यमित्याह। मेति। सर्वात्मनीश्वरे मदपत्यत्वमारोपितमेव न वस्तुत इत्यर्थं भा-वनया कृष्णे वा अपत्यवदेव बुद्धिस्तां मा कृथाः मदपत्य-मेवायमिति कृष्णे पुत्रभावं कुर्वीति भावः। ननु मनुष्यस्य मम परमेश्वरः कथं पुत्रः स्यात्तत्राह। मायेति। त्वदपत्यत्व-प्राप्त्यर्थं लोकदृष्ट्या मायया मनुष्यत्वेन गुप्तीकृतमैश्वर्यं येन अतो मनुष्यस्य तव मनुष्यः कृष्णः पुत्रो भवेदिति भावः। परेऽव्यये इति तदपि तस्य श्रेष्ठत्वम् ऐश्वर्यव्ययराहित्यं च भवेदिति भावः। अत्र वासुदेवप्रबोधनार्थमेव मायाशब्दः प्रयुक्तः वस्तुतस्तु कृष्णो मनुष्यः स्वरूपेणैव तदापि मायाशब्दः स्वरूपवाची ॥ ४९ ॥

भूभाररूपा असुरा एव ये राजन्यास्तेषां हन्तवेतान् हन्तुं सतां गुप्तये उभयेषामेव तेषां निर्वृत्यै सायुज्यप्रेमदानादि-भिरिति वैषम्यनैर्घृण्ये पराहते ॥ ५० ॥

मोहं कृष्णे स्वपुत्रत्वस्याभिमानं जहतुः ॥ ५१ ॥

शमलमविद्यां विधूय मोक्षं प्राप्नोति ॥ ५२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्
एकादशेऽपि पञ्चमोऽयं सङ्गतः सङ्गतः सताम् ॥ ५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

मायामनुष्याः प्राकृता मनुष्याः गृभ्नुवः तद्विषयको यस्ते-च्छात एवं चरिष्यामीति श्रीकृष्णसङ्कल्पकेन गूढैश्वर्ये अव्यये नित्यगुणशक्तिविग्रहादिके परे निःशमानातिशये कृष्णे अपत्य-बुद्धिं मा कृथाः अडागमः छान्दसः ॥ ४९ ॥

तर्हि मायामनुष्येषु किमर्थं तदवतरणं तत्राह। भूमारेति। भूभारासुरराजन्यानां हन्तवे तान् हन्तुं सतां सुराणां गुप्तये रक्षायै निर्वृत्यै मुक्तये मुमुक्षूणामिति शेषः ॥ ५० ॥

मोहं भगवद्विरुद्धरूपेव भगवत्पुत्रत्वमपत्यबुद्धिम् ॥ ५१ ॥

इहास्मिन् लोके शमलं देहम आत्मबुद्धिरूपमात्मनि अब्रह्मा-त्मकबुद्धिरूपं भगवति देवतान्तरसमबुद्धिरूपं मोहं विधूय ब्रह्मभावाय कल्पते योग्यो भवति ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

पञ्चमाऽध्यायार्थप्रकाशः ॥ ५ ॥

---

भाषा टीका ।

सर्वात्मा श्रीकृष्ण के विषय में पुत्र बुद्धिमत करना क्यों के कि वे परमात्मा हैं परमेश्वर हैं ऐश्वर्य को गुप्त करके मनुष्य मात्र वर्तमान हैं ॥ ४९ ॥

वे तो पृथिवी के भार रूप जो राजा हैं तिनके मारने के वास्ते औ सत्पुरुषों के रक्षा करने के वास्ते अवतार लिये हैं उनका यश लोक में विस्तृत होरहा है ॥ ५० ॥

श्रीशुक उवाच ।

महा भाग्यवान् वसुदेवजी इस बात को सुनकर बहुत विस्मित होगये और देवकीजी भी विस्मित भई फिर उन दोनों ने अपने संसारी मोह को छोड़ दिया ॥ ५१ ॥

इस पवित्र इतिहास को जो सावधानता से धारण करेगा सो पुरुष इस जन्म में सब पापों को दूर करके ब्रह्म गति को प्राप्त होगा ॥ ५२ ॥

इति श्रीमद्भागवत एकादश स्कन्ध पंचमोऽध्याय
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्ता ॥ ५ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥

—:*:—

## अथ षष्ठोऽध्यायः ।

———:*:———

श्रीशुक उवाच ।

अथ ब्रह्माऽऽत्मजैर्देवैः प्रजेशैरावृतोऽभ्यगात् ।
भवश्च भूतभव्येशो ययौ भूतगणैर्वृतः ॥ १ ॥
इन्द्रो मरुद्भिर्भगवानादित्या वसवोऽश्विनौ ।
ऋभवोऽङ्गिरसो रुद्रा विश्वे साध्याश्च देवताः ॥ २ ॥
गन्धर्वाप्सरसो नागाः सिद्धचारणगुह्यकाः ।
ऋषयः पितरश्चैव सविद्याधरकिन्नराः ॥ ३ ॥
द्वारकामुपसञ्जग्मुः सर्वे कृष्णदिदृक्षवः ।
वपुषा येन भगवान्नरलोकमनोरमः ॥
यशो वितेने लोकेषु सर्वलोकमलापहम् ॥ ४ ॥
तस्यां विभ्राजमानायां समृद्धायां महर्द्धिभिः ।
व्यचक्षतावितृप्ताक्षाः कृष्णमद्भुतदर्शनम् ॥ ५ ॥
स्वर्गोद्यानोपगैर्माल्यैश्छादयन्तो यदूत्तमम् ।
गीर्भिश्चित्रपदार्थाभिस्तुष्टुवुर्जगदीश्वरम् ॥ ६ ॥

देवा ऊचुः ।

नताः स्म ते नाथ ! पदारविन्दं बुद्धीन्द्रियप्राणमनोवचोभिः ।
यच्चिन्त्यतेऽन्तर्हृदि भावयुक्तैर्मुमुक्षुभिः कर्ममयोरुपाशात् ॥ ७ ॥
त्वं मायया त्रिगुणयाऽऽत्मनि दुर्विभाव्यं व्यक्तं सृजस्यवसि लुम्पसि तद्गुणस्थः ।
नैतैर्भवानजित ! कर्मभिरज्यते वै यत्स्वे सुखेऽव्यवहितेऽभिरतोऽनवद्यः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

षष्ठे ब्रह्मादिभिः स्तुत्वा गन्तुं विज्ञापितं हरिम् ।
उद्धवः प्रार्थयामास स्वधाम नय मामिति ॥

अत्र परमतिविस्तरेणाऽऽत्मविद्यां निरूपयितुं तत्प्रस्तावमाह । अथेति । आत्मजैः सनकादिभिरभ्यगात् द्वारकामिति चतुर्थेनान्वयः ॥ १—३ ॥

ननु तेषामुपेन्द्रादिरूपं भगवन्तं नित्यं पश्यतां कथमपि दिदृक्षा तत्राह । वपुषेति येन । वपुषा नरलोकमनोरमः सन् सर्वलोकेषु यशो वितेने तदति सुन्दरं वपुर्दिदृक्षवः ॥ ४ ॥

व्यचक्षत अपश्यन् ॥ ५ ॥

स्वर्गोद्यानस्थैर्माल्यैः चित्राणि शब्दार्थप्राधान्येन पदान्यर्थाश्च यासु ताभिर्गीर्भिः ॥ ६ ॥

बुद्धीन्द्रियादिभिर्दर्शनादिना प्राणेन च बलहेतुना दण्डवत्प्रणिपातेन नता वयं नमस्कृतवन्तः स्मेति विस्मये यथाहुः "दोर्भ्यां पद्भ्यां जानुभ्यामुरसा शिरसा दृशा । मनसा वचसा चेति प्रणामोऽष्टाङ्ग ईरित" इति स्मशब्दोक्तविस्मयाय विशेषणाम कर्ममयादुरुपाशान्मुमुक्षुभिर्भावयुक्तैरपि यदन्तर्हृदि चिन्त्यते नतु दृश्यते तद्रूपं नताः स्महो भाग्यमित्यर्थः ॥ ७ ॥

ननु ममापि दृष्टादृष्टकर्मकरणात्कुतो मत्पदारविन्दचिन्तनं

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कर्मपाशान्मुमुक्षुभिः क्रियते तत्राहुः । त्वमिति । हे अजित ! अस्तामिदानींतनमिदमत्यल्पं कर्म त्वं व्यक्तं महदादिप्रपञ्चं सृजसि पालयसि संहरसि च तदप्यात्मन्येव न पृथक् दुर्विभाव्यं मनसाप्यचिन्त्यं दुर्वितर्क्यं तद्गुणस्थस्तया मायाख्या गुणेषु नियन्तृत्वेन स्थितः अथ च एतैः कर्मभिर्नाज्यते न लिप्यसे कुतः यो भवाननवद्यो रागादिदोषरहितः यतः स्वे आत्मरूपे सुखेऽव्यवहितेऽनावृते अभिरतः अतस्त्वं कर्म कुर्वन्नप्यात्मारामः परमेश्वर इति मुमुक्षुभिश्चिन्त्यस इति भावः ॥ ८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

मां स्वधाम वैकुण्ठं नयेति प्रार्थयामास अतः पञ्चाध्यायीतः आत्मविद्यां परमात्मज्ञानं तत्प्रस्तावम् आत्मविद्याप्रसङ्गम् अथ नारदोपदेशानन्तरम् ॥ १ ॥

तदेव विवृणोति । इन्द्र इत्यादिना । तत्रेन्द्र इति सार्धयुग्मकं कृष्णेति लुप्ततृतीयान्तं पृथक् पदं "सुपां सुपः सुलोपश्चे"ति स्मृतेः अतएव वपुर्विरहयन इत्यग्रे योजयिष्यति ॥ २ ॥ ३ ॥

येनान्तर्भूतोपेन्द्रादिरूपेण श्रीकृष्णाख्यवपुषा ॥ ४ ॥

अद्भुतं दर्शनं दृश्यत इति दर्शनं श्रीविग्रहो यस्य तं विस्मापनं स्वस्य चेत्युक्तेः ॥ ५ ॥

शृङ्खलबन्धो ह्ययं चित्रकाव्यं चकाराद्दृगाश्च ग्राह्यास्तदत्र पूर्वपूर्वपद्यान्तस्थवर्णपदतदर्थैरुत्तरोत्तरादिमवर्णपदपदार्थानां सादृश्येन शृङ्खलबन्धो विचारणीयः ॥ ६ ॥

बुद्धीन्द्रियाणि ज्ञानेन्द्रियाणि भक्तियुक्तैरेव मुमुक्षुभिर्यत् पदारविन्दं चिन्त्यते ननु भक्तिविरहितैरिति शुष्कमुमुक्षूणां तादृक्त्वेनेऽयोग्यता दर्शिता अस्मिन् पद्ये अन्तिमवर्णाश्च तकारस्यान्त्यपदाद्यतकारेण शृङ्खलाबन्धः न च तत्र त्वकारो न तकार इति वाच्यं काव्यमार्गे स्वरो न गण्यत" इति न्यायात् संयुक्तयकारानुस्वारयोरविवक्षितत्वादिति एवं परत्रापि ज्ञेयम् ॥ ७ ॥

दृष्टमैहिकं पुत्रपौत्रादिविवाहरूपं कर्म अदृष्टं पारलौकिकं यज्ञादि कर्म तयोर्मम करणात् मत्कर्तृकानुष्ठानात् दृष्टादृष्टकर्तृभ्यो जीवेभ्यो मम विशेषाभावात् कुतो ममेत्यादि योजनीयम् इदानींतनम् अवतारकालीनम् इदं मनुष्यनाट्यानुरूपं दृष्टादृष्टकर्म आस्तां तदपि सृष्ट्यादिकमपि आत्मनि स्वरूपभूताधिष्ठान एव न पृथक् कुलालादिवदिति अभिन्ननिमित्तोपादानत्वमभ्युपगतं तत्र विवर्ताधिष्ठानत्वेनोपादानत्वमिति भगवान् शङ्करः स्वरूपशक्तिवेशतया निमित्तत्वं प्रधानशक्तिवेशतयोपादानत्वमिति तत्त्ववादिगुरवः सूक्ष्मचिदचिच्छरीरविशिष्टस्य सद्वारकमुपादानत्वं स्थूलतद्द्वयशरीरविशिष्टस्य कार्यत्वमिति हि श्रीवैष्णवाः आत्मन्येव न तु पृथगिति स्वामिव्याख्यानं तु तात्पर्यानुकूलमिति सुधीभिर्विभाव्यम् एतैः सृष्ट्यादिकर्मभिः रागादिदोषरहितः इदं मया सम्यक् कृतमिदमसम्यगिति कर्तृत्वाभिनिवेशशून्य इत्यर्थः । आत्मरूपे स्वस्वरूपभूते सुखे अनावृते उपाध्यावरणरहिते अतः सृष्ट्यादिमहत्कर्मभिरप्यलिप्तत्वात् इति हेतोः भावः वाच्यार्थो व्यङ्ग्यः ॥ ८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—६ ॥

बुद्धीन्द्रियप्राणमनोवचोभिः नताः स्मः कायान्तर्भावादिन्द्रियप्राणयोः भूततत्त्वस्याभेदकायिकप्रणामे हेतुत्वं भावयुक्तैः भक्तियुक्तैः ॥ ७ ॥

आत्मनि सृजसि न कुलालादिवच्छरीरभूतं कार्यं सृजसि किन्तु शरीरतया आत्मैव कार्यं सृजसीत्यर्थः । दुर्विभाव्यम् अन्यैश्चिन्तयितुमशक्यं गुणस्थः गुणेषु स्थितः गुणानामधिष्ठाता अनवद्य इत्यर्थः । तदेव विवृणोति । नैतैरिति ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवमध्यायचतुष्टयेन विप्रशापान्यथाकरणसामर्थ्योदाहरणप्रसक्तानुप्रसक्तं निमिजायन्तेयसंवादं निरूप्येदानीं विप्रशापानुमोदनानन्तरवृत्तान्तमनुवर्णयति । अथेत्यादिना । अथ विप्रशापानुमोदनानन्तरं ब्रह्मा चतुर्मुखः देवैर्दीव्यमानैः प्रजेशैः प्रजापतिभिर्मरीच्यादिभिश्चात्मजैः सनकादिभिश्च परिवृतः द्वारकामभ्यगादिति सम्बन्धः तथा भूतभव्यः प्रजयोरीशः भवो रुद्रः भूतभव्येशत्वमस्य परमात्मसापेक्षमिति मन्तव्यम् ॥ १ ॥

मरुद्भिर्मरुद्गणैः ॥ २ ॥ ३ ॥

कृष्णादिदृक्षवः श्रीकृष्णं द्रष्टुमिच्छवः दिदृक्षाहेतुत्वेन भगवन्तं विशिनष्टि । वपुषेति । येन वपुषा नरलोकमनोरमः सन् सर्वलोकमलापहं यशो वितेने विस्तृतवान् तेन वपुषा उपलक्षितं श्रीकृष्णं दिदृक्षव इत्यर्थः ॥ ४ ॥

महर्द्धिभिर्महतीभिरृद्धिभिः भोग्यभोगोपकरणादिसमृद्धिभिः समृद्धायां विभ्राजमानायां तस्यां द्वारकायामद्भुतं दृश्यते तथा तं कृष्णमवितृप्तान्यक्षीणि येषां तथा भूताः व्यचक्षत अपश्यन् ॥ ५ ॥

स्रग्भिरिति । माल्यैः पुष्पैर्यदूत्तमं श्रीकृष्णं छादयन्तः वर्षन्तः चित्राणि पदान्यर्थाश्च प्रतिपाद्या यासु ताभिर्गीर्भिर्वाग्भिस्तुष्टुवुः ॥ ६ ॥

ता एव चतुर्दशश्लोकात्मिका आह । नता इति । हे नाथ ! तव पदारविन्दं बुद्ध्यादिभिर्नताः स्म कर्तरि क्तः नमस्कृतवन्तः बुद्धिमनःशब्दाभ्यां मानसिकः प्रणामो विवक्षितः वचःशब्देन वाचिकः इन्द्रियप्राणशब्दाभ्यां कायिकः कायस्येन्द्रियप्राणयुक्तव्यापारत्वात्तयोश्च कायान्तर्भावात्करणत्रयेण नमस्कृतवन्तो भवामेत्यर्थः । स्मशब्दः विवक्षितविस्मयमाविष्कर्तुं पदारविन्दं विशिनष्टि यदिति । कर्ममयादुरुपाशाद्दृढपाशान्मुमुक्षुभिर्मोक्तुमिच्छुभिर्भावयुक्तैर्भक्तियुक्तैर्जनैरन्तर्हृदि हृदयकमलमध्ये यत्पादारविन्दं केवलं चिन्त्यते तादृशमधुना मांसचक्षुर्भिः साक्षात्कृत्य करणत्रयेण नमस्कृतवन्त इत्यघटितमेतत्संघटितमिति भावः ॥ ७ ॥

ननु यद्यहमन्तर्हृदि विचिन्तनीयचरणस्तर्हि भवतां जीवानामिव हृदयसम्बन्धात्प्रकृतिवश्यत्वतन्मूलसुखित्वदुःखित्वादिविपातिकमिति मां शरणं गता इत्यत आहुः । त्वमिति । त्रिगुणया सत्त्वादिगुणत्रयमय्या मायया आत्मनि धारके दुर्विभाव्यमन्यैश्चिन्तयितुमशक्यं व्यक्तं स्थूलचिदचिदात्मकं जगत्सृजस्यवसि रक्षसि लुम्पसि संहरसि तद्गुणस्थः तस्या मायाया गुणेषु नियन्तृ-

शुद्धिर्नृणां न तु तथेड्य ! दुराशयानां विद्याश्रुताध्ययनदानतपःक्रियाभिः ।
सत्त्वात्मनामृषभ ! ते यशसि प्रवृद्धसच्छ्रद्धया श्रवणसंभृतया यथा स्यात् ॥ ९ ॥
स्यान्नस्तवाङ्घ्रिरशुभाशयधूमकेतुः क्षेमाय यो मुनिभिरार्द्रहृदोह्यमानः ।
यः सात्वतैः समविभूतय आत्मवद्भिर्व्यूहेऽर्चितः सवनशः स्वरतिक्रमाय ॥ १० ॥
यश्चिन्त्यते प्रयतपाणिभिरध्वराग्नौ त्रय्या निरुक्तविधिनेश ! हविर्गृहीत्वा ।
अध्यात्मयोग उत योगिभिरात्ममायां जिज्ञासुभिः परमभागवतैः परीष्टः ॥ ११ ॥
पर्युष्टया तव विभो ! वनमालयेयं संस्पर्धिनी भगवती प्रतिपत्निवच्छ्रीः ।
यः सुप्रणीतममुयाऽर्हणमाददन्नो भूयात्सदाङ्घ्रिरशुभाशयधूमकेतुः ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

माल्यैः पुष्पैः चित्राणि पदानि अर्थाश्च यासु ताभिः ॥६॥

हे नाथ ! ते पदारविन्दं बुद्ध्यादिभिर्वयं नताः नमस्कृतवन्तः अनेनोपास्योपासकभावो दर्शितः बुद्ध्यादिभिरित्यनेन—

दोर्भ्यां पादाभ्यां जानुभ्यामुरसा शिरसा दृशा ।
मनसा वचसा चेति प्रणामोऽष्टाङ्ग ईरितः ॥

इतिस्मृत्युक्तलक्षणः प्रणामो दर्शितः कर्माणि निरसये विस्मयमेवाहुः । कर्ममयाः उरवः बहवः पाशा यस्मिन् तस्मात् संसारात् मुमुक्षुभिर्योगिभिः केवलमन्तर्हृदि चिन्त्यते न तु दृश्यते तद्वयं साक्षाद्दृष्ट्वा नमस्कृतवन्तः अहो तुच्छमस्माकं भाग्यमिति विस्मयः यन्मुमुक्षुभिश्चिन्त्यते तत्पदारविन्दं नता इत्यनेन त्रैकालिकमुमुक्षुचिन्तनविषयं कालाऽपरिच्छिन्नं श्रीकृष्णपदारविन्दमिति दर्शितम् ॥ ७ ॥

उपासकस्य उपास्यस्य वैलक्षण्यं दर्शयितुं विश्वजन्मादिहेतुत्वं सर्वाधारत्वं स्वसुखाभिरतत्वं सर्वदोषास्पृष्टत्वं च भगवन्तमाहुः । त्वमिति । हे अजित ! तद्गुणस्थः मायागुणेषु नियन्तृत्वेन स्थितस्त्वम् आत्मनि स्वस्मिन् सर्वाधारात्मके मायया स्वशक्तिभूतया अनन्तैर्विभाव्यं चिन्तयितुमशक्यं व्यक्तं चिदचिदात्मकं विश्वं सृजसि अवसि रक्षसि लुम्पसि संहरसि च अथच एतैः कर्मभिर्भवानजितो न लिप्यते यतस्त्वमनवद्यः स्वभावतोपास्तसमस्तदोषः किञ्च यतस्त्वम् अव्यवहिते अपरिच्छिन्ने स्वे स्वात्माधारभूते सुखे अभिरतः न तु स्वजन्यसुखे अनेन विश्वसृष्ट्यादिकं जीवोपकाराय करोषीत्युक्तम् ॥ ८ ॥

भाषा टीका ।

श्रीशुक उवाच ।

इसके अनंतर देवतों के सहित प्रजापतियों के सहित ब्रह्माजी द्वारकामें आये और भूत भविष्यत्काल के ईश्वर श्रीमहादेवजी भी भूतगणों के सहित आये ॥ १ ॥

इन्द्र भगवान् देवतों के सहित आये आदित्य वसु अश्विनीकुमार ऋभु अङ्गिरस रुद्र विश्वेदेव साध्यदेवता ॥ २ ॥

गंधर्व अप्सरा नाग सिद्धचारण गुह्यक ऋषि पितर विद्याधर किन्नर ॥ ३ ॥

ये सब श्रीकृष्ण दर्शनाभिलाषी होकर द्वारका को गये मनुष्य लोक के रमण कराने वाले भगवान् ने जिस शरीर से जगत् में यश का विस्तार किया जिससे कि सब लोगों का पाप नष्ट होता है उस मूर्ति के दर्शन को गये ॥४॥

बड़ी सम्पत्ति से विराजमान उस द्वारका मे आकर उन्होंने अद्भुत दर्शन जिनका ऐसे कृष्णचंद्र का दर्शन किया ॥ ५ ॥

स्वर्ग के बगीचे के फूलों से यदु नंदन को आच्छादन करते भये और चित्र विचित्र पद अर्थ वाली वाणियों से उनकी स्तुति करने लगे ॥ ६ ॥

देवा ऊचुः ।

देवता बोले हे नाथ ! आपके चरण कमल को हम वंदन करते हैं अपनी बुद्धि इंद्रिय प्राण मन वचन से हमारा नमस्कार है जिस चरण को कर्म मय संसार पास से छोड़ने की इच्छा से प्रेम युक्त होकर मुमुक्षु लोग हृदय के भीतर चिन्तन करते हैं ॥ ७ ॥

आपनी अचिन्त्य माया से अपने ही रूप से इस अतर्कनीय जगत् को तीनों गुणों के द्वारा सृजते हो और रक्षा करते हो और संहार करते हो और हे अजित ! इनके गुणों से आप युक्त नहीं होते हो जिससे कि आप अपने सुख स्वरूप में रमण करते हो और निर्दोष हो ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वात्मारामस्य किं कर्मकरणेनात आहुः । शुद्धिरिति । हे ईड्य हे ऋषभ ! दुराशयानां रागिणाम् विद्या उपासना विद्यादिभिस्तथा शुद्धिर्न भवति सत्त्वात्मनां सतां ते यशसि श्रवणेन सम्भृतया परिपुष्टयाऽभिवृद्धया सच्छ्रद्धया यथा स्यात् परमपावनस्य यशसो वितानाय तव कर्माचरणमिति भावः ॥ ९ ॥

तदेवं त्वद्यशःश्रवणमेव शुद्धिहेतुरस्माभिस्तु तवाङ्घ्रिर्दृष्टोऽतस्तवाङ्घ्रिर्नोऽस्माकमशुभाशयानां विषयवासनानां धूमकेतुस्तद्दाहकः

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कथम्भूतः यः क्षेमाय मोक्षाय मुनिभिर्मुमुक्षुभिः प्रेमार्द्रहृदा ऊह्यमानश्चिन्त्यमानः यश्च सात्वतैर्भक्तैः समविभूतये समानैश्वर्याय वासुदेवादिव्यूहैरर्चितः तेषु च कैश्चिद्धीरैरात्मवद्भिर्धीरैः स्वरतिक्रमाय स्वर्गमतिक्रम्य वैकुण्ठप्राप्तये सवनशस्त्रिकालमर्चितः॥१०॥

किं च प्रयतपाणिभिः संयतहस्तैर्हविर्गृहीत्वाऽग्नौ आहवनीयादौ याज्ञिकैर्यः चिन्त्यते ननु "यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्"निति वचनात्तत्तद्देवताश्चिन्त्यन्ते मत आहुः । अथवा निरुक्तेन विधिनेन्द्रादिरूपेणैव यज्ञपुरुषश्चिन्त्यत इत्यर्थः। तत किञ्च अध्यात्मयोगे आत्माधिकारे योगे योगिभिरध्यात्मतत्त्व माया अणिमादिकं जिज्ञासुभिस्तत्कामैश्चिन्त्यते परमभागवतैस्तु मुक्त्यै यः परीष्टः सर्वतः पूजितः स तवाङ्घ्रिर्नोऽशुभाशयधूमकेतुः स्यादिति पूर्वेणान्वयः॥ ११ ॥

एतेषां च मुनिसात्वतादीनां षण्णां सेवकानां मध्ये परमभागवतेषु बहुधा अपि तव प्रीतिरधिकेति संस्तुवन्ति । पर्युषणेति । इडभावश्छान्दसः अहं यत्र वसामि तत्रैव वसन्ति पर्युषितापीव वसतीति प्राप्त परमीयच्छ्रीः संस्पर्धमानां श्रियमनादृत्य यो भवान्पर्युषितयाऽपि अमुया वनमालया भक्तैरर्पितयामिति प्रीत्या सुप्रणीतं सुष्ठु सम्पादितम् यथा भवति तथाऽर्हणां पूजामादृत स्वीकृतवान् सुप्रणीतमित्यर्हणाविशेषणं वा तस्य तवाङ्घ्रिर्नोऽशुभाशयधूमकेतुर्भूयात् यद्वाऽयोऽङ्घ्रिरमुया सुप्रणीतमर्हणमादृतवानोऽशुभाशयधूमकेतुर्भूयादित्यन्वयः । अथ वेदं सम्बन्धः । एतेषां ध्यानार्चनादिनिष्ठेष्वपि त्वद्यशसि प्रवृत्तमच्छ्रवणानन्त एव कृतार्था भगवतो यशः प्रियत्वादित्याहुः पर्युषया वहुकान्तानित्यस्मात्परितः सर्वाङ्गे उषया कान्तया शोभितया वनमालया भवत्येकदेशे वर्तमाना श्रीः संस्पर्धमाना भवति तथाप्यास्नानमधुपतैर्बहुधा वर्णितया कीर्तिमत्या वैजयन्त्या वनमालयैव यो भवान् सुप्रणीतमर्हणामादृतादित्यादि पूर्ववत् ॥ १२ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

भगवद्यः शुच इत्यत्र प्रकृत्यर्थमाहाथार्यगृह्णत्वादयः । शुचिरिति । उपासना च ब्रह्मोपासीतेत्यादि प्रतीकोपासना ननु भक्तिस्तत्राऽर्थे तदादेवनवया उत्कर्षविषयमात्रत्वात् सती चासौ भक्ताचेति तया निर्गुणा भाभाम्योक्तशङ्कासमाधानाय भावार्थमाह । परमपावनार्थेति तथाच भक्तसुखार्थमेव तव लीलेति फलितं "मद्भक्तानां विनोदाय करोमि विविधाः क्रिया" इति भगवदुक्तेरवेति ॥ ९ ॥

पूर्वपद्येन सङ्गतिमाह । तदेवमिति । तेषु च भक्तेष्वेव मध्ये आत्मवद्भिः आत्मा त्वमेव नाथो येषां तथाच चिन्ताशब्दस्याद्धीरैरिति व्याख्यातं वैकुण्ठप्राप्तये इति एवं चैश्वर्यैकतुल्यमात्रादिहस्थैरेव वैकुण्ठवासिभिरभिप्रेतेति पूर्वतो वैशिष्ट्यम् ॥ १० ॥

याज्ञिकैः श्रीभरतादिभिरिति स्वपदप्रत्यासत्त्या हुतं यस्यै देवतायै वां देवतामुद्दिश्य वषट् करिष्यन् वषडिति मन्त्रमुच्चारयन् इन्द्रादिरूपेणेति यज्ञपुरुषादिरूपतया ध्यानेन एवं च तेषां त्रयीतात्पर्यवेत्तृत्वं सिद्धम् एतद्वचनानुरूप्रत्येक पृथक् तत्तद्देवता विधीयन्त इति भावः । आत्माधिकार इति । आत्मनः परमात्मनोऽधिकारः फलत्वेन स्फूर्तिर्यस्मिंस्तस्मिन् योगे चित्तस्यैकाग्र्यावस्थायां बहिर्वृत्तिनिरासात् कारणे तथा योगस्तस्मिन् योगिभिरपि चिन्त्यते परमभागवतैर्नित्यमुक्तेः ॥ ११ ॥

मुनिसात्वतादीनां षण्णामिति तत्र मुनयो मुमुक्षवः १ सात्वताः साधकभक्ताः २ धीरास्तत्राप्येकान्तिनः ३ याज्ञिकाः ४ योगिनः ५ परमभागवताश्चेति ६ ये षट् सेवकास्तेषां मध्ये वस निवास इति धातुः नेट् मत इडभावश्छान्दसः पर्युषितयेति तु साधुः यद्यपि स्पर्धते तथापि पूर्वार्थे भक्तिविषयानत्व क्रमभङ्गो जातः पर्युषयेत्यस्याऽर्थकल्पनस्थानो यद्वेति । द्वितीयेऽन्वये आर्थत्वकल्पनं तद्वचनेनेति यशसि भक्तावतां समभाविकारिणां मुन्यादिषड्भ्योऽपि श्रैष्ठ्यं वदन्तस्तद्यश एव मालारूपकत्वेन वर्णयन्ति । अथ वेति ॥ १२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यथा स्याच्छुचिरित्यन्वयः । कस्य चित् कश्चिदित्यर्थः ॥ ९ ॥

स्वर्गाधिगमतुल्याय तपः आर्द्रहृदा भक्तिमता मनसा समविभूतये साम्यापत्तये सवनशः त्रिसन्ध्यं स्वरतिक्रमाय स्वर्गातिक्रमाय ॥ १० ॥

परीष्टः प्राप्तुमभिलषितः ॥ ११ ॥

पर्युषया यस्मिन्नङ्घ्रौ पर्युषितया वनमालया श्रीः स्पर्धिनी मालायाः श्रियश्च तवाङ्घ्रि सम्बन्धस्तुल्य इत्यर्थः यः अङ्घ्रिः ॥१२॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भक्तानां त्वदुपासकानामनवद्यत्वावह इति यत्कथाश्रवणमात्रेणैवातिशयाध्यां निरतिशयां शुद्धिमावहन्तीत्याह । शुद्धिरिति । हे ईड्य ! दुरन्तात्मनां भवभञ्जुरमानसानाम् अत एव नाम्यक दुराशयानां नृणां दुष्टाशया विविधविषयप्रवणा आशयोऽन्तःकरणं येषां तेषामत एवाशुद्धियुक्तानामित्यर्थः तेषां नृणां विद्यादिभिर्न तथा शुद्धिर्भवेत् कथं यथा श्रवणेन सम्भृतया परिपुष्टया प्रवृद्धया तव यशसि विषये सच्छ्रद्धया स्यात् अध्ययनं पूर्वोत्तरभागरूपात्मक अध्ययनं श्रुतं तदर्थश्रवणं विद्या तज्ज्ञानं तपोऽनशनादिरूपं कृच्छ्रचान्द्रायणादिरूपं वा क्रिया वर्णाश्रमानुगुणकर्माणि ॥ ९ ॥

यत्कथाश्रवणमेव निरतिशयशुद्ध्यावहं किमुत ध्यानार्चनादिविषयस्त्वदङ्घ्रिरित्यभिप्रायेण मुन्यादिभिर्ध्यानार्चितस्त्वदङ्घ्रिरस्मत्प्रपत्तिविषयोऽस्माकमशुभनिरसनाय भवत्विति प्रार्थयन्त इत्यादिति । तवाङ्घ्रिर्नोऽस्माकम् अशुभाशयधूमकेतुः स्यात् अशुभाशयाः पापवासनाः तेषां धूमकेतुरिव धूमकेतुर्हि प्राणिनामशुभावहस्तेषां निरासक इत्यादिति यावत् तं विशिनष्टि योऽङ्घ्रिर्मुनिभिः क्षेमाय संसृतिनिस्ताररूपाय आर्द्रहृदा भक्तिमता मनसा ऊह्यमानः ध्यायमानः चिन्त्यमान इति यावत् यश्चात्मवद्भिः आत्मपरमात्मया-

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

धारयद्भिरिति: सात्वतैः पाञ्चरात्रैः समविभूतये समानैश्वर्याय स्वर्लोकमाय स्वर्गलोकमतिक्रम्य नित्यविभूतिं गन्तुमित्यर्थः । व्यूहे वासुदेवादिव्यूहोपासने सवनशस्त्रिसन्ध्यं यश्चिन्त्यते इति अर्चितः ॥ १० ॥

किं च हे ईश! प्रयता नियताः प्राणा येषां तैः केवलवैदिककर्मैकप्रवणपाणिभिरित्यर्थः । नैरुक्तया वेदविद्यया निरुक्तो यो विधिर्विधानं तेन हविःस्रुक्पुरोडाशादिकं गृहीत्वा ऽध्वरागतौ आहवनीयादौ यश्चिन्त्यते इत्यनू यज्यते यश्च अध्यात्मयोगिभिरध्यात्मयोगे आत्मयाथात्म्यज्ञानयोगे चिन्त्यते इत्यनुषज्यते यश्चात्ममायां जिज्ञासुभिः सांख्यैरित्यर्थः तथा परमभागवतैः परमैकान्तिभिः प्रपत्तिनिष्ठैः परीष्टः इषुगतौ परितो ऽन्वेषणः परिवृतः सेवित इति यावत् परीष्टः पर्याप्तः प्राप्तुमभिलषित इति वा वरिष्ठ इति पाठे वरिष्ठः श्रेष्ठोऽङ्घ्रिः परमभागवतैश्चिन्त्यते इति सम्बन्धः यद्यपि निरीश्वरसांख्यानां न पुरुषातिरिक्तः परमात्मा विद्यते तथापि तेषां चिन्त्यस्य प्रकृतिवियुक्तात्मस्वरूपस्य परमात्मशेषतया तैरविज्ञातेऽपि तस्य तदपृथक्सिद्धविशेषणत्वात्तच्चिन्ता पर्यन्तपर्यवसितैव भवति तत्पर्यन्तज्ञानाभावाच्च न तेषां मुक्तिरपितु कैवल्यमेवेत्यात्ममायायामात्ममायां जिज्ञासुभिश्चिन्त्यत इत्युक्तम् ॥ ११ ॥

ननु पादपद्मेषु बहुत्ववत्सु अस्मापि किमित्यङ्घ्रिमेवमहु मन्यध्वं इत्यत्र सौगन्धत्वादिगुणमभिप्रार्थयन्ते । पर्युष्टयेति । हे विभो! भगवती श्रीलक्ष्मीर्वक्षःस्थितापीति शेषः तव वक्षसिमलङ्कृतौ पर्युष्टया पर्युषितवत्या कर्तरि क्तः अङ्घ्रिपर्यन्तावलम्बिन्येति विवक्षितोऽर्थः तथा वनमालया प्रतिपत्नीवत् हृष्टभावः सपत्नीवत् संस्पर्द्धिनी स्पर्द्धावती बभूवेत्यर्थः । श्रियो वनमालायाश्च स्ववक्षसि सम्मर्द्दस्तुल्यः भागवतास्त्वत्पादङ्घ्रिं सेवन्ते इतिभावः तदेवाहुः यः अमुया श्रिया सुप्रयुक्तमानीव समर्पितमर्हणमादरादानः स्वीकुर्वाणः सोऽङ्घ्रिः सदा नोऽस्माकमशुभाशयधूमकेतुः स्यात् अस्य पूर्ववदर्थः ॥ १२ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तव कीर्तिश्रवणपूर्वसच्छ्रद्धया संसारिणामपि सात्त्विकानां गुणानामित्यपापाविलेपाभावेनात्यन्तिकी शुद्धिर्भवति किमुत तवेति भावेनाह । शुद्धिरिति हे ईड्य! दुराशयानां नृणां तथा विद्यादिभिः शुद्धिर्न स्यात् यथा सत्त्वात्मनां पुंसां ते तव यशसि प्रवृद्धसच्छ्रद्धया शुद्धिः स्यादित्यन्वयः । अनेन श्रवणेऽपि गुणाः प्रशंसितेन उत नेति शङ्कापरिहृता सत्त्वगुणाश्च भगवत्कथारतिहेतुत्वाच्छुद्धिकरत्वेन ज्ञानजनकत्वेन मुक्तिहेतुत्वात् ॥ ९ ॥

अस्तु नित्यनिर्दुःखानन्दः सृष्ट्यादिकर्ता च ततः किं युष्माकमिति तत्राहुः । स्यादिति । यो मुनिभिः क्षेमाय मार्द्रहृदयोह्यमानः यश्च सवनशः त्रिकाले आत्मवद्भिः स्वरूपविज्ञानविद्भिः सात्त्विकैः पुरुषैः समविभूतिभिः समविक्रमैर्वासुदेवादिभिः व्यूहार्चितः तव सोऽङ्घ्रिरशुभाशयधूमकेतुः स्यादित्यन्वयः ॥ १० ॥

पुनरप्यङ्घ्रिं विशेषयन्ति । यश्चिन्त्यत इति । अथवा वेदत्रयेण निरुक्तविधिना स्रुगादिगृहीत्वा प्रयतपाणिभिर्याज्ञिकैः अध्वराग्नौ विचिन्त्यते "उताप्यर्थविकल्पयो"रित्यभिधानं यश्चाध्यात्मयोगे उत परमात्मध्यानेऽपि आत्ममायाजिज्ञासुभिः योगिभिः परमभागवतैः परीष्टः सम्यक् पूजितः ॥ ११ ॥

किञ्च यद् श्रीर्भगवती पर्युष्टया वर्जितम्लानभावया नित्योत्फुल्लयाम्बुजं पतितया वनमालया सह प्रतिपक्षवत् संस्पर्द्धिनी अस्पर्द्धिनी स्पर्द्धावतीव तिष्ठतीत्यर्थः—

> अस्पर्द्धिनी स्पर्द्धिनीव श्रीराजते वनमालया ।
> नहि स्पर्द्धा इयो दोषाः संविद्रूपां स्पृशन्ति ताम् ॥

इतिवचनात् यश्चामुया श्रिया सुप्रयुक्तमर्हणमर्चनमाददान आस्ते यद्वा भक्तवत्सलो धर्म आदानादिरचनस्य कथं युज्यत इत्यत्राह । य इति । यः प्रकाशरूपः पूर्णत्र मङ्गलस्वरूपः अत्र तु अकारान्त इति अनेन लोकविलक्षणत्वेन हरेरवयवस्य पादस्याचरणवत् ख्यातऽचेष्टादानादिधर्मो युक्त इति ज्ञातव्यम् ॥ १२ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विद्यादिसद्भावेऽपि दुराशयानामिति शुद्धभक्तिश्रद्धाया अभावात् विद्याद्यसद्भावेऽपि सत्त्वात्मनामिति तद्भावात् तदेवं शृण्वतामिति तथात्वे किमुत पठतामिति भक्तसुखार्थमेव स्वल्पोक्तेति भावः ॥ ९ ॥

मुनिभिरात्मारामैरपि क्षेमाय परमसुखाय सात्वतैर्भक्तैः आत्मा त्वमेव नाथत्वेन विद्यते येषां तादृशैः समानां स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनां नारायणपरायणानां विभूतये परमसुखरूपायै स्वरतिक्रमाय इतरसुखभोगातिक्रमाय अर्चितः ॥ १० ॥

यश्चिन्त्यत इत्युक्तमधिकारिपरम् अत एव त्रय्या निरुक्तविधिनेति त्रयीतात्पर्यपर्यवसितविधिनेत्यर्थः । एतदङ्गानि प्रत्येकं सा सा देवता पृथग्विधीयत इति भावः । तथा च समार्पयत्वेन चरणस्य चरणोपनिषदुदाहरिष्यते चरणं पवित्रमित्यादिका ॥ ११ ॥

तादृशस्यापि चरणस्य स्वेषु परमानुग्रहं दर्शयितुमाहुः । पर्युष्टयेत्यर्थेन महेशं पर्युषितापि स्वक्षमितुःसहापि कथं सा न त्यज्यत इति पूर्वपक्षमुत्थाप्य तमेव सिद्धान्तेन दर्शयन्ति । य इत्यर्थेन योऽद्य नोऽस्मत्पत्पङ्कजममुया वनमालया करणभूतया अर्हणां सुष्ठु प्रणययुक्तं यथा स्यात्तथा ददत् स्वीकृतवानिति अनेन दैवैः कदाचिदप्यस्तारितामेव तदा श्रीभगवान् धृतवानिति ज्ञापितम् यद्यपि तस्या मालाया दिव्यत्वात् पर्युष्टत्वं न सम्भवति अस्याश्च तत्रेर्ष्याप्रेष्टभूषणत्वाच्च सम्भवति तथापि सम्प्रणयविनोदोक्तिमात्रमिदम् ॥ १२—१५ ॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अतो यथा त्वच्चरणमेव नमस्यं तथैव त्वद्यश एव श्रवणस्मरणादिविषयीकर्त्तव्यमित्याहुः । शुद्धिरिति । हे ईड्य नु भोः विद्यादिभिस्तथा शुद्धिर्न भवति यतस्ताभिरेव दुराशयानां विद्यादिभिर्गर्वेण दुष्ट एवाशयः प्रायः स्यादित्यर्थः सत्त्वात्मनां शुद्धसत्त्वबुद्धी-

केतुस्त्रिविक्रमयुतस्त्रिपतत्पताको यस्ते भयाभयकरोऽसुरदेवचम्वोः ।
स्वर्गाय साधुषु खलेष्वितराय भूमन्! पादः पुनातु भगवन्! भजतामघं नः ॥ १३ ॥
नस्योतगाव इव यस्य वशे भवन्ति ब्रह्मादयस्तनुभृतो मिथुरर्द्यमानाः ।
कालस्य ते प्रकृतिपूरुषयोः परस्य शं नस्तनोतु चरणः पुरुषोत्तमस्य ॥ १४ ॥
अस्यासि हेतुरुदयस्थितिसंयमानामव्यक्तजीवमहतामपि कालमाहुः ।
सोऽयं त्रिणाभिरखिलापचये प्रवृत्तः कालो गभीररय उत्तमपूरुषस्त्वम् ॥ १५ ॥
त्वत्तः पुमान् समधिगम्य ययास्य वीर्यं धत्ते महान्तमिव गर्भममोघवीर्यः ।
सोऽयं तयाऽनुगत आत्मन आण्डकोशं हैमं ससर्ज बहिरावरणैरुपेतम् ॥ १६ ॥

भाषा टीका ।

करने को अग्नि के तुल्य होवे कैसा चरणारविन्द है जिसको कि प्रेम युक्त हृदय से मुनि जन धारण करते हैं और जिस चरणारविन्द को आपके भक्तजन सायुज्य मुक्ति पाने के लिये आत्मज्ञानी हो कर स्वर्ग को उलंघन कर के वैकुण्ठ लोक को जाने के वास्ते चतुर्व्यूह रूप से पूजन करते हैं ॥ १० ॥

हे ईश! जिस चरण को याज्ञिक लोग यज्ञ की अग्नि के समीप हवि को ग्रहण कर के हाथ जोड कर वेदत्रय की कही विधि के अनुसार चिन्तन करते हैं और जिस चरण को योगिजन आत्म माया के जानने कि इच्छा से योग समाधि में चिन्तन करते हैं और जिस चरण को सर्वोत्तम भागवत जन सर्वथा पूजते रहते हैं ॥ ११ ॥

हे विभो! जिस आपकी वनमाला के हृदय में रहने से यह जूठी है ऐसा जानकर सौतिनसरीकी लक्ष्मी भी वैर करती हैं तो भी भक्तों कि दिई उस माला से आप सब के और हमारे पूजन को ग्रहण करते हो तिन आप का चरण हम लोगों के पाप नाश को अग्नि के तुल्य हो जावै ॥ १२ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्वच्चरणस्य भक्तपक्षपातः प्रसिद्ध एवेति स्तुवन्तः प्रार्थयन्ते । केतुरिति । बलिबन्धने त्रिभिर्विक्रमैर्युतः तत्र द्वितीयविक्रमे सत्यलोकं गतस्तव पादः केतुरत्युच्छ्रितो विजयध्वज इव तत्सम्पादयन्निव त्रिपतत्पताकः त्रिधा पतन्ती त्रिषु लोकेषु या पतन्ती गङ्गा पताका यस्य तथा सुरदेवचम्वोरसुरसेनयोरुभयोर्भयाभयकरः साधुषु सुरेषु स्वर्गाय खलेष्वसुरेष्वितराय इतरस्मै अधोगमनाय च एवं केतुरूपस्ते पादः स भजतां नोऽघं पुनातु शोधयतु भयानीति पाठे भजतां नः इति कर्मणि षष्ठी भयान्नः अतोऽस्मान्पुनात्विति तथा च श्रुतिः “ चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि । तेन पवित्रेण शुद्धेन पूता अतिपाप्मानमराति तरेम । लोकस्य द्वारमर्चिमत्पवित्रं ज्योतिष्मद्भ्राजमानं महस्वत् । अमृतस्य धारा बहुधा दोहमानम् चरणं नो लोके सुधितां दधात्विति” ॥ १३ ॥

ननु युद्धे देवासुरादयः परस्परं जयन्ति जीयन्ते च किमहमत्रास्मि आहुः । नसीति । मिथुर्मिथोऽर्द्यमाना युद्धादिभिः पीड्यमाना ब्रह्मादयोऽपि यस्य तव वशे भवन्ति न तु जये पराजये वा स्वतन्त्राः के इव नसि नासिकायामोतिं यासां ता गावो बलीवर्दा इव कुतः कालस्य कलयितुः प्रवर्त्तकस्य तवैव कुतः प्रकृतिपुरुषयोरपि परस्य तस्य ते पुरुषोत्तमस्य पादो नः शं तनोतु ॥ १४ ॥

प्रकृतिपुरुषाभ्यां परत्वमुपपादयन्तः कालत्वेन पुरुषोत्तमत्वमाहुः । अस्येति । अस्य जगत उदयादीनां हेतुरसि कुतः अव्यक्तं प्रकृतिर्जीवः पुरुषो महान्महत्तत्त्वं तेषां काल नियन्तारं त्वामाहुः “अक्षरात्परतः परः महतः परमव्यक्तमव्यक्तात्पुरुषः परः पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति”रित्याद्याः श्रुतयः किञ्च अयं संवत्सरात्मको यः कालस्त्रिणाभिर्भिश्चातुर्मास्यानि नाभयो यस्य सोऽपि त्वमेव अतस्त्वमुत्तमपुरुष इति तथा च गीतासु “ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ” इति ॥ १५ ॥

त्वमेव प्रकृत्यादिद्वारा जगदुदयादिहेतुरित्युक्तं तदेकेन प्रकारेण तदाहुः । त्वत्त इति । त्वत्तः पुरुषो वीर्यं शक्तिं समधिगम्य प्राप्य यथा मायया सह महान्तं धत्ते कमिव अस्य विश्वस्य गर्भमिव सोऽयं महान् तयैव माययाऽनुगतः स्वात्मनः सकाशादण्डकोशं ससर्ज त्वयानुगत इति पाठेऽपि तया मायया त्वयाऽधिष्ठितः सन्निति ॥ १६ ॥

———

श्रीराधारमणदासगोस्वामिभिर्विरचिता
दीपिकादीपिनी टिप्पणी ।

तव त्वत्तर्थं स्वपादयन्ति त्रिषु लोकेष्विति तत्र दिवि मन्दाकिनी पाताले भोगवती भुवि तु गङ्गेति ज्ञेयं चरणमिति पवित्रं शुद्धं विततं व्यापकं पुराणम् अनादि नित्यनूतनं वा येन पूतः पवित्रीकृतः तेन पवित्रेण पापपवित्रतासम्पादकेन शुद्धेन स्वयञ्च पवित्रेण अराति संसारलक्षणं लोकस्य वैकुण्ठस्य सोपानभवा

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

रूपमरूपस्य स्वेन रूपेणाभिनिष्पद्यते स तत्र पर्येति स उत्तमः पुरुष" इत्यादिकाः श्रुतयः "अंशावतारं पुरुषोत्तमस्य ह्यनादिमध्यान्तमजस्य विष्णो"रित्यादिकाः स्मृतयः अतेन "अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम" इत्यस्यार्थं उक्तः अत्र च भगवद्गीताभाष्ये वेदार्थावलोकनादवलोकयते इति लोक इति स्मृतिरिहोच्यत इति भाषितम् कालमाहुरित्यादिना गम्भीररयं इत्यन्तेन संयमहेतुत्वमुपपादितम् ॥ १५ ॥

अथ सृष्टिहेतुत्वमुपपादयन्ति । त्वत्त इति । पुमाननिरुद्धाख्यः सः जगद्व्यापारेऽधिकृतः अमोघवीर्यः अमोघमप्रतिहतं सङ्कल्पमात्रेण सृष्ट्यावहं वीर्यं सृष्ट्युपयुक्तविविधविचित्रशक्त्यात्मकं यस्य सः त्वत्तः सर्वव्यूहमूलभूतात्समधिकृत्य तावदाविर्भूय सन्नेवेति तादर्थ्ये च शेषत्वविवक्षया षष्ठी परिदृश्यमानजगत्सृष्ट्यर्थमित्यर्थः । यथा प्रकृत्या महान्तमहत्तत्त्वाख्यं वीर्यं धत्ते आधत्ते कमिव गर्भमिव पुरुषो योषितीति गर्भमिव प्रकृतौ महत्तत्त्वमुत्पादयामासेत्यर्थः । प्रकृतावाहितायाः परिणामस्यामहदर्थरूपायाः शक्तेः कार्यरूपत्वान्महत्तत्त्वस्य वीर्यत्वव्यपदेशः सोऽयं महान् तया प्रकृत्याऽनुगतः कारणतयाऽनुगतः कारणभूतप्रकृतिवद्गुणात्रययुक्त इत्यर्थः । आत्मनः सकाशादण्डकोशं ससर्ज अहङ्कारतन्मात्रमहाभूतेन्द्रियद्वारा सृष्टवानित्यर्थः । कथम्भूतं हैमम् आवरणैः पृथिव्यादिभिः सप्तभिर्बहिरावृतम् । अत्र सोऽयमित्यनेन भगवदात्मको महान् विवक्षितः । अण्डकोशशब्दस्तदन्तर्वर्तिब्रह्मादिस्तम्बपर्यन्तवस्तूनामप्युपलक्षणार्थो ज्ञेयः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे भगवन् ! भूम्नः ते पादौ नोऽस्माकं जगतां चाघं पुनातु यस्त्रिविक्रमसतः त्रयो विक्रमा एव प्रशस्तकर्माणि यस्य तथा तस्य प्रशस्ते कर्मणि तथेत्यादि तस्य तत्र केतुध्वजच्छत्रयो वेदा एव पतत्पतद्वलस्य पताका यस्य स तथा यक्षासुरदेवचमूनाः भयाभयकरः किञ्च यः साधुषु स्वर्गाय सुखाय असाधुष्वितराय दुःखाय भवतीति ॥ १३ ॥

सुखदुःखयोः कारणत्वेन हरेः पादस्य ख्यातन्त्र्यं प्रत्यक्षगिरिभावेनाह । नस्योतगाव इति । सुखदुःखयोर्नियन्तार इन्द्रियाभिमानिनो देवाश्च यस्य पादस्य वशे वर्तन्ते नासि नासिकायाम् ओता गावः स्वामिन इव । यश्च तनुभृतां शरीरिणां आयुषि शतवर्षलक्षणे रज्यमानः * संघट्टयमानः तावत्कालं स्थितत्वात् अहञ्च दुःखहामिति अभिमानशून्यश्चेति तनुभृतायुषि रज्यमानस्य पुरुषोत्तमस्य ते चरणौ नः शं तनोत्वित्यन्वयः ब्रह्मणा सर्पारित्यक्तो मृत इत्युच्यते नर इत्यनेन श्रीहरिसंबन्धो देहिनां विद्यावते तदभिमानशून्यत्वे हेतुमाह । प्रकृतीति । अत्रापि हेतुमाह । कालस्येति । कालप्रेरकस्य तस्य सकाशात् परस्य वा ॥ १४ ॥

---

* रज्यमान स इति स्थिते अकः सवर्णे दीर्घे सोमपा इतिवत् रज्यमान इति अकारान्तपुल्लिङ्गशब्दोऽयम् अत्र विशेषस्तात्पर्यदीपिकातोऽवगन्तव्यः ।

अष्टत्वादिगुणपूर्णत्वाच्च काल इत्याशयेनाह । अस्य जगतः उद्भवादीनां हेतुरसि "प्रधानादिदमुत्पन्न"मिति श्रुतेः प्रकृत्यादीनां जगद्धेतुत्वादिदं कथमत्राह । अव्यक्तादीनां हेतुरसि यतः कालः कालनिर्मातृत्वाच्च काल इत्याह । कालमात्र इति "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधी"ति श्रुतेः हरेर्विधान्तरेण कालशब्दवाच्यत्वमाह । त्रिणाभिरिति । तिस्रश्चातुर्मास्यलक्षणा नाभयो यस्य स तथा गम्भीररयः अनर्कितापारवेगः सोऽयं कालस्त्वं त्वमिति क इति तत्राह । उत्तमेति । पुरुषोत्तमशब्दवाच्यः संहारकर्तृत्वं विशिनष्टि । अखिलेति । अधुना यादवाद्यखिलजगन्निरासे प्रवृत्तः यद्वा पुरुषोत्तमत्वं विवृणोति । अव्ययेति । अनेन सर्वं तद्विधृतभूदिस्यत उक्तमव्यक्तेति कालस्वरूपाज्ञाने अस्यापमुत्पत्तिसमयः इति निश्चयो न स्यादत्रोक्तं कालेति कालस्वरूपज्ञाना तन्निर्माता वा कीदृशः कालः येन तद्विशेषज्ञानी स्यादत्राह । सोऽयमिति । हरिः यं कालं विशेषतो जानाति सोऽयं काल एवं विशिष्ट इत्यन्वयः । कथमत्राह । त्रिणाभिरिति । अखिलस्य समस्तप्रपञ्चस्यापचये संहारे च प्रवृत्तः अनेन सृष्ट्यादिविशेषविशिष्टं कालं जानातीत्युक्तं भवति अतश्च किमवसितमत्राह । उत्तमेति । एवंविधात्कालाद्ध्युत्तमत्वमित्यर्थः । अनेन प्रकृतिपुरुषकालमहत्तत्त्वेभ्य उत्तमत्वात्पुरुषोत्तम इत्युक्तं भवति । तदुक्तं "कालाज्जीवात्तथाऽव्यक्तान्महतश्चोत्तमो यतः । उत्तमः पुरुषस्तस्माद्भगवान्विष्णुरुच्यत" इति ॥ १५ ॥

अव्यक्तं सृजतस्तस्यासि हेतुरिति श्लोकद्वयेन कथितं सर्जनं त्वत्त इति विवृणोति । त्वत्त इति । त्वत्तो ब्रह्माण्डं जगदुत्पद्यत इति यदुक्तं तत्प्रधानमधिकृत्य प्रधानादिशब्दवाच्यान् रमादीनाधिकरणं कृत्वा वर्तते तथाहि महाप्रलये लक्ष्म्या सह रममाणादारात्रस्वात्त्वत्तोऽवतीर्णः पुमान् पुरुषनामामोघवीर्यो भवान् प्रधानाभिमानित्वात्तदाख्यां रमायां महान्तमिव स्थितं स्ववीर्यं गर्भं धत्ते पुरुषनामानं चतुर्मुखं प्रधानाख्यं गायत्रीं च सृष्टवानित्येकोऽर्थः स पुमांश्चतुर्मुखो महान्तमिव गर्भं महत्तत्त्वाभिधमात्मानं श्रद्धाभिधां गायत्रीं च प्रधाननाम्न्यां गायत्र्यां धत्ते सृष्टवानित्यपरः ताभ्यां महत्तत्त्वाख्यश्रद्धाख्याभ्यां शेषोऽहङ्कारापरनामा जातः इत्यन्योऽर्थः "नारायणाख्यः परमः शेते लक्ष्म्यान्वितो जले । स एव पुरुषाख्यं तु द्वितीयं रूपमात्मनः । कृत्वा रमायां पुरुषनामानं तु चतुर्मुखम् । प्रधानाख्यां च गायत्रीं ससर्ज पुरुषात्मकः । चतुर्मुखः स पुरुषो महत्तत्त्वाभिधं पुनः । प्रधाननाम्न्यां गायत्र्यां ससर्जात्मानमेव तु । श्रद्धाभिधां च गायत्रीं ताभ्यां शेषोऽभ्यजायत" इत्यादिवाक्यात् सकृदुक्तवाक्यस्यान्वयभेदो युज्यते सोऽयं महत्तत्त्वाख्यो ब्रह्मा यो नारायणादभिव्यक्तः पुरुषनामा तेन त्वयानुगतः प्रविष्टः श्रद्धाख्यगायत्री सृष्टाहङ्कारादितत्त्वैः सहात्मनः परमात्मनः प्रवेशादुत्पादनसमर्थैर्बहिर्नवभिरावरणैरुपेतं हैममाण्डकोशं ससर्जेत्यन्वयः । ब्रह्मणः आण्डकोशसृष्टिकर्तृत्वाङ्गीकारे अव्यक्तं सृजतीत्यस्य विरोधनिरासार्थं त्वयानुगत इत्युक्तम् ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

जीवात् पुरुषादुत्तमत्वेन पुरुषोत्तमत्वं व्यज्य प्रकृतिद्रष्टृतोऽप्युत्तमत्वेन व्यञ्जयति । त्वत्त इति । ययेति यया मायामित्यर्थः । स्पष्टमन्यत् ॥ १६ ॥

तत्तस्थुषश्च जगतश्च भवानधीशो यन्माययोत्थगुणविक्रिययोपनीतान्।
अर्थान् जुषन्नपि हृषीकपते! न लिप्तो येऽन्ये स्वतः परिहृतादपि बिभ्यति स्म ॥ १७ ॥
स्मायावलोकलवदर्शितभावहारिभ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः।
पत्न्यस्तु षोडशसहस्रमनङ्गबाणैर्यस्येन्द्रियं विमथितुं करणैर्न विभ्व्यः ॥ १८ ॥
विभ्व्यस्तवामृतकथोदवहास्त्रिलोक्याः पादावनेजसरितः शमलानि हन्तुम्।
आनुश्रवं श्रुतिभिरङ्घ्रिजमङ्गसङ्गैस्तीर्थद्वयं शुचिषदस्त उपस्पृशन्ति ॥ १९ ॥

बादरायणिरुवाच ॥

इत्यभिष्टूय विबुधैः सेशः शतधृतिर्हरिम्।
अभ्यभाषत गोविन्दं प्रणम्याम्बरमाश्रितः ॥ २० ॥

भाषा टीका।

हे भूमन्! हे भगवन्! त्रिविक्रम वामन अवतार मे आपका जो पाद तीनों लोकों के उपर पताका के तुल्य होगया यों वह पाद असुर सेना के भय देने वाला है देवसेना के अभय देने वाला है साधु पुरुषों को स्वर्ग देने वाला दुष्टों को नरक देनेवालों है वह चरण भजन करने वाले हमलोगों को पवित्र करे ॥ १३ ॥

आप प्रकृति पुरुष दोनों से परे हो जिन आप के काल के वश होकर ब्रह्मादिक सब देह धारी जीव आपस मे दुःखित होकर जैसे नाक मे पोया हुआ बैल होवे तैसे आपकी आज्ञा को करते हैं तिन आप पुरुषोत्तम का चरण हम लोगों के कल्याण को करै ॥ १४ ॥

इस जगत् की उत्पत्ति पालन नाश के आप हेतु हो प्रकृति जीव महत्तत्त्व इनके भी आप नियंता हो सो आप तीन चातुर्मास रूप काल होकर इस संसार के नाश करने मे प्रवृत्त हो ऐसे गंभीर वेग वाले काल रूप आपही उत्तम पुरुष हो ॥ १५ ॥

महत्तत्त्व रूपी आदि पुरुष ने आप से वीर्य को प्राप्त होकर आपकी उस माया के द्वारा जगत् रूप गर्भाधान किया उसी अमोघ वीर्य वाले पुरुष ने उसी माया के अनुगत होकर अपने स्वरूप से बाहिर सात आवरणों के सहित सुवर्ण मय ब्रह्मांड अण्डकोश को उत्पन्न किया है ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

नन्वेवं भूतभीश्वरत्वं मम कुतोऽवगतं तत्राहुः। तदिति। तत्तस्मात्तस्थुषः स्थावरस्य जगतो जङ्गमस्य च भवानधीशः यत् यस्मात् मायया उत्था उज्जृम्भिता या गुणविक्रिया इन्द्रियवृत्तिस्तयोपनीतानर्थान्विषयान् जुषन् जुषमाणोऽपि हे हृषीकपते! न लिप्तः स्वम् ये त्वन्ये जीवा योगिनो वा स्वतः परिहृतादप्यविरतमानस्यकाला विषयजोषणाद्बिभ्यति ताडनामात्रेण सन्नपि इत्यर्थः ॥ १७ ॥

अलिप्तत्वमाहुः। स्मायेति। स्मायावलोकः मन्दस्मितविलासितोऽवलोकस्तस्य लवः कटाक्षस्तेन दर्शितो यो भावोऽभिप्रायस्तेन मनोहारि यद्भ्रूमण्डलं तेन प्रहिता ये सौरता मन्त्रास्तैः शौण्डैः प्रगल्भैरनङ्गबाणैः कामस्य बाणैः संमोहनैः करणैः कामकलाभिः षोडशसहस्रं पत्न्यो यस्येन्द्रियं मनो विमथितुं क्षोभयितुं न विभ्व्यो न समर्थाः स भवान् न लिप्त इति पूर्वेणान्वयः ॥ १८ ॥

तस्मात्तवामृतरूपा या कथा सैव उदकं वहन्तीति तथा कीर्त्तिनद्यः तथा पादावनेजसरितो गङ्गाद्याश्च त्रिलोक्याः शमलानि हन्तुं विभ्व्यः केन प्रकारेण आनुश्रवं गुरूच्चारणमनुश्रूयत इत्यनुश्रवो वेदस्तत्र भवं कीर्त्तिरूपं तीर्थं श्रुतिभिः श्रवणेन्द्रियैरङ्घ्रिजं चाङ्गसङ्गैरेवं शुचिषदः स्वाश्रमधर्मेस्थितास्तव तीर्थद्वयमुपस्पृशन्ति सेवन्त इति ॥ १९ ॥

विबुधैः सह ॥ २० ॥ २१ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी।

एवं सृष्ट्यादिकर्तृत्वेन माययेति अत्र सर्वावतारावतारिशिरोमणेः श्रीकृष्णस्य स्तोतव्यत्वेन प्रकृतत्वात् स्वांशेन प्रकृतिप्रवर्त्तकपुरुषरूपेण वर्णनमिदं ज्ञेयं "कर्मफलं प्रयोक्री"ति न्यायेन जुषमाणत्वेऽपि स्वरूपभूतचिच्छक्त्याऽलिप्तत्वं मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनी"ति श्रीमदर्जुनोक्तेः ॥ १७ ॥

साक्षाद्रूपेऽप्यलिप्तत्वमाहुः स्मायेति। अभिप्रायोऽत्र रमणरूपः प्रहिताः प्रयुक्ताः सौरताः सम्भोगाङ्गरूपा मन्त्रवत् सम्मोहका भावहावहेलादयस्ते च ते शौण्डाश्च प्रगल्भास्तैरनङ्गबाणरूपैः करणैः क्रियते वशीक्रियते नायक एभिरिति करणानि तैस्तथाच कामकलाभिरिति व्याख्यातं कामस्य सम्भोगशृङ्गारस्य कला अलङ्कारशब्दवाच्याः भावहावहेलालीलाविलासविच्छित्तिविब्बोककिलकिञ्चिताद्या द्वात्रिंशतिः विशेषेण मथितुं क्षोभमप्रेमवतीतुल्यत्वेन क्षोभयितुं न शेकुः किन्तु यासां यादृशः प्रेमा तासां तादृशमेव शेकुरिति प्रेमवश्य एव त्वं न तु कामीत्यर्थः ॥ १८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शमलानि मलानि निहन्तुं मलं "निष्ठाऽघयोर्मलौ"ति यादवः शुचावग्नौ सीदति निषीदति तिष्ठतीति शुचिषदस्तेषां मन्त्राकमण्डलुहस्तानां वा ॥ १९ ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेव दर्शयति । तदिति । यस्मादेवं तस्मात् पुरुषः प्रकृत्याद्गीशः तत्र वेशरूपेण जुषन् जोषयन्नपीत्यर्थः । न लिप्तः "कर्मफलं प्रयोक्ता"इति न्यायेनेति भावः ॥ १७ ॥

नन्वहमत्र तु कामीव लक्ष्ये नेत्याहुः । स्मायेति । अनङ्गवाणरूपैः करणैः स्वाभिकप्रेमवतीरूपबंधा स्त्रीभिर्मोहादिभिर्विशेषेण सोऽत्तमप्रेमवतीतुल्यत्वेन मथितुं किन्तु यावांस्तत्र प्रेमा शक्यावदेवेत्यर्थः । इति प्रथमस्कन्धपद्यवत् प्रेमवश्य एव त्वं न तु कामीत्यर्थः ॥ १८ ॥

तत्र किं वक्तव्यं तव चरितं कामममलमिति तत्कथा तत्कथापि कामादिशमलमपहन्तीत्याहुः । विष्णुप्य इति । अत्रोद्यहालेऽद्य यथा कादर्शेषा यौगिकत्वेऽप्यनत्वं तिरस्कृतं स्यात् पादावनेजसरित इति तु दृष्टान्तत्वेनोक्तं शमलं निहन्तुं विष्णुप्य इत्यपि किं वक्तव्यं यत्तत्तीर्थद्वयं सुखावियोगप्राप्त्यर्थं शुचिषदो निर्मलचित्ता अपि उपस्पृशन्ति सदा सेवन्ते ॥ १९ ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एवं च मूलभूतः परमपरमेश्वरस्त्वमेवेत्याहुः । तदिति । यस्मादेवं तस्मात् तस्थुषः स्थावरस्य च जगतो जङ्गमस्य च भगवानधीशः स्रष्टा पुरुष ईशस्त्वं तु तमप्यधिकरोषीत्यर्थः । यद्यस्मात्मायया उत्थिता या गुणविक्रिया इन्द्रियवृत्तिस्तयोपनीतान् विषयान् मर्त्यादिशरीरेषु जीवद्वारा परमात्मत्वेन त्वं जुषमाणः सन्नपि हृषीकपते ! हे इन्द्रियनियन्तः ! न लिप्तः । ये त्वन्ये योगिनस्ते स्वतःस्वत परिहृतादपि विषयजोषणाद्बिभ्यति वासनामात्रेण बध्यन्ते इत्यर्थः ॥ १७ ॥

स्वयं भगवद्रूपः साक्षात्त्वं स्वप्राकृतविषयेष्वपि न लिप्त इत्याहुः । स्मायावलोको मन्दस्मितनिवलसितोऽवलोकः तस्य लवः कटाक्षः तेन दर्शितो यो भावो ऽभिप्रायस्तेन मनोहारि यद्भ्रूमण्डलं तेन प्रहिता ये सौरता मन्त्रास्तैः शौण्डैः प्रगल्भैः अनङ्गस्य वाणौघाणतुल्यकरणैः कामकलाभिः षोडशसहस्रपत्न्यः निमथितुं क्षोभयितुं न शेकुः पत्नीनां चिच्छक्तिवृत्तित्वात्तासां कामकला अप्यप्राकृत्याश्चिन्मय्य एव ताभिरप्यवशीकारदर्शनाद्लिप्त एव त्वं किं च पारिजातानयनादिद्रष्ट्वाऽतिवशीकारदर्शनात् ताश्च कदाचित्तासां चिद्विशेषप्रेममय्योऽपि भवन्तीत्युज्ज्वलनीलमणौ प्रतिपादितं ततश्च त्वं प्रेमवश्य एव न तु प्राकृताप्राकृतकामवश्य इति भावः । यद्वा विमथितुं व्रजसुन्दर्य्य इव विशेषेण मथितुं न शेकुः किन्तु यावांस्तत्र प्रेमांशस्तावदेवेत्यर्थः ॥ १८ ॥

यद्यपि त्वमेवमलिप्तस्तथापि तव लीलामृतं चरणामृतं च संसारबन्धात्सुखाकाम्यमोचकमेवेत्याहुः । विष्णुप्य इति । तव अमृतरूपा याः कथास्ता एव उदवहाः पुण्यनद्यः पादावनेजसरितो गङ्गाश्च शमलान्यविद्यामालिन्यानि हन्तुं विष्णुप्यः समर्थाः केन प्रकारेण आनुश्रवं गुरोरुच्चारणमनुश्रूयन्त इत्यनुश्रवाः पुराणादयस्तत्र भवं लीलामृततीर्थं श्रुतिभिः श्रवणेन्द्रियैः अङ्घ्रिजं तीर्थं च अङ्गसङ्गैः एवं शुचिषदः शुद्धचेतसजनाः तीर्थद्वयमुपस्पृशन्ति अधिकं सेवन्ते ॥ १९—२० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्थितिहेतुत्वमुपपादयन्ति । तदिति । तस्मादिमन् आयद्कोऽस्य तस्थुषः स्थावरस्य जगतो जङ्गमस्य भवान् अधीशः स्थितिकर्त्ता अधीशत्वे हेतुमाहुः । यत् यस्मात्त्वंतो: "पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः" इति स्मृतेः भक्तैरुपनीतान् अर्थान् जुषन् जुषमाणोऽपि हे हृषीकपते त्वया प्रभुना गुणविक्रिया त्रिगुणमूर्त्तिर्यया मायया तथा न लिप्तस्त्वया परमेश्वरात्स्वतोऽन्ये ये जीवास्ते तु "ये हि संस्पर्शजा भोगा दुःखयोनय एव ते । आद्यन्तवन्तः कौन्तेय ! न तेषु रमते बुध" इति स्मृतेः स्वतः परिहृताद् मायाविषयाद्विषयजोषणाद्बिभ्यति अतोऽधीशोऽसि त्वम् ॥ १७ ॥

हृषीकपतित्वं विवृण्वन्ति । स्मायेति । स्मायो मन्दहास्तेन सहितोऽवलोकः तिर्यक्प्रेक्षणं तस्य लवेन दर्शितो यो भाव आशयः तेन हारि मनोहरं यद्भ्रूमण्डलं तेन प्रहिताः प्रयुक्ताः ये सुरते भावाः सौरता मन्त्राः तैः शौण्डैः कामिजनपराभवे प्रगल्भैः अनङ्गवाणैर्मदनशरैः करणैरालिङ्गनादिलक्षणैः साधनैः षोडशसहस्रपत्न्यः यस्येन्द्रियं मनः विमथितुं विलोडयितुं जेतुं न विष्णुप्यः न समर्थाः बभूवुः ॥ १८ ॥

अविषयीत्वं विवृण्वन्ति । विष्णुप्य इति । तव नास्ति मृतं मरणं यासु ताः मुक्तिप्रदाः याः कथाः ता एव उदवहाः मुक्तिप्रदशास्त्ररूपाः नद्य इत्यर्थः । तथा पादावनेजसरितः चरणकमलप्रक्षालनोदवहाः श्रीगङ्गाद्याः त्रिलोक्याः शमलानि हन्तुं विष्णुप्यः समर्था भवन्ति नदीद्वयसेवनप्रकारं तदधिकारिणश्चाहुः गुरूच्चारणानु अनन्तरं श्रूयते इत्यनुश्रवं तदेवानुश्रवमुपनिषदादिशास्त्ररूपम् श्रुतिभिः श्रवणेन्द्रियैः अङ्घ्रिजं चाङ्गसङ्गैः एवं तीर्थद्वयं शुचौ सीदन्तीति तथा गङ्गादिनिषेवणाद्विमलाः वेदान्तश्रवणमननाद्यर्थं गुरुसमीपवर्त्तिनश्च उपस्पृशन्ति सेवन्ते ॥ १९ ॥

त्रिधुभिर्देवैः सह सेशः ईशेन शिवेन सहितः ॥२०—२१॥

---

भाषा टीका ।

तिससे आप स्थावर जंगम दोनों के अधीश हो माया से उत्पन्न भये जो गुण उनके विकारों से उत्पन्न जो विषय हैं तिन को आप सेवन करते हो तौभी उनमें लिप्त नहीं होते हो आप सब इन्द्रियों के पति हो और दूसरे सब योगि लोग तो विषयोंको छोड कर दूर रहते हैं तौभी उनसे डरते रहते हैं ॥ १७ ॥

आप की जो सोलह हजार रानी हैं सो सब मन्दहास से प्रिय दृष्टियों के लेशमात्र से दिखाया जो भाव तिस से मन का हरने

ब्रह्मोवाच ॥

भूमेर्भारावताराय पुरा विज्ञापितः प्रभो ! ।
त्वमस्माभिरशेषात्मंस्तत्तथैवोपपादितम् ॥ २१ ॥
धर्मश्च स्थापितः सत्सु सत्यसन्धेषु वै त्वया ।
कीर्तिश्च दिक्षु विक्षिप्ता सर्वलोकमलापहा ॥ २२ ॥
अवतीर्य यदोर्वंशे बिभ्रद्रूपमनुत्तमम् ।
कर्माण्युद्दामवृत्तानि हिताय जगतोऽकृथाः ॥ २३ ॥
यानि ते चरितानीश ! मनुष्याः साधवः कलौ ।
शृण्वन्तः कीर्तयन्तश्च तरिष्यन्त्यञ्जसा तमः ॥ २४ ॥
यदुवंशेऽवतीर्णस्य भवतः पुरुषोत्तम ! ।
शरच्छतं व्यतीयाय पञ्चविंशाधिकं प्रभो ! ॥ २५ ॥
नाधुना तेऽखिलाधार ! देवकार्यावशेषितम् ।
कुलं च विप्रशापेन नष्टप्रायमभूदिदम् ॥ २६ ॥
ततः स्वधाम परमं विशस्व यदि मन्यसे ।
सलोकाँल्लोकपालान्नः पाहि वैकुण्ठकिङ्करान् ॥ २७ ॥
* ( संस्तुतो भगवानित्थं विबुधैः पद्मजादिभिः ।
प्रतिनन्द्याह तान् राजन् ! मायामनुज ईश्वरः ॥ ० ॥ )

श्रीभगवानुवाच ॥

अवधारितमेतन्मे यदात्थ विबुधेश्वर ! ।
कृतं वः कार्यमखिलं भूमेर्भारोऽवतारितः ॥ २८ ॥

---

भाषा टीका ।

बाधा जो भ्रूमंडल तिस मे प्रेरित जो मंत्रो कीसी चतुराई इन चेष्टाओं से भी अपनी सब इंद्रियों से काम देव के बाणों की वर्षा कर भी आप की इंद्रियों के क्षोभित करने को समर्थ नहीं हो सकीं ॥ १८ ॥

आप की कथा रूपी अमृत जल प्रवाह की जो नदी हैं और आप के चरणारविंद के प्रक्षालन के जल की जो नदी गंगाजी हैं वे दोनों प्रकार की नदी सब जीवों के पापों को नाश करने में समर्थ हैं तिस मे कथा नदी तो श्रवण से पवित्र करती हैं और गंगाजी स्नानादि अंगसंग से पवित्र करती हैं जो पुरुष अपने धर्मों मे स्थित हैं वे लोग आप के इन दोनों तीर्थों का अवगाहन करते हैं ॥ १९ ॥

श्रीशुक उवाच ॥

महादेवजी के सहित ब्रह्माजी इस प्रकार से सब देवों के सहित श्रीकृष्णचंद्र की स्तुति करके प्रणाम करके आकाशही मे स्थित होकर यह वचन बोले ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

विक्षिप्ता विस्तारिता ॥ २२ ॥
उद्दामानि वृत्तानि विक्रमा येषु तानि कर्माणि ॥ २३—२८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

भूमेरिति युग्मकम् अशेषात्मन्निति सर्वान्तर्यामिरूपेण भूर्भा-

---

* इत्याधिकः पाठो वीरराघव विजयध्वजयोः ।

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

दीर्घो बृहत्त्वं ख्यातत्वेनेत्यर्थः । तद्विज्ञापनं त्वया तथैवोपपादितं सत्यसन्धेषु सत्यप्रतिज्ञेषु ॥ २१ ॥ २२ ॥

बिभ्रज्जगाति दर्शयन् ॥ २३ ॥

यानीति । यत्कृष्णस्योत्तरबालकचरणतया तेन तत्कृष्णदासमपेक्ष्यत्वं साधु यन्मनसि पुष्करैः कृतमितिवत् अत्रमंतीति भवसागरसंतयोः स्वतः पुरुषार्थत्वं तरणाख्यानुषङ्गिकत्वं चोक्तम ॥ २४ ॥

विवक्षितमाह । यदुवंश इति ॥ २५ ॥

नष्टप्रायमदर्शनप्राप्तप्रायम ॥ २६ ॥

ततो हेतोः स्वधाम प्रापञ्चिकाप्रकटीभूतं द्वारकाया एवाप्रकटप्रकाशं स्वयं भगवत्कृष्णरूपेण प्रविश्य कलांशविष्णुरूपेण तु सलोकांल्लोकपालान्नः पाहि नानावैकुण्ठनाथैः स्वविलासैश्च वैकुण्ठकिङ्करान् पाहीति सर्वांशमादायावतीर्णत्वात् ॥ २७ ॥

अवधारितं श्रुतं अखिलं दैत्यसंहारादि ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह सप्तभिः । भूमेरिति । हे सर्वात्मन् ! समस्तचिदचिदन्तरात्मन् ! मद्दसमद्विज्ञापितं तथैव यथाविज्ञापनम् उपपादितं साधितम् ॥ २१ ॥

सत्ये धर्मे इति सत्याभिसन्धिर्येषां तेषु सत्सु सर्वेषां लोकानां जनानां शृण्वतां वदतां च मलमपहन्त्रीति तथा सा कीर्तिर्दिक्षु विक्षिप्ता विस्तारिता ॥ २२ ॥

अवतीर्येति । न विद्यते उत्तमं यस्मात्तद्रूपं वपुर्बिभ्रद्बिभ्राणः जगतो हिताय श्रेयःसाधनाय उद्दामानि उदाराणि वृत्तानि वार्ताः येषु तानि त्वदीयकथाविषयगर्भाणीत्यर्थः । तानि कर्माणि कथाः कृतवानसीत्यर्थः ॥ २३ ॥

जगतो हिताचरणं कथा इत्येतदेवोपपादयन्ति । यानीति ! हे ईश ! ते तव जना सुखेन तमः प्रकृतिं तत्कार्यं संसारमित्यर्थः तरिष्यन्ति ॥ २४ ॥

यदुवंश इति । हे पुरुषोत्तम ! हे विभो ! पञ्चविंशाधिकं शरच्छतं वर्षशतं व्यतीताय व्यतिक्रान्तमभूत् ॥ २५ ॥

ततः किमत आह । नेति । हेऽखिलाधार ! तव देवकार्यावशेषितमनवशेषितं देवकार्यमित्यर्थः । तत्कर्तव्यमधुना तव नास्तीदं कुलं यदुकुलं नष्टप्रायं नश्यत् ॥ २६ ॥

ततोऽपि किमत आह । तत इति । ततः अवतारप्रयोजनस्य वृत्तत्वादधुना परमं सर्वोत्कृष्टं स्वधाम स्वस्थानं परमं पदं भवत्तु यदि मन्यसे न वयं विधातुं प्रभवा इति भावः । हे वैकुण्ठ ! लोकैः सहितान् किङ्करानस्मान् लोकपालान् पाहि वैकुण्ठस्य तव किङ्करान् वा किङ्करानाज्ञापनानुवर्तनमेव तत्पालनमितिभावः ॥ २७ ॥

सत्पुत इति । पद्मजादिभिर्ब्रह्मादिभिर्विबुधैरित्थं संस्तुतः स्तुतिपूर्वकं विज्ञापितः भगवान्मायामनुजः स्वसङ्कल्पोपात्तमनुजावतारः प्रतिनन्द्य तद्विज्ञापनमभिनन्द्य हे राजंस्तान् विबुधानाह ॥ ० ॥

तदेवाह । अवधारितमिति । हे विबुधेश्वर ब्रह्मन् एतन्मे मयाऽवधारितं निश्चयीर्निश्चितं किन्तत् । यन्नमात्थ उक्तवानसि तदेव स्पष्टयति । कृतमिति । वो युष्माकम् ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पञ्चविंशाधिकं पञ्चविंशत्यधिकं तदुक्तं "वत्सराणां शतञ्चैव ऋतूनां पञ्चविंशकम् । अवतीर्णस्य कृष्णस्य यदा प्रागात्तदा हरिम् । स्वस्थानगमनापेक्षी ब्रह्मा तुष्टाव सामर इति॥२१॥

सर्वांशत्वदेवकार्यापेक्षयापि न स्थयमित्याह । नाद्युनेति । यदुकुलमवशिष्टमपेक्ष्यापि न स्थेयमित्याह । कुलं चेति ॥ २६ ॥

यादवानां देवस्वार्थांशत्वमनो कलेःप्रवेशात्तस्य चापेक्षितत्वात्तत्कुलसंहारार्थं किञ्चित्कालाकिञ्चित्त्वपेक्षायां तत्कृत्वा कर्तुं तत्र स्वधाम प्रवेष्टव्यमित्याशयेनाह । ततः स्वधामेति । तदुक्तं च—

संवत्सरद्वयं चैव पश्चात्स्थित्वा जनार्दनः ।
अभिपेदे परं स्थानं चतुर्मासाधिकं पुनरिति ॥ २७ ॥

अवधारितं निश्चितम् ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भूमेरिति युग्मकम् । उपपादितं त्वयेत्युत्तरेणान्वयः ॥ २१-२५ ॥

नष्टप्रायमदर्शनगततुल्यम ॥ २६ ॥

स्वधाम प्रापञ्चिकाप्रकटीभूतं द्वारकाया एव प्रकाशं श्रीकृष्णरूपेण प्रविश्य श्रीविष्णुरूपेण तु सलोकांल्लोकपालान्नः पाहि नानावैकुण्ठनाथरूपैश्च वैकुण्ठकिङ्करान् पाहीति सर्वांशमादायावतीर्णत्वात् ॥ २७ ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु युष्माभिः क्षीरोदशायेव विज्ञापितः सत्यहं तत्राह । सर्वात्मन् हे सर्वावतारावतारिस्वरूप ! तस्यापि स्वरूपत्वादित्यर्थः॥२१॥

विक्षिप्ता विस्तारिता ॥ २२—२४ ॥

शरच्छतं वर्षशतम् ॥ २५ ॥

न देव कार्यावशेषितं देवकार्यस्यावशेषो नास्त्येवेत्यर्थः । नष्टप्रायमन्तर्हितप्रायं मंशरदर्शनापरत्वात् ॥ २६ ॥

स्वधाम प्रपञ्चागोचरीभूतं द्वारकायाः प्रकाशविशेषं कृष्णस्वरूपेण प्रविश्य वैकुण्ठश्वेतद्वीपादिकं तु नारायणादिस्वरूपेण सर्वांशमादायावतीर्णत्वात् ॥ २७ ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विक्षिप्ता विस्तारिता ॥ २२ ॥

उद्दामानि अनुपमानि वृत्तानि विक्रमा येषु तानि २३—२७

अवधारितं निश्चितं स्वीकृतम ॥ २८ ॥

---

तदिदं यादवकुलं वीर्यशौर्यश्रियोद्धतम् ।
लोकं जिघृक्षद्रुद्धं मे वेलयेव महार्णवः ॥ २९ ॥
यद्यसंहृत्य दृप्तानां यदूनां विपुलं कुलम् ।
गन्तास्म्यनेन लोकोऽयमुद्वेलेन विनङ्क्ष्यति ॥ ३० ॥
इदानीं नाश आरब्धः कुलस्य द्विजशापतः ।
यास्यामि भवनं ब्रह्मन्नेतदन्ते तवानघ ! ॥ ३१ ॥
श्रीशुक उवाच ।
इत्युक्तो लोकनाथेन स्वयम्भूः प्रणिपत्य तम् ।
सह देवगणैर्देवः स्वधाम समपद्यत ॥ ३२ ॥

भाषा टीका ।

ब्रह्मोवाच ।

हे भक्तवत्सल पूर्व काल में पृथिवी के भार उतारने के वास्ते हमने आपको प्रार्थना किया था सो सब आपने उसी प्रकार कर दिया ॥ २१ ॥

सत्यप्रतिज्ञा वाले सत्पुरुषों में धर्म का स्थापन आपने कर दिया और सब लोगों के पापों के नाश करने वाली कीर्ति भी आपने सब दिशों में फैला दी है ॥ २२ ॥

यदुवंश में अवतार लेकर दिव्य मनोहर रूपको धारण करके जगत् के हितके लिये अति सुन्दर अद्भुत चरित कर्म भी आपने बहुत किये ॥ २३ ॥

हे ईश्वर! जो आप के चरित्र हैं तिनको कलियुग में जो मनुष्य सत्पुरुष सुनेंगे वा कीर्तन करेंगे वे सब अनायास से अज्ञान कृत संसार को तर जावेंगे ॥ २४ ॥

हे प्रभो पुरुषोत्तम यदुवंश में अवतार लेकर आप को एक सौ पचीस वर्ष बीतगये हैं ॥ २५ ॥

हे अखिलाधार प्रभो ! अब आपको कोइ भी देवकार्य करना नहीं बाकी रहा है औ यह आप का यदु कुल भी ब्राह्मणों के शाप से प्रायः नष्ट सरीका होगया है ॥ २६ ॥

हे वैकुंठ ! तिस कारण से यदि आप की इच्छा होवे तो अपने वैकुंठ धाम को आप पधारो सब लोकों के सहित हम लोकपालों की रक्षा करो ॥ २७ ॥

श्रीभगवानुवाच ।

हे देवेश्वर ! जो आपने कहा है सो बात मैंने निश्चय करली है तुम लोगों के सब काम हमने कर दिये हैं औ भूमी का भार सब उतार दिया है ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वीर्यशौर्ययुक्तया श्रिया ॥ २९ ॥

उद्वेलेन उल्लङ्घितमर्यादेन ॥ ३० ॥

वैकुण्ठं यास्यंस्तव भवनं यास्यामि ॥ ३१ ॥ ३४ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

वीर्यस्यैवैकपक्षत्वे पक्षीयत्वं स्यादतो वीर्यशौर्ययुक्तयेति व्याख्यातम् उद्धतमपश्यं लोकं जगदेव जिघृक्षत् अनन्तरमेव प्राप्तुमिच्छत् ॥ २९ ॥

उल्लङ्घितमर्यादेनेति । मद्वियोगादुन्मत्तत्वेन कर्तव्याकर्तव्यविचारलोपात् ॥ ३० ॥

नाशोऽदर्शनम् अप्रकटद्वारकायां प्रवेशनमित्यर्थः । एतदेव प्रवेशमध्यान्ते विकुण्ठासुतरूपेण वैकुण्ठं यास्यन् ॥ ३१ ॥

लोकनाथेनेति । लोकसङ्ग्रहार्थं ब्राह्मणशापपर्यन्तमुचितमिति भावः ॥ ३२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवमुना विज्ञापितमवधार्यैतत् आह । तदिदमिति । तस्मादपीदं यादवकुलं वीर्योद्यमिरुद्धतमनिवार्यं वीर्यं पराभिभवसामर्थ्यं शौर्यं युद्धे अव्यूह इव प्रवेशसामर्थ्यं श्रीर्धनादिसम्पत् ततः किमत आह । लोकं जिघृक्षत् ग्रसितुमुद्युक्तं मे मया वेलया महार्णव इव रुद्धं निवारितम् ॥ २९ ॥

ततो यदि कुलमसंहृत्य गन्तास्मि गमिष्यामि तर्ह्यनेन कुलेनायं लोक उद्वेलेन उल्लङ्घितमर्यादेन यदुकुलेन विनङ्क्ष्यति विनष्टो भविष्यति उद्वेलेनेति पाठे उद्वेलेन वेलामतिक्रान्तेन महार्णवेन यथा नङ्क्ष्यति तद्वदनेनेत्यर्थः ॥ ३० ॥

कदा तर्हि संहरिष्यसीत्यत्राह । इदानीमिति । द्विजशापाच्छा आरब्ध एव नाशारम्भवानाश्च अवश्यंभावितया क्षिप्रमेव निरवशेषं विनङ्क्ष्यतीति भावः । हेऽनघ ! एतदन्ते कुलनाशान्ते हे ब्रह्मन् ! तव भवनं यास्यामि श्रीवैकुण्ठं यास्यंस्तव भवनं यास्यामीत्यर्थः ॥ ३१ ॥

अथ तस्यां महोत्पातान् द्वारवत्यां समुत्थितान् ।
विलोक्य भगवानाह यदुवृद्धान् समागतान् ॥ ३३ ॥
श्रीभगवानुवाच ।
एते वै सुमहोत्पाता व्युत्तिष्ठन्तीह सर्वतः ।
शापश्च नः कुलस्याऽसीद्ब्राह्मणेभ्यो दुरत्ययः ॥ ३४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीति । लोकनाथेन श्रीकृष्णेनेत्थमुक्तः कृष्णं प्रणिपत्य प्रणम्य देवगणैः सह स्वधाम स्वस्थानं सत्यलोकं समपद्यत समगात् ॥ ३२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तर्हि कालक्षेपे किं कारणं तत्राह । नाद्येति । मे लोकं जिघृक्षन्ति प्राप्तुमिच्छन्ति ॥ २९ ॥

अनुपसंहारे को दोष इति तत्राह । अनेनेति । उद्गतेन वीर्यशौर्यादिगुणैरुत्तीर्णेनानेन यादवकुलेन यतो यदुकुलस्यावध्यं युगधर्मोऽनुविवर्ततीत्यभिप्रायेणोक्तमाचार्यैः "सतामपि कलौ प्राप्ते विकारो मनसो भवेत् । तस्मात्यदूंश्च संजह्रे नैते स्युः पापिनाविति । पुनर्लोकविवृद्ध्यर्थमोत्तरेष्वादिकान्हरिः । आविश्य रक्षामकरोज्जगतः पुरुषोत्तमः । आत्मना सद्यानेन पुरुषार्थोऽधिको भवेत् । इत्यनुग्रहबुद्ध्या च संजह्रे स्वकुलं विभु"रिति ॥ ३० ॥

एतदन्ते एतस्य यदुकुलसंहारस्यान्ते तव प्रीत्यै भवनं यास्यामि ॥ ३१—३५ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ऋतनामधेयं लोकं जगदेव जिघृक्षत् अनन्तत्वात् प्राप्तुमिच्छत् ॥ २९ ॥

नन्वेतेषां ब्राह्मणानां सदान्यानां नित्यं वृद्धोपसेविनां व्याप्त्या सर्वत्र भद्रमेव भवत् तत्राह । यद्यीति । उद्वेलेन मर्यादामतिक्रम्य ... चेष्टेन ॥ ३० ॥

नाशः अदर्शनं निगूढायां द्वारकायां प्रवेशनमित्यर्थः एतस्य प्रवेशनस्यान्ते तव भवनं विकुण्ठासुतरूपेण यास्यामि तदुपरि तद्वैकुण्ठं यास्यामीत्यर्थः ॥ ३१ ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वीर्यं बलिष्ठत्वं शौर्यं युद्धोत्साहः तयोः श्रिया सम्पत्त्या उद्धतं इनात् इननादुद्धतम् अवध्यमित्यर्थः । लोकं जिघृक्षत् अनन्तत्वात्प्राप्तुमिच्छत् ममाचिन्त्यशक्तिना द्वारकायामेव रुद्धमन्यथा सर्वभूर्लोकोऽपि नाशमपत्स्यतेति ॥ २९ ॥

इमानां भामकत्वेन धृतादहङ्काराणाम् उद्वेलेन अतिक्रान्तमर्यादसमुद्रोपमेनेत्यर्थः । लोको भूर्लोकः यद्यपि मत्पारिजनानामेषां परमधार्मिकाणां बहूनां भारं पृथ्वी भारं न मन्यते तदपि तस्याः स्वामिना ममाऽवरुद्धमारोऽवतारयितव्य एव सुकुमार्या वनितायाः अति बहुतरभूषणभारो यथा तत्कान्तेनावतार्यते तथा यद्यपि व्यूढवक्षसां भारः सुसह एव तदप्यतिभारस्तु न सुसहो यथाकस्मात्प्राप्तोऽपि कनकराशिभारो पुरुषेणापि वणिजा दुर्वह एव धृतरत्नकणोऽपि कार्यात्मकत्वाद्गुरुरिति व्याख्यातोऽस्यामेतद्भारोऽपि पृथिव्या दुःसह एव इह इति ॥ ३० ॥

नाशोऽदर्शनं निगूढायां द्वारकायां प्रवेशनमित्यर्थः एतस्य प्रवेशनस्यान्ते तव भवनं विकुण्ठासुतरूपेण यास्यामि तदुपरि वैकुण्ठं यास्यामीति सन्दर्भः ॥ ३१—३२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मे इदं यादवकुलं वीर्यशौर्ययुक्तया श्रिया ऊर्ध्वं लोकं जिघृक्षति परिभाव्य स्थातुमिच्छतीति कथितोऽर्थः ॥ २९ ॥

किञ्चायं लोकः अनेन कुलेनोद्वेलेन मनुष्यलोकतामतिक्रम्य वर्तमानेन विनङ्क्ष्यति देवलोकतुल्यतां प्राप्य मनुष्यलोकभावात्प्रच्यविष्यतीत्यर्थः । तदा देवलोकमनुष्यलोकयोर्विशेषाभावः स्यादिति भावः । एतदन्ते यदुकुलसंहारान्ते स्वधाम यास्यन् तव भवनं यास्यामि ॥ ३०—३५ ॥

भाषा टीका ।

यह जो यादव कुल है सो सुरता वीरता की संपत्ति से बड़ा अभिमानी होरहा है सो सब संसार को नष्ट करदेता परंतु जैसे समुद्र को किनारा रोकता है तैसे मैंने इस को रोक रखा है ॥२९॥

यदि इन गर्वित यदुओं के विना समेटे मैं जाऊँगा तो तब निर्मर्यादा वाले इस कुल के उपद्रव से यह सब लोक नष्ट होजायगा ॥ ३० ॥

हे ब्रह्मन् ! इस वखत ब्राह्मणों के शाप के निमित्त से इस कुल का नाश का आरंभ कर दिया है इस के होने पर हे अनघ ! तुमारे लोक को आवेंगे ॥ ३१ ॥

श्रीशुक उवाच ।

लोकनाथ श्रीकृष्ण के इतने कहने पर ब्रह्माजी भगवान् को प्रणाम करके देव गणों के सहित अपने धाम को चले गये ॥ ३२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अतो वयमपि तस्मिन् प्रभासे आप्लुत्य नानागुणवता चरूपो-पेतेनान्धसा अन्नेन उशिजः कमनीयान् विप्रान् भोजयित्वा ॥३७॥

तेषु विप्ररूपेषु पात्रेषु महान्ति दानानि दत्त्वेत्यनेन यथा सुक्षेत्रे बीजमुप्तं बहुफलं भवति तथा सत्पात्रे दानमपीति द्योतितं नौभि-रर्णवमिव दानैर्वृजिनानि विप्रशापप्रयुक्तदुःखानि तरि-ष्यामः ॥ ३८ ॥

एवमिति। एवं हे कुरुनन्दन! तीर्थं प्रभासं गन्तुं कृताधियः स्यन्दनान् रथान् संयुयुजन्याहेर्वृकांश्चक्रुरित्यर्थः ॥ ३९ ॥

तदिति। हे राजन्! भगवतोक्तं श्रुत्वा तदुद्योजनं निरीक्ष्य च घोराणि अरिष्टान्युत्पातान् दृष्ट्वा च नित्यं कृष्णमनुव्रतः देवगर्भं-मिदम् ॥ ४० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यत्र प्रभासे दक्षशापादुत्पन्नाद्यक्ष्मणः किल्बिषात्प्रमुक्तोऽभूत् ॥ ३६ ॥

उशिजोऽग्नीन् ॥ ३७—३९ ॥

अरिष्टानि अशुभानि ॥ ४० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अथ तस्यां महोत्पातानिति तद्दिक्षुरेव। मुनिवाससनिवासे कि घटेतारिष्टदर्शनमिति तदभावात् ॥ ३३—३४ ॥

अस्माभिरिति। तेषां असाध्यमेव निर्दिष्टम्। तत्र जिजी-विषुभिरित्यात्मनश्चैव तेषामुत्पातनिरसनमभिप्रेतम्। तत्र व्याजमात्रं प्रभासमित्यादि। मङ्गलरूपायां अपुण्यांभङ्गवानु-करणामपि माभूदित्यभिप्रायकत्वा अनुकरणमात्रत्वञ्च जिजी-विषुभिरत्यनेनैव व्यञ्जितम्। अन्यथा श्रीभगवद्वङ्गीकारभङ्गः स्यात् ॥ ३५ ॥

तत्र च तीर्थे ब्रह्मशापस्यापि शमनयोग्यतां दर्शयति। यत्रेति। अन्यथा श्रीभगवतो युक्तिभङ्गः स्यात् ॥ ३६ ॥

सतीकारदृष्टान्तेन साधनेन तदेव द्रढयति। एवमितियुग्म-केन। एतद्व्याख्यानिदानविवरणं श्रीकृष्णसन्दर्भेसप्तदशोत्तर शततमानाकथन्चूर्णिकामारभ्य चतुस्त्रिंशदुत्तरतत्पर्यन्तग्रन्थे दृश्यम् ॥ ३७—३९ ॥

तन्निरीक्ष्येति। प्रथमं यादवानां प्रभासयात्रोद्यमदर्शनं पश्चा-देव श्रीभगवतस्तेभ्यः एतादृगुपदेशश्रवणमिति तस्मात् परोक्षी-कृत्य तेभ्यस्तेन तदुपदिष्टं परम्परयैव तच्छ्रवणमिति लभ्यते तादृश तत्पातिव्यायामपि दृष्टारिष्टानीति वस्तुत उत्पाताभावेऽपि बहिर्दृष्ट्या तदाभासः स्यादेवेति निर्णीतमिति गम्यते ॥ ४० ॥४१ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

महोत्पातान् भगवदिच्छयैवाविर्भूतान् मुनिवाससनिवासे किं घटेतारिष्टदर्शनमित्युक्तस्तत्र तदसद्भावात् ॥ ३३ ॥ ३४ ॥

प्रभासामिति। मामेव परिकरैर्विशिष्टैरेव द्वारिका सदा विरा-जतु तेषु प्रविष्टान् देवानेव यादवरूपानवाप्तं तेभ्यः सका-शात् योगबलेन निष्काश्य प्रभासं नीत्वा तत्रैव तान् मायया मौसलसङ्ग्रामं प्रापय्य स्वर्गं प्रापय्य वैकुण्ठाद्युत्तमादिस्वरूपो-ऽहमपि वैकुण्ठादिधामानि यास्यामि पूर्णस्वरूपेण तु सप-रिकरोऽहं द्वारकायां सदैवास्म्येवेति भगवन्मनोगतं वचम् ॥ ३५ ॥

यक्ष्मणा रोगेण गृहीतोऽपि यत्र स्नानमात्रं कृत्वा तस्मात् दुःखाद्विमुक्तः कलावृद्धिं भेजे ॥ ३६ ॥

उशिजः कमनीयान् अन्धसा अन्नेन ॥ ३७ ॥

उप्त्वेति। यथा सुक्षेत्रे बीजमुप्तं बहुफलं भवति तथा दानं सत्पात्रे इति द्योतयति ॥ ३८—४१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

उडुराट् चन्द्रः दक्षशापाद्यक्ष्मणा गृहीतः यत्र प्रभासे स्नानमात्रं कृत्वा किल्बिषात् यक्ष्मरोगरूपकाद्यात्मनो विमुक्तः सन् कलोदयं कलावृद्धिं भेजे ॥ ३६ ॥

नानागुणवता मधुरत्वादिगुणयुक्तेन अन्धसा अन्नेन उशिजः तपोवृत्तादिभिः कमनीयान् ॥ ३७ ॥

यथा सत्क्षेत्रे सत्फलसिद्धये बीजमुप्तं बहुफलं स्यात्तथा सत्पात्रे दानमिति द्योतयितुमाह। उप्त्वेति ॥ ३८ ॥ ३९ ॥

अरिष्टानि दुर्निमित्तानि ॥ ४०—४१ ॥

भाषा टीका।

इसके अनन्तर उस द्वारका में उत्पन्न भये महा उत्पातों को देख कर आये हुये वृद्ध ज्ञानी मनुष्यों से भगवान् कृष्णचन्द्र यह वचन बोले ॥ ३३ ॥

श्री भगवानुवाच।

इतने ए सब महा उत्पात यहां सब ठिकाने दीखते हैं और हमारे कुल को ब्राह्मणों का बड़ा भारी शाप भी होगया है ॥ ३४ ॥

हे वृद्धजनो! इस से आगे हम को यहां नहीं रहना चाहिये बड़े पुण्य वाले प्रभास क्षेत्र को आजही चले आवें विलम्ब मत करो ॥ ३५ ॥

जिस प्रभास तीर्थ में स्नान करने से चन्द्रमा दक्ष के शाप से भया जो राजयक्ष्मा क्षय रोग तिस से शीघ्रही छूट गये और फिर पहिले से कलाओं को प्राप्त भये हैं ॥ ३६ ॥

हम भी उसी प्रभास में स्नान कर के पितर देवतों का तर्पण कर के अनेक प्रकार के गुणदायक अन्न का सुन्दर ब्राह्मणों को भोजन करावेंगे ॥ ३७ ॥

उन सत्पात्रों के अर्थ हम लोग बड़े दान देवेंगे और श्रद्धा करेंगे तो जैसे नौकाओं से बड़े समुद्र को तर जाते हैं तैसे हम भी सब दुःखों को तर जावेंगे ॥ ३८ ॥

श्री शुक उवाच।

हे कुरु नन्दन! परीक्षित् जो इस प्रकार से भगवान् ने

विविक्त उपसङ्गम्य जगतामीश्वरेश्वरम् ।
प्रणम्य शिरसा पादौ प्राञ्जलिस्तमभाषत ॥ ४१ ॥

उद्धव उवाच ।

देवदेवेश ! योगेश ! पुण्यश्रवणकीर्तन ! ।
संहृत्यैतत्कुलं नूनं लोकं सन्त्यक्ष्यते भवान् ॥
विप्रशापं समर्थोऽपि प्रत्यहन्न यदीश्वरः ॥ ४२ ॥
नाहं तवाङ्घ्रिकमलं क्षणार्धमपि केशव ! ।
त्यक्तुं समुत्सहे नाथ ! स्वधाम नय मामपि ॥ ४३ ॥
तव विक्रीडितं कृष्ण ! नृणां परममङ्गलम् ।
कर्णपीयूषमास्वाद्य त्यजन्त्यन्यस्पृहां जनाः ॥ ४४ ॥
शय्यासनाटनस्थानस्नानक्रीडाऽशनादिषु ।
कथं त्वां प्रियमात्मानं वयं भक्तास्त्यजेम हि ॥ ४५ ॥
त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायां जयेमहि ॥ ४६ ॥
वातरशना य ऋषयः श्रमणा ऊर्ध्वमन्थिनः ।
ब्रह्माख्यं धाम ते यान्ति शान्ताः संन्यासिनोऽमलाः ॥ ४७ ॥
वयं त्विह महायोगिन् ! भ्रमन्तः कर्मवर्त्मसु ।
त्वद्वार्तया तरिष्यामस्तावकैर्दुस्तरं तमः ॥ ४८ ॥

---

भाषा टीका ।

आज्ञा देने से सब यादव प्रभास जाने का विचार कर के अपनी २ गाड़ी रथों को जोड़ते भये ॥ ३९ ॥

इतनी बात देख कर और भगवान् के वचन को सुन कर और बड़े कठिन उत्पातों को देख कर सदा काल जो श्रीकृष्ण के अनुवर्तन करने वाले उद्धवजी एकान्त में जाकर जगत् के ईश्वरों के भी ईश्वर श्रीकृष्णचन्द्रचरणों को मस्तक से प्रणाम कर के हाथ जोड़ कर प्रार्थना करने लगे ॥ ४०—४१ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

लोकं मर्त्यलोकम् न प्रत्यहन् न प्रतिहतवान् ॥ ४२—४४ ॥

शय्यादिषु त्वां भक्ता नित्यं सेवितवन्तो वयं कथं त्यजेम ॥ ४५ ॥

त्यक्तुमशक्नुवन् प्रार्थये न मायाभयादित्याह । त्वयेति । चर्चिताः अलंकृताः हि निश्चितं जयेम ॥ ४६ ॥

संन्यासिनो हि ब्रह्मचर्यादिकष्टैः कथंचित्तरन्ति वयं त्वना-यासेनैव तरिष्याम इत्याह । वातरशना इति । ऊर्ध्वमन्थिनः ऊर्ध्वरेतसः ॥ ४७ ॥

तावकैर्भक्तैः सह त्वद्वार्तया दुस्तरं तमः संसारम् ॥ ४८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

देवदेवेति सार्धकम् संहृत्य संहारानुकरणेन स्वसङ्गोपनेत्यर्थः । अत एव नूनमिति वितर्के यत्कस्मात् ॥ ४२ ॥

अतएव स्व वाञ्छितं मया प्रार्थ्यते । नाहमिति । यथा यादवा-स्त्वर्यान्ति तथा [illegible] ॥ ४३ ॥

[illegible] । तवेति । विक्रीडित-मिति [illegible] त्वदेकनिष्ठत्वं स्यात् किं पुनः साक्षाद्दर्शन[illegible] ॥ ४४ ॥

[illegible] ॥ ४५ ॥

[illegible] उपभुक्तस्रगादिना [illegible] साक्षाज्जयमिति भावः ॥ ४६ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

वातरशनेति । रशनाशब्देन वस्त्रं लक्ष्यते हिरण्यरशन इत्यत्र चतुर्थे तैरेव तथा व्याख्यातत्वात् । ते तव धाम स्वरूपम् ॥ ४७ ॥

वयं त्विति युग्मकम् । वयमिति साधकभक्तेषु स्वाभेदमङ्गीकृत्य बहुवचनं तरिष्यामस्तर्तुं शक्नुमेत्यर्थः ॥ ४८ ॥ ४९ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अतः विविक्ते एकान्ते तं श्रीकृष्णं समभाषत ॥ ४१ ॥

तदेवाह । देवेत्यादिना एवं विज्ञापित इत्यतः प्राक्तनेन । हे देव ! स्वतेजसा दीप्यमान हे देवानां ब्रह्मादीनामीश ! हे योगेश ! योगनिर्वाहक ! पुण्यं श्रवणं कीर्तनं च पुण्यावहं श्रवणं कीर्तनं च यस्य तस्य सम्बोधनं लोकं नूनं सन्त्यक्ष्यते त्यक्तुमिच्छसि तथानुमिनोमीति भावः । कुतः हे ईश्वर ! यत् यस्मात्समर्थोऽपि विप्रशापं न प्रत्यहन प्रतिहतवान् ॥ ४२ ॥

ततः किमत आह । नाहमिति । त्यक्तुं नोत्सहे न शक्नोमि तर्हि किंविधेयमित्यत आह । स्वधाम नय मामपीति । स्वधाम वैकुण्ठम् ॥ ४३ ॥

त्यागोत्साहमसम्भावयन्नाह । तवेति । कर्णपीयूषं श्रोत्रयोरमृततुल्यं परममङ्गलावहं च तव विक्रीडितमेतादृशं श्रुत्वाऽन्यस्पृहां देहतदनुबन्धिपुत्रदारादिविषयस्पृहां त्यजति त्वामेवाश्रयत इत्यर्थः ॥ ४४ ॥

कथं पुनः शय्यादिषु सहवर्तमान प्रियतमं तत्र हेतुरात्मानं त्वां कथं त्यजेमहि तत्रापि भक्ता वयं कथं त्यजेमहि ॥ ४५ ॥

त्वां त्यक्तुमशक्नुवन् स्वधाम नय मामिति प्रार्थये ननु संसृतिभयादित्यभिप्रेत्याह । त्वयेति । त्वयोपभुक्त स्रक्ः स्रगादिभिश्चर्चिताः अलंकृताः त्वदुच्छिष्टभोजिनश्च दासा वयं तव मायां जयेम हि निश्चितं न मायातरणार्थमस्माभिर्यतितव्यमित्यर्थः ॥ ४६ ॥

त्वत्पदं त्वन्मायातरणं चास्माकं सुलभमेवास्तीत्यभिप्रेत्याह । वातरशना इति । दिगम्बराः कौपीनमात्रधारिणः नतु नग्नाः श्रमणाः अनशनादिभिः श्रमवन्तः ऊर्ध्वमन्थिनः ऊर्ध्वरेतसः संन्यासिन चतुर्थाश्रमिणः शान्ता रागद्वेषादिरहिताः ब्रह्माख्यमिति मध्यमपदलोपी समासः ब्रह्मलोकाख्यमित्यर्थः—

एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति
स वायुलोकं स वरुणलोकं स आदित्यलोकम्
स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम् ।
अश्व इव रोमाणि विधूय पापं चन्द्र इव
राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा
ब्रह्मलोकमभिसम्भवामि स वा एष दिव्येन चक्षुषा
मनसैतान् कामान् पश्यन् रमते एतं ब्रह्मलोक

इत्यादिषु ब्रह्मलोकत्वेन प्रसिद्धमित्यर्थः । तत् ते तव धाम स्थानं यान्ति ॥ ४७ ॥

एवमन्ये ब्रह्मचर्यादिभिः क्लेशैस्तरन्ति वयं त्वनायासेन तरिष्याम इत्याह । वयं त्विति । हे महायोगिन्निह संसारे कर्मवर्त्मसु कर्ममार्गेषु सुखदुःखादिषु स्वर्गनरकपद्धतिषु वा भ्रमन्तोऽपि वयं तावकैस्त्वद्भक्तैः सह त्वद्वार्तया दुस्तरमपि तमः तमःकार्यं संसारं तरिष्यामः अनायासेनेति शेषः ॥ ४८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भवान् समर्थोऽपि विप्रशापं न प्रत्यहन् यस्मात्तस्मान्नूनमिदानीं लोकं संत्यक्ष्यते ॥ ४१—४४ ॥

शय्यासनादिषु प्रियम् ॥ ४५ ॥

तवाश्रिता मायां प्रकृतिम् ॥ ४६ ॥

श्रमणा भिक्षाचराः ॥ ४७ ॥

तावकैः तव भक्तैः सह त्वद्वार्तया ॥ ४८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

देवदेवेति सार्द्धकम् । अत एव नूनमिति वितर्कोक्तिः संहृत्य संहारमुद्रया स्वसङ्गेन नीत्वेत्यर्थः ॥ ४२ ॥

अतः स्वस्मिन्नत्रोपनयनं दृष्ट्वा प्रार्थयते । नाहमिति । यथा यादवानेवं तथा मामपि नयेत्यपिशब्दार्थः । स्वकर्तृकत्यागाशक्यत्वं कैमुत्येन दर्शयति । तवेति ॥ ४३—४४ ॥

तदेवाह । शय्येति ॥ ४५ ॥

त्यक्तुमशक्नुवन्नेव प्रार्थये न मायाभयात् अतः साधकभक्तानामपि तच्चरणमारोपितत्वत्सम्बन्धेनापि सुखसाध्यमिति दर्शयन् सजातीयवासनत्वेन तेष्वपि स्वाभेदमङ्गीकृत्य बहुवचनप्रयोगेणैव तेषां तदाह । त्वयोपभुक्तेति । परोक्षपूजादावपीति भावः । जयेम जेतुं शक्नुमः ॥ ४६ ॥ ४७ ॥

वयमिति युग्मकम् । तरिष्यामस्तर्तुं शक्नुमेत्यर्थः ॥ ४८—५० ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

देवानामपि देवा ब्रह्मादयस्तेषामीशेति देवकार्यं ब्रह्मप्रार्थितं च त्वया सर्वं सम्पादितमिति भावः । न केवलमेतदर्थमेवावतीर्णस्त्वमभूः किन्तु तदितरविचित्ररसमयरूपगुणचरित्रप्रकाशनया भक्तजनानन्दनार्थमपीत्याह । हे योगेशेति यदुक्तं "यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीत"मिति अनिर्वचनीयमायाप्रमत्तानिष्कारार्थमपीत्याह । पुण्येति । अत एव त्वदीयसर्वविधविलसितस्य निष्पन्नत्वादिदानीमिमं लोकं संत्यक्ष्यते नूनमिति वितर्कं भवानन्तर्धास्यतीति तर्कयामि किं च शापनिवर्तकं प्रभासस्नानमुपदिशसि किं त्वद्दर्शनादपि प्रभासस्नानमधिकं भवेत् विप्रशाप एषां मा फलत्विति तव मनोगतमस्त्यपि किं शापः प्रभवितुं शक्नुयात् तस्मात्तवात्र अन्तर्धित्सैव दृश्यते यत् यतः समर्थोऽपि भवान् विप्रशापं न प्रत्यहन् न प्रतिहृतवान् ॥ ४२ ॥

नन्वीश्वरोऽहं यथेच्छामि तथा करोमि तेन तव किमिति चेत्तत्राह । नाहमिति ॥ ४३ ॥

अन्यस्पृहां पुत्रकलत्रादिमोक्षान्तस्पृहां त्यजन्ति ननु विक्रीडितं त्यक्तुं शक्नुवन्ति नहं तु त्वामपि त्यक्तुं कथं शक्नुयामिति भावः ॥ ४४ ॥

किं च शय्यादिषु त्वां भक्ताः पादसंवाहनाद्यैः नित्यं सेवितवन्तो वयं कथं त्यजेम ॥ ४५ ॥

स्मरन्तः कीर्तयन्तस्ते कृतानि गदितानि च ।
गत्युत्स्मितेक्षणक्ष्वेलि यन्नृलोकविडम्बनम् ॥ ४९ ॥

श्रीशुक उवाच ।

एवं विज्ञापितो राजन् ! भगवान् देवकीसुतः ।
एकान्तिनं प्रियं भृत्यमुद्धवं समभाषत ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् एकादशस्कन्धे
षष्ठोऽध्यायः ॥ ६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

त्वत्कृतशङ्कानुबन्धेव प्रार्थये ननु मायामवादिरित्याह । त्वयेति । मायां जयेमेति मा यस्मात् प्रतिविक्षत्वन्ती मायाति नर्तयेरेवास्त्रैः प्रवर्त्तीभूय तां जयेम ननु ज्ञानादिभिरित्यर्थः ॥ ४६ ॥

वातरसनाख्यास्तैस्तैर्ऋषिभिर्वैराग्यादिभिः भावनैर्ब्रह्माख्यं तव धाम [तत्परं परमं ब्रह्म सर्वं विभजते जगत् । ममैव तत् घनं तेजो ज्ञातुमर्हसि भारत]अर्जुनं प्रति स्वयमुक्तेस्तत्त्वेव तेजोविशेषं ते यान्ति सत्यं ते यान्तु यान्तु न तत् वियासाम: किन्तु त्वन्मुखचन्द्र-मधुरस्मितसुधापानमत्ता एव तिष्ठासाम इति भावः ॥ ४७ ॥

किञ्च त्वदेकान्तिनो महाभक्ता मायातरणं भक्तेः फलत्वेन नैवानुसन्दधते यान्तु न तादृशा इति तादृशीं प्रौढिं कथ कुर्म इति दैन्यनैवास्माभिः मायातितीर्षामारोप्याह । वयन्त्विति । तुर्भि-न्नक्रमे वयन्तु दासा अपि सकलसंसारवासनातरङ्गस्थापि ज्ञाना-ऽभ्यासमनिच्छन्तोऽपि तव एवेति भावः । हे महायोगिन्निति, तव योगमाया मायाञ्च नैव विविदिषाम इति भावः । तावकैस्त्वद्भक्तजनैः सहेति ते खलु कल्पवृक्षस्वभावा एवेति तैरेवास्माकं साहित्यमुपपद्यते न यातरसनाद्यैरिति भावः । तत्तरणे नः कः प्रकार इत्यत आह । स्म-रन्त इति । त्वदीयचरित्रभवणकीर्त्तनादिसुखेनैवास्त्रेनजन्मैता-स्माकं तत्तरणं सुगममेवेति भावः । क्ष्वेलिः प्रेयस्या सह सौरतपरिहासः ॥ ४८ ॥ ४९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्लोकं सुश्लोकम् न प्रत्यक्षम् प्रतिहतत्वात् ॥ ४२—४४ ॥

शय्यादिषु प्रियम् अतिस्नेहविषयं त्वामात्मानमन्तर्यामिणं कथं भक्ताः कथं त्यजेमहि ॥ ४५ ॥

ननु मायातो भीतोऽस्मि किं तत्राह । त्वयेति । चर्चिताः अल-ङ्कृताः मायां कार्यकारणरूपां प्रकृतिम् ॥ ४६ ॥

श्रमणा भिक्षावृत्तयः ऊर्ध्वमन्थिनः ऊर्ध्वरेतसः नैष्ठिकादयः शान्ता ब्रह्मयत्नेन शान्तिं प्राप्ताः ब्रह्मात्वयं बृहत्त्वेन ब्रह्मनामकं धाम ध्यानं यान्ति अर्चिरादिमार्गेण प्राप्नुवन्ति "ब्रह्मणः सदनादूर्ध्वं तद्विष्णोः परमं पदं शुद्धं सनातनं ज्योतिः परं ब्रह्मेति साधवः सञ्चिन्त्याहुरिति" महा-भारते भगवद्वाक्यतः ब्रह्मादिपरं सुप्रसिद्धम् ॥ ४७ ॥

वयं तु संगमनोपायेन मायां तीर्त्वा तराक्षाम इत्याह । वयं त्विति । तावकैस्त्वद्भक्तैः सह त्वद्वार्तया तमः संसारं तरि-ष्यामः ॥ ४८ ॥

---

भाषा टीका ।

उद्धव उवाच ।

हे देवदेवों के ईश ! हे पुण्यश्रवणकीर्तन ! मेरे को माळूम होता है कि आप इस कुलको संहार कर के इस लोक का त्याग करोगे जिस में कि ब्राह्मणों के शाप के नाश करने को समर्थ हो तो भी आप ने नाश नहीं किया है ॥ ४२ ॥

हे केशव ! हे नाथ ! मैं आप के चरण कमल को आधे क्षण भी छोडने नहीं चाहता हूं मेरे को भी आप अपने धाम को लेजाओ ॥ ४३ ॥

हे कृष्ण ! आप का क्रीडा चरित्र मनुष्यों को परम मङ्गल कारक है उस चरित्र रूपकर्णो के अमृत को प्राप्त हो ने से मनुष्य और मनोरथों को छोड देते हैं ॥ ४४ ॥

शयन बैठना चलना स्नान क्रीडा भोजन इत्यादि कों में आप के सङ्ग रहने वाले प्रिय भक्त हम लोग आप आत्मा अंतर्यामी को कैसे छोड सके हैं ॥ ४५ ॥

आप के भोगे हुये फूलमाला वस्त्र अलङ्कार इनों से भूषित होकर आप के उच्छिष्ट प्रसाद को पाकर हम लोग आप के दास आप की माया को जीत जाते हैं ॥४६॥

दिगम्बर परिश्रम वाले सन्यासी औ ऊर्ध्वरेता ऋषि जन निर्मल मन वाले शान्त पुरुष आप के ब्रह्मनामक धाम को जाते हैं ॥ ४७ ॥

हे महायोगि ! हम लोग तो इहां कर्म मार्गों में भ्रमते हुये हैं तौ भी आप के भक्तों के सङ्ग में आप का चरित्र कथन करने से संसार को तर जावैंगे ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

क्ष्वेली परिहासः इङ्गितकरणम् ॥ ४९

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकान्तिनमित्यादि । स्वाभिप्रायावगमे हेतुः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षष्ठोऽध्यायः ॥ ६ ॥

श्रीमद्राधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

सम्यक् निष्कैतवतयाऽभाषत ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
षष्ठोऽध्यायः ॥ ६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
षष्ठोऽध्यायः ॥ ६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कथं भूताः सन्तस्तव कृतानि चेष्टितानि गदितानि सूनृतानि स्मितेः परिहासः गत्यादीनां दुर्ज्ञेयत्वज्ञावः तथ नृलोकविडम्बनं मनुष्यचेष्टानुकरणं तच स्मरन्तः स्मारयन्तश्च तारिष्याम इति पूर्वेणा सम्बन्धः ॥ ४९ ॥

हे राजन्नेकान्तिनमनन्यदेवतमत एव प्रियं भृत्यं चोद्धवं समभाषत ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
षष्ठोऽध्यायः ॥ ६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गत्युत्स्मितेक्षणक्ष्वेलि यन्नृलोकविडम्बनं तानि च तच्च स्मरन्तः उत्पन्नतत्त्वज्ञानोऽप्युद्धवो भ्रमन्न इत्यात्मनोऽक्षमतां वक्तीति वत्साधूनां स्वभाव इति प्रदर्शनाय "आत्मनोऽक्षमतां ब्रूयुरुत्तमा अपि सर्वदा । कदाचिदेनं स्वगुणान् हिनस्त्येवेह साधव" इति वचनादुक्तं युक्तमिति ॥ ४९ ॥

एकः श्रीहरिरेव सर्वोत्तम इति भावो यस्य स एकान्तिनं मुख्यप्रियमिति वा "एके मुख्यान्यकेवला" इत्यभिधानम् ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
षष्ठोऽध्यायः ॥ ६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
षष्ठोऽध्यायः ॥ ६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एकान्तिनमित्यादिकं स्वाभिप्रायावगमे हेतुः ॥ ५० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशस्य षष्ठोऽयं सङ्गतः सङ्गतः सताम् ॥ ६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गत्यादीनां दुर्ज्ञेयत्वं क्ष्वेली परिहासः कृतादीनि स्मरन्तः कीर्तयन्तश्च सन्तः तमस्तरिष्याम इति पूर्वेणान्वयः । एवं भक्त्युपाये सिद्धेऽपि भगवत्संगस्तु दुस्त्यज एवेति भावः ॥ ४९—५० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षष्ठाध्यायार्थप्रकाशः ॥ ६ ॥

भाषा टीका ।

आप के किये हुये कहे हुये चरित्रों को स्मरण करके कीर्तन कर के आप की चाल मन्द हास से देखना परिहास आदिकों में जो मनुष्य नाट्य है तिसको स्मरण कर के हम लोग संसार को तर जांयेंगे ॥ ४९ ॥

श्री शुक उवाच ।

हे राजन् ! परीक्षित् इस प्रकार से प्रार्थना करने से देवकीनन्दन भगवान् एकान्ति प्रिय उद्धव भक्त के प्रति अच्छे तरह कहने लगे ॥ ५० ॥

इति श्रीमद्भागवत एकादशस्कन्ध षष्ठाऽध्याय
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्ता ॥ ६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥

—:*:—

# अथ सप्तमोऽध्यायः ।

———*:———

श्रीभगवानुवाच ॥

यदात्थ मां महाभाग ! तच्चिकीर्षितमेव मे ।
ब्रह्मा भवो लोकपालाः स्वर्वासं मेऽभिकाङ्क्षिणः ॥ १ ॥
मया निष्पादितं ह्यत्र देवकार्यमशेषतः ।
यदर्थमवतीर्णोऽहमंशेन ब्रह्मणाऽर्थितः ॥ २ ॥
कुलं वै शापनिर्दग्धं नङ्क्ष्यत्यन्योऽन्यविग्रहात् ।
समुद्रः सप्तमेऽह्न्येतां पुरीं च प्लावयिष्यति ॥ ३ ॥
यर्ह्येवायं मया त्यक्तो लोकोऽयं नष्टमङ्गलः ।
भविष्यत्यचिरात्साधो ! कलिनाऽपि निराकृतः ॥ ४ ॥
न वस्तव्यं त्वयैवेह मया त्यक्ते महीतले ।
जनोऽधर्मरुचिर्भद्र ! भविष्यति कलौ युगे ॥ ५ ॥
त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धुषु ।
मय्यावेश्य मनः सम्यक् समदृग्विचरस्व गाम् ॥ ६ ॥
यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ।
नश्वरं गृह्यमाणं च विद्धि मायामनोमयम् ॥ ७ ॥
पुंसोऽयुक्तस्य नानाऽर्थो भ्रमः स गुणदोषभाक् ।
कर्माकर्मविकर्मेति गुणदोषधियो भिदा ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सप्तमे तूद्धवस्यात्मज्ञानाय हरिः स्वयम् ।
अवधूतेतिहासोक्तगुरुष्वष्टाववर्णयत् ॥

यदात्थ संहृत्यैतत्कुलमिति स्वर्वासं वैकुण्ठवासं प्रति ॥१॥२॥

त्वं च सर्वत्यागेनाश्रमनिष्ठो भवेति वक्तुमाह । कुलमिति त्रयेण ॥ ३ ॥

तदैवायं नष्टमङ्गलो भविष्यति निराकृतो नितरामाक्रान्तः ॥४॥

न वस्तव्यमेव त्वया ॥ ५—६ ॥

ननु गुणदोषात्मके विषमे लोके कुतः समदृष्टिः स्यामत आह । यदिदमिति । मनआदिभिर्गृह्यमाणं मनोमयत्वान्मायेति विद्धि तदपि न स्थिरं किंतु नश्वरं विद्धि ॥ ७ ॥

मनोमयत्वे हेतुः । पुंस इति । विक्षिप्तमनसः नानार्थो भेदविषयो भ्रमः स भ्रम एव गुणदोषभाक् ननु वेदेनैव विधिनिषेधाभ्यां भेदस्य सत्यतोक्ता न भ्रमविजृम्भितगुणदोषवत्त्वं: कर्म विहितम् अकर्म तल्लोपः विकर्म निषिद्धमिति भेदः भ्रान्त्यावच्छिन्न एव वेद इत्यर्थः ॥ ८ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

[illegible] स्वर्यामि तव नयनं वारय ॥ १ ॥
अंशेन बलदेवेन सह ॥ २ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

शापनिर्दग्धमित्यनुकरणाभिप्रायेण वस्तुतस्तु शापेऽपि निर्गतं दग्धं दाहो यस्मात्तादृशं सत् नङ्क्ष्यति प्राकृतलोकानाम- दर्शनमेव प्राप्स्यतीत्यर्थः । प्लावयिष्यति समुद्रः स्वदत्तभूमौ चतु- र्दिक्षु धावयिष्यति नतु मध्येऽपि "वज्रांविरथा महाराज ! श्रीमद्भग- वदालय"मिति वक्ष्यमाणत्वात् ॥ ३ ॥

यर्ह्येव त्यक्तस्तदैवेत्यन्वयः ॥ ४ ॥

नवस्तव्यमेवेति । एकत्र स्थानं बद्ध्वा न स्थेयमित्यर्थः । समदृग्विचरस्व गामित्युक्तेः ॥ ५ ॥

यद्यपि नोद्धवोऽल्पवपि मन्न्यूनो यद्गुणैर्नोर्हित इति भगवदुक्ते- रुद्धवस्य सिद्धत्वेनोपदेश्यत्वं न सम्भवति तथापि तन्मतादर- णाय तमुपदिश्य ज्ञानयोग्यान् प्रत्याह । त्वमित्यादि सप्तभिः । समं ब्रह्मैव पश्यतीति तथाभूतः सन् ॥ ६ ॥

मनोमात्रविलासितत्वात् मायेति मिथ्येति विद्धि तदपि मिथ्याभूतमपि ॥ ७ ॥

अयुक्तस्य पुंसः नानाभेदो विषयो यस्य तथाभूतो भ्रमो भवति स भ्रम एव गुणदोषबुद्धिहेतुर्भवतीत्यन्वयः । नेति समाधानं भ्रान्ति भ्रमेण विजृम्भिता प्रकाशिता गुणदोषबुद्धिर्यस्य तस्यैव अविद्याऽनात्मनि आत्मबुद्धिस्तन्निमित्तोऽज्ञा विषया अधिकारिणो यस्य तथाभूत एव विधिनिषेधलक्षणो वेदः नतु स्वरूपज्ञविषयः "त्रैगुण्य- विषया वेदा निस्त्रैगुण्यो भवार्जुने"ति श्रीभगवदुक्तेः ॥ ८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—५
गां भूमिम् ॥ ६ ॥
मायामनोमयं मायाशब्देन गुणाः उच्यन्ते गुणत्रयमनो ग्राह्यं न विद्धि मनोग्राह्यम् आत्मस्वरूपमेव तथा विधमित्यर्थः ॥ ७ ॥
अयुक्तस्य इति पद नानार्थो भ्रमः नानाविधदेहविषयभ्रमः सगुणदोषकृत् पुण्यपापहेतुरित्यर्थः । तदेवोपपादयति । कर्मेति । कर्म काम्यं विकर्म पापम् उभयमपि दोषः अकर्म निष्कामकर्म स गुण इत्यर्थः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भावमेवाह । यदित्यादिना । हे महाभाग ! मां प्रति यदात्थ संहृत्यैतत्कुलं नूनं लोकं सन्त्यक्ष्यते भवानिति तन्मे चिकीर्षित- मेव तथा ब्रह्मा भवो रुद्रः लोकपालाश्च मम वैकुण्ठवासं श्री- वैकुण्ठनाथसमाभिकाङ्क्षिणः अभिकाङ्क्षन्त इत्यर्थः ॥ १ ॥

मन्त्रवतारप्रयोजनमनिष्पाद्य कथं गमिष्यसीत्यत आह । मयेति । किन्तद्देवकार्यमित्यत आह । यदर्थमिति । ब्रह्मणाऽर्थितः प्रार्थितोऽ हमंशेन बलभद्रेण सह यदर्थमवतीर्णः तद्भूभारहरणात्मकमिति भावः ॥ २ ॥

नन्वत्र भागोऽवशिष्टः कुलसंहारात्मकस्य यदुकुलस्यावशिष्ट- त्वादित्यत आह कुलमिति । आपैव नितरां दुग्धप्रायमन्योऽ- न्यकलहादिरवशेषं नङ्क्ष्यति वै निश्चितं तर्हि पुरीं कः पालयि- ष्यतीत्यत आह । समुद्र इति । न कोऽपि पालयिष्यति किन्तु मदारभ्य सप्तमेऽह्नि एतां द्वारकां पुरीं समुद्रः प्लावयिष्यति नाश- यिष्यतीत्यर्थः ॥ ३ ॥

त्वया त्विह न स्थातव्यमिति वक्तुमाह । यर्हीति । यर्ह्येवायं लोको मया त्यक्तः तदैवाचिरादेव नष्टमङ्गलः हे साधो ! कलिना निरा- कृतः अभिभूतश्च भविष्यति ॥ ४ ॥

अतो मया त्यक्ते इहास्मिन्महीतले त्वया न वस्तव्यं न स्थातव्यं हे भद्र ! अधर्मे रुचिर्यस्य तथा भूतो भविष्यति अतोऽपीह न वस्त- व्यमित्यभिप्रायः ॥ ५ ॥

तर्हि किं विधेयं क गन्तव्यमित्यत आह । त्वमिति । सर्वं शब्दादिविषयं स्वजनेषु बन्धुषु स्नेहं च त्यक्त्वा मनो मयीश्वरे सम्यक् निवेश्य समदृक् सर्वस्य ब्रह्मात्मकत्वानुसन्धानरूपसम- दृष्टिमान् गां भूमिं विचरस्व ॥ ६ ॥

सर्वं परित्यज्येति शब्दादिविषयत्याग उक्तः वैराग्यमन्तरेण त्यागासम्भवात्तत्र वैराग्यजननार्थं तेषां नश्वरत्वं प्रकृतिगुणत्रय- मानसानामेव सुखकरत्वं चाह । यदिदमिति । यन्मनआदि- भिर्गृह्यमाणं तदिदं सर्वं नश्वरं मायामनोमयं च विद्धीति अन्वयः मायाशब्देन तद्गुणत्रयं लक्ष्यते माया- गुणत्रयं यन्मनः तत मागतं "तत आगत इत्यधिकारे मयट्च" इति मयट् प्रकृतिगुणत्रयमनोजन्यमेव विषयसुखं गुणत्रयमानसा- नामेव तद्रोचते नतु विशुद्धमानसानामित्यर्थः ॥ ७ ॥

समदृग्विचरस्वेत्युक्तं ननु देवमनुष्यतिर्यक्पादपादिभेदभिन्न- तया प्रतीयमानेषु वस्तुषु भिन्नैव दृष्टिः स्यात्तत्कथमेकरूपेत्यत आह । पुंस इति । अयुक्तस्य सर्वान्तरात्मनि सर्वशरीरके मयि चित्त- मयुञ्जतः पुंसः नानार्थः नाना अर्था यस्य सः यो नानार्थविषयः भ्रमः स भ्रमरूपः तत्तद्ब्रह्मात्मकत्वतन्त्रवस्तुविषया प्रतीतिर्भ्र- मरूपेत्यर्थः । सर्वान्तरात्मनि मयि चित्तं युञ्जतस्तु मदात्मकत्वेनै- करूपा या प्रतीतिः सा तु अभिन्नरूपेति भावः । अस्तु नानार्थो भ्रमः ततः किमत आह । गुणदोषभागिति यस्य पुंसो भ्रमः स गुणदो- षभाक् सुखदुःखभाक् पुण्यापुण्यभाग्वा गुणदोषकृदितिपाठे स भ्रमो गुणदोषकृत्सुखदुःखकृदित्यर्थः । किं भ्रमः स्वरूपेणैव गुणदोषावह इत्यत आह । कर्मेति । यस्य कर्माकर्मविकर्मेति त्रिविधो भेदः तस्य द्विधा गुणदोषौ विषमौ गुणदोषभिद इति पाठे कर्मादयस्तदनु- वृत्तिप्रयुक्तसुखदुःखहेतुरित्यर्थः । कर्मावश्यं कर्तव्यं नित्यं नैमित्तिकञ्च अकर्म अकर्तव्यं प्रतिषिद्धमित्यर्थः । विकर्म विविधफलाय चोदितं काम्यं कर्म अयमर्थः स्वतन्त्र- वस्तुभ्रमवतस्तत्र भ्रमतोऽज्ञस्य पुंसः विधिनिषेधशास्त्रात्मकवेद- निवन्धनदृष्टिपता तदनुष्ठानानुष्ठानाभ्यां सुखदुःखे च भ्रमस्य शास्त्रवश्यतापादनद्वारा गुणदोषकृत्त्वं न स्वरूपेणापि नचैतावता ब्रह्मविदां शास्त्रातिलङ्घनं न दोषायेति मन्तव्यं तेषामपि निश्चितं स्वतन्त्रवस्तु प्रतीतिभ्रमाभावेऽपि कर्माचरणानुष्ठानदर्शनात्तत्र प्रयुक्तशास्त्रवश्यतावर्जनीयत्वात् ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ऽन्योऽन्यो द्वितीयः तत्र पूर्व एव त्वया त्यक्तुं शक्यः स एव मया त्यागे विधीयते नतूत्तरः त्वदशक्यत्वाद्विगीतत्वाच्चेति भगवदाशय उद्धवेन ज्ञायत एव ॥ ४—६ ॥

ननु कीदृशं समदृक्त्वन्तत्राह । यदिदमिति । मनआदि-भिर्गृह्यमाणं यदिदं पृथिव्यादिकं वर्त्तते तत्सर्वं जागरे मायामयं मायाकल्पितत्वांशेन तुल्यमेव स्वप्ने मनोमयं मनःकल्पि-तत्वांशे सर्वतुल्यमेव ॥ ७ ॥

उक्तमेवार्थं प्रपञ्चयति । पुंस इति । नानार्थो नानाविधोऽर्थो यो गुणदोषभाक् अयमर्थो गुणं भजत इत्युत्कृष्टः अयमर्थो दोषं भजत इति निकृष्टः पुंसोऽयुक्तस्याज्ञानिनो भ्रमः भ्रमप्रतीत इत्यर्थः । गुणप्रवाहपतितानां कोवार्थ उत्कृष्टः को वा निकृष्टस्तेषां वा क उत्कर्षः को निकर्षः यदुक्तं चित्रकेतुना "गुणप्रवाह एतस्मिन् कः शापः को न्वनुग्रहः । कः स्वर्गो नरकः को वा किं सुखं दुःखमेव वेति ननु वेदेनैव विधिनिषेधाभ्यां गुणदोषावुक्तौ सत्यं वेदोऽप्य-विद्यावद्विषय एवेत्याह । कर्म विहितम् अकर्म तल्लोपः विकर्म निषिद्धमिति भिदा भेदो गुणदोषधियां गुणदोषबोधन-र्थायैव तस्याज्ञानिन एवोक्तेत्यर्थः ॥ ८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नाहं तवाङ्घ्रिकमलं क्षणार्द्धमपि केशव त्यक्तुं समुत्सहे नाथेत्यादिनाऽऽदिनमुक्तं प्रत्याह्यन्तध्यायेऽध्यायान्तरे संक्षेपतः सं-सारोद्वेगं स्वभक्तिमात्मज्ञानं तद्दाढ्यार्थं यदुभयभूतसंवादरूपेषु चतुर्विंशद्गुरुषु अष्टगुरूंश्चाह श्रीभगवान् । यदात्थेति । संहृत्यैतं-त्कुलं नूनं लोकं सन्त्यक्ष्यते भवानिति यदात्थ तन्मे चिकीर्षितं कर्त्तुमिष्टमेव ब्रह्मादयोऽपि मे स्वधामे ये स्वर्गे लोकेऽमृतत्वं भजन्ते इति श्रुत्युक्तपरमधामवासं प्रति अभिकाङ्क्षिणः आकाङ्क्षा-वन्तः सन्ति ॥ १ ॥

अहमपि स्वधाम गन्तुं प्रार्थितसुरोऽस्मीत्याह । मयेति । अंशेन बलेन सह ॥ २ ॥

त्वं च सर्वतो विरक्तो भूत्वा मद्भक्तिनिष्ठो भवेति वक्तुमाह । कुलमिति श्लोकत्रयेण ॥ ३ ॥

यर्हि मया त्यक्तो भविष्यति तर्ह्येवायं लोको नष्टमङ्गलो भवि-ष्यति अत एव कलिना निरवशाक्रान्तो भविष्यति ॥ ४ ॥

हेभद्र ! इह गृहे त्वया नैव वस्तव्यम् ॥ ५ ॥

सर्वं परित्यज्य त्यक्तेष्वपि स्नेहं च परित्यज्य सम्यङ्मयि मनः आवेश्य समदृक् सन् गां पृथिवीं विचरस्व ॥ ६ ॥

सर्वपरित्यागे त्याज्यस्य दोषः भगवति मनःसमावेशने भग-वद्गुणश्चापेक्षितः समदृक्त्वे सर्वस्यैकात्मकत्वं चापेक्षितमतो भगवान् स्वस्य सर्वहेतुत्वेन गुणं सर्वस्य नश्वरत्वेन दोषं सर्वस्य स्वशक्तिरूपमायाकार्यत्वेनैकात्मकत्वञ्चाह । यदिदमिति । इदं मन-आदिभिर्गृह्यमाणं जगत् नश्वरं क्षणभङ्गुरं विद्धि यद्यतो मायो-मनोमयं मायामेककमनःप्रधानं जगदुपादानरूपायाः मम शक्तेः प्रेरकेण मम मनसा जगन्निर्माणे प्रधानभूतेन रचितमित्यर्थः । सर्व-स्य जगतो ह्यनित्यत्वात् तत्र विरक्तः सन् मम मायाकार्यत्वेन सर्वं मत्वा समदृक् सर्वहेतुत्वेन सर्वेश्वरं मां जानन् मद्भक्तः सन् पृथ्वीं विचरस्वेति फलितोऽर्थः ॥ ७ ॥

ननु गां पर्यटतो मम विहितकर्मलोपः स्यादित्याह । पुंस इति । अयुक्तस्य अविवेकिनः जगत्कारणज्ञानभक्तिरहितस्य नानार्थः संसारः भ्रमः स्वाभयोऽन्याभयो वेत्यादिभ्रमविषयो भवति अतः स पुमान् गुणदोषभाग्भवति अत एव तस्य गुणदोषधियः पुंसः कर्माकर्मविकर्मेति भिदो भवन्ति अविवेकासिद्ध्यर्थं विहितं कर्मा-नुष्ठेयमेवाकर्मविहितलोपो नैव कर्तव्यो विकर्म निषिद्धाचरणं नैवकर्तव्यमित्यर्थः । विहितमनुष्ठेयं निषिद्धं दूरतो हेयमेवेति सिद्धान्तः ॥ ८ ॥

———

भाषा टीका ।

श्री भगवानुवाच ।

हे महाभागी उद्धव जी तुमने जो बात हम से कही है सो तो हमारी करने की इच्छा है ही है ब्रह्मा महादेव और सब लोकपाल मेरा वैकुण्ठ में वास करना चाहते हैं ॥ १ ॥

मैंने यहां का सब देवतों का कार्य्य कर दिया है जिस के वास्ते ब्रह्मा के प्रार्थना करने से अंश बलदेवजी सहित हम अवतीर्ण भये हैं ॥ २ ॥

यह कुल शाप से दग्ध होकर परस्पर के वैर से नष्ट हो जावेगा और आज से सात में दिन इस पुरी को समुद्र डुबाय देगा ॥ ३ ॥

मेरे न रहने से इस लोक का मङ्गल नष्ट होजायगा जब तबही हे साधु उद्धव कलियुग भी इस लोक के मनु-ष्यों को हत भागी कर देगा ॥ ४ ॥

मै जब इस महीतल को त्याग देऊंगा तब तुम यहां नहीं रहना हे भद्र यहां के लोग सब अधर्म में रुचि करेगा ऐसा कलियुग का धर्म है ॥ ५ ॥

तुम तो अपने स्वजन बन्धुओं में सब स्नेह को छोड़ अच्छी तरह मेरे में मन लगा कर समदृष्टि होकर पृथिवी में विचरो ॥ ६ ॥

जो यह संसार में मन से वचन से नेत्रों से कर्णों से ग्रहण किया जाता है सो सब नश्वर अनित्य है इसको मनो मय भगन्माया रचित जानो ॥ ७ ॥

अज्ञानी पुरुष का नाना पदार्थों में मन का भ्रम रहता है उसी से गुण और दोष देखा जाता है गुण दोष की बुद्धि ही से कर्म अकर्म विकर्म एगुणों के भेद भी यथा धिकार माने जाते हैं और किये जाते हैं ॥ ८ ॥

———

तस्माद्युक्तेन्द्रियग्रामो युक्तचित्त इदं जगत् ।
आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे ॥ ९ ॥
ज्ञानविज्ञानसंयुक्त आत्मभूतः शरीरिणाम् ।
आत्मानुभवतुष्टात्मा नान्तरायैर्विहन्यसे ॥ १० ॥
दोषबुद्ध्योभयातीतो निषेधान्न निवर्तते ।
गुणबुद्ध्या च विहितं न करोति यथाऽर्भकः ॥ ११ ॥
सर्वभूतसुहृच्छान्तो ज्ञानविज्ञाननिश्चयः ।
पश्यन्मदात्मकं विश्वं न विपद्येत वै पुनः ॥ १२ ॥

श्रीशुक उवाच ।

इत्यादिष्टो भगवता महाभागवतो नृप ! ।
उद्धवः प्रणिपत्याह तत्त्वजिज्ञासुरच्युतम् ॥ १३ ॥

उद्धव उवाच ।

योगेश ! योगविन्यास ! योगात्मन् ! योगसम्भव ! ।
निःश्रेयसाय मे प्रोक्तस्त्यागः संन्यासलक्षणः ॥ १४ ॥
त्यागोऽयं दुष्करो भूमन् ! कामानां विषयात्मभिः ।
सुतरां त्वयि सर्वात्मन्नभक्तैरिति मे मतिः ॥ १५ ॥
सोऽहं ममाहमिति मूढमतिर्विगाढस्त्वन्मायया विरचितात्मनि सानुबन्धे ।
तत्त्वञ्जसा निगदितं भवता यथाहं संसाधयामि भगवन्ननुशाधि भृत्यम् ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कथमात्मनि परिच्छिन्ने विततं जगदीक्षणीयं तत्राऽऽह । आत्मानमिति । मयि प्रत्यक्षि तद्रूपेणेक्षस्व ॥ ९ ॥

नन्वेवं युक्तचित्तस्येन कर्माकरणे देव द्यो विघ्नान् करिष्यन्ति तत्राऽऽह । ज्ञानेति । ज्ञानं वेदनात्पर्यनिश्चयो विज्ञानं तदर्थानुभवस्ताभ्यां सम्यग्युक्तस्तत आत्मानुभवेनैव तुष्टचित्तोऽतः शरीरिणां देवादीनामात्मभूतोऽन्तरायैर्न प्रति हन्यसे अयं भावः यावदनुभवं यथाश्रमं कर्माणि कुर्वीरेव तदनन्तरं सर्वेषामात्मभूतत्वान्न कोऽपि विघ्नमाचरति तथा च श्रुतिः"तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां स भवती"ति ॥ १० ॥

तत्त्वोत्पन्नज्ञानस्यापि यथेष्टाचरणप्रसङ्ग इत्याह । दोषबुद्ध्येति । गुणदोषबुद्ध्यतीतोऽपि प्राक्तनसंस्कारान्निषेधान्निवर्तत एव किन्तु न दोषबुद्ध्याविहितं च प्रायशः करोति न गुणबुद्ध्या यथाऽर्भकः सङ्कल्पविकल्परहितः किञ्चित्करोति कुतश्चिन्निवर्तते तद्वत् ॥ ११ ॥

एवं भूतस्य न पुनः संसार इत्याह । सर्वभूतेति । न विपद्येत न पुनः संसरेत् ॥ १२ ॥ १३ ॥

त्वं तु सर्वं परित्यज्येत्युपदेशमात्मनोऽयोग्यं मन्वानः पृच्छति योगेशेति । योगफलदायिन् योगविदां न्यासो नामातिनीत्यो निक्षेपविशेषः यद्वा योगो विन्यस्यते क्रियते यस्मिन् योगात्मन्योगे आत्मा प्रकटो भवति यस्य योगस्वरूपेति वा योगस्य सम्भवो यस्मात् चतुर्भिरेतैः सम्बोधनैः स्वमहिम्ना केवलं त्वयोपदिष्टं न तु मदधिकारं पर्यालोच्येति द्योतितम् तदाह । निःश्रेयसायेति । तत्त्यागो यादृशं सर्वस्यदानादिवद्वा त्यागः किन्तु संन्यासलक्षणोऽप्रत्यावृत्तिरूपः ॥ १४—१५ ॥

यं प्रति त्यागाद्युपदिष्टं सोऽहं मूढमतिः कुतः ममेत्यहमिति च सानुबन्धे पुत्रादिसहिते त्वन्मायया विरचिते आत्मनि देहे विगाढो निमग्नोऽतस्तत्तु भवता निगदितं यथाहमञ्जसा संसाधयामि तथा भृत्यं मामनुशाधि शनैः शिक्षय ॥ १६ ॥



---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

यस्माद्युक्तत्वेन भ्रमस्तस्मात् आत्मनि त्वंप दं तद्रूपेण ब्रह्मरूपेण जहदजहल्लक्षणयेति शेषः ।'

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ज्ञानेत्यत्राप्यं ग्रह ॥ १०—१२ ॥

श्रीमानुद्धवोऽपि महाभागवतत्वात् श्रीभगवतस्तथोपदेशगौर-वेण तत्त्वं जिज्ञासुरिव श्रीभगवता स्वत्यागात्स्वावोग्यनातिशयम-नेन तत्राप्यानितिकृष्ट इव सदैन्यमाहेत्याह । इतीत्यादिभिः ॥ १३ ॥

तथैव तस्य वाक्यं दर्शयति । योगेशेति त्रिभिः ॥ १४—१७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्माद्युक्तेन्द्रियग्रामः निरुद्धेन्द्रियवृन्दः निरुद्धचित्तः सन् इदं सुखदुःखमयं जगत् आत्मनि भोक्तरि जीवे भोग्यत्वेन स्थितं पश्य तं च भोक्तारमात्मानं मय्यधीश्वरे परमात्मनि नियन्तरि नियम्यत्वेन स्थितमीक्षस्व ॥ ९ ॥

नन्वेवं युक्तचित्तत्वेन कर्माकरणे देवादयो विघ्नान् करिष्यन्ति तत्राह । ज्ञानेति । ज्ञानं वेदतात्पर्यनिश्चयः विज्ञानं तदर्थानुभवः ताभ्यां सम्यक् युक्तः तत आत्मानुभवेनैव तुष्टचित्तः ततश्च शरीरिणां देवादीनामप्यात्मभूतः प्रीतिपात्रीभूतः यथाः तथाच श्रुतिः "आत्मा ह्येषां स भवती"ति ततश्च नैव ते विघ्नान् कुर्वीरिति भावः ॥ १० ॥

किञ्चोत्पन्नज्ञानोऽपि न यथेष्टाचरणो भवतीत्याह । दोषेति । गुणदोषबुद्ध्यतीतोऽपि ज्ञानी प्राक्तनसंस्कारतो निषेधान्निवर्त्तत एव किन्तु न दोषबुद्ध्या विहितञ्च प्रायशः करोति न तु गुणबुद्ध्या यथाऽर्भकः सङ्कल्पविकल्परहितः किञ्चित् करोति कुतश्चिन्निवर्त्तते च तद्वदिति ॥ ११-१२-१३ ॥

हे योगेश ! योगानां कर्मयोगज्ञानयोगभक्तियोगानामीश्वर अतएव योगविन्यास ! अनधिकारिण्यपि मयि योगं ज्ञानं सम्प्रति स्वप्रभावादेव विन्यस्यसीत्यर्थः । योगात्मन् ! हे योगस्वरूप यदि त्वं मया प्राप्तस्तर्हि सर्वे योगाः प्राप्ता एवेति भावः । किञ्च योगाद्भक्तियोगादेव त्वं सम्भवसि भक्तेष्वाविर्भवसीति मह्यं भक्तियोगो विशेषतो देय इति भावः ॥ १४ ॥

विषयात्मभिर्विषयाविष्टचित्तैस्त्वद्भक्तैरपि दुष्करः अभक्तैस्तु सुतराम् ॥ १५ ॥

स च विषयाविष्टचित्तोऽहमेव यतस्त्वन्मायया विरचिते आत्मनि देहे सानुबन्धे पुत्रकलत्रादिसहिते विगाढो निमग्न इति देहस्यान्धकूपत्वमारोपितं तेन तदावेशत्याजनमेव तस्मादुद्धारः प्रथमं कार्यस्तदनन्तरमेव ज्ञानाद्युपदेश इति ध्वनिः तत्तस्मात् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु अयुक्तस्य गुणदोषधियः प्राचह्यकतया कर्मण्यधिकारोऽस्तु मया किं कर्त्तव्यं तत्राह । तस्मादिति द्वाभ्याम् । ज्ञानभक्तिहीनः गुणदोषभाक् भवति अतस्तस्यावश्यकतया कर्मण्यधिकारः भवांस्तु मज्ज्ञानभक्तियुक्तः तस्माद्युक्तो युक्तेन्द्रियग्रामः नियमितेन्द्रियसमूहः युक्तचित्तः नियमितेन्द्रियनायकः आत्मनि जगदात्मनि अधीश्वरे चेतनाचेतननियन्तरि मयि विततं जगत् आत्मानं च ईक्षस्व ॥ ९ ॥

एवं ज्ञानविज्ञानसंयुक्तः समानातिशयशून्यसर्वशक्तिसर्वैश्वर्याद्विनीयविषयं ज्ञानं चिदचिद्ब्रह्मस्वरूपभेदविषयं विविधं ज्ञानं विज्ञानं ताभ्यां सम्यक् युतः शरीरिणाम् आत्मभूतः आत्मवत्प्रेष्ठः अनुभवेन तुष्टः सन्तुष्टः आत्मा मनो यस्य सः अन्तरायैर्विघ्नैर्न विहन्यसे ॥ १० ॥

ननु ज्ञानभक्तिसम्पन्नः समदृक् विधिनिषेधशास्त्रमवधूनयति किं नेत्याह । दोषबुद्ध्येति । उभयातीतः गुणदोषबुद्धिवर्जितः समदृक् दोषबुद्ध्या निषेधान्न निवर्तते अर्थादभ्यासान्निवर्तत एव विहितं च गुणबुद्ध्या न करोति अर्थादभ्यासादेव करोति यथा अर्भकः दोषबुद्ध्या चाण्डालादिभ्यो न निवर्तते किन्तु तत्सङ्गाभ्यासान्निवर्तत एव बन्धुषु च गुणबुद्ध्या न प्रविशति किन्तु अभ्यासात्तेषु प्रविशत्येव तद्वत् ॥ ११ ॥

पुनर्न विपद्येत जन्ममरणे न भजेत् ॥ १२ ॥

तत्त्वजिज्ञासुः संक्षेपतः श्रुतं भगवत्तत्त्वं विस्तरतः पुनस्तदेव सपरिकरं ज्ञातुमिच्छुः अच्युतं नित्यमूर्तिं श्रीकृष्णं प्राह ॥ १३ ॥

योगानां ज्ञानभक्तिवैराग्याणामीश फलद योगाः विन्यस्यन्ते समर्प्यन्ते यस्मिन् हे योगनिधान ! योगाः आत्मानः प्रियतमाः यस्य हे योगप्रिय योगानां सम्भवो यस्मात् हे योगप्रवर्त्तक योगानां फलदेन निधानेन योगस्नेहिना प्रवर्त्तकेन च भवता मे मम निःश्रेयसाय सेन्यासलक्षणः सम्यक् सर्वविसर्जनरूपस्त्यागः त्वं तु सर्वं परित्यज्य इत्यादिना प्रोक्तः यद्यपि मय्यावेश्य मनः सम्यगित्यनेन भक्तियोगः तस्माद्युक्तेन्द्रियग्राम इत्यादिना ज्ञानयोगश्च प्रोक्तस्तथापि त्यागो दुष्कर इति वक्तुं निःश्रेयसाय मे प्रोक्तस्त्याग इत्युक्तम् ॥ १४ ॥

काम्यन्ते इति कामाः गृहादिपदार्थाः विषयेषु आत्मा मनो येषां तैः ॥ १५ ॥

यं प्रति त्यागाद्युपदिष्टं सोऽहं ममेति अहमिति च मूढमतिः सानुबन्धे देहगेहादिसहिते त्वन्मायया त्वच्छक्त्या प्रकृत्या रचितः आत्मा स्वरूपं यस्य तस्मिन् संसारे गाढो निमग्नः तत्त्यागादिकं भवता निगदितं यथा अञ्जसा सुखेन संसाधयामि तथा भृत्यं मां संशाधि सम्यक् शिक्षय ॥ १६ ॥

---

भाषा टीका ।

तिससे संपूर्ण इन्द्रिय समूह को असद्विषय से रोककर चित्तको एकाग्र करके इस सब जगत् को आत्मा में स्थित आत्मा के अधीन देखो और ज्ञान व्याप्ति से व्याप्त सूक्ष्म आत्मा को अधीश्वर मेरे अधीन देखो ॥ ९ ॥

शास्त्र ज्ञान अनुभव ज्ञान इन दोनों से युक्त होकर सब देहधारियों के सुहृद आत्मा होकर परमात्मा के अनुभव ही से यदि सन्तुष्ट रहोगे तो कोई संसार के विघ्न तुमको नहीं लगेंगे ॥ १० ॥

जो पुरुष गुण दोष की दृष्टि से रहित है सो भी दोष की शंका से निषिद्ध कर्मों से नहीं निवृत्त होता है और न गुण की बुद्धि से विहित कर्मों में प्रवृत्त होता है

सत्यस्य ते स्वदृश आत्मन आत्मनोऽन्यं वक्तारमीश ! विबुधेष्वपि नानुचक्षे ।
सर्वे विमोहितधियस्तव माययेमे ब्रह्मादयस्तनुभृतो बहिरर्थभावाः ॥ १७ ॥
( यावत्पदाब्जरसिकैर्नहि सङ्गता ये तद्युक्तिभिर्विमृशतामपि नापयाति ।
सत्सङ्गमो गृहजुषामपि दम्पतीनां तत्रात्मनां खलु नृणां हतरंहसां स्यात् ॥ ० ॥)
तस्माद्भवन्तमनवद्यमनन्तपारं सर्वज्ञमीश्वरमकुण्ठविकुण्ठधिष्ण्यम् ।
निर्विण्णधीरहमुह वृजिनाभितप्तो नारायणं नरसखं शरणं प्रपद्ये ॥ १८ ॥

श्रीभगवानुवाच ।

प्रायेण मनुजा लोके लोकतत्त्वविचक्षणाः ।
समुद्धरन्ति ह्यात्मानमात्मनैवाशुभाशयात् ॥ १९ ॥
आत्मनो गुरुरात्मैव पुरुषस्य विशेषतः ।
यत्प्रत्यक्षानुमानाभ्यां श्रेयोऽसावनुविन्दते ॥ २० ॥
पुरुषत्वे च मां धीराः सांख्ययोगविशारदाः ।
आविस्तरां प्रपश्यन्ति सर्वशक्त्युपबृंहितम् ॥ २१ ॥
एकद्वित्रिचतुष्पादो बहुपादस्तथापदः ।
बह्व्यः सन्ति पुरः सृष्टास्तासां मे पौरुषी प्रिया ॥ २२ ॥
अत्र मां मृगयन्त्यद्धा युक्ता हेतुभिरीश्वरम् ।
गृह्यमाणैर्गुणैर्लिङ्गैरग्राह्यमनुमानतः ॥ २३ ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अवधूतस्य सम्वादं यदोरमिततेजसः ॥ २४ ॥

---

भाषा टीका ।

किन्तु बालक की नाईं साधन दशा में किये हुवे अभ्यास ही से शुभ कर्म में ही उसकी प्रवृत्ति रहती है ॥ ११ ॥

जो सब प्राणियों का मित्र है शान्त है शास्त्रज्ञान अनुभव ज्ञान से निश्चय करने वाला है वह सब जगत् को हमारे स्वरूप देखता है तो वह फिर संसार को नहीं प्राप्त होता है ॥ १२ ॥

श्री शुक उवाच ।

हे नृप ! भगवान् के ऐसे आज्ञा देने से वे महा भागवत उद्धव जी तत्त्व के जानने की इच्छा वाले भये फिर अच्युत भगवान् को प्रणाम करके प्रश्न करने लगे ॥१३॥

हे योगदाता ! हे योगियों के परम धन ! हे योगियों के प्राण ! हे योग के पैदा करने वाले ! मेरे मोक्ष कल्याण के लिये आपने सन्यासरूपी त्याग का कथन किया है ॥ १४ ॥

हे व्यापक ! हे सर्वान्तर्यामिं विषय में मन रखने वाले पुरुषों को कामनाओं का छोडना यह त्याग बडा कठिन है और जो आप के भक्त नहीं हैं तिन को तो बहुतही कठिन है यह बात मेरे विचार में है ॥ १५ ॥

सो मैं तो बडा मूर्ख बुद्धिवाला हूं आप की माया से रचित जो देहादिक तिस के मोह में डूबा हूं तब आप के कहे हुवे उस ज्ञान मार्ग को जैसे मैं सहज में समुझ जाऊं और उस का साधन कर सकूं तैसे मुझ भृत्य को आप सिखाइये ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मया संक्षेपत उक्तं विस्तरतस्त्वमप्यनुपृच्छसि चेदत आह । सत्यस्येति । स्वदृशः स्वप्रकाशस्य सत्यस्याऽऽत्मनः आत्मनो मां प्रति वक्तारं त्वत्तोऽन्यं नानुचक्षे न पश्यामि स्वदृशः स्वतः सिद्धज्ञानात्त्वत्तोऽन्यस्मिन्नि वा कुत इत्यत आह । सर्वे इति । बहिरर्थभावा विषयेष्वर्थबुद्धयः ॥ १७ ॥

केचिद्दुःखिता भक्ताश्च केचित्सेविनाः फलकाले विनश्यन्ति केचिद्दृष्टाः केचिद्धर्मार्थेऽसमर्थाः केचित् ध्यानाद्युपायमशक्यावृत्यसंयमनत्वमित्यादीनि पञ्च विशेषणानि न अन्तः कालतः पारं देशतश्च यस्य तम् कालादिभिरकुण्ठं विकुण्ठलोको धिष्ण्यं

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्थानं यस्य तमस्तु हे भगवन् ! हे स्फुटम निर्वेदे हेतुः दुर्जनैर्दुः-खैरभिभूतः दुःकारगौरवाय दृकारो युक्त इव पठनीयः मन्द-मवद्यत्वादीनि कुतो मम तदाह । नारायणमिति । अनुकम्पितामाह-नरो जीवस्तस्य सखायं भवन्तं शरणं प्रपद्ये ॥ १८ ॥

तदेवमसम्भावनाविपरीतभावनाभ्यामुपादिष्टं तत्त्वमनवगाहमानं प्रति तन्निवृत्तये गुरूपदेशं विनाऽपि स्वान्वयव्यतिरेकाभ्यामेव तत्त्वप्रतिपत्तिर्भवतीति दर्शयितुमाह । प्रायेणेति । लोकतत्त्वस्य विचक्षणाः परीक्षकाः अशुभाशयाद्विषयवासनातः ॥ १९ ॥

तदुपपादयति । आत्मनः पश्वादिशरीरेऽप्यात्मैव हिताहित-ज्ञाने गुरुः ॥ २० ॥

तत्र प्रत्यक्षं दर्शयति । पुरुषत्वे चेति । तथाच श्रुतिः "पुरुषत्वे चाविस्तरामात्मा सहि प्रज्ञानेन सम्पन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्स-त्येवं सम्पन्नोऽथेतरेषां पशूनामशनापिपासे एवाभिविज्ञान" मिति ॥ २१ ॥

अतः पुरुषत्वं स्तौति । एकेति ॥ २२ ॥

अनुमानमाह । अत्र पौरुष्यां पुरि युक्ता अप्रमत्ता अग्राह्यं ग्राह्येभ्योऽहङ्कारादिभ्यो व्यतिरिक्तं मामञ्जसा साक्षान्मृगयन्ति मार्गेण प्रकारद्वयमाह । गृह्यमाणैर्बुद्ध्यादिभिर्गुणैर्हेतुभिः जडानां प्रकाशः स्वप्रकाशमेकं विना न घटत इत्यनुपपत्तिमुखेन चक्षुकैः तथा तैरेव लिङ्गव्याप्तिमुखेनानुमानेन ईश्वरं प्रवर्तकं मृगयन्ते बुद्ध्यादिकरणानि कर्तृप्रयोज्यानि करणत्वाद्वास्यादिव-दिति तदुक्तम् "भगवान्सर्वभूतेषु लक्षितः स्वात्मना हरिः । दृश्यै-र्बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकै" रिति नचैवातो आनुमानिक आत्मेति मन्तव्यम् देहादिव्यतिरिक्तत्वपदार्थशुद्धिमात्रस्यैवानु-मानेन विवक्षितत्वात् ॥ २३ ॥

भूयोऽन्वयव्यतिरेकाभ्यामसम्भावनादिनिवृत्तावितिहासमाह-अत्रापीति ॥ २४ ॥ २५ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

स्वत्पदयेत्यादि । षष्ठीत्रयं कर्मणि आत्मनः परमात्मनः पुन-रात्मनो मे मां प्रतीत्यर्थः द्वितीयपक्षे स्वदश इति पञ्च-म्यन्तं ते इत्यस्य विशेषणम् ॥ १७ ॥

तस्माद्ब्रह्मादीनां त्वन्मायामोहितत्वात् तदुपायदृत्वर्थं तेषां दुःखीवादीनां क्रमेण व्युदासार्थं तदाह तत्राह नारायणं नरस्य महत्स्रष्ट्रादिपुरुषसमूहस्यापि परमाश्रयं स्वयं भगवत्वात् तथापि नरो जीवस्तस्य सखायं नरमात्रानुग्रहायावतीर्णमित्यर्थः ॥ १८ ॥

उपादिष्टं तत्त्वं तदेवं पूर्वोक्तप्रकारेणासम्भावनाविपरीतभावनाभ्या मनवगाह्यमानमनिश्चिन्वन्तमुद्धवं प्रति तत्रोपादिष्टे त्यागे अशक्यत्वमसम्भावना सोऽहं ममाहमिति विपरीतभावना ताभ्यां तन्निवृत्तये असम्भावनादिनिरासाय हिते कर्मणि प्रवृत्तिरन्वयः अहिताःनिवृत्तिर्व्यतिरेकस्ताभ्याम् एवकारस्य व्यावर्त्यमाह गुरूपदेशं विनापीति तत्त्वप्रतिपत्तिः अनुमानार्थापत्तिभ्यां शुद्धात्मज्ञानं प्रायेणेति तेषां विरलत्वं सूचयति लोकतत्त्वस्य जगत्याथार्थ्यस्य ॥ १९ ॥

तत् । आत्मनैवोद्धरणम् उपपादयति । युक्त्या साधयति पुरु-षस्य मनुष्यस्य तु आत्मा विशेषतो गुरुरिति गुर्वनुसरणे प्रवर्तक इत्यर्थः । श्रेयस्तत्त्वज्ञानम् ॥ २० ॥

तत्र । प्रत्यक्षानुमानयोर्मध्ये पुरुषत्वे मनुष्यदेहे आत्मानमा-विस्तरामतिप्रकटं पश्यन्ति तत्र च धीराः शास्त्रविचक्षणाः सन्तो मामपि पश्यन्तीत्यर्थः । तथाच मनुष्यदेहे ज्ञानाधिक्ये प्रमाणं श्रुतिः पुरुषत्वे मनुष्यदेहे आत्माविस्तरामतिप्रकटो वर्तते स हि मनुष्यदेहावच्छिन्न आत्मा प्रज्ञानेन प्रकृष्टज्ञानेन सम्पन्न-तमः विज्ञातम् अर्थविशिष्टतया विज्ञातं शब्दं वदति विज्ञातं विचा-रितम् उपादेयतया पश्यति श्वस्तनं श्व इदमेवं कर्तव्यमिति वेद लोकाऽलोकौ प्रकाशाप्रकाशौ स्वर्गनरकौ वेद मर्त्येन मरणधर्म-वता देहेन साधनं कृत्वाऽमृतं मोक्षमीप्सतीत्येवं सम्पन्नः ज्ञाने-नाढ्यतमः अथेत्यर्थान्तरे इतरेषां तद्व्यतिरिक्तानां पशूनामश्वादीना-मशनापिपासे एव तयोरेव ज्ञानं नतु शब्दार्थादिज्ञानमित्यर्थः ॥२१—२२ ॥

अतो ज्ञानसाधनत्वात् साक्षान्मां मृगयन्ति नतु जीवम् अनुप-पत्तिमुखेन अर्थापत्तिप्रमाणेन अनुपपद्यमानार्थदर्शनेन तदुप-पादकमर्थान्तरकल्पनमर्थापत्तिः यथा पीनो देवदत्तो दिवा न भुङ्क्ते अत्र यथा दिवाऽभुञ्जानस्य रात्रिभोजनमन्तरा पीनत्वानुप-पत्त्या तदुपपादकं रात्रिभोजनं कल्प्यते रात्रौ भुङ्क्ते इति तथा जडानां बुद्ध्यादीनां स्वप्रकाशमेकमात्मानमन्तरा प्रकाशानुप-पत्त्या तदुपपादकः स्वप्रकाश आत्मा कल्प्यते बुद्ध्यादीनां प्रका-शकः परमात्मास्तीति लक्षकैः प्रमाणान्तरं दर्शयति । तथेति तैर्बुद्ध्यादिभिरेव करणत्वेन लिङ्गैर्लीनस्य परमात्मनो गमकैर्हेतु-भिरित्यर्थः । व्याप्तिमुखेन व्याप्तिव्यापारद्वारा तत्र हेतुसमा-नाधिकरणात्यन्ताभावाऽप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः करणत्वं हि हेतुस्तत्समानाधिकरणस्तदधिकरण-वृत्तिर्हि घटाद्यभावस्तत्प्रतियोगी घटादिरप्रतियोगि तु कर्तृ-प्रयोज्यत्वलक्षणं साध्यं तेन सहैकाधिकरणवृत्तित्वं करणत्व-स्येति लक्षणसमन्वयः अनुमानतः परामर्शात् कर्तृप्रयोज्यत्व-व्याप्यकरणत्ववत्त्वाज्ञानादित्यर्थः । बुद्ध्यादिकरणानीति पक्षः कर्तृप्रयोज्यत्वं साध्यो धर्मः करणत्वादिति हेतुः वास्यादिव-दिति दृष्टान्तः यत्र यत्र करणत्वं तत्र तत्र कर्तृप्रयोज्यत्वं यथा वास्यादिरित्यन्वयव्याप्तिः यत्र कर्तृप्रयोज्यत्वं नास्ति न तत्र कर-णत्वं यथात्मेति व्यतिरेकव्याप्तिस्तथाच स्वतन्त्रः कर्ता परमेश्वर इति सिद्धम् एतावता अनुमानेनान्वेषणमात्रेण वैशेषिकादिसम्मतः केवलानुमानगम्य आत्मेति न मन्तव्यं मन्तव्य इति श्रुत्या देहा-दिभ्यो व्यतिरिक्तत्वपदवाच्यस्येश्वराभेदेन या शुद्धिरसंसा-रित्वं तावन्मात्रस्यैवानुमानेन विवक्षितत्वादित्यर्थः।उपलक्षणञ्चैतत् शास्त्रानुसारिलिङ्गस्यापि ईश्वरसाधने विहितत्वादिति ॥ २३ ॥

भूयः पुनरप्यन्वयव्यतिरेकाभ्यां विधिनिषेधाभ्यां मुखेऽत्रा-पीति अन्वयव्यतिरेकाभ्यामसम्भावनादिनिवृत्तावपि ॥ २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

बहिरर्थे अनात्मनि भावो भावना प्रतिपत्तिर्येषां ते बहिर-र्थभावाः ॥ १७ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

या युक्तिभिरिति । ये स्वरूपदाऽऽत्मगुणानुभवरसिकैः न सङ्गताः तेषां युक्तिभिः उपदेशमनपेक्ष्य केवलयुक्तिभिः स्वात्मऽऽदेयया तामि स्वतोपायप्रतिपादकैः विमृशतामपि या माया मापयति दुर्निरासया तया विमोहितधिय इत्यन्वयः ॥ ० ॥

अकुण्ठेति सम्बुद्धिः ॥ १८—१९ ॥

प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्याम् इह प्रत्यक्षेणानित्यत्वादि-दर्शनात् परत्र च तत एवानित्यत्वानुमानाच्चेत्यर्थः ॥ २० ॥

पुरुषत्वे चेति । मनुष्यजन्मन्येव मामाविष्कतरामतीव स्फुटतरं जानन्ति ॥ २१ ॥

मनुष्याणामेव शास्त्राधिकारः अतः पौरुषी तनुः प्रियेत्यर्थः ॥ २२—३४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु मया संग्रहेणोक्तं विस्तरतस्त्वन्येभ्यो जानीहीत्यत आह । मन्यस्वेति । हे ईश ! सत्यस्य नित्यमसंकुचितस्वभावस्य तत्र हेतुःस्वदृशः स्वस्मिन्नेव दृश्यस्य तस्य निर्मलं प्रत्यक्षितस्वयाथात्म्यस्येत्यर्थः । अनेन बद्धमुक्तजीवव्यवच्छेदोऽयमुक्त बद्धा हि सङ्कुचितस्वभावः मुक्तस्तु बद्धदशायामप्रत्यक्षितस्वयाथात्म्यः आत्मनः जीवस्या-न्तरात्मनः अन्तरात्मनः ते त्वत्तः अन्यं वक्तारमुपदेष्टारं विबुधे-ष्वपि नानुचक्षे न पश्यामि ते इत्यार्षत्वात्षष्ठी ध्वस्त्यर्थेन कुत इत्यत आह । सर्वं इति । सर्वेऽपीमे ब्रह्मादयो विबुधाः तव मायया मोहितबुद्धयः तनुभृतः कर्माधीनदेहभाजः बाह्यर्थे ऽनात्मनि भावः भावना अहमिति प्रतिपत्तिः येषां ते अत एव हत्यर्थः ॥ १७ ॥

मायां विधिनापि । येति । ये स्वरूपदाऽऽत्मगुणानुभवरसिकैर्भागवतैर्न सङ्गतास्तेषां युक्तिभिरुपदेशमनपेक्ष्य केवलयुक्तिभिर्निरस्तोपायै-र्विमृशतामपि या माया मापयति न निवर्तते तया विमोहितधिय इति पूर्वश्लोकेन सम्बन्धः । तर्हि सद्भिः सङ्गमस्त्वित्यत आह । गृह-स्तसङ्गम इति । दम्पतीनां मिथुनीभूय वसमानानामपीत्यर्थः । गृह-जुषां गृहान्सेवमानानां गृहस्थानामपीत्यर्थः । नष्टात्मनां तापत्र-याभितप्तानां द्रुतरंहसां द्रुतं रंहो वेगः विषयप्रावण्यरूपो येषान्तेषां नृणां खलु सत्सङ्गमः स्यात् ननु विषयवासनानामिति भावः ॥ ० ॥

यतो विबुधेष्वपि त्वत्तोऽन्यं वक्तारं नानुचक्षे तस्मात्त्वमेवाहं शरणं सदुपदेशेन रक्षितारं प्रपद्येऽध्यवस्यामीत्यर्थः । कथं-भूतः वृजिनेन सांसारिकदुःखेनाभितप्तः अत एव निर्विण्णधीः परिशुद्धबुद्धिः अहो इति निपातो निर्वेदसूचकः कथंभूतमनवद्यं मोहादिरूपदोषरहितमनन्तपारमनन्तावधिमपरिच्छेद्यस्वरूपस्वभाव-मित्यर्थः । सर्वज्ञं सर्ववस्तुविषयसाक्षात्कारवन्तमीश्वरं सर्वनिय-न्तारमकुण्ठविकुण्ठधिष्ण्यमकुण्ठं वैकुण्ठं धिष्ण्यं स्थानं यस्य तं नारायणं नराणां प्राप्यप्रापकमाधारं च नरस्य सखायम् इमान्याचा-र्यत्वसूचकानि विशेषणानि तत्राद्येन भ्रमविप्रलम्भप्रमादादिदोषाभावः द्वितीयेन ज्ञानादिपरत्वस्य तृतीयेन कल्पान्तरविषयत्वस्य तुरीयेण तृतीयस्य कर्मभूतत्वस्य पञ्चमेन तुरीयस्य प्रत्युत्तरस्य नारायणं नरसखमित्यनेनाखिलाध्यात्मतत्त्वोपदेशार्थं बदरिकाश्रमे नारायण-रूपेण वर्तमानं नरसखमित्यनेनोपदेशे शिष्यं अर्जुनादिमुखेन तदुपदेष्टृत्वं च दर्शयते ततश्च वात्सल्यं फलितम् ॥ १८ ॥

इत्थमापृष्टः प्राह भगवान् । प्रायेणेत्यादिना । यत्त्वयोक्तं त्यागो-ऽयं दुष्कर इत्यादिना भक्तियोगात्पूर्वं विषयत्यागो दुष्कर इति तत्र शनैः शनैर्मनःशिक्षया स सुकर एवेति वक्तुं तत्र निदर्शन-तया अवधूतयदुसंवादात्मकमितिहासं वक्तोपन्यस्तानवीरवीणकाः स्वमनसः शिक्षयैव स्वात्मानं तारयन्तीत्याह । प्रायेणेति । लोक-तत्त्वविचक्षणाः तत्तद्वस्तुगतिनियतगुणविमर्शनकुशलाः आत्मनैव स्वपक्षशिक्षितेन मनसैवाशुभाशयाद्विषयवासनातः स्वात्मानं तारयन्ति ॥ १९ ॥

यत एवमतः पुरुषस्यात्मनः स्वस्य विशेषतः गुरुर्हितप्रव-र्तकः आत्मैव प्रत्यक् शिक्षितं मन एव पुरुषस्य विशेषेण इत्यनेन मनुष्यजन्मनि मनःशिक्षाविवेकः श्रेयः सम्पत्तिश्च सुलभेति सूचितं तदेवोपपादयति । यदिति । यस्मिन्मनुष्यजन्मनि प्रत्यक्षानुमानाभ्या-मिह प्रत्यक्षेणानित्यत्वदर्शनात्परत्र दृष्टान्तेनानित्यत्वानुमानाच्च तत्र वैराग्येण श्रेयोऽनुविन्दते भगवत्प्राप्तमया मोक्षाख्यं श्रेयः प्राप्नोती-त्यर्थः । यद्वा प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यां श्रेयोऽनुविन्दते पुरुषस्यैव शास्त्राधिकारात् शास्त्रेण एव श्रेयस्तत्साधनादीना-मवगम्यत्वादिति भावः ॥ २०॥

एतदेवोपपादयति । पुरुषत्वे इति । पुरुषत्वे च मनुष्यजन्मन्येव सांख्ययोगविशारदाः साङ्ख्यं चिदचिदीश्वरतत्त्वत्रयविवेकः योगः परमात्मोपासनात्मकः तयोर्विशारदाः कुशलाः धीराः जितेन्द्रियाः सन्तो मामाविष्कतरामतीव स्फुटतरं जानन्ति कथम्भूतं सर्वशक्तिभिः प्रकृतिपुरुषसमाधिनविविधानेकश्रुतिप्रणाद्युपयुक्तसर्वज्ञत्वसत्यस-ङ्कल्पत्वादिभिरुपबृंहितं पुष्कलितम् ॥ २१ ॥

यतो मां पुरुषत्व एवाविष्कतरं प्रपश्यन्त्यत एव मनुष्य-शरीरं मम प्रियतममित्याह । एकेति । पादद्वयस्य द्वन्द्वान्ते भूत-स्यैकादिभिः प्रत्येकं सम्बन्धः पुर इत्यनेन स्वनिवासस्थानमुक्तं सृष्टा इत्यनेन स्वस्य तत्स्रष्टृत्वमनेन कारणत्वं फलितं तासामेक-पादादिपुरां मध्ये पौरुषी पुरुषाकारा पूर्मम प्रिया अत्र हेतुराविष्कतरं प्रपश्यन्तीत्युक्तम् ॥ २२ ॥

एवं तर्हि लब्धमनुष्यजन्मानः सर्वेऽपि किमप्रपश्यन्तीत्या-शङ्कायां न सर्वे प्रपश्यन्ति प्रत्यक्षादिप्रमाणविशुद्धयादित्याह । अत्रेति । अत्र पौरुष्यां पुरि युक्ताः अप्रमत्ताः केचिदेवेश्वरं सर्वनियन्तारं मामद्धा साक्षाद्धेतुभिर्जगत्कारणत्वादिहेतु-भिर्मार्गयन्ति मृगयन्ति विमृश्य पश्यन्तीत्यर्थः । तत्र हेतुत्वेनात्मानं विशिनष्टि । गृह्यमाणैरिति । प्रत्यक्षेण गृह्यमाणैर्गुणैः रूपादिभिर्वि-ङ्गैरग्राह्यं प्रत्यक्षमूलैरनुमानादिभिर्लिङ्गैरग्र ह्यमित्यनेनैव स्पष्टीकरोति नानुमानेन इति । अनुमानेनाग्राह्यमित्यर्थः । रूपादीनां पृथिव्यादी-नामनुमानेन चाक्षुषत्वादिजनकत्वदर्शनेन तेषां स्वाश्रये चाक्षुषत्वादिजनकत्व-स्वाभाव्यनिश्चयात् गुणैरिति प्रद्युम्नसाधनत्वाभिप्रायः ॥ २३ ॥

अथेतिहासं वक्तीति । अत्रेति । अत्र लोकतत्त्वविचक्षणाः समु-द्धरन्ति ह्यात्मानमात्मनैवाशुभाशयादित्यस्मिन्नर्थे पुरातनमितिहास-मुदाहरन्ति निदर्शनतया कथयन्तीत्यर्थः । इतिहासं विशिनष्टि । अवधूतस्येति । संवाद तयोः प्रश्नप्रतिवचनात्मकमित्यर्थः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तव मत्स्वरूपोपदेष्टा मत्तोऽन्यः किं न स्यादत्राह । सत्यस्येति । ते तव स्वरूपस्य वक्तारमात्मनस्त्वत्तोऽन्यं पुरुष नानुचक्षे न पश्यामि कीदृशस्य सत्यस्य साधुज्ञानादिगुणस्य स्वदृशः स्वयंप्रकाशमानस्य आत्मनः सर्वव्यापिनः मनुष्यत्वमात्रेऽपि देवेषु स्यादत उक्तं विबुधेष्वपीति उक्तं विशिनष्टि । सर्वं इति । ब्रह्मा आदिः कारणं येषां रुद्रादीनां ते तथोक्ताः ते विमोहिताधियः परोक्षज्ञानवन्तः कुत इत्यत आह । तनुभृत इति । शरीराभिमानित्वादत एव बहिरर्थभावाः मोक्षतदुपयोगिभ्योऽन्यत्रापि कामयुक्ताः अस्य श्लोकस्यार्थः—

> अशरीरः सदा विष्णुः पूर्णानन्दात्मनः सदा ॥
> इच्छा च क्रीडयैवास्य न फलाय यतो विभोः ।
> अतो बाह्यार्थकामोऽपि निष्काम इति कथ्यते ॥
> ब्रह्मा निरभिमानित्वाच्छरीरित्वेऽप्यशरीरवान् ।
> नित्यानन्दोपयोग्यन्यकामयोऽभिकाङ्क्षितः सदा ॥
> बहिरर्थविनिर्मुक्तस्तथापि तनुधारणात् ।
> अमूढा मूढ इति वदुच्यते च सरस्वती ॥
> रुद्राद्यास्तन्वभीमानाद्बहिरर्थयुजस्तथा ।
> सर्वेषां ब्रह्मपदवीयोग्यानां पूर्वमेव तु ॥
> अभावस्त्वपरोक्षस्य मोहो ज्ञानस्य भण्यते ।
> ब्रह्मणस्त्वंशरूपेषु भारत्या ज्ञानवर्जनम् ॥
> ब्रह्मणायाभिभावे तु नाशावनरणं क्वचित् ।
> शतजन्मसु पूर्वं तु ज्ञानोदय उदीर्यते ॥
> अपरोक्षेण पारोक्ष्यात्पूर्णज्ञानं सदैव तु ।
> शतजन्मगतायाश्च आपरोक्ष्योऽभिकाङ्क्षितिर्भवेत् ॥
> क्वचित्क्वचित्सरस्वत्या अंशावतरणेष्वपि ।

शक्तिविवेकग्रन्थादवगत इति अशरीरी "वायुरग्निर्विद्युत्स्तनयित्नुरशरीराणि वा एतानी"ति श्रुतिरत्रमानम्—

> श्रुतिभिस्तानित्यातु स्तनयित्नुर्हरिः स्मृतः ॥
> अग्निं भूताभिभरणाच्छ्रीर्वायुर्भरतः स्मृतः ।
> विद्युत्तु भारती प्रोक्ता एत एवाशरीरिणः ॥
> उपलासेनापि नाम स्यादेतेषां महतां सदा ।

इत्यनेन श्रुत्युक्ता एत एवेति ज्ञायते ॥ १७ ॥

यस्माद्भगवतोऽन्यो वक्ता नास्ति तस्मादहं नारायणं शरणं प्रपद्ये मम ज्ञानोपदेशायेति शेषः । भवन्तं पूज्यम् अनवद्यत्वं पूज्यत्वे हेतुः अनवद्यत्वे हेतुः अनन्तपारत्वं तर्हि स्वस्याज्ञानं प्राप्तम् अत उक्तं सर्वज्ञमिति वस्तुतत्प्रतिबन्धकेन ज्ञानं क्वचित्कुण्ठं स्यादत उक्तम् ईश्वरमिति देशप्रभुवदीश्वरस्यापि स्थानच्युतिः स्यादत्राह अखण्डेति अखण्डमपरिच्छिन्नम् अविकुण्ठं अविनाशि च धिष्ण्यं यस्य स तथा नञ् उभयत्र संबध्यते शरणप्राप्तौ हेतुमाह निर्विद्देति कुतो निर्वेद इत्यत्राह वृजिनेति एवंविशिष्टोऽपि नारायणोऽन्यः किं न स्यादत्राह नरसखमिति एतद्विशेषणं हरेरिति कुत इतीयमाशङ्का—

> विष्णोर्वीर्यैरनन्तस्य त्रिभिरंशैर्नरः स्मृतः ।
> सेन्द्रश्चतुर्भिः पार्थस्तु द्वाभ्यां तु बलक्ष्मणाविति

अनेन परिहर्तव्या ॥ १८ ॥

लोकतत्त्वविचक्षणादयोऽन्यस्य पुनस्तत्त्वज्ञानप्रश्नः किमर्थं इत्याशङ्क्य परोक्षलोकतत्त्वज्ञानस्य सत्स्नेहमन्नेरणोत्पन्नस्य पुरुषार्थसाधनत्वं न स्यात् प्रत्युतानर्थहेतुत्वं च अपरोक्षज्ञानानुत्पादादित्याशयेनाह । प्रायेणेति । अस्यैवमक्षरयोजना प्रायेण बहुधा लोके ये मनुजा लोके तत्त्वे च विचक्षणाः सत्स्नेहनिर्मुक्तपरोक्षज्ञाननिपुणास्ते आत्मनैव प्रयत्नेनैवाशुभाशयात् स्वस्योपेक्षणे पापफलदुःखबहुलं तमः प्राप्यात्मानं समुद्धरन्ति निर्मूलयन्ति हि यस्मात्स्मात्स्नेहयुक्ता लोकतत्त्वपरोक्षज्ञानविशारदाः आत्मनैव सात्त्विकमनसैवाभिमूलापरोक्षज्ञानेनैवाशुभाशयात्पापकारणात्संसारादात्मानं समुद्धरन्त्युन्मयन्ति एवमनुकूपावित्यत अनेन भगवद्भक्त्युत्पन्नं ज्ञानं पुरुषार्थोपयोगीति ज्ञानसमुद्रमग्नस्यापि मम भगवत्परोक्षज्ञानोत्पत्तिप्रकारो वक्तव्य इति तत्प्रश्नः सार्थक इति यतोऽस्मैऽस्मै मनस्यात्मा इत्यभिधानादात्मशब्दो यत्नादौ वर्तते इति मिश्रम्—

> पारोक्ष्येणैव तत्त्वं तु लोकं चापि वदन्ति ये ।
> तेऽपि सत्स्नेहनिर्मुक्तास्तमो यान्ति विनिश्चयात् ॥
> आपरोक्ष्य नव ज्ञानं तेषामुत्पद्यते क्वचित् ।

इति वचनादुक्तोऽर्थभेदः सिद्ध इति सन्तोष्टव्यम् ॥ १९ ॥

आत्मनैवेत्येवकारेण श्रेयःसम्पत्तौ सात्त्विकमनसः प्राधान्यमुक्तं तदेव प्रतिपादयति । आत्मन इति । आत्मनो जीवराशेः श्रेयःसम्पादने गुरुरुपदेष्टात्मैव मन एव "मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरती"ति श्रुतेः "अत" सातत्यगमन इति धातोः नित्यशेनात्मशब्देन शरीरमेव लक्ष्यते तस्यैव गमनसम्भवात्तत्रापि विशेषतः पुरुषार्थलक्षणश्रेयः सम्पत्तौ पुरुषस्य मनुष्यशरीरं प्राप्तस्य आत्मनः आत्मैव गुरुरिति सम्बध्यते कुत एतदत्राह । यदिति । असौ पुरुषः मानुषशरीरं प्राप्तो जीवः प्रत्यक्षानुमानाभ्यां श्रेयः पुरुषार्थं विन्दत इति यदत इति मनःपूर्वकं चक्षुषा कृष्यादिना व्रीह्यादिसम्पल्लक्षणश्रेयःप्राप्तिदर्शनेन यागादिसाधनसामग्र्या स्वर्गादिश्रेयः प्राप्यत इत्यनुमीयत इति ॥ २० ॥

एतदेव विशदयति । पुरुषत्व इति । पुरुषत्वे मनुष्यशरीरप्राप्तौ सत्यां च सांख्ययोगविशारदा धीराः सर्वशक्त्युपबृंहितं मामाविस्तारं यथायोगं विश्वरूपपर्यन्तं प्रपश्यन्ति यद्वा आ सन्तापः आसंसारसन्तापं विविधं तारयतीत्याविस्तारस्तम् आस्तु सन्तापकोपर्योऽरातिं यावतः निर्द्धाविर्भूतमैमेदवं वा ॥२१॥

बहुविधासु पूर्षु का पूरत्र प्रेष्ठेति तत्राह। तासामिति ॥२२॥

तत्र कारणमाह । अत्र मामिति । अत्र पुरुषशरीरे मनोयोगयुक्ता योगिनः अतो ग्राह्यमीश्वरं मामद्य प्रत्यक्षीकर्तुं मार्गयन्ति विचार्यमानं यतन्ते कैर्हेतुभिः सद्युक्तिभिः अनुमानतः त्रिविधपञ्चावयवलक्षणवाक्यात्मकैः किंप्रमाणकैश्चक्षुरादिना गृह्यमाणैः रूपादिभिरात्मनः परमात्मनो लिङ्गैर्गमकैर्ज्ञापकैर्जीवस्य दर्शनादिस्वातन्त्र्याभावेन तत्कर्तान्य ईश्वरोऽस्तीत्यनुमीयत इति ॥ २३ ॥

यथाहं संसाधयामि तथा मां शाधीत्युद्धववाक्यमवधारयानुक्रमर्थमितिहासेन सम्भेदयति । अत्रेति । अत्र पुरुषशरीरे अहंनिर्मागेण सुलभ इत्येतस्मिन्नर्थे अवधूतयदुसंवादरूपमितिहासं पुरावृत्तमुदाहरन्ति अस्यैव विवरणं पुरातनमिति अमिततेजसः सनत्प्रवयस्य तेजो यदे प्रभावेऽत्रे ज्योतिष्मत्यपि रतलीति च २४ ॥ २५ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नारायणं नरस्य महदाद्यष्टादिपुरुषसमूहस्यापि परमाश्रयं तथापि नरसखं नरमात्रानुग्रहायावतीर्णम् ॥ १८ ॥

यथा येनमुखेन प्रार्थितं तथैव श्रीभगवानुवाच । प्रायेणेति ॥ १९ ॥

आत्मनो गुरुरिति । गुर्वनुसरणे प्रवर्त्तक इत्यर्थः ॥२०॥

पुरुषत्वे मानुष्यप्राप्तौ मद्भावाविष्करां प्रकटतरज्ञानाः सन्तः तत्र च धीराः शास्त्रविचक्षणाः भक्ता मामपि पश्यन्तीत्यर्थः ॥२१॥२२

ईश्वरमिति जीवस्यापि तत्र तत्र स्वातन्त्र्याभावात् नचैतावतानुमानिक ईश्वर इति मन्तव्यम् अनुमानस्यास्य शास्त्रानुगतत्वेन विवक्षितत्वात् ॥ २३—२६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सत्यस्येति षष्ठी आर्षी सत्यात् सर्वकालदेशव्यापकात् सद्योहितनाशात् ते त्वत्तः स्वस्य मम स्वज्ञानं यतस्तस्मात् आत्मनो मम आत्मनः परमात्मनस्त्वत्तः सकाशादागमम् ॥ १७ ॥

तस्मात्त्वामेवाहं प्रपद्ये तत्र कश्चित् सर्वगुणमण्डितोऽपि दुराचारो भवतीति तद्व्यावृत्त्यर्थमाह । अनवद्यं कश्चित् सेवितः फलकाले विनश्यतीति तद्व्यावृत्त्यर्थमाह अनन्तपारं न विद्यते अन्तः कालतो न च पारं देशतश्च यस्य तं कश्चिदकृतज्ञो भवति नच त्वमित्याह । सर्वज्ञं कश्चिदसमर्थो रक्षणे न च त्वमित्याह । ईश्वरं कश्चिदसद्ग्राह्यो न च त्वमित्याह कालादिभिरकुण्ठो विकुण्ठलोको धिष्ण्यं स्थानं यस्य तम् उ हे भगवन् ! निर्वेदे हेतुः वृजिनैर्दुःखैरभितप्तः अत्र दकारगौरवाय वकारो युक्त इव पठनीयः परमसर्वोत्कर्षमाह । नारायणं नारस्य महदाद्यष्टादिपुरुषसमूहस्यापि परमाश्रयं परमं कृपालुत्वमाह । नरसखं नरमात्रानुग्रहायावतीर्णमित्यर्थः ॥ १८ ॥

भो उद्धव ! त्वमात्मानं मूढमतिं मन्यसे अहं त्वादृशं सुधियं विबुधेष्वपि नावलोके लोकेऽन्यत्र त्वत्तो निकृष्टा अपि गुरूपदेशं विनापि जीवबुद्धिबलादेव तत्त्वं जानन्तो दृश्यन्ते किं पुनस्त्वं सर्वसुधीमुकुटमणिर्मद्रूपगुरूपदिष्टनिखिलतत्त्व इत्याह । प्रायेणेति । लोकतत्त्वविचक्षणाः दृश्यमानलोकभद्राभद्रहेतुविचारप्रवीणाः अशुभाशयात् विषयवासनातः ॥ १९ ॥

एष आत्मा किञ्चित् श्रेयः प्रत्यक्षेण विन्दते किञ्चित् परामृश्यानुमानेनापि ॥ २० ॥

तत्रापि मनुष्यदेहगता एव जीवाः प्रायो मां ज्ञातुं प्रभवन्तीत्याह । पुरुषत्वे चेति । तत्रापि धीराः निर्मत्सरास्तत्रापि सांख्यं ज्ञानं योगो भक्तियोगस्तयोर्विचक्षणाः तथा च श्रुतिः "पुरुषत्वे चाविस्तरामात्मा स हि प्रज्ञानेन सम्पन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं सम्पन्नोऽथेतरेषां पशूनामशनापिपासे एवाभिज्ञान"मिति ॥ २१ ॥

अतः पुरुषत्वं स्तौति । एकेति ॥ २२ ॥

अत्र पौरुष्यां पुरि स्थिता भक्ताः साक्षान्मां कृष्णरूपिणमीश्वरं मार्गयन्ति युक्ता भक्तियोगवन्तः हेतुभिः श्रवणकीर्त्तनाद्यैः भक्त्याहमेकया ग्राह्य इति मदुक्तेः । ननु बुद्ध्यादिप्रवर्त्तकं त्वामनुमानेन मार्गयन्तो दृश्यन्ते इत्यत आह । गृह्यमाणैर्बुद्ध्यादिभिर्गुणैर्लिङ्गैरग्राह्यमनुमानेन यदनुमानं तस्मादग्राह्यं बुद्ध्यादिकरणानि कर्त्तृप्रयोज्यानि करणत्वाद्वास्यादिवदित्यनुमानेनानुमितस्त्वं कर्त्ता जीवोऽनुमीयते तथा प्रयोजकः स्वतन्त्रोऽन्तर्यामी च कथञ्चिदनुमीयेत ननु कृष्णः स्वयं भगवानहं मम तर्कातीतत्वान्मद्रूपगुणलीलैश्वर्याणामव्यक्तकर्तृत्वादिति ॥ २३ ॥

अत्रापि अनुमानगम्यत्वेऽन्तर्यामिस्वरूपस्य मम मायावपि ॥२४॥ ॥ २५ ॥ २६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

संक्षेपतो मया त्यागाद्युपदिष्टं विस्तरतो ज्ञातुमिच्छसि चेत्सहोत्थे प्रष्टव्याः तत्राह । सत्यस्येति । सत्यस्य अविनाशिनः देहादिविनाशिपदार्थभिन्नस्य आत्मनः जीवात्मनः जातावेकवचनम् सर्वेषामात्मनामात्मनोऽन्तरात्मनः स्वस्य अनुपमात् स्वतः सिद्धज्ञानात् ते त्वत्तः अन्यं विबुधेष्वपि वक्तारं मां प्रत्युपदेष्टारम् नानुपश्ये न पश्यामि तत्र हेतुमाह । सर्वे इति । तव मायया त्रिगुणमय्या शक्त्या मोहितबुद्धयः अतो बहिरर्थाः सपरिकरमोक्षव्यतिरिक्ताः साध्यसाधनरूपाः धनविद्यादयः तेषु भावो भक्तुं प्रीतिर्येषां ते तथा । नतु मोक्षोपायकथने ब्रह्मादीनां प्रायशः प्रीतिरिति भावः ॥१७॥

यस्मात्त्वत्तोऽन्यं विबुधेष्वपि वक्तारं नानुपश्ये तस्मात्खिन्नः हे भगवन् ! भवन्तं शरणं प्रपद्ये कथम्भूतः ह स्फुटं वृजिनैर्दुःखैरभितप्तः अतो निर्विण्णधीः कथम्भूतम् अनवद्यं स्वभावतोऽपास्तसमस्तदोषम् अनन्तपारम् नास्ति कालतः अन्तः देशतः पारं च यस्य तम् सर्वज्ञं सर्वदा सर्वद्रष्टारम् ईश्वरं सर्वनियन्तारम् अकुण्ठः अनावरणः विकुण्ठो धिष्ण्यं स्थानं यस्य तम् नारायणम् "त्वत्तः पुमान्समधिगम्य ययास्य वीर्यं धत्ते महान्त"मिति ब्रह्माद्युक्तात् पुरुषाख्यनारादपि पूर्वो मुख्यो नारायणोऽयनम् नरसखमिति नरार्जुनं प्रत्युक्तं मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जयेति तमर्जुनस्य सखायं स्वयं भगवन्तं ब्रह्मनारायणादिभिर्नामभिः प्रसिद्धं परतत्त्वं श्रीकृष्णमित्यर्थः ॥ १८ ॥

आत्मानं स्वात्मानं जीवम् आत्मनैव "सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च एष ते आत्मान्तर्यामी" त्यादिश्रुतिस्मृतिप्रसिद्धेनान्तर्यामिणैव अनुग्राहकेण अशुभाशयापर्याप्लुतात्संसारात्समुद्धरन्ति कथं भूताः लोकतत्त्वविचक्षणाः लोकेषु यत्तत्त्वम् "अन्तः प्रविष्टः शास्ता जनाना"मिति श्रुत्युक्तं तत्त्वं तद्विचक्षणाः अन्तरात्मपरितन्त्र जीवः न स्वतन्त्रः सारमावृत्त इत्येवं परीक्षकाः प्रायग्रहणेन शास्त्राचार्योक्ततत्त्वविचक्षणानां प्रहणं बोध्यम् ॥ १९ ॥

आत्मनो जीवात्मनः स्थिरचरदेहगतस्य आत्मैवान्तरात्मैव गुरुर्हिताहितसूचकः पुरुषस्य तु विशेषतो गुरुः यत् येनान्तरात्मना असौ पुरुषः प्रत्यक्षानुमानाभ्यां दृष्टदृष्टः श्रेयस्कामः सत्कर्मपरः ममापि सत्कर्मानुष्ठानेन श्रेयो भविष्यति सुखः कृतसत्कर्मानुष्ठानः अस्वर्गस्वभावत्वात् न यः कृतसत्कर्मानुष्ठानः न स देवमात्र प्राप्तः मनुष्यादिवत् इत्येवं प्रकाराभ्याम् यद्वा निरपेक्षं प्रमाणं प्रत्यक्षं

अवधूतं द्विजं कञ्चिच्चरन्तमकुतोभयम् ।
कविं निरीक्ष्य तरुणं यदुः पप्रच्छ धर्मवित् ॥ २५ ॥
यदुरुवाच ।
कुतो बुद्धिरियं ब्रह्मन्नकर्तुः सुविशारदा ।
यामासाद्य भवाँल्लोकं विद्वांश्चरति बालवत् ॥ २६ ॥
प्रायो धर्मार्थकामेषु विवित्सायां च मानवाः ।
हेतुनैव समीहन्ते आयुषो यशसः श्रियः ॥ २७ ॥
त्वन्तु कल्पः कविर्दक्षः सुभगोऽमृतभाषणः ।
न कर्ता नेहसे किञ्चिज्जडोन्मत्तपिशाचवत् ॥ २८ ॥
जनेषु दह्यमानेषु कामलोभदवाग्निना ।
न तप्यसेऽग्निना मुक्तो गङ्गाऽम्भस्थ इव द्विपः ॥ २९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रुतिस्तत्प्रत्यक्षं प्रमाणमनुमानं स्मृतिस्ताऽभ्याम् श्रेयोऽनुविन्दते यथेष्टं भुक्तिलक्षणां मुक्तिलक्षणां वा कल्याणं प्राप्नोति ॥ २० ॥

सांख्ययोगे चिदचिद्ब्रह्मविवेकलक्षणे योगे वेदान्तशास्त्रोक्तः तत्त्वत्रयविचिन्तने धीराः सर्वशक्त्युपबृंहितम् आविस्तरां स्फुटतरं मां प्रपश्यन्ति ॥ २१ ॥

अतएव पौरुषी पूः मे प्रिया ॥ २२ ॥

अत्र अस्यां पौरुष्यांनानुमानमितिश्रुतेः अनुमानतः अग्राह्यमाम्, "आत्मशब्दात्" इत्यादिसूत्रैः "स आत्मा" इत्यादिश्रुतिभिश्च गृह्यमाणैः हेतुभिः जगत्कारणभूतब्रह्मनिर्णायकगुणैः "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतिप्रोक्तैः जगत्कर्तृत्वादिभिः "सत्यं ज्ञानमनन्त" मित्यादिश्रुतिप्रोक्तैः सत्यत्वादिभिश्च लिङ्गैश्च "हिरण्यश्मश्रु" रित्यादिश्रुतिप्रोक्तैः मृगयन्ति अन्वेषयन्ति ॥ २३ ॥

अत्र मदन्तर्यामिणा अनुगृहीता एव अशुभाशयादात्मानं समुद्धरन्तीत्याह इममर्थं ॥ २४ ॥

---

भाषा टीका ।

आप सत्य स्वरूप हो स्वयं प्रकाश सर्वज्ञ हो सब के आत्मा अन्तर्यामी हो हे ईश्वर! आप को छोड कर दूसरे किसी को भी मै ज्ञान का वक्ता देवतों में भी नहीं देखता हूं ये सब ब्रह्मादिक देहधारी आप की माया से विमोहित बुद्धि वाले होकर बाहिर के विषयों को ही जानने वाले हैं न की ज्ञान के भी वक्ता हैं ॥ १७ ॥

वह माया कैसी है कि जो लोग आप के चरण कमल के भक्तों के सङ्ग नहीं करते हैं उनके बडे विचारों के करने से भी जो माया नहीं छूटती है उन पुरुषों का सङ्ग करना तो हम सरीके घर के विषयों को सेवन करने वालों को नहीं होसक्ता है ॥ ० ॥

तिस से निर्दोष अनन्त पार वाले सर्वज्ञ ईश्वर सनेदा अव्याहत वैकुण्ठ धाम वाले नर के सखा नारायण आप के शरण में मै संसार तापों से तपा हुआ वैराग्यवान् होकर प्राप्त हुआ हूं ॥ १८ ॥

श्रीभगवानुवाच ।

प्रायः कर के लोक में तत्त्व के जानने वाले मनुष्य इस अशुभ संसार में से अपने आपही से आत्मा का उद्धार करते हैं ॥ १९ ॥

विशेष करके अपना गुरु आपही विचार से होता है जिस से कि प्रत्यक्ष और अनुमान से वह पुरुष कल्याण को प्राप्त होजाता है ॥ २० ॥

सांख्ययोग में चतुर जो लोग हैं सो मेरे को मनुष्य रूपही में सब शक्तियों के सहित प्रकाश मान देखते हैं ॥ २१ ॥

एक पाद दो पाद तीन पाद चार पाद बहुत पाद और बिना पाद वाले बहुत से शरीर बनाये हैं परन्तु उन में पुरुष शरीरही मेरे को अत्यन्त प्रिय है ॥ २२ ॥

उत्तम युक्ति वाले पुरुष युक्तियों से ईश्वर को ढूंढ लेते हैं दृश्य इन्द्रियों से ग्रहण करने योग्य नहीं हैं तो भी अनुमान से जान लेते हैं ॥ २३ ॥

इस विषय में यदु महाराज तथा बडे तेजस्वी अवधूत दत्तात्रेय जी का जिस मे सम्वाद है ऐसी एक पुरातन इतिहास को प्राचीन लोग कहते हैं ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सुविशारदा अतिनिपुणा सर्वलोकविलक्षणा ॥ २६ ॥

सर्वलोकवैलक्षण्यमेवाऽऽह । प्राय इति । धर्मादिषु विवित्सायां आत्मविचारे च मानवाः समीहन्ते प्रवर्तन्ते तत्रापि आयुरादेर्हेतुना कामनयैव ॥ २७ ॥

त्वं तु न कस्यचित्कर्मणः कर्ता भवसि न किञ्चिदीहसे इच्छसि तत्त्वज्ञस्याऽज्ञानेन वाऽनैपुण्येन वा विरूपत्वेन वाऽन्या-

त्वं हि नः पृच्छतां ब्रह्मन्नात्मन्यानन्दकारणम् ।
ब्रूहि स्पर्शविहीनस्य भवतः केवलात्मनः ॥ ३० ॥

श्रीभगवानुवाच ।

यदुनैवं महाभागो ब्रह्मण्येन सुमेधसा ।
पृष्टः सभाजितः प्राह प्रश्रयावनतं द्विजः ॥ ३१ ॥

ब्राह्मण उवाच ।

सन्ति मे गुरवो राजन्! बहवो बुद्ध्युपाश्रिताः ।
यतो बुद्धिमुपादाय मुक्तोऽटामीह तान् शृणु ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

गित्वया वा औदासीन्यं घटत एव नेत्याह । कल्प इत्यादिना ॥ २८ ॥

महानानन्दश्च तव कुत इति पृच्छति । जनेष्विति ॥ २९ ॥

स्पर्शविहीनस्य विषयभोगरहितस्य अत्र हेतुः केवलात्मनः कलत्रादिशून्यस्य ॥ ३०—३१ ॥

बुद्ध्यैवोपाश्रिताः स्वीकृता न तूपदेशेन अटामि पर्यटामि ॥३२॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

द्विजं दत्तात्रेयं "योगर्द्धिमापुरुमयीं यदुहैहयाद्या" इति द्वितीयोक्तेः धर्मवित् परमहंसधर्मज्ञः ॥ २५ ॥

इयं बुद्धिः कुत उपलब्धेति शेषः । यां बुद्धिमासाद्य प्राप्य ॥२६॥

सर्वलोकेभ्यो बुद्धेर्वैलक्षण्यं वैशिष्ट्यं प्राय इति निष्काम-प्रवृत्तेर्वैलक्ष्यं सूचयति तत्रापि आत्मविचारप्रवृत्तावपि अत्र विविित्सापदस्य स्वाश्रयसमवायसम्बन्धेन विचारे लक्षणा ॥ २७ ॥

त्वमशक्तोऽपि कर्मणि पङ्ग्वादीनामशक्त्या सामर्थ्याभावेन तत औदासीन्यं घटते त्वं तु कल्पः समर्थः एवमन्येऽपि कल्यादि-शब्दा अज्ञानादिप्रतियोगितया व्याख्येयाः ॥ २८—२९ ॥

स्पर्शो विषयेन्द्रियसम्पर्कः अत्र भोगरहितत्वे ॥ ३० ॥

बुद्ध्यैव स्वीकृताः गुरुत्वेन सम्भाविता यतो येभ्यो गुरुभ्यः ॥ ३१ ॥

पृथिवीति युग्मकम् । सुपेशकादिवत्त्र सकारलोप आर्षः॥३२-३४॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स कीदृश इत्यतस्तमनुवर्णयति । अवधूतमिति । अवधूतमभ्य-ङ्गादिभिरसंस्कृतदेहं ननु वर्णाश्रमधर्मत्यागिनं न विद्यते कुत-श्चिद्भीतभयं यस्य तं तरुणं युवानं कविं विद्वांसम् ॥२५॥

प्रश्नमेवाह । कुत इति पञ्चभिः । हे ब्रह्मन् अकर्तुरिन्द्रियप्रीत्यर्थं कर्माण्यकर्तुस्तवेयं सुविशारदाऽतिनिपुणा सर्वलोकविलक्षणा मतिः कुतः कस्माल्लेनोपाविता तां विचिन्तयिष्ये । यामिति । यां बुद्धि-मासाद्य प्राप्य सम्प्राप्येति यावत् विद्वानपि बालवदवधूत-श्चरति ॥ २६ ॥

बुद्धेः सुविशारदत्वमेवाह । प्राय इति । प्रायशो मानवा धर्मा-दिषु विविदिषावां तत्साधनेषु हेतुभूतानां निमित्तभूतानां धर्मादि-साधनादिज्ञानार्थं चेत्यर्थः । तथा आयुरादेर्हेतुना आयुराद्यर्थं च समीहन्ते प्रवर्तन्त एव त्वं तु जडादिवत्क्रियास्वपि कर्तुं नेहसे नेच्छसि ॥ २७ ॥

नन्वशक्तत्वाज्ञाननैपुण्यवैरूप्यवाग्मित्वादिभ्यो न कर्मसमीहत इत्यतस्तं विशिनष्टि । कल्प इत्यादिना ॥ २८ ॥

कुतस्तव महानानन्दश्चेत्याह । जनेष्विति । दह्यमानेषु सत्सु त्वं तु न तप्यसे यथा दवाग्निना मुक्तो गङ्गाम्भःस्थो द्विपो गज-स्तद्वत्सुखमनुतिष्ठसि इत्यर्थः ॥ २९ ॥

पृष्टमपि तूष्णीमवस्थितं प्रतिवक्तुं चोदयति । त्वं हीति । हे ब्रह्मन्! भवतः आत्मनि मनस्यानन्दकारणं कथम्भूतस्य स्पर्शवि-हीनस्य शब्दादिविषयस्पर्शविहीनस्य केवलात्मनः अनुबन्ध-रहितदेहस्यापीति ॥ ३० ॥

इत्थमापृष्टः प्राहावधूत इत्याह भगवान् । यदुनेति । ब्रह्मण्येन ब्रह्मकुलोपकर्त्रा सुमेधसा बुद्धिमता सभाजितः सम्पूजितः पृष्टश्च प्रश्रयेण प्रकृष्टमेवयाऽवनतं नम्रं यदुं प्राह ॥ ३१ ॥

तदेवाह । सन्तीत्यादिना याववत्रमाध्यायसमाप्ति । तावत्कुतो बुद्धिरित्यस्योत्तरमाह । सन्तीति । बुद्ध्युपाश्रिताः शिक्षणीयया बुद्ध्योपाश्रिता उपासिताः मद्बुद्धिशिक्षिता इत्यर्थः । यतः येभ्यो बुद्धिशिक्षितामितिशेषः । उपादाय स्थिरीकृत्य मुक्तः तापत्रयादिति शेषः । अटामि पर्यटामि तान् बुद्ध्युपाश्रितान् गुरून् शृणु ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अकर्तुर्निषिद्धाचरणरहितस्य अज्ञानादिप्रवृत्तिशून्यस्य च ॥ २६ ॥

बालवत्संचरणं ज्ञानसम्पादनाय किं न स्यादित्याशङ्क्य सन्त्य

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मायं मनुष्यधर्मः किन्तु तेषां धर्मादिष्वेव प्रवर्तनम् आत्मतत्त्वविविदिषायां सत्यां चेत्याह । प्राय इति । प्रायो मानवाः परमात्मतत्त्वविविदिषायां सत्यां चेह धर्मादिष्वेव समीहन्ते प्रवर्तन्ते आयुराद्याप्तये च हेतुना तत्प्राप्तिसाधनसामग्र्येण ॥ २७ ॥

शास्त्यादिसाधनसामग्र्यभावादेवमवस्थानमिति तत्राह । त्वं त्विति ॥ २८—२९ ॥

स्पर्शविहीनस्य विषयभोगविहीनस्य केवलात्मनः शरीरमात्रपरिग्रहस्य ॥ ३०—३१ ॥

बुद्ध्युपाश्रिताः बुद्ध्या संगृहीताः यतो येभ्यः शिक्षावृत्तिमुपादाय शरीराभिमानमुक्तः तान् गुरून् ॥ ३२—३४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विविदिषा जिज्ञासामात्रम् ॥ २७—४९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

धर्मार्थकामेषु विविदिषायां विविदिषायामात्मविचारे आयुराद्यैर्हेतुना कामनयैव समीहन्ते प्रवर्तन्ते ॥ २७ ॥

त्वन्तु न कश्चिदपि कर्मणः कर्ता नच किमपीहसे तत्र कल्प इति न त्वसामर्थ्येनेत्यर्थः । कविरिति नाज्ञानेन दक्ष इति नत्वनैपुण्येन सुभग इति नतु कौरूप्येण हेतुना वनितादिकमिच्छसीत्यर्थः । मितभाषण इति नत्ववाग्मितया केनापि सह संवादमिच्छसीत्यर्थः । किन्त्वेतादृशोऽपि जडादिवच्चरसि ॥ २८ ॥

किञ्च तरुणस्यापि तव कामादिसन्तापो न कुत इति पृच्छति । जनेष्विति ॥ २९ ॥

मुखमेव वार्त्तां कथयतीति न्यायेन दृश्यमान एतावानानन्दश्च तव कुतः इति पृच्छति । त्वं हीति । स्पर्शो विषयभोगः केवलात्मनः एकाकिनः ॥ ३० ॥

प्रश्रयेणेति । तत्परिचर्ययैव तद्वशीकरिष्णुनेत्यर्थः । सुमेधसेति स्वबुद्धिप्रीणिततन्मनस्केनेति तत्प्रश्नवचनं हेतुः ॥३१॥

बुद्ध्यैवोपाश्रिताः ननूपदेशेन सांसारिकसन्तापान्मुक्तः ॥ ३२—३३—३४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सुविशारदः सुष्ठु निपुणः बालवत् अभिमानशून्यः योगिनो बालवदभिमानशून्यत्वं न तु सदसदनवेक्षत्वमित्याकरे स्थितम् ॥ २६ ॥

प्रायः बहुधा मानवाः धर्मादिषु विविदिषायां धर्मादिबोधेच्छायां सम्यगीहन्ते प्रवर्तन्ते तथापि आयुराद्यैर्हेतुना निमित्तेन चकारात्केचित्तु धर्मादिबोधेच्छायामपि न प्रवर्तन्ते ॥ २७ ॥

कुतस्त्वं निवर्गत्यागीति पृच्छति । त्वमिति । तुशब्दः पूर्वोक्तेभ्यो द्विविधेभ्यो मानवेभ्यो वैलक्षण्यं सूचयति कल्पः समर्थः कविः क्रान्तदर्शी दक्षः निपुणः सुभगः प्रियदर्शनः अमृतभाषणः सत्यहितवक्ता अकर्मण्यपि कर्तृत्वधीनैपुण्यबुद्धिंशत्वधर्मविशेषादिभी रहितोऽपि त्वं जडादिवदकर्ता पूर्वोक्तत्रिवर्गानुष्ठाता न भवसि न च किञ्चित्त्रिवर्गोपयिकं ऽथावद्दीप्यादिकमीहसे ॥ २८ ॥

कुतस्त्वं कामाद्यस्पृष्ट इति पृच्छति । जनेष्विति ॥ २९ ॥

बाह्यसुखोपकरणत्यागित्वेन त्यक्तबाह्यसुखस्यान्तरानन्दवतो भवतस्तदानन्दकारणं ब्रूहीति पृच्छति । त्वमिति । केवलस्य त्यक्तगार्हस्थ्यस्य अत एव स्पर्शविहीनस्य प्राप्यसुखरहितस्यापि आत्मनि हृदि आनन्दकारणं ब्रूहि ॥ ३० ॥

सुमेधसा महत्संगतदर्शनदृष्ट्वामृताब्धावोचनादिबुद्धिमता ॥३१॥

बुद्ध्युपाश्रिताः बुद्ध्यैव गुरुत्वेन गृहीताः यतो येभ्यः बुद्धिं विवेकवतीं शिक्षामुपादाय प्राप्य मुक्तः अहममाभिमानविमुक्तः पर्यटामि ॥ ३२—३४ ॥

---

भाषा टीका ।

निर्भय होकर विचरते हुवे कोइ अवधूत बड़े पंडित दया वान् ऐसे एक ब्राह्मण को देखकर धर्मात्मा यदु महाराजने प्रश्न किया ॥ २५ ॥

यदुरुवाच ।

हे ब्रह्मन् ! कुछ काम नहीं करने वाले आप को यह निपुण बुद्धि कहां से आई है जिस बुद्धि का आश्रय करके आप विद्वान् हो करभी बालक सरीके विचरते हो ॥ २६ ॥

सब मनुष्य तो प्रायः करके धर्म अर्थ काम मोक्ष इनको जानने कि इच्छा से आयु यश धन इनके निमित्तही से काम करते हैं ॥ २७ ॥

आप तो पंडितहो समर्थहो वक्ता हो चतुर हो सुंदर हो मधुर भाषी हो फिरभी न कुछ करते हो न कुछ चाहते हो विकल पागल पिशाच सरीके रहते हो ॥ २८ ॥

सब मनुष्य तो काम लोभरूपी दावानल से जलते हैं आपको तो कोइ ताप नहीं है जैसे कि गंगाजी के बीच मे खड़ा हाथी जंगली आग से दुखी नहीं होता है ॥ २९ ॥

हे ब्रह्मन् ! मेरे पूछने से आप अपने आत्मा मे आनंदके कारण को कहिये आपतो विषय भोग से रहित एकले हो तब आप को आनंद कैसे होता है ॥ ३० ॥

श्री भगवानुवाच ।

ब्राह्मण सुंदर बुद्धिवाले यदु महाराजने जब बड़े सत्कार पूर्वक पूजन करके ऐसे पूछा और नम्रहो कर आगे खड़े रहे तब महाभागी ब्राह्मण दत्तात्रेयजी कहने लगे ॥ ३१ ॥

ब्राह्मण उवाच ।

हे राजन् ! अपनी बुद्धिसे आश्रय किये हुवे हमारे गुरु बहुत हैं जिनसे जिस बुद्धिको लेकर संसार से मुक्तहोकर हम फिरते हैं तिनको श्रवण करो ॥ ३२ ॥

---

पृथिवी वायुराकाशमापोऽग्निश्चन्द्रमा रविः ।
कपोतोऽजगरः सिन्धुः पतङ्गो मधुकृद्गजः ॥ ३३ ॥
मधुहा हरिणो मीनः पिङ्गला कुररोऽर्भकः ।
कुमारी शरकृत् सर्प ऊर्णनाभिः सुपेशकृत् ॥ ३४ ॥
एते मे गुरवो राजंश्चतुर्विंशतिराश्रिताः ।
शिक्षावृत्तिभिरेतेषामन्वशिक्षमिहात्मनः ॥ ३५ ॥
यतो यदनुशिक्षामि यथा वा नाहुषात्मज ! ।
तत्तथा पुरुषव्याघ्र ! निबोध कथयामि ते ॥ ३६ ॥
भूतैराक्रम्यमाणोऽपि धीरो दैववशानुगैः ।
तद्विद्वान्न चलेन्मार्गादन्वशिक्षं क्षितेर्व्रतम् ॥ ३७ ॥
शश्वत्परार्थसर्वेहः परार्थैकान्तसम्भवः ।
साधुः शिक्षेत भूभृत्तो नगशिष्यः परात्मताम् ॥ ३८ ॥
प्राणवृत्त्यैव सन्तुष्येन्मुनिर्नैवेन्द्रियप्रियैः ।
ज्ञानं यथा न नश्येत नावकीर्येत वाङ्मनः ॥ ३९ ॥
विषयेष्वाविशन् योगी नानाधर्मेषु सर्वतः ।
गुणदोषव्यपेतात्मा न विषज्जेत वायुवत् ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

गुरूनाह । पृथिवीति ॥ ३३ ॥

शोभनं रूपं कीटस्य करोतीति सुपेशस्कृत् ॥ ३४ ॥

मे मया श्रिताः तदाह । एतेषां वृत्तिभिरात्मनः शिक्षाः शिक्षणीयानर्थान्हेयोपादेयादीनन्वशिक्षमनुशिक्षितवानस्मि ॥ ३५ ॥

नाहुषो ययातिः ॥ ३६ ॥

क्षितेः क्षमां शिक्षितवानित्याह । भूतैरिति । आक्रम्यमाणः पीड्यमानः तद्विद्वान्भूतानां दैववशवर्तित्वं विद्वान् व्रतं नियमम् ॥ ३७ ॥

पर्वतरूपा वृक्षरूपा च या पृथिवी तस्याः शिक्षितमाह । शश्वदिति । सर्वदा परार्थाः परोपकारार्थाः सर्वा ईहा यस्य सः परार्थ एव एकान्ततः सम्भवो यस्य सः भूभृतः पर्वतात् तस्य हि वृक्षतृणाभिर्झरप्रस्रवणक्रियाः परार्था एव यथा तद्वत् तथा नगशिष्यो वृक्षशिष्यः सन् परात्मतां पराधीनात्मताम् वृक्षो यथा परैरवखण्डयमानः पात्यमानो वा नयनमप्यनुमन्यते तद्वत् ॥ ३८ ॥

वायुरपि द्विविधः प्राणो बाह्यश्च तत्र प्राणस्य गुरुत्वमाह । प्राणवृत्त्येति । प्राणो ह्याहारमात्रेण प्रवर्तते रूपरसादीनिन्द्रियविषयांस्तु नापेक्षते तथा मुनिरपि भवेदित्यर्थः । प्राणवृत्तेरकरणे मनोवैकल्येन ज्ञाननाशः स्यादतो देहनिर्वाहः कर्तव्यः गुणाभिप्सायां तु वाङ्मनश्च विक्षिप्येतातो नाधिकं लिप्सेदित्याह । ज्ञानमिति । नावकीर्येत न विक्षिप्येत ॥ ३९ ॥

विषयान् सेवमानोऽपि तेष्वनासक्तिं बाह्याद्वायोः शिक्षेदित्याह । विषयेष्विति । नानाधर्मेषु शीतोष्णादिधर्मकेषु नहि वायुर्वने दहने वा सज्जते तद्वत् ॥ ४० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी ।

एतेषां पृथिव्यादीनां वृत्तिभिर्धर्मैः ॥ ३५ ॥

यतो यस्माद्गुरोः यद्धेयमुपादेयं चार्थम् ॥ ३६ ॥

नियमं क्षमारूपं मार्गात् ज्ञानमार्गात् ॥ ३७ ॥

पृथिव्या अनन्तरमेव गुरुत्वेन स्फुटीकरोति पर्वतरूपेति साधुः यथा शश्वत् परार्थसर्वेहः परार्थैकान्तसम्भवः स्यात्तथा भूभृतः शिक्षेत [illegible] । तस्य भूभृतः वृक्षादिप्रसवक्रियाः परार्था एवेत्युपलक्षणं [illegible] सम्भवोऽपि एकान्ततः सर्वथा हरिणगवयसिंहादिवासार्थेनेति ॥ ३८ ॥

वायोरप्यवान्तरभेदमाह । वायुरपीति । तत्र तयोर्द्वयोर्मध्ये प्राणस्य वृत्तिराहारमात्रं तयैव इन्द्रियप्रियैः रूपादिना चक्षुरादीनां लालनैः प्राणवृत्तेराहारमात्रस्य अतः प्राणवृत्त्यकरणस्य ज्ञाननाशकत्वात् स्वासक्तिं विहायौपाधिकतुष्टतया देहनिर्वाहः कर्तव्यः गुणाभिप्सायां मधुमधुरादिरसापेक्षायाम् अतो गुणाभिप्साया विक्षेपकत्वात् अधिकं प्राणवृत्तेरतिरिक्तम् ॥ ३९ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

विषयेषु रसादिषु आवसन् तान् सेवमानोऽपीत्यर्थः । वने पुष्पिते दहनेऽग्नौ ॥ ४० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एतेषां शिक्षावृत्तिभिः शिक्षा अशिक्षं शिक्षां कृतवान् ३५॥३८ इन्द्रियार्थैः शब्दादिभिः ॥ ३९—४१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तान्निर्दिशति द्वाभ्याम् । पृथिवीति । मधु करोत्याहारत्वेनेति मधुकृद्भृङ्गः स च मधु कृन्तति आच्छिद्य गृह्णातीति व्युत्पत्तेः मधुमक्षिका च ॥ ३३ ॥

मधुहा मध्वाहर्ता व्याधः कुररः पक्षिविशेषः उत्क्रोशाख्यः अर्भकोऽज्ञः शरकृदिषुकारः सुपेशमतिशोभनं रूपं कीटस्य करोतीति तथा भ्रमरविशेषः ॥ ३४ ॥

एते चतुर्विंशतिर्गुरवो मया आश्रिताः तदाह एतानीमित्या इति एतेषां वृत्तिभिरहमात्मनः शिक्षा मनः प्रतिशिक्षा अन्वशिक्ष पाठे पचतीति वन्निर्देशः शिक्षां कृतवानस्मीत्यर्थः ॥ ३५ ॥

तत्र यतो वृत्तेः यच्छिक्षणमनुशिक्षामि अन्वशिक्षितवानस्मि पूर्ववन्निर्देशः न चलेत अन्वशिक्षमित्यादिपरोक्षापरोक्षनिर्देशः स्मरणानन्तरभावेन पालितधर्मात्मताभिप्रायकः हे नाहुषात्मज नाहुषो ययातिः हे पुरुषव्याघ्र ! तच्छिक्षणं तथा ते तुभ्यं कथयामि निबोधावधारय ॥ ३६ ॥

तत्र क्षितिः पर्वतवृक्षादिरूपा भूमरूपा चेति द्विधा तत्र भूमरूपायाः क्षितेः क्षमां शिक्षितवानस्मीत्याह । भूतैरिति । दैववशानुगैः दैवप्रेरितैः भूतैराक्रम्यमाणः पीड्यमानोऽपि धीरः तदाक्रमणप्रयुक्तदुःखसहिष्णुः तद्विद्वान् भूतानां दैववशानुगत्वं जानन् मार्गान्न चलेदित्येव क्षितेर्व्रतं नियतं धर्ममन्वशिक्षं मार्गः क्षितिपक्षे चरणात्मकः पक्षान्तरे ज्ञानमार्गः ॥ ३७ ॥

पर्वतवृक्षरूपायाः क्षितेः शिक्षितमाह । शश्वदिति । शश्वत् सर्वदा परोपकारार्थी परार्था ईहा चेष्टा यस्य सः परार्थैकान्ततः सम्भवो यस्य सः भूभृतः पर्वतात्साधु यथा तथा एवं शिक्षितं तस्य हि तृणनिर्झरप्रस्रवणादिक्रियाः परार्था एव तद्वदित्यर्थः । तथा नगशिष्यः सन् परात्मतां पराधीनतां शिक्षेत वृक्षो यथा परैश्छेदनाय वोत्पाट्य वा नीयमानो न निवारयति नानुमन्यते वा तद्वत् ॥ ३८ ॥

वायुरपि द्विविधः प्राणो बाह्यश्च तत्र प्राणाच्छिक्षणीयमाह । प्राणवृत्त्येति । प्राणो ह्याहारादिमात्रेण वर्तते शब्दादिविषयांस्तु नापेक्षते तथा मुनिरपि प्राणधारणमात्रप्रयुक्तया वृत्त्या आजीविकया वर्तेत नैवेन्द्रियप्रियैः शब्दादिविषयैर्न तानानुभवेदित्यर्थः । प्राणवृत्त्या वर्तनमपि किमर्थमित्यत आह । ज्ञानमिति । प्राणवृत्त्यकरणे मनोविक्षेपेण ज्ञाननाशः स्यादतो यथा ज्ञानं न नश्येत मनो वा न विशीर्येत तदुपयुक्तया देहनिर्वाहोपयुक्तया वृत्त्या वर्तेत इत्यर्थः ॥ ३९ ॥

विषयान् सेवमानोऽपि तेष्वनासक्तिं बाह्याद्वायोः शिक्षेतेत्याह । विषयेष्विति । नानाधर्मेषु प्रियाप्रियसुखदुःखानुभवात्मकेषु विषयेष्वाविशन्नपि तानिन्द्रियैः स्पृशन्नपीत्यर्थः । गुणदोषाभ्यां प्रियाप्रियाभ्यां व्यपेतः विमुक्तः आत्मा मनो यस्य सः सर्वतः सर्वेषु विषयेषु न विषज्जेत नासक्तो भवेत् न तु वायुश्चन्दने दहने वा विषज्जते तद्वदित्यर्थः । अनासक्तावत्र दृष्टान्तो ननु गुणदोषव्यपेतात्मत्वे चेतव्यगन्तव्यं तस्य तदनपेतात्मत्वात् ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतेषां पृथिव्यादीनां शिक्षाकरणवृत्तिभिः ॥ ३५ ॥

यतो यस्मात् पृथिव्यादेर्यद्वृत्तं शिक्षामि शिक्षे तत्तथा निबोध बोधतिः परस्मैपदी ॥ ३६ ॥

क्षितेः शिक्षितां बुद्धिमाह । भूतैरिति । तद्दैवं विदन्तीति तद्विदः तेषां दैवज्ञानां मार्गात् तद्विद्वानिति पाठे तस्य दैवस्य वशानुगत्वं जानन् मार्गात् सतामिति शेषः क्षितेर्व्रतमचलत्वम् अत एवाचलेति पृथिव्या नामान्तरम् ॥ ३७ ॥

भूमेः शिक्षितं व्रतान्तरं बुद्धिं चाह । शश्वदिति । सर्वदा परेषां गुरुदेवादिसज्जनानामर्थे आत्मनः सर्वेहा सकलचेष्टा संभवं वृद्धिं च "सज्जनार्थेषु सम्भवेत् परिहर्षी वृद्धिमात्मनः" इत्यादेरयमेवार्थ इति शिक्षेत नियमेनेति शेषः ॥ ३८ ॥

एवं क्षित्यादीनि शिक्षणान्याख्याय मुनेर्वृत्तिप्रकारमाह । प्राणवृत्त्येति । मुनिर्यावत्प्राणवृत्त्या शरीरधात्र्या संतुष्येत् तावतैव निर्वहेत् एवकारव्यावर्त्यमाह । नैवेति । तत्रापि ज्ञाननाशकारणानि मनोविक्षेपनिमित्तानि च द्रव्याणि न सेवेतेत्याशयेनाह । ज्ञानमिति ॥ ३९ ॥

वायोः शिक्षिता का बुद्धिरिति तत्राह । विषयेष्विति । विषयेष्वाविशन् विषयाननुभवन् योग्यात्मा योगी जीवः गुणदोषसंबन्धेन न विषज्जेत संसक्तो न भवेत् गानादिनानाधर्मेषु ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एतेषां वृत्तिभिरेवात्मनः शिक्षाः शिक्षणीयानर्थान् अन्वशिक्षम् ॥ ३५ ॥ ३६ ॥

क्षितेः क्षमां शिक्षितवानित्याह । भूतैरिति । दैववशाः पित्रादयस्तेषामनुगैः तद्विद्वान् भूतानां दैववशवर्तित्वं जानन् ॥ ३७ ॥

पर्वतरूपा वृक्षरूपा च या पृथिवी तस्याः शिक्षितं क्रमेणाह । शश्वदिति । परार्थाः सर्वा ईहाः भूधारणनिर्झरोत्क्रमणाम्रोत्पन्नरत्नादिप्रदानरूपाश्चेष्टा यस्य सः भूभृतः शिक्षेत् शिष्यश्च एवं भूतो भवेदित्यन्वयः । नगस्य वृक्षस्य शिष्यः सन् परात्मतां शिक्षेत् परेष्वेवार्पित आत्मा येन तस्य भावस्तत्ता तां वृक्षं खलु स्थानात् स्थानान्तरं नीत्वा यदा रोपयति सेचनादिकं च करोति तत्र सोऽनुमन्यत एव नतु

तेजोऽबन्नमयैर्भावैर्मेघाद्यैर्वायुनेरितैः ।
न स्पृश्यते नभस्तद्वत्कालसृष्टैर्गुणैः पुमान् ॥ ४३ ॥
स्वच्छः प्रकृतितः स्निग्धो माधुर्यस्तीर्थभूर्नृणाम् ।
मुनिः पुनात्यपां मित्रमीक्षोपस्पर्शकीर्तनैः ॥ ४४ ॥
तेजस्वी तपसा दीप्तो दुर्धर्षोदरभाजनः ।
सर्वभक्षोऽपि युक्तात्मा नादत्ते मलमग्निवत् ॥ ४५ ॥
क्वचिच्छन्नः क्वचित्स्पष्ट उपास्यः श्रेय इच्छताम् ।
भुङ्क्ते सर्वत्र दातॄणां दहन् प्रागुत्तराशुभम् ॥ ४६ ॥
स्वमायया सृष्टमिदं सदसल्लक्षणं विभुः ।
प्रविष्ट ईयते तत्तत्स्वरूपोऽग्निरिवैधसि ॥ ४७ ॥
विसर्गाद्याः श्मशानान्ता भावा देहस्य नाऽऽत्मनः ।
कलानामिव चन्द्रस्य कालेनाव्यक्तवर्त्मना ॥ ४८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सम्भवति तथाऽऽह । नभस्त्वं तद्रूपत्वं भावयेत् यथा नभसः सर्वगतस्य न घटादिभिः सङ्गः परिच्छेदो वा एवमात्मनोऽपि सम्भवतीति ॥ ४२ ॥

किञ्च कूटस्थस्याऽऽत्मनो नागमापायिदेहादिसम्बन्ध इत्याह । तेजोऽबन्नमयैः तेजश्च आपश्चान्नं पृथिवी च तन्मयैः कालसृष्टैर्गुणैर्देहादिभिः पुमान्न स्पृश्यत इति नभोवत्सम्भवतीति ॥ ४३ ॥

स्वच्छत्वादिभिर्गुणैरुदकं जगत्पुनातीति तद्गुणा मया शिक्षिता इत्याह । स्वच्छो निर्मलः प्रकृतितः स्वभावतः स्निग्धो अनेकत्वनुरागवान् माधुर्यो मधुरालापी तीर्थभूस्तीर्थस्थानम् अपां मित्रमुदकतुल्यः अपादिति पाठे सन्धाय पापात्पुनाति स्वच्छत्वादिगुणैरस्योदकसादृश्यं ज्ञातव्यम् ॥ ४४ ॥

अग्नेः शिक्षितमाह । तेजस्वीति । ज्ञानातिशयात् विशेषतस्तपसा दीप्तः दुर्धर्षोऽक्षोभ्यः स चासावुदरभाजनश्चापरिग्रहः युक्तात्मा मुनिः ॥ ४५ ॥

अग्नेरेव शिक्षान्तरमाह । क्वचिदिति । यथाग्निः परेच्छयैव हविर्गृह्णाति तथा मुनिरित्याह । दातॄणामिति । प्रागुत्तराशुभं भूतं भविष्यच्च पापम् ॥ ४६ ॥

आत्मनो देहोपाधिकमेव उच्चनीचत्वादि न स्वाभाविकमित्यग्निदृष्टान्तेन सम्भावितमित्याह । स्वमायया स्वाविद्यया सृष्टं सदसल्लक्षणं देवतिर्यगादिरूपं विप्रशूद्रादिरूपं वा ॥ ४७ ॥

आत्मनो जन्मादिषड्विकाराभावः चन्द्रदृष्टान्तेन सम्भावित इत्याह । विसर्गाद्या इति । विसर्गो जन्म श्मशानं नाशः अत्रेयं ज्योतिःशास्त्रप्रक्रिया आप्यमयवर्तुलं चन्द्रः तेजोमयमण्डलमादित्यः तयोरेकनक्षत्रावस्थाने चन्द्रो न दृश्यते चक्षुष आदित्यमण्डलेन समदेशस्थितेन व्यवधानात् सा अमावास्या अथ षष्टिघटिकाभिश्चन्द्रो नक्षत्रान्तरं गच्छति आदित्यस्तु त्रयोदशभिः अहोरात्रैः अतः प्रतिपदमारभ्य विषमस्थितस्य आदित्यमण्डलस्य पञ्चदशः पञ्चदशो भाग आप्यमण्डले प्रतिबिम्बितो दृश्यते सा कलेत्युच्यते एवं पञ्चदशेऽह्नि त्रयोदशभिर्नक्षत्रैरन्तरमिति राशिचक्रस्य सप्तविंशतिनक्षत्रात्मकस्य मध्ये सम्मुखौ यदा चन्द्रादित्यौ तिष्ठतः तदा सम्पूर्णं प्रतिबिम्बं भूच्छायाबाच्छिन्नं दृश्यते सा पूर्णिमा तस्याममावास्याप्रतिबिम्बेन सह षोडशकलश्चन्द्र उपचर्यते ततः पुनः प्रतिपदमारभ्य मण्डलयोर्विपर्ययाभावात् कलाह्रासः तत्र यथा कलानामेवोत्पत्त्यादयो नाप्यमण्डलस्य तथात्मनोऽपीत्याह । कलानामिवेति ॥ ४८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

तद्गुणाश्रयः तेषां देहादीनां ये गुणाः कार्श्यादिधर्मास्तेषामहंप्रत्ययेनाश्रयोऽपि तैर्गुणधर्मैरसङ्गत्वाद्वस्तुतो न युज्यते ॥४१॥

एकस्य सजातीयभेदविरहितस्याद्वितीयस्य देहाद्यसङ्गं देहाद्यसम्बन्धम् अतएव असङ्गत्वादेव अव्यवच्छेदमपरिच्छिन्नत्वं समन्वयेन अधिष्ठानतयानुगमेन तत् जीवस्य विततत्वं तत्त्वमसीति तत्पदेनेश्वर उच्यते त्वंपदेन जीव उच्यते असिपदेन ऐक्यं तत्र मायोपहितं चैतन्यं सर्वज्ञं सर्वकारणम् अविद्योपहितं चैतन्यं किञ्चिज्ज्ञं जगत्सृष्टौ सर्वथाऽशक्तमिति तयोरैक्याभावात् मुख्यार्थस्य बाधः विशिष्टवाचकस्य शब्दस्य विशेष्यांशेऽपि वाचकतया कथञ्चिद्योगः ऐक्यं तु प्रयोजनमिति सोऽयं देवदत्त इतिवन्मायाविद्यादिविशेषणपरित्यागेनानुगतचिन्मात्रोपादानेन भागलक्षणया जीवेऽपि ब्रह्मस्वरूपभावनया विततत्वोपपत्तिरित्यर्थः । एतत् असङ्गत्वमपरिच्छिन्नत्वञ्च ॥ ४२ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी।

तन्मयैः तेजआदिविकारैः ॥ ४३ ॥

मुनिः पुनात्यघामित्रमिति पाठान्तरं तत्र स्वच्छत्वादयो गुणा अत्र स्फुटमुपलभ्यन्ते इत्यर्थात्तात्पर्यवशाज्जलसादृश्यं ज्ञेयम् ॥ ४४ ॥

सर्वभक्षोऽपि भक्ष्याऽभक्ष्यविचारशून्योऽपि मलं तज्जन्यं दोषं नादत्ते न प्राप्नोति ॥ ४५ ॥

क्वचिद्व्यावहारिकजनेषु अदृश्यत्वभूतवेशभाषादिना च्छन्नः क्वचिच्च मुमुक्षुप्रभृतिषु उपदेशादिना स्पष्टः अतः श्रेय इच्छन्निति रूपात्मः सर्वत्र भुङ्क्ते इति तस्य परमहंसत्वमभिव्यञ्जितं भूतं भविष्यच्चेति प्रारब्धस्य भोगमन्तराऽपरिहार्यत्वं व्यञ्जितम् ॥ ४६ ॥

स्वाविद्यया स्वरूपाज्ञानेन तत्तत्स्वरूपः देवतिर्यगादिरूपः ॥ ४७ ॥

तत्र चन्द्रदृष्टान्ते तयोश्चन्द्रादित्ययोः अदर्शने हेतुः चक्षुषेति अथ अमावास्यानन्तरं अतः षष्टिघटिकाभिर्नक्षत्रान्तरगमनात् पञ्चदशोभागः पञ्चदशांशः प्राप्यमण्डले अन्नमयमण्डले तस्यां पूर्णिमायां ततः पूर्णिमानन्तरम् अत्र ज्योतिःशास्त्रप्रक्रियायाम ॥ ४८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

समन्वयेन वेदान्तवाक्यसमन्वयसिद्धेन ब्रह्मात्मभावेन सर्ववस्तूनां ब्रह्मात्मकत्वेन आत्मनः परमात्मनः असङ्गं नभस्त्वं नभस इव भावयेत् ॥ ४२ ॥

निर्दोषत्वे च नमोदृष्टान्त इत्याह। तेज इति। पुमान् परः पुमान् ॥ ४३ ॥

अपः मित्रम् अपां तुल्यः ॥ ४४ ॥

सर्वभक्षः स्वाद्वस्वादुविभागमनपेक्ष्य भक्षकः ॥ ४५ ॥

स्पष्टः योगाभ्यासरूपमथनेन स्पष्टः ॥ ४६ ॥ ४७ ॥

विसर्गाद्याः निषेकाद्याः ॥ ४८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वायोरेव शिक्षणीयान्तरमाह। पार्थिवेष्विति आत्मदर्शी योगी पृथिव्यादिपरिणामरूपेषु देहेषु प्रविष्टःतद्गुणाश्रयः वयस्थमनुष्यत्वस्थूलत्वकृशत्वादिदेहधर्मयोगितया प्रतीयमानोऽपि तैर्गुणैर्न युज्यते स्थूलोऽहं कृशोऽहमिति न मन्यते आत्मदर्शीति हेतुगर्भं यतः देहविलक्षणमात्मानमेव पश्यतीति तथा गन्धैर्वायुरिव यथा सुरभिपूतिगन्धाश्रयेषु प्रविशन्नपि वायुर्वस्तुतो न तद्योगी तद्वत् ॥ ४१ ॥

अथाकाशाच्छिक्षितमाह द्वाभ्याम्। अन्तरिति। समन्वयेन वेदान्तवाक्यसमन्वयसिद्धेन ब्रह्मात्मभावेन सर्ववस्तूनां ब्रह्मात्मकत्वेनाव्यवच्छेदं निरन्तरं यथा तथा सर्वेषु चराचरात्मकेषु भूतेषु विततस्य व्याप्तस्य पूर्णस्येति यावत् आत्मनः परमात्मनः अन्तर्बहिश्च व्याप्त्याऽसङ्गं नभस्त्वं नभस इव भावयेत् ॥ ४२ ॥

निर्दोषत्वे नमोदृष्टान्तमाह। तेज इति। तेजश्चापश्चान्नं पृथिवी च इत्येवंविधभावः तन्मयैस्तद्विकाररूपैर्वायुना ईरितैः प्रेरितैर्मेघाद्यैः भावैः पदार्थैर्यथा नभो न स्पृश्यते तद्वत्पुमान् परमपुरुषः कालसृष्टैः कालेन निमित्तभूतेन सृष्टैर्गुणैः गुणपरिणामात्मकैः स्थिरजङ्गमैर्न स्पृश्यते व्याप्यगतदोषैर्न स्पृश्यते इत्यर्थः ॥ ४३ ॥

स्वच्छत्वादिभिर्गुणैरापो जगत्पुनन्तीति तद्गुणाः शिक्षणीया इत्याह। स्वच्छ इति। स्वच्छः निर्मलः प्रकृतितः स्वभावतः स्निग्धः भूतेष्वनुरागवान् माधुर्यः मधुरालापी नृणां तीर्थभूतस्तीर्थस्थानमपामिव मित्रमपां तुल्यः अन्यदपि स्वभावसाधारणं धर्ममाह ईक्षादिभिः पापात्पुनातीति ईक्षा दर्शनम् उपस्पर्शनं जलपक्षे स्नानपानादिकं मुनिपक्षे पादस्पर्शादिरूपम् ॥ ४४ ॥

अथाग्नेः शिक्षणीयमाह। तेजस्वीति तेजस्वी ज्ञानादिगुणवान् विशेषतस्तपसा दीप्तः दुर्धर्षः सत्त्वाढ्यः सन्नासाधुदरभाजन इति उदरं भाजनमन्नादिनिधानपात्रं यस्य सः अपरिग्रह इत्यर्थः सर्वभक्षः मिष्टकटुकविभागमनपेक्ष्य भक्षकः ननु निषिद्धनिषिद्धभक्षकः "आहारशुद्धौ सत्त्वशुद्धि"रिति नातिरतो बुभुक्षितादिति" च श्रुतेः युक्तात्मा समाहितचित्तः मलं नादत्ते निर्मलश्चाग्निवद्यथाग्निस्तद्वत् ॥ ४५ ॥

तत एव शिक्षणीयान्तरमाह। क्वचिदिति द्वाभ्याम्। छन्नः अग्निपक्षे भस्मना छन्नः योगिपक्षे स्वमाहात्म्यानाविष्कारेण स्पष्टः अग्निपक्षे आज्यादिरूपहविषा पक्षान्तरे योगाभ्यासादिना श्रेयः स्वर्गमोक्षादिरूपमिच्छतामिच्छद्भिः उपास्यः यथाग्निः परस्तादेव हविर्गृह्णाति तथा मुनिरपीत्याह। भुङ्क्ते इति। दातृणां प्रागुत्तराशुभं भूतं भविष्यच्च पापं दहन् ॥ ४६ ॥

स्वमाययेति विभुः परमपुरुषः सदसल्लक्षणं चिदचिदात्मकं जगत्प्रविष्टः तत्तत्स्वरूपः देवमनुष्यादिरूपः ईयते प्रतीयते यथाग्निर्यथासि दारुणि प्रविष्टः तद्रूप ईयते तद्वत् अग्नेरधिष्ठानगतवक्रत्वादिरिव देवाद्याकारो नान्तर्यामिपरमात्मस्वरूपगत इत्यर्थः ॥ ४७ ॥

जन्मादिषड्भावविकाराः शरीरस्यैव इति नत्वात्मनः चन्द्रस्य कलानामिवेति चन्द्रदृष्टान्तेन शिक्षितमित्याह। विसर्गाद्या इति। निषेकाद्याः श्मशानान्ताः नाशान्ता भावा विकाराः अलक्ष्यगतिना कालेन निमित्तेन देहस्यैव नत्वात्मनस्तद्वच्चन्द्रस्य कलानामिव यथा चासां वृद्धिह्रासौ न तु चन्द्रस्य तद्वदित्यर्थः ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पार्थिवेषु पृथिवीकार्येषु प्रविष्टः तद्गुणाश्रयः जन्मदुःखादिदेहधर्माश्रयः गुणैर्दुःखादिभिः ॥ ४१ ॥

नभसः शिक्षितमाह। अन्तरिति। मुनिर्विततस्य व्याप्तस्याकृतिनः आत्मनः परमात्मनः नभोवदव्यवच्छेदमखण्डत्वं देहेषु असङ्गत्वं भावयेच्चिन्तयेत् कुत्र कथमत उक्तं। स्थिरजङ्गमेष्विति। स्थिरजङ्गमेषु चराचरात्मकेषु वस्तुषु अन्तरात्मभावेन अन्तर्यामित्वेन अन्तर्व्याप्त्या बहिर्ब्रह्मभावेन बृहत्त्वेन महत्त्वव्याप्त्या इदं केन सिद्धमत्राह। समन्वयेनेति। उपक्रमादितात्पर्ययुक्तप्रमाणेन ब्रह्मणः आत्मभावेन स्वैक्येनेत्यन्यथा व्याख्यानम्—

जीवान्तर्यामिको विष्णुरात्मनामा समीरितः।
तस्य तु ब्रह्मरूपत्वाद्ब्रह्मेत्युक्तस्तथैव च ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पश्येदाकाशवद्‌व्याप्तिमसङ्गत्वं च नित्यशः ।
इतिप्रमाणाविरुद्धं तस्मान्नाङ्गीकर्तव्यः सोऽर्थ इति ॥ ४२ ॥

असङ्गप्रकारमाह । तेज इति । यथा नभो वाय्वग्निरितैर्मेघौघैर्न स्पृश्यते तद्वत्तथा पुमान् परः पुरुषः कालसृष्टैः तेजोऽव्वन्नमयैर्गुणैर्विषयैर्न स्पृश्यत इत्यन्वयः ॥ ४३ ॥

अब्दयः शिक्षितां बुद्धिमाह । स्वच्छ इति । तीर्थवद्गङ्गादिशुद्धजलवत् प्रकृतितः स्वभावतः स्वच्छः —

प्रकृतिः पञ्चभूतेषु स्वभावे मूलकारणे ।

इत्यभिधानं ननु जीवस्य स्वच्छगुणत्वे जीवपरयोः को विशेष इतीयमाशङ्का स्वच्छत्वादयो गुणा हरे स्वतः सिद्धा जीवस्येष्टव्या स्वीकर्तव्या इति परिहर्तव्या तदुक्तम्—

गुणान् जीवस्य चेष्टव्यान् भिन्नान्विष्णोर्गुणांस्तथा ।
तत्तद्दृष्ट्वा विचिन्वीत पृथगेव सुधीः सदेति ॥

माधुर्यः सुखहेतुः—

मधुनाम सुखं विद्यान्माधुर्यं सुखहेतुता ।
सुखं रतिर्वा सम्प्रोक्ता शब्दतत्त्वविचक्षणैरिति ।

वचनात् मुनिर्मित्रं स्वाभितं पुनाति ईक्षणमात्रेण ॥ ४४ ॥

अग्नेः शिक्षितां बुद्धिमाह । तेजस्वीति । तेजस्वी प्रभाववान् अन्यत्रार्चिष्मान् तपसा उपवासादिना अन्यत्र सन्तापहेतुज्वालया दीप्तः प्रकाशनशक्तिमान् दुर्धर्षः पराभवयितुमशक्यः—

पराभवो धर्षणा स्यादवज्ञानमथापि वा ।
न तत्सत्त्वं सदा कुर्यात्सहसा शपनन्नचेति ॥

वचनात् दुरभाजनो दूरान्निषेव्यः युक्तात्मा परमात्मनि युक्तमनाः एवं विधो ज्ञानी सर्वभक्षोऽपि पापं नादत्ते अपरोक्षज्ञानिनोऽपि सर्वभक्षणं "सर्वान्नानुमतिः प्राणात्यये तद्दर्शनात्" इत्यापादितपथं कथमाप्नुयात् ॥ ४५ ॥

क्वचिच्छन्नः दुष्टजनमन्निधौ क्वचित्स्पष्टः सुजनसमीपे आत्मज्ञानादिलक्षणां श्रेयः इच्छतां पुंसामुपास्यः दातॄणां प्रागुत्तराशुभं दहन् सर्वं भुङ्क्ते मुख्यगत्योः समामिदम् ॥ ४६ ॥

अग्नेः शिक्षितं परमात्मज्ञानमाह । स्वमाययेति । स्वमायया स्वेच्छाधीनप्रकृत्या सृष्टं सदसल्लक्षणां स्थूलसूक्ष्मरूपं जगत्प्रविष्टः तत्तत्स्वरूपः तत्तत्पदार्थानुगुणारूप ईयते कथमेवासि प्रविष्टः एधोऽरूपोऽग्निरिव अत्र जीवस्य छन्नत्वं परमात्मनः प्रविष्टत्वं चेति विशेषणा ज्ञातव्यम्—

जीवस्य च्छन्नतां शिक्षेत्प्रविष्टत्वं परात्मनः ।
तत्तद्गुणविडम्बं च वह्नेः सर्वं यथापि चेति ॥

वचनात्—

अङ्गारो यथाल्पोऽग्निरेधमल्पशरीरगः ।
दृश्यते परमात्मापि स्थूलास्थूलशरीरगः ॥

इति ॥ ४७ ॥

चन्द्रमसः शिक्षितां बुद्धिमाह । विसर्गाद्या इति । विविधाः सर्गाद्याः जननाद्याः श्मशानान्ताः मरणान्ता देहस्यैव नात्मनो जीवस्य चन्द्रस्य कलानां वृद्धिक्षयादिकं यथा न चन्द्रस्वरूपस्य ॥ ४८ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एवं देहधर्मानासक्तिमपि तस्मादेव शिक्षेदित्याह । पार्थिवेष्विति । सुगन्धो दुर्गन्धोऽयमिति तत्संयोगित्वेन प्रतीयमानोऽपि तद्वस्तुनो वायुर्यथा न तत्संयोगी एवं देहधर्मयोगेनाहंप्रत्ययेन प्रतीयमानोऽपि योगी न तद्धर्मा यत आत्मदृक् आत्मानं ततः पृथक्तया पश्यतीति सः ॥ ४१ ॥

परमात्मनोऽन्तर्बहिरपि वर्तमानत्वमसङ्गत्वं चाकाशदृष्टान्तेनाकाशं दृष्ट्वा शिक्षेदित्याह । अन्तर्हित इति द्वयेन । मुनिर्योगी अन्तर्बहिश्च देहान्तर्गतोऽपि विवेकेन आत्मनः परमात्मनो विततस्य सर्वव्यापकस्य नभस्त्वमाकाशसादृश्यं भावयेत् तदेवाह । स्थिरजङ्गमेषु अन्तर्हितः अन्तर्हितोऽन्तर्गत इत्यन्तर्हितः तस्य अन्तर्गतस्य चकाराद्बहिर्गतस्य च ब्रह्मात्मभावेन ब्रह्मस्वरूपत्वेन या समन्वयेन व्याप्तितया अव्यवच्छेदं अनवच्छिन्नत्वं यथा नभसः सर्वगतत्वाद्वस्तुनो न घटादिभिः सङ्गः परिच्छेदो वा एवमात्मनोऽपि ॥ ४२ ॥

तेजश्च आपश्च अन्नं पृथिवी च तन्मयैः कालसृष्टैर्गुणैर्देहादिभिः पुमान्न स्पृश्यते यद्वद्वायुनेरितैर्मेघाद्यैर्नभो न स्पृश्यते तद्वत् ॥ ४३ ॥

जलाच्छिक्षितमाह । स्वच्छो निर्मलः प्रकृतितः स्वभावतः स्निग्धः जनेषु स्नेहकृत् माधुर्यो मधुरः मधुरालापी तीर्थभूः भक्तापदेशेन लोकपावनः अपां मित्रं जलतुल्यः अपामिति पाठे मित्रं सखायं पुनाति स्वच्छत्वादिगुणैरम्भोजलसादृश्यं ज्ञेयम् ॥ ४४ ॥

वह्नेः शिक्षितमाह । तेजस्वीति त्रिभिः । दुर्धर्षः क्षोभयितुमशक्यः सर्वासावुदरभाजनश्च युक्तात्मा योगी एवं भवेदित्यर्थः ॥ ४५—४६ ॥

अग्निर्यथा एधसि प्रविष्ट ईयते भासमानः प्रकटीभवति तथैव भगवानिदं जगत् प्रविष्ट ईयते भवगणकीर्तनादिभक्त्यभ्यासात् प्रत्यक्षीभवति ॥ ४७ ॥

चन्द्राच्छिक्षितमाह । विसर्गो जन्म श्मशानं मृत्युस्तदन्ता दशा देहस्यैव नात्मनः चन्द्रस्य पञ्चदशकलानामेव यथा उत्पत्त्यादयः नतु षोडशस्यामाकलारूपस्य चन्द्रस्य ॥ ४८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पार्थिवेषु पृथिव्युपलक्षितपञ्चभूतमयेषु प्रविष्टः तद्गुणाश्रयः बालोऽस्मि तरुणोऽस्मि इत्यादिव्यवहारवशाद्देहगुणाश्रयतया प्रतीयमानोऽपि गुणैर्बालत्वादिभिर्न युज्यते बालत्वादिगुणको न भवति यथा चम्पकादिगन्धाश्रयतया प्रतीयमानोऽपि वायुर्गन्धैर्न युज्यते तद्वत् ॥ ४१ ॥

आकाशाच्छिक्षितमाह । अन्तर्हितश्चेति द्वाभ्याम् । समन्वेतीति समन्वयस्तेन समन्वयेन आत्मभावेन स्वस्वभावेन वा व्याप्तितया अव्यवच्छेदं व्यवच्छेदरहितम् असङ्गं व्याप्यसंस्पर्शदोषरहितम् ब्रह्म बृहद्गुणशक्त्याद्याश्रयं जगत्कारणम्—

अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम् ।
यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनमि

त्युक्तलक्षणं श्रीकृष्णाख्यं परं तत्त्वम् स्थिरजङ्गमेषु अन्तर्बहिश्च भवति एवं हि विततस्य सर्वव्यापकस्यात्मनो बृहदात्मन

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

मुनिस्तन्मननशीलः नभस्त्वं तद्वत्त्वं भावयेत् मायावादिना तु अन्तर्बहिश्च देहान्तर्गतोऽपि मुनिरात्मनो देहाद्यसङ्गम् अत एवाऽव्यवच्छेदं च भावयेत् कुतः स्थिरजङ्गमेषु समन्वयेन या व्याप्तिस्तया किंभूतेषु सूत्रस्येव व्याप्तिं विततस्य सर्वगस्य कुतः ब्रह्मात्मभावेन ब्रह्मस्वरूपभावनया तस्यसर्वात्मभूतेः। नन्वेतत्सर्वं कथं सम्भवति तत्राह नभस्त्वं भावयेत् यथा नभसः सर्वगतस्य न घटादिभिः सङ्गः परिच्छेदो वा एवमात्मनोऽपि सम्भवतीति व्याख्यातं तदयुक्तम् अणुर्ह्येष आत्मेत्यादिश्रुतिप्रतिपादितस्यात्मनः सर्वव्याप्त्यसम्भवात् अणुस्वरूपस्य व्यापकस्वरूपैक्यभावनापि निरर्थिकैव स्यात् नहि परमाणुर्मेरुभावनया मेरुर्भवति तस्त्वमसीति वाक्यन्तु अंशभूतस्यात्मनोंऽशिपृथगवस्थानाभावादवस्थानाभेदं वदति न स्वरूपतः ऐक्यम् अन्यथा सर्वं खल्विदं ब्रह्मेत्यनेनापि सर्वस्य चेतनाचेतनस्य स्वरूपैक्यं प्रसज्ज्येत नचैकस्मिन् भेदत्रयशून्ये सन्मात्रे वस्तुनि मायया भेदो वस्तुतस्त्वभेद इतिवाच्यम् मायायाः सत्यत्वेऽद्वैतसिद्धान्तभङ्गापत्तेः मिथ्यात्वे तु भेदकत्वासम्भवात् अनिर्वचनीयत्वे मायया भ्रान्तत्वेन मायावादिनां भ्रान्तत्वं तन्मुखेनैव स्यात् मायावादनिराकरणविस्तरः पराभिमताध्यासगिरिवज्रे द्रष्टव्यः ॥ ४२ ॥

तेजश्च आपश्च अन्नं पृथिवी च तन्मयैर्भावैरुष्णत्वादिगुणैर्कैर्द्रव्यैर्मेघाद्यैश्च नभो न स्पृशेत् न स्पृश्यते यथा तद्वत् पुमान् परमेश्वरः कालसृष्टैर्भावैः प्राकृतैः पदार्थैर्न स्पृश्यते ४३

जलाच्छिक्षितमाह। स्वच्छ इति। स्वच्छः निर्दोषः प्रकृतितः स्निग्धः स्वभावतः कोमलः माधुर्यः मधुरवागादिवृत्तिमान् तीर्थभूतस्तीर्थभूतः नृणां मित्रमुदकगुणग्राही मुनिः पुनाति जगदिति शेषः ॥ ४४ ॥

अग्नेः शिक्षितमाह। तेजस्वीति। दुर्धर्षः दुष्टैरनभिभूयमानः तपसा सो उदरभाजनः अपरिग्रहयुक्तः अयुक्तभोजनवाससंकल्पादिभ्योऽशिष्टव्यवहारेभ्यो युक्तः दूरीभूतः आत्मा मनो यस्य सः सर्वभक्षोऽपि श्रद्धयाऽश्रद्धया मानतोऽमानतश्च प्राप्तं सर्वं भुङ्क्ते तथापि मुनिः मलमसारं वैषम्यमित्यर्थः। अग्निवत्साहसे युक्तायुक्तनिरपेक्षभक्षणं तु सूत्रकारादिभिर्नानुज्ञातम् "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृति" रिति श्रुतेः ॥ ४५ ॥

तस्मादेव शिक्षितान्तरमाह। क्वचिदिति। प्रागुत्तराशुभमतीतानागतम् ॥ ४६ ॥

तस्मादेव परमात्मनः संसारगुणदोषास्पृष्टत्वं शिक्षितं दर्शयति। स्वमाययेति। स्वमायया प्रकृत्या सदसल्लक्षणं साधम्माधुलक्षणम् इदं जगत् सृष्टं निर्मितं प्रविष्टोऽपि "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः तथापि विभुरेवैयते स्वामाधारणविभुत्वादिधर्मवानेव प्रतीयते शास्त्रद्वारा निश्चीयते नतु सदसल्लक्षणेन संसारिणा अन्यथा क्रियते इत्यर्थः। एधस्मि सदसल्लक्षणे प्रविष्टः तत्तत्स्वरूपः तत्तदाकारः अग्निरिवैधते प्रत्यक्षतया प्रतीयते न स्पृश्यते तद्वत् ॥ ४७ ॥

चन्द्राच्छिक्षितमाह। विसर्गाद्या इति। विसर्गाद्याः जन्माद्याः श्मशानान्ताः भावाः षड् विकाराः अव्यक्तगतिनाऽलक्ष्यगमनेन कालेन निमित्तेन देहस्यैव न त्वात्मनो जीवस्य यथा वृद्धिह्रासौ कलानामेव न तु चन्द्रस्य तद्वत् ॥ ४८ ॥

---

भाषा टीका।

यद्यपि पृथिवी आदि विकार के देह में योगी प्रविष्ट है तौभी देह धर्म से युक्त नहीं होता है गुणों के आश्रय से रहकर भी गुणों से युक्त नहीं होता है यहबात वायु से सीखनी चाहिये वायु भी किसी गंध से लिप्त नहीं होता है ॥ ४१ ॥

ब्रह्मात्म रूप से स्थावर जंगम सब मे अन्वित होकर रहने वाला परमात्मा है और व्यापक है सब से अलग है इस बात को आकाश को देख कर जानना चाहिये ऐसे व्याप्त ब्रह्म की मुनि भावना करे ॥ ४२ ॥

जैसे कि अग्नि जल मेघ वायु आदि के धर्मों से आकाश का स्पर्श नहीं होता है तैसे ही काल के गुणों से आत्मा का स्पर्श नहीं होता है ॥ ४३ ॥

प्रकृति से निर्मल अति स्नेह वाला मधुर गुण वाला मनुष्यों का तीर्थ रूप ऐसा मुनि जल का मित्र होकर दर्शन स्पर्शन कीर्तन आदि को से सब को पवित्र करे यह बात जल से सीखनी चाहिये॥ ४४ ॥

तेजवाला होवे तप से प्रकाश मान होवे बड़ा दुर्धर्ष होवै पेटही बरतन रखै सर्व पदार्थ का मिठा कडुआदि का भक्षण कर ने से भी योगी को रोग दोष नहीं होता है यह गुण अग्नि से सीखा है ॥ ४५ ॥

कहीं छिपा रहै कहीं प्रगट रहै कल्याण चाहने वालों का उपास्य होवै देने वालों के पापों का दहन करता हुआ सब पदार्थों को भोगै यह भी अग्नि का गुण है ॥ ४६ ॥

इसी प्रकार जैसे काष्ठों में अग्नि रहता है तैसे ईश्वर भी स्थूल सूक्ष्म इस संसार को पैदा कर इसमे प्रविष्ट होकर सकल रूपसे भान होते हैं ॥ ४७ ॥

जन्म से लगा कर मरण पर्यंत सब विकार देहके हैं आत्मा के नहीं है जैसे कि अलक्षित काल के योग से चन्द्रमा के कलाओंका क्षय होता है चन्द्रमा का नहीं ॥ ४८ ॥

कालेन ह्योघवेगेन भूतानां प्रभवाप्ययौ ।
नित्यावपि न दृश्येते आत्मनोऽग्नेर्यथाऽर्चिषाम् ॥ ४९ ॥
गुणैर्गुणानुपादत्ते यथाकालं विमुञ्चति ।
न तेषु युज्यते योगी गोभिर्गा इव गोपतिः ॥ ५० ॥
बुध्यते स्वे न भेदेन व्यक्तिस्थ इव तद्गतः ।
लक्ष्यते स्थूलमतिभिरात्मा चावस्थितोऽर्कवत् ॥ ५१ ॥
नातिस्नेहः प्रसङ्गो वा कर्तव्यः क्वापि केन चित् ।
कुर्वन्विन्देत सन्तापं कपोत इव दीनधीः ॥ ५२ ॥
कपोतः कश्चनारण्ये कृतनीडो वनस्पतौ ।
कपोत्या भार्यया सार्धमुवास कतिचित्समाः ॥ ५३ ॥
कपोतौ स्नेहगुणितहृदयौ गृहधर्मिणौ ।
दृष्टिं दृष्ट्याऽङ्गमङ्गेन बुद्धिं बुद्ध्या बबन्धतुः ॥ ५४ ॥
शय्यासनाटनस्थानवार्ताक्रीडाशनादिकम् ।
मिथुनीभूय विस्रब्धौ चेरतुर्वनराजिषु ॥ ५५ ॥
यं यं वाञ्छति सा राजंस्तर्पयन्त्यनुकम्पिता ।
तं तं समानयत्कामं कृच्छ्रेणाप्यजितेन्द्रियः ॥ ५६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चिद्रावलोकनेनाग्निदृष्टान्तेनैव देहानां जन्मभङ्गुरतया वैराग्यं शिक्षितमित्याह । कालेनेति । ओघवद्वेगो यस्य तेन आत्मनः सम्बन्धिनां भूतानां देहानामित्यर्थः । अर्चिषां ज्वालानाम् ॥ ४९ ॥

आदित्याच्छिक्षितमाह द्वयेन । गुणैरिति । गुणैरिन्द्रियैर्गुणान्विषयानुपादत्ते यथाकालमर्थिन्यागते सति विमुञ्चति च न तेषु युज्यते आसज्यते गृहीतेष्वपि नाभिनिवेशं न करोति गोभी रश्मिभिर्गाः जलानि गोपतिः सूर्यो यथा ॥ ५० ॥

स्वतो भेदशून्यस्याप्यात्मनो भेदप्रतीतिरुपाधिवशादित्यादित्यदृष्टान्तेनैव सम्भावितमित्याह । बुध्यत इति । स्वे स्वस्वरूपेऽवस्थित आत्मा भेदेन न बुध्यते अभिव्यनक्तीति व्यक्तिरुपाधिः व्यक्तिस्थ उपाधौ प्रतिबिम्बितस्तु तद्गत इव उपाधिप्रविष्ट इव भेदेन स्थूलमतिभिर्लक्ष्यते अर्कवदित्यन्वयः ॥ ५१ ॥

कपोताच्छिक्षितमाह । नातिस्नेह इति । स्नेहः प्रीतिः प्रसङ्गः उपलालनाद्यासक्तिः ॥ ५२ ॥

दृष्टान्तं प्रपञ्चयति । कपोतः कश्चनेति ॥ ५३ ॥

तयोर्मिथःस्नेहप्रसङ्गौ दर्शयति । कपोताविति त्रयेण । स्नेहेन गुणितं बद्धं हृदयं ययोस्तौ ॥ ५४ ॥

विस्रब्धौ निःशङ्कौ ॥ ५५ ॥

सा कपोती तर्पयन्ती सहासवीक्षितालापादिभिः प्रीणयन्ती अतएव तेनानुकम्पिता सती यं यं वाञ्छति तं तं कामं समानयत् सम्पादयामास राजन्निति त्वं यथेति सूचितम् ॥ ५६ ॥ ५७ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

भूतशब्दश्च तत्कार्ये लक्षणया इत्यर्थं इत्युक्तम् ॥ ४९ ॥

अर्थिन्यागते सतीत्युपलक्षणं क्षुधाद्यवसरानुरूपेणापि ॥ ५० ॥

उपाधिवशात् देहाद्युपाधिवशेन उपाधिप्रविष्ट इवेति व्यापकत्वादसङ्गत्वाच्च वस्तुतः प्रवेशासम्भवादिवेत्युक्तं स्वे स्वरूपेऽवस्थित आत्मा भेदेन न बुध्यते व्यक्तिस्थस्तु स्थूलमतिभिस्तद्गत इव लक्ष्यते प्रतीयते तत्र दृष्टान्तः अर्कवदित्यन्वयः यथा गगने स्वरूपस्थोऽर्को भेदेन न ज्ञायते किन्त्वैकरूप्येणैव जलादिप्रतिबिम्बितस्तु उपाधिभेदेन स्वच्छास्वच्छमलिनत्वादिभेदेन प्रतीयते तद्वदित्यर्थः ॥ ५१ ॥

दीनधीः कृपणबुद्धिरित्यर्थः ॥ ५२ ॥

कतिचित् समाः सम्वत्सरानभिव्याप्येत्यर्थः ॥ ५३ ॥ ५४ ॥

शय्यादिषु मिथुनीभूय द्वितीयान्तपाठे शय्यादिकं प्रति मिथुनीभूय ॥ ५५ ॥

अतएव तया स्वस्य प्रीणनादेव तेन कपोतेन अनुकम्पिता अनुकम्पाविषयीकृता ॥ ५६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अग्नेः सूक्ष्मस्य स्थूलानां तद्विशेषणभूतानामर्चिषामुत्पत्तिविनाशौ यथा न सूक्ष्मांशे एवं सूक्ष्मतरस्य परमात्मनः स्वविशेषणभूतप्रभवाप्ययौ न भवत इत्यर्थः ॥ ४९ ॥

गुणैः गुणभूतैः श्रोत्रादिभिः गोपतिरादित्यः गोभिः किरणैः ॥५०॥

देहेषु प्रतीयमानत्वाद्वात्मनो देहस्वभावासंसर्गेऽप्यादित्यदृष्टान्त इत्याह । बुद्धिसंस्थेनेति । * भेदेन देवत्वमनुष्यत्वादिना ॥ ५१—६५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथवर्थोऽर्वाग्दृष्टान्तेनापि शिक्षयतीव इत्याह । कालेनेति । ओघवत्प्रवाहवद्वेगो यस्य तेन कालेन प्रभवाप्ययौ जन्मनाशौ नित्यावपि प्रवाहतो नित्यावपि भूतानामेव नत्वात्मनः यथाऽर्चिष्मतोऽग्नेरिव सत एवार्चिषां ज्वालानामेव प्रभवाप्ययौ दृश्येते न त्वग्नेः तद्वदित्यर्थः ॥ ४९ ॥

आदित्याच्छिक्षणीयमाह । गुणैरिति । यथोचितकालं गुणैरिन्द्रियैर्गुणान्विषयानुपादत्ते गृह्णाति विमुञ्चति च उपादानमत्र सम्पादनात्मकं मोचनं त्वर्थिभ्यस्त्यागात्मकम् उपभोग्यवस्तूनि सम्पादितानि चेदर्थिभ्यो ददाति नत्वात्मनानुभाव्यानीत्यर्थः । तदाह । न तेन युज्यत इति । तेन विषयजातेन न युज्यते नोपयुज्यते आत्मनं नोपयुञ्ज्यादित्यर्थः । गोभिर्गा इव गोपतिः यथा गोपतिः सूर्यः गोभिः किरणैर्गा अप उपादत्ते मुञ्चति च तद्वत् ॥ ५० ॥

वस्तुतो देवमनुष्यादिभेदरहितस्याप्यात्मनस्तद्भेदप्रतीतिर्भ्रान्तिरूपेत्येतदप्यादित्याच्छिक्षणीयमित्याह । बुद्ध्यत इति । स्थूले शरीरे मतिरात्माभिमानो येषां तैरात्मा प्रत्यगात्माऽवस्थितः देवादिशरीरे प्रविष्टः अस्थैर्यतिरोहितः स्वभिन्नत्वेन विद्यमानेन देवमनुष्यादिभेदेन युज्यते देवोऽयं मनुष्योऽयमिति प्रतीयते वीक्ष्यते स्वात्मापि तथा देवोऽहं कृशोऽहं स्थूलोऽहमिति वीक्ष्यत इत्यर्थः । स्थूलमतिभिरित्यनेन देहात्मभ्रमात्ममतिभिस्तु देहस्वभावासंसर्गित्वेनैवात्मा वीक्ष्यते चेति सूचितम् तत्र दृष्टान्तः अर्कवदिति यथा चार्को दिविस्थितो दर्पणजलजलपात्रादिषु प्रतीयमानोऽपि न तद्गतस्वभावसंसर्गितया प्रतीयते तद्वत् इयांस्तु दृष्टान्तदार्ष्टान्तिकयोर्विशेष इत्याशयेनाह भ्राकिकण इव तद्गत इति । आदित्यस्तु दर्पणादिव्यक्तावनवस्थितोऽपि तत्रस्थ इव दृश्यते आत्मा तु परमार्थतस्तद्गतः देवादिशरीरगतः तत्स्वभावासंसर्गित्वं तूभयोरपि तुल्यं संसर्गितया प्रतीतिर्भ्रान्तिरूपता चोभयत्र तुल्या ॥५१

अथ कपोताच्छिक्षितमाह । नेति । अतिस्नेहः प्रीतिः प्रसङ्गः उपलालनाद्यासक्तिः क्वापि केन चिदपि न कर्तव्यः ॥ ५२ ॥

दृष्टान्तं प्रपञ्चयति । कपोत इत्यादिना यावदध्यायसमाप्ति । वनस्पतौ कृतं नीडं कुलायं येन सः सार्धं सह कान्ताचरसमाः संवत्सरानुषितवान् ॥ ५३ ॥

कपोतावित्यत्र कपोतश्च कपोती च कपोतौ 'पुमान्स्त्रिया' इत्येकशेषः स्नेहेन गुणितं निबद्धं हृदयं ययोस्तौ गृहधर्मिणौ मैथुनधर्मिणौ बभूवतुः योजितयत्नौ ॥ ५४ ॥

विश्रब्धौ निःशङ्कौ वनराजिषु शय्यादिकं मिथुनीभूय चेरतुश्चक्रतुः ॥ ५५ ॥

* शुकपक्षीयविजयध्वजयोः बुद्धिसंस्थेनेति पाठः ।



वशादिति । हे राजन् ! यद्यदनेन त्वं यथेति सूचितम् अन्तर्वत्नी गर्भिणी सती सा कपोती अनुकम्पिता कपोतेन दयापूर्वकं प्रचोदिता यद्यदिष्टं नाऽऽलक्ष्यकामयत तं तं कामं काम्यत इति तथा तमिमं कृच्छ्रेणातिप्रयासेनापि समनवत्सम्पादयामास यतः सोऽजितेन्द्रियः ॥ ५६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कालवेगेन प्रतिक्षणमपि देहादीनां सूक्ष्मावुत्पत्तिनाशौ स्त इति सोदाहरणमाह । कालेनेति । कालाख्यनद्योघवेगेन भूतानां प्राणिनाम् आत्मनो देहस्य नित्यावपि सन्ततमावपि भवाप्ययौ उत्पत्तिनाशौ न दृश्येते सूक्ष्मत्वादिति शेषः यथाग्नेरर्चिषां ज्वालानां प्रवाहविशेषः यथा पुरुषस्य जरा प्रत्यक्षमेव दृष्टेति गीतातात्पर्यवचनं सद्भावप्रमाणं भूतानां चेतनानामात्मनः परमात्मनः प्रभवाप्ययाविस्यन्यथा व्याख्यानम्—

अनवयवयवानां च गुणानां गुणिनस्तथा ।
शक्तिशक्तिमतोश्चैव क्रियायास्तद्वतस्तथा ॥
स्वरूपांशांशिनोश्चैव नित्याभेदो जनार्दने ।
जीवस्वरूपेषु तथा तथैव प्रकृतावपि ॥
चिद्रूपायामतो नांशा अगुणा अक्रिया अपि ।
हीना अवयवैश्चेति कथ्यन्ते ते त्वभेदतः ॥
पृथग्गुणाद्यभावाच्च नित्यत्वादुभयोरपि ।
विष्णोरचिन्त्यशक्तेश्च सर्वं सम्भवति ध्रुवम् ॥
क्रियादेरपि नित्यत्वं व्यक्त्यव्यक्तिविशेषणम् ।
भावाभावविशेषेण व्यवहारश्च तादृशः ॥
विशेषस्य विशिष्टस्याप्यभेदस्तद्वदेव तु ।
सर्वं चाचिन्त्यशक्तित्वाद्युज्यते परमेश्वरे ॥
तच्छक्त्यैव च जीवेषु चिद्रूपप्रकृतावपि ।
भेदाभेदौ तदन्यत्र ह्युभयोरपि दर्शनात् ॥
कार्यकारणयोश्चापि निमित्तं कारणं विना ।

प्रमाणनिरुद्धत्वाज्जडस्येत्यङ्गीकर्तव्यम् अतज्ज्ञानां चेतनानां क्रियाच एवं चाचिन्त्यशक्तिमत्त्वाद्युज्यत इत्यभिप्रायेण "आत्मनि चैवं विचित्राश्च हि सर्वोपेता च तद्दर्शनात् सर्वधर्मोपपत्तेश्च स्वाभाविकी ज्ञानबलक्रिया च यत्र सतश्चपूर्वान् पर एकमाहुः" इत्यादिप्रमाणान्तरं च—

नश्यशक्तिमोचामयी विनाशोदयान् ।
अनमध्यागतत्वं तथामृतं परमं सत्यरूपम् ॥

नैवासत्त्वं क्वचिदपिमत् परेशे सर्वं युक्तं पूर्णशक्तेः सदैवेति । श्रुतिविरोधात् ॥ ४९ ॥

सूर्यादनुशिक्षितां बुद्धिमाह । गुणैरिति । योगी यथाकालं विहितकाले गुणैरिन्द्रियैः गुणान् शब्दादिविषयान् उपादत्ते विमुञ्चति च तेषु विषयेषु न सज्जते नातिसक्तो भवति कथमिव गोपतिः सूर्यः गोभिः रश्मिभिः गा इव जलानीव ॥ ५० ॥

न केवलमसङ्गत्वमेव सूर्यात् शिक्षितमपि तु जीवपरमात्मैक्यलक्षणं चेति भावनाह । बुद्धिसंस्थेनेति । तस्य जीवस्य शरीरगतः आत्मा परमात्मा स्थूलमतिभिः प्रमाणज्ञानरहितैः

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

बुद्धिसंस्थेन भेदेन बाह्यान्तःकरणविषयमिथ्याज्ञानेन स्वकं शरीरं गतस्थो जीव इव साहङ्कारेण सुखी दुःखीति लक्ष्यते दुःखाद्यधिकरणदेहगतत्वात्कथमस्तु स्थिताकंवत् यथा परमार्कस्वरूपानाभिन्नैर्बिम्बभूतो जले प्रतिबिम्बिताकंवत् अथैवमाशिरःपादादिरहितो वर्तुलश्चेति कल्प्यते तथापि तस्मा "द्वयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इत्यादिश्रुतितात्पर्यवेदिभिर्निर्मलचित्तैः सूक्ष्मज्ञैः जीवपरयोर्वैलक्षण्यं ज्ञानाग्निर्योगिभिर्भोक्तव्यमन्यथाऽसुरमतप्रवेश इति दृष्टान्तेऽप्येवमेव ज्ञातव्यं बिम्बप्रतिबिम्बयोरिव जीवपरयोर्भेदो व्यावहारिको न तु यथार्थ इति मतम्—

बुद्धिसंस्थत्वात्मभेदो व्यक्तिस्थो जीव उच्यते ।
तेनैव सह संस्थानात्परात्मा स्थूलबुद्धिभिः ॥
जीववल्लक्ष्यते विष्णुर्यथैनास्थितार्कवत् ।
परमार्कः पारिमाण्यात्तुल्यत्वाविना तथा ॥
अर्कस्वरूपानाभिन्नैः शिरःपादादिवर्जितः ।
मण्डलश्च कल्प्येत तत्तेजोमात्रदर्शिभिः ॥
सूर्यदेहादिभिन्नं हि तेजोमण्डलमेव तु ।
दृश्यते स्थूलमतिभिरेवमेव जनार्दन इति ॥

प्रमाणविरुद्धत्वादुपेक्षणीयम् ॥ ५१ ॥

मुक्तिसाधनेषु प्रथमतः प्राप्यं विरक्तिलक्षणं साधनमिति कपोतशिक्षितां विरक्तिमाह । नातिस्नेह इति ॥ ५२—५३ ॥

स्नेहगुणितहृदयाविस्यतदर्शनाति । दर्शिमित्यादिना ॥ ५४ ॥

शय्यासनादिषु मिथुनीभूय वर्तमानौ ॥ ५५—६९ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यथाकालमित्युभयत्राप्यन्वयः क्षुधाद्यवसरानुरूपेणेत्यर्थः । विमुञ्चति त्यजति ॥ ५० ॥

बुध्यत इति । आत्मा जीवः परमात्मा वा शक्तिशक्तिमत्त्वादिरूपेण स्वेन भेदेनावस्थितो बुद्ध्यत एव सूक्ष्ममतिभिः स्थूलमतिभिस्तु व्यक्तिस्थ उपाधिस्थोऽसौ तद्गतस्तद्वासक्त इव लक्ष्यते यथार्को भिन्नप्रान्तपूर्वादिशोभायन्मण्डलरश्म्यादिरूपेण स्वेन भेदेनेत्यादि पूर्ववत् ॥ ५१—७४ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सिंहावलोकनन्यायेन पुनरप्यग्नेः सकाशाद्वैराग्यं शिक्षितमाह । कालेनेति । ओघवेगेन ओघवतां मारुतादीनामिव वेगो यस्य तेन आत्मनः सम्बन्धिनां भूतानां देहानामित्यर्थः । अर्चिषां ज्वालानाम् ॥ ४९ ॥

सूर्याच्छिक्षितमाह द्वाभ्याम् । गुणैरिन्द्रियैर्गुणान् विषयान् उपादत्ते यथाकालमर्थिन्यागते सति विमुञ्चति ददाति च न तेषु युज्यते मया लब्धा मया दत्ता इति चाभिनिवेशं न करोति गोभिः रश्मिभिः गा जलानि गोपतिः सूर्यो यथा ॥ ५० ॥

आत्मा परमात्मा स्वेन भेदेन स्वरूपशक्तिमायाशक्तिजीवशक्त्यात्मकेनावस्थितोऽर्कवद्बुध्यते अर्को यथा स्वमण्डलमेघकिरणात्मकेन भेदेनावस्थितो बुध्यत इत्यर्थः । स्थूलमतिभिस्तु व्यक्तिस्थो जातिपदार्थ इव तद्गतः व्यक्तिगतः स्वपार्थक्यविच्छिन्न आत्मा लक्ष्यते अर्कवत् अर्को यथा जलादिपरिच्छिन्नः ॥ ५१ ॥

कपोतात्शिक्षितमाह । नातीति । प्रसङ्ग स्वपक्षसङ्गमादि ॥ ५२—५४ ॥

तर्पयन्ती सुरताद्यपवीक्षितादिभिः प्रीणयन्ती ॥ ५५—५७ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

देहादीनां क्षणभङ्गुरत्वमग्नितः शिक्षितमिति सिंहावलोकनेनाह । कालेनेति । आत्मनः सम्बन्धिभूतानां देहादीनां ओघवद्वेगो यस्य तेन कालेन निमित्तेन प्रभवाप्ययौ जन्मविनाशौ नित्यावपि न दृश्येते यथा अग्नेः सम्बन्धिनामर्चिषाम् ॥ ४९ ॥

आदित्याच्छिक्षितमाह । गुणैरिति द्वाभ्याम् । गुणैर्हस्तादिभिरिन्द्रियैः गुणान्शब्दादिरूपान्विषयान् योगी साधकः यथा कालम् प्रहणत्यागकालमनतिक्रम्य भजति ददाति सति उपादत्ते अर्थिनि सति विमुञ्चति तेषु न युज्यते लब्धमिति दत्तमिति वाऽभिनिवेशं न करोति यथा गोभिः रश्मिभिः गाः जलानि गोपतिः सूर्यस्तद्वत् ॥ ५० ॥

व्यक्तिस्थे देहस्थे अन्तःकरणे—

बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः ।
अणुर्ह्येष आत्मा चेतसा वेदितव्य

इत्यादिश्रुतिप्रोक्तेनाणुपरिमाणकेन स्वेन रूपेण अवस्थितः भेदेन देहेन्द्रियादिप्रकाशकत्वादिभिः वैलक्षण्येनैव बुद्ध्यते अर्कवत् यथार्कः स्वल्पपरिमाणोऽपि बृहत्परिमाणे लोके प्रकाशकतया विलक्षण एव दृश्यते तद्वत्—

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारतेति ॥

श्रीमुखवचनात् स्थूलमतिभिस्तु तद्गत इव लक्ष्यते बहुवचनेन स्थूलमतयः बहवो दर्शिताः तत्र केनचित्सङ्घातवादिना व्यक्तिरेवात्मेति लक्ष्यते अन्येन तद्गतः व्यक्तिगतः अन्तःकरणस्वरूप आत्मेति लक्ष्यते अपरेण तद्गत इव अन्तःकरण इव अन्यैः व्यक्तिगतः प्राणादिरूप आत्मेति लक्ष्यते इत्यर्थः । ते सर्वे नास्तिका उपेक्षणीया देहादेरात्मत्वाभावात् मायावादिना तु स्वतो भेदशून्यस्याप्यात्मनो भेदप्रतीतिरुपाधिवशादित्यादित्यदृष्टान्तेनैव सम्भावितमित्याह बुध्यत इति स्वे स्वरूपेऽवस्थित आत्मा भेदेन न बुध्यते अभिव्यनक्तीति व्यक्तिरुपाधिः व्यक्तिस्थः उपाधौ प्रतिबिम्बितस्तु तद्गत इव उपाधिप्रविष्ट इव भेदेन स्थूलमतिभिर्लक्ष्यते अर्कवदित्यन्वय इति व्याख्यातं तदयुक्तम् ज्ञानमात्रे ऽद्वितीये अन्यस्य उपाधितद्गतप्रतिबिम्बतत्द्रष्ट्रादेः पदार्थान्तरस्यासम्भवात् पदार्थस्य सूर्यादेः पदार्थान्तरे भिन्नदेशस्थे जलादौ प्रतिबिम्बो भवति सर्वगतस्य नीरूपस्य निरवयवस्य प्रतिबिम्बासम्भवाच्च नच नीरूपस्य निरवयवस्य सर्वगतस्याकाशस्य जले प्रतिबिम्बो दृश्यते इति वाच्यम् आकाशस्थस्य सूर्यप्रभारञ्जितस्य सूक्ष्ममेघादिसमूहस्य कटाहवत्प्रतीयमानस्य सावयवस्य दूरदेशिनो वस्तुनः प्रतिबिम्बदर्शनात् आकाशस्य पञ्चीकृतभूतविशेषस्य नीरूपत्वाद्यसम्भवाच्च पदार्थान्तरस्य अवस्य विद्यमानत्वाच्च ॥ ५१ ॥

कपोताच्छिक्षितमाह । नातिस्नेह इत्यादिना । प्रसङ्गः

कपोती प्रथमं गर्भं गृह्णाती काल आगते ।
अण्डानि सुषुवे नीडे स्वपत्युः सन्निधौ सती ॥ ५७ ॥
तेषु काले व्यजायन्त रचितावयवा हरेः ।
शक्तिभिर्दुर्विभाव्याभिः कोमलाङ्गतनूरुहाः ॥ ५८ ॥
प्रजाः पुपुषतुः प्रीतौ दम्पती पुत्रवत्सलौ ।
शृण्वन्तौ कूजितं तासां निर्वृतौ कलभाषितैः ॥ ५९ ॥
तासां पतत्रैः सुस्पर्शैः कूजितैर्मुग्धचेष्टितैः ।
प्रत्युद्गमैरदीनानां पितरौ मुदमापतुः ॥ ६० ॥
स्नेहानुबद्धहृदयावन्योऽन्यं विष्णुमायया ।
विमोहितौ दीनधियौ शिशून् पुपुषतुः प्रजाः ॥ ६१ ॥
एकदा जग्मतुस्तासामन्नार्थं तौ कुटुम्बिनौ ।
परितः कानने तस्मिन्नर्थिनौ चेरतुश्चिरम् ॥ ६२ ॥
दृष्ट्वा ताँल्लुब्धकः कश्चिद्यदृच्छातो वनेचरः ।
जगृहे जालमातत्य चरतः स्वालयान्तिके ॥ ६३ ॥
कपोतश्च कपोती च प्रजापोषे सदोत्सुकौ ।
गतौ पोषणमादाय स्वनीडमुपजग्मतुः ॥ ६४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आसक्तिः ॥ ५२—५३ ॥

कपोतौ पतिभार्यारूपौ स्नेहगुणिते प्रीतिनिबद्धे हृदये ययोस्तौ ॥ ५४ ॥

विस्रब्धौ परस्परं निःशङ्कौ ॥ ५५ ॥

सा कपोतभार्या भर्त्रानुकम्पिता तर्पयन्ती स्वचेष्टितैः प्रीणयन्ती सती यं यं वाञ्छति तं तं काममजितेन्द्रियः कपोतः समानयत्सम्पादयामास ॥ ५६—५७ ॥

———

भाषा टीका ।

काल के समूह के वेग से सब आत्मा के संबंधि भूतों के उत्पत्ति और प्रलय दोनों नित्य हैं तौ भी नहीं दीखते हैं जैसे कि अग्निकि ज्वाला का भेद नहीं दीखता है तैसे भ्रम से जानना चाहिये ॥ ४९ ॥

समय समय पर इंद्रियों से योगी विषयों को ग्रहण करता है और काल पाकर छोड़ता है उसमें युक्त नहीं होता है जैसे कि सूर्य किरणों से जलका ग्रहण करता है और छोड़ता है ॥ ५० ॥

जैसे एक ही सूर्य अनेक जल पात्रों में नाना दीखता है तैसे स्थूल दृष्टि वाले पुरुषों को मनुष्यादि देहों में आत्मा भी नाना प्रकार से प्रतीत होते हैं यह बात भी सूर्य से सीखी है ॥ ५१ ॥

किसी के साथ अत्यन्त स्नेह या आसक्ति नहीं करनी चाहिये कभी किसी ठिकाने करेगा तो दुखी होकर कबूतर की नाईं होजावैगा ॥ ५२ ॥

कोई एक कबूतर जंगल में पेड़ पर खोंता बनाकर अपनी स्त्री कबूतरी के साथ कितने ही वर्षों से रहता था ॥ ५३ ॥

वे दोनों कबूतर कबूतरी आपस में बड़े प्रेम से गृहस्थ के धर्मों को करते दृष्टि से दृष्टि अंग में अंग बुद्धि में बुद्धि को जोड़ कर सदा रहते थे ॥ ५४ ॥

सोना बैठना चलना खड़ा होना बोलना खेलना खाना पीना इन सब बातों को बड़े विश्वास से करतेहुवे संग ही में जंगल में घूमते थे ॥ ५५ ॥

हे राजन्! कबूतरी पति की तृप्ति करनेवाली कृपा करने वाली थी तब जो कुछ चाहती थी तिस चीज को वह अजितेन्द्रिय कामी कबूतर बड़े कष्टको भी सह कर ला देता था ॥ ५६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

तेषु जलमारितेष्वण्डेषु हरेः स्वमायकर्मादिशक्तिभी

श्रीधरस्वामिकृतभावार्थदीपिका ।

रचितनावयवाः पक्षिणः कोमलान्यङ्गानि तनूरुहाश्च येषां ते ॥ ५८—५९ ॥

पतत्रैः पक्षैः मदीनानां हृष्टानाम ॥ ६० ॥

शिशून् बालान् प्रजाः पुत्रान् ॥ ६१—६२ ॥

स्वाश्रयान्तिके चरतः क्रीडतः तान् कपोतपुत्रान् जालश्च प्रसार्य ॥ ६३ ॥

उत्सुकत्वादेव तत्पोषणार्थे गतौ सन्तौ पोपयां मक्षम ॥ ६४—६५ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

प्रथमं गर्भमिति प्रथमस्वन्ततावौत्कयव्याधिक्येनासक्त्याधिक्यं व्यञ्जितं काले प्रसूतिसमये स्वपत्युः सन्निधाविति तस्यां तस्यामासक्तिव्यञ्जनम् ॥ ५७ ॥

स्वभावकर्मादीत्यादिना कालशक्तिपरिग्रहः "कालकर्मस्वभाव" इत्युक्तः दुर्विभाव्याभिः सूक्ष्मत्वेन दुर्ज्ञेयाभिः ॥ ५८ ॥

तासां प्रजानां कूजितं शब्दं कलभाषितैरव्यक्तमधुरालापैः॥५९॥

मुग्धचेष्टितैः बालचेष्टाभिः प्रत्युद्गमैः सङ्गत्य सम्मुखागमनैः ॥ ६० ॥

विष्णुमायया स्नेहानुबन्धः परस्परं स्नेहहठौ हृदये ययोः तौ दीनधियौ प्रजापोषणाव्यग्रतया कृपणाचित्तौ ॥ ६१ ॥

एवं वैषयिकं सुखमुक्त्वा "यत्तदग्रेऽमृतमिव परिणामे विषोपम"मिति न्यायेन तस्यैव दुःखत्वमाह । एकदेति यावत् समाप्ति । अर्थिनौ लुब्धौ अर्थी दोषं न पश्यतीतिवत् ॥ ६२ ॥

स्वालयान्तिके स्वनीडसन्निधौ वहरुत्तान इति भूम्योरनिवर्तत्वं व्यञ्जितम् ॥ ६३ ॥

कपोतश्च कपोती चेति विग्रहः अतो विशेषणयोर्द्वित्वमविरुद्धम् ॥ ६४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

:०: शय्येति । विस्रब्धौ निःशङ्कौ वनराजिषु शय्यादिकं मिथुनीभूय चेरतुः ० । कपोतीति । गृहती विभ्रती सती काले प्रसवकाले आगते सति नीडे स्वपत्युः सन्निधावेवाण्डानि सुषुवे ॥ ५७ ॥

तेष्वण्डेषु काले तत्परिपाककाले व्यजायन्त शिशव इति शेषः ते च दुर्विगाह्याभिरचिन्त्याभिर्हरेर्भगवतः शक्तिभिः कार्योपयुक्तापयुक्ताङ्गविशेषणभूताभिः कालेनत्यर्थः । अङ्गैरिति पाणिनितबहुवचनमविवक्षितं कालावयवादिनमासार्थाभिप्रायेण वा तत्प्रयुक्तं रचिता अवयवा येषां कोमलान्यङ्गानि तनूरुहाश्च येषां तथा भूता बभूवुरिति शेषः ॥ ५८ ॥

प्रजाः शिशून् तासां प्रजानां कूजितं शृण्वन्तौ कलभाषितैर्मधुरस्वनैर्निर्वृतौ सुखितौ ॥ ५९ ॥

सुखस्पर्शैः तासां पतत्रैः पक्षैः मुग्धचेष्टितैः सुन्दरचेष्टितैः तथाऽदीनानामक्षुण्णानां प्रत्युद्गमैः उत्पतनैश्च मुदं हर्षमापतुः ॥ ६० ॥

अन्योऽन्यं स्नेहनानुबद्धमनुरक्तं हृदयं ययोस्तौ दीनधियौ तत्पोषणार्थममाखरधियौ पुपुषतुः पोषणं चक्रतुः ॥ ६१ ॥

तासां प्रजानामर्थमाहारमानेतुमित्यर्थः । अर्थिनौ तासामाहारमाकाङ्क्षमाणौ तस्मिन्नेव वने विचेरतुश्चरितवन्तौ ॥ ६२ ॥

तदा कश्चिल्लुब्धको व्याधः तान् शिशून् दृष्ट्वा स्वालयान्तिके स्वनीडसमीपे चरतः तान् जालमातत्य प्रसार्य जगृहे ॥ ६३ ॥

कपोतश्चेति । पोषणमाहारमादाय ॥ ६४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रजाः व्यजायन्त ॥ ५८—५९ ॥

अदीनानां हृष्टानाम् ॥ ६० ॥

शिशून् बालान् प्रजाः अपत्यानि ॥ ६१—६२ ॥

स्वालयान्तिके स्वनीडतलनिकटे चरतस्तान् बालान् जग्राह ॥६३॥

पोषणं भक्ष्यम ॥ ६४—६५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हरेः शक्तिभिः कालादिभिः रचिता अवयवाः मस्तकादीनि अङ्गानि येषां ते कोमलानि अङ्गानि तनूरुहाश्च येषां ते ॥ ५८—५९ ॥

अदीनानां चपलानाम ॥ ६० ॥

शिशून् अल्पकालान् प्रजाः पुत्रान् ॥ ६१—६२ ॥

तान् शिशून् ॥ ६३ ॥

पोषणं भक्ष्यम ॥ ६४—६५ ॥

---

भाषा टीका ।

कभी कबूतरी ने गर्भ धारण किया फिर समय आने पर अपने पती के पास खोंतर में उसने अंडों को पैदा किया ॥ ५७ ॥

तिन अंडों में समय आने पर हरि भगवान् की दुर्विभावित शक्तियों से अवयव रचना किये हुये कोमल रोमों वाले बच्चे पैदा भये ॥ ५८ ॥

तब दोनों स्त्री पुरुष उन बच्चों के मधुरभाषणों से प्रसन्न होकर पुत्रों पर बडे स्नेह युक्त होकर उनके शब्दों को सुनते हुये उनका पोषण करते थे ॥ ५९ ॥

शरीर में लगने से सुखदायक उनके पंखों से उनकी भोलापन से उनके शब्दों से उनके आगे पीछे चलने से उनके हर्ष को देखकर पिता माता दोनों आनंदित होते थे ॥ ६० ॥

विष्णु भगवान् की माया से वे दोनों आपस में बडी प्रीति से बंधे हुये मोहित होकर अति चिंता युक्त होकर छोटे बालकों को पोषण करते थे ॥ ६१ ॥

:०: ५६ श्लोकस्यात्र पाठ एतन्मते ।

कपोती स्वात्मजान् वीक्ष्य बालकान् जालसंवृतान् ।
तानभ्यधावत् क्रोशन्ती क्रोशतो भृशदुःखिता ॥ ६५ ॥
सा ऽसकृत्स्नेहगुणिता दीनचित्ताऽजमायया ।
स्वयं चाबध्यत शिचा बद्धान् पश्यन्त्यपस्मृतिः ॥ ६६ ॥
कपोतश्चाऽऽत्मजान् बद्धानात्मनोऽप्यधिकान् प्रियान् ।
भार्यां चाऽऽत्मसमां दीनो विललापातिदुःखितः ॥ ॥ ६७ ॥
अहो मे पश्यतापायमल्पपुण्यस्य दुर्मतेः ।
अतृप्तस्याकृतार्थस्य गृहस्त्रैवर्गिको हतः ॥ ६८ ॥
अनुरूपानुकूला च यस्य मे पतिदेवता ।
शून्ये गृहे मां सन्त्यज्य पुत्रैः स्वर्याति साधुभिः ॥ ६९ ॥

भाषा टीका ।

एक दिन उनके वास्ते चुगा लाने के वास्ते वे दोनों कुटुंबी गये सो चाराके फिकर से चारों ओर उसी वन में बहुत देर तक घूमते रह गये ॥ ६२ ॥

यहां उन बच्चों को अपने घरके पासमें चरते हुयों को देख कर कहीं जंगल में घूमते हुये एक व्याध ने जाल फैलाकर उनको पकड़ लिया ॥ ६३ ॥

वहां कपोत कपोती दोनों जो कि बालकों के पालन में सदा बड़े उत्कण्ठा वाले थे सो चारा लेकर अपने खोंता को गये ॥ ६४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

शिचा जालेन ॥ ६६ ॥
आत्मानुरूपां भार्यां च विलालप शुशोच ॥ ६७ ॥
विलापमाह त्रयेण । अहो इति । अतृप्तस्य दृष्टसुखे अकृतार्थस्यादृष्टमसम्पादयतः ॥ ६८—७० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपकार्दीपिनी टिप्पणी ।

क्रोशतः मातरं दृष्ट्वा विलापं कुर्वतः तान् बालकान् अभ्यधावत् सम्मुखं जगाम ॥ ६५ ॥

बद्धान् पश्यन्त्यपि अजमायया नष्टस्मृतिः सती स्वयं च जालेनाबध्यत ॥ ६६ ॥

आत्मानुरूपां स्वरमणयोग्याम् ॥ ६७ ॥
दृष्टसुखे ऐहिकभोगे अदृष्टं परलोककृत्यम् ॥ ६८ ॥

अनुरूपेति युग्मकम् । यस्य मे पतिदेवता पतिव्रता स्त्री अनुरूपा भोगसम्पादने समर्था मां सन्त्यज्य पुत्रैः सह स्वः स्वर्गं याति सोऽहं किमर्थं जिजीविष इत्यन्वयः विधुरो विरही दुःखं जीवितं जीवनं यस्य स तथा ॥ ६९—७० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सिचा जालेन ॥ ६६—७४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कपोती क्रोशतः मातृदर्शनेन उत्क्रोशतः जालसम्बन्धेन नितरां दुःखितान् शिशून् स्वयमपि क्रोशन्ती अभ्यधावत् ॥ ६५ ॥

सेति । सा कपोती असकृत्स्नेहेन गुणिता बद्धहृदयाऽत एव तद्बन्धनासमया दीनचित्ता सती बद्धान् पुत्रान् पश्यन्ती अपगता स्मृतिर्यस्याः सा स्वयमपि शिचा जालेनाबध्यत बद्धा बभूव ॥ ६६ ॥

कपोतश्चेति चस्त्वर्थः आत्मनः शरीरादप्यधिकप्रियानात्मजान् स्वशरीरेण समां तुल्यप्रियामात्मानुरूपां वा भार्यां च दृष्ट्वेति शेषः अतीव दुःखित इति मानसिकं दुःखमुक्तं विललापेति वाचिकम् ॥ ६७ ॥

विलापमेव प्रपञ्चयति त्रिभिः । अहो ममापायं व्यसनं पश्यत तमाविष्कर्तुमात्मानं विशिनष्टि । दुर्मतेर्दुष्टस्य विषयप्रवणा मतिर्यस्य तथाऽप्यतृप्तस्यात एवाकृतार्थस्य तत्रोभयत्र हेतुरल्पपुण्यस्य पुण्यलेशहीनस्य कोऽपाय इत्यत आह । गृह इति त्रैवर्गिकः धर्मार्थकामरूपत्रिवर्गसाधनभूतः गृहाश्रमो हतो नष्टः ॥ ६८ ॥

नाशमेवोपपादयति । अनुरूपेति । पतिरेव देवता यस्याः सा मे भार्येति शेषः साधुभिः पुत्रैः सह स्वः स्वर्गं याति ॥ ६९ ॥

सोऽहं शून्ये गृहे दीनो मृतदारो मृतप्रजः ।
जिजीविषे किमर्थं वा विधुरो दुःखजीवितः ॥ ७० ॥
तांस्तथैवाऽऽवृतान् शिग्भिर्मृत्युग्रस्तान्विचेष्टतः ।
स्वयं च कृपणाः शिक्षु पश्यन्नप्यबुधोऽपतत् ॥ ७१ ॥
तं लब्ध्वा लुब्धकः क्रूरः कपोतं गृहमेधिनम् ।
कपोतकान् कपोतीं च सिद्धार्थः प्रययौ गृहम् ॥ ७२ ॥
एवं कुटम्व्यशान्तात्मा द्वन्द्वारामः पतत्रिवत् ।
पुष्णन् कुटुम्बं कृपणः सानुबन्धोऽवसीदति ॥ ७३ ॥
यः प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतम् ।
गृहेषु खगवत्सक्तस्तमारूढच्युतं विदुः ॥ ७४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् एकादशस्कन्धे
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शिचा पक्षिग्राहिजालेन ॥ ६६—७३

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

बद्धान् स्वबालान् पश्यन्ती अपस्मृतिः शोकेनाचेतना सती पतन्ती शिचा जालेनाबध्यत ॥ ६६ ॥

चकारात् शुशोच ॥ ६७—७० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शिचा जालेन ॥ ६६—६७ ॥

अतृप्तस्य ऐहिकसुखे अकृतार्थस्य आमुष्मिकसुखे साधनमकृतवतः ॥ ६८—७० ॥

---

भाषा टीका ।

कबूतरी ने पहिले आकर जब अपने बालकों को जाल में बंधे हुये देखा तब चिल्लाते हुये उन को देखकर आपभी चिल्लाती हुई बड़ी दुःखित हो कर उन के पास को दौड़ी गई ॥ ६५ ॥

वह निरन्तर के प्रेम से बन्धी हुई भगवान् की माया से अत्यन्त दुखित हो गई उसकी स्मृति नष्ट हो गई तब बालकों को बन्धे हुवे देख कर आप भी गिर कर जाल मे बन्ध गई ॥ ६६ ॥

कबूतर ने भी जब अपने से भी अधिक प्रिय पुत्रों को अपने समान दुखित बन्धे हुये देखा तब दुखित हो कर बड़ा विलाप करने लगा ॥ ६७ ॥

अहो मैं बड़ा पापी हूं बड़ा दुर्बुद्धि हूं मेरे सत्यानाश होने को देखो मै अभी मैथुनादि से तृप्त नहीं भया हूं मैने कोइ काम मनके नहीं कर सके मेरा धर्मार्थ काम का साधने का घर नष्ट हो गया ॥ ६८ ॥

मेरे अनुकूल मेरेमे रूप वाली देवता सरी के मेरे को मानने वाली मेरी भार्या शून्य घरमे मेरे को छोड़ कर सुन्दर पुत्रों के सहित स्वर्ग को चली जाती है ऐसा मै मंद भागी हूं ॥ ६९ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तानावृतान् पश्यन्नपि शिक्षु जालेषु ॥ ७१—७२ ॥

दार्ष्टान्तिके योजयति । एवमिति ॥ ७३ ॥

एवं गृहासक्तिरितरथामत्यनर्थहेतुर्मनुष्यस्य त्वतिनिन्दितेत्याह । यः प्राप्येति ॥ ७४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
सप्तमोऽध्यायः ॥ ७ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

विधेयतः चेष्टाशून्यात् विविधं वध्यमानात् वा ॥ ७१ ॥ ७२ ॥

अशान्तात्मा निश्चितचित्तः सानुबन्धः पुत्रकलत्रादिसहितः ॥ ७३ ॥

अपावृतं निरावरणं मुक्तिद्वारं मुक्तिसाधनम् ॥ ७४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सोऽहं हतप्रजः हतदारः किमर्थं जिजिविषे जीवितुमिच्छामि ॥ ७० ॥

तान् शिशिमजालैरावृतानत एव मृत्युमुपगतानारब्धमरणात् विचेतसः मूर्छितान् पश्यन् कृपणो दीनः तत्र हेतुरबुधः अतः स्वयमपि शितौ शिक्यं जालेऽपतत्प्राविशत् ॥ ७१ ॥

तमिति तं कपोतं लब्ध्वा एव सिद्धार्थः सिद्धप्रयोजनः स्व गृहं ययौ ॥ ७२ ॥

दृष्टान्तविवक्षितमर्थं दार्ष्टान्तिके योजयति एवमिति । अशान्तात्मा अजितेन्द्रियः द्वन्द्वारामस्तद्रमत इति तथा पतत्रिवत्सानुबन्धः सपुत्रकलत्रः अवसीदति क्लिश्यति ॥ ७३ ॥

असत्स्मार्थिर्नाशवेक्षकानां तिरश्चामेव विधा वृत्तिः कथं विमुक्तलब्धचतुर्वर्गसाधनजन्मनां तु एवं विधा वृत्तिः सुतरां दुर्भगा इत्याह । य इति । लोकयत इति लोको देहस्तमपावृतं निष्प्रतिबन्धं मुक्तिद्वारं मुक्तिसाधनं मानुषं लोकं प्राप्यापि यो गृहेषु सक्तस्सन्कपोतवत्सक्तस्तमारूढच्युतं अर्थमार्गसोपानपङ्क्तिमारूढ ततो भ्रष्टं विदुः ॥ ७४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आरूढाद्भ्रष्टात् च्युत पतितम् ॥ ७४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विचेष्टमानान् बद्धत्वमपतत् ॥ ७१—७४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशे सप्तमोऽयं सङ्गतः सङ्गतस्सताम् ॥७॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तान् शिशिमजालैरावृतान् पश्यन्नपि शिशुषु जालेषु ॥ ७१-७२ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
सप्तमाध्यायार्थप्रकाशः ॥ ७ ॥

---

भाषा टीका ।

अब मेरी पत्नी मर गई पुत्र मर गये तो मैं दुखी अकेला वियोगी होकर शून्य घर में जीने की क्यों इच्छा करूं ॥ ७० ॥

. ऐसा कहकर उनको जालों में बंधे हुये छटपटाते मरते बच्चे ऐसे देखकर देखता हुआ भी मूर्ख आप भी जाल में गिर पड़ा ॥ ७१ ॥

वह क्रूर व्याध कबूतर कबूतरी उन सभों को पाकर तो जोड़ा के मिलने से खुशी होकर घरको चला गया ॥ ७२ ॥

इसी प्रकार से जो पुरुष अशान्त है रागद्वेषादि में लगा है सो दुखी होकर कुटुंब का पोषण करता हुआ ऐसे ही पक्षी सरीका परिवार सहित नष्ट होजाता है ॥७३॥

जो पुरुष खुले हुये मुक्ति के द्वार मनुष्य लोक को प्राप्त होकर भी पक्षी सरीका घर में ही आसक्त रहता है उसको तो मोक्ष मार्ग में चढ़कर गिर गया ऐसा जानते हैं ॥ ७४ ॥

इति श्रीमद्भागवत एकादशस्कन्ध में सप्तमाध्याय
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्ता ॥ ७ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥

—:*:—

## अथ अष्टमोऽध्यायः ।

---:*:---

ब्राह्मण उवाच ।

सुखमैन्द्रियकं राजन् ! स्वर्गे नरक एव च ।
देहिनां यद्यथा दुःखं तस्मान्नेच्छेत तद्बुधः ॥ १ ॥
ग्रासं सुमृष्टं विरसं महान्तं स्तोकमेव वा ।
यदृच्छयैवाऽऽपतितं ग्रसेदाजगरोऽक्रियः ॥ २ ॥
शयीताहानि भूरीणि निराहारोऽनुपक्रमः ।
यदि नोपनयेद्ग्रासो महाहिरिव दिष्टभुक् ॥ ३ ॥
ओजःसहोबलयुतं बिभ्रद्देहमकर्मकम् ।
शयानो वीतनिद्रश्च नेहेतेन्द्रियवानपि ॥ ४ ॥
मुनिः प्रसन्नगम्भीरो दुर्विगाह्यो दुरत्ययः ।
अनन्तपारो ह्यक्षोभ्यः स्तिमितोद इवार्णवः ॥ ५ ॥
समृद्धकामो हीनो वा नारायणपरो मुनिः ।
नोत्सर्पेत न शुष्येत सरिद्भिरिव सागरः ॥ ६ ॥
दृष्ट्वा स्त्रियं देवमायां तद्भावैरजितेन्द्रियः ।
प्रलोभितः पतत्यन्धे तमस्यग्नौ पतङ्गवत् ॥ ७ ॥
योषिद्धिरण्याभरणाम्बरादिद्रव्येषु मायारचितेषु मूढः ।
प्रलोभितात्मा ह्युपभोगबुद्ध्या पतङ्गवन्नश्यति नष्टदृष्टिः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टमेऽजगरादिभ्यो नवभ्यः शिक्षितं हरिः ॥
अवधूतगिरा प्राह विषयार्थोद्भवं प्रति ।

प्रारब्धकर्मभोगस्याप्यदृष्टमात्रत्वात्तदर्थोद्यमो नानुष्ठेयः तथा कर्तव्य इत्यजगराच्छिक्षितमित्याह । सुखमित्यादिना । यदैन्द्रियकं सुखं भवत्स्वर्गे नरके च भवत्येव यथा दुःखम् तस्माद्बुधः तन्नेच्छेत् ॥ १ ॥

शरीरनिर्वाहमात्रं तु यथा लब्धेन कर्तव्यमित्याह । ग्रासमिति । आजगरोऽजगरवृत्तिः अक्रियः उदासीनः ॥ २ ॥

यदा नापतति तदा किं कर्तव्यं तत्राऽऽह । शयीतेति । अनुपक्रमो निरुद्यमः दिष्टभुक् दैवमेव प्रापकमिति धैर्यवान् ॥ ३ ॥

ननु समर्थोऽपि शयीतैव किम् नेत्याह । ओज इति । ओज इन्द्रियबलम् सहो मनोबलम् बलं शारीरमेव तद्युक्तमपि देहमकर्मकमेव बिभ्रच्छयान एव भवेत् वीतनिद्रः स्वार्थे दत्तदृष्टिश्च भवेन्न पुनरीहेत इन्द्रियवानपीति दर्शनादिव्यापारमपि निवारयति ॥ ४ ॥

समुद्राच्छिक्षितमाह । मुनिरिति । बहिः प्रसन्नश्चासावन्तर्गम्भीरश्च दुर्विगाह्य एवं भूत इति परिच्छेत्तुमशक्यः अलक्ष्याभिप्रायत्वात् दुरत्ययोऽनतिक्रमणीयः तेजस्वित्वात् अनन्तपारः कालतो देशतश्चापरिच्छेद्यः स्वरूपाविर्भावात् अक्षोभ्योऽविकार्यः रागाद्यभावात् स्तिमितोदो निश्चलोदकोऽर्णवो यथा तद्वदेतैर्गुणैर्भवेदित्यर्थः ॥ ५ ॥

किञ्च वर्षासु सरिद्भिः समृद्धोऽपि सागरो यथा नोत्सर्पेत ग्रीष्मे तद्विहीनोऽपि न शुष्येत तथा समृद्धकामस्तद्विहीनो वा

### श्रीधरस्वामिकृतभावार्थदीपिका ।

न हृष्येन्न शोचेदित्यर्थः । अत्र हेतुः नारायणपरो न तु विषयपर इति ॥ ६ ॥

रूपगन्धरसस्पर्शशब्दरसैः पञ्चभिर्विषयैर्मोहिताः पतङ्गमधुकरगजहरिणमीना हता अतस्तेऽत्यन्तासक्तौ पञ्चैते गुरवः तदुक्तम्

पतङ्गमातङ्गकुरङ्गभृङ्गमीना हताः पञ्चभिरेव पञ्च ।

एकः प्रमादी स कथं न हन्यते यः सेवते पञ्चभिरेव पञ्चेति ॥

तत्र रूपविषयाभिमोहितो नश्यतीति पतङ्गाच्छिक्षितमाह । दृष्ट्वेति । तस्या भावैः प्रलोभितः ॥ ७ ॥

शिक्षामुपलक्षणीकृत्यैतत्प्रपञ्चयति । योषिदिति ॥ ८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

गवयो गुरुभ्यः शिक्षितमर्थम् अवधूतस्य गिरा द्वारा विनेक्षाय विवेकं जनयितुं तदर्थामिः भोगार्थप्रयत्नैः ऐन्द्रियकं विषयेन्द्रियसम्बन्धजन्यं सुखं तस्मात् विषयसुखस्य शूकरादिसाधारण्येन तुच्छत्वात् ॥ १ ॥

यथालब्धेन यादृच्छिकतया प्राप्तेन ग्रासेन मिष्टं मधुरं विरसं कट्वम्लादिः नापतेत्तत्र ग्रास इति शेषः ॥ २ ॥ ३ ॥

ओजमित्यभ्युपगमे बलं शारीरमेव ; तेजआदेरुक्तत्वात् भवेदित्यध्याहारः ॥ ४ ॥

बहिः प्रसन्नश्चेति अर्णवपक्षे जलप्रसन्नतायामपि सत्याम् अन्तर्दृश्यापि अतलस्पर्शः । मुनिपक्षे सर्वत्र चित्तप्रसन्नतायामपि अन्तर्निजरहस्योपास्याप्रकाशकः अतएव एवम्भूत इति उभयपक्षेऽप्यनिर्वाच्यतत्त्व इत्यर्थः । नित्यस्त्रित्वादिति मुनिपक्षे समुद्रपक्षे तु अलनक्रादिमत्त्वात् अनतिक्रमणीयत्वं रागाद्यभावादिति कामाकामादिनेति एतैर्गुणैर्विशिष्टो भवेत् ॥ ५ ॥

तद्विहीनः सरिद्विहीनोऽपि समृद्धकामः संप्राप्तसम्भोगोऽपि तद्विहीनः सम्भोगविहीनः अत्र हर्षशोकाभावे नारायणपरः नारायणैकनिष्ठः ॥ ६ ॥

अतः रूपादीनां पतङ्गादिमोहकत्वात् तेषु रूपादिषु एव पतङ्गादयः तत् पञ्चानां मोहितत्वं गारुडे प्रोक्तं तत्र पञ्चसु गुरुषु मध्ये तस्याः स्त्रियः भावैः हावभावहेलादिभिः ॥ ७ ॥

एतत् रूपमोहितस्य नष्टत्वं योषिदादिषु परिणामतो दुःखहेतुषु उपभोगबुद्ध्या सुखहेतुत्वज्ञानेन नश्यति संसरति ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—३ ॥

अकर्मकं दृष्टार्थं प्रवृत्तिशून्यम् ॥ ४ ॥

दुर्विमाव्यः दुरासदः दुरत्ययः अलङ्घनीयः अनभिभाव्यः अनन्तपारः ज्ञानादिभिर्विस्तया परिच्छेत्तुमशक्यः अक्षोभ्यः समाधिभेदं मर्मावितुमशक्यः ॥ ५-१४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथाजगराच्छिक्षितं वक्तुं तावद्दुःखवत् सुखमपि प्रारब्धवशादेव प्राप्यते न यत्नेनेत्याह । सुखमिति । हे राजन् ! यद्वा यतो यथेन्द्रियकमिन्द्रियप्रभवं सुखं देहिनां स्वर्गे नरके च प्रारब्धानुसारेणैव नरकेऽपि हि किञ्चिदन्नपानादिजन्यं सुखं विद्यत एवेति तत्प्रत्यतां स्वर्गसुखस्यापि वेदवित्तु नरक इत्युक्तं तस्मादैन्द्रियकसुखस्य प्रारब्धमूलत्वात्तदन्वेच्छेन यथा दुःखमनाकाङ्क्षितमप्युपतिष्ठते तद्वत्सुखमपीति दुःखमिव सुखमपि नेच्छेदित्यर्थः । बुधः सुखदुःखयोः प्रारब्धमूलत्वज्ञः ॥ १ ॥

अजगराच्छिक्षितगुणानाह । ग्रासमिति त्रिभिः । ग्रासमाहारं सुमृष्टं रसैः संयुक्तं महान्तं पर्याप्तं स्तोकमल्पमपर्याप्तं यदृच्छया दैवादापतितं ग्रासं न तु प्रयत्नेन अभ्यर्थितमित्यनकाराभिप्रायः अभ्यवहरेत् आजगरी अजगरसम्बन्धिनी क्रिया वृत्तिर्यस्य सः अजगरवदवृत्तेनेति विवक्षितोऽर्थः आजगरोऽक्रिय इति पाठेऽजगरवृत्तिरक्रिय उदासीनः ॥ २ ॥

शयीतेति । यदि ग्रास आहारो नोपलभ्येत यदृच्छया नापतेत् तर्हि महाहिरिवाजगर इव दिष्टभुक् आहारप्राप्तिप्राप्तिनिबन्धकं प्रारब्धमनुभवन्ननुपक्रमः निरुद्यमः भूरीणि बहून्यहानि तूष्णीं शयीत ॥ ३ ॥

ननु समर्थोऽपि शयीतैव किमित्यत आह । ओज इति । ओज इन्द्रियबलं सहो मनोबलं बलं शारीरं तद्युक्तमपि देहं बिभ्राणः अकर्मकं दृष्टार्थप्रवृत्तिशून्यं यथा तथा शयान एव भवेत् इन्द्रियवानपि प्रवृत्तिक्षमेन्द्रिययुक्तोऽपि वीतनिद्रः तस्मात्समर्थोऽपि पारवश्यरहितः ईहेत देहसुखं नेच्छेदपि न उपायेनेति वा ॥ ४ ॥

समुद्राच्छिक्षितमाह द्वाभ्याम् । मुनिरिति । बहिः प्रसन्नः स्वच्छः सान्तर्गम्भीरश्च दुर्विगाह्य इत्यम्भूत इति विवेकप्रशकः दुर्विभाव्य इति यावत् दुर्विगाह्य इति पाठे दुरासद इत्यर्थः ॥ ५ ॥

किञ्च वर्षासु सरिद्भिः समृद्धोऽपि नोत्सर्पेत ग्रीष्मे तद्विहीनोऽपि न शुष्येत तथा समृद्धकामः तद्विहीनो वा न हृष्येत न शोचेदित्यर्थः । तत्र हेतुर्नारायणपरः न तु विषयपर इति भावः ॥ ६ ॥

रूपरसगन्धस्पर्शशब्देषु पञ्चसु विषयेष्वासक्ताः पतङ्गमधुकरगजहरिणमीनाः पञ्च हता अतस्तेष्वनासक्तौ पञ्चैते गुरवः तदुक्तम्—

पतङ्गमातङ्गकुरङ्गभृङ्गमीना हताः पञ्चभिरेव पञ्च ।

एकः प्रमादी स कथं न हन्यते यः सेवते पञ्चभिरेव पञ्च ॥

तत्र रूपविषयासमोहितो नश्यतीति पतङ्गाच्छिक्षितमित्याह । दृष्ट्वेति । देवमायां भगवन्मायां तद्व्यामोहकत्वात्तद्रूपेण रूपवती तद्भावैः तस्याः स्त्रियाः भावैः विभ्रमादिभिः प्रलोभितः अन्धे तमसि नरके पतति अग्नौ पतङ्गवद्यथा पतङ्गः सपक्षः कीटविशेषः दीपादिकं दृष्ट्वा तद्रूपेण प्रलोभित उपभोग्यबुद्ध्या तं प्राप्य तस्मिन् पतित्वा नश्यति तद्वदित्यर्थः ॥ ७ ॥

तदेवाह । योषिदिति । मायारचितेषु मायासृष्टेषु योषिति तस्याः हिरण्याभरणाम्बराणि आदिशब्दग्राह्याणि स्रक्चन्दनादीनि तेषु द्रव्येषूपभोगबुद्ध्या प्रलोभितात्मा विमोहितमनाः अत एव नष्टविवेकः पतङ्गवन्नश्यति ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

न कर्तुमिहसे किञ्चिदिति यदुराजप्रश्नं परिहरन्नेतत्संसारसुखं यथा दुःखाशिरस्कत्वेन नाकाङ्क्ष्यं न साध्यं च तथा स्वर्गसुखमित्याह । सुखमिति । यथेन्द्रियकं सुखं पतनानिश्चयात्स्वर्गे नरके चास्ति तथा श्रोत्रादीन्द्रियाभिषयशब्दादिसुखं भवत्येवेति बहुज्ञो बुधो दुःखाशिरस्कं सुखं नेच्छेत् कुत एव तत्साधने प्रवर्तेत इत्यन्वयः । अतोऽनैहिकसुखाय न प्रवर्तनीयमिति किं वक्तव्यमित्युक्तं भवति ॥ १ ॥

तर्हि देहयात्रा कथङ्कारं वर्तेत इत्यतोऽजगरादुपात्तबुद्धिमाह । ग्रासमिति । दिष्टेन दैवेन "दैवं दिष्टं भागधेय"मित्यभिधानं "ग्रासस्तु कवलार्थक" इति च विसृष्टं दत्तं यदृच्छयैवापादितम् अतर्कितत्वेनोपपन्नम् अक्रियः यत्नरहितः अजगरो यथा ग्रसेत्तथा मुनिरिति शेषः ॥ २ ॥

ननु यदृच्छयापि ग्रासालाभे किं कुर्यात्तत्राह । शयीतेति । अनुद्यमः क्रियारम्भरहितः यदि यदृच्छयापि ग्रासो नोपनमेत् तर्हि महाहिरिव बहून्यहानि शयीत तत्र निमित्तं दिष्टभुगिति यदृच्छाप्राप्तभोगत्वादित्यर्थः ॥ ३ ॥

ननु तर्ह्यन्नबलस्य देहस्यान्नाभावे पतनं स्यादित्याशङ्क्य सत्यं बहिर्मुखस्यैतन्न योगारूढस्य तस्य भगवद्गुणगणामृतस्यास्वादनलक्षणपानपूर्णत्वाद्देहस्य बलवत्त्वादिति भावेनाह । ओज इति । करचरणादीन्द्रियशक्तिमानपि योगारूढः शरीरयात्रार्थं मेहेत न चेष्टेत कीदृशः शयानः सर्वद्वारशून्यः तर्हि निद्रालुः स्यात्तत्राह । वीतनिद्र इति । निद्रानिरासव्यापारमङ्गत्वादित्याह । विभ्रदिति । अत्र भगवान् ध्यानं लक्षयति ओजः सहोबलात्मना भगवता युक्तं देहं बिभ्रत् ध्यायन् अन्यत्र तादृशादृष्टनिर्मितम् ईशशक्तेरचिन्त्यत्वादित्यर्थः । अत एवाकर्मकं निश्चेष्टम् उद्देश्यरहितं वा ॥ ४ ॥

समुद्राच्छिक्षितां मतिमाह । मुनिरिति । अनन्तपारः अन्तपाररहितबुद्धिः अनन्तेन पारः पूर्तिस्तृप्तिलक्षणा यस्य स तथेति वा "पारं तीरान्तरं प्रोक्तं पारः पूर्तिस्तथा पुमा" निति ("पुमान्") इत्यभिधानम् अन्यत्रानिश्चिततीरान्तरः स्तिमितोदो निश्चलजलः निर्विकल्पकर्मा वा ॥ ५ ॥

समृद्धकामः समृद्धाभीष्टार्थः नोत्सर्पेत उत्सिक्तो न भवेत् हीनो वा दुर्भगोऽपि इति शेषः न शुष्येत् यथा प्रावृषि समुद्रः समृद्धजलाभिः ग्रीष्मे शुष्कजलाभिः सरिद्भिः ॥ ६ ॥

शलभाच्छिक्षितां बुद्धिमाह । दृष्ट्वेति । देवस्य मायां मोहकशक्तिं भावैः शृङ्गारचेष्टाभिः अत्र—

> महतां वनिताकामः पतत्यन्धे तमस्यलम् ।
> अन्यत्र निरयं याति दुःखत्रयस्यापि पर्यय

इति वचनात् अन्धः पाते विशेषोऽस्तीति ज्ञातव्य मायाशब्दस्येन्द्रजालार्थमन्तरेण मोहकारणत्वार्थः कथमित्यत आह—

> मोहकारणभूता तु मायेत्याहुर्मनीषिणः ॥
> मायेत्यानां मत्युक्तं तज्ज्ञापयति यत्नवम् ।

"कुत्रचिज्ज्ञानरूपं सल्लाभरूपं च भवति । भयं प्राचुर्यमुद्दिष्टं मायामयात्प्रचुरत्वयो"रित्यनेन परिहर्तव्य तस्मादा विवक्षिता तामनुसृत्यार्थो वक्तव्य इति ज्ञायते ननु तर्हि मायाशब्दस्यानेकार्थवृत्तित्वात्कुत्र मुख्यार्थ इतीयं शङ्का—

> स्वतन्त्रं परमार्थाख्यं स्वतन्त्रैका हरेर्मतिः ॥
> सैव माया समुद्दिष्टा मुख्यतत्स्वरूपिका ।

इत्यनेन परिहर्तव्या । परमार्थनिष्ठस्य स्वतन्त्रशब्दस्य गुणनिष्ठत्वं कथमित्येतत् "मतिमन्मतिभेदोऽपि न विष्णोः कश्चिदिष्यते" इत्यनेन परिहृतम् मायायाः ईशेच्छावाचित्वे जगतस्तन्मयत्वं कथमिति इदमपि—

> पारमार्थ्येन मात्रत्वेन तदन्यत्तदधीनं यतः ॥
> अनाद्यनन्तकालेऽपि विद्यमान[illegible]पि ध्रुव[illegible] ।
> अतो मायामयं प्राहुः सर्वं तद्वशगं यतः ॥

इति अमुना परिहृतं किं च विश्वस्य पराधीनत्वादसदादिशब्दवाच्यत्वं न त्वविद्यमानत्वात् तर्हि जगन्नास्त्येवेति कथम् असत्यत्वत्वादिश्रुत्युक्तं प्रवाहरूपेण नित्यत्वात्सदातनत्वं युक्तं अतस्तद्विश्वस्य मिथ्यात्वं किं न स्यादितिचेन्न हरेरिच्छाधीनत्वान्मायामात्रत्वात् तर्हि श्रुतेः का गतिरितिचेन्न एकस्यैव परमार्थत्वादिति सर्वं प्रमाणसिद्धम्—

> स्वाधीनं सदिति प्रोक्तं पराधीनमसत्स्मृतम् ॥
> अविद्यमानमेतस्माज्जगदाहुर्निरीश्वरः ।
> अनाद्यनन्तकालेषु विद्यमानमपि ध्रुवम् ॥
> अस्वातन्त्र्यात्तु नास्त्येवेत्येवं वाच्यं जगत्सदा ।
> सदा वृत्तेर्विद्यमानमिति ब्रूयाद्यदि क्वचित् ॥
> तथापि नाशमस्तीदं प्रवाहाद्यस्य नित्यता ॥
> अतो नित्यमित्याहुः प्रपञ्चं क्वचित् यद्यपि ।
> विष्णोरिच्छावशत्वाच्च मायामात्रमिति स्फुटम् ॥
> परमार्थं चैकमेव स्वातन्त्र्याद्विष्णुमव्ययम् ।
> यद्विकल्पयतीदं यः स एव विनिवर्तयेत् ॥
> विष्णुस्तस्मात्तद्वशत्वान्नास्तीति द्वैतमुच्यते ।
> स्वातन्त्र्येण हरौ ज्ञाते पराधीनत्वनिश्चयात् ॥
> इत्याहुरुपदेष्टार आचार्याः तत्त्ववेदिनः ।
> यथैव राजनि ज्ञाते नान्योऽस्तीति स्फुटं वचः ॥
> स्वातन्त्र्यात्पारतन्त्र्याच्च तद्भृत्यादिषु सत्स्वपि ।
> यथैकचक्रसंश्रेण एकवीर इतीव वा ॥
> तथैव सर्वप्राधान्याद्द्वितीयो हरिः स्मृतः ।
> एवं मुक्ता विजानन्ति सायुज्यं प्रापिता विभोः ॥
> अनन्तकालं पश्यन्तो जगदेतच्चराचरम् ।
> तस्यैकस्य ह्यविज्ञानात्केवलम्भ्रान्तिरूपकम् ॥
> जगद्दृक्षा तमो यान्ति स्वीयेनव्येशशापतः ॥

इत्यनेन प्रपञ्चो यदि विद्येतेत्यादिश्रुतिरपि विवृता सत्यत्वार्थे—

> पुत्रा मे यदि विद्यन्ते मारयन्त्येव ते ध्रुवम् ।
> यदि राज्यं करोत्येष भक्ष्यत्येतदसंशयमिति ॥

धृतराष्ट्रस्य वचनाद्यदिशब्दस्य विपर्ययपर्यवसाने वस्तुत्वार्थः प्रतीयते तथापि—

> यदिशब्दस्त्ववस्तुत्वे अज्ञातत्वे च संशये ।
> अवस्तुशब्दश्चाशक्ते ह्यल्पशक्तौ च कीर्त्यते

इत्यनेन यदिशब्दस्यावस्तुत्वार्थोऽपि ज्ञायते ॥ ७ ॥

प्रागुक्तश्लोकार्थमेव विवृणोति । योषिदिति । मायारचितेषु भगवदिच्छारचितेषु भोगसाधनेषु तल्पादिषु योषिज्जनेपूपभोगबुद्ध्या

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विषयभोगसाधनबुद्ध्या प्रक्षोभितात्मा विवशमनाः शलभवत्पततीत्यन्वयः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—४ ॥

प्रसन्नगम्भीरः सर्वपक्षे जलप्रसन्नतायामपि सत्यां दृश्यमानतलस्पर्शः मुनिपक्षे सर्वत्र चित्तप्रसन्नतायामपि निजरहस्यापादनाप्रकाशकः अतएवोभयोरपि दुर्विगाह्यः अनिर्णेयान्तस्तत्त्वः एवं क्रमेण तत्तत्पक्षे दुरत्ययः आक्रान्तुमशक्यः जलादिमयत्वात् अभिभवितुमशक्यः तेजस्वित्वात् अनन्तपारः उभयत्रापरिच्छेद्यस्वरूपाविर्भावात् अक्षोभ्यः निश्चलमहाजलत्वात्साधारणोऽप्यालम्बितुमशक्यः तथा रागाद्यभावाद्विषयलाभालाभादिभिरिति ॥ ५-६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अष्टमेऽजगराद्याश्च गुरवो नव वर्णिताः ।
पिङ्गलायाः कथा यत्र नैराश्यसुखदोदिता ॥

स्वदेहनिर्वाहार्थं वृथा नातिचेष्टितव्यमित्यत्राजगर एव गुरुरित्याह । सुखमिति चतुर्भिः । यथा दुःखमवाञ्छितमपि स्यात् तथा सुखमपि भवेदेवेति किं तदिच्छयेत्यर्थः ॥ १ ॥

आजगरः अजगरवृत्तिः अक्रियः अल्पचेष्टः ॥ २—३ ॥

वीतनिद्र इति स्वार्थे भगवच्चिन्तनादौ तु सर्वदा सावधानः भवेत् यस्मात् देहनिर्वाहार्थोद्यमेन समयो मा वृथा यात्वित्येतदर्थमेवाजगरी वृत्तिराश्रिता न पुनः सैव स्वार्थो ज्ञेय इति भावः ॥ ४ ॥

समुद्राच्छिक्षितमाह । मुनिरिति द्वाभ्याम् । गम्भीरोऽपि पुरुषः सुमनर्थविषा केनाप्यवगताभिप्रायो भवेत्तस्मात् योगी दुर्विगाह्यः सर्वथैवाज्ञेयमनोऽन्तस्तत्त्वः स्यात् दुरत्ययः तेजस्वित्वादनतिक्रम्यः अनन्तपारः कदाप्यस्ताहृदयसमर्थेऽपि काप्यन्तिकप्रदेशेऽपि क्षैवश्यराहित्यादेवानुद्वीर्णस्वतत्त्वः स्यादित्यर्थः । विजितकामादित्वादक्षोभ्यः ॥ ५ ॥

किञ्च वर्षासु सरिद्भिः समृद्धोऽपि सागरो यथा नोत्सर्पेत ग्रीष्मे तद्विहीनोऽपि न शुष्येत् तथा समृद्धकामः सम्पूर्णभोगोऽपि मुनिर्न कामेन हृष्येत् दीनोऽपि न दैन्येन शोचेत् यतो नारायणपरस्तन्माधुर्यानुभवलाभालाभाभ्यामेवास्य हर्षशोकौ स्याताम् ॥ ६ ॥

रूपासक्तिर्नाशहेतुरिति पतङ्गाच्छिक्षितमाह । दृष्ट्वेति द्वाभ्याम् ॥ ७ ॥

यद्यपि स्त्रीहिरण्यवादिषु मध्ये स्त्रियां पञ्चापि विषयाः सन्ति तदपि योषिदादिषु प्रथमं दर्शनेन पततीति रूपस्यैव प्राधान्यम् ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अष्टमेऽध्याये सर्पादयोऽजगरादिभ्यः शिक्षितमाहावधूतः तत्र तावदजगराच्छिक्षितमाह । सुखमिति चतुर्भिः । यथा दुःखमनिच्छितमेव भवति तथा यदैन्द्रियकं सुखं तत्स्वर्गे नरके च भवत्येव तस्मात्तद्बुधस्तन्नेच्छेत् ॥ १ ॥

आजगरः अजगरवृत्तिः ॥ २ ॥

अनुपक्रमः जीविकारम्भरहितः दिष्टभुक् दैवविपाकभुक् ॥ ३ ॥

ओज इन्द्रियाणां सहो मनसो बलं देहस्य सामर्थ्यम् तद्युक्तमपि देहमकर्मकं जीविकार्थयत्नरहितं बिभ्रत् भोगापेक्षया शयान एव भवेत् मोक्षापेक्षया तु वीतनिद्र एव भवेत् किंबहुना इन्द्रियवानपि नेहेत इन्द्रियार्थेष्विति शेषः ॥ ४ ॥

समुद्राच्छिक्षितमाह । मुनिरिति द्वाभ्याम् । प्रसन्नश्चासौ गम्भीरश्च दुर्विगाह्यः दुरूह्याभिप्रायः दुरत्ययः अनतिक्रमणीयः अनन्तपारः अनन्त कालमक्षयं सोमादिकं वा बहुषु विश्वं वा प्रलये पिबतीत्यनन्तपाः विष्णुस्तं रातीत्यनन्तपारः अक्षोभ्यः अविकार्यः स्तिमितोदः निश्चलजलः अर्णव इव मुनिर्भवेत् ॥ ५ ॥

यथा सागरः वर्षासु सरिद्भिः नोत्सर्पेत अन्यत्र तद्विहीनोऽपि न शुष्येत् तथा मुनिरपि समृद्धकामस्तद्धीनो वा न हृष्येन्न च शोचेत् हेतुगर्भं विशेषणं नारायणपर इति ॥ ६ ॥

पतङ्गाच्छिक्षितमाह । दृष्ट्वेति द्वाभ्याम् । तद्भावैः स्त्रीभावैः ॥ ७ ॥ ८ ॥

---

भाषा टीका ।

ब्राह्मण उवाच ।

हे राजन् ! इन्द्रियों का सुख तो स्वर्ग में तथा नरक में बराबर है जैसे कि प्राणियों को बिना चाहते दुःख आजाता है तैसे ही सुख भी आपही आजावैगा तिससे ज्ञानवान् पुरुष उस की चाहना से यत्न न करे ॥ १ ॥

विरक्त पुरुष अजगर की क्रिया को धारण करे भोजन प्राप्त चाहे मीठा मिले चाहे फीका मिले चाहे बहुत मिले चाहे थोड़ा मिले दैव इच्छा से जो मिल जाय तिसी को भोजन कर लेवे ॥ २ ॥

यदि कभी ग्रास न मिले तो भी बिना आहारमें रह कर भी कोई उद्यम न करे प्रारब्ध का भोग समझकर अजगर सरीखा बहुत दिन तक भूखाही सोता रहे ॥ ३ ॥

उसकी सब इंद्रिय समर्थ होवें तो भी मन इंद्रिय शरीर के बल के सहित देह को धारण करके भी निद्रा से रहित होकर सोता रहे ॥ ४ ॥

मुनि को चाहिये कि प्रसन्न चित्त रहे गंभीर रहे अथाह बुद्धि रखे निर्भय रहे कोई उसके बुद्धि का पार न पावै किसी भाव से क्षुभित न होवे निश्चल होकर रहे जैसे कि समुद्र होता है ये सब गुण समुद्र में भी होते हैं ॥ ५ ॥

मुनि को चाहे सब मनोरथ मिलजावें चाहे नहीं कुछ मिले तो भी नारायण में तत्पर रहने से थिर रहै जैसे कि समुद्र चौमासे में नदियों के मिलने से तथा अन्य दिनमें न मिलने से न उछलता है न सूखता है तैसा समान बना रहे ॥ ६ ॥

देवकी माया रूपी स्त्रि को देखकर अजितेंद्रिय पुरुष उसके भावों से लोभित होकर अंधेर में गिर पड़ता है जैसे कि पतंगा अग्नि में गिर पड़ता है ॥ ७ ॥

स्तोकं स्तोकं ग्रसेद्ग्रासं देहो वर्तेत यावता ।
गृहानहिंसन्नातिष्ठेद्वृत्तिं माधुकरीं मुनिः ॥ ९ ॥
अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः ।
सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदः ॥ १० ॥
सायन्तनं श्वस्तनं वा न संगृह्णीत भिक्षितम् ।
पाणिपात्रोदरामत्रो मक्षिकेव न सङ्ग्रही ॥ ११ ॥
सायन्तनं श्वस्तनं वा न सङ्गृह्णीत भिक्षुकः ।
मक्षिका इव सङ्गृह्णन् सह तेन विनश्यति ॥ १२॥
पदापि युवतीं भिक्षुर्न स्पृशेद्दारवीमपि ।
स्पृशन् करीव बध्येत करिण्या अङ्गसङ्गतः ॥ १३ ॥
नाधिगच्छेत्स्त्रियं प्राज्ञः कर्हिचिन्मृत्युमात्मनः ।
बलाधिकैः स हन्येत गजैरन्यैर्गजो यथा ॥ १४ ॥
न देयं नोपभोग्यं च लुब्धैर्यद्दुःखसञ्चितम् ।
भुङ्क्ते तदपि तच्चान्यो मधुहेवार्थविन्मधु ॥ १५ ॥
सुदुःखोपार्जितैर्वित्तैराशासानां गृहाशिषः ।
मधु हेवाग्रतो भुङ्क्ते यतिर्वै गृहमेधिनाम् ॥ १६ ॥

भाषा टीका ।

मूढ पुरुष ? स्त्रिजन सुवर्ण सुंदर वस्त्रादि द्रव्यों जोकि दैव की माया में रचित हैं तिन को देखने में उपभोग की बुद्धि से ज्ञान नष्ट होजाने से पतंग सरीका फसकर नष्ट होजाता है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मधुकराच्छिक्षितमाह । स्तोकमिति । गृहान्गृहस्थानहिंसन्नपीडयन् अयमभावः यथा मधुकरी विविधगन्धलोभेनैकस्मिन्नेव पद्मे वसन्नस्तमयसमये मुकुलिते तस्मिन्बध्यते एवं मुनिरपि गुणलोभेनैकमेव गृहमाश्रितस्तन्मोहेन बध्यत इति ॥ ९ ॥

किञ्च अणुभ्यश्चेति ॥ १० ॥

द्विविधो मधुकृत् मधुकृन्तति पुष्पादाच्छिद्य गृह्णातीति मधुकृद्भ्रमरः मधु करोत्याहारत्वेन स्वरूपेण चेति मधुमक्षिका च तत्र प्रथमाच्छिक्षितमुक्तं द्वितीयाच्छिक्षितमाह । सायमिदं भोक्ष्यामि श्व इदं भोक्ष्यामीति भिक्षितमन्नादि न संगृह्णीत किन्तु पाणिपात्रस्तन्मात्रग्राही यद्वा उदरमेवामत्रं पात्रं यस्य सः एकभिक्षायामुदरमात्रग्राही भवेत् संग्रही तु मक्षिकेव न भवति न जीवतीत्यर्थः ॥ ११ ॥

एतद्विवृणोति पुनः । सायन्तनमिति ॥ १२ ॥

स्पर्शासक्तिर्नाशहेतुरिति गजाच्छिक्षितमित्याह । पदाऽपीति । पादेनापि दारवीं दारुमयीमपि गजो हि करिणीं प्रदर्श्य निखाततृणपिहितगर्ते निपात्य बध्यते ॥ १३ ॥

किञ्च नाधिगच्छेदिति नोपगच्छेत् ॥ १४ ॥

त्यागभोगविहीनो धनसञ्चयः परगामी भवतीत्यत्र मधुहा गुरुरित्याह । न देयमिति । तदन्यो बलवान्भुङ्क्ते तदप्यन्यस्ततश्चान्यः मधुहा मक्षिकाभिः सञ्चितं मधु यथा भुङ्क्ते तद्वत् ननु सुगुप्तं धनं कथमन्यो ज्ञास्यति हरिष्यति चेति तत्राऽऽह । अर्थवित् । लिङ्गैरर्थं तदुपायं च वेत्तीत्यर्थवित् यथा मधुहा तरुकोटरादिगतं मधु वेत्ति हरति च ॥ १५ ॥

उद्यमं विनाऽपि भोगः सम्भवतीत्यत्रापि स एव गुरुरित्याह । सुदुःखेति । आशासानानामिति वक्तव्ये वर्णलोप आर्षः—

" यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।
तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेदि"ति ॥

गृहिणामावश्यकत्वेन दानविधानात् ॥ १६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी।

यावता ग्रासेन ननु यथेकत्रैव विशिष्टग्रासोपलब्धिः शक्या तर्हि स्तोकग्रासे को नियम इत्याशङ्क्य भावार्थमाह। पद्ममिति। तस्मिन् पद्मे मुकुलिते मुद्रिते सति तन्मोहेन गृहासक्त्या ॥ ९ ॥

किञ्च तस्मादेव मधुकरात् सारग्रहणं शिक्षितमित्याहेत्यर्थः ॥ १० ॥

तत्र द्विविधमधुकरमध्ये प्रथमाद्भ्रमरात् द्वितीयात् मक्षिकाविशेषात् यथा सङ्ग्रहकर्त्री मक्षिका न जीवति तद्वन्न जीवति किन्तु भवतीत्यध्याहारादित्यर्थं इत्युक्तम् ॥ ११ ॥

एतत् सङ्ग्रहवाक्यं विवृणोति स्पष्टयति तथाच न पौनरुक्त्यं वस्तुतस्तु सङ्ग्राहित्वासङ्ग्राहित्वभेदेन मक्षिकाजातेरपि द्वैविध्यात् प्रथमपक्षे यथा मक्षिकाजातिविशेष आहारमात्रं करोति सङ्ग्रही तु न भवति तथा यतिरपि सङ्ग्रही न स्यादित्यर्थः । द्वितीये तु संग्राहिमक्षिकाजात्यन्तरवद्यदि सङ्गृह्णन् भवति तदा तद्वदेव नश्यतीत्यर्थः ॥ १२ ॥

करिणीं दारुमयीम् ॥ १३ ॥

आत्मनः स्वस्य मृत्युं मृत्युहेतुं स कामुकः कर्मभूतः बलाधिकैः कामुकान्तरैः कर्तृभिः ॥ १४ ॥

न देयमिति । लुब्धैर्धनादि न दीयते नच स्वयं भुज्यत इत्यर्थः । किन्तु तत् सञ्चितम् अन्यो बलवान् भुङ्क्ते चिह्नैस्तत्स्थानमार्जनोपवेशनमुहुरीक्षणादि चिन्हैः अर्थं धनं तदुपायं तद्धरणोपायं च वेत्तीति ॥ १५ ॥

स एव मधुहेव आशासानानां कामयमानानां गृहमेधिनां गृहस्थानां सुदुःखोपार्जितैर्वित्तैर्हेतुभिः सिद्धाः गृहाशिषः अन्नाद्यान् यतिरग्रतो भुङ्क्ते अतस्तदर्थं यतिनोद्यमो न कार्य इत्यर्थः ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

न देयमिति। सञ्चितमन्यैर्ह्रियते ततः सञ्चयो न कार्य इत्यर्थः॥१५॥ दुःखेनान्यैरुपार्जितं तेभ्यो भिक्षित्वा भोक्तव्यमित्यर्थः ॥ १६–३१ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मधुकराच्छिक्षणीयमाह स्तोकं स्तोकमिति द्वाभ्याम् । यावता ग्रासेन देहो वर्तेत जीवेत तावन्तमेव ग्रासं नत्वधिकमित्यर्थः। तत्रापि स्तोकं स्तोकमल्पमेव ग्रसेत् गृहान् गृहस्थाश्रमस्थितान् जनानहिंसन्नपीडयन् माधुकरीं वृत्तिमातिष्ठेदाश्रयेत यथा मधुकरः सुमनसः अपीडयन् तत्र तत्र किञ्चिदेव गृह्णन् क्वाप्यसज्जमानो वर्तते तद्वन्मुनिरित्यर्थः। अन्यथैकस्मिन् पद्मे मधुलोभेन सक्तो मधुकरः तस्मिन् मुकुलिते निबद्धो भवत्येवं मुनिरपि गुणलोभेनैकमेव गृहमाश्रितस्तन्मोहेन बध्यत इत्यर्थः ॥ ९ ॥

किञ्च अणुभ्यश्चेति अणुभ्योऽल्पसारेभ्यः महद्भ्यो विपुलसारेभ्यः शास्त्रेभ्यः सारमाददीत यथा षट्पदोऽणुभ्यो महद्भ्यश्च पुष्पेभ्यः सारमादत्ते तद्वदित्यर्थः ॥ १० ॥

द्विविधो हि मधुकृत् मधु कृन्तति पुष्पादाच्छिद्य गृह्णातीति मधुकृत् भ्रमरः मधु करोति आहारत्वेन स्वेन रूपेणेति मधुकृत् मधुमक्षिका च तत्र प्रथमाच्छिक्षितमुक्तम् अथ मधुमक्षिकायाः शिक्षणीयमाह । सायन्तनमिति द्वाभ्याम् । सायन्तनश्वस्तनशब्दौ तत्तत्कालभोजनार्थपरौ इदं सायन्तनभोजनार्थमिदं श्व इत्येवं भिक्षितमन्नादि न संगृह्णीत किन्तु पाणी एवाञ्जलिरूपतामापन्नौ पात्रं भोजनपात्रं यस्य सः उदरमेवामत्रमन्ननिधानपात्रं यस्य सः मक्षिकेव न संग्रही यथा मक्षिका सङ्ग्राहिणी भवति तद्वत्संग्रही न भवेदित्यर्थः । संग्रही चेन्मधुमक्षिकावन्नश्यतीति भावः ॥ ११ ॥

एतद्विवृणोति पुनः । सायन्तनमिति। सहतेन संगृहीतेन सह विनश्यति ॥ १२ ॥

स्पर्शासक्तिर्नाशहेतुरिति गजाच्छिक्षणीयमित्याह । पदापीति । दारवीं दारुमयीमपि युवतीं स्त्रियं पदापि न स्पृशेत्स्पृशंस्तु नश्येत यथा करी गजः जिघृक्षुभिर्दारुमय्याः काष्ठतृणमृदाद्याच्छादितगर्तोपरिस्थापितायाः करिण्याः सङ्गसङ्गाद्यथा गर्ते पतितो बध्यते तद्वत् ॥ १३ ॥

किञ्च नाधिगच्छेदिति । प्राज्ञो विवेकवानात्मनः स्वस्य मृत्युं तत्तुल्यां स्त्रियं नाधिगच्छेन्नोपगच्छेत्तु सः अधिगच्छन् बलाधिकैर्हन्येत यथा गजो गजीमुपगच्छन् बलाधिकैर्हन्यते तद्वत् ॥ १४ ॥

दानभोगानुपयोज्यं धनमन्यगामीति मधुघ्नः शिक्षणीयमतस्तन्नार्जयेदित्याह । न देयमिति । लुब्धैर्दुःखेन सञ्चितमर्जितं यद्धनं न देयं नोपभोग्यं च तद्धनमन्योऽर्थवित्तद्ग्रहणोपायाभिज्ञः भुङ्क्ते तदपि तस्मादन्यः तस्यापि लोभाद्दानभोगानुपयुक्तः स्यात्तर्हि तस्मादन्यो बलवानेवाकृष्य भुङ्क्ते इत्यर्थः । मधुहेव स यथा मधुमक्षिकाभिः सञ्चितं मधु भुङ्क्ते तद्वत् ॥ १५ ॥

स्वोद्यमं विनैव भोजनलाभस्तस्मादेव शिक्षणीय इत्याह। सुदुःखेन बहुदुःखेनोपार्जितैर्वित्तैर्गृहस्थाशिषः पानभोजनादिकामानाशासानानां कामयमानानाम् आशासानानामिति वक्तव्येनावर्णलोप आर्षः—

> यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।
> तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेदिति ॥

शास्त्रार्थविदां गृहमेधिनामग्रतो यतिर्भुङ्क्ते मधुहेव स यथा मक्षिकाणां स्वोपार्जितमध्वभिलाषिणीनामग्रत एव मधु भुङ्क्ते तद्वत् ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मधुकरशिक्षितमतिमुपदिशति स्तोकमिति । मधुकरस्य विद्यमानां वृत्तिं समातिष्ठन् मुनिर्गृहात् ग्रसेदित्यन्वयः ॥ ९ ॥

अत्राणुत्वमहत्त्वे संख्ययोच्येते तत्त्वार्थतः सारं भगवज्ज्ञानजननीं भक्तिम् ॥ १० ॥

भिक्षितं भिक्षया लब्धमन्नं सायन्तनं सायन्तनार्थं श्वस्तनं श्वस्तनार्थं च न संगृह्णीत कथं तर्हि भोजनमत्राह । पाणीति । पाणिपात्रत्वेनोदरामत्रत्वेन वा भुञ्जीत इति शेषः । संग्रहे को दोष इत्यत्राह । मक्षिका इति । तेन धनेन सह विनश्यति चोरादिनेति शेषः ॥ ११ ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गजादिकमुपात्तमत्राह । पदेति । करिण्या अङ्गसङ्गतः स्पृशन् करीव बध्यते ॥ १३ ॥

एतदेव विवृणोति । नाधिगच्छेदिति ॥ १४ ॥

मधुघ्नतोऽपि का बुद्धिरार्जितेति तत्राह । न देयमिति । लुब्धैर्दुःखेन संचितं न देयं दानयोग्यं नोपभोग्यं स्ववपभोग्यं च न तत् एवं वित्तमर्थविद्न्यो भुङ्क्ते कथमिव मधुहा मकरन्दसंग्रही मधुवत् ॥ १५ ॥

किमनेनात्मनो बन्धमत्राह । सुदुःखेति । यतिर्निर्जितेन्द्रियग्रामः ॥ १६ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अणुभ्यश्चेति । त्रिविधो मधुकृत् एको भ्रमरजातिः असङ्ग्राहित्वसंग्राहित्वभेदेन द्वयी च मक्षिकाजातिरिति पद्यत्रयेण क्रमादुदाहरणानि ज्ञेयानि ॥ १०–१५ ॥

सुदुःखेति । अत्रादिदेशगृह्यमधुमक्षिकासंग्रहीतृविषयकं यावत् कामयमानानां गृहमेधिनां विविधहेतुभिः सिद्धा गृहाशिषोऽन्नादीनर्थान् यतिरग्रतो भुङ्क्ते ॥ १९–२० ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मधुकरान्छिक्षितमाह द्वाभ्याम् । मधुकरो यथा विविधगन्धलोभेनैकस्मिन्नेव पद्मे तत्सङ्कोचसमये तस्मिन्मुकुलिते सति बध्यते एवं मुनिरपि गुणलोभेनैकमेव गृहमाभिनन्दन्मोहेन बध्यते तस्मात् स्तोकं स्तोकमल्पमल्पं ग्रासं गृह्णन् भवेत् यावता देहो वर्तेतेति ग्रासानामाधिक्यन्यूनत्वे निषिद्धे गृहान् गृहस्थान् अहिंसन् अपीडयन् ॥ ९ ॥

मधुकरात् सारग्राहित्वमपि धर्मं शिक्षेदित्याह । अणुभ्यश्चेति ॥ १० ॥

मधुकरोतीति मधुकरशब्देन मधुमक्षिकाप्युच्यत इति ततः शिक्षितमाह । सायमिदङ्भोक्ष्ये श्व इदं भोक्ष्ये इति भिक्षितमन्नादि न सङ्गृह्णीतेति किं पुनरद्यतनं पौर्णमासिकं पौर्णवार्षिकं चेति भावः । अत्र मासं श्वो वा भविष्यति यहत्तु दइयमन्नादि तस्याप्यसंग्रहो न सम्भवेद्यतः सायन्तनं श्वस्तनं वा निमन्त्रणं न संगृह्णीयादिति केचिदाहुः केन पात्रेण गृहे गृहे भिक्षां कुर्यादित्यत आह । पाणिपात्र इति । सर्वतो भिक्षितग्रासानानीय कुत्र स्थापयेदित्यत आह । उदरामत्र इति । उदरमेवामत्रं भिक्षानिधानभाण्डं यस्य स च सः ॥ ११ ॥

संग्रहे कृते सति किं भवेदित्याह । सायन्तनामिति ॥ १२ ॥

स्पर्शासक्तिर्नाशहेतुरिति गजाच्छिक्षितमित्याह द्वाभ्याम् । पदा पादेनापि दारवीं दारुमयीमपि गजो हि करिणीं मदस्पर्श तृणादिपिहितगर्ते निपात्य बध्यते ॥ १३ ॥

इदं ममैव भोग्येति स्त्रियं नाधिगच्छेत् न विश्वसेतः स्यात् यतस्तथां मानीतैर्बलाधिकैर्गजारैः स किल हन्येत ॥ १४ ॥

त्यागभोगहीनो धनलुब्धः परगामी भवतीत्यत्र मधुहा मे गुरुरित्याह । न देयमिति । तदन्यो बली भुङ्क्ते तेनापि 'सञ्चितमन्यः तदन्यश्च: मधुहा मक्षिकाभिः सञ्चितं मधु यथा भुङ्क्ते तद्वत् ननु गुप्तं धनं कथमन्यो ज्ञात्वा हरेदित्यत आह अर्थविदिति तदुपायं च वेत्ति अर्थवित् यथा मधुहा तरुकोटरादिगतमपि मधुमक्षिकानुगमनेन वेत्ति ॥ १५ ॥

श्रीयमं विनापि भोगः सम्भवेदित्यत्रापि स एव गुरुरित्याह । सुदुःखेति । आशासानानामिति वक्तव्ये वर्णलोप आर्षः—

यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।

तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेदिति ॥ १६ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मधुकृन्ति पुष्पादीन्छिन्दन्ति गृह्णातीति मधुकृतस्त्रिविधः भ्रमरः मधुमक्षिकाश्च तत्राद्याच्छिक्षितमाह । स्तोकमिति द्वाभ्याम् ॥ ९—१० ॥

द्वितीयाच्छिक्षितमाह । सायन्तनमिति द्वाभ्याम् । इदं सायं भोक्ष्यामीदं श्वः भोक्ष्यामीति भिक्षितमन्नादि न संगृह्णीत किन्तु पाणिपात्रोदरामत्रो भवेत् पाणिरेव भिक्षितान्नादिग्रहणपात्रं यस्य स चासौ उदरमेवामत्रं निधानपात्रं यस्य न भाण्डादि स तथा मक्षिकेव संग्रही तु न भवेत् ॥ ११ ॥

अन्यथात्वे दोषमाह । सायमिति ॥ १२ ॥

गजाच्छिक्षितमाह । पदापीति द्वाभ्याम् ॥ १३—१४ ॥

मधुघ्नः शिक्षितमाह । न देयमिति द्वाभ्याम् । लुब्धैर्दुःखेन सञ्चितमुपार्जितं धनं न पात्रे देयं भवति नच काले भोग्यं भवति अपितु अर्थवित् परधनग्रहणप्रकारविदन्यो भुङ्क्ते तदन्यः मधुहा स्वाधः मक्षिकाभिः सञ्चितं मधु यथा भुङ्क्ते तद्वत् ॥ १५ ॥

किञ्च आशासानानाम् कामयमानानां गृहाशिषः—

यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।

तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेदिति ॥

स्मृत्याज्ञया लब्धान् अन्नादीन् ,यतिः ब्रह्मचारी च भुङ्क्ते अग्रतः प्रथमतः परोपार्जितान्नादिना यतिः कालक्षेपं करोतीति भावः ॥ १६ ॥

———

भाषा टीका ।

भ्रमर की वृत्ति को धारण करने वाला मुनि जितने से देहका निर्वाह होवे उतनाही थोडा ग्रास ग्रहण करे किसी घरों मे जावे तो भी किसी का मन दुखाकर भिक्षा न लेवे यह माधुकरी वृत्ति कही है ॥ ९ ॥

कुशल पुरुषों को चाहिये कि छोटे बडे सब शास्त्रों से सार को ग्रहण करे जैसे कि भौंरा पुष्पों से रसमात्र को लेलेता है पुष्पों को नहीं तोडता है ॥ १० ॥

भिक्षु पुरुष सवेरे से संध्या के वास्ते संध्या से सवेरे के वास्ते भिक्षा को नहीं रखे भिक्षा भोजन मागने को हाथही को पात्र

ग्राम्यगीतं न शृणुयाद्यतिर्वनचरः क्वचित् ।
शिक्षेत हरिणाद्बद्धान् मृगयोर्गीतमोहितात् ॥ १७ ॥
नृत्यवादित्रगीतानि जुषन् ग्राम्याणि योषिताम् ।
आसां क्रीडनको वश्य ऋष्यशृङ्गो मृगीसुतः ॥ १८ ॥
जिह्वयाऽतिप्रमाथिन्या जनो रसविमोहितः ।
मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तु बडिशैर्यथा ॥ १९ ॥
इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः ।
वर्जयित्वा तु रसनं तन्निरन्नस्य वर्धते ॥ २० ॥
तावज्जितेन्द्रियो न स्याद्विजितान्येन्द्रियः पुमान् ।
न जयेद्रसनं यावज्जितं सर्वं जिते रसे ॥ २१ ॥
पिङ्गला नाम वेश्याऽऽसीद्विदेहनगरे पुरा ।
तस्या मे शिक्षितं किञ्चिन्निबोध नृपनन्दन ! ॥ २२ ॥
सा स्वैरिण्येकदा कान्तं सङ्केत उपनेष्यती ।
अभूत्काले बहिर्द्वारि बिभ्रती रूपमुत्तमम् ॥ २३ ॥
मार्ग आगच्छतो वीक्ष्य पुरुषान् पुरुषर्षभ ! ।
तान् शुल्कदान् वित्तवतः कान्तान् मेनेऽर्थकामुका ॥ २४ ॥

भाषा टीका।

बनावै रखने का बरतन उदर को बनावे जैसी मक्षिका करती है तैसा रहै संग्रह नहीं करे ॥ ११ ॥

सवेरे के वा सांझ के भोजन को भिक्षु संग्रह करके न रखे यदि रखैगा तो मधु माखियों की नांई उस के साथही नष्ट हो जावैगा ॥ १२ ॥

त्यागी होकर लकडी की स्त्री की मूर्ति को पैरसे भी नहीं छूवै यदि छूवैगा तो जैसे जंगल मे हथिनी के संगसे हाथि बंध जाता है तैसे बंध जावैगा ॥ १३ ॥

ज्ञानी पुरुष अपने आत्मा के मृत्यु रूप स्त्री को कभी भी प्राप्त न होवै यदि ग्रहण करेगा तो बिलिष्ठ पुरुष उसको मारडेंगे जैसे एक हाथि को हथिनी के वास्ते बहुत हाथी मारते हैं तैसे ॥ १४ ॥

लोभी पुरुषों का दुःख से पैदा किया जो धन सो न देने को होता है न भोगने को होता है उस धनको कोइ दूसरा ही भोगता है जो कि उस के छिपाये हुये धनको भी जानने वाला है जैसे कि मधु माखियों के छाता को टोडने वाला लेजाता है यह मधुहा का कार्य देखा है ॥ १५ ॥

बडे दुःखों से संसारी अपने घरके भोग के लिये जिस अन्नादि पदार्थ को रखते हैं गृहस्थों के पहिले ही उस पदार्थ को सन्यासी यति पहिले ही भोगलेता है जैसे कि मधुहा मधु हरण करता है तैसे यह बात भी मधुहा से सीखी है ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

हरिणाच्छिक्षितमाह। ग्राम्येति। भगवद्गीतं तु शृणुयादेव मृगयोर्लुब्धकस्य ॥ १७ ॥

हरिणशब्देन हरिणीसुत ऋष्यशृङ्गोऽपि गुरुर्ज्ञातव्य इत्याह। नृत्येति। वश्यो बभूवेति शेषः ॥ १८ ॥

रसासक्तिर्नाशहेतुरिति मीनाच्छिक्षितमित्याह। जिह्वयेति। अतिप्रमाथिन्या अतिक्षोभिकया दुर्जयया ऋच्छति प्राप्नोति बडिशैरामिषान्तैर्लोहकण्टकैः ॥ १९ ॥

दुर्जयत्वमुपपादयति। इन्द्रियाणीति द्वाभ्याम्। अयं भावः यथाऽऽहारस्त्यज्यते तथाऽन्येन्द्रियजयः केवलं भवति रसनेन्द्रियं तु वर्धते यदि तु भुज्यते तर्हि पुनश्च रसासक्त्या सर्वेन्द्रियक्षोभः स्यात् अतो रसासक्तिं परित्यज्यापि भगवज्ज्ञानेन प्राणधृत्यैव सन्तुष्येदित्यत्रोक्तमपि रसनस्यातिदुर्जयत्वज्ञापनायोक्तम् इति विशेषः ॥ २०-२१ ॥

पिङ्गलाया नैराश्यं शिक्षितमिति वक्तुं तदाख्यानमाह। पिङ्गलेत्यादिना। मे मया शिक्षितम् ॥ २२ ॥

स्वैरिणी कामचारिणी सङ्केते रतिस्थाने ॥ २३ ॥

तान्वित्तवतः सम्भावितवान् शुल्कदान्भूयसो दातॄन् कान्तान् सुरतार्हान् ॥ २४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

विषयग्रामं सेवन्ते इति ग्राम्या विषयिणस्तेषां गीतं न शृणुयादिति विशेषणस्य व्यावर्त्तकत्वाद्भगवद्गीतं तु शृणुयादेवेति व्याख्यातं तदुक्तं पाद्मे "ब्राह्मणो वासुदेवाख्यं गायमानोऽनिशं परम् । हरेः सालोक्यमाप्नोति रुद्रगानाधिकं भवे"दिति ॥ १७ ॥

ग्राम्याणि इन्द्रियग्रामाहाणि ॥ १८ ॥

मृत्युं संसारम् प्रमत्तो बहिर्मुखा बुद्धिर्यस्य स तथा ॥ १९ ॥

प्राश्विति उद्यमं विनैवेत्यर्थः । रसनन्तु वर्जयित्वेत्यन्वयः । ननु रसनेन्द्रियजयः कथं स्यादित्यपेक्षायां पद्यस्यास्य भाव इति ॥ २० ॥

रसे जिते सति सर्वं जितमिति रसनेन्द्रियजयेन सर्वेन्द्रियजये योग्यत्वात् भूतवन्निर्देशः ॥ २१ ॥

तदाख्यानं पिङ्गलाख्यानं ज्ञानप्रकरणेऽप्यस्मिन् प्रसङ्गात् परमभक्तिमपि दर्शयति । पिङ्गलेति ॥ २२ ॥

उत्तमं रूपं बिभ्रती सती काले सन्ध्यायां बहिर्द्वारि स्थिताभूत् ॥ २३ ॥

हे पुरुषर्षभेति तस्याः दुराशाया माध्र्यफलत्वाभिप्रायेण ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हरिणाच्छिक्षणीयमाह ग्राम्यगीतमिति । कदाचित्कदाचिदपि ग्राम्यगीतं न शृणुयात् मृगयोर्लुब्धकस्य गीतेन मोहिताद्धरिणाद्ग्राम्यगीतं न शृणुयादितीमां वृत्तिं शिक्षेत हरिणो हि मृगयोर्गीतमोहितस्तेन गृहीतो नश्यति तद्वद्यतिर्ग्राम्यगीतं शृण्वन्नश्येदतस्तन्न शृणुयादित्यर्थः । ग्राम्येत्युक्तेर्भगवद्गीतं तु शृणुयादेवेत्यभिप्रायः ॥ १७ ॥

हरिणशब्देन हरिणीसुत ऋष्यशृङ्गोऽपि विवक्षितः अत एव सोऽपि गुरुरित्यभिप्रेत्याह नृत्येति । मृगीसुतः ऋष्यशृङ्गः ग्रामे भवानि ग्राम्याणि योषितां नृत्यानि वादित्राणि मृदङ्गादिध्वनयस्तान् गीतानि च जुषन् सेवमानः पश्यन् शृण्वंश्चेति यावत् आसां योषितां क्रीडनकः क्रीडासाधनं वश्यश्चाभवदिति शेषः अतस्तानि न जुषेतेति भावः ॥ १८ ॥

रसनासक्तिर्नाशहेतुरिति मीनाच्छिक्षणीयमित्याह । जिह्वयेति । अतिप्रमाथिन्या दुर्जयया जिह्वया करणभूतया रसे तद्विषये विमोहितः अत एवासमीक्ष्यकारी दुर्बुद्धिर्मृत्युमृच्छति प्राप्नोति यथामिषबुद्धिविमोहितो मीनो बडिशैरामिषाविष्टैर्लोहकण्टकैः विनश्यति तद्वत् ॥ १९ ॥

जिह्वायाः प्रमाथित्वमुपपादयति द्वाभ्याम् । इन्द्रियाणीति । मनीषिणः बुद्धिमन्तः इन्द्रियजयेच्छवः तावन्निराहारा इन्द्रियाणि वर्जयित्वा तु रसनं रसनेन्द्रियव्यतिरिक्तानीत्यर्थः । आशु जयन्ति रसनव्यतिरिक्तानीन्द्रियाणि निराहारमात्रेणैव जेतुं शक्यानि तेन तत्पादप्रत्ययःस्तनन्तु न तेन जेतुं शक्यं प्रत्युत निराहारेण रसनेन्द्रियवृद्धिरेवापादनादिति भावः । तदाह तन्निरन्नस्य वर्धत इति तद्रसनं निरन्नस्य निराहारस्य वर्धते इति ॥ २० ॥

अन्यानि रसनमजितमिन्द्रियाणि जितान्येवेत्यत आह । तावदिति । विजितानि अपि रसनव्यतिरिक्तानीन्द्रियाणि येन तथाभूतोऽपि यावद्रसनं न जयति तावज्जितेन्द्रियो न स्यादेव रसे रसनेन्द्रिये जिते सति तु सर्वमिन्द्रियं जितप्रायमेवेत्यर्थः ॥२१॥

पिङ्गलाया नैराश्यं शिक्षितमिति वक्तुं तदाख्यानमाचष्टे पिङ्गलेत्यादिना यावदध्यायसमाप्ति विदेहनगरे मिथिलापुरे तस्याः पिङ्गलातः मे मया शिक्षितं किञ्चिदस्ति तन्निबोध शृणु हे नृपनन्दन ! यदो ॥ २२ ॥

सेति । सा पिङ्गला स्वैरिणी संकेत इति कामचारिणी सङ्केते रतिस्थाने सङ्कतमिति पाठे अत्र अन्यजन्तः सङ्कतनमिति यावत् उपनेष्यती 'लक्षणहेत्वोः' इति शत्रन्तात् उगित्लक्षणो ङीप् उपनेतुमित्यर्थः । यद्वा एतावद्धनं यो दास्यति तेनैव सङ्गमिष्यामीत्येवं विधं संकेतमुपनेष्यती प्राप्तवतीति यावत् उत्तमं स्वलङ्कृतं रूपं बिभ्राणा काले स्वसंकेतकाले गृहद्वारि स्वगृहद्वारे अभूत्तस्थौ ॥ २३ ॥

मार्ग इति । हे पुरुषर्षभ ! तान् पुरुषान् वित्तवतः सधनानपि शुल्कदान् मूल्यदानपि न मेने नामन्यत तैः सह न रेमे इत्यर्थः । कुतः यतः सार्थकामुका तैः प्रतिज्ञातार्थादप्यधिकवित्तकामुका ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरिणाच्छ्रोत्रेन्द्रियजयो लब्ध इत्याह । ग्राम्येति । अहं वनचरो यतिर्ग्राम्याणां गीतं वचनं न शृणुयादितीममर्थं हरिणाद् शिक्षे कीदृशात् मृगयोर्गीतमोहितत्वेन बद्धात् ॥ १७ ॥

ग्राम्यगीतश्रवणे का हानिरिति तत्राह । नृत्येति । क्रीडनकाख्यः क्रीडासाधनवद्वन्धः ॥ १८ ॥

मत्स्याज्जिह्वेन्द्रियजयप्रकारं कथयति । जिह्वयेति । अतद्बुद्धिरतत्त्वज्ञः ॥ १९ ॥

रसजयो दुष्परिहर इत्युपपादयति । इन्द्रियाणीति । रसनं रसनेन्द्रियम् असौ रसना रस्ये स्वविषये वर्धते ॥ २० ॥

जिह्वेन्द्रियजय एवेन्द्रियजयो नान्य इत्याह । तावदिति । रसो रागः "रसो रागे विषे वीर्ये" इति यादवः ॥ २१ ॥

पिङ्गलाया वैराग्यमुपशिक्षितमिति वक्तुमुपक्रमते । पिङ्गलेति ॥ २२ ॥

सैकदा सङ्केते वित्तसमये कान्तमुपनेष्यती आत्मसमीपं प्रापयन्ती गृहद्वार्यभूदित्यन्वयः ॥ २३ ॥

मार्गे आगच्छतः पुरुषान्वीक्ष्य तान् पुरुषान् वित्तवतः शुल्कदान् कान्तान् मेने ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

रसे जिते सति सर्वं जितमिति तादृशस्य तस्य योग्यत्वाद् भूतवन्निर्देशः ॥ २१ ॥

ज्ञानप्रकरणेऽप्यस्मिन् प्रसङ्गात्परमभक्तिमपि दर्शयति । पिङ्गलानामेति ॥ २२-३० ॥

---

आगतेष्वपयातेषु सा सङ्केतोपजीविनी ।
अप्यन्यो वित्तवान् कोऽपि मामुपैष्यति भूरिदः ॥ २५ ॥
एवं दुराशया ध्वस्तनिद्रा द्वार्यवलम्बती ।
निर्गच्छन्ती प्रविशती निशीथं समपद्यत ॥ २६ ॥
तस्या वित्ताशया शुष्यद्वक्त्राया दीनचेतसः ।
निर्वेदः परमो जज्ञे चिन्ताहेतुः सुखावहः ॥ २७ ॥

* *

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्राकृतगानश्रवणासक्तिरनर्थहेतुरिति हरिणाच्छिक्षितमाह । ग्राम्यगीतमिति । तेन भगवद्गीतं शृणुयादेव ॥ १७ ॥

ग्राम्यगीतासक्तेरुदाहरणमाह । नृत्येति ॥ १८ ॥

प्राकृतरसासक्तिरनर्थहेतुरिति मीनाच्छिक्षितमाह । जिह्वयेति । बडिशैरामिषाश्रितैः ॥ १९ ॥

तदेवं रूपगन्धस्पर्शशब्दरसैः पञ्चभिर्विषयैः पतङ्गमधुकरगजहरिणमीनाः पञ्च मोहिताः हताः तदुक्तम्—

पतङ्गमातङ्गकुरङ्गभृङ्गमीना हताः पञ्चभिरेव पञ्च ।
एकः प्रमादी स कथं न हन्यते यः सेवते पञ्चभिरेव पञ्च ॥

किंत्वन्येन्द्रियाणां वृत्तिमध्ये रसनेन्द्रियमेवानर्थकारीत्यतस्तस्य जये प्रयत्नं कुर्वीतेत्याह । इन्द्रियाणीति द्वाभ्याम् । अयम्भावः यदाहारस्त्यज्यते तदान्येन्द्रियजयः केवलं भवति रसनेन्द्रियन्तु वर्द्धते यदि तु भुज्यते तर्हि पुनश्च रसासक्त्या सर्वेन्द्रियक्षोभः स्यात्तस्मात्तथा रसनेन्द्रियं जेतव्यं यथा तदनुवर्तीन्यन्यान्यपीन्द्रियाणि जितानि स्युस्तादृशो रसनेन्द्रियस्य जयस्तु रसनयैव परिमितमहाप्रसादमात्रभोजनेन या रसनावर्तिष्णुरिन्द्रियेषु भगवद्गुणनामकीर्तनरसास्वादाद्वा भवेत् यदुक्तम्—

रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते इति ॥ २० ॥ २१ ॥

पिङ्गलाया वैराग्यं शिक्षितमिति तदुपाख्यानमाह । पिङ्गलेति ॥२२॥

सङ्केते रतिस्थाने उपलप्स्यती स्वसमीपमानेष्यन्ती आनेतुमित्यर्थः ॥ २३ ॥

शुल्कदान् मूल्यं दत्वा सुरतग्राहिणः ॥ २४ ॥ २५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हरिणाच्छिक्षितमाह । ग्राम्येति । मृगयोर्लुब्धकस्य ॥ १७ ॥

ग्राम्यगीतभयोऽर्थं दर्शयति । नृत्येति । ऋष्यः सन् क्रीडनको बभूवेति शेषः ॥ १८ ॥

मीनाच्छिक्षितमाह । जिह्वयेति । अतिप्रमाथिन्या अत्यन्तमनःक्षोभिकया बडिशैः आमिषादिलिप्तलोहकण्टकैः ॥ १९ ॥

जिह्वायाः मनःक्षोभकत्वमुपपादयतीन्द्रियाणीति द्वाभ्याम् । ॥ २०—२१ ॥

पिङ्गलातः शिक्षितं वक्तुं तदाख्यानमाह । पिङ्गलेत्यादिना ॥२२॥ ॥ २३—२४—२५ ॥

---

भाषा टीका ।

वनमें रहने वाले यति को कामियों के भाषा के गीतों को नहीं सुनना चाहिये भगवान् के गीतों को तो सुनना चाहिये इस बात को व्याध के गीत सुनके मोहित हुवे बंधन में पड़े हरिणा से सीखना चाहिये ॥ १७ ॥

ग्रामीण स्त्रियों के गीत बाजा नृत्य इनको सेवन नहीं करे इनके सेवन से मृगी सुत ऋष्य शृंग मुनि भी इन स्त्रियों के वश होगये ॥ १८ ॥

मनको बड़े मंथन करने वाली जीभके मारे मनुष्य रसों से मोहित होजाता है सो दुर्बुद्धि मृत्यु को प्राप्त होता है जैसे कि वंशी में लगे को मुख लगाने से मछली मरजाती है यह बात मछली से सीखी है ॥ १९ ॥

जो बुद्धिमान् पुरुष विषयों को भोग नहीं देते हैं सो इंद्रियों को जीत लेते हैं एक रसना जीभ इंद्रिय तो नहीं वश होती है वह तो आहार नहीं मिलने से और बढ़ती है ॥ २० ॥

जिस पुरुष ने सब इंद्रिय जीत भी लिये हों तो भी जब तक रसना इंद्रिय को नहीं जीतता है तब तक जितेंद्रिय नहीं होसकेगा रसके जीतने से जानों सब ही जीत लिया ॥ २१ ॥

पूर्व काल में विदेह नगर मिथिला में एक पिंगलानाम की वेश्या थी हे नृपनंदन यदुजी ! उससे मैंने कुछ सीखा है तिस को आप श्रवण करो ॥ २२ ॥

वह व्यभिचारिणी एक दिन अपने मैथुन स्थान में कोई पुरुषों को लेजाने के वास्ते सुन्दर रूप बनाकर रात के समय दरवाजे में खड़ी होरही थी ॥ २३ ॥

हे पुरुषर्षभ ! मार्ग में आते हुवे पुरुषों को जिसको देखे तिसको धन देने वाला होगा भर्ता होगा इस प्रकार से धन की कामना से यह मेरा पति होजावे ऐसे आशा करती रही ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपिः सम्भावनायाम् अन्योऽपि मामुपैष्यतीति दुराशयेत्युत्तरेणान्वयः ॥ २५ ॥

द्वार्यवलम्बमाना पुनः प्रविशती पुनर्निर्गच्छन्ती एवं कुर्वती निशीथमर्धरात्रं प्राप ॥ २६ ॥

तस्या निर्विण्णचित्ताया गीतं शृणु यथा मम ।
निर्वेद आशापाशानां पुरुषस्य यथा ह्यसिः ॥ २८ ॥
न ह्यङ्गाजातनिर्वेदो देहबन्धं जिहासति ।
यथा विज्ञानरहितो मनुजो ममतां नृप ! ॥ २९ ॥

पिङ्गलोवाच ॥

अहो मे मोहविततिं पश्यताविजितात्मनः ।
या कान्तादसतः कामं कामये येन बालिशा ॥ ३० ॥
सन्तं समीपे रमणं रतिप्रदं वित्तप्रदं नित्यमिमं विहाय ।
अकामदं दुःखभयाधिशोकमोहप्रदं तुच्छमहं भजेऽज्ञा ॥ ३१ ॥
अहो मयाऽऽत्मा परितापितो वृथा साङ्केत्यवृत्त्याऽतिविगर्ह्यवार्तया ।
स्त्रैणान्नराद्यार्थतृषोऽनुशोच्यात् क्रीतेन वित्तं रतिमात्मनेच्छती ॥ ३२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

निर्वेदोऽलम्बुद्धिः चिन्ताचिन्तैव हेतुर्यस्य सः ॥ २७ ॥

यथा जगाद तत् मम मत्तः शृणु ननु किं निर्विण्णाया गीतश्रवणेन तत्राऽऽह हि यस्मात्पुरुषस्याऽऽशापाशानां निर्वेदोऽसिर्यथा तथा छेत्ता ॥ २८ ॥

तत्र हेतुः । नहीति । अङ्ग हे राजन् ! ॥ २९ ॥

अविजितात्मत्वे हेतुः याऽहं बालिशा विवेकशून्या कुतः येन कारणेनासतस्तुच्छान्नरात्कामं कामये ॥ ३० ॥

बालिशत्वं प्रपञ्चयति । सन्तमिति चतुर्भिः । समीपे सन्तमन्तर्यामित्वात् इममपरोक्षमीश्वरम् ॥ ३१ ॥

अतिविगर्ह्याऽतिनिन्द्या या वार्ता जीविका तया कुतः सांकेत्येन या वृत्तिस्तया बहुव्रीहिणा सविशेषणं वा परितापं प्रपञ्चयति । स्त्रैणादिति । स्त्रीलम्पटादत एवार्थतृषो लुब्धादत एवानुशोच्यान्नराद्याऽहं वित्तं रतिं चेच्छती मया वृथाऽऽत्मा परितापितः केन वित्तमिच्छती तेन नरेण क्रीतेन स्वयं विक्रीतेनाऽऽत्मना देहेन ॥ ३२ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपनी टिप्पणी ।

आगतेष्विति युग्मकम् एवं कुर्वतीति व्याख्यानान्निर्गच्छन्ती प्रविशतीति चात्रन्त एव पाठः ॥ २५ ॥ २६ ॥

अलं बुद्धिः स्वाभाविका विषयेषु हेयत्वबुद्धिः परम इति लौकिकनिर्वेदव्यावृत्तिः तत्र हेतुः सुखावह इति सुखं श्रीकृष्णविषयकानुरागजानन्दम् आवहति प्रापयतीति तथा चिन्ताचिन्तैव हेतुर्यस्येत्यापातम्बोधार्थमेव तस्य पूर्वसंस्कारहेतुकत्वात् ॥ २७ ॥

तस्या इत्यत्रैकं तस्या इति सम्बन्धसामान्यविवक्षया षष्ठी तयेत्यर्थः आशापाशानामिति 'अविद्याऽस्मितारागद्वेषाभिनिवेशाः' इत्यत्र रागशब्दोक्ता या आशास्ता एव पाशाः पाशवद्बन्धकास्तेषां निर्वेदोऽसिरिति धर्मलुप्ता तत्र हेतुत्वे ॥ २८ ॥ २९ ॥

याहं बालिशा तस्या अविजितात्मनो मे मोहविततिं यूयं पश्यत येन बालिशत्वेन हेतुनाऽसतः कान्तादहं कामं कामये, इत्यन्वयः ॥ ३० ॥

श्रीदत्तात्रेयकृपादृष्टिप्रभावेण झटिति पूर्वसंस्कारोदयादेतादृशं तद्वाक्यं सन्तमित्यादि । अन्तर्यामित्वात् समीप एव सन्तं न तु दूरगं तत्रापि परमसुन्दरत्वेन रमणं प्रेष्ठं तत्रापि रतिसुखदं सैरिन्ध्र्यादिष्विव भूषणादिवित्तप्रदञ्च तत्रापि नित्यमकालकलितं तत्रापि मम परोक्षं स्वयं प्रकाशत्वान्नतु परोक्षं तथाभूतमीश्वरं विहाय अकामदं यथार्थसुखाप्रदं प्रत्युत दुःखादिप्रदं तत्र हेतुस्तुच्छं तादृशमप्यहं भजे इति बालिशत्वप्रपञ्चः ॥ ३१ ॥

साङ्केत्येन सङ्केतीकृतेन रतिसुखेन वा वृत्तिर्वर्त्तनं तया हेतुना या विनिन्द्या जीविका भवति व्यधिकरणे तृतीयेति बहुव्रीहिणेति अतिविगर्ह्या वार्ता जीविका यस्यास्तया भवेति सामानाधिकरण्यभूतेन नरेण मूल्यं नीतेन स्वयं विक्रीतेन मूल्यं वित्तादिकं गृहीत्वा दत्तेन ॥ ३२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अर्थतृषः अर्थतृष्णायुक्तात् वित्तं रतिसुखहेतुं वित्तम् ॥ ३२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थमागतेषु सर्वेषु पुरुषेष्वपयातेषु प्रत्याख्यानाद्गतेषु सत्सु सा पिङ्गला सङ्केतोपजीविका सङ्केतेनैव उपजीवतीति तथा हेतुगर्भमिदमतः अपिः सम्भावनायां भूरिददातीति तथा धनाढ्य-

यदस्थिभिर्निर्मितवंशवंश्यस्थूणं त्वचा रोमनखैः पिनद्धम् ।
क्षरन्नवद्वारमगारमेतद्विण्मूत्रपूर्णं मदुपैति काऽन्या ॥ ३३ ॥
विदेहानां पुरे ह्यस्मिन्नहमेकैव मूढधीः ।
याऽन्यमिच्छन्त्यसत्यस्मादात्मदात्काममच्युतात् ॥ ३४ ॥
सुहृत्प्रेष्ठतमो नाथ आत्मा चायं शरीरिणाम् ।
तं विक्रीयाऽऽत्मनैवाहं रमेऽनेन यथा रमा ॥ ३५ ॥
कियत्प्रियन्त व्यभजन् कामा ये कामदा नराः ।
आद्यन्तवन्तो भार्याया देवा वा कालविद्रुताः ॥ ३६ ॥
नूनं मे भगवान् प्रीतो विष्णुः केनापि कर्मणा ।
निर्वेदोऽयं दुराशाया यन्मे जातः सुखावहः ॥ ३७ ॥
मैवं स्युर्मन्दभाग्यायाः क्लेशा निर्वेदहेतवः ।
येनानुबन्धं निर्हृत्य पुरुषः शममृच्छति ॥ ३८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अहो मया वृथैवात्मा देहः परितापितः कथं भूतया सङ्केते रतिस्थाने मया स्वाङ्कृतया वृत्तिवर्तनं यस्यास्तया अत एवाति-गर्ह्या मातो वृत्तिर्यस्यास्तया याहमर्थतृषः कामलुब्धात् शोच्यस्य-दात् अत एवानुशोच्यात् निन्द्यत्वानुचिन्त्यात् विसं रतिमिन्द्र-यपीति च तेन स्वयोगेन क्रीतेन कथं धिक्कीतनात्मना देहंम-च्छती ॥ ३२ ॥

---

भाषा टीका ।

पुरुषों के संकेत में जीविका करने वाली वह पिंगला आने जाने वाले पुरुषों को देखकर इसमें दूसरा कोई हम को बहुत धन देने वाला आवेगा सो भला होगा ऐसे विचार ती थी ॥ २५ ॥

ऐसी खोटी आशा में उसकी निद्रा जाती रही दरवाजे में ही खड़ी रही कभी भीतर आवे कभी बाहिर जावे ऐसी ही आधीरात उसको बीत गई ॥ २६ ॥

उसके धन की आशा में मुख सूख गया मन उसका दुखी होगया तब चिन्ता के हाल में पीछे का सुख देने वाला परम वैराग्य उत्पन्न हुआ ॥ २७ ॥

वैराग्य चित्त होने वाली उस वेश्या का जैसा गीत है सो मेरे से आप सुनो क्योंकि निर्वेद जो है सो पुरुषों के आशा रूपी पाशों के काटने को तरवार सरीखा होता है ॥ २८ ॥

हे नृप! जो विज्ञान रहित पुरुष है सो ममता को नहीं छोड़ता है इसी से बिना निर्वेद के भये देह बंधन को छोड़ना नहीं चाहता है ॥ २९ ॥

पिङ्गला उवाच ।

अहो मैं बड़ी अजितेन्द्रिय हूं मेरे मोहके विस्तार को देखो जिस मैं मूर्खा ने उसी मोहके वश होकर असत्कांत से धन तथा सुख की कामना करी है ॥ ३० ॥

जो सदा काल पास में रहने वाले रति के देने वाले धन देने वाले इन नित्य रमण परमात्मा को छोड़कर किसी कामना को नहीं देने वाले दुख भय शोक आधि मनकी चिन्ता मोह इनके देने वाले तुच्छ संसारी मनुष्य को मैं सेवती हूं सो मैं बड़ी अज्ञानिनी हूं ॥ ३१ ॥

अहो मैंने आज तक अपने शरीर मन को व्यर्थ ही संतापित किया संकेत वृत्ति से अति खोटी मैथुन की बात से नहीं अर्थ की तृष्णा वाला शोचने योग्य स्त्री लंपट ऐसे पुरुष को अपने शरीर को बेचकर मैंने रति की इच्छा करी है और धन की चाहना करी, है सो मैं बड़ी मंद भागिनी हूं ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अहो भिक्षुमां चाहमनिर्विमतमिमं भजामीत्याह । यदिति । वंशो नाम स्थूणासु निहितस्तिर्यक् वेणुः वंश्यास्तस्मिन्ननुगता निहिता वंश्याः अस्थिभिरेव निर्मिता वंशादयो यस्मिन् तत् तत्र पृष्ठदीर्घमस्थि वंशः स वंश्याः पार्श्वास्थीनि वंशानि स्थूणा हस्तपादास्थीनि तथा त्वचा रोमभिर्नखैश्च पिनद्धं छादितं तथापि क्षरन्ति नव द्वाराणि यस्मिन् तत् एवम्भूतागाररूपं नरशरीरमेतत् मन्मत्तोऽन्या का वा कान्तबुद्ध्या उपैति भजते ॥ ३३ ॥

सत्सङ्गमो सत्यामत्वहो मम मोह इत्याह । विदेहानामिति । याहमसती अच्युतादन्यं कामं भोगमिच्छती सा ॥ ३४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आत्मनस्तदनुग्रहविषयतां सम्भावयति । नूनमिति । केनापि कर्मणाऽज्ञातसुकृतविशेषेण मे मह्यं भगवान् विष्णुर्नूनं प्रीतः कुतः यद्यस्मात् दुराशाया मे ममायं सुखावहो निर्वेदो जातः तत्प्रसादमन्तरेणेदृशो निर्वेदो दुर्लभ इति भावः ॥ ३७ ॥

तदेवाह । मैवमिति । एवमेवं सति भगवति प्रीते सतीत्यर्थः मन्दभाग्याया मम निर्वेदस्य हेतवः क्लेशाः माऽभूवन् स्युरित्यर्थः किं निर्वेदमात्रेणोत्पन्नस्तं विशिनष्टि । येन निर्वेदेनानुबन्धं देहगेहादिष्वहंममाभिमानरूपं पाशं निर्हृत्य परिहृत्य पुरुषः शमं शान्तिं मनःप्रसादमृच्छति प्राप्नोति ॥ ३८ ॥

अत एवमनन्तेन भगवतोपकृतं निर्वेदमिति शेषः तत्कृतोपकाररूपं निर्वेदमित्यर्थः । शिरसाऽऽदाय धृत्वा ग्राम्यैः सह सङ्गतीकृता दुराशाश्च त्यक्त्वा ग्राम्यसङ्गता इति पाठे ग्राम्यविषयगोचराः दुराशास्त्यक्त्वा तमेवाधीश्वरं भगवन्तं व्रजामि सेवे इत्यर्थः ॥ ३९ ॥

किञ्चैवं वर्तिष्ये इत्यभिसन्धत्ते । सन्तुष्टेति । श्रद्दधती श्रद्धां कुर्वती चिकीर्षितविषयत्वरायुक्ता सन्तुष्टा विलासाद्यासङ्गयुक्तासन्तोषरहिता यथालाभेन दैवाल्लब्धेन जीवन्त्यहमात्मना तेन रमणेन निरतिशयप्रियेणामुना भगवता सह विहरामि वै नूनम् ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यदर्थं ग्राम्यमाकाङ्क्षन्ते तदीदृशं हीत्याह । यदिति । त्वचा रोमनखैरस्थिभिः पदं स्थूणाः स्तम्भाः मद्भ्या कीदृशी एतद्द्वारमगारं गृहमुपैतीत्यन्वयः वंशाः दीर्घदारुविशेषाः वंशवा वंशप्रोताहितरश्मिनवेशाय स्रवन्ति स्रवन्ति नव द्वाराणि यस्य तत्तथा मलेनान्यकान्तानां हेयत्वमुक्तं भवति ॥ ३३ ॥

इतोऽपि हेया इति भावेनाह । विदेहानामिति । अस्मात्स्वकीयात् स्वस्वामिन इत्यर्थः । अतो जगतः अतोऽन्यस्मादिन्द्रादित्यर्थः। अ निरेव पुमान् विष्णावित्ति वादयः यद्वाऽन्तोऽस्मात्सर्वमनोवृत्तिप्रेरकत्वेन प्रसिद्धात् ॥ ३४ ॥

योऽयं सुहृत्प्रेष्ठानां प्रेष्ठः नाथते ऐश्वर्येण वर्तत इति नाथः शरीरिणामात्मा नियन्ता च तमात्मना मनसैव विक्रीयानेनाच्युतेन सह इयं पिङ्गला सामान्या वेश्या न भवति किन्तु विशिष्टाप्सरःस्त्रैका अन्यथा अस्या नैतादृशी बुद्धिरुत्पद्येत तदुक्तम्—

भगवद्भार्यतायोग्याः काश्चिदप्सरसः स्त्रियः ॥
रमावेशात्कदाचित्स्युस्तास्वेका पिङ्गला भवेत् ।
तदन्यासां महादोषो भगवद्भर्तृतास्मृताविति ॥

॥ ३५ ॥

लोकसिद्धकान्तत्यागे लोकविलक्षणकान्तस्वीकारे अलम्बुद्धिगोचरकामाभावात्तत्वमनवद्यत्वं च निमित्तमित्याह । कियदिति । ते नरा भार्याया मे कियत्प्रियं व्यभजन् विभजेयुरित्यन्वयः तर्हि देवाः कान्ताः सन्तीत्यत आह । देवा इति ॥ ३६ ॥

विश्वस्य मायिद्वयंविति भगवति प्रसन्ने किमसुखमिति भावेनाह । नूनमिति । नूनमिदानीम् ॥ ३७ ॥

सम्भूतसम्भूतभगवद्भक्तिसुधा पिङ्गला पुनः शब्दादिविषयनिमित्तक्लेशा माभूवन्निति प्रार्थयते । मैवमिति । येन निर्वेदेन संसारबन्धं निरस्य परिहृत्य शमं भगवन्निष्ठालक्षणं यद्वा नन्दलक्षणं सर्वलक्षणं ब्रह्म प्राप्नोतीत्यन्वयः । कुतो माभूवन्निति अतो वाह । येनेति । पुरुषोऽनुबन्धं भगवद्भक्तिं निर्हृत्य भस्म कृत्वा शमं शमलं सुखोपरमं नरकमृच्छतीति एतस्मादिति शेषः ॥ ३८ ॥

तन्निष्ठामाह । तेनेति । तेन हरिणा उपकृतमनुगृहीतं निर्वेदं शिरसाऽऽदाय ग्राम्यसङ्गता दुराशाः त्यक्त्वा ॥ ३९ ॥

एतदत्यन्तं श्रद्दधती श्रद्धानां ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आत्मना मूल्यभूतेन विक्रीय क्रीत्वा ॥ ३५—४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अहो अतिबीभत्सं विष्ठागृहमेवाहं शृङ्गाररसं सम्भोग्यमविदमित्याह । यदगारम् अस्थिभिरेव निर्मितो वंशो वंशः स्थूणाश्च यस्मिन्तत् तत्र पृष्ठे दीर्घमस्थि यत् स वंशः पार्श्वास्थीनि वंशयानि हस्तपादास्थीनि स्थूणाः मत् मत्तोऽन्या का उपैति ॥ ३३ ॥

या अहमसती अच्युतादस्मात् सतृष्णा आत्मप्रदात्वात्प्रियं पुरुषं कामं भोगमिच्छन्ती याचमाना ॥ ३४ ॥

तर्हि किमतः परं चिकीर्षसीति चेदेवं करोमीत्याह । सुहृदिति । आत्मना स्वदेहेनानेन वसुना तं विक्रीय क्रीत्वा अहं प्राप्तेन तेन प्रेष्ठतमेन सह रमे ॥ ३५ ॥

ये कामा विषयाः ये कामदा वा नराः देवाः ते सर्वे आद्यन्तवन्तः कालेनैव विद्रुताः अतो भार्यायाः कियत् प्रियं व्यभजन् कृतवन्तः न किञ्चित् अत इहामुत्र च तद्व्यतिरिक्तः कोऽपि मया न सेव्य इति भावः ॥ ३६ ॥

एवं निश्चित्य स्वभाग्यमभिनन्दति । नूनमिति । केनापि । कर्मणेति मो विरक्तवर्द ! कृपया अद्य भवद्गृहमेव सफलीकुरु अत्रैवास्य शेषं किञ्चिद्दुग्धं पिब चेति यदृच्छयैवागतं श्रीदत्ताप्रेयमुक्त्वा तत्स्थानसंस्कारमार्जनलेपादिकं सायं काले तया कृतमिति प्राञ्चः ॥ ३७ ॥

ननु धनाप्राप्त्या क्लिश्यासि कथन्ते विष्णुः प्रीतस्तत्राह । मैवमिति । मे यदि मे विष्णुर्न प्रीतस्तदा मन्दभाग्याया वेश्यायाः क्लेशा निर्वेदहेतवो न स्युः येन निर्वेदेन अनुबन्धं गृहादिकं निर्हृत्य परित्यज्य ॥ ३८ ॥

अतस्तेन विष्णुना उपकृतं कृतमुपकारमिमं निर्वेदलक्षणं शिरसा गृहीत्वा ग्राम्येषु विषयेषु सङ्गताप्यहम् ॥ ३९ ॥

शरणं गता सती कीदृशी बुभूषसीत्यत आह । सन्तुष्टेति । एतत् श्रद्दधती विश्वसती एतदेव किं तत्राह । विहरामीति ॥ ४० ॥

---

संसारकूपे पतितं विषयैर्मुषितेक्षणम् ।
ग्रस्तं कालाहिनाऽऽत्मानं कोऽन्यस्त्रातुमधीश्वरः ॥ ४१ ॥
आत्मैव ह्यात्मनो गोप्ता निर्विद्येत यदाऽखिलात् ।
अप्रमत्त इदं पश्येद्ग्रस्तं कालाहिना जगत् ॥ ४२ ॥
ब्राह्मण उवाच ।
एवं व्यवसितमतिर्दुराशां कान्ततर्षजाम् ।
छित्त्वोपशममास्थाय शय्यामुपविवेश सा ॥ ४३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मन्मत्तोऽन्या यदेतत्पुरुषाकारमगारं कर्मफलभोगायतनं कान्तबुद्ध्या का उपैति सेवते कथंभूतम् यत्र: स्थूणास्वर्पिततिर्यग्वंशेषु: वंशका उभयतस्तत्किमर्पिता: वेणाः स्थूणाः तत्समापर्यायाः शरीरे हस्तपादाख्या अस्थिभिर्निर्मिताः वंशादयो यस्मिंस्तत् त्वचा रोमनखैः पिनद्धमाच्छादितम् क्षरन्ति नव द्वाराणि यस्मिन् तत् भिक्ष्यामीति भावः ॥ ३३ ॥

अच्युतात् अन्य कामभोगमिच्छती याहं सा विमूढधीरेकैव ॥ ३४ ॥

एवं संसाराद्विरक्ता भगवत्यनुरक्ता न: परमभगवानेवाराधनीय इत्याह । सुहृदिति । अयं मुमुक्षुप्रेरकत्वाद्विना अपरोक्षीकृत: शरीरिणां जीवानामात्मा सत्ताप्रद: नाथ: ऐश्वर्यप्रद: सुहृत्सर्वदानुकूल: अतएव प्रेष्ठतम: निरतिशयसुखप्रद: ममापि शरीरित्वाविशेषेणायं वात्सल्यादिना प्रेष्ठतमतयाराधनीय इति भावः आराधनप्रकारमाह । आत्मना स्वात्मनार्पितेन तं भगवन्तं विक्रीय वशीकृत्य रमा यथा तद्वदनेन रमे ॥ ३५ ॥

स्वायत: प्राप्तापत्यादयोऽपि तद्व्यतिरिक्ता: सर्वे हेया इत्याशयेनाह । कियदिति । कालविप्लुता ध्वंसा: तदनुग्रहलब्धा आद्यन्तवन्तो नरा: पत्याद्याश्च तत्सङ्गलब्धा: कामा विषयाश्च भार्याया: कियत्प्रियं व्यभजन् दत्तवन्त: न किमपीत्यर्थः । अतस्ते न सेव्या इति फलितोऽर्थः ॥ ३६ ॥

आकस्मिकनिर्वेदोत्पत्तौ हेतुमाह । नूनमिति । केनापि कर्मणा निमित्तभूतेन भगवान् प्रीत: यत् येन मुमुक्षुप्रेरकेण भगवता हेतुभूतेन दुष्टा आशा यस्यास्तस्या अधमस्याङ्गनः सर्वक्लेशहर: सुखावहो निर्वेदो जातः ॥ ३७ ॥

केनापि कर्मणा प्रीत इत्यत्र गमकमाह । मैवमिति । मन्दभाग्याया: तादृशकर्मवर्जिताया: क्लेशा: भवन्त्येव एवं निर्वेदहेतव: मा स्युः न भवन्ति येन निर्वेदमानुबन्ध गृहादिकम् निर्हृत्य समं भगवन्तमृच्छति किञ्चिन्मम साधु कर्मास्ति येन भगवान् प्रसन्नो निर्वेदं दत्तवान् इति भावः ॥ ३८ ॥

तेन भगवता उपकृतमुपकारं निर्वेदलक्षणं शिरसा आदाय प्राप्तसङ्कल्पा: ग्राम्येषु विषयेषु प्रविष्टा: दुराशा: त्यक्त्वा तमेव शरणं व्रजामि ॥ ३९ ॥

तदनन्तरकृत्यमाह । सन्तुष्टेति । अधीश्वरशरणागतिरेव परमपुरुषार्थः इत्येतत् श्रद्दधती सती आत्मना सर्वसत्ताप्रदेनामुनोपकन्त्री ॥ ४० ॥

भाषा टीका ।

बड़े छोटे बासों से बना हुआ खंभों वाला घर जैसे होता है तैसे एक बड़ी बीच की पीठ में सीधी हड्डी और बगल में बहुत छोटी हड्डीयां हाथ पैर इनों से रचित यह शरीररूप फूंस का घर है चमड़ी रोम नख इन्हों से बधा है इंद्रिय रूपी नौ दरवाजे इसमें बह रहे हैं विष्ठा मूत्र से भरा है ऐसे इस शरीर को मेरे बिना दूसरी कौन भजैगी तिससे मैं बड़ी अधम हूं ॥ ३३ ॥

इन विदेहों के पुर मे मैंही एक मूर्ख बुद्धि वाली हूं जो कि मैं सब कामनाओं के देने वाले इन अच्युत भगवान् को छोड़ कर दूसरे पुरुष से काम सुख चाहती हूं सो असती हूं ॥ ३४ ॥

यह भगवान् तो मेरे सुहृत हैं प्रियहैं सब प्राणियों के अन्तर्यामी हैं इन ही को मैं अपने आत्मा को बेच कर जैसे लक्ष्मी जी तैसे इन के साथ रमण करूंगी ॥ ३५ ॥

जिन को कि मैंने कामना देने वाले मान रक्खा है वे कामना देने वाले भावों के क्या काम दे सकते हैं अथवा काल के मारे जो देवता सो भी क्या दे सकते हैं ॥ ३६ ॥

यह बात निश्चित है कि मेरे ऊपर विष्णु भगवान् किसी पुण्य कर्मसे प्रसन्न भये हैं जिससे कि खोटी आशावाली मेरे को भी ऐसा सुख देने वाला वैराग्य भया है ॥ ३७ ॥

जो मन्द भागिनी होगी उसको तो ऐसे वैराग्य के हेतु क्लेश कभी नहीं होंगे जिस से मन संसार संबंधों को छोड़ कर पुरुष शांति को प्राप्त हो जाता है ॥ ३८ ॥

अब मैं उन परमात्मा के उपकार को मस्तक से ग्रहण कर के ग्रामीण भोगों की दुराशाओं को छोड़ कर उन्हीं सर्वेश्वर के शरण जाऊंगी ॥ ३९ ॥

इसी बात से सन्तुष्ट हो कर जो कुछ मिल जाय तिसी से जीती हुई अपने आत्मा रमण इन्हीं भगवान् के साथ रमण करूंगी ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु ब्रह्मादीन् हित्वा अमुनैवेति कोऽयं नियम इत्यत्राऽऽह । संसारेति । मुषितेक्षणमपहृतविवेकम् ॥ ४१ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तमेव शरण्यं स्वामीत्यत्र हेतुः संसारेति ॥ ४१ ॥

आत्मा परमात्मा आत्मनो जीवस्य आत्मिकात् परमात्मव्यतिरिक्तात् निर्वेदे हेतुः अप्रमत्त इति ॥ ४२—४३ ॥

सुष्वाप भगवदेकाश्रयेण निर्वृत्ता बभूवेत्यर्थः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
अष्टमोऽध्यायः ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु ब्रह्मादीन् हित्वा प्रभुनैवेति कोऽयमाग्रहस्तत्राह । संसारेति ॥ ४१ ॥

तर्हि किमात्मत्राणोपायविना भजिष्यसीति तत्र नेत्याह । आत्मैवेति । यदा ह्यात्मा अखिलाल्लोकान्निर्विद्येत तत्र हेतुः इदं जगत् कालाहिना ग्रस्तं पश्येत् तदा आत्मैव आत्मनः स्वस्य गोप्ता संसाराद्रक्षिता भवेत् ममात्मा च सम्प्रत्येतादृश एवाभूदतोऽहं स्वत एव निस्तीर्णसंसारा अभूमेव तेनातः परं केवलं प्रेम्णैव तं भजिष्ये इति भावः ॥ ४२ ॥ ४३ ॥ ४४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशे ऽष्टमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तदन्यो रक्षिता नास्तीत्याह । संसारेति । मुषितेक्षणं मायावृतचक्षुषम् ॥ ४१ ॥

यदा अखिलात् ऐहिकामुष्मिकाद्विषयान्निर्विद्येत अप्रमत्तः सावधानः भगवदाराधने इति शेषः । कालाहिना इदं सर्वं जगत् ग्रस्तं च पश्येत् तदा आत्मनः एवं प्रवृत्तस्य जीवस्य आत्मा परमात्मैव गोप्ता नान्य इत्यर्थः ॥ ४२ ॥

कान्ततर्षजां प्रियजनाभिलाषोद्भवाम् ॥ ४३ ॥

निष्कर्षमाह । आशाहीति ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टमाध्यायार्थप्रकाशः ॥ ८ ॥

---

भाषा टीका ।

विना इन नारायण के दूसरा कोइ ऐसा नहीं है जो की संसार कूप मे पड़े हुवे विषयों से नष्ट ज्ञानवाले काल रूप सर्प से ग्रसित आत्मा को छुटा सके ॥ ४१ ॥

जब सब बात से विरक्त होजावे तब अपने आत्मा का आप ही रक्षा करने वाला होजाता है जिससे सावधान होकर काळ रूप सर्प से ग्रसित इस जगत्को देखे ॥ ४२ ॥

ब्राह्मण उवाच ।

पिङ्गला इस प्रकार से निश्चय करके पतियों की तृष्णा की दुराशा को छेदन करके शांति को प्राप्त होकर सो गई ॥ ४३ ॥

आशा परम दुःख दायक है वैराग्य ही परमसुख दायक है जैसे कि कांत की आशा को छोडकर पिङ्गला वेश्या सुख पूर्वक सो गई ॥ ४४ ॥

इति श्रीमद्भागवत एकादशस्कन्ध में अष्टमाध्याय
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्ता ॥ ८ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे अष्टमोऽध्यायः ॥ ८ ॥

——:*:——

## अथ नवमोऽध्यायः ।

——:*:——

ब्राह्मण उवाच ।

परिग्रहो हि दुःखाय यद्यत्प्रियतमं नृणाम् ।
अनन्तं सुखमाप्नोति तद्विद्वान् यस्त्वकिञ्चनः ॥ १ ॥
सामिषं कुररं जघ्नुर्बलिनो ये निरामिषाः ।
तदामिषं परित्यज्य स सुखं समविन्दत ॥ २ ॥
न मे मानावमानौ स्तो न चिन्ता गेहपुत्रिणाम् ।
आत्मक्रीड आत्मरतिर्विचरामीह बालवत् ॥ ३ ॥
द्वावेव चिन्तया मुक्तौ परमानन्द आप्लुतौ ।
यो विमुग्धो जडो बालो यो गुणेभ्यः परङ्गतः ॥ ४ ॥
क्वचित्कुमारी त्वात्मानं वृणानान् गृहमागतान् ।
स्वयं तानर्हयामास क्वापि यातेषु बन्धुषु ॥ ५ ॥
तेषामभ्यवहारार्थं शालीन् रहसि *पार्थिव ! ।
अवघ्नन्त्याः प्रकोष्ठस्थाश्चक्रुः शङ्खाः स्वनं महत् ॥ ६ ॥
सा तज्जुगुप्सितं मत्वा महती व्रीडिता ततः ।
बभञ्जैकैकशः शङ्खान् द्वौ द्वौ पाण्योरशेषयत् ॥ ७ ॥
उभयोरप्यभूद्घोषो ह्यवघ्नन्त्याः स्म शङ्खयोः ।
तत्राप्येकं निरभिदेदकस्मान्नाभवद्ध्वनिः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नवमे कुररादिभ्यो देहान्तोपशिक्षितम् ॥
श्रुत्वा यदुः कृतार्थोऽभूदिति कृष्णेन वर्णितम् ।

कुररादिशिक्षितमाह । परिग्रहो हीति । यद्यत्प्रियतमं तस्य तस्य परिग्रहः तद्विद्वान् परिग्रहो दुःखमिति विद्वान् सन् यस्त्वकिञ्चनस्त्यक्तपरिग्रहो न तु दरिद्रः ॥ १ ॥

तदाह । सामिषमिति ॥ २ ॥

अर्भकशिक्षामाह । नेति । गेहपुत्रिणां तद्वतां या भवति चिन्ता सा च मे नास्ति आत्मनैव क्रीडा यस्य आत्मनि रतिः प्रीतिर्यस्य सः ॥ ३ ॥

ननु बालसर्वज्ञयोः किं सादृश्यं नैश्चिन्त्यं परमसुखमित्याह । द्वाविति । विमुग्धोऽज्ञः जडोऽनुद्यमः एवंभूतो यो बालो यश्च प्रकृतेः परमीश्वरं प्राप्तवान् द्वौ ॥ ४ ॥

कुमार्याः शिक्षितं वक्तुमाख्यायिकामाह । क्वचिदित्यादिना वृणानान्स्वयंवरणायाऽऽगतान् बन्धुषु पित्रादिषु ॥ ५ ॥

शङ्खाः शङ्खवलयाः महद्यथा भवति तथा स्वनं चक्रुः ॥ ६ ॥

सा महती बुद्धिमती तत्स्वनं शालिघातजननम् जुगुप्सितं दारिद्र्यद्योतकम् एकैकशः क्रमेणैकैकमवभज्य स्वकरादपसारितवती ॥ ७ ॥

निरभिदत्पृथक्कृतवती ॥ ८ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

प्रियतमं धनवस्त्रादिकं तस्य सङ्ग्रहो दुःखाय भवति ॥ १ ॥

तदाह सङ्ग्रहत्यागयोः दुःखसुखहेतुत्वमाह बलिनो यदा जघ्नुस्तदा स कुररः ॥ २ ॥

---

* इषदीति विजय० पाठः ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी।

आत्मनैव क्रीडासाधनेन द्वादशलक्षणविचारात्मिका क्रीडा यस्य सः आत्मनि स्वस्वरूपे रतिस्तुष्टिर्यस्य स तथा इह जगति॥३॥

गुणानां प्रकृतिरूपत्वात् प्रकृतेरिति व्याख्यानम्॥४॥

स्ववरणाय स्वस्या कन्याया वरणं कर्तुम्॥५

अवहननमेवाह। तेषामिति। समप्रशङ्खानां प्रकोष्ठस्थत्वायोगात् मुख्यार्थबाधः कार्यकारणलक्षणो योगस्तथा रूढिश्चेति शङ्खशब्दस्य वलये लक्षणा स्वनशब्दस्य पुंस्त्वेन महानिति न तद्विशेषणमतः क्रियाविशेषणतया व्याख्यातम्॥६॥

सत्येति। पाद्यद्वारीर्पणादौ तद्धस्तस्थवलयानां तैर्हृष्टत्वात् तच्छब्दं विना विघातमात्रशब्दस्यान्यकर्तृकत्वेनापि सम्भाव्यत्वाच्चैकैकशो बभञ्ज भञ्जने सौभाग्यच्युतेः अपसारितवतीति व्याख्यातं धातूनामनेकार्थत्वात्॥७॥

तत्रापि शङ्खद्वयमध्येऽपि एकस्माच्छङ्खद्वयात्॥८॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

॥१—३॥
गुणेभ्यः परस्तः त्रिगुणातीतः॥४—१५॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथ कुररात्परिग्रहापरिग्रहयोर्दुःखसुखहेतुत्वं शिक्षणीयमित्याह। परिग्रह इति। नृणां यद्यत्प्रियतमं वस्तु तस्य परिग्रहः अतिदुःखाय भवति यस्तु तत्परिग्रहस्यातिदुःखहेतुत्वं विद्वान् जानन्नकिञ्चनो निष्परिग्रहः स्यात्सोऽनन्तं सुखमाप्नोति॥१॥

तथाहि। सामिषमिति। सामिषं परिगृहीतामिषमुखं कुररमुत्क्रोशात्कं पक्षिविशेषमन्ये निरामिषा बलिनः बलीयांसः श्येनगृध्रादयः जघ्नुः सः कुररः सुखं समाविन्दत प्राप॥२॥

अथार्भकाच्छिक्षितमाह। नम इति। मे मम मानापमानौ न स्तः गेहपुत्रिणां तद्वतां या चिन्ता भवति सा च मे नास्ति किन्त्वात्मनैव सह क्रीडा यस्य सः आत्मन्येव रतिः प्रीतिर्यस्य सः इह लोके विचरामि बालवत् यथा बालो मानापमानचिन्तारहितश्चरति तद्वदित्यर्थः। आत्मशब्दः परमात्मपरः॥३॥

मानाद्यभावे बालदृष्टान्तः तत्त्वात्मक्रीडत्वात्मरतित्वयोरपीत्यभिप्रेत्य दृष्टान्तदार्ष्टान्तिकयोर्विवक्षितं साधर्म्यमाह। द्वाविति। चिन्ताशब्दो मानापमानयोरप्युपलक्षकः परमानन्दे आप्लुतौ मग्नौ कौ च तावित्यत आह। य इति। विमुग्धो जड इति च बालस्य विशेषणं विमुग्धो मूढः मानावमानानभिज्ञः जडः। अनुद्यमः देहादिपोषणचिन्ताप्रयुक्तोद्यमरहित इत्यर्थः। यश्च गुणेभ्यः परं गतः। त्रिगुणातीतः परमात्मसाक्षात्कर्ता॥४॥

अथ कुमार्याः शिक्षितं वक्तुमाख्यायिकामाह। कश्चिदित्यादिना द्व कन्यया इत्यन्तेन। वृणानान् "लक्षणहेत्वोरि"ति शानच् वरितुमित्यर्थः। गृहं प्रत्यागतान्भीर्ष्ययेत्यध्याहारः तान्स्वयमेवार्हयामासातिथ्येन सत्कारयामास। स्वयमेवेत्यत्र हेतुः बन्धुषु क्वापि यातेषु सत्सु इति बन्धवोऽत्र मात्रादयः॥५॥

तेषामागतानामभ्यवहारार्थं भोजनार्थं हे पार्थिव! रहसि एकान्ते शालीन् तण्डुलान् अवघ्नन्त्याः प्रकोष्ठस्थाः शङ्खाः शङ्खवलयाः सुमहद्यथा भवति तथा स्वनं ध्वनिं चक्रुः॥६॥

सेति। कुमारी महती बुद्धिमती तच्छालिन्यवहननं जुगुप्सितं मत्वाऽहो इयं स्वयमेवावहन्ति किमस्याः बन्धवो न सन्ति नूनमियं दरिद्रेति मन्येरन्निति बुद्ध्या तदवहननमननुरूपं मत्वा इत्यर्थः। अत एव तदा व्रीडिता च एकैकशः क्रमशः एकैकशङ्खं बभञ्ज कराद्‌पसारितवती द्वौ द्वौ तु शङ्खौ पाण्योरशेषयत्॥७॥

ततः पुनरवघ्नन्त्याः शङ्खयोर्द्वयोरपि घोषोऽभवत्ततः तत्रापि उभयोरप्येकमेकं निरभिदत्पृथक् कृतवती तदैकैकस्माच्छङ्खात् ध्वनिर्नाभवत्॥८॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

तिर्यग्जातात्कुररादपयागात्किंविशिष्टं ज्ञानं शिक्षितमत्राह। परिग्रह इति। नृणां प्रियतमं यद्वित्तं तस्य परिग्रहः तस्य वित्तस्याप्नतो नाशाद्दुःखाय भवति॥१॥

ततः किं फलितमत्राह। तदिति। तत्तस्मात् यो विद्वान् सोऽकिञ्चनो भवेदिममर्थं चित्तीकरोति। सामिषमिति॥२॥

तज्ज्ञानफलमाह। नम इति। इह पुत्रवतां या विशेषणादिचिन्ता सापि नास्ति॥३॥

ननु तर्हि कीदृशस्य चिन्ता नास्तीत्यत्राह। द्वाविति। गुणेभ्यः सत्त्वादिभ्यः परं विलक्षणमीश्वरं यतो ज्ञाता परमात्मगुणामृतमनुभवन्नित्यर्थः॥४॥

कुमार्याः शिक्षितज्ञानमाह। क्वचिदिति। वृणानान्वरणेच्छून् अर्हणमभ्यागतपूजनम्॥५॥

शालीन् कलमान् इयादि व्रीहिकुट्टपापाणौ "शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी"त्यमरः यथा महत्परिमाणं भवति तथा स्वनं चक्रुरिति क्रियाविशेषणम्॥६॥

महती विवाहारम्भे वर्तमाना तद्योग्येत्यर्थः। अभ्यागतसमयं व्रीहिताडन दारिद्र्यसूचकमिति व्रीडिता लज्जिता॥७॥

घोषो अवघ्नन्त्या इत्यसन्धिकार्यमार्षयागतैः शङ्खस्वनो न श्रुत इति सूच्यते सन्धिश्च विवक्षावशात् क्रियत इति वैयाकरणोक्तत्वाच्च। निरभिनत् निरभिदत्॥८॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

॥१—६॥

सा तज्जुगुप्सितमिति पाद्यार्घ्यार्पणादौ तद्धस्तस्थितशङ्खवलयानां तैर्दृष्टत्वात् तच्छब्दं विना विघातमात्रशब्दस्यान्यकर्तृकत्वेन सम्भाव्यत्वाच्च॥७—१३॥

———

अन्वशिक्षमिमं तस्या उपदेशमरिन्दम ! ।
लोकाननुचरन्नेताँल्लोकतत्त्वविवित्सया ॥ ९ ॥
वासे बहूनां कलहो भवेद्वार्ता द्वयोरपि ।
एक एव चरेत्तस्मात्कुमार्या इव कङ्कणः ॥ १० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नवमे सप्त गुरवः कुररार्द्याः प्रकीर्त्तिताः ।
देहोऽष्टमस्तदेवं स्युर्गुरवः पञ्चविंशतिः ॥

कुरराच्छिक्षितमाह । परिग्रह इति द्वाभ्याम् । यत् यत्प्रियतमं वस्तु तस्य तस्य परिग्रहः तस्मात् यस्त्वकिञ्चनो निस्पृहः स एव विद्वान् अनन्तं सुखमाप्नोति ॥ १ ॥

तदाह । सामिषं मांसग्राहिणां स कुररः ॥ २ ॥

बालकाच्छिक्षितमाह । नेति ॥ ३ ॥ ४ ॥

कुमार्याः शिक्षितमाह तदाख्यानेन । कचिदिति । अर्हयामास आवृतवर्याँस्तद्गृहागतान् भोजनजलादिभिरातिथ्यं चक्रे बन्धुषु पितृमात्रादिषु ॥ ५ ॥

कदा ते भोजयन्ति कदा तण्डुलान् करिष्यन्तीति मनसि कुर्वत्याकस्याश्चेष्टितमाह । तेषामिति । शङ्खाः शङ्खवलयाः ॥ ६ ॥

तत् शालिवहननं दारिद्र्यद्योतकत्वात् जुगुप्सितम् महती बुद्धिमती ॥ ७ ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नवमेऽध्याये सप्तभ्यः कुररादिभ्यः स्वदेहतश्च शिक्षितमवधूतेनोक्तं तदुक्त्वा श्रीयदुः कृतार्थो जात इति निरूप्यते । तत्रादौ कुरराच्छिक्षितमाह । परिग्रह इति द्वाभ्याम् । यद्यत्प्रियतमं तस्य तस्य परिग्रहः संग्रहः दुःखाय भवति तद्विद्वान् परिग्रहो दुःखायेति विद्वान् सन् योऽकिञ्चनः निष्किञ्चनो द्विविधः अन्तःपरिग्रहो दारिद्र्यश्च द्विविधोऽपि अनन्तं मोक्षाख्यं सुखमाप्नोति तुशब्दाद्दरिद्रो ऽकिञ्चनस्य व्यावृत्तिः ॥ १ ॥

तदेवाह । सामिषमिति । परिग्रहत्यागेन लब्धलौकिकसुखात्कुररात्परिग्रहत्यागेन मोक्षलक्षणं सुखं भवतीति शिक्षितमिति फलितोऽर्थः ॥ २ ॥

अर्भकाच्छिक्षितमाह । न मे इति द्वाभ्याम् । गेहपुत्रिणां मानापमानौ स्तः चिन्ता चाहित बालवर्णाश्रमाभिमानिनो मे न अतः आत्मनि परमात्मनि क्रीडा यस्य आत्मनि तस्मिन्नेव रतिरनुरक्तिर्यस्य सोऽहमिह भूतले विचरामि ॥ ३ ॥

निमुग्धः विशेषतोऽप्रगल्भः जडः अनुद्भूतबोधः एवं विधो यो बालः यश्च गुणेभ्यः प्राकृतेभ्यः परं परमेश्वरं प्राप्तस्तौ द्वौ चिन्तया मुक्तौ अत एव परमानन्दे आप्लुतौ भवतः बालः स्वाज्ञानलक्षणं परं गतः परस्तत्वात्पर्यान्तं आनन्दे निमग्नः इति विवेकः ॥ ४ ॥

कुमार्याः शिक्षितं वक्तुं तद्वृत्तमाह । कचिदित्यादिना । बन्धुषु पित्रादिषु क्वापि आवश्यककार्यवशाद्यातेषु सत्सु आत्मानं वृणानान् स्वयमागतान् स्वयमर्हयामास पूजयामास ॥ ५ ॥

तदेवाह । तेषामिति । शङ्खाः वलयरूपाः महत् यथा स्यात्तथा स्वनं शब्दं चक्रुः ॥ ६ ॥

सा महती दाक्ष्यादिभिर्निन्द्यं परिचर्यमाणाऽस्तस्तस्वयं शालिवहननं जुगुप्सितं मत्वा व्रीडिता सती एकैकशः क्रमेणैकमेकं वलयं पाणिभ्यामपसारितवती ॥ ७ ॥

तत्र तयोर्मध्ये एकं निरभिवत् अपसारितवती ॥ ८—९ ॥

---

भाषा टीका ।

जो जो पदार्थ प्रिय हैं तिन का संग्रह करना मनुष्यों को बड़ा दुखदाई है जो इस बात को जानकर अकिंचन होकर रहता है सो अनन्त सुख को प्राप्त होता है ॥ १ ॥

एक कुरर पक्षी मांस को ले जाता था उस के पीछे बहुत पक्षी पड़के उसको मारने लगे जब उसने उस मांस को छोड़ दिया तब वह उस आफत से छूट गया ॥ २ ॥

मेरे कोई मान अपमान का विचार नहीं है और घर वाले पुत्रों वालों की चिन्ता भी नहीं है तब आत्मा ही मे क्रीडा करके आत्मा ही में रति को करके मैं विचरता हूं यह गुण बालक को देखकर सीखा है ॥ ३ ॥

दो ही पुरुष चिंता से अलग रहते हैं औ परम आनन्द में मग्न रहते हैं जो विशेष अज्ञानी है जड है बाल है और जो बुद्धि के पार परमात्मा को प्राप्त होगया है ॥ ४ ॥

कोई कुमारी स्त्री थी उसके घर के सब किसी जगे चले गये थे उसी वखत कोई उसके वरण करने के प्रसंग में आये थे तब उस कुमारी ने उनका सत्कार किया ॥ ५ ॥

हे राजन् ! उनके भोजन के वास्ते एकांत में उसने धान कूटने चाहे तब उसके दोनों हाथों के शंख के कंकण बजने लगे ॥ ६ ॥

उसने उस बाजने को बुरा समझ कर बुद्धिमती होने से लज्जा किया तब एक एक कंकण को उसने निकाल दिये दोनों हाथों में दो दो बाकी छोड़ दिये ॥ ७ ॥

दो दो के रहने से भी कूटते समय मे फिर शंखों का शब्द होने लगा तब तिन मे भी एक एक निकाले फिर जब एकही एक रह गये तब शब्द नहीं भया ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु कुमार्यास्तव च कथं सङ्गतिस्तत्राऽऽह । लोकानिति ॥९॥

मन एकत्र संयुञ्ज्याज्जितश्वासो जितासनः ।
वैराग्याभ्यासयोगेन ध्रियमाणमतन्द्रितः ॥ ११ ॥
यस्मिन्मनो लब्धपदं यदेतच्छनैः शनैर्मुञ्चति कर्मरेणून् ।
सत्त्वेन वृद्धेन रजस्तमश्च विधूय निर्वाणमुपैत्यनिन्धनम् ॥ १२ ॥
तदैवमात्मन्यवरुद्धचित्तो न वेद किञ्चिद्बहिरन्तरं वा ।
यथेषुकारो नृपतिं व्रजन्तमिषौ गतात्मा न ददर्श पार्श्वे ॥ १३ ॥
एकचार्यनिकेतः स्यादप्रमत्तो गुहाशयः ।
अलक्ष्यमाण आचारैर्मुनिरेकोऽल्पभाषणः ॥ १४ ॥
गृहारम्भोऽतिदुःखाय विफलश्चाध्रुवात्मनः ।
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥ १५ ॥
एको नारायणो देवः पूर्वसृष्टं स्वमायया ।
संहृत्य कालकलया कल्पान्त इदमीश्वरः ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वास इति प्रथमान्तपाठे कलहहेतुः वार्ता गोष्ठी हेतुर्भवेदित्यर्थः ॥ १० ॥

चित्तैकाग्रता द्वैतास्फूर्तिलक्षणसमाधिहेतुरिति शरकाराच्छिक्षितमित्याह । मन इति । तत्रोपायमाह । जितेति । आसनजयं श्वासजयं च जयेत् श्वासाधीनं मनो निश्चलं भवति । ननु अस्तु निश्चलं तदपि मनो विषयवासनया यदि विक्षिप्यते सुषुप्तौ वा सर्वथा लीयेत वा तदा किं तत्राह । वैराग्येति । वैराग्येणाविक्षिप्यमाणमभ्यासयोगेन लयं ध्रियमाणं स्थिरीक्रियमाणम् ॥ ११ ॥

एकत्रेति कुत्र तदाह । यस्मिन्निति । यत्सर्वविक्षेपात्मकं मन एतद्यस्मिन्परमानन्दरूपे भगवति लब्धास्पदं सत्कर्मरेणून् कर्मवासनाः मुञ्चति तस्मिन् । ननु कर्मवासनात्यागेऽपि सुषुप्तिवल्लयो वा स्यादित्यत आह । सत्त्वेनेति वृद्धेनोपशमात्मकेन रजस्तमसोरभावे विक्षेपलयाभावान्निर्वाणमवृत्तिकं ध्येयाकारेणावस्थानमुपैति कुतः अनिन्धनम् इन्धनं गुणास्तत्कार्यं च तद्रहितम् तदुक्तं योगशास्त्रे—

मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः ॥
याऽसम्प्रज्ञातनामासौ समाधिरभिधीयत इति ॥ १२ ॥

ततश्च न द्वैतस्फूर्तिरित्याह । तदेति । बहिर्देशनादिना अन्तरं स्मृत्या इषौ गतात्मा तस्य ऋजुकरणे दत्तचित्तो भेरीघोषैरन्तिके व्रजन्तं नृपतिं न वेद तद्वत् ॥ १३ ॥

सर्पाच्छिक्षितमाह । एकचारीति । योगिनस्सङ्ग्रहस्यापि त्यागः कुमारीगुरुजनसङ्गत्यागे सर्पः स यथा जनाच्छङ्कमान एकाकी विचरति नियतनिकेतरहितश्च सदाऽप्रमत्तश्चैकान्तवासी स्व आचारैर्गतिभिः सविषो निर्विषो वेति न लक्ष्यते च असहायश्च मितभाषी च तद्वन्मुनिर्भवेदित्यर्थः ॥ १४ ॥

किं च गृहारम्भ इति । अध्रुवात्मनो नश्वरदेहस्य सुखं यथा भवति तथा नयेत ॥ १५ ॥

कारकसामग्रीनिरपेक्षात्केवलादीश्वराज्जगत्सृष्टिसंहारावूर्णनाभिदृष्टान्तेन मया समधिगताविति वक्तुं प्रथमं संहारप्रकारमाह । एक इति सार्धत्रयेण । एकः कारकनिरपेक्षः पूर्वसृष्टमिदं जगत्कालकलया कालशक्त्या संहृत्य ॥ १६ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

इमं योगिभिरप्यसङ्कीर्णं तल्लक्षणमुपदेशं कर्तव्यार्थं हे अरिन्दम ! त्वमपि धार्मिकनिष्ठाध्वंसकं जनसमर्दं तत्त्वज्ञानार्थं माश्रयेति भावः । लोकेषु जनेषु यद्धेयोपादेयवस्तुगतत्वं स्वरूपं तस्य विवित्सया जिज्ञासया "तस्य वाच्यमेदं स्यात् स्वरूपं परमात्मनी"ति शिष्यः ॥ ९ ॥

फलितमाह । वास इति । सप्तम्यन्तपाठे कलहस्य वार्तायाश्च मुख्यार्थ एव प्रथमान्त पाठे तु वासस्य तद्धेतुरूपत्वं नास्ति किन्तु तत्सम्बन्धित्वाल्लाक्षणिकार्थत्वादित्यर्थ इत्युक्तम् । कङ्कणाः कङ्कणमिति पाठद्वयं कम्बुपर्यायत्वाद्द्वयोरपि साधुत्वात् ॥ १० ॥

द्वैतस्य प्रपञ्चस्यास्फूर्तिरपरिज्ञानमेव लक्षणं स्वरूपं यस्य एवम्भूतो यः समाधिस्तस्य हेतुश्चित्तैकाग्रतैव तत्र चित्तैकाग्रतायाम् तस्य श्वासस्य जये ध्रियमाणमित्यस्यैवाविक्षिप्यमाणमित्यर्थस्तत्र वैराग्येण विक्षेपसम्भावना निरस्ता अभ्यासयोगेन लयोऽपि निरस्तः ॥ ११ ॥

तल्लक्षणमाह तत्कार्यञ्च रागादि तद्रहितं ध्येयाकारेणावस्थानं वृत्तिशून्यस्य वितर्कादिवृत्तिरहितस्य मनसो ध्येयब्रह्माकारतया या स्थितिरेकाग्रतालक्षणाऽसावसम्प्रज्ञातनामा समाधिरुच्यते

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपनी टिप्पणी ।

यथाह भगवान् "पतञ्जलिः तस्यापि निरोधे सर्ववृत्तिनिरोधान्निर्बीजः समाधि"रिति सूत्रार्थः तस्य सम्प्रज्ञातस्य प्रविलये सति सर्वचित्तवृत्तीनां परमात्मनि विलयात् निर्बीजोऽसम्प्रज्ञातसमाधिरिति ॥ १२ ॥

ततश्च ध्येयाकारेणावस्थानानन्तरं यदाऽसम्प्रज्ञातसमाधिर्भवति तदा आत्मनि परमात्मनि एवमेकाग्रतयाऽवरुद्धं निरुद्धं चित्तं येन सः बहिर्दर्शनादिना घटादि अन्तरं स्मृत्या सुखादि किञ्चिदपि न वेद ॥ १३ ॥

सङ्ख्यागतत्वेनाभेदात् पौनरुक्त्यमाशङ्क्य विशेषं व्याचष्टे । योगीति । गुहाशय एकान्तवासी मौनिभिः सङ्कथादर्शनादिवर्जितैः एकचारित्वादिविशेषणानां सर्पसाधारणत्वात् कथमात्मना सर्पोऽत्र गुरुत्वेनाख्यातः मुनिपक्षे आचारा तद्धर्मयोगचर्यारूपास्ते विद्वानविद्वान् वेति न ज्ञायमानः ॥ १४ ॥

निष्फलः प्रत्युतातिदुःखायैव भवति तर्हि कुत्र वसेदित्यपेक्षायामाह । सर्प इति ॥ १५ ॥

एक इति सार्धकम् । कारकनिरपेक्षः स्वशक्तिव्यतिरिक्तकारकशून्यः नारायणः सर्वब्रह्माण्डान्तर्यामी महत्स्रष्टृत्वः पुरुषः अखिलानामाश्रयः लयस्थानं सन् एकः सजातीयस्वरूपजीवभेदरहितः अद्वितीयो विजातीयप्रधानादिभेदरहितोऽभूत् तत्सर्वस्य तत्र लयेन पृथग् व्यपदेशानर्हत्वादित्यर्थः ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

साक्षात्कर्तास्मानुभावेन स्वशक्तिभूतेन शक्तिषु गुणेषु त्रिषु साम्यं नीतासु सत्त्वादिभिरयुक्तत्वात् केवलानुभवानन्देति केवलशब्दो जाग्रद्दुःखसम्भेदव्यावर्त्तकः ॥ १६—१७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः किमत आह । अन्वशिक्षमिति । हे अरिन्दम ! तस्याः कुमार्याः इममुपदेशमन्वशिक्ष ननु कुमार्यास्तव कथं सङ्केतितत्त्वमत आह । लोकानिति ॥ ९ ॥

को वा उपदेश इत्यत आह । वास इति । बहूनां वासे कलहो भवेत् द्वयोरपि वासे वार्त्ता मिथः संलापो भवेत् तस्मात्कलहवार्त्तयोरुभयोरपि योगविरोधित्वादेक एव चरेदिति तत्त्वमर्थः किं कुमार्योपदिष्ट इत्यत आह । कुमार्या इवेति कङ्कणदृष्टान्तेनायमर्थो निर्णीत इति भावः ॥ १० ॥

बाह्याभ्यन्तरविजातीयप्रत्ययाव्यवहितसमाधिनिष्ठेन भवितव्यमितीप्सुकतः शिक्षितमिति वक्तुं तावत्समाधिं विदधत् तदुपायांश्चाह । मन इति । एकत्र शुभाश्रये मनः संयुञ्ज्यादिति समाधिविधिः युज समाधौ इति हि धातुः कथं मनः समाहितं कुर्यादित्यपेक्षायां वदन् विशिनष्टि । जितः श्वासः प्राणो येन सः "प्राणबन्धनं हि सोम्य मन" इति श्रुतेरिति भावः । तर्हि श्वासजयः कथमित्यतो विशिनष्टि । जितमासनं येन सः सत्यासनजये श्वासजयो भवतीति भावः । तथापि चञ्चलं मनः कथं स्थिरं कुर्यादित्यत्र विशिनष्टि । वैराग्याभ्यासयोगेन ध्रियमाणं युज्यते इति योगो बलं वैराग्याभ्यासबलेन स्थिरीक्रियमाणं मन एकत्रातन्द्रितः युञ्ज्यादिति सम्बन्धः अतन्द्रितः अवहितः ॥ ११ ॥

विषयवैतृष्ण्यस्य प्रतिबन्धककर्मवासनाक्षयनाशमाह रजस्तमोऽभिवर्धकाहारादिप्रवृद्धसत्त्वगुणात् च स्थिरं कुर्यादित्याह । यस्मिन्निति । यस्मिन् शुभाश्रये लब्धपदं लब्धास्पदं सदचेतन्मनः कर्मरेणून् कर्मवासनाः मुञ्चति त्यजति तेन रजस्तमश्च निर्धूय प्रवृद्धेन सत्त्वेन च अनिन्धन गुणात्मकतत्कार्यं च तद्गुणितम् इध्यन दीपवत् प्रकाशवत् शनैः कर्माणि तद्वत् विषयान्तरागोचरादित्यर्थः । अत एव निर्वाणं लयं ध्येयाकारैकप्रावण्यात्मकमुपैति ॥ १२ ॥

एवमित्थमात्मनि परमपुरुषे ऽवरुद्धं नियमितं चित्तं येन सः तदा बहिरन्तरशब्दौ तद्भावपरौ बाह्यमान्तरं च न वेद नानुसन्धत्ते अनेन समाधेर्विजातीयप्रत्ययाव्यवहितरूपत्वमुक्तम् अभिसन्धानमित्यनेन प्रत्याहारः लब्धपदमित्यनेन धारणा जितासनजितश्वासशब्दाभ्यामासनप्राणायामौ कर्मरेणुन्मुञ्चतीत्यादिना "धर्मेण पापमपनुदत्याहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृति"रित्यादिश्रुत्युक्तौ यमनियमौ विवक्षितौ निर्वाणशब्देन ध्यानमवरुद्धचित्तो न वेदेत्यत्र दृष्टान्तः यथेति । इषौ निर्मीयमाणे बाणशल्ये गतोऽवरुद्ध आत्मा मनो यस्य सः इषुकारः पार्श्वे व्रजन्तं भेर्यादिघोषैर्गच्छन्तं नृपतिं यथा न वेद तद्वत् ॥ १३ ॥

अथ सर्पाच्छिक्षितमाह । एकचारीति । योगिनः सङ्गत्यागे कुमारी गुरुः जनसंसर्गत्यागे सर्पः स यथाशङ्कमानः एकाकी चरति नियतनिकेतरहितश्च सदा अप्रमत्तश्च एकान्तवासी चारैर्गतिभिरलक्ष्यमाणश्च तद्वन्मुनिरप्येकोऽसहायः अप्रमत्तत्वादीनामुपलक्षणमिदं किञ्चाल्पं गिरं यथा तथा भाषेत इति तथा ॥ १४ ॥

किञ्च गृहारम्भ इति । अध्रुवस्यात्मनो देहस्यापि दुःखाय भवति निर्माणश्रमायासोपलब्धेरिति भावः । विफलश्च यावदपेक्षं भोगाभावादिति भावः । अत एव सर्पः परकृतं न तु स्वनिर्मितं वेश्म वल्मीकादिकं प्रविश्य सुखं यथा भवति तथा वर्तते ॥ १५ ॥

"यथोर्णनाभिः सृजते गृह्णते च"ति श्रुतिप्रसिद्धोर्णनाभिदृष्टान्तेनैकस्यैव भगवतो निमित्तोपादानकारणत्वेऽभ्युपेते तदुक्तं "सदेव सोम्येदमग्र आसी"दित्यादिषु सृष्टेः पूर्वकालत्वश्रवणात्तत्सत्त्वमाह । एक इति सार्द्धैस्त्रिभिः । स्वमायया स्वसङ्कल्पेन "तदैक्षत बहु स्याम्" इत्युक्तविधेन स्वशरीरभूतप्रकृत्या वा पूर्वसृष्टमिदं जगदेकः प्रलयं प्रति कारणान्तरसामग्र्यन्तररहितः कल्पान्ते कालकलया स्वापृथक्सिद्धविशेषणभूतेन कालेन संहृत्य एकोऽद्वितीयश्चाभूदिति सम्बन्धः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इदं कथं सम्भाव्यत इत्यत्राह । लोकानिति ॥ ९ ॥

एकाकित्वस्य विपक्षे बाधकमाह । वास इति । अत्र दुर्जनैः सह वासो निषिध्यते न तु साधुभिः तस्य विहितत्वात्—

असज्जनैस्तु संवासो न कर्तव्यः कथञ्चन ॥
यावद्यावच्च बहुभिः सज्जनैः स तु मुक्तिदः ।

इतिवचनात् ॥ १० ॥

एक एवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः ।
कालेनाऽऽत्मानुभावेन साम्यं नीतासु शक्तिषु ।
सत्त्वादिष्वादिपुरुषः प्रधानपुरुषेश्वरः ॥ १७ ॥
परावराणां परम आस्ते कैवल्यसंज्ञितः ।
केवलानुभवानन्दसन्दोहो निरुपाधिकः ॥ १८ ॥
केवलात्मानुभावेन स्वमायां त्रिगुणात्मिकाम् ।
सङ्क्षोभयन् सृजत्यादौ तया सूत्रमरिन्दम ! ॥ १९ ॥
तामाहुस्त्रिगुणव्यक्तिं सृजन्तीं विश्वतोमुखम् ।
यस्मिन् प्रोतमिदम्विश्वं येन संसरते पुमान् ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शिल्पचित्तः इषुकारः पार्श्वे समीपे व्रजन्तं नृपतिं न वेद तद्वत् ॥ १३ ॥

सर्पाच्छिक्षितमाह । एकचारीति द्वाभ्याम् । एक एव चरेद्भिक्षुरित्येकचारित्वं भिक्षन्तरापेक्षयोक्तम् अत्र तु जनापेक्षया एकचारीति अनिकेतश्च सदाऽप्रमत्तश्च गुहाशयश्च गुहापर्वतादिपरकृतस्थानवासी चेत्यर्थः । आचारैः स्वाभाधारणैः भदाचारैरलक्ष्यमाणः गुप्ताचार इत्यर्थः । एकः मुख्यः ध्यानादावनुपम इत्यर्थः । स्वरतो वचनतश्चालपभाषणाश्च मुनिः स्यात् सर्पवदिति शेषः ॥ १४ ॥

विपक्षे दोषमाह । गृहारम्भ इति । अध्रुवात्मनः अनित्यशरीरिणः गृहारम्भोऽतिदुःखाय भवति एवं बहुजनसङ्गादगस्ततास्वाचारव्यापनानि दुःखायैव भवन्तीत्यूह्यम् । परेणेश्वरादिना कृतगृहादिरूपं प्रविश्य सुखं यथा भवति तथा वर्द्धते ॥ १५ ॥

प्रकृतिपुरुषकालाद्यनन्तशक्तिधरात्मिःसमानातिशयात् कारकसामग्रीनिरपेक्षाद्भगवतो मया विश्वसृष्टिसंहारादिगुणानाभिरूपणेन सम्भावितमाविति वक्तुमादौ संहारप्रकारमाहैक इति सार्द्धैस्त्रिभिः । एकः निःसमानातिशयः स्वशक्तिभूतया मायया प्रकृत्याख्यया पूर्वंसृष्टमिदं विश्वं कालकलया कालाख्यया शक्त्या संहृत्य एक एवाभूदित्युत्तरेणान्वयः ॥ १६ ॥

———

भाषा टीका ।

हे अरिंदम यदु महाराज ! इस उपदेश को मैंने उस से सीखा है जब कि मैं लोक के तत्त्व को जानने की इच्छा से लोकों में घूमता रहा ॥ ९ ॥

इस से यह निश्चय हुआ कि बहुतों के साथ वास होने से कलह होता है दो के साथ में भी बातें होती हैं तिस से कुमारी के कङ्कण की नांई विरक्त एकेलाही विचरा करै ॥ १० ॥

योगी को चाहिये कि स्थिर होकर रहै वैराग्य रखे आसन स्थिर करने का अभ्यास करै प्राणायाम करै तिस से स्थिर किये हुये मन को एक ठिकाने परमात्मा में युक्त करै ॥ ११ ॥

जिस भगवत् स्वरूप में यह मन लगजाता है तब धीरे धीरे कर्मों की वासनाओं को छोड़ देता है फिर सत्त्वगुण के बढ़ने से रजोगुण तमोगुणको दबा कर कोई बाह्य अवलम्बन नहीं रहने से मन शान्ति को प्राप्त हो जाता है ॥ १२ ॥

तबहीं परमात्मा के विषै चित्त के रुक जाने से बाहर भीतर कुछ भी नहीं जानता है जैसे कि तीर के बनाने वाला उसी में मन के लगे रहने से सामने ही राजा की फौज गई तो भी नहीं जानता हुआ यह बात शरकार से सीखी है ॥ १३ ॥

एकला घूमै घर का नियम नहीं रक्खै सावधान से रहै गुफाओं में सोवै थोड़ा बोलै अपने आचारों से अलक्षित रहै ऐसा मुनी होवै ॥ १४ ॥

क्षणभंगुर शरीर के वास्ते घर का आरम्भ करना दुःखदायक है और व्यर्थ है तिस से सर्प तो परके बनाये हुवे घर में रहकर सुख से बढ़ता है यह बात सर्प से सीखी है ॥ १५ ॥

एक नारायण देव अपनी माया से पहिले सृजे हुये इस जगत् को काल की कला से कल्पांत में संहार करते हैं ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

एक एवाद्वितीयः सजातीयविजातीयभेदशून्योऽभूत् कारणभूतासु सत्त्वादिषु शक्तिष्वपि साम्यं नीतासु सतीषु गुणसाम्यं प्रधानं तदुपाधिः पुरुषश्च तयोरीश्वरः ॥ १७ ॥

परावराणाम्परे ब्रह्मादयः अवरेऽन्ये च मुक्ता जीवास्तेषाम्परमः प्राप्य आस्ते कुतः कैवल्यसंज्ञितो मोक्षशब्दाभिधेयः तत्र हेतुः केवलो निर्विषयः स्वप्रकाशः आनन्दानां सन्दोहः समूहः परमानन्द इत्यर्थः । कुतः निरुपाधिकः ॥ १८ ॥

यथोर्णनाभिर्हृदयादूर्णां सन्तत्य वक्त्रतः ।
तया विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः ॥ २१ ॥
यत्र यत्र मनो देही धारयेत्सकलं धिया ।
स्नेहाद्द्वेषाद्भयाद्वापि याति तत्तत्स्वरूपताम् ॥ २२ ॥
कीटः पेशस्कृतं ध्यायन् कुड्यां तेन प्रवेशितः ।
याति तत्सात्मतां राजन् ! पूर्वरूपमसन्त्यजन् ॥ २३ ॥
एवं गुरुभ्य एतेभ्य एषा मे शिक्षिता मतिः ।
स्वात्मोपशिक्षितां बुद्धिं शृणु मे वदतः प्रभो ! ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अतः केवलादेव सृष्टिं दर्शयति । केवलेनाऽऽत्मानुभावेन कालेन सूत्रं क्रियाशक्तिप्रधानं महत्तत्त्वं सृजति जीवसंसारहेतुभूतं सूत्र सूत्रेऽपि त्वं मा मोहयति सम्बोधयति । अरिन्दम ! अरीन् रागादीन् दमयितुं समर्थ ॥ १९ ॥

सूत्रस्यैव व्यक्तिशब्देनोच्यमानस्य तामिति स्त्रीलिङ्गेन परामर्शः त्रिगुणाव्यक्तिं गुणत्रयकार्यम् अत एव विश्वतोमुखं नानाविधं त्रिगुणात्मकं विश्वमहङ्कारद्वारेण सृजन्तीम् त्रिगुणकार्यस्य सूत्रसंज्ञायां कारणमाह । यस्मिन्निति । कारणभूते समष्टिरूपे यस्मिन्निदं विश्वं प्रोतं ग्रथितम् "वायुर्वै गौतम ! सूत्र वायुना वै गौतम सूत्रेणायञ्च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि" इति श्रुतेः येन वाय्वात्मना प्राणरूपेण जीवः संसरति ॥ २० ॥

तदेवं शिक्षितमर्थमुक्त्वा दृष्टान्तमाह । यथेति । हृदयादूर्णाम् वक्त्रतो वक्त्रेण सन्तत्य प्रसार्य विहृत्य क्रीडित्वा ॥ २१ ॥

भगवद्ध्यानपराणां तत्सारूप्यं न चित्रमिति पेशस्कृतो भ्रमरविशेषाज्ज्ञातमित्याह । यत्र यत्रेति । सकलमेकाग्रम् ॥ २२ ॥

कुड्यां प्रवेशितो निरुद्धो भयेन ध्यायन् सात्मतां तत्सारूप्यम् सात्म्यतामिति पाठे स्वार्थता पूर्वरूपमसंत्यजन्नित्यस्यायमभिप्रायः यदा तेनैव देहेनान्यसारूप्यं दृश्यते तदा किं वक्तव्यं देहान्तरेण सारूप्यं घटत इति ॥ २३ ॥

स्वदेहादेव शिक्षितमाह । स्वात्मेति । स्वात्मनो देहाच्छिक्षिताम् ॥ २४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

आत्मानुभावेन स्वप्रभावरूपेण कालेन "प्रभावं पौरुषं प्राहुः कालमेके यतो भय"मिति कापिलेयोक्तेः साम्यं प्रधानम् आनन्दानां समूह इति व्याख्यानेन स्वरूपशक्तिवैशिष्ट्यादप्राकृतानन्तविशेषशालित्वमभिव्यञ्जितम् ॥ १७ ॥

केवलात् सजातीयविजातीयभेदशून्यात् ॥ १८ ॥

केवलेनात्मगतेन त्रिगुणात्मिकां प्रधानैकरूपां सङ्क्षोभयन् विषमगुणां कुर्वन् ॥ १९ ॥

तामिति स्त्रीलिङ्गेन परामर्श इति । तच्छब्देन कश्चिद्विशेषपरामर्शकत्वस्यापि अभिव्यक्तिमत्वात नित्यं यत् कर्म स यमः इतिवत् अतएव गुणत्रयस्याविकार्यत्वादेव हे गौतम ! वायुः समष्टिप्राणः सूत्रं सूत्रशब्दवाच्यः संसृष्टानि सङ्ग्रथितानि वाय्वात्मरूपेण वायोः स्वरूपभूतेन ॥ २० ॥

ऊर्णनाभिरत्र दीर्घसूक्ष्मः कीटविशेषः तस्यैव वक्त्राद्धिरण्यनिर्गमनादेः उद्गतामुत्पन्नां वक्त्रेण द्वारेण तयोर्णया चार्थान्तिके मतिर्दर्शनानुवर्तते । पर्यामति ॥ २१ ॥

तत्सारूप्यं भगवत्समानरूपतां भ्रमरविशेषात् भृङ्गीति ख्यातात् यत्र यत्रेति स्नेहादिना भरतादौ मृगसारूप्यादेर्दृष्टत्वात् अन्ते या मतिः सा गतिरिति न्यायाच्चेति भावः ॥ २२ ॥

जीवतोऽपि सारूप्ये दृष्टान्तविशेषमुदाहरति । कीट इति । तेन पेशस्कृता सात्म्यतामिति पाठे स्वार्थेनेति सात्म्यस्य समत्वरूपत्वात् समत्वेऽपि समत्वस्य समत्वेऽनवस्थापातात् ॥ २३ ॥

एषा मतिरिति जाताचैकवचनम् ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ज्ञानानन्दयोः कर्मकृतत्वेन संसारित्वावृत्तिमाह । निरुपाधिक इति ॥ १८ ॥

केवलात्मानुभावेनेति केवलशब्दः परिकरान्तरव्यावर्तकः सूत्रशब्दः महत्तत्त्वपरः सूत्रं हि बहुतन्तुकार्यं स्वाश्रितानां मणीनामाधारश्च एवमहङ्कारादितत्त्वाधारत्वात्रिगुणप्रकृतिकार्यत्वाच्च सूत्रत्वं महत्तत्त्वस्य ॥ १९—२१ ॥

तत्तत्स्वरूपतां स्वरूपमसाधारणधर्मः तत्तुल्यतां यातीत्यर्थः ॥ २२ ॥

कीटस्य पेशान्तरेण स्वरूपैक्याभावात् याति तत्सात्म्यतामित्यनन्तरोक्तश्च कुड्यास्पदं छिद्रं तत्सात्म्यशब्दो व्यभिचरति ॥ २३—२४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एकः पुनः स्वस्वमायया जगदेकोपादानकारणभूतः "एकमेवाद्वितीयं तदैक्षत बहु स्याम्" इत्यत्रैवैकशब्दः अविभक्तनामरूपसूक्ष्मचिदचिद्विशिष्टकारणावस्थब्रह्मपरः एकत्वं चात्र वस्तुविदशायां नामरूपविभागनिबन्धनं बहुत्वं तत्प्रतिसम्बन्धि विवक्षितं वैशेषिकादिभिर्नित्यत्वोक्तानामाकाशादीनामपि संहाराभिप्राय एवकारः अद्वितीयः निमित्तकारणान्तररहितः एक एवेत्युपादानस्य प्रस्तुतत्वेन निमित्तस्य बुद्धिस्थत्वात्परमात्मरूपविवक्षितचिदचिदात्मकविशेषणानां विहितत्वाद्विशेष्यस्य विहितव्यतिरिक्तविषयत्वात् । स्वमायां त्रिगुणात्मिकां सङ्क्षोभयन् येन संसरणे पुमानिति प्रकृतिपुरुषनित्यरूपत्वसूचकोत्तरवाक्यसङ्कोचापेक्षितत्वादेक एवेत्यस्याविभक्तनामरूपत्वावगतेश्च सृजत्यादौ तथा सूत्रमित्यनेनाद्वितीयपदस्य निमित्तान्तराभावत्वमवगम्यते अत एकमेवाद्वितीय इत्यस्य सजातीयविजातीयभेदशून्य इति व्याख्यास्वनुचिता कालकलया संहृत्येति विजातीयकालस्य तदा सद्भावावगमात् स्वमायां त्रिगुणात्मिकां सङ्क्षोभयिष्यति सत्त्वादिशक्तिषु साम्यं नीतासु इति गुणसाम्यावस्थाचिदचिद्व्यष्टिसद्भावावगमाच्च प्रधानपुरुषेश्वर इति सूक्ष्मावस्थयोक्तयोः तत्त्वयोः तच्छरीरतया स्थानावगमाच्च अतो यथोक्त एवार्थः । कस्तर्हि सूक्ष्मावस्थचिदचित्काधार इत्यतो विशिनष्टि । अखिलाश्रय इति । अखिलानां चिदचिदादीनां सार्वज्ञ्यसर्वशक्तित्वानुगुणानां चाश्रयः कस्तर्हि तस्याश्रय इत्यतो विशिनष्टि । आत्माधार इति । आत्मा स्वयमेवाधारो यस्य सः अनन्याधारः "स्वे महिम्नि प्रतिष्ठित" इति श्रुतेरिति भावः । कालकलयेदं संहृत्यैक एवाद्वितीयोऽभूदित्युक्तमेवोपपादयति कालेनात्मानुभावेनेति । स्वशक्तिभूतेन कालेन निमित्तभूतेन सत्त्वादिषु शक्तिषु साम्यं नीतासु सतीषु कार्योपयोगापृथक्सिद्धविशेषणभूतेषु सत्त्वरजस्तमःसु सूक्ष्मदशायां वैषम्येणावस्थितेषु नामरूपे विहाय साम्यं प्राप्य स्वस्मिन् लीनेषु सत्स्वित्यर्थः । प्रधानपुरुषेश्वरः स्वस्मिन्नविभाज्यतया सूक्ष्मावस्थयोः प्रधानपुरुषयोर्नियन्तृत्वेनावस्थितः आदिपुरुषः कृत्स्नजगत्कारणपुरुषः ॥ १७ ॥

अत एव परावराणां परमः कार्यकारणावस्थचिदचिद्व्याप्यविभूतः कैवल्यसंज्ञितः आस्ते तिष्ठति कैवल्यं हि नामरूपविभागरहितत्वरूपाव्याकृतत्वं तत्संज्ञितः अनेन सोऽयं तर्ह्यव्याकृतमासीदिति सदव्याकृतादिशब्दवाच्य इत्यर्थः । केवलशब्दो जाड्यदुःखसम्भेदव्यावर्तकः सम्बोधो विमलेत्यनेन तयोः परिमितत्वव्यावृत्तिः जाड्यदुःखासम्भिन्नज्ञानानवधिकानन्दस्वरूप इत्यर्थः । निरुपाधिक इत्यनेन ज्ञानानन्दयोः कर्मकृतत्वव्युदासः तेन सांसारिकजीवव्यावृत्तिः ॥ १८ ॥

अथ सृष्टिप्रकारमाह । केवलात्मानुभावेनेति । केवलशब्दः परिकरान्तरव्यावर्तकः आत्मनः स्वस्यानुभावः तदैक्षत बहु स्यामित्युक्तविधः सङ्कल्पः तन्मात्रेणेत्यर्थः । स्वमायां स्वाधारभूतां निरतिशयसूक्ष्मदशापन्नां मायां संक्षोभयन् ईषत् स्थूलदशापत्तिद्वारा परिणामोन्मुखीं कुर्वन् हे अरिन्दम । आदौ तावत्तया मायया सूत्रं सृजति सूत्रशब्दो महत्तत्त्वपरः सूत्रं हि बहुतन्तुकार्यं स्वस्मिन्प्रोतानां मणीनामाधारश्च एवं महदहङ्कारादितत्त्वाधारत्वात्त्रिगुणप्रकृतिकार्यत्वाच्च सूत्रत्वव्यपदेशः ॥ १९ ॥

तदेवाह । तमिति । तं महान्तं महत्तत्त्वमिति यावत् त्रिगुणव्यक्तिं त्रिगुणप्रकृतिकार्यभूतं सृजन्तमहङ्कारादिपृथिव्यन्ततत्त्वपरम्परामिति शेषः । अत एव विश्वतोमुखं सर्वेषु कार्येषु मुखं प्राधान्यमाश्रयत्वेन यस्य तमाहुः मुखशब्दः प्राधान्यवाचकः यद्वा विश्वतोमुखं यथा तथेति क्रियाविशेषणम् अनेकधा सृजन्तं तामाहुस्त्रिगुणव्यक्तिं सृजन्तीमिति पाठे प्रकृतिसूत्रोपस्थापकत्रिगुणव्यक्तिशब्दापेक्षया सृजन्तीमिति स्त्रीलिङ्गनिर्देश इति यस्मिन्प्रोतमिदं विश्वं प्रोतम् अनेन त्रिगुणव्यक्तिमित्यनेन च सूत्रस्वरूपयोः निमित्तमुक्तं भवति येन यदात्मकेन बुद्धीन्द्रियमनःप्राणात्मकसूक्ष्मशरीरेण युक्तः पुमान् जीवः संसरति देवमनुष्यादिस्थूलशरीरसंयोगवियोगात्मकजन्ममरणरूपसंसारतत्प्रयुक्तज्ञानविकासनविकाससङ्कोचौ च प्राप्नोतीत्यर्थः । अयमेव हि जीवस्य संसारो नाम यः प्रकृत्यारब्धदेहसम्बन्धतद्वियोगप्रयोगप्रयुक्तज्ञानसङ्कोचविकासरूपावस्थान्वयः अत्र प्रधानपुरुषेश्वरोऽखिलाश्रय इति चोक्त्वा येन संसरते पुमानित्युक्तेरिदमवगम्यते यत्परमात्मविशेषणीभूतजीवस्वभावस्य सङ्कोचविकासरूपावस्थाविशेष इति सृजन्तीं विश्वतो मुखमित्यनेन त्वहङ्कारादिपृथिव्यन्तसमष्टिपरम्परा देवादिसृष्टिप्रपञ्चश्च प्रधानगत इति एवं च विशिष्टस्योपादानत्वं साक्षाद्वस्थाश्रयत्वं प्रधानपुरुषयोरेव द्वारा तु परमात्मनोऽपीति फलितं संक्षोभयन् सृजतीति कर्तृत्वनिर्देशेन निमित्तकारणत्वं तत्र विशेष्यांशस्यैवेति फलितम् ॥ २० ॥

तदेतदूर्णनाभिदृष्टान्तेनाभ्युपेत्याभिप्रेत्याह । यथेति । ऊर्णां तन्तुसङ्घातप्रकृतिर्नाभौ यस्य सः कीटविशेषः स्वशरीरैकदेशभूताद्धृदयादुद्गतामूर्णां वक्त्रेण सन्तत्य प्रसार्य तयोर्णया विहृत्य विहारं कृत्वा क्रीडित्वेत्यर्थः । पुनस्तामूर्णां ग्रसति तथा महेश्वरोऽपि कार्यकारणयोरनन्यत्वाभिप्रायकतया तामिति स्त्रीलिङ्गनिर्देशः तथा विहृत्येत्यनेन दार्ष्टान्तिके कार्यस्य जगतो भगवत्क्रीडोपकरणत्वं प्रदर्शितम् ऊर्णनाभिरूर्णां सन्तत्येति स्पष्टत्वोक्त्या निमित्तकारणत्वमानुपूर्व्या सन्तत्येत्यनेनोर्णाया एव तन्तुसन्तानात्मिकावस्थाश्रयत्वावगमात् विशेष्यांशतदवगमात्तस्यानुपादानत्वं दार्ष्टान्तिकेऽपि परमात्मशरीरभूतयोश्चिदचितोरुपादानत्वसिद्धावपि विशेष्यभूतपरमात्मनस्तदासिद्धेः मैवं विशेषणांशस्यावस्थाश्रयत्वनिर्वाहकत्वमात्रेणैव विशेष्यांशस्यापि उपादानत्वसिद्धेः नास्माभिर्विशेष्यांशस्याद्वारकावस्थाश्रयत्वमभ्युपगतं किन्तु सद्वारकावस्थाश्रयत्वं तच्च सद्वारकावस्थाश्रयत्वमपि न दृष्टान्तेऽवगम्यत इति वाच्यं विशेष्यांशोपादानत्वस्य विशेषणगतावस्थाश्रयत्वनिर्वाहकत्वरूपत्वेन तस्य दृष्टान्तेऽप्यवगमात् नहि तत्र विशेष्यांशभूतजीवमन्तरेणोर्णाया अवस्थाश्रयत्वसिद्धिः किञ्चोर्णनाभेरसर्वज्ञस्यासर्वशक्तेः कार्यान्तरात्मतयानुप्रवेशनसामर्थ्याभावेऽपि दार्ष्टान्तिके ब्रह्मणः सर्वशक्तेः सर्वज्ञस्य "तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत्" इति तत्तत्कार्यानुप्रवेशतत्तद्रूपताभिधानस्य श्रुतत्वादुपादानत्वं निर्व्यूढमेव किञ्च कारणावस्थप्रकृतिपुरुषशरीरकतया तन्नियन्तृत्वात् कार्यावस्थतच्छरीरकतया तन्नियन्तृत्वस्याव्याहतत्वात् तन्नियन्तृत्वरूपावस्थाश्रयत्वमद्वारकमेव विशेष्यभूतब्रह्मनिष्ठमिति तन्निर्व्यूढमित्यलं बहुना निमित्तविस्तरेण ॥ २१ ॥

केनापि भावेन नित्यमुक्ताविधर्मिणां ध्यायन् तत्सरूपतां यातीति सुपेशस्कृदाख्याकृमिविशेषावधूतमित्याह । यत्रेति । धिया

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्यल्पोऽपि हरेर्द्वेषः स्नेहस्यानुदयाङ्कुरः ।
सोऽयं विशेषो नान्यस्य फलदाता च केशवः ॥
नहि पेशस्कृतः किञ्चित्फलदातृत्वमिष्यते ।
स्वानन्दचार्विद्विषां चैव केशवो न सुखप्रदः ॥

इतिवचनात् ॥ २३ ॥

उपसंहरति । एवमिति । स्वदेहाच्छिक्षितमतिमाह । स्वात्मेति । देहो मम गुरुरित्यन्वयः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कालेनेति युग्मकम् । आत्मानुभावेन स्वप्रभावरूपया शक्त्या आदिपुरुषः महत्स्रष्टृत्वः प्रथमः पुरुषः प्रधानपुरुषेश्वरः प्रकृतेर्जीवानाञ्च नियन्ता परेषां स्वीयांशानाम् अवरेषां विभिन्नांशानाञ्च परममाश्रयोऽसौ केवल्यसंज्ञिकस्तदाख्ययाम्नातः सन्नास्ते तदानीमासीदित्यर्थः । केवल एव कैवल्यः स्वार्थे ष्यञ् चातुर्वर्ण्यवत् तत्र केवलत्वे हेतुं स्वगतभेदं दर्शयति केवलेति स्वरूपशक्तिवैशिष्ट्यात् केवलानां शुद्धानां स्वरूपभूतानामनुभावानां यः सन्दोहस्तद्रूपः केवलत्वं दर्शयति । निरुपाधिक इति । तदुक्तं तृतीये सुप्तशक्तिरसुप्तदृगिति ॥ १७—१८ ॥

स्वरूपशक्तिमेव स्थापयन् सृष्टिं योजयति । केवलेति । सृष्टिकाले महावैकुण्ठनाथादाविर्भूय स एव शुद्धस्वरूपप्रभावरूपया शक्त्या त्रिगुणात्मिकां प्रधानैकरूपां स्वमायां सङ्क्षोभयन् सूत्रं सृजति ॥ १९ ॥ २० ॥

तदेतच्च यत्किञ्चिद्वंशेन कीटविशेषं गुरुं मत्वा अवगतमित्याह । यथेति । ऊर्णनाभिरत्र दीर्घसूक्ष्मः कीटविशेषस्तस्यैव वक्रेणोद्गिरणनिगरणादयः ॥ २१—२३ ॥

एषा मतिरिति जातविवेकत्वम् ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आत्मानुभावेन स्वप्रभावरूपेण कालेन शक्तिषु सत्त्वादिषु साम्यं नीतासु सतीषु प्रधानस्य मायायाः पुरुषाणां जीवानां च नियन्ता परावरेषां मुक्तबद्धजीवानां परम आराध्यः केवल एव कैवल्यः स्वार्थे ष्यञ् कैवल्य इति संज्ञा जाता यस्य सः ॥ १७ ॥

जगत्पालनादिव्यापाराभावात् केवलश्चानुभवानन्दसन्दोहरूपश्च सः उपाधिर्माया तस्याश्च तदानीं सुप्तत्वान्निरुपाधिकः तदुक्तं तृतीये सुप्तशक्तिरसुप्तदृगिति ॥ १८ ॥

संहारं दर्शयित्वा सृष्टिं दर्शयति । केवलेन आत्मानुभावेन चिच्छक्तिप्रभावेण स्वमायां प्रधानं प्रकाश्य स्ववीर्येण संक्षोभयन् सूत्रं क्रियाशक्तिं प्रधानं महत्तत्त्वं सृजति ॥ १९ ॥

तामिति स्त्रीलिङ्गेन सूत्रस्यैव परामर्शः तत् सूत्रमेव त्रिगुणमयी किं गुणत्रयकार्यमाहुरित्यर्थः । कीदृशीं विश्वतो मुखं नानाविधं त्रिगुणात्मकं विश्वमहङ्कारेण द्वारेण सृजन्तीं त्रिगुणकार्यस्य महत्तत्त्वस्य तत्त्व सूत्रमहत्त्वयोः कारणमाह । यस्मिन् कारणभूते सूत्रे समष्टिरूपप्राणे विश्वमिदं प्रोतं तथाच श्रुतिः वायुनैव गौतम । ततसूत्र वायुना गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि भूतानि संदृब्धानीति येन वाध्यात्मरूपेण प्राणेन जीवः संसरति ॥ २० ॥

ऊर्णनाभिर्मर्कटीति ख्यातः कीटविशेषः हृदयात् मुखतः वक्त्रतः वक्त्रेण सन्तत्य प्रसार्य विहृत्य क्रीडित्वा ॥ २१ ॥

भगवद्ध्यानपराणां तत्सारूप्यं न चित्रमिति पेशस्कृतो भ्रमरविशेषादज्ञासिमित्याह । यत्रेति द्वाभ्याम् । सकलामिति मनस एकस्यापि स्नेहद्वेषाद्यन्यगामित्वं न स्यात्तदैव देही ध्येयसारूप्यं लभते नान्यथेत्यर्थः ॥ २२ ॥

कीट इति । तेन पेशस्कृता तत्स्वात्मतां तत्समानरूपतां साम्यतामिति पाठे भावेन पूर्वरूपं पूर्वदेहम् असन्त्यजन्निति ध्यातृदेह एव ध्येयतुल्याकारं स्यात् यथा ध्रुवादीनां कश्चित्तथा ध्यातृणां भक्तानां दृश्यमानो देहत्यागस्तु भक्तियोगस्य रहस्यत्वरक्षार्थं मतान्तरोत्खातनार्थं च भगवतैव मायया दृश्यते यथा कश्चित् सच्चिदानन्दमयस्वदेहत्यागोऽपि तथा च तत्प्रमाणवाक्यं च मुनिद्वारा तयैव मायया प्रकाश्यते यथा "प्रारब्धकर्मनिर्वाणो न्यपतत् पाञ्चभौतिक" इति देहत्यागश्च तस्यैवमिति च ॥ २३ ॥

स्वदेहादपि शिक्षितमाह । स्वात्मेति ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एक एव सजातीयभेदशून्य एव अद्वितीयः विजातीयभेदशून्यः अतएवात्माश्रयः अखिलाधारः अखिलानामविभक्तनामरूपाणां चिदचिच्छक्तीनामाधारः स्वगतभेदवान् अभूत् सत्त्वादिषु शक्तिष्वपि आत्मानुभावेन स्वशक्तिरूपेण प्रधानावस्थारूपं साम्यं गतासु सतीषु अत्रैकत्वादिना स्वभावत एवाभेदः अखिलाश्रयत्वेन स्वभावत एव भेदश्च दर्शितः एवं सति चिदचिद्ब्रह्मपदार्थानां स्वाभाविको भेदाभेदः सम्बन्धः यस्तु एक एवाद्वितीयः सजातीयविजातीयस्वगतभेदशून्योऽभूदिति तन्न अखिलाश्रय इति मूलग्रन्थविरोधात् ॥ १७ ॥

प्रधानपुरुषयोः प्रकृतिजीवात्मनोः ईश्वरः नियन्ता प्रधानपुरुषरूपाभ्यां स्वशक्तिभ्यां विश्वसृष्ट्यादि करोतीति भावः किं बहुना पराणां कारणभूतानां प्रकृतिकालादीनामवराणां कार्यभूतानां महद्बुद्धिपराद्धादीनां परमोऽवधिभूतः सन् एव कैवल्यसंज्ञितः केवलपरमकारणपरैः सदव्याकृतादिशब्दैरुच्यमानः आस्ते "सदेव सोम्य तद्धेदं तर्ह्यव्याकृतमासी" दित्यादिश्रुतेः ॥ १८ ॥

केवलानां देहादिरहितानामनुशायिनां जीवानां सन्दोहः समूहो यस्मिन् सः निरुपाधिकः स्वगतानां जीवानामुपाधिभिः कर्मादिभिरसंस्पृष्टस्वरूपः आस्ते एवं भूतात्सजातीयभेदशून्याद्ब्रह्मणः सृष्टिं दर्शयति । केवलात्मेति । केवलः एकाद्वितीयादिशब्दवाच्यः निःसमानातिशयः विश्वहेतुस्तस्य च आत्मानुभावः एकोऽहं बहुस्यामित्येवं रूपोऽध्यवसायः तेन स्वशक्तिभूतां मायाम् ॥ १९ ॥

संक्षोभयन् सृष्ट्युन्मुखीं कुर्वन् तथा सूत्रं क्रिया शक्तिं प्रधान

देहो गुरुर्मम विरक्तिविवेकहेतुर्बिभ्रत्स्म(१) सत्त्वनिधनं सततार्त्युदर्कम् ।
तत्त्वान्यनेन विमृशामि यथा तथापि पारक्यमित्यवसितो विचराम्यसङ्गः ॥ २५ ॥
जायात्मजार्थपशुभृत्यगृहाप्तवर्गान् पुष्णाति यत्प्रियचिकीर्षया (२) वितन्वन् ।
स्वान्ते सकृच्छ्रमवरुद्धधनः स देहः सृष्ट्वाऽस्य बीजमवसीदति वृक्षधर्मा ॥ २६ ॥
जिह्वैकतोऽमुमपकर्षति कर्हि तर्षा शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ।
घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥ २७ ॥
सृष्ट्वा पुराणि विविधान्यजयाऽऽत्मशक्त्या वृक्षान् सरीसृपपशून् खगदंशमत्स्यान् ।
तैस्तैरतुष्टहृदयः पुरुषं विधाय ब्रह्माऽवलोकधिषणं मुदमाप देवः ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

महत्तत्त्वं सृजति कथम्भूतया मायबेत्याकाङ्क्षायां मायां निरूपयति । तामिति त्र्यर्थेन । त्रयाणां सत्त्वादिगुणानां व्यक्तिं समुदायभूतां विश्वतो मुखं सर्वतोमुखं विश्वं सृजन्तीमाहुः । "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः" इत्याद्याः श्रुतयः कथम्भूतं सूत्रमित्याकाङ्क्षायां तन्निरूपयति । यस्मिन्निति त्र्यर्थेन यस्मिन्सूत्रे इदं विश्वं प्रोतं ग्रथितम् येन सूत्रेण स्वकार्यरूपं प्राणप्रधानसूक्ष्मशरीरद्वारा पुमान् जीवः संसरति जन्ममरणप्रवाहरूपं संसारं प्राप्नोति तथाच श्रुतिः वायुर्वै गौतम सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानीति ॥ २० ॥

शिक्षितमर्थमुक्त्वा दृष्टान्तमाह । यथेति । ऊर्णनाभिर्यथोर्णां हृदयादुद्गतां वक्त्रात् वक्त्रेण सन्तत्य प्रसार्य तया विहृत्य भूयः पुनस्तां ग्रसति एवं महेश्वरः परमेश्वरो विश्वं वितत्य ग्रसति ॥ २१ ॥

भगवति स्नेहादिना मनोनियमनेन तत्सारूप्यं यातीति पेशस्कृतोऽवगतमित्याह । यत्र यत्रेति । सकलं सम्पूर्णम् ॥ २२ ॥

कुड्यां भित्तौ तदुपवासिते वृक्षादौ च प्रवेशितो निरुद्धः स तेन पेशस्कृता साकं सारूप्यं यथा कीटश्च स तथा तस्य भावकस्तां तां याति प्राप्नोति पूर्वरूपमसन्त्यजन्नित्यस्य कीटः पूर्वशरीरेणैव पेशस्कृच्छरीरसारूप्यं प्राप्नोतीत्यर्थः । मुमुक्षुस्तु प्राकृतशरीरं हित्वा अपहतपाप्मत्वादिगुणवत्त्वेनाप्राकृतशरीरेण च भगवत्सादृश्यं प्राप्नोतीति विवेकः ॥ २३ ॥

चतुर्विंशतिगुरुभ्यः शिक्षितमुपसंहरति । एवमिति । स्वदेहाच्छिक्षितमाह । स्वात्मनेत्यादिना । स्वात्मोपशिक्षितां स्वदेहादुपशिक्षिताम् ॥ २४ ॥

भाषा टीका ।

सकल जगत्के आश्रय सब आत्माओं के आधार परमात्मा एकही रहे उनके बराबर दूसरा कोई नहीं रहा अपने प्रभाव रूप काल से सत्त्वादिगुणों की शक्ति सब जब समता को प्राप्त होगई तब प्रकृति पुरुष दोनों के ईश्वर परमात्मा आप ही रहे ॥ १७ ॥

बड़े छोटे ब्रह्मादि मनुष्यादि सबके श्रेष्ठ कैवल्य नामक केवल आनन्द अनुभव से परिपूर्ण रहे औ प्राकृत उपाधि से रहित रहे ॥ १८ ॥

हे यदुजी ! फिर केवल अपने आत्मा ही के प्रभाव से तीनों गुणवाली माया को चलायमान करके सृष्टि के आदि काल में उसी माया के द्वारा परमात्मा ने महत्तत्त्व को सृजा है॥१९॥

जिसमें यह सब जगत् पोहा हुआ है जिससे जीवको संसार होता है जो नाना प्रकार के तीनों गुणों वाली माया है उसीको तीनों गुणों के कार्य होने से सूत्र कहते हैं ॥२०॥

यह बात मकरी को देखकर जाना है जैसे कि मकरी अपने मुखमें से सूतको निकालती है फिर उससे विहार करके फिर ग्रस लेती है ऐसे परमेश्वर का सृष्टि औ संहार करता है ॥ २१ ॥

कोई प्राणि स्नेह से अथवा द्वेष से अथवा भय से अच्छी तरह मनको जहां लगावैगा तिसी २ के स्वरूप को प्राप्त होजावैगा ॥ २२ ॥

जैसे कि भृङ्गी एक कीड़ा दूसरे कीड़े को लाकर अपने दीवाल में प्रवेश करदेता है तब वह कीड़ा उसके भय से उसके ध्यान करने से अपने पूर्व रूप को न छोड़कर उस पेशस्कारी के स्वरूप को प्राप्त होजाता है ॥ २३ ॥

हे प्रभो यदुराजा ! इस प्रकार से मैं इतने गुरुओं से इन बुद्धियों को सीखा हूं अब अपने शरीर से जो बुद्धि सीखी है तिसको मेरे कहने से आप श्रवण करो ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

गुरुत्वे हेतुः विरक्तिविवेकयोर्हेतुः विरक्तिहेतुत्वमाह । सत्त्वनिधनमुत्पत्तिविनाशौ बिभ्रत्स्म किञ्च सततं सन्ततमार्त्युदर्कं दुःखमेवोत्तरफलं बिभ्रत् बद्धा सततानिर्वेदकं उत्तरफलं यस्य तत्सत्त्वनिधनं बिभ्रत् विवेकहेतुत्वमाह । तत्त्वानीति । यथा यथावत्

(१) बिभ्रद्स्म सत्त्वेति शुकपक्षीय पाठः ॥ (२) यत्प्रियचिकीर्षु सदेति विजयध्वज० वीरराघ० सिद्धान्तप्रदीपेषु पाठः ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवमत्युपकारिण्यपि देहे नैवास्था कर्तव्येत्याह तथापीति । पारक्यं श्वसृगालादिभक्ष्यमिति निश्चितत्वात् ॥ २५ ॥

सततार्त्युदर्कतां प्रपञ्चयति । जायेति द्वाभ्याम् । यस्य देहस्य प्रियचिकीर्षया भोगसम्पादनेच्छया जायादिवर्गान्वितन्वन् पुष्णाति पुरुषः कथम्भूतः सकृच्छ्रं यथा भवति तथा कृच्छ्राणि सञ्चितानि धनानि येन सः देहविशेषणं वा सदेहः स्वान्ते स्वस्यायुषोऽन्तेऽवसीदति नश्यति किञ्च देहनाशेऽपि न दुःखसमाप्तिरित्याह । अस्य पुरुषस्य देहान्तरबीजं कर्म सृष्ट्वेति । वृक्षस्येव धर्मो यस्य सः ॥ २६ ॥

किञ्च जिह्वेति । अमुं देहं तदभिमानिनं पुरुषं वा एकतो रसं प्रति जिह्वा अपकर्षन्त्याच्छिनत्ति कर्हि कदाचित्तर्षो पिपासा अन्यं प्रति शिश्नं व्यवायं प्रति त्वक् स्पर्शं प्रति उदरमन्नमात्रं प्रति श्रवणं शब्दं प्रति घ्राणो गन्धं प्रति चपलदृक् रूपं प्रति क्व कचित्स्वविषयं प्रति कर्मशक्तिः अन्यदपि कर्मेन्द्रियम् लुनन्ति क्रोटयन्ति ॥ २७ ॥

तदेवं देहो गुरुरित्यादिभिस्त्रिभिर्विरक्तिविवेकहेतुत्वमुपपाद्येदानीमस्य देहस्यातिदुर्लभत्वं दर्शयन्नीश्वरनिष्ठां विधत्ते । सृष्ट्वेति द्वाभ्याम् । पुराणि शरीराणि पुनर्च पुरुषं देहम् अजया ऽप्यलोकाद्याऽऽत्मशक्त्याद्य विविधा बुद्धिर्बहिर्मतस्तद् नतुकम्, तासां मे पौरुषी प्रियेति, श्रुतिश्च 'पुरुषत्वे चाविस्तरामात्मे' त्यादिः ईश्वरो हि करणाधिष्ठात्रीरग्न्यादिदेवता वागादिभिः सह सृष्टवान् ताश्च तं प्रति भोगार्थं शरीरमयाचन्त स च ताभ्यो गोशरीरमश्वशरीरं पुरुषशरीरं यथाक्रममानीतवान् ततस्ता देवताः सोऽस्त्रीयथायथाऽऽयतनं चक्षुरादिस्थानमस्मिन्देहे प्रविशतेति तदाह । ताभ्य इत्यादि । तथा ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति ताभ्यः पुरुषमानयत्ता अब्रुवन्सुकृतं बतेति च ॥ २८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता

दीपिकादीपिनी टिप्पणी ।

देहो मानुषस्तथाऽप्ययं पूर्वार्थे विश्रद्दित्यस्यानुवृत्तिर्गौरवमतो यद्वेति अनेन देहेनैव विमृशामि अन्यत्रैतादृशबुद्ध्युपायाभावात् नान्यथा विश्वासः ॥ २५ ॥

सकृच्छ्रं सपरिश्रम स्वस्य देहस्य यदायुस्तस्यान्ते स देहोऽवसीदति नश्यति वृक्षधर्मेति वृक्षो यथा वृक्षान्तरबीजं सृष्ट्वा नश्यति तद्वत् ॥ २६ ॥

उदर कर्तुं मन्नमात्रं स्वगोरणार्थमाकर्षति स्वस्वविषयम् आदानगमनादिकं प्रति अन्यदपि कर्मेन्द्रियं हस्तपादादि एवं सर्वाणीन्द्रियाणि देहाभिमानिनं पुरुषं क्रोटयन्ति तत्रानुकूलो दृष्टान्तः बहुध इति ॥ २७ ॥

उपपाद्य हेतुरूपया युक्त्या संसाध्य तत्र सततार्त्युदर्कत्वाद्विरक्तिहेतुत्वं साधनीयं ज्ञानसामग्रीसद्भावात् विवेकहेतुत्वमिति ज्ञेयम् अयं प्रयोगः मनुष्यदेहो विरक्तिहेतुः सततार्त्युदर्कत्वात् रोगादिवत् यन्नैवं तन्नैवं यथा देवदेहः एवं मनुष्यदेहो विवेकहेतुः ज्ञानसामग्रीसद्भावात् देवदेहवत् यन्नैवं तन्नैवं यथा पश्वादिदेह इति अपरोक्षाय साक्षात्करणाय तन्मोक्षहेतुत्वं श्रुतिः पूर्वं व्याख्याता तदाह । निबद्धकथायां श्रुतिमप्याह ताभ्यः करणाधिष्ठातृदेवताभ्यः गां गोशरीरमनयद्भो नोऽस्माकमयं गोदेहो भोगाद्यर्थं नैवालं न समर्थः एवमश्वेऽपि पुरुषं पुरुषशरीरं सुकृतं सुष्ठु कृतं बत हर्षे ॥ २८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विड्भस्मस्यात्मानि यस्य निधनं विड्भस्मक्रमिरूपावस्था यहर्ता इति तत् विड्भस्मस्वनिधनं विमृशामि अनेन तत्वानि च प्राकृतं हेयत्वेन विमृशामीत्यर्थः । पारक्यं क्रियाविशेषणम् परलोकानुगुणं विमृशामि विचारयामीत्यर्थः ॥ २५ ॥

जायिप्रियचिकीर्षुतया यस्य देहस्य प्रियचिकीर्षुतया सदेहः अस्य पुरुषस्य कर्मबीजं सृष्ट्वा वृक्षसमानधर्मा स्वान्तकालेऽवसीदतीत्यर्थः ॥ २६ ॥ २७ ॥

पुरुषं मनुष्यं विधाय देवः वतुर्मुखः ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तावद्देहस्य गुरुत्वमाह । देह इति । गुरुत्वं हेतुत्वेन विशिनष्टि विवेकविरक्तिहेतुरिति । विवेको देवात्मादिविभागः विरक्तिर्वैतृष्ण्ये विरागः तयोर्हेतुः प्रवर्तकः तत्र विरक्तिहेतुत्वं वदन् विशिनष्टि । सत्वनिधनमुत्पत्तिविनाशौ विभ्रद्विभ्राणः प्राप्नुवन्नित्यर्थः। सततार्त्युदर्कं सन्ततमार्तिर्दुःखमेवोदर्कमुत्तरोत्तरफलं बिभ्रत् यद्वा मननमार्तिरेव उदर्कं उत्तरकालो यस्य तत्सत्वनिधनं बिभ्रत् विवेकहेतुत्वमाह । तत्त्वानीति । अनेन देहेन तत्त्वानि प्राकृतानि यथार्थमनुमृशामि एवमुपकारित्वेऽपि तस्मिन्नास्थां न करोमीत्याह । तथापीति । पारक्यमिति श्वसृगालादिभक्ष्यमिति व्यवसितः निश्चयवानसङ्गः तस्मिन्नभिमानरहितश्चरामि ॥ २५ ॥

सततार्त्युदर्कतां प्रपञ्चयति । जायेति द्वाभ्याम् । यत्प्रियचिकीर्षुतया यस्य देहस्य प्रियं कर्तुमिच्छाभावस्तया तथा जायादिवर्गान् वितन्वन् सम्पादयन् अर्थसङ्गो वित्तपरः पुष्णाति पुष्णातु ततः किमत आह । स्वान्त इतीयः पुमान् सकृच्छ्रं यथा तथाऽवकृच्छ्राणि सञ्चितानि धनानि येन सः सदेहः देहसहितः देहीत्यर्थः। स्वान्ते स्वायुषोऽन्तेऽवसीदति क्लिश्यति नश्यति तेन देहेन वियुज्यत इत्यर्थः। देहावगमेऽपि न दुःखपरिसमाप्तिरित्याह । अस्य देहान्तरस्य बीजं निदानभूतं कर्मात्मकं बीजं सृष्ट्वावसीदतीति सम्बन्धः वृक्षस्येव धर्मो यस्य सः यथा विनश्यमाणो वृक्षो वृक्षान्तरबीजं सृष्ट्वा नश्यति तद्वदित्यर्थः ॥ २६ ॥

किञ्च एकतो रसं प्रति जिह्वाऽमुं देहिनमपकर्षति कर्हिचित्कदाचित्तर्षा पिपासा जलं प्रति शिश्नो व्यवायं प्रति त्वक् स्पर्शनं प्रति उदरमन्नं प्रति श्रवणं शब्दं प्रति घ्राणो गन्धं प्रति चपला दृग्दृष्टिः रूपं प्रति कर्मशक्तिर्वागादिकर्मेन्द्रियजातमपि क्व तत्तत्प्रति नियतवचनादानगतिविसर्गादानपकर्षति इत्थं बह्व्यः सपत्न्यो गेहपतिं गृहस्वामिनमिव लुनन्ति क्रोटयन्ति ॥ २७ ॥

इत्थं देहस्य विवेकविरक्तिहेतुत्वमुपपाद्येदानीमस्यैव देहस्यातिदुर्लभत्वं दर्शयन्मुक्तिसाधननिष्ठां विधत्ते द्वाभ्याम् । सृष्ट्वेति । देवश्चतुर्मुखशरीरकः परमपुरुषः आत्मशक्त्या कार्योपयुक्तया पृथक्सि-

लब्ध्वा सुदुर्लभमिदं बहुसम्भवान्ते मानुष्यमर्थदमनित्यमपीह धीरः ।
तूर्णं यतेत न पतेदनुमृत्यु यावन्निःश्रेयसाय विषयः खलु सर्वतः स्यात् ॥ २९ ॥
एवं सञ्जातवैराग्यो विज्ञानालोक आत्मनि ।
विचरामि महीमेतां मुक्तसङ्गोऽनहङ्कृतिः ॥ ३० ॥
नह्येकस्माद्गुरोर्ज्ञानं सुस्थिरं स्यात्सुपुष्कलम् ।
ब्रह्मैतदद्वितीयं वै गीयते बहुधर्षिभिः ॥ ३१ ॥
श्रीभगवानुवाच ॥
इत्युक्त्वा स यदुं विप्रस्तमामन्त्र्य गभीरधीः ।
वन्दितोऽभ्यर्थितो राज्ञा यतौ प्रीतो यथागतम् ॥ ३२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तात्पर्यार्थं निरन्तरं दुःखमेवोत्तरोत्तरफलं यस्य तस्मत्स्वविधनमुत्पत्तिमरणं विष्वक्सम विवेकहेतुत्वं दर्शयति । तत्त्वानीति । यथा यथावत् तत्त्वानि विविच्य ब्रह्मावबोधानि विमृशामि विन्तयामि एवं यद्यपि शरीरमुपकारि तथापि पारक्यं श्वसृगालादिभक्ष्यमिति अवसितः कृतनिश्चयः असङ्गः देहादौ न सङ्गो विचरामि ॥ २५ ॥

किञ्च संसृतिहेतुश्चायं देह इत्याह । जायेति । यस्य देहस्य प्रियचिकीर्षुर्मया मलच्छं यथा भवति तथा प्रयत्नधनः यत्र कष्टं पित्रादिभ्यः संगृह्य स्वालये स्थापितं धनं येन स जनः जायादिकं वितन्वन् विस्तारयन् पुष्णाति सदेहः वृक्षधर्मा वृक्षस्य धर्मो यस्य सः अस्य संसारस्य पुनः पुनर्जन्ममरणस्य बीजं कर्म सृष्ट्वाऽवसीदति सद्यति ॥ २६ ॥

किञ्चेन्द्रियद्वारापि देहः संसृतिहेतुरित्याह । जिह्वैकत इति । अमुं जनं जिह्वा एकतो रसं प्रति अपकर्षति परमेश्वरभजनाद्वारविरोधा रसासक्तं करोति कर्हिचित् कचित् तर्षा पिपासा एकतः पानं प्रति शिश्नोऽन्यतो व्यवायं प्रति त्वक् स्पर्शं प्रति उदरं भोजनं प्रति श्रवणं शब्दं प्रति घ्राणो गन्धं प्रति चपलदृग्रूपं प्रति कच कचित् स्वविषयं प्रति कर्मणि शक्तिर्येन्द्र तत्तथा कर्मेन्द्रियम् एकस्य बहुभिरपकर्षणे दृष्टान्तः यथा बह्व्यः सपत्न्यो गेहपतिं गृहकार्यासक्तं भर्तारं लुनन्ति स्वस्वकार्याभिमुखीकरणेन इष्टकार्यावियुक्तं कुर्वन्तीत्यर्थस्तद्वत् ॥ २७ ॥

एवं देहस्य संसृतिहेतुत्वं द्वाभ्यां प्रदर्श्य मोक्षहेतुत्वं दर्शयति । सृष्ट्वेति द्वाभ्याम् । पुराणि शरीराणि पुरुषं पुरुषदेहम् ब्रह्मावलोकाय वृद्धदृग्वशक्त्यादिमद्धृगर्भाद्युपयकज्ञानाय धिषणा बुद्धिर्यस्मिन् तत् ॥ २८ ॥

भाषा टीका ।

वैराग्य तथा विवेक का हेतु यह शरीर है सदा काल दुःख सुख है उत्पत्ति नाश दोनों इस के होते हैं इस को मैं धारण करता हूं यह भी मेरा गुरु है इस देह से जैसे तैसे रहकर मैं तत्त्वों का विचार करता हु फिरभी पराया है ऐसा निश्चय करके सङ्ग छोड़कर विचरता हूं ॥ २५ ॥

भार्या पुत्र धन पशु भृत्य घर कुटुम्बी इन सबों को इसी देह के प्रीति करने की इच्छा से पोषण करता है इतना विस्तार करता हुआ भी अन्त में धनादिक सबों को छोड कर फिर दूसरे देह का बीज बो कर वृक्षसरीका क्रिया वाला देह नष्ट होजाता है ॥ २६ ॥

इस देह को एक तरफ से रस के लिये जीभ खींचती है कभी प्यास खैंचती है कभी लिङ्ग इन्द्रिय मैथुन को खैंचता है त्वचा सुन्दर स्पर्श को खैंचता है उदर अन्न को खैंचता है श्रवण गानादि सुनने को खैंचता है नाक सुंघने को खैंचता है कहीं चपलदृष्टि रूप को कहीं कर्मादि कों को हस्त पादादिक ऐसे बहुतसी सौतिन जैसी एक पत्नी को खैंचे तैसे सब इन्द्रिय इस देह को हैरान करती हैं ॥ २७ ॥

परमात्मा ने सृष्टि के समय में अपनी शक्ति माया से वृक्ष सर्प पशु पक्षी डांश मच्छी आदि नाना प्रकार के शरीर बनाये परन्तु उन शरीरों से सन्तुष्ट नहीं भये फिर ब्रह्म के ज्ञान वाले इस मनुष्यशरीर को बनाया तब परमेश्वर सन्तुष्ट भये ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्माद्बहूनां सम्भवानां जन्मनामन्ते मानुष्यमनित्यमप्यर्थदं पुरुषार्थप्रापकं दैवाल्लब्ध्वैवमनुमृत्यु मृत्युमनु निरन्तरं मृत्युर्यो यस्य तद्यावन्न पतेत्तावदेव तूर्णं शीघ्रं निःश्रेयसाय यतेत विषयः पुनः सर्वतः पश्वादियोनिष्वपि स्यादेव ॥ २९ ॥

तदेवं हेयोपादेयविवेकं बहुधा निरूप्येदानीं यदुक्तं त्वं तु कल्पः कविर्दक्ष इत्यादि तत्रोत्तरमाह । एवमिति । एवं बहुभ्यो गुरुभ्यः शिक्षितेन विशिष्टं ज्ञानमेवालोकः प्रदीपो यस्य सः

अवधूतवचः श्रुत्वा पूर्वेषां नः स पूर्वजः ।
सर्वसङ्गविनिर्मुक्तः समचित्तो बभूव ह ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्यामेकादशस्कन्धे
नवमोऽध्यायः ॥ ९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सप्तम्यन्तं वा आत्मविशेषणम् आत्मनि स्थित एव महीं विचरामि ॥ ॥ ३० ॥

ननु किम्बहुभिर्गुरुभिर्नहि श्वेतकेतुभृगुप्रमुखैर्बहवो गुरव आश्रिताः तत्राह । नह्येकस्मादिति । बहुधा सप्रपञ्चनिष्प्रपञ्चभेदादिभिः अवश्यभावः नैते परमार्थोपदेशगुरवः किन्त्वन्वयव्यतिरेकाभ्यामात्मन्यसम्भावनादिमात्रनिवर्तकास्तेषां बहुत्वं युक्तमेवेति ज्ञानप्रदं गुरुमेकमेव वक्ष्यति मदभिज्ञं गुरुं शान्तमुपासीतेति उक्तञ्च "तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम्"इति ॥ ३१ ॥

विप्रो दत्तात्रेयः योगर्द्धिमापुरुमयी यदुर्देहबाधा इत्युक्तत्वात् यथागतं तथैव यदृच्छया ययावित्यर्थः ॥ ३२ ॥

भगवान् स्वीयं ब्रह्मवित्कुलमिति श्लाघते नः पूर्वेषां पूर्वज इति अत्र संग्रहश्लोकाः ।

कपोतमीनहरिणीकुमारीगजपन्नगाः ।
पतङ्गः कुररश्चाष्टौ हेयार्थे गुरवो मताः ॥ १ ॥
मधुकृन्मधुहर्ता च पिङ्गला च त्रयोऽत्र तु ।
उपादेयार्थविज्ञाने शेषाः पृथ्व्यादयो मताः ॥ २ ॥
तद्व्याख्यान्तरभेदश्च तत्र तत्र स्फुटीकृतः ।
अध्यायत्रितये चात्र नवाष्टावीरिताः क्रमात् ॥ ३ ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
नवमोऽध्यायः ॥ ९ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी ।

तस्मात् मनुष्यदेहस्य दुर्लभत्वात् मानुष्यं मनुष्यदेहं दैवात् पूर्वसुकृतात् ॥ २९ ॥

तदेवं पञ्चविंशतिगुरुभ्यः शिक्षितार्थकथनप्रकारेण तत्र यदुप्रश्ने शिक्षितेन क्षित्यादिभ्यः क्षमादिना आत्मनि स्वरूपे ब्रह्मणि स्थित एवेति न बाह्यविषयं समिच्छतीति भावः ॥ ३० ॥

एते व्यावहारिकपदार्थाः अन्वयव्यतिरेकाभ्यां तत्तद्धर्माणां हेयोपादेयत्वाद्विविधनिषेधाभ्यामित्यर्थः । असम्भावना गुरूपदिष्टे सन्देहः आदिना विपरीतभावनाग्रहः ॥ ३१ ॥

यदृच्छयेति । साधुसङ्गस्य कर्मजत्वं पराहतम् ॥ ३२ ॥

समचित्तोऽभिन्नात्मनिष्ठो बभूव यद्वा स्वर्गापवर्गनिरयेषु समचित्तः एकान्तभक्तो बभूवेति कपोतादयोऽष्टौ हेयार्थे गुरव इति कपोतवत् सङ्गो हेयः मीनवद्रसासक्तिर्हेया हरिणवद्गीतासक्तिर्हेया कुमारीकङ्कणवत् सजातीययोगिसङ्गोऽपि हेयः गजवत् स्पर्शासक्तिर्हेया सर्पवज्जनसङ्गनिवर्तनकर्तादिकं हेयं पतङ्गवद्रूपासक्तिर्हेया कुररेण यथामिषं त्यक्तं तथा धनादिपरिग्रहो हेय इत्यर्थः । मधुकृदादयस्त्रयो द्वयोर्हेयोपादेययोर्गुरवः तत्र मधुकृन्मधुकरीवृत्तिसारसङ्ग्रहाबुपादेयौ तत्सजातीयमधुमक्षिकावत् सङ्ग्रहो हेयः मधुहर्तुः परदुःखदानेन संचितग्रहणं हेयम् उद्यममन्तरैव देहनिर्वाहकभोग उपादेयः पिङ्गलाया आशामयी पूर्वावस्था हेया नैराश्यमुपादेयं पृथ्व्यादीनान्तु सहनादयः सर्व एव धर्मा उपादेयाः इति विवेचनीयं तेषां पृथ्व्यादीनामवान्तरभेद इति यथा पर्वतवृक्षभेदेन पृथ्व्या द्वैविध्यं यथा हरिणव्याख्यावान्तरभेदः ऋष्यशृङ्ग इत्यादि यथास्माभिस्तत्र तत्र प्रकरणे स्फुटीकृतः व्याख्यानेन स्वीकृत एव एवं प्रथमतः षडध्यायान् विहाय क्रमात् अध्यायानां यन्त्रितयं तस्मिन् तत्र सप्तमेऽष्ट गुरवः अष्टमे नव नवमे चाष्टौ गुरवः ईरिताः कथिताः ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
नवमोऽध्यायः ॥ ९ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

बहुसम्भवान्ते अनेकजन्मावसाने अनु मृत्यु यावन्न पतेत् तावद्यतेत विषयः खलु सर्वतः स्यात् निःश्रेयसवत्तस्य देहनियमो नास्तीत्यर्थः ॥ २९ ॥

आत्मनि विज्ञानमेव प्रकाशकं यस्य स विज्ञानालोकः ॥ ३० ॥

एतदुपदेशेति प्रधानशब्दोऽत्र ज्ञानवाची इदं ज्ञानमद्वयं समाश्रयधिकरहितम् एतत्तुल्यं ज्ञानान्तरं नास्तीत्यर्थः ॥ ३१—३३ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यत एवमतो बहूनां सम्भवानां जन्मनामन्तेऽतिदुर्लभमनित्यमप्यर्थदं समीहितपुरुषार्थप्रापकम् इदं समीहितमानुषं जन्म तुल्यसुखदुःखः सन्ननुमृत्यु अनुपृष्ठतो मृत्युर्यस्य तदिदं शरीरं यावन्न पतेन्न विपद्येत तावदेव तूर्णी झटिति निःश्रेयसाय मुक्तये यतेत यत्नं कुर्यान्नतु कामार्थमित्यर्थः । तस्य कामस्य सुलभत्वादिति भावः । तदाह । विषयः खलु सर्वतः स्यात्सर्वतः सर्वत्र श्वशूकरादिजन्मस्यापि विषयः स्यात्सुलभः स्यादित्यर्थः ॥२९॥

प्रश्नोत्तरमुपसंहरति । एवमिति । एवमित्थं मतिं शिक्षयन् जातं वैराग्यं यस्य सः आत्मनि विषयभूते विज्ञानमेवालोकः तत्स्वरूपस्वभावप्रकाशकं यस्य सः अत एवानाहंकृतिर्देहात्माभिमानरहितः मुक्तः सङ्गो देहतदनुबन्धिषु येन तथाभूतोऽहमेतां महीं विचरामि पर्यटामीत्यर्थः ॥ ३० ॥

नन्वेकस्मादेव गुरोः किमेते सर्वेऽर्था न शिक्षिता इत्यत आह । नहीति । सुस्थिरं सुपुष्कलं च ज्ञानं नह्येकस्माद्गुरोः सकाशात्स्यात्किन्तु बहुभ्य एवेति भावः । तर्हि कस्यचिद्विश्वासादस्थिरमेव स्यादत आह । ब्रह्मेति । ब्रह्मशब्दोऽत्र ज्ञानपरः इदं ज्ञानमद्वितीयं समानाधिकरहितम् एतच्च तुल्यं ज्ञानान्तरं नास्तीत्यर्थः ऋषिभिर्बहुधा गीयते यद्यपि पृथिवीवाय्वादिदृष्टान्तेन शिक्ष्यत इत्यर्थः । पृथिव्यादयः शिक्षागुरवो नतु ब्रह्मविद्योपदेष्टारः अतस्तद्गुरुत्वं न दोषायेति यद्वैतत्सर्वे गुरुभगवत्स्वभिदमपि ब्रह्मैव परमपुरुष एव पृथिव्यादिगुरुभगवत्स्वरूपेणावस्थितः स एक एवेति भावः । अनेनाचार्यो मम आचार्यं मां विजानीयादिति विहिता दैवताचार्यबोधाद्वारत्ववुद्धिः कर्त्तव्येति । सूचितम् ॥ ३१॥

अवधूतयदुसंवादमुपसंहरति श्रीभगवान् । इतीति । स विप्रो दत्तात्रेयः योगर्द्धिमापुरुभयो यदुर्हैहयाद्या इत्युक्तत्वात् यदुश्च हैहयाद्यश्चेति द्वन्द्वः गभीरधीरपारज्ञानः आमन्त्र्य पृष्टो राज्ञा यदुना वन्दितोऽर्चितोऽत एव प्रीतः सन् यथागतं ययौ इति सम्बन्धः॥३२॥

तदुपदिष्टस्यानुष्ठितत्वं दर्शयति । अवधूतवच इति । सर्वेषां नोऽस्माकं पूर्वजः पूर्वः स यदुः सर्वमिमम् देहे तदनुबन्धिनि च सङ्गाद्विनिर्मुक्तः समचित्तः शीतोष्णसुखदुःखादिषु तुल्यचित्तः यद्वा सर्वत्र ब्रह्मात्मकत्वदर्शनः मुक्तश्चेति शेषः बभूवेति निश्चितम् ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इदानीं परमपुरुषार्थाय प्रयतनीयमित्यर्थतः सूचितं स्पष्टमाह । लब्ध्वेति । बहुसंभवान्ते बहुजन्मावसाने अनुमृत्यु पृष्ठतोऽनुगतं मृत्युं यस्य तदनित्यं शरीरं यावन्न पतेत्तावत् पूर्वमेव निःश्रेयसाय यतेतेत्यन्वयः ॥ २९ ॥

निश्चितार्थमाह । एवमिति । आत्मनि विज्ञानालोकः परमात्मविषयविज्ञानलक्षणप्रदीपः प्रकाशः ॥ ३० ॥

एकस्माद्गुरोः स्वार्थं सिद्धं बाहुल्यादिकप्रयोजनं कस्मादेकस्मादित्यर्थ:संगत्यादिक एव तात्पर्यार्थे इत्यत आह । नहीति । सुष्ठु पुष्कलं पूर्णं तत्र हेतुमाह । ब्रह्मेति । बहुधा गीयमानत्वादल्पबुद्धेर्निश्चयो न स्यादित्यर्थः इत्यनेन—

एकस्मात्तु गुरोर्ज्ञानं जायते नैव कस्यचित् ॥
एकस्मादेव जायेत योग्यो ब्रह्मपदस्य तु ।
स्वयं तूपादिशेज्ज्ञानं वैरिञ्चिपदयोगिनः ॥
अनुप्रदानेन चापि ज्ञानं दत्त्वा विमुक्तिदः ।
ज्ञानं प्राप्य बहुभ्योऽपि न ते मुक्तिमनुमुखात् ॥
ज्ञानमप्राप्य तेषां तु ज्ञानदो विष्णुरेव हि ।

वाक्योक्तविशेषं सिंहावलोकनन्यायेन सूचयति ॥ ३१—३२ ॥

समे ब्रह्मणि चित्तं यस्य स तथा ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
नवमोऽध्यायः ॥ ९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नन्वेक एव योग्यो गुरुः कर्तव्यः तस्मादेव सपरिकरं ज्ञानं सेत्स्यति किम्वा मतान्तरज्ञा एवान्ये प्रष्टव्याः किं गुर्वाभासैर्व्यावहारिकपदार्थैरित्याशङ्क्याह । न हीति । एकस्मान्मुख्याद्गुरोर्यद्यपि सुपुष्कलं सुस्थिरं यज्ज्ञानं तदपि न स्यात् न सम्पद्येत कुत इत्यत्राह । ब्रह्मेति । मतान्तरेण मतिभङ्गादित्यर्थः । तस्मान्महागुरुदृष्टमतपोषाय तद्विरुद्धमतनिरसनाय च बुभुत्सया मतमार्गे व्यावहारिकपदार्थाः एव गुरुत्वेन सम्भाविताः नतु कापिलादिमतान्तरस्थापका इति भावः ॥ ३१—३३

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अनित्यमपि अर्थदं नित्यस्यापि वस्तुनः प्रापकं तस्मादिदं यावन्न पतेत् तावदेव निःश्रेयसाय यतेत यत इदम् अनुमृत्यु मृत्यु जातस्यास्य पश्चात् पश्चादेव वर्त्तमानो मृत्युर्यस्य तत् खड्गमकूररथेनैव विध्वस्तमित्यर्थः । विषयः पुनः सर्वतः श्वादियोनिष्वपि प्राप्तः स्यादेव ॥ २९ ॥

यदुक्तं त्वन्तु कल्पः कविर्दक्ष इत्यादि तत्रोत्तरमाह । एवमिति । आत्मनि यद्विज्ञानमपरोक्षानुभवस्तत्रैवालोको दृष्टितात्पर्यं यस्य सः ॥ ३० ॥

ननु मदभिज्ञं गुरुं शान्तमुपासीतेति तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तममित्याद्युक्तिभ्य एक एव गुरुराश्रयणीयोऽवगम्यते । नापि श्वेतकेतुभृगुप्रमुखैर्बहवो गुरव आश्रिताः सत्यं ममापि मन्त्रोपदेष्टा गुरुरेक एव उपास्यो वर्त्तते । किन्तूपासनायामानुकूल्यप्रातिकूल्यदृष्टान्तभूता एते पदार्थाः परामृश्य गुरुकृता इत्यन्वयव्यतिरेकाभ्यां मे शिक्षागुरव एवैते ज्ञेयाः। तथाहि स्वामिचरणैरप्यनयोः श्लोकौ । "कपोतमीनहरिणा कुमारीगजपन्नगाः । पतङ्गः कुररश्चाष्टौ हेयार्थे गुरवो मताः मधुकृन्मधुहर्त्ता च पिङ्गला च शयोशयः ।उपादेयार्थविज्ञाने ज्ञेयाः

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पृथग्भावो मता" इति । शिष्यागुरुभ्यान्तु बाहुल्यमेव प्रायो ज्ञानप्रयोजकमित्याह । नहीति । ननु शिष्यागुरवोऽत्यभिज्ञजना एव भवन्तीत्यत आह अभिज्ञजनानां हि गौतमादीनाम् एव मतैराश्रीयन्ते सत्यम् अभिज्ञजनानां हि गौतमादिनाना-मतानुसारित्वात्मया स्वसजातीयाश्च कुत्र कुत्र कल्पनेष्वन्यथा इत्याह । ब्रह्मेति । अद्वितीयं यद्ब्रह्म एतत् खलु सविशेषनिर्विशेषभेदाभिभेदैर्बहुधैव ऋषिभिर्गीयते इति "नासावृषिर्यस्य मतं न भिन्न" मित्यभियुक्तवाक्यान्न मया व्यावहारिका एव पदार्थाः शिष्या गुरवः कृता इति भावः ॥ ३१ ॥

विप्रो दत्तात्रेयः योगर्द्धिमापृच्छ्य यदुदेहयाद्याः इत्युक्तेः । यथैवागतं तथैव यदृच्छया ययौ ॥ ३२—३३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशस्य नवमः सङ्गतः सङ्गतः सताम् ॥ ९ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अतः इह मनुष्यलोके धीरः बहुसम्भवान्ते विविधदुःखादिजन्मान्ते अध्रुवमपि अर्थदं तथापि मनुष्यत्वं दुर्लभं यावत् न मृत्युः भूतमपि अर्थदं पुरुषार्थं निरन्तरं मूलको नाशं लभते यावत् तदेव भूतमपि अर्थदं पुरुषार्थदमिदं मानुष्यं दैवाल्लब्ध्वा यावत् पतेत् न म्रियेत तावदेव तूर्णं धीरो निःश्रेयसाय मोक्षाय यतेत श्रोत्रादीनीन्द्रियाणि परमात्मनि श्रवणमननादीनि कुर्यादित्यर्थः । विषयः शब्दादिरूप इन्द्रियगुणादिभवनप्रवणानि कुर्यादित्यर्थः । विषयः शब्दादिरूप इन्द्रियार्थस्तु खलु सर्वतः सर्वेषु देहेषु स्यादेव ॥ २९ ॥

इत्थं चतुर्विंशति गुरुभ्यो लब्धं ज्ञानं देहस्य विरक्तिविवेकहेतुत्वेन गुरुत्वं चोक्त्वा स्वं तु कथं कान्दिशीक इत्यादि उक्तमाह । एवमिति । विज्ञानं गुरुप्रसादलब्धं निश्चितं ज्ञानमेवाश्रित्य अधीतो यस्मिन् तस्मिन् आत्मनि स्थितः महीं विचरामि ॥ ३० ॥

नन्वेकस्मादेव सहायभूतान्मुख्यगुरुमुखाच्छ्रुतं ज्ञानं स्थिरीभवति किं बहुभिः सहायभूतैर्गुरुभिरतः आह । नेति । एतल्लोकवदर्थात् किं बहुभिः सहायभूतैर्गुरुभिरत आह । नेति । एतल्लोकवद्यात् किं बहुभिः सहायभूतैर्गुरुभिरतः आह । नेति । एतल्लोकवद्-प्रसिद्धं ब्रह्म ऋषिभिर्वेदैः एकोऽहं बहुस्यामित्यादिभिः अद्वितीयमेकधा कारणरूपेण बहुधा कार्यरूपेणापि द्वैताद्वैतं गीयते किञ्च निःसमासातिशयत्वेन चिदचिच्छक्तिमद्ब्रह्मैकं पदार्थस्वरूपं निःसमासातिशयत्वेन चिदचिच्छक्तिमद्ब्रह्मैकं पदार्थस्वरूपविधये एकमित्येवमेकमेवाद्वितीयं "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते" इत्यादिभिर्वेदैर्गीयते यथा ऋषिभिः "अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके" इत्येवं वादिभिर्वेदव्यासादिभिर्गीयते अत इत्थं भूतब्रह्मविषयकज्ञानं मुख्यगुरुमुखात्सुगृहीतमपि सहायभूतादेकस्माद्गुरोः सुपुष्कलं सुस्थिरं नहि स्यात् "स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमितिश्रुतेः मदभिज्ञं गुरुं शान्तमुपासीतेति वक्ष्यमाणाच्च मुख्यो गुरुरेकस्तत्प्रोक्तज्ञानदार्ढ्यार्थं बहवो महात्मानो गुरुत्वेनादरणीया इति भावः ॥ ३१ ॥

विप्रो दत्तात्रेयः यथा गतं तथैव यदृच्छया ययौ ॥ ३२-३३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
नवमाध्यायार्थप्रकाशः ॥ ९ ॥

———

भाषा टीका ।

जिससे मनुष्य बहुत जन्मों के पीछे अनित्य भी इस मनुष्य शरीर को प्राप्त हो कर सुन्दर अर्थ का देने वाला है ऐसा समझ कर जब तक मरना नजीक नहीं आया है तबही मोक्ष के लिये यत्न करे वह धीर पुरुष है विषय भोगों का यत्न न करे क्योंकि वे सब ठिकाने ही होते हैं ॥ २९ ॥

इस प्रकार विज्ञान के देखने वाला होकर देहादिक में वैराग्य को प्राप्त होकर अहंकार को तथा सब के सङ्ग को छोड़ कर इस पृथ्वी में विचरताहूं ॥ ३० ॥

एक गुरु से ज्ञान अति दृढ नहीं होता है क्योंकि इस अद्वितीय ब्रह्म को भी ऋषियों ने बहुत प्रकार से गान किया है ॥ ३१ ॥

श्रीभगवानुवाच ॥

वे गम्भीर बुद्धि वाले ब्राह्मण दत्तात्रेय जी इस प्रकार से यदुमहाराज को कह कर उनसे विदा मांग कर यदुमहाराज से नमस्कृत पूजित हो कर अति प्रसन्न चित्त से जैसे आये है तैसे ही चले गये ॥ ३२ ॥

हमारे बड़ों के बड़े यदुमहाराज अवधूत जी के वचनों को श्रवण कर के सब के सङ्गों से छूट कर सम दृष्टि वाले होगये ॥ ३३ ॥

इति श्रीमद्भागवत एकादशस्कन्ध में नवमाध्याय
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्ता ॥ ९ ॥

———

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे नवमोऽध्यायः ॥ ९ ॥

——:*:——

## अथ दशमोऽध्यायः ।

——:*:——

श्रीभगवानुवाच ॥

मयोदितेष्ववहितः स्वधर्मेषु मदाश्रयः ।
वर्णाश्रमकुलाचारमकामात्मा समाचरेत् ॥ १ ॥
अन्वीक्षेत विशुद्धात्मा देहिनां विषयात्मनाम् ।
गुणेषु तत्त्वध्यानेन सर्वारम्भविपर्ययम् ॥ २ ॥
सुप्तस्य विषयालोको ध्यायतो वा मनोरथः ।
नानात्मकत्वाद्विफलस्तथा भेदात्मधीर्गुणैः ॥ ३ ॥
निवृत्तं कर्म सेवेत प्रवृत्तं मत्परस्त्यजेत् ।
जिज्ञासायां सम्प्रवृत्तो नाद्रियेत् कर्मचोदनाम् ॥ ४ ॥
यमानभीक्ष्णं सेवेत नियमान् मत्परः क्वचित् ।
मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकम् ॥ ५ ॥
अमान्यमत्सरो दक्षो निर्ममो दृढसौहृदः ।
असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक् ॥ ६ ॥
जायापत्यगृहक्षेत्रस्वजनद्रविणादिषु ।
उदासीनः समं पश्यन् सर्वेष्वर्थमिवाऽऽत्मनः ॥ ७ ॥
विलक्षणः स्थूलसूक्ष्माद्देहादात्मेक्षिता स्वदृक् ।
यथाऽग्निर्दारुणो दाह्याद्दाहकोऽन्यः प्रकाशकः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्विंशतिगुर्वाख्यानब्रह्मसम्भावनाभुवः ॥
उद्धवस्याऽऽत्मतत्त्वाप्त्यै साधनोक्तिरतः परैः ।
दशमे देहसम्बन्धात्संसृतिर्नाऽऽत्मनः स्वतः ॥
इत्येतद्वर्णयामास मतान्तरनिरासतः ।

तदेवमन्वयव्यतिरेकाभ्यामुत्पन्नविवेकज्ञानस्य तत्त्वज्ञानायावित आरभ्य साधनान्युपदिशति भगवान् मयेति । मया पञ्चरात्राद्युक्तवैष्णवधर्मेष्ववहितोऽप्रमत्तः संस्तदविरोधेन वर्णाद्याचारमनुतिष्ठेत् ॥ १ ॥

कथमकामात्मता सम्भवति तत्राऽऽह । अन्वीक्षेतेति । स्वधर्मैर्विशुद्धचित्तः सन् देहिनां विषयेषु सत्यत्वाभिमानवशेन ये सर्वे आरम्भास्तेषां फलवैपरीत्यं पश्येत् एवं फलवैपरीत्यादकामः स्यात् ॥ २ ॥

किञ्च काम्यविषयाणां मिथ्यात्वादपीत्याह । सुप्तस्येति । विफलोऽर्थशून्यः मनोमात्रप्रयोगः इन्द्रियैर्या बहिर्नीता बुद्धिः सा निष्फला नानात्मकत्वात् ऐन्द्रियकत्वाच्च मनोजन्यस्वप्नमनोरथवदिति ॥ ३ ॥

मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ॥
नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासयेति ।

स्मृतिरतः प्रवृत्तं काम्यं कर्म त्यजेन्निवृत्तं नित्यनैमित्तिकमेव कुर्यात् आत्मविचारे तु सम्यक् प्रवृत्तो निवृत्तकर्मचोदनामपि नाद्रियेत ॥ ४ ॥

किञ्च यमानहिंसादीनभीक्ष्णमादरेण सेवेत । शौचादींस्तु नियमान् कचिद्यदा शक्तिस्तदा आत्मज्ञानाविरोधेन यमान् द्वादश नियमांश्चैकोनविंशेऽध्याये वक्ष्यति । किञ्च यमेष्वप्यादरं

श्रीधरस्वामिकृतभावार्थदीपिका।

परिचर्य गुरुमुपासीतेत्याह। मदभिज्ञमिति। मदात्मकं मद्रूपम्॥५॥

गुरुसेवकस्य धर्मानाह। अमानीति। दक्षोऽनलसः निर्ममो जायादिषु ममताशून्यः गुरौ तु दृढसौहृदः असत्वरोऽव्यग्रः अमोघवाक् व्यर्थालापरहितः एतान्येव शिष्यस्य लक्षणानि ज्ञेयानि॥६॥

ननु स्वजायादिषु कथं निर्ममः स्यात्तत्राऽऽह। जायेति। औदासीन्यहेतुं विवेकं दर्शयति। आत्मनोऽर्थं प्रयोजनं सर्वत्र सममिव पश्यन्निति अयम्भावः सर्वदेहेष्वात्मन एकत्वाज्जायादिदेहेऽस्मिंश्च स्वदेहे आत्मनोऽर्थः सुखादिः सम एव केन विशेषेणैतेष्वेव ममत्वाभिनिवेशः इत्येवमुदासीनः सन् गुरुं प्रपद्येतेति॥७॥

ननु कोऽसौ देहादिव्यतिरिक्त आत्मा यस्यैकत्वादर्थः सर्वेषु समः स्यात्तमाह। विलक्षण इति। स्थूलसूक्ष्मदेहद्वयादात्माऽन्यो यतो विलक्षणः द्वेधा वैलक्षण्यं दर्शयति। ईक्षिता स्वदृगिति द्रष्टा हि दृश्याद्विलक्षणः स्वप्रकाशश्च जडाद्विलक्षणः तयोरन्यत्वे दृष्टान्तः यथाग्निर्दाहकः प्रकाशकश्च दाह्यात्प्रकाश्याच्च दारुणः काष्ठादन्यस्तद्वदिति॥८॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी।

चतुर्विंशतिगुरूणां याच्या कथनं तेन स्वस्य वा सम्भावना आत्मानुभवे स्वयोग्यताध्यवसायस्तस्या भुवः स्थानस्योद्धवस्यात्मप्राप्त्यै अतो नवमाध्यायात् परैरध्यायैः श्रीकृष्णकर्तृका साधनोक्तिर्वर्ण्यते स्वतः स्वरूपतो न इत्येतत् जीवसंसृतेरवास्तवत्वं मतान्तरनिरासतः मीमांसकमतनिराकरणेन तथैवं चतुर्विंशतिगुरुवर्णनप्रकारेण अन्वयव्यतिरेकाभ्यां हेयोपादेयत्वेन विधिनिषेधाभ्यां तदविरोधेन वैष्णवधर्माविरोधेन अकामात्मा निष्कामः॥१॥

अकृतस्य पुनस्त्यागासहिष्णुत्वमभिनिवेशस्तेन॥२॥

मिथ्यात्वादप्यकामः स्यादित्यनुषङ्गः अर्थशून्यः मिथ्याभूतः अत्र अर्थशून्यत्वे अहिर्नानाबुद्धिरिति भक्तिरूपाऽभेदात्मधीस्तु नानात्मिका न भवति भगवद्रूपाद्यनेकात्मकत्वात्॥३॥

तत्र काम्यादिचतुर्विधकर्ममध्ये मत्पर इति क्रियात्वेऽपि योज्यं मदाश्रयं विना सर्वमपि तत्तद्व्यर्थमित्यभिप्रायात् सम्यक् प्रवृत्त इति प्रवृत्तेः परमवैराग्यपूर्वकत्वं सूचयति यथोक्तं श्रीगीतासु "आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते। योगारूढस्य तस्यैव शमः कारणमुच्यते। यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते। सर्वसङ्कल्पसन्न्यासी योगारूढस्तदोच्यते" इति॥४॥

यमानित्यत्रापि मत्पर इति मदाश्रयं विना यमादीनामपि वैफल्यमिति सूचयति कचिद्दावश्यकमलमूत्रोत्सर्गादौ यथाशक्त्यैव पाठः॥५॥

मदभिज्ञमिति युग्मकम् आदरं कर्तव्यताभिनिवेशं मद्रूपमिति गुरावीश्वरदृष्टिं विधत्ते येऽमानित्वादयो गुरुसेवकस्यावश्यकर्तव्यत्वरूपा धर्मा एतान्येव शिष्यस्य द्योतकानि लक्षणान्यपि ज्ञेयानीत्यर्थः॥६॥

जायादिषु उदासीनः ममताविशेषमभावयन् सुखादिरित्यत्रादिना दुःखहान्यादिकं ज्ञेयम्॥७॥

ईक्षिता द्रष्टा स्वदृक् स्वप्रकाशः विलक्षणयोर्विरुद्धलक्षणयोर्देहात्मनोः अन्यत्वे भिन्नत्वे॥८॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

॥१॥२॥

भेदार्थधीः भेदविषयधीः आत्मनि देहभेदारोपः विफलः नानात्मकत्वात् आत्मन्यविद्यमानः मनुष्यत्वादिगोचरत्वात्॥३॥

कर्मचोदनां काम्यकर्मचोदनाम्॥४—६॥

सर्वेषु जायापत्यादिषु उदासीनः सर्वेषु समं साधारणं पश्येत् ममैवेदमिति न जानीयात् आत्मनोऽर्थमिव स्वकीयत्वाभिमतोऽर्थोऽपि हि पुत्रादिभिर्भुज्यते एवं पुत्रादयोऽपि न ममैवेति पश्येदित्यर्थः॥७—८॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तदेवमवधूतयदुसंवादमुखेन स्वबुद्धिः स्वयमेव शिक्षणीयेत्यभिधायाथ साक्षान्मुक्तिसाधनभूतब्रह्मोपासनात्मकं भक्तियोगं तदङ्गभूतौ कर्मज्ञानयोगावन्यानि च साधनानि उपदिशति श्रीभगवान्। मयेत्यादिना। मया सर्वज्ञेन परमकारुणिकेनोदितेषु पञ्चरात्रगीतादिमुखेनोपदिष्टेषु स्वधर्मेषु स्वरूपानुरूपधर्मेष्ववधानत्वनादिष्ववहितः प्रमादरहितः अप्रमादेन ताननुतिष्ठन्नित्यर्थः मदाश्रयः अहमेव सर्वान्तरात्मा आश्रयो यस्य सः मदाश्रयः सत्तास्थितिप्रवृत्तिज्ञानवान् अकामात्मा न कामेष्वात्मा यस्य सः फलाभिसन्धिरहितः स यावद्देहं वर्णाश्रमकुलोचितमाचारं समाचरेदनुतिष्ठेत्॥१॥

कथमकामात्मता सम्भवेदित्यत आह। अन्वीक्षेतेति। उक्तधर्मैर्विशुद्ध आत्मा मनो यस्य सः तत्त्वध्यानेन तत्त्वमनारोपिताकारः आत्मपरमात्मयाथात्म्यानुचिन्तनेन विषयात्मनां विषयप्रवणचित्तानां देहिनां गुणेषु गुणपरिणामात्मकेषु शब्दादिविषयेषु निमित्तेषु तदर्थमित्यर्थः। ये सर्वे आरम्भा उद्योगास्तेषां विपर्ययं फलव्यत्यासं सुखार्थारम्भाणामन्ततो दुःखफलकत्वमित्यर्थः। अन्वीक्षेत पश्येत् सर्वारम्भविपर्ययान्वीक्षणादकामात्मता सम्भवतीति भावः॥२॥

तत्त्वध्यानेनेत्यनेनाऽतत्त्वध्यानस्य कामात्मतापादकत्वादन्ततो दुःखहेतुत्वमनिष्टफलत्वमभिप्रेतं सूचितं तदेव दृष्टान्तमुखेन निगमयति। सुप्तस्येति। यथा सुप्तस्य पुंसः विषयालोकः प्रियाप्रियविषयाभासः यथा वा ध्यायतो मनोरथश्च निष्फलः नहि स्वाप्नार्थकामादिभोग्या फलितं तथा विषयध्यानात्मकमनोरथमात्रेण प्रत्युत तौ नानात्मकत्वात् निष्फलौ प्रियाप्रियरूपेण विषयाणां नानात्मकत्वात्तयोर्नानात्मकत्वमतन्त्रत्वं निष्फलत्वं च पुरुषार्थशून्यत्वं तथा गुणोत्थो भेदः आत्मनि देवमनुष्यादिभेदः अर्थः शब्दादिविषयश्च तद्विषया धीर्नानात्मकत्वाद्विफला नानात्मकत्वा-

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विज्ञेयत् कार्यत्वानित्यत्वादीनामप्युपलक्षणं नानात्मकत्वात् कार्यत्वादनित्यत्वाच्चाफलं इत्यर्थः । मदात्मधीरिति पाठे मदेन देवमनुष्यादिभेदेनात्मनि धीरित्यर्थः । आत्मनि देवादिदेहभेदारोपो विफलः नानात्मकत्वादात्मन्यविद्यमानत्वाद्देवमनुष्यादिगोचरत्वाद्धयोनामन्ततो दुःखहेतुत्वाच्चेत्यर्थः ॥ ३ ॥

यत एवमतो मत्परः अहमेव परं उत्कृष्टः पुरुषार्थो यस्य सः निवृत्तं फलाभिसन्धिरहितं निष्काममनन्यप्रयोजनमिति यावत् तत्कर्म सेवेताचरेत् प्रवृत्तं फलदानाय प्रवृत्तमैश्वर्यादिसाधनं काम्यमिति यावत् तत्कर्म त्यजेत् नन्विदमावश्यकताबोधके सति प्रवर्तके कथं तत्त्याग इत्यत आहायेन । जिज्ञासायामिति । जिज्ञासायां ब्रह्मविचारे संप्रवृत्तः पुमान् कर्मचोदनां काम्यकर्मचोदनां तत्फलं स्वरूपादिथरत्वबुद्ध्या नाद्रियेत ॥ ४ ॥

किन्तु यमान् यावदन्तःकरणनिग्रहोपायानभीक्ष्णं पौनःपुन्येनात्यादरेण सेवेत नियमान् शौचादींस्तु कश्चित्यपायाक्त सेवेतानुतिष्ठेत् मत्परोऽनन्यप्रयोजनः किञ्च मदभिज्ञमिति । मदभिज्ञं मामीश्वरमभिजानातीति तथा ब्रह्मनिष्ठमित्यर्थः।मदात्मकं मत्प्रधानमुपरतविषयं शान्तं जितेन्द्रियं गुरुमुपासीत ॥ ५ ॥

गुरूपासनस्य धर्मानाह । अमानीति । अमायी निष्कपटः अमत्सरः तस्मिन् तदनुबन्धिनि चार्थकामादिप्रयुक्तमात्सर्यरहितः दक्षस्तत्सेवायामुत्साही निर्ममः देहानुबन्धिषु ममाभिमानरहितः तद्धर्मामानस्य मात्सर्यापादकद्वारा गुरूपासनविरोधित्वादिति भावः। गुर्वाद्यर्थं सौहृदं यस्य सः दृढसौहृद इति पाठे दृढसौहृदवानित्यर्थः । असत्वरः न त्वरया सहितः अव्यग्रः अर्थाहितमनाः इत्यर्थः । अर्थान् देवोपदेश्यान् ज्ञातुमिच्छुः अनसूयुर्दोषाविष्काररहितः अमोघवाग्वृथा प्रलापरहितः ॥ ६ ॥

कथं निर्ममता सम्भवेदत आह । जायेति । आदिशब्देन पश्वादिसंग्रहः उदासीनः आसक्तिरहितः तदौदासीन्येन निर्ममो भवतीति भावः । कथमौदासीन्यं सम्भवेदत आह । समं साधारणं पश्यन् ममैवैते जायादय इति न विजानीयात् आत्मनोऽर्थमिव स्वकीयतयाभिमतोऽर्थो हि पुत्रादिभिर्भुज्यते एवं पुत्रादयोऽपि न ममैवेति पश्येदित्यर्थः ॥ ७ ॥

मदात्मधीरित्यनेन नात्मा देवमनुष्यादिशरीराकारः किन्तु ततोऽन्य इति सूचितं तदेव सदृष्टान्तं विशदयति । विलक्षण इति। आत्मा स्थूलसूक्ष्मदेहाद्विलक्षणः अन्यः भूतसूक्ष्मेन्द्रियमनःप्राणसङ्घातात्मको देहः सूक्ष्मः तत्परिणामात्मकस्तु स्थूलः वैलक्षण्यमाह ताभ्यां धर्माभ्यामात्मानं विशिनष्टि । ईक्षिता द्रष्टा एतयोर्वेत्ति सततं स्वेनमिति न विदुरिति मत्कैरिति भावः । देहदर्शीक्षयो नात्मना इति भावः । स्वदृक् स्वमात्मानं पश्यतीति स्वप्रकाशः प्रत्यगित्यर्थः । देहस्तु पराग्गति भावः यथा दाह्यात् प्रकाश्यात् दारुणः काष्ठादग्निर्दाहकः प्रकाशकश्चान्यस्तद्वत् ॥ ८ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मुमुक्षुणा ईश्वरपरोक्षज्ञानमापाद्यमिति इतिहाससमुच्चेनोक्तं तत्साधनानि निरूपयत्यादिमश्लोकाभ्यां । तत्रादौ वर्णाश्रमाचाराचरणप्रकारमाह । मयोदितेष्विति । अकामात्मा फलाभिसन्धिरहितमनाः भूत्वा ॥ १ ॥

सर्वसाधनेषु वैराग्यं प्रथममापाद्यमित्याह । अन्वीक्षेतेति अन्तःकरणशुद्धिहेतुना वर्णाश्रमादिविहिताचारेण विशुद्धात्मा पुमान् गुणेषु शब्दादिषु तत्त्वज्ञानेन पुरुषार्थसाधनतानिश्चयज्ञानेन विषयात्मनो विषयेष्वासक्तचित्तानां देहिनां सर्वेषां कर्मारम्भाणां विपर्ययं फलवैपरीत्यम् अन्वीक्षेतेत्यन्वयः । अन्वीक्षणं नाम यथावस्तु दर्शनं तदेव पुरुषार्थसाधनं नान्यत् ॥ २ ॥

सुप्तिरजनादिज्ञानवन्मुमुक्षुणा द्वैतमिदं ज्ञानमिति भावेनैतदुपपादयति सुप्तस्येति । यथा सुप्तस्य जागृतस्येव विषयाध्यासाद्बोधो यावत् ध्यायतो मनोरथश्च नानात्मकत्वाद्वस्तुव्यतिरेकत्वाद्विफलः अत एव अविद्यमानः तथाभ्यासिगुणैः अबाह्यबुद्धिरूपगुणैः अस्वरूपैः कामक्रोधादिभिरभेदोऽहं क्रोधवानहं कामीत्यादिलक्षणो योऽसौ द्वैत इत्यर्थः—

> वस्तुस्थितेरन्यथात्वं नानात्वमिति कीर्तितम् ॥
> ज्ञानस्यैव तु नानात्वात् स्यात्कामाद्यहंमतिः ।
> कामादिषु स्वधीस्थेषु केवलं जीवसंस्थितिः ॥
> इति बुद्धिरभेदः स्यात्स न कार्यः कथञ्चन ।
> अनुदृष्टकामक्रोधरूपो जीवाभिन्नस्वरूपतः ॥
> दुष्टकामो मनोधर्मस्तस्माद्भेदः सदैव सः ।

इतिप्रमाणेन द्वैतं ज्ञायते इत्यर्थः ॥ ३ ॥

अकामात्मेत्युक्तं विवृणोति । निवृत्तमिति । फलानपेक्षया यथा वस्तुज्ञानपूर्वं यत्कर्म तन्निवृत्तं तदेव सेवेत कुर्यात् अनीदृशं यत्कर्म तत्प्रवृत्तं त्यजेन्न कुर्यात् अहमेव परो यस्य स मत्परः अनेनाकामात्मनो बुधस्य कर्मविधानं प्रतीतिविरुद्धमिति परास्तम्—

> निष्कामं ज्ञानपूर्वं च निवृत्तमिति चोच्यते ॥
> निवृत्तं सेवमानस्तु ब्रह्माप्येति सनातनमिति ।

एतच्च मानम् । ननु सकामस्य कर्मविधानात्तत्त्यागः कथमत आह । जिज्ञासायामिति । जिज्ञासायां ब्रह्मविचारे कर्मचोदनां कर्मविधिं ब्रह्मज्ञानोत्पत्तौ प्रवृत्तानां सर्वशब्दानां कर्मादिविषयत्वाङ्गीकारे विरोधापत्त्या तत्रानादरलक्षणत्यागो विधीयते न तु सर्वात्मना अन्तःकरणशुद्धिद्वारा ज्ञानाङ्गत्वेनाङ्गीकाराद्दृष्टत्वाद्विफलो नाद्रियेतेत्युक्तम् ॥ ४ ॥

ननु यमादिचोदनापि नादरणीया किन्नेत्याह । यमानिति । यमनियमाः—

> अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसंचयः ॥
> आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाभयम् ।
> शौचं जपस्तपो होमः श्रद्धातिथ्यं मदर्चनम् ।
> तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनमिति ।

यद्यपि कार्यत्वाद्धितकार्ये निवृत्तादिवत् ज्ञानोत्पत्तौ गुरूपासनमन्तरङ्गमित्याह । मदभिज्ञमिति । मय्येव आत्मा ध्यानसमर्था बुद्धिर्यस्य स तथा तम्—

> मामेव नित्यं ध्यायेद्यो महात्मा सम्प्रकीर्तितः ॥

इतिवचनात् ॥ ५ ॥

तस्य गुरुप्रसादजनकगुणानाह । अमानीत्यादिना । निरतं गमयतीति निगमो निर्णायकं वेदलक्षणशास्त्रं तस्मिन् ॥ ६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

परमकारुणिकः श्रीभगवान् आह । मयोदितेष्वित्यादिना । मदाश्रयः ख्यातिप्रवृत्तिहेतुर्यस्य सः श्रीमद्गीतापञ्चरात्रादिकर्त्रा मयोदितेषूक्तेषु स्वधर्मेषु अवहितः सावधानः सन् तदविरोधेन वर्णाश्रमाचारमकामात्मा नास्तिकामः फलाभिसन्धिरात्मनि मनसि यस्य सः ज्ञानोपयोगित्वेनानुतिष्ठेत् ॥ १ ॥

नन्वन्यजनकामात्मतादर्शनेन कदाचिदात्मनि कामः स्यात्तदा किङ्कर्तव्यमत आह अन्वीक्षेतेति । विशुद्धात्मा विशुद्धे तत्त्वे आत्मा मनो यस्य सः परमेश्वरध्यानपरः विषयात्मनां विषयेषु इन्द्रियार्थेषु आत्मा चित्तं येषां तेषां गुणेषु इन्द्रियार्थेषु शब्दादिषु साध्येषु समारम्भाणां विपर्ययं वैपरीत्यमन्वीक्षेतालोचयेत् ननु तत्त्वध्याने एवमालोचने कर्तुरात्मनि अन्यजनकामात्मतादर्शनेनापि कामो न स्यादित्यर्थः ॥ २ ॥

किञ्च वर्णाश्रमाचारसमाचरणे फलाभिसन्धिः फलैः पोष्यस्य देहस्यात्मत्वे सति स्यात्तत्तु नास्तीत्याह सुप्तस्येति । सुप्तस्य मनुष्यस्य विषयालोकः शचीपतिरस्मीति दर्शनम् ध्यायतो रङ्कस्य नरेन्द्रोऽहमिति मनोरथो वा यथा विफलः तथा गुणैः स्वरूपावरणहेतुभूतैः भेदे आत्मभिन्ने देहे आत्मधीः देहोऽस्मीति बुद्धिर्विफला चेतनस्याचेतनत्वाभावात् अतो हि स्वात्मपरमात्मज्ञानसिद्ध्यै वर्णाश्रमाचारं समाचरेत्तु तत्र फलाभिसन्धिं कुर्यादिति भावः । ननु सुप्तस्य विषयालोकः स्वतः परप्रवर्त्तितो वेत्यत्र दृष्टान्तमाह नानात्मकत्वादिति । नानारूपं विश्वं तद्यस्यात्मा नानात्मा विश्वात्मा परमात्माहमस्तदात्मकत्वान्मदधीनस्थितिप्रकृतिकत्वात्स्वप्रदत्वात्स्वल्पकर्मफलभोगसिद्ध्यै मत्प्रवर्तितो विषयालोकोऽस्मीत्यर्थः अन्यथाऽनिष्टविषयावलोको न घटेतेति वेदान्तकौस्तुभे स्थितम् । यद्वा क्षेत्रज्ञस्यैकत्वात्स्वाधिपया धीः सफला क्षेत्रस्य नानात्मकत्वात् पञ्चभूतात्मकत्वात्स्वर्गाद्यनर्हत्वेन भेदात्मधीर्विफलेति योजना ॥ ३ ॥

वर्णाश्रमाचारसमाचरणे विशेषमुपदिशति । निवृत्तमिति । अहं परः प्राप्यो यस्य स मत्परः मत्प्राप्तिकामः निवृत्तं मद्भावापत्तिलक्षणमुक्तिसाधनं कर्म सेवेत प्रवृत्तं त्रिवर्गसाधनं त्यजेत् तथा च स्मृतिः "मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः । नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासयेति ननु तर्हि प्रवृत्तकर्मविधिव्याकोपः स्यादित्यत आह । जिज्ञासायामिति । मादृशाविष्ट्यधिकारी अन्यो मुमुक्षुः जिज्ञासायां ब्रह्मजिज्ञासायां ब्रह्मजिज्ञासोपपत्तिक ब्रह्मविचारे सम्यक् प्रवृत्तः मुमुक्षुस्तु कर्मचोदनां प्रवृत्तकर्मविधिं नैवाद्रियेत ॥ ४ ॥

किञ्च मुमुक्षुर्यमान् अहिंसादीन् अभीक्ष्णं पौनःपुन्येन सेवेत नियमान् शौचादीन् कांश्चिन्मदाराधनयोग्यतासम्पादनादौ । ननु वारं वारं श्रीमन्मुखतो मया श्रुतं मदाश्रयः मत्पर इति तत्कथं त्वां विजानीयान्मुमुक्षुरत आह । मदाभिज्ञमिति । मदात्मकमात्मनो मदधीनस्थितिप्रवृत्तिज्ञातारमित्यर्थः ॥ ५ ॥

उक्तलक्षणाद्गुरोः शिष्यलक्षणकथनपूर्वकं ब्रह्मविद्योत्पत्तिप्रकारमाह । अमानीति सप्तभिः । निर्ममः देहगेहादौ ममताशून्यः गुरौ हरौ तु दृढसौहृदः असत्वरः अचपलः अमोघवाक् सत्यवचनः ॥ ६ ॥

किञ्च जायादिपुत्राप्तिभिः आत्मनोऽर्थे अथ उपयोगिदेहनिर्वाहं सर्वेषु समानमिव पश्यन् गुरुमुपासीतेत्यन्वयः ॥ ७ ॥

तथा भेदात्मधीरित्यत्र देहविलक्षण आत्मा सूचितस्तमुपपादयति । विलक्षण इति । आत्मा जीवः द्रष्टा चिता दृक् स्वप्रकाशः दृश्यात्प्रकाश्यात्स्थूलात्सूक्ष्माच्च देहाद्विलक्षणः तत्र दृष्टान्तः यथाग्नि दाह्यात्प्रकाश्याच्च दारुणः काष्ठात् दाहकः प्रकाशकोऽग्निरन्यस्तद्वत् ॥ ८ ॥

---

भाषा टीका ।

श्री भगवानुवाच ॥

श्री भागवत पञ्चरात्रादिकों मे मेरे कहे हुवे स्वधर्मों मे सावधान हो कर रहे मेराही भरोसा रखै निष्काम हो कर वर्णाश्रम धर्मों के अनुकूल आचारों को करा करे ॥ १ ॥

निर्मल चित्त होकर देखै कि विषयाभिलाषी पुरुषों के जितने आरम्भ हैं वे सब विषयों में यथार्थ विचार करने से सब विपरीत होजाते हैं सुखके बदले सब प्राणियों को दुःख ही मिलता है ॥ २ ॥

सोते हुवे पुरुष को जैसे विषयों का देखना जैसे स्मरण करने वाले का मनोरथ नाना रूप होने से निष्फल होता है तैसे ही गुणों में भेद नाना प्रकार की वासना वाले पुरुषों के भी मनोरथ व्यर्थ ही हैं ॥ ३ ॥

मेरे में तत्पर पुरुष तो निवृत्त कर्मों का सेवन करे प्रवृत्त कर्मों को छोड देवै भगवद्भक्ति के विचार में प्रवृत्त होने पर काम्य कर्मों की विधिका बड़ा आग्रह न करे ॥ ४ ॥

यम नियम दोनों आगे कहेंगे तिनमें से यमों को तो निरन्तर सेवन करे नियमों को तो हमारे में तत्पर रहने से कुछ कुछ करता रहे मेरे स्वरूप को जानने वाले शान्त स्वरूप गुरुको मेरा स्वरूप ही के बरोबर माने ॥ ५ ॥

गुरु सेवा के समय में अपना मान नहीं चाहै किसी के शुभ कर्मों मे द्वेष नहीं करे आलस्य न रखै पदार्थों पर ममता न रखै सब के साथ सुहृदपना रखै धर्म कार्यों में व्यग्र न होवे अर्थ की जिज्ञासा करे किसी की निंदा न करे व्यर्थ भाषण नहीं करे ॥ ६ ॥

स्त्री पुत्र घर खेत स्वजन धनादिकों में उदासीन होकर दुःख सुख में अपने सरीर की सम दृष्टि रख कर देखा करे ॥ ७ ॥

आत्मा तो इस स्थूल सूक्ष्म दोनों देहों से भिन्न है इनका देखने वाला है स्वयं प्रकाश है जैसे कि काष्ठ का अग्नि जलाते हुवे काष्ठ से जलाने वाला प्रकाशक भिन्न ही होता है ॥ ८ ॥

निरोधोत्पत्त्यणुबृहन्नानात्वं तत्कृतान् गुणान् ।
अन्तः प्रविष्ट आधत्ते एवं देहगुणान् परः ॥ ९ ॥
योऽसौ गुणैर्विरचितो देहोऽयं पुरुषस्य हि ।
संसारस्तन्निबन्धोऽयं पुंसो विद्याच्छिदात्मनः ॥ १० ॥
तस्माज्जिज्ञासयाऽऽत्मानमात्मस्थं केवलं परम् ।
सङ्गम्य निरसेदेतद्वस्तुबुद्धिं यथाक्रमम् ॥ ११ ॥
आचार्योऽरणिराद्यः स्यादन्तेवास्युत्तरारणिः ।
तत्सन्धानं प्रवचनं विद्यासन्धिः सुखावहः ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनेनैव दृष्टान्तेन नित्यत्वानादित्वविभुत्वैकत्वादयोऽपि सिध्यन्तीत्याह । निरोधेति । यथा दारुष्वन्तः प्रविष्टोऽग्निस्तत्कृतान्नाशादीन्प्राप्नोति न तु स्वतो नाशादिमान् एवं देहगुणाननित्यत्वादीन् देहात्परो नित्यादिस्वरूपोऽप्यात्माऽनुभवति ततश्च नित्यत्वादिभिरपि वैलक्षण्यमात्मनस्त्वमिति भावः ॥ ९ ॥

नन्वग्निदारुसंयोगात्तद्धर्मभाक्त्वं घटते आत्मनस्त्वसङ्गत्वात्कथं देहेन तद्धर्मैर्वा सम्बन्धः सम्बन्धे वा कुतस्तन्निवृत्तिस्तत्राऽऽह। योऽसाविति । पुरुषस्येश्वरस्याधीनैर्मायागुणैर्योऽसौ सूक्ष्मोऽयं च स्थूलो देहो विरचितः पुंसो जीवस्यायं संसारस्तन्निबन्धनस्तदध्यासकृतः हि यस्मादेवं तस्मादात्मविद्या तन्निवर्तिकेत्याह । आत्मनो विद्या विज्ञानं तस्य छित् छेत्री भाच्छिदिति वा पदच्छेदः ॥ १० ॥

यस्मादेवं तस्माज्जिज्ञासया विचारेण आत्मस्थमात्मनि कार्यकारणसंघात एव स्थितं सम्यग्ज्ञात्वा एतदेतस्मिन् देहादौ वस्तुबुद्धिं स्थूलसूक्ष्मक्रमेण निरसेत् त्यजेत् ॥ ११ ॥

गुरोर्लब्धा विद्या अविद्यातत्कार्यनिरसनक्षमेति स्फुटीकर्तुं विद्योत्पत्तिमग्न्युत्पत्तिरूपेण निरूपयति । आचार्य इति । आद्याऽधरः तत्सन्धानं तयोर्मध्यमं मन्थनकाष्ठम् प्रवचनमुपदेशः विद्या तु सन्धिः सन्धौ भवम्नग्निरिव तथाच श्रुतिः "आचार्यः पूर्वरूपम् अन्तेवास्युत्तररूपम् विद्या सन्धिः प्रवचनं सन्धानमि"ति ॥ १२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

अनेनैव वह्न्यात्मकेन तत्कृतान् दारुलक्षणोपाधिकृतान् ततश्च नाशादेर्देहोपाधिकत्वे सति । स्वरूपधर्मैर्नित्यत्वादिभिरित्यादिना अनादित्वादिपरिग्रहः । वैलक्षण्यात् देहादेः सकाशाद्धि-दृग्लक्षणत्वादात्मत्वं भिन्नत्वमित्यर्थः ॥ ९ ॥

तद्धर्मभाक्त्वम् । दारुधर्मनाशादिमत्त्वम् । तन्निवृत्तिः देहतद्धर्मसम्बन्धनिवृत्तिः सूक्ष्मः सप्तदशोपाध्यात्मकः तदुक्तं श्रीशङ्कराचार्येण "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनमिति । अयं प्रत्यक्षतो दृश्यमानः संसारो जन्ममरणलक्षणः तदध्यासकृतः देहद्वारोपकृतः । तस्मात् संसारस्य देहद्वयोपाधिकत्वात् । आत्मवर्त्तीं स्वस्वरूपज्ञानं तन्निवर्त्तिका संसारनाशिका तस्य संसारस्य ॥ १० ॥

यस्मादेवं संसारस्याध्यासकृतत्वम् ॥ ११ ॥

अविद्याऽज्ञानं तत्कार्यं गुणादि तन्निरसनक्षमा तथाच विद्याया अग्न्युत्पत्तिरूपकत्वे प्रमाणं श्रुतिः पूर्वरूपमधःकाष्ठं अन्तेवासी शिष्यः उत्तररूपमुपरि काष्ठं विद्या ज्ञानं सन्धिः सन्धौ जातोऽग्निः प्रवचनमुपदेशः सन्धीयते मध्यसन्धौ स्थाप्यते इति सन्धानं मध्यममन्थनकाष्ठम् ॥ १२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

निरोधेति । दारुमनुप्रविष्टोऽग्निः उत्पत्तिं विनाशमणुत्वं बृहत्त्वमित्येवं रूपं नानात्वं तत्कृतान् गुणान् बहुलत्वाविरलत्वादीन् आधत्ते आसमन्ताद्धत्ते एवं देहात्परो जीवोऽपि देहमनुप्रविष्टो देहगुणान् धत्त इत्यर्थः ॥ ९ ॥ १० ॥

एतद्वस्तुबुद्धिं एतस्मिन्नुपादेयबुद्धिम् ॥ ११-१२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तर्हि देहान्यस्यात्मनः कथं हतोऽयमुत्पन्नोऽयं कृशोऽयं स्थूलोऽयमिति देहसामानाधिकरण्येन प्रतीतिरित्यत्राह । निरोधेति । यथा दाह्यं दार्वनुप्रविष्टोऽग्निर्निरोधं विनाशमुत्पत्तिमणुत्वं बृहत्त्वमित्येवं रूपं दारुगतं नानात्वं तत्कृतान् गुणान् बहुलत्वाविरलत्वादीनाधत्ते आसमन्तात् धत्ते एवं देहात्परो जीवोऽपि देहमनुप्रविष्टो देहगुणानाधत्ते अनाद्यज्ञानप्रयुक्तदेहतादात्म्याभिमानेन तत्समानधर्मतया प्रतीयत इति भावः ॥ ९ ॥

न केवलं देहगुणाधानमेव देहानुप्रवेशप्रयुक्तमपि तु कृत्स्नोऽपि संसारो देहप्रयुक्त एवेति वदन् तन्निवृत्त्युपायं चाह । योऽसाविति । गुणैः प्राकृतैः तत्परिणामात्मकैः पृथिव्यादिभिः पुरुषस्य जीवस्य योऽसौ देवमनुष्यादिरूपो देहो विरचितः हीत्यस्य नात्र विवाद इति भावः । तन्निबन्धनस्तद्देहप्रयुक्त एवायं संसारः पुंसस्तस्य देहिनः छित् संसारच्छेत्री आत्मनः परमात्मनो विद्या उपा-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सता चिदात्मन इति पाठे चिद्यादिति छेदः चिदात्मनः ज्ञानस्वरूपस्य पुंसो जीवस्यायं संसारः तन्निबन्धन इति विद्यात् जानीयात् इतीतिशब्दाध्याहारेण सम्बन्धः ॥ १० ॥

यस्मादेवं तस्माज्जिज्ञासया वेदान्तार्थविचारेणात्मस्थं जीवान्तरात्मतया स्थितमात्मानमन्तरात्मानं केवलं हेयप्रतिभटं परं परमपुरुषं सङ्गम्य गत्यर्थो बुद्ध्यर्थः समित्येकीकारे "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इत्युक्तन्यायेन जीवशरीरकत्वेन तद्विशेषणतया विशिष्टमेकं विविच्येत्यर्थः ॥ एतद्वस्तुबुद्धिमेतस्मिन् देहतदनुबन्ध्यादौ उपादेयत्वबुद्धिं यथाक्रमं निरस्येत् तावद्देहे ततो जायापत्यादिषु इत्येवं क्रमेण निरस्येदित्यर्थः । जिज्ञासया सङ्गम्येत्यनेन विचाराद्वेदनोत्पत्तिरुक्ता तथा च श्रूयते "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति ॥ ११ ॥

तदेवाग्न्युत्पत्तिरूपकेण दर्शयति । आचार्य इति । आद्योऽरणिरधरारणिरन्तेवासी शिष्यः उत्तरारणिः तयोर्मध्ये मन्थनकाष्ठं प्रवचनमुपदेशः वेदान्तार्थविचार इति यावत् विद्या वेदना तु सन्धिः सन्धौ भवः अग्निरग्नि तथा च श्रुतिः "आचार्यः पूर्वरूपमन्तेवास्युत्तररूपं विद्या सन्धिः प्रवचनं संधान"मिति ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्राप्तस्य हि प्रतिषेध इति न्यायादनयोरभेदशङ्कायाः किं बीजमत्राह । निरोध इति । यथा जीवो निरोधादिरूपस्तत्कृतान् देहकृतान् गुणानाधत्ते एवं परोऽपि देहमनुप्रविष्टो देहगुणानाधत्त इत्यन्वयः । निरोधो मरणमणुत्वं बृहत्त्वं नानात्वं पुनरादिनानाजातिविशिष्टत्वमनयोर्विलक्षणयोरज्ञानं बीजमित्यर्थः ॥ ९ ॥

इदमेवाज्ञानं संसारकारणमित्याह । य इति । योऽसौ सत्त्वादिगुणैर्विरचितो देहः अयं पुरुषस्य जीवस्यार्थे हि यस्मादविद्यास्थितात्मनः अविद्यायामज्ञाने स्थितमनसः पुंसोऽयं संसारस्तन्निबन्धनः देहाभिमाननिमित्तकः ॥ १० ॥

अदेहधर्मवान्विष्णुर्देहधर्मवदीक्षते ।
जीवस्त्वदेहधर्मोऽपि परतो देहधर्मधान् ॥
स्वयं स्वतनविमानः स्वज्ञानामेव दर्शयेत् ।
विष्णुर्जीवस्त्वभिमानी जीवन्मुक्तिपदं व्रजेदिति ॥ —

वचनाद्विष्णोर्देहधर्मवदाभानमज्ञानां न तु ज्ञानिनां जीवस्य स्वतो देहधर्मरहितस्यापि देहाभिमानादिति विवेकलक्षणो विचारः कर्तव्य इत्युपसंहरति । तस्मादिति । उक्तप्रकारेण जिज्ञासया आत्मस्थं देहान्तःस्थितं केवलं गुणगदेहिभोग्यगुणरहितमात्मानं नारायणं परं विलक्षणं सङ्गम्य ज्ञात्वाऽस्य जीवस्य वस्तुबुद्धिमन्यबुद्धिं निरस्येत्यजेत् कथं यथाक्रमं जिज्ञासया ब्रह्मादिजीवराशेः यथा स्वरूपतारतम्यं विचार्य ज्ञात्वा परब्रह्ममात्रबुद्धिं त्यजेदित्यर्थः—

अपरत्वाच्छक्तमुद्दिष्टं शक्तं बहिरिव भगवये ।
तस्माद्विष्णुः परं ब्रह्म वस्तुशब्दोदितं सदेति ॥

इत्यक्षरवचनात् ॥ ११ ॥

ननु ज्ञानोत्पत्त्यर्थं गुरूपासितः कर्तव्येत्युक्तं तत्र कथङ्कारं ज्ञानमुत्पद्यते येन जीवस्य ब्रह्ममात्रबुद्धित्यागस्स्यादित्यत-स्तत्प्रकारमाह । आचार्य इति ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किञ्च दारुधर्मा नाशादयो वह्नौ यथा भ्रमादारोप्यन्ते एव न तु ते तत्र वर्तन्ते एवमेव देहधर्मा अपि नाशादय आत्मनीत्याह । निरोधेति । निरोधो नाशः दारुषु प्रविष्टोऽग्निस्तत्कृतान्नाशादीन् गुणान् पुरुषभ्रमादेव धत्ते एवं देहगुणान् देहधर्मान् नाशादीन् देहात् पर आत्मा धत्ते यथा अग्निरेव उत्पन्नोऽल्पो महान् नानाकार इत्युच्यते तथैवात्मा नष्ट उत्पन्न इत्यादीति अत्र जीवात्मनो नानात्वे वाच्येऽपि एकस्यापि जीवस्य देवादियुंगपत् क्रमेण नानादेहगतत्वेन यन्नानात्वं तत्तद्वास्तवमेवेति ज्ञेयम् ॥ ९ ॥

नन्वग्नेर्दारुसंयोगात्तद्धर्मसंगात्कथं घटते आत्मनस्त्वसङ्गत्वात् कथं देहेन तद्धर्मैर्वा सम्बन्धः सम्बन्धे वा कुतस्तन्निवृत्तिरित्यत आह । योऽसाविति । पुरुषस्येश्वरस्याधीनैर्मायागुणैर्योऽसौ सूक्ष्मो देहः अयं च स्थूलो देहो विरचितः पुंसो जीवस्यायं संसारस्तन्निबन्धनस्तत्सम्बन्धाभावेऽपि तदध्यासकृतः तदीयात्मस्वरूपाच्छादिका अविद्यया निष्पादितो यो देहाध्यासरूपो निबन्धनस्तत्कृत इत्यर्थः । यस्मादेवं तस्मात्तत्प्रभावादेव विद्या तदीयैव विद्याशक्तिश्छित् तद्बन्धच्छेत्री आत्मनो जीवस्य ॥ १० ॥

तस्माज्जिज्ञासया विचारेण आत्मनि स्थूलसूक्ष्मदेहान्तर एव स्थितमात्मानं परं केवलमसङ्गिनम् अतिशयेन सङ्गम्य ज्ञात्वा एतस्मिन् देहबन्धे वस्तुबुद्धिं यथाक्रमं साधनबाहुल्यतः क्रमेण निरस्येत् त्यजेत् ॥ ११ ॥

गुर्वाश्रया विद्यैव अविद्यातत्कार्यनिरसनक्षमेति स्पष्टीकर्तुं विद्योत्पत्तिमग्न्युत्पत्तिरूपकेण निरूपयति । आचार्य इति । आद्य अधरः तत्सन्धानं तयोर्मध्यम मन्थनकाष्ठं प्रवचनमुपदेशः विद्या तु सन्धिः सन्धौ भवोऽग्निरिव तथा च श्रुतिः "आचार्यः पूर्वरूपम् अन्तेवास्युत्तररूपं विद्या सन्धिः प्रवचनं सन्धान"मिति ॥ १२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कथं तर्हि देवदत्तो जातो मृतश्चेत्यादिप्रतीतिरत्राह । निरोधेति । यथा दारुष्वन्तः प्रविष्टोऽग्निर्निरोधादिगुणास्पृष्टोऽपि तत्कृतान् गुणान् आधत्ते तद्वत् ॥ ९ ॥

किञ्च पुरुषस्य परमेश्वरस्य नियम्यभूतैर्गुणैः स्वकार्यद्वारा योऽसौ सूक्ष्मः अयं च स्थूलो देहो विरचितस्तन्निबन्धनस्तद्धेतुकः पुंसो जीवस्यायं जन्ममरणप्रवाहलक्षणः संसारः सृष्टश्च बीजाङ्कुरवदनादिः वृक्षधर्मेत्युक्तत्वात् संसारनिवृत्तिस्तु परविद्ययेति कथम्भूतस्य पुरुषस्य अविद्याच्छिदात्मनः "आत्मा वा अरे द्रष्टव्य" इत्यादिश्रुतिप्रोक्तस्य परमात्मनो विद्यया अविद्याच्छेदकत्वस्वाश्रितगुणरचितदेहनिबन्धनसंसारनिवृत्तिरितिनिष्कर्षः ॥ १० ॥

यस्मात्परविद्यैव संसारच्छेदिनी तस्मादुपायान्तरं योगशास्त्रादिप्रोक्तं विहाय केवलं परमात्मानमात्मन्यंशभूते जीवे व्याप्तत्वेन स्थितमंशिनं जिज्ञासया वेदान्तविचारेण सङ्गम्

वैशारदी साऽतिविशुद्धबुद्धिर्धुनोति मायां गुणसंप्रसूताम् ।
गुणांश्च संदह्य यदात्ममेतत्स्वयं च शाम्यत्यसमिद्यथाऽग्निः ॥ १३ ॥
अथैषां कर्मकर्तॄणां भोक्तॄणां सुखदुःखयोः ।
नानात्वमथ नित्यत्वं लोककालागमात्मनाम् ॥ १४ ॥
मन्यसे सर्वभावानां संस्था ह्यौत्पत्तिकी यथा ।
तत्तदाकृतिभेदेन जायते भिद्यते च धीः ॥ १५ ॥
एवमप्यङ्ग ! सर्वेषां देहिनां देहयोगतः ।
कालावयवतः सन्ति भावा जन्मादयोऽसकृत् ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सम्यक् ज्ञात्वा एतद्वस्तुबुद्धिम् एतस्मिन्देहगेहादौ आत्मात्मीय-बुद्धिं प्रथमं देहे आत्मबुद्धिं तदनन्तरं गेहादौ आत्मीयबुद्धि-मित्येवं क्रमेण निरस्येत् त्यजेत् ॥ ११ ॥

जिज्ञासया परमात्मानं सङ्गमयतीति विद्योत्पत्तिहेतुका नामेना-ऽप्युत्पत्तिरूपकेण स्फुटीकरोति । आचार्य इति । आचार्यो मद्-भिन्नो गुरुः आद्योऽरणिः स्यात् अन्तेवासी शिष्यः उत्तरोऽरणिः तन्मध्ये मध्यमं काष्ठं प्रवचनमुपदेशः विद्या तु सुखं परमा-नन्दरूपमावहति प्रापयतीति तथा सन्धिः सन्धौ भवत-ग्निरिव यथा नित्य एवाग्निरुत्पद्यते तथा ज्ञातृत्वलक्षणं नित्यं ज्ञानं ब्रह्मविद्यात्मना गुरुप्रसादादुत्पद्यते इत्यर्थः । अनेन "आचार्यः पूर्वरूपमन्तेवास्युत्तररूपं विद्या सन्धिः प्रवचनं सन्धान"मिति श्रुतिरुपबृंहिता भवति ॥ १२ ॥

भाषा टीका ।

अग्नि जैसे काष्ठ में रहने से उसके गुण छोटे बड़े पन उत्पत्ति नाश आदि कों को प्राप्त होता है तैसेही देह से पर आत्मा भी देह के गुणों को प्राप्त होता है वस्तुतः वह भिन्न ही है ॥ ९ ॥

गुणों से रचा हुआ जो यह पुरुष का देह है तिसीके हेतु से जीव को संसार होता है आत्मा के इस संसार को निवर्तन करने वाली ब्रह्म विद्या ही है ॥ १० ॥

तिस हेतु से आत्मा का विचार करके देह में स्थित आत्मा को तिससे पर केवल ऐसा जान कर इस देह में जो यथार्थ बुद्धि है तिसको क्रम से छोड़ देवै ॥ ११ ॥

ब्रह्म विद्या रूप अग्नि के उत्पत्ति करने में आचार्य नीचे का अरणि काष्ठ है शिष्य ऊपर का अरणि काष्ठ है उप-देश करना उसका मध्यम काष्ठ है विद्या जो है सो तो अग्नि है ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अग्निसादृश्यमेवाऽऽह । वैशारदीति । विशारदोऽतिनिपुणस्तेन शिष्येण प्राप्ता तेन गुरुणोपदिष्टा वा अतिविशुद्धा बुद्धिर्गुणा-त्मकरूपां मायां निवर्तयति यदात्मकमेतद्विश्वं आत्मनः संसृ-तिनिमित्तं तान् गुणांश्च दग्ध्वा स्वयमपि शाम्यति ततः तस्मात्कार्याकारणात्मविद्यया च उपशमनाभावात्साक्षात्परमानन्दरूपो भव-तीति ॥ १३ ॥

एवं तावत्स्वप्रकाशज्ञानस्वरूपो नित्य एक एवाऽऽत्मा कर्तृ-त्वादयश्च धर्मास्तस्य देहोपाधिकाः नतु स्वाभाविका इति संसारोऽयं मायामयं अतः सर्वतो विरक्तः स्वात्मध्यानेन मुच्यत इत्युक्तं मिथ्यात्वाः स्थूलसूक्ष्मादित्यादिना तत्र मीमांसकमतेन निर्गी-तेऽस्यार्थे मतान्तरविरोधेन सन्देहो मा भूदिति तन्मतं निराकर्तुमु-पन्यस्यति । अथेति । अथ मन्यसे एषां जीवात्मनां कर्मकर्तॄणां सुखदुःखयोर्भोक्तॄणां च नानात्वमस्ति एवं हि जैमिनीया मन्यन्ते अहंप्रत्ययविषय एवात्मा स च प्रतिशरीरं भिन्नः कर्तृभोक्तृरूपश्च नतु तत्स्वरूपभूतो निर्विकार एकः परमात्मा-ऽस्तीति यथाऽऽहुः—

अहंप्रत्ययविषयो ज्ञातव्यः सर्ववेदिभिरिति ॥

तथा वैराग्यं च न सम्भवति तथाहि । भोगस्थानानामनित्यत्वाद्वा वैराग्यं भवेत् भोगकालस्य वा तदुपायधर्माधर्मज्ञापकागमस्य वा भोक्तुरात्मनो वा तत्सर्वमेतन्नास्तीत्याह । अथ नित्यत्वं लोकका-लागमात्मनां मन्यसे इति ॥ १४ ॥

न च सर्वभोग्यानां विच्छेदः स्यात्मायामयत्वाद्वा वैराग्यं स्यादित्या-ह । सर्वभावानां स्रक्चन्दनादीनां संस्था स्थितिरौत्पत्तिकी प्रवाहरूपेण नित्या तथा श्रुतिः न कदाचिदनीदृशं जगदिति मतस्तत्कर्ता कश्चिदीश्वरो नास्तीति भावः । किं च यथा यथावत् न तु मायामयीत्यर्थः । नन्वाऽऽत्मनः स्वरूपभूतं नित्यमेकं ज्ञानमस्ती-त्याह । तत्तदिति । घटपटाद्याकारभेदेन धीर्जायते अतोऽनित्या भिद्यते च अयं गूढोऽभिप्रायः नहि नित्यज्ञानरूप आत्माऽपि तु ज्ञानप-रिणामवान् न च विकारित्वेनानित्यत्वप्रसङ्गः यथाऽऽहुः—

विक्रिया ज्ञानरूपास्य न नित्यत्वं विरोत्स्यते ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

इति अतो मुक्तादिन्द्रियादिरहितस्य परिणामासम्भवाज्जडत्वेन तत्प्राप्तेरपुरुषार्थत्वात्प्रवृत्तिरेव श्रेयसी न निवृत्तिरिति ॥ १५ ॥

तत्र तावत्तदुक्तमङ्गीकृत्य वैराग्योपपादनाय प्रवृत्तिमार्गस्याऽनर्थहेतुत्वं प्रपञ्चयति । एवमपीत्यादिना । लोकानां लोकपालानामित्यतः प्राक्तनेन ग्रन्थेन । अङ्ग हे उद्धव ! कालावयवतः संवत्सरादिरूपात् ॥ १६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

गुणसंप्रसूतां गुणकार्यरूपां मायां देहेन्द्रियादिकं यदात्मकं ये गुणा आत्मा स्वरूपं यस्य तदेतद्विश्वं तस्मात् मायादिकं नाशयित्वा विद्याया अपि शान्तत्वात्, कार्येण देहेन्द्रियादिना कारणेन अज्ञानेन विद्यया च वाक्यजैक्यज्ञानेन व्यवधानाभावात् स्वरूपप्राप्तौ प्रतिबन्धाभावात् तदुक्तमभियुक्तैः—

> ऐक्यज्ञानं यदा जातं महावाक्येन चात्मनः ।
> तदा विद्या स्वकार्यैश्च नश्यत्येव न संशयः ॥

इति ॥ १३ ॥

एवं पूर्वोक्तप्रकारेण नान्वर्थेति वाक्यालङ्कारे आक्षेपिता स्वहृदिस्थुक्तः स्वप्रकाशज्ञानरूपः निरोधात्परमाणुवृद्ध्यादित्युक्तेर्नित्य इत्यादि श्रुतिसमन्वयेन श्रुतीनां तात्पर्यवृत्त्या ब्रह्मणि पर्यवसानेन अर्थे परमात्मस्वरूपे मतान्तरविरोधेन जैमिनिमतविप्रतिपत्त्या तन्मतं जैमिनिमतम् उद्भावयति अभ्युपगमेनोत्थापयति । अथेति युग्मकम् । अथेति मतान्तरोपन्यासे अहं ब्राह्मण इत्यादिप्रतीत्या भेद एव ननु ज्ञानैकरूपः अतएव प्रतिशरीरं भिन्नः यागादिकर्तृत्वात् तत्फलभोक्तृत्वात् कर्तृभोक्तृरूपश्च वेदान्तमतं निराचष्टे । नात्वेति । तत्स्वरूपभूतक्लेशानां जीवानां कल्पितानामधिष्ठानत्वेन मूलस्वरूपभूतः निर्विकारज्ञानस्वरूपः एकः परमात्मा नास्ति यथाहुर्जैमिनीयाः अहम्प्रत्ययेति अहमितिप्रत्ययो ज्ञातृविषय एव यो हि परामृशति स स्वात्मानमहमित्येव परामृशति तेनाहंप्रत्ययस्य ज्ञातृगोचरत्वं निःसंशयमेव यत्तु शरीरस्य स्थूलोऽहं कृशोऽहमित्यादिज्ञानसमानाधिकरण्यादहंप्रत्ययविषयत्वं तदत्यन्तसन्निकृष्टयोरेकत्वभ्रान्त्या उपचारप्रतीतिवद्भास्वरायःपिण्डप्रतीतिवच्च सङ्गमनीयं ममेदं शरीरं कृशमिति षष्ठ्याऽस्मदर्थस्यात्मनः शरीरव्यतिरेकेण विविक्ततः प्रतीतेः शरीरस्य चेदहङ्कारास्पदत्वप्रतीतेः तथा स्वर्गकामो यजेतेत्यादिश्रुतयोऽपि शरीरातिरिक्तं परलोकभोगयोग्यं कर्तारमन्तरेणानुपपद्यमाना एतमाक्षिपन्ति ताभिराक्षिप्तं साक्षाद्वेदोपनिषदः समर्पयन्ति "अविनाशी वा अरे ऽयमात्माऽनुच्छित्तिधर्मे"त्यादयः इति सिद्धः शरीरातिरिक्तो मानसप्रत्यक्षरूपाहंप्रत्ययगम्यो ज्ञातेति तस्य ज्ञातृत्वं ज्ञेयत्वं च सिद्धं नचैकस्य कर्तृत्वं कर्मत्वञ्च स्वात्मनि क्रियाविरोधात् कथं सम्भवतीति वाच्यम् आत्मनः स्वकर्तृकायामेव क्रियायां कर्मत्वव्यवहारस्य लोके वेदे च दृष्टत्वात् तत्र लोके तावज्ज्ञाप्य एव स्वसंवेद्यः सम्भवतीति कर्मत्वाभिप्रायो प्रयोगः वेदेऽप्यात्मानमुपासीतात्मानं वेदात्मा ज्ञातव्य इत्याद्यनेकशः प्रयोगः तस्मान्मानसाहंप्रत्ययविषय एवात्मेति सिद्धं तथाच श्रुतिः समानसीन आत्मा जनानामिति सर्वदैवाहमित्ययं भावः विषयज्ञानवेलायामपि न विषयज्ञानकर्तृतयात्मावभासः किन्तु मानसाहंप्रत्ययकर्मतयैव किं पुनः स्वरूपज्ञानवेलायामिति एवं सिद्धान्त्युक्तं ज्ञानरूपत्वादिकं प्रत्याक्षिप्य वैराग्यमपि तदुक्तमाक्षिपति तथेति तथाहि वैराग्यासम्भवमेव दर्शयति भोगकालस्य वा भोगकालस्यापि अनित्यत्वाद्वैराग्यं भवेत् तदुपायेति तस्य स्वर्गादिभोगस्योपायभूतानि यानि यागादिकर्माणि तेषां बोधकस्यागमस्य स्वर्गकामो यजेत वृष्टिकामः कारीर्या यजेतेत्यादिशास्त्रस्याप्यनित्यत्वाद्वैराग्यं भवेत् तस्येतदिति एतत् भोगस्थानादीनामनित्यत्वन्तु नास्तीत्यर्थः । भोग्यानां स्रक्चन्दनवनितादीनां विच्छेदादनित्यत्वान्मायामयत्वान्मिथ्यात्वाद्वा वैराग्यं स्यात्तदपि नेत्याह । सर्वभावानामिति । तथा च जगतो नित्यत्वं जैमिनीया वदन्ति न कदाचिदिति जगत् कदाचिदपीदृशं नेति न किन्त्वीदृशमेवेति सृष्टिप्रलयाभावो दर्शितः अतः सर्वभावानां नित्यत्वात् विक्रियेति अस्यात्मनो ज्ञानरूपा विक्रिया नित्यत्वे न विरोत्स्यते विरोधं न प्राप्नोति यथा सूर्यो धूमाद्युपाधिं प्राप्य रश्मिद्वारा मेघरूपेण परिणमते स्वरूपेण तु नित्य एव तिष्ठति तद्वदिति ज्ञेयं तत्प्राप्तेर्मोक्षप्राप्तेः ॥ १४॥१५ ॥

तत्र मीमांसकमते तदुक्तम् उद्धवोक्तम् एवमपि गूढाभिप्रायेण मीमांसकमतस्वीकारेऽपि देहयोगतः देहसम्बन्धात् भावाः विकाराः ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वैशारदी विशारदा एतच्छरीरं यदात्मकं यन्निबन्धं स्वयं च शाम्यति उपासनारूपध्यानात्मिका प्रतीतिः मुक्तौ नास्तीत्यर्थः ॥ १३ ॥

सर्वभावानां देवमनुष्यादीनां लोककालागमात्मनां देशकालागमस्वभावानां नानात्वनित्यत्वयोः नित्यत्वं प्रतीपयति । संस्थेति । संस्था विनाशः औत्पत्तिकी जन्मप्रयुक्ता यथा तदपि मन्यसे इत्यर्थः । अथ देवादिनानात्वस्य देहगतत्वमाह तत्रवाकृतीति । देवाद्याकारभेदेन जीवा जायन्ते देवोऽहं मनुष्योऽहमिति तत्तदाकाराभिमानिनी धीश्च भिद्यत इत्यर्थः ॥ १४ ॥ १५ ॥

तत्रैव कालकृतं भेदान्तरमाह । एवमपीति । तत्रापि देवाद्याकारभेदं चेत्यर्थः ॥ १६—१८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवं वेदान्तार्थविचारादिक्रमेण उत्पन्नाया वेदनायाः साक्षात्प्रकृतितत्कार्यसम्बन्धनिवृत्तिसाधनत्वं यावत्प्रारब्धमङ्गमनुवर्तनीयत्वञ्चाह । वैशारदीति । या विशारदेन निपुणेन शिष्येण प्राप्ता तेन गुरुणोपदिष्टा वाऽतिविशुद्धबुद्धिः सेति सम्बन्धः वेदनात्मिका

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अतिविशुद्धा बुद्धिर्गुणसंप्रसूतां गुणेभ्यः सत्त्वरजस्तमोभ्यः संप्रसूतां मायां चित्रितां संसृतिं धुनोति तथा एतद्देहसम्बन्ध्यादिकं यदात्मं यदात्मकं यद्गुणपरिणामात्मकं तांश्च गुणांस्तन्मूलपुण्यापुण्यात्मककर्माणि च संदह्य स्वयं च शाम्यति उपायरूपा ध्यानात्मिका बुद्धिर्मुक्तौ नानुवर्तत इत्यर्थः। यावन्मुक्तिरहरहरनुवर्तनीयेति भावः। निवर्तिकाया यावन्निवर्त्यमेवानुवृत्तिरित्यत्र दृष्टान्तमाह। यथामिविति । यथाऽसौ सामर्थ्यरिन्धनोऽग्निर्दाह्याभावात्स्वयमेव शाम्यति तद्वत् ॥ १३ ॥

नानात्मकत्वाद्विफलस्तथा भेदात्मधीर्गुणैरित्यनेन देवमनुष्यादिशरीराणां तदुपभोग्यानां शब्दादिविषयाणां च नानात्मकत्वेन विफलत्वमुक्तं तत्र शङ्कते। अथेति द्वाभ्याम्। अथ ननु कर्मकर्तृणां काम्यकर्मानुष्ठितां तत्फलयोः सुखदुःखयोर्भोक्तृणामेषां देवमनुष्यादीनां काम्यकर्मफलस्य सुखस्य दुःखमिश्रत्वाभिप्रायेण दुःखशब्दः प्रयुक्तः लोकः सुखानुभवनतत्साधनानुष्ठानदेशः कालस्तत्कालः आगमः समीहितसाधनाद्यवबोधको वेदः आत्मा भोक्ता जीवस्तेषामिदं पूर्वोक्तभेदार्थयोरुपलक्षणं यद्यपि नानात्वमथापि नित्यत्वं ह्यथावितं मन्यस इति संबन्धः नहि कार्यत्वानित्यत्वादिकं नानात्वमनियतं जीवस्वरूपाणामीश्वरगुणानां च नानात्वेऽपि नित्यत्वादकार्यत्वाच्चेति भावः ॥ १४ ॥

नित्यत्वमेवोपपादयति। मन्यम इति। सर्वभावानां सर्वपदार्थानां संख्या विनाशः औत्पत्तिकी जन्मप्रयुक्ता हि अतो देशादीनां जन्मादर्शनात्तत्प्रयुक्ता संख्या च नास्तीति तेषां नित्यत्वमेवेत्यर्थः यथेत्यनेन संख्याया औत्पत्तिकत्वे भावाविदृष्टान्तोऽभिप्रेतः ननु देशादीनां नित्यत्वेऽपि भेदार्थयोरनित्यत्वं दृष्टमित्यत आह। तत्त्विति। तत्तदाकृतिभेदेन सत्त्वादिप्राकृतगुणप्रचुरतद्देवाद्याकारभेदेन जायन्ते जीवा इति शेषः। तेषामेवेषां कर्मकर्तृणां भोक्तृणां सुखदुःखयोरिति प्रकृतत्वात् भोक्तेषां बुद्धिः तत्तत्सत्त्वरजस्तमोगुणानुगुणतत्तत्फलतत्साधनतदाराध्यदेवतादिविषयतारूपेण भिद्यते अयंभावः नानात्वात्कार्यत्वादनित्यत्वाच्च देवाद्याकाराणां तदुपभोग्यार्थानां चापुरुषार्थत्वेन प्रवृत्तिकर्मतच्चोदनयोरत्यागानादरानुक्तौ तदनुपपन्नं देवाद्याकाराणामनित्यत्वेऽपि तदाकारभाजां जीवानां नित्यत्वादाकारपरंपरायास्तत्तदुपभोग्यविषयपरम्पराया अपि नित्यत्वाद्विषयानुभवदेशकालतत्साधनावबोधकागमानामपि तथात्वात्सर्वदा तत्तदभिलाषितविषयसाधनतत्फलानुभवशीलानां प्रवृत्तिकर्मपुरुषार्थसाधनमेवेति न तत्याग उचितः दुःखसाधनं तु त्यज्यत एव प्रतिकूलत्वात् नहि कश्चिदनुन्मत्त आत्मनि दुःखमुत्पादयितुमुत्सहत इति ॥ १५ ॥

तथापि प्रवृत्तिकर्मनिष्ठाप्रयुक्तदेवादिदेहसम्बन्धाः षड्भावविकारा दुःखगर्भा अवर्जनीया एवेति न प्रवृत्तिकर्म पुरुषार्थसाधनमित्यभिप्रेत्य शङ्कितं दूषयति। एवमपीति। अङ्ग हे उद्धव! एवमप्युक्तरीत्या प्रवृत्तिकर्मणः पुरुषार्थसाधनत्वोपपादनेऽपि सर्वेषां देहिनां देहसम्बन्धात्कालावयवतः कलाकाष्ठामुहूर्तादिसंवत्सरान्तेभ्यः कालावयवेभ्यो निमित्तेभ्यः पौनःपुन्येन जन्मादयो भावाः सन्त्येव जन्मादय इत्यादिशब्देन जरामरणादिसंग्रहः तदभाववर्जनीयं दुःखमिति भावः ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विद्यावहः सुखावहत्वं नित्यदुःखहेतुजीवब्रह्मैक्यबुद्धिशुष्कतर्कदाहेन नित्यानन्दनिदानत्वादिति भावेनाह। वैशारदीति। विविधं सारं सुखदुःखलक्षणं संसारं द्यतीति विशारदो विष्णुस्तस्य विद्यमाना वैशारदी सा अतिविशुद्धा बुद्धिः अपरोक्षबुद्धिः गुणसंप्रसूतिमयोग्यकामादिजननीं मायापिशाचधारितां जीवस्वरूपाच्छादिकां निरस्य परमाच्छादिकां विधुनोति उद्घाटयति अयोग्यकामादिगुणांश्च सन्दह्य एतद्दुःखादिकं यदात्म्यं यद्वा मायायाः स्वरूपाधीनं तादृशी स्वयं सा बाह्यान्तःकरणजा बुद्धिश्च तदन्तःकरणं च दग्ध्वा असमिद्धिरिन्धनोऽग्निरिव शाम्यति स्वरूपज्ञानेनैव स्वरूपमीश्वरादिकं चानुभवति मुक्ताविति शेषः "पिशाचधारिणी माया तूच्यते जीवगा सदा। दह्यन्ते तद्गुणाः सर्वे सा च प्रातिस्विकी नर" इति प्रमाणवचनादुक्तं युक्तम् अनेन बाह्यान्तःकरणं नश्यति स्वरूपान्तःकरणजन्यज्ञानेन स्वस्वरूपेश्वरादिकमनुभवतीत्येतत् सम्यक्तलावगतमतोऽन्यत्प्रमाणं वक्तव्यमितीय शङ्का—

बाह्यान्तःकरणाज्जन्यं ज्ञानं नश्यति मुक्तिगे ।
स्वरूपज्ञानतो भोगान् मुक्तो भुङ्क्ते यथेष्टतः ॥

इत्यनेन परिहर्तव्येति ज्ञातव्यम्—

एतच्छब्देन दुःखादिरपरोक्षतयोच्यते ।
कचिच्छ्रुत्वा कचिद्दृष्ट्वा कचिन्निन्द्यमितीर्यते ॥

इतिवचनात् एतच्छब्देन दुःखादिकमत्रोच्यत इति युक्तं तमसोऽहास्यनाशवत् भेदज्ञानविनाशादात्मैकत्वमेव न नानात्वमत एव तेषां नित्यत्वं च व्यावहारिकमेवेति तद्व्याख्यानं तदुत्तरग्रन्थविरुद्धत्वान्न विदुषां परितोषि सामञ्जस्यं भजत ॥ १३ ॥

तत्कथमत्राह। अथेति। एषामिति प्रत्यक्षं लोककालागमात्मनामित्यनेन भेदे प्रत्यक्षमनुमानमागमं च प्रमाणयति लोके काले आगमे वेदे चात्मा मतिर्येषां ते तथा तेषां लोककालवेदज्ञानामित्यर्थः। अनेन ज्ञानतारतम्यं च सूचितं तस्मात्पुण्यकर्मकर्तृणां मिश्रकर्मकर्तृणामत एव सुखदुःखमिश्रभोक्तृणामेषां नानात्वमथैषां नित्यत्वं च मन्यसे जानासि यदि त्वं तस्मान्न मया भेदसाधने प्रयतनीयमित्यतः आत्माभेदोऽनुपपन्न इति—

देहापेताश्च नित्याश्च वहवः सुखरूपिणः ।
उत्तमा जीवसंघास्तु नीचा ये नित्यदुःखिनः ॥

इत्यत अनित्यत्वं जनन सुखैकभोक्तृत्वं च युज्यते एवं व्यवस्था कस्मादिति तत्राह। सर्वभावानामिति। यथा सर्वेषां देवासुरमनुष्यादिजातिभिन्नानां भावानां जीवानां संख्या व्यवस्था योग्यता औत्पत्तिकी स्वाभाविकी हि यस्मात्तस्मात्तदाकृतिभेदेन देवासुरादिशरीरभेदेन तथा जायते जीवसंघस्तस्य धीश्चानिशं योग्यतानुसारेण भिद्यते अनेनाप्ययोग्यताधना भेदज्ञानेऽधिकार इतरेषामुभयेषां यथासम्भवमन्यत्प्रयुक्तं भवति ॥ १४—१५ ॥

ननु दृश्यमानत्वान्नित्यानामपि जन्मादिकमस्तु तन्मायामयमिति माशङ्कीत्याह। एवमपीति। एतमपि नित्यत्वेऽपि अत्र अनादिबद्धलक्षणसंसारे सर्वेषां देहिनां कालावयवतः रात्रिदिनादिघटिकादिषु कालावयवेषु देहयोगतः देहसम्बन्धेन जन्मादयो भावाः अभ्यक्रमन्ति प्रवाहतः सन्ति इत्यर्थः। देहापेतमनित्यत्वं जीवानामित्यतद्वाप्यनुसन्धेयम् ॥ १६ ॥

अत्रापि कर्मणां कर्तुरस्वातन्त्र्यं च लक्ष्यते ।
भोक्तुश्च दुःखसुखयोः को न्वर्थो विवशं भजेत् ॥ १७ ॥
न देहिनां सुखं किञ्चिद्विद्यते विदुषामपि ।
तथा च दुःखं मूढानां वृथाऽहंकरणं परम् ॥ १८ ॥
यदि प्राप्तिं विघातं च जानन्ति सुखदुःखयोः ।
तेऽप्यद्धा न विदुर्योगं मृत्युर्न प्रभवेद्यथा ॥ १९ ॥
को न्वर्थः सुखयत्येनं कामो वा मृत्युरन्तिके ।
आघातं नीयमानस्य वध्यस्येव न तुष्टिदः ॥ २० ॥
श्रुतं च दृष्टवद्दुष्टं स्पर्धाऽसूयाऽत्ययव्ययैः ।
बह्वन्तरायकामत्वात्कृषिवच्चापि निष्फलम् ॥ २१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मपरमात्मस्वरूपबोधरूपेण स्थितिरहित तस्मात्परमात्मानुभवाय निवृत्तिमार्गेण मुक्तिरेव सम्पादनीयेति मम मतम्। त्वन्तु तत्तदाकारभेदेन घटपटाद्याकारभेदेन धीर्जायते अत एवानित्या भिद्यते चेति मन्यसे ज्ञानपरिणामवादात्मेत्यङ्गीकारान्मुक्तावनिमित्तस्य परिणामासम्भवेन निर्धर्मकस्य निरीश्वरस्य अतस्य निष्फलत्वात् प्रवृत्तिरेव श्रेयसीति मन्यसे इति भावः ॥ १५ ॥

अथ पक्षं निराकरोति। तत्र यदुक्तं प्रवाहरूपेण भावानां नित्यत्वमतोऽपि वैराग्यं नोपपद्यते इति तत्राह। एवमिति। हे अङ्ग उद्धव! एवं प्रवाहस्य नित्यत्वेऽपि देहिनां पाञ्चभौतिकजरामरणादिदोषप्रस्तदेहवतां सर्वेषां कालावयवतः सम्वत्सरादिकालपरिच्छिन्ना एव स्रक्चन्दनादिभावाः सन्ति ननु स्वरूपेण नित्याः सन्तः सर्वेषु कालावयवेषूपतिष्ठन्ति प्रत्युतानित्या दुःखावहा भवन्तीत्यर्थः। किञ्च देहिनां देहविशेषसम्बन्धात्सन्ति ननु सर्वेषु देहेषु किञ्च नानादुःखावहजन्मादयोऽप्यसकृत्सन्ति अतो वैराग्यं युक्तमिति भावः ॥ १६ ॥

---

भाषा टीका ।

यह विद्या रूप वैशारदी बुद्धि अत्यंत निर्मल होने से गुणों से पैदा हुई माया को तथा इस संसार के कारण गुणों को दहन करके शांत होजाती है जैसे कि बिना लकड़ी का अग्नि शांत होजाता है ॥ १३ ॥

कदाचित् तुम कर्म करने वाले सुख दुःखों के भोगने वाले इनों को नाना भेद नित्य रहना तथा इनके लोक इन के काल इनके बोधक शास्त्रों को नित्य मानते हो ॥१४॥

सम्पूर्ण पदार्थों की स्थिति भी उत्पत्ति बरोबर मानते हो तिस तिस आकार के भेद से बुद्धियों का भी भेद है ऐसा मानते हो ॥ १५ ॥

हे उद्धव! ऐसा होने पर भी सब प्राणि मात्र के काल के अवयव से देह योग से सबके जन्मादिक बारंबार होते रहते हैं तिससे सब अनित्य हैं॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अत्रापीति। स्वातन्त्र्यपक्षे दुष्कर्मणो दुःखभोगस्य चाऽसम्भवादित्यर्थः ॥ १७ ॥

ननु ये सम्यक् कर्तुं जानन्ति ते सुखिन एव ये तु न जानन्ति त एव दुःखिन इति चेत्तत्राऽऽह। नेति। विदुषामपि क्वचित्सुखं न विद्यते तथा मूढानामपि दुःखं न विद्यते। अतो नायं कर्मकौशल्यात्सुखित्व इति तेषां केवलं वृथैवाहङ्कार इत्यर्थः ॥ १८ ॥

अङ्गीकृत्याप्याह। यदीति। तं योगमुपायं न विदुर्यथा साक्षान्मृत्युर्न प्रभवेत् ॥ १९ ॥

तथापि यावज्जीवं सुखं भविष्यतीति चेत्तत्राह। को न्विति। यतोऽन्तिके वर्तमानो मृत्युः न तुष्टिदो न तुष्टिं ददाति आघातं वधस्थानं प्रति नीयमानस्य वध्यस्य स्रक्चन्दनादि यथा न सुखयेत् ॥ २० ॥

एवमस्मिँल्लोके सुखं नास्तीत्युक्तं लोकान्तरेऽपि तथैवेत्याह। श्रुतमिति। श्रुतं स्वर्गादि तदपि दुष्टम् स्पर्धा परसुखासहनम् असूया परगुणे दोषाविष्करणमत्ययो नाश व्ययोऽपचयस्तैर्दुष्टम् यद्वा। व्ययो नाशः अत्ययोऽप्यपायनिश्चयः तं दृष्ट्वा तत्प्राप्त्या दुःखमित्यर्थः। किञ्च। बहवोऽन्तराया वैगुण्यादिरूपा विघ्ना यस्मिन् कामे सुखे तस्य साधनत्वं तस्मात् कृषिर्यथा बहुविघ्ना तद्वत् बहुविघ्नत्वेन श्रुतमपि निष्फलम् ॥ २१ ॥

---

अन्तरायैरविहतो यदि धर्मः स्वनुष्ठितः ।
तेनापि निर्जितं स्थानं यथा गच्छति तच्छृणु ॥ २२ ॥
इष्ट्वेह देवता यज्ञैः स्वर्लोकं याति याज्ञिकः ।
भुञ्जीत देववत्तत्र भोगान्दिव्यान्निजार्जितान् ॥ २३ ॥
स्वपुण्योपचिते शुभ्रे विमान उपगीयते ।
गन्धर्वैर्विहरन्मध्ये देवीनां हृद्यवेषधृक् ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

विघ्नवैगुण्याद्यभावमङ्गीकृत्यापि नाशदुःखं दुष्परिहरमित्याह । अन्तरायैरिति पञ्चभिः । निर्जितं साधितम् ॥ २२ ॥

यज्ञैर्देवता इन्द्रादिरूपा इष्ट्वा ॥ २३ ॥

स्वपुण्यैरुपचिते सर्वभोगसम्पन्ने देवीनां मध्ये विहरन् गन्धर्वैरुपगीयते ॥ २४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

अत्रापि जैमिन्यभिमतकर्तृभोक्तृपक्षेऽपि कर्मणां कर्तुरस्वातन्त्र्यं लक्ष्यते लोके दृश्यते तत्र हेतुगर्भितविशेषणमाह । कथम्भूतस्य कर्तुः तथा दुःखसुखयोर्भोक्तुश्चास्वातन्त्र्यं लक्ष्यते पूर्वप्रकारकतयेत्यर्थं तत्रार्थिकार्थतया हेतुमाह । स्वातन्त्र्यपक्ष इत्यादि तस्मात् कोऽन्वर्थः पुरुषार्थी विवशमस्वतन्त्रं कर्तारं भोक्तारं भजेत् तत्र स्थिरीभवेदित्यर्थः ॥ १७ ॥

विदुषां कर्माभिज्ञानां दक्षादीनामपि क्वचिद्विहितेऽपि काम्यकर्मणि सुखं न विद्यते प्रत्युत स्वनाशपर्यन्तं दुःखमेव दृश्यते प्रमादादिना कर्मवैगुण्यादिति भावः । तथा मूढानां कर्म कर्तुमजानतां सरलानां क्वचित् कार्याकरणेऽपि दुःखं न विद्यते सारल्यादिगुणेन अकस्मात् तीर्थादिमरणजन्यजातपुण्येन च प्रत्युत सुखमेव दृश्यते अतः कर्मणां सुखदुःखाप्रयोजकत्वात् ॥ १८ ॥

साक्षान्मृत्युरिति जीवन्मुक्तमृत्युं व्यावर्त्तयति ॥ १९ ॥

एतं प्रवृत्तिमार्गानुगतम् ॥ २० ॥

पूर्वार्धे व्ययस्य नाशान्तर्भावात् विषयानुसन्धानाऽगोचरत्वाच्च व्यय इत्यधिकमतो यद्वेति ॥ २१ ॥

अन्तरायैर्विघ्नवैगुण्यादिभिरविहतस्तच्छून्योऽपि धर्मः यदि सुष्ठु कृतस्तदा तेन विघ्नवैगुण्याद्यभाववतापि स्वधर्मेण तत्तथा ॥ २२ ॥

तत्र स्वर्लोके निजार्जितान् निजकर्मसाधितान् भोगान् वैषयिकसुखसाक्षात्कारान् भुञ्जीत कुरुते पाकं पचति तण्डुलान् पचतीत्यादिवत् सामान्यविशेषतया व्याप्यव्यापकत्वमुक्तार्थानामप्रयोगात् ॥ २३ ॥

उपगीयते प्रोत्साहनेन स्तूयते ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तेऽपि कर्मपारतन्त्र्यात् अस्वातन्त्र्यवेदिनोऽपि मोक्षोपायं न विदुः ॥ १९ ॥

मृत्युरन्तिके यस्मात्कोऽन्वर्थः आघातं हिंसास्थानम् ॥ २०-२१ ॥

सोऽपि धर्मोऽपि निजार्जितकर्मानुष्ठानदशायां निरुक्तम् ॥ २२-२४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नन्वेषामवर्जनीयतया निपतितदुःखपरिहारसामर्थ्यमस्तीति यतस्तेषां कर्मायत्तत्वेन स्वातन्त्र्याभावः अतः को वा प्रवृत्तिकर्मसाध्यं शब्दादिविषयं सेवेतेत्याह । नत्विति । तत्रापि प्रवृत्तिकर्मणः कथं चित्पुरुषार्थसाधनत्वेऽपि रजस्तमोगुणान्यतरगुणानुसारिणां कर्मणां प्रवृत्तिकर्मणां कर्तुरतएव सुखदुःखानामभोक्तुरस्वातन्त्र्यं कर्मपारतन्त्र्यं लोके लक्ष्यते दृश्यत इत्यर्थः । अन्यथा न केनापि दुःखमनुभूयेतेति भावः । अतः को वा पुमान् विवशः परवशः सन्नर्थं शब्दादिविषयं भजेत्सेवेत न कोऽपीत्यर्थः ॥ १७ ॥

ननु ये सम्यक् कर्म कर्तुं जानन्ति ते सुखिन एव ये तु न जानन्ति त एव दुःखिन इत्यत्राह । नेति विदुषामपि किञ्चित्सुखं न विद्यते साधनानामनुष्ठानदशायां दुःखावहत्वात् फलानुभवदशायां पतनभयशङ्कया च तदावहत्वादिति भावः । तथा चैव च दुःखमित्यस्यानुवृत्तं नेत्यादिः न दुःखं विद्यते अस्माकं कर्मकुशलत्वात्सुखिन एव वयमिति तेषां केवलं वृथैवाहङ्कार इत्यर्थः । यद्वा देहयोगेऽपि न ब्रह्मादिदेवानां जरामरणादयः सन्तीत्यत आह । नेति । विदुषां विबुधानां ब्रह्मादीनामित्यर्थः । सुखं न विद्यते तदैश्वर्यस्यापि द्विपरार्धावसानादिषु विभ्रंशशङ्कागर्भत्वेन दुःखमिश्रत्वान्निर्दुःखं सुखं न विद्यते इति भावः । किन्तु दुःखमेव तथाप्येवमपि मूढानां तेषां केवलं वृथाहङ्करणमहङ्कार इत्यर्थः ॥ १८ ॥

ननु विदुषां कीदृशं तन्मौढ्यमित्यत्राह । यदीति । यदि यद्यपि सुखदुःखयोः प्राप्तिं विघातं सुखप्राप्त्युपायं दुःखविघातोपायं च जानन्ति कर्मवश्यानामस्वतन्त्राणां सुखदुःखे शुभाशुभकर्ममूलके इति जानन्तीत्यर्थः । अपि तथापि ते योगं न विदुः अर्थात् स्फुटाभ्यासधारणयोः न विदुरेवेत्यर्थः । यथा यथानुष्ठितेन योगेन मृत्युर्न प्रभवेत्तथा तं न विदुर्मोक्षोपायं न विदुरित्यर्थः ॥ १९ ॥

तथापि तेषां यावज्जीवं सुखं भविष्यत्येवेत्यत आह । को न्विति एवं जीवन्तं को वार्थः कामो वा सुखयति न कोऽपीत्यर्थः । अथ

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यत्र कामः शब्दादिविषयः तत्र हेतुरन्तिके वर्तमानो मृत्युर्देहेन सह जातो वर्तमान इत्यर्थः । न तुष्टिदः न तोषदः नार्थकामयोः सुखजनकत्वापादक इत्यर्थः । आघातं हिंसास्थानं नीयमानस्य वध्यस्येव यथा वध्याय दीयमानः क्षीरान्नस्रक्चन्दनादिर्न सुखजनकत्वापादकस्तद्वदित्यर्थः ॥ २० ॥

काम्यकर्मफलेषु वैराग्योत्पादनाय तेषु दोषाविष्करणपूर्वकमपुरुषार्थतामाह । श्रुतमिति । चित्रया यजेत पशुकामः कारीर्या वृष्टिकामो यजेतेति श्रुतं दृष्टमैहलौकिकं पश्वादिफलं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति श्रुतमदृष्टं स्वर्गादिफलं च स्पर्द्धादिभिर्बहुभिरन्तरायैर्विघ्नैश्चाक्रान्तत्वात् कृषिवन्निष्फलमपुरुषार्थरूपं कृषिशब्दस्तत्फलपरः तत्र स्पर्द्धा परसुखासहिष्णुताऽसूया परेषां गुणेषु सत्स्वपि दोषाविष्करणाऽन्ययोर्नाशः व्ययोऽपव्ययः तैः यद्वा व्ययो नाशः अत्ययोऽतिशयः यद्वा काम्यकर्माणि दोषाविष्करोतीति श्रुतमिति दृष्टं दृष्टफलकमदृष्टं स्वर्गादिफलकं कृषिवद्यथा कृषिर्बहुविघ्ना तद्वद्बहुविघ्नमत एव निष्फलञ्च ॥ २१ ॥

अन्तरायानाक्रान्तं सफलमेवेत्यत्र तत्फलस्यापवर्गविरोधित्वं वक्तुं तावत्तत्प्रपञ्चश्रवणाय प्रेरयति । अन्तरायैरिति । तेन स्वनुष्ठितेन धर्मेण निर्जितं साधितं स्थानं यथा यादृशं स्थानशब्दस्तत्रत्यानुभाव्यसुखस्याप्युपलक्षकः गच्छति प्राप्नोतीत्यर्थः । तच्छृणु तत्प्रकारप्रदर्शनपरं मद्वचः शृणु इत्यर्थः ॥ २२ ॥

इहास्मिल्लोँके देवता इन्द्रादिरूपा यज्ञैरिष्ट्वा आराध्य याज्ञिकः यज्ञानुष्ठानाहितविशेषः पुमान् तत्र स्वर्लोके निजार्जितान् स्वकीययज्ञादिकर्मचितान् दिव्यान् भोगान् देववदिन्द्रादिवद्भुङ्क्ते ॥ २३ ॥

भोगप्रकारं दर्शयति । स्वपुण्योपचित इति । देवीनां देवस्त्रीणां मध्ये तासां हृद्यं मनोहरं वेषं रूपं भरतीति तथा ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु सदनुविद्धत्वात्स्वतन्त्रतां न स्वत इत्याद्युक्त्यार्थक्रियायोग्यत्वात्स्वाभाविकमेवेति भावेनाह । तत्रापीति । तत्रापि जन्मादिमति जगत्यपि कर्मणां कर्तुः जाताविकवचनम् अस्वातन्त्र्यं कर्मफलसुखदुःखानां भोक्तुरस्वातन्त्र्यं च उत्तमानामवरनियतत्वमवरजनस्योत्तमत्वं लक्ष्यते दृश्यते । भवतीति शेषः ततः किमत्राह । कोन्विति: कोन्वर्थः पुरुषार्थः सुखलक्षणः विवशं नीचवशं पुरुषं भजेत कोऽपि पुरुषार्थः कं पुरुषं पुरुषार्थः प्राप्नोतीत्यस्यापि इदमेव व्याख्येयं विशिष्टपुरुषवशं पुरुषं भजेदिति अत्र विशेषस्तु—

स्वाधिकानां वशत्वात्तु परमं सुखमेव तु ॥

तदन्येषां वशो यस्तु किंसुखं तस्य भण्यताम् ।

स्वाधिकानां वशत्वं च तेषां भक्तिमतः सुखम् ॥

तदन्येषां तु दुःखाय तस्माद्भक्त्यधिको भवेद्

इत्यनेनावगन्तव्यः । अनेन मुक्तावस्वनियतत्वं संसारधर्मत्वात्तदर्थं न प्रयतनीयमिति शङ्का निरस्ता ॥ १७ ॥



अत्र कैमुत्यमाह । नेति । विदुषामपि देहिनां देहाभिमानिनां यदा सुखं न विद्यते तथा तदा दुःखमूढानाम् अहङ्कारिणां च सुखं नास्ति इति किं पुनः "पुनः शब्दः प्रस्तुतार्थे तथाशब्द उदीर्यते" इति वचनात् पुनः शब्दः तथाशब्दार्थे वर्तते दुःखमूढैर्याऽऽत्यहङ्कारिणामात्मन्यविद्यमानगुणारोपवतां सुखं नास्तीति किम्पुनस्तरामिति च योज्यं यावद्देहाभिमानित्वम् अधिकं नावद् विरतं च ज्ञानरूपमित्यतो देहाभिमानिनश्च दुःखमूढा इत्युक्तं परमित्यनेनाभिमानित्वमेव प्रयोजनमिति ॥ १८ ॥

नन्वकृत्स्नज्ञानां दुःखादिकं तत्परिहारप्राप्त्युपायाभिज्ञानादग्निष्टोमादिना तदभिज्ञानां तौ सुखप्राप्तिदुःखपरिहारौ स्यातामित्येतदनूद्य परिहरति । यदीति । ये तु लोके विद्वत्त्वेन प्रसिद्धाः पुरुषाः यदि सुखस्य प्राप्तिं दुःखस्य विघातं परिहारं जानन्तीति मतं तेऽप्ययुक्ता सत्यं यथार्थयोगमुपायं न विदुः कुतो न विदुरित्याह । मृत्युरिति । यथा येनोपायेन मृत्युः संसारो न प्रभवेद्याङ्गीकुर्यात्तं देहमानित्वे बहुतरदुःखग्रस्तत्वादित्यर्थः ॥ १९ ॥

नन्वर्थकामौ तयोरुपायः स्यातामत्राह । को न्विति । अन्तिके स्थितमृत्युमेतं पुरुषम् अत्र दृष्टान्तमाह । आघातमिति । आघातं मरणस्थानं प्रति नीयमानस्य वध्यस्य पुंसो यथा सुखं नास्ति तथेति ॥ २० ॥

ननु स्वर्गकामस्य सुखहेतुत्वादन्यथा तत्कर्मानुष्ठानं व्यर्थं स्यादतः कथं कामो वा न सुखवतीति तत्राह । श्रुतश्चेति । कामस्य कर्मद्वारा सुखहेतुत्वेऽपि तादृशं न क्षणिकत्वात् । एवमत्र कर्मनिर्मितमन्दिरादिवद्विश्वकर्मविद्याऽप्रसिद्धत्वं प्रयोजकं नच मुक्तिवदिष्टत्वादिति वाच्यं ज्ञानसाध्यत्वविशेषात् स्वर्गकामेनानुष्ठीयमानमग्निष्टोमादिकं निश्चितफलं न स्यात् बह्वन्तरायविहतकृष्यादिकामवदित्याह । स्पर्धेत्यादिना । यथा कृषिवाणिज्यादिकं मिथः स्पर्धासूयादिबह्वन्तरायैर्विहतं भवति स्पर्धादिप्रयुक्ताभिचारिकर्मणा उन्मादादिनाऽप्यग्निष्टोमाद्यनुष्ठानमपि कुण्ठितम् अत्ययो विध्यतिक्रमणमव्ययोऽन्तराले मरणम् ॥ २१ ॥

ननु सत्कृष्यादिरिव स्वनुष्ठितोऽग्निष्टोमादिधर्मः कर्मफलजनकः किं न स्यादत्राह । अन्तरायैरिति । तेनैव धर्मेण अर्थकामयोः सुखहेतुत्वाभावेऽपि स्वनुष्ठितस्य धर्मस्य तद्धेतुत्वं स्यादितो वाह । अन्तरायैरिति ॥ २२ ॥

निजधर्मार्जितान् ॥ २३ ॥

देवीनामप्सरसाम् ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्मात्को नु अर्थः पुरुषार्थो विवशमस्वतन्त्रं तं भजेत् तत्र दर्शितमेवेत्यर्थः ॥ १७ ॥

न देहिनामिति तैः तत्र विदुषामपीत्यादौ प्रमादेनापि कर्मवैगुण्यादिति भावः । मूढानामपीत्यादावकस्मात्तीर्थादिसम्बन्धजातपुण्यत्वादिति भावः ॥ १८—२० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कर्मणां कर्तृभिरिति कर्मकरणे दुःखसुखयोर्भोक्तृभिरिति भोगेऽप्यस्वातन्त्र्यं लक्ष्यते स्वातन्त्र्ये हि कः खलु दुःखमभुञ्जान को वा विवेकी दुष्कर्म कुर्यादिति भावः । ततश्च विवशमस्वतन्त्रम् ॥१७॥

ननु यो दुष्कर्म कुर्यात्स विद्वानेव नोच्यते तस्य दुःखभोगोऽस्त्वेव एव यस्तु विकर्माकुर्वन् कर्म कर्तुं जानीयात् तस्य न कदापि दुःखमित्यत्राह नैवं वादिभिरिहधारिणां मध्ये सर्वदैव सुखी सर्वदैव दुःखी वा कोऽपि न दृष्ट इत्याह । नेति । विदुषामपि कदाचित् सुखं न विद्यते किञ्चिदपि तथैव मूढानामपि कदाचित् दुःखं किञ्चिदपि भवेदित्यतो वयं कर्मकुशलत्वात् सदा सुखिन इति तेषां वृथैवाहङ्कार इत्यर्थः ॥ १८ ॥

विज्ञत्वमङ्गीकृत्याप्याह । यदीति । योगमुपायं तथा न विदुर्येया साक्षान्मृत्युर्न प्रभवेत् ॥ १९ ॥

मृत्योः पूर्वन्तु सुखं वर्त्ततेति चेन्नैवमित्याह । कोन्विति । अर्थः तज्जन्यः कामो वा यतः स्वसन्निधिके मृत्युर्न तुष्टिदः आघातं वधस्थानं नीयमानस्य वध्यजनस्य सम्प्रति त्वं स्वर्णमुद्रासहस्रं गृहाणेति पायसपिष्टकादिकं यथेष्टं भुङ्क्ष्वेति च दीयमानोऽर्थो भोगश्च न यथा सुखप्रद इत्यर्थकामौ पुरुषार्थावपिद्धतौ ॥ २० ॥

इह लोके सुखं नास्तीत्युक्तं परलोकेऽपि नास्तीत्याह । श्रुतं च स्वर्गाद्यपि दुष्टं स्पर्द्धा परसुखासहनमसूया परगुणे दोषारोपः अत्ययो नाशः व्ययः भोगेन क्षीयमाणस्य स्वर्गस्याल्पताप्रतिपादकः किञ्चित् किञ्चिच्छास्त्रैः बहवोऽन्तराया वैगुण्यादिरूपा विघ्ना यस्मिन् तस्मात् यज्ञादिकात् कामः सुखं यत्र तस्य भावस्तत्त्वं तस्मात् कृषिर्यथा कदाचिन्निष्फलापि भवेत् तद्वत् ॥ २१ ॥

विघ्नवैगुण्याद्यभावमङ्गीकृत्यापि नाशदुःखं दुष्परिहरमित्याह । अन्तरायैरिति पञ्चभिः । निर्जितं साधितम् ॥ २२—२३ ॥

देवानामप्सरसाम् ॥ २४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नानात्वमस्तीति यदुक्तं तत्राह । अथापीति एकात्मकत्वानङ्गीकारेण नानात्वेऽपि कर्मणां प्रारम्भे अनुष्ठाने समाप्तौ च वैपरीत्यदर्शनात्तत्कर्तुरस्वातन्त्र्यं लक्ष्यते सुखदुःखयोरिष्टस्य सुखस्याप्राप्त्या अनिष्टस्य दुःखस्य च प्राप्त्या भोक्तुः अस्वातन्त्र्यं लक्ष्यते एवम्भूतं विवशं प्रवृत्तिमार्गे अर्थधर्मकामानां मध्ये तु इति भितर्थैः कोऽर्थः पुरुषार्थः भजेत कोऽपि जीवो विवशः अतः जडः कस्मै जीवाय कार्यं को दद्यादित्यर्थः ॥ १७ ॥

ननु कर्मनिष्ठस्यापि दोषादिसंश्लिष्टेषु कर्मसु विदुषस्तु सदासाफल्यादित्यत्राह । नेति । देहिनां देहादिपोषणरूपाणां कर्मक्रियाणां कुर्वाणानां विदुषां न चिञ्चित्सुखं विद्यते मूढानां च दुःखं न विद्यते अतः तथा तादृशमहं कर्मसु विज्ञान् सुखी असौ मूर्खः दुःखी इत्येवं रूपमहङ्करणं वृथा ॥ १८ ॥

किञ्च त्रैवर्गिकैः जन्ममरणदुःखमपरिहार्यमेवेत्याह । यदीति ॥ १९ ॥

किञ्चित्कर्मफलं सर्वमपि मृत्युभयभीतस्यैव सुखयतीत्याह । क इति । अर्थः कामसाधकः कामः इन्द्रियप्रीतिः एवं त्रैवर्गिकं पुरुषम् कः सुखयति न कोऽपि यतोऽन्तिके वर्तमानो मृत्युर्न तुष्टिं सुखयोग्यतां ददाति आघातं वधस्थानं प्रति नीयमानस्यैव कर्मणा वध्यो ॥ २० ॥

कालादिषु नित्येषु लोकानामपि नित्यत्वमङ्गीकृत्य वैराग्यं नोपपद्यते इति यदुक्तं तत्राह । श्रुतं चेति । इहवत् यथा इह प्रत्यक्षप्रमाणगोचरमिदं दुष्टं तद्वत् श्रुतं स्वर्गकामो यजेतेत्यादिश्रुतिप्रोक्तं स्वर्गादि तदपि स्पर्द्धादिभिर्दोषैर्दुष्टम् तत्र स्पर्द्धा परैश्वर्यासहनजा पराभिभवेच्छा असूया परगुणेषु दोषाविष्करणेच्छा अत्ययो नाशः व्ययोऽपक्षयः किञ्च बह्वन्तरायः बहुविघ्नयुक्तः कामो भोगो यस्मिन्स्वर्गादौ तस्य भावस्तत्त्वं तस्मात् किञ्च कृषिर्यथाऽत्यायासमाध्याऽपि कर्षकं कृष्यन्तरनिरपेक्षं न करोति अतो निष्फला तद्वत्स्वफलं भोगानन्तरं पुनरपि बहुश्रमसाध्यं स्थिरफलशून्यमित्यर्थः ॥ २१ ॥

एवं कर्मभिर्नानां लोकानामनित्यत्वमुक्त्वा अथ कर्मभिस्तत्र गतस्य पातमाह । अन्तरायैरिति पञ्चभिः । अन्तरायैर्विघ्नैरविहतो नाशं न नीतः किन्तु सुष्ठु अनुष्ठितः तेन धर्मेण निर्जितं स्थानं स्वर्गादिकम् ॥ २२—२३ ॥

स्वपुण्यैः यज्ञादिभिः उपचिते सर्वसमृद्धिसम्पन्ने देवीनां मध्ये विहरन् गन्धर्वैरुपगीयते ॥ २४ ॥

———

भाषा टीका ।

इस लोकमे भी कर्म के करने वालों को परतंत्रता दीखती है सुख दुःख के भोगने मे भी परतंत्रही हैं तब ऐसे पुरुष का तो कोइ भी मनोरथ सिद्ध नहीं होगा ॥ १७ ॥

काम्य कर्म करने वाले विद्वानों को भी कोइ सुख नहीं दीखता है और न यागादि कर्म नहीं करने वाले मूर्खों को दुःख ही दीखता है तब काम्य कर्म करने वालों के व्यर्थ अहंकारही है ॥ १८ ॥

यदि वे लोग सुख दुःख की प्राप्ति करना तथा निवारण करना जानते हैं तो तब वे लोग ऐसा उपाय तो नहीं जानते हैं कि जिससे मरण न होवै ॥ १९ ॥

जिसके पास मे मृत्यु उपस्थित है उसको कौनसा प्रयोजन सुख देता है जैसे कि वध स्थान में मारने को जिसको लेजाते हैं उस को कोइ चंदनादि सुखदाइ नहीं होता है ॥ २० ॥

जैसे यहां के सुख हैं तैसही शास्त्र से श्रुत स्वर्गादिक सुख भी दुःख युक्तही हैं क्यों कि वहां भी दूसरे कि पराभव की इच्छा दूसरे की निंदा अन्त मे नाश होना आदि दुःख हैं कर्म करने मे बहुत से विघ्न होते हैं तिससे यहां की खेती सरीका निष्फलसाही दीखता है ॥ २१ ॥

यदि धर्म का अच्छी तरह से अनुष्ठान होजावै कोइ विघ्न नहीं होवैं तो तब तिस कर्म से प्राप्त हुवे स्वर्गको जैसे जाते हैं तिस को तुम श्रवण करो ॥ २२ ॥

यहां पर यज्ञों से देवतों का यजन करके याज्ञिक लोग

स्त्रीभिः कामगयानेन किङ्किणीजालमालिना ।
क्रीडन्न वेदाऽऽत्मपातं सुराक्रीडेषु निर्वृतः ॥ २५ ॥
तावत्प्रमोदते स्वर्गे यावत्पुण्यं समाप्यते ।
क्षीणपुण्यः पतत्यर्वागनिच्छन् कालचालितः ॥ २६ ॥
यद्यधर्मरतः सङ्गादसतां वाऽजितेन्द्रियः ।
कामात्मा कृपणो लुब्धः स्त्रैणो भूतविहिंसकः ॥ २७ ॥
पशून् विधिनाऽऽलभ्य प्रेतभूतगणान् यजन् ।
नरकानवशो जन्तुर्गत्वा यात्युल्वणं तमः ॥ २८ ॥
कर्माणि दुःखोदर्काणि कुर्वन् देहेन तैः पुनः ।
देहमाभजते तत्र किं सुखं मर्त्यधर्मिणः ॥ २९ ॥
लोकानां लोकपालानां मद्भयं कल्पजीविनाम् ।
ब्रह्मणोऽपि भयं मत्तो द्विपरार्धपरायुषः ॥ ३० ॥
गुणाः सृजन्ति कर्माणि गुणोऽनुसृजते गुणान् ।
जीवस्तु गुणसंयुक्तो भुङ्क्ते कर्मफलान्यसौ ॥ ३१ ॥
यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः ।
नानात्वमात्मनो यावत्पारतन्त्र्यं तदेवहि ॥ ३२ ॥

भाषा टीका ।

स्वर्ग को जाते हैं वहां पर अपने अर्जित भोगों को देवतों सरी का भोगता है ॥ २३ ॥

अपने पुण्य से बढाये हुये निर्मल विमान में चढता है देवियों के मध्यमे दिव्यवेष धारण करके रहता है और विहार करते मे गन्धर्व उसका गान करते हैं ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कामगेनेच्छया गच्छता विमानेन । किङ्किणीजालमालिना क्षुद्रघण्टिकासमूहशोभिना सह स्त्रीभिः सुराक्रीडेषु नन्दनादिषु क्रीडन्नात्मपातं न वेद ॥ २५ ॥

कालेन चालितः पातितः ॥ २६ ॥

प्रवृत्तिर्द्विविधा विध्यनुसारेण काम्ये कर्मणि वा तदुल्लङ्घनेन अधर्मे वा तत्र काम्यप्रवृत्तेर्गतिरुक्ताऽधर्मप्रवृत्तेर्गतिमाह । यदीति । वाऽहु चेत्यन्वयः । अजितेन्द्रियत्वात्कामात्माऽतः कृपणोऽतो लुब्धो भोगतृष्णाकुलोऽतः स्त्रैणः स्त्रीलम्पटस्तदर्थं भूतविहिंसकः ॥ २७ ॥

किञ्च दुष्टजनप्रबोधितो धनाद्यर्थं पशूनविधिना हत्वा तमः स्थावरतां याति ॥ २८ ॥

एवं कर्मसु प्रवृत्तस्य न सुखं नच दुःखनिवृत्तिरित्युपसंहरति । कर्माणीति ॥ २९ ॥

तथापि लोकानां नित्यत्वादमर्त्यधर्मत्वाच्च लोकपालानां सुखमस्तीति चेत्तत्राऽऽह । लोकानामिति । द्वौ परार्धौ परमायुर्यस्य तस्य ब्रह्मणोऽपि तथा च श्रुतिः "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम" इति अतः प्रवृत्तिमार्गस्यैवमनर्थहेतुत्वाद्विरक्त्या ततो निवृत्तिरेव युक्तेति तात्पर्यार्थः ॥ ३० ॥

एतेनैव स्वधर्माश्रयत्वाभिप्रायेणेश्वरभावाङ्गीकारः परित्यक्तः अन्यदपि प्रौढ्या पूर्वमङ्गीकृतं निराकरोति चतुर्भिः । तत्र यदुक्तं कर्तृभोक्तृरूप एवाऽऽत्मेति तन्निराकरोति । गुणा इति । गुणा इन्द्रियाणि कर्माणि सृजन्ति न त्वात्मा आत्मेन्द्रियाणि प्रवर्तयन् कर्माणि करोतीति चेत्तत्राह । गुण इति । गुणः सत्त्वादिर्गुणानिन्द्रियाण्यनुसृजते प्रवर्तयति न त्वात्मा अत आत्मनः कर्तृत्वं नास्त्येव भोक्तृत्वमप्यौपाधिकमित्याह । जीवस्त्विति । गुणसंयुक्त इन्द्रियादिसंयुक्तः कुत इत्यत आह । असौ तत्कृताहङ्कारवानित्यर्थः ॥ ३१ ॥

यच्चोक्तमात्मनो नानात्वं तदप्यौपाधिकमित्याह । यावत्स्यादिति । गुणानां वैषम्यमहङ्कारादिकार्यरूपम् तन्नाऽऽत्मन एकत्वे कथं पारतन्त्र्यमुक्तं कथं वा लोकपालादीनामपि मद्भयमित्युक्तं तत्राऽऽह । नानात्वमिति ॥ ३२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

आत्मपातं स्वर्गात् स्वभ्रंशम् ॥ २५ ॥

अर्वागधः कालेन भोगसमाप्त्यवच्छेदकेन ॥ २६ ॥

यदीति युग्मकम् । काम्यकर्मणि पशुयागादौ तल्लङ्घनेन विध्यतिक्रमणेन तत्र त्रिविधप्रवृत्तेर्मध्ये तदर्थं स्त्रीप्राप्त्यर्थम् अविधिना स्वैराचारेण ॥ २७—२८ ॥

तत्र प्रवृत्तौ ॥ २९ ॥

यद्यपि कर्तृत्वभोक्तृत्वे न स्तः तथा भोग्यस्य भोगकालस्य च नित्यत्वं नास्ति तथापि लोकानां भोगस्थानानां तथाच ब्रह्मादीनां भयं प्रमाणं श्रुतिः अस्मात् परमेश्वराद्भीषा भीत्या अतः कालकलितत्वात् अनर्थहेतुत्वाद्दुःखजनकत्वात् ततः प्रवृत्तिमार्गात् तात्पर्यार्थः महावाक्यार्थः इति तदभिप्रेतगूढाभिप्रायस्योत्तरम् ॥ ३० ॥

एतेन श्रीवाक्यादित्यादिश्लोकात्मकपुराणरूपवाक्यप्रमाणेनेत्यर्थः । तत्कर्त्ता कश्चिदीश्वरोऽपि नास्तीत्युक्तचेश्वराभावाङ्गीकारः कृतः सोऽपि परित्यक्तः न त्वात्मेति अयस्कान्तस्यैवात्मनः सान्निध्येनैव तत्तत्प्रेरकत्वात् नतु स्वेच्छयेति भावः । स्वात्मनः सन्निकृष्टत्वात् इन्द्रियादेस्तु स्वस्वरूपत्वाभावेन विप्रकृष्टत्वादात्मनोऽहंशब्दव्यपदेश्यत्वं न सङ्गच्छते किन्तु तप्तायःपिण्डवत् तत्तादात्म्येन तु तत् सङ्गच्छत इति तेषु देहेन्द्रियादिष्वहङ्कारवानित्यर्थं इत्युक्तम् ॥ ३१ ॥

औपाधिकम् अहङ्कारादिकार्योपाधिकं नतु स्वरूपनिबन्धनं यावदिति सार्द्धकम् ॥ ३२ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सुराक्रीडेषु देवोद्यानेषु ॥ २५—२९ ॥

मत् मत्तः अस्मात् ॥ ३०—३१ ॥

आत्मनः नानात्वं देवमनुष्यादिरूपदेहप्रयुक्तं नानात्वं पारतन्त्र्यं कर्मपारतन्त्र्यम् ॥ ३२ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्त्रीभिःसह विहरन् किङ्किणीजालमालिना क्षुद्रघण्टिकासमूहमालालंकृतेन कामं यथेच्छं गच्छता यानेन विमानेन सुराक्रीडेषु सुराणां क्रीडास्थानेषु मेर्वादिद्रोणीषु देवोद्यानेषु वा सञ्चरन्नपि शेषः क्रीडंश्च निर्वृतः सुखितश्चात्मपातमात्मनः स्वस्य पातं पुण्यान्ते ततो भ्रंशं न वेद न जानाति ॥ २५ ॥

किन्तु यावत्पुण्यं समाप्यते तावत्स्वर्गे प्रमोदते ततः किमित्यत्राह । क्षीणपुण्य इति । क्षीणं पुण्यं यस्य सः अनिच्छन्नपि कालेन बलिना निमित्तेन चालितः अर्वागधःपतति एवमिहामुत्र परिवर्तत इति भावः ॥ २६ ॥

एवमिष्टादिकारिणां गतिरुक्ता अथ प्रसङ्गादनिष्टादिकारिणां गतिमाह । यदीति । असतां सङ्गादधर्मे रत आसक्तः अजितेन्द्रियश्च तत्र हेतुः कामात्मा कामेषु शब्दादिषु विषयेष्वात्मा चित्तं यस्य सः अत एव कृपणः अतो लुब्धो भोगतृष्णाकुलः स्त्रैणः स्त्रीलम्पटः तदर्थं भूतानां विहिंसकः ॥ २७ ॥

किञ्च पशूञ्जनपत्नोभितो धनाद्यर्थं पशूनविधिना हत्वा प्रेतगणान् भूतगणांश्च यजन्नवशः निजकर्मवश्यः जन्तुः जीवः नरकान् क्रमेण गत्वा प्राप्य अत्युल्बणं तम तमः प्रचुरं स्थावरं जन्म यातीति सम्बन्धः ॥ २८ ॥

इष्टादिकारितदन्येषां साधारण्येन सुखाभावमाह । कर्माणीति । देहेन पुण्यापुण्यात्मकानि दुःखोत्तरफलानि कुर्वन् तत्तद्देहावसाने तैः कर्मभिर्हेतुभिस्तत्तत्फलोपभोगानुगुणं देहमाभजते तत्रैवं सति मर्त्यधर्मिणो मरणशीलस्य किंसुखं न किञ्चिदपि सुखमित्यर्थः ॥ २९ ॥

तथापि लोकानां शाश्वतत्वात् लोकपालानां चामरत्वधर्मत्वात्तेषां सुखमस्त्येवेत्यत आह । लोकानामिति । मद्भयं मत्तो भयं कल्पजीविनामाकल्पान्तं जीवतामपि किं बहुना द्वे परार्द्धे परमायुर्यस्य तस्य ब्रह्मणोऽपि मत्तः कालात्मनो भयं लोकाद्यः सर्वे कालचालिता अनित्या एवेति न तेषामपि निर्दुःखं सुखमिति भावः ॥ ३० ॥

तदेवं प्रवृत्तिकर्मणस्त्याज्यत्वज्ञापनाय तत्र बहुधा दोषाः कीर्तिताः कर्माणि देहेन सृजन् पुनस्तैर्देहमाभजते इत्यनेनोत्तरोत्तरदेहकर्मणोः पूर्वपूर्वकर्मदेहनिमित्तत्वमुक्तं तत्रापि कर्मणां कर्त्तृत्वमात्मनस्तदा च लक्ष्यते भोक्तुश्च दुःखसुखयोरित्यनेन स्वस्वरजस्तमोगुणानुविधायिप्रवृत्तिकर्मकर्तृत्वं तत्प्रयुक्तं पारवश्यं तत्प्रयुक्तं च सुखदुःखभोक्तृत्वं ततश्च पुनः स्वस्वगुणानुगुणप्रवृत्तिकर्मवासनाप्रयुक्तरुच्यनुसारेण प्रवृत्तिकर्मकर्तृत्वमित्यादिका चक्रवत्परिवृत्तिरुक्ता तत्र विलक्षणः स्थूलसूक्ष्माद्देहादात्मेत्युक्तेति देहाद्भिन्नत्वेनोक्तस्य ज्ञानैकरसस्वरूपस्य निष्क्रियस्यात्मनः कथं च तत्सुखदुःखभोक्तृत्वापादकमित्याशङ्कायामात्मनस्तथात्वेऽप्यामोक्षं तस्य प्राकृतगुणयोगेन तद्वश्यत्वाद्गुणानां च यावन्मोक्षं वशोद्यात्मकस्वाभाववैषम्यस्वरूपावस्थाशीलत्वात्सर्वमुपपन्नमित्याह । गुणा इति । गुणाः प्राकृताः कर्माणि सृजन्तीति प्रयोजककर्तृणां गुणानां सृष्टौ स्वातन्त्र्यविवक्षया सृजन्तीति कर्तृत्वनिर्देशः स्वस्वानुगुणकर्मवासनाप्रयुक्तदेहारम्भचिकीर्षाप्रयत्नज्ञानजननद्वारा सृजन्तीत्यर्थः । अतो नात्र गुणानामेव कर्तृत्वं न त्वात्मन इति भ्रमितव्यं गुणाः गुणपरिणामात्मकः सेन्द्रियो देहः गुणाननु अनुसृत्य सृजते कर्माणीत्यनुवर्तते अनेन गुणानां देहारम्भापादनद्वारा आत्मनः कर्तृत्वापादकत्वं देहस्य चात्मगुणानुविधायिचिकीर्षाद्यनुगुणप्रवृत्तिशीलत्वं चोक्तम् असौ प्राकृतगुणयोगी तद्वश्यो जीवस्तु कर्मफलानि स्वप्रयत्नैर्देहनिष्पादितानां कर्मणां पुण्यपापात्मकानां फलानि सुखदुःखात्मकानि भुङ्क्ते ॥ ३१ ॥

तर्हि त्वत्तो भयानुवृत्तिः कियत्पर्यन्तेत्यत्र यावद्गुणवैषम्यतत्प्रयुक्तनानाविधदेहतन्निष्पाद्यकर्मकर्तृत्वतत्प्रयुक्ततत्पारतन्त्र्यतत्प्रयुक्तसुखदुःखभोक्तृत्वपरम्परानुवृत्तिस्तावदित्याह । यावदिति । गुणानां प्राकृतानां वैषम्यं यावत्स्यात्तावदात्मनो ज्ञानैकरसस्यापि नानात्वं देवमनुष्यादिरूपदेहप्रयुक्तनानात्वं तावद्देहसम्बन्ध इत्यर्थः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यावन्नानात्वं तावत्पारतन्त्र्यं कर्मकर्तृत्वप्रयुक्तं गुणकर्मवश्यत्वं स्यात् ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

सुराक्रीडेषु देवक्रीडास्थानवनेषु ॥ २५ ॥
समाप्यते क्षीयते ॥ २६ ॥

स्वतो ऽसुराणां वैष्णवाचार्यवैयर्थ्यं कृत्वा स्वर्गं गत्वा कर्मफलं भुक्त्वा मर्त्यलोकमागतानां गतिमाह । यदीति ॥ २७ ॥
आलभ्य हिंसित्वा ॥ २८ ॥

मनुष्यधार्मिकस्य स्थितिमाह । कर्माणीति । मर्त्यधर्मिणो मरणधर्मिणः पुरुषस्य तत्र देहे किं सुखं लभ्यते न किमपीत्यर्थः ॥ २९ ॥

न केवलं लोकत्रयस्यानित्यफलत्वं तत उपरितनानां सत्यलोकपर्यन्तानामप्येवमेवेत्याह । लोकानामिति ॥ ३० ॥

एवं मनुष्यादिब्रह्मपर्यन्तं लोकानां लोकपालानां च सृष्ट्यादिकर्त्रा कालात्मना भगवता मायागुणोपादानत्वेन तत्कर्मानुगुणं प्रवर्त्यते तस्मादस्य ज्ञानमेवात्यन्तदुःखनिवर्तकत्वेन नित्यं सुखदायीति भावेनोपसंहरति । गुणा इति । गुणाः सत्त्वादयः प्रकृतेः कर्मफलभोक्तृत्वमिति मतं प्रत्याह । जीवस्त्विति । तुशब्देनाचेतनस्य भोक्तृत्वानुपपत्तिं दर्शयति सत्त्वादिगुणयुक्तः ॥ ३१ ॥

एवं जीवपरभेदं प्रतिपाद्य तद्भेदमतमनूद्य दूषयति । यावदित्यादिना तावदीश्वरतो भयमित्यन्तग्रन्थः पूर्वपक्षिणः य एनममुम् उपासीरन् सेवन्ते तेऽन्धे तमसि मुह्यन्ति दुःखाद्भावात् ॥ ३२—३३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गुणा इति तैः तत्र एतेनेति पूर्वदर्शितगीतादिवाक्यादिश्रुत्यात्मकपुराणस्वरूपस्ववाक्यप्रामाण्येनेत्यर्थः । न स्यादेवेति । अयमेकान्तस्येश्वरात्मनः मार्गप्रदर्शनेन तत्तत्प्रेरकत्वात्तु स्वेच्छयेति भावः । यद्वा अथ जीवस्य स्वतः कर्मकर्तृभोक्तृरूपत्वं तन्मतं साङ्ख्यमतेन निराकरोति । गुणा इति । तत्तत्स्वभाव एव तत्र तत्र कारणमिति भावः ॥ ३१ ॥

यावदिति सार्द्धकम् । नानात्वं चाद्वयवादिमतेन निराकरोति यावदित्यर्द्धेन । तत्रैवाद्वयवादिनां सिद्धान्तमिदं दर्शयति नानात्वमित्येकेन । अयमर्थः एक एव खलु चिदेकलक्षणसत्तामात्रस्वरूप आत्मा स एवात्मन्यनाद्यविद्यया गुणमयीं मायां तद्वैपरीत्यजातकार्यवर्गं च कल्पयन्नस्मद्र्थेऽपि युष्मदर्थांश्च बहून् कल्पयति स्वप्नवत् तत्रास्मदर्थः स्वस्वरूपः पुरुषः युष्मदर्थास्त्रिविधाः पुरुषान्तररूपाः जडरूपा ईश्वराख्यपुरुषविशेषरूपाश्चेति तत्तत्कल्पनामविद्यायां गतायां नानात्वाभावादीश्वरो नाम कोऽप्यतो नास्ति स नास्त्येव किमुत तत्पारतन्त्र्यं किमुततरां ततो भयं किमुततमां बाह्यपारतन्त्र्यादिकमिति तदेवं मतद्वयेन नहि कदाचिदनीदृशं जगदिति ज्ञानं नित्यं नास्तीति परिहृतं तदनुपायोऽनर्थमनाशावस्थाऽज्ञानस्य स्वनाशावस्थाविति भावः ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कामेन इच्छया गच्छता विमानेन ॥ २५ ॥

कालेन चालितः पातितः ॥ २६ ॥

कर्ममार्गाधिकारी द्विविधः धार्मिकोऽधार्मिकश्च तत्र प्रथमस्य गतिरुक्ता द्वितीयस्य गतिमाह । यदीति । वाशब्दात्स्वतोऽपि कश्चिदजितेन्द्रियः स्यादित्यर्थः । कामात्मा तत एव कृपणो दीनः अत एव लुब्धो भोगतृष्णाकुलः स्त्रैणः स्त्रीलम्पटः तदर्थम्भूतविहिंसकः ॥ २७ ॥

अविधिना "इष्टेनेष्टमभिचरन् यजेत" इत्यादिविरुद्धविधिना उल्वणं तमः स्थावरत्वम् ॥ २८ ॥

एवं कर्मसु प्रवृत्तस्य नास्ति सुखमित्युपसंहरति । कर्माणीति ॥ २९ ॥

यच्च तृप्यन्तु भुञ्जन् इतिन्यायेनाङ्गीकृतं स्वर्गादीनां नित्यत्वं तन्निराकरोति । लोकानामिति । स्वर्गलोकस्य तत्पालानां च नैव नित्यत्वमित्याह । लोकानामिति । मत् मत्तः तथा च श्रुतिः—

भीषास्माद्वातः पवते भीषोदेति सूर्यः ।
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ॥

इति एतेनैव स्वयमीश्वरत्वाभिष्कारेणेश्वराभावाङ्गीकारः परित्यक्तः ॥ ३० ॥

नरकानन्तरो अन्तर्गतत्वेत्युक्तं तत्र जीवस्यैव वैरूप्यं किंनिमित्तमित्यपेक्षायामाह । गुणा इति । गुणा इन्द्रियाणि कर्तॄणि कर्माणि देवपूजार्दीनि स्वपरस्त्रीसम्भोगमद्यादिग्रहणादिविधानि उच्चावचानि चाहरूपफलानि सृजन्ति कुर्वन्ति तांश्च गुणान् भवन्तीन्द्रियाणि गुणाः सत्त्वादयः सृजन्ते जीवस्तु गुणैः सत्त्वादिभिश्च संयुक्तो भद्राभद्राणि कर्मफलानि भुङ्क्ते ॥ ३१ ॥

गुणैरिन्द्रियैः कृत्वा उच्चनीचगतिप्राप्तिलक्षणं वैरूप्यं यावत्स्यात् तावदात्मन एकस्यापि जीवस्य नानात्वं देवतिर्यगादिरूपत्वं स्यात् यावदेवं नानात्वं तावत् पारतन्त्र्यं कर्माधीनत्वम् ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

कामगेन इच्छानुरूपगतिना विमानेन किङ्किणीजालानां क्षुद्रघण्टिकानामितरस्थानविशेषाणां माला: यस्मिन् तेन सुराक्रीडेषु देवक्रीडास्थलेषु स्त्रीभिः सह क्रीडन् आत्मपातं न वेद नित्या ऽन्यात्मा प्राकृतवस्तुमयो न मिथ्योऽनन्तो वैराग्यमुक्तिनामिति भावः ॥ २५ ॥

कालचालित इति । नित्योऽपि कालः न केवलं प्राकृतवस्तुसंयोगहेतुरेव नास्ति किन्तु तद्वियोगहेतुरपीत्यर्थः ॥ २६ ॥

एवं विहिते काम्ये कर्मणि प्रवृत्तस्य गतिरुक्ता निषिद्धे प्रवृत्तस्य गतिमाह । यदीति द्वाभ्याम् । यदि वाऽसतां सङ्गादधर्मे

यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम् ।
य एतत्समुपासीरंस्ते मुह्यन्ति शुचाऽर्पिताः ॥ ३३ ॥
काल आत्मागमो लोकः स्वभावो धर्म एव च ।
इति मां बहुधा प्राहुर्गुणव्यतिकरे सति ॥ ३४ ॥
उद्धव उवाच ।
गुणेषु वर्तमानोऽपि देहजेष्वनपावृतः ।
गुणैर्न बध्यते देही बध्यते वा कथं विभो ! ॥ ३५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निषिद्धे कर्मणि रतः प्रवृत्तः अतो भूतविहिंसकः अतस्तेषाः यतः अविजितेन्द्रियः अतः कामात्मा । अतः कृपणः अतो लुब्धः ॥ २७ ॥

किञ्च पशून् अविधिना आलभ्य हत्वा प्रेतभूतगणान् यजन् नरकान् गत्वा उत्पथामतिघोरं पुनः पुनः संसारप्रदं तमो याति॥२८॥

प्रवृत्तिमार्गस्थजीवगतिमुपसंहरति । कर्माणीति । दुःखमभावकं मुत्तरोत्तरफलं येषां तानि विहितानिषिद्धरूपाणि यदुक्तं तत्त्वाकृतिभेदेन जायते म्रियते च भौतिकि तत्र दूषणं नोक्तम सोऽयं देवदत्तः एतावन्तं कालं सुखमहमन्वभवमित्यादिप्रत्यभिज्ञानस्य ज्ञानमित्यतासूचकस्य प्रामित्त्वात् ॥ २९ ॥

अस्तु निरीश्वरमते दोषग्रस्तं सेश्वरपक्षेऽपीश्वरोऽस्तीत्यत्र निश्चितं परमेश्वरं भोक्तृभोग्यनियन्तारं भगवानाह । लोकानामिति द्वौ परार्धौ परमायुर्यस्य तस्य "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम" इति श्रुतिरत्रानुसन्धेया ॥ ३० ॥

ननु भोग्यविषये नास्ति विवादः भोक्तृविषये त्वस्ति तत्र देहेन्द्रियादिषु जीवः क इत्यत्राह।गुणा इति। जीवस्तु जीवयति सत्त्वेषु देहेन्द्रियादिकं करोतीति जीवश्चेतनः कर्मफलानि भुङ्क्ते ननु कर्मफलभोक्ता जीवोऽस्तु कर्मकर्ता क इत्याकाङ्क्षायामाह । अभावीति । असौ जीव एव कर्माणि दुःखोदर्काणि कुर्वन् देहेन तैः पुनर्नियुक्तत्वात् "कर्ता शास्त्रार्थवत्त्वात्" इति सूत्राच्च 'विज्ञानं यज्ञं तनुते' इति श्रुतेश्च ननु ज्ञानस्वरूपस्य केवलस्य कथं कर्तृत्वादि सङ्गच्छते इत्यत्र करणान्याह । गुणा इति । गुणाः इन्द्रियाणि जीवेन प्रवर्तितानि करणानि कर्माणि सृजन्ति ननु केषांचिदिन्द्रियाणां सात्त्विके कर्मणि केषां चिद्राजसे केषांचित्तामसे प्रवृत्तिस्तत्र किं कारणं तत्राह । गुण इति । गुणाः सत्त्वादिः गुणा इन्द्रियाणि अनुसृजन्ते तत्र तत्र प्रवर्तयति तन्नन्यस्य करणमन्यः कथं प्रवर्तयति तत्राह । गुणसंयुक्तः सत्त्वादिगुणैः सम्यक् युक्तः गुणपरतन्त्र इत्यर्थः ॥ ३१ ॥

अत एव आत्मनः स्वभावतो नानात्वेऽपि यावद्गुणवैषम्यं तावन्नानात्वम् अद्यसात्त्विकः अद्यराजसः अद्यतु तामस इत्येवं नानात्वमित्यर्थः । किञ्च यावदात्मनः नानात्वं तदैव तावदेव । इह निश्चये पारतन्त्र्यं गुणवश्यत्वम् ॥ ३२ ॥

भाषा टीका ।

नूपुरों के समूह की माला वाले इच्छाचारी विमान पर चढ़कर आनंदित होकर देवनों के स्थानों में क्रीड़ा करता हुआ उहां से अपने गिरने की खबर नहीं रखता है ॥ २५ ॥

जब तक पुण्य समाप्त न होवे तब तक स्वर्ग में आनंद करता है जब पुण्यक्षय होता है तब नहीं चाहने पर भी कालके हेतु से चालित होने से फिर नीचे को गिर पड़ता है॥२६॥

यदि अधर्मियों के संग से अधर्म में रत होता है अथवा स्वयं अजितेन्द्रिय है कामाभिलाषी है कृपण है लोभी है तो प्राणियों का हिंसक होता है ॥ २७ ॥

बिना विधि से पशुओं को मारकर प्रेत भूत गणों का यजन करता है तब वह जन्तु परवश होकर नरकों में जाकर घोर तमोगुण से स्थावर योनि को प्राप्त होता है ॥२८॥

इस प्रकार से मनुष्य देह में दुःख के हेतु कर्म करता है फिर उन कर्मों से दूसरी देह को प्राप्त होता है तब मरने धर्मा मनुष्य को क्या सुख है ॥ २९ ॥

जितने लोक और लोक पाल और जो कल्प जीवी हैं तिनको भी मेरा भय है द्विपरार्ध आयु वाले ब्रह्माको भी मेरे से भय है ॥ ३० ॥

इंद्रियों द्वारा सब कर्म किये जाते हैं उन इंद्रियों की उत्पत्ति सत्वादि गुणों से होती है परन्तु उन इंद्रियों के सम्बन्ध से आत्मा कर्म फलों का भोक्ता होता है ॥ ३१ ॥

जब तक गुणों की विषमता रहेगी तब तक जीवात्मा में देव मनुष्यादि शत्रु मित्रादि भेद रहता है जब तक आत्म स्वरूप में देवादि भेद ज्ञान है तब तक उपास्य पर आत्मा के ज्ञान न होने से कर्मों के पर तंत्र रहता है ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यच्च गूढमभिप्रेतं प्रवृत्तिरेव श्रेयसीति तत्राऽऽह । य एतदिति । एतद्गुणवैषम्यं तत्कृतं भोग कर्मेत्यर्थः । उपासीरन् सेवरन् ते लोकादीनामनित्यत्वाच्छुचाऽर्पिताः प्रोताः सन्तो मुह्यन्ति ॥ ३३ ॥

कथं वर्त्तेत विहरेत्कैर्वा ज्ञायेत लक्षणैः ।
किं भुञ्जीतोत विसृजेच्छयीताऽऽसीत याति वा ॥ ३६ ॥
एतदच्युत ! मे ब्रूहि प्रश्नं प्रश्नविदाम्वर ! ।
नित्यमुक्तो नित्यबद्ध एक एवेति मे भ्रमः ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्यामेकादशस्कन्धे
दशमोऽध्यायः ॥ १० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

न केवलमनित्यतामात्रं किन्तु मायामयत्वमपीत्याह । काल इति । स्वभावो देवत्वादिपरिणामहेतुः धर्मस्तद्भोगकारणम् । गुणव्यतिकरे मायाक्षोभे सति मामेव प्राहुर्न मद्व्यतिरिक्ताः सन्ति ॥ ३४ ॥

ततो निवृत्तिरेव मुक्तिहेतुत्वाच्छ्रेयसीति निरूपम् एवं नानादेक एवाऽऽत्मा तस्य च गुणकार्यदेहसम्बन्धकृतः संसारः आत्मज्ञानाच्च मुक्तिरित्युक्तं विलक्षणः स्थूलसूक्ष्मादिभ्यादिना तदेव च मतान्तरनिरासेन दृढीकृतमथैषामित्यादिना तत्र पृच्छति । गुणेष्विति । अयमर्थः गुणेष्वसत्सु मुक्तिः सत्स्वेव वा आद्य ज्ञानसाधनाभावान्न मुक्तिः द्वितीये च गुणेषु वर्तमानोऽपि तत्कार्यदेहजेषु कर्मसु सुखादिषु च कथं न बध्येत तथापि तैराकाशवदनावृतत्वान्न बध्यत इति चेत्तर्हि बन्धो न सम्भवतीत्याह । अनपावृतः कथं बध्यत इति ॥ ३५ ॥

यदि तु सत्स्वेव तदहङ्कारेण बध्यते तन्निवृत्त्या च मुच्यत इति मतं तर्हि तत्कथं ज्ञातव्यमिति पृच्छति । बद्धो मुक्तो वा कथं वर्तेतेत्यादि किं भुञ्जीत कथं भुञ्जीतेत्यर्थः ॥ ३६ ॥

एतत् एतद्विषयं प्रश्नम् किञ्च एक एवाऽऽत्माऽनादिगुणासम्बन्धान्नित्यबद्धः मुक्तेश्चान्यत्वेऽनित्यत्वप्रसङ्गान्नित्यमुक्त इत्यप्यङ्गीकार्यं स्यात् तत्र मे भ्रमो भवतीत्याह । नित्यबद्ध इति ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
दशमोऽध्यायः ॥ १० ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

य एतादिस्यसङ्क्रम सेवेरन् धर्माधर्मबंध्यासेनेति शेषः मुह्यन्ति दुःखेन मूढ़ोमाप्नुवन्ति ॥ ३३ ॥

तदभ्युपगतां नित्यतां निराकृत्य तदभ्युपगतं बद्यास्वमपि निराकरोति । न केवलमिति । कालादिचतुष्टयं जैमिनिमतानुवादोक्तं विश्वव्यवहारनिमित्तं मामेव प्राहुः मदधिष्ठाने मां कल्पितं वदन्तीत्यर्थः । स्वभावधर्मौ तु पूर्वतोऽधिकौ तत्र कालो भोगकालः आत्मा भोक्ता आगमो भोगोपायबोधकं शास्त्रं लोकः स्वर्गादिः स्वभावो व्याख्यातः धर्मः तद्भोगकारणं देवत्वादिभोगकारणमपूर्वं ततः कालादेर्मिथ्यात्वात् ॥ ३४ ॥

तदेव च संसारस्य विलक्षणात्मात्मज्ञानस्यैव मोक्षहेतुत्वञ्च तत्र निवृत्तेर्मुक्तिहेतुत्वं गुणानां मायामयत्वात् गुणेषु वर्त्तमान इत्यनुपपन्नमतोऽयमर्थः । आद्ये गुणासत्त्वपक्षे द्वितीये च प्रातीतिकगुणासत्त्वपक्षे यद्यपि गुणेषु वर्त्तमानस्तथापि तैर्गुणैः अहं कर्त्ता भोक्तेति कथं बध्यते बध्यत्वेन प्रतीयते ॥ ३५ ॥

उत अपि किं विसृजेत् कथञ्च विसृजेत् कथं शयीत शयनं कुर्यात् आसीत उपविशेत याति गच्छति ॥ ३६ ॥

एतद्विषय बद्धमुक्तविषयं मुक्तेरन्यत्व इति यज्ज्ञेयं तदनित्यामिति व्याप्तेरनित्यत्वप्रसक्तेः तत्र एकस्यैव नित्यबद्धमुक्तत्वं ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
दशमोऽध्याय ॥ १० ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यावद्देहात्माभिमान कर्मपारवश्यात् भवत्यस्वतन्त्रत्वं कर्मवश्यत्वं यावत्तावत्कर्मफलपरार्धीश्वराद्भयम् एतच्छरीरमुपासीरन् आत्मत्वेनानुसन्दधत न मुह्यन्तीत्यर्थः ॥ ३३ ॥

देशकालधर्माधर्मेत उपाधीयां हि सुखदुःखसाधनादिहेतुत्वं कृत्वा मर्यादिहेतवः कालादयोऽपि तदधीना इत्याह । काल इति । आत्मा शरीरं पुण्यपापानुष्ठाता वा आगमः भोगः स्वभावः क्षुरकण्टकादीनामिव तत्तदवान्तरकार्यस्वभावः गुणव्यतिकरे सृष्टिवेलायाम् ॥ ३४ ॥

त्रिगुणमये शरीरे वर्त्तमानस्य बद्धस्य गुणातीतत्वमसम्भावितमिति चोदयति । गुणेषु वर्त्तमानोऽपीति ॥ ३५—३७ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
दशमोऽध्यायः ॥ १० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यावदस्य देहिनः स्वस्वातन्त्र्यं स्वतन्त्रस्यात्मनः स्वपारतन्त्र्यमित्यर्थः। तावदीश्वरतो मत्तो भयं सुखक्लेशगर्भं दुःखप्रचुरं संसारं तावदसमापाद्यामीत्यर्थः । कस्तर्हि गुणावैषम्यादिपरम्परानिवृत्त्युपाय इत्यत्र मदुपासनैवेत्यभिप्रेत्य देहोपासनस्य शोकमोहहेतुत्वमाह । य इति । एतच्छरीरं ये पुरुषा उपासीरन्नात्मत्वेनानुसंदधते तत्सुखार्थं प्रयतन्ते चेत्यपि वाभ्यां ते शुचा शोकेनार्पिताः सक्ताः मुह्यन्तीति शोकनिवृत्त्युपायविषयमोह प्राप्नुवन्तीत्यर्थः ॥ ३३ ॥

ननु प्रतिकूलदेशकालस्वभावादय एव भयहेतवो न त्वमित्यत आह । काल इति । कालादयोऽपि मदधीना एवेति भावः । तत्रात्मा शरीरं पुण्यपापानुष्ठाता वा आगमः मार्गः उपायः विधिप्रतिषेधात्मकं शास्त्रं वा स्वभावः क्षुत्पिपासादिकमिति शरीरं चन्द्रनक्षत्रादिकं वस्तुस्वभाव इत्येतान् बहुधा बहुप्रकारान् गुणव्यतिकरे सृष्टिदशायां मां प्राहुर्मदधीनान्प्राहुरतोऽहमेव भयावहकारीत्यर्थः ॥ ३४ ॥

विलक्षणः स्थूलसूक्ष्माद्देहाद्भिन्नश्चेतना स्वद्योगित्यात्मनां देहवैधर्म्यमुक्तं तदनुप्रवेशकृतं तद्गुणाध्यासात्मकं बन्धनञ्च वैशारदी चातिविशुद्धबुद्धिरित्यादिना गुणकर्मबन्धनिवृत्त्युपायः परमात्मोपासनमित्युक्तम् अत्रापि य एतत् समुपासीरन्निशत्वेनेन देहोपासनस्य बन्धहेतुत्वोपपादनेन परमात्मोपासनस्य तन्निवृत्त्युपायत्वं सूचितं तस्माज्जिज्ञासयात्मानमात्मस्थं केवलं परमित्येवं देहाद्भिन्नयोरपि जीवपरयोर्जीवस्य परस्य देहावयवत्वेनसमानिमित्यादि विलक्षणाधर्मयोगित्वेन भेदश्चोक्तः तदेतदघटमानमिव मत्वा पृच्छति । गुणेष्विति । गुणशब्दोऽत्र तत्कार्यदेवादिदेहशब्दादिविषयपरः सत्त्वादिगुणमूलककर्मपरश्च तत्र देहेष्वधिष्ठातृतया शब्दादिषु भोक्तृत्वेन देहजेषु गुणमूलककर्मसु कर्तृतयावस्थितोऽपि देही जीवः कथमित्यपक्रम्यते गुणैरनपावृतः कथम् "अनृतेन हि प्रत्यूढास्तथा सत्यानां सतामनृतमपिधानम्" इति जीवानां कर्मणा तिरोहितस्वभावत्वश्रवणात् त्रिगुणमये शरीरे वर्तमानस्य बद्धस्य कर्मणा तिरोहितस्वभावस्य च जीवस्यानादिसंसारिणो वैशारदी बुद्धिरपि न गुणकर्मनिरोधं वहतीति गुणातीतत्वमसम्भावितमिति भावः । अतः गुणैर्गुणकर्ममूलैः सुखदुःखादिभिः कथं न युज्यते युज्यत एवेति भावः । वस्तुतो देहादिसम्बन्धेऽप्यावरणकर्मोपाधिकत्वेऽपि अनादित्वादविद्यात्वाज्जीवस्य कर्मवश्यत्वं तदानुगत्यं तत्प्रयुक्तसुखदुःखभोक्तृत्वं च दुर्वारं नहि नित्यस्यानिवर्तसम्भव इति भावः । ननु कर्मवश्यत्वादिकमनादिकमेवेत्यत आह । बध्यते वा कथमिति । तर्हि ईश्वरवदात्मनः स्वहशा (?) इतितुश्च न बन्धसम्भव इति भावः ॥ ३५ ॥

अन्यदपि पृच्छति । कथं वर्तेतेति । विहरेदिति कर्तृपदमध्याहृत्यैवं वैशारदबुद्ध्युदयानुगुणा वृत्तिः कीदृशीति प्रश्नः तामेव प्रपञ्चयन्पृच्छति । विहरेदिति । कथमित्यनुषज्जते कैर्वा लक्षणैर्वा एकैर्लिङ्गैरनयमिति ज्ञायते प्रश्नान्तरं किं भुञ्जीतेति । किंशब्दः प्रश्नार्थकः उत विसृजेद्वा अनं विसृजेदेव नेति प्रश्नः किं शयीतेव अथवा आसीतेव अथवा याति सञ्चरन्नेव वर्ततेत्यर्थः । यद्वा किंशब्दः कथमर्थकः कथं भुञ्जीतेत्यर्थः । यद्वा किंभुञ्जीतेति भोज्यवस्तुविषयकः प्रश्नः किं विसृजेदित्यभोज्यवस्तुविषयकः शयीतेत्यादीनामध्याहृतेन कथमित्यनेन सम्बन्धः ॥ ३६ ॥

एतामिति । हे अच्युत ! मे मम एतं प्रश्नं ब्रूहि प्रति ब्रूहि नाहं प्रभुरिति मायोक्त इत्याशयेन सम्बोधयति । प्रश्नविदां वरेति प्रश्नशब्दः प्रतिवचनपरः तस्य प्रश्नपूर्वकत्वात् एतादिति पाठे एतद्वचनपाचरणादौ यः प्रश्नस्तं प्रश्नं ब्रूहीत्यर्थः । तर्हीत्यमाक्षिपता त्वया किमवधृतमित्यत आह । नित्यबद्ध इति । एकशब्दोऽन्यार्थकः एको ऽन्यार्थे प्रधाने चेत्यर्थपरिगणनानुशासनात् नित्यबद्धो जीवोऽन्यः नित्यमुक्तस्त्वन्यः किंचिदप्यवधृतमपि तु न बद्धस्य कदाचिदपि मुक्तिः सम्भविष्यति निर्मुक्तस्य पूर्वं बन्धः कथं सम्भवेदिति मे भ्रमः यद्वा तस्माज्जिज्ञासयात्मानमात्मस्थं केवलं परमित्युक्तजीवेश्वरभेदद्रढीकरणाय तयोरैक्यमाशङ्कते । नित्यबद्ध इति । अस्मिन् पक्षे संख्यायामेवैकशब्दो वर्तते योऽयं नित्यमुक्त ईश्वरः स एव स्वाविद्यया नित्यबद्ध इति मे भ्रम इत्यनेनैक्यप्रमितिकारणाभावात्तदपि निश्चेतुं न प्रभवामीति सूचितम् ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

दशमोऽध्यायः ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तर्हि स्वामिन्यान्तः क इति तत्राह । काल इति । गुणव्यतिकरे अस्मिन् मुक्तियशानां बहुधा कालादिभिर्मामभिमामुपासते इति प्राहुर्वेदाश्च इति शेषः—

कालः सर्वगुणोद्रेकाद्व्याप्तत्वाच्चात्मनामकः ॥
आगमोऽवगतेरस्य लोको ज्ञानस्वरूपतः ।
स्वधर्मात्स्वभावोऽयं धारणाद्धर्म इत्यपि ॥
उपासते सदा मुक्ताः परानन्दैकभागिनः ।
तदेतत्तत्त्वमज्ञात्वा प्राहुर्भुमनयः परे ॥
यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः ।
भेदबुद्धिस्तु यावत्स्यात्तावदीश्वरतन्त्रता ॥
यावदीश्वरतन्त्रत्वं तावत्तस्माद्भयं भवेत् ।
उपासत य एवं तु नित्यं शोके पतन्ति ते ॥
महातमस्यनानन्दे तस्मात्सेवेति चिन्तयेत् ।
तस्मान्नित्यं तु नानात्वं जीवानामीशतन्त्रता ॥
स्वाधिकारं वशत्वं च मुक्तावपि सदेष्यते ।
एवं ज्ञात्वा विमुच्यन्ते परानन्दं व्रजन्ति चेति ॥

प्रमाणात्कालादिनामानि हरेरेव मुख्यार्थानीत्यतो गुणपूर्णस्य हरेः दुःखसमुद्रमग्नेन जीवेनैक्यं दूरतोपाकृतमितिभावः कलकामधनादिवाति धातोः कमनीयानां गुणानां धनुरावार इति कालः सर्वेषां सर्वस्मादाप्तत्वात्प्रष्टत्वादात्मा अवगच्छति जानाति सर्वमित्यागमः लुकृ प्रकाशे इति धातोः प्रकाशपरपर्यायज्ञानस्वरूपत्वात् लोकः स्वाधीनो भावः सत्तालक्षणो यस्य सः स्वभावस्तत्त्वत्र इत्यर्थः । धारयति सर्वमिति धर्मः ॥ ३४ ॥

भगवदुक्त्या सम्यक् ज्ञातजीवपरभेदोऽप्युद्धवः स्थूलमतीनामपि निस्तुषं विविच्य भेदं ज्ञापयितुं पृच्छति । गुणेष्विति । स्वतोऽनपावृतः सदेही परमात्मा देहजेषु गुणेषु स्पर्शादि-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विषयेषु वर्तमानोऽपि गुणैर्विषयैर्न बध्यते उत बध्यते द्वितीये कथं बध्यते इति ॥ ३५ ॥

कोऽयं इति तत्राह । कथमिति । यदि बद्धस्तर्हि केन प्रकारेण वर्तेत लोके बद्धस्य प्रवृत्तदर्शनात् चर्यादिलिङ्गाभावेन तज्ज्ञाने च दुरापादमिति भावेनाह । कैरिति । बद्धस्यापि भोगाभावे मरणं स्यादतः किम्भुञ्जीतेति भुञ्जानस्य हानोपादाने दृष्टे तत्रापि किञ्जहाति बद्धः शयनाद्यन्यतमं करोति तत्रापि किंकरोति ॥ ३६ ॥

ब्रूहि परिहारेण स्पष्टीकुरु एवं पृच्छतस्तव कोऽभिप्रायः इत्यत एकजीववादिमतमवष्टभ्य प्रश्नबीजमाह । नित्येति । कुत एतदिति चेन्न न मोक्षो न बन्धनमित्यादिपरिहारात् "शिष्योऽपि पूर्वपक्षस्थस्तद्वादात्ममतं ब्रुवन् । नैव दूष्यस्तथान्येन स्थिरत्वार्थं हि तद्वच" इति वचनादुद्धवस्य नासत्यतादोषोऽपि ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
दशमोऽध्यायः ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेतत् पूर्वोक्तं त्रयमपि मतान्तरं निरस्यति । य एतदित्यर्द्धकेन ॥ ३३ ॥

यतः काल इति कालादिचतुष्टयं जैमिनिमतानुसारोक्तं विश्वव्यवहारसिद्धिनिमित्तं तत् पारिशेष्यात् स्वभावः साङ्ख्यमते गुणादेः प्रत्येकं विलक्षणकार्यकरत्वं धर्मस्तन्मते सत्तामात्रम् अपूर्वाविरत्वेतु कर्मेत्येवावक्ष्यत् सुखदुःखभोगकारणात्मकस्य विवक्षितत्वात् तनश्च मामेव ते प्राहुः किन्तु काल इत्यादिरूपेण तद्यथावन्मद्रूपेण तत्रापि बहुधा यतोक्तं कारणं प्राचुर्येण मिथश्च कैमुत्येन तत्तत्स्वगडकारणत्वेन मामेव प्राहुरित्यर्थः "तेऽपि मामेव कौन्तेय । यजन्त्यविधिपूर्वकम् । अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते " इतिवत् तत्र हेतुः गुणव्यतिकरे गुणैस्मयमादिभिरासङ्ग पराभूतत्वे सतीति तत्परामवादेश श्रुतिस्मृतियुक्तिविरुद्धानीश्वरवादिनो भूत्वा ते तथा वदन्तीत्यर्थः । ईश्वरकारणवादिनान्तु प्रायस्तान्यपि न दूषणानीति भावः । तथाहि "यदश्राविद्धाः प्रचरन्ति कर्मसु नैवान्यदा लोहमिवाप्रतप्त"मिति न्यायेन परमात्मस्वरूपेश्वरांशत्वात् स्वस्वजडवर्गप्रवर्त्तकत्वात् चिदात्मनां जीवानां स्वरूपसिद्धं अपि कर्तृत्वभोक्तृत्वे उपाधिं विना न स्पष्टीभवतः तस्मादविद्ययोपाधितो जाते च ये ताभ्यां न साक्षात् सम्बन्धः किन्त्वज्ञानेनैव तस्मादर्थवादिन्यत्र कर्मेति सुखदुःखयोरिति च विशेषितं तथा प्रत्यात्मं नानात्वं भवतु किन्तु परमात्मरूपेणैकत्वमेव तथा लोकस्याव्यक्ताव्ययकारणरूपेण भवतु नाम नित्यत्वं किन्तु स्थूलरूपेणानित्यत्वमेव तथात्मनामुपाध्यंशेन नास्ति सर्वथा नित्यत्वं किन्तु स्वरूपेणैव तथा कालस्य तत्प्रभावरूपतया आगमस्य च तन्निश्वासात्मतया नित्यत्वमस्तु प्रलये यत्र प्रचारो नास्त्येव तथा गुणादेरपि स्वभावः कारणं भवतु अविद्योपाहित आत्मा वा किन्तु सर्वकारणेश्वरशक्त्यात्मकत्वेनैवेति तदेवं सर्वस्येश्वरांशैकाभिन्नतया तस्य चेश्वरस्य च श्रुतिस्मृतिसिद्धानुभवप्रामाण्येन तद्रूपतया ततोऽन्यत्र रतानां सर्वमपि वैराग्यमेव श्रेयः तदेतज्जैमिनिमतनिरासायैवोक्तं लोकानां लोकपालानामित्यनेन मतान्तरनिरासाय चान्यत्रोक्तं "आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रय" इत्यनेनापि तात्पर्यम् ॥ ३४ ॥

देहजेषु गुणेषु वर्तमानोऽपि कथं तैर्न बध्यते इत्यन्वयः वर्तमानोऽप्यनावृतश्चेत् कथं वा बध्यत इत्यन्वयः । अन्यत्रैः तत्र गुणेष्ववस्थितेषु मुक्तिरित्यत्र बन्धस्तु तद्भावस्यापि स्वत एव ज्ञेयः ॥ ३५—३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
दशमोऽध्यायः ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्मात् प्रवृत्तिरेव श्रेयसीति ये प्राहुस्तानाक्षिपति ये एतत् कर्मैव उपासीरन् सेवेरन् ते शुचार्पिताः शोकमोहाः सन्तो मुह्यन्ति ॥ ३३ ॥

लोककालागमात्मनां सर्वेषामेव नित्यत्वमिति यत्परमतमङ्गीकृत्योक्तं तत्राह । काल इति । स्वभावो देवत्वादिप्राप्त्याश्रयहेतुः । धर्मः स्वर्गादिहेतुः इति गुणव्यतिकरे मायाक्षोभे सत्येव मामेव बहुधा भूतं तेषां सम्मायाशक्तिकार्यत्वादाहुः तस्मादस्य जीवस्य कर्मबन्धविमोचनार्थं यतनीयमिति मतं स्थापितम् ॥ ३४ ॥

ननु च भवन्मते मोक्ष एव पुरुषार्थोऽन्ततः स च भक्तिज्ञानवैराग्याभ्यासाद्भवति तस्मिन् सति पुरुषो मुक्त उच्यते इति मया न बुद्ध्यत इत्याह । गुणेष्विति । मुक्तस्यापि तत्तत्प्रियगमनादेर्भोजनशयनाटनादिश्रवणात् स्थूलसूक्ष्मदेहद्वयं त्रिगुणमेव तस्मिन्न स्थिते सति देहजेषु गुणेषु वर्त्तमानोऽपि नैर्गुण्यैर्देही कथं न बध्यते तथापि तैराकाशवत् चिन्मयत्वादनावृतो जीवो न बध्यते इति चेत् तर्हि बन्धो न सम्भवतीत्याह । अनावृतः कथं बध्यत इति ॥ ३५ ॥

यदि तु सत्स्वपि गुणेषु विषयेन्द्रियादिषु तदभिमानेन बध्यते तन्निवृत्त्या च मुच्यते इति मतं तर्हि मया तथा कथं ज्ञातव्यमिति पृच्छति । कथं वर्तेतेत्यादिना । वर्तनविहरणभोजनमूत्रपुरीषविसर्जनशयनासनगमनानि कर्माणि मुक्तस्य बद्धस्य च तुल्यान्येव दृश्यन्ते । तानि च निरभिमानानि साभिमानानीति मया कैर्वा लक्षणैर्ज्ञातव्यानि इति ॥ ३६ ॥

नित्यमुक्तो दत्तात्रेयभरतादिर्नित्यबद्धो देवदत्तयज्ञदत्तादिस्तु तयोरैहिकक्रियत्वादेक एवेति भ्रम इति लक्षणं तु मया प्रष्टुमशक्यमत्यस्यैव तत्तयाहं ज्ञापयितव्य इति भावः । अत्र नित्यपदमनधिकार्थम् ॥ ३७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशस्य दशमः सङ्गतः सङ्गतः सताम् ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अहोवत भगवन्नरस्य गुणाभिभूतस्य गुणबद्धत्वमस्तु तावत् यदुक्तं लोकानां लोकपालानां मद्भयमिति तन्निवृत्तिः कदेत्यत आह । यावदिति । यावत् अस्वातन्त्र्यं गुणपारतन्त्र्यम् तावदीश्वरतो मत्तो भयं संसारभवभ्भवति तदेवाह । एतदस्वातन्त्र्यं ये उपासीरन् ते शुचार्पिताः जन्ममरणादिसन्तापेनार्दिताः सन्तो मुह्यन्ति संसारे एव भ्रमन्ति त्यक्तगुणपारतन्त्र्यास्तु मुच्यन्ते इत्यर्थः ॥ ३३ ॥

ननु कर्तृभोक्तॄणां नानात्वं मन्यसे इत्याक्षेपस्तेषां नानास्वरूपाणामपि केनचित्प्रकारेण नानात्वे सति घटेत तदनानात्वं कीदृशमत्र चेतनाऽचेतनानन्तशक्तिर्निःसमानातिशयोऽहमेकः मत्तः चेतनाचेतनपदार्थानामेकपदार्थे ऽन्तर्भावान्नानात्वमित्याह । काल इति । गुणव्यतिकरे सति मामेव सर्वशक्तिमव कालोऽचेतनविशेषः आत्मा चेतनः लोकः चिदचित्समुदायः धर्मः सर्वोऽपि वेदे प्रोक्तो निवृत्तिप्रवृत्तिरूपः इति नाना "सर्वं खल्विदं ब्रह्म तज्जलानिती"त्यादीनि वाक्यानि प्राहुरिति दिक् ॥ ३४ ॥

गुणबद्धाः संसारे भ्रमन्ति त्यक्तगुणपारतन्त्र्या विमुच्यन्ते इत्युक्तं तत्र पृच्छति । गुणेष्विति । अनपावृतो विस्तृतज्ञानो जीवः हे विभो ! हे सर्वव्यापक कथं बध्यते देहजेषु स्वस्ववृत्तिरूपेण देहे वर्तमानेषु सत्त्वादिगुणेषु वर्तमानो देही गुणैः कथं वा न बध्यते कथं गुणपारतन्त्र्यं त्यक्त्वा मुक्तो भवतीत्यर्थः ॥ ३५ ॥

गुणैर्बद्धो यः सांसारिकसुखकामः यश्च मुक्तिकामः कथं वर्तेत किम्भुञ्जीत उत अपि कथं विसृजेत् अनिष्टमिति शेषः ॥ ३६ ॥

[illegible]—

सदा पश्यन्ति सूरय इति—

असुर्या नाम ते लोका अन्धेन तमसा वृताः ।

तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः ॥

इति च वेदे श्रूयते तत्र एकः नित्यमुक्त एव एकः नित्यबद्ध एव इति मे भ्रमः सर्वांशभूतानां क्षेत्रज्ञानां समस्वभावानां मध्ये केन हेतुना केषांचिन्नित्यमुक्तत्वं केषाञ्चिन्नित्यबद्धत्वमिति मे सम महान् संशय इत्यर्थः । हे अच्युत ! नित्याविग्रह हे प्रश्नविदां प्रश्नाभिप्रायाभिज्ञानां मध्ये वर श्रेष्ठ मे एतत्प्रश्नं प्रश्नममुह ब्रूहि ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
दशमाध्यायार्थप्रकाशः ॥ १० ॥

---

भाषा टीका ।

जब तक इस जीव को स्वस्वरूप पर स्वरूप ज्ञान के बिना परतंत्रता है तब तक संसार में रहने से ईश्वर से भय है तिस से जो लोग इस संसारादिक देहादिक में ही ममता रखते हैं वे सदा शोक युक्त रहते हैं ॥ ३३ ॥

गुणों के क्षोभ होने से काल आत्मा आगम लोक स्वभाव धर्म इस प्रकार से मेरेको बहुत प्रकार कहते हैं अर्थात् इन सब का कारण मही हूं ॥ ३४ ॥

उद्धव उवाच ।

हे विभो ! श्रीकृष्णचन्द्र इस देह में से उत्पन्न होने वाले गुणों में वर्तमान रहकर भी इनसे लिप्त न होकर कैसे नहीं बंधता है अथवा कैसे बंध जाता है सो कहिये ॥ ३५ ॥

इस देह में रहकर बंध से छूटने वाला पुरुष कैसा वर्तता है कैसे विहार करता है अथवा किन लक्षणों से जाना जाता है कैसे भोजन करता है कैसे वस्तुओं को छोड़ता है कैसे सोता है कैसे बैठता है कैसे जाता है ॥ ३६ ॥

हे प्रश्नकर्ताओं में श्रेष्ठ ! अच्युत ! भगवन् मेरे इस प्रश्न का उत्तर कहिये और नित्य मुक्त जीव तथा नित्यबद्ध जीव एक ही होगा करके मेरे को भ्रम है तिसको भी आप दूर कीजिये ॥ ३७ ॥

इति श्रीमद्भागवत एकादशस्कन्ध में दसमाध्याय
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्त ॥ १० ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे दशमोऽध्यायः ॥ १० ॥

—:*:—

# अथैकादशोऽध्यायः ।

---

श्रीभगवानुवाच ॥

बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः ।
गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम् ॥ १ ॥
शोकमोहौ सुखं दुःखं देहापत्तिश्च मायया ।
स्वप्नो यथाऽऽत्मनः ख्यातिः संसृतिर्नतु वास्तवी ॥ २ ॥
विद्याऽविद्ये मम तनू विद्‌ध्युद्धव ! शरीरिणाम् ।
मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते ॥ ३ ॥
एकस्यैव ममांशस्य जीवस्यैव महामते ! ।
बन्धोऽस्याविद्ययाऽनादिर्विद्यया च तथेतरः ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकादशे तु बद्धानां मुक्तानां चात्र लक्षणम् ॥
साधूनां च तथा भक्तेर्लक्षणं हरिरभ्यधात् ।

नित्यमुक्तो नित्यबद्ध एक एवेति मे भ्रम इति यदुक्तं तत्किं वस्तुतो विरोधः प्रतीतितो वा नाद्यः बन्धमोक्षयोर्वास्तवत्वाभावादित्याह । बद्धो मुक्त इति व्याख्याम् । आत्मा बद्धो मुक्तश्च मे गुणतो मदधीनसत्त्वादिगुणोपाधितो न तु वस्तुतः नन्वौपाधिकत्वेऽपि तप्ततुलपाकादिवद्वास्तवत्वं किं न स्यात्तत्राऽऽह । गुणस्य मायामूलत्वाद्बन्धनं नास्ति अत एव मोक्षश्च नास्ति ननु कथं सर्वथाऽविरुद्धमुच्यते तत्राऽऽह । इति मे व्याख्येति । एवं मत्कृतो निर्णयः अन्यमतिकुतर्कैरित्यर्थः । अथवैवमन्वयः आत्मा बद्धो मुक्त इति या व्याख्या उक्तिः सा मे गुणतो मद्गुणपारतन्त्र्यात् अत्र हेतुत्वेन गुणानिवर्तारि स्वस्मिंस्तद्व्यतिरेकमाह । अत एव न मे बन्धनं मोक्षो वेति अन्वयसमानम् ॥ १ ॥

एवं कारणभूतगुणानां मायामयत्वात्तत्कार्यसंसृतिर्मायेति प्रपञ्चयति शोकमोहाविति । यथा स्वप्न आत्मनो बुद्धेरेव ख्यातिर्विवर्तस्तद्वत् ॥ २ ॥

अतो वस्तुविरोधस्तावन्नास्ति प्रतीतिस्त्वौपाधिकी घटत इत्याह । विद्याऽविद्ये इति । तन्येते मोक्षबन्धावाभ्यामिति तनू शक्ती कुतः मे मायया विनिर्मिते मायावृत्तिरूपत्वात् मोक्षबन्धकरीत्येकवचनं द्विवचनार्थे ननु तत्कार्यत्वे बन्धमोक्षयोरनादित्वनित्यत्वे न स्याताम् न आद्ये अनादी अतो यावदविद्यां प्रवर्तयामि तावद्बन्धो यदा विद्यां ददामि तदा मोक्षः स्फुरतीत्यर्थः तथा च स्कन्दपुराणे—

बन्धको भवपाशेन भवपाशाच्च मोचकः ।
कैवल्यदः परं ब्रह्म विष्णुरेव सनातनः ॥

इति ॥ ३ ॥

तत्र शरीरिणामिति । बहुवचननिर्देशात्तत्पक्षभेदेनाविरोध उक्त इति भ्रान्तिं व्यावर्तयन्बन्धमोक्षव्यवस्थामुपपादयति । एकस्यैवेति । तर्हि किमात्माभेदात्तवापि बन्धो नहीत्याह । अस्य जीवस्यैवेति । नन्वात्माभेदे जीवो नाम कोऽन्योऽस्ति पृथक् कथं च बन्धमोक्षसुखदुःखादिव्यवस्था तत्राऽऽह । ममांशस्येति । अयमभावः यथैकस्यापि चन्द्रादेर्जलाद्युपाधिना बिम्बप्रतिबिम्बरूपो भेदो यथा च तत्र जलकृताः कम्पादयः प्रतिबिम्बस्यैव यथा च प्रतिबिम्बानामप्युपाधिभेदादेकस्मिन्नुदकुम्भे भग्ने तद्गतप्रतिबिम्बस्यैव विध्वंसो नान्यगतस्य तथाऽविद्यायाम् प्रतिबिम्बस्य मदंशस्य जीवस्यैव तत्कृतो बन्धस्तस्य चोपाधितो भेदाद्व्यवस्थेति । तथा चाऽऽहुः—

यथैकस्मिन्घटाकाशे रजोधूमादिभिर्युते ।
न सर्वे संप्रयुज्यन्ते तथा जीवाः सुखादिभिः ॥

इति एतच्चातिरहस्यं स्वबुद्ध्या निश्चेतव्यमिति सम्बोधयति । हे महामते ! इतरो मोक्षः ॥ ४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तत् एकस्यैव बद्धमुक्तत्वं प्रतीतितः भ्रान्त्या नाद्यः वस्तुविरोधपक्षो न सम्भवति मे गुणत इति गुणा जीवस्य नैव मे इति वक्ष्यमाणत्वात् नियन्तृनियम्यमात्रेण सम्बन्धं [illegible]

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सिद्धं किमुक्तं स्यादत्राह । एवमिति । एवमुक्तविधस्य जीवस्याविद्ययानादिबन्धस्तथा विद्ययेतरत् मोक्षलक्षणं श्रेयः स्त इत्यर्थः । अतः परमात्मा कथं बध्यत इति प्रश्नो नोपपन्न इति भावः ॥ ४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गुणस्य मायामूलत्वादिति मायया तत्सम्बन्धस्य मिथ्यैव स्फोरणादित्यर्थः । सम्मतेः तत्र द्वितीयव्याख्याने मे मतामिति शेषः ॥ १—२ ॥

कथं तत्राह । विद्येति । अतो वस्तुतो नित्यमुक्तोऽपि प्रतीतितो नादिबद्ध इति युगपदुभयत्वं घटत इत्यर्थः । अथ मे मम मायया शक्त्या कृते ननु स्वरूपान्तरूपत्वात्स्वांशरूपे अत एवानादी ये निर्मिते प्रसारिते ते एव मम शरीरिणां मदीयानां मोक्षबन्धकर्यौ भवतः इति किंतु सा धर्मराजवदुक्ता भयं द्वितीयाभिनिवेशतः स्यादिति न्यायेन यस्य यावन्मद्वैमुख्यं तस्य तावदविद्यां प्रसार्य स्वरूपावरणपूर्वकं गुणावेशं कुर्वती बन्धं करोति मत्साम्मुख्ये तु गुणावेशस्याजननपूर्वकं स्वरूपस्फुरणं कुर्वती मोक्षं करोतीति ज्ञेयम् अतस्तस्या एव तयोः कर्तृत्वेऽपि मदनुगत्वाद्बन्धको भवपाशेनेत्याद्युच्यत इति भावः । बन्धमोक्षकरी इति "सुपां सुलुक् पूर्वसवर्ण" इत्यादिना पूर्वसवर्णश्छान्दसः ॥ ३ ॥

एवं शरीरिणां प्रातीतिके बन्धे सति प्रत्येकमेवं व्यवस्थेत्याह । एकस्यैवेति । ममांशस्य रश्मिपरमाणुस्थानीयस्य अत एव तस्य जीवस्यैव ननु मण्डलस्थानीयस्य मम अत एव चैकस्यैव ननु सर्वस्येत्यर्थः ॥ ४—५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

"एकादशे बद्धमुक्तवैलक्षण्यस्य शिक्षणम् ।
साधूनां लक्षणं भक्तेरङ्गान्यप्युक्तवान् हरिः ॥

कथं मोक्षः कथं बन्ध इति तत्र प्रश्नोऽयं वस्तुतो न घटत इत्याह । बद्ध इति । मे गुणतः मदधीनसत्त्वादिगुणैर्बद्ध इति ततो मुक्त इति व्याख्या वस्तुतो न सम्भवति कुतः गुणस्य गुणसम्बन्धस्य मायामूलत्वान्मायया अविद्यया दुर्घटकशक्त्या सूर्यस्य देहेन्द्रियादिगुणसम्बन्धस्य मिथ्यैव स्फोरणादित्यर्थः । अत एव मे मम मते इति शेषः । न बन्धनं बन्धनाभावादेव न मोक्षश्च ॥ १ ॥

तत्र बन्धस्य मिथ्यात्वप्रकारं दर्शयति । शोकमोहाविति । देहापत्तिर्देहाद्देहान्तरप्राप्तिः देहस्य आपत्तिरापत् मृत्युर्वा मायया मायिकोपाधिसम्बन्धेन अविद्यया मायिकोपाध्यन्तःकरणं सूक्ष्मदेहे जीवस्य अभिमानादेव तद्धर्माणां शोकमोहादीनामपि स्वीयत्वेन ग्रहणमित्यर्थः । अतः शोकमोहादिमत्त्वलक्षणा संसृतिर्न वास्तवी न वस्तुभूता शोकमोहादीनां मायागुणत्वेन सत्यत्वेऽपि तत्सम्बन्धस्य जीवे अविद्याकल्पितत्वान्मिथ्यात्वमित्यर्थः । यथा आत्मनो बुद्धेः ख्यातिर्विवर्तः स्वप्नो मिथ्या तथा ॥ २ ॥

ननु केयमविद्या यया मिथ्याभूतोऽपि गुणसम्बन्धः स्फोरितस्तत्राह । विद्याविद्ये मम तनू तन्वेते बन्धमोक्षावाभ्यामिति ननु शक्ती शरीरिणां बन्धमोक्षकरी बन्धमोक्षकर्यौ अविद्या बन्धकरीत्यर्थः । इमे च मे मम मायया महा शक्त्या विनिर्मिते सृष्टे किञ्च मायावृत्तित्वादेव तयोर्मायामूलत्वमौपचारिकमेवोच्यते इत्याह । आद्ये अनादी अनाद्यनन्तमव्यक्तं नित्यं कारणमव्ययमिति द्वादशोक्तेः पुंसोऽस्ति प्रकृतिर्नित्येति वैद्यकोक्तेश्च मायाशक्तिरिव तद्वृत्ती विद्याविद्ये अपि नित्ये एव तदेवं मायायास्तिस्रो वृत्तयः प्रधानमविद्या विद्या च प्रधानेनोपाधिः सत्त्व एव सृज्यते अविद्यया तदध्यासो मिथ्या भूतः विद्यया तदुपराम इति तिसृणां कार्यम् ॥ ३ ॥

ताभ्यामेव मदीयशक्तिभ्यामविद्याविद्याभ्यां मदीयजीवशक्तेर्देहाध्यासप्रसारणाप्रसारणाभ्यां वस्तुभूतावपि बन्धमोक्षौ प्रत्यायितौ मदीयसृष्ट्यादिलीलाशक्तिप्रेरणावशादेवेत्याह । एकस्यैवेति । अंशस्य विभिन्नांशशब्दवाच्यस्य 'प्रकृतिं विद्धि मे परां जीवभूतां महाबाहो ययेदं धार्यते जगदिति' मदुक्तेर्जीवस्य मच्छक्तित्वेऽपि ममैवांशो जीवलोके जीवभूतः सनातन" इति मदुक्तेरंशत्वं चेत्यर्थः । अत्र शरीरिणामिति पूर्वोक्तं नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामानिति श्रुतेश्च जीवानां बहुत्वेऽपि कथमेकस्येत्युक्तम् उच्यते एकस्या अपि तटस्थाख्यजीवशक्तेर्वृत्तिबाहुल्यादेव बहवो जीवा इत्युच्यन्ते यथा एकस्या अपि बहिरङ्गाख्याया मायाशक्तेः प्रथमसर्गे विद्याविद्या चेति द्वे वृत्ती तयोश्चापि प्रतिजीवं वृत्तिबाहुल्याद्बहुत्वमेव यथा च मायावृत्तीनां मायाशब्दवाच्यत्वं तथैव जीववृत्तीनामपि जीवशब्दवाच्यत्वं किञ्च जीवशक्तिमायाशक्त्योर्वृत्तीनामपि नित्यत्वमेव ज्ञेयं नित्यो नित्यानामिति बन्धमोक्षकरी आद्ये इत्यादिवचनेभ्यः अविद्याध्वंस अपि जीवस्य निर्वाण इत्यादिवाक्येषु ध्वंसनिर्वाणशब्दाभ्यामुपराममात्रं सायुज्ये उच्यते ब्रह्मणा सह युज्यत इति सयुक् तस्य भावः सायुज्यमिति जीवस्य न तत्र स्वरूपध्वंसः किञ्च—

विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा ।
अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते ॥
यया क्षेत्रज्ञशक्तिः सा तारतम्येन वर्तते इति ॥

विष्णुपुराणोक्तेः प्रायो वशीभूता सृष्टिलीलासिद्ध्यर्थमित्याह । बन्ध इति । अस्य अविद्यया बन्धः स च कर्मणोऽनादित्वादनादिः मोक्षसम्भवात् सान्तः इतरो मोक्षः जन्यत्वात् सादिरनश्वरत्वादनन्तो ज्ञेयः ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जीवः कथं बद्ध्यते पुनः स कथं मुक्तो भवतीति प्रश्नयोरुत्तरमाह । बद्ध इति । जीवः गुणतो बद्धः मे मतो मुक्तो भवति इति व्याख्या सिद्धान्तोक्तिः "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति स्ववचनान्तराच्च ननु ज्ञानस्वरूपो जीवः स्वत एव किं न विमुच्यते इत्यत आह । न वस्तुतः । न स्वत इति अत्र बन्धमोक्षव्यवहारो नास्ति स एवान्येषां विमुक्तिहेतुरहमस्मीत्याह । न मे मोक्षो न बन्धनमिति । ननु गुणस्याचेतनस्य चेतनबन्ध-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कनिष्ठं तदुक्तं तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तपेत्यादि मुक्तेर्ब्रह्मादिभ्यश्चामिदं चिह्नमिति चेन्न—

बद्धा जीवास्तु कथ्यन्ते मुक्ता मध्वपदेहनात् ।
स इत्येवोच्यते नित्यं सर्वज्ञत्वतो हरिरिति

वचनात्—

अनाद्यविद्ययान्धत्वं जीवस्य यदि योग्यता ।
प्रयत्नश्चानुकूलः स्यादन्तवद्भवति ध्रुवम् ॥
नित्यमेवान्धयान्धत्वमयोग्या मानुषादयः ।
बद्धत्वं सर्वजीवानां नियमान्नित्यमेव तु ॥
बद्धत्वं विष्णवधीनत्वमन्धत्वं तददर्शनम् ।
अतः कांश्चिदनित्यत्वमन्धतायां भविष्यति ॥
मुक्तस्यापि तु बद्धत्वमस्ति यस्माद्धरेर्वशः ।
मुक्ताख्या दुःखमोक्षात्स्याद्बद्धाख्या हर्यधीनतः ॥
नित्यबद्धा अपि ततो मुक्ता दुःखविमोक्षतः ।
नित्यमुक्तस्त्वेक एव हरिर्नारायणः प्रभुः ॥

इत्यनेन सोपपत्तिकेन यो विद्ययान्धः स तु नित्यमुक्त इत्येतद्विवृतम्—

शतं सहस्राणि चतुर्दशेह परा गतिर्जीवगणस्य दैत्य ! ।
आरोहणं तत्कृतमेव विद्धि स्थानं तथा निःसरणं च तेषाम् ॥

इति जीवगुणस्य गतिबाहुल्यप्रवेशनिर्गमनप्रतीतेर्नित्यमुक्तत्वं हरेर्लिङ्गं न हरेरन्यत्र गमनतः स एव नित्यमुक्तः ननु मुक्तेः खेदत्वं युक्तमुक्तं तत्कथमितिचेन्न कृष्णो मुक्तैरिज्यते वीतमोहैः मुक्तानां परमा गतिरिति वचनात् तत्तेषां कदा तु मुक्ताख्येति चेन्न सर्वात्मना पञ्चदशकलानां त्यागानन्तरं तदाख्या तदुक्तम्—

कलाः पञ्चदश त्यक्त्वा श्वेतद्वीपनिवासिनाम् ॥

मुक्ताख्येति पश्चादपि स्वतन्त्रा इत्यतो विष्णवधीनास्त इति यत्प्रसादात्फला मोक्षः तदधीनत्वमस्तु नान्याधीनतास्त्यतः स्वाधिकानां वशे स्थिता इति । अन्याधीनत्वादाधिकं दुःखं नास्तीत्यत उक्तं नचास्मादधिकं किञ्चित्सुखमस्ति हरेर्विनेति । अतो नित्यमुक्तत्वं च स्वतन्त्रत्वं नान्यनिष्ठमित्युपसंहरति ।

नित्यमुक्तः स एवैकः स्वतन्त्रः संयतः सदेति ॥ ६—७ ॥

ननु उभयोर्देहस्थत्वाविशेषादेकस्य मुक्तत्वेन दुःखानदनमितरस्य बद्धत्वेन दुःखादनरूपमित्याशङ्क्य विद्वत्ताविद्वत्ते कारणमिति भावेनाह । देहस्थोऽपीति । विद्वान्नित्यनिर्दुःखानन्दानुभवः सर्वज्ञः श्रीहरिर्देहस्थोऽपि देहाभिमानाभावान्न देहस्थोऽपि तत एव दुःखं च नाश्नाति कथं स्वप्नादुत्थितः पुरुषस्तद्गतदुःखादिकं नास्ति तथेति कुमतिरविद्वान् जीवो देहाभिमानित्वादेहादन्योऽपि देहदेहस्थो यथा स्वप्नदृक् तद्दुःखादिकं भुङ्क्ते तथेति ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तादृशमेवं वैलक्षण्येनैव दर्शयति । सुपर्णाविति द्वाभ्याम् । अत्र सदृशाविति तदेवमेवाभेदनिर्देशः क्वचिदिति भावः । अतो सयुजाविति समानं रूपं चिद्रूपत्वं युङ्क्ते भजत इति समानोऽर्थः ॥६॥ विद्यामय इत्यत्र विद्या स्वरूपशक्तिवृत्तिरेव । व्याख्यातं चाक्रूरस्तुतौ ॥ ७—१६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यदुक्तं कैर्वा ज्ञायेत बद्धयोरिति तत्राह । अथेति । अयं जीवो बद्धः अयं जीवो मुक्त इति यथोच्यते तथा जीवात्मा बद्धः परमात्मा मुक्त इत्यपि अयमात्मा अपहतपाप्मेति यदुच्यत एवेत्यतः प्रथमं जीवात्मपरमात्मनोर्वैलक्षण्यमाकर्णयेत्याह । सार्धद्वयेन । विरुद्धधर्मिणोः शोकानन्दधर्मवतोः एकस्मिन् धर्मिणि शरीरे नियम्यनियन्तृत्वेन स्थितयोः ॥ ५ ॥

सुपर्णौ वृक्षात् पक्षिणाविव देहात् पृथग्भूतौ सदृशौ चिद्रूपत्वात् सखायौ सह योगात् । यदृच्छयेति वृक्षे तयोरावस्थानासक्तिपूर्वकनीडकरणे तदीयपिप्पलाशभोजित्वाभोजित्वे च हेतुमात्र उक्तः मायया वृश्च्यत इति वृक्षो देहः ऊर्ध्वमूलमवाक्शाखं वृक्षं यो वेद सम्प्रतीति श्रुतेः ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययमिति स्मृतेश्च तस्मिन् वृक्षे आसक्त्यनासक्तिपूर्वकं कृतं निकेतनं हृदयरूपं याभ्यां तौ तयोर्मध्ये एको जीवः पिप्पलान्नं पिप्पलोऽश्वत्थो देहस्तस्मिन्नदनीयं कर्मफलमित्यर्थः । खादति भुङ्क्ते अन्यः परमात्मा निरन्नः अभोक्तापि निजानन्दतृप्तो बलेन ज्ञानादिशक्त्या भूयानधिकः श्रुतिश्च—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीतीति ॥ ६ ॥

स परमात्मा आत्मानं स्वम् अन्यं जीवं च वेद न पिप्पलं कर्मफलमत्तीति सः पिप्पलादो जीवस्तु न तु स्वमन्यं च वेद युक् युक्तः स नित्यबद्धो जीवः विद्यामय इति विद्याशब्देनात्रान्तरङ्गा चिच्छक्तिरुच्यते नतु बहिरङ्ग मायाशक्तिवृत्तिः तथा च गोपालतापनीश्रुतिः । द्वौ सुपर्णौ भवतो ब्रह्मणोऽंशभूतस्तथेतरो भोक्ता भवति अन्यो हि साक्षी भवतीति भोक्ताभोक्तारौ वृक्षधर्मे तिष्ठतः यत्र विद्याविद्ये न विदामो विद्याविद्याभ्यां भिन्नो विद्यामयो हि यः स कथं विषयी भवतीति स्मृतिश्च छायातपौ यत्र न गृध्रपक्षाविति छायातपौ अविद्याविद्ये इति व्याख्या ॥ ७ ॥

अथ बद्धमुक्तयोर्जीवयोर्मिथो वैलक्षण्यमाह । देहस्थोऽपीति दशभिः । तत्र त्रिभिः कथं वर्त्तेतेत्यस्योत्तरमाह । विद्वान् मुक्तः संस्कारवशेन देहस्थोऽपि देहस्थो न भवति यथा स्वप्नादुत्थितः बाधितानुवृत्तिन्यायेन स्मर्यमाणे स्वप्नदेहे स्थितोऽपि तत्रस्थो न भवति तद्गतसुखदुःखयोः स्वनिष्ठत्वेनाप्रतीतेः तथा वस्तुतो न देहस्थोऽपि कुमतिरविद्वान् देहस्थः तन्निमित्तसुखदुःखभाक् यथा स्वप्नदृक् स्वप्नान् पश्यन् स्वप्नदेहगतः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कथं वर्त्तेतेत्यादिप्रश्नोत्तरं वदन् जीवेश्वरयोः परस्परं बद्धमुक्तादीनां जीवानां च वैलक्षण्यं दर्शयति । अथेत्यादिना । विरुद्धधर्मिणोः अल्पज्ञत्वसर्वज्ञत्वादिधर्मवतोः एकधर्मिणि समानस्थाने नियम्यनियन्तृत्वादिना स्थितयोः ॥ ५ ॥

एतौ प्रेर्यप्रेरकत्वादिना विद्वदनुभवप्रसिद्धौ एकस्य कर्मफलभोगार्थमपरस्य तत्फलदानाद्यर्थमेवं भूतं स्वस्वानुरूपतया

इन्द्रियैरिन्द्रियार्थेषु गुणैरपि गुणेषु च ।
गृह्यमाणेष्वहं कुर्यान्न विद्वान् यस्त्वविक्रियः ॥ ९ ॥
दैवाधीने शरीरेऽस्मिन् गुणभाव्येन कर्मणा ।
वर्तमानोऽबुधस्तत्र कर्ताऽस्मीति निबध्यते ॥ १० ॥
एवं विरक्तः शयन आसनाटनमज्जने ।
दर्शनस्पर्शनघ्राणभोजनश्रवणादिषु ॥ ११ ॥
न तथा बद्ध्यते विद्वांस्तत्र तत्रादयन् गुणान् ।
प्रकृतिस्थोऽप्यसंसक्तो यथा खं सविताऽनिलः ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

शोभनं पर्णं पतनं वयोरनादशो ज्ञानस्वरूपत्वज्ञातृत्वाद्यर्थत्वेन सादृश्यात् सखायौ प्रवर्त्यप्रवर्तकत्वात् ऊर्ध्वमूलोऽवाक् शाख एषोऽश्वत्थः सनातनः। ऊर्ध्वमूलमधः शाखमश्वत्थं प्राहुरव्ययमिति श्रुतिस्मृतिप्रसिद्धे वृक्षे समाप्तिव्याप्तिरेव यदृच्छया कृतं हृत्कमलरूपं नीडं याऽश्रयौ तौ तयोर्मध्ये एकः जीवाख्यः सुपर्णः पिप्पलः समाप्तिव्याप्तिरूपो देहः ब्रह्मादिपिपीलिकान्तवासस्थानं तत्रायते इत्यंश कर्मफलं आदाति भक्षयति अन्य ईश्वराख्यः सुपर्णस्तु निरन्नः पिप्पलान्नं न खादति परमानन्दरूपत्वात् बलेन सर्वेश्वरत्वसर्वात्मत्वादिना भूयान् अत्र "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति इति श्रुतिरनुसन्धेया॥६॥

ईश्वरस्य सर्वज्ञत्वं जीवस्याज्ञत्वं चाह। आत्मानमित्यर्द्धेन ज्ञानाज्ञानाभ्यां नित्यमुक्तनित्यबद्धयोर्वैलक्षण्यमुक्तमिदानीं नित्यं कर्मफलपेप्सुर्नित्यबद्धः नित्यं विद्याप्रधानः स नित्यमुक्त इत्याहाद्धेन। ब इति। अविद्यया कर्मरूपया युक्त युक्तः—

अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते।
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप! सर्वगा ॥
संसारतापानखिलानवाप्नोत्यतिसन्ततान् ।
तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ॥
सर्वभूतेषु भूपाल! तारतम्येन वर्ततेइति।

स्मृतेः विद्यामयो विद्याप्रधानः ॥ ७ ॥

अथ सामान्यतो बुभुक्षुं मुमुक्षुं च परस्परविलक्षणतया प्रतिपादयति। देहस्थ इत्यादिना। विद्वान् कालानवच्छिन्नस्वस्वरूपस्थितिवित् प्रारब्धकर्मवशाद्देहस्थोऽपि न देहस्थः देहसमकालस्थितिमान्न भवति नित्यो नित्यानामिति श्रुतिप्रोक्तनित्यस्थितिमानहं देहपरिच्छेद्यसत्ताको नास्मीति जानातीत्यर्थः। स्वप्नादुत्थितः प्रबुद्धः यथा स्वाप्नदेहं परिच्छेद्यमात्मनः स्थितिं नैव मन्यते तद्वत् कुमतिः कुत्सिते देहादावहमित्याद्यभिमतिर्यस्य सः अदेहस्थोऽपि देहसमकालस्थितिशून्योऽपि देहस्थ एव देहाभिन्नस्वस्वरूपमन्य एव यथा स्वप्नदृक् स्वप्नद्रष्टा ॥ ८ ॥

———

भाषा टीका।

हे तात उद्धवजी!! अब मैं बद्ध तथा मुक्त दोनों की विलक्षणता को तुम से कहता हूं वे दोनों एक धर्म वाले भौतिक शरीर मे रहते हैं और स्वयं बुद्धि से विलक्षण धर्मवाले हैं ५

इस शरीर रूपी वृक्ष मे जीवात्मा परमात्मा दोनो पक्षी सरी के हैं दैवयोग से इन ने इस वृक्ष मे खोंतर बनाया है दोनो बरोबर रहते हैं तिनमे से एक जीव तो कर्म फल को भोगता है और ईश्वर तो कुछ नहीं खाकर भी अधिक सदा प्रकाश करता है ॥ ६ ॥

सर्वज्ञ यह परमात्मा तो अपने को तथा जीवको दोनों को जानता है और कर्मफल को नहीं भोगता है और विद्या नित्य ज्ञान मय है वह नित्यही मुक्त है जो अज्ञानी जीव है यह तो कर्मफल को भोगता है सो अविद्या से युक्त है वह देह संबन्ध रहते तक नित्यही बद्ध है ॥ ७ ॥

इस प्रकार से इस देह में रहकर भी जो ज्ञानी है वह तो अपने को देह में नहीं रहा सरीका ही समझता है जैसे स्वप्न में से उठा पुरुष उस देह से मोह नहीं करता है और जो अज्ञानी है वह तो प्रत्यक्ष में देह में नहीं रहने पर भी अपने को देहस्थ समझता है जैसे स्वप्न में देखता हुआ पुरुष उसी बुद्धिमें रहता है ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

अत्र हेतुत्वेन वैलक्षण्यान्तरमाह द्वाभ्यामिन्द्रियैरिन्द्रियार्थेषु गृह्यमाणेष्वपि यस्तु विद्वान् स नाहं करोम्यहं गृह्णामीति मतिं न कुर्यादित्यर्थः। कुतः गुणैर्गुणेषु गृह्यमाणेषु अत एवाविक्रियो रागादिशून्यः तदुक्तम् गीतासु—

तत्त्ववित्तु महाबाहो! गुणकर्मविभागयोः।
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जत इति ॥ ९ ॥

अबुधस्तु पूर्वकर्माधीनेऽस्मिन् शरीरे वर्तमानो गुणैरिन्द्रियैर्भाव्येन कर्मणा तत्र देहादौ निबध्यते कुतः कर्ताऽस्मीत्यहंकारेण तदुक्तम् तत्रैव

वैशारद्येक्षयाऽसंगशितया छिन्नसंशयः ।
प्रतिबुद्ध इव स्वप्नान्नानात्वाद्विनिवर्तते ॥ १३ ॥
यस्य स्युर्वीतसंकल्पाः प्राणेन्द्रियमनोधियाम् ।
वृत्तयः स विनिर्मुक्तो देहस्थोऽपि हि तद्गुणैः ॥ १४ ॥
यस्यात्मा हिंस्यते हिंस्रैर्येन किंचिद्यदृच्छया ।
अर्च्यते वा क्वचित्तत्र न व्यतिक्रियते बुधः ॥ १५ ॥
न स्तुवीत न निन्देत कुर्वतः साध्वसाधु वा ।
वदतो गुणदोषाभ्यां वर्जितः समदृङ्मुनिः ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते इति ॥

एतैस्त्रिभिः श्लोकैः कथं वर्तेतास्य प्रश्नस्य सुखदुःखशून्यो निरभिमानश्च देहे वर्तेत इत्युत्तरमुक्तं भवति ॥ १० ॥

वैलक्षण्यान्तरं यदङ्गैर्भुञ्जीतेत्यादिप्रश्नोत्तरमाह । एवमिति त्रिभिः । अन्यगतमेव कर्म मां बध्नातीत्येवं विरक्तो विद्वान् तथा अभिज्ञानिव शयनासनादिषु न बध्यते कुतः तत्र तत्र विषयेषु गुणानिन्द्रियाणामन्वयन् भोजयंस्तत्साक्षित्वेन वर्तमानो न तु स्वयमश्नन् एतदेव कुतस्तत्राऽऽह । प्रकृतिस्थोऽपीति । सार्धेन । यथा खं सर्वत्र स्थितमपि न सज्जते यथा सविता जले प्रतिबिम्बितोऽपि यथाऽनिलः सर्वत्र संचरन्नपि तद्वत् ॥ ११-१२ ॥

असङ्गेन वैराग्येण शितया तीक्ष्णया छिन्नाः संशया असत्संभावनादयो यस्य सः नानात्वाद्देहादिप्रपञ्चात् ॥ १३ ॥

कथं विहरेदित्यस्योत्तरत्वेन वैलक्षण्यान्तरमाह । यस्य स्युरिति । तद्गुणैर्देहगुणैः संकल्पशून्याभिः प्राणादिवृत्तिभिर्विहरन् मुक्त इत्यर्थः ॥ १४ ॥

एवं तावद्बद्धमुक्तयोः स्वसंवेद्यमेव वैलक्षण्यमुक्तमिदानीं केर्वा ज्ञायेत लक्षणैरित्यस्योत्तरतया परैरपि सुज्ञेयं वैलक्षण्यमाह यस्यात्मेति त्रिभिः । हिंस्रैर्दुर्जनैर्व्याघ्रैर्वा प्राणिभिर्यस्यात्मा देहः पीड्यते यदृच्छया येन केनापि क्वचित्किंचिदर्च्यते वा स बुधश्च तत्र न व्यतिक्रियते नाति विक्रियत इत्यर्थः । तदुक्तम् याज्ञवल्क्येन—

"यः कण्टकैर्वितुदति चन्दनैर्यश्च लिम्पति ।
अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य चेति ॥ १५ ॥

किञ्च साध्वसाधु वा कुर्वतो वदतो वा जनान् स्तुवीत न च निन्देत यो लौकिकव्यवहारे विमुखः स मुक्त इत्यर्थः ॥ १६

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी ।

तत्र मुक्तस्य देहस्थत्वेऽपि तद्गतसुखदुःखाद्यभाक्त्वे बद्धस्य देहस्थत्वेऽपि नाभिमित्तसुखदुःखादिभाक्त्वे च निरहङ्कारत्वादेव देहस्थत्वेऽपि सुखाद्यभाक्त्वमिति निरहङ्कारत्वस्य तत्र हेतुत्वम् एवं यो निरहङ्कारः स मुक्त इति तदाद्वैलक्षण्यं चार्थः ॥ ९ ॥

सात्त्विकेन सूक्ष्मेन तत्र अहङ्कारेण बद्धत्वं तत्र गीतायामुक्तं साहङ्कारत्वादेव बद्धस्य तोऽदेहस्थत्वेऽपि तद्गतसुखदुःखादिभाक्त्वमिति साहङ्कारत्वस्य तत्र हेतुत्वम् एवं यः साहङ्कारः स बद्ध इति मुक्ताद्वैलक्षण्यं चेत्यर्थः ॥ १० ॥

एवमिति सार्धकं तयोस्तस्य व्याख्यानम् अभिज्ञानिवेति तत्साक्षित्वेन इन्द्रियसाक्षित्वेन ॥ ११ ॥ १२ ॥

एतदेव साक्षित्वेन वर्तमानत्वमेव प्रकृतिस्थोऽपीति सार्धकम् असंसक्तेन नानात्वाद्विवृत्तेः साक्षित्वमित्यर्थः ॥ १३ ॥

वैलक्षण्यान्तरं बद्धान्मुक्तस्यान्यद्वैलक्षण्यं यस्य प्राणेन्द्रियमनोधियां वृत्तयः क्षुत्पिपासादर्शनश्रवणादिसङ्कल्पनिश्चयरूपा पुरुषकर्तृकसदसत्सङ्कल्पशून्या भवन्ति स देहस्थोऽपि देहगुणैर्जन्मनाशादिविनिर्मुक्तः तथा च सङ्कल्पशून्याभिरित्यादि व्याख्यानम् ॥ १४ ॥

स्वसंवेद्यं बद्धमुक्तयोरेव सुज्ञेयम् अन्यैः पश्वादिभिर्वा नातिविक्रियते हर्षशोकादिपरवशो न स्यात् तत् परवेद्यलक्षणं तस्य तोदकस्य तस्य लिम्पकस्योपरि यथासङ्ख्यमक्रुद्धोऽपरितुष्टश्च किन्तु तयोरपि समः स मुक्तः परैरपि सुज्ञेय इत्यर्थः ॥ १५ ॥

किञ्च अन्यदपि परवेद्यं लक्षणमाहेत्यर्थः । लौकिकव्यवहारे विमुखत्वमेव यथा कथञ्चित् परवेद्यं लक्षणमित्यर्थः ॥ १६ ॥

———

सुदर्शनसूरिकृतशुकपक्षीयम् ।

अदेहस्थत्वमेव विवृणोति । इन्द्रियैरिति । गुणैः गुणभूतैरिन्द्रियैः इन्द्रियार्थेषु गुणेषु गृह्यमाणेषु सात्त्विकः हर्षविषादादिरहितो भोक्ता अभिमानं न करोतीत्यर्थः ॥ ९ ॥

कुमतेर्देहस्थितिं विवृणोति । दैवाधीन इति । गुणैस्तु भाव्यते सम्भाव्यत इति गुणभाव्यं तेन अबुधः बद्धः ॥ १० ॥ ११ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रकृतिस्थः अविकृतः संसर्गे सत्यपि अविकृतत्वे दृष्टान्तत्रयं यथाकाशमित्यादि ॥ १२ ॥

वैशारद्या विशारदया नानात्वात् देवत्वादिभेदात् विनिवर्तते देवोऽहमित्याद्यभिमानं न करोति ॥ १३ ॥

वीतसङ्कल्पाः इदं संपाद्यमिदं दूरष्टव्यमिदं परिहर्तव्यमित्यभिसन्धानरहिताः ॥१४—१६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

देहस्थस्यमेव विवृणोति । इन्द्रियैरिति । यस्तु विद्वान्स गुणैः प्रकृतिपरिणामात्मकैरिन्द्रियैर्गुणेषु इन्द्रियार्थेषु शब्दादिष्वनुकूलप्रतिकूलेषु गृह्यमाणेषु सत्स्वविक्रियः हर्षविषादादिरहितः नाहं कुर्यादात्मनि कर्तृत्वभोक्तृत्वाभिमानं न कुर्यादित्यर्थः ॥ ९ ॥

कुमतेर्देहस्थितिं विवृणोति । दैवाधीन इति । गुणैः प्राकृतैः तत्कार्यभूतैरिन्द्रियैर्वा आरभ्यते सम्पाद्यते इति तथा तेन कर्मणा हेतुना वर्तमानोऽपि अबुधः देहस्य दैवाधीनतां प्राचीनकर्मनिमित्ततां तत्र स्थितिं च तथा देहविलक्षणमात्मानं च अजानन् देहमात्मानं मन्वान इत्यर्थः । अत एव कर्ताऽस्मीति निबध्यते देहात्माभिमानकर्तृत्वभोक्तृत्वाभिमानैर्बद्धो भवतीत्यर्थः ॥ १० ॥

कथं विहरेदित्यादीनां विशेषप्रश्नानामुत्तरमाह । एवमिति । इत्थं कुमतेर्दुरनुचिन्तनेन विरक्तो देहतदनुबन्धिष्वासक्तिरहित इत्यर्थः । अशनं स्थानं शुक्रं स्थानं इत्यनुशासनात् शयनादिषु कर्मसु यथोचितं वर्तमान एवेति शेषः—

> युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
> युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥

इत्यत्र भगवतैवोक्तत्वात् ॥ ११ ॥

तत्र तत्र शब्दादिविषयेषु गुणान् गुणपरिणामात्मकानीन्द्रियाणि यावद्यत् भक्ष्यभक्तुमावयश्चीश्वरायत्तसत्ताकस्थितिप्रवृत्तिमतिस्वेन्द्रियैस्तेन कर्तृत्वभोक्तृत्वादिकमनुचिन्तयेदित्यर्थः । तदेवाह । न तथेति । विद्वान्—

> तत्त्ववित्तु महाबाहो ! गुणकर्मविभागयोः ।
> गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥

इत्युक्तविभ्रमतिमान् तथा न बध्यते इत्यर्थः । गुणानादयस्त्विन्तेनौदासीन्यमात्मनि कर्तृत्वभोक्तृत्वादिकं तु शरीरेऽनुसन्धेयमात्मनि फलितम् ईश्वरस्याकर्तृत्वमनुसन्धेयमिति वक्ष्यते मयि सर्वाणि कर्माणि निरपेक्षः समाचरेदिति ननु कर्माणि ... कृतफलभूतानि सुखदुःखादीन्यनुभवतो देहे वर्तमानस्य कथमौदासीन्यरूपमविक्रियत्वं सम्भवेदत आह । प्रकृतिस्थोऽपीति । प्रकृतिस्तत्परिणामात्मको देहस्तत्स्थोऽप्यसंसक्तः तदभिनिवेशरहितः तत्प्रयुक्तसुखदुःखादिष्वविक्रिय इति यावत् तत्स्थत्वेऽपि तत्प्रयुक्तैरविकृतत्वे दृष्टान्तत्रयं यथाखं सवितानिल इति । यथा खमाकाशः सर्वत्रावस्थितोऽपि व्याप्यगतदोषैर्न विक्रियते यथा सविता स्वप्रभया व्याप्नुवन्नपि तत्तत्प्रकृतिस्थोऽपि प्रकृत्यनभिनिवेशेनातत्स्थतुल्यो भवतीत्यर्थः ॥ १२ ॥

किञ्चावमसङ्गेन देहाद्यनभिनिवेशेन निशितया वैशारद्या विशारदया ईक्षया बुद्ध्या छिन्नाः संशया यस्य सः स्वप्नात्प्रतिबुद्ध इव नानात्वाद्देवत्वादिभेदाद्विनिवर्तते देवोऽहमित्याद्यभिमानं न करोतीत्यर्थः । देहादहं विलक्षणो न वा किमहं स्वतन्त्र उतेश्वरपरतन्त्रः किंवाहमीश्वर एवेति तस्माद्भिन्न इत्यादयः संशयाः ॥ १३ ॥

अथ केनां ज्ञायेत बद्धमुक्तयोरित्यस्योत्तरमाह । यस्येति । यस्य प्राणादीनां वृत्तयो व्यापाराः वीतसंकल्पाः स्युः इदमदनीयमिदं द्रष्टव्यमिदं सम्पाद्यमिदं परिहर्तव्यमित्याद्यभिसन्धिरहिताः स्युरित्यर्थः । स एव देहस्थोऽपि तद्गुणैर्विनिर्मुक्तो ज्ञेयः ॥ १४ ॥

यस्यात्मा देहः हिंस्रैर्दुर्जनैर्हिंस्यते पीड्यते अथवा येन केन चिद्यदृच्छया किञ्चिदर्च्यते सत्क्रियते तथापि तत्र हननार्चनादौ न व्यतिक्रियते नातीव विक्रियते स एव बुधः विद्वानिति ज्ञेयः ॥ १५ ॥

किञ्च यः साध्वसाधु वा कुर्वतो वदतो वा जनान् स्तुवीत न निन्देत गुणदोषाभ्यां रहितः मानापमानयोस्तुल्यदृष्टिः स [illegible] ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतदेव विवृणोति । इन्द्रियैरिति । गुणैर्हेयप्रधानैर्जीवैः श्रोत्रादीन्द्रियैः गुणेष्वप्रधानेष्वर्थेषु विषयेषु गृह्यमाणेषु सत्सु यदनविक्रियः कर्ताऽहं कृतोऽहमित्यादिविकाररहितो विद्वान् परमात्मा स नाहङ्कुर्यादित्यन्वयः—

> शरीरस्थोऽपि विज्ञत्वान्न विष्णुर्बध्यते क्वचित् ।
> अविज्ञत्वात्तु तत्रैव देहे जीवस्तु बध्यते ॥
> स्वप्नद्रष्टा यथैवेशो जीवो हरिः स्वप्नोत्थितो यथा ।
> सदा तमोविहीनोऽपि ज्ञापनार्थमुदीर्यते ॥

स्मृतेः—

> आत्मनो वर्णगैर्जीवैरात्मनो भागेषु च ।
> दुःखेषु गृह्यमाणेषु मनआदिभिरिन्द्रियैः ॥
> अहं दुःखीति नैवासौ ह्यहङ्कुर्यात्परः पुमान् ।
> जीवगत्वेन तद्दुःखं विष्णुः पश्यति सर्वदा ।
> अतो न दुःखभाग्विष्णुः स्वानन्दत्वात्पुरुषोत्तमः ॥
> परानन्दपादहं दुःखीत्येव जीवः प्रपश्यति ।
> तस्मात्स दुःखभाग्युक्तो यावदीशः प्रसीदतीति ॥

अनेन चानयोः श्लोकयोरर्थो विवृत इति जीवगतत्वेन तद्दुःखं विष्णुः पश्यति सर्वेशत्वेनेत्यभिचाकशीतीत्यस्यार्थः सूचित इति ॥ ९ ॥

जीवस्याहमस्मीत्यभिमान एवानर्थप्रदाहेतुरित्याह । दैवेति । दैवाधीनेऽस्मिन् शरीरे वर्तमानोऽबुधोऽसौ जीवः अस्मिन्कर्मणि अहं गुणभूतोऽस्वतन्त्र ईशाधीनः इति ज्ञात्वैव आयतनीयेन कर्मणा अहमेव कर्ताऽस्मीति मन्यमानस्तत्र शरीरे नितरां बध्यते इति—

> अस्वतन्त्रः स्वतन्त्रोऽस्मीत्येवं जीवः प्रभामयन् ॥
> बध्यते हीशकोपेन राजभावेन भृत्यवदिति ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वस्वनाशस्थानादौ स्वकर्तृत्वाभिमानोऽत्र निर्वासित इति । अत्राप्यस्वातन्त्र्यं दैवाधीनमित्यनेन सूचितम् ॥ १० ॥

कार्योऽपि शरीरशीर्णतामीरयन्ति शरीरस्य कार्याधीनत्वं च तर्हि कथं कार्यं न यतेत इति तत्राह । एवमिति । एवं शयनादिषु स्वस्य स्वातन्त्र्याभिमानेन बध्यमानत्वात् एवापारं स्वमनुभुञ्जन् निद्रादिषु विरक्तः तत्र तत्र हरिः स्वातन्त्र्यं विद्वांस्तत्र तत्र शरीरयात्रार्थं गुणान् विषयानाददत् स्वीकुर्वंस्तथा कर्तृत्वाभिमानित्वात् न बध्यत इत्यन्वयः गुणान् पुण्यलक्षणानाददत् उपार्जयन्निति वा भेदज्ञानेन एव बद्धस्य तामसज्ञानेन इत्यनेनोच्यते इति किं न स्यादितिचेन्न—

नित्यबद्धोऽपि जीवोऽयमात्मनो नित्यबद्धताम् ॥
निश्चाना नित्यमुक्तत्वं तस्य वेत्ता समुच्यते ।
तदधीनत्वसम्बन्धे तु विद्यमानेऽप्यदुःखभाक् ॥
देहस्थोऽपि न दुःखी स्यादन्यथात्वस्य मुक्तिगः ।

इतिवचनात् अं चाभिन्नानिश्चारानाछन्धमोक्ष इत्यनुपपत्तेः एतद्ध्यानफलमाह । प्रकृतिस्थोऽपीति । असङ्गेन वैराग्येण शितया तेजितया वैशारद्या विशारदमूलया विद्योरनुग्रहादुत्पन्नया दृष्टया अपरोक्षज्ञानेन छिन्नसंशयोऽत एवात्मसक्तः प्रकृतिस्थः शरीरस्थोऽपि ज्ञानी स्वप्नात्प्रतिबुद्ध इव नानात्वाभिमत्याज्ञानाभिवर्तेत इत्यन्वयः । "नानात्वमिति वै मिथ्याज्ञानं कुत्र चिदुच्यते वस्तुयाथात्म्यतोऽन्यत्वाज्ज्ञानस्योऽभ्यो निर्वाक्षये" इति वचनात् नानात्वशब्दस्य मिथ्याज्ञानवाचित्वस्य प्रसिद्धेः उक्त युक्त ॥ ११—१३ ॥

वाय्वाकाशयोः सर्वत्र सतोऽपि तत्तन्निमित्तजगत्त्वयो यथा नास्ति तथेति पूर्वोक्तजीवन्मुक्तलक्षणमेव विशदयति । यस्येति यस्य प्राणेन्द्रियमनोधियां चेष्टादिलक्षणा वृत्तयः सीमसङ्कुलताः फलानुसन्धानरहिताः स्युः स देहस्थोऽपि तद्गुणैर्देहधर्मैर्निर्मुक्तो नारिकेलफलमुक्तान्तःफलनारिकेलवदित्यन्वयः ॥ १४ ॥

यावच्छरीरपातं जीवन्मुक्तः कथंकारं तिष्ठतीत्यत्राह । यस्येति । आत्मा देहः मनो वा हिंस्रैर्हिंसाशीलैः प्राणिभिः येन केनचित्केन चिद्यदृच्छया प्राप्तेन चन्दनादिना तत्र तस्यामवस्थायां स बुधः न विक्रियते इति ॥ १५ ॥

एतद्विशदयति । न स्तुवीतेति । कुर्वतः पुरुषान् साध्वादिगदतो वा गुणदोषाभ्याम् अल्पेन तुच्छेन गुणेन दोषमात्रेण च वर्जितो नतु गुणमात्रेण वर्जित इत्यर्थः । दोषश्चेन गुणाश्चागाभिशानस्त्रौ न स वशाविस्त्यादि*वाक्यविरोधः सर्वगुणवर्जित अङ्गीकार इति भावः ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी

इन्द्रियैर्गुणैरिन्द्रियार्थैश्चापि गुणेषु गृह्यमाणेषु न अहंकुर्यात् अहं गृह्णामीति मतिं न कुर्यात् निरहंकारित्वे छिन्नगतिकयः तत्सविकाररहितः विकारवत्त्वेऽप्यहं न किमपि करोमीति वाचैव ब्रुवन् कपटी महावञ्चो ज्ञेयः ॥ ९ ॥

* इति जानसदृशी स्वार्जितोऽल्पगुणो न चेति शेषतात्पर्यम् ।

दैवाधीने पूर्वकर्माधीनेऽस्मिन् शरीरे वर्तमानः गुणैरिन्द्रियैर्भोग्येन कृतेन कर्मणा निबध्यते कुतः कर्ताऽस्मीत्यहंकारेण यदुक्तम्—

अहंकारविमूढात्मा कर्ताहमिति मन्यत इति ॥ १० ॥

किं भुञ्जीतेति यदुक्तं तत्राह । एवमिति त्रिभिः । न तथा बध्यत इति शयनासनादिषु यथा अविद्वांस्तत्र तत्रासक्त्या तत्तदुपायापायोत्थाभ्यां हर्षशोकाभ्यां बध्यते तथा न बध्यते तेन बाधितानुवृत्तिन्यायेन किञ्चिन्मात्रहर्षशोकस्वत्वेऽपि न क्षतिः यतो विरक्तः तत्र तत्र विषयेषु गुणानिन्द्रियाणि आददन् भोजयन् तत्साक्षित्वेन वर्तमानः नतु स्वयमददन् ॥ ११ ॥

एतदेव कुतस्तत्राह । प्रकृतिस्थोऽपीतिमार्धेन । यथा खं सर्वत्र स्थितमपि न सज्जति यथा सविता सर्वत्र किरणजालं प्रसारयन्नपि यथा चानिलः सर्वत्र सञ्चरन्नपि तद्वत् ॥ १२ ॥

असङ्गेन वैराग्येण शितया तीक्ष्णया छिन्नाः संशया असम्भावनादयो यस्य सः न नात्मत्वात् नानादेहप्रपञ्चात् ॥ १३ ॥

यदुक्तं कथं विहरेदिति तत्राह । यस्येति । तद्गुणैर्देहधर्मैः शोकमोहादिभिर्विनिर्मुक्तः सन् संकल्पशून्याभिः प्राणादिवृत्तिभिर्विहरतीति भावः ॥ १४ ॥

यदुक्तं केषां ज्ञायेत लक्षणैरिति तत्र सर्वंसुलक्षणानि मुक्तलक्षणान्याह । यस्येति त्रिभिः । हिंस्रैर्दुर्जनैर्यस्यात्मा देहो हिंस्यते उपानत्प्रहारादिभिः पीड्यते यदृच्छया हेतुना विनैव येन केनापि स्रक्चन्दनादिना किञ्चिदर्च्यते वा तत्र न व्यतिक्रियते नाति विक्रियते दुर्जनान् प्रति न क्रुध्यति सुजनान् प्रति न तुष्यति चेत्यर्थः । यदुक्तं याज्ञवल्क्येन—

यः कण्टकैर्वितुदति चन्दनैश्च विलिम्पति ।
अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य च ॥ १५ ॥

साध्वसाधु कुर्वतो वदतो वा जनान् न स्तुवीत न च निन्देत् ॥ १६

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यस्तु विद्वान् यदाभीत तदधीनमासीतेति श्रुतिप्रोक्तपराधीनत्वज्ञानवान् तथात्मपरमात्मज्ञानवान् आर्चिकयः रागद्वेषरहित सन् इन्द्रियैः श्रोत्रादिभिः करणैरिन्द्रियार्थेषु शब्दादिषु गुणैः सत्त्वादिभिः गुणेषु आगरणादिषु हिताहितेषु गृह्यमाणेषु सत्सु अहं न कुर्यात् अहं गृह्णामीति संसारप्रापिका मतिं न कुर्यात् चकारान्मम कर्मऽपाजि भगवान् सर्वं कारयतीति मुक्त्यार्थिका मतिं कुर्यात् ॥ ९ ॥

अबुधः परमेश्वराधीनतानभिज्ञः तथात्मपरमात्मानभिज्ञः दैवाधीने स्वाभाङ्गेऽस्मिन् शरीरे वर्तमानः आत्मत्वेन सज्जमानः तत्र संसारे निबध्यते नतु मुच्यते केन बध्यते इत्याकाङ्क्षायामाह । गुणाः इन्द्रियाणि भाव्यन्ते येन तेन कर्मणा किञ्च स्वातन्त्र्यग्राहमेव कर्ताऽस्मीत्यहंकारेण ॥ १० ॥

कथं वर्तेत यस्यात्मसमुक्तत्वात् किंभुञ्जीतत्यस्याप्युत्तरमाह । एवमित्यादित्रिभिः । यथा अबुधः बध्यते एवं विद्वान् सर्वं भगवदधीनमिन्द्रियतोषकं कर्म संसारहेतुः संसारसुखमनित्यत्वादिदोषदुष्टमित्यादिज्ञानवान् न बध्यते संसारे न निमज्जतीत्यन्वयः सांसारिकं सुखं बहुदोषवत्त्वं शयनादिषु विरक्तः ॥ ११ ॥

न कुर्यान्न वदेत्किंचिन्न ध्यायेत्साध्वसाधु वा ।
आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः ॥ १७ ॥
शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि ।
श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षतः ॥ १८ ॥
गां दुग्धदोहामसतीं च भार्यां देहं पराधीनमसत्प्रजां च ।
वित्तं त्वतीर्थीकृतमङ्ग ! वाचं हीनां मया रक्षति दुःख दुःखी ॥ १९ ॥
यस्यां न मे पावनमङ्गकर्म स्थित्युद्भवप्राणनिरोधमस्य ।
लीलावतारेप्सितजन्म वा स्याद्वन्ध्यां गिरं तां बिभृयान्न धीरः ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निष्कलमधस्थाविवा चादिनुल्यः तत्र तत्र पदार्थलाभे गुणान् भोगान् यत्करोषि यदश्नासि तत्कुरुष्व मदर्पणमित्येवं वादिनं मां भोजयन् समर्पितं संसारे वासमक्तः यतः प्रकृतिस्थः । स्वभावस्थः सर्वं भगवदायत्तं सर्वं भगवदात्मकमित्येवं वित् ॥ १२ ॥

नानात्वात् अब्रह्मात्मकतया वादिभिः प्रवर्तितो यो नानाभावः ब्रह्मनिरपेक्षपृथक्पृथगात्मसत्ता तस्मात् वैशारद्यया ऐतदात्म्यमिदं सर्वमित्येवं ज्ञानेन समकृशितया वैराग्यनिर्धीतया विनिवर्तते ॥ १३ ॥

कैर्वा लक्षणैः लक्षणैरित्यस्योत्तरमाह । यस्येति चतुर्भिः । देहस्थोऽपि तद्गुणैर्विनिर्मुक्तो ज्ञेयः ॥ १४ ॥

यस्य आत्मा देहः हिंस्रैर्दुःखदस्वभावैः कश्चित्किञ्चित् हिंस्यते पीड्यते अथवा येन केनचित् कश्चित् किञ्चित् यदृच्छया अर्च्यते तत्र तिरस्कारे सत्कारे वा न व्यतिक्रियते नातिविक्रियते स बुधो ज्ञेयः ॥ १५ ॥

यः साध्वसाधु वा न्याय्यमन्याय्यं वा कुर्वतो वदतो वा न स्तुवीत नच निन्देत् यतः साध्वसाधुकर्तृत्वकृतिभ्यां गुणदोषाभ्यां वर्जितः समानभूतः स मुनिः समदृक् ज्ञेयः ॥ १६ ॥

———

भाषा टीका ।

जो कि विकार को नहीं प्राप्त होने वाला विद्वान् है सो तो इन्द्रियों से इन्द्रियों के विषयों को ग्रहण कर तो भी सत्वादिगुणों से गुणों में वर्तमान् होवे तौ भी सब विषयों को ग्रहण करने पर अहङ्कार नहीं करता है ॥ ९ ॥

प्रारब्ध के आधीन इस शरीर में गुणों से होने वाले कर्म से वर्तमान् अज्ञानी पुरुष मै कर्ता हूं कर के अभिमान करने से बँध जाता है ॥ १० ॥

विरक्त पुरुष तो शयन आसन चलना न्हाना देखना छूना सूंघना सुनना खाना इत्यादिक में ॥ ११ ॥

विद्वान् होने से तहां तहां विषयों को भोगता हुआ भी शरीर में स्थित होकर भी आसक्ती न रखने से उन गुणों में नहीं बंधता है जैसे कि आकाश सूर्य पवन वे सर्वत्र रहने पर भी नहीं बंधते हैं ॥ १२ ॥

वैराग्य से तीक्ष्ण करी हुई जो निपुण दृष्टि तिस से जिस के सब संशय छूट गये हैं वह पुरुष जैसे स्वप्न से जगा हुआ पुरुष भ्रम से छूट जाता है तैसे नाना भ्रम से छूट जाता है ॥ १३ ॥

जिस पुरुष के प्राण इन्द्रिय मन बुद्धि इनकी वृत्ति संकल्पों से रहित होगी वह पुरुष देह में रहने से भी उन गुणों से छूटा ही रहैगा ॥ १४ ॥

ज्ञानी पुरुष तो कोई चाहे उसके शरीर में ताड़न करे चाहे कोई सत्पुरुष कहीं पूजन भी करै तो भी शोक वा हर्ष विकार को नहीं प्राप्त होता है ॥ १५ ॥

अपने को कोई भला करै या बुरा करै तो उन दोनों में न किसी की प्रसंसा करै ना निंदा करै कोई अपने गुण कहै या दोष कहै वह मुनि सम दृष्टि होकर दोनो से वर्जित ही रहै ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपि च न कुर्यादिति यो दैहिकेऽपि कर्मण्युदासीनः स मुक्तः इतरो बद्ध इत्यर्थः । एतान्येव सर्वाणि मुमुक्षोः साधनानि ज्ञातव्यानि ॥ १७ ॥

यस्तु केवलं शब्दब्रह्मणयभिज्ञः परिनिष्ठितमात्रदक्षो न मुक्तेः साधनैस्तद्दर्शननिष्ठो भवेत्तं निन्दति । शब्दब्रह्मणि निष्णातोऽर्थतः पारं गतोऽपि परे ब्रह्मणि न निष्णायात्तत्र तात्पर्येण न कुर्यात्तस्य शास्त्रश्रमः श्रमफलो न तु पुरुषार्थपर्यवसायी अधेनु चिरप्रसूताम् ॥ १८ ॥

एतदेवाभ्यासार्थनिदर्शनैः प्रपञ्चयति । गामिति । दुह्यत इति दोहः पयो दुग्धो दोहः सोऽस्यास्तां दोहोऽपि यस्यास्तामसतीं कुलटां असतीं भार्यां कामशून्यां देहं पराधीनं प्रतिक्षणदुःखहेतुम् असत्प्रजां दृष्टादृष्टसाधनशून्यं पुत्रम् अतीर्थीकृतमागते पात्रेऽदत्तं वित्तं दुष्कीर्तिदुरितापादकं अङ्ग हे उद्धव ! दुःखादनन्तरं दुःखमेव यस्य स रक्षति ॥ १९ ॥

मया हीनां वाचमित्युक्तम् विवृणोति । यस्यां वाचि मे जगतः

### श्रीधरस्वामिकृतभावार्थदीपिका ।

शोधकं चरित्रं न स्यात् किं तत् अस्य विश्वस्य स्थित्यादिरूपम् तदवतारलक्षणं: लीलावतारैरीप्सितं जगतः प्रेमास्पदं श्रीरामकृष्णादिजन्म वा न स्यात् तां निष्फलां गिरं धीरो धीमान् न धारयेत् ॥ २० ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

देहार्थं साध्वसाधु कर्म यो न कुर्यात् वदेत् ध्यायेदपि तथाच यो दैहिकेऽपि कर्मण्युदासीन इति व्याख्यातम् एतानि निरहङ्कारत्वविरक्तत्वादीन्येव सिद्धस्यासाधारणलक्षणान्यपि साधकस्य मुमुक्षोः साधनानि मुक्त्यर्थमनुष्ठेयानीति ज्ञातव्यानीत्यर्थः ॥ १७ ॥

उक्तैः साधनैः निरहङ्कारत्वविरक्तत्वादिभिरुक्तलक्षणनिष्ठस्य वेदस्य प्रतिपाद्योऽर्थो यः परमात्मा तन्निष्ठो न भवेत् ध्यानाद्यभियोगं ध्यानाद्यभिनिवेशम् भाविना नामसङ्कीर्तनादिभक्त्यङ्गपरिग्रहः पुरुषार्थपर्यवसायी मुक्तिसाधकः ॥ १८ ॥

एतदेव ध्यानाद्यभावे शास्त्राभ्यासस्य श्रमैकफलत्वमेव अन्यार्थनिदर्शनैरन्यपदार्थदृष्टान्तैः असतीं व्यभिचारिणीत्वात् कामशून्यां दृष्टादृष्टफलशून्यं दृष्टमैहिकं फलं धनार्जनादि अदृष्टं श्राद्धादिजन्यं तच्छून्यं मया हीनां मदीयलीलादिशून्यां वैदिकीमपि वाचम् ॥ १९ ॥

स्थित्यादिरूपं तत्रावतारचरित्राणां प्रस्तुतत्वात् तेषां साक्षात् स्थित्यादिरूपत्वासम्भवाल्लक्षणया तदवतारेति व्याख्यातमत एवेत्यर्थ इत्युक्तं क्रियान्तरत्र धारणां प्रेमास्पदं प्रेमविषयं निष्फलां गिरं वेदलक्षणामपि तदुक्तं श्रीनारदेन इदं हि पुंसस्तपसः श्रुतस्य वेत्यादि अतएव गीतं कलियुगपावनावतारेण श्रीभगवता—

श्रुतमप्यौपनिषदं दूरे हरिकथामृतात् ।
यन्न सन्ति द्रवच्चित्तकम्पाश्रुपुलकोद्गमा इति ॥ २० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

न कुर्यादिति स्वस्मिन् साध्वसाधु कारिषु स्वयम्मनोवाक्कायैर्न साध्वसाधुकारीति न विकल्पत इत्यर्थः ॥ १७ ॥

गुणेषु वर्त्तमानस्य गुणातीतत्वं नाम न शयनासनभोजनादिविरहः किन्तु अहंकाररागद्वेषराहित्यमुपकारापकारेषु तुल्यचित्तत्वं दर्शनस्पर्शनादिषु तृणलोष्टदर्शनादिषु सम्पाद्यमानबुद्धिविरहश्चेति प्रतिवचनमुक्तं भवति एवं विधस्य पुरुषस्य शास्त्रजन्ययोगजन्यज्ञानद्वयमप्युपादेयमित्याह । शब्दब्रह्मणीति । परे ब्रह्मणि समाधिपर्यन्तज्ञाना ॥ १८ ॥

अनीर्षीकृतमात्मानुगुणपरहितं मया हीनां मत्प्रतिपादनहीनां वाचं तु स्वसु श्री रक्षति ॥ १९ ॥

मया हीनां वाचमित्येतद्विवृणोति । यस्यामिति ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्चात्मारामः स्वयमपि किञ्चिल्लौकिकं कर्म साध्वसाधु वा न कुर्यात् वदेत् ध्यायेच्च किन्तु मुनिर्मननशीलोऽनया देहस्थोऽपि न देहस्थ इत्यादिनोक्तविधया वृत्त्या जडवद्विचरेत् ॥ १७ ॥

तदेव गुणेषु वर्त्तमानस्य गुणातीतत्वं नाम न शयनासनभोजनादिविरहः किंत्वहङ्काररागद्वेषराहित्यमुपकारापकारादिषु तुल्यचित्तत्वं दर्शनस्पर्शनादिषु कर्तृत्वाभिमानशून्यत्वं सुवर्णलोष्टादिष्वविशेषबुद्धिविरहश्चेति प्रतिवचनमुक्तं भवति एवंविधस्य पुरुषस्य शास्त्रजन्यमुपासनात्मकं चेति ज्ञानद्वयमुपादेयमित्याह । शब्दब्रह्मणीति । निष्णातः पारं गतोऽपि यदि परे ब्रह्मणि परब्रह्मविषयकसमाधिपर्यन्तज्ञाने न निष्णातः परिनिष्ठितो न भवेत्तर्हि तस्य श्रमोऽध्ययनाध्यापनादिश्रमः श्रमफलः श्रम एव फलं यस्य सः निरर्थकः श्रम इत्यर्थः । तत्र दृष्टान्तः धेनुं चिरप्रसूतां निःक्षीरां गामित्यर्थः । तां रक्षतो यथा रक्षा श्रमैकफला तद्वत् ॥ १८ ॥

एतदेव दृष्टान्तान्तरैश्च प्रपञ्चयति । गामिति । दुह्यत इति दोहः पयः दुग्धः दोहो सोऽपरत्र दोहोऽस्ति यस्यास्तां गामसतीं कामशून्यां दुष्टां भार्यां च पराधीनं प्रतिकूलं दुःखहेतुं देहमसत्प्रजां दृष्टादृष्टशून्यं दुरात्मानं पुत्रं च अनीर्थीकृतमार्गे पात्रेऽदत्तं वित्तं दुष्कीर्तिदुरितावहकम् अङ्ग हे उद्धव ! मया हीनां मत्प्रतिपादनरहितां वाचं च यो रक्षति स दुःखदुःखी दुःखानन्तरमेव दुःखमश्नातीति तथा ॥ १९ ॥

मया हीनां वाचमित्येतदेव विवृणोति । यस्यामिति । अङ्ग हे उद्धव ! अस्य जगतः स्थित्युत्पत्तिसंहारात्मकं पावनं श्रवणतो मननाच्च पावनकरं मे मम कर्म चरित्रं यस्यां वाचि प्रतिपाद्यं न स्यात् लीलया येऽवतारास्ते तथा लीलावतारेप्सितावताराणां कर्मनिमित्तत्वानुग्रहासः तेषु ईप्सितं जगतः प्रेमास्पदं रामकृष्णादिजन्म वा न स्यात्तां वन्ध्यां निष्फलां गिरं धीमान्न धारयेत् पावनमित्यनेन स्वजन्मकर्मप्रतिपादनरहितायाः प्रत्युतापवित्रतावहत्वं च सूचितम् अथवा लीलावतारेप्सितजन्मेति समाहारद्वन्द्वः तत्रेप्सिताः प्रियतमाः भक्ता इत्यर्थः । जन्मग्रहणं कर्मणोऽप्युपलक्षणं भगवद्भागवतजन्मकर्मादिकमित्यर्थः ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तन्मतं कथयाह । न कुर्यादिति । आत्मारामो मुनिः साधु कुर्याद्वदेद्ध्यायेच्च असाधु न कुर्यान्न वदेन्न ध्यायेच्च शुभजीवानुद्दिश्येति श्रेयः अतीतानागतवर्तमानत्रैलोक्योद्धरणक्षम इत्यादेः साधु न कुर्यादित्यर्थो नोपपद्यते इति आत्माराम इत्यत्राऽऽत्मशब्देन परमात्मा एवोच्यते न जीवाद्यन्यतमः ॥ १७ ॥

तदेकनिष्ठेन भक्त्याऽधीतवेदादिशब्दराशिः फलवान् स्यादन्यथा निष्फल एवेत्याह । शब्देति । परे ब्रह्मणि न निष्णातः परिनिष्ठितो नियतो न स्याद्यदि तर्हि तस्य पुंसः श्रमः वेदाध्ययनाभ्यासो धनमज्ञानं सत्यमस्य परं धर्मं वा फलमस्तीति श्रमफलः स्यात् अधेनुमदोग्ध्रीं गां रक्षत इव यथा तथास्य तदाज्ञान-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

[ए]रिश्रम एवावशिष्यते न तु जीवनफलमिति भावः । यद्वा श्रम-
[फ]लः प्रयत्नफलः श्रमः कावक्लेशः—

*ह्रियतिशब्देन नियमः कचिज्जीवनमुच्यते ।
हरियतत्वं कचित्तेव कचिद्‌धृतिविरोधितेति ॥

[य]त्र निष्णातः निष्णीयादिति शब्देन नियम उच्यत इति भावः
[अ]पेक्ष्या चरति मायैव वाचं शुश्रुषाँमफलामपुष्पामिति
[श्रु]तेः ॥ १८ ॥

एतमेवार्थं दृष्टान्तबाहुल्येन द्रढयति । गां दुग्धेति । पराधीनं
[प]रप्रेष्यं कुर्वन्तं देहम् असतीर्थीकृतं विषयविषयोपरक्तं कृष्णा
[दि]षु सम्पत्तीरतमा सती सा सती साध्वी पतिव्रता पराङ्गः
[प]रपिण्डादः परजातः परेभितः सोऽयं मनुष्यलोकः पुत्रेण
[ज]यः अनपत्यं परं मन्ये कदपत्याच्छुचां पदात् नार्थस्य
[ध]र्मैकान्तस्य कामो लाभाय हि स्मृतः यावत्तु गोविन्दगुणा-
[श्रु]तये फलमित्यादेः यस्त्वेवं विधं गवादिकं रक्षति स दुःखेऽ-
[न]न्तमसि निजदुःखानुभवो वर्तत इत्यर्थः ॥ १९ ॥

अन्येषामेवाप्रसक्तपरवाचो रक्षणे फलं किं न स्यादत्राह ।
[व]स्यामिति । यस्य जगतः स्थित्युद्भवप्राणनिरोधलक्षणं कर्म
"दुग्धदोहां तु गां रक्षेत् क्षीरमात्रप्रयोजनः । यथा तद्वद्वरेण्यवाचो
[व्य]ारणमिष्यते" इति वचनादन्यविषयवाचा नित्यानन्दलक्षणमोक्ष-
[फ]लं न स्यादतो मुमुक्षुः तन्न कुर्यादतो तत्त्वजिज्ञासानर्थक-
[े]ति मतिजज्ञासैव पुरुषार्थसाधनं तदन्तमुद्दिश्य न कुर्यान्न व
[व]देदिति विधीयते तत्त्वजिज्ञासुरिति ॥ २० ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पूर्वं ज्ञानयोगमुक्त्वाधुना भक्तियोगमुद्भावयितुमाह । शब्द-
[ब्र]ह्मणीति । अत्र परब्रह्मपदेन परत्वमात्रमुच्यते न तु ब्रह्मत्वभग-
[व]त्त्वादिविवेकेनेति ज्ञेयं सर्वत्र तत्सामान्यात् ॥ १८ ॥

तदेवं शब्दब्रह्माभ्यासस्य परब्रह्माभ्यासः प्रयोजनमित्युक्तं
[त]त्रवेदांशेषु विशेषत उपनिषद्भागे शब्दब्रह्मणस्तत्प्रतिपादकत्वे
[स्थ]ितेऽपि तद्विचारकोटिभिरपि परब्रह्मनिष्ठा न जायते किन्तु
[य]स्य तस्मिन्नंशे श्रीभगवदाकारपरब्रह्मलीलादिकं प्रतिपाद्यते तद-
[भ्]यासेनैव भगवदाकारे च निष्ठा जायते तदुक्तं संसारसिन्धु-
[म]तिदुस्तरमुत्तितीर्षोर्नान्यः प्लव इत्यादि अयःमूर्ति भक्ति-,
मुद्दश्येत्यादि च अत एव मदीयलीलाशून्यां वैदिकीमपि वाचं
[ना]भ्यसेदित्याह द्वाभ्याम् । गामिति । मया श्रीभगवता हीनां मम
लीलादिशून्याम् ॥ १९ ॥

यस्यामिति । तां निष्फलां गिरं वेदलक्षणामपि तदुक्तं श्रीनार-
देन इदं हि पुंसस्तपसः श्रुतस्य वेत्यादि अत एव गीतं कलि-
युगपावनावतारेण श्रीमगवता "श्रुतमप्युपनिषदं दूरे हरिकथा
मृतात् । यत्र सन्ति द्रवच्चित्तकम्पाश्रुपुलकोद्गमा" इति ॥ २० ॥

* ह्रियतिः जीवनं त्राणं रक्षणम् ।

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अनया वृत्या अनेन स्वभावेन मुक्तलक्षणं भिन्नं बद्धलक्षणं
च ज्ञेयम् ॥ १७ ॥

किंच भगवति सच्चिदानन्दमयाकारत्वभावनया भक्तिं कुर्वीत
तदेवायमुक्तलक्षणो मुक्तजीवः सिध्येदन्यथा तु पतेदित्याह । शब्दे
वेदशास्त्रे ब्रह्मणि तत्प्रतिपाद्यनिर्विशेषे ब्रह्मणि च निष्णातः
विशिष्टज्ञानकुशलः विशिष्टानुभवकुशलश्च किन्तु परे ताभ्यां
सकाशादपि परमाश्रयत्वेन श्रेष्ठे भगवति न निष्णायात् भक्ति-
कौशलः यावन्न भवेत् निष्णातशब्दस्य कुशलार्थत्वाद्भगवति
सच्चिदानन्दाकारत्वभावनया भक्तिरेवात्र कुशलता तां विना तस्य
श्रमः श्रमैकफलो व्यर्थ एव न तु पुरुषार्थप्रापकः दुग्धकामस्य अधेनुं
वन्ध्यां चिरप्रसूतां वा रक्षतो यथा श्रमः अत्र शब्दब्रह्मणि वेदे
निष्णातोऽपि परे ब्रह्मणि निर्विशेषे इति व्याख्यायामेकदेशान्वय
उत्तरश्लोकार्थतात्पर्यविरोधश्च स्यात् ॥ १८ ॥

दृश्यश्रव्यादीन् विषयान् मत्संबन्धानेव स्वीकुर्यान्न तु मत्सं-
बन्धशून्यानितदेव मयि निष्णातत्वमिति यत्कुं सर्वेन्द्रियव्यापा-
रोपलक्षणकमेकं वागिन्द्रियव्यापारमेव लक्षीकृत्य सबहुतरदृष्टान्त-
माह । गामिति । दुह्यत इति दोहः पयः दुग्धो दोहो यस्यास्तत्र दोहो
ऽस्ति यस्याः तां कस्मादिबहुमूल्यप्रदानेन क्रीत्वा प्राप्तां रक्षति पाति
गौरियं महद्बहुतरभाण्डादिचारणैर्दुग्धवती पुनः प्रसूतिमती च
भविष्यतीति बुद्ध्या दुग्धलोभी दुःखदुःखी ऐहिकदुःखवान्
आयत्यां तस्या गोर्दुग्धालाभदर्शनादुपलक्षणात् जन्मपापात्
पारत्रिकं च महदुःखं तद्वान् एवमसतीं भार्यां सतीजनकृत-
धर्मोपदेशादियत्नाभ्यां सती भविष्यतीति बुद्ध्या सन्तान-
कामलोभी रक्षतीत्यपसत्प्रजामित्यादावपि व्याख्येयं देहं
पराधीनं प्रतिक्षणं दुःखहेतुम् असत्प्रजां दृष्टादृष्टफलशून्यं पुत्रम्
आगते पात्रे अदत्तं वृत्तिं दुष्कीर्तिदुरितापादकम्
अङ्ग हे उद्धव । दुःखानन्तरं दुःखमेव यस्य स एव रक्षति ॥ १९ ॥

ननु त्वत्सम्बन्धेनैव सा वाक् का किं तत्त्वमस्यादिजी-
वब्रह्मैक्यप्रतिपादिका वा काचिदन्यैव वेति तां स्पष्टमाव-
दयन्नपत्नायामाह । यस्यां मम कर्म चरितं विश्वस्य स्थितिरुद्भवः
प्राणनिरोधः संहारश्च यत्र तत् तत्सोऽप्युपलक्षणमवतार
जन्मादि । लीलावतारेषु ईप्सितं सर्वजगत्सुभगं मज्जन्म जन्मो-
त्सवादि । यत्र तच्चरितं न स्यात् तां गिरं येन केन-
पर्वाक्षितवाल्यलीलादिकं यत्र तच्चरितं न स्यात् तां गिरं वेदल-
क्षणामपि वन्ध्यां विफलां धीरः पण्डितो न बिभृयात् अपण्डित
एव बिभृयात् ॥ २० ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किञ्चित् ऐहिकामुष्मिकफलविषयं साध्वसाधु वा न कुर्यात्
न वदेत् न ध्यायेत् देहवाङ्मनसां नियमनं भगवति कुर्यात्
अनया वृत्या जडवत्पर्यटेदित्यन्वयः मुनिः आत्मारामो आत्मनि
परब्रह्मणि रममाणशीलो यः अनेनैव कथं विहरेदित्यस्यापि
प्रतिवचनं ज्ञेयम् किञ्च मुमुक्षुचेष्टितात् वैपरीत्येन बुभुक्षुचेष्टित-
मप्युक्तं भवति ॥ १७ ॥

एवं जिज्ञासयाऽपोह्य नानात्वभ्रममात्मनि ।
उपारमेत विरजं मनो मय्यर्प्य सर्वगे ॥ २१ ॥
यद्यनीशो धारयितुं मनो ब्रह्मणि निश्चलम् ।
मयि सर्वाणि कर्माणि निरपेक्षः समाचर ॥ २२ ॥
श्रद्धालुर्मे कथाः शृण्वन् सुभद्रा लोकपावनीः ।
गायन्ननुस्मरन् कर्म जन्म चाभिनयन्मुहुः ॥ २३ ॥
मदर्थे धर्मकामार्थानाचरन्मदपाश्रयः ।
लभते निश्चलां भक्तिं मय्युद्धव ! सनातने ॥ २४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं परब्रह्मणि निष्ठापर्यन्तं मुमुक्षुबोधिनमुद्धवम्प्रति भगवतोपदिष्टमिदानीं तदभावे वेदपारगाश्रमो निरर्थक एवेत्याह । शब्दब्रह्मणीति । परे परब्रह्मणि न निष्णातः तद्ध्यानं न कुर्यात् तस्य शब्दब्रह्मपारगाश्रमः श्रमफलः श्रम एव केवलं फलं यस्य सः अधेनुं यथा गृहे रक्षतः रक्षा यथा श्रमैकफला तद्वत् ॥ १८ ॥

दुह्यते इति दोहः पयः दुग्धो दोहो यस्यास्तां स्वीकरणानन्तरं पयो नष्टामित्यर्थः असतीं शीलरहितामपात्रे दत्तं पात्रे च न दत्तं तदुक्तं महाभारते—

न्यायागतस्य वित्तस्य बोद्धव्यौ द्वौ व्यतिक्रमौ ।
अपात्रे प्रतिपत्तिश्च पात्रे यन्न दीयते इति ॥

मया मदर्थभूतेन हीनाम् अन्यार्थपरत्वेन गृहीतामित्यर्थः । हे अङ्ग ! दुःखदुःखी एव रक्षति दुःखानामपि दुःखं दुःखदुःखं तदस्यास्तीति स तथा ॥ १९ ॥

यस्यां गिरि अस्य विश्वविहारात्मकस्य प्रपञ्चस्य स्थित्यादिरूपं पावनं सर्वपवित्रीकरणं मे कर्म लीलावतारेषु मद्भक्तेप्सितं जन्म वा न स्यात्तां धीरः मुमुक्षुर्न बिभृयात् ॥ २० ॥

### भाषा टीका ।

ज्ञानी पुरुष न कुछ विशेष कार्य करे न कुछ कहे न कोई लौकिक भली बुरी बात की चिन्ता करे इस वृत्ति से रह कर आत्माराम मुनि होकर जडकी नांई विचरा करे ॥ १७ ॥

केवल वेदादिक शास्त्र में निपुण होकर भी परब्रह्म के आराधन में यदि कुशल न होवे तो उसका पठन पाठनादिक सब श्रम ही मात्र है जैसे दूध की आशा से बांझ गऊ का सेवा करना है तैसे ॥ १८ ॥

जिस के फिर दूध नहीं होनेवाला है ऐसी गऊ दुष्ट भार्या पर के आधीन शरीर और कुपात्र पुत्र धर्मादि उपयोग रहित धन हे उद्धव जी ! मेरे संबंध बिना वाणी इतनी बातों का संग्रह करने वाला महा बड़ा दुःख पाता है ॥ १९ ॥

हे उद्धव जी ! जो धीर पुरुष है सो ऐसी बांझ वाणी को धारण न करे जिस वाणीमें इस जगत् की उत्पत्तिस्थिति प्रलयरूपी पवित्र लीला न होवे और हमारे जन्म चरित्र तथा लीलावतारादि चरित्र न होवें वही वाणी केवल बांझ है ॥ २० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

उक्तम् ज्ञानमार्गमुपसंहरति । एवम् जिज्ञासया विचारेणाऽऽत्मनि नानात्वभ्रमं देहाद्यध्यासं निरस्य निर्मलं मनो मयि सर्वगे परिपूर्णे समर्प्य संभाव्य उपारमेत न शास्त्रपाण्डित्यमात्रेणेत्यर्थः ॥ २१ ॥

यद्यनीशोऽशक्तस्तर्हि तत्रापि मद्भक्त्यैव कृतार्थो भविष्यसीत्याह । यदीति ॥ २२ ॥

मदर्पणेन कर्मणा विशुद्धसत्त्वस्यान्तरङ्गां भक्तिमाह । श्रद्धालुरिति त्र्यकम् । अभिनयन्स्ववमनुकुर्वन् ॥ २३ ॥

आचरन् सेवमानः ॥ २४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

ज्ञानमार्गे [illegible] नामग्रतया तदनिष्पत्तेः विचारेण बद्धो मुक्त इति [illegible] गुणेषु मे न वस्तुत इत्यादिपूर्वोक्तप्रकारेण देहाद्यध्यासं ब्रह्मणोऽहमित्यनर्थमोऽध्यासः अयं पुत्र एवाहमिति बाह्यवस्त्वध्यासः आदिना गृह्यते तमध्यासं निरस्य स्वकस्वरूपार्थं गुरुलीलादिश्रवणेन धारयित्वा उपारमेत साधनप्रयासाद्विरमेत् न तु शास्त्रपाण्डित्यमात्रेणात्मश्लाघी भवेदित्यर्थः ॥ २१ ॥

इदं ज्ञानाभिमानस्यानुष्ठानमाहत्य मद्भक्त्यैवेत्येवकारेण ज्ञानसाकुर्यव्युदासः कृतार्थ इति ज्ञानस्यानुपङ्गिकत्वादित्यर्थः ॥२२॥

अन्तरङ्गां ज्ञानकर्माद्यनावृतां शुद्धामित्यर्थः । श्रद्धालुरिति युग्मकं स्ववमनुकुर्वन्निति जन्मकर्मलीलयोर्मध्ये ये लीला निजानुगमनीयभावास्तत्तत्प्रकटितान् स्वयमनुकुर्वन् भगवद्गुणांस्तु अनुकारानुकुर्वन्नित्यर्थः । धर्मो गोदानादिलक्षणस्तमपि मदर्थं मदीयजन्मादिमहोत्सवाङ्गत्वेनाचरन् कामो महाप्रसादसेवननिवासादि

**सत्संगलब्धया भक्तया मयि मां स उपासिता ।**
**स वै मे दर्शितं सद्भिरञ्जसा विन्दते पदम् ॥२५ ॥**

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ह्यव्यभिचारिणीं लभते तत्सुखेन केवलवादाद्यत्नमादरात् मम भजनीयस्य चलतया वा सा चलिष्यतीति मन्तव्यमित्याह । सनातन इति ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ज्ञानमार्गमुपसंहरति । एवं जिज्ञासया उक्तलक्षणप्रकारेण विचारेण आत्मनि स्वस्मिन् नानात्वभ्रमं देहद्वयाभिमानलक्षणं देवत्वमनुष्यत्वादिभेदमपोह्य निरस्य उक्तलक्षणया भक्त्या च मयि विरजं विपक्वमायाकषायं मनः समर्प्य भक्त्युत्थेन ज्ञानेन उपारमेत तत्सायुज्यं प्राप्नुयात् तथाचोक्तम्

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥

इति ॥ २१ ॥

एवं च मदर्पितनिष्कामकर्मणैवान्तःकरणशुद्धिरन्तःकरणशुद्ध्यधीनमेव भक्तिसहितं ज्ञानं तेन च ब्रह्मणि निश्चलमनोधारणा ततो ब्रह्मभूतः प्रसन्नात्मेत्यादिमदुक्तेर्विरामसमये विद्योत्तीर्णाया मद्भक्तेः प्राप्तितया च विपक्वकषायस्य मनसो मयि सम्यक् निदिध्यासनं ततो भक्त्युत्थेन शुद्धज्ञानेन सायुज्यमिति क्रमस्तत्र कश्चिद्यदि निश्चलमनोधारणात्मिकां चतुर्थीं भूमिकामध्यारोढुं न शक्नुयात्तदा स्वान्तःकरणस्य सम्यक् शुद्ध्यभावमनुमाय तच्छुद्ध्यर्थं पुनरपि मदर्पितनिष्कामकर्मैव कुर्यादित्युक्तं लक्षीकृत्याह । यद्यनीश इति । सर्वाणि नित्यनैमित्तिकनिवृत्तकर्माणि ॥ २२ ॥

तदेवं सार्द्धैश्चतुर्भिर्ज्ञानयोगमुक्त्वा भक्तियोगमाह । श्रद्धालुरित्यादिना मम कथा शृणोमि इत्यन्तेन अत्र श्रद्धाशब्दादालुच्प्रत्ययेन भक्तावौपाधिकश्रद्धावन्तो ज्ञानिप्रभृतयो व्यावृत्ताः प्रथमत एव श्रद्धालुरिति पदोपन्यासात् भक्तावीदृशश्रद्धावानेवाधिकारीति ज्ञापयति यदुक्तं "यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् । न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिद इति । तावत्कर्माणि कुर्वीत न निर्विद्येत यावता मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायत" इति । ज्ञानकर्माधिकारिभ्योऽस्य भक्तस्य सुगमाः इदमपि परस्मिंश्चौर्यग्रहणगानरासादौ गायन्ननुस्मरन्नित्यानन्तर्यं पौनःपुन्यं स्यात एव भवेदिति भावः । कर्म कालियदमनादिकं जन्म नन्दोत्सवादिकं नाटकादिरीत्या अभिनयन् चकारात् गायन्ननुस्मरंश्च ॥ २३ ॥

मदर्थे धर्मेऽर्थे मज्जन्मयात्रा दिवसे मत्स्वरूपश्रीगुरुदेवाराधनदिवसे च धर्मान् ब्राह्मणवैष्णवसम्प्रदानकान्नवस्त्रादिदानानि कामान् वैष्णवधर्मभाजनप्राप्तमधुरमहाप्रसादान्नभोजनस्रक्चन्दनताम्बूलोपभोगवसनपरिधानाद्यान् अर्थान् विष्णुवैष्णवसेवार्थं द्रव्याहरणानि आचरन् कुर्वन् निश्चलां साधनसाध्यदशयोः स्थिरां नैष्ठिकीं सनातने इति तदाराध्यस्य मत्प्रभोश्च सनातनत्वात्तद्भक्तिरपि सनातनी नित्यैवेति भावः ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मनि अनादिकालतः प्रवृत्तं नानात्वभ्रमं ब्रह्मात्मकत्वज्ञानाभावेन प्रत्येकं स्वतन्त्रसत्ताकत्वं भ्रान्तिः देहेन्द्रियादिविलक्षणात्मज्ञानाभावेन देह एवात्मेत्यभिमानेन वाय्वादिनानात्वभ्रान्तिश्च एवं जिज्ञासया अपोह्य विरजं भावितं मनः सर्वगे मयि अर्प्य वेदनोपासनध्यानापरपर्यायां भक्तिं प्राप्य कर्मादिरूपाद्दुःसाधनाभ्यासात् उपरमेत ॥ २१ ॥

ब्रह्मणि मयि यदि मनो धारयितुमनीशः तर्हि कर्मफले निरपेक्षः सर्वाणि मनः शोधकानि कर्माणि समाचर ॥२२॥

विशेषतो मे कथाः शृण्वन् गायन् मे जन्म कर्म च अनुस्मरन् अभिनयन् स्वयमनुकुर्वन् ॥ २३ ॥

किं बहुना धर्मकामार्थान् त्रिवर्गमपि मदर्थे आचरन् वेदनोपासनध्यानाद्यपरपर्यायां भक्तिं लभते ॥ २४ ॥

---

भाषा टीका ।

इस प्रकार के विचार से आत्मा में जो नाना प्रकार के भ्रम हैं तिनको दूर करके निर्मल मनको सर्व व्यापक हमारे विषय अर्पण करके संसार से निवृत्त होजावै ॥ २१ ॥

यदि मनको निश्चल करके ब्रह्म के विषय धारण न कर सके तब तो वर्णाश्रम विहित सब कर्मों को मेरे में अर्पण करके निरपेक्ष होकर आचरण करै ॥ २२ ॥

सुन्दर कल्याण देने वाली लोकों को पवित्र करने वाली हमारी कथाओं को श्रद्धालु होकर सुना करै हमारे जन्म कर्म का गाता हुआ स्मरण करता हुआ बारम्बार अभिनन्दन करता रहे ॥२३॥

मेरे आश्रय होकर मेरे लिये धर्म अर्थ काम इनको करता हुआ पुरुष हे उद्धव ! सनातन मेरे विषय में निश्चल भक्ति को प्राप्त होता है ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततश्चानेन प्रकारेण मयि सत्सङ्गेन लब्धया भक्त्या स भक्तो मामुपासिता ध्याता भवति स च ध्यानशीलः सद्भिर्दर्शितं वै निश्चितं सुखेनैव मे पदं स्वरूपं प्राप्नोति ॥ २५ ॥

---

उद्धव उवाच

*साधुस्तवोत्तमश्लोक ! मतः कीदृग्विधः प्रभो ! ।
भक्तिस्त्वय्युपयुज्येत कीदृशी सद्भिरादृता ॥ २६ ॥
एतन्मे पुरुषाध्यक्ष ! लोकाध्यक्ष ! जगत्प्रभो ! ।
प्रणतायाऽनुरक्ताय प्रपन्नाय च कथ्यताम् ॥ २७ ॥
त्वं ब्रह्म परमं व्योम पुरुषः प्रकृतेः परः ।
अवतीर्णोऽसि भगवन् ! स्वेच्छोपात्तपृथग्वपुः ॥ २८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

सत्सङ्गकथया भक्तिरप्युक्ता तत्र सतां भक्तेश्च विशेषं पृच्छति। साधुरिति। साधवः स्वस्वमतिकल्पिताः सन्ति बहवस्तव तु कीदृशः संमतः भक्तिरपि बहुविधा लोके कीदृशी पुनस्त्वय्युपयुज्येत सद्भिश्च नारदादिभिरादृता ॥ २६ ॥

एतच्च कथ्यताम् इदं चातिगुह्यं त्वमेव वक्तुमर्हसीत्येतदर्थमाविष्करोति हे पुरुषाध्यक्षेत्यादिना ब्रह्मादिनियन्तः ॥ २७ ॥

अत्र हेतुः त्वमिति। व्योमवदसङ्गः यतः प्रकृतेः परः स्वेषां भक्तानामिच्छयोपात्तं पृथक्परिमितं वपुर्येन सः ॥ २८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी।

ततश्च भक्तेर्भगवदानन्तरम् अनेन कथाश्रवणादिरूपेण प्रकारेण ब्रह्माऽनन्तरस्फूर्तिमान् ॥ २५ ॥

विशेषं विशिष्टं लक्षणम् उपयुज्येत उप आधिक्येन युज्येत नारदादिभिरादृता इति भक्तेस्तत्त्वं त एव जानन्ति तेषां च माहात्म्यं भगवानेवेति भेदेन पृष्टम् ॥ २६ ॥

एतच्च सज्जनयोर्विशिष्टलक्षणं च लोको वैकुण्ठः जगच्चानन्तब्रह्माण्डात्मकं प्रणताय भक्ताय अनुरक्ताय स्निग्धाय प्रपन्नाय एकशरणाय ॥ २७ ॥

अत्र पुरुषाध्यक्षत्वादौ यतो हेतोः प्रकृतेः परः प्रकृतेः परत्वादेवासङ्गत्वमित्यर्थः। स्वेषां भक्तानाम् उपात्तं जगति प्रकटीकृतं परिमितं स्वाभाविकाचिन्त्यशक्त्या विभुत्वेऽपि परिच्छिन्नम् ॥ २८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

व्योमशब्दो व्योमवन्निर्मलत्वपरः वासुदेवसङ्कर्षणप्रद्युम्नादिरूपेण पृथक्त्वम् ॥ २८—३० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

उक्तसर्वोपायनिदानभूतं सत्सङ्गात्मकं कारणान्तरं वदन् तदुपायभूतभक्तियोगस्य साक्षात्स्वपरत्वाद्युपायत्वमाह।

सत्सङ्गश्च श्रेयान् । सतां साधूनां सङ्गेन कथया मयि भक्त्या मां मामेव यो निषेवते स मे मम स्थानमञ्जसा सुखेन विन्दते लभते सद्भिर्दर्शितं वै इत्थं निश्चितं निश्चितमित्यर्थः ॥ २५ ॥

सत्सङ्गकथया भक्तिरप्युक्ता तत्र सतां भक्तेश्च विशेषं पृच्छति। साधुरिति। हे प्रभो! साधुः कीदृग्विधस्ते तव मतः अभिमतः सद्भिरादृता आदरपूर्वमनुष्ठिता भक्तिः कीदृशी त्वय्युपयुज्येत साधवः स्वमतिपरिकल्पिताः सन्ति बहवः तव तु कीदृशः सम्मतः तथा भक्तिरपि बहुविधा लोके कीदृशी पुनस्त्वय्युपयुज्येत सद्भिश्च नारदादिभिरादृता ॥ २६ ॥

एतत्तु प्रणताय मे मह्यं कथ्यताम् इदं चातिगुह्यं दुर्विज्ञेयं च त्वमेव वक्तुमर्हसीत्यभिप्रायेण भगवन्तं विशिनष्टि। हे पुरुषाध्यक्ष! त्वं ब्रह्मेत्यादिना पुरुषप्रकृत्योः प्रधानपुरुषयोर्नियन्तेत्यर्थः। अतो यत्किञ्चिज्ज्ञानं कर्म च तव वशवर्तीति कार्त्स्न्येन ज्ञानकर्मणोः त्वमेव ज्ञाता न त्वदन्यः कश्चिदुपदेष्टा विद्यत इति भावः ॥ २७ ॥

पुरुषाध्यक्षत्वोपयोगितया विश्वस्य च भक्तत्वादिकल्याणगुणानुगुणं स्वरूपमाह। त्वं ब्रह्मेति न केवलमुक्तविधः किन्तु निरस्तनिखिलदोषोऽसीत्याह। परमं व्योम व्योमवन्निर्मलत्वपरो व्योमशब्दः परमशब्दो मलप्रतिभटत्वपरः निर्मलस्वरूप इत्यर्थः। पुरुषाध्यक्षत्वस्य हेतुः सर्वान्तर्यामित्वमाह पुरुषः प्रकृतेः पर इति। प्रकृतिशब्दोऽत्र भूमिरापोऽनलो वायुरित्यादिनिर्दिष्टप्रकृतिद्वयपरः परत्वं नियन्तृत्वं च तच्छेषा विदितं परित्राणाय साधूनामवतीर्णोऽसि तवैतत्कर्मसु निवृत्तिरित्याशयेनाह। अवतीर्णोऽसीति। हे भगवन्! स्वेच्छया उपात्तानि परिगृहीतानि पृथग्भूतानि श्रीरामकृष्णादिरूपाणि येन तथाभूतो ऽवतीर्णोऽसि स्वेच्छापदेन वपुषां कर्मनिमित्तत्वव्युदासः ॥ २८ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

नापि सत्सङ्गकथा वेत् भगवत्परोक्षज्ञानमुत्पाद्यते न स्वर्गापवर्गादिकमपि अनयत्याह। सत्सङ्गेति। पदं वैकुण्ठादिस्थानम् ॥ २५ ॥

सद्भिरिति प्रस्तुतसत्कथायामप्युक्तो लोकोपकाराय तल्लक्षणं पृच्छति। साधुश्च इति। साधुत्वासाधुत्वयोर्मतः शुभाशु-

*साधुस्त्व उत्तमश्लोक ! मतः कीदृग्विधं ! प्रभो ! भक्तिस्त्वय्युपयुज्जीत कीदृशी सद्भिरादृता ॥२६॥ इति विजयध्वजपाठः।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

छिन्नभिन्नत्वात्साधुत्वे वर्तमानानां पुंसां मनः कीदृग्विधं भवति साधवः किंलक्षणा इत्यर्थः । कीदृशी किंलक्षणा भक्तिस्त्वय्युपयुज्येत त्वदुत्तमप्रसादयोगजननी सद्भिरादृता सम्भाविता "आदृतौ सादरार्चितौ" इत्यमरः ॥ २६ ॥

एतत्सद्भक्त्योर्लक्षणम् ॥ २७ ॥

रूपग्रहणस्य दुःखबोधकत्वाद्दुष्परिहर इति नेत्याह । त्वमिति । स्वेच्छयोपात्तं स्वीकृतं पृथग्वपुः शोभनाकारं वासुदेवादिशरीरं येन सः स्वेच्छोपात्तपृथग्वपुः शुभाकारे तनौ वपुरिति यादवः—

नित्यानन्दशरीरोऽपि वसुदेवादिदेहगः ॥
प्रदर्शयञ्जनि स्वस्य नित्यं देहादिवर्जितः ।
वसुदेवादिदेहेषु प्रवेशस्तस्य भण्यते ॥
देहोपादाननामापि तु नह्यन्यो देह इष्यते ।
अन्याभिमतदेहेषु प्रविष्टः सर्वदा हरिः ॥
नान्याभिमतो देहो विष्णोर्हि कदाचन ।
अतोऽशरीरो भगवान् पुत्रताभिमतिस्तु या ॥
वसुदेवादिकानां तु सैव मिथ्या मतिर्भवेत् ।
अन्यादृग्भावयुग्देह एवासौ हरिरास्थितः ॥
न तदन्येषु देहेषु कश्चित्तस्य प्रवेशनम् ।
मम पुत्रस्त्वयमिति भ्रामणाय यदा हरेः ॥
वसुदेवादिदेहेषु तनूपात्तिस्तु सा गतिः ।
अनुपात्तशरीरस्य तनूपात्तिरितीष्यते ॥

तद्देहे पितृदेहस्थे उपावृत्ते यतो हरिरिति एतद्विषयं मानम्॥२८॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नन्वेवं भूतभक्तिमार्गे प्रवृत्तिर्निष्ठा वा कथं स्यादित्याशङ्क्य तत्र हेतुमाह । सत्सङ्गेति । भक्त्या भक्तिरुच्या स भक्तो मामुपासिता भजमानो भवति ॥ २५ ॥

उत्तमाधिकत्वेन पृच्छति सैव सद्भिरादृता साधूनां स्वभक्तानां माहात्म्यं त्वत्त एव सुष्ठु जानामि भक्तेस्तत्त्वस्तु ते साधव एवेति भेदेन पृष्टम् ॥ २६ ॥

हे पुरुषाध्यक्ष ! महत्स्रष्टृप्रवर्तकेति लोको वैकुण्ठः जगत्वानन्तब्रह्माण्डात्मकं प्रणताय भक्ताय अनुरक्ताय स्निग्धाय प्रपन्नाय स्वैकशरणाय ॥ २७ ॥

साक्षाद्भगवानेव त्वमवतीर्णोऽसि भगवत एव वैभवमाह । ब्रह्म त्वं परमव्योमाख्यो वैकुण्ठस्त्वं प्रकृतेः परः पुरुषोऽपि त्वमिति । भगवानपि कथं भूतः सन्नवतीर्णः स्वेच्छामयस्येत्यनुसारेण स्वेषां सर्वेषामेव भक्तानामिच्छा वै तां पूरयितुमुपात्तानि तत्तदाकृतीनि पृथग्वपूंषि निजतत्तदाविर्भावा येन तथाभूत अवतारं प्रति यथाह जाम्बवान् यस्येषदुत्कलितरोषकटाक्षमोक्षैरित्यादि तथा च देवाः केतुस्त्रिविक्रमयुत इत्यादि यथा च ब्रह्मा नारायणस्त्वमित्यादौ नारायणोऽङ्गमिति यथा च देवाः स्पर्शस्तवाङ्घ्रिरविनाशि यत्र एवाक्रूरः अद्भुतानीहेत्यादि अत एव गोविन्दभुजगुप्तायामित्यादि ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एवं भूतायां भक्तौ कः प्रवर्तक इत्यपेक्षायामाह । सत्संगेति । भक्त्या उक्तलक्षणया नैष्ठिक्या उपासिता भजमानो भवति ततश्च सद्भिरेव दर्शितं पदं मच्चरणं मद्धाम वा अञ्जसा शीघ्रं रुच्यासक्तिरतिप्रेमभूमिकारूढः सन् विन्दते प्राप्नोति ॥ २५ ॥

भक्तिप्रादुर्भावकं साधुमेव श्रुत्वा तल्लक्षणं पृच्छति । साधुरिति । मतस्तव सम्मतः सद्भिरादृतापि भक्तिस्त्वयि कीदृश्युपयुज्येत ॥ २६ ॥

पुरुषाणां महत्स्रष्ट्रादीनामध्यक्षेत्यपारमैश्वर्यं लोकस्य महावैकुण्ठलोकस्याध्यक्षेत्यपारा संपत् तदपि जगत्यस्मिन्मायिकेऽपि लोकोद्धारणार्थं कृपया प्रकर्षेण भवसि प्रादुर्भवसीत्यपारं कारुण्यं चोक्तं प्रणताय मह्यं प्रणतत्वेऽप्यहं न जगज्जनवत् किं त्वनुरागीत्याह । अनुरक्ताय अनुरक्तत्वेऽपि नाहमर्जुनादिवद्देवान्तरोपासक इत्याह । प्रपन्नायेति ॥ २७ ॥

किञ्च त्वद्भक्तिप्रवर्तकः साधुस्त्वत्स्वरूपाद्भिन्नोऽपि त्वत्स्वरूपभूत एवेत्याह । त्वमिति । व्योमवदसंगः यतः प्रकृतेः परः तदपि प्राकृतेऽस्मिन् लोके कृपया जीवोद्धारार्थमवतीर्णोऽसि कीदृशः स्वभक्तेरिच्छयोपात्तानि गृहीतानि पृथग्भूतानि वपूंषि यतः सः स्वस्वरूपभूतानि वपूंष्येव त्वं स्वभक्तिप्रवर्तनार्थं भक्तेभ्यो ददासीत्यर्थः । अतएव नारदेन प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुमिति अत एव त्वद्भक्तं गुरुं लोकास्त्वत्स्वरूपत्वेनैव ध्यायन्तीति भावः । यद्वा त्वमात्मारामत्वात् जगत्यस्मिन्नुदासीनोऽपि स्वभक्तिप्रचारणार्थमवतरस्येवेत्याह । त्वमिति । स्वेच्छया उपात्तानि पृथक् पृथग्वपूंषि श्रीकपिलदत्तात्रेयश्रीनारदाद्याकारा येन सः यदुक्तं बहुमूर्त्येकमूर्तिकमिति ॥ २८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स लब्धभक्तिः इत्थं सत्सङ्गलब्धया मयि भक्त्या मामुपासिता भवति स वै स एव सद्भिः "स तु तत्पदमाप्नोति यस्माद्भूयो न जायते निरञ्जनः परमं साम्यमुपैती" त्यादिभिर्वेदैर्दर्शितं मे पदं विन्दते लभते नान्यः ॥ २५ ॥

सत्सङ्गलब्धया भक्त्येति साधुसङ्गस्य भक्तिप्रापकत्वं भक्तेर्भगवत्पदप्रापकत्वं श्रुत्वा साधूनां भक्तेश्च विशेषं पृच्छति । साधुरिति ॥ २६ ॥

पुरुषाध्यक्ष ! ब्रह्मादिनियन्तः लोकाध्यक्ष ! सर्वलोकस्वामिन् जगत्प्रभो ! सर्वविश्वस्वामिन् ॥ २७ ॥

यतः हे भगवन् ! त्वं ब्रह्म बृहद्गुणशक्त्याद्याश्रयः परमव्योम सर्वचेतनाचेतनावासस्थानं प्रकृतेः परः पुरुषः कार्यकारणरूपप्रकृतिविलक्षणविग्रहवान् स्वेच्छोपात्तपृथग्वपुः स्वेच्छया स्वकीयानां प्रह्लादगजपतिवैरोचनिप्रभृतयस्तादिच्छया उपात्तानि गृहीतानि पृथक् नानाकाराणि वपूंषि येन सः अवतीर्णोऽसि ॥ २८ ॥

---

### भाषा टीका ।

सत्संग से प्राप्त भई जो मेरे विषय में भक्ति तिस से वह मेरी उपासना करैगा तब तो सत्पुरुषों का दिखाया जो हमारा स्थान तिस को प्राप्त हो जावैगा ॥ २५ ॥

श्रीभगवानुवाच ।

कृपालुरकृतद्रोहस्तितिक्षुः सर्वदेहिनाम् ।
सत्यसारोऽनवद्यात्मा समः सर्वोपकारकः ॥ २९ ॥
कामैरहतधीर्दान्तः मृदुः शुचिरकिञ्चनः ।
अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः ॥ ३० ॥
अप्रमत्तो गभीरात्मा धृतिमान् जितषड्गुणः ।
अमानी मानदः कल्पो मैत्रः कारुणिकः कविः ॥ ३१ ॥
आज्ञायैवं गुणान् दोषान् मयादिष्टानपि स्वकान् ।
धर्मान् संत्यज्य यः सर्वान् मां भजेत स सत्तमः ॥ ३२ ॥
ज्ञात्वाऽज्ञात्वाऽथ ये वै मां यावान् यश्चास्मि यादृशः ।
भजन्त्यनन्यभावेन ते मे भक्ततमा मताः ॥ ३३ ॥
मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्चनम् ।
परिचर्या स्तुतिः प्रह्वगुणकर्मानुकीर्तनम् ॥ ३४ ॥
मत्कथाश्रवणे श्रद्धा मदनुध्यानमुद्धव ! ।
सर्वलाभोपहरणं दास्येनाऽऽत्मनिवेदनम् ॥ ३५ ॥
मज्जन्मकर्मकथनं मम पर्वानुमोदनम् ।
गीतताण्डववादित्रगोष्ठीभिर्मद्गृहोत्सवः ॥ ३६ ॥

भाषा टीका ।

उद्धव उवाच ।

हे प्रभो ! हे उत्तमश्लोक ! किस प्रकार का साधु आपको सम्मत है और सत्पुरुषों से आदृत कौनसी भक्ति है कि जिस का आप के विषे उपयोग होता है ॥ २६ ॥

हे पुरुषाध्यक्ष ! हे लोकाध्यक्ष ! हे जगत् प्रभो ! मैं आप का नम्र अनुरागी शरणागत भक्त हूं मेरे से इस बात को आप कहिये ॥ २७ ॥

आप ब्रह्म हो परमव्योम वैकुण्ठनाथ हो प्रकृति पुरुष दोनों से परे पुरुष हो हे भगवन् ! अपनी इच्छा से नाना प्रकार के रूपधारण करने वाले आप ने यह अवतार भक्तहितार्थ लिया है ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र त्रिंशल्लक्षणैः साधुं निरूपयति । कृपालुरिति पञ्चभिः । कृपालुः परदुःखासहिष्णुः सर्वदेहिनां केषांचिदप्यकृतद्रोहः तितिक्षुः क्षमावान् सत्यं सारः स्थिरं बलं वा यस्य सः अनवद्यात्माऽसूयादिरहितः सुखदुःखयोः समो हर्षविषादरहितः यथाशक्ति सर्वेषामुपकारकः ॥ २९ ॥

कामैर्विषयैरक्षुभितचित्तः दान्तः संयतबाह्येन्द्रियः मृदुरकठिनचित्तः शुचिः सदाचारः अकिञ्चनोऽपरिग्रहः अनीहो दृष्टक्रियाशून्यः मितभुक् लघ्वाहारः शान्तो नियतान्तःकरणः स्थिरः स्वधर्मे मच्छरणो मदेकाश्रयः मुनिर्मननशीलः ॥ ३० ॥

अप्रमत्तः सावधानः गभीरात्मा निर्विकारः धृतिमान्विपद्यप्यकृपणः जितषड्गुणः क्षुत्पिपासे शोकमोहौ जरामृत्यू षडूर्मयः एते जिता येन सः अमानी न मानाकाङ्क्षी अन्येभ्यो मानदः कल्पः परबोधने दक्षः मैत्रोऽवञ्चकः कारुणिकः करुणयैव प्रवर्तमानो न दृष्टलोभेन कविः सम्यक् ज्ञानी ॥ ३१ ॥

किञ्च मया वेदरूपेणादिष्टानपि स्वधर्मान् सन्त्यज्य यो मां भजेत सोऽप्येवं पूर्वोक्तवत्सत्तमः किमज्ञानान्नास्तिक्याद्वा न धर्माचरणे सत्त्वशुद्ध्यादीन् गुणान् विपक्षे नरकपातादीन् दोषांश्चाऽऽज्ञाय ज्ञात्वाऽपि मद्ध्यानविक्षेपकतया मद्भक्त्यैव सर्वं भविष्यतीति दृढनिश्चयेनैव धर्मान् सन्त्यजेत् । यद्वा भक्तिदार्ढ्येन निवृत्ताधिकारतया सन्त्यज्य । अथवा । विशेषैकादश्युपवासकृष्णैकादश्यनुपवासादिनिषेधभावाद्वा ये भक्तिविरुद्धा धर्मास्तान् सन्त्यजेदित्यर्थः ॥ ३२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पदेशदक्षः मैत्रोऽवञ्चकः कारुणिकः करुणयैव प्रवर्त्तमानः न स्वार्थलाभेन कविः चिदचिदीश्वरतत्त्वत्रययाथात्म्यज्ञः ॥ ३१ ॥

किञ्च आज्ञायेति । मयादिष्टानुपदिष्टान् वेदमुखेनोक्तान् गुणान्दोषांश्च आज्ञाय विज्ञाय विरोधिस्वरूपस्यापि ज्ञेयत्वाद्दोषानित्युक्तम् सर्वान्स्वकान्वर्णाश्रमोचितान् धर्मान्सन्त्यज्य सर्वधर्मान्परित्यज्येत्यत्रेवात्रापि यथासंप्रदायं त्यागो विवक्षितः यः मामुपायोपेयभावेन भजेत्स च सत्तमः साधूत्तमः ॥ ३२ ॥

किञ्च ज्ञात्वेति । यः यत्स्वरूपः यादृशः यत्स्वभावः यावान्यद्विभूतिकश्चास्मि तथा पुनः पुनर्विचार्य ये मामेवानन्यभावेन नान्यस्मिन् प्रयोजनान्तरोपायान्तरदेवतान्तरादौ यो भावस्तेन भजन्ति ते भक्ततमाः वैशब्दो निश्चयद्योतकः ॥ ३३ ॥

एवं साधुलक्षणमुक्तमथैवं विधानां सतां संगाच्चिह्नभूतानि भक्तियोगानुग्राहकाणि तल्लक्षणान्याह । मल्लिङ्गेत्यादिभिरष्टभिः मल्लिङ्गमर्चारूपं मल्लिङ्गमद्भक्तजनदर्शनादीनि भक्तियोगानुग्राहकाणि तल्लक्षणानीत्यष्टमान्ते ऽध्याहर्त्तव्यं परिचर्या पादपीडनादिरूपा प्रह्वशब्दः प्रणामपरः गुणकर्मानुकीर्तनम् ॥३४॥

मदनुध्यानं मद्विषयकानुध्यानं सर्वलाभोपहरणं सर्वस्य लब्धस्य समर्पणं दास्येन स्वामित्वेन आत्मनः स्वस्य निवेदनं समर्पणं मच्छेषत्वाध्यवसायः ॥ ३५ ॥

मम जन्मकर्मकथनं श्रोतृसन्निधाविति शेषः मम पर्वसु जयन्त्यादिष्वनुमोदनम् उत्सवकरणेनेति शेषः गीतादिभिर्मद्गृहेषु महालयेषूत्सवः ॥ ३६ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवान्सल्लक्षणं वक्तीत्याह । भगवानिति । सर्वदेहिनामकृतद्रोहः अनवद्यः आत्मा मनो यस्य स तथा ॥ २९ ॥

संचितं किञ्चनप्रक्षयोग्यं धनं न विद्यते इत्यकिञ्चनः संकोचरूपेण मुखेन यादनः अनीहो निषिद्धाचरणवर्जितः किञ्च धैर्यावधर्मेस्थिरः निश्चलः अहमेव शरणं यस्य स मच्छरणः मुनिः मद्गुणमननशीलः ॥ ३० ॥

अप्रमत्तो विहिताचारे प्रमादरहितः गभीरात्मा अनवगाह्यमनोगतिः आपदि धृतिमान् जिताः षट् कामादि गुणाः षडिन्द्रियविषया वा येन स तथा अमानी आत्मन्यविद्यमानगुणाभिमानरहितः मानदः ज्ञानोपदेष्टा कल्पः विहितक्रियाकरणनिपुणः कृपालुत्वं मनोधर्मः कारुणिकत्वं कायिकधर्म इति पृथगुक्तं कविः सर्वज्ञः ॥ ३१ ॥

सामान्यलक्षणमुक्त्वा विशेषलक्षणमाह । आज्ञायेति । चशब्द एवार्थे यो मया मदीयैर्व्यासादिभिर्दिष्टान् गुणान् दोषान् अपि आज्ञाय सम्यग्ज्ञात्वैव स्वकान् स्वाधिहितान् धर्मान् भागवतसञ्ज्ञान् मयि संत्यज्य समर्प्य मां भजेत्स एव सत्तम इत्यन्वयः ॥ ३२ ॥

भक्तेरनवच्छिन्नत्वेऽपि उत्तमोत्तमायाः शुश्रूषितत्वेन पृष्टत्वात्तं प्रश्नं परिहरति । ज्ञात्वेति । अथ सतां लक्षणकथनानन्तरमात्मनिकभक्तलक्षणमुच्यते यद्वा शास्त्रगुरूपदेशतो भगवन्माहात्म्यं ज्ञात्वाथ च विशेषतो ज्ञात्वेति वीप्सया माहात्म्यज्ञानेन पुनः पुनर्विशेषं द्योतयति तदुक्तम्—

ज्ञात्वापि मम माहात्म्यं तत्रोत्सुकतया पुनः ॥

विशेषाच्च विशेषेण ज्ञात्वा मामहन्तेऽधिकमिति परिमाणतो यावानस्मि स्वरूपतो योऽस्मि गुणतो यादृशोऽस्मीति तत्त्वेन येऽनन्यभावेनात्युत्तमभक्त्या मां चैवं भजन्ति ते भक्ततमाः निरतिशयभक्ता मता मानात्वेन ज्ञाता इत्यन्वयः अत्र तमप्प्रत्ययेन भक्तानां बाहुविध्यप्रकाशनेन भक्तेरपि तथात्वं सूचयतीति ॥ ३३ ॥

इदानीं सर्वसाधारणं भक्तिलक्षणमाह । मल्लिङ्गेति । अत्र कर्तव्यपदमध्याहृत्यान्वेतव्यं विविधप्रकारत्वात् । सर्वलाभोपहरणं सर्वलाभस्य द्रव्यस्योपहरणं हरावर्पणं दास्येन सहात्मनिवेदनमात्मसमर्पणं यद्वा दास्येन सहात्मनि मनसि निवेदनम् ॥३४॥३५॥

पर्वानुमोदनम् उत्सवानुष्ठानम् उत्सवं दृष्ट्वा हर्षो वा ॥३६॥३७॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ॥

अथ साधनतारतम्येन साधूनां तारतम्यमाह पञ्चभिः तत्र श्रावरं मिश्रभक्तिसाधकमाह । कृपालुरिति त्रिकेण । अत्र मच्छरण इति विशेष्यम् उत्तरत्र स च सत्तम इति चकारेण तु पूर्वोक्तो यथा सत्तमस्तथायमपि सत्तम इति व्यक्तेस्तथैवंभूतो मच्छरणः सत्तम इत्याक्षिप्यते अन्वयः तत्र किन्तु स्वधर्म इति स्वकान् धर्मान् संत्यज्येत्युत्तरोक्ताच्छ्रवणोपपादनार्थम् अत्रैव मूलेन मर्वानिति पदेन कोऽपि न त्यक्तः अस्तु तावद्विरुद्धानां धार्मेति भावः ॥ २९—३१ ॥

मध्यममभिश्रसाक्षाद्भक्तिसाधकमाह । आज्ञायैवमिति । नित्याधिकारतया सन्त्यज्येत्यन्ता व्याख्या ग्राह्या यथा च श्रीहयशीर्षपञ्चरात्रोक्तनारायणव्यूहस्तवः—

ये त्यक्तलोकधर्मार्था विष्णुभक्तिवशं गताः ।

ध्यायन्ति परमात्मानं तेभ्योऽपीह नमो नम इति ॥

अत्र त्वेवं व्याख्या यदि च स्वात्मनि तत्तद्गुणयोगाभावस्तथापि एवं पूर्वोक्तप्रकारेण गुणान् कृपालुत्वादीन् दोषांस्तद्विपरीतांश्चाज्ञाय हेयोपादेयत्वेन निश्चित्यापि यो मया तेषु गुणेषु मध्ये सत्रादिष्टानपि स्वकान् नित्यनैमित्तिकलक्षणान् स्वानेव वर्णाश्रमविहितान् तदुपलक्षणं ज्ञानमपि मदनन्यभक्तिविधानकतया सन्त्यज्य मां भजेत् स च सत्तमः चकारात्पूर्वोऽपि सत्तम इत्युत्तरस्य तत्तद्गुणाभावेऽपि पूर्वसाम्यं बोधयति ततो यस्तु तत्तद्गुणान् लब्ध्वा धर्मज्ञानपरित्यागेन मां भजति केवलं स तु परमसत्तम एवेति व्यक्त्यानन्यभक्तस्य पूर्वत आधिक्यं दर्शितम् अत्र अद्वेष्टा सर्वभूतानामित्यादिश्रीभगवद्गीताद्वादशाध्यायप्रकरणमप्यनुसन्धेयं सत्तम इत्यनेन तद्वयस्यापि सत्तमत्व सत्त्वमप्यस्तीति दर्शितम् अस्तु तावत्सदाचारस्य तद्भक्तस्य सत्त्वसत्त्वमनन्यदेवताभक्त्वमात्रेण दुराचारस्यापि सत्त्वाम्यपर्यायं साधुत्वं विधीयते अपि चेत्सुदुराचार इत्यादौ अत्र च साधुसङ्गप्रस्तावे यत्तादृश लक्षणं नात्यापितं तत्खलु तादृशसङ्गस्य भक्त्युन्मुखेऽनुपयुक्तताभिप्रायेण यथोक्तं श्रीप्रह्लादेन । सङ्गेन साधुभक्तानामिति साधुरत्र सदाचारः ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवमीश्वरबुद्ध्या विधिमार्गभक्तयोस्तारतम्यमुक्तम् तत्रै-
वोत्तरत्वानन्यत्वेन श्रेष्ठत्वं दर्शितं तत्रैवार्चनमार्गे त्रिविधत्वं
प्रपञ्च्यते पाद्मोत्तरखण्डात् तत्र महत्त्वं तापादिपञ्चसंस्का-
रित्वादौ मध्यमत्वम् —

तापः पुण्ड्रं तथा नाम मन्त्रो यागश्च पञ्चमः ।
अमी पञ्चैव संस्काराः पारमैकान्त्यहेतवः ॥

इत्यत्र कनिष्ठत्वं शङ्खचक्राद्यूर्ध्वपुण्ड्रधारणाद्यात्मलक्षणम् । तत्रा-
स्करणां चैव वैष्णवत्वमिहोच्यते इत्यत्र अथ शुद्धदास्यभक्त्या-
दिमात्रमात्रेण योऽनन्यः स तु सर्वोत्तम इत्याह । ज्ञात्वेति
ज्ञात्वा अज्ञात्वा वा यं केवलमनन्यभावेन श्रीव्रजराजनन्दनत्वा-
द्यालम्बनो यः स्वाभीप्सितो दास्यादीनामेकतरो भावः तेनैव
भजन्ति न कदाचिदन्येनेत्यर्थः । ते तु मे मया भक्ततमा मताः
साधुत्वेत्याद्यनुसारेण ते मे भक्ततमा मता इत्यनेनैव
सततस्यातिशयो दर्शितः अत एव योगेश्वरैरपि चतुर्थे प्रार्थितम् ।
प्रयाप्त तेऽङ्घ्र इत्यादिना ज्ञात्वाज्ञात्वेत्यत्राज्ञानज्ञानयोर्हेयोपादेयत्वं
निषिद्धं भक्ततमा इत्यत्र पूर्ववाक्यवत् मत्पदानिर्देशमातिक्रम्य
विशेषतो भक्तपदनिर्देशात् भक्तेः स्वरूपाधिकत्वमत्रैव विवक्षितं
मे मता इत्यत्र मम तु विशिष्टा मन्मतिरत्रैवेति सूचितम् इद-
मानुकूल्यत्वात् अत एव प्रकरणप्राप्तमेकवचननिर्देशमप्यति-
क्रम्य गौरवेणैव ये न इति बहुवचनं निर्दिष्टं ततः किमुत
तद्रागमिश्रयोगेण इति भावः ॥ ३३ ॥

मल्लिङ्गमद्भक्तजनेति षष्ठीलुक् छान्दसः उत्तरार्द्धेऽप्यन्वयात्
प्रह्वेति प्रह्वत्वं नमस्कारः ॥ ३४ ॥

दास्येनात्मनिवेदनमिति वैधभक्तौ दास्यस्य प्राधान्यात् ॥ ३५-३८ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कर्मज्ञानादिमिश्रा केवला चेति भक्तेर्द्वैविध्यात्तत्प्रवर्त्तकः
साधुरपि द्विविधस्तत्र प्रथममाह त्रिभिः । कृपालुः परस्य संसार-
दुःखासहिष्णुः स्वद्रोहिण्यपि जने अकृतद्रोहः सर्वदेहिनां
स्वमवजानतामपि तितिक्षुरपराधक्षन्ता सत्यमेव सारो बलं यस्य सः
अनवद्यात्मा असूयादिदोषरहितः समः सुखदुःखाभ्यां मानापमा-
नाभ्यां च तुल्यः ॥ २९ ॥

कामैरक्षुभितचित्तः दान्तः संयतबाह्येन्द्रियः मृदुः अकठो-
रचित्तः शुचिः सदाचारः अकिञ्चनः अपरिग्रहः अनीहः
व्यावहारिकक्रियाशून्यः मितभुक् पवित्रस्वल्पाहारः शान्तः
शान्तिमान् स्थिरः स्वधर्मे स्वकर्मसु फलोदयपर्यन्तम-
व्यग्रः आफलोदयकृत् स्थिर इति तल्लक्षणात् मच्छरणः मदे-
काश्रयः मुनिर्मननशीलः ॥ ३० ॥

अप्रमत्तः सावधानः गभीरात्मा अन्यैर्दुरवगाह्यस्वभावः धृति-
मान् निर्विकारः जितषड्गुणः क्षुत्पिपासाद्यूर्मिरहितः अमानी
मानाकाङ्क्षाशून्यः अन्येभ्यो मानप्रदः कल्यः परबोधने दक्षः मैत्रः
अवञ्चकः कारुणिकः करुणयैव प्रवर्त्तमानः कविर्बन्धमोक्षज्ञः
इत्यष्टाविंशतिगुणवानयं सत्तम इत्युत्तरस्यानुषङ्गः अतः शान्त
इति जितषड्गुण इति पदाभ्यामयं मिश्रभक्तो निर्वाणवाञ्छा-
शून्यत्वात् भक्तात्मारामः शान्तभक्त इति संज्ञाभ्यामुच्यते अयं
स्वपूर्वदशायां ज्ञानमिश्रभक्तिमान् तत्पूर्वदशायां कर्ममिश्रभक्ति-
मानासीदिततस्तदा तदाश्च भक्तेः प्राधान्यं सिद्धदशायां तु
कर्मज्ञानाद्यनादरणाच्छुद्धभक्त एवायमुच्यते इत्यतः सत्तम इति
ज्ञानमिश्रभक्तिमान् ततः कर्ममिश्रभक्तिमान् सन्निष्ठगतत्वे
अतोऽयं स्वमार्गिणं स्वतुल्यं चिकीर्षुः प्रथमं कर्ममिश्रां भक्तिमु-
पदिशति तदन्तेनोपदिष्टः अथ निष्कामः कर्ममिश्रामेव भक्तिं
कुर्वन् कर्माणि त्यजन् योगी कर्मभिस्त्यज्यते हि स इति स्वार्थ-
नारूढदशायामनादृतत्वात् अत एव कर्मणामुपरामे सति
ज्ञानमिश्रां भक्तिं लभते । ततस्तत्पाकदशायां भक्तेः प्राबल्ये सति
ज्ञानेऽप्यनादरतस्तदनुपरमसमये सति भक्तात्मारामः इति शान्तभक्त
इति संज्ञाभ्यां च व्यपदिश्यमानो भवति तदेव ज्ञानेऽनादरो
यथा भक्तिरसामृतसिन्धुधृता तदुक्तिः "भक्तिमत् सुखघनमूर्त्तौ पर-
मात्मनि वृष्णिपत्तने स्फुरति । आत्मारामतया मे वृथा गतो बत
चिरं कालः" इति । इत्थंगुणाक्षिप्तमतिर्भगवान् बादरायणिरिति
प्रथमे च तद्दशायां भक्तिबाधितस्य ज्ञानस्य सत्त्वेऽपि तस्य मत्त्या-
नादरकत्वात्—

अन्याभिलाषिताशून्यं ज्ञानकर्माद्यनावृतम् ।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा इति ॥

शुद्धभक्तिलक्षणस्य तत्र नाव्याप्तिर्ज्ञेया ॥ ३१ ॥

अथ केवलाया भक्तेः प्रवर्त्तकं साधुं कथयति । आज्ञायेति ।
यथा धर्मान् नैव सन्त्यज्य सत्तम उक्तः एवं मया वेदरूपेणादि-
ष्टानपि सर्वान् धर्मान् सन्त्यज्य मद्भक्त्यैव श्रद्धाविशेषवत्तया
सम्यक् प्रकारेणैव त्यक्त्वा यो मां भजेत् किमज्ञानात्
किन्त्वाढ्यो न धर्माचरणं सत्त्वशुद्ध्यादीन् गुणान् विपक्षे
दोषांश्च आज्ञाय सम्यगेव ज्ञात्वापि भक्त्यैव मे सर्वं भविष्यतीति
दृढनिश्चयेनैव धर्मान् सन्त्यजेति स्वामिचरणाः स च सत्तम
इति पूर्वाधिकारी धर्मान् सन्त्यज्य भजेदयं तु सन्त्यज्यैवेति भेदः
तथा पूर्वः कृपालुत्वादिसम्पूर्णगुणवानेव सत्तमः अयं तु
विशेषणान्तरानुपादानात् तावत्सङ्ख्यकगुणवत्त्वाभावेऽपि सत्तमः
नचास्य तावद्गुणाभाव एवेत्याशङ्कनीयम्—

भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककाल इति ।
यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुराः ॥

इत्यादिभणनादचिरेणैव सर्वदोषोपशमनपूर्वकसर्वगुणोदयस्य
तत्रावश्यंभावित्वात् किञ्च पूर्वो जितषड्गुणत्वात् सिद्धदशावस्थ
एव सत्तमः अयं तु तादृशत्वानुक्तेः साधकदशावस्थोऽपि सत्तम
इत्यतश्च पूर्वत एतावान् व्यञ्जित उत्कर्षः प्रथमत एव शुद्धभक्तिमत्त्वा-
ज्ज्ञेयः ॥ ३२ ॥

अयं सिद्धदशापन्नस्त्वेवं तु परममहोत्कृष्ट एवोच्यत इत्याह ।
ज्ञात्वाज्ञात्वेति । वीप्सा भक्त्याहमेकया ग्राह्य इति मदुक्तेः भक्ति-
तारतम्येन मन्माधुर्यमधिकाधिकं प्रतिक्षणमनुभवतोऽविच्छिन्ने-
त्यर्थः । यावान् कालदेशाभ्यामपरिच्छिन्नोऽप्यहं भक्तेच्छावशात्
परिच्छिन्नश्च यश्च साक्षात् परब्रह्माप्यहं श्यामसुन्दराकारो वसु-
देवपुत्रश्च यादृशः आत्मारामः आप्तकामोऽप्यहं भक्तप्रेमवश-
इत्यादिनात्मारामोऽनाप्तकामश्च अनन्यभावेनैकान्तिकत्वेनेति ये ते
इति गौरवेण बहुत्वम् भक्ततमा मता इति पूर्वोक्तलक्षणः सत्तम
एव मया मद्भक्तत्वेनोच्यते अयं तु मे भक्ततमो मया सम्मत
इत्यर्थः ॥ ३३ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी

यदुक्तं भक्तिस्त्वयि कीदृश्युपयुक्तेति तत्राह । मल्लिङ्गमद्भक्तजनस्पर्श पञ्चलिङ्गार्थः उत्तरार्द्धेऽप्यन्वयात् मद्भक्तेति मद्भक्तत्वं ममकारः ॥ ३४ ॥

सर्वेषामोपहरणं भगवतैव स्वसेवार्थं स्वभगवानीतमिति बुद्ध्या सर्वस्वस्ववस्तुनां ममताऽपहस्य तस्मै समर्पणं दास्येन हेतुना आत्मनो जीवस्य देहस्य चाहंताऽपहस्यापि समर्पणम् ॥ ३५ ॥

जन्मकर्मकथनमिति । मनुकीर्तनकथनयो रागस्वरतालादियुक्तत्वायुक्तत्वाभ्यां भेदो ज्ञेयः पर्वाणि जन्माष्टम्यादीनि तेषामनुमोदनमेवाह द्वाभ्याम् । गीतादिभिः मद्गृहाभिकरणक उत्सवः ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

साधुलक्षणमाह । कृपालुरिति पञ्चभिः । कृपालुः परदुःखदुःखितमनाः सर्वदेहिनामनुकूलप्रतिकूलानामकृतद्रोहः यतः तितिक्षुः सत्यं यथार्थाचरणं सारो बलं यस्य अनवद्यात्मा विशुद्धबुद्धिः समो निर्द्वन्द्वः सर्वेषां साध्वसाधूनामुपकारकः तस्य द्रोलेऽप्युक्तमितिहाससमुच्चये—

सुलभाः पुरुषा लोके साधवः साधुकारिषु ।

दुर्लभः पुरुषो लोके यस्तु साधुरसाधुष्विति ॥ २९ ॥

कामैर्न क्रियार्थैर्भगैरिति कामाः भोगाकैर्बाह्यैरपि अहतधीः अलुब्धमतिः दान्तः नियतबाह्यकरणः मृदुः कोमलस्वभावः शुचिः बाह्याऽभ्यन्तरशुद्धयर्थं कृतशास्त्रीयानुष्ठानः अकिञ्चनः मयि कृतात्मात्मीयसमर्पणः अनीहः त्यक्तात्रिवर्गचेष्टः मितभुक् स्वल्पभुक् शान्तः संयतान्तःकरणः स्थिरः भगवद्धर्मादचलितः मच्छरणः अहं गृहमाश्रयः सर्वोपद्रवेभ्यो रक्षिता च यस्य सः मुनिर्मद्ध्याननिष्ठः ॥ ३० ॥

अप्रमत्तः अवहितः गम्भीरात्मा निपुणबुद्धिः धृतिमान् अमानिकः जितषड्गुणः "क्षुधापिपासे प्राणानिष्ठ शोकमोहौ मनोऽनुगौ । जन्ममृत्यू शरीरस्य न मे ज्ञानस्वरूपिणः" इत्येवं जितषडूर्मिः स्वयममानी परेषां मानदः कल्पः हितोपदेशे दक्षः मैत्रः हिताचरणेन जनाह्लादकः कारुणिकः परदुःखनिराकरणस्वभावः कविः क्रान्तदर्शी सिद्धान्तविदित्यर्थः ॥ ३१ ॥

एवं मयादिष्टान् मयोदितेष्ववहितः स्वधर्मेषु मदाश्रय इत्यादिना मयोपदिष्टान्स्वकान् धर्मान् गुणान्मुक्तौ गुणभूतान् आज्ञाय तेषां मां भजेत स सत्तमः किंकृत्य अथेषामित्यादिना मया दिष्टान् दोषान् संत्यज्य ॥ ३२ ॥

स्वरूपतो योऽस्मि गुणशक्तितो यादृशोऽस्मि इयत्ताज्ञानहठव्यागतो यावान् ज्ञातुं शक्योऽस्मि तथा मां ज्ञात्वा ज्ञात्वा पुनः पुनर्ज्ञात्वा च अनन्यभावेन भजन्ति ते भक्ततमाः मे मताः संमताः ॥ ३३ ॥

अथ भक्तिलक्षणमाह । मल्लिङ्गेत्यष्टभिः । लिङ्गानि पूजाधिष्ठानानि ॥ ३४ ॥

लभ्यन्ते इति लाभानि गृहवनोपवनवस्त्रालंकारादीनि द्रव्याणि तेषामुपहरणं समर्पणं देवोपभोगार्थं कमत्वंशं विहाय निवेदयेदिति सूचयितुं सर्वपदप्रयोगः ॥ ३५ ॥

मम जन्मकर्मकथनमित्यनेनैव तत्तिथीनां जन्माष्टम्यादीनामनुमोदनमप्युक्तं मम पर्वानुमोदनं मम रासोत्सवादिपर्वाणि पूर्णिमादयादीनि तदनुमोदनम् ॥ ३६ ॥

---

भाषा टीका ।

श्री भगवान् उवाच ।

जो कृपा करने वाला होवै किसी का द्रोह नहीं करै सब की सब बातों का सहने वाला सत्य बोलने वाला पाप रहित समदृष्टि वाला सब के उपकार करने वाला ॥ २९ ॥

कामों में से दुःख नहीं पाने वाला बाहिर की इन्द्रियों को जीतने वाला कोमल चित्तवाला पवित्र अकिञ्चन विशेष चेष्टारहित परिमित भोजन करने वाला भीतर की इन्द्रियों के जीतने वाला स्थिर बुद्धिवाला मेरे आश्रय रहने वाला मुनि ॥ ३० ॥

प्रमाद नहीं करने वाला गम्भीर बुद्धिवाला धीरज वाला राग द्वेषादि छैः गुणों को जीतने वाला आप मान रहित दूसरे को मान देने वाला ज्ञान देने में समर्थ कृपा वाला पण्डित होवै वह साधु है ॥ ३१ ॥

ऐसे गुण दोषों को जानकर मेरे सिखाये हैं तौभी भक्ति से विरोधि होवें तो सब अपने धर्मों को छोड़ कर जो मेरे ही को भजता है वह उत्तम साधु मेरा सम्मत है ॥ ३२ ॥

हम जैसे हैं जितने बड़े हैं जो हैं इस बात को जानकर अथवा नहीं भी यथार्थ जानकर जो पुरुष अनन्यभाव से हमको भजते हैं वे भक्तों में श्रेष्ठ मेरे मत में हैं ॥ ३३ ॥

मेरी मूर्तियों का दर्शन मेरे भक्तों का दर्शन तथा स्पर्शन तथा अर्चन सेवा स्तुति नमस्कार गुण कर्मों का कीर्तन ॥ ३४ ॥

हे उद्धवजी मेरी कथा के श्रवण में श्रद्धा मेरा अनुचिन्तन करना लाई हुई सब युक्त पदार्थों का मेरे अर्पण करना दास्य भाव से आत्मा का निवेदन करना ॥ ३५ ॥

मेरे जन्म कर्मों के चरित्रों का कथन करना मेरे एकादश्यादिपर्वोत्सवों का अनुमोदन करना गान नृत्य बाजों से भक्तजन वैष्णव गोष्ठी से मेरे मंदिर का उत्सव करना यह सब मेरे में करने की उत्तम भक्ति के लक्षण हैं ॥ ३६ ॥

---

यात्राबलिविधानं च सर्ववार्षिकपर्वसु ।
वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणम् ॥ ३७ ॥
ममार्चास्थापने श्रद्धा स्वतः संहत्य चोद्यमः ।
उद्यानोपवनाक्रीड़पुरमन्दिरकर्मणि ॥ ३८ ॥
सम्मार्जनोपलेपाभ्यां सेकमण्डलवर्तनैः ।
गृहशुश्रूषणं मह्यं दासवद्यदमायया ॥ ३९ ॥
अमानित्वमदम्भित्वं कृतस्यापरिकीर्तनम् ।
अपि दीपावलोकं मे नोपयुञ्ज्यान्निवेदितम् ॥ ४० ॥
यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः ।
तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते ॥ ४१ ॥
सूर्योऽग्निर्ब्राह्मणा गावो वैष्णवः खं मरुज्जलम् ।
भूरात्मा सर्वभूतानि भद्र ! पूजापदानि मे ॥ ४२ ॥
सूर्ये तु विद्यया त्रय्या हविषाग्नौ यजेत माम् ।
आतिथ्येन तु विप्राग्र्ये गोष्वङ्ग ! यवसादिना ॥ ४३ ॥
वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया ।
वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

बलिविधानं पुष्पोपहारादिसमर्पणम् सर्ववार्षिकपर्वसु चातुर्मास्यैकादश्यादिषु विशेषतः ॥ ३७ ॥

उद्यानादिकरणे सामर्थ्ये सति स्वतः असति चान्यैः सम्भूयोद्यमः उद्यानं पुष्पप्रधानम् उपवनं फलप्रधानं वनम् आक्रीडं क्रीडास्थानम् ॥ ३८ ॥

सम्मार्जनं रजसोऽपाकरणम् उपलेपो गोमयादिभिरालेपनम् सेकस्तैरेव प्रोक्षणम् मण्डलवर्तनं सर्वतोभद्रादिकरणम् मह्यं मम ॥ ३९ ॥

कृतस्य धर्मस्यापरिकीर्तनं स्वयमन्येन वा निवेदितं न स्वीकुर्यात् एतच्च साधारणं स्थावरविषयं रागप्राप्तविषयं वा भक्त्यातु ग्राह्यमेव—

षड्भिर्मासोपवासैस्तु यत्फलं परिकीर्तितम् ।
विष्णोर्नैवेद्यसिक्थेन पुण्यं तद्भुञ्जतां कलौ ॥
हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ।
पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतः ॥

इत्यादिवचनेभ्यः यद्वा अन्यस्मै निवेदितं मे नोपयुञ्ज्यात् मह्यं न निवेदयेदित्यर्थः—

विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् ।
पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्पते ॥
पितृशेषं तु यो दद्याद्धरये परमात्मने ।
रेतोधाः पितरस्तस्य भवन्ति क्लेशभागिनः ॥

इत्यादिवचनेभ्यः ॥ ४०—४१ ॥

इदानीमेकादश पूजाधिष्ठानान्याह । सूर्य इति हे भद्र ! ॥ ४२ ॥

अधिष्ठानभेदेन पूजासाधनान्याह । सूर्ये इति त्रिभिः । त्रय्या विद्यया सूक्तैरुपस्थानादिना अङ्ग हे उद्धव ! यवसादिना तृणादिना ॥ ४३ ॥

बन्धुसत्कृत्या बन्धुवत्सम्मानेन हृदि खे हृदयाकाशे मुख्यधिया प्राणदृष्ट्या तोये तोयादिभिर्द्रव्यैस्तर्पणादिना ॥ ४४ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

यात्रा दोलाचन्दनक्रीडाद्युत्सवः एकादश्यादिविल्वादिना पवित्रदमनकहोलिका दीपमालादिपरिग्रहः ॥ ३७ ॥

सम्भूय मिलित्वा ॥ ३८ ॥

तैर्गोमयादिभिरेव दासवदिति लौकिको दासो दृष्टान्तितः अमायया वित्तशाठ्यादिकं विना ॥ ३९ ॥

अदम्भित्वं लोकेषु मिथ्यास्वभक्तिख्यापनराहित्यम् एतच्च निवेदितस्यास्वीकरणञ्च साधारणं कस्याप्यनिजमेव भूतं यत् स्थावरं कालान्तरस्थात् भगवदुपयोगार्हत्वात्तन्निवेदितमप्यग्राह्यं

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आधिक्यज्ञानतो विष्णुः सर्वतः सम्प्रसीदतीति ।

वचनात् वायुर्भीमो भीमनादो महौजाः इत्यनेनापि हेतुपूर्वकत्वेन वायोः सर्वदेवोत्तमत्वमुक्तं एवार्थः तस्माद्वायुरेव व्याप्तिर्वायुः समष्टिरयं पुनः मृत्युं जयति च एवं वेदेत्यनेन वायुज्ञानस्यापमृत्युं जयत्वोक्तश्च-

पञ्चभूतमनोबुद्धिरुद्राणां प्रतिदेहकम् ।
व्याप्तत्वादपि नेतृत्वाद्वायुर्व्यष्टिः समष्टिक इति ॥

वचनेन वायोर्व्यष्टिं समष्टिं च सम्यक् ज्ञात्वा मनो युञ्ज्यात् द्रव्यैः पुष्पैः ॥ ४४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दासवदिति यथा लौकिको दासः स इवेत्यन्यदपि तथैव कर्तव्यमित्यर्थः । अमायया चलचित्तविलयशाठ्यादिकं विना ॥ ३९ ॥

यदभिमतं लोकेषु मिथ्यात्मभक्तिव्यापनराहित्यं नोपयुञ्ज्यात् स्वार्थे न व्यवहरेत् अन्यस्तैः तत्र साधारणं फलमाद्यनिजं पथि कादिपूज्यमानमहारण्यवृक्षस्यादावधिकाराभावात् इत्यादरं कालान्तरकृतात् भगवदुपयोगयोग्यत्वात् यथा दीपावलोकः रागो लोभः भक्त्या तु ग्राह्यमेवाति असाधारणमप्यादरं चेत् तत्राप्यधिकारिकृतायां सत्यां स्वाधिकृतत्वे सति चेति भावः ॥ ४० ॥

यदादिति । चकारान्मम प्रियं च ॥ ४१ ॥

तत्रानित्यमेव संबध्यमाना ये सूर्यादयस्तेऽपि बहिरंगा न सेव्याः किन्तु मदधिष्ठानरूपत्वैवेत्युपदिशन् तत्र तत्र योग्यानुपासनाविशेषानप्युपदिशति । सूर्ये इत्यादिभिः व्याख्या टीकावत् ॥ ४२ ॥

किंवा सूर्ये इति युग्मकं सूर्यान्तर्यामिभावनार्थं अपि पठितव्यमित्यर्थः । यथातिथौ क्रियते तथैवाहरहरस्य गृहागते विप्रान्वे कर्तव्यमित्यर्थः । विप्रान्वं तु भागवतशास्त्राद्व्याचार्ये विप्राद्द्विषड्गुणयुतादित्यादेः अन्यत्रादरमात्रं कार्यमिति ज्ञेयं वैष्णव इति विमत्वादिराहित्येऽपि तत्सामान्येऽपि नतु पूर्ववत्तदन्वयत्वेत्यर्थः वायोर्वस्तत्रेजीवनहेतुत्वं तत्तु तदन्तर्यामिशक्त्येति भावनीयमित्यर्थः । खादिषु भूतेषु तेजसोऽनुक्तिः सूर्याग्निभ्यां चरितार्थत्वात् ॥ ४३ ॥ ४४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सर्वेषु वार्षिकेषु वत्सरसम्बन्धिषु पर्वसु फाल्गुनपूर्णिमादिषु या दोलादियात्रास्तासु बलिविधानं विविधवस्त्रालंकारादिभिस्सहस्रक्चन्दनपुष्पादिपूजोपहारकरणं व्रतान्येकादश्यादीनि ॥ ३७ ॥

मदर्चा प्रतिमा उद्यानादिकरणे सामर्थ्ये सति स्वत एव असति अन्यैः सम्भूयाप्युद्यमः आक्रीडं क्रीडास्थानं पुरं चक्रध्वजनम् ॥ ३८ ॥

सम्मार्जनं तृणधूल्याद्यपसारणं प्रथमं गोमयमृज्जलैरुपलेपो द्वितीयः स्थले शुष्के सति सेकः पुष्पोदकैस्तृतीयः मण्डलवर्तनं सर्वतोभद्रादिनिर्माणं चतुर्थं तैर्मम मम गृहस्य शुश्रूषणं सेवा दासवत् लौकिकन राजकीयदासेन राज्ञो गृहस्य यथा यद्यदपि तदपि तथेत्यर्थः । अमायया चलचित्तशाठ्यराहित्येन ॥ ३९ ॥

अमानित्वममहंकारः यदभिमतं लोके मिथ्याभासोक्त्यापनराहित्यं मे मह्यं निवेदितं दीपावलोकमपि नोपयुञ्ज्यात् मह्यं दत्तस्याद्येर्दीपस्य च स्वव्यवहारमात्रे उपयोगो न कर्तव्य इत्यर्थः किन्तु परमार्थसिद्ध्यर्थं वैष्णवेभ्यो दत्त्वा स्वयमुपभुञ्जीतेत्यर्थः

षड्भिर्मासोपवासैश्च यत्फलं परिकीर्त्तितम् ।
विष्णोर्नैवेद्यसिक्थेन पुण्यं तद्भुञ्जतां कलौ ।
हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ।
पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतः ॥

इत्यादिवचनेभ्यः ॥ ४० ॥

लोके शास्त्रे च यदभिमतं तन्मह्यं निवेदयेत् तेन इष्टमशस्यादीनि शास्त्रविहितान्यपि लोके इष्टत्वाभावात् तथा मद्यादीनि संकर्षणप्रियाण्यपि शास्त्रे इष्टतमत्वाभावान्न निवेदयेदिति भावः । तत्रापि यद्य आत्मनः स्वस्यातिप्रियं तत्तु विशेषतो निवेदनीयमित्यर्थः ॥ ४१ ॥

त्वां कुत्र पूजयेदित्यपेक्षायामेकादश पूजाधिष्ठानान्याह । सूर्ये इति ॥ ४२ ॥

तत्र तत्राधिष्ठितं स्वेष्टदेवं केन प्रकारेण पूजयेदित्यपेक्षायामाह । सूर्ये इति त्रिभिः त्रय्या विद्यया सूक्तैरुपस्थाननमस्कारादिना यवसादिना तृणप्रदानकण्डूयादिभिः ॥ ४३ ॥

बन्धुसत्कृत्या स्वीयगृहागतातिथिसत्कारपूर्वकसम्मानेन हृदि खे स्वहृदयाकाशे ध्यानेन मुख्यधिया प्राणोऽयं मुख्य इति बुद्ध्या तोये द्रव्यैर्जलपुष्पतुलस्यादिभिः ॥ ४४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यात्रासु रथयात्राप्रभृतिषु बलिविधानं पुष्पोपहारादिसमर्पणं तच्च सर्ववार्षिकेषु पर्वसु प्रतिवर्षं तत्तत्तिथिषु ॥ ३७ ॥

शक्तो स्वतः अशक्तो भागवतान्तरैः संभूयोद्यमः ॥ ३८ ॥

सेकः सुगन्धिजलैः प्रोक्षणं मण्डलानां सर्वतोभद्रादीनां वर्तनं स्थापनम् ॥ ३९ ॥

निवेदितमन्यस्मै समर्पितं दीपावलोकमपि मे नोपयुञ्ज्यात्

विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् ।
पितृभ्यश्चैव तद्देयं तदानन्त्याय कल्पते ॥
पितृशेषं तु यो दद्याद्धरये परमात्मने ।
रेतोधाः पितरस्तस्य भवन्ति क्लेशभागिनः ॥

इत्यादिवचनेभ्यः ॥ ४० ॥ ४१ ॥

मदधिष्ठानत्वेनोपदिष्टानि स्वाधिष्ठानान्याह । सूर्ये इति हे भद्र ! "दानं मानसमेतं ज्ञानमनघं क्षमाभिः सौर्यं सत्यं प्रियवाक् सहितं चत्वारि यत्र स चतुर्भद्रः" इति महाभारते चतुर्भद्रलक्षणम् पूजापदानि पूजाधिष्ठानानि ॥ ४२ ॥

त्रय्या विद्यया आसत्येत्यादिरूपया ॥ ४३ ॥

मुख्यधिया प्राणबुद्ध्या ॥ ४४ ॥

स्थण्डिले मन्त्रहृदयैर्भोगैरात्मानमात्मनि ।
क्षेत्रज्ञं सर्वभूतेषु समत्वेन यजेत माम् ॥ ४५ ॥
धिष्ण्येष्वित्येष्विति मद्रूपं शङ्खचक्रगदाम्बुजैः ।
युक्तं चतुर्भुजं शान्तं ध्यायन्नर्चेत्समाहितः ॥ ४६ ॥
इष्टापूर्तेन मामेवं यो यजेत समाहितः ।
लभेत मयि सद्भक्तिं मत्स्मृतिः साधुसेवया ॥ ४७ ॥
प्रायेण भक्तियोगेन सत्सङ्गेन विनोद्धव ! ।
नोपायो विद्यते सध्र्यङ् प्रायणं हि सतामहम् ॥ ४८ ॥
अथैतत्परमं गुह्यं शृण्वतो यदुनन्दन ! ।
सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत्सखा ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्यामेकादशस्कन्धे
एकादशोऽध्यायः ॥ ११ ॥

भाषा टीका ।

संपूर्ण वार्षिक पर्वों में यात्रा बलिका विधान करना वैदिक पञ्च संस्कार पूर्वक महाक्षर तथा तान्त्रिकद्वयमन्त्रादि ग्रहण पूर्वक दीक्षा लेना मेरे एकादशी जन्माष्टमी आदि व्रतों का धारण करना ॥ ३७ ॥

मेरी मूर्ति के स्थापन करने में श्रद्धा रखनी एकेला अथवा औरों के साथ मिलकर मंदिर का उद्यम करना बाग बगीचा पुष्प वाटिका ग्राम मंदिर कर्म में उद्यम करना ॥३८॥

मंदिर का मार्जन करना लीपना सेचन करना रंगवल्ली से मंडल बनाना निष्काम होकर दास की नाईं मेरे मंदिर का कार्य करना ॥ ३९ ॥

अभिमान नहीं करना दंभ नहीं करना किए हुवे पुण्य का नहीं कहना दीपकादिक भी मेरे अर्पण करे पीछे उसमें अपना स्वत्व नहीं रखना ॥ ४० ॥

जो जो वस्तु लोक में अत्यंत इष्ट होवे और अपने को अति प्रिय लगे परंतु शास्त्र में निषिद्ध न होवे तो उस वस्तु का मेरे को अर्पण करै तो अनंत फल की प्राप्ति होवे ॥ ४१ ॥

हे भद्र ! उद्धवजी सूर्य अग्नि ब्राह्मण गउ वैष्णव आकाश वायु जल पृथिवी आत्मा संपूर्ण प्राणी मात्र इतने सब मेरे निमित्त से पूजा करने के स्थान हैं ॥ ४२ ॥

हे उद्धवजी सूर्य में वेद मन्त्रों के द्वारा उपस्थान से पूजन करै अग्नि में हविष से मेरा पूजन करै उत्तम ब्राह्मण में आतिथ्य भोजनादिक से गउन में घास जल आदिक से ॥४३॥

वैष्णव में बंधु सरीका पूर्ण सत्कार से हृदयाकाश में ध्यान करके वायु मे मुख्य प्राण की दृष्टि से जल में तर्पण पुष्पादिकों से मेरा पूजन करै ॥ ४४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्थण्डिले भुवि मन्त्रहृदयैः रहस्यमन्त्रन्यासैः ॥ ४५ ॥

सर्वाधिष्ठानेषु ध्येयमाह । धिष्ण्येष्विति । इत्यनेन मन्त्रप्रकारेण एषु धिष्ण्येषु ॥ ४६ ॥

उक्ताया भक्तेः फलमाह । इष्टापूर्तेति । सद्भक्तिं दृढां भक्तिम् अस्या भक्तेरन्तरङ्गसाधनमाह । इत्थं मत्स्मृतिः साधुसेवया भवति । यद्वा स्मृतिर्ज्ञानम् ततश्च दृढभक्तिमतः पुंसः साधुसेवया मज्ज्ञानं भवतीत्यर्थः ॥ ४७ ॥

ज्ञानभक्तिमार्गावुक्तौ तत्र ज्ञानमार्गादपि भक्तिमार्गः श्रेष्ठ इत्याह । प्रायेणेति । सत्सङ्गेन यो भक्तियोगस्तेन विनोपायः संसारतरणे न विद्यते सत्सङ्गेनेत्यत्र हेतुमाह । हि यस्मात्सतामहं प्रायणं श्रेष्ठमवलमाश्रयः अतः सत्सङ्गो मद्भक्तेरन्तरङ्ग इत्यर्थः ॥४८॥

इदानीं सांख्ययोगादीनि साधनान्तरसव्यपेक्षाणि सव्यभिचाराणि च सत्सङ्गस्तु स्वतन्त्र एव समर्थः फलाव्यभिचारी चेति वर्णयितुमाह । अथैतेति । एतद्वक्ष्यमाणं परमं गुह्यमतः शृण्वित्यर्थः ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकादशोऽध्यायः ॥ ११ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

रहस्यमन्त्रन्यासैः ॐ हृदयाय नमः शिरसे स्वाहा शिखायै वषट् कवचाय हुमिति गोप्यमन्त्राणां पृथिव्यां स्थापनैः आत्मनि देहे आत्मानं स्वपदार्थम् अयं ममात्मा तदधिष्ठानमिति बुद्ध्या भोगैर्यजेत क्षेत्रज्ञमन्तर्यामिरूपं मां सर्वभूतेषु सुखदुःखयोः समत्वदृष्ट्या यजेत ॥ ४५ ॥

सर्वाधिष्ठानेषु सूर्याद्येकादशसु अत्र सर्वत्र चतुर्भुजरूपध्याने सत्यपि पूजाप्रकारस्य द्वैविध्यं गवादिषु तु सान्दर्भपादिना यथा तदधिष्ठातृप्रतिमायाः परिचर्या स्नापनेन वस्त्रादिना परिचर्या हृदयाकाशजलादौ तु साक्षात्तदधिष्ठातुरेवोपास्तेति यवसादेरभक्ष्यत्वेन चतुर्भुजस्य प्रदानफलत्वाऽसम्भवात् ॥ ४६ ॥

उक्तायाः साधनरूपायाः भक्तेः फलं प्रेमलक्षणां भक्तिम् अत्रेष्टशब्देन समागच्छन्त्योक्तानि अग्निहोत्रदर्शपौर्णमासचातुर्मास्यपशुयागवैश्वदेवबलिहरणाद्युपलक्ष्यन्ते पूर्तशब्देन सुरालयारामकूपवापीतडागप्रपान्नसत्रागमयुक्ष्यन्ते तत्राग्निहोत्रादीनां भक्तौ प्रवेशोऽन्तर्यामिरूपभगवदधिष्ठानत्वेनाग्न्यादिसन्तर्पणात् कूपारामादीनाञ्च तत्परिचर्यार्थं क्रियमाणत्वात् तत्र प्रवेशः अथवा दृढायाः भक्तेरनुभावनं मुख्याङ्गं सत्सङ्गः मत्स्मृतिः दृढा भक्तिः एकाङ्गरूपायाः स्मृतेः चाक्षुक्तित्वाच्चकत्वं चाक्षुषिकमतो यद्वति ज्ञानमत्र साक्षात्कारः ॥ ४७ ॥

तत्र मार्गद्वयमध्ये प्रायेणेति वितर्के दृष्टा सर्वत्र साधारण्येनेति भक्तियोगस्य विशेषणम् ॥ ४८ ॥

साङ्ख्ययोगादीनीत्यादिना धर्मादीनां परिग्रहः तत्र साङ्ख्यं वैराग्याभिसापेक्षं योगः समाधिर्धैर्याद्यपेक्षः धर्मादीन्यपि धनश्रद्धाद्यपेक्षाणि सव्यभिचारीणि भक्त्यभावे फलव्यभिचारवन्ति च स्वतन्त्रः वैराग्याद्यनपेक्ष एव साध्यं समर्पयितुं समर्थः फलं भगवत्प्रेमलक्षणं अव्यभिचारि च अथ मत एव परं गुह्यम् अतो गुह्यत्वात् कृष्णसुहृत प्रजन्मन्देशप्रापणाद्युचिताहितकर्ता सखा यन्त्रणाशून्यमित्रबुद्धिमान् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भोगैरात्मानमात्मनीति यतं विना नात्मा क्लेशयितव्य इत्यर्थः । समत्वं रागद्वेषराहित्यम् ॥ ४५ ॥

एषु सूर्यादिषु धिष्ण्येषु स्थानेषु ध्यायन्नर्चेदित्यन्वयः ॥४६–४८ ॥

गुह्यं गोपनार्थः ॥ ४९ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भूतात्मन्यत्र भूतशब्देन पञ्चाङ्गादिमण्डलसंस्कृतो देशो विवक्षितः तदाह । स्थण्डिल इति । मन्त्रहृदयैर्मूलमन्त्रहृदयाद्यङ्गमन्त्रन्यासैरात्मनि स्वकीयमात्मानं मां भोगैः शास्त्राविरुद्धकामैर्यजेत यतं विना नात्मा क्लेशयितव्य इत्यर्थः । सर्वभूतेषु देवमनुष्यादिशरीरेषु क्षेत्रज्ञं जीवशरीरकं मां समत्वेन रागद्वेषादिराहित्येन यजेत ॥ ४५ ॥

एतेषु सूर्यादिषु धिष्ण्येषु स्थानेष्वपि मद्रूपमेव ध्यायन्समाहितोऽनाहितचित्तः समर्चयेत् ॥ ४६ ॥

किञ्च इष्टं वैदिक कर्म पूर्तं स्मार्तं तयोः समाहारत्वेन यः समाहितो मामेव यजेत सोऽपि मल्लिङ्गादिदर्शनादिकृद्धिय मयि सद्भक्तिं प्रेमात्मिकामविच्छिन्नां भक्तिं लभते उक्तसर्वसाधनोपकृता सद्भक्तिः साधुसेवाफलमेवेत्युपसंहरति । मत्स्मृतिः साधुसेवयेति । मत्स्मृतिर्मद्भक्तिः सत्सङ्गमूलैव ॥ ४७ ॥

न ततोऽन्यः कश्चिन्मत्प्राप्त्युपायो विद्यते इत्याह । प्रायेणेति । हे उद्धव ! सत्सङ्गलब्धेन भक्तियोगेन विना मत्प्राप्त्युपायो न विद्यते प्रायेणोक्त्यनेन कस्यचिन्मायायोगस्यापि उपायत्वं सत्सङ्गलब्धस्य च विनाकृतं सत्सङ्गेनेत्यत्र हेतुमाह । हि यस्मादहं सतां प्रायणम् उपाय उपेयश्च इत्येन इत्यवनं यत्त्यनेनेत्ययनमिति व्युत्पत्तिद्वयस्य विवक्षितत्वादुपायोपेयभावेनाश्रितोऽहं तदधीनः सत्सङ्गादेव मद्वशीकार इति भावः ॥ ४८ ॥

अथेत्थं निरूपितवहुङ्गभक्तियोगस्य दुष्करत्वाभिप्रायमावश्य प्रायणमित्यनेन सूचितं स्ववशीकरणोपायं न्यासयोगं विवक्षुः स्तावत्तस्य परमगोप्यत्वमधिकारिविशेषायैवोपदेष्टव्यं च ख्यापयन् शुश्रूषामुत्पादयँश्च तत्कथनं प्रतिजानीते । अथैतदिति । सुगोप्यत्वादप्युक्तौ हेतुत्वोपात्तं भृत्यः सुहृत्सखेति विशेषणत्रयम् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मन्त्रहृदयैर्नमोऽन्तैर्मन्त्रैः आत्मनि स्वशरीरे मनसि वा आत्मानमन्तर्यामिणं क्षेत्रज्ञं जीवान्तर्यामिणं सर्वभूतेषु समत्वेन एकप्रकारेण विकारान्तरेण किमत भोगैः स्रग्गन्धादिभिः भोगो राज्ये धने भोज्ये इति आत्मशब्देनात्र जीवः किं न स्यात्तस्य पूजकस्य तत्रापि पीडितत्वात् चेतनः पुरुषो ह्यात्मा संसारी चेतनो मत इत्यभिधानाच्चेति चेन्न—
"आत्मनिष्ठो हरिः पूज्य आत्मनामाशनादिकैः ।
तत्सम्बन्धादात्मशब्दो जीवस्याप्युपचारत इति ॥
वचनादात्मा मुख्यो हरिरेवेति ज्ञायते तत्र विधानस्य हरेरधिष्ठानत्वेन पीठार्चनवदर्चनोपपत्त्या सार्थकत्वात् ॥ ४५ ॥

एतेष्वधिष्ठानेषु ध्यानप्रकारमाह । धिष्ण्येष्विति । धिष्ण्येषु स्थानेषु ॥ ४६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किंवा योगेन सांख्येन न्यासस्वाध्याययोरपि ।
किम्वा श्रेयोभिरन्यैश्च न यत्रात्मप्रदो हरिः ॥

इति नारदोक्तेरपि सम्यक् प्रावण्यं सम्यक् प्रकृष्टमाश्रयः ॥ ४८ ॥

ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युतेति स्मृते-स्तुभ्यमहमनन्यप्रकाश्यमपि वस्तु वच्मीत्याह । अथैतदिति । सांख्ययोगादीनि साधनान्तरसव्यपेक्षाणि सव्यभिचारीणि च सत्सङ्गस्तु स्वतन्त्र एव समर्थः फलाव्यभिचारी चेति स्वामि-चरणाः ॥ ४९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशे सङ्गतोऽत्रैकादशः सङ्गतः सताम् ॥ ११ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्थण्डिले भुवि मन्त्रहृदयैः रहस्यमन्त्रन्यासैः तत्प्रकारः गोपालतापन्यादिव्याख्यानाद्द्रष्टव्यः ॥ ४५ ॥

एतेषु सूर्यादिषु चतुर्भुजमित्युपलक्षणम्—

द्विभुजं ज्ञानमुद्राढ्यं वनमालिनमीश्वरम् ।
दिव्यालङ्करणोपेतं रत्नपङ्कजमाश्रितम् ॥
गोपगोपीगवावीतं सुरद्रुमलताश्रितम् ।
चिन्तयंश्चेतसा कृष्णं मुक्तो भवति संसृतेरिति ॥

श्रुत्युक्तस्य द्विभुजस्यापि ॥ ४६ ॥

इष्टापूर्तेन कर्मणा यो मामेव यजेत् तस्य साधुसेवया मत्स्मृतिर्मद्विषयकं ज्ञानं ततः स मयि भक्तिं लभत इत्यन्वयः ॥४७॥

हे उद्धव ! प्रायः सत्सङ्गेन लब्धो यो भक्तियोगस्तेन विनोपायः मत्प्राप्त्युपायो न विद्यते यतः सतां प्रायणं प्रकृष्टमयन-माश्रयोऽहमेव सत्सङ्गादपि कस्यचित् मद्भक्तिर्न भवतीति भक्ते-र्दौर्लभ्यसूचनाय प्रायोक्तिः ॥ ४८ ॥

एतदुद्धवाश्चर्यं सत्सङ्गप्रभावं परमं गुह्यं वक्ष्यामि त्वं मे सुहृत्सखापि सन् भृत्यः अतः शृणु ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकादशाध्यायार्थप्रकाशः ॥ ११ ॥

भाषा टीका ।

पृथिवी की वेदी पर मन्त्रों के न्यासों से उत्तम सात्त्विक प्रिय भोगादिकों से आत्मा में सम्पूर्ण भूतों में क्षेत्रज्ञ रूप परमेश्वर जान कर सम दृष्टि से मेरा यजन करे ॥ ४५ ॥

इन सब स्थानों में शंख चक्र गदा पद्म धारण किये हुये चार भुजा वाले शांत मेरे स्वरूप को ध्यान करके सावधान होकर अर्चन करे ॥ ४६ ॥

इस प्रकार से यज्ञादिकों से वा मंदिर प्रतिष्ठादिक से जो सावधान चित्त होकर मेरा यजन करता है वह मेरे विषे उत्तम भक्ति को प्राप्त होता है और यदि इसी प्रकार साधु सेवा भी करे तो उसको सदा काल मेरा स्मरण बना रहता है ॥ ४७ ॥

हे उद्धव ! प्राय करके भक्ति योग के बिना सत्पुरुषों के संग बिना मुक्ति का उत्तम सहज उपाय दूसरा नहीं है क्योंकि सत्पुरुषों का तो केवल मैं ही आश्रय हूं ॥ ४८ ॥

हे यदुनंदन ! तुम श्रद्धा से सुनते हो तिस से अब मैं एक परम गुप्त बात भी कहता हूं क्योंकि तुम हमारे भृत्य भी हो सुहृत भी हो सखा भी हो ऐसा न होता तो नहीं कहते ॥ ४९ ॥

इति श्रीमद्भागवत एकादशस्कन्ध में एकादशाध्याय
भाषा टीका समाप्ता ॥ ११ ॥

———

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे एकादशोऽध्यायः ॥ ११ ॥

—:*:—

# अथ द्वादशोऽध्यायः ।

———:*:———

श्रीभगवानुवाच ।

न रोधयति मां योगो न साङ्ख्यं धर्म एव च ।
न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणा ॥ १ ॥
व्रतानि यज्ञश्छन्दांसि तीर्थानि नियमा यमाः ।
यथाऽवरुन्धे सत्सङ्गः सर्वसङ्गापहो हि माम् ॥ २ ॥
सत्सङ्गेन हि दैतेया यातुधाना मृगाः खगाः ।
गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ॥ ३ ॥
विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः ।
रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन् युगेऽनघ ! ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वादशे साधुसङ्गस्य महिमा वर्णितः पुरा ।
कर्मानुष्ठानसंत्यागव्यवस्था च ततः परम् ॥

न रोधयति न वशीकरोति योग आसनप्राणायामादिः साङ्ख्यं तत्त्वानां विवेकः धर्मः सामान्यतोऽहिंसादिः स्वाध्यायो वेदजपः तपः कृच्छ्रादि त्यागः संन्यासः इष्टापूर्तमिष्टं च पूर्तं च तत्रेष्टमग्निहोत्रादि पूर्तं कूपारामादिनिर्माणम् दक्षिणाशब्देन सामान्यतो दानं लक्ष्यते ॥ १ ॥

व्रतानि एकादश्युपवासादीनि यज्ञो देवपूजा छन्दांसि रहस्यमन्त्राः अवरुन्धे वशीकरोति ॥२॥

यातुधाना राक्षसाः ॥ ३—४ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

ततः परं साधुसङ्गमहिमावर्णनानन्तरम् ॥ ० ॥

न रोधयतीति युग्मकं यथा सत्सङ्गो मां वशीकरोति तथा योगादयो नेत्युक्त्या तेऽपि किञ्चिद्वशीकुर्वन्तीत्यायातं तथाच भक्तिमिश्रा एव ते ज्ञेयाः न साधारणाः अतएव व्रतान्येकादश्यादीनीति टीकाकृद्भिर्व्याख्यातं नचैतावता नित्यव्रतानामकर्तव्यत्वप्रसङ्ग इति वाच्यम् एकस्य फलाभिलाषप्रशमयानस्य नित्यत्वनिराकरणायोगात् कर्माधिकारिणः विप्रमुख्यकुलप्रसंशवाग्निहोत्राऽपरित्यागवत् भक्त्यधिकारिणश्च भक्तपूजाऽत्यधिकत्वश्रवणात् इत्यर्थनाऽपरित्यागवच्च तत्त्यागायोगाच्च अन्यथा वैष्णवो यदि भुञ्जीत एकादश्यां प्रमादतः । विष्णवर्चनं वृथा तस्य नरकं घोरमाप्नुयादिति गौतमीयादि वचनव्याकोपः स्यात् ॥ १ ॥ २ ॥

सत्सङ्गेनेति सार्धयुग्मकम् ॥ ३ ॥ ४ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

न रोधयति हृदिस्थं न करोति न वशीकरोतीति यावत् ॥१-४॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं बह्वङ्के बहुव्ययःकालादिसाध्ये दुष्करे भक्तियोगे उपदिष्टे तदभ्यसितुमशक्तस्यामाशिक्षमानसमुद्धवमावस्य सुकरोपायमात्मनिःक्षेपापरपर्यायं न्यासयोगात्मकं वशीयांसं निवशुक्तायसत्स्यानिनरोपायसाध्यभावनत्वख्यापनाय कैमुत्यन्यायेन तदुपायनिष्ठसत्सङ्गतेरन्यानितरसाध्यमाचन्नाआह । नेति । मां न रोधयति न हृदिस्थं करोति न वशीकरोतीति यावत् । योगः वर्णाश्रमोचितकर्मयोगः प्राणायामयोगो वा सांख्यं प्रकृतिविविक्तात्मोपासनं धर्मः अहिंसादिरूपः स्वाध्यायो वेदाध्ययनं तपोऽनशनादि इष्टं यागादि वैदिकं कर्म पूर्तं स्मार्तं तयोः समाहारः त्यागः सामान्यतो दानं दक्षिणा कन्यादिपादगुणकार्यं दानम् ॥ १ ॥

व्रतान्येकादश्युपवासादीनि यज्ञाः पञ्च महायज्ञाः छन्दांसि रहस्यमन्त्राः तीर्थानि गङ्गादीनि नियमाः शौचाचमनादयः । यमाः बाह्याऽभ्यन्तरेन्द्रियनियमनोपायाः यथा सत्सङ्गो मामवरुन्धे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वशीकरोति तथैव मां नावरुन्धन्ति कुतः हि यस्मात्सत्सङ्गः सर्वसङ्गापहः मनसः सर्वेषु मद्व्यतिरिक्तेषु सङ्गमपहन्तीति तथा मनसः सर्वसङ्गापहारेण मदेकसङ्गावहः योगादयस्तु नैवंविधा इति भावः ॥ २ ॥

यद्यपि योगसांख्यादीनां चित्तनैर्मल्यैकाग्र्यसंपादनद्वारा भक्तियोगोत्पादनेन तद्द्वारा भगवद्वशीकारकारणत्वमस्ति सत्सङ्गतस्तु गुरूपसत्त्यापादनादिप्रणाड्यैव तद्वशीकारकारणत्वं न साक्षादिति न विशेषस्तथापि सतामात्मनां कथं चित्सत्सङ्गिनां च स्वविद्यामाहात्म्यप्रसङ्गपरमपुरुषसङ्कल्पेन मोक्षकत्वप्रतिपादनाय यथावरुन्धे सत्सङ्ग इत्युक्तं तदाह । सत्सङ्गेनेति । सतः सङ्गः सम्बन्धः स च तद्विद्याया मिथःसंवादस्तदभिमानविषयदेशगमनसंभवतद्दर्शनस्पर्शनादिविषयत्वादिरूपेण बहुविधः "नास्याब्रह्मवित्कुले भवती"ति श्रुतेः—

ये यं स्पृशन्ति पाणिभ्यां ये च पश्यन्ति चक्षुषा ।
स्थावराण्यपि मुच्यन्ते किंपुनर्बान्धवा जनाः ॥

इत्यभियुक्तोक्तेश्च यातुधाना राक्षसाः नागा गजाः ॥ ३ ॥
रजस्तमःप्रकृतय इत्यनेनात्यन्तमोक्षोपायशून्यत्वमभिप्रेतम् ॥४॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवद्गुणोत्कर्षज्ञानपूर्विका भक्तिरेव परमपुरुषार्थान्तरङ्गमितीममर्थं समर्थयते तत्रादौ गुणोत्कर्षज्ञानानुत्कर्षयोगादीनां विनाऽऽत्तपुरुषार्थसाधनत्वं न भवतीत्याह । न रोधयतीति । योगो ध्यानं रोधयति वशीकरोति । त्यागो दानं यथा मयि सत्सु गुणसमर्पितिभक्तिपूर्विका सर्वपूर्णगुणत्वसमर्पितैर्या मामवरुन्धे वशीकरोति तथा योगादयो न रोधयन्ति—

सङ्गस्तु गुणसमर्पितिर्गुणादरोऽपि निश्चयात् ।
स विशेषो सर्वेस्तेन मुच्यते नात्र संशयः ॥
अपरोक्षदृशोऽर्हत्वं प्रेम्णा स्यादपि क्षमम् ।
अन्यथा गुरुभागेव मद्गुणाभिरुत्कारणात्मिति ॥

वचनानुक्तः एवार्थः नतु स्वतन्त्रसाधनम् ॥ १—२ ॥

भगवान् उक्तार्थं प्रपञ्चयति । सत्सङ्गेनेति । दैतेयाः प्रह्लादादयः यद्वा सत्सङ्गेन सततं प्राप्ताः त्वाष्ट्रो वृत्रः अवान्तरकोऽन्धना भिक्षुः यातुधानाः इत्यादिना शृङ्गग्राहिकतया दर्शयितुं विशेषेण इत्यादिषु पुनर्वचनं भक्तिः तुलाधारः मयो नामा शूद्रः न गोपवादयो मामुपागताः इत्यन्वयः ॥ ३—६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ सर्वस्यैव भागवतोचितशास्त्रादिनाश्रयस्य तु यथायोग्यं सेवाविधानं तत्र महाभागवतसेवा द्विविधा प्रसङ्गरूपा परिचर्यारूपा च तत्र प्रसङ्गरूपामाह । न रोधयतीति । पूर्वाध्यायान्ते मत्कर्मभिः पुरुषोत्तमेत्यनेन सत्सङ्गस्य सत्तापक्षत्वमुक्तं तत तस्य स्वातन्त्र्ये । यद्यप्युत्तरत्र सर्वापेक्षया परमसामर्थ्यञ्च भवतु परमगुह्यत्वं पुनरिदम् सर्वेभ्योऽपि इतः तदुत्तरं परमगुह्यतमाह । न रोधयतीति युग्मकेन । अत्र तु हविषाग्नेः बजत मामि-

त्यादौ अग्निहोत्राद्युपलक्षितं पूर्त्तमुद्यानोपवनाक्रीडत्वाद्युपलक्षितं इष्टं ततश्च यथा सत्सङ्गो मामवरुन्धे वशीकरोति तथा योगो न साङ्ख्यमित्यादिकोऽन्वयः तत्रश्तेऽपि किञ्चिद्वशीकुर्वन्तीत्यर्थलब्धेर्भगवत्परा एव ज्ञेयाः न साधारणाः अतएव व्रतान्येकादश्यादीनीति टीकाकारः नन्वेतावता तेषां नित्यानां वैष्णवव्रतानामफलत्वपरत्वे प्राप्तम् एकस्य फलातिशयस्यासर्वप्रशंसयैतस्य नित्यत्वनिराकरणायोगात् तथा कर्माधिकारिणां तद्धिप्रमुखतोऽयं वै भगवान् सर्ववेदभुक् इज्यते हविषा राजन् ! यथा विप्रमुखे हुतैरिति श्रुत्यापि पूर्वोक्ताग्निहोत्रादिना यज्ञेशत्वादि विधिं न परित्यक्तुं शक्नुवन्ति तद्वत् भक्त्यधिकारिणाञ्च यथा मद्भक्तपूजाऽभ्यधिकेति श्रुत्यापि दीक्षानन्तरं नित्यतया प्राप्तां मत्पूजां त्यक्तुं न शक्नुवन्ति तद्वदिति अत एव षड्भिर्मासोपवासैस्तु यत्फलं परिकीर्तितं विष्णोर्नैवेद्यसिक्थेन तत्फलं भुञ्जतां कलावित्यपि न बाधकम् एकादश्यादौ हि नित्यत्वेऽप्यानुषाङ्गिकमेव महाफलत्वं तत्र तत्र गतम् अतएव नित्यत्वकरणार्थमपि तादृशवैष्णवं व्रतमवश्यमेव कर्त्तव्यमित्यागतं नित्यवैष्णवव्रतत्वादिकं एकादश्यादावत्रैवं प्रसङ्गं किञ्चिद्दर्शयिष्यामः अतः पूर्वाध्याये टीकाकारैरपि आज्ञायैव गुणान् दोषानित्यत्र निरुक्तैकादशीकृत्स्नोऽकाद्यनुपपन्नास्यामिवेश्यभावाद्वयो ये भक्तिनिष्ठा धर्मांस्तान् संत्यज्येत्यर्थ इत्युक्तं प्रथमे श्रीभीष्मयुधिष्ठिरसंवादे भगवद्धर्मानित्यत्र हरितोषणात् द्वादश्यादिनियमरूपानिति व्याख्यानं व्रतानि चेद् हरितोषणानीत्यत्र तृतीये एकादश्यादीनीति अतएव भगवन्महाप्रसादैकव्रतस्य श्रीमदम्बरीषस्य साक्षाद्भगवदाचारदर्शनवत्तदेव निर्णीयते अतएव श्रीगौतमेनापि निर्णीय स्वतन्त्रे लिखितं वैष्णवो यदि भुञ्जीत एकादश्यां प्रमादतः । विष्णवर्चनं वृथा तस्य नरकं घोरमाप्नुयादिति ॥ १ ॥ २ ॥

अथ प्रस्तुतमनुसरामः वशीकरणमत्र द्विविधं मुख्यं गौणञ्च तत्र मुख्येन प्रेम लभ्यते अस्त्वेवमङ्ग भजतां भगवान् मुकुन्दो मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगमिति न्यायेन । अतएव गौणेनान्यत् फलं तत्र मुख्यं श्रीगोप्यादौ गौणं याज्ञादौ उत्तर एव स्वीकरणं फलदानोन्मुखीकरणमित्यपि पर्यवसितं तद्वशीकरणे दृष्टान्तानाह । सत्सङ्गेनेत्यादि चतुर्भिः । तत्र सत्सङ्गेनेति सार्द्धयुग्मकं दैतेयादयस्तूपलक्षिताः असुरा इति वाश्च राक्षसजातिषु दिग्दर्शनम् ॥ ३ ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

द्वादशे साधुसंगस्य महिमोक्तो व्रजौकसाम् ।
प्रेम्णः सर्वमहोत्कर्षः सूचितः सदार्यच्छिदा ॥

योगः आसनप्राणायामादिः साङ्ख्यमात्मानात्मविवेकः धर्मोऽहिंसादिः स्वाध्यायो वेदपाठः तपः कृच्छ्रादि त्यागः संन्यास इष्टापूर्त्तम् इष्टं च पूर्त्तं च तत्रेष्टमग्निहोत्रादि पूर्त्तं कूपारामादिनिर्माणं दक्षिणाशब्देन सामान्यतो दानं लक्ष्यते ॥ १

व्रतानि चातुर्मास्यादीनि यज्ञो देवपूजा छन्दांसि रहस्यमन्त्रा न रोधयन्तीति प्रत्येकेनान्वयात्मकत्वं व्रतानीत्यादौ वचनविपरिणामेन न रोधयन्तीत्यर्थः । रुधेर्वशीकरणार्थकत्वात् योगादयः

बहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः ।
वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः ॥ ५ ॥
सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः ।
व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथापरे ॥ ६ ॥
तेनाधीतश्रुतिगणा नोपासितमहत्तमाः ।
अव्रतातप्ततपसः मत्सङ्गान्मामुपागताः ॥ ७ ॥
केवलेन हि भावेन गोप्यो गावो नगा मृगाः ।
येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा ॥ ८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

न मद्वशीकारप्रयोजका इति नैरहमष्टाङ्गयोगिप्रभृतिभिर्न वशीकृतो न प्राप्तः स्यामिति फलितोऽर्थः । न साधयति मां योगो न सांख्यं धर्म उद्धव ! न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता । भक्त्याहमेकया ग्राह्य इत्यग्रिमवाक्यस्यैकार्थ्यात् योगादयो न मत्प्राप्त्युपाया इत्यतो नोपायो विद्यत इति पूर्वोक्तिरेव दृढीकृता सत्सङ्गो यथाऽवरुन्धे वशीकरोतीत्यग्रयन्त्रप्रयोगेण भक्त्युत्पत्तेः पूर्वमपि स एव स्वयं मां वशीकुर्यात् किं पुनर्भक्तिजननद्वारेत्यर्थो लभ्यते । अत्र यथाशब्दस्तत्र च यथा शब्दो यथावदित्यर्थ एव प्रयुक्तः । भक्त्याहमेकया ग्राह्य इत्यग्रिमवाक्ये एकयेति पदप्रयोगादित्येके योगादीनामपि भक्तिमिश्रत्वात् किञ्चिद्वशीकारत्वमस्त्येवेत्यतो यथाशब्दः साधर्म्य इत्यपरे प्राहुः सर्वसङ्गापहः सार्वत्रिकासक्तिनिरासक इति वशीकारे हेतुः ॥ ॥ २ ॥ वशीकरणमत्सङ्गोऽमुख्यं च यथा सम्भवं श्रीगोप्यादी एव दर्शयति । सत्सङ्गेनेति चतुर्भिः । सन्तः प्रधानीभूतभक्तिमन्तः केवलभक्तिमन्तश्च तत्र पूर्वेषां भक्तिमिश्रेण वशीकारो गौणः उत्तरेषां तु मुख्य इति ज्ञेयं यातुधाना राक्षसाः ॥ ३ ॥ ४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

द्वादशे साधुसङ्गस्य महिमा तदनन्तरं शरणागतिः शरणवरणं सर्वात्मत्वं च वर्ण्यते । प्रतिज्ञातमाह । नेत्यादिना । न रोधयति न हृदि स्थापयति स्वाध्यायादयः सिद्धान्तोपयोगिन एव । यथा सत्सङ्गो मां रोधयति तथा न मां रोधयन्ति यदा तदा सिद्धान्तविरुद्धं योगादिशास्त्रत्रयं च सुतरां नैव रोधयन्तीति त्रयोऽन्वयः । तत्र योगः पतञ्जलिनामकेन केनापि ऋषिणा प्रतिपादितः चित्तवृत्तिनिरोधलक्षणः सांख्यं भगवद्व्यतिरिक्तकपिलकृतं तत्त्वसंख्यानम् धर्मो जैमिन्युक्तः स्वाध्यायो नियमाभ्यासपूर्वको वेदाभ्यासः तपः आलोचनात्मकं ज्ञानं त्यागो वैराग्यम् इष्टापूर्तम् इष्टं च पूर्तं च तत्रेष्टं श्रौतं पूर्तं स्मार्तं कर्म दक्षिणा दानम् ॥ १ ॥

व्रतानि हरिवासरोपवासादीनि यज्ञः पूजा छन्दांसि रहस्यमन्त्राः यथा स्वाध्यायादिष्वन्तर्मन्त्राः यथा स्वाध्यायादितापर्यावधारणहेतुतया सत्सङ्गः मां सर्वेषां स्वाध्यायादीनां फलभूतमवरुन्धेत् आत्मसात्करोति यतः सर्वपूर्वकेषु स्वाध्यायादिसाधनेषु यः सङ्गः मनोऽभिषङ्गः तात्पर्यग्राहकस्वरूपो दोषस्तदपहः ॥ २ ॥

यातुधानाः राक्षसाः ॥ ३—४ ॥

### भाषा टीका ।

#### श्रीभगवान् उवाच ।

सब संसारी संगों का दूर करने वाला सत्संग जैसे मेरे को वश करता है तैसे योग तथा सांख्य धर्म वेदाध्ययन तप त्याग यज्ञयागादिक मंदिर निर्माणादिक दक्षिणा व्रत यज्ञ वेद मन्त्र जप तीर्थ यम नियम ये सब मेरे को वश नहीं कर सकते हैं ॥ १—२ ॥

हे अनघ उद्धवजी ! सत्संगही से दैत्य राक्षस मृग पक्षी गंधर्व अप्सरा नाग सिद्ध चारण गुह्यक विद्याधर मनुष्यों में वैश्य शूद्र स्त्री अन्त्यज रजोगुण तमोगुण स्वभाव वाले तिस तिस युग में मेरे पदको प्राप्त भये हैं ॥ ३—४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

त्वाष्ट्रो वृत्रः कायाधवः प्रह्लादः ॥ ५ ॥

ऋक्षो जाम्बवान् गृध्रो जटायुः वणिक्पथस्तुलाधारः व्याधो धर्मव्याधः यज्ञपत्न्यो दीक्षितभार्याः ॥ ६ ॥

तेषां सत्सङ्गव्यतिरिक्तसाधनान्तराभावमाह । त इति । न अधीताः श्रुतिगणा यैः तदर्थं च नोपासिता महत्तमा यैस्ते तथा किञ्च अव्रतातप्ततपसः न व्रतानि येषां न तप्तानि तपांसि यैस्ते च ते च तथा मत्सङ्गादिति मत्सङ्गः सङ्गो नाम मयैव सङ्ग इत्यभिप्रेत्योक्तम् यद्वा सत्सङ्गस्यापि मत्सङ्गत्वं विवक्षयेत् अस्यापि सत्त्वात् यद्वा मदीयसङ्गादित्यर्थः ॥ ७ ॥

तत्र वृत्रादीनां भवतु नाम कर्माद्यन्यसाधनानन्तरं गोपीप्रभृतीनां तु नान्यदस्तीत्याह । केवलेनेति । सत्सङ्गलब्धेन केवलेन भावेन प्रीत्या नगा यमलार्जुनादयः नागाः कालियादयः यद्वा तद्वानी-

### श्रीधरस्वामिकृतभावार्थदीपिका ।

गतानां सर्वतरुगुल्मादीनामपि भगवति भावोऽस्तीति गम्यते तदुक्तं भगवतैव—

अहो अमी देववरामरार्चितं पादाम्बुजं ते सुमनःफलार्हणम् ।
नमन्त्युपादाय शिखाभिरात्मनस्तमोऽपहत्यै तरुजन्म यत्कृतम् ॥

इत्यादि सिद्धाः कृतार्थाः सन्त ईयुः प्रापुः ॥ ८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

कयाधोर्दीतेरपत्यं कायाधवः प्रह्लादः तत्र वृत्रस्य सत्सङ्गः प्राग्जन्मनि श्रीनारदाङ्गिरसोः सङ्गः प्रह्लादस्य तु गर्भे श्रीनारदसङ्गः आदिशब्दगृहीतान् कानिचिद्गणयति वृषपर्वा दानवः अस्य जातमात्रस्य मातृपरित्यक्तत्वान्मुनिपालितत्वेन मुनिसङ्गः पुराणान्तरप्रसिद्धो ज्ञेयः बलेः श्रीप्रह्लादसङ्गः वाणस्यापि बलिशम्भुसङ्गः मयस्यापि सभानिर्माणादौ पाण्डवसङ्गः विभीषणस्य हनुमत्सङ्गः ॥ ५ ॥

सुग्रीवस्य हनुमत्सङ्गः हनुमतस्तु श्रीमगवद्रूपसत्सङ्गः गजेन्द्रस्य पूर्वजन्मनि सत्सङ्ग उत्तरजन्मान्ते भगवत्सङ्गः गृध्रस्य गरुडदशरथादिसङ्गः वणिक्पथस्य महाभारते जाजलिमुनिगर्वप्रसङ्गे प्रोक्तमाहात्म्यः श्रीनारदादिसङ्गोऽन्वेषणीयः धर्मव्याधस्य हि आदिवाराहे इयं कथा वसुनामा कश्चिद्वैष्णवो राजासीत् तेन च मृगभ्रान्त्या हतः कश्चिद्ब्राह्मणो ब्रह्मराक्षसः सन् राज्ञः प्रापञ्चिकविष्णुलोकगमनसमये शरीराविष्टो बभूव तद्रोगान्ते राजतां प्राप्तस्य तस्य ब्रह्मपरात्परस्तवपाठेनासौ बहिर्देहान्निर्गतस्तदा तत्कृतधर्मव्याधसंज्ञः सन् जगन्नाथं दृष्ट्वा स्तुत्वा तत्सायुज्यमापेति कुब्जायाः पूर्वजन्मनि नारदसङ्गः श्रीहरिवंशप्रसिद्ध एव गोपीनां च साधनसिद्धानां नित्यसिद्धगोपीसङ्ग एव यज्ञपत्नीनां च श्रीकृष्णगुणकथकलोकसङ्गः अपरे दैतेयादयः ॥ ६ ॥

नन्वर्थे श्रुतिगणाध्ययनार्थे पूर्वार्थे सत्सङ्गे स्वसङ्गत्वमारोपितं तद्वाग्मिनो दुर्लभनो वक्तीति तथा च स्वस्यापि सत्त्वात् स्वसङ्गोऽपि सत्सङ्ग इति विवक्षितं किन्तु प्रसिद्धिविच्युतिस्तु तदन्यस्यैव सत्सङ्गेन वैष्णवानामेव प्रसिद्धत्वादतः पुनर्वक्तीति अत्र मम ये सम्बन्धिनस्तेषां सङ्गादिति मध्यपदलोपी समासः अत एव मदीयसङ्गादित्यर्थ इत्युक्तम् ॥ ७ ॥

तत्र तेषु सत्सु सर्वे सत्सङ्गलब्धेनेति प्रकरणान्तरादध्याहृत पूर्वार्थे नगनागशब्दाभ्यां प्रधानानामेव कृतार्थताऽभिप्रेता न सर्वेषामतो वक्तीति ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

त्वाष्ट्रः त्वष्टुः पुत्रः बाणो मयश्च प्रसिद्धौ वाणमयाभ्यामन्ये विभीषणादयो गोष्यन्त एवेति भगवत्सङ्गलस्य दृढत्वात्मामुपागता इत्युक्तिः ॥ ५ ॥

गृध्रो जटायुः अत्र तस्य मुमुक्षुत्वं श्रीमति रामायणे अपरावर्त्तिनामिति पदस्य मुक्तिविषयत्वे सति घटते नतु पुत्रात् परावृत्तिपरत्वे वणिक्पथः तुलाधारः व्याधः धर्मव्याधः भगवद्वीर्यश्रवणावेशुद्धताप्रहृतहृदयतया तमेः छायानां प्रकृतिविशेषमोक्षः सम्भवतीत्यनेनैव वचनबलेनाप्युपगन्तव्यम् ॥ ६—७ ॥

नगा इति मृगविशेषणं यमलार्जुनाद्युद्धतया निश्चलाः वृक्षा अपि वृक्षाः परिम्लाना इति न्यायेन अन्तः संज्ञा वृक्षाणामात्मसन्निकर्षविप्रकर्षज्ञानितया भगवदनुकम्पासम्भवः ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्वाष्ट्रो वृत्रासुरः कायाधवः प्रह्लादः तावादी येषां ते बहवो मत्पदं प्राप्ता इति सम्बन्धः बहवो दैतेयादिषु काश्चित्साधूनिर्दिशति त्वाष्ट्रकायाधवादय इत्यादिना बाणो मयश्च प्रसिद्धौ ॥ ५ ॥

अथ मृगेषु साधूनाह । सुग्रीवो हनुमानिति ऋक्षो जाम्बवान् पशुष्वाह । गज इति गजो गजेन्द्रः अथ पक्षिष्वाह । गृध्र इति गृध्रो जटायुः तस्य तु मुमुक्षुत्वं श्रीमति रामायणे—

या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः ।
अपरावर्तिनां या च या च भूमिप्रदायिनाम् ॥
मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमानिति ।

प्रसिद्धम् अपरावर्तिनां या गतिरनुत्तमान् लोकान् गच्छेति मुक्तिविषयत्व एव घटते नतु पुत्र अपरावर्तिगतिपरत्वे तत्प्राप्यलोकानामनुत्तमत्वाभावात् अथ वैश्येष्वाह वणिक्पथ इति । वणिक्पथः तुलाधाराख्यः अन्त्यजेष्वाह व्याध इति व्याधो धर्मव्याधः स्त्रीष्वाह कुब्जा व्रजे गोप्यो यज्ञपत्न्य इति । यज्ञपत्न्यो ब्राह्मण्यः कुब्जादीनां केनापि भावेन भगवत्सम्बन्धसद्भावात् भागवतत्वमस्त्येव तथा पर इत्येतदनुक्तसङ्ग्राहकं ज्ञेयम् ॥ ६ ॥

ते त्वाष्ट्रकायाधवादिसत्सङ्गिनः न अधीताः श्रुतिगणा यैस्ते न उपासिता महत्तमाः साधवो यैस्ते न सन्ति व्रतानि येषां ते न तप्तं तपो यैस्ते अत्र सन्निधरापेः किन्तु सतां त्वाष्ट्रादीनां सङ्गान्मामुपागताः प्राप्ताः सत्सङ्गलब्धस्य दृढत्वव्यापनाय मामुपागता इत्युक्तं मोक्षयन्त एवेत इत्यर्थः । नाधीतश्रुतिगणा इत्यादिविशेषणैरुपायान्तरशून्यत्वमेव व्याप्यते ॥ ७ ॥

ननु युक्तमेतद्भगवद्याथात्म्याभिज्ञानां त्वाष्ट्रादीनां तत्सम्बन्धिनामन्येषां च मुक्तिरिति । इदं त्वयुक्तं यत्केवलं कामनादिभावेन त्वामनुवृत्तवतीनां गोप्यादीनामिति अतो न तासां मुक्तिः कुतस्तत्सम्बन्धिनामित्यत आह । केवलेनेति । भावोऽत्र कामभयद्वेषादिरूपाभिप्रायविशेषपरः साधनापरपर्यायदर्शनस्पर्शनादिरूपव्यापारपरश्च तस्य कैवल्यं नाम परत्वमुत्कृष्टत्वमिति यावत् तद्यथायोगं योज्यं तत्र गोप्यः केवलेन तीव्रेण भावेन कामात्मकेन गावो नगा मृगाश्च तस्य सादरं मदीक्षणस्पर्शनादिरूपेण भावेन ये चान्ये मूढधियः तमोगुणावृतधियः केवलतमोगुणप्रधाना इत्यर्थः केवलेन भावेन भगवद्रूपात्मकेन नगा यमलार्जुनादयः नागाः कालीयादयः तेऽपि सिद्धा मुक्त्यर्हाः मदीक्षणस्पर्शनादिभिर्निरस्ताखिलमुक्तिप्रतिबन्धकाः सन्तोऽञ्जसाऽनायासेन मामीयुः प्रापुः नगा इति मृगविशेषणं वा तत्र नगाः निश्चलाः यमलार्जुनाद्युद्धचित्त-

यं न योगेन साङ्ख्येन दानव्रततपोऽध्वरैः ।
व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपि ॥ ९ ॥
रामेण सार्धं मथुरां प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः ।
विगाढभावेन न मे वियोगतीव्राधयोऽन्यं ददृशुः सुखाय ॥ १० ॥
तास्ताः क्षपाः प्रेष्ठतमेन नीता मयैव वृन्दावनगोचरेण ।
क्षणार्धवत्ताः पुनरङ्ग ! तासां हीना मया कल्पसमा बभूवुः ॥ ११ ॥
ता नाविदन्मय्यनुषङ्गबद्धधियः स्वमात्मानमदस्तथेदम् ।
यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे ॥ १२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तेषां साधुसङ्गोत्था यथा प्रकृतिप्रधानीभूता केवला च भक्तिरेव नतु साधनान्तरमित्याह । न इति । न अधीताः श्रुतिगणा यैस्तदर्थं च न उपासिता महत्तमाः श्रुत्यर्थग्राहयितारो मुनयो यैस्ते न व्रतानि येषां न तप्तानि तपांसि यैस्ते च ते च तथा किन्तु सत्सङ्गेनैव हेतुना मत्त्या सत्सङ्गात् मत्संगं प्राप्य मामुपागताः प्राप्ताः सद्भिः सङ्गो नाम ममैव सङ्ग इत्यर्थः ॥ ७ ॥

तत्रापि गोपीप्रभृतीनां सर्वतोऽप्यतिवैशिष्ट्यमाह । केवलेन ज्ञानकर्माद्यमिश्रेण निष्कामेण भावेन शृङ्गारवात्सल्यसख्यदास्यमात्रशालिना भक्तियोगेन । गोप्यः शृङ्गाररसेन गावो वात्सल्यरसेन नगा गोवर्धनादिपर्वताः सख्यरसेन मृगा अपि मूढधियो वृन्दावनीयलतागुल्माद्या नागाः कालियाद्या दास्यरसेन मामीयुः अत्र गोप्यादयः सिद्धा एव पूर्वंभागाद्यनन्तरं मामीयुरिति केवलेन भावेन तेषां मत्प्राप्तिमत्त्वमनादितो नित्यसिद्धमेवेत्यर्थोऽवसीयते अन्यथा सिद्धा इति पदस्य वैयर्थ्यं स्यात् ॥ ८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कायाधवः कयाधुपुत्रः प्रह्लादः ॥ ५ ॥
वणिक्पथः तुलाधारः व्याधः धर्मव्याधः ॥ ६ ॥

न अधीताः श्रुतिगणाः यैस्ते तथा तदध्ययनार्थं नोपासिता महत्तमा यैस्ते तथा न सन्ति व्रतानि येषां न तप्तानि तपांसि यैः ते च ते च तथा मत्प्रापकः सङ्गः मत्सङ्गः शाकपार्थिवादित्वात्समासः ॥ ७ ॥

केवलेन हि सत्सङ्गेन लब्धो यो भावः भक्तिस्तेन ॥ ८ ॥

### भाषा टीका ।

वृत्रासुर प्रह्लादजी आदिक वृषपर्वा बलि बाणासुर मय दानव विभीषणजी सुग्रीवजी हनुमानजी जाम्बवान् गजराज जटायु तुलाधार धर्मव्याध कुब्जा व्रज में गोपिका यज्ञ पत्नी ऐसे और भी मुक्त होगये ॥ ५—६ ॥

इन्होंने न वेद पढे थे न किसी महत्पुरुष का उपासना किया न व्रत किये न तप किया केवल सत्संग से मेरे को प्राप्त होगये ॥ ७ ॥

एक केवल प्रेम भाव से गोपिका गउ वृक्ष मृग और भी जो मूढ़ बुद्धि वाले नाग आदिक सिद्ध होकर अनायास से मेरे को प्राप्त होगये ॥ ८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सत्प्राप्तेर्दुर्लभतामाह । यमिति । योगादिभिः कृतप्रयत्नोऽपि यं न प्राप्नुयात्तं मामीयुरिति पूर्वेणान्वयः अत्र च प्रथमं या गोप्यः पश्चाद्वा या श्रीकृष्णेन सह सङ्गतास्ते सन्तस्तत्सङ्गोऽन्येषां सत्सङ्गस्तेन च तेषां भक्तिरिति ज्ञातव्यम् ॥ ९ ॥

गोपीनां भावं प्रपञ्चयति । रामेणेति चतुर्भिः । श्वाफल्किना अक्रूरेण मयि प्रणीते सति मे मत्तोऽन्यं सुखाय न ददृशुः कुतः वियोगेन तीव्रा दुःसह आधियासां ताः अत्र हेतुः मय्येव गाढेनातिदृढेन भावेन प्रेम्णाऽनुरक्तानि संसक्तानि चित्तानि यासां ताः ॥ १० ॥

तीव्राधित्वं व्यनक्ति । तास्ता इति । मया सह या एव क्षपा रात्रयः क्षणार्धवल्लीनास्ता एव पुनर्मया हीनास्तासां कल्पसमा बभूवुः कथम्भूताः तास्ताः वाचामगोचरा इत्यर्थः ॥ ११ ॥

किञ्च एवं तीव्राधयस्ता मोहमिषेण समाधिं प्राप्ता इत्याह । ता इति । मय्यनुषङ्गेणाऽऽसक्त्या बद्धा धियो याभिस्ताः स्वमात्मानं स्वदेहमदो दूरस्थमिदं सन्निहितं च नाविदन् यद्वा स्वं पतिपुत्रादि ममतास्पदम् आत्मानमहङ्कारास्पदं देहम् अदः परं लोकमिदमिमं लोकं च नाविदन्निति । यथा मुनयः समाधौ नामरूपे न विदुस्तद्वत् किन्त्वब्धितोये नद्य इव मयि प्रविष्टा इत्यन्वयः ॥ १२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

अत्र च गोप्यादिप्रकरणे ॥ ९ ॥

माथं वियोगे प्रेमोद्रेकं प्रणीते सति मथुरां प्रति प्रापिते

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

सति मत्तोऽन्यं निजसखादिकमपि सुखाय न ददृशुः प्रियसखीमाद्यापि ज्वालायते इत्याद्युक्तेः किन्त्वतीतनिर्देशेनाधुना तु सुखाय पश्यन्तीति वियोगो नास्तीत्यर्थः । अत्र वियोगती-व्राधित्वे ॥ १० ॥

तावता इति तच्छब्दयोरनुभूतार्थगोचरत्वाद्यच्छब्दानपेक्षत्वम् अतएव वाचामगोचरा इति व्याख्यानम् ॥ ११ ॥

मोहमिषेणाऽपह्नुत्याऽप्रकटलीलाभिनिवेशेन प्रकटलीलाऽननु-सन्धानलक्षणमोहस्य वास्तवत्वमभिव्यज्यते समाधेस्तूपमान-मात्रत्वं स्तनापदेशं फलयुगमेव धत्ते मृदुः काञ्चनवल्लिरेषेति-वत् प्रकृतं यन्निदिध्यासवत् ध्यायते सा त्वपह्नुतिरिति तल्लक्ष-णात् पूर्वार्धे दूरस्थसन्निहितयोर्विशेषस्यासम्बन्धत्वाज्ज्ञेयत्वा-नर्हत्वाच्च यद्वेति पतिपुत्राद्यज्ञाने दृष्टान्तो यथा मुनय इति भगवन्मात्राभिनिवेशे दृष्टान्तः अब्धितोये नद्य इवेति ॥ १२ ॥

---

### भास्करदर्शनसूरिकृतशुकपक्षीयम् ।

यमिति यच्छब्दो भगवत्परः ॥ ९ ॥

श्वाफल्किना अक्रूरेण ॥ १०—११ ॥

तयेदमिति शरीरमुच्यते नद्यः प्रविष्टा इवेति नदीनां नाम-रूपावेदनमचेतनत्वादपि गोपीनां तु भगवद्ध्यानपारवश्यादिति वैषम्यम् ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मामिति विवक्षितमात्मानं विशिनष्टि । यमिति । योगादिभिः कृतप्रयत्नोऽपि यं न प्राप्नुयात्तं दुर्लभं मामापुरिति सम्बन्धः व्रतान्येकादश्युपवासादीनि तपः कृच्छ्रचान्द्रायणादिरूपं व्याख्या शास्त्राध्यापनं स्वाध्यायोऽध्ययनं सन्न्यासस्तुर्याश्रमपरिग्रह इति ॥ ९ ॥

केवलेन हि भावेनेति विवक्षितं गोपीनां भावं प्रपञ्चयति । रामेणेति चतुर्भिः । श्वाफल्किनाऽक्रूरेण मयि रामेण बलभद्रेण सार्धं सह मथुरां प्रणीते प्रापिते सति मत्तोऽन्यं सुखाय न ददृशुः कुतः वियोगेन तीव्रो दुःसह आधिर्यासां ताः तत्र हेतुः मयि विगाढेनातिदृढेन भावेन प्रेम्णाऽनुरक्तानि संसक्तानि चित्तानि यासां ताः ॥ १० ॥

तीव्राधित्वं व्यनक्ति । तास्ता इति । या या इति पाठान्तरम् अङ्ग हे उद्धव ! वृन्दावनगोचरेण प्रियतमेन च मया सह याभिर्याः क्षपाः रात्रयः क्षणार्धवत्क्षिताः यापिताः तास्ता एव पुनर्मया हीनाः तासां गोपीनां कल्पसमा बभूवुः ॥ ११ ॥

किञ्चैवं तीव्राधयो मोहव्याजेन समाधिं गताः किञ्चिदपि न विदुरित्याह । ता इति । मत्पदानुषङ्गेणासक्त्या बद्धा धियो-ऽभिलाषाः गोप्यः स्वमात्मानं स्वदेहमदो दूरस्थम् इदं संनिहितं च नाविदन् यथा मुनयः समाधौ स्वात्मानं न विदुर्यथा वाब्धि-तोये प्रविष्टा नद्यः स्वनामरूपे न विदुः तद्वन्नदीनां नामरूपा-वेदनमुचितमचेतनत्वाद्गोपीनां तु भगवद्ध्यानपारवश्यादिति वैष-म्यम् ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्तिरहितं ज्ञानमपि न मत्प्रापकं किमुतान्यत्साधनजात-मिति भावेनाह । यमिति । य मां राहुवद्यत्नवानपि—

> हरिसङ्गविहीनस्तु हरेर्दर्शनवानपि ।
> न मुच्यतेऽखिलज्ञोऽपि तमो याति विनिश्चयात् ॥
> गुणैरन्यैर्विहीनस्तु तद्भक्तस्त्वपि चाक्रमात् ।
> सङ्गवान्सुखमाप्नोति इत्याद्युक्तेर्मुक्तिमेति वा ॥
> स्वभक्तसङ्गहीनस्य व्युत्क्रमात्सङ्गिनोऽपि वा ।
> स्वसङ्गविप्रकृद्विष्णुस्तत्सज्जनेषु तत्र चेति ॥

अनेन भगवद्भक्तेस्तद्भक्तभक्तेरन्वयव्यतिरेकौ दर्शिताविति ध्वनितमित्यनेन श्लोकेन ज्ञायते—

> गोपिकाद्या दिवं गत्वा हरिं ज्ञात्वा यथातथम् ।
> परम्पदं ययुः पूर्वसङ्गादेव सुमोचिता इति

वचनाद्भक्तिजनितज्ञानेन मुक्तिमाप्नोति न केवलज्ञानेनेत्यभिप्रायेण न सांख्येनेत्युक्तम् उपलक्षणमेतत् दानादिष्वप्यनुसन्धेयमेतत्—

> श्रोतव्यं च श्रुतज्ञेन वक्तव्यं कार्यमेव च ।
> नित्यं च हरेः पूजेत्येवं कुर्याच्चाक्रमात् ॥
> एवङ्कृतां तु संन्यासी सर्वोत्तमगोप्ता स्मृतः ।
> अन्यथा नैव संन्यासी निष्क्रियोऽपि शिखा यथेत्येवं

लक्षणवान् संन्यासी न तु शिखानिष्क्रिय इत्यभिप्रेत्य वेणु-मात्रभृत्संन्यासी न मामाप्नोतीति किञ्च—

> नाहं कर्ता तु सर्वस्य कर्तैको विष्णुरव्ययः ।
> इति विरत्या तु संन्यासी नान्यथा तु कथञ्चन ॥
> मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
> निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वर इति

लक्षणान्तरवानेव सन्यासी न रक्तपटधारीत्यर्थः ॥ ९ ॥

गोपीनामपि भक्तिरपरोक्षज्ञानान्तरङ्गा न तु रतिनिमित्तेति प्रकटयितुं वक्ति । रामेणेति । ता गोप्यो मत्तोऽन्यद्वस्तु सुखाय न ददृशुरित्यन्वयः ॥ १० ॥

अत्र हेतुमाह । तासामिति ताः क्षपाः ॥ ११ ॥

स्वमात्मानं स्वस्वरूपम् अदः स्वर्गमिदं जगत् तत्र दृष्टान्तमाह । यथेति । समाधौ मुनयो नामरूपं यथा न विदन्ति अब्धितोये प्रविष्टा नद्यश्च अनेन भक्त्यतिशयो दर्शित इति ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तामेव व्यनक्ति । यमिति । य भावम् अत्रापि योगादयो भग-वत्परा एव योगादिभिर्यत्नवानपीत्यनेन तत्प्राप्त्यर्थप्रयुज्यमान-त्वावगमात् ॥ ९ ॥

अथ साधकचरीणां गोपीनां प्रथमतस्प्राप्तिपरत्वेन नित्य-प्रेयसीनामपि तन्महानियोगान्तरप्राप्ति तस्य वियोगस्यातीतत्वाति-र्देशाद्दर्शयति त्रिभ्याम् । विगाढभावेन तीव्राधयः सत्यो मत्तोऽन्यं निजसखादिकमपि न सुखाय ददृशुः प्रियसखीमाद्यापि ज्वालायते

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इतिवत् तनश्चाधुना तु सुखाय पद्यन्तीति वियोगो नास्तीत्यर्थः ॥ १० ॥

एवं तास्ताः क्षपा मया हीनाः सत्यस्तासां कल्पसमा बभूवुः अधुना तु तादृश्यो न भवन्तीति नास्त्येव वियोग इत्यर्थः । पूर्वं तेनैकत्वेनात्र प्रति मयि ताः प्रेयसां प्रेष्ठ इत्यादौ वर्त्तमानप्रयोगाः कृता इति सोऽयमर्थः स्पष्ट एव प्रतिपत्तव्यः ॥ ११ ॥

ततश्च प्रकटाप्रकटलीलयोः पृथक्प्रतिपत्त्यैवाप्रकटभावमापद्य स्वनामरूपयोरेव ताः स्थिता इत्याह । तादृशाभूताविरहोत्कण्ठातिशयेनाभिव्यक्तदुर्धरमहाभावाः सत्यः अन्यासामन्यदीर्घेण कालेनेत्यादिमद्वृत्तानुसारेण यद्यप्यनुज्ञाप्यमसार मो भवानित्यादिद्वारकागतासिप्रजावचनानुसारेण च कदाचित्तासां दर्शनार्थं गते मयि सख्यो योऽनुषङ्गो महामोहनभावाभिव्यक्तिकारी पुनः संयोगस्तेन बद्धा धियोऽमिताः तथा भूताः सत्यः स्वं ममतास्पदम् आत्मानमहंकारास्पदम् अदः अप्रकटलीलानुगतत्वेनाभिमतं वा तथा इदं प्रकटलीलानुगतत्वेनाभिमतं वा यथा स्यात्तथा तदानीं नाविदन् किंतु द्वयोरैक्येनाविदुरित्यर्थः । प्रकटाप्रकटतयाभिन्नं प्रकाशद्वयमभिमानद्वयं लीलाद्वयं चाभेदेनैवाजानन्निति विवक्षितं ततश्च नाम च रूपं चेति समाहारद्वन्द्वेन नामरूपात्मनि अप्रकटप्रकाशविशेषे प्रविष्टा इव न तु प्रविष्टाः वस्तुभेदादित्यर्थः । तत्राहंकारास्पदं प्रविष्टा इवेति वस्त्वभेदेन योजयति यथा समाधौ समाध्युपाधौ तुरीयाख्यात्मनि मुनयो जाग्रदाद्युपाधितया विश्वतैजसप्राज्ञाख्या मुनीनामात्मानः प्रविष्टा इव किन्तु तेषां तुरीयं त्रिषु सन्ततमिति न्यायेनोपाधिनैव तुरीयाच्छिन्नतया ख्यातानां तदुपाधिपरित्याग एव प्रवेशतयोपचर्यते तथा तासां मत्प्राप्त्यन्तरायतत्परित्याग एव प्रवेशतयोपचर्यत इत्यर्थः । अथ ममतास्पदे प्रविष्टा इत्यपि समुद्रगंगाप्रवेशेन योजयति । यथाब्धितोये नद्यः प्रविष्टा इव भवन्ति पृथिव्यामविच्छेदात् तद्वत्तयोः प्रकाशयोर्मिथो विच्छेदाज्ञानात् प्रविष्टा इवेति ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

केवलस्य भक्तियोगस्य सत्सङ्ग एव हेतुर्न तु सुकृतान्तरं किमपीत्याह । यमिति । यत्नवतापि योगादीनां सम्यगनुष्ठानवतोऽपि ॥ ९ ॥

तत्रापि गोपीनां भावस्य सर्वोपरि विराजमानत्वमाह । रामेणेति चतुर्भिः । दुष्टाफल्किना अक्रूरेण मयि मधुरां प्रकर्षेण नीते सति मे मत्तोऽन्यं सुखाय न ददृशुः यतोऽनुरक्तचित्ताः प्रेम्णः षष्ठीभूमिका योऽनुरागस्तन्मयीभूतानि चित्तानि यासां ताः तत्रापि विशिष्टो गाढो भावः अनुरागोत्तरभूमिकागतो महाभावभेदो रूढाभिधस्तेन हेतुना वियोगे भवति तीव्र आधिर्यासां ताः अत्र ददृशुरिति भूतनिर्देशादधुना तु दन्तवक्त्रवधान्ते मया सह संयुक्ता एव वर्त्तन्त इति द्योतितम् ॥ १० ॥

कल्पस्य क्षणता योगे वियोगे तद्विपर्यय इति प्रेम्णः सप्तम्या भूमिकाया महाभावभेदस्य रूढभावस्य लक्षणं सर्वतो विलक्षणं दर्शयति । तास्ता इति । मया सह रासक्षपा ब्रह्मरात्रिपरिमिता अपि क्षणार्धवत् याभिर्नीताः । तासां मया वृन्दावनगोचरेण वृन्दावनस्थेन अथ च वृन्दावने गोभिः सह चरता हीनास्ताः क्षपाः प्रहरचतुष्टयपरिमिता अपि यापयितुमशक्यत्वात् कल्पैर्बहुभिः समाः ॥ ११ ॥

मोहाख्यभावेऽपि सर्वविस्मरणमिति विगाढभावस्यापरमत्यनुभावमुज्ज्वलनीलमणियुक्तं दर्शयति । मयि अनुषङ्गेण नितरां सङ्गेन बद्धा धियो याभिस्ताः । अत्र बद्धपदेन कृष्णस्य त्रिजगन्मोहनविचित्रलीलारूपस्वस्य अनुषङ्गस्य बन्धनदामत्वं धीवृत्तीनां कृष्णवाञ्छितस्वपावककामधेनुघटात्वमारोपितं स्वमात्मानं देहं न विदुः रासाभिसारादौ क्व स्थितं क्व वा यान्तमिति नानुसन्दधुः तथा अदः परलोकं धर्मातिक्रमादिति भावः । इदमिमं लोकं लज्जाभयाद्यतिक्रमादिति भावः । समाधौ मुनय इति । तेषां यथा सर्वविस्मरणे ब्रह्मानुभवोऽभिरव्यक्ते तथैतासां मदनुभव इति सर्वविस्मरणांशे दृष्टान्तः न तु प्राप्यांशे गोपीप्राप्यप्रेममुनिप्राप्यनिर्माणयोरहो महदेवान्तरं यस्मान्ममत्वाममते तयोः तथाहि सर्वसन्तापनिवर्त्तकात् परमाह्लादकात् दृश्यमानात् चन्द्रादपि सकाशात् सर्वगुणहीनोऽपि दृश्यमानः पतिपुत्रादिको यत् सुखमधिकं दत्ते तत्र ममतैव यदि कारणं तदा किं पुनः सर्वगुणमणिगणे स्वभावादेव निरवधिकसुखप्रदे श्रीकृष्णे परब्रह्मणि निरवधिकैव ममता सुखाधिक्ये कारणं भक्तानामिति अत एवोक्तम्

ब्रह्मानन्दो भवेदेष चेत्परार्द्धगुणीकृतः ।
नैति भक्तिसुखाम्भोधेः परमाणुतुलामपीति ॥

ब्रह्म च भक्तेष्वासक्तं तद्द्वयं च मुनिषु नैवासक्तं न तद्द्वयं चेति नद्यो यथाब्धितोये प्रविष्टा नामरूपे स्वीये न विदुरिति रसचर्वणांशे दृष्टान्तः ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यं माम् ॥ ९ ॥

गोपीनां भावं प्रपञ्चयति । रामेणेति चतुर्भिः । विगाढभावेन दृढप्रेम्णा अनुरक्तं चित्तं यासां ताः वियोगेन तीव्रो दुःसहः आधिर्यासां ताः मे मत्तोऽन्यं सुखाय न ददृशुः ॥ १० ॥

मया सह तास्ताः प्रसिद्धाः क्षपाः क्षणार्धवन्नीताः मया हीनाः पुनस्तास्तासां कल्पसमा बभूवुः ॥ ११ ॥

किञ्च ताः मयि अनुषङ्गेण आसक्त्या बद्धा धियो याभिस्ताः अत एव अब्धितोये नद्य इव मयि प्रविष्टाः स्वमात्मानं देहमिदं च लोकमदः परं च लोकं नाविन्दन् यथा समाधौ मुनयो न विदुस्तद्वत् ॥ १२ ॥

---

भाषा टीका ।

योग से सांख्य से दानों से तप से यज्ञों से व्याख्यानों से स्वाध्याय से सन्यास से बड़े यत्नकरने वाला भी जिस मेरे को नहीं प्राप्त होसकता है तिस मेरे को गोपिकादिक केवल भाव से प्राप्त होगये ॥ ९ ॥

मत्कामा रमणं जारमस्वरूपविदोऽबलाः ।
ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः ॥ १३ ॥
तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ।
प्रवृत्तं च निवृत्तं च श्रोतव्यं श्रुतमेव च ॥ १४ ॥
मामेकमेव शरणमात्मानं सर्वदेहिनाम् ।
याहि सर्वात्मभावेन मया स्या ह्यकुतोभयः ॥ १५ ॥

उद्धव उवाच ।

संशयः शृण्वतो वाचं तव योगेश्वरेश्वर ! ।
न निवर्तत आत्मस्थो येन भ्राम्यति मे मनः ॥ १६ ॥

भाषा टीका ।

जिस समय अक्रूरजी हमको बलदेवजी के सहित मथुरा को लेगये तब गोपियोंने मेरे में चित्त के अनुराग होने से अतिगाढ प्रेम के वश होने से मेरे वियोग होने में तीव्र वेदना के होजाने से मेरे विना और किसी वस्तु को सुख दायक नहीं समझा ॥ १० ॥

हे उद्धवजी ! मेरे साथ वृन्दावन में विचरने से प्रिय मेरे संग होनेसे उन बडी रातों को गोपियों ने क्षणमात्र के तुल्य मान लिया था फिर मेरे विना होने से वही रातें कल्प सरीकी गोपिकाओं को हो गई ॥ ११ ॥

मेरे विषय में मन के अत्यन्त लगजाने से उन गोपियों ने न अपने शरीर का ख्याल किया न पराये का जैसे कि मुनि जन समाधि में सब भूलजाते हैं और जैसे सब नदी समुद्र में मिलजाने से अपने नाम रूप दोनों को छोडदेती हैं तैसे ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं ता अबलाः केवलं मत्कामा अस्वरूपविदः स्वरूपं तु न जानन्ति तथाऽपि सत्सङ्गाज्जारं ब्रह्म जारबुद्ध्यैवमपि ब्रह्म स्वरूपमेव मां परमं प्रापुरित्यर्थः ॥ १३ ॥

यस्मादेवं भूतो मद्भजनप्रभावस्तस्मात्त्वं चोदनां श्रुतिं च प्रतिचोदनां स्मृतिं च यद्वा विधिं च निषेधं चोत्सृज्य मां शरणं याहि ॥ १४ ॥

मयैवाकुतो भयः स्याः भव ॥ १५ ॥

पूर्वं तावत्स्वधर्मादिनिष्ठवानितः स्वधर्मोऽनन्यादिना कर्म कर्तव्यमित्युक्तमिदानीं तु सर्वं त्यक्त्वा मां शरणं याहीत्युच्यते तत्र किमात्मनः कर्तृत्वाद्यस्ति नास्ति वेत्यात्मकः आत्मविषयः संशयो न निवर्तते यद्वा कर्म कार्यं त्याज्यं वेत्यात्मको हृदिस्थः संशयो न निवर्तते इति पृच्छति । संशय इति । येन संशयेन ॥ १६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

स्वरूपं परमेश्वरत्वलक्षणं सत्सङ्गाज्जित्यमिलितानां गोपीनां संगात् जारबुद्ध्यैवमपीति अपि ताप्राकृते तद्रूपे स्वाभाविकेऽपि श्रीकृष्णे तु अचिन्त्यशक्तिभूयस्त्वामिति व्याख्यातं परमं प्रापुरिति प्राप्तौ परमात्मनः श्रीविग्रहात्मकस्य विधेयत्वात् तदुक्तमभियुक्तैः "नेत्रा बहाङ्गिनि रमे कामिभिः परोढा तद्धाकुलाम्बुजदृशां कुलमन्तरंगा । आशामया रमभिषेरखोरितानां कंसारिणा रसिकमण्डलशेखरेणेति" । तदेवाह रमणं रतिक्रीडासुखदं मां श्रीकृष्णमेवेति तस्य ब्रह्मणो निराकारत्वं प्रत्याख्यातम् ॥ १३ ॥

पूर्वार्थे चोदनाशब्दस्य विधिरूपवेदैकदेशपरत्वेऽपि प्रतिचोदनाशब्दस्य स्मृतिपरत्वं न कुत्रापि प्रसिद्धमतो यद्वेति चोदनाशब्दस्य प्रवर्तनार्थत्वाद्विधिनिवर्तनार्थस्य प्रतिशब्दत्वाद्द्वयोः प्रत्याख्यानवत् तथाच प्रतिचोदनाशब्दस्य निषेधार्थो मृग्य एवात तथा व्याख्यातं प्रवृत्तं वर्णिमार्गं निवृत्तमार्गो मुक्त्यर्थ आवर्त्तेत प्रवृत्तेन निवृत्तेनाऽश्नुतेऽमृतमित्युक्तेः अयं योगसाङ्ख्यादिरूपो श्रोतव्यः अयं च श्रुतस्तदनुष्ठेय इत्युभयमत्वर्थं त्यक्त्वा शुद्धभक्तस्य द्वयोरप्यनुपादेयत्वात् कथञ्च मामेव शरणं याहीति पूर्वं प्रतिपादिता सत्सङ्गादिलक्षणा भक्तिरेव दृढीकृता सर्वात्मभावेनेति अन्यनिष्ठत्वमपि त्याजितं तच्च तत्परित्यागे किमपि दूषणमित्याह मयेति ॥ १४ ॥ १५ ॥

अत्र विप्रतिपत्तौ पूर्वार्थे मीमांसकमतप्रत्याख्यानपूर्वकं कर्तृत्वाद्यभावः त्रिलक्षणः स्थूलसूक्ष्मादिदेहादात्माधिना स्वहंगित्यादिप्रघट्टकेन पूर्वमेवोपपादित इति तद्विषयकप्रश्नो त्रिकयोश्चतस्य न युक्त इत्यतो यद्वेति तथाचैकान्तभक्तेन कर्म कर्तव्यं वा त्याज्यमिति प्रश्नस्य पूर्वमकृतत्वादपूर्वत्वमिति ज्ञेयम् ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अतः जारं चोरमपीत्यर्थः परमं गुह्यमित्यर्थः ॥ १३ ॥
तस्मान्मत्समाश्रयणस्य मोक्षहेतुत्वात् प्रतिचोदनां निषेधं

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यद्वा ममाज्ञचोदनाया अपवादरूपा विशेषचोदना तामुत्सृज्येति उपायतया बुद्धित्यागो विवक्षितः उपायत्वग्रहणं तत्र वर्जयेदिति प्रपत्तिशास्त्रेषु दृष्टत्वात् यास्यसि मामित्यनुषङ्गः ॥ १४-१५ ॥

एवमुपायविषये श्रोतव्यं सर्वं श्रुतम् अत उद्धवः आत्मविषये श्रोतव्यान्तरं शुश्रूषमाणः पृच्छति । संशय इति ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न केवलं स्वात्मादिकं नाविदन् किन्तु केवलमबला अज्ञाना-त्मस्वरूपाविदस्तथापि मत्कामाः मय्येव कामो यासां ताः जारं रमणं लौकिकप्रतीत्या चोरमन्तारं वस्तुतः परब्रह्मभूतं मां प्रापुः सत्सङ्गेन हि ह्येता इत्युपक्रान्तमुपसंहरति । सङ्गाच्छत-सहस्रशः प्रापुरिति सम्बन्धः ॥ १३ ॥

इत्थमुपदेक्ष्यमाणशरणागत्याख्यस्यास्य योगप्रभावख्यापनाय तद्यो-गानिष्ठसत्सङ्गस्यैवाऽनितरसाध्यसाधनतामभिधायाथ तं योगमु-पदिशति तस्मादिति हे उद्धव ! तस्माच्छरणागतियोगानिष्ठसत्सङ्-गतेरेवं विधत्वात् चोदनां विधिं प्रतिचोदनां निषेधं यद्वा चोदनां न हिंस्यात्सर्वा भूतानीत्यादिरूपां सामान्यभावनां प्रतिचोदनाम-ग्नीषोमीयं पशुमालभेतेत्यादिरूपामपवादात्मिकां विशेषचोदनाम उत्सृज्येत्यनेन विधिनिषेधात्मकशास्त्रत्याग उक्तः प्रवृत्तिं च निवृत्तिञ्चेत्यनेन विधिनिषेधात्मकशास्त्रबोध्यप्रवृत्तिनिवृत्तित्यागः श्रोतव्यमित्यनेनानन्यसाध्यस्वाभीष्टोपायान्तरशुश्रूषात्यागः श्रोतव्य-मुत्सृज्येत्यनेन तदुपायतया श्रुतेषु कर्मज्ञानभक्तियोगेषु उपायत्व-बुद्धित्यागः तत्र विध्यात्मकशास्त्रत्यागो नाम तस्मिन्स्वाभीष्टसा-धनताबोधकत्वबुद्धित्यागः निषेधात्मकशास्त्रत्यागस्तु निषिद्ध-सेवानिवृत्तरूपावश्यबोधकत्वबुद्धित्यागरूपः प्रवृत्तिनिवृत्तित्यागस्तु शास्त्रबोध्ययोः प्रवृत्तिनिवृत्त्योर्दुष्करत्वानुसन्धानेनोपायत्वबुद्धित-च्चिकीर्षाप्रयत्नादित्यागात्मकः अनेन कृत्यकरणाऽशक्तस्याकृत्यकर-णान्निवर्तितुमप्यशक्तस्यापि मच्छरणागतिरभीष्टोपायभूतेति ध्वनितम् ॥ १४ ॥

मामित्यनेन सार्वज्ञ्यसर्वशक्त्याद्याश्रयणसौकर्यापादकाश्रित-कार्यापादकवात्सल्यसौशील्यस्वामित्वज्ञानशक्तिपूर्णादिकल्याण-गुणयोगित्वमभिप्रेतम् एकमित्यनेन फलोपायबोरैक्यं विवक्षितम् एवकारेण प्रपदने स्वस्य कर्तृत्वव्यावृत्तिः एकवचनेन स्वानुष्ठि-तशरणागतियोगस्योपायत्वबुद्धिव्युदासः तत्र हेतुत्वेनात्मानं विशि-नष्टि । आत्मानं सर्वदेहिनामिति सर्वान्तरात्मभूतेन मनः पर्यन्तसर्वे-न्द्रियप्रचोदयित्रा मयैव प्रकृतोपायानुष्ठानस्य कारितत्वात्तत्रोपायता-बुद्धिर्न कार्येति भावः । मामेवेत्येवकारोऽन्वेतव्यः तेनासार्वज्ञ्यादिगु-णयोगिचतुर्मुखादिजीवव्यावृत्तिः एवकारस्य स्वमर्माभिव्याहृत-पदार्थविपरीतपदार्थव्यावृत्तिपरत्वात् सर्वात्मभावेन शरणं याहि उपाये गृहरक्षित्रोः शब्दः शरणमित्ययमित्युक्तेरत्रोचितत्वादुपायपर शरणशब्दः याहि या प्रापणे प्राभिर्गतिपूर्वकत्वाद्गत्यर्था बुद्ध्यर्थाः इति न्यायाद्व्यवस्येत्यर्थः । सर्वात्मभावेन वः सर्वं आत्मनः स्वस्य भावः उपेयत्वपितृत्वरक्षकत्वशेषित्वादिनिरूपितापेतृत्वपुत्रत्व-रक्ष्यत्वशेषत्वादिसम्बन्धज्ञान तेन एवं चेत् कुतोऽपि भयं नाहित यस्य सः अकृत्यकरणकृत्याकरणादिमत्प्राप्तिप्रतिबन्धकभयरहितः मां मुक्तोपभोग्यं प्राप्स्यसि प्राप्स्यसि ॥ १५ ॥

आत्मानं सर्वदेहिनामित्यनेन स्वस्य सर्वान्तरात्मतया सर्वे-न्द्रियप्रचोदयितृत्वमुक्तं तत्प्रकारजिज्ञासया पृच्छति । संशय इति । हे योगेश्वरेश्वर ! योगनिर्वाहकाधिपते तव वाचं शृण्वतो मम उपायविषयः संशयो निवृत्तः आत्मस्थः आत्मविषयस्तु न निवर्तते ततः किमित्यतो विशिनष्टि । येनात्मस्थेन संशयेन मे मनो भ्राम्यति अतस्तं संशयं निराकुर्विति भावः । किं सर्वेन्द्रिय-प्राणनियमनादिकं जीवकर्तृकमुत स्वत्कर्तृकं स्वत्कर्तृकत्वेऽपि कस्य देवमनुष्यादिभावात्मकः संसारः कश्चेन्द्रियादीनामाधारः किं जीव उत शरीरं किंस्वा त्वं कश्च सुखदुःखहेतुपुण्यापुण्ययोर-कः कश्च सुखदुःखयोर्भोक्ता कश्च संसारनिवृत्त्युपाय इत्येवं विधः आत्मस्थः संशयः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्फलमाह । मत्कामा इति । मामेव कामयन्त इति मत्कामाः अज्ञरूपविदोऽबलाः जारं मां रमणं मत्वा संगान्मां परमं ज्ञात्वा मामापुरित्यन्वयः । आसां अज्ञानं कथमुद्भूत उच्यते संसारं जरयतीति जारः तं नित्यानन्दप्रदत्वेन रमय-तीति रमणः तं सर्वतो विलक्षणस्वभावस्यास्य विष्णोः स्वरूपं विदन्तीत्यस्वरूपविदः इत्येवं गुणसम्प्रीतितो मां ब्रह्म ज्ञात्वेति गोपिकाद्या दिवं गत्वा हरिं ज्ञात्वा यथा तथेत्येत-दत्रापि प्रमाणत्वेनोदाहर्तव्यमिति ज्ञातव्यम् ॥ १३ ॥

यतो मुमुक्षूणामहमेव शरण्यस्ततस्त्वमपि मां शरणं व्रजे-त्युपसंहरति । तस्मादिति । प्रतिकर्मचोदितां चोदनां नानाकर्म-विधिमुत्सृज्य प्रवृत्त्यादिकं च मयि समर्प्य सर्वदेहिनामात्मानं स्वामिनं यस्मिन्नकुतोभयमस्ति तमेकं मां सर्वात्मभावेन सर्व-स्वामिबुद्धिक्रियया शरणं याहीत्यन्वयः ॥ १४—१५ ॥

प्रश्नमतो वायौ मुख्यभिप्रेत्युक्त्वा विशेषतो गोपिकाप्रशंसनं कृतमिति संशयबीजं हृदि कृत्वोद्धवश्चोदयति । संशय इति भक्तेषु वायोः सर्वोत्तमत्वमुक्त्वा विशेषतो गोपीस्तुवतस्तव वाक्य शृण्वतो ममात्मस्थो मनोगतः संशयो वायुरुत्तमो गोप्यो वेत्ययमाकारो न निवर्तते प्रत्युत येन वचनेन मे मनो भ्राम्यति निर्धारितैककोटिरहितं नेत्यन्वयः ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ॥

तदेवं प्रकटाप्रकटयोर्द्वयोरपि लीलयोस्तासां स्वप्राप्तौ भाव एव कारणं दर्शितं ततश्चाप्रकटलीलायां प्रविष्टा अपि यद्वि-शेषणाधिक्येन तं प्रापुस्तद्दर्शयन्नाप्यस्यन्यनुवदति । मत्कामा इति अयमर्थः यथाऽभीष्टमुदारं दर्शनीयं कटं करोतीत्यत्र क्रिया खलु विशेष्यस्य कृतिं प्रत्यापयन्ती विशेषणानामपि प्रत्या-पयति कटं करोति तं च भीष्ममित्यादिरीत्या तथात्रापि प्रतीयते विशेष्यं चात्र ब्रह्मैव सर्वविशेषाश्रयणाविपरमवस्तुतया तेषु तस्या-भेदनानुगमात् तदेवं स्थिते अनुवादमनुकरवैव न विधेयमुद्दी-रयेदित्युक्तदिशा पाठानुरोधेनात्र न विधेयं निर्णीयते किंस्वयो-

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नुरोधेन तस्यैव बलवत्त्वात् यथा बल्व पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीत्यत्र पचन्तीं विविधाः पाकाः इत्यादौ सन्देहोहृश्च गृहानामित्यत्र अग्निहोत्रं जुहोति यवागूंच पचतीत्यत्र च पर्णमयीत्वादीनामेव विधेयत्वं तद्वत् तदिगन्वाकाङ्क्षापूर्तेरर्थानुरोधस्य बलवत्त्वं ततश्च पूर्वोक्तरीत्या ताः ब्रह्म प्रापुः किं निर्विशेषत्वयाविर्भूतं न किन्तु परमं परा मा लक्ष्मीर्यस्मिन् तादृशं श्रीभगवद्रूपमेवेत्यर्थः । परमं यो महद्ब्रह्मेति सहस्रनामस्तोत्रात् तादृशत्वं च "शुभाश्रयः सचित्तस्य सर्वगस्य तथात्मन" इति श्रीविष्णुपुराणरीत्यान्यत्रापि भगवदाविर्भावे संभवतीत्याशङ्क्याह मां श्रीकृष्णाख्यमेव प्रापुः यथोक्तं तासु स्वयमेव मय्यावेश्य मनः कृष्णा इत्यादि मयि भक्तिर्हीत्यादि च तत्र च मां निजभावविशेषमयभेदेन द्विधा प्रापुरिति बोधयितुं तासां तत्तद्विशेषणसाहित्येन सविशेषणद्वयमाह । मत्कामा रमणमिति । जारस्वरूपाविद् इति रमणशब्देनात्र पतिरेवोच्यते नन्दनशब्देन पुत्र इव रूढ्या यौगिकत्वबाधात् यथा मित्रानन्दनशब्देन मित्रापुत्र एवोच्यते न तु मित्रापतिः मित्रारमणशब्देन च मित्रापतिर्न तु मित्रापुत्रस्तद्वदत्रापि जारशब्देनोपपतिरेवोच्यते न तु पतिः कोषकारमते च तत्रैव रूढः रमणं स्वात्पटोलस्य मूलेऽपि रमणः प्रिये इति विश्वप्रकाशात् स्त्रीजातिसंबन्धेन रमणशब्दवत् प्रियशब्देन पतिरेवोच्यते तथैव प्रसिद्धेः धवः प्रियः पतिर्भर्ता जारस्तूपपतिः समावित्यमरकोशाज्जारः पापपतिरिति त्रिकाण्डशेषाच्च पतित्वं तूद्वाहेन कन्यायाः स्वीकारित्वमिति लोक एव भगवति तु स्वभावेनापि दृश्यते परमव्योमाधिपस्य महालक्ष्मीपतित्वं ह्यनादिसिद्धमिति ततश्च मत्स्वरूपविद् इति स्वरूपं नित्यमेव मत्प्रेयसीत्वलक्षणमवतारसमये मदीयलीलाशक्त्या मोहितत्वाच विदन्ति यास्तथा सत्यो जारं जारबुद्धिमेव सन्तं मां प्रापुः तथापि रमणत्वप्राप्तौ हेतुः मत्कामाः इति मयि कामः कथमस्माकमन्यादृशं पतित्वं स्वप्नवद्विलीयेत श्रीकृष्ण एव जागरणवत्प्रादुर्भवेदित्यभिलाषो यासां तथा सत्यो मां रमणं प्रापुः तादृगभिलाषश्चासां स्पष्ट एवोपलभ्यते यथा अपि बत मधुपुर्यामार्यपुत्रोऽधुनास्ते इत्यत्र तस्य स्त्रिया एव वयमिति ध्वज तत्र च किङ्करीणामिति श्यामसुन्दर ते दास्य इति मद्दैन्यात् किङ्करीत्वेनापि निक्षिप्य भुजमगुरुसुगन्धं मूर्ध्न्यधास्यत् कदा नु इत्यनेन तदेवास्मात्रमङ्गाङ्गीकारेण कदा स्वाङ्गीकरिष्यतीति श्रीराधा स्वयमेव प्रार्थितवतीति तथा कात्यायनि महामाये इत्यादौ गोप्यः किमाचरदित्यादौ यत्पत्यपत्यसुहृदामित्यादौ च श्रीभगवताच स्वमतं तदेवोद्धवत्योपदिष्टं वल्लभ्यो मे मदात्मिका इति अत्र यात यूयमित्याद्यनुसारेण श्रीनन्दराजे निजपितृत्वाभिमननेन स्वस्मिन् गोपत्वमननात् ब्राह्मणस्य मम ब्राह्मणीतिवत् खलु वल्लभस्य मम वल्लवीरूपास्ता इति श्रीशुकवचने च कृष्णवध्व इत्येवोक्तं तदेवं जारबुद्धेर्हेयत्वं रमणबुद्धेरुपादेयत्वं जारबुद्धिद्वयमपीति व्याख्याय श्रीस्वामिभिरवगमितं सर्वाभिलाषप्राप्तिः अन्यद्वयमनन्तव्या अन्यथा ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति श्रीगीतोपनिषद्वचः यथेति यदभिप्रायेत्येवार्थः तदनानुगमनतया विद्यते इति प्रतिज्ञाहानिर्न स्यात् तत्क्रतुन्यायात् अहं भक्तपराधीन इति स्वेच्छामयस्येति प्रतिज्ञाहानिश्च स्यात्



स्वयमेवेदं दृष्टान्तद्वारा बोधितं मय्यावेश्य मनः कृष्णा इत्याद्यनन्तरं या मया क्रीडता रात्र्यां वनेऽस्मिन् व्रज आस्थिताः अलब्धरासाः कल्याण्यो मापुर्मद्वीर्यचिन्तया इति अथ स्वस्वगृहगतानां तासां तान् पतीन् तांश्च देहांस्त्यक्तवतीनामौपपत्यं न सम्भवतीति हे कल्याण्य इत्यनेन भवतीनां न तद्वदृष्टपरित्याग इति वैशिष्ट्यमवगमितं तदेतदभिप्रत्यैव पूर्वमपि तमुक्तं यति धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथञ्चन प्रत्यागमनसन्देशैरित्युक्त्वा तासां प्राणधारणे आग्रहो दर्शितः जारतया प्रतीतत्वेन रमणत्वेन च मत्प्राप्तौ मम कारुण्यं तु परमसहायमित्याह । अबला इति । तादृशमत्प्रेमकैवल्येन तासु स्वस्वरूपानुसन्धानबलाविरोधानात् न विद्यते बलं मत्साहाय्यं विनान्यत् यासां तादृश्य इति अतएव ममानिष्कृतोद्यारिति भावः । यान्तां नित्यप्रेयसीनां वार्ता तासां सङ्गादन्या अपि शतसहस्रशस्तथा मां प्रापुरिति किञ्च ब्रह्मत्वं परमेश्वरत्वञ्च तत्र स्वाभाविकमेवेति तादृशप्रेमविशेषेण तयो रावरणमेव न तु निर्धूननं परमाधुर्यस्य तु परमोल्लासः अथ जारत्वं तु तत्रात्यन्तं दुःखमयजुगुप्सितात्यसम्बन्धाविष्कृतं चेति तेन प्रेमविशेषेण निर्धूननमेव न तु पूर्ववदावरणमात्रं परमरमणत्वस्य तु परमोल्लास इति अत्र पद्य विशेषः श्रीकृष्णसन्दर्भे द्रष्टव्यः ॥ १३ ॥

तदेवं तदभीष्टतमां श्रीगोपीनामपि स्वप्राप्तिं कथयित्वा तस्यापि तां कोटीकुर्वन्नुपसंहरति । तस्मादिति युग्मकेन । तस्मात्त्वमदीयत्वेन लब्धमदङ्गानां तेषां नारदादिप्रभृतीनामपि सङ्गमात्रस्यैतावन्महिमा तस्मात्कृष्णपरमाश्रयत्वेन परमसम्मतं मदभीष्टं मामेकमेव शरणं याहि शरणागतिपर्यन्ततया भजेत्यर्थः ततश्च हि निश्चितं मया त्वमकुतोभयः स्याः भविष्यसि तत्र कैमुत्यायात्मनः स्वभावतः सर्वहितत्वं दर्शयति सर्वदेहिनामात्मानं परमात्मानमिति एकमेव शरणमित्येव दर्शयति सर्वात्मभावेनेति तदेव विवृणोति । उत्सृज्येत्यादिना । श्रोतव्यं श्रुतमेवेति ज्ञानाश्रयत्वमपि निराकरोति तत्रैकामिति तदात्वे एवेति कालान्तरे चाश्रयान्तरस्य भावनामपि निवर्तयति स्म ॥ १४ ॥ १५ ॥

पूर्वं तावद्भक्तिभगवता मयोदितेत्यादिना कर्ममिश्रा भक्तिरुक्ता ततश्च तत्परत्वे सति निवृत्तं कर्म सेवेतेत्यादिना सर्वमेव कर्मत्याजितं किन्तु ज्ञानमित्यादिना ज्ञानमिश्रा विहिता ज्ञानार्थमात्मतत्त्वनिरूपणं च सुष्ठु कृतम् श्रीमदुद्धवेनापि गुणेषु सक्तमानोऽपीत्यादिना पृष्टा बद्धो मुक्त इत्यादिना श्रीभगवदुक्तः सिद्धान्तोऽप्यवधारितः तत्तु ज्ञानं भक्तिं विना न सिद्ध्यतीति स्वयं भगवतैव पुनः शब्दब्रह्मणि निष्णात इत्यादिनोद्दिष्टम् श्रद्धालुरित्यादिना भक्तिं च दर्शयित्वा तस्या भक्तेर्जन्मनि सिद्धौ च कारणं सत्सङ्ग एवेति दर्शितं पुनस्तस्येव साधुसङ्गेनेत्यादिना तौ विशेषतः पृष्टौ श्रीभगवता च तावुपदिश्य प्रायेण भक्तियोगेनेत्यादिना केवलः सत्सङ्ग एव दृढीकृतोऽतिशायितश्च तस्मात्त्वमुद्धवेत्यादिना कर्म च ज्ञानं च सम्यगेव त्याजितं तदेवं यद्यपि संशयावसरो नास्ति तथाप्याह । संशय इति । तव वाक्यं शृण्वतोऽवधारयतो ममात्मनश्च संशयः मनोदितेस्ववाहित इत्यादिकाध्यायत्रयगतमदृशवाक्यार्थपर्यालोचनासामर्थ्ये न निवर्तते कुतः येन यतो मम मनो भ्राम्यति वैयग्र्यमि-

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शेषाविघ्नमस्ति तस्मात्पुनः सम्यक्त्वेनोपदिश्यतामिति भावः । संशयोऽत्र तत्तत्प्रकरणानामेकतात्पर्यताग्रहणे वैकल्यं शृण्वतः इति शृण्वतोऽपीत्यर्थः ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ततश्च ता मां प्रापुरित्याह । मत्कामा मां कामयन्त इति ताः मां परमं ब्रह्म प्रापुः कीदृशं रमणं ताभिः सह रममाणं ता-रमयन्तं च वीक्ष्य रन्तुं मनश्चक्रे इति आत्मारामोऽप्यरीरमदिति शुकोक्तेः किम्पतिस्वरूपं न जारम् उपपतिस्वरूपम् कीदृश्यः मत्स्वरूपविदः मन्महामाधुर्यमात्रानुभाविन्यो ऐश्वर्यलक्षणं मत्स्वरूपविशेषं न विदन्तीति ताः । यद्वा अन्ये भक्तजना इव मत्स्वरूपं मत्माहात्म्यं न विन्दन्ते न प्राप्नुवन्ति तथाप्यसौ ताभि-र्मेऽविहारातिशयोऽभवदिति यद्वा ताः स्वस्वरूपं सौन्दर्यादिकं न जानन्ति किन्तु मत्सौन्दर्यादिकमेवानुभवन्तीति ताः यद्वा न विद्यन्ते स्वरूपविदः स्वरूपज्ञा यासां ताः ॥ १३ ॥

तदेवं श्रीमदुद्धवेन साधुलक्षणं पृष्टः श्रीभगवांस्तावत्तस्येन त्रिविधं साधुं लक्षयित्वा तत्तत्सङ्गप्रादुर्भूतां प्रधानीभूतां फलां च भक्तिं सामान्यतो निरूप्य भक्तेः स्ववशीकारं विवक्षुः कैमुत्येन सत्सङ्गस्यैव वशीकारित्वमुक्त्वा सत्सङ्गिनो भक्तांश्च निर्दिश्याग्रे गोप्यादीनपि केवलं भक्तियोगे मुख्यत्वेन स्तुत्वा सहैव रामेण सार्द्धमित्यादिना तथापि गोपीविषयकप्रेमवात्स्यं सदा-जाज्वल्यमानज्ञानमयिष्यैणा हृदि मुद्रितमप्यधीरतयैवोद्घाटय तासा-मेव भक्तियोगस्य स्ववशीकारत्वेऽतिशयपरात्मावर्त्वं तासामेव साधु-त्वस्यापि सर्वमहामहोत्कृष्टपदत्वाभिज्ञानमित्यभिव्यज्य केवले तद् नुष्ठिते भक्तियोग एवोद्धवं प्रवर्तयितुमाह । तस्मादिति । चोदनां विधिं प्रतिचोदनां प्रतिषेधं च विहितं कर्म निषिद्धं च कर्म त्यक्तव्यं यः तर्हि किं संन्यासं कुर्वे न प्रवृत्तं गृहस्थानां धर्मं च निवृत्तं सन्यासिनां धर्मं च त्यक्त्वा तथापि श्रोतव्यं श्रुतं च त्यक्तव्यमिति भक्तिधर्मश्रवणमनाकाङ्क्ष्य भूतश्रवणं च विस्मृत्येत्यर्थः । सर्वात्म-भावेन सर्वोऽयमात्मनो मनसो भावो दास्यसख्यादिरूपस्तेनैव-मेवमात्मानमङ्गीकृत्य शरणं याहि मयैव अकुतोभयः स्या इति तव नास्ति कर्माधिकारो नापि ज्ञानाधिकारस्तदपि त्वं तत्तत्कर्म-त्यागोत्थं प्रत्यवायभयं संसारभयं च मन्यसे चेत्तदा तद्भयद्वया-त्त्राताऽहं विद्यमान एवास्मीत्यर्थः ॥ १४—१५ ॥

संशयो न निवर्त्तत इत्येतत्पूर्वकक्षया एव मयि सर्वाणि कर्माणि निरपेक्षः समाचरेदिति वदता त्वया महां कर्माधिकारी दत्तः तत्पूर्वं तु—

> यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ।
> नश्वरं गृह्यमाणं च विद्धि मायामनोमयमिति ॥
> तस्माद्युक्तेन्द्रियग्रामो युक्तचित्त इदं जगत् ।
> आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे ॥

इत्युक्तवता मह्यं ज्ञानाधिकार एव दत्तः अधुना तु सर्वं त्यक्त्वा मां शरणं याहीति भक्त्यधिकारं ददासि न जाने पुनरग्रे कमधिकारं मह्यं दास्यसीति सम्भ्रमोऽद्भूत वक्रोक्तिर्ध्वनिता ॥१६॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अबलाः सत्सङ्गेतरबलरहिताः मत्कामाः श्रीकृष्ण एवास्म-त्सुखहेतुर्नान्यत्किञ्चिदित्येवं मयि कामः सङ्कल्पो यासां ताः मच्छरणाः स्वबुद्ध्या जारमुपपतिं वास्तवस्तु परमं ब्रह्ममामेव प्रापुरित्यर्थः ॥ ॥ १३ ॥

यस्मात् शरणागतिरित्थं महाफला तस्मात् हे उद्धव ! त्वमपि चोदनां प्रतिचोदनां विधिनिषेधरूपं शास्त्रं प्रवृत्तं च निवृत्तं च त्रिवर्गोपायं मोक्षोपायं च शास्त्रार्थं श्रोतव्यं श्रुतं च हेयोपा-देयानुष्ठानसिद्धये गुरुमुखात् श्रोतव्यं सुज्ञातं च उत्सृज्य ॥१४॥

सर्वात्मभावेन सर्वेषु चोदनादिषु हितकारित्वाहितकारित्व-रूपो य आत्मभावः आत्मनो निश्चयः तेन श्रीकृष्ण एव हितम-हितं स्वेच्छया कर्तुमकर्तुं समर्थ इत्येवं भूतेन मामेव शरणं याहि मन्येषु ब्रह्मादिषु सत्सु स्वस्यैव शरण्यत्वे हेतुमाह । एकमेव निःसमानातिशयं तत्रापि हेतुमामाह । सर्वेषां देहिनां ब्रह्मा-दीनामात्मानं ननु सर्वतो निवृत्तस्य मे कुतश्चिद्भयं स्यादि-त्यत्राह । मयैव हि निश्चितम् अकुतोभयः स्याः ॥ १५ ॥

सर्वदेहिनामात्मानमिति तव वाचं शृण्वतो मे आत्मनि सर्वा-त्मनि त्वयि विषये स्थितः कथमसौ सर्वात्मा इत्येवंरूपः संशयः न निवर्तते ॥ १६ ॥

---

### भाषा टीका ।

वे स्त्री जाति गोपिका गण मेरे स्वरूप को न जान कर भी जार पुरुष की बुद्धि में भी रमण बुद्धि से हजार हों सत्संग से परं ब्रह्म मेरे को प्राप्त हो गई ॥ १३ ॥

तिस कारण से हे उद्धव ! तुम सब वैदिक विधि तथा स्मृति विधि सबों को छोड़कर प्रवृत्त निवृत्त दोनों कर्मों को छोड़कर सुना हुआ तथा सुनने योग्य इनको भी छोड़ कर ॥ १४ ॥

सब प्राणि के एक आत्मा अन्तर्यामी मेरे को सर्वा-त्मभाव से एकही आश्रय समझ कर शरण प्राप्त होजाओ तब मेरे रक्षक होने से सब धर्माधर्मों से तुम निर्भय हो-जाओगे ॥ १५ ॥

उद्धव उवाच ।

हे योगेश्वरों के ईश्वर आप के विचित्र वचनों के सुनने से मेरे मन में स्थित सन्देह निवृत्त नहीं होता है और मेरा मन भ्रमता है ॥ १६ ॥

---

श्रीभगवानुवाच ।

स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः ।
मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः ॥ १७ ॥
यथाऽनलः खेऽनिलबन्धुरुष्मा बलेन दारुण्यधिमथ्यमानः ।
अणुः प्रजातो हविषा समिध्यते तथैव मे व्यक्तिरियं हि वाणी ॥ १८ ॥
एवं गदिः कर्म गतिर्विसर्गो घ्राणो रसो दृक् स्पर्शः श्रुतिश्च ।
सङ्कल्पविज्ञानमथाभिमानः सूत्रं रजःसत्त्वतमोविकारः ॥ १९ ॥
अयं हि जीवस्त्रिवृदब्जयोनिरव्यक्त एको वयसा स आद्यः ।
विश्लिष्टशक्तिर्बहुधेव भाति बीजानि योनिं प्रतिपद्य यद्वत् ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

उत्तरं स एष इत्यष्टभिः अयमभावः ईश्वरस्तावत्स्वमाया-वशात्प्रपञ्चात्मना भाति तत्प्रपञ्चाध्यासाच्च जीवानामनाद्यविद्यया कर्तृत्वादि ततो विधिप्रतिषेधाधिकारस्तदानीं सत्त्वशुद्ध्यर्थं कर्माणि कुर्वित्युक्तम् सत्त्वे च शुद्धे पुनः कर्मजाड्यपरिहाराय भक्तिनिष्ठस्य कर्मादरं परित्यज्य दृढविश्वासेन भजेत्युक्तम् जातायां तु विद्यायां न किञ्चित्कर्तव्यमस्तीति तत्र तावदीश्वरात्प्राणादीन्द्रियद्वारा जीवसंसृतिकारणभूतं प्रपञ्चोद्गममाह सार्धैश्चतुर्भिः । स एषोऽपरोक्षः जीवयतीति जीवः परमेश्वरः अपरोक्षत्वे हेतुः विवरेष्वाधारादिचक्रेषु प्रसूतिरिव प्रसूतिरभिव्यक्तिर्यस्य सः तामेवाभिव्यक्तिमाह घोषेणेति घोषेण परारूपेण नादवता प्राणेन सह गुहामाधारचक्रं प्रविष्टः सन्मनोमयं सूक्ष्मं रूपं पश्यन्त्याख्यं मध्यमाख्यं च मणिपूरचक्रे विशुद्धिचक्रे चोपेत्य प्राप्य वक्त्रे मात्रा ह्रस्वादिः स्वर उदात्तादिर्वर्णः ककारादिरित्येवं वैखर्याख्यः स्थविष्ठोऽतिस्थूलो नानाभेदशाखात्मको भवति । तथाच श्रुतिः—

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्तीति ॥
अभियुक्तश्लोकश्च—

या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टिं
वर्णानन्तः प्रकटकरणैः प्राणसङ्गात्प्रसूते ॥
तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां
वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये ॥

इति ॥ १७ ॥

अव्यक्तस्य सतः सूक्ष्ममध्यमक्रमेणाभिव्यक्तौ दृष्टान्तः । यथेति । यथाऽग्निः खे ऊष्मा अव्यक्तोष्मरूपः दारुण्यधिकं मथ्यमानोऽनिलसहायः सन्नणुः सूक्ष्मविस्फुलिङ्गादिरूपो भवति पुनः प्रकृष्टो जातो हविषा समिध्यते तथैवेयं वाणी ममाभिव्यक्तिः ॥ १८ ॥

उक्तां वाग्वृत्तिमुपसंहरन्नितरेन्द्रियवृत्तिष्वतिदिशति । एवं गदिर्वदनं भाषणं मे व्यक्तिरित्युपसंहारः कर्म हस्तयोर्वृत्तिर्गतिः पादयोर्विसर्गः पायूपस्थयोरिति कर्मेन्द्रियाणाम् घ्राणोऽवघ्राणं रसो रसनं दृक् दर्शनं स्पर्शः स्पर्शनं श्रुतिः श्रवणमिति ज्ञानेन्द्रियाणाम् सङ्कल्पो मनसो विज्ञानं बुद्धिचित्तयोरभिमानोऽहङ्कारस्य सूत्रं प्रधानस्य सत्त्वरजस्तमसां विकारोऽधिदैवादिरूपोऽखिलः प्रपञ्चो मे व्यक्तिरिति पूर्वेणान्वयः ॥ १९ ॥

तस्मादीश्वरव्यक्तिरूपः प्रपञ्चो नेश्वराद्भिन्नोऽस्तीत्याह । अयमिति । अयं जीव ईश्वर आद्योऽव्यक्त एक एव वयसा कालेन विश्लिष्टा विभक्ता नानेन्द्रियरूपाः शक्तयो यस्य यद्वा विशेषेण श्लिष्टा आलिङ्गिता मायाशक्तिर्येन सः बहुप्रकार इवाऽऽभाति यतः स एवाद्यः त्रिवृत् त्रिगुणाश्रयः अब्जयोनिर्लोकपद्मस्य कारणभूतः एकस्य बहुधा भाने दृष्टान्तः योनिं क्षेत्रं प्रतिपद्य प्राप्य बीजानि यद्वदिति ॥ २० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी ।

अयं भावः अष्टानां पद्यानामयमभिप्रायः स्वमायावशात् स्वमायां वशीकृत्येत्यर्थः । प्रपञ्चात्मना बहिरङ्गशक्तिद्वारा विश्वरूपेणेत्यर्थः । अतस्मिंस्तद्बुद्धिरध्यासः देहादिरहमस्मीति तस्मात् ततोऽध्यस्तकर्तृत्वादेः तदानीं विधिप्रतिषेधाधिकारकाले तत्र एवं व्यवस्थायां सत्याम् आधारचक्रं हिरण्यगर्भस्थानं ज्ञेयं तत्र मनोमयं पश्यन्त्याख्यं नाभिस्थे मणिपूरकचक्रे सूक्ष्मरूपं मध्यमाख्यं हृदयस्थे विशुद्धचक्रे चोपेत्यत्यर्थः । तथाच वाचः पदादिरूपे प्रमाणं श्रुतिः वाक् वाचः परिमितानि संख्यातानि परारूपादीनि चत्वारि पदानि स्वरूपाणि भवन्ति तेषां मध्ये त्रीणि परा पश्यन्ती मध्यमाख्यानि रूपाणि गुहा गुहायां शरीरमध्ये मूलाधारनाभिहृदयेषु निहितानि स्थितानि नेङ्गयन्ति स्वरूपं न प्रकाशयन्ति वाचस्तुरीयरूपं वैखर्याख्यं मनुष्या वदन्त्यत एव नतु तत्त्वतो जानन्ति अथ श्लोके या सा प्रसिद्धा परावाक् मित्रोऽग्निः वरुणः सोमस्तयोः सदनमाधारचक्रं तस्मात् प्राणसङ्गेनोच्चरन्ती स्वयमेवाङ्कुरन्ती परावाक् अन्तःकरणाभ्यां मनोबुद्धिभ्यां प्रकटकरणेन वागिन्द्रियेण च त्रिषष्टिवर्णान्

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शेषाविरुप्रमस्ति तस्मात्पुनः सम्यक्त्वेनोपदिश्यतामिति भावः । संशयोऽत्र तत्तत्प्रकरणानामेकतात्पर्यंताग्रहणे वैफल्यं शृण्वतः इति शृण्वतोऽपीत्यर्थः ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ततश्च ता मां प्रापुरित्याह । मत्कामा मां कामयन्त इति ताः मां परमं ब्रह्म प्रापुः कीदृशं रमणं ताभिः सह रममाणं ता- रमयन्तं च वीक्ष्य रन्तुं मनश्चक्रे इति आत्मारामोऽप्यरीरमदिति शुकोक्तेः किम्पतिस्वरूपं न जारम् उपपतिस्वरूपम् कीदृश्यः असङ्गरूपविदः मन्महामाधुर्यमात्रानुभावितयाऽऽश्वर्यलक्षणं मत्स्व- रूपविशेषं न विदन्तीति ताः । यद्वा अन्ये भक्तजना इव मत्स्वरूपं मत्माहात्म्यं न विन्दन्ते न प्राप्नुवन्ति तथापि ताभि- र्मद्विहारासिद्धेरिति यद्वा ताः स्वस्वरूपं सौन्दर्यादिकं न जानन्ति किन्तु मत्सौन्दर्यादिकमेवानुभवन्तीति ताः यद्वा न विद्यन्ते स्वरूपविदः स्वरूपज्ञा यासां ताः ॥ १३ ॥

तदेवं श्रीमदुद्धवेन साधुलक्षणं पृष्ट श्रीभगवांस्तारतम्येन त्रिविधं साधु लक्षयित्वा तत्तत्सङ्गप्रादुर्भूतां प्रधानीभूतां फलां च भक्तिं सामान्यतो निरूप्य भक्तेः स्ववशीकारं विवक्षुः कैमुत्येन सत्सङ्गस्यैव वशीकारित्वमुक्त्वा सत्सङ्गिनां भक्तांश्च निर्दिश्यान्ते गोप्यादिनिष्ठं केवलं भक्तियोगं मूलभावेन कतुत्वा सहैव रामेण सार्धमित्यादिना तत्रापि गोपीविषयकस्वप्रेमवात्स्यं महा- जाज्वल्यमानज्ञानभक्तियोगा हृदि मुद्रितमप्यधीरतयैवोद्घट्य तासा- मेव भक्तियोगस्य स्ववशीकारत्वमेतत्स्वपरायणत्वं तासामेव साधु- त्वस्यापि सर्वमहामहोत्कृष्टप्रकर्षानिश्चासित्वमभिव्यज्य केवलं तद् लुब्धेन भक्तियोग एवोद्धवं प्रवर्त्तयितुमाह । तस्मादिति । चोदनां विधिं प्रतिचोदनां प्रतिषेधं च विहितं कर्म निषिद्धं च कर्म त्यक्त्वेत्यर्थः तर्हि किं संन्यासं कुर्वे न प्रवृत्तं गृहस्थानां धर्मं च निवृत्तं सन्यासिनां धर्मं च त्यक्त्वा तत्रापि श्रोतव्यं श्रुतं च त्यक्त्वेति भाविधर्मश्रवणमनाकाङ्क्ष्य भूतश्रवणं च विस्मृत्येत्यर्थः । सर्वात्म- भावेन सर्वो य आत्मनो मनसो भावो दास्यसख्यादिस्तेनैव- मेवमामाश्रयणीकृत्य शरणं याहि मयैव अकुतोभयः स्या इति तत्र नास्ति कर्माधिकारो नापि ज्ञानाधिकारस्तदपि त्वं तयोस्त- त्त्यागेन प्रत्यवायभयं संसारभयं च मन्यसे चेत्तदा तद्भयद्वया- न्नातोऽहं विद्यमान एवास्मीत्यर्थः ॥ १४—१५ ॥

संशयो न निवर्त्तत इत्येतत्पूर्वेक्षया एव मयि सर्वाणि कर्माणि निरपेक्षः समाचरेदिति वदता त्वया मह्यं कर्माधिकारो दत्तः तत्पूर्वं तु—

> यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ।
> नश्वरं गृह्यमाणं च विद्धि मायामनोमयमिति ॥
> तस्माद्युक्तेन्द्रियग्रामो युक्तचित्त इदं जगत् ।
> आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे ॥

इत्युक्तवता मह्यं ज्ञानाधिकार एव दत्तः अधुना तु सर्वं त्यक्त्वा मां शरणं याहीति भक्त्यधिकारं ददासि न जाने पुनरग्रे कमधिकारं मह्यं दास्यसीति सम्परसोऽभूत् वक्रोक्तिर्योतिता ॥१६॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अबलाः सत्सङ्गेतरबलरहिताः मत्कामाः श्रीकृष्ण एवात्म- त्सुखहेतुर्नान्यत्किञ्चिदित्येवं मयि कामः सङ्कल्पो यासां ताः मच्छरणाः अनुरूपा जारमुपपतिं वास्तवतस्तु परमं ब्रह्म मामेव प्रापुरित्यर्थः ॥ ॥ १३ ॥

यस्मात् शरणागतिरित्थं महाफला तस्मात् हे उद्धव ! त्वमपि चोदनां प्रतिचोदनां विधिनिषेधरूपं शास्त्रं प्रवृत्तं च निवृत्तं च त्रिवर्गोपायं मोक्षोपायं च शास्त्रार्थं श्रोतव्यं श्रुतं च हेयोपा- देयानुष्ठानसिद्धये गुरुमुखात् श्रोतव्यं सुज्ञातं च उत्सृज्य ॥१४॥

सर्वात्मभावेन सर्वेषु चोदनादिषु हितकारित्वाहितकारित्व- रूपो य आत्मभावः आत्मनो निश्चयः तेन श्रीकृष्ण एव हितम- हितं स्वेच्छया कर्तुमकर्तुं समर्थ इत्येवं भूतेन मामेव शरणं याहि मन्येषु ब्रह्मादिषु सत्सु स्वस्यैव शरणत्वे हेतुमाह । एकमेव निःसमानातिशयं तत्रापि हेतुमामाह । सर्वेषां देहिनां ब्रह्मा- दीनामात्मानं ननु सर्वतो निवृत्तस्य मे कुतश्चिद्भयं स्यादि- त्यत्राह । मयैव हि निश्चितम अकुतोभयः स्याः ॥ १५ ॥

सर्वदेहिनामात्मानमिति तव वाक्यं शृण्वतो मे आत्मनि सर्वा- त्मनि त्वयि विषये स्थितः कथमसौ सर्वात्मा इत्येवंरूपः संशयः न निवर्तते ॥ १६ ॥

---

### भाषा टीका ।

वे स्त्री जाति गोपिका गण मेरे स्वरूप को न जान कर भी जार पुरुष की बुद्धि से भी रमण बुद्धि से हजार हों सत्संग से परं ब्रह्म मेरे को प्राप्त हो गई ॥ १३ ॥

जिस कारण से हे उद्धव ! तुम सब वैदिक विधि तथा स्मृति विधि सबों को छोडकर प्रवृत्त निवृत्त दोनों कर्मों को छोडकर सुना हुआ तथा सुनने योग्य इनको भी छोड कर ॥ १४ ॥

सब प्राणि के एक आत्मा अन्तर्यामी मेरे को सर्वा- त्मभाव से एकही आश्रय समझ कर शरण प्राप्त होजावो तब मेरे रक्षक होने से सब धर्माधर्मों से तुम निर्भय हो- जाओगे ॥ १५ ॥

उद्धव उवाच ।

हे योगेश्वरों के ईश्वर आप के विचित्र वचनों के सुनने से मेरे मन में स्थित सन्देह निवृत्त नहीं होता है क्योंकि मेरा मन भ्रमता है ॥ १६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

प्रसूते प्रसूयते अतस्तां प्रथममुदितां पराख्याम् अथ पश्यति नतु-च्चारयितिवां तां मनःस्थां पश्यन्त्याख्यां तथा बुद्धिसंस्थामुच्चारणमीति विचारयुक्तां मध्यमां करणनिशादां स्थानप्रयत्नानिमेयां वैखरी-मिहं प्रपद्ये त्रिपादिमिति ह्रस्वदीर्घप्लुतभेदमात्रयो भवप्लुतत्वा-भावात् ऋलृ वर्णाश्चत्वारः ह्रस्वत्वाभावादेचोऽष्टौ उदात्तादि-स्वरास्तु तदन्तर्गता एव विसर्गानुस्वारजिह्वामूलीयोपध्मानी-याश्चत्वारः एवं पञ्चविंशतिः स्पर्शाश्च तावन्तः एवं पञ्चाशत् यवलाः सानुनासिका निरनुनासिकाश्चेति षट् रेफ एकः नका-रस्य दन्त्यमूर्द्धन्यत्वभेदे द्विः पाठात् शषसहळक्षाः षट् एव त्रिपादिति ॥ १७ ॥

अव्यक्तस्य सर्वागोचरस्य सतो ब्रह्मणः खे काष्ठविग्रहे तत्र पराख्यव्यक्तेर्मानि अव्यक्तोष्मरूपतयोपमीयते पश्यन्ती तु सूक्ष्म-विस्फुलिङ्गादिरूपतया मध्यमा प्रकृष्टजाततया वैखरीतु समिद्ध-तयेति ज्ञेयम् ॥ १८ ॥

एवं गादिरित्युपसंहारो निगमनं विज्ञानं निश्चयात्मकं बुद्धेः अनुसन्धानन्तु चित्तस्येति ज्ञेयं मे व्यक्तिः मगाभिव्यक्ति-रूपः ॥ १९ ॥

अयमिति सार्द्धकम् अयं प्रपञ्चाभिव्यक्तिरूपः जीवयति वर्त-यतीति जीव ईश्वरः पूर्वार्थे वागादीन्द्रियाणां बहुप्रकारान्त-र्गतत्वाद्विशेषणमधिकमतो यद्वेति तस्मात् मायेश्वरस्यैव बहु-प्रकारेण भानात् तन्मायाविलासितत्वात् ईश्वरमायारचितत्वात् तदाश्रयमीश्वराधिष्ठानकं तत ईश्वरात् ॥ २० ॥ २१ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विवरप्रसूतिः विवरं हृदयच्छिद्रे प्रसूतिः प्रकाशो यस्य सः गुहां प्रविष्टो जीवः प्राणेन घोषेण शब्देन चोपलक्षितः शरीरस्थितिकाले जीवः प्राणं घोषं च न जहातीत्यर्थः।यदेतत्कर्णा-वपिधाय शृणोति नैनं घोषं शृणोति स यदोत्क्रमिष्यन् भवतीति हि श्रूयते प्राणवायुविघट्टितशरीरच्छिद्र प्रभवः स घोषः मनोमयं स्वमनोग्राह्यं सूक्ष्मं पार्श्वस्थैरनुपलभ्यं रूपमुपेत्य स्थितः पश्चादुच्चा-रणावस्थायाम् उरः कण्ठः शिरस्तथेति प्रकारेण तात्वादिस्थानप्रय-त्नवशात् स्थविष्ठो भवतीत्यर्थः। मात्रा ह्रस्वादिः स्वर उदात्तादि ॥१७॥

पूर्वं सूक्ष्मतयानभिव्यक्तस्य क्रमेण स्थूलतयाभिव्यक्तौ दृष्टान्तमाह । यथानल इति । खे काष्ठोदरे ऊष्मा मथन-दशायां सूक्ष्ममात्रतयोपलब्धेः मे व्यक्तिः मदधीनत्वेना-भिव्यक्ता ॥ १८ ॥

एव शब्दप्रसङ्गादुच्चारणं प्रस्तुतं ततश्च वागिन्द्रियव्यापार उक्तो भवति अथान्येषामिन्द्रियाणां व्यापारानाह । एवं गदि-रिति । ज्ञानेन्द्रियाण्याह। घ्राण इति । संकल्पविज्ञानं संकल्प-रूपज्ञानं मनोव्यापारः अहंकारकार्यो ऽनात्मन्यात्मबुद्धिरभिमानः सूत्रं महान् स ह्यध्यवसायहेतुः महान् वै बुद्धिलक्षण इति वचनात् एतत्सर्वं रजःसत्वतमोविकारः ॥ १९ ॥

त्रिवृत् गुणत्रयवश्यः अब्जयोनिः अप्सु जातं ब्रह्माण्डमब्जं तदन्तर्यामित्वस्य सोऽब्जयोनिः एकः एकरूपः वृद्धिपरिणा-मादिरहितः मे मदधीनः बलवता कालेन विलुप्तशक्तिः देहानु-बन्ध्यहङ्कारममकाररूपेण विप्रकीर्णचैतन्यशक्तिः बहुधा देव-मनुष्यादिरूपेण यथा बीजानि योनिं भूमिं प्रतिपद्याङ्कुरादि-रूपेण बहुधा विभान्ति तद्वत् ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र सर्वेन्द्रियव्यापाराणामात्मायत्ततां विवक्षुस्तावद्वागिन्द्रिय-व्यापारस्य उत्पत्तिक्रममात्मायत्ततां चाह । स एष जीव इति । विवरप्रसूतिः विवरे हृदयच्छिद्रे प्रसूतिः प्रकाशो यस्य सः गुहां हृदयगुहां प्रविष्टः "हृदि ह्ययमात्मा प्रतिष्ठित" इति श्रुतेरिति भावः। स एव जीवः प्राणेन घोषेण च उपलक्षितः शरीरस्थितिकाले जीवः प्राणं तद्घोषं च न जहातीत्यर्थः। यदे-तत्कर्णौ पिधाय शृणोति नैनं घोषं शृणोति स यदोत्क्रमि-ष्यन् भवतीति श्रूयते मनोमयमित्यस्य स घोष इत्यादिः प्राण-वायुसङ्घट्टितशरीरच्छिद्रप्रभवः स घोषः तावन्मनोमयं मनोग्रा-ह्यमत एव सूक्ष्मं पार्श्वस्थैरनुपलभ्यमानं रूपमुपेत्य स्थितः पश्चादुच्चारणावस्थायाम् उरःकण्ठःशिरस्तथेति प्रकारेण तात्वादिस्थानप्रयत्नवशात् मात्रादिरूपेण स्थविष्ठः स्थूलतमो भवति तत्र मात्रा ह्रस्वादिः वर्णः ककारादिः स्वर उदात्ता-दिरिति ॥ १७ ॥

पूर्वं सूक्ष्मतयानभिव्यक्तस्य क्रमेण स्थूलतयोपलभ्यमानत्वे दृष्टान्तमाह । यथेत्यादिना समिध्यत इत्यन्तेन ग्रन्थेन। यथाऽनलः काष्ठोदरस्थोऽग्निः सूक्ष्मः सन्नात्ममन्थनारम्भदशाया-मुष्मात्मकस्ततो दारुण्यधिकबलेन मथ्यमानः खे आकाशेऽनि-लसहायः सन्नणुर्विस्फुलिङ्गादिरूपो भवति ततः क्रमेण प्रकृष्टो जातो हविषा समिध्यते सम्यग्दीप्यते तथैवं वागिन्द्रियव्यापा-ररूपा वाणी मे व्यक्तिराकारः शरीरं मदधीनेत्यर्थः । प्राणेन घोषेणेत्यनेन जीवप्राणयोः परस्परायत्ता स्थितिरिति सूच्यते विवरप्रसूतिरित्यनेन जीवस्य शरीरावस्थितिदशायां सङ्कुचित-प्रकाशत्वमुच्यते तेनाज्ञत्वं फलितं तेन च वागिन्द्रियव्यापारानु-गुणतद्योदनाऽसमर्थत्वं च व्यज्यते वाणी चेति चकारोऽन्वे-तव्यः तेन दृष्टान्तभूतस्याग्नेरप्यात्मव्यक्तित्वमभिप्रेतम् ॥ १८ ॥

वागिन्द्रियव्यापारस्यात्मायत्तत्वमुक्तम् अथान्येषां कर्म-ज्ञानेन्द्रियाणां चात्मायत्तव्यापारवत्त्वमाह । एवमिति । गतिः पादेन्द्रियव्यापारः कर्म पाणीन्द्रियव्यापारः रतिरुपस्थस्य विसर्गः मूत्रपुरीषोत्सर्गः पायोः घ्राणं गन्धोपादानं घ्राणेन्द्रि-यस्य रसः रसग्रहः रसनेन्द्रियस्य दृक् भावे क्विप् दर्शनं चक्षुरिन्द्रियस्य स्पर्शस्त्वगिन्द्रियस्य श्रुतिः श्रवणं शब्दग्रहणं श्रोत्रेन्द्रियस्य सङ्कल्पविज्ञानं सङ्कल्परूपं विशेषज्ञानं मनोव्या-पारः अभिमानः अनात्मन्यात्मबुद्धिरूपः सचाहङ्कारस्य व्यापारः सूत्रं महत्तत्वं तस्य मणीनां तन्तोरिव बहुकार्याधारत्वादिति भावः। तेन च तद्व्यापारोऽध्यवसायो लक्ष्यते तथाऽन्यश्च यो गुण-त्रयपरिणामात्मको देहेन्द्रियादिगणः स च मे व्यक्तिरिति पूर्वश्लोकेन सम्बन्धो ज्ञेयः ॥ १९ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

शरीरे आधारनाभिहृदयेषु स्फुरन्त्यपि नेङ्गयन्ति स्वरूपं न प्रकाशयन्तीति पदार्थः अथ श्लोके या सा पराख्या मिश्रोऽग्निः वरुणः सोमः तयोः सवनमाधारचक्रं तस्मात्प्राणसंगेनोच्चरन्ती स्वयमेव सूक्ष्ममुद्भवन्तीति त्रिपादि वर्णान् प्रसूयते कैः अन्तःकरणाध्यां प्रकटकरणेन च स तां प्रथममुदितां सतीं पश्यन्त्याख्यां अन्तःपश्यति ततुच्चारयति वां तां प्रथमां तथा बुद्धिसंख्याम् उच्चारयामीति विचारयुक्तां मध्यमां करणविशदां ध्यानप्रयत्ननिर्मितां वैखरीं प्रपद्ये त्रिषष्टिमिति ह्रस्वदीर्घप्लुतभेदनाया नव प्लुतत्वाभावात् ऋऌवर्णाश्चत्वारः ह्रस्वत्वाभावादेचोऽष्टौ उदात्तादिस्वरास्तु तदन्तर्गता एव विसर्गानुस्वारजिह्वामूलीयोपध्मानीयाश्चत्वारः एवं पञ्चविंशतिः स्पर्शाश्च तावन्तः एवं पञ्चाशत् यवलाः सानुनासिक निरनुनासिकाश्चेति षट् रेफ एकः नकारस्य दन्त्यमूर्धन्यत्वभेदेन द्विःपाठात् शषसहक्षाः षट् एवं त्रिषष्टिरिति अत्र द्वितीयं वैयर्थ्यं द्वितीयेनार्थेन निराकरोति। स एव इति। स एव मल्लक्षणो जीवो जगतो जीवनहेतुः विशेषतो ब्रजस्य जीवनहेतुना परमेश्वरः प्राणेन मत्प्राणतुल्येन घोषेण ब्रजेन सह विवरप्रसूतिः विवरात् अप्रकटलीलातः प्रसूतिः प्रकटलीलायामेवाभिव्यक्तिर्यस्य तथाभूतः सन् पुनर्गुहामप्रकटलीलामेव प्रविष्टः कीदृशः सन् किं कृत्वा मात्रा मम चक्षुरादीनि स्वरो भाषा गानादिः वर्णो रूपम् इति इत्थं स्थविष्ठः स्वपरिजनानां प्रकट एव सन् बहिरङ्गभक्तानां मनोमयं कथंचित्स्मरणवशेन गम्यम् अन्येषां सूक्ष्मस्वरूपं यद्रूपं प्रकाशयन्नुपेत्य ॥ १७ ॥

तत्र प्रथमेऽर्थे यथानलइति तथैव ममैव व्यक्तिरूपा वाणी चेत्यर्थः द्वितीयेऽर्थे प्रकटलीलाविस्फारं च सदृष्टान्तं स्पष्टयति। यथेति हि यस्मात् इयं स्वरहस्यैकवेद्यविग्रहस्य ममैव वाणी नात्रासंभावना विधेयेत्यर्थः। दृष्टान्तोऽयं गर्भादिक्रमेणाविर्भावमात्रांशे तृतीयस्कन्धेऽपि श्रीमदुद्धवेनैव तदुक्तम् अजोऽपि जातो भगवान् यथाग्निरिति ॥ १८ ॥

तदेवं देवस्य स्वाविर्भावत्वं दर्शयित्वा तद्द्वारा जीवानां जगदावेशं त्याजयितुं जगति लौकिकवागादिवृत्तीनामपि तत उद्भवं दर्शयति। एवं गदिरिति। यथा पराख्यादिक्रमेण वैदिकी वाग्वृत्तिरुत्पन्ना तथा गदिर्लौकिकपद्युत्पन्ना किन्तु पूर्वा स्वरूपशक्त्या परा तु माययेति ज्ञेयमित्यर्थः। ततश्च यथा गदिस्तथा कर्मादयोऽपीत्यर्थः ॥ १९ ॥

तथैव दर्शयति। अयं हीति सार्धकं बीजानीति बीजानां मध्ये यदेकमपीत्यर्थः ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

भो प्रियसखोद्धव! मैवं मंस्थाः सर्वेषामेव जीवानामुपकारार्थं भक्तिज्ञानवैराग्ययागतपोधर्मादीनि मत्प्राप्त्युपायरत्नानि तत्तत्तदत्वनन्यपेक्षपानि त्वयि न्यासत्वेनैवार्पयामि त्वन्तु तत्र तत्र यत्तान्न स्वत्वमारोप्य ममैव तदित्यभिमन्यमानो लज्जामपि किञ्च भजसि प्रहन्तु मां वचन! त्वया ज्ञानमभ्यस्यतां कर्माणि क्रियन्तां भक्तिः कर्तव्या योगो मनुष्ठेयासतपश्चरणीयमित्यादिकं सर्वजीवानुद्दिश्यापि त्वामेकमेव लक्ष्यीकृत्य यद्वोचं वच्मि वक्ष्यामि वा तेनैव किं त्वं तत्तदनुष्ठानाधिकारी अहम्भूतत्वं तु मे योऽसि सोऽस्येव माऽपगतं तु न ते क्वापि साधकत्वमिति सदसमोऽस्वासमभिव्यञ्जयन्कस्यापि जीवस्य दशाभेदेन कर्माधिकारो ज्ञानाधिकारो भक्त्यधिकारश्च गतो ज्ञापने तस्य वेदस्यार्थं सम्यगहमेव जानामि नान्यो यतो वेदस्वरूपेण चतुर्मुखवक्त्रेभ्योऽहमेव प्रादुरभूवमित्याह। स इति। जीवयतीति जीवः परमेश्वरः स प्रसिद्धः एष मल्लक्षणः पुरुष यदीति स्तनजन्या स्वयं स्पृशति चिन्तरेषु चतुर्मुखशरीरस्थाधारादिचक्रेषु प्रसूतिरिव प्रसूतिरभिव्यक्तिर्यस्य सः तामेवाभिव्यक्तिमाह। घोषेण पराख्येन नादेन नादवता प्राणेन सह गुहामाधारचक्रं प्रविष्टः सन् मनोमयं सूक्ष्मं रूपं पश्यन्त्याख्यं मध्यमाख्यं च पूरकचक्रं विशुद्धचक्रं च उपेत्य प्राप्य वक्त्रेषु मात्रा ह्रस्वादिः स्वर उदात्तादिः वर्णश्चाकारादिरित्येवं वैखर्याख्यः स्थविष्ठोऽतिस्थूलः नानाविधशाखात्मको भवति ॥ १७ ॥

क्रमेणाभिव्यक्तौ दृष्टान्तः। यथेति। यथा अग्निः खे दारुगताकाशे ऊष्मा प्रथममथने अव्यक्तोष्मरूपः ततो दारुणाधिकं मथ्यमानः अनिलसहायः सन् अणुः सूक्ष्मविस्फुलिङ्गादिरूपो भवति ततश्च प्रजातः प्रकर्षेण स्थूलतया जातः हविषा समिध्यते प्रवर्द्धते तथैव मे व्यक्तिमेदाविर्भावरूपा इयं वेदलक्षणा वाणी अतोऽस्या अतिगूढमर्थं मां विना को जानाति ज्ञात्वा च जीवस्य संसारनिस्तारणार्थान् भक्तिज्ञानकर्मोद्युपायान् को व्यवस्थापयतीत्यतस्त्वयि परमयोग्ये पात्रे स्वतुल्ये तानुपायान् साम्प्रतं कृपया न्यस्यामि त्वत्तो बदरिकाश्रमस्था मुनयः प्राप्य कृतार्था भविष्यन्तीति भावः ॥ १८ ॥

किञ्च मत्स्वरूपभूता वेदलक्षणा वाणी यथा ब्रह्मशरीरादुद्भूता तथैव प्राकृत्यपि वाणी प्राकृतलोकशरीरादपभ्रंशादिरूपा समुद्भवतीत्याह। एवं गदिर्वागिन्द्रियव्यापारो भाषणं तथा च श्रुतिः—

चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्तीति

अस्या अर्थः वाक् वचनानि चत्वारि परिमितानि पदानि स्थितिस्थानानि तत्र त्रीणि परापश्यन्तीमध्यमाख्यानि प्राणमनोबुद्धिस्थानि आधारनाभिहृदयेषु स्फुरन्त्यपि नेङ्गयन्ति स्वरूपं न प्रकाशयन्ति तुरीयं वैखर्याख्यं वागिन्द्रियगतं वाचो वचनमिति यथा गदिरनमेव समष्टिव्यष्टीनां सर्वेन्द्रियव्यापारो ममैव प्राकृती व्यक्तिरित्याह। कर्म हस्तयोर्व्यापारः गतिः पादयोः विसर्गः पायूपस्थयोरिति कर्मेन्द्रियाणां घ्राणोऽवघ्राणः रसो रसनं दृक् दर्शनं स्पर्शः स्पर्शनं श्रुतिः श्रवणमिति ज्ञानेन्द्रियाणां सङ्कल्पो मनसः विज्ञानं बुद्धिचित्तयोः अभिमानोऽहङ्कारस्य सूत्रं प्रधानस्य रजःसत्त्वतमसां विकारोऽध्यात्मादित्रिविधः प्रपञ्चः मे व्यक्तिर्भौतिकीति पूर्वेणान्वयः ॥ १९ ॥

तस्मादीश्वराभिव्यक्तिरूपः प्रपञ्चो नेश्वराद्भिन्न इति वक्तुं प्रथममीश्वरमाह। अयञ्चेति ईश्वरस्त्रिवृत् त्रिगुणमायाश्रयः त्रिवृद्रूपत्वेनैव अब्जयोनिः अब्जस्य लोकपद्मस्य कारणभूतः प्रथमं सृष्टेः पूर्वमव्यक्त एक एव वयसा कालेन स एव आद्य ईश्वरः प्रपञ्चात्मको भवतीत्याह। विश्लिष्टशक्तिर्विश्लिष्टाः पृथक् पृथक् विभक्ता वागादीन्द्रियरूपाः शक्तयो यस्य तथाभूतः सन् बहुधा देवमनुष्या-

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

द्विबहुप्रकारको भाति एकस्य बहुधा भाने दृष्टान्तः योनिं क्षेत्रं प्रतिपद्य प्राप्य बीजानि बहुत एकैकस्यापि बीजस्य बहुधा उद्गमा भवन्तीत्यर्थः ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

संशयनिवारणाय सर्वकारणत्वादिना सर्वात्मत्वमाह । स इत्यादिना । "सर्वाणि नामानि यमाविशन्ति सर्वे वेदा यत्रैकीभवन्ति एकमेवाद्वितीयम् ऐतदात्म्यमिदं यः सर्वज्ञः सर्ववित् यतो वा इमानि भूतानि जायन्ते" इत्यादिषु प्रसिद्धो यः स एव त्वदप्रचरोऽहं जीवः सर्वचेतनाचेतनचेतयिता त्रिगुणे हृत्पद्मे प्रसूतिरभिव्यक्तिर्यस्य सः भयस्वरूप इत्यर्थः । घोषेण परावस्थारूपशब्दवता प्राणेन स्वशक्तिलक्षणात्मना गुहामाधारचक्राख्यां प्रविष्टः सन् मनोमयं पश्यन्त्याख्यं सूक्ष्मं रूपं मध्यमाख्यं च मणिपूरकचक्रे विशुद्धिचक्रे चोपेत्य प्राप्य मुखे मात्रा ह्रस्वादिः स्वर उदात्तादिः वर्णः ककारादिरित्येवं वैखर्याख्यः स्थविष्ठः अतिस्थूलः पदवाक्यादिरूपो भवति अत्र—

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्तीति श्रुतिरनुसन्धेया ॥ १७ ॥

अव्यक्तस्य सतः सूक्ष्ममध्यमक्रमेणाभिव्यक्तिं दृष्टान्तेन स्पष्टयति । यथेति । यथा दारुण्यवलोऽग्निरव्यक्तो बलेन मथ्यमानः सन् प्रथमसूक्ष्मात्मकः तदनन्तरमणुरूपस्तदनन्तरं प्रवृद्धो जातः अनिलबन्धुः वायुसहायः स हविषा समिध्यते तथैवेयं वाणी मे व्यक्तिः ममाभिव्यक्तिः ॥ १८ ॥

गतिः वागिन्द्रियव्यापाररूपं गदनं भाषणं यथा मे व्यक्तिः पूर्वत्र प्रतिपादिता एव कर्म हस्तेन्द्रियस्य गतिः पादेन्द्रियस्य विसर्गः पायूपस्थयोः घ्राणः अवघ्राणं घ्राणेन्द्रियस्य रसः रसनं रसनेन्द्रियस्य दृक् दर्शनं चक्षुरिन्द्रियस्य स्पर्शस्त्वगिन्द्रियस्य श्रुतिः श्रवणं श्रोत्रेन्द्रियस्य संकल्पः मननं मनसः विज्ञानं बोधनं चिन्तनं च बुद्धिचित्तयोः च अभिमानः देहादावहङ्कारस्य व्यापारः । ममाभिव्यक्तिः किम्बहुना सूत्रं महतः पूर्वरूपं रजःसत्त्वतमोविकारः सर्वोऽपि संसारः मे चिदचिच्छक्तिमतोऽभिव्यक्तिः "आत्मकृतेः परिणामात्" इति सूत्रात् "तदात्मानं स्वयंकुरुतेति" श्रुतेश्च सर्वनिमित्तोपादानकारणत्वात्सर्वात्माहमित्यर्थः ॥ १९ ॥

संसाराभिव्यक्तिं प्रपञ्चयन् तर्हि सर्वात्मनस्तव विकारित्वबहुत्वादिप्रसङ्गः इति शङ्कां निराकरोति । अयमिति । अयं स्वरूपस्थितः एकः अद्वैतरूपः बहुधा द्वैतरूपश्च भाति 'उभयव्यपदेशात्त्वहिकुण्डलवत्' इत्यादिसूत्रेभ्यः हि यतः विशिष्टशक्तिः विशेषतः श्लिष्टाः संश्लिष्टाः चिदचिद्रूपाः शक्तयो यस्मिन्स शक्तिशक्तिमदद्वैतविवक्षया द्वैतरूपसमानाधिकपदार्थान्तराभावात् अद्वैतरूपः एवं स्वाभाविकद्वैतरूपः विकारित्वाद्याः अचिच्छक्तिधर्माः बहुत्वादयश्चिच्छक्तिधर्माः अतो नोक्तदोषप्रसङ्गः प्राणः कारणरूपः अव्यक्तः अनभिव्यक्तनामरूपः वयसा कालेन त्रिवृत् त्रिसर्गरूपः जगदाकारः बीजानि इव यथा एकैकानि योनौ क्षेत्रं प्रतिपद्य वृक्षरूपाणि भवन्ति तद्वत् तत्र चेतनाचेतने जगति प्रविष्टः अन्तर्यामिः ब्रह्मादिजनकः जीवः सर्वप्राणप्रदः परमेश्वरः ॥ २० ॥

---

भाषा टीका ।

श्रीभगवान् उवाच ।

यह आत्मा शब्दरूप से प्रगट होता है आधारादिक चक्रों में से प्रगट होने वाला है जिस में पहिले नाद वाले प्राण के सहित आधार चक्र में प्रवेश करता है तब परा नाम से कहा जाता है फिर सूक्ष्म मनो मय रूप को प्राप्त होकर पश्यन्ती रूप मध्यमा रूप हो जाता है फिर विशुद्ध चक्र में आकर मुख में से वैखरी रूप होता है तब ह्रस्वादि मात्रा उदात्तादि स्वर ककारादिवर्ण रूप से स्थूलाकार से प्रगट होता है ॥ १७ ॥

जैसे कि अग्नि पहिले अत्यन्त सूक्ष्म रूप से काष्ठ के आकाश में रहता है फिर काष्ठ के मन्थन करने से वायु के सहायता से बल पड़ने से सूक्ष्म चिनगारी रूप से पैदा होता है छोटा हो कर भी फिर घृत हविष के डालने से अच्छे प्रकाश हो कर जलने लगता है तिसी प्रकार से हमारी वाणी प्रगट होती है ॥ १८ ॥

इसी प्रकार से भाषण प्रगट होता है फिर क्रिया होती है फिर चलना होता है फिर मलादि त्याग क्रिया होती है ऐसे कर्मेन्द्रिय होते हैं घ्राणेन्द्रिय फिर रस फिर दर्शन फिर श्रवण ऐसे ज्ञानेन्द्रिय फिर सङ्कल्प फिर विज्ञान फिर अभिमान फिर प्रधान का सूत्र फिर रज सत्व तम इन का विकार अधि दैवादिक होता है ऐसे सब प्रपञ्च होता है ॥ १९ ॥

यह आत्मा पहिले मात्र एक रहता है फिर काल से उस की शक्तियों का विभाग होता है तब तीनों गुणों के आश्रय होने से लोक पद्म का कारण होता है तब बहुत प्रकार से भान होता है जैसे कि धान्यादिक बीज खेत में पड़ने से नाना अंकुर रूपी हो जाता है तैसे ॥२०॥

यस्मिन्निदं प्रोतमशेषमोतं पटो यथा तन्तुवितानसंस्थः ।
य एष संसारतरुः पुराणः कर्मात्मकः पुष्पफले प्रसूते ॥ २१ ॥
द्वे अस्य बीजे शतमूलस्त्रिनालः पञ्चस्कन्धः पञ्चरसप्रसूतिः ।
दशैकशाखो द्विसुपर्णनीडस्त्रिवल्कलो द्विफलोऽर्कं प्रविष्टः ॥ २२ ॥
अदन्ति चैकं फलमस्य गृध्रा ग्रामचरा एकमरण्यवासाः ।
हंसा य एकं बहुरूपमिज्यैर्मायामयं वेद स वेद वेदम् ॥ २३ ॥
एवं गुरूपासनयैकभक्त्या विद्याकुठारेण शितेन धीरः ।
विवृश्च्य जीवाशयमप्रमत्तः सम्पद्य चात्मानमथ त्यजास्त्रम् ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां

संहितायां वैयासिक्यामेकादशस्कन्धे

द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्मात्स्वमायाविलसितत्वात्तदात्मकमिदं जगत्न ततः पृथगिति सदृष्टान्तमाह । यस्मिन्निति । तन्तुविताने संस्थास्थितिर्यस्य स पटो यथा यस्मिन्निदं विश्वमोतं दीर्घतन्तुषु पट इव प्रोतन्तिर्यक्तन्तुष्विव एवं भूतं समष्टिव्यष्ट्यात्मकं विश्वमविद्ययाऽऽत्मन्यध्यस्तं वृक्षरूपं जीवस्य कर्तृत्वादिसंसारहेतुरतस्तद्विवेकज्ञानेन कर्मादिसर्वं त्याज्यमित्युक्तमिति तात्पर्येणाऽऽह । य एष इति सार्धैस्त्रिभिः । पुराणोऽनादिः कर्मात्मकः प्रवृत्तिस्वभावः पुष्पफले भोगापवर्गौ कर्मतत्फले वा प्रसूते जनयति ॥ २१ ॥

वृक्षरूपकं प्रपञ्चयति । द्वे इति । द्वे पुण्यपापे अस्य बीजे स च शतमूलः शतमपरिमिता वासना मूलानि यस्य त्रयो गुणा नालानि प्रकाण्डा यस्य पञ्च भूतानि स्कन्धा यस्य पञ्च रसाः शब्दादिविषयास्तेषां प्रसूतिर्यस्मात् दश च एका च शाखा इन्द्रियाणि यस्य द्वयोः सुपर्णयोर्जीवपरमात्मनोर्नीडं यस्मिन् त्रीणि वल्कलानि त्वचो वातपित्तश्लेष्माणो यस्य द्वे सुखदुःखे फले यस्य सः अर्कं प्रविष्टः सूर्यमण्डलपर्यन्तं व्याप्तः तं निर्भिद्य गतस्य संसाराभावात् ॥ २२ ॥

तत्फलभोक्तॄनाह । गृध्यन्ति अभिकाङ्क्षन्त इति गृध्राः कामिनो ग्रामे चरा गृहस्था अस्य वृक्षस्यैकं फलं दुःखमदन्ति । परिणामतः स्वर्गादेरपि दुःखरूपत्वात् हंसा विवेकिनोऽरण्यवासाः संन्यासिन एकं फलं सुखमदन्ति । एकं परमात्मानं मायामयमेव बहुरूपमिज्यैर्गुरुभिः कृत्वा यो वेद स सर्वं वेद तत्त्वार्थं वेद ॥ २३ ॥

स्वरूपं ज्ञात्वा कृतकृत्यः सर्वं साधनं त्यजेदित्याह । एवमिति । एकान्तभक्त्या शितेन तीक्ष्णेन विद्याकुठारेण स्वतन्त्रता वा द्वयोर्ज्ञानभक्त्योर्जीवोपाधिं त्रिगुणात्मकं लिङ्गशरीरं विवृश्च्य छित्वा परमात्मानञ्च सम्पद्य प्राप्याथास्त्रं साधनं त्यजेति ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीधरस्वामिकृतभावार्थदीपिकायाम्

द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी ।

समष्टिर्वनवत् सर्वं जगत् व्यष्टिर्वृक्षवत् प्रत्येकं शरीरं तदात्मकं तद्विवेकज्ञानेन तस्मादश्वत्थाद्विश्वस्मात् पृथक्त्वज्ञानेन य एष इति सार्धकम् ॥ २२ ॥

विश्वात्मकवृक्षफलभोजनकर्तॄन् ॥ २३ ॥

अथानन्तरं शीघ्रमित्यर्थः ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे

द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यस्मिन् जीवे इदं मनुष्यादिशरीरं पटवत् प्रोतं वस्त्रमिव शरीरं बिभर्ति स इति पूर्वेणान्वयः इतिसंसरतीति संसारः संसरत्यनेनेति वा शरीरं कर्मात्मनः कर्मशीलस्य जीवस्य स एव संसारतरुः ।

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पुराणः अनादिः पुष्पस्थानीयं कर्म फलस्थानीयं सुखदुःखं पुष्पफले प्रसूते ॥ २१ ॥

अस्य संसारतरोः द्वे पुण्यपापे बीजे अयं तरुः रागादिदोषशतमूलः गुणत्रयनालः त्रिनालः पञ्चतन्मात्रस्कन्धः शब्दादिविषयजन्यपञ्चविधरसप्रसूतिः एकादशेन्द्रियशाखः जीवपरमात्मरूपपक्षियुगलान्वितहृत्पद्मनीडः तेजोऽबन्नरूपत्रिवल्कलः द्विफलः भोगमोक्षफलः अर्कं प्रविष्टः आध्यात्मिकादितापाविष्टः ॥ २२ ॥

गृध्राः फलं गृध्यन्तः हंसाः संन्यासिनः बहुविधरूपनिष्ठाः यस्य तं मायामयं प्रकृतिपरिणामरूपं वृक्षं यो वेद स वेदविदित्यर्थः ॥ २३ ॥

एकभक्त्येति उपासना विशेष्यते एकारूपा स्थिरा भक्तिर्यस्याः तया जीवाशयं जीवेष्ववस्थितमिति वृक्षविशेषणं विवृश्च्य छित्त्वा अस्त्रं शस्त्रं विद्याख्यम् आत्मानं सम्पद्य परमात्मानं प्राप्य अस्त्रं त्यज नतु प्रागेव आमोक्षाद्विद्यामनुवर्त्तयेत्यर्थः ॥ २४ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कस्तर्हीन्द्रियाद्यधिष्ठानाभिमान्यादिसंशयं निराकरोति । यस्मिन्निति अशेषमिदमिन्द्रियप्राणजातं यस्मिन्नोतं प्रोतं च स एव संसारतरुरिति सम्बन्धः सर्वेन्द्रियगणोतप्रोतस्य दृष्टान्तः पटो यथा तन्तुवितानसंस्थ इति । तन्तुवितानस्य तन्तुविततेः ओतप्रोतरूपा संस्था सम्यक् स्थितिर्यस्मिन् स पटो वस्त्रं यथा तद्वत् संसारयतीति संसारः संसरत्यनेनेति वा संसारो देहः पुराणः प्रवाहतोऽनादिः कर्मात्मकः प्रवृत्तिस्वभावः पुष्पफले पुष्पस्थानीयं कर्म फलस्थानीयं सुखं दुःखं च प्रसूते जनयति कर्मात्मन इति पाठे कर्मशीलस्य जीवस्य भोगार्थं सुखदुःखे जनयतीत्यर्थः ॥ २१ ॥

तामेव संसारस्य तरुरूपतां प्रपञ्चयति । द्वे अस्येति श्लोकेन । अस्य संसारतरोर्द्वे पुण्यपापे बीजे शतं रागद्वेषभयादीनि मूलानि यस्य सः त्रिनालः गुणत्रयं नालाः प्रकाण्डानि यस्य सः पञ्च भूतानि स्कन्धा यस्य सः पञ्चानां रसानां शब्दादिविषयाणां प्रसूतिर्यस्मिन् दश ज्ञानकर्मोभयेन्द्रियाणि एकं मनः एतान्येव शाखा यस्य सः द्विसुपर्णनीडः जीवपरमात्मरूपपक्षियुगलान्वितहृत्पद्मरूपनीडयुक्तः त्रिवल्कलः त्रीणि वल्कलानि त्वचो वातपित्तश्लेष्माणो यस्य सः द्विफलः भोगमोक्षफलः जीवरूपिणः पक्षिणः प्रवृत्तिकर्मासक्तत्वे भोगफलकः निवृत्तिधर्मासक्तत्वे तु मुक्तिफलक इत्यर्थः । अर्कं प्रविष्टः आध्यात्मिकादितापत्रयाख्यज्वाले प्रतिष्ठितः ॥ २२ ॥

द्विफलत्वमेव प्रपञ्चयति । अदन्तीति । ग्रामेचराः गृध्राः शब्दादिविषयाभिलाषिणो जीवा अस्य संसारतरोरेकं सुखदुःखात्मकं फलमदन्ति भुञ्जते एकं मोक्षाख्यं फलं त्वरण्यवासाः हंसा अदन्ति ज्ञानकर्मयोगयोरपि शरीरसाध्यत्वं तत्फलयोर्भोगमोक्षयोरपि तद्द्वारा तत्साध्यत्वाभिप्रायेणास्य फलमित्युक्तं यः पुमानेकं संसारतरुं मायामयं प्रकृतिपरिणामात्मकं बहुरूपं देवत्वमनुष्यत्वाद्यनेकरूपम् इज्यैः पूज्यैर्गुरुभिः कृत्वा वेद स एव वेदं वेद वेदविदित्यर्थः । बहुरूपरूपाणीति पाठे बहुरूपाणि देवमनुष्यत्वादीनि तान्येव रूपं यस्य तमित्यर्थः ॥ २३ ॥

एवं यथार्थमिमं ज्ञात्वा एका एकरूपा स्थिरा भक्तिर्यस्यां तया गुरूपासनया अच्छेन शिक्षितेन शितेन विद्याकुठारेण उपाधिरूप्यासोपासनान्यतरविद्यात्मककुठारेण परशुना स्वशास्त्यनुगुणेन धीरः अकुतोभयः जीवाशयं जीवे व्यवस्थितं वृक्षं छित्त्वा निःशेषशरीरसम्बन्धमपोह्येत्यर्थः । तत्र न्यासयोगपक्षेऽप्रमत्तः महाविश्वासविषयकप्रमादरहितः आत्मानं मां सम्पद्याथास्त्रं त्यज महाविश्वासात्मकं शस्त्रं यावन्मत्प्राप्त्यनुवर्तयेत्यर्थः ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नन्वेवं तर्हि चतुर्मुख एव जगदाकारेण विवर्तत इति किं न स्यादत्राह । यस्मिन्निति । यस्मिन्विरिञ्चे तन्तूनां वितानस्य पद्माद्याकारस्य संस्थार्थास्थितिः पटाकारतया तन्तुविरचितपद्माद्याकारस्य पटाद्यथा भेदः प्रत्यक्षसिद्धस्तथा विरिञ्चाधारं जगत् विरिञ्चाद्भिन्नम् उपलक्षणमेतत् । विरिञ्चश्च श्रीश्च महाधारौ मद्भिन्नावेति । तदुक्तम्—

यथैव वस्त्रे दीर्घे च तिर्यग्वापि सुसंस्थिता ।
तन्तुभिः क्रियमाणेव पद्माद्याकारसंस्थितिः ॥
यथा जीर्णानि वस्त्राणि तन्त्वाधाराणि वा पुनः ।
कण्ठावयवभूतानि तद्वदेव चतुर्मुखे ॥
सोऽपि तदक्षरो नित्यं संश्रिता श्रीरपि स्फुटमिति ।

उक्तं विधिनापि । स एव इति । स एव संसारतरुर्जगद्द्रुमः पुष्पफले स्वर्गमोक्षौ प्रसूते स विरिञ्चे ओतप्रोतश्च इति शेषः ॥ २१ ॥

जगद्वृक्षस्य ब्रह्म बीजमित्युक्तं तद्विवृणोति । द्वे अस्येति—

जगद्वृक्षस्य बीजे द्वे ब्रह्मा चैव सरस्वती ।
मूलभूतानि कर्माणि मनोबुद्धिरहङ्कृतिः ॥
नालत्वेन समुद्दिष्टाः समाद्याः स्कन्धसंज्ञिताः ।
एकादशेन्द्रियाण्येव शाखास्तु त्रिगुणास्त्वचः ॥
प्रवृत्तं च निवृत्तं च फले अस्य प्रकीर्तिते ।
पुष्पमैहिकमुद्दिष्टं रसाः शब्दादयस्तथा ॥
प्रवृत्ताश्च निवृत्ताश्च पक्षिणस्तत्र संस्थिताः ।
वृक्षस्य पृथिवीमब्ज्योतिष्णाराकाशवायुमत् ॥
तस्या अपि सदाधारं एवं ज्ञात्वा विमुच्यते ।

इत्यनेन व्याख्यातोऽयं श्लोकः तथापि स्पष्टत्वाय किञ्चिदुच्यते अस्य जगद्वृक्षस्य जलवच्च भूमिवच्च ब्रह्मसरस्वत्यौ द्वे बीजे उपयुक्ते न तु वटबीजादिवदङ्कुरोत्पत्त्यनन्तरं नाशोऽस्त्यत्र अत एव स्वकार्यतो गुणतो रूपतश्च महतो शतमित्युपलक्षणमनेकवि-

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ॥

अतएव यस्मिन्निति विशेषबोधार्थं जगदेव रूपकेण वर्णयति ।
एष इति सार्द्धकेन ॥ २१ ॥ २२ ॥

तदेवं वेदं जगच्च निरूप्य तस्मात्त्वमुद्धवोत्सृज्येति पद्यमेव-
तानं पूर्वोक्तं वेदार्थमेव समासेन दर्शयति द्वाभ्यां तत्र वेदो-
क्तसाध्येष्वधिकारिभेदमाह । मदन्तीत्येकेन । तत्र सन्न्यासिनः सुख-
मिति तत्फलेन ब्रह्मलोकगतानां तत्रैव ब्रह्मणा सह मोक्ष प्राप्स्यतां
मिति तत्फलेन ब्रह्मलोकगतानां तत्रैव ब्रह्मणा सह मोक्षं प्राप्स्यतां
ताताभावात् एकमेव स्वरूपशक्तिवैचित्र्या बहुरूपं चतुर्व्यू-
हादिलक्षणं कश्चिन्मायामयं मायाशक्त्या जगद्रूपञ्च यो वेद मामिति
शेषः स वेदं वेद तत्त्वार्थं वेत्तीति ॥ २३ ॥

तदेवं वेदार्थं प्रदर्श्य तस्मात्त्वमुद्धवोत्सृज्येत्यादिवाक्यैकार्थ्येन
निगमयति । एवमिति । एवं पूर्वोक्तप्रकारेण मद्रूपस्य रुचिं तद्भक्त्या
गुरूपासनया जातेन तेन विद्याकुठारेण शुद्धजीवात्मज्ञानस्वरू-
पेण परशुना जीवाशयं भवमयसंसारतरुरूपं भवबन्धनात्मकं
प्रवृश्च्य छित्त्वा गुरूपासनयैव जातया प्रेमलक्षणयैकान्तभक्त्या
आत्मानं सर्वाश्रयस्वरूपं मां सम्पद्य साक्षात्कृत्य अथानन्तर-
मेवास्त्रं तद्रूपत्वेन कृतरूपकं विद्याकुठारं त्यज तस्य तद्वृश्चन-
मात्रप्रयोजनत्वात् त्यागो युक्तः शस्त्रेऽस्तु इत्येव सदा तत्साक्षा-
त्कारे हेतुत्वान्न युक्त इति भावः । वक्ष्यते च ज्ञानञ्च मयि संन्यसेदिति ।
ज्ञानसद्भक्तिनिष्ठाशालिना भजन् मामखिलसंशयविमुक्तिमित्ति ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तन्मायारचितत्वात्तदाश्रयमिदं जगत्ततः पृथगिति सह-
ष्टान्तमाह । यस्मिन्निति । तन्तुवितानं संस्था स्थितिर्यस्य स पटो
यथा तथा यस्मिन्निदं विश्वं प्रोतं दीर्घतन्तुषु प्रोतं तिर्यक् तन्तुषु
पट इव एवं भूतं समष्टिव्यष्ट्यात्मकं शरीरमेव संसारहेतुत्वात्
संसारवृक्षं तरुरूपकेण वर्णयति । य इति । पुराणः अनादिः कर्मा-
त्मकः कर्मप्रवाहमयः पुष्पं फलप्रसूतिर्द्वौ भागः शुभाशुभ्रूपौ
फले सुखदुःखे ॥ २१ ॥

द्वे इति । द्वे पुण्यपापे अस्य बीजे रूपकं विवृणोति । शतमपरिमिता वासना मूलानि यस्य त्रयो गुणा नालानि
पञ्च भूतानि स्कन्धा यस्य पञ्च रसाः शब्दा-
दिविषयास्तेषां प्रसूतिर्यस्मात् दश एका च शाखा इन्द्रियाणि
प्रकाशेऽस्य यस्य द्वयोः सुपर्णयोर्जीवपरमात्मनोर्नीडं वासो यस्मिन्
त्रीणि वल्कलानि त्वचो वातपित्तश्लेष्माणो यस्य द्वे सुखदुःखे
फले यस्य सः अर्कं प्रविष्टः सूर्यमण्डलपर्यन्तं व्याप्त तं
निर्भिद्य गतस्य संसाराभावात् ॥ २२ ॥

तत्फलभोक्तॄनाह । गृध्यन्तीति गृध्राः कामिनः ग्रामेचराः
गृहस्थाः अस्य वृक्षस्यैकं फलमविद्यामयं दुःखमदन्ति अविद्या-
मयस्य नरकस्वर्गादेरपि दुःखस्वरूपत्वात् अरण्यवासाः सन्न्या-
सिनः हंसा विवेकिनः एकं फलं विद्यामयं सुखमदन्ति ज्ञान-
वस्तुनः सर्वथा सुखरूपत्वात् एवं बहुरूपं मायाशक्त्या समु-
द्भूतत्वान्मायामयम् इज्यैः पूज्यैर्गुरुभिः कृत्वा यो वेद स वेदं वेद
तत्त्वार्थं वेद ॥ २३ ॥

त्वं चैवं ज्ञात्वा कृतकृत्यः सन् सर्वसाधनं सन्त्यजेत्याह ।
एकया गुणीभूतयापि मुख्यया भक्त्या शितेन तीक्ष्णीकृतेन ज्ञान-
कुठारेण जीवोपाधिं त्रिगुणात्मकं लिङ्गशरीरं विवृश्च्य छित्त्वा
परमात्मानं च सम्पद्य प्राप्य अथास्त्रं ज्ञानरूपं साधनं त्यजेति
सन्न्यासिनां मया त्वमेव वक्ष्यसि यथा गीता शास्त्रे पूर्व-
मर्जुन इत्यतः स्वस्यानिष्टं नाशङ्कनीयमिति भावः ॥ २४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशे द्वादशोऽयं सङ्गतः सङ्गतः सताम् ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तन्तुवितानं संस्था स्थितिर्यस्य स पटो यथा तद्वत्
यस्मिन्परमेश्वरे इदमशेषं जगदोतं दीर्घतन्तुषु पट इव प्रोतं
तिर्यक् तन्तुष्विव इदं पदार्थं विवृणोति तरुरूपकेण । य इत्या-
दिना । पुरापि कारणे प्रलयेऽपि सूक्ष्मरूपेण सद्रूपतया स्थितः
प्रवाहरूपत्वसम्भवात् कर्मात्मकः अनादिकर्मनिर्मितः पुष्प-
फले कर्मतत्फले प्रसूते जनयति ॥ २१ ॥

अस्य बीजे द्वे पुण्यपापे शतमूलः बहुवासनामूलः त्रिनालः
त्रयो गुणाः नालानि यस्य सः पञ्च भूतानि स्कन्धा यस्य
सः पञ्चरसानां श्रोत्रादिविषयाणां शब्दादीनां प्रसूतिरुत्पत्ति-
र्यस्मात्सः दशेन्द्रियाणि च एकमन्तःकरणं च शाखा यस्य
सः द्विसुपर्णनीडः जीवपरमात्मनोर्नीडं यस्मिन् सः त्रीणि वात-
पित्तकफलक्षणानि वल्कलानि यस्य सः द्वे सुखदुःखे फले
यस्य स तथा अर्कं प्रविष्टः सर्वप्रकाशकपरमेश्वरप्रकाशितः ॥२२॥

गृध्यन्तीति गृध्राः बुभुक्षवः ग्रामेचराः ग्राम्यधर्मरताः
मायामयं प्राकृतं फलं दुःखात्मकं संस्पर्शजमित्यर्थः "ये हि
संस्पर्शजा भोगा दुःखयोनय एव ते" इति गीतोक्तेः अरण्य-
वासाः विविक्तवासाः हंसाः तत्त्वविदः मुमुक्षवस्ते एकं परमात्म-
ध्यानसुखमदन्ति तेषां तत्त्वभूतत्वमभिनन्दति इज्यैर्गुरुभिः एकं
बहुरूपमुक्तप्रकारेण विश्वाभिन्नाभिन्नं ब्रह्म यो वेद स वेद वेदार्थं
वेद ॥ २३ ॥

अहं किं कुर्यामित्यत आह । एवमिति । त्वं तु धीरः अप्रम-
त्तश्च सन् एवं विद्याकुठारेण जीवाशयं जीवस्य आशयो
यस्मिंस्तं संसारं विवृश्च्य निराकृत्य गुरूपासनया लब्धया एकस्य
सर्वात्मभूतस्य मम भक्त्या आत्मानं सर्वात्मानं मां सम्पद्य अस्त्र
साधनं त्यज ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वादशाध्यायार्थप्रकाशः ॥ १२ ॥

---

भाषा टीका ।

जिस परमेश्वर मे यह जगत आढेटेढे तंतुओं मे जैसे पट पोहा रहता है तैसे पोहा है यही एक संसार रूपी वृक्ष है सो केवल त्रिगुण से निर्मित है इसी से पुण्य पाप रूप दो फलों को पैदा करता है ॥ २१ ॥

इस संसार वृक्ष के पुण्य पाप दो बीज हैं कर्म वासना रूप सैकडों इस के मूल हैं तीन गुण इसके पोधा हैं पांच भूत इसके छोटे पोधा हैं शब्दादिक पांच इस के रस हैं ग्यारा इन्द्रिय इस के शाखा हैं जीव ईश्वर दो पक्षियों का इस मे खोंतर है वात पित्तादिक तीन इस मे वल्कल हैं सुख दुःख दो इस के फल हैं यहां से सूर्य मण्डल पर्यंत यह वृक्ष व्याप्त हो रहा है ॥ २२ ॥

फलों की आकांक्षा करने वाले ग्रामवासी गृहस्थ लोग इसके एक दुःख रूपी फल को भक्षण करते हैं जंगल मे वास करने वाले विरक्त परमहंस लोग इसके मोक्ष सुख रूप दूसरे फल को भोगते हैं इस प्रकार से एकही परमेश्वर को अपनी माया शक्ति से नाना रूप भये पूज्य गुरु जनों से जो जानता है सोई वेद को जानत है । २३ ॥

तुम तो इस प्रकार गुरुकी उपासना से मेरी एकाग्र भक्ति से विद्या रूपी तीक्ष्ण कुहाडी से सावधान होकर लिङ्ग शरीर संसार रूप इस वृक्षको काट कर फिर परमात्म स्वरूप को प्राप्त होकर उस साधन रूपी अस्त्र को त्याग दो ॥ २४ ॥

इति श्रीमद्भागवत एकादशस्कन्ध में द्वादशाध्याय
भाषा टीका समाप्त ॥ १२ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥

—:*:—

# अथ त्रयोदशोऽध्यायः ।

——:*:——

सत्त्वं रजस्तम इति गुणा बुद्धेर्नचात्मनः ।
सत्त्वेनान्यतमौ हन्यात् सत्त्वं सत्त्वेन चैव हि ॥ १ ॥
सत्त्वाद्धर्मो भवेद् (१)वृद्धात् पुंसो मद्भक्तिलक्षणः ।
सात्त्विकोपासया (२)सत्त्वं ततो धर्मः प्रवर्त्तते ॥ २ ॥
धर्मो रजस्तमो हन्यात् सत्त्ववृद्धिरनुत्तमः (३) ।
आशु नश्यति तन्मूलो ह्यधर्म उभये हते ॥ ३ ॥
आगमो(४)ऽपः प्रजा देशः कालः कर्म च जन्म च ।
ध्यानं मन्त्रोऽथ(५) संस्कारा दशैते गुणहेतवः ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रयोदशेऽथ सत्त्वस्य वृद्ध्या विद्योदयक्रमः ।
हंसेतिहाससंक्षिप्तगुणविश्लेषवर्णनम् ॥

विद्याकुठारेण जीवाशयं विवृश्च्य साधनं त्यजेत्युक्तम्
ननु तत्र तमआदिगुणत्रयवृत्तिप्रतिबन्धे सति कथं विद्योत्प-
त्तिरित्याशङ्क्य तन्निवृत्त्या विद्योत्पत्तिप्रकारमाह । सत्त्वमिति
त्रिभिः । यद्यानन्दादिवदात्मधर्मा गुणाः स्युस्तर्हि तत्स्व-
रूपत्वात्तेषामनिवृत्त्या विद्योत्पत्तिर्न स्यान्न त्वेतदस्तीत्याह । बुद्धेः
प्रकृतेरेते गुणा नत्वात्मन इति अतः सत्त्वेन सत्त्ववृद्ध्याऽन्य-
तमौ हन्यात् रजस्तमोवृत्तीर्जयेदित्यर्थः । सत्त्वं च सत्यदया-
दिवृत्तिरूपमुपशमात्मकेन सत्त्वेनैव हन्यात् ॥ १ ॥

ननु गुणत्रयवृत्तीनां परस्परोपमर्दनरूपत्वात्कथं सत्त्ववृत्त्ये-
केतरवृत्त्योर्नियमेन हन्तव्यास्तत्राऽऽह । सत्त्वादिति । मद्भक्ति
लक्षणेति यो धर्मः स मद्भक्तिरूप एव वा सत्त्वमेव कथं वर्धेत
तत्राऽऽह । सात्त्विकानां पदार्थानामुपासया सेवया सत्त्वं वृद्धं
भवतीत्यर्थः ॥ २ ॥

स च धर्मो रजस्तमश्च हन्यात् कुतः न विद्यते उत्तमो
यस्मात्स सर्वोत्तमः यतः सत्त्ववृद्धिः सत्त्वस्य वृद्धिर्यस्मिन् कारणे
सः अत एव तत्कार्यो धर्मप्रतिबन्धोऽपि नास्तीत्याह । तस्मिन्नुभय-
स्मिन् हते तन्मूलः ते रजस्तमसी रागद्वेषादिना प्रमादालस्यादिना
च मूलं यस्य सः ॥ ३ ॥

सात्त्विकोपासया सत्त्वं वर्धेत इत्युक्तं तानेव सत्त्ववृद्धिहे-
तून् दर्शयितुं सामान्यतो गुणत्रयवृद्धिहेतूनाह । आगमः शास्त्रम
अपः आपः क्वचिदागमोऽर्थं इति पाठः ॥ ४ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

अथ द्वादशाध्यायानन्तरं चित्तस्य गुणानां च परस्परं विश्लेषस्य
विभागस्य वर्णन कथनं पूर्वाध्यायार्थेन सह निर्वाहनिर्वाहकसङ्ग-
तिमवतारयति । विद्याकुठारेणेति । तत्र विद्योत्पत्तौ गुणत्रयप्रति-
बन्धे गुणत्रयवृत्त्या विघ्ने सति तन्निवृत्त्या गुणत्रयनिरासेन तत्र
गुणत्रयप्रतिबन्धे तत्स्वरूपत्वात् धर्मत्वेनात्मस्वरूपत्वात् एतत् गुणा-
नामात्मधर्मत्वम् अतः गुणानामात्मधर्मत्वाभावात् अन्यतमौ रज-
स्तमसी तत्र तयोरागमापायित्वाद्धननासम्भवात्तु लक्षणया तयो-
स्तत्तद्वृत्तिजयो व्याख्यातः अत एव इत्यर्थ इत्युक्तं तत्र कामेहा-
मदाद्या वक्ष्यमाणाश्चतुर्दश रजोवृत्तयः क्रोधलोभानृताद्याः
पोडशतमोवृत्तयस्ता जयेत् उपशमात्मकेन चित्तसमाधानात्म-
केन ॥ १ ॥

लक्षयति ज्ञापयति धर्मो मदर्पितत्वर्णाश्रमादिलक्षणः निरती-
येऽर्थे मद्भक्तिरूप एवेति धर्मः स्वनुष्ठितः पुंसामित्यादिदिशा
श्रवणादर्शादिभक्तिरूपः सात्त्विकानां पदार्थानां वक्ष्यमाणानिवृत्ति-
शास्त्रादीनाम् ॥ २ ॥

स च सत्त्वेन वृद्धः यस्मात् कारणादिति यद्यपि सत्त्वा-
धर्मो भवति तथापि मिथः सम्बद्धत्वात्क्रमादपि
सत्त्वस्य वृद्धिः सम्भवतीति तथा व्याख्यातं यस्मिन् कारण-
मिति पाठे कारणपदस्याध्याहारकल्पनेति हेयम् अत एव रज-
स्तमोनाशादेव तत्कार्यः रजस्तमोजन्यः उभयस्मिन् रजस्तमो-
द्वये ॥ ३ ॥

अर्थं इति पाठोऽभिप्रेयः तत्र निवृत्तिपरत्वेन व्याख्याने
सात्त्विकोऽर्थः प्रवृत्तिपरत्वेन तद्राजसः वेदवाह्यपरत्वेन तामा-
मस इति ज्ञेयम् अर्थं इत्यत्राप्यम इति च पाठः क्वचिदेव ॥ ४ ॥

(१) शुद्धाद्वा (२) ज्ञानं (३) मनुत्तमा (४) यजनं देशः (५) संस्कारो नवेते इति वि० पाठः ।

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

बुद्धेः अन्तःकरणस्य अन्यतमौ रजस्तमोगुणौ सत्त्वं सत्त्वेन हन्यादिति सत्त्वोत्पादितेन ज्ञानेन त्रैगुण्यनिवृत्तौ सत्त्वमपि निवृत्तं भवतीत्यर्थः । भक्तिलक्षणः प्रकाशकः भगवद्भक्तेरन्तरङ्गतया तद्दीपकः चिह्नभूतः ॥ १ ॥

सात्त्विकोपासनया सात्त्विकपुरुषसेवया सात्त्विकाहारसेवयाऽऽत्र च रजस्तमोहन्त्वात् पूर्वमीषदुत्पन्नो भगवद्भक्तिचिह्नभूतो धर्मः उत्तरोत्तररजस्तमोऽनुद्भवहेतुरित्यर्थः । उभये रजसि तमसि च हते तन्मूलः रजस्तमोमूलः अधर्मः नश्यति नोत्पद्यत इत्यर्थः ॥ २ ॥ ३ ॥

आगमः शास्त्रं प्रजाः पुत्रादयः कर्म सदाचारः सन्ध्योपासनादिः जन्म ब्राह्मणादिजन्म ध्यानं देवताविषयं मन्त्रदेवतास्मारकः संस्कारः उपनयनादिः गुणहेतवः ॥ ४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अयं हि जीवस्त्रिवृदित्यनेन जीवस्य गुणत्रयपारवश्यकृतो गुणत्रयपरिणामात्मकदेहसम्बन्धरूपः संसारस्तन्निवृत्तिश्च यथा स्यात्तथानुगुणाभ्यासोपासनान्यतरयोगेनेत्युक्तम् ननु सत्येव गुणपारवश्ये कथमनुष्ठितोपायस्यापुपायाविषयप्रमादादिरहित्यमतोऽवश्यं गुणजयेन भवितव्यं तत्रापि यदि सत्त्वादयो गुणा ज्ञानानन्दामलत्वादिवदात्मनः स्वाभाविकास्तर्हि न जेतुं शक्यास्ततः कथं गुणजयः कथंतरामप्रमत्तत्वादिकमित्यभिप्रायमाशङ्क्याह । सत्त्वमिति । बुद्धेः प्रकृतिपरिणामात्मकमनसो गुणाः सत्त्वादयो न त्वात्मनोजीवस्यान्तःप्राकृतान्तःकरणसम्बन्धनिमित्तत्वात्सत्त्वादिगुणानामप्यौपाधिकत्वेन निरसितुं शक्यन्त एवेति भावः । तन्निरसनोपायमेवाह । सत्त्वेनेति प्रवृद्धेनेति शेषः । अन्यतमौ रजस्तमोगुणौ हन्यान्निरस्येदित्यर्थः एवमपि निरासकसत्त्वस्यावस्थानाद्गुणपारवश्यं स्थितमेवेत्यत्राह । सत्त्वं सत्त्वेन चैव हीति । सत्त्वेनैव सत्त्वमपि हन्यात् सत्त्वोत्पादितेन ज्ञानेन मुक्त्यात्मकत्रैगुण्यनिवृत्त्या सत्त्वमपि निवृत्तं भवतीत्यर्थः ॥ १ ॥

सत्त्वप्रवृद्धौ पूर्वोदितभक्तियोगः सुकर एवेत्याह । सत्त्वादिति । भक्तिलक्षणो धर्मः पुंसः सत्त्वाभिवृद्ध्या वृद्धः समृद्धो भवेद्भवेत इत्यर्थः । कुतस्तर्हि सत्त्ववृद्धिरित्यत आह । सात्त्विकोपासयेति । सात्त्विकानामाहाराणां जात्याश्रयनिमित्तदुष्टानामुपासया सेवया सत्त्वमूलं मर्यादिनिविङ्गविपरिणामेन सम्बन्धः ततः वृद्धात्सत्त्वाद्धर्मः भक्तिलक्षणः प्रवर्तते अहरहरभ्यासाहितातिशययुक्तो भवति ॥ २ ॥

प्रवृद्धस्यापि सत्त्वस्य न साक्षाद्रजस्तमउपघातकत्वमपि तु भक्त्यादिलक्षणधर्मद्वारैवेत्याह । धर्म इति । सत्त्वाद्वृद्धो धर्मः रजस्तमश्च हन्यादतः सत्त्ववृद्धिरनुत्तमः नास्त्युत्तम उपायो यस्मात्तथाविधमोक्षोपाय इत्यर्थः । ननु रजस्तमसोरुपघातेऽपि तन्मूलयोरनादिपुण्यपापयोर्मुक्तिप्रतिबन्धकयोस्सत्त्वात्कथं सत्त्ववृद्धेरनुत्तमत्वमत आह । आश्विति । उभये रजसि तमसि च हते सति तन्मूलः उभयमूलः अधर्मः पुण्यपापात्मकः आशु नश्यति पापवत्पुण्यस्यापि स्वफलजननद्वारा मुक्तिप्रतिबन्धकत्वान्मुमुक्षोरिष्टफलप्रतिबन्धकत्वानिष्टफलसाधनत्वादिरूपाधर्मशब्दप्रवृत्तिनिमित्तयोगात् ॥ ३ ॥

न केवलं सात्त्विकोपासनैव सत्त्वविवृद्धिहेतुरपि त्वन्येऽपीत्याह । आगम इति । आगमादयो दश गुणहेतवः सत्त्वगुणविवृद्धिहेतवः तत्रागमो वेदपञ्चरात्रादिरूपो भगवद्वैभवप्रकाशकेतिहासपुराणादिरूपश्च सात्त्विकागममेव सेवेत न च राजसतामससङ्कीर्णानित्यर्थः । 'महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तक' इति ब्रह्मादीनामपि प्रकृष्टसत्त्वगुणसम्पत्तं भगवत्कटाक्षाधीनत्वश्रवणात्प्राकृतशुद्धसत्त्वसमाश्रयत्वाद्भगवतस्तत्प्रतिपादकानां सात्त्विकत्वमितरेषां राजसतामसत्वादिकमवगन्तव्यं तथा च स्मरति भगवान् मनुः—

या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।

सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृता इति ॥

कुदृष्टयः कुत्सितदर्शनानि कुमतानीत्यर्थः । तेषां वेदविरुद्धत्वं वेदान्तसिद्धभगवद्वैभवाप्रतिपादकत्वदेवतान्तरपारम्यप्रतिपादकत्वेन पुराणेषु सात्त्विकादिविभागा मात्स्ये प्रोक्ताः—

सङ्कीर्णास्तामसाश्चैव राजसाः सात्त्विकाः स्मृताः ।

कल्पाश्चतुर्विधाः प्रोक्ता ब्रह्मणो दिवसाश्च ते ॥

यस्मिन् कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा ।

तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते ॥

अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्तितम् ।

राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः ॥

सङ्कीर्णेषु सरस्वत्याः पितॄणां च निगद्यते ।

सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः ॥

तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिमिति ।

तथा कौर्मे च —

असंख्यातास्तथा कल्पा ब्रह्मविष्णुशिवात्मकाः ।

कथिता हि पुराणेषु मुनिभिः कालचिन्तकैः ।

सात्त्विकेष्वपि कल्पेषु माहात्म्यमधिकं हरेः ।

तामसेषु शिवस्योक्तं राजसेषु प्रजापतेरिति ।

यथेदं सात्त्विकपुराणादिविभागप्रकरणं तत्सात्त्विकमित्यवगन्तव्यं बाधकाभावात् परस्परविरुद्धार्थपुराणबलाबलविवेकापेक्षायां तद्व्यवस्थापकतयैव प्रवृत्तत्वाद्गुणक्रमावौचित्याच्च प्रजाः साधुजनास्तानेव सेवेत न तु विषयलम्पटानिति भावः । अप आपः गङ्गादिपुण्यजलानि न तु गन्धोदकसुरोदकादीनि देशो विविक्तदेशः न तु यत्र पानक्रीडाद्यूतादीनि स देशः कालो ब्राह्ममुहूर्तादिरूपः न तु निशीथादिरूपः कर्म फलाभिसन्धिरहितं नित्यमिसंहितफलं जन्म शौक्रं सावित्रं याज्ञिकं च "स हि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्म" इत्युक्तविधं न तु शैवदीक्षाविलक्षणं ध्यानं विष्णुविषयकं न तु देवतान्तरविषयकं मन्त्रो विष्णुस्मारकः न तु देवतान्तरस्मारकः संस्कारः—

तापः पुण्ड्रं तथा नाम मन्त्रो यागश्च पञ्चम इत्युक्तपञ्चविधः न तु

मुद्रिकाषट्कतत्त्वज्ञः परमुद्राविशारदः ।

भगासनस्थमात्मानं ध्यात्वा निर्वाणमृच्छति ।

कर्णिका रुचकं चैव कुण्डलं च शिखामणिः ।

भस्म यज्ञोपवीतं च मुद्राषट्कं प्रचक्षते ।

आभिर्मुद्रितदेहस्तु न भूय इह जायते ।

रुद्राक्षकङ्कणं हस्ते जटा चैका च मस्तके

कपालं भस्मना स्नानम् ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्यादिशैवागमप्रसिद्धमुद्राषट्कधारणकङ्कणादिधारणात्मकः । विवक्षितागमादिविपरीतानामुक्तागमादीनां रजस्तमोविवृद्धिद्वारा सत्त्वविरोधित्वादिति भावः ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

संसारच्छेदकरत्वाद्यान्तःकरणजं ज्ञानं अधर्मिणामपि विनाश्य स्वयं च नश्यतीत्युक्तं तत्प्रपञ्चयन् भक्तेरुत्पत्तिप्रकारादिकं कथयत्यस्मिन्नध्याये । तत्र सत्त्वादिगुणा आत्मनो बुद्धेः किं वेति संशये भगवानभिधत्ते । सत्त्वमिति । बुद्धेरन्तःकरणस्य विद्यमाना इति शेषः नात्मनो जीवस्य तत्र सात्त्विकादिभेदेन नानेति सत्त्वेन सत्त्वगुणविशिष्टेनान्तःकरणेनान्यतमौ राजसतामसौ भावौ हन्यात् सत्त्वं सात्त्विकमन्तःकरणं सत्त्वेन तज्जनितज्ञानेन हन्यात् ॥ १ ॥

सत्त्वेनान्यतमौ हन्यादित्युक्तं तद्विवृणोति । सत्त्वादिति । वृद्धात् सत्त्वात्पुंसो मद्भक्तिलक्षणो धर्मो भवेत् धर्मः किमुद्रेचयतीति तत्राह । सात्त्विकेति । ततो धर्मात्पुनः सत्त्वोद्रेकः तस्मादुद्रिक्तसात्त्विकोपासनया वृद्धया भक्त्या ज्ञानं ततः पुनः सत्त्वोद्रेकः तस्मात्पुनः धर्मोद्रेकः प्रवर्तते उद्रिक्तभक्तिधर्मपूरितान्तःकरणो ब्रह्मार्पणबुद्ध्या धर्ममेव करोतीत्यर्थः ॥ २ ॥

धर्मफलमाह । धर्म इति । स धर्मो रजस्तमश्च हन्यात् पुनः कथमस्य वृत्तिरिति तत्राह । सत्त्ववृत्तिरिति । सत्त्वेन भक्तिस्वभावेन वृत्तिर्वर्तनं भवति भक्तिमयो वर्तत इत्यर्थः । भक्तिप्रतिबन्धकेऽधर्मे सति कथं तद्वृत्तिरिति तत्राह । आश्विति । उभये रजसि तमसि च हते तन्मूलस्त्वधर्म आशु नश्यतीति अतो युक्तमुक्तमिति ॥ ३ ॥

भक्तिज्ञानसाधनान्यागमादयोऽत्र सत्त्वादिगुणकृता इत्याह । आगम इति । सत्त्वादयो गुणा एव हेतवो येषां ते तथा अतएव च सात्त्विकादिभेदेन त्रिविधा इत्युक्तं भवति ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पूर्वोक्तरीत्या सत्सङ्गलब्धो मद्भक्तिलक्षणो धर्मो वृद्धात् वृद्धिप्राप्तात्सत्त्वाद्भवेत् मायाकार्यात् चम्पकश्रीजविशेषः क्षीरसेकेन जाताङ्घ्रिपादिवेति भावः ॥ १ ॥ २ ॥

सत्त्ववृद्धिरिति मिथो वर्द्धनात् ॥ ३ ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

त्रयोदशे गुणांस्त्यक्तुमुपायं हंसगुह्यतः ।
इतिहासाद्धरिध्यानादूचे चित्ताद्गुणच्युतम् ॥

विद्याकुठारेण छित्त्वेत्युक्तमतो विद्योत्पत्तिप्रकारमाह । सत्त्वमिति सप्तभिः । नत्वात्मनः नैव जीवस्य अतो बन्धका अविद्याया गुणास्ते हन्तव्या इति भावः । अन्यतमौ रजस्तमोभागौ सत्त्वं सत्यदयादिरूपम् उपशमात्मकेन सत्त्वेन हन्यात् ॥ १ ॥

सत्त्वस्यैवेतरगुणपराभावकत्वे बलमाह । सत्त्वादिति । मद्भक्तिर्गुणभूता लक्षणं चिह्नं यत्र सः यद्वा मद्भक्तिरेव लक्षणं यस्य सः तां विना स्वलक्षणो विगीत एव धर्म इत्यर्थः । सत्त्वमेव कथं वर्द्धेत तत्राह । सात्त्विकानां वस्तूनामुपासनया सेवया सत्त्वं वृद्धं भवतीत्यर्थः ॥ २ ॥

उभये हते रजस्तमसोर्हतयोः सतोः तन्मूलः रजस्तमोमूलः ॥ ३ ॥

सात्त्विकोपासनेत्युक्तमतः सात्त्विकानि वस्तूनि ज्ञापयितुमाह द्वाभ्याम् । आगमः शास्त्रम् अपः आपः प्रजा जनः त्रिगुणाः हेतवः गुणत्रयजन्याः आगमादयः सात्त्विका राजसास्तामसाश्च स्युरित्यर्थः ॥ ४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विद्योत्पत्त्यर्थमत्रादौ सत्त्ववृद्ध्यान्यनाशनं गुणचित्तवियोगार्थं हंसेतिहासवर्णनं पूर्वाध्यायान्ते अप्रमत्तो विद्याकुठारेण जीवाशयं संछिद्यात्मानं संपद्य साधनं त्यजेत्युक्तम् इदानीं लोभप्रमादादिकारणयोरजस्तमसोः सतोः कथमप्रमत्तत्वं कथं वा विद्योत्पत्त्याऽऽशयसंछेदनं कथं वात्मसंपत्तिरित्याशङ्कायां सत्त्ववृद्ध्या रजस्तमःप्रहाणेन विद्योत्पत्तिमाह । सत्त्वमित्यादि षड्भिः । तत्र सत्त्वादयो गुणा यद्यात्मनो ज्ञानेच्छादिवत् स्वरूपनिबन्धनाः स्युस्तर्हि न निवर्तेरन् नत्वेतदस्तीत्याह । सत्त्वमिति । सत्त्वं रजस्तम इति गुणाः बुद्धेः सन्ति नत्वात्मनः यद्यप्येते गुणाः प्रकृतेरेव तथापि सर्वस्य कार्यस्य प्राकृतगुणत्रयकार्यत्वाद्बुद्धेरपि तत्कार्यत्वेन तथात्वात् बुद्धेरेव ज्ञानलोभप्रमादादिवृत्तय उत्पद्यन्तेऽतो बुद्धेरित्युक्तम् एवं च सगुणमयकार्यत्वाद्बुद्धेरपि तत्कार्यत्वेन तथात्वात् बुद्धेरेव ज्ञानलोभप्रमादादिवृत्तय उत्पाद्यत्वेन सत्त्ववृद्ध्यान्यतमौ रजस्तमसी हन्यात् तद्वृत्तीर्जयेदित्यर्थः । ननु स्यादेतत् तथापि सत्त्वं तिष्ठति सति तत्कार्यस्य सुखज्ञानसङ्गस्य सत्त्वात् तद्बन्धे सति काञ्चनायसोरिव पादबन्धने को विशेषः स्यात् तस्माद्विद्योत्पत्तावपि जीवाशयच्छेदनं न स्यादित्याशङ्कायामाह । सत्त्वमिति । सत्त्वमपि सत्त्वेन शमदमदयाकारुण्यादिरूपतद्वृत्त्युदयेन हन्यात् उपशमैकवृत्तं कुर्यादिति यावत् ॥ १ ॥

सत्त्ववृद्धिः कथं स्यादित्यपेक्षायामाह । सत्त्वादिति । वृद्धात्सत्त्वात्पुंसो जीवस्य धर्मो भवेत् धर्मोत्पत्तिकार्यद्वारा सत्त्ववृद्धिर्जातेत्यर्थः । ननु धर्मोऽपि शैवशाक्तसौरगाणपत्यकापालिकजैनादिभेदाद्विविध एव दृश्यते एतत्कतमो विवक्षित इति चेत्तत्राह । मद्भक्तिलक्षण इति । मद्भक्तिरेव लक्षणं यस्य सः येन धर्मेण मद्भक्तिः स्यात्स एव सात्त्विकः वैष्णवो धर्म इत्यर्थः । नोदाहृतेषु कश्चिदपि सात्त्विकः रजस्तमोमूलकत्वादित्यत्र धारय सत्त्वमेव कथं वर्धेतेत्यपेक्षायामाह । सात्त्विकोपासयेति । सात्त्विकानां पदार्थानामुपासया सेवनेन सत्त्वं भवेत् ततो वृद्धात्सत्त्वाद्धर्म उक्तलक्षणः प्रवर्तते वृद्धः प्रकर्षेण सत्कृष्णार्कार्चनपूजनजप्यमन्त्रोत्सवयात्रादिरूपो वर्तते ॥ २ ॥

ततः किं तत्राह । धर्म इति । तथाभूतो धर्मः रजस्तमो हन्यादभिभवेत् इतरकुतः यतोऽनुत्तमः न उत्तमो यस्मात्स तथा पुनः कथ-

तत्तत्सात्त्विकमेवैषां यद्यद्वृद्धाः प्रचक्षते ।
निन्दन्ति तामसं तत्तद्राजसं तदुपेक्षितम् ॥ ५ ॥
सात्त्विकान्येव सेवेत पुमान् सत्त्वविवृद्धये ।
ततो धर्मस्ततो ज्ञानं यावत् स्मृतिरपोहनम् ॥ ६ ॥
वेणुसंघर्षजो वह्निर्दग्ध्वा शाम्यति तद्वनम् ।
एवं गुणव्यत्ययजो देहः (१)शाम्यति तत्क्रियः ॥ ७ ॥

उद्धव उवाच ।

विदन्ति मर्त्याः प्रायेण विषयान् पदमापदाम् ।
तथाऽपि भुञ्जते कृष्ण ! तत्कथं श्वखराजवत् ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भूतः सत्त्ववृद्धिः पुनर्वस्मात्सत्त्ववृद्धिर्भवेत् ततश्चोभवे उभौ गुणौ रजस्तमसी मयवशौ यस्य तस्मिन्ननुभवास्मिन् हते सति तन्मूलोऽधर्म आशु शीघ्रमेव नश्यति एतेन सत्त्ववृद्ध्यभिभवे रजस्तमसोर्ध्वंसं तत्राधर्मोऽप्युद्भवेदेव कारणस्य सत्त्वादिति ज्ञेयम् ॥ ३ ॥

ननु न केवलं वृद्धं सत्त्वमेवान्यगुणावभिभवति किन्तु रजस्तमसोरपि वृद्धं तदन्यगुणौ इत्यादेव कथं सात्त्विको-पासया सत्त्वमित्येवोक्तं तस्मादाद्यत्सेवयैव त्रयो गुणा वर्धन्ते ते पदार्था निर्देष्टव्या इति चेत्तथा श्रुतिवत्यङ्गीकृत्याह । आगम इति । आगमः शास्त्रम् अपो द्रव्यम् अप इति वा पाठः प्रजा जनाः जन्म दीक्षा स्पष्टार्थमन्यत् एते दश पदार्था गुणहेतवस्त्र-याणां गुणानां वृद्धिहेतवो भवन्ति त्रिविधा दश पदार्था इति-भावः ॥ ४ ॥

---

भाषा टीका ।

श्रीभगवान् उवाच सत्व रजः तम ये सब गुण बुद्धि के हैं आत्मा के नहीं हैं तिस से सत्वगुण की वृद्धि करके रजो-गुण तमोगुण का नाश करे सत्व के कार्य भी सत्वही से निवृत्त हो जाँयगे ॥ १ ॥

पुरुष के सत्वगुण के बढने से मेरी भक्ति के जनाने वाला धर्म उत्पन्न होता है और सात्विक पदार्थों के सेवा से सत्व की वृद्धि होती है तब धर्मही बढता है ॥ २ ॥

धर्म रजोगुण तमोगुण को नाश करता है उसी से सत्व की वृद्धि होती है फिर अधर्म के मूल दोनों गुणों के नाश होने से अधर्म शीघ्रही नष्ट हो जाता है ॥ ३ ॥

शास्त्र जल मनुष्य देश काल कर्म जन्म ध्यान मंत्र संस्कार ये दश पदार्थ गुणों के बढने मे हेतु हैं ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एषु सात्त्विकादिनिर्णयमाह । एषामेव मध्ये यद्यद्वृद्धाः शास्त्रज्ञाः प्रचक्षते प्रशंसन्ति तत्तत्सात्त्विकम् यच्च निन्दन्ति तत्तामसम् यत्तैर्वृद्धैरुपेक्षितं न स्तुतं नच निन्दितं तद्राजसम् ॥५॥

सात्त्विकान्येवेति । निवृत्तिशास्त्रायेव सेवेत न प्रवृत्तिपाख-ण्डशास्त्राणि तीर्थाप एव न गन्धोदकसुराद्याः प्रजा जनाः निवृत्तान् जनांश्च प्रवृत्तदुराचारान् विविक्तदेशं न रथ्याद्यूतदेशान् कालं ब्राह्ममुहूर्तादिकं ध्यानादौ न प्रदोषनिशीथादीन् कर्म च नित्यं न काम्याभिचारादीनि । जन्म च वैष्णवशैवदीक्षा-लक्षणं न शाक्तक्षुद्रदीक्षारूपम् ध्यानं श्रीविष्णोर्न कामि-नीविग्रहाणाम् मन्त्रं प्रणवादिकं न काम्यक्षुद्रान् संस्कारमा-त्मनः शोधकं ननु केवलं देहगृहादीनाम् ननु ज्ञानं महावा-क्यश्रवणादिभ्योत्पद्यते किं तत्र सत्त्वसंवृद्ध्या धर्मेण वाऽत आह यावत्स्मृतिरात्मापरोक्ष्यम् यावच्च देहद्वयतत्कारणभूतगुणापो-हनावधिपर्यन्तं ज्ञानं भवतीत्यर्थः ॥ ६ ॥

ननु गुणव्यतिकराज्जातो देहः कथं स्वाश्रयभूतान् गुणान् स्वत एवोत्पन्नया विद्ययाऽपोह्य स्वयमप्युपरमेत्तत्राऽह । वेणूनां संघर्षाज्जातोऽग्निर्यथा स्वत एवोत्पन्नाभिर्ज्वालाभिस्तद्वनं सर्वं दग्ध्वा पश्चात्स्वयं शाम्यति एवं देहोऽपि तत्क्रियस्तस्याग्नेरिव क्रिया व्यापारो यस्य सः ॥ ७ ॥

ननु नियतेन्द्रियतया सात्त्विकसेवायामियानस्ति पुरुषार्थ-स्तथाऽपि राजसादीन् विषयान् दुःखमिति जानन्तोऽपि कथं सेवन्त इति पृच्छति । विदन्तीति । एवं श्वानं श्वानो यथा भर्त्स्यमाना अपि खरा यथा पद्भ्यां ताड्यमाना अपि खरीमनु-धावन्तः अजा यथा निर्लज्जा हन्तुमानीता अपि तद्वत् ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

एतन्नागमादिषु वृद्धाः व्यासादयः सात्त्विकादीनां गुण-दोषौ पाञ्चरात्रस्कन्धे दर्शितौ स्तः ॥ ५ ॥

(१) येद इति शुकपक्षीय सिद्धा० पाठः ।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

महावाक्यानि तत्त्वमसीत्यादिद्वादश तेषां श्रवणात् तदुक्तं तैरेव "ऐक्यज्ञानं यदा जातं महावाक्येन चात्मनः । तदाऽविद्या स्वकार्यैश्च नश्यत्येव न संशयः" इति तावत् पर्यन्तमिति तथाच शास्त्राद्यैक्यज्ञानं परोक्षात्मकमेव स्यात् तत्त्वपरोक्षम् आत्मासाक्षा-त्कारस्तु सात्त्विकपदार्थज्ञानमभक्तिवत्तद्गणधर्मोऽपि "प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावत्" इत्याद्युक्तेरित्यर्थः ॥ ६ ॥ ७ ॥

इदानात्मापरोक्षपर्यन्तः प्रायेणेति ये तावन्न विरमन्ति ते श्वादितुल्याः भुञ्जतां तामित्यर्थः । तत्र श्वा मैथुनान्ते शुन्यां बन्धं न जानाति खरश्च रजकदर्शिततृणमुष्टिभोगान्ते महाभारवहनं न जानाति अजस्तु नित्यनानाभोजनाद्यन्ते शिरश्छेदं न जानाति इति त एव दृष्टान्तिताः ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तत्र सात्त्विकमिति फलाभिसन्धिरहितं नित्यं नैमित्तिकं विनाशिनं तामसमभिचारादिजं राजसपुत्रपश्वादिप्रदम् कर्म ॥ ५ ॥

धर्मः अपूर्वशब्दवाच्य ईश्वरानुग्रहः स्मृतिः अविच्छिन्नस्मृति-सन्ततिः अपोहनं शब्दादिविषयस्मृत्यभावश्च यावज्ज्ञान-मुत्पद्यते "परमात्मनि यो रक्तो विरक्तोऽपरमात्मनी"तिन्यायेन विष-यान्तरविमुखभगवदेकस्मृतिसन्ततिरूपज्ञानं भवतीत्यर्थः ॥ ६ ॥

उत्पाद्यस्य स्वोत्पादकविनाशेन स्वनिवृत्तौ दृष्टान्तमाह । वेणीषति । वेदः वेदनम् । अतिक्रियः बन्धहेतुभूततत्क्रियाशून्यं स्मृतिरूपमुपायभूतं हि ज्ञानं मोक्षदशायां निवर्तते ॥ ७ ॥

श्वखराजवत् श्ववत्खरवदजवच्च ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सात्त्विकाहारागमादीनां विभाजकं लक्षणमाह । तत्त्वादिति । मद्भक्ताः भगवद्भक्ता भगवद्भक्तियोगस्यैव प्रकृतत्वात्तन्निष्ठा एवात्र वृद्धशब्दविवक्षिताः प्रचक्षते प्रकृष्टं वदन्ति तत्तदेषामाहा-रागमादीनां मध्ये सात्त्विकं यद्यत् ते निन्दन्ति तत्तामसं यद्यद्-तैरुपेक्षितं न स्तुतं न निन्दितं च तद्राजसमिति ॥ ५ ॥

ततः किमत आह । सात्त्विकान्येवेति । ततो विवृद्धात्मसत्त्वा-द्धर्मः मद्भक्तिलक्षणः ततो धर्मात् ज्ञानं मत्स्वरूपस्वभावयाथा-त्म्यगोचरज्ञानं स्मृतिः मद्विषयकस्मृतिसन्ततिः यावत्कारकत्वेना-पोहनं शब्दादिविषयान्तरस्मृत्यभावनिश्चयश्च भवेत् "परमा-त्मनि यो रक्तो विरक्तोऽपरमात्मनी"ति न्यायेन विषयान्तरवि-मुखभगवदेकस्मृतिसन्ततिरूपज्ञानं भवतीत्यर्थः ॥ ६ ॥

नन्वाशु नश्यति तन्मूलो ह्यधर्म उभये हते इत्यनेन गुणत्रय-परिणामात्मकदेहसाध्यसात्त्विकाहारागमादिसेवाप्रणाड्युत्पादि-तसत्त्वशुद्धिनिमित्तभक्तियोगात्मकविद्यया निरवशेषं रजस्त-मसोरपहतयोर्देहसम्बन्धीनामसत्पुण्यपापात्मकाऽधर्मोऽपहार्तिका

तत्र गुणत्रयोत्पाद्यदेहः कथं स्वोत्पाद्यसत्त्ववृद्ध्युपाचितभक्ति द्वारा स्वमूलभूतगुणत्रयं निवर्तयन् स्वयमपि निवर्तते इत्यभि-प्रायमाक्षिप्य उत्पाद्यस्य स्वोत्पादकविनाशेन स्वनिवृत्तौ दृष्टा-न्तमाह । वेणुसंघर्षज इति । यथा वेणूनां संघर्षाज्जातः वह्निः स्वकारणवेणोत्पन्नाभिज्वालाभिः स्वहेतुभूतं वनं दग्ध्वा स्वयमपि शाम्यति एवं गुणव्यत्ययजः गुणवैषम्यजो देहोऽपि नाक्रियः तत्तद्गुणविहिताक्रियाव्यापारो यस्य सः तद्वदात्मोत्पादकयोरु-भयोरपि निवर्तक इत्यर्थः । अतिक्रिय इति पाठान्तरं तत्रातिक्रियः स्वसजातीयदेहान्तरसम्बन्धरूपबन्धहेतुतत्तत्क्रियाशून्यः स्वयमपि शाम्यति स्वमूलभूतगुणत्रयं शमयन् स्वयमपि शाम्यति उपरमते स्मृतिरूपमुपायभूतं ज्ञानं हि मोक्षदशायां निवर्तते अतो यावन्मो-क्षमुपायनिरन्तरानुगुणं स्यादित्ययमाशयो देहः स्वमूलभूतगुणकर्म-सम्बन्धादिकमात्मनो निवर्तयन् स्वयमपि निवर्तत इत्यर्थः ॥ ७ ॥

सात्त्विकान्येव सेवेत पुमान् सत्त्वविवृद्धय इत्यनेनासात्त्विकसे-वया रजस्तमसोर्निवृत्तिस्ततः पुण्यपापात्मको ऽधर्मस्ततो देहात्माभिमानाद्यज्ञानं शब्दादिविषयस्मृतिसन्ततिस्ततोऽन्ततो दुःखावाप्तिश्चेति सूचितं तत्र पृच्छत्युद्धवः । विदन्तीति । यद्यपीत्थं प्रायेण केचिन्मर्त्याः विषयानापदां दुःखानां पदं स्थानं विदन्ति तथापि हे कृष्ण ! भुञ्जते विषयानेवानुसरन्ति नतु तेभ्यो विर-ज्य मुक्तये यतन्त इत्यर्थः । श्वखराजवत् श्ववत् खरवत् अजवत् श्वानो यथा भर्त्स्यमाना अपि खरा यथा पद्भ्यां ताड्यमाना अपि शुनीं खरीं चानुधावन्ति अजा यथा निर्बद्धा हन्तुमा-नीता अपि तद्वदित्यर्थः । ततः किमत आह । तत्कथमिति । विषयाणामापत्पदत्वविदः पुनर्विषयानेव भुञ्जत इत्येतत्कथं नहि कश्चित् श्वभ्रपतनस्यानर्थहेतुतां जानन्नपि तत्र पततीति अतस्तत्र किंकारणमिति प्रश्नः ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्तद्भेदज्ञानं कथमत्राह । तत्त्वादिति । ज्ञानवृद्धा एषामागमा-दीनां मध्ये यद्यत् सात्त्विकं प्रचक्षते तत्तत्सात्त्विकं यन्निन्दन्ति तत्तामसं यदुपेक्षितं प्रचक्षते तद्राजसमिति जानीहीति शेषः ॥ ५ ॥

किमर्थमेवं विभागवचनं येनोपयोगः स्यादत्राह । सात्त्वि-कानीति । सत्त्वं सत्त्वस्वभावकर्तावृद्धय किं तत इति तत्राह । तत इति । ततः सत्त्वाद्भक्तिसाधनं धर्मः ततो धर्मात् ज्ञानं स्यात् किञ्च हरिविषयवाचो हरिविषया स्मृतिरपोहनं भगव-द्विरुद्धत्यागः इत्येते भवन्ति ॥ ६ ॥

एवमुत्पन्नज्ञानस्य नाशं सदृष्टान्तमाह । वेणिवेति । तन्मूलनिर्वाणं यथा तथा कथयामि तथाहि । यस्मिन् वने वेणवः सन्ति तेषां वेणूनां संघर्षाज्जातो वह्निः तद्वनं दग्ध्वा स्वयमपि शाम्यत्येवं गुणव्यत्ययजः सत्त्वादिगुणानां व्यत्ययाद्वैषम्यात्-शात्पृथक्स्थितावुद्रिक्तात्सत्त्वाज्जातो देहो वृत्तिज्ञानं स्वकार-णमन्तः करणं निवर्त्य निर्मुक्तः स्वयं च निवर्तत इत्यन्वयः "विनिवर्तेत पृथग्भाव इति अनिरुद्धोऽनिकार्यको प्रशान्तात्मा क्रमे" इति यादवः वेदशब्दस्य प्रसिद्धार्थं परित्यज्याप्रसिद्धक-ल्पने किं नियामकम् उच्यते उपक्रमं ब्रूमः—

श्रीभगवानुवाच ।

अहमित्यन्यथा बुद्धिः प्रमत्तस्य यथा हृदि ।
उत्सर्पति रजो घोरं ततो वैकारिकं मनः ॥ ६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

रजसा सत्त्वयुक्तेन भवेच्छ्रीमान् यशोऽधिकः ॥
तद्वै तामसं वृत्त सर्वशास्त्रेषु पश्यत ।
यत्रत्रयात्मकं स्यात् मामृदिश्योपसेवनं ॥
तद्दुर्गतिमिति विख्यातं निकृष्टगतिदं नृणाम् ।
यज्ञानतपसा युक्तं केवलं तामसं तु यत् ॥
तद्दुर्गतिप्रदं नृणामिह लोके परत्र चेति ।

लिङ्गे चतुर्दशाध्याये

हिरण्यगर्भो रजसा तमसा शङ्करः स्वयम् ।
सत्त्वेन सर्वगो विष्णुः स चात्मा सहस्रमयः

तत्रैव चतुर्विंशेऽध्याये—

त्वत्कोपसम्भवो रुद्रस्तमसा च समावृतः ।
त्वत्प्रसादाज्जगद्धाता रजसा च पितामहः ॥
सत्त्वरूपः स्वयं विष्णुः पुरुषः पुरुषोत्तमः ।

श्रीमद्भागवतेऽपि प्रथमस्कन्धे—

मुमुक्षवो घोररूपान् हित्वा भूतपतीनथ ।
नारायणकलाः शान्ताः भजन्ति ह्यनसूयवः ॥

भूतपतीन् शिवादीन् भूतपतित्वं शिवस्यैव भूतेशः खण्डपरशुः पिनाकी प्रमथाधिप इत्यमरकोशात् दशमेऽपि पारिक्षितप्रश्नः——

देवासुरमनुष्येषु ये भजन्त्यशिवं शिवम् ।
प्रायस्ते धनिनो भोजा नतु लक्ष्म्याः पतिं हरिमिति ॥

अशिवमिति तामसमित्यर्थः । तामसत्व प्रश्नोत्तराभ्यां प्रतिपाद्य—

हरिर्हि निर्गुणः साक्षात् पुरुषः प्रकृतेः परः ।
स सर्वदृगुपद्रष्टा तं भजन्निर्गुणो भवेदित्युक्तम् ॥

ध्यानं श्रीविष्णोरेव न सूर्याग्निरुद्रभैरवादीनां मन्त्रं रामकृष्णनारायणविष्णुनृसिंहसम्बन्धिनमेव न तु हैरण्यगर्भसौरादिशैवशाक्तादिकं वा संस्कारं स्वरूपशोधक भगवत्स्वरूपादिविषयकज्ञानभक्तिरूपमेव—

अन्नाद्यंश्वरज्ञानाद्विशुद्धिः परमा मतेति ।

याज्ञवल्क्यस्मृतेः भक्तिः पुनाति मन्निष्ठा श्वपाकानपि संभवादिति भगवदुक्तेः न तु देहगेहादीनामेव ततो वृद्धात्सत्त्वादुक्तलक्षणो धर्मो भवेत्ततो ज्ञानं भवतनु "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेने" ति श्रुतिविहितयज्ञस्वधर्माभ्यासोचितवेदाध्ययनयज्ञादिधर्मेणैव ज्ञानं भवदेव किंवदुक्तलक्षणधर्मेण किम्वा सत्त्ववृद्ध्यर्थमुक्तशास्त्रादिदशकेनेति तत्राह । यावत्स्मृतिरित्यादि । फलरूपा भक्त्यपरपर्याया ध्रुवा स्मृतिर्यावत्पर्यन्तं स्यात्तावत् "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृति" रिति श्रुतेः पुनः कथम्भूत ज्ञानम् अपोहनं संसृतिहेतुभूतगुणकार्यदेहः सकारणोऽपोह्यतेऽपहस्यतेऽनेनेत्यपोहनं तत्सम्यक्सापाय कारणमित्यर्थः । एवम्भूतं ज्ञानं भक्तिलक्षणधर्मेणैव जायते नतु यज्ञादिरूपसाधारणधर्मेणेति भावः ॥ ६ ॥

ननु गुणानत्कार्यापोहेऽपि सूक्ष्मदेहस्य विद्यमानत्वात् पुनस्तत्सम्बन्धः स्यादिति चेत्सोऽपि नश्यतीत्याह । वेणुगर्भेति । वेणूनां सङ्घर्षाज्जातो वह्निर्यथा स्वस्माज्जनितज्वालाभिस्तद्वनं दग्ध्वा शाम्यति एवं गुणव्यतिकराज्जातो देहः सूक्ष्मशरीरं स्वोत्पन्नज्ञानेन स्वकारणं विनाश्य स्वयमपि शाम्यति कथम्भूतः तत्क्रियः तस्याग्नेरिव क्रिया यस्य सः ॥ ७ ॥

एवं सात्त्विकपदार्थानां सेवनस्य परम्परया सर्वानर्थनिवृत्तिपूर्वकनिरतिशयफलकत्वे सिद्धे सति सर्वानर्थहेतून् राजसतामसान् विषयान् जानन्तोऽपि बहवो जनाः कथं सेवन्ते इति सन्दिह्य पृच्छति उद्धवः । विदन्तीति । मर्त्याः विषयानापदाम्पदं दुःखरूपं स्थानं प्रायेण बहुधा प्रत्यक्षानुमानशास्त्रद्वारा विदन्ति जानन्ति तथापि तान् भुञ्जते तत्र दृष्टान्तः श्वखरराजवत् श्ववत् खरवत् अजवत् हे कृष्ण ! तत्कथं केन हेतुनेत्यर्थः ॥ ८ ॥

———

भाषा टीका ।

इन पदार्थों मे जिन जिन पदार्थों को शिष्ट जन प्रशंसा करैं वेही सात्त्विक पदार्थ हैं जिनकी वे निंदा करते हैं वे तामस हैं जिसको उनने नहीं कहा है वह राजस है ॥ ५ ॥

पुरुष को चाहिये कि सत्वकी वृद्धि के लिये सात्त्विकही पदार्थों का सेवन करे तिस से धर्म बढेगा फिर ज्ञान बढेगा यावत्पर्यंत अज्ञान रहेगा ऐसा करने ही से ठीक होगा ॥ ६ ॥

जैसे कि बांसों के घिसने से पैदा हुआ अग्नि सब वन को जला कर आप भी शांत हो जाता है तैसे ही गुणों के व्यतिक्रम से भया देह भी उसी के क्रिया की नांई शांत हो जाता है ॥ ७ ॥

उद्धव उवाच ।

हे श्रीकृष्ण ! प्रायः करके सब मनुष्य इन विषयों को दुःख का ही हेतु जानते हैं तो भी कुत्ता बकरा गधा सरीके फिर भी उनहीं विषयों को भोगते हैं इसका क्या कारण है सो कहिये ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

मिथ्याऽभिनिवेशेन भुञ्जत इति सहेतुकमाह । अहमिति त्रिभिः । प्रमत्तस्य विवेकशून्यस्य देहादावहमिति मिथ्याबुद्धि-

रजोयुक्तस्य मनसः संकल्पः सविकल्पकः ।
ततः कामो गुणध्यानाद्दुःसहः स्याद्धि दुर्मतेः ॥ १० ॥
करोति कामवशगः कर्माण्यविजितेन्द्रियः ।
दुःखोदर्काणि सम्पश्यन् रजोवेगविमोहितः ॥ ११ ॥
रजस्तमोभ्यां यदपि विद्वान् विक्षिप्तधीः पुनः ।
अतन्द्रितो मनो युञ्जन् दोषदृष्टिर्न सज्जते ॥ १२ ॥
अप्रमत्तोऽनुयुञ्जीत मनो मय्यर्पयन् शनैः ।
अनिर्विण्णो यथा कालं जितश्वासो जितासनः ॥ १३ ॥
एतावान् योग आदिष्टो मच्छिष्यैः सनकादिभिः ।
सर्वतो मन आकृष्य मय्यद्धा वेश्यते यथा ॥ १४ ॥

उद्धव उवाच ।

यदा त्वं सनकादिभ्यो येन रूपेण केशव ! ।
योगमादिष्टवानेतद्रूपमिच्छामि वेदितुम् ॥ १५ ॥

श्रीभगवानुवाच ।

पुत्रा हिरण्यगर्भस्य मानसाः सनकादयः ।
पप्रच्छुः पितरं सूक्ष्मां योगस्यैकान्तिकीं गतिम् ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

हृदि यथावदुत्सर्पति ततोऽहंबुद्धेश्च वैकारिकं सत्त्वप्रधानमपि मनः अतिघोरं दुःखात्मकं रज उत्सर्पति मनो व्याप्नोतीत्यर्थः ॥ ९ ॥

इदमेवमिदमेवं भोग्यमिति सविकल्पः सङ्कल्पः स्यात्ततश्च अहोरूपमहोभाव इति गुणाभिध्यानाद्दुर्धरः कामः स्यात् ॥ १० ॥

ततो विषयान् भोक्तुं कर्माणि करोति ॥ ११ ॥

एवं तर्हि कस्यापि दुःखनिवृत्तिः स्यादित्याशङ्क्याऽऽह । यदपि यद्यपि रजस्तमोभ्यां विक्षिप्तधीर्मूढधीश्च तथापि विद्वान्विवेकी पुनर्मनो निरुन्धन्न सज्जते ॥ १२ ॥

विषयदोषदृष्ट्याऽपि मनोनिरोधाशक्तौ सुखं तन्निरोधोपायमाह । अप्रमत्त इति । अनिर्विण्णोऽनलसः यथाकालं त्रिषवणम् मयि परमानन्दरूपेऽर्पयन्समादध्यात् ॥ १३ ॥

विषयैः संग्रथितस्य मनसस्तद्वियोगेनेश्वरनिष्ठत्वमसम्भावितं मन्यमानं प्रति तन्निरूपणार्थेतिहासमुपक्षिपति । एतावानिति । यथा यथावन्मय्यावेश्यते एतावानित्यर्थः ॥ १४ ॥

मच्छिष्यैरित्युक्ते तेषामतिज्यायसामनेन रूपेण निरूपणासम्भवात्पृच्छति । यदेति । तं कालं तदेतद्रूपं च वेदितुमिच्छामि तत्कथयेति ॥ १५ ॥

मानसाः पुत्राः सूक्ष्मां दुर्ज्ञेयाम् ऐकान्तिकीं गतिं काष्ठाम् ॥ १६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

मिथ्याभिनिवेशो नाम ज्ञात्वापि स्वीकृतस्य पुनस्त्यागाऽसहिष्णुत्वं तेनैव भुङ्क्ते इति सयुक्तिकमाहेत्यर्थः । युक्तिश्चेयं विषयाणां दुःखरूपत्वज्ञानेऽपि मनुष्या देहादौ यथावन्मिथ्याज्ञानवन्तः यथावद्विवेकशून्यत्वात् पश्वादिवदित्याद्याकारा ज्ञेया विवेकशून्यत्वमपि पूर्वकर्मविशेषेणेति शेषः ॥ ९ ॥

एवमिदमित्यादिविशेषचिन्तनस्याभिनयः ततश्च सङ्कल्पविकल्पविशेषानन्तरं गुणाध्यानाच्छ्रेष्ठत्वारोपात् दुर्धरोऽसह्यः ॥ १० ॥

दुःखोदर्काणि दुःखोत्तरफलानीति सम्पश्यन् जानन्नपि ॥ ११ ॥

एवं चेदिति चेद्यदि दुःखोदर्कत्वज्ञानेऽपि कर्मकरणं तर्हि विरक्त्यभावान्न कस्यापि दुःखनिवृत्तिः स्यादित्यर्थः ॥ १२ ॥

सुखं मयि मनोऽर्पणमनायासं यथा स्यात्तथा तन्निरोधोपायं मनोनिरोधसाधनं स्वस्मिन् परमसुन्दरे तद्धारणाम ॥ १३ ॥

तद्वियोगेन विषयविच्छेदेन असम्भावितमघटितं तन्निरूपणार्थ ईश्वरनिष्ठत्वोपपादनाय उपक्षिपति आरभते ब्रह्मा साक्षात् इति वैराजधारणा व्याख्याता ॥ १४ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

अनिरुद्धवासुदेवामितबुद्धानामनेन कृष्णाख्येन स्वं नित्यनराकृतिपरब्रह्मरूपः सर्वावतारी येन रूपेणावतीर्णस्तत् कथादि ॥ १५—१६ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रमत्तस्य आत्मन्यनभिसंहितस्य कृष्णाजहमिति देहात्मनोः संसर्गात् स्थूलोऽहं कृशोऽहमित्यहङ्कारो भवति तेन रजोमयं रजोयुक्तम् आहङ्कारिकं मनउत्सर्पति व्याप्रियते ममकारं जनयति रजःशब्दः रजोयुक्तपरः रजोयुक्तस्येत्यनन्तरोक्तेः ॥ ९ ॥

मनसः प्रवृत्तिं विवृणोति रजोयुक्तस्येति । सङ्कल्पः मनुष्योऽहं पशुरहमित्यात्माभिमानानुगुणेषु भोजनवसनादिषु भेदेषु भोग्यताबुद्धिः सङ्कल्पः स्रक्चन्दनवनिताद्याकारवैविध्यप्रतिपत्तियुक्तः ततः कामः भोग्यताबुद्धिलक्षणात्सङ्कल्पात् कामः भोगेष्विच्छा सच कामः भोग्यगतसौन्दर्यमाधुर्यादिगुणध्यानात् दुःसहः स्यात् अवस्थातुमशक्तः पुरुषः स्यादित्यर्थः ॥ १० ॥ ११ ॥

समपश्यन्नपि रजस्तमोभ्यामिति रजः कर्महेतुः तमस्तदनुबन्धिदोषदर्शननिवारकं कामविजयोपायमाह । अतन्द्रित इति आत्मानानुगुणेषु वस्तुषु भोग्यताबुद्धिरूपात्सङ्कल्पाद्धि कामो भोग्यताबुद्धिश्च गुणज्ञानादिना सा तु दोषदर्शनान्निवर्तते मधुरतरे फले विषमिति श्रुत्वा ज्ञानाद्भोग्यताबुद्धिर्निवर्तते इत्यर्थः ॥ १२ ॥

दोषदृष्ट्या विषयान्तरेभ्यो निवृत्तस्य मनसः अविक्षेपोपाययोगमाह अनिर्विण्णः अन्तरायैरविषण्णः जितश्वास इति मनसो मय्यर्पणमेव योगशरीरं प्राणायामादयो मनसो मदर्पणस्योपकारका इत्यभिप्रायः ॥ १३—१६ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सक्तिरित्थं विषयाणामापातरमणीयत्वज्ञानवतोऽपि देहात्माभिमानजरजस्तमोभिभूतं मन एव प्रसह्य भोजयतीत्युत्तरमाह श्रीभगवान् । अहमिति । यथा प्रमत्तस्यात्मन्यनवहितस्य हृदहमित्यन्यथा बुद्धिर्जायते कृष्णं जहामिति यद्देहात्मनोः संसर्गात्स्थूलोऽहं कृशोऽहमित्यहङ्कारो भवतीत्यर्थः । ततोऽन्यथाबुद्धेर्हेतोः रजो वैकारिकशब्दो तत्कार्यवाचीति वैकारिकं सात्त्विकाहङ्कारकार्यं मनः मनो वैकारिकाज्जज्ञ इति द्वितीयेऽभिधानात् घोरं महाशनं महापाप्मानं रजः रजोगुणकार्यं कामं तद्विरोधे सति क्रोधं चोत्सर्पति अनुवर्तते कामक्रोधाविदं भवतीत्यर्थः कामक्रोधयोः रजोगुणप्रभवत्वं भगवतैव गीतम्—

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणमिति ॥ ९ ॥

उत्सर्पणं न साक्षात्किन्तु सङ्कल्पद्वारेत्याह । रजोयुक्तस्येति । मनसो रजोगुणयोगस्तु राजसाहङ्कारसहकृतवैकारिकाख्यसात्त्विकाहङ्कारकार्यत्वादवगन्तव्यः अतो विकल्पसहितः सङ्कल्पो भवति । रजोगुणस्य विक्षेपापादकत्वात्तद्योगाच्च मनसः सङ्कल्पविकल्परूपव्यापारो भवत इत्यर्थः । रजः कर्महेतुस्तमस्तु तदनुबन्धिदोषदर्शनवारकं तत्र सङ्कल्पो नाम मनुष्योऽहमित्यात्माभिमानानुगुणेष्वोदनक्षीरादिषु हेयेषु भोग्यताबुद्धिः विकल्पस्तु स्रक्चन्दनवनिताद्याकारवैविध्यप्रतिपत्तिरूपः ततश्च कामः भोग्यताबुद्धिलक्षणात्संकल्पात्कामः भोगेष्विच्छा स च कामः दुर्मतेर्देहात्माभिमानिनो जीवस्य गुणाध्यानाद्भोग्यगतसौन्दर्यमाधुर्यादिगुणध्यानात् दुःसहः स्यात् अनवस्थावस्थातुमशक्तः स्यादित्यर्थः ॥ १० ॥

ततः किमत आह । करोतीति । कामस्य दुःसहस्य वशङ्गतः प्राप्तः संपश्यन् जानन्नपि कर्माणि भोगफलकत्वाभिमानविषयाणि वस्तुतः दुःखोत्तरफलानि करोति कुतः यतोऽयमविजितेन्द्रियः रजोवेगेन कामवेगेन मोहितश्च एवं जानन्नोऽपि कथं भुङ्क्ते इत्यस्योत्तरमुक्तम् ॥ ११ ॥

एवं चेद्विषयाणामापातरमणीयत्वानुसन्धानेऽपि नानुरागपूर्वकमुमुक्षूपायानुष्ठानाधिकारो न कस्यापि स्यादित्यत्राह । रजस्तमोभ्यामिति । यद्यपि यद्यपि रजस्तमोभ्यां विक्षिप्तधीर्मूढधीश्च तथापि विद्वान् विवेकी पुनः मनो रुन्धन् सङ्कल्पविकल्पापचयं कुर्वन् विषयेषु सदा दोषदृष्टिः तेषामापातरमणीयत्वदर्शनस्वभावः अतन्द्रितः तद्विषयप्रमादरहितः न सज्जते विषयाननुभव इति शेषः एवंविधेनापि एवमधिक्रिया सम्पाद्यते भावः ॥ १२ ॥

आत्मानुगुणेषु वस्तुषु भोग्यताबुद्धिरूपात्सङ्कल्पाद्धि कामः भोग्यताबुद्धिश्च गुणाध्यानादिना सा तु दोषदर्शनान्निवर्तते मधुरेऽपि पयसि विषमिश्रत्वज्ञानाद्भोग्यताबुद्धिनिवृत्तिरेषा दोषदृष्ट्या विषयान्तरेभ्यो निवृत्तस्य मनसो विषयं दर्शयन्नधिकारिणं विशिषन् योगं विदधाति । अप्रमत्त इति । दोषदृष्ट्येत्थं विषयभोगानासक्तः अप्रमत्तः अतन्द्रितश्च यथाकालं तत्तत्प्रातर्मध्यन्दिनसायंकालानतिक्रमेण जितासनः चिरमुपविष्टस्यापि भ्रमराहित्यापादनात्मकाभ्यासविशेषरूप आसनजयः श्वासजयो नाम पूरणरेचनकुम्भनाद्युपायैः प्राणवशीकारः अनिर्विण्णः मनश्च शनैर्मनो मयि शुभाश्रयभूतेऽर्पयन् धारणां युञ्जीत युज समाधौ ध्यानपूर्वकसमाधिनिष्ठो भवेदित्यर्थः । अविषण्ण इति पाठान्तरेऽन्तरायैरविषण्णचित्त इत्यर्थः । तत्र मनसो मदर्पणमेव समाधियोगस्वरूपं प्राणायामादयस्तु तदुपकारकास्ते यमनियमादीनामपीतराङ्गानामुपलक्षकाः ॥ १३ ॥

एवं योगस्य स्वरूपमुक्तम् अथ निष्कृष्य योगस्वरूपमेव दर्शयन्नुक्तप्रश्नोत्तरानुसन्धानार्थं हंससनकादिसम्वादं वक्तुं तत्पृष्ठिरूपामुत्पादयति । एतावानिति । मच्छिष्यैः हंसरूपेणावतीर्णस्य मे शिष्यैः प्राप्तैः सनकादिभिरेतावानेव योग आदिश्य उपदिष्टः मदुपदेशलब्धो योगो ऽन्येभ्योऽप्युपदिष्ट इत्यर्थः । [illegible] सर्वेभ्यो विषयेभ्यो मन आकृष्य मय्यद्धा मय्येव अद्धेत्यवधारणार्थको निपातः यथा यथावदभिनिवेश्यते इत्येतावानित्यर्थः ॥ १४ ॥

तत्र सनकादयः पृच्छन्ति । यथा त्वामिति । येन रूपेण किंप्रकृत-श्रीकृष्णरूपेण किंवा रूपान्तरेण यथा यादृशं योगमादिष्टवान् उपदिष्टवान् तद्रूपं तद्योगोपदेष्टृरूपं योगं चेत्यपि बोद्धुं वेदितुमिच्छामि ॥ १५ ॥

विवक्षितं सम्वादं वक्तुं प्रकरोति । पुत्रा इति । पितरं हिरण्यगर्भं प्रति सूक्ष्मां दुर्ज्ञेयामैकान्तिकीमसाधारणीं योगस्य गतिं प्रकारं पप्रच्छुः ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अकर्तर्यात्मनि अहङ्कर्तेति कर्तृत्वाभिमानमेति तन्मूलरागोत्सिक्तमनः कारकः कामः कारणमित्युत्तरमाह । अहमितीति । अयमत्रार्थः यदा प्रमत्तस्य हृद्यहङ्कर्तेत्यन्यथा बुद्धिरुत्सर्पति । उत्क्रमयति तथा घोरं रज उत्सर्पति उदेति ततो रागोदयादुच्छ्रितं मनो वैकारिकं विविधविकाराकरो भवति ॥ ९ ॥

रजसा विकारस्य मनसो विविधकल्पनया पुनः सङ्कल्प इदमित्थं करिष्यामि इदमेवं करिष्ये इत्यादिलक्षण उदेति एवंविविधसङ्कल्पेन दुर्मतेरक्षोभनयुक्तैः गुणानां शब्दादीनां ध्यानाद्दुःसहः कामः स्यादित्यन्वयः ॥ १० ॥

कामस्य दुःसहत्वमुपपादयति । करोतीति । रजोवेगविमोहितत्वेन कामवशाङ्गतः तस्मादविजितेन्द्रियस्तस्मात्कर्माणि दुःखोदर्काणि सम्पश्यन्नपि पुनः कर्माणि करोतीत्यन्वयः यद्वा काममयत्वेन अविजितेन्द्रियो भवति तेन चक्षुरादीन्द्रियजयाभावेन वनितादिरूपं पश्यन् रजोवेगेन वीर्योद्रेकेण विमोहितः विवेकज्ञानशून्यत्वेन विह्वलिताङ्गो दुःखफलानि कर्माणि करोति कामसौख्याय विषयान् भुङ्क्ते इति ॥ ११ ॥

ननु विषयाणां समुद्रतरङ्गवदावर्तमानत्वाच्च संसारादुत्थानं स्यात् पुरुषायुषसहस्रेणापि तस्मान्मोक्षशास्त्रविधानं व्यर्थमित्याशङ्क्य अज्ञस्यैवं न तत्त्वज्ञस्येत्याह । रजस्तमोभ्यामिति । विद्वच्छब्दविवरणं दोषदर्शीति । पुनःशब्दो वीप्सार्थो दोषदर्शित्वेन सम्बध्यते विद्वान् यद्यपि यद्यपि रजस्तमोभ्यां विक्षिप्तधीः तथाप्यतन्द्रितो भूत्वा हरौ मनो युञ्जन् पुनर्दोषदर्शित्वाद्विषयेषु न सज्जते शरीरयात्रार्थं विषयान् सेवमानोऽपि तैः प्रतिबद्धो न भवतीति ॥ १२ ॥

एतदेव विवृणोति । अप्रमत्त इति । हिशब्दः सर्वशास्त्रप्रसिद्धत्वद्योतकः मनो विषयेभ्य आकृष्य शनैर्मय्यर्पयन् स्थापयन् युञ्जीत ध्यायेत् योगः संहननोपायध्यानसङ्गतिमुक्तिरिति भावः मामिति शेषः अनिर्विण्णः अनालस्यः * अलमितिबुद्धिवैराग्यशून्यो वा ॥ १३ ॥

सनकादियोगीन्द्रियाणां सम्प्रदायभावान्नायं योगः साधीयानित्याह । एतावानिति । यथा मनो मय्येव चावेश्यते तादृशो योगः एतावान्नान्य इति सनकादिभिरादिष्ट इत्यद्धा सत्यम् अद्धा प्रत्यक्षसत्ययोरिति च ॥ १४ ॥

लोकोपकाराय मेरुशृङ्गोपरिस्थितोपदेशवत्सनकाद्यादिप्रयोगोपदेशनमित्यश्रद्धेयमिति भावेन पृच्छति । यदेति ॥ १५ ॥

इदं साधनाश्रयाप्रकृतत्वेनादिमूलफलत्वेन वेद एव प्रमाणमिति भेद्यमित्याशयेन परिहर्तुमितिहासमाह । पुत्रा इति । योगस्य ज्ञानस्य गतिम् ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

प्रमत्तस्य पूर्वकर्मविशेषेण लुप्तविवेकस्य देहादावहमित्यन्यथा बुद्धिर्हृदि यदोत्सर्पति अतिशेते तदा रजोऽप्युत्सर्पति ततो हेतोर्वैकारिकं सात्त्विकमपि मनः उत्सर्पति दुर्वशं भवति ॥ ९ ॥

तदेवाह । रजोयुक्तस्येत्यर्धकेन ॥ १० ॥

दुःखोदर्काणीति जानन्नपि ॥ ११—१३ ॥

अद्धा साक्षात् ॥ १४ ॥

त्वं नित्यनराकृतिपरब्रह्मरूपः सर्वावतारी यदा येन रूपेणावतारेण तं समयं तद्रूपं च वेदितुमिच्छामि ॥ १५—१७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ये दुर्विषयान् भुञ्जते ते विद्वांस एव नोच्यन्ते किन्तु विद्वन्मानिन एव ते विषयान् निन्दन्तोऽपि यथा भुञ्जते तत्र प्रकारं श्रावयत्याह । अहमिति त्रिभिः । प्रथमं देहादावहमिति हृदि मिथ्या बुद्धिरुत्कर्षेण सर्पति ततः प्रमत्तस्य तस्य घोरं रजः कर्तृ वैकारिकं सात्त्विकमपि मनः प्रति उत्सर्पति मनो व्याप्नोतीत्यर्थः ॥ ९ ॥

प्रथममिदं भोग्यमिति सविकल्पः ततश्च इदमेव भोग्यमिदमेवं भोग्यमिति सविशेषः सङ्कल्पः स्यात् ततश्च अहो रूपमहो भाव इति दुर्निरोधः कामः स्यात् ॥ १० ॥

ततस्तद्विषयप्राप्त्यर्थं कर्माणि वधादफलानि तानि च दुःखोदर्काणि पश्यन् जानन्नपि ॥ ११ ॥

विद्वांस्तु यद्यपि रजस्तमोभ्यां विक्षिप्तधीः परतन्त्रधीश्च कथंचित् स्यात्तदपि ॥ १२ ॥

अतन्द्रित इत्यस्यार्थमाचष्टे । अप्रमत्त इति । कुत्र मनो युञ्जीतेत्यत आह । मयि अनुयुञ्जीतेति अनिर्विण्णा इति तदपि मनोनिरोधो यदि न स्यात् तदपि तत्प्रयत्नान्न विरमेदिति भावः ॥ १३ ॥ १४ ॥ १५ ॥

ऐकान्तिकीं गतिं परां काष्ठाम् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विपर्ययज्ञानादित्युत्तरमाह । अहमिति त्रिभिः । प्रमत्तस्य परमार्थविपर्ययेऽनवहितस्यान्यथाज्ञानवत इत्यर्थः । देहेऽहमित्यन्यथा बुद्धिर्यथा यावत् हृदि उत्सर्पति आरोहतीत्यर्थः । ततोऽहङ्कारहेतोर्वैकारिकं सत्त्वकार्यमपि मनः घोरं रजो रजोगुणम् उत्सर्पति व्याप्नोति मनोरथे प्रतिहते मातृपितृगुर्वादिहननमपि स करोतीत्यतो घोरमित्युक्तम् ॥ ९ ॥

रजोयुक्तस्येति । ततो रजोगुणयुक्तस्य मनसः सविकल्पकः इदं रूपादिमद्वस्तु मे स्यात्कथं वा स्यादित्यादिरूपः सङ्कल्पो भवेत् ततः सङ्कल्पानन्तरं तस्य दुर्मतेरिदमेवातिभोग्यं भाग्योदयेन मे भवेदिति गुणध्यानात् एतत्प्राप्त्यैव मम जीवनमित्येवंरूपः दुःसहः कामः स्यात् ॥ १० ॥

करोतीति । यतोऽविजितेन्द्रियस्ततः कामवशगः विषयान्भोक्तुं दुःखोदर्काणि विपरिणामे दुःखमेवोत्तरोत्तरं येभ्यस्तथाभूतानि कर्माणि पश्यन्नपि करोति तत्कुतः यतो रजोवेगविमोहितः ॥ ११ ॥

---

*हारिभेत्यपीति शब्दपूरणम् ।

सनकादय ऊचुः ॥

गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रभो ! ।
कथमन्योऽन्यसंत्यागो (१) मुमुक्षोरतितितीर्षोः ॥ १७ ॥

श्रीभगवानुवाच ॥

एवं पृष्टो महादेवः स्वयंभूर्भूतभावनः ।
ध्यायमानः प्रश्नबीजं नाभ्यपद्यत कर्मधीः ॥ १८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु रजआदेरप्रमत्तस्य दुर्मतेर्विपर्ययज्ञानाद्दुःखावाप्तिरेवेति विदुषोऽपि रजस्तमोयोगविक्षेपप्रमादादिक्लेशस्तर्हि का गतिरित्यत आह रजस्तम इति । विद्वान् गुणदोषविवेकज्ञः केनचिद्दृतादिकर्मणा रजस्तमोभ्यां यद्यपि यद्यपि विक्षिप्तधीर्भवेत्तथापि पुनर्विविक्तदृष्टिः संसारे दोषदृष्टिः अतन्द्रितः अलसः सम्मनो ध्येयवस्तुनि युञ्जन् सन् विषयेषु न सज्जते ॥ १२ ॥

ननु दोषदर्शी सत्यामपि मनोनिरोधो दुःसाध्य इति चेत्तत्राह । अप्रमत्त इति । त्वया सत्यमुक्तं तथापि अप्रमत्तः कर्त्तव्यविषये सावधानः अनिर्विण्णः कतिवारं नियुक्तमपि मनो वश्यं नापद्यतेऽतः परं न नियोक्ष्यामीत्येवं निर्वेदमकुर्वन् अनुयुञ्जीत पुनः पुनर्नियुञ्ज्यात् यथा काले नियमेन कालमनतिक्रमयेन यथा स्यात्तथा शनैर्मनः शुभाश्रये मय्यर्पयेत् जितासनो जितश्वासश्च भवेत् ॥ १३ ॥

रजआदिदृष्टा कथं विद्युत्प्रकारेण त्वयि मनसि नियुक्ते तदनन्तरं किङ्कर्तव्यमित्यपेक्षायामियमेव योगकाष्ठेति द्रढयितुमेवं भूतयोगकर्तृरूपद्वारं प्रमाणयितुं सतोऽधिकस्याभावाद्वेवं विधयोगसंग्रहार्थं च प्रवर्तयितुं सर्वयोगाधीशात् स्वाश्रयानेव प्रमाणत्वेनोदाजहारेत्येतावानिति सर्वविषयेभ्यो मनआकृष्य यथावत् परमानन्दरूपे सर्वपुरुषार्थदातरि मयि अद्धा साक्षाद्वेश्यते मच्छिष्यैः सनकादिभिरेतावान् योग आदिष्टः नह्यतोऽधिक इत्यर्थः मच्छिष्यत्वेन भगवदंशविभूतिभूतब्रह्मरुद्रेन्द्रादिव्यावृत्तिः सूचिता मुमुक्षुणा न ते ध्येया इत्यर्थः । आविश्यते इत्यस्य यथार्थविपर्यययोः रूपादिविषयेष्वत्यन्तावेशो भवति तद्वदित्यर्थः । मच्छिष्यैरित्यनेन तद्वचने मदनुवर्तिनां सर्वेषां प्रामाण्यतरत्वं तदनङ्गीकारिणां हयग्रीवाद्याधिदैवन्तरत्वमिति दर्शितम् ॥ १४ ॥

सर्वविदादीनामपि पूर्वेषां सनकादीनामागतेन रूपेणोपदेशाम्सम्भावितं मन्वानः पृच्छत्युद्धवः । यदेति । हे केशव ! यदा यस्मिन्काले येन रूपेण त्वं सनकादिभ्यो योगमुपदिष्टवानेतदहं वेदितुमिच्छामि कृपया वद ॥ १५ ॥

यदर्थं प्रार्थितो भगवांस्तत्कालं तद्रूपं च ज्ञापयितुमितिहासमवतारयति । श्रीभगवानुवाच पुत्रा इति । हिरण्यगर्भस्य मानसाः पुत्राः सनकादयः योगस्य सूक्ष्मां दुरूहाम् एकान्तिकीमेकाग्रमत् भगवत्येवान्तोऽवसानं यस्यास्तां गतिं गम्यते ऽनयेति गतिः साधनमित्यर्थः पितरं पप्रच्छुः ॥ १६ ॥

### भाषा टीका ।

श्रीभगवान् उवाच ।

प्रमादी पुरुष के मैं देहादिक हूं ऐसी बुद्धि होती है एस हृदय में होते ही सात्त्विक बुद्धिवाले का मन भी घोर रजोगुण युक्त हो जाता है ॥ ९ ॥

मनमे रजोगुण के होते ही विषयों का संकल्प विकल्प होता है फिर गुणों के ध्यान होने से काम होता है दुर्मति पुरुष को अति दुःसह होने से वह काम छूटता नहीं है ॥१०॥

फिर अजितेन्द्रिय होने से काम के वश होकर रजोगुण के वेग से मोहित होने से दुःख के फल दायक उन कर्मों को देखता हुआ भी फिर करता ही रहता है ॥ ११ ॥

जो विवेकी है सो तो रजोगुण तमोगुण से बुद्धि के विक्षेप होने पर भी उनमें दोष की दृष्टि करने से सावधान होकर मनको रोकता है तब उन विषयों में बंधता नहीं है ॥ १२ ॥

इस कारण से सावधान होकर आलस को छोड़कर प्रात आदि काल मे दृढ आसन लगाकर प्राणायाम से श्वास को रोक कर मनको धीरे धीरे मे अर्पण करता हुआ रोकने का अभ्यास करे ॥ १३ ॥

मेरे शिष्य सनकादि कों ने भी इतना ही योग का उपदेश किया है जोकि सब तरफ से मनको खैंचकर मेरे मे अर्पण करना हो जावे ॥ १४ ॥

उद्धव उवाच हे केशव ! आपने जिस समय मे जिस रूप मे सनकादिकों को योगका उपदेश किया है उस रूप को मैं जानने चाहता हूं ॥ १५ ॥

श्रीभगवान् उवाच ब्रह्मा के मानस पुत्र जो सनकादिक हैं उनने अपने पिता ब्रह्माजी से योगकी एकांत सूक्ष्म गतिको पूछा ॥ १६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्रैवाऽऽह । गुणेष्विति । विषयेषु स्वभावतो रागादिवशादेव चेतः प्रविशति ते चानुभूता विषया वासनारूपेण चेतसि प्रविशन्ति । अतितितीर्षोर्विषयानतिक्रमितुमिच्छोः ॥ १७ ॥

एवमिति । महान् देवोऽपि स्वयम्भूरपि भूतानां स्रष्टापि ध्याय-

---

(१) मुमुक्षोः सेतितीर्षतः इति वि॰ पाठ.

स मामचिन्तयद्देवः [1] प्रश्नपारतितीर्षया ।
तस्याहं हंसरूपेण सकाशमगमं तदा ॥ १९ ॥
दृष्ट्वा मां त उपव्रज्य कृत्वा पादाभिवन्दनम् ।
ब्रह्माणमग्रतः कृत्वा पप्रच्छुः को भवानिति ॥ २० ॥
इत्यहं मुनिभिः पृष्टस्तत्त्वजिज्ञासुभिस्तदा ।
यदवोचमहं तेभ्यस्तदुद्धव ! निबोध मे ॥ ॥ २१ ॥
वस्तुनो यद्यनानात्वमात्मनः प्रश्न ईदृशः ।
कथ घटेत वो विप्रा ! [2]वक्तुर्वा मे क आश्रयः ॥ २२ ॥
पञ्चात्मकेषु भूतेषु समानेषु च वस्तुतः ।
को भवानिति वः प्रश्नो वाचारम्भो [3]ह्यनर्थकः ॥ २३ ॥
मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः ।
अहमेव न मत्तोऽन्यदिति बुध्यध्वमञ्जसा ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

मानो विचारयन्नपि प्रश्नस्य बीजं यदज्ञानादयं प्रश्नस्तन्नाविन्दत् यतः कर्मविक्षिप्तधीः ॥ १८ ॥

प्रश्नस्य पारमुत्तरमभिप्रायो वा तस्य तितीर्षया जिज्ञासया हंसरूपेणेति यथा हंसो नीरं क्षीरं च पृथक्कर्तुं शक्त एवमहं गुणांश्चेतश्चेति द्योतयितुं हंसरूपेण गतोऽस्मीति ॥ १९—२० ॥

इत्यहं मुनिभिः पृष्ट इति पृथक् वाक्यम् यदवोचमिति च पृथक् अतोऽहमच्छब्दावृत्तिरदोषः तेभ्यो यदवोचं तन्मे वचनं निबोध ॥ २१ ॥

देहादिविविक्तात्मज्ञाने सति तन्निष्ठस्य रागाद्यसंभवात्स्वयमेव विषयचेतसोर्विश्लेषो भवतीति वक्तुं प्रश्नखण्डनमिषेणैव तावदात्मानात्मविवेकमाह । वस्तुन इति त्रिभिः । किमात्मनोऽयं प्रश्नस्तदुपाधेर्भूतसंघस्य वा यद्यात्मनस्तर्हि तस्य वस्तुनः परमार्थरूपस्यानानात्वे सति हे विप्रा ! वो युष्माभिः कृतः प्रश्न ईदृशो वस्तुषु निर्धारणरूपः कथं घटते वक्तुरुत्तरदातुर्वा मे मम क आश्रयः अविशेषे आत्मनि कं जातिगुणादिविशेषमाश्रित्योत्तरं वक्ष्यामीत्यर्थः ॥ २२ ॥

भूतसंघविषयत्वेऽप्ययं वः प्रश्नो वाचारम्भो वाङ्मात्रेणारब्धः यतोऽनर्थकः कुतः भूतेषु देवमनुष्यादिदेहेषु पञ्चभूतात्मकेष्वतः समानेष्वभिन्नेषु पुनश्च वस्तुतः परमकारणात्मना अभिन्नेषु 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतेः ॥ २३ ॥

तत्र पञ्चात्मकत्वं प्रत्यक्षादिसिद्धमेवेति परमकारणाभेद-मेवोपपादयति । मनसेति । मनआदिभिर्यद्गृह्यते तत्तदहमेवेत्यर्थः अञ्जसा तत्त्वविचारेण एतेनैव सर्वात्मकोऽहमित्यञ्जसाप्युत्तरमुक्तं भवति ॥ २४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

तद्वैकालिककर्मैः प्रश्नकरणमेव । स्वभावतः स्वरसत एव रागादिविषयाविति अनुकूलेषु रागः प्रीतिः आदिना प्रतिकूलेषु द्वेषस्तद्रूपात् वासनारूपेण संस्काररूपेण ॥ १७ ॥

यदज्ञानात् यस्यात्मस्वरूपस्याज्ञानात् अयमन्योऽस्वस्थानरूपः प्रश्नः तत् आत्मरूपम् ॥ १८ ॥

सकाशं समीपम् ॥ १९ ॥

कृतपादाभिवन्दनात्वात्मनाज्ञानजोऽयं को भवानितिप्रश्नः किन्तु प्रश्नेनैव हंसाभिप्रायज्ञानेन पूर्वप्रश्नोत्तरणार्थः अत एवाग्रे तत्त्वजिज्ञासुभिरित्युक्तम् ॥ २० ॥

अतः पृथग्वाक्यत्वात् ॥ २१ ॥

तदुपाधेः आत्मोपाधेः भूतसंघस्य देहादेः यद्यात्मनः आत्मसम्बन्धी प्रश्नः अनानात्वे एकत्वे सति ॥ २२ ॥

प्रश्नस्य भूतसङ्घातविषयत्वे देहविषयत्वे अनर्थकः विचारे सति अभिधेयशून्यः अतः पञ्चभूतात्मकत्वात् कारणेनाभिन्नत्वे श्रुतिः प्रमाणं वाचारम्भणमिति व्याख्यातं च भगवद्भाष्यकृद्भिः यतो वाचारम्भणं विकारो नामधेयं वाचैव केवलमस्तीत्यारभ्यते विकारो घटः शराव उदञ्चनञ्चेति न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति नामधेयमात्रमेतदनृतं मृत्तिकेत्येव सत्यमिति एष ब्रह्मणो दृष्टान्तः आम्नातः तत्र श्रुतात् वाचारम्भणशब्दात् दार्ष्टान्तिकेऽपि ब्रह्मव्यतिरेकेण कार्यजातस्याभाव इति गम्यते इति ॥ २३ ॥

तत्र पञ्चात्मकपरमकारणयोरैक्यमेव उपपादयति युक्त्या साधयति युक्तिश्चात्रार्थापत्तिरूपा मनआदिग्राह्यस्याधिष्ठानाभेदमन्तरा प्रतीत्यनुपपत्त्या कल्पितस्याधिष्ठानाभेद

(१) प्रश्नपारविनिश्चयम् (२) वक्तुं वा (३) निरर्थकः इति वि० पाठः ।

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

कल्पते इति यत्तच्छब्दयोर्गम्यत्वादित्यर्थं इत्युक्तम् एतेनैव परमकारणाभेदोपपादनेनैव हंसत्वमप्युक्तमित्यपरस्मयः ॥ २४ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

गुणाश्चेतांसि आविशन्ति शब्दादिगुणाः स्मर्यमाणाः चेतसो नापगच्छन्तीत्यर्थः। अन्योऽन्यसम्त्यागः चेतसा गुणत्यागः गुणैश्चेतस्त्यागः ॥ १७ ॥

प्रश्नबीजं प्रश्नविषयं कारणस्य बीजमितिवत् ॥ १८—२१ ॥
वस्तुनो यदीति । प्रश्नस्य साक्षादुत्तरमुत्तरत्र वक्ष्यन् प्रथमं प्रश्नं खण्डयन्नेव समस्तचिदचिद्वस्तुनि व्याप्तिं दर्शयति तत्र सर्वान्तरात्मानमीश्वरं जानतां ज्ञानिनां केवलमचिन्मात्रदेहमेव पश्यतामज्ञानिनां च नैवं प्रश्नो घटत इत्यभिप्रायः प्रथममीश्वरव्याप्त्यज्ञानवतां प्रश्नप्रतिवचनानुपपत्तिमाह । वस्तुनो यदीति । कस्यचिदपि वस्तुनः नानात्वं पृथक्त्वं मया विनाभावोऽस्ति चेत् एवं प्रश्नः स्यात् प्रष्टारो भवन्तोऽप्यस्मदविनाभूता मम सर्वजीवशरीरकत्वात् तदा युष्मच्छरीरकोऽहमेव प्रष्टा स्यां शरीरमात्रस्य वक्तृत्वादर्शनात् ततश्च प्रतिवक्तृतयाभिमतो ऽहमेव प्रष्टेत्यत्यन्तमनुपपन्नं मम वक्तुर्वा क आश्रयः को विषयः वक्तव्यस्य सर्वस्य मदात्मकत्वादहमेव वक्तव्यः स्यामतः प्रष्टा प्रतिवक्ता वक्तव्यश्चैक एवेति प्रश्नप्रतिवचने अनुपपन्ने इत्यर्थः॥२२॥
एवं प्रष्टॄणां युष्माकमप्यहमन्तरात्मेत्युक्तं भवति अचेतनं शरीरमेव जानतामपि एवं प्रश्नोऽनुपपन्न इत्याह । पञ्चात्मकेष्विति । अहं तावद्धंसरूपेण प्रत्यक्षः अतो न जातिः प्रष्टव्या मत्सजातीयानां भूतानां सर्वेषां पाञ्चभौतिकत्वं समानमिति न कारणमपि प्रष्टव्यं तस्मादस्मत्प्रतिवचनरूपवाग्व्यवहारारम्भकं वचः प्रश्नप्रतिवचननिरपेक्षत्वादनर्थकमित्यर्थः ॥ २३ ॥
एवं प्रश्नखण्डनव्याजेनोपादिष्टं समस्तचिदचिद्वस्तुनः स्वान्तरात्मत्वं स्फुटमेवाह । मनसेति । मनसा योगपरिशुद्धेन देहादिव्यावृत्ततया ग्राह्यमात्मस्वरूपं चक्षुरादिभिर्ग्राह्यमचेतनं तत्सर्वं मच्छरीरतया मदात्मकं ननु स्वातिप्रमतः सर्वान्तरात्माहमेव सर्वशब्दवाच्य इति बुध्यध्वमित्यर्थः ॥ २४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रश्नमेवाह । गुणेष्विति । गुणेषु शब्दादिविषयेषु चेतः आविशते तेषु भोग्यत्वबुद्ध्या आविष्टं भवतीत्यर्थः । तथा गुणाः स्मर्यमाणाश्चेतश्चाविशन्ति ततो नापगच्छन्ति तद्विषयतां न त्यजन्ति इत्यर्थः । अनेनाहमित्यन्यथा बुद्धिरित्यादेर्मोहित इत्यन्तस्योत्तरस्यार्थो निष्कृष्य प्रदर्शितः अन्योऽन्यसन्त्यागः चेतसा गुणत्यागः गुणैश्चेतसस्त्यागः मुमुक्षोः प्रकृतिसम्बन्धस्यानर्थहेतुत्वाध्यवसायेन तस्मान्मोक्तुमिच्छोरत एवात्यन्तं तितीर्षोर्विषयानतिक्रमितुमिच्छोः कथं स्यादित्यर्थः । अनेन रजस्तमोऽभ्यामित्यादिनोक्तस्योपायभूतस्य योगस्य प्रश्न उक्तः ॥ १७ ॥

सनकादीनां प्रश्नस्य ब्रह्मणाप्यविज्ञातप्रतिवचनतामाह । एवमिति । भूतभावनः भूतानि व्यष्टिभूतानि भावयत्युत्पादयतीति तथा अनेन कृत्स्नब्रह्माण्डान्तर्गतभूतसृष्ट्युपयुक्तज्ञानशक्त्यादिमत्त्वमप्युक्तं महादेव इत्यनेन सृज्यरुद्रादिभ्योऽप्यतिशयितज्ञानादिमत्तया दीप्यमानत्वं विवक्षितं प्रश्नबीजं प्रश्नो बीजं कारणं यस्य तत्प्रतिवचनं तस्यैव प्रश्ने प्रतिवचनोदयात्तस्य तत्कारणस्य ध्यायमानः विचारयन्नपि नाध्यपद्यत नाविन्दत यतः सोऽपि कर्मधीः कर्मणा सङ्कुचितज्ञानः असर्वज्ञ इत्यर्थः ॥ १८ ॥

तर्हि स तेषां प्रश्नः किम्प्रतिवचनरहित एवासीदित्यत आह । स मामिति । सः अनभिपन्नप्रश्नबीजो ब्रह्मा प्रश्नपारतितीर्षया प्रश्नस्य पारमुत्तरं तस्य तावदेवानुवृत्तः तितीर्षा जिज्ञासा तया मां सर्वज्ञमचिन्तयत् हंसरूपेणात्मनेन यथा हंसः क्षीरं नीरं च पृथक्कर्तुं शक्तः एवमहं गुणांश्चेतश्च समीचीनोपायोपदेशेन पृथक्कर्तुमनीशोऽस्मीति ज्ञापयितुमित्यवगम्यते । तस्येति । तस्य चिन्तयतो ब्रह्मणः सकाशं समीपगमं गतवानस्मि ॥ १९ ॥

ततः किन्तदाह । दृष्ट्वेति । तदा ते सनकादयः ब्रह्माणमग्रतः कृत्वा मामुपव्रज्य प्रत्युत्थानप्रणामादिभिः उपसंगम्य प्रष्टव्यमपृष्ट्वैव तावत्को भवानिति पप्रच्छुरित्यर्थः ॥ २० ॥

तत्र हेतुं वदन् इत्थमापृष्टोऽहं यत्तावदुक्तवानस्मि तद्ब्रवीमि शृणुतेत्याह । इतीति । तावत्तत्त्वजिज्ञासुभिः किं परिदृश्यमानचिदचित्सजातीयस्त्वमुत तद्विलक्षणस्तर्हि के ते विलक्षणधर्मा इत्येवं परमात्मयाथात्म्यं ज्ञातुमिच्छद्भिः को भवानिति पृष्टः ॥ २१ ॥

तत्र तावत् सर्वज्ञो हंसरूपी भगवानपृष्टमपि प्रष्टव्यं तदभिप्रायमालक्ष्य प्रतिवक्ष्यंस्तावत्प्रश्नं खण्डयन्नेव जिज्ञासितं तत्त्वं निरूपयितुमात्मनः समस्तचिदचिद्व्याप्तिं दर्शयति । वस्तुन इति त्रिभिः । तत्र तावत्सर्वान्तरात्मानमीश्वरं जानतां ज्ञानिनां केवलमचिन्मात्रमेव पश्यतामज्ञानां च नैव विधः प्रश्नो घटते इत्यभिप्रेत्य प्रथममीश्वरव्याप्तिं जानतां प्रश्नानुपपत्तिमाह । वस्तुन इति । वस्तुनः चिदचिद्वस्तुनः अनानात्वे मदपृथक्सिद्धत्वं तेनात्मायत्तसत्तास्थितिप्रवृत्तित्वं शरीरत्वं चाभिप्रेतं युष्माभिर्यदि ज्ञातमित्यर्थः । तदात्मनो मम मद्विषयक इत्यर्थः । ईदृशः को भवानित्येवं विप्रा वो युष्माकं प्रश्नः हे विप्राः! कथं घटेत सङ्गच्छेत । यदि कस्यचिदपि चिदचिद्वस्तुनो मदपृथक्त्वं तदैवं प्रश्नः स्यात् प्रष्टारो भवन्तोऽप्यस्मदविनाभूताः मम सर्वजीवशरीरकत्वात् तदा युष्मच्छरीरकोऽहमेव प्रष्टास्मि मम शरीरमात्रस्य वक्तृत्वादर्शनात् ततश्च प्रतिवक्तृतयाभिमतोऽहमेव प्रष्टेत्यनुपपन्नमिति किञ्च वक्तुर्मे क आश्रयः विषयः वक्तव्यस्य सर्वस्य मदात्मकत्वादहमेव वक्तव्यः स्याम् अतः प्रष्टा प्रतिवक्ता च वक्तव्यश्चैक एवेति प्रश्नप्रतिवचने अनुपपन्ने इत्यर्थः । एवं प्रष्टॄणां युष्माकमप्यहमन्तरात्मेत्युक्तं भवति ॥ २२ ॥

अचेतनं शरीरमेव जानतामप्येवं प्रश्नोऽनुपपन्न इत्याह । पञ्चात्मकेष्विति । अहं तावद्धंसरूपेण प्रत्यक्षः अतो न जातिः प्रष्टव्या मत्सजातीयानां सर्वेषां पाञ्चभौतिकत्वेन समानानां

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सर्गो न कारणमपि प्रष्टव्यं तस्माद्वाचारम्भः प्रतिवचन-रूपवाग्व्यवहारारम्भो वः प्रश्नः प्रतिवचननिरपेक्षत्वादनर्थक इत्यर्थः ॥ २३ ॥

इत्थं प्रश्नखण्डनव्याजेनोपदिष्टं यच्चिदचिद्वस्तुनः सकाशादात्मनो वैलक्षण्यं यावहं समस्तचिदचिद्वस्तुनः स्वान्तरात्मकत्वं तत्स्फुटमेवाह । मनसेति । मनसा योगपरिशुद्धेनापि मनसा तत्र योगपरिशुद्धेन मनसा देहादिव्यावृत्ततया ग्राह्यमात्मस्व-रूपमपरिशुद्धेन तेन चक्षुरादिभिश्च ग्राह्यमचेतनं च तदेत-त्सर्वमहमेव शरीरात्मभावनिबन्धनमिदं सामानाधिकरण्यं मच्छरीरतया मदात्मकं ननु स्वनिष्ठमतः सर्वान्तरात्माहमेव सर्वशब्दबुद्धिविषयः न मत्तोऽन्यत् इत्यञ्जसा तत्त्वविचारेण बुध्यध्वम् ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किं ज्ञानविषयोऽयं प्रश्न इति तत्राह । गुणेष्विति पुंसां चेतो गुणेषु शब्दादिष्वाविशते गुणाः शब्दादिविषयाश्चेतसि संस्काररूपेण वर्तन्ते तत्र संततिर्योः संसारमर्त्यो ननु कामस्य मुमुक्षोर्मुक्तियोग्य-स्याधिकारिणः कथमन्योऽन्यसंत्यागः विषयेषु चेतसः आकर्षणं चेतसा विषयाणामाकर्षणं पृथक्करणमित्यर्थः तदुच्यता-मिति शेषः ॥ १७ ॥

तत्र ब्रह्मणा किमुक्तमिति तत्राह । एवमिति । प्रश्नो बीजं यस्य सः प्रश्नबीजः तत्परिहारम् अन्यमनस्क इव स्थितत्वादित्याह । कर्मधीरिति । अस्यार्थः गुणानां चेतसश्च कर्मकारणमिति मत्वा नः अन्यमनस्कत्वे किङ्कारणमित्यस्येदमेवोत्तरं कर्मणि स्वयंकर्तरि हरौ धीर्यस्य कर्मणा हरिणैव परिहारो वक्तव्य इति धीर्यस्य स तथा कर्म भगवन्तमेव ध्यायतीति वा तदेतदुक्तम्—

> ब्रह्मा पृष्टस्तु योगीन्द्रैः सनकाद्यैर्मनोगतैः ।
> कारणं विषयैस्तस्मा कर्मेति प्रत्यपद्यत ॥
> हेतुरन्योऽपि तत्रास्तीत्येवं जानन्नपि प्रभुः ।
> विशेषतो मनस्तत्र नाभाज्जानन् हरेः प्रियम् ॥
> स्वात्मन्यपरिहारोक्तिस्तदा ह्यासीद्धरेः प्रिया ।
> अतः स नात्मनं जानन्नाकरोत्तद्विचारणाम् ॥
> तमेवाचिन्तयद्देवः प्रश्ननिर्णयकारणात् ।
> भ्रमतीव मनः क्वापि ब्रह्मणो विष्णुमायया ॥
> सर्वज्ञस्यापि यत्रात्मा वक्तुमिच्छज्जनार्दनः ।
> तज्ज्ञात्वा चिन्तितं तस्य चिन्तयत्यमुमेव तु ॥
> न स्वयं चिन्तयत्यर्थं स हि तद्भावितस्तदा ।
> अन्य त्वज्ञानसंयुक्ता मोहमीयुर्यथाक्रमम् ॥
> तस्य मध्यन्दिने सूर्ये चामवत्सामात्रकम् ।
> नैवाज्ञानं यथा सूर्ये तमो नास्ति कदाचनेति ॥

एतदिमन्यात्येव ॥ १८ ॥

नन्वेवं तर्हि सनकादीनां प्रश्नो निरर्थो वाक्प्रश्नवादिति शङ्कामाभूदिति भावेनाह स मामिति । प्रश्नस्य पारः पूरणं परिहार इति यावत्तमीहमानेन धिया यस्य स तथा तम् ॥ १९—२१ ॥

ज्ञानविधुरयोनित्वेन संशयविषयेण लोकार्थे प्रामाण्य-जननाय को भवानिति तत्प्रश्नं विघटयति । वस्तुन इति । आत्मनो वस्तुनः परमात्मवस्तुनो भवत्पक्षे बहुनानात्वमेकत्वं विव-क्षितं तर्हि सनानात्वे एकत्वपक्षे को भवानितीदृशः प्रश्नः कथं घटत सिद्धविषयत्वादिति शेषः । हे विप्राः वः प्रश्नो यद्यनेकाश्रयः नानात्वाश्रयः तर्ह्यपि को भवानिति वक्तुं कथं घटते अनेक-स्मिन् बहुत्वसंख्याविशिष्टे वस्तुनि एकत्वसंख्याविशिष्टत्वेन वक्तुमनुपपन्नत्वात् ॥ २२ ॥

सिद्धविषयत्वं कथमत्राह । पञ्चात्मकेष्विति । देवमनुष्यपि-तृगन्धर्वासुरभेदेन पञ्चविधेषु भूतेषु जीवेषु हिरण्यगर्भावर-त्वाद्ब्रह्मत्वाभावापेक्षया वस्तुतो वस्तुरूपया समानेषु सत्सु ब्रह्मादि वन्दितचरणारविन्दं मामुद्दिश्य को भवानिति वाचारम्भो यस्य स तथा वाचारम्भ इत्यर्थः वः प्रश्नो निरर्थकः निर्विषय इति ॥ २३ ॥

कुतो निरर्थक इति तत्राह । मनसेति । मनआदीन्द्रियैर्यद्-दुगृह्यते तदहं न भवाम्येवेति यस्मात्तस्मान्निर्विषय इत्य-न्वयः । ननु त्वमपि स्वत्प्रसाददुगृह्यसे तस्मात्प्रश्नः कुत इति तत्राह । मत्तोऽन्यदिति नेत्यनुषज्जते अन्यादिति मार्गनिर्देशः यन्मनआदिभिर्विचार्यं मत्तोऽन्यत्वेनैव ज्ञायते तदहं न भवा-म्येवेति बुध्यध्वमिति अञ्जसा तत्त्वम् अञ्जसा त्वरिते तत्त्वमित्यभिधानम् विचार्य निर्णीतस्यापि पुनः संशय-कारणं परिकल्प्यात्मसंशयो न कर्तव्यः अतः को भवा-निति प्रश्नो नारब्धव्यः किन्तु गुणेष्वाविशते चेत इत्येव प्रश्न आरब्धः इति भावः --

> न युष्माकं मयि प्रश्नो घटतेऽयं कथंचन ।
> मामृते न हि वन्द्योऽस्ति विरिञ्चेः कापि कश्चन ॥
> अभिवन्दितपादं मां विरिञ्चेन कथं पुनः—
> पृच्छथान्वे समा यस्मादवरत्वे चतुर्मुखात् ।
> देवा मनुष्याः पितरो गन्धर्वा असुरास्तथा ॥
> इति पञ्चात्मकं सर्वं ब्रह्मणस्त्ववरं यतः ॥
> यन्मदन्यद्विचारेण गृह्यते तत्र चाप्यहम् ।
> इति जानीध्वमद्धैव मत्प्रसादाद्धि मदूर्ध्वाः ॥
> अन्यत्स्वभावतो ह्येव मम प्रेरणयैव तु ।
> तस्माद्विर्वासितार्थे तु प्रश्नारम्भो न सङ्गतः ॥

इति समाख्यानबलादुक्त एवार्थो नान्यः स्वकपोलकल्पित इति किञ्च इदं हि विश्वं भगवानिवेतर इत्यतश्च हरेर्जगतो भेद सिद्ध इति सकलशास्त्राणां मोक्षे हि तात्पर्यं मोक्षश्च प्रकृति प्राकृतविवेकज्ञानाद्विष्णोः तदुक्तम्—

> प्रकृतेर्व्यतिरिक्तो यः पुरुषश्चेति कथ्यते ।
> तं विद्वान् परमात्मानं त याति परमं पदम् ॥
> नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ! ।
> बहूनां पुरुषाणां हि यथैका योनिरुच्यते ॥
> तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकमिति ।

बहुप्रमाणेषु ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

एवमिति—

यामानहं यथाभावो यद्रूपगुणकर्मकः।
तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहादिति ॥
एतन्मतं समातिष्ठ परमेण समाधिना।
भवान्कल्पविकल्पेषु न विमुह्यति कर्हिचित् इति ॥

ऋषिमाद्यं न बध्नाति पापीयांस्त्वां रजोगुण इतिलब्धभगवद्वर-त्वेऽपि न भारती मेऽङ्ग मृषोपलक्ष्यते इत्यादिना व्यञ्जितताद्दशा-ज्ञानुभवत्वेऽपि योऽन्तर्हित इत्यादौ पित्रानुवर्णितरहोऽत श्रीभग-वन्तं प्रति सनकादीनां वाक्यत्वेऽपि च ब्रह्मणः कर्मधीत्व सम्प्रति स्वमहिमव्यञ्जनाय श्रीभगवदिच्छयैव ज्ञेयं हंसोपनिषदि याज्ञवा-दिशक्तिवत्तमतनितहासवत् ॥ १८ ॥

हंसरूपेण गतोऽस्मीत्यभिप्राय इति शेषः ॥ १९–२० ॥

कृतपादाभिवन्दनत्वात्को भवानिति प्रश्नोनाज्ञानजः किन्तु तेनैव तदभिप्रायज्ञानार्थः अत एवाह तत्त्वजिज्ञासुभिरिति ॥२१॥

किं मां जीवं ज्ञात्वायं को भवानिति प्रश्नः क्रियते भौति-कदेहं ज्ञात्वा वा किमीश्वरं ज्ञात्वेति विकल्पः जीवपक्षं दूष-यति आत्मनो जीवरूपस्य वस्तुनो यद्यनानात्वं सर्वस्यापि तस्य चिदेकरूपतया विशेषांशनिर्देशायोग्यत्वं तर्हीदृशः प्रश्नः कथं घटेत यदीति निश्चये तस्मात् हे विप्राः! वो युष्माकं प्रष्टॄणां वक्तुर्वा मम क आश्रयः युष्माभिः किं जात्यादिविशेषमभिप्रेत्य क इति प्रयुक्तं मया चोत्तरयितव्यमित्यर्थः ॥ २२ ॥

देहपक्षं दूषयति। पञ्चेति। वस्तुतो वस्तुविचारे सति भूतानां पञ्चात्मकत्वात्को भवानित्येकत्वेन प्रश्नोऽयं नार्थवान् यदि च देह-रूपाणां तेषां मिलितत्वेनैकत्वं मन्यध्वे तथाप्यात्मवत्समानत्वात् प्रश्नोऽयं नार्थवान् ननु विदुषामपि व्यवहारोऽयं दृश्यते यतो भवतापि विप्रा इति व इति चोक्तमित्याशङ्क्याह। वाचारम्भ इति वाङ्मात्रेणारभ्यते मद्विधेन तदपोहार्थमेव तदनुवादः क्रियते भवद्भिश्च मद्विधवदितिचेत् ज्ञातमेव तत्त्वं किं पृच्छ्यत इति भावः ॥ २३ ॥

ईश्वरपक्षं दूषयति। मनसेति। मनआदिभिर्यद्गृह्यते तत्सर्वं-महमेव कुतः यतो न मत्तोऽन्यत् परमकारणं मां विना तत्का-र्यत्वेनेत्यर्थः। तथापि प्रश्नोऽयं न घटत इति भावः ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

गुणेषु विषयेषु स्वभावतो रागादेव चेतः प्रविशति ते चानुभूता विषयाः चेतसि प्रविशन्ति प्रतितितीर्षोः विषयानति-क्रमितुमिच्छोः ॥ १७ ॥

महान् देवोऽपि स्वयम्भूरपि भूतानां स्रष्टापि ध्यायमानः विचारयन्नपि प्रश्नस्य बीजं यदज्ञानादयं प्रश्नस्तत् शुद्धं स्वरूप-भावं तत्त्वं नाभ्यपद्यत ज्ञातुं नाशक्नोदित्यर्थः। यतः कर्मधीः कर्मसृष्टिमात्रकर्मासक्तबुद्धिः ॥ १८ ॥

हंसरूपेणेति। यथा हंसो नीरं क्षीरं च पृथक्कर्तुं शक्तस्तथाहं गुणांश्चेतश्चेति योजयितुमिति भावः ॥ १९—२० ॥

महन्तेऽपि: महत्ता अभिमानवत्तया इष्यः स्वामी तन्नि-यन्ता ननु तन्निवत्स्यः इष्य आढ्यो धनी स्वामीत्यमरः ॥ २१ ॥

किं मां जीवं ज्ञात्वा को भवानिति प्रश्नः क्रियते भौति-कदेहं ज्ञात्वा वा परमेश्वरं ज्ञात्वा वेति विकल्प्य प्रथमं जीव-पक्षं दूषयति। वस्तुनो वस्तुभूतस्य आत्मनो जीवस्य यदि प्रश्नस्तदा सर्वस्यापि तस्य चिदेकरूपतया जातिगुणादिवि-शेषाभावेन च वस्तुतः खलु नानात्मकत्वाद्यभावात्स्वे सति को भवानिति वः प्रश्नः कथं घटेत वक्तुरुत्तरदातुर्वा क आश्रयः कञ्जातिगुणादिविशेषमभिप्रेत्याहं कोऽहमित्युत्तरं दास्या-मीत्यर्थः ॥ २२ ॥

देहपक्षं दूषयति। पञ्चेति। वस्तुतो वस्तुविचारे सति देहरूपाणां भूतानां पञ्चात्मकत्वात् को भवानित्येकत्वेन प्रश्नो न घटते तस्मात्किं यूयं पञ्चेत्युच्यतामिति भावः। ननु तेषां पञ्चानां मिलितत्वेनैकत्वं मन्यामहे इत्यत आह। समानेषु सर्वत्रापि मनुष्यादिदेहेषु तेषु पञ्चसु समानेषु सत्सु समानत्वाद्येन पूर्वोक्त-जीववदैक्यात् को भवानिति पुनरपि प्रश्नो न घटते ननु च विदुषामपि प्रश्नोत्तरत्वेनमेव व्यवहारो दृश्यते यतो भव-तापि वो विप्रा इति चोक्तमित्याशङ्क्याह। वाचारम्भ इति मम त्वयं वाचारम्भो ह्यनर्थक एव मया तु वाङ्मात्रेणारभ्यते युष्मत्प्रश्नवदघटमानत्वादनर्थः वचनानुवादरीत्या मयैवाकला-मिरपीति चेद्ब्रूध्वे तर्हि यूयमज्ञानिन एव कथं तत्त्वं जिज्ञासध्वे किमत्र न लज्जध्वे इति भावः ॥ २३ ॥

परमेश्वरपक्षं दूषयति। मनसेति। अयमर्थः परमेश्वरान्तरा-भावान्मम सजातीयभेदो नास्त्येव यच्च मनआदिभिर्गृह्यते तदहमेव ततु मत्तोऽन्यत् मच्छक्तिकार्यत्वादिति विजातीयभेदोऽपि नास्त्यतः को भवानिति प्रश्नो न घटत इति भावः ॥ २४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

प्रश्नमेवाह। सनकादय ऊचुः गुणेष्विति। गुणेषु विषयेषु अनादितत्संस्कारविशिष्टं चेतो विशति ते गुणाश्च वासनारूपा-श्चेतसि प्रविशन्ति हे प्रभो! जगत्पते प्रतितितीर्षोः संसारमति-क्रम्य गन्तुमिच्छोर्मुमुक्षोरनयोऽन्योन्यसम्बन्धयोः विश्लेषः कथं स्यात्त-द्ब्रूहीति शेषः ॥ १७ ॥

तदा तेन किमुक्तमित्यत आह श्रीभगवानुवाच। एवमिति। एवमुक्तप्रकारेण पृष्टः महादेवः सर्वदेवाधिपः स्वयम्भूर्भूतभा-वनः जगत्स्रष्टा ध्यायमानः एकाग्रीभूता ऽचिन्तयन् केन हेतुना एतैः प्रश्नः कृतस्तं प्रश्नबीजं नाभ्यपद्यत न निश्चितवान् तत्कुतः यतः कर्मधीः कर्मसु धीर्यस्य तथाभूतत्वाच्चिन्ताव्याकुलचित्त एवासीदित्यर्थः ॥ १८ ॥

ततः किंवृत्तमित्यपेक्षायामाह। स इति। स देवः ब्रह्मा प्रश्नपार-तितीर्षया प्रश्नस्योत्तरं दातुमिच्छया मामचिन्तयत्तदा तस्मिन्काले हंसरूपेण तस्य सकाशमगमं हंसरूपग्रहणे यथा हंसो मिश्रित-क्षीरनीरे पृथक्कर्तुं समर्थस्तथाहं गुणचेतसोर्विश्लेषं कर्तुमनेन रूपेणागतोऽस्मीति भावः ॥ १९ ॥

दृष्ट्वेति ततश्च ते ब्रह्मपुत्रा मां दृष्ट्वा समीपमागत्य पादा-

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भिवन्दनं कृत्वा ब्रह्माणमग्रतः कृत्वा को भवानिति पप्रच्छुः हंसस्य र्षिशिष्टेजस्त्वादीश्वरभावनया पादाभिवन्दनं चक्रुः अस्मत् पितृवाहनवद्धंसमान ईश्वरो जीवो वेति सन्दिह्य पितृद्वारैव निर्णयो भविष्यतीत्यभिप्रायेण ब्रह्माणमग्रतः कृत्वाभिप्रायः ततस्तच्चिन्तया तूष्णीमासीनं दृष्ट्वा स्वयमेव पप्रच्छुरिति भावः॥२०॥

तदा भवता किमुक्तमित्यत आह । इतीति । यदा तत्त्वजिज्ञासुभिर्मुनिभिरित्युक्तप्रकारेणाहं पृष्टः तदा तेभ्योऽहं यदुवाच तन्मे मत्तो निबोध ॥ ॥ २१ ॥

तत्र तदभिप्रायं जानन् तांश्च परमतत्त्वश्रवणेऽत्यधिकारिणो ज्ञात्वा "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो ! सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा—

योऽयं तदा गतो देवसमीपे देवतागणः ।
स त्वमेव जगत्स्रष्टा यतः सर्वगतो भवान् ॥
सर्वं समाप्नोषि ततोऽसि सर्वः ।
सर्वगत्वादनन्तस्य स एवाहमवस्थितः ॥
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥

इत्यादि श्रुतिस्मृतिप्रतिपादितसर्वचेतनाचेतनवस्तुन आत्मत्वेन सर्वोत्पत्तिलयजीवनहेतुत्वेन सर्वनियन्तृत्वेन सर्वव्यापकत्वेन च सर्वसामानाधिकरण्याहंस्वरूपोऽहमित्युत्तरं दातुं तत्प्रश्नखण्डनपूर्वकं तत्त्वोपदेशेन तान् शिष्यत्वेन स्वीकर्तुं च प्रश्नं कर्तारं चेतनाचेतनोभयवस्तुपत्वे निक्षिप्य तस्यासम्भवमाह । वस्तुन इति द्वाभ्याम् । भो विप्रा वः युष्माकमात्मनः आत्मस्वरूपस्य ईदृशः बहूनां मध्ये एकस्य निर्धारणरूपः को भवानिति प्रश्नः कथं घटेत सम्भवेत् अयुक्त इत्यर्थः । अघटनामेवाह प्रश्नः किं चेतनात्मविषयः प्रकृतिकार्यभूतदेवतिर्यङ्मनुष्यरूपभौतिकदेहात्मविषयो वेति विकल्पद्वयेन प्रतिपादयति यदीति । यद्यात्मनश्चेतनस्य तर्हि तस्य वस्तुनः सदेकरसस्य ज्ञानस्वरूपत्वेनाधिकारत्वेन चानानात्वे एकजातिमत्त्वे सति । कथं घटेत युक्तः स्यात् वक्तुरस्मदादेर्वा मे मम क आश्रयः केतकीपुष्परेणूनामिव विशेषाभावात्कं विशेषमाश्रित्योत्तरं वक्ष्यामीति भावः । चेतनात्मनो जातिमत्त्वं च आचार्यप्रोक्ता या जातिः सा नित्या सा जरामरेति उद्योगपर्वणि सनत्सुजातवचनात् सिद्धम् आचार्येण शिष्यायोपदिष्टा या जातिरात्मत्वजातिः सा नित्या कालत्रयावाच्या जरामरणरहिता च नित्यो नित्यानां न जायते म्रियते वा नत्वेवाहं जातु नासं नत्वं नेमे "नाशोनानाऽव्यपदेशात्" इत्यादिश्रुतिस्मृतिसूत्रेभ्यः ॥ २२ ॥

द्वितीयपक्षोऽपि न सम्भवतीत्याह । पञ्चेति । देहात्मविषयत्वेऽपि को भवानिति यः प्रश्नो वाचारम्भः केवलवागारम्भः ननूपपत्तियुक्तः हि यतोऽनर्थकः अनुपपत्तिमाह । भूतेषु देवतिर्यगादिदेहेषु पञ्चात्मकेषु पञ्चमहाभूतकार्येषु सत्सु अतएव समानेषु सत्सु विशेषाभावादित्यर्थः । ननु बहुपुण्यलभ्यक्षुत्पिपासाजराश्रमादिदोषवर्जितब्रह्मेन्द्रादिदेहानां मनुष्यादिदेहेभ्योऽत्यन्तविलक्षणत्वात् कथं समानत्वमत आह । वस्तुत इति । वस्तुशब्देन·· गौरनाद्यन्तवती जनित्री भूतभाविनी ।

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः
जनयन्तीं सरूपाः दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥

इत्यादिश्रुतिस्मृतिप्रतिपादितसर्वविकारोपादानभूता भगवच्छक्तिः प्रकृतिरुच्यते "तदनन्यत्वमारम्भणशब्दादिभ्य" इतिसूत्रात्कारणानन्यत्वमेव कार्यस्यातः प्राकृतत्वात्तेषामपि समानत्वमेव तस्माद्वस्तुनो विशेषाभावात्प्रश्नोऽनुपपन्न इत्यर्थः ॥ २३ ॥

एवं केवलचेतनात्मविषये देहात्मविषये च प्रश्नस्यानुपपन्नत्वे सति यद्यपि देहविशिष्टस्य प्रत्यगात्मनोऽपि भेदसम्भवादीश्वरस्य च स्वरूपगुणशक्तिभिरेव सर्ववैलक्षण्यादित्युभयविषयस्य प्रश्नस्यौचित्यं तथापि विविक्तात्मतत्त्वज्ञानस्य सम्प्रदायं प्रवर्तयितुं तेषां तज्जिज्ञासुत्वभावनया इमे चेश्वरगुरुबुद्ध्या गुरोः सकाशात्स्वपराजयं न सहिष्यन्तीति मत्वा तूष्णीं भूतेषु भगवान् स्वरूपं ज्ञापितवान् इत्याह । मनसेति । मनसा वचसा बुद्ध्याऽन्यैरपीन्द्रियैर्यद्गृह्यते तदहमेव मत्तोऽन्यन्नेति यूयमञ्जसा बुध्यध्वमित्यन्वयः मनोवचोदृक्श्रोत्रादिभिरिन्द्रियैर्वैदिकलौकिकसूक्ष्मस्थूलनित्यानित्यैहिकामुष्मिकं यद्गृह्यते तत्सर्वमहमेव सर्वस्य चेतनाचेतनपदार्थस्य मदात्मकत्वान्मद्व्याप्यत्वान्मदधीनत्वादहमेव सर्वं मत्तोऽन्यत्पृथक्स्थितिप्रवृत्तियोग्यं नास्तीत्यञ्जसा बुध्यध्वं जानीत एवं निरन्तरानुसन्धानेन सुखेन मज्ज्ञानं स्यादिति भावः तथा सर्वत्र मद्दृष्ट्या गुणचेतसोर्विश्लेषोऽप्ययत्नत एव स्यादित्यपि ध्वनितं बुध्यध्वमित्यनेन सनकादीनुपलक्ष्य भगवता सर्वजिज्ञासून्प्रत्युपदिष्टं सनकादीनां तु सदा भगवत्तत्त्वानुसन्धाने गुणचेतसोर्ग्रन्थ्यभावात् अतएव प्रश्नेऽपि कथमन्योऽन्यसंत्यागो मुमुक्षोरतितितीर्षोरिति मुमुक्षुपदग्रहणं तत्स्वस्मरपदग्रहणं मुमुक्षुत्वं च बद्धस्यैव सम्भवति तेषां बद्धत्वाभावात् मुमुक्षुत्वाभावः तत्त्वज्ञानोपदेष्टृसम्प्रदायप्रवर्तनाय भगवदंशावतारत्वात् तदुक्तं द्वितीयस्कन्धे ब्रह्मणावतारवर्णने—

तप्तं तपो विविधलोकसिसृक्षया मे ।
आदौ सनात् स्वतपसः स चतुः सनोऽभूत् ॥
प्राक्कल्पसंप्लवविनष्टमिहात्मतत्त्वम् ।
सम्यग्जगाद मुनयो यदचक्षतात्मन्निति ॥

विष्णुपुराणे च भृग्वाद्युत्पत्तिमुक्त्वा—

सनन्दनादयो ये च पूर्वसृष्टास्तु वेधसा ।
न ते लोकेषु सज्जन्ते निरपेक्षाः प्रजासु ते ॥
सर्वे ते चागतज्ञाना वीतरागा विमत्सराः इति ॥ २४ ॥

---

भाषा टीका ।

सनकादयऊचुः हे प्रभो ! ब्रह्माजी गुणों मे चित्त का प्रवेश होता है और गुणों का प्रवेश चित्त मे होता है तब जो संसार से छूटने की इच्छा वाला है उसके चित्त से गुणों का त्याग कैसे होवैगा ॥ १७ ॥

श्रीभगवानुवाच सब सृष्टि के रचने वाले सब देवों के देव स्वयंभू ब्रह्माजी ऐसे पूछते मात्र ध्यान करने लगे तौ भी कर्मों मे बुद्धि के लगे रहने से प्रश्न के उत्तर को नहीं प्राप्त हो सके ॥ १८ ॥

उस प्रश्न के पार जाने की इच्छा से उन ब्रह्माजी ने

गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रजाः ।
जीवस्य देह उभयं गुणाश्चेतो मदात्मनः ॥ २५ ॥
गुणेषु चाविशच्चित्तमभीक्ष्णं गुणसेवया ।
गुणाश्च चित्तप्रभवा मद्रूप उभयं त्यजेत् ॥ २६ ॥
जाग्रत्स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः ।
तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः ॥ २७ ॥
यर्हि संसृतिबन्धोऽयमात्मनो गुणवृत्तिदः ।
मयि तुर्ये स्थितो जह्यात्त्यागस्तद्गुणचेतसाम् ॥ २८ ॥

भाषा टीका ।

मेरा चिंतन किया तब हंस के रूप से उस समय उनके पास हम गये ॥ १९ ॥

मेरे को देख कर वे सनकादिक चरणों मे नमस्कार करके ब्रह्माजी को आगे खडे करके पूछते भये कि आप कौन हो ॥ २० ॥

हे उद्धवजी ! तत्वकी जिज्ञासा करने वाले उन मुनियों ने जब मेरे को ऐसे पूछा तब मैंने जो उन से कहा तिस बात को तुम सुनो ॥ २१ ॥

हे विप्रो हो ! यदि तुमारे मन मे वस्तु एकही मानी है तब तो एक आत्मा जानने वाले का यह प्रश्न कैसे हो सकता है और कहने वाला मै भी किस आधार से कहूंगा ॥ २२ ॥

यदि सब का सरीर पंचभूत का है तो यथार्थता से बरोबरही हैं तब आप कौन हो यह प्रश्न आप का अनर्थक वाग्जाल मात्रही है ॥ २३ ॥

यदि यथार्थ ज्ञान से देखो तो मैं सब जगत्का शरीरी हूं व्यापक हूं तब मन से वचन से दृष्टि से तथा और भी इन्द्रियों से जो गृहीत होता है सो हम से पृथक् कुछ नहीं है ऐसे सीधा आप लोग समुझ जाओ ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं प्रश्नखण्डनमिषेणैवाऽऽत्मस्वरूपं सामान्यतो निरूप्य प्रश्नार्थोऽपि दुष्परिहरं यत्पृष्टं तत्रोत्तरमाह । गुणेष्वित्यादिनाऽध्यायसमाप्ति । अयमभिप्रायः यदि कर्तृत्वभोक्तृत्वादिरूपतया विषयैः संग्रथितं चित्तं बुद्ध्यादिशब्दवाच्यमेव जीवस्य स्वरूपं भवेत्तदा तद्वियोगो न घटेत तस्य तु स्वरूपमहं ब्रह्मैव चित्ताध्यासेन तु तत्स्वभावतया विषयैः संग्रथितम् अतः स्वस्य ब्रह्मत्वभावनया विषयाणां च मिथ्यात्वानुसन्धानेन सर्वतो निर्विद्य भगवन्तं भजतो भवत्येव परिपूर्णस्वरूपावस्थानमिति हे प्रजाः ! पुत्रकाः सत्त्वं गुणेषु चेत आविशति गुणाश्च चेतसि एवं गुणाश्चेतश्चोभयं ग्रथितं मदात्मनो ब्रह्मस्वरूपस्य जीवस्य देहोऽध्यास्ते उपाधिर्न तु स्वरूपम् ॥ २५ ॥

तस्मादभीक्ष्णं पुनःपुनर्गुणसेवया तत्संस्कारेण गुणेष्वाविशच्चित्तं ते च पुनर्वासनारूपेण चित्ते प्रकर्षेण भवन्तीति तथा ते गुणाश्चेतश्च एवं यदुभयं तन्मद्रूपः संत्यजेत् ॥ २६ ॥

ननु जाग्रदाद्यवस्थावतः कुतः कूटस्थस्वरूपता तत्राह । जाग्रज्जागरः स्वप्नः सुषुप्तं चेति बुद्धेरेता वृत्तयो न तु जीवस्य ताश्च न स्वाभाविक्यः किंतु —

सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत् ।
प्रस्वापं तमसा जन्तोस्तुरीयं त्रिषु सन्ततमिति ॥

वक्ष्यमाणक्रमेण गुणत एव जीवस्तु विलक्षणस्तत्तदवस्थारहित एव विनिश्चितः कुतः तासां साक्षित्वेन ॥ २७ ॥

ननु तर्हि कथमहं जागर्मीत्यादिप्रतीतिस्तत्राह । यर्हि यस्मादात्मनस्त्यक्त स्मृतिः सरणमनयेति संसृतिर्बुद्धिस्तया बन्धोऽयमात्मनो गुणवृत्तीर्ददाति तस्मात्तस्मिन्नपि तुर्ये स्थितः सन्निमं संसृतिबन्धं जह्यात् तत्रवा गुणचेतसां गुणानां चेतसश्चान्योऽन्य त्यागो भवति ॥ २८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी ।

दुष्परिहरमशक्योत्तरं गुणचित्तयोरन्योऽन्यत्यागः कथमिति यत् पृष्टं तत्र प्रश्ने बुद्ध्यादिशब्दवाच्यं लिङ्गशरीरमेव । ततः चित्तादुपाधेर्जीवस्वरूपत्वे तद्वियोगो विषयवियोगः । तस्य जीवस्य । चित्ताध्यासेन चित्तमेवाहमस्मीत्यभिमानेन । तत्स्वभावतया चित्तस्वभावत्वात् । चित्तस्य संग्रथितत्वे जीवस्वरूपमपि संग्रथितमिवेत्यर्थः । अतः जीवस्य ब्रह्मस्वरूपत्वात् ॥ २५ ॥

तस्मात् अध्यस्तोपाधित्वात् एवमन्योऽन्यसङ्ग्रथितं यदुभयं तत्पादसंयुक्तान्योऽन्यं प्रापततन्तुद्वयवत् परित्यजेदित्यर्थः ॥ २६ ॥

बुद्धेर्वृत्तयोऽवस्थाविशेषाः तासां बुद्धिवृत्तीनां साक्षित्वेन साक्षाद्द्रष्टृत्वात् यो यद्द्रष्टा स तद्भिन्न इति व्याप्तेर्यथा तरुद्रष्टा तरोर्भिन्न इत्यर्थः ॥ २७ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी।

तया बुद्ध्याध्यस्तया अयमध्यासनिबन्धनो बन्ध आत्मनो जीवस्य गुणवृत्तीर्जाग्रदाद्यवस्था: आत्मन्यसतीरपि ददाति प्रत्यापयति तदा स्वरूपानुसन्धानेनाध्यासपरित्यागकाले स्वत एवाचेतनानां तेषां मिथस्त्यागो भवतीत्यर्थः ॥ २८ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अथ चेतसो गुणानां चान्योऽन्यमसन्त्यागः कथमित्याद्यप्रश्नस्य साक्षादुत्तरं वक्तुमारभते । गुणेष्विति । महात्मनः महमन्तरात्मा यस्येति स महात्मा महात्मकस्य जीवस्य देह उभयं चेतश्च स्मर्यमाणा गुणाश्च भवन्तीत्यर्थः ॥ २५ ॥

स्मर्यमाणतया शब्दादिगुणानां चेतसि प्रतीयमानत्वं विवक्षितं चित्तप्रभवाः पूर्वसंस्कारवशाच्चित्ते प्रकाशमानाः मद्रूप इति सप्तमी मद्रूपे चिन्त्यमाने उभयं त्यजेत् चित्तं गुणांस्त्यजति गुणाश्च चित्तं त्यजन्तीत्यर्थः । कथमन्योऽन्यसन्त्याग इत्युपक्रमवशादयमेवार्थः एवं मद्रूपध्यानं शब्दादिगुणपरित्यागोपाय इत्युक्तम् ॥ २६ ॥

अथ जीवस्य देहाद्विलक्षणत्वानुसन्धानं च गुणपरित्यागोपाय इति वक्ष्यन् जाग्रदाद्यवस्थात्रयस्य प्रकृतिसम्बन्धोपाधिकत्वं प्रपञ्चयति । जाग्रदादिबुद्धिवृत्तयः ॥ २७ ॥

तुरीयेऽवस्थात्रयातीते जीवशरीरके मयि स्थितत्वमेव गुणचेतसामन्योऽन्यत्यागः स्यात् यद्वा गुणचित्तानां त्यागः स्यात्॥२८॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथाभिप्रायमालक्ष्य ब्रह्माणं प्रतिपृष्टं प्रति वक्ति । गुणेष्वित्यादिना । प्रजाः ! हे पुत्राः अहमन्तरात्मा यस्य स महात्मा तस्य देहे देहसम्बन्धे सति चेतो गुणेष्वाविशते ते च तस्मिन्नाविशन्तेऽतो गुणाश्चेतश्चेत्युभयं मिथो न त्यजतीति शेषः इति प्रश्नानुवादः देह इत्यनेन परस्परात्यागो देहसम्बन्धनिमित्त इतिद्योतितम् ॥ २५ ॥

अनूदितं प्रश्नमेवोपपादयति । गुणेषु चेति । सति देहसम्बन्धेऽभीक्ष्णं पुनः पुनः गुणसेवया चित्तं गुणेष्वाविशदाविष्टं भवति चकाराद्गुणाश्च तस्मिन्नाविशन्तो भवन्ति कथं बाह्याभ्यन्तरयोर्गुणचेतसोर्मिथ आवेश इत्यत आह । गुणाश्च चित्तप्रभवा इति । प्रभवत्वमत्र प्रतीयमानत्वं पूर्वसंस्कारवशाच्चित्ते प्रकाशमाना भवन्ति चित्तमपि तत एव तान् विषयीकुर्वदेवावतिष्ठत इत्यर्थः । गुणाः पुनः चित्तप्रभवाः चित्ते प्रकर्षेण भवन्ति ततो नापगच्छन्ति कथं तर्हि परस्परत्यागोपायः येन देहसम्बन्धोऽपि निवर्तेत इत्यत आह । मद्रूपे चिन्त्यमाने सत्युभयं गुणाश्चेतश्चेत्युभयं कर्तृ त्यजेत् अन्योऽन्यमिति कर्मपदमध्याहर्तव्यं चित्तं गुणाँस्त्यजति गुणाश्च चित्तं त्यजन्तीत्यर्थः । कथमन्योऽन्यसन्त्याग इत्युपक्रमवशादयमेवार्थः ॥ २६ ॥

एवमात्मस्वरूपध्यानं शब्दादिगुणपरित्यागोपाय इत्युक्तम् अथ जीवस्य देहविलक्षणत्वानुसन्धानं च गुणपरित्यागोपाय इति विवक्षुस्तावज्जीवस्य प्रकृतिविलक्षणत्वज्ञापनाय तं ततो विविनक्ति । जाग्रदिति । जाग्रच्छब्दस्य कर्तरि शत्रन्तस्य व्युत्पन्नत्वेऽपि तदाश्रितजाग्रदाद्यवस्थायामत्र लक्षणया वृत्तिः जाग्रदादयस्तिस्रोऽवस्था गुणतः प्रकृतिगुणेभ्यः सत्त्वादिभ्यः हेतुभ्यः बुद्धेरन्तःकरणस्य वृत्तयः प्रवृत्तयः तद्व्यापारनिमित्ता इत्यर्थः तथाच विविच्य वक्ष्यति—

सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत् ।
प्रस्वापं तमसा जन्तोस्तुरीयं त्रिषु सन्ततमिति ॥

यद्यपि सुषुप्तेरन्तःकरणादिकरणेषु निर्व्यापारेषु सत्स्वहमहमित्यवभासमात्ररूपत्वान्न तस्या बुद्धिवृत्तित्वं तथापि निर्व्यापारे सत्यन्तःकरणे मनुष्यत्वब्राह्मणत्वसुखित्वदुःखित्वादिवाह्याभ्यन्तराद्यवभासविधुरकस्वतथाविधोऽस्वाप्सम् इति तावन्मात्रेण तस्माद्वृत्तित्वव्यवहार इति बोध्यम् अनेन जीवस्य जाग्रदाद्यवस्थात्रयान्वयः प्रकृतिसंबन्धप्रयुक्तत्वेनौपाधिको न स्वाभाविक इति प्रकृतितत्कार्यतत्सम्बन्धतत्प्रयुक्तादिभ्योऽतिरिक्तं प्रत्यगात्मस्वरूपमित्युक्तं भवति तदाह । तासां विलक्षण इति । साक्षिविलक्षणपदद्वयान्वयाभिप्रायेण तासामित्यपादानस्य शेषत्वविवक्षया षष्ठी ताभ्यो विलक्षण इत्यर्थः । कथं ताभ्यो विलक्षणत्वं तदन्वय इत्यत आह । साक्षित्वेन विनिश्चित इति । तासां साक्षित्वेनेति सम्बन्धः साक्षित्वं च साक्षाद्द्रष्टृत्वं तदेवावस्थात्रयान्वयात्मकमिति विलक्षणस्याप्यवस्थात्रयान्वय उपपद्यत इति भावः ॥ २७ ॥

ततः किमत आह । यर्हीति । यर्हि यतोऽयं संसृतिबन्धः देहसम्बन्धरूपसंसारबन्धः आत्मनो जीवस्य गुणवृत्तिदः गुणानां शब्दादिविषयाणां चेतसश्च परस्परावेशेन या वृत्तयः सङ्कल्पविकल्पात्मिकाः ता ददातीति तथा यद्वा आत्मनो मनसः गुणवृत्तिदः गुणेषु शब्दादिषु वृत्तीर्भोग्यतादिबुद्ध्यात्मिकाः ददातीति तथाऽतस्तुर्ये स्वतोऽवस्थात्रयरहिते जीवशरीरके मयि स्थितः मनः परस्यात्मन इत्यस्य प्रथमान्ततया विपरिणामेन कर्तृतयान्वयः मयि स्थित आत्मा मनः जह्यात् गुणवृत्तीस्त्यजेदित्यर्थः प्रकृतिविविक्ते महात्मके स्वभावतोऽवस्थात्रयरहिते जीवस्वरूपे स्थितः तद्यथात्म्यानुसन्धानपर आत्मा गुणवृत्तीर्जह्यादित्यर्थः । ततश्च गुणवृत्तित्यागाद्गुणचेतसां त्यागः स्यात् परस्परावेशत्यागः स्यात् प्रकृतिविलक्षणमहात्मकजीवस्वरूपयाथात्म्यानुसन्धानेन चेतोवृत्तित्यागस्ततो गुणचेतसां त्यागः ततो देहसम्बन्धत्यागः ततो निरवशेषवैषयिकसुखदुःखनिवृत्तिर्निरतिशयानन्दप्राप्तिश्चेत्युक्तं भवति अवस्थात्रयरहितजीवस्वरूपानुसन्धानेऽप्यात्मनो विशेष्यतयानुसन्धानमपि कार्यमिति द्योतनाय मयीति विशेष्यत्वनिर्देशः जीवस्य परमात्मानं प्रति नियतविशेषणता हि तत्स्वरूपनिरूपणोपयुक्ता ॥ २८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इदानीं सनकादीनां प्रश्नं परिहरति । गुणेष्वित्यादिना । हे प्रजाः ब्रह्मजत्वेन प्रकृष्टजन्मत्वात्तथा सम्बोधनं वः चेतो गुणेष्वाविशते गुणाश्चेतसीति प्रश्नस्यायं परिहारः मय्येव आत्मा मनः यस्य स इत्यस्यां मयपदित्वे एतद्रूपं सिध्यति ॥ २५ ॥

एवं धातुवद्गुणचित्तयोरभिभावो ज्ञानाग्निनेत्युक्तं तत्र स केन प्रकारेणेतीत्यत्राह । गुणेष्विति । अभीक्ष्णं निरन्तरं गुणानां विषयाणां सेवया चित्तं चेतो गुणेषु विषयेष्वाविशेदा-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कार्येषु वर्तते गुणाश्च चित्तप्रभवाः चित्ते प्रभवो येषां ते तथा चित्ते संस्काररूपेण वर्तन्ते हरिस्मरणमतिक्रम्य प्रतीयन्त इत्यर्थः । ततः किमत्राह । मद्रूप इति । तत्र विज्ञानमद्रूपे मम स्वरूपे चेतो गुणांश्चेत्युभयं त्यजेत् इदमुक्तं भवति मनआदीन्द्रियाणि मदन्तर्यामिणि हरौ स्थितानि तदाधाराणि तत्प्रेरितानि विषयेषु वर्तन्ते विषयाश्च विष्णुरूपा विष्ण्वाधारा विष्णुप्रेरिता मम भोगसाधनानीत्ययं विष्णौ गुणादित्याग इति—

विष्णुरूपा विषयाः सर्वे विष्णावेव मनो मम ।
इति मत्यर्थं तत्सर्वं त्यजेत्तत्र साधनः ॥

इति वचनात् मुमुक्षुभिरेवमेव नित्यमनुसन्धेयम् ॥ २६ ॥

नन्वस्य गुणसङ्गस्य स्वाभाविकत्वे पुरुषायुषानन्त्येनापि त्यागो न सुलभ इति तत्राह । जाग्रदिति । जाग्रदाद्यवस्था गुणतो गुणद्वारेण बुद्धिवृत्तयः बुद्ध्याः प्रकृत्याः वृत्तिर्वर्तनं यासां तास्तथा प्रकृतिगुणसम्बन्धाज्जीवस्य जाग्रदाद्यवस्थावर्तित्वं न स्वाभाविको गुणसङ्ग इत्यर्थः । तात्पर्यमाह । तासामिति । तासां जाग्रदाद्यवस्थानां साक्षित्वेन वर्तमानो जीवः स्वतन्त्रोऽयो विलक्षणो विनिश्चित इत्यन्वयः ॥ २७ ॥

नन्वयमस्वाभाविकः स्वत एव निवर्तते न तत्साधनप्रयत्नापेक्षेत्याशङ्कां परिहर्तुमुक्तानुवादपूर्वकं तत्साधनं कथयति । यर्हीति । आत्मनो जीवस्यायं संसृतिबन्धः सत्त्वादिगुणप्रवृत्तितः इति यर्हि यस्मादयमास्तुर्ये गुणत्रयातीते मयि स्थितं स बन्धं जह्यात् मदुपासनासमुद्भूतसमुद्भवज्ञानाभिभूतमत्प्रसादेन बन्धं त्यजतीत्यर्थः । कोऽयं बन्धत्यागो नाम येन हेयत्वेन वर्ण्यते इति तत्राह । त्याग इति । विषयारूढबाह्यान्तःकरणत्याग एव बन्धत्यागो नाम नान्यादिति ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नन्वेवं सति गुणाश्चेतश्च मिथः प्रसङ्गेन स्थितानि मय्यपि प्रसज्जन्ति किमुत जीवे इत्यस्माकं त्रिगुणीभूयैव प्रवृत्ता जात इत्याशङ्क्य जीवे तेषामस्वाभाविकसम्बन्धं कथयन् स्वस्मिंस्तत्कैमुत्यं दर्शयति । गुणेष्विति । गुणेष्वित्यादिकं सत्यमेव किन्तु जीवस्य तदुभयमपि देह उपाधिमात्रेणैव जीवे सम्बद्धमित्यर्थः यतो मदात्मनः ब्रह्मैवात्मा परमांशिरूपो यस्य तस्य शुद्धस्य ततो मयि तु तत्सम्बन्धः सुतरामेव नास्तीत्यर्थः । अयं भावः यथा सूर्यांशानां रश्मीनां सूर्यकार्यभूतेन मेघेन स्वाभाविकसम्बन्धो नास्ति सूर्यस्य तु दूरत एव तद्वार्ता तथा जीवानां मम च सम्बन्ध इति ॥ २५ ॥

तदेवमपि जीवस्तु स्वशक्त्या तान् वियोजयितुं न शक्नोति किन्तु मद्भेदोपासनादिलब्धमच्छक्त्यैवेत्याह । गुणेषु चेति । मद्रूपः मदभेदभावनाविष्टः इति ज्ञानानुसारेणोक्तं भक्तिरूपोपासना चेत् मम रूपं यत्र स ध्यातेति ज्ञेयम् ॥ २६ ॥

जीवस्य तैः स्वाभाविकसम्बन्धाभावं दर्शयति । जाग्रदिति तैः ॥ २७ ॥

जीवस्य स्वतोऽशक्तिं दर्शयंस्तदेव द्रढयति । यर्हीति । मयि तुर्यं इति "विराट् हिरण्यगर्भश्च कारणं चेत्युपाधयः । ईशस्य यत्त्रिभिर्हीनं तुरीयं तत्पदं विदु"रिति न्यायेन एतदेव मूलप्रश्नस्योत्तरमित्याह । त्याग इति । ततः स्वत एवाचेतनानां तेषां मिथस्त्यागो भवतीति भावः ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नन्वेवं चेत् सत्यमज्ञानिन एव वयं स्म किन्तु भवानेव चेत् सर्वं तर्हि चेतश्च गुणाश्च त्वमेवातश्चेतोवृत्तिषु विषयाः प्रविष्टा विषयेष्वपि चेतोवृत्तयः प्रविष्टा इत्युभयेषामेषामन्योऽन्यसन्त्यागं भवानेवास्माभिः प्रष्टव्योऽभूत् अतः कृपयोत्तरं देहीत्यत आह । गुणेष्विति । हे प्रजाः हे पुत्रकाः! सत्यं गुणेषु चेत आविशति गुणाश्च चेतसि एवं गुणाश्चेतश्चोभयं मदात्मनश्चिन्मयत्वेन ब्रह्मस्वरूपस्य जीवस्य देह अध्यस्तम् उपाधिरेव नतु स्वरूपम् एवं च चेतसो गुणानां च परस्परसन्त्यागार्थं कथं यतध्वे उभयमेव तदनर्थकारि दूरतस्त्यक्त्वा कथं न निर्द्वन्द्वीभवतेति ध्वनिः ॥ २५ ॥

ननूभयपरस्परसंत्यागश्च दुर्घट एवेत्याह । गुणेष्विति । अनादित एवाभीक्ष्णं गुणसेवया दृढतरेण तत्संस्कारेण गुणेष्वाविशदेव चित्तं वर्तते कथं तांस्त्यक्तुं प्रभविष्यति भावः गुणाश्च पुनः पुनर्वासनारूपेण चित्ते प्रकर्षेण भवन्ति सदा तत्र वर्तन्त इति ते गुणाश्च कथं वा तत्त्यक्तुं प्रभविष्यन्ति भावः । किञ्च ज्ञानिनां कष्टेन परस्परतदुभयत्याजना च निष्प्रयोजनैव तैरुभयैरपि प्रायः प्रयोजनं तेषां नास्तीत्याह । मद्रूपः मदभेदभावनावेशात्तन्मयः सन् ज्ञानी उभयं त्यजेत् भक्तानां तु मत्सेवामेव परमपुरुषार्थत्वेन निश्चिन्वतां मद्रूपगुणलीलारसनिमग्नचेतसः सकाशात् स्वत एव गुणा अपयान्तीति न तेषाञ्चेतोगुणयोः परस्परसन्त्यागो दुर्घटो मन्तव्य इति भावस्तु तेषां नेष्ट इति ज्ञेयम् ॥ २६ ॥

वस्तुतस्तु निर्लेपजीवस्य गुणैश्चित्तादिभिश्च सम्बन्ध एव नास्ति मिथ्याध्यासत्याग एव तत्त्याग उच्यत इत्याह । जाग्रदिति जाग्रत् जागरः—

सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत् ।
प्रस्वापं तमसा जन्तोस्तुरीयं त्रिषु सन्ततमिति ॥

वक्ष्यमाणगुणत एव हेतोर्बुद्धिवृत्तयः जीवस्तु विलक्षणस्तत्तदवस्थारहित एव कुतस्तासां साक्षित्वेनैव विनिश्चितः ॥ २७ ॥

किञ्च यद्यपि गुणाः सर्वथैव जीवस्य न भवन्ति तथापि देहाध्यासप्रसादाद्गुणवृत्तीः सः प्राप्नोति ततश्च देहाध्यासभङ्गे सत्येव तान् स त्यजतीत्याह । यर्हि आत्मनो जीवस्यायं देहाध्यासरूपः संसारबन्धोऽभूत्तर्ह्येव स गुणवृत्तिदः जीवाय तस्मै गुणवृत्तिप्रदोऽभूत् यर्हि च मयि तुर्ये स्थितः सन् जह्यात् इमं संसृतिबन्धं त्यजेत् तदा गुणचेतसां गुणानां चेतसश्चान्योऽन्यं स्वत एव त्यागो भवति ॥ २८ ॥

अहंकारकृतं बन्धमात्मनोऽर्थविपर्ययम् ।
विद्वान्निर्विद्य संसारचिन्तां तुर्ये स्थितस्त्यजेत् ॥ २९ ॥
यावन्नानार्थधीः पुंसो न निवर्तेत युक्तिभिः ।
जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा ॥ ३० ॥
असत्त्वादात्मनोऽन्येषां भावानां तत्कृता भिदा ।
गतयो हेतवश्चास्य मृषा स्वप्नदृशो यथा ॥ ३१ ॥
यो जागरे बहिरनुक्षणधर्मिणोऽर्थान् भुङ्क्ते समस्तकरणैर्हृदि तत्सदृक्षान् ।
स्वप्ने सुषुप्त उपसंहरते स एकः स्मृत्यन्वयात्त्रिगुणवृत्तिदृगिन्द्रियेशः ॥३२॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं स्वस्वरूपं निर्दिश्य ब्रह्मणोऽपि यद्गुरूहं पृष्टं तस्योत्तरमाह । गुणेष्वित्यादिभिः । हे प्रजाः ! पुत्राः गुणेषु विषयेषु चेतो विशते गुणाश्च चेतसि विशन्तीति सत्यं गुणाश्चेतश्चोभयं मदात्मनो मदंशस्य जीवस्य देहः देहस्य हेतुत्वात् गुणवासनामयं चेत एव जीवस्य विविधदेहधारणे हेतुरित्यर्थः ॥ २५ ॥

कथं तर्हि तत्त्यागस्तत्राह । गुणेषु चेति । चित्तमभीक्ष्णं गुणसेवया पुनः पुनस्तत्संस्कारेण गुणेषु आविशत् गुणाश्च चित्तप्रभवा अभीक्ष्णं तद्वासनायुक्ताच्चित्तात्प्रकर्षेण भवन्त्युत्पद्यन्ते तथा यद्यपि परस्परं ग्रथितमेतदुभयं तथापि जीवो मद्रूपः सन् त्यजेत् अहं सच्चित्स्वरूपो भगवदात्मकः सदा निर्विकारः गुणचेतसी मम स्वरूपनिबन्धने न भवतः किन्त्वनित्ये इति भगवत्स्वरूपवद्गुणादिवैलक्षण्यज्ञानवान् सन् त्यजेदित्यर्थः "धर्मो नित्यः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्यान्यनित्य" इति भारते व्यासवचनात् ॥ २६ ॥

ननु जाग्रदाद्यवस्थावतो जीवस्य कुतो निर्विकारत्वं कुतो वा गुणादिवैलक्षण्यमिति चेत्तत्राह । जाग्रदिति । जाग्रदाद्यवस्था गुणतो गुणैः सत्त्वादिभिर्हेतुभूतैर्बुद्धिवृत्तयो भवन्ति न तु जीवस्वरूपे स्वतो भवन्ति यतो जीवस्तासां वृत्तीनां साक्षित्वेन साक्षाद्द्रष्टृत्वेन विनिश्चितः विवेकिभिरिति शेषः अहं स्वप्नानद्राक्षं सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्यादिप्रत्यभिज्ञानात् तस्मात्ताभ्यो ऽवस्थाभ्यो विलक्षणो जीवः ॥ २७ ॥

ननु यद्येवमवस्थाविलक्षण एव जीवस्तर्हि अहमस्वाप्समहं जागर्मीत्याद्यवस्थात्मत्वप्रतीतिः कथं कदा वा तद्राहित्यमिति चेत्तत्राह । यर्हीति । संसरणेनानात्मन्यात्मानं बध्नातीति संसृतिबन्धोऽहङ्कारः स आत्मनो गुणवृत्तिदः आत्मनो जीवस्य गुणकार्यवृत्तीः स्वप्नाद्यवस्था ददातीति तथा तस्मादयं जीवात्मा तुर्ये मयि भगवत्याश्रयानीति मयि वर्तमाने तुर्ये शुद्धस्वरूपे जीवेऽवस्थितस्तुर्यः तुरीयस्वरूपानुसन्धानवानिति यावत् यर्हि यदा जह्यात् तं संसृतिबन्धमहङ्कारं त्यजेत् तस्मिन् काले गुणचेतसो त्यागः गुणानां चेतसश्च त्यागो विश्लेषो भवेत् ॥ २८ ॥

---

भाषा टीका ।

हे पुत्रो हो ! गुणों मे चित्त प्रविष्ट होता है चित्त मे गुण प्रविष्ट होते हैं हमारा शरीर भूत जो आत्मा है तिसके देह मे गुण चित्त ए दोनों विद्यमान हैं ॥ २५ ॥

निरन्तर गुणों की सेवा करने से चित्त गुणों मे प्रविष्ट होता है चित्तकी वासनाओं से गुण भी चित्तमे प्रविष्ट होते हैं जिसका चित्त मेरे रूप मे आसक्त होजाता है वह इन दोनों को छोड देता है ॥ २६ ॥

जाग्रत् स्वप्न सुषुप्ति ए तीनों वृत्ति जीव के त्रिगुणों से होती हैं और जीव तो इन का साक्षी होने से इन अवस्थाओं से भिन्न ही है यह निश्चित है २७ ॥

जब पर्यन्त यह बुद्धि गुणों की वृत्तियों से युक्त है तब पर्यन्त यह संसार बन्ध है जब मेरे शरीर तुर्य रूप जीव मे मनको युक्त करे तब तो उन वृत्तियों के छूटने से चित्त तथा गुण दोनों का वियोग होजाता है ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कथं संसृत्या बन्धः कथं च तं जह्यात्तदाह । अहंकारेण कृतं बन्धमात्मनोऽर्थविपर्ययमानन्दाद्यावरणेनानर्थहेतुं विद्वान् जानन् सन्निर्विद्य दुःखमेतदिति ज्ञात्वा तुर्ये स्थितो भूत्वा संसारचिन्तां संसारोऽस्तीत्यस्मिन्नर्थे चिन्तामभिमानं तत्कृतां भोगचिन्तां च त्यजेदिति ॥ २९ ॥

यावदेव न त्यजेत्तावत्तस्य कर्मज्ञानादि सर्वं व्यर्थमित्याह । यावदिति । यद्यपि जागर्ति कर्मादिषु तथाऽपि स्वपन्स्वप्नानिव पश्यन्निव भवति यतोऽज्ञः असम्यग्दर्शी अज्ञजागरस्य स्वप्नत्वे दृष्टान्तः स्वप्न इति ॥ ३० ॥

ननु कथं वेदप्रमितवर्णाश्रमकर्मादिनानार्थधीर्निवर्तेत तत्राह । असत्त्वादिति । भावानां देहादीनां तत्कृता भिदा वर्णाश्रमादिरूपा गतयः स्वर्गादिफलानि हेतवः कर्माणि चास्याऽऽत्मनो मृषा अविद्याविषयो वेद इति भावः ॥ ३१ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

युक्तिभिरित्युक्तं ता युक्तीराह । य इति । अर्थान्स्थूलान्देहादीन्समस्तकरणैश्चक्षुरादिभिर्भुङ्क्ते कथंभूतान् अनुक्षणधर्मिणः क्षणिकबाल्ययौवनादिधर्मवतो यश्च स्वप्ने हृदि जागरदृष्टसदृशान्वासनामयान्भुङ्क्ते यश्च सुषुप्ते तान् सर्वानुपसंहरति स एकः कुतः त्रिगुणवृत्तिदृगवस्थात्रयद्रष्टा ननु जाग्रदवस्थां सर्वेन्द्रियाणि पश्यन्ति स्वप्ने मनः सुषुप्ते तत्संस्कारशेषा बुद्धिः कथमात्मा तद्द्रष्टा तत्राऽऽह । इन्द्रियेशः ननु इन्द्रियेशा अपि विश्वतैजसप्राज्ञा भिन्नाः न कुतः स्मृत्या प्रतिसंधानेन सर्वावस्थान्वयात् यः स्वप्नानद्राक्षं यश्च तदनन्तरं न किंचिदवेदिषं स एवेतर्हि जागर्मीत्युपाधिभेदेन विश्वादिव्यवहार इति भावः । एतेन बाल्ययुवाद्यवस्थास्वपि प्रतिसन्धानेनाऽऽत्मैक्यं द्रष्टव्यम् ॥ ३२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तं बन्धं संसारे बुद्धौ चिन्तामध्यासमभिमानं श्लेषेण बुद्ध्याऽध्यस्ततया चिन्तां भोगचिन्तां तथाच तत्कृतां भोगचिन्तामिति व्याख्यातम् ॥ २९ ॥

एवं निर्वेदप्रकारेण यावदभिमानकृतनानात्वं न त्यजेत् युक्तिभिर्यो जागर इत्यत्र वक्ष्यमाणाभिः ॥ ३० ॥

शङ्कते । नन्विति । वेदवाणिना वेदप्रमाणज्ञापिता वर्णाश्रमकर्मादिरूपा नानाधीर्भेदबुद्धिः कथं निवर्तेत आदिना फलग्रहः आत्मनोऽन्येषाम् आत्मव्यतिरिक्तानां भावानां देहादीनामसत्त्वान्मिथ्यात्वात् तत्कृता देहादिकृता भिदा वर्णाश्रमादिरूपो भेदः एवं गतयः स्वर्गादिफलानि हेतवस्तत्साधनानि कर्माणि च अस्यात्मनः सम्बन्धे मृषैव स्वप्नद्रष्टुः स्वप्ने दृश्यमानराजादिभेदवत् तन्वदृष्टार्थं ब्राह्मणमुपनयीत स्वाराज्यकामो राजा राजसूयेन यजेतेत्यादिभेदप्रतिपादकवेदस्य का गतिरिति चेत्तत्राह अविद्यासविषय इति । अविद्या स्वरूपाज्ञानं तद्वन्त एव विषया अधिकारिणो यस्य तादृशो वेदः तथाच त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुनेतिवदात्मानुभविनो न तत्राधिकार इत्यर्थः ॥ ३१ ॥

देहादीनित्यादिना गेहपुत्रादिपरिग्रहः वासनामयान् सूक्ष्मान् तान् सर्वान् स्थूलान् सूक्ष्मांश्च सर्वान् विषयानुपसंहरते अज्ञाने लीनान् करोति न पश्यतीत्यर्थः । तत्संस्कारशेषा तस्यावस्थाद्वयस्य संस्कारः शेषो यस्यां सा तथा इन्द्रियेशः बहिरिन्द्रियाणामन्तरिन्द्रियस्य मनोबुद्ध्योश्चेशः स्मृत्यान्वयं दर्शयति । यश्चेति अनुस्मृत्यनुभूत्योः समानाधिकरण्यात् योऽहं स्वप्नसुषुप्त्योर्द्रष्टाऽभवं स एवाहमिदानीं जागर्मीत्येकस्यैव स्मृत्या सर्वावस्थान्वयान्न विश्वादयो भिन्नाः किन्तु विशेषणभेदेन विश्वादिव्यवहार औपाधिक एव न वास्तव इत्यर्थः । एतेन जाग्रदाद्यवस्थासु स्मृत्यात्मन ऐक्येन बाल्ययुवाद्यवस्थास्वपि योऽहं बाल्ये क्रीडासक्तो यश्च तारुण्ये तरुणीसक्तः स एवाहमिदानीं वृद्धोऽस्मीति स्मृत्याऽऽत्मैक्यं द्रष्टव्यमित्यर्थः ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अर्थविपर्ययम् अस्य स्वामिति बुद्धिरूपं ममकारम् अहङ्कारानन्तरं पठितत्वात् प्रयोजनं विघातं वा निर्विशेष्यमुक्तत्वात् तुर्ये स्थितः इति अवस्थात्रयातीतपरिशुद्धजीवात्मस्वरूपानुसन्धाता ॥ २९ ॥

नानार्थधीर्देवमनुष्याद्यभिमानबुद्धिः युक्तिभिः देहात्मभेदप्रतिपादकयुक्तिभिः यद्यपि जागर्ति तथापि स्वपन् स्वपिति जाग्रद्दशायामप्ययम् इत्यर्थः । भ्रान्तिदशायामेव जागराभिमाने दृष्टान्तमाह । स्वप्न इति ॥ ३० ॥

भावानां देवमनुष्याद्याकाराणामात्मन्यसत्त्वात्कृता भिदा देवादिभेदः किं कृत इत्यर्थः । तत्कृतेति पाठे देवादिशरीरकृतो भेदः गतयस्तद्वृत्तयः तद्धेतवो दोषाश्च मृषा स्वप्नज्ञानादय इव विनाशिन इत्यर्थः ॥ ३१ ॥

अनुक्षणधर्मिणः प्रतिक्षणपरिणामिनः समस्तकरणैः अपास्तोपरतबाह्यकरणैः सुप्तः सुषुप्तःविषयादरामिति शेषः स एकः अवस्थात्रयेऽप्येकः अन्वयात्प्रत्यभिज्ञानादित्यर्थः त्रिगुणवृत्तिदृक् गुणत्रयकलुषज्ञानः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मयि तुर्ये स्थितो इत्यनेन यथावस्थितस्वात्मपरमात्मयाथात्म्यानुसन्धाननिष्ठस्यानादिदेहात्माभिमानस्वतन्त्रात्माभिमानप्रयुक्तो देहसम्बन्धात्मको बन्धस्तत्तश्च गुणचेतसां परस्परमेण इति सूचितं तत्स्फुटमेवाह । अहङ्कारकृतमिति । अहङ्कारो ज्ञानैकस्वरूपे आत्मनि देवत्वमनुष्यत्वादिभेदाभिमानरूपः स्वतन्त्रत्वाभिमानरूपश्च तेनानादिना कृतमात्मनो बन्धमर्थविपर्ययमर्थस्य परमपुरुषार्थस्य विपर्ययो विघातो यस्मात्तथाभूतं विद्वान् जानन्निर्विद्य संसारबन्धनादिति शेषः । तुर्ये स्थितः सन् पूर्ववदर्थः संसारचिन्तां संसृतिबन्धात्मकां मुञ्चेयमिति चिन्तां त्यजेत् ॥ २९ ॥

अहङ्कारस्य सर्वानर्थनिदानतामाह । यावदिति । नानार्थधीः देवत्वमनुष्यत्वाद्यभिमानबुद्धिः युक्तिभिर्देहात्मभेदप्रतिपादकयुक्तिभिः यावन्न निवर्तेत तावज्जागर्त्यपि यद्यपि जागर्ति तथाप्ययं स्वपन्निव जाग्रद्दशायामपि सुप्त इवाज्ञ इत्यर्थः भ्रान्तिदशायामेव जागराभिमाने दृष्टान्तमाह । स्वप्ने जागरणं यथेति । नहि स्वप्नं पश्यन् तं स्वप्नमिति जानाति किन्तु जागरमेवाभिमन्यते एवमज्ञानेन देहमात्मत्वेन पश्यन् तद्भ्रमात्मकमिति जानाति किन्तु यथार्थमेवेति अतो यावद्देहादिविलक्षणमात्मानं यथावन्न जानाति तावत्सुप्तोऽप्यज्ञ एवानर्थम् इति भावः ॥ ३० ॥

ननु तुर्यस्थितिमात्रेण कथमनादिकालानुवृत्ताहङ्कारादित्याग इत्यत आह । असत्त्वादिति । आत्मनः स्वतः ज्ञानैकरूपस्यान्येषां भावानां देवमनुष्याद्याकाराणामौपाधिकत्वेन नित्यमसत्-

एवं विमृश्य गुणतो मनसस्त्र्यवस्था मन्मायया मयि कृता इति निश्चितार्थाः ।
संछिद्य हार्दमनुमानसदुक्तितीक्ष्णज्ञानासिना भजत माऽखिलसंशयाधिम् ॥ ३३ ॥
ईक्षेत विभ्रममिदं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम् ।
विज्ञानमेकमुरुधेव विभाति माया स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्पः ॥ ३४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सगन्धादिरहितत्वादविषमेव वस्तुगृहादिवदूहनीयं तथा तेषां गतयो हेतवश्च गम्यन्ते प्राप्यन्ते विषया आभिरिति गतयः साधनभूताः क्रियाः तथा तेषां हेतवः कारणानि वर्णाश्रमाभिमानादयः यद्यप्यस्य प्रवृत्तिनिष्ठस्य सत्या नित्यसुखरूपाः प्रतीयन्ते तथाप्यस्य मुमुक्षोर्विदुषः परमार्थोपयोगित्वाभावात्स्वप्नवदेव न स्वरस्त्वात्मा किञ्चित्करत्वेन मृषैव तत्र दृष्टान्तः स्वप्नदृशो यथा स्वप्नान् पश्यतः पुरुषस्य तत्कालं स्वाप्निकाः पदार्थाः सत्या अपि तस्यैव प्रबुद्धस्य ते मृषा न किञ्चिदप्यर्थं कुर्वन्तीत्यर्थः । तत्र तावत् मुमुक्षोर्विदुषः स्त्रीमात्रप्रसङ्ग "स्त्रीणां तत्सङ्गिनां सङ्गं त्यजेद्दूरत आत्मवानि"ति वाक्यात्त्याज्य एव परन्तु तस्यापि तत्त्वविचारार्थं भगवद्भजनार्थं वा देहनिर्वाहमात्रमपेक्षितं तत्तु प्रारब्धप्राप्तेन यादृशतादृशान्नवस्त्रनिवासस्थानेन भवत्येव न तु रसगन्धादिमद्द्रव्यस्यावश्यकत्वं तथोक्तं महाभारते—

शरीरं यथाकथञ्चित्प्राणेभ्यश्च यथाशक्त्युपपन्नत् ।
यत्र क्वचनशायी स्यात्सूत्रवद्यत्र यत्र इति ॥

अत्र मायावादिनः ननुकथं वेदप्रतिपादितवर्णाश्रमकर्मादिमानाधीनिर्वर्तितत्वादिरूपस्य भावानां देहानामनन्त्वात्तरकृता भिदा वर्णाश्रमादिरूपा गतयः स्वर्गादिफलानि कर्माणि चाप्यात्मनो मृषा अविद्याविषयो वेद इति व्यासश्रुतवचनत् "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती"त्यादिश्रुत्या तत्त्वविविदिषार्थं वर्णाश्रमादिकर्मणो सर्वैर्विद्भिरङ्गीकृतत्वात्तद्विरोधापत्तेः किञ्च वेदस्याविद्याविषयत्वे वर्णाश्रमाणां तद्धर्माणां च वेदविहितत्वेन मृषात्वे सति सन्न्यासाश्रमतद्धर्मस्यापि तदन्तःपातित्वेन कर्मत्यागपूर्वकशिखासूत्रत्यागदण्डधारण भिक्षाटनमिताहारोपनिषदादिश्रवणान्तविचारप्रणवजपादिरूपसन्न्यासधर्मानुष्ठातृणां भूतभविष्यद्वर्तमानानां सन्न्यासिनामप्यविद्यावत्त्वापत्तेः संसारिधर्मवत्त्वेन मुमुक्षुद्वेष्यत्वापत्तेः अपिच मोक्षफलस्य श्रवणमनननिदिध्यासनज्ञानभक्त्यादिरूपसाधनस्यापि वेदप्रतिपाद्यत्वात्तस्यापि मृषात्वापत्तेर्वेदवेदान्तादिसर्वशास्त्रस्य मृषात्वेन तद्व्याकोपावहं विस्तरेण तस्मात्स्वर्गफलस्य स्त्रीपशुपुत्रादिकामुक्तमाविकृत्यतत्फलविधायकवेदभागस्य तथात्वमुच्यते चेत्तद्भवतु तथा न तु सर्ववेदस्य तथात्वं वक्तुमुचितमुक्तदोषप्रसङ्गात् ॥ ३१ ॥

पूर्वमात्मनोऽवस्थात्रयवैलक्षण्यं तत्साक्षित्वं चोक्तं तदेवोपपादयति । यदिति । यो जागरे जाग्रदवस्थायां बहिरर्थान् बाह्यविषयान् रूपरसगन्धादिमद्द्रव्याणि समस्तकरणैश्चक्षुरादिभिः सर्वेन्द्रियैर्भुङ्क्ते कथं भूतान् क्षणक्षयधर्मिणः क्षणे क्षणे परिणामित्वात् अस्थिरत्वतः यश्च स्वप्ने हृदि तत्सदृशान् तत्सदृशान् जाग्रदनुभूतसदृशसंस्कारात्मना हृदि मनसि स्थितान् यश्च सुषुप्ते सुषुप्त्यवस्थायां तान् सर्वानुपसंहरते स एकः तत्र हेतुः इन्द्रियेशः चक्षुरादीनामिन्द्रियाणां मनसो बुद्धेश्चेशः स्वामी प्रेरक इत्यर्थः यद्यपि जाग्रदाद्यवस्थानां विश्वतैजसप्राज्ञा अभिमानिनः प्रसिद्धास्तेषामवस्था भेदेन भिन्नत्वात्तथाप्येकरूपता तथाप्यात्मनोऽवस्थानां साक्षित्वेनैकत्वमाह । त्रिगुणवृत्तिदृगिति त्रिगुणवृत्तीनामवस्थानां दृगेक एक इत्यर्थः । आत्मन एकत्वे प्रत्यभिज्ञाप्रमाणमाह । स्मृत्यन्वयादिति । यः स्वप्नमद्राक्षं यश्च तदनन्तरं सुखमस्वाप्सं न किञ्चिदवेदिषं स एव जागर्मीति प्रतिसन्धानेन सर्वावस्थास्वन्वयात् अनुगतत्वात् अवस्थानां व्यभिचारात्सिद्धमवस्थावैलक्षण्यं तत्साक्षित्वं चात्मन इति ॥ ३२ ॥

---

भाषा टीका ।

देहादिकों मे अहंकार के करने से यह बन्धन है जिससे कि आत्मा के अर्थका विपरीत भाव होरहा है तिससे विद्वान् पुरुष उसको दुःख रूप जानकर मेरे शरीर जीव तुम्हें रूप मे आश्रित होकर संसार की चिन्ता को त्याग देवे ॥ २९ ॥

जब तक शब्दादि विषयों मे पुरुषकी नाना प्रकारकी बुद्धि युक्तियों से निवृत्त नहीं होती है तब तक वह पुरुष जगा हुआ भी सोताही सरीखा है जैसे कि स्वप्न मे अपने को जगा हुआ देखने से भी जागना नहीं होता है ॥ ३० ॥

आत्मा के साथ मे और देहादि पदार्थों का यथार्थ सम्बन्ध न होने से गुण कृत होने से उन सबों से आत्मा मे देहादि भेद प्रतीत होता है तथा इसकी कर्म कृत जो गति है औ जो उसके हेतु हैं वे सब इसके कर्म कृत अज्ञान से हो रहे हैं जैसे कि स्वप्न मे क्षणिक पदार्थ भी चिरस्थायी मालूम पड़ते हैं ॥ ३१ ॥

जो आत्मा जाग्रत अवस्था मे बाहिर के क्षणिक पदार्थों को सब इन्द्रियों से भोगता है और स्वप्न मे उसी प्रकार के पदार्थों को हृदय मात्र मे भोगता है और स्वप्न मे सब भोगों को समेट लेता है वह आत्मा एकही है क्यों कि वह सब इंद्रियों का प्रेरक है और जागरण मे उसको तीनों अवस्थाओं के भोगों का स्मरण होता है ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततः किमत आह । एवमिति । गुणतो या एतो मनसस्त्र्यवस्थास्ता मदविद्यया मयि कृता न तत्त्वतः सन्तीति निश्चित

दृष्टिं ततः प्रतिनिवर्त्य निवृत्ततृष्णस्तूष्णीं भवेन्निजसुखानुभवो निरीहः ।
संदृश्यते क्व च यदीदमवस्तुबुद्ध्या त्यक्तं भ्रमाय न भवेत् स्मृतिरानिपातात् ॥ ३५ ॥
देहं च नश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् ।
दैवादपेतमुत दैववशादुपेतं वासो यथा परिकृतं मदिरामदान्धः ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मरूपोऽसौ येन ते यूयमखिलसंशयानामाश्रयम् आर्भ.. तेऽहमि- त्याभिरहंकारकृतं संछिद्य हार्दं हृदि स्थितं मां भजत केन छित्त्वा तदाह । अनुमानैः सदुक्तिभिः सतामुपदेशैः श्रुतिभिश्च तीक्ष्णेन ज्ञानखड्गेन ॥ ३३ ॥

अनुमानानि दर्शयति । ईक्षेतेति । इदं जगद्विभ्रममीक्षेत तत्र हेतवः मनोविजृम्भितत्वात् दृष्टत्वाद्विनाशित्वाच्च स्वप्नवत् अति- चञ्चलत्वाच्चालातचक्रवत् । ननु, भ्रमोऽपि निर्विषयः कथं स्यात् तत्राह । विज्ञानमिति । निगमनम् तस्मात्त्रिधा योऽयं गुणपरिणाम- कृतो विकल्पो भेदः स मायेति ॥ ३४ ॥

तस्मात्ततो दृश्याद्दृष्टिं प्रतिनिवर्त्य निजसुखानुभवो भवेत् तन्नैश्चल्यार्थं च निवृत्ततृष्णस्तूष्णीं निरीहश्च भवेत् मनो वाक्कायव्यापाररहित इत्यर्थः । ननु, देहवतः सर्वथा द्वैतदृष्टिप्रति- निवर्तनायोगात्पुनः संसारः स्यादेव तत्राह । संदृश्यत इति । क्व चावश्यकाहारादिषु यद्यपीदं संदृश्यते तथापि पूर्वमव- स्तुबुद्ध्या यत्त्यक्तं तत्पुनर्मोहाय न भवेदेव किंतु देहपात- पर्यन्तं स्मृतिरेव स्मृतिः संस्कारमात्रेणावभासो भवेदि- त्यर्थः ॥ ३५ ॥

एतदेवोपपादयति । देहमिति । आसनादुत्थितमुत्थाय तत्रैव स्थितं ततः क्वचिदपेतं निर्गतं पुनस्तत्रैवोपेतं वा देहमपि नानु- सन्धत्ते कुतोऽन्यत् यतो येन देहेन स्वरूपमध्यगमज्ज्ञातवांस्तं देहं यतः कारणादिति वा परिकृतं परिहितं वासो गतं स्थितं वा यथा न वेत्ति तद्वत् ॥ ३६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी ।

ततः सर्वावस्थास्वात्मनः ऐक्यज्ञानानन्तरम् एवं निमृश्य मननं कृत्वा । मदविद्यया मम स्वरूपविषयकाज्ञानेन । कुतः कल्पिताः तदाह तत्र करणसाधनमाहेत्यर्थः ॥ ३३ ॥

अनुमानानि ज्ञानोत्पत्तौ सहकारीणि । तत्र विभ्रमत्वे । निर्विषयाः निराश्रयाः । निगमनमिति । अयं भावः परार्था- नुमाने हि पञ्चावयववाक्यं तत्र जगद्विभ्रममीक्षेतेति प्रतिज्ञा (१) दृष्टत्वादि हेतुः (२) यद्यद्दृष्टत्वाद्यवच्छिन्नं तत्तद्भ्रममात्रं यथा स्वप्नादि इत्युदाहरणम् (३) यथा भ्रमत्वव्याप्यदृष्टत्वा- दिमान् स्वप्नादिस्तथाचेदं जगदित्युपनयः (४) तस्मात् त्रिधा योऽयं गुणपरिणामकृतो विकल्पः स माया मिथ्येति साध्यो- पसंहाररूपं निगमनमिति (५) ॥ ३४ ॥

तन्नैश्चल्यार्थं सुखानुभवस्य स्थिरत्वार्थं निवृत्ततृष्ण इत्यादि- एवंभूतस्य यथा स्यात्तथा मनोवाक्कायव्यापाररहित इत्यर्थः संस्कारेति । प्रारब्धजसंस्कारमात्रेण जीवन्मुक्तस्य दग्धपटवत् द्विदलादिभवनमात्रो बाधितानुवृत्तिमात्रं भवेदित्यर्थः ॥ ३५ ॥

एतदेव संस्कारमात्रेणावभासनमेव । तत्र आसन एव ॥ ३६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मायामयं प्रकृतिकार्यम् अखिलसंशयरूपमाधिं संछिद्य मां भजतेत्यन्वयः ॥ ३३ ॥

ईक्षेतेति । इदं स्थूलोऽहमित्याद्यनुसन्धानं मनसो विलासं मनः- कार्यं विभ्रममीक्षेत तदेवोपपादयति । इदं मनुष्यादिशरीरं हि अलातचक्रवत् प्रतिक्षणध्वंसि तद्वदस्थायि अनित्यं शरीरं नित्य आत्मा भवति माया स्वप्नं प्रकृतिकार्यं स्वप्ने भ्रमे ज्ञानस्वरूपात्मा बहुधा देवादिरूपेणाभाति जाग्रदादिरूपेण त्रिधा विकल्पश्च गुणविसर्गकृत इत्यर्थः ॥ ३४ ॥

ततः शरीरादिभासात् दृष्टिं प्रतिनिवर्त्येति ज्ञानेन्द्रियनियमनमुक्तं निवृत्ततृष्ण इति मनोनियमनं तूष्णीमिति वागादिकर्मेन्द्रियनियम- नमुक्तं निजसुखानुभव इति समाधिफलं भ्रमाय न भवेत्समाधिं न गलयेदित्यर्थः आनिपातात् आमरणात्स्मृतिर्भगवद्ध्यानं कर्तव्यम् अन्यथा मनः कालुष्यात्समाधेः गलितः स्यादिति भावः ॥ ३५ ॥

समाधिदशायां देहाकारो न प्रतिभातीत्याह । देहं चेति । अव- स्थितमासीनमुत्थितं यस्मिन्दशायां कः निपुणोऽपि कदाचि- त्समाधिपरमत्वात् तद्युक्तः सिद्धः निष्पन्नसमाधिः अध्यगमत् साक्षात्कृतवान् स्वरूपं निष्कृष्टस्वरूपं दैवादपेतमित्यादि वासोविशेषणम् ॥ ३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं मनसि स्थितोऽन्यथाभ्रमात्मायया स्वस्वकर्मानुगुणगती- यसङ्कल्परूपज्ञानेन गुणानः सत्त्वादीन्मनोनिष्ठगुणेभ्यो निर्मितेभ्यो मयि कृता इत्येवमित्थं विमृश्य निवर्तेति सम्बन्धः आत्मनः कर्तृत्वादेश्चोपादानकारणत्वादिर्विभक्तत्वरूपाणां तद्द्वारा स्वात्मपर्यन्तत्वाभिप्रायेण सर्वान्युक्तं निश्चितोऽर्थः सक- लानर्थनिवारकतयाभिमतं मदुपासनमेव परमप्रयोजनं येस्ते यूयं हार्दं हृद्गतमखिलसंशयादिमनुमानसदुक्तितीक्ष्णज्ञाना- सिना संछिद्य मां भजतेत्यन्वयः संशयाः किमहं देहाकार उत तद्विलक्षणः किं स्वतन्त्रः किं वा परतन्त्र इत्यादिरूपाः त एवाधिः पीडा ज्ञानमत्र यथार्थतयात्मपरमात्मस्वरूपानुसन्धा- नात्मकम् अनुमानं देहेन्द्रियविषयाणामन्ततो दुःखावहत्वानित्यत्व- हेतुत्वादिव्याप्तिग्रहणं तेन तन्मूलं वैराग्यं विवक्षितं सदुक्तयः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

शारीरिकन्यायात्मिकाः वेदान्तार्थविचारवैराग्याभ्यां निशितेन तीक्ष्णेन ज्ञानरूपेणासिना इत्यर्थः ॥ ३३ ॥

अनुमानमेव दर्शयति । ईक्षेतेति । विशेषेण भ्रमः आत्मत्वभोग्यत्वादिभ्रमो यस्मिन् मनसो विलासो वाङ्मनस्सङ्कल्पविकल्पादिरूपमित्यर्थः । इदं देवादिशरीरतदुपभोग्यविषयादिकं सर्वमिति धर्मिणो निर्देशः । वितथमिति साध्यस्य दृष्टमिति साधनस्यालातचक्रमिति दृष्टान्तस्य सविशेषणमतिलोलमिति ईक्षेत इत्थमनुमिनुयादित्यर्थः अथ सद्युक्तिविचारात्मकज्ञानाकारं दर्शयति । विज्ञानमिति । विज्ञानं जीवस्वरूपं "विज्ञानं यज्ञं तनुते, यो विज्ञाने तिष्ठन्" इति श्रुतेः तदेकं ज्ञानैकस्वरूपस्वभावम् उरुधा देवमनुष्यादिरूपेण बहुधेव विभाति न तत्स्वरूपेऽस्ति देवमनुष्यादिभेद इति भावः । स च विकल्पो देवमनुष्यादिभेदः त्रिधा त्रिप्रकारा ये गुणाः सत्त्वादयस्तेषां विसर्गः परिणामः तेन कृतः मायास्वप्नः सर्वस्य सर्वशक्तेर्मम मायया प्रकृत्या सङ्कल्परूपज्ञानेन वा निर्मितेन स्वप्नः स्वप्न इव कृतः यथा स्वप्नः सङ्कल्पविकल्पप्रचुरमनसः प्रतीयमानः पुनः प्रबोधेन निवर्तते तद्वत् स्वात्मपरमात्मयाथात्म्यानुसन्धानात् आत्मगतत्वेन प्रतीयमानः पुनरामोक्षानुवृत्तात्मोपासनान्निवर्तेत इति ॥ ३४ ॥

दृष्टिमिति ततः शब्दादिभ्यः दृष्टिं प्रतिनिवर्त्य शब्दादिबाह्यविषयान् गृह्णन्नित्यर्थः निवृत्ता तृष्णा विषयाभिलाषो यस्य सः निरीहः निर्व्यापारः तत्र दृष्टिं प्रतिनिवर्त्येति बाह्यज्ञानेन्द्रियाणां चक्षुरादीनां नियमनमुक्तं निवृत्ततृष्ण इति मनसः निरीह इति कर्मेन्द्रियाणां निजसुखानुभव इति समाधिरुक्तः तूष्णीं भवेदिति देहानुचिन्तननिषेधः एवं विधस्य पुंसः पूर्वमवस्तुबुद्ध्या अनात्मबुद्ध्या—

यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै ।
परिणामादिसम्भूतां तद्वस्तु नृप ! तच्च किम् ॥

इत्यात्मन्येव वस्तुशब्दस्य मुख्यवृत्त्यवस्मरणात् त्यक्तमिदं देहादिकं च समाधिव्यतिरिक्तशयनासनभोजनादिदशासु यद्यपि संदृश्यतेऽनुसन्धीयते तथापि तद्भ्रमाय समाधिभञ्जनाय न भवेत् यद्वा पुनर्देहान्तरसम्बन्धनिमित्तदेहात्माभिमानादिरूपभ्रमाय न भवेत् । ननु, तुर्ये स्थितः अनुमानसद्युक्तितीक्ष्णज्ञानासिना निजसुखानुभव इति तुर्यस्थितज्ञानानुभवशब्दनिर्वाच्यं ज्ञानं किं तत्त्वमस्यादिवाक्यजन्यरूपं किं वा ध्यानोपासनादिशब्दवाच्यं ध्यानादिशब्दवाच्यत्वेऽपि किं द्वित्रिरावृत्तिरूपं किं वा यावच्छरीरपातानुवृत्तिरूपमित्यत्राह । स्मृतिरानिपातादिति । स्मृतिः भगवद्ध्यानं आशरीरपातात्कर्तव्यमित्यर्थः । अन्यथा मनःकालुष्यात्समाधिरेव गलितः स्यादिति भावः । आनिपातादित्यनेन द्वित्रिरावृत्तज्ञानव्युदासः स्मृतिशब्देन वाक्यजन्यस्य ॥ ३५ ॥

तूष्णीं भवेदित्युक्तं तूष्णीम्भावं विवृणोति—देहं चेति । सिद्धः निष्पन्नसमाधिमान् देहमवस्थितमासीनमुत्थितं वा न पश्यति नानुसन्धत्ते तत्र हेतुत्वेन देहं विशिनष्टि । नश्वरमिति । हेयत्वादिति भावः । किञ्च, यतः स्वरूपं निष्कृष्टात्मस्वरूपमध्यगमत्साक्षात्कृतवान् अतः समाधिदशायां देहो न प्रत्येतव्य इत्यर्थः । दैवादुपेतमिति वासोविशेषणं यथा मदिरामदेन मद्यपानमदेनान्धो विवेकरहितः पुमान् परिकृतं परिधृतं वासो वस्त्रं दैववशादुपेतं प्राप्तमथ तस्मादपेतं वा नानुसन्धत्ते तद्वदित्यर्थः ॥ ३६ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उक्तार्थानुवादपूर्वकमुक्तज्ञानफलं विधत्ते । एवमिति । एवमुक्तविधं विमृश्यालोच्य कथमित्युक्तं स्मारयति । गुणत इति । सत्त्वादिगुणत उद्भूता मननात्मन उद्दिष्ट इति मनसो जीवस्य जाग्रदाद्यवस्था मन्मायया मदिच्छया मयि सदाधारत्वेन कृता विहिताः पर्याप्ता इति निश्चितार्था यूयमनुकूलश्रुत्यादिमानेन सतां महतामुक्त्या वचनेन तीक्ष्णेन निशितधारेण ज्ञानाख्यासिना हार्दे हृदि रूढमखिलसंशयाधिं संछिद्य मा मां भजेतेत्यन्वयः अनेन मुक्तिरप्युक्ता भवतीति ज्ञातव्यम् ॥ ३३ ॥

ननु, जाग्रदादिषु प्रवर्तकत्वेन वर्तमानस्य हरेः विश्वादिरूपाणां भेदो नास्तीत्युक्तं तत्र वृत्तिभेदेन प्रतीयमानो भेदः कथं प्रत्येतव्य इत्यत्राह । ईक्षेतेति । जाग्रदादिषु प्रतीयमानमिमं परमात्मभेदं विभ्रममज्ञानमूलं वीक्षेत—

जाग्रदादिकरो देवः परमात्मैक एव तु ।
इति वीक्षेत सततं मुच्यते संसृतेस्ततः ॥

इतिवचनात् अज्ञाननिमित्तहेतुमाह । मनस इति । मनसो विलासं मनोविकाररूपत्वात् एतत्कुतोऽत्राह । दृष्टमिति । गुरूपदेशशास्त्रदृष्ट्या यदा विभ्रमोऽयमिति दृष्टस्तदैव नष्टो भवति यस्मात् इतोऽपि मनोविलास इत्याह । अतिलोलमिति । श्रुत्यादिविचारे क्षिप्रविनाशित्वात् अत्र लुप्तोपमामाह । अलातचक्रमिति । अलातचक्राकारभ्रमवत् परमात्मभेदभ्रमं विद्यादित्यर्थः । एवं सुरनराद्याहिततत्त्रियन्तृभेदोऽपि भ्रान्त इत्याशयेनाह । विज्ञानमिति । विज्ञानमानन्दं ब्रह्मेति श्रुतेः । एकं स्वगतभेदशून्यं ब्रह्म नानारूपमिव भाति । अज्ञानामिति शेषः । यथा स्वप्ने एकैव गजादिमाया बहुधा प्रतीयते तथेति मिथ्याज्ञानकारणमाह । त्रिगुणेति । सत्त्वादिभिस्त्रिभिर्गुणैस्तत्सर्गैस्तत्कार्यैः पापादिभिश्च कृतः एष विकल्पो मिथ्याज्ञानं कारणमिति शेषः । तमआदिगुणनिमित्तपापादिदुष्कर्मकलुषितान्तःकरणानामज्ञानामासुरप्रकृतीनां साक्षादानन्दरूपमेकं बह्विव प्रतीयत इति भावः । "देहभेदस्वपक्षयोः प्रादुर्भावेषु केवलं । ज्ञानानन्दैकसद्रूपं भ्रान्त्या भिन्नं प्रपश्यति । सा च भ्रान्तिर्विनश्येत यदा भ्रान्तित्ववेदनम् । प्रतिक्षिप्रं विनश्येच्च न स्थिरं दिग्भ्रमादिवत् । त्रिगुणैर्बाधिता जीवा भ्रान्तिमाश्च जनार्दनम् । पश्यन्ति बहुधा स्वप्ने यथैकं बहुधा क्वचित् । अभिन्नोऽपि विभिन्नेषु व्यवहारो यथा भवेत् तथैव व्यवहाराय शक्तत्वान्नैव दूषणम् । ईशस्य तु तदन्येषामपि यच्छक्तिदायकः" इत्यनेन मानेन—

अशक्तोऽप्यतिशक्त्योऽयं विनिवर्तयितुं भ्रमः ।
ईशस्य गुरुसम्पत्त्या यदि शुद्धमनाः पुमान् ॥

इत्यनेन मानेन निर्णीतत्वादिदमेव तात्पर्येण ज्ञातव्यम् अन्यद्दुःशास्त्रमिति सिद्धम् ॥ ३४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मम वा मतामनुवर्तिनां योक्तयो वचनानि ताभिरनुमानश्रुतिस्मृतिभिरित्यर्थः । तीक्ष्णीकृतो ज्ञानरूपोऽसिस्तेनाखिलाश्च ते संशयाश्च अखिलजीवानां संशयो वा स एवाभिमानस्तोऽश्चवा "पुंस्याधिमानस्तोऽश्च" इत्यमरः हृदि वर्त्तमानं मां भजत अनुमानसद्युक्तिभिः संशये छिन्ने सति मद्भजनात्मत्साक्षात्कारात्सर्वकर्मात्मिकमायानिवृत्तिः स्वत एव भवतीत्यर्थः । अयम्भावः अनाद्यविद्यानिरूपितत्रिगुणात्मकमनस एव संसारहेतुत्वात् तस्य पूर्वोक्तप्रकारेण सात्त्विकत्व सम्पादिते सति सत्सङ्गे च परिप्रश्नसंवादिना शास्त्रजन्यपरोक्षज्ञानेन संशये छिन्नेऽपि कर्मात्मिकाविद्याप्रयुक्तगुणसम्बन्धस्य सत्त्वे पुनर्न्न भ्रश्येत तदर्थं मां भजतेत्युक्तं मनसि गुणसम्बन्धाभावे सति सर्वानर्थनिवृत्तिपूर्वकं सर्वकर्मादिसम्बन्धनिवृत्तिर्भवतीति भूयश्चान्ते विश्वमायानिवृत्तिः"मायिना मद्भक्तप्राणाः

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।

ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥

तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ।

भवामि न चिरात्पार्थ ! मय्यावेशितचेतसाम् ॥

इत्यादिस्मृतिभ्यः ॥ ३३ ॥

ज्ञानासिना संशयं सञ्छिन्द्येत्युक्तं तज्ज्ञानं दर्शयति । दृश्यतेति । मनसो विलासमिदं जगत् विभ्रमसांक्षित मद्भजनं विना स्वर्गं गच्छेयं ब्रह्मलोकं गच्छेयं नागलोकं गच्छेयमित्येवं मनसो विलासं तस्मङ्कल्पविषयं चतुर्दशभुवनात्मकमिदं विश्वं शुभाशुभकर्मनिरूपणीयो भ्रमति जीवोऽस्मात्रिति विभ्रमं पश्यतेत्यर्थः । तत्रापर्यालोचितं कीदृशं अलातचक्रं अलातचक्रवत्संचरणात्मकचक्रेण गच्छदागच्छत् अत आयते अत एव दृष्टं विनष्ट दृश्यमानमपि विशेषेण नष्टमदृश्यं भवति किंच विज्ञान प्रत्यगात्मानं ज्ञानस्वरूपत्वेनैकमांक्षित । ननु, देवोऽयं मनुष्योऽयं पशुरयं पादपोऽयमिति बहुधा प्रतीयते कथमेकमिति चेत्तत्राह । उरुधा विभाति या सा माया प्रकृतिरेव "मायां तु प्रकृतिं विद्यान् मायिनन्तु महेश्वरम्"इतिश्रुतेः तत्त्वजामेकामिति श्रुतेर्मायया अपेक्षत्वात्कथमुरुधा भातीति चेत्तत्राह । त्रिधा विकल्पः देवमनुष्यतिर्यगादिरूपो भेदः गुणविसर्गकृतः सत्त्वादिगुणत्रयस्य विविधसर्गेण सर्जनेन सत्त्वादिगुणप्रधाना देवादयोभवन्ति सर्वमायाशब्दवाच्यप्रकृतिकार्यत्वान्मायैव "तदनन्यत्वमारम्भणशब्दादिभ्यः" इतिसूत्रात् अयं भेदोऽपि न नित्य इत्याह । स्वप्ने यथा स्वप्नोऽनित्यस्तथा देवादिदेहस्तल्लोकभोगाश्चेत्यर्थः ॥ ३४ ॥

ज्ञाननिरूपणे जगत्स्वरूपनिरूपणस्य प्रयोजनमाह । दृष्टिमिति । यतः स्वप्नवदनित्योऽयं प्रपञ्चः तस्मात्ततो दृष्टिं प्रतीतिवृत्त्यं मनोवृत्तिमाकृष्य निवृत्ततृष्णः सन् तूष्णीं निरीहश्च निर्व्यापारो भवेत् देहादिभोगसुखाभिवृत्तिं इत्यन्तरमाह । निजसुखानुभवः । निजस्य स्वरूपसुखस्यानुभवो यस्य तथाभूतः सन् ततुक्तप्रकारेण जगत्यनित्यताबुध्या ततो दृष्टिनिवृत्तौ सत्यामपि देहयात्रार्थं सञ्चारे क्वचित्सङ्केन पुनस्तत्र प्रसक्तिश्चेत्तर्हि साधनश्रमो व्यर्थ एव स्यादिति चेत्तत्राह । संदृश्यत इति । क्वचित् कुत्रचित् यदृच्छया यदीदं तुच्छसुखहेतुरिदं प्राकृतं द्रव्यं दृश्यते तथापि येन यद्वस्तुबुद्धया ममेदं सुखदं न किन्त्वनर्थकरमिति ज्ञात्वा त्यक्तं पुनस्तस्य भ्रमाय नाविपरीतज्ञानाय न भवेत् परन्तु पूर्वानुभूतस्य संस्कारेण स्मृतिराशरीरपातादेहपातावधिः स्यात् ॥ ३५ ॥

ननु, यदि ज्ञानिनोऽपि पूर्वानुभूतपदार्थस्य देहादिस्मृतिः स्यात्तर्हि अज्ञानस्य को विशेषः प्रतीयेतस्याशङ्कायां ततोऽप्यधिकज्ञानारूढदशायां विशेषः सन्तिन्नुभूयत इति समाधानमाह । सिद्धः यथारूढ़ज्ञानारूढः नश्वरं देहमासने स्थितं ततउत्थितमन्यत्र गतं च न पश्यति च पुनर्देहगत्यार्थं दैवाद्भोजनादिउपपन्नं प्राप्तम् अथ दैववशादपेतं वा न पश्यति देहानुसन्धाने दृष्टान्तमाह । यथा मदिरामदान्धः परिकृत कटिबद्धं वासः स्थितं गतं वा नानुपश्यति तद्वत् एतत्कुतः यतः स्वरूपमध्यगमत् स्वरूपानन्दतृप्तत्वादित्यर्थः । यद्येवं भूतो देहमपि नानुसन्धत्ते तदाऽन्यं न पश्यतीति किमु वक्तव्यं तदा तस्य सर्ववैलक्षण्यमिति भावः ॥ ३६ ॥

---

भाषा टीका ।

इस प्रकार विचार करके गुणों से मन की तीन अवस्थाओं को जान कर सब यो परमेश्वर की इच्छा से निर्मित है ऐसा निश्चय करके सत् शास्त्रों की युक्ति तथा अनुमान रूपी तीक्ष्ण खड्ग से संपूर्ण संशय रूपी जो हृदय मे स्थित गांठ है तिनको छेदन करके आप लोग मेरा ही भजन करो ॥ ३३॥

इस संपूर्ण जगत् को मन का विलास देख मन के मानने से सब पदार्थ नित्यप्रिय दीखते हैं नहीं तो जो प्राकृत पदार्थ दीखते हैं नाशमान परिणामी हैं वे जैसे कि वनेठी की आग चंचल होती है तैसा चंचल है एक विज्ञान रूप परमात्मा ही नाना प्रकार से अपनी ज्ञान शक्ति से स्थित है जैसे कि स्वप्न के पदार्थ सत्य होने पर भी चंचल हैं तैसे आग्न के भेदों को देखो ॥ ३४ ॥

तिस हेतु से तिस जगत् से बुद्धि को हटाकर तृष्णा को छोड कर अपने मे स्थित परमात्मा का अनुभव करता हुआ और चेष्टाओं को छोड देवै जो कुछ जगत् मे यह दीखता है उसको जब अवस्तु बुद्धि से छोड देवै तब फिर उस मे मोह नहीं होता है परन्तु उन पदार्थों का स्मरण तो शरीरपात पर्यन्त रहेगाही ॥ ३५ ॥

देह जो है सो नाश होने वाला है वह चाहै बैठा होवे चाहै खडा होवै उसको सिद्ध पुरुष नहीं देखता है जिससे कि उसको स्वस्वरूप परस्वरूप का ज्ञान हो गया है वह शरीर चाहै कहीं जावै या कहीं आवै उसको ज्ञानी नहीं जानता है जैसे कि मदिरा के मद से अन्धा पुरुष शरीर पर के वस्त्र को रहने से या गिरने से नहीं जानता है ॥ ३६ ॥

---

देहोऽपि दैववशगः खलु कर्म यावत्स्वारम्भकं प्रतिसमीक्षत एव सासुः।
तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥ ३७ ॥
मयैतदुक्तं वो विप्रा ! गुह्यं यत्साङ्ख्ययोगयोः।
जानीत मागतं यज्ञं युष्मद्धर्मविवक्षया ॥ ३८ ॥
अहं योगस्य साङ्ख्यस्य सत्यस्यर्तस्य तेजसः।
परायणं द्विजश्रेष्ठाः ! श्रियः कीर्तेर्दमस्य च ॥ ३९ ॥
मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम्।
सुहृदं प्रियमात्मानं साम्यासङ्गादयोऽगुणाः ॥ ४० ॥
इति मे छिन्नसन्देहा मुनयः सनकादयः।
सभाजयित्वा परया भक्त्याऽगृणत संस्तवैः ॥ ४१ ॥
तैरहं पूजितः सम्यक् संस्तुतः परमर्षिभिः।
प्रत्येयाय स्वकं धाम पश्यतः परमेष्ठिनः ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्यामेकादशस्कन्धे
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

ननु च यः परिपाल्यमानोऽपि मुमूर्षति तं चेत् पश्यति तर्हि पतेदेव नेत्याह। देहोऽपीति। देहो दैववशेन गच्छन् स्वारम्भकं कर्म यावदस्ति तावत्पर्यन्तं प्रतिसमीक्षत एव जीवत्येव सासुः प्राणेन्द्रियसहितः। ननु, तर्हि तस्मिन्कदाचिदासज्जेतापि? नेत्याह। तमिति। स्वाप्नं स्वप्नतुल्यम् अधिरूढः प्राप्तः समाधिपर्यन्तो योगो येनात एव प्रतिबुद्धं ज्ञातं परमार्थवस्तु येन सः तथा च श्रुतिः "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति ॥ ३७ ॥

उक्तार्थे तेषां विश्वासार्थं स्वस्वरूपमाह। मयेति। साङ्ख्यमात्मानात्मविवेको योगोऽष्टाङ्गस्तयोर्गुह्यं रहस्यं यज्ञं विष्णुम् "यज्ञो वै विष्णुः" इति श्रुतेः। युष्मद्धर्मविवक्षयेत्यनेन धर्मो प्रत्युपदिष्टा इति ज्ञेयम्। अत एव "वक्तेन हंसरूपेण ब्रह्मणोऽभ्याह माधव" इत्यनुवादो भविष्यति ॥ ३८ ॥

ऋतं प्रमीयमाणो धर्मः सत्यमनुष्ठीयमानो धर्मः तेजः प्रभावः एतेषां परमयनम् ॥ ३९ ॥

किञ्च। मामिति। कथम्भूताः अगुणाः गुणपरिणामरूपा न भवन्ति किन्तु नित्या इत्यर्थः ॥ ४० ॥

मे मया अगृणत मां तुष्टुवुः ॥ ४१ ॥

प्रत्येयाय प्रत्यागतोऽस्मि ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
त्रयोदशोऽध्यायः ॥ १३ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी।

स्वारम्भकं देहजनकं कर्म प्रारब्धलक्षणं तस्मिन् प्रारब्धपरिक्षीणे देहे। अत एव आरूढसमाधियोगत्वादेव तथा च जीवन्मुक्तौ प्रमाणं श्रुतिः। तस्य जीवन्मुक्तस्य तावदेव चिरं विलम्बो यावत् प्रारब्धजदेहान्न विमोक्ष्यते अथ देहपतनानन्तरं संपत्स्ये ब्रह्माणं सम्पद्यते विदेहमुक्तो भवतीत्यर्थः ॥ ३७ ॥

उक्तार्थे ज्ञानभक्तियोगे। अत एव धर्माणामुपदिष्टत्वादेव ॥ ३८ ॥

स्वज्ञानस्यानन्यभूतसर्वज्ञानत्वं दर्शयन् स्वस्य सर्वोत्कृष्टत्वं दर्शयति। अहमिति ॥ ३९ ॥

प्रियं निरुपाधिसर्वप्रेमास्पदम्। अतः सर्वोत्कृष्टे मयि तादृशगुणानुभवेन प्रेममार्गेणैव साम्येति पर्यवसानवाक्यार्थः ॥ ४० ॥

परया भक्त्या प्रेमलक्षणया ॥ ४१ ॥

स्वकं धाम वैकुण्ठलोकम् ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सकृत्समाधिलाभादेव मुक्त्यभावे हेतुमाह । देहोऽपीति । साधुः सप्राणः ज्ञानिनः इतरस्य च को भेद इत्यत्राह—तमिति । तं देहं स्वाप्नं स्वप्नपदार्थवदनित्यं सप्रपञ्चम् इतरपदार्थजातैः सह समाधिकाले प्रतिबुद्धवस्तुः साक्षात्कृतात्मवस्तुः पुरुषो न पश्यतीति देहस्य कर्मानुवर्तित्वं सर्वसाधारणं समाधिकाले स्वरूपसाक्षात्कारस्तादितरादर्शनं च योगिन इतरेभ्यो वैषम्यमित्यर्थः ॥ ३७ ॥

यज्ञं यज्ञशरीरकम् ॥ ३८ ॥

मोक्षोपायिकानां ज्ञानविशेषाणां धर्मविशेषाणामात्मगुणानां च प्रवर्तकोऽहमित्याह । अहं योगस्येति ॥ ३९ ॥

गुणाः कल्याणगुणा निर्गुणं हेयगुणरहितं के पुनस्ते कल्याणगुणगणा इत्यत आह । साम्येति । हितैषित्वादौ सर्वेषु समस्ततत्साम्यम् असङ्गः स्वगतचिकीर्षितप्रतिघातरहितः ॥ ४०-४२ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये

श्रीसुदर्शनसूरिकृतशुकपक्षीये

त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, यदा समाधिर्निष्पद्यते किंतदैव कृत्यान्तराभावाद्योगिनो देहो नश्यति किम्वा कञ्चित्कालमनुवर्तेत इति संशयाविष्टान्मुनीन् प्रत्याह—देहोऽपीति । दैववशगः दैवस्यान्तरात्मनो मम वशं गतः दैवायत्तसत्ताहिथतिप्रवृत्तिकः अनेन निरन्तरसमाधिनिष्ठस्य कथं देहधारणमित्याशङ्काव्युदासः अपिशब्देन समाधिनिष्पत्तिरपि मत्सङ्कल्पायत्तेति विवक्षितं यावत्स्वारम्भकं कर्म तावत्साधुः सप्राणः प्रतिसमीक्षत एवावतिष्ठत एवेत्यर्थः । स्वस्य देहस्यारम्भकमभ्युपगतप्रारब्धात्मकर्मेत्यर्थः । तथाच श्रूयते । तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथसम्पत्स्ये" इति । ननु, ज्ञानिनस्तदितरस्य च देहो यावत्स्वारम्भककर्मावस्थाय्येव तत्र को विशेष इत्यत आह—तमिति । सप्रपञ्चं सानुबन्धिनं स्वाप्नं स्वाप्नार्थवदनित्यं तं देहमधिरूढसमाधियोगः अधिरूढः प्राप्तः समाध्यात्मको योगो येन सः अत एव प्रतिबुद्धवस्तुः साक्षात्कृतवस्तुः पुमान् पुनर्न भजते इतरस्तु पुनर्देहान्तरं प्रतिपद्यत इतिभावः ॥ ३७ ॥

उपसंहरति । मयेति । साङ्ख्यं तत्त्वत्रयविभागपूर्वक ब्रह्मात्मकस्वात्मोपासनं योगो भगवदुपासनं तयोः सम्बन्धि यद्गुह्यं गोप्यं तदेतत् हे विप्राः!यो युष्मभ्यं मयाभिहितं सत्यमुक्तं किंतु दुष्कराविमौ साङ्ख्ययोगौ इत्यभिप्रायमावक्ष्य दुष्करोऽपि मां शरणं गतस्य मत्प्रसादात्सुकर एवेत्यत्र हेतुतया मोक्षोपयुक्तानां ज्ञानविशेषाणां च प्रवर्तकोऽहमेवेति विवक्षुस्तावदात्मन आत्माश्रयणीयत्वोपयुक्तनिरतिशयसात्सल्यादिगुणयोगितामाविष्करोति । जानीतेति।यज्ञं यज्ञनिर्वाहकं श्रीविष्णु "यज्ञो वै विष्णुः" इति श्रुतेः "यज्ञायाचरतः कर्म समग्रं प्रविलीयत"इति स्मृतेश्चामां हंसरूपिणं युष्माकं धर्मो गोविन्दमं तद्विवक्षया आगतं जानीत ॥ ३८ ॥

अहमिति । हे द्विजश्रेष्ठाः! योगादीनामहं परायणमाश्रयः प्रवर्तक इत्यर्थः।तत्र सत्यं भूतहिताचरणम् ऋतं पुण्यं कर्म तेजः बाह्यकरणवशीकारप्रभावः श्रीर्वैराग्यादिसंपत् कीर्तिस्तत्प्रभवा प्रथा शमोऽन्तः करणनियमः ॥ ३९ ॥

किं बहुनेत्याह—मामिति । गुणाः कल्याणगुणाः निर्गुणं हेयगुणरहितं निरपेक्षकं स्वार्थनिरपेक्षपरदुःखनिराचिकीर्षुम् आत्मानमत एव प्रियं सुहृदं हितैकावहं भजन्त्याश्रयन्ति के पुनस्ते कल्याणगुणा इत्यत्राह—साम्येति । साम्यं वैषम्यराहित्यमानन्दश्चादिर्येषां ते ॥ ४० ॥

हंससनकादिसंवादमुपसंहरति—इतीति । इतीत्थं मे मत्तो हंसरूपाच्छिन्नाः सन्देहा गुणचितत्यागादिविषया येषां ते सनकादयः परयोत्कृष्टया भक्त्या मां समाजयित्वा सम्यगाराध्य संस्तवैः स्तोत्रैरगृणात तुष्टुवुः अदादेश आर्षः ॥ ४१ ॥

तैः सनकादिभिरहं हंसरूपः परमेष्ठिनः पश्यतः सतः स्वकं धाम स्थानं वैकुण्ठाख्यं प्रतीयाय प्रत्यागतोऽस्मि प्रत्ययायेति पाठस्तु चिन्त्यः ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दैवादुपेतमित्येतत्स्पष्टयति—देहोऽपीति । ननु, स्वयं देहपोषणादिप्रयत्नोदासीनश्चेत् कथं तिष्ठति इत्यतो वाऽऽह—देह इति । दैववशगः स्वादृष्टप्रेरकश्रीहर्यधीनो देहोऽपि तावत्प्रतिसमीक्षते प्रतीक्षयावतिष्ठते कार्यस्य जडस्य कारणावस्थानमन्तरणावस्थानं कथमत्राह । सासुरिति । प्राणवृत्तिसहितत्वात् । कियन्तं कालमत्राह । कर्मेति । यावत्स्वारम्भकं स्वोत्पादकादृष्टलक्षणं कर्मास्ति तत्समाप्तौ पततीत्यर्थः स्वलुशब्दः तथाप्यभिमानो भवत्येवेत्यत्राह । तमिति । अधिरूढसमाधियोगः असम्प्रज्ञातसमाधिस्थः सप्रपञ्चं तं देहं पुनर्न भजेत् पूर्वं यथा तथाहंतां न करोतीत्यन्वयः ।

"आदरो भजनं भक्तिर्बहुमानं च सेवनम् ।
पर्यायवाचकाः सर्वे स्मृतिस्तज्जन्यकर्म च" इति

वचनात् कथमिव प्रतिबुद्धवत् यथा स्वप्नादुत्थितः स्वाप्नं स्वप्नदृष्टं देहं न भजेत्तथेति ॥ ३७ ॥

इति हासं निगमयति—मयैतदिति ॥ ३८ ॥

कर्मयोगस्य साङ्ख्यस्य यथार्थज्ञानस्य सत्यस्य यथार्थभाषणस्य ऋतस्य भूतहितोपदेशवेदस्य तेजसो बलस्य ब्रह्मवर्चसस्य वा श्रियः सम्पदः ॥ ३९ ॥

सर्वे गुणा असम्पूर्णगुणरूपा अप्रधानाः ब्रह्मादिदेवा एवंविधं मां भजन्ति । किंगुणाश्च मांभजन्ति कीदृशं । निर्गुणं प्रकृतिगुणवर्जितम् आत्मानं संपूर्णगुणरूपकम् अतएव निरपेक्षकम् अपूर्णगुणस्य हि गुणापेक्षा नच साऽस्यास्तीति अतएव सुहृदम् आत्मानं स्वबन्धुम् अत एवाहमेव सेव्य इत्युक्तं प्रियं "तदेतत्प्रेयते" इति श्रुतेः "अपूर्णगुणरूपास्तु सम्पूर्णगुणरूपकम् । भजन्ति परमं ब्रह्म

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

देवाखिलगुणवर्जितम्" इति वचनात् के अगुणा इति तत्राह—साङ्ख्या-सङ्गादय इति । ज्ञानादिगुणानां तारतम्येऽपि सर्वसामान्यादन-ग्रधानं साङ्ख्यादीनां महभावाद्विशेषोक्तिरिति ज्ञातव्यम् ॥ ४० ॥

सनकादीनां भगवदुक्त्या छिन्नसंदेहत्वस्य किमभूदित्यत्र-आह—इतीत्यनेन समाप्तिः ॥ ४१ ॥

पूजितः सम्यक् संस्तुतः इत्येताभ्यां संछिन्नसंशयत्वं कथयति ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

त्रयोदशोऽध्यायः ॥ १३ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ॥

तत्र निजोक्तमादरयति—मयैतदिति । आदरे कारणविशेषत्वेन स्वपरिचयविशेषं करोति—जानीतेति । यज्ञं विष्णुं तत्त्वी-श्वरत्वेन ज्ञापितमपि शिवादिरूपं युष्मद्धर्मविवक्षयेत्यनेन धर्मो भत्युपदिष्टा इति ज्ञेयम् ॥ ३८ ॥

स्वज्ञानस्यान्तर्भूतसर्वज्ञानत्वं दर्शयन् सर्वोत्कृष्टत्वं दर्शयति—अहमिति ॥ ३९ ॥

तथैव स्वज्ञानमुपदिशति—मामिति । ये स्वगुणाः गुणपरिणामा न भवन्ति ते प्रथमस्कन्धे पृथिव्या सत्यं शौचमित्यादिना बहुधा वर्णिताः साङ्ख्यसङ्गादयोऽनन्तगुणाः सर्वे एव मां भजन्ते तत्र हेतुः आत्मानं सर्वेषामाश्रयस्वरूपम् अतः सर्वोत्कृष्टस्वरूपात्ते सर्वोत्कृष्टस्वरूपं मां विना कथं वान्यं भजन्त्विति भावः। किञ्च,तादृशात्मत्वादेव निर्गुणम् । ननु जीववदविद्यया गुणासम्बद्धम् । निरपेक्षकं स्वेच्छयापि तदसम्बद्धम् अतस्तद्गुणपरिणामादृते मां विनेत्यादि पूर्ववत् । किञ्च । तादृशात्मत्वादेव सुहृदं निरुपाधिसर्वहितकारिणं प्रियं निरुपाधिसर्वप्रेमास्पदम् अतो ममैव तादृशगुणाश्रयत्वं युक्तमिति भावः। सर्वोत्कृष्टे मयि-प्रेमभक्तिरेव साध्येति पर्यवसानवाक्यार्थः ॥ ४० ॥

ततश्च ते सन्देहं त्यक्तवन्तस्ताञ्च भक्तिं मयि प्राप्तवन्त इत्याह—इतीति । परया भक्त्या प्रेमलक्षणया ॥ ४१-४२ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

त्रयोदशोऽध्यायः ॥ १३ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यावत् स्वारम्भकं कर्म तावत् सासुः सप्राणः सन् प्रतिसमीक्षते मुक्तस्यापि तस्य कर्मभोगप्रतीक्षां कुर्वन् जीवतीत्यर्थः ननु तर्हि तस्मिन् कदाचिदासक्तिरपि तत्र नेत्याह—तं देहं ससप्रपञ्चम् इन्द्रियविषयभोगादिसहितमपि न भजते यथा प्रतिबुद्धवस्तुः प्राप्तजागरो जनः स्वाप्नं देहं पुनर्न भजते ॥ ३७ ॥

वक्तेऽर्थे तेषां विश्वासार्थं स्वस्वरूपमाह—मयेति । साङ्ख्यमात्मानात्मविवेकः योगोऽष्टाङ्गः धर्मस्य विवक्षया अनेन धर्मो भत्युपदिष्टा इति ज्ञेयम् । अतएव "वक्तेन हंसरूपेण ब्रह्मणोऽभ्यागत माधव" इत्यनुवादो भविष्यति ॥ ३८ ॥

अहो अद्भुतं ज्ञानमश्रौष्मेत्यतिचमत्कारवत्तानाश्रयाह—अहमिति । "ऋतं च सूनृता वाणी सत्यं च समदर्शनम्" इत्यग्रे वक्ष्यते तेजः प्रभावः एतेषां पराणां परमाश्रयः ॥ ३९ ॥

नन्वहं परायणमिति त्वद्वाक्यादेव तवापि मम देहेऽभिमानो दृश्यत इत्यतः कथं ज्ञानमस्माभिः शक्यमङ्गीकर्त्तुमित्याशङ्कते चेत् सत्यं नेदं मम शरीरं जीवस्येव स्वस्माद्भिन्नं भौतिकं नाप्यत्राहङ्कारादिकमपि प्राधानिकं किन्तु मत्स्वरूपभूतं सच्चिदानन्दमयमेवेत्याह । मां निर्गुणं मायिकगुणातीतं सर्वे गुणा भजन्ति निरपेक्षकं मायिकगुणापेक्षाशून्यं किन्तु सुहृदं स्वभक्तजनानां हितकारिणं यतः प्रियं तेषां प्रेमविषयीभूतं तेषु प्रीतिकर्त्तारं च "इगुपधज्ञाप्रीकिरः कः" इति कर्त्तरि कप्रत्ययविधेः के ते गुणाः साम्यं सर्वत्र प्राकृतवस्तुष्वौदासीन्यात् समत्वं च अप्राकृतेषु स्वभक्तेषु आसक्तिश्चात्मिकी तदाद्याः आदिशब्दात् प्रथमस्कन्धे पृथिव्युक्ताः सत्यशौचादयश्चानन्ताः कीदृशाः अगुणाः गुणपरिणामरूपा न भवन्ति किन्तु नित्या इत्यर्थः इति श्रीस्वामिचरणाः "इमे चान्ये च भगवन्नित्या यत्र महागुणाः" इति । प्रथमे च अतः स्वरूपभूता एव गुणा आत्मानं स्वरूपमेव भजन्ति "न तस्य कार्यं करणं च विद्यते" इत्यादौ "स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतेः ॥ ४० ॥

अगृणन्त अगृणन्त मां तुष्टुवुः ॥ ४१ ॥

प्रत्येयाय प्रत्यागतोऽस्मि ॥ ४२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

एकादशे सङ्गतः सतुसङ्गतोऽभूत्त्रयोदशः ॥ १३ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नन्वेवं भूतज्ञानिनो देहोऽपाव्यमानः शीघ्रमेव पतेत्कथं तिष्ठेदिति चेत्तत्राह—देहोऽपीति । दैवं प्रारब्धं कर्म तदधीनवदधीनः स्वदिवति निश्चयं स्वारम्भकं स्वकारणं कर्म यावत् स्वस्मिन्निष्ठति तावत्प्रति सासुः प्राणसहितः समीक्षते तथाश्च प्रतीक्षते इत्यर्थः स्योपेक्षयापि न पतति चेत्तर्हि तस्य पालनमेव किं न कुर्यादित्याशङ्क्याह । तं देहं ससप्रपञ्चं पुनर्न भजते मम सुखहेतुरयमित्येवं न पालयति तच्चान्यद्वस्तु तदर्थं सङ्गृह्णाति कुतः अधिरूढसमाधियोगः अधिरूढः प्राप्तः समाधिना योगो ध्येयभूतपरमात्मनः संयोगो येन सः सर्वव्यवहारहेतुत्वेन तस्य च ध्येयवस्तुनि व्यग्रत्वात् बाह्यवस्तुनि प्रवृत्तिरित्यर्थः । तत्र दृष्टान्तः यथा प्रतिबुद्धः पुनः स्वाप्नं वस्तु न भजते तथेत्यर्थः । अत्र यथापदमध्याहृत्य योजनीयं प्रतिबुद्ध इत्यत्र सुप्तोऽपि आर्षः प्रतिबुद्धवस्तुरित्येकपदकरणे तु अध्यगमत्स्वरूपम् अधिरूढसमाधियोग इति विशेषणाभ्यामुक्तार्थत्वात्पुनरुक्त्यापत्त्या व्यर्थमेव स्यात् ॥ ३७ ॥

उपदिष्टं ज्ञानं सर्वशास्त्रसारभूतं तस्योपदेष्टृत्वं च परमेश्वरादन्यस्य न सम्भवतीत्यतः स्वस्य परमेश्वरत्वं व्यक्तमाह । मयेति । विप्रा ! इति सम्बोधनेन वेदाभ्यासयुतां तत्त्वज्ञाने मुख्याऽधिकारः सूचितः साङ्ख्यमात्मानात्मविवेकः योगः पातञ्जल-

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

शास्त्रोक्तोऽष्टाङ्गयोगः तयोर्वक्तृत्वमाश्रित्यैकं तदेतन्मया वो युष्मभ्यमुक्तं किञ्च यज्ञं विष्णुमागतं मां जानीत ननु ब्रह्मणो वाहनमिति "यज्ञो वै विष्णुः" इति श्रुतेः। तर्हि विष्णोर्हंसरूपेण किमर्थमागमनमिति चेत्तत्राह। युष्मद्धर्मविवक्षयेति। युष्मादृशानां परमहंसानां धर्मविवक्षयेति युष्मादृशानां परमहंसानां धर्मः आत्मानात्मविवेकेन सर्वसङ्गनिवृत्तिपूर्वकपरतत्त्वैकनिष्ठत्वं तस्य विवक्षया एतेन परमहंसधर्मोपदेष्टृत्वं विष्णोरपि हंसरूपेणैवोपपद्यते नान्यथेति दर्शितम् ॥ ३८ ॥

यज्ञमागतं मां जानीतेत्युक्तमिदानीं विष्णुत्वज्ञापकगुणानाह—अहमिति। सत्यं समदर्शनं निर्दोषरूपान्तर्यामिब्रह्मदर्शनमित्यर्थः ऋतं सत्यं प्रियवचनं तेजः परैरनभिभूयमानत्वे सति पराभिभवनसामर्थ्यं दमोऽन्तरिन्द्रियसंयमः भो द्विजश्रेष्ठाः एतेषां गुणानामहं परममयनमव्यभिचरिताश्रयं श्रियो लक्ष्म्याः शोभाया वा कीर्तेश्च तथेत्यर्थः ॥ ३९ ॥

पुनः सर्वगुणाश्रयत्वं दृढीकरोति। मामिति। सात्त्वासङ्गादयः सर्वे गुणा मां भजन्ति तत्र ब्रह्मादिपर्यन्तानां साधारणोपायोपेयत्वं साम्यं चराचरान्तः स्वरूपेणावस्थितत्वेऽपि तद्धर्मास्पृष्टत्वमसङ्गत्वं तौ याद्दी येषां ते कथम्भूतं मां निर्गुणं मायिकगुणाशून्यं निरपेक्षकं किञ्चिदपेक्षारहितं कथं तर्हि कश्चिदन्यभूमिनवनीतादिचौर्याद्याचरणमिति चेत्तत्राह। सुहृदं प्रियं च भक्तसुहृत्त्वात् प्रियत्वाद्यकृत्यमपि करोमीति भावः। ननु तर्हि, भक्तपक्षपातात् कथं साम्यं कथञ्चाऽसङ्गत्वमिति चेत्तत्राह। आत्मानं सर्वेषामात्मानम् आत्मत्वात्समोऽपि सुरतरुवद्भजतामेव मनोरथपूरको नान्येषामतो न वैषम्यमत एवासङ्गत्वमपि सिद्धं कथम्भूता गुणा अगुणाः प्राकृतगुणविलक्षणा दिव्या इत्यर्थः ॥ ४० ॥

हंसोपदेशस्य समाप्तिमाह—भगवान्—इतीति। इत्युक्तगुह्यतत्त्वोपदेशेन हंसरूपेण मया कर्त्रा छिन्नसंदेहाः सनकादयो मुनयः परया भक्त्या मां समाजयित्वा पूजयित्वा संस्तवैः समीचीनस्तोत्रैरगृणन् तुष्टुवुः ॥ ४१ ॥

तैरिति। तैः परमर्षिभिः सम्यक्पूजितः संस्तुतश्चाहं परमेष्ठिनः पश्यतः स्वकं धाम वैकुण्ठं प्रति एवाव आगच्छम् ॥ ४२ ॥

"कृष्णहंसः स्वशिष्येभ्यो गुह्यतत्त्वमुवाच यत्।
तदादरेण तद्भक्ताः प्रीत्या शृणुत पश्यत च" ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रयोदशाध्यायार्थप्रकाशः ॥ १३ ॥

---

भाषा टीका।

देह भी प्रारब्ध के वश होने से जब तक उसके प्रारंभ कर्म समाप्त न होंगे तब तक प्राणों के सहित प्रतीक्षा करैगा हि नष्ट नहीं होगा, परन्तु जो पुरुष समाधियोग में आरूढ होगया है सो तो वस्तु के बोध हो जाने से स्वप्नकी नाईं प्रपंच सहित उस देह को फिर नहीं भजता है ॥ ३७ ॥

हे विप्रो! मैंने तुम से सांख्य तथा योग में गुप्त जो अर्थ सो कहा है मैं यज्ञ पुरुष नारायण हूँ तुमको धर्मोपदेश करने को आया हूँ ऐसा जानो ॥ ३८ ॥

हे द्विजश्रेष्ठो! मैं योग सांख्य सत्य सुंदर वचन तेज शोभा कीर्ति दम इन सब गुणों का आश्रय हूं ॥ ३९ ॥

मैं प्राकृत गुणों से रहित हूं इसी से निरपेक्ष हूं सब भूतों का सुहृद हूं प्रिय हूं अन्तरात्मा हूं इसी से साम्य असङ्ग आदिक सब गुण मेरे को भजते हैं ॥ ४० ॥

इस प्रकार से सनकादिक मुनि लोगों का जब मेरे से सन्देह के छूट गया तब परमभक्ति से हमारा पूजन करके स्तोत्रों से स्तुति करने लगे ॥ ४१ ॥

उन परम ऋषियों से हम पूजित होकर तथा स्तुति पाकर ब्रह्माजी के देखते ही अपने धाम वैकुण्ठ को चले गये ॥ ४२ ॥

इति श्रीमद्भागवत एकादशस्कन्ध में तेरमां अध्याय की
श्री वृन्दावनस्थ पं० लक्ष्मणाचार्यकृत
भाषा टीका समाप्त ॥ १३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

—:*:—

# अथ चतुर्दशोऽध्यायः ।

———:*:———

उद्धव उवाच ।

वदन्ति कृष्ण ! श्रेयांसि बहूनि ब्रह्मवादिनः ।
तेषां विकल्पप्राधान्यमुताहो एकमुख्यता ॥ १ ॥
भवतोदाहृतः स्वामिन् ! भक्तियोगोऽनपेक्षितः ।
निरस्य सर्वतः सङ्गं येन त्वय्याविशेन्मनः ॥ २ ॥

श्रीभगवानुवाच ।

कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता ।
मयाऽऽदौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥ ३ ॥
तेन प्रोक्ता च पुत्राय मनवे पूर्वजाय सा ।
ततो भृग्वादयोऽगृह्णन् सप्त ब्रह्ममहर्षयः ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्दशे परं श्रेयो भक्तिरेव नचेतरत् ।
इत्येतद्वर्ण्यते ध्यानयोगश्च सह साधनैः ॥

एवं तावद्भगवता भक्त्या मोक्ष इत्युक्तमन्ये त्वन्यानि साधनानि वदन्ति तत्र विशेषनिर्धारणाय पृच्छति—वदन्तीति । श्रेयांसि श्रेयःसाधनानि किं विकल्पेन प्राधान्यमुताहो किं वा एकस्यैव मुख्यता ॥ १ ॥

एकमुख्यतापक्षोत्थाने कारणम् भवतेति न अपेक्षितमपेक्षा यस्मिन्सोऽहैतुकः अयमर्थः भवता यो भक्तियोग उक्तः अन्ये च यानि श्रेयःसाधनानि वदन्ति तेषां किं साक्षात्फलसाधनत्वेन प्राधान्यमेव सर्वेषामुताङ्गाङ्गित्वम प्राधान्येऽपि किं विकल्पेन सर्वेषां तुल्यफलत्वं यद्वा कश्चिदस्ति विशेष इति ॥ २ ॥

तत्र भक्तिरेव महाफलत्वेन मुख्या अन्यानि तु स्वस्वप्रकृत्यनुसारेण पुरुषस्यानीयस्वर्गादिफलबुद्धिभिः प्राणिभिः प्राधान्येन परिकल्पितानि क्षुल्लकफलानीति विवक्षुः प्रकृत्यनुसारेण बहुधा वेदार्थप्रतिपत्तिमाह—कालेनेति सप्तभिः । मदात्मकः मय्येवाऽऽत्मा चित्तं येन सः ॥ ३ ॥

भृग्वादयः भृगुश्च मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुरित्येते च सप्त ब्रह्माणः प्रजापतयस्ते च ते ब्रह्मर्षयश्च ॥४॥५॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

परमुत्तमं श्रेयःसाधनं भक्तिरेव इतरद् धर्मवर्णाश्रमादिकन्तु, परं श्रेयो न भवति इत्येतच्चतुर्दशेऽध्याये श्रीकृष्णेन वर्ण्यते । अन्ये तु मीमांसकादयः अन्यानि धर्मादीनि । तत्र तेषु साधनेषु मध्ये । विशेषनिर्धारणाय गौणमुख्यनिर्णयाय । विविधः कल्पो विकल्पः एवं वा एवं वेति यावत् तेन प्राधान्यम्॥१॥

ननु, निरपेक्षो भक्तियोगो मयोक्तश्चेदन्यसाधनप्रश्नेनालं चेत्तत्राहोच्यते—अयमर्थ इति । तेषां धर्मादिसाधनानां साक्षात्फलसाधनत्वेन अव्यवहितमुक्तिफलोपधायकत्वेन । उत किम्वा । अङ्गाङ्गित्वं यथा दर्शपौर्णमासादीनां परमापूर्वे प्रत्यङ्गत्वेऽपि प्रयाजाद्यपेक्षयाङ्गित्वं तथा केषामङ्गत्वं केषां चाङ्गित्वमित्यर्थः । कश्चिदस्ति विशेष इति प्राधान्येऽपि । कस्यचिदधिकतरफलेषां कृच्छ्रो महानिव भवार्णवमप्लवेशामित्यादिन्यायेन फलाफलशालस्या निर्णयः कश्चिदस्ति चेत्यर्थः ॥ २ ॥

तत्र तेषु साधनेषु मध्ये । अन्यानि धर्मादीनि क्षुल्लकफलानि तुच्छफलानि । कालेनेति सप्तकम् । आदौ ब्राह्मकल्पादौ ॥३

तत इति युग्मकम् । तथा मनुं प्रति कथनानन्तरं ब्रह्माणश्च ते महर्षयश्चेति विशेषणयोः कर्मधारयः तत्र प्रजापतयः प्रजास्रष्टारः महर्षयो मन्त्रद्रष्टारः ॥ ४ ॥ ५ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

श्रेयांसि पुरुषार्थसाधनानि विकल्पप्राधान्यं विकल्पेनैकस्य

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सुखफलं प्रति निरपेक्षसाधनतया प्राधान्यमेकमुख्यता एकस्यैव प्राधान्यम् ॥ १ ॥

अनपेक्षितः अपेक्षितान्तररहितः अननुमतइतिवत् येन भक्तियोगेन ॥ २—६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अधिरूढसमाधियोगः "स्वात्मनं पुनर्न भजते प्रतिबुद्धवस्तुः" इति परब्रह्मोपासनमेव मोक्षाख्यश्रेयःसाधनमित्युक्तं तत्र मोक्षाख्यपुरुषार्थस्य स्वतरस्थावृत्तत्वानिर्दिधारयिषया पृच्छति । वदन्तीति। ब्रह्म वेदमधीयतेऽध्यापयन्ति चेति ब्रह्मवादिनः अनेन सर्वेषां वादानां वेदमूलत्वं वेदव्याख्यातृत्वं च ज्ञापितं श्रेयांसि धर्मार्थकामरूपाणि इदं तत्साधनानामप्युपलक्षणं वदन्ति किं तेषां विकल्पः उत प्राधान्यमहो किं वा एकस्यैव मुख्यता भवतीति शेषः ॥ १ ॥

भवता तु हे स्वामिन् ! अनपेक्षितः फलापेक्षारहितः इत्यर्थः भक्तियोग उदाहृतः मोक्षसाधनत्वेन कथितः तत्र तेषां ब्रह्मवादिभिरुक्तानां श्रेयसां तत्साधनानां च त्वदभिहितमोक्षतत्साधनाभ्यां सह विकल्पः मोक्षशब्दाभिलपनीयस्य श्रेयसो ब्रह्मवाद्युक्तश्रेयोऽन्तरान्तर्भूतत्वे तदुक्तसाधनैः सह त्वदुक्तभक्तियोगस्य विकल्पेनानुष्ठानप्रसङ्गः फलस्य धर्माद्यनतिरिक्तत्वात् व्रीहियवयोरनतिरिक्तसाध्ययोर्व्रीहिभिर्यजेत यवैर्यजेतेति विकल्पः प्रसिद्ध इति भावः । यदि धर्मादिभ्यो विजातीयो मोक्षः स्यात्तदा धर्मादीनां मोक्षस्य च तारतम्यं निश्चेतव्यं किं सर्वेषां श्रेयःसाधनानां प्राधान्यं परस्परमङ्गाङ्गिभाववैधुर्येण स्वस्वफलं प्रति प्रधानोपायतयानुष्ठेयत्वमिति द्वितीयविकल्पार्थः यद्येषां मध्ये कस्यचिदेवोत्कृष्टत्वं तदा सत्युत्कृष्टे फले निकृष्टतल्लिप्सानुदयात्तस्यैवेप्सिततमत्वात् तल्लिप्सोः तत्साधनस्यैवानुष्ठेयत्वात् तस्यैव प्राधान्यादितरेषाम् उपयोग विशेषविवेकेन सन्निहितसाधनाङ्गतयानुष्ठानं स्यादित्याशयेन तृतीयकोट्युद्भवः तदुक्तं भक्तियोगं विशिनष्टि । निरस्येति । येन भक्तियोगेन सर्वतः सर्वेभ्यः सङ्गं निरस्यापोह्य मनस्त्वय्येवाविशेदिति ननु यद्यपि भगवत्स्वेव मनःस्थैर्यसाधनत्वकथनेन भक्तियोगस्य धर्मादिभ्यो विलक्षणश्रेयःसाधनत्वज्ञानसद्भावावगमाद्विकल्पानुपपत्तिस्तथापि मनसस्त्वय्यावेशेन साध्यो मोक्षः किं धर्माद्यन्तर्भूत उत तद्व्यतिरिक्तः अतिरिक्तत्वेऽपि किमन्या तत्साध्यमस्त्युत नेति तारतम्येऽप्यङ्गाङ्गिभावोऽस्त्युत नेति संशयेन तदुपपत्तिः ॥ २ ॥

तत्र ब्रह्मवादिनो वदन्तीत्यनेन यज्ज्ञापितं वेदव्याख्यातृत्वं तदङ्गीकुर्वन्नाह । कालेनेत्यादिना । प्रलये प्राकृतप्रलये वेदसञ्ज्ञितेयं मम वाणी कालेनाध्येत्रध्यापयितृरहितेन नष्टा विप्लुतयथावस्थितवर्णपरंपरा बभूव सैव पुनर्मया सर्वेण जगत्सिसृक्षुणा भावौ कल्पादौ ब्रह्मणे चतुर्मुखाय प्रोक्ता अविप्लुतानुपूर्वीविशिष्टतया आविष्कृतमांपादा उपदिष्टेत्यर्थः तां विशिनष्टि । धर्मो यस्यां मदात्मक इति । अहमात्मा स्वरूपं यस्य स धर्मः यस्यां वाण्यामभिव्यक्तः —

ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः ।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् इति ॥

श्रीकृष्णस्य धर्मत्वं श्रीमन्महाभारते प्रसिद्धं वैधत्वे सत्यलौकिकश्रेयःसाधनत्वं हि धर्मत्वं तच्च भगवत्यस्ति अमृतस्यैष सेतुरिति श्रवणात् अतो मदात्मक इत्युक्तम् अनेन मदात्मकधर्मप्राधान्यपरैवेयं कृत्स्ना वेदसंज्ञिता वाणी यागादीनां धर्मत्वप्रतिपादनपरः पूर्वभागोऽप्यनभिसंहितफलयज्ञादिसाध्यमत्प्रीतिद्वारकमत्प्राप्तिप्रतिपादनपर एवेति सोऽपि मदात्मकधर्मप्रतिपादनपर एवेति फलितम् ॥ ३ ॥

किञ्च तेन ब्रह्मणा प्रथमजाय पुत्राय मनवे स्वायम्भुवाख्याय सा वाणी प्रोक्ता तत्रेति तत्र स्वायंभुवे मन्वन्तरे तत इति पाठेऽपि स एवार्थः भृग्वादयः भृगुमरीच्यत्र्यङ्गिरः पुलस्त्यपुलहक्रतवः सप्त ब्रह्ममहर्षयः प्रतिमन्वन्तरं सप्तर्षिभेदः प्रतिपादितोऽष्टमे स्कन्धेऽनुगन्तव्यः ततो ब्रह्मणः सकाशादपुत्रात् गृहीतवन्तः वाणीमिति शेषः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवत्साक्षात्काराय सर्वस्मादुत्तमसाधनं भक्तिरेव तद्गताखेयं ध्येयो हरिरिति ब्रवमस्मिन्नध्याये विधत्ते तत्रोद्धवप्रश्नपूर्वकं प्रश्नाम्नायं कथयति । वदन्तीति । श्रेयांसि प्रशस्तानि साधनानि तेषां साधनानां यथाम्बा पयसाबेति यदिदं भवतीदं वेति विकल्पो वा सम्भूय सर्वेषां प्राधान्यमुतैकस्य मुख्यता अन्येषां च तदुपसर्जनत्वं चेति ॥ १ ॥

भवतानपेक्षितः अन्यापेक्षारहितोऽखिलसाधनोत्तमो भक्तियोग उदाहृतः तथापि ब्रह्मवादिमतानां का गतिरिति शेषः येन भक्तियोगेन ॥ २ ॥

वेदमूलान्येव श्रेयांसि तत्र मत्प्रीतिसाधनं भक्तिलक्षणो धर्मः श्रेयसामुत्तम इति दर्शयितुं श्रद्धाजननाय वेदोक्तपरंपरामाह । कालेनेत्यादिना । कालेन कालशक्त्या मदात्मको मद्विषयः ॥ ३ ॥

मनवे स्वायम्भुवाय कीदृशोऽयं तद्धितप्रत्ययः इत्येतत्स्पष्टयति । पुत्रायेति । स्वयम्भुवः पुत्रत्वात्स्वायम्भुव इत्यर्थः अत्र मनोः पूर्वजत्वं रुद्रेन्द्रकुमारान्विनेति ग्राह्यम्—

रुद्रमिन्द्रं कुमारञ्च विनैवाग्र्यात्प्रजो मनुः ।
ब्रह्मपुत्रेष्वादिसृष्टावन्यथात्वं पुनर्जनेः ॥

इति वचनात्——

आदिसृष्टौ पूर्वजा ये तेऽधिकाः सर्वतो गुणैः ।
अनाद्यनन्तकालेषु मुक्तावपि यथाक्रमम् ॥

इति च ॥ ४—५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसंन्दर्भः ।

पूर्वं यत् तस्मात्त्वमुद्धवोत्सृज्येत्यादिभिर्भक्तियोगस्य नैरपेक्ष्यमभ्यस्तं तदेव मतान्तरनिरासेन द्रढयितुं पृच्छति । वदन्तीति ॥ १ ॥

निरस्येति फलान्तरसापेक्षत्वमपि निरस्तम् ॥ २ ॥

कालेनेति सार्द्धकम् । कालेन नष्टा तत्रापि प्रलये कल्पान्ते बहुनष्टेत्यर्थः । इयमिति मयतेत्यादिना यया मयताऽनूद्यते तया

तेभ्यः पितृभ्यस्तत्पुत्रा देवदानवगुह्यकाः ।
मनुष्याः सिद्धगन्धर्वाः सविद्याधरचारणाः ॥ ५ ॥
किं देवाः किन्नरा नागा रक्षःकिम्पुरुषादयः ।
बह्व्यस्तेषां प्रकृतयो रजःसत्त्वतमोभुवः ॥ ६ ॥
याभिर्भूतानि भिद्यन्ते भूतानां मतयस्तथा ।
यथाप्रकृति सर्वेषां चित्रा वाचः स्रवन्ति हि ॥ ७ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

निरूपितेत्यर्थः । एतेन स्वाभाविकं ज्ञानादिभिन्नत्वं महावैराग्य-फलत्वञ्च तमन्मतमिति बोधितम्, आदौ ब्राह्मकल्पादौ महात्मको मत्स्वरूपभूतो ह्लादिनी सारूपत्वात् ॥ ३ ॥

तत इति युग्मकं तेभ्यस्तत्पुत्रास्तत्परम्परायामेवाग्येभ्यश्च पितृभ्योऽन्य इत्यर्थः ॥ ४—६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भक्तेः कृष्णवशीकारसर्वोत्कर्षश्च सुस्फुटी ।
तद्गताश्च मुमुक्षोः सम्मतं ध्यानं च वर्णितम् ॥

श्रुतानां श्रोतव्यानां च श्रेयःसाधनानां तारतम्यादिकं पृच्छति । वदन्तीति । श्रेयांसि श्रेयःसाधनानि किंविकल्पेन प्राधान्यम् इदं प्रधानमिदं वा प्रधानमिति उताहो एकस्यैव मुख्यता इदमेव प्रधानमिति ॥ १ ॥

भवन्मते तु भक्तियोग एव मुख्य इत्याह । भवतेति । अनपेक्षितः निष्कामो भक्तियोग एव भवता उदाहृतः उत्कर्षेण आहृतः आनीतः येन मनस्त्वद्वाविष्टं स्यात् स किं सर्वेषामपि श्रेष्ठो सम्मतः उत तवैवेति निर्द्धार्य्य उच्यतामिति भावः ॥ २ ॥

भो उद्धव ! सर्वमतानि वेदोत्थितानि तस्य वेदस्य तु मद्भक्तियोग एव तात्पर्य्यमित्याह । कालेनेति । मदात्मकः मत्स्वरूपभूतः भक्तियोगस्य ह्लादिनीसारभूतत्वात् यद्वा मय्येव आत्मा चित्तं यतः चित्तस्य मदाविष्टता मद्भक्त्यैव भवेत् भक्त्याहमेकया ग्राह्य इति मद्वचनात् भक्त्यैवाहमिन्द्रियैर्ग्रहीतुं शक्यो नान्यथेति तत्रार्थो द्रष्टव्यः ब्रह्मवादिभिरुक्तानां मद्भक्तियोगादन्येषां श्रेयसां मत्प्रापकत्वाभावात् श्रेयस्त्वमेव वस्तुतो नास्तीत्यतस्तेषां विकल्पतः प्राधान्येन एकस्य मुख्यत्वेन वा जिज्ञास्येन तव किम्प्रयोजनमिति भावः ॥ ३ ॥

कथं ततो नाना मतान्युद्भूतानि तत्राह । तेनेति सार्द्धैस्त्रिभिः । भृग्वादयः भृगुश्च मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुरित्येते च सप्त ब्रह्मणः प्रजापतयः ते च ते महर्षयश्च किन्देवाः कृमवेदहौर्गन्ध्यादिराहित्येन किन्देवा मनुष्या वेति संदेहास्पदीभूताः द्वीपान्तरमनुष्या एव किन्नराः किञ्चिन्नरा इव मुखतः शरीरतो वा किम्पुरुषाः किञ्चित् पुरुषा इव वानरादयः ॥४॥५॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवता ज्ञानवैराग्यविजृम्भितया स्वभक्त्यैव स्वप्राप्तिरूपा मुक्तिरुक्ता अन्ये त्वन्यथा वदन्ति तेषां मोहितत्वं ज्ञानवैराग्य-भक्तिदार्ढ्यं च भगवन्मुखादेव श्रोतुं पृच्छति । वदन्तीति द्वाभ्याम् । हे कृष्ण ! सदानन्द ब्रह्मवादिनः वेदवादिनः श्रेयांसि बहूनि वदन्ति तेषां विकल्पेन प्राधान्यम् उताहो एकस्यैव मुख्यता ॥ १ ॥

अनपेक्षितः नास्ति अपेक्षा फलापेक्षा यस्मिन् सः ॥ २ ॥

नष्टा अन्तर्हिता मदात्मकः अहमात्मा आश्रयो यस्य सः अनेन वेदस्य मदात्मकधर्मपरत्वमस्ति मत्सम्बन्धवर्जितकर्मादिषु वेदसमन्वयकल्पनमयुक्तमित्युक्तम् ॥ ३ ॥

मनवे स्वायम्भुवाय ततः मनुतः भृग्वादयः भृगुश्च मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुरित्येते सप्त ब्रह्मणः प्रजापतयस्ते च ते महर्षयः अगृह्णन् तामिति शेषः ॥ ४ ॥

भाषा टीका ।

उद्धव उवाच हे कृष्ण ! ब्रह्मवादि लोग बहुत से साधन मोक्ष के कथन करते हैं क्या वे साधन सबही अलग २ श्रेष्ठ हैं अथवा उन मे कोई एक श्रेष्ठ प्रधान है ॥ १ ॥

हे स्वामिन् ! आपने तो केवल निरपेक्ष भक्ति योगही कहा है जिस मे कि सब तरफ से संग को छोड कर आप के विषय मे मन का योग हो जावै ॥ २ ॥

श्रीभगवान उवाच वेद नामकी यह वाणी जिसको की कि मैने सृष्टि के आदि मै ब्रह्माजी से कहा था जिसमे मेरा प्रतिपादक धर्म है वह वेद वाणी बहुत काल पाकर नष्ट प्राय हो गई ॥ ३ ॥

तिन ब्रह्माजी ने पूर्वज मनुजी के अर्थ कही तिसके पीछे सप्त महर्षि भृगु आदिकों ने ग्रहण किया ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

किं देवाः कलमदस्वेददौर्गन्ध्यादिराहित्येन किं देवा मनुष्या वेति सन्देहास्पदद्वीपान्तरमनुष्याः एवं किन्नराः किञ्चिन्नरा इव मुखतः शरीरतो वा किम्पुरुषाः किञ्चित्पुरुषा इव वानराः

**एवं प्रकृतिवैचित्र्याद्भिद्यन्ते मतयो नृणाम् ।**
**पारंपर्येण केषांचित्पाखण्डमतयोऽपरे ॥ ८ ॥**

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं प्रकृतयो वासना बह्व्यः कुतः रजः सत्त्वतमांसि भुवः जन्मस्थानानि यासां ताः ॥ ६ ॥

भूतानि देवासुरमनुष्यादीनि चित्रा वाचो वेदार्थव्याख्यानविषयाः ॥ ७ ॥

एवमित्युक्तोपसंहारः केषांचिदध्ययनादिशून्यानामप्युपदेशपारम्पर्येण अपरे पाखण्डमतयो वेदविरुद्धार्थमतयः ॥ ८ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

किं देवकिन्नरयोर्देवत्वनरत्वांशप्राधान्येन विशेषो न ॥ ६ ॥

याभिर्वासनाभिः यथेत्यर्थकम् । यथाप्रकृति वासनानुसारेण चित्राः व्याख्याने विविधप्रकारावच्छिन्नाः स्रवन्ति निःसरन्ति ॥ ७ ॥

अध्ययनादिशून्यानामपीत्यत्र यद्यपि मतिभेदेन तेषां पाखण्डमावस्तथापि उपदेशपारम्पर्येणेत्यपेरर्थः ॥ ८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भूतानि भिद्यन्त इति जात्याभेदो विवक्षितः ॥ ७—८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तेभ्यः सप्तर्षिभ्यः पितृभ्यः स्वस्य पितृभ्य इत्यर्थः । सप्तर्षीणां पुत्रा देवादयोऽगृह्णन्निति पूर्वेण सम्बन्धः तत्र गुह्यकाः यक्षाः ॥ ५ ॥

किन्देवकिन्नरकिम्पुरुषा देवादिवज्जातिविशेषाः एवं वेदस्यानादिनिधनत्वं प्रतिपादितमथ यत्सर्वेषां वादानां वेदमूलकत्वमिति तत्प्रतिक्षेप्तुम्—

अधर्मं धर्ममिति या मन्यते तमसावृता ।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ ! तामसी ।
तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सत्त्वात्सञ्जायते ज्ञानम् ॥

इत्यादि । प्रमाणप्रतिपन्नरजःसत्त्वतमोगुणानुगुणस्वभावत्वादीनां तत्र सात्त्विकस्वभावानां यथावस्थितवेदार्थावगमे सत्यपीतरस्वभावानां विपरीतबुद्धित्वात्स्वस्वबुद्ध्युत्प्रेक्षितार्थमूलकाः सर्वे वादा न तु वेदैकमूलका इत्याह।बह्व्य इति । तेषां ब्रह्मादिकिम्पुरुषादिपर्यन्तानाम् प्रकृतयः रजःसत्त्वतमांसि भुवः जन्मस्थानानि यासां ताः ॥ ६ ॥

प्रकृतीर्विशिनष्टि याभिरिति । याभिः प्रकृतिभिर्भूतानि भिद्यन्ते भिद्यन्त इति जात्यादिभेदो विवक्षितः तथाभूतानां मतयश्च भिद्यन्ते प्रकृतिरत्र स्वभावः स च कर्मानुगुणज्ञानप्रयत्नचिकीर्षाक्रियाद्युत्पत्तिरन्तःकरणगतः सत्त्वादिगुणकार्यविशेषात्मकः यथा प्रकृति यथास्वभावं स्वस्वभावानतिक्रमेण सर्वेषां चित्रा वाचः स्रवन्ति प्रवहन्ते प्रवर्तन्त इत्यर्थः ॥ ७ ॥

एवं यथा यथावाचश्चित्राः स्रवन्ति तथा तथा प्रकृतिवैचित्र्यान्मतयो भिद्यन्ते नृणामिति देवादीनामपि प्रदर्शनार्थं मतिवैचित्र्यं निदर्शनाभिप्रायेणाह । पारंपर्येणेति । तथाहि केषांचित्तमःस्वभावानामनादिनिधनमपि वेदं पौरुषेयमत एव तत्रापि भ्रमविप्रलम्भादिपौरुषदोषसम्भावनयाप्रमाणं मन्यमानानाम् स्वस्वभावानुगुणबुद्ध्युत्प्रेक्षितवेदार्थविरुद्धार्थस्मर्तॄणां मूलपुरुषाणां पारम्पर्येणोपदेशपरम्परया इतरे तदनुयायिनः केचिदर्वाचीनाः पुरुषाः हे पुरुषर्षभ! पाखण्डमतयः यथावस्थितवेदविरुद्धार्थमतयः दृश्यन्त इतिशेषः ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रजःसत्त्वतमोभुव इति पाठः ॥ ६ ॥

याभिः प्रकृतिभिः भूतानामतिभेदेऽपि वेदस्यैकत्वेन तदर्थोऽप्येकविषय एवेति तत्राह । यथा प्रकृतीति । वेदवाचः चित्राः स्रवन्ति धर्माद्यशेषार्थप्रतिपादका वाचः स्वमनीषायै प्रमाणवत् प्रतिभान्तीत्यर्थः ॥ ७ ॥

ततः किन्तत्राह । एवमिति । यथा प्रकृतिवैचित्र्याद्वेदवागर्थप्रतीतिवैचित्र्यमेवं मतयोऽपि विचित्राः । ननु श्रुतिमूलत्वेन गुरुपरम्परागतत्वेन सर्वेषामपि मतानां प्रामाण्यमवगत स्यादत्राह पारम्पर्येणेति । अनेन मदुक्तपारम्पर्येणागतानि केषांचिद्वादीनामेव तानि प्रमाणान्यन्यानि राजसादीनीत्यर्थः, विरक्तत्वापेक्षया केषांचिदित्युक्तं वामशैवादीनि तामसत्वेन पाखण्डानीत्याह । पाखण्डेति ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यथेत्यर्थकम् ॥ ७—९ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रकृतयो वासना बह्व्यः कुतः रजःसत्त्वतमांसि भुवो जन्मस्थानानि यासां ताः भूतानि देवासुरमनुष्यादीनि ॥ ६ ॥

चित्रा वाचः वेदार्थव्याख्यानरूपाः ॥ ७ ॥

पारम्पर्येण गुरूपदेशपरम्परया पाखण्डमतयः अतितमःप्रकृतित्वाद् वेदविरुद्धार्थमतयः तेन भार्गारथ्या अपि शुद्धं मधुरमपि तत्तटवर्त्यैरण्डनिम्बादिकाकपित्थबिल्वविषवृक्षादिभिः

मन्मायामोहितधियः पुरुषाः पुरुषर्षभ ! ।
श्रेयो वदन्त्यनेकान्तं यथाकर्म यथारुचि ॥ ९ ॥
धर्ममेके यशश्चान्ये कामं सत्यं दमं शमम् ।
अन्ये वदन्ति स्वार्थं वा ऐश्वर्यं त्यागभोजनम् ॥
केचिद्यज्ञतपोदानं व्रतानि नियमान् यमान् ॥ १० ॥
आद्यन्तवन्त एवैषां लोकाः कर्मविनिर्मिताः ।
दुःखोदर्कास्तमोनिष्ठाः क्षुद्रानन्दाः शुचाऽर्पिताः ॥ ११ ॥
मय्यर्पितात्मनः सभ्य ! निरपेक्षस्य सर्वतः ।
मयाऽऽत्मना सुखं यत्तत्कुतः स्याद्विषयात्मनाम् ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आम्रमूलद्वारा गृहीतं विरसं विरुद्धरसं च यथा भवत्येव, तेषां तेषां व्याख्यातॄणां मुखं प्राप्य वेदार्थोऽपि विरसो विरुद्धफलप्रदश्च भवेदिति भावः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तेभ्यो ब्रह्ममहर्षिभ्यो देवादयोऽगृह्णन्निति पूर्वेणान्वयः ॥ ५ ॥

रजःसत्त्वतमांसि भुवः उत्पत्तिभूमयो यासां ताः ॥ ६ ॥

भूतानि राजससात्त्विकतामसरूपाणि मनुष्यदेवादीनि मतयः पुनस्तेषां तादृशजन्मादिहेतुभूताः बुद्धयः यथाप्रकृति राजसत्वादिस्वभावानुरूपं स्रवन्ति जपयज्ञादिपरतया तत्तद्बुद्धौ प्रवर्त्तन्ते ॥ ७ ॥

केषांचित्पारंपर्येण वेदावलम्बिपरंपरागतोपदेशेन अपरेतु पाखण्डमतयो वेदावलम्बिपरंपरागतोपदेशनिरपेक्षबुद्धयः ॥ ८ ॥

---

भाषा टीका ।

उन पितरों से उनके पुत्रों ने ग्रहण किया फिर देवता दान व गुह्यक मनुष्य सिद्ध गंधर्व विद्याधर चारण इनों ने ग्रहण किया ॥ ५ ॥

फिर किंदेव किन्नर नाग रक्षः किंपुरुष आदिक उन सबों के रजसत्वतमोगुणकी प्रकृति हैं ॥ ६ ॥

जिन प्रकृतियों से भूतों की मति नाना प्रकारकी भिन्न होती हैं जैसी जिनकी प्रकृति है तैसे तिन के वचन निकलते हैं ॥ ७ ॥

इस प्रकार प्रकृतियोंकी विचित्रता से मनुष्यों की मतियों के भेद होते हैं इनके परंपरा से और कोई दूसरे पाखंड मति वाले हो जाते हैं ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्प्रकृतीनां मायागुणमूलत्वान्मन्मायामोहितधियः अनेकान्तं नानाविधम् ॥ ९ ॥

तदेवाऽऽह—धर्ममिति सार्धेन । धर्मं कर्ममीमांसकाः यदुक्तम्

मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।
नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया ॥

इत्यादि यशः काव्यालङ्कारकृतः यथाऽऽहुः—

यावत्कीर्तिर्मनुष्यस्य पुण्या लोकेषु गीयते ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥

इति कामं वात्स्यायनादयः सत्यं दमं शमं च योगशास्त्रकृतः अन्ये दण्डनीतिकृतो ... ऐश्वर्यमेव स्वार्थं पुरुषार्थं वदन्ति अतः सामाद्युपाया एव श्रेयःसाधनमिति तेषां मतम् तथैव त्यागं भोजनं च लोकायतिकाः यज्ञतपोदानं यज्ञो देवतानां पूजनं तपश्च दानं च ॥ १० ॥

तेषां तुच्छफलत्वमाह । आद्यन्तवन्त इति । एषां लोका एतैः साध्यानि फलानि तमोनिष्ठा मोहात्मकाः भोगकालेऽप्यसूयादिभिः शुचार्पिता व्याप्ताः ॥ ११ ॥

भक्तेर्मुख्यत्वमाह । मयीति यावत्समाप्ति । हे सभ्य ! मया परमानन्दरूपेणाऽऽत्मना स्वरूपत्वेन स्फुरता ॥ १२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी ।

तत्प्रकृतीनां तद्वासनानाम् । मायागुणमूलत्वात् सत्त्वादिहेतुकत्वात् । श्रेयः श्रेयःसाधनम् ॥ ९ ॥

तदेव नानाविधमतवदनमेव । कर्म नित्यनैमित्तिकलक्षणम् । तत्र चतुर्विधकर्मसु मध्ये । काम्यमग्निहोत्रादि, निषिद्धं कलञ्जभक्षणादि, नित्यं सन्ध्यावन्दनादि, नैमित्तिकं जातेष्ट्यादि । प्रत्यवायस्तदकरणे निषिद्धकरणे च यो दोषस्तस्य जिहासया परिहारेच्छया । काव्यालङ्कारकृतः भरतदण्डिमम्मटादिप्रभृतयः । सत्यं यथार्थभाषणम् । दमं बहिरिन्द्रियनियमनम् । शममन्तरिन्द्रियनियमनं च श्रेयो वदन्ति केचित् कर्मनिष्ठाः ॥ १० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

एषां धर्मादीनां लोका लोकयन्ते प्राप्यन्ते भुज्यन्ते इति तथा च फलानीति व्याख्यातम् ॥ ११ ॥

स्वरूपत्वेन रश्मीनां रविवन्मूलरूपत्वेन स्फुरता विषयात्मना-मिति मदतिरिक्तपुरुषार्थिनः सर्व एव विषयात्मान इति भावः ॥ १२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यथाकर्म यथारुचि रुचिभेदनियामकं कर्मवैविध्यमित्य-भिप्रायः ॥ ९ ॥

यशश्चान्य इति । लोकयशो यथाविहितं भवति तादृशाचरितं श्रेय इत्यभिप्रायः यद्वा यावत्कीर्तिस्तावत्परलोकावस्थानमिति शास्त्रार्थयुक्तं कामं प्रजानन्तुमित्यर्थः ॥ १० ॥

दुःखोदर्काः दुःखफलाः ॥ ११ ॥

मय्यात्मना सुखमन्तरात्मनानुभूतं मदनुभवाधीनं सुखम् ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अतो विवेकशून्यानां व्यञ्जयितुं विशिनष्टि । मन्मायामोहित-धिय इति । मन्मायामोहितमतित्वात्तत्पारंपर्यानादरेण अतोऽपि यथावत्तत्त्वं न जानन्तीति भावः । ते पुनः पाखण्डमतयः सन्तो न तूष्णीमवतिष्ठन्ते किन्तु यथाकर्म यथारुचि अनेकान्तं नाना-विधं श्रेयो वदन्ति रुचेर्नियामकं कर्मवैविध्यमित्यभिप्रायेण यथाकर्मेत्युक्तम् ॥ ९ ॥

यथाप्रकृति सर्वेषां चित्रा वाचः स्रवन्ति हीत्ये-तत्प्रपञ्चयति । धर्ममिति । एके पूर्वमीमांसकाः धर्मं यागदान-होमादिरूपं श्रेयःसाधनं वदन्ति इति सम्बन्धः । एवमुत्त-रत्रापि स्वर्गादिरेव श्रेयस्तत्साधनं धर्म एवेति वदन्तीत्यर्थः । अन्ये काव्यालङ्कारादिकृतः यशः कीर्तिमेव स्वर्गादिरूपश्रेयः-साधनं वदन्ति तथा च तत्परिपाटिः—

यावत्कीर्तिर्मनुष्यस्य पुण्या लोकेषु गीयते ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥

इति कामतन्त्रप्रणेतारस्तु काममेव पुरुषार्थं वदन्ति तदुपा-यास्तु तैरेवोक्तास्तत एव द्रष्टव्याः । योगिनस्तु सत्यं दमं शमं च कैवल्याख्यश्रेयः साधनं वदन्तीत्यर्थः । अन्ये नीति-शास्त्रविदः ऐश्वर्यमेव स्वार्थं पुरुषार्थं वदन्ति तदुपायास्तु सामादयस्तैरेवोक्ता इति भावः । लौकायतिकास्तु । त्यागभोजनम् विभवभोजनं वदन्ति —

भस्मीभूतस्य देहस्य पुनरागमनं कुतः ।
तस्मात्सर्वप्रयत्नेन ऋणं कृत्वा घृतं पिबेत् ॥

इत्यादिरूपा हि तेषां परिपाटिरित्यर्थः । केचित्त्रयीमतानुसारिणः यज्ञादीन् पुरुषार्थोपायान् वदन्ति तत्र व्रतान्येकादश्युपवासादीनि नियमाः शौचाचमनादयः यमाः इन्द्रियनिग्रहादयः तैर्हि यज्ञादि-प्रयुक्तैश्चित्तशुद्ध्युपजातविविदिषाधिकृतश्रवणमननाद्युपकृततत्त्वमस्या-दिवाक्यजन्यब्रह्मस्वरूपाभिन्नप्रत्यगात्मापरोक्षज्ञानं निःशेषाविद्या-निवृत्तिरूपमुक्तिसाधनमित्युक्तम् ॥ १० ॥

एवं वादानां वैविध्यमभिधाय विकल्पादिविकल्पप्रतिक्षेपाय आत्मभिन्नमोक्षाख्यश्रेयस्साधनभूतभक्त्युपासनव्यतिरिक्तेषां श्रेयः-साधनापन्नानां तेषां स्वरूपमाह । आद्यन्तवन्त इति । एतेषां धर्मा-दीनां लोक्यन्त इति लोकाः फलान्याद्यन्तवन्तोऽनित्या इत्यर्थः । तत्र हेतुः कर्मविनिर्मिताः कर्मसम्पादिताः कृष्यादिकर्मफलव-दिति भावः । दुःखोदर्काः दुःखोत्तरफलाः स्वर्गादिसाधनधर्मा-दिस्थले सति पुनर्दुःखावाप्तेरिति भावः । तमोनिष्ठाः मोहाव-साना: क्षुद्रा आनन्दा येष्वन्तेऽन्त एव शुचा शोकमर्पिताः संगताः अनुभवदशायामपि पतनभयशङ्कानिमित्तदुःखसंगमा इत्यर्थः ॥ ११ ॥

अथ भक्तियोगसाध्यं तु मोक्षसुखं मदनुभवात्मकं नित्यं दुःखा-सम्भिन्नं निरवधिकं चेत्यभिप्रेत्य तद्विषयासक्तमनसां दुर्ल-भमित्याह । मयीति । हे सभ्य ! मयि नित्यनिरतिशयानन्दैकस्व-रूपेऽर्पितं आत्मा मनो येन तस्यात एव सर्वतः सर्वेषु वैष-यिकेषु क्षुद्रसुखेषु निरपेक्षस्य पुंसो यन्मया आत्मना निमित्त-भूतेन सुखं तद्विषयात्मनां कुतः स्यात् आत्मनेत्यनेन विषयवैलक्ष-ण्यमभिप्रेतम् आत्मा हि निरतिशयप्रीतिविषयः सुखात्मक-ज्ञानं प्रीतिविषयभूतस्यैवात्मनः तत्प्रीतिहेतुत्वविवक्षया आत्मनेति तृतीया निरतिशयानन्दरूपात्मविषयज्ञानस्य विषयवैलक्षण्येन निरतिशयसुखात्मकत्वं विषयात्माज्ञस्यत्वोक्त्या तदनुभाव्यां-शलोकविपरीताकारत्वमात्मनित्यत्वसुखाद्यर्कत्वसत्वनिष्ठत्वप्रभूता-नन्दत्वनिरन्तरहर्षार्पितत्वादयो व्यज्यन्ते ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्र नानामतत्वे मुख्यकारणं किमिति तत्राह । मन्माययेति । अनेकान्तं नानाविधं यथारुचि यथेच्छम् ॥ ९ ॥

एतदेव विशदयति । धर्ममेक इति । त्यागोऽभिमानत्यागः भोजनं वात्स्यादेः ॥ १० ॥

एतत्साधनसाध्यान् लोकानाह । आद्यन्तवन्त इति । एषां कर्मनिर्मिता लोकास्तेषामाद्यन्तवत्त्वेऽपि यावल्लोकं सुखमस्ति किमे-त्याह । दुःखोदर्का इति । तमोनिष्ठाः अन्धकारप्रचुराः भक्ति-वर्जितं श्रेयो ये मन्यन्ते दुराशयाः तेषामन्ते तमो घोरमनन्तं प्राप्यते ध्रुवमिति वचनात् असन्मतनिष्ठानां तमएव क्षुद्रत्वयु-क्तत्वेऽपि हरिभक्तिराहित्यात् अल्पानन्दत्वे शुचार्पितत्वं हेतुः ॥ ११ ॥

भगवद्धर्मसाध्यलोकसुखवत्तल्लोकसुखमपि नित्यं किं न स्यादविशेषादत्राह । मयीति । अहमात्मा प्रापको यस्य तन्मया-त्मकं मय्यर्पित आत्मा मनो यस्य सत्यं साधुगुणपूर्णो ममा-त्मास्वभावो यस्य तथेति वा यथाहं निर्दोषस्वभावः तथेदमपी-त्यनयोक्त्या विशेषो दर्शितः इतीतरानुमानस्य तर्काभावेन दौर्व-ल्याद्योत्थानुभवमित्यर्थः ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

धर्ममिति सार्धकम् ईश्वरानननाज्जैमिन्यादीनामपि तत्तत्प्रवर्त-कत्वमेवेति भावः । धर्मं स्वधर्मं नित्यनैमित्तिकम् एके नित्यकर्म-निष्ठाः सत्यादित्रयमद्वैता योगिनश्च केचित्कर्मनिष्ठाः स्वार्थमिति स्वधनमेव साधनं साध्यं वोच्यते उभयोरपि स्वनाश्यमायत्वात् तत्र कामैश्वर्यत्यागभोजनानि साध्यानि अन्यानि तु साध-नानि ॥ १० ॥

**अकिञ्चनस्य दान्तस्य शान्तस्य समचेतसः ।
मयासन्तुष्टमनसः सर्वाः सुखमया दिशः ॥ १३ ॥**

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

एषां मध्ये ये वा कर्मणा वेदविधिना विनिर्मिता लोकाः सुखदफलानि भवन्ति तेऽप्याद्यन्तवदादिरूपा एव वेदार्थसुखार्थे तु नरका एवेति भावः ॥ ११ ॥

आत्मना पूर्णसच्चिदानन्दलक्षणपरमात्मनया परमप्रेष्ठरूपेण तत्रापि मया सर्वाश्चर्यरूपगुणादिविशिष्टमद्रूपेण स्फुरतेत्यर्थः विषयात्मनामिति मदतिरिक्तपुरुषार्थिनः सर्व एव विषयात्मान इति भावः ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अनेकान्तं नानाविधम् ॥ ९ ॥

तदेवाह । धर्ममिति सार्द्धेन धर्मं मीमांसकाः तदुक्तं
मांसाशी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।
नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया ॥
इत्यादि यशः काव्यालङ्कारकृतः यथाहुः
यावत्कीर्तिर्मनुष्याणां पुण्या लोकेषु गीयते ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते इति ॥
कामं वात्स्यायनादयः सत्यं दमं शममिति शान्तिशास्त्रकृतः अन्ये स्वार्थवादिनः दण्डनीतिकृतः वै प्रसिद्धम् ऐश्वर्यमेव स्वार्थं वदन्ति अतः सामाद्युपाया एव श्रेयःसाधनमिति तेषां मतं तथैव त्यागं भोजनं च लोकायतिकाः यज्ञादिकं वैदिकाः नियमान् यमान् तपोव्रतादिनिष्ठाः ॥ १० ॥

एषां लोकाः एतैः साध्यानि फलानि तमोनिष्ठाः मोहावसानाः ॥ ११ ॥

तत्तस्मात्स्वकाव्य वेदस्य तात्पर्यं नैव सर्वश्रेष्ठेति निष्कर्ष्य तदेव मां प्राप्नोतीत्याह मय्यर्पितेत्यादिना उद्धव प्रश्न पर्यन्तेन ग्रन्थेनाभयारूपगुणसमुद्रेण आत्मना प्रेमास्पदेन हेतुना विषयेषु मायिकवस्तुषु शमदमज्ञानादिष्वपि मनो येषां तेषां ज्ञानादीनामपि सात्त्विकत्वेन मायिकत्वात् नच तत्प्राप्यं ब्रह्मैवेत्यपि वाच्यम्।
किं वा योगेन सांख्येन न्यासस्वाध्याययोरपि ।
किंवा श्रेयोभिरन्यैश्च न यत्रात्मप्रदो हरिरिति ॥'
नारदोक्तेः ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

त्रिगुणया मदीयया मायया मोहिता मदात्मकधर्मदर्शनाद्बहिः कृता धीर्येषां ते अतएवानेकान्तं नैकस्मिन् मय्यन्तःपर्यवसानं यस्य तन्मम सम्बन्धशून्यं श्रेयो वदन्ति ॥ ९ ॥

तदेव प्रपञ्चयति । धर्ममिति सार्द्धेन । एके मीमांसकाः धर्मं कर्म अन्ये काव्यालङ्कारकृतः यशः कीर्तिम् अन्ये वात्स्यायनादयः कामम् अन्ये योगिनः सत्यं दमं समं अन्ये नीतिकुशलाः ऐश्वर्यं स्वार्थं पुरुषार्थम् अन्ये लोकायतिकाः त्यागं भोजनं च श्रेयो वदन्ति केचित्तु यज्ञं देवताविशेषपूजनं केचित्तपः केचिद्दानं केचिद्व्रतानि केचिन्नियमान् केचित् यमानिति स्वस्वानुरूपं श्रेयो वदन्ति ॥ १० ॥

एतेषां धर्मादिश्रेयोवादिनां कर्मविनिर्मिताः आद्यन्तवन्तोऽथानुष्ठानविनिर्मिताः दुःखोदर्काः दुःखावसाना यतः तमसि प्रधाने निष्ठा समाप्तिर्येषामनित्या इत्यर्थः । भोगकालेऽपि क्षुद्रानन्दाः तथात्वेऽपि शुचार्पिताः शोकेन व्याप्ताः ॥ ११ ॥

तेषां मोक्षानर्हत्वं ज्ञानवैराग्यभक्तिमतस्तु परमानन्दभाक्त्वमाह । मयीति सार्द्धसमाप्ति । सर्वतः प्राकृतपदार्थप्राप्तिप्रयत्नतत्फलभोगादितः निरपेक्षस्य मयि परमात्मनि अर्पितः आत्मा सर्वज्ञः श्रीकृष्णो मम मुक्तिद इति बुद्धिर्येन तस्य मया आत्मना निखिलानिष्टनिवर्तकसुखं मोक्षाख्यं तद्विषयेषु मदात्मसु आत्मा मनो येषां तेषां धर्मादिपराणां कुतः स्यात् जीवाः अल्पज्ञाः तत्र यो मज्जकस्तस्याहं सर्वज्ञः परमसुखदः इतरेषां मद्विमुखानां मत्सम्बन्धवर्जितधर्मादिकारिणां कुतोऽपि न परमं सुखं कर्तृणामज्ञत्वविषयबहुत्वादिनाऽसमर्थत्वात् धर्मादीनां जडत्वाच्चेत्यर्थः ॥ १२ ॥

---

भाषा टीका।

हे पुरुषर्षभ! उद्धवजी हमारी माया से जिनकी बुद्धि मोहित है वे पुरुष जिनकी जैसी रुची है जैसे जिनके कर्म हैं तैसे अनेक प्रकार के साधनों को कहते हैं ॥ ९ ॥

कोइ कर्मकांड को साधन कहते हैं कोइ यश को कोइ काम को कोई शम दम सत्य को कोइ ऐश्वर्य को ही कोइ शरीर पोषण भोजन ही को पुरुषार्थ बताते हैं कोइ यज्ञ को तपको दानको कोइ व्रत नियम यम इनको कल्याण का साधन कहते हैं ॥ १० ॥

इन सबों में जिनके कर्मकांड से स्वर्गादि जो लोक मिलते हैं वेकर्मार्जित होने से उत्पत्तिनाश वाले हैं और दुःख फल देने वाले तमोगुण वाले थोड़े सुख वाले शोक से युक्त वे लोक हैं ॥ ११ ॥

हे सख्य! उद्धवजी जो पुरुष सब तरफ से निरपेक्ष है और मेरे में आत्मा के अर्पण करने वाला है उसको मेरे में आत्माके अर्पण करने वाला है उसको मेरे अन्तर्यामी के अनुभव करने से जो सुख होता है सो विषयी पुरुषों को कहां से होगा ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

किञ्च अन्येषां तत्तल्लोकादिपरिच्छिन्नं सुखं भक्तस्य तु परिपूर्णमित्याह। अकिञ्चनस्येति ॥ १३ ॥

न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनान्यत् ॥ १४ ॥
न तथा मे प्रियतम आत्मयोनिर्न शङ्करः ।
न च सङ्कर्षणो न श्रीर्नैवाऽऽत्मा च यथा भवान् ॥ १५ ॥
निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम् ।
अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

परिपूर्णतामेवाऽऽह । न पारमेष्ठ्यमिति । रसाधिपत्यं पातालादिस्वाम्यम् अपुनर्भवं मोक्षमपि मद्विना मां हित्वाऽन्यन्नेच्छति अहमेव तस्य प्रेष्ठ इत्यर्थः ॥ १४ ॥

ममापि स एव प्रेष्ठ इत्याह । न तथेति द्वाभ्याम् । आत्मयोनिर्ब्रह्मा पुत्रोऽपि शङ्करो मत्स्वरूपभूतोऽपि सङ्कर्षणो भ्राताऽपि श्रीर्भार्याऽपि आत्मा मूर्तिरपि यथा भक्त इति भक्तस्य अतिहर्षेणाऽऽह । भवानिति ॥ १५ ॥

पूयेय मदन्तर्वर्तिब्रह्माण्डानि पवित्रीकुर्यामिति भावेनेत्यर्थः ॥ १६ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

अन्येषां धर्माद्यनुष्ठातॄणां तत्तल्लोकादि इन्द्रवरुणलोकादि आदिना पशुपुत्रादिपरिग्रहः । परिच्छिन्नं परिमितमनित्यं च । परिपूर्णं देशकालापरिच्छिन्नम् । अकिञ्चनस्य भगवद्व्यतिरेकेण त्यक्तसर्वपरिग्रहस्य । शान्तस्य भगवन्निष्ठबुद्धिविशिष्टस्य । शमो मन्निष्ठता बुद्धेरित्युक्तेः । समचेतसः स्वर्गापवर्गादौ तुल्यदृष्टेः सुखमयाः भगवदनुभवमयसुखैकव्याप्ताः सर्वत्र तत्स्फूर्तेः सर्वभूतेषु यः पश्येद्भगवद्भावमात्मन इत्यादेः ॥ १३ ॥

परिपूर्णतां भक्तसुखस्याऽपरिच्छिन्नत्वं सार्वभौमं श्रीप्रियव्रतादीनामिव महाराज्यम् अत्यर्थे वाशब्द इति मोक्षसुखस्याप्यपरिपूर्णत्वं व्यञ्जितम् । अत्र पारमेष्ठ्यादिचतुष्टयस्योत्तरोत्तरन्यूनक्रमः । एवञ्च यदि पारमेष्ठ्यं नेच्छति तदा कुतो महेन्द्रधिष्ण्यमित्याद्युत्तरोत्तरकैमुत्यमपि ज्ञेयं योगसिद्ध्यादिद्वयस्य तु पूर्वस्मान्न्यूनत्वमिति ॥ १४ ॥

स एव शुद्धभक्त एव अत्र पुत्रोऽपीत्यादि व्याख्ययाऽऽत्मयोन्यादीनां परमभक्तत्वेऽपि पुत्रादित्वेनैवाऽप्रियतमत्वोक्तिरिति भक्तत्वांशेनैव प्रियतमत्वमभ्युपेतम् ॥ १५ ॥

ज्ञानिन गौरवविशेषपात्रत्वेन ज्ञानिभक्तविशेषम् । निरपेक्षं निष्कामम् अतएव शान्तं क्षोभरहितम् अतएव निर्वैरं मात्सर्यादिरहितम् । किञ्च समं सर्वत्र भगवद्दृष्ट्या हेयोपादेयबुद्धिरहितं मुनिं श्रीनारदादिमनुव्रजामि सदा पवित्रस्यात्मन पावित्र्यासम्भवात् स्वान्तःस्थितब्रह्माण्डपवित्रीकरणमेवोपचारेणात्मनः पवित्रीकरणमिति भावनाभिप्रायेण पूयेयेत्युक्तम् ॥ १६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मया सन्तुष्टमनसो मत्तः प्रकृष्टप्राप्यान्तराभावात्सन्तोषमयाः सर्वा दिशः ॥ १३ ॥

सन्तोषमेव विवृणोति । न पारमेष्ठ्यमिति । रसाधिपत्यं पातालैश्वर्यम् ॥ १४—१५ ॥

पूयेयेत्यतिवादः पावयेयमिति चार्थः ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवं मोक्षाख्यपुरुषार्थस्य तत्साधनभूतभक्तियोगस्य च, निरतिशयसुखरूपस्य धर्मादितल्लोकेभ्यो निरतिशयत्वख्यापनात्तारतम्यलाभेन तस्यैव उत्कृष्टत्वावमपादकमुख्यत्वमपि ख्यापितः अथ किं तत्कण्ठं फलभूतमोक्षसुखस्य निरतिशयत्वमित्यभिप्रेत्य तत्साधनभूतभक्तियोगस्य स्वस्वरूपरूपगुणानुस्मृत्यात्मकस्य निरतिशयसुखरूपतामाह । अकिञ्चनस्येत्यादिना । मया निरतिशयानन्दरूपेण विषयभूतेन च मया सन्तुष्टं मनो यस्य तस्यात एव समचेतसस्सर्वत्र मद्भावैकचेतसः निरन्तरं मय्येवासक्तचित्तत्वादिति भावः । अत एवाकिञ्चनस्याभिलषणीयान्तररहितस्य तत्र हेतुर्दान्तस्य जितबाह्यकरणस्य शान्तस्य जितान्तःकरणस्य सर्वा दिशः सुखमयाः सुखप्रचुराः दिग्ग्रहणं कालावस्थयोरप्युपलक्षणम् ॥ १३ ॥

सन्तोषमेव विवृणोति । न पारमेष्ठ्यमिति । मय्येवार्पित आत्मा मनो येन सः मत् मत्तो विनान्यत्पारमेष्ठ्यादिकमपि नेच्छति पारमेष्ठ्यं ब्रह्माधिपत्यं महेन्द्रधिष्ण्यम् इन्द्रस्थानं सार्वभौमं कृत्स्नभूमण्डलाधिपत्यं रसाधिपत्यं पातालैश्वर्यं योगसिद्धयोऽणिमादयः किं बहुना अपुनर्भवं मोक्षमपि नेच्छति पारमेष्ठ्यादिभ्यः सर्वेभ्योऽप्यहमेव मय्यर्पितात्मनो निरतिशयप्रीतिविषय इति सः मदन्यत्तुच्छत्वान्नेच्छतीत्यर्थः ॥ १४ ॥

न केवलमहमेव तस्य निरतिशयप्रियः किन्तु सोऽपि मम तथैवेत्याह । न तथेति । भवानिति ज्ञानिमात्रोपलक्षणं यथा भवान्मम प्रियतमः तथा आत्मा जीवमूर्तिः आत्मयोनिप्रभृतयो न प्रियतमाः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पुत्रपौत्रभ्रातृभार्याशरीरत्वादिरूपा अपि अनेन "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय" इति गीतावचनार्थ उक्तः ब्रह्मात्मयोन्यादीनामपि ज्ञानित्वान्निरतिशयप्रियत्वाच्च तथा मे प्रियतम इत्यसकृत्तं तथापि तेषामपि यदि मयि भक्तिर्न स्याच्च तदा प्रिया इत्यर्थपर्यवसानेन तथोक्तमिति बोध्यम् ॥ १५ ॥

प्रेमातिशयपारवश्यप्रयुक्तामात्मनो वृत्तिमाह । निरपेक्षमिति मदतिरिक्तविषयनिरपेक्षं मुनिं मत्स्वरूपगुणादिमननैकशीलमत एव समदर्शनं सर्वत्र मद्भावयुक्तचेतसमत एव निर्वैरं क्वापि वैररहितमहं नित्यमनुव्रजामि अनुव्रजनस्य प्रयोजनमाह । पूयेतेत्यङ्घ्रिरेणुभिरिति । तदाश्रितं तत्स्पृष्टं च सर्वमपि वस्तु मदङ्घ्रिरेणुभिः पूतं भवेदिति बुद्ध्या तमनुगच्छामीत्यर्थः। पूयेयेत्युत्तमपुरुषपाठे मदन्तर्वर्तिब्रह्माण्डमपि पवित्रीकुर्यामिति भावेनेति तन्माहात्म्यातिशयस्तुतः ॥ १६ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवंविधस्य मदर्पितात्मनो न केवलममुत्र सुखित्वम् इहापि सुखित्वं स्यादित्याह । अकिञ्चनस्येति । अकिञ्चनस्येत्यत्र एकोऽपि सुखित्वे हेतुः किमुत समुदिता इति भावेनोक्तं सर्वाः सुखमया इति ॥ १३ ॥

स्वय्यर्पितात्मनोऽपि पारमेष्ठ्याद्याकाङ्क्षायां तत्पदानां दुःखमिश्रसुखरूपत्वात्सर्वत्र सुखित्वं कथमित्याशङ्क्याह । न पारमेष्ठ्यमिति । मय्यर्पितात्मा मामेव सुखमिच्छति मदन्यत्किमपि नेच्छतीति यतस्तस्मात्तस्य निराकाङ्क्षत्वेन सर्वत्र सुखमेवेति भावः ॥ १४ ॥

अथ भक्तेषु प्रीतिविशेषोऽस्तीति दर्शयितुं भक्तेः कर्तव्यत्वं च निदर्शयन्निव उद्धवमतिस्तौति । न तथेति । अनेन मनुष्यादिभक्तेषु भिक्षान्नप्रदानपरकृपानिमित्तप्रीतिसंकर्षादिषु प्रियापुत्रादिप्रीतिवत्सार्वकालिकयान्तरा प्रीतिरस्तीति सूचितम्—

> कृपानिमित्ता या प्रीतिर्नीचभक्तेषु साधिका ।
> आन्तरैव तु या प्रीतिः सा तूच्चेषु यथाक्रमम् ॥
> यथा कश्चित्स्वमात्मानं प्रियां पुत्रमथापि वा ।

अतिहाय कृपायुक्तो भिक्षवेऽन्नं ददात्यपि । कदाचिदेव न पुनः स्वात्मादेः सार्वकालिकम् । योगक्षेमवहत्वं च नित्यं स्वात्मादिषु स्फुटम् । एवमेव परेशस्य भक्तेषु श्रिय*आदिषु इति वचनात्—

> यादवेष्वपि तु सर्वेष्व उद्धवो भगवत्प्रियः ।
> उद्धवाच्च प्रियतमः प्रद्युम्नस्तु महारथः ॥
> तस्मादपि प्रियतमो रामः कृष्णस्य सर्वदा ॥
> नैव तस्मात्प्रियतमो विनैवैकं चतुर्मुखम् ।
> सर्वेभ्योऽपि प्रियतमा हरेः श्रीरेव वल्लभा ॥
> नैव तस्याः प्रियतमो विना स्वात्मानमेव हि स्वतोऽपि ।

सर्वेभ्यो यादवेभ्यो विशिष्टभक्त उद्धव इति प्रकटनाय विशिष्य स्तुत उद्धव इति भावः ॥ १५ ॥

* श्रीश्च अजश्च श्रियजौ तौ आदी येषां ते श्रियजादयः तेषु प्रयोगस्य साधुत्वं तु व्याख्यानान्तरे दर्शितम् ।

ननु प्रतीतार्थे परित्यज्याप्रतीतार्थविशेषकल्पने को हेतुरित्याशङ्क्यातिदेशो हेतुरिति भावेनाह । निरपेक्षमिति। स्वाङ्घ्रिरेणुभिस्तं पूयेय शोधयामीत्यनुव्रजामि अनुगच्छतो मम पादधूलयो वायुना पुरतो गच्छन्ति भक्ते निपतन्त्योऽतितरां शोधयन्तीदं सजभूमिपादविक्रमे सिद्धं भवतीति ततः पूयेय शुद्धो भवानीत्येवमर्थो न युक्तः यत्सेवया माहात्म्यमाप्तः स हरिस्तदनुगमनेन तत्पादरेणुसंस्पर्शेन शुद्धो भवतीति न युज्यते सदोषस्य शुद्धिप्रार्थनं दृष्टं निर्दोषस्य न घटत इत्युक्त एवार्थः—

> अनुगच्छति विष्णुस्तु स्वभक्तं तस्य शुद्धये ।
> तस्याङ्घ्रिरेणुभिर्वायुनीतैरग्रेसरः शुचिः ॥
> अग्रतो गमने विष्णोः पादस्पृष्टं रजो भवेत् ।
> अतः स्वभक्तं पूयेयत्यनुव्रजति केशवः ॥

इति वचनात् अनेन निष्कामत्वादिगुणसम्पन्नत्वेन सेवमानेषु भक्तेषु स्वस्यातिशयिता प्रीतिरस्तीत्युक्तं भवति ॥ १६ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ॥

स्वानुभवसुखमाहात्म्यमेव दर्शयति। अकिञ्चनस्येति द्वाभ्याम्॥१३॥

सार्वभौमं श्रीप्रियव्रतादीनामिव महाराज्यम् अध्यर्थे वाग्यह इति मोक्षसुखस्याप्यपरिपूर्णत्वं दर्शितं पारमेष्ठ्यादिचतुष्टयस्यानुक्रमस्याधोऽधोनिम्नस्थया न्यूनत्वविवक्षया च ततश्चोत्तरोत्तरं कैमुत्यमपि योगसिद्ध्यादिद्वयं तु सार्वत्रिकमिति पश्चान्निर्दिष्टं तदपुनर्भवस्तूत्तरश्रेष्ठ्यम् ॥ १४ ॥

अत्रात्मयोनित्वेन पुत्रत्वं शङ्करत्वेन सुखकरत्वसूचनया साहचर्यं सङ्कर्षणत्वेन गर्भसङ्कर्षणसूचनया भ्रातृत्वं श्रीत्वेनाभयविशेषसूचनया भार्यात्वं व्यज्यते आत्मा श्रीमूर्तिरपि तत्तच्च पुत्रत्वादिना न ते प्रियतमाः किन्तु भक्त्यैव अतो भक्त्याधिक्यात् यथा भवान् प्रियतमस्तथा न ते इत्यर्थः इतिभक्तानां प्रियतमत्वे निदर्शनम् ॥ १५ ॥

तदेवं प्रेमविशेषपात्रत्वेन तादृशं भक्तं स्तुत्वा गौरवविशेषपात्रत्वेन भक्तविशेषं स्तौति । निरपेक्षं निष्कामभक्तम् अतः क्षोभरहितं मात्सर्यादिरहितञ्च अन्यत्र हेयोपादेयभावनारहितं च मुनिं श्रीनारदादिमनुव्रजामि यतस्तादृशनिष्कपटभक्तिमयसाधुत्वदर्शनेन ममापि भक्तिविशेषो जायते कथं गोपनीय इत्याह । पूयेयेति । तद्भक्त्यनिष्क्रान्तदोषात् पवित्रितः स्यामिति भावेनेत्यर्थः ॥ १६—१७ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भक्तस्य सुखं सुखस्यानुभाव च विवृणोति । अकिञ्चनस्येति द्वाभ्याम् । मया ध्यानप्राप्तेनैवालौकिकशब्दस्पर्शरूपरसगन्धशीलकृपादिमहामाधुर्येण सन्तुष्टानि मनःप्रभृतिसर्वेन्द्रियाणि यस्य तस्य सर्वा इति सर्वा दिशो याति ता एव सुखमय्यः यथा प्रणिधानबद्धानश्वरमहाधनो मनुष्यो यं देशं याति तत्रैव तस्य भोगैश्वर्यसुखानीत्यर्थः । अतएवाकिञ्चनस्य मल्लक्षणसंपूर्णानश्वरमहाधनप्राप्त्यैव किञ्चनशब्दवाच्यपरिमितनश्वरप्राकृतधनजनादिग्रहणविमुखस्य बाह्याभ्यन्तरविषयेभ्यो इन्द्रियाणां स्वयमेवापकर्षत्वेनैव निवृत्तेः दान्तस्य शान्तस्य शमो मन्निष्ठता बुद्धेरित्युक्तप्रमाणेकमेदेक-

न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनान्यत् ॥ १४ ॥
न तथा मे प्रियतम आत्मयोनिर्न शङ्करः ।
न च सङ्कर्षणो न श्रीर्नैवाऽऽत्मा च यथा भवान् ॥ १५ ॥
निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम् ।
अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

परिपूर्णतामेवाऽऽह । न पारमेष्ठ्यमिति । रसाधिपत्यं पाताला- दिस्वाम्यम् अपुनर्भवं मोक्षमपि मद्विना मां विहायाऽन्यन्नेच्छति अहमेव तस्य प्रेष्ठ इत्यर्थः ॥ १४ ॥

ममापि स एव प्रेष्ठ इत्याह । न तथेति द्वाभ्याम् । आत्म- योनिर्ब्रह्मा पुत्रोऽपि शङ्करो मत्स्वरूपभूतोऽपि सङ्कर्षणो भ्रातापि श्रीर्भार्याऽपि आत्मा मूर्तिरपि यथा भक्त इति भक्तव्ये अतिहर्षेणाऽऽह । भवानिति ॥ १५ ॥

पूयेय मदन्तर्वर्तिब्रह्माण्डानि पवित्रीकुर्यामिति भावेनेत्यर्थः ॥ १६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

अन्येषां धर्माद्यनुष्ठातॄणां तत्तल्लोकादि इन्द्रवरुणलोकादि आदिना पशुपुत्रादिपरिग्रहः । परिच्छिन्नं परिमितमनित्यं च । परिपूर्णं देशकालापरिच्छिन्नम् । अकिञ्चनस्य भगवद्व्यति- रेकेण त्यक्तसर्वपरिग्रहस्य । शान्तस्य भगवन्निष्ठबुद्धिविशि- ष्टस्य । शमो मन्निष्ठता बुद्धेरित्युक्तेः । समचेतसः स्वर्गापव- र्गादौ तुल्यदृष्टेः सुखमयाः भगवदनुभवमयसुखैकव्याप्ताः सर्वत्र तत्स्फूर्तेः सर्वभूतेषु यः पश्येद्भगवद्भावमात्मन इत्यादेः ॥ १३ ॥

परिपूर्णतां भक्तसुखस्याऽपरिच्छिन्नत्वं सार्वभौमं श्रीप्रिय- व्रतादीनामिव महाराज्यम् मत्यर्थे वाशब्द इति मोक्षसुखस्या- प्यपरिपूर्णत्वं व्यञ्जितम् । अत्र पारमेष्ठ्यादिचतुष्टयस्योत्तरोत्तर- न्यूनक्रमः । एवञ्च यदि पारमेष्ठ्यं नेच्छति तदा कुतो महेन्द्र- धिष्ण्यमित्याद्युत्तरोत्तरकैमुत्यमपि ज्ञेय योगसिद्ध्यादिद्वयस्य तु पूर्वन्यूनत्वमिति ॥ १४ ॥

स एव शुद्धभक्त एव अत्र पुत्रोऽपीत्यादि व्याख्ययात्म- योन्यादीनां परमभक्तत्वेऽपि पुत्रादित्वेनाऽप्रियतमत्वोक्तिरिति भक्तत्वांशेनैव प्रियतमत्वमभ्युपेतम् ॥ १५ ॥

ज्ञानिन गौरवविशेषपात्रत्वेन ज्ञानिभक्तावशेषम् । निरपेक्षं निष्कामम् अतएव शान्तं क्षोभरहितम् अतएव निर्वैरं मात्सर्यादि- रहितम् । किञ्च समं सर्वत्र भगवद्दृष्ट्या हेयोपादेयबुद्धिरहितं मुनिं श्रीनारदादिमनुव्रजामि सदा पवित्रस्यात्मन पावित्र्या- सम्भवात् स्वान्तःस्थितब्रह्माण्डपवित्रीकरणमेवोपचारेणात्मनः पवित्रीकरणमिति भावनाभिप्रायेण पूयेयेत्युक्तम् ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मया सन्तुष्टमनसो मत्तः प्रकृष्टप्राप्यान्तराभावात् सन्तोषमयाः सर्वा दिशः ॥ १३ ॥

सन्तोषमेव विवृणोति । न पारमेष्ठ्यमिति । रसाधिपत्यं पाता- लैश्वर्यम् ॥ १४—१५ ॥

पूयेयेत्यतिवादः पावयेयमिति वार्थः ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवं मोक्षाख्यपुरुषार्थस्य तत्साधनभूतभक्तियोगस्य च, निरतिशयसुखरूपस्य धर्मादितल्लोकेभ्यो निरतिशयत्वख्या- पनाय तारतम्यलाभेन तस्यैव उत्कृष्टत्वावममात्वेकमुख्यत्वपक्षं ख्यापितः अथ किं वक्तव्यं फलभूतमोक्षसुखस्य निरतिशयत्व- मित्यभिप्रेत्य तत्साधनभूतभक्तियोगस्य स्वस्वरूपरूपगुणानुस्मृ- त्यात्मकस्य निरतिशयसुखरूपतामाह । अकिञ्चनस्येत्यादिना । मया निरतिशयानन्दरूपेण विषयभूतेन च मया सन्तुष्टं मनो यस्य तस्यात एव समचेतसस्सर्वत्र मद्भावैकचेतसः निरन्तरं मय्येवासक्तचित्तत्वादिति भावः । अत एवाकिञ्चनस्याभिलषणी- यान्तररहितस्य तत्र हेतुर्दान्तस्य जितबाह्यकरणस्य शान्तस्य जितान्तःकरणस्य सर्वा दिशः सुखमयाः सुखप्रचुराः दिग्ग्रहणं कालावस्थयोरप्युपलक्षणम् ॥ १३ ॥

सन्तोषमेव विवृणोति । न पारमेष्ठ्यमिति । मय्येवार्पित आत्मा मनो येन सः मत् मत्तो विनाऽन्यत्पारमेष्ठ्यादिकमपि नेच्छति पारमे- ष्ठ्यं ब्रह्माधिपत्यं महेन्द्रधिष्ण्यम् इन्द्रस्थानं सार्वभौमं कृत्स्नभू- मण्डलाधिपत्यं रसाधिपत्यं पातालैश्वर्यं योगसिद्धयोऽणिमादयः किं बहुना अपुनर्भवं मोक्षमपि नेच्छति पारमेष्ठ्यादिभ्यः सर्वे- भ्योऽप्यहमेव मय्यर्पितात्मनो निरतिशयप्रीतिविषय इति सः मदन्यन्नेच्छत्वान्नेच्छतीत्यर्थः ॥ १४ ॥

न केवलमहमेव तस्य निरतिशयप्रियः किन्तु सोऽपि मम तथै- वेत्याह । न तथेति । भवानिति ज्ञानिमात्रोपलक्षणं यथा भवान्मम प्रियतमः तथा आत्मा जीवमूर्तिः आत्मयोनिप्रभृतयो न प्रियतमाः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

पुत्रपौत्रभ्रातृभार्याशरीरत्वादिरूपा अपि अनेन "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति गीतावचनार्थ उक्तः यद्यप्यात्मयोन्यादीनामपि ज्ञानित्वाभिरतिशयप्रियत्वाच्च तथा मे प्रियतम इत्यसङ्गतं तथापि तेषामपि यदि मयि भक्तिर्न स्यात्तदा प्रिया इत्यर्थपर्यवसानेन तथोक्तमिति बोध्यम् ॥ १५ ॥

प्रेमातिशयपारवश्यप्रयुक्तामात्मनो वृत्तिमाह। निरपेक्षमिति मदतिरिक्तविषयनिरपेक्षं मुनिं मत्स्वरूपगुणादिमननैकशीलमत एव समदर्शनं सर्वत्र मद्भावयुक्तचेतस्तमत एव निर्वैरं क्वापि वैररहितमहं नित्यमनुव्रजामि अनुव्रजनस्य प्रयोजनमाह। पूयेतेत्यङ्घ्रिरेणुभिरिति। तदीयचित्तं तत्स्पृष्टं च सर्वमपि वस्तु मदङ्घ्रिरेणुभिः पूतं भवेदिति बुद्ध्या तमनुगच्छामीत्यर्थः। पूयेयेत्युत्तमपुरुषपाठे मदन्तर्वर्तिब्रह्माण्डमपि पवित्रीकुर्यामिति भावेनेति तन्माहात्म्यातिशयस्तुतः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

एवंविधस्य मदर्पितात्मनो न केवलममुत्र सुखित्वम् इहापि सुखित्वं स्यादित्याह। अकिञ्चनस्येति। अकिञ्चनत्वमत्र एकैकोऽपि सुखित्वे हेतुः किमुत समुदिता इति भावेनोक्तं सर्वाः सुखमया इति ॥ १३ ॥

त्वय्यर्पितात्मनोऽपि पारमेष्ठ्याद्याकाङ्क्षायां तत्पदानां दुःखमिश्रसुखरूपत्वात्सर्वत्र सुखित्वं कथमित्याशङ्क्याह। न पारमेष्ठ्यमिति। मय्यर्पितात्मा मामेव सुखमिच्छति मदन्यत्किमपि नेच्छतीति यतस्तस्मात्तस्य निराकाङ्क्षत्वेन सर्वत्र सुखमेवेति भावः ॥ १४ ॥

अथ भक्तेषु प्रीतिविशेषोऽस्तीति दर्शयितुं भक्तेः कर्तव्यत्वं च निदर्शयन्निव वस्तुमतिरस्तीति। न तथेति। अनेन मनुष्यादिभक्तेषु भिक्षाप्रदानवत्कृपानिमित्तप्रीतिवंशस्पर्शादिषु प्रियापुत्रादिप्रीतिवत्सार्वकालिकयान्तरा प्रीतिरस्तीति सूचितम्—

कृपानिमित्ता या प्रीतिर्नीचभक्तेषु सात्विका।
आन्तरैव तु या प्रीतिः सा तूच्चेषु यथाक्रमम्॥
यथा कश्चित्स्वमात्मानं प्रियां पुत्रमथापि वा।

प्रतिहाय कृपायुक्तो भिक्षवेऽन्नं ददात्यपि। कदाचिदेव न पुनः स्वात्मादेः सार्वकालिकम्। योगक्षेमवहत्वं च नित्यं स्वात्मादिषु स्फुटम्। एवमेव परेशस्य भक्तेषु भव*जादिषु इति वचनार्थं—

यादवेष्वपि तु सर्वेष्व उद्धवो भगवत्प्रियः।
उद्धवाच्च प्रियतमः प्रद्युम्नस्तु महारथः॥
तस्मादपि प्रियतमो रामः कृष्णस्य सर्वदा॥
नैव तस्मात्प्रियतमो विनैवैकं चतुर्मुखम्।
सर्वेभ्योऽपि प्रियतमा हरेः श्रीरेव वल्लभा॥
नैव तस्याः प्रियतमो विना स्वात्मानमेव हि त्यतोऽपि।

सर्वयादवेभ्यो विशिष्टभक्त उद्धव इति प्रकटनाय विशिष्य स्तुत उद्धव इति भावः ॥ १५ ॥

नन्तु प्रतीतार्थे परित्यज्यान्यार्थविशेषकल्पने को हेतुरित्याशङ्क्यातिशयो हेतुरिति भावेनाह। निरपेक्षमिति। स्वाङ्घ्रिरेणुभिस्तं पूयेय शोधयामीत्यनुव्रजामि अनुगच्छतां मम पादधूलयो वायुना पुरतो गच्छन्ति भक्ते निपतन्त्योऽतितरां शोधयन्तीदं सजलभूमिपादविक्रमे सिद्धं भवतीति ततः पूयेय शुद्धो भवानीत्येवमर्थो न युक्तः यत्सेवया माहात्म्यमाप्तः स हरिस्तदनुगमनेन तत्पादरेणुसम्पर्केण शुद्धो भवतीति न युज्यते सदोषस्य शुद्धिप्रार्थनं इदं निर्दोषस्य न घटत इत्युक्त एवार्थः—

अनुगच्छति विष्णुस्तु स्वभक्तं तस्य शुद्धये।
तस्याङ्घ्रिरेणुभिर्वायुनीतैरग्रेसरः शुचिः॥
अग्रतो गमने विष्णोः पादस्पृष्टं रजो भवेत्।
अतः स्वभक्तं पूयेयेत्यनुव्रजति केशवः॥

इति वचनात् अनेन निष्कामत्वादिगुणसम्पन्नत्वेन सेवमानेषु भक्तेषु त्वय्यतिशयिता प्रीतिरस्तीत्युक्तं भवति ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः॥

स्वानुभवसुखमाहात्म्यमेव दर्शयति। अकिञ्चनस्येति द्वाभ्याम् ॥ १३ ॥

सार्वभौमं श्रीप्रियव्रतादीनामिव महाराज्यम् अप्यर्थे चाशब्द इति मोक्षसुखस्याप्यपरिपूर्णत्वं दर्शितं पारमेष्ठ्यादिचतुष्टयस्यानुक्रमश्चाधोऽधोविवक्षया न्यूनत्वविवक्षया च ततश्चोत्तरोत्तरं कैमुत्यमपि योगसिद्ध्यादिद्वयं तु सार्वत्रिकमिति पश्चाद्विन्यस्तं अपुनर्भवस्तूत्तरश्रेष्ठ्यम् ॥ १४ ॥

अत्रात्मयोनित्वेन पुत्रत्वं शङ्करत्वेन सुखकरत्वसूचनया साहचर्यं सङ्कर्षणत्वेन गर्भसङ्कर्षणसूचनया भ्रातृत्वं श्रीत्वेनाभयविशेषसूचनया भार्यात्वं व्यज्यते आत्मा श्रीमूर्तिरपि ततश्च पुत्रत्वादिना न ते प्रियतमाः किन्तु भक्त्यैव अतो भक्त्याधिक्यात् यथा भवान् प्रियतमस्तथा न ते इत्यर्थः इति भक्तानां प्रियतमत्वे निदर्शनम् ॥ १५ ॥

तदेवं प्रेमविशेषपात्रत्वेन तादृशं भक्तं स्तुत्वा गौरवविशेषपात्रत्वेन भक्तविशेषं स्तौति। निरपेक्षं निष्काममकम अतः क्षोभरहितं मात्सर्यादिरहितम् अन्यत्र हेयोपादेयभावनारहितं च मुनिं श्रीनारदादिमनुव्रजामि यतस्तादृशनिष्कपटभक्तिमयसाधुत्वदर्शनेन ममापि भक्तिविशेषो जायते कथं गोपनीय इत्याह। पूयेयेति। तद्भक्त्यनिष्क्रीतदोषात् पवित्रितः स्यामिति भावेनेत्यर्थः ॥ १६—१७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

भक्तस्य सुखं सुखस्यानुभावं च निरूपयति। अकिञ्चनस्येति द्वाभ्याम्। मया ध्यानप्राप्तेनैवालौकिकशब्दस्पर्शरूपरसगन्धशोभाकृपादिमहामाधुर्यवता सन्तुष्टानि मनःप्रभृतिसर्वेन्द्रियाणि यस्य तस्य सर्वा इति सर्वा दिशो याति ता एव सुखमय्यः यथा प्रभ्यानिधस्यानश्वरमहाधनो मनुष्यो यं देशं याति तत्रैव तस्य भोगैश्वर्यसुखानीत्यर्थः। अत एवाकिञ्चनस्य मत्स्वरूपसंपूर्णानश्वरमहाधनप्राप्त्यैव किञ्चनशब्दवाच्यपरिमितनश्वरप्राकृतधनजनादिस्पृहयाविमुखस्य बाह्याभ्यन्तरीयसर्वेन्द्रियाणां स्वयमेवोपरमत्वेनैव निवृत्तेः दान्तस्य शान्तस्य शमो मन्निष्ठता बुद्धेरित्युक्तममाकं भेदक-

* श्रीश्च अजश्च श्रियजौ तौ आदी येषां ते श्रियजादयः तेषु प्रयोगस्य साधुत्वं तु व्याख्यानान्तरे दर्शितम्।

निष्किञ्चना मय्यनुरक्तचेतसः शान्ता महान्तोऽखिलजीववत्सलाः ।
कामैरनालब्धधियो जुषन्ति यत्तन्नैरपेक्ष्यं न विदुः सुखं मम ॥ १७ ॥
बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः ।
(१)प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयते ॥ १८ ॥
यथाऽग्निः सुसमृद्धार्चिः करोत्येधांसि भस्मसात् ।
तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ॥ १९ ॥
न साधयति मां योगो न साङ्ख्यं धर्म उद्धव ! ।
न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता ॥ २० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

निष्टबुद्धेः अत एव समचेतसः स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ॥ १३ ॥

तस्य किञ्चनशब्दवाच्यपदार्थेषु स्पृहाराहित्यमाह । नेति । पारमेष्ठ्यं ब्रह्मपदम् अपुनर्भवं सायुज्यसुखं च । मय्यर्पितात्मेति । ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति मत्कृतनियमादहमपि तस्मिन्नर्पितात्मा भवामीत्यतएव मद्विनेति अहमेव तस्य सर्वेन्द्रियग्राह्यतया सदैव वर्त्त एव नहि निरन्तरदिव्यामृतरसास्वादिने जनाय मृत्तिका रोचत इति भावः ॥ १४ ॥

स च भक्तस्तव कीदृक् प्रिय इत्यत आह । न तथेति । आत्मयोनिर्ब्रह्मा पुत्रोऽपि शङ्करो मत्स्वरूपभूतोऽपि सङ्कर्षणो भ्रातापि श्रीर्भार्यापि आत्मा मूर्त्तिरपि यथा भक्त इति भक्तस्य प्रतिद्वंद्विष्यामाह भवानिति श्रीस्वामिचरणाः अत्र ब्रह्मादीनां भक्तत्वेऽपि तेषु भक्तत्वांशादपि पुत्रत्वाद्यंशा अधिका वर्त्तन्ते अतः प्राधान्येन व्यपदेशा भवन्तीति न्यायेन ते पुत्रादित्वेनैव व्यपदिश्यन्ते नतु भक्तत्वेन नन्दयशोदादिषु तु महाप्रेमवत्त्वात् पितृत्वाद्यंशयोऽपि भक्तत्वलक्षणोऽशोऽधिकतर इति तेषु भक्तत्वमेवेति ते कृष्णस्यातिप्रतमा एव यदुक्तं दर्शयंस्त्वाद्दृशां लोके आत्मनो भक्तदयतामिति तेषां भक्तशब्दवाच्यत्वं स्वातिवशीकारकत्वं च नेमं विरिञ्चो न भवो न श्रीरप्यङ्गसंश्रया प्रसादं लेभिरे गोपीति सर्वोत्कर्षश्च यद्वा एतादृशभक्तेष्वपि मध्ये भवान् यथा मे प्रियतमस्तथा मन्मुखादेव श्रूयतामित्याह । न तथेति । तेन सर्वभक्तेषु मध्ये उद्धवः श्रेष्ठस्तस्मादपि गोप्यः श्रेष्ठास्तेनापि तासां चरणधूलिप्रार्थनादिति वैष्णवसिद्धान्तः ॥ १५ ॥

किं बहुना भक्तो यथा सदा मामनुचरति तथा अहमपि भक्तः परोक्षः सन् भक्तमनुचरामि भगवान् भक्तभक्तिमानिति मद्दीयशुकोक्तेरित्याह । निरपेक्षमिति । मुनिं मद्रूपगुणलीलापरिकरादिमननपरं पूयेय मदन्तर्वर्त्तिब्रह्माण्डानि पवित्रीकुर्यामिति भावनयेत्यर्थ इति स्वामिचरणाः तद्भक्त्यनिष्कृतिदोषात् पवित्रितः स्यामिति भावेनेत्यर्थ इति सन्दर्भः वस्तुतस्तु भक्तचरणधूलिग्रहणं विना भक्तिर्न स्यात् भक्त्या विना मन्माधुर्यरसानुभवो न स्यादिति मयैव मत्प्रोक्तं स्थापितम् अतोऽहमपि भक्त इव भक्त्या पूर्णो मन्माधुर्यरसानमग्नो भवेयामिति भावः ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किञ्चास्मिल्लोकेऽपि मज्ज्ञानभक्तियुक्तस्य संसाराद्विरक्तस्य पुंस एव सर्वत्र सुखमित्याह । अकिञ्चनस्येति ॥ १३ ॥

अपुनर्भवं मोक्षमपि नेच्छति मद्विना अन्यत् नेच्छतीति किमुत वक्तव्यम् ॥ १४ ॥

ममापि मन्मादृशाः मज्ज्ञानभक्तियुक्ता एवातिप्रिया इत्याह । नेति द्वाभ्याम् । चकारोऽनुक्तसमुच्चयार्थः ॥ १५ ॥

पूयेयेति । स्वगतब्रह्माण्डानि पवित्रीकुर्यामित्याशयेनानुव्रजामि एतावत्प्रयोजनसिद्धिस्त्वेकदैवानुव्रजनेनापि भवति अहन्तु नित्यमनुव्रजामि सर्वथा स्वभक्तवश्योऽस्मीत्याशयः ॥ १६ ॥

भाषा टीका ।

जो निष्किञ्चन है बाहिर भीतर की दोनों इन्द्रियों का जीत ने वाला है समबुद्धि वाला है मेरेही से जिसका मन सन्तुष्ट है तिस पुरुष के तो सब दिशा सदा काल सुख रूप ही हैं ॥ १३ ॥

जिसने मेरे विषे मन अर्पण कर रक्खा है वह तो मेरे बिना ब्रह्म लोक इंद्र लोक सार्वभौम राज्य पाताल राज्य योगों की सिद्धि अथवा मोक्ष भी अन्य किसी पदार्थ को नहीं चाहता है ॥ १४ ॥

मेरे को जैसे तुम भक्त प्रिय हो तैसे न ब्रह्मा हैं न शिव हैं न बलदेवजी हैं न लक्ष्मी है न अपना आत्मा भी है ॥ १५ ॥

जो निरपेक्ष है शांत है मुनि है निर्वैर वैर रहित है सम दृष्टि वाला है उसके चरण रेणु से पवित्र होने की इच्छा से मैं उस भक्त के पीछे पीछे चलता रहता हूं ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च मद्भक्तानां सुखमेतावदेवंभूतमिति वा को वक्तुं समर्थो यतस्तत्स्वसंवेद्यं निरुपममित्याह । निष्किञ्चना इति । महान्तो निरभिमानाः अनालब्धधियोऽस्पृष्टचित्ताः निष्किञ्चनत्वादीनां यथेष्टं हेतुहेतुमद्भावः एवंभूता मम मदीया यत्सुखं

(१) प्रायस्तथापि मद्भक्त्या इति वि० पाठः ।

भक्त्याऽहमेकया ग्राह्यः श्रद्धयाऽऽत्मा प्रियः सताम् ।
भक्तिः पुनाति मन्निष्ठा [1]श्वपाकानपि सम्भवात् ॥ २१ ॥
धर्मः सत्यदयोपेतो विद्या वा तपसान्विता ।
मद्भक्त्याऽपेतमात्मानं न सम्यक् प्रपुनाति हि ॥ २२ ॥
कथं विना रोमहर्षं द्रवता चेतसा विना ।
विनानन्दाश्रुकलया शुध्येद्भक्त्या विनाऽऽशयः ॥ २३ ॥
वाग्गद्गदा द्रवते यस्य चित्तं रुदत्यभीक्ष्णं हसति क्वचिच्च ।
विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

जुषन्ति सेवन्ते तत्सुखं न एव निरुपमं नान्ये कुतः नैरपेक्ष्यं नास्त्यपेक्षणीयं येषां ते निरपेक्षास्तैरेव लभ्यं न तु मोक्षापेक्षैरपीत्यर्थः । यद्वा एवम्भूताः सन्तो ये मम मामित्यर्थः जुषन्ति प्रीणन्ति त एव यन्नैरपेक्ष्यं सुखं तदनुभवन्ति इत्यर्थः ॥ १७ ॥

अपि च आस्तां तावदुत्तमभक्तकथा यतः प्राकृतोऽपि भक्तः कृतार्थ एवेत्याह । बाध्यमान इति द्वाभ्याम् । विषयैराकृष्यमाणोऽपि प्रगल्भया समर्थया ॥ १८ ॥

पाकार्थं प्रज्वालितोऽग्निर्यथा काष्ठानि भस्मीकरोति तथा रागादिनापि कथञ्चिन्मद्विषया सती भक्तिः समस्तपापानीति भगवानपि स्वभक्तिमाहात्म्याश्चर्येण सन्तोषयति अहो उद्धव विस्मयं श्रावयति ॥ १९ ॥

अत एवम्भूतं श्रेयो नान्यदस्तीत्याह । न साधयतीति द्वाभ्याम् ॥ २० ॥

श्रद्धया या भक्तिस्तया स्वसम्भवाज्जातिदोषादपीत्यर्थः ॥ २१ ॥

भक्त्यभावेऽन्यत्साधनं व्यर्थमित्याह द्वाभ्याम् । धर्म इति ॥ २२ ॥

रोमहर्षादिकं विना कथं भक्तिर्गम्येत, भक्त्या विना च कथमाशयः शुध्येदिति ॥ २३ ॥

किञ्च भक्तिः स्वाश्रयं शोधयतीति किं वक्तव्यं यतो गद्गदवागादिलक्षणमद्भक्तियुक्तो लोकं सर्वं पुनातीत्याह । वागिति ॥ २४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी।

एतावत् एतत्पारिमाणिकम् । एवम्भूतमेवंजातीयम् । तत् सुखं स्वसंवेद्यं स्वेन भक्तेनैवानुभवनीयम् । मय्यनुरक्तचेतस इत्यनेनैव मदीयत्वमागतं पुनर्ममेत्यधिकमतो वक्ति । प्रीणन्ति प्रसन्नीकुर्वन्ति ॥ १७ ॥

यतो हेतोः प्राकृतोऽपि प्रकृतिः प्रारब्धः आरब्धभक्तिरित्यर्थः । समर्थया समर्थप्रभावया । भक्त्या शरणागतिमात्रात्मिकया । प्रायः इत्यनेन स्वापराधो व्यावर्त्यते । नाभिभूयत इति तद्बाधायां भगवति स्वदैन्यख्यापनात् ॥ १८ ॥

रागादिनेति आदिना क्रोधलोभादिपरिग्रहः । भक्तिः श्रवणादिलक्षणा समस्तपापानि प्रारब्धपर्यन्तानि भक्तप्रारब्धविध्वंस इत्याद्यभिव्याप्तिनेत्युक्तेः ॥ १९ ॥

अतो भक्तेराश्चर्यमहिमत्वात् एवम्भूतं भक्तिसदृशम् अन्यच्छ्रेयः साधनं नास्ति । तत्साधनार्थं प्रयुक्तोऽपि योगादिकर्ता मां न साधयति वशाय नोन्मुखं करोति यथोर्जिता भक्तिः साधनात्मिका ॥ २० ॥

श्रद्धया निश्चयेन या भक्तिस्तया केवलया शुद्धया भक्त्या त्वहमेव ग्राह्यः प्रेमद्वारा वशीकार्यः सैव मन्निष्ठा मयि दार्ढ्यं गता सती ॥ २१ ॥

विद्या ज्ञानम् । तपसा चित्तैकाग्र्येण । मद्भक्त्या मत्प्रीतिलक्षणया अपेतं रहितम् आत्मानं चित्तं सम्यक् न प्रपुनाति उक्तपारमेष्ठ्याद्यपुनर्भवपर्यन्तसर्वकामनातो न शोधयति ॥ २२ ॥

रोमहर्षादिकम् अष्टसात्त्विकविकारं भक्त्यनुभावरूपं विना तत्कारणीभूता भावभक्तिः कथं ज्ञायेत । शुध्येत् आशयो विवासनातः पवित्रः स्यात् ॥ २३ ॥

स्वाश्रयं तादृशभक्तिमन्तं जगत् ॥ २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मम सुखं न विदुः मदधीनमोक्षसुखमपि न गणयन्ति नाद्रियन्त इत्यर्थः ॥ १७—२४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अपुनर्भवमपि नेच्छन्तीत्युक्तं तत्रादर एव कारणमित्यभिप्रेत्याह । निष्किञ्चना इति । निष्किञ्चना मद्व्यतिरिक्ताभिलषणीयान्तररहिताः तत्र हेतुर्मय्यनुरक्तं चेतो येषां ते तत्र हेतुः शान्ताः

(१) सकाममपि इति विज० पाठः

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

जितान्तःकरणाः अखिलेषु जीवेषु मदात्मकत्वभावेन वत्सलाः दयालवः महान्तः साधवः कामैरनालब्धाऽस्पृष्टा धीर्येषां ते तथाभूताः सन्तो यन्मम मदनुभवजं सुखं जुषन्तेऽनुभवन्ति नैरपेक्ष्यं निरपेक्षाः निष्कामास्तेनैलभ्यं मोक्षसुखं नैरपेक्ष्यं तदपि तत्र विदुः तत्समं न विदुः अतो नैरपेक्ष्यं नाद्रियन्ते इति भावः ॥ १७ ॥

अस्त्वेवंविधं सुखमेवंविधानां यः पुनरुपक्रान्तत्वद्भक्तियोगोऽविजितेन्द्रियश्च स किं विषयाभिभूतः संसरेदेवेत्यत्राह । बाध्यमानोऽपीति । मद्भक्तः प्रारब्धमद्भक्तियोगः प्रायः प्रगल्भयाऽहरहरेधमानया भक्त्या हेतुभूतया विषयैर्नाभिभूयते मद्भक्तिरहरहरेधमाना विषयविस्मृतिं करोतीति भावः ॥ १८ ॥

ननु सा प्रगल्भा चेत् विषयाभिभवाभिभावुका स्यात् तत्प्रागल्भ्यप्रतिबन्धके पापे सति कथं सा प्रगल्भा स्यादित्यत आह । यथेति । यथाग्निरप्यग्निस्तावत्काष्ठेषु निहितः क्रमेण सुसमिद्धार्चिरेधांसि दारूणि भस्मसात्कुरुते तथा मद्विषया भक्तिरपि हे उद्धव ! तावदुपक्रान्ताहरहरभ्यासाहितोत्कर्षा कार्त्स्न्येनैनांसि पापानि स्वप्रागल्भ्यप्रतिबन्धकानि च नाशयतीत्यर्थः । यद्यपि धर्मेण पापमपनुदतीति धर्मस्यैव भक्त्युत्पत्तिप्रतिबन्धकापनोदकत्वं श्रुतं तथापि प्रारब्धभक्तियोगसहचरितस्यैव धर्मस्य तदपनोदकत्वमिति भगवदाशयः ॥ १९ ॥

अनुभजाम्यहं नित्यमिति निरतिशयप्रीतिरूपात्मविषयकभक्तियोगस्यैवात्मवशीकारकारणत्वं सूचितं तत्स्फुटमेवाह । न साधयतीति । ऊर्जिता एधिता मम भक्तिर्यथा मां साधयति वशीकरोति तथा योगादिर्न साधयति ॥ २० ॥

न केवलं मद्भक्तिर्मद्वशीकारमात्रहेतुरपि तु यथावस्थितमत्स्वरूपस्वभावादिज्ञानहेतुरपीत्याह । भक्त्येति । यथावस्थितस्वरूपस्वभावोऽहं शुद्धया निष्कामया एकया एकरूपयाऽविच्छिन्नयेति यावत् ग्राह्यः ग्रहीतुं शक्यः भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन ज्ञातुमिति वचनार्थं उक्तः तत्र हेतुत्वेनात्मानं विशिनष्टि । सतां प्रिय इति । सतां भक्तानामहं प्रियः निरतिशयप्रीत्यात्मकभक्तिविषयः अतोऽहमपि सद्भिः प्रियैर्भक्त्या ग्राह्यो भवयामिति भावः । प्रियत्वे हेतुरात्मेति आत्मा हि निरतिशयप्रिय इति भावः । पूर्वेनेत्यत्रोद्धरिष्यामीति भक्तियोगस्य नितरां पावनकरत्वं सूचितं तदुपपादयति । भक्तिरिति । मन्निष्ठा मद्विषया भक्तिः श्वपाकानपि सम्भवाज्जातिदोषात्पुनाति । यद्यप्युक्तवक्ष्यकभक्तियोगे न श्वपाकस्याधिकारोऽस्ति तथाप्यस्मिन्प्रकरणे भक्तिशब्देन प्रपत्तिश्च विवक्षितेति तस्यां सर्वाधिकारो बहुप्रमाणप्रतिपन्नः ॥ २१ ॥

यथा भक्तिः पुनाति न तथेतर इत्याह । धर्मेति । धर्मादिभिरुपेतः विनयेनान्वितो विद्यया चान्वितोऽपि मद्भक्त्याऽपेतं रहितमात्मानं सम्यक् न प्रपुनाति ॥ २२ ॥

रोमहर्षादिकमन्तरेण कथं भक्तियोगनिष्पत्तिरवगम्यते भक्त्या च विना कथं शुध्येदित्याह । कथमिति । आनन्दाश्रुकलयेत्यनन्तरं भक्तिनिष्पत्तिः कथमवगम्यत इति वाक्यशेषः भक्त्या विना कथमाशयोऽन्तःकरणं शुद्ध्येदिति तत्र रोमहर्षो रोमाञ्चः चेतसो द्रवो नाम शुभाश्रयानुध्यानकृतो मनोविकारविशेषः आनन्दाश्रुकला आनन्दाश्रुबिन्दुसन्ततिः ॥ २३ ॥

किञ्च भक्तिः स्वाश्रयं पुनातीति किमु वक्तव्यं यतो गद्गदवागादिमद्भक्तिनिष्पत्तिलक्षणयुक्तः कृत्स्नं जगत्पुनातीत्याह । वागिति । यस्य वाग्गद्गदा यस्य चित्तं च द्रवते यश्च कदाचिद्रोदिति अभीक्ष्णं पुनःपुनर्हसति कश्चित् विलज्जः सन्नुच्चैर्गायति । कश्चित् नृत्यति च स एवं मद्भक्तियुक्तः भुवनमीक्षणस्पर्शनादिभिः पुनाति पवित्रीकरोतीत्यर्थः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवं भजतां निर्दुःखानन्दानुभवो भविष्यतीत्यत्र किंमानमित्याशङ्क्य ब्रह्मादिज्ञानिप्रत्यक्षं प्रमाणमिति निदर्शयति । निष्किञ्चना इति । ये निष्किञ्चनाः निष्किञ्चनत्वादिगुणपूर्णाः कामैर्विषयैरनालब्धाधियोऽप्रतिहतबुद्धयः अजुषश्च विषयानसेवमानाश्च ते मम सकाशान्नैरपेक्ष्यं विषयानपेक्षं स्वरूपसुखं स्यादिति विदुर्हीत्यन्वयः ननु बिम्बभूतस्य विष्णोः स्वरूपसुखसद्भावे मानमस्ति चेत्प्रतिबिम्बजीवस्वरूपसुखाविर्भावे भक्त्यादिसाधनसामग्रीसम्पादनयत्नो नितरां सफलः स्यात्तत्र किंमानमित्यत्रापीदमुत्तरम्भवतीत्याह । निष्किञ्चना इति । मम नैरपेक्ष्यं सुखमस्तीति विदुरित्यन्वयः हिशब्द उभयत्रापि प्रमाणमस्तीति सूचयति ज्ञानिप्रत्यक्षलक्षणप्रमाणसद्भावाद्भक्त्यादिसाधनमवश्यमापादनीयमिति भावः ॥ १७ ॥

ननु त्वद्भक्तस्यापि विषयग्राहग्रस्ततया भक्तिलोपेनाधःपातः सम्भाव्यत इति भक्तिविधानं व्यर्थमिति तत्राह । बाध्यमान इति । विषयैर्बाध्यमानत्वेनाजितेन्द्रियोऽपि प्रगल्भतया मद्भक्त्या विषयैर्नाभिभूयते विषयाभिषेवया प्राप्तदोषेणाधो न पततीत्यन्वयः ॥ १८ ॥

कथमिवेति तत्राह । यथेति । एनांसि पापानि ॥ १९ ॥

भक्त्यनुपहितबुद्धिनानुष्ठितधर्मादयो मदपरोक्षं न जनयन्तीत्याह । नेति ॥ २० ॥

भक्तिप्रधानधर्मादीनां तत्साधनवद्भक्तेरपि तत्सहिताया एव तत्साधनत्वमत्राह । भक्त्येति । भक्तेः प्राधान्ये गुणादर्शनात् कथं तदुत्पत्तिरुच्यते इति तत्राह । भक्तिरिति । सम्भवाज्जननादिरूपसंसारात् यद्वा सोऽत्पत्त्यनन्तरमेव पुनाति न तु कालक्षेपेण ॥ २१ ॥

भक्तिनायकहीनानां धर्मादीनामप्रयोजकत्वमयोक्तम् अधुना तत्प्रकाशयति । धर्म इति । हिशब्दो "नायमात्मा प्रवचनेन लभ्य" इति श्रुतिं सूचयति ॥ २२ ॥

यद्यपि महान्तो वैष्णवसिद्धान्ताचार्यत्वादिमतेनास्य भक्तिरस्तीति जानते तथापि बाह्यानां सुबोधाय भक्तेः प्रत्यक्षलक्षणान्याह । कथमिति ॥ २३ ॥

समीचीनभक्तियुक्तः पुरुषोऽपि सर्वं पुनाति किं पुनर्भक्तिरित्याशयेनाह । वाग्गद्गदेति । अत्र—

> चित्तद्रवस्तथा धैर्यं प्रसादो भक्तिलक्षणाः ।
> आधिक्येन तु तत्रापि स्थैर्यमेव विशेषतः ॥
> दम्भस्य चलभक्तेश्च यस्माद्धर्षादिकं भवेत् ।
> दम्भादिपरिहारार्थं निगूहीयाच्च धीरधीः ॥
> अत आध्यात्मिकैः कष्टैराधिभूताधिदैवतैः ।
> वाक्यैश्च वेदतन्त्राद्यैरुपदेशैश्च तारयेः ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यद्यन्यच्छासनेनापि यस्य भक्तिर्न वार्यते।
स एव परमो भक्तो विष्णोर्हृदयवल्लभः॥

इति विशेषाश्च प्राहुः ॥ २४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

प्रायेणाभिभूयत इत्युक्तायां श्रीभगवति स्वदैन्यनिवेदनरूप-त्वात् यतः प्रगल्भया समर्थप्रभावया भक्त्या शरणागतमा-त्रात्मिकया ॥ १८ ॥

अतः सर्वानेव भक्तिभेदान् प्रशंसति। यथेत्यष्टभिः। यथा ग्निर्यथा भक्तिर्यथा कथंचिच्छ्रवणादिलक्षणा समस्तानि पापानीति ॥ १९ ॥

तत्साधनार्थं प्रयुक्तोऽपि योगादिस्तथा मां न साधयति वशयन्तोन्मुखं करोति यथा ऊर्जिता भक्तिः साधनात्मिका॥२०॥

श्रद्धया भक्त्या श्रद्धापूर्विकया केवलया भक्त्या त्वहमेव ग्राह्यः क्रमाद्दर्शीकार्य्यः सैव मन्निष्ठा मयि दार्ढ्यं गता सती ॥ २१ ॥

विद्या ज्ञानं तपसा चित्तैकाग्र्येण मद्भक्त्या सत्यादिसद्गुणया न सम्यक् प्रपुनाति उक्तपारमेष्ठ्याद्यपुनर्भवपर्य्यन्तसर्वा-सनातो न शोधयति ॥ २२ ॥

तदेव व्यतिरेकेणाह। कथमिति। रोमहर्षस्तावद्गात्रिकाश्चित्तो-द्भवस्य चिह्नम् आनन्दाश्रुकला तु विशिष्टस्य तस्य चिह्नं चेतोद्रवस्तु भक्तेरन्तरङ्गमात्र इति तथा तथोक्तं रोमहर्षेणा-नन्दाश्रुकलया च विना कथं तारतम्येन चेतोद्रवोऽवगम्यते द्रवता चेतसा च विना कथं भक्तिर्भवति भक्त्या च विना कथमाशयः शुध्येदिति ॥ २३ ॥

मद्भक्तियुक्तो मत्प्रेमातिशयवानस्तु भुवनमपि पुनाति किमुताश्रयं संगिनो ग्रामं देशं मण्डलं वर्षं द्वीपादिकं चेत्यर्थः ॥ २४ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

यतो मद्रूपगुणादिमाधुर्य्यानुभवसुखं मद्भक्तैरेव लभ्यं नान्यै-रित्याह। निष्किञ्चना इति। निष्किञ्चना ज्ञानिनोऽपि भवन्तीति केचिदाहुस्तद्व्यावृत्त्यर्थमाह। मय्यनुरक्तचेतस इति। शान्ता अखिलजीव-रक्षा अखिलेष्वपि जीवेषु भक्तिरसाविष्टत्वात् अत एव महा-न्तस्तत्सङ्गेनैव लोकैरुच्यमानाः कामैर्वाद्यापातितैरपि भोगैर्न आक्र-न्ता कृता धीर्येषां ते यत्तत्सुखं स्फुरन्ति आस्वादयन्ति तत्तुल्यं ते एव विदुर्नान्ये कुतः नैरपेक्ष्यं नास्ति सापेक्ष्यं मोक्षादिकमपि येषां ते नैरपेक्ष्यवन्तस्तेषां ज्ञानम् ॥ १७ ॥

अपि च आरब्धानारब्धपूर्वसमानमन्तकथा यतो भक्तौ प्रथमं प्रवर्त्तमानोऽपि भक्तः कृतार्थ एवेत्याह। बाध्यमान इति। प्रायः प्रगल्भया प्रायेणैव प्रवर्त्तमानस्या किम्पुनः प्रगल्भया ज्ञानि-प्रकरणे यथा दुराचारो ज्ञानी निन्द्यते ज्ञानित्वं च तस्य निषिध्यते वक्तव्यसमयतपस्वर्गं इत्यादिना तथा तत्र भक्तप्रकरणे दुराचारो भक्तो न निन्द्यो भक्तत्वं च तस्य न निषिद्धमित्याह। बाध्य-मान इति। यदुक्तम् "अपिचेत् सुदुराचारो भजते मामनन्यभाक् साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः" इति किञ्चात्र विषयै-र्बाध्यमानोऽपि नित्यैर्नाभिभूयत इत्युभयत्रापि वर्त्तमाननिर्देशात् विषयबाध्यत्वदशायामपि विषयाबाध्यत्वं भक्तिसद्भावात् यथा वीरक्रमाक्रान्तवत् शस्त्राघातं प्राप्तस्यापि न पराभवस्तथा शौर्य्यसद्भावादिति यथा वा पीतज्वरघ्नमहौषधस्य नाद्यापि वर्त्तमानोऽपि ज्वरोऽनाश्रकोऽयथावत् एव तस्य विनङ्क्ष्यत्वात् दिनान्तरे च सम्यग्विनङ्क्ष्यमाणत्वाच्च ॥ १८ ॥

तथ्याजितेन्द्रियतानुजन्यपापस्य भक्तिरेव विनाशिकानियामक दृष्टान्तः यथाग्निरिति हे उद्धवेति त्वमत्रानुभवमेव प्रमाणमिति भावः ॥ १९ ॥

ननु भक्तिर्यथा स्वप्राप्तिसाधनं तथा ज्ञानयोगादिकमपीति केनांशेन भक्तेरुत्कर्ष इत्यत आह। नेति त्र्याङ्गयाम्। न साधयति न मत्प्राप्तिसाधनं भवति यथाभक्तिः ऊर्जिता ज्ञानकर्माद्यना-वृतत्वेन प्रबला तीव्रेत्यर्थः ॥ २० ॥

यथेति स्वरूपेण प्राप्तं योगादीनामपि स्वर्गादिसाधन-त्वमाशङ्क्याह। भक्त्येति। एकया नत्वन्येन योगादिनेत्यर्थः। तेन यद्यत्र ज्ञानादीनामपि ब्रह्मप्राप्तिसाधनत्वं श्रूयते तत्तस्या गुणीभूता भक्तिरेव तत्प्रापिकेति ज्ञेयं तदेवं ज्ञानसत्कर्मादिकम् भगवन्तं साधयितुमसमर्थं केवलपापनाशकतयैव सार्थकमभू-दिति स्थितं तत्रापि भक्तेर्यथा पापनाशकता न तथा ज्ञाना-दीनामित्याह। भक्तिरिति सार्द्धेन। सम्भवात् जातिदोषादपीति श्रीस्वामिचरणाः तेन प्रारब्धपापनाशकतापि भक्तेरुच्यते ॥२१॥

किञ्च धर्मज्ञानादीनां पापनाशकत्वमपि भक्तिसान्निध्येनैव भक्तिराहित्येन तु किञ्चिन्मात्रमेवेत्याह। धर्म इति विद्या ज्ञानम्॥२२॥

अन्तःकरणं तु सम्यक् भक्तिरेव शोधयति नान्यत्सा-धनं सा च भक्ती रोमाञ्चाद्यनुभावरूपेत्याह। कथमिति। भक्त्या हेतुना यद्द्रवचेतस्त्वेन विना कथं साधनान्तरेण रोमहर्षः कथं वा आनन्दाश्रुकला रोमहर्षं विना आनन्दाश्रुकलया च विना कथमाशयः शुध्येदित्यन्वयः। यदुक्तं कलियुगपावनावतारेण श्रीभगवता --

श्रवणत्योपनिषदं दूरे हरिकथामृतात्।
यत्र सन्ति द्रवच्चित्तकम्पाश्रुपुलकादय इति॥

तेन निष्कामकर्मयोगादयः बहुप्रमाणमिव अन्तःकरणस्य शोधकास्तावद्भवन्तु किन्तु तस्य येन कषायेण भगवदपरोक्षा-नुभवो न भवति तं कषायं तु प्रेमभक्तिरेव ज्वालयति नतु ज्ञानादिरपीति भावः ॥ २३ ॥

प्रेमभक्तियुक्तो जनस्तु स्वमुद्धरतीति किञ्चात्र यतो भूर्ध्वा-कमण्डलुरुद्धरतीत्याह। वागिति। यस्य वाक् गद्गदा गद्गदाकारा अस्पष्टाक्षरेत्यर्थः। द्रवते द्रवति यत्रासिक्तद्रवचित्तमसत्ययाम रुदति क्वचिद्धसति क्वचिदित्युक्तागत्या उद्गायते नृत्यतीत्यादिति भावः क्वचिदिति सर्वत्रान्येति त्रिजगद्भवन्तु सार्वत्रिक एव ॥ २४ ॥

———

यथाऽग्निना हेम मलं जहाति ध्मातं पुनः स्वं भजते च रूपम् ।
आत्मा च कर्मानुशयं विधूय मद्भक्तियोगेन भजत्यथो माम् ॥ २५ ॥
यथा यथाऽऽत्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः ।
तथा तथा पश्यति वस्तु सूक्ष्मं चक्षुर्यथैवाञ्जनसंप्रयुक्तम् ॥ २६ ॥
विषयान् ध्यायतश्चित्तं विषयेषु विषज्जते ।
मामनुस्मरतश्चित्तं मय्येव प्रविलीयते ॥ २७ ॥
तस्मादसदभिध्यानं यथा स्वप्नमनोरथम् ।
हित्वा मयि समाधत्स्व मनो मद्भावभावितम् ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अपुनर्भवं यद्यपि नेच्छन्ति तथापि निष्किञ्चनाः मद्व्यतिरिक्ते देहगेहादिके विरक्ताः मय्यनुरक्तचेतसो मद्भक्ताः यन्निरपेक्षं निरपेक्षैरेव लभ्यं मम मायापाशिक्षयं जुषन्ति सेवन्ते तत्काम्यन्ते इति कामाः भोगास्तेमं आलभ्या न पूर्णीकृता धीधीषां मुमुक्षूणां ते न विदुः ॥ १७ ॥

शान्तानां महतामास्तां तावत्कृतार्थताकथा यतोऽशान्तोऽपि मद्भक्तः कृतार्थ एवेत्याह । बाध्यमान इति द्वाभ्याम् ॥ १८ ॥

यथा किञ्चिदप्यग्निः एधःसु निःक्षिप्तः ततः सुसमृद्धः एधांसि काष्ठानि ॥ १९ ॥

अतो मद्भक्तेरत्यन्तश्रेयो नास्तीत्याह । न साधयतीति द्वाभ्याम् ॥ २० ॥

श्रद्धया कृतया भक्त्या अहं ग्राह्यः सम्यक्भवः सम्भवः सुघोरः संसारस्तस्मात् मन्निष्ठान् श्वपाकानपि पुनाति पवित्री करोति मज्ज्ञानं प्रापयतीत्यर्थः ॥ २१ ॥

मद्भक्तिं विना धर्मादिकमकिञ्चित्करमित्याह । धर्म इति द्वाभ्याम् ॥ २२ ॥

भक्तेर्ज्ञापकं रोमहर्षादिकं विना कथं भक्तिर्ज्ञायते भक्त्या विना आशयः अनादिकाम्यकर्मादिदूषितमन्तःकरणं कथं शुध्येत् ॥ २३ ॥

मद्भक्तियुक्त आत्मानं पुनातीति किमुवक्तव्यमपि तु सर्वं लोकं पुनातीत्याह । वागिति ॥ २४ ॥

---

भाषा टीका ।

जो निष्किञ्चन हैं मेरे में जिनके चित्तका अनुराग है जो शांत हैं महान् सब जीवों पर दयालु हैं कामों से जिनकी बुद्धि खिंच नहीं है उन लोगों को निरपेक्ष होने से जो मेरा सुख है तिसको दूसरे कोइ नहीं जानते हैं ॥ १७ ॥

मेरा भक्त अजितेंद्रिय होने से विषयों से बाधित होवै तौ भी प्रायः करके मेरी भक्ति के सामर्थ्य से विषयों के परवश नहीं होता है ॥ १८ ॥

हे उद्धवजी ! जैसे अच्छे प्रकार जलता हुआ अग्नि सब काष्ठों को भस्म करदेता है तैसे ही मेरे विषय की भक्ति संपूर्ण पापों को नाश करती है ॥ १९ ॥

हे उद्धवजी ! जैसे मेरे को बढ़ी हुई भक्ति वश करती है तैसे न योग वश करता है न सांख्य न धर्म न वेदाध्ययन न तप न त्याग वश करते हैं ॥ २० ॥

मैं सत्पुरुषों का आत्मा हुं प्रिय हुं एक केवल भक्ति से श्रद्धा से ग्रहण करने में आता हुं मेरे में परम निष्ठा वाली भक्ति चांडालादिकों को भी जात्यादि दोषों से पवित्र कर देती है २१

सत्य दया से युक्त जो धर्म तप के सहित जो विद्या ये दोनों भी मेरी भक्ति से रहित आत्मा को अच्छी तरह से पवित्र नहीं करसके हैं ॥ २२ ॥

विना रोमों के हर्ष होने से विना चित्त के द्रवित होने से विना आनंद के आंसुओं से विना ऐसी भक्ति से कैसे अन्तःकरण शुद्ध होसकता है ॥ २३ ॥

जिस की वाणी गद्गदहोजातीहै जिसका चित्तद्रवित होजाताहै जो हर समय रोताहै कहीं हँसताभी है निर्लज्ज होकर गाताहै और नाचता है ऐसी मेरी भक्ति से युक्त वह पुरुष संसार को पवित्र कर देता है ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपिच भक्त्यैवाऽऽत्मशुद्धिर्नान्यत इति सदृष्टान्तमाह । यथेति । यथाऽग्निना ध्मातं तापितमेव हेम सुवर्णमन्तर्मलं जहाति न क्षालनादिभिःस्वं निजं रूपं च भजते कर्मानुशयं कर्मवासनाम् मां भजते मद्रूपतामापद्यते ॥ २५ ॥

ननु ब्रह्मविद्याप्नोतिपरम् तमेव विदित्वाऽतिमृत्युमेतीत्यादिश्रुतिभ्यो ज्ञानादेवाविद्यानिवृत्त्या स्वप्राप्तिरवगम्यते कुतो भक्तियोगेनेत्युच्यते तत्राऽऽह । यथा यथेति । आत्मा चित्तं परिमृज्यते शोध्यते मत्पुण्यकथानां श्रवणैरभिधानैश्च भक्तेरेवावान्तरव्यापारो ज्ञानं न पृथगित्यर्थः ॥ २६ ॥

किंच ज्ञानं नाम चित्तस्य मदाकारपरिणामः स च मां

स्त्रीणां स्त्रीसंगिनां संगं त्यक्त्वा दूरत आत्मवान् ।
क्षेमे विविक्त आसीनश्चिन्तयेन्मामतन्द्रितः ॥ २९ ॥
न तथाऽस्य भवेत्क्लेशो बन्धश्चान्यप्रसङ्गतः ।
योषित्संगाद्यथा पुंसो यथा तत्संगिसंगतः ॥ ३० ॥
उद्धव उवाच
यथा त्वामरविन्दाक्ष ! यादृशं वा यदात्मकम् ।
ध्यायेन्मुमुक्षुरेतन्मे ध्यानं मे वक्तुमर्हसि ॥ ३१ ॥
श्रीभगवानुवाच ।
सम आसन आसीनः समकायो यथासुखम् ।
हस्तावुत्सङ्ग आधाय स्वनासाग्रकृतेक्षणः ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

भजनः स्वभावत एव भवति न च यत्नान्तरमपेक्षत इति सदृष्टान्तमाह । विषयानिति ॥ २७ ॥

यस्मादस्वत्साधनं तत्फलं च स्वप्नमनोरथवदसदभिध्यानमात्रं तस्मात्तद्विहाय मय्येव मनः समाहितं कुर्विति प्रकरणार्थमुपसंहरति । तस्मादिति । मद्भावभावितं मद्भावेन भजनेनैव शोधितम् ॥ २८

विशेषतो वाऽस्याधनायुक्तकाममार्गाः परित्याज्या इत्याह । स्त्रीणामिति । आत्मवान् धीरः सन् क्षेमे निर्भये देशे विविक्ते विजने ॥ २९ ॥

एतदुपपादयति । न तथेति । अस्य पुंसो यथा तत्संगिसंगतः क्लेशो भवेत् यथा च बन्धो योषित्सङ्गतस्तथाऽन्यप्रसंगतो न भवेदिति ॥ ३० ॥

मां चिन्तयेदित्युक्तं तत्प्रकारं पृच्छति । यथेति ध्यानाङ्गप्रश्नः यादृशमिति ध्येयविशेषणप्रश्नः यदात्मकमिति यस्य तानि विशेषणानि तत्स्वरूपप्रश्नः एतन्मे ध्यानं मे वक्तुमर्हसीति पाठः तत्रायमर्थः मुमुक्षुस्त्वां यथा ध्यायेत्तन्मे वक्तुमर्हसीति जिज्ञासोः कथनाय मे पुनरेतत्त्वद्दास्यमेव पुरुषार्थो नतु ध्यानम् कृत्यमतीति तदुक्तम् त्वयोपभुक्तस्रग्गन्धेत्यादि त्वं वक्तुमर्हसीति पाठः सुगमः ॥ ३१ ॥

तत्र ध्यानाङ्गत्वेनाऽऽसनप्राणायामप्रकारमाह । सम इति चतुर्भिः । समे नात्युच्छ्रिते नातिनीचे आसने कायवलायो समकायः सन् यथासुखमासीन इति नास्ति स्वस्तिकादिनियम इत्युक्तम् नासाप्रतिवीक्षणं च चित्तस्थैर्याय "अन्तर्लक्ष्या बहिर्दृष्टिः स्थिरचित्तः सुसंवृत" इतियोगशास्त्रोक्तेः ॥ ३२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी ।

साधनादिभिरित्यादिना तत्क्षणमवश्यादिग्रहः आत्मा चित्तम् मद्भक्तियोगेन मत्प्रीत्या । अथो कात्स्न्र्येन । मद्रूपतां मद्विप्रमोषेण स्त्रीमयोऽयं कामुक इति वन्मदेकमयताम् ॥ २५ ॥

सूक्ष्मं वस्तु मदीयस्वरूपरूपगुणलीलायाथार्थ्यम् । भक्तेरेवान्तरव्यापार इति । यथा चक्षुषः करणत्वेऽपि संयोगादिरवान्तरव्यापारस्तथा ज्ञानमपि । नहि काष्ठैः पचतीत्युक्तं ज्वालानामव्यापारस्तथा साधनत्वं प्रतीयेत इति तस्य तत्परिकरत्वमभिप्रेतम् ॥ २६ ॥

यत्नान्तरं प्राणायामसमाध्यादिरूपम् । मूलेऽनुस्मरत इति स्मरणोपलक्षितभक्तेरभ्यास एवाभिप्रेत इति ज्ञेयम् ॥ २७ ॥

तद्विहाय अन्यत् साधनादिकं परित्यज्य । स्वप्नमनोरथमित्येकवद्भावः यथा स्वप्नो मनोरथश्चासन् तथा कर्मादिसाधनम् । तत्फलञ्च स्वर्गादि । असत् मिथ्या । अभिध्यानं मनोमात्रविलसितं हित्वा मयि मनः समाधत्स्वेत्यन्वयः ॥ २८ ॥

काममार्गाः परित्याज्या इति साधनस्य पूर्वा प्रक्रियोक्ता ॥ २९ ॥

एतत् काममार्गपरित्यजनम् । यद्यपि क्लेशो बन्धश्चेत्युभावुभयत्र तथापि स्वस्यान्यव्यासक्तेरभावात् तत्संगिसङ्गः कारणम् । बन्धस्य च स्त्रीसङ्गः इति प्राधान्याद्यथायोग्यं व्याख्यानमिति ज्ञेयम् ॥ ३० ॥

तत्प्रकारः तस्य चिन्तनस्येतिकर्तव्यतात्मकम् । ध्यानाङ्गप्रश्नः ध्यानस्येतिकर्तव्यताप्रश्नः । एवमितिकर्तव्यताध्येयविशेषणा तत्स्वरूपप्रश्नात्रयः । तत्र मत्पदस्य पुनरुक्तिपाठे । कथम्भूतस्य मे स्वदास्यैकपुरुषार्थस्य । तथाच पराणं एतायं प्रश्नो न स्वार्थ इति । तथा व्याख्यानम् त्वं वक्तुमर्हसीति पाठस्य सुगमत्वं पुनरुक्त्यभावाद्वेद ॥ ३१ ॥

तत्र प्रश्नत्रयमध्ये ध्यानाङ्गत्वेन ध्यानसाधनत्वेन । सम इति सार्धकम् । चित्तस्थैर्यायेति वायुविक्षेपाभावात् । अन्तर्लक्ष्यः हृदि लक्ष्यैकदृष्टिरित्यर्थः । बहिर्दृष्टिः बाह्यविषयानुसन्धानशून्यः ॥ ३२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यथाऽध्मातामिति हुतिमुखेन आध्मातामित्यर्थः । रूपमौज्ज्वल्यम् ॥२५॥

सूक्ष्मं तत्त्वं प्रकृतेः सूक्ष्मो जीवः जीवात्सूक्ष्मः परमात्मा ॥२६॥

प्रलीयते प्रकर्षेण श्लिष्यति अन्यानुगमनाक्षमं भवति ॥ २७ ॥

असदभिध्यानम् अशुभाभिध्यानं यथास्वप्नमनोरथम् अचिरस्थिर-विषयमित्यर्थः । मद्भावभावितं मद्विषयभावबन्धेन भक्त्या-वासितम् ॥ २८—३० ॥

यथेति ध्यातृकर्तृविशेषणं यादृशमिति विग्रहसंस्थान-प्रश्नः यदात्मकमिति दिव्यात्मस्वरूपप्रश्नः ॥ ३१–३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च भक्त्यैवात्मशुद्धिर्भवतीत्याह सदृष्टान्तमाह । यथेति । यथाग्निना ध्मातं धमनीमुखेन ध्मातं हेम सुवर्णं कर्तृ मलं जहाति स्वं स्वासाधारणं रूपमौज्ज्वल्यं भजते तथात्मा जीवोऽपि मद्भक्तियोगेन कर्मानुशयमिति पदद्वयं उपलक्षणम् अनुशयं भुक्तावशिष्टं ज्ञानावरकं कर्म विधूयाशेषं ततः मां भजति प्राप्नोति मां प्राप्य स्वस्वरूपं भजत इत्यर्थः । तथा च श्रुतिः "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत" इति ॥२५॥

ननु भक्त्युत्पत्तिप्रतिबन्धके कर्मणि विधूते सति भक्तिस्तया च कर्मविधूतिरित्यन्योन्याश्रयणेनतत् एवं च कदा यथा-वस्थिततत्त्वयाथात्म्यविवेकः येन तत्पूर्वकभक्तियोगः स्यादित्यत आह । यथा यथेति । मत्पुण्यगाथाश्रवणकीर्तनाभिधानैरात्मा परिमृज्यते विशोध्यते कर्मविधूननेनेति भावः । तथा तथा तत्त्वसूक्ष्मं सूक्ष्मं तत्त्वं तत्त्वाभिहिताविपिताकारः प्रकृतेः सूक्ष्मो जीवः जीवात्सूक्ष्मः परमात्मा तद्वत्त्वात्मतया व्याप-कस्वभावत्वात् यथा रोगाद्विमुक्तं चक्षुस्तात्कुरूपग्रहणासमर्थं सदञ्जनसंप्रयुक्तं निवृत्तदोषं सद्रूपं गृह्णाति तद्वदेवात् मत्पुण्यगाथाश्रवणाभिधानेनात्मशुद्धिस्ततस्तत्त्वयाथात्म्यविवेकः ततो भक्तिरित्यर्थः ॥ २६ ॥

अथ शब्दादिभिरेव चित्तं मत्प्रवणं स्यादिति सदृष्टान्तमाह । विषयानिति । अस्य यथेत्यादिः मामनुस्मरतः तथेति । अनुस्मरतः श्रवणाभिधानादिभिर्मां स्मरतः पुंसः चित्तं प्रविलीयते प्रक-र्षेण श्लिष्यति ॥ २७ ॥

दृष्टान्तत्वेनोक्तस्य विषयध्यानस्य त्याज्यत्वमाभिप्रेत्य विवृण्वन् दार्ष्टान्तिकत्वेनोक्तमात्मानुस्मरणं विधत्ते । तस्मादिति । तस्माच्छ्रव-णाभिधानादिकर्मणैव मद्भक्त्युत्पत्तेः स्वप्नमनोरथं स्वप्नवत् तत्तत्-क्षणविषयमित्यर्थः असदभिध्यानं शब्दादिविषयध्यानं त्यक्त्वा मद्भावभावितं यथा मद्विषयभावबन्धेन भक्त्योपासितं भवति तथेति समाधिविशेषणं मनो मय्येव समाधत्स्व श्रवणाभिधाना-दिकर्मणा समाहितं कुर्वित्यर्थः ॥ २८ ॥

न केवलमसदभिध्यानमेव हेयमपि त्वभिध्यातृसङ्गोऽपि इत्याह । स्त्रीणामिति । स्त्रीसङ्गिनां चेति चशब्दोऽध्याहर्तव्यः त्यागो दुष्कर इत्यतो विविनक्ति । आत्मवान् धीमान् वशीकृतेन्द्रियः क्षेमे निर्भये विविक्ते निर्जने च देशे आसीनः अतन्द्रितोऽनलसः मां चिन्तयेदिति ॥ २९ ॥

स्त्रीसङ्गादिस्त्याज्यत्वे कारणमाह । न तथेति । यथास्य पुंसः योषित्सङ्गात्तत्सङ्गिसङ्गतः योषित्सङ्गिनां सङ्गतश्च बन्ध-स्तादृशोऽन्यं तत्प्रयुक्तः क्लेशश्च भवेत्तथाऽन्यप्रसङ्गतस्तौ न भवतः अतो योषित्तत्सङ्गिसङ्गौ त्याज्याविति भावः ॥ ३० ॥

चिन्तयेन्मामतन्द्रित इत्युक्तां चिन्तां तद्विषयप्रकारजिज्ञा-सया पृच्छति । यथेति । यथा ध्यायेदिति सम्बन्धः यथेति ध्यानाङ्गप्रश्नः यादृशमिति विग्रहसंस्थानप्रश्नः यदात्मकमिति दिव्यात्मस्वरूपप्रश्नः एतत्सर्वविषयं ध्यानं तत्प्रकारं च वक्तु-मर्हसि त्वदभिमतं त्वमेव वक्तुं शक्तो नान्य इति भावः ॥३१॥

तान्प्रश्नानाकुनाभ्याह । सम इति चतुर्भिः । समे देशे नात्युच्छ्रि-तोपयुक्ते आसने चैलाजिनकुशोत्तरम् इत्युक्तविधे यथासुख-मासीनः स्वस्तिकपद्मकाद्यन्यतमासनेनोपविष्टः समकायः ऋजु-कायः हस्तौ उत्सङ्गे आधाय स्वस्य नासाग्रे कृतं निहि-तमीक्षणं दर्शनं येन सः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्तिः पुनातीत्युक्तं तत्र शुद्धिप्रकारं सदृष्टान्तमाह । यथेति । अग्निना मुखवायुसंयोगेनोज्ज्वलितेन ध्मातं दाहविशेषं प्राप्तं हेम मलमष्टादशदोषलक्षणं स्वरूपं निर्दोषभास्वरलक्षणम् आत्मा सत्स्वभावो जीवो ऽनाद्यविद्याकामकर्मकलितं कर्मानुशयमन्तः-करणं भक्तियोगेन विधूय निर्मलीकृत्य मत्तो मङ्गलमूर्तिं मां भजत इत्यन्वयः ॥ २५ ॥

श्रवणादिगुणाधिकं ध्मातहेमवत् भक्तियोगोद्रेकक्रमेण शुद्ध आत्मा मनः भगवत्सूक्ष्मतत्त्वं पश्यतीत्याह । यथेति । परिमृज्यते शोध्यते तत्त्वं सूक्ष्मं सूक्ष्मतरत्वम् अत्र दृष्टान्तान्तरं चाह चक्षुरिति ॥ २६ ॥

कर्मसांकर्यराहित्येन भक्तिपूर्वकध्यानमात्रेण चित्तं कथं त्वयि निरन्तरं विलग्नं भवतीत्यत्राह । विषयानिति । आत्मानुभव एवास्य सान्तं न मानान्तरमपेक्षणीयमिति भावेन विषयानिदर्शनमुक्तं चित्तं स्वरूपचैतन्यमित्यर्थः ॥ २७ ॥

फलितमाह । तस्मादिति । यथा स्वप्नगतोरगं स्वप्नतन्मनोर-थगतासदभिध्यानम् अशुभं विषयध्यानं हित्वा तन्त्वेव नहि त्वदासक्तस्याखिलस्य विषयासक्तिरपि ग्राह्या किमित्यतो वा मन्द्रा-शङ्कां परिहरन्नुपसंहरति । तस्मादिति । अज्ञानामपि बुद्ध्यमता-र्थं विषयासक्तिनिवर्तनमुक्तं न तु ग्राह्यांशेऽधिनेति यत्तस्मा-द्भावो भक्तिः मयि भक्त्या भावितं तन्मयीकृतम् ॥ २८ ॥

स्वरूपताद्यान्तःकरणयोग्यत्वभेदेन त्रिविधा विषयाः तत्र पूर्वे मुक्तापेक्षणीया द्वितीयाः सांसारिकाः अनर्थजनकत्वान्मुमु-क्षुणा अवश्यं हेयाः तथाहि तत्सेवातिरेकेण हर्षोऽहमित्यादिल-क्षणा क्लेशोऽन्यथा बुद्धिर्जायते जन्मप्रभृतिपूरणेन सह वर्तमान-त्वात् सुखक्षयहेतुत्वेन इत्यादिशब्दवाच्या रोग क्षय इति धातोः तस्याः संगो येषां ते स्त्रीसंगाः तत्संगानां संगो येषामिति स्त्रीसंगसंगिनः तेषां संग दूरतः परिहृत्य मत्सेवैव कर्तव्या

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ईश्वरो मम स्वामी तत्किङ्करोऽहमित्यादिस्मरणोन्नतिभावेन विषयासक्तकथया हत्याशयेनाह । स्त्रीसंगेति । अनेन स्त्रीरागिणां संगोऽपि परिहर्तव्य इत्युक्तं भवति "केशवे त्वन्यथा बुद्धिः नैव स्त्रीसंप्रकीर्तिते" त्यादिवाक्यमत्र प्रमाणं क्षेमे मङ्गलरूपे ॥ २६ ॥

नन्वन्येषु हत्यादिषु अधःपातहेतुषु दोषेषु सत्सु किंविशेष्य स्त्रीसङ्गसङ्गिसङ्गो दूरतस्त्याज्य इत्युच्यत इत्यत आह । न तथेति । यथाऽस्य पुंसः योषित्सङ्गात्तद्विषयिभिर्जुगुप्सायोषित्सङ्गाख्यया ईश्वरोऽहमित्याद्यनेकविधान्यथाबुद्धिरोधकरणलक्षणासङ्गात्तया तत्सङ्गिसङ्गतः मिथ्याज्ञानिभिर्बालक्षणासङ्गात्क्लेशो बन्धश्चान्धन्तमो लक्षणश्च भवेत् तथाऽन्यप्रसङ्गतः पिपीलिकादिवधलक्षणान्न भवेदित्यन्वयः अत्र पातकविशेषात्तत्फलानि च—

परदारादयः प्रोक्ता क्षुद्रपातकसंज्ञिताः ।
उपपातकं मद्भक्तिश्च वर्णाश्रमाद्यपु पातकम् ॥
महापातकसंज्ञं तु पित्रादेर्दारधर्षणम् ।
दारदयिः स्वोत्तमानां मानुषाणां स्वभावतः ॥
सुमहापातकं प्रोक्तं तद्भक्तिस्तु महत्तमः ।
ऋषिदारेषु मनसो गतिरत्र ततोऽधिकम् ॥
देवदाराभिकामानां सक्तिमङ्गस्ततोऽधिकः ।
किमु विष्णोस्ततो योषित्सङ्गस्य उपसम्पदितः ॥
न समं पातकं क्वापि न स्वरूपाभिकामिनः ।
अवज्ञाता माधवादेस्तस्मात्तं दूरतस्त्यजेत् ॥
मानुषेषु तु दुःखित्वं क्षुद्रपापफलं स्मृतम् ।
पापं तु वर्णबाह्यत्वं तिर्यग्योनिर्गतिस्तथा ॥
सहस्रवर्षं नरकं क्षुद्रपातकजं फलम् ।
तथोपपातकाच्चापि नरकं युगमात्रकम् ॥
चतुर्युगावमानं तु पातकस्य फलं स्मृतम् ॥
महापातकजन्यं च कल्पावधिसमीरितम् ।
सुमहापातकाच्चापि यावद्ब्रह्मवयो भवेत् ॥
तत्पराणां पातकानां फलमन्धतमः स्मृतम् ।
अधोऽधो दुःखमतुलं विष्णुदाराभिमर्शनात् ॥
वधादपि हि दाराणां धर्षणं कोपकारणम् ।
तस्माद्दूरे सदा वन्द्या अप्रियस्याभिकामत इति ॥

अर्थतत्त्ववचनाद्विशेषः पातकानां फलानां च द्रष्टव्यः ॥ ३० ॥

ध्यायेन्मामतन्द्रित इत्यत्रोक्तं ध्यानप्रकारं पृच्छति । यथेति यादृशं कीदृशं यदात्मकं किमात्मकम् ॥ ३१ ॥

समाहितेन मनसा ध्यानं कर्तव्यम् एतदुपायं प्रथमतो वक्ति । सम आसन इत्यादिना ॥ ३२ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तथा प्रीत्या तस्य महाप्रेम्णः प्राप्तिक्रमं सदृष्टान्तमाह- यथेति । तथा मद्भक्तियोगेन मत्प्रीत्या कर्मानुशयं विधूय शोधयित्वा अथो कात्स्न्र्येन भजति महाप्रेमाविर्भावात् पूर्णां सेवापद्धतिं प्राप्नोतीत्यर्थः ॥ २५ ॥

आदिभजनमारभ्य क्रमश्चवन् महाप्रेमपर्यन्ताविर्भावे पूर्वपूर्वापेक्षमेव कारणमाह । यथा यथेति । तत्र सूक्ष्मं मदीयस्वरूपगुणलीलावाचादर्शं पश्यतीति । तद्दर्शनक्रमातिशयेन महाप्रेमाद्याविर्भवतीति भावः ॥ २६ ॥

तस्माद्भक्तिरेवाऽपेक्षणीयेत्युपसंहरन्नाह । विषयानिति द्वाभ्याम् ॥ २७ ॥ २८ ॥

तत्र पूर्वाऽप्राक्रयामाह । स्त्रीणामिति ॥ २९ ॥

क्लेशो बन्धश्चेति उभावपि उभयोर्योज्यौ तत्सङ्गिसङ्गोऽपि ह्यादिकारणमिति ॥ ३० ॥

तत्र मुमुक्षूणां तत्प्रकारं पृच्छति । यथेति । परार्थः प्रश्नः सर्वेषां मार्गाणां तारतम्यज्ञानेन स्वमार्गोत्कर्षज्ञानं भवतीति भावेन यथाप्रे सिद्धीनामपि एवमन्यत्रापि ॥ ३१ ॥

सम इति सार्धकम् । सुखमासीन इति तदङ्गभूतस्वहितकादिषु मध्ये एकं कुर्यादित्युक्तम् ॥ ३२ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किञ्च भक्त्यैवात्मशुद्धिः नान्यत एवेति सदृष्टान्तमाह । यथेति । यथाग्निना ध्मातं ध्मापितमेव हेम सुवर्णं मलं त्यजति न क्षालनादिभिः स्वं निजं रूपं च भजते तथैवात्मा जीवः कर्मानुशयं कर्मवासनात्मकं मलं विधूय मदीयलोके मां भजति साक्षादेव सेवते ॥ २५ ॥

आदिभजनमारभ्य केवलया भक्त्यैवात्मशोधनतारतम्येन श्रवणकीर्तनस्मरणादितारतम्यात् मन्माधुर्यानुभवतारतम्यम् प्राप्नोतीत्याह यथा यथेति । तत्त्वसूक्ष्मं तत्त्वं मद्रूपलीलादिस्वरूपम् सूक्ष्मं मन्माधुर्यानुभवविशेषं तथाद्वंद्वैकयम् । यद्वा सूक्ष्मम् तत्त्वं पूर्वमिपानाभाव आदं चक्षुर्यथेति । प्रथममन्धात् काणोऽप्युत्तमस्ततश्चाक्षुष्मान् चक्षुष्मतोऽपि सिद्धाञ्जनसाञ्जितनेत्रः सूक्ष्मम् पश्यति ॥ २६ ॥

एतादृशश्रवणकीर्तनस्मरणादिनिष्ठानां त्वद्भक्तानां चित्तम् त्वयि कीदृशं स्यादित्यत आह । विषयानिति । विषयध्यानासक्तं चित्तं यथा विषयमाधुर्यनिमग्नं दृष्टं तथैव मदीयध्यानासक्तं मन्माधुर्यमात्रनिमग्नं स्यात् ॥ २७ ॥

तस्मादन्यत् साधनं तत्फलं च स्वप्नमनोरथवदसदभिध्यानमात्रं तस्मात्तद्विहाय केवलयैव भक्त्या मय्येव मनः समाहितं कुर्विति प्रकरणार्थमुपसंहरति । तस्मादिति श्रीस्वामिचरणाः मद्भावेन मद्ध्यानतयैव भावितं साधयुक्तीकृतम् ॥ २८ ॥

विशेषतो वात्स्यायनाद्युक्ताः काममार्गास्त्याज्या इत्याह । स्त्रीणामिति । यत आत्मवान् धृतियुक्तः तेषां सङ्गं सति धृतिर्न तिष्ठेदिति भावः । क्षेमे निर्भयदेशे विविक्ते निर्जने ॥ २९ ॥

यथा तत्सङ्ग इति योषित्संगिसङ्गत्यागे भूयानेव यत्नः कर्तव्यो यतो योषित्सङ्गे लज्जा स्त्रीयाप्रतिष्ठा च बाधिकाऽस्ति तत्संगिसंगे तु प्रायस्ते अपि न बाधिके परञ्च योषित्संगो यथा तत्कथाभिस्तस्यामासज्जयति लज्जाभयादिकमपि त्याजयति न तथा योषिदपीत्यत उक्तरत्र तन्निर्देशः ॥ ३० ॥

भक्तिं विना किमपि साध्यं न सिद्ध्यतीति भगवद्वाक्याभिप्रायं सर्वेषां मार्गाणां प्रकारज्ञानं विना स्वमार्गोत्कर्षज्ञानमतिसुखदं न भवतीति भावेन मोक्षाकाङ्क्षिणो ध्यानभक्तेः प्रकारादीन् पृच्छति । यथेति तत्र प्रकारप्रश्नः यादृशमिति ध्येयविशेषप्रश्नः यदात्मकमिति ध्येयस्वरूपप्रश्नः अत्र मे इत्यस्य

प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः ।
विपर्ययेणापि शनैरभ्यसेन्निर्जितेन्द्रियः ॥ ३३ ॥
हृद्यविच्छिन्नमोङ्कारं घण्टानादं बिसोर्णवत् ।
प्राणेनोदीर्य तत्राथ पुनः संवेशयेत्स्वरम् ॥ ३४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पौरुक्त्यादेवं व्याख्येयं यथा मुमुक्षुस्त्वां ध्यायेत्तन्मे वक्तुमर्हसि ननु मुमुक्षोर्ध्यानेन पृष्टेन तवैकान्तिकभक्तस्य किं तस्मात् यथा त्वामहं ध्यायामि तद्वदेत्येवं पृच्छ्यतामित्यत आह । मे मम तु एतत् ध्यानमिति संहतपाणिद्वयेन तस्य चरणद्वयं दर्शयति ध्यानं त्वं वक्तुमर्हसीति पाठः सुगमः ॥ ३१ ॥

स्वनासाग्रकृतेत्त्वणा इति चित्तस्थैर्यार्थं । "प्रग्ताक्षो वाहिदंष्टिः स्थिरचित्तः सुसंयत" इतियोगशास्त्रोक्तेः ॥ ३२ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किंच मद्भक्तश्चैव निर्मलो भूत्वा मद्भावं प्राप्नोति नान्यत इति सदृष्टान्तमाह । यथेति । यथा हेम सुवर्णमग्निना ध्मातम् सन्तापितमेव मलं जहाति नतु क्षालनादिभिः स्वरूपञ्च भजते तद्वदात्मा जीवात्मा कर्मानुशयं संसारहेतुभूतानादिकर्माशयनं ध्यानं हृत्वं विधूय मां मद्भावापत्तिं "निरञ्जनः परमं साम्यमुपैती"तिश्रुतिरत्रानुसन्धेया भजते आपद्यते च ॥ २५ ॥

ननु स्वस्मात्सिमाधारणहेतुभूतैवंविधा भक्तिः केनोपायेन स्यादित्यत आह । यथेति । असौ आत्मा जीवः मत्पुण्यगाथानां श्रवणैरभिधानैश्च यथा यथा मृज्यते देहात्माभिमानादिमलविमुक्तो भवति तथा तथा तत्त्वसूक्ष्मं तत्त्वेषु प्राकृतेषु देहेन्द्रियादिषु सूक्ष्मं ज्ञानस्वरूपं कर्मफलं भुञ्जानं जीवात्मानं तस्मिश्च सूक्ष्मं नियन्तारं मां पश्यति तदनन्तरं स्वतः मद्भक्तो भवतीत्यर्थः ॥ २६ ॥

गङ्गाप्रवाहवदखण्डितवृत्तिरूपा यानुरक्तिः सा ज्ञानादेव जायते इति सदृष्टान्तमाह । विषयानिति । मम परमात्मनः अनुकम्पतः गुणस्वरूपादिचिन्तनं कुर्वतः मुमुक्षोश्चित्तं दृढतरानुरक्तिरूपम् मय्येव प्रविलीयते ॥ २७ ॥

यस्माद्विषयध्यानाद्विषयेषु चित्तं विलीयते मम ध्यानान्मयि च तस्माद्धेतोः अभिध्यानं देहगेहादिविषयकमहंममाभिमानं हित्वा मद्भावैः मद्गुणश्रवणाभिधानैः भावित शुद्धतां नीतं मयि समाधत्स्व ॥ २८ ॥

ज्ञानं विना परा भक्तिर्नोपपद्यते अतो ज्ञानार्थं मां चिन्तयेदित्याह । स्त्रीणामिति ॥ २९ ॥

स्त्रीणां तत्सङ्गिनां च सङ्गत्यागे हेतुमाह । नेति ॥ ३० ॥

चिन्तयेन्मामतन्द्रित इत्युक्तं तत्प्रकारं पृच्छति । यथेति । यथेति ध्यानाङ्गप्रश्नः यादृशमिति ध्येयनिरूपणप्रश्नः यदात्मकमिति स्वरूपप्रश्नः ॥ ३१ ॥

उत्तरमाह । सम इत्यादिना । ध्यानाङ्गभूतासनानरूपणाम् यमनियमयोरुपलक्षणाम् ॥ ३२ ॥

———

भाषा टीका ।

जैसे अग्नि से धौंकने से सुवर्ण अपने मैल को छोड़ देता है फिर अपने शुद्धरूप को प्राप्त होजाता है तैसे आत्मा भी मेरे भक्ति योग से कर्म विषयवासनाओं को छोड़कर शुद्ध होकर फिर मेरे को भजता है ॥ २५ ॥

यह आत्मा जैसे जैसे मेरे कथा श्रवण नामग्रहण आदिकों से पवित्र होता है तैसे तैसे प्रकृति पुरुष ईश्वर इन सूक्ष्म तत्त्वों को जानता है जैसे कि दोष युक्त नेत्र में अञ्जन के लगाने से यथार्थ पदार्थ दीखते हैं ॥ २६ ॥

विषयों के स्मरण करनेवाले पुरुष का चित्त विषयों में लगा रहता है मेरे को स्मरण करनेवाले का चित्त मेरे में हीं लीन होजाता है ॥ २७ ॥

तिससे असत्पदार्थों को स्वप्न के तुल्य क्षणिक समुझ कर छोड़कर मेरी भावना से शुद्ध किये हुये मन को मेरे में स्थापन करो ॥ २८ ॥

आत्मज्ञानी पुरुष स्त्रियों के तथा स्त्री सङ्गवालों के संग को दूर से छोड़कर निर्भय एकांत स्थान में बैठकर स्थिर चित्त होकर मेरा चिंतन करै ॥ २९ ॥

पुरुष को जैसे स्त्रियों के संग से और उनके संगियों के संग से बन्धन और क्लेश होता है तैसा और किसीके संग से क्लेश नहीं होता है ॥ ३० ॥

उद्धव उवाच हे कमलनेत्र ! श्रीकृष्ण जी आप जैसे हो जिसप्रकार से स्थित हो मुमुक्षु पुरुष जिसप्रकार से आप का ध्यान करै मेरे करने के अर्थ उस ध्यान को आप मेरे से कहिये ॥ ३१ ॥

श्रीभगवान उवाच साधक पुरुष बरोबर आसन के ऊपर सुख पूर्वक बैठकर शरीर को सीधा रक्खे दोनों हाथों को गोद पर रखलेवै नासा के अग्रभाग में नेत्रों को करलेवै ॥ ३२ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

विपर्ययेण रेचकपूरककुम्भकक्रमेणापि यद्वा वामनाड्या पूरितं दक्षिणया त्यजेत्तया वा पूरितं वामयेत्त्वेवं विपर्ययेण यथोक्तं योगे—

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विपर्ययेण रेचकपूरककुम्भककमेण इह प्राणायामदशायां मनस आलम्बनम् ॥ ३३ ॥

प्रणवस्य स्वरूपमाह । ओङ्कारमिति घण्टानादवित्तन्तु अविच्छिन्नत्वे इत्यन्तौ प्राणेनोद्‌घाट्य तत्र हृदि पुनः स्वरमोङ्कारं सम्वेशयेत् पुनः पुनः प्राणायामेष्वनुसन्दध्यादित्यर्थः ॥ ३४ ॥

त्रिषवर्णं त्रिसन्ध्यं जितानिलो भवतीति शेषः ॥ ३५ ॥ ३६ ॥

तस्य मध्ये महानग्निरित्यग्निः प्रत्यक्षश्रुतिसिद्धः सूर्यसोमौ श्रुत्यन्तरसिद्धत्वादिह स्मृतौ ज्ञातव्यौ ॥ ३७ ॥

सुचारुभ्यः सुन्दरतरग्रीवा यस्य तत्सुचारुसुन्दरग्रीवम् ॥ ३८—४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च पूरकादिभिः प्राणस्य मार्गमिडापिङ्गलाख्यनाडीविशेषरन्ध्ररूपं प्राणवायुसञ्चारमार्गं शोधयेत् विपर्ययेण रेचकपूरककुम्भकक्रमेण वा शनकैरभ्यसेत्प्राणमार्गशोधनमिति शेषः जितप्राणस्य हि मनोजयः "प्राणबन्धनं हि सोम्य ! मन" इति श्रुतेः मनसि जित एव सति ध्यानं सुकरमतस्तस्य तदङ्गत्वं मार्गशोधन स्वप्रतिबन्धेन प्राणवायुसञ्चारार्थं मार्गो हि श्लेष्मादिभिरापूरितोऽवतिष्ठतेऽतस्तदर्थं शोधनम् स्वनासाग्रदर्शनत्वमपि चित्तस्थैर्यहेतुत्वाभिप्रायेणोक्तम् निर्जितेन्द्रिय इति यम उक्तः नियमस्त्वर्थतो द्रष्टव्यः ॥ ३३ ॥

प्राणस्येत्यादिना प्राणायाम उक्तः स च प्रणवाख्यमन्त्रानुसन्धानयुक्त एव कर्तव्य इति वक्तुं तदनुसन्धानप्रकारमेवाह । हृदीति । घण्टानादमिवाविच्छिन्नमविच्छिन्ननादमित्यर्थः । बिसोर्णावत्कमलनालतन्तुवत् हृदयावस्थितं तमिमं सूक्ष्मेण नादेन युक्तमित्यर्थः । तावदोङ्कारमेवंविधमनुसन्धायेत्यर्थः ततः प्राणेन प्राणाख्यवायुना उदीर्योत्थाप्य ततोऽस्थितं ध्यात्वेत्यर्थः । पुनस्तत्र हृदि स्वरमुदात्तस्वरविशिष्टमोङ्कारं सम्वेशयेत्सम्यग्विदध्यायेदित्यर्थः ॥ ३४ ॥

एवमित्थं प्रणवसंयुक्तं प्रणवानुसन्धानयुक्तं यथा भवति तथा त्रिषवणं त्रिसन्ध्यं दशकृत्वः दश वारान् प्राणसंयममभ्यसेदेव चेन्मासादर्वागेव जितोऽनिलः प्राणो येन तथा भूतो भवति ॥ ३५ ॥

एवं ध्यानाङ्गानि उक्त्वा अथाष्टममपि ध्येयस्थानध्यानप्रकारमाह । हृत्पुण्डरीकमिति सार्द्धेन । अन्तःस्थं शरीरान्तर्वर्ति हृदयकमलमूर्ध्वनालमधोमुखं मुकुलितं च कदलीपुष्पसङ्काशमनलक्ष्यतं तदूर्ध्वमुखमधोनालमुन्नितं विकसितमष्टपत्रं सकर्णिकं सकोशं च ध्यात्वा तत्र कर्णिकायां सूर्यसोमाग्नीन् तन्मण्डलान्युत्तरोत्तरं न्यस्येत् चिन्तयेदित्यर्थः । तस्य मध्ये महानग्निरित्यग्निः प्रत्यक्षश्रुतिसिद्धः सूर्यसोमौ तु श्रुत्यन्तरसिद्धत्वादिह स्मृताविस्त्याचार्याः ॥ ३६ ॥

अथ ध्येयमात्मनो रूपं वदन् ध्यानं विधत्ते । वह्निमध्य इत्यादिना । वह्निमण्डलमध्ये समैतदस्यमाणाविधं ध्यानमङ्गलं ध्यानस्य शुभाश्रयं रूपं स्मरेत् रूपं विशिनष्टि । प्रशान्तमिति । प्रशान्तं प्रसन्नं शोभनं मुखं यस्य तत् दीर्घाः सुन्दराश्चत्वारो भुजा यस्य तत् ॥ ३७ ॥

सुचारुभ्योऽपि सुन्दरा ग्रीवा यस्य शोभनौ कपोलौ यस्य शुचि शुभ्रं स्मितं मन्दहासो यस्य तत् ॥ ३८ ॥

समानयोः कर्णयोर्विन्यस्ते स्फुरन्ती मकराकारे कुण्डले यस्य तथा भूतं श्याममित्युक्तं किमिव श्याममित्यत आह । घनश्याममिति । हेमवत्पीतमम्बरं यस्य तत् श्रीवत्सश्रीमहालक्ष्म्योर्निकेतनमुरो यस्य वक्षिमस्तनाविति वा ॥ ३९ ॥

शङ्खादिभिर्विभूषितं नूपुरैर्विलसन्तौ पादौ यस्य ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विपर्ययेण रेचकादिक्रमेण ॥ ३३ ॥

अत्र प्राणशब्दो द्विरावर्तनीयः हृदि निरन्तरं प्राणेनोच्चार्यमाणमोङ्कारं घण्टानादवत् कर्णरमणीयं बिसोर्णावत् पद्मनालतन्तुवदविच्छिन्नं वायुद्वारा प्रेर्यमाणं प्राणशक्त्योदीर्य उच्चार्य तत्र स्वहृदि स्थिते प्राणे स्वरमुदात्तलक्षणं पुनरुच्चारितं यथा संवेशयेत् समीचीनं कुर्यादित्यन्वयः ऊर्णा भ्रूमध्यमावर्त्तं तन्तौ मेषादिलोमाश्चिति यादवः । पुनरप्रथमे प्रश्ने स्थावृत्तावधारणा इति ॥ ३४ ॥

प्रणवेन संयुक्तं प्राणसंयमं प्राणायामं मासादर्वाक् मासात्पूर्वमेवानिलो जितः प्राणप्रसादं प्राप्त इत्यर्थः—

उपास्य प्राणतोऽनुज्ञां हरिं स्थाप्य सेवकः ।
अनुज्ञानन्तरं मासाद्वशे प्राणो भविष्यति ॥
प्रसादमात्रं सम्प्रोक्तं प्राणविष्णोर्जयाभिधाति ।
नहि सर्वविजेतारौ विजेयौ केन चित्क्वचित् ॥
अपेक्षितं फलं तेन दीयते तज्जितं स्थितं ।
यथा जिता वसुमती यथा मोक्षपदं जितमिति ॥

प्रभञ्जनप्रमाणवचनादुक्तम् ॥ ३५ ॥

कथं स्थितं त्वामिति प्रश्नं परिहरति । हृत्पुण्डरीकेति ॥ ३६ ॥

वादृशमिति प्रश्नं परिहरति । वह्निमध्य इति ॥ ३७ ॥

यदात्मकमित्यस्य परिहारः प्रशान्तमित्यनेन सूचितः निर्दोषप्रकृष्टानन्दस्वभावमित्यर्थः ॥ ३८—४१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विपर्ययेणोत्स्यर्थकम् टीकायामिडयेत्यादिवाक्ये च तदनुरूपमेवावृत्य योजना कार्या ॥ ३३ ॥

हृदीति तैः तत्र द्वादशान्तं द्वादशाङ्गुलपर्यन्तम् अनाहतमित्यर्थः । बिन्दुशिरस्कमित्यत्र नादशिरस्कमित्येव पाठ्यं पौनरुक्त्यात् नादस्य तदङ्गत्वेनावश्यवाच्यत्वाच्च ॥ ३४—४३ ॥

---

द्युमत्किरीटकटककटिसूत्राङ्गदायुतम् ।
सर्वाङ्गसुन्दरं हृद्यं प्रसादसुमुखेक्षणम् ॥ ४१ ॥
सुकुमारमभिध्यायेत्सर्वाङ्गेषु मनो दधत् ।
इन्द्रियाणीन्द्रियार्थेभ्यो मनसाऽऽकृष्य तन्मनः ।
बुद्धया सारथिना धीरः प्रणयेन्मयि सर्वतः ॥ ४२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

विपर्ययेण रेचकपूरककुम्भकक्रमेण ॥ ३३ ॥

हृदीति मूलाधारादारभ्य अविच्छिन्नं सन्ततं घण्टानादतुल्य- मोङ्कारं हृदि स्थितं प्राणेनोदीर्य्य ऊर्ध्वं द्वादशाङ्गुलपर्य्यन्तम् नीत्वा कथं विसोर्णवत् कमलनालतन्तुवत् अथ पुनस्तत्र स्वरं नादं विन्दुं वा सम्वेशयेत् स्थिरीकुर्यात् ॥ ३४ ॥

मासादर्वाक् सामाद्धहिरेव ॥ ३५ ॥

हृत्पुण्डरीकं मन एव कमलं तच्च बहिरपि यातीति ध्यायेत्यति अन्तःस्थं देहान्तर्वर्त्ति ऊर्ध्वनालमधोमुखं मुकु- लितञ्च कदलीपुष्पसंकाशं यद्दृष्टि तद्विपरीतं ध्यायेदित्यर्थः स्वसेत् सञ्चिन्तयेत् ॥ ३६ ॥

ध्यानमङ्गलं ध्यानस्य शुभं विषयम् ॥ ३७ ॥

समम् अनुरूपावयवं प्रशान्तमनुपमम् ॥ ३८॥३९ ॥

श्रीवत्साभियौ वक्षोदक्षिणवामस्थे नितरां केतने असाधा- रणचिन्हे यस्य तत् आयुतं समन्तादलङ्कृतम् ॥ ४० ॥ ४१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्राणायाममाह । प्राणस्येति त्रिभिः वामनासारम्भक्रमेण पूरककुम्भकरेचकैः विपर्ययेणापि रेचकपूरककुम्भकक्रमेणापि वा दक्षनासारम्भक्रमेणापीत्यर्थः ॥ ३३ ॥

हृदि विसोर्णवत् कमलतन्तुवत् सूक्ष्मं घण्टानादमिव अवि- च्छिन्नं सन्ततमोङ्कारं प्राणेनोदीर्य्योङ्कारेऽत कृत्वा पुनः प्राणेनैव संयुक्तं स्वरं प्रणवम् तत्र प्राणायामकर्मणि सम्वेशयेत्संयो- जयेदित्यर्थः ॥ ३४ ॥

एवमुक्तप्रकारेण प्रणवः संयुक्तो येन मासादर्वाग- र्जितानिलो जितप्राणो भवति ॥ ३५ ॥

ध्येयपीठकमलपूर्वकं श्रीविग्रहध्यानमाह । हृत्पुण्डरीकमिति सार्द्धैस्त्रिभिः अन्तःस्थं स्वशरीरान्तर्गतम् ऊर्ध्वं विकासितम् ३६

पुण्डरीकस्य कर्णिकायां सूर्यादीन्संचिन्तयेत् एतद्रूप- मायां ध्यानमात्रेणैव मङ्गलं मत्स्वरूपमत् ध्यायेत् ॥ ३७ ॥

समं समानावयवं मया रमया सह वर्त्तमानं वा सुचारु अतिकमनीयम् ॥ ३८ ॥

समाने समानयोर्वा कर्णयोर्विन्यस्ते स्फुरन्ती मकराकारे कुण्डले यस्मिन् तत् वक्षसि दक्षिणभागे श्रीवत्सयुक्तं श्रियः शोभायाः निकेतनम् ॥ ३९ ॥ ४० ॥

---

भाषा टीका ।

फिर पूरक कुम्भक रेचकों को करके अथवा विपरीत से प्राण के मार्ग का शोधन करै जितेन्द्रिय होकर धीरे धीरे प्राणायाम का अभ्यास करै ॥ ३३ ॥

हृदय के मध्य में कमल के सूत्र सरीका घण्टा सरी के नाद का निरन्तर अनुसन्धान करके प्राण वायु से उस ओंकार को उठाकर फिर उस मे नाद बिन्दुस्वर का संयोग करै ॥३४॥

इसी प्रकार ओंकार के सहित सदा प्राणायाम का अभ्यास करै ऐसे त्रिकाल दश दश प्राणायाम के करने से एक महीने के अन्दर में पवन वश हो जावैगा ॥ ३५ ॥

फिर हृदय में कमल ध्यान करै जिसका कि ऊपर को नाल है नीचे को मुख है उसको ऊर्ध्व मुख करै उस में आठ पत्र हैं और कर्णिका भी हैं ॥ ३६ ॥

उसकी कर्णिका के मध्य मे बाहिर में सूर्य मण्डल फिर चन्द्र मण्डल फिर अग्नि इनको स्मरण करे उस अग्नि मण्डल के मध्य में ध्यान करने से मंगल दायक इस मेरे स्वरूप का स्मरण करै ॥ ३७ ॥

जिस रूप के सब अवयव समान हैं जो शान्त है जिस के सुन्दर मुख है जिस के चारु सुन्दर चार भुजा हैं जो अति सुन्दर है जिस के सुन्दर ग्रीवा है जिस के सुन्दर कपोल हैं जिसका सुन्दर मन्द हास है ॥ ३८ ॥

बराबर दोनों कानों में धारण किये प्रकाशमान मकराकृत कुंडल जिस में हैं सुवर्ण पीताम्बर है जो रूप मेघ सरीका श्याम है जिस में श्री वत्स का चिन्ह है जो लक्ष्मी का निवास स्थान है ॥ ३९ ॥

शंख चक्र गदा पद्म तथा वनमाला इन से भूषित है नूपुरों से चरण जिस के शोभित हैं जो कौस्तुभ मणि के प्रभा से युक्त है ऐसे रूप का ध्यान करै ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

द्युमद्भिः किरीटादिभिरा समन्तायुतमलंकृतम् प्रसादेन शोभनं मुखमीक्षणं च यस्मिंस्तत् ॥ ४१ ॥

सुकुमारमतिकोमलम् सर्वाङ्गेषु ध्यानमुपसंहरति । इन्द्रि- याणीति । प्रकर्षेण नयेत् सर्वतः सर्वाङ्गयुक्ते ॥ ४२ ॥

---

तत्सर्वव्यापकं चित्तमाकृष्यैकत्र धारयेत् ।
नान्यानि चिन्तयेद्भूयः सुस्मितं भावयेन्मुखम् ॥ ४३ ॥
तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत् ।
तच्च त्यक्त्वा मदारोहो न किंचिदपि चिन्तयेत् ॥ ४४ ॥
एवं समाहितमतिर्मामेवाऽऽत्मानमात्मनि ।
विचष्टे मयि सर्वात्मन् ज्योतिर्ज्योतिषि संयुतम् ॥ ४५ ॥
ध्यानेनेत्थं सुतीव्रेण युञ्जतो योगिनो मनः ।
संयास्यत्याशु निर्वाणं द्रव्यज्ञानक्रियाभ्रमः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्यामेकादशस्कन्धे
चतुर्दशोऽध्यायः ॥ १४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यावदेवमित्यस्योत्तरत्वेन सविशेषध्यानमुक्त्वा तदात्मकमित्यस्योत्तरतया शनैर्विशेषपरित्यागेन ध्यानमेव समाधिपर्यन्तमाह । तदिति त्रिभिः । एकत्राङ्गे अन्यान्यङ्गानि न चिन्तयेत् एकत्रेति यदुक्तं तदेवाङ्गं दर्शयति । सुस्मितमिति ॥ ४३ ॥

व्योम्नि सर्वकारणरूपे तच्च कारणत्वमपि त्यक्त्वा मदारोहो मयि शुद्धे ब्रह्मण्यारूढः सन् किञ्चिदपि ध्यातृध्येयविभागमपि न चिन्तयेत् ॥ ४४ ॥

मामेवाऽऽत्मनि विचष्टे आत्मानं च सर्वात्मनि मयि संयुतं विचष्टे ज्योतिर्ज्योतिषि संयुक्तमिवेत्यन्वयः ॥ ४५ ॥

एवंभूतसमाधिपर्यन्तध्यानस्य फलमाह । ध्यानेनेति । मनो युञ्जतः समादधतः द्रव्यज्ञानक्रियाभ्रमोऽधिभूताधिदैवाध्यात्मरूपो द्रष्टृदृश्यदर्शनरूपो वा भ्रमो निर्वाणं शान्तिं सम्यग्यास्यतीति ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

इन्द्रियार्थेभ्यः इन्द्रियाणि श्रोत्रादीनि । सारथिना सहायरूपया ॥ ४२ ॥

सर्वव्यापकं सर्वाङ्गाभिनिविष्टम् ॥ ४३ ॥

तत्रैकस्मिन्नङ्गे मुखे ॥ ४४ ॥

मां तत्पदार्थमेव चिद्रूपत्वेनानुगतमात्मनि त्वम्पदार्थे विचष्टे आत्मानं त्वंपदार्थं ज्योतिः किरणमिव ज्योतिषि किरणमालिनि संयुतं नित्याश्रितं विचष्टे ॥ ४५ ॥

एवम्भूतेति । एवम्भूतः परस्परं व्यतिहारेणैक्यभावनाभूतो यः समाधिस्तत्पर्यन्तस्य ध्यानस्य । द्रव्यादिपदानां यथासंख्यमर्थद्वयं ज्ञेयम् ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कुमत् द्युमित् ॥ ४१ ॥

बुद्ध्या भगवद्रूपमेव ध्येयं नान्यच्चिन्त्यमित्यध्यवसायेन सर्वव्यापकं शब्दादिसर्वविषयप्रवणम् एकत्र भगवद्विग्रहे अन्यानि रूपाणि विशेषतो मनोहारित्वादाह । सुस्मितमिति । आकृष्य विषयान्तरेभ्यः आकृष्य ॥ ४२ ॥ ४३ ॥

तत्र विग्रहे लब्धपदमित्यन्वयः व्योम्नि व्योमवदपरिच्छिन्ने दिव्यात्मस्वरूपे कं ब्रह्म खं ब्रह्मेति हि श्रुतिः मदारोहः मत्स्वरूपानुसन्धाननिष्ठः तच्च धारणामपि त्यक्त्वा न किञ्चिदपि चिन्तयेत् समाधौ ध्येयमेव पश्यति ध्यानक्रियामपि न जानाति कुतो विषयान्तरज्ञानमित्यर्थः ॥ ४४ ॥

समाधिदशायां परिशुद्धे जीवात्मन्यन्तरात्मतयावस्थित एव भगवाननुसंधेयः न तु केवल इत्याह । एवं समाहितेति ॥ ४५ ॥

ध्यानेनेति । द्रव्यज्ञानक्रियाभ्रमं द्रव्यं तमः ज्ञानं सत्त्वं क्रिया रजः तत्कृतभ्रमान्वितं मनः उक्तलक्षणं ध्यानेन निर्वाणं मुक्तिं विषयान्तरावगाहनाच्चमत्वं वा यास्यतीत्यर्थः ॥ ४६ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
चतुर्दशोऽध्यायः ॥ १४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

देहादिविषये ज्ञानेन्द्रियकर्मेन्द्रियविषये च भ्रमतीति भ्रमरूपं प्राकृतमतां निर्वाणं नाशम् आशु संपादयति यातीत्यन्वयः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ॥

तत्र स्वध्यपदमित्यादिकं मुमुक्षुध्यानत्वात् यद्वा तदनन्तरं ब्रह्मानुसन्धानं मायावृत्तिवशात्मनशावकोपेच्छया तद्रूपं च ततः श्रीभगवत्स्फूर्तिर्भवतीति ब्रह्मभूतः प्रसन्नात्मेतिवत् ॥ ४४ ॥

ज्योतिः किरणां ज्योतींषि किरणमालिनीव संयुतं नित्याभिन्नमित्यन्वयः ॥ ४५-४६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सान्द्रध्यानार्थं मनसः ऐकाग्र्यप्रकारमाह । इन्द्रियाणि । चक्षुरादीनि विषयेभ्यो रूपादिभ्यः सकाशात् मनसा आकृष्य मनसैव प्रणयेत् तन्मनः बुद्ध्या आकृष्य मयि सर्वतः सर्वाङ्गयुक्ते धारयेत् प्रकर्षेण नयेत् ॥ ४२ ॥

सर्वव्यापकं सर्वाङ्गेषु सञ्चरत् चित्तम् आकृष्य एकत्र एकस्मिन्नङ्गे तदाह । मुखमिति ॥ ४३ ॥

स्वध्यपदं ततोऽन्यत्रागच्छत्तत्रैव स्थिरीभूतमित्यर्थः । ततश्च तत्र मुखध्यान एव स्वध्यपदं मुखध्यानमजहदित्यर्थः । आकृष्य देहेन्द्रियादिभ्यः पृथक् कृत्य नतु ध्यानभक्तेरपि पृथक्कृत्येत्यर्थः । व्योम्नि आकाशे धारयेत् ततश्च तच्च चित्तमपि त्यक्त्वा मदारोहः मयि ब्रह्मणयारूढः सन् न किञ्चिदपि चिन्तयेत् किन्तु भक्तिकांक्षायुक्तो जीवो ब्रह्मैवानुभवेदिति भावः श्रीहंसरूपेण गुणाभिव्यक्तिभ्यो य उक्तस्तद्ध्यानमेवप्रकार इति केच भक्त्या हृते रतिमता न पृथगिदस्त्विति श्रीकपिलदेवोक्तेः कर्मज्ञानादित्यागस्येव ध्यानभक्तित्यागस्य तद्योगेच्छायाश्च निषिद्धत्वात् ॥ ४४ ॥

किन्तु ध्यानमपि भजेदित्याह । एवमिति । समाहिता समाधियुक्ता मतिर्यस्य सः मामेव ब्रह्म आत्मनि जीवात्मनि विचष्टे आत्मानं च सर्वात्मनि मयि संयुतं विचष्टे ज्योतिर्ज्योतिषि संयुतमिति ब्रह्मजीवयोरप्राकृतत्वात् ज्योतिर्ज्योतिः कथनं ज्ञापितम् ॥ ४५ ॥

एवम्भूतसमाधिपर्यन्तध्यानस्य फलमाह । ध्यानेनेति । युञ्जतः समादधतः द्रव्यज्ञानक्रियासु अधिभूताधिदैवाध्यात्मसु भ्रमः अध्यासरूपः निर्वाणं शान्तिं सम्यक् याति यास्यति ॥ ४६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

एकादशे सङ्गतः सतसङ्गतोऽभूच्चतुर्दशः ॥ १४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

युगाङ्कैः किरीटादिभिः आ समन्तात् युतं युक्तं प्रसादेन शोभनं मुखमीक्षणं च यस्मिन् तत् ॥ ४१ ॥

इन्द्रियार्थेभ्यः मनसाकृष्येति प्रत्याहारो दर्शितः क्रमोऽत्र न विवक्षितः प्रणयेन्मयि सर्वतः इत्यनेन धारणापि सूचिता ॥ ४२ ॥

एकत्र धारयेदित्युक्तं तदेवाह । सुस्मितमिति । मुखमिति चरणाद्युपलक्षणम् ॥ ४३ ॥

श्रीविग्रहध्यानमुक्त्वा स्वरूपध्यानं यदात्मकमित्यध्याहारमाह । तत्रेति । तत्र श्रीविग्रहैकदेशे सुस्मितमुखादौ स्वध्यपदं चित्तम् व्योम्नि व्योमवत्सूक्ष्मे स्वरूपे धारयेत् मदारोहः ध्यानेन मयि आरूढः तच्च स्वरूपध्यानमपि त्यक्त्वा किञ्चिदपि न चिन्तयेत् ध्येयदर्शनजन्यानन्दसंप्लुते निमग्ना भवेदित्यर्थः ॥ ४४ ॥

उपसंहरति । एवमिति द्वाभ्याम् । एवमुक्तप्रकारेण समाहितमतिः आत्मनि ध्यातरि मां ध्येयम् आत्मानं ध्यातारं सर्वात्मन् सर्वात्मनि ज्योतिर्ज्योतिषि सर्वावभासके मयि विचष्टे पश्यति ॥ ४५ ॥

द्रव्ये देहादौ अहमित्यादिरूपः ज्ञाने स्वपरयोः स्वरूपैकत्वादिरूपः क्रियायां कर्मणि स्वर्गादिपरत्वरूपश्च भ्रमः निर्वाणं लयं संपादयति ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

चतुर्दशाध्यायार्थप्रकाशः ॥ १४ ॥

---

भाषा टीका ।

प्रकाशमान किरीट कड़ा कोंधनी बाजूबंध इनों से सुंदर शोभित सब अंगों से सुंदर मनोहर कृपा करने को सुंदर मुख नेत्र युक्त का ध्यान करै ॥ ४१ ॥

ऐसे सुकुमार रूप को सब अंगों में मन को लगाकर ध्यान करै उस मूर्त्ति में तन्मय होकर सब विषयों से मन के द्वारा इंद्रियों को खैंच कर मनको उसी में लगा देवे ऐसा धीर पुरुष बुद्धि का साहाय लेकर चारों ओर से मेरे में मन को लगावै ॥ ४२ ॥

सब तरफ चले जाने वाला जो मन है तिसको खैंच कर एक ठिकाने मूर्त्ति में धारण करै फिर भी और अंगों की चिंता न करके केवल मंद हास युक्त भगवन्मुख की भावना करै ॥ ४३ ॥

उस मुखारविंद में जब चित्त स्थिर होजावे तब

भाषा टीका।

वहां से उस मन को खैंचकर आकाश सरी के निर्मल समस्त कल्याण गुण युक्त हेय गुण रहित परमात्मस्वरूप में धारण करै फिर उसको भी छोड़कर मेरे में दत्त चित्त होकर फिर कुछ भी चिन्तन नहीं करै यहां (तच्च त्यक्त्वा) इसके कहने से परमात्मा के स्वरूप के छोड़ने का अर्थ नहीं है क्योंकि आगे (मदारोहः) यह भी तो कहा है जिससे यहां ऐसा क्रम है कि पहिले से यम नियम आसन प्राणायाम प्रत्याहार ए छै अंग योग के कह आये हैं अब मुझके ध्यान करने में धारणा का कथन किया है उस धारणा का छोड़ना कहा है तिसके पीछे समाधि लगा कर हमारे स्वरूप के बिना दूसरे पदार्थों का स्मरण न करै यह कहने का तात्पर्य है नहीं तो भगवत्स्वरूप को छोड़देगा तो समाधि ही क्या होगा ॥ ४४ ॥

इस प्रकार से सावधान बुद्धि होजाने से अपने आत्मा के विषे इस परमात्मा को सर्वात्मरूप से देख लेता है जैसे कि अग्नि के कण और अग्नि का भेद है तिस प्रकार जीवात्मा परमात्मा प्रकाश रूपका भेद है ॥ ४५ ॥

इस प्रकार से अतिशय ध्यान के करने से योगिका मन युक्त होता है तब शीघ्र ही सत्व रजतम तीनों गुणों का भ्रम शांत होजाता है ॥ ४६ ॥

इति श्रीमद्भागवत एकादशस्कन्ध में चौदहवां अध्याय की

श्री वृन्दावनस्थ पं० लक्ष्मणाचार्यकृत

भाषा टीका समाप्त ॥ १४ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥

—:*:—

## अथ पञ्चदशोऽध्यायः ।

———:*:———

श्रीभगवानुवाच ।

जितेन्द्रियस्य युक्तस्य जितश्वासस्य योगिनः ।
मयि धारयतश्चेत उपतिष्ठन्ति सिद्धयः ॥ १ ॥

उद्धव उवाच ।

कया धारणया कास्वित्कथंस्वित्सिद्धिरच्युत ! ।
कति वा सिद्धयो ब्रूहि योगिनां सिद्धिदो भवान् ॥ २ ॥

श्रीभगवानुवाच ।

सिद्धयोऽष्टादश प्रोक्ता धारणायोगपारगैः ।
तासामष्टौ मत्प्रधाना दशैव गुणहेतवः ॥ ३ ॥
अणिमा महिमा मूर्तेर्लघिमा प्राप्तिरिन्द्रियैः ।
प्राकाम्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता ॥ ४ ॥
गुणेष्वसंगो वशिता यत्कामस्तदवस्यति ।
एता मे सिद्धयः सौम्य ! अष्टावौत्पत्तिका मताः ॥ ५ ॥
अनूर्मिमत्त्वं देहेऽस्मिन् दूरश्रवणदर्शनम् ।
मनोजवः कामरूपं परकायप्रवेशनम् ॥ ६ ॥
स्वच्छन्दमृत्युर्देवानां सह क्रीडानुदर्शनम् ।
यथासंकल्पसंसिद्धिराज्ञाप्रतिहता गतिः ॥ ७ ॥
त्रिकालज्ञत्वमद्वन्द्वं परचित्ताद्यभिज्ञता ।
अग्न्यर्काम्बुविषादीनां प्रतिष्टम्भोऽपराजयः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततः पञ्चदशे प्रोक्ताः सिद्धयो धारणानुगाः ।
श्रीविष्णुपदसम्प्राप्तावन्तरायतया मताः ॥

एवं मनो युञ्जतो योगिनोऽन्तराविर्भवन्त्यः सिद्धयोऽप्यन्तरायप्राया एवातस्ताः परिहृत्य परमेश्वरपर एव भवेदिति वक्तुं सिद्धीराह । जितेन्द्रियस्येति । युक्तस्य स्थिरचित्तस्य ॥ १ ॥

स्विदिति वितर्के काचित्किंनामा कथंस्वित्कीदृशी वा धारणा च कतीति प्रश्नान्तरे वाशब्दः त्वमेवैतज्जानासि नान्य इत्याशयेनाह । योगिनामिति ॥ २ ॥

धारणायोगपारगैरित्यनुषङ्गः । योगपारगैरिति । त्रिकालज्ञत्वादि-क्षुद्रसिद्धीरन्येऽपि जानन्तीति भावः । अहमेव प्रधानं मुख्यः स्वभावत आश्रयो यासां ताः मत्स्वरूपं प्राप्तेषु किंचिन्न्यूना भवन्तीति भावः । गुणहेतवः सत्त्वोत्कर्षहेतुकाः ॥ ३ ॥

ताः स्वरूपेणोपदिशति । अणिमेति सार्धैः पञ्चभिः । अणिमा महिमा लघिमा च मूर्तेर्देहस्य तिस्रः सिद्धयः प्राप्तिर्नाम सिद्धिः सर्वप्राणिनामिन्द्रियैः सह तत्तदधिष्ठातृदेवतारूपेण सम्बन्ध इत्यर्थः । श्रुतेषु पारलौकिकेषु दृष्टेषु दर्शनयोग्येष्वपि सर्वेषु भूविवरादिव्यवहितेष्वपि प्राकाम्यं भोगदर्शनसामर्थ्यं सिद्धिः शक्तीनां मायातदंशभूतानां प्रेरणम् तत्रेश्वरे मायाया अन्येषु तदंशानां प्रेरणमीशिता नामसिद्धिः ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विषयभोगेष्वसंगो वशिता सिद्धिः यत्कामो यद्यत्सुखं कामयते तत्तदवस्यति तस्य तस्य सीमानं प्राप्नोतीति अष्टमी सिद्धिः औत्पत्तिकाः स्वाभाविक्यो निरतिशयाश्चेत्यर्थः ॥ ५ ॥

गुणहेतुसिद्धीराह । अनूर्मिमत्त्वं क्षुत्पिपासादिराहित्यम् दूरे श्रवणं दर्शनं चेति द्वे सिद्धी मनोवेगेन देहस्य गतिः कामितरूपप्राप्तिः परकाये प्रवेशः ॥ ६ ॥

स्वेच्छामृत्युः अप्सरोभिः सह देवानां याः क्रीडास्तासामनुदर्शनं प्राप्तिः संकल्पानुरूपप्राप्तिः अप्रतिहता आज्ञा यस्य सा आज्ञा चेत्येता दश ॥ ७ ॥

क्षुद्रसिद्धीश्च पञ्चाऽऽह । त्रिकालज्ञत्वमिति । अद्वन्द्वं शीतोष्णाद्यनभिभवः अग्न्यादीनां स्तम्भनम् ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

ततश्चतुर्दशाध्यायानन्तरम् । धारणानुगाहनस्तद्धारणाऽनुवर्तिन्यः अन्तरायतया विघ्नतया । अन्तरायप्राया एव विघ्नप्राया एव कर्दमादिविधानात्तु, तावच्च योगगतिमिच्छतिरप्रमत्तो यावद्वह्मप्रजकथासु रतिं न कुर्यादित्यनुसारेण सिद्धिमत्त्वेऽपि नान्तराया इति प्रायग्रहणम् । मयि चेतो धारयत इति स्वामिदिव्यधारणा मे तत्र मुख्यो हेतुरिति सूचितं तथैवाग्रे व्याख्यास्यते ॥ १ ॥

कीदृशी किंलक्षणा ॥ २ ॥

धारणाश्चेति चकारोऽध्याहृतः । मत्प्रधाना इति प्रधानलक्षणाविशेषणेन विशेष्याश्रयोपाधिरिति: मुख्याश्रयत्वञ्च भगवत एव स्वरूपशक्त्यंशभूतानां तासां तत एवान्यत्रोपासकेष्वाविर्भावात् योगिषु तु तदाभास एवेति क्षयं तेषां सम्यक् भगवत्परत्वाभावात् यत्किञ्चित् तत्परत्वाभावे तु तदाभासोऽपि दुर्लभः एतावान् सांख्ययोगाभ्यामित्यादेः । अतएव किञ्चिन्न्यूना भवन्तीति व्याख्यातम् ॥ ३ ॥

स्वरूपेण लक्षणसहितसंज्ञामात्रेण । अणिमेति युग्मकम् । योगिदेहस्य शिलादावपि प्रवेशप्रयोजकोऽणुत्वलक्षणो गुणोऽणिमा । तथा तस्यैव सर्वव्यापनलक्षणो महिमा । येन सूर्यमरीचीरवलम्ब्य देहस्य सूर्यलोकप्राप्तिर्भवति स लघुत्वलक्षणो गुणो लघिमा भोगदर्शनसामर्थ्यं पारलौकिकेषु विषयेषु तथा भूधरादिरपिहितेषु द्रव्येषु यद्भोगदर्शनं भोगप्राप्तिस्तत्सामर्थ्यं प्राकाम्यमित्युच्यते । नच दर्शनशब्दस्य प्राप्तपर्यन्तकत्वं कथमिति वाच्यम् । स्वर्गिभिरपि सहक्रीडानुदर्शनमित्यत्रानुदर्शनं प्राप्तिरिति व्याख्यातत्वात् । परत्र सूत्रोपाधिकोपासनायास्तत्प्राप्तिसाधनत्वेन वक्ष्यमाणत्वाच्च । तस्मात् प्राकाम्यमित्येव पाठः प्राचीनः । वाचस्पतिप्रभृतिभिः प्राकाम्यमिच्छानभिघात इति व्याख्यानात् सिद्धिप्रसङ्गे सर्वत्र कोषादौ प्राकाम्यशब्द एव श्रूयते नतु प्राकाश्यमिति तस्माद्दर्शनसामर्थ्यमिति व्याख्यानस्य हृदयमबुद्ध्वा केनचित् प्राकाश्यमिति पाठः कल्पित इति गम्यते । तत्र मायातदंशभूतप्राकृतेषु मध्ये ॥ ४-५ ॥

अनूर्मिमत्त्वमिति सार्द्धश्लोकम् । कामितरूपप्राप्तिः कामितस्वाभीष्टस्य रूपस्य देवादिरूपस्य प्राप्तिः ॥ ६ ॥

सहेति । तद्दर्शनादप्सरोभिरित्यध्याहृतम् ॥ ७ ॥

संस्तम्भनमग्न्यादीनां दाहादिशक्तिप्रतिबन्धनम् ॥ ८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १-३ ॥

प्राप्तिः अङ्गुल्येन विदूरस्थस्पर्शादिः प्राकाम्यं धारणादिव्यापारेष्वन्येभ्यः प्रभूतव्यापारक्षमत्वम् ॥ ४ ॥

यत्कामस्तदवस्यति यत्र कामना तं देशं तदाभीमेव प्राप्य स्थितो भवति यद्वा दुष्प्रापाभिमतसाधको भवति ॥ ५ ॥

अनूर्मिमत्त्वं पाशितादिराहित्यम् अशनायाद्यतीतत्वं वा दूरश्रवणं सर्वभूतरुतज्ञानम् ॥ ६-९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न केवलमस्य समाधिपर्यन्तस्य परिनिष्पन्नध्यानयोगस्य निरवशेषदुष्कर्मक्रियाश्रमलयात्मकमुक्तिरेव फलमपि त्वणिमादिसिद्धयोऽपीत्याह । जितेन्द्रियस्येति । युक्तस्य स्थिरचित्तस्य तत्र हेतुः जितवाह्येन्द्रियस्य जितप्राणस्य च मय्येव चेतो धारयतो योगिनः सिद्धयः उपतिष्ठन्ति उपस्थिता भवन्ति केवलमुपतिष्ठन्ते न त्वन्तरायभूतासु तासु सक्तो भवेदित्यनेन सूच्यते तदेतदग्रे स्पष्टमेव वक्ष्यति । अन्तरायान् वदन्त्येतानिति ॥ १ ॥

धारयतः सिद्धय उपतिष्ठन्तीत्युक्तं तत्र धारणाप्रकारतत्प्रयुक्तसिद्ध्युपस्थितिविशेषबुभुत्सया पृच्छति । कयेति । कया कथंप्रकारयेति धारणाप्रकारप्रश्नः किंस्विदिति किंस्वित्किंकामाः कथं वा सिद्धिरिति सिद्धिप्रकारप्रश्नः कति वेति तत्संख्याप्रश्नः ब्रूहीत्यत्र हेतुत्वेन विशिनष्टि । सिद्धिद इति । तत्तद्धारणानुगुणसिद्धिरूपफलप्रदः अतस्तत्स्वरूपप्रकारज्ञस्त्वमेवेति भावः ॥ २ ॥

तावत्कति वेति प्रश्नस्योत्तरमाह । सिद्धय इति । धारणात्मको यो योगस्तस्य पारं आकल्पेन स्वरूपप्रकारादिकं गच्छन्ति जानन्तीति तथा तैः प्रोक्ताः तत्रावान्तरविभागमाह । तासामष्टादशसंख्यानां सिद्धीनां मध्येऽष्टौ सिद्धयः मत्प्रधानाः अहमेव प्रधानं मुख्यप्रयोजनभूतो यासां ताः मत्प्राप्त्येकमुख्यप्रयोजना इत्यर्थः । अन्यास्तु दश गुणहेतव एव विषयानुभवहेतव एव पुनः संसारहेतव इति यावत् ॥ ३ ॥

ताः स्वरूपकथनपूर्वकमुद्दिशति । अणिमेति सार्द्धैः पञ्चभिः । मूर्तेर्देहस्याणिमाऽणुत्वं सूक्ष्मत्वमिति यावत् महिमा महत्त्वं मूर्तेः सूक्ष्मतापरया सूक्ष्मजन्तुप्रवेशसामर्थ्यपर्यन्तता तथा महद्भ्योऽपि तस्या महत्त्वापत्तिर्महिमेत्यर्थः लघिमा लघुभ्योऽपि तस्या लघुत्वापत्तिः प्राप्तिर्नाम सिद्धिः सर्वप्राणिनामिन्द्रियैः सह तत्तदिन्द्रियसम्बन्धरूपा तत्तदिन्द्रियाधिष्ठातृदेवतारूपेण सम्बन्धरूपेति केचित् प्राकाम्यमिति श्रुतेषु पारलौकिकेषु दृष्टेषु

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दर्शनयोरन्यत्रापि इष्टाद्दृष्टार्थदर्शनावारेष्वप्येतयोऽतिशयितरूपं प्राकाम्यं पञ्चमी सिद्धिरित्यर्थः । ईशित्वं शक्तिप्रेरणं सर्वविषयकस्वपरसामर्थ्योपादानमीशित्वं नाम षष्ठी सिद्धिरित्यर्थः ॥ ४ ॥

विषयभोगेष्वसङ्गो वशित्वं सप्तमी सिद्धिरित्यर्थः । यत्काममवस्यति । यद्यत्र सुखे कामः अवच्छन्नसमानं तयं प्राप्नोति । समुद्रे विप्रुडिव तत्सुखगणपूर्णी सिद्धिरित्यर्थः । यद्यप्यनन्तरकारिका अणिमा महिमा चैव गरिमा लघिमेति गरिमा सिद्धिस्तृतीया सिद्धिरुक्ता भगवता तु गरिमाणमनुक्त्वा निरतिशयसुखमष्टमी सिद्धिरुक्ता तथापि वक्तुर्वैलक्षण्यादागमवक्तृक्रमेण ग्राह्यं हे सौम्य ! एता अष्टौ सिद्धयः औत्पत्तिकाः अप्राकृतदेवजननामिव सार्वात्म्यप्रसङ्गमसमिव निरपेक्षसमाधियोगपर्यन्तयोगस्य स्वभावतः सिद्धा इत्यर्थः । अनेनासां वक्ष्यमाणामुत्तरावान्तराणामिति सूचितं तेन तासामष्टौ मत्प्रधाना इत्युक्तमात्मप्राधान्य स्पष्टीकृतम् ॥ ५ ॥

अथ गुणहेतून् दश सिद्धीराह । अनूर्मिमत्त्वमिति त्रिभिः । अस्मिन् योगिनः शरीरेऽनूर्मिमत्त्वं वलीपलितादिराहित्यमशनायापिपासाद्यतीतत्वं वा दूरश्रवणं नाम दूरस्थमसंभूतशब्दश्रवणं दूरदर्शनं नाम दूरस्थवस्तुसाक्षात्कारः मनोजवः यत्र मनस्तत्र देहस्य वेगेन गतिः कामरूपं यथाभिमताकारापत्तिः परकायप्रवेशनं मृतराजादिशरीरानुप्रवेशः तत्र कामरूपता नाम तस्यैव शरीरस्याभिमताकारान्तरापत्तिः परकायप्रवेशनं नाम देहं त्यक्त्वेन्द्रियैः सह परशरीरानुप्रवेश इति विभागः ॥ ६ ॥

अप्सरोभिः सह देवानां याः क्रीडास्तासामनुदर्शनं प्राप्तिः यथासङ्कल्पसंसिद्धिः सङ्कल्पानुसारिणी सिद्धिः अप्रतिहता आज्ञा गतिश्चेति दश ॥ ७ ॥

त्रिकालज्ञत्वं भूतभविष्यद्वर्तमानकालगतवस्त्वभिज्ञत्वम् अद्वन्द्वम् शीतोष्णादिभिरनभिभवः परचित्तादीत्यादिशब्देन तत्प्रवृत्त्यादिग्रहः । अग्न्यादीनां स्तम्भनमपराजयः । कुतश्चिदपि पराजयराहित्यम् ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

परं ज्ञानफलममृतमेव न किन्त्वणिमादिसिद्धयश्चैहिकीत्येतदादिमस्मिन्नध्याये निरूपयति । तत्रादौ नापृष्टः कस्यचिद्ब्रूयादिति न्यायेन प्रश्नबीजमुत्थापयति । जितेन्द्रियस्येति ॥ १ ॥

सिद्धय इति शुश्रुवानुद्धवः कीदृश्या धारणया का का सिद्धिः ताश्च कति संख्याताः भवन्तीति पृच्छति । कथेति ॥ २ ॥

कतिनेति प्रश्नं परिहरति । सिद्धय इति । धारणायोगपारगैः धारणाख्ययोगपारङ्गतैरत्रोत्पन्नज्ञानस्यापि तत्तद्योगसिद्धये तत्तदभिमानिगततत्तद्गुणवदुपनिषेधानुस्मरणं धारणेत्युच्यते तस्मात् सिद्धीनां मुख्यतो ज्ञानफलत्वेऽपि धारणाफलत्वमुपचारोऽन्यथानुत्पन्नज्ञानस्यापि धारणाभ्यासेन तत्सिद्धिप्रसङ्ग इति असुराणां तु भगवत्सङ्कल्पसमाधाहंतव इति च तासामष्टादशसिद्धीनां मूलभूता अष्टौ सिद्धयो मय्येव प्रधाना मुख्या अन्येषु देवेषूपचरिता इति मत्प्रधानाः—

सर्वाधिका अणिमाद्याः विष्णोर्नान्यस्य कस्य चित् ।
स्वाभाविका विरिञ्चस्य तत्प्रसादात्पराधिका इति ॥

स्वामाऽष्टेविंशति वचनात् ता एव अष्टैव गुणभूतानामनूर्मिमत्त्वाद्यानामपि हेतवः—

निःसीमाष्टगुणानामासिद्धयोऽष्टादश स्मृताः ।
देवेष्वन्यत्र दृष्टानां सिद्धयोऽष्टैव सम्मताः ॥

इति ॥ ३ ॥

कान्ता अष्टेति तत्राह । अणिमेत्यादिना मूर्तेः स्वरूपस्याणिमादिसिद्धिः इन्द्रियैरन्येन्द्रियैर्विषयप्राप्तिः श्रुतेषु दृष्टेषु वस्तुषु प्राकाश्यशक्तिप्रेरणमैश्वर्यत्वं गुणेष्वसङ्ग एव वशित्वं यस्मिन् कामो यस्य स यत्कामस्तत्काममवाप्नोति इति यत्प्राकाम्यम्—

यादृशानन्दकामः स्यात्तादृशानन्दसम्भवः ।
भोगाभिन्नेव प्राकाम्यमणिमादेः पृथग्मत इति

वचनात् ॥ ४—५ ॥

इदानीमष्टादश सिद्धीरुद्दिशति । अनूर्मिमत्त्वमित्यादिना । अणिमामहिमालघिमाप्राप्तिप्राकाश्येशितावशिताप्राकाम्यमित्यष्टमहासिद्धयः अनूर्मिमत्त्वं दूरश्रवणम् दूरदर्शनं मनोजवः कामरूपं परकायप्रवेशनम्—

स्वच्छन्दमृत्युर्देवानां सह क्रीडानुदर्शनम् ।
यथासङ्कल्पसंसिद्धिराज्ञाप्रतिहता गतिः ॥

अद्वन्द्वं त्रिकालज्ञत्वं परचित्ताद्यभिज्ञता अग्निस्तम्भः अर्कस्तम्भः जलस्तम्भो विषादिस्तम्भः अम्बादिशब्देन छायाज्ञानसहितता- इनशापादिभिरप्रतिहतिर्गृहीता इयं सम्भूय सप्तदशी सिद्धिः अपराजय इत्यष्टादशसिद्धयः अणिमाद्यष्टसिद्धिभ्यो जाताः एवमुभये सम्भूय षड्विंशाः गरिम्णा सह सप्तविंशाः अथान्तर्भावभेदेनाष्टादशसिद्धयोऽष्टसिद्धय इति केषाञ्चित्पक्षः तथाहि । अनूर्मिमत्त्वस्य प्राकाम्यान्तर्गतत्वेन ते इमे एका दूरश्रवणदूरदर्शनत्रिकालज्ञत्वपरचित्ताद्यभिज्ञतानां प्राकाश्यान्तर्भावेन चतस्र एका कामरूपत्वस्याणिमामहिमालघिमान्तर्भावेनैका अग्निस्तम्भार्कस्तम्भजलस्तम्भविषस्तम्भछायाज्ञशापादिस्तम्भानामीशित्ववशित्वान्तर्भावेन पञ्च अपराजयोऽपि ईशित्वान्तर्गत इति षट् मनोजवकामरूपपरकायप्रवेशस्वच्छन्दमृत्यूनां देवैः सहितततत्क्रीडानुदर्शनाज्ञाप्रतिहतानां प्राप्त्यन्तर्भावेन षट् अत्र कामरूपत्वस्य द्विवारोक्तिः रूपभेदेन न विरुध्यते—

गरिम्णः सैव हेतुः स्यान्महिमा हेतुधारणात् ।
प्रायोऽष्टसिद्धिकथनेष्वतो न पृथगुच्यत इति ॥
प्राप्तिप्रकाश्ययोश्चापि धारणैकापि सम्भवेत् ।
अत एकत्वेन तावुक्त्वा गरिमाणं पृथक् क्वचित् इति ॥
मूलभूतास्तु सिद्धीनां देवानामष्टसिद्धयः ।
सर्वसिद्धिप्रधानास्तास्तज्जा अष्टादश स्मृताः ॥
अष्टस्वन्तर्गतास्तास्तु तदपेक्षतयाल्पका इति ।
अनूर्मिमत्त्वसिद्धिस्तु प्राकाम्यान्तर्गता स्मृता ।
दूरश्रुतिर्दूरदृष्टिस्त्रिकालज्ञत्वमेव च ॥
परचित्ताद्यभिज्ञानं प्राकाश्यान्तर्गतानि च ।
अणिमादित्रयान्तश्च कामरूपत्वमिष्यते ॥
अग्न्यर्काम्बुविषादीनां प्रतिष्टम्भो वशित्वगः ।

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सिद्धयो मूर्त्तेर्देहस्य इन्द्रियैः स्वेन्द्रियैः सर्व्वेन्द्रियप्रविष्टैरभीष्टसर्वविषयप्राप्तिर्यैरिति प्राप्तिर्नाम सिद्धिः श्रुतेषु दर्शनायोग्येषु दृष्टेषु दर्शनयोग्येष्वपि सर्वेषु भूविवरादिव्यवहितेष्वपि भोगदर्शनसामर्थ्यं प्राकाम्यं नामासिद्धिः शक्तिप्रेरणां जीवेषु स्वशक्तिस्तद्द्वारणामीशितानामसिद्धिः ॥ ४ ॥

गुणेष्वसंगः विषयभोगेऽप्यनासक्तिर्वशिता नाम सिद्धिः यत्कामः यद्यत् सुखं कामयते तत्तदवस्यति तस्य सीमानं प्राप्नोतीत्यष्टमी कामावसायिता नाम सिद्धिः औत्पत्तिकाः स्वाभाविक्यः निरतिशयाश्च ॥ ५ ॥

गुणनिबन्धना दश सिद्धीराह । अनूर्मिमत्त्वं क्षुत्पिपासादिषडूर्मिराहित्यं दूरश्रवणादर्शनमिति दूरदर्शनं दूरश्रवणमिति द्वे सिद्धी इत्येके एकैवेत्यन्ये मनोजवः मनोवेगेन देहस्य गतिः कामरूपं कामितरूपप्राप्तिः ॥ ६ ॥

अप्सरोभिः सह देवानां याः क्रीडास्तासामनुदर्शनं प्राप्तिः यथा सङ्कल्पसंसिद्धिः सङ्कल्पितपदार्थप्राप्तिः । इयं किञ्चत् कायिकादिप्रयत्नसापेक्षेति कामावसायितातो भेदः कल्पः अप्रतिहता आज्ञा गतिश्चेत्येकैव सिद्धिरित्येके । अप्रतिहताज्ञत्वमप्रतिहतगतित्वमिति द्वे सिद्धी इत्यपरे ॥ ७ ॥

क्षुद्रसिद्धीश्च पञ्चाह । त्रिकालज्ञत्वमिति । अद्वन्द्वं शीतोष्णाद्यनभिभवः अन्यादीनां स्तम्भनम् ॥ ८ ॥ ९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वासामपि सिद्धीनां साध्यसाधनयोः प्रभुः ।
श्रीकृष्ण आत्मनामात्मा वक्ति पञ्चदशे स्थितम् ॥

ध्यानेन मोक्षप्रतिबन्धकनानाभ्रमनिवृत्तिः पूर्वाध्यायान्ते उक्ता पञ्चदशे तु नानोपायसाध्याः सिद्धयोऽपि ध्यानेनैव लभ्यन्ते इत्येवं ध्यानमाहात्म्यमुच्यते । जितेन्द्रियस्येति ॥ १ ॥

काश्चित् किंनामा कथं वा कीदृशी सिद्धिः कया धारणाविशेषया जायते कति संख्याकाः वा सिद्धयः सन्ति हे अच्युत ! नित्यगुणस्वरूपविग्रह यतो भवानेव योगिनां सिद्धिदः अतो ब्रूहि ॥ २ ॥

सिद्धयो धारणाश्च योगपारगैरष्टादश प्रोक्ताः तासां मध्ये अष्टौ मत्प्रधानाः अहंप्रधानः स्वामी यासां ताः योगिषु तु मदिच्छयैव ताः अंशमात्रेण इति प्रकरणाज्ज्ञेयम गुणहेतवः गुणो योगगुणो हेतुः साधको यासां ताः साकल्येन पुरुषप्रयत्नसाध्याः दशैव ॥ ३ ॥

एताः स्वरूपतो दर्शयति । अणिमेति सार्द्धैः पञ्चभिः । मूर्त्तेः अणिमाणुत्वम् महिमा महत्त्वाप्तिः लघिमा लघुत्वाप्तिः प्राणिनामिन्द्रियैः सह प्राप्तिः सम्बन्धः श्रुतेषु आमुष्मिकेषु दृष्टेष्वैहिकेषु प्राकाम्यं दर्शनसामर्थ्यम् शक्तिप्रेरणां सर्वपदार्थसामर्थ्योद्बोधनमीशिता ईशित्वम् ॥ ४ ॥

गुणेष्वसङ्गो वशिता वशित्वं यत्कामः तदवस्यति तदवसानं प्राप्नोति इत्यवस्यतिः सिद्धिः एताः अष्टौ मे मदीया एव मनः औत्पत्तिकाः स्वाभाविक्यः निरतिशयाश्च साकल्येन पुरुषप्रयत्नसाध्या नेत्यर्थः । किंबहुना मत्प्रधानाः सिद्धयोऽपि यथासंभवं योगेनोपतिष्ठन्तीति तद्वर्णनाभिप्रायः ॥ ५ ॥

दश गुणहेतुसिद्धीराह । अनूर्मिमत्त्वमक्षुत्पिपासादिमत्त्वम् दूरे श्रवणं दर्शनं चेति सिद्धिद्वयम् ॥ ६ ॥

देवानां सह क्रीडायाः समाजलीलायाः अनुदर्शनमनुप्रविश्य दर्शनमित्यर्थः । यथासङ्कल्पसंसिद्धिः सङ्कल्पमनतिक्रम्य प्राप्तिः अप्रतिहता आसर्वतो गतिर्यस्याः सा आज्ञा ॥ ७ ॥

पञ्च क्षुद्रसिद्धीश्चाह । त्रिकालज्ञत्वमिति । अद्वन्द्वं शीतोष्णादिद्वन्द्वानभिभवः अग्न्यादीनां प्रतिष्टम्भः संस्तम्भनम् ॥ ८ ॥ ९ ॥

---

भाषा टीका ।

श्रीभगवानुवाच ॥

जो जितेन्द्रिय है योग में युक्त है श्वासका जीतनेवाला है और मेरे में चित्तको धारणा करता है उसके पास में सिद्धि बहुत उपस्थित होती हैं ॥ १ ॥

उद्धव उवाच

हे अच्युत ! आप योगियों के सिद्धि देनेवाले हो सो मेरेसे यह कहिये कि सिद्धि कितनी हैं कौन सिद्धि किस प्रकारकी है और किस धारणा से कौन सिद्धि प्राप्तहो सकती है ॥ २ ॥

श्रीभगवानुवाच

धारणाके योग के जाननेवाले पुरुषों ने सिद्धि अठारा प्रकारकी कहीहैं तिन में आठ तो मेरी स्वाभाविक सिद्धि हैं और दश तो गुणोंके हेतुसे होती हैं सो गुणों से संसार में लगाने वाली हैं ॥ ३ ॥

छोटा होजाना, बडा होजाना ये दो सिद्धि शरीरकी हैं तैसे हलका होजाना और इन्द्रियों से छिपीहुई वस्तुको जान जाना सुनी देखी सब वस्तुओं में इच्छा से व्यवहार करना शक्ति से सबकी प्रेरणा करदेना ये सिद्धि क्रमसे अणिमा महिमा, गरिमा, लघिमा, प्राप्ति, प्राकाम्य, ईशित्व इन नामों से कही जाती हैं ॥ ४ ॥

गुणो में आसक्ति नहीं होना इसका नाम वशिता सिद्धि है इनसे जो कामना करै सो होजाता है हे सौम्य ! उद्धवजी ये आठ हमारी स्वाभाविकी सिद्धि हैं ॥ ५ ॥

और इस शरीर में भूख प्यास नहीं लगना दूरकी बात को सुनलेना देखलेना मनसरीका वेग होजाना इच्छाका रूप धारणा करना दूसरेके शरीर में प्रवेश होजाना ॥ ६ ॥

इच्छा से मृत्युहोना देव अप्सरों के साथ क्रीडादेखना जैसा सङ्कल्प तैसी सिद्धि होजाना अपनी आज्ञा तथा गति कहीं नहीं रुकना ॥ ७ ॥

तीनों काळकी बातों को जानजाना शीतोष्णादिकोंका नहीं लगना दूसरेके मनकी बातको जानजाना अग्नि सूर्य जळ विष इनकी सक्तिका रोकना किसी से पराजय नहीं होना ॥ ८ ॥

एताश्चोद्देशतः प्रोक्ता योगधारणसिद्धयः ।
यया धारणया या स्याद्यथा वा स्यान्निबोध मे ॥ ९ ॥
भूतसूक्ष्मात्मनि मयि तन्मात्रं धारयेन्मनः ।
अणिमानमवाप्नोति तन्मात्रोपासको मम १०
महत्यात्मन् मयि परे यथासंस्थं मनो दधत् ।
महिमानमवाप्नोति भूतानां च पृथक् पृथक् ॥ ११ ॥
परमाणुमये चित्तं भूतानां मयि रञ्जयन् ।
कालसूक्ष्मार्थतां योगी लघिमानमवाप्नुयात् ॥ १२ ॥
धारयन्मय्यहंतत्त्वे मनो वैकारिकेऽखिलम् ।
सर्वेन्द्रियाणामात्मत्वं प्राप्तिं प्राप्नोति मन्मनाः ॥ १३ ॥
महत्यात्मनि यः सूत्रे धारयेन्मयि मानसम् ।
प्राकाश्यं पारमेष्ठ्यं मे विन्दतेऽव्यक्तजन्मनः ॥ १४ ॥
विष्णौ त्र्यधीश्वरे चित्तं धारयेत्कालविग्रहे ।
स ईशित्वमवाप्नोति क्षेत्रक्षेत्रज्ञचोदनाम् ॥ १५ ॥
नारायणे तुरीयाख्ये भगवच्छब्दशब्दिते ।
मनो मय्यादधद्योगी मद्धर्मा वशितामियात् ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्तद्धारणाभिः सह विशेषतो निरूपयति । ययेति यावत्समाप्ति ॥ ९ ॥

भूतसूक्ष्मोपाधौ मयि तन्मात्रं भूतसूक्ष्माकारम् स तन्मात्रोपासकः मम मदीयमणिमानम् ॥ १० ॥

ज्ञानशक्तिमहत्तत्त्वोपाधौ मयि यथासंस्थं महत्तत्त्वाकारम् भूतानां चेति । आकाशादिभूतोपाधौ च मयि मनो धारयंस्तत्तद्भूतमहिमानं प्राप्नोतीत्यर्थः ॥ ११ ॥

वाय्वादिभूतानां ये परमाणवस्तन्मये तदुपाधौ मयि चित्तं रञ्जयन् योगी कालसूक्ष्मार्थतां कालपरमाणूपाधिरूपतामिति लघुत्वविवरणम् तदुक्तम् स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम् इति ॥ १२ ॥

वैकारिकाहङ्कारोपाधौ मयि अखिलमेकाग्रम् आत्मत्वमधिष्ठातृत्वम् अत्र हेतुः मन्मनाः मयि मनो धारणप्रभावादेवं भवति नात्रातीव हेतुरनुसंधेय इतिभावः । एवं मद्धारणानुभावेन मद्योगबलमाश्रय इत्यादिषु द्रष्टव्यम् ॥ १३ ॥

क्रियाशक्तिप्रधानं महत्तत्त्वमेव सूत्रं तदुपाधौ मयि स मे पारमेष्ठ्यं सर्वोत्कृष्टं प्राकाश्यं विन्दते कथम्भूतस्य अव्यक्ताज्जन्म यस्य तस्य सूत्रस्य तदुपाधेर्ममेत्यर्थः ॥ १४ ॥

त्र्यधीश्वरे त्रिगुणमायानियन्तरि अत एव कालविग्रहे मायाकल्पितरूपेऽन्तर्यामिणि ईशित्वं विशिनष्टि । क्षेत्रज्ञानां जीवानां क्षेत्राणां तदुपाधीनां च चोदनां प्रेरणां न तु विश्वसृष्ट्यादिकर्तृत्वलक्षणमित्यर्थः ॥ १५ ॥

तुरीयाख्ये—

विराट् हिरण्यगर्भश्च कारणं चेत्युपाधयः ।
ईशस्य यत्त्रिभिर्हीनं तुरीयं तत्पदं विदुः ॥ इत्येवं लक्षणे
'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना' ॥

तद्वति भगवच्छब्दशब्दिते ॥ १६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

उद्देशतः लक्षणपूर्वकसंज्ञामात्रतः । यथेत्यर्धकम् । ययेति तत्साधनधारणाप्रश्नोत्तरम् । यथेति तत्प्रकारप्रश्नोत्तरम् ॥ ९ ॥

मदीयमणिमानमित्यणिम्नो मदीयत्वकीर्तनेन ज्ञेयं "जगद्व्यापारवर्जम्" इति न्यायेन सर्वथा तत्प्राप्त्यभावात् ॥ १० ॥

महिमानं तादृशज्ञानशक्त्यालङ्कृतमूर्तित्वम् । आकाशादिभूतोपाधौ आकाशादिशरीरके मयि तत्तद्भूतमहिमानं तत्तद्भूतशक्त्यालङ्कृतमूर्तित्वम् आकाशादिभूतोपधौ चेत्यध्याहारादिदमर्थं इत्युक्तम् ॥ ११ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

वाय्वादिभूतानां ये परमाणवः सारशून्यपरमसूक्ष्मांशाः तत्तदुपाधौ तदन्तर्यामिणि मयि चित्तं रञ्जयन् योगी लघिमानं सारशून्यत्वमवाप्नोति । कालपरमाणूपाधिरूपतामिति । कालस्य यः परमाणुरूपोपाधिः परमसूक्ष्मदेशावच्छिन्नाकाशतद्रूपताम् । तद्वदतिलघुतामिति सारशून्यत्वलक्षणस्य लघुत्वस्य विवरणम् । कालसूक्ष्मार्थतामिति पाठेऽप्यंशश्च उपाधिपरः आत्मेति पाठे तु आत्मा देह उपाधिरित्यर्थः ॥ १२ ॥

अत्र इन्द्रियाधिष्ठातृत्वप्राप्तौ । एवं भवति इन्द्रियाधिष्ठातृत्वं भवति । अत्र प्राप्तिलक्षणसिद्धौ मद्धारणादन्योऽपीव हेतुर्नानुसन्धेयः किन्तु मद्धारणैवात्र हेतुरित्यर्थः ॥ १३ ॥

प्राकाम्यमिच्छानिघातः दृष्टादृष्टभोगप्राप्तिसामर्थ्यम् ॥ १४ ॥

तदुपाधीनां जीवोपाधीनां शरीराणां नस्ति "जगद्व्यापारवर्जम्" इति न्यायात् ॥ १५ ॥

वशितां वशित्वं वशीकारवैराग्यम् ऐहिकामुष्मिकविषयजिहासाम् । तदुक्तं पातञ्जले । "दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्" इति । विराट् स्थूलोपाधिः हिरण्यगर्भः सूक्ष्मोपाधिः कारणमविद्या । ऐश्वर्यस्येति समग्रस्येति सर्वत्रान्वितम् । त्रिपात् पादत्रिभूम्यधिष्ठातृत्वमैश्वर्यम् । वीर्यं पराक्रमः यशः सत्कीर्तिः । श्रीः सौन्दर्यं सम्पत्तिश्च । ज्ञानं स्वविषयं परविषयं च । वैराग्यं प्राकृतभोगसम्बन्धाभावः इङ्गना संज्ञा ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तन्मात्रं तन्मात्रविषयं विषयान्तरनिवृत्तं तन्मात्रोपासकः मच्छरीरभूतभूतसूक्ष्मोपासकः ॥ १० ॥

भूतानां पृथिव्यादिस्थूलभूतानामात्मनि मयि स्वन्वयः ॥ ११ ॥

परमाणुमये भूतानां सूक्ष्मावयवव्यापिनं कालसूक्ष्मात्मनां सूक्ष्मकालावस्थितत्वं च ध्यायन्निति शेषः ॥ १२ ॥

इन्द्रियाणामात्मत्वमिन्द्रियाणि दूरदेशव्यापीनि भवन्ति न आधं तथाभावं तदेव प्राप्तिः ॥ १३ ॥

पारमेष्ठ्यं परमेष्ठिचिह्नमीश्वरेण सृष्ट्यादिनिर्वाहक इति ॥ १४-१६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्वरूपकथनगर्भमुद्देशं निगमयति । एताश्चेति । अथ ता एव सिद्धीः तत्साधनभूतधारणाभिः सह विशेषतो निरूपयितुम् तच्छुश्रूषामुत्पादयति । यथेत्यर्धेन ॥ ९ ॥

निरूपयति । भूतसूक्ष्मेत्यादिना उपासकस्य सामेवाभिध्यतः प्राक्तनेन । यः भूतसूक्ष्मात्मनि भूतसूक्ष्मशरीरके मयि । तन्मात्रं तावन्मात्रविषयं विषयान्तरनिवृत्तमित्यर्थः । तत् मनो धारयेत्सः मम तन्मात्रोपासकः मच्छरीरभूतसूक्ष्मतन्मात्रोपासकः अणिमानमवाप्नुयात् ॥ १० ॥

महतीति । महति महत्तत्त्वशरीरके परे आत्मन् परमात्मनि मयि यथासंख्यं विषयान्तरेभ्यो निवृत्तं सम्यक् स्थितं यथा स्यात्तथा मनो धारयन् भूतानामाकाशादीनां पृथक् पृथग्यथा स्व योगमहिमा तथा तं प्राप्नोतीत्यर्थः ॥ ११ ॥

परमाणुमय इति । भूतानां परमाणुमये सूक्ष्मावयवव्यापिनि मयि चित्तं रञ्जयन् आसञ्जयन् कालसूक्ष्मार्थतां स कालः परमाणुर्वै यो भुङ्क्ते परमाणुतामित्युक्तविधः सूक्ष्मकालः । स एवार्थो वस्तु तस्य भावस्तत्ता तां सूक्ष्मकालावस्थितत्वं च ध्यायन्निति शेषः लघिमानमवाप्नुयात् ॥ १२ ॥

धारयन्निति । वैकारिकेऽहंतत्त्वे । वैकारिकाहङ्कारशरीरके मत्सर्वाङ्गमेकाग्रं यथा तथा मनो धारयेत् एवं मत्स्वेव मनो यस्य स मन्मनाः सर्वेन्द्रियाणां सर्वेषां प्राणिनां यानीन्द्रियाणि तेषामात्मा स्वभावः तत्तद्विषयव्याप्तिस्वभावस्तस्य भावस्तत्त्वमधिष्ठातृत्वं वा प्राप्नोति ॥ १३ ॥

सूत्रे बहुमणीनां सूत्र इव स्वकार्याणां बहूनामाधारभूते महति महत्तत्त्वशरीरके मयि मानसं धारयेत् सः प्राकाश्यं इष्टार्थव्यापारोपयुक्तज्ञानातिशयं परमेष्ठिनो भावः पारमेष्ठ्यम् परमेष्ठिन इवान्येष्वप्यतिशयितव्यापारत्वमस्य इत्यर्थः । अव्यक्तात्प्रधानाज्जन्म यस्य तस्मान्महत्तत्त्वान्महिमविशेषणत्वेनोपात्तमानाद्वितोऽनिन्दते इत्यर्थः । केवलमहत्तत्त्वशरीरकभगवद्विषयधारणायाऽणिमत्वप्राप्तिरुक्ता अत्र तु सूत्रत्वाव्यक्तजन्मत्वादिगुणविशेषयुक्तमहत्तत्त्वशरीरकभगवद्विषयकधारणया प्राकाश्यलाभ उच्यते ततश्च गुणविशेषयोगतद्भावकृतधारणाभेदात्सिद्धिभेद इत्यवगन्तव्यम् ॥ १४ ॥

विष्णाविति विष्णौ सर्वव्यापके त्र्यधीश्वरे सृष्ट्यादिव्यापारत्रयनिर्वाहके कालशरीरके मयि यो मनः धारयेत् स ईशित्वमवाप्नोति ईश्वरत्वं विन्दतीति । चोदनेति । शक्तिप्रेरणमीशितेत्युक्तं सर्वेषां क्षेत्रज्ञानां देहानामात्मनां च चोदनं प्रेरणं सर्वविषयकसामर्थ्योपादनमित्यर्थः ॥ १५ ॥

नारायण इति तुरीयाख्ये जागरस्वप्नसुषुप्त्यवस्थात्रयरहिततुरीयशब्दवाच्ये परिशुद्धजीवात्मस्वरूपशरीरके नारायणे जीवानां प्राप्ये प्रापके आधारभूते च भगवच्छब्दवाच्ये ज्ञानशक्तिबलैश्वर्यवीर्यतेजोरूपषाड्गुण्यपूर्णे मयि मन आदधत् धारयन् योगी मद्धर्मी ममेव धर्मो यस्य सः वशितां गुणेष्वसङ्गरूपामवाप्नुयात् यथाहं गुणेष्वसङ्गोऽस्मि तथैव मयि मनो धारयन्नपि यातीत्यर्थः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मनोयोगेन मद्धारणाध्यानेन जायमानाः सिद्धयो योगधारणासिद्धयः सङ्ख्याविषयं प्रश्नं परिहृत्य इदानीं कया धारणया इत्यादिप्रश्नं परिहरति । यतीति ॥ ९ ॥

तत्र तावत्प्रथममणिमादिसिद्धिप्रापकं ध्यानप्रकारमाह । भूतसूक्ष्मेति । भूतसूक्ष्माणां पार्थिवादिपरमाणूनामात्मनि नियामके परमाणुषु स्थिते मयि तन्मात्रपरिमितत्वेन मनो धारयन् ध्यायन्नणिमानमेवाप्नोति । अनेन यद्यद्वस्तुपरिमितं रूपं स्वयमपि तत्तत्परिमितो भवतीत्युक्तं भवति—

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तन्मात्रावयवे सूक्ष्मे परमाण्वभिधानके ।
प्रत्येकमणुरूपं तु विष्णुं ध्यायन्नणुर्भवेदिति ॥

वचनात् प्रकारान्तरेणाणुत्वप्राप्तिप्रतिपत्तिमाह । तन्मात्रेति । मम तन्मात्रोपासकः तस्याकाशादिगुणस्य शब्दादेर्यत्सूक्ष्ममात्रं परिमाणं तत्परिमाणस्य मम स्वरूपस्योपासकोऽपि तत्परिमितरूपो भवतीत्यर्थः—

आकाशवत्सूक्ष्मतां यो व्यापित्वेनैव मन्यते ।
तन्मात्रव्यापिनं विष्णोस्तिन्नयस्स तथा भवेदिति ॥

वचनात् अणुत्वं च चक्षुर्दर्शनस्याणुत्वन्तु अणिमा सम्प्रकीर्तिता इत्युक्तविधं च ॥ १० ॥

व्याप्तस्य हरेरेकैकावयवध्यानं परिच्छिन्नवस्तुमहत्त्वकारणमाह । महतीति । महति व्याप्ते आत्मन् आत्मनि स्वामिनि मयि यथासंख्यं यथावस्तुपरिमाणं तथा स्थिते मनो दधत्पुरुषो महिमानं महत्त्वमवाप्नोति तदेव विविनक्ति । भूतानामिति । अस्मात् स्थूलतां प्राप्नुवानीत्यपेक्षायां तस्मात् स्थूलतां प्राप्नोति ततोऽन्यस्मान्महत्त्वमाप्नुवानीत्यपेक्षायां तस्मादिति पृथक् पृथक् भूतानां सकाशान्महत्त्वमाप्नोतीत्यर्थः । परे परमात्मनि सर्वनामसंज्ञाविकल्पात् नास्त्यस्य ॥ ११ ॥

लघिमासिद्धिप्राप्त्यर्थां प्रतिपत्तिमाह । परमाणुमय इति । कालसूक्ष्माणां कालपरमाणूनामात्मके आत्मनि व्यापके तत्स्वरूपं विशिनष्टि । परमाणुमये भूतानां सकाशादतिशयेनाणुस्वरूपे मयि चित्तं रञ्जयन् अनुरक्तं कुर्वन् तदेकानिष्ठत्वेन कुर्वन् लघिमानमाप्नोति ॥ १२ ॥

प्राप्तिसिद्ध्युपायिकां धारणामाह । धारयन्निति । वैकारिके महत्तत्त्वे व्याप्ते मयि मनो धारयन्नखिलं निवृत्तबाह्यवृत्ति यथा तथा धारयन् सर्वेन्द्रियाणामात्मत्वं स्वामित्वेन स्वेच्छानियतत्वमाप्नोति । ततः किमत्राह । प्राप्तिमिति । अन्येन्द्रियैर्विषयदर्शनादिलक्षणप्राप्तिमाप्नोति अन्येन्द्रियैर्दर्शनादि यथाङ्गुल्यग्रेणाङ्गस्पर्शनमपि गता । प्राप्तिरित्युच्यते सद्भिरिति च मन्मना इत्यनेनान्तराले अन्यमनस्कत्वं निवारयति ॥ १३ ॥

प्राकाम्यप्राप्तिप्रकारमुक्त्वा प्रकारान्तरं दर्शयति । महतीति । महति महत्तत्त्वे सूत्रे मुख्यप्राणे सात्मनि व्याप्ते मयि मानसं धारयन्नव्यक्तजन्मनः अव्यक्तस्यापि विकारलक्षणात्स्थूलत्वापादनकर्तुर्मे प्रसादात्पारमेष्ठ्य परमेष्ठिनो ब्रह्मणः प्रसादलब्धप्राणभारत्योः प्रसादाच्च सर्ववेदादिज्ञानप्रद्युपपादकं प्राकाम्यं विन्दते इत्यन्वयः—

प्राकाम्यं सर्ववेदादिज्ञानमेव विदो विदुः ।
सर्वे गुणास्तु प्राणस्य परमात्मप्रसादतः ॥
प्राणविष्णोः प्रसादेन भारत्याः सम्प्रकीर्तिताः ।
प्रसादात्तु त्रयाणां वाप्यानन्दादिः सदा गुणा इति ॥ १४ ॥

ईशित्वप्राप्तिप्रकारमाह । विष्णाविति । परमाणुत्वादिरूपः कालो विग्रहः प्रतिमा यस्य स कालविग्रहः तस्मिन्नधीश्वर अधीश्वरत्वगुणविशिष्टे अनेन यो यो गुण उपासकस्याभिलषितः तं तं गुणं तास्मन्नुपसंहृत्योपासनकर्तव्यमित्युक्तं भवति सर्वत्राधीश्वरत्वादौ विद्यमानेऽप्यस्यादि विष्णौ व्याप्ते मयि चित्तं धारयन्नीशित्वमवाप्नोति कीदृशं क्षेत्रं शरीरं स्थावरादिपदार्थसमूहो वा क्षेत्रज्ञा जीवा एषां चोदनं नियमनं यस्मात्तत् क्षेत्र-

शब्दोदनं भुविदितम्न्ते: प्राणाभिरुक्तकारकत्वं पूर्वशक्तेः कोटिगुणशक्त्युद्रेकस्येत्युक्तमनेन ॥ १५ ॥

वशितावाप्त्युपायमाह । नारायण इति । नारायणे तुर्याख्ये भगवच्छब्दशब्दिते ऐश्वर्यादिषड्गुणानुपसंहृत्य मयि मन आदधद्योगी वशितामियादवाप्नोति असङ्गत्वादिलक्षणो मम धर्मो यस्य स मद्धर्मः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यथेत्यर्थकम् ॥ ६ ॥

भूतसूक्ष्मादयो भेदपाठादिगताः स्वरूपशक्तिविलासाः ज्ञेयाः तासामणिमत्यादावुनयेषां भेदनावश्यकत्वापत्त्यात् तन्मात्रोपासको ममेति पुनरुक्तेस्तद्वधारणार्थत्वाच्च अणिमानमित्यत्रापि ममेत्यन्वयः किन्त्वणिमादिकामिदमंशेनैव ज्ञेयं "जगद्व्यापारवर्जम्" इति न्यायेन सर्वथा तद्धर्मप्राप्त्यसम्भवात् ॥ १० ॥

महिमानं तत्तच्छक्त्यवच्छिन्नमूर्तित्वमित्यर्थः भूतानां चेति महत्त्वधारणायामेतदपेक्षावान्तरफलं भवतीत्यभिप्रायात् ॥ ११ ॥

भूतानां मध्ये यः परमाणुर्मन्शून्याकाशपरमसूक्ष्मांशस्तदुपाधिके मयि चित्तं रञ्जयन् योगी लघिमानं भारशून्यत्वमवाप्नोति तमेव दर्शयति । कालस्य यः सूक्ष्मांशः परमाणुस्तस्यार्थे उपाधिः परमसूक्ष्मदेशावच्छिन्नाकाशः तद्रूपतां तद्वदतिलघुतामित्यर्थः । आत्मेति पाठे आत्मा देह उपाधिरित्यर्थः ॥ १२ ॥

वैकारिके शुद्धसत्त्वमये ॥ १३ ॥

अव्यक्तमिन्द्रियागम्यं जन्म प्रादुर्भावो यस्य तस्य मम यद्वा व्यक्तं जगति च प्रकटमित्यादि ॥ १४—१९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भूतसूक्ष्मात्मनि भूतसूक्ष्मोपाधौ मयि तन्मात्रं भूतसूक्ष्माकारं स तन्मात्रोपासकः मम मदीयमणिमानं परमाण्वाकारतां सिद्धिं यया शिलामपि प्रवेष्टुं शक्नोति ॥ १० ॥

महत्यात्मनि ज्ञानशक्तिमहत्तत्त्वोपाधौ मयि यथासंख्यं महत्तत्त्वाकारं महिमानं परममहदाकारतां यया सर्वमपि व्याप्तुं शक्नोति भूतानां चेति आकाशादिभूतोपाधौ च मयि मनो धारयन् तत्तद्रूपं महिमानं प्राप्नोतीत्यर्थः ॥ ११ ॥

परमाणुमये वाय्वादिभूतानां ये परमाणवस्तन्मये तदुपाधौ च मयि चित्तं रञ्जयन् कालसूक्ष्मार्थेना कालस्य यः सूक्ष्मांशः परमाणुः स एवार्थ उपाधिर्यस्य तस्मिन् तद्वदतिलघुत्वरूपं लघिमानं तद्युक्तः स कालः परमाणुर्यो भुङ्क्ते परमाणुतामिति ॥ १२ ॥

वैकारिकाहङ्कारोपाधौ मयि अखिलमेकाग्रं सर्वेन्द्रियाणां सर्वेषामिन्द्रियाणामधिष्ठातृत्वग्राहकाणामात्मत्वनात्मस्वरूपाणां भोक्तृत्वमित्यर्थः ॥ १३ ॥

क्रियाशक्तिप्रधानं महत्तत्त्वमेव सूत्रं तदुपाधौ मयि प्राका-

# निर्गुणे ब्रह्मणि मयि धारयन् विशदं मनः ।
# परमानन्दमाप्नोति यत्र कामोऽवसीयते ॥ १७ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्वमैश्वर्यं विन्दते तदेव किम्पारमेष्ठ्यं परमेष्ठिनो भावः पारमेष्ठ्य कारणभूतस्य मे अव्यक्तजन्मनः अव्यक्ताज्जन्म यस्य तस्य सूत्रस्य सूत्रोपाधेरित्यर्थः ॥ १४ ॥

अधीश्वरे त्रिगुणमायानियन्तरि कालविग्रहे कालः कालयिता द्रष्टा तत्स्वरूपे ईशित्वं विशति । क्षेत्रज्ञानां जीवानां क्षेत्राणां तदुपाधीनां च चोदनं प्रेरणं तत्र तत्र स्वशक्तिसञ्चारणमित्यर्थः ॥ १५ ॥

तुरीयाख्ये—

विराट् हिरण्यगर्भश्च कारणं चेत्युपाधयः ।
ईशस्य यस्त्रिभिर्हीनं तुरीयं तत्पदं विदुः

इत्येवं तुरीये आख्या यस्य तस्मिन्नित्यनेन भगवच्छब्दशब्दित इत्यनेन च नारायणस्य तुरीयत्वे षडैश्वर्यवत्त्वे च मनसा धार्यमाणे सत्येवेति भावः । अयमर्थः यस्य स्थूलं सूक्ष्मं चेति कार्यद्वयं नोपाधिः कारणं माया च नोपाधिः किन्तु तुर्यं सच्चिदानन्दवस्तु आख्या आख्यानस्य आकारो यस्य तस्मिन् नारायणे स च केन शब्देनोच्यते तत्राह । भगवच्छब्दशब्दित इति । वशितां गुणेष्वसङ्गम् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ तत्तद्धारणया तां तां सिद्धिं निरूपयत्यष्टभिः । भूतेति । भूतसूक्ष्मात्मनि भूतसूक्ष्मरूपे भूतसूक्ष्मावस्थापन्ने मयि तन्मात्रे तन्मात्रविषयं मनो धारयन् तन्मात्रोपासकः भूतसूक्ष्मरूपमात्रोपासकः मम भूतसूक्ष्मरूपिणः अणिमानं सूक्ष्मतामवाप्नोति भूतसूक्ष्मादिकार्यरूपेण स्वयमेवावस्थितस्तदैक्षत बहु स्यामित्यादिश्रुतेरतो मयीत्याद्यभेदः सूपपन्नः ॥ १० ॥

महत्यात्मनि मयि महत्तत्त्वरूपे मयि यथासंख्यं तन्मात्रविषयं मनो दधत् महिमानं तादृशरूपिणो मम महत्त्वमवाप्नोति परे इति विशेषणं कार्यरूपे परिच्छिन्नस्य कारणस्यैव हरेः कर्तव्यमिति ख्यापयति आकाशादिभूतानां च पृथक् पृथगुपासनया तत्तद्रूपिणो मे ममाप्नोतीत्यर्थः ॥ ११ ॥

भूतानां परमाणुमये सूक्ष्मावयवरूपे मयि मनो रञ्जयन् कालसूक्ष्मार्थतां कालस्य परमाणुरूपस्य ज्ञाप्यस्य सूक्ष्मो योऽर्थः ज्ञापकः सूर्यादिपरमाणुरूपस्तस्य भावकस्तत्तां लघिमानं स कालः परमाणुर्वै यो भुङ्क्ते परमाणुतामित्यत्र दर्शितामित्यर्थः ॥ १२ ॥

वैकारिके अहंतत्त्वे वैकारिकाहङ्काराख्यरूपापन्ने मयि अखिलं तदर्कादिविषयम् आत्मत्वमधिष्ठातृत्वम् ॥ १३ ॥

महत्तत्त्वरूपेणावस्थानेन सूत्रात्मनि सूत्रे तस्मिन् पारमेष्ठ्यं परमेष्ठितुल्यं प्राकाम्यम् अव्यक्ताज्जन्म यस्य तस्य सूत्रात्मनो मम ॥ १४ ॥

प्रथमचेतनेषु स्वशक्तिपरिणामेषु स्वकार्येषु स्वरूपेण धारणामुपदिश्य कालरूपेण धारणामुपदिशति । विष्णाविति । अधीश्वरत्वं विवृणोति । कालविग्रहे इति । भूतभविष्यद्वर्तमानव्यवहारनिर्वाहके कालमूर्तौ विष्णौ मयि क्षेत्राणां क्षेत्रज्ञानां देहदेहिनां चोदनं प्रेरणलक्षणामीशित्वमीशितामवाप्नोति ॥ १५ ॥

अथ त्वम्पदार्थे स्वरूपेण धारणामुपदिशति । नारायणे इति तुरीयाख्ये तुरीयं त्रिषु सन्ततमित्येवं नामके—

उत्पत्तिं प्रलयञ्चैव भूतानामगतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति

इति स्मृत्या भगवच्छब्देनापि शब्दिते मद्धर्मः मद्रूपेणैव मम धारणालक्षणो धर्मो यस्य सः वशितामियात् प्राप्नुयात् ॥ १६ ॥

---

भाषा टीका ।

यह योग धारणा की सिद्धि मैने तुमारे आगे नाम स कही हैं अब जिस धारणा मे जो सिद्धि जैसी होगी तिसको तुम मेरे से सुनो ॥ ९ ॥

भूत सूक्ष्मरूप मेरे में भूत तन्मात्रा के मन को स्थापन करै तो मेरे शरीररूप तन्मात्रा का उपासन करने वाला अणिमा सिद्धि को प्राप्त होता है ॥ १० ॥

महाभूत स्वरूप मेरे विषै यथा योग मन को स्थापन करने से अलग अलग सब भूतों की महिमा सिद्धि को प्राप्त होता है ॥ ११ ॥

सब भूतों के परमाणु स्वरूप मेरे में चित्त का रंजन करै तब योगी काल की सूक्ष्मता रूप लघिमा सिद्धि को प्राप्त होता है ॥ १२ ॥

मेरे मे मन को लगा कर सात्विक अहंतत्त्व रूप मेरे मे अच्छे प्रकार से मनको धारणा करै तो सब प्राणि मात्र के इन्द्रियों से भोगरूप प्राप्ति नामक सिद्धि को प्राप्त होता है ॥ १३ ॥

सूत्रसंज्ञक क्रियाप्रधान महत्तत्त्वरूप मेरे विषै मनको धारणा करै तो अव्यक्त जन्मा सूत्रात्मा के पारमेष्ठ्य सर्वोत्तम पदवी को प्राप्त होता है ॥ १४ ॥

कालस्वरूप उत्पत्त्यादितीनों के ईश विष्णु के विषै चित्त को धारणा करै तब वह योगी सब शरीर सब आत्माओं के प्रेरणा करनेकी सिद्धी को प्राप्त होता है ॥ १५ ॥

भगवत्शब्द से जो कहे जाते हैं ऐसे तुरीय संज्ञक नारायण मेरे विषै मनको धारणा करै तो मेरे धर्म वाला हो जाता है औ वशिता सिद्धि को प्राप्त होता है जिससे कि सब उसके वश मे रहते हैं ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यत्र परमानन्दरूपे सर्वोऽपि कामस्तदंशभूतोऽवसीयते समाप्यते तम् ॥ १७ ॥

श्वेतद्वीपपतौ चित्तं शुद्धे धर्ममये मयि ।
धारयन् श्वेततां याति षडूर्मिरहितो नरः ॥ १८ ॥
मय्याकाशात्मनि प्राणे मनसा घोषमुद्वहन् ।
तत्रोपलब्धा भूतानां हंसो वाचः शृणोत्यसौ ॥ १९ ॥
चक्षुस्त्वष्टरि संयोज्य त्वष्टारमपि चक्षुषि ।
मां तत्र मनसा ध्यायन् विश्वं पश्यति सूक्ष्मदृक् ॥ २० ॥
मनो[1] मयि सुसंयोज्य देहं तदनु वायुना ।
मद्धारणानुभावेन तत्राऽऽत्मा यत्र वै मनः ॥ २१ ॥
यदा मन उपादाय यद्यद्रूपं बुभूषति ।
तत्त[2]द्भवेन्मनोरूपं मद्योगबलमाश्रयः ॥ २२ ॥
परकायं विशन् सिद्ध आत्मानं तत्र भावयेत् ।
पिण्डं हित्वा विशेत्प्राणो वायुभूतः षडङ्घ्रिवत् ॥ २३ ॥
पार्ष्ण्याऽऽपीड्य गुदं प्राणं हृदुरःकण्ठमूर्धसु ।
आरोप्य ब्रह्मरन्ध्रेण ब्रह्म नीत्वोत्सृजेत्तनुम् ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अतः परं गुणहेतुकाः सिद्धीराह । शुद्धे सत्त्वात्मके श्वेततां शुद्धरूपताम् ॥ १८ ॥

आकाशात्मा यः प्राणः समष्टिरूपस्तद्रूपे मयि मनसा घोषं नादं चिन्तयन्नसौ हंसो जीवस्तत्राऽऽकाशे उपलब्धा नाना संकेतरूपा विचित्रा वाचः शृणोति यद्वा तत्राऽऽकाशे उपलब्धा अभिव्यक्ता या वाचस्ता दूरतः शृणोतीति ॥ १९ ॥

त्वष्टा आदित्यस्तस्मिन्नपरिच्छिन्ने चक्षुः संयोज्य तं च चक्षुषि संयोज्य तत्रोभयसंयोगे मां ध्यायन् विश्वं दूरतः पश्यति ॥ २० ॥

मनो देहं च तदनुवर्तिना वायुना सह मयि सुसंयोज्य या मद्धारणा क्रियते तस्याः प्रभावेण यत्र मनो याति तत्रात्मा देहो यातीत्यर्थः । यद्वा मनः कर्तृ आत्मानं वायुना सह देहं च मयि सुसंयोज्य यत्र याति तदनु तत्र देहो यातीति ॥ २१ ॥

मन उपादाय उपादानकारणं कृत्वा यद्यद्देवादिरूपं भवितुमिच्छति तत्तन्मनोरूपं मनसोऽभीष्टरूपं योगी भवेत् कुतः यतो मद्योगबलम् योऽहमचिन्त्यशक्तिर्नानाकारस्तस्मिन्मयि मनसो योगो धारणा तस्य बलं प्रभावः स एवाऽऽश्रयः कारणम् ॥ २२ ॥

यत्र प्रविविक्षति तत्राऽऽत्मानं चिन्तयेत् ततः पिण्डं स्वदेहं हित्वा प्राणः प्राणप्रधानलिङ्गशरीरोपाधिर्वायुभूतो बाह्यवायौ भूतः प्रविष्टस्तेन मार्गेणेत्यर्थः । षडङ्घ्रिवत् भृङ्गो यथा पुष्पात्पुष्पान्तरमनायासेन प्रविशति तद्वत् ॥ २३ ॥

पिण्डं हित्वेत्युक्तं तत्प्रकारं कथयन् स्वच्छन्दमृत्युमाह । पार्ष्ण्या पार्ष्णिना गुदं निरुध्य प्राणं प्राणोपाधिमात्मानम् ब्रह्मरन्ध्रेण मूर्धद्वारेण ब्रह्मेत्युपलक्षणं ब्रह्म वा अन्यद्वा अपेक्षितं स्थानं मनसा नीत्वा ॥ २४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

निर्गुणे निर्विशेषब्रह्मणि । परमानन्दं ब्रह्मसायुज्यम् । तदंशभूतः ब्रह्मानन्दांशभूतः । "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"ति श्रुतेः । एतच्च ब्रह्मसायुज्यमपि सिद्धिमध्ये एव गणितम् ॥ १७ ॥

अतः परम् अष्टसिद्ध्यनन्तरम् । प्राकृतधर्मोपार्जितयोगाभ्यासमात्रत्वाद्गुणहेतुका इत्युक्तम् । धर्ममये प्राकृतसत्त्वधर्माधिष्ठातरि । शुद्धस्वरूपतां रजस्तमोहीनसत्त्वात्मताम् ॥ १८ ॥

तद्रूपे समष्टिप्राणोपाधौ मयि तत्रस्था आकाशस्था भूतानां विचित्रा विविधा वाचः शृणोतीति प्रथमोऽर्थः । तत्राकाशे ज्ञातृत्व तद्गुणं शब्दमात्रेण प्राप्तसंयोग तत्रोपलब्धेत्यधिकम्-पृष्टार्थेऽन्वयतो यद्भाति । दूरत इति तु प्रकरणबलादध्याहृतम् ॥ १९ ॥

अपरिच्छिन्ने नेत्रगोलकपरिच्छेदशून्ये । उभयसंयोगे त्वष्टृचक्षुःसंयोगे तत्राधिष्ठातारं मां ध्यायन्निति स्वध्यानप्रभाव एव तत्र हेतुत्वेनोक्त इति ज्ञेयम् ॥ २० ॥

---

(१) मनो मनसि । (२) तत्तद्भजेत इति वि०

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी।

तदनुवर्तिना मनोऽनुकूलेन मयि मनआद्यधिष्ठातरि। मद्धारणा योगिकर्तृकं मद्धारणाम्। एवमेवाभिप्रेत्य मद्धारणा क्रियते इति व्याख्यानम्। तथाच क्त्वाप्रत्ययस्य समानकर्तृकत्वं निर्वहति। तथापि या मद्धारणा क्रियते इति कष्टकल्पनैवातो यद्वेति। आत्मानं मन एव कर्मभूतम् तदनु तस्य मनसः पश्चात् तत्र मनः प्राप्ते स्थाने देहोऽपि वेगेन यातीति मनोजवसिद्धिर्व्याख्याता ॥ २१ ॥

यद्यद्देवादिरूपं यद्यद्देवादिरूपकत्वेन भवितुं योगीच्छति तत्तच्छरीरात्मको योगी भवतीति कामरूपसिद्धिर्व्याख्याता ॥२२॥

तत्र प्रवेष्टुमिष्टे परकाये आत्मानं मदधिष्ठितप्राणाद्युपाधिमिति शेषः। ततस्तादृशधारणासामर्थ्यात् तेन वाय्वनुकूलेन ॥ २३ ॥

पार्ष्णिना पादपश्चाद्भागेन। गुदं निरुध्येति सम्पीड्य सीविनीं सूक्ष्ममित्याद्युक्तं मुक्तासनं सूचितम् ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

निर्गुणे गुणत्रयातीते ॥ १७—१८ ॥

भूतानां वाच इत्यन्वयः ॥ १९ ॥

त्वष्टा आदित्यः ॥ २० ॥

वायुना सह देहं मयि संयोजयेत्यन्वयः ॥ २१ ॥

मन उपादाय मयि निधायेत्यर्थः। मनोरूपं भवेत् अभिमतरूपवान् भवेत् ॥ २२ ॥ २३ ॥

उत्सृजेत्तनुमिति छन्दत इत्यर्थः ॥ २४-२५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

निर्गुणे इति। निर्गुणे हेयगुणरहिते ब्रह्मणि कल्याणगुणबृहत्त्वशालिनि मयि विशदं योगपरिशुद्धं मनो धारयन् परमानन्दं प्राप्नोति। यत्र परमानन्दे कामः सर्वोऽप्यवसीयते समाप्यते ॥ १७ ॥

अथ गुणाहतून् सिद्धीस्तत्साधनभूता धारणाश्च विशेषतो निरूपयति। श्वेतद्वीपपताविति। शुद्धे शुद्धसत्त्वात्मके धर्ममये धर्मनिर्वाहके नाप्रतिहतकत्वेन तत्प्रचुरत्वात्तत्र भवद् मयि चित्तं धारयन् षडूर्मिरहितः अशनायाद्यतीतः श्वेततां श्वेतरूपतां याति ॥ १८ ॥

मयीति। आकाशात्मन्याकाशवन्निर्मलः सर्वव्यापक आत्मा स्वरूपं यस्य तस्मिन्नपि प्राणशरीरके मयि मनसा घोषं प्राणघोषम् उद्वहन् चिन्तयन् तत्र धारणायां या उपलब्धिस्तयोपलक्षितः इत्यर्थः। उपलब्ध्या इति पाठे नातिविशेषणम् असौ हंसो योगी दूरस्थानामपि भूतानामुपलब्ध्याः अभिव्यक्ता वाचः शृणोतीति दूरश्रवणमुक्तम् ॥ १९ ॥

अथ साधारणां दूरदर्शनं निरूपयति। चक्षुरिति। त्वष्टा आदित्यः चक्षुरिन्द्रियाधिष्ठाता तस्मिन् चक्षुः संयोज्य तं च चक्षुषि संयोज्य संयुक्तं ध्यात्वा इत्यर्थः। तयोरुभयसंयोगे मां मनसा ध्यायन् सूक्ष्मदृग् यस्य तथाभूतः सन् विश्वं दूरस्थमपि सर्वं पश्यति ॥ २० ॥

अथ साधारणां मनोजवं निरूपयति। मन इति। मयि तावत्प्रथमतः तदनु ततः वायुना प्राणवायुना सह देहं च संयोज्य संयुक्तं ध्यात्वा यत्र मनस्तत्रात्मा देहोऽपि मद्धारणानुभावेन मद्विषयकधारणाप्रभावेण उपतिष्ठतीति शेषः ॥ २१ ॥

अथ कामरूपमाह। यदेति। मनः उपाधाय मयि निधायेत्यर्थः। यद्यद्देवादिरूपं बुभूषति भवितुमिच्छति। यादृग्रूपयुक्तो भवितुमिच्छतीत्यर्थः। तत्तन्मनोरूपं मनसोऽभीष्टरूपं भवेत्प्राप्नुयात् इति शेषः। तत्र हेतुर्मद्योगबलं मद्विषयकधारणात्मकयोगबलमाश्रितः ॥ २२ ॥

परकायमिति। परकायं परशरीरं विशन् प्रविविक्षन् तत्र परकाये आत्मानं धारयेत् स्थितं चिन्तयेत् ततः पिण्डं स्वदेहं हित्वा प्राणः प्राणसहितः प्राणशब्देनेन्द्रियाणि मुख्यप्राणश्चोच्यन्ते मनो सत्त्वधीर्योऽस्य वायुभूतो वायुसदृशो भूत्वा वायुर्यथा बाह्यो नासिकारन्ध्रेणान्तः प्रविशति तद्वत्प्रविश्य परकायमित्यनुषज्जते। षडङ्घ्रिर्भृङ्गः यथा पुष्पात्पुष्पान्तरमनायासेनैव प्रविशति तद्वत् ॥ २३ ॥

अथ स्वच्छन्दमृत्युमाह। पार्ष्ण्येति। पार्ष्ण्या पादमूलेन गुदं मूलाधारमापीड्य प्राणं क्रमेण हृदुरःकण्ठमूर्धस्वारोप्य ब्रह्मरन्ध्रेण प्रतिमशीर्षकपालरन्ध्रेण ब्रह्म नीत्वा प्रापय्य तं देहमुत्सृजेत् स्वच्छन्दतस्त्यजेत् ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

प्राकाम्यसिद्धिकारणमाह। निर्गुण इति। यत्र यस्मिन्नानन्दे प्राप्तकामोऽन्येच्छावसीयते समाप्तो भवति। कामः काम्यः कमनीयो विषयो नास्तीति वा यथेष्टानन्दसम्प्राप्तिः प्राकाम्यमिति कीर्त्यते इति च भगवतामस्मतात्कारणं यस्मात्तस्मात्तथा अत्र निर्गुणत्वब्रह्मत्वगुणावुपसंहार्यौ ॥ १७ ॥

अनूर्मिमत्त्वसमाधिमाह। श्वेतद्वीपपताविति। शुद्धे निर्दुःखे धर्ममये धर्मफलदातरि श्वेतद्वीपपतौ मयि मनो धारयन् श्वेततां याति निर्दुःखत्वमाप्नोतीति। शुद्धः श्वेतः सुखी श्वेतः श्वेतवर्णः कश्चिद्भवेत् इति। कथं निर्दुःखत्वमाप्तं स्यादित्यत्राह। षडिति। षडूर्मिराहित्यं विधूतमसर इत्यनेन अनूर्मिमत्त्वं दुःखस्याभावमात्रमुदाहृतमिति ॥ १८ ॥

दूरश्रवणसिद्ध्युपायमाह। मयीति। आकाशात्मनि आकाशव्यापिनि प्राणे स्थिते मयि मनसा घोषं शब्दमुद्वहन्नाकाशस्थप्राणस्थो हरिः शब्दप्रवर्तकस्तस्याधारश्चेति। ध्यायन् हंसः शरीराभिमानविधुरो जीवोऽसौ तत्राकाशे उपलब्धानामासमन्तात् स्थितानां भूतानां वाचः शृणोतीत्यन्वयः। त्यागात् पूर्वशरीराणां तद्यानां सम्बन्धेन च। जीवं हंस इति प्राहुस्तत्तत्तुत्वाद्धरिं परमित्यतो वा हंसो जीवः ॥ १९ ॥

दूरदर्शनोपायमाह। चक्षुरिति। त्वष्टा सूर्यश्चक्षुर्नियामक आभास्य तत्र चक्षुषि सूर्ये च स्थितं माम्—

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सहस्रयोजनान्तं तु दूरदर्शनमिष्यते ।
दूरश्रवणमप्येवं तस्मिन्नेव युगे स्थिते ॥

इति विशेषः ॥ २० ॥

मनोजवप्रापकधारणाप्रकारमाह । मन इति । यदा योगिनो मनोवेगेन गन्तुमिच्छा तदा मनो मनसि मनस्तत्त्वे वायुना संयोज्य तदनु मनोऽनु देहमपि वायुना संयोज्य मद्धारणानुभावेन मनस्तत्त्वान्तर्यामिणो मम ध्यानसामर्थ्येन यत्र मनस्तत्रात्मा शरीरमनुगच्छतीत्यन्वयः । स्वमनःसमवेगिता मनोजव इति प्रोक्त इति च ॥ २१ ॥

कामरूपावाप्त्युपायमाह । यदेति । यदा मन उपादाय स्थिरीकृत्य यद्यद्रूपं गजादिरूपं बुभूषति भवितुमिच्छति गजादिरूपः स्यामिति तदा गजाद्याकारस्य गजाद्यन्तर्यामिणो मम योगबलं ध्यानबलमाश्रितो योगी तत्तन्मनोगतगजादिरूपं भजेदित्यन्वयः—

गजादिरूपमाकाङ्क्षन् गजादिस्थितमीश्वरम् ।
ध्यायन् गजादिरूपः स्यात्पश्वाद्याकारता तथा ॥

कामरूपत्वमुद्दिष्टमिति च ॥ २२ ॥

परकायमित्यस्यायमर्थः परकायं विशन् सिद्ध आत्मानं स्वान्तःस्थं हरिं तत्र परकाये भावयेदेवं भावितः प्रकृष्टानन्दरूपत्वात्प्राणनकर्तृत्वाच्च प्राणः परमात्मा वायुभूतो वायौ भूतो वाय्वन्तर्गतः पिण्डं हित्वा इतरदृष्ट्या स्वदृष्ट्या न त्यक्त्वा योगिनं समादाय परकाये प्रविशेदित्यन्वयः स्वदेहात्यागतः परे परकायप्रवेशः स्यादिति । परकायस्थितं हरिं ध्यायन् विशेत् परे काये वाय्वन्तर्गतः पुमान् ॥

प्राणनामा हरिः प्रोक्तः तस्मिन्वायुः समाश्रितः ॥
वाय्वन्तर्गतो जीवो देहाद्देहं प्रयात्यतीति च ॥ २३ ॥

स्वच्छन्दमृत्युताप्रकारमाह । पाष्ण्येति । प्राणं हृदुरःकण्ठमूर्धस्वारोप्य षडाधारस्थितं विष्णुं ध्यायन् ब्रह्मरन्ध्रेण तनुमुत्सृजेत् प्राणं ब्रह्मणि नीत्वा प्राणनामानं बहिःस्थे ब्रह्मणि सम्मृतेत्यर्थः । युगादर्वाक्तनता स्मृता स्वच्छन्दमृत्युतेति—

षडाधारस्थितं विष्णुं ध्यायन्नायुः क्षयं विना ।
यदि मृत्युमभीप्सीत तथा प्राणोत्यसंशयम् ॥
प्राणस्थं प्राणनामानं बहिःस्थे ब्रह्मनामके ।,
विष्णुं विष्णावनुस्मृत्य विसृजेद्देहमञ्जसेति ॥
अनेकत्व हरेर्नीतिस्तद्वन्यस्य हरेः स्मृतिः ।
नहि नेयः क्वचित्क्वापि केनचित्स्ववशत्वतः ॥

इति च ॥ २४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

निर्गुणे ब्रह्मणीति । ब्रह्मसायुज्यमपि सिद्धिमध्ये गणितम् ॥१७॥

अतः परं प्राकृतधर्मोपाधिनयोपास्यमानस्य गुणहेतुत्वं स्वतः शुद्धे गुणातीते उपाधिनस्तु धर्ममये सात्त्विकधर्माधिष्ठातरि श्वेततां शुक्लतां रजस्तमोहीनसत्त्वात्मताम् ॥ १८ ॥

मयीतिते: तत्र विचित्रा वाच इत्यत्र भूतानामिवेतिशेषम्॥१९–२०॥

मन इति । तैः तत्र मयि मनोऽधिष्ठातरीति ज्ञेयम् ॥ २१–२२ ॥

आत्मानमिति । मदधिष्ठितप्राणाद्युपाधिमिति शेषः ॥२३–२४॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सर्वोऽपि कामो यत्रावसीयते समाप्यते तं परमानन्दम् ब्रह्मसायुज्यमिति सन्दर्भः ॥ १७ ॥

अतः पर गुणहेतुकाः श्वेततां शुक्लरूपतामित्यनूर्मिमत्त्वनाम्नी सिद्धिः ॥ १८ ॥

आकाशात्मा यः प्राणः समष्टिव्यष्टिरूपस्तद्रूपे मयि मनसा घोषं नादमुद्वहन् चिन्तयन् तत्राकाशे उपलब्धा अभिव्यक्ता या भूतानां वाक्ता दूरतः हंसः शुद्धः सन् शृणोतीति दूरश्रवणम् ॥ १९ ॥

त्वष्टा सूर्यस्तस्मिन् चक्षुः संयोज्य चक्षुषि च तं संयोज्य तत्रोभयसंयोगे मां ध्यायन् विश्वं सर्वं दूरस्थितमपि पश्यतीति दूरदर्शनम् ॥ २० ॥

मनो मयि संयोज्य तदनुवर्तिना वायुना सह देहं च संयोज्य या मद्धारणा क्रियते तस्याः प्रभावेण यत्र मनो याति तत्रैवात्मा स्थूलदेहोऽपि यातीति मनोजवः ॥ २१ ॥

मन उपादाय उपादानकारणं कृत्वा यत् यत् देवादिरूपम् भवितुमिच्छति तत्तत् मनोरूपं मनोऽभीष्टरूपं भवेत् तत्र मयि योगः योगधारणा तस्य बलं प्रभाव एवाश्रयः साधकमिति कामरूपम् ॥ २२ ॥

तत्र परकाये पिण्डं स्थूलदेहं हित्वा प्राणः प्राणप्रधानलिङ्गशरीरोपाधिः सन् वायुभूतः बाह्यवायुना भूतः प्राप्तः । विशेत् परकायं प्रविशेत् षडङ्घ्रिर्यथा पुष्पात् पुष्पान्तरं विशति मद्योगधारणाप्रभावेणेति योज्यमिति परकायप्रवेशः ॥ २३ ॥

पाष्णर्या पार्ष्णिना गुदं निरुद्ध्य प्राणं प्राणोपाधिमात्मानम् ब्रह्मरन्ध्रेण मूर्धद्वारेण ब्रह्म निर्विशेषं सविशेषं वा नीत्वा प्रापय्य तनुम् त्यजेदिति स्वच्छन्दमृत्युः ॥ २४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवमप्यनन्तेषु त्वत्पदार्थे च मच्छक्तिरूपे मम हृदयोपासनं कर्तव्यमित्युक्तमिदानीं तत्पदार्थधारणामाह । निर्गुणे इति । निर्गुणे प्राकृतगुणरहिते ब्रह्मणि बृहद्गुणशक्तिके विश्वहेतौ मयि विशदं गम्भीरं मनो धारयन् यत्र सर्वोऽपि कामः अवसीयते समाप्यते एवम्भूतपरमानन्दमेव प्राप्नोति ॥ १७ ॥

अथ गुणहेतुकाः सिद्धीराह । शुक्ले शुद्धसत्त्वे धर्ममये धर्मप्रधाने धर्मरक्षके इत्यर्थः । षडूर्मिरहितः क्षुधापिपासादिरहितः श्वेततां शुक्लतां याति ॥ १८ ॥

असौ ध्याता हंसः सारासारवित् आकाशवदात्मा स्वरूपं यस्य तस्मिन्समष्टिरूपे प्राणे मयि प्राणरूपकाशस्थं घोषम् नादमुद्वहन् ध्यायन् तत्राकाशे उपलब्धाः अभिव्यक्ताः वाचः शृणोति ॥ १९ ॥

विहरिष्यन् सुराक्रीडे मत्स्थं सत्त्वं विभावयेत् ।
विमानेनोपतिष्ठन्ति सत्त्ववृत्तीः[1] सुरस्त्रियः ॥ २५ ॥
यथा सङ्कल्पयेद्बुद्ध्या यदा वा मत्परः पुमान् ।
मयि सत्ये मनो युञ्जंस्तथा तत् समुपाश्नुते ॥ २६ ॥
यो वै मद्भावमापन्न ईशितुर्वशितुः पुमान् ।
कुतश्चिन्न विहन्येत तस्य चाऽऽज्ञा यथा मम ॥ २७ ॥
मद्भक्त्या शुद्धसत्त्वस्य योगिनो धारणाविदः ।
तस्य त्रैकालिकी बुद्धिर्जन्ममृत्यूपबृंहिता ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सूक्ष्मदृक् योगनिशितैकाग्रदृष्टिः त्वष्टरि आदित्ये चक्षुरिन्द्रियं चक्षुषि च त्वष्टारं तत्रोभयसंयोगे मां ध्यायन् विश्वं पश्यति ॥ २० ॥

प्रथमं मनः तदनु वायुना प्राणेन सह देहं च मयि सुष्ठु संयोज्य मद्धारणानुभावेन यत्र मनस्तत्र आत्मा मनोदेहवायुयोजनकर्ता यातीत्यर्थः । अनेनैव तत्र देहोऽपि यातीति ज्ञेयम् ॥ २१ ॥ २२ ॥

सिद्धः परकायं विशन् तत्र परकाये आत्मानं भावयेत् चिन्तयेत् तदनन्तरं पिण्डं निजकायं हित्वा प्राणः प्राणप्रधानलिङ्गशरीरः वायुभूतः सन् तस्मिन्विशेत् तत्र दृष्टान्तः षडङ्घ्रिवत् यथा भ्रमरः पुष्पं हित्वा पुष्पान्तरमनायासेन प्रविशति तद्वत् ॥ २३ ॥

पिण्डस्यागमसङ्गात्स्वच्छन्दमृत्युप्रकारमाह । पार्ष्णिना गुदम् मूलाधारम् आपीड्य निरुध्य प्राणं क्रमेण हृदुरःकण्ठमूर्धसु आरोप्य ब्रह्मरन्ध्रेण ब्रह्म नीत्वा आत्मानमिति शेषः ब्रह्मप्राप्तिमनसोद्दिश्येति यावत् तनुमुत्सृजेत् ॥ २४ ॥

भाषा टीका ।

निर्गुण प्राकृत गुण रहित मेरे में निर्मल मन का धारणा करे तो वह ऐसे परम आनन्द स्वरूप को जानजाता है कि जिसमें सब मनोरथ समाप्त होजावें ॥ १७ ॥

शुद्ध धर्म मय श्वेतद्वीप के पति मेरे विषे जो चित्तको धारणा करता है वह क्षुधा तृषा आदिक छै ऊर्मियों से रहित होकर शुद्ध श्वेतगुण को प्राप्त हो जाता है ॥ १८ ॥

आकाश आत्मारूप मेरे में मनसे शब्द को धारणा करे तो वह इस योगी दिव्यज्ञान को प्राप्त होकर सब भूतों की वाणियें को सुन लेता है ॥ १९ ॥

अपने नेत्र में सूर्यदेव को सूर्य में नेत्र को संयुक्त करके उहां पर मेरा मन से ध्यान करे तो सूक्ष्मदृष्टि वाला होकर सब संसार को देखता है ॥ २० ॥

मेरे में मनको संयुक्त करै तिसके पीछे वायु के सहित देह को भी संयुक्त करै तब मेरे स्वरूप की धारणा के प्रभाव से जहां मन को पंहुचावै तहीं देह भी चला जाता है ॥ २१ ॥

जिस वखत मन को धारण करके जो जो रूप होना चाहता है तब मेरे योग बल के प्रभाव से उसी उसी रूप को प्राप्त हो जाताहै ॥ २२ ॥

सिद्ध पुरुषको जब परके शरीर मे प्रवेश करना होवै तब अपने आत्मा का भावना करै फिर मेरे ध्यान करने से प्राण को साथ में लेकर शरीर को छोड कर वायुरूप हो कर अनायास से भ्रमर सरीका उस शरीर मे प्रविष्ट हो जाता है ॥ २३ ॥

जब इच्छा से देह छोडना हो तो पैरकी एडी से गुदा द्वार को रोक कर मुक्तासन लगा कर मूलाधार से प्राण को उठा कर नाभि हृदय कण्ठ आदि चक्रों में चढा कर फिर मस्तक के ब्रह्म रन्ध्र में प्राण को ले जाकर मूर्ध द्वार से निकाल कर शरीर को त्याग देवै ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मत्स्थं मन्मूर्तिरूपं शुद्धं सत्त्वं चिन्तयेत् तदा सत्त्ववृत्तयः सत्त्वांशभूताः ॥ २५ ॥

यदा वा अकालेऽपि यथा वेति पाठे यथा वा येन केनापि प्रकारेण बुद्ध्या संकल्पयेत्तथा यथा वाप्नोतीत्यर्थः । यद्वा यथा संकल्पयेद्यदा वा मत्परो मयि विश्वासवान् भवति तदा तदनुरूपं सर्वमाप्नोतीत्यर्थः किंकुर्वन् सत्ये सत्यसंकल्पे मयि मनो युञ्जन् ॥ २६ ॥

मदिति पृथक्पदम् ममेत्यर्थः । ईशितुः सर्वनियन्तुर्वशितुः स्वतन्त्रस्य मम भावं स्वभावं प्राप्तः एता गुणहेतवः ॥ २७ ॥

अतः परं तुद्राः धारणाविद् इति त्रिकालेश्वरधारणासूचिता त्रैकालिकी त्रिकालवस्तुविषया स्वजन्ममृत्युभ्यामुपबृंहिता तत्सहिता अनयैव परचित्ताद्यभिज्ञताऽपि व्याख्याता ॥ २८ ॥

(१) सत्त्ववृत्ति—इति वि० वीररा० पाठः ।

अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुः ।
मद्योगश्रान्तचित्तस्य यादसामुदकं [1]यथा ॥ २९ ॥
मद्विभूतीरभिध्यायन् श्रीवत्सास्त्रविभूषिताः ।
ध्वजातपत्रव्यजनैः[2] स भवेदपराजितः ॥ ३० ॥
[3]उपासकस्य मामेवं योगधारणया मुनेः[4] ।
सिद्धयः पूर्वकथिता उपतिष्ठन्त्यशेषतः ॥ ३१ ॥
जितेन्द्रियस्य दान्तस्य जितश्वासात्मनो मुनेः ।
मद्धारणां धारयतः का[5] सा सिद्धिः सुदुर्लभा ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अग्न्यादिसर्वोपघातशून्यो भगवानित्येवं भूतयोगमयम् तेनोऽभिभूयेत अत्र हेतुः मद्योगेति यादसामुदकं यथाऽभिघातकं न भवति तथा तस्य वपुषोऽग्न्यादय इत्यर्थः। अनयैवाद्भुताऽपि व्याख्याता ॥ २९ ॥

मद्विभूतीर्ममावतारान् ध्वजादिभिः सह ॥ ३० ॥

उपसंहरति। उपासकस्येति। एवं पृथग् धारणाभिः ॥ ३१ ॥

यद्वा किंनानाधारणाप्रयासेन एकयैव सर्वाः सिद्धयो भवन्तीत्याह। जितेन्द्रियस्येति। मद्धारणां नारायणे तुरीयाख्य इत्युक्ताम् या सुदुर्लभा स्यात्सा का न काचिदित्यर्थः॥ ३२ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

सुराक्रीडे देवोद्यानादौ । इति सहक्रीडानुदर्शनरूपा सिद्धिर्व्याख्याता ॥ २५ ॥

यद्वा वेत्यत्र यथावेति पाठे द्वितीययथाशब्दस्य यथा वदिति व्याख्यानं कृतम् । किन्तु तत् सङ्कल्पितं वस्तु तथा प्राप्नोतीत्यनेनैव यथावत्त्वमागतमतो यद्वेति । तदनुरूपं सङ्कल्पविश्वासानुरूपम् ॥ २६ ॥

स्वभावं नियन्तृत्वस्वातन्त्र्यलक्षणं ध्येयत्वेन प्राप्तः एतादृशः॥२७॥

अतः इशतः परं गुणाहेतुत्वेऽपि क्षुद्राः त्रिकालज्ञेति जगत् सृष्टिस्थितिप्रलयकालज्ञेश्वरधारणात्यर्थः । अनयैव त्रिकालज्ञसिद्ध्यैव ॥ २८ ॥

इत्येवम्भूतेति एवम्प्रकारको योगो धारणा तन्मयं नाभिघ्नं वपुः नैरग्न्यादिभिः। अत्र अनभिभवे । मद्योगेति मद्धारणेन शान्तमविकृतं चेतो यस्य तस्य । अनयैव अग्न्यादिस्तम्भनसिद्ध्यैव ॥ २९ ॥

ममावतारान् जगत्पराजयोपाधिकान् श्रीवत्सो भृगुलक्ष्म॥३०॥

धारणयेति आतावेकवचनम् । योगात्मिकाभिर्धारणाभिरित्यर्थः ॥ ३१ ॥

एवं तत्तत्सिद्ध्यर्थं पृथक् पृथक् धारणा उक्ता एकयैव धारणया सर्वाः सिद्धीरुक्तुं यद्वेति । मूल एव पक्षान्तरं न त्वर्थान्तरम् ॥ ३२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सत्ये सत्यसङ्कल्पे ॥ २६—२७—२८ ॥

यादसां प्रभृत्युदकेयथा न हन्यते तद्वदित्यर्थः ॥ २९ ॥

मद्विभूतीरिति । श्वेतद्वीपश्रीविष्णुलोकादिषु ध्वजातपत्रादिप्रसिद्धिसत्त्वहेतुत्वाभिप्रायेणात्र तदुक्तिः ॥ ३०—३३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

क्रीडानुदर्शनं निरूपयति । विहरिष्यन्निति । सुरा आक्रीडन्ति यस्मिंस्तत्सुराक्रीडं देवोद्यानादिकं तत्र विहरिष्यन्विहर्तुमिच्छुः सत्त्वं मूर्तिरूपं शुद्धसत्त्वं चिन्तयेत् तथाभूतं सत्त्ववृत्ति सत्त्वमच्छरीरभूतं शुद्धसत्त्वं वृत्तिर्मनो यस्य तं सुरस्त्रियो विमानेन सहोपतिष्ठन्ति तत्समीपे स्थिता भवन्तीत्यर्थः ॥ २५ ॥

यथा सङ्कल्पसंसिद्धिमाह । यदेति । यदा यस्मिन्काले यथा वेति पाठे येन केनापि प्रकारेण बुद्ध्या सङ्कल्पयेत्तदा मत्परः मदासक्तचित्तः सत्यं सत्यसङ्कल्पं मयि मनो युञ्जन् तत्सङ्कल्पानुरूपं यथा यथावत्तमुपाश्नुते प्राप्नोतीत्यर्थः ॥ २६ ॥

अप्रतिहताज्ञां गतिं चाह । य इति । मदिति पृथक्पदं व्यस्तत्वेन पञ्चमी ममेत्यर्थः । ईशितुः सर्वनियन्तुः वशितुश्च स्वतन्त्रस्य मम भावं वशित्वादिकं प्राप्तः स्वयमीशितृत्ववशित्वगुणयुक्तः मामपीशत्ववशित्वगुणयुक्तं ध्यायन्नित्यर्थः । स कुतश्चिदपि न विपद्येत न प्रतिहन्येत किन्तु तस्याज्ञा यथा ममाज्ञा न विपद्येत तद्वत्प्रतिहतिरहिता स्यादित्यर्थः । आज्ञाग्रहणं गतेरप्युपलक्षणं धारणास्वेकैव सङ्कल्पभेदाद्भाज्ञागतिरूपफलभेदः अत्रेदमवगन्तव्यं सिद्धयोऽष्टादशोत्युपक्रम्य तासामष्टौ मत्प्रधाना दशैव गुणहेतव इत्यवान्तरविभागमभिधायाणिमादीनष्टौ उद्दिश्य एता मे सिद्धयः

1 उदकैर्यथा इति वि० पाठः 2 व्यजनैः 3 उपासीनस्य वीरर० पाठ 4 पुनः इति वि० वीर० पाठः 5 कान्नु इति वि० वीर० पाठः।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सौम्य ! मत्तः परोऽपरात्मिका मता इति तदुक्तं नियमस्य अनूर्मिमत्त्वमित्यादिनोक्ताः सिद्धीरुद्दिश्य भूतसूक्ष्मात्मनीत्यादिना सिद्धयः सप्तदश प्रोक्ताः । तत्र सिद्धयोऽष्टादशेत्युपक्रमवशादाशागत्यादिषु विशिष्य धारणाविशेषाणामनुक्तेश्चाष्टादशयो यथासंकल्पसंसिद्धेरेव प्रपञ्चनमात्रा इति यद्वदाज्ञायामीशितृवंशितुरिति भावंगुणावुक्तौ तथाऽपराजयेऽपि मद्विभूतीरनुध्यायन्निति विभूतिध्यानात्मिका धारणा साधनतयोक्तेति न तयोस्तत्प्रपञ्चतारूपत्वं तथाप्युपक्रमोक्तसंकल्पोपलक्षणार्थं इति वा प्रधानसिद्धयोऽष्टादशेति वा भगवतोऽभिप्राय इत्यवगन्तव्यम् ॥ २७ ॥

त्रिकालज्ञत्वमाह । मद्भक्तयेति । शुद्धं सत्त्वमन्तःकरणं यस्यात एव धारणाविदो योगिनः ततो मद्भक्तिप्रभावादेव त्रैकालिकी कालत्रयगोचरवस्तुविषयकज्ञानरूपा तामेव विन्दतीति । जन्ममृत्यूपबृंहिता कालत्रयगोचरवस्तुजन्ममरणादिगोचरज्ञानघटिता सिद्धिः स्यादित्यर्थः । तत इत्यनेनैवाद्वन्द्वपरचित्ताद्यभिज्ञत्वयोरपि साधनोक्तिरिति ते पृथक् नोक्ते इति द्रष्टव्यम् ॥ २८ ॥

अग्न्यादिप्रतिष्टम्भमाह । अग्न्यादिभिरिति । योगमयं योगप्रचुरं मुनेर्वपुरग्न्यादिभिर्न हन्येत नाभिभूयेत किंतु त एव तेन प्रतिष्टब्धाः स्युरित्यर्थः । तत्र हेतुत्वेन मुनिं विशिनष्टि । मद्योगश्रान्तचित्तस्येति । अप्रतिहतौ दृष्टान्तः यादसां जलजन्तूनामुदकं यथा प्रति घातकं न भवति तद्वदित्यर्थः ॥ २९ ॥

अपराजयमाह । मद्विभूतीरिति । विभूतिशब्देनावताराः प्राधान्यतो नियाम्याश्च विवक्षिताः तत्रावतारैः सह विभूतीर्विशिनष्टि । श्रीवत्साद्यस्त्रविभूषिता इति । ध्वजातपत्रव्यजनशब्दाद्द्वन्द्वान्तान्मत्वर्थीयोऽर्श आद्यच् ध्वजादिभिर्युक्ता इत्यर्थः । विभूतित्वं नाम नियाम्यत्वं तथाहि भगवद्भिर्भाष्यकारैः—

हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठेत्यत्र भाषितम् ॥

हे कुरुश्रेष्ठ ! मदीयाः कल्याणीर्विभूतीः प्राधान्यतस्ते कथयिष्यामि प्राधान्यशब्देनोत्कर्षो विवक्षितः पुरोधसां च मुख्यं मामिति वक्ष्यते जगत्युत्कृष्टाः काश्चन विभूतीर्वक्ष्यामि विस्तरेण वक्तुं श्रोतुं च न शक्यते तासामानन्त्यात् विभूतित्वं नाम नियाम्यत्वं सर्वेषां भूतानां बुद्ध्यादयः पृथग्विधा भावा मत्त एव भवन्तीत्युक्त्वा एतां विभूतिं योगं च मम यो वेत्ति तत्त्वत इति प्रतिपादनात् तथा तत्र योगशब्दनिर्दिष्टं स्रष्टृत्वादिकं विभूतिशब्दनिर्दिष्टं तत्प्रवर्तयितृत्वमिति पुनश्च—

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥

इति ह्युक्तं तत्र सर्वभूतानां प्रवर्तनरूपं नियमनमात्मतयाध्यवस्यामीति अनया श्रीसूक्त्या जगत्युत्कृष्टा ये पदार्था भगवन्नियाम्यास्ते तद्विभूतय इत्युक्तं भवति उत्कृष्टानामपकृष्टानां च सर्वेषां तन्नियाम्यत्वेऽप्युत्कृष्टेष्वेव तद्विभूतित्वव्यवहार इति भगवद्भाष्यकाराभिप्रायः अनेन सर्वेषामपीश्वरनियाम्यत्वाविशेषात्कथं केषांचिदेव विभूतित्वमित्याशङ्का निरस्ता एतां विभूतिं योगं चेत्यत्राप्येवमभाषि विभूतिरैश्वर्यम् एतां सर्वस्य मदायत्तोत्पत्तिस्थितिप्रवृत्तिरूपां विभूतिं मम हेयप्रत्यनीककल्याणगुणाख्ययोगं च यस्तत्त्वतो वेत्तीति । नन्वेवमप्यवतारायां स्वामिन्नत्वेन तत्र नियन्तृनियाम्यभावात्कथं तेषामपि केषांचिद्विभूतिषु पाठ इति चेत्तत्रापि तैरेव रामः शस्त्रभृतामहं वृष्णीनां वासुदेवोऽस्मीति इत्यत्रद्वयेऽप्युत्तरमभाषि शस्त्रभृतां रामोऽहं न तु मेऽसौ विभूतिरित्यर्थः । अर्थान्तराभावात् आदित्यादेः क्षेत्रज्ञत्वेनावस्थितस्य भगवतः शरीरतया धर्मत्वमिति शस्त्रभृत्त्वमात्रस्यात्र तत्स्थानीयत्वमिति वृष्णीनां वसुदेवसूनुरहमेव न तत्र विभूतिरर्थान्तराभावादेव वसुदेवसूनुत्वाद्याकारेणाविर्भावानुगुणं यत्सामर्थ्यं तन्मदविनाभूतमित्यर्थं इति च सिद्धम् ॥ ३० ॥

साधारणाः सिद्धीर्निरूप्याथ परिनिष्पन्नयोगस्य ताः सर्वाः सुलभा इत्याह द्वाभ्याम् । उपासीनस्येति । एवं पूर्वोक्तविधया योगधारणया मामुपासीनस्य योगिनः सर्वाः पूर्वमुद्दिष्टाः सिद्धयः उपतिष्ठन्ति ॥ ३१ ॥

जितेन्द्रियस्येति । जितान्तःकरणस्य दान्तस्य जितबाह्येन्द्रियस्य जितप्राणस्य च मद्धारणां धारयत इति पाके पचतीतिवन्निर्देशः कुर्वत इत्यर्थः । कानु सिद्धिः सुदुर्लभा सर्वापि सुलभैव इत्यर्थः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

देवसहितक्रीडानुदर्शनसिद्धिधारणामाह । विहरिष्यन्निति । सुराणामाक्रीडे विहरिष्यन् विहर्तुकामो योगी सत्त्वगुणं मत्स्थं विभावयेत् सुरस्त्रियो विमानेन सत्त्ववृत्तिमुपतिष्ठन्ति समीपमाप्नुवन्तीत्यन्वयः । देवैः क्रीडा चन्द्रादिभिर्विनेति ॥ २५ ॥

यथा सङ्कल्पसिद्धिध्यानमाह । यथेति । सत्ये मत्यसङ्कल्पे [illegible] मनो युञ्जानो यथा यथा मत्परः पुमान् बुद्ध्या सङ्कल्प[illegible] यं यं गुणमुपसंहृत्य मामुपास्ते तथा तथा तत्काममाप्नोतीत्यन्वयः यथा सङ्कल्पसिद्धिश्चाप्यन्नपानसुतादिषु इति ॥ २६ ॥

आज्ञाप्रतिहतिसिद्धिधारणाप्रकारं दर्शयति । य इति । यः पुमानीशितुः वशितुः मदिति पञ्चमी षष्ठ्यर्थे मम भावं भावनामीशितृत्ववशितृत्वादिगुणोपसंहारलक्षणां भक्तिं सेवामापन्नः तस्य पुंसः आज्ञा कुतश्चन हेतोर्न विहन्येत चशब्द एवार्थे यथा ममाज्ञा वै प्रसिद्धम्—

आज्ञाप्रतिहतिश्चैशादर्थागस्त्यविघातनम् ।
विना महातपस्विभ्यः शापप्रतिहतिः स्मृता ॥

इत्येतच्चशब्दतो वा गृहीतं भावो मनश्च भक्तिश्च कश्चिदभ्यास इष्यत इति च ॥ २७ ॥

त्रिकालज्ञत्वसिद्धिसाधनमाह । मद्भक्त्येति । धारणाविदः त्रिकालान्तर्यामिहरिस्मरणप्रकारज्ञस्य जन्ममृत्यूपबृंहिता सृष्टिसंहारविषयिणी बुद्धिर्ज्ञानं स्यादिति शेषः वेदादिकं विना प्रोक्ता त्रिकालज्ञानिता बुधैरिति त्रिकालप्रेरकं विष्णुं ध्यातुः कालत्रयज्ञतेति च ॥ २८ ॥

अग्न्यादिस्तम्भोपायितप्रकारमाह । अग्न्यादिभिरिति । योगमयं ध्यानमयम् एतदेव विशिनष्टि । मद्योगश्रान्तचित्तस्येति । अग्न्यादीनामौष्ण्यादिशक्तिस्तम्भकाह्लादकत्वादिगुणाधायकस्य मम ध्यानं मद्योगः तेन श्रान्तं तदेकनिष्ठं चित्तं यस्य स तथा तस्य अग्न्यादिशक्तिसंस्तम्भ इष्यत इति यादसां वपुः अग्न्यादिषु हरिं ध्यात्वा स्वप्रतिस्तम्भको भवेदिति च ॥ २९ ॥

॥श्रीः॥

# विज्ञापनम् ।

## परपक्षगिरिवज्रः ।

अयि विचक्षणाः ! महातिप्रहर्षसमयो वरीवर्त्ति अहं तत्रभवद्भ्यो भवद्भ्योऽद्भुतग्रन्थं निवेदयामि यद्ग्रन्थान्वेषणं सहस्राणि विद्वां ऽकार्षुः चातकास्स्वातिबिन्दुमिव, तथाऽपि तद्ग्रन्थदर्शनमपि दुर्लभमभूत् तत्पाठनविचारणादि तु दूरापास्तमेवासीत् तमेव ग्रन्थमा नन्देन समस्तभारतवासिनां श्रीमतां सेवायां निवेदयामि यं ग्रन्थं 'शारीरकहार्दसंचयनामकं' कथयन्ति, केचित्तु परपक्षगिरिवज्राख अध्यासगिरिवज्राख्यमपि ब्रुवन्ति, एष ग्रन्थो वेदान्तिनां शिरोधार्यो ऽस्ति, किञ्च सर्वमनीषिणामेतत्सुविदितमस्ति, निगमकल्पतरो र मयफलं वेदान्तशास्त्रमेवास्ति, यद्यपि वेदान्तशास्त्रस्य स्वस्वसिद्धान्तानामनुकूला अनेके ग्रन्था मुद्रितास्सन्ति, तथापीदृशः को ग्रन्थोऽद्यावधि न मुद्रितोऽस्ति, यद्ग्रन्थावलोकनेनैव सर्वं सिद्धान्तज्ञानं भवति, एतस्मिन् ग्रन्थेऽद्भुतचमत्कारोऽस्ति एतदवलोकने सर्वशास्त्रसिद्धान्तज्ञानपूर्वकमत्यासत्यविचारो भवति, अन्यवेदान्तग्रन्थस्यावलोकनावश्यकता ऽपि न भवति, सर्वेषां विपश्चितामेत ग्रन्थावलोकनेन पूर्णानन्दावाप्तिर्भवति, एष च ग्रन्थो विदुषां पठनपाठनादिषु प्रचारणीयो ऽस्ति, किम्बहुलेखनेनैतद्ग्रन्थावलोकयितृ ब्रह्मानन्दास्वादसमुद्भूतरोमाञ्चित इव भवति, एतद्ग्रन्थावलोकनेन विद्वन्मण्डल्यां वाग्विलासे सङ्कोचः कदा ऽपि न भवति, एष च ग्र निम्नलिखितप्रकरणैर्विभूषितो ऽस्ति, एतस्मिन् ग्रन्थे चत्वारो ऽध्यायास्सन्ति, तत्र प्रथमे ऽध्याये विषयसम्बन्धगिरिनिपात-प्रयोजना कारिगिरिनिपात-अध्यासगिर्यधिष्ठानगिरिनिपातादीनि महाविस्तीर्णानि त्रयोविंशतिः प्रकरणानि सन्ति. द्वितीये ऽध्याये जिज्ञास्य पपत्तिगिरिनिपातादीनि दश प्रकरणानि सन्ति तृतीयेऽध्याये साङ्ख्यगिरिनिपातादीनि दश प्रकरणानि सन्ति चतुर्थेऽध्याये जीवन्मु गिरिनिपातो ऽस्ति, एवं चत्वारिंशत्प्रकरणैर्विभूषितो ऽष्टसहस्रश्लोकसंख्यापरिमितो ग्रन्थोऽस्तीति विज्ञेयं मनीषिभिरिति शम ॥ मूल रौप्यकत्रयम् ३)

पूज्यपादश्रीविश्वनाथचक्रवर्तिविरचितम्

## श्रीकृष्णभावनामृतम् ।

श्रीकृष्णभावनामृतम् श्रीकृष्णचन्द्राष्टकालिकसेवानिरूपणपरम् क्रीडानिकुञ्जस्थ किङ्करीशुकशारिकादीनां परस्परसेवानिरूप एव सुस्पष्टपद्यात्मकं महाकाव्यम् तदनुगुणामिताक्षरसंस्कृतटीकया समलङ्कृतम्, मूल्यम् रौप्यकत्रयम् ३)

श्रीमद्भागवत सम्बन्धीय नियमावली ।

इतने बड़े परिश्रम और अध्यवसाय पर भी सर्व साधारण के सुलभ संग्रह के अर्थ पूर्ण ग्रंथ का मूल्य केवल ५०) रूप अग्रिम रखा गया है राजा महाराजा और सम्मान्य मनष्यों के सन्मान रक्षा के लिये उनसे केवल १००) रु० मात्र लिया जायगा डा महसूल २४) रु० अलग पड़ेगा यह भागवत दशटीकोपेत है ।

असमर्थ ग्राहकों से चार किस्तों में रुपया लिया जायगा—प्रथम किस्त १२) रु० पञ्चमस्कन्ध तक, द्वितीय किस्त १२) षष्ठस्क तक, तृतीय किस्त १२) सप्तमस्कन्ध तक, चतुर्थ किस्त १४) दशमस्कन्ध तक और डाक महसूल २४) द्वादशस्कन्ध तक लियाजाय

## श्रीजगन्नाथवल्लभनाटकम् ।

इह खलु जगति विद्यास्थानेष्वनेकेषु पठनीयेषु सत्स्वपि शास्त्रान्तराणां सहिष्णुवेद्यत्वेन सूक्ष्ममतिवेद्यत्वेन च तेष्वल्पजनादरणीयेषु आ इदानीं स्थूलमतिवेद्यत्वेन सुकुमारवेद्यत्वेन च काव्यनाटकादीन्येव मनुष्याणां समययापनयोग्यानि तानि च भगवद्विषयकाणि चेद्भुक्ति मुक्तिप्रदानीति विचार्येदानीं जगन्नाथवल्लभनाटकं सर्वजनसौकर्याय प्रकाशितम् इदं च नाटकं श्रीराधाकृष्णरहस्यक्रीडा विषये प्रतापरु नृपतितोषार्थं रामानन्दराय कविना निर्मितम्. अत्र च पञ्चाङ्काः सन्ति तत्र प्रथमेऽङ्के नटनटीसूत्रधाराणां संवादपूर्वकप्रस्तावनानन्तरं श्री राधाकृष्णमदनिका विदूषकाणां वृत्तान्तैः पूर्वरागनिरूपणम् १ द्वितीये च भावपरीक्षादिनिरूपणम् २ तृतीये भावप्रकाशादिनिरूपणम् ३ चतु श्रीराधिकाया अभिसरणक्रियानिरूपणम् ४ पञ्चमे श्रीराधाकृष्णयोः सङ्गमनिरूपणम् अस्मिन् ग्रन्थे मध्ये मध्ये गीतगोविन्दवद्गा पद्यान्यपि विद्यन्ते मूल्यम् द्वादश आणकाः ॥।)

## वेदान्तसारः ।

भो भो वेदवेदान्तसकलशास्त्रपारावारपारङ्गताः !

विदितमेव भवतां श्रीमद्वैयासिकसूत्रार्थयाथात्म्यप्रतिपादको बालानामपि वेदान्तार्थसंशयनिवारणाकरो वेदान्तसारो नाम ग्रन्थ रत्नम्. स चेदानीं सुललितैर्नागराक्षरैरपूर्वतया मुद्रितस्सन् जाज्वलीति. अतस्सर्वेऽप्येतद्ग्रन्थरत्नं केवलेन सार्धरूपकमूल्येन गृहीत्व मनोमयानन्दं प्राप्नुवन्तु भवन्तः । अस्य मू० १॥)

**श्रीश्रीनिम्बार्कदर्शनम्**--भो भोः परिनिष्ठितविद्वांसः ! अस्मन्मुद्रणालये अद्यावधि काप्यमुद्रितम् भाष्यत्रयोपेतम् 'श्रीमन्निम्बार्क दर्शनम्' समग्रं सम्मुद्रितं तत्त्वपतां महयोत्सुकैः पञ्चमुद्रा-मूल्येन, पश्चादधिकेन लभ्येत इति विदन्तु मू० ५)

श्रीमद्भागवत कार्यालय—श्रीदेवकीनन्दन प्रेस
श्रीवृन्दावन—जिला मथुरा । } विद्वज्जन कृपाकाङ्क्षी—श्रीनित्यस्वरूप ब्रह्मचारी ।

एकादशस्कन्धः    श्री १०८ श्रीराधारमणो जयति ।    द्वितीयखण्डः

महर्षिप्रवर श्रीकृष्णद्वैपायनप्रणीतम्

# श्रीमद्भागवतम् ।

श्रीश्रीपादश्रीधरस्वामिकृतभावार्थदीपिका, श्रीराधारमणदास गोस्वामिविरचिता दीपिका दीपिनी, टिप्पणी, श्रीमद्विशिष्टाद्वैतसिद्धान्तनिर्वाहकाचार्यप्रवर श्रीसुदर्शनसूरिकृतशुकपक्षीयसमाख्याटीका, तदनुगामिश्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका, श्रीमन्मध्वसिद्धान्तधुरन्धर श्रीमद्वि-जयध्वजतीर्थकृतपदरत्नावली, श्रीमद्विष्णुस्वामिसिद्धान्तनिर्वाहकाचार्यप्रवरश्रीमद्वल्लभाचार्य-कृतसुबोधिनी, श्रीगौडीयवैष्णवाचार्यप्रवरश्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भाख्यटीका, तदनुगामिश्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी, श्रीनिम्बार्कसम्प्रदायि-श्रीमच्छुक-देवकृतसिद्धान्तप्रदीपाख्यटीका इति नवभिर्व्याख्याभिर्भाषानुवादेन च समलङ्कृतम् ।

तदिदम्

परमहंसपरिव्राजकाचार्यपूज्यपादश्रीमत्स्वामिप्रकाशानन्दसरस्वतीप्रवरशिष्येण,

श्रीनित्यस्वरूपब्रह्मचारिणा

सम्पादितम् ।

वङ्गदेशान्तर्गत ताडास भूपति श्रीराधाविनोद प्रेम सेवा परायण राजर्षिराय-

"श्रीवनमालिराय वहादुरस्य"

सम्पूर्णसाहाय्येन

प्रकाशितञ्च ।

तत्र

श्रीवृन्दावन श्रीरङ्गमन्दिरस्थ पं० भागवताचार्य द्वारा

तथा

काञ्चीमण्डलान्तर्वर्त्ति 'कान्दुर' पं० श्रीरङ्गाचार्यद्वारा च संशोध्य

श्रीवृन्दावनधामनि

स्वकीये "श्रीदेवकीनन्दन" यन्त्रालये

मुद्रापितम् ।

सम्वत् १९६४

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अपराजितसिद्ध्युपायमाह । मद्विभूतीरिति । मद्विभूतीः मम विविधभूतीः अपराजितः मनुष्यैरिति शेषः ॥ ३० ॥

उक्तानामनुक्तानां च सिद्धीनामवरोधोऽपरोक्षीकृततत्त्वस्य तत्सिद्धीराकाङ्क्षायाश्च ममोपासकस्योक्तविधया तत्तत्सिद्धिप्राप्तियोग्यगुणोपार्जनं कुर्वत एवेत्याह । उपासकस्येति । उपासनयापरोक्षीकृततत्त्वस्य पुनरुपासनं कार्यकाले कुर्वतः कार्यसिद्धिः स्यादित्यतो योगधारणया पुनरित्युक्तं योगधारणया सिद्ध्युपायध्यानेन ॥ ३१ ॥

निरन्तरध्यानरतस्य पुंसः सिद्धिर्निरूपणमात्रेण भवति न चिरध्यानापेक्षास्तीत्याशयेनाह । जितेन्द्रियस्येति । दान्तस्योपरतस्य जितश्वासस्य प्राप्तवायुप्रसादस्य जितात्मनः प्राप्तमनोजयस्य—

उपास्य वायुं प्रथमं वायौ सूत्रपरे स्थिते ।
अनुज्ञातस्ततस्तत्र तत्र हरिं स्मरेत् ॥
कृत्वाऽपरोक्षं तं चापि काले काले स्मरेत्पुनः ॥
अभीष्टकार्यसिद्धिः स्यात्तस्य नास्त्यत्र संशयः ।
अकामो यदि वायुं च ध्यात्वा दृष्ट्वा हरिं तथा ॥
न किञ्चित्कामयेत्पश्चात्स क्षिप्रं मुक्तिमेष्यति ।

इति ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मत्स्थमिति । अहमेव स्थानमाश्रयो यस्य तन्मदुपाधिरूपं सत्त्वं देवाद्युद्भवहेतुसत्त्ववृत्तिविशेषं चिन्तयेत् तदेवाह—सत्त्ववृत्तीरिति ॥ २५ ॥

यदा येनात्र यथा चेति पाठे यदुपाधित्वेन ॥ २६ ॥

मद्भावं मद्भावनामीशितुः संसारनियन्तुः वशितुस्तस्य स्वतन्त्रस्य चेति तदुपाधित्वं दर्शितम् ॥ २७ ॥

अतः परं गुणहेतुत्वेऽपि क्षुद्राः धारणेति जगत्सृष्टिस्थितिप्रलयकालेश्वरधारणोच्यते जन्ममृत्यूपबृंहितेति जन्मभिर्मृत्युभिर्नोपगच्छतीत्यर्थः ॥ २८—२९ ॥

मद्विभूतीरिति । मद्विभूतीनां मध्ये यां कां चित् तां च जगत्पराजयोपाधिमित्यर्थः ॥ ३०—३१ ॥

मद्धारणां मम तत्तदुपाधिरहितस्यापि यत् किञ्चिद्रूपस्यापि धारणामित्यर्थः । स्वभावतः सर्वसिद्धसेवितात्स्वतन्त्रात् मम कृपात् कामनामात्रेण सर्वसिद्धेरिति भावः ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सत्त्वं स्वीयान्तःकरणं मत्स्थं मद्गतं चिन्तयेत् ततश्च सत्त्ववृत्तीः सत्त्ववृत्तयः सुरस्त्रियस्तमागत्य सेवन्ते इति देवक्रीडाप्राप्तिः ॥ २५ ॥

यदा वा अकाले कालेऽपि इत्यर्थः यथा चेति पाठे यथा सङ्कल्पयेत् यथा येन वा प्रकारेण मत्परः स्यात् सत्ये सत्यसंकल्पे मयि तथा तेनैव प्रकारेण तत् स्वाभीष्टं वस्तु प्राप्नोतीति सङ्कल्पसिद्धिः ॥ २६ ॥

मत् मत्तः सकाशाद्भावं ध्यानातिशयेन ईशितृत्वं वशितृत्वं वा मत्तः कीदृशात् ईशितुः वशितुः सर्वान् वशीकर्तुः न विहन्येत न विहता भवेदित्यप्रतिहताज्ञत्वम् ॥ २७ ॥

अतः परं क्षुद्राः धारणाविद इति त्रिकालज्ञत्वधारणा सूचिता त्रैकालिकी त्रिकालवस्तुविषया जन्ममृत्यूपबृंहिता जन्ममरणयोरपि उपबृंहिता बुद्धिमेव प्राप्ता भवति ननु किञ्चिदपि हन्यतीत्यर्थः । इति त्रिकालज्ञत्वम् ॥ २८ ॥

अग्न्यादिसर्वोपघातशून्यो भगवानित्येवंभूतध्यानयोगेन शान्तचित्तस्य मुनेर्योगमयं योगपरिपक्वं वपुरग्न्यादिभिर्न हन्येत यथा यादसामुदकमुपघातकं न भवति प्रत्युत क्रीडास्पदं तथैव तस्याग्न्यादय इत्यग्न्यादिप्रतिष्टम्भः ॥ २९ ॥

मद्विभूतीर्मदवतारान् सध्वजादिभिः सहितो भवेत् अपराजितश्च भवेदित्यपराजयनाम्नी सिद्धिः ॥ ३० ॥

उपसंहरति । उपासकस्येति ॥ ३१ ॥

दान्तस्य संयतमनसः जितः श्वासः आत्मा व्यावहारिकः स्वभावश्च येन सः तस्य ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सुराक्रीडे देवानां विहारस्थाने विहरिष्यन् मत्स्थं सत्त्वं मयि नियन्तरि स्थितं सत्त्वगुणं विभावयेत् चिन्तयेत् तदा सत्त्ववृत्तीः सत्त्ववृत्तयः सात्त्विका इत्यर्थः ॥ २५ ॥

मत्परः मदेकपरः सर्वार्थदत्वेनोपायो यस्य सः यथा यादृशं यदा वा यस्मिन् देशे काले वा सङ्कल्पयेत् तथा तादृशमेव तत्रैव समुपाश्नुते सम्यक् प्राप्नोति किङ्कुर्वन् सत्ये यथार्थगुणस्वरूपस्वतन्त्रसङ्कल्पधर्मिणि मयि मनो युञ्जन् मम सत्यतां चिन्तयन्नित्यर्थः ॥ २६ ॥

ईशितुः सर्वनियन्तुः वशितुः स्वतन्त्रस्य मत् मम भावं ईशित्वादिकं स्वभावम् आपन्नः प्राप्तः तादृशं मम स्वभावं ध्यायन्निति यावत् तस्य आज्ञा कुतश्चिदपि न विहन्येत चकारः गत्यादिसमुच्चयार्थः यथा मत्युत्तमोपमा अयं कूपः सागर इवेतिवत् ॥ २७ ॥

अथ क्षुद्राः सिद्धीराह । मद्वस्तुत्यादिना । धारणाविदः इत्यनेन त्रिकालज्ञपरमात्मधारणाभिज्ञस्य त्रैकालिकी पूर्वापरवर्तमानपदार्थविषया कथम्भूता स्वजन्ममृत्युभ्यां विषयभूताभ्यामुपबृंहितोपबर्हिता बुद्धिः स्यात् अनयैव परचित्ताभिज्ञता दर्शिता ॥ २८ ॥

यथा यादसामुदकं घातकं न भवति तथाग्न्यादिभिः परितः संक्षिप्तैरपि मद्योगेन भगवानग्न्यादिरनुल्लङ्घ्य इत्येवं मद्विषयधारणया शान्तचित्तस्यानुद्विग्नमनसो मुनेर्वपुर्न हन्यते अनयैवाद्वन्द्वता दर्शिता ॥ २९ ॥

मद्विभूतीः चेतनाचेतनमच्छक्तिरूपाः देवमनुष्यादिषु महत्त्वभेदप्रयुक्ताश्च श्रीवत्सादिविभूषिताः ध्वजादियुक्ताः ममावताररूपाश्च ॥ ३० ॥

उपसंहरति । उपासकस्येति ॥ ३१ ॥

अन्तरायान् वदन्त्येता युञ्जतो योगमुत्तमम् ।
मया सम्पद्यमानस्य कालक्षपणहेतवः ॥ ३३ ॥
जन्मौषधितपोमन्त्रैर्यावतीरिह सिद्धयः ।
योगेनाप्नोति ताः सर्वा नान्यैर्योगगतिं व्रजेत् ॥ ३४ ॥
सर्वासामपि सिद्धीनां हेतुः पतिरहं प्रभुः ।
अहं योगस्य साङ्ख्यस्य धर्मस्य ब्रह्मवादिनाम् ॥ ३५ ॥
अहमात्माऽऽन्तरो बाह्योऽनावृतः सर्वदेहिनाम् ।
यथा भूतानि भूतेषु बहिरन्तः स्वयं तथा ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्यामेकादशस्कन्धे
पञ्चदशोऽध्यायः ॥ १५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवदेकां धारणां वद यया सर्वाः सिद्धयः सुलभाः स्युरत आह । जितेन्द्रियस्येति । मद्धारणां मम सर्वेश्वरस्य यदुकुलेऽवतीर्णस्य धारणां मद्धारणाम् ॥ ३२ ॥

भाषा टीका ।

यदि देवतों के क्रीड़ा स्थानों मे विहार करने की इच्छा होवे तो मेरे मे स्थित शुद्ध सत्व की भावना करे तब सत्वगुण मे वर्तने वाली देव स्त्री विमान को लेकर उसके पास उपस्थित होती हैं ॥ २५ ॥

और बुद्धि से जैसा जिस भक्त पुरुष मेरे मे तत्पर होकर सत्य स्वरूप मेरे में मनको युक्त करे तब तैसी सिद्धि को प्राप्त होता है ॥ २६ ॥

ईशिता वशिता जो मैं हूं तिस मेरे भाव को जो पुरुष प्राप्त होजावै तो जैसे मेरी आज्ञा कहीं नहीं रुकती है तैसी उसकी भी आज्ञा कहीं नहीं रुकेगी ॥ २७ ॥

जो धारणा के जानने वाला है मेरी भक्ति मे जिसका सत्व शुद्ध होगया है उस योगि की जन्म मृत्यु आदि के ज्ञानवाली तीनो कालों कि बुद्धि होजाती है ॥ २८ ॥

मेरे योग मे जिस मुनि का शान्त चित्त है तिसका योगमय शरीर अग्नि आदि कों से नहीं नष्ट होता है जैसे कि जल जन्तुओं का शरीर जल से नहीं नष्ट होता है ॥ २९ ॥

ध्वज छत्र व्यजन इनके सहित श्रीवत्स अस्त्रादिकों से भूषित हमारी विभूतियों अवतारों को जो ध्यान करै वह योगी अपराजित हो जावै ॥ ३० ॥

योगधारणा से मेरे को ऐसे उपासना करने वाले मुनि के पास पहिली कही हुई सब सिद्धि उपस्थित हो जाती हैं ॥ ३१ ॥

जो मुनि जितेन्द्रिय इन्द्रियों को दमन करने वाला है श्वास और मनको जीतने वाला है मेरी धारणा को धारण करता है तो ऐसी कौन सिद्धि है कि जो उसको दुर्लभ होगी ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यद्यप्येवं तथाऽपि न प्रार्थ्या इत्याह । अन्तरायानिति ॥ ३३ ॥

तस्मादहैतुकीयमेव धारणा कार्या नान्याः काम्या इत्याह । जन्मेति । जन्मनैव काश्चित्सिद्धयो भवन्ति यथा देवानां यथा च यादसामुदकस्तम्भः पक्ष्यादीनां खेचरत्वादि तदुक्तं पातञ्जले "जन्मौषधितपोमन्त्रयोगजाः सिद्धय" इति योगेन मद्धारणामित्युक्तेन योगगतिं मत्सालोक्यादिरूपाम् ॥ ३४ ॥

कुत इत्यत आह । सर्वासामित्यर्धेन । प्रभुत्वोपपादकं हेतुः कारणं पतिः पालयिता चाति किञ्च न केवलं सिद्धीनामेव प्रभुरपि तु मोक्षादीनामपीत्याह । अहमिति । योगो मोक्षः साङ्ख्यं तत्साधनं ज्ञानं धर्मस्य तदुपदेष्टॄणां ब्रह्मवादिनां च ॥ ३५ ॥

कुतस्तत्राऽऽह । अहमिति । सर्वदेहिनां जीवानामात्मा यत आन्तरोऽन्तर्यामि "एष त आत्माऽन्तर्याम्यमृत" इतिश्रुतेः तर्हि किमन्तर्वर्तित्वात्परिच्छिन्नः न बाह्यश्च व्यापक इत्यर्थः । तत्र हेतुः अनावृतः एतत्सदृष्टान्तमाह । भूतेषु चतुर्विधेषु महाभूतानि यथा बहिश्चान्तश्च भवन्ति स्वयमहमपि तथेत्यर्थः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
पञ्चदशोऽध्यायः ॥ १५ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

श्रीचैतन्यं प्रपद्येऽहं भक्ताभासान्तलोचनम् ।
येनैकादशव्याख्याने मूढः साध्वीविमोचितः ॥
यद्यप्येवं न कामाश्चिद्दोषोऽपमम् ॥ ३३ ॥

पातञ्जलसूत्रस्यायमर्थः काश्चन जन्मनिमित्ता एव सिद्धयो यथा पक्ष्यादीनामाकाशगमनादयः यथा वा कपिलमहर्षिप्रभृतीनां जन्मसमनन्तरमेवोपजायमानाः सांसिद्धिका ज्ञानादयो गुणाः। औषधिसिद्धयो यथा पातालादौ रसायनाद्युपयोगात्। मन्त्रसिद्धयो यथा मन्त्रजपात् केषाञ्चिदाकाशगमनादिः। तपःसिद्धिर्यथा विश्वामित्रादीनाम्। समाधिसिद्धिस्तु व्याख्याता। एताः सिद्धयः पूर्वजन्मनि क्षपितकल्मषाणामेवोपजायन्ते तस्मात् समाधिसिद्धाविवान्यासां सिद्धीनां समाधिरेव जन्मान्तराऽभ्यस्तः कारणं मन्त्रादीनि तु निमित्तमात्राणीति। अन्यैर्जन्मौषध्यादिभिः ॥ ३४ ॥

प्रभुरीशिताहम्। प्रभुत्वस्योपपादनम्। हेतुना साधनं कारणत्वात् पालयितृत्वाच्च प्रभुत्वमित्यर्थः। धर्मस्य भगवदर्पित निष्कामकर्मणः तस्यैव ज्ञानसाधनत्वात्। तदुक्तं प्रथमे। यदत्र क्रियते कर्म भगवत्परितोषणमित्यादि तदुपदेष्टृणां धर्मोपदेशकानां मोक्षाद्युपदेशकानां वा ॥ ३५ ॥

कुतो मोक्षादिप्रभुत्वं जीवानां शरीरव्यापिनीयानां यच्चात्मा शरीरमिति श्रुतेः तत्र व्यापकत्वे। एतत् बहिरन्तर्वसमानत्वं मामित्यस्य व्याख्यानमहमपीति ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

जन्मौषधीति । जन्मप्रयुक्ता सिद्धिः पक्षिणामाकाशगमनादिः योग गतिं भक्तियोगफल मामेव ॥ ३४—३६ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यद्यपि सुलभास्तथापि न तास्वासक्तो भवेदन्तरायभूतत्वादित्यभिप्रेत्याह । अन्तरायानिति । उत्तमं योगं मदुपासनात्मकं युञ्जतः कुर्वतो योगिन एता अणिमत्वादीनन्तरायान् योगावच्छकन्दकद्वारा पुनः संसृतिहेतुत्वेन विघ्नभूतान् वदन्ति योगविद इति शेषः । नन्वेषामन्तरायत्वेऽप्यौत्पत्तिका मत्प्रधाना इति चोक्ता अणिमाद्योऽष्टौ नान्तराया इत्यत आह । यथा मदुपासनया सम्पद्यमानस्य मामिति शेषः । निरतिशयपुरुषार्थरूपं मां प्रारब्धान्ते प्राप्स्यमानस्य कालक्षेपणहेतवः विघ्नहेतव इत्यर्थः ॥ ३३ ॥

न केवलमणिमादय एवाऽस्य सुलभा अपितु अन्यसाध्या अप्यस्य सुलभा इत्याह । जन्मेति । जन्मनैव काश्चित् सिद्धयो भवन्ति यथा देवानां यथा च यादसामुदकस्तम्भः पक्ष्यादीनां खेचरत्वादि काश्चिदौषध्यादिभिरपि तदुक्तं पातञ्जले "जन्मौषधितपोमन्त्रयोगजाः सिद्धयः" इति यावतीर्यावत्यः ताः सर्वाः सिद्धीर्योगेन मदुपासनात्मकेन प्राप्नोति अनेन बहुदेवादिजन्मादयकतरा नान्ताः सिद्धयः सुलभा एवेति न तदर्थतया योगो विनियोज्य इत्युक्तं भवति योगस्य प्रधानफलभूता मत्प्राप्तिरूपा गतिस्त्वनन्यसाध्येत्याह । नान्यैर्योगगतिं व्रजेदिति । अनेनानन्यसाध्यायां मत्प्राप्तावेव विनियोज्य इत्युक्तं भवति ॥ ३४ ॥

योगेनाप्नोति ताः सर्वा इत्युक्तं तत्र हेतुमाह । सर्वासामिति । यतोऽहमुपास्यमानः सर्वासामपि सिद्धीनां हेतुः प्रापकः पतिः पालयिता सिद्धिहक्ष न केवलमहं सिद्धीनामेवोक्तविधः अपि तु कैवल्यसाधनस्य प्रकृतिवियुक्तात्मोपासनाख्यसांख्यस्य मत्प्राप्तिसाधनस्य मदुपासनात्मकयोगस्य च ब्रह्मवादिनां स्वर्गादिप्रापकयज्ञादिरूपधर्मस्य चाहं हेतुः पतिः प्रवर्तकः प्रभुः शासी चेत्यर्थः ॥ ३५ ॥

कुत इत्यत आह । अहमिति । सर्वदेहिनामहमन्तरात्मा च यतः अन्तरः अन्तर्यामी "एष त आत्मान्तर्यामी" इति श्रुतेः ननु सर्वदेहान्तरात्मत्वमात्रेण किं त्वं परिच्छिन्नः नेत्याह । बाह्यः बहिरपि व्याप्य वर्तमानोऽत एवानावृतः आवरणरहितः अपरिच्छिन्न इत्यर्थः । अन्तर्बहिश्च व्याप्तौ दृष्टान्तः यथा भूतेषु देवमनुष्यादिषु भूतान्याकाशादीन्यन्तर्बहिश्च वर्तन्ते तद्वत्स्वयमहमपि तथा वर्ते इत्यर्थः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवद्ध्यानेनाणिमादिसिद्धीनां भोक्तृत्वेऽपि तदर्थोपादितत्वं प्रशस्तेत्याह । अन्तरायानिति । एतान् सिद्धिविशेषान् उत्तमं योगं मुक्तियोग्यं ध्यानं युञ्जतः कुर्वतः सम्पद्यमानस्य आत्मप्रसादमात्रकामस्य कुतोऽन्तराया इति तत्राह । कालेति ।

यदि योगफलं भुङ्क्ते पुनः काममपास्य तु ।
तेनैव क्रमयोगेन याति दृष्ट्वा हरिं तथा ॥
एतद्यदा मुक्तिपदवी नान्यथा तु कथञ्चन ।
पूर्वं हरिं हि कामार्थं पश्चान्मोक्षार्थमिष्यते ।
येषान्तु जगतः सिद्धिकामानां दोषो न तु कश्चित् ॥

इति ॥ ३३ ॥

जन्मादिभ्यो योग एव साधनोत्तम इत्याह । जन्मौषधीति । यावतीर्यावत्यः योगेन ध्यानेन एतादृशो योगो विशिष्टदेवताभिरेव सुलभ्यो न सर्वैरित्याह । धैर्येति । धैर्यं, धैर्यवत् कश्चिदेव जन्मादिभिर्योगगतिं व्रजेत् कुत इति तत्राह । सर्वासामिति । मृदो घटकारणत्वेऽपि न तत्स्वामित्वं किन्तु कुलालस्यैवेत्यत उक्तं पतिरिति कुलालस्वामित्व यावत्ग्रहणतीत्यतः प्रभुरिति समर्थेन मया विशिष्टा एवास्मिन् योगेऽधिकृताः स्युरिति सङ्कुचिततरथाद्युक्तमित्यर्थः—

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जन्मादिभिः कैश्चिदेव प्राप्यते योगजं फलम् ।
योगेन सर्वैः प्राप्येत योगे यत्नं ततः कुरु ॥
कश्चिदर्थेऽपि यच्छब्दः प्रश्नार्थेऽपि क्वचिद्भवेत् ।
क्वचित्परामर्शवाची क्वचिदापेक्षवाचकः ॥
इतिवचनाद्येरितियच्छब्देन कश्चिदर्थ उच्यते ॥ ३४ ॥

न केवलं सिद्धीनामेव हेतुः किन्तु योगादीनामपीति भावेनाह । अहमिति । ब्रह्मवादिनां वेदान्तानामित्यर्थः ॥ ३५ ॥

कीदृशस्त्वमिति । तत्राह । अहमिति । अहं सर्वदेहिनामात्मा प्रेष्ठः स्वामी अन्तर्यामिरूपेणान्तरः अन्तः स्थित्वा गतिकृत् अनेन प्रेष्ठत्वं विवृतं ब्रह्मरूपेण बाह्यो बहिष्ठः बहिष्ठस्यापि ब्रह्माण्डस्यैवान्येनावृतोऽस्तीत्यतोऽनावृत इति प्रजनं विभ्रमभायात् दृष्टान्तयति । यथेति । पञ्च महाभूतानि भूतेषु जीवादिवस्तुषु अन्तर्बहिश्च व्याप्नोतीति ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मया संपद्यमानस्य मद्रूपामेव सम्पत्तिमिच्छत इत्यर्थः अत एव ब्रह्मसायुज्यमप्यस्यान्तरायः स्यादिति युक्तमेव तत्र गणितम् उत्तमं निष्कामं भक्तियोगम् ॥ ३३ ॥

तथापि पूर्वोक्ता धारणास्तु सर्वतोऽधिका इत्याह । जन्मेति । योगेनेति पूर्वोक्तधारणानामेकतरेणापि ॥ ३४ ॥

मयि विश्वस्तैस्तु तत्तत्सिद्धिकामनयापि नान्यत् तच्च सोपाधिमद्धारणं कर्त्तव्यं स्नतः सर्वाश्रयत्वान्ममेत्याह । सर्वासामिति द्वाभ्याम् । धर्मस्य ज्ञानसाधनस्य ॥ ३५—३६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सिद्धयो ह्येता बालस्यैव चमत्कारकारिण्यो न त्वभिज्ञस्येत्याह । अन्तरायानिति । मया मत्प्राप्त्या सम्पद्यमानस्य मधुकस्य कालक्षपणाहेतव इति दिने दिने तस्य मत्प्राप्तिलक्षणसम्पत्तिर्ह्रसत्येव तस्मात् योगेनैव कालं यापयेत् न तु तत्फलभूताभिः सिद्धिभिरिति भावः ॥ ३३ ॥

किञ्च जन्मेति । काश्चित् काश्चित् सिद्धयो जन्मादिभिरपि भवन्ति यथा जन्मनैव देवानां सिद्धयः यथा च जन्मनैव वाद्सामुद्रकस्तम्भः पक्षिणां खेचरत्वं प्रेतानामन्तर्द्धानपरकायप्रवेशाद्याः तदुक्तम् पातञ्जले "जन्मौषधितपोमन्त्रयोगजाः सिद्धय" इति यावतीर्यावत्यः ताः सर्वा एव योगेनाप्नोति योगगतिं सालोक्यादिमुक्तिम् ॥ ३४ ॥

यतो मम ध्यानेनैव सर्वाः सिद्धयस्तस्मादहमेव तासां हेतुः न केवलं हेतुरेव पतिः पालयिता च प्रभुः स्वामी च न केवलं सिद्धीनामेव हेतुप्रभूतयोऽहं यतो योगस्य मदीयध्यानयोगस्यापि अहमेव हेतुः न केवलं ध्यानयोगस्य सांख्यस्य ज्ञानस्यापि ज्ञानसाधनधर्मस्य निष्कामकर्मणोऽपि ॥ ३५ ॥

योगिनां ज्ञानिनां च ध्यानस्यालम्बनोऽप्यहमेवेत्याह । अहमान्तर आत्मा अन्तर्यामी तर्हि किमन्तर्वर्त्तित्वात् परिच्छिन्नः न बाह्यश्च व्यापक इत्यर्थः । तत्र हेतुरनावृतः एतत् दृष्टान्तमाह । भूतेषु चतुर्विधेषु महाभूतानि यथा बहिश्चान्तश्च भवन्ति स्वयमहमपि तथेत्यर्थः ॥ ३६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशे पञ्चदशः सङ्गतः सङ्गतः सताम् ॥ १५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मया सम्पद्यमानस्य 'यत्त्र क्रीडन् रममाणः ब्रह्मणा विपश्चिता" इति मया सह सम्यक् मुक्तौ सम्पद्यमानस्य प्रजिष्यतो मुमुक्षोः एताः पूर्वोक्ताः सिद्धीः अन्तरायान् वदन्ति अतो मत्प्राप्तिकामेन ता उपेक्ष्या इति भावः ॥ ३३ ॥

मद्धारणाभिरुक्ताभ्यः स्वविषयकधारणायाः श्रैष्ठ्यमाह । जन्मेति । जन्मादिभिः खेचरत्वाद्याः यावतीः सिद्धीः पक्ष्यादय आप्नुवन्ति ताः सर्वाः सिद्धीः इह मयि विषये योयो गोगधारणालक्षणस्तेन योगी आप्नोति अस्यैर्जन्मौषध्यादिभिस्तु योगगतिं मद्विषयकयोगस्य गतिं मत्प्राप्तिं न व्रजेत् ॥ ३४ ॥

ननु भगवन् ! भगवद्विषयकस्य योगस्य सर्वसिद्धिप्रदत्वं त्वद्धारणाप्रापकत्वं च कुत इत्यत्राह । सर्वासामित्यर्द्धेन । अपि अवधारणे सर्वासां सिद्धीनां प्रभुरहमेव यतः हेतुः कारणम् पतिः पालयिता न केवलं सिद्धीनामेव प्रभुरपितु योगस्य तत्साधनस्य सांख्यस्य आत्मानात्मविषयकविवेकस्य तत्साधनस्य धर्मस्य कर्मणः ब्रह्मवादिनां तत्त्वोपदेष्टॄणां चाहमेव प्रभुः ॥ ३५ ॥

किञ्च सर्वेषां देहिनां जीवानामहमात्मा सत्ताप्रदतया आश्रयः अस्मीत्यर्थः । ममैवांशो जीवलोके जीवभूतः सनातनः इति स्मृतेः 'अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके" इति न्यायाच्च कथम्भूतः अन्तरः अन्तः प्रविष्टः जनानाम् "एष ते आत्मान्तर्याम्यमृतः" इत्यादिश्रुतेः परिच्छिन्नत्वशङ्कां वारयति । बाह्यः "यस्मिन् द्यावापृथिव्यौ विधृतौ तिष्ठत" इतिश्रुतेः मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवेति स्मृतेः अतोऽनावृतः उभयत्र दृष्टान्तः यथा भूतेषु चतुर्विधेषु भूतानि अन्तश्च बहिश्च भवन्ति तद्वत् ननु महाभूतानामुपरिप्रकृत्यादीनि तत्त्वान्यन्यानि सन्ति तदुपरि अपि किञ्चिदस्ति किं नेत्याह । स्वयमिति ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
पञ्चदशाध्यायार्थप्रकाशः ॥ १५ ॥

---

भाषा टीका।

भगवद्भक्तिरूप उत्तम योग साधने वाले को तो ये सब सिद्धि विघ्न रूप हैं ऐसा महात्मा जन कहते हैं जो मेरे मे लगा है मेरे को प्राप्त होने वाला है उसके वास्ते ऐसी सिद्धि काल के व्यर्थ बिताने वाली हैं॥ ३३॥

जन्म औषधि तप मंत्र आदिकों से यहां जितनी सिद्धी हैं उन सब सिद्धियों को योग से प्राप्त हो जाता है परन्तु उन जन्म आदि सिद्धियों से योग की गति को नहीं प्राप्त हो सकता है॥ ३४॥

संपूर्ण सिद्धियों का हेतु पति प्रभु मैं हीं हूं मैं ही योग का सांख्य का धर्म का ब्रह्मवादियों का भी प्रभु हूं॥ ३५॥

मै संपूर्ण प्राणियों का अंतर्यामी भी हूं सबके बाहिर भी हूं फिर आवरण रहित भी हूं जैसे कि पंच महाभूत सब के बाहिर भी रहते हैं भीतर भी रहते हैं तैसे मैं भी सर्वत्र रहता हूं॥ ३६॥

इति श्रीमद्भागवत एकादशस्कन्ध पंदरहवें अध्याय की
श्री वृन्दावनस्थ पं० लक्ष्मणाचार्यकृत
भाषाटीका समाप्त॥ १५॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे पञ्चदशोऽध्यायः॥ १५॥

———:०:———

## अथ षोडशोऽध्यायः ।

———:*:———

उद्धव उवाच ।

त्वं ब्रह्म परमं साक्षादनाद्यन्तमपावृतम् ।
सर्वेषामपि भावानां[1] त्राणस्थित्यप्ययोद्भवः ॥ १ ॥
उच्चावचेषु भूतेषु दुर्ज्ञेयमकृतात्मभिः ।
उपासते त्वां भगवन् ! याथातथ्येन ब्राह्मणाः ॥ २ ॥
येषु येषु च भावेषु भक्त्या त्वां परमर्षयः ।
उपासीनाः प्रपद्यन्ते संसिद्धिं तद्वदस्व मे ॥ ३ ॥
गूढश्चरसि[2] भूतात्मा भूतानां भूतभावनः ।
न त्वां पश्यन्ति भूतानि पश्यन्तं मोहितानि ते ॥ ४ ॥
याः काश्च भूमौ दिवि वै रसायां विभूतयो दिक्षु महाविभूते ![3] ।
ता मह्यमाख्याह्यनुभावितास्ते नमामि ते तीर्थपदाङ्घ्रिपद्मम् ॥ ५ ॥

श्रीभगवानुवाच ।

एवमेतदहं पृष्टः प्रश्नं प्रश्नविदांवर ! ।
युयुत्सुना विनशने सपत्नैरर्जुनेन वै ॥ ६ ॥
ज्ञात्वा ज्ञातिवधं गर्ह्यमधर्मं राज्यहेतुकम् ।
ततो निवृत्तो हन्ताऽहं हतोऽयमिति लौकिकः ॥ ७ ॥
स तदा पुरुषव्याघ्रो युक्त्या मे प्रतिबोधितः ।
अभ्यभाषत मामेवं यथा त्वं रणमूर्धनि ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

षोडशे तु हरेराविर्भावयुक्ता विभूतयः ।
ज्ञानधीसंप्रभावादिविशेषेणोपवर्णिताः ॥
अन्तश्चिन्तन यद्ध्यानमशक्यमकृतात्मनाम् ।
अतस्तद्योग्यतापत्त्यै विभूत्यादिनिरूपणम् ॥
एवं तावन्नवाध्याय्यामष्टप्रश्ना निरूपिताः ।
ब्रह्मत्वसम्भवे तावत्सप्तम्यादिचतुष्टये ॥
बन्धमुक्त्योस्तु निर्धारे सद्भक्त्योश्च ततः परे ।
द्वादशेऽनन्तरं कर्म कृतित्यागव्यवस्थितौ ॥
हंसेतिहासतो योगनिष्ठायां च त्रयोदशे ।
श्रेयः साधननिर्धारे ध्याने चैव चतुर्दशे ॥
धारणासिद्धिभेदे च प्रसङ्गेन निरन्तरे ।
उद्धवप्रश्नतो दत्तमुत्तरं हरिणोचितम् ॥
षोडशे भूतिविस्तारे द्वयोर्वर्णाश्रमव्रते ।
ज्ञानादिनिर्णये चातो यमादीनां च निर्णये ॥
योगत्रयाधिकारे तु विंशे च तदनन्तरं ।
तत्त्वसङ्ख्याविवादे च पुंप्रकृत्योर्विवेचने ॥
जन्ममृत्युप्रकारे च द्वाविंशे दत्तमुत्तरम् ।
परावराश्रमप्रश्ने चतुर्भिस्तदनन्तरैः ॥
सप्तविंशे क्रियायोगप्रश्ने तदुपवर्णनम् ।
अष्टाविंशे ततः प्रोक्ता ज्ञानयोगोपसंहृतिः ॥
संसारासम्भवप्रश्ने तन्मध्ये दत्तमुत्तरम् ।

---

१ प्राणः इति विज० २ चरति इति वीर० ३ महाविभूतेः इति विज० पाठः ।

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ब्रह्म: ब्रह्मेत्याद्यष्टाङ्गाभ्युदयाय विशिनष्टि । अनाद्यन्तमिति । उत्पत्तिविनाशरहितं सर्वकारणमित्यर्थः । बृहत्त्वबृंहणोपाधिकत्वस्यापनायानावृतमित्युक्तं कर्मरूपावरणरहितं यद्वाऽन्तर्बहिश्च व्याप्य वर्तमानं चेत एवमतः सर्वेषां भावानामर्थानां त्राणं मोक्षोपयुक्तज्ञानप्रदानेनात्मोज्जीवनं स्थितिः पालनमव्ययः संहार उद्भव उत्पत्तिः त्राणस्थितिसहितावव्ययोद्भवौ यस्मात्तद्भूतस्त्वमित्यर्थः ॥ १ ॥

विभूतिविज्ञानस्य निष्प्रयोजनत्वशङ्कां निराकुर्वन्नाह । उच्चावचेष्विति । अकृतात्मभिरजितेन्द्रियैर्दुर्ज्ञेयमपि त्वां ब्राह्मणा वेदान्तविदः उच्चावचेषु तरतमेषु भावानर्थेषु यथावस्थिताकारेण सर्वभूतोत्पत्तिस्थितिप्रवृत्तिहेतुत्वेन उपासते तत्तद्भेषु तत्तद्विभूतिविशिष्टं त्वामुपासत इत्यर्थः । भक्तिविवृद्धय इति भावः ॥ २ ॥

तदेव विवृण्वन् पृच्छति । येषु येष्विति । भक्त्योपासनेन समतीतिनिश्चितफलस्य हेतुत्वविवक्षया तृतीया भक्त्यर्थं तद्वृद्ध्यर्थमितियावत् येषु येषु भावेषु त्वां यद्विभूतिरूपभावविशिष्टं त्वामित्यर्थः । उपासीनाः संसिद्धिं भक्तियोगनिष्पत्तिं प्राप्नुवन्ति तत्तद्विभूतिरूपं वस्तु मे मह्यं वदस्व ॥ ३ ॥

दुर्ज्ञेयमकृतात्मभिरित्यत्र हेतुं वदन् तत्प्रपञ्चयति । गूढ इति । भूतानि भावयति सत्तावन्ति करोतीति तथा भवान् इत्थमाहारः भूतात्मा सर्वभूतान्तरात्मा सन् भूतेषु गूढश्छन्नस्त्वस्फुटो वर्तते तथापि पश्यन्तं युगपत्सर्वं साक्षात्कुर्वन्तं त्वां तव मायामोहितानि भूतानि न पश्यन्ति न जानन्ति यद्वा सत्यं विभूतिविशिष्टं परमात्मानमुपासीनाः संसिद्धिं प्रपद्यन्ते नाहं तु परमात्मेत्यत्राह । गूढ इति । भूतेषु मनुष्येषु गूढः मनुष्य इव चरति अतस्तव माया मोहिताः केचन जानन्ति न ह्येतावता त्वयि परमात्मत्वं विहन्यत इति भावः ॥ ४ ॥

विभूतीश्च साकल्येन पृच्छति । या इति । हे महाविभूते ! याः काश्चिद्भूम्यादिषु विभूतयः रसायां पाताले कपस्थिताः ते त्वयाऽनुभाविता उत्कर्षीकृताः तासामुत्कर्षत्वं त्वदधीनमिति भावः । ताः सर्वा मह्यमाख्याहि तीर्थानां पदं स्थानं च तदङ्घ्रिपद्मं नमामि ॥ ५ ॥

अधुना न त्वयैवायं प्रश्नः कृतः किन्त्वर्जुनेनापि तत्रोत्तरं सिद्धमेवेत्यभिप्रेत्याह । एवमिति । अहमित्यस्य पृष्ट इत्यन्तः प्रश्नं प्रष्टव्यं प्रति हे प्रश्नविदांवर ! अहं कुत्र केनेत्यत आह । युयुत्सुनेति । विनशने कुरुक्षेत्रे अर्जुनेनाहं पृष्ट इति सम्बन्धः युयुत्साविनशने किं सङ्गतिकारणमित्यतोऽर्जुनं विशिनष्टि । सपत्नैः सह योद्धुमिच्छुना ॥ ६ ॥

युयुत्सोर्विभूतिप्रश्ने कः प्रसङ्ग इत्यत्राह । ज्ञात्वेति । राज्यहेतुकं राज्यप्राप्तिमात्रहेतुकम् अत एवाधर्ममत एव च गर्ह्यं ज्ञातीनां वधं ज्ञात्वाहं हन्ताऽयं हत इति लौकिकः प्राकृतमतिः सन् ततो युद्धान्निवृत्त आसीदिति शेषः ॥ ७ ॥

ततः किमत आह । स तदेति । सोऽर्जुनः मे मया कर्त्रा युक्त्या उपायभूतया प्रतिबोधितः अशोच्यानन्वशोचस्त्वमित्यादिना प्रज्ञापितचिदचिद्विशिष्टयाथात्म्यः सन् यथा त्वं तथा रणमूर्धनि संग्राममुखे मामपृच्छत विभूतीरपृच्छदित्यर्थः ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अधिकारिणामनेकविधत्वेन योग्यताया उपास्तेः फलस्य तथाविधत्वात्तदानुकूल्येन तत्तदुपासनार्थं तत्तद्गुणोपसंहाराय विभूतीरुपदिशत्यस्मिन्नध्याये । तत्रोद्धवः स्वप्रश्नवचने तात्पर्यजननाय प्रश्नकारं कृष्णं वेदान्तवेद्यं ब्रह्म त्वदनुग्रहेण मया ज्ञातमिति भावेन वक्ति । त्वं ब्रह्मेत्यादिना । साक्षात्परमं ब्रह्म त्वमेव अन्येषामप्रमुख्यमिति भावेनोक्तमनाद्यन्तमिति । प्रकृतेः कथंचिदुक्तविशेषणमस्त्यपि विकारित्वादमुख्यमिति भावेनोक्तमपावृतमिति । एवंविधस्य ब्रह्मणोऽनेकलक्षणमाह । सर्वेषामिति । अपिरेवार्थे त्वमेव सर्वेषां भावानां प्राणश्चैकः स्थित्यप्ययोद्भवश्च सृष्टिस्थितिसंहारकर्ता सत्ताया अपि तदेकाधीनत्वात्तत्त्वोक्तिः ॥ १ ॥

अस्मादिकर्तृत्वविशिष्टत्वेनोपास्योऽपि त्वमेवेत्याह । उच्चावचेष्विति । ब्राह्मणा मुनयो याथात्म्येन निर्दुःखानन्दानुभवरूपत्वेन स्थितत्वात् ॥ २ ॥

नन्वेवमुक्तानुवादोऽस्तु तथापेक्षितांशः कः इति तत्राह । येष्विति । येषु येषु केषु केषु यथा कथं तदुपासनं "मासनोपसंभाषाणानयस्त्वमित्युपमन्त्रणेषु वद" इत्यतो वदस्वेत्यात्मनेपदम् ॥ ३ ॥

बहुश्रुतवतोऽपि मम त्वत्स्वरूपज्ञानं दुःसाधनमिति भावेनाह । गूढ इति । ते त्वया ॥ ४ ॥

स्वप्रश्नं विशिनष्टि । याः काश्चेति । महाविभूतेः ब्रह्मादिदेवार्चितैश्वर्यस्य त्वत्सन्निधानविशेषात् स्वजात्युत्तमाः याः ता विभूतीराख्याहीत्यन्वयः ते त्वयानुभाविताः निश्चिताः यद्वा ते तव विभूतीः अनुभाविताः उपासिताः महद्भिरिति शेषः हे तीर्थपद ! ॥ ५ ॥

परिहरति । एवमिति । युयुत्सुना योद्धुकामेन विशसने युद्धे ॥ ६ ॥

किमभिप्रायेण पृच्छतीति तत्राह । ज्ञात्वेति । ततो युद्धात्कीदृशः अहं हन्ता अयं हत इति निरूप्य लौकिको बाह्यजनस्वभावोऽत्र इत्यर्थः ॥ ७ ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

टीकायां तथाख्यास्यामीति सप्तमादितथाख्यास्यामीति ज्ञेयम् आदिपद्यामुक्ततात्पर्यत्वात् अष्ट प्रश्नान्निरूपयति ब्रह्मत्वेति सप्तमादिचतुष्टयं दशमपर्यन्ते ततः परे एकादशे निरन्तरे पञ्चदशे द्वयोः सप्तदशाष्टादशयोः अत ऊनविंशे तदनन्तरे एकविंशे चतुर्भिः षड्विंशपर्यन्तैः तत्र ब्रह्मत्वेति १ बन्धमुक्त्योरिति २ साध्विति ३ कर्मेति ४ हंसेति ५ भेद इति ६ ध्यान इति ७ धारणेति ८ इत्यष्टौ प्रश्नाः भूतीति ९ वर्णेति १० ज्ञानेति ११ यमेति १२ योगेति १३ तत्त्वेति १४ जन्मेति १५ परेति १६ क्रियेति १७ ज्ञानेति १८ संसारेति १९ भक्तीति २० इति विंशतिः २३ सर्वेषां

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

सर्वैरेवमेव मत्त एवेति सर्वासामपीत्यादिना पूर्वमुक्तं तत् श्रुत्वा प्राकृताप्राकृततद्वैभवादपदार्थान् प्रश्नेन ज्ञातुं तस्य सर्वाश्रयत्वमनुवदति। त्वं ब्रह्मेति। त्वं ब्रह्म बृहत् सर्वकारणत्वात् तत्रापि परमं भगवद्रूपत्वात् तत्रापि साक्षात् स्वयं भगवत्त्वात् तत्राप्राकृतानन्तवैभवाश्रयत्वमाह। अनाद्यन्तं ननु पुरुषाविवत् परिच्छिन्नत्वमेवम् अपावृतं ननु तद्वन्मायास्खलितं प्राकृतवैभवाश्रयत्वमाह। सर्वेषां भावानां महदादीनां आद्यस्थिवत्त्वयोद्भवो यः पुरुषः सोऽपि त्वमिति यस्यांशांशांशभागेन विश्वस्थित्युद्भवोऽस्त्य इत्यादेरनन्यापि त्वमेवेत्यर्थः॥ १॥

तत्र प्राकृतीर्विभूतीस्तावत्पृच्छति। उच्चावचेष्विति। भूतेषु प्रधानकार्येषु त्वां गुणसाम्यादिरूपम्॥ २॥

अप्राकृतीः पृच्छति। येषु येषु चेति। भावेषु भूतेषु परमार्थसत्येषु भगवदादिषु "अस्य महतो भूतस्येत्यादिश्रुतेः त्वां श्रीवासुदेवादिरूपम्॥ ३॥

क्वासि कांश्चित्साक्षाद्रूपेण कांश्चित् शक्त्यावेशरूपेण चेति ज्ञेयम्॥ ४॥

मर्यादिकादिषु येषा मध्योर्ध्वेतरलोकाः प्राकृता अप्राकृताश्च स्वयं एव गूढाः। ते त्वयैकेन स्वयं भगवता अनुभाविताः अनुभावं तत्तन्माहात्म्यं प्रापिताः अत एव तीर्थानां सर्वासां गुरुपरम्पराणां परमाश्रयः। अङ्घ्रिपद्मं यस्य तं श्रोतसां समुद्रमिव॥ ५॥

अहो आश्चर्यं यस्मिन्नद्वयस्य प्रश्नसम्बन्धादितीति सश्लाघमाह। एवमिति॥ ६—८॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी

यदगम्भूतं येषु येषु प्रभावबलनशक्तिभिः।
तत्तद्विभूतिशब्दोक्तं वस्तु षोडश उच्यते॥

सर्वासामपि सिद्धीनामित्यादिना सर्वेषां सर्वैरेवमेव मत्त एवेत्युक्तं तत् श्रुत्वा प्राकृताप्राकृततद्वैभवादपदार्थान् जिज्ञासमानस्तस्य सर्वाश्रयत्वमनुवदति। त्वं ब्रह्मेति। तत्रापि परमं भगवद्रूपं तत्रापि साक्षात् स्वयं भगवद्रूपं तत्राप्यनाद्यन्तमपावृतमिति परिच्छिन्नमानुषाकारत्वेऽपि सर्वकालदेशव्यापकं यः सृष्ट्यादिकर्ता विष्णुः सोऽपि त्वदंशत्वात्त्वमेवेत्याह। विपद्भ्यो रक्षणं त्राणं जीविकाप्रदानं स्थितिः सर्वेषामपीति॥१॥

यतश्च त्वं विष्णुरूपेण सर्वेषां कारणं तत एव सर्वेषु भूतेषु तत्कार्येषु उच्चावचेषु उत्कर्षापकर्षरूपेषु त्वां सन्तमकृतात्मभिः त्वदयकृतमनस्कैः ब्राह्मणाः ब्रह्म विदन्तीति येऽज्ञा उपासते याथातथ्येन यत्र यत्र त्वं यथा यथा वर्तसे तत्र तत्र तथा तथैव त्वां तारतम्येनोपासत इत्यर्थः॥ २॥

सर्वत्रोपासनायामप्यायाभिव्यक्तोपासनार्थं विभूतीः पृच्छति। येषु येष्विति। प्रपद्यन्ते संसिद्धिं प्राप्नुवन्ति॥ ३॥

दुर्विज्ञेयत्वमाह। गूढ इति। भूतात्मा सर्वभूतान्तर्यामी भवन्नपि भूतभावनः प्राणिभ्यपरूपत्वं भूतानां गूढ एव अत एव त्वां न पश्यन्ति निर्विसर्गपाठे हे भूतभावन॥ ४॥

तस्माद्गूढाः स्वविभूतीः स्वयमेव प्रकाशयेत्याह। या इति ते त्वयैव अनुभाविता अनुभवगोचरीकारितास्ता आख्याहि तदनुभावय चेत्यर्थः। किम्भवत्य भगवतश्चिन्मयी विभूतिः अंशा उच्यन्ते मायामयास्तु विभूतय इति सर्वत्र व्यवहारः अत्र तु विभूतिशब्देनैश्वर्यं प्राकृताप्राकृतवस्तुमात्रमेव तथा प्राकृताप्राकृतवस्तुसारश्रेष्ठमन्यत्वया उच्यते इति विवेचनीयम्॥ ५॥

प्रश्नं प्रष्टव्यं विनशने कुरुक्षेत्रे॥ ६॥

युयुत्सोरर्जुनस्य विभूतिप्रश्ने कः प्रसङ्गस्तत्राह। ज्ञात्वेति। राज्यहेतुकं ज्ञातिवधमधर्म्यं ज्ञात्वा तस्माद्विवृत्तः कीदृशः अस्य हन्ताहं मयायं हत इत्येवं लौकिकं प्राकृतबोधं भवं बोधनं यस्य सः॥ ७—८॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

मद्विभूतिरमिथ्याविवरणयुक्तविभूतिभवश्रोच्छया तच्छ्रवणादात्मसमाधिकारित्वमात्मनः सूचयितुं भगवद्वीर्यानिःसमानातिशयत्वसर्वपूज्यत्वादिज्ञानवत्तामात्मनः आविष्करोति। त्वमिति द्वाभ्याम् सर्वेषां चेतनाचेतनानां आद्यादयो यस्मात्सः॥ १॥

ब्राह्मणाः उमब्रह्मविदः॥ २॥

अतस्त्वमेव सर्वविभूतिमान् स्वविभूतीर्यद्भ्रोति पृच्छति त्रिभिः। भावेषु विभूतिरूपेषु उपासीनाः सेवमानाः सन्तः सिद्धिं भुक्तिमुक्तिलक्षणां प्रपद्यन्ते तां त्वं वदस्व॥ ३॥ ४॥

अनुभाविताः तत्तदुत्कृष्टत्वादिना ख्यावतारत्वेन च त्वयैवोत्कृष्टीकृताः तीर्थानां परमाश्रयं पदाङ्घ्रिपद्मं च॥ ५॥

एतत्प्रश्नं प्रष्टव्यं प्रति युयुत्सुना पार्थेनच्छुना विनशने कुरुक्षेत्रे अहं पृष्टः॥ ६॥

तस्य विभूतिप्रश्ने प्रसङ्गमाह। ज्ञात्वेति द्वाभ्याम्। लौकिकः लोकप्रसिद्धहन्तृहन्तव्यविवेकवान् ततो ज्ञातिवधात्॥ ७॥

युक्त्या ज्ञानोपायात्मविद्यागर्भिणया मे मया प्रतिबोधितः सन् सङ्ग्राममूर्ध्नि युद्धारम्भे यथा त्वममिभाषसे एवमस्यमापत तदनुरूपमपि कथयिष्यामीति भावः॥ ८॥

भाषा टीका।

उद्धव उवाच हे प्रभो! आप साक्षात् पर ब्रह्म हो आप का आदि अन्त नहीं है आप आवरण रहित हो सब प्राणिमात्र के उत्पत्ति पालन संहार के हेतु हो॥ १॥

छोटे बडे सब भूतों में व्याप्त हो अज्ञानि लोग आप को नहीं जानते हैं हे भगवन्! ब्रह्मज्ञानीजन आप की यथार्थ रूप से उपासना करते हैं॥ २॥

परम ऋषिजन जिन जिन रूपों में विद्यमान आप की भक्ति से उपासना करके सिद्धि को प्राप्त होते हैं तिन तिन रूपों को मेरे से कहिये॥ ३॥

आप सब भूतों के पालन करने वाले हो सब के अन्तर्यामी हो तौभी गुप्त होकर विचरते हौ आप सब भूतों को देखते हो आपकी माया से मोहित होकर वे लोग आप को नहीं देखते हैं॥ ४॥

अहमात्मोद्धवामीषां भूतानां सुहृदीश्वरः ।
अहं सर्वाणि भूतानि तेषां स्थित्युद्भवाप्ययः ॥ ९ ॥
अहं गतिर्गतिमतां कालः कलयतामहम् ।
गुणानां चाप्यहं [१] साम्यं गुणिन्यौत्पत्तिको गुणः ॥ १० ॥
गुणिनामप्यहं सूत्रं महतां च महानहम् ।
सूक्ष्माणामप्यहं जीवो दुर्जयानामहं मनः ॥ ११ ॥
हिरण्यगर्भो वेदानां मन्त्राणां प्रणवस्त्रिवृत् ।
अक्षराणामकारोऽस्मि पदानि छन्दसामहम् ॥ १२ ॥
इन्द्रोऽहं सर्वदेवानां वसूनामस्मि हव्यवाट् ।
आदित्यानामहं विष्णू रुद्राणां नीललोहितः ॥ १३ ॥
ब्रह्मर्षीणां भृगुरहं राजर्षीणामहं मनुः ।
देवर्षीणां नारदोऽहं हविर्धान्यस्मि धेनुषु ॥ १४ ॥
सिद्धेश्वराणां कपिलः सुपर्णोऽहं पतत्रिणाम् ।
प्रजापतीनां दक्षोऽहं पितॄणामहमर्यमा ॥ १५ ॥
मां विद्ध्युद्धव ! दैत्यानां प्रह्लादमसुरेश्वरम् ।
सोमं नक्षत्रौषधीनां धनेशं यक्षरक्षसाम् ॥ १६ ॥

भाषा टीका ।

हे महाविभूति वाले भगवन् ! पृथिवी में स्वर्ग में वा पाताल में दिशाओं में आप के प्रभावसे बढ़ाई हुई जितनी विभूती हैं उन को मेरे से कहिये सकल तीर्थों का स्थान जो आपका चरणकमल तिसको मै नमस्कार करताहूं ॥ ५ ॥

श्रीभगवान् उवाच हे प्रश्नकरनेवालों में श्रेष्ठ उद्धवजी ! इस प्रकार से कुरुक्षेत्र में शत्रुओं के साथ युद्धकी इच्छा करने वाले अर्जुन ने भी मेरे से यह प्रश्न किया रहा ॥ ६ ॥

उनने यह समुझाथा कि केवल राज्यके वास्ते जो बंधुओं का वधकरना है सो निन्दित है ऐसा समुझकर लौकिक दृष्टिसे मैं मारताहूं यह मरता है यह समुझकर युद्ध से निवृत्तहो गयेथे ॥ ७ ॥

तब उन पुरुषश्रेष्ठ अर्जुनको मैने जब युक्ति से समुझाया तब जैसे तुम पूछतेहो तैसेही उन मे भी युद्ध के मध्यमें मेरे से पूछा रहा ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ता विभूतीः कथयति । अहमिति । अत्रमच्छन्दसमानाधिकरणाः प्रथमान्ता द्वितीयान्ताश्च सर्वा विभूतयस्तास्ताश्चोपासनार्थं कथ्यन्ते षष्ठी च कचिन्निर्धारणे सम्बन्धे च कचित् यथायोग्यं द्रष्टव्या ततश्चामीषां भूतानामात्मेति ते सुहृदिति ईश्वर इति सामान्येनाहमुपास्य इत्यर्थः । एवं सर्वत्र तेषां स्थित्युद्भवाप्ययः तत्तद्धेतुरित्यर्थः ॥ ९ ॥

विशेषतो विभूतीराह । कलयतां वशीकुर्वताम् गुणानां मध्ये साम्यं सर्वत्र समत्वम् गुणानां सत्वादीनां साम्यमव्याकृतं वा गुणिनि धर्मिणि औत्पत्तिकः स्वाभाविको यो गुणः सोऽहम् ॥ १० ॥

सूत्रं प्रथमकार्यम् महान्महत्तत्वम् सूक्ष्मोपाधित्वाद्दुर्ज्ञेयत्वाच्च जीवस्य सूक्ष्मत्वम् बुद्धेर्गुणेनाऽऽत्मगुणेन चैव बालाग्रशतभागस्य शतधाकल्पितस्य च । भागो जीवः स विज्ञेय इति आराग्रमात्रोऽह्यवरोऽपि दृष्ट इति श्रुतेः ॥ ११ ॥

वेदानां सम्बन्धी तेषामध्यापकः पदानि त्रिपदा गायत्र्यर्थः ॥ १२ ॥ १३ ॥

हविर्धानी कामधेनुः ॥ १४ ॥ १५ ॥

नक्षत्रौषधीनां प्रभुं सोमम् यक्षरक्षसां प्रभुम् ॥ १६ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

आत्मान्तर्यामीति । सर्वेश्वरान्तर्यामित्वलक्षणेन सामान्यधर्मेणाहं सर्वैरुपास्य इत्यर्थः । इत्यन्तर्यामित्वलक्षणाप्राकृत-

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

विभूतिवर्णनम्। व्यवहारसम्पादकानि यद्यपि तथाप्यहमेव मद्विशेषानुमावितैरेव तैर्व्यवहारसिद्धेः इति प्राकृतविभूतिवर्णनम्। तद्धेतुः सर्वकारणमिति महत्स्रष्टृ पुरुषरूपाप्राकृतविभूतिवर्णनम्। एवमन्यत्रापि विवेचनीयम् ॥ ९ ॥

गतिः फलं शरणागतिर्वा। गुणिभ्याकाशादौ स्वाभाविको धर्मः शब्दादिः ॥ १० ॥

गुणिनां कार्याणां मध्ये महत्तत्त्वं हि वस्तुतो जीवानां प्रकृत्यंशेन विभुत्वादणुत्वं न सङ्कुच्यत इति तन्मतानुसारेण गौण्या वृत्त्या व्याचष्टे सूक्ष्मोपाधित्वादिति सूक्ष्मलिङ्गशरीरमुपाधिर्यस्य तस्य भावस्तत्त्वं तस्मात् उपाधेर्लिङ्गस्य सूक्ष्मत्वेनोपहितस्यापि सूक्ष्मत्वव्यपदेशः यथा सूक्ष्मो हि दुर्ज्ञेयत्वगुणो भवति तथा दुर्ज्ञेयत्वाच्च सूक्ष्मत्वम् तत्र श्रुतिः प्रमाणं बुद्धेर्लिङ्गस्य सूक्ष्मत्वगुणेन तथात्मनो दुर्ज्ञेयत्वगुणेन चापरोऽपि व्यापकोऽपि आराग्रमात्रः सूक्ष्मो दृष्ट इति। वस्तुतस्तु मूलाभिप्रायेण नैषोऽर्थो विवक्षितः महतां चेति सूक्ष्माणामपीति परस्परप्रतियोगित्वेन निर्देशात्तथा व्याख्याने वाक्यद्वयस्य सङ्गतेः ॥ ११ ॥ १२ ॥

आदित्यानाम् अदितिपुत्राणां मध्ये विष्णुर्वामनोऽस्मीति अप्राकृतविभूतिनिर्देशः नीललोहितः सदाशिवः ॥ १३ ॥

देवाश्च ते ऋषयः सर्वषास्तेषां मध्ये ॥ १४ ॥

सिद्धेश्वराणामित्यादिषड्विभूतिनिर्धारणे ॥ १५ ॥

मामिति युग्मकम् ॥ १६—१७ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

अह गतिरिति गतिमद्धीनेत्यर्थः ॥ १० ॥

गुणिनां गुणवतां सूत्रं महत्तत्त्वम् ॥ ११—२२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथ ता विभूतीः कथयति। अहमित्यादिना। अमीषां भूतानां भूतसङ्घात्मकानां देवमनुष्यादिशरीराणां च आत्माऽन्तः प्रविश्य धारकः जीवः आत्मेत्येकवचनमेको व्रीहिरिति-वज्जात्यभिप्रायकं यद्वा। सर्वभूतानां देहिनामहमात्मा स्वस्यात्मत्वकथनेन स्वविभूतित्वं सिद्धम् आत्मा हि नाम शरीरस्य सर्वात्मना आधारो नियन्ता शेषी च तस्य च सर्वभूतात्मत्वं श्रूयते—

यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो
यं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरम् ॥
यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इति।
स आत्मान्तर्याम्यमृत इति च ॥

आत्मशब्दाभिप्रेतं नियन्तृत्वं स्वरूपमाह। ईश्वर इति। अनेनेश्वरः सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठतीति वचनार्थः स्मारितः यत एवात्मात एव सुहृदात्मा हि शरीरस्य सर्वात्मना हिताचरणैकशीलः एवं स्वविभूतिभूतेषु सर्वेषु स्वस्यात्मतयावस्थानमेव तत्तच्छब्दार्थसामानाधिकरण्यनिर्देशहेतुरित्यभिप्रेत्य विभूतिविशेषान् स्वसामानाधिकरण्येन व्यपदिशति। अहं सर्वाणि भूतानीति। भगवत्यात्मतयावस्थिते हि सर्वे शब्दास्तस्मिन्नेव पर्यवस्यन्ति यथा देवमनुष्यपशुवृक्षादयः शब्दाः शरीराणि प्रतिपादयन्तस्तत्तदात्मनि पर्यवस्यन्ति तथा भगवतस्तत्तदात्मतयावस्थानमेव तत्तच्छब्दसामानाधिकरण्यनिबन्धनमित्यवगन्तव्यं यत्सामानाधिकरण्यकारणमन्तरात्मस्वरूपमन्तःप्रविश्य नियमनम्—

तत्सृष्ट्वा तदेवानुप्राविशत्।
अन्तः प्रविष्टः शास्ता जनानां सर्वात्मेति

श्रुतं तत्सृष्टिस्थितिसंहारहेतुत्वमुखेनेत्यभिप्रेत्याह। तेषां स्थित्युद्भवाप्यय इति। स्थित्यादिसंपादक इत्यर्थः ॥ ९ ॥

गतिमतामित्यत्र प्रशंसायां मतुप् प्रशस्तगतिमतां या गतिस्तेषामोत्कृष्ट्याबहा साहं कलयतामनर्थप्रापकतया गणनीयानां मध्ये कालोऽहमस्मि गुणानां सत्त्वादीनां यत्साम्यं तदहं गुणानां मध्ये गुणिनि धर्मिण्यौत्पत्तिकः स्वाभाविको यो गुणः सोऽहम् ॥ १० ॥

गुणिनाम् उद्भूतसत्त्वादिगुणत्रयवतां यत् सूत्रं प्रथमं कार्यं महत्तत्त्वं तदहं महतां वृहतां यो महान्महत्तत्त्वाख्यगुणः सोऽहं स मदधीन इत्यर्थः। सूक्ष्माणां मध्ये यो निरतिशयसूक्ष्मो जीवः सोऽहं तत्सूक्ष्मत्वं मदधीनमित्यर्थः। दुःखेनापि जेतुमशक्यानां मध्ये मन्मनस्तदहं प्रायशोऽत्र प्रकरणे निर्धारणे षष्ठी ॥ ११ ॥

त्रिवृत् त्रयाणामक्षराणामकारोकारमकाराणां वृत् वर्तनं यस्मिन् सः प्रणव ओङ्कारः सोऽहं छन्दसां वेदानां त्रिपदा गायत्र्यहमित्यर्थः ॥ १२ ॥

वसूनां मध्ये हव्यवाट् पावकोऽस्मि द्वादशसङ्ख्याकानामादित्यानां द्वादशो य उत्कृष्टो विष्णुनामादित्यः सोऽहं रुद्राणामेकादशसङ्ख्यानां नीललोहितो नाम रुद्रोऽहमस्मि ॥ १३ ॥

ब्रह्मर्षीणां मरीच्यादीनां मध्ये भृगुरहं मनुः स्वायम्भुवः धेनुषु हविर्दुघासु निर्धारणार्थे सप्तमी हविर्धानी दिव्या सुरभिः कामधेनुरहमस्मि ॥ १४ ॥

सिद्धेश्वराणां योगनिष्ठानां परमोपास्यः कपिलोऽहं पतत्त्रिणां पक्षिणां मध्ये यः सुपर्णो गरुडः सोऽहं प्रजापतीनां नवानां ब्रह्मणां दक्षो नाम प्रजापतिरहम् ॥ १५ ॥

दैत्यानां मध्ये असुरश्रेष्ठं प्रह्लादं मां विद्धि हे उद्धव! नक्षत्रौषधीनामिति सम्बन्धसामान्ये षष्ठी नक्षत्राणामोषधीनामधिपतिं सोमं चन्द्रं मां विद्धीत्यनुषज्जते एवं यक्षरक्षसामित्यत्रापि धनेशं कुबेरं मां विद्धीत्यर्थः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

आत्मा सर्वगुणा ईश्वरोऽहममीषां भूतानां सुहृत् अनुपकृतबन्धुः कुत इति तत्राह। अहमिति। ननु स्वभुक्तिरेवाङ्क्तिक तत्राह। तेषामिति—

स्थित्युद्भवादिहेतुत्वाद्भूतानि हरिरुच्यते।
नतु भूतस्वरूपत्वात्सोऽहं सर्वेश्वरेश्वर इति ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यदन्यत्र एतस्मात्परमात्मनस्तुष्ट्यादिहेतुत्वात्तदधीनत्वाद्वैकवाक्यत्वं स्वरूपैक्याद्विति भावः ॥ ६ ॥

विभूतीराह । अहं गतिरिति । गतिमतां ज्ञानवतां गतिर्ज्ञानमहं ज्ञानं ज्ञानवतामहमिति । तद्वत्सु नित्यसन्निहितमित्यर्थः । कलयतां संहरतां कालः कालाभिमानी—

ब्रह्मस्वजात्युत्तमत्वं तु भेदरूपसन्निधेः ।
विभूतिरूपं तत्प्रोक्तमिन्द्रियादिषु संस्थितम् ॥
तथा बहिः स्थितं रूपं विभूतिलेश ईरितम् ।
सर्वसाधारणं रूपमन्तर्यामीति चोच्यते ॥
यथा कृष्णात्मना बुद्धहन्ता व्यासात्मना समः ।
असमोऽप्येकरूपोऽपि सामर्थ्यात्पुरुषोत्तमः ॥

इत्यनेन विभूतीनां भगवद्रूपताभिधा नात्स्वजात्युत्तमः स्वाधिकं निर्णीतम्—

ब्रह्मरुद्रेन्द्रजीवेभ्यः पृथगेव व्यवस्थितम् ।
विभूतिरूपं विष्णोस्तु तद्भेदैककारणम् ॥
तदेव ब्रह्मरुद्रादिनामभिर्वाच्यमञ्जसा ।
तदेव देवेष्विन्द्रोऽस्मि तथा रुद्रेषु शङ्करः ॥

इत्यादिनोक्तं कृष्णेन नेन्द्रादयो जीवसञ्ज्ञयाः इत्यनेन ब्रह्मादिभ्यो भिन्नं तन्नामकत्वेनोच्यत इति विभूतिरिति ज्ञातव्यम्—

प्रधानो ज्ञानिनां ब्रह्मा ज्ञानमानी हृदि स्थितः ।
स एव कालमानी तु संहर्तॄणां प्रभुः स्मृतः ॥

इतिवचनात् युक्तं गुणानां मध्ये सौम्यमहम् वमेनानन्दानुभवेन सहितः सोमस्तस्य भावः सौम्यं सर्वगुणाधिकोऽयम्—

आनन्दानुभवस्तूत्तम वस्त्वनुभवात्स्मृतः ।
तद्युक्तत्वं तथा सौम्यं गुणानामधिकं हि तत् ॥
भक्त्यादिगुणपूर्णोऽपि दुःखहेतुस्वभावनात् ।
निष्फलो भवति ह्यद्धा प्रीतस्य सफलो भवेत् ॥
तस्मादानन्दमानं तु गुणोत्कृष्टमुच्यते ।
यस्याभिमानी ब्रह्मैको भक्तिज्ञानादिकस्य च ॥
अस्याभिमानिनी देवी तथैव तु सरस्वती ।
तदन्येषां गुणानां तु तदन्ये विबुधाः स्मृताः ॥
गुणानां तु प्रभुर्ब्रह्मा तस्मादेकश्चतुर्मुखः ।

इत्युक्तेः आनन्दमानं हरिरानन्द इति ज्ञानमित्यर्थः । गुणिनां मध्ये गुणिनि स्थितो य औत्पत्तिको गुणः सूत्रं वायुः सोऽहमित्यर्थः । अपिशब्दः सूत्रस्यौत्पत्तिकगुणाभिमानित्वं समुच्चिनोति तदुक्तम्—

औत्पत्तिकगुणो नाम शुभप्राप्त्यैकयोग्यता ।
तस्याभिमानी प्राणस्तु स हि सर्वगुणाधिकः ॥

इति—

गुणानां गुणयोग्यत्वं परसर्वगुणिषु स्थितम् ।
वायुस्तदभिमान्येकः सर्वगुणाधिकस्तत इति च ॥

महतां स्थूलानां महान् महत्तत्त्वम् ॥ १०—११ ॥

त्रिवृत् अकार उकारमकारात्मकः छन्दसां वेदानां पदानि पद्यन्त इति वाच्यानि वेदानां मुख्यार्थः उक्तं च—

स्वयूथानामथाधिक्ये स्वजातीनामथापि वा ।
यत्कारणं विभूत्याख्यं विष्णोस्तद्रूपमुच्यते इति

वर्णेष्वपि पदान्याहुः पादाश्चापि तदीश्वराः ।
पादानामीश्वरार्द्धर्चास्तदीशा ऋच एव तु ॥
ऋचामधीशा वर्गाश्च तेषां सूक्तमधीश्वरम् ।
सूक्ताधीशास्तथाध्यायास्तेषामीशास्तथाष्टकाः ॥
तदधीशास्तथा शाखा वेदाश्चापि तदीश्वराः ।
वेदानामीश्वरा वाच्या वाच्यानामीश्वरो हरिः ॥
न हरेरीश्वरः कश्चित्कदाचित्क्वापि विद्यते ।

इति—

पदं पदसहस्रेण यश्चरन्नापराध्यते ।

इतिवत् पदं तु वाचकं प्रोक्तं क्वचिद्वाच्यमपीष्यत इति अत्रेदं तात्पर्यमवगन्तव्यम्—

सर्ववेदाभिमानिभ्यो देव्यो लक्ष्मीस्ततोऽधिका ।
वेदाभिमानिनी साक्षात्सा विष्णोर्दूरवस्थिता ॥
यज्ञाख्या सैव विष्णोस्तु या तूरःस्थलमाश्रिता ।
हरिणा रतियोगस्था दक्षिणाख्यापि सैव तु ॥
उत्तरोत्तरतः सापि विशिष्टा दक्षिणामुखे ।
एवं वेदाभिमानिभ्यो देवेभ्यः सर्व एव तु ॥
तदर्थरूपाः एतदस्तस्यास्तस्यास्तयोत्तमाः ।
शच्या इन्द्रस्ततश्चोमा तस्या रुद्रस्ततोऽवरः ॥
भारती प्राणः एवाऽस्यास्ततः श्रीस्तत्परो हरिः ।

इति ॥ १२ ॥

इन्द्रो रुद्रादिभिर्विना सर्वदेवानामुत्तमः ।
ऋते रुद्रादिकानिन्द्रः सर्वदेवाधिकस्ततः ॥
ऋते भीमं फाल्गुनश्च पाण्डवेभ्योऽधिकस्ततः ।
तथा शुक्रः कवीशस्तु बृहस्पत्यादिकानृते ।
यमः संयमतामीशः शङ्करादीन् विनैव तु इति॥१३—१६॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्र प्राकृतेष्वप्राकृतीमाह । अहमात्मेति । आत्मा परमात्मा सुहृत्स्वतो हितकारी ईश्वरः सर्वप्रवर्त्तकश्च तेष्वेव प्राकृतीमाह । अहमिति । भूतानां मध्ये भूतानि अहं भगवद्विशेषानुभावितत्वेनैव व्यवहारसिद्धेः तेष्वेवाप्राकृतीमाह । तेषामिति । स्थितीति महत्स्रष्टृपुरुषः सर्वकारणमित्यर्थः एवमन्यत्रापि ॥ ९ ॥

गतिः फलं शरणागतिर्वा ॥ १० ॥

सूक्ष्माणामिति सूक्ष्मतापरकाष्ठां प्राप्तो जीव इत्यर्थः । दुर्ज्ञेयत्वाद्यत्सूक्ष्मत्वं तदत्र न विवक्षितं महतां चेति सूक्ष्माणामपीति परस्परप्रतियोगित्वेन वाक्यद्वयस्यानन्तर्योक्तौ स्वारस्यभङ्गात् प्रपञ्चमध्ये सर्वकारणत्वान्महत्तत्त्वस्य महत्त्वं नाम व्यापकत्वं न तु पृथिव्याद्यपेक्षया सूक्ष्मत्वं यथा तद्वत् प्रपञ्चे जीवानामपि सूक्ष्मत्वं परमाणुत्वमेवेति स्वारस्यं श्रुतयश्च एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेशेति बालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेयः आराग्रमात्रो ह्यवरोऽपि दृष्ट इति च ॥ ११—२३ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

ता विभूतीः सामान्यतः कथयति । अहमिति ॥ ९ ॥

विशेषतो विभूतीराह । अहमिति । अत्र प्राकृताप्राकृतवस्तुसारा एव विभूतय उच्यन्ते तत्र काश्चिन्निर्धारणषष्ठ्या काश्चित्संबन्धषष्ठ्या चात्मचक्षुष्ट्वसमानाधिकरण्याः प्रथमान्ता द्वितीयान्ताश्च ज्ञेयाः गतिमतां कर्मिज्ञानिप्रभृतीनां गतिः प्राप्यफलं कलयतां वशीकुर्वतां मध्ये कालः साम्यं प्रकृतिः गुणिनि धर्मिणि औत्पत्तिकः स्वाभाविको यो गुणः सोऽहं यथा आकाशे शब्दः ॥ १० ॥

सूत्रं सूत्रतत्त्वं प्राण इत्यर्थः । महतां महत्त्ववतामन्तःकरणानां मध्ये महांश्चित्तमित्यर्थः । जीव इति । "एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेशेति वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेय इति आराग्रमात्रो ह्यवरोऽपि दृष्ट" इत्यादिश्रुतिभ्यः अत्र जीवस्य परमाणुप्रमाणत्वेऽपि संपूर्णदेहव्यापिशक्तिमत्त्वं जतुजटितस्य महामणेर्महौषधिविशेषस्य च शिरसि धृतस्य संपूर्णदेहपुष्टीकारिगुणशक्तिमत्त्वमिव न विरुद्धम् ॥ ११ ॥

वेदानां वेदाध्यापकानां मध्ये हिरण्यगर्भो ब्रह्मा पदानि त्रिपदा गायत्रीत्यर्थः ॥ १२ ॥ १३ ॥

हविर्धानी कामधेनुः ॥ १४ ॥ १५ ॥

नक्षत्रोषधीनां प्रभुं सोमं यक्षरक्षसां प्रभुम् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अथ ताः विभूतीराह । हे उद्धव ! अमीषां चिदचिद्रूपाणां भूतानामात्मा सत्ताप्रदतयाऽत्रः यथा ओषधीनां भूः यथा केशादीनां पुरुषः अत एव सर्वाणि भूतान्यहम् परमात्मत्वेन जीवात्मत्वेनाचेतनत्वेन च पदार्थानां भिन्नत्वं सर्वस्य मदात्मकत्वादभिन्नत्वमित्यर्थः । तदुक्तं भगवता पूर्वाचार्येण

सर्वं हि विज्ञानमतो यथार्थकम्
श्रुतिस्मृतिभ्यो निखिलस्य वस्तुनः ।
ब्रह्मात्मकत्वादिति वेदविन्मतं
त्रिरूपतापि श्रुतिसूत्रसाधितेति ॥

इमं ब्रह्मविश्वयोः सम्बन्धं विशेषेणोपपादयति । तेषां स्थित्युद्भवाप्यय इति । भूतानि भिन्नान्यपि मदभिन्नानि मदायत्तस्थित्यादिमत्त्वादित्यर्थः । तथा च श्रुतिः सर्वं खल्विदं ब्रह्म तज्जलानिति इदं सर्वं ब्रह्मैव कुतः तज्जत्वात्तल्लत्वात्तदनत्वात् इतिशब्दो हेतावितिवेदान्तकौस्तुभे स्थितम् प्रकारान्तरेण भेदाभेदमुपपादयितुं विशिनष्टि । सुहृदिति ईश्वर इति च । सर्वाणि भूतानि अहं यतस्तेषां सुहृत् पालकत्वादिना ईश्वरो नियन्तृत्वादिना पाल्यपालकतादात्म्यं यथा पुत्रो मदभिन्न इति प्रसिद्धम् शास्त्रेऽपि "पिता वै पुत्रनामासीति" नियन्तृनियम्यतादात्म्यं यथा सेनायां गच्छन्त्यां राजा प्रयातीति प्रसिद्धम् शास्त्रेऽपि "न वै वाचो न चक्षूंषि न मनः इत्याचक्षते प्राण इत्येवाचक्षते" इति छान्दोग्यादौ सर्वेषामिन्द्रियाणां प्राणाभिन्नत्वं सुप्रसिद्धम् सर्वविद्वदभिमतम् एवं सर्वेषां भूतानां भगवदात्मकत्वात् भगवदधीनस्थित्यादिमत्त्वात् भगवत्पाल्यत्वात् भगवन्नियाम्यत्वाच्च भगवतो भिन्नत्वेऽप्यभिन्नत्वेन भगवद्विभूतित्वम् ॥ ९ ॥

एवं सर्वस्य चिदचिदात्मकस्य विश्वस्य स्वविभूतित्वमुक्त्वा तत्र विशेषतो विभूतीराह । अहमिति । गतिमतां श्रेष्ठगतिमतां तेषां विशेषत्वसंपादिका गतिरहम् कलयतां शुभाशुभप्राप्तिनिमित्ततया संख्यावभासमानानां मध्ये कालोऽहं गुणानां साम्यं समत्वमहम् गुणिनि औत्पत्तिकः स्वाभाविको यो गुणः सोऽहम् ॥ १० ॥

सूत्रं महतः सूक्ष्मावस्थारूपं महान्महत्तत्त्वम् सूक्ष्माणां बुद्ध्यादीनां सम्बन्धी तत्प्रकाशकः सूक्ष्मतरो जीवः

बुद्धेर्गुणेनात्मगुणेन चैव
ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः ।
अणुर्ह्येष आत्मा चेतसा वेदितव्यः

इत्यादिश्रुतेः ॥ ११ ॥

वेदानां सम्बन्धी तेषां प्रवर्तकः पदानि त्रिपदा गायत्री ॥ १२ ॥ १३ ॥

हविर्धानी कामधेनुः ॥ १४ ॥ १५ ॥

असुरेश्वरं दैत्यानां प्रभुं प्रह्लाद मां विद्धि ॥ १६ ॥

---

भाषा टीका।

हे उद्धवजी ! मैं इन सब भूतों का सुहृत् हूं आत्मा हूं ईश्वर हूं मैं ही सब भूत रूप से कहा जाता हूं और इनकी उत्पत्ति-स्थिति प्रलय करने वाला भी मैं हूं ॥ ९ ॥

स्वर्गादिगति वाले जितने हैं तिनके मध्य में मैं गति हूं वश करने वालों में मैं काल हूं गुणों में मैं समता हूं गुण वालों में मैं स्वाभाविक गुण हूं ॥ १० ॥

सत्त्वादि गुण वालों में मैं प्रथम कार्य रूप सूत्र हूं बड़ों में मैं महत्तत्त्व हूं सूक्ष्मों के मध्य में मैं जीव हूं दुर्जेय पदार्थों के मध्य में मैं मन हूं ॥ ११ ॥

वेदों के पढ़ाने वालों में मैं ब्रह्मा हूं मन्त्रों के मध्य में मैं तीन मात्रा वाला ओंकार हूं अक्षरों में मैं अकार हूं वैदिक छन्दों में मैं त्रिपदा गायत्री हूं ॥ १२ ॥

सब देवों के मध्य में मैं इन्द्र हू वसुओं में मैं अग्नि नामक वसु हूं द्वादश आदित्यों में मैं विष्णु नामक सूर्य हू ग्यारा रुद्रों में मैं नील लोहित नामक रुद्र हूं ॥ १३ ॥

ब्रह्मर्षियों के मध्य में मैं भृगु हू राजर्षियों में मैं मनु हूं देवर्षियों में मैं नारद हू धेनुओं में मे काम धेनु हूं ॥१४॥

सिद्धेश्वरों के मध्य में मैं कपिल हूं पक्षियों में मैं गरुड हू प्रजापतियों में मे दक्ष हूं पितरों में अर्यमा हूं ॥१५॥

हे उद्धव ! दैत्यों के मध्य में मेरे को तुम असुरों में श्रेष्ठ प्रह्लादजी जानो औषध तथा नक्षत्रों के मध्य में मेरे को सोम जानो यक्ष राक्षसों के मध्य में मेरे को कुबेर जानो ॥ १६ ॥

---

ऐरावतं गजेन्द्राणां यादसां वरुणं प्रभुम् ।
तपतां द्युमतां सूर्यं मनुष्याणां च भूपतिम् ॥ १७ ॥
उच्चैःश्रवास्तुरङ्गाणां धातूनामस्मि काञ्चनम् ।
यमः संयमतां चाहं सर्पाणामस्मि वासुकिः ॥ १८ ॥
नागेन्द्राणामनन्तोऽहं मृगेन्द्रः शृङ्गिदंष्ट्रिणाम् ।
आश्रमाणामहं तुर्यो वर्णानां प्रथमोऽनघ ! ॥ १९ ॥
तीर्थानां स्रोतसां गङ्गा समुद्रः सरसामहम् ।
आयुधानां धनुरहं त्रिपुरघ्नो धनुष्मताम् ॥ २० ॥
धिष्ण्यानामस्म्यहं मेरुर्गहनानां हिमालयः ।
वनस्पतीनामश्वत्थ ओषधीनामहं यवः ॥ २१ ॥
पुरोधसां वसिष्ठोऽहं ब्रह्मिष्ठानां बृहस्पतिः ।
स्कन्दोऽहं सर्वसेनान्यामग्रण्यां भगवानजः ॥ २२ ॥
यज्ञानां ब्रह्मयज्ञोऽहं व्रतानामविहिंसनम् ।
वाय्वग्न्यर्काम्बुवागात्मा शुचीनामप्यहं शुचिः ॥ २३ ॥
योगानामात्मसंरोधो मन्त्रोऽस्मि विजिगीषताम् ।
आन्वीक्षिकी कौशलानां विकल्पः ख्यातिवादिनाम् ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यादसां प्रभुम् तपतां तापयताम् द्युमतां दीप्तिमतां च मध्ये ॥ १७ ॥

संयमतां दण्डयतामित्यर्थः ॥ १८ ॥

शृङ्गिणां दंष्ट्रिणां च मध्ये तेषां प्रभुत्वात् तुर्यः सन्न्यासः प्रथमो ब्राह्मणः ॥ १९ ॥

स्रोतसां प्रवाहाणां च सरसां स्थिरोदकाशयानाम् ॥ २० ॥

धिष्ण्यानां निवासस्थानानाम् गहनानां दुर्गमानाम् ॥ २१ ॥

ब्रह्मिष्ठानां वेदार्थनिष्ठानाम् सेनान्यां चमूपतीनाम् अग्रण्यां सन्मार्गप्रवर्तकानाम् अजो ब्रह्मा ॥ २२ ॥

शुचीनां शोधकानामपि मार्जनतक्षणघर्षणादीनां मध्ये वाय्वादिरूपः शोधकोऽहम् ॥ २३ ॥

योगानां योगाङ्गानामष्टानां मध्ये आत्मसंरोधः समाधिरहम् मन्त्रो नीतिः कौशलानां विवेकादिनैपुणानां मध्ये आन्वीक्षिकी आत्मानात्मविवेकविद्या अख्यात्यन्यथाख्यातिशून्यख्यात्यसत्ख्यात्यनिर्वचनीयख्यातिवादिनामेवमिदमेवं वेति यो दुरन्तो विकल्पः सोऽहम् ॥ २४ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

संयमतां संयच्छताम् इत्यर्थोक्तिः ॥ १८ ॥

मृगेन्द्रस्य शृङ्गित्वाभावाच्छिरोधारासम्भवेन प्रभुर्वेति व्याख्यातम् ॥ १९ ॥

त्रिपुरघ्नः शिवः २० ॥

निवासस्थानानां मध्ये ब्रह्मादिलोकपानां निवासस्थानं मेरुरहं एताः षष्ठ्यो निर्धारणे ॥ २१—२२ ॥

यज्ञानां देवयज्ञब्रह्मयज्ञपितृयज्ञमनुष्ययज्ञभूतयज्ञानां पञ्चानां मध्ये ब्रह्मयज्ञो वेदाध्ययनलक्षणो यज्ञोऽहमेव यागत्र शुद्धमिदमिति ब्राह्मणस्य ज्ञेया ॥ २३ ॥

विजिगीषतां जेतुमिच्छतां सम्बन्धीति सम्बन्धे षष्ठी भवतीति । मीमांसका हि शुक्तिरजतादिस्थलेऽख्यातिं मन्यन्ते तल्लक्षणं यथा परस्परासंश्लेषेण स्मरणात्मकं प्रत्यक्षात्मकं यज्ज्ञानद्वयं तदख्यातिरिति इदं तद्रजतं तत्रेदन्तापरामर्शेन प्रत्यक्षतः शुक्त्यादि गृह्यते तत्तापरामर्शेन तु रजतं स्मर्यते । तथाच ज्ञानद्वयमपि सत्यमेव अभेदेन ग्रहणन्तु मानसदोषादित्यर्थः । १ । तार्किका हि शुक्तिरजतादौ अन्यथा ख्यातिं मन्यन्ते तन्मते हि द्व्यणुकाद्यारम्भेण तत्तद्द्रव्यं पृथगेव जायते । अतस्तानि तत्प्रकारकोऽनुभवोऽन्यथाख्यातिः स्मृत्यादेव सर्वमाविद्यया जायत इति

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

शून्यवादिनः ते च शुक्तिरजतादौ शून्यख्यातिं मन्यन्ते तस्याश्च लक्षणम् अलीकपदार्थतया भासमानत्वं शून्यख्यातिरिति । यथा ऽसदात्मकं शून्यमेव शुक्त्यात्मना तथा तदेव रजतात्मनाऽपि भासते किन्तु रजतादिकं यत्र व्यवहारसम्पादकं न स्यात् तत्रालीकत्वेन व्यवहार इत्यर्थः । ३ । आत्मख्यातिरित्येव पाठः किन्त्वसत्ख्यातिरित्येव सर्वत्र दृश्यते तत्र क्षणिकविज्ञानवादिमत एवात्मख्यातिरिति तन्मते यत् सत् तत् क्षणिकमिति व्याप्त्याऽसत्तुल्यत्वादसत्ख्यातिरप्यात्मख्यातिरित्यर्थः । तस्याश्च लक्षणं रजतादिविषयाकारे विज्ञाने सत्यपि अन्ततः स्वप्रदर्शनज्ञ-तापादकवैशिष्ट्याऽग्रहणमात्मख्यातिरिति । ४ । एवमद्वैतवादिनः सर्वत्रानिर्वचनख्यातिं मन्यन्ते तस्याश्च लक्षणं सदसद्भिन्नत्वे सति सदसदात्मकमनिर्वचनख्यातिः भगवन्मते विकल्पस्य स्वस्वरूपाविभूतित्वात् सर्वत्राविन्त्यख्यातित्वमेवाभिप्रेतम् ॥ २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वाय्वग्नीति । शुचीनां शोधकानां मध्ये वाय्वादिपदार्थोऽहमित्यर्थः ॥ २३ ॥

ख्यातिवादिनामिति । तार्किकपक्षोपलक्षणं विकल्पः त्वया किमेवमुच्यते उतान्यथेति विकल्पः ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गजेन्द्राणां गजश्रेष्ठानां मध्ये ऐरावतं मां विद्धि यादांसि जलजन्तवस्तेषां प्रभुं स्वामिनं वरुणं मां विद्धि द्युमतां द्युतिमतां तपतां मध्ये सूर्यं मां विद्धि नराणां मध्ये भूपतिं नृपं मां विद्धीति ॥ १७ ॥

तुरङ्गाणामश्वानां मध्ये उच्चैःश्रवा नामाश्वोऽहमस्मि संयमतां दण्डयतां मध्ये यमोऽहमस्मि सर्पाणामेकशिरसां वासुकिरस्मि ॥ १८ ॥

नागा अनेकशिरसः तेषां मध्येऽनन्तोऽहमस्मि शृङ्गिणां दंष्ट्रिणां च मृगाणां मध्ये मृगेन्द्रः आश्रमाणां ब्रह्मचर्यादीनां चतुर्णां मध्ये यश्चतुर्थः चतुर्थः संन्यासः सोऽहं वर्णानां ब्राह्मणक्षत्रियविट्शूद्राणां मध्ये यः प्रथमो ब्राह्मणवर्णः सोऽहम् ॥ १९ ॥

स्रोतसां प्रवाहरूपाणां तीर्थानां गङ्गा जाह्नव्यहमस्मि सरसां स्थिरोदकाशयानां समुद्रः धनुष्मतां धनुर्धराणां मध्ये त्रिपुरघ्नो रुद्रोऽस्मि ॥ २० ॥

धिष्ण्यानां निवासस्थानानाङ्गहनानां दुर्गमानां वनस्पतीनां वृक्षाणाम् ॥ २१ ॥

पुरोधसाम्पुरोहितानामृषिश्रेष्ठानां वेदार्थनिष्ठानाम्पुरोधसां बृहस्पतिः ऋषिष्ठानां वसिष्ठोऽहमिति सम्बन्धः सेनान्यां सेनापतीनां स्कन्दोऽहम् अग्रण्यां सन्मार्गप्रवर्तकानां भगवानजो ब्रह्माहम् ॥ २२ ॥

शुचीनां शोधकानां मध्ये वाय्वादिपदार्थरूपो नितरां शोधकोऽहमित्यर्थः ॥ २३ ॥

योगानामङ्गानां मध्ये आत्मसंरोधः समाधिरहं विजिगीषतां सम्बन्धी मन्त्रो जयोपायो नीतिरहमस्मि कौशलानां विवेकादिनैपुण्यानां मध्ये आन्वीक्षिकी आत्मानात्मविवेकविद्या ख्यातिवादिनामन्यथाख्यातिवादिनां तार्किकादीनां सम्बन्धी यो विकल्पः त्वया किमेवमुच्यते उतान्यथेति यो विकल्पः सोऽहमस्मि ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

द्युमतां प्रकाशवताम् ॥ १७ ॥

धातूनां गैरिकाणाम् ॥ १८ ॥

गार्हस्थ्यं च यतित्वं च वेदेष्वेकत्वमागतम् ।
प्राधान्योक्तिर्यतित्वस्य गार्हस्थ्यस्य क्वचित्क्वचिदिति च

तुर्यश्चतुर्थो यत्याश्रमः ॥ १९ ॥

स्रोतसां नदीनां तीर्थानां शुद्धजलानां रूपान्तरविवक्षया त्रिपुरघ्न इत्यादि ॥ २० ॥

गहनानां गम्भीराणाम् ॥ २१ ॥

वसिष्ठोऽप्यधिकस्तेषां मनुष्याणां पुरोधसामित्युक्तेः मनुष्याणां पुरोधसामधिको वसिष्ठः ऋषिष्ठानां वैदिकानां सेनान्यां सेनापतीनामग्रण्यां श्रेष्ठानाम् अजः ब्रह्मा ॥ २२ ॥

ब्रह्मयज्ञः स्वाध्याययज्ञः वाय्वग्न्यर्काम्बुवागात्मा निवामकः शुचीनां शुद्धिकराणां शुचिः शुचिकरः ॥ २३ ॥

योगानामात्मसंरोधः मनोरोधः मन्त्रो गुह्योक्तिः मन्त्रगोप्तिषु गुह्योक्तिरिति यावत् कौशलानां शुभहेतूनामान्वीक्षिकी तर्कविद्या ख्यातिवादिनां ज्ञानवादिनां मध्ये विकल्पो विशिष्टकल्पो जीवेशादिभेदवादः—

जीवेशादिविशेषं यो यथार्थेन प्रकल्पयेत् ।
कल्पिमारभ्य वा विष्णोराधिक्यात्तूत्तरोत्तरम् ।
नियमेनैव केनापि न छेद्यः सन्विकल्पकः ।
सर्वज्ञानिविशेषेभ्यः स ज्ञानी सर्वगाधिकः ॥

इतिवचनात् उक्त एवार्थः अत्रापि भेददृष्ट्याभिमानेन चेत्युक्तम् विद्यात्मनि भिदाबोध इति च वक्ष्यति ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

ख्यातिवादिनामिति । तथाहि आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथाख्यातिरनिर्वचनख्यातिरित्यनत् ख्यातिपञ्चकम् । विज्ञानशून्यमीमांसकाऽद्वैतविदां मतमिति तत्रान्तर्वृत्तिरूपविज्ञानपरम्परैव तत्तद्विषयाकारतया बहिर्भासते क्षणिकविषयवदिति विज्ञानवादिनः ते च शुक्तिरजतादावात्मख्यातिं मन्यन्त

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्याश्च ख्यातं विषयाकारकेऽपि वैशिष्ट्यासंसर्गं आत्मख्याति- रिति विषयो रजतादिवस्त्वेवाकारो यस्य तस्मिन् विज्ञानेऽपि सति स्वप्नवदेवान्तरो रजताद्यावरकर्वोऽशुद्धाग्रहणमात्मख्याति- रित्यर्थः । अथ शून्यादेव सर्वमविद्यया जायत इति शून्यवादिनः ते च शुक्तिरजतादावप्यसत्ख्यातिं मन्यन्ते तस्याश्च लक्षणं अलीकपदार्थतया भासमानत्वमसत्ख्यातिरिति यथासदाख्यं शून्यमेव शुक्त्यात्मना भासते तथा रजतात्मनापि भासते किन्तु यत्र रजतादिकमर्थक्रियाकारि न स्यात् तत्रालीकपदा- र्थतया व्यवह्रियत इत्यर्थः । अथ शुक्त्यादिपरम्परारूपं रजता- दिपरम्परारूपमपि वस्तुजातमस्तीति मीमांसकाः ते च शुक्तिरजतादावख्यातिं मन्यन्ते तस्याश्च लक्षणं परस्पर- संश्लेषेण यज्ज्ञानद्वयं तदख्यातिरिति विज्ञानानां च विज्ञेयानां च विवेकाग्रहणमिति च इदन्तापरामर्शेन शुक्त्यादिकं गृह्यते तत्तापरामर्शेन तु रजतम् अभेदेन ग्रहणं तु मानसदोषादित्यर्थः अथ द्व्यणुकाद्यारम्भेण तत्तद्द्रव्यं जायत इति तार्किकाः ते च शुक्तिरजतादावन्यथाख्यातिं मन्यन्ते तस्याश्च लक्षणम् अत इति तत्संसर्गोऽन्यथाख्यातिरिति पूर्वरजतादिकधर्माभाववति शुक्त्यादिवस्तुनि पूर्वतद्धर्मारोपोऽन्यथाख्यातिरित्यर्थः । विरुद्धप्रका रकं ज्ञानमेकत्रान्यथाख्यातिरिति प्राचीनतार्किकाः अथ सर्व- मेव द्वैतमनिर्वचनीयमित्यद्वैतवादिनः ते च तस्य दृष्टान्ते शुक्तिरजतादावनिर्वचनीयख्यातिं मन्यन्ते तस्याश्च लक्षणं सदसद्भिन्नत्वे सति सदसदनात्मकं ज्ञानमनिर्वचनीयख्याति- रिति ज्ञानबाधितत्वात्सतो भिन्नं तथाप्यापातत उपलभ्यमान- त्वादसतो भिन्नं तथात्वे सति सदसदनात्मकं ज्ञानमनिर्वचनी- यख्यातिरित्यर्थः । स्वमते तु विकल्पः ख्यातिवादिनामित्युक्त्वा ते च विकल्पा मम शक्तिमया एवेति न परस्परमद्यापि व्युच्छि- द्यन्ते ततस्तत्प्रतिपाद्यस्य शक्तेश्चाचिन्त्यत्वं विज्ञाप्य तन्मय- त्वात्सर्वत्राचिन्त्यख्यातित्वमेव प्रतिपादितम् ॥ २४—२६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गजेन्द्राणां मध्ये यादसां तु प्रभुम् ॥ १७ ॥

संयमतां दण्डयताम् ॥ १८ ॥

शृङ्गिणां मध्ये मृगेन्द्रः कृष्णसारः दंष्ट्रिणां मध्ये मृगेन्द्रः सिंहः तुर्यः संन्यासः प्रथमो ब्राह्मणः ॥ १९ ॥

सरसां स्थिरजलाशयानाम् ॥ २० ॥

धिष्ण्यानामाश्रयस्थानानां गहनानां दुर्गाणाम् ॥ २१ ॥

ब्रह्मिष्ठानां वेदनिष्ठानां सेनान्यां चमूपतीनाम् अग्रण्याम- ग्रणीनाम् ॥ २२ ॥

ब्रह्मयज्ञो वेदपाठः शुचीनां शोधकानां मध्ये वाय्वग्न्यादि- रूपः शुचिः शोधकोऽहम् ॥ २३ ॥

योगानां योगाङ्गानामष्टानां मध्ये आत्मसंरोधः समाधिरहं मन्त्रः विग्रहादिप्रयोजकः कौशलानां विवेकसंविदन्वेषणपुण्यानां मध्ये आन्वीक्षिकी आत्मानात्मविवेकविद्या ख्यातिवादिनामिति

आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा ।

तथानिर्वचनख्यातिरित्येतत् ख्यातिपञ्चकम् ।

विज्ञानशून्यमीमांसातर्काद्वैतविदां मतम् ॥

पञ्चानां ख्यातिवादिनाम् एवमिदमेवं वेति यो दुरन्तो विकल्पः सोऽहम् ॥ २४ ॥ २५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गजेन्द्राणां प्रभुमैरावतं यादसां प्रभुं वरुणं च मां विद्धि तपतां द्युमतां दीप्तिमतां च मध्ये सूर्यं मनुष्याणां च मध्ये भूपतिं मां विद्धि ॥ १७ ॥

संयमतां यथाकर्म संयमनकारिणाम् ॥ १८ ॥

तुर्यः संन्यासः प्रथमः ब्राह्मणः ॥ १९ ॥ २० ॥

धिष्ण्यानामालयानाम् गहनानामगम्यानाम् ॥ २१ ॥

सेनान्यां सेनापतीनाम् अग्रण्यां सद्धर्मनेतॄणाम् ॥ २२ ॥

ब्रह्मयज्ञो ब्रह्मणि मनोऽर्पणम् शुचीनां शुद्धिहेतूनां मार्ज- नतक्षणादीनां मध्ये वाय्वादिरूपोऽहं शुचिः ॥ २३ ॥

योगानामष्टानामात्मसंरोधः मनसः समाधिः विजिगीषतां सम्बन्धी मन्त्रो हिताहितनिश्चयः कौशलानां कुशलकर्तृक- विचाराणां मध्ये आन्वीक्षिकी आत्मानात्मपरमात्मवि- चारविद्या ख्यातिवादिनां ख्यातिः प्रत्यक्षप्रमाणेन जगत्प्रसिद्धि- स्तद्वादिनां निरीश्वराणां सम्बन्धी विकल्पः विशेषतः कल्पः समर्थः प्रतिभटः वेदबलेनेश्वरप्रतिपादकः आचार्योऽहमस्मीत्यर्थः ॥ २४ ॥

---

### भाषा टीका ।

गजेंद्रों के मध्य में मैं ऐरावत हूं जलजंतुओं में मैं वरुणप्रभु हूं तपनेवाले प्रकाशवालों में मैं सूर्य हूं मनुष्यों में मैं राजा हूं॥१७॥

घोड़ों में मैं उच्चैःश्रवा हूं धातुओं में मैं सुवर्ण हूं दंड देनेवालों में मैं यम हूं सर्पों में मैं वासुकि हूं ॥ १८ ॥

नागेंद्रों में मैं अनन्त हूं सींगवाले दांतवालों में मैं कृष्णमृग तथा सिंह हूं आश्रमों में मैं चौथा संन्यास आश्रम हूं हे अनघ ! उद्धवजी वर्णों में मैं प्रथम वर्ण ब्राह्मण हूं ॥ १९ ॥

तीर्थ नदी इन के मध्यमें मैं गंगा हूं स्थिर जलाशयों में मैं समुद्र हूं आयुधों में मैं धनुष हूं धनुषधारियों में मैं त्रिपुरघ्न महादेव हूं ॥ २० ॥

उत्तम स्थानों में मैं मेरु हूं दुर्गम स्थानों में मैं हिमालय हूं वृक्षों में मैं पीपल हूं औषधियों में मैं यव हूं ॥ २१ ॥

पुरोहितों में मैं वसिष्ठ हूं ब्रह्मज्ञानियों में मैं बृहस्पति हूं सब सेनापतियों में मैं कार्तिकस्वामी हूं धर्मादि प्रवर्तक अग्रगण्यों में मैं भगवान् ब्रह्मा हूं ॥ २२ ॥

यज्ञों के मध्य में मैं ब्रह्मयज्ञ हूं व्रतों में मैं अहिंसा व्रत हूं शुद्धिकरनेवालों में मैं वायु सूर्य अग्नि जल विप्रवाक्य रूप शुद्धियों में मैं शुद्ध हूं ॥ २३ ॥

योगों में मैं समाधि हूं जीतनेकी इच्छावालों में मैं गूढ विचार रूप मंत्र हूं सबकुशलताओं में मैं आत्मपरमात्म विवेक वाली विद्या हूं सत्ख्याति अन्यथाख्याति आदि में विकल्प इनका मत मैं ही मैं हूं॥ २४ ॥

स्त्रीणां तु शतरूपाऽहं पुंसां स्वायंभुवो मनुः ।
नारायणो मुनीनां च कुमारो ब्रह्मचारिणाम् ॥ २५ ॥
धर्माणामस्मि (१)सन्न्यासः क्षेमाणामबहिर्मतिः ।
गुह्यानां (२)सूनृतं मौनं मिथुनानाम(३)जस्त्वहम् ॥ २६ ॥
संवत्सरोऽस्म्यनिमिषामृतूनां मधुमाधवौ ।
मासानां मार्गशीर्षोऽहं नक्षत्राणां तथाऽभिजित् ॥ २७ ॥
अहं युगानां च कृतं धीराणां देवलोऽसितः ।
द्वैपायनोऽस्मि व्यासानां कवीनां काव्य आत्मवान् ॥ २८ ॥
वासुदेवो भगवतां त्वं तु भागवतेष्वहम् ।
किंपुरुषाणां हनुमान् विद्याध्राणां सुदर्शनः ॥ २९ ॥
रत्नानां पद्मरागोऽस्मि (४)पद्मकोशः सुपेशसाम् ।
कुशोऽस्मि दर्भजातीनां गव्यमाज्यं हविःष्वहम् ॥ ३० ॥
व्यवसायिनामहं लक्ष्मीः कितवानां छलग्रहः ।
तितिक्षाऽस्मि तितिक्षूणां सत्त्वं सत्त्ववतामहम् ॥ ३१ ॥
ओजः सहो बलवतां कर्माहं विद्धि सात्वताम् ।
सात्वतां नवमूर्तीनामादिमूर्तिरहं (५)परा ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

कुमारः सनत्कुमारः ॥ २५ ॥

सन्न्यासो भूताभयदानम् क्षेमाणामवस्थानानां मध्ये अबहिर्मतिरन्तर्निष्ठा सूनृतं प्रियवचनं मौनं च नहि प्रियभाषणे मौनं च पुरुषस्याभिप्रायो ज्ञायते अजः प्रजापतिः यस्य देहार्धेऽर्धां मिथुनमभूत् स एव मुख्यं मिथुनम् अर्धो ह वा एष आत्मनो यत्पत्नीति श्रुतेः ॥ २६ ॥

अनिमिषामनिमिषाणामप्रमत्तानाम् मधुमाधवौ वसन्त इत्यर्थः । अभिजिदुत्तराषाढाचतुर्थपादः श्रवणाप्रथमपादश्च तथा च श्रुतिः "अभिजिन्नाम नक्षत्रमुपरिष्टादाषाढानामवस्तात् श्रोणाया इत्यादिः" ॥ २७ ॥

कृतं कृतयुगम् देवलोऽसितश्च व्यासानां वेदविभागकर्तॄणाम् कवीनां विदुषां काव्यः शुक्रः ॥ २८ ॥

भगवताम्—

उत्पत्तिं प्रलयञ्चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥

इत्येवं लक्षणानाम् ॥ २९ ॥

सुपेशसां सुन्दराणाम् दर्भजातीनां काशदूर्वादीनाम् हविःषु चरुपुरोडाशादिषु घृतेषु वा ॥ ३० ॥

लक्ष्मीर्धनादिसम्पत् ॥ ३१ ॥

बलवतामोजश्च सहश्च सात्वतां भागवतानां भक्त्या कृतं कर्माहमित्यर्थः । तेषामेव नवव्यूहार्चने वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धनारायणहयग्रीववराहनृसिंहब्रह्माण इति या नव मूर्तयस्तासां मध्ये वासुदेवाख्या ॥ ३२ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी।

मुनीनां मननशीलानां मध्ये नारायण इत्यप्राकृतविभूतिनिर्देशः ॥ २५ ॥

आश्रमाणामहं तुर्य इत्यत्र सन्न्यासस्य व्याख्यातत्वात् पुनरुक्तिमाप्रसाङ्क्षीदिति सन्न्यासशब्देन भूताभयदानलक्षणो धर्मो व्याख्यातः भूताभयप्रदानस्य कलां नार्हन्ति षोडशीमित्युक्तेः विशेषणाभेदेन विशेष्यभेदावगमात् पूर्वं वेदाध्यापकत्वावच्छेदेन हिरण्यगर्भो विभूतित्वेनोक्तः इह तु मिथुनोत्पादकत्वावच्छेदेनेति विशेषः । पत्नीति यत् एव आत्मनो देहस्यार्द्धो भाग इति श्रुत्यर्थः ॥ २६ ॥

उत्तराषाढाचतुर्थपाद इत्युपलक्षणं श्रवणाद्यघटिकाचतुष्टयस्य आषाढानामुत्तराषाढायाश्चतुर्थः पादः पञ्चदशघटिकारूप उपरिष्टादभिजिन्नक्षत्रस्योपरितनो भागः श्रोणायाः श्रवणस्याद्यघटिकाचतुष्टयस्य अधस्तनो भाग इति श्रुत्यर्थः । तदुक्तं ज्योतिर्विद्भिः । उषाषाढान्त्यपादे तु श्रुतेराद्याश्चतस्रो नाडिकाः । अभिजिद्भुक्तिरित्येवमष्टाविंशतिमेषु सर्वे ॥ २७ ॥

(१) संन्यासः (२) सूनृतं (३) पुमानहम् (४) पद्मकोशस्तु (५) पुरा इति विश० पाठः।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

विदुषां वयउनीतवादयात्मज्ञानपर्यन्तशास्त्रज्ञानां मध्ये आत्मवान् आत्मानात्मविवेकज्ञः ॥ २८ ॥

वासुदेवश्चतुर्व्यूहान्तरस्थादिरूपः एतच्च तस्य विभूतित्व स्वस्य ततोऽपि परत्वं दर्शितं यद्यपि उत्तरत्वादियुक्तानामिति स्वामिव्याख्याने मुख्यादित्वे प्राप्ते विजातीयत्वेन निर्द्धारणानुपपत्तिस्तथापि उत्तरत्वादिज्ञानयुक्तत्वमेव जातिं कल्पयित्वा तथा व्याख्यानमिति स्थितञ्च गीतादिश्चान्तनीया ॥ २९ ॥

पद्मरागोऽहमित्यनेन स्वकौस्तुभस्य तज्जातीयत्वं व्यञ्जितम् । पूर्वार्धे हविःषु वक्तव्यया साजात्यकल्पनागौरवाद्घृतेष्विति व्याख्यातम् ॥ ३० ॥

व्यवसायिनामुद्यमवतामिति सम्बन्धे षष्ठी । कितवानां कापट्यवतां सम्बन्धी छलग्रहः द्यूतम् सत्त्वं धैर्यम् ॥ ३१ ॥

ओजः इन्द्रियपाटवं सहः मनःपाटवं नवसु मूर्तिषु ब्रह्मेत्येव सम्यः पाठः ॥ ३२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कुमारः सनत्कुमारः ॥ २५ ॥

सन्यासः फलत्यागः अर्वाहिर्मतिः प्रत्यगात्मानुसन्धानम् ॥ २६ ॥

अनिमिषां कालावयवानाम् अनिमिषः कालस्तेनावयवा लक्षिताः ॥ २७ ॥

कवीनां दिव्यदर्शिनाम् ॥ २८ ॥

भगवतां ज्ञानैश्वर्यादिमतां निर्वाहको वासुदेवोऽहम् ॥ २९-३१ ॥

सात्वतां महाभागवतानां कर्म पञ्चकालानुष्ठानम् आदि मूर्तिः सङ्कर्षणादिभ्यः प्रधानो वासुदेवोऽहमित्यर्थः ३२——३७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

शतरूपा स्वायम्भुवमनोः पत्नी मुनीनां मध्ये यः श्रेष्ठो बदर्याश्रमवासी नारायणस्सोऽहमेव तत्त्वसौ मद्विभूतिरित्यर्थः अर्थान्तराभावात् नारायणनिष्ठनिरतिशयमौनोपयुक्तं यत्सामर्थ्यं तन्मदविनाभूतमित्यर्थः । ब्रह्मचारिणां जितेन्द्रियाणां मध्ये कुमारः सनत्कुमारः ॥ २५ ॥

धर्माणामलौकिकश्रेयःसाधनानां मध्ये सन्यासः अनभिसंहितफलो धर्मः आत्मनिक्षेपापरपर्यायो वा क्षेमाणां भयराहित्यावहानां मध्येऽवहिर्मतिः प्रत्यगात्मस्वरूपानुसन्धानं गुह्यानां मध्ये सूनृतं प्रियवचनं मौनं चाहं नहि प्रियाभाषणे मौने च पुरुषाभिप्रायो ज्ञायते इति तयोर्गुह्यतमत्वं मिथुनानां मध्ये अजः प्रजापतिः यस्य देहार्द्धांश्यां मिथुनमभूत्स एव मुख्य मिथुनम् "अर्द्धो वा एव आत्मनो यत्पत्नीति" श्रुतेः ॥ २६ ॥

अनिमिषामप्रमत्तानां मध्ये सम्वत्सरोऽहमस्मि मधुमाधवौ चैत्रवैशाखौ वसन्त इत्यर्थः । अभिजिदुत्तराषाढाचतुर्थपाद इत्यर्थः तथाच श्रुतिः अभिजिन्नाम नक्षत्रमुपरिष्टादाषाढानामवस्ताच्छ्रोणाया इति ॥ २७ ॥

कृतं कृतयुगमित्यर्थः । धीराणां ब्रह्मसहानां मध्येऽसितो देवलश्चाहं व्यासानां वेदविभागकर्तृणां द्वैपायनः पाराशर्यः कवीनां दीर्घदर्शिनां काव्यः शुक्रः तं विद्धिमहि । आत्मवान् सूक्ष्मबुद्धिमान् ॥ २८ ॥

भगवतां ज्ञानैश्वर्यादिषाड्गुण्ययुक्तानां वासुदेवः ज्ञानादिकं मदायत्तमित्यर्थः । भागवतेषु भगवद्भक्तेषु मध्ये त्वमुद्धवोऽहमस्मि ॥ २९ ॥

सुपेशसां सुन्दराणां मध्ये पद्मकोशः हविषां पुरोडाशादीनां गव्यमाज्यमहमस्मि ॥ ३० ॥

व्यवसायिनामर्थार्जनशीलानां सम्बन्धिनी या लक्ष्मीर्धनादिसम्पत् साहं कितवानां छलयतां सम्बन्धी छलग्रहः छलेन ग्रहः आग्रहः द्यूतादिना जेष्यामीत्यादिरूपः सोऽहं तितिक्षूणामित्यादिषु आश्रयाश्रयिभावसम्बन्धायां षष्ठी तितिक्षा क्षमा सा च मनोविकारहेतौ सत्यपि अविकृतमनस्त्वं सत्त्ववतामित्यत्रातिशायने मतुप् सत्त्वगुणप्रचुराणामित्यर्थः । तेषां यत्सत्त्वं तदहम् ॥ ३१ ॥

तथा ओजस्विनामोजः सहस्विनां सहः बलिनां बलं तत्रौज इन्द्रियपटुत्वं सहो धारणसामर्थ्यं बलं शारीरं सात्वतां भागवतानां सात्वतं पञ्चरात्रोक्तं कर्म पञ्चकालानुष्ठेयं तदहं नव मूर्त्तीनां मत्स्याद्यात्मान्तानां नवानां मूर्तीनां या आदिमूर्त्तिर्मूलभूता मूर्तिः परा सर्वकारणभूता साहं मत्स्यादिमूर्त्तिरूपेणाविर्भावानुगुणं यत्सामर्थ्यं तन्मदविनाभूतमित्यर्थः । अर्थान्तराभावात् भाविन्याः कल्किमूर्त्तेरविवक्षया नवमूर्त्तीनामित्युक्तम् ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

> शतरूपावरा स्त्रीणां पुंसामप्यधिको मनुः ।
> नवाप्यधिकौ नित्यमिन्द्राणीन्द्रौ शुभैर्गुणैरिति ॥

नारायण ऋष्यवतारः ॥ २५ ॥

धर्माणां सुकृतानां क्षेमाणां प्रातरक्षणाम् अवहिर्मतिः प्रत्यगात्मज्ञानं गुह्यानां गोप्यानां मौनं वाचंयमत्वम् असंप्रज्ञातसमाधिस्थत्वं वा ॥ २६ ॥

अनिमिषां काळावयवानाम् ॥ २७ ॥

धीराणां गम्भीराणां व्यासानां वेदविभागं कुर्वाणानां कवीनां वाग्मिनाम् ॥ २८ ॥

भगवतामैश्वर्यादिषड्गुणवतां देवानाम्—

> ऐश्वर्यादिगुणैः षड्भिः सामग्र्यात्सर्वदेवताः ।
> भगवच्छब्दवाच्याश्च साक्षात्तु भगवान् हरिः ।
> निरपेक्षं तु सामग्र्यं तस्य सर्वाधिकं यतः ॥

इतिवचनात् त्वं तु भागवतेष्वहमित्यत्र तात्पर्यार्थोऽयम्

> सर्वभागवताधीशा उद्धवो भगवत्प्रियः ।
> तस्मादप्यधिको जिष्णुः प्रियत्वे भक्तितो हरेः ।
> तस्मादप्यधिको रामः कृष्णा त्वप्यधिका ततः ।
> तस्या अप्यधिको भीमो न तु तत्सदृशः क्वचिदिति ॥

स्मृतिप्रामाणिकः तु व्याक्रोदेऽवधारणे इति च ॥ २९ ॥

पेशसां मुकुलानां मध्ये ॥ ३० ॥

कितवानां दीव्यतां छलग्रहो द्यूतम् ॥ ३१ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

सहोबलवतामोजः ओजोऽस्मि ओजो ऽवष्टम्भबलयोरिति प्रमाणं सात्वतां भागवतानां कर्माहमिति विद्धि सात्वतां पाञ्चरात्रिकाणां श्रियादिनवमूर्तीनाम आदिः स्वकीयमूर्तिरहं कीदृश्यस्ताः पुरा पूर्वकाले प्रथमतः पूज्या इत्यर्थः —

विष्णोः श्रियो ब्रह्मणश्च वायोः सङ्कर्षणस्य च।
सुपर्णस्य च संप्रोक्ताः प्रत्येकं नव मूर्तयः।
पूज्याः सात्वततन्त्रेषु तत्राद्या मूर्तयो हरेः।
प्राधानादता हि सर्वासां मूर्तीनां हरिमूर्तयः।
अभेदादेव मूर्तीनामेकमूर्तिश्च सा स्मृता॥

इति मानं किञ्च

स्वरूपतश्च गुणतो न विशेषः कथञ्चन।
विष्णोस्तु नव मूर्तीनां पूजा च तवक्ष्यते।

इतिवचनादासां स्वरूपत्वं सिद्धम् —

नारायणः परं ब्रह्म वासुदेवादिकास्तथा।
नरसिंहवराहौ च परं ज्योतिर्हरेस्तथा।
इन्दिरा च रमा लक्ष्मीर्हिरण्या गगना तथा।
रक्ता रक्तनरा मूर्तिर्विभूतिश्च श्रियो नव।
ब्रह्मा चतुर्मुखो धाता विधाता विधिरेव च।
कर्ता विरिञ्चो भूतेशः शतानन्दश्च ता नव।
धनञ्जयमृते चैव वायोश्च नव मूर्तयः।
शेषोऽनन्तो नरश्चैव लक्ष्मणो बल एव च।
सङ्कर्षणो नीलवासा जगद्धत्तो ऽधःशयः।
सुपर्णो गरुडश्चैव वैनतेयो महाशनः॥
नववर्णः पञ्चवर्णः पन्नगाशोऽमृताकरः॥
तथैव सर्ववेदात्मा सुपर्णो नवधा स्मृतः॥

इतिवचनान्मूर्तिभेदो ज्ञातव्यः॥ ३२॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

टीकायामभिजिदित्यादौ उत्तरः श्रवणः आषाढा चोत्तराषाढा तयोश्चतुर्थः पाद इति व्याख्येयम्॥ २७॥

कवीनां इगड्डनीत्याद्यात्मज्ञानपर्यन्तशास्त्रविदुषां मध्ये अहं काव्यः यतोऽसौ आत्मवान् आत्मानात्मविवेकज्ञः॥ २८॥ भगवतां षड्गुणयुक्तभगवद्विभावानां मध्ये वासुदेवश्चतुर्व्यूहान्तरव्यादिरूपः अनेन स्वस्य ततोऽपि परत्वं दर्शितम् उत्पत्त्यादियुक्तानामिति व्याख्यायां मुन्यादित्वे प्राप्ते विजातीयत्वेन निर्धारणानुपपत्तेः॥ २९॥

रत्नानां पद्मरागोऽस्मीत्यनेन स्वकौस्तुभस्य तज्जातीयत्वं व्यञ्जितम् अत एव क्रमदीपिकायां कौस्तुभं भानुमन्तमिति तद्ध्यानम् दर्शितम् इन्द्रनीलजातीयत्वं तु नारायणव्यूहस्तवे वक्तव्यत्र ज्ञेयम्॥ ३०—३१॥

नवसु मूर्तिषु ब्रह्माद्यं साक्षाच्छ्रीभगद्रूपः यः खलु तादृशजीवासङ्गावे तत्कर्माणि स्वयमाविर्भवति वज्ररूपेणोपेन्द्रवत्॥ ३२॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

संन्यासस्त्यागो दानमिति यावत् अवहिर्मतिरन्तर्निष्ठा गुह्यानां मध्ये सूनृतं प्रियवचनं मौनं चेति तद्द्वयं न पुंसोऽभिप्रायज्ञापकमतोऽतिगुह्यमित्यर्थः। अजः प्रजापतिः यस्य देहाधोऽर्द्धं मिथुनमभूत् स एव मुख्यं मिथुनम् "अर्द्धो वा एष आत्मा यत् पत्नीति" श्रुतेः॥ २६॥

अनिमिषां कालानां मध्ये वत्सरः मधुमाधवौ वसन्त इत्यर्थः। अभिजित् उत्तराषाढाचतुर्थः पादः तथा च श्रुतिः अभिजिन्नाम नक्षत्रमुपरिष्टादाषाढानामवस्तात् श्रोणाया इति॥२७॥

कृतं सत्ययुगं देवलोऽसितश्च व्यासानां वेदविभागकर्तॄणां कवीनां विदुषां काव्यः शुक्रः॥ २८॥

वासुदेवः प्रथमव्यूहः॥ २९॥

सुपर्वणां सुन्दराणाम॥ ३०॥

यक्षीः सर्वाङ्गः सत्त्ववतां सात्त्विकानां सत्त्वम्॥ ३१॥

बलवताम ओजश्च सहश्च सात्वतां वैष्णवानां कर्म श्रवणकीर्त्तनादिकं तेषामेव व्यूहाख्येन नव वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धनारायणहयग्रीववराहनृसिंहब्रह्माणा इति या नव मूर्त्तयस्तासां मध्ये आदिमूर्त्तिर्वासुदेवनाम्नी। अत्र स्वायम्भुवे मन्वन्तरे यथा विष्णुरेवेन्द्रो यज्ञसंज्ञोऽभूत् तथैव क्वचिन्महाकल्पे विष्णुरेव ब्रह्मा भविष्यतो वासुदेवादीनामन्तिमो ब्रह्मा विष्णुरेव ज्ञेयः॥ ३२॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

कुमारः श्रीसनकः॥ २५॥

संन्यासः मयि सर्वकर्मात्मीयभरन्यासः सूनृतं प्रियवाक्यं मौनं च मिथुनानां दम्पतीनां सम्बन्धी कायद्वैधेन प्रवर्तकः अजो ब्रह्मा यद्वा मिथुनानां जीवशरीरयुगलानां प्रवर्तकः अजः प्रकृतिप्रेरकः पुरुषावतारः उक्तवक्ष्यमाणाः सर्वा विभूतयस्तस्य स तु ममावताररूपविभूतिरिति तुशब्दार्थः स्मृतः पुमान् समाधिगस्य यदास्य बीजं धत्ते महानिर्युक्तत्वात्॥ २६॥

अनिमिषामयमत्तानाम "अभिजिन्नाम नक्षत्रमुपरिष्टादाषाढानामवस्तात् श्रोणाया" इत्यादिश्रुतिप्रसिद्धमभिजिदहम्॥ २७॥

व्यासानां वेदविभागकर्तॄणाम॥ २८॥

उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति॥

इत्येवम भगवतामुत्पत्त्यादिज्ञानवतां ज्ञानिनां वेद्यतया वासुदेवः वासुदेवपरा वेदा इति सर्वैर्वेदैर्वेद्योऽहमेव मां जानन्सर्वोत्पत्त्यादिज्ञानवान् भवतीति भावः॥ २९॥

सुपर्वणां सुन्दरावयवानां पिश समयगं दर्भजातीनां काशदूर्वादीनाम हविःषु चरुपुरोडाशादिषु घृतेषु वा॥ ३०॥

लक्ष्मीः विद्यादिश्रीः॥ ३१॥

बलवतामोजश्च सहश्चाहम सात्वतां भागवतानां कर्म भागवतशास्त्रोक्तं कर्माहमिति विद्धि सात्वतामुपास्यभूता या नवमूर्त्तयः नित्यं नूतना मूर्त्तयस्तासामादिमूर्त्तिः परा पूर्णा साहम्॥ ३२॥

---

विश्वावसुः पूर्वचित्तिर्गन्धर्वाप्सरसामहम् ।
भूधराणामहं स्थैर्यं गन्धमात्रमहं भुवः ॥ ३३ ॥
अपां रसश्च परमस्तेजिष्ठानां विभावसुः ।
प्रभा सूर्येन्दुताराणां शब्दोऽहं नभसः परः ॥ ३४ ॥
ब्रह्मण्यानां बलिरहं वीराणामहमर्जुनः ।
भूतानां स्थितिरुत्पत्तिरहं वै प्रतिसंक्रमः ॥ ३५ ॥
गत्युक्त्युत्सर्गोपादानमानन्दस्पर्शलक्षणम् ।
आस्वादश्रुत्यवघ्राणमहं सर्वेन्द्रियेन्द्रियम् ॥ ३६ ॥
पृथिवी वायुराकाश आपो ज्योतिरहं महान् ।
विकारः पुरुषोऽव्यक्तं रजः सत्त्वं तमः परम्[1] ॥
अहमेतत्प्रसङ्ख्यानं ज्ञानं तत्त्वविनिश्चयः ॥ ३७ ॥
मयेश्वरेण जीवेन गुणेन गुणिना विना ।
सर्वात्मनापि सर्वेण न भावो विद्यते क्वचित् ॥ ३८ ॥
सङ्ख्यानं परमाणूनां कालेन क्रियेत मया ।
न तथा मे विभूतीनां सृजतोऽण्डानि कोटिशः ॥ ३९ ॥
तेजः श्रीः कीर्तिरैश्वर्यं ह्रीस्त्यागः सौभगं भगः ।
वीर्यं तितिक्षा विज्ञानं यत्र यत्र स मेंऽशकः ॥ ४० ॥

भाषा टीका ।

स्त्रियों में मैं शतरूपा हूं पुरुषों में मैं स्वायम्भूमनु हूं मुनियों में मैं बदरीनारायण हूं ब्रह्मचारियों में मैं सनत्कुमार हू ॥२५ ॥

धर्मों में मैं सन्यास हूं कल्याण के उपायों में अन्तर्बुद्धि मैं हूं सुन्दर वचन या गुप्त इनों में मौन मैं हूं स्त्री पुरुष के जोड़ों में मैं ब्रह्मा हूं ॥ २६ ॥

सावधान काल बितानेवालों में मैं सम्वत्सर हूं ऋतुओं में मैं चैत वैशाख बसंत हूं महीनों में मैं मगशिर हूं नक्षत्रों में मैं अभिजित हूं ॥ २७ ॥

युगों में मैं सत्ययुग हूं धैर्यवालों में मैं देवल असित ऋषि हूं व्यासों के मध्य में मैं द्वैपायन हूं कवियों में मैं आत्मज्ञानी शुक्राचार्य हूं ॥ २८ ॥

षड्गुण ऐश्वर्यवालों में मैं वासुदेव हूं भागवतों में तुम उद्धव मैं हूं किं पुरुषगणों में मैं हनुमान् हूं विद्याधरों मे मैं सुदर्शन हूं ॥ २९ ॥

रत्नों मे मैं पद्मराग पीलामणि हूं शोभित पदार्थों में मैं पद्म का पुष्प हूं दर्भ तृण की जातियों मे मैं कुश हू हविषों मे मैं गऊ का घृत हूं ॥ ३० ॥

व्यापार वालों मे मैं लक्ष्मी हूं कपटवालों में मैं जुआ खेल हूं सहनेवालों मे सहना गुण मैं हूं सत्ववालों में सत्व मैं हूं ॥ ३१ ॥

बल वालों में ओज सह इन्द्रिय बल मनबल मैं हूं सात्वत भागवतों में भक्ति सेवनरूपकर्म मैं हूं पञ्च रात्रोक्त नौ मूर्तियों के मध्य में श्रेष्ठ आदि मूर्ति वासुदेव मैं हूं ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

गन्धर्वाणां विश्वावसुः अप्सरसां पूर्वचित्तिः गन्धमात्रम- विकृतम् ॥ ३३ ॥

परमो मधुरः परः परावयः शब्दः ॥ ३४ ॥

अर्जुनः पार्थः भूतानां प्राणिनां प्रतिसंक्रमः प्रलयः ॥ ३५ ॥

गत्यादयः पञ्च कर्मेन्द्रियव्यापाराः स्पर्शादयो ज्ञानेन्द्रियव्यापाराः तत्र लक्षणं दर्शनम् सर्वेन्द्रियाणामिन्द्रियं तत्तदर्थग्रहणशक्तिरप्यहम् ॥ ३६ ॥

तदेवं तत्र तत्र निर्धारणेन तत्तत्सम्बन्धेन च विशेषतो विभूतीर्निरूप्येदानीं सामान्यतः सर्वा अपि निरूपयति । पृथिवीति- सार्द्धत्रयेण । पृथिव्यादिपञ्चकं तन्मात्राणि विवक्षितानि महदहङ्कारः

(१) परः इति० वि० पाठः ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

महान्महत्तत्त्वम् एताः सप्त प्रकृतिविकृतयः विकारः पञ्चमहाभूतानि एकादशेन्द्रियाणि चेत्येवं षोडशसङ्ख्याकः पुरुषो जीवः अव्यक्तं प्रकृतिः एवं पञ्चविंशतितत्त्वानि तदुक्तम्—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुष इति ॥

किञ्च रजः सत्त्वं तम इति प्रकृतेर्गुणाश्च परं ब्रह्म च तदेतत्सर्वमहमेव किञ्चैतत्प्रसङ्ख्यानमेतेषां परिगणनमेतेषां लक्षणतो ज्ञानं च तत्फलं तत्त्वनिश्चयश्चाहमेव ॥ ३७ ॥

एतदेव संक्षिप्याऽऽह । मयेति । जीवेश्वररूपो द्विविधो यो भावो यश्च गुणिगुणरूपो यश्च क्षेत्रज्ञक्षेत्ररूपः स सर्वोऽपि मया विना मद्व्यतिरेकेण नास्ति अहमेव सर्वमित्यर्थः ॥ ३८ ॥

ननु सामान्यतः किमेवं संक्षिप्य कथयसि पूर्ववद्विशेषेणासंख्याः स्वर्वा विशेषतः सर्वाः कथयेति चेत्तत्राऽऽह । संख्यानं पृथिव्यादिपरमाणूनां कालेन महता तदपि मयैव क्रियते कृत्वा च वक्तुं शक्यते तथा मे विभूतीनां सङ्ख्यानं कर्तुं न शक्यते कुत इत्यत आह । सृजतोऽण्डानीति । यदा मया सृज्यमानानां ब्रह्माण्डानामेव तावत्सङ्ख्या नास्ति तदा कुतस्तद्गतानां विभूतीनां सङ्ख्येत्यर्थः ॥ ३९ ॥

तथापि विशेषत एव सर्वा अपि संक्षेपतः कथयामीत्याह । तेजः प्रभावः श्रीः सम्पत् सौभगं मनोनयनाह्लादकत्वम् भगो भाग्यम् वीर्यं बलम् अंशको विभूतिः ॥ ४० ॥

———

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

अविकृतमिति दौर्गन्ध्यं व्यावर्तयति । पुण्यो गन्धः पृथिव्यां चेति श्रीगीताभ्यः अपां रसश्चेत्युत्तरश्लोकस्थश्च ॥ ३३ ॥ ३४ ॥

हिरण्यगर्भाख्यम् इत्यत्र तदंशत्वेन विभूतित्वमुक्तमत्र तु पालनादिक्रियाश्रयमपि तत्त्वेनोक्तमिति विशेषः ॥ ३५ ॥

गत्यादीनामानन्दादीनामास्वादादीनां च द्वन्द्वैकत्वं तत्तद्वर्तीति ते च ते रूपरसादयोऽर्थास्तेषां ग्रहणे, या शक्तिः सा त्वहमेवेत्यर्थः । चक्षुषश्चक्षुरित्यादि श्रुतेः ॥ ३६ ॥

पृथिवीति सार्धकं तत्त्वानां पञ्चविंशकत्वं सांख्यतत्त्वकौमुद्यामुक्तं मूलप्रकृतिरिति अयमर्थः प्रकरोतीति प्रकृतिः प्रधानं सत्त्वरजस्तमसां साम्यावस्था मूलं चासौ प्रकृतिश्चेति यावत्कार्यमूलत्वान्नास्या मूलान्तरापेक्षा अनवस्थाप्रसंगात् महदाद्याश्च सप्त प्रकृतयश्च ता विकृतय इति तत्र तत्त्वान्तरोपादानत्वं प्रकृतित्वं कार्यत्वं च विकृतित्वं तथा हि महत्तत्त्वमहङ्कारस्य प्रकृतिर्विकृतिश्च मूलप्रकृतेः एवमहङ्कारतत्त्वं तन्मात्राणामिन्द्रियाणां च प्रकृतिः विकृतिश्च महतः एवं पञ्च तन्मात्राणि भूतानामाकाशादीनां प्रकृतयो विकृतयश्चाहङ्कारस्येति एकादशेन्द्रियपञ्चमहाभूतलक्षणो षोडशको गणस्तु विकारः कार्यमेव न कस्यापि कारणं घटादिजनकत्वेऽपि तत्त्वान्तरानारम्भकत्वान्न प्रकृतित्वमित्यर्थः । लक्षणतोऽसाधारणधर्मतः तत्फलं तत्त्वज्ञानफलम् ॥ ३७ ॥

एतदेव सामान्यतो निरूपणमेव मद्व्यतिरेकेण नास्ति मां सर्वकारणं विना तस्य शशशृङ्गादिगणनान्तःपातात् ॥ ३८ ॥

क्रियते कृत्वा वक्तुं शक्यते इति तु कृञ्धातोः सर्वधात्वर्थानुगतत्वाद्व्याख्यातम् । श्रियःकीर्तिरिति सहस्रनामभाष्यवत् ॥ ३९—४० ॥

———

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मयेश्वरेणेति कथंभूतेन जीवेन जीवशरीरकेण गुणेन गुणशरीरकेण ॥ ३८——४० ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गन्धर्वाणां मध्ये विश्वावसुरप्सरसां मध्ये पूर्वचित्तिरहमिति सम्बन्धः भूधराणां पर्वतानां यत् स्थैर्यं तदसाधारणं तदहं तथा भुवः पृथिव्या यदसाधारणं गन्धमात्रम् ॥ ३३ ॥

अपामपां परमः सर्वोत्तमकारणं रसः सचाहं तेजिष्ठानामतितेजस्विनां विभावसुरहमस्मि विभावसोर्यत्तेजोरूप तदहमित्यर्थः वसूनामस्मि हव्यवाडिति विभावसोर्विभूतित्वस्य पूर्वमेवोक्तत्वात् पृथिव्यादिभूतासाधारणगन्धादेर्विभूतित्ववर्णनप्रकरणानुगुण्याच्च सूर्यादीनां या प्रभा साहं शब्द इत्याकाशासाधारणो गुणः सोऽहं किम्बहुना सर्वोऽपीन्द्रियाणां यो विषयः पर उत्कृष्टः सोऽहं स्पर्शोऽभिप्रायकमिदं वाय्वादीनां स्पर्शादिरहमित्यर्थः ॥ ३४ ॥

ब्रह्मण्यानां ब्रह्मकुले साधवो ब्रह्मण्यास्तेषां मध्ये बलिर्वैरोचनिः अर्जुनः पार्थः भूतानां स्थित्यादिरहं मदधीन इत्यर्थः प्रतिसंक्रमः प्रलयः ॥ ३५ ॥

गत्यादयः पञ्च कर्मेन्द्रियव्यापाराः स्पर्शादयो ज्ञानेन्द्रियाणां ते चाहमित्यर्थः । तत्र गतिः पादेन्द्रियस्य उक्तिर्वागिन्द्रियस्य उत्सर्गः पायोरुपादानं पाणेः गत्यादीनां समाहारद्वन्द्वः आनन्द उपस्थेन्द्रियस्य स्पर्शश्च लक्षणं च तयोः समाहारः लक्षणं दर्शनम् आस्वादश्च श्रुतिश्चावघ्राणं च तेषां समाहारस्तद्वत् तत्र स्पर्शस्त्वगिन्द्रियस्य लक्षणं चक्षुषः आस्वादो रसनेन्द्रियस्य श्रुतिः श्रोत्रस्य अवघ्राणं घ्राणेन्द्रियस्य न केवलं विषयव्यापारा एव मद्विभूतयोऽपि त्विन्द्रियाण्यपीत्याह । सर्वेन्द्रियेन्द्रियं सर्वेषामिन्द्रियाणामिन्द्रियमहं सर्वेन्द्रियप्रवर्तकोऽहमित्यर्थः ॥ ३६ ॥

पृथिव्याद्यसाधारणानां गन्धादीनामात्मविभूतित्वमुक्तमथाश्रयाणामपि विभूतित्वमाह । पृथिवीति । न केवलं पृथिव्यादीनामेव किन्तु तत्कारणानामपीत्याह । अहं महानिति । अहमहङ्कारो महान्महत्तत्त्वं विकारः अहङ्कारविकाररूपाणि एकादशेन्द्रियाणि इष्टान्तार्थमिदं तेषां सर्वेन्द्रियेन्द्रियमित्यनेनैवात्मविभूतित्वोक्तेः अव्यक्तमचित्समष्टिः पुरुषश्चित्समष्टिः रजः सत्त्वं तमश्चाचित्समष्टेर्गुणाः परं मुक्तात्मस्वरूपं न केवलमेतानि तत्त्वान्येवाहमपि त्वेषां गणनं अवगणना ज्ञानं तत्फलभूतं यथावस्थिततत्त्वस्वरूपबलमात्रनिश्चयात्मकज्ञानं चाहमेवेत्याह । अहमिति ॥ ३७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अनुक्तसङ्ग्रहाभिप्रायेणाह । मयेति । ईश्वरेणान्तः प्रविश्य नियन्त्रा मयाऽत एव मच्छरीरभूतेन जीवेन गुणेन सत्त्वादिना गुणिना तदाश्रयभूताचिद्द्रव्येण विना गुणिनं विशिनष्टि सर्वात्मना समष्टिव्यष्टिरूपेणात एव सर्वेण सर्वकार्यात्मनावस्थितेन क्वचिदपि वस्तुनि भावो न विद्यते भावशब्दोऽत्र सत्तापरः सर्वमपि चिदचिदीश्वरतत्त्वत्रयात्मकं वस्तु मदविनाभूतं मन्नियाम्यमित्यर्थः । "न तदस्ति विना यत्स्यान्मया भूतं चराचर"मित्यस्यार्थोऽत्राभिहितः ॥ ३८ ॥

ननु विशेषतः पूर्ववत्सर्वा विभूतयः किन्नोच्यन्त इत्यत आह । सङ्ख्यानमिति । मया सर्वज्ञेन कालेन परमाणूनां पार्थिवानां सङ्ख्यानं वा क्रियते नतु मम विभूतीनां तत्र हेतुत्वेनात्मानं विशिनष्टि । कोटिशोऽण्डानि सृजत इति । अण्डानामेवानन्त्यान्न गणयितुं शक्यानि किम्पुनस्तदन्तर्गतानि वस्तून्यतो न विशेषतो निरूपयितुं शक्यन्ते नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तपेत्यस्यार्थ उक्तः ॥ ३९ ॥

ननु विशेषतो निरूपणाभावे तत्तद्विभूतिभूतं वस्तु न ज्ञातमेवेत्याद्याशङ्कायां लक्षणतस्तज्ज्ञापयति । तेज इति । यत्र पदार्थे तेजआदयस्तदन्यतमो वा स मे ममांशकः अंशभूतः ममाचिन्त्यशक्तेर्नियाम्यैकदेशो मद्विभूतिभूत इति यावत् यद्वा शरीरभूत इत्यर्थः विशिष्टैकदेशोऽप्यंशः शरीरमप्यंश इति "अंशो नानाव्यपदेशात्" इत्यत्राभापि भाष्यकारैः तत्र तेजो यशः श्रीः कान्तिः कीर्तिः प्रथा ऐश्वर्यं सम्पत् ह्रीर्लज्जा त्यागः सत्पात्रे वित्तादित्यागः सौभगं सौन्दर्यं भगो भाग्यं वीर्यं सत्यप्यभिभवहेतौ अनभिभूतत्वं तितिक्षा क्षमा विज्ञानं यथावस्थिततत्तद्वस्तुविज्ञानं मन्त्रः* श्रीमदष्टाक्षरादिमन्त्रः मन्त्राणां प्रणवोऽस्मीतिवदित्युक्तो वा मन्त्रणमालोचनं हिताहितपर्यालोचनं वा अनेन यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वेत्याद्यर्थ उक्तः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गन्धर्वाणां विश्वावसुः अप्सरसां पूर्वचित्तिः अहमस्मि गन्धमात्रं गन्धाख्यविषयः ॥ ३३ ॥

तेजिष्ठानाम् अर्चिष्मताम् ॥ ३४ ॥

प्रतिसंक्रमः संहारः ॥ ३५ ॥

गतिः पादविषयः उक्तिर्वागिन्द्रियविषयः उत्सर्गोऽपानस्य उपादानं हस्तयोः आनन्द उपस्थस्य स्पर्शस्त्वगिन्द्रियस्याहमिति शेषः । आस्वादो जिह्वाकर्म श्रुतिः कर्णयोः अवघ्राणं घ्राणेन्द्रियस्य सर्वेन्द्रियाणामिन्द्रियाणामिन्द्रियशक्तिप्रदः ॥ ३६ ॥

विकारो ब्रह्माण्डं पुरुषो ब्रह्माण्डान्तः स्थितः अव्यक्तमचेतनं प्रकृतिः रजआदिकमप्यहं रजआदिरूपत्वात् रजआदिनाम-

सत्त्वादि नामविष्णोस्तु सत्त्वादिरूपस्य केवलम् ।
जीवरूपस्य च तन्नाम जीवादेरुपचारतः ॥

इत्यादिवचनात् गत्यादितमःपर्यन्ताः पदार्थाः तत्स्वरूपं किं नेत्याह । पर इति । परो विलक्षणो भिन्नः तन्नियन्तृत्वात्तत्त्वोपदेशः -

यस्य यस्य स्वभावो यस्तत्तन्नामा हरिः परः ।
नियामकः स्वभावस्य तत्तच्छब्दादिनामवान् ।
वैशेष्याख्या विभूतिश्च विभूतिश्च स्वभावजा ।
द्विधा विभूतिर्विज्ञेया विष्णोस्तु परमात्मनः ।

इतिवचनात् एतत्प्रसङ्गव्याख्यानम् एतेषामव्यक्तादीनां तत्त्वानां प्रकृष्टसंख्यानं गणनं यस्मात्तत्तथा ज्ञानं वाहं भगवद्विषयत्वादिदमश्रद्धेयमिति नेत्याह । तत्त्वेति । हरेरनारोपितं स्वरूपं निश्चिनोतीति तत्त्वनिश्चयम् ॥ ३७ ॥

ननु गतिर्गतिमतामित्याद्युक्तषष्ठ्यर्थेन पृथक् कृताः पदार्थास्तेषु तव व्याप्तिर्नास्तीत्यायातं तथाच पुरुषेणेदं व्याप्तमित्यादिश्रुतिविरोधः प्राप्त इति तत्राह । मयेति । मया विना क्वचिदपि भावः पदार्थो न विद्यत इत्यन्वयः । षण्णवत्यङ्गुलादिलक्षणपरिच्छिन्नपुरुषाकारेण त्वया विना कथं नास्तीत्युच्यत इति तत्राह । सर्वेणेति । सर्वं समाप्नोषि ततोऽसि सर्वं इति स्मृतेः सर्वं व्याप्य स्थिता ननु बहिरेव व्याप्तो न त्वन्तरिति मन्दाशङ्कां परिहरति । सर्वात्मनेति । सर्वेषामन्तश्च व्याप्तेन ननु सर्वव्यापकस्यापि व्योम्नः को विशेष इत्यतो वाह । सर्वात्मनेति । सर्वनियामकेन ननु ज्ञानादिगुणरहितस्य नियन्तृत्वं कथं युज्यते निर्गुणश्चेति श्रुतेरत्राह । गुणिनेति । यः सर्वज्ञ इति श्रुतिः ननु कदाचिद्दण्डितो यथा दण्डाभावेनादण्डित्वं तथात्वस्यापि सम्भाव्येतेत्यत्राह । गुणेनेति । विज्ञानमानन्दं ब्रह्मेति श्रुतेः न केवलं गुणानामेव तदभिन्नत्वं प्राणधारकत्वादिक्रियाणामपीति भावेनाह । जीवेनेति । ननु गुणी चेत्स गुणः स चेत् गुणीति युक्तिविरोध इति तत्राह । ईश्वरेणेति । अघटितघटकेन अनेन वैशेष्याख्या स्वभावजेति द्विधा विभूतिरुक्तेति ज्ञातव्यम्—

वैशेष्याख्या विभूतिस्तु विभूतिश्च स्वभावजा ।
द्विधा विभूतिर्विज्ञेया विष्णोस्तु परमात्मनः ।

इतिवचनात् ॥ ३८ ॥

एवं विभूतीनाम् अनन्तत्वमुक्तं स्पष्टयति । संख्यानमिति । कालेन सर्वगुणात्मकेन मया असंख्यत्वात्तथा न क्रियते नाविज्ञानात् -

अनन्तमिति वेत्तीशस्त्वनन्तं त्वन्तवत्तथा ।
अनन्तस्य हि संख्याने ननु सर्वज्ञता भवेत् ।
अनन्तमपि वेत्तीशः प्रत्येकं च विशेषतः ।
सर्वज्ञत्वान्न संख्यानमनन्तस्य कुतो हि सा ।

इति वचनात् ॥ ३९ ॥

स्वभावजविभूतेर्वैशेष्याख्या कीदृशीत्यत्राह । तेज इति । यत्र यत्र यस्मिन् यस्मिन् पुरुषे तेजआदयो गुणा विशिष्टाः सन्ति स मेंऽशकः वैशिष्ट्यापादकमदंशयोगी सौभगं शुभैकभागित्वं भग ऐश्वर्यादिकः त्यागो निषिद्धत्यागः ॥ ४० ॥

---

* मन्त्रो यत्र समेंऽशकः इति भेदेन पाठ एतन्मते ।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

टीकायामाविकृतामिति कुत्सितं व्यावर्त्तयति पुण्यो गन्धः पृथिव्यां चेति श्रीगीताद्यपः अपां रसश्चेत्युत्तरं ज्ञेयञ्च ॥३३—३५॥

सर्वेन्द्रियाणामिन्द्रियमिति तच्छक्तिहेतुरित्यर्थः। चक्षुषश्चक्षुरित्यादिश्रुतेः ॥ ३६ ॥

पृथिवीति सार्द्धकं परं ब्रह्म चेति ब्रह्मणोऽपि स्वविभूतित्वं दर्शितं युक्तं च तत् विशिष्टतयाविर्भावाच्छ्रीभगवतो धर्मिरूपत्वम् अविशिष्टतयाविर्भावाद्ब्रह्मणो धर्मरूपत्वं च ततः पूर्वस्य मण्डलस्थानीयत्वमिति भावः। अत्र श्रीविष्णुपुराणमपि सम्प्रवदते "शुभाश्रयः सचित्तस्य सर्वगस्य तथात्मन" इति व्याख्यातं च स्वामिभिः सर्वगस्यात्मनः परब्रह्मणोऽप्याश्रयः प्रतिष्ठा तदुक्तं श्रीभगवता ब्रह्मणो हि प्रतिष्ठाहमितीति अत्र च तैर्व्याख्यातं ब्रह्मणो हि प्रतिष्ठा घनीभूतं ब्रह्मैवाहं यथा घनीभूतः प्रकाश एव सूर्यमण्डलं तद्वदित्यर्थः इति श्रीमत्स्यदेवेनापि तथैवोक्तं "मदीयं महिमानं च परं ब्रह्मेति शब्दित" मिति ब्रह्मसंहितायां च—

यस्य प्रभा प्रभवतो जगदण्डकोटि—
कोटिष्वशेषवसुधादिविभूतिभिन्नम्।
तद्ब्रह्म निष्कलमनन्तमशेषभूतं—
गोविन्दमादिपुरुषं तमहं भजामीति ॥

श्रीयामुनाचार्यचरणैरपि—

यदण्डमण्डान्तरगोचरं च य—
द्दशोत्तराण्यावरणानि यानि च।
गुणाः प्रधानं पुरुषः परं पदं—
परात्परं ब्रह्म च ते विभूतय इति ॥

अत एवाह श्रीध्रुवः—

या निर्वृतिस्तनुभृतां तव पादपद्म—
ध्यानाद्भवज्जनकथाश्रवणेन वा स्यात्।
सा ब्रह्मणि स्वमहिमन्यपि नाथ! मा भू—
त्किन्त्वन्तकासिलुलितात्पततां विमानादिति ॥

अत एव श्रीभगवद्गुणेनात्मारामाणामप्याकर्षणं सम्भवति यथा आत्मारामाश्च मुनय इत्यादौ स्वसुखनिभृतचेता इत्यादौ दृष्टश्च तथैव श्रीव्यासनारदसम्वादः प्रथमे अत्र विशेषः श्रीभागवतसन्दर्भे द्रष्टव्यः ॥ ३७ ॥

मया विना भावः पदार्थमात्रं कश्चिन्न विद्यते सर्वकारणं मां विना तस्य शशशृङ्गादिगणान्तःपातात् ननु महत्स्रष्टृपुरुषादिलक्षणेश्वरादयः कारणानि सन्ति ततस्तैरेव तत्सत्त्वमिति तत्राह। मय्येवेश्वरादिरूपेणेत्यर्थः। कारणव्यतिरेके कार्यव्यतिरेकादिति भावः अनेनानन्तकोटिब्रह्माण्डेश्वराद्यस्थानोऽपि स्वस्य परत्वं दर्शितं यथैवोक्तं श्रीगीतासु ईश्वरः सर्वभूतानामित्यादिभिः ॥ ३८ ॥

कालेन सर्गान्तर्यामिणा मया सङ्ख्यानं पृथिव्यादिपरमाणूनां सङ्ख्यानं क्रियते ज्ञायत इत्यर्थः। सर्वज्ञत्वाद्यव्यभिचारादिति भावः। तथापि मे विभूतीनां सङ्ख्यानं न तथेति तासामनन्तत्वादिति भावः। कृधातोः सर्वधात्वर्थानुगतत्वात्तथा व्याख्यातं शिष्टकादिति सहस्रनामवत् तत्रास्तु तावन्महावैकुण्ठेश्वररूपस्य मम ब्रह्माण्डकोटिसङ्ख्यस्यापि न ज्ञायत इत्याह। सृजत इति ॥ ३९—४० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

गन्धर्वाणां विश्वावसुः अप्सरसां पूर्वचित्तिः गन्धमात्रमिति मात्रपदोपादानात् पुण्यो गन्धः पृथिव्यामिति गीतोक्तेश्च दुर्गन्धो व्यावृत्तः ॥ ३३ ॥

परमो मधुर इत्यत्रापि कट्वादिरसव्यावृत्तिः परः श्रेष्ठः शब्दोऽतिमधुरः पराख्यो वा ॥ ३४ ॥

प्रतिसङ्क्रमः प्रलयः ॥ ३५ ॥

गत्यादयः पञ्च कर्मेन्द्रियव्यापाराः रूपादयो ज्ञानेन्द्रियव्यापाराः तत्र चक्षुषां दर्शनं सर्वेन्द्रियाणामिन्द्रियमिति चक्षुषश्चक्षुरित्यादिश्रुतेः तत्तदर्थग्रहणशक्तिरहम् ॥ ३६ ॥

तदेवं तत्र तत्र निर्द्धारणेन तत्तत्सम्बन्धेन च विशेषतो विभूतीर्निरूप्य इदानीं पुनरपि सामान्यतः सर्वा निरूपयति। पृथिवीतिसार्द्धद्वयेन पृथिव्यादिशब्दैस्तन्मात्राणि विवक्षितानि अहम् अहङ्कारः महान् महत्तत्त्वम् एताः सप्त प्रकृतिविकृतयः विकारः पञ्च महाभूतानि एकादशेन्द्रियाणि चेति षोडशसंख्याकः पुरुषो जीवः अव्यक्तं प्रकृतिः एवं पञ्चविंशतितत्त्वानि तदुक्तम्—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुष इति ॥

किञ्च रजः सत्त्वं तम इति प्रकृतेर्गुणाश्च परं ब्रह्म च तदेतत् सर्वमहमेव एतत् प्रसङ्ख्यानम् एतेषां परिगणनम् एतेषां लक्षणतो ज्ञानं च तत्फलं तत्त्वनिश्चयश्चाहमेव ॥ ३७ ॥

उक्तमर्थं किञ्चिद्विशिष्य संक्षिप्य चाह। ईश्वरेण जीवेन च विना चेतनात्मको भावो न विद्यते गुणेन सत्त्वादिना गुणिना महदादिना च विना जडात्मको भावो न सर्वेषामात्मना व्यष्टिसमष्टयुपाहितेन जीवेन सर्वेण व्यष्टिसमष्टिरूपोपाधिना च विना चिज्जडात्मको भावो नास्ति स सर्वोऽपि मया विना नास्तीत्यहमेव सर्वमित्यर्थः ॥ ३८ ॥

ननु सामान्यतः किमेवं सङ्क्षिप्य कथयसि पूर्ववन्निर्द्धारणसम्बन्धाख्यां विशेषतः सर्वाः कथयसि चेत् तत्राह। संख्यानं पृथिव्यादिपरमाणूनां कालेन महता तदपि मयैव क्रियते इति कृत्स्नं वक्तुं शक्यत इत्यर्थः। तथापि मे विभूतीनामिति एतावत्य एव विभूतय इति विशिष्य मयापि वक्तुं न शक्यत इत्यर्थः। कुत इत्यत आह। सृजतोऽण्डानीति। यदा मयासृज्यमानानामण्डानामेव तावत्संख्या नास्ति तदा कुतस्तत्स्थानां विभूतीनां संख्येत्यर्थः ॥ ३९ ॥

किन्त्वेवं रीत्या विशेषतोऽपि सर्वा विभूतयो वक्तुं शक्या इत्याह। तेजः प्रभावः श्रीः सम्पत् सौभगं मनोनयनाह्लादकत्वम् भगः भाग्यं वीर्यं बलम् अंशकः विभूतिः ॥ ४० ॥

एतास्ते कीर्तिताः सर्वाः संक्षेपेण विभूतयः ।
मनोविकारा एवैते तथा वाचाऽभिधीयते ॥ ४१ ॥
वाचं यच्छ मनो यच्छ प्राणान् यच्छेन्द्रियाणि च ।
आत्मानमात्मना यच्छ न भूयः कल्पसेऽध्वने ॥ ४२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

गन्धर्वाणां विश्वावसुः अप्सरसां पूर्वचित्तिः गन्धमात्रं केवल-गन्धलक्षणो गुणः ॥ ३३ ॥

परमो मधुरः नभसो गुणः शब्दः परः पराख्यः ॥ ३४ ॥

प्रतिसंक्रमः—प्रलयः ॥ ३५ ॥

गत्यादयः पञ्च कर्मेन्द्रियगोचराः स्पर्शश्च लवणं दर्शनं च आस्वादश्रुत्यवघ्राणञ्चेति पञ्च ज्ञानेन्द्रियगोचराः अहं सर्वेन्द्रिये-न्द्रियं प्राणोऽहम् ॥ ३६ ॥

किं बहुना सर्वाणि तत्त्वान्यहमेवेत्याह । पृथिवीति सार्धेन । पृथिव्यादिशब्दास्तत्तत्तन्मात्रपराः पृथिव्यादीनां विकारशब्देनो-क्तत्वात् अहमहङ्कारः महान् महत्तत्त्वम् एताः सप्त प्रकृतयः विकारः पञ्च महाभूतानि एकादशेन्द्रियाणि चेत्येवं षोडशसंख्याकः पुरुषः प्रकृतिप्रेरकः अव्यक्तं प्रकृतिः रजः सत्त्वं तमः इति प्रकृतेर्गुणाः परं प्रकृतिविलक्षणम् अप्राकृतं धाम एतत् जगत्परिसंख्यायते परिगण्यते परिच्छिद्यते येन तत्काळतत्त्वं ज्ञानं "विज्ञानं यज्ञं तनुते" इत्यादिश्रुतिप्रोक्तं जीव-तत्त्वम् तत्त्वविनिश्चयः तत्त्वानि पूर्वोक्तानि विनिश्चीयन्ते येन स वेदश्चाहमित्यन्वयः ॥ ३७ ॥

ननु पुरुषोऽहमिति वक्तुं शक्यं पृथिव्याद्यचेतनपदार्थस्य जीवस्याल्पस्वरूपस्य चाभेदासम्भवात् कथं घटेत पृथिव्यादिज्ञानं चाहमित्यत आह । मयेति । यथा पृथिवीं विना ओषधीनां भावः यथा वा ऊर्णनाभिं विना तन्त्वादीनां भावः यथा वा पुरुषं विना केशलोमादिभावः गुणिनं विना गुणभावः व्यक्तिं विना जातिभावः कदाचिदपि नोपपद्यते तथा मया सर्वात्मना सर्वेषां चेतनाचेतनपदार्थानां कारणत्वेन शक्तिमत्त्वेनाधारत्वादिना च आत्मना आश्रयत्वेन विना भावः सर्वेषां सत्ता कुत्रचित्कदाचिदपि न विद्यते यथा ओषध्यादिशब्दैः पृथिव्यादय एव मुख्यवृत्त्या-भिधीयन्ते तथा सर्वपदवाच्योऽहमिति दर्शयितुं विशिनष्टि । ईश्वरेण जीवेन गुणेन गुणिना किम्बहुना सर्वेण उक्तानुक्तेन सर्वाकारेणेत्यर्थः ॥ ३८ ॥

भगवन् ! भवद्विभूतीः विस्तरतो वदेत्यत्राह । संख्यानमिति । परमाणूनां भूम्यादिसूक्ष्मकणानां संख्यानं कालेन तत्रापि मयैव क्रियते तथा मे विभूतीनां संख्यानं न कर्तुं शक्यते तत्र हेतुमाह । सृजतोऽण्डानीति । कोटिशः अनन्तकोटिब्रह्माण्डानि सृजत इत्यर्थः । यद्वाण्डानामेव संख्यानं कर्तुमशक्यं तदा तद्गतानां विभूतीनां संख्यानमशक्यमिति किमुत वक्तव्य-मित्यर्थः ॥ ३९ ॥

विभूतीनामसंख्येयत्वमेव दर्शयति । तेज इति । तेजः प्रभुत्वं श्रीः कान्तिः कीर्त्तिः साधुवादः ऐश्वर्यं सम्पत् ह्रीः अयोग्ये कर्मणि लज्जा त्यागः औदार्यम् सौभगं सौन्दर्यं भगो भाग्यं वीर्यं परैरनभिभूतत्वं तितिक्षा सहनशीलता विज्ञानमात्मानात्मपरमा-त्मविवेकः यत्र यत्राभूत् भविष्यति वर्तते च सः सः मे अंशकः विभूतिः ॥ ४० ॥

———

भाषा टीका ।

गन्धर्वों में मैं विश्वावसु हूं अप्सरों मे मैं पूर्वचित्ती हूं पर्वतों में मैं स्थिरता हूं पृथिवी के मध्य में मैं गन्ध गुण मात्र हूं ॥ ३३ ॥

जलों में मैं श्रेष्ठ रस हूं तेजवालों मे मैं अग्नि हूं सूर्य चन्द्र तारा इनमे मैं प्रभा हूं आकाश का मैं परम गुण शब्द हूं ॥ ३४

ब्राह्मण रक्षकों मे मैं बलि राजा हूं वीरों में मैं अर्जुन हूं भूतों के मध्य में उत्पत्ति स्थिति प्रलय मैं हूं ॥ ३५ ॥

सब इन्द्रियों के जो व्यापार गमन बोलना मलादि उत्सर्ग ग्रहण करना सुख भोगना ए कर्मेन्द्रिय के और स्पर्श स्वाद श्रवण आघ्राण दर्शन ए ज्ञान इन्द्रियों के व्यापार सो मैं ही हूं ॥ ३६ ॥

पृथिवी वायु आकाश; जल अग्नि इनकी तन्मात्रा मैं हूं और महत्तत्त्व मैं हूं पंचप्राणादि षोडश विकार मैं हूं पुरुष मैं हूं इनका संख्या फल भी मैं हूं इनका निश्चय भी मैं हूं ॥ ३७ ॥

गुण गुणि औ जीव जो शरीर तिसमें व्याप्त मेरे ईश्वर सर्व रूप सर्वात्मा के विना कहीं कोई पदार्थ ही नहीं है ॥ ३८ ॥

परमाणुओं की तो गिनती बहुत काल लगने से मैं कर सकुं परन्तु तैसे मेरी विभूतियों की संख्या नहीं हो सकेगी क्योंकि मैं कोटि न ब्रह्माण्डों को बनाता रहता हूं ॥ ३९ ॥

तेज श्री कीर्त्ति ऐश्वर्य लज्जा त्याग मनोहरशोभा भाग्य वीर्य सहनशीलता विज्ञान ए सब गुण जहां जहां होवैं सो सो मेरा अंश है ॥ ४० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

उपसंहरति । एता इति । एते च विभूतिभेदा मयि चित्ता-वताराय कल्पिता अतो नात्रातीवाभिनिवेशः कर्तव्य इत्याह । मनोविकारा एव नतु परमार्थाः यथा किञ्चित् खपुष्पादि वाङ्मात्रेणाभिधीयते तत्तुल्याः ॥ ४१ ॥

तस्माद्वागादीन्नियच्छ आत्मानं बुद्धिमात्मना सत्त्वसम्पन्नया तयैव नियच्छ अध्वने संसारमार्गाय ॥ ४२ ॥

यो वै वाङ्मनसी सम्यगसंयच्छन् धिया यतिः ।
तस्य व्रतं तपो दानं स्रवत्यामघटाम्बुवत् ॥ ४३ ॥
तस्मान्मनोवचःप्राणान्नियच्छेन्मत्परायणः ।
मद्भक्तियुक्तया बुद्ध्या ततः परिसमाप्यते ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
पारमहंस्यां संहितायां वैयासिक्यां
षोडशोऽध्यायः ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

असंयमे दोषमाह । य इति । असंयच्छन् अयच्छन्निति ॥ ४३ ॥ परिसमाप्यते कृतकृत्यो भवतीत्यर्थः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षोडशोऽध्यायः ॥ १६ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

चित्तावतारस्य यथा कथञ्चित् चित्तस्य संलग्नीकरणाय अर्ताप्रसावतारप्रयोजनत्वात् । अत्र विभूतिभेदेषु । यद्यपि परमात्मवासुदेवनारायणब्रह्मरूपा अप्राकृतविभूतयः तेषां मनोविकारत्वं न सम्भवति तथापि कश्चित्पाठेन तथोक्तम् । खपुष्पादितुल्यत्वन्तु अनन्तत्वसत्ताकत्वमतन एव ॥ ४१ ॥

तस्मान्मनोविकारत्वात् वागादीन्नियच्छेत् बहिर्दृष्टिवारणम् बुद्धिं राजसीं तामसीञ्च ॥ ४२ ॥ ४३ ॥

तस्मादसंयमने दोषात् । मत्परायण इति । अहमेव वचोमनआदीनां परं प्राप्यमयनमाश्रयो यस्य तथा भूतः सन् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
षोडशोऽध्यायः ॥ १६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मनोविकाराः मन्मोविकाराः मत्सङ्कल्पमात्रजन्याः वाचा वेदेन ॥ ४१ ॥

आत्मानमात्मना यच्छ अन्येषु न प्रवर्तय इति स्वात्मना आत्मानं स्वयमेव यच्छ अध्वने संसाराध्वने परिभ्रमाय ॥ ४२ ॥ ४३ ॥

परिसमाप्यते मोक्षोपायः सम्पूर्णो भवति ॥ ४४ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
षोडशोऽध्यायः ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विभूतिनिरूपणं निगमयति । एता इति । संक्षेपेण सङ्ग्रहेण यद्वा संक्षिप्यते सङ्गृह्यते ऽनेनेति सङ्ग्रहः सङ्ग्राहकं लक्षणं तेन सर्वा विभूतयस्ते तुभ्यम् कीर्तिताः एते सर्वे पदार्थाः मनोविकाराः मत्सङ्कल्पमात्रजन्या इति यथा वथा वाचा वेदेनाभिधीयते "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इत्यादिरूपया वाचा अभिधीयत इत्यर्थः । अनेन विभूतित्वं निरुक्तम् ॥ ४१ ॥

एवं विधानन्तविभूतिविशिष्टं मां सर्वेन्द्रियादिनियमनेनोपासस्वेत्याह । वाचं यच्छेति । वागादीनां नियमनं नामानर्थावहेभ्यो व्यापारेभ्यो निवर्तनं प्राणं चेन्द्रियाणि च तानि तस्मात्परस्तिष्ठक्त्वं तत्र वाङ्नियमो नामासद्वादापवर्जनं मनोनियमनमसद्भिध्यानवर्जनम् आत्याभर्यानिमित्तवृत्त्यादिना प्राणवृत्तिनर्जन प्राणनियमनम् पूरककुम्भकरेचकाद्युपायेन स्ववशीकरणं वा आत्मानमात्मना यच्छ अपथेषु न प्रवर्तयामीति आत्मानं स्वयमेव यच्छ । सविभूतिकं मामेवोपास्स्वेति भावः । एवं चेद्भूयोऽध्वने संसाराध्वपरिभ्रमाय न कल्पसे ॥ ४२ ॥

उक्ताकरणे च्युतिमाह । यो वा इति । असंयच्छन् संयच्छेत्तर्हि तस्य व्रतादिकमामघटस्थाम्बुवदामघटोऽपक्वघटः स्रवति गलितं भवति ॥ ४३ ॥

यत एवं तस्माद्वाङ्मनःप्राणान्मद्भक्तियुक्तया बुद्ध्या नियच्छेत्ततो नियमनात्परिसमाप्यते मोक्षोपायः सम्पूर्णो भवतीत्यर्थः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
षोडशोऽध्यायः ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उपसंहरति । एता इति । यथान्यैर्वाचा जीवादीनाम् नामादिकर्मप्रतिष्ठ इत्यस्य नाम देवदत्तस्याभिधानमित्यादिप्रकारेण सङ्कीर्तितत्वेन क्रियते तथान्यपदार्थेष्वेते सर्वे शब्दा

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

मनोविकाराः मनसा वा अपि सङ्कल्पयत्यथ वाचा व्याहरतीति श्रुतेः मनःसङ्कल्पविषया न तु मुख्यवाचका इत्यर्थः ॥४१॥

विभूतिज्ञानस्य फलितार्थमाह । वाचमिति । यतः सर्वशब्दो मय्येव स्वतो मुख्यस्तस्मादितरविषयत्वं विहाय वागादिकं मय्येव कुर्वित्यर्थः । प्राणं सर्वचेष्टां मद्विषयां तद्द्वारेणेन्द्रियाणि मद्विषयाणि कृत्वा आत्मना प्रयत्नेनात्मानं परमात्मानं लक्ष्यत्वेनात्मानं जीवमपि स्वनात्मना यच्छ नियम्य नियामकलक्षणसम्बन्धवदस्त्वं पुनः संसाराध्वने न कल्पस इत्यन्वयः ॥ ४२ ॥

वागादीनां स्वविषयाकरणे बाधकमाह । यो वा इति । यतिः प्रयत्नवान् सर्वमपि निष्फलं भवति ॥ ४३ ॥

मत्सर्वोत्तमज्ञानमेव मुक्तिसाधनमित्युपसंहरति । तस्मादिति । ततः ज्ञानसामग्र्यनन्तरं समाप्यते संसार इति शेषः

वाङ्मनःप्राणबुद्ध्यादीन्यच्छेत्केशवे परे ।

सर्वशब्दाभिधेयत्वं तस्य ज्ञात्वा विशेषतः ।

मुख्यवृत्त्याभिधेयत्वमन्येषां मनसो भ्रमात् ।

तस्मात्तथा चिन्तयतः सर्वेऽज्ञानं यथातथम् ॥—

तस्मान्मनोवचःप्राणान्माधवैकपरायणान् ।

कुर्याद्धि तत्तपो ह्यग्र्यं महाधर्मोत्तमश्च स इति ॥

यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।

ज्ञानमात्मनि महति नियच्छेच्छान्त आत्मनीति ॥

वाक्यद्वयं तूक्तार्थे प्रमाणम् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

षोडशोऽध्यायः ॥ १६ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एता इति छत्रिन्यायेन परमात्मादीनां मनोविकारत्वाभावात् यद्वा एता विभूतयः संक्षेपेण कीर्त्तिता अपि सामान्यविशेषाभ्यां सर्वा एव कीर्त्तिताः तत्र ते पौरुषेयप्रमाणातीताः परमात्मवासुदेवनारायणपरब्रह्मरूपा अपि कीर्त्तिताः किन्तु एते पौरुषेयप्रमाणगोचराः सर्वभूतादयस्तु मनोविकारा एव मच्छक्तिलेशाभासांशत्वेन मनसैव मन्यमानाः यथा राजाश्रिते राजत्वं वाचा गौण्या वृत्त्याभिधीयते तत्तुल्याः न तु परमात्मादिवद्यथा तद्रूपा इत्यर्थः यद्वा मनोविकारवन्तीति मनोविकाराः तर्हि कथं स्व विभूतित्वेन निःश्रेयसहेतुत्वमुपदिश्यते तत्राह । यथेति । यथा येन सद्गुणांशाभिव्यक्तिप्रकारेण वाचा मच्छ्रेयलक्षणाभिधीयते प्रतिपाद्यते तथा तत्प्रकारेणैव ते मान्या न विद्वेष्टव्या इत्यर्थः ॥ ४१ ॥

बहिर्दृष्टिमेव सर्वथा वारयति । वाचमिति द्वाभ्याम् । तस्मात् मनोविकारमयवागादिकं नियच्छेत्यर्थः । आत्मानं बुद्धिं सत्त्वमयया तयैव आत्मना नियच्छ अध्वने संसारमार्गाय ॥ ४२—४३ ॥

स्वयमेव तथैव स्पष्टयन्नुपसंहरति । तस्मादिति । मयि श्रीकृष्णरूपे परमात्मादिरूपे वा भक्तिः या भक्ता तद्युक्तया बुद्ध्या अहमेव वचोमनआदीनां परमवलम्बभवो यस्य तथाभूतः सन् प्राकृतवच आदीनि यच्छेत् तत ऊर्ध्वं न किञ्चिज्ज्ञानादिना कृत्यमस्तीत्यर्थः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

षोडशोऽध्यायः ॥ १६ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उपसंहरति । एता इति । सर्वाः सामान्यभूता विशेषभूताश्च कीर्त्तिता एव किन्तु एते प्रसिद्धा लोकेषु दृश्यमाना मनसो विकाराः स्नेहद्वेषाभिमानादयो यथा येन प्रकारेण वर्त्तन्ते तथा तेनैव प्रकारेण अभिधीयते तत्र तत्र लोकैरभिधीयन्ते नतु मद्विभूतिरूपेणेत्यर्थः । यथा सर्ववस्तुमात्राणामेव सामान्यतो मद्विभूतित्वेऽपि यत्र यस्य मनसः स्नेहमयो विकारस्तत्र तेनायं मे पुत्र इति अयं मे पितेति अयं मे भर्त्तेति अयं मे पितृव्य इति अयं भ्रातुष्पुत्र इति अयं मे मित्रमित्येवमेवाभिधीयते नत्वयं भगवद्विभूतिरिति तथा यत्र द्वेषमयो मनोविकारस्तत्रायं ममापकर्त्ता इति अयं ममापकार्य इति अयं द्वेष्टा इति अयं द्वेष्य इति अयं हन्तेति अयं वध्य इत्येवमभिधीयते नत्वयं भगवद्विभूतिरिति एवमिन्द्रो विशेषतो मद्विभूतिरपि शच्या मद्भर्त्तेति अदित्या मत्पुत्र इति जयन्तेन मत्पितेति बृहस्पतिना मच्छिष्य इति असुरैरस्मद्द्वेष्टेत्येवमेवाभिधीयते नत्वयं भगवद्विभूतिरिति निष्परिग्रहैर्मुमुक्षुभिस्तु सर्वत्रैवायं भगवद्विभूतिरित्येवाभिधीयते इति अप्राकृतविभूतीस्तु विभूतित्वेन पुत्रभ्रात्रादित्वेन वा ध्यायतां सर्वथैव कृतार्थत्वमेव तत्तदवतारतत्परिकराणां तथा दृष्टत्वात् विभूतय इत्यनुद्य मनोविकारा इति अभिधीयते इति न व्याख्येयं विभूतिमध्ये एव श्रीवासुदेवादीनां तथा निर्विशेषब्रह्मणश्च परिपठितत्वात् तेषामपि खपुष्पायमाणत्वे सति शून्यवादप्रसक्तेः श्लोकेऽत्रैव एते इत्यस्य वैयर्थ्याच्च ॥ ४१ ॥

यतः सर्वे एव पदार्थाः मद्विभूतयस्ततः सर्वे एव वाचा मनसा कायेनापि सम्माननीया एव नतु केऽपि तिरस्करणीया इत्याह । वाचमिति । तथा च पुनः पुनरुक्तिः-

अतिवादांस्तितिक्षेत नावमन्येत कञ्चन ।

नचेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥

इति आत्मानं बुद्धिमात्मना सात्त्विकया तयैव बुद्ध्या नियम्य अध्वने संसारमार्गाय ॥ ४२ ॥

व्यतिरेके दोषमाह । य इति ॥ ४३ ॥

परिसमाप्यते कृतकृत्यो भवतीत्यर्थः ॥ ४४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

एकादशे षोडशोऽपि सङ्गतः सङ्गतः सताम् ॥ १६ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु भगवन् ! कोटिशः अण्डानि सृजतो भवतः परिश्रमोऽपि स्यादित्यत्रोत्तरं वदन्नुपसंहरति । एता इति । एते मत्कृताः पदार्थाः मनोविकाराः मनसा सङ्कल्पेन मया रचिता इत्यर्थः

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मय्येषां सर्जनादौ मम कश्चिच्छ्रम इति भावः । यथा नृपतिनेदं सम्यगभवतु इत्येवं वाचैवाभिधीयते तद्वदित्यर्थः । यद्वा सङ्कल्पमात्रेण जगत्कर्तृत्वं "तदैक्षत बहु स्यामिति" वाचाभिधीयते इत्यर्थः ॥ ४१ ॥

अनन्तब्रह्माण्डमयसंसारश्रवणेन भीतं प्रति तत्तरणोपायमाह । वाचमितित्रिभिः । आत्मानं बुद्धिम् आत्मना शुद्धेन मनसा यच्छ मद्भजनविरोधिभूतविषयान्निवारयेत्यर्थः । अध्वने पुनःपुनर्जन्ममरणप्रवाहाय ॥ ४२ ॥

अनिवारणे दोषमाह । यः असंयच्छन् वर्तेत इति शेषः तस्य आमघटाम्बुवत् अपक्वघटजलवत् ॥ ४३ ॥

परिसमाप्यते संसारान्मुक्तो भवति ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षोडशाध्यायार्थप्रकाशः ॥ १६ ॥

---

भाषा टीका ।

इतनी सब विभूति संक्षेप से मैंने तुम से कही हैं ऐसे वचन से कथन के योग्य होवे तैसे सब हमारे मन के विकार से संकल्प मात्र से रचित हैं ॥ ४१ ॥

तिससे तुम इनको जान कर वचन मन प्राण इन्द्रिय बुद्धि इन सबों को सत्त्व गुणवाली बुद्धि के द्वारा संसार विषय से रोकोगे तब योग के होने से फिर संसार मार्ग को नहीं प्राप्त होवोगे ॥ ४२ ॥

जो पुरुष यति होकर भी वाणी और मनको नहीं रोकता है उसका व्रत तप दान एवं जैसे कच्चे घड़े से जल निकल जाता है तैसे लुप्त हो जाते हैं ॥ ४३ ॥

तिससे जो मेरे में परायण पुरुष है वह मन वचन प्राण इनोंको मेरी भक्ति से युक्त बुद्धि के द्वारा रोके तब उसके सब मनोरथ समाप्त होजाते हैं ॥ ४४ ॥

इति श्रीमद्भागवत एकादशस्कन्ध षोडश अध्याय की
श्री वृन्दावनस्थ पं० लक्ष्मणाचार्यकृत
भाषाटीका समाप्त ॥ १६ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे षोडशोऽध्यायः ॥ १६ ॥

——:o:——

# अथ सप्तदशोऽध्यायः ।

—:*:—

उद्धव उवाच ॥

यस्त्वयाऽभिहितः पूर्वं धर्मस्त्वद्भक्तिलक्षणः ।
वर्णाश्रमाचारवतां सर्वेषां द्विपदामपि ॥ १ ॥

यथानुष्ठीयमानेन त्वयि भक्तिर्नृणां भवेत् ।
स्वधर्मेणारविन्दाक्ष ! तत्समाख्यातुमर्हसि ॥ २ ॥

पुरा किल महाबाहो ! धर्मं परकं प्रभो [1] ।
येन हंसरूपेण ब्रह्मणेऽभ्यात्थ माधव ! [2] ॥ ३ ॥

स इदानीं सुमहता कालेनामित्रकर्शन ! ।
[3] न प्रायो भविता मर्त्यलोके प्रागनुशासितः ॥ ४ ॥

वक्ता कर्ताऽविता नान्यो धर्मस्याच्युत ! ते भुवि ।
सभायामपि वैरिञ्च्यां यत्र मूर्तिधराः कलाः ॥ ५ ॥

कर्त्राऽवित्रा प्रवक्त्रा च भवता मधुसूदन ! ।
त्यक्ते महीतले देव ! विनष्टं कः प्रवक्ष्यति ॥ ६ ॥

[4] तत्त्वं नः सर्वधर्मज्ञ ! धर्मस्त्वद्भक्तिलक्षणः ।
यथा यस्य विधीयेत तथा वर्णय मे [5] प्रभो ॥ ७ ॥

[6] श्रीशुक उवाच ॥

इत्थं स्वभृत्यमुख्येन पृष्टः स भगवान् हरिः ।
प्रीतः क्षेमाय मर्त्यानां धर्मानाह सनातनान् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततः सप्तदशे पृष्टः स्वधर्मं भक्तिलक्षणम् ।
हंसोक्तं धर्ममस्याह ब्रह्मचारिगृहस्थयोः ॥

कर्माणि निःसङ्ग मात्मतामित्यत्र भक्त्या कृतं कर्म मोक्षसाधनं मद्विभूतिरित्युक्तम् भक्तिसाधनत्वं च कर्मणां मयोदितैः स्वधर्मैरित्यादिना तत्र तत्रोक्तम् न च कर्मानुष्ठातॄणां नियमेन भक्तिर्दृश्यते अतः पृच्छति । यस्त्वयेति युग्मम् । पूर्वं कल्पादौ त्वद्भक्तिलक्षणस्तज्ज्ञापकस्तत्साधनमित्यर्थः । वर्णाश्रमहीनानामपि द्विपदां नराणाम् ॥ १ ॥

यथा येन प्रकारेणानुष्ठीयमानेन स्वधर्मेण ॥ २ ॥

ननु सम्प्रदायादेव ज्ञायते किं पुनर्मयोक्तेन तत्राऽऽह । पुरेति । परमकं परमश्रेष्ठं कं सुखरूपञ्च तम् यत् यम् हंसरूपेण धर्मोऽप्युक्त एव नतु योगमात्रम् जानीत मागतं यज्ञं युष्मद्धर्मविवक्षयोपयुक्तत्वात् ॥ ३ ॥

प्रागनुशासितोऽपि न भविता न भविष्यति ॥ ४ ॥

अत्र हेतुमाह । वक्तेति द्वाभ्याम् । ते त्वत्तोऽन्यः कलाः वेदाद्याः ॥ ५—६ ॥

तत्तस्मात्सोऽस्माकं मनुष्याणां मध्ये यस्य यथा विधीयते ॥ ७—८ ॥

—

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

यस्त्वयेति युग्मकम् । ब्रह्मचारिगृहस्थयोर्हंसोक्तं धर्ममनु-

---

(१) भवान् (२) य माह त्वयि भक्तेभ्यो ब्राह्मणेभ्यश्च माधव ! (३) प्रायोऽन्तर्भविता (४) त्वमतः (५) मेऽच्युत ! (६) बादरायणिरुवाच इति विजयध्वजपाठः ।

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

चाहं कृत्वा भगवानाह । तज्ज्ञापकः तां त्वद्भक्तिं साध्यत्वेन ज्ञापयतीति तथा ॥ १—२ ॥

पुरेति युग्मकम् । न केवलं आनीत मागतं वर्णं युष्मच्छ्रेविवक्षुयेत्येव हंसस्य धर्मवक्तृत्वे प्रमाणामपि तु विष्णुधर्मोत्तरमपि ॥ ३ ॥

तत्र इदानीं धर्मस्य प्रवृत्त्यभावे ॥ ४ ॥ ५ ॥

तदेवाह कर्त्रेति ॥ ६ ॥

तत्तस्मादन्यवक्तुरभावात् अतो नैःश्रेयसकरत्वात् ॥ ७–९ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—३ ॥

शासिता विविच्य ज्ञापिता ॥ ४ ॥

कर्तेति । कर्त्ता कारयिता च स इतिन्यायेन मर्यादास्थापनार्थं नरनारायणादिरूपेण कर्त्ता ॥ ५ ॥

आविश्य रसकेण ॥ ६–९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थमाख्यायादौ वर्णाश्रमशुभाचारमकामात्मा समाचरेदिति वर्णाश्रमानुगुणानामाचाराणां भगवद्भक्तियोगानुग्राहकतयानुष्ठेयत्वमुक्तं तत्प्रकारमुक्तानुवादपूर्वकं पृच्छति । यस्त्वयेति । वर्णाश्रमाचारवतां वर्णानुगुणाचारयुक्तानामाश्रमानुगुणाचारयुक्तानां च सर्वेषां द्विपदां त्वद्भक्तिलक्षणो धर्मस्तत्प्राप्तिसाधनत्वयाभिहित इत्युक्तानुवादः ॥ १ ॥

तत्र पृच्छति । यथेति । यथानुष्ठीयमानेन स्वधर्मेण स्वस्ववर्णाश्रमानुगुणेन धर्मेण त्वयि नृणां भक्तिर्भवेत्तदनुष्ठानप्रकारात्मकं वस्तु मह्यं समाख्यातु कथयितुमर्हसि ॥ २ ॥

ननूपदेष्टृपरम्परयैव तज्ज्ञायते किमिति मां पृच्छसीत्यत्राह । पुरेति । यत् यं परमकं परमश्रासौ कं सुखरूपश्च तं धर्मं हंसरूपेण ब्रह्मणेऽपिशब्दात्सनकादिभ्योऽप्युवाच उपदिष्टवानसि हे माधव ! ॥ ३ ॥

स धर्मः हे अमित्रकर्शन ! प्राक् त्वयानुशासितो विविच्य ज्ञापितः इदानीमतिमहता कालेन मर्त्यलोके प्रायशो न भविता विच्छिन्नो बभूवेत्यर्थः ॥ ४ ॥

अत एव तस्य धर्मस्य वक्ता उपदेष्टा कर्त्ताऽविता रक्षिता हे अच्युत ! ते त्वत्तोऽन्यो भुवि नास्ति न दृश्यत इत्यर्थः । मास्तु भुव्यूर्ध्वलोकेषु तु स्यादत आह । सभायामपीति । सभां विरिञ्चेः । यत्र मूर्तिधराः कला इति । कला विद्या मूर्तिधराः विग्रहधारिण्यः सन्ति वैरिञ्च्यां सभायामपि वक्ता कर्त्ताविता वा नास्तीति सम्बन्धः ॥ ५ ॥

यद्यधुना त्वं न कथयसि तर्हि कर्त्राविता प्रवक्ता च त्वया त्यक्तेऽवनिमण्डलतले विनष्टं विच्छिन्नं धर्मं कः प्रवक्ष्यति न कोऽप्यतस्त्वमेवोपदिशेति भावः ॥ ६ ॥

तदेवाह । स त्वमिति । हे सर्वधर्मज्ञ ! सः कर्त्ता वक्ताऽविता च त्वं नोऽस्मभ्यं त्वद्भक्तिलक्षणोपयुक्तः धर्मः यथा यद्रूपकलापयुक्तो यस्य यादृश आश्रमस्य विधीयते तथा मे मह्यं वर्णय हे प्रभो ! मम स्वामिन् ॥ ७ ॥

इत्थमिति शुकोक्तिः मनुष्याणां क्षेमाय ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्तद्वर्णादिभिरनुष्ठीयमानेन स्वधर्मेण भगवद्भक्तिर्भवतीत्यतस्तद्वर्णविभागं तत्तत्स्वधर्मं निरूपयत्यस्मिन्नध्याये । तत्रोद्धव उक्तार्थमनूद्य ज्ञातव्यांश पृच्छति । यस्त्वयेति । पूर्वं त्वया यस्त्वद्भक्तिलक्षणः त्वद्भक्तिरेव लक्षणं संपद्यस्य स तथाभिहितः ॥ १ ॥

तेन स्वधर्मेणानुष्ठीयमानेन वर्णाश्रमाचारवतां नृणां यथा त्वयि भक्तिर्भवेत्तथाख्यातुमर्हसीत्यन्वयः द्विपदामपि वर्णादिहीनानामपि यो धर्मस्तमपीति वाऽन्वयः ॥ २ ॥

ननु मयोक्तो धर्मस्त्वया ज्ञातश्चेत्पुनः किमिति वक्तव्य इति तत्राह । पुरेति ॥ ३ ॥

स धर्म इदानीं प्रायोऽन्तर्भविता तिरोभूतः ॥ ४ ॥

अस्य धर्मस्य वक्ता त्वदन्यो नास्तीत्याह । वक्तेति । ते तव धर्मस्य विरिञ्चोऽस्ति इत्यत्राह । सभायामिति । त्वत्प्रसादं विना विरिञ्चोऽपि न वक्ष्यतीत्यपिपदार्थः—

विना प्रसादं विष्णोर्न धर्मं ब्रह्माभिवक्ष्यति ।
तत्प्रसादेन वक्तुं तु ब्रह्मा शक्ष्यति नापरः ॥

इति वचनात् यत्र सभायां कलाः प्राणाद्या मूर्तिधराः अङ्गोपाङ्गाद्यवयववत्यः स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोकेषु नाम च ता इमाः षोडशकलाः पुरुषायणा इत्यादिश्रुतेः ॥ ५ ॥

यदा ब्रह्मसभायामपि त्वदन्योऽन्यो नास्ति किमुत भूतल इति भावेनाह । कर्त्रेति । भवता त्यक्ते महीतले विनष्टं धर्मं कः पुरुषः प्रवक्ष्यतीत्यन्वयः कर्तेति पाठे यो भवान् धर्मस्य कर्ता तेन भवता ॥ ६ ॥

ततः किमत्राह । त्वमिति । यतोऽन्यो नास्ति अतस्त्वद्भक्तिलक्षणो धर्मो यस्य यथा विधीयेत तथा मे वर्णयेत्यन्वयः ॥ ७ ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यस्त्वयेति युग्मकम् । वर्णादीनां यो धर्मस्त्वया प्रोक्तस्तेन स्वधर्मेण यथानुष्ठीयमानेन सता नृमात्राणां त्वयि भक्तिर्भवेत् तत्तथा मम मां प्रति आख्यातुमर्हसीति द्वयोरन्वयः त्वद्भक्तिलक्षणः त्वद्भक्तेः साधनं चैव त्वद्भक्तिः कर्माहं निर्जिर सात्वतामिश्रत्वाचनादिलक्षणतया प्रयच्छतीति भावः ॥ १ ॥ २ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ब्रह्मणेऽभ्यात्थेति । श्रीविष्णुधर्मोत्तरे तथैव श्रूयते ॥ ३-६ ॥

तत्स्वद्विद्यानामस्माकं सम्बन्धिनो वक्तेति योज्यम् ॥ ७—८ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अथ सप्तदशे धर्मं हंसोक्तं भक्तिमिश्रितम् ।

पृष्टः प्राहोद्धवं कृष्णो ब्रह्मचारिगृहस्थयोः ॥

ज्ञानयोगं भक्तियोगमष्टाङ्गयोगं च श्रुत्वा कर्मयोगं जिज्ञासमान उक्तानुवादपूर्वकं पृच्छति । यस्त्वयेति सप्तभिः । पूर्वकल्पादौ यदुक्तं त्वया—

कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता ।

मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥

इति स च भक्तिलक्षणो धर्मस्त्रिविधः केवलः प्राधानभूतो गुणभूतश्च तत्र यः केवलः स वर्णाश्रमवतां वर्णाश्रमहीनानामपि द्विपदां नराणां यदृच्छयैव तादृशसाधुसङ्गादेव भवति ननु धर्मादिभ्यः यदुक्तं त्वया ।—

यं न योगेन सांख्येन दानव्रततपोऽध्वरैः ।

व्याख्यास्वाध्यायसन्न्यासैः प्राप्नुयाद्यत्नवानपीति ॥

यद्मिंश्च वर्णाश्रमाचारवत्सु जनेषु यदृच्छयैवाविर्भूते सति ते जना वर्णाश्रमाचारं परित्यज्यैव तमनुतिष्ठन्ति यदुक्तं धर्मान् सन्त्यज्य यः सर्वान् मां भजेत् स च सत्तम इतिप्रधानभूतगुणभूतौ तु तौ यथायोगं तादृशसत्संगात् स्वधर्माच्च भवत एव परन्तु यथा येन प्रकारेणानुष्ठीयमानेनेति त्वत् त्वदन्यो न जानातीति भावः भक्तिः प्रधानभूता गुणभूता वा ॥ १ ॥ २ ॥

ननु किमथा स्वधर्मो मया क्वापि नोक्तस्तत्राह । पुरेति । परमकं परमं कं मोक्षलक्षणं सुखं यस्मात्तं यत् यं हंसरूपेण स्वधर्मोऽप्युक्त एव ननु योगमात्रं जानीत मागतं यन्नं युष्मत्कर्मविवक्षयैत्युक्तत्वात् ॥ ३ ॥

प्रागनुशासितोऽपि न भविष्यति ॥ ४ ॥

कला वेदाद्या अष्टादश विद्याः ।

ऋग्यजुः सामाथर्वाख्या वेदाश्चत्वार एव च ।

पुराणन्यायमीमांसा धर्मशास्त्राणि चत्वापि ।

शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषं तथा ।

छन्दश्चेति षडङ्गानि विद्याः प्रोक्ताश्चतुर्दश ।

आयुर्धनुर्गान्धर्वश्च शास्त्रेऽष्टादशापि तानि ॥ ५ ॥

विनष्टं धर्मम ॥ ६ ॥

त्वद्भक्तिं लक्षयति दर्शयतीति सः तद्वक्तुरित्यर्थः ॥ ७ ॥ ८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वर्णानामाश्रमाणां च कर्मभिः साधयेत्कथः ।

अधुनाध्याययुग्मेन भक्तिमित्याह केशवः ।

हरिभक्तिवर्णाश्रमक्रियया निर्मलान्तःकरणानामात्मपरमात्मविवेके जाते भवत्सु वर्णाश्रमक्रियानुष्ठानेन भक्त्युदयप्रकारं पृच्छति । य इत्यादिना । मद्भक्तियुक्तयेत्यनेन पूर्वमनन्तराध्यायान्ते भक्तिलक्षणः भक्त्यात्मकः धर्मः योऽभिहितः स सर्वेषां द्विपदां तत्र मुख्यानां वर्णाश्रमाचारवतां सम्बन्धीत्यर्थः । अपिशब्दादन्येऽपि गृह्यन्ते ॥ १

सा च भक्तिः स्वधर्मेण स्वस्वासाधारणवर्णाश्रमधर्मेण यथा येन प्रकारेणानुष्ठीयमानेन भवेत् तत्र वर्णाश्रमवतां साक्षाद्धर्मानुष्ठानेनेतरेषां गुरुशुश्रूषणादिद्वारेति विवेकः तत्समाख्यातुमर्हसि ॥ २ ॥

तत्र नत्संप्रदायाज्ज्ञेयमित्यत्र त्वमेव संप्रदायप्रवर्त्तक इत्याह । पुरेति । माया: संप्रदायविद्यायाः धवः स्वामी संप्रदायधर्मप्रवर्त्तकस्तस्य सम्बोधने हे माधव । मा विद्या च लक्ष्मीरूपा तया सह स्वामी धवः स्मृत इति स्मृतेः परमकं ज्ञानभक्तिद्वारा मुक्तिसाधनं धर्मं जानीत मागतं यन्नं युष्मत्कर्मविवक्षयेतिवचनात् हंसरूपेण श्रीमत्सनकादिभ्यो योगोपदेशसमये ब्रह्मणो स्वपुत्राद् योगसाधनतया धर्मोऽप्युपदिष्ट इति गम्यते अतो यत् यं ब्रह्मणेऽभ्यात्थ तं व्याख्यातुमर्हसीत्यनुषङ्गः ॥ ३ ॥

ननु स लोकात् प्रवृत्त इत्यत आह । स इति । प्रागनुशासितः स परमको धर्मः इदानीं महता कालेन निमित्तेन मर्त्यलोके प्रायो न विद्यतेऽतोऽन्तेऽपि न भविता ऽतस्तमाख्यातुमर्हसि ॥ ४ ॥

तत्रान्ये बहुविदस्तदर्थं मृग्याः अत्राह । वक्तेति द्वाभ्याम् । ते त्वत्तः कला वेदाः ॥ ५ ॥ ६ ॥

तत्तनः नोऽस्माकमधिकारिणां मध्ये त्वद्भक्त्युपायः यस्य यथा विधीयते तथा मे मां प्रति वर्णय ॥ ७ ॥ ८ ॥

———

भाषा टीका ।

उद्धव उवाच ।

हे भगवन् ! आपने जो पहिले आपका भक्तिरूप धर्म कहा है सम्पूर्ण वर्णाश्रमी मनुष्य जिसको करने के योग्य हैं ॥ १ ॥

उस धर्म के जैसे अनुष्ठान करने से आपके विषै मनुष्यों की भक्ति होवै और अपना धर्म भी स्थिर रहै हे कमललोचन ! तैसे मेरे से कहिये ॥ २ ॥

हे महाबाहो ! हे प्रभो ! हे माधव ! पूर्वकाल में जो हंसरूप से आपने ब्रह्मा के अर्थ परम धर्म कहा है ॥ ३ ॥

हे शत्रुनाशक ! वह धर्म इस वखत बड़े काल के बीतने से जैसे पहिले कहा है तैसा प्राय लोक में नहीं रहेगा ॥ ४ ॥

हे अच्युत ! इस पृथिवी में इस धर्म के कहने वाला तथा रक्षा करने वाला दूसरा कोई नहीं है इहां क्या जहां कि वेदादिक मूर्ति से रहते हैं ऐसे ब्रह्माजी के सभा में भी नहीं कोई है ॥ ५ ॥

हे देव ! हे मधुसूदन ! इस धर्म के कहने वाले करने वाले रक्षा करने वाले आप जिस समय इस पृथिवी तल को छोड़ेंगे तब नष्ट होने वाले धर्म को कौन कहेगा ॥ ६ ॥

तिस से हे सर्व धर्मज्ञ ! हे प्रभो ! आपके भक्ति रूप जो धर्म सो जिस पुरुष को जैसा विहित है तैसा मेरे से वर्णन कीजिये ॥ ७ ॥

श्रीशुक उवाच ।

वे भगवान् हरिः अपने भक्तों में मुख्य उद्धवजी के ऐसे पूछने से प्रसन्न होकर सब मनुष्यों के कल्याणार्थ सनातन धर्मों को कथन करते भये ॥ ८ ॥

श्रीभगवानुवाच ॥

धर्म्य एष तव प्रश्नो नैःश्रेयसकरो नृणाम् ।
वर्णाश्रमाचारवतां तमुद्धव ! निबोध मे ॥ ९ ॥
आदौ कृतयुगे वर्णो नृणां हंस इति स्मृतः ।
कृतकृत्याः प्रजा जात्या तस्मात्कृतयुगं विदुः ॥ १० ॥
वेदः प्रणव एवाग्रे धर्मोऽहं वृषरूपधृक् ।
उपासते तपोनिष्ठा हंसं मां मुक्तकिल्बिषाः ॥ ११ ॥
त्रेतामुखे महाभाग ! प्राणान् मे हृदयात्त्रयी ।
विद्या प्रादुरभूत्तस्या अहमासं त्रिवृन्मखः ॥ १२ ॥
विप्रक्षत्रियविट्शूद्रा मुखबाहूरुपादजाः ।
वैराजात्पुरुषाज्जाता य आत्माचारलक्षणाः ॥ १३ ॥
गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम ।
वक्षःस्थानाद्वने वासो न्यासः शीर्षणि संस्थितः ॥ १४ ॥
वर्णानामाश्रमाणां च जन्मभूम्यनुसारिणीः ।
आसन् प्रकृतयो नृणां नीचैर्नीचोत्तमोत्तमाः ॥ १५ ॥
शमो दमस्तपः शौचं सन्तोषः क्षान्तिरार्जवम् ।
मद्भक्तिश्च दया सत्यं ब्रह्मप्रकृतयस्त्विमाः ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

धर्म्यो धर्मादनपेतः कुतो नैःश्रेयसकरो भक्तिजनकः अतो मे मत्तस्तं धर्मं निबोध ॥ ९ ॥

तत्रादौ मदुपासनालक्षण एव मुख्यो धर्म आसीत् आश्रमलक्षणस्तु पश्चात्प्रवृत्तः स चैवमनुष्ठितो भक्तिहेतुर्भवतीति वर्णोत्पत्तिमाह । आदाविति । कल्पादौ यत्कृतयुगं तस्मिन् ते च तदा मामुपासत एव केवलं नान्यत्कुर्वन्तीति वक्तुं कृतयुगनामनिरुक्तिमाह । कृतकृत्या इति । जात्या जन्मनैव ॥ १० ॥

किञ्च विधायकाभावादपि तदानीं नान्यत्कर्मास्तीत्याह । वेद इति । धर्मश्च मनोविषयोऽहमेव वृषरूपधृक् चतुष्पात् क्रियाविशेषो यज्ञादिः अतस्तपोनिष्ठाः मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तप इति वचनादेकाग्रतया हंसं शुद्धं मां ध्यायन्तीत्यर्थः ॥ ११ ॥

पश्चात्त्रेतायुगप्रवेशे मे वैराजरूपस्य प्राणाभिमित्तात् हृदयात्मकाशात् तस्यास्त्रय्याः सकाशात् होत्राध्वर्यवोद्गात्रैस्त्रिवृद्रूपः यज्ञो वै विष्णुरिति श्रुतेः ॥ १२ ॥

वर्णानामाश्रमाणां च धर्मान्वक्तुं तेषामुत्पत्तिमाह । विप्रेति द्वाभ्याम् । आत्माचारः स्वधर्म एव लक्षणं ज्ञापको येषां ते ॥ १३ ॥

मम वैराजरूपस्य हृदो वक्षसोऽधस्तात् ब्रह्मचर्यमिति नैष्ठिकाभिप्रायम् ॥ १४ ॥

तेषामधिकारिविशेषेण स्वभावानाह । वर्णानामिति पञ्चभिः । जन्मस्थानानुसारिण्यः नीचैरित्यव्ययम् अतोऽयमर्थः मन्दाभिर्जन्मभूमिभिर्मन्दाः उत्तमाभिरुत्तमाश्चेति ॥ १५ ॥

तप आलोचनम् ॥ १६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी ।

तत्र धर्मद्वयमध्ये । आदौ हिरण्याक्षादौ ब्राह्मे कल्पे । आचारलक्षणाः क्रियालक्षणाः । आह प्रवृत्तिक्रममाहेत्यर्थः ॥ १० ॥

विधायकाभावाद्वेदानाविर्भावात् । तदानीं कृतयुगे अन्यत् तपोऽतिरिक्तम् ॥ ११ ॥

वैराजरूपस्य ब्रह्मणः पुरुषस्य तदभिमानवतः कल्पान्तरे इति ज्ञेयम् । होतुः कर्म होत्रम् । अध्वर्योः कर्म आध्वर्यवम् उद्गातुस्तदौद्गात्रम् तैः ॥ १२ ॥

वैराजात् विराडभिमानिब्रह्मरूपात् ॥ १३ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

नैष्ठिकाभिप्रायमित्युपकुर्वाणस्तु जघनादिति ज्ञेयम् ॥ १४ ॥

जन्मस्थानमुत्तमापितरौ प्रभोऽवयवत्वात् ॥ १५ ॥

शमोदम इत्यादिश्लोकत्रयोक्ता वर्णधर्मा विप्रादिवर्णानां यथासंख्यमाश्रमधर्मा अपि उक्ताः विप्राणां शमादिप्रधाना ब्रह्मचर्यादयः ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आदौ कृतयुगे चतुर्युगसहस्रारम्भकृतयुगे हंस इति ब्राह्मणवर्णसंज्ञा नतु क्षत्रियादय इत्यर्थः ॥ १० ॥ ११ ॥

त्रिवृन्मखः प्रणवप्रधानः ॥ १२ ॥

वैराजात् विराट्शब्दवाच्यानिरुद्धप्रसूताच्चतुर्मुखात् ॥ १३-१९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पूर्वमनुवर्णयितुकामः स्तुवन्प्रश्नमभिनन्दति । धर्म्य इति । तव लोकहितैककारिण एष प्रश्नः धर्म्यः हिताचरणरूपाद्धर्मादनपेतः तत्र हेतुत्वेन प्रश्नं विशिनष्टि । वर्णाश्रमाचारवतां नृणां निःश्रेयसकरः । मुक्तिसाधनः प्रश्नस्य निःश्रेयसकरत्वम् उत्तरज्ञानानुष्ठानादिपरम्परयेत्यवगन्तव्यं हे उद्धव ! तं भक्तियोगानुग्राहकं वर्णाश्रमानुगुणं धर्मं मे मत्तो निबोध जानीहि ॥ ९ ॥

वर्णानामुत्पत्तिं तद्धर्मभेदं च विवक्षुस्तावत्कृतयुगे वर्णस्तद्धर्मश्चैक एवेत्याह । आदाविति । आदौ कृतयुगे चतुर्युगसहस्रारम्भकृतयुगे नृणां वर्णो हंस इति स्मृतः हंस इति ब्राह्मणवर्णसंज्ञा स एक एव नतु क्षत्रियादयः सन्तीत्यर्थः । कृतमिति नाम निर्वक्ति कृतकृत्या इति । जाता हंसत्वजात्यैव यस्मात्कृतकृत्यास्तस्मात्तद्युगं कृतमिति विदुः हंसजात्युत्पत्तिमात्रेणैव कृतकृत्यतावत्त्वं तस्मिन्कृतशब्दप्रवृत्तौ निमित्तमित्यर्थः । अनेन तद्युगसम्भवानां हंसानां न कर्तव्यांशोऽस्तीति सूचितम् ॥ १० ॥

किञ्च विधायकाभावादपि तदानीं नान्यत्कर्मास्तीत्याह । वेद इति । तदा प्रणव एव वेदः नतु त्रयीति भावः । धर्मश्च मनोविषयोऽहमेव वृषरूपधृक्चतुष्पात्तु क्रियाविशेषो यज्ञादिः अतस्ते केवलं तपोनिष्ठाः ध्यानयोग निष्ठाः हंसं विशुद्धं निरस्तनिखिलदोषं मामुपासते अतस्तेऽपि मुक्तकिल्बिषा अहमिव तेऽपि हंसा इति भावः ॥ ११ ॥

पश्चात्त्रेतायुगप्रवेशे तु हे महाभाग ! मम हृदि यः प्राणः तस्मात्त्रयी ऋग्यजुःसामरूपाः त्रयोऽवयवा यस्याः सा विद्या प्रादुर्बभूव तस्या नित्यत्वात्प्रादुरभूदित्युक्तं नतूत्पद्यते इति तस्यास्त्रय्या विद्यायाः सकाशात् हौत्राध्वर्यवौद्गात्रत्रिरूपः त्रयाणां ऋग्यजुःसाममन्त्राणां वृत्तत्वेन करणतया यस्मिन्निति वा त्रिवृत्स मखो यज्ञोऽहमासमित्यात्ममखयोः सामानाधिकरण्यमात्मायत्तसत्ताप्रवृत्तिमत्त्वनिबन्धनं त्रेताप्रभृतियज्ञादिरूपो धर्मस्तद्विभावकधर्मश्चासीदित्यर्थः ॥ १२ ॥

अत एवमत एव विप्रादयश्चत्वारो वर्णाः आश्रमाचारः आश्रमो लक्षणं ज्ञापको येषां ते वैराजाद्विराट्शब्दवाच्यानिरुद्धप्रसूताच्चतुर्मुखादेर्जाता आसन्निति शेषः ब्राह्मणादीनां वैराजमुखादिभ्यः प्रसूतत्वं नाम वेदप्रवचनादिरूपमुखादिव्यापारावलम्बित्वम् ॥ १३ ॥

अथाश्रमाणामुत्पत्तिमाह । गृहाश्रम इति । मम चतुर्मुखशरीरकस्य जघनतो गृहाश्रमः हृदो ब्रह्मचर्यं न्यासः संन्यासः शीर्षणि शिरसि संस्थित आश्रित इत्यर्थः । वर्णानां जातिरूपत्वादाश्रमाणां च क्रियात्मकत्वात्तेषामाश्रमैर्विना पृथगुत्पत्त्यनुपपत्तेराश्रमाणां नृणामुत्पत्तेः सृष्टिप्रकरणानन्वयैवोक्तत्वान्मुखाद्युत्पत्त्यसम्भवान्मुखजघनाद्यवयवगतवैषम्यादिनीचोत्तमभावादिरूपधर्मावच्छिन्नस्वरूपैर्वोत्पत्तिरवगन्तव्या अत एव जाता इत्युक्तम् ॥ १४ ॥

तेषां स्वभावविशेषानाह । वर्णानामिति । जन्मभूमयो जन्मदेशाः तत्र वर्णानां जन्मदेशा मुखबाहूरुपादाः जघनहृदयशिरांस्याश्रमाणां तदनुसारिण्यः तद्गतधर्मानुसारिण्यः हेतुगर्भमिदम् अतः नीचैरवमैर्जन्मदेशैर्नीचाः उत्तमैस्तैरुत्तमाः प्रकृतयः स्वभावा आसन् ॥ १५ ॥

तत्तत्स्वभावप्रयुक्तान् धर्मानाह । शम इति । इमाः शमादयः ब्रह्मप्रकृतयः ब्रह्मवर्णस्वभावप्रयुक्ताः अत एव ब्रह्मकर्म स्वभावजमिति गीतं ब्राह्मणादीनां स्वभावो नाम ब्राह्मणादिजन्महेतुभूतप्राचीनकर्मविशेषः तदनुसारिबुद्धिविशेषो वा तस्य स्वभावस्य शमादीन्प्रति हेतुत्वं सत्त्वादिगुणोद्रेकापादनतत्प्रयुक्तशमादिविषयरुचिजननद्वारैव ब्राह्मणस्य स्वभावप्रभवो रजस्तमोऽभिभवेन उद्भूतसत्त्वगुणः क्षत्रियस्य स्वभावप्रभवस्तु सत्त्वतमोऽभिभवेनात्युद्रिक्तरजोगुणः वैश्यस्य तु सत्त्वरजोऽभिभवेनाल्पोद्रिक्तरजोगुणः वैश्यस्य तु सत्त्वरजोऽभिभवेनाल्पोद्रिक्ततमोगुणः शूद्रस्य स्वभावप्रभवस्तु रजःसत्त्वाभिभवेनात्युद्रिक्ततमोगुणः एभिः स्वभावप्रभवैर्गुणैः शमादिरुचिः यद्यपि शमादयो मुमुक्षूणां त्रयाणां वर्णानां साधारणास्तथापि ब्राह्मणस्य सत्त्वोद्रेकस्य स्वाभाविकत्वेन शमदमादयः सुखोपादाना इति कृत्वा तस्य शमादयः प्रकृतयः इत्युक्तं क्षत्रियवैश्ययोस्तु स्वतो रजस्तमःप्रधानत्वेन शमदमादयो दुःखोपादाना इति कृत्वा न तत्प्रकृतय इत्युक्तमित्यवगन्तव्यं तत्र शमो नामानर्थावहेभ्यो विषयेभ्यो बाह्येन्द्रियनियमनं दमोऽन्तःकरणनियमनमिति तपो भोगनियमनरूपः शास्त्रप्रसिद्धः कायक्लेशः शौचं शास्त्रीयकर्मयोग्यता सन्तोषो दैवाल्लब्धेनान्नादिनालं बुद्धिः क्षान्तिः परैः पीड्यमानस्याप्यविकृतचित्तता आर्जवं परेषु मनोऽनुरूपं बाह्यचेष्टाप्रकाशनं दया परदुःखासहिष्णुता सत्यं यथादृष्टविषयं भूतहितरूपवचनम् ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

धर्मः धर्मविषयः ॥ ९ ॥

नृणां वर्णो हंस इति हंसाभिधानः कृतयुगं पर्वासयुगम् ॥ १० ॥

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आद्ये कृते प्रकृष्टो नवो भगवद्गुणानां येन स प्रणव ओङ्कारलक्षणरूपस्तद्व्याख्यानरूपो वेद एक एव न ऋगादिभेदेन विभक्तः। ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एवेति श्रुतिः तस्य विषयः क इत्यत आह । धर्मं इति स क इत्यतोऽहमिति किंविशिष्टः वृषरूपधृक् चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्येत्यादिश्रुतिः एवंविधे त्वयि किंप्रमाणमत्राह । उपासत इति । हंसा इत्यस्य विवरणं मुक्तकिल्बिषा इति ॥ ११ ॥

अधुना त्रेतायुगे वेदादिप्रवर्तनप्रकारमाह । त्रेतामुख इति । त्रेतामुखे त्रेताप्रारम्भे मे मम हृदयात् प्रेष्ठतमा सरस्वतीत्यस्याः प्रकृष्टो विरिञ्चः तस्मात्प्राणात्त्रयी विद्या त्रित्वसंख्याविशिष्टत्वेन वेदविद्या प्रादुरभूत् त्रीन् वेदान् शृणु इति त्रिवृतो ब्राह्मणात एव मुखं द्वारं यस्य स तथा अहं तस्या विद्याया आसं विप्रद्वारा त्रय्या अभिव्यक्तोऽहमित्यर्थः । विप्राणां तस्योपदेष्टृत्वात् ॥ १२ ॥

तत्र विप्रमुखत्वं किं विशिष्योच्यते क्षत्रादिमुखत्वं किं न स्यादित्याशङ्क्य मम सर्वावयवेभ्यो मुखस्य मुख्यत्वाद्यागादिकरणत्वात्तत्स्थापनस्य यागाधिकारत्वाच्चेति भावेनाह । विप्रेति । तत्र कस्मादुपविशेषाद्विप्राद्युत्पत्तिरत्राह । वैराजादिति । वैराजात् ब्रह्मान्तर्यामिणः ये आत्माचारलक्षणाः शास्त्रविहिताचार एव लक्षणं येषां ते तथा ॥ १३ ॥

इदानीमाश्रमोत्पत्तिव्यवस्थामाह । गृहाश्रम इति । वनेवासः वानप्रस्थः ॥ १४ ॥

समावयवानां विशेषाभावेऽपि मन्दमतिमपेक्ष्य जन्मस्थानमनुसृत्य वर्णादीनां स्वभावविशेषोऽस्तीत्याह । वर्णानामिति । प्रकृतयः स्वभावाः स्वभावभेदा नीचादिशब्दवाच्याश्चेत्याह । नीचैरिति । नीचप्रकृतिः शूद्रः नीचोत्तमो वैश्यः उत्तमः क्षत्रियः उत्तमोत्तमः विप्रः नीचनीचोऽन्तेवसायी ॥ १५ ॥

नीचैरित्यादिविप्रादिक्रमविषयं निवारयितुं विप्रादिस्वभावलक्षणमाह । शम इत्यादिना ॥ १६ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्र द्विपरार्धादौ ब्राह्मकल्पे यत्कृतत्रेतयोर्वर्णाश्रमाचाराणां प्रवृत्तिक्रमकथनमाह । आदाविति पञ्चभिः । यतो या तु सृष्ट्यादित एव चातुर्वर्ण्यादिप्रवृत्तिर्वर्णिता सा कल्पान्तरेष्वेव ज्ञेया ॥१०॥

तदानीं का निष्ठा विधिकार्याभावान्नान्ये वेदाः प्रवर्तिताः किन्तु मुख्य एक एवेत्याह । वेद इति ॥ ११ ॥

क्रमेण तेषां मुक्तौ सत्यां तानन्यान् वेदान् प्रवर्तयोऽन्येऽधिकारिणः प्रवर्तिता इत्याह । त्रेतेति द्वाभ्याम् । मे मम वैराजाख्यब्रह्मरूपस्य उपरिसृष्टेस्तत्कारणकत्वात् अत एव नीचैर्नीचोत्तमोत्तमा इति नीचत्वेनापि उपदेक्ष्यते श्रीनारायणे तयोस्तदनुचितत्वात् मत्स्तदधिष्ठाना ॥ १२ ॥

वैराजात् विराडभिमानिब्रह्मरूपात् ॥ १३ ॥

ब्रह्मचर्यमिति तैः तत्र नैष्ठिकाभिप्रायमित्युपकुर्वाणस्तु जघनादिति ज्ञेयम् ॥ १४ ॥ १५ ॥

शमो दम इत्यादिषु वैदान्तत्रयाणामाश्रमधर्मा अप्युन्नेयाः विप्राणां शमादिप्रधाना ब्रह्मचर्यादयः ॥ १६ ॥

---

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

धर्म्यो धर्मादनपेतः तं धर्मम् ॥ ९ ॥

एवं त्वत्पृष्टो वर्णाश्रमाचारलक्षणो धर्मो यतः आरभ्य प्रवृत्तस्तं समयमपि शृण्वित्याह । आदाविति ॥ १० ॥

धर्मश्च मनोविषयोऽहमेव वृषरूपधृक् चतुष्पात् न क्रियाविषयो यज्ञादिरित्यर्थः ॥ ११ ॥

मे मम वैराजरूपस्य प्राणाभिमितात् हृदयात् सकाशात् त्रयी तस्याः त्रय्याः सकाशात् होत्राध्वर्यवौद्गात्रैस्त्रिवृत् त्रिरूपः यज्ञो वै विष्णुरिति श्रुतेः ॥ १२ ॥

जाता प्राक् सृष्टा एव तदा प्रकटीबभूवुः । आत्माचारः स्वस्वधर्म एव लक्षणं ज्ञापको येषां ते ॥ १३ ॥

हृदो वक्षसोऽधःस्थलात् ॥ १४ ॥

जन्मभूम्यनुसारिण्य एव प्रकृतयः स्वभावाः नीचैरित्यव्ययं नीचाभिर्जन्मभूमिभिर्नीचाः उत्तमाभिः उत्तमाः प्रकृतयः तेन मुखस्य शीर्षाणश्च सर्वोत्तमत्वाद्विप्रस्य सन्न्यासस्य च सर्वोत्तमा प्रकृतिः पादस्य जघनस्य च नीचत्वात् शूद्रस्य गृहाश्रमस्य च नीचा प्रकृतिः ॥ १५ ॥

मम भक्तिर्गुणाभूता ॥ १६—१९ ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निःश्रेयसकरः भक्तिजनकः तत्र प्रश्नः यतः धर्म्यः धर्मादनपेतः तं प्रस्तुतं धर्मं मे मत्तो निबोध ॥ ९ ॥

वर्णाश्रमकर्मण्यन्तःकरणशुद्धिद्वारा परभक्तिहेतुज्ञानसाधनतया भक्तिसाधनत्वं तस्य कृतयुगे प्रवृत्तिर्नास्ति प्रयोजनाभावादित्याह । आदाविति द्वाभ्याम् । आदौ कल्पादौ यत्कृतयुगं तस्मिन् हंसः शुद्धान्तःकरणाः जात्या जन्मनैव कृतकृत्या नानावर्णाश्रमतद्धर्मनिरपेक्षाः मद्ध्यानपरा न तु यज्ञादिकर्माधिकारिण इत्यर्थः ॥ १० ॥

वेदः प्रणवः चिदचिच्छक्तिमद्ब्रह्मवाचकः तत्राकारो विशेषतो ब्रह्मवाचकः अ ब्रह्मेति श्रुतेः प्राकृतानुमयति जीवमप्राकृतं लोकं गमयतीत्युः गुरुरिति गुरुवाचकोकारनिरुक्त्या चिच्छक्तिः सूचिता मकारार्थश्चिच्छक्तिर्जीवः तत्र प्राकृतजीवाख्यो मकारार्थो द्वयोः उभयोः अकाराणां पृथक्स्थितिप्रवृत्त्याद्यभावात्तदाभिन्नत्वम् अत एव तत्त्वत्रयस्य भेदाभेदः स्वाभाविकः सम्बन्धः तथाह भगवान्नारायणाचार्यः—

सर्वं हि विज्ञानमतो यथार्थकं श्रुतिस्मृतिभ्यो निखिलस्य वस्तुनः । ब्रह्मात्मकत्वादिति वेदविन्मतं त्रिरूपतापि श्रुतिसूत्रसाधिता । एवमर्थाभिधायी प्रणवरूपो वेदोऽध्यानात्मकमद्भजनबोधकोऽग्र आसीन्नतु नानावर्णाश्रमतद्धर्मपरः अहमकारार्थः वृषरूपधृक् सत्यशौचदयातपआख्यतया प्रधानचतुष्पादयुक्तो धर्मः तपोनिष्ठाः आलोचनाख्यतपोविशेषनिष्ठाः हंसं स्वभावतोऽपास्तदोषं कल्याणगुणगणनिधिं मामुपासते ॥ ११ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

नैष्ठिकाभिप्रायमित्युपकुर्वाणस्तु अधनादिति ज्ञेयम् ॥ १४ ॥

जन्मस्थानमुत्तमापितरौ मनोऽव्ययत्वात् ॥ १५ ॥

शमोदम इत्यादिश्लोकत्रयोक्ता वर्णधर्मा विप्रादित्रयाणां यथासंख्यमाश्रमधर्मा अपि उक्ताः विप्राणां शमादिप्रधाना ब्रह्मचर्यादयः ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आदौ कृतयुगे चतुर्युगसहस्रारम्भकृतयुगे हंस इति ब्राह्मणवर्णसंज्ञा नतु क्षत्रियादय इत्यर्थः ॥ १० ॥ ११ ॥

त्रिवृन्मखः प्रणवप्रधानः ॥ १२ ॥

वैराजात् विराट्शब्दवाच्यानिरुद्धप्रसूताच्चतुर्मुखात् ॥ १३-१६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पृष्टमनुवर्णयितुकामः स्तुवन्प्रश्नमभिनन्दति । धर्म्य इति । तव लोकहितैककारिण एष प्रश्नः धर्म्यः हिताचरणरूपाद्धर्मादनपेतः तत्र हेतुत्वेन प्रश्नं विशिनष्टि । वर्णाश्रमाचारवतां नृणां निःश्रेयसकरः । मुक्तिसाधनः प्रश्नस्य निःश्रेयसकरत्वम् उत्तरज्ञानानुष्ठानादिपरम्परयेत्यवगन्तव्यं हे उद्धव ! तं भक्तियोगानुग्राहकं वर्णाश्रमानुगुणं धर्मं मे मत्तो निबोध जानीहि ॥ ९ ॥

वर्णानामुत्पत्तिं तद्धर्मभेदं च विवक्षुस्तावत्कृतयुगे वर्णस्तद्धर्मश्चैक एवेत्याह । आदाविति । आदौ कृतयुगे चतुर्युगसहस्रारम्भकृतयुगे नृणां वर्णो हंस इति स्मृतः हंस इति ब्राह्मणवर्णसंज्ञा स एक एव नतु क्षत्रियादयः सन्तीत्यर्थः । कृतमिति नाम निर्वक्ति कृतकृत्या इति । जाता हंसत्वजात्यैव यस्मात्कृतकृत्यास्तस्मात्तद्युगं कृतमिति विदुः हंसजात्युत्पत्तिमात्रेणैव कृतकृत्यतावत्त्वं तस्मिन्कृतशब्दप्रवृत्तौ निमित्तमित्यर्थः । अनेन तद्युगसम्भवानां हंसानां न कर्तव्यांशोऽस्तीति सूचितम् ॥ १० ॥

किञ्च विधायकाभावादपि तदानीं नान्यत्कर्मास्तीत्याह । वेद इति । तदा प्रणव एव वेदः नतु त्रयीति भावः । धर्मश्च मनोविषयोऽहमेव वृषरूपधृक्चतुष्पात्तु क्रियाविशेषो यज्ञादिः अतस्ते केवलं तपोनिष्ठाः ध्यानयोग निष्ठाः हंसं विशुद्धं निरस्ताखिलदोषं मामुपासते अतस्तेऽपि मुक्तकिल्बिषा अहमिव तेऽपि हंसा इति भावः ॥ ११ ॥

पश्चात्त्रेतायुगप्रवेशे तु हे महाभाग ! मम हृदि यः प्राणः तस्मात्त्रयी ऋग्यजुःसामरूपाः त्रयोऽवयवा यस्याः सा विद्या प्रादुर्बभूव तस्या नित्यत्वात्प्रादुरभूदित्युक्तं नतूत्पद्यते इति तस्यास्त्रय्या विद्यायाः सकाशात् हौत्राध्वर्यवौद्गात्रैस्त्रिरूपः त्रयाणां ऋग्यजुःसाममन्त्राणां वृत्तं करणतया यस्मिन्निति वा त्रिवृत्स मखः यज्ञोऽहमासमित्यात्ममखयोः सामानाधिकरण्यमात्मायत्तसत्ताप्रवृत्तिमत्त्वनिबन्धनं त्रेताप्रभृतियज्ञादिरूपो धर्मस्तद्विभागभेदश्चासीदित्यर्थः ॥ १२ ॥

अत एवमत एव विप्रादयश्चत्वारो वर्णाः आत्माचारः स्वधर्मो लक्षणं ज्ञापको येषां ते वैराजाद्विराट्शब्दवाच्यानिरुद्धप्रसूताच्चतुर्मुखादेर्जाता आसन्निति शेषः ब्राह्मणादीनां वैराजमुखादिभ्यः प्रसूतत्वं नाम वेदप्रवचनादिरूपमुखादिव्यापारावलम्बित्वम् ॥ १३ ॥

अथाश्रमाणामुत्पत्तिमाह । गृहाश्रम इति । मम चतुर्मुखशरीरकस्य जघनतो गृहाश्रमः हृदो ब्रह्मचर्यं न्यासः संन्यासः शीर्षणि शिरसि संस्थित आश्रित इत्यर्थः । वर्णानां जातिरूपत्वादाश्रमाणां च क्रियात्मकत्वात्तेषामाश्रमैर्विना पृथगुत्पत्त्यनुपपत्तेराश्रमाणां नृणामुत्पत्तेः सृष्टिप्रकरणेष्वन्यथैवोक्तत्वान्मुखोरपरपसम्भवान्मुखजघनाद्यवयवगतवैदवावादिनीचोत्तमभावादिरूपधर्मायत्तस्वरूपैवोत्पत्तिरवगन्तव्या अत एव जाता इत्युक्तम् ॥ १४ ॥

तेषां स्वभावविशेषानाह । वर्णानामिति । जन्मभूमयो जन्मदेशाः तत्र वर्णानां जन्मदेशा मुखबाहूरुपादाः जघनहृदयवक्षःशिरांसि आश्रमाणां तदनुसारिण्यः तद्गतधर्मानुसारिण्यः हेतुगर्भमिदम् अतः नीचैस्तैर्जन्मदेशैर्नीचाः उत्तमैस्तैरुत्तमाः प्रकृतयः स्वभावा आसन् ॥ १५ ॥

तत्तत्स्वभावप्रयुक्तान् धर्मानाह । शम इति । इमाः शमादयः ब्रह्मप्रकृतयः ब्रह्मवर्णस्वभावप्रयुक्ताः अत एव ब्रह्मकर्मस्वभावजमिति गीतं ब्राह्मणादीनां स्वभावो नाम ब्राह्मणादिजन्महेतुभूतप्राचीनकर्मविशेषः तदनुसारिबुद्धिविशेषो वा तस्य स्वभावस्य शमादीन्प्रति हेतुत्वं सत्त्वादिगुणोद्रेकापादनतत्प्रयुक्तशमादिविषयरुचिजननद्वारैव ब्राह्मणस्य स्वभावप्रभवो रजस्तमोऽभिभवेन उद्भूतसत्त्वगुणः क्षत्रियस्य स्वभावप्रभवस्तु सत्त्वतमोऽभिभवेनात्युद्रिक्तरजोगुणः वैश्यस्य तु सत्त्वरजोऽभिभवेनाल्पोद्रिक्तरजोगुणः वैश्यस्य तु सत्त्वरजोऽभिभवेनाल्पोद्रिक्तस्तमोगुणः शूद्रस्य स्वभावप्रभवस्तु रजःसत्त्वाभिभवेनात्युद्रिक्ततमोगुणः एभिः स्वभावप्रभवैर्गुणैः शमादिरुचिः यद्यपि शमादयो मुमुक्षूणां त्रयाणां वर्णानां साधारणास्तथापि ब्राह्मणस्य सत्त्वोद्रिक्तस्य स्वाभाविकत्वेन शमदमादयः सुखोपादाना इति कृत्वा तस्य शमादयः प्रकृतयः इत्युक्तं क्षत्रियवैश्ययोस्तु स्वतो रजस्तमःप्रधानत्वेन शमदमादयो दुःखोपादाना इति कृत्वा न तत्प्रकृतय इत्युक्तमित्यवगन्तव्यं तत्र शमो नामानर्थावहेभ्यो विषयेभ्यो बाह्येन्द्रियनियमनं दमोऽन्तःकरणनियमनमिति तपो भोगनियमनरूपः शास्त्रप्रसिद्धः कायक्लेशः शौचं शास्त्रीयकर्मयोग्यता सन्तोषो दैवाल्लब्धेनान्नादिनालं बुद्धिः क्षान्तिः परैः पीड्यमानस्याप्यविकृतचित्तता आर्जवं परेषु मनोऽनुरूपं बाह्यचेष्टाप्रकाशनं दया परदुःखासहिष्णुता सत्यं यथादृष्टविषयं भूतहितरूपवचनम् ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

धर्मः धर्मविषयः ॥ ९ ॥

नृणां वर्णो हंस इति हंसाभिधानः कृतयुगं पर्यासयुगम् ॥ १० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आद्ये कृते प्रकृष्टो नवो भगवदनुष्ठानो येन स प्रणव ओङ्कारस्तद्रूपस्तद्व्याख्यानरूपो वेद एक एव न ऋगादिभेदेन विभक्तः ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एवेति श्रुतिः तस्य विषयः क इत्यत अहं धर्म इति स क इत्यतोऽहमिति किंविशिष्टः वृषरूपधृक् चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्येत्यादिश्रुतिः एवंविधे त्वयि किमप्रमाणमत्राह । उपासत इति । हंसा इत्यस्य विवरणं मुक्तकिल्बिषा इति ॥ ११ ॥

अधुना त्रेतायुगे वेदादिप्रवर्तनप्रकारमाह । त्रेतामुख इति । त्रेतामुखे त्रेताप्रारम्भे मे मम हृदयात् प्राणतमा सरस्वतीत्यस्याः प्रकृष्टो विरिञ्चः तस्मात्प्राणात्त्रयी विद्या त्रित्वसंख्याविशिष्टत्वेन वेदविद्या प्रादुरभूत् त्रीन् वेदान् वृणुत इति त्रिवृतो ब्राह्मणास्त एव मुखं द्वारं यस्य स तथा अहं तस्या विद्याया आसं विप्रद्वारा त्रय्या अभिव्यक्तोऽहमित्यर्थः । विप्राणां तत्त्वोपदेष्टृत्वात् ॥ १२ ॥

तत्र विप्रमुखत्वं किं विशिष्योच्यते क्षत्रादिमुखत्वं किं न स्यादित्याशङ्क्य मम सर्वावयवेभ्यो मुखस्य मुख्यत्वाद्यागाधिकरणत्वात्तत्त्वज्ञापनस्य वागधिकारत्वाच्चेति भावेनाह । विप्रेति । तत्र कस्माद्रूपविशेषाद्विप्राद्युत्पत्तिरत्राह । वैराजादिति । वैराजात् ब्रह्मान्तर्यामिणः ये आत्माचारलक्षणाः स्वस्वविहिताचार एव लक्षणं येषां ते तथा ॥ १३ ॥

इदानीमाश्रमोत्पत्तिस्थानमाह । गृहाश्रम इति । वनेवासः वानप्रस्थः ॥ १४ ॥

समावयवानां विशेषाभावेऽपि मन्दमतिमपेक्ष्य जन्मस्थानमनुसृत्य वर्णादीनां स्वभावविशेषोऽस्तीत्याह । वर्णानामिति । प्रकृतयः स्वभावाः स्वभावभेदा नीचादिशब्दवाच्याश्चेत्याह । नीचैरिति । नीचप्रकृतिः शूद्रः नीचोत्तमो वैश्यः उत्तमः क्षत्रियः उत्तमोत्तमः विप्रः नीचनीचोऽन्त्यवसायी ॥ १५ ॥

नीचैरित्यादिविप्रादिक्रमविषयं निवारयितुं विप्रादिस्वभावलक्षणमाह । शम इत्यादिना ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्र द्विपरार्धादौ ब्राह्मकल्पे यत्कृतत्रेतयोर्वर्णाश्रमाचाराणां प्रवृत्तिक्रमस्तमाह । आदाविति पञ्चभिः । यतो या तु सृष्ट्यादित एव चातुर्वर्ण्यादिप्रवृत्तिर्वर्णिता सा कल्पान्तरेष्वेव ज्ञेया ॥ १० ॥

तदानीं का निष्ठा विधिकाण्डाभावान्नान्ये वेदाः प्रवर्तिताः किन्तु मुख्य एक एवेत्याह । वेद इति ॥ ११ ॥

कर्मणा तेषां मुक्तौ सत्यां तानन्यान् वेदान् प्रवर्त्यान्येऽधिकारिणः प्रवर्तिता इत्याह । त्रेतेति द्वाभ्याम् । मे मम वैराजाख्यब्रह्मरूपस्य व्यष्टिसृष्टेस्तत्कारणकत्वात् अत एव नीचैर्नीचोत्तमोत्तमा इति नीचत्वेनापि व्यपदिश्यते श्रीनारायणे तथोक्तेरनुचितत्वात् मस्तकस्तदधिष्ठाता ॥ १२ ॥

वैराजात् विराडभिमानिब्रह्मरूपात् ॥ १३ ॥

ब्रह्मचर्यमिति तैः तत्र नैष्ठिकाभिप्रायमित्युपकुर्वाणस्तु अध्ययनादिति ज्ञेयम् ॥ १४ ॥ १५ ॥

शमो दम इत्यादिषु वेदान्तव्याख्यामाश्रमधर्मा अप्युपेयाः विप्राणां शमादिप्रधाना ब्रह्मचर्यादयः ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

धर्म्यो धर्मादनपेतः तं धर्मम् ॥ ९ ॥

एष त्वत्पृष्टो वर्णाश्रमाचारलक्षणो धर्मो यतः प्रारभ्य प्रवृत्तस्तं समयमपि सूचयन्नाह । आदाविति ॥ १० ॥

धर्मश्च मनोविषयोऽहमेव वृषरूपधृक् चतुष्पात् न क्रियाविषयो यज्ञादिरित्यर्थः ॥ ११ ॥

मे मम वैराजरूपस्य प्राणान्निमित्तात् हृदयात् सकाशात् त्रयी तस्याः त्रय्याः सकाशात् हौत्राध्वर्यवौद्गात्रैस्त्रिवृत् त्रिरूपः यज्ञो वै विष्णुरिति श्रुतेः ॥ १२ ॥

जाता प्राक् सृष्टा एव तदा प्रकटीबभूवुः । आत्माचारः स्वस्वधर्म एव लक्षणं ज्ञापको येषां ते ॥ १३ ॥

उरो वक्षसोऽधःस्थलात् ॥ १४ ॥

जन्मभूम्यनुसारिण्य एव प्रकृतयः स्वभावाः नीचैरित्यस्यार्थं नीचाभिर्जन्मभूमिभिर्नीचाः उत्तमाभिः उत्तमाः प्रकृतयः तेन मुखस्य शीर्ष्णश्च सर्वोत्तमत्वाद्विप्रस्य सन्न्यासस्य च सर्वोत्तमा प्रकृतिः पादस्य जघनस्य च नीचत्वात् शूद्रस्य गृहाश्रमस्य च नीचा प्रकृतिः ॥ १५ ॥

मम भक्तिर्गुणभूता ॥ १६—१९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निःश्रेयसकरः भक्तिजनकः तव प्रश्नः यतः धर्म्यः धर्मादनपेतः तं प्रस्तुतं धर्मं मे मत्तो निबोध ॥ ९ ॥

वर्णाश्रमकर्मस्वान्तःकरणशुद्धिद्वारा परभक्तिहेतुज्ञानसाधनतया भक्तिसाधनत्वं तस्य कृतयुगं प्रवृत्तिर्नास्ति प्रयोजनाभावादित्याह । आदाविति द्वाभ्याम् । आदौ कल्पादौ यत्कृतयुगं तस्मिन् हंसः शुद्धान्तःकरणाः जात्या जन्मनैव कृतकृत्याः नानावर्णाश्रमतद्धर्मनिरपेक्षाः मद्ध्यानपरा न तु यज्ञादिकर्माधिकारिणः इत्यर्थः ॥ १० ॥

वेदः प्रणवः चिदचिच्छक्तिमद्ब्रह्मवाचकः तत्राकारो विशेषतो ब्रह्मवाचकः अ ब्रह्मेति श्रुतेः प्राकृतानुत्तरति जीवमप्राकृतं लोकं गमयतीत्युः गुरुरिति गुरुवाचकोकारनिरुक्त्या चिच्छक्तिः सूचिता मकारार्थश्चिच्छक्तिर्जीवः तत्र प्राकृतजीववाचको मकारार्थो बद्धः उभयोः अकारार्थात्पृथक्स्थितिप्रवृत्त्याद्यभावात्तदभिन्नत्वम् अत एव तत्त्वत्रयस्य भेदाभेदः स्वाभाविकः सम्बन्धः तथाह भगवान्नारायणाचार्यः—

सर्वं हि विज्ञानमतो यथार्थकं श्रुतिस्मृतिभ्यो निखिलस्य वस्तुनः ।
ब्रह्मात्मकत्वादिति वेदविन्मतं त्रिरूपतापि श्रुतिसूत्रसाधिता ।

एवमर्थाभिधायी प्रणवरूपो वेदोऽध्यानात्मकमन्त्रजनबोधकोऽस्मि आसीन्नतु नानावर्णाश्रमतद्धर्मपरः अहमकारार्थः वृषरूपधृक् सत्यशौचदयातपआख्यतया प्रधानचतुष्पादयुक्तो धर्मः तपोनिष्ठाः आलोचनात्मकतपोविशेषनिष्ठाः हंसाः स्वभावतोऽपास्तदोषं कल्याणगुणगणनिधिं मामुपासते ॥ ११ ॥

तेजो बलं धृतिः शौर्यं तितिक्षौदार्यमुद्यमः ।
स्थैर्यं ब्रह्मण्यतैश्वर्यं क्षत्रप्रकृतयस्त्विमाः ॥ १७ ॥
आस्तिक्यं दाननिष्ठा च अदम्भो ब्रह्मसेवनम् ।
अतुष्टिरर्थोपचयैर्वैश्यप्रकृतयस्त्विमाः ॥ १८ ॥
शुश्रूषणं द्विजगवां देवानां चाप्यमायया ।
तत्र लब्धेन सन्तोषः शूद्रप्रकृतयस्त्विमाः ॥ १९ ॥
अशौचमनृतं स्तेयं नास्तिक्यं शुष्कविग्रहः ।
कामः क्रोधश्च तर्षश्च स्वभावोऽन्तेवसायिनाम् ॥ २० ॥
अहिंसा सत्यमस्तेयमकामक्रोधलोभता ।
भूतप्रियहितेहा च धर्मोऽयं सार्ववर्णिकः ॥ २१ ॥
द्वितीयं प्राप्यानुपूर्व्याज्जन्मोपनयनं द्विजः ।
वसन् गुरुकुले दान्तो ब्रह्माधीयीत चाहुतः ॥ २२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अथ कर्मबोधकवेदस्य कर्मशास्त्रतदधिकारिणां च प्रवृत्तिमाह। त्रेतामुखे इति त्रिभिः। हे महाभाग! त्रेतामुखे त्रेतायुगारम्भे मे मम वैराजरूपिणः प्राणाग्निमित्तात् हृदयात् हृद्गतात् प्रख्यातात् त्रयी ऋग्यजुःसामाख्यवेदत्रयी विद्या कर्मविद्या प्रादुरभूत् कालयोगादधिकारिबुद्धिमान्द्यं यत्तन्निवृत्तये विविधविषयोपयोगितया कर्म त्रय्यां विस्तरतः प्रतिपाद्यत इति शेषः। त्रय्याः सकाशात् होत्राध्वर्यवौद्गात्रैः त्रिवृन्मखोऽहमासम् यज्ञो वै विष्णुरिति श्रुतिरत्रानुसन्धेया ॥ १२ ॥

आचारलक्षणाः स्वकर्मज्ञाप्याः ॥ १३ ॥

ब्रह्मचर्यं हृदः वक्षसः अधस्तात् उपकुर्वाणस्य गृहस्थाश्रमत्वं नैष्ठिकस्य तु सर्वथा प्राप्यसुखपरित्यागित्वेन सर्वश्रेष्ठत्वं चतुर्थो हि प्राप्यसुखं भुक्त्वा आश्रमादाश्रमं गच्छति चतुर्थस्य श्रेष्ठत्वं संन्यासमात्रविवक्षया अकृतदारपरिग्रहत्वविवक्षयेति नैष्ठिकश्रेष्ठविस्तरस्तु वेदान्तकौस्तुभे द्रष्टव्यः अतो ब्रह्मचर्यस्य त्रैविध्यादाश्रमत्रयस्थाने तदुत्पत्तिर्युक्तैव ॥ १४ ॥

तेषां स्वभावमाह। वर्णानामिति पञ्चभिः। जन्मभूम्यनुसारिणीः उत्पत्तिस्थानानुसारिण्यः नीचैरित्युपलक्षणं मध्यमोत्तमयोर्नीचैरित्यस्यार्थं मन्दार्थे मन्दाभिर्जन्मभूमिभिर्मन्दाः प्रकृतयः मध्यमाभिर्मध्यमाः उत्तमशब्देन ज्ञेयाः उत्तमाभिरुत्तमाः द्वितीयोत्तमशब्दव्याख्या ॥ १५ ॥

तपः आलोचनम् ॥ १६ ॥

---

भाषा टीका।

श्रीभगवानुवाच।

यह तुम्हारा प्रश्न मनुष्यों के कल्याण करने वाला है और धर्म युक्त है वर्णाश्रम वालों के कर्तव्य जो धर्म हैं तिनको तुम मेरे से श्रवण करो ॥ ९ ॥

पहिले ब्राह्म कल्प के आदि में सत्य युग में सब मनुष्यों का हंस नाम का एक ही वर्ण था सब प्रजा जन्म से ही कृतकृत्य रहते थे तिससे उसका नाम कृत युग हुआ ॥१०॥

पहिले ओंकार रूप एक ही वेद था वृष रूपधारी मैं ही एक धर्म था सब मनुष्य तप में निष्ठा वाले निष्पाप होकर हंस रूप मेरी उपासना करते थे ॥ ११ ॥

हे महाभाग! त्रेता के आरंभ में मेरे प्राण रूप हृदय से ऋग्यजुः साम रूप तीन वेद विद्या प्रगट भई तदनन्तर तीन प्रकार यज्ञ रूप मैं धर्म भया ॥ १२ ॥

फिर विराट् पुरुष के मुख बाहु जंघा पाद से क्रम से ब्राह्मण क्षत्रिय वैश्य शूद्र ये चार वर्ण भये जो सब आचारों के करने से जाने जाते हैं ॥ १३ ॥

मेरे जघन स्थान से गृहस्थाश्रम भया हृदय में से ब्रह्मचर्य आश्रम भया वक्षस्थल से वानप्रस्थ भया मस्तक में से संन्यास आश्रम भया ॥ १४ ॥

सब वर्ण आश्रमों की जैसी जन्म भूमी हैं उसी के अनुसार नीच की नीच ऊंचे की उत्तम प्रकृति होती भई ॥ १५ ॥

शम दम तप शौच संतोष सहना कोमलता मेरी भक्ति दया सत्य इतनी ये ब्राह्मण की प्रकृति हैं ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तेजः प्रतापः ॥ १७ ॥ १८ ॥

एतैरेवाश्रमस्वभावा अपि ज्ञेयाः ॥ १९ ॥

तद्बाह्यानां स्वभावमाह। अशौचमिति। शुष्कविग्रहो निर्मूलकलहः तर्षस्तृष्णा ॥ २० ॥

मेखलाजिनदण्डाक्षब्रह्मसूत्रकमण्डलून् ।
जटिलोऽधौतदद्वासो रक्तपीठः कुशान् दधत् ॥ २३ ॥
स्नानभोजनहोमेषु जपोच्चारे च वाग्यतः ।
न छिन्द्यान्नखरोमाणि कक्षोपस्थगतान्यपि ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र तावत्सर्वसाधारणं धर्ममाह । अहिंसेति । वर्णग्रहणमुपलक्षणार्थम् वर्णाश्रमान् गृहस्थप्रकरणे वक्ष्यति ॥ २१ ॥

प्रथमं तावदाश्रमेषु ब्रह्मचारिणो धर्मा वर्ण्यन्ते स च द्विविधः उपकुर्वाणको नैष्ठिकश्च तत्राद्यस्य धर्मानाह । द्वितीयमिति सार्धैः । द्विजन्मैवर्णिकः आनुपूर्व्यात् गर्भाधानादिसंस्कारक्रमेण द्वितीयमुपनयनाख्यं जन्म प्राप्याचार्येणाऽऽहूतो ब्रह्म वेदमधीयीत तदर्थं च विचारयेत् ॥ २२ ॥

किंच मेखलादीन् कुशांश्च दधत् तत्राक्षशब्देनाक्षमाला कथंभूतः जटिलः अनभ्यङ्गादिना जातजटः तथा अधौतदद्वासोऽरक्तपीठः दन्ताश्च वासश्च दद्वासांसि न धौतानि तानि यस्य सः अधौतदद्वासाः स चासावरक्तपीठश्च नतु कौतुकादिना रक्तं पीठमासनं यस्य सः ॥ २३ ॥

अपंध्वोच्चारो मूत्रपुरीषोत्सर्गो जपोच्चारं तस्मिन्वाग्यतो मौनी भवेत् ॥ २४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

क्षत्रियाणां तेजआदिप्रधाना ब्रह्मचर्यादयः ॥ १७ ॥

वैश्यानामास्तिक्यप्रधाना ब्रह्मचर्यादयः ॥ १८ ॥

शूद्रस्य तु शुश्रूषणादिप्रधानो गृहस्थधर्म एवैक इति तेरेवाश्रमधर्मा अपि ज्ञेया इति व्याख्यातम् ॥ १९ ॥

तद्वाह्यानां वर्णाश्रमधर्मबहिष्कृतानाम् ॥ २० ॥

तत्र साधारणासाधारणधर्मयोर्मध्ये उपलक्षणार्थमाश्रमधर्मस्वख्यापनार्थम् ॥ २१ ॥

सच ब्रह्मचारी । तत्र ब्रह्मचारिद्वयमध्ये । आद्यस्य सावधि ब्रह्मचर्यवत उपकुर्वाणस्य । आचार्येणाहूत इति अध्ययने तदाज्ञापरत्वमुक्तम् तदर्थं वेदार्थम् ॥ २२ ॥

मेखलेति सार्धकम् जपोच्चार इति द्वन्द्वैकवद्भावः । मौनी भवेदिति वाक्यसमाप्तिः ॥ २३ ॥

न छिन्द्यादित्यर्धकम् । नखेति पृथक् पदम् । सुपां सुलोपश्चेति द्वितीयालोपः ॥ २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अन्तेवासिनां चाण्डालानाम् ॥ २०—२१ ॥

उपनयनमथ द्वितीयं जन्म ब्रह्म वेदम् ॥ २२ ॥

अक्षसूत्रम् अक्षमालाम् यथा ब्रह्मसूत्रमुपवीतम् उपवीताक्षब्रह्मसूत्रम् ॥ २३ ॥

उच्चारे विण्मूत्रोत्सर्जने ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तेजः परैरनभिभवनीयत्वं बलं पराभिभवनसामर्थ्यं धृतिः आरब्धे कर्मणि विघ्नोपनिपातेऽपि तत्समापनसामर्थ्यं शौर्यं युद्धे निर्भयप्रवेशसामर्थ्यं तितिक्षा शस्त्रघातादिप्रयुक्तव्यथासहनम् औदार्यमात्मीयद्रव्यस्य परस्वत्वापादनपर्यन्तत्यागबुद्धिः उद्यमः उत्तरोत्तरमैश्वर्याधिक्यापादनानुगुणव्यापारः स्थैर्यमुपाश्रिते संग्रामे आत्ममरणनिश्चयेऽपि पलायनादिराहित्यं ब्रह्मण्यम् ब्रह्मकुलहितकरत्वम् ऐश्वर्यं स्वव्यतिरिक्तसकलजननियमनसामर्थ्यम् ॥ १७ ॥

आस्तिक्यं शास्त्रार्थे सत्यत्वनिश्चयः दाननिष्ठा दानशीलत्वं अदम्भोऽदम्भनम् अर्थोपचयं वित्तवृद्धौ सत्यामप्यतुष्टिरलंबुद्धिः ॥ १८ ॥

द्विजानां गवां देवानां चामायया शुश्रूषणं तेनैव लब्धेन सन्तोषश्च ॥ १९ ॥

स्तेयं चौर्यं नास्तिक्यमविश्वासः शुष्कविग्रहः निर्हेतुकविरोधः कामः सर्वाहितेषु विषयेषु अननुभूतानन्दव्याप्तिः क्रोधः सति कामविरोधे तद्धेतुसाध्यगुणरूपाभिसन्धिविकारः तर्षः अर्थकामतृष्णा अन्तेवसायिनां चण्डालादीनामवर्णिनामनाश्रमिणां च स्वभाव इत्यर्थः ॥ २० ॥

अथ सर्ववर्णानां साधारणान् धर्मानाह । अहिंसेति । सार्ववर्णिकः सर्वाश्रमिकश्चेत्यपि बोध्यम् ॥ २१ ॥

अथाश्रमधर्मानशेषान् विवक्षुस्तत्र ब्रह्मचारिणो धर्मानाह । द्वितीयमित्यादिना द्विजस्त्रैवर्णिकः आनुपूर्व्याद्गर्भाधानादिसंस्कारक्रमेण द्वितीयमुपनयनाख्यं जन्म प्राप्य गुरुकुले वसन् दान्तो जितान्तःकरणः ब्रह्म वेदं चरति गच्छति अध्ययनेन प्राप्नोतीति तथा यतव्रतः स्वाश्रमोक्तेषु व्रतेषु नियतः ॥ २२ ॥

मेखलादीन् कुशांश्च दर्भांश्च धारयेत् तत्राक्षशब्देनाक्षमाला विवक्षिता । ब्रह्मसूत्रं यज्ञोपवीतम् । जटिलोऽनभ्यङ्गादिना बद्धजटः अधौतदद्वासः अधौता दतः दन्ताः वासांसि वस्त्राणि च यस्य स चासावरक्तोऽपीतश्च तथाभूतः कौतुकादिना रक्तानि पीतानि च वासांसि न धारयेदित्यर्थः २३ ॥

उच्चारो मूत्रपुरीषोत्सर्जनं जपश्चोच्चारश्चानयोः समाहारो जपोच्चारं तस्मिन् स्नानादिष्वन्येषु च वाग्यतः मौनी भवेदित्यर्थः कक्षगतान्युपस्थगतान्यपि रोमाणि नखांश्च न छिन्द्यात् नखानां

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कस्योपदस्यगतत्वासम्भवात्सामर्थ्यात्समस्तानामपि दीक्षां विधानम् ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तेजः प्रभावः बलं शक्तिः

अर्थहानौ च बन्धूनां वियोगेऽप्यपि संपदि ।
तयोः प्राप्तौ च सर्वस्य चित्तस्य स्थापनं धृतिः ॥ १७ ॥

धर्माधर्मेषु विश्वासो वस्तदाहितकथमुच्यते ।
न्यायार्जितं धनं धान्यमन्नाद्यं यत्प्रदीयते ॥
अर्थिभ्यः श्रद्धया युक्तं दानमेतदुदाहृतम् ।
अर्थोपचयं अर्थार्जने अतुष्टित्वं बुभुक्षमावः ॥ १८ ॥ १९ ॥

शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
मृज्जलाभ्यां तथा बाह्यं मनः शुद्धिस्तथापरम् ॥

इत्येतद्विपरीतमशौचम् अनृतम् अयथार्थभाषणं जीवब्रह्मैक्यभाषणमित्यर्थः—

कर्मणा मनसा वाचा परद्रव्येषु निःस्पृहः ।
अस्तेयमिति सम्प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥

इत्येतदन्यत् स्तेयं परकीयग्रन्थस्यात्मीयत्वेन वचनमित्यर्थः शुष्कविग्रहः निष्फलकलहः शुक्तिरजतं निदर्शनीकृत्य जगन्मिथ्येति कथाश्लाघा: कामो निषिद्धविषयाभिलाषः लक्ष्मीपतिरहमित्याद्यभिलापलक्षणा इत्यर्थः । क्रोधस्तत्त्वोक्तावसहिष्णुता तर्षोऽसन्तुष्टिः असूयागुणदूषणोक्तिरित्यर्थः ॥ २० ॥

साधारणधर्ममाह । अहिंसेति—

कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा ।
अक्लेशजननं प्रोक्तमहिंसा त्विह योगिभिः ॥
सत्यं भूतहितं प्रोक्तं न यथार्थाभिभाषणम् ।
असत्यमपि तत् सत्यमुत्तमानां हि यद्वचः ॥

विष्णुवैष्णवविषये द्रव्यत्यागे लोभाभावः अन्यत्र गुणः ॥ २१ ॥

आनुपूर्व्यात् अपवर्गं ब्राह्मणमुपनयीतेत्यादिश्रुत्याविहितप्रकारेणेत्यर्थः । उपनयनलक्षणं द्वितीयं जन्म प्राप्य ब्रह्मणि सक्तः दान्त उपरतो विष्णुभक्त इत्यर्थः । वाग्यतो मितभाषणः ॥ २२ ॥

मेखलादीन् धाम आदींश्च दधत् ॥ २३ ॥

स्नानादिषु वाग्यतः काष्ठमौनवान् जपे उच्चारे मूत्रोत्सर्गे पुरीषोत्सर्जने च—

गुरुणा चोपदिष्टोऽपि वेदबाह्यविवर्जितः ।
विधिनोक्तेन मार्गेण मन्त्राभ्यासो जपः स्मृतः ॥
अधीत्य वेदसूत्रे वा पुराणे सेतिहासके ।
यदेष्वध्ययनं तच्च तदभ्यासो जपः स्मृतः ॥

इति ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

क्षत्रियाणां तेजआदिप्रधाना ब्रह्मचर्यादयः ॥ १७ ॥
वैश्यानामास्तिक्यप्रधाना ब्रह्मचर्यादयः ॥ १८—३५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आश्रमस्वभावा अनुक्ता अप्येवं ज्ञेयाः वर्णबाह्यानां स्वभावमाह । अशौचमिति । अन्तेवसायिनामन्त्यजानाम् ॥ २० ॥

सार्ववर्णिक इत्युपलक्षणं सर्वेवर्णैर्वर्णबाह्यैश्च कर्तुमर्ह इत्यर्थः ॥ २१ ॥

गृहाश्रमधर्मविवरण एव वर्णधर्माः स्वयं विवृता भविष्यन्तीत्यभिप्रेत्य प्रथमं प्रथमाश्रमधर्मानाह । द्वितीयमित्यादि नवभिः द्विजः त्रैवर्णिकः आनुपूर्व्यादिति गर्भाधानादिसंस्कारक्रमेण प्रथमं शौक्रं द्वितीयं सावित्रम् उपनयनमुपनयाख्यं प्राप्य ब्रह्म वेदमधीयीत आहुतः आचार्येणाहूतः चकारात्तदर्थं च विचारयेत् ॥ २२ ॥

मेखलादीन् कुशांश्च दधत् तत्राद्यः असमालामुपवीतं ब्रह्मसूत्रं न धौतानि दद्वासांसि येन न रक्तं कौतुकेन पीठमासनं येन स च स च सः जपश्च उच्चारो मूत्रपुरीषोत्सर्गश्च तस्मिन् वाग्यतो मौनी ॥ २३ ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तेजः प्रभावः ॥ ॥ १७ ॥

अर्थोपचये द्रव्यसंग्रहे ॥ १८ ॥

अमायया अदम्भेन शम इत्यादिचतुर्भिः आश्रमप्रकृतयोऽपि यथासम्भवं ज्ञेयाः ॥ १९ ॥

अन्त्यजानां स्वभावमाह । अशौचेति अन्तेवसायिनां चाण्डालादीनाम् ॥ २० ॥

सर्वसाधारणं धर्ममाह । अहिंसेति । चकाराद्भक्तिः ॥ २१ ॥

वर्णधर्मान् गृहस्थप्रकरणे वक्ष्यति आश्रमधर्मेषु निरूप्यमाणेषु ब्रह्मचारिधर्मः प्रथमं वक्तव्यः स ब्रह्मचारी द्विविधः उपकुर्वाणो नैष्ठिकश्च तत्रोपकुर्वाणधर्मानाह । द्वितीयमित्यादि नवभिः । प्रथमं दैवात्त्रैवर्णिककुले जन्म प्राप्य तत्रानुपूर्व्याद्गर्भाधानादिसंस्कारक्रमेण द्वितीयमुपनयनाख्यं जन्म प्राप्य एवं द्विजो भूत्वा गुरुकुले वसन् तेनाहुतः आहूतः ब्रह्म वेदमधीयीत चकाराद्वेदार्थं चिन्तयेत् ॥ २२ ॥

न धौतानि दद्वासांसि यस्य स अधौतदद्वासाः स चासौ अरक्तपीठश्च सौन्दर्यनिमित्तकेशदन्तवस्त्रनेमर्दवासनयोविडम्बशून्य इत्यर्थः ॥ २३ ॥

जपे उच्चारे च मूत्रपुरीषोत्सर्गे ॥ २४ ॥

---

रेतो नावकिरेज्जातु ब्रह्मव्रतधरः स्वयम् ।
अवकीर्णेऽवगाह्याप्सु यतासुस्त्रिपदीं जपेत् ॥ २५ ॥
अग्न्यर्काचार्यगोविप्रगुरुवृद्धसुरान् शुचिः ।
समाहित उपासीत संध्ये च यतवाग् जपन् ॥ २६ ॥
आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् ।
न मर्त्यबुद्ध्यासूयेत सर्वदेवमयो गुरुः ॥ २७ ॥
सायं प्रातरुपानीय भैक्ष्यं तस्मै निवेदयेत् ।
यच्चान्यदप्यनुज्ञातमुपयुञ्जीत संयतः ॥ २८ ॥
शुश्रूषमाण आचार्यं सदोपासीत नीचवत् ।
यानशय्यासनस्थानैर्नातिदूरे कृताञ्जलिः ॥ २९ ॥
एवं वृत्तो गुरुकुले वसेद्भोगविवर्जितः ।
विद्या समाप्यते यावद्बिभ्रद्व्रतमखण्डितम् ॥ ३० ॥
यद्यसौ छन्दसां लोकमारोक्ष्यन् ब्रह्मविष्टपम् ।
गुरवे विन्यसेद्देहं स्वाध्यायार्थं बृहद्व्रतः ॥ ३१ ॥
अग्नौ गुरावात्मनि च सर्वभूतेषु मां परम् ।
अपृथग्धीरुपासीत ब्रह्मवर्चस्व्यकल्मषः ॥ ३२ ॥

---

भाषा टीका।

तेज बल धैर्य शूरता सहना उदारता उद्यम स्थिरता ब्रह्मण्यता ऐश्वर्य ये सब क्षत्रियों के स्वाभाविक कर्म हैं ॥१७॥

आस्तिकता दान देना कपट न करना ब्राह्मण सेवा धन के अर्जने में असंतोष ये वैश्य के स्वाभाविक धर्म हैं ॥१८॥

ब्राह्मणादि गऊ देवता इनकी निष्कपट भाव से सेवा उसमें जो मिले तिससे संतोष ये शूद्र के स्वाभाविक धर्म हैं ॥ १९ ॥

अशुद्ध रहना झूठ कहना चोरी करना नास्तिकता व्यर्थ लड़ाई काम क्रोध तृष्णा ये अन्त्यज चांडालादिकों के स्वभाव हैं ॥ २० ॥

अहिंसा सत्य वचन चोरी न करना क्रोध लोभ न करना प्राणि मात्र के हित की चेष्टा यह सब वर्णों का साधारण धर्म है ॥ २१ ॥

ब्राह्मणादिक यज्ञोपवीत संस्कार से दूसरे जन्मको प्राप्त होकर गुरु कुल में निवास करे जितेन्द्रिय होकर रहै जब गुरु बुलावैं तब वेद पढ़ै ॥ २२ ॥

कटिमेखला मृग चर्म दंड जप की माला यज्ञोपवीत कमंडल इनको हर समय रखै जटा धारण करै दंत वस्त्र इनको न धोवै आसन पीढ़ा पर न बैठ कुशों को हाथ में रखै ॥ २३ ॥

स्नान भोजन होम जप मूत्रविष्ठा का त्याग इन समयों में मौन रहै कांख में इन्द्रिय में भी रोमों को न कटावै नखों को नहीं कटावै ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

रेतो बुद्धिपूर्वं नावकिरेन्नोत्सृजेत् ब्रह्मव्रतधरोऽगृहस्थः स्वयमेव कथंचिदवकीर्णो अवगाह्य स्नात्वा यतासुः कृतप्राणायामस्त्रिपदीं गायत्रीं जपेत् ॥ २५ ॥

संध्ये च द्वे यतवाग् जपन्नुपासीत मध्याह्ने संध्यानिमित्तं मौनं नास्तीति द्विवचनम् ॥ २६ ॥ २७ ॥

अन्यदपि यत्संप्राप्तं तच्च निवेदयेत् तेनानुज्ञातं तु संयतः सन्नुपयुञ्जीतेत्यर्थः ॥ २८

यानशय्यासनस्थानैः यान्तं पृष्ठतो यानेन निद्रितमप्रमत्ततया समीपशयनेन विश्रान्तं पादसंवाहनादिभिः समीपासनेन आसीनं कृताञ्जलिः नियोगप्रतीक्षया नातिदूरेऽवस्थानेनेत्यर्थः ॥ २९ ॥

एवं भूतं वृत्तं यस्य सः ॥ ३० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवमुपकुर्वाणकस्य धर्मानुक्त्वा नैष्ठिकस्य विशेषधर्मानाह । यदीति षड्भिः । असौ ब्रह्मचारी यदि छन्दसां लोकं महर्लोकं ततो ब्रह्मलोकं चारोढुमारोढुमिच्छतीत्यर्थः । यद्वा छन्दसां लोकमिति ब्रह्मलोकविशेषणम् यत्र मूर्तिधराः कला इत्युक्तत्वात् तर्हि बृहद्व्रतः सन् बृहन्नैष्ठिकं व्रतं यस्य सः विन्यसेत्समर्पयेदधिक-स्वाध्यायार्थमधीतनिष्कयार्थं च ॥ ३१ ॥

ब्रह्मवर्चस्वी वेदाभ्यासजं तेजस्तद्वान् ॥ ३२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

कथञ्चित् स्वप्नादिदोषेण अवकीर्णो उत्सृष्टे सति ॥ २५ ॥

आचार्योऽत्राध्यापकः गुरुश्च पित्रादिः । गायत्रीं जपन् ॥ २६ ॥

आचार्यं मां मदीयं प्रेष्ठं विजानीयात् गुरुवरं मुकुन्दप्रेष्ठत्वेन स्मरेदित्युक्तेः । साक्षाद्रूपत्वे तु मां मद्रूपमेव विजानीयात् ॥ २७ ॥

निवेदयेदित्यावृत्तिः तुकाराध्याहारश्चेति इत्यर्थं इत्युक्तम् ॥ २८ ॥

यानं च शय्या च शयनं च आसनं च स्थानं चावस्थानं तैः यान्तं गच्छन्तं गुरुम् एवं निद्रितमित्यादिगुरुविशेषणानि नियोगप्रतीक्षया आज्ञाप्रतीक्षणेन ॥ २९ ॥

वृत्तमाचारः । यावद्विद्या समाप्यते तावदखण्डं ब्रह्मचर्यं व्रतं बिभ्रत् सन् गुरुकुले वसेत् ॥ ३० ॥

ततो महर्लोकात् । पूर्वार्धे विशेष्यस्यानुपश्चकाराध्याहारश्च कष्टमतो यद्वेति । अधीतस्य वेदस्य निष्क्रियार्थमानुषज्यरूपदक्षिणार्थम् ॥ ३१ ॥

मामन्तर्यामिरूपम् अपृथग्धीरन्तर्यामिरूपे भेदबुद्धिशून्यः ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अवकीर्णः स्कन्नरेताः त्रिपदीं सावित्रीम् ॥ २५—३० ॥

छन्दसां लोकं छन्दसां फलभूतं लोकं सप्तर्षिलोकम् व्रतं ब्रह्मचर्यव्रतम् ॥ ३१ ॥

अपृथग्धीः स्वनिष्ठभेदरहितः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

जातु कदाचिदपि बुद्धिपूर्वकं रेतो न विकिरेत् यतस्त्वं ब्रह्मव्रतधरः ब्रह्मचर्यव्रतधरोऽगृहस्थ इति यावत् यदि कथं चिदवकीर्णः स्यात्तर्ह्यप्स्ववगाह्य स्नात्वा यतासुः नियमितप्राणः कृतप्राणायाम इत्यर्थः । त्रिपदीं सावित्रीमष्टोत्तरसहस्रं जपेत् तावता त्रिपदीजपेन शुद्धिरिष्यते ॥ २५ ॥

अग्नीति । द्विसन्ध्ये शुचिरग्न्यादीनुपासीत समाहितचित्तो यतवाक् मौनी भूत्वा जपेत्सावित्रीमिति शेषः तत्राग्न्युपासनमग्निहोत्र-होमेनार्कोपासनं सूर्यमण्डलान्तर्वर्तिपरमपुरुषध्यानात्मकं गवामुपा-सनं तृणप्रदानकण्डूयनादिना सेवा गुर्वादीनामुपासनं प्रणामपाद-संवाहनादिभिः सेवा सुराणां धूपदीपनैवेद्यपञ्चमहायज्ञादि-सेवा ॥ २६ ॥

किञ्च आचार्यमिति । आचार्यं मां विजानीयान्मद्बुद्ध्योपासीत कर्हिचिदपि नावमन्येत नावज्ञां कुर्यात् मर्त्यबुद्ध्या मनुष्योऽयं मादृशोऽयमिति बुद्ध्या नासूयेत न दोषानाविष्कुर्वीत च यतो गुरुः सर्वदेवमयः सर्वदेवताप्रचुरमद्बुद्ध्योपास्यमानः आत्मनः सर्वदेवताप्राचुर्यं सर्वदेवताशरीरकत्वमेवेत्यर्थः । तथाच श्रुतिः "स आत्मा अङ्गान्यन्या देवता" इत्याद्या ॥ २७ ॥

किञ्च सायमिति । भैक्षं भिक्षालब्धमन्नादिकं यच्चान्यदपि स्वोप-भोग्यमनिषिद्धं तत्समादाय तस्मै आचार्याय निवेदयेत्तत्पुरतो निदध्यादित्यर्थः । ततस्तेनाचार्येणानुज्ञातं स्वयमुपयुञ्जीत उपयुक्तं कुर्यात् ॥ २८ ॥

शुश्रूषमाण इति । नीचवद्दासवद्यान्तं पृष्ठतो यानेन निद्रितमप्रमत्त-तया समीपशयनेन विश्रान्तं पादसंवाहनादिभिः समीपासने-नासीनं कृताञ्जलिर्नियोगप्रतीक्षया नातिदूरेऽवस्थानेनेत्यर्थः ॥ २९ ॥

एवम्भूतं वृत्तं वृत्तिर्यस्य सः भोगैः रहितः यावद्विद्याध्ययनं समाप्यते तावदखण्डितमविच्छिन्नं व्रतमुक्तविधं बिभ्रच्चाद्यन् गुरुकुले वसेत् ॥ ३० ॥

तस्यैवानुष्ठेयान्तरमाह । यदीति । असौ ब्रह्मचारी यदि छन्दसां वेदाध्ययनादिकर्मणां फलभूतं ब्रह्मविषयं ब्रह्मलोकमा-रोढुमन्विप्सुः स्यात्तर्हि स्वाध्यायार्थमधीतनिष्क्रयार्थं बृहद्व्रतः ब्रह्मचर्यव्रतधर एव सन् गुरवे देहं न्यसेत् गुर्वधीनं कृत्वा यावज्जीवं ब्रह्मचर्यव्रतधर एव स्यादित्यर्थः । एवं चेदयं नैष्ठिक इत्युच्यते अन्यथा तूपकुर्वाण इति विवेकः ॥ ३१ ॥

अस्य नैष्ठिकस्य वृत्त्यन्तरमाह । अग्नौ इति श्लोकम् । अपृथग्धीः स्वनिष्ठभेदरहितः अग्न्यादिष्वन्तरात्मतयावस्थितमग्न्यादिशरीरकं मां ब्रह्मवर्चस्वी ब्रह्मचर्यव्रतचर्याहिततेजःसम्पन्नः अकल्मषः सन्नुपासीत ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

नाधकिरेन्न उत्सृजेत् प्रसङ्गगुरुणा पूर्वमुपदिष्टोऽप्यनुज्ञया धर्मार्थमात्मसिद्ध्यर्थमुपायमहत्त्वं व्रतं प्राणापानसमायोगः प्राणायाम उदीरितः । ब्रह्मव्रतधरः ब्रह्मचर्यव्रतधरः—

कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा ।
सर्वत्र मैथुनत्यागं ब्रह्मचर्यं प्रचक्षते ॥

स्वप्ने सुन्दर्यादिदर्शने यदृच्छया रेतोऽवकीर्णोऽप्स्ववगाह्य निमज्ज्य यतासुः प्राणायामोपेतस्त्रिपदीं गायत्रीं जपेदित्यन्वयः "स्वप्नेऽपि रेतस्खलने प्रायश्चित्तं विधीयते" इति स्मृतेः ॥ २५ ॥

"भद्रो देवा भवन्तु नः" इत्यादेरपि अग्न्यर्कव्यतिरिक्तसुरा अपि मन्तव्या इत्यर्थः ॥ २६—२९ ॥

स्रक्चन्दनादिभोगवर्जितः एवंवृत्त इत्येकं पदम् एक-सदाचारनिरत इत्यर्थः । कियन्तं कालमेवं वास इति तत्राह । विद्येति ॥ ३० ॥

असौ बृहद्व्रतः ब्रह्मचारी यदि छन्दसां वेदानां लोकमारो-क्ष्यन् आरोढुकामो भवति स्वाध्यायार्थं स्वाध्यायैकप्रयोजनं देहं गुरवे विन्यसेत् गुरुशुश्रूषां कुर्यादित्यर्थः कीदृशं ब्रह्मणाधिकृतं विष्टं प्रविष्टं पाति रक्षति ब्रह्मविष्टपं सत्यलोकमित्यर्थः ॥ ३१ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

कस्मिन्नधिष्ठानविशेषे स्वमुपासनमत्राह। अग्न्याविति। आत्मनि सूर्ये हृदये वा अग्न्यादिस्वाधिष्ठानसत्तया भेदे निर्धारितेऽपि सर्वत्रैकमेवोपास्यत्वेन कर्तव्यमिति निश्चयार्थमाह। अपृथग्धीरिति। अन्यथा-वस्तुज्ञानं पृथग्धीः यस्य नास्ति सोऽपृथग्धीः अग्न्याद्यैक्यविषयमिथ्याज्ञानरहित इत्यर्थः। तत्फलमाह। ब्रह्मवर्चस्वीति ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

रेतो नावकिरेत् बुद्धिपूर्वकं नोत्सृजेत् दैवात् स्वयमेवावकीर्णो सति अवगाह्य स्नात्वा यतासुः कृतप्राणायामः त्रिपदीं गायत्रीम् ॥ २५ ॥

सन्ध्ये प्रातःसायंसन्ध्ये उपास्य जपन् यतवाग्भवेदिति माध्यान्हिकसंध्यानिमित्तं मौनं नास्तीति ज्ञापितम् २६—२७ ॥

भैक्ष्यं भिक्षासमूहं यद्यन्यदपि प्राप्तं तदपि निवेदयेत् तेनानुज्ञातमन्नीयमुपयुञ्जीत उपभुञ्जीत ॥ २८ ॥

यानशय्यासनस्थानैरुपासीतेति गच्छन्तं गुरुमनुपृष्ठतो गच्छेत् निद्रितस्य तस्यान्ति दूरेऽप्रमत्ततया शयीत विश्रान्तस्य पादौ सम्वाहयन्नासीत आसीनस्य तस्याग्रतः कृताञ्जलिः सन्नाज्ञां प्रतीक्षमाणस्तिष्ठेदित्यर्थः ॥ २९-३० ॥

एवमुपकुर्वाणस्य धर्मानुक्त्वा नैष्ठिकस्य विशेषधर्मानाह। असौ ब्रह्मचारी छन्दसां लोकं ब्रह्मविद्रूपं ब्रह्मलोकं च आरोक्ष्यन् भवेत् तर्हि बृहत् नैष्ठिकं व्रतं यस्य सः गुरवे देहं विन्यसेत् आधिकस्वाध्यायार्थमित्यर्थः। विद्यपशब्दोऽयं पिद्यपशब्दवत्कुत्सनवाची हृष्टः ॥३१ ॥

ब्रह्मवर्चः वेदाभ्यासजं तेजस्तद्वान् ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

स्वयं नावकिरेत् नोत्सृजेत् स्वप्नादिदोषेणावकीर्णो तु अवगाह्य स्नात्वा जितासुः कृतप्राणायामः त्रिपदीं गायत्रीम् ॥ २५ ॥

सन्ध्ये च द्वे यतवाक् जपन्नासीत मध्यान्हे सन्ध्यानिमित्तमौनाभावं ज्ञापयति द्विवचनम् ॥ २६ ॥

कर्हिचित् देवाराधनाद्यशक्त्या आलस्यादिना वा वाङ्मनोदेहव्यापारलोपनेन नावमन्येत ॥ २७ ॥

अन्यदपि यद्यल्लब्धं तत्सर्वं निवेदयेत् अनुज्ञातं गुर्वनुज्ञातं तु भुञ्जीत ॥ २८ ॥

नीचवत् सर्वशः उत्कृष्टोऽप्यनुत्कृष्टवत् सर्वशो दीनः सन्नित्यर्थः। यानशय्यासनस्थानैः याने आज्ञानुसारतोऽनुगमनादिना शयने पूर्वापरपरिचर्यानुरोधतः पश्चाच्छयनेन प्राक् प्रबोधेन आसने आज्ञानुसारतः पृष्ठतो वामतो वा कृताञ्जलिना तिष्ठता आसीनेन वा स्थाने पादुकानिधानादिस्थानासनयोगेन किम्बहुना सर्वत्र कृताञ्जलिरित्युपलक्षणम् मधुरवाक् सुमनाः सुमुखश्च नातिदूरे इत्युपलक्षणं नातिनिकटे च सदोपासीत उपकुर्वाणोऽपि विद्यां प्राप्य प्राम्यसुखार्थं गमिष्यामीति नीचां मतिं न कुर्यात्किंतु गुरुसेवार्थं सदैव गुरुसमीपे स्थास्यामीति मतिं कुर्यादित्यर्थः। समावर्तनं तु यथाधिकारं गुर्वधीनमिति भावः। विस्तरस्तु स्वधर्मामृतसिन्ध्वादिषु द्रष्टव्यः ॥ २९ ॥

एवमुक्तप्रकारं वृत्तं यस्य सः भोगविवर्जितः जितसर्वेन्द्रियः ॥३०॥

अधुना नैष्ठिकस्य विशेषधर्मानाह। यदीति षड्भिः। असौ ब्रह्मचारी यदि शास्त्रानन्दकामस्तदा स्वाध्यायार्थं यदि वा छन्दसां लोकमारोक्ष्यन् आरोढुमिच्छति यत्र मूर्तिधराः छन्दाः इत्युक्तचतुर्मुखलोकपर्यन्तविषयानन्दकामस्तदा यदि वा आनन्दब्रह्मणो विज्ञानं बिभर्ति कुलक्षणत्वादिवेदान्तैकवेद्यस्य ब्रह्मणः बृहद्गुणस्वरूपस्य विष्णोर्भूम विष्णुं व्यापकं लोकमारोढुमिच्छति तदा बृहद्व्रतविडनमैहिकामुष्मिकभोगपरित्यागपूर्वकहरिगुर्वाराधनादिरूपं व्रतं यस्य स तथा सन् गुरवे देहमापन्नात्मसेवार्थं विन्यसेदित्यन्वयः ॥ ३१ ॥

ब्रह्मवर्चस्वी ब्रह्मवर्चः शब्दब्रह्माभ्यासजं परब्रह्मध्यानजं वा तेजस्तद्वान् ॥ ३२ ॥

---

भाषा टीका।

ब्रह्मचारी कभी अपने जानकर वीर्य को न निकाले कभी स्वप्नादि में निकलजावे तो स्नान कर के गायत्री का हजार जपकरै ॥ २५ ॥

अग्नि आचार्य गउ ब्राह्मण और कोइ विद्या गुरु वृद्ध देवता इन सबों की उपासना सेवा पवित्रता से करे और दोनों सन्ध्याओं में सावधान होकर मौन होकर गायत्री जपै ॥ २६ ॥

आचार्य गुरु को मेराही रूप जाने कभी भी अपमान न करै मनुष्य की बुद्धि से उन के किसी अव गुण की निन्दा न करै क्योंकी गुरु जब परमेश्वर स्वरूप हैं तो सर्व देवता स्वरूपभी हैं ॥ २७ ॥

सायं प्रातः भिक्षा लाकर गुरुको निवेदन करे और भी जो वस्तु मिले तिसकाभी निवेदन करै जब गुरु आज्ञा-देवें तब मौन होकर भोजन करे ॥ २८ ॥

आचार्य की सेवा करने में सदा नीचमती का रहकर उपासना करे चलने में सोनेमें बैठनेमें खड़ाहोने में गुरु के सन्मुख पास में हाथ जोड़कर रहै ॥ २९ ॥

इस प्रकार के आचरण से सब भोगों को छोड़ कर गुरु की कुटी में वास करे जब तक विद्या वेद समाप्त न होवै तब तक अखण्ड ब्रह्मचर्य व्रत धारण करे ॥ ३० ॥

यह ब्रह्मचारी यदि नैष्ठिक होकर ब्रह्म लोकको जाना-चाहै तब जन्मभरे का महा व्रत धारण करके वेदाध्ययन के लिये गुरु को देहका अर्पण करदेवै ॥ ३१ ॥

अग्नि में गुरु में आत्मा में सब भूतों में समबुद्धि से मेरी उपासना करे वेदाभ्यास के तेज से निष्पाप होकर रहै ॥ ३२ ॥

---

स्त्रीणां निरीक्षणस्पर्शसंलापक्ष्वेलनादिकम् ।
प्राणिनो मिथुनीभूतानगृहस्थोऽग्रतस्त्यजेत् ॥ ३३ ॥
शौचमाचमनं स्नानं संध्योपासनमार्जवम् ।
तीर्थसेवा जपोऽस्पृश्याभक्ष्यासंभाष्यवर्जनम् ॥ ३४ ॥
सर्वाश्रमप्रयुक्तोऽयं नियमः कुलनन्दन ! ।
मद्भावः सर्वभूतेषु मनोवाक्कायसंयमः ॥ ३५ ॥
एवं बृहद्व्रतधरो ब्राह्मणोऽग्निरिव ज्वलन् ।
मद्भक्तस्तीव्रतपसा दग्धकर्माशयोऽमलः ॥ ३६ ॥
अथानन्तरमावेक्ष्यन् यथाजिज्ञासितागमः ।
गुरवे दक्षिणां दत्त्वा स्नायाद्गुर्वनुमोदितः ॥ ३७ ॥
गृहं वनं वोपविशेत्प्रव्रजेद्वा द्विजोत्तमः ।
आश्रमादाश्रमं गच्छेन्नान्यथा मत्परश्चरेत् ॥ ३८ ॥
गृहार्थी सदृशीं भार्यामुद्वहेदजुगुप्सिताम् ।
यवीयसीं तु वयसा तां सवर्णामनुक्रमात् ॥ ३९ ॥
इज्याध्ययनदानानि सर्वेषां च द्विजन्मनाम् ।
प्रतिग्रहोऽध्यापनं च ब्राह्मणस्यैव याजनम् ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्यैव वनस्थयतिसाधारणधर्मानाह । स्त्रीणामिति । निरीक्षणं भावगर्भम् क्ष्वेलनं परिहासः एवमादिकं त्यजेत् मिथुनीभूतानग्रतस्त्यजेत् न पश्येदित्यर्थः ॥ ३३ ॥

तस्यैव सर्वाश्रमसाधारणं धर्ममाह । शौचमिति द्वाभ्याम् । ॥ ३४ ॥ ३५ ॥

निष्कामनैष्ठिकस्य तु मोक्षं फलमाह । एवमिति । अमलो निष्कामश्चेद्दग्धः कर्माशयोऽन्तःकरणं यस्य तथाभूतः सन्मद्भक्तो भवति ॥ ३६ ॥

उपकुर्वाणस्य समावर्त्तनप्रकारमाह । अथेति । अनन्तरं द्वितीयाश्रममावेक्ष्यन्प्रवेष्टुमिच्छन्यथा यथावद्विचारितवेदार्थः स्नायात् अभ्यङ्गादिकं कृत्वा समावर्तेतेत्यर्थः ॥ ३७ ॥

तस्याधिकारानुरूपमाश्रमविकल्पसमुच्चयावाह । गृहमिति । सकामश्चेद्गृहमन्तःकरणशुद्ध्यादिकामश्चेद्वनं प्रविशेत् शुद्धान्तःकरणः स च द्विजोत्तमो ब्राह्मणश्चेत्प्रव्रजेदित्यर्थः यद्वा आश्रमादाश्रमान्तरं गच्छेत् अन्यथा अनाश्रमी प्रातिलोम्येन च नाचरेदित्यर्थः मत्परः इति वा छेदः स्वभक्तस्याऽऽश्रमनियमाभावस्य वक्ष्यमाणत्वात् ॥ ३८ ॥

विवाहनियमपूर्वकं वर्णधर्मैः सह गृहस्थधर्मानाह । गृहार्थीति । सदृशीं सवर्णाम् अजुगुप्सितां कुलतो लक्षणतश्चानिन्द्यां कामतस्तु यामन्यामुद्वहेत्तां सवर्णामनु तस्या अनन्तरम् तत्रापि वर्णक्रमेणोद्वहेदित्यर्थः—

तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् ।
ब्राह्मणक्षत्रियविशां भार्याः स्वा शूद्रजन्मनः ॥

इति स्मृतेः ॥ ३९ ॥

इज्यादयस्त्रैवर्णिकानामावश्यका धर्माः प्रतिग्रहादित्रयं तु वृत्तिः सा च ब्राह्मणस्यैव ॥ ४० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी ।

तस्यैव नैष्ठिकब्रह्मचारिण एव साधारणधर्मानिति वनस्थयतेरपि ते धर्मा इत्यर्थः ॥ ३३ ॥

शौचमिति युग्मकम् । तस्यैव ब्रह्मचारिण एव ॥ ३४ ॥ ३५ ॥

भक्तिसंयोगेनैव तीव्रेण सता तपसा स्वधर्मेण ॥ ३६ ॥

द्वितीयाश्रमं गृहस्थाश्रमम् । अभ्यङ्गः शिरःस्नानमादिना होमादि ॥ ३७ ॥

तस्य ब्रह्मचारिणः अधिकारभिन्नबुद्ध्याशुद्धिलक्षणः विकल्पोऽत्र एवं वा एवं वेति समुच्चय उक्तं यद्वेति पक्षान्तरम् तत्त्वर्थान्तरम् । अनाश्रमी आश्रमबहिष्कृतो न भवेत् । वक्ष्यमाणत्वात् ज्ञाननिष्ठो विरक्तो वेत्यादिना ॥ ३८ ॥

तस्याः सवर्णाया अनन्तरं तत्रापि असवर्णाया उद्वहेऽपि वर्णक्रमे

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी।

प्रमायां तिस्र इति। वर्णानुपूर्व्येण वर्णक्रमेण ब्राह्मणस्य तिस्रो भार्याः ब्राह्मणी क्षत्रियाणी वैश्या चेति एवं द्वे क्षत्रियस्य एवं विशस्त्वेका तथा शूद्राज्जन्म यस्य तस्य शूद्रस्य स्वा सवर्णा शूद्रायेव तथैव प्रकारान्तरं तु मनुः प्राह। शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते। ते चैव स्वा च राज्ञश्च ताश्च स्वाश्चाग्रजन्मन इति। तथाच मनूक्तप्रामाण्येन तु तिस्र इत्यादिकं सजातीयां स्वकरेति व्याख्येयम् ॥ ३९ ॥

त्रैवर्णिकानां ब्राह्मणक्षत्रियवैश्यानाम् ॥ ४० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

मद्भावः मद्विषयभावनायुक्तः ॥ ३५ ॥

मद्भक्त इति आश्रमधर्मेण सह मद्भक्तियुक्तश्चेन्मुच्येदित्यर्थः ॥ ३६—३७ ॥

आविशन् आश्रमान्तरं प्रविशन् ॥ ३८—४२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

किञ्च स्त्रीणामिति। ईक्षणं परिहासः मिथुनीभूतान्प्राणिनः पशुपक्ष्यादीनपि त्यजेत् यतोऽयमगृहस्थः ब्रह्मचर्यव्रतधरः ॥ ३३ ॥

प्रसक्तान्सर्वाश्रमसाधारणान् धर्मानाह शौचमिति द्वाभ्याम्। शौचं शास्त्रीयकर्मयोग्यता आर्जवं परेषु मनोऽनुरूपं बाह्यचेष्टाप्रकाशनं मनोवाक्कायानामैकरूप्यं वा जपः गायत्र्यादिमन्त्रजपः अस्पृश्यादीनां स्पर्शादिवर्जनम् ॥ ३४ ॥

हे कुरुनन्दन! सर्वाश्रमप्रयुक्तः सर्वाश्रमावस्थानप्रयुक्तः सर्वभूतेषु मद्भावः मदात्मकत्वबुद्धिः मनोवाक्कायानां संयमश्च सर्वाश्रमप्रयुक्त इति सम्बन्धः तत्र मनःसंयमो नामासदनभिध्यानं वाक्संयमस्त्वनृताहितनृशालापादिवर्जनं कायसंयमो निषिद्धभोगराहित्यम् ॥ ३५ ॥

उक्तब्रह्मचर्यव्रतचर्यायाः फलमाह। एवमिति। बृहद्व्रतधरः ब्रह्मचर्यव्रतधरो ब्राह्मणोऽभिगतवेदतदर्थः तीव्रेणाविच्छिन्नेन तपसा अग्निरिव उज्ज्वलन्मद्भक्तः लब्धमद्भक्तियोगः तत एव दग्धकर्माशयः निरस्तसमस्तप्रतिबन्धककर्मवासनः अमलः देहान्ते प्रकृतिसम्बन्धरूपमालिन्यरहितः मुक्तो भवेदित्यर्थः ॥ ३६ ॥

एवं समाप्तविद्यस्यापि छान्दोग्योपनिषदुक्ता तावद्ब्रह्मलोकप्राप्तिस्ततो मुक्तिश्चेति सूचितमथ नैष्ठिकाश्रमाद्युकस्य समाप्तविद्यस्यानन्तरं कृत्यमाह। अथेति। अथ विद्यासमाप्त्यनन्तरं जिज्ञासितागमोऽधिगतवेदतदर्थः अनन्तरमाश्रमत्रयान्यतमं यदा आरोक्ष्यन् विविक्षुर्भवति तदा गुरवे दक्षिणां दत्त्वा तेनानुमोदितः अभ्यनुज्ञातः स्नानादिसमावर्तनाख्यं स्नानं कुर्यात् ॥ ३७ ॥

ततो गृहं वनं वा उपविशेत् गृहस्थो गृहस्थाश्रमपरः वनस्थो वानप्रस्थाश्रमपरः यदि द्विजोत्तमः ब्राह्मणस्तर्हि प्रव्रजेत्संन्यसेद्वा द्विजपदस्य त्रैवर्णिकसाधारणत्वाद्विप्रस्यैवाश्रमचतुष्टयमधिकारप्रयोगः। अनेन ब्रह्मचारिणोऽपि तृतीयचतुर्थाश्रमप्रवेशाधिकार उक्तः। आश्रमादिति। अस्पर्शः मद्भक्तो द्विजः आश्रमादाश्रमान्तरं प्रविशेत स्वनाश्रम्यवतिष्ठेत "अनाश्रमी न तिष्ठेत क्षणमेकमपि द्विज" इति च स्मर्यते ॥ ३८ ॥

तत्र यदि गृहार्थी स्यात्तदा सदृशीमनुरूपामजुगुप्सितामनिन्दितामदुष्टामित्यर्थः। वयसा यवीयसीमात्मनो न्यूनवयस्कां समवर्णां स्वसजातीयां भार्यामुद्वहेत अनुक्रमादित्यादौ सवर्णां पश्चादितराम् उद्वहेदर्पोऽर्थः ॥ ३९ ॥

तत्र गृहस्थस्य त्रैवर्णिकस्य प्रथमं साधारणान् धर्मानाह इज्येति। ब्राह्मणस्य विशेषमाह। प्रतिग्रह इति। याजनं च ब्राह्मणस्यैवेति सम्बन्धः प्रतिग्रहादिभिर्जीवेदित्यर्थः। एवकारेण प्रतिग्रहयाजनाध्यापनेषु द्वितीयतृतीयवर्णयोर्नाधिकार इत्युक्तं भवति ॥४०॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अप्रतिपन्नस्यानुमानस्येव निहितोपासनस्याभीष्टमाध्यसिद्धौ सामर्थ्यं स्यादित्यतः प्रतिक्षिपति। स्त्रीणामिति। क्ष्वेडनं जिह्वास्फोटः नर्म वचनं वा स्मरणादिकमादिशब्दगृहीतम् अगृहस्थः ब्रह्मचारी यमनः प्रथमतः ॥ ३३ ॥

सर्वाश्रमसाधारणधर्ममाह। शौचमित्यादिना ॥ ३४ ॥

सर्वभूतेषु मद्भावः मम व्याप्तिस्मरणसत्ता ॥ ३५ ॥

ब्रह्मचर्यानुष्ठानफलमाह। एवमिति। तीव्रतपसा दग्धः कर्माशयः बाह्यान्तःकरणं यस्य स तथा मत एवामलः संसारमलमुक्तो भवति ॥ ३६ ॥

अथेति प्रमेयान्तरारम्भविषयः ब्रह्मचर्याश्रमानन्तरम् आविशन् गृहस्थाश्रमं प्रवेष्टुकामः स्नायात् स्नातको भवेत् ॥ ३७ ॥

द्विजोत्तमनानाश्रमतया न स्थेयमित्याह। गृहमिति ॥ ३८ ॥

गृहार्थी चेत् कीदृशीमुद्वहेदित्याह। गृहार्थीति। यां सवर्णामनुक्रमादिति पाठः ॥३९॥

द्विजन्मनां ब्राह्मणक्षत्रियवैश्यानामिज्या यजनम् ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

एवं बृहदिति। मद्भक्तश्चेत्तत मद्भक्तत्वेनैव तीव्रेण सता तपसा स्वधर्मेणामलः शुद्धान्तःकरणो भवति दग्धकर्माशयो मुक्तश्च भवतीत्यर्थः ॥ ३६ ॥ ३७ ॥

समुच्चयं वक्तुं पक्षान्तरमाह। आश्रमादिति। अन्यथेति अनाश्रमी न भवेत् प्रतिलोमं च नाचरेदित्यर्थः। टीकायां यद्यमायात्वादिति कामनिष्ठो विरक्तो वेत्यादिनेति ज्ञेयम् ॥ ३८ ॥

गृहार्थीति तैः। तिस्र इत्यादिक सजातीयां स्वकरेत्या ॥३९॥४३॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दद्येति । क्षुद्रकामाय नेष्यते किन्त्विह जीवद्दशायां महते कृच्छ्राय कायक्लेशात्मकतपसे प्रेत्य मृत्वाऽत्वनन्तसुखाय चेष्यते ॥ ४२ ॥

एतेदृश प्रपञ्चवर्त्तिशिष्टस्य फलमाह । शिलेति उञ्छः कणाद्यादानं कणिकाद्यर्जनं शिलं विरजं नैर्मल्यावहं धर्मं स्ववर्णाश्रमोचितं महान्तं महाफलं जुषाणः मय्युत्तिष्ठन्मय्यर्पितः समाहित आत्मा मनो येन सः गृह एव तिष्ठन् सन्नप्यतीव भोगानासक्तः शान्तिं संसारक्लेशनिवृत्तिं मुक्तिमिति यावत् उपैति प्राप्नोति ॥ ४३ ॥

एवमपि शिलोञ्छाभ्यां सकुटुम्बस्य कथं जीवनं स्यादित्याशङ्कां शमयन् वृत्त्यन्तरमाह । समुद्धरन्तीति । सीदन्तं शिलादिभिः क्लिश्यन्तं मत्परायणं विप्रं ये समुद्धरन्ति जीवयन्ति तानहमापद्भ्यः न चिरादाशु समुद्धरिष्ये अनेन यः कश्चिद्राजादिः स्वधर्मविरोधेन कृपया जीविकां कल्पयेत्तयोपजीवेदित्युक्तं भवति तत्समुद्धारणावा: फलं सर्वापत्परिहाररूपं चेति अर्थावाद्यथा तरितुमिच्छमाणांश्छिन्नतीर्णून् नौस्तारयति तद्वदहमुद्धरिष्ये इति सम्बन्धः ॥ ४४ ॥

राज्ञां सीदद्विप्रसमुद्धरणं परमधर्मं इत्याह । सर्वा इति । पितेव कृपया युक्तः कस्तर्हि राजानमुद्धरेदित्यत आह । आत्मानमात्मना स्वयमेव समुद्धरेदित्यर्थः । तदुपयुक्तेन गुणेन भवितव्यमित्याशयेन विशिनष्टि । धीर इति । स्वप्रजोद्धरणे दृष्टान्तः यथा गजपतिर्गजानिति ॥ ४५ ॥

एवं समुद्धरणस्य फलमाह । एवम्विध इति । इह कृत्स्नमशुभं पापमपोह्यार्कवर्णेन वर्णो यस्य तेन विमानेन सहितः ॥ ४६ ॥

राजादिपरिकल्पितजीविकाभावे वृत्त्यन्तरमाह । सीदन्निति । शिलोञ्छाभ्यां सीदन् क्लिश्यन् ताभ्यामकृतजीवनश्चेदित्यर्थः वणिग्वृत्त्या तत्रापि पण्यैः स्वव्यवहारार्हतृणकाष्ठादिविक्रयैर्नतु निषिद्धलवणमांसादिविक्रयैरापदं जीवनाभावरूपां तरेत् नतु तत्राप्यापदाक्रान्तश्चेत् खड्गेन क्षत्रियवृत्त्या यद्यपि गौतमोऽनन्तरां पापीयसीं वृत्तिमातिष्ठेदिति स्मरन् खड्गधारणं पण्यविक्रयात् श्रेष्ठं मन्यते तथापि हिंसातो वणिग्वृत्तिरेव श्रेष्ठेति भगवतो मतम् कदाचिदपि श्ववृत्त्या नीचवर्णसेवया आपदं न तरेदिति सम्बन्धः ॥ ४७ ॥

एवं विप्राणामापदि वृत्तिरुक्ता । अथ राजन्यानां तामाह । वैश्यवृत्त्येति । पथि वनमार्गे मृगयापि वा चरेत् अथवा विप्ररूपेण विप्रवृत्त्या वा नतु कथञ्चिदपि श्ववृत्त्या जीवेत् ॥ ४८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रतिग्रहं तपस्तेजोयशोनुदं मन्यमानः पुरुषः अन्याभ्यां याजनाध्यापनाभ्यां जीवेतेत्यन्वयः तयोर्याजनाध्यापनयोर्दोषदृक् शिलैः शिलोञ्छवृत्त्या वा जीवेत् ॥ ४१ ॥

शिलोञ्छवृत्तेः क्लेशरूपत्वात् किमिति सा प्रशस्तेति विधीयते इत्यत्राह । ब्राह्मणस्येति । क्षुद्रकामायाल्पभोगाय ॥ ४२ ॥

शिलोञ्छवृत्तेः सुखसाधनत्वात्सैव निषेव्येति भावेनाह । शिलोञ्छेति । शान्तिं मोक्षम् ॥ ४३ ॥

अपदः पदहीनात् आपद इति वा ॥ ४४—४६ ॥

आपद्धर्ममाह । सीदन्निति । दारिद्र्येण सीदन् नश्यन् वणिजां वृत्त्या कथमापत्तरणमत्राह । पण्यैरिति । आपदाक्रान्तः खड्गेन वा क्षत्रधर्मेणेत्यर्थः । श्ववृत्त्या नीचसेवया ॥ ४७ ॥

वैश्यवृत्त्या गोरक्षणादिलक्षणया ॥ ४८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

टीकायां सधनानामिति ब्राह्मणेतरेषामिति ज्ञेयं नौर्यथार्णवगतान् तानर्णवादुद्धरति तथेत्यर्थः ॥ ४४—५४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अन्याभ्यां याजनाध्यापनाभ्यां तयोरपि दोषदृक् दोषं चेत् पश्येत् तदा शिलैः स्वामित्यक्तैः क्षेत्रपतितैः कणिशैः ॥ ४१ ॥

ननु विप्रः कथं स्वयमेव क्लिश्येत् तत्राह । ब्राह्मणस्येति । कृच्छ्राय जीविकार्जनकष्टं प्राप्तुम् ॥ ४२ ॥

उञ्छवृत्तिर्नाम विपण्यादिपतितस्य कणिशस्योपादानं महान्तमातिथ्यादिलक्षणं धर्मम् ॥ ४३ ॥

तादृशं विप्रं भक्त्या धनवितरणेन सेवमानानां फलमाह । समुद्धरन्तीति । विप्रमित्युपलक्षणं मत्परायणं मद्भक्तं यं कमपि ॥ ४४ ॥

राज्ञोऽपि धर्ममाह । सर्वा इति । धीरो धैर्ययुक्तो राजा ॥ ४५-४६ ॥

सर्वेषामापद्वृत्तीराह । सीदन्निति त्रिभिः । पण्यैर्विक्रयार्हैरेव नतु सुरालवणाद्यैः आपदाक्रान्तो विपद्ग्रस्तः खड्गेन वेति यद्यपि गौतमोऽनन्तरां पापीयसीं वृत्तिमातिष्ठेदिति स्मरन् खड्गधारणं पण्यविक्रयात् श्रेष्ठं मन्यते तथापि हिंसातो वणिग्वृत्तिरेव श्रेष्ठेति भगवतो मतं नतु श्ववृत्त्या नीचसेवया ॥ ४७ ॥

विप्ररूपेण अध्यापनादिना ॥ ४८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

प्रतिग्रहं तपआदिनाशकरं मन्यमानः याजनाध्यापनाभ्यां जीवेत तयोरपि कृपणत्वापादकत्वादिदोषग्रस्तत्वं मन्यमानः शिलैः स्वामित्यक्तैः क्षेत्रपतितैः कणिशैः ॥ ४१ ॥

क्षुद्रकामाय विपुलवृत्तिसङ्घटितग्राम्यसुखाय ॥ ४२ ॥

शिलैः उञ्छैः विपण्यादि पतितकणोपादानैर्वा वृत्तिस्तया परितुष्टचित्तः महान्तं—

चक्षुर्दद्यान्मनो दद्याद्वाचं दद्यात्सुसूनृताम् ।
उत्थाय चासनं दद्यात् स यज्ञः पञ्चदक्षिणः ॥

इत्येवं मद्विषयकज्ञानभक्तिप्रबोधकमत्पूजनाद्यात्मकं विरजं फलाभिसन्धिमानधर्मःस्यापना(?)विशेषरहितं धर्मं जुषाणः सेवमानः नातिप्रसक्तः देहगेहादौ नात्यासक्तः मयि अर्पितः आत्मा येन सः गृह एव तिष्ठन् शान्तिं मुक्तिं सम्यगुपैति

शूद्रवृत्तिं भजेद्वैश्यः शूद्रः कारुकटक्रियाम् ।
कृच्छ्रान्मुक्तो न गर्ह्येण वृत्तिं लिप्सेत कर्मणा ॥ ४९ ॥
वेदाध्यायस्वधास्वाहाबल्यन्नाद्यैर्यथोदयम् ।
देवर्षिपितृभूतानि मद्रूपाण्यन्वहं यजेत् ॥ ५० ॥
यदृच्छयोपपन्नेन शुक्लेनोपार्जितेन वा ।
धनेनापीडयन् भृत्यान् न्यायेनैवाहरेत्क्रतून् ॥ ५१ ॥
कुटुम्बेषु न सज्जेत न प्रमाद्येत्कुटुम्ब्यपि ।
विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥ ५२ ॥
पुत्रदाराप्तबन्धूनां सङ्गमः पान्थसंगमः ।
अनुदेहं वियन्त्येते स्वप्नो निद्रानुगो यथा ॥ ५३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आश्रमादाश्रमान्तरे गमनं ज्ञानवैराग्यभक्तिलाभार्थम् मद्वेश्मधु-विन्द्वेत किमर्थं पर्वतं व्रजेदिति न्यायेन गृहस्थाश्रमे यथोक्तज्ञान-वैराग्यभक्तिलाभे पुनराश्रमान्तरप्रवेशे किं प्रयोजनमिति भावः॥४३॥

महत्सेवारतः शिलोञ्छवृत्त्या वर्तमानः गृहाश्रमी शान्ति-प्राप्नोति इत्युक्तमथ सधनकर्तृकमहत्सेवाफलमाह । समुद्धरन्तीति त्रिभिः । मत्परायणं विप्रं ये समुद्धरन्ति तानचिरात् शीघ्रमेव समुद्धरिष्ये निप्रमित्युपलक्षणम् मत्परायणं यं कमपि ॥ ४४ ॥

राज्ञस्तु मत्परायणसमुद्धरणस्य का कथाः आपद्भ्यः सर्वाः प्रजाः समुद्धरणमावश्यको धर्म इत्याह । सर्वा इत्यादिना ॥४५॥४६॥

अथापद्वृत्तीराह । सीदन्निति त्रिभिः । पण्यैः क्रयविक्रयार्हैः नतु लवणाद्यैः तत्राप्यापदाक्रान्तश्चेत् खड्गेन क्षत्रियवृत्त्या वा यद्यपि क्षत्रियवृत्तेरव्यवहितत्वात्प्राथम्यमुचितं तथापि ब्राह्मणेन हिंसा-वृत्तेरापद्यपि त्याज्येति भगवतो मतम् अत एवोक्तं महाभारते—

ब्राह्मणस्य परो धर्मो वेदानां धारणाद्यपि ।
अहिंसा सत्यवचनं क्षमा चैव महामते ! इति ॥

नतु श्ववृत्त्या श्ववृत्तिर्नीचसेवनं तया ॥ ४७ ॥

सर्वजीवनोपायाभावे मृगया जीवेत् श्ववृत्त्या तु कथंचन न जीवेत् ॥ ४८ ॥

---

भाषा टीका ।

जो ब्राह्मण प्रतिग्रह को तप तेज यश का नाश करने वाला है ऐसा समुझै वह अध्यापन और याजन दोनों से ही जीविका करै इन में भी दोष देखे सो तो शिलोंछ वृत्ति से जीविका करै॥ ४१ ॥

ब्राह्मण का यह देह क्षुद्र कामों के भोगने के वास्ते नहीं है किन्तु इस जन्म में तपस्या कष्ट करने परलोक मे ब्रह्मलोकादि सुख पाने के वास्ते है ॥ ४२ ॥

शिलोंछ नाम खेत के बाल बीनना और दुकान के नीचे पड़े अन्न के दाना बीनना इन्हीं से ब्राह्मण सन्तुष्ट चित्त वाला हो कर बड़े भारी कष्ट धर्म का सेवन करता हुआ और मेरे में मन को अर्पण करने वाला घर में ही रहकर भी विषयों में आसक्त न होने से शान्ति मोक्ष को प्राप्त हो जाता है ॥ ४३ ॥

ऐसे तपसी दुःखपाते हुये मेरे में तत्पर ब्राह्मण को जो अन्न वस्त्रादि दुःख से उद्धार करते हैं तिनको मैं आपदों से उद्धारकरोंगा जैसे कि नाव समुद्र के पार करदे-तीहै ॥ ४४ ॥

राजा को चाहिये कि पिता की नांई सब प्रजाओं को दुःखों से उद्धारकरै धैर्य से अपने को आप रक्षाकरै जैसे कि बड़ा हाथी कीचड़ में से सब हाथियों को निकाल के आपभी निकल जाता है ॥ ४५ ॥

इस प्रकार के धर्म वाला राजा यहां सब पापों को दूर करके सूर्य से तेज वाले विमान से स्वर्ग को जाता है उहां इंद्र के साथ सुख भोगता है ॥ ४६ ॥

ब्राह्मण को यदि धन की विपत्ति पड़े तब खरीदने बेचने के व्यापार से विपत्ति को तरै अथवा बहुत दुखी होने से खड्ग से क्षत्रिय की वृत्ति कर लेवे परंतु श्ववृत्ति जो नीच की सेवा तिस को कभी न करै ॥ ४७ ॥

क्षत्रिय को विपत्ति पड़े तो वैश्य की वृत्ति से जीवै अथवा सिकार खेल कर जीवै अथवा ब्राह्मण के कार्य कर के विचरै परन्तु नीच सेवा तो कभी नहीं करै ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कारवः प्रतिलोमजातिविशेषा कुलालादयस्तेषां वृत्तिं कटादिक्रि-याम् आपद्वृत्तीस्तु नानुकल्पेन वर्तेतेत्याह । कृच्छ्रादिति ॥ ४९ ॥

तदेवं वृत्तिव्यवस्थामुक्त्वा पुनर्गृहस्थस्यावश्यकान् धर्मान्

### श्रीधरस्वामिकृतभावार्थदीपिका ।

स्नानाह । वेदाध्ययनं ब्रह्मयज्ञस्तेन ऋषीन् स्वधाकारेण पितॄन् स्वाहाकारेण देवान् बलिहरणेन भूतानि अन्नाद्यैरन्नोदकादिभिर्मनुष्यानिति ज्ञातव्यम् यथोदयं विभवानुसारतः तेष्वीश्वरदृष्टिं विधत्ते । मद्रूपाणीति ॥ ५० ॥

आवश्यकं धर्ममुक्त्वा शक्त्यनुसारं धर्ममाह । यदृच्छया उद्यमं विना उपार्जितेन वा शुक्लेन स्ववृत्त्या लब्धेन शुक्लेन वा धनेन भृत्यान् पोष्यान् ॥ ५१ ॥

गृहस्थस्यापि निवृत्तिनिष्ठामेवाऽऽह । कुटुम्बेष्विति त्रिभिः । न प्रमाद्येदीश्वरनिष्ठायां प्रमत्तो न भवेत् ननु दृष्टादृष्टार्थकर्मासक्तस्य कथमप्रमादो विचारेणेत्याह । विपश्चिदिति ॥ ५२ ॥

तत्रापि दृष्टेष्वासक्तेरधिकत्वात्तेषां नश्वरतां प्रपञ्चयति । पुत्रादीनामेकत्र संगमः पान्थानां प्रपायां सङ्गम इव तत्र हेतुः अनुदेहं प्रतिदेहमेते वियन्ति नश्यन्ति निद्रानुवर्ती स्वप्नो निद्रापाये यथेति ॥ ५३ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

कटेत्युपलक्षणम् । अत एव कटादिक्रियामिति व्याख्यातम् अनुकल्पेन गौणेनापद्धर्मेण ॥ ४९ ॥

वृत्तिरूपधर्माणां वृत्तीनां विविधनियमम् ॥ ५० ॥

उपार्जितेनेत्यस्य स्ववृत्त्या लब्धेनेति व्याख्या । न्यायेनैव नीत्यैव क्रतून् पञ्च यज्ञान् ॥ ५१ ॥

निवृत्तिनिष्ठां वैराग्यपरतां दृष्टार्थं कर्म विवाहादि अदृष्टार्थं च यज्ञादि अप्रमादः ईश्वरनिष्ठायां सावधानता । विचारेण नश्वरत्वानुसन्धानेन अदृष्टं स्वर्गादि । दृष्टवत्प्रामादिवत् ॥ ५२ ॥

तत्रापि दृष्टादृष्टयोरपि । दृष्टेष्वासक्त्याधिक्ये प्रत्यक्षनश्वरत्वानुभव एव हेतुः । तेषां पुत्रादीनां प्रपायां पानीयशालायाम् तत्र पान्थसङ्गमसादृश्ये ॥ ५३ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अदृष्टमपि दृष्टवदिति अनित्यमित्यर्थः ॥ ५२—५३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ वैश्यस्यापदि वृत्तिमाह । शूद्रवृत्तिमिति । शूद्रस्याह । शूद्र इति । तां पूर्ववर्णवृत्तिं कटनिर्माणादिक्रियां वा भजेत् तन्तुकटक्रियामिति पाठे तन्तुकटनिर्माणादिक्रियामित्यर्थः एतेषामापद्गमे परवृत्तिं प्रतिषेधति । कृच्छ्रादिति । कृच्छ्राज्जीवनाभावरूपापदः मुक्तश्चेत्तर्हि गर्ह्येण कर्मणा वर्णान्तरस्य विहितं कर्म वर्णान्तरस्य गर्ह्यं तेन सीदन् विप्रो वाणिग्वृत्त्यादिनोक्तेन कर्मणा वृत्तिं न कल्पयेत् ॥ ४९ ॥

एवं त्रैवर्णिकस्य गृहस्थस्य जीवनार्थं धर्मानुक्त्वा अथ परलोकसाधनधर्मानाह । वेदाध्यायेति । वेदानामध्यायोऽध्ययनं स्वधास्वाहाशब्दौ पितृदेवनोद्देश्यकहविरादिद्रव्यत्यागद्योतकौ यथोदयं विभवानुसारतः मद्रूपाणि मच्छरीरभूतानि देवादीन्यथाऽहं यजेद्देवादिशरीरकं मामाराधयेदित्यर्थः तत्र स्वाहाशब्दोपलक्षितयागहोमादिभिः देवान् वेदाध्ययनोपलक्षितब्रह्मयज्ञादिना ऋषीन् स्वधाशब्दोपलक्षितश्राद्धादिभिः पितॄन् बलिदानाद्यैर्भूतानीति विभागः ॥ ५० ॥

यदृच्छयेति । यदृच्छयोपपन्नेनोद्यमं विना दैवाल्लब्धेन शुक्लेन शुद्धेन उपार्जितेन स्ववृत्त्या लब्धेन वा धनेन भृत्यान् पोष्यांश्च पोषयन्मां यजेत् तदेवाह । क्रतूनाहरेदनुतिष्ठेत् ॥ ५१ ॥

गृहस्थस्यापि निवृत्तिधर्मनिष्ठतामाह । कुटुम्बेष्विति त्रिभिः । कुटुम्बेषु जायापत्यादिषु न सज्जेत न ममतां कुर्यात् न प्रमाद्येत देहेनाहंभावं कुर्यात् किन्तु विपश्चित् चिदचिदीश्वरतत्त्वत्रययाथात्म्यवित् दृष्टवददृष्टं स्वर्गादिकमपि नश्वरं पश्येत् ॥ ५२ ॥

तत्र दृष्टेष्वासक्तेरधिकत्वान्नश्वरतां प्रपञ्चयति । पुत्रेति । पुत्रादीनामेकत्र सङ्गमः पान्थानां प्रपायां सङ्गम इवानित्यः तथाह्यनुदेहं प्रतिदेहमेते पुत्रादयः वियन्ति विगता भवन्ति यथा निद्रागमे सति स्वप्नाः निद्रापाये व्येति तद्वत् निद्रागम इति प्रथमान्तपाठे निद्रानुवर्ती स्वप्नस्तदपाये निवर्तत इत्यर्थः । ५३ ।

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कारुकटक्रियां कटादिक्रियां संपदि नैवेत्याह । कृच्छ्रादिति ॥ ४९ ॥

गृहस्थधर्ममाह । वेदेत्यादिना । यथोदयं सम्पदामिति शेषः मद्रूपाणि मत्प्रतिमास्थानीयानि—

प्रतिमाचक्ररूपं तिर्यङ्नरसुरादयः ।

साक्षाद्रूपाणि मत्स्यादीन्यभिजाग्नेव सर्वदा ।

इति वचनात् ॥ ५० ॥

शुक्लेन शुद्धेन ॥ ५१ ॥

मध्यजनतात्पर्यं इदमेव प्रथमसाधनमित्याह । कुटुम्बेष्विति । अदृष्टं स्वर्गादिकं दृष्टवद्गृहादिकवन्नश्वरं पश्येत् ॥ ५२ ॥

कुटुम्बेष्वसंगतया प्रवर्तनोपायमाह । पुत्रेत्यादिना । पान्थसंगम इति लुप्तोपमा पान्थानां सङ्गम इव पुत्रादीनां संगम इति एते पुत्रादयो देहमनु भवन्त्येव अरुच्यादृष्टान्तान्तरमाह । स्वप्न इति । पान्थसंगमः कश्चिद्भवति कश्चिन्न न तथा स्वप्नः अपितु निद्रामनुगत एव ॥ ५३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कृच्छ्रान्मुक्तः सन्नेव ॥ ४९ ॥

आपद्वृत्तिव्यवस्थामुक्त्वा पुनर्गृहाश्रमधर्मानावश्यकानाह । वेदाध्ययनेन ऋषीन् स्वधाकारेण पितॄन् स्वाहाकारेण देवान् बलिहरणेन भूतानि अन्नोदकाद्यैर्मनुष्यान् यथोदयं यथाविभूति यजेत् तेष्वपीश्वरदृष्टिं विधत्ते । मद्रूपाणीति ॥ ५० ॥

अनावश्यकान् धर्मानाह । यदृच्छयेति ॥ ५१ ॥

इत्थं परिमृशन् मुक्तो गृहेष्वतिथिवद्वसन् ।
न गृहैरनुबध्येत निर्ममो निरहंकृतः ॥ ५४ ॥
कर्मभिर्गृहमेधीयैरिष्ट्वा मामेव भक्तिमान् ।
तिष्ठेद्वनं वोपविशेत् प्रजावान् वा परिव्रजेत् ॥ ५५ ॥
यस्त्वासक्तमतिर्गेहे पुत्रवित्तैषणातुरः ।
स्त्रैणः कृपणधीर्मूढो ममाहमिति बध्यते ॥ ५६ ॥
अहो मे पितरौ वृद्धौ भार्या बालात्मजात्मजाः ।
अनाथा मामृते दीनाः कथं जीवन्ति दुःखिताः ॥ ५७ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कर्मस्वनासक्तस्य भक्तस्यापि गृहस्थस्य धर्मानाह । कुटुम्बेष्विति चतुर्भिः । अनासक्तोऽपि भगवत्स्मरणादौ न प्रमाद्येत् कुटुम्बस्यापि नश्वरं पश्येत् दृष्टवत् दृष्टम् ऐहिकं नश्वरमिव अदृष्टं पारलौकिकमपि नश्वरं पश्येत् उभयत्रापि निःस्पृहो भवेदिति भावः ॥ ५२ ॥

पान्थसंगमः पान्थानां प्रपायां संगमतुल्यः । अनुदेहं प्रतिदेहं वियान्ति ममतास्पदीभूताः पुत्रादयो नश्यन्ति निद्रानुगो निद्रानुवर्त्ती स्वप्नो यथा नश्वरत्वांशे दृष्टान्तः ममतास्पदत्वस्य मिथ्यात्वाभिमिथ्यात्वे वा ॥ ५३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कारूणां वारुडादीनां कटक्रियाम् कृच्छ्रान्मुक्तः सर्वोऽपि जनः गर्ह्येण जुगुप्सितेन कर्मणा वृत्तिं न लिप्सेत वाञ्छेत् किं पुनर्वक्तव्यं नाचरेदिति ॥ ४९ ॥

तदित्थं वर्णानां वृत्तीरुक्त्वा गृहस्थस्यावश्यकान् पञ्चयज्ञानाह । वेदाध्यायेनेति । यथादेशं यथाविभवं वेदाध्ययनेन ऋषीन् स्वधाप्रयोगेण पितॄन् स्वाहाप्रयोगेण देवान् बलिदानेन भूतानि अन्नाद्यैर्मनुष्यानित्यध्याहारः मद्रूपाणि मद्रूपत्वेन विभाव्य अन्वहं प्रत्यहं यजेत् पूजयेत् ॥ ५० ॥

न्यायेन यथान्यायं यथासामर्थ्यं क्रतून् आहरेत् यदृच्छयोपपन्नेन पित्रादिद्वारा जन्मान्तरीयपत्नासिद्धेन उपार्जितेन वा कर्मभूतेन शुक्लेन शुद्धेन भृत्यवर्गोऽत्र तद्धनभागिमात्रवाचकः तत्पीडने तामसत्वप्रसंगः अतस्तानपीडयन् तज्जीविकामलोपयन्नित्यर्थः ॥ ५१ ॥

गृहस्थोऽपि मुमुक्षुर्निवृत्तिनिष्ठो भवेदित्युपदिशति । कुटुम्बेष्विति त्रिभिः । कुटुम्बी गृहाश्रमी अपि विपश्चित् विषयानन्दब्रह्मानन्दयोरनित्यत्वनित्यत्वानन्तत्वचिन्तया मुमुक्षुश्चेत् कुटुम्बेषु अत्यल्पविषयानन्दफलेषु नैव सज्जेत अदृष्टमपि पारलौकिकं भोगं दृष्टवत् अनित्यं पश्येत् यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते एवं हरौ भक्त्या नवरूपा इत्यादिश्रुतेः भगवदुपासनायां प्रमादं न कुर्यात् ॥ ५२ ॥

पारलौकिकपदार्थानामनित्यताश्रुत्युक्तैव तथा ऐहिकानां पुत्रादिपदार्थानामनित्यतां प्रपञ्चयति । पान्थानां नानादेशीयानां कादाचित्कः संगमः यथा नित्यो न भवति तथा पुत्रादीनामपि अनित्य एव संगमः ननु यावद्देहं तावदेव सेव्य इत्यत आह । एते पुत्रादिनामकाः देहाः अनुदेहं प्रतिदेहं वियन्ति प्रतिक्षणं क्षीयन्ते न संगमकालेऽपि नियमेन सुखदा इत्यर्थः ॥ ५३ ॥

भाषा टीका ।

वैश्य को आपत पड़े तो शूद्र की वृत्ति को करै शूद्र को विपत पड़े तो नीचों के काम जो चटाई सूप आदि का बनाना तिसको करै ये सब वर्ण जब कष्ट से छूट जावैं तब अपने जाति से निंदित कर्म को न करैं ॥ ४९ ॥

वेद का अध्यन स्वधा स्वाहा पितृ देव यज्ञ बलि अन्नादि सत्कारों से देवता ऋषि मनुष्यादि इनको हमारा रूप जानकर प्रति दिन पूजन करै ॥ ५० ॥

दैव योग से स्वयं प्राप्त अथवा शुद्ध वृत्ति से उपार्जित शुद्ध धन से यज्ञों को करै और उसमें अपने किसी भृत्यादि को पीड़ा नहीं देवै ॥ ५१ ॥

कुटंबी होकर भी कुटुम्ब में आसक्त न होवै सावधान रहै ज्ञानी होकर स्वर्गादि अदृष्ट फलों को भी दृष्टपदार्थों के तुल्य जानकर उनमें लोभ न करै ॥ ५२ ॥

पुत्र स्त्री बन्धु इनका सङ्गम बटोही के सङ्गम सरीखा है ये सब देह के छूटने ही छूट जाते हैं जैसे निद्रा के पीछे स्वप्न छूट जाता है ॥ ५३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अतिथिवदुदासीनः ॥ ५४ ॥

अस्याश्रमविकल्पमाह । कर्मभिरिति । गृहाश्रम एव तिष्ठेत् यदि प्रजावांस्तर्हि प्रव्रजेद्वा ॥ ५५ ॥

गृहाद्यासक्तं दोषमाह । यस्त्विति त्रिभिः ॥ ५६ ॥

बन्धमेवाभिनयेन दर्शयति । अहो इति । बाला आत्मजा यस्याः सा आत्मजाश्च मां विना अनाथाः सन्तः कथं जीविष्यन्तीति ॥ ५७ ॥

एवं गृहाशयाक्षिप्तहृदयो मूढधीरयम् ।
अतृप्तस्ताननुध्यायन् मृतोऽन्धं विशते तमः ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
पारमहंस्यां संहितायां वैयासिक्यां
सप्तदशोऽध्यायः ॥ १७ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

गृहे च आशयो वासना तेन आ सर्वतः क्षिप्तं हृदयं यस्य सः अन्धंतमोऽतितामसीं योनिम् ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

उदासीन इति स्वाध्यायादातिथिर्वाहेति धर्मलुप्तोपमा॥५४॥

अस्यापि गृहस्थस्यापि । विकल्पं गृहस्थाश्रमान्यतमविधित्सां प्रजावानिति प्रजावत्त्वे प्रायो वैराग्यं भवेदिति वेदाज्ञिनामभिप्रायः । कर्मठानान्तु ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षन्तु सेवमानो व्रजत्यधः इत्येवाभिप्रायः ॥ ५५ ॥

गृहासक्तेः प्रसंगाल्लोकेषणानुपादानम् ॥ ५६ ॥
अभिनयेन तद्वाक्यानुकरणेन ॥ ५७ ॥
चिन्तं विचिन्तं तान् पित्रादीन् ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अतिथिवन्ममकाररहितः निरहंकृतिरिति साहित्येऽपि भगवज्ज्ञानवतां मोक्ष इत्यर्थः ॥ ५४—५८ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं दशादशयोरव्यनित्यतां परिमृशन् युक्तः समाहितः अतिथिवदुदासीनः अहंममाभिमानरहितः गृहैर्नानुबध्येत न तेष्वासक्तो भवेदित्यर्थः ॥ ५४ ॥

गृहमेधीयैर्गृहस्थविहितैः कर्मभिर्यज्ञादिभिर्मामिष्ट्वा राद्ध भक्तिमान् यावज्जीवं गृहाश्रमे तिष्ठेत् प्रजावान् पुत्रवांश्चेद्वनं वा उपविशेत् वनस्थो वा भवेत् परिव्रजेत्सन्यसेद्वा ॥ ५५ ॥

गृहाद्यासक्ते दोषमाह । यस्त्विति । तत्र विषमहयं दाराणामप्युपलक्षणं पुत्रवित्तदारैषणादिभिरातुरचेतसः स्त्रीवश्यः ममाहमिति मूढः बध्यते ॥ ५६ ॥

बन्धमेवाभिनयेन दर्शयति । अहो इति । बाला आत्मजा यस्याः सा भार्या आत्मजाश्च मामृते मां विनानाथाः रक्षकरहिताः । अत एव दीनाः दुःखिताश्च कथं जीवन्ति ॥ ५७ ॥

इत्थं गृहादिष्वाशयेनाभिप्रायविशेषेणाक्षिप्तं हृदयं चित्तं यस्य सः अत एव मूढधीरयम् विषयेषु तृप्तिरहितः तान् गृहादीनेवानुध्यायन्मृतः सोऽन्धन्तमो विशते अतितामसीं योनिं प्राप्नोतीत्यर्थः ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मयि मनसा युक्तः ॥ ५४ ॥

आश्रमादाश्रमं गच्छेदित्ययं विधिः काम्यनिक इत्याह । कर्मभिरिति ॥ ५५ ॥

एवं मुक्तिसाधनमुक्त्वेदानीं संसारप्राप्तिं ततोऽनर्थं च वक्ति । यस्त्विति । ममाहमित्यन्यथाज्ञानेन ॥ ५६—५७ ॥

गृहाशया । गृहेष्वतितृष्णया आशा दिगतितृष्णयोरिति॥५८॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
सप्तदशोऽध्यायः ॥ १७ ॥

श्रीमच्छ्रीधरस्वामिकृतक्रमसन्दर्भः।

प्रजाद्यानिति। प्रजादय्वे भावो वैराग्यं भवेदिति वेदान्तिनामभिप्रायः कर्मठानान्त्वन्यथा यथोक्तम्—

> अदृष्यानि श्रीधरपाठस्य मनो मोक्षे निवेशयेत्।
> अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः इति ॥ ५५—५८॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमच्छ्रीधरगोस्वामिकृतक्रमसन्दर्भे
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

मुक्तः अनासक्तः ॥ ५४ ॥

तत्रापि ग्रामे स्पृहावतस्तथा भक्तावकाशप्राप्त्यर्थं कलत्रपुत्रादिप्रतारकस्य भक्तस्य वा आश्रमाविकल्पमाह। कर्मभिरिति ॥ ५५ ॥

गृहाद्यासंगे दोषमाह। यस्त्वति त्रिभिः ॥ ५६ ॥

बन्धमेवाभिनयेन दर्शयति। अहो इति। बाल एकाभिमात्रिक आत्मजो यस्याः सा अतो मद्विरहिता पारक्यपेषणादिवृत्त्यापि जीवितुमसमर्थेति भावः। आत्मजा हिमवार्षिकाः प्रजाश्च मां विना अनाथाः कथं जीविष्यन्तीति ॥ ५७ ॥ ५८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
एकादशे सप्तदशः सङ्गतः सङ्गतः सताम् ॥ १७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

इत्थं परिमृशन् एवं विचारयन् मुक्तः वासनाभिरितिशेषः गृहेषु बाह्यस्थूलसूक्ष्मेषु त्रिषु निर्ममः निरहंकृतश्च अतिथिवत् विद्वदतिथिवत् वसन् गृहैर्न बध्यते ॥ ५४ ॥

दृढज्ञानभक्तिः विगताहंममाभिमानः जितेन्द्रियः गृहे एव तिष्ठेत् अदृढसाधनो वनमुपविशेत् साधनदार्ढ्यार्थम् तत्राप्यकृतार्थश्चेत्परिव्रजेद्वा ॥ ५५ ॥

अनुत्पन्नज्ञानवैराग्यभक्तेर्गृहाभिनिवेशः कुतः आश्रमान्तरगमने अधिकारः कुतस्तरां मुक्तिः किंतु संसार एवेत्याह। य इति त्रिभिः। तुशब्दः बुभुक्षुजीवविशेषत्वद्योतकः ॥ ५६ ॥

बालाः आत्मजा यस्याः सा भार्या पितरौ माता च पिता च प्रजाः अपत्यानि एते मामृते कथं जीवन्ति त्वरितमेव म्रियन्तीति वर्तमानपदाभिप्रायः ॥ ५७ ॥

एवमुक्तप्रकारेण गृहे एव वसितुमाशयोऽभिप्रायो यस्य कः आक्षिप्तमाकृष्टं कलत्रादिविषयीभूतं हृदयं यस्य सः स च स च तथा तानेव संसारप्रापकान् न तु "ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्। यः प्रयाति त्यजन्देहं स याति परमां गति"मित्युक्तं मुक्तिप्रदं माम् ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
सप्तदशाध्यायार्थप्रकाशः ॥ १७ ॥

---

भाषा टीका।

इसप्रकार से मुक्त होने वाला पुरुष घरमे अतिथि सरीका वास करता हुआ निर्मम निरहङ्कार होकर रहे तो गृहों मे नहीं बंधता है ॥ ५४ ॥

गृह मेधीय गृहस्थ के विहित कर्मों से भक्तिमान् पुरुष यज्ञों को करता हुआ घर मे रहे अथवा वानप्रस्थ होकर वन को चला जावे अथवा यदि पुत्र होगया हो तो सन्यासी हो जावे ॥ ५५ ॥

जिस पुरुष की घर मे बुद्धि आसक्त है पुत्र धन की इच्छा से आतुर हो रहा है स्त्री लम्पटी है वह मूर्ख मैं हूं मेरा है इसी बुद्धि से घर मे बंध जाता है ॥ ५६ ॥

वह कहता है कि अहो मेरे माता पिता वृद्ध हैं भार्या मेरी बड़ी भोरी है पुत्र मेरे सब बहुत छोटे इसके पास हैं यह सब अनाथ हैं दुखित हैं मेरे विना पाले पोषे ए सब कुटुंबी कैसे जीवेंगे ॥ ५७ ॥

इस प्रकार से घर कुटुम्ब की माया से जिसका चित्त विक्षिप्त है वह मोहित बुद्धिवाला अपने मनोरथों से तृप्त न होकर अब उनके ध्यान करते ही मरता है तब घोर अन्धतम नरक को जाता है ॥ ५८ ॥

इति श्रीमद्भागवत एकादशस्कन्ध सप्तदश अध्याय की
श्री वृन्दावनस्थ पं० रुक्मण्याचार्यकृत
भ[illegible]का समाप्त ॥ १७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे स

—:o:—

त्तदशो

त्वरम
व गद्
त। आयु
इवेयङ्कि
एकादशस्
॥ २ ॥
चतुर्दिशमः
भारासश्व
ऋ आक

# अथ अष्टादशोऽध्यायः ।

———:*:———

श्रीभगवानुवाच ।

वनं विविक्षुः पुत्रेषु भार्यां न्यस्य सहैव वा ।
वन एव वसेच्छान्तस्तृतीयं भागमायुषः ॥ १ ॥
कन्दमूलफलैर्वन्यैर्मेध्यैर्वृत्तिं प्रकल्पयेत् ।
वसीत वल्कलं वासस्तृणपर्णाजिनानि च ॥ २ ॥
केशरोमनखश्मश्रुमलानि बिभृयाद्दतः[१] ।
न धावेदप्सु मज्जेत त्रिकालं स्थण्डिलेशयः ॥ ३ ॥
ग्रीष्मे तप्येत [२]पञ्चाग्नीन् वर्षास्वासारषाड् जले ।
आकण्ठमग्नः शिशिरे एवं वृत्तस्तपश्चरेत् ॥ ४ ॥
अग्निपक्वं समश्नीयात्कालपक्वमथापि वा ।
[३]उलूखलाश्मकुट्टो वा दन्तोलूखल एव वा ॥ ५ ॥
स्वयं संचिनुयात्सर्वमात्मनो वृत्तिकारणम् ।
देशकालबलाभिज्ञो नाददीतान्यदाहृतम् ॥ ६ ॥
वन्यैश्चरुपुरोडाशैर्निर्वपेत्कालचोदितान् ।
न तु श्रौतेन पशुना मां यजेत वनाश्रमी ॥ ७ ॥
अग्निहोत्रं च दर्शश्च पूर्णमासश्च पूर्ववत् ।
चातुर्मास्यानि च मुनेराम्नातानि च नैगमैः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टादशेऽत्र स्वधर्मं वनस्थयतिगोचरम्
अधिकारविशेषेण विशेषं चाह तद्गतम् ॥

क्रमप्राप्तान् वनस्थधर्मानाह । वनमिति । आयुषस्तृतीयं भागं पञ्चसप्ततिवर्षपर्यन्तं ततः परं क्षीणेन्द्रियस्य वार्द्धकेऽपि संन्यासाधिकारः स्यादिति भावः ॥ १ ॥

वसीत परिदधीत ॥ २ ॥

दतो दन्तान्न धावेत शोधयेत् त्रिकालमप्सु मज्जेत् । सुखवत्स्नायात् स्थण्डिलेशयो भूमिशायी ॥ ३ ॥

तप्येत पञ्चाग्नीन् सूर्येण सह चतुर्दिक्षु अग्निचतुष्टयात्मानं तापयेदित्यर्थः । आसारषाट् आसारं धारासम्पातं सहत इति तथा अभ्रावकाशं नाम व्रतं चरेत् जले आकण्ठमग्नः उदकवासं नाम व्रतं चरेत् ॥ ४ ॥

उलूखलेन वाश्मना वा कुट्टयति कण्डयतीति तथा दन्ता एवोलूखलं यस्य स तथा ॥ ५ ॥

संचिनुयादाहरेत् अन्यदा कालान्तरे आहृतं कालान्तरे नाददीत "लब्धे नवे नवेऽन्नाद्ये पुराणं तु परित्यजेदि"ति नारदोक्तेः ॥ ६ ॥

कालचोदितानाग्रयणादीन् ॥ ७ ॥

किंचाग्निहोत्रमिति मुनेश्च नैगमैर्वेदवादिभिः ॥ ८ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी ।

वनस्थयतयो गोचरा अधिकारिणो यस्य तम् । अधिकारिविशेषेण विरक्ताविरक्तत्वादिभेदेन तद्गतं वनस्थयतिगतम्

---

(१) व्रती (२) पञ्चाग्निः (३) उलूखली इति विज० पाठः ।

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

विशेषं भेदं तत्र वनस्थगतो विशेषः तृतीयभागावसाने मन्दवैराग्ये प्रव्रज्याधिकारः तदर्वाक् असामर्थ्ये देहत्यागिप्रवेशः वैराग्ये तु प्रव्रज्या इति यतिगतश्च स बहूदकादिलक्षणः । ततः परं तृतीयभागानन्तरं तत्र विरक्ताविरक्तयोर्मध्ये ॥ १—३ ॥

अभ्रायां वृष्टयवकाशो यत्र तन्नामकं व्रतं तथोदके वासो यत्र तन्नामकं व्रतं चरेत् ॥ ४ ॥ ५ ॥

स्वयमिति अन्यद्वारा तदाहरणं निषिद्धं देशकालबला-भिज्ञ इति वनप्रदेश एव वक्तव्यं नतु ग्रामे । अन्यदाहृतं नोपादेयमिति देशकालयोर्बलम् अभिजानातीति तम् ॥ ६ ॥

वन्यैर्वनोद्भवैर्नीवारादिभिरेव निष्पन्ना ये चरुपुरोडाशास्तैः आग्रयणादीन् नवान्नप्राशनार्थवैदिककर्माणि ॥ ७ ॥

पूर्ववत् गृहस्थवत् ॥ ८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं गृहस्थधर्मान् उक्त्वा अथ वनस्थधर्मानाह । वनमित्यादिना । विविक्षुः प्रवेष्टुमिच्छुः पुत्रेषु भार्यां न्यस्य भार्यारक्षणं पुत्राधीनं कृत्वेत्यर्थः । भार्यया सहैव वा वन एव वसेत् एव-कारेण कदाचिदपि पुनर्गृहान् प्रत्यागमस्य व्युदासः शान्तो जिते-न्द्रिय आयुषस्तृतीयभागं पञ्चसप्ततिवर्षपर्यन्तं वन एव वसे-दिति सम्बन्धः ततः परिक्षीणेन्द्रियस्यैवाक्षिरोगेऽपि सन्यासा-धिकारः स्यादिति भावः ॥ १ ॥

कन्देति । वन्यैर्वनसम्भवैर्मेध्यैर्विहितैः कन्दैर्मूलफलैश्च वृत्तिं जीवनं प्रकल्पयेत् वल्कलं वासो वसीत परिदधीत तद्वामे तृणानि पर्णान्यजिनानि वा वसीत ॥ २ ॥

केशादिरूपाणि मलानि बिभृयात्तु छिन्द्यात् इतः दन्तान् न धावेत् त्रिकालमप्सु मज्जेत् स्थण्डिलशयः तृणादिभिरास्तीर्णभू-शायी भवेत् ॥ ३ ॥

ग्रीष्मे ऋतौ पञ्चाग्नीन् तप्येत उपरि सूर्येण चतुर्दिक्ष्वारो-पितैरग्निभिश्चात्मानं तापयेदित्यर्थः । वर्षासु वर्षत्तोयासारं धारासम्पातं सहन् इति तथा शिशिरे ऋतौ जले आकण्ठ-मग्नः एवं त्रिधा वृत्तिर्यस्य सः तपः स्वयमेवाभिमोचितं धर्मं चरेदनुतिष्ठेत् ॥ ४ ॥

अग्निपक्वमिति । कन्दं मूलं चाग्निपक्वं समश्नीयात् फलानि तु कालपक्वानीति विभागः उलूखलेनाश्मना वा कुट्टयति नीवारा-न्नवहन्तीति तथा अथवा दन्ता एव उलूखलं यस्य सः ॥ ५ ॥

आत्मनः स्वस्य वृत्तिकारणं जीवनसाधनं कन्दमूलादिकं स्वयमेवाहरेत्स्वयमेवानयेदित्यर्थः । किञ्च देशेति । अन्यदा कालान्तरे आहृतं नाददीत नोपाददीत नाश्नीयादित्यर्थः । तत्र हेतुः देशकाल-प्रयुक्तं बलं तदभिज्ञः "कालान्तरे ह्याहृतं तु नाददीत वनाश्रमी । लब्धे नवे नवेऽन्नाद्ये पुराणं तु परित्यजेदिति" नारदोक्तेरिति भावः ॥ ६ ॥

वन्यैरिति । वन्यैर्नमस्समयैर्नीवारादिभिः कालचोदितानाग्रयणा-दीन् चरुपुरोडाशादीन्निर्वपेत् "भौतेन छागस्य वपाया मेदस" इति श्रुतेन पशुना छागादिना न मां यजेत ॥ ७ ॥

किञ्च अग्निहोत्रादीनि नैगमैर्वैदिकवाक्यैर्यानि मुनेरपि कर्तव्य-तयाऽऽम्नातानि अग्निहोत्रादीनि तैरपि मां यजेदिति सम्बन्धः अग्निहोत्रादिशब्दाः कर्मनामधेयानि ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वनेऽपि विशेषियुक्तवानप्रस्थस्य प्रवृत्तिप्रकारमाह । वनमि-त्यादिना । तृतीयं भागमायुषः चतुर्मासाधिकं त्रयस्त्रिंशद्वर्षप-रिमितम् ॥ १ ॥

वन्यैर्वनभवैः ॥ २ ॥

अनी धावनस्थानवान् धावनं पलायनं तेजनं वा ॥ ३ ॥

वर्षासु वर्षतो आसारपाद् वेगवर्षमपि सहन् इति ॥ ४ ॥

कालपक्वं कदलीफलादि उलूखलः उलूखलावहतनीवारादिना वर्तमानः अश्मकुट्टः अश्मना चूर्णितापर्णादिवृत्तिः दन्ता एवोलूखलो यस्य स तथा दन्तचूर्णितभोज्य इत्यर्थः । गजदन्तानि-र्मितोलूखलो वा ॥ ५ ॥

सांश्वनुयात् सङ्ग्रहं कुर्यात् अन्यदाहृतमन्येनानीतम् ॥ ६ ॥

कालचोदितान् प्राप्तान् काल इष्टीनि विहितान् ॥ ७ ॥

पूर्ववत् गृहस्थाश्रमे यथा तथा वने अग्निहोत्रादिकं कुर्या-दिति शेषः नैगमैः कल्पशास्त्रैः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अष्टादशेऽत्र वर्णाश्रमे वनस्थन्यासिनोः क्रमात् ।
सकल्पानाभिमतञ्च धर्मं साधारणा तथा ॥

क्रमप्राप्तान् वनस्थधर्मानाह । वनमिति । आयुषस्तृतीयं भागं पञ्चसप्ततिवर्षपर्यन्तं ततः परं सन्न्यासे अधिकारः ॥ १ ॥

वसीत परिदधीत ॥ २ ॥

दतो दन्तान् न धावेत मज्जेत् मुमज्जत् स्नायात् ॥ ३—४ ॥

उलूखलेनाश्मना कुट्टयति खादयतीति सः दन्ता एव उलूखलं यस्य सः ॥ ५ ॥

वृत्तिकारणं जीविकाहेतु फलपुष्पादि अन्यदा कालान्तरे आहृतं कालान्तरे नाददीत किन्तु देशकालाभिज्ञ इति कष्टे देशे आप-त्काले च अतिदौर्बल्ये च नायं नियमः ॥ ६ ॥

कालचोदितान् आग्रयणादीन् ॥ ७ ॥

मुनेर्वनस्थस्य नैगमैर्वेदैराम्नातानि विहितानि ॥ ८ ॥

एवं चीर्णेन तपसा मुनिर्धमनिसंततः ।
मां तपोमयमाराध्य ऋषिलोकादुपैति माम् ॥ ९ ॥
यस्त्वेतत्कृच्छ्रतश्चीर्णं तपो निःश्रेयसं महत् ।
कामायाल्पीयसे युञ्ज्याद्बालिशः कोऽपरस्ततः ॥ १० ॥
यदासौ नियमेऽकल्पो जरया जातवेपथुः ।
आत्मन्यग्नीन् समारोप्य मच्चित्तोऽग्निं समाविशेत् ॥ ११ ॥
यदा कर्मविपाकेषु लोकेषु निरयात्मसु ।
विरागो जायते सम्यङ्न्यस्ताग्निः प्रव्रजेत्ततः ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वनं वोपविशेत्प्रविशेत्प्रव्रजेद्वेत्युक्तं तत्र वनस्थधर्मान् परिव्राड्धर्मांश्चाष्टादशेऽध्याये दर्शयति । तृतीयं भागं पञ्चाशद्वर्षोपरिपञ्चविंशतिवर्षात्मकम् ॥ १ ॥

वन्यैर्वनोद्भवैः कन्दैः पत्रमूलैरन्यैर्मूलैः फलैश्च वसीत परिदधीत ॥ २ ॥

दन्तः दन्तान् न धावेत पञ्चाग्नीन् चतुर्दिशमग्नीन् संस्थाप्य तैः पञ्चमेन नभोमध्यगेनाग्निना च देहं तापयेदित्यर्थः । आसारं धारासंपातं सहते इत्यासारषाट् ॥ ३—४ ॥

उलूखलेनाथवाश्मना कुट्टयतीत्युलूखलाश्मकुट्टः दन्ता एवोलूखलं यस्य स दन्तोलूखलः ॥ ५ ॥

सञ्चिनुयात् समाहरेत् ॥ ६ ॥

कालचोदितान् आग्रयणादीन् ॥ ७ ॥

नैगमैः निगमो वेदस्तन्निष्ठैः ॥ ८ ॥

———

भाषा टीका ।

श्रीभगवान् उवाच यदि वन को जाकर वानप्रस्थ होना होवै तो भार्या को पुत्रों के पास छोड जावे अथवा भार्या को साथ ही लेजावै फिर शांत होकर आयु के तीसरे भाग पर्यंत वनही में निवास करै ॥ १ ॥

जङ्गल के पवित्र कन्द मूल फल इनसे अपनी जीविका करै वकल के तथा तृण के पत्रों के मृग चर्म के वस्त्र पहिरै ॥ २ ॥

केश रोम नख डाढी मोंछ इनके मलों को न धोवै दन्तधावन भी न करै केवल जल मे डूबजाया करै ऐसे स्नान तीनो काल करै और पृथिवी पर सोया करै ॥ ३ ॥

ग्रीष्म काल में पञ्चाग्नि की धूनी तापै वर्षा ऋतु ओं में वर्षा की धारा सहकर जल में रहै ठंड काल में कण्ठ भर पानी में रहै इसप्रकार से तपस्या करै ॥ ४ ॥

अग्नि मे पकाये वस्तु को खावै अथवा काल से ही जो पकजावै तिसको खावै अथवा ऊखल में या पत्थर से कूटकर कंदादि कों को खावै अथवा दान्तों से ही काट कर खाया करै ॥ ५ ॥

अपने भोजनादिक पदार्थ अपने हाथही से सब लावै देशकाल बल अपने देखकर ऐसा करै पहिले वर्ष के लाये हुवे पदार्थ को न खावे यदि बल आदिक ठीक न हो तो दूसरे से मगा लेवै ॥ ६ ॥

जंगल के हविष्यान्न या चरु या पुरोडाश इनो से पर्वकालों मे विहित श्राद्ध यज्ञादिकों को करै परन्तु वन आश्रम वाला पुरुष श्रुति प्रोक्त पशु से मेरा यजन न करै ॥ ७ ॥

अग्निहोत्र दर्श पूर्ण मास इनको गृहस्थ सरीका करै और वैदिक लोगोंने चातुर्मास्य यागभी वानप्रस्थ मुनिके करने को कथन किये हैं ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

अस्य निष्कामस्य फलमाह । एवमिति । धमनीभिः शिराभिः संततो व्याप्तः यावज्जीवं कृतेन तपसा शुष्कमांस इत्यर्थः ऋषिलोकात् महर्लोकादिक्रमेण अयंभावः अन्तःकरणशुद्धिभक्तिद्वारैव तावन्मुच्यते प्रतिबन्धकबाहुल्येत्वनेन क्रमेण मुच्यत इति ॥ ९ ॥

तं सकामं निन्दति । यस्त्विति । निःश्रेयसं मोक्षफलम् अल्पीयसे आविरिञ्च्यादत्यल्प एव तस्मै ॥ १० ॥

एवं यावज्जीवं वर्तमानस्य मोक्षः तृतीयभागावसाने तु अन्त्यविरागेऽपि संन्यासाधिकारः यदि तु ततोऽर्वागेव स्वधर्माशक्तो भवेत्तदापि सम्यगविरक्तो विरक्तो वा तत्राविरक्तस्य फलमाह । यदेति । जातो वेपथुः कम्पो देहे यस्य सः ॥ ११ ॥

विरक्तं प्रत्याह । यदेति ॥ १२ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

अस्य वानप्रस्थस्य निष्कामस्य भगवदाराधनामात्रकाम-

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

इत्यर्थः । ननु क्रमोपादाने किं बीजमित्यपेक्षायामाह । अथ भाव इति । भगवत्तोषकेण तपसा यदि अन्तःकरणशुद्धिभक्ती स्यातां तदा तद्द्वारैव वानप्रस्थस्य एवमुच्यते प्रतिबन्धकबाहुल्ये तु अन्तःशुद्धिभक्त्यभावौ हेतू ॥ ९ ॥

सकामं महर्लोकादिकामम् ॥ १० ॥

कामनाप्रतिबन्धं च विना तपसा यावज्जीवं वर्त्तमानस्य मोक्षः । ततस्तृतीयभागादर्वाक् पूर्वं तत्र विरक्ताविरक्तयोर्मध्ये । अग्नीन् अग्निसाध्यकर्माणि ॥ ११ ॥

ततः वानप्रस्थाश्रमात् ॥ १२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ऋषिलोकादिति ल्यब्लोपे पञ्चमी अथवा मम भक्तियुक्तश्चेदृषिलोकं गत्वा मामुपैतीत्यर्थः ॥ ९ ॥

यस्त्वेतदिति । सर्वाश्रमधर्माणां भगवद्भक्तिविरहितत्वल्लोकावाप्तिरेव फलं तत्फलकामो वालिशः मन्द इत्यर्थः ॥ १०-१४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तविधानाभिसंहितफलधर्मनिष्ठस्य वनाश्रमिणो गतिमाह । एवमिति । धमनीभिः शिराभिः सन्ततः व्याप्तः यावज्जीवं चीर्णेन तपसा शुष्कमांसत्वक्केवलास्थिरूपदेहादिदेह इत्यर्थः । तपोमयं तन्निर्वाहकत्वेन तत्प्रचुरं मामाराध्य ऋषिलोको महर्लोकः इदं ल्यब्लोपे पञ्चमी यावज्जीवमनभिसंहितफलधर्मनिष्ठो मद्भक्तियुक्तो वनस्थः ऋषिलोकं विहाय देहान्ते मामुपैतीत्यर्थः मामाराध्येत्यनेन तपसः स्वाराधनरूपत्वावगमात्फलाभिसंध्यभावः फलितः एवं चाभिसंहितफलस्य तु ऋषिलोकप्राप्तिः फलमिति फलितम् ॥ ९ ॥

अभिसंहितफलनिष्ठं निन्दति । यस्त्विति । कृच्छ्रतः क्लेशेन चीर्णं सम्पादितं निःश्रेयससाधनभूतं महत्तपः केवलमल्पीयसे कामाय शुद्ध्या तुपयुक्तं कुर्यात् ततोऽन्यः को वा वालिशः मूर्खः अज्ञो वा न कोऽपीत्यर्थः ॥ १० ॥

एवं चीर्णेनेत्यादिना यावज्जीवमनुष्ठितस्य स्वधर्मरूपतपसः अप्राप्तिसाधनत्वमुक्तं तदशक्तौ कृत्यमाह । यदेति । असौ वनाश्रमी नियमे स्वधर्मेऽकल्पः यदा च जरया जातकम्पः तदा अग्नीनाहवनीयादीनात्मनि हृदये समाधिदयारोप्य मदर्पित चित्तः सन् अग्निं समाविशेत् प्रविशेदित्यर्थः ॥ ११ ॥

गृहं वनं वोपविशेत्प्रव्रजेद्वा द्विजोत्तम इति ब्रह्मचारिणः संन्यासाधिकार उक्तः तिष्ठन् वोपविशेत्प्रव्रजेत्प्रव्रजेदिति गृहस्थस्यापि अथ वनाश्रमिणस्तद्धर्मोऽपि वक्तुं तदधिकारिगुणानाह । यदेति । कर्मविपाकेषु कर्मावसानकेषु निरयात्मसु निरयरूपेषु लोकेषु स्वर्गादिषु विरागो यदा जायते ततस्तदा अग्निं परित्यज्य प्रव्रजेदिति सम्बन्धः—

आक्रीडा विविधा राजन् ! पश्चिम्याश्रमवासिकाः ।
एते वै निरयास्तात ! स्थानस्य परमात्मनः ॥
वासुदेवे मनो यस्य जपहोमार्चनादिषु ।
तस्यान्तरायो मैत्रेय ! देवेन्द्रत्वादिकं फलम् ॥

इति स्वर्गादीनां मुक्तिप्रतिबन्धकत्वेन मुमुक्षोर्निरयवदत्यन्तहेयत्वं महर्षिभिरभिहितम् ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तपोमयं ज्ञानरूपम् ऋषीणां लोकान्मामुपैति ॥ ९ ॥

एवं कृच्छ्रचीर्णं तपो मदपरोक्षाय नियोक्तव्यम् अन्यथा युञ्जानः सर्वहास्य इत्याह । यस्त्विति । निःश्रेयसं मदपरोक्षलक्षणं पुरुषार्थसाधनम् ॥ १० ॥

स्वाश्रमविहितकर्मकरणासमर्थस्याग्निकृत्यमाह । यदेति । ॥ ११ ॥

क्रमप्राप्तं परिव्रजनपूर्वकं यतिधर्ममाह । यदेति । धर्मविपाकेषु धर्मफलेषु दुःखत्वान्निरयात्मसु नरकसमानरूपेषु ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवमिति । टीकायां निष्कामस्येति भगवदाराधनामात्रकामस्येत्यर्थः अन्तःकरणेत्यादौ यदि तथा सन्तोषयया तपस्यान्तःकरणशुद्धिभक्ती स्यातां तदात्रैव वानप्रस्थत्वे मुच्यते यदि तु प्रतिबन्धकबाहुल्यं स्यात् तर्हि क्रमेणैव मुच्यत इति मां तपोमयमाराध्येति तपसैवाराध्येत्यर्थः । अतः शुद्धभक्त्यभावात् क्रमेणैव मां प्राप्नोतीति भावः ॥ ९ ॥

महर्लोकादिकामं निन्दति । यस्त्विति । कामानां प्रतिबन्धं च विना तपसा यावज्जीवं वर्त्तमानस्य मोक्षः ॥ १०—१३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ऋषिलोकात् महर्लोकं प्राप्य मामुपैति क्रमेण मुच्यत इत्यर्थः ॥ ९ ॥

सकामं तं निन्दति । य इति ॥ १० ॥

अकल्पः असमर्थः ॥ ११ ॥

धर्मविपाकेषु धर्मप्राप्येषु ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निष्कामस्य वानप्रस्थस्यान्तःकरणशुद्धिज्ञानवैराग्यभक्तिसिद्धौ सत्यां मुक्तिरेवेत्याह । एवमिति । एवं चीर्णेन तपसा आयुषस्तृतीयभागसाध्येन धमनीभिः शिराभिर्व्याप्तः तपोमयं तपसा प्राप्यम् आलोचनात्मकज्ञानसंन्यासाग्रहं विहाय आयुःशेषे आत्मस्थमानसवशीभूतं मामाराध्य ऋषिलोकात् ल्यब्लोपे पञ्चमी ऋषिलोकं विहाय मामुपैति आपुनरावृत्तिमार्गक्रमेणैव मां प्राप्नोतीत्यर्थः ऋषिलोकं महर्लोकं तु सकामो वानप्रस्थः गच्छति न मद्भक्त इति भावः । एवं सर्वेषामाश्रमिणां सकामानामेव तत्तल्लोकप्राप्तिः ज्ञानभक्तिनिष्ठानां तु सर्वेषामेकाश्रमे मुक्तिः

इष्ट्वा यथोपदेशं मां दत्त्वा सर्वस्वमृत्विजे ।
अग्नीन् स्वप्राण आवेश्य निरपेक्षः परिव्रजेत् ॥ १३ ॥
विप्रस्य वै संन्यसतो देवा दारादिरूपिणः ।
विघ्नान् कुर्वन्त्ययं ह्यस्मानाक्रम्य समियात्परम् ॥ १४ ॥
बिभृयाच्चेन्मुनिर्वासः कौपीनाच्छादनं परम् ।
त्यक्तं न दण्डपात्राभ्यामन्यत्किंचिदनापदि ॥ १५ ॥
दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं पिबेज्जलम् ।
सत्यपूतां वदेद्वाचं मनः पूतं समाचरेत् ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सिथिलप्रयत्नानां स्वन्तःकरणशोधकाश्रमादाश्रमान्तरगमनसाध्येनाराधनेन मुक्तिरेवेत्याकरेषु द्रष्टव्यम् ॥ ९ ॥

अत एव सकामं निन्दति । य इति । निःश्रेयसं मोक्षसाधनम् अल्पीयसे प्राकृतभोगाय ॥ १० ॥

यदि मुमुक्षुः बुभुक्षुर्वा वानप्रस्थधर्मानेव आयुषस्तृतीयभागसाध्यं न समापयितुं शक्नोति नच सन्यासाश्रमेऽपि गन्तुं शक्नोति तदा मुक्त्यर्थं स्वाश्रमधर्मसाध्यलोकप्राप्त्यर्थं वा कं शरणं व्रजेदित्याह । यदासाविति । असौ द्विविधोऽपि वानप्रस्थः मच्चित्तो मन्मनो मां शरणं व्रजेत् अहमेव मुक्तिभुक्तिप्रद इत्यर्थः—

या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये ।
तया विना तदाप्नोति नरो नारायणाश्रयः ॥

इति मोक्षधर्मे च यदि तु कायक्लेशादेव फलमिच्छति तदाग्निं समाविशेत् ॥ ११ ॥

यदि तु नियमे खलु कल्पस्यापि कर्मविपाकेषु कर्मफलभूतेषु ब्रह्मलोकपर्यन्तेषु—

आब्रह्मलोकाद्विविधा राजन् ! पञ्चन्यस्थामलोदकाः ।
एते वै निरयास्तात ! लोकस्य परमात्मनः ॥

इति वैष्णवेऽपि निरयत्वेनोक्तेषु निरयात्मसु दुःखोदर्केषु लोकेषु विरागः सम्यग्जायते तदा ततः वानप्रस्थादाश्रमात् ज्ञानभक्तिदार्ढ्याय प्रव्रजेत् ॥ १२ ॥

---

भाषा टीका ।

इस प्रकार से तप के अत्यन्त करने से उस मुनि का शरीर प्रायः नसों के देखने लायक होजायगा तब अत्यन्त तपो मूर्ति मेरी उपासना करने से देह त्याग कर महर्लोक को जाकर फिर मेरे वैकुण्ठ धाम को प्राप्त होगा ॥ ९ ॥

जो पुरुष ऐसे कष्ट की तपस्या को करके फिर परलोक में क्षुद्र स्वर्गादि सुखों में लगादेवे उससे दूसरा मूर्ख कौन होगा ॥ १० ॥

वही वानप्रस्थ यदि ऐसे नियमों से समर्थ न होवे और बुढापे से शरीर उसका कांपने लगे तब उस यज्ञ अग्नि को मंत्रों से आत्मा में स्थापित भावना करके मेरे में मनको लगाकर अग्नि में प्रविष्ट होजावे ॥ ११ ॥

जब कि कर्म निमित्त फल रूप लोकों को निरय सरीखा समझने से वैराग्य उत्पन्न हो आवे तब अग्नि आदि को को प्रैष मंत्रों से त्याग कर सन्यासी होजावे ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्रादौ कृत्यमाह । इष्ट्वेति । यथोपदेशं आश्राद्धकपूर्वकं प्राजापत्येष्ट्या मामिष्ट्वा स्वे प्राणे आत्मनि ॥ १३ ॥

सन्यासे विघ्ना भवन्ति तानविगणय्य संन्यसेदेवेत्याशयेनाऽऽह । विप्रस्येति । केनाभिप्रायेण कुर्वन्ति तमाह । अयमिति परं परं ब्रह्म ॥ १४ ॥

एवं प्रव्राजितस्य धर्मानाह । बिभृयाच्चेदिति । परं कौपीनाद्यच्छादनं यदि धारयितुमिच्छति तर्हि कौपीनमाच्छाद्यते यावता तावन्मात्रं धारयेदित्यर्थः । त्यक्तं अपवादात्पूर्वमेव ततोऽन्यत्किञ्चिदपि न बिभृयात् दण्डपात्राभ्यामित्यावश्यकजलपात्रादरुपलक्षणम् ॥ १५ ॥

मनः पूतं मनसा सम्यग् विचार्य यच्छुद्धं तदाचरेत् ॥ १६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तत्र सन्यासान्तरे । आश्राद्धकपूर्वं मार्गशीर्षादिमासचतुष्टये कृष्णपक्षीयाष्टमीसम्भवं श्राद्धं आश्राद्धकं तत्पूर्वकं यथा स्यात्तथा ॥ १३ ॥

तान् विघ्नान् । तम् अभिप्रायं परं ब्रह्म तल्लोकम् ॥ १४ ॥

अपवादात् अपवादात् वाक्यं च भवान् यजतामित्यादि जलपात्रादरित्यादिशब्देन शीतनिवारकवस्त्रादिपरिग्रहः ॥१५॥

दयया पूतं हिंसातो निवर्तितं मनःपूतमिति धर्मे येन चात्मा प्रसीदतीति मनःप्रसादस्य प्रमाणत्वात् ॥ १६ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

परिव्राजमधिकृत्यास्य वचनस्य प्रवृत्तत्वात्सामान्यवचनोऽपि विप्र-शब्दः परिव्राड्विप्रपरः सामान्यतो निर्देशस्तु सर्वेषां प्रत्य-वायसामान्यात् तथाहुशनास्तत्परित्यागे सर्वेषामाश्रमिणां पतनमेवाह—

> ब्रह्मसूत्रपरित्यागाद्ब्रह्मचारी गृही वनी ।
> परिव्राड् वापि पतति तस्मात्सूत्रं तु न त्यजेदिति—

तत्परित्यागे प्रायश्चित्तानि बहूनि स्मरन्ति यथात्रिः त्यक्त्वा यज्ञोपवीतं तु षट्कृच्छ्राणि समाचरेदिति ननु स्नात्वा निष्कृत्य यज्ञोपवीतं विसृजेदिति तत्त्यागो दृश्यते इति चेन्न स्नात्वा निष्कृत्य पुराणयज्ञोपवीतकमण्डलुदण्डं सन्त्यज्य नवान् संगृह्याश्रमं प्रविशेदिति श्रुत्यैव त्यागग्रहणयोः पुरातननूतनविषयत्वा-पादनादन्योऽप्यापेक्ष्यव्यवस्थापनेन विरोधाभावात् सामान्ययज्ञो-पवीतशब्दस्य पुराणत्वविशेषितं पर्यवसितुमुचितत्वात्सामान्य-निषेधस्य नूतनविशेषविधिनापवर्जितुमशक्तेः न हि कर्णाद्यत्या-दिवत् एवं च यानि ब्रह्मसूत्रत्यागविधिपराणि वचांसि तानि पुराणब्रह्मसूत्रत्यागपराणीति व्यवस्थाप्यं यत्तु विज्ञानेश्वरेणोक्तं यज्ञोपवीतधारणं वैकल्पिकं यज्ञोपवीतं विसृजेदिति श्रुतेरिति तदपि त्यागे प्रायश्चित्तस्मरणात् विकल्पासम्भवात्स्वपक्षस्व-स्थापनाभिनिवेशकारितमित्यनादरणीयम् अनेन न्यायेन शिखावर्जन-मप्यनुपपन्नं तद्वपननिषेधस्मरणात् यथाह लिखितः—

> ऋतुसन्धिषु सर्वत्र चातुर्मास्यान्तरं विना ॥
> पौर्णमास्यां शिखावर्जं मुण्डयेत शिरो व्रतीति ।

मेधातिथिः—

> कक्षोपस्थशिखावर्जं मुण्डयेत शिरो यतिः ॥

अत्रिः न प्रयायाच्चतुर्मासान्वपनं कारयेत च—

> आरम्भादूर्ध्वपदिनयोर्वापयेद्वपनेऽपि तु ।

अथः कर्णांशिखान्नि सूरामाणि नहि जातुचिदिति शिखावपने प्राय-श्चित्तं स्मरति गालवः त्रिस्नानक्षौमवपनं कृत्वा प्राजापत्यं कृत्वा प्राणायामशतं कुर्यादिति ननु मुण्डः शिखी चेति विकल्पस्मरणात् सशिखवपनं कृत्स्नेति निषेधस्मरणाच्च शिखावपनसिद्धिरिति चेन्मैवं मुण्डः शिखी चेत्यादिविकल्पस्यापि त्रिदण्डैकदण्डधारण-विकल्पवन्मुख्यामुख्यविषयतयैव निर्वाह्यत्वात् सम्भवति हि केषांचिद्व्याध्यादिना शिरसि केशानुत्पत्तिः अन्यथोदाहृतबहुस्मृति-वचनविरोधापत्तेः शिखावपनं गालवेन प्रायश्चित्तस्मरणात् तथा च विकल्पवाक्यस्यायमर्थः वाशब्दश्चार्थः मुण्डो भवेच्छिखी च-भवेच्छिखावर्जलुप्तकेशो भवेदित्यर्थः । शिखावपनमन्तरेणापि वपने मुण्डशब्दः स्मृतिकारैरेव प्रयुक्तः—

> पौर्णमास्यां शिखावर्जं मुण्डयेत शिरो यतिः इति ।
> कक्षोपस्थशिखावर्जमृतुसन्धिषु वापयेत्

न मैमुण्डयमानिक्रामेद्भिक्षुः स्वयंस्मरे कश्चित् इत्यादिषु शिखा-व्यतिरिक्तांशवपनेऽपि मुण्डशब्दप्रयोगात् मुण्डवपनशब्दयोः पर्या-यवदविशेषस्थोपपादनाच्च सामान्यो मुण्डशब्दः शिखाव्यतिरिक्त-विषय इति व्यवस्थाप्यं सशिखं वपनं कृत्स्नमित्यत्रापि सविष्टर-मन्नं भुञ्जीतेत्यादिवत्कर्तव्यमाहिकेनान्वयः न पुनः सघृतमन्नं भुञ्जीतेत्यादिवत्तथा चायमर्थः यथा सशिखं शिरो भवति तथा वपनं कुर्यादिति मनश्चतुर्भिरपि परिव्राजकैरेकमुपवीतमवश्यं धार्यं त्रिदण्डशिखे च मुख्यतया परिग्राह्ये इति सिद्धमिति दिक् विस्तरस्तु अस्मदीयमात्वाशतदूषणादिषु द्रष्टव्यः ॥ १५ ॥

दृष्टिपूतमिति । दृष्ट्या सम्यगवलोक्य शुद्धे देशे पादं न्यसेदित्यर्थः वस्त्रेण पूतं शोधितं जन्तुमालिन्यादिरहितं जलं पिबेत् सत्येन भूतहितेन पूतां शुद्धामनृतादिरहितां वाचं वदेत् मनः पूतं मनसा सम्यक् हेयोपादेयविभागं कृत्वा तत्र यदुपादेयं तदाचरेत् ॥ १६

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

प्रव्रजते इत्थं भावमाह । इष्टेति । प्राणो अन्तर्यामिणि ॥ १३ ।
देवान् सम्यक् सम्पूज्य तेभ्योऽनुज्ञामादायैव संन्यासः कार्योऽन्यथा ते दारादिषु सन्निधाय विघ्नं विधायाधः पातयन्तीत्याशयेनाह । विप्रस्येति । वै इत्यनेन असम्पूज्य*न्यासिष्णुं तं देवा वै पातयन्त्यधः सुसंपूज्य न्यासिष्णुं तं देवा एवानुजानते इति वाक्यं सूचयति । हि शब्देन अयथा तद्यशो वृद्ध्यै विघ्नन्तीव पुनः पुनः । तात्पर्यान्निर्गतो देवैर्नोत्थातुं शक्नुयात्कश्चिदिति मतं सूचयति ॥ १४ ॥

मौनेन वाग्दण्डः अनीहया निषिद्धाचरणत्यागेन देहदण्डः प्राणायामेन चेतोदण्डः ॥ १५—१९ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

परं ब्रह्मलोकम् ॥ १४ ॥

यस्मात्प्रैषोच्चारात्पूर्वमेव सर्वं त्यक्तं तस्माद्दण्डपात्राभ्या-मन्यत् किञ्चिदपि न गृह्णीयात् ॥ १५—१७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी

इष्ट्वा यथोपदेशं श्राद्धाष्टकपूर्वकं प्राजापत्येष्ट्या मामिष्ट्वा ॥१३॥
तत्र विघ्नान् गणयेदित्याह । विप्रस्येति । दारादिरूपिणः दारादिरूपा विघ्नाः केनाभिप्रायेण कुर्वन्तीति तमाह । अयमिति आक्रम्य अतिक्रम्य परं परं ब्रह्म ॥ १४ ॥

तस्य धर्मानाह । बिभृयादिति । पर कौपीनाद्यन्यद्वासो धारयितुमिच्छति तर्हि कौपीनमाच्छादयेत् यावता तावन्मात्रमेव त्यक्तं प्रैषोच्चारात् पूर्वमेव दण्डपात्राभ्यामन्यत् , किमपि न बिभृयात् ॥ १५—१९ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किं विधाय प्रव्रजेदित्याकाङ्क्षायामाह । इष्ट्वेति । यथोपदेशं यथा-विधि प्राजापत्येष्ट्या मामिष्ट्वा अग्नीन् स्वप्राणे आत्मनि आवेश्य निरपेक्षः मदितरपदार्थापेक्षारहितः परिव्रजेदिति ॥ १३ ॥

परं पूर्णं पुरुषोत्तमम् ॥ १४ ॥

---

* न्यासीयत्तस्य महादेवमायान्निष्क्रमणा हरिं संपूज्यात्मा-नतिक्रम्य परमेश्वरमियादिति बुद्ध्या देवा विघ्नं कुर्वन्तीत्यर्थः

श्रीधरस्वामिकृतभावार्थदीपिका ।

विविक्तं विजनं क्षेमं निर्भयं शरणं स्थानं यस्य सः मयि भावेन विमल आशयो यस्य सः ॥ २१ ॥

बन्धं मोक्षं च केन बन्धः केन वा मोक्ष इति तावाह । बन्ध इति ॥ २२ ॥ २३ ॥

पुराणि हट्टादिमन्ति ग्रामास्तद्रहिताः व्रजा गोष्ठानि तान् सार्थान् यात्रिकजनसमूहान् ॥ २४ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी ।

वेणुभिस्त्रिभिर्दण्डैः । वेणूभिरिति तु लेखकभ्रम एव ॥१७॥

वृत्तिमद्दन प्रतिग्रहाध्यापनयाजनशिलोञ्छरूपेष्वल्पं । अत्र विधायामेव चतुःसंख्या वर्णा आरोपितस्यर्थान्तरं तत्र वर्णाश्रयाभावे प्राणरक्षार्थं शूद्रोऽप्युपेतः आहारार्थं समीहेतेति वक्ष्यमाणत्वात् । अभिशस्तपतितान् कलङ्कदूषितान् । अत्राहिमस्यागारे ॥ १८ ॥

अयाचितादीति । माधूकरमसंक्लृप्तं प्राक् प्रणीतमयाचितम् । तात्कालिकोपपन्नं च भैक्ष्यं पञ्चविधं स्मृतमिति भिक्षापञ्चकं ज्ञेयम् । माधूकरे भैक्ष्ये । नैवेद्यं विभागेन निवेदनीयत्वं विद्यते अन्येषु चतुर्विधभैक्ष्येषु न विद्यते । तत्र त्रितयं विष्णुब्रह्मार्कभ्यश्चाग्नये । नैवेद्यमप्सु क्षिपेत् । भौतिकं भूतेभ्यो देयं तु बहिः क्षिपेत् । पूर्वार्धे माधुकरेऽप्यस्याचेपक्ष्यमतो यद्वति । तदानीं विभक्तशेषभोजनकाले । तन्मध्ये स्वभोज्यशेषमध्ये ॥१९॥

निःसङ्गः सर्वत्र क्वचनापि न कुत्राप्यासक्तः ॥ २० ॥

अभेदेन तत्त्वमसीत्युक्ताचिद्रूपैकपेन ॥ २१ ॥

अन्वीक्षेत विचारयेत् तदभिनयः केन बन्ध इत्यादिः ॥२२॥

तस्मादिन्द्रियविक्षेपस्य बन्धत्वात् । मद्भावेन सर्वत्र मद्भावनया ॥ २३ ॥

पुरादीन् प्रति भिक्षार्थं प्रविशन् महीं चरेदित्यन्वयः ॥२४॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अभेदेनेति अब्रह्मात्मकस्वनिष्ठात्मभेदनिरासः तेन सांख्यमतव्यावृत्तिः ॥ २१—२२ ॥

क्षुल्लकामेभ्यः क्षुद्रकामेभ्यः ॥ २३—२४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मौनेति । मौनं वाचो दण्डः अनीहा काम्यकर्मत्यागो देहस्य दण्डः प्राणायामश्चेतसः एते त्रयो दण्डा यस्य तुरीयाश्रमिणो न सन्ति सङ्ग हे हद्व । सङ्गाकृतैर्वेणुभिर्यतिर्न भवेत् ॥ १७ ॥

भिक्षामिति । विगर्हिताभिशस्तपतितादीन् वर्जयित्वा चतुर्षु वर्णेषु असंक्लृप्तान् अत्रापि स्वामी भविष्यतीति पूर्वमननुसंहितान् सप्तागारान् गृहान् प्रति भिक्षां चरेत्तावतैव लब्धेन तुष्येच्च पूर्वपूर्ववर्णेषु भिक्षाया अलाभे उत्तरोत्तरवर्णानुमतिरिति कश्चिद्व्याचष्टे प्राणात्ययदशायामेव वर्णान्तरभिक्षानुमतिरिति तु युक्तं तथा च सूत्रम् "सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्" इति चतुर्णामपि परिव्राजकानां विप्रकुलभिक्षामेव भगवान् पराशरः स्मरति तत्र परिव्राजकाश्चतुर्विधा भवन्ति कुटीचका बहूदका हंसाः परमहंसाश्चेति तत्र कुटीचका नाम पुत्रादिभिः कुटीं कारयित्वा कामक्रोधलोभमोहमदमात्सर्यादीन् परित्यज्य विधिवत्संन्यासं कृत्वा त्रिदण्डजलपात्रशिखायज्ञोपवीतकाषायवस्त्रधारिणः स्नानशौचाचमनजपस्वाध्यायब्रह्मचर्यध्यानतत्पराः पुत्रादेरेव भिक्षाकालेऽन्नं यात्रामात्रमुपयुञ्जानास्तस्यां कुट्यां नित्यं वसन्त आत्मानं मोक्षयन्ते बहूदका नाम त्रिदण्डकमण्डलुजलपवित्रशिखायज्ञोपवीतिनः कौपीनोत्तरीयवसनकाः वेदान्तार्थबोधकाः साधुवृत्तेषु ब्राह्मणकुलेषु भैक्ष्यचर्यां चरन्त आत्मानं मोक्षयन्ते हंसा नाम त्रिदण्डजलपवित्रशिखायज्ञोपवीतरक्तकाषायवाससो गोमूत्रगोमयाहारा एकरात्रद्विरात्रत्रिरात्रषड्रात्रमासोपवासकृच्छ्रातिकृच्छ्रचान्द्रायणसान्तपनपराकतुलापुरुषादीनि चरन्तो गोद्विजादयेषु देशेषु वसन्त आत्मानं मोक्षयन्ते परमहंसा नाम त्रिदण्डजलपवित्रशिखायज्ञोपवीतिनोऽन्तर्बहिस्सनविचारिणो ग्रामैकरात्रवासिनो नगरतीर्थप्रदेशेषु पञ्चरात्रं स्नानवर्ज्यं भिक्षाकाले शीर्णपर्णकुटीं कृत्वा ब्राह्मणकुलादेव भैक्ष्यं गृहीत्वाष्टौ ग्रासानेव भुञ्जाना संध्योपासनतत्परा नित्यं वृक्षमूले वसन्तः आत्मानं मोक्षयन्ते इति ॥ १८ ॥

बहिरिति । किञ्च बहिर्जलाशयं ग्रामादिस्थादिः उपस्पृश्य वाग्यतो मौनी भूत्वा तथा केन विद्याचितं वस्तमे आहृतं भैक्ष्यमन्नं विभज्य दत्त्वा शेषं भुञ्जीत अशेषमित्यधिकाहरणं निरस्तम् ॥१९॥

एक इति । एकोऽसहायः निःसङ्गः क्वाप्यनासक्तः नियमितबाह्यान्तरिन्द्रियः आत्मन्येव क्रीडा कौतुकं यस्य सः आत्मनि परमात्मन्येव रतः सन्तुष्टः आत्मवान् धीरः समदर्शनः सर्वस्य ब्रह्मात्मकत्वं पश्यन् ॥ २० ॥

विविक्तः निर्जनः क्षेमो निर्भयश्च देशः शरणं वासस्थानं यस्य मद्भावेन मद्भक्त्या निर्मल आशयो मनो यस्य सः मयाऽभेदेनात्मानमेकं ब्रह्मैकरूपं चिन्तयेत् मयाऽभेदेनेत्यनेन अब्रह्मात्मकस्वनिष्ठात्मभेदव्युदासः तेन सांख्यमतव्यावृत्तिः ॥ २१ ॥

अन्वीक्षेतेति । बन्धमोक्षशब्दौ तत्कारणपरौ आत्मनः स्वस्य बन्धहेतुं मोक्षहेतुं च ज्ञाननिष्ठया तत्त्वत्रययाथात्म्यज्ञाननिष्ठयाऽन्वीक्षेत पर्यालोचयेत तावेव दर्शयति । बन्ध इति । एषामिन्द्रियाणाम् ॥२२॥

तस्मादिति । यत इन्द्रियविक्षेपसंयमौ बन्धमोक्षहेतू तस्मात् षण्णां समनस्कानां ज्ञानेन्द्रियाणां वर्गं नियम्य मद्भावेन यो भावोऽभिप्रायविशेषः भक्त्यात्मकस्तेन युक्तः क्षुल्लकामेभ्यः क्षुद्रकामेभ्यः शब्दादिविषयेभ्यो विरक्तः महदपारमात्मनि सुखं लब्ध्वा चरेदिति सम्बन्धः ॥ २३ ॥

पुरेति । पुराणि वीथीमन्ति ग्रामास्तद्रहिताः व्रजा गोष्ठाः सार्थाः सांयात्रिकजनसमूहाः तान् भिक्षार्थं प्रविशन्नेव पुण्यदेशाद्रिमतीं महीं चरेदिति सम्बन्धः ॥ २४ ॥

———

मानमस्याश्रमपदेष्वभीक्ष्णं भैक्ष्यमाचरेत् ।
संसिध्यत्याश्वसंमोहः शुद्धसत्त्वः शिलान्धसा ॥ २५ ॥
नैतद्वस्तुतया पश्येद्दृश्यमानं विनश्यति ।
असक्तचित्तो विरमेदिहामुत्र चिकीर्षितात् ॥ २६ ॥
यदेतदात्मनि जगन्मनोवाक्प्राणसंहतम् ।
सर्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत्स्मरेत् ॥ २७ ॥
ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वाऽनपेक्षकः ।
सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः ॥ २८ ॥
बुधो बालकवत्क्रीडेत्कुशलो जडवच्चरेत् ।
वदेदुन्मत्तवद्विद्वान् गोचर्यां नैगमश्चरेत् ॥ २९ ॥
वेदवादरतो न स्यान्न पाखण्डी न हैतुकः ।
शुष्कवादविवादेन कंचित्पक्षं समाश्रयेत् ॥ ३० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

... इति श्रुतिप्रोक्तकर्मफलानिरपेक्षे परमात्मनि संयमः ऐकाग्र्यं परमात्मध्यानं मोक्षो मोक्षहेतुः इत्येवमात्मपरमात्मविषयकज्ञाननिष्ठया आत्मनः बन्धं मोक्षं चान्वीक्षेताऽऽलोचयेत् ॥ २२ ॥

यस्मादिन्द्रियविक्षेपो बन्धहेतुर्मद्ध्यानं मोक्षहेतुस्तस्मात् क्षुल्लकामेभ्यः कर्मफलेभ्यो विरक्तः मद्भावेन मद्ध्यानात्मको भावो यो भावस्तेन महत् ध्यानजन्यसुखं लब्ध्वा चरेत् ॥ २३ ॥

किंकुर्वन् कुत्र चरेदित्याकाङ्क्षायामाह । पुरग्रामव्रजानिति पुराणि हट्टादियुक्तानि तद्वर्जिताः ग्रामाः व्रजान् गोष्ठानि सार्थान् यात्रिकव्यूहान् भिक्षार्थमेव नतु खेलनेन पुरापदेशादियुक्तामेव नतु विपरीताम् ॥ २४ ॥

भाषा टीका ।

मौन होना चेष्टा से रहित होना प्राणायाम करना ये तीन वचन के देह के चित्त के दंड हैं हे उद्धव ! जिसके ये तीन नहीं हैं वह पुरुष केवल तीन बांसों के रखने मात्र से सन्यासी नहीं होता है ॥ १७ ॥

निन्दितों को छोडकर चारों वर्णों में भिक्षा करै पहिले विना विचारे हुये सात घरों में जावै उनमें जो मिलै तिस से सन्तोष कर लेवै ॥ १८ ॥

भिक्षा को लेके गाम के बाहर जलके किनारे आकर आचमन करके मौन होकर जो कोई आवै तिसको कुछ देकर बाकी जो बचे तिसको जल सींच कर पवित्र करै फिर जितना अन्न होवै सब भोजन करै ॥ १९ ॥

निःसंग होकर जितेन्द्रिय होकर इस पृथिवी में एकेला विचरै आत्माही में क्रीडा करै आत्माही में रत रहे आत्मज्ञानी होवै समदृष्टि रखै ॥ २० ॥

एकांत कल्याण स्थल में रहे मेरी भक्ति करने से अंतःकरण को शुद्ध रखै मुनि जो है अभेद रूप से मेरे साथ आत्मा का व्याप्यव्यापकभाव चिन्तन करै ॥ २१ ॥

और ज्ञान निष्ठा से आत्माके बंध और मोक्ष को देखै इंद्रियों का विक्षेप बंध है इनका संयम मोक्ष है ॥ २२ ॥

जिससे मुनि इंद्रिय षड्वर्ग को नियमन करके मेरे भाव से विचर आत्मा में महान् सुखको प्राप्त होकर क्षुद्र कामों से विरक्त होजावै ॥ २३ ॥

पुर ग्राम गोष्ठ यात्रि समूह इनमें भिक्षाके वास्ते विचरता प्रवेश करै पवित्र देश नदी पर्वत वन आश्रम वाली पृथिवी में विचारता रहै ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यतः शिलवृत्त्या प्राप्तेन तदीयेनान्धसाऽन्नेन शुद्धसत्त्वः सन्निवृत्तमोहः संसिध्यति मुच्यते ॥ २५ ॥

ननु भिक्षान्नं विहाय कथं शिलान्ने प्रवृत्तिः स्यादत आह । नैतदिति । एतत् दृश्यमानं भिक्षान्नादि वस्तुतया न पश्येत् यतो विनश्यति अत इहामुत्र च लोके असक्तचित्तः सन् चिकीर्षितात्तदर्थकृत्याद्विरमेत् ॥ २६ ॥

ननु तथापि यावद्विनाशं सुखहेतुत्वात्तच्चिन्तावतः कुतो विरागः स्यात्तत्राह । यदेतदिति । एतज्जगन्ममतास्पदं मनोवाक्प्राणैः संहतं सहितमहंकारास्पदं शरीरं सर्वं तज्जन्यं

नोद्विजेत जनाद्धीरो जनं चोद्वेजयेन्न तु ।
अतिवादांस्तितिक्षेत नावमन्येत कंचन ।
देहमुद्दिश्य पशुवद्वैरं कुर्यान्न केनचित् ॥ ३१ ॥
एक एव परो ह्यात्मा भूतेष्वात्मन्यवस्थितः ।
यथेन्दुरुदपात्रेषु भूतान्येकात्मकानि च ॥ ३२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सुखं चाऽऽत्मनि मायामात्रमिति तर्कया स्वप्नादिदृष्टान्तेन त्यक्त्वा स्वस्थ आत्मनिष्ठः संस्तन्न स्मरेन्न चिन्तयेत् ॥ २७ ॥

एवं बहूदकादिधर्मानुक्त्वा परमहंसधर्मानाह । ज्ञाननिष्ठ इति सार्धैस्त्रिभिः । बहिर्विरक्तो मुमुक्षुः सन् ज्ञाननिष्ठो वा मोक्षेऽप्यनपेक्षो मद्भक्तो वा सलिङ्गान्दित्रदण्डादिसहितानाश्रमांस्तद्धर्मांस्त्यक्त्वा तदासक्तिं त्यक्त्वा यथोचितं धर्मं चरेदित्यर्थः । न पुनस्त्यक्तस्त्याग एव विवक्षितः पुनर्धर्मविधानात् भक्तिज्ञानयोरुत्तराध्याये वक्ष्यमाणत्वाच्च तर्हि पूर्वस्मात्को विशेषस्तमाह । अविधिगोचरो विधिकिंकरो न स्यादिति एतदेव स्फुटीकरिष्यति "शौचमाचमनं स्नानं न तु चोदनया चरेदि"त्यादिना ॥ २८ ॥

कथं चरेत्तदाह । बुधो विवेकवानपि बालकवन्मानापमानविवेकशून्यः कुशलो निपुणोऽपि जडवत्फलानुसंधानाभावेन विद्वान् पण्डितोऽप्युन्मत्तवल्लोकरञ्जनाभावेन नैगमो वेदार्थनिष्ठोऽपि गोचर्यामनियताचारामिव ॥ २९ ॥

वेदवादरतः कर्मकाण्डव्याख्यानादिनिष्ठः पाखण्डी श्रुतिस्मृतिविरुद्धधर्मानुष्ठानवान् हैतुकः केवलतर्कनिष्ठः शुष्कवादे निष्प्रयोजनगोष्ठ्यां यो विवादस्तस्मिन् ॥ ३० ॥

अतिवादान् दुरुक्तानि ॥ ३१ ॥

आत्मदृष्ट्या तावद्वैरकारणं नास्तीत्युक्तमेक एवेति देहदृष्ट्यापि नास्तीत्याह । भूतानि च देहा अपि कारणरूपेणैकात्मकानि ॥ ३२ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपनी टिप्पणी ।

तदीयेन ध्यानप्रवृत्त्यनुबन्धिना ॥ २५ ॥

दृश्यमानम् न तु स्वप्नम् इत्यवधेः निःसङ्गत्वविवरणम् । अतो नश्वरत्वात् । तदर्थंकृत्यात् मिथ्याज्ञानपरिश्रमात् ॥ २६ ॥

बोधाद्धिनाशं विनाशादर्वाक् तावत्तावतः मिथ्याज्ञादिचिन्तावतः मायामात्रं प्रतीतिमात्र तद्वर्तमानमतीतं च मिथ्याज्ञादि त्यक्त्वापि पुनर्न चिन्तयेत् इत्यतीते वर्तमाने च निःसङ्गत्वमुक्तम् ॥ २७ ॥

तदासक्तिं धर्मासक्तिमिति धर्मशब्दस्य तदासक्तौ लक्षणा पूर्वस्माद्बहूदकादेः तं विशेषम् । एतदेव अविधिगोचरत्वमेव ॥ २८ ॥

विवेकवानपि मानापमानज्ञानवानपि ॥ २९ ॥



पाखण्डी न स्यात् पूर्वपक्षज्ञानार्थमपि पाखण्डशास्त्रं नाभ्यसेदित्यर्थः । निष्प्रयोजनगोष्ठ्यामिति वैष्णवमतप्रवृत्तिप्रयोजनगोष्ठ्यां तु पक्षमपि समाश्रयेत् ॥ ३० ॥

दुःसहः संसारादुद्वेगं विधत्ते त्रस्तोऽस्म्यहं कृपणवत्सल दुःसहोग्रसंसारचक्रकदनादित्यादि प्रह्लादोक्तेः ॥ ३१ ॥

देहमिति युग्मकम् । आत्मा परमात्मा भूतेष्वन्येषु आत्मनि च स्वस्मिन् जीवे यथेन्दुरुदपात्रेष्विवेत्येकस्यैव वैभवमात्रे दृष्टान्तः नतु प्रतिबिम्बत्वे "अम्बुवदग्रहणात्तु न तथात्वं वृद्धिह्रासभाक्त्वमन्तर्भावात्" इति पूर्वोत्तरन्यायाभ्यां तथा निर्णीतत्वात् ॥ ३२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

शिवाम्भसा शिवोऽच्छन्नवृत्तिध्यानप्रवृत्तमित्यादेन ॥ २५ २६ ॥

सर्वं माया सर्वमिदं प्रकृतिपरिणामः ॥ २७ ॥

सलिङ्गान् गृहस्थादिलिङ्गोपेतान् अविधिगोचरः कार्यविधिरगोचरः ॥ २८ ॥

गोचर्यामजगरवदिति भावः नैगमः निगमनिष्ठः वेदवादरतः वेदपूर्वभागरतो न स्यात् ॥ ३० ॥ ३१ ॥

वैराग्यकरणे हेतुमाह । एक एवेति । यथेन्दुरिति दोषाभावे दृष्टान्तमाह । अन्यथा आकाशमेकं पृथगिति दृष्टान्तविरोधात् ॥ ३२—३५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च ध्यानप्रवृत्तेति । अभीक्ष्णं पुनः पुनः तत्र हेतुः संसिध्यतीत्यादि शिवाम्भसा शिवरूपया प्रीत्या तदीयेनाभ्यासा अज्ञेनापि शुद्धसत्त्वः सन् निवृत्तमोहः संसिध्यति मुच्यते अत एतदर्थमभीक्ष्णं मे ध्यानमाचरेदित्यर्थः ॥ २५ ॥

ननु कामेभ्यः कथं विरक्तः स्यादित्यत उपायमाह । नेति एतत्परिदृश्यमानं शब्दादिविषयजातं वस्तुतया न पश्येत् कुतः यतस्तद्विनश्यति एतद्दृष्टान्तेन पारलौकिकविषयस्यापि नश्वरत्वमुक्तमिति इहामुत्र चिकीर्षितात् ऐहलौकिककामसाधनतया कर्तुमिष्टात्कृत्याद्विरमेत् इत्थं सम्यग्विवेकेन विरक्तो भवेदित्यर्थः ॥ २६ ॥

किञ्च मनोवाक्प्राणसंहतं वाग्ग्रहणं कर्मेन्द्रियाणामप्युपलक्षणं मनोग्रहणं ज्ञानेन्द्रियाणां प्राणग्रहणं भूतपञ्चकस्य बुद्धीन्द्रियमनःप्राणभूतसंघातात्मकमेतज्जगज्जङ्गमं शरीरं माया प्रकृतिपरिणामात्मकमित्येवं विधत तर्कया नश्वरत्वादिभिः प्रकृतिकार्यत्वानुमानेनार्थः । स्वस्थः स्वस्मिन्नेव प्रत्यगात्मके स्थितः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ब्रह्मात्मकस्वात्मस्वरूपदर्शी आत्मपरः त्यक्त्वा त्वक्तादिके शरीरे आत्माभिमानं त्यक्त्वा पुनस्तच्छरीरमात्मतया नाभिमन्येत ॥२७॥

इत्थं वर्णाश्रमधर्मानभिधायाथेत्थमाश्रमधर्माननुतिष्ठतः सञ्जातज्ञानवैराग्यभगवद्भक्तियोगस्याचारमेवं विदधाति । ज्ञाननिष्ठ इति सार्द्धैकादशभिः । विरक्त इति ज्ञाननिष्ठस्य विशेषणम् अनपेक्षक इति मद्भक्त इत्यस्य विरक्तो ज्ञाननिष्ठो वा अनपेक्षको मद्भक्तो वा स्यादिति सम्बन्धः । वैराग्ययुक्तं ज्ञानं चात्र भगवच्छेषत्वैकरसोऽहं तदायत्तस्वरूपस्थितिप्रवृत्तिश्च स चासंख्येयैः कल्याणगुणैः परतरः अतो मम भगवानेव परमप्राप्यः प्रापकश्च अन्यदपि मन्मनोरथवर्त्ति स एव मम सर्वमित्यध्यवसायात्मकं एतच्च समनन्तराध्याये ज्ञानिनस्त्वहमेवेष्ट इत्यादिना स्वयमेव स्फुटीकरिष्यति भक्तियोगस्यानपेक्षत्वं नामानभिसंहितफलत्वं भक्तिमपरस्यान्यतरनिष्ठश्चेदित्यर्थः । स चतुर्थाश्रमनिष्ठ एवेति न सङ्कोचः किन्तु चत्वारोऽप्याश्रमिणः सलिङ्गानाश्रमानिति बहुवचनदर्शनात् सलिङ्गान् गृहस्थादिलिङ्गोपेतानाश्रमांस्त्यक्त्वाऽविधिगोचरश्चरेत् विधिग्रहणं प्रतिषेधस्याप्युपलक्षणम् । अविधिगोचरः विधिनिषेधानियोज्यः विधिर्मां प्रवर्त्तयति निषेधस्तु निवर्त्तयतीति बुद्धिं त्यक्त्वा भगवच्छेषत्वैकरसस्य मम तत्कैङ्कर्यं मत्स्वरूपानुबन्धीति बुद्ध्या चरेत् यथाशक्ति वर्णाश्रमधर्मान् भगवत्कैङ्कर्यवेषेणाचरेत् सलिङ्गानामाश्रमाणां त्यागो नाम निष्पन्नोपायत्वेन तेषूपायानुग्राहकत्वबुद्धयभावात्मकः अनेन यावदुपायनिष्पत्तिस्तावत्तदनुग्राहकत्वबुद्ध्यानुतिष्ठेदिति सूचितं स्वीकृतसिद्धोपायस्य निष्पन्नोपायस्य च वर्णाश्रमधर्मानुष्ठानस्योपायोपकारकत्वाभावात्तद्बुद्ध्यानुष्ठेयत्वं ननु स्वरूपेणानुष्ठेयत्वं निष्पन्नस्याप्युपायस्याप्रयाणादनुवर्त्तनीयत्वात्प्रतिबन्धकशास्त्रप्रच्युतिसम्भवतया स्वरूपानुबन्धितया वा लोकनिघृक्षया वाऽनुष्ठेयत्वमाहर्तव्यमेव अन्यथा—

नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयादिति ॥

श्रुत्युक्तरीत्यापि स्वरूपतो वर्णाश्रमधर्मत्यागः प्रत्यवायहेतुरनुपायादपि कैङ्कर्यकरणाच्छुद्धतापि न सिद्ध्येल्लोकश्चोत्सीदेत् अतो यथोक्त एवार्थः आश्रमलिङ्गानि—

मेखलाजिनदण्डेन ब्रह्मचारीति लक्ष्यते ।
गृहस्थो यज्ञवेदाद्यैर्नखरोमैर्वनाश्रमी ॥

त्रिदण्डेन यतिश्चेत्याद्युक्तानि द्रष्टव्यानि ॥ २८ ॥

किञ्च बुधइति । बुधो विवेकवानपि बालकवन्मानावमानरहितः क्रीडेच्चरेत् कुशलो निपुणोऽपि जडवत् विद्वानप्युन्मत्तवद्वदेत् नैगमः वेदार्थनिष्ठोऽपि गोचर्यां पशुचर्यां चरेत् अज्ञ इव वर्तेत देहात्माभिमानविषयानुसन्धानपरत्वज्ञानमाहात्म्याविष्काराणामभावादिति भावः ॥ २९ ॥

वेदवादरतः वेदपूर्वभागरतो न स्यात् पाषण्डी वेदविरुद्धाचारतः हैतुकः केवलतर्कनिष्ठश्च न स्यात् शुष्कवादेन निष्प्रयोजनगोष्ठ्या यो विवादस्तेन तन्मूलकं कञ्चित्पक्षं च न समाश्रयेत् न संश्रयेत् ॥ ३० ॥

जनान्नोद्विजेत न भीतो भवेत्नापि जनं चोद्वेजयेत् अतिवादान् दुरुक्तानि तितिक्षेत ॥ ३१ ॥

देहमुद्दिश्य [illegible] हेतुमाह । एक एवेति । भूतेषु भूतसंघातपरिणामरूपेषु देवमनुष्यादिदेहेषु च आत्मा प्रत्यगात्मा तस्मिन्नात्मनि [illegible] आत्मनिष्ठावकं तस्मिन्नवस्थितः परमात्मा एक एव [illegible] व्याप्य स्थितः बोधाय पर्वं दृष्टान्तः ततः किमत आह । भूतान्येकात्मकानीति । एकः परमपुरुष आत्मा येषां तानि हि यस्मादेवं तस्मान्न वैरं कुर्यादिति सम्बन्धः सर्वभूतानां भगवच्छरीरत्वात्क्वापि भूते कृतं वैरं तदात्मभूतपरमपुरुषपर्यन्तगामीति न तत्कुर्यादित्यर्थः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवं स्थानम् अभीक्ष्णमित्यनेन पुरादिषु विकल्प इति ज्ञायते वानप्रस्थाश्रमस्थेषु नित्यं भैक्षचरणस्य किं शिष्टफलमित्यत आह । संसिध्यतीति । शिलोञ्छसा शिलोञ्छविहितान्नेन शुद्धं सत्त्वमन्तःकरणं यस्य स तथा असंमोहो मिथ्याज्ञानरहितः आशु संसिध्यति अपरोक्षज्ञानमाप्नोतीति ॥ २५ ॥

संसिद्धस्य दर्शनप्रकारं विधत्ते । नेति । एतज्जगद्वस्तुतया परब्रह्मत्वेन अत्र हेतुः विनश्वरं दृश्यमानमिति एवं पश्यता वैराग्यानुसन्धानं कर्त्तव्यमित्याह । आसक्तेति । इहामुत्रासक्तचित्तः स्यात् ततः किमत्राह । विरमेदिति । चिकीर्षितात् कर्तुमिष्टात् कर्मोदिर्विरमेत् कृतकृत्यो भवेदित्यन्वयः ॥ २६ ॥

एतदेव स्पष्टयति । यदेतदिति । मनोवाक्प्राणैः संभूतं स्वस्वस्वमात्मनि हरौ स्थितम् ऋचो अक्षरे परमे व्योमन्नित्यादिश्रुतेः यदेतत्प्रत्यक्षं जगत्सर्वं मायेति तर्कणाच्चेतनप्रकृतिकृतत्वेन अनुष्ठितानुगुणमायातीत्यायः फलं तस्मा नेति माशब्दो निषेधार्थः तथा च मायेति निष्फलमुच्यते मायामिति वक्तव्ये मायेति स्त्रीलिङ्गत्वेन वचनमत्यन्तास्वातन्त्र्यप्रकटनायेत्यतोऽस्य ज्ञानेन प्रयोजनाभावान्नैतत्सुखाय स्यादिति त्यक्त्वा स्वतन्त्रत्वात्स्वो विष्णुरन्यसंबाधरहित्येन मुक्तिफलप्रदत्वात् तस्य तदेकशरणो भूत्वा तज्जगन्न स्मरेद्विष्णुमेव प्रयोजकं स्मरेदित्यन्वयः यदि विष्णुः स्वतन्त्रो न स्यात्तर्हि तज्जगन्नियतं न स्यात् तच्चान्नित्यसुखं स्यान्न चैवं तस्मात्स एव तथैवेत्यादितर्कणा विश्वं मिथ्या दृश्यत्वादित्यादितर्कणा मायामयत्वं प्रपञ्चस्योच्यत इत्येतत्पूर्वोत्तरग्रन्थार्थविरोधात् विश्वं सत्यमित्यादिश्रुतिप्रामाण्याद्दसमयुक्तार्थ—

त्रिगुणा प्रकृतिर्माया तज्जत्वाद्विश्वमीरितम् ।
अनाद्यनन्तकालेषु मायेत्याहुर्विपश्चितः ॥
अचेतनत्वान्नैवेतत्प्रयोजकतया स्मरेत् ।
चेतनत्वं स्वतन्त्रत्वं स चैको विष्णुरेव तु ॥
आयस्तु फलमादिष्टं प्रोक्तमायेतिनिष्फलम् ।
फलाल्पत्वात्तु मायैषा सम्प्रोक्ता त्रिगुणात्मिका ॥
महाफलप्रदत्वात्तु विष्णुराय इतीरित इति ।

प्रमाणसङ्गावाच्चत्युपेक्षणीयम् ॥ २७ ॥

ज्ञानपरिपाकप्राप्तस्य यतेर्वृत्तिप्रकारं विधत्ते ज्ञाननिष्ठ इति ज्ञानस्य निष्ठोत्कर्षो यस्य स तथा वाशब्दौ समुच्चयार्थौ नाविकल्पार्थौ अन्योऽन्यनियमार्थौ वा अनपेक्षकः शिष्यसङ्ग्रहाद्यनपेक्षः सलिङ्गान् दण्डादिलक्षणसहितान् मुक्त्वा विधिगोचरः अयं यतिरयं ब्रह्मचार्यादिरूपव्यवहारागोचरश्चरेद्विविक्ते अरण्ये वर्तेत एव इत्ययः अथवा वेदोक्तविधिवाचितत्वेन सन्ध्योपासनादि

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तर्कप्रमाणाः देहमनआद्यात्ममात्रवादिनस्ते तर्केणैव निराकर्तव्या इत्यतस्तर्कैर्योग्युक्तियुक्तैव ॥ २७ ॥

कर्मज्ञानवैराग्यभक्तिरूपाणि गुर्वनुग्रहलभ्यानि मोक्षसाधनानि तत्र वर्णाश्रमधर्माणामन्तःकरणशुद्धिद्वारा ज्ञानसाधनत्वं वक्ष्यत्यस्मिन्नेवाध्याये "इति स्वधर्मनिर्णिक्तसत्त्वो निर्ज्ञातमद्गतिरिति वैराग्यसहितस्य भक्तिसाधनत्वं च वक्ष्यत्युत्तराध्याये—

ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च संमतः।
स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः॥
ज्ञानविज्ञानसंसिद्धाः पदं श्रेष्ठं विदुर्मम।
ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम्॥
तपस्तीर्थंजपोदानपवित्राणीतराणि च॥
नालं कुर्वन्ति तां सिद्धिं या ज्ञानकलया कृता॥
तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव!।
ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावतः इति॥

भक्त्या स्वप्राप्तिं च वक्ष्यत्यस्मिन्नेवाध्याये——

भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम्।
सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः॥

तत्र सर्वसाधनैः—

जन्मान्तरसहस्रेषु तपोदानसमाधिभिः।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते॥

इत्यादिवाक्येभ्योऽनेकजन्मसञ्चितैर्जाताया भक्तेरावेशेन ग्रहग्रस्त इव मम भक्तः सर्वाश्रमधर्माणां तल्लिङ्गानां च विस्मरणं करोतीति कैमुतिकन्यायेनाह सर्वेश्वरः। ज्ञाननिष्ठ इति सार्द्धद्वयेन (?)। स्वर्गादिसत्यलोकपर्यन्तसुखकामानां तत्तदाश्रमेषु तल्लिङ्गेषु प्रवृत्तिर्मुक्तैव हृदयशुद्धिपूर्वकतत्त्वविविदिषुणापि यावद्विद्योदयस्तावत्तत्तद्ग्रहणं कर्तव्यमेव यस्तु विरक्तः उक्तलोकप्राप्तिवासनारहितः ज्ञाननिष्ठः ज्ञानतत्त्वः सलिङ्गानाश्रमांस्त्यक्त्वा चरेत् मदितरपदार्थरागत्यागपूर्वकं मज्ज्ञानग्रहगृहीतो यथेच्छं विचरेदेव यदि तदा "स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः" इति मदुक्तविधिनिषेधगोचरः अविधिगोचरः तत्तदाश्रमतल्लिङ्गविध्यविषयः अनपेक्षः सर्वसाधनतत्फलनिरपेक्षः मद्भक्तो वा सलिङ्गानाश्रमांस्त्यक्त्वा चरेदिति किमु वक्तव्यम् द्वितीयो वाशब्दः कैमुतिकन्यायसूचकः आश्रमचिह्नानि

मेखलाजिनदण्डेन ब्रह्मचारीति लक्ष्यते॥
गृहस्थो यज्ञवेदाद्यैर्नखलोमैर्वनाश्रमी॥
त्रिदण्डेन यतिश्चापि लक्षणानि पृथक् पृथक्॥

इत्यादिभिर्वाक्यैरभिहितानि मोक्षधर्मे नारायणीयोपाख्याने

या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये।
तया विना तदाप्नोति नरो नारायणाश्रयः॥ इति

अत्रैवोक्तम्—

न यस्य जन्मकर्मभ्यां न वर्णाश्रमजातिभिः।
सज्जतेऽस्मिन्नहम्भावो देहे वै स हरेः प्रियः॥ इति

सम्यग्ज्ञानवैराग्यभक्तिरसः तदावेशग्रहगृहीतः सर्वतो निवृत्ताभिमानो भवेदिति भावः॥ २८॥

एतदेव विवृणोति। बुध इत्यादिना। बुधोऽपि सिद्धान्ताभिज्ञोऽपि लौकिकव्यवहारे बालकवदनभिज्ञवत् कुशलोऽपि ध्यानादौ निपुणोऽपि जडवत् लौकिके कार्येऽकुशलवत् विद्वान् स निमित्तवक्त्र्यादिरपि उन्मत्तवन्निर्निमित्तप्रियाप्रियवाणिः नैगमोऽपि निगमानुसार्यपि गोचर्यां वृषभाचरणं चरेत्॥ २९॥

वेदवादः कर्मविस्तरो यस्य कर्मकाण्डस्य तत्र रतो न स्यात् पाषण्डी अशिष्टाचरणरतो न स्यात् हेतुकस्तर्कमूलाचरणरतो न स्यात् शुष्कवादविवादे निरर्थकवचनप्रतिवचनसम्वादे कञ्चिदपि पक्षं न समाश्रयेत्॥ ३०॥

किञ्च जनादुपसन्नकारिणो नोद्विजेत तं जनं च नोद्वेजयेत् किन्तु धीरः स्यात् श्रीमद्भगवद्गीतायामपि यस्मान्नोद्विजते लोकः लोकान्नोद्विजते च यः। हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः इति प्रतिवादात् दुरुक्तितोमरान् तितिक्षेत सहेत कञ्चन कमपि नावमन्येत दुरुक्तितोमरैर्नपीडयेत् नारुन्तुदः स्यान्नानृशंसवादी न हीनतः परमभ्याददीत यथास्य वाचा पर उद्विजेत न तां वदेदुशतीं पापलोक्यामिति वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचति रात्र्यहानि परस्य नामर्मसु ते पतन्ति तान् पण्डितो नावसृजेत्परेभ्य इति च महाभारते॥ ३१॥

देहमुद्दिश्य एते गम्भिरुष्टाः मत्पादमूले कुतो न पतन्ति एतेऽत्यन्ततो निकृष्टाः दूरतः कुतो नापगताः अत एते द्वेष्या इत्येवं शरीरनिमित्तं वैरं न कुर्यात् हि यतः भूतेषु देहादिषु आत्मनि जीवात्मसु जातावेकवचनम् नित्यो नित्यानामिति श्रुतेरात्मनां बहुत्वात् एक एव निःसमानातिशयः परमात्मा परमेश्वरः अवस्थितः ननु एकस्मिन् देहेऽवस्थित आत्मा तावैरभिभूयते सर्वदेहेष्ववस्थितः परमात्मापि किन्नापैयुज्यते इत्याशङ्क्याह। यथेन्दुरुदपात्रेष्विति इन्दोः परिच्छिन्नत्वेन सर्वेषूदपात्रेषु स्वरूपतोऽवस्थित्यसम्भवात्प्रतिबिम्बरूपेणेत्यर्थः स यथा सर्वोदपात्राणि प्रकाशयति निस्तापानि च करोति न तद्गतदोषजातगन्धेनापि युज्यते तद्वदित्यर्थः। भूतानि देहरूपाण्यप्येकात्मकानि एकोपादानकानि देहिनामप्येकत्वं चिन्तयन् वैरं नैव कुर्यादिति सम्बन्धः॥ ३२॥

——

भाषा टीका।

प्रति दिन वानप्रस्थों के आश्रम में भिक्षा मांगे ऐसे भिक्षा के अन्न से मोहरहित होने से अन्तःकरण के शुद्ध होने से जल्दी सिद्ध होजाता है॥ २५॥

इस लौकिक पदार्थ को वस्तु रूप न देखे क्योंकि जो प्राकृत दृश्यमान पदार्थ है वे नष्ट होजाते हैं इस लोक पर लोक के लोभ मे आसक्त न होकर विचरा करे॥ २६॥

यह जो आत्मा मे जगत् है मन वाणी प्राण से संयुक्त है यह सब भगवान् माया सङ्कल्प रचित है ऐसा जानकर स्वस्थ होकर इस से डरकर फिर स्मरण न करे॥ २७॥

ज्ञान निष्ठावाला होवे अथवा विरक्त होवे अथवा मेरा

अलब्ध्वा न विषीदेत काले कालेऽशनं क्वचित् ।
लब्ध्वा न हृष्येद्धृतिमानुभयं दैवतन्त्रितम् ॥ ३३ ॥
आहारार्थं समीहेत युक्तं तत्प्राणधारणम् ।
तत्त्वं विमृश्यते तेन तद्विज्ञाय विमुच्यते ॥ ३४ ॥
यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठमुतापरम् ।
तथा वासस्तथा शय्यां प्राप्तं प्राप्तं भजेन्मुनिः ॥ ३५ ॥
शौचमाचमनं स्नानं न तु चोदनया चरेत् ।
अन्यांश्च नियमान् ज्ञानी यथाऽहं लीलयेश्वरः ॥ ३६ ॥
न हि तस्य विकल्पाख्या या च मद्वीक्षया हता ।
आदेहान्तात्क्वचित् ख्यातिस्ततः संपद्यते मया ॥ ३७ ॥
दुःखोदर्केषु कामेषु जातनिर्वेद आत्मवान् ।
अजिज्ञासितमद्धर्मो गुरुं मुनिमुपाव्रजेत् ॥ ३८ ॥
तावत्परिचरेद्भक्तः श्रद्धावाननसूयकः ।
यावद्ब्रह्म विजानीयान्मामेव गुरुमादृतः ॥ ३९ ॥
यस्त्वसंयतषड्वर्गः प्रचण्डेन्द्रियसारथिः ।
ज्ञानवैराग्यरहितस्त्रिदण्डमुपजीवति ॥ ४० ॥

भाषा टीका ।

भक्त होवै सो अनपेक्ष होकर आश्रमों के सब चिन्हों को छोड़कर विधि के परतन्त्र न होकर विचरा करै ॥ २८ ॥

पण्डित होकर बालक सरीकी क्रीडा करै कुशल होकर भी जड़ सरीका विचरै विद्वान् होकर उन्मत्त के बराबर बोलै वैदिक होकर भी गऊ सरीका विचरै ॥ २९ ॥

वेद के बाद विवाद न करै पाखण्डी न होवै हेतुवादी न होवै शुष्कवाद में किसी पक्ष का आश्रय न करै ॥३०॥

धीर रहै मनुष्यों से उद्वेग न पावै आप भी किसी को उद्विग्न न करै खोटे वचनों को सह लेवै किसी का अपमान न करै इस देह के पीछे किसी के साथ पशु सरीका वैर नहीं करै ॥ ३१ ॥

एक ही परमात्मा सब जीवों के भीतर व्याप्त है जैसे कि जल पात्रों में चन्द्रमा दीखता है इस दृष्टि से सब देहों को परमात्मा के साथ देखै तब वैर नहीं करै ॥ ३२ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

दैवतन्त्रितं दैवाधीनं यतः ॥ ३३ ॥

अलं तर्हि भिक्षाप्रयत्नेनापि तत्राऽऽह । आहारमात्रार्थं समीहेतैव यतः तस्य प्राणधारणम् युक्तं सम्यक् कथम् तेन प्राणधारणेन तत्त्वं विचार्यते किं तेनापि तदाह । तद्विज्ञायेति ॥ ३४ ॥

तर्हि किं भिक्षादिकमप्राप्तमेव केनैवमुक्तमित्याह । यदृच्छयेति ॥ ३५ ॥

यथाहमीश्वरो लीलया चरामि तथा ज्ञानी ज्ञाननिष्ठोऽनासक्तः कुर्यान्न तु विधिकिंकरत्वेन तस्य ज्ञाननिष्ठाविरोधादित्यर्थः ३६ ॥

कुतो विधिकिंकरत्वाभावस्तस्य तत्राऽऽह । न हि तस्य विकल्पाख्या भेदप्रतीतिः सर्वाऽस्ति सा सत्यम् या चाऽभीत्साऽपि मद्वीक्षया ज्ञानेन हता ननु न हता पुनर्दृश्यमानत्वात्तत्राऽऽह । आदेहान्तात्क्वचित्कदाचिद्बाधितैव ख्यातिर्भवति ॥ ३७ ॥

तदेवं विरक्तस्य परोक्षज्ञानवतः संन्यासं तद्धर्मांश्चोक्त्वा केवलं वैराग्यवन्तं विविदिषुं प्रत्याह । दुःखोदर्केष्विति । न जिज्ञासितो मद्धर्मो मत्प्राप्तिसाधनं येन सः ॥ ३८ ॥

मामेव मद्रूपत्वेन गुरुं परिचरेत् ततः परमेकदण्डेरेदित्यादिधर्मैर्वर्ततेति भावः ॥ ३९ ॥

अनधिकारिणः संन्यासं निन्दति द्वाभ्याम् । यस्त्विति । प्रचण्डोऽशासक इन्द्रियसारथिर्बुद्धिर्यस्य सः ॥ ४० ॥

———

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

कालेऽलाभकाले । पुनः काले लाभकाले । यतो हेतोः उभयं लाभालाभम् ॥ ३३ ॥

यद्युभयं दैवाधीनं तर्हि समीहतैव यत्नं कुर्यादेव । तेनापि तत्त्वविचारेणापि तत् तत्त्वम् ॥ ३४ ॥

यद्याहारमात्रार्थं चेष्टा तर्हि ॥ ३५ ॥

लीलया स्वेच्छया नतु कर्मवश्यत्वेन । तस्य ज्ञानिनः विधिकिङ्करत्वेन सह ज्ञाननिष्ठाविरोधात् ॥ ३६ ॥

बाधितैव स्वकार्यं कर्तुमसमर्थैव प्रतीतिर्भवति दग्धरज्जुवत् । मया संपद्यते सायुज्याख्यां मत्तुल्यसम्पत्तिं प्राप्नोतीत्यर्थः ॥ ३७ ॥

परोक्षज्ञानवतः शास्त्रीयज्ञानवतः । तद्धर्मान् सन्यासधर्मान् । केवलवैराग्यवन्तं परोक्षज्ञानशून्यविषयार्थधर्ममात्रवन्तम् । अत एव विविदिषुं शास्त्रद्वारा ज्ञातुमिच्छुम् । आत्मवान् धीरः । न जिज्ञासितो न विचारितः । जिज्ञासापदस्य स्वाश्रयसमवायसम्बन्धेन विचारे लक्षणा । इच्छाविरहे गुरुप्रपत्तेर्नैरर्थक्यात् ॥ ३८ ॥

ततः परं ब्रह्मज्ञानानन्तरम् ॥ ३९ ॥

अनधिकारिणोऽविरक्तस्य । यदित्वति युग्मकम् । त्रिदण्डमुपजीवति त्रिदण्डोपलक्षितवाग्मिकन्यासं प्रदर्श्य जीविकाम् करोतीत्यर्थः ॥ ४० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

चोदनया काम्यकर्मचोदनया नाचरेत् यथाहं लीलयेश्वरः लीलया कुर्वन्नहमीश्वरो यथा न काम्यकर्म चोदनया करोमि तद्वदिति काम्यचोनावश्यत्वाभावे दृष्टान्तः नतु लीलाचरत्वे ॥ ३६ ॥

विकल्पाख्या ब्राह्मणोऽहमित्यादिदेहविकल्पाभिमानः आदेहान्तं शरीरादिवैशिष्ट्यं देहपातावधि ॥ ३७ ॥

सन्यासिनोऽपि ज्ञातव्यान्तरमाहित ज्ञानाधिकसन्यासिनोऽप्यधिकमाह । विजिज्ञासितमद्धर्मं इति ॥ ३८ ३९ ॥

समनस्कानीन्द्रियाणि षड्वर्गः ॥ ४० ॥ ४१ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

काले भक्ष्यति । कालेऽशनायादशायामशनमलब्ध्वा धृतिमान् विषीदेन न विषादं कुर्यात् कचिदशनं लब्ध्वा न हृष्येत कुतः यतस्तदुभयं लाभोऽलाभश्चत्युभयं दैवयन्त्रितं दैवाधीनम् ॥ ३३ ॥

अलं तर्हि भिक्षाप्रयासेनापि तत्राह । आहारार्थमिति । समीहेत यतेत यतस्तस्य प्राणधारणं युक्तं किं तस्य प्रयोजनं तत्राह । तत्त्वमिति । येन प्राणधारणेन तत्त्वं विमृश्यते तत्त्वविमर्शनार्थं प्राणधारणमित्यर्थः तस्यापि किम्प्रयोजनमित्यत आह । यदिति । यत् यस्माद्विज्ञायैव विमुच्यते तत्त्वज्ञात्वा विमुच्यते तस्मात्तत्त्वविमर्शनात्मकज्ञानोपयुक्तप्राणधारणार्थमाहारं समीहेतेत्यर्थः । तत्त्वमत्र चिदचिदीश्वराणां यथावस्थिताकारः ॥ ३४ ॥

समीहामन्तरेणापि कदाचिद्यदृच्छया दैवादुपपन्नं प्राप्तमन्नं मेध्यं श्रेष्ठमथापकृष्टं वा तद्वदाच्छादनं तथा वासो वस्त्रं शय्यां च यदृच्छया प्राप्तं प्राप्तं च भजेत् ॥ ३५ ॥

स्वकर्मविधिवशाचरत्वमेव सिद्धावलोकितन्यायेन प्रपञ्चयति । शौचमिति । लीलया कुर्वन्नहमीश्वरो यथा न चोदनया करोमि तथा ज्ञानी च शौचादीनन्यांश्च नियमांश्चोदनया नाचरेत्किन्तु कैङ्कर्यस्य स्वरूपानुगुणत्वबुद्ध्येति भावः यथेश्वरस्य परिपूर्णस्य लीलाद्यनुरूपा तथाश्रितस्य कैङ्कर्यकरणं स्वरूपानुरूपमित्यभिप्रायः ॥ ३६ ॥

भूतान्यैकात्म्यकानि च इत्यनेनाब्रह्मात्मकस्वतन्त्रवस्तुभेदभ्रमो न कार्य इति सूचितम् अथ कथमनादिकालानुवृत्तः स निवर्तेत कदा वा निःशेषनिवृत्तिरित्यत आह । नहीति । तस्योक्तविधाचारयुक्तस्य या विकल्पाख्या विकल्पो भेदः आख्या ख्यातिः प्रतीतिरिति यावत् अब्रह्मात्मकस्वतन्त्रवस्तुभेदभ्रान्तिः सा नहि कुत इत्यत आह सेति । सा मद्वासना मदेकशाश्वत् मदात्मकत्वबुद्ध्या हता भवति यद्यप्येवं देहान्तात्कचित्कदाचित्सा ख्यातिर्भवेत्तथापि ततः देहान्ते मल्लीलयैव साधनभूतया मया संपद्यते संयुक्तो भवति मां प्राप्नोतीत्यर्थः । देहान्ते निरवशेषं ख्यातिनिवर्तनं जीवद्दशायां कदाचित्क्वापि न मत्प्राप्तिविरोधिनीति भावः । यद्वा मया उपायभूतेन सम्पद्यते प्राप्यते स्वेन रूपेणाभिनिष्पन्नो भवति परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत इति श्रुतेः ॥ ३७ ॥

तदेवं निष्पन्नोपायस्यादेहान्तादनुवर्तनीयावृत्तिरभिहिता अथ स्वधर्मनिष्ठस्य उपायोपेयादिजिज्ञासोः कृत्यमाह । दुःखोदर्केष्विति दुःखोदर्केषु दुःखोत्तरफलेषु कामेषु जातो निर्वेदः अतीव हेयताध्यवसायो यस्य सः अत्र हेतुः दुःखोदर्केष्विति विशेषणम् आत्मवान् कामानामन्ततोऽनर्थावहत्वबुद्धिमान् यद्वा विधिवत्सद्गुरूपसत्त्युपयुक्तचित्तसमाधानयुक्तः न जिज्ञासितो मद्धर्मो मत्प्राप्तिसाधनधर्मो येन सः मुनिं मननशीलं ब्रह्मनिष्ठं गुरुमुपव्रजेदभिगच्छेत् अत्र परीक्ष्य लोकान् कर्मचितानित्यादिश्रुत्यर्थः प्रत्यभिज्ञाप्यते ॥ ३८ ॥

तावदिति । ब्रह्मशब्देन तत्प्राप्तिसाधनादिस्वरूपमपि विवक्षितं भक्त्येति गुरुभक्तिर्विवक्षिता अनसूयक इत्यनेन सर्वाङ्गप्रयुक्तदोषाविष्कारराहित्यं श्रद्धावानित्यनेन गुरूपदिष्टार्थास्तिकत्वं विवक्षितं मामेव गुरुं परिचरेदिति सम्बन्धः तत्रादृतः आदरयुक्तः एवकारेण कथं चिदपि भेददृष्टिव्युदासः गुरुं मामित्यनेन विवक्षितं सामानाधिकरण्यं न तावच्छरीरात्मभावनिबन्धनं भगवदात्मकत्वस्य सर्वात्मसाधारणत्वेन तस्य गुरावेव विशिष्योपदेशायोगात् नाप्यवतारत्वनिबन्धनम् आचार्यस्यापि कञ्चित्प्रति शिष्यत्वात्किञ्चिच्छिष्यस्यापि कांश्चित्प्रत्याचार्यत्वात् स्वस्वशिष्यान्प्रति ईश्वरावतारत्वेऽपि स्वस्य स्वाचार्यं प्रति तत्त्वासम्भवात् नहि रामकृष्णादेः सर्वान्प्रति ईश्वरत्ववत्कं चित्प्रत्याचार्यस्य सर्वान्प्रतीश्वरत्वं युक्तं तस्मादेवं विधा अभेदोपदेशा मनो ब्रह्मेत्यादिवदुद्दृश्युपासनोपदेशपराः ॥ ३९ ॥

इत्थं सदाचार्यपरिचर्यालब्धवैराग्यभगवद्भक्तिभ्यां भवितव्यमन्यथा केवलाश्रमाश्रमधर्मा निष्फला इत्यभिप्रेत्याह । यस्त्विति । असंयतषड्वर्गः अनियमितषडिन्द्रियवर्गः प्रचण्डो विषयेष्वत्यासक्तः इन्द्रियसारथिर्बुद्धिर्यस्य सः ज्ञानं शास्त्रजन्यं विज्ञानं

सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा ।
अविपक्ककषायोऽस्मादमुष्माच्च विहीयते ॥ ४१ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

दैवतन्त्रितं दैवाधीनं यतः ॥ ३३ ॥

तदपि भिक्षायाः स्वतोऽप्राप्तौ सत्यां तदर्थं यतेतैवेत्याह । आहारार्थमिति यतः प्राणधारणं युक्तमुचितं यतस्तेनेति तत्त्वम् ॥ ३४ ॥

यदृच्छयोपस्थितं श्रेष्ठं स्वादु अपरं विरसं वा मुनिरिति तत्र तत्र वचनेनाभिनन्दनं प्रत्याख्यानं वा न कुर्यादिति भावः ॥ ३५ ॥

चोदनया नाचरेत् विधिकैङ्कर्याभावात् किंतु पूर्वाभ्यासेन स्वेच्छयैव ॥ ३६ ॥

तस्य ज्ञानपरिपाक एव विधिकैङ्कर्याभावे कारणमित्याह । नहीति । विकल्पस्य भेदस्य ख्यातिः प्रथनं तस्य नास्ति तत्त्वात्मैवेदं सर्वमिति श्रवणात् तस्य बाधैव नास्ति मनसा स्वप्नस्येव तत्राह । या चासीत् सापि मन्मनीषया मदपरोक्षानुभवेन हता हतप्राया ननु हतप्राया न तत्राह क्वचिदा देहान्तात् बाधितैव ख्यातिर्दृश्यते ॥ ३७ ॥

सर्वविवेकवुधः कृत्यमुक्त्वा विविदिषोः कृत्यमाह । दुःखोदर्केष्विति । न विचारितो मद्धर्मः परमात्मतत्त्वं येन सः ॥ ३८ ॥

मामेव गुरुं मद्रूपम् ॥ ३९ ॥

दुराचारं संन्यासिनं निन्दति द्वाभ्याम् । यस्त्विति प्रचण्डोऽशान्तः इन्द्रियसारथिर्बुद्धिर्यस्य सः त्रिदण्डमुपजीवति जीविकामेव संन्यासं पर्यवस्यतीत्यर्थः ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तदुपमयं दैवतन्त्रितं दैवप्रवर्तितम् ॥ ३३ ॥

मुक्त्यर्थं तत्त्वचिन्तनं तदर्थं प्राणधारणं तदर्थमाहारस्तदर्थो यत्नः कर्तव्य इत्याह । आहारार्थमिति ॥ ३४ ॥

यत्नतो यदृच्छातो वा लब्धेऽन्ने स्वाद्वस्वादुबुद्धिर्न कार्येत्याह यदृच्छयेति । उक्तार्थमन्वयतोऽपि दर्शयति । तथेति ॥ ३५ ॥

ईश्वरोऽहं यथा लीलयैव चरामि तथा ज्ञानी शौचादिकं कुर्यादेव नतु चोदनया विधिकिंकरत्वेन चरेत् ॥ ३६ ॥

तत्र हेतुमाह । नहीति । हि हेतौ यतः या प्रसिद्धा विधिकिंकरत्वापादिका अहं स्वाधीनास्मि नित्यवृत्तितयान् विहितं यत्करिष्यामि तत्फलं प्राप्स्यामि परमेश्वरो देवताविशेषः कर्तृभिन्नः कर्माध्यक्षभूतो न सर्वात्मान्योऽसावन्योऽहमस्मीति श्रुतेः एवंभूता अनाद्यविद्याविकृतजीवसम्मता विकल्पख्यातिभेदप्रतीतिः सा तस्य ज्ञानिनः एतदात्म्यमिदं सर्वं किं कर्मणा किं प्रजया ब्रह्मविदाप्नोति परमित्यादिश्रुत्यनुवर्तिनः अंशत्वेन भिन्नमपि यत्स्वात्मनं स्वाधिनिरपेक्षाविर्भावितपदत्वपादमात्रेन तदभिन्नतया मन्यमानस्य मदीयया विश्वभिन्नाभिन्नस्य मम सम्बन्धिज्ञानेन हता ननु पुनः कदाचित्स्यादित्यत्राह । आदेहान्तात्क्वचिदिति न स्यात् ननु देहान्तानन्तरं कदाचित्स्यादित्यत्राह । ततः देहान्तानन्तरं मया सम्पद्यते मां प्राप्नोति ॥ ३७ ॥

ज्ञानभक्तिसम्पन्नस्य विरक्तस्य कृत्यमुक्त्वेदानीं केवलविरक्तस्य कृत्यमाह । दुःखोदर्केष्विति द्वाभ्याम् ॥ ३८ ॥

मामेव मन्मूर्तिमेव गुरुम् ॥ ३९ ॥

जीविकार्थं दण्डधारणं निन्दति । यस्त्विति द्वाभ्याम् । प्रचण्डः दुर्निग्रहः इन्द्रियसारथिः इन्द्रियाश्वप्रग्रहवान् मनोलक्षणः सूतो यस्य सः ॥ ४० ॥

---

भाषा टीका ।

कभी कभी वक्त पर भोजन न मिलेतो विषाद न करै मिलजावे तो हर्ष न करै धैर्य से समुझे कि दोनों परमात्मा के आधीन हैं ॥ ३३ ॥

आहारके वास्ते चेष्टाकरे क्योंकि उससे प्राणका धारण करना युक्तहै प्राण धारण से तत्त्वज्ञका विचार होता है उसके ज्ञानसे मुक्त होजाताहै ॥ ३४ ॥

दैव इच्छासे स्वादु अथवा अस्वादु जैसा अन्न मिलजावे उसकाही भोजन करलेवे तैसे वस्त्रमे तैसे ही शय्या में जैसा मिलजावे तैसा वर्तलेना मुनिको युक्तहै ॥ ३५ ॥

शुचिता आचमन स्नान इनको विधि प्रेरणासे न करै किन्तु अपना कर्तव्यही समुझकर करै अन्य नियमों को भी ज्ञानी वैसाही करै जैसे कि मैं ईश्वर लीलासे करताहूं । ३६ ।

उस सन्यासीकी कोई विषमदृष्टि नहीं है जो रही सो मेरी कृपा दृष्टि से नष्ट होगई है देहरहने तक कभी विषम बुद्धि रहतीहै फिरतो मेरे धामको प्राप्त होजाता है ॥ ३७ ॥

दुःखफल वाले कामों में से वैराग्यको प्राप्तहोवै और वह आत्मज्ञानी होवे मेरे धर्मों को न जानता हो तो मेरे जाननेवाले मुनि गुरुका आश्रयण करै ॥ ३८ ॥

जबतक मेरे ब्रह्म स्वरूपको न जान लेवे तब पर्यंत आदर पूर्वक मेरी दृष्टिसे श्रद्धावान् होकर निंदा न करके भक्त होकर श्रीगुरुकी परिचर्या करै ॥ ३९ ॥

जिसने काम क्रोधादिक छै वर्गको नहीं जीताहै इन्द्रिय और बुद्धि जिसके प्रबल हो रहे हैं ज्ञान वैराग्य जिसके नहीं है ऐसा होकर जो त्रिदंड ग्रहण करता है ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सुरान् यष्टव्यान् देवानात्मानं च स्वात्मानमात्मस्थं मां च निह्नुते प्रतारयति निह्नुवफलमाह । अस्मादिति ॥ ४१ ॥

---

भिक्षोर्धर्मः शमोऽहिंसा तप ईक्षा वनौकसः।
गृहिणो भूतरक्षेज्या द्विजस्याचार्यसेवनम् ॥ ४२ ॥
ब्रह्मचर्यं तपः शौचं सन्तोषो भूतसौहृदम्।
[1]गृहस्थस्याप्यृतौ गन्तुः सर्वेषां मदुपासनम् ॥ ४३ ॥
इति मां यः स्वधर्मेण भजेन्नित्यमनन्यभाक्।
सर्वभूतेषु मद्भावो मद्भक्तिं विन्दते दृढाम् ॥ ४४ ॥
भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम्।
सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः ॥ ४५ ॥
इति स्वधर्मनिर्णिक्तसत्त्वो निर्ज्ञातमद्गतिः।
ज्ञानविज्ञानसंपन्नो न [2]चिरात्समुपैति माम् ॥ ४६ ॥
वर्णाश्रमवतां धर्म एष आचारलक्षणः।
स एव मद्भक्तियुतो निःश्रेयसकरः परः ॥ ४७ ॥
एतत्तेऽभिहितं साधो! भवान् पृच्छति यच्च माम्।
यथा स्वधर्मसंयुक्तो भक्तो मां समियात्परम् ॥ ४८ ॥

इतिश्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे श्रीभगवदुद्धवसम्वादे
अष्टादशोऽध्यायः ॥ १८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

चतुर्णां प्रधानधर्मानाह। भिक्षोरिति ॥ ४२ ॥

अन्यधर्मान् कांश्चिद्गृहस्थेऽप्यतिदिशति। ब्रह्मचर्यमिति तपः स्वधर्मः शौचं रागादिराहित्यं च तस्य ब्रह्मचर्यप्रकारमाह। ऋतौ गन्तुरिति ॥ ४३ ॥

एवंभूतवर्णाश्रमधर्मफलमाह। इति मामिति। दृढां मद्भक्तिं विन्दते ॥ ४४ ॥

ततः किमत आह। भक्त्येति। महेश्वरत्वे हेतुः सर्वोत्पत्त्यप्ययौ यस्मात् अत एव तत्कारणम् मा मां ब्रह्मरूपं वैकुण्ठनिवासिनम् यद्वा ब्रह्मणो वेदस्य कारणं मामुपयाति सामीप्येन प्राप्नोति ॥ ४५ ॥

ततश्चासौ मुक्त एवेत्याह। इत्येवंभूतेन स्वधर्मेण निर्णिक्तं शुद्धं सत्त्वं यस्य सः अत एव निर्ज्ञाता मम गतिरैश्वर्यं येन सः ॥ ४६ ॥

उक्तमर्थं संक्षिप्याह। स एष आचारलक्षणः पितृलोकप्रापकः स एव मद्भक्तियुतो मदर्पणेन कृतः ॥ ४७ ॥

प्रकरणार्थमुपसंहरति। एतच्च तेऽभिहितम् यथा भक्तो भूत्वा मां परं समाप्नुयादिति ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

भोगवैभवप्राकट्याभावादस्माल्लोकात्तथाविद्यावच्छिन्नत्वेन प्राप्तनिजधर्मातिक्रमात्, अमुत्र निरयप्राप्तेः परस्माच्च बिभेति ॥ ४१ ॥

ईक्षा आत्मानात्मविवेकः। इज्या यज्ञानुष्ठानम्। द्विजस्य ब्रह्मचारिणः ॥ ४२ ॥

अन्यधर्मान् ब्रह्मचर्यादिधर्मान्। उपदिष्टस्यान्यत्र गमनमनिषेधः तस्य गृहस्थस्य ॥ ४३

मां स्वधर्मेण भजेत् मत्प्रीत्यर्थं स्वधर्ममाचरेत्। अत

[1] गृहस्थस्याप्रतो गन्तुः इति विज० पाठः [2] चिरक्तः इति षड्भावर विज० पाठः।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी

एवानन्यभाक् अन्यत् फलं न भजतीति तथा । मद्भावः मन्तर्यामिभावकः । इदां प्रेमलक्षणाम् ॥ ४४ ॥

ततस्तादृशभक्तिप्राप्तेः अत एव सर्वोत्परत्वव्यवस्थापकेषु तत्कारणम् सर्वकारणम् । पूर्वार्धे कारणशब्दात् पूर्वं तत्पदाध्याहारः ब्रह्मशब्दस्य च सविशेषं व्याख्यातो बहुति ॥ ४५ ॥

ततश्च सात्त्विकप्राप्त्यनन्तरम् । एवम्भूतेन मत्सन्तोषैकप्रयोजनकेन । अत एव शुद्धसत्त्वेन । मां निर्विशेषब्रह्माख्यम् ॥ ४६ ॥

अत्र प्राप्तेरुपासनस्तादृशधर्मस्य सर्वथा प्राप्तिफलकत्वमभिव्यनक्ति ॥ ४७ ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे अष्टादशोऽध्यायः ॥ १८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

द्विजस्य उपनीतस्य ब्रह्मचारिणः ब्रह्मचर्यमिति ॥ ४२ ॥

श्रुतौ गन्तुः गृहस्थस्यापि ब्रह्मचर्यादिकं सम्भवति एवं सर्वेषामाश्रमिणां मदुपासनं स्यादित्यर्थः ॥ ४३—४५ ॥

ज्ञानं शास्त्रजन्यं विज्ञानं योगाभ्यासजन्यम् ॥ ४६ ॥

पृष्टार्थप्रतिवचनं निगमयति । वर्णाश्रमेति । केवलो वर्णाश्रमधर्मः परिमितस्वर्गादिफलकः स एव भगवद्भक्त्यङ्गस्थितो मोक्षाय भवतीत्यर्थः ॥ ४७ ॥ ॥ ४८ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये अष्टादशोऽध्यायः ॥ १८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ज्ञानरहितस्य गत्यभावं वदन्निन्दति । सवा इति । स पूर्वश्लोकोक्तविधः सुरानिति पाठे इज्यान् देवान् आत्मानं निन्हुते मच्छेषज्ञानरहितत्वादिति भावः—

> योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
> किन्तेन न कृतं पापं चौरेणात्मापहारिणा ॥

इत्युक्तत्वात् आत्मस्थं मां च निन्हुते प्रतारयति स्वतन्त्राभिमानात् अत एवायं धर्महा सर्वेषामाश्रमिणां स्वस्वाश्रमधर्मानुगृहीतभगवद्भक्तिलक्षणो हि धर्मो विहितस्तदभावादयं धर्महा अत एव चाविपक्वकषायः । "धर्मेण पापमपनुदतीति कषायपक्तिः कर्माणि" त्याद्युक्तरीत्या अनभिसंहितफलवर्णाश्रमधर्मैर्हि पापापनुत्ति स्तदभावादविपक्वकषायः कषायवद्दुर्मोचनीयत्वात्पापमिह कषायशब्दविवक्षितम् अत एव चास्माद्मुष्माच्च लोकाद्विहीयते भ्रष्टो भवति नोभयत्र सुखमश्नातीत्यर्थः ॥ ४१ ॥

चतुर्णामाश्रमिणां प्रधानधर्मानाह । भिक्षोरिति । तुर्याश्रमिणः शम इन्द्रियजयः अहिंसाऽभूतद्रोहचिन्ता वनौकसो वनाश्रमिणः तपः शास्त्रीयकायक्लेशः ईक्षा आत्मपरमात्मयाथात्म्यावमर्शो धर्मः गृहिणो भूतरक्षा इज्या पञ्चमहायज्ञाश्च धर्मः द्विजस्योपनीतस्य ब्रह्मचारिण इत्यर्थः आचार्यसेवनं धर्मः ॥४२॥

आश्रमान्तरधर्मान् काँश्चिद्गृहस्थस्यापि अतिदिशति । ब्रह्मचर्यमिति । श्रुतौ गन्तुर्गृहस्थस्यापि ब्रह्मचर्यं सम्भवतीति तदपवादमाह । एषोऽपि प्रधानं सर्वेषां धर्ममाह । सर्वेषां मदुपासनमिति धर्म इत्यनुषज्यते ॥ ४३ ॥

सङ्क्षेपतो धर्मान् विशेषसामान्यरूपेणोक्त्वा तत्फलमाह । इतीति । नान्यं भजतीत्यनन्यभाक् देवतान्तरभक्तिरहितः यद्वा नान्यस्मै प्रयोजनाय भजतीत्यनन्यभागनन्यप्रयोजन इत्यर्थः । सर्वभूतेषु मद्भावः मदात्मकत्वबुद्धिमान् च इत्थं स्वधर्मेण मां भजन्सोऽचिरात्क्षिप्रमेव मद्भक्तिं विन्दते लभते ॥ ४४ ॥

भक्तेः फलमाह द्वाभ्याम् । भक्त्येति । हे उद्धव ! महेश्वरं महेश्वरत्वे हेतुः सर्वोत्परत्वं सर्वस्योत्परत्वयो यस्मात्तमत एव सर्वकारणं परब्रह्मभूतं मामुपयाति प्राप्नोति ब्रह्मशब्देन कारणत्वोपयुक्तसार्वज्ञ्यसर्वशक्तित्वादिकल्याणगुणगणबृहत्त्वं च विवक्षितम् ॥ ४५ ॥

इत्येवम्भूतेन स्ववर्णाश्रमधर्मेण निर्णिक्तं शुद्धं सत्त्वं यस्य सः विज्ञाता मद्विभूतिप्रकारो मद्याथात्म्यं येन सः ज्ञानं शास्त्रजन्यं विज्ञानमुपासनात्मकं च एवं विधः स मामुपैति वर्णाश्रमधर्माद्यनुगृहीतयानपायिन्या भक्त्या मामुपैतीति श्लोकद्वयविवक्षितोऽर्थः ॥ ४६ ॥

पृष्टार्थप्रतिवचनं निगमयति । वर्णाश्रमवतामिति द्वाभ्यामेव आचारलक्षणः आचारात्मको धर्मो निरूपित इति शेषः स एव धर्मः मद्भक्तियुक्तश्चेत् योगश्चाङ्गाङ्गिभावः निःश्रेयसकरः मुक्तिसाधनभूतः पर उत्कृष्टः नातः पर उपायो विद्यत इत्यर्थः ॥ ४७ ॥

हे साधो ! भवान् यन्मां पृच्छति । किं तत् यथा स्वधर्मसंयुक्तो भक्तो मां परं प्रकृतिपुरुषविलक्षणं समियादित्येतत्ते तुभ्यमभिहितमिति सम्बन्धः ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् अष्टादशोऽध्यायः ॥ १८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सुरानात्मस्थं स्वान्तर्यामिणमात्मानं प्रभुं मां च निन्हुते निराकरोति सोऽस्माल्लोकादमुष्मात् स्वर्गादेश्च विहीयते अधः पततीत्यर्थः ॥ ४१ ॥

यत्यादीनां विशेषतः कर्तव्यधर्ममाह । भिक्षोरिति । यतेः शमाहिंसे धर्मौ वानप्रस्थानां तप ईक्षा आलोचनं च धर्मः गृहस्थानामभूताविना प्राणिरक्षेज्या यागश्च द्विजस्य ब्रह्मचारिणः आचार्यसेवनं गुरुकुलवासः ॥ ४२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शुद्धस्वरूपाप्रतः आद्यौ गन्तुरयं गन्तुकत्वादेरिति शेषः ॥४३॥

एतैर्धर्मैः साध्यमाह । इतीति ॥ ४४ ॥

संप्राप्तौ भक्तिरेव प्रयोजिकेत्याह । भक्त्येति ॥ ४५ ॥

अविहितधर्मेण निर्णिक्तं धौतं सत्त्वमन्तःकरणं यस्य स तथा निर्णीतत्वेन ज्ञानमूर्तिः ॥ ४६ ॥

भक्तिरेव मम परमप्रीतिसाधनं वर्णादिविहितधर्मोऽपि भक्तिसंवलित एवेति भावेनाह । वर्णेति ॥ ४७ ॥

उपसंहरति । एतदिति । चशब्द एवार्थे यथा मां समियात् तथैवाभिहितम् ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मां स्वधर्मेण भजन् मत्प्रीत्यर्थं स्वधर्ममाचरन् अनन्यभाक् मत्तोऽन्यार्थमित्यर्थः । ननु स्वधर्मेण देवादीनां यजनात्कथं त्वत्प्रीतिः स्यात् तत्राह । सर्वभूतेषु च ममैवान्तर्यामित्वेन स्थितस्य भावो भावना यस्य सः ॥ ४४ ॥ ४५ ॥

सा च मत्प्राप्तिर्मद्भक्त्युदयानुक्रमेण मज्ज्ञानपूर्विकैव भवतीत्युपसंहरति । इति स्वधर्मेति । गम्यते ज्ञायते अनया गतिर्भक्तिः निःशेषेण ज्ञाता तत्त्वतोऽनुभूता गतिर्येन अत एव ज्ञानविज्ञानसंपन्नः मत्स्वरूपरूपगुणलीलादीनां परोक्षापरोक्षानुभवः ब्रह्म ब्रह्म च युञ्चनुभवतः तत्तत्क्रममाह इति निर्णीतमतिः मत्पादाधीतमद्वार्दिष्टज्ञानशास्त्रः मां निर्विशेषब्रह्माख्यम् ॥ ४६ ॥

तस्य च स्वधर्मस्य सर्वत्र भक्तेरेव बलमित्याह । वर्णेति ॥ ४७ ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सुरान् यष्टव्यान् देवान् स्वात्मानम् आत्मरूपं मां च निह्नुते प्रतारयति । निह्नवफलमाह । मत्स्मादिति ॥ ४१ ॥

चतुर्णां प्रधानस्वधर्मानाह । भिक्षोरिति ॥ ४२ ॥

अन्यधर्मान् कांश्चिद्गृहस्थस्यातिदिशति । ब्रह्मचर्यमिति । शौचं रागद्वेषादिराहित्यं तस्य ब्रह्मचर्यप्रकारमाह । ऋताविति गन्तुरिति । किञ्च मदुपासनं सर्वेषां वर्णाश्रमधर्माणां प्राणप्रदत्वादावश्यकं येन विना ते सर्वे विफलाः स्युर्यदुक्तं मुखबाहूरुपादेभ्य इत्यत्र स्थानाद्भ्रष्टाः पतन्त्यध इति ॥ ४३ ॥

इत्येवंप्रकारेण मदुपासनस्यावश्यकत्वातुत्कर्षं निश्चित्य मदुपासनप्रधानेन स्वधर्मेण मां भजन् अनन्यभाक् सन् मद्भक्तिं

शान्तभक्तिं विन्दते ननु स्वधर्मेण देवपित्रादीनां यजनात् कथमनन्यभाक्त्वं तत्राह । सर्वभूतेषु ममैवान्तर्यामित्वेन भावो भावना यस्य सः ॥ ४४ ॥

ततश्च तया भक्त्या कश्चित्सर्वलोकमहेश्वरं मां प्राप्नोति स्वतुल्यैश्वर्यं यदाऽहं तस्मै सार्ष्टिलक्षणां मुक्तिं ददामीति भावः । कश्चित्सर्वोत्पत्त्यप्ययं मां प्राप्नोति तदभिप्रेतयोगसिद्धिज्ञानानन्दाद्युत्पत्तिं संसारात्ययं च तस्मै तावदहं ददामीति भावः । कश्चिन्मां ब्रह्मेति तस्मै निर्वाणमुक्तिं ददामीति भावः ॥ ४५ ॥

उपसंहरति । इतीति ॥ ४६ ॥

प्रधानीभूतां भक्तिमुक्त्वा गुणीभूतां भक्तिमाह । वर्णाश्रमवतामिति । मद्भक्तियुतः मदर्पणेन कृत एव स निःश्रेयसकरः निर्वाणमोक्षप्रद इत्यन्वयः ॥ ४७-४८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

एकादशेऽष्टादशोऽयं सङ्गतः सङ्गतः सताम् ॥ १८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निह्नुते प्रतारयति गृहाश्रमधर्मत्यागेनेति शेषः ॥ ४१ ॥

शमो भक्तिपुता ॥ ४२ ॥

न केवलं गृहस्थस्य भूतरक्षेज्यामात्रं धर्मः तत्र मनिव्रताः परिव्राजकस्येत्याह । ब्रह्मचर्यमिति । अत्र ब्रह्मचर्यस्य सङ्कोचं दर्शयति । ऋताविति गन्तुरिति ॥ ४३ ॥

उक्तवर्णाश्रमधर्माणां फलमाह । इति मामिति । दृढामविचलां भक्तिमन्तःकरणशुद्धिपूर्वकज्ञानद्वारेति शेषः ॥ ४४ ॥

भक्तेः फलमाह । भक्त्येति । सर्वस्योत्पत्त्ययौ यस्मात्तमत एव कारणं सर्वहेतुं मा मां ब्रह्मोपयाति कार्यकारणप्रकृतिबन्धविमुक्तः शुद्धगुणस्वरूपं मां प्राप्नोतीत्यर्थः—

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ! ।

मामुपेत्य तु कौन्तेय ! पुनर्जन्म न विद्यते ।

इति श्रीमुखवचनान्तराच्च ॥ ४५ ॥

ननु त्वद्भक्त्या मुक्तिर्भवतु तावत्सा भक्तिर्वर्णाश्रमधर्माचरणमात्रेण त्वद्गुणशक्तिस्वरूपादिकमजानतः कथं स्यादत आह । इतीति । इत्थंभूतेन पूर्वोक्तेन स्वधर्मेण वर्णाश्रमधर्मेणानुष्ठितेन निर्णिक्तसत्त्वः शुद्धान्तःकरणः ततो विज्ञानमूर्तिः विज्ञानमद्गुणशक्तिस्वरूपादियाथात्म्यः ततो ज्ञानविज्ञानाभ्यां सम्पन्नो भवति तदनन्तरं परां भक्तिं प्राप्नोति ततोऽचिरादचिराद् मां समुपैति इमं साधनक्रममुत्तराध्याये स्पष्टं वक्ष्यति ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावित इति ॥ ४६ ॥

संक्षिप्याह । वर्णाश्रमवतामिति । स्वाचारलक्षणाः स्वाश्रमधर्मतया लक्ष्यमाणाः केवलाश्रमिणां लोकाद् इत्यर्थः । केवलाश्रमिणां लोकाः अमूर्तं तमसः भयामित्यत्रोपपादिताः स एव मद्भक्तियुतः मत्कृपावर्णकीर्तनादियुतः परायां मद्भक्त्या उत्पादकतयान्वितः परो धर्मो भवति स वै पुंसां परो धर्मो यतो भक्तिरधोक्षज इति प्रथमस्कन्धेऽप्युक्तत्वात परत्वे हेतुः निःश्रेयसकरः परः ज्ञानभक्तिद्वारेण मोक्षकर इत्यर्थः ॥ ४७ ॥

अध्यायद्वयार्थमुपसंहरति । एतदिति । यथा स्वधर्मसंयुक्तः भक्तो

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भूत्वा परं ब्रह्म मां समियात् सम्यक् इत्यात्माप्नुयात् एतत्तेऽभिहितमित्यन्वयः ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

अष्टादशाध्यायार्थप्रकाशः ॥ १८ ॥

———

भाषा टीका ।

यह तो धर्म घाती है सो सब और देवतों को और अपने में रहने वाले मेरेको ठगता है उसके अन्तःवासना शुद्ध न होने से इस लोकमें तथा परलोक से भी भ्रष्ट हो जाताहै ॥ ४१ ॥

शमता और अहिंसा ये सन्यासी के धर्म हैं तपस्या और तत्त्वमय विवेक ए वानप्रस्थ के धर्म हैं भूतोंकी रक्षा करना और देवयज्ञादिक ये गृहस्थ के धर्म हैं ॥ ४२ ॥

ब्रह्मचर्य तप मनकी शुद्धि सन्तोष भूतोंसे मित्रता ये भी गृहस्थ के धर्म हैं गृहस्थका ब्रह्मचर्य स्त्रीके ऋतुकाल मात्र गमन के नियम से होजाता है और मेरा उपासना करनातो सबका धर्म है ॥ ४३ ॥

जो दूसरे देवतादिक को छोड़कर अपने धर्मसे नित्य मेरे को भजताहै सब प्राणियों में अन्तर्यामी मेरी बुद्धिरखता है व पुरुष थोड़े कालमें मेरी भक्तिको प्राप्त होजाता है ॥ ४४ ॥

हे उद्धव ! जो निश्चल भक्तिसे सर्व लोकों के महेश्वर सबके उत्पत्ति स्थिति संहार कर्ता ब्रह्मरूप की उपासना करता है वह मेरेको प्राप्त होजाताहै ॥ ४५ ॥

इस प्रकारसे स्वधर्मके करने से शुद्ध होकर मेरी गति को जानने वाला ज्ञान विज्ञान से संयुक्त पुरुष थोड़े काल मे मेरेको प्राप्त होताहै ॥ ४६ ॥

यह जो आचार नामक वर्णाश्रम धर्म है वह यदि मेरी भक्तियुक्त होवेतो मोक्षका उपाय होजाता है ॥ ४७ ॥

हे साधु ! उद्धवजी यह बात सब मैंने तुमारे आगे कहा जोकि तुमने मेरेसे पूछा है जैसे स्वधर्म से युक्त पुरुष प ब्रह्म मेरेको प्राप्त होजाता है ॥ ४८ ॥

इति श्रीमद्भागवत एकादशस्कन्ध अष्टादश अध्याय की

श्री वृन्दावनस्थ पं० बलभद्राचार्यकृत

भाषाटीका समाप्त ॥ १८ ॥

———

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे अष्टादशोऽध्यायः ॥ १८ ॥

———:०:———

# अथ एकोनविंशोऽध्यायः ।

——:*:——

श्रीभगवानुवाच ॥

यो विद्याश्रुतसंपन्न आत्मवान्नानुमानिकः ।
मायामात्रमिदं ज्ञात्वा ज्ञानं च मयि संन्यसेत् ॥ १ ॥
ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च संमतः ।
स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः ॥ २ ॥
ज्ञानविज्ञानसंसिद्धाः पदं श्रेष्ठं विदुर्मम ।
ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम् ॥ ३ ॥
तपस्तीर्थं जपो दानं पवित्राणीतराणि च ।
नालं कुर्वन्ति तां सिद्धिं या ज्ञानकलया कृता ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ज्ञानादेर्निर्णयः पूर्वं कृतो ह्याश्रमधर्मतः ।
अथोनविंशतितमे ज्ञानादेस्त्याग उच्यते ॥

तदेवं तर्कतो बाधितोऽपि देहादिप्रपञ्चो यावदपरोक्षानुभवेन दिङ्मोहादिरिव न बाध्यते आवज्ज्ञानाऽभ्यासस्ततो मुक्तिरित्युक्तमादेहान्तात्कचित्त्वर्यमाणस्ततः संपन्ने अर्थस्यादिना यस्य त्वपरोक्षानुभवेन प्रपञ्चो विलीनप्रायस्तस्य न किंचित्कृत्यमस्तीत्याह। य इति। विद्या अनुभवस्तत्पर्यन्तेन श्रुतेन संपन्नोऽत एवाऽऽत्मवान्प्राप्तात्मतत्त्वो नानुमानिकः केवलपरोक्षज्ञानवान्न भवति अनकारपाठे प्राक्श्रुत्यनुकूलतर्कतो निर्णीतार्थ इत्यर्थः। स इदं द्वैतं तन्निवृत्तिसाधनं च मयि मायामात्रमिति ज्ञात्वा ज्ञानं च तत्साधनं संन्यसेत् अयमेव विद्वत्संन्यासो नाम ॥ १ ॥

अत्र हेतुमाह। ज्ञानिनस्त्विति। यस्मादहमेव तस्येष्टोऽपेक्षितः स्वार्थः फलम् हेतुस्तत्साधनं च संमतः स्वर्गोऽभ्युदयश्च अपवर्गः संसारनिवृत्तिश्च अतस्तस्य न प्राप्यं कृत्यं वा किंचिदस्तीत्यर्थः ॥ २ ॥

अत्र विद्वदनुभवं प्रमाणयति। ज्ञानेति। यथोक्तं ज्ञानिनमभिनन्दति। ज्ञानीति। यतोऽसौ ज्ञानेन मां धारयति ॥ ३ ॥

तस्य ज्ञानं स्तौति। तप इति। अलमत्यर्थम् ज्ञानस्य कलया लेशेन ॥ ४ ॥

——

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

विमुक्तस्य प्राप्तात्मतत्त्वस्य परमहंसस्य । गुणदोषव्यवस्थार्थं गुणदोषनियमार्थम् । आश्रमधर्मतः आश्रमधर्मं पुरस्कृत्य तर्कतः शास्त्रविचारेण बाधितोऽपि मिथ्यात्वेन ज्ञातोऽपि तावदपरोक्षानुभवादर्वाक् ततः अपरोक्षानुभवे सति प्राक् अनुभवात् पूर्वं श्रुत्यनुकूलतर्कतः । मन्तव्य इति मननविधानाच्छ्रुत्यनुकूलो मुख्यत्वेन निश्चितार्थः । तथाहि । विमतमभिन्ननिमित्तोपादानकं कार्यत्वात् सुखादिवत् । तदुक्तं शङ्करशारीरके । ननु तु वेदान्तवाक्येषु जगतो जन्मादिकारणवादिषु तदर्थग्रहणदार्ढ्यायानुमानमपि वेदान्तवाक्याविरोधि प्रमाणं भवत् न निवार्यते श्रुत्यैव च सहायतया तर्कस्याऽभ्युपेतत्वात् तथाहि श्रोतव्यो मन्तव्य इति श्रुतिरिति द्वैतं जगत् तस्य द्वैतस्य निवृत्तिसाधनं च वाक्यजन्यं ज्ञानं मयि शुद्धे ब्रह्मणि मायामात्रं प्रतीतिमात्रं न वास्तवम् अज्ञानधर्मौ भवबन्धमोक्षाविति अतो न बन्धस्तस्य नैव मोक्ष इत्याद्युक्तेः तत्साधनं ज्ञानसाधनं शमादि मयि संन्यसेदिति विजयार्थं दत्तमस्त्रमिव विजयानन्तरं राज्ञि समर्प्य पुनस्तमिव मामेवोपासीतेत्यर्थः अत एव अयमेव विद्वत्संन्यास इत्युक्तम् ॥ १ ॥

अत्र ज्ञानसमर्पणे तुशब्दः शुष्कज्ञानिनिरसनार्थः फलं परमसाध्यं तत्साधनं फलसाधनम् अभ्युदयः परलोकवैभवः अतः ममैव सर्वस्वरूपत्वात् तस्य विद्वत्संन्यासिनः ॥ २ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

अत्र भक्त्यैव परमसाध्यसाधनत्वे । ज्ञानविज्ञानसंसिद्धाः श्रीसनकादयः शुकादयश्च मम पदं श्रीचरणारविन्दमेव श्रेष्ठम् जानन्ति न तु ब्रह्मतत्त्वं तच्चारविन्दनयनस्य पदारविन्देत्यादेः स्वसुखनिभृतचेता इत्यादेश्च । अत एव मे ज्ञानी प्रियतमः परमप्रेष्ठः अत एव ज्ञानेन मां बिभर्ति पुष्णाति सुखयतीत्यर्थः । तथाच गीतं मयैव तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यत इति ॥ ३ ॥

तस्य ज्ञानिनः ज्ञानस्य भगवज्ज्ञानस्य तां प्रेमभक्तिलक्षणां सिद्धिं नाशं कुर्वन्ति न वर्द्धयन्ति शुद्धिमिति पाठे भक्तौ योग्यताम् ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आनुमानिकः शास्त्राविरुद्धतर्काभिमतः इदं शरीरं मायामात्रं न स्वात्मस्वरूपं मयि संन्यसेत् मदधीनमनुसंदध्यात् ॥ १ ॥

स्वार्थ इष्टः स्वस्य पुरुषार्थोयेष्टः हेतुः पुरुषार्थप्रदः ॥ २ ॥

मां बिभर्ति हृदये बिभर्ति ॥ ३ ॥

नाशङ्कुर्वन्ति ॥ ३—६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दुःखोदर्केष्वित्यादिश्लोकद्वयेन स्ववर्णाश्रमधर्मनिष्ठस्य जिज्ञासोर्गुरूपसत्तिमूलकतदुपदेशसमधिगतब्रह्मस्वरूपतत्प्राप्तिसाधनादिस्वरूपस्य वर्णाश्रमधर्माङ्गकभगवद्भक्तियोगसाध्या मुक्तिरित्युक्तम् अथ भक्तियोगाशक्तस्य न्यासाख्यं स्वप्राप्तिसाधनमुपायान्तरमुपदिशति । यो विद्याश्रुतसम्पन्न इत्यादिना । विद्याश्रुतसंपन्नः विद्या शास्त्रजन्यं ज्ञानं श्रुतं शास्त्राधिकाराभावे केवलगुरूपश्रवणजन्यं ताभ्यां सम्पन्नः श्रुतशब्देन स्वप्राप्तिसाधनतयोपदेश्यमानस्य न्यासस्य सर्वाधिकारत्वं सूचितं विद्याश्रुतसम्पन्न इत्यनेन परीक्ष्य लोकान्कर्मचितानित्यादिश्रुत्युक्ता गुरूपदेशपर्यन्ता प्रणाडी न्यासयोगमभिचिकीर्षोरपि समानेति सूचितम आनुमानिकः । शास्त्राविरुद्धतर्काभिज्ञः तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते इत्युक्तरीत्या कृष्यादिफलानामिव यज्ञादिकर्मफलानामप्यनित्यत्वानुमानकुशलो वा आत्मवान् समाहितचित्तः इदं शरीरं मायामात्रं प्रकृतिपरिणामात्मकं ज्ञात्वा भगवच्छेषतैकरसे आत्मनि भगवन्मायाविरचितमिति ज्ञात्वेत्यर्थः । ज्ञानं ज्ञानात्मकमात्मस्वरूपं मयि सर्वशेषिणि सर्वान्तरात्मनि उपायोपेयभूते सत्यसङ्कल्पे परमकारुणिकेऽनालोचितविशेषाशेषलोकशरण्ये मयि सन्न्यसेत् मदधीनमनुसंदध्यादित्यर्थः । मायामात्रमित्यस्य मिथ्यामात्रमिति नार्थः प्रकृतेर्मायाशब्दवाच्यत्वे निमित्तमासुरराक्षसशस्त्रादीनामिव विचित्रकार्यकरत्वं तथा च —

> ततो भगवता तस्य रक्षार्थं चक्रमुत्तमम् ।
> आजगाम समाज्ञप्तं ज्वालामालि सुदर्शनम् ॥
> तेन मायासहस्रं तच्छम्बरस्याशुगामिना ।
> बालस्य रक्षता देहमेकैकशो निषूदितम् ॥

इत्यादौ न मायाशब्दो मिथ्यावाची ऐन्द्रजालिकादिष्वपि केनचिन्मन्त्रौषधादिना मिथ्यार्थविषयायाः पारमार्थिकधीबुद्धेरुत्पादकत्वेन मायावीति प्रयोगः तथा मन्त्रौषधादिभेदेन तत्र मायाशब्दप्रयोगः अनुगतस्यैव शब्दार्थत्वात् तत्र मिथ्यार्थेषु मायाशब्दप्रयोगो मायाकार्यबुद्धिविषयत्वेनौपचारिको मञ्चाः क्रोशन्ति इतिवत् अतोऽत्र मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमित्यादिष्वभिधीयमाना गुणमयी पारमार्थिकी प्रकृतिरेव मायाशब्देनाभिधीयते तस्याः कार्यं भगवत्स्वरूपतिरोधानं स्वस्वरूपभोग्यत्वबुद्धिश्च ॥ १ ॥

ज्ञानं च मयि सन्न्यसेदित्यनेन ओमित्यात्मानं युञ्जीतेत्युक्तार्थः प्रत्यभिज्ञाप्यते संन्यासश्चात्रात्मरक्षाभरनिक्षेपः तमेव विवृणोति । ज्ञानिन इति । ज्ञानी चात्र भगवच्छेषतैकरसः प्रकृतिवियुक्तकेवलात्मन्यपर्यवस्यन् भगवन्तं प्रेप्सुर्भगवन्तमेव परमप्राप्यं मन्वानस्तस्याहमेव स्वार्थः प्राप्य इति यावत् तस्येष्टः तथा हेतुः प्राप्त्युपायश्चाहमेव सम्मतः मत्तो मां विना स्वर्गो मोक्षः कैवल्यं च तथा यः कश्चिदन्योऽपि अर्थः न प्रियः अनेन प्रियो हि ज्ञानिनोऽत्यर्थमित्युक्तार्थः प्रत्यभिज्ञाप्यते ॥ २ ॥

इत्थं मयि संन्यस्तात्मस्वरूपा एव मद्याथात्म्यं विदुरित्यभिप्रेत्याह । ज्ञानेति । ज्ञानं शरीरस्य मायामात्रत्वज्ञानम् आत्मस्वरूपस्य प्रकृतिविविक्तस्य भगवच्छेषतैकरसत्वज्ञानं च विवेचितं विज्ञानं भगवत एवोपायोपेयत्वाध्यवसायात्मकं ताभ्याम् सम्पन्नाः परं प्रकृतिपुरुषविलक्षणमत एव श्रेष्ठं सर्वोत्तमं मम पदं स्वरूपं विदुः अनेन "ददामि बुद्धियोगं तं येन मामुपयान्ति" त इत्यस्यार्थः प्रत्यभिज्ञापितः असौ ज्ञानी ज्ञानेन मां विनात्मधारणं न सम्भवतीति ज्ञानेन हेतुभूतेन मां बिभर्ति धारयति तदायत्तधारणोऽहमित्यर्थः । अनेन ज्ञानी त्वात्मैव मे मतं आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिमित्यस्यार्थः प्रत्यभिज्ञाप्यते तथाहि तत्राभाषि भगवद्भाष्यकारैः ज्ञानी त्वात्मैव मे मतं तदायत्तधारणोऽहमिति मन्ये कस्मादेवं यस्मान्मया विनात्मधारणासम्भावनया मामेवानुत्तमं प्राप्यमास्थितः अतस्तेन विना ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमित्युक्तविधस्वभावस्य ममाप्यात्मधारणं न सम्भवति ततो ममाप्यात्मा हि स इतीति ॥ ३ ॥

मायामात्रमिदं ज्ञात्वा ज्ञानं च मयि संन्यसेदित्यात्मसंन्यासस्य मायामात्रज्ञानपूर्वकत्वमुक्तं तस्यावश्यकत्वज्ञापनाय निरतिशयशुद्ध्यावहत्वमाह । तपस्तीर्थमिति । या शुद्धिर्ज्ञानकलया ज्ञानलेशेन कृता तां शुद्धिं तपआदीनि नाशं कुर्वन्ति न कर्तुं शक्नुवन्तीत्यर्थः । शक्तिद्योतकोऽत्राथंशब्दः अलं भूषणपर्याप्तिशक्तिवारणवाचकम् इत्यनुशासनात् इतराणि पवित्राणि शौचाचमनादीनि ॥ ४ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरेः प्रसादजनकं ज्ञानमेव तस्य भक्तिस्तस्याः यमादयः कृष्णो ब्रह्मेति यच्च ज्ञानं तत्सर्वमस्मिन्नध्याये निरूप्यते तत्र प्रथमतः उत्पद्यमानं तदेवंविधं प्रसादसम्पादकमिति भावेन वक्ति । यो विद्येति । यो विद्यायाः वेदान्तादिलक्षणायाः श्रुतेन श्रवणेन सम्पन्नः उत्पन्नज्ञानः आनुमानिकः उपक्रमादियुक्त्या निर्धूतसंशयविपर्ययश्च आत्मवान् ममात्मा स्वामी हरिरिति निश्चितहरितत्त्वो मामपरोक्षीकृत्य माञ्जिज्ञासुरिदं जगत् मायामात्रं मदिच्छाक्षोभितोपादानप्रकृतिनिर्मितत्वात्तन्मात्रं ज्ञात्वा तज्ज्ञानं च ममेदं ज्ञानं हरिपूजालक्षणं तत्प्रसादेनोत्पन्नं तदधीनञ्चेति मयि संन्यसेत् समर्पयेदित्यन्वयः—

त्रिगुणा प्रकृतिर्माया पश्येत्तन्मात्रकं जगत् ।
निर्मिमीते जगत्सर्वमतो मायेति सा स्मृता ॥

इतिवचनात्—

इदं ज्ञानं हरेः पूजा हरेरेवोदितं सदा ।
हर्यधीनं च सर्वत्रेत्येवं न्यासो हरौ स्मृतः ॥

इतिवचनात् उक्तप्रकार एव हरौ ज्ञानन्यासो न प्रकारान्तरः ॥ १ ॥

कस्मादेवं ज्ञानसंन्यास इत्यतस्तन्निमित्तमाह । ज्ञानिन इति । तुशब्दस्तारतम्यद्योतकः स्वस्यार्थं आनन्दलक्षणो यस्मात्स तथा हेतुर्ज्ञानोत्पादकः सम्मतो ज्ञातः इतोऽपीत्याह । स्वर्गश्चेति ॥ २ ॥

स्वार्थप्राप्तिप्रकारमाह । ज्ञानेति । विधूतमन्ते निगमयति । ज्ञानीति । प्रियतमत्वे निमित्तमाह । ज्ञानेनेति ॥ ३ ॥

तपआदिभोभयशुद्धिमतस्तव प्रियत्वेन ज्ञानं विशिष्य किं स्तौषीति तत्राह । तपइति । या शुद्धिर्ज्ञानलेशेन कृता तां शुद्धिं तपआदीनि अलं सम्यक् न कुर्वन्तीत्यन्वयः ॥ ४ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मायामात्रं माययैवात्मन्यध्यस्तं न तु स्वाभाविकमिदं जगत् ज्ञानं मयि संन्यसेत् विजयार्थं दत्तमस्त्रमिव विजयानन्तरं दातरि समर्प्य पुनरुक्तमिव मामेवोपासीतेत्यर्थः ॥ १ ॥

अतः स्वयमनुभवं सति ज्ञानिनः परमसाधनसाध्यरूपोऽहमेव विस्फुरामि न तु ब्रह्मकैवल्यादिरित्याह । ज्ञानिनस्त्विति । तुशब्दः पक्षान्तरनिरसनार्थः ॥ २ ॥

तत्र प्राचीनज्ञानिनामनुभवं प्रमाणयति । ज्ञानेति । श्रीसनकादयः श्रीशुकदेवादयश्च मम परं चरणारविन्दमेव श्रेष्ठं जानन्ति न तु ब्रह्मतत्त्वं तस्यारविन्दनयनस्य पदारविन्देत्यादेः स्वसुखनिभृतचेता इत्यादेश्च यस्मादेवं विदुरत एव ज्ञानी प्रियतमः अत एव ज्ञानेन मां बिभर्ति पुष्णाति सुखयतीत्यर्थः । तथा च गीतं मयैव तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यत इति ज्ञानी त्वात्मैव मे मतमिति प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय इति चेति भावः ॥ ३ ॥

अत एव तप इति तां सिद्धिं भक्तिरूपां नालं कुर्वन्ति न विक्षेपयन्ति शुद्धिमिति पाठे भक्तौ योग्यताम् ॥ ४ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ज्ञानिनः साधनत्यागो भक्तिर्भक्तस्य शाश्वती ॥
वर्ण्यं च यमादीनामूनविंशे निरूप्यते ।

तदेवमनाद्यविद्यादूरीकरणार्थमेव निष्कामकर्मयोगवैराग्यादीनि जीवस्य कर्त्तव्यत्वेनोक्तानि तैः साधनैर्दूरीभूतायामविद्यायां विद्यायां चोत्पन्नायां न तैः साधनैः कोऽप्युपयोगः यथा सर्पव्याघ्रभूताद्याविष्टः पुरुषः स्वं विस्मृत्य सर्पोऽहं भूतोऽहमित्येवं यावदात्मानं मन्यते तावदेव मणिमन्त्रौषधादीनां प्रयोग उपयुज्यते तत्तद्दोषे तैस्तैरुपायैरुपशान्ते सति अमुकोऽहममुकस्य पुत्र इति स्वस्वभावे प्राप्ते सति न पुनस्तैर्मन्त्रौषधादिभिः कृत्यमित्याह । य इति । विद्या सांख्ययोगतपोवैराग्यमयं ज्ञानमविद्यानिवर्तकं श्रुतानि तत्तत्प्रतिपादकशास्त्राणि तैः सम्पन्नः अत एव तत्तत्साधनवशादात्मवान् प्राप्तात्मतत्त्वः नानुमानिकः केवलापरोक्षज्ञानवान् भवति किन्त्वपरोक्षानुभववानित्येव इदं देहदैहिकसर्ववस्तुषु स्वाभिमननं मायामात्रमाविद्यकमेव ज्ञात्वा यद्वा इदम् इदंकारास्पदं जगन्मायिकं मायिकत्वाद्धेयमेवेति ज्ञात्वा ज्ञानं च ज्ञानसाधनं च मयि संन्यसेत् मत्प्राप्त्यर्थं त्यजेत् अयमेव विद्वत्संन्यासो नाम ॥ १ ॥

ननु ज्ञानमिव किं भक्तिमपि संन्यसेदित्यत्र नाह नहीत्याह । ज्ञानिन इति । अहमेवेष्टः भजनविषयीभूतः कथं मद्भजनं त्यजेत् स्वार्थः स्वापेक्षितं फलमहमेव हेतुस्तत्साधनं चेति कथं मद्भक्तिं त्यजेत् सम्मत इत्येतत् प्रमाणमेव यदुक्तं मयैव ब्रह्मभूतः प्रसन्नात्मेत्यनन्तरम्—

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमिति ॥

वक्ष्यते चात्रापि भज मां भक्तिभावित इति स्वर्गः सुखहेतुः अपवर्गः दुःखाभावहेतुश्च ज्ञानिनः परमसाध्यसाधनरूपोऽहमेव स्फुरामीति सन्दर्भः ॥ २ ॥

अत्र प्राचां ज्ञानिनामनुभवं प्रमाणयति । ज्ञानेति । श्रेष्ठं पदं मत्स्वरूपमित्यर्थः मम पदं चरणारविन्दमेव श्रेष्ठं विदुः जानन्ति न तु ब्रह्मतत्त्वं तस्यारविन्दनयनस्येत्यादेरिति सन्दर्भः एतादृशज्ञानी तु मम प्रियतमः ॥ ३ ॥

ज्ञानस्य कलया लेशेनापि ॥ ४ ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु इति मां यः स्वधर्मेण भजेन्नित्यमनन्यभाक् सर्वभूतेषु मद्भावो मद्भक्तिं विन्दते दृढाम् —

भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम् ॥
सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति स इत्यत्र

स्वधर्मवर्धितया भक्त्यैव स्वप्राप्तिरुक्ता इति स्वधर्मनिर्णिक्तसत्त्वो निर्ज्ञातमद्गतिः ज्ञानविज्ञानसम्पन्नो न चिरात्समुपैति मामित्यत्र ज्ञानेनैव स्वधर्मसाध्येन स्वप्राप्तिरुक्ता एवं ज्ञानभक्त्योरन्योऽन्यनैरपेक्ष्येण भवत्प्राप्त्युपायत्वं प्रतीयते अतो भगवन् ! ज्ञाने किं वा भक्तौ मया त्वत्प्राप्त्यर्थः प्रयत्नः कर्तव्य इत्यत्र ज्ञानं विना भक्तेरसम्भवात् सम्यक् ज्ञानवान् भूत्वा मां भजेत्याह । य इति पञ्चभिः । विद्याश्रुतसम्पन्नः वेदान्तविद्याश्रवणसम्पन्नः सुज्ञानतत्त्व इत्यर्थः अतः आत्मा चेतनाचेतनात्मानन्तस्वाभाविकशक्तिसम्पन्नः

तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव ! ।
ज्ञानविज्ञानसंपन्नो भज मां भक्तिभावितः ॥ ५ ॥
ज्ञानविज्ञानयज्ञेन मामिष्ट्वात्मानमात्मनि ।
सर्वयज्ञपतिं मां वै संसिद्धिं मुनयोऽगमन् ॥ ६ ॥
त्वय्युद्धवाऽऽश्रयति यस्त्रिविधो विकारो मायाऽन्तरापतति नाद्यपवर्गयोर्यत् ।
जन्मादयोऽस्य यदमी तव तस्य किंस्युराद्यन्तयोर्यदसतोऽस्ति तदेव मध्ये ॥ ७ ॥
उद्धव उवाच ॥
ज्ञानं विशुद्धं विपुलं यथैतद्वैराग्यविज्ञानयुतं पुराणम् ।
आख्याहि विश्वेश्वर ! विश्वमूर्ते ! त्वद्भक्तियोगं च महद्विमृग्यम् ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मा वा अरे द्रष्टव्यः इत्यादिश्रुतिप्रोक्तः उपास्यतया विद्यते यस्य सः तत्त्वानुमानिकः नैषा मतिस्तर्केणापनेयेति श्रुतेः इदमचेतनं देहादिकं मायामात्रं प्रकृतिकार्यं ज्ञात्वा ज्ञानं चेतनं देहमांशं मदंशांशिनि विन्यसेत् मदाश्रयतया मायवेदित्यर्थः ॥१॥

स्वार्थः प्राप्यः हेतुः प्रापकः नान्योऽर्थो मदृते प्रिय इत्यनेन स्वेतरपदार्थे वैराग्यमुक्तम् ॥ २ ॥

विमर्शित भावयति भजनीयतया ॥ ३ ॥

अत एव ज्ञानस्वरूपस्य: या ज्ञानस्य कलया येन कृता तां तपआदीनि अकमत्वर्थं न कुर्वन्ति ॥ ४ ॥

भाषा टीका ।

श्रीभगवान् उवाच जो पुरुष ज्ञान विज्ञान से परिपूर्ण है आत्मज्ञानी है केवल आनुमानिक नहीं है वह पुरुष इस जगत् को माया मात्र भगवत्संकल्प रचित जान कर ज्ञान को भी मेरे मे अर्पण कर देवै ॥ १ ॥

ज्ञानि को मही इष्ट हूं मैं ही स्वार्थ हूं मै ही हेतु हूं मै ही सब सम्मत हूं मैं ही स्वर्ग हूं मैं ही मोक्ष हूं उस को मेरे बिना कोइ दूसरा अर्थ प्रिय नहीं है ॥ २ ॥

ज्ञान विज्ञान से जो सिद्ध हैं वे पुरुष मेरे श्रेष्ठ पद को जानते हैं इसी से ज्ञानी मेरे को अति प्रिय है क्यों की वह मेरे को ज्ञान से धारण करता है ॥ ३ ॥

तप तीर्थ जप दान और जो कोइ पवित्र पदार्थ ए सब उस सिद्धि के सदृश नहीं होते हैं जो कि सिद्धि ज्ञान के कला मात्र से होती है ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ज्ञानेन सहितं तत्पर्यन्तं यथा भवति तथा ज्ञात्वा तदर्थम्: अनु मामेव भज भक्त्यानन्यभावोत्तमः ॥ ५ ॥

तत्र प्रत्ययार्थं पूर्वेषां वृत्तमाह । ज्ञानेति । मामेव संसिद्धिं प्राप्ताः ॥ ६ ॥

तदेव ज्ञानं संक्षेपत उपदिशति । त्वयीति । त्रिविध आध्यात्मिकादिर्विकारो देहादिः स माया न तु परमार्थः यद्यस्मादन्तरा मध्य एवापतति रज्जौ सर्पमालादिवत् नाद्यपवर्गयोरं त्वादावन्ते चास्ति अतो यद्यदा अस्य विकारस्यामी जन्मादयः स्युस्तदा तस्य तवाधिष्ठानभूतस्य किं न किंचिदित्यर्थः तथापि वस्तुतो न सन्ति तस्यासत्त्वादित्याह । आद्यन्तयोरिति । असतः सर्पादेराद्यन्तयोर्यद्रहित रज्ज्वादि तदेव मध्येऽपि न तु सर्पादि तद्वदयं विकारो नास्तीत्यर्थः । यद्वा आद्यन्तयोर्यद्रहित तन्मध्येऽप्यस्त्येव न तस्य जन्मादयः सन्त्यतस्त्वं निर्विकारं ब्रह्मेति ॥ ७ ॥

ज्ञानादेर्विशेषं जिज्ञासुः पृच्छति । ज्ञानमिति । विशुद्धमेतज्ज्ञानं विपुलं निश्चितं यथा भवति तथा कथयेति महद्भिर्ब्रह्मादिभिर्विमृग्यम् ॥ ८ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तस्मादुक्तविरुद्धज्ञानस्य वैशिष्ट्यात् तत्पर्यन्तमनुभवपर्यन्तं ज्ञात्वा शास्त्रया निश्चित्य । अन्यत् सर्वं मोक्षपर्यन्तम् ॥ ५ ॥

तस्योद्धवस्य प्रत्ययार्थं प्रतीत्यर्थं मामेव श्रीभगवत्साक्षात्कारलक्षणामेव ॥ ६ ॥

तदेव अनुभवात्मकमेव आदौ अध्यासात् पूर्वम् अन्ते ज्ञानेनाध्यासनाशे देहादिविकारो नास्त्येव । अतः अज्ञानेनारोपितत्वात् । अस्य आत्मनोऽत्यन्तभिन्नस्य । तस्यापि विकारस्यापि पूर्वार्धेऽनाद्यपवर्गयोरित्यनेनैव कल्पितस्यासत्त्वमुक्तं पुनस्तदर्थेन पौनरुक्त्यमतो वक्तेति । यदस्ति यत्प्रतीत्यधिष्ठानं ब्रह्मास्ति तस्य अधिष्ठानस्य त्वं निर्विकारं ब्रह्मेति विशेषेणैव तत्त्वमस्यादिवत् एवं चाधिष्ठानस्यैव सत्यत्वनिरूपणान्न पौनरुक्त्यम ॥ ७ ॥

विपुलशब्दस्य विस्तारूपार्थत्वाद्भ्रमवारणे निश्चयस्येदर्थः

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

यथा व्याख्यातं पुराणं तत्पदार्थविषयत्वेन "श्रुतेस्तु शब्दमूलत्वात्" इत्यनुसारेणानादिसिद्धं ब्रह्मादिभिरस्मादिना सनकादिपरिग्रहः परमहंसमहामुनीनामन्वेषणीयचरणावित्याद्युक्तेः ॥ ८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

त्वयीति। त्वयि मायान्तः प्रकृत्यन्तर्वर्तमाने संसारिणि त्वयि यत्त्रिविधो जन्मादिविकार आपतति आद्यपवर्गयोः शरीरसम्बन्धात् पूर्वकाले तदवसानकाले च त्वयि नास्ति यतः अमी जन्मादयः अस्य शरीरस्योपलक्ष्यन्त इति यत्तस्मात्तव किं त्विज्जन्मादयः तव न स्युरित्यर्थः ॥ ७—६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

यो विद्यादिनोक्तमर्थमुपसंहरति। तस्मादिति तस्मात् ज्ञानस्य निरतिशयशुद्ध्यावहत्वात्तेन सहितं यथा तथा स्वस्यान्तरात्मानं मां ज्ञात्वा प्राप्यत्वेन प्रापकत्वेन ज्ञात्वेत्यर्थः हे उद्धव! ज्ञानविज्ञानसम्पन्नस्त्वं ज्ञानविज्ञानसम्पन्न इत्यनेनात्मसंन्यासस्य सकृत्कर्तव्यत्वेऽपि विश्वासात्मकस्य विज्ञानान्तर्गतस्य यावज्जीवानुवर्तनीयत्वं सूच्यते मद्भक्त्या मद्विषयकप्रेम्णा भावितः सञ्जाताभिप्रायविशेषः सन् मां भजाराधय मत्कैङ्कर्यं कुर्वित्यर्थः ॥ ५ ॥

उपदिष्टार्थे विश्वासजननाय पूर्वेषां वृत्तिमाह। ज्ञानविज्ञानयज्ञेनेति। ज्ञानविज्ञाने एव यज्ञस्तेन तयोर्देवताप्रसादहेतुत्वेन यज्ञत्वनिरूपणम् आत्मनि जीवे आत्मानमन्तः प्रविश्य धारकम् सर्वयज्ञनिर्वाहकं मामिष्ट्वा आराध्य मां वै मामेव संसिद्धिं मुक्तिमन्वगुः प्रापुः ॥ ६ ॥

विस्तरेण ज्ञानस्वरूपबुभुत्सां जनयन् संग्रहेण तद्दर्शयति। त्वयीति। हे उद्धव! मायान्तः प्रकृत्यन्तः मायापरिणामात्मकं शरीरं तदाश्रयति अधिष्ठाय वर्तमाने संसारिणि त्वयि यस्त्रिविधः आदिमध्यान्तरूपः उत्पत्तिस्थितिप्रलयरूप इतियावत् आपतति स विकारः यतः आद्यपवर्गयोः शरीरसम्बन्धात्पूर्वकाले तदवसाने च नास्तीति यतश्चामी जन्मादयः अस्य शरीरस्यैव यस्मी जन्मादयस्ते तस्य तव किं स्युः देहसम्बन्धिनो जन्मादयस्तव किं स्युर्न स्युरित्यर्थः। असतः शरीरस्याद्यन्तयोरपि यदात्मस्वरूपमस्ति तन्मध्येऽप्यस्त्येव तत् वृद्धिक्षयादिमद्भवतीत्यर्थः। अचेतनपरिणामरूपो जन्मादिविकारश्च यभागनित्यश्च देहः आत्मा तु तद्रहितो नित्य इत्येतदेव मायामात्रमिदं ज्ञात्वेत्यनेनोक्तमित्यभिप्रायः ॥ ७ ॥

तद्विस्तरबुभुत्सया पृच्छति। ज्ञानमिति। पुराणमुपदेशपरंपराप्राप्तं ज्ञानकार्यं वैराग्यं तत्प्रयुक्तं विज्ञानं नाऽपि युतम् विशुद्धं विशुद्धत्वावहं यदेतज्ज्ञानं तद्विपुलं यथा तथा महद्विमृग्यं महद्भिरन्वेषणीयं परमगोप्यमित्यर्थः। त्वद्भक्तियोगं चाख्याहि ॥ ८ ॥

---



श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यतः सर्वेऽपि प्राप्तो ज्ञानस्योत्तमसाधनत्वमतः स्वयापीदमेव सम्पादनीयमित्याह। ज्ञानेति। आत्मानं परमात्मानं तं वा एतमभिवदन्ति स्वात्मेति श्रुतिः ॥ ५ ॥

कस्येदं दृष्टफलं येन विश्रम्य भजनीयं स्यादित्याह। ज्ञानेति। आत्मनि हृदये समीचीना सिद्धिर्मुक्तिर्यस्मात्स तथा तम् ॥ ६ ॥

ननु तथापि देहित्वेन जन्मादिना दुःखादिसम्भवात्कथं त्वत्प्राप्तिर्मुक्तिः स्यादित्याशङ्क्य सतश्चिदानन्दरूपस्य तव जन्मादिर्नास्ति सन्देहस्यैव मम तु तादृशो देह एव नास्ति निर्गुणत्वात्कुतो जन्मादिः अतो नित्यनिर्दुःखानन्दानुभवस्य मम प्राप्तिरेव मुक्तिरिति भावेनाह। त्वयीति। हे उद्धव! यस्त्रिविधो जन्मस्थितिसंहारलक्षणो विकारस्त्वद्रूपमाश्रयति सम्प्रति वर्तते स मायानिर्मितो न तु स्वाभाविकः—

अन्यकर्तृ निर्मितं जीवे जन्मादि हरिणा यतः।
तस्मान्मायेति तत्प्राहुर्मायानिर्माणमुच्यते ॥
नहि जीवस्य जन्मादिः स्वतो नित्यस्य सम्भवेत्।
सृष्टेः प्राक् प्रलये चैव यतो जन्मादि नास्य हि ॥
तस्मान्मध्येऽपि नास्त्यस्ति देहादिस्थं तु विष्णुना।
कर्मभिर्निर्मितं जीवे प्रलये यन्न जीवगम् ॥
यन्न विद्येत हि क्षये यन्न विद्येत मुक्तिगे।
जीवस्य न स्वभावोऽसौ मायेयोति विनिश्चितम् ॥

इति प्रकाशिकायां किञ्च—

मायेत्युक्तं निर्मितं तु यतो जन्मादिनिर्मितम्।
देहादिकं परेशेन मायाजन्मादि तेन त्विदमस्माच्च ॥

अतर्कितोपपन्नत्वागतत्वान्न स्वाभाविक इत्याह। मध्यतरेति। यो जन्मादिरन्तरा सृष्टिकाले आपतति कर्मवशादागच्छति ॥ आद्यपवर्गयोः प्रलयमुक्त्योर्न विद्यते यन्न विद्येत क्षये यन्न विद्येत मुक्तिगे। जीवस्य न स्वभावोऽसावित्युक्तत्वाच्च उक्तोऽर्थोऽयं तत्राप्यनुभवसिद्ध इत्याशयेनाह। जन्मादय इति। तस्य परिणामरूपस्य देहस्य दृश्यमानजन्मादयोऽस्य चिदानन्दस्वरूपस्य तव स्युः किं मां प्रति वद यत्नमानन्द भोजश्च महा ज्ञानमनाकुल इत्यादेः उपसंहरति। आद्यन्तयोरिति। असत इति हेतुगर्भविशेषणम् अस्वतन्त्रत्वादवस्तुनो जगतः आद्यन्तयोः प्रलये मुक्तौ च यज्जीवस्यास्ति चिदानन्दस्वरूपं तदेव मध्ये सृष्टिकालेऽपि स्वरूपं तस्मादाभिमानिकः संसारो मदपरोक्षज्ञानेन निवर्तेत इति भावः। ज्ञानिनो मनुष्योऽहमित्यनुभवतः सुखैकरूपा मुक्तिः कथं सेत्स्यति मनुष्यस्य अन्यादृशत्वानुपपत्तेरित्याशङ्क्य कालत्रयेऽपि जीवस्यैकरूपत्वेनाभिमानिक आगन्तुकः संसारो मत्प्रसादेन निवर्तेत इत्यतो वाह। त्वयीति—

आद्यन्तयोरनुगमादाद्यन्तरहितस्य तु।
आद्यन्ते भाविनो मध्ये कथमन्यादृशं वपुः इत्यतः सिद्धम्

किञ्च—

अनित्यत्वात्तु देहस्य तस्य जन्मादिकं भवेत्।
मुक्तिप्रलयसम्बन्धे कथं जीवे तदिष्यते इति ॥
अनित्यस्य गुणा मध्ये भवेयुः स्वत एव न।
नतु स्वतस्तु नित्यस्य कादाचित्कैर्गुणैर्युतास्थिति ॥ ७ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतत् ज्ञानं यथास्थितं तथाख्याहि ॥ ८—१२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विवक्षितमुपसंहरति । तस्मादिति । स्वात्मानं जीवस्वरूपं ज्ञानं विज्ञानं च ब्रह्म ॥ ५—७ ॥

त्वयीत्यनेनापातबोधार्थे त्वम्पदार्थज्ञानमेवोक्तमित्यपरितुष्य तत्पदार्थज्ञानविज्ञाने सवैराग्ये पृच्छंस्तन्मात्रेणाप्यपरितुष्य तत्तत्फलं भक्तियोगमपि पृच्छति । ज्ञानमिति । ननु पूर्वमपि विशुद्धज्ञानमुक्तं तत्राह । विपुलं तत्पदार्थविषयत्वादतिमहत्तरं यत्तदपीत्यर्थः तत्कथं विवर्तवादाद्यनुरूपं नेत्याह । पुराणं "श्रुतेस्तु शब्दमूलत्वात्" इत्यनुसारिणानादिसिद्धं यत्तदेव तदनुसारेणैवाह विज्ञानानन्तरं त्वद्भक्तियोगं चेति विवर्तवादस्तु भक्तियोगनाशक इतिभावः विज्ञानानन्तरभावित्वं प्रमाणयति । महद्भिः सनकादिभिरपि विमृग्यमिति ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मामेव भज अन्यत्सर्वं त्यजेति स्वामिचरणाः ॥ ५ ॥

ज्ञानविज्ञानसम्पन्न एव कस्तत्राह । ज्ञानविज्ञानयज्ञेन परोक्षज्ञानरूपयज्ञेन सर्वयज्ञपतिं मामात्मानं परमात्मानमात्मन्येव इष्ट्वा मुनयः संसिद्धिम् अन्वगमन् एवम्भूताः संसिद्धिं गताः प्राचीना मुनय एव ज्ञानविज्ञानाभ्यां सम्पन्ना उच्यन्ते इत्यर्थः ६

एवमुक्तलक्षणो ज्ञानविज्ञानसम्पन्नो मां भजन् ज्ञानी परमकाष्ठां प्राप्तो ह्यतिदूरे वर्त्तताम् त्वं तु त्वम्पदार्थं ज्ञात्वैवाविद्योत्तीर्णो भवेत्युद्धवं लक्षीकृत्य सर्वलोकमाह । त्वयीति । हे उद्धव ! त्वयि जीवात्मनि यस्त्रिविधस्त्रिगुणमयो विकारो देहाध्यास आश्रयति त्वामाश्रितोऽयमध्यासो यो वर्तत इत्यर्थः स माया अविद्यैव अविद्याकार्यं इत्यर्थः । अन्तरा मध्ये एव आपतति प्राप्नोति भवतीति नायं तवौत्पत्तिको धर्म इति भावः यतो नाद्यपवर्गयोः आद्यन्ते च स नास्तीत्यर्थः तत्र चिद्रूपत्वात् तस्य जडरूपत्वादिति भावः यदमी देहस्य जन्मादयस्तत्र तस्य चिदात्मनस्तव किं स्युर्न स्युरेव कथं त्वं जातोऽहं मृतोऽहमहं सुखी दुःखीत्यात्मानं मन्यसे इति भावः ननु यदा मे देहसम्बन्धो नासीत् यदा च ज्ञानेनापयास्यति तदैवाहं देहातिरिक्तो भवितुं शक्नुयामधुना तु देह एवाहमित्यत आह असतो भ्रमप्रतीतत्वादसत्यस्य वस्तुनः आद्यन्तयोर्यत् सत्यं वस्तु मध्येऽपि तदेव यथा व्याघ्राविष्टपुरुषस्य व्याघ्रत्वप्रतीतिकालेऽपि पुरुषत्वमेव सत्यं न तु व्याघ्रत्वं तत्र जीवस्याविद्यासम्बन्धः स मायाज्ञानादेवानाद्यविद्यासम्बन्ध इति सर्वलोकप्रसिद्धिः अन्यथा अविद्यासम्बन्धस्य सर्वथैवानादित्वे सति स्वरूपप्रसक्तौ ज्ञानेनापि न तदपगमः स्यात् मुक्तिर्नाम जीवस्य स्वरूपहानिरिति मतं तु भक्तिनाशकम् ॥ ७ ॥

त्वंपदार्थज्ञानं श्रुत्वा तत्पदार्थज्ञानविज्ञाने सवैराग्ये पृच्छंस्तन्मात्रेणाप्यपरितोषात् सर्वमुख्यं भक्तियोगं च पृच्छति । ज्ञानमिति । विशुद्धं त्वंपदार्थज्ञानातीतं विपुलं तत्पदार्थविषयत्वाद्बृहत्तरं पुराणं प्राचीनज्ञानिसम्मतं तथैव सम्बोधयति हे विश्वेश्वराविश्वमूर्ते इति विश्वस्य मिथ्यात्वे तदैश्वर्यं तन्मूर्तित्वं च वृथैवेति भावः महद्भिः शुकसनकादिभिरपि विशेषतो मृग्यं ज्ञानाद्यामिभं शुद्धमित्यर्थः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे उद्धव ! ज्ञानेन जीवेन मदंशभूतेनोपासकतत्त्वेन एतदुपलक्षणं वक्ष्यमाणानां प्रकृत्यादिभावानाम् अष्टाविंशतिभावैः सह स्वात्मानं सर्वात्मानं मां ज्ञात्वा अत एव ज्ञानेन सर्वात्मभूतमद्विषयकबोधेन मदंशभूतोपासकस्वरूपादिविविधबोधेन च सम्पन्नः भक्त्या मत्स्नेहेन भावितो मां भजेत्यन्वयः ॥ ५ ॥

स्वप्राप्तिरूपं भक्तिफलं दर्शयन् उक्तार्थे विशिष्टवृत्तान्तं प्रमाणयति । ज्ञानेति । मामेव संसिद्धिं प्राप्ताः ॥ ६ ॥

ननु भगवन्ननेकद्रव्यविशेषसंयोगे अपूर्वमद्यशक्त्युत्पत्तिवद्देहे ज्ञानमुत्पद्यते देहनाशानन्तरं ज्ञाननाशः ननु देहविलक्षणं क्वापि ज्ञानमस्ति श्यामोऽस्मि गौरोऽस्मि जातोऽस्मि वृद्धिं गतोऽस्मि क्षीणोऽस्मीत्यादिलोकप्रतीत्या देहात्मवादिबौद्धपक्षाश्रयणेन च देह एवात्मेति निश्चयस्तस्माद्यदुक्तं भवता मायामात्रमिदं ज्ञात्वा ज्ञानं च मयि विन्यसेदिति चेतनाचेतनतत्त्वद्वयं तन्नोपपद्यते इत्यत आह । त्वयीति । हे उद्धव ! यस्त्रिविधः आध्यात्मिकादिविकारः मायान्तरा मायामात्रत्वेन मयोदाहृतः प्रकृतिपरिणामत्वेन तदन्तःस्थः आश्रयति उद्भ्रमति त्वयि स्थाने नापतति ईषदपि आत्मस्थाने अनात्मा न पतति न बलादप्यात्मा भवति मद्यशक्तिस्तु तद्द्रव्यगुणभूता आविर्भवति अतद्गुणो द्रव्ये तद्वदर्शनात् आत्मा नहि देहगुणः यत् यतः अस्य अनात्मनः त्रिविधस्य स्थूलस्य देहस्य आद्यपवर्गयोः उत्पत्तिविनाशयोः मध्ये च अस्तत्र सूक्ष्मदेहस्य आद्यन्तयोः मध्ये च यत् यः पृथग्भूतः ग्रहीता पालयिता त्यागकर्त्ता भवानस्ति तस्य तवापि किमपि जन्मादयः स्युः नैव स्युरित्यन्वयः यत् ये जन्मादयः तदेव तस्यैव देहस्यैव तस्मादिदं शरीरं मायाकार्यं तत्पृथक् ज्ञानस्वरूपस्त्वं ममांश इत्यर्थः यत्तु मायावादिना त्वयीति त्रिविधः आध्यात्मादिविकारः देहादिः स माया नतु परमार्थः यत् यस्मादन्तरा एव आपतति रज्जौ सर्पमालादिवत् नाद्यपवर्गयोः तत्रादावन्ते चास्ति अतः यत् यदा अस्य विकारस्यामी जन्मादयः स्युस्तदा तदाधिष्ठानभूतस्य किं न किञ्चिदित्यर्थः । तस्यापि वस्तुतो न सन्ति तस्यासत्त्वादित्याह । असतः सर्पादेराद्यन्तयोरन्तरा यदस्ति तदेव मध्ये न तु सर्पादि तद्वदयं विकारो नास्तीत्यर्थः । यद्वा आद्यन्तयोर्यदस्ति तन्मध्येऽप्यस्त्येव न तस्य जन्मादयः सन्ति अतस्त्वं निर्विकारं ब्रह्मासीति व्याख्यातं तदत्यन्तायुक्तं तदुपेक्षणीयम् सच्चिन्मात्रे त्रिविधभेदशून्ये रज्जुस्थानीये तदितरतत्सदृशसर्पतद्द्रष्टुः पुरुषस्थानीयपदार्थान्तराङ्गीकारमन्तरेणारोपासम्भवात् ॥ ७ ॥

पूर्वोक्तज्ञानविज्ञानवैराग्यभक्तीः दार्ढ्येन धारयितुं पृच्छति । ज्ञानमिति । विशुद्धं सर्वात्मविषयकमत एव विपुलमगाधम् एतत्पूर्वोदाहृतं यथा यथावदाख्याहि ॥ ८ ॥

---

तापत्रयेणाभिहतस्य घोरे संतप्यमानस्य भवाध्वनीश ! ।
पश्यामि नान्यच्छरणं तवाङ्घ्रिद्वन्द्वातपत्रादमृताभिवर्षात् ॥ ९ ॥
दष्टं जनं संपतितं बिलेऽस्मिन् कालाहिना क्षुद्रसुखोरुतर्षम् ।
समुद्धरैनं कृपयाऽपवर्ग्यैर्वचोभिरासिञ्च महानुभाव ! ॥ १० ॥

श्रीभगवानुवाच ॥

इत्थमेतत् पुरा राजा भीष्मं धर्मभृतां वरम् ।
अजातशत्रुः पप्रच्छ सर्वेषां नोऽनुशृण्वताम् ॥ ११ ॥
निवृत्ते भारते युद्धे सुहृन्निधनविह्वलः ।
श्रुत्वा धर्मान् बहून् पश्चान् मोक्षधर्मानपृच्छत ॥ १२ ॥
तानहं तेऽभिधास्यामि देवव्रतमुखाच्छ्रुतान् ।
ज्ञानवैराग्यविज्ञानश्रद्धाभक्त्युपबृंहितान् ॥ १३ ॥
नवैकादश पञ्च त्रीन् भावान् भूतेषु येन वै ।
ईक्षेताथैकमप्येषु तज्ज्ञानं मम निश्चितम् ॥ १४
एतदेव हि विज्ञानं न तथैकेन येन यत् ।
स्थित्युत्पत्त्यप्ययान् पश्येद्भावानां त्रिगुणात्मनाम् ॥ १५ ॥
आदावन्ते च मध्ये च सृज्यात् सृज्यं यदन्वियात् ।
पुनस्तत्प्रतिसंक्रामे यच्छिष्येत तदेव सत् ॥ १६ ॥

भाषा टीका।

तिस से हे उद्धव ! ज्ञान के सहित अपने आत्मा को जान कर ज्ञान विज्ञान से परि पूर्ण हो कर भी भक्ति भाव से मेरे को भजो ॥ ५ ॥

अपने आत्मा मे ज्ञान विज्ञान सहित मेरा यजन कर के बहुत से मुनि लोग सिद्धि को प्राप्त होगये क्यों कि मैं सब यज्ञों का पति हूं ॥ ६ ॥

हे उद्धव ! तुमारे विषय आध्यात्मिक आदि तीन प्रकार का जो विकार दीखता है यह मध्य मे ही है तिस से माया जानो! क्यों कि जो आदि अन्त मे नहीं है सो मध्य मे भी नहीं है जन्म आदिक ये जो विकार इस शरीर के हैं आदि अन्त मे सर्पादिकों के नहीं रहने से भी जो रज्जु है सो ही मध्य मे भी स्थिर जानना ॥ ७ ॥

उद्धव उवाच जिस प्रकार से विशुद्ध अधिक वैराग्य विज्ञान से युक्त प्राचीन जो ज्ञान है तिस को हे विश्वेश्वर हे विश्वमूर्ते ! मेरे से कहिये और महापुरुष जिस को ढूंढते हैं ऐसे आप के भक्ति योग को भी कहिये ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

मद्भक्तिमृते स्वस्यानभिनिवृत्तिं वदन्नाऽऽह। तापत्रयेणेति। तापत्रयेणाभितो हतस्य अतः संतप्यमानस्य अङ्घ्रिद्वन्द्वमेवातपत्रं तस्मात् न केवलमातपात्त्रातुः किंत्वमृतमप्यभितो वर्षति यत्तस्मात् ॥ ९ ॥

अतिकृपामुत्पादयन्नाह। दष्टमिति। अस्मिन्बिले संसारकूपे पतितं तत्र च कालाहिना दष्टमपि क्षुद्रसुखेष्वेव उरुस्तर्षस्तृष्णा यस्य तम् दह्यमानः कथं समुद्धरणीय इति चेत्तत्राऽऽह। अपवर्ग्यैरपवर्गबोधकैर्वाग्मृतैरासिञ्चेति ॥ १० ॥

त्वद्विश्वासार्थं चिरन्तनतायां निर्णीतमहं वक्ष्यामीत्याशयेनाऽऽह। इत्थमिति ॥ ११ ॥ १२ ॥

ज्ञानादिभिरुपबृंहितान् तत्सहितानित्यर्थः ॥ १३ ॥

तत्र ज्ञानं कथयति। नवेति। प्रकृतिपुरुषमहदहंकारपञ्चतन्मात्राण्येकादशेन्द्रियाणि पञ्चमहाभूतानि त्रयो गुणाः एतान् भावानष्टाविंशतितत्त्वानि भूतेषु ब्रह्मादिस्थावरान्तेषु कार्यत्वानुगतानि येन ज्ञानेनेक्षेत अथ एष्वपि भावेष्वेकं परमात्मतत्त्वमनुगतं येनेक्षेत कार्यकारणात्मकं जगत्पश्यन् परमकारणात्मकमेवेक्षेत तु ततः पृथगिति मत पश्येत्तज्ज्ञानमित्यर्थः ॥ १४ ॥

### श्रीवल्लभाचार्यकृतभावार्थदीपिका ।

विज्ञानमाह । एतदेवेति श्लोकार्धेन यदा येनैकेनानुगतानेकात्मकान् भावान् पूर्वमैक्षत तांस्तथा पूर्ववन्नेक्षेत किंतु तदेकं परमकारणम् ब्रह्मैव तदा एतदेव विज्ञानमुच्यते एतदुक्तं भवति परोक्षज्ञानेनापरोक्षभ्रमस्य दिङ्मोहादिरिव निवृत्त्यभावात्तदात्मकं जगत्पश्यन्नप्यात्मनः पृथक् सदिति मन्यते अपरोक्षज्ञाने तु बाधितमेव दग्धपटवज्जीवन्मुक्तः संस्कारशेषं पश्यति ततः परं न पश्यति अतः परोक्षापरोक्षज्ञाने ज्ञानविज्ञानशब्दाभ्यामुच्येते इति एकेन सर्वकार्याणामनुगतिं कार्याणां कारणात् पृथगसत्त्वं चोपपादयति साधनं तत्र यदि न कदाचिदनीदृशं जगदित्याद्यनेनैतेषां भावानामुत्पत्त्यादयो न स्युस्तर्हि कारणस्यैकस्याभावादेकात्मकता मिथ्यात्वं च न स्यादतस्तेषामुत्पत्त्यादीन् साधयति । स्थितीति । त्रिगुणात्मनां सावयवानामित्यर्थः । विमता भावा उत्पत्त्यादिमन्तः सावयवत्वाद्घटादिवदिति पश्येत् ॥ १५ ॥

तत आद्यनुत्पत्तौ अन्ते परिणामान्तरापत्तौ च कारणत्वेन मध्ये चाश्रयत्वेन सृज्यात्सृज्यं कार्यात्कार्यान्तरं प्रति यदन्वियादनुगच्छेत्तत्प्रतिसंक्रामे तेषां प्रलये च यदवशिष्येत तदेव सदिति पश्येदित्यर्थः ॥ १६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

अभिनयेनोदाहरणानुकरणेन अतस्तापत्रयाभिहतत्वात् । अमृतं परमानन्दम् ॥ ९ ॥

तत्र च कूपे । एवमपि कालाहिदष्टत्वेऽपि । अपवर्गबोधकैः भक्तियोगतात्पर्यकैः । यथावर्णविधानमपवर्गश्च भवतीत्यादिगद्ये तस्य तस्मिन् प्रयोगात् ॥ १०—१२ ॥

ज्ञानं शास्त्रीयम् । वैराग्यं विषयेष्वरुचिः । विज्ञानमपरोक्षानुभवः । श्रद्धा शास्त्रार्थविश्वासः । भक्तिः श्रवणादिरूपा । साध्या प्रेमलक्षणा । तत्सहितान् धर्मान् श्रवणादीन् ॥ १३ ॥

तत्र ज्ञानादिमध्ये अनुगतानि कारणतया व्याप्तानि । अतः कारणस्य व्यापकत्वज्ञानात् । एष्वपि अष्टाविंशतितत्त्वेषु । अनुगतमनुस्यूतम् । व्यापककार्यं देहादिकारणं महदादितद्रूपम् । परमकारणं ब्रह्म तदात्मकमेव । ततः परमकारणात् ॥ १४ ॥

एतावदित्यर्थकम् । येनैकेन परमकारणेन ब्रह्मणा अनुगतान् व्याप्तान् भावान् तत्त्वानि पूर्वमवदीत पूर्वं हि शास्त्रजन्यपरोक्षज्ञानदशायाम् आधाराधेयत्वेन कार्यकारणत्वेन च द्वयोरप्यवभानं भवत्येवेति तस्य ज्ञानत्वं विज्ञानदशायां तु निदिध्यासनेन शब्दमात्रेणैव वा परमात्मनोऽपरोक्षस्फुरणे तु नान्यत् स्फुरेदिति विज्ञानस्य विज्ञानत्वमित्यभिप्रेत्य पूर्ववदेतेनेत्यादि व्याख्यातं तदेव भाष्यरीत्या स्फुटीकरोति एतदुक्तमिति तदा परोक्षज्ञाने बाधितं मिथ्यात्वेन ज्ञातं ततः संस्कारशेषनाशानन्तरम् अतः परोक्षापरोक्षस्फुरणस्य ज्ञानविज्ञानलक्षणत्वात् स्थितीत्यर्धकम् एकेन परमकारणेन अनुगतिं व्याप्तिं ज्ञानरूपां कारणात् पृथगसत्त्वं चाधिष्ठानमात्रस्फुरणं तदेव विज्ञानम् उप-पादयति युक्त्या साधयति तत्र अनुगतिपृथगसत्त्वोपपादने जगत् कदाचिदपि ईदृशं नेति न किन्तु ईदृशमेवेति न तस्य सृष्ट्यादि न च तत्कर्ता कश्चित् परमात्मास्तीति मीमांसकमतम् एकात्मकता परमकारणात्मकत्वं ज्ञानरूपं मिथ्यात्वं च परमात्मैकस्फुरणलक्षणं विज्ञानम् अतः उत्पत्त्याद्यभावे ज्ञानविज्ञानासम्भवात् विमता विवादास्पदीभूताः भावाः तत्त्वानि इति पक्षनिर्देशः उत्पत्त्यादिमन्त इति साध्यं सावयवत्वादिति हेतुः यत् सावयवं तदुत्पत्त्यादिमद्यथा घटादि इत्यन्वयव्याप्तिः यदुत्पत्त्यादिमन्न तत्सावयवमपि न यथा परमात्मेति व्यतिरेकव्याप्तिः ॥ १५ ॥

तत उत्पत्त्यादिमत्त्वात् यदन्वियादित्यनुगतिरूपज्ञाननिर्देशः तदेव सदिति विज्ञाननिर्देशः अत्र सृज्यात् सृज्यमित्युक्त्या श्रुतेस्तु शब्दमूलत्वादिति न्यायेन परिणाम एवाभ्युपगतो न विवर्तः अन्यथा कल्प्यमित्युच्येत ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विले संसारगर्ते अपवर्गैः करणैः यत्र अपवर्गहेतुभिः ॥ १०—१३ ॥

शब्दस्पर्शरूपरसगन्धा विसर्गशिल्पगत्युक्तयश्च नव भावा एकादश इन्द्रियाणि पञ्च महाभूतानि त्रयः सत्त्वादयो गुणाः एकं ज्ञानैकाकारमात्मवस्तु जातावेकवचनं येषु कारणतयानुगतं प्रकृतितत्त्वं वा ॥ १४ ॥

एतदेव हि विज्ञानं न तथैकेन यत् स्थितमिति तथाशब्दः पूर्वप्रत्यस्तप्रकृतिप्राकृतगोचरज्ञानप्रकारपरामर्शी एकेन विशिष्टं नान्येन अविद्याचरज्ञानविलक्षणमात्मैकगोचरं समाधिदशायां ज्ञानं विज्ञानमित्यर्थः ॥ १५ ॥

सृज्यात् सृज्यं शरीरात् शरीरान्तरं तत्प्रति संक्रामे शरीरप्रलये यदिष्यते एकरूपं स्थितं तदेवात्मस्वरूपं सत् अपरिणामि ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

बुभुत्सोपयुक्तां दशामाविष्कुर्वन् तन्निवृत्तौ त्वच्चरणारविन्दमेव शरणमित्यध्यवस्यामीत्याह । तापत्रयेणेति । हे ईश्वर घोरे दुःसहे संसाराध्वनि तापत्रयेणाभिहतस्य पीडितस्यात एव सन्तप्यमानस्य पुंसः शरणं साधनं तवाङ्घ्रिद्वन्द्वमेवातपत्रम् तस्मादन्यं न पश्यामि कथम्भूतादमृताभिवर्षादमृतं मोक्षसुखं तदभिवर्षतीति तथा तस्मादमृतायायभूतादित्यर्थः ॥ ९ ॥

नन्वेवमध्यवस्यतस्तव किंतच्छ्रवणेनेत्यत आह । दष्टमिति । विले संसारगर्ते संपतितं काल एवाहिस्तेन दष्टं क्षुद्रसुखेषु दुःखबहुलेषु विषयसुखेष्वेव उरुः तृष्णा यस्य तमेनं तापत्रयाभितप्तं जनं कृपया समुद्धर कथं समुद्धरणीयस्तत्राह । अपवर्ग्यैरपवर्गबोधकैर्वागमृतैरासिञ्चेति हे महानुभाव ! महानचिन्त्योऽनन्यसाधारणानुभावो यस्य तस्य सम्बोधनम् ॥ १० ॥

विवक्षितस्योत्तरस्य सांप्रदायिकत्वमाह । इत्थमिति । धर्मभृतां भगवद्भक्तिलक्षणधर्मपराणां मध्ये वरं श्रेष्ठं भीष्मं राजाजातशत्रुर्युधिष्ठिरः नोऽस्माकं सर्वेषां शृण्वतां सताम् एतत् त्वत्पृष्टमित्थं त्वमिव अप्रच्छ ॥ ११ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एकादश इन्द्रियाणि पञ्च महाभूतानि त्रयो गुणाः एतान् भावान् अष्टाविंशतितत्त्वानि भूतेषु ब्रह्मादिस्थावरान्तेषु कार्येषु अनुगतानि येन ज्ञानेनैव यत् एष्वपि भावेषु अष्टाविंशतितत्त्वेषु एकं परमात्मतत्त्वम् अनुगतं येनैव कार्यकारणात्मकं जगत् पश्यन् परमकारणात्मकमेवैतत् नतु ततः पृथगिति येन पश्येत्तज्ज्ञानमित्यर्थः ॥ १४ ॥

विज्ञानमाह । एतदेवेत्यर्द्धेन । एतदेव एतत् ज्ञानमेव विज्ञानं भवति कथमित्यत आह । न तर्हीति । येन परमात्मना एकेन यद्विश्वमनुगतं यथा पूर्वमीक्षितं तथा नेक्षते अयमर्थः ज्ञानदशायां परोक्षीभूतेन परमात्मना अनुगताः सर्वे परोक्षाः परोक्षीभूता भावा दृष्टाः विज्ञानदशायां तु एकः परमात्मैवापरोक्षीभूत ईक्षितो भवति तदनुभवानन्दादेव तत्कार्याणां भावानामीक्षणेऽवकाशो न भवेदित्यद्वितीयात्मानुभवः ज्ञानदशायामेकेन परमात्मनैवानुगतानां कार्याणां सर्वेषां परमकारणात्मकत्वात् परमात्मैकपमेव यदुक्तं तदुपपादयति । स्थितमिति सार्द्धेन । त्रिगुणात्मनां भावानां कार्याणां स्थित्युत्पत्त्यप्ययत्वात् पश्येदित्युत्पत्तिस्थितिप्रलयवत्त्वात्तेषामनित्यत्वं पश्येदित्यर्थः । अनित्यत्वादेव सार्वकालिकसत्यत्वाभावात्तेषामसत्यत्वं ज्ञानिनो मन्येरन्निति भावः ॥ १५ ॥

सत्यः पुनरेकः परमात्मैवेत्याह । आदौ उत्पत्तौ अन्ते परिणामान्तरापत्तौ च कारणत्वेन मध्ये च आश्रयत्वेन सृज्यात् सृज्यं कार्यात् कार्यं प्रति यदन्वियात् अनुगच्छेत् तत्प्रतिसङ्क्रामे तेषां प्रलये च यदवशिष्येत तदेव सत् यथा महदादीनां स्वस्वकार्यं प्रति कारणत्वेऽपि सर्वकारणत्वाभावान्न कारणत्वं किन्त्वेकः परमात्मैव कारणं तथैव तेषां सत्यत्वेऽपि सार्वकालिकसत्यत्वाभावान्न सत्यत्वं किन्त्वेकः परमात्मैव सत्य इति ज्ञानदशायामपि तदेवाद्वयत्वं पश्येदिति भावः ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्वत्पादाम्बुजच्छत्रं नापश्यतः संसारगर्ते पतितं ज्ञानभक्त्युपदेशेन मां समुद्धरेत्याह । तापत्रयेणेति द्वाभ्याम् । अङ्घ्रिरूपच्छत्रमेवातपत्रं तस्मात् अमृतवर्षिणो वर्षतीति तत्तस्मात् ॥ ९ ॥

आपवर्ग्यैः आत्यन्तिकसाधनभूतज्ञानभक्तिविषयैः ॥ १०—१२ ॥

ज्ञानादयः उपबृंहिताः वर्धिताः येस्तान् सारमात्रतोऽभिभाषिष्यामि ॥ १३ ॥

तत्र ज्ञानविज्ञाने कथयति । नवेति सार्द्धेन । जीवप्रकृतिमहदहङ्कारान् पञ्च तन्मात्राणि चेति नव एकादशेन्द्रियाणि पञ्च महाभूतानि सत्त्वादीन् त्रीन् गुणान् एतान् भावान् अष्टाविंशतिपदार्थान् भूतेषु ब्रह्मादिस्तम्बपर्यन्तेषु असंख्येयेषु येनैव कारणत्वेन पश्येत् अथैकं सर्वात्मानं परमकारणं निःसमातिशयं विरञ्चिचक्रिकमसमसंकं माम् एतेषु अष्टाविंशतिपदार्थेषु येनैव तन्मम विशिष्टं ज्ञानं भूतानां चेतनाचेतनात्मकानामष्टाविंशतिसंख्याकैः जीवप्रकृत्यादिभिः सहैकत्वं सम्भाव्य तेषामैक्यं परमकारणेन मया सह यदा सम्भावयति तदैव ज्ञानवान् भवतीति भावः ॥ १४ ॥

यत् यदा एकेन तथा नेक्षेत परमकारणेन सहैक्यं न पश्येत् किन्तु तत्तदसाधारणस्वरूपगुणादिबहुत्वतया वैलक्षण्यं पश्येत् एतदेवाह विज्ञानम् सर्वेतत्सर्वस्यैकात्मकत्वे सति घटेऽप्यत एकात्मकत्वं सर्वस्यैकोपादानतया दर्शयति । स्थितमिति सार्द्धेन । त्रिगुणात्मनां सत्त्वादिकार्याणां प्राकृतपदार्थानामित्यर्थः स्थित्यादीन् पश्येत् ॥ १५ ॥

किमद्यतः स्थित्यादयो भवन्तीत्यपेक्षायामाह । आद्राविति । आदावुत्पत्तौ अन्ते परिणामान्तरापत्तौ मध्ये च सृज्यात्कार्यात् सृज्यान्तरं यदन्वियात् तत्प्रतिसंक्रामे सृज्यसंहारे च यदवशिष्येत तदेव एतत् सर्वकारणम् एककारः परमात्मवादित्याद्यर्थः ॥ १६ ॥

---

### भाषा टीका ।

हे ईश ! इस घोर संसार मार्ग में आध्यात्मिक आधिभौतिक आधिदैविक इन तीन तापोंसे तपायमान दुखित पुरुष के वास्ते अमृत के बर्षाने वाले आपके चरणरूप छत्रके बिना दूसरा कोई रक्षक मेरको नहीं दीखता है ॥ ९ ॥

हे महानुभाव ! इस संसार रूप बिलमें पड़े हुवे कालरूप सर्प से ग्रसे हुए क्षुद्र सुखोंकी तृष्णा वाले इस संसारी जीवको कृपा करके आप उद्धार करो मोक्षदायक अपने वचनों से सींचन करो ॥ १० ॥

श्रीभगवान् उवाच इसी प्रकार से पूर्व काल में धर्म जानने वालों मे श्रेष्ठ भीष्मजी से हम सब लोगों के सुनतेही युधिष्ठिर महाराज ने प्रश्न किया रहा ॥ ११ ॥

भारत युद्ध जब हो चुका तब अपने बन्धु ओंके मरने से युधिष्ठिर महाराज बिह्वल होगये तब बहुत से धर्मों को पूछा फिर भीष्मजी से मोक्ष धर्मों को पूछने भये ॥ १२ ॥

अब भीष्मजी के मुख से सुने हुए ज्ञान वैराग्य विज्ञान श्रद्धा भक्ति से युक्त उन प्रश्नों को उत्तर सहित मैं तुम से कहूंगा ॥ १३ ॥

प्रकृति पुरुष महान् अहङ्कार पञ्च भूतों की शब्दादितन्मात्रा एकादश इन्द्रिय पञ्च महाभूत तीन गुण ऐसे अठाइस एक परमात्मा इतने तत्वों को सम्पूर्ण प्राणि मात्रमें जिससे जान जावे वही ज्ञान हमारे मतमे निश्चय ज्ञानहै ॥ १४ ॥

फिर इसी का नाम विज्ञान है जिससे कि एकही से नहीं किन्तु प्रकृति पुरुष काल के सहित परमात्मा सब त्रिगुण भाव मात्रोंकी उत्पति स्थिति प्रलय को करते हैं ॥ १५ ॥

सब पदार्थों के आदि में अन्तमे और मध्यमें एक कार्य से दूसरे कार्यको जो व्याप्त होकर जाताहै फिर उसकार्य के नाश होनेपर जो रहता है वही परमात्मा सत्य सदा एक रूपहै ॥ १६ ॥

---

श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् ।
प्रमाणेष्वनवस्थानाद्विकल्पात् स विरज्यते ॥ १७ ॥
कर्मणां [1]परिणामित्वादाविरिञ्चादमङ्गलम् ।
विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥ १८ ॥
भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ ! ।
पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम् ॥ १९ ॥
श्रद्धाऽमृतकथायां मे शश्वन् मदनुकीर्तनम् ।
परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम ॥ २० ॥
आदरः परिचर्यायां सर्वाङ्गैरभिवन्दनम् ।
मद्भक्तपूजाऽभ्यधिका सर्वभूतेषु मन्मतिः ॥ २१ ॥
मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम् ।
मय्यर्पणं च मनसः सर्वकामविवर्जनम् ॥ २२ ॥
मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च ।
इष्टं दत्तं हुतं [2]जप्तं मदर्थं यद्व्रतं तपः ॥ २३ ॥
एवं [3]धर्मैर्मनुष्याणामुद्धवाऽऽत्मनिवेदिनाम् ।
मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वैराग्यमाह । श्रुतिरिति द्वाभ्याम् । श्रुतिर्नेह नानास्ति किञ्चनेत्यादिः प्रत्यक्षं पटादिकार्यं तन्त्वादिव्यतिरेकेण न दृश्यत ऐतिह्यं महाजनप्रसिद्धिः अनुमानं विमतं मिथ्या दृश्यत्वाच्छुक्तिरजतादिवदित्यादि एवं प्रमाणचतुष्टयम् एतेष्वनवस्थानाद्द्वैतैर्व्यभिचरितत्वात् स एवं सर्वानुगतं सत्यमात्मतत्त्वं पश्यन्विकल्पस्य च मिथ्यात्वात्ततो विरज्यते विरक्तो भवतीत्यर्थः ॥ १७ ॥

ननु वेदोक्तस्वर्गादिसुखाशया न विरज्येतेत्याह । कर्मणामिति । आविरिञ्चाद्ब्रह्मलोकपर्यन्तमदृष्टमपि सुखममङ्गलं दुःखरूपं नश्वरं च पश्येत् ॥ १८ ॥

भक्तियोगं सकारणमाह । भक्तियोगः पूर्वमुक्त एव तथापि तद्विषयप्रीतिं प्राप्नुवते तुभ्यं पुनश्च कथयिष्यामि ॥ १९ ॥

श्रद्धा श्रवणादरः शश्वदिति सर्वत्रानुषज्जते मदनुकीर्तनं श्रवणानन्तरं मत्कथाव्याख्यानमित्यर्थः ॥ २० ॥ २१ ॥

अङ्गचेष्टा लौकिकी क्रिया वचसा लौकिकेनापि मद्गुणानामीरणम् कथनम् ॥ २२ ॥

मदर्थे मद्भजनार्थम् तद्विरोधिनोऽर्थस्य परित्यागः भोगस्य तत्साधनस्य चन्दनादेः सुखस्य पुत्रोपलालनादेः इष्टादि वैदिकं यत्कर्म तदपि मदर्थं कृतं भक्तेः कारणमित्यर्थः ॥ २३ ॥

भक्तिः प्रेमलक्षणा संजायते अस्य मद्भक्तस्यान्यः कोऽर्थः साधनरूपः साध्यरूपो वाऽवशिष्यते सर्वोऽपि सिद्ध एव भवतीत्यर्थः ॥ २४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

विमतं विवादाध्यासितम् अत्र विश्वं पक्षीकृत्य मिथ्यात्वं साध्यते दृश्यत्वं हेतुः यद्दृश्यं तन्मिथ्या यथा शुक्तिरजतादीत्यन्वयव्याप्तिः यन्मिथ्या न भवति तन्न दृश्यं यथात्मेति व्यतिरेकव्याप्तिः एतैः श्रुत्यादिप्रमाणैः विकल्पस्य बाधितत्वात् मिथ्यात्वेन ज्ञानात्सर्वानुगतमात्मानं घटोऽस्ति पटोऽस्ति घटोऽनुभूयत इत्येवं सर्वे पदार्थाः सत्तानुभूतिघटिता एव दृश्यन्त इत्यात्मतत्त्वस्य सत्तानुभूतिरूपतया सर्वप्रतीत्यधिष्ठानत्वात् सर्वानुगतत्वं यथैकैव रज्जुरधिष्ठानतया सर्पभूविदलनाम्बुधारादण्डादिष्वनुगता तद्वदित्यर्थः । विकल्पस्य च विविधं कल्पनमिति विकल्पः प्रपञ्चस्तस्य ततः विकल्पात् ॥ १७ ॥

कर्मणामग्निहोत्रचातुर्मास्यपशुसोमादीनां परिणामित्वादित्यादि कारित्वात् कार्यत्वादिति यावत् दुःखरूपं भोगकालेऽपि स्पर्धाऽसूयादिमत्त्वात् ॥ १८ ॥

---

१ फलरूपत्वात् २ भुक्तं इति वि० वीर० पाठः ३ धर्मः इति वीर० पाठः ।

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

भक्तियोगं प्रेमलक्षणं सकारणं कारणेन साधनभक्तियोगेन सहितं तथापि पूर्वमुक्तमेऽपि कारणमुपायम् ॥ १९ ॥

श्रद्धेति चतुष्कम् श्रद्धा कथायाः सर्वपुरुषार्थोपादने विश्वासः अत एव भगवदादर इति निष्कृष्टोऽर्थः पूजायामुपचारैरन्तं स्तुतिभिः स्तोत्रैः १ परिचर्यायां परिचर्या तु सेवोपकरणादिपरिष्क्रिया तथा प्रकीर्णकच्छत्रवादित्राद्यैरुपास्तिरित्युक्तलक्षणायाम् अभ्यधिका मत्पूजातोऽपि तत्र मम सन्तोषविशेषात् सर्वेषु भूतेषु मन्मतिः तत्र तत्र ममैव स्फुरणम् २ ॥ २० ॥ २१ ॥

मदर्थेषु मन्निमित्तकार्येषु लौकिकेनापि इति नेदोक्तकथाव्यावृत्तिः तथा चानुकीर्तनेन न पौनरुक्त्यं सर्वकामविवर्जनमिति मद्व्यतिरिक्तेच्छावर्जनं मय्यर्पितात्मेच्छति मद्भिनाव्यादित्युक्तः ३ ॥ २२ ॥

तद्विरोधिनो मज्जनव्यापारकस्यार्थस्य द्रव्यस्य सुखेन पौनरुक्त्यमाशङ्क्य भोगशब्दस्य तत्साधने चन्दनादौ वसना इष्टमित्यादया भावे निष्ठा ४ ॥ २३ ॥

धर्मैर्भागवतधर्मैः श्रद्धादिभिः स्वत एव भवतीति परमपुरुषार्थशिरोमणौ तत्र सर्वसुखान्तर्भावात् २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

श्रुतिः वेदपूर्वभागः अनवस्थानात् अनवस्थानमस्थैर्यं दृष्टानिश्चयः वेदान्तव्यतिरिक्तप्रमाणेषु अन्यपरतया तत्त्वानिश्चयाभावादित्यर्थः विकल्पात्पुत्रपश्वन्नादिफलवैविध्यात् ॥ १७—१९ ॥

मदनुकीर्तनं स्तुतिभिः जन्मकर्मप्रतिपादकवचनम् ॥२०—२५॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ वैराग्यमुपदिशति । श्रुतिरिति द्वाभ्यां चतुष्टयमित्यनन्तरं तेनेति शेषः प्रमाणशब्दः कर्मणि ल्युडन्तः तेन चतुष्टयेन प्रमाणेषु प्रमितेषु कर्मफलेषु स उक्तविभज्ञानसम्पन्नो विरज्यते इत्येतद्वैराग्यमित्यर्थः । ऐतिह्यशब्दः श्रुतिमूलकस्मृतिपुराणादीनामन्युपलक्षणार्थः तत्र श्रुत्यादिप्रमितं कर्मफलं स्वर्गादिप्रत्यक्षसिद्धं कृष्यादिकर्मफलवत्सातिशयमनुमानसिद्धं स्वारोग्यादि तस्यैवार्थादिनामारोग्य अनकत्वानुमानसिद्धत्वात् यद्यानुमानं वैराग्यहेतुतयोक्तं तच्च श्रुत्यैव प्रदर्शितं "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति इदं हि कृष्यादिकर्मफलदृष्टान्तेन कर्मफलत्वहेतुना पुण्यफलस्य नश्वरत्वमनुमापयति अस्मिन् पक्षे चतुष्टयमित्यनन्तरं तत्र ततीति च शेषः तत्र श्रुत्यादिप्रमितेषु फलेषु तेनैवानेनानुमानं परामृश्यते प्रत्यक्षग्रहणं दृष्टान्तार्थम् एतच्च स्वयमेव स्फुटीकरिष्यति । अदृष्टमपि दृष्टवदिति अत्रानुमानस्यानुमेयद्वारा विरक्तिहेतुत्वं पुण्यचितो लोकः क्षीयते इति स्वप्रदर्शनमस्येषामुपलक्षणार्थं चेति चाभिप्रयन् साध्यधर्मान् विरक्तौ हेतुतया निर्दिशति । अनवस्थानाद्विकल्पात् परिणामित्वादिति कर्मणामित्येतत्फलपरं कर्मणां कर्मफलानामनवस्थानादेकरूपतया स्थित्यभावाद्विकल्पात्सातिशयात् परिणामित्वाद्विकारित्वाद्विनाशित्वाच्च विरज्यत इति सम्बन्धः विरक्तिमेवाभिनयन दर्शयति । आविरिञ्च्यादित्यादिना दृष्टवददृष्टं ब्रह्माधिपत्यपर्यन्तं सर्वमपि श्रुत्यादिप्रमितपदं कर्मफलं नश्वरमत एवामङ्गलं दुःखगर्भं चेति विपश्चित् ज्ञानी पश्येत् ॥ १७—१८ ॥

त्वद्भक्तियोगं च महद्विमृग्यमिति भक्तियोगः पृष्टः स च तस्य निरन्तरानुपपादितत्वात् तत्स्वरूपबुभुत्साप्रयुक्तः प्रश्नः किन्तु तदन्तरङ्गाविवित्साप्रयुक्त इत्यभिप्रयन् तदन्तरङ्गसाधनानि वक्तुं प्रतिजानीते । भक्तियोग इति । प्रीयमाणाय भक्तियोगमग्रणार्थं प्रीतियुक्ताय यद्वा मद्विषयप्रीतियुक्ताय अनेन पात्रता व्यज्यते पुरैवोक्तः सपरिकर उक्त इत्यर्थः । अतः सोऽधुना नोपदेष्टव्य इति भावः । इदानीं तूक्तस्यैव भक्तियोगकारणेषु यत्परमुत्कृष्टमन्तरङ्गकारणं तत्पुनः कथयिष्यामीत्यर्थः कारणमित्येकवचनं सामान्याभिप्रायकम् ॥ १९ ॥

कानि पुनस्तानीत्यत आह । श्रद्धेत्यादिना मे ममामृततुल्या या कथा तस्यां तच्छ्रवणादौ इत्यर्थः । श्रद्धा आदरः मदनुकीर्तनं शश्वदिति सर्वत्रानुषज्यते मद्गुणकीर्तनपरिनिष्ठा आसक्तिः स्तुतिभिः जन्मकर्मप्रतिपादकवचनैः ॥ २० ॥

परिचर्या भगवन्मन्दिरसम्मार्जनोपलेपादिक्रिया पूजा त्वावाहनादिषोडशोपचारात्मिका इति न पौनरुक्त्यं सर्वाङ्गैः

पादाङ्गुलिभ्यां जानुभ्यां शिरसा चावनीं स्पृशन् ।
बद्धाञ्जलिर्नमस्कुर्यात् पञ्चाङ्गः स उदीर्यते ॥
निधाय दण्डवद्देहं प्रसार्य चरणौ करौ ।
बद्ध्वा मुकुलवत्पाणी प्रणामो दण्डसंज्ञितः ॥
पादौ शिरस्तथा हस्तौ निकुञ्च्य मुकुलाकृती ।
मनोबुद्ध्यभिमानैश्च प्रणामोऽष्टाङ्गसंज्ञितः इति ॥

विहितैः सर्वैरङ्गैः अभ्यधिका मद्भक्तानां पूजा च सन्मतिसर्वदात्मकत्वबुद्धिः ॥ २१ ॥

मदर्थेषु मदाराधनोपकरणतुलसीपुष्पाद्यर्जनेषु कर्मसु निमित्तभूतेषु अङ्गचेष्टा कायव्यापारः वचसा लौकिकेनापि मद्गुणानामीरणाद्कथनमतः स्तुतिभिः स्तवनमित्यनेन न पौनरुक्त्यम् अर्पणं समाधानं सर्वकामविवर्जनं प्रयोजनान्तरानभिसन्धिः ॥२२॥

मदर्थे मत्प्रीत्यर्थे अर्थपरित्यागः वित्तव्ययः भोगस्य तत्साधनस्य चन्दनादेः सुखस्य पुत्रोपलालनादेश्च परित्यागः इष्टं यागादिर्वैदिकं कर्म दत्तं दानं हुतं होमः भुक्तमतिथिभोजनं व्रतमेकादश्युपवासादि तपः अन्यदपि शास्त्रीयकायक्लेशादिकम् एतत्सर्वं मत्प्रीत्यर्थं कृतं मद्भक्तेः कारणमित्यर्थः ॥ २३ ॥

एवं धर्मं इत्यनुक्तसंग्राहकं तत्र प्रदर्शनार्थमाह । आत्मनिवेदनम् । आत्मशब्दस्तदनुबन्धिनामप्युपलक्षणार्थः निवेदनं भगवदायत्तत्वानुसन्धानं सर्वात्मस्वेषु इत्यादिः एभ्यो धर्मेभ्यो मयि भक्तिः प्रीतिरूपसञ्जायते किन्तन इत्यत आह । अस्य सञ्जातभक्तियोगस्य को नु पुरुषार्थोऽवशिष्यते सर्वोऽपि सुलभ एवेति भावः ॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अत्र किंप्रमाणमिति तत्राह। श्रुतिरिति। नैकमेवोक्तार्थे सर्वोत्तमत्वे हरेः प्रमाणमपि तु श्रुत्यादिचतुष्टयमपि ऐतिह्य आगमभेदः प्रयोजनमाह। प्रमाणेष्विति। एवं वेदादिप्रमाणैर्विदिताशेषतत्त्वतदीयविशेषतया ज्ञानविज्ञानसम्पन्नः पुरुषो विकल्पाद्विरुद्धकल्पनाज्जीवस्वातन्त्र्यज्ञानादिलक्षणाद्विरज्यते विरक्तो भवति मिथ्याज्ञानरहितो भवतीत्यर्थः। सोऽपि प्रामाणिकः कथमित्यत उक्तं प्रमाणेष्विति श्रुत्यादिप्रमाणेषु अन्यथाप्रामाण्यव्याख्यानात्तात्पर्यार्थज्ञाने स्थित्यभावात् चोरवत् पलायनशीलत्वादित्यर्थः प्रमाणानां तात्पर्यार्थापरिज्ञानतः तत्पलायनं तात्पर्यार्थापरिज्ञानतः उत्पन्नाद्वा ॥ १७ ॥

वैराग्यं निरूपयति। कर्मणामिति। आविरिञ्चान्मनुष्यमारभ्य विरिञ्चिपर्यन्तं जगत् अमङ्गलमसारमत एव नश्वरं पश्येत् अदृष्टं स्वर्गादिकमपि दृष्टवत् गृहादिवत्पश्येत् कर्मणां फलरूपत्वात् ॥ १८ ॥

विरक्तो मयि भक्तिं कुर्यादिति भावेनाह। भक्तियोग इति ॥ १९ ॥

निरतिशयभक्त्युत्पत्तौ कारणं वक्ति। भक्तेति। अमृतवज्जरामरणहारिण्यां हरिकथायां परिनिष्ठा आस्था अत्यापद्यपि नेमं नियमं मुञ्चामीति निश्चयः ॥ २० ॥

अभिवन्दनं प्रणामः सम्मतिः सन्निहित इति मत्स्मरणम् ॥ २१ ॥

मदर्थेषु अहमेवार्थो येषां ते तथा तेषु परमभागवतेषु अङ्गचेष्टा शारीरावयवैः नृत्यलक्षणा चेष्टा ॥ २२ ॥

मदर्थं मत्प्रीत्यर्थम् ॥ २३ ॥

निष्ठौ स्वहस्तप्राप्ते कारणं सर्वाटकेन किमित्याह। कोऽन्य इति। अस्य पुरुषस्य ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

विकल्पात् संशयात् संशयमनादृत्येत्यर्थः। यद्वा तेषु प्रमाणेष्वनवस्थानात् तैः प्रमाणैः सम्यग्ध्यानगमाद्धेतोर्विकल्पात् त्रिविधेषणात्मात्मीयत्वेन कल्पत इति प्रपञ्चात् विरज्यते विरक्तो भवति तत्र श्रुतिः असङ्गो ह्ययं पुरुष इत्यादि प्रत्यक्षं प्रकाश्यप्रकाशकत्वभेदलक्षणेन सर्वानुभवात् ऐतिह्यं तत्तच्छास्त्रप्रवर्तकमहाजनसंप्रदायप्रसिद्धिः अनुमानं यथाग्नेर्दाहकत्वात् दाह्याद्दाहकोऽन्यः प्रकाशक इत्यादिलक्षणं तथानुमानं विमतं प्रपञ्चत्व प्रपञ्चसमवायद्रव्यात्मनि मिथ्या कदाचिदेव दृश्यत्वाच्छुक्तौ रजतत्ववत् समवायवदिति च सुषुप्त्यादौ न दृश्यत इति कदाचिद्दृश्यं तदुक्तम् आद्यावन्ते च मध्ये चेति ॥ १७—१८ ॥

मत् मम भक्तियोगः प्रेमोपायः पूर्वोक्त एव पुनश्च मद्भक्तेः प्रेम्णः कारणमुपायं कथयिष्यामीत्यर्थः ॥ १९ ॥

श्रद्धेति चतुष्कम् अभ्यधिका मत्पूजातोऽपि तत्र मम सन्तोषविशेषात् सर्वभूतेष्वपि दृश्यमानेषु ममैव मतिस्तत्र तत्र स्फुरणं सर्वकामेत्यादिकं कर्माभिष्ठासंपादनद्वारा कारणम् ॥ २० – २३ ॥



अस्य भक्तस्य कोऽन्योऽर्थोऽवशिष्यत इति परमपुरुषार्थशिरोमणौ तत्र सर्वसुखान्तर्भावात् ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

ज्ञानविज्ञाने उक्त्वा वैराग्यमाह द्वाभ्याम्। श्रुतिः यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्तीति प्रत्यक्षं घटादीनां मृत्कृतत्वं मृन्मयानत्वं च दृष्टमेव ऐतिह्यं महाजनप्रसिद्धिः न कदाचिदनीदृशं जगदित्युक्तधर्मं तु न महाजनत्वं ज्ञेयम् अनुमानं जगद्विनश्यत्वं कालिकमाद्यन्तवत्त्वादिति एवं चतुर्षु प्रमाणेषु सत्सु अनवस्थानात् सार्वकालिकावस्थानाभावाद्धेतोर्विकल्पात् स्वर्गादिभोगमयात् द्वैतप्रपञ्चाद्विरक्तो भवेत् ॥ १७ ॥

ननु स्वर्गादीनां सार्वकालिकसुखदत्वाभावेऽपि किञ्चित्कालिकसुखदत्वमस्त्येवेत्यत आह। कर्मणामिति। कर्मणां परिणामित्वात् कर्मपरिणामनश्वरात् कर्मपरिणतत्वादिति यावत् आविरिञ्च्यात् ब्रह्मलोकपर्यन्तमदृष्टं स्वर्गादि दृष्टवत् दृष्टं राज्यादिकमिव स्पर्धासूयादिमत्त्वेन सङ्कटफलत्वादमङ्गलं नश्वरं च ॥ १८ ॥

यत्पृष्टं त्वद्भक्तियोगं च महद्भिर्मृग्यमाणयाहीति तत्राह। भक्तियोग इति पुरैवोक्त इति तदपि त्वं श्रुत्वापि तत्र तृप्त्यभावादेव पुनः पृच्छसीति भावः पुनरपि कथयिष्यामि यतः प्रीयमाणाय तस्मिन्नेव प्रीतिं प्राप्नुवते तत्रापि हेतुः अनघेति अपराधे सत्येव तत्र प्रीतिर्ह्रसति नान्यथेति भावः कारणं परं श्रेष्ठम् मङ्गम् ॥ १९ ॥

अमृतरूपा या कथा तत्कथायाः सर्वस्याः अमृतत्वेऽप्यतिमाधुर्यवती रासादिसम्बन्धिनीत्यर्थः श्रद्धा अतिश्रद्धा ॥ १ ॥ अभ्यधिका मत्सन्तोषविशेषं ज्ञात्वा मत्पूजातोऽपीत्यर्थः ॥ २ ॥ अङ्गचेष्टा दन्तधावनादिदैहिकी क्रियापि मदर्थं मत्सेवार्थं वचसा अपभ्रंशवाक्येनापि गीतबन्धेन मद्गुणकथनं मदर्थं मद्विषयायां तस्यामर्थे अर्थपरित्यागः श्रीगुरुवैष्णवादिसम्प्रदानकः यद्वा भजनविरोधिनोऽर्थस्योपेक्षा भोगस्य स्त्रीसम्भोगादेस्त्यागः सुखस्य पुत्रोपलालनादेः इष्टं दानं हुतं ब्राह्मणवैष्णवमुखे घृतपक्वान्नप्रक्षेपः विष्णवे स्वाहेति संस्कृतवह्निमुखे तिलाज्यनिक्षेपो वा जप्तं सहस्रलक्षादिभगवन्नाममन्त्रजपः एतान्येव मदर्थं इष्टं भक्तानां यागः मदर्थं मत्प्राप्त्यर्थं एकादश्युपवासादिकं यत्तदेव भक्तानां तपः ॥ २०— २३ ॥

अस्य निष्कामभक्तस्य कोऽन्योऽर्थः इतोऽपरः किंफलमवशिष्टं भवति किन्तु तदेव पुनः पुनरमृतकथाश्रवणादिकमेव फलं तेन ज्ञानिनो यथा साध्यप्राप्तौ सत्यां साधनस्य त्याग उक्तस्तथा भक्तस्य साध्यभक्तिप्राप्तौ सत्यां साधनभक्तेः श्रवणकीर्तनादिकाया नैव त्यागः प्रत्युत प्रेमरसरूपायाः साध्यभक्तेरनुभावरूपा श्रवणकीर्तनादिभक्तिः पूर्वतोऽपि सहस्रगुणिता भवतीति ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अथ वैराग्यमुपदिशति। श्रुतिरिति द्वाभ्याम्। विकल्प ऐहिका-

यदात्मन्यर्पितं चित्तं शान्तं सत्त्वोपबृंहितम् ।
धर्मं ज्ञानं सवैराग्यमैश्वर्यं चाभिपद्यते ॥ २५ ॥
यदार्पितं तद्विकल्पे इन्द्रियैः परिधावति ।
रजस्वलं चासन्निष्ठं चित्तं विद्धि विपर्ययम् ॥ २६ ॥
धर्मो मद्भक्तिकृत् प्रोक्तो ज्ञानं चैकात्म्यदर्शनम् ।
गुणेष्वसंगो वैराग्यमैश्वर्यं चाणिमादयः ॥ २७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मुष्मिकमप्यैहिककर्मफलवत्प्राकृतमनित्यम् अत्र प्रमाणचतुष्टयं तत्र यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते इति श्रुतिः देहादेरनित्यतायां प्रत्यक्षं प्रमाणम् ऐतिह्यमाप्तजनपरम्पराप्रसिद्धिः देहादिकमनित्यं भौतिकत्वात्घटादिवदित्यनुमानम् एवंभूतेषु प्रमाणेषु नास्ति भवस्थानं स्थिरत्वं यस्य तस्माद्विकल्पाद्दैहिकामुष्मिकात्प्राकृतात्कर्मफलात्सः प्रमाणचतुष्टयवित् विरज्यते निर्विण्णो भवति ॥ १७ ॥

किञ्च कर्मणां फलं च परिणामित्वात् नश्वरम् उक्तप्रकारेणानित्यमपि अमङ्गलमभद्रं पश्येत् न केवलमनित्यतयैव हेयमपितु अमङ्गलत्वाच्चेति भावः न केवलं दृष्टमेव अपितु आविरिञ्च्यात् विरञ्चि लोकपर्यन्तमदृष्टमप्यमङ्गलं पश्येत् ॥ १८ ॥

भक्तियोगमाह । भक्तियोग इति चतुर्भिः । वर्णाश्रमकर्मानुष्ठानोचितशुद्धिज्ञानसाध्यतया पूर्वोक्तः अथ परकर्मरूपात् श्रेष्ठश्रद्धापूर्वकमत्कथाश्रवणादिरूपं भक्तिकारणं साधनं चकाराद्भक्तिमपि पुनः कथयिष्यामि ॥ १९ ॥

श्रद्धा अमृतकथायां श्रद्धापूर्वकश्रवणमिति फलितोऽर्थः ॥ २० ॥

सर्वभूतेषु मन्मतिः मद्भावनया सर्वेषां भूतानां पूजा इत्यर्थः तत्रापि मद्भक्तपूजाऽभ्यधिका ॥ २१ ॥

मदर्थेषु सर्वेषु कार्येषु अङ्गचेष्टा देहक्रिया ईरणं कथनम् अर्पणं निरोधः कामाः मद्भजनविरोधिनः संकल्पास्तत्परिवर्जनम् ॥ २२ ॥

मदर्थे मद्भजनार्थमर्थस्य धनग्रामकलत्रादेः परितः सर्वतः त्यागः कर्तव्यः अत एव भोगस्यार्थसेवनस्य च सुखस्य च परित्यागः कर्तव्यः यद्वा मदर्थं मयि अर्थतद्भोगतत्सुखानां परित्यागो मदात्मकत्वेन समर्पणं कर्तव्यमित्यर्थः । किंबहुना यदिष्टादि तच्च मदर्थं त्यागः कर्तव्य इत्यर्थः ॥ २३ ॥

एवं धर्मैरुक्तप्रकारैः आत्मनिवेदिनां लब्धात्मबोधानाम् भक्तिः प्रेमविशेषलक्षणा अस्य ज्ञानभक्तिसम्पन्नस्य साधनरूपः कोऽर्थोऽवशिष्यते न कोऽपीत्यर्थः । ज्ञानभक्तिभ्यां युक्तो भविष्यतीति फलितोऽर्थः २४ ॥

भाषा टीका ।

एक श्रुति शब्द प्रमाण दूसरा प्रत्यक्ष प्रमाण तीसरा ऐतिह्य महाजनों का कथन प्रमाण चौथा अनुमान प्रमाण ऐसे चार प्रमाणों से पदार्थों की स्थिरता न होने से इन नाना प्रकार के भेदों से ज्ञानी पुरुष निवृत्त होजाता है ॥ १७ ॥

और स्वर्गादि के साधन जो कर्म है वे नष्ट होने वाले हैं तिससे यहां से ब्रह्मलोक पर्यन्त सर्वत्र अमंगल ही है इसी से ज्ञानी पुरुष उन लोकों को जैसे यहां के दृष्ट लोक नाशमान हैं तैसे अदृष्ट लोकोंको भी नश्वर देखे ॥ १८ ॥

हे अनघ ! उद्धव बड़ी प्रीति करने वाले तुम्हारे अर्थ भक्ति योगतो मैने पहिलेही कहदिया है फिरभी मेरीभक्ति के परम कारण को कहूंगा ॥ १९ ॥

मेरी अमृत रूपी कथा में श्रद्धा करना निरन्तर मेरा अनुकीर्तन करना पूजामें परि निष्ठा करना स्तोत्रों से मेरी स्तुति करना ॥ २० ॥

मेरी परिचर्या में आदर करना सब अङ्गों से मेरा वंदन करना मेरे भक्तों की भागवतों की अधिक पूजा करना सम्पूर्ण प्राणी मात्र मे मेरी भावना करनी ॥ २१ ॥

सब शरीर की चेष्टा मेरेही लिये करनी वचन से मेरे गुणों का कथन करना मनका मेरेमे अर्पण करना सब कामों का वर्जन करना ॥ २२ ॥

मेरे लिये पदार्थों का त्याग करना भोग सुखभी मेरे लिये छोड देना यज्ञ दान जप व्रत तप जो कुछ हो सो मेरे लिये करना ॥ २३ ॥

हे उद्धव ! जो मनुष्य इस प्रकार से मेरे लिये आत्मनिवेदन करते हैं उनकी मेरे में भक्ति उत्पन्न होजाती है तब उनको कौनसा मनोरथ मिले बिना बाकी रह सकता है ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

किंबहुना चित्तमेवान्तर्बहिर्निष्ठमर्थानर्थयोः कारणमित्याह । यदाऽऽत्मनीति द्वाभ्याम् । यदा आत्मनि मयि ईश्वरे चित्तमर्पितं तदा पुमान् धर्मादीन् प्राप्नोत्येव ॥ २५ ॥

एतदेव व्यतिरेकेण द्रढयति । यदा तच्चित्तं विकल्पे

उद्धव उवाच ॥

यमः कतिविधः प्रोक्तो नियमो वाऽरिकर्शन ! ।
कः शमः को दमः कृष्ण ! का तितिक्षा धृतिः प्रभो ! ॥ २८ ॥
किं दानं किं तपः शौर्यं किं सत्यमृतमुच्यते ।
कस्त्यागः किं धनं चेष्टं को यज्ञः का च दक्षिणा ॥ २९ ॥
पुंसः किं स्विद्बलं श्रीमन् ! भगो लाभश्च केशव ! ।
का विद्या ह्रीः परा का श्रीः किं सुखं दुःखमेव च ॥ ३० ॥
कः पण्डितः कश्च मूर्खः कः पन्था उत्पथश्च कः ।
कः स्वर्गो नरकः कः स्वित्को बन्धुरुत किं गृहम् ॥ ३१ ॥
क आढ्यः को दरिद्रो वा कृपणः कः क ईश्वरः ।
एतान् प्रश्नान् मम ब्रूहि विपरीतांश्च सत्पते ! ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

देहगृहादावर्पितं तद्विषयेषु परिधावति तदाधिकं रजस्वलमसन्निष्ठं च भवति ततश्च विपर्ययमधर्मादिकं विद्धि ॥ २६ ॥

स्वाभिप्रेतान् धर्मादीन् व्याचष्टे ।,धर्मो मद्भक्तिकृत् यतः स एव प्रोक्तः प्रकृष्ट उक्तः शास्त्रेषु ॥ २७ ॥

धर्मादीनां महाजनप्रसिद्धानामन्यथा व्याख्यातत्वाद्यमादिष्वपि संख्यातः स्वरूपतो वा किञ्चिद्वैलक्षण्यं स्यादित्येवं संभावनया तद्विशेषं जिज्ञासुः पृच्छति । यम इति पञ्चभिः ॥ २८ ॥

इष्टमभ्यर्हितं धनं च किम् ॥ २९ ॥

परेति विद्यादीनां विशेषणम् श्रीमेयडनम् ॥ ३० ॥ ३१ ॥

प्रश्नान् पृष्टानर्थान् विपरीतानशमादीन् ॥ ३२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

धर्मादीन् प्राप्नोतीति भक्तेस्तटस्थलक्षणम् ॥ २५ ॥

एतदेव ईश्वरार्पितचित्तस्य धर्मादिप्रापकत्वमेव व्यतिरेकेण ईश्वरार्पणाभावे विपर्ययकथनेन ॥ २६ ॥

स्वाभिप्रेतान् स्वाभिमतान् । मद्भक्तिकृदेव धर्म इति स एव मुख्यवृत्त्या धर्मशब्देन वाच्य इत्यर्थः । ततो भक्तिकृत्त्वादेव । शास्त्रेषु, एवं धर्ममनुष्ठानामुद्धवात्मनिवेदिनाम् । मन्निमित्तं कृतं पापमपि धर्माय जायते । मामनादृत्य धर्मोऽपि पापं स्यान्मत्प्रभावतः यत् करोषि यदश्नासि । कुर्वाणा यत्र कर्माणीत्यादिवचनजातेषु ऐकात्म्यं सर्वेषां परमस्वरूपमद्रूपेणैकस्वरूपत्वम् ॥ २७ ॥

महाजनप्रसिद्धानां वेदप्रतिपाद्यप्रयोजनवद्यो धर्मः ज्ञानं द्रव्यादिसमस्तपदार्थादिविवेकः वैराग्यं मनस्यासक्तावपि बाह्यस्त्यागलक्षणः शुष्को विरागः । ऐश्वर्यं ग्रामाद्याधिपत्यम् । इत्यादिलक्षणाक्रान्तानाम् अन्यथा वैष्णवशास्त्रानुसारेण संभावनया सन्देहेन तद्विशेषं यमादीनां लक्षणसंख्याऽन्यां वैलक्षण्यम् ॥ २८ ॥

अभ्यर्हितं श्लाघ्यम् ॥ २९ ॥

भग इत्यत्र दयेति टीकासंमतः पाठः । दया लोकवत्सिद्धैवेत्यनेन दयायाः पृष्टत्वावगमात् । तामं व्याचिख्यासुरित्यादिना अपृष्टस्यापि भगस्य व्याख्याने हेतुविशेषस्य व्याख्यानाच्च ॥३०॥३१॥

प्रश्नानित्यस्य कर्मसाधनत्वात् पृष्टार्थानिति व्याख्यातं प्रष्टव्यानिति कश्चित् ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मदर्पितमिति रजस्वलमनात्मनिष्ठं यत् चित्तमिन्द्रियैरर्पितं शब्दादिविकल्पं परिधावति तच्चित्तं विपर्ययं विद्धि भ्रान्तियुक्तं विद्धि ॥ २६ ॥

प्रकृतं धर्मादिचतुष्टयं विवृणोति । धर्म इति । मद्भक्तिकारणम् ऐकात्म्यदर्शनम् एकात्मशब्दो बहुव्रीहिः तस्य भाव ऐकात्म्यं सर्वेषामात्मनामेकेन परमात्मना आत्मवत्त्वदर्शनमित्यर्थः ॥ २७—२९ ॥

ह्रीरित्यत्र का ह्रीरित्यन्वयः ॥ ३०—३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेव स्पष्टीकरोति । यदेति । यदा सत्त्वोपबृंहितं भवेत् मायारीकृतरजस्तमस्त्वेनोपबृंहितं सहितम् मन एव आत्मं रागाद्य-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कलुषितं चित्तमन्तरात्मनि मय्यर्पितं तदा स पुमान् धर्मादीनभिपद्यते ॥ २५ ॥

उक्ताकारविपरीताकारं चित्तं स्वधर्मज्ञानवैराग्यानैश्वर्योपादकमित्याह । यर्हीति । रजस्वलं रजःशब्दस्तमसोऽप्युपलक्षणार्थः रजस्तमःप्रचुरमसन्निष्ठं देहासक्तं यच्चित्तमिन्द्रियैरर्पितं शब्दादिविकल्पं प्रति परिधावति विकल्प इति सप्तम्यन्तपाठे शब्दादिविषयेऽर्पितमित्यर्थः । तच्चित्तं विपर्ययमधर्मादिकारणं विद्धि ॥ २६ ॥

अन्यथा व्याख्यानदूरीकरणाय धर्मादिचतुष्टयं विवृणोति । धर्म इति । मद्भक्तिकृन्मद्भक्तिकारणम् ऐकात्म्यदर्शनम् । एकात्मशब्दो बहुव्रीहिः तस्य भाव ऐकात्म्यं सर्वेषामात्मनामेकपरमात्मात्मकत्वं तद्दर्शनमित्यर्थः । गुणेषु शब्दादिविषयेष्वसङ्गः अनर्थहेतुत्वपर्यालोचनपूर्विकानासक्तिः ॥ २७ ॥

एवं धर्मादिषु विवृतेषु प्रसङ्गान्मुक्तिसाधनतयोक्तयमनियमाद्यवान्तरभेदयमादिस्वरूपबुभुत्सया पृच्छति । यम इत्यादिना सत्पते! इत्यन्तेन । हे अरिकर्षण ! का धृतिः ॥ २८ ॥

ऋतमुच्यते यदृतमुच्यते तत्किमिति प्रश्नः इष्टं सुखसाधनं किमित्यर्थः ॥ २९ ॥

हे श्रीमन् ! का दया को लाभः ह्रीरित्यत्र का ह्रीरित्यन्वयः ॥३०-३१॥

कृपणः कः कश्चेश्वरः एतान् प्रश्नान् प्रष्टव्यान् भक्त्युपयुक्तान् मम मह्यं ब्रूहि विपरीतानयमादीन् मुक्तिविरोधिनश्च ब्रूहीति स्वन्वयः हे सतांपते ! ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यदा सत्त्वगुणेनोपबृंहितं सत्त्वान्वितमत एव शान्तं चित्तं मय्यर्पितं भवति तदा धर्मादिकमाप्नोतीत्यनेन धर्माद्यर्थी विशिष्टोऽस्तीत्येतत्परिहृतम् ॥ २५ ॥

विपक्षे बाधकमाह । यदीति । यदि तच्चित्तं विकल्पेऽपि तामिन्द्रियैरपि निन्दितेषु विषयेषु धावति । तर्हि तच्चित्तं रजस्वलं रजो दूषितं राजसमसन्निष्ठं तामसञ्च विपर्ययं दुःखकारणं च विद्धि ॥ २६ ॥

धर्मादिकमभिपद्यत इत्युक्तं तद्विशिनष्टि । धर्म इति । ऐकात्म्यदर्शनमित्येतत्—

एकः प्रधान उद्दिष्टो विष्णोः प्राधान्यदर्शनम् ।
ऐकात्म्यदर्शनं प्रोक्तं सर्वज्ञानोत्तमं च तत् ॥

इत्यनेन व्याख्यातम् ॥ २७ ॥

तत्र तत्र भक्तिसाधना नियमादयः कथ्यन्ते तत्स्वरूपविवित्सया तत्रोद्धवः पृच्छति । यम इत्यादिना ॥ २८—२९ ॥

श्रीमत् धनं किञ्चित् ॥ ३०—३२ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्य तद्द्वयलक्षणं दर्शयन् धर्मादयश्च तदनुगता भवन्तीत्याह । यदेति । अत्यादिना भक्तिर्भगवत्यर्पितमेत्यादिः ॥ २५ ॥

व्यतिरेकेण च सूचयति । यदीति । यच्चित्तं विकल्पे देहगृहादावर्पितं सत्परिधावति तद्रजस्वलमसन्निष्ठं च चित्तं विपर्ययं विपरीतं मत्प्रेमरहितं विद्धीति ॥ २६ ॥

मद्भक्तिकृदेव धर्मः प्रकर्षेणोक्तो नान्यः ततः स एव मुख्यवृत्त्या धर्मशब्देन वाच्य इत्यर्थः एवमेव भक्तावपि धर्मशब्दः एवं धर्मैरितीति भावः ऐकात्म्यं सर्वेषां परमस्वरूपं मद्रूपैर्योकरूपत्वं यथा एक एव सर्वेषामात्मा योऽहं स्वयं भगवान् स एकात्मा स्वार्थे ष्यञ् तद्दर्शनमेव ज्ञानं प्रोक्तमिति पूर्ववत् ॥ २७—३२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कोऽन्योऽर्थोऽस्यावशिष्यते इत्यल्पमत्या भगवदुक्तेरेवमुक्तलक्षणा केवला निर्गुणा भक्तिर्ज्ञानाङ्गत्वेन न व्याख्येया ज्ञानाद्यङ्गभूता भक्तिस्त्वितोऽन्या सात्त्विकी वर्तत एव तयैव सकामभक्तः स्वापेक्षितं धर्मज्ञानादिकं प्राप्नोत्येवेत्याह । यदेति । यत् शान्तं चित्तम् आत्मनि परमात्मनि मयि अर्पितं सात्त्विक्या भक्त्या मद्विषयीकृतं भवति तत् धर्मादियुक्तं भवतीत्यर्थः ॥ २५ ॥

व्यतिरेकं दर्शयति । यत् चित्तं विकल्पे देहगेहादौ अर्पितं तत् रजस्वलं सत् विषयान् परिधावति असन्निष्ठं निषिद्धविषयासक्तं च भवति तच्चित्तं विपर्ययं प्राप्तं विद्धि अधर्ममज्ञानमवैराग्यमनैश्वर्यं च प्राप्नोतीत्यर्थः ॥ २६ ॥

धर्मादीन् व्याचष्टे । धर्म इति । मद्भक्तिकृत् मद्भक्तेः कृत् कारकं यत्र वस्तुनि भवेत् स धर्मः धर्मादीनामन्यतो विलक्षणं लक्षणं श्रुत्वा यमादीनामपि अन्यतः स्वरूपतश्च वैलक्षण्यं सम्भाव्य पृच्छति यम इति पञ्चभिः ॥ २७—२८ ॥

इष्टमभ्यर्हितं च किम् ॥ २९ ॥

श्रीर्मण्डनम् ॥ ३०—३१ ॥

प्रश्नान् पृष्टानर्थान् विपरीतांश्चेति पृष्टार्थानामेतेषामुक्त्यैव एतद्विपरीताः स्वत एवोक्ता मया ज्ञाताश्च भविष्यन्तीति भावः ॥३२॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

क्रममाह । यदेति । आत्मनि मयि यदा चित्तमर्पितं तदाधिकारी धर्मादीन् क्रमादभिपद्यते प्राप्नोति अत्र परवस्तुवेदनरूपस्य ज्ञानस्यैव भूम्ना स्मृतिभक्तिरूपत्वान्मद्भक्तेः पृथक् निर्देशः ऐश्वर्यं मम साधर्म्यं मोक्षमभिपद्यते ॥ २५ ॥

एतदेव व्यतिरेकतया द्रढयति । यर्हीति । यत् यदा विकल्पे देहगेहादौ चित्तमर्पितं सदिन्द्रियैर्द्वारभूतैर्विषयेषु परितो धावति तदा सत्कारणं ब्रह्म तद्विपरीतमसत्कार्यं संसारः तन्निष्ठं रजस्वलं भवति ततो विपर्ययमभिपद्यते अधर्मादिकमज्ञानं सद्विमुख्यमनैश्वर्यं च प्राप्नोति ॥ २६ ॥

धर्मादीन् व्याचष्टे धर्म इति । ऐकात्म्यदर्शनं सर्वत्र एकत्व

१ धाति ।

श्रीभगवानुवाच ॥

अहिंसा सत्यमस्तेयमसंगो ह्रीरसंचयः ।
आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाभयम् ॥ ३३ ॥
शौचं जपस्तपो होमः श्रद्धातिथ्यं मदर्चनम् ।
तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम् ॥ ३४ ॥
एते यमाः सनियमा उभयोर्द्वादश स्मृताः ।
पुंसामुपासितास्तात ! यथाकामं दुहन्ति हि ॥ ३५ ॥
शमो मन्निष्ठता बुद्धेर्दम इन्द्रियसंयमः ।
तितिक्षा दुःखसंमर्षो जिह्वोपस्थजयो धृतिः ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निःसमानातिशयस्य कारणस्य आत्मनः परमात्मनो मम दर्शनम् ऐश्वर्यमणिमादय इति । अणिमादयोऽत्र मुक्तिप्रतिबन्धभूताः मुमुक्षुहेयाः सिद्धयो नोक्ताः अपि तु तासामष्टौ मत्प्रधाना इति अनुगुणतया प्रागुक्ताः "परमं साम्यमुपेत्य, मम साधर्म्यमागताः" इति श्रुतिस्मृतिप्रोक्तमुक्तगुणविशेषाः बोध्याः ॥ २७ ॥

धर्मादीनां व्याख्याविशेषं श्रुत्वा यमादीनपि पृच्छति । यम इति ॥ २८ ॥

इष्टं हितं धनं किम् ॥ २९ ॥

परेति विद्यादीनां विशेषणम् ॥ ३० ॥

श्रीमेयडनम् ॥ ३१ ॥

प्रश्नान् प्रश्नविषयान् अर्थान् विपरीतान् अशमादीन् ॥ ३२-३३ ॥

---

भाषा टीका ।

जब परमात्मा के विषे चित्त अर्पण किया जाता है तब सत्त्वगुण में वर्धित होताहै सो शांत होजाता है तब धर्म ज्ञान वैराग्य ऐश्वर्य इन गुणोंको प्राप्त करता है ॥ २५ ॥

जब देहादि विकल्पों में अर्पित होता है इन्द्रियोंके साथ दौड़ता रहता है तब रजोगुणी होजाता है असत् पदार्थमें लमता है तब विपरीत अधर्म अज्ञान अवैराग्य अनैश्वर्य इन गुणोंको प्राप्त करता है ॥ २६ ॥

धर्म यही है कि जिसमें मेरी अथवा कीर्तनादि भक्ति होवे परमात्मा का सर्वत्र व्याप्ति देखना यही ज्ञान है विषयोंमें आसक्ति नहीं करना यही वैराग्य है अणिमादिकों की प्राप्ति ऐश्वर्य है ॥ २७ ॥

उद्धव उवाच हे अरिकर्शन ! शत्रुनाशक ! यम कितने प्रकार का है नियम कितने हैं हे कृष्ण ! कौन शम है हे प्रभो ! कौन दम है तितिक्षा कौन है धृति कौन है ॥ २८ ॥

दान क्या है तप क्या है शौर्य क्या है सत्य क्या है ऋत क्या है त्याग क्या है धन क्या है इष्ट क्या है यज्ञ क्या है दक्षिणा क्या है ॥ २९ ॥

हे श्रीमन् ! पुरुष का बल क्या है हे केशव ! भग क्या है लाभ क्या है विद्या क्या है लज्जा क्या है उत्तम श्री क्या है सुख क्या है दुःख क्या है ॥ ३० ॥

पंडित कौन है मूर्ख कौन है मार्ग कौन है खोटा मार्ग कौन है स्वर्ग कौन है नरक कौन है बंधु कौन है घर कौन है ॥ ३१ ॥

धनी कौन है दरिद्र कौन है कृपण कौन है कौन ईश्वर है हे सत्पुरुषों के पति ! इतने मेरे इन प्रश्नों के उत्तर कहिये और इन के विपरीत जो हैं तिन को कहिये ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यमनियमानाह । अहिंसेति त्रिभिः । अस्तेयं मनसापि परस्वाग्रहणम् आस्तिक्यं धर्मे विश्वासः ॥ ३३ ॥

शौचं बाह्यमाभ्यन्तरं चेति द्वयम् अतो द्वादश नियमाः श्रद्धा धर्मादरः ॥ ३४ ॥

उभयोः श्लोकयोर्ये स्मृतास्ते यमा नियमाश्च यद्वा उभयोः प्रवृत्तनिवृत्तयोः मुमुक्षोर्यमा मुख्याः सकामस्य नियमा मुख्याः स्मृता इत्यर्थः । अत्र हेतुमाह हि यस्मादुपासिताः सेविताः सन्तः पुंसां प्रवृत्तानां निवृत्तानां च यथाकामं कामानुसारेण मोक्षमभ्युदयं च दुहन्तीति ॥ ३५ ॥

मुमुक्षोरुपादेयान् शमादीन् हेयांश्च दुःखादीन् महाजनप्रसिद्धेभ्यो विलक्षणानाह । शम इत्यादिना यावत्समाप्ति । एतेनैव तद्विपरीता अशमादयोऽप्युक्ताः । शमो मन्निष्ठता बुद्धेर्न तु शान्तिमात्रम् दम इन्द्रियसंयमो न चौरादिदमनम् तितिक्षा विहितदुःखस्य संमर्षः सहनं न भारादेः जिह्वोपस्थयोर्जयो वेगधारणम् धृतिर्न त्वनुद्वेगमात्रम् ॥ ३६ ॥

---

दण्डन्यासः परं दानं कामत्यागस्तपः स्मृतम् ।
स्वभावविजयः शौर्यं सत्यं च समदर्शनम् ॥ ३७ ॥
ऋतं च सूनृता वाणी कविभिः परिकीर्तिता ।
कर्मस्वसंगमः शौचं त्यागः संन्यास उच्यते ॥ ३८ ॥
धर्म इष्टं धनं नृणां यज्ञोऽहं भगवत्तमः ।
दक्षिणा ज्ञानसंदेशः प्राणायामः परं बलम् ॥ ३९ ॥
भगो म ऐश्वरो भावो लाभो मद्भक्तिरुत्तमः ।
विद्यात्मनि भिदाबाधो जुगुप्सा ह्रीरकर्मसु ॥ ४० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

दण्डो भूतद्रोहस्तस्य त्यागो दानं न धनार्पणम् कामत्यागो भोगोपेक्षा तपो न कृच्छ्रादिः स्वभावो वासना तस्य विजयः प्रतिबन्धः शौर्यं न विक्रान्तिः समं ब्रह्म तस्य दर्शनमालोचनं सत्यविषयत्वात्सत्यं न यथार्थभाषणमात्रम् ॥ ३७ ॥

अन्यच्च ऋतं सूनृता सत्या प्रिया च वाक् एवं च ऋतसत्ययोः स्फुट एव विवेकः क्रमप्राप्तं त्यागं व्याख्यातुमादौ ततोऽर्थभेदेन शौचं व्याचष्टे तस्यापि मलत्यागरूपत्वे त्यागाभेदप्रतीतेः कर्मस्वसङ्गमोऽनासक्तिः शौचं त्यागस्तु संन्यास इति तयोर्भेद इत्यर्थः ॥ ३८ ॥

नृणामिष्टं धनं धर्मो न पश्वादिसाधारणम् भगवत्तमः परमेश्वरोऽहमेव यज्ञः मद्बुद्ध्या यज्ञोऽनुष्ठेयो न क्रियाबुद्ध्येत्यर्थः यज्ञार्थं दानं दक्षिणा सा च ज्ञानोपदेशो न हिरण्यादिदानम् तेन हि यज्ञरूपो विष्णुः प्राप्यते दुर्दमदमनं बलं तच्च मनोदमनहेतुत्वात्प्राणायाम इति ॥ ३९ ॥

लाभं व्याचिख्यासुः प्रथमं भगं ततो भेदेन व्याचष्टे लोके तयोरभेदप्रसिद्धेः भगो भाग्यं तच्च मे ऐश्वरो भावो मदीयमैश्वर्यादिषाड्गुण्यमित्यर्थः । उत्तमो लाभस्तु मद्भक्तिर्न पुत्रादिः विद्या चाऽऽत्मनि प्रतीतस्य भेदस्य बाधो न ज्ञानमात्रम् अकर्मसु जुगुप्सा हेयत्वदर्शनं ह्रीर्न लज्जामात्रम् ॥ ४० ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी

अहिंसेति त्रिकम् । अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमा इति पातञ्जलिसूत्रे पञ्चानां परिग्रहोऽत्र तु द्वादशानामिति संख्यातो वैलक्षण्यम् एवम् । शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमा इत्यस्मिन् सूत्रे पञ्चानां नियमानाम् परिग्रह इह तु द्वादशानामिति तत एव तत् ॥ ३३ ॥

बाह्यमाभ्यन्तरं चेति तत्र बाह्यं मृज्जलादिभिः कायादिप्रक्षालनम् । आभ्यन्तरं मैत्र्यादिभिश्चित्तमलानां प्रक्षालनम् । जपश्च स्वाध्यायापरपर्यायः प्रणवपूर्वाणां मन्त्राणां मुहुरुच्चारणम् । तपश्चान्द्रायणादि एकादश्यादिव्रतं वा । सूत्रे निष्कामतया सर्वक्रियाणां परमेश्वरेऽर्पणलक्षणमीश्वरप्रणिधानम् । अत्र तु स्वरूपतो विलक्षणानां होमादीनां परिग्रह इति वैलक्षण्यं व्याख्यानम् ॥ ३४ ॥

प्रथमार्थे मूलोक्तपद्यस्य मूल एवं संख्यापरिग्रहस्य कुत्राप्यनुक्तत्वात् अधिकारिनियोगानभिधानाच्च यद्वेति । अत्र प्रवृत्तिनिवृत्तिव्यवस्थायाम् अभ्युदयं स्वर्गादि ॥ ३५ ॥

एतेनैव शमादिलक्षणेन अत्र बुद्धेर्भगवन्निष्ठतायाः शमत्वोक्त्या बुद्ध्यधीनानामिन्द्रियादीनां स्वसम्बन्धेनैव यमादिकं भगवान्मेने इति महाजनवैलक्षण्यम् ॥ ३६ ॥

तस्य प्रमाणः । सत्यविषयत्वात् परमार्थसत्यब्रह्मकर्मकत्वात् ॥ ३७ ॥

ऋतमत्यनेत्रमित्यादौ ऋतस्य सत्याद्यन्यत्वात्स्फुटत्वमुक्तम् । अपृष्टस्यापि शौचस्याभिधाने हेतुं व्याचष्टे क्रमप्राप्तमिति । ततः शौचात् भेदेन पृथक्त्वेन तत्र हेतुः तस्यापीति । शौचस्यापि द्विविधस्य कायमनोमलत्यागरूपत्वेन लोके त्यागाभेदप्रतीतेः अनासक्तिरेव शौचं न मलत्यागमात्रं संन्यास एव त्यागो न तु प्रत्यापत्तिरूपं सर्वस्वदानमात्रम् । तयोः शौचत्यागयोः ॥ ३८ ॥

धर्म एव धनं न पश्वादि । कुतः साधारणं सर्वसाधारणत्वात् । सा च ज्ञानोपदेश इति ज्ञानस्योपदेशो यस्मात् सः ज्ञानोपदेशहेतुराचार्यभक्तिविशेष एव मुख्या दक्षिणा न हिरण्यादिदानमात्रमित्यर्थः । अन्यथा शिष्यस्य यजमानस्य ज्ञानोपदेशकर्तृत्वेनाचार्यत्वापत्तेः तेन ज्ञानोपदेशेन तच्च बलम् । ननु दयाद्याः किम लक्षणं प्रोक्तमित्यत आह । लोकप्रसिद्धेवेति निर्हेतुकपरदुःखप्रहाणेच्छा कृपेति लोकप्रसिद्धलक्षणैवाभिप्रेतेति न विलक्षणं तल्लक्षणं कृतमित्यर्थः ॥ ३९ ॥

लाभं क्रमप्राप्तं ततो लाभात् । भेदेन पृथक्त्वेन अपृष्टस्यापि भगस्य व्याख्याने हेतुमाह । लोके तयोरिति । तयोर्लाभभगयोः भावोऽत्र प्रकृतिजन्यबोधे प्रकारीभूतो धर्मविशेषः । स चैश्वर्यादिषाड्गुण्यमेवेति तथा व्याख्यातं भेदो मर्त्योऽहं देवोऽहं बालोऽहं युवाहमित्यादि बुद्धिस्तस्या बाधः न ज्ञानमात्रम् । शास्त्रार्थज्ञानमात्रं विद्या ॥ ४० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अभयमिति पदम् अन्यस्मात्स्वस्य भयाभावात् अभयान्तरं

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

द्वादशत्वसमावृत्येषां च यथाभावश्च विवक्षितः उभयो-द्वादश अभयमित्युभयविवक्षया तत्रोच्चारणम अत एवमेषां द्वादशत्वं पूर्णं स्यात् ॥ ३३—३६ ॥

स्वभावविजयः मनुष्यादिस्वभावविजयः क्षुत्पिपासानभिभूतत्वं समदर्शनम् अपक्षपातेन दर्शनम् ॥ ३७ ॥

यथा दृष्टार्थविषया वागृतम् ऋतसत्ययोर्भेदः कर्मस्वसङ्गमः कर्तृत्वाभिमानाभावः संन्यासः फलत्यागः ॥ ३८ ॥

भगवत्तमः अतिशयितज्ञानादिमान् ज्ञानसंदेशः ज्ञानप्रदानम् ॥ ३९ ॥

ऐश्वरो भावः ईश्वरसम्बन्धी स्वभावः ऐश्वर्यवीर्ययशःप्रभृतयः आत्मनि भिदाभावः देवमनुष्यात्वाद्यभिमाननिवृत्तिः अकर्मसु निषिद्धकर्मसु जुगुप्सा ह्रीः ॥ ४० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यमान्नियमांश्च परिगणय्य दर्शयति सार्धद्वयेन । तत्राद्यश्लोकोक्ता यमाः शौचादयस्तु नियमा इति विवेकः । उभयोः श्लोकयोर्द्वादश स्मृताः तत्र शौचमान्तरं बाह्यं चेति शौचादीनां द्वादश संख्यावगन्तव्या यद्वा अभयशब्देन स्वल्पान्वेष्यः अस्मादन्येषां च भयाभावश्च विवक्षित इति तेनान्यतरेण साकं शौचादीनां द्वादशत्वमवगन्तव्यम् अहिंसा भूताद्रोहचिन्ता सत्यं भूतहितावहं वचः अस्तेयं मनसापि परस्वाग्रहणम् असङ्गः काञ्चनासक्तिः ह्रीस्वरूपं स्वयमेव वक्ष्यति असंचयः अपरिग्रहः आस्तिक्यं शास्त्रार्थविश्वासः ब्रह्मचर्यं स्त्रीसङ्गराहित्यं मौनं वृथालापवर्जनं स्थैर्यमचाञ्चल्यं क्षमा तितिक्षा तद्यथाः स्वरूपं वक्ष्यति ॥ ३३ ॥

शौचं शास्त्रीयकर्मयोग्यता जपो मन्त्रावृत्तिः तपः शास्त्रीयकायक्लेशः श्रद्धा चिकीर्षितविषयत्वरा आतिथ्यमतिथिभोजनं तीर्थाटनं तीर्थयात्रा परार्थेहा परोपक्रिया तुष्टिर्यदृच्छालाभसन्तुष्टिः ॥ ३४ ॥

किमेभ्य इत्यत आह । पुंसामिति । उपासिता अनुष्ठिता एते हे तात ! यथाकामम् इच्छानुसारं दुहन्ति फलन्तीत्यर्थः ॥ ३५ ॥

अथ शमादीनां स्वरूपं विवृणोति । शम इत्यादिना यावदध्यायसमाप्ति । एतेनैव तद्विपरीता अशमादयोऽप्युक्ष्याः बुद्धेर्मन्निष्ठता या सा शमः नतुः शान्तिमात्रमित्यर्थः । इन्द्रियसंयमो बाह्येन्द्रियनियमनं न चौरादिदमनमात्रं दुःखसंमर्षो दुःखस्य सहनं न भारादेः जिह्वोपस्थयोर्निग्रहधारणा धृतिः नत्वनुद्वेगमात्रम् ॥ ३६ ॥

दण्डो भूतद्रोहस्तस्य त्यागो दानं न धनार्पणमात्रं कामत्यागो भोगानपेक्षा तपो न कृच्छ्रादिः स्वभावविजयः क्षुत्पिपासाद्यनभिभूतत्वं शौर्यं नतु शत्रुविजयमात्रं समदर्शनं तारतम्यापोहेन सर्वस्य ब्रह्मात्मकत्वदर्शनं सत्यं न यथार्थभाषणमात्रम् ॥ ३७ ॥

सूनृता यथादृष्टार्थविषया वाणी ऋतं नतु प्रियभाषणमात्रं कर्मस्वसङ्गमः कर्तृत्वाभिमानाभावः शौचं नतु स्नानादिजन्यमात्रं शौचमपूर्वमत्राभिप्रेतत्वाद्ब्रह्मध्यानं संन्यासः कर्मफलत्यागस्त्याग उच्यते नतु कर्मत्यागः ॥ ३८ ॥

नृणां धर्मो मद्भक्तिरूपधर्मः इष्टं धनं नतु वित्तमात्रं भगवत्तमोऽतिशयितज्ञानशक्त्यादिमानहं यज्ञः स्वर्गापवर्गसाधनभूतो हि यज्ञः स चाहमेवेत्यर्थः । ज्ञानसंदेशो ज्ञानं संदिश्यते सम्यगुपदिश्यते येन तादृशि प्रणिपातेन परिप्रश्नेन सेवयेत्याद्युक्तेन प्रणिपातसेवादिना स ज्ञानसंदेशो दक्षिणा नतु हिरण्यादिदानमात्रं प्राणायामः परं बलं नतु दुर्मददमनं बलम् ॥ ३९ ॥

यश्चोऽहं भगवत्तम इत्युक्तं कस्तर्हि भग इत्यभिप्रायमाशङ्क्य तं दर्शयन् । भगो म ऐश्वरो भाव इति ईश्वरस्यस्वभावासाधारणभावः ऐश्वर्यवीर्ययशःप्रभृतिः परदुःखनिराचिकीर्षा दया लोकप्रसिद्धैवेति न व्याख्याता उत्तमोत्कृष्टा मद्भक्तिरेव लाभो नतु पुत्रादिः आत्मनि भिदाभावो देवमनुष्यत्वाद्यभिमाननिवृत्तिर्विद्या नतु ज्ञानमात्रम् अकर्मसु निषिद्धकर्मसु जुगुप्सा हेयत्वदर्शनं ह्रीर्नतु लज्जामात्रमित्यर्थः ॥ ४० ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विपरीतमुक्तेभ्योऽन्यद्दोषः ॥ ३३—३५ ॥

दुहन्ति फलानीति शेषः ॥ ३६—३७ ॥

दण्डन्यासः अशास्त्रविहितदण्डत्यागः दण्डत्याग इति वा पाठः स्वभावविजयः स्वमनोजयः समदर्शनं यथावस्तुदर्शनम् ॥ ३८ ॥

कर्मस्वसङ्गः नाहङ्कृतिरिति ॥ ३९ ॥

इष्टं धनं धर्मः भगवत्तमोऽहं यज्ञः यजेन इज्य इत्यर्थः ज्ञानसंदेशः ज्ञानोपदेशः दक्षिणा ऐश्वरो भावो ममेश्वरत्वभावनं भगः आत्मनि भिदाबाधः सर्वतः विलक्षणो हरिरिति ज्ञानं विद्या ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अहिंसेति त्रिकम् उभयोरिति यमे नियमे चेत्यर्थः ॥ ३३—३५ ॥

अन्तःकरणस्य स्वनिष्ठत्वमेव शममुक्त्वा अन्तः करणार्थानामिन्द्रियादीनां च स्वस्वसम्बन्धेनैव यमादिकं मेने ॥ ३६ ॥

समदर्शनं नारायणपराः सर्वे इत्यादिरीत्या ॥ ३७—३८ ॥

टीकायां सा च ज्ञानोपदेश इति ज्ञानस्योपदेशो यस्मात्सः ज्ञानोपदेशप्राप्तिहेतुत्वाच्चादर्थे भक्तिविशेष इत्यर्थः नहि यजमानो ज्ञानोपदेशं करोति यथा हिरण्यादिदक्षिणामिति यद्वा भगवत्तमः स्वयं भगवद्रूपः श्रीकृष्णाख्यो ऽहमेव यज्ञो मज्ज्ञानेनैव यज्ञफलप्राप्तेः "सर्वे वेदाः सर्वविद्याः सशास्त्राः सर्वे यज्ञाः सर्वइज्याश्च कृष्णः विदुः कृष्णं ब्राह्मणास्तत्त्वतो ये तेषां राजन् ! सर्वयज्ञाः समाप्ताः" इति महाभारतोक्तेः तस्मिंश्च ज्ञाने यः संदेशः सम्वादः आचार्यानुकूलं वचः तदाज्ञानुष्ठानं वा स एव दक्षिणा तत्सन्तोषकरत्वात् ज्ञानपर्यायकत्वाच्च ॥ ३९ ॥

भिदा मर्त्योऽहं देवोऽहं वाग्मोऽहं गुणाभिमानादिबुद्धिरूपतया वाध्यः ॥ ४०—४४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यमनियमानाह । अहिंसेति द्वाभ्याम् । शौचं बाह्यमाभ्यन्तरं चेति द्वयम् यमा द्वादश नियमाः उभयोः श्लोकयोर्ये स्थिता-स्ते यमा नियमाश्च यथा यथावद्भक्त्या कामं पूरयन्तीति यम-नियमौ मन्मते अन्यमते च तुल्यसंख्याकौ तुल्यलक्षणौ च मन-योरपि भगवन्मते वैलक्षण्यं मन्मतेऽस्त्याशङ्क्य निष्कर्षयंमेवै-तत्प्रश्नोत्तरे ज्ञेयं ॥ ३३—३५ ॥

साधकानामुपादेयान् शमादीनाचार्यान्तरलक्षणवैलक्षण्येन लक्षयति । शम इत्यादिना यावदध्यायपरिसमाप्ति । बुद्धेर्मन्निष्ठता शम इति मन्निष्ठबुद्धित्वं विना केवला शान्तिर्विरतिर्न इन्द्रिय-संयम इति स्वेन्द्रियदमनं विना स्त्रीपुत्र्यादिदमनं हास्यास्प-दमेव दुःखसंयम इति परावमाननोत्थस्य दुःखस्य शास्त्र-विहितस्य दुःखस्य वा सहनेन तितिक्षा तेन विना तु स्वेच्छ-येव शीतोष्णादिदुःखसहनं मौढ्यमेव जिह्वोपस्थस्य जयं विना अन्यत्र धीरता व्यर्थैव ॥ ३६ ॥

दण्डन्यासः भूतमात्रस्यैव द्रोहत्यागो दानं धनार्पणमात्रं तु न किमपि भोगापेक्षा एकादशीकार्तिकव्रतादौ या विहिता सैव तपः नतु कृच्छ्रादि स्वभावः स्वीयपापण्डित्यादिविख्यापनं तस्य स्वाभाविकयोः कामक्रोधयोश्च राजसतामसयोर्भावयोश्च विजयः प्रतिबन्धं शौर्यं नतु विक्रमः समदर्शनम् ईर्ष्यासूयादिवैषम्यप-रित्यागेन सर्वत्र स्वसमसुखदुःखालोचनम्—

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ! ॥
सुखं वा दिवा दुःखमिति ।

श्रीगीतोक्तेः नतु यथार्थभाषणमात्रम् ॥ ३७ ॥

सूनृतां वाणी सत्या प्रिया च या वाणी सैव नतु यथार्थभाषण-मात्रं तथात्वे दोषवतां दोषकीर्तनमपि प्रसज्जेत तस्मिंश्च सति निन्दा स्यात् सा च सतां श्रोतृणामप्रियेति तस्याः सूनृतवाणीत्वाभावः स्यात् पूर्वाचार्यैस्तु सत्यं यथार्थाचरणम् ऋतवर्णार्थभाषणमित्यन बोक्तं तथा चक्रुः कर्मसु अनासक्तिः शौचं नतु केवलं शुचित्वमेवेति पूर्वापूर्वस्य तताद्गुणधर्मस्य शौचस्य लक्षणमिदमनापूर्णमपि सूपुंगुर्वो दानवत्सरा इति न्यायात् एवं भगो म ऐश्वरो भाव इत्यत्रापि ज्ञेयं त्यागः संन्यासः कलत्रपुत्रादिममतात्यागः नतु भोगत्याग एव त्यागः ॥ ३८ ॥

धर्म एव इष्टं धनं न गजाश्वादि अहं भगवत्तमो यज्ञ-देवतान्तरं एव यज्ञ मज्जन्मयात्राद्युत्सवो यज्ञस्तु वाऽनुष्ठेय इत्यर्थः । नतु नश्वरफलोऽश्वमेधादिः ज्ञानस्य उत्पत्त्यर्थे सत्सं-कीर्तनादिरसानुभवस्य सन्देशः स्वर्णमित्रेषु ज्ञापनैव दक्षिणा नतु धनवस्त्राद्यर्पणं दुर्दमदमनं बलं तच्च मनोदमनहेतुत्वात् प्राणायामः ॥ ३९ ॥

दया लोकप्रसिद्धैवेति न सा लक्षिता मम ऐश्वरो भावो गुणैव ईश्वरत्वं भगः नतु जीवानां ब्रह्मरुद्रादीनामीश्वरत्वमित्यर्थः मद्भक्तिलाभ एव लाभो नतु पुत्रादिलाभः आत्मनि जीवात्मनि अविद्याकृता भिदा सजातीयत्वं तस्या बाध एव विद्या यदुक्तं ईशगुणमयः पुमानिति भिदा यद्योगकृतेति न त्वधीता व्याक-रणाद्या अकर्मसु पापेषु जुगुप्सा लोकनिन्द्यत्वेनैव तत्राप्रवृत्ति-र्ह्रीर्नतु लज्जामात्रम् ॥ ४० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शौचं बाह्याभ्यन्तरभेदाद्विविधम् अतो द्वादशसंख्या-पूर्तिः ॥ ३४ ॥

उभयोः श्लोकयोः पूर्वे यमा उत्तरे नियमा इत्यर्थः । यथा-कामं यथासङ्कल्पं मुक्तिं भुक्तिं च दुहन्ति पूरयन्ति ॥ ३५ ॥

शमादीन् व्याचष्टे । शम इति । शमशब्दः शान्तिमात्रपरत्वेन प्रतीयते वस्तुतस्तु एक एव भगवान् सर्वात्मातो द्वेषादीन् विहाय तं शान्तो भूत्वा भजामीति बुद्धेर्मन्निष्ठता शमः दमशब्दः बाह्यशब्दादिदमनपरतया प्रतीयते विशेषतस्तु सर्वोपद्रवकार-णीभूतैकादशेन्द्रियाणां निग्रहः इन्द्रियनिग्रहेण दान्तो भूत्वा मां भजेदिति फलितोऽर्थः दुःखानां त्रिविधानां सम्यक् सहनं न मारादेः शिक्षादिरत्रपदस्य महदादिभक्त्योरनधिकारात् तज्जयो धृतिः नानुद्वेगमात्रम् ॥ ३६ ॥

दण्डन्यस्तपरपीडाजनकवचनादित्यागो दानं न वस्त्राद्यर्पणमा-त्रम् कामत्यागः दुर्वासनात्यागस्तपः न कृच्छ्रचान्द्रायणादि स्वभा-वस्य शास्त्रविरुद्धायाः प्रकृतेर्विजयः शौर्यं न विक्रान्तिः समस्य सर्वत्र हेतुतया स्थितस्य दर्शनं सत्यं न यथार्थकथन-मात्रम् ॥ ३७ ॥

सूनृता सत्या प्रिया च वाणी ऋतम् क्रमप्राप्तं त्यागं व्याचष्टे स्वाश्रमकर्मसु तत्फलत्यागेन असङ्गरूपः "यस्तु कर्म-फलत्यागी स त्यागीत्यभिधीयते" इति वचनात् तच्चैवेश्वरे युक्तेषु शौचं तच्छुद्धिरूपः कर्मशुद्धिर्मदर्पणमिति वचनात् स्वानन्दपरि-त्यागपूर्वको यः मयि सर्वात्मकत्वेन स्वस्य समर्पणं संन्यासश्च त्याग उच्यते नतु गृहादित्यागमात्रमित्यर्थः ॥ ३८ ॥

इष्टं धनं धर्मः "स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे" इति पूर्वोक्तः । नतु पश्वादि भगवत्तमः निःसमानातिशयैश्वर्य-वानहं यज्ञः सर्वपुरुषार्थसाधनं नतु कर्ममात्रम् दक्षिणा च ज्ञानसन्देशः ज्ञानोपदेशः नतु सुवर्णादिदानमात्रं मनोदमनहे-तुत्वात्परं बलं प्राणायामः ॥ ३९ ॥

मे मम यो भावः "मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते" इत्येवं भूतः स भगः नतु प्राकृत ऐश्वर्यादिमात्रं भगशब्दार्थ इत्यर्थः । नतु तव भावः जीवस्य कथं घटेत इत्यत आह । ऐश्वर इति । ईश्वरस्य मम असाधारणः अयमैश्वरः जीवस्तु तत्समतां मुक्तौ प्राप्नोतीति भावः । "निरञ्जनः परमं साम्यमुपैतीति श्रुतेः इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः" इति श्रीमुखवचनाच्च उत्तमो मोक्षहेतुत्वाच्च लाभो मद्भक्तिरेव आत्मनि भिदाऽब्रह्मा-त्मकत्वभ्रमजः केवलभेदस्तद्बाधो विद्या नतु तार्किकाद्यभि-मतं केवलभेदज्ञानं तत्त्वमसीतिश्रुतेः —

एक समस्तं यदिहास्ति किञ्चित्
तदच्युतो नास्ति परं ततोऽन्यत् ॥
सोऽहं स च त्वं स च सर्वमेत-
दात्मस्वरूपं त्यज भेदमोहमिति ॥

विष्णुपुराणाच्च अकर्मसु निषिद्धकर्मसु जुगुप्सा हेयत्वबुद्धिर्ह्रीः न लज्जामात्रम् ॥ ४० ॥

श्रीर्गुणा नैरपेक्ष्याद्याः सुखं दुःखसुखात्ययः ।
दुःखं कामसुखापेक्षा पण्डितो बन्धमोक्षवित् ॥ ४१॥
मूर्खो देहाद्यहंबुद्धिः पन्था मन्निगमः स्मृतः ।
उत्पथश्चित्तविक्षेपः स्वर्गः सत्त्वगुणोदयः ॥ ४२ ॥
नरकस्तमउन्नाहो बन्धुर्गुरुरहं सखे ! ।
गृहं शरीरं मानुष्यं गुणाढ्यो ह्याढ्य उच्यते ॥ ४३ ॥
दरिद्रो यस्त्वसंतुष्टः कृपणो योऽजितेन्द्रियः ।
गुणेष्वसक्तधीरीशो गुणसंगो विपर्ययः ॥ ४४ ॥
एत उद्धव ! ते प्रश्नाः सर्वे साधु निरूपिताः ।
किंवर्णितेन बहुना लक्षणं गुणदोषयोः ।
गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः ॥ ४५ ॥

इतिश्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे श्रीभगवदुद्धवसम्वादे
एकोनविंशोऽध्यायः ॥ १९ ॥

भाषा टीका ।

श्री भगवान् उवाच अहिंसा सत्य चोरी न करना किसी मे आसक्ती न करना खोटे कार्य मे लज्जा करना द्रव्यादि संग्रह न करना आस्तिकता ब्रह्मचर्य मौन होना स्थिर बुद्धि क्षमा करना अभय रहना इसका नाम यम है ॥ ३३ ॥

पवित्रता जप तप होम श्रद्धा अतिथि सेवा मेरा पूजन तीर्थयात्रा परोपकार चेष्टा सन्तोष आचार्य कीसेवा ॥३४॥

इन दोनो श्लोकों में बारह यम और नियम कहेहैं हे तात। इनके उपासना से पुरुषों को सब मनोरथ प्राप्त होते हैं ॥ ३५ ॥

बुद्धि की मेरे मे निष्ठा होना शम है इन्द्रियों का संयम ही दम है दुःखका सहना तितिक्षा है जिह्वालिंग दोनो का जीतना धृति है ॥ ३६ ॥

किसी को दण्ड न देना इसका नाम दान है कामका त्यागना तप है स्वभाव का जीतना शौर्य है समदृष्टि का नाम सत्य है ॥ ३७ ॥

कवि जनोंने सुन्दर वचन को ऋत कहाहै कर्मोंमे फल की इच्छा रहित होना शौच है सन्यास ही त्यागहै ॥ ३८ ॥

मनुष्यों का इष्टधन धर्म है ऐश्वर्य वालों मे श्रेष्ठ मैं ही यज्ञ हूं ज्ञानका उपदेशही दक्षिणा है प्राणायामही परम बल है ॥३९॥

हमारा जो ईश्वर भाव है सो भग है मेरी भक्तिका लाभ ही उत्तम लाभ है आत्मा मे देवमनुष्यादि भेद दृष्टि छूटना विद्या है कुकर्मों से घिनाई होने का नाम लज्जा है ॥ ४० ॥



श्रीधरस्वामिकृतभावार्थदीपिका।

गुणा एव श्रीर्भूषणं न किरीटादि दुःखसुखयोरत्ययोऽतिक्रमोऽननुसंधानं सुखं न भोगः विषयभोगापेक्षैव दुःखं नाग्निदाहादि बन्धान्मोक्षं द्वयं वा यो वेत्ति स पण्डितो न विद्वन्मात्रम् ॥ ४१ ॥

अहंबुद्धिरित्युपलक्षणम् देहगेहादिष्वहं ममेत्यभिमानवान् मूर्ख इत्यर्थः। मन्निगमो मां नितरां गमयति प्रापयति यो निवृत्तिमार्गः स तु पन्थाः सन्मार्गो न कण्टकादिशून्यः चित्तविक्षेपः प्रवृत्तिमार्गः स उत्पथः कुमार्गो नतु चोराद्याकुलः सत्त्वगुणस्योदय उद्रेकः स्वर्गो नेन्द्रादिलोकः ॥ ४२ ॥

तमस उन्नाह उद्रेकः स नरको न तामिस्रादिः गुरुरेव बन्धुर्न भ्रात्रादिः स चाहमेव यथाऽहं जगद्गुरुः "एक एव परो बन्धुर्विषमे समुपस्थिते। गुरुः सकलधर्मात्मा यत्राकिञ्चनगो हरिः" इति सत्साधनं भोगायतनं गृहं तच्च मानुष्यं मानुषरूपं शरीरमेव न हर्म्यादि गुणैः संपन्न आढ्य उच्यते न धनी ॥ ४३ ॥

असंतुष्टो यः स दरिद्रो न निःस्वः योऽजितेन्द्रियः स कृपणः शोच्यो न दीनः विषयेष्वनासक्तधीर्यः स ईशः स्वतन्त्रो न राजादिः गुणासक्तो गुणेषु सक्तो यश्च स विपर्ययोऽनीशः एतच्च शमादिविपर्ययोपलक्षणार्थम् ॥ ४४ ॥

उपसंहरति। एत इति। साधु मोक्षोपयोगितया एतच्च सर्वं गुणदोषयोर्विवकाभावत्वेन पृष्टमिति तयोः संक्षेपतो लक्षणमाह।

श्रीधरस्वामिकृतभावार्थदीपिका ।

किं बहुना वर्णितेन गुणदोषयोर्लक्षणमेतावदेव तदाह । गुणदोषयोर्दर्शनं दोषः गुणस्तु तदुभयदर्शनविवर्जितः स्वभाव इति ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकोनविंशोऽध्यायः ॥ १९ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

न विद्यामात्रं न्यायादिग्रन्थमात्रं न पण्डितः ॥ ४१ ॥
चित्तस्य विक्षेपो यस्मात् स तथा ॥ ४२ ॥

विषमे संसारवनलक्षणे कष्टे समुपस्थिते प्राप्ते सति । सकलधर्मात्मा सर्वधर्मोपदेष्टा । यत्र यस्मिन् गुरौ तुष्टे भक्तिप्रलभ्यः श्रीहरिर्लभ्यत इति शेषः ॥ ४३ ॥

एतच्च ईशविपर्ययकथनम् ॥ ४४ ॥

एव इत्यर्द्धकं मोक्षोपयोगितया मोक्षसाधनत्वेन । एतावदेवेति पूर्वोक्तानि लक्षणानि व्यवहारमयत्वाद्गौणानि परमार्थमयत्वान्मुख्यं तु लक्षणमेतावदेवेत्यर्थः । गुणदोषयोर्विहितत्वनिषिद्धत्वयोः दर्शनं विवेकः । उभयवर्जितः स्वभाव इति तत्तद्गुणदोषदृष्टिमतिक्रम्य स्वभावत एव परमार्थपथी प्रवृत्तिर्गुण इत्यर्थः । एतदपेक्षयोभयोरपि हीनत्वात् ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणी
एकोनविंशोऽध्यायः ॥ १९ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

श्रीर्गुणा नैरपेक्ष्याद्याः निरपेक्षत्वगुणाद्याः श्रीर्भगवानेव श्रीः सम्पत् एव समृद्धिरित्यर्थः । दुःखसुखात्ययः दुःखतन्मिश्रसुखात्ययः ॥ ४१ ॥

मोक्षगतः मोक्षपथज्ञानम् ॥ ४२—४३ ॥

विपर्ययः भर्तास्वातन्त्र्यम् इदमपृष्टमपि प्रष्टुरभिप्रेतत्वादुक्तम् ॥ ४४ ॥

उभयवर्जितः उभयवर्जनं गुणः अयमर्थः संसारे उपादेयतया चाभिमतानां सर्वपदार्थानां दोषदृष्टतया हेयत्वाविशेषेऽपि तद्विवेकेण इदं गुणवत् इदं दोषवदिति विभागज्ञानं भ्रान्तिरूपत्वादपि इत्यर्थः ॥ ४५ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकोनविंशोऽध्यायः ॥ १९ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नैरपेक्ष्याद्या इत्याद्यशब्देन यदृच्छालाभसन्तोषादिपरिग्रहः नैरपेक्ष्यादिगुणसमुदायः श्रीर्मण्डनं नतु किरीटादिः श्रीरित्यर्थः दुःखसुखात्ययो दुःखमिश्रसुखापायः सुखं नतु भोगः कामसुखापेक्षा शब्दादिविषयसुखापेक्षा दुःखं नत्वग्निदाहादिः बन्धमोक्षवित् बन्धमोक्षकारणवित् पण्डितो नतु विद्यामात्रम् ॥ ४१ ॥

देहादिष्वहम्बुद्धिरात्माभिमानो यस्य स मूर्खो नतु केवलाज्ञानमात्रम् अहम्बुद्धिशब्दो ममताबुद्धेरप्युपलक्षणार्थः देहादीत्यादिशब्देन तदनुबन्धिसंग्रहः मन्निगमः मां नितरां गमयति प्रापयतीति तथा पन्था मद्विषयज्ञानमित्यर्थः सुमार्गः नतु कण्टकादिशून्यो मार्गः चित्तस्य विक्षेपः शब्दादिविषयप्रावण्यमुत्पथः कुमार्गो नतु चौराद्याकुलः सत्त्वगुणस्योदयोऽभिवृद्धिः स्वर्गो नतिन्द्रादिलोकः ॥ ४२ ॥

तमसऽज्ञानादेऽभिवृद्धिर्नरको नतु तामिस्रादिः गुरुरेव बन्धुः स च गुरुरहमेवेत्यर्थः । नतु पितृभ्रात्रादिः हे सखे । मानुष्यं शरीरं गृहं नतु भोगस्थानं हर्म्यादि गुणाढ्यः सद्गुणशाली आढ्यो नतु धनिकः ॥ ॥ ४३ ॥

असंतुष्टः यदृच्छालाभसन्तोषरहितः यः स दरिद्रो नतु निर्धनः उपर्युपरि पश्यन्तः सर्व एव दरिद्रा इति न्यायादितिभावः । अजितेन्द्रियः कृपणः शोच्यो नतु दीनः गुणेषु शब्दादिष्वसक्ता धीर्यस्य स ईशः नतु राजादिः गुणेषु सक्तो यस्य स तु विपर्ययो ऽनीशः इदमपृष्टमपि प्रष्टुरभिप्रेतत्वादुक्तम् ॥ ४४ ॥

व्याख्यानमुपसंहरति । एत इति । प्रश्नाः पृष्टार्थाः सर्वे साधु यथा तथा निरूपिताः इत्थं मोक्षोपयुक्ता यमादयो निरूपिताः तथैव विपरीतानपि निरूपयेयमभिप्रायमालक्ष्य किम्प्रातीतिकलक्षणस्वरूपनिरूपणप्रयासेन यतस्तेषां लक्षणतः संग्रहीतुं शक्यत्वादित्यभिप्रायमाह । किम्वर्णितेनेति । कथं तर्हि मोक्षोपयुक्तानां तद्विरोधिनां विवेक इत्यत आह । लक्षणं गुणदोषयोरिति । गुणदोषयोर्मुक्त्युपयुक्ततद्विरोधिनोर्लक्षणमेतावदित्यर्थः । किन्तदित्यत आह । गुणदोषदृशिरिति । इह संसारिणां दैवायिकदृष्टादृष्टसुखेषु तत्साधनेषु च गुणबुद्धिर्दुःखतत्साधनेषु तु दोषबुद्धिः सैषा उभयी बुद्धिर्दोषः गुणस्तूभयवर्जनम् उभयोः संसारिणां गुणत्वतया दोषत्वतया चाभिमतयोः सुखदुःखयोर्वर्जनं गुणः तयोरुभयोरपि दोषदृष्टिर्गुण इत्यर्थः । स्वेस्वेऽधिकारे या निष्ठा स गुणः परिकीर्त्तितः । विपर्ययस्तु दोषः स्यादुभयोरेष निश्चय इति गुणदोषयोः स्वरूपं स्वयमेवानन्तराध्याये वक्ष्यति तत्र स्वस्वाधिकारनिष्ठानाम स्वस्ववर्णाश्रमानुरूपस्वस्वधर्माहितसाधनेषु धर्मेषु निष्ठा स एव गुणस्तद्विपर्ययनिष्ठा दोष इत्यर्थः एवञ्च मुमुक्षोरनभिसंहितफलस्ववर्णाश्रमोचितधर्मशमदमाद्यङ्गकभक्तियोगनिष्ठा गुणः दृष्टादृष्टसुखसाधने निष्ठा तु दोषः स्वाधिकारनिष्ठा विपर्ययश्चेति गुणदोषदशिर्दोष इत्युक्तं तथा दुःखतत्साधनेषु दोषदृष्टिरपि मुमुक्षवपेक्षया दोष एव दुःखेषु दोषदृष्टिर्हि तन्निवृत्त्युपायेषु प्रवर्त्तयति मुमुक्षोः प्रारब्धकर्मफलभूतदुःखस्यावश्यानुभाव्यत्वेन तन्निवृत्त्युपायेषु प्रवृत्त्यभावात् दुःखार्थकर्मसु तत्स्यापि प्रवृत्त्यभावाच्च अतः स्वाधिकारनिष्ठाविपर्ययस्वरूपत्वाद्दोषदृष्टिरपि दोष एवेत्युक्तम् एवं च मुमुक्षोर्या बुभुक्षवधिकारनिष्ठा सुखदुःखप्राप्तिनिवृत्त्युपायाभिनिवेशात्मिका सैव विपरीतेत्यस्वाधिकारनिष्ठात्वं विपरीतत्वमिति

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इत्यादिभिः प्रोक्ता उच्यते मुनिभिः न दुर्विज्ञेयाद् ॥ ४३ ॥

योऽसन्तुष्टः स एव दरिद्रः न निर्धनः योऽजितेन्द्रियः स कृपणः शोच्यः न हीनः गुणेष्विन्द्रियार्थेषु न सक्ता धीर्यस्य स ईशः यत्पृष्टं विपरीतानपि ब्रूहीति तस्योत्तरमेकदेशकथनेनाह । गुणसंगो विपर्यय इति । गुणेषु संगो यस्य स विपर्ययः अनीशः एवं शमादिविपरीता अपि बोध्याः इति भावः ॥ ४४ ॥

उपसंहरति । एते इति । हे उद्धव ! प्रश्नाः एते सर्वे साधु निरूपिताः अथोक्तशमादिपोषकविघातकगुणदोषयोः प्रसङ्गप्राप्तेन लक्षणेन बहुना वर्णितेन किमपि तु सारं लक्षणं वर्णयामि तदाह । गुणदोषदृशिरिति । गुणदोषयोर्दृशिर्दर्शनमालोचनं दोषः तदुभयवर्जितः स्वभावस्तु गुण इत्यर्थः ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकोनविंशाध्यायार्थप्रकाशः ॥ १९ ॥

———

भाषा टीका ।

निरपेक्ष सात्त्विक गुण भी शोभा है दुः असुख का नहीं मानना ही सुख है काम सुखों की अपेक्षा दुःख है बन्ध-मोक्ष के ज्ञानवाला ही पंडित है ॥ ४१ ॥

देहादिकों मे अहं बुद्धिकरने वाला मूर्ख है मेरे प्राप्ति का मार्ग ही मार्ग है जिसका विक्षेप होना खोटा मार्ग है सत्त्वगुण का उदय स्वर्ग है ॥ ४२ ॥

तमोगुण का बढना नरक है हे सखे ! मैं ही गुरु औ बन्धु हूं मनुष्य का शरीर ही घर है गुणवाला ही धनी है ॥ ४३ ॥

असन्तोष वाला ही दरिद्र है जो अजितेन्द्रिय सो कृपण है गुण मे जिस की बुद्धि आसक्त नहीं है सो ईश है गुणों का सङ्ग ही विपर्यय है ॥ ४४ ॥

हे उद्धव ! इतने तुमारे प्रश्न मैंने सब अच्छे कह दिये अब बहुत गुण दोषों के लक्षण करने से क्या प्रयोजन है केवल गुण दोषों का जो देखना सोई दोष है इस का छोड देना ही गुण है ॥ ४५ ॥

इति श्रीमद्भागवत महापुराण एकादशस्कन्ध में
उन्नीसवोंअध्याय की पं० लक्ष्मणाचार्यकृत
भाषा टीका समाप्त ॥ १९ ॥

———

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे एकोनविंशोऽध्यायः ॥ १९ ॥

——:०:——

## अथ विंशोऽध्यायः ।

———:*:———

उद्धव उवाच ॥

विधिश्च प्रतिषेधश्च निगमो हीश्वरस्य ते ।
अवेक्षतेऽरविन्दाक्ष ! गुणं दोषं च कर्मणाम् ॥ १ ॥
वर्णाश्रमविकल्पं च प्रतिलोमानुलोमजम् ।
द्रव्यदेशवयःकालान् स्वर्गं नरकमेव च ॥ २ ॥
गुणदोषभिदादृष्टिमन्तरेण वचस्तव ।
निःश्रेयसं कथं(१) नृणां निषेधविधिलक्षणम् ॥ ३ ॥
पितृदेवमनुष्याणां वेदश्चक्षुस्तवेश्वर ! ।
श्रेयस्त्वनुपलब्धेऽर्थे साध्यसाधनयोरपि ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विंशे योगत्रयं प्रोक्तं भक्तिज्ञानक्रियात्मकम् ।
गुणदोषव्यवस्थार्थमधिकारिविभागतः ॥ १ ॥

गुणदोषदृशिर्दोषो गुणस्तूभयवर्जित इत्युक्तं तदाक्षिपति । विधिश्चेति पञ्चभिः । विधिश्च प्रतिषेधश्चेश्वरस्य तव निगम आज्ञारूपो वेदः स च विधेयानां प्रतिषेध्यानां कर्मणां गुणं दोषं च पुण्यपापफलरूपमवेक्षते ॥ १ ॥

उत्तमाधमभावेन तदधिकारिणां वर्णानामाश्रमाणां विकल्पं भेदं च गुणदोषरूपमवेक्षते प्रतिलोमानुलोमजं च गुणं दोषं च तथैवावेक्षते प्रतिलोमजा उत्तमवर्णासु स्त्रीषु हीनवर्णेभ्यः पुरुषेभ्यो जाताः सूतवैदेहकादयः अनुलोमजास्तूत्तमवर्णेभ्यः पुरुषेभ्यो हीनवर्णासु स्त्रीषु जाता मूर्धावसिक्ताम्बष्ठादयस्तेषां च "असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः" इति गुणदोषौ द्रव्यादीन् कर्मार्हतानर्हताभ्याम् स्वर्गं नरकं च तत्फलतया गुणदोषरूपमेवावेक्षते एतच्चोत्तराध्याये प्रपञ्चयिष्यते ॥ २ ॥

तथापि प्रस्तुते किमायातमत आह । गुणदोषेति । गुणदोषदृशिर्दोष इति निराकृतत्वाद्गुणदोषभिदादृष्टिमन्तरेण तां विना निषेधविधिलक्षणं कर्मकाण्डगतं तव वचः कथम् तच्च वचोऽन्तरेण नृणां निःश्रेयसं कथं स्यात्तत्रापि श्रोतव्यो मन्तव्य इति साधनविधेर्नानुध्यायेद्बहून् शब्दान्वाचो विग्लापनं हि तदित्यादिनिषेधस्य चावश्यकत्वादिति भावः । यद्वा गुणदोषभिदादृष्टिरूपं निषेधविधिलक्षणं तव वचो विनेति सामानाधिकरण्येनास्तु यद्वा गुणदोषभिदादृष्टिमन्तरेण निषेधविधिलक्षणमपि वचः कथं नु तत्त्वमस्यादिवाक्यवन्निःश्रेयसपरं स्यात् सर्वस्य वेदस्य तत्परत्वाङ्गीकारादित्यर्थः ॥ ३ ॥

ननु पितरो देवाश्च सर्वज्ञाः प्रत्यक्षतो दृष्ट्वा मनुष्येभ्यः कथयिष्यन्ति नेत्याह । पित्रादीनां सर्वेषां तव त्वद्वाक्यरूपो वेद एव तु श्रेयः श्रेष्ठं चक्षुः प्रमापकम् क अनुपलब्धेऽर्थे मोक्षस्वर्गादौ च तथा साध्यसाधनयोरिदमस्य साध्यमिदमस्य साधनमित्यत्रापि तदेवं गुणदोषदृष्ट्यभावे निःश्रेयसं न घटेत ॥४॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

अधिकारिभागतः योगत्रयाधिकारे भेदतया गुणदोषव्यवस्था काम्यकर्माधिकारिणो निखिलगुणदोषभाक्त्वं निष्कामाधिकारिणस्तु ज्ञानभक्तिप्राप्तेः पूर्वं यत् किञ्चित् तद्दाक्षर्यं ताभ्यां भिन्नत्वात्तु न किञ्चिदपीति वा नियामकत्वमित्यर्थः । तद्गुणदोषवर्जनमाक्षिपति पूर्वपक्षविपर्यीकरोति । विधेयानामग्निहोत्रादीनां प्रतिषेध्यानाञ्च कलञ्जभक्षणादीनां शुभाशुभं फलम् कर्मभूतं वेदः कर्त्ता गुणं दोषञ्च यथाक्रमं गुणत्वेन दोषत्वेन चावेक्षते प्रतिपादयतीत्यर्थः । गुणदोषञ्चेति समस्त पाठे चशब्दस्त्वनर्थकः । तदधिकारिणां कर्माधिकारिणां वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्यादीनां भेदमपि वेदः कर्तृभूतः उत्तमाधमरूपतया गुणदोषरूपत्वेन प्रतिपादयति अयमुत्तमस्ततोऽयमधम इत्यर्थः तथैव उत्तमाधमभावेन गुणदोषौ श्रेष्ठत्वनिकृष्टत्वलक्षणौ । तत्फलतया कर्मफलरूपतया । एतच्च द्रव्यादीनाम् गुणदोषरूपत्वञ्च ॥ १ ॥

तथापि गुणदोषावेक्षणेऽपि प्रस्तुते " गुणदोषदृशिर्दोष " इति सिद्धान्ते निराकृतत्वात् गुणदोषदर्शनस्य निषिद्धत्वात् ।

(१) नृस्यात् इति वि० पाठ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवायं कुतः कृत इति शेषः । अतो मे भ्रमः मम चित्तं भ्राम्यतीत्यर्थः ॥ ५ ॥

नहि सर्वस्य वेदबोधितं सर्वं वर्जयितव्यम् इत्युच्यते येन तव भ्रमः स्यात्किन्तु निरूपकभेदेन सर्वं व्यवस्थितम् इत्युच्यते नरकावेक्षया हि स्वर्गो गुणः अतः अपेक्षितगुणदोषविभागमात्रं क्रियतेऽतो विधिनिषेधशास्त्रनिरूपकस्य स्वर्गो नरकश्चेत्युभयमपि दुष्टमिति गुणदोषभेदापवादः कृतः मोक्षोपायस्तु निरूपकस्यापि गुणभूत इति गुणदोषभेदापवादवचनं न तद्गोचरमपितु तद्व्यतिरिक्तविषयमिति परिहारं विवक्षुस्तावदधिकारिभेदेन पुरुषार्थसाधनानि व्यवस्थितानीत्याह । योगास्त्रय इत्यादिना श्लोकेऽधिकार इत्यत आह । यया प्रोक्ताः नृणां श्रेयोविधित्सया श्रेयःप्राप्तुमिच्छया कैवल्यधर्मापवर्गरूपश्रेयःप्रापयितुमिच्छया मया प्रोक्ताः के पुनस्ते इत्यत आह । ज्ञानमिति । ज्ञानञ्च प्रकृतिवियुक्तात्मोपासनात्मकं कर्माभिसंहितफलकर्मयोगः भक्तिः भक्तियोगः एभ्योऽन्य उपायः पुरुषार्थसाधनं कुत्रचिदपि नास्ति कुत्रापि वेदस्मृतिस्मृतीतिहासपुराणादिष्वितरमतिपादनपर इत्यर्थः ॥ ६ ॥

इह नाम तत्र त्रिषु मध्ये कर्मसु निर्विण्णानां तत्फलेषु दुःखबुद्ध्या विरक्तानामत एव न्यासिनां यदृच्छया केनापि भाग्योदयेन तत्साधनभूतकर्मत्यागिनां ज्ञानयोगः तत्र तेषामधिकार इत्यर्थः । कामिनां स्वर्गकामानामनिर्विण्णचित्तानाम् तत्साहितानां कर्मयोगः ॥ ७ ॥

यदृच्छयेति केनापि भाग्योदयेन यदृच्छया मत्कथादौ मत्कथाश्रवणादौ जातश्रद्धः सञ्जातादरः न निर्विण्णो इत्यनेनेदानीं कर्मफलकामित्वं न विवक्षितं किन्तु पूर्वकामनाप्रयुक्तकर्मानुष्ठानवासनया इदानीमपि कर्मफलेष्ववशेषितवासनामात्रत्वम् अत एव नातिसक्तः दोषविषयेष्वतीवासक्तिरहितस्तस्य भक्तियोगः अनुष्ठित इति शेषः सिद्धिदोऽपवर्गदः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

लौकिकं पूर्वपक्षमुपसंहरति—गुणेति । यतो वेद उत्तमं चक्षुः तेन कारणेन नियमाद्गुणदोषभेददृष्टिः अतो हि स्वर्गादिफलैर नतु तर्हीत्थं निश्चितवतस्तव किमिति भ्रम इति तत्राह—निषेधेनेति । यद्यपि एवार्थं भवता भिदायाः गुणदोषयोर्भेदस्य निषेधेनैवापनोद उच्यते इति यस्मात्तस्मात् भ्रमः सञ्जात इत्यतो निश्चयं भवन्तं पृच्छामीति भावः ॥ ५ ॥

अतः सर्वगुणात्मा तु विष्णुरेकः सनातनः ।
अन्यत्सर्वं तत्प्रियत्वाद्गुणो दोषस्तथाऽप्रियम् ॥
एवं ज्ञानवतां दृष्टिरज्ञस्तज्ञावगच्छति ।
कालदेशविशेषेषु प्रीतिभेदमपेक्ष्य तु ॥
अविज्ञातवतस्तस्य मर्यादा वेदतः कृता ।
गुणदोषभिदा नास्ति भगवत्प्रियमन्तरा ॥
गुणदोषस्वभेदोऽन्योऽन्यच भगवत्प्रियात् ।
गुणा ये दोषतामीयुर्दोषाश्च गुणतां क्वचित् ॥
अतो दोषो न दोषः स्यान्न गुणोऽपि गुणी भवेत् ।
भगवत्प्रीतिविज्ञानाद्गुणदोषभिदा यदि ॥
यद्येवं तद्गुणादेव विपर्यासं न कारयेत् ।
गुणदोषभिदा कापि स्यात्तदपेक्ष न हि क्वचित् ॥

इत्यनेनास्य तात्पर्यार्थो विज्ञायते । यद्वा गुणदोषभिदा दृष्टिर्निगमात्ते तव मते अतो नाहिप्रत्युत गुणदोषभिदायाः अपवादोऽपि अतो भ्रम इति गुणदोषयोर्विहिताविहितकर्मानुष्ठानपरिनिष्ठितत्वं वेदो वक्तीति यद्यपि तथाप्ययार्थो न किन्तु भगवत्प्रियाप्रियविवेकज्ञानपरिनिष्ठाविषयः—

ज्ञानस्तु गुणदोषत्वस्वभेदेन वस्तुना ।
दोषापि गुण एव स्याद्भगवत्प्रीतितो गुणः ॥
दोषस्तु तद्विपरीत्यादिति दृष्टा भवेद्गुणः ।
कालदेशविशेषेण प्रीत्यज्ञानाज्जनिष्यतेः ॥
मर्यादागुणदोषाभ्यां कृता वेदेषु सर्वशः ।

इत्येतदेव—

स्वेस्वेऽधिकारे या निष्ठा सगुणः परिकीर्तित ॥
विपर्ययस्तु दोषः स्यादुभयोरेष निर्णयः ।

इत्यादिना वक्ष्यते अतः विहिताद्यनुष्ठानपरिनिष्ठितत्वेन गुणदोषभेदनियमोक्तिर्मत्प्रियादिविवेकज्ञानविषयेतिभावेन भगवद्वचनप्रहसनं परिहरिष्यंस्तिरत्वेन क्रोडीकृत्य मुक्त्युपायानाह योगास्त्रय इति योग उपायानुज्ञामर्थो समर्थोविद्वान् इतिगुणविधिदानां कृतव इति धातोः तान्निर्दिशति । ज्ञानमिति । अन्ययोगं व्यवच्छिनत्ति नेति ॥ ६ ॥

अथ ज्ञानयोगाधिकारिण आह । निर्विण्णानामिति । इह कर्मसु निर्विण्णानां न्यासिनां सनकादीनामिति शेषः—

सनकाद्या ज्ञानयोगा भक्तियोगाश्च देवताः ।
मानुषाः कर्मयोगाश्च त्रिधैते योगिनः स्मृताः ॥
सर्वेषां सर्वयोगैश्च प्राप्यामुक्तिर्न संशयः ।
तथाऽपितु विशेषेण स्वस्तेषां विधीयते ॥

इतिवचनमत्रमानं ज्ञानादिगुणानां त्रिषुसत्वेऽपि (१)सामान्यविशेषविवक्षया विभागो युज्यते प्रमाणानां सत्वात् कर्मयोगाधिकारिणमाह । तेष्विति । ज्ञानभक्तियोगिनो ऽपेक्ष्य ज्ञानभक्त्योरल्पत्वात्कर्मयोगिन इति ॥ ७ ॥

भक्तियोगाधिकारिण आह । यदृच्छयेति । तुशब्दो विशेषं सूचयति यः पुमानिति जातिवेकवचनं यदृच्छया स्वादृष्टोद्भिनभगवदिच्छया जातभक्ता मत्कथादौ विशिष्टभक्त्यावन्तः न निर्विण्णाः नित्योत्पन्नसमाराधासारज्ञानत्वान्न कादाचित्कनिर्वेदाः नातिसक्ताः नित्यसम्पूर्णभोगत्वान्न कादाचित्कविषयाः नातिसक्ता ये पुरुषाः सन्त्येतेषां भक्तियोगो मुख्यभक्तित्वान्मुख्यसिद्धिद इत्यन्वयः । उक्तमेतल्लक्षणं देवानामेवेति देवा एव भक्तियोगिन इत्यर्थः—

भगवद्गुणानुसारेण वेदार्थो नीयते हि यैः ।
भक्तियोगास्तु ते प्रोक्ताः स्मारणादिसुराः सदा ॥

---

१ तथाच स्वसमानाधिकरणगुणानामन्येषां ज्ञानादीनामाधिक्यविवक्षया ज्ञानयोगित्वाद्युक्तिः ।

तावत्कर्माणि कुर्वीत न निर्विद्येत यावता ।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥ ९ ॥
स्वधर्मस्थो यजन् यज्ञैरनाशीः[1] काम उद्धव ! ।
न याति स्वर्गनरकौ यद्यन्यन्न समाचरेत् ॥ १० ॥
अस्मिंल्लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः ।
ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया ॥ ११ ॥
स्वर्गिणोऽप्येतमिच्छन्ति लोकं निरयिणस्तथा ।
साधकं ज्ञानभक्तिभ्यामुभयं तदसाधकम् ॥ १२ ॥
न नरः स्वर्गतिं काङ्क्षेन्नारकीं[2] वा विचक्षणः ।
नेमं लोकं च काङ्क्षेत देहावेशात्प्रमाद्यति ॥ १३ ॥
एतद्विद्वान् पुरा मृत्योरभवाय घटेत सः ।
अप्रमत्त इदं ज्ञात्वा मर्त्यमप्यर्थसिद्धिदम् ॥ १४ ॥
छिद्यमानं[3] यमैरेतैः कृतनीडं वनस्पतिम् ।
खगः [4]स्वकेतमुत्सृज्य क्षेमं याति ह्यलम्पटः ॥ १५ ॥
अहोरात्रैश्छिद्यमानं बुद्ध्वायुर्भयवेपथुः ।
मुक्तसङ्गः परं बुद्ध्वा निरीह उपशाम्यति ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ते निगमात् विधिनिषेधलक्षणादाज्ञारूपाद्वेदात् निगमेन गुणदोषदृष्टिर्नैव इति भगवदाज्ञारूपेण वेदेन अपवादश्च क्रियते अतः इह स्फुटं भ्रमः संशयः ॥ ५ ॥

मुमुक्षोरुत्तमभक्तियोगमारुरुक्षोः यावद्यत्राधिकारस्तत्र निष्ठा गुणः अनधिकारे प्रवृत्तिर्दोषः ततः प्राप्तपरमभक्तियोगः सर्वत्र निरपेक्षः गुणदोषदृष्टिशून्यः दृढविश्वासेन मां स्मरन्मुच्यते इति वक्तुं योगानाह श्रीपुरुषोत्तमः । योगा इति । श्रेयोविधित्सया मोक्षसाधनेच्छया योगा उपायाः अन्यः काम्यकर्मादिरूपः ॥ ६ ॥

तत्तदधिकारिणो दर्शयति । निर्विण्णानामिति द्वाभ्याम् । इह एषां मध्ये परमात्मस्वरूपगुणादिश्रवणमननाद्यभिनिवेशेन कर्मसु निर्विण्णानां त्यक्ततदनुष्ठानाभिनिवेशानाम् न्यासिनां त्यक्तान्तःकरणममतानां यद्वा परमात्मनि अनुष्ठितं कर्मफलत्यागिनाम् ज्ञानयोगः सिद्धिद इत्यग्रिमेणान्वयः । भगवत्स्वरूपादिश्रवणाद्यनुत्पन्नरुचित्वेन तेषु कर्मसु अनिर्विण्णचित्तानां यतो हृदयशुद्धिकामिनाम् कर्मयोगस्तु सिद्धिदः ॥ ७ ॥

यदृच्छया मत्कथादौ जातश्रद्धः मद्भक्त्युपयोगिषु कर्मसु न निर्विण्णः तेषु भक्तिपरत्वान्नातिसक्तः यः पुमानस्य भक्तियोगः सिद्धिदः मत्प्राप्तिलक्षणमोक्षप्रद इत्यर्थः ॥ ८ ॥

भाषा टीका ।

गुण दोष की दृष्टि तो आप की आज्ञारूप शास्त्र से है स्वयं नहीं है फिर आप की आज्ञा से उस गुण दोष दृष्टि का निषेध भी करते हो तो मेरे को इस बात में भ्रम होता है ॥ ५ ॥

श्रीभगवानुवाच सब मनुष्यों के कल्याण के विधान की इच्छा से मैंने ज्ञान कर्म भक्ति ऐसे तीन प्रकार के योग कहे हैं इन से और कोई उपाय नहीं है ॥ ६ ॥

जो लोग इस संसार में कर्मों से उदासीन हैं और त्यागी हैं तिन के लिये ज्ञानयोग है उन कर्मों में जिन का वैराग्य नहीं है और जो कामना वाले हैं तिन के वास्ते कर्म योग है ॥ ७ ॥

जो पुरुष न विरक्त है न आसक्त है परन्तु दैवयोग से मेरी कथादिक में जिस की श्रद्धा होगई है उस के वास्ते मेरा भक्तियोग सिद्धिदायक है ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सावधि कर्मयोगमाह । तावदिति नवभिः । कर्माणि नित्यनैमित्तिकानि यावता यावत् ॥ ९ ॥

कर्मयोगिनो ज्ञानभक्तिभूमिकारोहप्रकारमाह । स्वधर्मस्थ इति ।

---

१ मांस २ योति ३ कालावयवैः स्वदेह इति वि० पाठः ।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अतो यदृच्छयेति पूर्वमुक्तसत्कृपालक्षणं भाग्यं बोधितं तदुक्तम् एताबानेव यजतामित्यादि ॥ ११ ॥

उभयं तत्साधकमिति स्वर्गिणो महाविषयावेशाज्ञारकिणो महापीडावेशात् न तु तयोः कर्मवदसार्वत्रिकत्वात् "तदुपर्यपि बादरायणः सम्भवात्" इति न्यायेन ॥ १२ ॥

तस्मात्प्राप्तेन नरदेहेन ज्ञानभक्ती एव साधयेत्तत्तु स्वर्गस्यादिकं काङ्क्षेदित्याह । न नर इति ॥ १३ ॥

अथ वैराग्यपूर्वकं विज्ञानमार्गं विवृणोति । एतद्विद्वानित्यादिना जातेत्यतः प्राक् ॥ १४—२२ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तदेवं जात्यैवात्यासक्तस्य जीवस्य कर्माधिकारः स्वाभाविक एव स च कियत्पर्यन्तस्तथा ज्ञानाधिकारो भक्त्यधिकारश्च कदा-यर्यादित्यपेक्षायामाह । तावदिति । कर्माणि नित्यनैमित्तिकानि तावता यावत् न निर्विद्येत कर्मणान्तःकरणशुद्धौ सत्यां यावन्निर्वेदो न जायत इत्यर्थः । निर्वेदे तु जाते निर्विण्णानां मावः तथा आकस्मिकसत्कृपाजनिता श्रद्धा यावावदिति ज्ञानयोग इति मदुक्तेर्ज्ञान एवाधिकारो न कर्मणीति श्रद्धातः पूर्वमेव कर्माधिकारः श्रद्धायां जातायान्तु जातश्रद्धस्तु यः पुमानिति मदुक्तेर्भक्तावेव केवलायामधिकारो न कर्मणीति भावः श्रद्धा चेयमास्यन्तिकैव ज्ञेया स च भगवत्कथाश्रवणादिभिरेव कृतार्थी भविष्यामि नतु कर्मज्ञानादिभिरिति दृढतराहितकपवत्रणैव तादृशशुद्धभक्तमङ्गोत्थैव ज्ञेया अतएव

"श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्त्तते ।
आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि न वैष्णवः ॥

इत्युक्तदोषोऽप्यत्र नास्ति आज्ञाकरणात् प्रत्युत जातायां श्रद्धायां तत्करणे आज्ञाभङ्गः प्रसज्जेदिति किन्त्वप्राप्तमहत्सङ्ग-पश्चादुजाततादृशश्रद्धमपि वैष्णवान्तरोत्कर्ष दृष्ट्वैव तद्वदेव कर्मत्यक्त्वा भगवन्तं भजन्तं जनमेव तद्वेन विषयीकरोतीति केचिदाहुरन्यत्तु श्रुतिस्मृती भक्तिप्रतिप्रतिपादिक एव नतु वर्णाश्रमधर्मप्रतिपादिके मयादिष्टानपि स्वकान् धर्मान् संत्यज्य यः सर्वान् मां भजेत्स च सत्तम इति भगवदुक्तिविरोधात् अनन्यभक्तानामस्माकं श्रुतिस्मृत्युक्तविधिनिषेधाभ्यां न किमपि प्रयोजनमिति मत्वा यदेकादश्यादिव्रतानामाचरणं ताम्रपात्रस्थदधिदुग्धादेः कांस्यपात्रस्थनारिकेलोदकस्य च भगवतेऽर्पणं तस्य च भगवदर्पितस्य भक्षणमिति निषिद्धाचरणं च तदेव श्रुतिस्मृती ममैवाज्ञे इति भगवदुक्तिविषयीकरोतीत्याचक्षते न च इति निजवर्णाश्रमधर्मं इति न चलति न कम्पते इति तत्रार्थः अत्र प्राचीनभक्तानामन्यानामपि कर्मिकृतसङ्गनेत्रेणैव तदनुरोधवशात् यदीयत् कर्मकरणं तत्कर्मकरणमेव तत्र श्रद्धाराहित्यात्—

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत् ॥
असदित्युच्यते पार्थ ! न च तत्प्रेत्य नेह च इति ।

भगवदुक्तेः ॥ ९ ॥

स्वधर्मस्थस्य कर्मिणः स्वर्गनरकगामिनः कदाचित्स्यादपि निष्कामकर्मयोगमाह । स्वधर्मस्थ इति । अनाशीः कामः फलकामनारहितः अन्यत् निषिद्धम् अतोऽयं स्वधर्मस्थत्वेन विहिताननुष्ठानात् निषिद्धवर्जनाच्च नरकं न याति फलकामनाराहित्याच्च स्वर्गमपीत्यर्थः ॥ १० ॥

तर्हि स कर्मी किं प्राप्नोत्यत आह—अस्मिन्नेव मर्त्यलोके स्थितः स्वधर्मस्थ इति निष्कामकर्मकरणात् अनघ इति निष्पापत्वाच्च शुचिः शुद्धान्तःकरणःसन् विशुद्धं ज्ञानमाप्नोति ज्ञानान्मोक्षञ्च यदृच्छयेति यदि च यादृच्छिकशुद्धभक्तसङ्गवानस्तदा मद्भक्तिं च केवलां तया च प्रेमाणं प्राप्नोति यदि च कर्ममिश्रज्ञानमिश्रभक्तिमत्साधुसङ्गवानस्तदा ततः प्राप्तया कर्ममिश्रया ज्ञानमिश्रया च प्रधानीभूतया भक्त्या अन्ततः शान्तिरतिं प्राप्नोति ॥ ११ ॥

अतो मुक्तिप्रेमभक्तिसाधकं नरदेहं स्तौति—स्वर्गिण इति षड्भिः । ज्ञानभक्तिभ्यां ज्ञानभक्त्योः तदुभयं स्वर्गिनारकि शरीरम् ॥ १२ ॥

तस्मादुत्कृष्टां नरगतिं प्राप्य ततो निकृष्टां स्वर्गतिं नरकगतिं च कृताभ्यां पुण्यपापाभ्यां न कामयेतेत्याह । नेति । पाप-रहितां नृगतिमपि सुखेन तिष्ठेयमिति बुद्ध्या न कामयेतेत्याह नेममिति । इमं नरलोकं यतो देहावेशात् देहासक्त्या स्वार्थे ज्ञाने भक्तौ वा प्रमाद्यति ॥ १३ ॥

परन्तु एतन्मर्त्यशरीरं साधकमिति विद्वान् जानन् मृत्योः पूर्वमेव अभवाय भवनिवृत्तये यतेत अप्रमत्तः अनलसः सन् अर्थसिद्धिदमप्येतत् शरीरं मर्त्यं मरणधर्मकं ज्ञात्वा ॥ १४ ॥

देहावेशत्यागे दृष्टान्तमाह । यमैर्यमर्वाजर्येरेतैः पुरुषैश्छिद्यमानं कृतं नीडं यस्मिन्कं स्वकृतं स्वस्थाश्रयं वाक्षमुत्सृज्य अलम्पटः अनासक्तः खगश्चतुरः पक्षी यथा याति ॥ १५ ॥

तथैव अहोरात्रैश्छिद्यमानमायुर्बुद्ध्वा निरीह उपशान्तिं प्राप्नोति ॥ १६ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कर्मयोगेन तु ज्ञानभक्तिलाभस्ततो मुक्तिरित्याह । तावदिति त्रिभिः ॥ ९ ॥

यदि अनाशीःकामः अनाशीः फलवासनारहितः कामः सङ्कल्पो यस्य सः स्वधर्मस्थः स्वोचितकर्मपरः यज्ञैः यथा योग्यैः यजन् स्वर्गं न याति यदि अन्यत् निषिद्धं न समाचरेत् अतो नरकं न याति ॥ १० ॥

किन्तु ज्ञानं विशुद्धं भक्तिं वैवक्रमम् विशुद्धमिति पदं लिङ्गविपरिणामेन योज्यं विशुद्धां ज्ञानपूर्विकां मद्भक्तिं वाऽऽप्नोति ततो मुक्तो भवतीति भावः ॥ ११ ॥

उक्तयोगत्रयाधिकारित्वेन मोक्षसाधकं देहं स्तुवन्मुमुक्षोर्मुक्तिमाह । स्वर्गिण इति पञ्चभिः । एतं लोकं नरदेहं ज्ञानभक्तिभ्यां साधकं मोक्षदयेति शेषः । तदुभयं स्वर्गिनारकिदेहद्वयम् ॥ १२ ॥

¹ नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् ।
मयाऽनुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत् स ²आत्महा ॥१७॥
यदारम्भेषु निर्विण्णो विरक्तः संयतेन्द्रियः ।
अभ्यासेनाऽऽत्मनो योगी धारयेदचलं मनः ॥ १८ ॥
धार्यमाणं मनो यर्हि भ्राम्यदाश्वनवस्थितम् ।
अतन्द्रितोऽनुरोधेन मार्गेणाऽऽत्मवशं नयेत् ॥ १९ ॥
मनोगतिं न विसृजेज्जितप्राणो जितेन्द्रियः ।
सत्त्वसम्पन्नया बुद्ध्या मन आत्मवशं नयेत् ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नरः देवानरदेहवान् स्वर्गीतिं नारकीं गतिं वा न काङ्क्षेत इमं लोकं चापि न काङ्क्षेत पुण्यापुण्यमिश्रकर्माचरणेन स्वर्गनरकादिभ्यात्मानं न पातयेदिति भावः । यतो विचक्षणोऽपि देहावेशात्प्रमाद्यति इदं हित्वा अनिष्टे निमज्जति ॥ १३ ॥

तर्हि किङ्कुर्यादित्यत आह । एतदिति । सः नरः विद्वांश्चेत्तर्हि इदं नरशरीरमर्थसिद्धिदमपि मर्त्यं मरणधर्मकं भवति एतज्ज्ञात्वा इत्थंभावं अप्रमत्तः सन् अभवाय ज्ञानभक्तिभ्यां मोक्षाय यतेत ॥ १४ ॥

अप्रमत्त एव यतेत इत्यत्र दृष्टान्तमाह । छिद्यमानमिति । यमैर्निर्घृणैः एतैः प्रसिद्धैः ॥ १५ ॥

अप्रमत्तस्य फलमाह । अहो रात्रैरिति भयेन वेपथुः कम्पो यस्य सः मुक्तसङ्गः सङ्गो येन सः परं माम् बुद्ध्वोपशाम्यति मम साधर्म्यं प्राप्नोति ॥ १६ ॥

———

भाषा टीका ।

जब पर्यन्त फलों से वैराग्य न होवै तब तक कर्मों को करै अथवा जब तक मेरी कथा के श्रवण में श्रद्धा न होवै तब तक कर्मों को करै ॥ ९ ॥

हे उद्धव ! अपने धर्म में स्थित होकर कर्म करै और कामना न करै यदि और दूसरे कर्मों को नहीं करै तो तब स्वर्ग अथवा नरक को नहीं जाता है ॥ १० ॥

अपने धर्म में स्थित होकर इस लोक में वर्तमान होवै पवित्र रहै निष्पाप होवै तब विशुद्ध ज्ञानको प्राप्त होजाता है अथवा दैवयोग से मेरी भक्ति को प्राप्त होता है ॥११॥

इस मनुष्य शरीर को स्वर्ग वाले तथा नरक वाले दोनो चाहते हैं यह शरीर ज्ञान भक्ति दोनों के सिद्ध करने वाला है उन दोनों देवता नारकि शरीरों से ज्ञान कर्म नहीं सिद्ध होते हैं ॥ १२ ॥

बुद्धिमान् मनुष्य न स्वर्ग को इच्छा करै न नरक की न इस लोक की इच्छा करै क्योंकि देह के अभिमान करने से मनुष्य को प्रमाद होजाता है ॥ १३ ॥

इस बात को जान कर पुरुषको मृत्युकाल के आने से पहिले ही अपने मोक्ष के लिये यत्न करना चाहिये साव‑धान होकर जाने कि यह शरीर मरने वाला है तोभी मनोरथ के सिद्ध करदेने वाला है ॥ १४ ॥

यम सरी के निर्दयी दुष्टों से कटते हुये अपने घोंसला‑वाले पेड़ निवासस्थान को छोड़ कर निर्लोभ होकर जो पक्षी चला जाता है सो सुखी हो रहता है ॥ १५ ॥

इसी तरह से रात दिनों के बीतने से स्वयं में अपनी आयु के कटते हुये जान कर काँपता हुआ सत पुरुष संग को छोड़कर परमात्मा को जानकर चेष्टा रहित होकर सब कामनाओं से शांत होजावै ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवमप्रयतमानं प्रमत्तं निन्दति—नृदेहं च्चेवं माद्यं प्राप्तेत्यध्याहारः यो भवाब्धिं न तरेत्स आत्महा तत्र हेतवः आद्यं सर्वफलानां मूलम् एतदुपार्जितकर्मभिः सर्वप्राप्तेः किञ्च सुदुर्लभमुद्यमकोटिभिरपि प्राप्तुमशक्यम् तथापि तु सुलभम् यदृच्छया लब्धत्वात् तं च सुकल्पं पटुतरम् किञ्च गुरुः सम्भितमात्र एव कर्णधारो नेता यस्य तम् मया च स्मृतमात्रेणानुकूलमारुतेन प्रेरितम् ॥ १७ ॥

एवं तावद्विरक्तस्य वैराग्यद्वारा ज्ञानभक्तिसाधकं कर्मयोगमुक्त्वेदानीं सम्यग्विरक्तस्य ज्ञानयोगं तस्य च ज्ञानप्राप्तेः पूर्वं किञ्चित्कृत्यं वर्जनीयं चाऽऽह सार्द्धैस्त्रिभिः । यदा त्वारम्भेषु कर्मसु निर्विण्णो दुःखदर्शनेनाऽप्रसक्तस्तत्फलेषु विरक्तश्च तदा संयतेन्द्रियस्सन्नात्मनाऽभ्यासेनाऽऽत्मार्थेषु विषयेषु अचलं यथा भवति तथा मनो धारयेत् ॥ १८ ॥

———

१ नृदेहमाद्यसुदुर्लभं च । २ आत्मघ्नः ।

एष वै परमो योगो मनसः सङ्ग्रहः स्मृतः ।
हृदयज्ञत्वमन्विच्छन् दम्यस्येवार्वतो मुहुः ॥ २१ ॥
साङ्ख्येन सर्वभावानां प्रतिलोमानुलोमतः ।
भवाप्ययावनुध्यायेन्मनो यावत्प्रसीदति ॥ २२ ॥
निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः ।
मनस्त्यजति दौरात्म्यं चिन्तितस्यानुचिन्तया ॥ २३ ॥
यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया ।
ममार्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र प्रथममेवात्यन्तधारणासंभवात्तत्स्वभावानुसारेण वशीकरणमाह यर्हि आशु आत्मपरिभ्रमदनवस्थितं भवति तदाऽनुरोधेन किञ्चिदपेक्षापूरणद्वारेण ॥ १९ ॥

ननु तर्हि यथा पूर्वमेव स्यात्तत्राऽऽह मनोगतिं तु न विसृजन्नपेक्षेत किंत्वप्रमत्तः सन् वशमानयेदित्यर्थः ॥ २० ॥

अनुरोधमार्गं सदृष्टान्तं स्तौति एष इति। अनुवृत्तिमार्गेण मनसः संग्रहः परमो योगः तत्साधनत्वादुपचारेण स्तुतिः यथा अदान्तस्य दमनीयस्यार्वतोऽश्वस्य हृदयज्ञत्वं स्वाभिप्रायेण गतिमन्विच्छन्नपेक्षमाणोऽश्ववारकः प्रथमं किञ्चिद्गतिमनुवर्तते तदा च रश्मिना तं धृत्वैव गच्छति नतूपेक्षते तद्वदित्यर्थः ॥ २१ ॥

एवमीषद्वशीकृतस्य मनसोऽत्यन्तनैश्चल्योपायमाह—सांख्येनेति त्रिभिः। सांख्येन तत्त्वविवेकेन सर्वभावानां महदादिदेहान्तानामनुलोमतः प्रकृत्यादिक्रमेण भवं प्रतिलोमतः पृथिव्यादिक्रमेणाप्ययं चानुध्यायेत् प्रसीदति निश्चलं भवति ॥ २२ ॥

ननूपायसहस्रेणापि मनो विषयाकारतां न त्यजति किंभूयोभूय उपदेशेनेति चेत्तत्राऽऽह—निर्विण्णस्येति। ततश्चागमापायिषु तेष्वभिभूतात्मदर्शनात्तद्विवेकापन्नसंसारे निर्विण्णस्यातो विरक्तस्य ततश्चोक्तवेदिनो गुरूपदिष्टार्थबोधकस्य ततो गुरूपदिष्टस्यैव चिन्तितस्य पुनः पुनरनुचिन्तया दौरात्म्यं देहाद्यभिमानं त्यजति ॥ २३ ॥

किञ्च यमादिभिर्योगमार्गैरान्वीक्षिक्या पदार्थद्वयशोधनेन ममार्चनध्यानादिभिर्वा वाशब्देनास्य पक्षस्य स्वातन्त्र्यं दर्शयति एतैरुपायैर्योग्यं परमात्मानं मनः स्मरेन्नान्यैरतो यत्नं कुर्यादित्यर्थः ॥ २४ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

अप्रयतमानं यावत्कुर्वन्तं तत्र आत्मघातित्वे । एतादृशि नृदेहसम्पादितकर्मभिः । तथापि सुदुर्लभत्वेऽपि । यदृच्छया केनापि भाग्योदयेन ॥ १७ ॥

तस्य च सम्यग्विरक्तस्य । किञ्चित् कुर्यात् मनोधारणादि । वर्जनीयश्च रजस्तमः मनस उपेक्षणादि । आत्मविषयवृत्तिसन्तत्या सजातीयप्रत्ययप्रवाहेन ॥ १८ ॥

तत्र मनोधारणे । तत्स्वभावानुसारेण मनः स्वभावानुकूल्येन । किञ्चिदपेक्षापूरणं मिष्टान्नादिरूपो द्विविधिं तत् सेवित्वा पुनर्निर्वेदेन तत्त्यजनम् ॥ १९ ॥

यदपेक्षापूरणं तर्हि यथापूर्वं विषयाविष्टम् ॥ २० ॥

अनुरोधमार्गेण आनुकूल्येन मनोनिरोधमार्गेण । अनुवृत्तिमार्गेण । किञ्चित्तदपेक्षापूरणद्वारेण । तत् साधनत्वात् । योगसाधनत्वात् उपचारेण अभेदारोपेण आयुर्घृतमितिवत् स्तुतिः । तद्गतिमश्वगतिं । तदानुवर्त्तनकालं । तमश्वम् ॥ २१ ॥

यावत् प्रसीदतीति मनःप्रसादे भावानां नश्वरत्वानुसन्धानमेव विरक्तिद्वारा साधनमित्यभिप्रेतम् ॥ २२ ॥

ननूपायसहस्रेणेत्यादि शङ्कासमाधानाभासः कश्चिदस्ति तद्युक्तमेव ततश्चेति पृथगेव योजनोत्थापनात् । ततश्च भवाप्ययानुध्यानानन्तरं तेषु भावेषु । तद्विवेकापन्न संसारे आत्मनो देहादेः पृथक्त्वाज्ञानाविलसिते संसारे । निर्विण्णस्य इत्थवक्तुर्यावद्विग्नस्य । अतो निर्विण्णत्वात् ततश्च विरक्तत्वे सति । तत उक्तवेदित्वे सति ॥ २३ ॥

पदार्थद्वयशोधनेन जहदजहल्लक्षणया तत्त्वंपदार्थयोः सामानाधिकरण्येन अस्य पक्षस्य परापरक्षत्वमाशङ्क्य पक्षान्तरमाह—ममार्चोपासनाभिर्वेति । ततश्च यमादिभिर्न प्रयोजनमिति भावः । अन्यैः कर्मभिर्न प्रयोजनं अन्यत् कर्मादिकम् ॥ २४ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

हृदयज्ञत्वस्वमनोऽभिप्रायवेदित्वं मनः कल्पति अश्व इव तत्तदेव गन्तुमिच्छति शाश्वतीत्येवमालोचन गन्धप्रभृतीवर्गस्य उत्पत्तिप्रतिलोमक्रमेणाप्ययः ॥ २२ ॥

दृष्टिः प्रमादः चिन्तितस्यानुचिन्तनं भूयोभूयोभावना ॥ २३ ॥

नस्मरेत् नानुध्यायेत् ॥ २४—२५ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

निर्विण्णस्य संसारादुद्विग्नस्य अत एव विरक्तस्य ॥ २३ ॥
किमन्यया गतिकिंवत्याह ममार्चोपासनाभिर्वेति ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अहो दरिद्रश्चिन्तामणिमकस्मात्प्राप्य पदाक्षिपतीत्याह—नृदेहम् आद्यं सर्ववाञ्छितफलानां मूलम् उत्तमकोटिभिरपि प्राप्तुं अशक्यत्वात् सुदुर्लभमपि केनापि भाग्येन प्राप्तत्वात् सुलभं प्लवं नावं प्राप्येति शेषः तत्राप्यतिभाग्यवशात् सुकल्पं पटुतरं गुरुः संश्रितमात्र एव कर्णधारो नाविकः पारं नेता यत्र तं मया च सेव्यमानेनानुकूलमारुतेन प्रेरितं वाक्यमिदं ज्ञानप्रकरणपातित्वात् तेषां स्वर्गाद्यनश्वरत्वानुपादेयफलत्वात्तायुक्तमिति केचित् शुद्धभक्तानामपि भवाब्धितरणस्यानुसंहितफलत्वाभावेऽपि भवाब्धितरणं भवेदिति विहिताकरणलक्षणः प्रत्यवायो न स्यादित्यन्ये ॥ १७ ॥

ज्ञानभक्त्यधिकारिणोः साधारण्येनैव स्वार्थसाधकं नरदेहं स्तुत्वा ज्ञानाधिकारिणः आवश्यकं कृत्यं तदेव तस्य प्राथमिकं स्वभावं दर्शयति—यदेति सार्द्धैस्त्रिभिः । गृहाद्यारम्भेषु निर्विण्णः दुःखदर्शनेनोद्विग्नः तदधिकारप्राप्तकर्मफलेषु च विरक्तः तदा योगी यमनियमादियोगयुक्तः आत्मनः मनः अचलं यथा स्यात्तथा धारयेत् ॥ १८ ॥

यर्हि तु यत्नेन धार्यमाणमत्यन्तचञ्चलतया आशु प्रथमम् अनवस्थितं त्रिगुणानि चित्तत्वाश्रयं भवेत् चञ्चलतः कामादिवेग स्यात्यन्तधारणेन वेगोद्गुणितो भवेदिति भावः तदा अनुरोधमपि किञ्चिदनुरूपत्वापूरणद्वारेण ॥ १९ ॥

ननु तर्हि यथापूर्वमेव स्यात् तत्राह मनसो गतिं तु विसृजेत् किन्तु स्ववशमेवेत्यर्थः ॥ २० ॥

अनुरोधमार्गमपि किञ्चिदनुरूपत्वापूरणद्वारेण संग्राहनं करोति एष किञ्चिदेतदनुरूपत्वापूरणमार्गेण मनसः संग्रहः स्ववशीकारः परमो योगः यथा दम्यस्य हर्यश्वमित्यादिमतस्य अश्वस्य दुष्टस्य अर्थात् स्वदृष्टया आश्रित्य मम मित्रापविच्छन्नं हयाभिप्रायमन्वास्थो अनतिवर्तोऽवच्छिन्नधारकः सहसा तद्वशीकारासम्भवात् प्रथमं किञ्चिद्गतिमेवानुवर्त्तते इति शेषः । तद्वदित्यर्थः । तदापि दृष्टिपथात् तं भूत्यैव गच्छति न तूपेक्षते ॥ २१ ॥

एवमभिवशीकृतस्य मनसोऽत्यन्तनैश्चल्योपायानाह—सांख्येनेति त्रिभिः । सांख्येन, तत्त्वविवेकेन सर्वभावानां महदादिपृथिव्यन्तानां अनुलोमतः प्रकृत्यादिक्रमेण भवं प्रतिलोमतः पृथिव्यादिक्रमेणाप्ययं च ॥ २२ ॥

निर्विण्णः उक्तार्थपर्यालोचकस्य ॥ २३ ॥

आन्वीक्षिक्या तत्त्वविचारेण ममार्चेति वाशब्देनास्य पक्षस्य ज्ञानादुत्कर्षं दर्शयतीति स्वामिचरणाः वाशब्दोऽप्यर्थे इत्यन्ये एतैरेव योगैः परमात्मानं स्मरेन्नान्यैः ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रमत्तं निन्दति नृदेहमिति मुख्याधिकारिदेहमाद्यं प्रथमं मुख्यमित्यर्थः अत एव सुदुर्लभमपि दैवात्सुलभं नृदेहं प्लवं नावमाश्रित्य भवाब्धिं यो न तरेत्स आत्महा ॥ १७ ॥

एवमेकेन श्लोकेन योगात् द्वाभ्यां तदधिकारिभेदं त्रिभिः कर्मयोगिनो ज्ञानभक्त्यादिप्रकारं पञ्चभिर्योगिनां मुक्तिप्रकारं तत एकेन प्रमत्तनिन्दां चोक्त्वाथ सर्वेषां योगिनामुपकारकं मनोनियमनमाह—यदारम्भेष्विति सप्तभिः । यदारम्भेषु संसारप्रापकेषु कर्मसु निर्विण्णः यतो विरक्तस्तत्फलभोगेच्छारहितः तदा जितेन्द्रियः सन् आत्मनो मनः अचलं यथा भवति तथा अभ्यासेन धारयेत् ॥ १८ ॥

अभ्यासमेवाह—धार्यमाणमिति त्रिभिः । यर्हि धार्यमाणमाशु भ्रश्यत् अनवस्थितं भवति तदा अनुरोधेन किञ्चिन्मनोनुसारेण कपटभूतेन मार्गेण नतु योगेश्वरानुरोधेनत्यर्थः ॥ १९ ॥

एतदेवाह—मनइति द्वाभ्याम् । जितप्राणः कृतप्राणायामः जितेन्द्रियः विषयेभ्यः प्रत्याहृतेन्द्रिय हृद्यात् हृत्कमलभवने इति हृदयं प्रति तत्रैवमभिवच्छन् मनोगतिं न विसृजेत् किन्तु आत्मवशां नयेत् एव मनसोऽभ्यस्य दम्यस्य दुर्दान्ततया दमनीयस्य मनसः संग्रहः परमो योगः परमयोगसाधनत्वादिति द्वयोरन्वयः ॥ २० ॥ २१ ॥

मनोनिग्रहस्योपायानाह—सांख्येनेति त्रिभिः । सांख्येन सङ्ख्यायन्ते तत्त्वानि आत्मनात्मरूपाणि यया सा सङ्ख्या तत्त्वगणना तत्रानुधारणेन कारणस्य नित्यतयोपादेयत्वं कार्याणां नित्यतयानुपादेयत्वं चेत्यवभूतेनोपादेयानुपादेयविवेकेन यावन्मनः प्रसीदति कारणे नित्ये ब्रह्मणि निष्ठां प्राप्नोति तावत् सर्वभावानां महदादिस्थूलपर्यन्तानाम् अनुलोमतः सृष्टिक्रमतः भवम् प्रतिलोमतः संहारक्रमतोऽप्ययं ध्यायेत् ॥ २२ ॥

कार्याणामनित्यत्वध्यानेन तेषु निर्विण्णस्यातो विरक्तस्य "उक्तवादिनः कारणं तु ध्येयम्" इति श्रुत्युक्तकारणज्ञानवतः चिन्तितस्य कारणस्य ब्रह्मणः अनुचिन्तया ध्यानसन्तत्या दौरात्म्यं अनित्यविषयाभिमानं त्यजति ॥ २३ ॥

यमादिभिर्योगपथैर्योगमार्गैः आन्वीक्षिक्या चिदचिद्ब्रह्मात्मकपदार्थत्रितयस्वरूपया विद्यया ममार्चोपासनाभिर्वा येनकेनाप्येकपक्षस्य परमपदप्राप्तिसाधनमात्रेण सूच्यते एतदुपायैर्मनो दौरात्म्यं त्यजति अन्यैः स्वाधिकारवर्जितैर्न त्यजति इत्थं शुद्धमनो मुमुक्षुः किं कुर्यात्तत्राह योगं मां स्मरेत् ॥ २४ ॥

---

भाषा टीका

यह मनुष्य शरीर सब फलों का कारण है बड़े दुर्लभ से मिलता है भगवत् कृपा से अब सुलभ भया है सब कार्य करने में समर्थ है समुद्र तरने को नौका रूप है इस में सब गुरु रूप खेवटिया भी मिला है अनुकूल रूप मेरे वचन से प्रेरित है ऐसे नाव रूप शरीर को पाकर भी जो संसार सागर को न तरे वह पुरुष आत्मघाती है ॥ १७ ॥

यदि कुर्यात्प्रमादेन योगी कर्मविगर्हितम् ।
योगेनैव दहेदंहो नान्यत्तत्र कदाचन ॥ २५ ॥
स्वेस्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ।
कर्मणां जात्यशुद्धानामनेन नियमः कृतः ।
गुणदोषविधानेन सङ्गानां त्याजनेच्छया ॥ २६ ॥
जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु ।
वेद दुःखात्मकान् कामान् परित्यागेऽप्यनीश्वरः ॥ २७ ॥
ततो भजेत मां प्रीतः श्रद्धालुर्दृढनिश्चयः ।
जुषमाणश्च तान् कामान् दुःखोदर्कांश्च गर्हयन् ॥ २८ ॥
प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुने ! ।
कामा हृदय्या नश्यंति सर्वे मयि हृदि स्थिते ॥ २९ ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि मयि दृष्टेऽखिलात्मनि ॥ ३० ॥
तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥ ३१ ॥
यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ।
योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥ ३२ ॥

भाषा टीका ।

जब प्रवृत्ति के कर्मों से विरक्त होजावे तब इन्द्रियों का संयम करके योगी पुरुष आत्मा के अभ्यास से निश्चल-मनको धारण करे ॥ १८ ॥

धारणा स्थिर करने से भी मन यदि भ्रमता रहै स्थिर न होवे तब धीरे से मन का कुछ अनुरोध कर के उसको अपने वश करै ॥ १९ ॥

प्राणायाम से प्राण को जीत कर सब इन्द्रियों को जीत कर सत्व गुण युक्त बुद्धि से मन को आत्मा के बस करै ॥ २० ॥

जैसे दमन करने योग्य दुष्ट घोड़ा के मन को रख कर धीरे धीरे उस को वश करते है तैसही धीरे धीरे मनको निग्रह कर लेना यही परम योग है ॥ २१ ॥

जब तक मन न स्थिर हो तब तक सम्पूर्ण पृथिव्यादि पदार्थों का अनित्यादि विचार से क्रम से तथा विपरीत से सब भावों की उत्पत्ति तथा प्रलय इनका ध्यान करता रहै तो मन स्थिर होगा ॥ २२ ॥

जिसको संसार से निर्वेद भया है जो विरक्त है जो इस कहे योग को जानता है वह पुरुष किसी तत्व को चिन्तन कर फिर चिन्ता करता रहै तो मन अपने चञ्चल भाव पनको छोड़ देता है ॥ २३ ॥

यम नियमादिक जो योग के मार्ग हैं तिन से वेदान्तज्ञान से ज्ञानकी निष्ठा मे अथवा कुछ नहीं तो मेरी मूर्ति के पूजन से मनके द्वारा परमात्मा को स्मरण करै वही योग है और किसी उपाय से किसी का स्मरण न करै ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, पापापत्तौ प्रायश्चित्तं कार्यमेव तत्राऽऽह—यदीति । योगेन ज्ञानाऽभ्यासेनैव एतच्च भक्तस्यापि नामकीर्तनाद्युपलक्षणार्थम् नान्यत्कृच्छ्रादि ॥ २५ ।

ननु नित्यनैमित्तिकं कर्म सत्त्वशोधकत्वाद्गुणो हिंसादिकं त्वशुद्धिहेतुत्वाद्दोषः तत्र च तन्निवर्तकत्वात्कृच्छ्रादिप्रायश्चित्तं गुण इति विधिप्रतिषेधाऽभ्यामुक्तत्वात्प्रायश्चित्तं विना योगेन कथं पापं देहेत्तत्राऽऽह स्वेस्व इति स्वाधिकारे निष्ठैव गुणो नेतरः तदुपपादयति—वस्तुतोऽनियतप्रतिषेधाऽभ्यामनेन गुणदोषविधानेन

## श्रीधरस्वामिकृतभावार्थदीपिका ।

कर्मणां नियमः सङ्कोचः कृतः कुत इत्यत आह जात्या उत्पत्त्यैवाशुद्धानाम् स च प्राप्तानां सङ्गानां त्याजनेच्छया अयं भावः पुरुषस्याशुद्धिर्नाम न प्रवृत्तेरन्याऽस्ति स्वाभाविकप्रवृत्त्यैव तस्य मलिनत्वात् न च सहसा सर्वतो निवृत्तिःकर्तुं शक्यते अत इदं न कर्तव्यमिदमेव कर्तव्यमित्येवं स्वाभाविकप्रवृत्तिसंकोचद्वारेण निवृत्तिरेव क्रियते यथा च न प्रवृत्तिरेव वक्ष्यतयोत्तराध्याये वक्ष्याम उत्पत्त्यैव हि कामेष्वित्यादिना अतो योगिनः स्वाभाविकप्रवृत्त्यभावान्न प्रायश्चित्तादिविधिगोचरतेति ॥ २६ ॥

भक्त्यधिकारिणो भक्तियोगमाह—जातश्रद्ध इति नवभिः । मत्कथासु जातश्रद्धोऽत एवान्येषु कर्मसु निर्विण्णो न तु तत्फलेषु विरक्तः तदाह वेदेति यद्यपि वेद तथाऽपि तत्परित्यागेऽनीश्वरोऽसक्तः ॥ २७ ॥

एवम्भूतो यः श्रद्धालुर्भक्त्यैव सर्वं भविष्यतीति दृढनिश्चयः स्यात्ततस्तदनन्तरं मां प्रीत्या भजेत विषयांस्तु सेवमानोऽपि तेषु प्रीतिं न कुर्यादित्याह गर्हयन्निति ॥ २८ ॥

कथं भजेत किंवा ततो भवति तदाह प्रोक्तेनेति द्वाभ्याम् "श्रद्धामृतकथायां मे शश्वन्मदनुकीर्तनात्" इत्यादिना तत्र तत्रोक्तेन मामासकृन्नित्यं भजतो हृदय्या हृद्गताः कामा नश्यन्ति ॥ २९ ॥

हृदयमेव ग्रन्थिरहंकारस्तत्पूर्वकाश्च सर्वे संशया असंभावनादयः कर्माण्यनारब्धफलानि संसारहेतुभूतानि च ॥ ३० ॥

तदेवं व्यवस्थयाऽधिकारत्रयमुक्तम् तत्र च भक्तेरन्यनिरपेक्षत्वादन्यस्य च तत्सापेक्षत्वाद्भक्तियोग एव श्रेष्ठ इत्युपसंहरति तस्मादिति त्रिभिः मदात्मनो मय्यात्मा चित्तं यस्य तस्य श्रेयः श्रेयःसाधनम् ॥ ३१ ॥

तत्र हेतुः यत्कर्मभिरित्यादि इतरैरपि तीर्थयात्राव्रतादिभिः श्रेयःसाधनैर्यद्भाव्यं स्वर्गसुखादि तत्सर्वमञ्जसा अनायासेनैव स्वर्गमपवर्गं मद्धाम वैकुण्ठं लभत एव वाञ्छा तु नास्तीत्युक्तं यदि वाञ्छतीति ॥ ३२ ॥ ३३ ॥

---

## श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

तत्र विगर्हिते कर्मणि । एतच्च ज्ञानाभ्यासेनांहो दहन्कृष्ण ॥२५॥ नित्यं सन्ध्योपासनादि । नैमित्तिकं जातेष्ट्यादि । तत्र च दोषत्वे सति । तन्निवर्त्तकत्वात् । हिंसादिदोषनिवर्त्तकत्वात् । उक्तत्वात् । गुणदोषयोरभिहितत्वात् गुणरूपं प्रायश्चित्तं विना । स्वे स्वे इत्यत्रोक्तम् । तथाच ज्ञानिनो ज्ञानाभ्यास एव गुणः नतु प्रायश्चित्तादिरिति तत्र कुर्यादिति भावः ॥ २६ ॥

तत् अधिकारिभेदेन गुणदोषयोः काल्पितत्वं उपपादयति उपपत्त्या साधयति । यस्माद्धेतोः । अनेन पूर्वसूचितकर्मव्याक्षेपेण । उत्पत्त्यैव स्वभावेनैव । सच सङ्कोचः । ननु गुणदोषविधानेन सङ्गानां त्यागः कथं स्यादत आह अयं भाव इति । तस्याऽशुद्धेः पुरुषस्य । अतः गुणदोषविधानस्य सङ्कोच द्वारा निवृत्तिप्रयोजनत्वात् ॥ २७ ॥

जातश्रद्ध इति युग्मकम् । कथास्विति कीर्त्तनाद्युपलक्षणं । जातश्रद्धो सञ्जातविश्वासः । अतएव जातविश्वासत्वादेव । अन्येषु भगवद्धर्मव्यतिरिक्तेषु । तत्फलेषु कर्मफलेषु । तमेवाह अविरक्तत्वमेवाह । एवम्भूतः निर्वेदेऽपि परित्यागाऽशक्तः । तदनन्तरं विश्वासानन्तरम् । मांभजेत मदनन्यता भक्ताधिकारि स्यात् । तेषु विषयेषु । श्रद्धा चेयं कर्मणि अधिसमर्थविद्वत्त्वयुक्ताधिकारिविशेषणमेव नतु भक्त्यङ्गत्वे प्रविशति स्वाराज्यकामो राजा राजसूयेन यजेतेतिवत् पुरुषविशेषणत्वेन श्रुतत्वात् तदभावेऽपि सकृदपि परिगीतं श्रद्धया हेलया वेत्यादौ तस्याः फलदातृत्वश्रवणाच्च । तदुक्तं रसामृतसिन्धौ । श्रद्धामात्रस्य तद्भक्तावधिकारित्वहेतुता । अङ्गत्वमस्य विश्वासविशेषस्य तु केशवे इति । अतएवानुष्ठानाङ्गत्वेऽपि न प्रविशतीति ज्ञेयम् ॥ २८ ॥

ततो भजनात् ॥ २९ ॥

तत्र तत्र प्रकरणे ॥ ३० ॥

असम्भावनादयोऽसन्देहः आदिना विपरीतभावना तत् कार्यभूता रागादयश्च गृह्यन्ते । न आरब्धं भोगादित्वं सुखदुःखादिफलं येषां तानि अनारब्धफलानि सञ्चितागामिवदीनि प्रारब्धस्य तु भक्तोत्कण्ठावर्द्धनार्थं भगवतैव रक्षणमिति ज्ञेयम् । तथाच पारमर्षं सूत्रम् । तदधिगमे उत्तर पूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादिति । श्रुतिश्च । "तत् सुकृतदुष्कृते विधुनुते एवम् ह वाव न तपति किमहं साधुना करवं किमहं पापमकरवम्" इति ॥ ३१ ॥

तदेवं निर्विण्णानां ज्ञानयोग इत्याद्युक्तप्रकारेण । तत्र च योगत्रयमध्ये । अस्य निरपेक्षत्वाज्ज्ञानाद्यपेक्षारहितत्वात् । अन्यस्य च ज्ञानादेः तत्सापेक्षत्वाद्भक्त्यपेक्षासहितत्वात् । यतो भक्त्यैव कामादिनाशलक्षणं वैराग्यं ज्ञानञ्च स्वतएव स्यात् तस्मात् मद्भक्तियुक्तस्य यानं ज्ञानस्य धनाभ्यासः वैराग्यञ्च वैराग्याभासः । प्रायो वितर्के । श्रेयो न भवेत् किमुत कर्मस्वर्थः । व्यभिचारिभ्रमात्तथाभक्त्यन्तरायाश्च । नतुद्वयमत्यन्तनिषेधार्थः ॥ ३२ ॥

---

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

स्वे स्वे यथाश्रमानुरूपे जात्या शुद्धानां अतः शुद्धानां गुणदोषविधानेन निष्कामसकामत्वप्रतिपादनेन नियमः कृतः व्यवस्था कृता ॥ २६ ॥

सङ्गानां काम्यकर्मश्रद्धानां त्याजने छाया इन्द्रियजयाशक्तस्यापि भगवत्सेवया इन्द्रियजयातिसिद्धिमाहजातश्रद्धादिभिः ॥ २७—३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

बद्ध्यते । किञ्च, भगवदनुभवरूपं ज्ञानं विषयारोचकत्वलक्षणम् वैराग्यं च भक्त्युत्थत्वाद्गुणातीतं तदपि स्वत एव स्यात् यदुक्तं "भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककालः । प्रपद्यमानस्य" इति प्रायग्रहणेन कश्चिच्छान्तभक्तेः प्रथमदशायां तयोर्ग्रहेऽपि नाश्रयत्करः भक्तिर्मुक्त्येव निर्विघ्नत्वावात्ययुक्तविरक्तता इति तन्मतमुक्तं भक्तिरसामृतसिन्धौ ॥ ३१ ॥

ननु, यदि कश्चित्मत्कथादावेव श्रद्धालुस्तु कर्मज्ञानादिषु तद्रोचकत्वादत एव तत्फलेषु स्वर्गापवर्गादिषु स्पृहावांश्च स्यात्तदा किं भवेदत आह—यदिति द्वाभ्याम् । इतरैरपि श्रेयः साधनैस्तीर्थयात्राव्रतादिभिः मद्धाम सालोक्यम् ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यदुक्तमन्यैर्मनोवीरात्स्यं न त्यजतीति तत्र स्वाधिकारे निष्ठा गुणोऽन्याधिकारे निष्ठा दोष इति हेतुमाह—स्वेति सार्द्धद्वाभ्याम् । योगेनैव स्वाधिकारप्राप्तेनैव तत्र प्रमत्त स्वाधिकारबाह्यं कदाचनापि नैव कुर्यात् ॥ २५ ॥

यतः स्वे स्वे अधिकारे कर्मयोगिनः कर्मणि ज्ञानयोगिनो ज्ञाने भक्तियोगिनो भक्तौ या निष्ठा स गुणः परितः सर्वतः कीर्त्तितः अन्याधिकारे निष्ठा दोष इत्यर्थः । सङ्गानां दुःखयोनीनां प्राकृतपदार्थसंयोगानां त्यजनेच्छया मुमुक्षया अनेन मुक्त्युपायविषयकेन गुणदोषविधानेन जात्यशुद्धानां जातित एवाशुद्धानां संसारप्रापकाणां मुक्तिविरोधिनां कर्मणां नियमः कृतः मुक्तेरुपायानां कर्मज्ञानादीनां यथाधिकारं आदरोऽनधिकारे नादरस्तदा तेषां स्वत एव सर्वथानादर इति नियमः कृत इत्यर्थः ॥ २६ ॥

एवं गुणदोषदर्शनप्रयोजनमुक्त्वाऽथ कर्मभिः इह जन्मकृतैरन्यजन्मकृतैर्वा शुद्धान्तःकरणस्य महत्सेवया साधनरूपा कथाश्रवणाद्यात्मिका भक्तिः तया वैराग्य ज्ञानं च जायते "वासुदेवे भगवति भक्तियोगः समाहितः । सध्रीचीनेन वैराग्यं ज्ञानं च जनयिष्यति" इति श्रीमन्नारदोक्तेः तत्र स्वाधिकारप्राप्ते कर्मणि भक्तियोगे वा गुणं पश्यन्नन्यत्र प्रवृत्ताधिकाराभावाद्दोषं पश्येत् एवं शुद्धस्य तदनन्तरं ज्ञानवैराग्याभ्यां पराभक्तिर्जायते ।—

"तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव ! ।
ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावित." ॥

इति पूर्वोक्तत्वात् तथा भक्तस्य गुणदोषवर्जितस्वभावो भवतीत्याह—जातश्रद्ध इति । द्वादशभिः कर्मभिः शुद्धान्तःकरणत्वेन मत्कथासु जातश्रद्धः "तावत्कर्माणि कुर्वीत न निर्विद्येत यावता । मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते" इति पूर्वोक्तश्च । अत एव सर्वकर्मसु निर्विण्णः कारयन्ते इति कामा तान् यद्यपि दुःखात्मकान् वेद तथापि तान् जुषमाणः मां भजेतेत्युत्तरेणान्वयः ।—

"तत्तेऽनुकम्पां सुसमीक्षमाणो भुञ्जान एवात्मकृतं विपाकम् ।
हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक्" ॥

इत्युक्तात् ॥ २७

भगवद्भजनेनैव तत्कर्मणामपराधादिरूपेण [illegible] भगवदुपासनं तद्भक्तिप्राप्तिश्च भविष्यतीति दृढनिश्चयः ॥ २८ ॥

प्रोक्तेन मत्कथाश्रवणादिरूपेण कामानदयति तेभ्यो वैराग्यं भवति मयि हृदि स्थिते मयि ज्ञाते सतीत्यर्थः । मत्कथाश्रवणादिरूपया भक्त्या मद्विषयकं ज्ञानं संसाराद्वैराग्यं च भविष्यतीति फलितोऽर्थः ॥ २९ ॥

ज्ञानफलमाह—भिद्यत इति । हृदयं देहादावहंममाभिमानरूपान्तःकरणवृत्तिः तादृशं हृदयमेव ग्रन्थिः भिद्यते अन्योपि संशयाः उपास्योपासकस्वरूपगुणादिविषयकाः सर्वे क्षीयन्ते कदा आत्मन्यात्मनि मयि दृष्टे सुज्ञाते सति "यद्विज्ञानेन सर्वं विज्ञातं भवति" इति श्रुतेः ॥ ३० ॥

तस्मात्कर्मभक्तिसमुत्पन्नात्सवैराग्यात्सज्ञानात् हेतो मद्भक्तियुक्तो भवति मत्प्रेमानिशेषभक्तियुक्तो भवति तस्य मद्भक्तियुक्तस्य अहमात्मा आश्रयो यस्य तस्य न वैराग्यं चकारात्कर्माणि न श्रेयः न मम वशीकरणहेतुः प्रायोग्रहणेन ज्ञानादीनाम् भक्तिद्वारा श्रेयस्त्वं सूच्यते यथा केनापि हेतुना बहुकालतो राजपुत्रः स्वैरिण्या वियोजितः संवर्द्धितश्च स्वपितुः स्याद्वि तत्र स कदाचित्कमपि कर्मणा तुष्टेन राजस्वरूपगुणाद्यभिज्ञेन प्रबोधितः स्वैरिणीदोषदर्शनेन तस्यां विरक्तश्च कृतः राज्यप्राप्त्युपाये च प्रवर्तितस्तस्य पितृप्रेमविह्वलस्य पितुरङ्के पतितस्य भक्तिरेव पितरं वशीकरोति न पूर्वकृतानि कर्मज्ञानादीनि साधनानि तद्वदिति ॥ ३१ ॥

भक्त्यैव सर्वं यद्यद्वाञ्छति तत्सुलभं भवतीत्याह यदिति द्वाभ्याम् इतरैस्तीर्थयात्रादिभिश्च श्रेयोभिर्हरिप्राप्त्युपाये ॥ ३२ ॥

---

भाषा टीका ।

यदि कदाचित् भक्त योगीजन से प्रमाद वस से कोई खोटा कर्म हो भी जावे तो योगही से उसके पाप को दहन करे और कुछ नहीं करै ॥ २५ ॥

अपने अपने वर्णाश्रम के अधिकार से निष्ठा रखना यही गुण है जाति से अशुद्ध जो कर्म है तिनका यही वात से नियम किया है गुण तथा दोष के विधान से और सङ्गों की त्यागने की इच्छा से ॥ २६ ॥

मेरी कथा में जिसको श्रद्धा भई हो और सब कर्मों मे वैराग्य होगया हो वह सब कर्मों को दुःख रूप जानता है परन्तु परित्याग करने में भी समर्थ नहीं है ॥ २७ ॥

तब अति प्रीति से श्रद्धावान् दृढ़ निश्चयवाला होकर दुःख फलदेने वाले उन कर्मों की निन्दा करता हुआ फिर भी यथा कथंचित् उन का सेवन करता हुआ मेरा भजन करे ॥ २८ ॥

पहिले कहे हुए भक्तियोग से जो मुनि मेरे को निरन्तर भजता है उस मुनि के हृदय के सब काम मेरे हृदय के मध्य मे वास करने से नष्ट हो जाते हैं ॥ २९ ॥

जब सब को अन्तर्यामी मेरे को वह पुरुष हृदय में देख लेताहै तब उस के हृदय की मोह ग्रन्थी छूटजाती है सब संशय उसके मिटजाते हैं और सब कर्म क्षय हो जाते हैं ॥ ३० ॥

सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति ॥ ३३ ॥
न किञ्चित्साधवो धीरा भक्ता ह्येकान्तिनो मम ।
वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥ ३४ ॥
नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम् ।
तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ॥ ३५ ॥
न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः ।
साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥ ३६ ॥
एवमेतान् मयादिष्टाननुतिष्ठन्ति मे पथः ।
क्षेमं विन्दन्ति मत्स्थानं यद्ब्रह्म परमं विदुः ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे श्रीभगवदुद्धवसम्वादे
विंशोऽध्यायः ॥ २० ॥

भाषा टीका ।

जिस से मेरी भक्ति से युक्त मेरे मे मन लगाने वाले योगी के लिये न ज्ञान है न वैराग्य है अर्थात् इन से कल्याण पाने की अपेक्षा नहीं रहती है ॥ ३१ ॥

कर्मों से जो फल होता है तपस्या से जो होता है ज्ञान से जो होगा वैराग्य से जो होगा योग से दान धर्म से और अन्य धर्मों से भी जो कुछ होता है ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र हेतुमाह—न किञ्चिदिति । धीरा धीमन्तो यतो मम एकान्तिनो मय्येव प्रीतियुक्ता अतो मया दत्तमपि न गृह्णन्ति किं वक्तव्यं न वाञ्छन्तीत्यर्थः । अपुनर्भवमात्यन्तिकमपि कैवल्यम् ॥ ३४ ॥

तदुपपादयति—नैरपेक्ष्यमेव परमुत्कृष्टमनल्पकं महन्निःश्रेयसं फलं तत्साधनं च प्राहुः मे भक्तिर्निराशिषः प्रार्थनाशून्यस्य निरपेक्षस्य प्रार्थनाकारणभूतापेक्षारहितस्य पुंसो भवेत् । यद्वा, मे निरपेक्षस्य या भक्तिः सा निराशिषो भवेदित्यर्थः ॥ ३५ ॥

अनेन प्रकारेण सिद्धानां न गुणदोषा इति विरोधपरिहारमुपसंहरति न मयीति गुणदोषैर्विहितप्रतिषिद्धलक्षणैरुद्भवो येषां ते गुणाः पुण्यपापादयः साधूनां निरस्तरागादीनामतः समचित्तानामत एव बुद्धेः परमीश्वरं प्राप्तानाम् ॥ ३६ ॥

काण्डत्रयनिष्ठां निर्दिश्यैतान् मुक्तिमार्गानुपसंहरति—एवमिति । ये पथो मत्प्राप्त्युपायान् येऽनुतिष्ठन्ति ते क्षेमं काल-मायादिरहितं मम लोकं विन्दन्ति यत्परमं ब्रह्म तत्त्व विदुः ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
विंशोऽध्यायः ॥ २० ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तत्र ज्ञानवैराग्ययोः श्रेयस्साधनत्वाऽभावे । यदिति युग्मकम् । सत्त्वशुद्ध्यादीत्यादिना स्वर्गादिपरिग्रहः ॥ ३३ ॥

तत्र वाञ्छाऽभावे । एकस्मिन् मय्येवान्तो निष्ठा येषाम् ते इति मय्येव प्रीतियुक्ता इति व्याख्यानम् । अत एकान्तित्वात् ॥ ३४ ॥

तत् एकान्तित्वम् उपपादयति, युक्त्या साधयति । तत्साधनं फलसाधनम् । पूर्वार्धे प्रार्थनाशून्यत्वेनैवापेक्षाराहित्यमुक्तम् पुनर्निरपेक्षस्येत्यधिकमतो यद्वेति । निराशिषो निष्कामस्य ॥ ३५ ॥

विरोधपरिहारं गुणदोषदर्शनादौ इत्यस्य "अहरहः सन्ध्यामुपासीत न कलञ्जं भक्षयेत्" इत्यादिभिर्यो विरोधः गुणदोषभिदा दृष्टिर्निगमात्ते न हि स्वतः इत्यादिनोक्तस्तस्य परिहारं निवृत्तिं विहितप्रतिषिद्धैः सन्ध्यावन्दनादिकलञ्जभक्षणादिभिः ॥ ३६ ॥

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

एतान् निष्कामकर्मयोगज्ञानभक्तिरूपान् ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
विंशोऽध्यायः ॥ २० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

न वाञ्छन्ति अपवर्गेच्छाविरहे भक्तेः स्वातुरत्वकाष्ठा दर्शिता नत्वपवर्गेच्छाया आनर्थहेतुत्वं "स्वापेक्षां प्रतीक्षते" इति वचनान्तरानुरोधात् ॥ ३४ ॥

मे मत्तः भक्तिप्रदोऽपहमित्यर्थः ॥ ३५ ॥

गुणदोषोद्भवा गुणाः गुणदोषज्ञानमात्रोद्भवा रागद्वेषादयः प्रथगुपायान् येऽनुतिष्ठन्ति ते विदुरित्यध्याहारयोजना नरकापेक्षया स्वर्गो गुणी मतः आपेक्षिकः गुणदोषविभागः मतो विधिनिषेधशास्त्रप्रवृत्तिनिरूपकस्य तु स्वर्गो नरकमुभयमपि दुष्टममिति गुणदोषसद्भावाद् कृतः भक्तियोगस्तु निरूकस्यापि गुणावत्तर इति गुणदोषभावापन्नावचनं न तद्गोचरम् अपितु सङ्कुचितविषयमिति परिहारः फलितः ॥ ३६—३७॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
विंशोऽध्यायः ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, समीहितमपि श्रेय ऐश्वर्यकैवल्यादिरूपं न तस्य भक्तियोगोऽपि साधनमित्यत आह—यदिति । यत्कर्मादिभिरवाप्यते तत्सर्वं मद्भक्तियोगेनाञ्जसा सुखेन लभते तत्र कर्म यज्ञादिरूपं तपः शास्त्रीयकायक्लेशः ज्ञानं प्रकृतिविविक्तात्मोपासनात्मकं वैराग्यं तदुपयुक्तं विषयेषु वैराग्यं योगो योगस्मृत्युक्तः दानमात्मीयद्रव्यस्य परस्वत्वापादनं धर्मो वापीकूपतडागवनादिनिर्माणात्मकः । इतराणि श्रेयः साधनानि तीर्थयात्रा व्रतादीनि सर्वमित्यनेन विवक्षितं विवृणोति—स्वर्गापवर्गमिति । अपवर्गशब्दोऽत्र कैवल्यपरः तस्य प्रकृतिसम्बन्धाभावस्वानरूपत्वात्मस्वात्मेति । मोक्षस्य पृथङ्निर्देशादेवं भक्तियोगस्य सर्वफलसाधनत्वमुक्त्वाऽवान्तरसाध्यसाधनतामाह । मद्धामकर्माश्रयाद वाञ्छतीति लभत इत्यनुषज्यते यदीति । सम्भावनाद्योतको निपातः ॥ ३३ ॥

वाञ्छा तु नास्तीत्यभिप्रेत्य तद्विवृणोति, न किञ्चिदिति । मम भक्ताः नास्ति पुनर्गोतत्व यस्मात्तमपुनर्भवं मोक्षं कैवल्यं च मया दत्तमपि न वाञ्छन्ति यद्वा कैवल्यं निरवद्यं दैवस्वरूपभावानावहमपुनर्भवं मद्धाम न वाञ्छन्तीत्यर्थः । न वाञ्छन्तीत्यपवर्गेच्छाविरहे भक्तेः स्वातुरत्वकाष्ठा दर्शिता नत्वपवर्गेच्छाया आनर्थक्यहेतुत्वं "स्वापेक्षां प्रतीक्षेत" इति वचनान्तरानुपपत्तेः तद्वाञ्छायां हेतुतया सत्वात् विशिनष्टि—एकान्तिनः इति एकान्तिनः मदनुभवैकप्रयोजनपराः अतो मदनुभव एव तेषां प्रयोजनं तदेव विद्यामिति न वाञ्छन्तीति भावः ॥ ३४॥

यदि न वाञ्छन्ति तर्हि तेषां मुक्तिर्न स्यादेव किमित्यत आह—नैरपेक्ष्यमिति । परं केवलमनल्पकं केवलमनल्पकं नैरपेक्ष्यं निःश्रेयसं निःश्रेयसकरम् एकान्तभक्तिरेव निःश्रेयससाधनभूतत्वदवाञ्छतापि मुक्तिस्तेषां एवेति भावः । भक्तियोगोऽपि नितरां निरपेक्षस्यैव प्रतिष्ठितः स्यादित्याह, तस्मादिति तस्मादनल्पनैरपेक्ष्यस्य निःश्रेयसकरत्वान्निराशिषः इष्टादृष्टफलेच्छारहितस्य निरपेक्षस्यापवर्गेऽप्यपेक्षारहितस्य मद्भक्तिर्भवेत् । अन्तरायाऽप्रतिहता भवेदित्यर्थः ॥ ३५ ॥

तदाह—न मयीति । गुणदोषोद्भवा गुणदोषज्ञानमात्रोद्भवाः गुणा रागद्वेषादयो न भवेयुः रागद्वेषादयोऽपि भक्तियोगविघातकाः ते च न स्युरित्यर्थः । तदभावे हेतुत्वेन विशिनष्टि—मय्येकान्तभक्तानामनन्यप्रयोजनभक्तियुक्तानां समचित्तानां गुणदोषविवर्जितचित्तानां बुद्धेः गुणदोषबुद्धेः परम् अतीत धर्मम् उपेयुषामुभयवर्जनात्मकधर्मपराणाम् इत्यर्थः ॥ ३६ ॥

"श्रुत्वा धर्मान् बहूंस्त्वत्तो मोक्षधर्मानपृच्छत । नाहं तेऽभिधास्यामि" इति प्रतिज्ञातमोक्षधर्मनिरूपणमुपसंहरति, तदनुष्ठानफलमाह । एवमिति । मयोपदिष्टानुपदिष्टान्मया: मोक्षमार्गान्येऽनुतिष्ठन्ति ते यत्परं ब्रह्म विदुस्तस्य परब्रह्मभूतस्य मम स्थानं क्षेमं सुखं यथातथाविस्मृतिं लभन्ते मद्विति पृथक्पदं ममेत्यर्थः । यद्वा, समासरूपार्थां वृत्तौ वृत्तस्यापि तस्य मदिति पदस्य सामर्थ्यादिशेषणयोगः ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
विंशोऽध्यायः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कर्मादिना प्राप्यं यच्छ्रेयो न तत् स्वभक्तस्यादयादित्याशङ्कां माभूदित्याह—यत्कर्मभिरिति । यदि वाञ्छति तर्हि लभते न तत्रेतरापेक्षाऽस्तीत्यर्थः । योगेन प्राणायामलक्षणेन ध्यानेन वा ॥ ३३ ॥

ननु यदीति स्वर्गे रागिणां तेषां सर्वाभिलाषसम्भवादिति तत्राह—न किञ्चिदिति । रागिणोऽपि ते भक्तिफलबुद्ध्या न किञ्चिद्वाञ्छन्ति ॥ ३४ ॥

सुखं न वाञ्छन्ति चेत् दुःखयोग्याः किमित्याह—नैरपेक्ष्यमिति नैरपेक्ष्यमकल्मषं निष्पापं परं पूर्णं निःश्रेयसं प्राहुरिति । यस्मात्तस्मात् स्वैकपरायणानां तेषां स्वतः किं सुखलक्षणं फलम् अन्यथा पापात्मत्वमपि श्रेयः स्यादित्याशङ्कां परिहरन्नुपसंहरति, तस्मादिति । निराशिषः संसारविषयाशीर्मुक्तस्य मे एकान्तनिरपेक्षस्य तस्य भक्तिरानन्दरूपिणी भवेदित्यन्वयः यतो भक्तिविषयया भक्ताय फलं देयमत इति—

"यदि दद्याद्भक्तियोगफलं मोक्षमपीश्वरः ।
भक्तियोगफलत्वेन तत्सद्भावीपुरेव ते" ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तथापि मुक्तिस्तु स्यादेवेति सूचयन् निरपेक्षसाधनमें साधनं निरपेक्षत्वमेव भवेदित्युपपादयति, नैरपेक्ष्यमिति। परं श्रेष्ठं महत्वकं निरपेक्षः आनन्दपूर्णः आश्रयः अहं तस्य भावो नैरपेक्ष्यं मद्भावलक्षणं निःश्रेयसं मोक्षं "निरञ्जनः परमं साम्यमुपैति" इत्याद्याः श्रुतयः प्राहुः तस्मान्नैरपेक्ष्यस्य मद्भावसाधनरूपा भक्तिरपि निराशिषो निरपेक्षस्यैव भागवतस्य भवेदित्यर्थः ॥ ३५ ॥

भागवतानां निरपेक्षत्वमेव दर्शयति—नेति। बुद्धेरित्युपलक्षणं देहेन्द्रियमनोबुद्धिप्राणेभ्यः परं विलक्षणं स्वं पदार्थं यद्वा बुद्धेः प्रकृतेः परं मां ध्यानेनोपेयुषां प्राप्तानामत एव साधूनां निरस्तरागादीनामत एव समचित्तानामत एव मय्येकान्तभक्तानां गुणदोषविहेतु दोषपूर्वो येषां गुणानां रागद्वेषादीनां ते न सन्ति गुणदोषवर्जितास्तेषां अभाव इत्यर्थः ॥ ३६ ॥

उपसंहरति, एवमिति। आदिष्टानुपादिष्टान् यथा मुक्तिमार्गान् येऽनुतिष्ठन्ति ते क्षेमं कालकर्मप्रकृतिदोषरहितं परमं परमश्रेष्ठं ब्रह्म व्यापकं यद्विदुः श्रुतयः स्मृतयश्च तन्मम स्थानं विन्दन्ति यमन्ते योऽस्याध्यक्षः स परमे व्योमन् इत्याद्याः श्रुतयः—

"ब्रह्मणः सदनादूर्ध्वं तद्विष्णोः परमं पदम्।
शुद्धं सनातनं ज्योतिः परब्रह्मेति यद्विदुः" ॥

इत्याद्याः स्मृतयश्च ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
विंशाध्यायार्थप्रकाशः ॥ २० ॥

---

भाषा टीका।

इन सब फलों को मेरा भक्त मेरे भक्ति योग से अनायास से प्राप्त हो जाता है स्वर्ग तथा मोक्ष तथा मेरा वैकुंठधाम जो चाहे तो मिल जाता है ॥ ३३ ॥

जो मेरे एकांती भक्त हैं साधु हैं धीर हैं वे तो मेरे देने से भी न कैवल्य को चाहते हैं न मोक्ष को चाहते हैं ॥ ३४ ॥

जो निरपेक्षता है वही बड़ा भारी कल्याण पदार्थ है तिस हेतु से जो निरपेक्ष है औ निष्काम है तिसी को मेरी यथार्थ भक्ति होती है ॥ ३५ ॥

जो मेरे एकांत भक्तों को गुण तथा दोषों के गुण नहीं होते है क्यों कि वे तो साधु हैं समचित्त वाले हैं बुद्धि के पर तीर मे प्राप्त हो गये हैं ॥ ३६ ॥

इस प्रकार कहे हुवे इन मार्गों को जो लोग अनुष्ठान करते हैं वे भक्ति जन क्षेम कल्याण स्थान मेरे पद को प्राप्त होते हैं जिसको कि परब्रह्म कहते है ॥ ३७ ॥

इति श्रीमद्भागवत महापुराण एकादशस्कन्ध में
बीसवें अध्याय की पं० ब्रह्मआचार्यकृत
भाषा टीका समाप्त ॥ २० ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे विंशोऽध्यायः ॥ २० ॥

—:०:—

## अथ एकविंशोऽध्यायः ।

———:*:———

श्रीभगवानुवाच ॥

य एतान् मत्पथो हित्वा भक्तिज्ञानक्रियात्मकान् ॥
क्षुद्रान् कामांश्चलैः प्राणैर्जुषन्तः संसरन्ति ते ॥ १ ॥
स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्त्तितः ।
विपर्ययस्तु दोषः स्यादुभयोरेष निश्चयः ॥ २ ॥
शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु ।
द्रव्यस्य विचिकित्सार्थं गुणदोषौ शुभाशुभौ ॥ ३ ॥
धर्मार्थं व्यवहारार्थं यात्रार्थमिति चानघ ! ।
दर्शितोऽयं मयाऽऽचारो धर्ममुद्वहतां धुरम् ॥ ४ ॥
भूम्यम्ब्वग्न्यनिलाकाशा भूतानां पञ्चधातवः ।
आब्रह्मस्थावरादीनां शारीरा आत्मसंयुताः ॥ ५ ॥
वेदेन नामरूपाणि विषमाणि समेष्वपि ।
धातुषूद्धव कल्प्यन्ते एतेषां स्वार्थसिद्धये ॥ ६ ॥
देशकालादि भावानां वस्तूनां मम सत्तम ! ।
गुणदोषौ विधीयेते नियमार्थं हि कर्मणाम् ॥ ७ ॥
अकृष्णसारो देशानामब्रह्मण्योऽशुचिर्भवेत् ।
कृष्णसारोऽप्यसौवीरकीकटासंस्कृतेरिणम् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

जयति स्वपरानन्दः परानन्दनृकेसरी ।
यत्कृपालवलेशेन श्रीधरः सत्कृतिः कृती ॥
दृष्ट्वा तामिच्छया सन्तः क्षमन्तां मम साहसम् ।
यथा हि श्रीयशोदाय कृतमेतच्च सर्वतः ॥
एकविंशे क्रियाज्ञानभक्तिष्वनधिकारिणाम् ।
कामिनां द्रव्यदेशादिगुणदोषाः प्रपञ्चिताः ॥

तदेवं गुणदोषव्यवस्थार्थं योगत्रयमुक्तं तत्र ज्ञानभक्तिनिष्ठानां न किञ्चिद्गुणदोषौ साधकानां तु प्रथमतो निवृत्तिकर्मनिष्ठानां यथाशक्ति नित्यनैमित्तिकं कर्म सत्त्वशोधकत्वाद्गुणः तदकरणं निषिद्धकरणं च तमआदिमलकरत्वाद्दोषः तन्निवर्तकत्वाच्च प्रायश्चित्तं गुणः विशुद्धसत्त्वानां तु ज्ञाननिष्ठानां ज्ञानाभ्यास एव सिद्धिहेतुत्वाद्गुणः भक्तिनिष्ठानां पुनः श्रवणकीर्तनादिभक्तिरेव गुणः तद्विरुद्धः सर्वमुभयेषां दोष इत्युक्तम् इदानीं ये तु न सिद्धा नापि साधकाः किन्तु केवलं काम्यकर्मप्रधानास्तेषां सकलगुणदोषान् प्रपञ्चयिष्यन्नादौ तानति बहिर्मुखान्निन्दति, य एतानिति । मत्पथो मदुक्तमार्गान् क्षुद्रान् तुच्छांश्चलैरस्थिरैः प्राणैर्बहुधा वृत्तिभिरिन्द्रियैर्वा जुषन्तः सेवमाना भवन्ति ते संसरन्ति निखिलगुणदोषभाक्त्वेन नानायोनीः प्राप्नुवन्तीत्यर्थः ॥ १ ॥

ननु, तैरेव कर्मभिः केचिद्गुणदोषभाजः केचिन्नेति कुतो वैषम्यम् नह्यग्निना केचिद्दह्यन्ते केचिन्नेति सम्भवति तत्राऽऽह, स्वे स्व इति । अधिकारभेदेन कल्पितौ गुणदोषौ न वस्तुनिष्ठाविति भावः ॥ २ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तदाह, शुद्ध्यशुद्धी इति । विचिकित्सार्थं योग्यमयोग्यं चेति सन्देहद्वारा स्वाभाविकप्रवृत्तिप्रतिबन्धार्थमित्यर्थः । तत्र शुद्ध्यशुद्धी योग्यत्वायोग्यत्वे गुणदोषौ तन्निमित्तोपादेयत्वानुपादेयत्वे शुभाशुभौ तन्निमित्तावर्थानर्थौ ॥ ३ ॥

तत्र शुद्ध्यशुद्धी धर्मार्थम् शुद्धेन धर्मः अशुद्धेनाधर्म इति गुणदोषौ व्यवहारार्थम् अशुद्धस्यापि राजादीनां व्यवहारदर्शनादुपादेयं नान्यदिति शुभाशुभौ यात्रार्थं दोषत्वेऽप्यापत्सु शरीरनिर्वाहमात्रोपादानेन पापमधिकोपादानेन तु पापमिति मया मन्वादिरूपेण धर्मरूपां धुरं भारं कर्मजडानामित्यर्थः ॥ ४ ॥

शुद्ध्यशुद्धी प्रपञ्चयिष्यन् वेदोक्तत्वेन तदभिनिवेशो माभूदिति समानेष्वपि वस्तुष्विति यदुक्तं तत्प्रपञ्चयति, भूमीति त्रिभिः । भूतानां प्राणिनाम् धारयन्तीति धातवः कारणानि शारीराः शरीरारम्भकाः देहतः साम्यमुक्तं जीवतोऽप्याह—आत्मसंयुता इति ॥ ५ ॥

धातुषु देहेषु नामरूपाणि वर्णाश्रमादीनि कल्पनायाः प्रयोजनमाह, एतेषां प्राणिनां स्वार्थसिद्धये प्रवृत्तिनियमद्वारा धर्मादिपुरुषार्थसिद्धये ॥ ६ ॥

न केवलं देहेष्वेवापि तु देशकालादिभावानामपि आदिशब्देनानुपादेयानां फलनिमित्ताधिकारिणां ग्रहणम् । वस्तूनामुपादेयानां ब्रह्मादीनामपि मम मया नियमार्थं सङ्कोचार्थमित्यर्थः ॥ ७ ॥

एवं गुणदोषविषयं परिशोध्य तयोः शुद्ध्यशुद्धिमूलत्वाच्छुद्ध्यशुद्धी प्रपञ्चयति, अकृष्णसार इत्यष्टभिः । देशानां मध्ये कृष्णहरिणरहितोऽशुचिः तत्राप्यब्रह्मण्यो ब्राह्मणभक्तिशून्योऽत्यन्तमशुचिः कृष्णसारोऽपि कृष्णेन मृगेण सारः श्रेष्ठो यः सोऽप्यसौवीरकीकटः सुवीराः सत्पुरुषास्तद्रहितसौवीरः कीकटोऽपि शुचिः तदुक्तम् 'सर्वे पुण्यतमो देशः सत्पात्रं यत्र लभ्यते, इति तद्वर्जितो यः कीकटोऽङ्गवङ्गकलिङ्गादिः असंस्कृतः सम्मार्जनादिशून्यो म्लेच्छबहुलो वा इरिणमूषरम् एकवद्भावः तदशुचि तदन्यः शुचिरित्यर्थादुक्तं भवति ॥ ८ ॥

———

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

एकविंशाध्यायस्य किंवृत्तमनुसन्धाय मङ्गलमाचरयति जयतीति । स्वं परं स्थानन्दयतीति तथा स स्वामी परमानन्दस्वरूपो यो नृकेसरी नृसिंहः स जयति सर्वोत्कर्षेण वर्तते । इत्येषेण परमानन्दसंज्ञकगुरुणा महेश्वरस्याभेदोऽभिप्रेतः । सत्कृतिः सत्प्रयत्नः कृता निद्राम् अभुधति शेषः । देश्यं निर्दिशति—इत्यन्तामिति । तत्र त्रिष्वधिकारिषु मध्ये योगत्रये च । निवृत्तकर्मनिष्ठानां निष्कामकर्मनिरतानां । तदकरणं नित्यनैमित्तिकाकरणम् । तन्मलिनसकरणत्वात् सत्वमालिन्यापादकत्वात् तामसत्वकत्वाच्च तस्य नित्याद्यकरणनिषिद्धकरणजन्यदोषस्य निराकत्वात् । विशुद्धसत्वानां जातवैराग्याणां भक्तिनिष्ठानां जातश्रद्धानां तद्विरुद्धं ज्ञानभक्तिविरुद्धम् । उभयेषां ज्ञानिभक्तानां । नापि बाधका निष्कामा अपि न कामानैहिकान् पारलौकिकांश्च ॥ १ ॥

अधिकारे कामित्वनिष्कामित्ववैराग्यश्रद्धारूपविशेषविशेषेण योग्यतया अधिक्रियमाणे सम्बन्धविशेषे वा निष्ठा स्थितिः स गुणः विपर्ययः पराधिकारे निष्ठा । उभयोर्गुणदोषयोः तत्वाभासोक्तशङ्कायाः कतरदिव समाधानं तत्राह अधिकारभेदेनेति न वस्तुनिष्ठाविति यथा ऋतुगमनं क्रियात्मकं वस्तु तत्र गृहस्थस्य विहितत्वाद्गुणत्वं प्रतीयते किन्तु विरक्तस्य निषिद्धत्वाद्दोषत्वमेवेति न गुणो गुणत्वं नच दोषे दोषत्वं किन्त्वधिकारभेदेनोभयोः कल्पितत्वदेवेत्यर्थः ॥ २ ॥

तदाह, गुणदोषयोः कल्पितत्वमाह—शुद्धीति सार्द्धकम् । विचिकित्साशब्दस्य विचिकित्स्यकार्ये प्रवृत्तिप्रतिबन्धे लक्षणा अत इत्यर्थ इत्युक्तम् । तन्निमित्ते इति ते योग्यत्वायोग्यत्वे निमित्ते कारणे ययोस्तथाभूते उपादेयत्वानुपादेयत्वे पुनस्तन्निमित्त इति ते उपादेयत्वाऽनुपादेयत्वे निमित्ते ययोस्तावर्थानर्थौ तत्र शुद्ध्यशुद्ध्यादि मध्ये । शुद्धेन देशकालादि षट्पदार्थेन व्यवहारार्थमपि विनापि शुद्ध्यशुद्धिव्यवस्थां केवलव्यवहारार्थमपि गुणदोषौ उपादेयत्वानुपादेयत्वे विधीयेते अत एवाशुद्धस्यापीति व्याख्यातम् । नान्यदिति अन्यत् प्रतिग्रहादिक नोपादेय । यात्रार्थमिति विनापि गुणदोषव्यवस्थां केवलवृत्त्यर्थमपि तौ शुभाशुभौ विधीयेते अत एव दोषत्वेऽपीति व्याख्यातम् ॥ ३ ॥

दर्शित इत्यर्थकम् । धुरमिति कर्मजडानामेव भारो ननु भक्तानां तेषामप्याचारः सुखमय एवेत्यर्थः । सुखस्वरूपया भक्त्यैव प्रवृत्तत्वात् ॥ ४ ॥

वेदप्रोक्तत्वेन हेतुना भक्तस्य तदभिनिवेशः शुद्ध्यशुद्ध्यासक्तिर्माभूत भवत्विति हेतोः तत् समानत्वम् । कारणानि शरीरस्य पूर्ववर्तीनि अत एव शरीरारम्भकाः भौतिकत्वेन सर्वदेहानां समत्वाज्जीवानां देहतः साम्यमुक्तम् ॥ ५ ॥

वर्णाश्रमादीनीति ब्राह्मण ब्रह्मचार्यादि-नामानि रूपाणि द्विपदत्वादीनि उत्तममध्यमाधमत्वानि चेति व्याख्येयम् । प्रवृत्तिनियमद्वारा प्रवृत्तिसङ्कोचक्रमेण आदिना मोक्षपर्यन्तानां परिग्रहः ॥ ६ ॥

फलनिमित्ताधिकारिणां कामिनां कीदृशानामनुपादेयानां वेदा ब्रह्मात्मविषया इति वक्ष्यमाणत्वात् चित्तशुद्ध्यर्थमेव कर्माणि विहितानि न काम्यफलार्थः अतः फलमुद्दिश्य कर्म कर्त्तारो हि अयोग्या अत एवानुपादेया इति तेषां निखिलगुणदोषौ विधीयेते इत्यर्थः । उपादेयानां यागादि कर्माणि योग्यत्वेन ग्राह्याणामित्यर्थः । नियमशब्दस्य व्यवस्थार्थत्वाद्व्यवस्थायाश्च सङ्कोचे पर्यवसानादित्यर्थ इत्युक्तम् ॥ ७ ॥

गुणदोषविषयं देशकालादिषट्कं परिशोध्य विविच्य । तयोर्गुणदोषयोः तत्रापि अकृष्णसारत्वेऽपि कृष्णसारोऽपि कीकटः अङ्गवङ्गकलिङ्गादिः तद्विवर्जितः सत्पुरुषरहितोऽशुचिः एकवद्भाव इति कीकटश्चाऽसंस्कृतश्चेरिणश्चैतेषां समाहारः कीकटाऽसंस्कृतेरिणं असौवीरं च तत् कीकटाऽसंस्कृतेरिणञ्चेति तथा । असौवीरादन्यः सत्पात्रवान् कीकटादिरपि शुचिरिति अर्थात् तात्पर्यवशादुक्तम् ॥ ८ ॥

श्रीशुकदेवसूरिकृतशुकपक्षीयम् ।

एष एव परिहारोऽनन्तराध्याये स्फुटतरमुच्यते, प्राणैरिति । प्राणार्थेन्द्रियविषयाः शब्दादयो वर्तन्ते प्राणैरिन्द्रियैर्येषां ते इति विपर्ययः अधिकारानुगुणा निष्ठा यथा शूद्रस्य ब्राह्मणधर्मः अविरक्तस्य संन्यासिधर्मश्च दोषः ब्राह्मणस्य विरक्तस्य च गुणः ॥ १—२ ॥

समानेष्विति भौतिकत्वाद्याकारेण समानत्वं शुद्ध्यशुद्धी एव गुणदोषौ तौ च शुभाशुभौ कर्मनिष्पादनयोग्यत्वायोग्यत्वरूपौ विधीयेते द्रव्यस्य विचिकित्सार्थं वृद्धस्य शूद्रस्य जिहासार्थं गुणदोषविधानमित्यर्थः ॥ ३ ॥ ४ ॥

धर्मार्थं दुष्टद्रव्यवर्जनेन धर्मार्थप्रयोजनसिद्धिः व्यवहार अर्थार्जनादिः यात्रा देहधारणं धर्माविरोधार्थार्जनदेहधारणादिकमपि शुद्ध्यशुद्धी कर्मानुष्ठाने सत्येव सत्ये भवत इत्यर्थः शारीरा शरीरसम्बन्धिनो भूतानां धातवः ॥ ५ ॥

कल्प्यन्ते ज्ञाप्यन्ते एषां पुंसां पुरुषार्थसिद्धये ॥ ६ ॥

देशकालादिभावानां देशकालादिनिष्पाद्यानां नियमार्थं कर्मणां वर्जनीयवर्जनार्थम् ॥ ७ ॥

अकृष्णसारः कृष्णमृगप्रधानरहितो देशः कृष्णमृगप्रचारे सत्यपि असौवीरकीकटासंस्कृतेरिणम् असौवीरादिव्यतिरिक्त देश कर्मयत इतीत्यर्थः । कीकटो मगधकाश्यङ्गादिः असंस्कृतदेशः म्लेच्छभूयिष्ठदेशः इरिणम् उषरक्षेत्रम् ॥ ८ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

"कर्मणां जात्यशुद्धानामनेन नियमः कृतः ।
गुणदोषविधानेन सङ्गानां त्याजनेच्छया ॥

इत्यशुद्धानां कर्मणां सङ्गानां च त्याज्यत्वोक्त्या शुद्धानां तेषां मुमुक्षोरप्युपादेयत्वं सूचितं तत्र के पुनस्ते कर्मादयः शुद्धाशुद्धाश्चेत्यभिप्रायमालक्ष्य तान् विवक्षुस्तावत्स्वाधिकार निष्ठाविपरीतनिष्ठैव दोषः स एवाशुद्ध्यावहस्तत्फलं तु संसार इत्याह—य इति द्वाभ्याम् मत्पथः मम गर्भजन्मजरामरणाद्यनेकसांसारिकदुःखसागरनिमग्नान् जीवानवलोक्यानुजिघृक्षया मदाराधनोपयुक्तकरणकलेवरशास्त्रादिकं प्रयच्छतो ममेत्यभिप्रेतोर्थः पथो मार्गानस्मत्प्राप्त्युपायान्कर्मयोगज्ञानयोगभक्तियोगात्मकान् हित्वा ये चलैः प्राणैरिन्द्रियैः क्षुद्रान् कामान् शब्दादिविषयान् जुषन्तः सेवमाना भवन्ति ते संसरन्ति सांसारिकदुःखतरणोपायार्थं हि करणकलेवरादीन्प्रयच्छतो जातस्य मनुष्यमात्रस्य मनुनादिष्टःस्ववर्णाश्रमोचितेषु साक्षात्परम्परया वा मत्प्राप्तिसाधनेष्वधिकारस्तमिममधिकारं त्यक्त्वा ये केवलं क्षुद्रकामपरास्ते पुनः संसरन्तोऽन्ततः स्थावरतां प्राप्नुवन्तीति भावः ॥ १ ॥

मनुष्यमात्रस्य क्षुद्रकामाभिनिवेशः संसारावहत्वाद्दोष एवेत्यभिप्रेत्योक्तं वचः पुनः पठति, स्वे स्वे इति ॥ २ ॥

विवक्षितस्य शुद्ध्यशुद्धिविभागस्य तावत्प्रयोजनं यदुक्तं प्रति जानाति शुद्ध्यशुद्धीति । द्रव्यस्य विचिकित्सार्थम् इदं योग्यम् इदमयोग्यं चेति सन्देहद्वारा स्वाभाविकप्रवृत्तिप्रतिबन्धार्थमित्यर्थः शुद्ध्यशुद्धी योग्यत्वायोग्यत्वे वस्तुषु देशकालद्रव्यकर्तृमन्त्रकर्मरूपेषु पदार्थेषु समानेष्वपि पञ्चभूताद्यात्मकत्वेन समानाकारेष्वपि अपीत्यनेन व्यर्थो शुद्ध्यशुद्धिविभाग इत्याशङ्का निरस्ता किं तत इत्यत आह—गुणदोषौ शुभाशुभौ इति सत्यामेव विचिकित्सायां शुभाशुभावहौ स्वाधिकार तद्विपर्ययरूपौ गुणदोषौ विज्ञातौ भवत इत्यर्थः । गुणदोषौ इत्यस्य तत इत्यादिः विधीयेते इत्यस्य विभज्य ज्ञाप्येते इत्यर्थः ॥ ३ ॥

ततोपि किमित्यत आह—धर्मार्थमिति । गुणदोषपरिज्ञान धर्मार्थमित्यर्थः सत्येव हि तज्ज्ञाने दोषपरिहारेण स्वाधिकारनिष्ठारूपधर्मसिद्धिः किञ्च, इदमुपादेयमिदमनुपादेयमिति व्यवहारार्थं च यात्रार्थं धर्माविरोधेन तदुपयुक्तशरीरसंरक्षणार्थम् एतत्सर्वं शुद्ध्यशुद्धिविभागेन सम्भवतीति भावः । तदाह, दर्शित इति धर्मं स्वाधिकारात्मकधर्मरूपं धुरं भारमुद्वहताम् उद्वोढुमिच्छतामयमाचारः शुद्ध्यशुद्धिविभागपूर्वकप्रवृत्तिरूपो दर्शितो ज्ञापितः ॥ ४ ॥

"शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु" इति प्रतिज्ञातमेव प्रपञ्चयति, भूमीति त्रिभिः । आब्रह्मस्थावरादीनां भूतानां प्राणिनां शरीरारम्भका भूम्यादयः पञ्चधातवः तेषामात्माऽन्तरात्मभूतेन मया संयुताः सर्वे भावाश्चिदचिदीश्वरतत्त्वत्रयात्मका इत्यर्थः । अनेन समानेष्विति विवक्षितं साक्षात् स्पष्टीकृतम् ॥ ५ ॥

समानत्वेपीत्यपि शब्देनान्तरवैषम्यमपि शुद्ध्यशुद्धिविभागज्ञापनप्रयोजकमस्तीति सूचितं तद्विवृणोति—वेदेनेति । सृष्ट्युक्तरीत्या ब्रह्मादिस्थावरान्तेषु भावेषु समानाकारेषु सत्स्वपि तच्छरीरारम्भकेषु धातुषु भूम्यादिपञ्चभूतेषु विषमाणीति विविधानि नामरूपाणि च वेदेन कल्प्यन्ते विधत्त इति शेषः विधाता हि मत्तोऽस्य निपरिवर्तमानाद्देवमनुष्यादिवैदिकशब्दादवगततद्वाच्यभूतदेवाद्याकारान् देवमनुष्यादीन्सृजति तथा च श्रुतिः "वेदेन नामरूपे व्याकरोत्सता सती प्रजापतिः" इति स्मृतिरपि—

"नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः" ॥

इति कल्पनायाः प्रयोजनमाह—एतेषां संसारिणां जीवानां स्वार्थसिद्धये स्वार्थमित्युपयुक्ताधिकारनिष्ठार्थमित्यर्थः ॥ ६ ॥

ततः किमत आह—देशेति । भवन्तीति भावा देशकालादिरूपेण सतामित्यर्थः आदिशब्देन द्रव्यकर्तृमन्त्रकर्मसङ्ग्रहः वस्तूनां गुणदोषौ योग्यत्वायोग्यत्वे शुद्ध्यशुद्धीति यावत । शुद्ध्यशुद्धी विधीयेते इत्युपक्रमात् मम मया निर्धीयन्ते निरूप्य ज्ञाप्यन्ते किमर्थं कर्मणां देशकालादिनिष्ठानां नियमार्थं सङ्कोचार्थं विपरीताधिकारवर्जनेन स्वस्वाधिकाराणामनुष्ठानार्थमित्यर्थः ॥ ७ ॥

प्रतिज्ञाते शुद्ध्यशुद्धी विवृणोति, अकृष्णसार इत्यादिना । अकृष्णसारः स कृष्णमृगप्रचाररहितो देशः तथाऽब्रह्मण्यो ब्राह्मणभक्तिशून्यश्चाशुचिर्भवेत कृष्णमृगप्रचारो ब्रह्मण्यश्च शुचिरित्यर्थः । कृष्णसारोपि न सर्वो देशः शुचिः किन्तु सौवीरादिव्यतिरिक्तो देशः तत्र सौवीरः सौराष्ट्रदेशः कीकटदेशो मगधकलिङ्गादिः—

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

"अकृष्णसारकाशिष्ठेषु सौराष्ट्रमगधेषु च।
तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हति" ॥

इति स्मर्यते असंस्कृतो म्लेच्छभूयिष्ठदेशः ईरणामूषरदेशः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

कर्मयोगिनां भगवत्प्रियत्वेन द्रव्यदेशादिशुद्धिकथनपूर्वकं कर्मकरणप्रकारं वक्तुमिमध्याये तत्र कथितानां त्रयाणां मध्ये कमनुतिष्ठतां गतिमाह—य एतानिति। भक्तिज्ञानक्रियात्मिकां भक्तिज्ञानकर्मयोगत्रियाम् ॥ १ ॥

यथा गुणदोषौ मतिप्रयाप्रियोपहितविहिताविहितकरणनिबन्धनौ एवं गुणदोषमूले पुण्यपापानन्धन शुद्ध्यशुद्धी अपि तत्सन्निधानविशेषतद्भावकृतेन ब्राह्मणजात्यधिकृते इति पूर्वोक्तानुवादपूर्वं शुद्ध्यशुद्धिव्यवस्थामाह—स्वेस्वे इति। उक्तार्थम् ॥ २ ॥

पञ्चभूतात्मकत्वेन समानेष्वपि वस्तुषु द्रव्यस्य शुद्धिः अशुद्धिः गुणदोषौ च शुभाशुभौ च मत्सन्निधानविशेषतद्भावकृतत्वेन विधियेन किमर्थमत उक्तं विचिकित्सार्थं शुद्ध्यशुद्धिविवेकज्ञानेन पुण्याधिक्येन सुखाधिक्यं भवति इति ज्ञापनार्थमिति—

"पञ्चभूतात्मकत्वेन सकमता सर्ववस्तुषु।
हरिसन्निधिवैशेष्याद्विशेषश्च महात्मदा" ॥

इति वचनात् ॥ ३ ॥

एतदेव विवृणोति, धर्मार्थमिति। सुकृतादिप्रयोजनमुद्दिश्य अर्थं धर्मसाधनं धुरमुद्वहता मया यात्रार्थं शरीरयापनार्थम् ॥ ४ ॥

शुद्ध्यशुद्धी इत्युक्तमेव विवृणोति, भूमीति। स्थावरादीनाम् आब्रह्मपर्यन्तानां जीवानाम् आत्मना संयुताः शारीराः भूम्यादयः पञ्चधातवो महाभूतानि ॥ ५ ॥

पञ्चभूतात्मकत्वेन समानेष्वपि स्थावरादिब्रह्मान्तेषु धातु परमेश्वरः "य उ त्रिधातु पृथिवीम्" इति श्रुतिः। तस्य सन्निधानविशेषाच्छुद्ध्यैतत्सन्निधानविशेषादशुद्ध्यै च भेदेन तारतम्यलक्षणेन विषमाणि नामरूपाणि विकल्प्यन्ते विविधत्वेन कल्प्यन्ते व्यवहारयोग्यायोग्यानि क्रियन्ते विद्वद्भिर्मया चेति शेषः। किमर्थमेतेषां देहित्वेन प्रत्यक्षलक्षणानां जीवानां स्वार्थसिद्ध्ये स्वयोग्यं पुरुषार्थसिद्ध्ये इति ब्रह्मस्थावरादीनां अस्मृतिलक्षणज्ञानयोग्यानामित्यर्थः। "वाक्यस्मरणयोरक्षित्" इति वचनात्—

यद्यद्धरेः सन्निहितं तत्तच्छुद्धितरं मतम्।
अतः शुचितमो विष्णुः सान्निध्यं च स्वभावतः ॥

इति वचनात् ॥ ६ ॥

देशादीनां श्रुतिस्मृतिलक्षणां मम मुखोद्गतं वचनमेव गुणदोषयोर्विवेकमित्याह—देशेति। अयं देशोऽयं कालः एतद्द्रव्यमिति इमानि कर्मयोग्यानि नेतराणीति मम वचनाद्देशादीनां गुणदोषौ विधीयेते कर्मणां नियमार्थं फलसाधनार्थम् ॥ ७ ॥

कीदृशा देशाः शुचय इत्यतस्तानाह—कृष्णसार, इति। ब्राह्मणानां कर्मकरणाय कृष्णसारो नाम मृगो देशानां शुचिः शुद्धिकरो भवेत् कृष्णसारोऽयं देशमधिवसति स देशः शुचिरित्यर्थः। अथवाऽस्य कृष्णसारविधुरोऽपि देशः शुचिरिति सूचयति—

"नदीसमुद्रगिरय आश्रमाश्च वनानि च।
नगराणि च दिव्यानि शालग्रामादयस्तथा ॥
तेषां समीपगाश्चैव देशा योजनमात्रतः।
कर्मयोग्यास्तु समाख्यातास्तदन्ये कीकटाः स्मृताः ॥
तदन्येऽपि तु ये देशाः कृष्णसारोषिताः सतः।
कर्मयोग्या एव ते ज्ञेया" ॥

इति वचनात्। उक्तस्यापवादमाह, कृष्णसारोऽपीति। कृष्णसारोऽपि सौवीरकीकटासंस्कृतेरिणोऽयोग्यदेशस्य शुचिहेतुः एषां सत्यासोऽपि शुचिकरो नेत्यर्थः। अपरादुषितो देशोऽसंस्कृत इत्युच्यते तदुक्तं "यदि नाध्युषिताः सद्भिः" इति तत्रापि विशेषोऽस्तीत्युक्तम्—

"अपरैरध्युषिताश्चापि यदि सद्भिरधिष्ठिताः। इति
कर्मयता इति विज्ञया विष्णुविज्ञानि यत्र च" ॥

ईरणदेशः श्रावणिक इपद्वीपादिकः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

य एतानिति तैः तत्र साधकानामजातवैराग्यश्रद्धानां विशुद्धसत्त्वानां जातवैराग्याणां भक्तिनिष्ठानां जातश्रद्धानां न सिद्धा अजातवैराग्यश्रद्धाः नापि साधकाः निष्कामा अपि नेति विवेकव्यं मूले तु क्रिया ज्ञानभक्तिसम्पादकत्वेन रचितान् पूर्वोक्तान् कामानैहिकान् पारलौकिकान् वा ॥ १ ॥

तत्र व्यवहारिकयोर्गुणदोषयोर्विधानार्थमधिकारिमात्रस्य पूर्वानुवादेनैव गुणदोषौ लक्षयति—स्वेस्वे इति। अधिकारे कामित्वनिष्कामत्ववैराग्यश्रद्धाभिर्यथायोग्यतया अधिक्रियमाणे योगविशेषे उभयोर्व्यावहारिकपारमार्थिकाधिकारिणोः किन्तु पूर्वत्र गुणत्वं कल्पितमुत्तरत्र तु सिद्धमेवेति भावः। अत्र ज्ञानकर्मयोगभक्त्यंशं विना सिद्धभावेन तन्निष्ठतयैव विहितत्वात् तेन तत्र तत्र निष्ठा च्युतिः किन्तु सर्वनिरपेक्षतया सर्वसाधिकायां भक्तावेव तत्तद्देशाभिमत्वे कृते निष्ठा च्युतिः स्यादिति गम्यते तदेवं भक्त्यंशसहायाकर्मनिष्ठाकर्मिषु गुणः तथा तत्सहाया ज्ञाननिष्ठा ज्ञानिनि तत्रापि गुणः निष्किञ्चनभक्तिनिष्ठा तु भक्तेः सर्वोत्कृष्टा किमुत तत्साध्यप्रेमलक्षणाभक्तिरिति पूर्ववदेव ज्ञातम् एवमेतद्विपर्ययोन्यूनेऽधिके वाधिकारे प्रवृत्तो दोषः न्यूने पूर्वहानेः अधिके परासिद्धेरित्यर्थः ॥ २ ॥

अत्र व्यावहारिकेष्वपि से स इत्यनुसारेणैव गुणदोषौ विवृणोति, शुद्ध्यशुद्धीत्यादिना। तत्र शुद्धीति सार्द्धकं टीकायां धर्मार्थमिति प्राधिकमेव विचिकित्साप्रस्थापनादिलक्षणव्यवहारार्थमपि तदुपयुक्त द्रव्यादीनां तत्तच्छास्त्रे शुद्ध्यशुद्धित्वाशुभत्वाशुभत्वविभागदर्शनात् एवमुत्तरत्रापि गुणदोषौ व्यवहारार्थमिति विनापि शुद्ध्यशुद्धिव्यवस्थां केवलव्यवहारार्थमपि गुणदोषौ विधीयेते शुभाशुभौ धर्मार्थमिति विनापि गुणदोषव्यवस्थां

कर्मण्यो गुणवान् कालो द्रव्यतः स्वत एव वा ।
यतो निवर्त्तते कर्म स दोषोऽकर्मकः स्मृतः ॥ ९ ॥
द्रव्यस्य शुद्ध्यशुद्धी च द्रव्येण वचनेन च ।
संस्कारेणाथ कालेन महत्त्वाल्पतयाऽथवा ॥ १० ॥
शक्त्याऽशक्त्याऽथवा बुद्ध्या समृद्ध्या च यदात्मने ।
अघं कुर्वन्ति हि यथा देशावस्थानुसारतः ॥ ११ ॥
धान्यदार्वस्थितन्तूनां रसतैजसचर्मणाम् ।
कालवाय्वग्निमृत्तोयैः पार्थिवानां युतायुतैः ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शुद्ध्यादिनिर्णयप्रयोजनमाह—शुद्धीति द्वाभ्याम् । शुद्धेरनुवृत्ति र्गुणः अशुद्धं तु दोषः एवम्भूतौ गुणदोषौ शुद्धप्रवृत्त्या शुभो-ऽर्थः अशुभप्रवृत्त्याऽशुभोऽनर्थः इत्येवम्भूतौ शुभाशुभौ चाहि-ह्वयति शेषः । समानत्वेऽपि एकात्मकेऽत्वेऽपि वस्तुषु देशादिषु शुद्ध्य शुद्धी योग्यत्वायोग्यत्वे निर्धार्येते । विभज्य प्रतिपाद्येते तत्प्रति-पादनस्य प्रवृत्तिरूपं फलरूपं च प्रयोजनमुक्त्वा प्रयोजनान्तरमाह, द्रव्यस्य विचिकित्सार्थमिति देशः कालादियोग्यत्वायोग्यत्व-विषयकसंशयनिराकरणार्थम् ॥ ३ ॥

इत्यर्थम् किञ्चिद्वस्तु अशुद्धत्वेन किञ्चिच्च शुद्धत्वेन प्रतीयते तत्र यथोचितव्यवहारसिद्ध्यर्थं च किं बहुना यात्रार्थं निर्वा-हार्थं च धर्मे धर्मरूपां धुरमुद्वहताम् अयमाचारः दर्शितः ॥ ४ ॥

वस्तूनां समानत्वं दर्शयति, भूमीति । भूतानां प्राणिनां आब्रह्म-स्थावरादीनां समष्टिव्यष्टीनामित्यर्थः भूम्यादिनामकाः पञ्च धातवः एतदुपलक्षणं लिङ्गशरीरारम्भकाणामिन्द्रियादीनाम् शारीराः शरीरारम्भकाः समष्टिव्यष्टिदेहकारणानीत्यर्थः । भूम्या-द्यात्मकं सर्वं समष्टिव्यष्टिरूपं जगदित्यर्थः । भूम्याद्याः किमात्मका इत्याकाङ्क्षायामाह, आत्मसंयुता इति आत्मना परमकारणेन मया संयुताः मदात्मका इत्यर्थः ॥ ५ ॥

एवम्भूतेषु समेष्वेकात्मकेषु वेदेन नामानि ब्राह्मणादीनि रूपाणि तत्तच्छरीरादीनि विषमाणि कल्प्यन्ते समर्थ्यन्ते किमर्थम् एतेषां क्षेत्रज्ञानां स्वार्थसिद्धये भोगमोक्षसिद्धये ॥ ६ ॥

किञ्च मम वस्तूनामंशभूतानां पदार्थानां मध्ये देशकालादि भावानाम् आदिना द्रव्यकर्तृमन्त्रकर्मणां सङ्ग्रहः वेदेन गुणदोषौ योग्यत्वायोग्यत्वे विधीयेते किमर्थम् मुमुक्षुभिर्निष्काममेव कर्म कर्तव्यं न तु काम्यमित्यादिकर्मणां नियमार्थम् ॥ ७ ॥

सङ्क्षेपतः शुद्ध्यशुद्धी दर्शयति, अकृष्णसार इत्यष्टभिः । तत्र देशशुद्ध्यशुद्धिदेशानां मध्ये अकृष्णसारः कृष्णमृगप्रचार-शून्यः अशुचिः अब्रह्मण्यः ब्राह्मणेभ्यो हितकृत् ब्रह्मण्यस्तद्वि-परीतोऽब्रह्मण्यः अशुचिः कृष्णेन मृगेन सारः श्रेष्ठोऽपि सौवीरः सत्पुरुषयुक्तस्तद्व्यतिरिक्तोऽसौवीरः सः अशुचिः सत्पुरुष-युक्तस्तु सर्वोऽपि शुचिरेव "सर्वे पुण्यतमो देशः सत्पात्रं यत्र लभ्यते" इति वचनात् । कीकटः अङ्गवङ्गकलिङ्गादिरसंस्कृतो म्लेच्छबहुलश्च इरिणः ऊषरश्च एकवद्भावः तदशुचिर्भवेत्तदन्येषां शुचित्वमर्थादुक्तमेव ॥ ८ ॥

भाषा टीका ।

श्री भगवान् उवाच ॥ जो पुरुष भक्ति ज्ञान क्रिया रूप मेरे इन मार्गों को छोड़कर इन चल प्राणोंसे क्षुद्रकामों को सेवन करते हैं वे पुरुष संसारही मे घूमते रहते हैं ॥ १ ॥

अपने अपने अधिकार में जो निष्ठा कहा है, वोई तो गुण है इससे जो विपरीत है वही दोष है इन दोनों का यही निश्चय है ॥ २ ॥

समानही वस्तुओं मेंभी शुद्धि तथा अशुद्धि का विधान किया जाता है द्रव्य के संदेह विचार के वास्ते शुभ अशुभ गुणदोष भी कहे जाते हैं ॥ ३ ॥

हे अनघ ! धर्मके वास्ते व्यवहार के वास्ते देह यात्राके वास्ते जो लोग धर्मके भारको धारण करते हैं उनके वास्ते मैंने यह आचार दिखाया है ॥ ४ ॥

सबभूतों के पृथिवी जल अग्नि वायु आकाश ये पांच धातु हैं इन हीसे ब्रह्मा से स्थावर पर्यंत आत्मा के सहित सबके शरीर हैं ॥ ५ ॥

हे उद्धव ! इस के स्वार्थ सिद्धि के लिये समधातुओं में भी सब के विषम नाम रूप वेदके द्वारा कल्पना किये जाते हैं ॥ ६ ॥

हे सत्तम ! मेरे कर्मोंके नियम के वास्ते देशकाल आदिके जितने भाव वस्तु हैं तिनके गुणदोष विधान किये जाते हैं ॥ ७ ॥

देशों के मध्य में कृष्णसार मृगके विना जो देश है तथा ब्राह्मण का रक्षक जो देश नहो वह देश अशुद्ध है कृष्णसार मृगके रहने परभी सौवीर मगध देश तथा असंस्कार वाला देश ऊषर देश ये सब अशुद्ध हैं ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कालस्य शुद्ध्यशुद्धी दर्शयति, कर्मण्य इति, । द्रव्यतो द्रव्य-सम्पत्त्या स्वतो वा पूर्वाह्णादिर्यः कर्मण्यः कर्मार्हः स काल-

श्रीधरस्वामिकृतभावार्थदीपिका ।

अस्मिन्कर्मणि शुभवान् यतो यस्मिन् द्रव्यालाभेन वा स्वतो विघ्नादिना वा कर्म निवर्तते यश्च सूतकादौ दशाहादिकालः सोऽकर्मकः कर्मानर्हः स्मृतः स कालो दोषः अशुद्ध इत्यर्थः ॥ ९ ॥

वस्तुशास्त्रोपात्तानां द्रव्याणां शुद्ध्यशुद्धी दर्शयति, द्रव्यस्येति चतुर्भिः । द्रव्येण तोयादिना शुद्धिर्मूत्रादिना त्वशुद्धिः वचनेन शुद्धमशुद्धं वेति सन्देहे शुद्धमित्येवं रूपेण ब्राह्मणवचनेन शुद्धिर्विपरीतेनाशुद्धिः संस्कारेण प्रोक्षणादिना पुष्पादेः शुद्धिरवघ्राणादिना त्वशुद्धिः कालेन दशाहादिना नवोदकादेः शुद्धिः

'काले मेघोदकं ग्राह्यं वर्ज्यं तु त्र्यहमेव हि ।
अकाले दशरात्रं स्यात्ततः शुद्धिर्विधीयते' ॥

विपरीतेनाशुद्धिः पर्युषितान्नादेरशुद्धिः अन्त्यजाद्युपहतानां तडागाद्युदकानां महत्त्वाल्पत्वाभ्यां शुद्ध्यशुद्धी ॥ १० ॥

शक्त्याऽशक्त्या सूर्योपरागादिसूतकाशौचे शक्तानामस्पृश्यशुद्धिरशक्तानामपि शुद्धिः बुद्ध्या पुत्रजन्मादौ दशाहादिज्ञानेन शुद्धिरज्ञानेनाशुद्धिः समृद्ध्या श्रीमद्वस्त्रादेः समृद्धं प्रत्यशुद्धिर्दरिद्रं प्रति शुद्धिः तत्रापि विशेषमाह, यदिति । एते च द्रव्यवचनादयो द्रव्याशुद्धिद्वारा आत्मने यदघं कुर्वन्ति तद्देशावस्थानुसारेण एव यथा यथावत्कुर्वन्ति न सर्वतः तथा हि निर्भय एव देशे कुर्वन्ति न तु चौराद्याकुले तथा रोगादिव्यतिरिक्तयुवाद्यवस्थायामेव कुर्वन्ति न बाल्यरोगाद्यवस्थायामिति तथा च स्मृतिः

"देशं कालं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम् ।
उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत्" ॥

इति ॥ ११ ॥

द्रव्यादिभिर्द्रव्यस्य शुद्धिरित्युक्तं तत्र वचनादिशुद्धिरेकरूपैव द्रव्यतस्तु शुद्धिर्बहुरूपेति तां प्रपञ्चयति, धान्येति । दारु मौक्तिकं प्रभृतसारादि च अस्थि गजदन्तादि रसास्तैलघृतादयः तैजसाः सुवर्णादयः तेषां पार्थिवानां च रथ्याकर्दमघटेष्टकादीनां यथा यथं कालादिभिः शुद्धिः तत्रापि कालाग्न्याद्युपघाततारतम्येन देशकालावस्थाद्यनुसारेण च एतैरन्यैश्च युतायुतैर्मिलितैः केवलैश्च कालस्य पुनर्ग्रहणं युतत्वप्रदर्शनार्थम् ॥ १२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

द्रव्यसम्पत्त्येति "पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम्" इति स्मृतेः द्रव्यसम्पत्तिश्चेन्नाडीच्छेदनात् पूर्वं पुत्रजन्मकालो दानकर्मार्हः पूर्वाह्णादिश्च स्नान एव जपादिकर्मार्हः । तस्मिन् दानजपादिकर्मणि यस्मिन्काले यथोक्तव्याहृतम् अन्यथानयथापत्तेः ॥ ९ ॥

पर्युषितान्नोदकशुद्धिरपि कालेनैव ज्ञेया । तत्रापि निरुक्तशुद्ध्यशुद्धिव्यवस्थायामपि ॥ १० ॥

तथाहि । देशावस्थानुसारेणैव दर्शयति तथाच बौधायनस्मृतिः । देशं निर्भयदेशं कालं महत्वादिदोषशून्यम् आत्मानं ब्राह्मणादिरूपम् । द्रव्यम् अल्पबहुधान्यादिरूपम् । द्रव्यप्रयोजनमिति यदि पक्वान्नादिविवाहादौ भोजनादि प्रयोजनं तदा उपपद्यते तर्हि "तन्मात्रद्रव्यमुद्धृत्य शेषं संस्कारमर्हति" इत्युक्तेः । उपपत्तिं युक्तिं यथा प्रोक्षणमात्रेण पुष्पकणादूषितं तु प्रक्षालनतापनादिना मूत्रनाशापत्तेः इति शौचान्यथानुपपत्त्या प्रोक्षणमात्रमेव तच्छोधकं कल्प्यते । अवस्थां बाल्याद्यवस्थां यथा अदत्तदत्तकन्यासु बालेषु च विशोधनम् । अदत्ताः अपरिणीता याः कन्यास्तासु कृतचूडासु वाग्दानात् प्राक् अहोरात्रं विशेषेण शुद्धिकारणं सपिण्डानाम् सपिण्डवाग्दत्तकन्यानां त्रिपुरुषपर्यन्तमेव अप्रत्तानां तु स्त्रीणां त्रिपुरुषी विज्ञेया इति वसिष्ठवचनात् । बालेषु चानुत्पन्नदन्तेषु अग्निसंस्कारे सद्यःकाले निशोधनम् । एवं वृद्धबालातुरान् विनेत्युक्तेः सूतकादौ तेषां शुद्धिर्विज्ञेया ॥ ११ ॥

तत्र द्रव्यशुद्धौ । तां द्रव्यतः शुद्धिम् अश्मसारादि च यथापाठम् । यथायथं धर्मशास्त्रानुसारेण तत्र धान्यानां शुद्धिः प्रोक्षणात् यथाह बौधायनः । "व्रीहयः प्रोक्षणाच्छुद्धाः शाकमूलफलानि च । तन्मात्रस्यापहारो वा निस्तुषीकरणेन वा" इति । मौक्तिकदारुस्य शुद्धिस्तक्षणादिना यथाह याज्ञवल्क्यः "काष्ठानां तक्षणाच्छुद्धिर्भूमेर्गोमयजलैरपि" इति गजदन्तादेस्तु गोमूत्रादिभिः शुद्धिः । यथाह यमः । "गोमूत्रेणाविषदन्तानां सौमानां गौरसर्षपैः" इति । शङ्खश्च । "सिद्धार्थकानां कल्केन दन्तशृङ्गमयस्य च । गोवालैः फलपात्राणामस्थ्नां स्याच्छृङ्गवत्तथा" इति । तैलघृतादीनाञ्च शुद्धिः प्लवनादिना । यथाह शङ्खः । "द्रवाणां घृततैलानां प्लावनं गोरसस्य च । भाण्डानि क्षालयेच्छुद्धिः शाकमूलफलानि च" इति चकारस्तु घृततैलयोरपि प्लावनमभिधत्ते । प्लावनं वस्त्रान्तरितपात्रे प्रक्षेपः तस्मिन्नेव पात्रे यथा तद्बहिर्निःसरति तथा तज्जातीयद्रव्येण पूरणं वा सुवर्णादीनां च शुद्धिर्जलादिना । यथाह ब्रह्मपुराणं श्राद्धे च । "सुवर्णरूप्यशङ्खाश्च शुक्तिरत्नमयानि च । कांस्यायस्ताम्ररैत्यानि त्रपुसीसमयानि च । निर्लेपानि च शुद्ध्यन्ति केवलेन जलेन च । शूद्रोच्छिष्टानि शोध्यानि त्रिधा क्षाराम्लवारिभिः" इति । रथ्येत्यादि तत्र रथ्या राजमार्गस्तस्याः शुद्धिः मारुतार्कादिना । यथाह बौधायनः—"आसनं शयनम् यानं नावः पन्थास्तृणानि च । मारुतार्केण शुद्ध्यन्ति पक्वेष्टकचितानि च" इति एष कर्दमस्यापि । घटादेस्तु शुद्धिः दहनादिना । यथाह देवलः । मृण्मयानां तु पात्राणां दहनाच्छुद्धिरिष्यते" इति । मनुयाज्ञवल्क्यौ । पुनः पाकेन मृण्मयानि पुनः पाकात् महीमयानि । मूत्रोच्चारमर्मणां शुद्धिस्तु वातादिना । यथाह यमः । कृष्णाजिनानां वातैश्च" इति । तत्रापि पूर्वोक्तशुद्धावपि एतैः कालादिभिरन्यैश्च गौरसर्षपधान्यकल्कादिभिः कार्पासिकसूत्रनिर्मितवस्त्रादीनां शुद्धिः युतैस्त्रिभिर्मिलितैर्युतैरेकेकजलादिभिरपि । कालेन शुद्धिः काले मेघोदकं ग्राह्यमित्यादिना यद्यप्युक्ता तथापि कालस्य पुनर्ग्रहणं जलवायुवादिशुद्धौ कालस्य व्यापकत्वदर्शनार्थं सर्वशोधककाल यस्मात् "अमतामाश्रयो हि सः" इत्युक्तेः ॥ १२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

गुणवांश्च कालः कर्मयत्र: देशकालयोः कर्मयता च द्रव्यान्तरसम्बन्धाद्वा स्वतो भवति मथुरादेशस्य जयन्त्यादिकालस्य च भगवज्जन्मयोगात् गुणवत्त्वं यत इति निवर्तते अनिवृत्तम् प्रकृतमप्रमत्तं कर्मयद्दोष इत्यर्थः ॥ ९ ॥

द्रव्येण आतपादिना वचनेन शास्त्रवचनेन अल्पकालेन अनतिविप्रकृष्टकालेन वर्तते संस्कारेण यथा प्रोक्षणेन भूशुद्धिः महत्त्वाल्पतया यथा नदीजलस्य महत्त्वात्पृथिवीजलस्याल्पत्वाच्च तत्संसर्गेऽपि नदीजलस्य शुद्धिः ॥ १० ॥

शक्त्या मन्त्रादिशक्त्या शुद्धिः आतुरस्य वाक्यशुद्धिः ब्राह्मणवाक्येन शुद्धिः समृद्ध्या समृद्धिरुत्सवस्तत्र: शुद्धिः एवं पर्यालं देशावस्था राष्ट्रक्षोभः ॥ ११ ॥

धान्येति धान्यस्य वायवातपादिना शुद्धिः दारुणो मृत्तोयाभ्याम् अत्यन्तोपहतौ तक्षणाद्वा अस्थ्नामपि वायवातपशोषणाच्छुद्धिः तत्र शुद्धिर्यथा आर्द्रस्पर्शनः शुष्कादिस्पर्शे प्रायश्चित्तं न तद्यनिबन्धनं तन्तुशुद्धिस्तोये रसस्य क्षीरादेः केशादिसंसर्गेणापि वह्निना कायेन शुद्धिः तैजसस्य कांस्यादेः अग्निना शुद्धिः चर्मणां सलिलेन शुद्धिः पार्थिवानां द्रव्याणां युतायुतैः संयोगासंयोगैः शुद्धिः यथा ओदनस्य केशाद्यपनयनाज्यसंयोगादिना शुद्धिः ॥ १२—१४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ कालस्य शुद्ध्यशुद्धी विदधाति, कर्मण्य इति । कर्मणि साधुः कर्मण्यः शुचिरित्यर्थः । कोऽसौ यो द्रव्यतो द्रव्यसम्पत्त्या स्वतः पूर्वाह्णत्वादिना यो गुणवान् यतः यत्र तु काले द्रव्यालाभेन वा राष्ट्रविप्लवादिना वा आरब्धं कर्म निवर्तते निवृत्तं भवति न समाप्यत इति यावत् । यश्च सूतकादौ दशाहादिलक्षणः स कालोऽकर्मकः कर्मानर्हः अत एव दोषः अशुचिः इदं देशस्याप्युपलक्षणं देशकालयोः कर्मण्यता च द्रव्यान्तरसम्बन्धाद्वा स्वतो वा भवति मथुरादिदेशस्य कृष्णजयन्त्यादि कालस्य च भगवत्सम्बन्धयोगाद्गुणवत्त्वम् ॥ ९ ॥

अथ द्रव्यस्य शुद्ध्यशुद्धी दर्शयति, द्रव्यस्येति चतुर्भिः । द्रव्येण मृज्जलातपाग्न्यादिना द्रव्यस्य वस्त्रादेः शुद्धिः मूत्रादिना त्वशुद्धिरित्यर्थः । वचनेन शास्त्रबलेन च शुद्धमशुद्धं वेति सन्देहे शुद्धमेवेति ब्राह्मणवचनेन वा शुद्धिः संस्कारेण प्रोक्षणादिना च पुष्पादेः शुद्धिरवघ्राणादिना त्वशुद्धिः अल्पकालेनानतिविप्रकृष्टकालेन यथा मद्योदकादिस्पर्शाहादिना शुद्धिः विपरीतेन त्वशुद्धिः महत्त्वाल्पतया यथा नदीजलस्य महत्त्वाद्भूम्यादिजलस्याल्पत्वात् चण्डालादिसंस्पर्शेऽपि नद्यादिजलस्य शुद्धिः रथ्यादिजलस्य त्वशुद्धिरित्यर्थः ॥ १० ॥

शक्त्याशक्त्या यथा सूर्योपरागादिषु स्नातुं शक्तस्य तु स्नानादिनैव शुद्धिरातुरस्य स्वशक्त्या शुद्धिः कस्य चिद्बुद्ध्या शुद्धिरशुद्धिश्च यथा पुत्रजन्मादौ दशाहातिक्रमज्ञानेन शुद्धिरनतिक्रमज्ञानेन त्वशुद्धिः समृद्ध्या उत्सवेन यथा भगवदुत्सवादिष्वस्पृश्यस्पर्शेऽप्युत्सवेनैव शुद्धिः तत्र विशेषमाह, यथा

"देशं कालं तथा शक्तिं द्रव्यं द्रव्यप्रयोजनम् । उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत्" इति स्मृत्युक्तरीत्या एते द्रव्यवचनादयः शोधकाः देशावस्थाद्यनुसारतः आत्मानोऽशुद्धात्मकस्य द्रव्यस्य यथाऽघं कुर्वन्ति एवं पर्यालं यथा तथा शुद्धिं कुर्वन्तीत्यर्थः । यद्वाऽघशब्दोऽत्र वारणार्थकः अघं कुर्वन्ति यथावच्छुद्धिं वारयन्तीत्यर्थः । अघं कुर्वन्तीति पाठान्तरे यथा आत्मनः यथा नास्तिकद्रव्यस्वरूपस्य स्वतः शुद्धस्यैवाघं कुर्वन्ति स्वभावतः शुचिवस्तूनि अशुचित्वमापादयन्ति तथा देशावस्थाद्यनुसारतः शुद्धिरिति स्वतः शुद्धस्यैव उच्छिष्टाद्यशुचिवस्तुसंस्पर्शेऽशुद्धिरुच्यत इति ॥ ११ ॥

तां प्रपञ्चयति, धान्येति । धान्यादीनां कालादिभिः शुद्धिः तत्र धान्यस्यावघातादिना वायवातपादिना शुद्धिः दारूणां दारुपात्रादीनां मृत्तोयाभ्याम् अत्यन्तोपहतौ तक्षणाद्वा अस्थ्नां गजदन्तादीनामपि वायवातपादिना शोषणाच्छुद्धिः तन्तुशुद्धिस्तोयैः रसस्य क्षीरादेः केशादिसंस्पर्शेऽपि कायेन शुद्धिः तैजसस्य कांस्यादेः अग्निना शुद्धिः चर्मणां तैलेन पार्थिवानां द्रव्याणां युतायुतैः संयोगासंयोगैः शुद्धिः यथा ओदनस्य केशाद्यपनयनाज्यसम्मेलनादिना शुद्धिरुच्यत इति ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

देशानिरूप्य कर्मयोग्यं कालमाह—कर्मण्य इति । विशेषा इत्यादि प्रमाणसिद्धोऽयमर्थ इति प्रकटनाय कर्मण्य इति स्मृत्युक्तशब्दानुवादः गुणवान् वृत्तिमान् कालः कर्मण्यः यज्ञादिकर्मयोग्यः स च द्विविधः द्रव्यतः स्वत इति वाशब्देन द्वावपि योग्याविति वक्ति, एवशब्देन तृतीयो नास्तीति निर्धार्यते द्रव्यतः कर्मण्यो वसन्तादिलक्षणः स्वतः कर्मण्यः सन्ध्यादिलक्षणः कालस्य गुणवत्त्वं नाम किं येन कर्मावर्तत इति तं विविनक्ति यत इति यतो यस्मिन् काले निषिद्धात्कर्मनिवर्तते न क्रियते स कालः सदोषो निषिद्धो कर्मकः कर्मानर्हो निशीथादिलक्षणः स्मृतः निशीथो मध्यमा रात्रिः राक्षसानां तु गोचरः इत्यादिना यतो दोषात्कर्म निवर्तते तेन दोषेण युक्तः कालः सदोषत्वादकर्मकः ॥ ९ ॥

द्रव्यस्य शुद्ध्यशुद्धिप्रकारोऽपि बहुविध इत्याह—द्रव्येणेत्यादिना ताम्रादिद्रव्यस्याम्लादिद्रव्यसंयोगेन शुद्धिः माणिक्यादिद्रव्यस्य तुच्छरामध्यसुरादिसंयोगेनाशुद्धिः महता वचनेन च शुद्ध्यशुद्धी स्तः तद्यथा अभक्ष्यत्वं यतिपात्रत्वं चाण्डालो इदं केषाञ्चित्प्रक्षालनादिसंस्कारेण शुद्धिः असंस्कारेणाशुद्धिः गर्भस्थानमसंस्कृतपाण्यादेः केषाञ्चिद्योऽध्यापहृतगृहादिद्रव्यस्य विशेषाणां कालतः शुद्धिः अन्नादीनां कालेनाशुद्धिः अन्नादीनां महत्त्वे श्वादिस्पर्शे स्पृष्टांशत्यागेन सिद्धस्य शुद्धिः अथवान्यस्याल्पत्वाल्पत्वेन शुना स्पृष्टस्य तस्याशुद्धिः अल्पस्यापि पापस्य पिपीलिकाहननादेरशुचित्वं न महतो द्रव्यस्य वधादशुद्धिः ॥ १० ॥

१ म्लेच्छादयः ।
२ तटाकाद्युदकानां ॥

अमेध्यलिप्तं यद्येन गन्धं लेपं व्यपोहति ।
भजते प्रकृतिं तस्य तच्छौचं तावदिष्यते ॥ १३ ॥
स्नानदानतपोऽवस्थावीर्यसंस्कारकर्मभिः ।
मत्स्मृत्या चाऽऽत्मनः शौचं शुद्धः कर्माचरेद्द्विजः ॥ १४ ॥
मन्त्रस्य च परिज्ञानं कर्मशुद्धिर्मदर्पणम् ।
धर्मः सम्पद्यते षड्भिरधर्मस्तु विपर्ययः ॥ १५ ॥
क्वचिद्गुणोऽपि दोषः स्याद्दोषोऽपि विधिना गुणः ।
गुणदोषार्थनियमस्तद्भिदामेव बाधते ॥ १६ ॥

### भाषा टीका ।

देश भी काल से द्रव्य से अथवा स्वयं ही गुण युक्त हो जाता है जहां से कि कर्म की निवृत्ति हो जाती है वह दोष अकर्मक कहा जाता है ॥ ९ ॥

द्रव्य की शुद्धि तथा अशुद्धि कहीं द्रव्य से होती है कहीं वचन से होती है किसी द्रव्य की संस्कार से किसी की काल से किसी चीज की अधिक होने से शुद्धि ही रहती है किसी की थोड़े होने से ॥ १० ॥

किसी द्रव्य की शक्ति से किसी की अशक्ति से किसी की बुद्धि से ऐसे कई एक पदार्थ आत्मा के वास्ते अशुद्धि कारक आत्मा अवस्था के अनुसार हो जाते हैं ॥ ११ ॥

धान्य तथा काष्ठादि तंतु घृतादि रस तैजसादि चर्म के पदार्थ इनकी शुद्धि काल से वायु से आतप से मृत्तिका से जल से यथायोग्य शुद्धि होती है पार्थिवपदार्थों को तो किसी के मिलने किसी के अलग होने से शुद्धि होती है ॥ १२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अस्पृश्यस्पर्शे शुद्धिमुक्त्वा लेपविषयेऽप्याह । यत्पीठपात्रवस्त्रादि येन तक्षणाम्लोदकादिना गन्धं लेपं च व्यपोहति त्यजति स्वगतं च मलं त्यक्त्वा प्रकृतिं स्वमेव रूपं भजते तस्य तच्छौचं शोधकम् यावता च तक्षणादिना व्यपोहति तावत्प्रमाणं स्वरूपत आवृत्तितो वा तत्कर्तव्यमिष्यते ॥ १३ ॥

एवं तावद्द्रव्यशुद्धिरुक्ता इदानीं कर्तृशुद्धिमाह, स्नानेति । अवस्था कौमारादिः वीर्यं शक्तिः संस्कार उपनयनादिः कर्म सन्ध्योपासनदीक्षादिलक्षणम् आत्मनः साहङ्कारस्य कर्तुरेतैः स्नानादिभिर्यथायथं तत्कार्यानुसारिणी शुद्धिः इयं च शुद्धिर्न व्यवहारार्था किन्तु विहितकर्मार्थेत्याह । शुद्ध इति । द्विजइत्युपलक्षणं शूद्रादेरपि ॥ १४ ॥

मन्त्रशुद्धिमाह, सद्गुरुमुखाद्यथावत्परिज्ञानं मन्त्रशुद्धिः कर्मशुद्धिमाह, ईश्वरार्पणं कर्मणः शुद्धिः धर्माधर्मे शुद्ध्यशुद्धी उपसंहरति, धर्म इति । देशकालद्रव्यकर्तृमन्त्रकर्मभिः षड्भिः शुद्धैर्धर्मः सम्पद्यते एतेषां यो विपर्ययः सोऽधर्मस्तद्धेतुरित्यर्थः ॥ १५ ॥

अयं च गुणदोषविभागो न वास्तव इत्याह । क्वचिदिति । आपदि प्रतिग्रहो गुणोऽप्यनापदि निषिद्धत्वाद्दोषः परधर्मश्च परस्य गुणोऽपि स्वस्य दोषः दोषोऽपि कुटुम्बत्यागादि विरक्तस्य दोषोऽपि तु विधिबलेन गुणः । एवं योऽयं गुणदोषयोरेकास्मिन्नर्थे नियमो गुणदोषार्थे वा यो नियमो नियामकं शास्त्रं स तयोर्भिदमेव बाधते ॥ १६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी

यत् पीठेति पीठस्य काष्ठस्य तक्षणाच्छुद्धिः । यथाह याज्ञवल्क्यः । काष्ठानां तक्षणाच्छुद्धिर्मृद्गोमयजलैरपि" इति अमेध्यलिप्तपात्राणां शुद्धिर्यथा मार्कण्डेयः । उदुम्बराणामम्लेन क्षारेण त्रपुसीसयोः । भस्माम्बुभिश्च कांस्यानां शुद्धिः प्लावाद्द्रवस्य चेति । उदुम्बराणां ताम्रमयपात्राणां त्रपु रङ्गम् । वस्त्राणां च शुद्धिः क्षारजलादिना । तान्तवं मलिनं पूर्वमद्भिः क्षारैश्च शोधयेत् अंशुभिः शोषयित्वा वा वायुना वा समाहरेत्" इति शङ्खोक्तेः । तस्य पीठादेः तत् तक्षणादि तावदिति मूलपदं व्याचष्टे यावता चेति । स्वरूपत इति तक्षणत्वादिस्वरूपेणैकवारमेव तद्गन्धलेपानपगमे तु आवृत्तो वारम्वारं वा तत् तक्षणादि कर्तव्यम् । तदुक्तमत्रिणा । यावन्नापैत्यमेध्याक्ताद्गन्धो लेपश्च तत्कृतः । तावन्मृद्वारि चा देयं सर्वासु द्रव्यशुद्धिषु" इति ॥ १३ ॥

स्नानेति तत्र स्नानेन देहशुद्धिस्तया देवार्चनादिकार्योपसिद्धिः । दानेन मनः शुद्धिस्तया विषयभोगेऽपि पापाभावसिद्धिः । यथाह गार्ग्यः । अकार्यकारिणां दानम्" इति एवम् ग्रहनिमित्तदानेन ग्रहदानजनितकार्यसिद्धिर्वा । तपसा कृच्छ्रचान्द्रायणादिना पापप्रायश्चित्तसिद्धिः अवस्था कौमारादिः तया च शुद्धिः यथा हरिहरभाष्ये । शिशोरभ्युक्षणं कार्यं बालस्याचमनं स्मृतम् । रजस्वलादि संस्पर्शे स्नानमेव कुमारकैः" इति । वालादिस्वरूपं च यथा तत्रैव । प्राक् क्रीडा करणाद्बालः प्रागन्नप्राशनाच्छिशुः । कुमारस्तु च विज्ञेयो

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

वाचम्मोचानवस्थानामिति । तथा च शुद्ध्या शिशुस्पर्शादिका-र्थसिद्धिः छायया च महदादौ स्नानादिकार्यसिद्धिः । उप-नयनादिसंस्कारेण वेदयोग्यतालक्षणकार्यसिद्धिः । सर्वो-पासनादिकर्मणा पापमोचनादिसिद्धिरिति तत्तत्कार्यानुमा-पिकी शुद्धिर्विज्ञेया । आत्मनः शौचं शुद्धिमाचरेत्ततः शुद्धः सन् वेदविहितं कर्माचरेदित्यन्वयः । मत्स्मृत्या चेति स्मृति-वाक्यादप्युक्तेः स्मृतिर्वेदना शुद्धिर्न व्यावहारकाधिकारमर्हति अपि तु परमैव तस्याः सर्वत्राऽव्यभिचारत्वात् । हरिर्हरति पापानि दुष्टचित्तैरपि स्मृत इत्याद्युक्तेः १४ ॥

एतेषां देशादिविषयाणां यो विपर्ययोऽशुद्धत्वं सोऽधर्म इति । अथाशुद्धत्वस्य देशादिनिष्ठत्वादधर्मस्य तु पुंनिष्ठत्वादभेदा-नुपपत्तिः किन्तु अन्यजनकत्वागमाभिप्रायमुक्तमितिवत्तत्त्व-ज्ञानप्रयोजनं च देशाद्यशुद्धिरधर्मः न व्यभिचरतीति बहु-श्रुतापरिष्कारः ॥ १५ ॥

क्वचिदित्यस्य व्याख्या आपदीति । प्रतिग्रहस्य गुणत्व-माहार्थमभिहितेति प्रायश्चित्तस्यावश्यकत्वात् निषिद्धत्वं च प्रतिग्रहं मन्यमानस्तपस्तेजोयशोनुदमिवेत्यादेः । कुटुम्ब-भाराद्यैरौषत्वं, पुंसस्त्रिवर्गो विहितः सुहृदो ह्यनुभावितः । न तेषु क्लिश्यमानेषु त्रिवर्गोऽर्थाय कल्पते इत्युक्तेः । विरक्ता-देरिति आदिना नैष्ठिकपरिग्रहः । न दोष इति । यदहरेव विरजेत्तदहरेव प्रव्रजेदिति श्रुतिरूपविधिबलेन कुटुम्बत्यागादि-गुणः श्रेष्ठ एव । एकस्मिन्नर्थे प्रतिग्रहादौ योऽयं प्रसि-द्धो नियमः नियामकं शास्त्रम् आपदि प्रतिग्रहस्य गुणत्व-प्रतिपादकम् अनापदि तु दोषत्वप्रतिपादकं वाक्यं कर्तृ । स नियमः शास्त्रं कर्तृ । तयोर्गुणदोषयोर्भेदमेव कर्म भूतं बाधते गुणदोषौ न वस्तुनिष्ठौ किन्तु अधिकारिभेदेन कल्पितावेवेति बोधयतीत्यर्थः ॥ १६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

परिज्ञानं प्रयोगज्ञानं कर्मप्रयोगानुष्ठानं शुद्धिः द्रव्यादिशुद्धिभिः विपर्ययैः मन्त्रवैकल्यादिभिः ॥ १५ ॥

गुणेति आपत्स्वादेर्निषिद्धत्वाद्दोषः दोषोऽपि हिंसा विहितत्वात् यज्ञेषु गुणः गुणदोषार्थनियमः विशेषशास्त्रेण गुण-दोषानियमः तद्भिदां बाधते ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यच्च ताम्रवस्त्रादिकममेध्यलिप्तं भवति तत् येनाम्लोदका-दिना यावद्गन्धं दुर्गन्धं लेपम् अमेध्यलेपं च व्यपोहति त्यजति आगतं मलं त्यक्त्वा प्रकृतिं स्वमेव रूपमभजत्तावत्तस्य शौच-माहृत्वेन इष्यते ॥ १३ ॥

अथ कर्तृशुद्धिमाह । स्नानेति । स्नानम् कर्मानुष्ठा-नोपयुक्तं तपः वीर्यं शक्तिः तीर्थेति पाठान्तरं संस्कार

उपनयनादिः कर्म सन्ध्योपासनादिरूपं मत्स्मृतिर्विष्णुस्मृ-स्मरणम् एभिरात्मनः शौचं शुद्धिः द्विजः इत्थं शुद्धः सन्नेव स्वाधिकारात्मकं कर्माचरेत् ॥ १४ ॥

अथ मन्त्रशुद्धिमाह,मन्त्रस्येति । परिज्ञानं प्रयोगज्ञानम् आचार्य-मुखाद्यथावत्परिज्ञानं वा मन्त्रस्य शुद्धिः अथ कर्मशुद्धिमाह कर्म-शुद्धिर्मदर्पणम्"इति कर्मणां मदर्पणमेव तेषांशुद्धिरित्यर्थः।अर्पणं नाम भगवदाराधनरूपत्वानुसन्धानम् इत्थं शुद्ध्यशुद्धिप्रश्नमुप-संहरति।धर्मः इति षड्भिः।देशकालद्रव्यकर्तृमन्त्रकर्मभिर्विशुद्धैरेव धर्मः स्वाधिकारलक्षणः सम्पद्यते विपर्ययैरशुद्धैस्त्वधर्मः प्रथमान्त पाठे विशुद्धानां षण्णां यो विपर्ययः अशुद्धिः सोऽधर्मः तच्छुद्धिरि-त्यर्थः ॥ १५ ॥

इमे च शुद्ध्यशुद्धी विषयभेदेन व्यतिकरमापाद्येते इत्याह-क्वचिदिति । क्वचिद्गुणोऽपि शुद्धिरपि विशेषविधिबलाद्दोषः स्या-दशुद्धिः स्यात् यथातुरस्य निषिद्धं स्नानादिकं तथा दोषोऽपि गुणः स्यात् यथा हिंसादि यज्ञमिच्छतः अतो गुणदो-षार्थनियमः विशेषशास्त्रेण गुणदोष विषयानियम इत्यर्थः । च तद्भिदां सामान्यशास्त्रप्राप्तगुणदोषविभागं बाधतेऽपवदति सामा-न्यशास्त्रस्य विशेषविधिविषयसङ्कोचमात्रं क्रियते नत्वत्यन्त-बाध इति न तस्य वैयर्थ्यमित्येवंकाराभिप्राय; ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यदमेध्यलिप्तं येन गन्धं लेपं च व्यपोहति । तेन तस्य प्रकृतिं भजते तस्य वस्तुनस्तच्छौचं शुद्धिरुपदिश्यते ॥ १३ ॥

कर्माङ्गशुद्धिप्रकारमाह । स्नानेति । तपसा यौवनादि-लक्षणा वीर्यं माहात्म्यं शक्तिर्वा संस्कार ऊर्ध्वपुण्ड्रादिधारणं कर्म नित्यसन्ध्याधन्दनादिमत्पूजावसानम् एभिरेभिः शौचं च मनसः शुद्धिं कृत्वाऽभीष्टं कर्माचरेत् मदध्यानाभ्यासम् ध्यानाभ्यासाच्च ॥ १४ ॥

अध्यायुपेतस्य मन्त्रस्य परिज्ञानमापादनीयमितिशेषः। कर्मणः शुद्धिः कथमित्यत उक्तं कर्मेति मदर्पणं प्रख्यापयन्नर्पितमिति एतैः साध्ये किमत्राह, धर्म इति । धर्मो मङ्गलकलक्षणः सम्पा-द्यते तत्राधिकारिणः आह । सद्भिरिति । विपर्ययैर्मदर्पणमकुर्वा-णैरसद्भिरेतैरधर्मः पापलक्षणः सम्पाद्यत इत्यन्वयः—

"आन्तरः सन्निधिर्विष्णोर्बाह्यः सन्निधिरेव च"

द्विविधः सन्निधिः प्रोक्तः कृत्रिमो बाह्य उच्यते ।

स्वाभाविकस्त्वान्तरः स्यात्प्रतिमार्जायणो यथा" ॥

इति वचनेन सन्निधानार्थं प्रख्यापयन् कर्तव्यमिति ज्ञायते ॥ १५ ॥

इतोऽपि भगवदर्पणं कर्तव्यमन्यथा कृतहान्यकृताभ्यागमौ स्यातामिति भावेनाह । क्वचिदिति । क्वचित्कर्मणि विहितत्वेन गुणोऽपि दोषः स्यात् मद्भक्तेनानर्पितत्वेनानुष्ठितत्वाद्दन्तवदिति शेषः । अपि विधिना ब्राह्मणोऽपि न हन्तव्य इति निषेधविधिना दोषोऽपि गुणः स्यात् यथेन्द्रस्य ब्रह्महत्या ऋषिनारायणप्रीतिजन-कत्वात् । ननु, गुणदोषविधानानियमः कथमत्राह । गुणेति । गुण-दोषाभ्यामर्थनियमः स्वर्गनरकादिफलनियमस्तौ गुणदोषौ विदन्ति जानन्तीति तद्विदः मनुष्यादयस्तेषामेव बाधते वर्णसङ्करो भवति

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रथमलक्षाध्यायात् पञ्चविंशाध्यायेन तिर्यगादयो व्यावर्त्यन्ते शुभेऽस्मात् प्रत्यवायमावाक्षेपमनो मनुष्यादीन् प्रति विधीयमानो गुणदोषौ भगवदर्पणाभावे स्वर्गनरकादिफलं ददत इत्युक्तं तद्विधानं तद्विदामित्यनेन मनुष्यादिष्वपि शुभाशुभज्ञानयोग्यवयसां तदज्ञानमहाशनज्ञानजो दोषो मूर्खाणां तिर्यगादीनां तदभावश्चेति सुच्यते

"वर्णाश्चतुर्दशाद्रूर्ध्वं ये विदुःते शुभाशुभम् ।
तेषामज्ञानजो दोषः सुमहान्कर्मजावपि" ॥ इति
तिरश्चामिन्द्रियाशक्तेर्न दोषो ज्ञानजो भवेत् ।
गुणोऽपि नैव कश्चित्स्यादयतो ज्ञानवहिष्कृता ॥
इति वचनात् ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मत्स्मृत्या चेति स्नातव्यमुक्तम "अपवित्रः पवित्रो वे"त्यादेः अतोऽप्रतिकार्यत्वां शुद्धिर्योजनाय प्रोक्तेयं न व्यावहारिकी मन्तव्या सर्वत्रास्खलितरूपत्वात् "हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः" इत्यादेः ॥ १४—१८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यत् पीठवस्त्रपात्रादि अमेध्यलिप्तं भवेत् तत् येन तावत् यद्वारामृज्जलादिना गन्धं लेपं च व्यपोहति त्यजति प्रकृति स्वरूपं भजेत् तस्य तच्छौचं तावदिति यावता तज्जलादिना गन्धलेपं व्यपोहति तावत्प्रमाणं शौचं कर्तव्यमित्यर्थः ॥ १३ ॥

द्रव्यशुद्धिमुक्त्वा कर्तृशुद्धिमाह,स्नानेति। अवस्था वार्द्धक्यादिः तत्र वीर्यं शक्तिः शक्त्यनुरूप आचार इत्यर्थः संस्कार उपनयनादिः कर्म सन्ध्योपासनादिकं तैः आत्मनः साहङ्कारस्य कर्तुः शौचं शुद्धिः प्रयोजनमाह, शुद्ध इति द्विज इत्युपलक्षणं शूद्रादेरपि ॥ १४ ॥

मन्त्रशुद्धिमाह, मन्त्रस्य सद्गुरुमुखात् यथावत् परिज्ञानं मन्त्रशुद्धिमाह, मदर्पणमिति मय्यर्पितं कर्मशुद्धमनर्पितमशुद्धं तद्वान् मल्लिनं व्यवहार्यं इति भावः । शुद्ध्यशुद्धी प्रदर्श्योपसंहरति, धर्म इति षड्भिः । देशकालद्रव्यकर्तृमन्त्रकर्मभिः षड्भिः शुद्धैर्धर्मः सम्पद्यते एतेषां यो विपर्ययः सोऽधर्महेतुरित्यर्थः ॥ १५ ॥

अयं च गुणदोषविभागो न क्वापि नियत इत्याह, क्वचिदिति । आपदि प्रतिग्रहो गुणोऽप्यनापदि निषिद्धत्वाद्दोषः दोषोऽपि कुटुम्बत्यागादिर्विधिना विधिबलेन विरक्तेर्गुणः तस्माद्गुणदोषरूपौ यावर्थौ तयोर्नियम एव तद्विदां गुणदोषरूपभेदं बाधते यथा कुटुम्बत्यागो दोषं एवेति यो नियमः स एव अधिकारिविशेषे दोषं बाधते ज्ञानिनः कुटुम्बत्यागस्य गुणत्वात् तथा कुटुम्बत्यागो गुण एवेति यो नियमः स एव गुणं बाधते कर्मिणः कुटुम्बत्यागस्य दोषत्वात् तस्माद्गुणदोषौ न सामान्यतो नियतौ किन्तु व्यक्तिविशेष एव नियतौ इत्यर्थः ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किञ्च अमेध्येनाशुचिना मलपङ्कादिना लिप्तं यत्पीठपात्रवस्त्रादि येन तत्तद्यथायोग्योदकादिना यावत्परिमाणेन गन्धं लेपं व्यपोहति त्यजति अत एव प्रकृतिं स्वरूपं भजते तस्य पीठादेः तज्जलादि तावत् परिमाणं शौचं शोधकमिष्यते ॥ १३ ॥

कर्तृशुद्धिमाह, स्नानेति । अवस्था कौमारादिलक्षणा वीर्यं शक्तिलक्षणम् संस्कारः उपनयनादिलक्षणः कर्म सन्ध्योपासनादिलक्षणम् एतैः स्नानादिभिः आत्मनः शौचं शुद्धिः एवं शुद्धः सन् कर्माचरेदिति ॥ १४ ॥

मन्त्रशुद्धिमाह, गुरुमुखात्परिज्ञानं मन्त्रस्य शुद्धिः कर्मशुद्धिमाह। कर्मशुद्धिर्मदर्पणम् इति इत्थं शुद्ध्यशुद्धी प्रपञ्च्योपसंहरति धर्म इति धर्मः स्वस्वाधिकारप्राप्तः षड्भिर्देशकालद्रव्यकर्तृमन्त्रकर्मभिः शुद्धैः सम्पद्यते ययायां विपर्ययस्तु अधर्मः अधर्महेतुः ॥१५॥

अयं गुणदोषविधायको वेदः ज्ञानभक्तिसाधनविशेषबोधकतया मोक्षहेतुरित्याशयेनाह । क्वचिदिति । आश्रमादाश्रमं गच्छेदिति विधिनोपकुर्वाणस्य दारसंग्रहो गुणोऽपि नैष्ठिकस्य दोषः स्यात् द्रव्यादिनासक्तस्य कुटुम्बत्यागो दोषोऽपि विरक्तस्य यदहरेव विरजेत्तदहरेव प्रव्रजेदिति विधिना गुणः गुणदोषौ अर्थौ विषयो यस्य स गुणदोषार्थः नियमयति स्वेस्वेऽधिकारे स्थापयतीति नियमो वेदः स चासौ स च सः गुणदोषविधायको वेदः तद्भिदामेव बाधते ॥ १६ ॥

---

भाषा टीका

जो वस्तु किसी अशुद्ध चीज को छिपटने से अशुद्ध होगई हो उस को धोने से उसका लेप तथा गन्ध छूट जावे और वह वस्तु अपने पहिले रूप को प्राप्त हो जावे तो शुद्ध हो जाती है उसका उतना ही शौच है ॥ १३ ॥

स्नान करने से दान से तप से अवस्था से कहीं वीर्य से संस्कार कर्म से तथा मेरे स्मरण करने से आत्मा का शौच होजाता है मनुष्य को चाहिये कि ऐसे शुद्ध हो जावे तब वैदिक कर्मों को करे ॥ १४ ॥

गुरु के मुख से उपदेश से ज्ञान होने से मंत्र की शुद्धि होती है मेरे अर्पण करने से कर्मों की शुद्धि होती है ऐसे छै प्रकार से धर्म होता हैं इन से विपरीत होने से अधर्म होजाता है ॥ १५ ॥

कहीं पर गुण भी दोष होजाता है कहीं पर विधि के किया दोषभी गुण हो जाता है इन गुण दोष दोनों का जो अर्थ, नियम वही उन के भेद को बाधक, करता है ॥ १६ ॥

---

१ तद्विदामेवेत्यवधारणेन मूर्खाणां गुणदोषाज्ञानेनाज्ञाभावः प्रतीयतेतत्तात्पर्यानुसारिणा व्याख्यां दर्शयति ।

२ ब्रह्महत्याद्यशुभकारणदोषापेक्षया ब्रह्महत्यादिकं निषिद्धमिज्ञानजोदोषोमहानित्यर्थः ॥

समानकर्माचरणं पतितानां न पातकम् ।
औत्पत्तिको गुणः संगो न शयानः पतत्यधः ॥ १७ ॥
यतो यतो निवर्तेत विमुच्येत ततस्ततः ।
एष धर्मो नृणां क्षेमः शोकमोहभयापहः ॥ १८ ॥
विषयेषु गुणाध्यासात्पुंसः संगस्ततो भवेत् ।
संगात्तत्र भवेत्कामः कामादेव कलिर्नृणाम् ॥ १९ ॥
कलेर्दुर्विषहः क्रोधस्तमस्तमनुवर्तते ।
तमसा ग्रस्यते पुंसश्चेतना व्यापिनी द्रुतम् ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दोषस्य क्वचिद्दोषत्वाभावे गुणत्वे चोदाहरणं दर्शयति । समानस्य तस्यैव कर्मणः सुरापानादेराचरणमपतितानां पतनहेतुरपि जात्या कर्मणा वा पतितानां पुनः पातकमधिकारभ्रंशकं न भवति पूर्वमेव पतितत्वात् अतोऽत्र दोषस्यापि दोषता नास्तीत्यर्थः । तथा संगोऽपि यो यतेर्दोषः स गृहस्थस्यौत्पत्तिकः पूर्वस्वीकृतो न दोषोऽपि तु गुणः "ऋतौ भार्यामुपेयात्„ इत्यादिविधानात् उभयत्र दृष्टान्तः पूर्वमेवाधः शयानो यथा न पततीति ॥ १७ ॥

अतो गुणदोषनियमाविधीनां प्रवृत्तिसंकोचद्वारा निवृत्तावेव तात्पर्यमित्यभिप्रेत्याह । यतो यत इति ॥ १८ ॥

यथाश्रुतप्रवृत्तिपरतां वेदस्य निराकर्तुं प्रवृत्तिमार्गस्यानर्थहेतुतां दर्शयति । विषयेष्विति चतुर्भिः । संग आसक्तिः तत्र तेषु विषयेषु येन प्रतिहन्यते कामस्तेन सह कामादेव कलिः कलहो विवादः ॥ १९ ॥

दुर्विषहस्तीव्रः तमः संमोहः तं क्रोधम् चेतना कार्याकार्यस्मृतिः द्रुतं शीघ्रम् ॥ २० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

दोषस्य सुरापानादेः । क्वचित् पूर्वमेव जातिकर्मपतितेषु । दोषत्वं नास्ति तथा सङ्गस्य दोषरूपस्यापि क्वचिद्गृहस्थे स्त्रीषु गुणत्वमस्ति तत्र तत्र चोदाहरणं दर्शयतीत्यर्थः । अतः अधिकारभ्रंशकत्वाभावात् । तत्र पतितेषु । उभयत्र दोषत्वाभावे गुणत्वे च । यथाधःशयनं न भ्रंशकं किन्त्वारोहणावरोहणपरिश्रमाभावाद्गुण एव तथेत्यर्थः ॥ १७ ॥

यतो गुणदोषविभागो न वास्तवोऽतः । एष निवृत्तिलक्षणः ॥ १८ ॥

यथाश्रुतेति । वाच्यार्थमननतिपरस्य या प्रवृत्तिपरता स्वर्गकामो यजेतेत्यादिरूपा तां निराकर्तुं तात्पर्यानुपपत्त्या तिर[illegible]म ॥ १९ ॥



व्यापिनी पूर्वं व्याप्य स्थिता । तमसा क्रोधेन ग्रस्यते नाश्यते ॥ २० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सामान्यशास्त्रप्राप्तगुणदोषविभागमपवदति । समानकर्माचरणमिति । समानकर्माचाराणां समानकर्मभिः पतितैः सह व्यवहारे पतितानां न पातकं किन्त्वपतितानामेव पातकं स्यात् गुणैः संगः संगाख्यो गुणः जन्मसिद्धः सर्वप्राणिनां नाशाय भवति अतो जन्तुरधः पतति निरयं प्रविशति ॥ १७ ॥

एष धर्मः असंगरूपधर्मः ॥ १८ ॥

संगात् भोग्य इति बुद्ध्या कामः भोक्तुरभिनिवेशः कलिः कलहः ॥ १९ ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दोषस्य क्वचिद्दोषत्वाभावे उदाहरणमाह । समानेति । समानकर्माचरणम् एककर्माचरणं सह संभाषणादिकमित्यर्थः । पतितानां न पातकं किन्त्वपतितानामेव पतितैः सह सम्भाषणं पातकं क्वचिद्गुणत्वाभ्यत्र दोषत्वेऽपि उदाहरणमाह । औत्पत्तिक इति । गुणैः शब्दादिविषयैः सह सङ्गो गृहस्थस्यौत्पत्तिकः स्वाभाविकः पूर्वमेव स्वीकृतत्वात् अतः तस्य न दोषः किन्तु गुणः ऋतावुपेयादित्यादिशास्त्रानुमतत्वात् स एव तु सङ्गो यतेस्तु दोषः तत्र दृष्टान्तः पूर्वमेवाधः शयानो न पततीति औत्पत्तिको गुणैः सङ्गो नाशाय नः पतत्यध इति पाठान्तरं तत्रायमर्थः सङ्गानां त्याजनेच्छयैव जात्यनुसाराणां सङ्गानां च त्याज्यत्वमुक्तं तत्र कोऽसौ सङ्गः यस्त्याज्यतयोक्तः कश्च त्याज्यत्वे हेतुः कुतश्च सङ्ग उपजायते सङ्गप्रभवाश्च के पुनर्दोषा इत्यभिप्रायमाशङ्क्याह । औत्पत्तिक इत्यादिना । गुणैः शब्दादिविषयैः सह सङ्ग औत्पत्तिकः सर्वप्राणिनां जन्मसिद्धः स नाशाय भवति नाशोऽत्रान्तः स्वाभाविकस्य चेतनस्यानादिविमोचात्मकस्वरूपस्य कल्पेत न अतो जन्तुरधः पतति निरयं प्रविशतीत्यनेनैव त्याज्यताहेतुरिति भावः ॥ ॥ १७ ॥

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्यागप्रकारमाह । यतो यत इति । यतो यतो विषयान्निवर्तेत विनिवर्तेत ततस्ततो विमुच्येत विशेषेण मुच्येत न तत्तं विषयं पुनरनुध्यायेदित्यर्थः । विषयेष्वनर्थपरम्परां विषयसुखासंगपरिहारस्य पुरुषार्थहेतुतामाह । एष इति । एष असङ्ग एव नृणां परमो धर्मः निरतिशयश्रेयःसाधनं तदाह । क्षेमः सुखावहः शोकाद्यनर्थपरिहारकश्च ॥ १८ ॥

किञ्च विषयेषु शब्दादिषु गुणाध्यानादुपादेयत्वाभिनिवेशादयस्तत्र विषयेषु पुनः पुनः पुंसः सङ्गो भवेत् सङ्गाच्च तत्र विषयेषु कामः अनुपभुज्यावस्थानाशक्त्यात्मकश्चित्तविकारः कामो भवेत् कामाच्च कलिः कलहो भवेत् ॥ १९ ॥

ततश्च दुःसहः क्रोधः तं क्रोधं तमोऽनुवर्तते क्रोधात्तमो भवेदित्यर्थः । तमश्चात्र सम्मोहः स च कार्याकार्यविवेकाभावात्मकः तमसा च या पुंसां व्यापिनी चेतना सा द्रुतमाशु ग्रस्यते ग्रस्ता भवति धर्मभूतज्ञानस्य विभुत्वाद्व्यापिनीत्युक्तं तदतिसङ्कुचितं भवतीत्यर्थः ॥ २० ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गुणदोषनिमित्तबाधो यथा न स्यात्तं प्रकारं वक्ति समानेति । अपतितानां विप्रादीनां समानकर्माचरणे भवपर्यायेणात्मयोग्यकर्माचरणे पातकं न स्यात् तथा पूर्वमपतिता विप्रादयो येन कर्मणा पतन्ति तेषां तत्समानकर्माचरणे तप्तसुरापानतप्तस्त्रीमूर्त्याश्लिङ्गनादिके देहत्यागवद्दोषक्षयं तत्कर्म पातकं च न भवति तथा शयानः शूद्रश्च ब्राह्मणादिपातित्यहेतुभिः लशुनभक्षणादिभिरधो न पतति अध इति विशेषणात्सुरापानादिभिरेव पतति । कुतो न पततीत्यत उक्तमौत्पत्तिक इति तस्य शूद्रस्य लशुनभक्षणादिलक्षणैर्गुणैरशुचेः कर्मभिः सङ्गः औत्पत्तिकः स्वाभाविको यतस्तस्मात्स्वायोग्य एव कर्मणि पततीत्यर्थः—

> त्रैवर्णिकाः सञ्चरन्तो वेदकर्मप्रवर्तनात् ।
> शयानः शूद्र उद्दिष्टो वेदकर्माप्रवर्तनात् ॥
> न तस्याभक्ष्यजो दोषः शुश्रूषायां प्रवर्ततः ।
> यथा सुवर्णस्य मलं शुक्लं ताम्रस्य नैव तत् ॥
> एवं विप्रादिदोषैस्तु न शूद्रो दोषनाभिवात् ।
> मलं तु तस्यापि मलं यथैव शूद्रजन्मनः ॥
> स्वधर्मप्रतिरूपस्य चरणं दोषदं मतम् ।

इतिवचनात् ॥ १७ ॥

किं बहुनोक्तेन सर्वतोऽप्यभिमानपरित्यागेन श्रीनारायणसमर्पणेन समस्तदोषनाशकरमित्याह । यतो यत इति । यतः यतः कर्मणो नाहं कर्तेति निवर्तेत अहङ्काररहितत्वेन यद्यत्कर्म परमेश्वरार्पणबुद्ध्या करोति ततस्ततः कर्मणो विमुच्येत तत्तत्कर्मबन्धकं न स्यादित्यर्थः । तत्कर्तृत्वत्यागो मुमुक्षुतारार्थं स्तौति । एष इति । एषः परमेश्वरसमर्पणलक्षणो धर्मः संसारमुक्तिहेतुः "मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसे" आदेः ॥ १८ ॥

विषये बाध्यमानदोषमाह । विषयेष्विति । अयमर्थः भगवदर्पणबुद्धिराहित्येन क्रियमाणं कर्म शब्दादिविषयेषु गुणबुद्धिं जनयति । गुणबुद्धिश्चाकापथःपूरमतीव तदनु नरकुण्डस्य पुंसो विषयेषु गुणश्रवणात् सुखसाधनत्वध्यानात् तेषु आहवश्चयः सङ्गः स्यात् ततस्तेषु कामः इच्छा स्यादिच्छातः कलिः कल शब्दे इति धातोः चेतनधर्मज्ञानग्रासकहेतुरधर्माज्ञानात्मा विशति ॥ १९ ॥

कलेराक्रोशात्मकशीलपरिपाकेषु सत्सु दुर्विषहः क्रोधः स्यात् तदनु क्रोधानन्तरं तमो वर्तते ततस्तमसि प्रवृत्ते पुंसः व्यापिनीन्द्रियसन्तता चेतना सुखानुभवशक्तिस्तमसा दुःखोद्रेकेण ग्रस्यते नष्टा भवति ॥ २० ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विषयेष्विति चतुर्भिः ॥ १९—२२॥

---

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

गुणदोषयोरनियमं प्रपञ्चयति,—समानस्य तस्यैव कर्मणः सुरापानादेराचरणम् अपतितानां पतनहेतुरपि जात्या कर्मणा वा पतितानां पुनः पातकम् अधिकारभ्रंशकम् न भवति पूर्वमेव पतितत्वात् यथा सङ्गोऽपि यो यतेर्दोषः स गृहस्थस्यौत्पत्तिकः पूर्वस्वीकृतो न दोषः अपि तु गुणः सङ्कल्पासक्तेरौत्पत्तिकत्वे सति ऋतौ भार्यासङ्गो गुणः तदसङ्गस्य तस्मिन्नधिकारिणि दोषश्रवणात् उभयत्र दृष्टान्तः पूर्वमेवाधः शयानो यथा न पतति ॥ १७ ॥

किञ्च गुणदोषविधीनां प्रवृत्तिसंकोचद्वारा निवृत्तावेव तात्पर्यमित्यभिप्रेत्याह । यतो यत इति ॥ १८ ॥

यथाश्रुतप्रवृत्तिपरतां वेदस्य निराकर्तुं प्रवृत्तिमार्गस्यानर्थहेतुत्वं दर्शयति । विषयेष्विति चतुर्भिः । संगः आसक्तिः कामादेव कलिः कामप्रतिघातकेन लोकेन सह कलहः ॥ १९ ॥

तं क्रोधमनु तमो मोहः ततस्तमसा मोहेन चेतना कार्याकार्यस्मृतिः ॥ २० ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गुणदोषप्रतिपादकस्यापि वेदस्य तन्निवृत्तावाधकत्वं वक्तुं तदन्वयव्यतिरेकाङ्क्यां द्रढयति । समानेति । समानकर्माचरणं प्रमाणापूर्वककर्माचरणं पतितानामपि पातकं पतनहेतुर्न किन्तु शुद्धिहेतुरित्यर्थः । शास्त्रीयकर्मरतः पतितोऽपि शनैः ऊर्ध्वं गच्छतीति भावः औत्पत्तिकः स्वाभाविकः स्वच्छन्दः कृतः सङ्गो न गुणः न शुद्धिहेतुरित्यर्थः शयानः शास्त्रोक्ते कर्मणि लुप्तरतिः अधः पतति अधोगतिं प्राप्नोति ॥ १७ ॥

अथ विषयेषु वैराग्यं परमो गुण इत्याह । यत इति । यतो यतो विषयात् एषः निवृत्तिलक्षणः ॥ १८ ॥

तया विरहितः साधो ! जन्तुः शून्याय कल्पते ।
ततोऽस्य स्वार्थविभ्रंशो मूर्च्छितस्य मृतस्य च ॥ २१ ॥
विषयाभिनिवेशेन नाऽऽत्मानं वेद नापरम् ।
वृक्षजीविकया जीवन् व्यर्थं भस्त्रेव यः श्वसन् ॥ २२ ॥
फलश्रुतिरियं नृणां न श्रेयो रोचनं परम् ।
श्रेयोविवक्षया प्रोक्तं यथा भैषज्यरोचनम् ॥ २३ ॥
उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च ।
आसक्तमनसो मर्त्या आत्मनोऽनर्थहेतुषु ॥ २४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ विषयेष्वासक्तिः परमो दोष इत्याह । विषयेष्विति चतुर्भिः । विषयेषु शब्दादिषु गुणाध्यानात् गुणत्वचिन्तनात् तत्र तेषु सङ्गः आसक्तिः सङ्गात्तत्र कामः कामादेव कामविघातकैः सह कलिः कलहः ॥ १९ ॥

दुर्विषहः दुर्धरः तं क्रोधमनु तमः सम्मोहः तमसा कार्याकार्यविवेकलक्षणा चेतना द्रुतं शीघ्रं ग्रस्यते ॥ २० ॥

---

### भाषा टीका ।

जो लोग स्वयं पतित हैं तिनका जो स्वाभाविक आचरण है वह पातक नहीं है उनका तो जन्म से वह सङ्ग गुणही है क्योंकि जो जमीन पर सोता है वह नीचे नहीं गिरता है ॥ १७ ॥

जिस जिस अयुक्त कर्म से निवृत्त होता है उसीसे वह छूट जाता है यही मनुष्यों का धर्म है जो कि शोक तथा मोहको नाश करता है ॥ १८ ॥

विषयों में गुण के अनु सन्धान के करनेसे पुरुषको उस में आसक्ति होतीहै आसक्ती के होनेसे उस में कामना होती है कामके होनेसे मनुष्यों का कलह होता है ॥ १९ ॥

कलह के होने से बड़ा भारी क्रोध होता है जिसके पीछे बड़ा अज्ञान होता है फिर पुरुष की व्यापक चेतना बुद्धि तमो गुण से ग्रसित हो जाती है ॥ २०

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

शून्याय कल्पते असत्तुल्यो भवतीत्यर्थः । स्वार्थविभ्रंशः पुरुषार्थहानिः मूर्च्छितस्य मृततुल्यस्य ॥ २१ ॥

तत्तुल्यत्वं प्रपञ्चयति । विषयेति । व्यर्थं वृक्षजीविकयैव यो जीवन् वर्तते स मूर्च्छिततुल्यः अत एव यो भस्त्रेव श्वसन् वर्तते स मृततुल्यः अतः स्वार्थनाश इत्यर्थः ॥ २२ ॥

ननु प्रवृत्तस्य स्वर्गादिफलश्रवणात्कुतः स्वार्थविभ्रंश इत्यत आह । फलश्रुतिरिति । इयं फलश्रुतिर्न श्रेयः परमपुरुषार्थपरा न भवतीत्यर्थः । किन्तु बहिर्मुखानां नृणां मोक्षविवक्षयाऽवान्तरफलैः कर्मसु रुच्युत्पादनमात्रम् यथा भैषज्ये औषधे रोचनं रुच्युत्पादनम् तथा हि

'पिब निम्बं प्रदास्यामि खलु ते खण्डलड्डुकान् ।
पित्रैवमुक्तः पिबति न फलं तावदेव तु' ॥

तथा मातृवाक्यं च

जिह्वा ते वर्धते वत्स ! गडूचीं भक्षय पिब ।

इति न फलं तावदेव तु किन्त्वारोग्यम् ॥ २३ ॥

ननु कर्मकाण्डे मोक्षस्य नामापि न श्रूयते कुत एवं व्याख्यायते यथाश्रुतस्याघटनादित्याह । उत्पत्त्यैवेति त्रिभिः । उत्पत्त्या स्वभावत एव कामेषु पश्वादिषु प्राणेष्वायुरिन्द्रियबलवीर्यादिषु स्वजनेषु पुत्रादिषु अनर्थहेतुषु परिपाकतो दुःखहेतुषु ॥ २४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

तया स्मृत्या । ततोऽसत्तुल्यत्वात् । मूर्च्छितमृततुल्यस्येति द्वयोः पदयोर्मिलित्वा व्याख्यानम् ॥ २१ ॥

तत्तुल्यत्वं मूर्च्छितमृततुल्यत्वं वृक्षजीविकया यथानुधर्मेणैव बाह्निकी जलापक्षादिरूपा वृक्षस्य जीविका तथा विषयावि-ष्टस्यापि बाह्निकाहारादिरूपा या तया जीवन् स्थितिं कुर्वन् यो वर्तते अत एव मूर्च्छिततुल्यत्वादेव अतः मृत-तुल्यत्वात् स्वार्थनाशश्चतुर्विधपुरुषार्थहानिरित्यर्थः ॥ २२ ॥

इयं पशुकाम इत्यादिरूपा बहिर्मुखानां स्वर्गादिविषये-च्छूनाम् अवान्तरफलैर्गौणफलैः नानेन खण्डलड्डुकमात्रमेव फलं न किन्तु रुच्युत्पादनार्थं गौणफलाभास एवेत्यर्थः पूर्वमैहिकविषयेच्छूनां निवृत्तिस्तु पारलौकिकस्वर्गादीच्छूना-मिति ज्ञेयम् ॥ २३ ॥

एवं निवृत्तिपरत्वेन व्याख्यातस्य प्रवृत्तिपरत्वस्य पदार्थादि-ष्विति पशुकामो यजेत वर्चस्कामस्य जुहुयात् खादिरं वीर्यकामस्य यूपं कुर्वीत इत्यादिवाक्यानि वचनानि परि-पाकतः परिणामतः ॥ २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

शून्याय शून्यत्वाय स्वार्थे विभ्रंशः मूर्छितस्य मृततुल्यस्य ज्ञानमात्रनिरन्वयनाशः इत्यभिप्रायः ॥ २१ ॥ २२ ॥

फलश्रुतिः श्रूयमाणं स्वर्गादिकं श्रेयः पुरुषार्थत्वेन प्रतिपिपादयिषितः किन्तु रोचनार्थं गुडजिह्विकान्यायेन शास्त्रे श्रद्धाजननार्थं भेषजरोचनं गुडशर्करादिपुरस्कारेण भेषजे श्रद्धाजननम् ॥ २३ ॥

उत्पत्त्यैव जन्मप्रभृति ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे साधो ! तया चेतनया रहितस्तु जन्तुर्जीवः शून्याय कल्पते असत्प्रायतां प्राप्नोतीत्यर्थः । नहि स्थावरादिषु चैतन्यं सदिव भातीति भावः । ततः शून्यतापत्तेः मूर्छितस्येव मृतस्येव चास्य विषयसंगिनः विषयाभिनिवेशेन स्वार्थविभ्रंशो भवेत् ॥ २१ ॥

कोऽसावात्मानमपरं च न वेदेत्यर्थः स्वपरज्ञानाभावः नहि तरुपाषाणादीनां स्वपरविवेको दृश्यते अयमेव महान् स्वार्थविध्वंस इत्यर्थः । तमेनं स्वार्थविभ्रंशं निन्दति । वृक्षजीविकयेति । यः स्वार्थविभ्रंशापन्नः स वृक्षजीविकया वृक्षस्येव स्वपरविवेकरहितया जीविकया जीवन् वर्तते भस्त्रेव व्यर्थं श्वासं मुञ्चन् वर्तेत इत्यर्थः ॥ २२ ॥

यदि विषयसङ्गस्येत्थमनर्थकारित्वं तर्हि मातापितृसहस्रेभ्योऽप्यतिवत्सलो वेदः किमिति स्वर्गादिवैषयिकसुखसाधनानि यज्ञादीनि विधत्त इत्यत आह । फलश्रुतिरिति । इयं यजेत स्वर्गकाम इत्यादिरूपा फलश्रुतिः न श्रेयः बोधयतीति शेषः श्रूयमाणं स्वर्गादिफलं न पुरुषार्थत्वेन प्रतिपिपादयिषितमित्यर्थः । परं केवलं रोचनं गुडजिह्विकान्यायेन मोक्षसाधनेषु रुचिजननार्थं फलकीर्तनमित्यर्थः । एतदेव स्पष्टयति । श्रेयोविवक्षया इष्टसुखापेक्षया स्वर्गादिकर्मानुष्ठापितं ततोऽप्यापवर्गिकं सुखमतिशयितमित्येवं मोक्षसुखस्य निरतिशयपुरुषार्थत्वविवक्षया प्रोक्तं स्वर्गादिफलमुक्तमित्यर्थः । यथा भेषजरोचनं भेषजमौषधं प्रति रोचनं रुचिजनकं गुडशर्करादि यथा तद्वत्—

पिब निम्बं प्रदास्यामि खलु ते खण्डलड्डुकान् ।
पित्रैवमुक्तः पिबति न फलं तावदेव तु ॥

इत्युक्तप्रकारपुरस्कारया भेषजे यथा प्रीत्युत्पादनं तद्वदित्यर्थः ॥ २३ ॥

अन्यथा हितबोधनार्थं प्रवृत्तो वेदः कथमहितेष्वेव लोकं प्रवर्तयेदित्याह उत्पत्त्येवेति द्वाभ्याम् उत्पत्त्यैव जन्मप्रभृत्येवात्मनः स्वस्य अनर्थहेतुषु कामादिष्वासक्तमानसानत एव तेषु रतान् वेदो यद्बोधयिष्यति तदेव श्रेय इति विश्वसितानित्यर्थः । स्वार्थे स्वश्रेयः अविदुषोऽजानतो वृजिनाध्वनि दुःखावहे संसृतिमार्गे भ्राम्यमाणानन्तस्तमो धियतः आचरतामापत्स्यमानांस्तान्मर्त्यान् पुनस्तेषु एव कामादिष्वनर्थावहेषु बुधो वेदः कथं युञ्ज्यात् युक्तान् कुर्यात्प्रवर्तयेदित्यर्थः । तत्र प्राणशब्देनायुरिन्द्रियबलादीनि विवक्षितानि आजन्मशब्देन पुत्रमित्रकलत्रादयः बुध इति द्वितीयार्थे वा वेद इति शेषः वेदो बुधः वेदस्योचितवेन [illegible] इति [illegible] युञ्ज्यादित्यर्थः । तथा च स्वयमाप्तः स्वादित्यर्थः ॥ २४—२५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्रानुभवशक्त्या रहितो जन्तुरासुरो जीवः शून्याय सुखनाशाय कल्पते नित्यत्वाच्चेतनस्य न स्वरूपेण नाशः किन्तु सर्वात्मना सुखनाश एवेत्याह । तत इति । चशब्द एवार्थे ततो मृतस्य अन्धं तमः पतनानन्तरम् अस्य मूर्छितस्य दुःखसमुद्राभिभूतत्वेन निःसंज्ञस्य स्वार्थस्य सुखस्य विभ्रंशः स्वरूपतो हानिर्भवति ॥ २१ ॥

न केवलं सर्वात्मना सुखनाशः तस्य निरतिशयदुःखमपि भवतीत्याह । विषयेति । विषसाम्यं यातीति विषयो दुःखं तस्याभिनिवेशेन समुद्रेकेणात्मानं न वेद अपरं प्रतियोगिनं च न वेत्ति स्वानुभवमन्तरेण न किञ्चिद्वेत्तीत्यर्थः । स्वपरविषयज्ञानं नास्ति चेत्तुच्छत्वादप्रयोजक आपन्न इति । तत्राह । वृक्षेति । भगवद्भागवतप्रद्वेषातिशयेन नित्यं तमः पतितो निरन्तरं दुःखमेवानुभवन् यमकिङ्करैरविरतं दुह्यमानत्वेन वृक्षजीविकया वृक्षजीवनवद्व्यर्थं जीवन् निष्प्रयोजनो भस्त्रवत् दुःखपरीतायुः दृतिवच्छ्वसन्नास्ते इत्यन्वयः—

द्वेषिणो गुणवत्त्वेन भूयन्ते विषयाः सदा ।
असतां सङ्गतस्तेषु दोषाः भोक्तुं सुदुर्लभाः ॥
अतो नित्यगुणाध्यानात्तद्गुणे प्रीतिमान् भवेत् ।
अतस्तत्र भवत्कामः कामिनं कश्चिदाविशेत् ॥
अधर्माज्ञानरूपेण कामिनाविष्टदेहिनः ।
सत्सु क्रोधो दुर्विषहस्ततस्तमसि पात्यते ॥
अन्धे तमसि मग्नस्य चेतनेन्द्रियसङ्गता ।
सुखानुभवशक्तिर्या सा विनश्यति सर्वदा ॥
तदा शून्यभावेन शून्य इत्युच्यते नरः ।
सर्वात्मना तु सम्भ्रंशस्तस्य दुःखविवर्धनः ॥
अमूर्छितस्य च भवेत् मृत्यनन्तरमेव च ।
दुःखाख्यविषयाविष्टात्मानं परमेव च ।
यथावद्वेत्ति पतितस्तमस्यन्धे कदाचन ॥
वृक्षवद्दृश्यते नित्यं निष्प्रयोजनजीवनः ।
नित्यदुःखपरीतायुर्दृतिवच्छ्वसितश्चापि ॥

इति वचनादासुरजनविषयोऽयमिति ज्ञायते ॥ २२ ॥

श्रुतिविहितत्वात्स्वर्गादिविषयेच्छा सतां स्यादित्याशङ्क्य वेदतात्पर्यपर्यालोचनेन स्वर्गादिविषयस्यानित्यसुखहेतुत्वेन न तदिच्छा कार्या श्रुतेर्भेषजरोचनार्थमिक्षुखण्डदानवत्स्वर्गादिवाक्यानि मुख्यतो मुक्तिपरेत्याह । फलश्रुतिरिति । इयं फलश्रुतिः मोक्षफलभावकत्वेन चरितार्थत्वात् न स्वर्गादिकुसुमश्रुतिस्तथात्वे वेदस्यानर्थहेतुत्वं स्यात् तदुक्तम्—

स्वर्गादिकामनायुक्तस्त्वैहिकेष्वपि सज्जते ।
तत्रापि द्वेषकामेभ्यो विशेषं चाभिकाङ्क्षति ॥
ततस्तमसि पातः स्यादतो वेदः कथं हि तान् ।
काम्यत्वेनाभिवक्ति सर्वं जानन् स्वयं स्वहा ॥

न तानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि ।
कथं युञ्ज्यात् पुनस्तेषु तांस्तमो विशतो बुधः ॥ २५ ॥
एवं व्यवसितं केचिदविज्ञाय कुबुद्धयः ।
फलश्रुतिं कुसुमितां न वेदज्ञा वदन्ति हि ॥ २६ ॥
कामिनः कृपणा लुब्धाः पुष्पेषु फलबुद्धयः ।
अग्निमुग्धा धूमतान्ताः स्वं लोकं न विदन्ति ते ॥ २७ ॥
न ते मामङ्ग ! जानन्ति हृदिस्थं य इदं यतः
उक्थशस्त्रा ह्यसुतृपो यथा नीहारचक्षुषः ॥ २८ ॥
ते मे मतमविज्ञाय परोक्षं विषयात्मकाः ।
१ हिंसायां यदि रागः स्याद्यज्ञ एव न चोदना ॥ २९ ॥
२ हिंसाविहारा ह्यालब्धैः पशुभिः स्वसुखेच्छया ।
यजन्ते देवता यज्ञैः पितृभूतपतीन् खलाः ॥ ३० ॥
स्वप्नोपमममुं लोकमसन्तं श्रवणप्रियम् !
आशिषो हृदि संकल्प्य त्यजन्त्यर्थान् यथा वणिक् ॥ ३१ ॥
रजःसत्त्वतमोनिष्ठा रजःसत्त्वतमोजुषः ।
उपासत इन्द्रमुख्यान् देवादीन्न तथैव माम् ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अतस्तान् स्वार्थं परमसुखमविदुषः अतो न तान् प्रह्वीभूतान् वेदो यद्योभविष्यति तदेव श्रेय इति विश्वसितानित्यर्थः तानेवंभूतान् वृजिनाध्वनि कामवर्त्मनि देवादियोनिषु भ्राम्यतः ततः पुनस्तमो वृक्षादियोनिं विशतः पशुकाम इति आयुरिन्द्रियादिकाम इति च पुत्रादिकाम इति च कथं पुनस्तेष्वेव कामेषु स्वयं बुधो वेदो युञ्ज्यात्प्रवर्तयेत् तथा सत्यनाप्तः स्यादिति भावः ॥ २५ ॥

कथं तर्हि कर्ममीमांसकाः फलपरत्वं वदन्ति तत्राऽऽह । एवमिति । व्यवसितं वेदस्याभिप्रायम् कुसुमितामवान्तरफलप्ररोचनया रमणीयां परमफलश्रुतिं वदन्ति कुतस्ते कुबुद्धयस्तदाह हि यस्माद्वेदज्ञा व्यासादयस्तथा न वदन्तीति ॥ २६ ॥

कुबुद्धित्वं प्रपञ्चयति । कामिन इत्यादिभिः । कामित्वात्कृपणा अतो लुब्धास्तृष्णाकुला अतः पुष्पेष्ववान्तरफलेषु परमफलबुद्धयोऽत एवाग्निमुग्धा अग्निसाध्यकर्माभिनिवेशेन लुप्तविवेकास्ततश्च धूमतान्ता धूमता धूममार्गोऽन्ते येषां ते स्वं लोकमात्मतत्त्वम् तथा च श्रुतिः

कश्चित्स्वित् वा अस्माल्लोकात् प्रेत्य आत्मानं वेद अयमहमस्मीति कश्चित्स्वं लोकं न प्रति जानाति अग्निमुग्धो हैव धूमतान्त इति' ॥ २७ ॥

कोऽसौ स्वलोकस्तमाह । हृदिस्थमात्मानं मां स्वलोकम् ननु हृदिस्थमहंकारास्पदं जानन्त्येव सत्यम् परमात्मानं तु न जानन्तीत्याह । य इदं मद्व्यतिरिक्तं जगन्नास्ति कुतः यत इदं जगज्जातम् तत्कुतो न जानन्ति हि यस्मात् उक्थं कर्मैव शस्त्रं शंस्यं कथनीयं पशुहिंसासाधनं वा येषां ते अतः केवलमसुतृपः प्राणतर्पणपराः नीहारं तमस्तेन व्याप्तानि चक्षूंषि येषां ते यथा सन्निहितमपि न जानन्ति तद्वत् तथा च श्रुतिः 'न तं विदाथ य इमा जजानाऽन्यद्युष्माकमन्तरं बभूव नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ती'ति ॥ २८ ॥

वेदतात्पर्याज्ञानाद्धिंसामेव यजन्तीत्याह । ते परोक्षमस्फुटं मे मम मतमविज्ञाय देवतादीन्यजन्त इत्युत्तरेणान्वयः स्वमतमेवाऽऽह हिंसायां मांसभक्षणार्थं तत्फलार्थं च यदि रागः स्यात्तर्हि यज्ञ एवेत्यपूर्वनुबोधकारा परिसंख्येय न स्वातन्त्र्येण चोदनेत्येवंरूपम् यद्यपि नित्यनैमित्तिकयोः कामविशेषानुबन्धो नास्ति तथापि कर्मणा पितृलोक इति श्रुतेः सामान्यतः पितृलोककामनास्त्येव अन्तःकरणशुद्धिकामना चेति भावः तदुक्तम्

'नाकामस्य क्रिया काचिद् दृश्यते चेह कर्हिचित् ।
यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम्, ॥

इति ॥ २९ ॥

अज्ञत्वादेव हिंसया विहारः क्रीडा येषां ते ॥ ३० ॥

१ हिंसायां यदि कामः स्यादत्र इति वि० पाठः । २ वृथा पशून् विहिंसन्ति हिंस्यन्ते प्रेत्य तैस्तु ते इति वीररा० विज० पाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

धाम: कर्मविधिप्रेरिताः असुतृप इन्द्रियतर्पणपराः हृदिस्थमपि न जानन्तीत्यत्र दृष्टान्तः यथा नीहारं तमस्तेन रूपाणि चक्षूंषि येषां ते सन्निहितमपि न जानन्ति तद्वत् ॥ २८ ॥

किञ्च ते मम परोक्षमस्फुटं दुरवगाहमितिभावः मतमविज्ञाय केवलं विषयात्मकाः विषयप्रवणचित्ताः सन्तः वृथा पशून् विहिंसन्ते यागमपदिश्य मांसभक्षणाय पशून् हिंसन्त इत्यर्थः अतस्ते नास्तिका इति भावः । ते तु प्रेत्य मृत्वा तैर्हिंसितैरेव पशुभिरमुत्र शालावृकादिरूपतामापन्नैर्हिंस्यन्ते ॥ २९ ॥

वृथापशून् विहिंसन्ते इत्यत्र हेतुतया नास्तिकानामभिप्रायविशेषं प्रकाशयंस्तान्विवृणोति । हिंसायामिति । अनेन तत्पूर्वकं मांसभक्षणमुपलक्ष्यते तत्र यदि राग इच्छा स्यात्तर्हि यज्ञ एव चोदना विधिरनुमानिरिति यावत् इति विहिंसन्त इति सम्बन्धः हिंसैव विहारः क्रीडा येषां ते स्वसुखेच्छया मांसभक्षणसुखेच्छया आलब्धैः पशुभिः ये यज्ञास्तैः पित्रादिरूपा देवता यजन्ते अतस्ते खलाः स्वसुखेच्छया यागो व्याजीकृत इत्यतस्ते खला इत्यर्थः ॥ ३० ॥

एवं नास्तिकानां फलमुक्तम् चयाक्तिकेष्वपि फलकामानां प्रवृत्तिं तत्फलं च दर्शयति । इत्यमिपर्नामिति । असन्तं प्रकृतिपरिणामात्मकमत एव भवणाप्रियं श्रोत्रमात्रप्रियममुं लोकं परलोकं तथाभ्या आशिषः कामांश्च हृदि सङ्कल्प्याभिसन्धायाधमान् धनानि त्यजन्ति कामसाधकेषु कर्मसु विनियोजयन्ति यथाव-श्चिण्यका कश्चिद्वणिग्वहुधनार्जनेच्छया तावत्स्वं धनस्वजन्सश्रृष्टं विवकृत्वाविदुरमलभ्रष्टा भवन्ति तद्वदित्यर्थः ॥ ३१ ॥

रजःसत्त्वतमोनिष्ठाः रजआदिगुणमूलकर्मनिष्ठाः रजःसत्त्वतमोजुषो राजसाहारादि सेवमानाः तेषु प्रीतियुक्ता वा अत्र रजस्तमोभ्यां मिश्रितं सत्त्वं विवक्षितम् इन्द्रो मुख्यो येषां तान् देवादीनुपासते स्वगुणानुरूपानिन्द्रादीनेवाराधयन्ति न यथा इन्द्राद्युपासनमपि न यथावत्कुर्वन्ति यथावत्त्वं नाम भगवदात्मकत्वबुद्धियुक्तत्वमेव न यथैवेति मामित्यनेनापि सूच्यते साधारणमपि न यथावदुपासत इत्यर्थः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अमतत्प्रदर्श्यासुरमतं प्रदर्शयति । एवमिति । केचिदसुरपक्षीयाः वेदस्यैवमुक्तं व्यवसितं निश्चयमविज्ञाय फलश्रुतिं फलं मोक्षस्तद्विषयां श्रुतिं कुसुमितां स्वर्गविषयां वदन्ति । अत एवावेदज्ञा इति ॥ २६ ॥

एतदेवोपपादयति । कामिन इति । कामिनो[1] निषिद्धकामिनः न तु योग्यकामवन्तो निषेध्याः—

> अयोग्यभार्यापुत्रादिकामितानर्थसाधिनी ।
> योग्यकामात्परः प्रीतिरतो ब्रह्मादयोऽमलाः ॥
> भार्यापुत्रादिसंयुक्ता वासुदेवमुपासते ।

इति प्रमाणात् एवंविधा असुरा इत्यभिप्रेत्य कृपणादिशब्दाः प्रयुक्ताः ननु स्वर्गकाम इति श्रुतेः स्वर्गादिरेव स्पष्टार्थत्वात् कथं पुष्पेषु फलबुद्धय इति निन्दा क्रियते

इति तत्राह अग्निमुग्धा इति नामविज्ञानादिरेवोच्यते इति मुग्धाः मिथ्याज्ञानिनः अत्रत्यफलमाह । धूमेति मिथ्याज्ञानित्वं कथमत्राह । स्वलोकमिति स्वलोकं स्वाश्रयं परमात्मानं न विदन्ति अनेन स्वर्गकामाः स्वर्गकामशब्दार्थमपि न विदन्तीति ज्ञापितम्—

> नित्यानन्दहरेर्भक्तिज्ञानाद्याः स्वर्गशब्दिताः ।
> पुत्रभार्यान्तवित्ताद्याः सर्वं मोक्षगतं फलम् ॥
> उद्दिश्य स्वर्गकामस्य यजनं श्रुतिचोदितम् ।
> तदविज्ञाय पुष्पाख्यमनित्यं स्वर्गमिच्छव: ॥
> यजन्ति मन्दमनसो वेदवादपरायणाः ।

इति मानेन स्वर्गशब्दविवरणात् ऊर्मिमयं यानैर्वा इत्यादि चात्र मानम् ॥ २७ ॥

कोऽसावाश्रय इति तत्राह । न त इति । ये उक्थेन प्राणेन शाः शासनं येषां ते उक्थशासः अन्धे तमसि पातयित्वा प्राणेन वयत्वा असुतृपः केवलेन्द्रियारामास्ते य इदं स्वान्तो यतश्चेदं जातं हृदिस्थं मां न जानन्तीत्यन्वयः—

> विश्वयभक्तान् सदा वायुः पातयेत्तमसि ध्रुवम् ।
> विष्णुभक्तांश्च मोक्षाय प्रापयित्वा सुखं नयेत् ॥

इति च महान्तं निदर्शयति । यथेति । यथा नीहारचक्षुषः नीहारावृतदृष्टयः पदार्थान् यथावन्न विदन्ति ॥ २८ ॥

तथा ते मे मतमविज्ञाय—

> मोक्षाख्यरूपफलमेवाह स्वर्गादिवचनं तु यत् ।
> असुराणामयं स्वर्गशब्दः पुष्पात्मकं वदेत् ।
> देवानां हरिसम्प्राप्तिं वेदो विष्णुपरो यतः ॥

इत्येतस्मिन्नर्थे अविदित्वा ततः किमत्राह । परोक्षेति । परोक्षमर्थतमः तद्विषयः तत्प्राप्तियोग्यः आत्मा स्वरूपं येषां ते तथा अन्धन्तमः परोक्षं च पञ्च कष्टं तथोच्यते इतिवाक्यसिद्धं कामिनः कृपणा इत्यादिभिर्विविधा असुरा इत्यर्थेन उक्तः इदानीं स्पष्टयति । हिंसायामिति । अयं भावः ये कामिनः तेषामसुराणां यदि यदा हिंसायां कामः तदा यज्ञ एव न चोदना यद्यदात्मनो हिंसनमिष्टं तत्तद्विहितमिति कुतर्कैः प्रतिपाद्य यज्ञं प्रति पादयन्ति—

> आसुरो विहितां हिंसां विहितत्वेन वर्णयेत् ।
> आसुरा याज्ञिकाः सर्वे नारायणपराङ्मुखाः ।

इति वचनात् ॥ २९ ॥

एषां प्रत्यक्षाद्यन्यथानुपपत्त्यासुरत्वं स्पष्टमित्याह । हिंसाविहारा इति आलब्धैः हिंसितैः ॥ ३० ॥

अमुं लोकमुद्दिश्य असन्तमनित्यम् अर्थहानिरेवैषां न स्वामीष्टप्राप्तिरित्याह । आशिष इति । हृदि स्वर्गाशिषः सङ्कल्प्य वाञ्छाम इति निरूप्य वणिग्यथा तथा अर्थाञ्छ्यजन्ति ॥ ३१ ॥

सन्तु वा पितृभूतपतीनां यष्टारोऽसुराः इन्द्रादिदेवतार्चकाः कथमित्याशङ्कयायथावत्तदर्चनामावादित्याह । रज इति । एवंविधा याज्ञिकास्तामसाः कुतः—

> विष्णुं विहाय ये देवान् पितॄन् भूतेश्वरांस्तथा ।
> साम्येन वा पूजयन्ति ते ज्ञेया आसुरा गणाः ॥

इति स्मृतेः तेष्वपि विशेषोऽस्ति तामससात्त्विकास्तामसराजसास्तामसतामसा इति यत्र ते सर्वे इन्द्रमुख्यान् देवादीन् मां च

---

[1] अयोग्यकामवन्तः ।

इष्ट्वेह देवता यज्ञैर्गत्वा रंस्यामहे दिवि ।
तस्यान्ते इह भूयास्म महाशाला महाकुलाः ॥ ३३ ॥
एवं पुष्पितया वाचा व्याक्षिप्तमनसां नृणाम् ।
मानिनां चातिस्तब्धानां मद्वार्तापि न रोचते ॥ ३४ ॥
वेदा ब्रह्मात्मविषयास्त्रिकाण्डविषया इमे ।
परोक्षवादा ऋषयः परोक्षं मम च प्रियम् ॥ ३५ ॥
शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम् ।
अनन्तपारं गम्भीरं दुर्विगाह्यं समुद्रवत् ॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इदं सर्वं विश्वमुत्पद्यते च एवेदं निश्वाकारेण विवविलक्षणक्ति मान् संस्थितः सर्वं खल्विदं ब्रह्मेति श्रुतेः एवंभूतं सर्वप्रेरकः सर्वकारणं सर्वात्मानं मामपि न जानन्ति यत उपशास्त्राः वकथं कर्मेव शास्त्रं श्रेयं कथनीयं स्वाभ्यसाधकं परपीडाजनकं वा येषां ते यतोऽसुतृपः प्राणतर्पणपराः सर्वत्र वर्तमानमपि मां न जानन्तीत्यत्र दृष्टान्तमाह । यथा नीहारचक्षुष इति । नीहारेण तमसाऽऽवृतानि चक्षूंषि येषां ते यथा निकटस्थमपि न जानन्ति तद्वदित्यर्थः ॥ २८ ॥

किञ्च हिंसायां चोदना अपूर्वविधिर्न भवति किन्तु मन्त्रा-धिकारविधायकस्य यदि हिंसकर्मफलादौ रागः इच्छा स्यात्तदा यज्ञः हिंसयैव कार्यः इति नियमविधिमाश्रित्य पशुव्रता स्वाभा-विकप्रवृत्तिर्निवार्यते इति मे मतमविज्ञाय विषयेषु आत्मा मनो येषां ते पशुभिः स्वतः यजन्त इत्युत्तरेणान्वयः ॥ २९ ॥

हिंसायां विहारः क्रीडा येषां ते तथा ॥ ३० ॥

अक्षय्यमित्यनेन वाक्येन तत्कर्मफलस्य ऐहिकलोकभोगाल्प-त्वकालस्थायित्वापेक्षया किञ्चित्स्थिरत्वमुक्तम् ते च खलाः वाक्यार्थानभिज्ञाः नित्यं मत्वा बहुधनव्ययं तदर्थं कुर्वन्तीत्याह स्वप्नोपममिति । असन्तं यत्तैः खलैर्नित्यत्वेनाङ्गीकृतं नाकपरीतं प्राकृतपदार्थविशेषत्वात् किन्तु स्वप्नोपममनित्यम् एवंभूतममुं परलोकम् तथा अस्मिंल्लोके आशिषः सङ्कल्प्य अर्थान् वणिग् यथा यज्ञादिकर्मसु योजयन्ति ॥ ३१ ॥

रजःसत्त्वतमोजुषः रज आदिविपाकभोक्तॄन् मम मायागुण-विमोहितानित्यर्थः । मां सर्वचेतनाचेतनस्वामिनं सर्वान्तर्यन्तु तथा तादृशेन प्रकारेणापि नैवोपासते मदुपासनप्रकारेण नोपा-सते इति किमु वक्तव्यम् ॥ ३२ ॥

---

भाषा टीका ।

ऐसे जो लोग स्वार्थ नहीं जानते हैं और पाप के मार्ग में घूमते रहते हैं तब जो पण्डित वेद पुरुष सो उनको अज्ञान नरक मे जाते हुवे देखकर भी फिर उनः कर्मों मे कैसे युक्त करेगा ॥ २५ ॥

कोई दुर्बुद्धि वाले मनुष्य इस बात को न जानकर वेद के ठीक अर्थको न समझ कर फूलों सरीखी फल श्रुतिको देख कर इस वाद को कहते हैं ॥ २६ ॥

वे कामी हैं कृपण हैं लोभी हैं पुष्पों मे जिनकी फल बुद्धि होरही है होमकी अग्निसे मुग्ध होरहे हैं धूआ के लगने से अज्ञानी होगये हैं अपने परमात्मा को नहीं जानते हैं ॥ २७ ॥

हे उद्धव ! वे लोग हृदय मे स्थित मेरे को नहीं जानते हैं जोकि मैं हू जिससे कि सब जगत होरहा है उक्थ जो कर्म काण्ड विशेष सोई शास्त्र जिनका और अपने प्राणों के पोषण करने वाले हैं जैसे कुहुडी आंख मे लागई हो तैसे वे लोग हैं ॥ २८ ॥

वे विषयात्मा लोग मेरे मतको परोक्ष होने से नहीं जानते हैं यदि मांस मे प्रीति होवे तबहीं यज्ञादि हिंसा करी जाती है कुछ विधि नहीं है ॥ २९ ॥

हिंसा मे विहार करने वाले वे लोग अपने सुखके वास्ते मारे हुवे पशुओं से यज्ञों से देवतों का यजन करते हैं और वे खल पुरुष ऐसेही पितर तथा भूत आदि कों को पूजते हैं ॥ ३० ॥

वह स्वर्गादि लोक स्वप्न के तुल्य है यथार्थ से नहीं है सुनने मात्रको नित्य है मनोरथ को हृदय मे कल्पना करके जैसे कोई बनिया लोभ से अर्थ करै तैसे यजन करते हैं ॥ ३१ ॥

रजो गुण सत्व गुण तमो गुण इन मे निष्ठा वाले हैं रजःसत्वतम के सेवने वाले हैं ऐसे होकर इन्द्रादि देवो-की उपासना करते हैं तैसी मेरी उपासना नहीं करते हैं ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

इति संकल्प्येत्युक्तं तमेव संकल्पं दर्शयति । इष्ट्वेति । तस्य भोगस्यान्ते महाशाला महागृहस्थाः ॥ ३३ ॥

ततः किमत आह । एवमिति । अतो मत्प्रवणत्वाभावान्नित्यं संसारिणो भवन्तीति भावः ॥ ३४ ॥

मयोपबृंहितं भूम्ना ब्रह्मणानन्तशक्तिना ।
भूतेषु घोषरूपेण बिसेषूर्णेव लक्ष्यते ॥ ३७ ॥
यथोर्णनाभिर्हृदयादूर्णामुद्वमते मुखात् ।
आकाशाद्घोषवान् प्राणो मनसा स्पर्शरूपिणा ॥ ३८ ॥
छन्दोमयोऽमृतमयः सहस्रपदवीं प्रभुः ।
ओङ्काराद्व्यञ्जितस्पर्शस्वरोष्मान्तस्थभूषिताम् ॥ ३९ ॥
विचित्रभाषाविततां छन्दोभिश्चतुरुत्तरैः ।
अनन्तपारां बृहतीं सृजत्याक्षिपते स्वयम् ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तदेवं वेदानां प्रवृत्तिपरत्वं निराकृत्य प्रकृतं निवृत्तिपरत्वमेवोपसंहरति। वेदा इति। कर्मब्रह्मदेवताकाण्डविषया इमे वेदा ब्रह्मात्मविषयाः ब्रह्मैवात्मा न संसारीत्येतत्पराः तत्परत्वाप्रतीतौ च

'फलश्रुतिरियं नृणां न श्रेयो रोचनं परम्।
श्रेयो विवक्षया प्रोक्तं यथा भैषज्यरोचनम् ॥'

इत्युक्तमेव कारणमनुस्मारयति। परोक्षेति। ऋषयो मन्त्रास्तद्द्रष्टारो वा तत्कामिनि वतः परोक्षमेव मम च प्रियम् अयं भावः शुद्धान्तःकरणैरेवैतद्बोद्धव्यं नान्यैरनधिकारिभिर्वृथा कर्मत्यागेन भ्रंशप्रसंगादिति ॥ ३५

ननु वेदज्ञा अपि जैमिन्यादयः किमिति तथा न वर्णयन्ति ऋतं विना तत्त्वतो वेदं तदर्थं वा न कोऽपि वेदेत्याशयेनाऽऽह। शब्दब्रह्मेति यावत्समाप्ति। स्वरूपतोऽर्थतश्च दुर्विज्ञेयम् तच्च सूक्ष्मं स्थूलं चेति द्विविधम् तत्र सूक्ष्मं तावत्स्वरूपतोऽपि दुर्बोधमित्याह। प्राणेन्द्रियमनोमयम् प्रथमं प्राणमयं पराख्यं ततो मनोमयं पश्यन्त्याख्यं तत इन्द्रियमयं मध्यमाख्यं तस्य वाक्प्रकटत्वेन वागिन्द्रियप्रधानत्वात् किञ्च अनन्तपारं समधिप्रमाणादिमयत्वं निर्विशेषत्वं च तस्य कालतो देशतश्चापरिच्छेदात् अर्थतोऽपि दुर्बोधत्वमाह। गम्भीरं निगूढार्थम् अतो दुर्विगाह्यं मतिप्रवेशानर्हं तथा च श्रुतिः 'चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति' अयमर्थः वाचः शब्दब्रह्मणः परिमितानि गणितानि पदानि स्थानानि परं तत्त्वभेदभिन्नानि पदानि रूपाणि चत्वारि तानि चत्वार्यपि ये मनीषिणोऽन्तर्हृदयज्ञा एव विदुर्नान्ये यतो गुहायां देहमध्ये त्रीणि निहितानि नेङ्गयन्ति स्वरूपं न प्रकाशयन्ते केवलं वाचस्तुरीयं चतुर्थं भागं वैखरीरूपं मनुष्याः प्राणिनो वदन्ति तदपि वदन्त्येव न तत्त्वतो जानन्ति ॥ ३६ ॥

तच्च मनीषिभिरेव ज्ञेयं सूक्ष्मं तत्स्वरूपं दर्शयति। मयेति। मयाऽनन्तशक्तिनोपबृंहितमधिष्ठितम् अनन्तः स्वयमप्यपरिच्छिन्नमाह। भूम्नेति। अधिष्ठातृत्वेऽप्यविकारित्वमाह। ब्रह्मणेति। अविकृतस्यापि नियन्तृत्वं घटयति। अनन्तशक्तिनेति। भूतेषु सर्वप्राणिषु घोषरूपेण नादरूपेण लक्ष्यते मनीषिभिः अतः सूक्ष्मत्वेन दृष्टान्तो बिसेषूर्णातन्तुरिवेति ॥ ३७ ॥

ततो वैखर्याख्याया बृहत्या वाच उत्पत्तिप्रकारं सदृष्टान्तमाह। यथोर्णनाभिः। हृदयात्मकाशात् मुखात् द्वारात् उद्वमते बहिः प्रकटयति [illegible]। आकाशादिति। प्राणवत्सूपाधिर्हिरण्यगर्भरूपः प्रभुर्भगवान् तेन रूपेण छन्दोमयो वेदमूर्तिः स्वतन्त्रममृतमयः घोषवानाद्योपादानवान् मनसा निमित्तभूतेन निमित्तमात्रेण दर्शयति। स्पर्शादीन् वर्णान् रूपयति संकल्पयतीति स्पर्शरूपि तेन स्पर्शग्रहणमुपलक्षणम् हृदयाकाशाद्बृहतीं सृजतीति तृतीयश्लोकेनान्वयः बृहतीशब्दार्थस्याख्यानाय विशेषणानि सहस्रपदवीं बहुमार्गाम् तदेवाऽऽह ओङ्कारादुरःकण्ठादिसंयोगेन व्यञ्जितैः स्पर्शादिभिर्भूषिताम् ओङ्कारश्चात्र हृदि सूक्ष्मोऽभिव्यक्तो न त्वकारादिवर्णरूपः तस्य व्यङ्ग्यकोटित्वात् तत्र स्पर्शाः कादिपञ्चवर्गाः स्वरा अकारादयः षोडश ऊष्माणः शषसहाः अन्तस्था यरलवाः एवं विचित्राभिर्वैदिकलौकिकभाषाभिर्विततां चतुरुत्तरं चत्वारि चत्वार्यक्षराण्यधिकानि येषां तैश्छन्दोभिरुपलक्षिताम् एवमनन्तपारां सृजति स्वयमेवाऽऽक्षिपते उपसंहरति ॥ ३८ ॥ ३९ ॥ ४० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी।

इह भुवि रंस्यामहे अप्सरोभिर्विहरिष्यामः ॥ ३३ ॥

तत्तत्कालादेशमतरूपत्वात्। पुष्पितवाक्त्वेऽप्यज्ञानार्थैकवाक्यतया। अतो महात्मनां कल्पमानत्वात्। तत्प्रमाणत्वाभावात् साक्षित्वाभावात् सन्तापिणो जन्ममरणादिमन्तो भवन्ति ॥ ३४ ॥

तदेवं पूर्वोक्तप्रकारेण कर्मब्रह्मदेवताकाण्डानि कर्मज्ञानोपासनाकाण्डानि विषयाः प्रतिपाद्यानि येषु तथाभूताः। आत्मा जीवो ब्रह्मैव न संसारीत्येतत् प्रतिपादनपराः। तत्परत्वाप्रतीतौ ब्रह्मपरत्वाज्ञाने कारणं प्रवृत्तिमङ्गीकृत्य कर्मसु रुच्युत्पादनम्। ननु परोक्षवादस्य किं कृतः। परोक्षस्य प्रियत्वं कथं तत्राह। अयं भाव इति। एतत् वेदानां तात्पर्येण निवृत्तिपरत्वम्। स्फुटं निवृत्तिपरत्वाऽभिधानेऽशुद्धा-

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

ऽतःकरणैर्विषयावरुद्धकर्तृत्वं न शक्यन्ते किन्तु तेषां विहितकर्मत्यागेन ज्ञानाभावादशुभवतोऽपि भ्रंशप्रसङ्गादित्यर्थः ॥ ३५ ॥

तथा निवृत्तिपरतया तत्त्वतो याथार्थ्येन तदर्थञ्च वेदार्थं शब्दब्रह्मेति युग्मकम् । मन्त्ररूपात्मकवेदस्य स्वरूपतो दुर्बोधत्वाभावाद्वेदस्य द्वैविध्यं व्याचष्टे तत्रानि । तत्र शब्दब्रह्म तत्र स्थूलसूक्ष्मयोर्मध्ये । प्राणेन्द्रियमनोमयमिति पदमयं क्रमेण व्याचष्टे प्रथमामित्यादि । प्राणमयं प्राणे आविर्भूतं पराख्यम् एवं परत्रापि इन्द्रियमय वाचि आविर्भावोपायनम् । तस्य बुद्धिस्थमध्यमाख्यब्रह्मणः । वाग् व्यञ्जकत्वेन वैखर्याख्यवाचः प्रकाशकत्वेन । निर्विशेषस्य वैखर्याख्यामलापञ्च्य तस्य सूक्ष्मब्रह्मणः । तथाच पराख्याविरूपे प्रमाणं श्रुतिः । तमपि । चतुर्थभागमपि तत्त्वतो याथार्थ्येन । अभिघातृत्वे भ्रमादिविकारः स्यात्तथापि निर्विकारित्वमाह घोषरूपया व्यक्तप्रणवाकारेण नादरूपेण मनीषिभिर्योगिभिर्लक्ष्यते तदुक्तमाप्ततमैः अनन्तेऽस्मिन्गात्रे च द्वैतस्योपशमः शिवः । ओङ्कारो विदितो येन स योगी नेतरो जन इति ॥ ३६—३७ ॥

ततः सूक्ष्माद्देहात् यथोर्णेति त्रिकम् । तदुपाधिः सूत्रात्मकप्राणोपाधिः । तेन रूपेण । हिरण्यगर्भरूपेण स्वतः स्वस्य रूपेण अमृतमयः परमानन्दरूपः । नादोपनादवान् । नादः पराख्यः । वैखर्युपादानं विद्यते यस्य स तथा नादो यस्यांस्वमोङ्कार इत्यत्र तेरेव नादशब्दस्य तथा व्याख्यानात् । एतेन परा निर्देशः मनसा निमित्तेनेति पदद्वयमत्युद्दिशः । आकाशात् हिरण्यगर्भस्याधारचक्रमयञ्चस्य आकाशादिति मध्यमोक्तः । तदेवाह बहुमार्गत्वमेवाह अक्षरादिभिः प्रकरणे । इन्द्रगतः बुद्धिस्थः सूक्ष्मां मध्यमारूपः । तत्राकारादिरूपस्योङ्कारस्य व्यञ्जककोटित्वात् व्यक्तवैखर्यान्तःपातात् । तत्र स्पर्शादिमध्ये अत्र पूर्वं मात्रा स्वरो वर्ण इति क्वचित्तु इत्यत्र मात्रा ह्रस्वादिः स्वर उदात्तादिरिति ये पृथक् प्लुता उदात्तादयश्च गृह्यन्ते तेषामपि स्वरेऽन्तर्भावात् चकारस्य च स्पर्शोष्मस्वन्तर्भावादेकोनशतमात्रस्वात्र गणिताः । वैदिकलौकिकभाषाभिर्वैदिकलौकिकशब्दैस्तत्र वैदिकाः छान्दसशब्दाः लौकिकाश्च पाणिनिस्मृतिसिद्धाः । उपसंहरति कालान्तरे स्वान्तः प्रवेशयति च ॥ ३८—४० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

महाशालाः महागृहपतयः ॥ ३३ ॥ ३४ ॥

वेदा इति । वेदाः कार्त्स्न्येन सर्वान्तरात्मभूतब्रह्मविषयाः अथापि त्रिकाण्डविषया इव इमे कर्मकाण्डदेवताकाण्डज्ञानकाण्डरूपावच्छेदवन्त इति प्रतिभान्तीत्यर्थः ऋषयः वेदाः परोक्षवादाः दुरवगमवाक्यवृत्तयः ॥ ३५ ॥

वेदोपादानसिद्ध्यर्थं शब्दतत्त्वं प्रपञ्चयति । शब्दब्रह्मेति । शब्द एव ब्रह्म प्रपञ्चनाय बृहत्त्वयोगात् ब्रह्मेत्युक्तं सुदुर्बोधस्वरूप प्राणेन्द्रियमनोमयं सम्बन्धमात्रे मयट् मनःप्राणसहकृतवागिन्द्रि- याथार्थ्ये गम्भीरं दुरवगमार्थं दुर्विगाह्यं युक्तिभिरपि निरूपयितुमशक्यत्वार्थम् ॥ ३६ ॥

उपबृंहितं विस्तारितं घोषरूपेण कर्णौ पिधाय श्रूयमाणेन घोषरूपेण ॥ ३७ ॥

आकाशादिति घोषेण सह वर्तमानः प्राणः स्पर्शरूपिणा मनसा स्पर्शसंयोगविशिष्टेन मनसा सह कृतः ॥ ३८ ॥

छन्दोमय इति श्रुतिसिद्धवैभवः अमृतमयार्थी प्राणः सृजतीत्यन्वयः ओङ्काराद्यभिज्ञानस्य शान्तस्य प्रकृतिलीनस्येति प्रकारेण प्रणवप्रकाशितभूताकाराद्यर्थाभिज्ञाः कादयो मावसानाः स्पर्शाः अचः स्वराः शषसहा ऊष्माणः यरलवाः अन्तस्थाः ॥ ३९ ॥

छन्दोभिश्चतुरुत्तरैश्चतुरुत्तराधिकैः गायत्र्यादिषु छन्दस्सु पूर्वपूर्वच्छन्दोऽपेक्षया उत्तरोत्तरच्छन्दः एकैकस्मिन्पादे एकैकाक्षरवृद्ध्या चतुरुत्तराधिकं भवति नैरित्यर्थः । बृहतीं बृहत्त्ववतीम् आक्षिपते प्राणः स्वव्यापारोपरमेणानभिव्यक्तां करोति ॥ ४०—४२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इति सङ्कल्पेनेत्युक्तं तमेव सङ्कल्पं दर्शयति । इष्टेति । इह लोके देवता यज्ञैरिष्ट्वा ऽराध्य गत्वा स्वर्लोकं प्राप्य दिवि स्वर्गे रंस्यामहे तत्कृतस्य भोगस्यान्तेऽवसाने पुनरिह लोकेषु महाशाला महागृहपतयः महाकुलाश्च भूत्वा भविष्यामः ॥ ३३ ॥

ततः किमित्यत आह । एवमिति । वाचा वेदपूर्वभागाभिलषितया व्याक्षिप्तं मनो येषां तेषां मानिनां दुरहङ्कारिणामतीव स्तब्धानां परिपूर्णमात्मानं मन्यमानानां मूढानां मद्वार्तापि न रोचते ततस्ते नित्यं संसारिणोऽपि भवन्तीति भावः ॥ ३४ ॥

तदेवं वेदतात्पर्यानभिज्ञानां प्रवृत्तिफले उक्ते किं तर्हि वेदतात्पर्यमित्यत आह । वेदा इति । त्रिकाण्डविषयाः कर्मकाण्डदेवताकाण्डज्ञानकाण्डरूपावच्छेदवन्तः सर्वे इमे वेदाः ब्रह्मात्मविषयाः ब्रह्मैवात्मा सर्वेषामन्तरात्मा तद्विषयाः सर्वान्तरात्मभूतपरब्रह्मविषया इत्यर्थः । परब्रह्मतद्गुणतद्विभूतितत्प्राप्त्युपायोपेतृस्वरूपतात्पर्यका इत्यर्थः । तर्हि सर्वैरप्येतद्वेदतात्पर्यं किं न गृह्यते इत्यत्राह । परोक्षेति । ऋषयो वेदाः परोक्षमस्फुटं स्वाभिप्रायं वदन्तीति तथा दुरवगमवाक्यवृत्तयः अत एतत्तात्पर्यं न सर्वे विदन्तीति भावः । ननु लोकोज्जीविषया वेदरूपां वाचमुत्सृजता त्वया किमिति परोक्षवादः कृत इत्यत्राह । परोक्षं मम च प्रियमिति परोक्षभाषणमेव ममापि प्रियमित्यर्थः अयम्भावः शुद्धाऽन्तःकरणैरेवैतद्वेदतात्पर्यं बोद्धव्यं नान्यैरनधिकारिभिः कुतः अनधिकारिणां वृथा कर्मत्यागेन भ्रंशप्रसङ्गादिति ॥ ३५ ॥

न केवलं ऋषयः परोक्षवादा एवापि त्वन्येऽपि तेषां लौकिकशब्दविलक्षणा धर्माः सन्तीत्यभिप्रेत्याह । शब्दब्रह्मेति । शब्दः शब्दात्मको वेदः स एव ब्रह्म प्रपञ्चतया बृहत्त्वयोगाद्ब्रह्मेत्युक्तं तच्च सुदुर्बोधं दुरवगाहस्वरूपं प्राणेन्द्रियमनोमयं सम्बन्धमात्रे मयट् प्राणसहकृतवागिन्द्रियोच्चार्यम् इदं लौकिकवैदिकशब्दव्यावर्तकम् अनन्तोऽपरिच्छेद्यः पारोऽवधिर्यस्य तत् गम्भीरं दुरवगमार्थं

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

दुर्विगाह्यं युक्तिभिरपि निरूपयितुमशक्यार्थं गाम्भीर्यं दुर्विगा-ह्यत्वमोर्दरान्तः समुद्रवदिति ॥ ३६ ॥

किञ्च अनन्ताः शक्तयो ज्ञानवीर्यतेजःप्रभृतयो यस्य तेन ब्रह्मभूतेन भूम्ना मया उपबृंहितं विस्तारितं प्राणेन्द्रियमनोमयमित्येतत्सदृशान्तमुपपादयति। भूतेष्विति। बिसेषु पद्मनालेषूर्णेव तन्तुरिव भूतेषु मनुष्येषु घोषरूपेण यः वर्णो विशदः श्रूयमाणः प्राणघोषः तद्रूपेण लक्ष्यते तावदुच्चारयितु-प्राणघोषाभिव्यक्त्या नामापद्यत इत्यर्थः ॥ ३७ ॥

ततो यथा ऊर्णनाभिः कीटविशेषः हृदयात्स्वकायान्मुख-द्वारा ऊर्णामुद्वमते बहिर्निःसारयति तथा घोषवान् प्राणः हृदयाका-दविभोः पुरुषस्य प्राणवायुराकाशाख्या उरःप्रदेशान्तर्विवर-द्वारा स्पर्शरूपेण मनसा स्वसंयोगविशेषेण मनसा सहकृतः यद्वा अथवा स्पर्शरूपिणा स्पर्शो हृदुरः कण्ठादिस्थानसंस्पर्शः स रूप-माकृतिः प्रकार इतियावत् सोऽस्यास्तीति तथा तेन घोषेण च सहकृत इत्यर्थः ॥ ३८ ॥

छन्दोमयः छन्दःप्रचुरः छन्दःशब्दाभिधेयवेदानिष्कार-त्वेन तत्प्रचुरं विनाशिनम् अमृतमयः स्वामी प्रभुर्देहेन्द्रिया-धिष्ठातृत्वसमर्थः बृहतीं ब्रह्मशब्दाभिमतां वाचं सृजतीत्युपरि-तनान्वयः एवंभूतः प्राणो वागिन्द्रियं प्राप्य बृहतीं वाचमाविष्क-रोतीत्यर्थः। बृहतीशब्दव्याख्यानाय तां विशिनष्टि। सहस्रपदवीं सहस्रं पदव्यः अवबोधमार्गाः यस्यास्तां सहस्राक्षरा परमे व्योमन्नित्युक्तविधामवाक्यादयो मार्गस्ताना वर्णाः स्पर्शाः अचः स्वराः ऊष्मसहा ऊष्माणः यरलवा अन्तस्थाः ओङ्काराद्व्यञ्जिताः ये स्पर्शा इत्यो वर्णास्तैर्विभूषिताम् ओङ्कारप्रभवा वेदा ओङ्कारप्रभवाः स्वराः ओङ्कारप्रभवं सर्वं वाङ्मयमित्यादिशास्त्रार्थोऽनेन प्रकटितः ॥ ३९ ॥

विचित्राभिर्भाषाभिर्विततां भाष्यन्त इति भाषाः शब्दाः श्रुतय-स्ताभिर्विततां विस्तृतामित्यर्थः। अनन्तपारामपरिच्छिन्नावधिं चतु-रुत्तरैः छन्दोभिर्गायत्र्यादिभिरुपलक्षितामिति शेषः चतुरुत्तरैश्च-तुरक्षराधिकैर्गायत्र्यादिच्छन्दस्सु पूर्वपूर्वच्छन्दोऽपेक्षयोत्तरोत्तर-च्छन्द एकैकस्मिन् पादे एकैकाक्षरवृद्ध्या चतुरक्षराधिकं भवति तैश्छन्दोभिर्युक्तामित्यर्थः। इत्थंभूतां बृहतीं वाचं प्राणः स्वयं सृजति आक्षिपते स्वव्यापारोपरमे प्राणानभिव्यक्तां च करोतीत्यर्थः॥४०॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

तत्प्रार्थनाप्रकारमाह। इष्ट्वेति रंस्यामहे रन्तुमिच्छामः इह भूमौ अनेनायथोपासनं च दर्शितं निजानन्दलक्षणमोक्षाका-ङ्क्षानुगुणगुणोपसंहाराभावात् ॥ ३३ ॥

अयथोपासने निमित्तमाह। एवमिति। पुष्पितया स्वर्गादि-पुष्पविषयया वाचा व्याक्षिप्तं मनो येषां ते तथा तेषां मानिना-मातिस्तब्धानामिति विशेषणद्वयेन मनः समीचीनत्वजनक-सत्सङ्गगुर्वादिसेवापि दूरीभूतेति ध्वनयति ॥ ३४ ॥

स्वर्गादिपरस्य वेदस्य मुक्तिपरत्वं कथं घटत इत्यत आह। वेदा इति। अत एव पूर्णस्वरूपत्वात् ब्रह्मात्मा विष्णुः स एव विषयो येषां ते ब्रह्मात्मविषया वेदाः "नारायणपरा वेदा" इत्यादेः—

> ब्रह्मत्वं पूर्णता प्रोक्ता तच्च तस्य अत एव तु।
> स ब्रह्मात्मा समुद्दिष्टो वासुदेवः सनातनः॥

इति च अनेन ब्रह्मात्मप्रतिपादकत्वमोक्षपरत्वमभिप्रेतं वेदस्येति ज्ञायते उक्ताशङ्कायाः परिहारः कथमायात इत्यत उक्तं त्रिकाण्डविषया अपीति यद्यपि ब्रह्मदेवकर्मकाण्डविषया अधिकारिभे-देन प्रतीयन्ते तथाप्युत्तमाधिकारिणां काण्डत्रयपरत्वं विहाय ब्रह्मगुणप्रतिपादनद्वारा मोक्षपरत्वं स्पष्टमिति भावः। सर्ववेदानां ब्रह्मात्मपरत्वं सत्यं चेत्तर्हि अतः किमिति प्रतीत्यभाव इति तत्राह। परोक्षेति। किमनेन प्रयोजनमत्राह। परोक्षमिति "परो-क्षप्रिया इव हि देवा" इति श्रुतिः ब्रह्मादीनामस्मत्कानां देवा-दीनां प्रियमित्यर्थोऽवगन्तव्यः ॥ ३५ ॥

परोक्षवादमप्रसादं विना वेदार्थो दुरवबोध इत्याह। शब्दब्रह्मेति। नहि निरधिकारित्वात् ज्ञित्वादिरित्यादिशब्दब्रह्मैव वेद इत्यत उक्तं प्राणेति। अत्र प्राणादिशब्दैर्ब्रह्मादयो विव-क्ष्यन्ते प्राणेन्द्रियमनोभिः मीयते ज्ञायत इति प्राणेन्द्रियमनोमयं मेयत्वान्मय उद्दिष्टो वेदः प्राणादिभिः सहेति वाक्यात् वाक्यत्वे पौरुषेयत्वेन च लौकिकवाक्यवदनित्यं परिमितं च नेत्याह। अनन्तेति—

> अन्तो विनाश उद्दिष्टः पारः परिमितिस्तथा।
> अनन्तपारो वेदोऽयं ताभ्यां स रहितो यतः॥

इति वचनमत्रोदाहृत्यार्थो वक्तव्यः समुद्रवदित्यल्पाधिकारिणोऽस्वे-षोक्तं न तूत्तमाधिकारिण इति ॥ ३६ ॥

वेदस्य गीयमानोऽर्थो न वेद्याख्याभावेन वैयर्थ्यमापद्यमत आह। मयेति। अनन्तगुणपूर्णत्वाद्भूम्ना ब्रह्मादिशब्दवाच्येन मयो-पबृंहितं मत्प्रतिपादकत्वेन पूर्णार्थोपेतं किमत्र प्रमाणमत्राह। भूतेष्विति। भूतेषु घोषरूपेण लक्ष्यते कथमिव बिसेषूर्णेव शब्द-ब्रह्मेति शेषः ॥ ३७ ॥

प्राणादिभिर्मीयत इत्युक्तं तं प्रकारमाह। यथेति। यथोर्ण-नाभिर्हृदयादूर्णामुद्धृत्य मुखादुद्वहते निष्कासयति पुनर्भक्षयति च एव घोषवानाकाशगुणशब्दवानक्षिमान् छन्दांसि मन्यन्ते तेनि छन्दोमयोऽमृतमयो मत्प्रसादेन मोक्षदः प्राणः आत्मस्पर्शो विष्णुः तं रूपयतीत्यात्मस्पर्शोऽपि प्राणस्य मनस्तेन स्वमनसा सहस्रपदवीं महदनन्तरूपावयवाम् ओङ्कारम् त्रिमात्रानन्तमात्रा-त्मसानप्राणे व्यञ्जितां स्पष्टव्यक्तां तदुच्चारणात्मरूपां स्पर्शादिवर्णैः रलंकृतां गुह्यदर्शनादिभेदेन विचित्राभिर्नानाविधाभिरनेकाशीति-संख्याताभिर्भाषाभिर्विततां चतुरुत्तरैश्चतुर्वर्णैरधिकाधिकैर्युक्तै-र्गायत्र्यादिच्छन्दोभिश्च विततां अनन्तपारां विनाशपरिमाणर-हितां बृहतीं श्रुतिं हृदयाकाशादुद्धृत्य सृजति उच्चारयति। रुद्रादिरूपः प्रलयकाले पुनः कल्पान्ते स्वस्मिन्नुपाक्षिपते विद-धातीत्यन्वयः चतुरुत्तरत्वनियमो जगत्यन्तानामेव गायत्र्या उष्णि-क्चतुर्वर्णाधिक्यादिचतुरुत्तरैः जगत्यन्तानामेव चतुरुत्तरत्वनि-यमः—

> शुक्लं यदाकिलान् स्पर्शानात्मस्पर्शो विष्णुरुच्यते।
> तस्य प्रकाशकं नित्यं तमस्ये प्राणमेककम्॥
> प्राणस्येव मनो नित्यं वासुदेवं प्रकाशयेदिति च।
> प्रीयन्तेऽनेन छन्दांसि प्राणः छन्दोमयस्ततः इति च—
> त्रिमात्रमात्रिनः कृत्वा यावच्चानन्तमात्रिकाः।
> प्रणवास्तेऽपि भेदेन ह्यनन्ताः परिकीर्तिताः॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एकमात्रोत्तराः सर्वे वासुदेवाभिधायकाः ।
तेषां व्याख्यानरूपा हि सर्वे वेदाः प्रकीर्तिताः ॥
ओङ्कारेणान्वितास्तस्मात्सर्वे वाच्या हरेः प्रियैः ।

इति उक्तार्थे प्रमाणम्—

गुह्यदर्शनभाषे च भाषा चैव समाधिका ।
त्रिधास्तु मूढभाषाः स्युरेकैका च त्रिधा पुनः ॥
गुह्यदर्शनसंज्ञा च गुह्यगुह्या तथापरा ।
एवमादिक्रमेणैव त्वेकाशीतिनिर्धारिता: ॥
भाषान्तत्र च गुह्याया प्रसिद्धार्थैरनन्विता ।
गुह्यार्थे तत्परैवान्योमर्शनीत्यादिका च सा ॥
दर्शनान्यवलस्त्वेव पशुपत्यादिनां तु या ।
बहुश्रुतिविरुद्धस्तु वेदेस्मा दर्शनात्मिका ॥
अन्ते निषेधसंयुक्ता गम्यस्नानादिका च सा ।
यया प्रदृश्यमानार्थो समाधिः सा प्रकीर्तिता ॥
विष्णुः परम इत्याद्या सा च विद्भिरीरिता ।

इतिवचनात् सम्प्रदायशुद्धैर्गुरुचरणशरणैरेव पुरुषैर्ज्ञेयोऽयमर्थ इति—

भस्मस्नानविधानं तु श्रुत्युक्तं दर्शनानुगम् ।
भस्मस्नानं ततो ग्राह्यं विधानं तु नृसिंहगम् ॥

इतिवाक्यवादन्ते निषेधयुक्तत्वात् भस्मस्नानादरोऽपि कर्तव्य इति ॥ ३८—४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ब्रह्मात्मविषयाः सर्वतो बृहत्तमो य आत्मा परममूलस्वरूपो भगवानहं तत्परा एवेत्यर्थः । मतिवाचरणत्वेन वक्ष्यमाणत्वात् तथा सर्वेषामप्रतीतौ कारणमाह । परोक्षेति । परोक्षं मम च प्रियमिति तु "त्वञ्च रुद्र ! महाबाहो मोहशास्त्राणि कारय । अथ तानि वितथ्यानि दर्शयस्व महाभुज । प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु" इत्यन्यत्र व्यक्तत्वात् तथा इदं ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मयेत्यादौ तदभिप्रायप्रकाशात् । तथ तत्र सर्वेषामनधिकारात् अत एव मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगमित्यादौ कर्मिणि ॥ ३५ ॥

शब्दब्रह्मेति युग्मकम् । प्राणेन्द्रियमनोमयं लौकिकवाग्व्यवहारादिरूपेण तत्वाभिमूर्तमपि सुदुर्बोधं यतः शब्दतः अनन्तपारम् अर्थतश्च गम्भीरं दुर्विगाह्य च तत्र दुर्विगाह्यं प्रवेष्टुं तावदशक्यं कथञ्चित् प्रवेशे च सति गम्भीरं दुर्गमार्थपर्यवसानमित्यर्थः ॥ ३६ ॥

तन्त्र्यत्स्मृतं चेत्कथं प्राणादिष्वाविर्भवति तत्राह । मयेति । पबृंहितं तत्र मनोद्भावितं तन्धमन्त वैकुण्ठेऽनन्तपारे च ब्रह्मणोऽनन्तसत्त्वयाविभूतं तत्कथं भवत्येकेनोद्भावितं स्यात् तत्राह । ब्रह्मणा स्वरूपतः परमबृहत्त्वेन शक्तितश्चानन्तशक्तिनेति ननु यत्सर्वव्यापकं भवति तदेवानन्तपारं स्यात् ननु तथैरम्

२ अन्योमीमांसामानिनन्दादित्यादिका प्रतीतार्थे योग्यताभावात् भागवज्ज्ञानिनांशः गुरूपदेशादिना मणिः ज्ञानोत्तमं लक्ष्यमानेति गोद्बोऽपि मणिमूर्तौ प्रधानयोर्युत्तमस्य यथो भवे दिक्षामिधानम् ॥

व्यक्ते तत्राह । भूतेष्विति । नादरूपेणाऽव्यक्तप्रणवाकारेण लक्ष्यते योगिभिः तदुक्तम्—

अनन्तोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ।
ओङ्कारो विदितो येन स योगी नेतरो जनः ॥

इति ॥ ३७ ॥

तस्यैव प्राणादिमयतया परारूपादिरूपेण स्वरूपाद्भवप्रकारमाह । यथोर्णेति त्रिभिः । यथोर्णनाभिर्हृदयात्स्वकाशास्मुखादूर्णामुद्गमत गिरतीत्यर्थः । तथा प्रभुरीश्वरोऽपि मयः परमात्मापि स्वरूपेणामृतमयः परमानन्दरूपः शक्त्या छन्दोमयः सर्वज्ञानादिमस्तम्भनमयः सन् आकाशादाकाशमव्यक्तस्य हिरण्यगर्भस्याधारचक्रे चाविर्भूय पराख्यां बृहतीं सृजति ततो घोषवान् किञ्चिद्व्यक्तनादवान् नाभिचक्र मध्यमाख्यां सृजति ततो हृदि प्राणात्मकः सन् ओङ्काराख्यरूपेङ्कारतामापद्य स्पर्शरूपिण्या तत्तद्वर्णभेदज्ञानस्पर्शिना मनसा पश्यन्त्याख्यां सृजति ततश्च व्यञ्जितस्पर्शस्वरादिरूपां छन्दोभिरित्यादिरूपां च शाखाभिः सहस्रपदीं वैखर्याख्यां सृजति काचान्तरे स्वात्मन्युपसंहरति । अन्तःप्रवेशयति च अत्र पूर्वं मात्रा स्वरो वर्णा इति स्पर्शाश्च इत्यत्र मात्राद्यन्ताः स्वर उदात्तादिरिति ये पृथक् प्लुता उदात्तादयश्च गृह्यन्ते तेषामपि स्वरेऽन्तर्भावात् लृकारस्य च स्पर्शेष्वन्तर्भावादेकोनपञ्चाशद्धात्र गणिताः ॥ ३८-४१ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तेषां मनोरथं विवृणोति । इष्ट्वेति । तत्र भोगस्यान्ते इह महाशालाः महागृहस्थाः ॥ ३३—३४ ॥

प्रकरणमुपसंहरति । वेदा इति । कर्मब्रह्मदेवताकाण्डविषया इमे वेदा ब्रह्मात्मविषयाः ब्रह्मैव योऽयमहमात्मा तद्विषयाः ब्रह्मस्वरूपमदाराधनपरा एवेत्यर्थः । ननु तर्हि ऋषयो मन्त्रास्तद्द्रष्टारो वा कथमेव स्पष्टं नाचक्षते तत्राह । परोक्षमेव यथा स्यात्तथा वदन्ति न तु साक्षादिति ननु तेषां साक्षात्कथनस्य कोऽभिप्रायस्तत्राह । परोक्षमिति । तथा कथनं एव मत्प्रीतिमयाचार्यं तथा वदन्तीत्यर्थः ॥ ३५ ॥

ननु वेदस्यात्मान्यथानुपपत्त्यैव भैषज्यरोचनन्यायेनैव तस्य स्वर्गादिपरत्वमिति भवान् यथा व्याचष्टे तथैव जैमिन्यादयोऽपि व्याचक्षतां मैवं यदि ते जानीयुस्तर्हि व्याचक्षीरन् मां विना मद्भक्तान् व्याससनकादींश्च विना तत्त्वतो वेदार्थं न कोऽपि वेदेत्याह । शब्दब्रह्मेति यावत्समाप्ति । स्वरूपतोऽर्थतश्च दुर्विज्ञेयं तच्च सूक्ष्मं स्थूलं चेति द्विविधं तत्र सूक्ष्मं तावत्स्वरूपतोऽपि दुर्ज्ञेयमित्याह । प्राणेन्द्रियमनोमयं प्रथमं प्राणमयं पराख्यम् आधारचक्रस्थं ततो मनोमयं पश्यन्त्याख्यं नाभ्यनाहतचक्रस्थम् उपलक्षणमेतत् बुद्धिमयं मध्यमाख्यं हृदये च मणिपूरकचक्रस्थं तत इन्द्रियमयं वैखर्याख्यं तस्य वाग्व्यञ्जकत्वेन वागिन्द्रियप्रधानत्वात् किञ्च अनन्तपारं प्राकृताप्राकृतप्रमाणमयस्य कालतो देशतश्चापरिच्छेदात् अर्थतोऽपि दुर्विज्ञेयत्वमाह । गम्भीरं गूढार्थम् अतो दुर्विगाह्यं तथाच श्रुतिः चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहायां त्रीणि निहिता

गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ।
त्रिष्टुब्जगत्यतिच्छन्दो ह्यत्यष्ट्यतिजगद्विराट् ॥ ४१ ॥
किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् ।
इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चन ॥ ४२ ॥
मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते त्वहम् ।
एतावान् सर्ववेदार्थः शब्द आस्थाय मां [1] भिदाम् ।
मायामात्रमनूद्यान्ते प्रतिषिध्य [2] प्रसीदति ॥ ४३ ॥

इतिश्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे श्रीभगवदुद्धवसम्वादे
एकविंशोऽध्यायः ॥ २१ ॥

भाषा टीका ।

इस लोक मे यज्ञों से देवतों का यजन कर के स्वर्ग में जाकर रमण करेंगे उस पुण्य के समाप्त होने पर फिर यहां आकर बड़े घर वाले कुल मे उत्पन्न होंगे ॥ ३३ ॥

इस प्रकार से फूल के से वचनों से जिन के मन विक्षिप्त हो रहे हैं वे मनुष्य अभिमानी हैं बड़े ढीठ हैं उन को मेरे प्रसंग की बात भी नहीं सुहाती है ॥ ३४ ॥

वे जो वेद हैं सो कर्म ब्रह्म देवता इन तीन कांड के प्रति पादन कर ने वाले हैं जितने वेद तथा ऋषि छिपा कर कहनेवाले हैं छिपा कर कहना मेरे को प्रिय है ॥ ३५ ॥

वेद रूपी जो शब्द ब्रह्म है सो बड़ा कठिन से जानने योग्य है परा पश्यन्ती मध्यमा वैखरी रूप है उस के पार का अन्त नहीं है बड़ा गंभीर है समुद्र सरीर का अथाह है ॥ ३६ ॥

अनन्त शक्ति वाले भूमा ब्रह्म मैंने उस का विस्तार किया है वह वेद सब भूतों मे घोष रूप से प्रवृत्त है जैसे कि कमल नाल के भीतर तन्तु रहता है तैसे लक्षित होता है ॥ ३७ ॥

जैसे मकरी कीड़ा हृदय मे के सूत को मुख से उगिलता है तिसी प्रकार से शब्दवाला प्राण स्पर्श रूपी मन से वेद शब्द को पैदा करता है ॥ ३८ ॥

वह प्रभु परमात्मा छन्दो मय है अमृत मय है सो सहस्र पदवी वाणी वेद वाणी को पैदा करता है ओंकार से प्रकाशित स्पर्श स्वर ऊष्मा अन्तस्था इन वर्णों से भूषित है ॥ ३९ ॥

नाना प्रकार की भाषाओं से फैली हुई है और एक-एक से चार चार अधिक अक्षरों से बनी है उस के पार-का अन्त नहीं है बड़ी भारी है उस को वह परमात्मा सृजता है फिर स्वयं प्रलय काल मे समेट लेता है ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तेषु कतिचिच्छन्दांसि दर्शयति । गायत्रीति । तत्र चतुर्विंशत्यक्षरा गायत्री ततश्चतुरक्षरवृद्ध्योष्णिगादिच्छन्दांसि प्रकृतिः अतिजगती अतिविराट् चेत्यर्थः । एतैश्छन्दोभिरुपलक्षितामिति पूर्वेणान्वयः अतो बृहत्यपि साकल्येन स्वरूपतो दुर्ज्ञेया इत्युक्तम ॥ ४१ ॥

अर्थतोऽपि दुर्ज्ञेयत्वमाह । किमिति । कर्मकाण्डे विधिवाक्यैः किं विधत्ते देवताकाण्डे मन्त्रवाक्यैः किमाचष्टे प्रकाशयति ज्ञानकाण्डे किमनूद्य विकल्पयेन्निषेधार्थमित्येवं मदन्या हृदयं तात्पर्यं मत्तोऽन्यः कश्चिदपि न वेद ॥ ४२ ॥

ननु तर्हि त्वं मत्कृपया कथय ओमिति कथयति । मामेव यज्ञरूपं विधत्ते मामेव तत्तद्देवतारूपमभिधत्ते न मत्तः पृथक् यदाऽऽकाशादिप्रपञ्चजातं "तस्माद्वा एतस्मादात्मन आकाशः संभूत" इत्यादिना विकल्प्यापोह्यते निराक्रियते तदप्यहमेव न मत्तः पृथगस्ति कुत इत्यपेक्षायां सर्ववेदार्थं संक्षेपतः कथयति एतावानेव सर्वेषां वेदानामर्थः तमेवाऽऽह । शब्दो वेदो मां परमार्थरूपमाश्रित्य भिदां मायामात्रमित्यनूद्य "नेह नानास्ति किंचनेति प्रतिषिध्य प्रसीदति निवृत्तव्यापारो भवति अयं भावः यथाह्यङ्कुरे यो रसः स एव तद्विस्तारभूतनानाकाण्डशाखास्वपि तथैव प्रणवस्य योऽर्थः परमेश्वरः स एव तद्विस्तारभूतानां सर्ववेदकाण्डशाखानामपि संगच्छते नान्य इति ॥ ४३ ॥

नित्यमुक्तः स्वतः सर्ववेदज्ञान्वेदवित् ।
स्वपरज्ञानदाता यस्तं वन्दे गुरुमीश्वरम् ॥
इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकविंशोऽध्यायः ॥ २१ ॥

[1] माऽभिदाम् इति विज० पाठः । [2] प्रशाम्यतीति वीर० विज० पाठः

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

तत्र तेषु छन्दःसु मध्ये ॥ ४१ ॥

अतोऽनन्तपारत्वात् अनूद्यानुवादं कृत्वा । विकल्पयेत् भेदमारोपयेत् । अहवा वेत्रयां ॥ ४२ ॥

मां विधत्त इत्यत्रैकम् । मामित्यङ्गीकारे । कथयति काण्ड-त्रयस्य परमप्रतिपाद्यार्थं स्वात्मानमेव प्रतिपादयति श्रीकृष्णः । यज्ञरूपं यज्ञो वै विष्णुरिति श्रुतेः । कर्मकाण्डे विधिवाक्यैः यज्ञात्मकं मामेव विधत्ते । देवताकाण्डे देवताभिर्मन्त्रैरिन्द्र-वाद्यवाच्यन्तर्यामिणं मामेवाभिधत्ते । "शास्त्रदृष्ट्या तूपदेशो वाम-देववत्" इति न्यायात् । विकल्प्याध्यारोप्य तद्व्याकाशादि प्रपञ्चजातमपि परमार्थरूपं परमार्थसत्तारूपमाश्रित्य आश्रय । मायामात्रं प्रतीतिमात्रम् । अनूद्यानुवादेनारोपं कृत्वा । तथा पर्यवसाने युक्तिं उपजनता आह भवन्माव इति । विकल्प्याध्यारोप्य भङ्गमामन्त्रयति । नित्यमुक्त इति । स्वपरेति स्वविषयकं परविषयकञ्च ज्ञानं ददातीति तथा ॥ ४३ ॥

सर्वेवैभवसम्पूर्णो हीनस्तु श्वपचादपि ।
यः करोति दयालुं तं श्रीचैतन्यं समाश्रये ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
एकविंशोऽध्यायः ॥ २१ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

किमनूद्य कर्म विधत्ते किन्तत्त्वमाचष्टे इत्यर्थः । विकल्पयेदित्यु-पलक्षणं किं विकल्पेन विधत्ते किं समुच्चित्य विधत्ते किं सामा-न्यतो विधत्ते किं व्यापवर्गं इति चार्थः मत् प्रश्नस्य ॥ ४२ ॥

मां विधत्ते महाराधनरूपं कर्म विधत्ते मिचष्टे मां मां तत्त्वं विचष्टे विकल्प्य व्रीहियवादिरूपोऽहमेव विकल्पेन प्रतिपादित इत्यर्थः अहं व्यपोह्य व्यपोह्यमानमपि वस्तु मदात्मकमित्यर्थः शब्दो वेदः मां परमार्थरूपमाश्रित्य भिदां मायामात्रमनूद्य तद्रूपमात्र जीवे प्रतिषिध्य जीवे मायाकारस्य अन्त काष्ठाभूत मयि प्रतिषिध्य प्रशाम्यति सर्वतत्त्वविलक्षणमत्प्रतिपादनेन पर्यवसितव्यापारो भवतीत्यर्थः ॥ ४३ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकविंशोऽध्यायः ॥ २१ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

छन्दांस्येव कानि चिद्दर्शयति । गायत्रीति । अत्यष्टिः अति-जगती विराट् चेति विभागः अयं च शब्दाविर्भावक्रमो लौकिक-वैदिकशब्दसाधारणः ॥ ४१ ॥

गम्भीरं दुर्विगाह्यमिति श्लोकं तदेव प्रपञ्चयति । किं विधत्ते इति । किमाचष्टे किं तत्त्वमाचष्टे इत्यर्थः । किं विकल्पयेदित्युप-लक्षणं किं विकल्पेन विधत्ते किं समुच्चित्य विधत्ते किं सामान्यतो विधत्ते किमापादयति किमपवदतीति चार्थः । इतीत्थमस्या हृदयं तात्पर्यं मदन्योऽन्यः कश्चिदपि न वेद ॥ ४२ ॥

नहि तस्या हृदयं प्रकाशयेत्याह । मामिति । मां विधत्ते महाराधनरूपं धर्मं विधत्ते मामेव सर्वशरीरकमभिधत्ते अभिधया वृत्त्या प्रतिपादयति यद्विकल्प्यापोह्यते तदप्यहमिति तत्स्वरूपः व्रीहियवादिरूपोऽहमेव विकल्पेन प्रतिपादितः अपोह्यमानमपि वस्तु मदात्मकमित्यर्थः । किंबहुनेत्याह । एतावानिति । सर्वोऽपि वेदतात्पर्यविषयीभूतार्थः एतावानेव कियान् यः शब्दो वेदः मामाश्रयमाश्रित्य तात्पर्यतो विषयीकृत्य भिदां देवमनु-ष्यादिभिदां मायामात्रं प्रकृतिमात्रमनूद्य तां जीवस्व-रूपे प्रतिषिध्य जीवगतं चाकारमन्ते काष्ठाभूते मयि प्रति-षिध्य प्रशाम्यतीति सर्वेतरविलक्षणमत्प्रतिपादनेन पर्यव-सितव्यापारो भवतीत्यनाधानेवत्यर्थः ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकविंशोऽध्यायः ॥ २१ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गायत्र्यादिच्छन्दसां क्रमोऽपि छन्दोविचित्यादावुक्त इति इत्या-शयवानाह । गायत्रीति—

छन्दस्तु नवपादं यज्जगतीत्युच्यते बुधैः ।
इतिवचनाज्जगतीनामच्छन्दो नवपादात्मकमित्यर्थः ॥ ४१ ॥

मुख्यप्राणोऽपि मत्प्रसादादेव वेदार्थं जानाति मुख्यतः सर्व-वेदार्थतत्त्वमहमेव जानामीत्याशयवानाह । किं विधत्त इति । विक-ल्पयेत् विविधरूपत्वेन कल्पयेत् लोके विद्वज्जनमध्ये मदन्यः कः पुरुषः इत्यस्याः श्रुतेः हृदयं तात्पर्यार्थं वेद कोऽपि न वेद चतुर्मुखो वायुर्मत्प्रसादाद्वेत्तीत्यर्थः ॥ ४२ ॥

सन्ध्यामुपासीतेत्यादेः सन्ध्योपासनादिनिखिलस्वगुणपर्यवसत-रेयाज्ञानार्थं भगवान् कथं वेत्तीति तत्राह । मामिति । सन्ध्यामुपा-सीतेत्यादिविधिलक्षणो वेदो मामुद्दिश्य विधत्ते सन्ध्याशब्द-वाच्येऽनिष्पत्वात् ध्येयः सदा सवितृमण्डलमध्यवर्तीत्यादेः यदा-दित्यगतं तेजो जगद्भासयतेऽखिलमित्यादेश्च सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिसत्यत्वादिगुणवाचको वेदः सत्यत्वादिगुणविशिष्टं मामभिधत्ते चत्वारि वागित्यादिषु वेदादिवाच्यत्वाद्वागाख्यं मां वागित्यनूद्य चत्वारीति निषिध्य कल्पयित्वा वासुदेवसंकर्ष-णादिरूपविशिष्टत्वेन ध्येय इति न सुरां पिबेत् ब्राह्मणो न हन्तव्य इत्याद्यपोहभागः सुर ऐश्वर्ये इति धातोः सुराणामैश्व-र्यादिमद्गुणानां पानं मम भ्यादिति चिन्तनं वेदैकवेद्यत्वेन ब्राह्मणो विष्णुरस्मीति चिन्तनमित्यादिमदोपप्रथममपोह्य निषि-ध्यात्मानमेव लोकमुपासीतेत्यादिमाहात्म्योपासनं वेदतात्पर्यार्थं इत्यस्याः श्रुतेः हृदयमहमेव वेदेति गतेनान्वयः—

त्रिविभागं हरेः पूजैर्वाभिधाने च तद्गुणाः ।
विकल्पं तद्गुरुत्वञ्चाप्यपोह्य तु तदप्रियम् ॥
उच्यते सर्ववेदेषु तच्च वेद स एव हीति वचनात् ॥
सुरा हरेर्गुणाः प्रोक्तास्ते मे स्युरिति चिन्तनम् ।
सुरापानमिति प्रोक्तं तच्च कुर्यात्कथञ्चन ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ब्राह्मणो विष्णुरहितः स नास्तीत्यभिचिन्तनम् ।
ब्रह्महत्या समुद्दिष्टा तां न कुर्यात्कथञ्चन ॥
इत्याद्यपोहवाक्यार्थभिन्नत्वो विष्णुर्बुधैर्जनैः ।

इतिवचनाच्च । न केवलं कतिपयवाक्यार्थः सर्ववेदार्थोऽप्येवमेवेति भावनोपसंहरति । एतावानिति । कदानु इदृग्विभ्रम इति तत्राह । शब्द इति । निर्दोषः शब्दो वेदः मामिदं मामाश्रयाय सर्वावतारेषु भेदरहितो विष्णुरिति प्रतिष्ठाप्य मायामात्रं मदिच्छामुखादर्शनमित्तं शरीरादिकं बन्धमनूद्य निरूप्य तस्य प्रतिषेधार्थमुपासनादिकं विधायान्ते मोक्षं ज्ञानोदयेन जीवस्य शरीरादिकं प्रतिषिध्य प्रशाम्यति हितमितसमुद्भवस्वभावोपाहितरूपेण तिष्ठतीत्यन्वयः । न भिदा यस्य सोऽभिदः अभिदस्यायमभेदर्याऽभिदाः१ तमभिदाम् स इति प्रज्ञाति अनिषेधे पुमान्विष्णावेति भावः प्रपञ्चनिषेधो वेदस्यार्थोऽनेनोच्यत इति मतम्—

सर्वावताररूपेषु निर्भेदत्वावबोधनः ।
अभेदो विष्णुरहितत्वमेवोक्त्वा तदिच्छया ॥
निमित्तं देहिकं बन्धं तस्योपासनमेव तं ।
प्रतिषिध्य विमोक्षे तु स्वभावोपाहितरूपतः ॥
प्रतिशाम्यति वेदोऽयं वासुदेवैकसंश्रयः ॥

इतिसमाख्यया निरवनमित ज्ञानदं विद्यात्मनि भिदाबोध इति भेदज्ञानस्य विद्यात्वोक्तेश्चेति ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकविंशोऽध्यायः ॥ २१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवं मदुत्पन्नस्य वेदस्य तात्पर्यंश्चाहमेवेत्याह । किं विधत्त इति ॥ ४२ ॥

परमपतिपाद्यश्चाहं श्रीकृष्णरूप एवेत्याह । मां विधत्त इत्यर्द्धकेन । मत्तात्पर्यकत्वेनैव मत्सान्निध्यादिकं कृत्वा मय्येव पर्यवस्यतीत्यर्थः तदेव दर्शयति । एतावानिति । यतः शब्दो वेदस्तदनु गतश्च स मायामात्रं जगत्प्रतिषिध्य भिदां मदवतारादिरूपां चानूद्य तदन्ते मां श्रीकृष्णरूपमेवाश्रयापालभ्य प्रसीदति कृतकृत्यो भवति तदुक्तं श्रीगीतास्वपि वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहमिति ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकविंशोऽध्यायः ॥ २१ ॥

---

१ हाहाशब्दवत् आकारान्तः पुल्लिङ्गोऽयम् ।

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तेषु कानि छन्दांसि दर्शयति । गायत्रीति । तत्र चतुर्विंशत्यक्षरा गायत्री तदग्रतश्चतुरक्षरवृद्ध्या उष्णिगादिच्छन्दांसि अत्यतिजगती विराट्त्वेनार्थः । एतैश्छन्दोभिरुपलक्षितामिति पूर्वेणान्वयः ॥ ४१ ॥

बृहती स्वरूपतो दुर्बोधेत्युक्तम् अर्थतोऽपि दुर्बोधेत्याह । किं विधत्ते श्रुत्वा कर्तव्यत्वेन किं विधीयते अस्य हितार्थं श्रौतैरिदमेव कर्तव्यमिति किं श्रुत्याभिदिश्यते इत्यर्थः । किमाचष्टे किमभिधत्ते श्रुत्वा किमभिधीयते श्रुत्यर्थेनानुवर्तक इत्यर्थः । किमनूद्य विकल्पयेत् इदमेकं वस्तु इदमपरं वस्तु इदमप्यन्यदुक्तिर्भाति द्वित्रीणि वस्तूनि निर्दिश्य विकल्पयेत् इदं वा कुर्यादिदं वा कुर्यादिति वक्ति इयीत तत्किमित्यर्थः ननु अहरहः संध्यामुपासीत कर्मणा पितृलोक इति दर्शनात् कर्मैव श्रुतिर्विधत्ते चोदनालक्षणो धर्म इति व्याख्यानात् धर्म एव श्रुत्यर्थः व्रीहिभिर्वा यजेत यवैर्वा यजेतेति वैकल्पिको विधिरपि धर्मविषयक एव यद्वा भक्तियोगो निष्कामकर्मज्ञानयोगश्चानूद्य विकल्पितो यथा—

भक्तियोगश्च योगश्च मया मानव्युदीरितः ॥
तयोरेकतरेणैव पुरुषः पुरुष व्रजेदिति ।

तत्र रे मूढा ! नहि नहीत्याह । मत्त्याः श्रुतेः हृदयं तद्गतमभिप्रायं मदन्यो नैव कश्चन वेद प्रेयस्या अभिप्रेतमर्थं प्रेयांसं विना को वेदेति भावः ॥ ४२ ॥

ननु तर्हि त्वमेव कृपया कथयेति तत्रोमित्याह । मां विधत्ते भक्तेर्मत्स्वरूपभूतत्वान्मद्भक्तिमेव कर्तव्यत्वेन विधत्ते इत्यर्थः । यागादिविधीनामपि मद्भक्तिविधान एव तात्पर्यात् धर्मो यस्यां मदात्मक इति मदुक्तः अभिधत्ते मामिति अहमेव सर्ववेदार्थ इत्यर्थः विकल्प्यापोह्यते ह्यहमिति योगास्त्रयो मया प्रोक्ता इत्युक्तः कायडत्रयेण कर्म ज्ञानं भक्तिश्चेत्यनूद्य कर्म कुर्यात् ज्ञानं वा अभ्यसेत् भक्तिं वा कुर्यादिति विकल्प्य पश्चादपोह्यते प्रथमं सकामकर्मापोहो निष्कामकर्मकरणं ततो ज्ञानारूढत्वे सति निष्कामकर्मणोऽप्यपोहः ज्ञानसिद्धिदशायां ज्ञानमपि सन्न्यसेदित्युक्तेर्ज्ञानस्याप्यपोहः भक्तेरपोहस्तु न क्वापि समये न केनापि शास्त्रवाक्येन प्रतिपादितो दृष्ट इत्यतः कर्मज्ञानापोहादेवाहमपोह्य इत्युक्तं प्रथमपुरुष आर्षः कर्मज्ञानयोरपि स्वप्रापकमार्गत्वात्तत्रात्मपदच्छन्दः प्रयुक्तः तस्य चिद्रूपत्वान्मायिकरूपत्वाच्च तत्र मायिकरूपस्यैवापोहो युज्यते न चिद्रूपस्य तन्नित्वतोऽपि किञ्चित् स्पष्टीकृत्य व्याचक्षाणस्तत आह एतावानिति । वेदात्मकः शब्दः मामाश्रय मद्भक्तियोगविधायकत्वेन मामेवाभित्य भिदां मत्तोऽपि भिन्नं कर्मयोगं ज्ञानयोगं च मायामात्रमनूद्येति कर्मयोगस्य त्रिगुणमयत्वेन स्वर्गपदार्थज्ञानपर्यन्ते ज्ञानयोगस्यापि विद्यामयत्वस्य सात्त्विकत्वेन मायामात्रत्वम् अतोऽन्ते प्रतिषिध्य क्रमेण तद्वयमपोह्य प्रसीदति निर्गुणाया मद्भक्त्यमृतवल्याः फलस्य मन्माधुर्यानुभवरूपस्य रसेन सदानन्दवान् स्वयमपि निर्वृणोतीत्यर्थः । के त्वेवं व्याचक्षते मामेव कर्मकाण्डपशुरूपं विधत्ते मन्त्रवाक्यैर्देवताकाण्डे मामेवाभिधत्ते ज्ञानकाण्डे मत्तः पृथगाकाशादिकं विकल्प्य यदपोह्यते तदप्यहमेव तस्मादेतावानेव सर्ववेदार्थः

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

...दो वेदः मां परमार्थरूपमाश्रित्य भिदां मायामात्रमित्यनूद्य
...मायाहित किश्वनेति प्रसीदति विधुत्तव्यापारो भवतीति
...व्याख्यानेऽपि मायामात्रस्यैव प्रतिषेधोक्तेर्भक्तानां भक्त्युपकर-
...णां भगवल्लिकेतादीनां च मायामात्रत्वाभावान्न कापि-
...तिः ॥ ४३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशे ऽैकविंशः सङ्गतः सङ्गतः सताम् ॥ २१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कानिच्छन्दःकृत्तायां तेषु कतिचिद्दर्शयति । तत्र गायत्री चतु-
...र्विंशत्यक्षरा उष्णिक् अष्टाविंशत्यक्षरा एवमाधिक्यमुत्तरोत्तरं
...म् अतिजगत् अतिजगती ॥ ४१ ॥

वेदार्थमहमेव जानामि नान्य इत्याह । किमिति । अविरोधप्रका-
...ण किंविषयं विधत्ते तत्प्राप्त्युपाये च किमाचष्टे किमनूद्य
...कल्पयेत् किं हेयमुपादेयं चोपक्रम्य विकल्पयेत् कार्यकार-
...भावेन विभज्य प्रतिपादयेत् अस्याः बृहत्याः वाचो हृदय-
...शयं मदन्यः कश्चन कोऽपि न वेद अत एवोक्तार्थबोधाय
...मत्स-श्रयाय माश्रयणीय इति भावः ॥ ४२ ॥

तर्हि मदनुग्रहाय भगवन् ! तदर्थं कथयेत्यत्राह । मामिति ।
...अविरोधप्रकारेण मामेव विधत्ते सर्वे देवा यत्पदमामनन्तीति
...श्रुतेः कर्मज्ञानभक्त्यादिसाधनेषु त्वाजमात्रेषु मामेव मत्प्राप्त्यु-
...पायमभिधत्ते यमेवैष वृणुते तेन लभ्य इति श्रुतेः यतो वा
...इमानि भूतानि जायन्ते इति विकल्प्य कार्यकारणभावेन
...विभज्य हि प्रसिद्धं कार्यं "यथेह कर्मचितो लोकः क्षीयते एवमे-
...वामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिना हेयत्वेनापोह्यते
...अहमुपादीयते इति शेषः तद्ब्रह्म तद्विजिज्ञासस्व कारणं तु ध्येयः
...निरञ्जनः परमं साम्यमुपैतीत्यादिभिः पाद्यत्वेन स्वीक्रियते एता-
...वान् सर्ववेदार्थो भवति फलितार्थमाह । शब्दो वेदः मायामात्रं
...प्रकृतिकार्यजातं जीवभोग्यं यतो वा इमानि भूतानि जायन्त
...इत्यादिनाऽनूद्य आद्यन्तवत्तया हेयत्वेनोक्त्वा पुनस्तद्ब्रह्म तद्विजि-
ज्ञासस्वेत्यनेन मां निष्प्रपञ्चं तत्पदार्थनिवन्तारमाख्याय अशरो-
पाद्येवताभिधेयं अन्ते त्वम्पदार्थं वा भिदां अब्रह्मात्मकत्वबुद्धिरूपां
प्रतिषिध्य तत्त्वमसीति तादात्म्योपदेशेन निराकृत्य प्रसीदतीत्य-
न्वयः एतेन तत्त्वम्पदविषयो वेद इत्युक्तं तथा च श्रुतिः भोक्ता
भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेत-
दिति ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकविंशाध्यायार्थप्रकाशः ॥ २१ ॥

---

भाषा टीका ।

उन छंदों के नाम ये हैं गायत्री उष्णिक् अनुष्टुप् बृहती पंक्ति त्रिष्टुप् जगती अति जगती अत्यष्टी विराट् इत्यादि और भी नाम हैं ॥ ४१ ॥

यह वेद क्या कहता है क्या विधान करता है क्या अनुवाद करता है किसका विकल्प करता है इस प्रकार से इस वेद के अभिप्राय को मेरे बिना दूसरा कोई नहीं जानता है ॥ ४२ ॥

मेरे ही को विधान करता है मेरे ही को कहता है मेरे ही को विकल्प करता है तथा किसी रूप में अपवाद भी करता है इतनाहीं सब वेदों का अर्थ है कि वेद मेरको आश्रय करके प्राकृत पदार्थ को भगवान् की संकल्प रूपी माया को हेय रूप से अनुवाद करके परमात्मा के स्वरूप को बताकर निवृत्त होजाता है ॥ ४३ ॥

इति श्रीमद्भागवत महापुराण एकादशस्कन्ध
इकीसवें अध्याय की पं० लक्ष्मणाचार्यकृत
भाषा टीका समाप्त ॥ २१ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे एकविंशोऽध्यायः ॥ २१ ॥



# अथ द्वाविंशोऽध्यायः ।

—:*:—

उद्धव उवाच ॥

कति तत्त्वानि विश्वेश ! संख्यातान्यृषिभिः प्रभो ! ।
नवैकादश पञ्च त्रीण्यात्थ त्वमिह शुश्रुम ॥ १ ॥
केचित् षड्विंशतिं प्राहुरपरे पञ्चविंशतिम् ।
सप्तैके नव षट् केचिच्चत्वार्येकादशापरे ॥ २ ॥
केचित्सप्तदश प्राहुः षोडशैके त्रयोदश ।
एतावत्त्वं हि संख्यानामृषयो यद्विवक्षया ।
गायन्ति पृथगायुष्मन्निदं नो वक्तुमर्हसि ॥ ३ ॥

श्रीभगवानुवाच ॥

[1] युक्तं च सन्ति सर्वत्र भाषन्ते ब्राह्मणा यथा ।
मायां मदीयामुद्गृह्य वदतां किं नु दुर्घटम् ॥ ४

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वाविंशे तत्त्वसंख्यानामविरोधविधोच्यते ।
पुंप्रकृत्योर्विवेकश्च जन्ममृत्युविधादि च ॥

तदेवं वेदानां प्रवृत्तिपरत्वं निराकृत्य मोक्षपरत्वं निर्णीतम् सन्ति च मोक्षपरत्वेऽपि तत्त्वान्तरविवादाः तथाहि केचित्तत्त्वसंख्यासु विवदन्ते तत्रापि बाह्यार्थसदसत्त्वे आत्मत्वेऽप्येकत्वनानात्वादिषु तत्र किं सत्यमिति जिज्ञासया पृच्छति । कतीति । ऋषिभिरागमेषु बहुधा संख्यातानि तेषु कति युक्तानीत्यर्थः भगवन्मतानुवादपूर्वकं बहुधा संख्यानं प्रपञ्चयति । नवेति त्रिभिः । त्वं तावदष्टाविंशतितत्त्वान्यात्थ तानि च वयं शुश्रुम श्रुतवन्तः ॥ १ ॥ २ ॥

एतावतीनां भाव एतावत्त्वं नानात्वमित्यर्थः । यद्विवक्षया यत्प्रयोजनमभिप्रेत्य च गायन्ति आयुष्मन्नित्यमूर्ते ! ॥ ३ ॥

विवक्षाभेदेन सर्वं युक्तमेव मायया च किं नाम न युक्तमित्याह । युक्तमिति । यथा ब्राह्मणा भाषन्ते तद्युक्तं न च वस्तुतः कस्मात्सन्ति सर्वत्रान्तर्भूतानि सर्वाणि तत्त्वानि किंच मायामिति असत्त्वेऽपि मायाश्रयत्वाद्भूत एवेत्यर्थः उद्गृह्य स्वीकृत्य नहि मरीचिजलपरिमाणादिविवादे किंचिद्घटितमिव भवति॥ ४ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

अविरोधविधा अविरोधप्रकारः । विवेकः पृथगात्मत्वं । जन्ममृत्युविधा जन्ममरणप्रकारः । आदिना त्रैगुण्ये त्रिविधसंसारादि । तदेवं मुख्यार्थघटनप्रकारेण तत्त्वान्तरविवादाः मोक्षोपयोगितत्त्वविषयकविवादाः । तथाहि विवादमेव स्फुटी करोति । तत्रापि च तत्त्वेष्वपि । बाह्यार्थसदसत्त्वे कार्यवस्तुनः सत्त्वासत्त्वनिरूपणे । विवदन्ते इति पूर्वेणैवान्वयः । तत्र तेषु विवादेषु । कतीत्येकम् । युक्तानीत्यध्याहारादित्यर्थ इत्युक्तं नवेति युग्मकम् ॥ १—२ ॥

इदं प्रयोजनम् । आयुष्मन्निति नित्ययोगे मतुप् अत एव नित्यमूर्त्ते इति व्याख्यातम् ॥ ३ ॥

ब्राह्मणभाषणानुसारेणैव युक्तत्वं न तु परमार्थतः । युक्तत्वे हेतुर्यस्मादिति । वस्तुत्वाभावमाह किंचेति । सतोऽप्रतीतावसतः प्रतीतिकारिणी माया तदाश्रयत्वात् । यथा मरीचिजलमेव नास्ति किमुत तत्परिमाणादिविवादस्तथा ब्रह्मव्यतिरिक्तानि तत्त्वान्येव न सन्ति तत्संख्यायां कुतो विवाद इत्यर्थः ॥ ४ ॥

---

[1] युक्तयः इति वीर० विज० पाठः

नैतदेवं यथात्थ त्वं यदहं वच्मि तत्तथा ।
एवं विवदतां हेतुं [1] शक्तयो मे दुरत्ययाः ॥ ५ ॥
यासां व्यतिकरादासीद्विकल्पो वदतां पदम् ।
प्राप्ते शमदमेऽप्येति वादस्तमनु शाम्यति ॥ ६ ॥
परस्परानुप्रवेशात्तत्त्वानां पुरुषर्षभ ! ।
पौर्वापर्यप्रसंख्यानं यथा वक्तुर्विवक्षितम् ॥ ७ ॥
एकस्मिन्नपि दृश्यन्ते प्रविष्टानीतराणि च ।
पूर्वस्मिन् वा परस्मिन् वा तत्त्वे तत्त्वानि सर्वशः ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एतावतीनां भाव एतावत्त्वं नानात्वमित्यर्थः । यद्विवक्षया यत्प्रयोजनमभिप्रेत्य च गायन्ति हे आयुष्मन्निति नित्ययोग मतुप् नित्यमूर्तित्वेन हे सर्वकालव्यापिन्नित्यर्थः । तेन तेषामृषीणामाद्यन्तमध्यवर्त्तित्वात्त्वमेव सर्वमतामिप्रायं विद्वान् प्रष्टव्य इति भावः ॥ ३ ॥

तेषां विवादेऽपि वस्तुनो न विवाद इत्याह । युक्तमिति । यथा ब्राह्मणा भाषन्ते तत् युक्तमेव यतः सन्ति सर्वत्रान्तर्भूतानि सर्वतत्त्वानि कस्तर्हि विवादे हेतुरित्यपेक्षायामाह तत्रमेवेत्याह । मायामिति । तथा तयोद्ग्राहसामर्थ्यमत्याचन्द्रार्कं सम्मायैव तेभ्यो ददातीति भावः ॥ ४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वेदं तत्त्वत्रयपरं श्रुत्वान्यानि तदवान्तरतत्त्वानि पृच्छति । कतीति चार्द्धत्रिभिः । हे विश्वेश । हे सर्वेश्वर एष सर्वेश्वर इति श्रुतेः तत्त्वानि कति सन्तीति प्रश्नः तत्र तावत् एकोनविंशाध्याये भूतेषु अष्टाविंशतितत्त्वानि तेष्वपि परमकारणमेकं तत्त्वमुक्तवानसि पुनरिह पूर्वाध्यायान्ते त्वं त्रीणि तत्त्वान्यात्थ उक्तवानसि हे प्रभो ! इति सम्बोधनेन त्वमनन्ते अज्ञावानस्मीति सूच्यते ऋषिभिस्तु केश्चित्पञ्च तत्त्वानि केश्चित्षड्विंशत्येकादशषड्विंशतितत्त्वानि व्याख्यातानि ॥ १ ॥ २ ॥

यद्विवक्षया यदभिप्रायेण एतावतीनां भावः एतावत्त्वं गायन्तीत्यन्वयः हे आयुष्मन् ! नित्यमूर्ते ! तदिदं पृथक् विविच्य नोऽस्माकं वक्तुमर्हसि ॥ ३ ॥

उत्तरमाह । युक्तय इत्यादिना । यथा ब्राह्मणाः उभयब्रह्मविदः भाषन्ते तथा सर्वत्र तत्तन्मतेषु युक्तयः सन्ति मदीयां मायामुद्गृह्य मच्छक्तिं न्यूनाधिकतत्त्वसंख्याविवक्षानुसारतः स्वीकृत्य वदतां किन्तु दुर्घटं न किमपीत्यर्थः ॥ ४ ॥

भाषा टीका ।

उद्धव उवाच हे विश्वेश । हे प्रभो ! सब ऋषियों ने कितने तत्त्व कहे हैं आपने तो नौ ग्यारा पांच तीन ऐसे अठाइस तत्त्व कहे हैं सो हमने सुने हैं ॥ १ ॥

कोई छब्बीस कहते हैं कोई पचीस कहते हैं कोई सात कहते हैं कोई छै कहते हैं कोई चार कहते हैं कोई ग्यारह कहते हैं ॥ २ ॥

कोई सतरा कहते हैं कोई सोलह कहते कोई तेरा कहते हैं इतने प्रकार की तत्त्वों की संख्या को ऋषि लोग जिस अभिप्राय से अलग अलग कहते हैं हे अनन्त आयुष्मन् ! इसका भेद आप मेरे से कहिये ॥ ३ ॥

श्री भगवान् उवाच जिस प्रकार से ब्रह्मज्ञानी मुनि कहते हैं वे सब युक्तही हैं क्योंकि इच्छा रूपी माया को ग्रहण करके कहने वालों को इन तत्त्वों में कुछ भी असम्भव नहीं है ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु यदि सर्वमपि युक्तं तर्हि कुतो विवादो यदि च मायैवालम्बनं तर्हि कुतो हेतुं प्रति विवादस्तत्राह । नैतदेवमिति । हेतुं प्रति च विवदमानानां मदीया दुरतिक्रमाः शक्तयः सत्त्वाद्या अन्तःकरणवृत्तिविक्षेपरूपेण परिणता एव हेतुरित्यर्थः ॥ ५ ॥

तासां विवादहेतुत्वमुपपादयति । यासामिति । यासां व्यतिकरात्क्षोभाद्वदतां पदं विषयो विकल्पो भेद आसीदन्तःकरणवृत्तिविकल्पो वा तन्मूलभूतः एतदेव व्यतिरेकेण द्रढयति । शमदमयोर्ज्ञानैकपदम् तस्मिन् प्राप्ते विकल्पोऽप्येति लीयते तं च विकल्पमनाशमनु वादः शाम्यतीति ॥ ६ ॥

सन्ति सर्वत्रेति यदुक्तं तत्प्रपञ्चयति । परस्परेति द्वाभ्याम् । अन्योऽन्यस्मिन्ननुप्रवेशाद्वक्तुर्यथा विवक्षितं तथा पूर्वं कारणमपरं कार्यं कार्यकारणभावेन प्रसंख्यानं भवति यद्वा पूर्वा अल्पसंख्या पराधिकसंख्या तयोर्भावः पौर्वापर्यं तेन प्रसंख्यानं गणनमिति ॥ ७ ॥

अनुप्रवेशं दर्शयति । एकस्मिन्नपीति । पूर्वस्मिन् कारणभूते तत्त्वे कार्यतत्त्वानि सूक्ष्मरूपेण प्रविष्टानि मृदि घटवत् अपरस्मिन् कार्यतत्त्वे कारणतत्त्वान्यनुगतत्वेन प्रविष्टानि घटे मृद्वत् ॥ ८ ॥

[1] हेतुरिति वीर० विज० पाठः

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी।

हेतुं युक्तिं प्रति। यद्वा। हेतुं कारणं प्रति जातावेकवचनं समुदितानां हेतुत्वाद्धेतुरित्येकवचनम् ॥ ५ ॥

तासां शक्तीनां यासां सत्त्वादिशक्तीनां भेदमुद्दिश्य वादप्रवृत्तेः वादस्य भेदो विषयः प्रपञ्चात्मकमेव व्यतिरेकेण विकल्पाभावे वादाभावरूपेण शमश्च बुद्धेर्भगवन्निष्ठता दमश्च बाह्येन्द्रियनिग्रहः तस्मिन् प्राप्ते सति सर्वविलक्षणेश्वरतत्त्वमात्रग्रहणाद्वादमूलो विकल्पो क्षीयते अपगच्छति विकल्पमनुवादकारणीभूतविकल्पनाशानन्तरम् ॥ ६ ॥

कार्यकारणयोरन्योन्यप्रवेश एव विवक्षितो ननु कार्यं कारणभावेन प्रसङ्ख्यानमतो यद्यपि तथा चाल्पायाः संख्यायाः प्रथमोपस्थितत्वात् पूर्वत्वमधिकतरसङ्ख्यायाः पश्चादुपस्थितत्वादपरत्वं तेन गणनम् ॥ ७ ॥

सूक्ष्मरूपेणेति यदि कार्यस्य सूक्ष्मरूपेण कारणे स्थितिर्न स्वीक्रियते तदा तत्र तस्यासत्त्वात्तदुत्पत्त्याद्यनुपपत्तेरित्यर्थः। अनुगतत्वेन व्यापकत्वेन ॥ ८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

हेतुशक्तयः हेतुसामर्थ्यानि बुद्धयः केवलयुक्तयोऽप्रतिष्ठिता इत्यर्थः ॥ ५—६ ॥

व्यतिकरात् मानत्वदौर्बल्याविवेकात् न्यूनसंख्यावादिनामपि न तत्त्वापलापोऽभिप्रेतः अपि तु उक्तेष्वनुक्ततत्त्वान्तर्भावोऽभिप्रेत इत्यविरोध इति परिहरति। परस्परानुप्रवेशादिति ॥ ७ ॥

एकस्मिन् काष्ठादौ अग्न्यादयः प्रविष्टा दृश्यन्ते अतस्तत्त्वान्तर्भावो युक्त इत्याह। पूर्वस्मिन् वेति ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अतो यत्संख्यानमात्थ विरुद्धमित्युक्तवानसि तदेतदेवं न विरुद्धं भवति यत्संख्यानं तथाप्यविरुद्धं यथा भवति तत्तथाह वदिष्य वक्ष्यामि कस्मादुक्तनानाविधवादेहेतुरित्यत आह। एतानीति एवं विवदतां हेतुरनेकविधवादहेतुः दुरत्यया दुरतिक्रमणीयाः मम शक्तय एव मदीयैरभ्युपगन्तव्या इत्यर्थः। शक्तयोऽत्र प्रकृतिपुरुषकालमहदहङ्कारादयः प्रकृत्यादीनामात्मशक्तित्वं कार्योपयुक्तत्वे सत्यात्मापृथक्सिद्धविशेषणत्वेनेत्यवगन्तव्यं तदेव हि शक्तिशब्दप्रवृत्तिनिमित्तम् ॥ ५ ॥

शक्तीनां हेतुत्वमभ्युपपादयति। यासामिति। यासां शक्तीनां व्यतिकराद्विवदतां वादिनां पदं विषयः विकल्पः पक्षभेद आसीत् व्यतिकरोऽन्योऽन्यस्मिन्नन्तर्भावः अयमव्यतिकरस्त्वाद्युपलक्षणम् अन्तर्भावानन्तर्भावाभ्यां न्यूनाधिकतत्त्वप्रसंख्याने वादभेदः प्रवर्तत इत्यर्थः। स तर्हि कदा निवर्तत इत्यत्राह। प्राप्त इति। शमदमयोर्द्वन्द्वैक्यं तस्मिन् प्राप्ते सति विकल्पोऽप्येति निवर्तते तमपियन्तं विकल्पमनु वादः प्रशाम्यति शमदमादिमतः सर्वं चिदचिदात्मकं जगन्मच्छरीरत्वेन पश्यतो न विकल्पवादौ स्त इत्यर्थः ॥ ६ ॥

यासां व्यतिकराद्वादोत्थितविकल्प इत्येतदेव प्रपञ्चयति। परस्परेति। हे पुरुषर्षभ! तत्त्वानां परस्परानुप्रवेशादिति व्यतिकरणार्थं उक्तः वक्तुर्यादृशी यथा विवक्षितं तथा पौर्वापर्यप्रसंख्यानं पूर्वाल्पसंख्या अपरा अधिकसंख्या तयोर्भावः पौर्वापर्यं तेन गणनं भवति ॥ ७ ॥

तत्त्वान्तरेष्वन्यस्यान्तर्भावः किं कश्चिद्दृष्टचरः तत्राह। एकस्मिन्निति। एकस्मिन् काष्ठादौ इतरायदग्निजलादीनि प्रविष्टानि दृश्यन्तेऽतस्तत्त्वान्तर्भावो युक्त इत्याह। पूर्वस्मिन् कारणभूते परस्मिन् कार्यभूते वा तत्त्वे सर्वशः सर्वाणि तत्त्वानि प्रविष्टानि यथा मृदि कारणभूतायां घटादयः सूक्ष्मरूपेण प्रविष्टाः यथा च घटादौ कार्यभूते मृदादिकं कारणभूतमनुगतत्वेन प्रविष्टं तद्वदिति भावः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ननु तामाणिकं वादिकमिति विप्रतिपद्यन्ते इत्याशङ्क्य तत्प्रतत्त्वापरिज्ञानादिति भावेनाह। नैतदिति। त्वं यथात्थ एतदेवं न भवति युक्तत्वादहं वक्ष्यामि तत्तथा निर्दोषत्वादिति तद्विज्ञाय विप्रवदन्त्यल्पबुद्धयः इत्यत्रापि मच्छक्तिरेव हेतुरित्याह। एवमिति। तत्रापि कारणं विष्णोः शक्तिरिति ॥ ५ ॥

सत्त्वादिभेदेन यासामिति बहुवचनं यासां मच्छक्तीनां सकाशाज्जाताद्व्यक्तादितत्त्वानां व्यक्तादितत्त्वानां व्यतिकराद्विकारात्मनमसो यो विकल्पः विरुद्धकल्पो मिथ्याज्ञानलक्षणः स एव विवदतां विवदमानानां पदमाश्रय आसीत् तत्त्वसंख्याविषयभेदेन बहुविधात्मनोविकाराद्भवतीत्यर्थः। यद्वा विकारतः अव्यक्तादेर्विकल्पोऽयं तमसः तत्प्रभावेन विरुद्धकल्पनमिति कदा नु विकल्पोपशम इत्यत आह। प्राप्त इति। दमः इन्द्रियनिग्रहः तद्द्वारा शमे प्राप्ते मन्निष्ठायां प्रवृत्तायां स विकल्पो व्येति नश्यति तमनु विकल्पनाशानन्तरं विवादोऽपि शाम्यति तत्र वासुदेवैकनिष्ठया निरहङ्कारया तद्वत् विवादैकाश्रयं हित्वादिति ॥ ६ ॥

तत्त्वानामनेकविधसंख्याने युक्तिमाह। परस्परानुप्रवेशादिति। कार्यकारणरूपाणां तत्त्वानां परस्परानुप्रवेशात् कारणेषु कार्यानुप्रवेशात् क्वचित्कार्येषु कारणानुप्रवेशात् अन्तर्भावाच्च तथा प्रवेशेन पृथगेवावस्थानाच्च पौर्वापर्यप्रसंख्यानं न्यूनाधिक्येन तत्त्वानां गणनं वक्तुर्विवक्षितं यथा तथा क्रियते पूर्वा संख्या अल्पा अपरा बह्वी तत्सम्बन्धित्वं पौर्वापर्यम् ॥ ७ ॥

एतदेव विवृणोति। एकस्मिन्निति। इतराणि तत्त्वानि एकस्मिन् पूर्वस्मिन् कारणे तत्त्वे अपरस्मिन् कार्ये तत्त्वे वा प्रविष्टानि दृश्यन्तेऽपि चकाराच्चकाराद्वयोर्वा तत्त्वानां गणनानिरुक्तानां पौर्वापर्यं पूर्वापरसम्बन्धिप्रसंख्यानमपि युज्यत इत्यर्थः। तर्हि विवादस्य तत्र चित्तेऽङ्गीकार्यमुत नेति तत्राह। यथेति। अङ्गिनामङ्गानामिदं यथावदेव विविक्तं पृथक् पृथक् वदताम् अत एव युक्तं स्यात्। [illegible] हेतुं वदन्ति। युक्तिसम्भवादिति। यदुक्तं यथा विविक्तं तत्तथा गृह्णीमः कुतो युक्तिसम्भवादिति वा ॥ ८—९ ॥

---

**पौर्वापर्यमतोऽमीषां प्रसंख्यानमभीप्सताम्।**
**यथा विविक्तं यद्वक्त्रं गृह्णीमो युक्तिसम्भवात् ॥ ९ ॥**

### श्रीमच्छ्रीधरस्वामिकृतक्रमसन्दर्भः।

तथैवाह। नैतदिति। मम शक्तयो मायात्मकरूपा एव हेतव इत्यर्थः ॥ ५ ॥

तदेव योजयति। यासामचिन्त्यानां शक्तीनामेव व्यतिकराद्धासङ्क्राद्धेतोः सर्वोऽपि विकल्पो मतभेदो भेदमात्रं वा वदतां वा विषयो भवति स तु विकल्पः शमदमे मन्निष्ठान्तःकरणविहितबाह्येन्द्रियनिग्रहे प्राप्ते सति लीयते अपगच्छति सर्वविषयेभ्योऽश्वरत्वमाग्रहात् ततः स्वत एव तदनुवादः शाम्यतीति ॥ ६ ॥

वक्तुर्यथा विवक्षितं तथा प्रसंख्यानं भवतीति शेषः ॥ ७ ॥

एकस्मिन् तत्त्वे इतराणि तत्त्वानि प्रविष्टानि दृश्यन्ते एकस्मिन् पूर्वस्मिन् परस्मिन् वेत्यन्वयः यथेत्यन्तर्भावमात्रपर्यायेहस्य पूर्वस्मिन् कारणे इत्यादिटीका योज्या ॥ ८—९ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

विवादमभिनयेन दर्शयति। नैतदिति। विवदतां तेषां विवादे तु मच्छक्तयो माया शक्तिवृत्तय एव तत्तत्करूपा अविद्या एवेत्यर्थः यदुक्तं हंसगुह्ये—

यच्छक्तयो वदतां वादिनां वा विवादसम्वादभुवो भवन्ति।
कुर्वन्ति चैषां मुहुरात्ममोहं तस्मै नमोऽनन्तगुणाय भूम्न ॥

इति ॥ ५ ॥

व्यतिकराद्धासङ्क्राद्विकल्पः एवं वा एवं वा एवं नैवमेवं सहस्रविधः विवादास्पदं किञ्च शमश्च दमश्चेति द्वन्द्वैकवत् तस्मिन् प्राप्ते सति शमो मन्निष्ठता बुद्धेर्दम इन्द्रियसंयम इत्युक्तेर्हि वान्मन्निष्ठबुद्धित्वे सति इन्द्रियसंयमे अहङ्कारोपरमे विकल्पोऽप्येति सर्वः संशयो नश्यति तमनु तत्पश्चाद्वादः विवादश्च शाम्यति ॥ ६ ॥

सन्ति सर्वत्रेति यदुक्तं तत्प्रपञ्चयति। परस्परेति द्वाभ्याम् परस्परास्मिन् तत्त्वानामनुप्रवेशात् पौर्वापर्यं भवति मतभेदेषु मध्ये कस्मिंश्चिन्मते कार्यस्य कारणे प्रवेशात् पूर्वत्वं कस्मिंश्चिन्मते कारणस्य कार्ये प्रवेशादपरत्वं ततश्च प्रकृष्टं न्यूनमधिकं वा संख्यानं स्यात् पौर्वापर्यं च प्रसंख्यानं चेति द्वन्द्वैक्यं ननु तत्त्वानां कारणे कार्ये वा किं प्रवेशेन संख्याया न्यूनत्वे प्रकर्षेण आधिक्ये वा किं तत्राह। वक्तुर्वादिनो यथा विवक्षितं वक्तुमभीष्टं तथैव तत्तन्मतं पृथगभूदित्यर्थः ॥ ७ ॥

एतत्श्लोकार्थं विवृणोति। एकस्मिन्नपीति द्वाभ्याम् पूर्वस्मिन् कारणभूते तत्त्वे कार्यतत्त्वानि सूक्ष्मरूपेण प्रविष्टानि मृदि घटवत् अपरस्मिन् कार्यतत्त्वे कारणतत्त्वानि अनुगतत्वेन प्रविष्टानि घटे मृद्वत् ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

स्वस्वपक्षेऽतिदुराग्रहेण विवदताम् मे शक्तयः प्रकृतिमहदाद्याः हेतुः वादे निमित्तम् ॥ ५ ॥

यतो यासां व्यतिकरात् परिणामात् वदतां पक्षमाश्रयः विकल्पः आसीत् दुराग्रहादिसर्वदोषघातिपरतत्त्वनिष्ठा शमः तद्व्यापार्येन्द्रियनिग्रहो दमः शमदमयोर्द्वन्द्वैक्यं तस्मिन् प्राप्ते सति विकल्पोऽप्येति विलीयते तमनु वादः शाम्यति पक्षपाताभावात् ॥ ६ ॥

युक्तयः सन्ति सर्वत्रेति यदुक्तं तत्प्रपञ्चयति। परस्परेति त्रिभिः। हे पुरुषर्षभ! तत्त्वानामन्योऽन्यस्मिन् अनुप्रवेशात् वक्तुर्वादिनो यथा विवक्षितं तथा पौर्वापर्यप्रसंख्यानम् पूर्वाल्पा अपराधिका संख्या तयोर्मध्यस्तत्त्वं तेन गणनं भवति ॥ ७ ॥

परस्परानुप्रवेशं दर्शयति। एकस्मिन्निति। एकस्मिन्नपि पूर्वस्मिन् कारणे तत्त्वे इतराणि कार्यभूतानि यद्वा सर्वाणि तत्त्वानि सूक्ष्मरूपेण प्रविष्टानि अपरस्मिन् कार्यभूते इतराणि कारणतत्त्वानि च दृश्यन्ते ॥ ८ ॥

---

### भाषा टीका

जैसा तुम कहते हो वैसा नहीं है जैसा मैं कहता हूं सोई ठीक है ऐसे विवाद करने वाले पुरुषों के लिये मेरी दुस्तर शक्ति ही हेतु होजाती है ॥ ५ ॥

जिन शक्तियों के संक्षोभ होने से कहने वालों का आश्रय भेद होगया है उनहीं को जब शम दम प्राप्त होजाता है तब वह विकल्प चला जाता है उसी के पीछे विवाद भी शान्त हो जाता है ॥ ६ ॥

हे पुरुषर्षभ! तत्त्वों के परस्पर मे प्रवेश होनेसे थोड़ी बहुत की संख्या होजाती है जैसी वक्ता की इच्छा होवे तैसी संख्या होजाती है ॥ ७ ॥

एकही तत्त्व मेंही औरभी तत्त्व प्रवेश हुए दीखते हैं पूर्व कारण मे अथवा परकार्यमे सब में सब तत्त्व दीखते हैं ॥ ८ ॥

---

### श्रीवरस्वामिकृतभावार्थदीपिका।

अविरोधमुपसंहरति। अतोऽमीषां तत्त्वानां पौर्वापर्यं तत्तत्कारणकार्यत्वं प्रसंख्यानं च न्यूनाधिकमभीप्सतां वादिनां मध्ये यथा विवक्षया यद्वक्त्रं यस्य मुखं प्रवर्तते तत्सर्वं विविक्तं निश्चितं वयं गृह्णीमः उपलभ्यमानेन सर्वत्र युक्तेः सम्भवात् ॥ ९ ॥

सत्त्वं ज्ञानं रजः कर्म तमोऽज्ञानमिहोच्यते।
गुणव्यतिकरः कालः स्वभावः सूत्रमेव च ॥ १३ ॥
पुरुषः प्रकृतिर्व्यक्तमहङ्कारो नभोऽनिलः।
ज्योतिरापः क्षितिरिति तत्त्वान्युक्तानि मे नव ॥ १४ ॥
श्रोत्रं त्वग्दर्शनं घ्राणो जिह्वेति ज्ञानशक्तयः।
वाक्पाण्युपस्थपाय्वङ्घ्रिः कर्माण्यङ्गोभयं मनः ॥ १५ ॥
शब्दः स्पर्शरसौ गन्धो रूपं चेत्यर्थजातयः।
गत्युक्त्युत्सर्गशिल्पानि कर्मायतनसिद्धयः ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अभेदोऽपि कीदृशः अणु अल्पमात्रं चिद्रूपत्वेन शक्तिशक्तिमत्त्वेन वा ऐक्यात् तयोर्भेदेऽपि अल्पमात्र अल्पभेदो वर्त्तते एवेति भावः अनन्ततः परमेश्वरादन्योऽत्यन्तभिन्न एव जीव इति कल्पना अपार्थां कथां तस्यैवमपि ईश्वरप्रसादादाश्रयस्य ज्ञानस्य पृथक्त्वात् पक्षद्वयमपि न घटते अत आह। ज्ञानं चेति। सत्त्वगुणवृत्तित्वात् ज्ञानं प्रकृतावेवान्तर्भूतमित्यर्थः ॥ ११ ॥

ननु ज्ञानं जीवधर्म इति प्रसिद्धं कथं प्रकृतेर्गुण इति ब्रूषे तथा कर्मापि जीवकृतमेव अज्ञानमपि जीवस्यैव न प्रकृतेर्नापीश्वरस्येत्यत एतानि तत्त्वानि जीव एवान्तर्भावनीयान्यन्यथा सर्वमत एव तत्त्वबुद्धिः स्यादत आह। प्रकृतिरिति सार्द्धेन। गुणानां साम्यं हि प्रकृतिस्तत्तद्विशेषरूपा गुणास्तस्या एव तस्मात्मनो जीवस्य स्थित्युत्पत्त्यन्तहेतव इति जीवस्य स्थित्यादिहेतुभूत गुणाश्रयत्वानुपपत्तेरिति भावः। सत्यमेतत् किमायातमत आह सत्त्वमिति। ज्ञानमिति यत्प्रसिद्धं तत् सत्त्वकार्यत्वात् सत्त्वमेव एवं कर्म रज एव अज्ञानन्तु तम एवेत्यतानि प्रकृतेरेव धर्मा उपाध्यधीने जीवे ते एवेत्यत एतानि प्रकृतावेवान्तर्भावाणि ॥ १२ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अतो हेतोः अमीषां तत्त्वानां पौर्वापर्यं न्यूनाधिकसंख्यत्वं यथा तथा प्रवदतां गणनमभीष्टतां वादिनां मध्ये यद्यस्य वक्त्रं वक्त्रोपपत्त्युचित वाक्यं यथा तथा युक्तिसम्भवात् विविक्तं निश्चितं वयं गृह्णीमः ॥ ९ ॥

अथ नानापक्षाणां यत्रान्तर्भावः तं स्वपक्षं दर्शयति। अनादीति। श्रीपत्येव चिदचिद्ब्रह्मभेदात्तत्त्वानि तत्र चेतनं तत्त्वमाह। तमाद्यविद्यया अज्ञस्वरूपया प्रकृत्या युक्तस्य आत्मवेदनं स्वतो न सम्भवति एवं चेतनतत्त्वमुक्त्वा सर्वज्ञं ब्रह्मतत्त्वमाह। अन्यस्तत्त्वज्ञः सम्भवति ज्ञानदो भवेदिति ॥ १० ॥

ननु तयोर्भेदे सति कथं तत्त्वसंख्यायुज्यते इत्यत आह। पुरुष इति। अल्पज्ञत्वेन भिन्नत्वेऽपि पुरुषस्य जीवस्य ईश्वरांशत्वेश्वरानिरपेक्षस्वरूपस्थित्या तदन्यकल्पनापार्थेति तस्य पुरुषस्येश्वरानिरपेक्षस्वरूपस्थित्यादिमत्त्वेनान्यकल्पना तु अपार्था निरर्थिका तस्मात्पुरुषेश्वरयोर्भेदेऽपि तत्त्वसंख्यायां विवादविरोधो नास्ति ज्ञानं च पुरुषेश्वरयोरेव न तत्त्वान्तरम् अचेतनं तत्त्वं प्रतिपादयन् सत्त्वादीनां तत्रैवान्तर्भावमाह। प्रकृतेर्गुणा इत्यादिना गुणाः सत्त्वादिः प्रकृतेरेव ॥ ११

ननु सात्त्विकोऽयं पुरुष इति सत्त्वादेः पुरुषगुणत्वेन प्रतीतिरत आह। प्रकृतिगुणसाम्यामिति ॥ १२ ॥

———

भाषा टीका।

इसी हेतु से जो जैसी संख्या की इच्छा करै तिसको पूर्व तथा परमान के होने से जैसी वक्ता की इच्छा होवे तैसीही संख्या के कहने ऐसी युक्ति से सम्भव होने से हम निश्चय से मानते हैं ॥ ९ ॥

अनादि कालकी कर्म शक्तिमे जीव को यथार्थ ज्ञान स्वयं नहीं होता है और ईश्वर तो ज्ञान के देने वाला तत्त्वज्ञानी है जिससे जीव तथा ईश्वर का नित्यसिद्ध भेदही है ॥ १० ॥

इहांपर जीव तथा ईश्वर दोनों के आकार ज्ञान गुणवाला होनेसे कुछभी जड चेतन सरीकी विलक्षणता नहीं है तिससे इन दोनों की अत्यन्त भेद दृष्टि व्यर्थ है और जो ज्ञान है सो सत्त्वादि वृत्तियुक्त होनेसे प्रकृति के अन्तर्गत होजाताहै ॥ ११ ॥

गुणोंकी साम्या वस्था प्रकृति है और गुण तीनों जो सत्त्वरजः तम उत्पत्ति स्थिति प्रलय के हेतु हैं वेतो प्रकृति के गुण हैं ॥ १२ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

अतः सत्त्वं सत्त्वमयं ज्ञानं प्रकृतेर्गुणः इति पूर्वेणान्वयः ननु तर्हि सत्त्वस्य कर्म ज्ञानं चेतत्त्वान्तरं स्यात् न रजः कर्म राजसं

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यद्वं तत्र जीवस्यानाद्यविद्यायोगहेतुत्वप्रयुक्तः संसारश्च परमात्मनस्तु स्वतः सार्वज्ञ्यं सार्वज्ञ्यानन्दश्च अतीव वैधर्म्यं तयोः स्वरूपाभेदं वारयतीति तौ भिन्नावेव "ज्ञाज्ञौ द्वावजावीशानीशौ" इति श्रुतेरिति भावः ॥ १० ॥

कथं तर्हि पञ्चविंशतितत्त्वसंख्यानपक्षप्रवृत्तिरित्यभिप्रायमाशङ्क्याह । पुरुषेश्वरयोरिति । अत्रैवं वैधर्म्ये सति पुरुषेश्वरयोः स्वगुणैरपि वैलक्षण्यं वैधर्म्यं नास्ति निरवद्यस्य निहितव्यतिरिक्तविषयत्वात्स्वरूपतः स्वगुणतश्च वैलक्षण्यं नास्ति उभयोरपि ज्ञानरूपत्वात् ज्ञानगुणकत्वाच्चेति भावः। कृत्स्नाकृत्स्नाणुत्वविभुत्वादिरूपवैधर्म्येऽपि ज्ञानस्वरूपत्वज्ञानगुणकत्वादिसाधर्म्यान्मुक्त्यवस्थायां परमसाम्यापत्त्या जीवस्य परमात्मांशत्वेन तदपृथक्सिद्धत्वविवक्षया च जीवपरयोरेकत्वविवक्षया पञ्चविंशतितत्त्वसंख्यानपक्षप्रवृत्तिरिति भावः। एवं च षड्विंशतितत्त्वपक्षे तत्त्वकल्पना जीवपरयोरत्यन्तभेदकल्पनारूपा भेदस्य कल्पना यद्वा स्वनिष्ठभेदकल्पनाऽऽधायांशत्वेन स्वनिष्ठात्मभेदो नास्तीत्यर्थः। न वैलक्षण्यमणुमपीति निषेध्यः स्वनिष्ठात्मभेद एवेति भावः। जीवस्य स्वात्मन्यप्रहणाहेतुर्ज्ञानं च प्रकृतेः सम्बन्धौपाधिकमतस्तन्निवृत्त्या तज्ज्ञानं निवर्तत इत्यभिप्रायेणाह । अज्ञानं च प्रकृतेर्गुणाः प्रकृतेः कार्यभूतमित्यर्थः ज्ञानं चेति छेदे भ्रान्तिज्ञानमित्यर्थः परमात्मप्रसादात्प्रकृतिकार्याज्ञाननिवृत्तौ मुक्त्यवस्थायामज्ञत्वसर्वज्ञत्वरूपवैलक्षण्याभावाज्ज्ञानस्वरूपस्वभावत्वरूपसाम्याज्जीवपरयोरेकतत्त्वतेति पञ्चविंशतितत्त्ववादाभिप्राय इति भावः ॥ ११ ॥

नन्वेवमपि सत्त्वादिगुणकृतवैलक्षण्यमस्त्येवेत्यत आह । प्रकृतिरिति । गुणसाम्यावस्थमचिद्द्रव्यमेव प्रकृतिरतः सत्त्वादयो जगत्स्थित्यादिहेतवः प्रकृतेरेव गुणाः नत्वात्मनः सत्त्वादीनां प्रकृतिगुणत्वकथनेन तेषां तदन्तर्भावात्त पञ्चविंशतितत्त्ववादे तैः सहाधिकतत्त्वप्रसङ्ग इति द्योतितम् ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तैर्युक्तिभिरप्यनाद्यविद्यायुक्तादस्वतन्त्राज्जीवात्सर्वथान्यः परमेश्वरः स्वीकर्तव्य इति भावेनाह । अनादीति । अनादिकालमारभ्याविद्याकामकर्मयुक्तपुरुषस्य पुराणि शरीराणि स्वतो जीवस्यात्मवेदनं स्वस्वरूपाविर्भावलक्षणं ज्ञानं तथात्मनः परमात्मनोऽपरोक्षलक्षणं ज्ञानं च स्वतः स्वशक्त्या न सम्भवेत् तत्कर्तुरीश्वरस्य तस्मात्पुरुषः । पुंसांपङ्क्त्याऽभिन्नास्ततो जीवादन्यो भवेदित्यङ्गीकर्तव्यम् ॥ १० ॥

अत्रेदमप्यनुसन्धेयमित्याह । पुरुषेति । इदि स्थित्वा जीवानां ज्ञानोत्पादनात्पुरुषनाम्नो यद्विः स्थित्वा ज्ञानफलमुक्तिदानादीश्वरनाम्नश्चापरवापि वैलक्षण्यं न दृष्टव्यं भेददर्शनेऽनर्थमाह । तदस्येति । तयोः पुरुषेश्वरयोः अन्यत्वकल्पनाभेदस्त्विलक्षणा अपार्था तत्स्वरूपावगमनप्रयोजनानर्थकारिणी इत्यर्थः । ज्ञानात्मनो जीवस्य ज्ञानोत्पादनं कथं घटत इति तत्राह ज्ञानञ्चेति । प्रकृतेर्गुणाः सत्त्वगुणाश्रयम्—

स्वरूपभूतं ज्ञानं तु सदा जीवस्य विष्णुना ।
नियतं प्राकृतं ज्ञानं भक्त्या तेनैव दीयते ॥

इतिवचनात् ॥ ११ ॥

अन्यज्ञानस्य प्राकृतत्वं साधयति । प्रकृतेरिति । तुशब्दो विशेषद्योतकः प्रकृतेर्गुणसाम्ये प्रलये वर्तमानस्य आत्मनो जीवस्य यथासत्त्वं रजस्तम इति प्रकृतेर्गुणा आवरका न भवन्ति ईश्वरेच्छानियतप्रवृत्तिगुणत्वात् तथा स्वरूपज्ञानादिगुणा अपि भवन्ति तथा सृष्टिकाले जीवस्वरूपं तैर्गुणैरावृतं भवति गुणानां वीर्यमाह । स्थितीति ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आत्मवेदनमपि न सम्भवति कुतः परमात्मवेदनमित्यर्थः ततश्चानिर्मोक्षप्रसङ्गादीश्वराख्यपरमात्मपर्यन्तज्ञानाय जीवाख्यपुरुषादन्यस्तत्त्वज्ञो ज्ञानदो भवेत् सम्भाव्यते स तु स्वयं प्रकाशज्ञान ईश्वर इति भावः ॥ १० ॥

अन्ये तु पूर्वोक्तवैशिष्ट्यमबुद्ध्वा किन्तु चिन्मात्ररूपत्वेनावैशिष्ट्यं बुद्ध्वैव वदन्तीत्याह । पुरुषेति । तर्हि तन्मते पुरुषस्य ज्ञानं कुतः स्यात् तत्र चैवं वदन्तीत्याह । ज्ञानं च तत्प्रकृतेरेव गुणाः ततश्च तद्गुणगणप्रवाहेषु भ्रमतस्तस्य कदाचित्तत्सम्बन्धः स्यात् नदीप्रवाहे भ्रमतस्तारककाष्ठादिनेवेति भावः ॥ ११ ॥

तर्हि भगवन्मताद्यविंशतिपक्षो ऽबाधकः षड्विंशतिपक्षः कथं सिध्यतीत्याशङ्क्य तन्निरसनम् पुनः पूर्वमतं स्थापयति । प्रकृतिरिति सार्द्धेन । गुणानां सत्त्वादीनां साम्यमेव प्रकृतिः प्रकृतेर्गुणाः तत्स्वात्मनो न सम्भवन्तीति ये प्रकृतेर्गुणाः सत्त्वादयस्ते आत्मनः पुरुषस्य ये गुणा ज्ञानानन्दादयस्ते प्रकृतेर्नेति किमुतेश्वरगुणानां वार्तेत्यर्थः प्रकृतेर्गुणाश्च केवलं प्रपञ्चस्थित्यादिहेतव इत्याह तत्रैव सत्त्वं रज इत्यर्धेन अन्त्यशब्देनात्यन्तिकप्रलयरूपो मोक्षोऽपि गृह्यते तमः कारणत्वैव प्रलयस्य क्रमप्राप्तत्वात् मोक्षस्य ज्ञानहेतुकत्वात् ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अतोऽमीषां तत्त्वानां पौर्वापर्यं तत्तत्कारणकार्यगतत्वं प्रसंख्यानं न्यूनमधिकं वाभीप्सतां वादिनां मध्ये यथा यथा विवक्षया यद्वाक्यं यस्य मुखं प्रवर्तते तस्मै तद्वयं विविक्तं सविवेकं गृह्णीमः उक्तन्यायेन सर्वत्र युक्तेः सम्भवात् ॥ ९ ॥

ननु प्राकृतानां तत्त्वानामुक्तन्यायेनानुप्रवेशात् संख्याभेदो भवतु जीवेश्वरयोस्तु कथं भेदविवक्षा यया षड्विंशतिपक्षः प्रवृत्तस्तत्राह । अनादीति । अनाद्यविद्यया अयुक्तस्य युक्तस्य वा पुरुषस्य जीवस्य आत्मवेदनमपि स्वप्रयत्नेन प्रथमा आत्मवेदनस्य स्वतः स्वेन न सम्भवात्तेनोः स्वतः सर्वज्ञः । परमेश्वरोऽन्यो भवेदित्यद्वैतवादिनां मतम् ॥ १० ॥

कथं तर्हि पञ्चविंशतिपक्षस्तत्राह । पुरुषेश्वरयोर्जीवात्मपरमात्मनोः अत्र वस्तुतश्चिद्रूपे भेदे वर्तमानेऽपि न वैलक्षण्यमपि

सत्त्वं ज्ञानं रजः कर्म तमोऽज्ञानमिहोच्यते ।
गुणव्यतिकरः कालः स्वभावः सूत्रमेव च ॥ १३ ॥
पुरुषः प्रकृतिर्व्यक्तमहङ्कारो नभोऽनिलः ।
ज्योतिरापः क्षितिरिति तत्त्वान्युक्तानि मे नव ॥ १४ ॥
श्रोत्रं त्वग्दर्शनं घ्राणो जिह्वेति ज्ञानशक्तयः ।
वाक्पाण्युपस्थपाय्वङ्घ्रिः कर्माण्यङ्गोभयं मनः ॥ १५ ॥
शब्दः स्पर्शरसौ गन्धो रूपं चेत्यर्थजातयः ।
गत्युक्त्युत्सर्गशिल्पानि कर्मायतनसिद्धयः ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अभेदोऽपि कीदृशः अणु अल्पमात्रं चिद्रूपत्वेन शक्तिशक्तिमत्त्वेन वा ऐक्यात् तयोर्भेदेऽपि अल्पमात्रं अल्पभेदो वर्त्तत एवेति भावः अत एतत् परमेश्वराद्वन्योऽस्य तभिन्न एव जीव इति कल्पना अपार्था व्यर्था तस्यैवमपि ईश्वरप्रसादाश्रयस्य ज्ञानस्य पृथक्त्वात् पक्षद्वयमपि न घटते अत आह । ज्ञानं चेति । सत्त्वगुणवृत्तित्वात् ज्ञानं प्रकृतावेवान्तर्भूतमित्यर्थः ॥ ११ ॥

ननु ज्ञानं जीवधर्मं इति प्रसिद्धं कथं प्रकृतेर्गुण इति ब्रूषे तथा कर्मापि जीवकृतमेव अज्ञानमपि जीवस्यैव न प्रकृतेर्नापीश्वरस्यैवेत्यत एतानि तत्त्वानि जीव एवान्तर्भावनीयानीत्यन्यथा सर्वमत एव तत्त्वबुद्धिः स्यादत आह । प्रकृतिरिति सार्द्धेन । गुणानां साम्यं हि प्रकृतिस्तत्तद्विशेषरूपा गुणास्तस्या एव तस्मात्तनो जीवस्य स्थित्युत्पत्त्यन्तहेतव इति जीवस्य स्थित्यादिहेतुभूत गुणाश्रयत्वानुपपत्तेरिति भावः । सत्यमेतत् किमायातमत आह सत्त्वमिति । ज्ञानमिति यत्प्रसिद्धं तत् सत्त्वकार्यत्वात् सत्त्वमेव एवं कर्म रज एव अज्ञानन्तु तम एवेत्येतानि प्रकृतेरेव धर्मा उपाध्यधीने जीवे ते एवेत्यत एतानि प्रकृतावेवान्तर्भाव्याणि ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अतो हेतोः अमीषां तत्त्वानां पौर्वापर्यं न्यूनाधिकसंख्यत्वं यथा तथा प्रवक्तृणां गणानमभीप्सितं वादिनां मध्ये यद्यस्य वक्तुं वक्त्रोपपादितं वाक्यं यथा तथा युक्तिसम्भवात् विविक्तं निश्चितं वयं गृह्णीमः ॥ ९ ॥

अथ नानापक्षाणां यत्रान्तर्भावः तं स्वपक्षं दर्शयति । अनादीति । जीवयोर्व चिदचिद्ब्रह्मभेदात्तत्त्वानि तत्र चेतनं तत्त्वमाह । तनाद्यविद्यया जडस्वरूपया प्रकृत्या युक्तस्य आत्मवेदनं स्वतो न सम्भवति एवं चेतनतत्त्वमुक्त्वा सर्वज्ञं ब्रह्मतत्त्वमाह । अन्यस्तत्त्वज्ञः सम्भवति ज्ञानदो भवेदिति ॥ १० ॥

ननु तयोर्भेदे सति कथं तत्त्वमसीत्युच्यते इत्यत आह । तस्य इति । अल्पज्ञत्वेन भिन्नत्वेऽपि पुरुषस्य जीवस्य ईश्वरांशत्वेनेश्वरनिरपेक्षस्वरूपस्थित्यादिमत्त्वेनात्मकल्पना तु अपार्था निरर्थिका तस्मात्पुरुषेश्वरयोर्भेदेऽपि तत्त्वमस्यादिवाक्यविरोधो नास्ति ज्ञानं च पुरुषेश्वरयोरेव न तत्त्वान्तरम् अचेतनं तत्त्वं प्रतिपाद्यम् सत्त्वादीनां तत्रैवान्तर्भावमाह । प्रकृतेर्गुण इत्यादिना गुणाः सत्त्वादिः प्रकृतेरेव ॥ ११

ननु सांख्यकोऽयं पुरुष इति सत्त्वादेः पुरुषगुणत्वेन प्रतीतिरत आह । प्रकृतिर्गुणसाम्यमिति ॥ १२ ॥

---

भाषा टीका ।

इसी हेतु से जो जैसी संख्या की इच्छा करे तिसको पूर्व तथा परमान के होने से जैसी वक्ता की इच्छा होवे तैसीही संख्या के कहने ऐसी युक्ति से सम्भव होने से हम निश्चय से मानते हैं ॥ ९ ॥

अनादि कालकी कर्म शक्तिसे जीव को यथार्थ ज्ञान स्वयं नहीं होता है और ईश्वर तो ज्ञान के देने वाला तत्त्वज्ञानी है जिससे जीव तथा ईश्वर का नित्यसिद्ध भेदही है ॥ १० ॥

इहांपर जीव तथा ईश्वर दोनों के आकार ज्ञान गुणवाला होनेसे कुछभी जड चेतन सरीकी विलक्षणता नहीं है जिस से इन दोनों की अत्यन्त भेद दृष्टि व्यर्थ है और जो ज्ञान है सो सत्त्वादि वृत्तियुक्त होनेसे प्रकृति के अन्तर्गत होजाता है ॥ ११ ॥

गुणोंकी साम्य अवस्था प्रकृति है और गुण तीनों जो सत्त्वरजः तम उत्पत्ति स्थिति प्रलय के हेतु हैं येतो प्रकृति के गुण हैं ॥ १२ ॥

---

श्रीवल्लभाचार्यकृतभावार्थदीपिका ।

अतः सत्त्वं सत्त्वमयं ज्ञानं प्रकृतेर्गुणः इति पूर्वेणैवान्वयः ननु तादृशं कर्म ज्ञानं चतत्त्वान्तरं स्यात् न रजः कर्म रजसो

### श्रीधरस्वामिकृतभावार्थदीपिका ।

वृत्तिः महान् च तमसः अतः कर्माज्ञानयोरजस्तमोद्वारा प्रकृता-वेवान्तर्भाव इति भावः । तथापि कालस्वभावयोस्तत्त्वान्तरता स्यात् न गुणव्यतिकर इति गुणानां व्यतिकरो यस्मात्स ईश्वर एव कालो नाम स्वभावो नाम सूत्रं महत्तत्त्वमेव तस्य सर्वशक्तिमत्त्वात् तदेवं ज्ञानादीनां यथायथमन्तर्भावान्न पञ्चपक्षेऽपि तत्त्ववृद्धिरेवं पक्षान्तरेष्वपि ज्ञेयम् ॥ १३ ॥

स्वमते तु गुणानामागमापायित्वात्प्रकृतेर्भेदाभिव्यक्तितोऽतो गुणास्त्रीणि तत्त्वान्यपराणि पञ्चविंशतितत्त्वानि पूर्वोक्तपञ्चकस्यासाधारणानि दर्शयति । पुरुष इति सार्धद्वाभ्याम् । व्यक्तं महत्तत्त्वम् नभआदीनि पञ्च तन्मात्राणि मे मया ॥ १४ ॥

एकादश दर्शयति । श्रोत्रमिति । दर्शनं चक्षुः ज्ञानशक्तयो ज्ञानेन्द्रियाणि पञ्च वागादिपायवन्तानि द्वन्द्वैकवत्त्वेनोक्तानि चत्वार्यङ्घ्रिश्चेति कर्माणि कर्मेन्द्रियाणि पञ्च उभयात्मकं मनः उभयेन्द्रियसाधारणमित्यर्थः । अङ्ग हे उद्धव । एवमेतान्येकादश ॥ १५ ॥

पञ्च दर्शयति । शब्द इति । शब्दादीनि विषयतया परिणतानि पञ्च महाभूतानि ननु गत्यादिभिस्तत्त्वाधिक्यं पक्षत्रयेऽपि स्यादित्याह । गतीति । गतिश्च उक्तिश्च उत्सर्गो च शिल्पं च तानि कर्मायतनानां कर्मेन्द्रियाणां सिद्धयः फलानि न तत्त्वान्तराणीत्यर्थः ॥ १६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी

अतः गुणानां प्रकृतिधर्मत्वात् तत्रैव ज्ञानादीनाम् अतः कर्मज्ञानयोरजस्तमोवृत्तित्वात् सूत्रं क्रियाशक्त्यात्मकमुक्तप्राणाख्यं तच्च महत्तत्त्वस्य यथार्थं पूर्वोक्तप्रकारेण पक्षद्वये पञ्चविंशतिषड्विंशतिपक्षद्वये एतच्च ज्ञानादीनामन्तर्भावनम् ॥ १३ ॥

महत्तत्त्वं ज्ञानशक्त्यात्मकम् ॥ १४ ॥

उभयात्मकं ज्ञानकर्मात्मकम् ॥ १५ ॥

अर्थजातयो विषयप्रभेदाः फलानि कार्याणि ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रकृतिगुणमत्त्वादेरव्यक्तत्वात् वक्ष्यन् प्रथमं साकल्येन तत्त्वान्याह । गुणव्यत्यय इति । गुणव्यत्ययजनकः सर्वपदार्थानां कालसम्बन्धस्य नियतत्वात् स्थितिहेतुत्वात् कालस्य स्वभावसूत्रशब्दवाच्यत्वम् ॥ १३ ॥

पुरुषो जीवः व्यक्तं महान् ॥ १४ ॥

ज्ञानशक्तयः ज्ञानजननशक्तानि ज्ञानेन्द्रियाणीत्यर्थः कर्माणि कर्मेन्द्रियाणि ॥ १५ ॥

कर्मायतनसिद्धयः कर्मायतनफलानि न तत्त्वान्तराणीत्यर्थः ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

के पुनः सत्त्वादिगुणा इत्यतस्तान् कार्यमुखेन वदति सत्त्वमिति ज्ञानजनकत्वं सत्त्वमित्यर्थः एवं रजः कर्म तमोऽज्ञानमित्यत्रापि द्रष्टव्यम् अज्ञानमित्यत्र ज्ञानं चात्र यथावस्थिततत्त्ववस्तुज्ञानं तद्विपरीतमज्ञानम् अथ न्यूनसंख्यावादे तत्त्वानां परस्परान्तर्भाववदुपसाकल्येन तत्त्वान्याह । गुणव्यतिकर इति । गुणव्यत्ययजनकः कालः स एव स्वभावः सूत्रमिति चोच्यते सर्वपदार्थानां कालसम्बन्धस्य नियतत्वात्स्थितिहेतुत्वाच्च कालस्य स्वभावसूत्रशब्दवाच्यत्वं सप्तविंशमथापरं इति श्रुत्यनुरोधात्कालेन सह सप्तविंशतितत्त्वानीति भावः ॥ १३ ॥

पुरुषो जीवः तस्य स्वरूपाद्भेदः पूर्वमेव प्रतिपादित इति स्वरूपापि तत्त्वान्तरत्वमुक्तप्रायमेव प्रकृतिर्गुणसाम्यावस्थमचिद्द्रव्यं व्यक्तं महान् पुरुषादीनि नव तत्त्वानि मे मयोक्तानीति साकल्येन तत्त्वप्रसंख्यानप्रसङ्गात्तत्त्वप्रसंख्यानपरत्वमुक्तः अस्मिन् पक्षे पुरुष इति जात्यभिप्रायमेकवचनं पुरुषादिशब्दैर्जीवादिशरीरकः परमात्मा च विवक्षितः प्राकृताधिकरणन्यायेन सर्वबुद्धिशब्दानां परात्मपर्यन्तत्वात् अहङ्कारे तत्कार्याणामिन्द्रियाणामन्तर्भावः आकाशादिषु शब्दादीनाम् एवं तत्त्वानां नवत्वमवगन्तव्यम् ॥ १४ ॥

श्रोत्रमिति । दृश्यते अनेनेति दर्शनं चक्षुः श्रोत्रादयः पञ्च ज्ञानशक्तयः ज्ञानशक्तानि ज्ञानकरणानि ज्ञानेन्द्रियाणीति यावत् वागादिपायवन्तानि द्वन्द्वैकवत्त्वेनोक्तानि चत्वार्यङ्घ्रिश्चेति पञ्च कर्माणि कर्मेन्द्रियाणि उभयं ज्ञानकर्मेन्द्रियानुग्राहकं मनः अङ्ग हे उद्धव ॥ १५ ॥

शब्दादयः पञ्चार्थजातयः श्रोत्रादीनां विषयजातयः शब्दादीनामवान्तरभेदेन बहुविधत्वात्सर्वेषां संग्रहाय जातिपदं प्रयुक्तम् क्रमस्त्वत्र न विवक्षितः दर्शनस्य रूपं विषयः घ्राणस्य गन्धः जिह्वाया रस इति विभागः गत्यादीनि कर्मायतनसिद्धयः कर्मायतनानां कर्मेन्द्रियाणां सिद्धयः कार्यभूतानि तत्रोत्सर्गशब्देन मूत्ररेतसोरुत्सर्गः पुरीषस्य च विवक्षितः तत्राद्य उपस्थस्य द्वितीयस्तु पायोः सिद्धिरिति विभागः । अत्रापि न क्रमो विवक्षितः तेन गतिरङ्घ्रेः सार्धः उक्तिर्वाचः पाण्योः शिल्पमुत्सर्गः पायूपस्थयोरिति विभागः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

क्रमागतमनेन प्रकृत इत्यत्राह । सत्त्वमिति । इह सृष्टिकाले सत्त्वं ज्ञानं सत्त्वगुणजन्यं रजोगुणजन्यं कर्म तमोगुणजन्यमज्ञानमित्युच्यते प्रलयकालात् सृष्टिकालेऽयं विशेष इति वाह्यज्ञानं प्राकृतमिति सिद्धं यद्वा प्रलये तु सृष्टावपि प्रकृतेर्गुणा आत्मनः परमात्मनो न विशेषापादकाः किन्तु जीवस्यैव कथमत्राह । सत्त्वमिति । सत्त्वादयो जीवस्य बाह्यज्ञानादिविशेषजनका इति—

अ[1]न्तस्थः पुरुषो नाम ज्ञानदः सर्वदेहिनाम् ।

---

१ पुरुषेश्वरयोरिति श्लोकार्थे विहायलोकतन्त्वान प्रमाणमन्तः स्थेति ।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सर्गादाविति द्वयेन सर्वेषां विवक्षितमुक्तम् ॥ १७—२० ॥

चत्वार्येवेति । जन्मनं तत्रापि पक्षे आत्मनः सकाशात्तेजो- ऽन्नानि जातानि पुनस्तैश्चतुर्भिरवयविनः कार्यस्य जन्मेत्यत इदं जगज्जातमित्यर्थः । अत्राकाश इन्द्रियागोचरत्वान्न मतः वायु- स्तेजसः सूक्ष्मावस्थैवेति भावः २१—२७ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यद्विचक्षणा गायन्तीति यत्पृष्टं तत्स्वमततात्पर्यं दर्शयति। सर्गादाविति । कार्याणि षोडश विकाराः कारणानि महदादीनि सप्त तद्रूपिणी सती प्रकृतिरेव सर्गादौ गुणैः सत्त्वरजस्तमोभि- र्धत्ते उपादानकारणत्वात् पुरुषस्त्वध्यक्षः अपरिणामी निमित्त- भूतः केवलमीक्षते अतः परिणामिन्याः प्रकृतेः पुरुषो भिन्न इति ॥ १७ ॥

महत्तत्त्वादिभिरारब्धत्वादण्डस्य महत्तत्त्वादिष्वेवान्तर्भावमभि- प्रेत्याह । व्यक्तादय इति । प्रकृतेर्बलात् तामेवाश्रित्येत्यर्थः ॥ १८ ॥

सप्तैव धातवः तत्त्वनीति मते जानातीति ज्ञानं जीवः उभयोर्जी- वज्ञाधोरा धार आश्रय इति सप्त तत्र प्रकृत्यादीनां कारणत्वेन चादिष्वन्तर्भावः उत्तरेषामन्तर्भावार्थमाह । ततस्तेऽस्य ॥ १९ ॥

षडिति मतेऽपि भूतानि पञ्चेति तेष्वेवान्येषां तत्त्वानामन्तर्भावः परः पुमान् इति तस्मिन् जीवस्य ॥ २० ॥

अन्नं पृथ्वी आत्मनः परमात्मनः सकाशात् अवयविनः कार्यस्य जन्म जातमभूत् ॥ २१ ॥

भूतानि च पञ्च मात्राणि च पञ्च इन्द्रियाणि च पञ्च एकेन मनसा सह आत्मा सप्तदशः ॥ २२ ॥

आत्मा जीव एव संकल्पयन्मन उच्यते त्रयोदशे भूतानि तन्मात्रैरेकीकृतानि पञ्चैव इन्द्रियाणि च पञ्चेति दश एकं मनः जीवः परमात्मेति त्रयोदश ॥ २३ ॥ २४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यद्विचक्षणा गायन्तीति यत् पृष्टं तत्र कारणं तु ध्येयमिति श्रुतेः जगत्कारणे भक्त्युत्पादनार्थं एव तत्त्वेभ्यो विश्वोत्पत्त्यादि जीवानुग्रहार्थं भगवान् करोति बोधोत्पत्तये स्वस्वमतानुसा- रेण तत्त्वानि प्रतिपादयन्तीत्याशयेनोत्तरमाह । सर्गादाविति द्वाभ्याम् । पुरुषः चेतनाचेतनशक्तिमान् अव्यक्तः अनभिव्यक्त- शक्तिः अस्य चेतनाचेतनात्मकस्य विश्वस्य सर्गादौ सृष्टेः प्राक् "तदैक्षत बहु स्यां प्रजायेय„ इतीक्षते तदा तच्छक्तिरूपाहित- शब्दादिभिः विश्वस्य जीवगर्भा कार्यकारणरूपिणी सृष्टिसंहा- रयोः कार्यकारणरूपाभ्यां स्थातुं योग्या प्रकृतिः गुणैः महदा- दिकार्यरूपाणि धत्ते ॥—१७ ॥

एते महदादयः प्रकृतेः विकुर्वाणाः प्रकृतेरुत्पन्नाः धातवो विश्व- मूलभूताः संहता अपि स्वतः अकिञ्चित्कराः पुरुषेक्षया तु लब्धवीर्याः सन्तः बलात् गुपुरुषबलादण्डं सृजन्ति ॥ १८ ॥

सप्तैव धातवः सर्वविश्वमूलभूतानि तत्त्वानि एवकारोऽन्य- योगव्यवच्छेदपरः प्रकृत्यादीनां तत्त्वानां कारणतया स्वादिष्वेवा- न्तर्भावादिन्द्रियादीनां अकारणभूतेऽहङ्कारेऽन्तर्भावाच्च सप्ततत्त्व- सिद्धिं द्योतयन्ति के ते धातव इत्यपेक्षायामाह । तत्रेति । अर्थात् स्वोक्ताः पदार्थाः ज्ञानं भोक्ता जीवः उभयोर्भोक्तृभोग्ययोराधारः आश्रयः परमात्मा खानि ततस्तेभ्यो देहेन्द्रियासवः देहाद्युपलक्षितं सर्वं विश्वजातमित्यर्थः ॥ १९ ॥

षडित्यत्र षट् तत्त्वपक्षेऽपि भूतानि खादीनि पञ्च अंशस्य ज्ञानस्यांशिन्यन्तर्भावात् परः परश्चेति तैर्भूतैः इदं विश्वं सृष्ट्वा नियन्तृतया समुपाविशत् ॥ २० ॥

स्वावाय्वोरपि कारणतया तेजस्यन्तर्भावाच्चतुस्तत्त्वपक्षप्रवृत्तिरि- त्याह । चत्वारीति । आत्मनः परमेश्वरात्तेजआदीनि जातानि अन्नं पृथ्वी चतुर्थः आत्मा परमेश्वरः एवं चत्वारि तत्त्वानि तैस्तत्त्वैः इदं विश्वं जातम् अस्मिन् पक्षेऽपि इत्थं अवयविनः विश्वस्य जन्म ॥ २१ ॥

सप्तदशतत्त्वपक्षमाह । संख्याने इति । भूतानि च मात्राणि च एकेन मनसा सह षोडश आत्मा सप्तदशः ॥ २२ ॥

आत्मनि सर्वकारणे मनसोऽन्तर्भावे सति षोडशत्वपक्षसि- द्धिरित्याह । तद्वदिति । त्रयोदशतत्त्वपक्षं दर्शयति । भूतानि पञ्च ज्ञानेन्द्रियाणि पञ्च मनश्च आत्मा परमेश्वरो जीवश्चेति ॥२३॥

एकादशतत्त्वपक्षं दर्शयति । आत्मा महाभूतानि ज्ञानेन्द्रियाणि च इत्थमेकादशत्वम् नवतत्त्वपक्षं दर्शयति । प्रकृतिमहदहङ्काराः त्रीणि तत्त्वानि पञ्च तन्मात्राणि परमेश्वरश्चेति ॥ २४ ॥

———

भाषा टीका ।

सृष्टि के आदि में महदादि कारण रूपवाली भूतादि षोडश विकार वाली प्रकृति सत्त्वादि गुणों से सृष्टि करने के लायक होती है पुरुष केवल ज्ञान से इच्छा मात्र कर ता है ॥ १७ ॥

उस पुरुष के इच्छा से महदादिक धातु विकार को प्राप्त होकर पराक्रमी होकर प्रकृति के बल से ब्रह्मांड को पैदा करते हैं ॥ १८ ॥

महदादिक सातही धातु हैं आकाशादि पांच अर्थ ज्ञान जीव तथा आत्मा आधार तैसे देह इन्द्रिय प्राण ये उनसे होते हैं ॥ १९ ॥

छै तत्वों के पक्षमे भी पांच भूत छठवां, आत्मा है उन पांच भूतों से युक्त परमात्मा इस जगत् को बनाकर इसके भीतर में प्रविष्ट होगया है ॥ २० ॥

चार तत्वों के पक्ष मेंभी अग्नि जल पृथिवी ये तीनों आत्मा से पैदा भये फिर यह सब जगत् भया जिस से यह सब कार्य के अवयवी से भये ॥ २१ ॥

सतरा की संख्या में पञ्चभूत पांच तन्मात्र पांच इन्द्रिय एक मन एक आत्मा एसे सतरह होगये ॥ २२ ॥

तैसेही सोलहकी संख्या मे आत्मा हीको मन मान लिया तो सोलह भये पांच भूत इन्द्रिय मन आत्मा परमात्मा इस प्रकार से तेरा तत्व भये ॥ २३ ॥

इति नाना प्रसंख्यानं तत्त्वानामृषिभिः कृतम् ।
सर्वं न्याय्यं युक्तिमत्त्वाद्विदुषां किमशोभनम् ॥ २५ ॥

उद्धव उवाच ॥

प्रकृतिः पुरुषश्चोभौ यद्यप्यात्मविलक्षणौ ।
अन्योऽन्यापाश्रयात्कृष्ण ! दृश्यते न भिदा तयोः ॥
प्रकृतौ लक्ष्यते ह्यात्मा प्रकृतिश्च तथाऽऽत्मनि ॥ २६ ॥
एवं मे पुण्डरीकाक्ष ! महान्तं संशयं हृदि ।
छेत्तुमर्हसि सर्वज्ञ ! वचोभिर्नयनैपुणैः[1] ॥ २७ ॥
त्वत्तो ज्ञानं हि जीवानां प्रमोषस्तेऽत्र शक्तितः[2] ।
त्वमेव ह्यात्ममायाया गतिं वेत्थ न चापरः ॥ २८ ॥

भाषा टीका ।

पञ्च महाभूत पञ्च इन्द्रिय एक आत्मा ऐसे ग्यारह होगये आठ प्रकृति और पुरुष के मानने से नौ तत्त्व होगये ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

उपसंहरति । इतीति । इति एभिः प्रकारैः प्रकृतिपुरुषभेदज्ञापनायेत्यर्थः ॥ २५ ॥

ननु गुणसाम्यं प्रकृतिस्तत्त्वाः सत्त्वादयो गुणा तत्त्वात्मन इति तयोर्भेदाप्रतीतेः कथं ज्ञातुं शक्यत इत्युद्धवः पृच्छति । प्रकृतिरिति । आत्मना जडाजडस्वभावेन विलक्षणौ अन्योऽन्यापाश्रयात्परस्परपरिहारेणेत्यर्थः । अन्योऽन्यापाश्रयत्वमेवाऽऽह । प्रकृताविति । प्रकृतौ तत्कार्ये देहे प्रकृतिश्चाऽऽत्मनि तेन विना तस्या अप्रतीतेः अहमित्यभेदप्रतीतेर्न देहात्मनो भेदो लक्ष्यत इत्यर्थः ॥ २६ ॥

हृदि वर्तमानं संशयम् नये युक्तौ नैपुणं प्रावीण्यं येषां तैः ॥२७॥

अहमपीत्युक्तं तत्र हेतुमाह । त्वत्त इति । हि यस्मात् त्वत्त एव त्वत्प्रसादादेव अत्र ज्ञाने प्रमोषो भ्रंशश्च ते शक्तितो मायातः ननु स्वप्रकाशस्याऽऽत्मनः कथं ज्ञानप्रमोषः ज्ञानदाने तत्प्रमोषे वा मम किम्प्रयोजनं तत्राऽऽह । त्वमेवेति ॥ २८ ॥

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

प्रकृतिपुरुषेति सर्गादावित्यत्रोक्तमेव तात्पर्यं व्याख्यातम् ॥ २५ ॥

तत्र प्रकृतिपुरुषभेदज्ञापने । परस्परपरिहारेणान्योऽन्यस्यागेन भिन्नतया ज्ञानादित्यर्थः तदेव प्रकृतिपुरुषभेदादर्शनमेव तेन विनेत्यादि यथासंख्यं हेतुद्वयम । तेनात्मना तस्या देहावस्थायाः प्रकृतेः । हेतुद्वयस्याध्याहारादेवेत्यर्थं इत्युक्तम ॥ २६ ॥

युक्तावर्थोपस्थनुमानात्मतमायां प्रावीण्यमबाधितत्वम् ॥ २७॥

तत्र संशयच्छेदसामर्थ्ये स्वप्रकाशस्य विवेकरूपस्यात्मनो जीवस्य । तत्प्रमोषे ज्ञानाभ्रंशे त्वमेवेति । मायादूरीकरणेन ज्ञानदाने तवैव शक्तिमत्त्वात । तत्संमुखादन्यत्रैव मायाया अभिभवसामर्थ्योचेति भावः ॥ २८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आत्मविलक्षणौ विलक्षणात्मानौ विलक्षणस्वरूपौ स्वतो विलक्षणौ इति वा ॥ २६ ॥२७॥

श्रीतृशक्तितः श्रीतृणामस्मरणशक्तितः ॥ २८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थमुपपादितान् पक्षानुपसंहरति । इतीति । इतिशब्दः प्रदर्शनाभिप्रायकः एवं त्रित्वपञ्चत्वेऽप्यवगन्तव्ये इत्यर्थः । तत्र त्रित्वपक्षे प्रकृतिपुरुषेश्वररूपाणि त्रीणि तत्त्वानि पञ्चत्वपक्षे चतुस्तत्त्वपक्षोक्तानि चत्वारि वायुरेक इति पञ्चेत्यूह्यम ऋषिभिः कृतं सर्वं प्रसंख्यानं न्याय्यं न्यायादनपेतं कुतः युक्तिमत्त्वात् अन्तर्भावानन्तर्भावात्मकयुक्तियुक्तत्वात् अतः किं विदुषामशोभनं किं दुर्घटमित्यर्थः न किञ्चिदिति भावः ॥ २५ ॥

कार्त्स्न्येन तत्त्वगणनायां पुरुषः प्रकृतिर्व्यक्तमिति प्रकृतिपुरुषौ पृथक् कीर्तितौ तत्र यद्यपि प्रकृतिपुरुषौ विलक्षणस्वरूपस्वभावौ तथापि देवोऽहं मनुष्योऽहमिति तादात्म्यप्रतीतेः किङ्कारणं यदि तद्दुर्निरूपं तर्हि तयोर्न भेदः प्रतीयत इति भगवन्तं पृच्छति । प्रकृतिः पुरुषश्चोभाविति । आत्मविलक्षणौ विलक्षणात्मानौ विलक्षणस्वरूपौ स्वतो विलक्षणौ इति वा अन्योऽन्यस्य तथापीत्यादिः हे कृष्ण ! अन्योऽन्यापाश्रयात्परस्परपरिहारेणाप्रतीतेरित्यर्थः तयोः प्रकृतिपुरुषयोर्भिदा न दृश्यते॥ २६ ॥

१ छेत्तुमर्हसि पर्यायवचोभिस्तत्त्वनैपुणैः २ प्रमोषस्तुन शक्तितः इति वि०पाठः ३ प्रमोषः श्रोत्रशक्तितः इति शुकप०पाठः

श्रीभगवानुवाच ॥

प्रकृतिः पुरुषश्चेति विकल्पः पुरुषर्षभ !।
एष वैकारिकः सर्गो गुणव्यतिकरात्मकः ॥ २९ ॥
ममाङ्ग ! माया गुणमय्यनेकधा विकल्पबुद्धीश्च गुणैर्विधत्ते ।
वैकारिकस्त्रिविधोऽध्यात्ममेकमथाधिदैवमधिभूतमन्यत् ॥ ३० ॥
दृग्रूपमार्कं वपुरत्ररन्ध्रे परस्परं सिध्यति यः स्वतः खे ।
आत्मा यदेषामपरोऽयमाद्यः स्वयाऽनुभूत्याऽखिलसिद्धसिद्धिः ॥
एवं त्वगादिश्रवणादिचक्षुर्जिह्वादि नासादि च चित्तयुक्तम् ॥ ३१ ॥
योऽसौ गुणक्षोभकृतो विकारः प्रधानमूलान्महतः प्रसूतः ।
अहं त्रिवृन्मोहविकल्पहेतुर्वैकारिकस्तामस ऐन्द्रियश्च ॥ ३२ ॥

भाषा टीका ।

से भिन्न हैं तोभी हे कृष्ण ! इन दोनों का आपस मे आश्रय होने से कोई भेद नहीं दीखता है देह मे आत्मा का भान होता है आत्मा मे देह का भान होता है ॥ २६ ॥

हे पुण्डरीकाक्ष ! हे सर्वज्ञ मेरे हृदय मे वर्तमान इस महा संशय को नीति से निपुण निज वचनों से आप दूर करने को योग्य हो ॥ २७ ॥

आप के ही कटाक्ष से जीवों को ज्ञान होता है आपके ही शक्ति से ज्ञान का नाशभी होता है आपही अपनी माया की गति को जानते हो दूसरा कोई नहीं जानता है ॥ २८॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विकाराविकाराभ्यां नानात्वैकत्वाभ्यां सापेक्षानिरपेक्षत्वाभ्यां प्रकाशाप्रकाशाभ्यां चात्यन्तं भेदं वक्तुमाह । प्रकृतिः पुरुषश्चेति । विकल्पोऽत्यन्तभेद एव कुत इत्यपेक्षायां प्रकृतिशब्दोक्तदेहादिसंघातस्य विकारित्वं तावद्दर्शयति । एष इति सार्धेन । एष सर्गः सृज्यत इति सर्गो देहादिसंघातो वैकारिको विकारवान् अत्र हेतुः गुणव्यतिकरात्मको गुणक्षोभकृतः ॥ २९ ॥

नानात्वमाह । ममेति विकल्पं भेदं तद्बुद्धीश्च अनेकधात्वं प्रपञ्चयति वैकारिकोऽनेकविकारवानपि स्थूलेन मार्गेण तावत्त्रिविधः त्रैविध्यमाह । अध्यात्ममिति एकंरूपम् ॥ ३० ॥

तानि रूपाणि दर्शयति । दृगध्यात्मम् रूपमधिभूतम् अत्र रन्ध्रे चक्षुर्गोलके प्रविष्टः आर्कं वपुरंशोऽधिदैवमिति सापेक्षप्रकाशतामाह । परस्परमिति । चक्षुषा रूपं ज्ञायते तद्व्यथाऽनुपपत्त्या चक्षुः तत्प्रवृत्त्यन्यथाऽनुपपत्त्या तदधिष्ठात्री देवता ततश्च चक्षुषः प्रवृत्तिस्ततो रूपज्ञानमित्येवमेतत्त्रयं परस्परं सिध्यति अत्र रन्ध्रे इति विशेषणं स्वावस्थ्यमाह । दृष्टान्तोपयोगितया यस्तु खे आकाशे अर्को वर्तते मण्डलात्मा स तु स्वतः सिध्यति चक्षुर्विषयत्वेऽपि प्रतियोग्यपेक्षामात्रेण स्वत इत्युक्तम् इदानीमात्मनो विकारित्वाद्यभावेन भेदमाह । यद्यस्मादात्मा एषामर्ध्यात्मादीनामाद्यः कारणमत एकरूपोऽभिन्नश्च तस्मादेतेभ्योऽपरो भिन्नः स्वप्रकाशत्वादपीत्याह । स्वयाऽनुभूत्या स्वतः सिद्धप्रकाशेनाखिलानां सिद्धानां परस्परप्रकाशकानामपि प्रकाशकः सर्वेषामपि सामान्यतोऽस्वप्रकाशविषयत्वात् अत एव स्वप्रकाशत्वं सिद्धम् चक्षुषि दर्शितं त्रैविध्यमिन्द्रियान्तरेष्वप्यतिदिशति । एवमिति । यथा चक्षुरेवं त्वगाद्यपीत्यर्थः । त्वक् स्पर्शो वायुरिति श्रवणं शब्दो दिश इति जिह्वा रसो वरुण इति नासा गन्धोऽश्विनाविति चित्तेन युक्तमन्तःकरणान्तरमपि तत्र चित्तं चेतयितव्यं वासुदेव इति मनो मन्तव्यं चन्द्र इति बुद्धिर्बोद्धव्यं ब्रह्मेति अहङ्कारोऽहङ्कर्तव्यं रुद्र इत्येवं त्रिविधमित्यर्थः ॥३१॥

ननु पुनरपि वैकारिकत्रयमात्रमेवोक्तम् त्रिविधप्रपञ्चस्यैतत्त्रिरूपात्मप्राप्तिस्तु कुतः स्यात् अहंकारनिवृत्त्या तत्कृतः त्रिविधविकल्पनिवृत्त्यैवेत्याशयेनाऽऽह योऽसाविति अहमहंकारः तमेवाऽऽह गुणक्षोभं करोतीति तथा ततः परमेश्वरात्कालाख्या निमित्तात् प्रधानं मूलमुपादानं यस्य तस्मान्महतः प्रसूतो विकारः स त्रिवृत् त्रिविधो मोहमयस्य विकल्पस्य हेतुः त्रिवृत्त्वमेवाह । वैकारिक इति ॥ ३२ ॥

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

प्रकृतेर्विकारत्वम् आत्मनोऽविकारत्वं ताभ्याम् आत्मत्वे नानात्वम् आत्मन एकत्वं ताभ्याम् प्रकृतेः सापेक्षप्रकाशत्वम् आत्मनस्तु निरपेक्षप्रकाशत्वं ताभ्यां च अत्र प्रकृतेर्विकारत्वं ॥ २९ ॥

विधत्ते सृजति । तद्बुद्धीश्च भेदज्ञानानि । वैकारिक इत्यत्र सर्ग इति विशेष्यं पूर्वश्लोकादनुवर्तनीयम् । तदन्यथेति तस्य रूपज्ञानस्य अन्यथा चक्षुर्विनानुपपत्त्यासिद्ध्या अतीन्द्रियमपि चक्षुर्ज्ञायतेऽनुमीयते अयं चक्षुष्मान् रूपज्ञानाद्यस्यैवं तथैवमिति ॥३०॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

तत्प्रवृत्तीति तस्य चक्षुषो रूपदर्शने या प्रवृत्तिस्तस्या अधिष्ठातृदेवतामन्तराऽसिद्धया चक्षुरधिष्ठात्री अर्करूपदेवतानुमीयते इदं चक्षुः साधिष्ठातृकं जडत्वेऽपि प्रकाशमानत्वाद्राज्यादिवत् यद्वैवं तर्केणानुमिनोति । ततो देवतातः तत्चक्षुषः । अत्र रन्ध्रे इति विशेषणात्तु अर्कवपुषो ग्रहणम् । यथा भूतले घटो नास्तीत्यत्र भूतलस्य विशेषणत्वम् अभावस्य विशेष्यत्वं भूतलानुयोगिको घटप्रतियोगिकोऽभाव इति तथा कीदृगर्क वपुः अत्र रन्ध्रे एतद्रन्ध्रधारकमिति । तथा चैतद्विशेषणेन यदुपायस्य भेदं तदाह तत्र हेतुः द्रष्टृत्वस्य या व्याख्यिके उपयोगिता उपकारकत्वं तथा यथाकाशस्थत्वेन चक्षुषोपकारकत्वं किन्तु चक्षुष्यस्यैव तथान्तःकरणावच्छिन्नस्यैव जीवस्य पुण्यपापाद्युपरक्तत्वम् न परमात्मन इति भावः । ननु यदि स्वतः सिध्यति तर्हि तमन्धाः कथं न पश्यन्तीति चेत्तत्राह । चक्षुर्विषयत्वेऽपीति । यथा चक्षुरवच्छिन्नाधिदैवतस्य प्रतियोगिनः सम्बन्धिनश्चक्षुरपेक्षा न तथा तत्तस्य रवेश्चक्षुरपेक्षास्तीत्यनादृतमात्रेण स्वत इत्युक्तं चक्षुर्विषयत्वमस्त्येवेत्यर्थः । अतः सर्वकारणत्वात् एकरूपः विवर्ताधिष्ठानत्वेनाविकृतस्वरूपः कार्यगामित्वञ्च तस्माद्धि कारित्वाभावात् । एतेभ्योऽध्यात्मादिभ्यो भिन्नः आत्मनः स्वप्रकाशत्वात् व्यवहारे परानपेक्षत्वात् अपि आत्मा भिन्न इत्याह । अतएव सर्वप्रकाशकत्वाद्धेतु । तस्य आत्मनः एवमित्युक्तम् । अतिदिशति स्पर्शादिष्वन्यत्र तथेति । त्वगध्यात्मकं स्पर्शोऽधिभूतं वायुरधिदैवम् एवमन्येऽपि ॥ ३१ ॥

वैलक्षण्याणामिति घटकुड्ययोः प्रभातमिति न्यायेन निवृत्त्यात्वमिवोक्तम् स्यादिति पर्यन्तं शङ्कामासः । अहङ्कारस्याधिष्ठानमावान्त्यः । विकल्पस्य भेदस्य ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विकल्पः भेद एवेत्यर्थः । एष सर्गः प्रपञ्चः वैकारिकः विकारारब्धः ॥ २९ ॥ ३० ॥

अध्यात्मादिकं विवृणोति । दृगिति एकश्चक्षुरध्यात्मं रूपमधिभूतं तदुभयगार्कं वपुःअधिदैवमर्कः तत्सम्बन्ध्यार्कं परस्परासिद्ध्वाति परस्परोपकार्योपकारकभावात् कार्यकरं भवति आत्मा तु स्वतः सिध्यति स्वप्रकाशः दृगाद्युपरमेऽपि स्थितः अखिलसिद्धिसिद्धः अखिलप्रकाश्यप्रकाशकः इत्युक्तं परस्परोपकारादिकमिन्द्रियान्तरादिष्वतिदिशति । एवं त्वगादीति । आदिशब्देर्थाधिभूतं विषयः अधिदैवं च विवक्षितम् ॥ ३१ ॥

अहङ्कारस्य देहात्मभ्रमहेतुत्वं वदन् प्रश्नोत्तरं निगमयति योऽसाविति । यः स अहङ्कारः सात्त्विकादिभेदेन त्रिवृत् पञ्चिन्नः राजसः मोहविकल्पहेतुः देहात्माद्याकारारोपहेतुः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

येयं मम सर्वज्ञत्वोपपादनाय दुर्विज्ञेयगतिर्माया त्वयाभिहिता तत्कार्यभूतोऽहङ्कार एव देहात्मभ्रान्तस्वातन्त्र्यप्रतीतिकारणमित्युत्तरमाह । प्रकृतिः पुरुषश्चेति । विकल्पः भेद एवेत्यर्थः । तत्र तावदेव सर्गः सृज्यत इति सर्गः अधिभूताध्यात्माधिदैवरूपः वैकारिकः प्रकृतिविकारात्मकाहङ्कारारब्धः गुणव्यतिकरात्मकः इत्यत्राभिप्रेतमित्यात्मगुणानामिच्छादीनां स्थौल्यादीनां देहगुणानां च व्यतिकर एकधर्मिनिष्ठतया सङ्कीर्णतया च प्रतीतिर्यस्मात्स आत्मा स्वरूपं यस्य तथाभूतः ॥ २९ ॥

न केवलं मदीया माया स्वविकाराहङ्कारद्वारा गुणव्यतिकरकरैवापि त्वात्मनि देहात्मानुरूपत्वस्वातन्त्र्यत्वादिभेदबुद्धिकरी चेत्याह । ममेति । अङ्ग, हे उद्धव ! गुणैः सत्त्वादिभिः कोऽसौ वैकारिक इत्यत आह । वैकारिक इति । अध्यात्ममेकमधिभूतं द्वितीयमधिदैवं तृतीयमित्येवं यस्त्रिविधः स वैकारिक इति सम्बन्धः ॥ ३० ॥

अध्यात्मादिकं विवृणोति । दृगिति । दृक् चक्षुरध्यात्मं रूपमधिभूतम् अर्कमण्डलस्य सम्बन्धी वपुः शरीरं तदधिदैवं राजसाहङ्कारमहत्तत्त्वात्सात्त्विकाहङ्कारादुत्पन्नानामिन्द्रियाणां सृष्टिः रूपादीनां तद्विषयाणामधिष्ठातॄणां देवानां च प्रकरणेषु सृष्टिस्तत्र तत्राभिहितेत्यहङ्कारस्याध्यात्मादिप्रकारता दर्शिता एतेषां त्रयाणां परस्परोपकार्योपकारकभावेनैव ज्ञानजननरूपकार्यकरत्वमित्याह । यत्रेति । यत्र शरीरे रन्ध्रे चक्षुर्गोलके परस्परात्सिध्यति परस्परोपकार्योपकारकभावात् सिध्यति कार्यकरं भवति अर्कवपुषा रश्मिद्वाराधिष्ठितयोरेव चक्षुरिन्द्रियविषययोर्ग्राह्यग्राहकभावः । अतस्तयोरधिदैवोपकार्यत्वम् अतिविप्रकृष्टस्याऽव्यवहितस्य च रूपस्यैव सुग्राह्यत्वात्तदुपकार्यत्वं चक्षुषः एवं त्रयाणामन्यतमं विनान्यतमस्य ज्ञानजनकत्वासम्भवात्परस्परोपकार्योपकारकत्वमवगन्तव्यम् अध्यात्मादिशब्दानां विभक्त्यर्थेऽव्ययीभावानामधिकरणशक्तिप्रधानत्वेऽपि तच्छक्तेराधेयनिरूपत्वादाधेयपरत्वम् इन्द्रियाणां देहेऽवस्थानादध्यात्मत्वं विषयाणां तु रूपादीनां तेजःप्रभृतिभूतनिष्ठत्वादधिभूतत्वम् अधिष्ठातृदेवतावपुषोऽर्कादिवपुषोऽत्र रूपदेवतानिष्ठत्वादधिदैवत्वं यद्यध्यात्मादीनां परस्परादुपादिप्रकाशो भवति कुतस्तर्ह्यात्मप्रकाश इत्यत आह । यः स्वतः स्व इति । हृदयाकाशे य आत्मा "हृद्ययमात्मा प्रतिष्ठित" इति श्रुतेः स स्वतः सिध्यति स्वयं प्रकाशत इत्यर्थः कुतः यद्यस्मादयमात्मा एषां दृगादीनां त्रयाणामाश्रयः प्रकाशकत्वे हेतुतया वर्तमानः दृगाद्युपरमे स्वरूपेणावस्थानात् एतेभ्योऽपरः भिन्नः अत्यन्तविलक्षणः तदेवाह । स्वया स्वाभाविकयानुभूत्या ज्ञानेन अखिलसिद्धिसिद्धिरखिलप्रकाश्यप्रकाशकः एवं चक्षुष्युक्त परस्परोपकार्योपकारकभावमिन्द्रियान्तरेष्वप्यतिदिशति । एवमिति । चक्षुर्वत् परस्परात्सिध्यत्येवं त्वगादिरित्यर्थः । आदिशब्देरधिभूताधिदैवे विवक्षिते तत्र त्वगिन्द्रियस्याधिभूतं स्पर्शोऽधिदैवं वायुः श्रोत्रस्याधिभूतं शब्दोऽधिदैवं दिशः जिह्वाया अधिभूतं रसः प्रचेता अधिदैवं नासाया अधिभूतं गन्धोऽधिदैवमश्विनौ इत्यूह्यं चक्षुरादीनां मनःसहकृतानामेव कार्यकरत्वमित्यभिप्रेत्य निर्दिशति । चित्तयुक्तमिति । तत्र मनसोऽधिभूतमनुध्येयो विषयश्चन्द्रमा अधिदैवम् ॥ ३१ ॥

महत्त्वेन ततः किमित्यतोऽहङ्कारस्य देहात्मतादात्म्यप्रतीतिहेतुत्वं वदन् प्रश्नोत्तरं निगमयति योऽसाविति । योऽसावहमहङ्कारः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

स मोहविकल्पहेतुरिति सम्बन्धः मोहो देहात्मनोरभेदभ्रमः विकल्पः आत्मनि देवत्वमनुष्यत्वादिभेदारोपः तयोर्हेतुः महङ्कारं विशिनष्टि। गुणानां सत्त्वरजस्तमसां क्षोभो वैषम्यं तेन कृतो विकारस्तदात्मकः प्रधानं प्रकृतिर्मूलं कारणं यस्य तस्मात्सकाशात् महतत्त्वात्प्रसूतः वैकारिकस्तामस ऐन्द्रश्चेति त्रिवृत् त्रिप्रकारः वैकारिकः सात्त्विकः ऐन्द्रियस्तैजसः राजसाहङ्कारस्येन्द्रियोत्पत्तावनुग्राहकत्वाभिप्रायेणैन्द्रिय इत्युक्तम् एवं देहात्मनोरभेदप्रतीतौ कारणमुक्तम् ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

आत्मानिवक्षणाविति यदवादुक्तं तत्तथैवेति भावेन परिहरति। प्रकृतिरिति। अथशब्दो वैलक्षण्यानुकर्षार्थोऽवधारणार्थश्च प्रकृतिपुरुषावन्योऽन्यविलक्षणावेवेत्यर्थः वैलक्षण्याविवेकः किंकृत इति तत्राह। विकल्प इति मिथ्याज्ञानकृतः ननु विकल्पः किङ्कारणक इति तत्राह। एष इति। एष विकल्पः तमःकारणक इति प्रतिज्ञायते तथाहि गुणव्यतिकरात्मक एव सर्गो वैकारिकः विकारनिमित्तः स च गुणव्यतिकरस्त्रिविधः सत्त्वरजस्तमसामेकैकप्राधान्येन त्रैविध्यं तत्र तमःप्रधानानामेव सत्त्वानां विरुद्धकल्पनं यस्मात्तस्मात्तम एव कारणम् ॥ २९ ॥

न केवलं तम एव प्रकृतिरीश्वरेच्छा च कारणमित्याह। ममेति। अङ्ग उद्धव! मम माया ममेच्छा गुणमयी ज्ञानादिगुणमयी सत्त्वादिगुणमयी माया मदधीना प्रकृतिश्च गुणैर्गुणभूतैर्महदहङ्कारादिभिः सत्त्वादिगुणैर्वानेकधा विकल्पबुद्धिं विधत्ते करोति महत्तत्त्वविकाराज्जातत्वाद्वैकारिकोऽहङ्कारस्त्रिविधः महत्तत्त्वाद्विकुर्वाणादहं तत्त्वमजायत इत्यादिना प्रसिद्धम्—

> वैकारिको महांश्चैव तथाहङ्कार एव च।
> तथैव सात्त्विकश्चांशो वैकारिक इति त्रिधेति ॥

स सोऽयं त्रिविधोऽपि त्रिविधः अध्यात्मादिभेदेन ॥ ३० ॥

एतत्त्रैविध्यं ग्राह्यग्राहकयैव दर्शयति। दृग्रूपमिति। रन्ध्रे गोलके दृक् चक्षुरिन्द्रियं तदध्यात्ममुपलक्षणमेतत् अध्यात्ममिन्द्रियाणि तैजसाहङ्कारस्वरूपाणि तैरेव विपरीतज्ञानं जायते अहङ्कारे विद्यमाने भ्रमो भवति नान्यदेति वचनात् परत्र देहादिहिर्यद्रूपं तदधिभूतं तामसं परत्र दिवि योऽर्कस्तदधिदैवतं वैकारिकम् अनेन किम्प्रयोजनमत्राह। परस्परमिति। अध्यात्मादिगतचक्षुरादीतरापेक्षया सिध्यति। ज्ञानाख्यं प्रयोजनं भवति असौ सिद्धिः स्वतो न एकैकस्मात् स्यात् चक्षुराद्यन्यतमाभावे ज्ञानं नोदेतीत्यर्थः। नैतावता परस्परसिद्धिः पूर्यत इत्याह। आत्मेति। यदात्मा प्रयत्नो जडाहङ्कारो वाक्य तदा त्रिवृदं वैकारिकं ज्ञानं प्रकृतिप्राकृतव्यतिरिक्तं जीवपरमात्मस्वरूपं कदा नु विशद दृश्यत इत्यत्राह। एषामिति। आत्मेत्यनुवर्तते यदैषां प्रकृतिप्राकृतानाम् उपरमः अत्यन्तोच्छेदलक्षणा, मुक्तिस्तदा स्वयानुभूत्या स्वरूपज्ञानेनात्मा जीव आद्यः आत्मा परमात्मा च ज्ञायत इति शेषः कीदृशो हरिरखिलस्य सिद्धयासिद्धौ ज्ञानाज्ञाने यस्मात्स तथा सर्वस्य ज्ञानाज्ञानहेतुरित्यर्थः—

> सत्यक् कार्ये हरेः आत्मा तन्मुक्तस्य विशेषतः।
> देवतानुग्रहो नित्यो मुक्तस्यापि ह्युपद्यते ॥
> नित्यं तत्प्रतिविम्बत्वाज्जीवानामेव कृत्स्नशः।
> आत्मज्ञानं च मुक्तस्य न जडाहंकृतेः क्वचित् ॥
> किन्तु स्वरूपशक्त्यैव देवेभ्यश्चाभिजायते।

इतिवचनात्तदुक्तत्वावर्मानिर्दिशतिएवमिति। चक्षुर्जिह्वादिना सदृत्वगादिश्रवणादिचैनमध्यात्मादिभेदेन त्रिविध त्वादिचानिक्षमन्योऽन्यापेक्षत्वात् कीदृशं त्वगादि चित्तयुक्तम् अनेन चित्तं मनोऽपि त्रिविधमिति ज्ञायते चक्षुरादीति पुनर्वचनमवधा १ रणार्थम् ॥३१॥

तामसाहङ्कारोऽपि विकल्पहेतुरिति सूचितं पुरस्तात्तद्विशदीकरोति। योऽसाविति। योऽसौ मोहविकल्पहेतुरज्ञानान्यथाज्ञानहेतुर्विकारः सत्त्वादिगुणक्षोभो महत्तत्त्वं तेन कृतः सोऽहमहङ्कारस्त्रिवृत् त्रिरूपत्वेन वर्तते त्रिः प्रकारमाह। वैकारिक इति। वैकारिकस्तामस ऐन्द्रियोत्पत्तिहेतुः तैजसश्चेति। प्रयोजनमाह। जगत इति। जगतः प्रसूतिः सृष्टिर्यस्मात्स तथा जगत्सृष्टिहेतुरित्यर्थः अनेन प्रकृतेः कारणत्वं गतमत्राह। प्रधानं प्रकृतिर्मूलस्य महत्तत्त्वद्वारा कारणं यस्य स तथा ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

प्रकृतिपुरुषयोर्विकारित्वाविकारित्वाभ्यां नानात्वैकात्वपरस्परापेक्षत्वानपेक्षत्वाभ्यां परप्रकाश्यत्वस्वप्रकाश्यत्वाभ्यां चात्यन्तभेदं तत्त्वमाह चतुर्भिः। प्रकृतिः पुरुषश्चेति विकल्पो भेदः प्रकृतेः सकाशात् पुरुषो भिन्न एव तदपि दृश्यते न भिन्नत्वयोरिति कथं प्रतीयते इति भावः। कुत इत्यपेक्षायामाह। एष सृज्यत इति सर्गो देहादिसंघातः प्रकृतिकार्यत्वात् प्रकृतिशब्दोक्तः वैकारिकः नानाविकारवान् यतो गुणव्यतिकरात् गुणक्षोभादेव आत्मा स्वरूपं यस्य सः गुणक्षोभकृत इति प्रकृतौ विकारो दर्शितः पुरुषस्तु केवलमीक्षमाणो निर्विकारः प्रसिद्ध एवेति भावः ॥२९॥

नानात्वमाह। ममेति। विकल्पं भेदं तद्बुद्धींश्च वैकारिकः अनेकविकारवानपि स्थूलतस्त्रिविधः तत्राध्यात्ममित्येकम् अथाधिभूतमिति द्वितीयम् अधिदैवमन्यत् तृतीयम् ॥ ३० ॥

त्रैविध्यं दर्शयति। दृक् अध्यात्मरूपमधिभूतम् आर्कं वपुरर्कांशोऽधिदैवम् अत्र रन्ध्रे चक्षुर्गोलके परस्परापेक्षत्वमाह। परस्परं सिद्ध्यतीति चक्षुषा रूपं ज्ञायते रूपज्ञानान्यथानुपपत्त्या तदधिदैवं रूपं तत्रश्चक्षुषः प्रवृत्तिस्ततो रूपज्ञानमित्येतत्त्रयं परस्परं सिद्ध्यति परमात्मा तु निरपेक्ष एव तत्र दृष्टान्तः। य इति। यस्तु खे आकाशे अर्को वर्तते मण्डलात्मा स तु स्वत एव सिद्ध्यति तथैवात्मा परमात्मा यत् यस्मादेषामध्यात्मादीनामाद्यः कारणं एकश्चेतनादेकः योऽपरः कारणात्मादेव एतेभ्यो भिन्नः स्वयानुभूत्या स्वतः सिद्धप्रकाशेन अखिलानां सिद्धानां परस्परप्रकाशकानामध्यात्मादीनामपि सिद्धिर्वस्तुतः प्रकाशो यस्मात् सः तेन निरपेक्षत्वादेकत्वात् स्वप्रकाशत्वादन्यप्रकाशकत्वाच्च पुरुषः प्रकृतेर्भिन्न इति प्रतिपादितम्। चक्षुषि दर्शितं तत्त्रैविध्यमिन्द्रियान्तरेष्वप्यतिदिशति। एवमिति। कथा

---

१ चित्तयुक्तत्वावधारणार्थमित्यर्थः।

आत्मापरिज्ञानमयो विवादो ह्यस्तीति नास्तीति भिदार्थनिष्ठः ।
व्यर्थोऽपि नैवोपरमेत पुंसां मत्तः परावृत्तधियां स्वलोकात् ॥ ३३ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

चक्षुरिति चक्षू रूपसंदर्शः एवं त्वगादि त्वक् स्पर्शो वायुरिति श्रवणादि श्रवणं शब्दो दिश इति जिह्वादि जिह्वा रसो वरुण इति नासादि नासा गन्धोऽश्विनाविति चित्तयुक्तं चित्तादि च चित्तं चेतयितव्यं वासुदेवोंऽश इति रूपलक्षणमित्यत मनो मन्तव्यं चन्द्र इति बुद्धिर्बोद्धव्यं ब्रह्मेति अहंकारोऽहंकर्तव्यं रुद्र इति एवमन्यदपि सर्वं त्रिविधमिति ॥ ३१ ॥

नन्वसौ नानाविकारमयः प्राकृतः प्रपञ्चः सत्यो मिथ्या वा वादिनां मतवैविध्यान्निश्चेतुमशक्यत्वात् पृच्छ्यते इत्याकाङ्क्षायाम् अनुवादपूर्वकमाह । योऽसाविति द्वाभ्याम् । गुणक्षोभकार्यं विकारमयः प्रपञ्चप्रधानमूलात् प्रधानहेतुकात् महतः सकाशात् प्रसूतः उद्भूतो योऽहङ्कारस्तत्कर्मा त्रिवृत् त्रिरूपीभूतः त्रिवृत्त्वमेवाह । वैकारिकस्तामस ऐन्द्रियश्चेति आधिदैवाधिभूताध्यात्मादिमयः स हि मोहविकल्पहेतुः मोहेन अज्ञानेन हेतुना सत्यो वा मिथ्या वा नित्यो वेत्येव विकल्पस्य हेतुः ॥ ३२ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

परिहरति । प्रकृतिः पुरुषश्चेति । विकल्पो भेद एव पुरुषर्षभेति सम्बोधनेन जडाजडयोरैक्यं शङ्कितुं योग्यो न भवानिति सूचयन् अचेतनत्वाविकारित्वादिधर्मभिन्नयोः भिन्न एव पुरुष इत्याह । एष इति सार्द्धद्वाभ्याम् । एष जडत्वेन प्रसिद्धः देहादिरूपः अनात्मवर्गः वैकारिकः विकारवान् सृज्यते इति सर्गः गुणानां व्यतिकरः क्षोभः आत्मा कारणं यस्य स गुणव्यतिकरात्मकः गुणक्षोभज इत्यर्थः ॥ २९ ॥

स च मम शक्तिभूतायाः मायायाः वेशभूतः इत्याह । ममेति । अङ्ग हे उद्धव ! मम माया देवमनुष्यपश्वादिरूपैः अनेकधा भवति अत एव गुणैः देवत्वादिभिः विकल्पेषु जीवभेदेषु देवोऽहं मनुष्योऽहं अयं पशुः इत्याद्याः बुद्धीः धत्ते जीवानेव व्यामोहयतीत्यर्थः । स च वैकारिकः विकारवान् देहादिसंघातः त्रिविधः तदुपपादयति । अध्यात्ममेकम् अत्राव्ययं विभक्तिसमीपसमृद्धीत्यनेन अध्यात्मादिशब्दानां विभक्त्यर्थेऽव्ययीभावः आत्मनि देहे वर्त्तमानमध्यात्मं चक्षुरादि अथान्यत् भूतेषु तेजःप्रभृतिषु वर्त्तमानमधिभूतं चक्षुरादिग्राह्यं रूपादि रविरधिदैवं चक्षुराद्यधिष्ठातृ देवतारूपम् ॥ ३० ॥

तानि जडानि तद्द्रष्टा पुरुषस्तेभ्योऽन्य इत्याह । दृगिति दृगध्यात्मम् रूपमधिभूतम् अत्र दृग्गोलके प्रविष्टमार्कं वपुरधिदैवम् रूपग्राहकमिन्द्रियं दृक् दृग्ग्राह्यो गुणो रूपम् रूपग्रहणे उपकारकमार्कं वपुरित्येवमध्यात्मादिकं परस्परं तेनैव ज्ञाता सिध्यति केन यः आत्मा स्वतः अनात्मभूतदृगादिनैरपेक्ष्येण खे हृदि वर्त्तते हृदयनामात्मेति श्रुतेः विषयेषु प्रवर्त्तमानानां प्रेरकः अत एव एतेभ्योऽपरो भिन्नः किं बहुना स्वानुभूत्या ज्ञानेनाखिलसिद्धानां सिद्धिः अनुकारकः चक्षुरादीनां वैविध्यं त्वगादिष्वपि द्रष्टव्यमिति । चक्षुरादित्रिकं यथा परस्परं सिध्यति एवं त्वगाद्यपीत्यन्वयः चक्षुरादीनां मनः सहकृतानामेव शब्दादिग्रहणे कारणत्वं द्योतयितुमाह । चित्तयुक्तमिति ॥ ३१ ॥

अथ प्रकृतिपुरुषाभेदशङ्कायां पुरुषेश्वरयोरत्यन्तभेदशङ्कायां च अहङ्कार एव हेतुरित्याह । य इति । अहमहङ्कारः मोहविकल्पयोर्हेतुः तत्र प्रकृतिपुरुषयोरैक्यभ्रमो मोहः पुरुषेश्वरयोरत्यन्तभेदभ्रमः विकल्पः ॥ ३२ ॥

———

भाषा टीका ।

श्रीभगवान् उवाच हे पुरुषश्रेष्ठ ! उद्धवजी प्रकृति और पुरुष इनका तो आपस में बड़ा भेद है यह जो प्रकृति का विकार देहादिक है सो तो गुणों के क्षोभ होने से बनता है ॥ २९ ॥

हे उद्धव ! हमारी प्रकृति माया गुणमयी है सो अनेक प्रकार की भेद बुद्धियों को पैदा करती है जिसमें तीन भेद ये हैं एक अध्यात्म एक अधिदैव एक अधिभूत यही उसके विकार हैं ॥ ३० ॥

ये तीनों इस प्रकार से हैं जैसे रूप के देखने में नेत्र अध्यात्म है रूप अधिभूत है उस नेत्र में जो सूर्य देवता का अंश सो अधिदैव है ये तीनों आपस में एक के आश्रय के विना एक सिद्ध नहीं होता है सो जो आकाश में सूर्य है वह तो स्वयं ही सिद्ध हो रहा है और जो आत्मा है सो तो इन तीनों से भिन्न है आप ही अपने प्रकाश से सब प्रकाश होने वालों का प्रकाशक है जैसे नेत्र का कहा है तैसे ही त्वचा अथवा चक्षु जिह्वा नासिका इनके व्यापारों में भी अध्यात्मादिक तीनों को जानना चाहिये ॥ ३१ ॥

यह जो गुणों के क्षोभका किया विकार है प्रधान कारण वाले महत्तत्त्व से पैदा भया है जिस में अहंकार मोह का हेतु है सो सात्त्विक राजस तामस ऐसे तीन प्रकारका है ॥ ३२ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

स कुतो निवर्तेत आत्माज्ञाननिर्मितत्वात्तज्ज्ञानेनेत्याशयेनाऽऽह । आत्मा परिज्ञानमय इति । ननु कथं मोहमयत्वं विकल्पस्याहंकारस्य वा कोऽसावत्यन्ताकृतिकारत्वात्राऽऽह । विवाद इति । अयं भिदा अर्थनिष्ठा विवादोऽस्यात्मापरिज्ञानमय इत्यन्वयः यद्वा विवादः सर्वोऽपि भिदार्थनिष्ठ एव

उद्धव उवाच ॥

त्वत्तः परावृत्तधियः स्वकृतैः कर्मभिः प्रभो ।
उच्चावचान्यथा देहान् गृह्णन्ति विसृजन्ति च ॥ ३४ ॥
तन्ममाख्याहि गोविन्द दुर्विभाव्यमनात्मभिः ।
न ह्येतत्प्रायशो लोके विद्वांसः सन्ति वञ्चिताः ॥ ३५ ॥

श्रीभगवानुवाच ॥

मनः कर्ममयं नृणामिन्द्रियैः पञ्चभिर्युतम् ।
लोकाल्लोकं प्रयात्यन्य आत्मा तदनुवर्तते ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु वस्तुमात्रनिष्ठः सन् परस्परं युक्तिभिरेवं भेदस्य निराकृतत्वान्मोहमयत्वं सिद्धमिति ननु यद्यहंकारो विकल्पश्च नास्ति अकस्मार्हि तन्निवृत्तिप्रयासेन तत्राऽऽह । व्यर्थोऽप्यर्थरहितोऽपि स्वरूपभूतात्मस्तो बहिर्मुखानां नैवोपरमेत् प्रत्युत तत्कृतः कर्मभिरुच्चनीचदेहेषु संसरन्तीति ॥ ३३ ॥

तत्र पृच्छति । त्वत्त इति । व्यापकस्यात्मनो देहाद्देहान्तरगमनमकर्तुः कर्माणि नित्यस्य च जन्ममरणादीनि कथमिति भावः ॥ ३४ ॥

एतद्विद्वांसो न सन्ति हि यस्मात्त्वन्मायया वञ्चिता मोहिताः ३५

लिङ्गशरीराध्यासेन सर्वं घटत इत्युत्तरमाह । मन इति । प्राधान्येन पञ्चभिरिति निर्देशोऽन्येषामप्युपलक्षणार्थम् देहाद्देहान्तरं प्रति याति मनोऽन्य एवाऽऽत्मा तन्मनोऽनुवर्तते अहङ्कारेणानुगच्छति ॥ ३६ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

सोऽहङ्कारः आत्माज्ञानविलसितत्वादात्मस्वरूपाऽज्ञानेन रचितत्वात् । तज्ज्ञानेन आत्मज्ञानेन अहङ्कारः आत्मापरिज्ञानमयः आत्माऽज्ञानविलासितः । मोहमयत्वमज्ञानविलसितत्वं कैश्चिन्मीमांसकसांख्यादिभिः । पूर्वार्धेऽपेरध्याहारः । आत्मस्वादेशवृत्तिगौरवमतो यद्वेति । अतो वस्तुमात्रनिष्ठत्वाभावात् । परस्परयुक्तिभिरिति भेदो नाम वस्तुनः स्वरूपं, तद्धर्मो वा आद्ये हस्तः कर इति वद्घटो भेद इति पर्यायापत्तिः । द्वितीये भेदस्यापि भेदस्य तद्धर्मत्वात् पुनस्तस्यापीत्यनवस्थेत्यादियुक्तिभिः । तन्निवृत्तिप्रयासेन अहङ्कारस्य विकल्पस्य च निवृत्तिसाधनश्रमेण प्रत्युतेत्यव्ययं वैपरीत्ये तत्कृतैः अहङ्कारकृतैः ॥ ३३ ॥

त्वत्त इति युग्मकम् । तत्र बहिर्मुखानां संसरणे । एतद्विद्वांसः व्यापकस्य कर्तुः संसरणं कथमित्यत्र सिद्धान्तश्रेयाः ॥ ३४ ॥ ३५ ॥

सर्वव्यापकस्यापि देहाद्देहान्तरगमनमकर्तुः कर्म नित्यस्य जन्ममरणादिकं च अन्येषां प्राणबुद्धिकर्मेन्द्रियाणाम् । ततो मनःप्रधानाल्लिङ्गशरीराद्भिन्नः । मूढं कर्ममयं कुर्वद्रूपम् । यथाऽऽकाशस्य विभुत्वेन गमनासम्भवेऽपि घटाद्युपाधिगमनेनाकाशोऽपि गच्छन्निव प्रतीयते तद्वदत्रापीति भावः । वैपक्षमानात्मनो अणोरपि गमनं निरीहस्य न सम्भवति इति आक्षेपः उत्तरन्तु यथा स्थितमेव ॥ ३६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इन्द्रियैरिति । भूतसूक्ष्माणामप्युपलक्षणम् लोकाल्लोकान्तरं शरीराच्छरीरान्तरम् ॥ ३६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यत एवमतो देहादत्यन्तविलक्षण एवात्मेत्याह । आत्मेति । परिज्ञानमयः परितः कार्त्स्न्येन ज्ञानस्वरूपः परिशब्देन प्रदेशभेदेनापि जडत्वस्यावृत्तिः देहस्तु परितो जड इति भावः । विवादः अहम्प्रत्ययेन सर्वैः सम्प्रतिपन्नः परितो ज्ञानमय इत्येतैकरूप्यलाभात्तस्य विकाराभावप्रयुक्तत्वात्तत्प्रयुक्तं सदादिशब्दव्यपदेश्यत्वं देहस्य तु अचेतनपरिणामात्मकस्य पूर्वपूर्वविकाराणामुत्तरोत्तरेष्वभावासाकितशब्दव्यपदेश्यत्वं तथा तत्तद्वस्थाविषयाकितशब्दव्यपदेश्यत्वञ्च व्यनितं तदाह । अस्तीति नास्तीति निर्देशनिष्ठः नास्तीत्यस्य व्यपदेश इति शेषः उभयाभिधो व्यपदेशः भिदार्थनिष्ठः भिदया भेदेनार्थाश्रयतो योऽर्थः देवमनुष्यादिशरीररूपस्तन्निष्ठस्तद्विषय इत्यर्थः।अस्तीति नास्तीत्येवंरूपो भेदव्यपदेशः अर्थनिष्ठः देवमनुष्यादिदेहरूपार्थनिष्ठ इति यावत् यद्वा परिज्ञानमय आत्मा देहविलक्षणोऽस्ति नास्तीति विवादमात्रम् अस्त्येवेत्यर्थः भिदार्थनिष्ठः लिङ्गव्यत्यय आर्षः अर्थनिष्ठ इत्यनेनात्मस्वरूपानिष्ठस्तन्निष्ठतया प्रतीतिस्तु भ्रम इति सूचितं स च स्वात्मयाथात्म्यसाक्षात्कारादेव निवर्ततेऽन्यथा तु न निवर्तते इत्याह । व्यर्थ इति । व्यर्थोऽप्यर्थशून्योऽप्यात्मन्यविद्यमानोऽपि स्वस्य योऽसौ साक्षात्कारो यस्मात् तस्मात्त्वत्तः पराङ्मुखा विमुखा धीर्येषां तेषां पुंसां नैवोपरमेत् किन्त्वनुवर्तत एवेति भावः ॥ ३३ ॥

एवं भगवद्विमुखानां देवमनुष्यादिदेहसम्बन्धवियोगरूपसं-

[1]ध्यायन्मनोऽनुविषयान् दृष्टान् वाऽनुश्रुतानथ ।
उद्यत्सीदत्कर्मतन्त्रं स्मृतिस्तदनुशाम्यति ॥ ३७ ॥
विषयाभिनिवेशेन नाऽऽत्मानं यत्स्मरेत्पुनः ।
जन्तोर्वै कस्यचिद्धेतोर्मृत्युरत्यन्तविस्मृतिः ॥ ३८ ॥
जन्म त्वात्मतया पुंसः सर्वभावेन भूरिद ! ।
विषयस्वीकृतिं प्राहुर्यथा[2] स्वप्नमनोरथः ॥ ३९ ॥
[3]स्वप्नं मनोरथं[4] चेत्थं प्राक्तनं न स्मरत्यसौ ।
तत्र पूर्वमिवाऽऽत्मानमपूर्वं चानुपश्यति ॥ ४० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रकारं ब्रूहीत्यर्थः । अनात्मभिरत्यन्तबुद्धिभिर्दुर्विभाव्यं भावयितुमशक्यं किं पुनर्वक्तुमित्यर्थः । ननु लोके विज्ञा बहवः सन्त्युक्त एवैतत् प्रष्टव्यास्तत्राह । नहीति।वञ्चिता त्वन्मायया मोहिताः।३४।३५॥

मनो मनःप्रधानं सूक्ष्मशरीरमेव लोकाल्लोकान्तरं याति कर्म कर्माधीनम् आत्मा जीवोऽन्यस्ततो भिन्नोऽपि तदुपाहितत्वादेव तत् सूक्ष्मशरीरमनुवर्त्तते अनुगच्छति ॥ ३६ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ पुरुषेश्वरयोरत्यन्तभेदं पुरुषेश्वरयोरत्र नवैलक्षण्यमण्वपीति वाक्येन प्राप्तं प्रसङ्गान्निराकरोति । आत्मा जीवः परमात्मनोंऽश स अंशत्वावच्छिन्नेन निजरूपेण भिन्नोऽपि अंशिनिरपेक्षस्थितिप्रवृत्त्याद्यभावादभिन्नः "अंशो नानाव्यपदेशादन्यथा चापी"त्यादिन्यायात् एवं भूतस्य परमेश्वराद्भिन्नस्याऽप्यभिन्नस्य आत्मनः स्वरूपापरिज्ञानं तन्मय एव कः पुरुषेश्वरयोर्भिदा भेदरूपो योऽर्थस्तदज्ञः अस्तीति नास्तीति विवादः ननु यथार्थे त्वन्मतमाश्रित्येमं विवादं कुतो न त्यजन्तीत्यत्र मत्पराङ्मुखत्वान्मम मतं न जानन्त्यतो न त्यजन्तीत्याशयेनाह । इयर्थोऽपीति । त्वल्लोकात् त्वदीयानन्यजनजनमयाद्व्यावृत्तः पराङ्मुखधियां बहिर्मुखीनां इयर्थोऽपि निरर्थोऽपि केवलमेवावादः केनचामेदश्च नैवोपरमेत ॥ ३३ ॥

भगवत्पराङ्मुखबुद्धित्वेन तेषां जन्ममरणप्रवाहलक्षणः संसार एव भवतीति सूचितं तत्र पृच्छति । त्वत्त इति । यथा गृह्णन्ति विसृजन्ति च तन्मायावाहीत्युत्तरेणान्वयः ॥ ३४ ॥

एतद्विद्वांसः प्रायो बहुधा न हि सन्ति हि यतो वञ्चिताः त्वन्मायत्वेन शेषः ॥ ३५ ॥

मनः कर्ममयं कर्मप्रधानं फलोन्मुखकर्मप्रेरितम् पञ्चभिरित्युपलक्षणं पञ्च तन्मात्राणां पञ्चकर्मेन्द्रियाणां च मनः प्रधानं लिङ्गशरीरमित्यर्थः । लोकात्स्थूलदेहाल्लोकान्तरं देहान्तरं प्रयाति तर्हि तदेवात्मा किं नेत्याह । अन्य इति । तल्लिङ्गशरीरमेवात्मानुवर्त्तते यथाग्रामाद्ग्रामान्तरं रथः प्रयाति रथी तमनुवर्त्तते तद्वत् ॥ ३६ ॥

आत्मा जोहै सोतो ज्ञान स्वरूप है उस के विषय में आस्ति नास्ति ऐसा सब लोगों का विवाद रहता है और उस के अर्थ में भेदभी है जिन लोगों की बुद्धि मेरे से बहिर्मुख है उन का यह विवाद मिटता नहीं है॥३३

उद्धव उवाच हे प्रभो ! तुमारे से जिन की बुद्धि बहिर्मुख है वे लोग जैसे ऊंच नीच शरीरों को धारण करते हैं और छोड़ते हैं ॥ ३४ ॥

हे गोविन्द ! सो बात आप मेरे से कहो ये जिस को अज्ञानि लोग नहीं जान सकते हैं इस के जानने वाले पंडित नहीं हैं जोहैं सो तुमारि माया के भुलाये भये हैं ॥ ३५ ॥

श्रीभगवान् उवाच मनुष्यों का जो कर्म मय मन है सूक्ष्मशरीर सो पांच इंद्रियों से युक्त है वह लोकों से लोकांतर को जाता है उसी के पीछे आत्माभी जाता है ॥ ३६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु मनसोऽपि पूर्वदेहवियोगो देहान्तरयोगश्च कथं भवतीति चेत्स्मृतिवियोगयोगाभ्यामिति वक्तुं तयोः कारणमाह । ध्यायन्निति । कर्मतन्त्रत्वात्कर्मोपस्थापितान् दृष्टान् वा अनुश्रुतान् वेदोक्तान् विषयाननुध्यायत् अथानन्तरं ध्यायमानेषूदयीविभवत्पूर्वं विषयेषु च सीदल्लीयमानं भवति तदनन्तरं तस्य स्मृतिः पूर्वापरानुसन्धानं नश्यति ॥ ३७ ॥

ततः किमत आह । विषयेति । कर्मोपस्थापितदेवादिदेहात्यन्ताभिनिवेशेनाऽऽत्मानं पूर्वदेहं पुनर्न स्मरेदिति यत्सैव यातनादिदेहाभिनिवेशेन वा दृष्टतयोर्हेतोः पूर्वदेहेऽत्यन्ताविस्मृतिरहङ्कारनिवृत्तिस्तदभिमानिनो जन्तोर्जीवस्य मृत्युरुच्यते न तु देहनाशः ॥ ३८ ॥

जन्म तु विषयस्य देहस्यात्मतया स्वीकृतिमभिमानं प्राहुर्न तु देहस्योत्पत्तिः नच पुत्रादिदेहस्यप्रीत्यतिशयमात्रेण किं तु सर्वभावेनाभेदेन अभिमानमात्रेणोत्पत्तिमरणयोर्दृष्टान्तद्वयम् यथा स्वप्नश्च मनोरथश्चेत्यर्थः ॥ ३९ ॥

दृष्टान्तौ विवृणोति । स्वप्नमिति । तत्र वर्तमाने स्वप्नादौ पूर्वे

१ ध्यायमानोऽनु इति वीर०पाठः २ स्वप्नः ३ तस्मादिति शुकपक्षीय०पाठः ४ चाथ वि०पाठः

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इदानीं जन्म रूपयति। जन्मेति। पुंसो देहादिष्वहं ममेद-मित्याद्यात्मतयात्मीयत्वेन सर्वभावेन सर्वेषणया समस्तधर्मभ-ग्रहणं, विषयस्वीकृतिं देहाभिमानं जन्म प्राहुरित्यन्वयः। देहा-दिस्वयं स्वकीयश्च न भवति परमात्माधीनत्वादिति सूचकत्वेन विशेषणेनाऽर्थं उदाहरति। यथेति। आप्रविद्यमानमित्यर्थं स्वप्नो यथा अविद्यमानो यथा च मनोरथविषयोऽप्यविद्यमानो न त्वनिर्वचनीय एवमेवापि जीवस्यातो जन्ममृतियुक्ते इति भावः। स्वप्न इति पाठे स्वप्ने जायमानो आप्ररत्नप्रत्ययो यथा अविद्यमानइत्यर्थः॥३९॥

अत्यन्तविस्मृतिं मोहादरया रूपयति। स्वप्नमिति। यथा-स्वप्नोदेकस्थितः स्वप्नरूपं मनोरथं च प्राक्तनमर्थं तद्विषयं चासौ स्वप्नादिरूक् न स्मरति तथा तत्र देहान्तराभिमाने सति पूर्वं पुरातनमात्मानं देहं न स्मरति इत्यादिः केषां चित्महात्मनां स्मरणं सम्भवतीत्यादिमर्थं अस्मरणे कारणमाह। अपूर्वमिति चाद्यच्च एवार्थे अपूर्वं पश्चात्तनं नूतनं देहमेवानुपश्यति यस्त इति वद्धा विषयाभिनिवेशमेव रूपयति। स्वप्नमिति। प्राक्तनं स्वप्नं मनोरथं च यथा न स्मरति असौ तथा प्राक्तनजन्मा-धनुभूतमर्थं विषयं च न स्मरति किं तत्र निमित्तमत्राह। तत्रेति। तत्र देहान्तरप्राप्तौ पूर्वमनादिमेवात्मानम् अपूर्वं सादि-मिवानुपश्यति इति यस्मात्तस्माद्विषयाभिनिवेश एव कारण-मित्यर्थः॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

स्वप्नमिति। तैः तऽत्र पूर्वं चेत्यादौ पूर्वं चापूर्वमिवेत्यन्वय इत्येव वक्तव्यम्॥ ४०—४४॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

एवं सर्वदैव सूक्ष्मशरीरानुवर्तिनो जीवात्मनः स्थूलशरी-रेण वियोग एव मृत्युः संयोग एव जन्मेति बुवंस्तयोरपि स्थूलवियोगसंयोगयोः सर्वथा स्मृतिवियोगस्मृतिसंयोगावेव कारणमित्याह। ध्यायादिति। कर्मतन्त्रं कर्माधीनं मनः कर्मोपस्थापि-तान् दृष्टान् विषयान् मर्त्यलोकस्थान् परदारादीन् श्रुतान् देवलोक-स्थान् तानेव ध्यायन् सन् अथ ध्यानानन्तरं ध्येयेषु तेष्वेव उद्यत्-तदाकारीभवत् सीदत् पूर्वध्यातेभ्यो विषयेभ्यः सर्वथा विच्युती-भूतं भवति तदनु तदनन्तरं तस्य स्मृतिः पूर्वापरानुसन्धाने न-श्यति॥ ३७॥

ततः किमत आह। विषयेति। कर्मोपस्थापितेषु देवादि-देहेषु यातनादेहेषु वा अत्यन्ताभिनिवेशेन आत्मानं पूर्वदेहं पुमर्मनो न स्मरेदिति यत् स मृत्युः। स्थूलदेहवियोगः। अत्यन्ता आत्यन्तिकी पूर्वदेहविषया विस्मृतिर्यतः सः। कस्य-चिद्धेतोः प्रारब्धकर्मसमाप्तिरित्यर्थः॥ ३८॥

जन्मत्विति। विषयस्य कर्मोपस्थापितदेहस्य सर्वभावेन आत्म-तया स्वीकृतिम् आत्यन्तिकमभिमानमेव जन्म प्राहुः। अभिमा-नमात्रेणोत्पत्तिमरणयोर्दृष्टान्तद्वयम्। यथा स्वप्नश्च मनोरथश्च सः। सर्वोऽपि दृश्यो विभाव्यैकधादृश्यतीत्येकवचनम्॥ ३९॥

दृष्टान्तो विवृणोति। स्वप्नमिति वर्तमानो देहस्थो जीवो यथा प्राक्तनं स्थूलदेहं न स्मरति इत्यमेव वर्तमानस्वप्नस्थो मनो-रथस्थो वा जीवः प्राक्तनं स्वप्नं मनोरथं वा न स्मरति कश्चित् कदाचित् स्वप्ने पूर्वकं स्वप्नं च स्मरतीति चेत् कश्चित् कदाचित् जातिस्मरश्च पूर्वदेहं स्मरतीति न सर्वथा नियमः किञ्च तत्र वर्तमानदेहस्थो जीवः पूर्वसिद्धमेवात्मानम् अपूर्वमिव अनुपश्यति अहं चातुर्थिक इति सांवत्सरिक इति इतः पूर्वमहं नासमिति प्रतिपद्यमात्मानं जानातीत्यर्थः॥ ४०॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ननु पूर्वदेहादिकमात्मा कुतो न स्मरतीत्यत आह। ध्यायादिति तस्यात्मनः कर्मतन्त्रं मनः कर्मोपस्थापितान् दृष्टान्श्रोत्रगतवा-श्रुतान् वा विषयान् अनुध्यायन् ध्यायमानेषु विषयेषु उद्यत् आविर्भवत् अन्यत्र सीदत् स्मृतिहीनं भवति एवमेकस्मिन्नेव जन्मनि विषयस्मृतिरनुशाख्यति किमुत जन्मान्तरीयदेहादिवि-षयेत्यर्थः॥ ३७॥

ननु आत्मा देहाद्देहान्तरं गच्छति चेत्तर्हि देवदत्तो मृतः जातः इति लोकप्रसिद्धयोर्जन्ममरणयोः को विषय इतिशङ्कां निराकरोति। विषयेति द्वाभ्याम्। यत् यः जन्तुः देही विषयाभिनिवेशेन अहमित्यहङ्कार विषये देहे योऽभिनिवेशः देहोऽहमित्याग्रहस्तेन आत्मानं देहेन्द्रियादि-विलक्षणं न स्मरेत् तस्य जन्तोः पुनः कस्यचिद्धेतोः विस्मृति देहवियोगो मृत्युरित्यर्थः॥ ३८॥

जन्मेति। जन्म तु विषयस्य देहस्य आत्मतया स्वीकृतिं प्राहुः पूर्वदेहादिस्मृतिविनाशकं देहान्तरात्माभिमानं जन्म प्रचे-तसेत प्राया अभिसमावन्ति अन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वेत्यादयः श्रुतयः प्राहुरित्यर्थः। पृथग्भूतस्यापि पुत्रादेरात्मतया स्वीक-रणं सम्भवत्यत आह। सर्वभावेनेति। सम्पूर्णेन देहात्मभावे-नेत्यर्थः दृष्टान्तमाह। यथा स्वप्नमनोरथ इति। स्वप्ने मनोरथः रूपान्तराभिनिवेशः पूर्वरूपस्मृतिविनाशको यथा तद्वदित्यर्थः॥३९॥

पूर्वदृष्टान्तानुवादपूर्वकं दृष्टान्तान्तरमाह। स्वप्नमिति। असौ पुमान् स्वप्नं मनोरथं च प्राप्य प्राक्तनमात्मानममुकनामामुकनाम-रूपगोत्रोऽहमासमिति न स्मरति तत्र स्वप्नं मनोरथं च पूर्व-मिव अपूर्वमात्मानं पश्यति चकारात्पूर्वगृहादिवदपूर्वं गृहादि-कमपि पश्यति॥ ४०॥

---

### भाषा टीका।

पुरुष का मन विषयों का ध्यान करता रहता है तब देखे सुने विषयों के ध्यान करने से वह मन कभी कार्यों में उद्यत होता है कभी लय होजाता है तब ऐसे कर्म बद्ध होने से उसकी स्मृति नष्ट होजाती है॥ ३७॥

विषयों के अत्यन्त अभिनिवेश होने से अपने को फिर नहीं स्मरण करता है ऐसे इस मनुष्य को किसी हेतु से अत्यन्त विस्मरण वाला मृत्यु होजाता है॥ ३८॥

[1]इन्द्रियायनसृष्ट्येदं त्रैविध्यं भाति वस्तुनि ।
बहिरन्तर्भिदाहेतुर्जनोऽसज्जनकृद्यथा ॥ ४१ ॥
नित्यदा ह्यङ्ग ! भूतानि भवन्ति न भवन्ति च ।
कालेनालक्ष्यवेगेन सूक्ष्मत्वात्तन्न दृश्यते ॥ ४२ ॥
यथाऽर्चिषां स्रोतसां च फलानां वा वनस्पतेः ।
तथैव सर्वभूतानां [2]वयोऽवस्थादयः कृताः ॥ ४३ ॥
सोऽयं दीपोऽर्चिषां यद्वत्स्रोतसां तदिदं जलम् ।
सोऽयं पुमानिति नृणां मृषा गीर्धीर्मृषायुषाम् ॥ ४४ ॥

भाषा टीका ।

हे भूरिद ! उद्धवजी पुरुष का सब प्रकार से जो मन में विषयों का स्वीकार करना है उसी को जन्म कहते हैं जैसे कि स्वप्न का देखना है अथवा कोई मनोरथ का करना है ॥ ३९ ॥

स्वप्न में तथा मनोरथ में इस प्रकार के पहिले मनोरथ को नहीं स्मरण करता है तहां पर अपने आत्मा को पहिले सरीखा अपूर्व ऐसा जानने लगता है ॥ ४० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

उपसंहरति । इन्द्रियाणामयनं मनस्तस्य देहान्तराभिनिवेशेन या सृष्टिरुत्पत्तिस्तया वस्तुन्यात्मनि तदभिमानेनेदं त्रैविध्यमुत्तममध्यमनीचत्वलक्षणं भातीत्यन्वयः एवंभूत आत्मा बाह्याभ्यन्तरभेदहेतुश्च भवति बाह्यान्विषयानान्तरान् सुखादींश्च पश्यतीत्यर्थः यथा जनो जीवः स्वप्ने बहूनसतो जनान् देहान् कुर्वन् पश्यन् बहुरूपो भाति । तद्वत् यद्वा इदं त्रैविध्यमवस्थात्रयादिरूपं भाति असज्जनकृत् दुष्टपुत्रोत्पादको जनः पिता स्वयं समोऽपि पुत्राभिमानतच्छत्रुमित्रादिषु यथा भेदहेतुर्भवति तद्वदिति अभ्यासमानम् ॥ ४१ ॥

तदेवं लोकप्रसिद्धौ जन्ममृत्यू निरूप्य सूक्ष्मावपूर्वावपि तौ वैराग्याय निरूपयति । नित्यदा प्रतिक्षणं भूतानि शरीराणि उत्पद्यन्ते नश्यन्ति च कालस्यातिसूक्ष्मत्वात्तत्कृतं भवनमभवनं वाऽविवेकिभिर्न लक्ष्यते ॥ ४२ ॥

सतो जन्ममरणयोर्ज्ञाने कारणमेतद्भवेत् सदसत्त्वमेव तयोः कुतः इत्याशङ्क्यानुमानेन साधयति । यथेति । अर्चिषां परिणामादिभिः स्रोतसां कुम्भ्यादिभिः फलानां रूपादिभिर्वयोऽवस्थाविशेषाः कृताः कालेनेति पूर्वस्यानुषङ्गः आदिशब्देन तेजोबलकामकोशादीनामुपादानम् विमतं प्रतिक्षणोत्पत्तिविनाशवत् अवस्थाभेदवत्त्वाद्दीपज्वालादिवदित्यनुमानम् ॥ ४३ ॥

कथं तर्हि प्रत्यभिज्ञा तत्रदेव सादृश्यावलम्बिनीत्याह । सोऽयमिति । सादृश्यादर्चिषामेव यथा सोऽयं दीप इति प्रत्यभिज्ञा यथा च स्रोतसां प्रवाहजलानामेव तदिदं जलमिति तथा सोऽयं पुमानिति गीर्धीश्च मृषा नृणां बहूनी शरीराणि मृषा व्यर्थमायुर्येषामविवेकिनां तेषां भवति ॥ ४४ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

तदभिमानेन देहान्तराविष्टमनोऽभिमानेन । एवं भूतः देहाद्यापन्नात् । पूर्वोऽर्थोऽसज्जनकृद्दृष्टान्तपरत्वं स्वप्ने इत्यव्याहारः त्रैविध्यशब्देनाप्राकृतोत्तममध्यादिपरिग्रहश्चातो यद्वेति । तद्वदिति पुत्रस्य शत्रुमित्रादिविलक्षणः । सन्नत् असाशहुमि-न्द्रियत्वादिपदत्रयम् । समानमुभयपक्षेऽपि तुल्यार्थकम् ॥ ४१ ॥

तदेव मनोऽभ्यासनिवन्धनजन्मादिप्रकारेण तौ जन्ममृत्यू तत्कृतमत्यतिसूक्ष्मकालकृतम् । भवनं जन्म । अभवनं मरणम् ॥४२॥

सतोर्वर्तमानयोः एतत् कालस्यातिसूक्ष्मत्वम् । सदसत्त्वं क्षणिकत्वम् । तयोर्जन्ममरणयोः । साधयति सूक्ष्मजन्ममृत्यू अनुमापयति । विमतं विवादाध्यासितं शरीरमिति पक्षस्योद्देशः प्रतिक्षणोत्पत्तिविनाशवदिति साध्यस्य । अवस्थाभेदवत्त्वादिति हेतोः । दीपज्वालादिवदिति दृष्टान्तस्य । यद्यदवस्थाभेदवत्तत् प्रतिक्षणोत्पत्तिविनाशवद्यथा दीपज्वालादिरित्यन्वयव्याप्तिः । यन्नैवं तन्नैवं यथात्मेति व्यतिरेकव्याप्तिः ॥ ४३ ॥

यर्हि प्रतिक्षणोत्पत्तिविनाशवत्तर्हि प्रत्यभिज्ञा ज्ञानोत्तरम् ज्ञानम् तस्या एकवस्तुविषयत्वात् भिन्नाभिन्नशरीरे सा कथं सङ्गच्छेदित्याशङ्क्य । तदर्थमिति सिद्धान्तग्रन्थः । तत्रदेव दीपादिवदेव सादृश्यावलम्बनादि सन्निवेशसाम्यात् । दृष्टान्तेऽपि प्रकाशनकुण्डलादिसाम्यात् । अर्चिषामेव सदृशत्वात् । मृषा भ्रममयी । सादृश्यस्य भ्रमहेतुत्वादिति ॥ ४४ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इन्द्रियायनेति अयनशब्दो भौतिकदेहपरः शरीरमिन्द्रियमन्तःकरणं चेति त्रैविध्यमस्ति तन्मन एवात्मवस्तुनि बाह्या-

[1]इन्द्रियाणां मनश्चेति इति शुकप०पाठः । [2]वयोऽवस्था च तत्कृता इति वि०पाठः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

[illegible]ति १ सोऽयमिति । यथा प्रतिक्षणमग्निज्वालादीनामागमापि- गमभावत्सोऽयमपि दीप इति प्रत्यभिज्ञानं मृषेति भक्तोऽव्यवहारः स एवायं दीप इत्यादिप्रत्यभिज्ञा मृषा तथा भूतागोमिर्मृषावुषां पुंसां केषां चिद्विशेषाणामागमात् केषां चिदपगमात् स एवायं पुमानिति देहविषयो व्यवहारो मृषा विवेकिनां स चायं देह इत्यादिको न मृषा स चायमिति तु ज्ञानं न मृषायं स एव तु इतिज्ञानमृषैव कथादित्यादेर्विशेषविवेकोयुज्यते ॥ ४४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उपसंहरति । इन्द्रियायनस्य इन्द्रियाश्रयस्य देहस्य सृष्ट्यैव इदं त्रैविध्यं विश्वतैजसप्राज्ञत्वं वस्तुनि जीवे भाति कीदृशं बहिरन्तर्भिदाहेतुः बहिर्भिदानां जागरे श्रोत्रा- दीन्द्रियगुणभेदानामन्तर्भिदानां स्वप्नसुषुप्त्योर्मनोबुद्धिगुणभेदानां हेतुरुत्पादकं जनो यथा असज्जनकृत असत्पुत्रोत्पादकः इन्द्रि- यमनोबुद्धिगुणभिदानां नितृणामप्यसत्त्वात् सङ्गत एव दृष्टान्तः ॥ ४१

लोकप्रसिद्धौ जन्ममृत्यू निरूप्य प्रतिक्षणवर्त्तिनौ तौ सूक्ष्मौ वैराग्यार्थं निरूपयति । नित्यदा प्रतिक्षणं भूतानि शरीराणि भवन्ति उत्पद्यन्ते न भवन्ति नश्यन्ति च ननु प्रतिक्षणमुत्प- त्तिविनाशौ देहानां न लक्ष्येते तत्राह । अलक्ष्यवेगेनेति सूक्ष्म- त्वात् कालवेगो यथा दुर्लक्ष्यस्तथा तत्कालकृतावुत्पत्तिविनाशा- वित्यर्थः ॥ ४२ ॥

उत्पत्तिविनाशयोरलक्ष्यत्वेऽपि तावदवस्थादिभिरेवानुमीयेते इति सदृष्टान्तमाह । यथेति । अर्चिषां परिणामादिभिः स्रोतसां गत्यादिभिः फलानां रूपादिभिर्यथा अवस्था विशेषाः कृताः कालेनेति पूर्वस्यानुषङ्गः तथैव भूतानां देहानां वयोऽवस्थादयः कौमाराद्यवस्थाद्यः आदिशब्देन तेजोबलकामकौशलानि प्राणाणि भूतानि प्रतिक्षणोत्पत्तिविनाशवन्ति अवस्थाभेदवत्त्वाद्दीपज्वा- लावदित्यनुमानम् ॥ ४३ ॥

प्रत्यभिज्ञा तु सादृश्यावलम्बिनी कथंचिदित्याह । सोऽयमिति । अर्चिषां क्षणमात्रेणैव सहस्रश उद्गमाद्गमवतां गतानां ज्योतिः किर- णानां पुञ्ज एव क्षणान्तरे सोऽयं दीप इति स्रोतसां स्रोतो- युक्तजलानां क्षणमात्र एव क्रमशो दूरगतत्वेऽपि क्षणान्तरेऽपि नदीदं जलमिति प्रतीतिर्यथा तथैव कौमारे दृष्टे यौवनेऽपि सोऽयं पुमानिति तेन तत्राभेदावलम्बिनी धीज्ञानं, गीर्वाक्च मृषा अविवेकविजृम्भितेत्यर्थः मृषा एतादृशाविवेकव्याप्नमायुर्येषां तेषाम् ॥ ४४ ॥

---

१ सोऽयमितिश्लोके सोयं पुमानिति देहविषयकप्रत्यभिज्ञायाः भ्रान्तित्वमुक्तं तदनुपपन्नं तथात्वे देहस्य क्षणिकत्वापत्ते- रिति शङ्कानिरासकत्वेन प्रवृत्तत्वात्पद्यमुखेन प्रत्यभिज्ञा- द्वयं प्रदर्शयति । तथा च प्रत्यभिज्ञाभावधारणानिर- वधारणाचेति द्विविधा । आद्या भ्रमरूपा । जडे भेदाभेदसत्त्वा- त् । द्वितीयाविरोधित्वात्प्रमैव ।

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एकत्वात्मतया देहस्वीकारलक्षणस्य जन्मनः फलमाह । इन्द्रियेति । इन्द्रियायतनसृष्ट्या इन्द्रियाश्रयभवनस्य देहस्य सृष्ट्या जन्मना आत्मतया देहस्वीकारलक्षणेन इदं त्रैविध्यमु- त्तममध्यमाधमत्व वस्तुनि आत्मनि भाति जनः आत्मतया देहस्वीकारकर्ता बहिरन्तर्भूतानामुपद्रवाणां भिदायाः भेदस्य हेतुर्भवति स्वकृतेन देहात्माभिमानेनाधिभौतिकत्रैविध्यं बाह्याभ्यन्तरो- पद्रवांश्च प्राप्नोतीत्यर्थः असज्जनजनको यथा असज्जनेन हेतुभू- तेन बाह्याभ्यन्तरसन्तापान् प्राप्नोति तद्वत् ॥ ४१ ॥

देहिनो देहात्माभिमानेन क्षणभङ्गुरेषु देहादिष्वप्रत्यक्षदुःखाना- दिना तन्निवृत्तिमाह । नित्यदेति सप्तदशभिः । हे अङ्ग नित्यदा प्रतिक्षणं भूतानि शरीराणि भवन्त्यवस्थान्तरं प्राप्नुवन्ति न भवन्ति पूर्वावस्थां त्यजन्ति तदुभयं सूक्ष्मत्वान्न दृश्यते ॥ ४२ ॥

एतदेव दृष्टान्तेन स्फुटीकरोति । यथेति । यथा अर्चिषां दीपा- दिगतानां पूर्वपूर्वज्वालानामपायः उत्तरोत्तरज्वालानामागमः यथा च स्रोतसां पूर्वपूर्वप्रवाहजलानामपायः उत्तरोत्तरप्रवाह- जलानामागमः यथा च वनस्पतेः फलानां पूर्वपूर्वावस्थापायः उत्तरोत्तरावस्थागमाः कालेन कृताः न दृश्यन्ते इति दृश्यते ऽनेनैवान्वयो वचनव्यत्ययतो बाध्यः तथैव सर्वभूतानां पञ्च- भूतमयानां देहानां वयसा कालेन कृताः अवस्थाः निषेकाद्याः आदिना तत्तद्गुणादेर्भेदाश्च सूक्ष्मत्वान्न दृश्यन्ते देहात्मवादिनः अनित्येषु देहादिषु नित्यभ्रान्तिर्भवतीति भावः ॥ ४३ ॥

अनित्ये नित्यभ्रान्तिमेव दर्शयति । सोऽयमिति । मृषा आत्मानात्मविवेकानुपयोगित्वेन व्यर्थमायुर्येषां तेषाम् ॥ ४४ ॥

---

भाषा टीका ।

इंद्रियों के भोग की सृष्टि से ऐसा त्रैविध्य वस्तु आत्मा में भास होता है सोइ बाहिर भीतर के भेद का हेतु होता है जैसे कि असज्जन पुत्र को पैदा करने वाला जन होता है ॥ ४१ ॥

हे उद्धव ! नित्यही सब भूत प्राणीके शरीर होते हैं और जाते हैं जिस का वेग लखा नहीं जाता है ऐसे काल के वेगसे सूक्ष्म होने से नहीं दीखता है ॥ ४२ ॥

जैसे अग्नि की ज्वाला और जल का स्रोत और वृक्ष के फल होते हैं तैसे ही सब भूतों की अवस्था भी बद- लती है ॥ ४३ ॥

जैसे ज्वालाओं में अग्नि दीखती है जैसे प्रवाह में वही जल दीखता है तिसी प्रकार से मनुष्यों का वही मनुष्य है कर के मिथ्या आयुवालों की मिथ्या बुद्धि मिथ्या वाणी भी होती है ॥ ४४ ॥

मा स्वस्य कर्मबीजेन जायते सोऽप्ययं पुमान् ।
म्रियते वाऽमरो भ्रान्त्या यथाऽग्निर्दारुसंयुतः ॥ ४५ ॥
निषेकगर्भजन्मानि बाल्यकौमारयौवनम् ।
वयोमध्यं जरा मृत्युरित्यवस्थास्तनोर्नव ॥ ४६ ॥
एता मनोरथमयीर्ह्यन्यस्योच्चावचास्तनूः ।
गुणसङ्गादुपादत्ते क्वचित्कश्चिज्जहाति च ॥ ४७ ॥
आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ ।
न भवाप्ययवस्तूनामभिज्ञो द्वयलक्षणः ॥ ४८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु कथं देहाध्यासवतः पुंसः कर्मजन्ममरणानि सन्ति नान्यस्येति व्यवस्था न हि घटते घटस्य पुरुषभेदेन सत्त्वमसत्त्वञ्चेति न कस्यापि वस्तुनस्तत्स्वभावादित्याह । मा स्वस्य नैवाऽऽत्मनः कर्मणा बीजभूतेन सोऽप्ययमपि पुमान् जायते म्रियते वा किन्त्वयं भ्रान्त्याऽजन्मापि जायत इवामरोऽपि म्रियत इव यथा महाभूततेजोऽग्निः काष्ठात्पृथगवस्थितोऽपि दारुयोगवियोगाभ्यां जन्मनाशौ प्राप्नोति तद्वत् ॥ ४५ ॥

सिद्धवत्कृत्योक्ता वयोऽवस्थाः प्रपञ्चयति । निषेको जठरे प्रवेशः गर्भस्तन्मध्ये वृद्धिः बाल्यं शिशुत्वमापञ्चमाब्दात् कौमारमाषोडशाद्वर्षात् ततो यौवनमापञ्चचत्वारिंशतः ततो वयोमध्यमाषष्टिवर्षात् ॥ ४६ ॥

देहसम्बन्धाज्जन्ममरणादीनीत्युपपादितमर्थमुपसंहरति । एता इति । हि स्फुटम् अन्यस्य देहस्य तनूरवस्थाः गुणसङ्गात्तत्कृताविवेकात् कश्चित्परमेश्वरानुग्रहतः क्वचित्कथञ्चिज्जहाति अवस्थावतो देहस्य द्रष्टा नासाववस्थावानिति विवेकज्ञानेन ४७

ननु तदानीं मूर्च्छितत्वेन जन्ममरणवान् देहो न दृश्यतेऽत्राऽऽह आत्मन इति । पितुर्देहस्यौर्ध्वदैहिकं कुर्वताऽप्ययदर्शनात्पुत्रदेहस्य च जातकर्माणि जन्मदर्शनादात्मनः स्वस्य देहस्यापि भवाप्ययावनुमेयौ एवं च दृश्यत्वे सति भवाप्ययवतां वस्तूनां देहानामभिज्ञो द्रष्टा द्वयलक्षणो भवाप्ययधर्मको न भवति ॥ ४८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता— दीपिकादीपिनी टिप्पणी ।

नेत्यादेश्च समाधानग्रन्थः । तद्भावात् कर्मजन्ममरणाभावात् । रज्जुसर्पवत्तत्सत्त्वाभावादित्यर्थः । सा व्यवस्था व्यावहारिक्येव न पारमार्थिकीत्यर्थः । सोऽपि पुमान् स्वस्य कर्मबीजेन मा जायते मा म्रियते च किन्तु भ्रान्त्याऽजन्मापि जायत इवामरोऽपि म्रियत इव यथा दारुसंयुतोऽग्निस्तथेत्यन्वयः । वाशब्द इवार्थः । अमर इति अजन्मेत्यस्योपलक्षणम् ४५

सिद्धवल्लोके जातत्वादनुवादत्वादित्यर्थः ॥ ४६ ॥

कथञ्चिदित्यध्याहृतम् ॥ ४७ ॥

तदानीं जन्ममरणसमये । एवं चानुमानप्रकारेण दृश्यत्वे सति । जन्ममरणवतः स्वदेहस्यापि दृश्यत्वे सति ॥ ४८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अथ शरीरात्पूर्वमपि विद्यमानः पुमान् भ्रान्त्या जायते आत्मनः उत्पत्तिर्भ्रान्तिसिद्धेत्यर्थः । एवमुत्तरत्रापि यथाग्निरिति दारुगतस्याग्नेरपि पूर्वं विद्यमानत्वान्मथनेनोपलब्धिरेव सोत्पत्तिः तद्वत् ४५-४६

मनोरथमयीः मनोरथो मनोवृत्तिः यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरं तमेवैति कौन्तेयेति न्यायादन्तिमप्रत्ययानुगुणास्तनूरित्यर्थः ॥ ४७ ॥

आत्मन इति । अद्वयलक्षणः जन्ममरणाद्यवस्थाभेदविलक्षणः स्वभावाप्ययावस्थानामनभिज्ञः स जन्ममरणयोर्न प्रत्यभिज्ञा तदानीं मोहग्रस्तत्वात् अतः स्वभवाप्ययावनुमेयौ कथमित्यत्राह । पितृपुत्राभ्यामिति । पुत्रोत्पत्तिदर्शनात्स्वोत्पत्तिरनुमेया पितृमरणान्मरणमनुमेयमित्यर्थः ॥ ४८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं शरीरस्य सततपरिणामित्वमवस्थाभेदेन गोचरबुद्धिद्वयोर्भ्रान्तिमूलत्वं चोक्तम् अथात्मनो जन्माद्यवस्थानन्वयं तदन्वयप्रतीतेर्भ्रान्तिमूलत्वं चाह । मास्वेति । स्वस्य देहस्य कर्मबीजेन देहोत्पत्तिनिमित्तकर्माख्यबीजेन सोऽपि देहात्माभिमान्यपि पुमान् जीवो मास्तु देहवत्सततपरिणामस्वभावो न भवतु तथापि भ्रान्त्या जायते म्रियते च आत्मन उत्पत्तिमरणे भ्रान्तिसिद्धे इत्यर्थः । तत्र हेतुत्वेन पुमांसं विशिनष्टि । अज अमर इति । न तदजस्य जनिरमरस्य मृतिश्च विद्यत इत्यर्थः । देहोत्पत्तेः पूर्वं तद्विनाशात्परञ्चात्मनो विद्यमानत्वादिति भावः तत्र दृष्टान्तमाह । यथाग्निरिति । यथा महाभूततृतीयपरिणामात्मकस्याग्नेर्दारुसंयुक्तस्य मथने तोपलब्धिमात्रं न तु दारुणा सहोत्पत्तिविनाशौ तत्प्रतीतिस्तु भ्रान्तिमूला तद्वत् ॥ ४५ ॥

वयोऽवस्थाश्च इत्युक्ता अवस्था दर्शयति । निषेकेति । निषेको

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

षेको द्वारा पञ्चमासुल्वप्रवेशः गर्भस्तत्रोपचयः बाल्यमापञ्चमाब्दात्कौमारमाषोडशाब्दात्ततो यौवनमाचत्वारिंशतेः वयोमध्यमाषष्टिवर्षात्तदुपरि जरा तदुपरि मृत्युः इति तमोऽन्धावस्था मर्त्यात्मनः ॥ ४६ ॥

किं तर्ह्येवं विधनानावस्थदेहसम्बन्धतद्वियोगात्मकसंसृतिकारणमित्यत आह। एता इति। अन्यस्य देहस्य सम्बन्धिनीः मनोरथो मनोवृत्तिस्तत आगता मनोरथमयीः "तत आगत" इत्यधिकारे " मयट्च " इति मयट् टित्त्वात् ङीप्—

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय ! सदा तद्भावभावितः॥

इतिन्यायादन्तिमप्रत्ययप्रयुक्ता इत्यर्थः एताः परिदृश्यमाना उच्चावचा यद्वा एता निषेकाद्यवस्थाः अन्यास्त्वासनयानावस्थास्तनूश्च कश्चित्कदाचित्तत्सम्बन्धनिमित्तकर्मपरिपाकदशायामुपादत्ते कश्चिज्जहाति च कश्चिदित्यनेन तदुपादानपरित्यागौ बद्धस्यैव न तु मुक्तनित्ययोरित्यभिप्रेतं गुणसङ्गादित्यनेन मनोरथमयीरित्यनेन च यं यं वापीति पूर्वोक्तन्यायेन गुणपरिणामात्मकशब्दादिविषयानुध्यानं त्यागोपादानकारणमित्युक्तं भवति॥४७॥

केवलमुपादत्ते जहाति च न तु तावुपादानत्यागौ साक्षात्करोति विवेकेन तु केवलमनुमिनोतीत्याह। आत्मन इति। स्वस्य भवाप्ययौ देहसम्बन्धतद्वियोगात्मकजन्ममरणे पितृपुत्राभ्यां दृष्टान्ताभ्यामनुमेयौ पुत्रोत्पत्तिदर्शनात्स्वोत्पत्तिरनुमेया पितृमरणदर्शनात्स्वमरणमनुमेयं न तु स्वजन्ममरणे साक्षात्करोति तदानीं मोहग्रस्तत्वादिति भावः तदेवाह। नेति। भवाप्ययवस्तूनां स्वजन्ममरणादिवस्तूनां नाभिज्ञः तदा मोहाविष्टत्वादनभिज्ञ इत्यर्थः। तदाप्ययवलक्षणः स्वयं जन्ममरणमाक्रुरूपश्च न भवति जन्ममरणयोर्देहगतत्वादिति भावः ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ननु देहस्यैव विकारश्चेद्देहजातोऽहं मृत इति प्रतीतिः कथमत्राह। नाद्य इति। आद्य उत्पत्तिरहितोऽमरो मरणरहितः आद्यन्तशून्य इत्यर्थः अव्ययः शरीरसंयोगवियोगयोरपि वृद्धिक्षयादिरहितः स जीवः स्वकृतकर्मबीजेन जायते म्रियते चेति व्यवहारो भ्रान्त्या विवेकज्ञानराहित्येन यथा दारुसंयुक्तोऽग्निरुत्पत्तिविनाशवानित्युच्यते तस्मान्नित्यस्य जीवस्य जननमरणप्रतीतिरविवेककृतेत्यर्थः—

स चायमिति तु ज्ञानं न मृषात्वं स एव तु।
इति ज्ञानं मृषैव स्याद्भेदाभेदौ यतस्तयोः॥
अभेद एव जीवस्य नित्यं प्रत्येकशः पृथक्।
देहदीपनदीवारिफलादीनां पृथक्त्वतः॥
भेदाभेदौ परिज्ञेयौ कार्यकारणयोरपि।
गुणस्य गुणिनश्चैव जातिव्यक्त्योस्तथैव च॥
तथावयव्यवयवयोः क्रियावास्तवतस्तथा।
एवं जडेषु नियमाद्विरूपेष्वन्यदेव तु॥
ये धर्मा नियमेनैव धर्मिणो न वियोगिनः।
अद्वया अन्यभिन्नास्ते भिन्नाभिन्ना वियोगिनः॥

इति वचनात् यावद्द्रव्यभाविनामभेदो यावद्द्रव्यभाविनां भेदाभेदाविति निर्णय इति ॥ ४५ ॥

जन्मादिकं जीवस्य नैवेत्युक्त्या देहस्य सिद्धं प्रदर्शयति। निषेकेति ॥ ४६ ॥

चिद्रूपस्य। जीवस्य जडशरीरसम्बन्धः कथं घटत इति तत्राह। एता इति। अन्यस्य हरेरधीना मनोरथमयीरेतास्तनूः सत्त्वादिगुणसङ्गादुपादत्ते अभिमनुते अभिमानं जहाति च हरेरिच्छागुणसंगश्च घटक इत्यर्थः ॥ ४७ ॥

अभिमानस्वीकारो जन्म तदत्यन्तविस्मृतिर्मरणमित्युक्तं तद्व्यतिरिक्तप्रमाणकत्वेन मानान्तरं किं न स्यादित्यत्राह। आत्मन इति। आत्मनो देहस्य भवाप्ययौ जन्मनाशौ पितृपुत्राभ्यां लिङ्गाभ्यामनुमेयौ तथाहि स्वदेहात् पुत्रदेहो जातः यस्मात्तस्माज्जन्मसिद्धं यथा च पितृशरीरं विनष्टं पुत्रेण दृष्टं यस्मात्तदपि प्रत्यक्षसिद्धमेवं देहस्य जननमरणं सिद्धं इति भावः। ननु तर्हि देहस्य विद्यमाने जातो मृत इति चेतनविषयत्वेन कथं व्यपदिश्यत इति तत्राह। भवाप्ययाविति। वस्तूनां नित्यानां जीवानां जातोऽहं मृतोऽहमिति व्यपदिश्यमानौ भवाप्ययौ अभिज्ञाद्वयलक्षणौ अभिज्ञाद्वयं जातो मृत इति अभिमानद्वयमेव लक्षणं ययोस्तौ तथाहि यस्मात्तस्माद्व्यपदेश इति[1] भावः ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

मात्स्यचेति तैः तत्र तद्भावादिति रज्जुसर्पवत् सत्त्वाभावादित्यर्थः ॥ ४५—५१ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

वस्तुतस्तूपाधिसम्बन्धेनैव जीवस्य जन्ममृत्यू स्त इत्याह। नेति। स्वस्य कर्मरूपेण बीजेन अयं पुमान् जीवः ना जायते ना म्रियते च किन्त्वयं भ्रान्त्या अजन्मापि जायते अमरोऽपि म्रियते यथा महाभूततेजोरूपोऽग्निरनादिकल्पान्तमवस्थितोऽपि दारुयोगवियोगाभ्यामेव जन्मनाशौ प्राप्नोति तद्वत् ॥ ४५ ॥

देहसम्बन्धादेव जीवोऽवस्थावानुच्यते तस्या नवावस्था गणयति। निषेको जठरे प्रवेशः गर्भस्तन्मध्ये वृद्धिः जन्म जठरान्निष्क्रामः बाल्यमापञ्चमाब्दात् कौमारं पौगण्डकैशोरात्मकमाषोडशवर्षात् ततो यौवनमापञ्चचत्वारिंशतः ततो वयो मध्यमाषष्टिवर्षात् ततो यावज्जीवनं जरैव ततो मृत्युरिति ॥ ४६ ॥

देहसम्बन्धाज्जन्ममरणादीन्युपपादितमर्थमुपसंहरति। एता इति। हि स्पष्टं मनोरथमयीः कर्मप्रापितमनोध्यानप्राप्ताः अन्यस्य देहस्य तनूः स्वस्य गुणसङ्गादविद्याहेतुकात् उपादत्ते कश्चिद्भगवदनुगृहीतो जहाति च ॥ ४७ ॥

ननु देहस्यैता अवस्था देहिना दृश्यन्त एव किन्तु निषेकगर्भजन्ममरणानि न दृश्यन्ते तत्राह। आत्मन इति। पितृदेहस्योत्पन्नदे-

१ तथाचानुमानप्रयोगः मदीयो देहः उत्पत्तिमान् पुत्रदेहत्वात्। मत्पुत्रदेहवत्। मदीयो देहः विनाशवान् पितृदेहत्वात् मत्पितृदेहवत् इति ।

तरोर्बीज¹विपाकाभ्यां यो विद्वान् जन्मसंयमौ ।
तरोर्विलक्षणो द्रष्ट एवं द्रष्टा तनोः पृथक् ॥ ४९ ॥
प्रकृतेरेवमात्मानमविविच्याबुधः पुमान् ।
तत्त्वेन स्पर्शसम्मूढः संसारं प्रतिपद्यते ॥ ५० ॥
सत्त्वसंगादृषीन् देवान् रजसासुरमानुषान् ।
तमसा भूततिर्यक्त्वं भ्रामितो याति कर्मभिः ॥ ५१ ॥
नृत्यतो गायतः पश्यन् यथैवानुकरोति तान् ।
एवं बुद्धिगुणान् पश्यन्ननीहोऽप्यनुकार्यते ॥ ५२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पितृकर्म कुर्वता ऽस्वयदर्शनात् पुत्रदेहस्य च जातकर्मणि जन्मदर्शनात् आत्मनः स्वदेहस्यापि भवाप्ययावनुमेयौ अत्र भवशब्देन निषेकगर्भजन्मान्युपलक्षितानि एवं च दृश्यत्वे सति भवाप्ययवतां वस्तूनां देहादीनामभिज्ञो द्रष्टा प्रपञ्चलक्षणः देहलक्षणः वाऽत्र भवति ॥ ४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मानात्मविवेकं दर्शयति । नेति । अपि निश्चितं अस्य देहस्य कर्मरूपेण बीजेन अयं देह एव जायते म्रियते च सदेहः पुमान् भ्रान्त्योपलक्षितोऽपि मा नैव म्रियते जायते च यतोऽमरः यथाग्निः अरण्यादिदारुसंयुतोऽपि न तेन सह जायते म्रियते च तद्वदित्यर्थः ॥ ४५ ॥

कास्ताः सर्वभूतानां वयोऽवस्था इत्याकाङ्क्षायामाह । निषेक इति निषेकः मातृजठरे प्रवेशः गर्भो जठरस्थत्वम् जन्म मातृजठरान्निर्गमनपर्यायभूतत्वम् बाल्यं प्रथमपञ्चाब्दपरिच्छेद्यत्वम् कौमारमाषोडशाब्दात् यौवनमाचत्वारिंशदब्दात् वयोमध्यमाषष्टिसंवत्सरात् तत उपरि जरा मृत्युः पञ्चत्वमायुः सापेक्ष्य तनोर्देहस्य ॥ ४६ ॥

ननु तनोरेव अवस्था चेत्तर्हि बालोऽस्मि कुमारोऽस्मीत्यादिकथं घटेतेत्यत आह । एता इति । एताः पूर्वोक्ताः अन्यस्य आत्मव्यतिरिक्तस्य तनोरवस्थाः गुणसङ्गादुपादत्ते स्वीकरोति संसारे परिभ्रमतीति फलितोऽर्थः जीव इति शेषः । अत एव मनोरथमयीः भ्रान्तमनोरथप्रचुराः जीवधर्मत्वेन गृहीता इत्यर्थः कश्चित्कश्चिदात्मानात्मस्वरूपयाथात्म्यबोधे सति ॥ ४७ ॥

तद्विवेकमेवोपदिशति । आत्मन इति । पितृपुत्राभ्याम् आत्मनः पूर्वमात्मतयाङ्गीकृतस्य स्वदेहस्येत्यर्थः । भवाप्ययौ अनुमेयौ अतो नानाभूतमयो देहः भवाप्ययधर्मकः ननु भवाप्ययविषयभूतानां वस्तूनां भौतिकानां देहादीनामभिज्ञः अन्वयलक्षणः नानाभूतमयदेहादिविलक्षणस्वरूपः क्षेत्रज्ञः भवाप्ययजनक इत्यर्थः प्रयोगस्तु नानाभूतमयो देहो जातः न त्वहम् भौतिकत्वात्पुत्रदेहवत् देहो मरिष्यति न त्वहम् भौतिकत्वात्पितृदेहवदिति ॥ ४८ ॥

---

भाषा टीका ।

अपने कर्म बीज से यह पुरुष पैदा नहीं होता है न मरता है यह आत्मा अमर है भ्रांति से सब होता है जैसे अग्नि काष्ठ में रहने से उत्पन्न तथा नष्ट माना जाता है ॥४५॥

गर्भाधान गर्भवृद्धि जन्म बाल्यावस्था कौमार अवस्था यौवन अवस्था मध्यम अवस्था वृद्धावस्था मरण इस प्रकार से शरीर की नौ अवस्था होती हैं ॥ ४६ ॥

इतने ए शरीर ऊंच नीचे मनोरथ मय हैं जीव इन को गुणों की आसक्ति से कहीं ग्रहण करता है कहीं कोइ छोड़देता है ॥ ४७ ॥

अपने पिता तथा पुत्र को देखकर अपने भी जन्म तथा मरण का अनुमान करना नाश उत्पन्न दोनों वस्तुओं का जानने वाला कोइ यथार्थ से नहीं है ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एतदेव दृष्टान्तेन स्पष्टयति । तरोरिति । तरुशब्दो नोद्भिज्जमात्रस्योपलक्षणं किन्तु फलपाकान्तस्य व्रीह्यादेरित्यर्थः । यथा तरोरेवान्यः परिणामो विपाकः बीजाज्जन्म विपाकात्संयमं नाशं च विद्वान् द्रष्टा तरुद्रष्टा एवं तनोर्द्रष्टा ततः पृथक् अतस्तत्र वर्त्तमानोऽपि भवाप्ययाभ्यां न सम्बध्यते ॥ ४९ ॥

अविवेकिनः संसारं प्रपञ्चयति । प्रकृतेरिति पञ्चभिः । तत्त्वेन तत्त्वतोऽविविच्य तत्त्वदृष्ट्या स्पर्शेषु विषयेषु सम्मूढ इति वा ॥ ५० ॥

१ विकाराभ्यां मिति विज० पाठः

### श्रीधरस्वामिकृतभावार्थदीपिका ।

गुणभेदेन त्रिविधं तथापि च तत्तारतम्येनैकत्र त्रिविधं संसारमाह । सत्त्वेति ॥ ५१ ॥

नन्वकर्तुरात्मनः कुतः कर्मभिर्भ्रमणं तत्राह । नृत्यतो गायतो जनान् पश्यन्ननुकरोति तद्गतचरतालादिगतिं शृङ्गारकरुणादिरसं च मनस्यनुवर्तयतीत्यर्थः अनुकार्यते गुणैर्बन्धादिरित्यर्थः । अनेन दृष्टान्तेन दृश्यधर्मो द्रष्टरि स्फुरतीति दर्शितम् ॥ ५२ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

एतदेव द्रष्टृदृश्यधर्मानाक्रान्तत्वमेव । पूर्वार्धे तरुशब्दस्य फलपाकान्तमात्रे लक्षणा अतो वक्ष्येति । विपाकादन्त्यपरिणामात् ॥ ४९ ॥

अविविच्य पृथक्त्वेनाज्ञात्वा पूर्वार्धे तरत्वेनेति परमपुरुषार्थकमतो यति ॥ ५० ॥

तथापि त्रैविध्येऽपि । तत्तारतम्येन गुणानां न्यूनाधिकत्वेन । एकैकत्र एकैकस्मिन् गुणे त्रिविधम् ऊर्ध्वादियोन्यात्मकम् ॥ ५१ ॥

तद्गतेति । नर्तक-गायकनिष्ठा ये स्वरतालादयस्तेषां गतिं परिपाटीमादिना ग्रामत्रैकविंशतिमूर्च्छनादिग्रहः । शृङ्गारकरुणादीत्यादिना रौद्रवीरभयानकादिग्रहः । अनेन नर्तकगायकादिदृष्टान्तेन दृश्यधर्मो बुद्धिधर्मः सुखदुःखादिरूपः द्रष्टरि आत्मनि । यथा दृश्यानां नर्तकानां गायकानां धर्माः स्वरतालादयः शृङ्गारादयश्च द्रष्टृषु मनःस्वेषु स्फुरन्ति तद्वदिति ॥५२॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तरोरिति बीजविपाकः फलकालपरिणामः यस्योत्पत्तिविनाशावनुमेयौ तस्मादात्मा भिन्नः यथा वृक्षोत्पत्तिविनाशाभिज्ञो देवदत्तो वृक्षाद्भिन्नः तद्वद्देहोत्पत्तिविनाशाभिज्ञो देवदत्तो देहाद्भिन्न इत्यर्थः ॥ ४९—५१ ॥

अनुकरोति स्वयमपि नृत्यन्निव भवति बुद्धिगुणान् बुद्ध्युपस्थापितान् देहगुणान् स्थूलादीन् ॥ ५२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अत एवात्मा देहाद्भिन्नः सिद्ध्यतीति सदृष्टान्तमाह । तरोरिति । विपाकः फलपरिणामः यथा यः पुमान् बीजविपाकाभ्यां तरोर्जन्मसंयमावुत्पत्तिविनाशौ बीजाज्जन्म विपाकात्संयमं विद्वान् स तरोर्विलक्षणो भिन्नो दृष्टः एवं तनोर्देहस्य पञ्चभूतसंघातात्मकाद्देहादुत्पत्तिं विपाकान्नाशं च द्रष्टा पश्यन्नात्मा तयोः पृथग् भिन्नः ॥ ४९ ॥

इत्थं देहाद्भिन्नमात्मानं यो न विविनक्ति स संसरतीत्याह । प्रकृतेरिति । प्रकृतेर्देहादात्मानं तस्यैव यथावद्विलक्षणाकारेणाविविच्यात्माबुधः । अत एव स्पर्शेन शब्दादिविषयानुभवेन संमूढः समित्यैक्याकारे देहात्मनोरैक्याभिमानात्मकमोहयुक्तः संसारं प्रतिपद्यते ॥ ५० ॥

संसारप्रतिपत्तिमेव प्रपञ्चयति । सत्त्वसङ्गादिति । सत्त्वसङ्गः धर्मो धर्मेस्तितिक्षा तपः सत्यमिति वक्ष्यमाणसत्त्वकार्यधर्मज्ञानाद्यभिनिवेशस्तस्मात्कर्मभिस्तदनुरूपकर्मभिः देवानृषींश्च याति देवत्वमृषित्वं वा प्राप्नोति रजसा रजःकार्यकामाद्यभिनिवेशेन तदनुरूपकर्मभिरसुरमानुषान् वाऽसुरयोनिं मनुष्ययोनिं वा प्राप्नोति तमसा तमःकार्यशोकमोहादिना तत्प्रयुक्तैः कर्मभिश्च भूतप्रेतपिशाचत्वं पशुपक्ष्यादित्वं वा प्राप्नोति इत्थं भ्रामितो भवति यद्वा कर्मभिः पुण्यपापात्मकैः भ्रामितः प्रकृतिमयदेहे संचालितो जीवः सत्त्वादिसङ्गादेवत्वादिकं प्राप्नोतीति सम्बन्धः ॥ ५१ ॥

कथं निर्गुणस्यात्मनो भ्रमणमित्यत्राह । नृत्यत इति । यथा नृत्यतो गायतश्च जनान् पश्यन् पुमान् ताननुकरोति स्वयमपि बुद्ध्या नृत्यन्निव गायन्निव च भवति तथात्मेह निःक्रियोऽप्यात्मा बुद्धिगुणान् स्वस्मिन् बुद्ध्युपस्थापितान् गुणान् देहादिधर्मानित्यर्थः पश्यन् स्वगतत्वेनाध्यवस्यन्ननुकार्यते चेष्टमान इव वर्तते ॥ ५२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अभिमानमात्रसमर्थनेन किंप्रयोजनमित्याशङ्क्य अभिमानपरित्यागेनैव संयमलक्षणोऽयं इति भावेनाह । तरोरिति । यस्तरोर्जन्मसंयमौ बीजविकाराभ्यां बीजाद्विकाराच्च विद्वान् जानाति यथा तेन विदुषा तदन्तःस्थित आत्मा तन्नियामकः परमात्मा च तरोर्विलक्षणो दृष्टः एवं देहस्य जन्मसंयमौ द्रष्टा जीवः तन्नियामकः सर्वज्ञः परमात्मा च तयोः पृथक् भिन्न इत्यर्थः । अनेन तरोर्बीजविकारदृष्टान्तेन विद्वान् देहाभिमानं त्यक्त्वा संयमं याति सर्वस्मात्परमेवं जानातीत्युक्तमत्र किंप्रमाणमित्यतो वाह । तरोरिति । विद्वद्दर्शनं मानमित्यर्थः । यो बीजविकाराभ्यां जन्मसंयमौ विद्वांस्तरोरवैत्यां गतस्तरोर्विलक्षणो यथा दृष्टः एवं देहस्य जन्मादिद्रष्टा जीवाख्यः शरीराद्भिन्न इति स्वानुभवसिद्धमुक्तमिति भावः ।—

> बीजाद्यवस्थासंयुक्तात् द्रष्टा यथा पृथक् । एवं
> विकारिणो भिन्नजीवः पृथगेव स्थितिर्वचनात् ॥ ४९ ॥

विकारिणो देहाज्जीवपरमात्मविवेकेन ज्ञानं मुक्तिसाधनं तदभावज्ञानं संसारकारणमित्याह । प्रकृतेरिति । प्रकृतेर्देहादेरात्मानं जीवं परमात्मानं च स्वतन्त्रताविविच्य सम्यक् भिन्नमज्ञात्वा अत एवाबुधः पुमान् संसारं प्रतिपद्यते अज्ञाननिमित्तमाह । स्पर्शेनेति । स्पर्शो विषयाः तत्रासक्त्यासम्मूढः ॥ ५० ॥

संसारतारतम्यमपि सत्त्वादिगुणनिमित्तमित्याह । सत्त्वसङ्गादिति । सत्त्वसङ्गात्सात्त्विकसङ्गाच्च पुण्यकर्मणा ऋष्यादीन् प्राप्नोति रजसा राजसकर्मणा मानुषमानुषासुरादिकं प्राप्नोति । तामसकर्मणा प्रमथराक्षसादिभूतप्रेतयोनिरयमाप्नोति ॥ ५१ ॥

यथाऽम्भसा प्रचलता तरवोऽपि चला इव ।
चक्षुषा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः ॥ ५३ ॥
यथा मनोरथधियो विषयानुभवो मृषा ।
स्वप्नदृष्टाश्च दाशार्ह ! तथा संसार आत्मनः ॥ ५४ ॥
अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ।
ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ ५५ ॥
तस्मादुद्धव ! मा भुङ्क्ष्व विषयानसदिन्द्रियैः ।
आत्माग्रहण[1]निर्भातं पश्य वैकल्पिकं भ्रमम् ॥ ५६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अतः सात्त्विकानां सुरादीनां दुःखित्वमितरेषां सुखित्वमित्यादिविपरीतानुभवः कथमित्याह । नृत्यत इति । यथा लोके नर्तनादि कुर्वतः पश्यन् स्वयं च तान् पुरुषाननुकरोति नृत्यादि करोति एवमनीहोऽपि दुःखाद्यननुभवयोग्योऽपि बुद्धिगुणान् दुःखादीन् पश्यन्ननुभवन्नहं दुःखीत्यादि ममत्वेनानुकार्यते हरिणेति शेषः—

दुःखं शोकादयः सर्वे ज्ञेया बुद्धिगुणा इति ।
सुखज्ञानं तु जीवस्य शक्तिर्ब्रह्मणैव च ॥
विपर्ययेणासुराणां जीवबुद्धिगुणा मताः ।
आत्मनोऽपि गुणा बुद्धिकृता बुद्धिगुणा इति ॥
उच्यन्ते सुखदुःखाद्याः परमात्मकृता इति ।

इति वचनात् ॥ ५२ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नृत्यत इति । बुद्धिगुणतोऽन्यदपि ध्यानं जीवस्य दर्शितं द्रष्टृदृश्ययोर्मिथो भिन्नगुणत्वात् ॥ ५२—५५ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एतदेव दृष्टान्तेन स्पष्टयति । तरोरिति । तरुर्यद्बीजोद्भिज्जमात्रमुत्पद्यते ततो वर्धमाना फलपाकान्तस्य व्रीह्यादेरित्यर्थः बीजाज्जन्म विपाकात् संयमं नाशं च विद्वान् ॥ ४९ ॥

अविवेकिनः संसारं प्रपञ्चयति । प्रकृतेरुपाधेः सकाशादात्मानं असंपश्यन्सम्मूढः विषयाविष्टः ॥ ५० ॥ ५१ ॥

द्रष्टुर्जीवस्य दृश्यात् पार्थक्येऽपि दृश्यधर्मग्रहणे दृष्टान्तमाह । नृत्यतो गायतो जनान् पश्यन् बालो यथा अनुकरोति तद्गतस्वरतालादिगतिं शृङ्गारादिरसं च मनस्यनुवर्तयतीत्यर्थः अनुकार्यते गुणैर्बलादित्यर्थः ॥ ५२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

एतदेव दृष्टान्तेन स्पष्टयति । तरोरिति । वृक्षतरोः बीजाज्जन्म विपाकात्संयमं नाशं च विद्वान् स द्रष्टा तरोर्विलक्षणः एवं तनोर्जन्मसंयमौ यो विद्वान् स ततः पृथगेव ॥ ४९ ॥

एवमात्मानात्मविवेकं संसारनिवृत्तये उपदिश्य आत्मानात्मविवेकाभावे तु संसरत्येवेत्याह पञ्चभिः । तत्त्वेन स्वस्वरूपयाथात्म्येन अविविच्य अत एव अबुधः अनात्मज्ञः देहात्माभिमानवान् स्पर्शेषु तेषु संमूढः संसारं जन्ममरणप्रवाहं प्रतिपद्यते प्राप्नोति ॥ ५० ॥

संसारं प्रपञ्चयति । सात्त्विकादिकर्मभिर्भ्रामितश्चाबलः कश्चित् सात्त्विकेन कर्मणा ऋष्यादिभावाभावितस्तत्क्रमादेव ऋष्यादीन् देवान् याति रजसा च असुर्यादिभावाभावितः असुरादीन् याति तमस्तमसा भूतादीन् एवं पुनः पुनः संसारं प्राप्नोतीत्यन्वयः ॥५१॥

ननु ऋषित्वादिधर्मविहीनो जीवः कथं तान् तान् धर्मान् प्राप्नोतीत्यत आह । नृत्यत इति । नृत्यतः नर्तकान् गायतः गायकान् पश्यन् यथा अनुकरोति एवं बुद्धिगुणान् बुद्धिगतान् ऋषित्वदेवत्वादीन् धर्मान् असुर्यादिदेहात्माभिमानेन आत्मधर्मतया पश्यन् बलाद्देहात्माभिमानेनानुकार्यते देहधर्मान् आत्मधर्मत्वेन स्वीकरोतीति फलितोऽर्थः ॥ ५२ ॥

भाषा टीका ।

वृक्षके पैदा होने तथा धान्यादिकों के पककर सुखजाने को देखकर अपने जन्म मरण को जान जावे कि जैसे इस पेडसे देखने वाला अलग है तैसे शरीरसे भी देखने वाला अलगही है ॥ ४९ ॥

अज्ञानी पुरुष इस प्रकार से प्रकृति से ठीक भिन्न आत्मा को न जान कर विषय सुखोंमे मोहित होकर संसार को प्राप्त होता है ॥ ५० ॥

सत्व गुणकी आसक्ती से ऋषि देवता होता है रजोगुणसे असुर मनुष्य होता है तमोगुण से भूत पशु आदि योनिको प्राप्त होताहै ऐसेही कर्मों से घूमता हुआ जाताहै ॥५१॥

जैसे नाच में बैठा मनुष्य उनके नाच गान को देखकर मन में गाता नाचता सा होजाता है इसी प्रकार से अकर्ता भी आत्मा बुद्धि गुणोंका अनुकरण करता है तो उस सरीखा होता है ॥ ५२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

उपाधिधर्माध्योपहितेऽत्रभासन्ते इत्यत्र दृष्टान्तमाह यथाऽम्भ-

[1] निष्पन्न इति विजयध्वजपाठः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जीवस्य संसारोऽपि वृथा अल्पप्रयोजनः "अल्पप्रयोजनं वस्त्वनुवृत्त्येव तदुच्यते" इति वचनात् ॥ ५४ ॥

असद्रूपत्वे किमिति न निवर्तत इति तत्राह । अर्थे इति । अर्थे दुःखित्वादिलक्षणे विषये अविद्यमानेऽपि संसृतिः संसृष्टदुःखित्वादिप्रत्ययो न निवर्तते किन्तु वर्तत एव अनिवृत्तौ निमित्तमाह । ध्यायत इति । निरन्तरं शब्दादिविषयध्यानमनिवृत्तौ कारणमित्यर्थः । तत्कुत्र दृष्टमत्राह । स्वप्न इति । ध्यायत इत्यनुवर्तते जाग्रद्दृष्टतुरगाद्यर्थध्यानात् स्वप्नेऽप्यर्थागमस्तुरगाद्यर्थागमो यथा न निवर्तते उपादानादिव्यवहारानुभवात् अत्र यथाऽम्भसेत्यादिदृष्टान्तानां प्रपञ्चमिथ्यात्वे न तात्पर्यं किन्तु देहसम्बन्धात्सुखरूपाणां जीवानां अहं दुःखीत्यादिप्रत्ययस्य यथा स्वतः शुक्लः शङ्खोऽपि जपाकुसुमसन्निधानाल्लोहित इति शङ्खविषये लोहितप्रत्ययस्य मिथ्यात्वं इदं तथात्रापीति । सन्तोष्टव्यम् ॥ ५५ ॥

फलितमाह । तस्मादिति । आत्मनोर्जीवपरमात्मनोः स्वरूपाग्रहणेन निष्पन्नं वैकल्पिकं विरुद्धकल्पनाजनितं भ्रमं पश्यन् ॥ ५६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्मादुद्धव माभुङ्क्ष्वेति स्फुटमेव तमुपलक्ष्यान्यान् प्रत्युपदेशो व्यज्यते नोद्धवोऽण्वपि मन्न्यून इत्यादिभिर्भगवन्मनोवृत्तेः ॥ ५६ ॥ ५८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अन्यधर्मो अन्यत्रावभासन्ते इत्यत्र दृष्टान्तमाह । यथेति । अम्भसा प्रचलतेव तत्र नौकारूढैर्जनैस्तत्तीरस्थास्तरवो यथा चला इव दृश्यन्ते एवं कर्तृत्वभोक्तृत्वादय उपाधिधर्मा एव तद्ग्राह्ये जीवे सर्पभूताद्याविष्टत्वात् सर्पादिग्राह्ये मनुष्ये सर्पादिधर्मा इवावभासन्त इत्यत्र दृष्टान्तमाह । चक्षुषेति ॥ ५३ ॥

तदेवं विषयभोगा उपाधिधर्मा एव जीवे मृषा प्रतीता इत्यत्र दृष्टान्तद्वयमाह । यथेति । विषयानुभवो विषयभोगः संसारः संसारबन्धः ॥ ५४ ॥

संसारबन्धस्य मिथ्यात्वेऽपि तदुत्थं दुःखं न निवर्तत इत्याह । अर्थे उपाधिसम्बन्धे अविद्यमाने अवस्तुभूतेऽपि संसृतिः संसारबन्धोत्थं दुःखं न निवर्तते कस्य विषयान् भोगबुद्ध्या ध्यायतः अस्य जीवस्य अवस्तुभूतस्यापि दुःखदत्वे दृष्टान्तः स्वप्नेऽनर्थागमः सर्पादिदंशः ॥ ५५ ॥

यस्माद्भोगबुद्ध्या विषयध्यानमनर्थहेतुस्तस्मात्त्वं तत्त्यजेत्याह तस्मादिति । विकल्पाद्देहाध्यासादुत्थं भ्रममज्ञानं पश्य कीदृशं आत्मनो जीवस्य अग्रहणमप्राप्तिस्तत्र निमित्तं विराजमानं तदतिसाधकमित्यर्थः ॥ ५६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्यधर्मस्यान्यत्र प्रतीतौ दृष्टान्तद्वयमाह । यथेति । तथा ऋषिरस्मि देवोऽस्मि असुरोऽस्मीत्यादिदेहात्माभिमानेन ऋषित्वादयो धर्मा आत्मधर्मत्वेन प्रतीयन्ते ॥ ५३ ॥

किंबहुना यथा मनोरथधियः नरोऽस्म्यसुरोऽस्मीत्यादिमनोरथधियः स्वप्नदृष्टाश्च व्याघ्रोऽस्मीत्यादिधियः तत्र तत्र दैवादुत्थिता अपि मृषा नरः सुरो व्याघ्रो वा न भवति तथात्मासङ्गत्वात् तथा विषयाणां शुभाशुभानामनुभवो यस्मिन् स संसारः ऋषित्वदेवत्वमनुष्यत्वादिरूपः जातत्वमृतत्वादिरूपश्च आत्मनः ऋषिर्वा देवो वा मनुष्यो वा मृगो वा न भवति ॥ ५४ ॥

ननु तस्य मृषात्वे तन्निवृत्त्युपायविषयकशास्त्रस्य वैयर्थ्यं स्यादत आह । अर्थे इति । अर्थे । ऋषित्वदेवत्वादेः जातत्वमृतत्वादेरात्मनि अविद्यमानत्वेऽपि अस्य देहात्माभिमानिनः संसृतिः ऋषिरस्मि देवोऽस्मि असुरोऽस्मि मरिष्यामीत्यादिरूपा न निवर्तते यथा स्वशिरश्छेदाद्यनर्थाभावेऽपि स्वप्ने तादृशानर्थागमोऽस्त्येव ननु आत्मपरमात्मविषयकशास्त्रश्रवणादिना ऋषित्वादयो जाग्रत्वादयश्च देहधर्मा अहन्तु परमात्मांशभूतस्तैर्धर्मैरस्पृष्टस्वरूपः इति ज्ञात्वा परमात्मध्यानेन मुक्तः कुतो न भवेदित्यत आह । ध्यायतो विषयानिति । विषयासक्तस्योक्तसाधनेऽधिकारो नास्ति अतःसंसृतिर्न निवर्तते इत्यर्थः ॥ ५५ ॥

अतो विषयभोगो न कर्तव्य इत्याह । तस्मादिति । असाधुविषयैः कलिष्ठैरिन्द्रियैः विषयानिन्द्रियार्थान् वैकल्पिकं विकल्पं आत्मभिन्ने देहभ्रमं आत्मभ्रान्तिं पश्य संसारहेतुत्वेनालोचय ॥ ५६ ॥

---

भाषा टीका ।

जैसे जलके हिलने से वृक्ष भी हिलते से दीखते हैं तथा अपने घूमने से नेत्रों से भूमी घूमतीसी दीखती है ॥ ५३ ॥

जैसे केवल मनोरथ की बुद्धि तथा विषयों के अनुभव झूठे हैं हे दशार्ह उद्धव ! स्वप्न के देखे पदार्थ जैसे क्षणिक हैं तिसी प्रकार से अपने मोह से मात्र आत्मा को संसार का बन्धन है ॥ ५४ ॥

यथार्थ अर्थ नहीं दीखने से भी संसार निवृत्त नहीं होता है विषयों के ध्यान करने से बन्धन होता है जैसे स्वप्न में भयादिक अनर्थ की प्राप्ति होती है ॥ ५५ ॥

हे उद्धव ! तिस से खोटी इन्द्रियों से विषयों को मत भोगो परमात्मा में प्रीति न होने से यह सब संसार का शत्रु मित्र भ्रम है ऐसा जानो ॥ ५६ ॥

क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धोऽसूयितोऽथवा ।
ताडितः सन्निबद्धो वा वृत्त्या वा परिहापितः ॥ ५७ ॥
निष्ठ्युतो मूत्रितो वाऽज्ञैर्बहुधैवं प्रकम्पितः ।
श्रेयस्कामः कृच्छ्रगत आत्मनाऽऽत्मानमुद्धरेत् ॥ ५८ ॥

उद्धव उवाच ।

यथैवमनुबुध्येयं वदनो वदतांवर ! ।
सुदुःसहमिमं मन्य आत्मन्यसदतिक्रमम् ॥ ५९ ॥
विदुषामपि विश्वात्मन् ! प्रकृतिर्हि बलीयसी ।
ऋते त्वद्धर्मनिरतान् शान्तांस्ते चरणालयान् ॥ ६० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे श्रीभगवदुद्धवसम्वादे
द्वाविंशोऽध्यायः ॥ २२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दुःखप्रतीकारोद्यममपि परित्यज्य परमेश्वरनिष्ठयैव सोढव्यमित्याह । क्षिप्त इति द्वाभ्याम् । क्षिप्त आक्षिप्तो दुरुक्त्या वा प्रलब्ध उपहसितः ॥ ५७ ॥

निष्ठ्युतो निष्ठीवनविषयीकृतः मूत्रितो मूत्रेणाऽऽर्द्रीकृतः प्रकम्पितः परमेश्वरनिष्ठातः प्रच्यावितोऽपि कृच्छ्रगतः कृच्छ्रं प्राप्तोऽपि ॥ ५८ ॥

एवं त्वदुक्तं यथा अनुबुध्येयं तथा नोऽस्मान् सर्वान् प्रति वद ५९

त्वद्धर्मनिरतान् ऋते विदुषामप्यसद्भिः कृतमतिक्रममपराधं दुःसहं मन्ये इत्यन्वयः प्रकृतिः स्वभावः ॥ ६० ॥

निरस्य सर्वसन्देहमेकीकृत्य सुदर्शनम् ॥
प्रकाशितरहस्यं तं भजध्वं गुरुमीश्वरम् ॥ १ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी

क्षिप्त इति युग्मकम् । आक्षिप्तः वाचा तिरस्कृतः अपमानितः अन्नु स्थानाद्यभावेनानादृतः ॥ ५७ ॥ ५८ ॥

न इत्येकत्वे बहुवचनम् "अस्मदो द्वयोश्च", इति सूत्रात् । विविक्तमुपसङ्कल्प्येति निर्जनस्थानोक्तेः अतएवात्रापि अनुबुध्येयमित्येकवचनमपि एव लिङ् प्रयोग इति । स्वामिव्याख्यायान्तु लोकसङ्ग्रहस्य जनतानुसारेण नः सर्वानिति बहुवचनोपगमः ॥ ५९ ॥

ऋते त्वद्धर्मनिरतानिति त्वच्छरणाकाङ्क्षिणां हि निष्ठा येषु तेष्व-स्माकं न विस्मयः अतस्ते तु भवता नाथेनाहार्याः किंस्विन्न एवेति भावः ॥ ६० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

क्षिप्तः वाचा क्षिप्तः प्रलब्धः विप्रलब्धः असूयितः गुणेष्वारोपितदोषभावः वृत्त्या द्रव्यरूपया जीवितेन ॥ ५७—५८ ॥

वदतस्तथानुवृत्त्या त्वन्मतानुसारेणापि दुःसहमसदतिक्रमं मन्ये ॥ ५९—६० ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आत्मापहरणानिमित्तानामिष्टानां स्वर्गनिवृत्तये सहात्मयाथात्म्यावबोधकतया भावितव्यमिति सूचितं तत्र धिक्कोपानिपातेऽप्यात्मसहनेन स्वात्मानमुद्धरेदित्याह द्वाभ्याम् । क्षिप्त इति । असद्भिर्दुर्जनैः क्षिप्त आक्षिप्तः तिरस्कृतोऽभिक्षिप्तः प्रलब्धः उपहसितः असूयितः गुणेष्वारोपितदोषभावः वृत्त्या जीवितेन परिहापितः त्याजितो वा ॥ ५७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

निष्ठितः निष्ठीवनविषयीकृतः मूत्रितः मूत्रेणार्द्रीकृतः अतैवं बहुधा प्रकम्पितश्चालितोऽपि श्रेयस्कामश्चेत् कृच्छ्रगत उक्तविधामापदं प्राप्तोऽपि आत्मयाथात्म्यावलोकनविषयभूतेनात्मना हेतुना आत्मानमुद्धरेत् ॥ ५८ ॥

क्षेपादीनां दुःसहतां मन्यमानस्तदुपायं पृच्छति । यथैवेति हे वदतांवर ! यथा क्षेपादीन् सोढुमनुबुध्येयं स्वात्मानं परमात्मानं च यथावज्जानीयां तथा मोऽहमान्प्रति वद तदुपायमुपदिशेत्यर्थः । किमिति क्षेपादिक्षमोपायं पृच्छसि चेत्तत्राह । सुदुःसहमिति । आत्मनि स्वस्मिन्नसद्भिः कृतमतिक्रमं क्षेपादिरूपं सुदुःसहं सुतरां दुःसहमहं मन्ये ॥ ५९ ॥

कुत इत्यपेक्षायामाह । विदुषामपीति । हि यस्मात् हे विश्वात्मन् ! विदुषामपि प्रकृतिर्बलीयसी प्रकृतिसम्बन्धप्रयुक्ता देहात्माभिमानरागद्वेषादयो बलीयांस इत्यर्थः । किं सर्वेषामपि विदुषां नेत्याह । ऋत इति । त्वद्धर्मे भगवद्धर्मेष्वन्तेषु नितरां रतान् त्वच्चरणावेवाश्रयमाश्रयो येषां तानत एव शान्तान् जितान्तःकरणान् ऋते विना इतरेषां विदुषामपि प्रकृतिर्बलीयसीति सम्बन्धः ॥ ६० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दुःसहविषयोपद्रवेऽपि तत्परिहारप्रयत्नो न कार्यः किन्तु विषयेभ्यः प्रत्याहृतमनसा स्वात्मानं संसारादुद्धर्तुं प्रयतेतेति शिक्षयति । क्षिप्त इत्यादिना ॥ ५७—५८ ॥

विषयाः सोढव्या इति यदुक्तं तत्रोद्धवश्चोदयति । यथेति । यथावत्स्पष्टीकुरुते चरणाश्रयात् चरणैकशरणान् ऋते इतरेषां विदुषामप्यसतामात्मन्यतिक्रमं दुःसहं मन्ये तत्र हेतुगर्भविशेषणमाह । प्रकृतिरिति । प्रकृतिर्बलीयसी हि अहंममेति देहाभिमानस्वभावो बलिष्ठोऽपरिहार्यो यस्मात्तस्मादिति शेषः ॥ ५९—६० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

न इत्येकत्वे बहुवचनम् "अस्मदो द्वयोश्च" इति सूत्रात् पूर्वं हि विविक्त उपसङ्गम्य इत्यादिना निर्जन एव सम्वादोऽयमिति व्यञ्जितं अत्रैव चानुबुध्येयेत्येकवचनान्त एव क्रियाप्रयोग इति ॥ ५९ ॥

ऋते स्वधर्मनिरतानिति ये त्वत्पादाश्रयित्वादिलक्षणलक्षितास्ते स्वधर्मकं न विस्मयः अतस्तेषु असतामाक्रोशादयो किन्त्वन्य एवेति भावः ॥ ६० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विषयभोगरहितः कीदृशांस्तिष्ठेदित्यपेक्षायामाह । क्षिप्त इति द्वाभ्याम् । क्षिप्त आक्षिप्तः बहिर्निःसारितो वा प्रलब्ध उपहसितः असूयितः गुणेषु दोषारोपविषयीकृतः वृत्त्या जीविकया रहितीकृतः निष्ठितः निष्ठीवनविषयीकृतः ॥ ५७ ॥ ५८ ॥

यथा अनुबुध्येय तत्तत्सहने यथाविवेकं प्राप्नुयाम् एवं वद ॥ ५९ ॥

विदुषाम् असदतिक्रमसहने उपायं जानतामपि प्रकृतिः अनात्मकः स्वभावः त्वद्धर्मणि रतान् । त्वद्भक्तान् विनेति तेषां स्वत्साम्यप्राप्त्या प्रकृतिरकोपनैवेत्याह । शान्तान् तत्र हेतुस्त्वच्चरणनिवासात् ॥ ६० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

एकादशे द्वाविंशः सङ्गतः सङ्गतः सताम् ॥ २२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तितिक्षुर्भूत्वा वैकल्पिकभ्रमनिवर्तकात्मज्ञानप्रदेन परमात्मना आत्मानमुद्धरेदित्याह । क्षिप्त इति द्वाभ्याम् । क्षिप्तः दुरुक्तादिना गर्वादियोजितेन दूरीकृतः अवमानितः अनादृतः प्रलब्धः उपहसितः असूयितः गुणवत्त्वेऽपि निन्दितः वृत्त्या जीविकया परिहापितः परित्याजितः ॥ ५७ ॥

निष्ठितः निष्ठीवनविषयीकृतः मूत्रितः मूत्रेणार्द्रीकृतः प्रकम्पितः प्रकम्पोपलक्षितामतिपीडां प्रापितः एवं बहुधा कृच्छ्रगतः कष्टं प्रापितोऽपि श्रेयस्कामो मुक्तिकामः आत्मना ज्ञानभक्तिप्रदेन गुर्वादिरूपिणा परमात्मना हेतुभूतेन आत्मानमज्ञानग्राहगृहीतं संसारादुद्धरेदित्यर्थः ॥ ५८ ॥

एवं मदुपदिष्टं यथा यथावदनुबुध्येयं तथा वद ॥ ५९ ॥

त्वद्धर्मनिरतान् तत्रापि त्वच्चरणालयान् अत एव शान्तान् ऋते विना विदुषामपि असद्भिः कृतमतिक्रममपराधं सुदुःसहं मन्ये इत्यन्वयः हि यतः प्रकृतिर्मनोरूपा बलीयसी दुर्जया ॥ ६० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

द्वाविंशाध्यायार्थप्रकाशः ॥ २२ ॥

भाषा टीका।

असत्पुरुष चाहे खोटे वचन कहैं चाहे अपमान करैं चाहे हंसी करैं चाहे गुणों को दोष बतावैं चाहे मारैं चाहे बांधैं चाहे जीविका छुड़ा देवें ॥ ५७ ॥

चाहे ऊपर थूक डालैं चाहे मूत्र करैं ऐसे नाना प्रकार से दुःखि करैं तो भी अपने कल्याण को चाहने वाला पुरुष ऐसे कष्ट में पड़ने पर भी अपनी बुद्धि से आत्मा का उद्धार करै ॥ ५८ ॥

उद्धव उवाच।

हे वक्ताओं में श्रेष्ठ कृष्णचन्द्र मैं तो असत्पुरुषों के किये अपने अपमान को बड़ा कठिन समझता हूं इस के सहने का उपाय मेरे से कहिये ॥ ५९ ॥

हे विश्वात्मा बड़े विद्वानों को भी यह सहना कठिन है क्योंकि प्रकृति सम्बन्ध बड़ा बलवान् है परन्तु जो पुरुष आप के चरण के आश्रय करते हैं और शांत हैं और आप के भागवत धर्मों में निरत हैं वहतो ऐसे तिरस्कार को सह सकते हैं ॥ ६० ॥

इति श्रीमद्भागवत महापुराण एकादशस्कन्ध

बाइसवें अध्याय की पं० लक्ष्मणाचार्यकृत

भाषा टीका समाप्त ॥ २२ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे द्वाविंशोऽध्यायः ॥ २२ ॥



## अथ त्रयोविंशोऽध्यायः ।

———:*:———

बादरायणिरुवाच ॥

स एवमाशंसित उद्धवेन भागवतमुख्येन दाशार्हमुख्यः ।
सभाजयन्भृत्यवचो मुकुन्दस्तमाबभाषे श्रवणीयवीर्यः ॥ १ ॥

श्रीभगवानुवाच ॥

बार्हस्पत्य ! स वै नात्र साधुर्वै दुर्जनेरितैः ।
दुरुक्तैर्भिन्नमात्मानं यः समाधातुमीश्वरः ॥ २ ॥

न तथा तप्यते विद्धः पुमान् बाणैः सुमर्मगैः ।
यथा तुदन्ति मर्मस्था ह्यसतां परुषेषवः ॥ ३ ॥

कथयन्ति महत्पुण्यमितिहासमिहोद्धव ! ।
तमहं वर्णयिष्यामि निबोध सुसमाहितः ॥ ४ ॥

केनचिद्भिक्षुणा गीतं परिभूतेन दुर्जनैः ।
स्मरता धृतियुक्तेन विपाकं निजकर्मणाम् ॥ ५ ॥

अवन्तिषु द्विजः कश्चिदासीदाढ्यतमः श्रिया ।
वार्तावृत्तिः कदर्यस्तु कामी लुब्धोऽतिकोपनः ॥ ६ ॥

ज्ञातयोऽतिथयस्तस्य वाङ्मात्रेणापि नार्चिताः ।
शून्यावसथ आत्माऽपि काले कामैरनर्चितः ॥ ७ ॥

दुःशीलस्य कदर्यस्य द्रुह्यन्ते पुत्रबान्धवाः ।
दारा दुहितरो भृत्या विषण्णा नाचरन् प्रियम् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रयोविंशे तिरस्कारसहनोपाय ईर्यते ।
भिक्षुगीतप्रकारेण मनसः संयमो यथा ॥
दुर्जनोपद्रवो नूनं दुःसहो हि महीयसाम् ।
अतश्चतुर्भिरध्यायैः सहनोपायवर्णनम् ॥

तत्र तावदस्मिन्नध्याये भिक्षुगीतया मनोविजय उत्तरस्मिन् प्रकृतिपुरुषविवेककृतेनेतरस्मिन् गुणवृत्तिविजयस्ततः परस्मिन्नैलगीतया विषयसङ्गत्यागेन सत्सङ्ग इति क्रमेणोपाया भगवता वर्ण्यन्ते आशंसितः प्रार्थितो भृत्यस्य वचः सत्कुर्वंस्तं भृत्यं प्रति बभाषे ॥ १ ॥

तत्र तावदङ्गीकारतस्तद्वचः सम्पूजयति द्वाभ्याम् । हे बार्हस्पत्य । बृहस्पतेः शिष्य अत्र लोके स साधुर्नास्ति यो दुर्जनोक्तैर्भिन्नं क्षुभितं मनः समाधातुमीश्वरः स्यात् ॥ २ ॥

कुत इत्यत आह । नेति । यथा मर्मस्था मर्मस्वेव नित्यं स्थित परुषोक्तिरूपा इषवस्तुदन्ति व्यथयन्ति तथा इतरे बाणा न तुदन्ति अतस्तैस्तथा न तप्यत इत्यर्थः ॥ ३ ॥

तथाऽपि मया वक्ष्यमाणैरुपायैः सर्वं सोढुं शक्यमित्यभिप्राये णेतिहासं प्रस्तौति । महद्यथा भवति तथा पुण्यमितिहासं गाथ कथयन्ति ॥ ४—५ ॥

स भिक्षुः पूर्वं धनाढ्यः कृच्छ्रार्जितस्य धनस्य नाशेन सन्तप्तमा निर्विण्णः सन्प्रव्रज्य भिक्षार्थमटन् दुर्जनैरुपद्रुतः प्रस्तुतोपयोगि गाथामगायदिति वक्तुं तस्य पूर्वचरितमाह । अवन्तिष्वित्यादिना अवन्तिषु मालवेषु वार्ता कृषिवाणिज्यादिरूपा वृत्तिर्यस्य कदर्य स्मृत्युक्तः "आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयन् । दे ताऽतिथिभृत्यांश्च स कदर्य इति स्मृत" इति ॥ ६ ॥

तस्य ये ज्ञातयो बान्धवा अतिथयोऽस्वजनाश्च तेन नार्चि इत्यर्थः । शून्यावसथे धर्मकामहीने गृहे देहे वा ॥ ७—८ ॥

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

मनःसंयम एव सहनोपाय इतीर्यते । मन्वन्येऽपि तदुपायाः सन्ति न त्वत्रोक्ताः कृष्णाय अध्यायचतुष्टयार्थमपि समुद्दिश्य दुर्जनेति । महीयसामपि दुःसह इत्यन्वयः मनो दुःसहत्वात् । तत्र अध्यायचतुष्टयमध्ये तावत् प्रथमम् । अस्मिन्नर्थे विंश । उत्तरस्मिन्नतुर्विंशे । तदुत्तरस्मिन् पञ्चविंशे । ततः परस्मिन् षड्विंशे ॥ १ ॥

तत्र दुर्जनोपद्रवस्य दुःसहत्वे तावद्वादौ । तद्वचः उद्धववाक्यम् ॥ २ ॥

नित्यं रिपवा इति प्रसिद्धघाणास्तु निःसरन्ति तत्क्षतमपि कालान्तरे शाम्यति मन इदं वाणा न तुदन्ति । अतस्तथा तादृन कर्तृत्वा मावालद्यमर्मगैरित्यपि क्वचित्पाठः ॥३॥

तथापि दुर्जनोपद्रवस्य दुःसहत्वेऽपि । प्रस्तौति प्रकरणागतं करोति वर्णयतीत्यर्थः । कथयन्तीति युग्मकम् ॥ ४ ॥ ५ ॥

प्रव्रज्य संन्यस्य । प्रस्तुतोपयोगिनीं सहनोपयुक्ताम् । तस्य कदर्यस्य ॥ ६ ॥

तस्येति कर्त्तरि षष्ठी अतस्तेनेत्यर्थः क्वतः ॥ ७ ॥

दुह्यन्ते कदा मरिष्यतीति द्रोहं कुर्वन्ति । प्रियं सुखम् ॥८॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—५ ॥

बार्हस्पत्यः बृहस्पतिशिष्य ईश्वरः समर्थः लुब्धः अर्थाभिनिविष्टः कदर्यः सिद्धेऽपि विभवे विनियोगविमुखः ॥ ६ ॥

शून्यावसथे अतिथिपूजारहितगृहे आत्मा शरीरम् ॥ ७ ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्यमुद्धवेन पृष्टस्तमभिनन्द्य तं प्रति श्रीभगवानाहेत्याह मुनिः । स इति । इत्थं भागवतमुख्यमोद्धवेनाशासितः पृष्टो दाशार्हश्रेष्ठः श्रवणीयं वीर्यं निश्वप्रकाशक चरितं यस्य स मुकुन्दः भृत्यस्योद्धवस्य वचः समाजयन् संमानयंस्तमुद्धवमाबभाषे ॥ १ ॥

भाषणमेवाह । बार्हस्पत्येत्यादिना यदुक्तं सुदु सहमिम स्यन्य आत्मन्यसद्भिरतिक्रममिति तत्रान्तरसत्यमेवेत्याह । बार्हस्पत्येति द्वाभ्याम् । हे बार्हस्पत्य बृहस्पतेः शिष्य ! स साधुर्विद्वान् नास्त्येव कोऽसौ यो दुर्जनैरितैर्दुरुक्तैः भिन्नमात्मानं मनः समाधातुमीश्वरः समर्थः । अनेन समाहिते सत्यात्मनि सुखदुःखे न स्त इति सूचितस्वाभिजकर्मानुवर्ति मन एव सुखदुःखकारणमिति फलितम् ॥ २ ॥

कुत इत्यत आह । न तथेति । मर्मगैरस्यैन प्राप्तैर्बाणैर्विद्धोऽपि न तथा तप्यते कथमित्यत्राह । यथाऽसतां दुर्जनानां सम्बन्धिनः परुषवाक्यरूपाः इषवः मर्मस्थाः सन्तः तुदन्ति व्यथयन्ति दुःखयन्तीत्यर्थः । केवलेषुभ्यः परुषेषुभिर्नितरां तप्यते इति विवक्षितोऽर्थः ॥ ३ ॥

यद्यप्येवं तथापि शनैः सुखदुःखयोरसाधारणविमर्शेनात्मानं समाधातुं प्रभवत्येवेति वक्तुमितिहासं प्रस्तौति । कथयन्तीति महापुण्यं श्रुण्वतां महतपुण्यावहमितिहासं कथयन्ति स एव स्वात्मदुःखयोस्तदन्तरमिति भावः । अतस्तमितिहासं वर्णयिष्यामि सुसमाहितः सन्निबोध शृणु ॥ ४ ॥

इतिहासं निशामय । केनेत्याह इति दुर्जनैः परिभूतेन केन भिक्षुणा तदभिमता गीता तां महात्मतिपूर्वया सम्बन्धः भिक्षुं निशामय । धृतियुक्तेन विप्रायमिवानेऽपि कान्वसमापन्नमास्थार्ये धृतिन्वया युक्तेन निजकर्मणां विपाकं विपकान्ते निरत्यन्ते फलान्यनन्तानि यथा समहस्माभिमानकारिणामीश्वरनिग्रहानुग्रहमूलानां निजकर्मणां सञ्जातमन्तःकरणमेव पारिशेष्यन्यायेन सुखदुःखसाधनमिति स्मरतीत्यर्थः ॥ ५ ॥

कोऽसौ भिक्षुरित्यत आह । अवन्तीष्वित्यादिना अवन्तीषु देशेषु श्रिया धनादिसम्पत्त्या आढ्यतमः समृद्धतरः कश्चिद्द्विज आसीत् न निशामय । वार्त्ता कृषिवाणिज्यादिरूपा वृत्तिर्यस्य सः कदर्यः कमल लोभपोषणमात्रपरः यथा—

आत्मानं धर्मकृत्यञ्च पुत्रदारांश्च पीडयन् ।
देवतातिथिभृत्यांश्च स कदर्य इति स्मृतः ॥

इत्युक्तविधः तत्र हेतुः कथन्त्रिवित्तकामी लुब्धश्चेति किन्नाभिकोपनः ॥ ६ ॥

अत एव तस्य सम्बन्धिनो ज्ञातयोऽतिथयश्च वचनमात्रेणापि तेन नार्चिताः शून्यावसथेऽतिथिपूजारहिते गृहे तस्यात्मा देहोऽपि कामैर्भोगैर्नार्चितो न लालितः ॥ ७ ॥

दुःशीलस्येति एवंविधस्य तस्य पुत्रादयः दुह्यन्तेऽद्रुहन्तापकारित्यर्थः दारादयोऽपि विषण्णाः सन्तोऽस्य प्रियं नाचरन्त चक्रुः ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्तिमन्तरेण सर्वमन्यासो दुःखहेतुरित्येतस्मिन्नध्यायं समर्थयते तत्र एव कृष्णः उद्धव किमाहेति राज्ञो मानसीं शङ्कां परिहरति । स एवमिति । माशंसितः प्रष्टुरभीष्टाभिवदनायाकाङ्क्षा कारितः ॥ १ ॥

किमाहेति तत्राह । नाह्वेति अत्र जीवराशौ वाह्यान्तर्भञ्जनः वाह्यान्तः शत्रुशोषकः साधुः साधुश्रेष्ठत्यानतश्च सज्जनो वा दुर्जनोक्तैरिन्दुरुक्तैर्भिन्नमात्मानं मनः समाधातुमीश्वरः समर्थं यथा यो दुरुक्तैर्भिन्नमात्मानं समाधातुमीश्वरः स साधुः सज्जनो वै कुतः वाह्यान्तर्भञ्जनो हीति ॥ २—३ ॥

अत्र श्रीकृष्णः सुमनोवार्थमितिहासं वक्ति । कथयन्तीति । इह त्वत्पृष्टेऽर्थे ॥ ४ ॥

विपाक कर्मनिष्पत्तिम् ॥ ५ ॥

वार्त्ता वृत्तिः कृष्यादिर्द्वीह्यर्जीवनोपायवान् कदर्यः हारिद्र्याभिनीपेतः कामी पर्याप्तपृष्ठभाग ॥ ६ ॥

लुब्धत्वे हेतुमाह । ज्ञातय इति । अत्र मित्रमप्याह । शून्येति निजभवजातमन्यस निभाग स्वयं धनशून्यगृहे निवसाता स्वयंकामैः कार्यैरलालितः ॥ ७ ॥

पुत्रादिभिरपि कृतप्रियो न भवति । किमुतान्यैरिति भावमाह दुःशीलस्येति ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १ ॥ ३ ॥

तथैवोदाहरति । कथयन्तीति युग्मकमिदं ॥ ४— ९ ॥

तस्यैवं यक्षवित्तस्य च्युतस्योभयलोकतः ।
धर्मकामविहीनस्य चुक्रुधुः पञ्चभागिनः ॥ ९ ॥
तदवध्यानविस्रस्तपुण्यस्कन्धस्य भूरिद ! ।
अर्थोऽप्यगच्छन्निधनं बह्वायासपरिश्रमः ॥ १० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

"त्रयोविंशेकदर्यस्य धनक्षयनाशयोद्भवो ।
गीतं दुःखहरञ्चोक्तं दुर्जनावमतिरक्कृते:" मासंशितं प्रार्थितम् ॥ १ ॥

हे बार्हस्पत्य ! बृहस्पतेः शिष्येति सोपपत्तिकं त्वद्वाक्यद्दमनमेव किन्तु पारमार्थिकोऽयं मार्गस्त्वद्गुरुणा तेनाऽवगतो मत्त एव त्वया शिक्षितव्य इति भावः ॥ २ ॥

परुषेषवः परुषोक्तिरूपा इषवः ॥ ३ ॥

यद्यप्येवमेव सर्वत्र दृष्टं तदपि परुषेषुभैर्यधैर्यकरमुपाख्यानं श्रावयिष्यन्नाह । कथयन्तीति विपाकं फलम् ॥ ४ ॥ ५ ॥

अवन्तिषु मालवेषु वार्त्ता कृषिवाणिज्यादिरूपा वृत्तिर्यस्य सः कदर्यो विगीतः बदुकम आत्मानं धर्मकृत्यं च पुत्रदारांश्चपीडयन् । देवतातिथिभृत्यांश्च स कदर्य इति स्मृत इति ॥ ६ ॥

शून्यावासथे धर्मकामशून्ये गृहाश्रमे ॥ ७ ॥

दुःशीलस्य दुःशीलाय दुह्यन्ते द्रुह्यन्ति ॥ ८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथास्मिन् त्रयोविंशेऽध्याये भिक्षुगीतया मनसो विजयः वर्ण्यते स श्रीकृष्णः एवमुक्तप्रकारेणासंशितः प्रार्थितः भृत्यमुख्योद्धवस्य वचः समाजयन् सत्कुर्वन्सुखं प्रश्नावणाये हृत्यच्यवः ॥ १ ॥

तद्वचः समाजयति । बार्हस्पत्य इति द्वाभ्याम् । हे बार्हस्पत्य! बृहस्पतेः शिष्य ! सत्यं वदसीति तत्रोधनाभिप्रायः अत्र लोके स साधुर्नास्ति यो दुर्जनैरितैर्दुरुक्तैर्भिन्नं विकारं प्रापितमात्मानं मनः समाधातुं निर्विकारं कर्तुमीश्वरः समर्थो भवेत् ॥ २ ॥

परुषेषवः दुरुक्तवाग्बाणाः तथोक्तं महाभारते—
वाक्सायका वदनान्निः पतन्ति यैराहतः शोचतिराऽहवानि ।
परस्य वै मर्मसु ते पतन्ति तान् पण्डितो नावसृजेत्कदाचित् ॥
कर्णिनालीकनाराचानुद्धरन्ति शरीरतः ।
वाक्शल्यस्तु न निर्हर्तुं शक्यो हृदि शयो हि सः ।
इति ॥ ३ ॥

तथापि मयोक्तमोमनोपायेन मनःसमाधातुं मुमुक्षुर्गीताः इत्याद्दित्यभिप्रायेणेतिहासं प्रोक्तोति कथयन्तीति महद्यशाभक्ताः तथा पुण्यमितिहासं कथयन्ति ॥ ४ ॥ ५ ॥

अवन्तिषु मालवेषु वार्त्ता कृषिवाणिज्यादिरूपा वृत्तिर्यस्य सः आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयन् । देवतातिथिभृत्यांश्च स कदर्य इति स्मृत इति स्मृतेः ॥ कृतसंख्याः कदर्योऽतिलुब्धः ॥ ६ ॥

तस्य कदर्यस्य ये ज्ञातयो ये च अतिथयः पूजार्हाः ते वाङ्मात्रेणापि तेन नार्चिताः शून्यावसथे धर्मकामवर्जिते गृहे आत्मापि नार्चितः धर्मेण कामेन वा न तोषितः ॥ ७ ॥ ८ ॥

———

भाषा टीका ।

श्रीशुक उवाच सब भागवतों में श्रेष्ठ उन उद्धवजी से इस प्रकार के कथन करने से यादवों मे श्रेष्ठ श्री मुकुंद कृष्णचंद्र जी जिन के कि चरित्र श्रवण कीर्तन के योग्य हैं वे अपने भृत्य के वचनों की प्रशंसा करके फिर बोलने लगे ॥ १ ॥

श्रीभगवान् उवाच हे बृहस्पति के शिष्य उद्धवजी ऐसा साधु कोई संसार मे नहीं है जोकि दुर्जनों के कहे वचनों से दुखित मनका समाधान करसके ने को समर्थ होवे ॥ २ ॥

बाणों के लगने से पुरुष मर्मो मे वेधित होवे तोभी ऐसा नहीं दुखित होता है जैसे कि मर्म मे लगेहुवे असत् पुरुषों के परुष वचन रूपी बाणों से ताडित होनेसे दुःखित होता है ॥ ३ ॥

हे उद्धव ! इस विषय मे बडे पवित्र एक इतिहास को महात्मा जन कहते हैं तिसको मैं कहूंगा तुम सावधान होकर सुनो ॥ ४ ॥

यहगीत किसी सन्यासी का गाया है जिसको कि दुर्जनोंने तिरस्कार किया तब उस भिक्षुकने अपने कर्मफलों को स्मरण किया और फिर इस गीतको धैर्य धारण करके गान किया है ॥ ५ ॥

उज्जैन के देशों मे सम्पत्ति से बडा धनी एक कोइ खेति आदि जीविका करने वाला अति क्रोधी कामी लोभी कंजूस एक ब्राह्मण होताभया ॥ ६ ॥

उसने अपने बन्धु तथा अतिथि जनोंको वचन सेभी कभी सत्कार नहीं किया शून्य अपने घरमे रहा करताथा कभी मनोरथों से उसने अपनी भी तृप्ति की ॥ ७ ॥

उस दुःशील कदर्य के पुत्रादि सब बांधव द्रोह करते थे भार्या पुत्री भृत्य सब उससे विमुख रहते थे कोई भी प्रीति नहीं करता था ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

यक्षाणां वित्तमिव केवलं रक्षणीयं वित्तं यस्य पञ्चभागिनः पञ्चयज्ञदेवताः ॥ ९ ॥

ज्ञातयो जगृहुः किञ्चित्किञ्चिद्दस्यव उद्धव ! ॥
दैवतः कालतः किञ्चिद्ब्रह्मबन्धोर्नृपार्थिवात् ॥ ११ ॥
स एवं द्रविणे नष्टे धर्मकामविवर्जितः ।
उपेक्षितश्च स्वजनैश्चिन्तामाप दुरत्ययाम् ॥ १२ ॥
तस्यैवं ध्यायतो दीर्घं नष्टरायस्तपस्विनः ।
खिद्यतो बाष्पकण्ठस्य निर्वेदः सुमहानभूत् ॥ १३ ॥
स चाहेदमहो कष्टं वृथाऽऽत्मा मेऽनुतापितः ।
न धर्माय न कामाय यस्यार्थायास ईदृशः ॥ १४ ॥
प्रायेणार्थाः कदर्याणां न सुखाय कदाचन ।
इह चाऽऽत्मोपतापाय मृतस्य नरकाय च ॥ १५ ॥
यशो यशस्विनां शुद्धं श्लाघ्या ये गुणिनां गुणाः ।
लोभः स्वल्पोऽपि तान् हन्ति श्वित्रो रूपमिवेप्सितम् ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तेषामवध्यानमनादरस्तेन विध्वस्तो विशीर्णः पुण्यस्य स्कन्धोऽर्थलाभमात्रहेतुरंशो यस्य यद्वायासैः कृष्यादिभिः केवलं भ्रमो यस्मिन् सः ॥ १० ॥

कुतो निधनमगच्छत्तदाह । ज्ञातय इति । दैवतो गृहदाहादिना कालतो निखातधान्यादि नृणां च पार्थिवानाञ्च द्वन्द्वैकवत् तस्मात् ॥ ११—१२ ॥

नष्टरायः नष्टो रा अर्थो यस्य तस्य तपस्विनः सन्तप्तस्य ॥१३॥

मे मया आत्मा देहः वृथा वृथैव आत्मानुतापं प्रपञ्चयति न धर्मायेत्यादिना यस्य ईदृशोऽर्थायासस्तेन मया ॥ १४ ॥

नरकाय तत्सम्बन्धे धर्माननुष्ठानात् ॥ १५ ॥

श्वित्रः श्वेतकुष्ठम् ॥ १६ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

पञ्चयज्ञदेवताः देवर्षिपितृमनुष्यभूतानि ॥ ९ ॥

अर्थलाभेति द्रव्यलाभमात्रहेतोरंशस्यापगमात् सद्वासनाहेतोर्भगवदर्पितत्वलक्षणविशेषस्याविनाशं बोधयति ॥ १० ॥

ब्रह्मबन्धोः कदर्यस्य नरश्च पार्थिवाश्च तेषां समाहारो नृपार्थिवं तस्मात् ॥ ११ ॥

उपेक्षितस्त्यक्तः निर्वेदः अर्थेऽसंतुष्टया स्वावज्ञानम् ॥१२ ॥१३॥

ईदृशः लोभातिशयः अर्थार्थमायासो न धर्माय न कामायाभूत्तेन मया वृथैवात्मानुतापित इत्यन्वयः ॥ १४ ॥ १५ ॥

श्वेतकुष्ठं कर्तृ ईप्सितमभीष्टं रूपं यथा हन्ति तद्वत् ॥१६॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पञ्चभागिनः देवपितृभूतमनुष्यब्रह्मर्षयः ॥ ९ ॥

यह्वायासपरिश्रम इति बहुकायायासपरिश्रमवानित्यर्थः ॥ १० ॥

ब्रह्मबन्धोरिति । धनमिति शेषः दैवतः किञ्चिदिति मद्यमिति शेषः । ॥ ११—१२ ॥

नष्टरायो नष्टधनस्य ईदृश आत्मा इत्यन्वयः ॥ १३ ॥

नार्थाय नर्थाय च नासीत् अर्थस्यापि विनाशादित्यर्थः ॥१४-१६॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यक्षाणां वित्तमिव केवलं रक्षणीयं वित्तं यस्य उभयलोकयोः अस्मादमुष्माच्च लोकाच्च्युतस्योभयत्रापेक्षसम्भावितसुखस्य तत्र हेतुः धर्मकामविहीनस्य पञ्चभागिनः देवर्षिपितृभूतमनुष्यब्रह्मपर्षाः पञ्चमहायज्ञदेवताः चुक्रुधुरर्जितस्य वित्तस्य पञ्चमहायज्ञेषु तत्तद्देवताराधनं हि प्रयोजनं तदभावात्ते चुक्रुधुरित्यर्थः ॥ ९ ॥

तत्क्रोधफलमाह । तद्धिति । तेषां भागिनामवध्यानमनादरस्तेन विध्वस्तः पुण्यस्कन्धः अर्थलाभमात्रहेतुभूतपुण्यस्कन्धप्राकारदुर्गं यस्य हे भूरिद ! बह्वायासगर्भैः कृष्यादिभिः परिश्रमो यस्मिन् सोऽर्थो धनमपि निधनं नाशमगच्छत् ॥ १० ॥

निधनप्राप्तिप्रकारमेवाह । ज्ञातय इति । दस्यवश्चौराः दैवतो गृहदाहादिना कालतः निखातधान्यादि तथा नृपार्थिवाश्चराज्ञां पार्थिवानां च द्वन्द्वैकवत् तत्र पार्थिवा राजानः नरास्तत्सम्बन्धिनः ब्रह्मबन्धोरर्थः किञ्चित्किञ्चिन्निधनमगच्छदिति पूर्वेणा सम्बन्धः यद्वा दैवादिभ्य इत्यर्थं ब्रह्मबन्धोर्द्रविणे नष्टे सतीत्युत्तरेण सम्बन्धः ॥ ११ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पूर्वमेव धर्मकामाभ्यां विवर्जितः ज्ञातिभिस्त्यक्तश्च ततोऽर्थक्षयाच्च दुरत्ययामपारां चिन्तां प्राप्तवान् ॥ १२ ॥

नष्टो रा धनं यस्य तस्य तत एव दीर्घं चिरकालं यथा तथा चिन्तयतः अत एव तपस्विनस्तत एव खिद्यतः अत एवाश्रुपूर्णकण्ठस्य सुमहान् शुभावहो निर्वेदोऽभूज्जातः ॥ १३ ॥

स च जातनिर्वेदोऽपि विप्र इदमाह उक्तमेवाह । अहो इत्यादिना खट्वाङ्गः समसाधयदित्यन्तेन अहो ममेदं कष्टं मे मया आत्मा देहो वृथैवानुतापितः अनुतापमेव प्रपञ्चयति । न धर्मायेति । यस्य मम ईदृशः अर्थार्जनायासो धर्माय कामाय च नाभूत् ॥ १४ ॥

युक्तं चैतदित्यभिप्रायेणाह । प्रायेणेति । कदर्याणां मादृशानामर्थो धनं प्रायेण कदाचिदपि सुखाय न भवति नापि स्वोपभोगाय चापि तु मृतस्य नरकाय भवति ॥ १५ ॥

यशस्विनां यशोऽमलं यशः ये च गुणिनां श्लाघ्या गुणा तान् स्वल्पोऽपि लोभो हन्ति यथा श्वित्रः श्वेतकुष्ठं रोगः ऊर्जितं श्लाघ्यं रूपं सौन्दर्यं हन्ति तद्वदित्यर्थः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

न केवलं कुपिताः पुत्रादय· प्रियं न चक्रुः पञ्चयज्ञभागभुजो देवा अपीति वक्ति । तस्येति । तस्यार्थे यज्ञविरहस्य यक्षवित्तवदनुपभोगविरहस्य ॥ ९ ॥

ततः किमभूदत्राह । तदवध्यानेति । तदवध्यानेन तेषां देवादीनां अवज्ञाजातकोपेन विस्रंसतः क्रमेण विनष्टः पुण्यस्कन्धः पुण्यसमूहो यस्य स तथा तस्य पुण्यस्कन्धः पुण्यलक्षणभुजाशिरो वा विस्रस्तं शिथिलबन्धनं वा सुकृतनाशफलमाह । अर्थ इति ॥ १० ॥

नाशप्रकारमाह । ज्ञातय इति । नृपार्थिवात् नृराजात् ॥ ११ ॥

योग्यस्य धननाशो वैराग्यहेतुरित्याशयेनाह । स इति ॥१२॥

तपस्विनः सन्तापवतः ॥ १३ ॥

निर्वेदप्रकारमाह । स चेति । आत्मा देहो यस्य मे ॥ १४ ॥

न सुखायेत्युक्तं स्पष्टयति । इह चेति ॥ १५ ॥

अर्थलोभोऽपि यशआदिगुणसर्वस्वहानिकर इत्याह । यश इति ।
श्वित्रः श्वेतकुष्ठम् ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विस्रस्तपुण्यस्कन्धस्येत्यंशमात्रापगमात्सद्वासनाहेतुर्यो मुमुक्षया भगवत्यर्पितो विशेषस्तस्याविस्रंसं बोधयति ॥१० —१२ ॥

अतः कदर्यस्यापि सर्वापराधमतिक्रम्य प्राचीनः संस्कारविशेषोऽयमुद्बुद्ध इत्याह । तस्यैवमिति ॥ १३—२७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तेषामवध्यानमनादरः वार्त्ताक्लेशः कृष्यादिभिः परिश्रमो यस्मिन् सः ॥ ९ ॥ १० ॥

दैवतो दस्युभ्यो वा किञ्चित् कालतः कालेनापि निधानभाण्डादिकं किञ्चिन्नृपार्थिवादिति प्रत्येकं नृभ्यश्चौरादिभ्यो राजभ्यश्च निधनमगच्छदिति पूर्वेणान्वयः ॥ ११ ॥ १२ ॥

कदर्यस्यापि तस्यापराधस्थगितस्तद्भोगान्ते प्राचीनःसंस्कारविशेषोऽयमुद्बुद्ध इत्याह । तस्येति । नष्टरायो नष्टधनस्य तपस्विनः सन्तप्तस्य ॥१३॥ १४ ॥

नरकाय स्वयभीत्या नित्यनैमित्तिककर्मानुष्ठानात् ॥ १५ ॥

श्वित्रः श्वितकुष्ठम ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवमुक्तप्रकारेण यक्षवित्तस्य यक्षाणां वित्तमिव केवलं रक्षणीयं वित्तं यस्य उभयलोकनष्टच्युतत्वे हेतुः धर्मकामविहीनस्येति । पञ्चयज्ञदेवताः ॥ ९ ॥

तदवध्यानेन पञ्चभागवनादरेण विस्रंसतो विशीर्णः पुण्यस्कन्धः पुण्यमूलमैश्वर्यं यस्य अतः वार्त्तायासेन कृषिवाणिज्यादिरूपेण केवलं श्रमो यस्मिन् सः अर्थोऽपि निधनं नाशमगच्छत् ॥ १० ॥

नाशप्रकारमेवाह । ज्ञातय इति । नृपार्थिवयोर्द्वन्द्वैकवद्भावः ॥ ११ ॥ १२

नष्टः रायो यस्मात् तस्य तपस्विनः नानातापवतः ॥१३॥

मे मया ॥ १४ ॥ १५ ॥

श्वित्रः श्वेतकुष्ठम् ॥ १६ ॥

---

भाषा टीका ।

इस प्रकार से यक्ष की नाईं धन रखने वाले तथा इसलोक परलोक दोनों से भ्रष्ट धर्म काम से रहित उस ब्राह्मण के पंच यज्ञ के भागी देवता संपूर्ण क्रोध को प्राप्त भये ॥ ९ ॥

हे भूरिद ! उद्धव उनके अवज्ञा करने से उसकी पुण्य की जड नष्ट होगई तब परिश्रम से कमाया धन सब नाश को प्राप्त हो गया ॥ १० ॥

कुछ धनतो कुटुंबियों ने लेलिया हे उद्धवजी ! कुछ चोरों ने लेलिया कुछ देवतों के अग्नि लगने से कुछ गड़े रहने से कुछ राजा से कुछ मनुष्यों के छीनने से धन नष्ट होगया ॥ ११ ॥

इस तरह से धन के नष्ट होने से वह धर्म काम से रहित होगया तब उसके कुटुंबियों ने उसको छोड़ दिया तब बड़ी चिंता को प्राप्त भया ॥ १२ ॥

उस के धन के नष्ट होजाने से सन्ताप करने से खेदित होने से कण्ठ गद्गद होने से बहुत देरतक ध्यान करने से बड़ाभारी वैराग्य उत्पन्न होगया ॥ १३ ॥

तब बोला अहो बड़ा कष्ट है कि मैंने अपने आत्मा को स्वयं ही परितापित किया है जिस मैंने कि न धर्म

अर्थस्य साधने सिद्ध उत्कर्षे रक्षणे व्यये ।
नाशोपभोग आयासस्त्रासश्चिन्ता भ्रमो नृणाम् ॥ १७ ॥
स्तेयं हिंसाऽनृतं दम्भः कामः क्रोधः स्मयो मदः ।
भेदो वैरमविश्वासः संस्पर्धाव्यसनानि च ॥ १८ ॥
एते पञ्चदशानर्था ह्यर्थमूला मता नृणाम् ।
तस्मादनर्थमर्थाख्यं श्रेयोऽर्थी दूरतस्त्यजेत् ॥ १९ ॥
भिद्यन्ते भ्रातरो दाराः पितरः सुहृदस्तथा ।
एकास्निग्धाः काकिणिना सद्यः सर्वेऽरयः कृताः ॥ २० ॥
अर्थेनाल्पीयसा ह्यते संरब्धा दीप्तमन्यवः ।
त्यजन्त्याशु स्पृधो घ्नन्ति सहसोत्सृज्य सौहृदम् ॥ २१ ॥
लब्ध्वा जन्मामरप्रार्थ्यं मानुष्यं तद्द्विजाग्र्यताम् ।
तदनादृत्य ये स्वार्थं घ्नन्ति यान्त्यशुभां गतिम् ॥ २२ ॥
स्वर्गापवर्गयोर्द्वारं प्राप्य लोकमिमं पुमान् ।
द्रविणे कोऽनुषज्जेत मर्त्योऽनर्थस्य धामनि ॥ २३ ॥
देवर्षिपितृभूतानि ज्ञातीन् बन्धूंश्च भागिनः ।
असम्विभज्य चाऽऽत्मानं यक्षवित्तः पतत्यधः ॥ २४ ॥

---

भाषा टीका ।

के लिये न काम के लिये व्यर्थ धन कमाने में इतना परिश्रम किया ॥ १४ ॥

प्राप्त कर के हमसे कृपण पुरुषों के धन कभी सुखदायक नहीं होते हैं इस लोक में अपने सन्ताप देने को होते हैं मरे पीछे नरकदायक होते हैं ॥ १५ ॥

यशवाले पुरुषों का जो यश है गुण वालों के जो प्रसंशित गुण हैं इन सबकों थोड़ा भी लोभ हो तो नाश कर देता है जैसे की सुन्दर रूप वाले के रूप को कोढ रोग प्राप्त्तो भिन्न कर देता है ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सिद्धेऽप्यर्थे तस्य उत्कर्षे सम्वर्धने नाशोपभोगयोर्द्वन्द्वैकवम् नाशे उपभोगे चेत्यर्थः । सर्वत्रोत्कर्षपर्यन्तेष्वायासस्त्रासश्चिन्ता च नाशे भ्रम इति ॥ १७ ॥

किञ्च अर्थप्राप्त्यर्थास्तेयादयः षडनर्थाः प्राप्तेऽर्थे स्मयादयो व्यसनैः सह नव व्यसनानि स्त्रीद्यूतमद्यविषयाणि त्रीणि ॥ १८—१९ ॥

भेदवैरस्पर्धाः प्रपञ्चयति द्वाभ्याम् । भिद्यन्ते स्नेहं त्यजन्ति कथंभूता एकाः स्निग्धाः एकं एकप्राणा इत्येव ते आस्निग्धाश्चातिस्निग्धा-श्चेत्यर्थः कुतः काकिणिना पुंस्त्वमार्षम् विंशतिवराटिका काकिणी तया ॥ २० ॥

संरब्धाः क्षुभिताः स्पृधः स्पर्धमानाः ॥ २१ ॥

इह तावदर्थानुष्ठानामेतेऽनर्थाः परलोकेऽप्यनर्थाः एवमेषा-मित्याह । लब्ध्वेति त्रिभिः । मानुष्यं जन्म तत्रापि द्विजाग्र्यतां ब्राह्मण्यम् स्वार्थं घ्नन्ति आत्मार्हणं न कुर्वन्ति ये ते यान्ति ॥ २२ ॥

अमरप्रार्थ्यत्वं दर्शयन्नाह । स्वर्गेति । लोकं देहम् अनुषज्जेत आसक्तिं कुर्वीत ॥ २३ ॥

ऋषयो मनुष्ययज्ञब्रह्मयज्ञाभ्यां देवताः देवपितृभूतानि इतरेषु ज्ञातयः सगोत्राः बन्धवो विवाहादीनां सम्बन्धात् अन्यां-श्च भागिनो भागार्हान् आत्मानं चासंविभज्य भोगाद्यभिरसं-तर्प्य ॥ २४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

अर्थस्य साधने तथाऽर्थे सिद्धेऽपि तस्योत्कर्षे वर्धने आयासः श्रमः । रक्षणे उपभोगे च चिन्ता । व्यये त्रासः नाशे भ्रम इति यथायथं योज्यम् ॥ १७ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तस्मात् अर्थस्यानर्थमूलत्वात् । स्तुहीशूकस्य महाशूकात् संज्ञामात्रेणार्थाख्यं वस्तुतस्त्वनर्थमेव ॥ १८ ॥ १९ ॥

भेदस्य स्नेहभञ्जकत्वात् स्नेहं त्यजन्तीति कथयित्वा व्याख्यातं स्नेहत्यागस्य हेतुं व्याकुर्ते । कुत इति ॥ २० ॥

एवं भेदवैरं प्रपञ्च्य स्पर्द्धां प्रपञ्चयति । अर्थेनेति । एते भ्रात्रादयः अर्थेनेति हेतौ तृतीया अर्थेन निमित्तेनेत्यर्थः ॥ २१ ॥

तेषामर्थनिष्ठानां तत्रापि मनुष्यत्वेऽपि । ब्राह्मण्यं ब्राह्मणत्वं तन्मनुष्यजन्मादिकमनादृत्य मत्स्वभावे वैयर्थ्यमवज्ञाय तरन्तः किं न जीवन्तीत्याद्युक्तेः आत्माहितं श्रीकृष्णभक्ति ततो वक्ष्यामि ते हितमिति तदुपेक्षोक्तेः । अशुभां गतिं निरयं "य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम् । न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यधः" इत्याद्युक्तेः ॥ २२ ॥

धामनि आश्रये कारणे इत्यर्थः ॥ २३ ॥

पञ्चस्वपि देवस्य चतुर्दशभुवनसन्निवेशं दृष्ट्वा व्यासोऽपि ऋषय इत्यादि । इतरेषु देवपितृभूतयज्ञेषु । अन्यांश्च भृत्याश्रितादीन् । यक्षवित्तः यक्षवद्गुप्तमदेयमभोग्यं च वित्तं यस्य सः ॥ २४ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उत्कर्षे सिद्धस्य वर्द्धने साधनादिदशासु नाशाद्भयः क्रमेण भवन्ति साधनमर्जनं तथा नाशः समुद्रयानादिभिः व्यय चिन्ता भ्रमः भेदः बन्धुहानिः अद्धम इतिपदं मनसो नियमनाभावः यक्षा परैः प्रयत्नैर्द्धमनं दयाशापादनं वैरम् अकारणविरोधः व्यसनानि व्यसनशब्देन सप्तसु व्यसनेषु द्यूतपानवाक्पारुष्याणि त्रिर्विधानि अन्येषु पौनरुक्त्यायोग्यत्वाद्वा विवक्षानुपपत्तेः ॥ १७—१९ ॥

काकिण्या काकिणिकामात्रेण ॥ २०-२२ ॥

यक्षवित्तः ॥ २४-२७ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अर्थोपास इदृशा इत्युक्तं तदायासप्रकारं विवृण्वन् धनस्यानर्थहेतुतामप्याह । अर्थस्येति । साधनेऽर्जने सिद्धे मार्जितेऽप्यर्थे तस्योत्कर्षे वृद्ध्याद्युपायैर्वर्द्धने व्यये विनियोगे नाशोपभोगयोः प्रत्येकयं नाशे उपभोगे चेत्यर्थः तत्र साधनोत्कर्षयोरायासः तत्कण्ठक्षये त्रासः व्ययोपभोगयोश्चिन्ता विनाशे भ्रमो हा हतोऽस्मीति मूर्तिभ्रंमश्च भवति ॥ १७ ॥

साधनदशायामनर्थान् प्रपञ्चयति । स्तेयमिति । स्तेयं चौर्यं स्तेयादयः पञ्चदश विलप्राप्त्ययोः प्राप्तयै स्मयादयो नवानर्थाः दम्भो वञ्चनानुरूपवेषः कामः परकीयवित्तमात्राभिगृध्नुता क्रोधः कामविरोधे सति तद्साहित्यानुरूपश्चित्तविकारः स्मयो गर्वो महद्विषये निकर्षबुद्धिः मोहो विहिताविहितविवेकशून्यता भेदो देहानुबन्धिष्वप्रियापादनं वैरमकारणाविरोधः संस्पर्धा कलहः व्यसनानि स्त्रीद्यूतमद्यविषयाणि त्रीणि ॥ १८ ॥

एते स्तेयादयः अर्थमूला अर्थे मूलं येषां तथाभूताः । पञ्च दशानर्थाः तस्मादिति यतोऽर्थोऽनर्थावहस्तस्मादर्थाख्यमर्थं इति नाम मात्रस्वपदेश्यं वस्तुतस्त्वनर्थावहं वित्तं श्रेयोऽर्थी चेत्तर्हि दूरतस्त्यजेत् ॥ १९ ॥

भेदवैरसंस्पर्धाः प्रपञ्चयति । भिद्यन्त इति । भ्रात्रादयो भिद्यन्ते स्नेहं त्यजन्ति कथम्भूताः एकाः तुल्याः यत्संभवः अत एव स्निग्धा अन्योऽन्यं प्रीतियुक्ता अपि कुतः काकिणिकात् पुरुषमार्गे विंशतिवराटिका काकिणिका तन्मात्रव्यवहारादपि सर्वे भ्रात्रादयः अरयः शत्रवः कृताः ॥ २० ॥

एतत्प्रपञ्चयति । अर्थेनेति । अल्पीयसा काकिणिकादिपरिमितेनाप्यर्थेन व्यत्यस्तेन भ्रात्रादयः संरब्धाः क्रुद्धाः दीर्घो यावज्जीवानुवृत्तो । मन्युर्येषां ते स्पृधः स्पर्द्धमानाः सहसा आशु सौहृदमुत्सृज्य घ्नन्ति हिंसन्ति परस्परमसून्प्राणांस्त्यजन्ति च ॥ २१ ॥

इत्यमर्थासक्तस्येह लौकिका अनर्थाः प्रपञ्चिता अथ पारलौकिकमनर्थमाह । लब्ध्वेति । अमरैरपि प्रार्थ्यं मानुष्यं जन्म तत्रापि द्विजाग्र्यतां लब्ध्वा तदनादृत्य तादृशं सार्थं श्रेयोऽनादृत्य ये केवलमर्थमात्रासक्तास्ते स्वार्थं स्वात्महितं विनाशयन्ति तदाह । यान्त्यशुभां गतिं नरकं प्राप्नुवन्तीत्यर्थः ॥ २२ ॥

अमरप्रार्थ्यत्वे हेतुत्वेन मानुष्यं जन्म विशिंषन् विवेकी चेत् कोऽपि वित्ते प्रसज्येतेत्याह । स्वर्ग इति । स्वर्गापवर्गयोर्द्वारं साधनमिमं लोकं मनुष्यदेहं प्राप्य अनर्थस्य धामन्याश्रये द्रविणे को नु सज्जेत न कोऽपीत्यर्थः ॥ २३ ॥

नुनु पञ्चमहायज्ञाद्युपयुक्तं द्रविणं किमित्यनर्थावहं वदसीत्यत आह । देवेति । आत्मा देहः देवादीन्प्रति वित्तमसंविभज्य यज्ञादिभिस्तानसन्तर्प्य यः केवलं यक्षवित्तः रक्षणैकमात्रवित्तः सोऽधः पतति नरकं गच्छति ॥ २४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मोपतापायेत्युक्तं विवृणोति । अर्थस्य साधन इति । साधने आयासः सिद्धे साधिते उत्कर्षे रक्षणे त्रासश्चिन्ते व्यये च चिन्ता नाशे उपभोगे च भ्रमो बुद्धिभ्रंशः पिशाचावेशेनेति शेषः ॥ १७ ॥

किञ्च इदं वक्ष्यमाणं वित्तत्यागे कारणं भवतीति भावेनाह । स्तेयमिति । स्मयोऽहङ्कारः मदो दर्पः भेदो द्वैधीभावः राजादिभ्यो व्यसनानि विविधानि ॥ १८ ॥

ततः किङ्कर्तव्यमत्राह । तस्मादिति ॥ १९ ॥

अर्थः कथं द्वैधीभावं करोतीति तत्राह । भिद्यन्त इति । भिद्यन्ते प्राणिमात्रमपि प्रतिपक्षीभवन्तीत्याह । एकयेति ॥ २० ॥

सन्तु भ्रात्रादयः किं कुर्वन्तीति । तत्राह । अर्थेनेति । हिरण्यपर्यवसायिनो वा ॥ २१ ॥

जन्मान्तरैर्देवादिजन्मविशेषैरपि प्रार्थ्यं मानुषं लब्ध्वा तत्रापि द्विजाग्र्यतां लब्ध्वा तद्द्विजाग्र्यत्वमनादृत्य येऽर्थार्जनादिकर्मणा सर्वं शुभं घ्नन्ति ते अशुभां गतिं गच्छन्ति ॥ २२ ॥

व्यर्थयाऽर्थेहया वित्तं प्रमत्तस्य वयो बलम्।
कुशला येन सिध्यन्ति जरठः किं नु साधये ॥ २५ ॥
कस्मात्संक्लिश्यते विद्वान् व्यर्थयाऽर्थेहयाऽसकृत्।
कस्यचिन्मायया नूनं लोकोऽयं सुविमोहितः ॥ २६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इदमेव विविनक्ति। स्वर्गेति। तस्मादेवा मानुष्यं प्रार्थयन्ते इत्यतो वाह। स्वर्गेति। धामनि धाम्नि गृहं लोकं शरीरम् ॥ २३ ॥

कथमनर्थधामत्वं वित्तस्येत्याशङ्कय योग्येभ्योऽप्रदानेनाधःपातहेतुत्वादित्याह। देवेति। भागिनः अंशभागयोग्यानुद्दिश्य। इमानं पतति। पातयति ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अर्थस्य साधने उत्पादने सिद्धेऽर्थे उत्कर्षेऽर्थस्य सम्वर्धने नाशोपभोगे च यथा सम्भवमायासादयः व्यसनानि स्त्रीद्यूतमद्यविषयाणि त्रीणीत्यूनविंशतिः ॥ १७ ॥

तत्रायासत्रासचिन्ताभ्रमाः केवलं दुःखहेतव एव स्तेयादयस्तु पापहेतवोऽपि पञ्चदशैवानर्थहेतवः ॥ १८ ॥ १९ ॥

ऐकमत्यादेके च ते अतिस्नेहवत्त्वादात्मानश्चाश्च ते एकात्मिनश्चापि भ्रात्रादयः काकिणिनेत्यार्षं विंशतिवराटिकामात्रेणापि ॥ २० ॥

स्पृधः स्पर्धमानाः ॥ —२१—२४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

साधने सिद्धे तु तदुत्कर्षः वर्धनं तस्मिंश्च रक्षणे च चोरादितः आयासत्रासचिन्ता च उपयोगे यो व्ययस्तद्विघ्नचिन्ता नाशे भ्रंशे भ्रमः नाशोपभोगयोर्मध्यैकयम् ॥ १७ ॥

व्यसनानि स्त्रीद्यूतमद्यविषयाणि त्रीणि ॥ १८ ॥

एते स्तेयादयः श्रेयोऽर्थी मुमुक्षुः ॥ १९ ॥

भेदवैरस्पर्धाः दर्शयति। भिद्यन्त इति द्वाभ्याम्। विंशतिवराटिका काकिणी तया काकिणिनेति पुंस्त्वमार्षत्वात्। एकाः अन्योऽन्यस्नेहग्रथिताः भिद्यन्ते निःस्नेहीभवन्ति ॥ २० ॥

संरब्धाः क्षुभिताः स्पृधः स्पर्धमानाः ॥ २१ ॥

किं च अमरप्रार्थ्यं मानुष्यं जन्मवत् तत्रापि द्विजाग्र्यतां लब्ध्वा ये स्वार्थं घ्नन्ति ध्वंसं प्रयत्नं न कुर्वन्ति ते अशुभां अशुभादियोनिं यान्ति ॥ २२ ॥ २३ ॥

ज्ञातीन् सगोत्रान् बन्धून् विवाहादिना संबद्धान् अन्यांश्च भागिनः भागार्हान् अतिथ्यादीन् आत्मानं च असंविभज्य तत्तत्कार्येषु संतर्प्य यक्षवित्तः यक्षवत् व्यर्थं वित्तं यस्य सः अधः नरके पतति ॥ २४ ॥

भाषा टीका।

धन के पैदा करने मे सिद्ध करने मे बढाने मे रक्षा करने मे खर्च करने मे नाश होने पर भोगने मे परिश्रम चिन्ता भ्रम ए सब दुःख मनुष्यों को होते हैं ॥ १७ ॥

चोरी हिंसा झूठ दम्भ काम क्रोध गर्व मद भेद वैर अविश्वास ईर्षा व्यसन ॥ १८ ॥

मनुष्यों के लिये इन पन्द्रह अनर्थों के होने का कारण केवल धन ही है तिससे अपने कल्याण चाहने वाला पुरुष अर्थ नामक इस अनर्थ धन को दूर से छोड देवे ॥ १९ ॥

भाइ भार्या पिता सुहृद ए सब बडे स्नेही हैं तो भी एक कौडी के हिसाब मे गडबड होने से सब का मन फट जाता है और वैरी होजाते हैं ॥ २० ॥

ए सब थोडे ही धन के लिये बडे व्यग्र हो कर क्रोध करते हैं स्पर्धा करके शीघ्र ही मित्रता छोड कर त्याग देते हैं और मार डालते हैं ॥ २१ ॥

इस जगत् मे देवतों के चाहने लायक मनुष्य जन्म को पाकर तिसमे भी ब्राह्मणादि होकर इस जन्म को अनादर करके जो अपने भगवत भजन रूप स्वार्थ को नष्ट कर देते हैं वे पुरुष अशुभ गति को प्राप्त होते हैं ॥ २२ ॥

जो पुरुष विवेकी होगा सो तो स्वर्ग तथा मोक्ष इन दोनों के द्वार रूप इस मनुष्य लोक को प्राप्त होकर अनर्थ के स्थान रूप धन मे कौन आसक्ति करेगा ॥ २३ ॥

देव ऋषि पितर ज्ञाति बन्धु और धन के भागी तथा अपना आत्मा इन सबों को धन का विभाग न देकर जो पुरुष केवल यक्ष की नाइं धन को पहरा देकर रखता है वह पुरुष नरकों मे गिरजाता है ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

एवं विमृश्यानुतप्यमान आह। व्यर्थयाऽर्थेहया प्रमत्तस्य मम वित्तादि गतमिति शेषः। येन वित्तादिना कुशला विवेकिनः सिध्यन्ति मुच्यन्ते जरठो वृद्धः ॥ २५ ॥

अन्यमपि स्वमदृशं शोचति कस्मादेवमनर्थं विद्वानपि संक्लिश्यत इति कारणं सम्भावयति। कस्य चिदिति ॥ २६ ॥

किं धनैर्धनदैर्वा किं कामैर्वा कामदैरुत ।
मृत्युना ग्रस्यमानस्य कर्मभिर्वोत जन्मदैः ॥ २७ ॥
नूनं स भगवांस्तुष्टः सर्वदेवमयो हरिः ।
येन नीतो दशामेतां निर्वेदश्चात्मनः प्लवः ॥ २८ ॥
सोऽहं कालावशेषेण शोषयिष्येऽङ्गमात्मनः ।
अप्रमत्तोऽखिलस्वार्थे यदि स्यात्सिद्ध आत्मनि ॥ २९ ॥
तत्र मामनुमोदेरन् देवास्त्रिभुवनेश्वराः ।
मुहूर्तेन ब्रह्मलोकं खट्वाङ्गः समसाधयत् ॥ ३० ॥
श्रीभगवानुवाच ॥
इत्यभिप्रेत्य मनसा ह्यावन्त्यो द्विजसत्तमः ।
उन्मुच्य हृदयग्रन्थीन् शान्तो भिक्षुरभून्मुनिः ॥ ३१ ॥
स चचार महीमेतां संयतात्मेन्द्रियानिलः ।
भिक्षार्थं नगरग्रामानसङ्गोऽलक्षितोऽविशत् ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु नायं मोहितः क्लिश्यति किं तु धनादिभिर्भोगादि । बिभित्सयाऽत आह । किं धनैरिति । उत पुनरपि ॥ २७ ॥

इदानीं सम्पन्नविवेकः कृतार्थमाह । नूनमिति त्रिभिः । येन प्रीतेनाऽऽत्मनः प्लवरूपो निर्वेदश्च भवति स हरिर्मे नूनं प्रीत इति ॥ २८ ॥

अङ्गं शोषयिष्ये तपसा ब्रह्मविद्यया कथं नेष्यामि यदि स्यात्कालावशेषस्तर्ह्यात्मन्येव सिद्धस्तुष्टः सन् अखिले स्वार्थे धर्मादिसाधनेऽप्रमत्तः सन् ॥ २९ ॥

अनुमोदेरन्ननुगृह्णन्तु ननु देवैरनुमोदितोऽपि जरठः स्वल्पेन कालेन किं साधयिष्यसि तत्राऽऽह । मुहूर्तेनेति ॥ ३० ॥

अभिप्रेत्य निश्चित्य आवन्त्योऽवन्तिदेशभवः हृदयग्रन्थीनहङ्कारममकारान् ॥ ३१ ॥

असङ्गः आसक्तिशून्यः अलक्षितः भैक्ष्यमयाचयन् ॥ ३२ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

अर्थेहया अर्थार्थमुद्यमेन प्रमत्तस्य स्वार्थेऽनवहितस्य ॥२५॥

अनर्थज्ञानवतोऽपि तदर्थोद्यमवत्त्वमकण्ठे कारणं स्वयमेव संभावयति । योग्यताविषयं करोति ॥ २६ ॥

पुनरपि । जन्मान्तरमपि ॥ २७ ॥

सम्पन्नविवेकः भगवत्सम्बन्धिसंस्कारेण संसिद्धप्रमः । सर्वदेवमयः यद्यादौ तन्मयत्वेन तदुपासनस्फूर्तेः एतामर्थेऽनर्थरूपां दशाऽनर्थां येनाहं नीतः येन प्रीतेन सतां स्वस्य नौकारूपो निर्वेदश्च भवति आवत इत्यन्यथा तदभावः सूचितः युञ्जानानामभक्तानामित्याद्युक्तेः । तथाच तादृशदशानिर्वेदाऽऽभ्यामेव भगवत्प्रसादोऽनुमीयत इति भावः ॥ २८ ॥

ज्ञानाऽभावे तपआदेर्योगमात्रस्याऽपुरुषार्थत्वाद् प्रत्युत "कर्षयन्तः शरीरस्थमात्मग्राममचेतसः" इत्यादिना निषिद्धत्वाच्च यद्वेति । तर्हि स्यादिति तेन कालावशेषेणेत्यादि योजनम् । कालावशेषेणेति अपवर्गो तृतीया तं ध्यास्येऽस्यर्थः ॥ २९ ॥

तत्र विद्यया देहसम्बन्धमापद्य । ब्रह्मलोकं ब्रह्मात्मकं वैकुण्ठगतं वाऽनभयं हरिमिति द्वितीयाङ्के ॥ ३० ॥

पूर्वं गर्हितमपि सद्व्यवसायं दृष्ट्वा भगवांस्तमभिनन्दति द्विजसत्तम इति । शान्तो मांसहृद्बुद्धिमान् । भिक्षुः संन्यासी ॥ ३१—३३ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

निर्विण्णोऽसीदिति शेषः ॥ २८—३१ ॥

निर्बन्धं भिक्षाटनस्य वारयाम ॥ ३२—४२ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं विमृश्यानुतप्यमानमाहाऽथर्वेति । अथर्वा अर्थशून्यतार्थे इत्याप्रमत्तस्य वित्तं वयो बलं च गतमिति शेषः । वित्तादीन् विशिनष्टि । येनेत्येकवचनं प्रत्येकाभिप्रायं येन वित्तादिना कुशलाः धर्मकाममोक्षाः सिध्यन्ति तद्गतमित्यर्थः अतोऽधुना जरठः इदम्:

तं प्रवयसं भिक्षुमवधूतमसज्जनाः।
दृष्ट्वा पर्यभवन् भद्र ! बह्वीभिः परिभूतिभिः ॥ ३३ ॥
केचित्त्रिवेणुं जगृहुरेके पात्रं कमण्डलुम्।
पीठं चैकेऽक्षसूत्रं च कन्थां चीराणि केचन ॥ ३४ ॥
प्रदाय च पुनस्तानि दर्शितान्याददुर्मुनेः।
अन्नं च भैक्ष्यसम्पन्नं भुञ्जानस्य सरित्तटे ॥ ३५ ॥
मूत्रयन्ति च पापिष्ठाः ष्ठीवन्त्यस्य च मूर्धनि।
यतवाचं वाचयन्ति ताडयन्ति न वक्ति चेत् ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

शोषविषये यत्नतोऽस्य भोगासम्पादनादिति भावः। अखिलस्वार्थे भगवच्चरणचिन्तने अप्रमत्तः यदि कालावशेषः आयुः शेषः आत्मनि मयि स सिद्धः स्यात् ॥ २९ ॥

त्रिभुवनेश्वरा इन्द्राद्या अनुमोदेरन् मा विघ्नान् कुर्वन्त्वित्यर्थः ननु तदपि स्वल्पेन कालेन किं साधयिष्यसि। तत्राह मुहूर्तेनेति ॥ ३०—

इदथग्रन्थीन् अहङ्कारममकारान् ॥ ३१ ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

व्यर्थयार्थेहया प्रमत्तस्यानवहितस्य मे वित्तादिगतामिति शेषः येन वित्तादिना कुशलाः अप्रमत्ताः सिध्यन्ति श्रेयः साधयन्ति ननु बहूनं तत्रालोचनीयमिदानीं किञ्चिद्देयतयोपादेयतया च चिन्तनीयमत्राह। जरठो वृद्धः किं नु साधये ॥ २५ ॥

तत्र त्रिवर्गो हेय इत्याह। कस्मादिति द्वाभ्याम् ॥ २६ ॥ २७ ॥

त्रिवर्गासिद्धेर्दो हरिकृपयैव भवतीत्याह। नूनमिति। येन आत्मनः प्लवरूपो निर्वेदो दत्तः एतां दशामहं नीतश्च स हरिर्नूनं मे प्रीतः ॥ २८ ॥

उपादेयमाह। स इतिः सोऽहं कालविशेषेण अङ्गं देहं शोषयिष्ये तपसेति शेषः यदि कालावशेषः स्यात् तर्हि आत्मनि परमात्मनि सिद्धः लब्धनिष्ठः अप्रमत्तः अवहितः सन् अखिलस्वार्थे तत्प्राप्त्युपाये मोक्षसाधने प्रवर्तिष्ये इति शेषः ॥ २९ ॥

तत्र तपः पूर्वकमोक्षोपायानुष्ठाने मां देवा अनुमोदेरन् अनुगृह्णन्तु ननु तदनुमोदितोऽपि जरठस्त्वं स्वल्पेन कालेन कथमखिलं स्वार्थं साधयिष्यसीत्यत आह। मुहूर्तेनेति ॥ ३० ॥

इदथग्रन्थीन् देहादौ आत्मत्वाहङ्कारादीन् ॥ ३१-३२ ॥

---

भाषा टीका

विवेकी पुरुष जिस धन अवस्था बल से परमार्थ सिद्ध करलेते हैं वे सब मेरे व्यर्थ चेष्टा में चले गये अब मैं वृद्ध होगया तो अब क्या साधन कर सकूंगा ॥ २५ ॥

इस लोक में विद्वान् होकर भी निरंतर धन की इच्छा से व्यर्थ क्यों दुख पाता है इससे मालूम होता है किसी देव की माया से यह सब संसारी खूब मोहित हो रहा है ॥ २६ ॥

धर्मों से क्या प्रयोजन है धन देने वालों से क्या है कामों से क्या है जो मनुष्य मृत्यु से ग्रसित है तिसको अनेक जन्मों के देने वाले कर्मों से वा क्या प्रयोजन है ॥२७॥

अब मालूम होता है कि सर्व देव स्वरूप हरि भगवान मेरे ऊपर संतुष्ट भये हैं जिनने कि मेरे को इस दशा में प्राप्त कर दिया है आत्मा के संसार से पार उतरने को वैराग्य रूप नौका में मेरे को देदिया है ॥ २८ ॥

सो अब में जितना काल बांकी है उसमें अपने अंग को शोषण करूंगा सावधान रहूंगा यदि मेरा मरण न होजावेगा तो संपूर्ण अर्थों को अपने आत्मा में सिद्ध करलयूंगा ॥२९॥

तिस बात में तीनों भुवनों के पति देवता लोग मेरी सहायता करेंगे खट्वांग महाराज ने एक मुहूर्त में ब्रह्म लोक को सिद्ध कर लिया था मेरे को तो अधिक समय है ॥ ३० ॥

श्रीभगवान् उवाच।

अवंतीका ब्राह्मण इस प्रकार से मन में विचार करके हृदय की सब संशयों को छोड़कर शांत मुनी होकर सन्यासी होगया ॥ ३१ ॥

वह मुनि मन इंद्रिय प्राण इन सभों को वश में करके इस पृथिवी में विचरता भया और प्रालक्षित होकर भिक्षा के लिये नगर ग्रामों में घूमता रहा ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

प्रवयसं वृद्धम् अवधूतं मलिनम् पर्यभवन्नभिभेनिरे हे भद्र ! परिभूतिभिस्तिरस्कारैः ॥ ३३ ॥

तर्जयन्त्यपरे वाग्भिः स्तेनोऽयमिति वादिनः ।
बध्नन्ति रज्ज्वा तं केचिद्बध्यतां बध्यतामिति ॥ ३७ ॥
क्षिपन्त्येकेऽवजानन्त एष धर्मध्वजः शठः ।
क्षीणवित्त इमां वृत्तिमग्रहीत्स्वजनोज्झितः ॥ ३८ ॥
अहो एष महासारो धृतिमान् गिरिराडिव ।
मौनेन साधयत्यर्थं बकवद्दृढनिश्चयः ॥ ३९ ॥
इत्येके विहसन्त्येनमेके[1]दुर्वातयन्ति च ।
तं बबन्धुर्निरुरुधुर्यथा क्रीडनकं द्विजम् ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

परिभवानेव दर्शयति । केचिदिति सप्तभिः ॥ ३४ ॥

भो भगवन् ! गृहाणेति दर्शितानि सन्ति प्रदाय पुनराहरुः ॥ ३५ ॥

अन्ये मूत्रयन्ति मूर्धनि च ष्ठीवन्ति फूत्कारेण श्लेष्माणं प्रक्षिपन्ति ॥ ३६—३७ ॥

क्षिपन्ति निन्दन्ति निन्दामेवाऽऽह । एष धर्मध्वजस्त्रिदण्डचिह्नोपजीवी शठो लोकवञ्चकः तदेवाऽऽहुः । क्षीणवित्त इति ॥ ३८

महासारोऽतिबली ॥ ३९ ॥

दुर्वातयन्ति तदुपर्यधोवायुं मुञ्चन्ति बबन्धुः शृङ्खलैः निरुरुधुः कारागृहादिषु द्विजं शुकसारिकादि यथा ॥ ४० ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

केचिदिति सार्धकम् । अक्षसूत्रं कमण्डलुमासाम् । तानि त्रिवेण्वादीनि ॥ ३४ ॥ ३५ ॥

अस्य भिक्षोः यतधाचमिति सार्धकम् ॥ ३६ ॥ ३७ ॥

तदेव । लोकवञ्चकत्वमेव इमां भिक्षुत्वव्याजमयीम् ॥ ३८ ॥

बकवदिति । बको यथा मौनेनैव वारांसि भक्षयति अयमपि तथैव जीविकार्थं दृढनिश्चयः ॥ ३९ ॥

क्रीडनकं क्रीडासाधनम् ॥ ४० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तं वा इति । तं प्रवयसं वृद्धमवधूतमल्पपङ्काङ्कलनादिदेह तिरस्काररहितं दृष्ट्वा खलाधमैः सचार्यमिति ज्ञात्वा हे भद्र ! बह्वीभिः परिभूतिभिः परिभवैः पर्यभवन् पापं पतीनिर्घाणदेशः परिभवं चक्रुरित्यर्थः ॥ ३३ ॥

परिभवमेव प्रपञ्चयति । केचिदिति सप्तभिः । त्रिवेणुं त्रिदण्डं पात्रं जलपात्रं कमण्डलुश्च तौ ॥ ३४ ॥

प्रदायेति भो भिक्षो ! गृहाणेति प्रदाय प्रयच्छन्त इवाभिनयमात्रं कृत्वा केवलं दर्शितानि मुमेकानि त्रिदण्डादीन्याददुः जागृहुः भत्सामिति । भैक्ष्यसम्पन्नं भिक्षोः कर्म भैक्ष्यं भिक्षेत्यर्थः । तेन सम्पन्नं बध्यमन्नं भुञ्जानस्य सतः ॥ ३५ ॥

तस्मिन्ने मूत्रयन्ति मूत्रमुत्सृजन्तु: केचिदस्य मूर्धनि ष्ठीवन्ति न्यष्ठीवन्त फूत्कारेण श्लेष्माक्षेपः ष्ठीवनं वर्तमाननिर्देशस्य अधुनापि दुर्जनाः साधूनेवमभिमर्षन्ति न ततो दुःखितेभवितव्यमित्यभिप्रायः यतवाचं धृतमौनमपि वाचाद्यावयन्ति न वक्ति चेत्ताडयन्ति ॥ ३६ ॥

स्तेनश्चौरोऽयमिति वदन्तो वाग्भिस्तर्जयन्ति भर्त्सयन्ति बध्यतामित्यनन्तरं वादिन इत्यनुषज्जते ॥ ३७ ॥

क्षिपन्ति धिगमुमिति निन्दन्त्यवहेलयन्ति अवज्ञानमेव विशिष्य दर्शयति । एष इत्यादिना दृढनिश्चय इत्यन्तेन । एषः शठः अन्तर्मूर्खः बहिस्तु धर्मध्वजो धर्मस्तु योऽभयमार्गसूचको ध्वजस्तत्तुल्यं त्रिदण्डं यस्य सः अतोऽयं वञ्चक इति भावः । तदेवाहुः । क्षीणवित्त इति । स्वजनैरुज्झितश्चेमां वृत्तिमग्रहीत् ॥ ३८ ॥

महान् सारो बलं यस्य सः अश्मसारतुल्यदृढ इत्यर्थः गिरिराडिव धृतिमान् समावायेय प्रयोजनमर्थादिकं साधयति संपादयति ॥ ३९ ॥

इतीति । दुर्वातयन्ति तदुपर्यधोवायुं मुञ्चन्ति तं द्विजं बबन्धुः रज्ज्वादिभिर्निरुरुधुश्च । यथा क्रीडनकं क्रीड्यतेऽनेनेति क्रीडनकं क्रीडासाधनं वानरादिकं यथा बध्नन्ति निरुन्धन्ति च तद्वत् ॥ ४० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

त्रिवेणुं दण्डं चीराणि जीर्णवस्त्राणि ॥ ३४ ॥

दर्शितानि प्रदाय पुनराददुः ॥ ३५ ॥

वाचयन्ति घावयन्ति ॥ ३६—३९ ॥

दौर्वादयन्ति दुर्वचनं कारयन्ति ॥ ४०—४१ ॥

1 दौर्वादयन्ति इति वि०पाठः

एवं स भौतिकं दुःखं दैविकं दैहिकं च यत् ।
भोक्तव्यमात्मनो दिष्टं प्राप्तं प्राप्तमबुध्यत ॥ ४१ ॥
परिभूत इमां गाथामगायत नराधमैः ।
पातयद्भिः स्वधर्मस्थो धृतिमास्थाय सात्त्विकीम् ॥ ४२ ॥

द्विज उवाच ।

नायं जनो मे सुखदुःखहेतुर्न देवतात्मा ग्रहकर्मकालाः ।
मनः परं कारणमामनन्ति संसारचक्रं परिवर्तयेद्यत् ॥ ४३ ॥
मनो गुणान् वै सृजते बलीयस्ततश्च कर्माणि विलक्षणानि ।
शुक्लानि कृष्णान्यथ लोहितानि तेभ्यः सवर्णाः सृतयो भवन्ति ॥ ४४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रवयसं वृद्धं पर्यभवन् तिरश्चक्रुः परिभूतिभिस्तिरस्कारलक्षणैः ॥ ३३ ॥ ३४ ॥

प्रदाय च पुनराददुः पुनरपि गृहाणेति दातुं दर्शितान्यपि भोजनकाले पुनराददुः आच्छिद्य जगृहुः ॥ ३५ ॥

अङ्गे मूत्रयन्ति मूर्धनि ष्ठीवन्ति ॥ ३६ ॥ ३७ ॥

धर्मध्वजः त्रिदण्डादिलिङ्गोपजीवी शठो लोकवञ्चकः वञ्चनमेवाहुः । क्षीणवित्त इति ॥ ३८ ॥

महासारः सारार्थग्राही ॥ ३९ ॥

तुर्बातयन्ति तन्तुपर्यपानवायुं मुञ्चन्ति बबन्धुः शृङ्खलैः कारागृहादिषु द्विजं शुकसारिकादिकं यथा ॥ ४० ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे भद्र ! परिभूतिभिः तिरस्कारैः पर्यभवन् अवमेनिरे ॥ ३३ ॥

तदेवाह । केचिदिति सप्तभिः ॥ ३४ ॥

भो मुने ! गृहाणेति दर्शितानि सन्ति प्रदाय पुनराददुः ॥ ३५—३६—३७ ॥

क्षिपन्ति निन्दन्ति तदेवाहुः एष इति ॥ ३८ ॥

महासारः महाबलः ॥ ३९ ॥

तुर्बातयन्ति तन्तुपर्यपानवातं मुञ्चन्ति ॥ ४० ॥

———

भाषा टीका ।

उस वृद्ध अवधूत सन्यासी को देख कर हे उद्धवजी दुर्जन बहुत अनादरों से तिरस्कार करने लगे ॥ ३३ ॥

कोई त्रिदंड को चुरा लेवें कोई कमंडलु पात्र को लेजावें कोई बैठने के पीढा को कोई अक्षसूत्र माला को कोई चीर वस्त्र को लेजावें ॥ ३४ ॥

फिर उस मुनि की चीजों को दिखा देवें फिर छिपा देवें फिर देकर फिर लेलेवें जिसवखत वे भिक्षा अन्न लाकर नदी के किनारे भोजन करते होवें ॥ ३५ ॥

उस समय में कोई पापिष्ठ मूत देवें कोई कभी उनके मस्तक पर थूक देवें जब वे मौन रहैं तब उनको बुलावें नहीं बोलैं तो मारने लगैं ॥ ३६ ॥

कोई दुष्ट यह चोर है ऐसा कहकर खोटे वचनों से उनको डरावें कोई बांधो बांधो ऐसा कहकर रस्सी से उनको बांध देवें ॥ ३७ ॥

कोई उनकी अवज्ञा करके गाली देवें और कहैं यह धर्म का बाना लिया है शठ है धन के नष्ट होने से कुटुंबियोंने छोड दिया है तब इसने यह वृत्ति लेली है इत्यादि ॥ ३८ ॥

अहो यह बडा सारवाला है पर्वतसरीका धैर्यवाला है बगुला सरीका दृढ निश्चय वाला है मौनी होकर अपने मत लब को सिद्ध करता है ॥ ३९ ॥

ऐसा कह कर कोई हंसीकरैं कोई अधोवायु छोड देवैं कोई बांधदेवैं कोई रोकरखैं जैसे पींजरेकि चिडिया होवे तैसे रखैं ॥ ४० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

भौतिकं दुर्जनादिकृतम् दैहिकं ज्वरादिनिमित्तम् दैविकं शीतोष्णादिप्रभवम् दिष्टं दैवप्राप्तम् ॥ ४१ ॥

धर्मात्पातयद्भिः परिभूतोऽपि सात्त्विकीं धृतिमास्थाय स्वधर्म एव स्थित इमां वक्ष्यमाणां गाथामगायत सात्त्विकी धृतिश्च—

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाऽव्यभिचारिण्या धृतिः सा पार्थ ! सात्त्विकी ॥

इति ॥ ४२ ॥

तामेवाहाद्वाद्शभिर्गाथामाह । नायमिति । नचाऽऽत्मा नापि

अनीह आत्मा मनसा समीहता हिरण्मयो मत्सख उद्विचष्टे ।
मनः स्वलिङ्गं परिगृह्य कामान् जुषन्निबद्धो गुणसङ्गतोऽसौ ॥ ४५ ॥
दानं स्वधर्मो नियमो यमश्च श्रुतं च कर्माणि च सद्व्रतानि ।
सर्वे मनोनिग्रहलक्षणान्ताः परो हि योगो मनसः समाधिः ॥ ४६ ॥
समाहितं यस्य मनः प्रशान्तं दानादिभिः किं वद तस्य कृत्यम् ।
असंयतं यस्य मनो विनश्यद्दानादिभिश्चेदपरं किमेभिः ॥ ४७ ॥
मनो वशेऽन्ये ह्यभवं स्म देवा मनश्च नान्यस्य वशं समेति ।
भीष्मो हि देवः सहसः सहीयान् युञ्ज्याद्वशे तं स हि देवदेवः ॥ ४८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रहादयः मनः परं केवलं सुखदुःखयोः कारणं वदन्ति 'मनसा ह्येव पश्यति मनसा शृणोति,, इत्यादिश्रुतयः ॥ ४३ ॥

परिवर्तनप्रकारमाह । मन इत्यादि । गुणान् गुणवृत्तीः सृजति ततश्च तेभ्यो गुणेभ्यः शुक्लानि सात्त्विकानि कृष्णानि तामसानि लोहितानि राजसानि सवर्णानि तत्तत्कर्मानुरूपाः सृतयो देवतिर्यङ्नरादिगतयः ॥ ४४ ॥

तर्हि मनस एव संसारः स्यान्नात्मन इत्याशङ्क्याऽऽह । अनीह इति । अयमर्थः अविद्ययाऽध्यासेनैवात्मनः संसृतिर्न तु स्वतः यतः तद्रहितस्येश्वरस्य सा नास्ति किन्तु तद्वतो जीवस्यैवेति तदेवाऽऽह । मनसा समीहमानेन सह नियन्तृत्वेन वर्तमानोऽपि परमात्मा अनीहः कर्तृत्वक्रियासङ्गरहितः यतो हिरण्मयो विद्याशक्तिप्रधानः यतो मत्सखः मम जीवस्य सखा नियन्ता स तु उच्चैर्विचष्टे अतिरोहितज्ञानेन केवलं पश्यतीत्यर्थः । असौ पुनरहं जीवः स्वलिङ्गं स्वस्मिन्नात्मनि लिङ्गयति द्योतयति संसारमिति तथा तन्मनः परिगृह्याऽऽत्मत्वेन स्वीकृत्य मनसो गुणैः कर्मभिः सङ्गतः सम्बद्धो गुणसङ्गाद्वा कामान् जुषन्निबद्ध इति ॥ ४५ ॥

अतो मनोनिग्रहे कृते सर्वं कृतं स्यात् विना तु सर्वं व्यर्थमित्याह । दानमिति द्वाभ्याम् । स्वधर्मो नित्यनैमित्तिकः सद्व्रतान्येकादश्युपवासादीनि अन्यानि च यानि कर्माणि एते सर्वे उपाया मनोनिग्रहलक्षणोऽन्तो निष्ठा फलं येषां ते तथा तत्र ज्ञानाङ्गत्वं तेषां प्रसिद्धं तत्राऽऽह । मनसः समाधिर्निग्रह एव परो योगो ज्ञानम् ॥ ४६ ॥

अतो यस्य मनः समाहितं भवति तस्य किं कृत्यमवशिष्टमपरं प्रत्युपदिशन्निव स्वयमेवाऽऽह । असंयतं विक्षिप्तं चेत् तदा विनश्यदवस्थादिना क्षीयमाणं चेत्तर्ह्येभिर्दानादिभिः किमपरं प्रयोजनं स्यान्न किञ्चिदित्यर्थः ॥ ४७ ॥

नन्वितरेन्द्रियजयः प्रयोजनं स्यादित्याह । मनोवश इति । देवा इन्द्रियाणि तदधिष्ठातारो वा भीष्मो योगिनामपि भयङ्करो मनोलक्षणो देवः कुतः सहसो बलादपि बलिनोऽपि वा सहीयान् बलवान् अतस्तं यो वशवर्तिनं कुर्यात्स एव देवदेवः सर्वेन्द्रियजेता भविता नान्यः तथा च श्रुतिः "मनसो वशे सर्वमिदं बभूव नान्यस्य मनो वशमन्वियाय । भीष्मो हि देवः सहसः सहीयान्,, इति ॥ ४८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता—
### दीपिकादीपिनी टिप्पणी ।

ज्वरादिभिर्निमित्तम् आध्यात्मिकम् । दैविकमाधिदैविकम् । प्राप्तं प्राप्तं दुःखं दैवप्राप्तत्वाल्लोकत्वमेव न कस्यापि दोष इत्यबुध्यत ॥ ४१ ॥

आस्थायाश्रित्य गाथां स्वपरोपदेशमयं वाक्यसमूहम् ॥ ४२ ॥

यद्यपि गाथायां षोडश एव श्लोका नवद्वादश तथापि गाथार्थतात्पर्यस्य भगवता द्वाभ्यां दर्शितत्वादष्टादशश्लोकीमित्युक्तम् । जायत इति जनो देहः । यस्मात् कर्तृ संसारचक्रं जन्ममरणप्रवाहं परिवर्तयेत् पुनः पुनः प्रापयेत् ॥ ४३ ॥

बलीयो दुर्जयम् । गुणवृत्तीः कामाद्याः । गुणेभ्यः गुणवृत्तिभ्यः तत्तत्कर्मानुरूपाः सात्त्विकराजसतामसकर्मानुकूलाः । गतयो योनयः ॥ ४४ ॥

यर्हि मनसः कर्तृत्वं तर्हि । आत्मनो मोक्षशङ्कासमाधानाय योजनात् पूर्वमेव तात्पर्यार्थं व्याचष्टे । अयमर्थ इति । अविद्यया स्वरूपाज्ञानेन इयं देहात्मभ्रमादिरूपा । स्वतः स्वभावतः । यतो हेतोः तद्रहितस्याविद्यारहितस्य । तद्वतोऽविद्यावतः । तत् पूर्वोक्तमेतत् तात्पर्यम् । समीहमानेन गुणवृत्तीः सृजता । तत्क्रियासङ्गरहितः चिच्छक्तिबलेन मनोऽध्यासाभावान्मनःक्रियासङ्गशून्यः । विद्याशक्तिः स्वरूपशक्तिस्तत्प्रधान इति तदभिभूता मायापि तदाश्रिता एव तिष्ठतीति सूचितम् । अतो नियन्तृत्वात् स्वीकृत्य अध्यस्य । गुणैः गुणकार्यैः कर्मभिः ॥ ४५ ॥

अतः संसारस्य मनोनिबन्धनत्वात् तं मनोनिग्रहम् । नित्यः सन्ध्योपासनादिः नैमित्तिको जातेष्ट्यादिः । नियमः स्नानादिः यमोऽहिंसादिः श्रुतं शास्त्रश्रवणम् सत्यानि च प्रकृतिविकृति-

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी।

बागसङ्गानरूपाणि। तेषां स्वधर्मादीनां तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्तीत्यादि श्रुतौ "यज्ञादिश्रुतेरश्ववदिति" न्याये च प्रसिद्धम् ॥ ४६ ॥

मतो धर्मादीनां मनो निग्रहफलकत्वात्। विक्षिप्तं रजसा छाद्यमानश्च तमसा ॥ ४७ ॥

इतरेन्द्रियजयः ज्ञानकर्मेन्द्रियजयः दानादीनां प्रयोजनम्। मनो बलीयस्त्वात् तं मनोदेव तथाच मनसो दुर्जयत्वे प्रमाणं श्रुतिः ॥ ४८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

आत्मा शरीरम् मनः केवलं सुखदुःखयोः कारणं वदन्ति "मनसा ह्येव पश्यति मनसा शृणोति" इत्यादि श्रुतेः मन एव मनुष्याणां कारणं बन्धमोक्षयोः इति स्मृतेश्च ॥ ४३ ॥

गुणान् रागद्वेषादीन् शुक्लकृष्णलोहितानि पुण्यपापमिश्ररूपाणि सवर्णाः सदृशः अनुरूपाः ॥ ४४ ॥

हिरण्मयः परमपुरुषः मत्सखः मम जीवस्य सखीभूतः द्वा सुपर्णा सयुजा सखाया" इतिश्रुतिः मनसा समीहितं सम्यगीहितमुच्चिचेष्टे पश्यति असौ जीवः स्वलिङ्गं करणतया चिन्हभूतं विनश्येत् सः इति शेषः ॥ ४५—४७ ॥

मनोवशे मनसो वशे देवाः इन्द्रियाणि अन्यस्य जनस्य अदान्तमनसः भयङ्करः देव ईश्वरः गुरुज्यात् सहसः महीयान् बलिनोऽपि बलवत्तरः ईश्वरप्रसादान्मनोवशीकार इत्यर्थः ॥ ४८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

इत्थं परिभूतोऽपि नाग्निमिश्रनिदानानुसन्धानेनाऽविकृतो बभूवेत्याह। एवमिति। भौतिकं दुर्जनैः कृतं दैविकं शीतोष्णादिप्रभवं दैहिकं ज्वरादिनिमित्तं यद्दुःखं प्राप्तं प्राप्तमसकृत्प्राप्तं तत्सर्वं दिष्टं निजकर्मनिमित्तमत आत्मनो मोक्षरूपमेवेत्यनुष्यन्निश्चित्याविकृतोऽवतस्थे इत्यर्थः ॥ ४१ ॥

तदवनोधसूचिकां तद्गीतगाथां प्रस्तौति। परिभूत इति। पातयद्भिः स्वधर्माच्चालयद्भिरधर्मैरित्थं परिभूतः सात्त्विकीं सत्त्वगुणकारितां धृतिमास्थाय स्वधर्मे एव स्थित इमां गाथामगायत ॥ ४२ ॥

गाथामेव षोडशश्लोकीमाह। नायमित्यादिना। नायमयं जनो न सुखदुःखहेतुर्नापि देवतादयः तत्र देवता ईश्वरः। आत्मा जीवात्मा ग्रहाः सूर्यादयः किं त्वन्तःकरणमेव कारणमामनन्ति सुखदुःखकारणमिद इति शेषः। तत्र हेतुत्वेन मनो विशिनष्टि। यन्मनः संसारचक्रं परिवर्तयेदुग्रमयेत्तन्मनः कारणमिति सम्बन्धः ॥ ४३ ॥

एतदेवोपपादयति। मनो गुणानिति। बलीय इत्यनेन मनसो दुर्निग्रहत्वमभिप्रेतं गुणांस्तानद्रागद्वेषादीन् सृजति ततश्च गुणेभ्यः शुक्लानि सात्त्विकानि पुण्यानीत्यर्थः। कृष्णानि तामसानि पापानि लोहितानि राजसानि च पुण्यापुण्यात्मकानीत्यर्थः। एवं विलक्षणानि कर्माणि तेभ्यः कर्मभ्यः सवर्णास्तदनुरूपाः सृतयः गतयो भवन्ति जीवस्य देवतिर्यङ्नरजन्मानि भवन्ति तत्र सात्त्विककर्मभ्यो दैवी सृतिस्तामसेभ्यस्तिर्यञ्ची राजसेभ्यस्तु मानुषीति विभागः तासु च पुनर्मनसा गुणसृष्टिस्तेभ्यः कर्माणि ततः सृतय इत्येषां चक्रवत्परिवृत्तेश्चक्रस्वरूपत्वम् ॥ ४४ ॥

ननु मनःपरिवर्त्येन संसारचक्रेण कथं जीवस्य सुखदुःखे स्तः यदि देहसम्बन्धात्तर्हि तदविशेषात्परमात्मनः स्यातामित्यत आह। अनीह इति। समीहता समीहमानेन सङ्कल्पयता विकल्पयता चेत्यर्थः। तेन मनसा हेतुभूतेन अनीहः अहंममाभिमानानुरूपचेष्टारहितः आत्मा अन्तः प्रविश्य शासनेन धारकः हिरण्मयः हिरण्यवत्प्रकाशवदुज्ज्वलः मत्सखः मदनपायी परमपुरुषः मन उद्विचष्टे पश्यति बुद्धिसाक्षितयावतिष्ठत इत्यर्थः। असौ जीवस्तु कर्त्रिलिङ्गमात्मतयाभिमतं शरीरं परिगृह्य कामान्विषयान् जुषन् सेवमानः गुणसङ्गतः शब्दादिविषयसङ्गनिबद्धो भवति अतस्तस्यैव सुखदुःखे नतु परमात्मनः नहि शरीरसम्बन्धमात्रमेव सुखदुःखहेतुः अपितु गुणकर्मवश्यत्वमेव परमात्मनस्तदभावात्सुखदुःखे न जीवस्य तु तद्वश्यत्वात्ते स्त इति भावः अत्र—

द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते।

इत्यादिश्रुत्यर्थोऽनुसंहित इति ॥ ४५ ॥

इत्थं मनस एव सुखदुःखनिदानत्वात्तन्निग्रहस्यैव तन्निवृत्युपायत्वात्तस्यैव प्रधानसाधनत्वादितरे तदर्था इति निर्णयति। दानमिति। दानादयः सर्वे मनोनिग्रहलक्षणान्ताः मनोनिग्रहरूपः अन्तो निष्ठा फलं येषां ते ननु ब्राह्मणा विविदिषन्ति यज्ञेन दानेनेति दानादीनां वेदनापरपर्याययोगाङ्गत्वश्रवणात्कथं मनोनिग्रहाङ्गत्वमित्यत आहापर इति। विषयान्तरेभ्य आकृष्य परमात्मन्येव मनसः सन्धारणं समाधिः स एव मनोनिग्रहः स परो योगो यज्ञेन दानेनेत्यादिश्रुत्यभिधीयमान इत्यर्थः। तत्र स्वधर्मं स्ववर्णाश्रमोचितधर्मः यमा नियमाश्च अहिंसा सत्यम् स्तेय नित्यादिनैकोनविंशोऽभिहिताः श्रुतमध्ययनं कर्माणि पुण्यानि वैदिकानि सद्व्रतान्येकादश्युपवासादीनि ॥ ४६ ॥

अन्वयव्यतिरेकाभ्यां तेषां तदङ्गत्वं निर्णयति। समाहितमिति यस्य मुमुक्षोर्मनः समाहितं प्रशान्तं रागाद्यकलुषितं च भवेत् तस्य किङ्कृत्यं दानादिभिः साध्यं किमस्ति यदेति परं प्रश्नं पदिशन्निव स्वयं वदति यस्य मुमुक्षोर्मनः असंयतं चेत् यदा विलिइयद्यालस्यादिनाक्षीयमाणं चेत् तदा एभिः किमपरं प्रयोजनं स्यान्न किञ्चिदित्यर्थः। समाधेर्न मुमुक्षोरपेक्षितफलसाधनत्वात् प्रतिनियतफलसाधनत्वेनानुष्ठितानां दानादीनामनिष्टफलप्रदानान्तको नाशहेतुश्चात्र दानादीनां समाध्यङ्गत्वमेवेति भावः ॥ ४७ ॥

नन्वत्र दानादीनामुभयथापि वैयर्थ्यादकर्तव्यतोक्ता प्रतिनियतफलसाधनतयाऽकर्तव्यत्वेऽपि वेदनाङ्गतया तत्कर्तव्यत्वश्रवणात् नापीतरेन्द्रियनिग्रहाय दानादीनां कर्तव्यतेत्याह मनोवश इति। अन्ये देवा इन्द्रियाणि तदधिष्ठातारो वा म

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यद्योऽमयन्त्रम मनश्चेति यावदर्थः मनस्तत्त्वस्य वशं न समेति तर्हि कस्याप्यवशगं दानादिभिर्वा कथं समाहितं कर्यादित्यत आह । भीष्म इति । देवः स्वतेजसा दीप्यमानः मनश्चाश्वोऽभिधा-यगीति इत्युक्तविधः परमपुरुषः दानादिभिराराधितस्तत्दुर्नि-ग्रहमपि मनः वशे युञ्ज्यात्स्वात्मिन्समाहितं कुर्यात् अत हेतुत्वेन तं विशिनष्टि । स हि देवः सहसः सहीयान् बलिनोऽपि बल-वत्तरः तत्र हेतुः देवदेवः देवानां मनःप्रभृतिकरणानामधि-ष्ठातॄणां चन्द्रादीनामपि देवः अत एव तेषां भीष्मः भयङ्करः अत्र न तत्र सूर्यो भाति न चन्द्रतारकं भीषास्माद्वातः पवते इत्यादि श्रुतियुगलार्थोऽभिप्रेतः ॥ ॥ ४८ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किमकरोदेवं परिभूत इति तत्राह । परिभूत इति । सात्त्विकीं स्वाभाविकीम् ॥ ४२ ॥

कीदृशीं गाथामगायतेति तत्राह । नायमिति । अयं जनः परितो वर्तमानः तर्हि किंदुःखस्य इति तत्राह । न देवतेति । देवता देवाः आत्मा देहः ग्रहाः आदित्यादयः तर्हि किङ्कार-णमत्राह । मन इति । यत्संसारचक्रं परिवर्तयत्तन्मनः परं कारणमामनन्तीत्यन्वयः ॥ ४३ ॥

मनसः कारणत्वं विवृणोति । मन इति । प्राकृतं लिङ्गशरीररूपं प्रलये सूक्ष्मरूपेण स्थितं मनःसृष्टिकाले गुणानात्मनि सृजते वै सात्त्विकादिभेदेन त्रिविधं बाह्यावयवोपचितं भवतीत्यर्थः । अत एव बलीयः कार्यकारणसमर्थं ततस्तस्माच्च मनसः सात्त्वि-कादिभेदेन त्रिविधानि विलक्षणानि कर्माणि भवन्ति विल-क्षणानीत्युक्तं विवृणोति । शुक्लानीति । तेभ्यः कर्मभ्यः सवर्णाः शुक्लादिवर्णयोग्याः गतयो भवन्ति अनेन सर्वस्य सुखादीनां परं कारणं मन इत्यवगतम् ॥ ४४ ॥

ननु मनसः परमकारणत्वं चिदचिन्नियन्तुः परमात्मनः कार-णत्वमपह्नुवानं स्यादिति तत्राह । अनीह इति । आत्मा परमात्मा मनसः समीहितं संसारावृत्तिहेतुभूतं कर्म उद्दिश्य तत्कृत्स्नसाक्षित्वेन पश्यति कीदृशः अनीहः मनोवत् क्लिष्टकारी न भवतीत्यनेन हरेः प्रशस्तकर्तृत्वं ज्ञायते साक्षित्वेन देहान्तर्वर्तमानस्य दुःखादिकं स्यादित्यत उक्तं हिरण्मय इति । पूर्णस्वरूपानन्दः तस्य दुःखाभावे हेतुमाह । मत्सख इति । पूर्णानन्दो हरिमं-त्सखेति । यस्मात्तस्मात्परेषां दुःखकारणं मन इति भावः अचेतनत्वेन स्वतः प्रवृत्त्यनुपपन्नस्य मनसः कारणत्वं कथ-मत्राह । मन इति । असौ निबद्धो देहाभिमानी जीवः स्वलिङ्गं लिङ्गशरीररूपं मनः परिगृह्य गुणसंगतः विषयस्नेहतः कामान् विषयान् जुषमाणस्त इति विषयानुरक्तचेतनानुगृहीतस्याचेतन-स्यापि मनसः कारणत्वं युक्तमिति भावः । नहामनाः पुमां-श्चिन्तयतीति श्रुतेः मनसः संसारकारणत्वमुक्तं तत्र किंप्रमा-णमित्यतो वाह । अनीह इति । परमात्मनो दर्शनं प्रेरणा च प्रमाणम् ॥ ४५ ॥

एवं विश्वसंसारनिवृत्तौ क उपाय इत्यतस्तस्य मनसो निग्रह एवेत्याह । दानमिति । मनोनिग्रहलक्षणान्ताः मनोवशीक-रणस्वरूपनिर्णयाः कुत इत्यत्राह । पर इति ॥ ४६ ॥

मनः समाधानस्य परमयोगत्वमुपपादयति । समाहितमिति । यस्य मनः समाहितं परमात्मध्यानयोगयुक्तं तस्य दानादिभिः किं कृत्यं यद् यस्य मनो दानादिभिरसंयतं विनष्टं चेद्भिर्दा-नादिभिरपरं साध्यं किं न किमपि ॥ ४७ ॥

ननु तर्हि मनःसंयमनं कर्तव्यं तच्चाशक्यं किमित्याशङ्क्य स्वानन्यत्वाच्च शक्यमिति भावेनाह । मन इति । अहमपि वि-ष्णुभ्योऽन्ये देवा मनोवशे भवन्ति । तत्र गुणभूतस्य मनसः पुरु-षवश्यत्वप्रकारः कथमित्यतो वाह । मन इति वा हि शब्देन "श्रुते र्ब्रह्मणः कस्य मनो याति वशं क्वचित् । भियं सरस्वतीं चापि याति वा तत्प्रसादतः" इति वाक्यं प्रमाणयति । विष्णुवाद्यैश्च गुरो विना अन्यस्य वशं न याति । कुतोऽत्राह । भीम १ इति स २ हसः सहनशक्तिमतः सहीयानतिशयितसहनशक्तिमान् भीमो रुद्रस्तस्मात् इति विद्धयतं ततः किमत्राह । योऽनि । विष्णुवादीन्विनान्यः कश्चिद्यमो नास्याविशत् नातिक्रान्तवान् तत्र हेतुः स हि देवदेवः स भीमो देवस्य सात्त्विकमनसो देवोऽ-भिमानी यस्मात्तस्मात् ॥ ४८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मनः स्वलिङ्गं परिगृह्णात्यनेन मानसज्ञानातिरिक्तं स्वाभा-विकं ज्ञानं जीवस्य दर्शितं तदभावेन परिग्रहाद्यनुत्पत्तेः ॥ ४५—५० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भौतिकं दुर्जनादिकृतं दैहिकं ज्वरादिनिमित्तं दैविकं शीतो-ष्णादिप्रभवं दिष्टं दैवप्राप्तम् ॥ ४१ ॥

स्वीयधर्मनिष्ठतः पातयद्भिरपि तैः स्वधर्मे स्थित एव इमां वक्ष्यमाणां गाथामगायत सात्त्विकीं धृतिश्च—

> धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
> योगेनाव्यभिचारिण्या धृतिः सा पार्थ ! सात्त्विकी ॥

इति ॥ ४२ ॥

अहो दुःखमेतावत् कः खलु दत्त इति विमृशन्न तावदयं दुर्जनो दत्त इत्याह । नायमिति । ननु प्रत्यक्षमयं किमपलपसि स्वानन्दयेणायं जनो न दत्त इतिचेत् केषांचित् प्रेरणावशादेत्त इत्युक्तवन्तं तत्र प्रेरकान् निषेधति न देवता नात्यात्मा नापि ग्रहादयः

---

१ भीमो रुद्रः व्योमकेशो भवो भीम इत्यभिधानात् ।
२ सहसः वायोः सकाशात् तदनुग्रहयोग्यतयावत् । देवस्य भर्गः सहसोयतोजनीति श्रुतौ सहः शब्दस्य वायौ प्रयोग-दर्शनात् ।

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किन्तु मन एव परं केवलं कारणं वदन्ति "मनसा ह्येव पश्यति मनसा ह्येव शृणोति" इत्याद्याः श्रुतयः परिवर्तयेत् परिभ्रामयेत् ॥ ४३ ॥

परिवर्तनप्रकारमाह । मन एव दोषपूर्णोऽपि कनककामिन्यादिवस्तूनि गुणान् सृजते सृजति धनं विना कुतो धर्मः स्रक्चन्दनवनिताद्या भोगाश्च कुतः सिध्यन्ति तांश्च विना कुतः सुखमतो धनमुपार्जनीयमिति प्रथमं धनोपार्जने दोषेऽपि मन एव प्रवर्तयतीत्यर्थः । बलीय इत्यरे महानर्थकृद्धनकलत्रपुत्रादिकामिन्यतः स्वतो वा जनितं विवेकमपि नैव गृह्णातीति भावः । कर्माणि मनःप्रवर्तितानि विलक्षणानि कानिचित्सात्त्विकानि कानिचित्तामसानि कानिचिद्राजसानि न त्वेकीभूतानीत्यर्थः । शुक्लानि धर्मोपयोगीनि कृष्णानि नरकोपयोगीनि लोहितानि धर्माधर्मोपयोगीनि क्रमेण तेभ्यः सवर्णाः सृतयः देवतिर्यङ्नरादिजातयः ॥ ४४ ॥

ननु तर्हि मनस एव संसारोऽस्तु नात्मनस्तत्र सत्यमात्मा ह्यत्र शरीरे द्विविध एकः परमात्मा मनोलेपरहितः अन्यो जीवात्मा तल्लेपसहित एव तत्र प्रथमं तावत् शृणिवत्याह । अनीह इति । मनसा समीहमानेन सहनियन्तृत्वेन वर्तमानोऽपि परमात्मा अनीहः तत्क्रियासङ्गरहितः अतो हिरण्मयः स्वतन्त्रचिन्मयः मम जीवस्य सखा उत उच्चैर्विचष्टे अतिरोहितज्ञानात् न केवलं निर्लेप एव पश्यतीत्यर्थः द्वितीयो जीवात्मा तु स्वस्य लिङ्गं लिङ्गशरीरं मनः परिगृह्य आत्मत्वेन स्वीकृत्य तस्य मनसो गुणैर्गुणकृतकर्मभिः संगतः संगात् कामान् जुषन् निबद्धः मनोध्यासात् जीवात्मन एव संसार इत्यर्थः । मनसस्तु जडत्वेन सुखदुःखानुभवाभावात् स्वर्गनरकापवर्गेषु मध्ये न कोऽपीति भावः ॥ ४५ ॥

तस्मात्सर्वानर्थकृतो मनसो निग्रह एव यतनीयमित्याह । दानमिति । दानादय एते सर्वे उपायाः मनोनिग्रहलक्षणः अन्तः शेषः फलं येषां ते यतो मनसः समाधिर्निग्रह एव परः सर्वश्रेष्ठो योगः ॥ ४६ ॥

सुधीभिरेको मनोनिग्रह एवापेक्षणीयो नान्य इत्याह । समाहितं वशीकृतं चेत् किं दानादिभिः असंयतम् अवशीभूतं मनो विनश्यत् अपयुक्तं च अपरमनुरक्तं विक्षेपयुक्तं च चेत् किमेभिर्दानादिभिः ॥ ४७ ॥

नन्वितरेन्द्रियजयोऽप्यपेक्षणीय एव तत्र नेत्याह । मनोवश इति । देवा इन्द्रियाणि तदधिष्ठातारश्च मनोवशे मनस एव वशेऽभवन् वर्तन्ते च स भीष्मः योगिनामपि भयंकरः मनोलक्षणो देवः यतः सहसः महास्विनोऽपि सहीयान् बलिष्ठादपि बलिष्ठः इत्यर्थः अतस्तं यो वशं युञ्ज्यात् कुर्यात् स हि देवदेवः सर्वेन्द्रियजेता तथाच श्रुतिः "मनसो वशे सर्वमिदं बभूव नान्यस्य मनो वशमन्वियाय । भीष्मो हि देवः सहसः सहीयानिति ॥ ४८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भौतिकं दुष्टमनुष्यादिभूतकृतम् दैविकं शीतोष्णादि दैहिकं ज्वरादिनिमित्तम् ॥ ४१ ॥

पातयद्भिः धर्मोहितिदोषः । परिभूतोऽपि अधर्मेभ्यः—

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ ! सात्त्विकी ।

इत्येवं भूतां सात्त्विकीं धृतिमास्थाय इमां वक्ष्यमाणां गाथामगायत ॥ ४२ ॥

तामेव गाथां षोडशश्लोकात्मिकामाह । नायमिति । मन एव परं मुख्यं कारणं निमित्तं "मनसा ह्येव पश्यति मनसा शृणोति" इत्याद्याः श्रुतयः आमनन्ति न केवलं सुखदुःखानुभवमात्रे मनसो निमित्तत्वमपि तु तन्मन एव संसारचक्रं जन्ममरणप्रवाहं परिवर्तयेत् जीवात्मनः संसृतिनिमित्तं मन एवेत्यर्थः ॥ ४३ ॥

संसृतिनिमित्तत्वमेवाह । मन इत्यादिना । बलीयो वायुवद्दुर्निग्रहं मनः गुणान् गुणवृत्तीः सृजते जीवस्य सात्त्विकत्वादिभावे निमित्तं भवतीत्यर्थः । ततो गुणेभ्यः शुक्लानि सात्त्विकानि कृष्णानि तामसानि लोहितानि राजसान्येवं त्रिविधानि कर्माणि तेभ्यश्च कर्मभ्यः सवर्णाः कर्मानुरूपाः सृतयः देवतिर्यङ्नरादिगतयः ॥ ४४ ॥

ननु चेतनं जीवमचेतनं मनः गुणान् सृष्ट्वा त्रिविधैः कर्मभिर्देवतिर्यगादियोनिषु परिवर्तयतीति कथं घटत तत्राह । अनीह इति । आत्मा देहे चेतनत्वेन प्रसिद्धो जीवः स्वलिङ्गमात्मन् आत्मानं लिङ्गयति संसृतिं द्योतयतीति तन्मनः परिगृह्य आत्मत्वेन स्वीकृत्य गुणसङ्गतः मनः सृष्टगुणवृत्तिसङ्गतः कामान् जुषन् समीहता मनसा निबद्धो भवति चेतनेन जीवेनात्मत्वेन गृहीतं मनश्चेतनाधिष्ठितत्वाद्गुणान् सृजति ततस्त्रिविधानि कर्माणि ततो देवादिगतयः इत्येवं मनो जीवं संसारे परिवर्तयतीत्यर्थः । ननु तर्हि स्वात्मतया परिगृहीतेन मनसा बद्धमात्मानं दीनं कः पश्येदत आह । हिरण्मयः ज्योतिर्मयविग्रहः अनीहः प्राकृतचेष्टारहितः मत्सखः परमेश्वरः उच्चैर्विचष्टे चक्षुर्भिः पश्यति कदा मां प्रार्थयेदस्मादविद्याबन्धात् स एव मनसा गृहीतं मां मोचयितुं समर्थ इति भावः ॥ ४५ ॥

तस्मान्मनसो भगवति नियमनं कर्तव्यमित्याह । दानमिति । दानं सत्पात्रेभ्यो यथायोग्यं वस्त्वर्पणं स्वधर्मो नित्यनैमित्तिकः श्रुतं शास्त्राभ्यासः सुकृतान्येकादश्युपवासादीनि अन्यानि च कर्माणि एते सर्वे उपायाः मनोनिग्रहलक्षणा भगवति मनसः समाधानं तदन्तो निष्ठा फलं येषां ते तथा तस्मात्परः सर्वसाधनफलरूपो योगः सर्वसंसारनिवृत्तिपूर्वकभगवत्प्राप्त्युपायः समाधिः भगवति मनसः समाधानम् ॥ ४६ ॥

दानादीनामन्वयव्यतिरेकाभ्यां मनोनियमनाङ्गत्वमाह । समाहितमिति । समाहितं विषयेभ्य उपरतं प्रशान्तं भगवति स्थैर्येण असंयतं विषयेषु विक्षिप्तं विनश्यत् भगवद्ध्यानपरत्वात् सत्त्वे लीयमानम् ॥ ४७ ॥

ननु मनः समाहितं कथं भवेत्तत्राह । मन इति । हि यतः देवाः मनोवशे मनश्चान्यस्य देवस्य वशं न समेति मनो देवः भीष्मः सर्वदेवमनुष्यादीनामपि भयङ्करः सहसः सहीयान् बलिनोऽपि बलीयान् तं यो देवदेवः देवः श्रीवासुदेवः देवः उपास्यः यस्य सः श्रीवासुदेवोपासकः सः वशे युञ्ज्यात् श्रीवासुदेवध्यानेन मनोजयो भवतीत्यर्थः ॥ ४८ ॥

तं दुर्जयं शत्रुमसह्यवेगमरुन्तुदं तन्न विजित्य केचित् ।
कुर्वन्त्यसद्विग्रहमत्र मर्त्यैर्मित्राण्युदासीनरिपून् विमूढाः ॥ ४९ ॥
देहं मनोमात्रमिमं गृहीत्वा ममाहमित्यन्धधियो मनुष्याः ।
एषोऽहमन्योऽयमिति भ्रमेण दुरन्तपारे तमसि भ्रमन्ति ॥ ५० ॥
जनस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनश्चात्र ह भौमयोस्तत् ।
जिह्वां क्वचित्संदशति स्वदद्भिस्तद्वेदनायां कतमाय कुप्येत् ॥ ५१ ॥
दुःखस्य हेतुर्यदि देवतास्तु किमात्मनस्तत्र विकारयोस्तत् ।
यदङ्गमङ्गेन निहन्यते क्वचित् क्रुध्येत कस्मै पुरुषः स्वदेहे ॥ ५२ ॥

भाषा टीका।

इस प्रकार दैहिक दैविक भौतिक जो कुछ दुःख भोगने को अपने प्रारब्ध से रहा तिस तिस को भोगता गया ॥४१॥

दुष्ट मनुष्यों के तिरस्कार करनेसे वे अपने धर्मसे गिरावैं मैं ऐसा जानकर सात्विक धैर्यको धारण करके उस ब्राह्मण ने इस गीतका गान किया ॥ ४२ ॥

ब्राह्मण उवाच यह संसारी जनकोई सुख दुःख का कारण नहीं है देवता तथा आत्मा नवग्रह कर्म काल ये कोइ नहीं दुःख देने हैं मनहीं एक सुखदुःख का हेतु है जिससे कि संसारचक्र घूमरहा है ॥ ४३ ॥

अति बलवान मन गुणोंकी वृत्तियों को सृजता है तिससे सात्विक शुक्ल तामस कृष्ण राजस रक्त कर्म होते हैं तिनही वृत्तियों सरीकी देवादि योनि होती हैं ॥ ४४ ॥

आत्मातो स्वयं सब संसारी क्रियासे रहित है परन्तु मनके संसर्ग होनेसे सबका कर्ता होजाता है और मेरा सखा जो परमात्मा सोतो दिव्य ज्ञान से देखता रहता है और यह जीवात्मातो अपने विकार के चिन्हको ग्रहण के गुणों में आसक्त होकर कामों को ग्रहण करके भजन करता हुआ बंधा रहता है ॥ ४५ ॥

दान स्वधर्म यम नियम श्रवण कर्म उत्तम व्रत ए सब उपाय मन के रोकने के हि हेतु हैं मन का रोकनाहि परम योग है यही समाधि है ॥ ४६ ॥

जिस का शान्त मन सावधान है उस को दानादिकों से क्या काम है सो कहा जिस का मन ठिकाने नहीं है उस को इन और दानादि कों से क्या हो सकेगा ॥४७॥

मन के वश मे सब इन्द्रिय हो रहे हैं मन तो दूसरे किसी के वश नहीं होता है वह देव बड़ा भयंकर बड़ा सहने वाला है मन देवों का देव है उस को वश मे करना चाहिये तब देव देव हो जावैगा ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

अतोऽसह्या रागादयो वेगा यस्य तम् अत एवारुन्तुदम मर्मभेदं तन्न विजित्याजित्वा तत् ततो वै केचिन्मर्त्यैः केश्चिदसद्विग्रहं कुर्वन्ति तत्र चानुकूलप्रतिकूलोदासीनत्वात् मित्रादीन् कुर्वन्ति ते मूढा इत्यर्थः ॥ ४९ ॥

तनश्चानेन प्रकारेण संसारे भ्रमन्तीत्याह। देहमिति। मनो मात्रपरिकल्पितमिमं स्वदेहमहमिति पुत्रादिदेहं च ममेति स्वीकृत्य तमसि संसारे ॥ ५० ॥

तदेवं मनस एव दुःखकारणत्वमुपपाद्येदानीं जनादीनां दुःखाकारणत्वं प्रपञ्चयति। जनादिर्नाम षड्भिः। अत्र चादिम- अपि पक्षे आत्मनः किम् किञ्चित् सुखदुःखकर्तृत्वं नरकर्तृत्वं चेत्यर्थः। कुत इत्यत आह। ह निश्चितं भौमयोर्विकारयोर्देहयो- स्तत्र त्वात्मनः अमूर्तस्याक्रियस्य च हननादिषु कर्तृत्वकर्तृत्वा- नुपपत्तेः तथाऽपि दुःखमात्मपर्यवसाय्येवेति चेद्यमपि पर- मात्मन उभयत्राप्येकत्वान्न कोपविषयोऽस्तीति दृष्टान्तेन दर्शयति। जिह्वामिति ॥ ५१ ॥

यदि देवता भवन्तु नाम तत्रापि पक्षे आत्मनः किम् यतो विकारयोर्निष्क्रियमाणयोर्देहयोरनयोरनेन मुखेऽभिहन्येन वा हस्ते दष्टे तदभिमानिनोर्वह्नीन्द्रयोरेव तत्र त्वाभि- क्रियत्वानहङ्कारस्य चाऽऽत्मनः देवतानां च सर्वदेहस्थत्वात् कोपविषयोऽस्तीति स्वदेहदृष्टान्तमाह। यदङ्गमङ्गं दन्ताधिष्ठानं हस्तमुखादि तत एव पूर्वत्र देवताऽधिष्ठानरूपभूविकार- दृष्टान्तोदाहरणम् ॥ ५२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपनी टिप्पणी।

यतो मनोनिग्रहीता एव मेदनोऽतः। अत एवाऽसह्यवे- गत्वादेव। तच्छब्दस्य पौनरुक्त्यमाशङ्कयाव्ययत्वेन व्याचष्टे ततेति छेद इति तत् ततः सतसो जयादित्यर्थः। तत्र च विग्रहे तच्छब्दयोरन्वयमानत्वादित्यर्थ इत्युक्तम् ॥ ४९ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

ततश्च असद्ग्रहाद्यो सति ॥ ५० ॥

उपपाद्य युक्त्या प्रतिपाद्य जनाद्दीनामित्यादिना देवतात्म ग्रहकर्मकालानां परिग्रहः । अस्मिन्नपि देहस्य सुखदुःखकारणत्वपक्षे । सुखदुःखकर्मत्वं सुखदुःखविषयत्वम् । तत्कर्तृत्वं सुख दुःखजनकत्वं देह एव देहं सुखयति दुःखयति च नात्मा कर्मापि न चात्मानं कोऽपि तस्याऽकर्तृत्वादमूर्तत्वाच्चेत्यर्थः । "य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् । तावुभौ न विजानीतो नायं हन्ति न हन्यते,, इति भगवदुक्तेः । तत् कर्तृत्वं कर्मत्वञ्च । तथापि कर्मत्वकर्तृत्वाऽनुपपत्त्यापि । एवमपि दुःखस्यात्मपर्यवसायित्वेऽपि । उभयत्रापि स्वदेहे परदेहे च ॥ ५१ ॥

तत्रापि देवतापक्षेऽपि । विक्रियमाणयोः हननक्रियायां कर्मत्वं कर्तृत्वं च प्राप्तयोः । तत् कर्मत्वं कर्तृत्वञ्च । हस्तेनेति करस्थितखड्गेनान्यजनस्य मुखेऽभिहत इत्यर्थः । अत एव देवताधिष्ठानत्वेनाङ्गस्य विवक्षितत्वादेव । पूर्वत्र देहपक्षे ॥५२॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

असद्ग्रहं निष्फलविरोधं मित्रोदासीनरिपूनिति पूर्वं कुर्वन्तीत्यर्थः ४९ ॥

मनोमात्रं मनसि मात्रा यस्य तं तन्मनसापरिच्छेद्यम् एषोऽहं ब्राह्मणोऽहं मनुष्योऽहम् अन्योऽयं शूद्रोऽयम् ॥ ५० ॥

जनः इति सुखदुःखशब्दाभ्यां तद्धेतुभूतौ चन्दनालेपनखड्गप्रहारादिरूपदेहोपचारापचारौ लक्ष्यते आत्मनः अविकृतस्य पार्थिवयोः स्वपरशरीरयोर्हि तत् मानापमानादि यद्यप्यात्मनस्तथापि न कोपः कार्य इत्याह । जिह्वामिति ॥ ५१ ॥

दुःखस्य वधादेः देवता ईश्वरः विकारयोः स्वपरदेहयोः॥५२॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं मन एव सुखदुःखनिदानमित्यजानन्तस्तत्समाधानं चाऽकुर्वन्तः कथं निष्फलं विरोधं मित्रोदासीनारिपूंश्च कुर्वन्तीत्याह । तादृति । दुर्जयं दानाद्याराधितपरमपुरुषप्रसादेतरोपायैर्जेतुमशक्यं न केवलं दुर्जयमपि तु शत्रुं तद्वत् दुःखप्रदम् असह्यो वेगो रागादिरूपो यस्य तमतएवारुन्तुदं हृदयव्यथाजनकं यन्मनस्तदविजित्य मर्त्याः सहासद्ग्रहं निष्फलवैरं मित्रादींश्च कुर्वन्त्यतस्ते विशेषेण मूढाः अत्रमिति पुंस्त्वनिर्देशस्तत्त्वारोपणयुक्तः तच्छब्दयोः पुंस्त्वपाठे तं नाम प्रसिद्धं तं मनोरूपशत्रुमविजित्येति सम्बन्धःअन्यतरस्य नपुंसकपाठेतु तत्तस्मादित्युक्तार्थोऽनुगन्तव्यः ॥४६

कुर्वन्तु ततः किमत आह । देहमिति । मनोमात्रं मनोमात्रनिदानकं मनोगुणान् वा इत्यादिना तन्मात्रनिदानकत्वोक्तेः इदं परिदृश्यमानं देवमनुष्याद्यन्यतमं गृहीत्वा देहे तदनुबन्धिनि चात्माभिमानात्मीयाभिमानाभ्याम् अन्धाः स्वयाथात्म्यागोचरा धीर्येषां ते एषोऽहं ब्राह्मणोऽहमन्योऽयं शूद्रोऽन्य इत्यादिभ्रमेण दुरन्तपारेऽगाधे तमसि संसारे भ्रमन्ति ॥ ५० ॥

जनस्तु हेतुः सुखदुःखयोश्चेदित्यारभ्य यदुक्तं नायं जनो मे सुखदुःखहेतुर्न देवतात्मा ग्रहकर्मकाला इत्यनेन जनादयः सुखदुःखहेतवो न भवन्तीति तदेव तेषां तत्कारणत्वं संभावनापूर्वकमुपपादयति । जनश्चेत्यादिभिः षड्भिः तत्र ननु सुखदुःखहेतुभूतचन्दनलेपनखड्गप्रहारादिकर्ता जनस्तन्निदानं स्यादिति सम्भाव्य निराकरोति । जन इति सर्वत्र किमित्यतः पूर्वेण सम्भाव्य किमित्यादिना तन्निरास इति विवेकः तत्र जनस्य हेतुत्वं वदता तुल्यन्यायात्सुखित्वं दुःखित्वं च जनान्तरस्यैवेति वक्तव्यम् अत्र जनशब्देन किमात्मा विवक्षितः किंवा देहः किमुभयं तत्राद्यः कल्पः करिष्यमाणेनात्महेतुत्वनिरासेन निरस्तो भवतीत्यभिप्रेत्य द्वितीयं निरस्यति किमात्मनश्चात्र हि भौमयोस्तदिति । तच्छब्देन हेतुत्वं सुखित्वं दुःखित्वं च विवक्षितम् एवमुत्तरत्रापि किमात्मनः अन्यगतेन सुखदुःखकर्तृत्वकर्मत्वादिना आत्मनो न किञ्चित्स्पर्शनमस्तीत्यर्थः । तदुपपादयति । भौमयोस्तदिति । भौमयोः पार्थिवयोर्देहयोस्तत्सुखदुःखकर्तृकर्मत्वं भौमयोरित्यनेन तयोरपि तदसम्भवोऽभिप्रेतः कर्तृत्वस्य यत्नाश्रयत्वरूपत्वात् यत्नस्य सुखदुःखयोश्च ज्ञानरूपत्वादचेतनयोः पार्थिवयोर्यत्नाद्याश्रयत्वासम्भवात् प्रतिवारं किमात्मन इत्युक्तेरयमभिप्रायः सर्वोऽप्यात्मनः सुखावाप्तये दुःखहत्यै च यतते तत्र यद्यात्मनो न सुखदुःखाभ्यामन्वयस्तर्हि न यतेतेति तृतीयं कल्पं निराकुर्वन्नाह । जिह्वामिति । क्वचित्कदाचित्स्वदद्भिः स्वदन्तैर्जिह्वां खादन् दशति तद्वेदनायां खादनजन्यव्यथायाः कस्मै कुप्येत् आत्माधिष्ठितैकशरीरावयवयोरेकं कर्तृ कर्म च दृश्यते तत्र जनान्तराज्जनान्तरस्य सुखदुःखाभ्यवहारोऽस्तीत्यर्थः । तन्वनवहितमनसो जनस्य स्वस्य परस्य वा सुखदुःखहेतुत्वमिति चेत्तर्हि असमाहितस्य मनस एव तद्धेतुत्वमित्याशयमिति भावः ॥ ५१ ॥

न देहो नाप्यात्मा न तदुभयं सुखदुःखहेतुः किन्तु तदुभयान्तरात्मेश्वर एव तद्धेतुरित्याशङ्क्याह । दुःखस्य हेतुरिति दुःखग्रहणं सुखस्याप्युपलक्षणार्थं देवता ईश्वरः स एव तत्तदिन्द्रियाभिमानी सुखयति दुःखयति सुखयति दुःखयतीत्यस्तु तेनेत्युक्तमित्याह । किमात्मनस्तत्रेत्यस्य पूर्ववदर्थः विकारशब्दोऽत्रवर्तीयात्मायजन्तः वैषम्यनैर्घृण्यसुखदुःखशीलत्वादिविकारवतोरेव ततद्धेतुत्वादिकं नतु निर्विकारयोरन्तरात्मनोरित्यर्थः तन्वन्यान्तरात्मा अन्यान्तरात्मनो न सुखदुःखादिहेतुः किन्तु स्वयमेव स्वस्य तदुपजनय्य सुखयति दुःखयति चेत्यत्राह । यदीति । कदाचित् यत ईश्वरात्प्रवर्तितेनाङ्गेनाङ्गान्तरं निहन्यते तद्वेदनायां स्वदेहे स्वनियाम्ये प्रकृतिपुरुषो देहादयः स्त इति तथा पुरुषः परमपुरुषः कस्मै क्रुध्येत न कस्मैचित् किन्तु स्वस्मा एव न ह्यनयुक्तं न ह्युन्मत्तः स्वस्मा एव दुःखहेतुर्भूत्वात्मने क्रुध्यति तथा नित्यनिर्विकारिणो विकाराश्रयत्वं चेति भावः ॥ ५२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रुद्रेणाभिमन्यमानं वैकारिकमपि मनो द्विविधं सात्त्विकं तामसमिति । प्रथमं विष्णवादिदेवताप्रसादेन जय्यं द्वितीयं विष्णुप्रसादं विना दुर्जयं विष्णुवध्यकालनेमिमभिमतत्वात्

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अतो मित्रैर्मर्त्यैः सह विग्रहोऽसतां भवतीत्याशयेनाह । तमिति अयमत्रार्थः अत्र जीवराशौ केचिद्विमूढास्तामसाः पूर्वापरविहितभिन्नाद्यतत्त्वयोर्मनसोऽन्तं तामसमनोलक्षणं शत्रुं सुखविरोधिनं न विजित्य मित्रैर्मर्त्यैरसद्विग्रहं कुर्वन्ति । कीदृशं शत्रुं दुर्जयं दुष्टेन पापिना कालनेमिना जितत्वाद्दुर्जयीकृतत्वाज्जेतुमशक्यत्वादत एवासह्यवेगं वायुवन्मुष्टिग्रहणायोग्यमरुन्तुदं सततनिहितबाणवत् दुःखकरम् अनेन शत्रुशब्दो विवृतः विष्णुप्रसादेन विजयीत्याह । उदासीनेति । विष्णुभक्तादुदासीनानां रिपुं न तु भक्त्या तदुपासको यजमानानामित्यर्थः । प्रस्तुतसात्त्विकमनो विहाय तामसमनःपरामर्शः कथं युज्यत इतीच्छायामाह "एकस्थानाधिपत्ये तु भिन्नानामपि युज्यतेऽभेदेन परामर्शः सादृश्ये चापि वस्तुनो" इत्यनेनापि परिहर्तव्या यद्वा तन्मयत्वं तमोऽभिमानिनं कालनेमिनं न विजित्य मित्रैरसद्विग्रहं कुर्वन्ति । कीदृशं तं शत्रुमनेन शत्रुमजित्वा मित्रकलहो बालकलहवत् परिहासहेतुरित्युक्तं भवति ॥ ४९ ॥

दुष्टाभिमानवद्योर्विचितशक्तितामसमनोनिमित्तदेहाभिमानमालेख्यबोत्पन्नमिथ्याज्ञानेन जीवस्य नित्यनिरयप्राप्तिहेतुत्वात् स एव जेतव्य इति भावेनाह । देहमिति । इदमित्यव्ययं मनोमात्रं मनसा निर्माणमुपगतं देहं गृहीत्वा ममेदमहमिति ध्यानान्धपङ्क्तिमेव एव देहोऽहमित्यनात्मनः आत्मभ्रमेणान्योऽदेहोऽयमित्यपि भ्रमेणाहमन्य इति आत्मनोऽनात्मभ्रमेण मिथ्याज्ञानेनान्धयियोऽपतत्कृतयथार्थज्ञाना मनुष्याः दुरन्तपारे तमसि पतित्वा भ्रमन्ति पुनः पुनर्दुःखसमुद्र एव मग्ना वर्तन्त इत्यतो बुद्धिमता तज्जय एव प्रयतितव्यमिति भावः । देहमात्रं स्वमात्मानं यः पश्यति "अन्धे तमसि मग्नस्य गोत्थानं तस्य कुत्रचि"दितिवचनात् मिथ्याज्ञानिनामन्धन्तमो नियतमिति ज्ञायते ॥ ५० ॥

एवं मनसः सुखदुःखकारणत्वमुक्तं तत्र तर्हि तस्य प्रतीयमानं सुखदुःखकारणत्वमभिमाननिमित्तमेवेति जानता सुखदुःखज्ञानेन पुरुषेण सोढव्यं तत्र कोपो न कार्य इत्याह । जन इत्यादिना ग्रन्थेन । तस्य जीवस्य सुखदुःखयोर्हेतुर्जनः परदेह इत्येवं यदि तर्हि अत्र देहे वर्तमानस्य देहव्यतिरिक्तस्यात्मनो निर्मुक्तकपालनालिकेरवत् स्थितस्य किं स्यान्न किमपि दुःखं स्यात्तर्हि कस्य तदत्राह । हीति । तद्दुःखं विवेकेन विचारिते सति । भौमयोः पृथिवीकार्ययोस्ताड्यताडकयोरेव हि यस्मात्तस्मात्तदात्मनोऽभिमानकृतं दुःखमिति । जानतेषां मध्ये कस्मै कुप्येदित्यन्वयः तत्रोदाहरणम् । जिह्वामिति । स्वदद्भिः स्वदन्तैः तस्यां जिह्वायां वेदनायां सत्यामनेन देहस्यात्र तनत्वेनाभिमानजन्यं दुःखमित्युक्तं भवति । "जनशब्दः स्मृतो जीवे क्वचिद्देहे च वर्तते ,, इति वचनाज्जनशब्दोऽत्र देहवाची ॥ ५१ ॥

देहस्याचेतनत्वेन दुःखहेतुप्रवृत्त्ययोगात् अभिमानस्य च पराधीनत्वेनायुक्तमुक्तं किन्तु देवतायाः सर्वस्मात्प्राधान्येन तद्धेतुत्वमुचितमित्यत्राह । दुःखस्येति । यदि दुःखस्य हेतुर्देवतेत्युच्यते तद्वचनमस्तु विचारिते न घटते इत्याह । विकारयोर्विकाराभिमानिनोर्देवयोः सकाशादुत्पद्यमानदुःखमभिमानिमित्तमेव तत्र निरभिमानस्यात्मनस्तेन किं स्यादतः स्वाभिदेवात् प्रतिकोपो न कार्य इति भावः । तत्रोदाहरणम् । यदङ्गमिति । यदा स्वदेहे 'विकाराभिमानिन्याद्देवताभिमन्यमानहस्तादङ्गेन चक्षुराद्यङ्गं कश्चिद्धिंस्यते तदा तत्सोढव्यमेव अन्यथा पुरुषः कस्मै कुप्येत हस्तादेरकारणत्वाद्योग्यकोपादेर्मन एव कारणमत्रेति—

> अविकाराश्च ते देवा विकारा इति शब्दिताः ।
> अभिमानाद्विकारस्य अतः शक्ता अपि ध्रुवम् ।

इति वाक्याद्विकारशब्दवाच्यत्वं युक्तं देवानाम् ॥ ५२ ॥

———

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

जनस्त्विति । आत्मनो जीवस्य आत्मन एव प्राधान्येन सर्वाणि दुःखानीति विचारे तु सुतरां न कोऽप्यवकाश इत्याह । जिह्वामिति । एवमुत्तरत्रापि ॥ ५१ ॥

दुःखस्येति । तैः तत्र हस्तेनेति कस्य चिद्धस्तेनान्यतरस्य मुखेऽभिहत इत्यर्थः । देवतानां चेति आत्मनः सविकारादित्वेऽपि च इन्द्रादिर्मम देहे स एवान्यस्य देहे ततो ममाङ्गान्येव देवतास्ता इति क्रोधविषया न स्युरेवेत्यर्थः ॥ ५२ ॥

———

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अरुर्मर्म तुदतीति दुर्जयबलीयरुन्तुदत्वं न विजित्य अजित्वा एवाजितात्मानः केचिन्मूढाः मर्त्यैः सहासद्विग्रहं कुर्वन्ति तत्र चानुकूलप्रतिकूलादीनन्यानमित्रादीन् कुर्वन्ति ॥ ४९ ॥

ततश्चानेन प्रकारेणाविद्यया ग्रस्यमाना भवन्तीत्याह । देहमिति । मनसो मात्रा वृत्तयः इन्द्रियादयो यस्मिंस्तं देहमिमम् अहमिति पुत्रादिदेहं च ममेति गृहीत्वा भ्राम्य तमसि संसारे ॥ ५० ॥

तदेवं मनस एव सुखदुःखयोः कारणत्वमुपपाद्येदानीं जनादीनां पूर्वोक्तानां षण्णामकारणत्वं प्रपञ्चयति । जन इत्यादि षड्भिः हेतुरिति जन एव जनं सुखयति जन एव जनं दुःखयतीति चेत् अत्र च अङ्गीकुर्वन्नपि पक्षे आत्मनो जीवात्मनः किं न किञ्चिदपि यस्मात् सुखदुःखकर्तृत्वं सुखदुःखकर्मत्वं च भौमयोर्मृन्विकारदेहयोरेव न त्वात्मनः अमूर्तस्य देहाद्भिन्नत्वाद्वस्तुतो निरभिमानिनस्तस्य ताडनादिषु कर्तृत्वकर्मत्वानुपपत्तेः ननु तदपि पीडात्वात्मन एव प्रत्यक्षीभवतीत्यत आह । जिह्वामिति । तद्वेदनायां तत्र वेदनायां पीडायामात्मगामिन्यां सत्यां कस्मै कुप्येत् किं पीडकेभ्यो दन्तेभ्यः किम्वा पीड्यमानायै जिह्वायै तत्र यथा पीड्यमानायै जिह्वायै कोपस्यानौचित्यात् पीडकेभ्यो दन्तेभ्यः कोपो न क्रियते तथैवात्रापि कोपो न कर्तव्य इति भावः । दुःखं त्वात्मनो लिङ्गाध्यासमूलकं सोढव्यमेव लिङ्गं तु मन एवेति तदन्यस्मै दोषो न देय इत्यग्रिमश्लोकेषु सर्वत्रैवमेव ज्ञेयम् ॥ ५१ ॥

यदि देवता अस्तु नाम तत्रापि पक्षे आत्मनः किं यतो विकारयोर्विक्रियमाणयोर्देवतयोरेव तत् हस्तेन मुखे अभिहते तेन च [illegible] हस्तेऽभिशमे तदभिमानिनोर्वह्नीन्द्रयोर्देवतयोरेव तद्दुःखं सम्भवतु तस्मात्तत्त्वतः पृथग्भूतस्य

आत्मा यदि स्यात्सुखदुःखहेतुः किमन्यतस्तत्र निजस्वभावः ।
नह्यात्मनोऽन्यद्यदि तन्मृषा स्यात्क्रुध्येत कस्मान्न सुखं न दुःखम् ॥ ५३ ॥
ग्रहा निमित्तं सुखदुःखयोश्चेत्किमात्मनोऽजस्य जनस्य ते वै ।
ग्रहैर्ग्रहस्यैव वदन्ति पीडां क्रुध्येत कस्मै पुरुषस्ततोऽन्यः ॥ ५४ ॥
कर्मास्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तद्धि जडाजडत्वे ।
देहस्त्वचित्पुरुषोऽयं सुपर्णः क्रुध्येत कस्मै न हि कर्ममूलम् ॥ ५५ ॥
कालस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तत्र तदात्मकोऽसौ ।
नाग्नेर्हि तापो न हिमस्य तत्स्यात्क्रुध्येत कस्मान्न परस्य द्वन्द्वम् ॥ ५६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

देवतानां च सर्वदेहस्थत्वमेवात्र कोपविषयोऽस्तीति स्वदेह दृष्टान्तमाह । यत् यदा मद्भं मुखादिकमङ्गेन हस्तादिना इन्द्राद्यधिष्ठानेन विनिहन्यते वेदिव्यत एव पूर्वत्र देवताधिष्ठानरूपभूविकारदृष्टान्तोदाहरणम् ॥ ५२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु वासुदेवभक्त एव तद्ध्यानेन मनो वशे युञ्ज्यात्तर्हि तदभक्तानां का गतिरित्यतस्ते संसारे भ्रमन्तीत्याह । तमिति द्वाभ्याम् । यस्मात् अरुन्तुदं मर्मच्छेदजनकमान्तरीयं शत्रुम विजित्य अविजित्य मर्त्यैर्लोकजनैः विग्रहं मित्रायुदासीनान् रिपूंश्च कुर्वन्ति ततस्माते मूढाः ॥ ४९ ॥

यतो यतो धावति दैवचोदितं मनो विकारात्मकमापपञ्चसु ।
गुणेषु मायारचितेषु देह्यसौ प्रपद्यमानः सह तेन जायते ॥
इत्युक्तप्रकारेण मनोमात्रं कर्मानुसारतः सङ्कल्पानुरूपं देहमहमिति गृहीत्वा गेहादि ममेति च गृहीत्वा तमसि संसारे भ्रमन्ति ॥ ५० ॥

अथ "आत्मानि तूरगच्छन्ति प्राहयन्ति च,, इतिसूत्रकारीनमतिं सकलश्रुतिसिद्धान्तजीवब्रह्मनादात्म्यानुसन्धानवतः न जनादयः सुखदुःखहेतव इत्याह । जन इति षड्भिः । जनः सुखस्य कश्चित् दुःखस्य च हेतुश्चेत् अत्र हि अस्मिन् पक्षेऽपि भौमयोः भूमिवद्भुवयोः देहात्मवादिनः "अन्नमयं हि सोम्य मनः" इति श्रुतेः मनआत्मवादिनां तत्सुखदुःखदातृत्वं तत्प्राप्त्या प्रीतिद्वेषकर्तृत्वं च भवति आत्मनः ब्रह्मांशत्वेन ब्रह्माभिन्नत्वानुसन्धानवत एतां समास्थाय परात्मनिष्ठामिति वक्ष्यमाणात् किं न किमपि सुखदुःखदातृत्वं तत्प्राप्त्या प्रीतिद्वेषकर्तृकत्वं च न भवति द्वितीयाभावात् यथा कश्चिद्देही स्वजिह्वां स्वकीयैर्दन्तैः कचिद्दशति तदा कस्माय दन्तजिह्वकतराय कुप्येत् स्वदेहगतत्वेन तदनन्यत्वात् ॥ ५१ ॥

देवता इन्द्रियाधिष्ठातृरूपा अस्मिन् पक्षेऽपि तत्सुखदुःखदातृत्वं तत्प्राप्त्या प्रीतिद्वेषकर्तृत्वं च विकारयोः देहे मनसि वा विकाररूपे आत्माभिमानिनोरेव भवति आत्मनः परात्मनिष्ठावतः किं न किमपि सर्वस्य सर्वात्मभूतभगवदात्मकत्वेन द्वेषविषयाभावात् यथा कश्चित्कदाचित्स्वदेहे यदा अङ्गं मुखादि अङ्गेन हस्तादिना निहन्यते तदा पुरुषः कस्मै क्रुध्येत हस्तादेः परकीयत्वाभावात् ॥ ५२ ॥

भाषा टीका

कोई लोग उस दुर्जय नहीं सहने वाले बल वाले मर्म भेदन करने वाले मनरूप शत्रु को नहीं जीतकर इस लोक में मनुष्यों के साथ मित्र शत्रु उदासीन भाव करके वैर करते हैं वे लोग मूर्ख हैं ॥ ४९ ॥

मनमात्र के संसर्ग से इस देह को अहंकार से ग्रहण करके मेरा यह है में इसका स्वामी हूं ऐसे अन्ध बुद्धि वाले होकर बहुत से मनुष्य यह मै हूं यह दूसरा है ऐसे भ्रम से अपार तमोगुण सागर मे घूमते रहते हैं ॥ ५० ॥

यदि देही जनकोई सुखदुःख का कारण होवे तो उस से आत्माका क्या सम्बन्ध है यहतो पृथिवी विकारों का है यदि कदाचित अपने दांतों से जीभमे दबने से चोट लगै तो उस के दुःख होने से किसपर कोप करेगा ॥ ५१ ॥

यदि देवता दुःख का हेतु होवे तो इससे भी आत्मा को क्या है यहभी इन्द्रिय अधिष्ठाता देवता विकार का है यदिमभी अपने शरीर से अपने शरीर मे चोटलगे तो किस पर कोप करेगा ॥ ५२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मनः सुखदुःखाद्याकारपरिणामोऽन्यः स एव यदि हेतुः स्यात्तत्र तस्मिन् पक्षे अन्यतः किं न किञ्चिदन्यतो भवति यस्मै कुप्येदित्यर्थः । यतो निज एव स्वभावः सः तन्नात्मनस्तथा परिणामोऽन्यनिमित्तो भवत्वतोऽस्ति कोपविषय इति चेत्तत्राऽह । नहीति । आत्मव्यतिरिक्तं नास्त्येव यदि स्यात्

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कारस्य स्वयं प्रकाशस्वरूपस्य किं न तस्य सुखदुःखे तन्मूलशुभाशुभकर्मणी च न स्त इत्यर्थः तथा देहस्याप्यचेतनस्य प्रवृत्त्यसम्भवेति भावः । जडाजडत्वे जडस्याजडत्वे अजडस्य देहस्यात्मत्वे सति हि तस्यात्सुखदुःखादिकं स्याज्जडाजडयोरैक्यमनुपपन्नं मिथो विरुद्धस्वरूपस्वभावत्वादित्यर्थः । देहस्तु प्राप्य जडः पुरुषो जीवः सुपर्णः स्वप्रकाशस्वरूपः अतः कर्म न मूलं न हेतुः अतः कस्मै क्रुध्येत जनादिषु कस्मैचिदित्यर्थः । यद्यपि ततश्च कर्माणि विलक्षणानीति कर्मणां स्वानुरूपसुखापाद तद्द्वारा हेतुत्वमुक्तम् एवं कर्मणो—

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।

विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥

इत्युक्तरीत्या देहादिपञ्चकनिष्पाद्यत्वमिति देहात्मादीनामपि हेतुत्वं वक्ष्यत इति तन्निराकरणं विरुद्धं तथापि कर्मणो निदानमसमाहितं मन एवेति निर्णयाय तन्निरास इत्यवगन्तव्यम् ॥ ५५ ॥

तर्हि वशीकृतसर्वप्रपञ्चः काल एव हेतुरित्याशङ्क्य प्रतिवक्ति । कालस्त्विति । आत्मनः किं स्वरूपतः सुखदुःखाभावरहितस्य ज्ञानैकस्वरूपस्यात्मनः सुखदुःखक्रियायां कर्तृत्वकर्मत्वादिकं न किञ्चिदस्तीत्यर्थः । तत्र हेतुत्वेनात्मानं विशिनष्टि । तदात्मक इति । अस्मावात्मा तदात्मकः स उक्तविध आत्मा स्वरूपं यस्य सः तावन्नो नयोरित्यनेनात्मा जड इति सूचितं विकारयोस्तद्विधानेन विकाररहितत्वमुक्तम् अजस्येत्यनेन उत्पत्तिविनाशरहितस्य पुरुषोऽयं सुपर्ण इत्यनेन स्वप्रकाशस्वरूपत्वं यदि स्वरूपतः सुखदुःखाभावरहितोऽप्यात्मा कालवशवर्तित्वेन सुखदुःखसम्बन्धं भजते तर्हि तत एव हेमाग्नेस्तापो न स्यात् हिमस्य तत्प्रसिद्धं शैत्यं न स्यात् शीतोष्णमात्रयोर्हिमाग्न्योस्तौ स्वभावौ न स्यातामित्यनेन तद्विपरीतस्वभावौ स्यातामिति च विवक्षितं नहि कदाचित्कालवशादेवं दृष्टमतो न हेतुः काल इति भावः जनादीनामहेतुत्वं निगमयति । न परस्य द्वन्द्वमिति । अत्र परस्य इत्यध्याहर्तव्यं तथाग्रे दर्शनात् परतो जनादिषु परस्परमतमात् न ग्रहं न सुखदुःखं भवत इत्यर्थः ॥ ५६ ॥

—————

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मनसोऽपिसुखादिहेतुत्वमभिमानमन्तरेणाविचारासहमित्याह । आत्मेति । यद्यात्मा मनो दुःखादिकारणं स्यादिति मतं तत्र पृच्छामः दुःखादिकारणं भवन्मनः स्वतो वा परतो वा नाद्य इत्याह । किमन्यत इति । अन्यतो दुःखस्वभावत्वेन विलक्षणान्मनसस्तत्र सुखस्वभावे आत्मनि चेतनेऽकिं भवति न किमपि उभयोः सुखादिस्वभावः भिन्न इति भावेनाह । निज इति । चेतनस्य सुखस्वभावो मनसो दुःखस्वभावो निजो नित्य सदातन इत्यर्थः । निजमात्मीयानित्ययोरिति यादवः द्वितीयं प्रत्याह । नहीति । आत्मनोऽन्यत दुःखकारणं नहि अहं दुःखी स्यामिति दुःखं दृश्यते यदि तथापि तन्मना स्यात् शुक्तिरजतवत् अन्यस्यान्यात्मत्वं न दृष्टचरमित्याह । न सुखमिति । सुखं सुखरूपं दुःखं दुःखरूपं न भवति । दुःखरूपं सुखरूपं न भवत्यतोऽभिमानं विनान्यायिकरूपत्वम प्रामाणिकमिति विद्वान् कस्मै कुध्येतेत्यन्वयः—

जीवस्य सुखरूपस्य न दुःखं क्वचिदिष्यते ।

अतो मनोऽभिमानेन दुःखी भवति नान्यथा ॥

इति वाक्यमत्र मानं यद्वा यदि मनःसुखादिहेतुस्तर्हि तत् स्याद्दुःकं हि मनोऽभिमाननिमित्तं तत् दुःखं विना तत्र सुखस्वभावः आत्मन्यन्यतो मनसो दुःखं स्यात्किं न स्यादेव कुतोऽत्राह । निज इति । मनोधर्मो दुःखमात्मनो निजस्वभावो न हि कुतः तदात्मनोऽन्यत्र प्रतिबिम्बमानस्य का गतिरत्राह । यदीति । जपाकुसुमसामीप्याच्छुक्लस्य लौहित्यमिव मृषा स्यादतोऽन्यस्यान्यत्वं नेत्याह । न सुखमिति । "जीवस्य सुखरूपस्य न दुःखं क्वचिदिष्यत„ इत्यादेरभिमाननिमित्तं दुःखमन्यत एव दर्शयतीत्यञ्जीकार्यम् ॥ ५३ ॥

देहस्य दुःखादिहेतुत्वे बाधकमाह । ग्रहा इति । गुणमायात्वाद्ग्रहाः देहाः आत्मनो दुःखादिनिमित्तं चेदविवेकवशाद्वा भवतु अजस्य स्वतो जन्मादिरहितस्य न ममेति विवेकिनो जनस्य जीवस्य ते देहाः दुःखादिनिमित्तं स्युः किं चैव न स्युः अतो ग्रहैर्देहे पीडाः देहनिमित्तपीडाः ग्रहस्यैव विषयग्रहस्वरूपस्य मनस एव भवन्ति मनोऽभिमाने सत्येव न स्युरित्यर्थः । ततो देहादन्यः पुरुषः पुरु प्रसरतीति प्रज्ञानी कस्मै कुध्येदित्यन्वयः ॥ ५४ ॥

कर्म चावत्सुखदुःखयोर्हेतुरस्तु तथाप्यात्मनो जीवस्याजडत्वे सत्यतोऽनेनानिष्टं स्यात्किमिति शेषस्तर्हि कस्येदमत्राह । तर्हीति । तद्दुःखादिकं जडे जडात्मके मनसि हि यस्मात्ततः किमत्राह । देह इति । देहे वर्तमानोऽयं स्वतन्त्रं परमात्मानं स्वस्य स्वरूपं च वेत्तीति स्वाभित् सुपर्णः सुखात्मकः पुरुषः कस्मै कुध्येत कर्मणे कुप्यतीत्यत्राह । नहीति । जडात्मकमनआद्यभिमाननिमित्तदुःखादिकं कर्ममूलं न हि यस्मात्कर्मणोऽपि न कुप्येत यद्वा कर्ममूलमनआदेरभिमाननिमित्तं दुःखादि स्वतन्त्रस्य नास्तीति ॥ ५५ ॥

यदि दुःखादेर्हेतुः कालोऽस्तीति मतं तर्हि नित्यसुखरूपस्य विवेकिनः आत्मनः किमनिष्टं तत् कालादात्मनो दुःखादिलक्षणमनिष्टं प्राप्तमत्राह । नत्रेति । तत्र तथा सत्यसौ दुःखादिस्तदात्मनः कालाधीनदेहस्येति प्राप्तमात्मनो नित्यत्वेन कालानधीनत्वाद्देहस्य तद्दर्शनाच्च तच्च न युक्तं देहस्य जडत्वात् तत्रोदाहरणमाह । नाग्नेरिति । लुप्तोपममेतत् यथाग्नेस्तापनिमित्तं दुःखं यथा च हिमस्य तन्निमित्तं दुःखं न जडत्वादेवं देहस्यापि कालादिसम्बन्धे विद्यमानेऽपि न दुःखं युक्तं ननु तर्हि तदन्तर्वर्तिनो हरेस्तद्दुःखं स्यादत्राह । न परस्येति । परस्य प्रकृतिविलक्षणस्य भोक्तुः सर्वज्ञस्य हरेस्तद्दुःखं न युज्यते तस्माज्जीवस्य मनोऽभिमानमात्रं दुःखकारणमतः कस्मै कुप्येतेति—

सदा कालादिसम्बन्धाद्दुःखं देहस्य युज्यते ।

तथापि नैव दुःखी स जडत्वान्नियमेन तु ॥

आत्मनः सुखरूपत्वान्न दुःखं युज्यते क्वचित् ।

तस्मान्मनोऽभिमानेन दुःखी जीवो न चान्यथा ॥

न केनचित्क्वापि कथञ्चनास्य द्वन्द्वोपरागः परतः परस्य ।
[1]यथाऽहमः संसृतिरूपिणः स्यादेवं प्रबुद्धो न बिभेति भूतैः ॥ ५७ ॥
एतां स[2]आस्थाय परात्मनिष्ठामध्यासितां पूर्वतमैर्महर्षिभिः ।
अहं तरिष्यामि दुरन्तपारं तमो मुकुन्दाङ्घ्रिनिषेवयैव ॥ ५८ ॥

श्रीभगवानुवाच ॥

निर्विद्य नष्टद्रविणो गतक्लमः प्रव्रज्य गां पर्यटमान इत्थम् ।
निराकृतोऽसद्भिरपि स्वधर्मादकम्पितोऽमूं[3]मुनिराह गाथाम् ॥ ५९ ॥
सुखदुःखप्रदो नान्यः पुरुषस्याऽऽत्मविभ्रमः ।
मित्रोदासीनरिपवः संसारस्तमसः कृतः ॥ ६० ॥
तस्मात्सर्वात्मना तात ! निगृहाण मनो धिया ।
मय्यावेशितया युक्त एतावान् योगसंग्रहः ॥ ६१ ॥
य एतां भिक्षुणा गीतां ब्रह्मनिष्ठां समाहितः ।
धारयन् श्रावयन् शृण्वन् द्वन्द्वैर्नैवाभिभूयते ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम् ।
एकादशस्कन्धे श्रीभगवदुद्धवसम्वादे
त्रयोविंशोध्यायः ॥ २३ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवं षडेते हेतवः प्रसिद्धा निरस्ताः यदि कश्चिद्धेत्वन्तरमुद्भावयेत्तदपि वस्तुमहिमापेक्षायां न सम्भवतीत्याह । न केनचिदिति । नन्वपरोऽस्तु कथमपह्नूयते तत्राऽऽह । यथेति । संसृतिमविद्यमानामेव रूपयति प्रकाशयतीति तथा तस्य अहमोऽहङ्कारस्य यथा स्यान्न तथा परतः प्रकृतेः परस्याऽऽत्मनो द्वन्द्वसम्बन्धः अहङ्कारनिमित्तोऽसौ न वास्तव इत्यर्थः । एवं प्रबुद्धो यः स भूतैः कृत्वा न बिभेति ॥ ५७ ॥

अतोऽहमपि तथैव परमात्मनिष्ठतया तरिष्यामीत्याह । एतामिति । सोऽहमित्यन्वयः नन्वियं निष्ठैव कथं भवेत्तदाह । मुकुन्देति ॥ ५८ ॥

प्रस्तावेन सह गाथार्थं संक्षेपतो दर्शयति द्वाभ्याम् । इत्थं नष्टद्रविणो निर्विद्य गतक्लमः प्रव्रज्य गां पर्यटमानः निराकृतोऽपि स्वधर्मादकम्पितः सन्मुनिरमूं गाथामगायतेत्यन्वयः ॥ ५९ ॥

मित्रोदासीनरिपवः सर्वोऽपि संसारस्तमसोऽज्ञानस्य आत्मनो मनसो विभ्रममात्रः कृतो न तात्त्विक इत्यर्थः ॥ ६० ॥

उक्तं द्वन्द्वसहनोपायमुपसंहरति । तस्मादिति ॥ ६१ ॥

मनोनिग्रहाशक्तोऽप्येतत्कथयाऽपि निष्ठफलं प्राप्नोतीत्याह । य इति । द्वन्द्वैः सुखदुःखादिभिः ॥ ६२ ॥

भिक्षुगीतं मिषं कृत्वा भक्तचित्तगतं हरिः ।
मोहं निघ्नन्निहाभाति परमानन्दरूपतः ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी ।

तदपि हेत्वन्तरोद्भावनमपि । अपरोक्षः सर्वप्रत्यक्षः द्वन्द्वोपरागः ॥ ५७ ॥

अतः प्रबुद्धस्य भयाऽभावात् । सोऽहमित्यन्वयाऽभिधानात् स आस्थायेत्येव स्वामिसम्मतः पाठो नतु समास्थायेति । अन्यावेशपरित्यागाय तस्या निष्ठाया आस्थामात्रं तमस्तरणन्तु मुकुन्दाङ्घ्रि निषेवयैव तां विना तस्याः सोपद्रवत्वादित्युपसंहारे भक्तिरेव पर्यवसायिता ॥ ५८ ॥

द्वाभ्यां गाथार्थस्य संक्षिप्ततया दर्शितत्वात् श्लोकाभ्यामित्युक्तम् । अकम्पितोऽचलितः सन् ॥ ५९ ॥

---

१ यथात्मनः २ समास्थाय ३ असौ इति वि० पाठः

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

भ्रमादन्यः सुखादिप्रदो न किन्तु विभ्रम एवेत्यन्वयः पुनरप्यात्मविभ्रमपदस्य योजनादिकमपि इत्युक्तम् ॥ ६० ॥

उपायं मनोनिग्रहलक्षणम् । तस्मात् संसारस्य मनोविभ्रममात्रकृतत्वात् सर्वात्मना सर्वथा एतावान्मनोनिग्रहमात्र एव ॥ ६१ ॥

एनच्छ्रावयतीति भिक्षुगीताश्रवणादिपरः तत्फलं योगफलम् ॥ ६२ ॥

उपसंहारे मङ्गलमाचरति । भिक्षुगीतामिति—

टीका प्रशंसिता येन जगति स्वामिनामिता ।
तं चैतन्यं प्रपद्येऽहं भक्तिव्याख्यया नम्राहकम् ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणी
त्रयोविंशोऽध्यायः ॥ २३ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

छेदनदहनादेर्देहगतत्वेऽपि तत्कार्यं सुखदुःखानुभवस्तु आत्मन एव भवतीति शङ्कायां सुखदुःखानुभव औपाधिकः स च संसारावस्थायामेव नतु मुक्तावस्थायामित्याह । न केनचिदिति । परतः परस्य सूक्ष्मदेहादपि परस्य अहमः जीवस्य संसृतिरूपिणः संसृतिदशायां यथा दुःखोपरागः स्यात् न तथा स्थूलसूक्ष्मप्रकृतिप्रहाणलक्षणायां मुक्तिदशायामित्यर्थः । अत आगमापायित्वात्सर्वं सोढव्यमित्यभिप्रायः ॥ ५७—५९ ॥

सुखदुःखेति । सुखदुःखप्रदोऽन्यो हेतुर्न किंतु आत्मविभ्रमः देहात्माभिमान एव हेतुः मित्रोदासीनारिपवश्च स एव देहात्मभ्रमकार्यत्वात् तस्मादहंकारममकारकारणं मन एव संसारकारणमित्यर्थः ॥ ६०—६२ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
त्रयोविंशोऽध्यायः ॥ २३ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यद्यसमाहितस्य मनसः कारणात्तत्प्रवृत्तेऽप्यात्मनः स्वस्वभावानगमस्तद्विपरीतभावागमश्च कथमित्याशङ्क्य न स्वभावापगमः किन्तु स्तस्मनादिभिर्जलाग्न्योरिव तदागमापायावौपाधिकौ नतु स्वाभाविकावित्यभिप्रेत्येवं विद्वान्न बिभेतीत्याह । न केनचिदिति । यदा परस्य देहविलक्षणस्यात्मनः परतः जनादिस्वान्यतमात्कुतोऽप्यन्यस्मादुःखोपरागः न सुखदुःखान्वयः तदा संसृतिं रूपयति निरूपयति आपादयतीति यावत् तत्संसृतिरूपं मनस्तद्वस्यास्तीति तथा तस्यात्मनः अहमः अहमभिमानाद्धेतोरन्यात्माभिमानानुपाधेः स्याद्दुःखोपरागः स्यादित्यर्थः सङ्कल्पविकल्पात्मकमनसोऽसमाहितादहंममाद्यभिमानस्ततो द्वेषादिस्ततः कर्माणि ततो जन्मानि ततश्च सुखदुःखे इत्यर्थः इत्थं विद्वान् भूतैरुपद्रुतोऽपीति शेषः न बिभेति ॥ ५७ ॥

इत्थं यथोक्तमनुष्ठेयोपदेशमर्थं भिक्षुगीतोपदिष्टमुक्तस्य निर्वेदात्मभूतिवृत्तं संगृह्णाति । एतामिति द्वाभ्याम् । तावदवस्थ्याविद्यः अत एव निर्विद्य सङ्गत्य गां पृथ्वीं पर्यटमानः विगतक्लमः पूर्वतमैर्महर्षिभिरध्यासितां परिगृहीतामेतां सुखदुःखनिदानपरिस्काररयुक्तां परस्य परमात्मनो निष्ठामास्थायाऽऽसाद्य निराकृतोऽपि स्वधर्मादविकम्पितः मुकुन्दाङ्घ्रिनिषेवयैव उपायभूतयाऽपारमपि तमः तमःकार्यं संसारं तरिष्यामीत्यध्यवस्य स मुनिर्विप्रः अमूं गाथामाहेति सम्बन्धक्रमः ॥ ५८—५९ ॥

उपदेष्टव्यमर्थमुपदिशति । सुखेति । सुखदुःखप्रदः तयोर्हेतुः आत्मविभ्रम एव तदन्यः आत्मना मनसा यो विभ्रमः देहात्माभिमानस्वतन्त्रात्माभिमानात्मकः न केवलमयं तयोरेव हेतुः किन्तु मित्रादिविषयभावः संसारश्च तन्निबन्धनः आत्मविभ्रमनिबन्धनः ॥ ॥ ६० ॥

ततः किमत आह । तस्मादिति । तात हे उद्धव । तस्मादात्मविभ्रमस्य सुखदुःखादिहेतुत्वात् मय्यावेशितया धिया युक्तस्त्वं सर्वात्मना मनो निगृहाण विषयान्तरेभ्यो निगृह्य मयि समाहितं कुरु एतावानेव योगसंग्रहः शास्त्रेषु प्राधान्यतः प्रतिपाद्ययोगसङ्ग्रह एतावानेव मय्यावेशितधिया मनोनिग्रह इति इयानेवेत्यर्थः ॥ ६१ ॥

प्रकृतभिक्षुगीताधारणश्रवणादिफलमाह । य इति । धारयन् श्रद्धया शृण्वन् वा समाहितो भवति ततश्च ब्रह्मनिष्ठः ततो द्वन्द्वैः सुखदुःखादिभिरभिभूतो न भवति मुक्तो भवतीति भावः ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

न परस्येत्येतद्विवृणोति । न केनचिदिति । यथा संसृतिरूपिणः संसारकारणस्वभाववतः आत्मनो मनसो यथा दुःखोपरागः दुःखाख्यराहुग्रहणं स्यात्तथा परतः परस्य हरेर्दुःखोपरागो न स्यात् इदमेव श्रद्धेयमिति भावनाह । एतामिति । एवं प्रबुद्धः एवं विधज्ञानी पूर्वाचार्यैर्ज्ञानिभूतैः सर्वैः कृतामुपद्रवान्न बिभेति ॥ ५७ ॥

एवं विरक्तिर्भगवत्कृपाभक्तिद्वारा संसारनिर्मोक्षहेतुरित्याह । एतामिति । मुकुन्दाङ्घ्रिनिषेवयैव एतां परमात्मनिष्ठां मनः संयमलक्षणस्वरूपां समास्थाय स्थिरीकृत्य परमात्मज्ञानलक्षणां वा प्राप्य अत्र प्रमाणमाह । अध्यासितामिति । सम्यगनुष्ठितां तमः अज्ञाननिमित्तं संसारम् ॥ ५८ ॥

अवश्यमेवं गाथामित्याह । निर्विद्येति ॥ ५९ ॥

गाथायास्तात्पर्यमाह । सुखेति । आत्मनि मनसि कर्तृविधिविभ्रम एव सुखदुःखप्रदः अन्यो नैव ततो मित्रोदासीनारिपुलक्षणश्च संसारः स्वमनः स्वमनोहेतुकः ॥ ६० ॥

मनोनिग्रहयोगमाह । तस्मादिति । एतावान् मनःसंयमलक्षणः ॥ ६१ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

फलमाह। य इति। ब्रह्मनिष्ठां ब्रह्मोत्कर्षज्ञानपूर्वकमनोनिग्रहलक्षणाम् ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

त्रयोविंशोऽध्यायः ॥ २३ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

परस्य स्वरूपतो मायातीतस्य ॥ ५७ ॥

तदेषा च मनःपरमात्मनिष्ठा श्रीमन्मुकुन्दाङ्घ्रिनिषेवां विना सोपद्रवैव जाता यदीदृशो नानाविचारोऽपि तन्निष्ठायामुपद्रव एवेत्यन्ते तन्निषेवामन्यवस्थयैव विविनक्ति। एतामिति। तस्माद्भवता साध्वेवोक्तम् ऋते स्वधर्मनिरतानिति श्रीभगवतो भावः ॥ ५८ ॥ ५९ ॥

मित्रोदासीनरिपुरूपः सुखदुःखप्रदः पुरुषस्य सर्वोऽपि संसारो नान्योऽस्ति किन्तु तमसस्तमसा स्वाज्ञानेन कृतोऽयमात्मनो मनसो विभ्रमस्तद्रूप एवेत्यर्थः ॥ ६० ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

त्रयोविंशोऽध्यायः ॥ २३ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

यदि कश्चिदेत्यन्तरमुद्धावयेत्तदपि वस्तुमहिम्ना न सम्भवतीत्याह। नेति। परतः अन्यस्मादेतोः यतः परस्य मायातीतस्य ननु तर्ह्यपरोक्षस्य दुःखानुभवस्य को हेतुस्तत्र पूर्वोक्तमनोऽध्यास एवेत्याह। यथाहमहन्तामनःप्रधाने लिङ्गदेहेऽयोऽहङ्कारस्तस्मादेव नान्यस्मात् यथाशब्द एवार्थे संसृतिं संसारबन्धं निरूपयितुं यांश्च यस्य तस्मात् एषं प्रबुद्धो यः स भूतैः कृत्वा न बिभेति जीवात्मा हि स्वरूपतः शुद्ध एव न तस्य कालकर्मादयो दुःखहेतवः किं त्वविद्यया देहेऽहङ्कारादिहस्य अध्यास एव स च देहो मनःप्रधानत्वात्मन एवेति तदेव दुःखहेतुरिति प्रकरणार्थः देहाध्यासे सति तु जीवात्मनः शुद्धस्यैवाऽपगते अध्यासानुगाः यद्यपि हेतवो यथा योगयुञ्जन्तीति निर्गलितार्थः ॥ ५७ ॥

ततश्च तस्य विदतस्यगिना प्राग्भवीया शुद्धा मद्भक्तिर्मनसि प्रादुर्भूता प्रादुर्भूतायां च तस्यां स्वस्य संन्यासं द्वन्द्वसहनोपायमुक्तलक्षणमेतावन्तं विचारं चावधारयन्मच्चरणनिषेवयाऽमृतसिन्धुनिमग्न उच्चैर्नृत्यन् महर्षाटोपमाह। एतामिति। सोऽहमित्यन्वयः परमात्मनिष्ठां देहदैहिकाभिमानेभ्यः परः शुद्धो य आत्मा जीवस्तस्य निष्ठां विचारितलक्षणां स्वरूपं केवलमास्थायेति परमात्मनिष्ठायामेतस्यां मम मा इयत् कियतिमात्रमेव तमः संसारं नु सेवयैव तरिष्यामि सत्यम् एवार्थः एवकारात्लुप्यते ननु तर्हि परात्मनिष्ठायां कियतिमात्रमपि किं करोषि तत्राह। पूर्वतमैः प्राचीनैरध्यासितामिति ॥ ५८ ॥

कदर्योपाख्यानं तस्याख्यानोत्थापनप्रयोजनं चाह श्लोकद्वयेन निर्विद्येति ॥ ५९ ॥

आत्मविभ्रम इति पञ्चम्यर्थे प्रथमा आत्माविभ्रमादन्यो नेत्यर्थः। तत एव तमसो अज्ञानस्वरूपात् मित्रादिरूपः संसारः ॥ ६० ॥

उक्तं द्वन्द्वसहनोपायमुपसंहरति। तस्मादिति। एतावान् मनोनिग्रहपर्यन्त एवेत्यर्थः ॥ ६१ ॥

मनोनिग्रहयोग्योऽप्येतच्छ्रवणादिना तत्फलं प्राप्नोतीत्याह। य इति ॥ ६२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।

एकादशे त्रयोविंशः सङ्गतः सङ्गतः सताम् ॥ २३ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

फलितार्थमाह। नेति। यथाहमः देहाद्यात्मभावं प्राप्तस्य संसृतिरूपिणः कर्मभिरुत्तरोत्तरतः संसृतिं रूपयतीति संसृतिरू मनस्तद्दृश्यादीनीति तस्य द्वन्द्वानि तथास्य परतः प्रकृतेरपि परस्य देहाद्यात्मभ्रान्तिं त्यक्त्वा अब्रह्मात्मकलक्षणां भ्रान्तिं च त्यक्त्व परानन्यतया स्थितस्य द्वन्द्वानां तु का कथा तदुपरागोऽपि न स्या देहाद्यात्मभ्रान्तिं स्वातन्त्र्यभ्रान्तिं च त्यक्त्वा परमेश्वरांशत्वे न भिन्नोऽप्यहं तन्निरपेक्षस्थितिप्रवृत्त्याद्यभावात्तदभिन्न एवा स्मीत्येवं प्रबुद्धस्तत्स्वमस्यादिवाक्यार्थज्ञानात् ज्ञाततत्त्वो भूते नैव बिभेति ॥ ५७ ॥

स्वकर्तव्यतामाह। एतामिति। परे श्रीवासुदेवे आत्मनिष्ठ तदंशत्वात्तदनतिरिक्तोऽस्मीत्येवं भूतां "ममैवांशो जीवलोके जीव भूतः सनातनः। क्षेत्रज्ञं चापि मां विद्धी"ति श्रीमन्मुखप्रोक्त पूर्वतमैः श्रीकुमारादिभिरध्यासितां सम्यगास्थाय मुकुन्दाङ्घ्रिसे वयैव नतु ज्ञानमात्रेण दुरन्तपारन्तमः दुस्तरं संसारं त रिष्यामि ॥ ५८ ॥

अध्यायार्थं संक्षेपतो दर्शयति। निर्विद्येत्यादिना। सद्द्रविण प्रक्षीणधनः निर्विद्य निर्वेदं प्राप्य प्रव्रज्य गृहाश्रमं त्यक्त्वा गतक्ल नष्टक्लेशः गां भूमिं पर्यटमानः असद्भिर्निराकृतोऽपि स्वधर्मान्मुकु न्दाङ्घ्रिसेवातोऽकम्पितः सन् मुनिरमूं गाथामगायतेत्यन्वयः ॥ ५

सुखः सुखदः अन्यः जनदेवतादिरूपः न कस्तर्हि आत्म विभ्रमः आत्मनो मनसः यो देहाद्यहमिति गेहादौ ममे स्वरूपे अब्रह्मात्मकत्वरूपश्च एवं त्रिविधो भ्रमः सुखदुः खप्र इत्यन्वयः किञ्च मित्रोदासीनरिपवः सर्वोऽपि संसारश्च पुरुषस्य तमसस्ताद्धितात्मविग्रहतो निमित्तादेव परमेश्वरेण पुरुषक फलदात्रा कृतः ॥ ६० ॥

पूर्वोक्तं द्वन्द्वसहनोपायमुपसंहरति। तस्मादिति। म आवेशितया धिया मनो निगृहाण एतावान् योगस्योप ज्ञातस्य संग्रहः सुखम ॥ ६१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मनोनिग्रहासमर्थोऽन्येनच्छत्रयाविभिन्नतफलं प्राप्नोतीत्याह ।
च इति । द्वन्द्वैः सुखदुःखादियुगलैः ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रयोविंशाध्यायार्थप्रकाशः ॥ २३ ॥

---

भाषा टीका ।

सब से पर अलग रहने वाले इस आत्मा को किसी ठिकाने किसी हेतु से किसी प्रकार से सुख दुःख द्वन्द्व नहीं होता है जैसा वह होता है वह अहङ्कार के आवेश से संसार होता है ऐसा जो ठीक जान लेता है वह इन देही प्राणियों से नहीं डरता है ॥ ५७ ॥

इस प्रकार से पूर्व काल के महर्षियों ने धारण करी हुई निष्ठा को धारण कर के उस संन्यासी ब्राह्मण ने निश्चय कर लिया कि मैं मुकुन्द भगवान् की चरण सेवा से ही इस कठिन अपार अन्धकार संसार को तर जाऊंगा ॥ ५८ ॥

श्रीभगवान् उवाच ।

जिसके कि धन नष्ट होगया था फिर वैराग्य से सुखी होकर संन्यासी होकर इस पृथिवी में घूमता रहा फिर जब असत्पुरुषों ने तिरस्कार किया तब अपने धर्म में से चलायमान न होकर उस भिक्षु मुनि ने इस गाथा का गान किया है ॥ ५९ ॥

सुख दुःख देने वाला दूसरा कोई नहीं है यह केवल पुरुष को अपना भ्रम मात्र है जो कि किसी को मित्र किसी को शत्रु किसी को उदासीन मान लेता है इसी तमोगुण अज्ञान से उसको संसार होता रहता है ॥ ६० ॥

तिस से हे तात ! उद्धव ! सब प्रकार से मन को बुद्धि से रोक रखो मेरे में उस बुद्धि को ठीक लगावो इतना ही सब योग का सार है ॥ ६१ ॥

जो पुरुष भिक्षु की गाई हुई इस ब्रह्म निष्ठा वाली गाथा को सावधान होकर धारण करेगा या सुनेगा वा सुनावेगा वह पुरुष सुख दुःख द्वन्द्वों से छूट जावेगा ॥ ६२ ॥

इति श्रीमद्भागवत महापुराण एकादशस्कन्ध
तेवीस में अध्याय की पं० लक्ष्मणाचार्यकृत
भाषा टीका समाप्त ॥ २३ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे त्रयोविंशोऽध्यायः २३ ॥



# अथ चतुर्विंशोऽध्यायः ।

———:*:———

श्रीभगवानुवाच ॥

अथ ते सम्प्रवक्ष्यामि सांख्यं पूर्वैर्विनिश्चितम् ।
यद्विज्ञाय पुमान् सद्यो जह्याद्वैकल्पिकं भ्रमम् ॥ १ ॥
आसीज्ज्ञानमथो अर्थ एकमेवाविकल्पितम् ।
यदा विवेकनिपुणा आदौ कृतयुगेऽयुगे ॥ २ ॥
तन्मायाफलरूपेण केवलं निर्विकल्पितम् ।
वाङ्मनोऽगोचरं सत्यं द्विधा समभवद्बृहत् ॥ ३ ॥
तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ।
ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्विंशे तु सांख्येन मनोमोहो निवार्यते ।
आत्मनः सर्वभावानामागमापायचिन्तया ॥
अपवर्गं स्वभक्तानामद्भुतत्वाय संयमम् ।
चित्तस्योक्त्वा पुनः कृष्णः सांख्यमत्राऽऽह तत्कृते ॥

अद्वितीयात्परमात्मनो मायया प्रकृतिपुरुषद्वारा सर्वं द्वैतमुदेति पुनस्तत्रैव लीयत इत्यनुसन्धानस्य द्वन्द्वभ्रमनिवर्तक इति वक्तुं सांख्यं प्रस्तौति । अथेति । पूर्वैः कपिलादिभिर्विनिश्चितम् वैकल्पिकं भेदनिमित्तम् भ्रमं सुखदुःखादिरूपम् ॥ १ ॥

अथोशब्दः कार्त्स्न्ये ज्ञानं द्रष्टा तेन दृश्यः कृत्स्नोऽप्यर्थश्चाविकल्पितं विकल्पशून्यमेकमेव ब्रह्मरूपेण लीनमासीदित्यर्थः । कदेत्यपेक्षायामाह । अयुगे युगेभ्यः पूर्वम् प्रलय इत्यर्थः । तथा आदौ कृतयुगं तस्मिन्नन्यदापि यदा विवेकनिपुणा जना भवन्ति तदाऽपि तेषां भेदास्फूर्तेः ॥ २ ॥

तद्बृहद्ब्रह्म वाङ्मनोऽगोचरं सत्यं भवति तथा माया दृश्यं फलं तत्प्रकाश्यस्तद्रूपेण मायाविलासरूपेण वा द्विधाऽभूत् ॥ ३ ॥

तयोर्द्विधाभूतयोरंशयोर्मध्ये उभयात्मिका कार्यकारणरूपिणी ॥ ४ ॥

——

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

आत्मनो जीवस्य मनोमोहो भगवता सांख्येनात्मानात्मविवेकेन निवार्यते । सर्वभावानां प्रकृत्यादिभूपर्यन्ततत्त्वानां तत्कृते चित्तसंयमनार्थम् अत्राग्निमश्चतुर्विंशत्यध्याये यथावा निमित्तशक्त्या प्रकृतिर्गुणत्रयसाम्यमुपादानशक्तिः । तत्रैव परमात्मत्वेऽथ अथेति सांख्याऽधिकारे ॥ १ ॥

द्रष्टा जीवः अर्थश्च प्रपञ्चः । ब्रह्मरूपेण । भगवत्येव अथ बृहति बृंहयन्तीति श्रुत्या बृहत्त्वाद्बृंहणत्वाच्च यद्ब्रह्म परमं विदुरिति स्मृत्या च तत्कर्तृत्वस्य तत्रैव सुस्पष्टत्वः । उपसंहारे परावरदृशा मयस्येतेन तद्रूपेणावस्थितेः स्पष्टयिष्यमाणत्वाच्च अत एव लीनमासीत् व्याख्यानम् । तेषां विवेकनिपुणानाम् ॥२॥

तेन ब्रह्मणा यद्दृश्यं वस्तु तन्माया तस्य ब्रह्मणो यः प्रकाशविशेषः स फलमित्यर्थः । द्वितीयपक्षे मायास्वरूपशक्तेराभासरूपा बहिरङ्गा निमित्तशक्तिः तस्या विलासः प्रकृतिः पुरुषाविर्भावक्रीडनविशेषस्तेन रूपेणेत्यर्थः ॥ ३ ॥

अंशयोरिति प्रकृतेस्तद्बहिरङ्गशक्तित्वादंशत्वं पुरुषस्य तत्तटस्थशक्तित्वादंशत्वमिति ज्ञेयम् । कार्यमाकाशादि कारणं महदादि तद्रूपिणी अत्र पुरुषशब्देन जीव एव विवक्षितष्टीकाकृद्भिः । विष्णोः स्वरूपात् परतो हि तेऽन्ये रूपे प्रधानं पुरुषश्च विप्रेति विष्णुपुराणवाक्ये । तत्रैव टीका च । परतो निरुपाधेर्विष्णोः स्वरूपात् ते प्रागुक्ते प्रधानं पुरुषश्चेति द्वे रूपे अन्ये मायाकृते इति ॥ ४ ॥

——

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वैकल्पिकं भ्रमम् अज्ञानम् ॥ १ ॥

ज्ञानं परमात्मस्वरूपम् एकं समाऽभ्यधिकरहितं अविकल्पितं

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गोचरत्वाऽयामुत्पाद्यमानत्वेन च कल्पितामिति शेषः यद्वा तच्छ-ब्दार्थात्मकमुणाय बृहत्तरमिति वक्ष्मात्तस्माद्वाङ्मनसयोरगोचर-त्वाच्च द्विधाभूदिति ॥ ३ ॥

सत्पत्रिवर्गविषयाविकरणान्तरेण ज्ञानार्थकयमत्र नोच्यत इति भावेन ज्ञानार्थाभिमानिदेवतास्वरूपं तावदाह । तयोरिति तयोर्ज्ञानार्थयोरेकतरो योऽर्थो विषयलक्षणः स प्रकृतिर्गायत्री-नाम्न्या प्रकृत्याभिमन्यमान इत्यर्थः । सापि न स्वतन्त्रेत्याह । सेति । सा प्रकृतिरुभयात्मिका लक्ष्मीर्विष्णुसंज्ञयोरानयोरात्मा देहः प्रयत्नश्च यस्याः सा तथा मया श्रिया च सृष्टानुग्राह्या चेत्यर्थः अन्य-तमो भागो ज्ञानं यः सोऽपि पुरुषः पुरुषनामा ब्रह्मणाभिमन्य-मानमित्यर्थः । सोऽप्युभयात्मक इत्यनुसन्धेयं मया श्रिया सं सृष्टः अनुग्राह्यश्चेत्यभिप्रायेन—

ज्ञानाभिमानी पुरुषः स ब्रह्मा समुदाहृतः ।
अर्थाभिमानी प्रकृतिर्गायत्री सा प्रकीर्तिता ॥
तयोर्नियामको विष्णुः श्रीश्चानुग्राहिका स्मृता ।
वायुस्तु ब्रह्मणः पुत्रः प्रकृतौ समजायत ॥
त्रिगुणात्मा समुद्दिष्टः प्रायः सत्त्वात्मकस्तथा ।
गायत्री चैव सावित्री तथैव च सरस्वती ॥
एवं त्रिरूपा प्रकृतिरेका सत्त्वादिभेदतः ।
तासु वीर्यं समुत्सृष्टं ब्रह्मणैकत्वमानतम् ॥
स सूत्रात्मा समुद्दिष्टो वायुर्लोकप्रणायकः ।
तस्यापि सूत्रं भगवान् धारणाद्विष्णुरव्ययः ॥
सूत्रपुत्रस्त्वहङ्कारः स रुद्रः समुदाहृतः ।
सूत्रात्मना महांश्चैव सह जातश्चतुर्मुखः ॥
तामसोऽनन्तजश्चैव स एको गुणभेदतः ।
इति स्मृतिसूचकेन हिशब्देन किमत्र

प्रमाणमिति शङ्कापरिहरति ॥ ४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथेति तैः तत्र प्रधानपर्यायः प्रकृतिशब्दः ॥ १ ॥

आसीदिति तैः तृतीयस्कन्धे भगवानेक आसेदमग्र आत्मात्मनां विभुरित्यादौ यद्भगवत्त्वेन शब्द्यते तदेवात्र ब्रह्म-त्वेन शब्द्यते इति वदन्तीत्यादिमद्ग्रन्थैकगत्या वस्तुप्रतिपाद्य अन्तेतु एव साङ्ख्यविद्भिः प्रोक्त इत्यादौ परावरदृशा मयेत्यनेन भगवद्रूपेणावस्थितिः स्पष्टैव । कदेत्यपेक्षायामाह । यदा आदौ कृतयुगे विवेकनिपुणा जना भवन्ति तस्मिन् अयुगे तत्पूर्व-स्मिन् प्रलयकाल इत्यर्थः यद्वा ज्ञानमत्र जीवतत्त्वम् ॥ २ ॥

तदिति तैः तत्र मायादृश्यमिति फलं तत्प्रकाश इति छेदः तेन ब्रह्मणा यद्दृश्यं वस्तु तन्माया तस्य ब्रह्मणो यः प्रका-शविशेषः स फलमित्यर्थः यद्वा प्रकृतिर्यत्रेत्यादौ ब्रह्मणत्रयं त्वह-मिति वक्ष्यमाणात् तद्वृहत् सत्तुत्वयं ब्रह्मरूपेण स्थित्यैव मायाया निजशक्तिविशेषस्य यत्फलं व्यक्तरूपं वस्तु तद्रूपेण ॥ ३ ॥

तयोरिति तैः । प्रकृतिः प्रधानं पुरुषो जीवः एवं श्रीविष्णुपु-राणे विष्णोः स्वरूपात्परतो हि तेऽन्ये रूपे प्रधानं पुरुषश्च विप्रेत्यत्र तेषामेव टीका च परतो निरुपाधेर्विष्णोः स्वरूपात् ते प्रागुक्ते प्रधानं पुरुषश्चेति द्वे रूपे अन्ये मायाकृते इति ॥ ४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

चतुर्विंशतु सृष्टाद्या हेतवोऽस्य यतोऽभवन् ॥
पुनस्तद्वत्र विविग्रुपेनत सांख्यं निरूपितम् ।

मनः प्रधानादिवृन्देहऽहं बुद्धिरनात्मनो दुःखकारणामिति भिक्षु-गीतादवगत सा चानात्मन्यात्मबुद्धिरात्मानात्मविवेके सति निवर्तते स चात्मानात्मविवेकः सांख्यज्ञानमूल इत्यनन्तं साङ्ख्यमुपदिश-न्नाह । अथेति । विकल्पो देहस्तद्वुद्धत्वमध्यासरूपं भ्रमं त्यजेत् ॥१॥

ज्ञानं ब्रह्म परमात्मभगवच्छब्दवाच्यं वास्तवत्यर्थः । वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ब्रह्मेति परमात्मेति भगवानिति शब्द्यत" इतिसूतोक्तेः अर्थोशब्दः कात्स्न्र्ये अविकल्पित विकल्पशून्यमेकमेव ज्ञानं ब्रह्मैवार्थो वस्त्वासीत् कदेत्यपेक्षायामाह । अयुगे युगेऽस्यः पूर्वं प्रलय इत्यर्थः तथा आदौ यत् कृतयुगं तस्मिश्च अन्यदापि यदा विवेकनि-पुणा ज्ञानिनो भवन्ति तदापि तेषां भेदास्फूर्तेः ॥ २ ॥

तदेव केवलमेकमपि बृहद्ब्रह्म माया बहिरङ्गाख्यस्वशक्तिः फलं फलभोक्तृ स्वीयाचित्कणरूपतटस्थशक्तिश्च तद्रूपेण द्विविधं सम-भवत् द्विविधमपि तांश्चांशानाह । निर्विकल्पते ब्रह्मणो निर्भेदं तयोस्तच्छक्तित्वात् वाङ्मनसयोरगोचरं माया या अव्यक्तस्वरूप-त्वात् जीवस्यातिसौक्ष्म्यात् सत्यं द्वयोरेव नित्यत्वात् ॥ ३ ॥

तयोर्द्विधाभूतयोरंशयोर्मध्ये एकतरो मायाख्यो ह्यर्थः प्रकृतिः सा चोभयात्मिका कार्यकारणरूपिणी अन्यतमोऽर्थः ज्ञानं ज्ञानस्वरूपः स च पुरुषो जीवः ॥ ४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वानर्थहेतुरात्मनिभ्रमश्चेत्तर्हि कस्तन्निवृत्त्युपाय इत्याकाङ्-क्षायां परमेश्वरतच्छक्तिभूतप्रकृतिपुरुषविवेकशीलमतपरमेश्वर-भजनजन्यतत्कृपाकटाक्षेण तन्निवृत्तिरित्याह । अथ ते इति । विकल्पः देहगेहादौ यो भ्रमः पूर्वाध्यायान्ते दर्शितोऽहमिति ममेति स्वाधीनोऽस्मीत्येवं भूतस्तम् ॥ १ ॥

अयुगे युगेऽस्यः प्राक् प्रलये ज्ञानं जीवः यथोऽर्थः प्रकृतिश्च अविकल्पितमविभक्तमेकं कारणं ब्रह्मैवासीत् यत आत्म-मन्ता विवेकनिपुणाः आदौ कृतयुगे ध्यायन्तीति शेषः । प्रकृति-पुरुषादिशक्तिमद्ब्रह्मासीदित्यर्थः ॥ २ ॥

तद् ब्रह्म मायाफलरूपेण प्रकृतिपुरुषरूपेण द्विधा समभवत् ॥३॥

एतयोः मायाफलयोरेकतरः अर्थः प्रकृतिः या उभयात्मिका कार्यकारणरूपिणी सा अन्यतमो भागः ज्ञानं जीवः पुरुषः अभिधीयते सः ॥ ४ ॥

भाषा टीका ।

श्रीभगवान् उवाच इसके अनन्तर पूर्वाचार्यों के निश्चय किये हुवे सांख्य शास्त्रको मैं कहूंगा जिसके जानने से

तमो रजः सत्त्वमिति प्रकृतेरभवन्गुणाः ।
मया प्रक्षोभ्यमाणायाः पुरुषानुमतेन च[1] ॥ ५ ॥
तेभ्यः समभवत्सूत्रं[2] महान् सूत्रेण संयुतः ।
ततो विकुर्वतो जातो योऽहङ्कारो[3] विमोहनः ॥ ६ ॥
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिवृत् ।
तन्मात्रेन्द्रियमनसां कारणं चिदचिन्मयः ॥ ७ ॥
[4] अर्थस्तन्मात्रिकाज्जज्ञे तामसादिन्द्रियाणि च ।
तैजसाद्देवता आसन्नेकादश च वैकृतात् ॥ ८ ॥

भाषा टीका ।

पुरुष की नाना प्रकार की भेद भ्रम की बुद्धि दूर होती है ॥ १ ॥

पूर्व काल मे युगों के होने के पहिले ही तथा सत्य युग में जिस वख्त की ज्ञान मे प्रवीण मनुष्य थे तब एक अर्थ तथा एक भेद रहित ब्रह्म रूप ज्ञान ये दो पदार्थ थे ॥ २ ॥

वह जो भेद रहित केवल वाणी मनके अगोचर सत्य वृहत् पदार्थ है वही तथा फल रूप मे दो प्रकार का होगया ॥ ३ ॥

उन दोनों मे एक पदार्थ तो दो प्रकार की प्रकृति है दूसरा पदार्थ ज्ञान है जोकि पुरुष कहा जाता है ॥ ४ ॥

————

श्रीधरस्वामिकृतभावार्थदीपिका ।

अभवन्नभिव्यक्ता बभूवुः मया परमेश्वरेण पुरुषानुमतेन तत्र पुरुषस्य कः संबन्धः जीवादृष्टोपयुक्तत्वात्सृष्टेः पुरुषानुमतत्वम् यद्वा स्वस्यैव प्रकृतीक्षणरूपा या पुरुषावस्था तदनुमतेन तद्द्वारेणेत्यर्थः ॥ ५ ॥

सूत्रं क्रियाशक्तिमान् प्रथमो विकारः ततो महान् ज्ञानशक्तिः तत्त्वतो महानेव प्रथमो विकारः प्रसिद्धस्तत्राऽऽह स च ज्ञानक्रियागर्भत्वात्सूत्रेण संयुतो न पृथक् एकमेव तत्त्वं क्रियाज्ञानशक्तिभ्यां द्विधोच्यत इत्यर्थः । विमोहनो जीवस्य भ्रमहेतुः स जातः ॥ ६ ॥

तत्र तन्मात्रादीनां कारणम् मनःशब्देन देवानामप्युपलक्षणम् चिदचिन्मयः चिदाभासव्याप्त्यात्मानुभवग्रन्थिरूप इति जीवोपाधित्वं दर्शितम् यद्यपि "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इत्यादिश्रुतेस्तन्मयं हिमोऽस्य मन "इत्यादिभ्यश्च प्रथमं भूतानि जायन्ते तेभ्यश्चापञ्चीकृतेभ्यः प्राणादिक्रमेण समष्ट्यात्मकं लिङ्गशरीरं पञ्चीकृतेभ्यश्च ब्रह्माण्डं तस्मिन् वैराजस्तदन्तर्यामी लीलाविग्रहः क्षीराब्धिशायी श्रीनारायणस्तन्नाभिपद्मे च वैराजस्य भोगविग्रहश्चतुराननस्ततो यथाऽवसरमन्येषां जीवानामाविर्भाव इति प्रक्रिया तथाऽपि चिच्छक्तिपूर्वकोऽहङ्कारस्ततो भूतेन्द्रियादिव्यवहार इत्येतावता महदादिक्रमेण सृष्टिरुच्यते तथाचोक्तम् —

मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा ।
उपायः सोऽवताराय नास्ति भेदः कथञ्चनेति ॥ ७ ॥

तन्मात्रेन्द्रियदेवानामुत्पत्तिं दर्शयति । अर्थ इति । तन्मात्रिकात्तन्मात्रकारणात्तामसात्तद्द्वारा अर्थो महाभूतरूपो जज्ञे बभूव भूतानामावरणस्वभावत्वात् इन्द्रियाणि दश तैजसाद्राजसात् तेषां प्रवृत्तिस्वभावत्वात् वैकृतात्सात्त्विकाद्देवताः दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः । चन्द्रश्चेत्येकादश चशब्दान्मनश्च तेषां प्रकाशस्वभावत्वात् ॥ ८ ॥

————

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

मया महत्स्रष्टृमहापुरुषरूपेण । पूर्वांशे भवेत्यस्य ... स्वांशे पुरुषावतारे लक्षणा अनुमतशब्दस्यादृष्टे सत्यपरितोषाद्यद्वेति अभवन् व्यक्ता बभूवुर्वेति समुच्चयार्थः ॥ ५ ॥

संयुतं सह ततः सूत्रात् । भ्रमहेतुर्देहाध्यासहेतुः ॥ ६ ॥

त्रिवृत्त्वे हेतुः यत इति तन्मात्रहेतुत्वात्तामसः इन्द्रियहेतुत्वात्तैजसः । मनोदेवताहेतुत्वाद्वैकारिकः विगतः कारो विक्षेपो यस्मात् स विकारः सत्त्वं तत्प्रधानत्वात् सात्त्विक इत्यर्थः । जीवोपाधित्वं जीवस्य सुखदुःखादिहेतुत्वम् । वेदान्तसांख्ययोः सृष्टिप्रक्रियायां विरोधमाशङ्क्य समाधत्ते । यद्यपीति । अप-भवं पृथिवी कार्यम् अपञ्चीकृतेभ्यः पञ्चीकरणानन्तरभाविभ्यः पञ्चीकरणञ्च वृद्धैरुक्तम् । द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः । स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते इति । लिङ्गशरीरं सप्तदशतत्त्वात्मकम् । तदुक्तं शङ्कराचार्यैः । पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनमिति । तस्मिन् ब्रह्माण्डे । क्षीराब्धिशायीत्यत्र गर्भोदशायीति पाठः प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितमित्यत्र तथोपगमात् । वैराजस्य स्थूलब्रह्मणः । भोगार्थं विग्रहः सूक्ष्मो हिरण्यगर्भः । ततो ब्रह्मणः । चिच्छक्तिः महत्तत्त्वापरपर्यायचित्तस्य ज्ञानरूपपरिणामः । एतावता व्यवहारमात्रप्रदर्शनेन । तथाचोक्तं कारिककृद्भिः । मृल्लोहेति । मृदादिदृष्टान्तरूपैर्या भेदेन सृष्टिस्ततोऽन्यथा वा सांख्यसृष्टिरुक्ता सा चित्तस्यावताराय भवतु कथञ्चन नास्ति यथैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृन्मयं विज्ञातं यथैकेन

१ चेति । २ ततस्सूत्रेणाच संयुतम् । ३ विमोहकः । ४ अर्थस्तन्मात्र को जज्ञे इतिवि० पाठः ।

मया संक्षोभिता भावाः सर्वे संहत्य कारिणः ।
अण्डमुत्पादयामासुर्ममायतनमुत्तमम् ॥ ९ ॥
तस्मिन्नहं समभवमण्डे सलिलसंस्थितौ ।
मम नाभ्यामभूत्पद्मं विश्वाख्यं तत्र चाऽऽत्मभूः ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वैकारिक इति तैः तत्र वायवीयादौ पुराणोक्तानिभिरस्तु श्रवणानां त्रिवृद् मतम् अहङ्कारोपाधेरेवात्मन आकाशः सम्भूतः मतस्तत्प्रवणत्वं चाभिव्यक्तिविशेषापेक्षत्वादिकमिति इत्युक्तं तथा ग्रन्थान्तरेऽपि तत्तदर्थे गम्यन्ते युक्त एव मत् यथोक्तम्—

वेदार्थादधिकं मन्ये पुराणार्थं वरानने ।।
वेदाः प्रतिष्ठिता देवि ! पुराणे नात्र संशयः ॥
पुराणमन्यथा कृत्वा तिर्यग्योनिमवाप्नुयात् ।
सुदान्तोऽपि सुशान्तोऽपि न गतिं प्राप्नुयात्क्वचित् ॥
यो वेद चतुरो वेदान् साङ्गोपनिषदो द्विजाः ! ।
पुराणं नैव जानाति न च स स्याद्विचक्षणः ॥

इत्यादि

भारतव्यपदेशेन ह्याम्नायार्थः प्रदर्शितः ॥

इत्यादि च श्रीदाधिमथायीस्वत्र गर्भोदशायीति वाच्यं चित्तं महत्तत्त्वमिति ॥ ७—८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मया महत्स्रष्टृमहापुरुषस्वरूपेण पुरुषस्य जीवस्यानुमतेन प्रथम क्षिप्तस्य जीवस्य प्राक्तनकर्मज्ञानभक्तिसाधनानि सम्यग्दृष्ट्वा मिश्रात्मकेन सृष्टेर्जीवादृष्टप्रयुक्तत्वात् ॥ ५ ॥

सूत्रं क्रियाशक्तिमान् प्रथमो विकारः ननु प्रथमो विकारो ज्ञानशक्तिर्महानिति प्रसिद्धस्तत्राह । महान् यः प्रसिद्धः स हि सूत्रेण संयुक्तः तत्र तत्र सूत्रसहित एव स ज्ञेय इत्यर्थः विमोहनः जीवस्य भ्रमहेतुः ॥ ६ ॥

महतहङ्कारः त्रिवृत् वृत्तित्रयवान् तन्मात्रेन्द्रियमनसामिति क्रमेण यथा भवन्ति चिदचिन्मय इति स्वयमचिन्मयोऽपि जीवोपाधित्वेन तदैकात्म्यप्रतीत्याऽऽनन्दस्वरूपत्वाच्चिदचिन्मयः ॥ ७ ॥

तस्मात्त्रिकात् तन्मात्रकारणात्तामसात्त्वर्थे आकाशादिभूत पञ्चकं अपि तन्मात्ररूपस्य स्थानत्वात् अतः कारणस्य कार्य निवासरूपत्वात् तस्य निवासः इत्यर्थे गुरुक्रमशः ततो जलादिना कुसुमादिरूपात् ठचा तन्मात्रिक इति क्रियया इन्द्रियाणि दश तैजसात् तेषां पर्यं तस्वभावस्यान्तं जनस्य वैकृतात् सात्त्विकात् देवता दिग्वातादयः चकारात्मनश्च तेषां प्रकाशकस्वभावात् सात्त्विकत्वम् ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु यदेकं पुनर्यद्बृहत् प्रकृतिपुरुषरूपेण द्विधा समभवत्तस्य किमिति शङ्कां निराकर्तुमाह । मया प्रक्षोभ्यमाणायाः इति प्रकृतेस्तत्प्रधानयो गुणाः अभवन् प्रतिरूपका बभूवुः पुरुषानुमतेन जीवानुग्रहकर्त्रा ॥ ५ ॥

तेभ्यो गुणेभ्यः सूत्रं महत एव पूर्वं रूपं समभवत् ततः सूत्रेण संयुतो महान् समभवत् ततो महतः विमोहनः देहात्मतादिहेतुः ॥ ६ ॥

चिदचिन्मयः जीवसमूहगर्भः ॥ ७ ॥

तस्मात्त्रिकात् तन्मात्रकारणात् तामसात् अर्थः महाभूतपञ्चकरूपः अर्थोऽभूत् तामसाहङ्कारात् शब्दतन्मात्रं तत आकाशस्ततः स्पर्शतन्मात्रं ततो वायुस्ततो रूपतन्मात्रं ततस्तेजस्ततो रसतन्मात्रं ततो जलं ततो गन्धतन्मात्रं ततो भूः तैजसात् दशेन्द्रियाणि वैकृतात्सात्त्विकात् दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः चन्द्रश्चैकादश देवता चकारान्मनः ॥ ८ ॥

---

भाषा टीका ।

जीव की कर्म की अनुमति को देखकर मैंने प्रकृतिको क्षोभित किया तब तमः रजः सत्त्व ये तीन प्रकृति के गुण होते भये ॥ ५ ॥

तिन गुणों से क्रियाशक्तिवाला सूत्र भया उस से ज्ञान शक्ति वाला महत्तत्त्व भया फिर महत्तत्त्व के विकार होने से सबको मोहित करने वाला अहङ्कार पैदा भया ॥ ६ ॥

वह अहङ्कार सात्त्विक राजस तामस रूप से तीन प्रकार से है वही क्रम से पञ्चभूतों की तन्मात्रा तथा ज्ञानेन्द्रिय कर्मेन्द्रिय और मन इनका कारण है ॥ ७ ॥

तिनमें तामस अहङ्कार से शब्दादि से तन्मात्राओं से आकाशादिक पञ्च भूत पैदा भये और दश इन्द्रिय राजस से भये सात्त्विक से इन्द्रियों के देवता भये ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मम वैराजात्मनोऽयनम् ॥ ९ ॥

सलिले संस्थितिर्यस्य तस्मिन्निवसंस्थिति तस्मिन्सलिलसंस्थितनामण्डे नारायणरूपो लीलाविग्रहेण समभवं स्थित इत्यर्थः विश्वाख्य लोककारणभूतम् तत्र चाऽऽत्मभूश्चतुराननरूपोऽभिव्यक्तः पुनर्वैराज एव तस्मिन्नाविर्भूत इत्यर्थः ॥ १० ॥

सोऽसृजत्तपसा युक्तो रजसा मदनुग्रहात् ।
लोकान् सपालान्विश्वात्मा भूर्भुवः स्वरिति त्रिधा ॥ ११ ॥
देवानामोक आसीत्स्वर्भूतानां च भुवः पदम् ।
मर्त्यादीनां च भूर्लोकः सिद्धानां त्रितयात् परम् ॥ १२ ॥
अधोऽसुराणां नागानां भूमेरोकोऽसृजत्प्रभुः ।
त्रिलोक्याङ्गतयः सर्वाः कर्मणां त्रिगुणात्मनाम् ॥ १३ ॥
योगस्य तपसश्चैव न्यासस्य गतयोऽमलाः ।
महर्जनस्तपः सत्यं भक्तियोगस्य मद्गतिः ॥ १४ ॥
मया कालात्मना धात्रा कर्मयुक्तमिदं जगत् ।
गुणप्रवाह एतस्मिन्नुन्मज्जति निमज्जति ॥ १५ ॥
अणुर्बृहत्कृशः स्थूलो यो या भावः प्रसिध्यति ।
१ सर्वोऽप्युभयसंयुक्तः प्रकृत्या पुरुषेण च ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

रजसा युक्तो मदनुग्रहात्तपसाऽसृजत् भूरादिसहिता भुवः अन्तरिक्षलोकः स्वः स्वर्लोकः महर्लोकादेरप्युपलक्षणम् ११

लोकसृष्टिप्रयोजनमाह । देवानामिति सार्धेन ओको निवासः पदं स्थानम् त्रितयात्परं महर्लोकादि ॥ १२ ॥

भूमेरधः अतलादि एवं व्यवस्थायां कारणमाह सार्धेन । त्रिलोक्यां पातालादिसहितायाम् ॥ १३ ॥

योगादितारतम्येन यथोत्तरं महर्लोकादयः मद्गतिर्वैकुण्ठलोकः ॥ १४ ॥

तत्र तु मद्गतिव्यतिरेकेणोत्तरा गतयश्चञ्चला इत्याह । वैराग्यार्थेन मया कालशक्तिना धात्रा परमेश्वरेण कर्मफलप्रदेन हेतुभूतेन गुणप्रवाहे संसारे उन्मज्जत्युत्तमलोकमुत्तमगतीः प्राप्नोति पुनर्निमज्जति स्थावरं नीचा गतीः प्राप्नोति ॥ १५ ॥

सृष्टिनिरूपणस्याद्वितीयात्मप्रतिपत्त्यर्थत्वात्तत्प्रतिपादनाय कारणेन कार्यस्य व्याप्तिमाह । अणुरिति । उभयेन संयुक्तो व्याप्तः तदेवाऽऽह । प्रकृत्येति ॥ १६ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

स्वयं भगवतस्तद्दासतासम्बन्धैरान्तर्यामिणेति व्याख्यातम् ॥ ९ ॥

तत्र च पद्ये ॥ १० ॥

लोकान् भुवनानि अग्रे त्रितयात् परमित्युक्तेरुपलक्षणमित्युक्तम् ॥ ११ ॥

प्रयोजनं देवादीनामवस्थानलक्षणं योगादिभिः सिद्धानाम् ॥ १२ ॥

अथ इत्यर्धकम । एवं व्यवस्थायां देवादीनां तत्तत् स्थाननियमलक्षणायाम् । त्रिलोक्यामिति सार्धकम् । कर्मणां गार्हस्थ्यधर्माणां गतयः फलात्मकानि स्थानानि योगादितारतम्येनेति तत्र योगोऽष्टाङ्गस्तस्य तारतम्येन महर्लोकादि सर्वम् ॥ १३ ॥

तपो वानप्रस्थत्वं ब्रह्मचर्यं च तत्रोपकुर्वाणब्रह्मचारिणा सह नैष्ठिकेन तेन जनः । वानप्रस्थत्वतपसा तपोलोकः न्यासेन सत्यलोको गतिरिति ज्ञातव्यम् । यत्र व्रजन्तीति वाक्यात् तत्संकुलं हरिपदानतिमात्रदृष्टैरित्यत्र तावन्मात्रेण दृष्टैः स्तानां विमानैस्तु कर्मादि प्राप्यैरिति स्वरूपेण व्याख्यानात् गोलोकप्रकरणाच्च मद्गतिर्वैकुण्ठलोक इति व्याख्यातम् ॥ १४ ॥

तत्र तासु गतिषु मध्ये कर्मयुक्तं कर्मफलेन योजितमित्यर्थः । "फलमत उपपत्तेः" इति न्यायात् ॥ १५ ॥

अद्वितीयेति । अभिन्नात्मज्ञानप्रयोजनकत्वात् तत्प्रतिपादनाय अद्वितीयात्मप्रतिपादनाय ॥ १६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

समभवं चतुर्मुखरूपेण समभवं तत्प्रकारं विवृणोति । ममनाड्यामिति । विश्वात्मा जगदात्मा ॥ १० ॥

भुवः अन्तरिक्षम् ॥ ११—१३ ॥

योगस्य प्राणायामाभ्यासादिरूपस्य न्यासस्य संन्यासाश्रमस्य ब्रह्मसंन्यासिनां स्मृतमिति वचनात् मद्गतिः परमपदप्राप्तिः ॥ १४ ॥

धात्रा आराधनभूतकर्मयुक्तमिदं जगत् इति विवक्षितः ॥ १५ । १६ ॥

१ सर्वमुभयसंयुक्तं इति वि० पाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

मयेति। सर्वे भावाः महदादयः मया सञ्चोदिताः अन्तरात्मतया प्रविश्य मया प्रेरिताः संहत्य मिलित्वा कारिणः कार्योत्पादनक्षमाः अनेनात्ममंयोगात् प्रागसंहत्याऽकारित्वं सूचितं तथा चोक्तं "नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना,,। अण्डं विधिरिति। ममोत्तममासनं स्थानम् ॥ ९ ॥

सोऽपि हमस्मिन् तस्मिन्नण्डेऽहमभ्रम चतुर्मुखरूपेण समभवं नत्प्रकारं विवृणोति। ममेति। विश्वाख्यं जगदाख्यं पद्ममभूत्तत्र पद्मं आत्मभूश्चतुर्मुखः समभूत् ॥ १० ॥

सः आत्मभूः रजसा युक्तस्तपसा चातो मदनुग्रहात्मपाकात् लोकानसृजत लोकानेवाह। भूर्भुवः स्वरिति त्रिधा। भूर्भुवः स्वरिति पदत्रयमव्ययम् ॥ ११ ॥

तत्र स्वः स्वर्लोकः देवानामोकः स्थानमभूत् भुवोऽन्तरिक्षं भूतानां पदं स्थानमासीन्मर्त्यादीनां भूर्लोकः पदमासीत् सिद्धानां भृग्वादीनां महर्षीणां त्रिलयाल्लोकत्रयात्परं महर्जनादिकं पदमासीत् १२

असुराणां नागानां चौकः स्थानं भूमेरधस्तादतलादिकमसृजत् अतलादीनां भवितव्यरूपत्वेन भूम्यामेवान्तर्भावात् महरादीनां सुखप्रधानत्वेन स्वःशब्देनैव संग्रहात्रिलोकत्वव्यवहारः अवान्तरलोकविवक्षया तु लोकानां चतुर्दशत्वव्यवहारः एवं च सर्वेऽपि लोकाः कर्मणा प्राप्याश्चिरकालस्थिता एवेत्याह। त्रिलोक्यामिति। त्रिगुणात्मनां त्रयो गुणाः सत्त्वादयो येषां तेषामात्मनां क्षेत्रज्ञानां कर्मणां सात्त्विकराजसतामसकर्मणां गतयः फलभूतलोकप्राप्तयः त्रिलोक्यामेव ब्रह्माण्डान्तर एवेत्यर्थः ॥१३॥

तदुपपादयति। योगस्येति। योगस्य प्राणायामादिरूपस्य सन्न्यासाश्रमस्य च गतयः अमलाः निर्मलाः सात्त्विक्यः ता एवाह। महर्जनस्तपः सत्यमिति। यदि कर्मणामेता गतयस्तर्हि त्वद्भक्तेः का गतिरित्यत्राह। भक्तियोगस्य मद्गतिरिति। मयि स्थितः पूर्वोत्तराभ्याम् अन्वयः मद्भक्तियोगस्य मद्गतिः परमपदप्राप्तिः फलमित्यर्थः ॥ १४ ॥

इत्थं महदादिमनःपर्यन्तरूपेणोभयात्मना प्रकृतिरूपादिना द्विधा समभवद् बृहदादि प्रकृतिपुरुषशरीरकस्य ब्रह्मणः कारणत्वमुक्तं ननु प्रकृतेरेव कृत्स्नसमष्टिव्यष्टिनस्वात्मना परिणामे सति कथं विशिष्टस्योपादानत्वसिद्धिः न युज्यते च विशिष्टोपादानत्वम् अन्यथा विशेष्यांशेऽपि विकाराश्रयत्वापत्तेरित्याशङ्क्य विशिष्टोपादानत्वं सार्थावस्तु तावद्विशेष्यांशस्योपादानत्वं नाम सद्वारकावस्थाश्रयत्वं प्रत्यवस्थं प्रकृतिपुरुषनियमनमेवस्वरूपमेवेत्यभिप्रेत्याह। मयेति। मया धात्रा अन्तः प्रविश्य प्रयासेन मयि कालात्मना कालशरीरकेण बहिः कालरूपेण चरता च गुणपरिणामात्मके प्रकृतिमण्डले उन्मज्जति उत्पद्यते निमज्जति विनश्यति चानेनात्मनो चावस्थाविशेषाद्वस्वप्रतीतेर्नियमनमेवप्रतीतेश्च सद्वारकाऽद्वारकोभयावस्थाश्रयत्वसिद्धिः नियन्तृत्वप्रतीतेश्च निमित्तकारणत्वसिद्धिः तत्र सद्वारकावस्थाश्रयत्वेन स्वरूपतः स्वभावतश्च न विकारः सर्वावस्थचेतनाचेतननियमनमेवस्यासद्वारकत्वेऽपि न तस्य स्वरूपस्वभावविकारात्मकत्वं यद्यपि तन्नियमनं तद्गतावस्थाक्रमकं तस्वरूपपरिणामावस्थारूपमेवेति स्वभावतो विकारक-



रूपत्वमेव तथापि सङ्कोचविकासात्मकजीवधर्मभूतज्ञानविकारवत्स्वविकारात्मकं किं तु निरतिशयोत्कर्षावहकल्याणगुणात्मकत्वमेवेति तात्पर्यं कर्मयुक्तमित्यनेन नियमनस्य कर्मानुरूपत्वप्रतीतेरात्मनो वैषम्यनैर्घृण्यप्रसङ्गाभावः फलितः ॥ १५ ॥

इदं जगदित्यनेन किमचेतनं निर्वाचितं किं च चेतनमित्यत्रोभयमपीत्यभिप्रेत्य तत्र हेतुत्वेन चेतनाचेतनयोर्मिथोऽनपायित्वमाह। अणुरिति। यो यो भावोऽर्थः प्रसिद्ध्यति प्रमितो भवति स सर्वोऽपि भावः प्रकृत्या पुरुषेण चेत्युभयेन संयुक्तः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

एवं सृष्टैश्चतुर्विंशतिसंख्यैर्महदादिभिस्तत्त्वैः किं कृत्यमत्राह। मयेति ॥ ९ ॥

आयतनत्वं दर्शयति। तस्मिन्निति—

विष्णोर्नाभ्यब्जाविर्भूतत्वात् पद्मयोनिरित्युक्तिः स्वयम् तथाभिभूतदेहोऽभूत्पद्मादपि चतुर्मुखः। चतुर्मुखस्य सर्वाङ्गं ह्यानन्दं यो महात्मनः। हरिस्तु सर्वदाऽपि भूतदेहो न तु कश्चित्। नैतस्य प्राकृतो देहः प्रादुर्भावेष्वपि कश्चित्। इत्यनेन हरेर्भूतदेहो नास्तीति ज्ञायते सत्त्वमयं समीचीनतया ह्यानन्दोऽभवं न तु स्वपदो भवामीत्यर्थः ॥ १० ॥

तपसा ज्ञानेन ॥ ११ ॥

ओकः निवासस्थानं त्रिलयात्परं महरादिकम् ॥ १२ ॥

कर्मभेदेन त्रिलोक्याः स्थानभेदमाह। त्रिलोक्यामिति ॥१३॥

महर्लोकादिप्राप्तौ किं साधनमत्राह। योगस्येति। सङ्गतिमत्प्राप्तिः—

नैव विष्णावभक्तस्य महर्लोकादिका गतिः।

भक्त्युद्रेकात्क्रमादूर्ध्वं यावद्विष्णोः प्रवेशनम् ॥

एवं ज्ञानं विना नापि महर्लोकादिका गतिः।

ज्ञानोद्रेकात्क्रमादूर्ध्वं यावद्विष्णोः प्रवेशनम् ॥

नित्य १ शो भगवद्रूपस्यापरोक्षेण दर्शनम्।

मुहूर्तमात्रं ज्ञानं स्यान्महाज्ञानं ततोऽधिकम् ॥

ज्ञानेन ब्रह्मलोकः स्यान्महाज्ञानाज्जनो गतिः।

सदैवाखण्डितं ध्यानं तप इत्युच्यते बुधैः ॥

अपरोक्षदृशा युक्तं नित्यं परमात्मकालया।

अपरोक्षदृशा नित्यमेकमात्रायुजायुतम् ॥

तदनुभोगया नित्यमपरोक्षदृशा युतम्।

पादयोगं समुद्दिष्टं ध्यानं नित्यमखण्डितम् ॥

पादयोगान्महर्लोको जनो लोकस्तु योगतः।

तपसस्तु तपोलोकः प्राप्यते नान्यतः क्वचित्।

इति वचनैर्वाक्यैर्वा महर्लोकादिप्राप्तावपि साधनविशेषा अवगन्तव्याः ॥ १४ ॥

१ योगस्तपोज्ञानमिति त्रीणि साधनान्युक्तानि महरादिचतुर्णां स्थानानि पञ्चफलान्युक्तानि अतः कथमिति चेत् सत्यं योगपदेन पादयोगः योगश्चेति द्वयं तपस्त्वेकं ज्ञानमहाज्ञानं चेति द्वयं क्रमेण महरादिलोकसाधनानीत्यभिप्रायेण वस्तुसाधनचतुष्टयमाह तत्त्वा इत्यादिना।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्तियोगरहितस्य का स्थितिरित्याह । मयेति । कालात्मना ज्ञानात्मना धात्रा कारकेण मया प्रेरितकर्मयुक्तमिदं जगद्देहिस्मिन् गुणप्रवाहे उन्मज्जति सृष्टं भवति निमज्जति संहृतं भवति ॥ १५ ॥

तमेव प्रेरणप्रकारं विवृणोति । अणुरिति । अतीतानागतवर्तमानत्वेन यो यो भावः पदार्थः प्रसिध्यति स्वरूपतो वर्तते तत्सर्वमुभयसंयुक्तं मया चित्प्रकृत्या च सरस्वत्या पुरुषेण हिरण्यगर्भेण संयुक्तमस्माभिः प्रविश्य प्रेरितं च यस्मात्तस्मादद्यापि सर्वं स्पष्टीभूय स्थितं दृश्यते ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आवरणमुपाधिः तत्रोत्तमत्वं स्वरूपापेक्षया ॥ ९ ॥

द्वितीयपुरुषरूपेणाहं समभवं सलिलस्य गर्भोदकरूपस्य संस्थानिर्वेश्माश्रिति च तन्त्रेणोक्तम् ॥ १०—११ ॥

सिद्धानां योगादिभिः ॥ १२ ॥

त्रिलोक्यामिति सार्द्धकम् पातालादिकभूर्भुवः स्वश्चेति कर्मणां गार्हस्थ्यं धर्माणां तपो वानप्रस्थत्वं ब्रह्मचर्यं च तत्र ब्रह्मचर्येणोपकुर्वाणत्वनैष्ठिकत्वभेदेन क्रमान्महर्जनश्च वनस्थत्वेन तपः न्यासेन सत्यं योगतारतम्येन तु सर्वमिति इदं मद्गतिरिति तैः भक्तियोगप्राप्यत्वेन वक्ष्यमाणां यत्रव्रजन्तीत्यादिवाक्यसाहाय्यात् लोकप्रकरणाच उक्तं च तृतीये देवान् प्रति ब्रह्मणैव तत्संकुलं हरिपदानिमात्रदृष्टैरित्यादि टीका च तावन्मात्रेण दृष्टेभक्तानां विमानैस्तु कर्मादिप्राप्यैरित्येषा एवमेव श्रुतिश्च "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेने"ति अप्राप्यकृत इत्यस्य विशेष्यं लोक इत्येव तत्प्रसक्तेः—

ईश्वरः सर्वभूतानामित्यादौ

　　तमेव शरणं गच्छ सर्वभावेन भारत ! ।

　　तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ।

इति श्रीभगवदुपनिषत्सु ॥ १३ ॥ १४ ॥

मया कर्त्रा इदं जगत् कर्मयुक्तं कर्मफलेन योजितमित्यर्थः "फलमत उपपत्ते"रिति न्यायात् ॥ १५ ॥ १७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भावाः सूत्रादयः ॥ ९ ॥

सलिलस्य गर्भोदकरूपस्य संस्थितिर्यत्र तस्मिन्नण्डे अहं गर्भोदशायिरूपः द्वितीयः पुरुषः समभवं स्थित इत्यर्थः । विश्वाख्यलोककारणभूतं तत्रात्मभूर्ब्रह्मा वैराज एव भोगविग्रहः पुनश्चतुराननोऽभूदित्यर्थः ॥ १०—१२ ॥

कर्मणां तद्गतां योगस्याष्टाङ्गस्य न्यासस्य ज्ञानस्येति एतत्त्रितयवतां महरादयश्चत्वारो लोकाः गतयः प्राप्या मद्गतिर्वैकुण्ठलोकः भक्तियोगस्य निर्गुणस्य तद्वतां निर्गुणानां प्राप्योऽपि वैकुण्ठलोको निर्गुण एवेति भावः ॥ १३ ॥ १४ ॥

गुणमया गतयस्तु चला एवेत्याह । मया कालशक्तिना धात्रा परमेश्वरेण कर्मफलप्रदेन इदं जगत्सृष्टमिति शेषः गुणप्रवाहे संसारे उन्मज्जति आसत्यलोकमुत्तमा गतीः प्राप्नोति पुनर्निमज्जति आस्थावरं नीचा गतीः प्राप्नोति ॥ १५ ॥

कारणेन कार्यस्य व्याप्तिमाह । अणुरिति । भावः कार्यभूतः पदार्थः ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सलिले संस्थितिर्यस्य तस्मिन् सलिलसंस्थिताण्डे अहं सर्वकारणरूपेण समभवं मम नाभ्यां पद्ममभूत् तत्रात्मभूर्ब्रह्माऽभूत् ॥ १० ॥

स आत्मभूः रजसा युक्तः मदनुग्रहात्तपसा भूर्भुवः स्वरिति त्रिधा लोकानसृजत अर्वाग्दृष्टलोकसृष्टेरन्तर्भावोऽत्र सम्भवति भूर्लोके तलादीनामन्तर्भावः स्वर्गादिमत्वात्परः ॥ ११ ॥

लोकसृष्टिप्रयोजनं दर्शयन् चतुर्दशलोकपक्षं सूचयति । देवानामिति सार्द्धेन त्रितयात्परं महर्लोकादि ॥ १२ ॥

अधोऽनन्तादि केवलाश्रमधर्मनिष्ठानां भक्तिनिष्ठानां च लोकविभागं दर्शयन् सप्तलोकपक्षं सूचयति । त्रिलोक्यामिति सार्द्धेन त्रिलोक्यां सर्वाः ब्रह्मचर्याद्याश्रमत्रयव्यतिरिक्तविषयाः गृहाश्रमविषयाः ॥ १३ ॥

योगस्य ब्रह्मचारिधर्मस्य तपसो वानप्रस्थधर्मस्य न्यासस्य संन्यासिधर्मस्य भक्तियोगस्य तु मद्गतिः मद्भावापत्तिः ज्ञानस्य भक्तावन्तर्भावः ॥ १४ ॥

तत्र मद्गतिव्यतिरिक्ताः सर्वाः गतयः आगमापायिन्यो ह्यनित्यभूतजगदन्तर्गतत्वादित्याशयेनाह । मयेति । कालात्मना कालशक्तिना धात्रा परमेश्वरेण मया हेतुभूतेन गुणप्रवाहे इदं जगदुन्मज्जति निमज्जति ॥ १५ ॥

स्वीयशक्त्यात्मकत्वं जगत आह । अणुरिति । अणु सूक्ष्मं बृहन्महान् तदन्तराले यो यो भावश्च कृशस्थूलादिः सर्वोऽपि प्रकृत्या भोग्यरूपया पुरुषेण भोक्त्रा च प्रसिध्यति अत उभयसंयुक्तः अयमर्थः सर्वत्र स्वकर्मफलभोगार्थं जीवो निर्विकारेण रूपेणावस्ते प्रकृतिर्भोग्यरूपा महदादिपरमाणुपर्यन्ताभिरवस्थाभिः संस्थितेति ॥ १६ ॥

---

भाषा टीका ।

मेरी प्रेरणा करने से सब महदादिक पदार्थ पृथक् समर्थ न होने से मिल करके ब्रह्मांड को उत्पन्न करते भये जोकि मेरा उत्तम निवास स्थान है ॥ ९ ॥

जल पर रहने वाले उस ब्रह्मांड मे ब्रह्मा रूप से मैं उत्पन्न भया जिस मे मेरी नाभी से कमल भया तिस मे ब्रह्मा भये जो कमल चौदा भुवन रूप भया है ॥ १० ॥

उस ब्रह्मा ने तपस्या से युक्त होकर तथा रजो गुण से मेरे अनुग्रह होने से दिक्पालोंके सहित लोकों को तथा भू भुंवः स्वः ऐसे तीन लोको को पैदा किया ॥ ११ ॥

स्वर्ग तो देवों का स्थान भया और भूत प्रेत आदिकों का भुवर्लोक स्थान भया सिद्धों का स्थान तो तीन लोकों के ऊपर भया ॥ १२ ॥

यस्तु यस्यादिरन्तश्च स वै मध्यं च तस्य सन्।
विकारो व्यवहारार्थो यथा तैजसपार्थिवाः ॥ १७ ॥
यदुपादाय पूर्वस्तु भावो विकुरुते परम्।
आदिरन्तो यदा यस्य तत्सत्यमभिधीयते ॥ १८ ॥
प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः।
सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहम् ॥ १९ ॥
सर्गः प्रवर्त्तते तावत्पौर्वापर्येण नित्यशः।
महान् गुणविसर्गार्थः स्थित्यन्तो यावदीक्षणम् ॥२०॥

भाषा टीका।

पाताल लोक मे असुरों का नाग लोगों का स्थान भया यह स्थान भूमिके नीचे परमेश्वर ने बनाया है तीनों लोकों में जो सब गति हैं वे त्रिगुण वाले कर्मों से निर्मित हैं ॥ १३ ॥

योगकी तपस्या की संन्यास की क्रम से गृहस्थादि-आश्रमियों की निर्मल गति हैं सो कौन हैं कि मह-र्लोक जन लोक तप लोक सत्य लोक ये हैं और भक्तियों वालों को मेरा वैकुण्ठ धामही गति है ॥ १४ ॥

काल शक्ति वाले विधाता रूप होकर मैंने इस जगत को युक्त करदिया गुणों के प्रवाह रूप इस जगत् में सब जीव ऊपर और नीचेते जाते रहते हैं ॥ १५ ॥

छोटा या बड़ा जो जो पदार्थ लोक मे प्रसिद्ध है वह सब प्रकृति तथा पुरुष इन दोनो से संयुक्त ही है ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

इदानीं कार्यस्य कारणात्मतां दर्शयति। यस्य कार्यस्य आदिः कारणमन्तोऽवस्थानं च तस्य मध्यं मध्यावस्थाऽपि स एव वै प्रसिद्धं मृत्सुवर्णादिषु अत एवाव्यभिचारित्वात्स एव सन्नतरः। अलं तर्हि मिथ्याभूतकार्यस्पृहया तत्राऽऽह। विकार इति। तैजसाः कटककुण्डलादयः पार्थिवा घटशरावादयश्च यथेति ॥ १७ ॥

नन्वेवं तर्हि महदादीनामप्याद्यन्तरूपत्वात्सत्यत्वं स्यात्तत्राऽऽह। यदिति। यद्रूपमुपादायोपादानकारणतया स्वीकृत्य पूर्वः कारणरूपो महदादिर्भावः अपरमहङ्कारादिकं भावं विकुरुते सृजति यथा पिण्डो मृदमुपादाय स्वयं निमित्तभूतो घटं सृजति तद्वत् स एव सन्निति पूर्वस्यानुपपत्तेः कथं तर्हि मृत्तिकेत्येव सत्यमित्यादिश्रुतिस्तत्राऽऽह। आदिरिति। यदा यस्याऽऽदिरन्तश्च विवक्ष्यते तदा तत्सत्यमभिधीयते मुख्या तत्कारणात्मनः सत्त्वविवक्षयेत्यर्थः ॥ १८ ॥

ननु तथाऽपि प्रकृतिपुरुषकालानामकार्यभूतानां भिन्नत्वा-त्कथमद्वितीयता तत्राऽऽह। प्रकृतिरिति। अस्य सतः कार्यस्योपादानं या प्रकृतिः प्रसिद्धा यश्च तस्या आधारोऽधिष्ठाता परः पुरुषो यश्च गुणक्षोभेणाभिव्यञ्जकः कालस्तत्त्रितयं ब्रह्मरूपोऽहमेव न तु पृथक् प्रकृतेः शक्तित्वात्पुरुषकालयोरंशरूपत्वात् ॥ १९ ॥

एवं तावत्कालत्रयेऽप्यव्यभिचारित्वाद्ब्रह्मैव सत्यमिति यदुक्तं तस्य सृष्टिकारणत्वेनादौ सत्त्वमुक्त्वा मध्येऽपि तस्यैव सत्त्वमुपपाद्यान्तेऽप्यवधित्वेन सत्त्वं दर्शयिष्यन्सर्गप्रवाहरूपायाः स्थितेरवधिमाह। सर्ग इति। महान्प्रभुः पौर्वापर्येण पितृपुत्रादिरूपेण नित्यशः अविच्छेदेन किमर्थं प्रवर्तते तदाह। गुणेषु देहेषु विविधतया सृज्यत इति गुणविसर्गो जीवस्तदर्थं तद्भोगप्रयोजनः किंपर्यन्तं प्रवर्तते यावत् स्थितेरन्तः सोऽपि किमवधिस्तत्राऽऽह। यावदीक्षणं परमेश्वरस्य तावत् ॥ २० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

तस्य कार्यस्य सत एव आद्यन्तमध्ये स्थिरत्वात् अव्यभि-चारित्वं सर्वानुगतत्वेनानश्वरत्वं तस्मात् ॥ १७ ॥

ब्रह्माद्यन्तरूपस्य सत्यत्वं तर्हि स्वकार्यमहङ्कारादिकं प्रति स एव सर्वोपादानरूपः। परमात्मैव सन् सत्यः। घटादिकं नामधेयमात्रं ह्यतदनृतं मृत्तिकेत्येव सत्यं नाममात्रं विकारो न कारणात् पृथगस्तीत्येवकारार्थ इति श्रुतिपदार्थः पर-मकारणस्य सत्यत्वविवक्षा चेयं यदा पृथिव्या आदिरन्तश्च विवक्ष्यते तदा तत् कारणं जलमेव सत्यं यदा तस्य सा विवक्षा तदा तेज एव सत्यम् एवं तस्यापि सत्ये तद्वायुरेव सत्यः तस्यापि सा चेत् तर्हि महापुरुष एव तस्यापि सा चेत्तर्हि अहङ्कार एव तस्यापि सा चेत्तर्हि महानेव तस्यापि सा चेत्तर्हि प्रधानमेव तस्यापि सा चेत्तर्हि काल एव तस्यापि सा चेत्तर्हि महापुरुष एव तस्यापि सा चेत्तर्हि श्रीकृष्ण एवेति श्रीकृष्णस्यैव परमकारणत्वं मुख्यमभिप्रेतं तथाग्रे स्वयमेव व्याख्यास्यति ॥१८॥

विराण्मयाऽऽसाद्यमानो लोककल्पविकल्पकः ।
पञ्चत्वाय विशेषाय कल्पते भुवनैः सह ॥ २१ ॥
अन्ने प्रलीयते मर्त्यमन्नं धानासु लीयते ।
धाना भूमौ प्रलीयन्ते भूमिर्गन्धे प्रलीयते ॥ २२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एतावत् प्रवर्तते यावत् स्थित्यन्तः स्थितेः पालनस्य अन्तः समाप्तिः स चान्त एव किमवधिकस्तत्राह । यावदीक्षणं पालने च्छानुकूलमित्यर्थः ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्रावस्थानामनित्यत्वेऽपि अवस्थावतः पदार्थस्य सदुपादानकत्वात्सत्यत्वमाह । यदिति । यस्योपादेयस्य यावस्था सा भवतु अनित्या यस्तु यस्य कार्यस्य आदिः उपादानभूतः पदार्थः अन्तः कार्यावस्थापगमेऽवशिष्यमाणः पदार्थः मध्यं कार्यावस्थापन्नं मध्यं विवृणोति । व्यवहारार्थः विकार इति वै अवधारणे स एव तस्य कार्यस्य सन्मूलम् कार्यं कारणात्मकमित्यर्थः । यथा तैजसाः कुण्डलादयः पार्थिवाः घटशरावादयः कारणात्मकाः न हि विकारैर्विसर्जन्ति कनकस्य तदात्मतया इति कथमयथा भवन्ति भुविद्यपदानि नृणामिति चोक्तत्वात् "सन्मूलाः सोम्येमाः प्रजा इत्यादिश्रुतेः ॥ १७ ॥

ननु पूर्वपूर्वपदार्थस्योत्तरोत्तरपदार्थकारणत्वे प्रतिपादिते भगवतः स्वस्य ब्रह्मणः तत्तत्कारणत्वं तर्हि न स्यादत आह । यदिति । तुशब्दोऽवधारणे यस्य ब्रह्मणः उपक्रमे एकमेवासीदित्युक्तस्यैव पूर्वो भावः पदार्थः प्रकृत्यादिः यस्यैवापरं महदादिकं यदा विशेषतः करोति तदा यद्ब्रह्मोपादायैव न तु स्वातन्त्र्येणेत्यर्थः किं च यदेव आदिः पूर्वपदार्थः यदेवान्तोऽपरपदार्थः तत्सत्यं ब्रह्माभिधीयते सर्वकारणतया प्रतिपाद्यते ॥ १८ ॥

ननु तर्हि प्रकृत्यादीनां वैयर्थ्यं स्यादित्यत आह । यस्य महदाद्यणुपर्यन्तस्य प्रकृतिरुपादानं परः प्रकृतिविलक्षणः पुरुषो जीवः आधारः धारकः सर्वं प्राकृतं वस्तु जीवः धारयतीत्यर्थः । कालोऽभिव्यञ्जकः ननु तर्हि ब्रह्मणो भवतो निमित्तकारणत्वमागतमित्यत आह । तत्त्रितयं तत्त्रिकमपि ब्रह्माहम् प्रकृत्यादीनां स्वरूपतो भिन्नत्वेऽपि शक्तीनां शक्तिमतः पृथक् सत्त्वाभावादभेदः सर्वाभिर्दाभिच्छक्तिभिर्ब्रह्म जगदभिन्ननिमित्तोपादानकारणं तत्र परिणामित्वादयः प्रकृत्याद्यवशक्तिनिष्ठधर्माः बन्धमोक्षादित्वादयोऽशभूतचिज्जीवधर्माः सर्वज्ञत्वसर्वेशक्तित्वसर्वकारणत्वपरानन्दत्वादयः परब्रह्मणः इति गुणमां कार्यशङ्कानिरासः ॥ १९ ॥

एवमनिर्वचनीयभ्रमनिवृत्तये सृष्टिनिरूपणद्वारा आत्मानात्मपरमात्मविवेकः प्रदर्शितः अथानेन विवेकेन विविधभ्रममूलजन्ममरणप्रवाहनिवृत्तिः कदेत्यपेक्षायामाह । सर्ग इति । गुणेषु मायागुणेषु विसर्गो विन्यासो यस्य स गुणविसर्गो जीवस्तदर्थं स्तत्कर्मफलभोगार्थः नित्यशोऽविच्छिन्नः महान् अनादिस्सर्गः नित्यत्वेऽपि निधनश्च जन्ममरणप्रवाह इत्यर्थः । यावदीक्षणं ममावलोकनं तावत् पौर्वापर्येण भूतभाविरूपेण प्रवर्तते मम कृपावलोकनानन्तरे निवर्तते इत्यर्थः ॥ २० ॥

भाषा टीका ।

जो जिसका आदि अन्त होता है वही उसका मध्य सत्य होकर रहता है मध्य मे जितने विकार हैं वे व्यवहार के लिये हैं जैसे कि सुवर्ण के कुण्डलादिक औ मृत्तिका के घटशरावादिक होते हैं ॥ १७ ॥

पहिला भाव जिस पदार्थ को लेकर दूसरे भाव बनाता है सोइ जब जिसका आदि मे रहता है वही सत् कहाता है जैसे कि मृत्पिण्ड मृत्तिका को ग्रहण कर घटकार्य को बनाता है तो आदि अन्त मे रहने से मृत्तिका पदार्थ सत्य मानाजाता है ॥ १८ ॥

इस जगत का उपादान कारण प्रकृति है परम पुरुष इसका आधार है इसी सत्पदार्थ का प्रकट करने वाला काल है यह तीनो मेरे विशेषण होने से मैं ही हूं ॥ १९ ॥

ऐसा यह सर्ग सृष्टि प्रवृत्ति होता है बड़ा भारी पूर्व पर कार्य कारण रूप से नित्यही होता है जीव भोगने के लिये प्रलय पर्यंत होता है वह अन्त होना भी भगवत्सङ्कल्प पर्यन्त ही है ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रलयं निरूपयति । विराट् ब्रह्माण्ड मया कालात्मना आसाद्यमानो व्याप्यमानो लोकानामहरहः कल्पाः सृष्टिप्रलया विविधाः कल्प्यन्ते यस्मिंस्तान्सर्वान्विकल्पयतीति स तथाभूतः पञ्चत्वरूपाय विशेषाय विभागाय कल्पते योग्यो भवति पञ्चानां भूतानामैक्यरूपत्वतेषां पृथग्भावापत्त्या तद्वर्तीत्यर्थः ॥ २१ ॥

तत्र "तस्माद्वा एतस्मादात्मन आकाशः संभूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नम् अन्नात्पुरुष इति श्रुत्युक्तसृष्टिक्रमप्रातिलोम्येन लयमाह । अन्न इति । मर्त्यं शरीरं येनोपचितं तस्मिन्नन्ने पुनर्वर्षाभावादवृष्टौ क्षीणे सति तत्रैव लीयत इत्यर्थः । अन्नं धानाबीजमात्रावशेषं भवतीत्यर्थः । धाना भूमौ उप्ता न प्ररोहन्तीति भूमिर्गन्धे संवर्तकादित्यशोषिता संकर्षणमुखाग्निना दग्धा सती भूतसूक्ष्मरूपगन्धमात्रावशेषा भवति ॥ २२ ॥

स लीयते महान् स्वेषु गुणेषु गुणवत्तमः ।
तेऽव्यक्ते संप्रलीयन्ते तत्काले लीयतेऽव्यये ॥ २६ ॥
कालो मायामये जीवे जीव आत्मनि मय्यजे ।
आत्मा केवल आत्मस्थो विकल्पापायलक्षणः ॥ २७ ॥
एवमन्वीक्षमाणस्य कथं वैकल्पिको भ्रमः ।
मनसो हृदि तिष्ठेत व्योम्नीवार्कोदये तमः ॥ २८ ॥
एष सांख्यविधिः प्रोक्तः संशयग्रन्थिभेदनः[1] ।
प्रतिलोमानुलोमाभ्यां परावरदृशा मया ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम् ।
एकादशस्कन्धे श्रीभगवदुद्धवसम्वादे
चतुर्विंशोऽध्यायः ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स च महान् स्वकार्येषु गुणेषु ज्ञानक्रियाशक्तिमत्त्वाद्गुणवत्तमस्तादृग्भावं विहाय गुणमात्ररूपो भवति तेऽव्यक्ते प्रकृतौ साम्यावस्थां गच्छन्तीत्यर्थः । तदव्यक्तं काले कालाधीनत्वात्तेनैकीभूयावतिष्ठते अव्यये उपरतवृत्तौ ॥ २६ ॥

मायामये मायाप्रवर्तके ज्ञानमये वा अत एव जीवयतीति जीवस्तस्मिन्महापुरुषे अयं भावः विश्वसृष्टुर्महापुरुषस्योपकरणरूपः कालो गुणक्षोभेन सृज्यत्वात्तत्तदात्मनावतिष्ठत इति तदुक्तं सप्तमे 'कालं चरन्तं सृजतीश आश्रयं प्रधानपुंभ्यां नरदेव सत्यकृदि'ति द्वितीये च 'योऽयं कालस्तस्य तेऽव्यक्तबन्धो ! चेष्टामाहुश्चेष्टते येन विश्वम् । निमेषादिर्वत्सरान्तो महीयांस्तं त्वेशानं क्षेमधाम प्रपद्ये,' इति जीव आत्मनि प्रकृतेर्लीनत्वेन प्रतियोग्यभावात्परिपूर्णत्वेन स्वरूपेणावतिष्ठते आत्मा चाऽऽत्मस्थ एव नान्यत्र लीयते यतः केवलो निरुपाधिः तत्र हेतुः विकल्पापायाभ्यां विश्वोत्पत्तिप्रलयाभ्यां लक्ष्यते ऽधिष्ठानत्वेनावधित्वेनेति तथा सः ॥ २७ ॥

अस्य कथनस्य प्रस्तुतोपयोगमाह । एवमिति । मनसः कथं भेदनिमित्तो भ्रमः स्यात् जातो वा कथं हृदि तिष्ठेत् ॥ २८ ॥

उपसंहरति । एष इति ॥ २९ ॥

करस्थमिव येनेदं दर्शितं तत्त्वमात्मनः ।
सांख्यप्रख्यानतस्तस्मै हरये गुरवे नमः ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुर्विंशोऽध्यायः ॥ २४ ॥

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

उद्देश्यगतत्वादनुवाद्य प्राप्तत्वात् स्वयोनिषु इति यत् पूर्वमुक्तं तस्यैव योनिरित्यनुवादः तथाच बहुवचनस्य योनिशब्दस्य बहुवचनतयैवानुदितुमौचित्यात् एकत्वमविवक्षितं ग्रहं संमार्ष्टीतिवत् । अत्रापि मनसि देवताश्चेऽपि अभिप्राय इति देवतानां मनोऽधीनत्वान्मनसि लय इति वाच्योयुक्तिः वस्तुतस्तु स्वकारणे सात्त्विकाऽहङ्कार एव स्वयोऽभिप्रेत इत्यर्थः रिकम् अर्थात् पूरयति मनश्चेति वैकारिकान्मनो जज्ञे देवा वैकारिका दशेत्युक्तेस्तत्कार्याणां तेषां तत्र लयस्याभिप्रेतत्वात् ॥२५॥

तादृग्भावं गुणवत्तमत्वं जडांशमित्यर्थः । गुणमात्ररूपः अहंकारवज्ज्ञानक्रियाशक्तिमात्ररूपः । कालाधीनत्वात् साम्यावस्थायाः कालकृतत्वात् । तेन कालेन सहाभिन्नीभूय । उपरतवृत्तौ निमेषाद्यवस्थाहीने ॥ २६ ॥

अतएव कालः क्रियायां क्रमानुसन्धानात्मकः । महापुरुषे कारणार्णवशायिनि पुरुषावतारे । ननु कालस्य नित्यत्वं श्रूयते कथं लय इत्यपेक्षायामाहायं भाव इति । उपकरणरूपश्चेष्टात्मकः गुणक्षोभेन क्रियायां क्रमानुसन्धानात्मकत्वेन । तत् चेष्टारूपत्वं सृज्यत्वं च तत्र सृज्यत्वं सप्तमे चेष्टारूपत्वं च द्वितीये इति योजनीयम् । प्रतियोग्यभावात् । प्रकृतौ लयावस्थाया एव महापुरुषत्वात् यस्या ईक्षणं क्रियते तस्या ईक्षणकर्मत्वेन प्रतियोगिन्याः सम्बन्धिन्याः प्रकृतेरभावादित्यर्थः । परिपूर्णपुरुषस्यांशी सच्चित्सुखलक्षणं सदानन्दरूपोऽहं तेन रूपेणेत्यर्थः । तथैव व्याख्यातं स्वामिभिरेव अंशभागेनेत्यत्र अंशेन पुरुषरूपेण मायाया भागो भजनमीक्षणं यस्येति । अत्र निरुपाधित्वे ॥ २७ ॥

(१) दैविक इति विज० पाठः ।

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

अस्य सांख्यकथनस्य । प्रस्तुते ग्रन्थसङ्गे उपयोगम् उपकारताम् ॥ २८ ॥

परावरदृशा मयेति सर्वादित्वं सर्वशेषत्वञ्च स्वयं भगवद्रूपस्य स्वस्यैव स्थापितम् । आत्मनः स्वस्य तत्त्वं सर्वावताराऽवतारि मूलरूपत्वम् ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
चतुर्विंशोऽध्यायः ॥ २४ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ननु महत्तत्त्वं द्रव्यं गुणेषु कथं तस्य लय इत्युच्यते गुणेषु उपरतेषु महान् लीयते गुणाश्चोपरतवैषम्या अव्यक्ते वर्तन्त इत्यर्थः । तदव्यक्तं काले लीयते कालेन सह संसृष्टं भवतीत्यर्थः ॥ २६ ॥

कालस्याऽव्यक्तप्रकृतित्वाभावात् मायामये प्रकृतिसंसृष्टे जीवे कालो लीयते कालो जीवेन सहसंसृष्टो भवतीत्यर्थः आत्मनि अन्तरात्मनि आत्मा अहं केवलः महदादिकार्यसमष्टिरहित इत्यर्थः । विकल्पापायलक्षणः देवादिरूपरहितः आत्मस्थः आधारान्तरनिरपेक्षः ॥ २७ ॥

एवमिति । प्रकृतिपुरुषकालेश्वरविवेकमीक्षमाणस्येत्यर्थः वैकल्पिकः स्थूलोऽहमित्यादिविकल्पविषयः ॥ २८ ॥

प्रतिलोमानुलोमाभ्यां सर्गसंहारक्रमाभ्याम् ॥ २९ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
चतुर्विंशोऽध्यायः ॥ २४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मनसि स्वकारणे लीयमाने सति तेन सह सर्वेन्द्रियारम्भकांशा वैकारिके सात्त्विकाहङ्कारे लीयन्त इति ईश्वरशब्दः कारणमात्रपरः वैकारिकशरीरके ईश्वरे लीयन्त इति वा एवं शब्दोऽपि शब्दतन्मात्रमपि भूतादिं स्वकारणं तामसाहङ्कारमप्येति तं प्रति लयमेतीत्यर्थः । भूतादिर्महतीत्यत्र भूतादिशब्दस्तैजसवैकारिकयोरप्युपलक्षणार्थः त्रिविधोऽप्यहङ्कारो महत्तत्त्वे प्रलीयत इत्यर्थः । तं विशिनष्टि । प्रभुः देहात्माभिमानादिरूपमोहजनकत्वात् ॥ २५ ॥

स लीयत इति । महान् स्वेषु स्वकारणभूतेषु गुणेषु सत्त्वादिषु त्रिषु तं विशिनष्टि । गुणवत्तम इति । अध्यवसायहेतुत्वान्महान्वे वृद्धित्वात् इत्युक्तेः ननु महत्तत्त्वं द्रव्यं गुणेषु कथं तस्य लयः उच्यते गुणेषु उपरतेषु महान् लीयते इति ते गुणाश्चोपरतवैषम्याः साम्यात्मना अव्यक्ते वर्तन्त इत्यर्थः । तदव्यक्तं काले लीयते कालेन सह संसृष्टं भवतीत्यर्थः । लीयत इत्यनेन संसर्गविशेषमात्रमेवोच्यते न तु लयः कालस्याव्यक्तप्रकृतित्वाभावात् अत एव इत्यनेन कालस्य नित्यत्वमुच्यते ॥ ॥ २६ ॥

मायामये प्रकृतिप्रचुरे तत्संसृष्ट इत्यर्थः । तस्मिन् जीवे कालो लीयते जीवेन सह संसृष्टो भवतीत्यर्थः । जीवः आत्मन्यन्तरात्मन्यजे कर्माधीनोत्पत्तिरहिते मयि लीयते इत्यर्थः । अज इत्यनेनात्मन उत्पत्तिप्रतिसञ्चरभ्रयोरपि नास्तीति सूच्यते तदुपपादयति । आत्मेति । सर्वान्तरात्मभूतोऽहमात्मन्येव तिष्ठतीति तथा न कस्मिंश्चिदन्यस्मिन्निति भावः अतोऽविकल्पापायलक्षणः विकल्पो देवादिशरीरभेदः अपायस्तदपगमस्ताभ्यां न लक्ष्यत इति तथाऽस्पृष्टोत्पत्तिविनाशावस्थ इत्यर्थः केवलः महदादिकार्यसमष्टिरहितः ॥२७॥

इत्थं साङ्ख्यं निरूप्य तस्य जगद्वैकल्पिकं भ्रममित्युक्तं वैकल्पिकभ्रमहानिकरत्वं सदृष्टान्तमाह । एवमिति । प्रकृतिपुरुषकालेश्वरविवेकमित्यमन्वीक्षमाणस्य पुंसः वैकल्पिकः स्थूलोऽहमित्यादिविकल्पविषयो भ्रमः स च मानसः मनःकारणकः हृदि कथं तिष्ठेत न तिष्ठेदेवेत्यर्थः । अर्कोदये सति तम इव ॥ २८ ॥

अनेन साङ्ख्यवर्णनेन सर्वभावानां प्रतिलोमानुलोमतो भवाप्ययौ विजानीयादित्युत्थापिता जिज्ञासापि शान्ता बभूवेत्युपसंहरति । एष इति । सांख्यस्य प्रकृतिपुरुषकालेश्वरविभागस्य विधिरपि प्रमाणतापको हि विधिरतस्तेन तद्विवेचितं संशयः देहात्मजीवेश्वरभेदाभेदसंशयः स एव ग्रन्थिः तद्गतुर्मोऽप्यवाप्तं छिनत्तीति तथाभूत एष सांख्यविधिः परावरदृशा समधिगतयाथात्म्यद्रष्ट्रा मया प्रतिलोमानुलोमाभ्यां सर्गसंहारक्रमाभ्यां प्रोक्तः कृत इत्यर्थः ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
चतुर्विंशोऽध्यायः ॥ २४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

योनिर्वैकारिकस्तैजसश्चाहङ्कारः विकारजत्वाद्वैकारिके महति चतुर्मुखे लीयते ईश्वरे ईशनशक्तिमति—

विकारजत्वात्तु महान्वैकारिक उदाहृतः ।
ईशनादीश्वरश्चैव ब्रह्मा बृंहणतः स्मृतः ॥

इति स्मृतेः भूतादिं तामसाहङ्कारं स भूतादिरनन्तशरीरस्थ महति महत्तत्त्वाभिमानिनि ॥ २५ ॥

स महान् स्वेषु गुणेषु स्वकारणेषु गुणाभिमानिनीषु नाडीषु श्रीभूदुर्गासरस्वतीषु ते गुणास्ताः सत्त्वादिगुणाभिमानिन्यो अव्यक्ते प्रकृत्याख्यमूलरूपे तदव्यक्तमव्यक्ताभिमानिनी सा श्रीः पुरुषाभिधे विरिञ्चे परमे लीयते स पुरुषः कालाभिमानिनम् ॥ २६ ॥

कालाख्यो विरिञ्चः मायामये जीवे मूलप्रकृत्यभिमानिन्यां महालक्ष्म्यां जीवनाम्नी श्रीरजे आत्मनि मयि विशेषतः लयं लयमाप्नोति आत्मस्वरूपं वक्ति । आत्मेति । आत्मा पूर्णगुणः केवलः प्रकृतिसम्बन्धविधुरो ऽसमाधिकत्वात् आत्मस्थ

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अनन्याधारः अत एव सर्वादिहीनः विकल्पापायलक्षणः सन्नन्यक् ज्ञानस्वरूपः मिथ्याज्ञानापगमो लक्षणं यस्य स तथेति वा ॥ २७ ॥

कथितस्मृत्यादिस्मरणफलमाह। एवमिति। वैकल्पिको भ्रमः विरुद्धकल्पनालक्षणमन्यथा ज्ञानं मनस उत्पन्नं हृदि स्थितौ ॥ २८ ॥

उक्तार्थमुपसंहरति। एष इति। प्रतिलोमेन विपरीतक्रमेण संहारकथनम् अनुलोमेन यथाक्रमेण सृष्टिकथनं संशयग्रन्थिछेदिकः संसारबन्धवनदहने अग्नेर्ज्वालायमानः परावरदृशा सर्वज्ञेन—

गायत्री चैव सावित्री तथैव तु सरस्वती।
एवं त्रिरूपा प्रकृतिर्ब्रह्मपत्नी प्रकीर्तिता ॥
महत्तत्त्वात्मको ब्रह्मा तज्जत्वात्तत्र लीयते।
गुणाधिकः पतिरपि तस्याः सत्त्वादिभेदतः ॥
त्रिविधा मूलरूपायां प्रकृत्यां सा प्रलीयते।
प्रकृतिर्मूलरूपा सा ब्रह्मपत्नी जगन्मयी ॥
पुरुषाभिधे विरिञ्चे तु स चास्मिन् कालसंज्ञके।
कालाभिधो विरिञ्चस्तु महालक्ष्म्यां विलीयते ॥
जीवमायेति यामाहुः सा च सत्त्वादिभेदतः।
त्रिविधैकस्वभावत्र विष्णावेव विलीयते ॥
इत्यन्तसामीप्यं लयो लक्ष्म्याः प्रकीर्तितः।
पुरुषेणातिसामीप्यं प्रकृतेर्लय उच्यते ॥
ब्रह्मा च प्रकृतिश्चैव मुक्तिगौ विलयं यतः।
अनन्तो निजदेहो तु ज्ञानमात्रो समीपगो ॥

इत्यादिप्रमाणसिद्धं स्यात् सर्वज्ञेन परमाप्तेन मया प्रोक्तत्वादिदं सूक्ष्मार्थिरहस्यं ग्राह्यमिति भावः ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
चतुर्विंशोऽध्यायः ॥ २४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

योनिः सर्वेन्द्रियप्रवृत्तिहेतुर्मनः वैकारिके सात्त्विकाहंकारे तस्मिन् कथम्भूते मनसीश्वरे व्यधिकरणसप्तम्यौ मनसः सप्तमी च "स्वामीश्वराधिपती"त्यादिना मनः कारणत्वान्मनोऽधिष्ठातरीश्वरे इत्यर्थः। उपलक्षणं चैतद्देवतावर्गस्य महति सूत्रसंयुत इति वेयं महांश्च सूत्रसंयुत इति ज्ञापितत्वात् ॥ २५ ॥

काले तच्छक्त्यात्मके ईश्वरे अत एवाव्यये ॥ २६ ॥

यस्तु क्रियायां क्रमानुसंधानात्मकस्तत्कार्यरूपो लौकिकः कालः स तु मायामये तदनुसंधातरि जीवे लीयते मायाकार्येण तेनैव व्यापृतं माया वयुनं ज्ञानमिति निघण्टोः स जीवः आत्मनि परमात्मरूपे मयि तस्य तु लयामायमाह। अत इति। किन्तु सन् परमात्मा परमपुरुषः केवले शुद्ध आत्मनि स्वात्मभूते स्वरूपे स्थितो भवति कीदृशः सन् विकल्पानां सृष्टिस्थितिप्रलयानामपायोऽनङ्गीकारो यत्र तादृशस्वरूपः सन्निति ॥ २७ ॥ २८ ॥

परावरदृशा मयेति सर्वादित्वं सर्वश्रेष्ठत्वं च स्वं भगवद्रूपस्य स्वस्यैव ख्यापितम् ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
चतुर्विंशोऽध्यायः ॥ २४ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

योनिस्तैजसाहङ्कारो वैकारिकाहङ्कारकार्ये मनसि कुतः ईश्वरे तैजसाहङ्कारस्य ज्ञानकर्ममयत्वात् ज्ञानकर्मणोश्च ज्ञानेन्द्रियकर्मेन्द्रियरूपत्वात् ज्ञानेन्द्रियकर्मेन्द्रियाणां च मनस एव इंगितव्यत्वात् मन एव तेषामीश्वर इति युक्तेः अस्यार्थः शब्दतन्मात्र इत्युक्तं तस्य शब्दतन्मात्रस्य लयमाह। शब्दो भूतादि तामसाहंकारम् अप्येति तस्मिन् लीयत इत्यर्थः। भूतादिस्तामसाहंकारो वैकारिकाऽहंकारश्च महति ॥ २५ ॥

स च सूत्रसंयुतो महान् गुणेषु ते च गुणा अव्यक्ते प्रकृतौ गुणानां वैषम्यत्याग एव लयो विवक्षितः प्रकृतेर्गुणसाम्यरूपत्वात् तत् अव्यक्तं काले लीयत इति प्रकृतेर्लयो व्याख्यानानुगमकयः न तस्य कालावयवैः परिणामाद्यो गुणाः। अनाद्यनन्तमव्यक्तं नित्यं कारणमव्ययमिति द्वादशोक्तौ प्रकृतेर्नित्यत्वश्रवणात् जायन्तेऽपायमानेऽप्यन्तरिक्षेण प्रलयपर्याने प्रकृतेर्लयो नोक्तः अत एवोक्तं—

लयः प्राकृतिको ह्येष पुरुषाव्यक्तयोर्यदा।
शक्तयः सम्प्रलीयन्ते विवशाः कालविद्रुताः ॥

इति तस्मादेवं व्याख्येयं तत्काले तस्मिन् काले ते गुणा अव्यक्ते सम्प्रलीयन्ते ततश्च कालो लौकिकः सृज्यः ॥ २६ ॥

मायामयेमायोपाधौ जीवे लीयते इति पूर्वेणान्वयः न त्वेतीत्यव्ययस्तदिममिति जीवस्यापि तटस्थशक्तित्वान्नित्यत्वेन तत्त्वान्तरगणामिव स्वरूपलयानौचित्यात् स च जीवः आत्मनि परमात्मनि मयि लीयते अव्ययत्वादप्रच्युतस्वरूप एव संश्लिष्टोऽन्तर्भूत इत्यर्थः। आत्मात्मात्मस्थ एव विराजते केवलो निरुपाधिः यतो विकल्पापायाभ्यां विश्वोत्पत्तिलयाभ्यां लक्ष्यते ॥ २७ ॥

अन्वीक्षमाणस्य विचारयतः वैकल्पिकः देहोऽहमिति मनसो भ्रमः हृदि कथं तिष्ठेत् उक्तलक्षणेन सांख्येनात्मानात्मविवेके सति देहस्यानात्मत्वनिर्धारणादिति भावः ॥ २८ ॥ २९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
एकादशे चतुर्विंशः सङ्गतः सङ्गतः सताम् ॥ २४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

योनिरिन्द्रिययोनिः राजसाहंकारो महति लीयते प्रभुर्देवतागणः वैकारिके लीयते ईश्वरे सर्वेन्द्रियस्वामिनि मनसि

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वैकारिके प्रविष्टे सति वैकारिके महति शब्दः शब्दतन्मात्रे भूतादिमप्येति भूतादिश्च महत्यप्येति पाठक्रमादर्थक्रमो बलवान् ॥ २५ ॥

महान् गुणेषु सूत्रात्मना स्थितेषु महान् सूत्रे ज्ञानक्रियाविशेषे इति सृष्ट्यनुरोधाद्बोध्यम् ते सूत्ररूपेणावस्थिताः अव्यक्ते प्रकृतौ तदव्यक्तं काले प्रकृतिसृष्टिसंहारयोः कालनिमित्तत्वात् पुनः सृष्टिकालं प्रतीक्षमाणा प्रकृतिरवतिष्ठते इत्यर्थः । अव्यये इत्यनेन कालस्य नित्यता सूच्यते ॥ २६ ॥

मायामये प्रकृत्यावृते एतेन जीवस्य मायया बद्धत्वमुक्तम् जीवः आत्मनि अंशिनि अजे मयि लीयते अत्र कालस्य वृत्तिरूपेण सृजत्वं निवृत्तिरूपेण संहारकत्वं जीवस्य च देहेन्द्रियादिसंयोगाद्वा सृजत्वं संहारकत्वं चोपचर्यते इति बोध्यम् एवं सर्वकारणत्वं भगवतो बोध्यं स्वस्य सर्वकारणस्यान्यनिरपेक्षस्थितिप्रवृत्त्याद्याश्रयत्वमाहाऽऽत्मेति । केवलः निःसमानातिशयः विकल्पापायौ विश्वसृष्टिसंहारौ शास्त्रद्वारा लक्ष्यते यस्मात् अनाद्यनन्तस्वरूपगुणशक्त्याद्याश्रय इत्यर्थः ॥ २७ ॥

एवमात्मानात्मपरमात्मस्वरूपादियाथात्म्यमन्वीक्षमाणस्य वैकल्पिकः देहाद्यात्महमादिरूपः ॥ २८ ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
चतुर्विंशाध्यायार्थप्रकाशः ॥ २४ ॥

---

### भाषा टीका ।

देवता सब मन मे लीन होते हैं हे सौम्य । उद्धव जो कि मन से सब इन्द्रियों का स्वामी है शब्द का तामसाहंकार मे लय होता है वह बड़ा समर्थ महत्तत्व मे लीन होता है ॥ २५ ॥

वह महत्तत्व अपने कारण गुणों मे लीन होता है जो कि गुण वालों मे बड़ा है वे गुण प्रकृति मे लीन होते हैं वह प्रकृति नाश रहित काल मे लीन होती है ॥ २६ ॥

काल ज्ञान स्वरूप वाले जीव मे लीन होता है जीव तो आत्मा मेरे मे लीन होता है मैं तो अज हूं तो केवल आत्मा धार हूं विकल्प तथा नाश इन से रहित हूं तब मेरा लय होना नहीं है ॥ २७ ॥

इस प्रकार से इन सब बातों के विचार करने वाले पुरुष को पदार्थों के भेदों का भ्रम कैसे हृदय मे स्थित रहेगा जैसे कि आकाश मे सूर्य के उदय होने से अंधकार नहीं रहता है तैसे ॥ २८ ॥

कार्य कारण सूक्ष्म स्थूल सब के जानने वाले मैंने यह सांख्य का विधि उत्पत्ति प्रलय रूप से कहा है जो कि हृदय के संशय ग्रन्थि का नाश करने वाला है ॥ २९ ॥

इति श्रीमद्भागवत महापुराण एकादशस्कन्ध
चावीस मैं अध्याय की पं० लक्ष्मणाचार्यकृत
भाषा टीका समाप्त ॥ २४ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥



## अथ पञ्चविंशोऽध्यायः ।

---:*:---

श्रीभगवानुवाच ॥

गुणानामसम्मिश्राणां पुमान् येन यथा भवेत् ।
तन्मे पुरुषवर्येदमुपधारय शंसतः ॥ १ ॥
शमो दमस्तितिक्षेक्षा तपः सत्यं दया स्मृतिः ।
तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दयादिः स्वनिर्वृतिः ॥ २ ॥
काम ईहा मदस्तृष्णा स्तम्भ आशीर्भिदा सुखम् ।
मदोत्साहो यशःप्रीतिर्हास्यं वीर्यं बलोद्यमः ॥ ३ ॥
क्रोधो लोभोऽनृतं हिंसा याच्ञा दम्भः क्लमः कलिः ।
शोकमोहौ विषादार्ती निद्राशा भीरनुद्यमः ॥ ४ ॥
सत्त्वस्य रजसश्चैतास्तमसश्चानुपूर्वशः ।
वृत्तयो वर्णितप्रायाः सन्निपातमथो शृणु ॥ ५ ॥
सन्निपातस्त्वहमिति ममेत्युद्धव ! या मतिः ।
व्यवहारः सन्निपातो मनोमात्रेन्द्रियासुभिः ॥ ६ ॥
धर्मे चार्थे च कामे च यदाऽसौ परिनिष्ठितः ।
गुणानां सन्निकर्षोऽयं श्रद्धारतिधनावहः ॥ ७ ॥
प्रवृत्तिलक्षणे निष्ठा पुमान् यर्हि गृहाश्रमे ।
स्वधर्मे चानुतिष्ठेत गुणानां समितिर्हि सा ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चविंशे ह्यनैर्गुण्यप्रतिपत्त्यै निरूप्यते ।
चित्तप्रभवसत्त्वादिगुणवृत्तिरनेकधा ॥

प्रकृतिपुरुषविवेकज्ञानवतोऽपि यावत्प्रयत्नविशेषेण गुणप्रवृत्तिजयो न स्यात् तावत्संसारोपरमोऽतस्तज्जयोपायगुणवृत्तिनिरूपणार्थमाह । गुणानामिति । सह मिश्रीभूय वर्तमानाः संमिश्राः न संमिश्रा असंमिश्रास्तेषां विभक्तानां गुणानां मध्ये येन गुणेन यथा यादृशो भवेत्तदिदं कथयतो मत्तो निबोधस्व ॥ १ ॥

तत्र सत्त्ववृत्तीराह । शम इति । शमो मनोनिग्रहः दमो बाह्येन्द्रियनिग्रहः तितिक्षा सहिष्णुत्वम् ईक्षा विवेकः तपः स्वधर्मवर्तित्वम् स्मृतिः पूर्वापरानुसंधानम् तुष्टिर्यथालाभसंतोषः त्यागो वदान्यता अस्पृहा विषयेषु वैराग्यम् श्रद्धा आस्तिक्यं गुर्वादिषु ह्रीरनुचिते कर्मणि लज्जा तेषामनवलोकनम् दया दानम् दयादानादिसत्त्वगणोऽस्तीति स्मरणात् आदिशब्देनार्जवविनयादिश्च निर्वृतिरात्मरतिः ॥ २ ॥

रजसो वृत्तीराह । काम इति । कामोऽभिलाषः ईहा व्यापारः मदो दर्पः तृष्णा लाभे सत्यप्यसंतोषः स्तम्भो गर्वः आशीर्धनाद्यभिलाषेण देवतादिप्रार्थनम् भिदा अहमन्य इति भेदबुद्धिः सुखं विषयभोगः मदोत्साहो मदेन युद्धाद्यभिनिवेशः यशःप्रीतिः स्तुतिप्रियता हास्यमुपहासः वीर्यं प्रभावाविष्कारः बलेनोद्यमो स्पर्धनोद्यमः सात्त्विक एव ॥ ३ ॥

तमोवृत्तीराह । क्रोध इति । क्रोधोऽसहिष्णुता लोभो व्ययपराङ्मुखता अनृतमशास्त्रीयं प्रमाणमिति भाषणम् हिंसा द्रोहः याच्ञा प्रार्थना दम्भो धर्मध्वजित्वम् क्लमः श्रमः कलिः कलहः शोकमोहौ अनुशोचनं भ्रमश्च विषादार्ती दुःखं दैन्यं

### श्रीधरस्वामिकृतभावार्थदीपिका ।

च निद्रा तन्द्रा आशा मे इदं भविष्यतीत्यन्वीक्षा भीर्भयम् अनुद्यमो जाड्यम् ॥ ४ ॥

अनुपूर्वशः क्रमेणैताः श्लोकत्रयोक्ता वर्णितप्रायाः अन्या अप्यूह्या इति भावः ॥ ५ ॥

विभक्तानां गुणानां वृत्तयो वर्णिता मिश्राणामाह । सन्निपात इति त्रिभिः । अहं ममेति ममतानुषक्तसर्ववृत्तिसामानाधिकरण्यदर्शनात्सन्निपातजत्वम् अहं शान्तः कामी क्रोधी-त्यादि तथा मम शान्तिरस्ति कामः क्रोध इत्यादि द्रष्टव्यम् तत्पूर्वकः सर्वो व्यवहारश्च सन्निपातकार्यमित्याह । व्यवहार इति । यत्र हेतुः मनश्च मात्राणि चेन्द्रियाणि चासवश्च तैः मनआदीनां सात्त्विकतामसराजसत्वात्तेऽव्यवहारः सन्निपातज इति भावः ॥ ६ ॥

असौ पुरुषो यदा धर्मादिषु परिनिष्ठितो भवति तदाऽयं त्रिषु निष्ठारूपः संनिकर्षः सन्निपातकार्यम् धर्मादीनां सत्त्वतमोरजःकार्यत्वात्त्रिषयतः सन्निपातजत्वमुक्तम् फलतश्च तथात्वमाह । श्रद्धारतिधनानि सत्त्वरजस्तमोमयान्यावहतीति तथा ॥ ७ ॥

धर्मनिष्ठायामेव सन्निपातं दर्शयति । प्रवृत्तिलक्षणे काम्यधर्मे यदा पुंसो निष्ठा भवति तथा पुमान् यदा गृहाश्रम एवासक्तस्तिष्ठेत् अनु पश्चात्स्वधर्मे च नित्यनैमित्तिके तिष्ठेत्साऽपि समितिः सन्निपातः हि यस्मात्काम्यधर्मगृहासक्तिस्वधर्मा रजस्तमः सत्त्वमया इत्यर्थः ॥ ८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

सनैर्गुण्यप्रतिपत्त्यै स्वीयज्ञानादेर्निर्गुणत्वप्रतिपादनाय । प्रधानाभिप्रेतेन भक्तियोगरूपेण । अतो गुणवृत्तिजयस्य द्वन्द्वनिवर्त्तकत्वात् । गुणवृत्तिरूपात्मकमर्थम् । तदिदं तत्तद्गुणविशेषेण तथा तथा भवनम् ॥ १ ॥

तत्र तासु वृत्तिषु मध्ये ॥ २ ॥

दर्पश्चित्तोन्नतिः । गर्वोऽन्यहेलनम् । अतो न पौनरुक्त्यम् । यद्येतेषां व्याख्यानमाह । व्याचष्टेति ॥ ३—४ ॥

प्रायः शब्दस्याभिप्रायमाहान्या अपीति ॥ ५ ॥

सर्ववृत्तीनां शमादीनाम् अहं ममेति वृत्तौ सामानाधिकरण्यम् एकाधिकरणवृत्तित्वं तस्य दर्शनाद्यत्राहंममकारौ स्तस्तत्रैव शान्तिकामक्रोधादीनामुदयो न तु ब्रह्मविदि निरहङ्कार इत्यर्थः । तत्पूर्वकोऽहङ्कारममकारपूर्वकः । अत्र सन्निपातकार्यत्वे । सन्निपातजा मिश्रगुणवृत्तिकार्यम् ॥ ६ ॥

निष्ठाया विषयो धर्मादिकस्तस्य सत्त्वादिकार्यत्वात्तन्निष्ठाया अपि सन्निपातजत्वमुक्तमित्यर्थः । फलतस्तथात्वमिति तत्र धर्मनिष्ठायाः सात्त्विक्याः फलं श्रद्धापि सात्त्विक्येव सात्त्विक्याध्यात्मिकी श्रद्धेत्युक्तः तथा कामनिष्ठाया राजस्याः फलम् विषयरतिः सा राजस्येव एवमर्थनिष्ठायास्तामस्याः फलम् धनाभावविशिष्टं धनं तामसमेवेति फलतोऽपि सन्निपातजत्वमित्यर्थः ॥ ७ ॥

काम्ये धर्मे वर्णाश्रमधर्मादौ । हि यस्मादित्यस्य अन्वयः काम्यधर्मेत्याद्याहारादित्यर्थं इत्युक्तम् ॥ ८ ॥ ९ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

शमादयः सात्त्विकाः ॥ १ ॥ २ ॥

कामादयो राजसाः ॥ ३ ॥

क्रोधादयस्तामसाः ॥ ५ ॥

मनोमात्रेति मात्रशब्दः शब्दादिगुणपरः मनआदिभिर्व्यवहारश्च गुणसन्निपातकृतमूल इत्यर्थः ॥ ६—१० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्रिलोक्यां गतयः सर्वा कर्मणां त्रिगुणात्मनां भक्तियोगस्य प्रवृत्तिरिति सत्त्वादिगुणकर्मयुक्तो गतिभेद इत्युक्तं तत्र येन गुणेन यदभिनिवेशः स्यादिति जिज्ञासायामाहस्याह । गुणानामिति गुणानां सत्त्वादीनां प्रत्येकं मिथो मिश्राणां च मध्ये येन येन गुणेन पुमान् यथा यादृशो भवेत् यदभिनिवेशो भवेदित्यर्थः । तदेतद्धे पुरुषवर्य ! शंसतः कथयतो मे मत्तः उपधारय श्रृणुयित्यर्थः ॥ १ ॥

इत्थं श्रोतुं प्रबोध्य जिज्ञासितमुपपादयितुं तावत्प्रत्येकमवधारणकार्याण्याह । शमइत्यादिना । शमादयः सत्त्वस्य वृत्तयः कार्यभूताः कामादयो रजसः क्रोधादयस्तमसः तत्र शमोऽन्तःकरणावधानं दमो बाह्येन्द्रियावधानं तितिक्षा द्वन्द्वसहिष्णुता ईक्षा तत्त्वविमर्शः स्मृतिरनुभूताविस्मरणम् अस्पृहेति छेदः वैराग्यं श्रद्धा आस्तिक्यं ह्रीरनुचिते कर्मणि लज्जा दया दानं दयादानयोः तिरस्कारोऽचितमनुशासनादन्यथा पौनरुक्त्यात् आदिशब्देनार्जवविनयादिः स्वनिर्वृतिरात्मानुभवजं सुखम् ॥ २ ॥

कामो विषयाननुभूयापि स्वातुमशक्तिः ईहा चेष्टा मदो दर्पः तृष्णाऽसन्तोषस्तम्भो गर्वः आशीर्धनादिलिप्सा भिदा सुखं विषयभोगः मदोत्साहः साहसकर्माभिनिवेशः यशसि प्रीतिः ॥ ३ ॥

दम्भो यज्ञनं क्लमः श्रमः कलिः कलहः शोकमोहादनुशोचनं भ्रमश्च विषादार्तीः दुःखं दैन्यं च आशाऽपेक्षा भीर्भयम् अनुद्यमो जाड्यम् ॥ ४ ॥

पुंसः सत्त्वादिगुणत्रयाभिवृद्ध्या क्रमेणैते भवन्ति एभिः अयं सात्त्विको राजसस्तामसश्चेत्यनुमीयते एता अनुपूर्वशः क्रमेण श्लोकत्रयोक्ताः वर्णितप्रायाः अन्या अप्यूह्या इति भावः अथ मिश्राणां गुणानां वृत्तीर्विवक्षुः अवधाय प्रबोधयति सन्निपातमथो श्रृणुयिति सन्निपातप्रयुक्तं गुणानां मिथः संसर्गजनप्रयुक्तकार्यमित्यर्थः ॥ ५ ॥

हे उद्धव ! अहं ममेति या मतिः स संनिपातः अहङ्कारममकारौ मिश्रितगुणकार्यभूतावित्यर्थः । अहंममेतिमूलकः सर्वोऽपि मनोमात्रेन्द्रियासुसाध्यको व्यवहारश्च गुणसंनिपातमयः मनो मात्रेतिमात्रशब्देन शब्दादितन्मात्रकार्याकाशादिभूतकार्यं विवक्षितः ॥ ६ ॥

पुरुषं सत्त्वसंयुक्तमनुमीयाच्छमादिभिः ।
कामादिभी रजोयुक्तं क्रोधाद्यैस्तमसा युतम् ॥ ९ ॥
यदा भजति मां भक्त्या निरपेक्षः स्वकर्मभिः ।
तं सत्त्वप्रकृतिं विद्यात्पुरुषं स्त्रियमेव वा ॥ १० ॥
यदा आशिष आशास्य मां भजेत स्वकर्मभिः ।
तं रजः प्रकृतिं विद्याद्धिंसामाशास्य तामसम् ॥ ११

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पुनरपि सन्निपातं प्रपञ्चयति । प्रवृत्तिलक्षणो काम्यधर्मो यत्र पुंसो निष्ठा भवति तथा पुमान् यदा गृहाश्रमं परिनिष्ठितो भवेत् अनु निरन्तरं स्वधर्मं च नित्यनैमित्तिकं निष्ठत् सोऽपि समितिः सन्निपातः हि यस्मात् काम्यधर्मगृहासक्तिस्वधर्मा रजस्तमः सत्त्वमया इत्यर्थः ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मायामयो जीवः सृष्टिसंहारप्रवाहेणोह्यमानो निःश्रमाना- तिशयः सृष्टिसंहारप्रवर्त्तकस्त्वाहमित्युक्तं पूर्वाध्याये स जीवो मायाविनिर्मुक्तो भूत्वा त्वां केनोपायेन प्राप्नुयादित्याकाङ्क्षायां गुणविजयपूर्वकेन मद्भजनेन मां प्राप्नोतीत्याह पञ्चविंशे गुणानामिति । ते हि मिश्रीभूय स्थिताः सांमश्रास्तद्भिन्नानां प्रत्येकं विभक्तानामपि मध्ये येन गुणेन पुमान् यथा भवेत् तदिदं शंसतो वदतो मत्तः हे पुरुषर्षभ ! अभिकारिश्रेष्ठ निबोध ॥ १ ॥

प्रथमं सत्त्वादीनां गुणानां क्रमेण वृत्तीराह । शम इत्यादिना वृषादिः स्वार्जवमितयादिः ॥ २ ॥

काम इहाविषयभोगे इच्छा आशीः फलप्रापणादिविस्मया देवादिप्रार्थना भिदा स्वकीयेष्वपि वृत्त्यादिकामेन भेदबुद्धिः मदेनानवहितत्वादिकन दर्पयोत्साहः कामगर्वाभिनिवेशः बलेनाभिजनविद्यादिसामर्थ्येनोद्यमो न तु स्वधृतमार्गेण ॥ ३ ॥

क्लमः वृथाश्रमः कलिः वृथा कलहः विषादार्त्तौ दुःख- दैन्ये ॥ ४ ॥

सर्वेषामप्राया इत्यनेन अन्या अप्यूह्या इति सूचयन् विभ- क्तानां गुणानां वृत्तयो दर्शिताः अथ मिश्राणां ताः श्रोतव्य- माह । सन्निपातमिति । सन्निपातं मिश्रगुणकार्यम् ॥ ५ ॥

तमेवाह । सन्निपात इति त्रिभिः । अहमिति ममेति च मति- हेतुपूर्वकः त्रिगुणात्मैर्मनआदिभिर्यो व्यवहारश्च सन्निपातो मिश्रितगुणकार्यम मात्रा शरीरम् ॥ ६ ॥

असौ गुणनिष्ठो जीवः धर्मे सत्त्वस्यार्थे तमसः कामे रजसश्च कार्ये यदा परिनिष्ठितस्तदा त्रयाणां गुणानां सन्निकर्षः सन्निपातः कथम्भूतः श्रद्धारतिधनावहः श्रद्धां सत्त्वमयीं रतिं रजोमयीं धनं तमोमयमावहतीति स तथा श्रद्धादिविविध- फलक इत्यर्थः ॥ ७ ॥

प्रवृत्तिलक्षणे त्रिवर्गसाधने रजोमये गृहाश्रमे तमोमये स्वधर्मे सत्त्वमये यदानुतिष्ठत तदा समितिः सन्निपातः ॥ ८ ॥

भाषा टीका ।

श्री भगवान् उवाच भिन्न भिन्न गुणों के योगसे जिस से जैसा पुरुष हो जाता है हे पुरुषवर्य ! उद्धवजी मेरे कथन करने से तिस विषय को तुम श्रवण करो ॥ १ ॥

भीतर की इंद्रियों का रोकना शम बाहर की इंद्रियों का रोकना दम सहन शीलता विवेक अपने धर्म मे निष्ठा बातों का याद रखना सन्तोष खर्च ने की इच्छा वैराग्य आस्तिकता बुरे काम मे लाज दान देना आत्मा में ही सुखी होना ये सत्त्व गुण की वृत्ति हैं ॥ २ ॥

विषयों की अभिलाषा व्यापार दर्प असन्तोष गर्व अन्य विप्रार्थना भय से वहा भेद विषय भोग मदसे उत्साह यश मे प्रीति हँसना पुरुषार्थ दिखाना जबरदस्ती से उद्यम करना ये रजो गुणकी वृत्ति हैं ॥ ३ ॥

क्रोध लोभ झूंठ हिंसा माँगना धर्म का दिखाना परिश्रम करना लडाई करना शोक मोह विषाद दुःख निद्रा आशा भय आलस्य ए तमो गुण की वृत्ति हैं ॥ ४ ॥

इन तीनों श्लोक मे क्रम से सत्त्व रजः तम इन तीनों गुणों की वृत्ति प्रायः कर के वर्णन कर दी हैं अब तीनों गुणों मे जो सन्निपात है तिसको सुनो ॥ ५ ॥

हे उद्धव ! मैं हूं मेरा है यह जो मति है सोइ सन्निपात है मन तथा शब्दादिक इंद्रियों प्राणों से जो व्यवहार होता है वह भी सन्निपात का ही है ॥ ६ ॥

जब कोई मनुष्य धर्म या काम मे स्थित होता है वहीं गुणों का सन्निकर्ष है तिस मे सत्त्व से श्रद्धा रज से रति तम से धन ये प्राप्त होते हैं ॥ ७ ॥

जब मनुष्य को प्रवृत्ति धर्म मे इच्छा होवे तब गृहस्थाश्रम मे यदि आसक्त होकर रहे सो फिर स्वधर्मों का भी अनुष्ठान करे तो उसका नाम भी गुणों का सन्निपात है ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवं भिन्नाभिन्नगुणवृत्तीः प्रदर्श्येदानीं पुमान्येन भवेदिति यदुक्तं तद्दर्शयति । पुरुषमिति त्रिभिः ॥ ९ ॥ १०

हिंसां शत्रुमरणादिकमाशास्य यो भजेत्तं तामसं विद्यात् एतैर्गुणैरेवंभूतो भवतीति तात्पर्यार्थः ॥ ११ ॥

सत्त्वं रजस्तम इति गुणा जीवस्य नैव मे ।
चित्तजा यैस्तु भूतानां सज्जमानो निबध्यते ॥ १२ ॥
यदेतरौ जयेत्सत्त्वं भास्वरं विशदं शिवम् ।
तदा सुखेन युज्येत धर्मज्ञानादिभिः पुमान् ॥ १३ ॥
यदा जयेत्तमः सत्त्वं रजः सङ्गं भिदा चलम् ।
तदा दुःखेन युज्येत कर्मणा यशसा श्रिया ॥ १४ ॥
यदा जयेद्रजः सत्त्वं[1] तमो मूढं लयं जडम् ।
युज्येत शोकमोहाभ्यां निद्रया हिंसयाऽऽशया ॥ १५ ॥
यदा चित्तं प्रसीदेत इन्द्रियाणां च निर्वृतिः ।
देहेऽभयं मनोऽसङ्गं तत्सत्त्वं विद्धि मत्पदम् ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु तथापि गुणबन्धेन कर्तृत्वाभिनिवेशात्मकेन विशेषेण त्वं सेव्यो जीवस्तु सेवक इति नियमो यतो मां भजेतेति चारं वारमुच्यते तत्राऽऽह । सत्त्वमिति । जीवस्यैव न मे कुतः यत चित्तजाः जीवोपाधौ चित्तेऽभिव्यज्यन्तेऽतो यैः स एव बध्यते कीदृशः भूतानां देहरूपाणामन्येषां च मध्ये सज्जमानः अहं त्वसज्जमानो गुणनियन्तृत्वेन सृष्ट्यादिकर्ताऽपि नित्यमुक्तोऽतो महाविशेष इति भावः । यद्वा भूतानामपञ्चीकृतानां यत्कार्यभूतं चित्तम् "अन्नमयं हि सोम्य ! मन" इति श्रुतेः तत्प्रभवाः अतो भूतोपहितस्य जीवस्यैवेति व्याख्यानम् ॥ १२ ॥

तदेवं मिश्रामिश्रगुणकार्याणि प्रदर्श्येदानीमेकैकगुणोद्रेककार्याणि दर्शयति । यदेति सप्तदशभिः । यदेतरौ गुणौ जयेत् अभिभवेत् भास्वरं प्रकाशकम् विशदं स्वच्छं शिवं शान्तं शिवत्वविशदत्वभास्वरत्वानां यथाक्रमं सुखधर्मज्ञानहेतुत्वात्तदा तैर्युज्येत आदिशब्दाच्छमदमादिभिश्च ॥ १३ ॥

तमः सत्त्वं च कर्मभूतं रजः कर्तृ सङ्गं सङ्गहेतुः भिदा भेदहेतुः चलं प्रवृत्तिस्वभावमतः सङ्गहेतुत्वाद्यशसा श्रिया युज्यते तत्कामः पुमान् भवतीत्यर्थः । भिदा हेतुत्वाद्दुःखेन युज्येत "द्वितीयाद्वै भयं भवति" इति श्रुतेः चलत्वात्कर्मणा युज्येत ॥ १४ ॥

यदा रजः सत्त्वं च कर्मभूतं तमः कर्तृ जयेत् मूढं विवेकध्वंसकं लयमावरणात्मकं जडमनुद्यमात्मकमतो मूढत्वाच्छोकमोहहिंसाभिलयत्वान्निद्रया जडत्वादुद्यमाभावेन केवलमाशया युज्येतेति द्रष्टव्यम् । जन इति पाठे लयात्मकमेव निद्राख्यो हेतुः ॥ १५ ॥

किं च । यदा चित्तं प्रसीदेत स्वच्छं भवेत् निवृत्तिरुपरतिः तदाऽऽत्मसत्त्वं मदुपलब्धिस्थानं सत्त्वमुद्रिक्तं विद्धि ॥ १६ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी

अनुमीयादित्यत्रायं प्रयोगः अयं सात्त्विकः शमादिमत्त्वात् । अयं राजसः कामादिमत्त्वात् । अयं तामसः क्रोधादिमत्त्वादिति ॥ ९ ॥

स्वरूपतो मत्कीर्तेर्निर्गुणत्वेऽपि सात्त्विकधर्मसम्बन्धात् सत्त्वप्रकृतिमित्युक्तमेवं परत्रापि ज्ञेयम् । आशिषो राज्यादिभोगान् आशास्य सङ्कल्प्य अन्येषां शब्दादिविषयरूपेण परिणतानां मध्ये नैष्ठिक्यर्थः । मय्य इत्यत्राहुतं ननु निष्कामार्पणं खेनसाधेतनयोः साम्राज्यायोगात् ॥ १० ॥ ११ ॥

गुणनियन्तृत्वेनेति । चिच्छक्त्या मायायुक्तामित्यर्थः । तदुक्तं श्रीमदर्जुनेन । मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि इति । अतश्चिच्छक्तिवैशिष्ट्यात् जीवादस्यैव महान् भेद इत्यर्थः । पूर्वार्थे सज्जमान इत्यनेनैव चरितार्थत्वे भूतानामित्यधिकत्वादपुर्वार्थमतो । यद्वेति । अन्नमयं पृथिवीप्रधानम् । तत्प्रभवाः भूतकार्यचित्तप्रजाताः अतो भूतकार्यचित्तजत्वात् ॥ १२ ॥

धर्मज्ञानाद्यादिपदस्य व्याख्या । शमादिभिः । तैः सुखादिभिः ॥ १३ ॥

अतो विशेषणत्रयनिर्देशस्त्वात् । तत्तत्कामो यथा श्रीकामः यस्य देहगेहाद्यासक्तिस्तस्यैव यशआदि कामना नान्यस्येत्यर्थः ॥ १४ ॥

अतो मूढत्वादिविशेषणात् मूढत्वाद्विवेकध्वंसकत्वात् शोकोऽनुतापः मोहोऽभिनिवेशः हिंसा तमसा परपीडनं नाभियुञ्ज्येत तदादीनां तमःकार्यत्वात् । निद्रया ज्ञानावरणया तमोवृत्त्या तमसा प्रच्छन्ने पुंस्त्वे ज्ञानाभावे कृतमित्युक्तः । आशया इदं मे भविष्यतीति तृष्णया धर्मकर्मणा व्याख्यातत्वादुदुद्यमित्युक्तम् । जडमित्यत्र जन इति पाठान्तरम् ॥ १५ ॥

गुणानामन्योऽन्यमिथुनत्वादुद्रिक्तमित्यध्याहृतम् ॥ १६ ॥

१ तमो मूढो लयो जनः इति० चि० पाठः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

रजस्तमः सत्त्वगुणो जयेत् रजःस्वभावमाह। सङ्गेति। भिन्नसङ्गकारिभेदकारि चपलताकारि च ॥ १४ ॥

तमोगुणो रजः सत्त्वगुणौ जयेत् आवृत्या अतिलुब्धया मूढमितत्वेन तमः स्वभावो दर्शितः ॥ १५ ॥

यदा चित्तं प्रसन्नमिन्द्रियाणां निर्वृतिराह्लादश्च देहे अभयं मनः असङ्गं च भवति तदा तन्मत्पदं मत्स्थानं सत्त्वं विद्धि ॥१६॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तदेवममिश्रा मिश्राश्च गुणवृत्तीः प्रदर्श्य इदानीं पुमान् प्राधान्येन व्यपदेशा भवन्तीति न्यायेन स गुणेन यथा भवेदिति यदुक्तं तद्दर्शयति। पुरुषमिति ॥ ९ ॥

पुरुषगुणयोगेन तत्र तत्र भक्तिरपि सगुणा तिष्ठेदित्याह। यदेति द्वाभ्याम् ॥ १० ॥

हिंसा शत्रुमारणादिकम् ॥ ११ ॥

ननु तथापि सृष्ट्यादिकर्तृत्वेन गुणवत्त्वाविशेषात् केन विधेयत्वं सेव्यो जीवः सेवक इति नियमः यतो मां भजेतेति श्रुतिर्वे तत्राह। न त्वामिति। गुणा बन्धका जीवस्यैव न तु मे कुतः यतश्चित्तजाः जीवोपाधौ चित्तेऽभिव्यक्तत्वात्तत्र जाताः भूतानामिति सप्तम्यर्थे षष्ठी। वैगुण्यभूतभौतिकेषु देहदैहिकेषु सज्जमानो जीव एव निबध्यते अहं स्वभावसज्जमानगुणनियन्तृत्वेन सृष्ट्यादिकर्तापि नित्यमुक्तः अतो महान् विशेष इति भावः ॥ १२ ॥

किञ्च। त्रिगुणमये जीवे गुणाः परस्परं बाध्यबाधकभावेनैव तिष्ठन्ति तथा सति जीवस्य यादृशी दशा स्यात्तामाह। यदेति त्रिभिः। सत्त्वं कर्तृ यदा इतरौ रजस्तमोगुणौ जयेत् अभिभवेत् भास्वरं प्रकाशकं विशदं स्वच्छं शिवं शान्तं शिवत्वशिवदत्वभास्वरत्वांशं यथाक्रमं सुखधर्मज्ञानहेतुत्वाद्वा तैः सुखादिभिरेव युज्येत भादिशब्दात् शमदमादिभिश्च ॥ १३ ॥

तमः सत्त्वं कर्मभूतं रजः कर्तृ यदा जयेत् सङ्गं सङ्गहेतुः भिदा भेदहेतुः। चलं प्रवृत्तिस्वभावं तदा भिदाहेतुत्वाद्दुःखेन युज्यते द्वितीयाद्वै भयं भवतीति श्रुतेः। चलत्वात् कर्मणा सङ्गहेतुत्वात् यशसा श्रिया च युज्येत तदा तत्कामः पुमान् भवतीत्यर्थः ॥ १४ ॥

रजः सत्त्वञ्च कर्मभूतं तमः कर्तृ यदा जयेत् मूढं विवेकभ्रंशकं स्वभावरणात्मकं जडमनुद्यमात्मकं तदा मूढत्वाच्छोकमोहादिभिः। स्वपत्यादिनिद्रया जडत्वानुद्यमाभावेन केवलमाशया युज्येत। तत्रोत्तरग्रन्थस्वाध्यायमनुसृत्य तत्तत्कालेऽपि तत्तद्गुणात्मको जीवः। तथा यदा केवलं भक्त्या गुणातीतं चित्तं स्यात्तदा निर्गुणेन प्रेमानन्देन युज्येतेत्येवमग्रेऽपि व्याख्यानञ्च ज्ञप्तव्यमेव ॥ १५ ॥

तदेवं वर्तमानो गुणो बाधको भवति यदा तदा श्रीयो वाच्यावित्तमतत्त्व इदानीं केन केन बलयेन कः को गुणो वर्ध-

मानो ज्ञेय इत्याह। यदेति त्रिभिः। प्रसीदेत् स्वच्छं भवेत् निर्वृतिर्दुःखयत्नश्रममैक्यं मनः सङ्गरहितमनासक्तं स्यात्तदा सत्त्वमुद्रिक्तं विद्धि मत्पदर्मापि मत्प्राप्तौ पदं व्यवसायो यस्मात्तत् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यदुक्तं पुमान् येन यथा भवेदिति तदाह। पुरुषमिति त्रिभिः ॥ ९ ॥ १० ॥

आशिषः फलानि हिंसा प्राणिपीडा ॥ ११ ॥

बन्धकत्वनिवर्तकभूतयोर्भक्तभजनीययोरन्योऽन्यविलक्षणधर्मवत्त्वमाह। सत्त्वमिति। सत्त्वाद्याः गुणाः प्रकृतिगुणाः जीवस्यैव यतो जीवस्यैव व्यामोहकतया चित्ते जायन्ते वैगुण्यभूतानां मनुष्यादीनां मध्ये सज्जमानो जीवो निबध्यते ॥ १२ ॥

एवं विभक्तानामविभक्तानां च गुणानां कार्याणि प्रदर्श्याधुनैकैकगुणोद्रेककार्याण्याह। यदेति त्रिभिः। सत्त्वं प्रयोज्यकर्तृप्रकृतिमित्यर्थः। एवमग्रेऽप्यूह्यम्। तत्प्रयोजकः पुमान् सुखादिभिर्युज्येतेति उत्तरत्रापि योज्यम् जयेदभिभवेत् भास्वरं यावदर्थप्रकाशकम् विशदन्निर्मलम् शिवकल्याणावहम् ॥ १३ ॥

रजः इतरौ जयेत् सङ्गमासक्तिमूलं भिदा शत्रुमित्रादिभेदेन चलमस्थिरम् आसक्तिमूलत्वाद्दुःखेन कर्मणा चपलत्वाद्यशसा आशया च ॥ १४ ॥

तमः इतरौ जयेत् मूढमविवेकित्वापादकम् स्वभावनाशकत्वापादकम् जडं पारतन्त्र्यापादकम् ॥ १५ ॥

सत्त्वाद्युद्रेकज्ञापकान्याह। यदेति त्रिभिः। यदा चित्तं प्रसीदेत मद्गुणादि चिन्तनाद्यैर्निद्रां जयेत इन्द्रियाणां वागादीनां निर्वृतिः मद्गुणकथनादौ सुखं भवेत् देहेऽभयम् भयहेतुः भूतोऽहंपुरुषः कृतचक्रधारीत्यादिश्रुतिप्रोक्तं भक्तिरूपं च भवेत् मनोऽसङ्गं सर्वसङ्गत्यागपूर्वकं मन्निष्ठं भवेत् तदा मत्पदम् तदा मत्पदप्रापकमत्त्वमुद्रिक्तं विद्धि जानीहि ॥ १६ ॥

---

भाषाटीका।

शमादिक गुणों को देखकर सत्त्वगुण वाला पुरुष है ऐसा अनुमान करना चाहिये कामादि कों से रजोगुणी जाने क्रोधादिकों से तमोगुणी जाने ॥ ९ ॥

जब निष्काम होकर भक्ति से मेरे को भजता है जो तिस को सत्त्व गुण वाला जाने वह स्त्री होवे वा पुरुष होवे ॥ १० ॥

जब किसी मनोरथ को करके अपने कर्मों से मेरे को भजे तो उसको राजस जाने किसीकी हिंसा विचार कर मेरा भजन करे तो उसको तामस जानना ॥ ११ ॥

सत्त्व रज तम ए तीनों गुण जीव के हैं मेरे नहीं

विकुर्वन् क्रियया चाधीरनिर्वृत्तिश्च चेतसाम् ।
गात्रास्वास्थ्यं मनो भ्रान्तं रज एतैर्निशामय ॥ १७ ॥
सीदच्चित्तं विलीयेत चेतसो ग्रहणेऽक्षमम् ।
मनो नष्टं तमो ग्लानिस्तमस्तदुपधारय ॥ १८ ॥
एधमाने गुणे सत्त्वे देवानां बलमेधते ।
असुराणां च रजसि तमस्युद्धव ! रक्षसाम् ॥ १९ ॥
सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत् ।
प्रस्वापं तमसा जन्तोस्तुरीयं[1] त्रिषु सन्ततम् ॥ २० ॥
उपर्युपरि गच्छन्ति सत्त्वेन ब्राह्मणा जनाः ।
तमसाऽधोऽध आमुख्याद्रजसाऽन्तरचारिणः ॥ २१ ॥
सत्त्वे प्रलीनाः स्वर्यान्ति नरलोकं रजोलयाः ।
तमोलयास्तु निरयं यान्ति मामेव निर्गुणाः ॥ २२ ॥
मदर्पणं निष्फलं वा सात्त्विकं निजकर्म तत् ।
राजसं फलसङ्कल्पं हिंसाप्रायादि तामसम् ॥ २३ ॥
कैवल्यं सात्त्विकं ज्ञानं[2] रजो वैकल्पिकं च यत् ।
प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् ॥ २४ ॥

भाषा टीका ।

चित्त से उत्पन्न होते हैं जिनसे आसक्त होने से मनुष्य बंधन को प्राप्त हो जाता है ॥ १२ ॥

जब प्रकाश मान निर्मल सखरूप सत्व गुण दूसरे दोनों गुणों को जीतकर दबा देता है तब पुरुष सुख धर्म ज्ञानादिक गुणों से युक्त होजाता है ॥ १३ ॥

जब रजो गुण जो है सो तमो गुण सत्व गुण को जीत लेता है तब सङ्ग आसक्ति भेद बचका हेतु होने से कर्म यश भी दुःख इन से मनुष्य युक्त होजाता है ॥ १४ ॥

जब तमो गुण होता है मोहका अज्ञान आलस्य का हेतु होने से मनुष्य शोक मोह निद्रा हिंसा आशा इन से युक्त हो जाता है ॥ १५ ॥

जिस वखत चित्त प्रसन्न हो जावे सब इंद्रियभी शांति को प्राप्त होजावे देह मे निर्भयता होजावे मन मे आसक्ति नह है उसको सत्व जानो वह मेरे स्थान की प्राप्ति करने वाला है ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यदा पुनः क्रियया विकुर्वन् विकारं प्राप्नुवन् आधीर्भवति आसमंताद्विक्षिप्ता धीर्यस्य सः चेतसां बुद्धीन्द्रियाणामनिर्वृति-रनुपरतिः गात्राणि कर्मेन्द्रियाणि तेषामस्वास्थ्यं विकारा[illegible] मनो भ्रान्तं चञ्चलं तदा रज उत्कटं निशामय जानी-हीति ॥ १७ ॥

यदा सीदच्चित्तोऽमनश्चेतसो ग्रहणे चिदाकारपरिणामेऽक्षमं सच्चित्तं विलीयेत मनोऽपि सङ्कल्पात्मकं नष्टं लीनं तमोऽज्ञानं ग्लानिर्विषादश्च भवति तत्तदा तम उत्कटमुपधार[illegible] विद्धि ॥ १८ ॥

किं च । एधमान इति । इन्द्रियाण्येव निवृत्तिप्रवृत्तिमोहरूपा-भावानि देवासुररक्षांसि । यद्वा । प्रसङ्गादाधिदैविकानां [illegible] नामुत्कर्षकार्यापयुक्तानीति ज्ञेयम् ॥ १९ ॥

गुणोत्कर्षतोऽवस्थाभेदं दर्शयति । सत्त्वादिति । प्रसङ्गान्निर्गु[illegible] वस्थामाह । तुरीयं चतुर्थमवस्थान्तरं नाम त्रिषु आत्मत्वा[illegible] सन्ततमेकरूपमात्मतत्त्वमेवेत्यर्थः ॥ २० ॥

गुणोत्कर्षद्वारेण तत्तत्कर्मफलनिष्ठां दर्शयति । उपर्युपरी[illegible] ब्राह्मणा वेदानुष्ठानयुक्ताः आब्रह्मण इति पाठे [illegible] व्याप्य आमुख्यात्स्थावरानभिव्याप्य अन्तरचारिणो मनुष्या एव भवन्ति ॥ २१ ॥

देहावुत्क्रान्तिकालीनगुणोत्कर्षफलमाह । सत्त्वे इ[illegible]

---

१ त्रिष्वसङ्गतम २ कर्मनिष्ठन्तु राजसम् इति वि० पाठः ।

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सत्त्व इति । सत्त्वे प्रवृद्धे सति प्रलीनाः मृताः स्वर्गं यान्ति रजोलयाः रजसि प्रवृद्धे सति लयो येषां ते तथा एवं तमोलयाः इत्यत्रान्वयः उपर्युपरि गच्छन्तीत्यनेन सत्त्वोल्लासानुसारमूर्ध्वगमनमित्युक्तं निरतिशयोल्लासे तु क यान्तीत्यत्राह । यान्ति मामेव निर्गुणा इति । अस्मिन् प्रकरणे निर्गुणशब्देनातिप्रवृद्धं सत्त्वमुच्यते अतीवोल्लसितं सत्त्वं गुणसम्बन्धविघातकम्—

सत्त्वं जरस्तम इति गुणा बुद्धेर्न चात्मनः ।
सत्त्वेनान्यतमौ हन्यात्सत्त्वं सत्त्वेन चैव हि ॥

इत्युक्तत्वात् अतोऽत्र निर्गुणशब्देन नैर्गुण्यावहनिरतिशयसत्त्वोल्लासदशाप्रलीना उच्यन्ते ते मामेव यान्तीत्यर्थः ॥ २२ ॥

एवं सत्त्वादिगुणानुसारिणो गतिभेदा उक्ताः अथ तदनुसारिणः कर्मज्ञानवासकर्तृश्रद्धाहारसुखभेदानाह । मदर्पणमिति । मय्यर्पणं यथा भवत्याज्ञाकृतपरत्वेन कृतमित्यर्थः । निष्फलं फलाभिसन्धिरहितं वा नित्यकर्म तत्सात्त्विकं यत्फलसङ्कल्पमभ्युदयफलवत्तद्राजसं यद्धिंसाप्रायादि शत्रुहिंसाद्यभिसन्धिप्रचुरमादिशब्देन मात्सर्यादिसङ्ग्रहः तत्तामसम् ॥ २३ ॥

कैवल्यमिति । केवलमेव कैवल्यम् आरोपिताकारविधुरं यथावस्थिताकारगोचरमित्यर्थः । तज्ज्ञानं सात्त्विकं वैकल्पिकमारोपिताकारविषयं यत्तद्रजः तत्प्रयुक्तमित्यर्थः । यत्तु प्राकृतं किञ्चिदित्यविभक्तविषयं तत्तामसं ज्ञानं मन्निष्ठं मय्येव निष्ठात्मकं मद्गोचरं निर्गुणमत्युद्रिक्तसत्त्वप्रचुरम् ॥ २४ ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

क्रियया विकुर्वन् भवति चेतसो विषयादनिवृत्तिश्च भवति गात्राणामालस्यं शरीरावयवानां विजृम्भणाम् एतैर्लिङ्गैरिदं रज इति निशामय पश्य ॥ १७ ॥

तमोगुणवर्तनप्रकारं रूपयति । सीददिति । यदा चित्तं स्मरणाकारणम् अन्तःकरणं सीदत् नश्यत् अथवा विलीयते चेतसो ग्रहणे वस्तुस्मरणाशक्तमचेतनाया ग्रहणे अक्षममसमर्थं मनो नष्टं भवति तमः अज्ञानं ग्लानिर्ग्लानता च भवति तदा तमोगुणवर्तनमुपधारय ॥ १८ ॥

बुभुक्षुणा सत्त्वमेव सेवनीयमिति भावेनाह । एधमान इति ॥ १९ ॥

तुरीयमवस्थास्वरूपं त्रिषु गुणेष्वसङ्कृतं सत्त्वजं न भवति ॥ २० ॥

इतोऽपि सत्त्वमेव श्रेयःसाधनमित्याह । उपरीति । आब्रह्मणो ब्रह्मलोकपर्यन्तम् आमुख्यादन्धं तमः पर्यन्तमन्तरचारिणः स्वर्गादौ चरन्ति ॥ २१ ॥

सत्त्वे सत्त्वगुणप्रवृद्धौ प्रलीनाः मृताः स्वर्गं रजसि प्रवृद्धे लयो येषां ते रजोलयाः तमोलयाः इत्येतदनेन व्याख्यातं निर्गुणास्तमसादिगुणानभिभूता आत्यन्तिकभक्तिसाधनाः ॥२२॥

वाशब्दश्चार्थे मदर्पणत्वेन निष्फलत्वेन फलानुसन्धानराहित्येन वा कर्म [illegible] नित्यं वा यथोक्तविधिविहितं [illegible] सात्त्विकं कर्म ॥ २३ ॥

गुणनिमित्तकर्मभेदं निरूप्य ज्ञानभेदमाह । कैवल्यमिति । कैवल्यं केवलं यथाशास्त्रं प्रतिपादितं तत्त्वं तद्विषयं ज्ञानं केवलं केवलमेव कैवल्यं ज्ञानं सात्त्विकम् अग्निष्टोमादिकर्मनिष्ठं प्राकृतं बहिर्मुखजनप्रियं वैषयिकं निर्गुणं मुक्तिसाधनं तदुक्तं

नैर्गुण्यसाधनं यत्तन्निर्गुणं परिकीर्तितमिति ।
यथा शास्त्रोक्तविज्ञानं केवलं ज्ञानमुच्यते ॥
स्वरुच्या शास्त्रानुकूल्याद्दृष्टानां तु भक्तितः ।
गुणानां तु हरौ भावाविनिश्चित्य तदाश्रयात् ॥
यथा शास्त्रानुसन्धानं ज्ञानं च हरिसंश्रयम् ॥

इति च ॥ २४ ॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मदर्पणं मयि अर्पणं यस्य तत् उत्तमत्वात् मदर्पितमित्यर्थः । निष्फलं सत्त्वगुणमयं निष्कामत्वेनैव कृतमित्यर्थः निजकर्म स्ववर्णाश्रमादिधर्मः ॥ २३ ॥

केवलस्य निर्विशेषस्य ब्रह्मणः शुद्धजीवभेदेन ज्ञानं कैवल्यं त्वंपदार्थमात्रज्ञानस्य कैवल्यानुपपत्तेः तत्पदार्थज्ञानसापेक्षत्वात् सत्त्वयुक्ते हि चित्ते प्रथमतः शुद्धं सूक्ष्मं जीवचैतन्यं प्रकाशते ततस्तदेकाकारताभेदेन तस्मिन् शुद्धं पूर्णं [illegible] तन्मयत्वमनुभूयते ततः सत्त्वगुणस्यैव तत्र कारणतात्सात्त्विकत्वं तथा च श्रीगीतोपनिषदः सत्त्वात्संजायते ज्ञानमिति भगवज्ज्ञानस्य तु देवानां शुद्धसत्त्वानामित्यादि मुक्तानामपि सिद्धानामित्याद्युक्त्या सत्त्वादिसद्भावेऽप्यभावात् रजस्तमःस्वभावस्येत्याद्युक्त्या वा तदभावेऽपि वृत्रासुरस्य सद्भावात् न तत्कारणकत्वं किन्तु तद्गुणत्वेन तस्य पूर्वजन्मनि श्रीनारदादिसङ्गश्रवणतया नैषां मतिस्तावदुरुक्रमाङ्घ्रिमित्याद्युक्त्या च भगवत्कृपापरिमलपात्रभूतस्य श्रीमतो महतः सङ्ग एव कारणं तस्मात्सङ्गस्य तुलयाम लवेनापीत्याद्युक्त्या निर्गुणावस्थातोऽप्यधिकत्वात्परमनिर्गुणा एव सत्तमे च समः प्रियः सुहृदित्यादौ सगुणा देवादौ तस्य कृपायास्तथा न भवति किन्तु श्रीमन्नारदादिष्वेवेति प्रतिपादनात् महतां निर्गुणत्वाभिव्यक्त्या तत्सङ्गस्यापि निर्गुणत्वं व्यक्तं तथा भक्तेरपि गुणसङ्गनिर्मुक्त[illegible]तरं चानुवृत्तिः श्रूयते तस्मादिदमिमं बहुवर्णाद्याद्यौ परमेश[illegible]ज्ञानस्य नैर्गुण्यहेतुत्वेन निर्गुणत्वोक्तिरस्तु [illegible] तथा कैवल्यज्ञानस्यापि नैर्गुण्यहेतुत्वाद्वैशिष्ट्ये[illegible] वृत्तिश्च स्यात् तस्मात्तत एव निर्गुणं भगवज्ज्ञानम् [illegible] विशेषो भक्तिसन्दर्भे दृश्यः ॥ २४ ॥

———

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यदा क्रियया विकुर्वन् विकारं प्राप्नुवन् धीः [illegible] ता नानापदार्थगतत्वेन विक्षिप्ता धीर्यस्य तथाभूतो [illegible]

वनं तु सात्त्विको वासो ग्रामो राजस उच्यते ।
तामसं द्यूतसदनं मन्निकेतं तु निर्गुणम् ॥ २५ ॥
सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः ।
तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥ २६ ॥
सात्त्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी ।
तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणा ॥ २७ ॥
पथ्यं पूतमनायस्तमाहार्यं सात्त्विकं स्मृतम् ।
राजसं चेन्द्रियप्रेष्ठं तामसं चार्तिदाशुचि ॥ २८ ॥
सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम् ।
तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम् ॥ २९ ॥
द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकः ।
श्रद्धाऽवस्थाकृतिर्निष्ठा त्रैगुण्यः सर्व एव हि ॥ ३० ॥
सर्वे गुणमया भावाः पुरुषाव्यक्तधिष्ठिताः ।
दृष्टं श्रुतमनुध्यातं बुद्ध्या वा पुरुषर्षभ ! ॥ ३१ ॥
एताः संसृतयः पुंसो गुणकर्मनिबन्धनाः ।
येनेमे निर्जिताः सौम्य ! गुणा जीवेन चित्तजाः ॥ ३२ ॥

भाषा टीका ।

ऊपर ऊपर के लोकों में जाते हैं तमोगुण से नीचे नीचे स्थावरों तक जाते हैं रजो गुण से मध्य में विचरते हैं ॥२१॥

सत्वगुण में मरने से स्वर्ग को जाते हैं रजोगुण में मरने वाले पुरुष मनुष्य लोक में रहते हैं तमोगुण में मरने से नरक में जाते हैं निर्गुण पुरुष तो मेरे को ही प्राप्त होते हैं ॥ २२ ॥

मेरे में अर्पण करके निष्काम जो निजकर्म किया वह सात्विक कर्म है फलके संकल्प से जो किया सो राजस है हिंसा प्रायादि जो कर्म सो तामस है ॥ २३ ॥

केवल आत्म विषयक जो ज्ञान सो सात्विक है देहादि [illegible] से जो ज्ञान सो रजो गुण का है बालकादिसदृश का [illegible] ज्ञान सो तामस है मेरी निष्ठा वाला ज्ञान निर्गुण है ॥२४॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

वनं विविक्तत्वात्सात्त्विको वासः मन्निकेतनं तु साक्षात्तदाविर्भावान्निर्गुणं स्थानम् ॥ २५ ॥

कारकः कर्ता असङ्गी अनासक्तः रागान्धोऽभिनिवेशवान् स्मृतिविभ्रष्टोऽनुसन्धानशून्यः मदपाश्रयो मदेकशरणः स हि निरहङ्कारत्वान्निर्गुणः ॥ २६ ॥

अधर्मे धर्म इति या श्रद्धा ॥ २७ ॥

पथ्यं हितम् पूतं शुद्धम् अनायस्तमनायासेन प्राप्तम् आहार्यं मद्यमांसादि इन्द्रियाणां प्रेष्ठं भोगकाले सुखदं कटु[illegible] [illegible]णादि आर्तिदाशुचि दैन्यकरमशुद्धं च [illegible] निर्गुणमित्यभिप्रेतम् ॥ २८ ॥

आत्मोत्थं सुखम् मदपाश्रयमित्यपि स्वस्वरूपपदार्थविषय[illegible] त्वेन ज्ञानवदेव द्रष्टव्यम् ॥ २९ ॥

उक्तं संसारहेतुभूतं त्रैगुण्यमुपसंहरति द्वाभ्याम् । द्रव्यं पथ्यपूतादि देशो वनग्रामादिः फलं सात्त्विकं सुखमित्यादि काले यदा भजेत मां भक्त्या [illegible] ज्ञानं कैवल्यं सात्त्विकं ज्ञानमित्यादि कर्म मदर्पणमित्यादि [illegible] सात्त्विकः कारकोऽसङ्गीत्यादिः श्रद्धा सात्त्विक्याध्यात्मिकी[illegible] अवस्था सत्त्वाज्जागरणमित्यादिः आकृतिरुपर्युपरि ग[illegible] त्यादिनोक्ता देवत्वादिरूपा निष्ठा [illegible] [illegible] दिनोक्तः स्वर्गादि. एवं सर्वोऽप्ययं भावस्त्रैगुण्या[illegible] त्मकः ॥ ३० ॥

न केवलमेत एव किं तु यावन्तः पुरुषाव्यक्ता[illegible] ते सर्वे भावा गुणमया एव तत्प्रपञ्चः । दृष्टमिति ॥ ३१ ॥

इदानीमुक्तं त्रैगुण्यस्य संसारहेतुत्वमनुवदन् [illegible] माह । एता इति सार्धेन । येन निर्जिताः स [illegible]

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ज्ञानविज्ञानयोः सम्भवो यस्मिन् तमिमं देहं लब्ध्वा गुणसङ्गं विनिर्धूय मां भजन्ति सेवन्ते ॥ ३३ ॥

गुणजयपूर्वकं भजनप्रकारमाह। निःसङ्ग इति सार्द्धेन। सात्त्विकान्येव सेवेत पुमान् सत्त्वविवृद्धये इत्युक्तया रजस्तमश्च अभितः बाह्याऽभ्यन्तरतो जयेत् नैरपेक्ष्येण सत्त्वफलभूते देवादिभावे निरपेक्षतया सत्त्वमपि अभिजयेत् एवं निःसङ्गः सर्वतो विरक्तः विद्वान् ज्ञानवान् अत एव युक्तः भजनयोग्यः शान्त उपासीतेति श्रुतेः शान्तधीः मां भजेत् ॥ ३४ ॥ ३५ ॥

एवम्भूतेन भजनेन मां प्राप्नोतीत्याह। सम्पद्यत इति सार्द्धेन। जीवं लिङ्गशरीरं विहाय मां सम्पद्यते ननु मुक्तो जीवस्त्वत्तो भिन्नोऽभिन्नो वाऽवतिष्ठत इत्यत आह। जीव इति। आशयसम्भवैरन्तःकरणोद्भवैः रागद्वेषादिभिः जीवेन लिङ्गशरीरेण च निर्मुक्तः न बहिः न भिन्नः नान्तरः नाभिन्नः मा्द्भिन्नाभिन्नस्वरूपः। अतो भिन्नाभिन्नत्वे हेतुमाह। मयैव ब्रह्मणा सर्वात्मना पूर्णः सम्पन्नः वृक्षेण फलमिव सूर्येण प्रभेव अग्निना विस्फुलिङ्गमिव ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे पञ्चविंशाध्यायार्थप्रकाशः ॥ २५ ॥

### भाषा टीका।

जो पुरुष भक्तियोग से मेरे में निष्ठा करता है वह मेरे को प्राप्त होता है जिससे ज्ञान विज्ञान को पैदाकरने वाले इस देहको प्राप्त होकर मेरे को भजे ॥ ३३ ॥

चतुर पुरुष गुणों की आसक्तिको छोड़कर मेरे को भजते हैं इसी से विद्वान् पुरुष निःसङ्ग होकर जितेन्द्रिय होकर मेरे को भजे ॥ ३४ ॥

मुनि पुरुष सत्त्व गुणकी सेवा करने से रजोगुण तमो गुण को जीतलेता है शांत बुद्धि होने से मुक्त होने से निरपेक्ष होनेसे सत्त्व को भी जीत लेता है ॥ ३५ ॥

इस प्रकार जीवात्मा गुणों से मुक्त होकर लिंग शरीर को छोड़कर मेरे को प्राप्त होता है जब जीव अन्तःकरण मे उत्पन्न होने वाले देहगुणों से छूटजाता है फिर बाहर वा भीतर विषयों को नहीं स्मरण करता है तबतो केवल ब्रह्म मेरे ध्यानहीं मे मग्न हो रहता है ॥ ३६ ॥

इति श्रीमद्भागवत महापुराण एकादशस्कन्ध पचीस में अध्याय की पं० लक्ष्मणाचार्यकृत भाषा टीका समाप्त ॥ २५ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे पञ्चविंशोऽध्यायः ॥ २५ ॥



# अथ षड्विंशोऽध्यायः ।

———:*:———

श्रीभगवानुवाच ॥

मल्लक्षणमिमं कायं लब्ध्वा मद्धर्म आस्थितः ।
आनन्दं परमात्मानमात्मस्थं समुपैति माम् ॥ १ ॥
गुणमय्या जीवयोन्या विमुक्तो ज्ञाननिष्ठया ।
गुणेषु मायामात्रेषु दृश्यमानेष्ववस्तुतः ॥
वर्तमानोऽपि न पुमान् युज्यतेऽवस्तुभिर्गुणैः ॥ २ ॥
सङ्गं न कुर्यादसतां शिश्नोदरतृपां क्वचित् ।
तस्यानुगस्तमस्यन्धे पतत्यन्धानुगाऽन्धवत् ॥ ३ ॥
ऐलः सम्राडिमां गाथामगायत बृहच्छ्रवाः ।
उर्वशीविरहान्मुह्यन्निर्विण्णः शोकसंयमे ॥ ४ ॥
त्यक्त्वाऽऽत्मानं व्रजन्तीं तां नग्न उन्मत्तवन्नृपः ।
विलपन्नन्वगाज्जाये घोरे ! तिष्ठति विक्लवः ॥ ५ ॥
कामानतृप्तोऽनुजुषन्क्षुल्लकान् वर्षयामिनीः ।
न वेद यान्तीर्नायान्तीरुर्वश्याकृष्टचेतनः ॥ ६ ॥

ऐल उवाच ॥

अहो मे मोहविस्तारः कामकश्मलचेतसः ।
देव्या गृहीतकण्ठस्य नायुः खण्डा इमे स्मृताः ॥ ७ ॥
नाहं वेदाभिनिर्मुक्तः सूर्यो वाभ्युदितोऽमुया ।
मुषितो वर्षपूगानां बताहानि गतान्युत ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

षड्विंशे योगनिष्ठाया विघातो दुष्टसङ्गतः ।
साधुसङ्गेन तन्निष्ठा परा काष्ठेति वर्ण्यते ॥
योगिनो योगविध्वंसः सङ्गतः स्यमपेदिति ॥
सर्वथा तन्निवृत्त्यर्थमैलगीतं निरूप्यते ॥

निःसङ्गो मां भजेद्विद्वानप्रमत्तो जितेन्द्रिय इत्युक्तं तत्र विषयेऽमध्ये कथञ्चिज्जीवन्मुक्तस्यापि तर्हि सङ्गो दुर्वार इत्यनर्थः स्वानुभवाकृष्टोक्तानुवादपूर्वकं परिहरति सार्धाभ्याम् । मल्लक्षणं मत्स्वरूपं लक्ष्यते येन तमिमं नरदेहं लब्ध्वा मद्धर्मे भक्तियोगे आस्थितः सन्नात्मस्थमात्मन्येव नित्यमुक्तत्वेन स्थितं परमानन्दस्वरूपमात्मानं मां समुपैति सम्यक्प्राप्नोति ॥ १ ॥

न चैवंभूतस्य विषयसङ्गो नामास्तीत्याह । गुणमय्येति । गुणमयी या जीवयोनिर्जीवोपाधिस्तया विमुक्तो गुणेषु वर्तमानोऽपि तैर्न युज्यते सङ्गं न प्राप्नोति । अत्र हेतुः अवस्तुभिः नन्ववस्तुभिरप्यन्ये युज्यमाना दृश्यन्ते तत्राऽऽह । अवस्तुत्वेन दृश्यमानेषु ॥ २ ॥

तथाऽपि सङ्गं वर्जयेदित्याह । सङ्गमिति । असतां लक्षणमाह । शिश्नोदरे तर्पयन्तीति । शिश्नोदरतृपस्तेषां कश्चित्कदाचिदपि आस्तां तावद्बहूनां सङ्गः किं तु तदेकस्याप्यनुगोऽनुवर्ती अन्धमनुगच्छति योऽन्धस्तद्वत् ॥ ३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

वैक्लव्ये कारणमाह। कामानिति ॥ ६ ॥

कामप्रवृत्तचेतसो मम इमे आयुःखण्डा इमान्यायुःखण्डानि ॥ ७ ॥

अत्यन्तासक्तिमेवाह। नाहमिति। अभिनिर्मुक्तः सूर्येऽस्ते सति स्वपन् अभ्युदितः सूर्ये उदिते सत्यपि स्वपन्नहं सूर्यः अर्थं न वेद नाज्ञासिषं सूर्यं इति द्वितीयार्थे प्रथमा वेदेति भूतेऽपि लट् प्रथमपुरुषश्चार्षः—

सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ।

अंशुमानभिनिर्मुक्ताऽभ्युदितौ तौ यथा क्रममित्यमरः ॥

कुतो नाज्ञासीरत आह। अमुया उर्वश्या मुषितः अपहृतविवेकस्वरूपः इत्यर्थः। वर्तेति खेद वर्षपूगानां वर्षसमूहानाम् अहान्यपि न वेद ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

निःसङ्गो मां भजेद्विद्वानप्रमत्तो जितेन्द्रियः ॥

इत्युक्तं तदेव प्रपञ्चयति षड्विंशे। मल्लक्षणामिति। मदीयं रूपादिकं लक्ष्यते येन तमिमं कायं लब्ध्वा मद्विषयके ज्ञानवैराग्यसहिते भक्तियोगे आस्थितः आत्मानं चेतनं परमात्मविलक्षणमानन्दं मां च समुपैति सम्यग् प्राप्नोति जानातीत्यर्थः। यद्वा। "यद्विज्ञानेन सर्वं विज्ञातं भवति" इति श्रुतेः परमात्मानं मामित्यन्वयः ॥ १ ॥

एवं सुज्ञानतत्त्वस्य विषयाभिनिवेशो न भवतीत्याह। गुणमयीति सार्द्धेन ज्ञानविद्यया भावनभूतया विद्यया जीवयोन्या जीवस्य देहद्वारा जन्ममरणप्रवाहहेतुभूतया गुणमय्या तमोगुणकार्यभूतया विद्यया प्रमादमोहौ तमसो भवतोऽज्ञानमेव चेति वचनादज्ञानेनेत्यर्थः। विमुक्तः सन् एवाम्यन्तुतः वस्तुशब्दः तत्त्वस्वरूपत्वाबधकत्वाद्भ्रमत्वेन अहं ममाभिमानाविषयत्वेनेत्यर्थः। दृश्यमानेषु गुणेषु मायामात्रेषु प्रकृतिकार्येषु देहे आहारादिषु वर्तमानोऽपि वस्तुभिः सतुपादानकत्वात्सद्रूपैर्गुणैर्न युज्यते अहन्तां ममतां च न प्राप्नोति ॥ २ ॥

तत्सङ्गं वर्जयेदित्याह। सङ्गमिति। शिश्नोदरे तर्पयन्तीति शिश्नोदरतृपस्तेषां क्वचिदपि सङ्गं न कुर्यात् विपक्षे दोषमाह। तस्य सङ्गकर्तुः अनुगोऽपि तमस्यन्धे नरके अज्ञानबहुले तिर्यगादियोनौ वा पतति किं पुनः स पततीति वक्तव्यम्। तत्र दृष्टान्तमाह। अन्धानुगश्चासावन्धश्च अन्धानुगान्धस्तद्वत् ॥ ३ ॥

अत्रेतिहासमाह। ऐल इति। नवमस्कन्धोक्तप्रकारेण प्राप्तायाः उर्वश्याः विरहात् वियोगात् प्रथमं मुह्यन् पुनः कुरुक्षेत्रे प्राप्तायाः प्रोक्तेनोपायेन तल्लोकं प्राप्य शोकस्य सयमे अपगमे ततो निर्विण्णः सन्निमां गाथामगायतेति बोध्यम् ॥ ४ ॥

तन्मोहं दर्शयति। त्यक्त्वेति। आत्मानं नृपम् निक्कष्टः सन् नृपः हे घोरे! तिष्ठेत्यादि विलपन्नन्वगात् ॥ ५ ॥

वैक्लव्ये मूलमाह। कामानिति। वर्षाणां यामिनीः रात्रीः आकृष्टा चेतना यस्य सः ॥ ६ ॥

गाथामगायतेत्युक्तम् तां गाथामाह। अहो इत्यादिश्लोकैः इमे अहोरात्ररूपाः आयुःखण्डाः न स्मृताः ॥ ७ ॥

तदेवाह। नाहमिति। अमुया मुषितो अस्तङ्गतोऽस्तं सूर्योऽभिनिर्मुक्तोऽस्तङ्गतोऽभ्युदितो वा इति वर्षपूगानां नक्ताहानि च अपि न वेद न ज्ञातवानस्मि ॥ ८ ॥ ९ ॥

---

भाषा टीका।

श्री भगवान् उवाच मेरेको प्राप्त करने वाले इस मनुष्य शरीर को प्राप्त होकर प्राणी मेरे धर्म मे स्थिर रहै तब अपने हृदयमे स्थित परमानन्द स्वरूप परमात्मा मेरे को प्राप्त होजाता है ॥ १ ॥

ज्ञानमे निष्ठा के होने से त्रिगुण मय इस देवादि जीव योनि से छूट जाता है फिर दृश्यमान क्षणिक शब्दादि गुणों मे वर्त्तमान रहै तौभी अनित्य होने से उन शब्दादिक गुणों से बंधता नहीं है ॥ २ ॥

शिश्न तथा जीभ इंद्रिय के तृप्त करने वाले असत् पुरुषों का कभी संग न करै जो पुरुष उस दुष्टका संग करता है वह तो जैसे अन्धे के पीछे चलने वाला अन्धा कभी गढे मे गिरजाता है तैसे वहभी नरक मे गिर पड़ता है ॥ ३ ॥

उर्वशी के विरह से मोहित होकर शोकके शांति होने पर वैराग्य के होने से बड़ी कीर्ति वाले चक्रवर्ती पुरूरवा महाराजने इस गाथा का गान किया है ॥ ४ ॥

पुरूरवा राजाको अब उर्वशी छोड़कर चली तब राजा पागल सरीका नंगा होकर उसके पीछे दौड़ा और बड़ा अधीरज होकर विलापकर बोला हे क्रूर मेरी भार्ये! खड़ा रह ॥ ५ ॥

फिर अब ज्ञान भया तब बोले कि मै क्षुद्र कामों सेभी तृप्त न होकर सेवन करता रहगया मैने उर्वशी के मारे खिंचके खिंच जाने मे कईवर्षों की जाती आती हुई रातोंको नहीं जाना ॥ ६ ॥

ऐल उवाच अहो काम मे मेरा चित्त मोहित होगया है मैंने मोहके विस्तार को देखो इस उर्वशी देवीके कण्ठको ग्रहण कर के रहने से मैंने ए अपने अवस्था के खण्ड रातदिना के बीतते नहीं स्मरण किये ॥ ७ ॥

इस उर्वशीने मेरे मनको चुरा लिया तब मेरेको सूर्यका उदय तथा अस्त होना नहीं मालूम पड़ा अनेक वर्षों के अनेक दिन चले गये सो बड़े खेदकी बात होगई है ॥ ८ ॥

---

अहो मे आत्मसम्मोहो येनाऽऽत्मा योषितां कृतः ।
क्रीडामृगश्चक्रवर्ती नरदेवशिखामणिः ॥ ९ ॥
सपरिच्छदमात्मानं हित्वा तृणमिवेश्वरम् ।
यान्तीं स्त्रियं चान्वगमं नग्न उन्मत्तवद्रुदन् ॥ १० ॥
कुतस्तस्यानुभावः स्यात्तेज ईशत्वमेव वा ।
योऽन्वगच्छं स्त्रियं यान्तीं खरवत्पादताडितः ॥ ११ ॥
किं विद्यया किं तपसा किं त्यागेन श्रुतेन वा ।
किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम् ॥ १२ ॥
स्वार्थस्याकोविदं धिङ्मां मूर्खं पण्डितमानिनम् ।
योऽहमीश्वरतां प्राप्य स्त्रीभिर्गोखरवज्जितः ॥ १३ ॥
सेवतो वर्षपूगान्मे उर्वश्या अधरासवम् ।
न तृप्यत्यात्मभूः कामो वह्निराहुतिभिर्यथा ॥ १४ ॥
पुंश्चल्यापहृतं चित्तं कोऽन्वन्यो मोचितुं प्रभुः ।
आत्मारामेश्वरमृते भगवन्तमधोऽक्षजम् ॥ १५ ॥
बोधितस्यापि देव्या मे सूक्तवाक्येन दुर्मतेः ।
मनोगतो महामोहो नापयात्यजितात्मनः ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

येन सम्मोहेन आत्मा देहः क्रीडामृगवदधीनः ॥ ९ ॥

ननु प्रणयकुपितायास्तस्या अनुनयार्थमनुगमनं युक्तमेव सत्यम् नग्नस्य तदस्तीत्याह । सपरिच्छदं राज्यादिसहितमीश्वरं चक्रवर्तिनं तृणमिव त्यक्त्वा यान्तीमप्यन्वगममनुगतोऽस्मि ॥ १० ॥

किञ्च मम प्रभावाद्यभिमानो वृथैवेत्याह । कुतस्तस्य मे तेजःप्रभृति खरो यथा पादताडितोऽपि खरीमनुगच्छति । तद्वत् ॥ ११ ॥

एवम्भूतस्य सर्वं साधनं व्यर्थमित्याह । किमिति । त्यागेन सन्न्यासेन विविक्तेन एकान्तसेवया मौनेन वाङ्नियमेन ॥ १२ ॥

अनुतप्तः सन्नात्मानं निन्दति द्वाभ्याम् । स्वार्थस्येति । अकोविदमज्ञातारं गोखरवत् गौरिव खर इवेति ॥ १३ ॥

अधरासवं सेवमानस्याऽऽत्मभूर्मनसिजः पुनःपुनरुद्भवन् ॥ १४ ॥

एवमष्टभिर्निर्वेदो निरूपित इदानीं तस्य विवेकमाह द्वाभ्याम् । पुंश्चल्येति । अयं भावः कर्मभिर्देवानिष्ठा दुःखमेव प्राप्तोऽस्म्यतः परमेश्वरमेव भजेयमिति ॥ १५ ॥

परमेश्वरप्रसादं विना देवैरुपदिष्टादपि वेदवाक्यान्मोहो न निवर्तत इत्याह । बोधितस्यापीति । देव्या उर्वश्या सूक्तवाक्येन यथार्थवचनेन । पुरूरवो मा मृथा माप्रतप्तो मा त्वा वृकासो मांशिवास उक्षन् । न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता" इत्यनेन ॥ १६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

आत्मसंमोहो मनोमोहः । योषितां क्रीडामृगः कृत इत्यन्वयः ॥ ९ ॥

अत्र उर्वश्यां ननु प्रणयकुपितत्वम् ॥ १० ॥

ईशत्वं नियन्तृत्वम् ॥ ११ ॥

एवम्भूतस्य स्त्रैणस्य । विद्यया शास्त्रार्थज्ञानेन तपसा स्वधर्मेण । श्रुतेन शास्त्रश्रवणेन ॥ १२ ॥

स्वार्थस्य मुक्तिलक्षणस्य ईश्वरतां राजराजताम् ॥ १३ ॥ १४ ॥

भगवन्तमृते इति भगवानेव भक्तस्य चित्तं मोचयितुम् प्रभुर्नान्ये देवा इत्यर्थः । अत एव परमेश्वरमेव भजेयमिति भावार्थोल्लेखः ॥ १५ ॥

हे पुरूरवस्त्वं ! मा मृथा मा म्रियस्व मा प्रतप्तः मद्विरहेण मा प्रतप्तो भव अशिवासः अशिवा अमङ्गला वृकास इन्द्रियरूपा वृकाः त्वा त्वां मा उक्षन् मा भक्षयन्तु इन्द्रियवशगो मा भवेत्यर्थः । स्त्रैणानि स्त्रीसम्बन्धीनि सख्यानि विश्वासा न

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

सन्ति तासु विश्वासो न कर्त्तव्य इत्यर्थः । यत एता एतासां स्त्रीणां हृदयानि शालावृकाणां शुनामिव नवनवाकाङ्क्षीणि इति मन्त्रार्थः ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

नश्यन्ति । ममेति शेषः तेजः पराभिभवसामर्थ्यम् ईशित्वं नियन्तृत्वम् ॥ ११—१६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अहो इति । येन मोहेनात्मा अहं योषितां क्रीडामृगः कृतः योषितां कृत इति पाठे क्रीडामृग इव वशीकृत इत्यर्थः । तन्मोहं महापन्नमात्मानं विनिन्दति । चक्रवर्ती नरदेवशिखामणिः ॥ ९ ॥

इत्थं भूतं सपरिच्छदं भोग्यभोगोपकरणभोगस्थानादिसहितममात्मानं सार्वभौमं तृणमिव हित्वागतस्य यान्तीं स्त्रियमन्वगममन्तःकरणक इव खरवत् पद्भ्यां ताडितोऽपि ॥ १० ॥

कुत इति । योऽहमेवं यान्तीं तां उन्मत्तवदनुगन्तुकं तस्यानुभवादिकं कुतः स्यात् अनुभावो माहात्म्यं तेजः पराभिभवसामर्थ्यम् ॥ ११ ॥

किं च यस्य पुंसो मनः स्त्रीभिर्हृतं वशीकृतं तस्य विद्यादिभिः किं सर्वं साधनं व्यर्थमित्यर्थः । तत्र विद्या विवेकः त्यागो दानं श्रुतमध्ययनं विविक्तमेकान्तावस्थानम् ॥ १२ ॥

एवमनुतप्तः स्वात्मानं निन्दति । स्वार्थस्येति द्वाभ्याम् । स्वार्थस्य स्वश्रेयसोऽकोविदमनभिज्ञं धिङ्मामित्यन्वयः । पण्डितमानिनमहं निन्द्य इत्यर्थः । तत्र हेतुत्वेनात्मानं विशिनष्टि । ईश्वरतां सम्राट्त्वं प्राप्यापि योऽहं गोखरवत् गोवत् खरवच्च परस्त्रीभिर्जितः ॥ १३ ॥

उर्वश्या मधुराम्बुवं सेवमानस्य ममात्मभुवो मनः प्रभवः कामः न तृप्यति न शाम्यति यथा वह्निराहुत्याहुतिभिर्न शाम्यति प्रत्युतैधत एव तद्वत् ॥ १४ ॥

अहो स्त्रीपारवश्यं दुस्त्यजमित्याह । पुंश्चल्येति । पुंश्चली स्वैरिणी कान्ता तयापहृतं चित्तं मोचितुं तत्सङ्गात् त्याजयितुं भगवन्तं विना तत्प्रसादमन्तरेणेति भावः । को वा प्रभुः समर्थः न कोऽपीत्यर्थः । प्रभुत्वनिर्दिष्टधारायणया भगवन्त विशिनष्टि । अधोक्षजम् अधः कृता अक्षजा इन्द्रियवृत्तयो यस्य तमकरणायत्तज्ञानमित्यर्थः । आत्मारामाणां विषयवैमुख्येनात्मन्येव रममाणानामीश्वरमात्मरतिनिर्वाहकमित्यर्थः ॥ १५ ॥

भगवद्व्यतिरिक्तानां सर्वेषामात्मतत्त्वयाथात्म्यज्ञापनायास्मात् मोहत्यागद्यमाह । बोधितस्यापीति । देव्योर्वश्या सूक्तवाक्येन सूनृतवाक्येन 'न वै स्त्रैणानि सख्यानि सन्ति शालावृकाणां हृदयान्येता' इति श्रुत्युक्तविधेन प्रतिबोधितस्यापि दुर्मतेः कामासक्तमनसः तत्र हेतुरजितात्मनोऽजितेन्द्रियस्य मम मनोगतो महामोहः कान्तायां भोग्यताबुद्धिरूपो नापयाति नापगच्छतीत्यर्थः ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तदेतत् विद्धोति । नाहमिति । अहं वर्षपूगानां सङ्ख्यातयोग्यानि गतानि अहान्युत न वेद किमुताज्ञानि सुखोदयाविना ज्ञातुं शक्यत्वात् कथमेतदत्राह । अभिनिर्मुक्त इति सूर्यस्याऽस्तुर्दितोऽहरहः सूर्यस्याभिनिर्मुक्तः कालो रात्रेश्च इति मृषा विवेकज्ञानाभावात्कुतोऽत्राह । मुषित इति । तत्सङ्गेन ज्ञानस्य मुष्टत्वात् अभिनिर्मुक्त इत्यादिराजविशेषणं वा ॥ ९ ॥

पुनरपि पश्चादनुतप्तमाह । अहो इति । आत्मा मनो धृतिर्गुणो वा क्रीडामृगश्च कृत इति शेषः ॥ १० ॥

क्रीडामृगत्वं व्यनक्ति । सपरिच्छदमिति । हस्त्यश्वादिपरिकरेणेनम् ॥ ११ ॥

अनुभावादिगुणैः स्त्रीसङ्गदोषलेपो न स्यादिति । तत्राह । कुत इति । अनुभावस्तत्त्वनिश्चयः तेजः सामर्थ्यम् ईशित्वं योगशक्तिविशेषः अनेन सङ्गदोषं मार्ष्टुं न समर्था एते गुणा इत्युक्तं भवति स्मरणाज्ञानेनानुगमनहेतुरुच्यते ॥ १२ ॥

विद्यादयोऽपि सङ्गदोषं मार्ष्टुं न प्रभव इत्याह । किं विद्ययेति ॥ १३ ॥

आसनिर्वेदो राजा स्वात्मानं धिक्करोति । स्वार्थस्येति । स्वार्थविषये अकोविदं स्वप्रयोजनज्ञानपाटवरहितमित्यर्थः ॥ १४ ॥

आत्मभूरात्मस्थानेकार्थत्वेन अत्र क इति शङ्कानिवृत्तये काम इति ॥ १५ ॥

संसारकामवैरिणः शार्ङ्गिणो जानाति प्रभुत्वं क्लीति वचनं कथं युज्यत इति तत्राह । आत्मारामेति ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आत्मा देहः योषितां क्रीडामृगः कृतः ॥ ९ ॥

यतोऽहमात्मानं सार्वभौमं चक्रवर्तिनमपि तृणमिव हित्वा यान्तीं स्त्रियमन्वगमम् ॥ १० ॥

ननु त्वं महातेजःप्रभावैश्वर्यः कथमेवं दैन्यमापन्नोऽसि तत्राह । कुत इति । तस्य मम ॥ ११ ॥

अतस्तादृशस्यान्यस्यापि विद्यादिकं सर्वं व्यर्थमित्याह । किमिति ॥ १२—१३ ॥

सेवतः सेवमानस्य आत्मभूर्मनोजन्यः ॥ १४ ॥

ननु तर्हीदानीं तस्मादुर्वशीसङ्गात् केन मोचितः प्राप्तवैराग्यो वृत्तयोऽसि तत्राह । पुंश्चल्येति । मोचितुं मोचयितुमात्मारामेश्वरमिति आत्मारामोऽपि मादृशस्य देहारामस्य चित्तं मोचयितुं प्रायो न शक्नोति किं त्वात्मारामेश्वर एव शक्नोतीति भावः । तत्र हेतुर्निरतिशयैश्वर्यमेवेत्याह । भगवन्तं सम्मोचने परमसमर्थम् अधोक्षजम् अधः कृतं तिरस्कृतं भवत् अक्षजमैन्द्रियकं यस्मात्तम् ॥ १५ ॥

तदेवोर्वश्या बहुतरमुपदिष्टाद्वैराग्यादेव तत्र मोहोपगतमिति चेन्न हि न हीत्याह । बोधितस्येति । नापयाति नापगच्छति ॥ १६ ॥

किमेतया नोपकृतं रज्ज्वा वा सर्पचेतसः ।
रज्जुस्वरूपाविदुषो योऽहं यदजितेन्द्रियः ॥ १७ ॥
क्वायं मलीमसः कायो दौर्गन्ध्याद्यात्मकोऽशुचिः ।
क्व गुणाः सौमनस्याद्या ह्यध्यासोऽविद्यया कृतः ॥ १८ ॥
पित्रोः किं स्वं नु भार्यायाः स्वामिनोऽग्नेः श्वगृध्रयोः ।
किमात्मनः किं सुहृदामिति यो नावसीयते ॥ १९ ॥
तस्मिन् कलेवरेऽमेध्ये तुच्छनिष्ठे विषज्जते ।
अहो सुभद्रं सुनसं सुस्मितं च मुखं स्त्रियः ॥ २० ॥
त्वङ्मांसरुधिरस्नायुमेदोमज्जाऽस्थिसंहतौ ।
विण्मूत्रपूये रमतां कृमीणां कियदन्तरम् ॥ २१ ॥
अथाऽपि नोपसज्जेत स्त्रीषु स्त्रैणेषु चार्थवित् ।
विषयेन्द्रियसंयोगान्मनः क्षुभ्यति नान्यथा ॥ २२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सपरिच्छदं राज्यादिसहितम् ईश्वरं भर्तारम् अन्वगममनुगतोऽस्मि ॥ १० ॥

अनुभावः प्रभावः तेजो बलम् ईशितृत्वं नियन्तृत्वम् ॥ ११ ॥

विविक्तेन एकान्तवासेन ॥ १२ ॥

ईश्वरतां चक्रवर्त्तित्वम् ॥ १३ ॥

आत्मभूः मनोभवः ॥ १४—१५ ॥

देव्याः उर्वश्याः सुक्तवाक्येन सुष्टेन वाक्येन "पुरूरवो मा मृथा माप्रतन्तो मा त्वा वृकासो अशिवास उक्षन् नवै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता" इत्यनेन प्रतिबोधितस्यापि मनोगतो महामोहः विषयासक्तिहेतुः मनसि स्थितः अनात्मन्यात्मभ्रमः नोपयाति ॥ १६ ॥

———

भाषाटीका।

अहो मेरा बड़ा आत्मा का मोह है कि जिसमें मैंने अपने आत्मा को नर देवों का शिरोमणि तथा चक्रवर्ती होने पर भी स्त्रियों का खेल का मृग बना दिया ॥ ९ ॥

मेरे परिवारों के सहित ईश्वर मेरे को भी तृण के तुल्य त्याग करके जाती हुई स्त्री के पीछे मैं नंगा होकर पागल सरीखा पीछे से रोता हुआ चला गया ॥ १० ॥

जो मैं गदहा सरीखा पादों से ताड़ित होने पर भी चली जाती हुई स्त्री के पीछे चला गया तिस मेरे को प्रभाव क्या होगा तेज क्या होगा ईश्वरपना क्या होगा ॥ ११ ॥

जिस के मन को स्त्रियों ने हरण कर लिया है तिसको विद्या से क्या होगा तपस्या से क्या होगा त्याग से क्या होगा शास्त्र श्रवण से क्या होगा एकांत से क्या होगा मौन से क्या होगा ॥ १२ ॥

स्वार्थ के नहीं जानने वाले मूर्ख पंडित मानी मेरको धिक्कार है जो कि मैं महाराजपन को प्राप्त होकर स्त्रियों से बैल गधा सरी का जीता गया ॥ १३ ॥

● उर्वशी के अधरामृत के सेवन करने से मेरे बहुत वर्ष बीत गये तो भी मेरा कामदेव तृप्त नहीं भया है जैसे कि घृतादि से अग्नि नहीं तृप्त होता है ॥ १४ ॥

व्यभिचारिणी स्त्री से हरण किये चित्त को समाधान करके छुटाने को आत्मेश्वर अधोक्षज भगवान् के बिना और कौन समर्थ है ॥ १५ ॥

मैं बड़ा दुर्मती हूं अजितात्मा हूं उस देवी उर्वशी ने मेरे को अति पठित सुंदर वचन से समुझाया तो भी मेरे मन से भया जो बड़ा मोह सो नहीं हटा है ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

पूर्वं पुंश्चल्यापहृतं चित्तमित्यादिना तस्या अपकारो नुस्मृत इदानीं ममैवायमपराध इत्याह। किमेतयेति। नोऽस्माकं कामिनामेतया किमपकृतं न किञ्चिदपि यथा रज्जुस्वरूपाविदुषो रज्जुद्रष्टुः पुंसः सर्पकल्पनया क्लिश्यतोऽपि रज्ज्वा किमपि नापकृतं तद्वत् यद्यस्मात्सोऽहमेवम्भूतः स एवाजितेन्द्रियत्वादपराधीत्यर्थः ॥ १७ ॥

ननु तथाऽपि सैव सौगन्ध्यप्रेमादिगुणैः सम्मोहमूर्छामिवाऽऽकृष्य तेऽपि समीतिपरिकल्पिता एवेत्याह चतुर्भिः। काय-

अदृष्टादश्रुताद्भावान्न भाव उपजायते ।
असम्प्रयुञ्जतः प्राणान् शाम्यति स्तिमितं मनः ॥ २३ ॥
तस्मात्सङ्गो न कर्तव्यः स्त्रीषु स्त्रैणेषु चेन्द्रियैः ।
विदुषां चाप्यविश्रब्धः षड्वर्गः किमु मादृशाम् ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मिति मलीमसोऽतिमलिनः सुमनसां कुसुमानामिव गन्धसौकुमार्यादिसौमनस्यं शोभनमनोभावो वा ॥ १८ ॥

ममत्वमपि तस्मिन्नविचारकल्पितमेवेत्याह । पित्रोः किं स्वं कायः जनकत्वात् नु किंतर्हि भार्याया वा भोगप्रदत्वात् अत्रानुपयुक्तमप्येतन्न्यायतुल्यत्वादुक्तम् स्वामिनो वाधीनत्वात् अग्नेर्वा अन्त्येऽप्यन्ततदाहुतित्वात् श्वगृध्रयोर्वा भक्ष्यत्वात् किंवाऽऽत्मनः तत्कृतशुभाशुभभागित्वात् सुहृदां वा उपकारित्वात् एवं यो न निश्चीयते ॥ १९ ॥

तुच्छाकृमिविड्भस्मलक्षणा निष्ठा अन्तो यस्य तस्मिन् काये कलेवरे प्रियत्वेन गृहीते विषज्जमेवाऽऽह । अहो इति । सुनसं शोभननासिकम् ॥ २० ॥

अतो गुणारोपेण रममाणा मादृशाः कृमितुल्या इत्याह । त्वगादिसंहतौ तत्सङ्गात देहे विण्मूत्रादिसंहतौ रमतां कृमीणां वा ॥ २१ ॥

यद्यप्येवं वीभत्सिता एव स्त्रियोऽथाऽपि नोपसर्जनावलोकनादिनाऽपि सङ्गं न कुर्यात् अर्थेन्द्रियार्थसंनिकर्षो अत्र हेतुः विपर्ययेति ॥ २२ ॥

ननु कथञ्चिन्निमीलितनयनादेरपि मनःक्षोभो दृश्यते सत्यम् सोऽपि पूर्वदर्शनादिकं विना न भवतीत्याह । अदृष्टादिति भावात्पदार्थात् भावो मनःक्षोभः अत. प्राणानिन्द्रियाणि असम्प्रयुञ्जतो नियच्छतः स्तिमितं निश्चलं सत् ॥ २३ ॥

इन्द्रियैः कृत्वा अविश्रब्धोऽविश्वसनीयः मादृशामविवेकिनाम् ॥ २४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

एवम्भूतः । गुणारोपेण रममाणोऽहमेवापराधी लज्जमानमनस्त्वादित्यर्थ इत्युक्तम् ॥ १७ ॥

तथापि अपराधिन्येऽपि । नेऽपि सौगन्ध्यादिगुणा अपि गन्धसौकुमार्यादीत्यादिना सौन्दर्यलावण्यपरिग्रहः मूलेत्वादिना सौरभ्य सौस्नग्ध्यादिपरिग्रहः । पूर्वार्थे सुमनसामिव परिणामविरसत्वमपि प्रसक्तमतो वेति शोभनमनोभावो हि भावहावहेलाद्यात्मकः ॥ १८ ॥

तस्मिन् स्त्रीदेहे । अत्र स्त्रीदेहप्रकरणे । एतत् भार्याया इति पदं स्त्रीदेहस्य भार्यादेहत्वासम्भवात् अनुपयुक्तमसम्बद्धमपि न्यायतुल्यत्वात् भार्याया यथा भोगप्रदत्वं तथा पत्युरपीति दृष्टान्ततुल्यत्वादुक्तमित्यर्थः । तदाहुतित्वादन्ताधाहुतित्वात् तत्कर्मेति देहकृतपुण्यपापभागित्वात् ॥ १९ ॥

विषज्जमेवासक्तिप्रकारमेवेत्यर्थः ॥ २० ॥

अतस्तुच्छनिष्ठत्वात् गुणारोपेण भ्रष्टत्वाध्यासेन ॥ २१ ॥

वीभत्सिताः ग्लान्याम्पदाः । अत्र सङ्गाऽकरणे ॥ २२ ॥

सोऽपि निमीलितनयनस्य मनःक्षोभोऽपि अतः दृष्टश्रुतभावानां मनःक्षोभकत्वात् ॥ २३ ॥

यतः सङ्गस्यानर्थहेतुत्वं तस्मात् ॥ २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सर्पचेतसः सर्पभ्रान्तिमतः रज्ज्वा किमपकृतं स्वरूपमविदुषः स्वस्यैव एवापकारीत्यर्थः । अजितेन्द्रियोऽहमिति यस्तस्मात् किमेतयापकृतमित्यन्वयः ॥ १७—१९ ॥

तुच्छत्वं भावो निष्ठा यस्य तत् तुच्छनिष्ठम् ॥ २०—२२ ॥

प्राणान् इन्द्रियाणि असम्प्रयुञ्जतः विषयेष्वयोजयतः ॥ २३ ॥

अविश्रब्धः अविश्रम्भणीयः ॥ २४—२५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यतः सा प्रतिबोधितवती तथाप्यहमनपगतमोहस्ततः सा नापकारिणी प्रत्युत प्रतिबोधनेनोपकर्त्री किं तु मयैव महापराद्धमित्याह । किं नगिति । मे महामनर्थावेदया किमपकृतमपि तु किमपि नापकृतं सा तदहोऽस्त्रैषशब्दार्थकः यथा सर्पचेतसो रज्ज्वा नापकृतं तद्वदित्यर्थः । सर्पभ्रान्तिमतसो रज्जुस्वरूपाविदुष इव स्वस्यैव एवापकारीति भावः । तदाह स्वरूपं दृष्टान्ते रज्जुस्वरूपं दार्ष्टान्तिके तु देहात्मनोर्याथात्म्यमविदुषः अजानतः दृष्टान्ते रज्जु सर्पत्वेन पश्यतः दार्ष्टान्तिके देहमात्मत्वेन पश्यतः स्वरूपाज्ञाने हेतुमाह । यद्यस्मादहमजितेन्द्रियः इन्द्रियपरवशः ॥ १७ ॥

अन्यथैवं मोहो न स्यादित्यसम्भावनयोपपादयति । क्वेति । अयं कायः कान्तादेहः मलीमसोऽतिमलिनः । यद्वात्र कायशब्देन स्वदेहोऽपि तन्त्रेण विवक्षितः । दौर्गन्ध्याश्रयः अशुचिश्चैवं विधस्य देहस्य क्व सौमनस्याद्या गुणा अन्ये च हृदयङ्गमा गुणाः क्व सौमनस्यं सौगन्ध्यमतिहेयं काये भोग्यताबुद्धिरत्यन्तासम्भाविनीति भावः । अतोऽस्मिन्नेते सौमनस्याद्या अविद्यया स्वरूपावेदनात्मिकया कृताः ॥ १९ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्या इत्याह । किमेतयेति । एतया उर्वश्या नोऽस्माकं किमपकृतं न किञ्चिदपि सर्पचेतसो जनस्य रज्ज्वा वा किमपकृतं न किमपि यतो रज्जुस्वरूपमविदुषस्तस्यैव दोषः स हि स्वाज्ञानादेव बिभेति यत् यस्मादहमपि तथैवाजितेन्द्रियो मोहेनेदृशम भजम् ॥ १७ ॥

ननु तदपि मैवं सौरूप्यसौरभ्यमाधुर्यादिसुगुणैस्तदीया व्यसनमोहमूलामिति चेत् नैवं तेऽपि गुणा अभिनवपरिकल्पिता एवेत्याह । क्वायमिति । वस्तुविचारतो मलीमसोऽतिमलिन एव कायः क्व सुमनसां पुष्पाणामिव सौरभ्यसौकुमार्यादिकं सौमनस्यं तदाद्या गुणा वा क्व किं स्वयमध्यासकल्पनामारोपो मया स्वमोहेनैव कृतः ॥ १८ ॥

सामान्यतो देहमात्रेऽपि ममत्वमविवेककल्पितमेवेत्याह पित्रोः किं स्वमयं कायः जनकत्वात् नु वितर्के भार्याया वा भोगप्रदत्वात् स्वामिनः पत्युर्वा भोक्तृत्वात् अग्नेर्वा अन्त्येष्ट्यां तदाहुतिरूपत्वात् श्वगृध्रयोर्वा किमात्मनस्तत्कृतशुभाशुभभागित्वात् सुहृदां वा तदुपकारकत्वात् एवं यो न हि निश्चीयते ॥ १९ ॥

तुच्छलोकनिष्ठे निन्दाफले वा विषज्जते विषज्जनप्रकारमाह । अहो इति ॥ २० ॥

विण्मूत्रपूयं तन्मये देहे रममाणानां मादृशानां कृमीणां कियदन्तरं न कियदपि ॥ २१ ॥

यद्यप्येवं बीभत्सिता एव स्त्रियस्तथापि तासु जना उपसज्जन्त्येवेत्यतो निषेधति । अथापीति । अर्थवित् विवेकी तु तथापि न तासु विषज्जेत् तद्दर्शनादपि दूरे तिष्ठेत् यतो विषयेत्यादि ॥ २२ ॥

ननु निर्जने स्थितस्यापि मुनेर्मनःक्षोभः क्वचिद्दृश्यते सत्यं स खलु प्राचीनस्त्रीदर्शनसंस्कारोत्थ एवेति सोपपत्तिकमाह । अदृष्टादिति । तस्मात्प्राणान् इन्द्रियाणि स्त्रीविषये न सम्प्रयुञ्जतो जनस्य मनस्तिमितं निश्चलं सत् शाम्यति ॥ २३॥

अविश्वास्यः अविश्वसनीय इत्यर्थः । षड्वर्गः षडिन्द्रियवर्गः ॥२४॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पूर्वं पुंश्चल्यापहृतं चित्तमित्यादिना तदपराधोऽनुस्मृतोऽधुना न तदपराधः किन्तु ममैवापराध इत्याह । किमिति । नोऽस्माकमेतया उर्वश्या किमपकृतं न किञ्चिदपि यथा रज्जुस्वरूपाऽनिरूपस्तद्दृष्टुः पुंसः सर्पचेतसः सर्पोऽयमिति खिद्यतः रज्ज्वा किञ्चिदपकृतं न किञ्चिदपीत्यर्थः । यद्यस्मादहमेवाजितेन्द्रियः ॥ १७ ॥

विषयासक्तिहेतौ मनोगते महामोहे कारणमाह । क्वायमिति । अध्यासः अनात्मनि आत्मभ्रमः अविद्यया आत्मानात्माज्ञानेन कृतः आत्मानात्माविवेकमाह । क्वायं मलीमस इति । मलीमसः अतिमलिनः शोभनस्य आत्मविषयकस्य मनसो भावः सौमनस्यं तदाद्याः नित्यत्वनिर्विकारत्वादयः ॥ १८ ॥

आत्मानात्मविवेकदार्ढ्याय आत्मगुणानाह । पित्रोरिति त्रिभिः । नावसीयते न निश्चीयते ॥ १९ ॥

तुच्छाः हेयाः आदौ शुक्रादिरूपाः मध्ये मूत्रपुरीषाद्याधाररूपाः अन्ते कृमिविड्भस्मरूपाः निष्ठाः अवस्थाः यस्य तस्मिन् अहो सुभद्रमिति विषज्जते ॥ २० ॥

त्वगादिसंहतौ कलेवरे रमतामस्मदादीनां विण्मूत्रादिसंहतौ रमतां कृमीणां कियदन्तरं न कियदपीत्यर्थः ॥ २१ ॥

अथापि त्वगादिसङ्घातत्वेन स्त्रीदेहस्य बीभत्सितत्वेऽपि न सज्जेत सङ्गं न कुर्यात् यतो मनो विषयेन्द्रियसंयोगात् क्षुभ्यति अन्यथा विषयेन्द्रियसंयोगाभावे तु न क्षुभ्यति ॥ २२ ॥

एतदेवाह । अदृष्टादिति । भावात् विषयात् भावो मनसः क्षोभः असम्प्रयुञ्जतः विषयेषु प्राणान् इन्द्रियाण्यविमुञ्जतः स्तिमितं निश्चलं सत् शाम्यति ॥ २३ ॥

यस्मात् प्राणान् असंप्रयुञ्जतो मनः शाम्यति तस्मात्स्त्रीषु स्त्रैणेषु च सङ्गो न कार्यः इन्द्रियैरस्थिरेण चक्षुरादिभिरपि तत्सङ्गो न कार्य इत्यर्थः । तत्सङ्गेन निर्जितानामपीन्द्रियाणां पुनर्विषयप्रावण्यं सम्भवतीति द्योतयितुमाह । षड्वर्गः समनस्कज्ञानेन्द्रियवर्गो विदुषामप्यविश्वास्योऽविश्वसनीयः मादृशां कामिनामविश्वसनीय इति किमु वक्तव्यम् ॥ २४ ॥

---

भाषा टीका ।

इस उर्वशीने मेरा कितना नहीं उपकार किया है जैसे कि मार्ग में पड़ी हुई रस्सी को नहीं जानने वाले पुरुष को सर्प जानने वाले को रस्सी दुःख देती है तैसेही अजितेन्द्रिय होनेसे इसने मेरेको किया है ॥ १७ ॥

दुर्गन्धी वाला अशुद्ध यह मलिन शरीर कहां सुन्दर बुद्धि आदिक गुण कहां बड़ाही अन्तर है तथापि अहङ्कार से ऐसा देहादिकों में भ्रम होरहा है ॥ १८ ॥

जिस शरीर का यह निश्चय नहीं है कि यह माता पिता का है या अन्नादि देने वाले मालिक का है या अग्नि काहै या कुत्ता का है या गीधका है या अपनाहै या मित्रोंका है ऐसा ठीक मालूम नहीं पड़ता है ॥ १९ ॥

उस अपवित्र तुच्छ शरीर में अहो बड़ा सुन्दर सुंदर नासिका वाला मंदहास वाला स्त्रीका शरीर है करके उस मे आसक्त होजाता है ॥ २० ॥

त्वचा मांस नाड़ी मेद मज्ज हड्डियों का समुदाय विष्ठा मूत्र पीवसे भरा हुआ है तब ऐसे शरीर में रमण करने वालों को कीड़ो से क्या फरक है ॥ २१ ॥

तोभी यथार्थ जानने वाला पुरुष स्त्री या स्त्री के सङ्गी पुरुषों में आसक्ति न करे क्योंकि विषय तथा इंद्रियों के संयोग से मनका क्षोभ होता है एकंत में नहीं होताहै ॥ २२ ॥

बिना देखे सुने पदार्थ में मन नहीं चलता है इंद्रियों को विषयों में से रोक रखने से मन निश्चल होकर शांत हो जाता है ॥ २३ ॥

श्रीभगवानुवाच ॥

एवं प्रगायन् नृप ! देवदेवः स उर्वशीलोकमथो विहाय ।
आत्मानमात्मन्यवगम्य मां वै उपारमज्ज्ञानविधूतमोहः ॥ २५ ॥
ततो दुःसङ्गमुत्सृज्य सत्सु सज्जेत बुद्धिमान् ।
सन्त एतस्य छिन्दन्ति मनोव्यासङ्गमुक्तिभिः ॥ २६ ॥
सन्तोऽनपेक्षा मच्चित्ताः प्रशान्ताः समदर्शिनः ।
निर्ममा निरहङ्कारा निर्द्वन्द्वा निष्परिग्रहाः ॥ २७ ॥
तेषु नित्यं महाभाग ! महाभागेषु मत्कथाः ।
सम्भवन्ति हिता नृणां जुषतां प्रपुनन्त्यघम् ॥ २८ ॥
ता ये शृण्वन्ति गायन्ति ह्यनुमोदन्ति चाऽऽदृताः ।
मत्पराः श्रद्दधानाश्च भक्तिं विन्दन्ति ते मयि ॥ २९ ॥
भक्तिं लब्धवतः साधो ! किमन्यदवशिष्यते ।
मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि ॥ ३० ॥
यथोपश्रयमाणस्य भगवन्तं विभावसुम् ।
शीतं भयं तमोऽप्येति साधून् संसेवतस्तथा ॥ ३१ ॥
निमज्ज्योन्मज्जतां घोरे भवाब्धौ[1] परमायनम् ।
सन्तो ब्रह्मविदः शान्ता नौर्दृढेवाप्सु मज्जताम् ॥ ३२ ॥

भाषा टीका ।

जिस से स्त्री या स्त्री सङ्गी पुरुषों का संग नहीं करना चाहिये क्योंकि इंद्रियों में सम्बन्ध होनेसे विद्वान् कोभी विश्वास नहीं रहता है ऐसा है तो फिर हम सरीके तो पुरुषों की क्या वार्ता है ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

फलितमाह द्वाभ्याम् । एवमिति । नृपेषु देवेषु च दीव्यतीति तथा ॥ २५ ॥

उक्तिभिर्हितोपदेशैरिति तीर्थदेवादिसङ्गादपि सत्सङ्गः श्रेयानिति दर्शयति ॥ २६ ॥

सतां लक्षणमाह । सन्त इति । विशेषणषट्कस्य यथेष्टं हेतुहेतुमद्भावः ॥ २७ ॥

न च तेषूपदेशापेक्षाऽपि तु केवलं तत्सन्निधिरेव तारयतीत्याह । तेष्विति सप्तभिः ॥ २८ ॥

श्रवणादिभिरेव मत्पराः श्रद्दधानाश्च सन्तो भक्तिं विन्दन्ति ॥ २९—३० ॥

विभावसुमग्निं सेवमानस्य अर्थात् नश्यन्ति तथा कर्मजाड्यमागामि संसारभयं तन्मूलमज्ञानं च नश्यतीत्यर्थः ॥ ३१ ॥

निमज्ज्योन्मज्जतामुच्चावचयोनीर्गच्छतां परमायनं परमाश्रयः ॥ ३२ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

अथो साकल्येन सङ्गत्यागेनेत्यर्थः । आत्मनि जीवात्मनि आत्मानं नियन्तृत्वेन स्थितं परमात्मानं मां सर्वज्ञमवगम्य ज्ञात्वा उपारमद्भक्त्युद्रेकेण मम शरणापन्नो बभूवेत्यर्थः । ननु मोहलक्षणप्रतिबन्धकसद्भावे उपरामः कथं सम्भवेत्तत्राह । ज्ञानेति । ज्ञानमत्र भगवज्ज्ञानमेव ग्राह्यं न तु निर्विशेषब्रह्मानुसन्धानम् । "आत्मारामश्चरमृत भगवन्तमधोक्षजम्" इति तद्वाक्यात् । ततो दुःसङ्गमुत्सृज्येत्युत्तरस्वारस्याच्च ॥ २५ ॥

यतः सङ्गत्यागेन पुरूरवाः कृतार्थो बभूव ततो हेतोः ॥ २६ ॥

मच्चित्ता इति विशेष्यम् अनपेक्षत्वादिकन्तु स्वरूपगुणानुवादमात्रम् ॥ २७ ॥

१ तं परायणम् इति विज० ।

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

अथाऽऽदेन तेषां सङ्गमस्यैव पावनत्वं तदुत्थकथायास्तु किमुतेति व्यञ्जितम् ॥ २८ ॥

कथाविषयकमादरणमादृतिः सा विद्यते येषां ते आदृताः। अर्शआदिभ्योऽच्प्रत्ययः । भक्तिं प्रेमलक्षणाम् ॥ २९ ॥

भक्तेस्तु भक्तिरेव फलमित्याह । भक्तिमिति । ब्रह्मणि स्वरूपगुणाभ्यां बृहत्तमे तदेवाह । आनन्देति । "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादिश्रुतेः तस्यैव बृहत्तमत्वम् । एवं स्वरूपेण बृहत्तमत्वमुक्त्वा गुणेनाप्याह । अनन्तगुणे इति । मधुराऽनन्तगुणवैचित्र्यमिति स्वयं भगवत्त्वेन सर्वांशपूर्णत्वात् । एवंभूतमद्विषयकभक्तेः पञ्चमपुमर्थत्वेन परमफलत्वमेवोपयुज्यत इति भावः ॥ ३० ॥

तस्याश्च सत्सङ्गैकजीवातुत्वात् पूर्वोद्दिष्टानां सतां स्वरूपगुणमप्याह । यथेति चतुर्भिः । उपश्रयमाणस्य फलविशेषकामनया यज्ञार्थं सेवमानस्य अत एव भगवन्तमित्युक्तम् । तन्मूलं भयकारणम् ॥ ३१ ॥

शान्ता मल्लिप्तबुद्धयः । अत एव मदनुग्रहात् ब्रह्मविदः मद्विभूतिरूपासम्यगाविर्भावं ब्रह्मापि जानन्तः । तदुक्तं सत्यव्रतं प्रति श्रीमत्स्यदेवेन । मदीयं महिमानञ्च परं ब्रह्मेति शब्दितम् । वेत्स्यस्यनुगृहीतं मे संप्रश्नैर्विवृतं हृदीति ॥३२॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एतस्य पुरूरवसः उक्तिभिः ॥ २९—३० ॥

भयम् अन्धकारजनितभयं तमो विभागः किमप्येतीत्यर्थः देहात्मनामैकत्वनिर्विवेकत्वअज्ञाने तदेव तमः किमप्यनिर्वाच्यं ज्ञानावरकमप्येत्यपगच्छतीत्यर्थः ॥ ३१ ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न केवलमेवमैलो निश्चिचायैवापि तु निश्चितमर्थमन्वतिष्ठदपीत्याह । एवमिति । नरदेवानां देवः नृपदेवदेव इति पाठेऽप्ययमेवार्थः दीव्यतीति देव इति व्युत्पत्त्या राजपर्यायोऽत्र देवशब्दः स ऐलः आत्मनि प्रत्यगात्मनि आत्मानं मामन्तः प्रविश्य प्रशासनेन धारकं मामुपागत्य प्राप्य उपासनेन साक्षात्कृत्येत्यर्थः । ततो ज्ञानेनोपासनात्मकेन विधूतः निरवशेषं निरस्तो मोहो देहात्माभिमानादिरूपो येन तथाभूतो बभूव मुक्तोऽभूदित्यर्थः ॥ २५ ॥

इतिहासमुखेनोपदिष्टमर्थमुपसंहरति । तत इति । बुद्धिमांश्चेत्सत्सु सज्जेत किमतस्तत्र माह । सन्त इति । एतस्य श्रेयस्कामस्य पुंसः मनोव्यासङ्गं मनसा विषयेषु सङ्गमुक्तिमनर्थहेतुत्वोपपादकैर्वचोभिश्छिन्दन्ति ॥ २६ ॥

कीदृशास्ते सन्त इत्यत्र तान्विशिनष्टि । सन्तोऽनपेक्षा इति । मय्येव निरतिशयपुरुषार्थरूपे चित्तं येषां तेऽत एवानपेक्षाः मद्व्यतिरिक्तविषयाभिलाषरहिताः अत एव प्रशान्ताः रागाद्यकलुषितचित्ताः समदर्शिनः सर्वं चिदचिदात्मकं जगद्ब्रह्मात्मकत्वेन समं पश्यन्तीति तथा देहतदनुबन्धिष्वहंममाभिमानरहिताः निर्द्वन्द्वाः द्वन्द्वेभ्यो निर्गताः शीतोष्णादिद्वन्द्वप्रभवविकाररहिताः परिगृह्यन्त इति परिग्रहा अनुकूला विषयास्तेभ्यो निर्गतास्तद्रहिता इत्यर्थः ॥ २७ ॥

ननु मनोव्यासङ्गहेतावपि सति केवलमुक्तिभिश्छिन्दन्तोऽपि पुनः प्ररोहेदित्यत आह । तेष्विति । हे महाभाग ! सत्स्वभवन्ति प्रवर्तन्ते ततः किमत आह । मदिति । ताः मम कथा जुषतां शृण्वतां नृणामघं प्रपुनन्ति शोधयन्ति क्षपयन्तीति यावत् ॥ २८ ॥

ततः किमत आह । ता इति आदृता इति । कर्तरि क्तः आदृतवन्तश्च भवन्ति यद्वा वैराद्दता भवन्ति ते श्रद्धाना मत्परा मदाराधनपराश्च सन्तो मयि भक्तिं विन्दन्ति लभन्ते व्यासङ्गनिमित्तदुरितक्षपणद्वारा मयि भक्तियोगं निष्पादयन्तीत्यर्थः ॥ २९ ॥

ततोऽपि किमत आह । भक्तिमिति । मयि भक्तिमिति सम्बन्धः किमन्यदवशिष्यते न दुर्लभं किञ्चिदस्तीत्यर्थः । भक्तेः सर्वसाधनहेतुतया तद्विषयभूतमात्मानं विशिनष्टि । अनन्तगुण इति अनन्ता असंख्येया गुणा आश्रितकार्योपादका यस्मिन् ब्रह्मणि स्वरूपतो निरतिशयबृहत्त्वशालिनि निरतिशयानन्दज्ञानस्वरूपे॥३०॥

एवं सत्सङ्गस्य प्रणाड्याऽखिलश्रेयः साधनत्वमुक्तमथ तस्मिन् रुचिं जनयितुं प्रस्तौति । यथेति । भगवन्तमाहवनीयादिरूपेण पूज्यं विभावसुमग्निम् उपश्रयमाणस्य पुंसः शीतं तमोऽन्धकारश्च तज्जन्यं भयं चापैति तथा साधून् संसेवतः पुरुषस्यापि तमो ज्ञानं तत्प्रयुक्तं संसृतिभयं चापगच्छतीत्यर्थः ॥ ३१ ॥

निमज्ज्येति उन्मज्जताम् उन्मज्जतां पुंसां परमायनं परमं शरणं सन्त एव साधव एवोत्तारका इत्यर्थः । कथम्भूताः ब्रह्मविदः शान्ता रागादिभिरकलुषितचित्ताश्च यथाऽप्सु मज्जतां दृढा नौः शरणं तद्वदित्यर्थः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उक्तं निगमयति । तस्मादिति । कुत इति तत्राह । विदुषामिति ॥ २५ ॥

जन्मप्रभृत्यभ्यस्तस्य दुःसङ्गस्य त्यागो दुःशक इति न मन्तव्यः सत्सङ्गेन स्वयमेव शिथिलीभूतस्य सुलभ इति भावेनाह । तत इति । तृणगूढाग्निवत्स्वयरहितकूपपतनवत् दुःसङ्गो नर्थकारणमिति यततः किमस्य कुर्वन्तीति तत्राह । सन्त इति । सन्त एतस्य मनोवाक्कायकर्मभिः सम्यक् शरणम् गतस्य पुंसो मनोव्यासङ्गं मनसो दुष्टेषु सङ्गमुक्तिभिः छिन्दन्ति ॥ २६ ॥

एवंविधमाहात्म्याश्चैते कथं ज्ञातव्या इति तल्लक्षणमाह । सन्त इति ॥ २७ ॥

अनपेक्षत्वादिगुणानामन्यत्रापि दर्शनात्तेषामपि दुःसङ्गनिवर्तकत्वं स्यादित्याशङ्क्य तद्भक्त्युद्बोधकगुणसद्भावात्तेषामेव तन्माहात्म्यमिति भावेनाह । तेष्विति । ततः किमाह । ता इति । ताः कथास्ता उक्तयो मनोव्यासङ्गं छिन्दन्तीत्यर्थः २८ ॥

अन्नं हि प्राणिनां प्राणा आर्तानां शरणं त्वहम् ।
धर्मो वित्तं नृणां प्रेत्य सन्तोऽर्वाग्बिभ्यतोऽरणम् ॥ ३३ ॥
सन्तो दिशन्ति चक्षूंषि बहिरर्कः समुत्थितः ।
देवता बान्धवाः सन्तः सन्त आत्माऽहमेव च ॥ ३४ ॥
वैतसेनस्ततोऽप्येवमुर्वश्या लोकनिस्पृहः ।
मुक्तसङ्गो महीमेतामात्मारामश्चचार ह ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे श्रीभगवदुद्धवसम्वादे
षड्विंशोऽध्याय: ॥ २६ ॥

भाषा टीका

मेरे विषे जिसको भक्तिका लाभ होगया है उस के लिये और कौनसा मनोरथ बांकी है ॥ ३० ॥

जैसे कि भगवान् अग्निदेवके सेवन करने वाले पुरुष का शीत अंधकार भय चला जाता है तैसेही साधुओं के संग करने वाले पुरुष के सबदुःख चले आते हैं ॥ ३१ ॥

घोर संसार सागर में डूबने उछलते हुये पुरुषोंके वास्ते ब्रह्मवेत्ता संतही परम आश्रय हैं जैसे कि जलमें डूबने वाले को नौका पार करदेती है ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

किं च । यथाऽन्नमेव प्राणो जीवनम् अहमेव यथा शरणं धर्म एव यथा प्रेत्य परलोके वित्तं तथा सन्त एवार्वाक् संसारपाताद्बिभ्यतः पुंसः अरणं शरणम् ॥ ३३ ॥

किं च । सन्तश्चक्षूंषि सगुणानिर्गुणज्ञानानि अर्कः पुनः समुत्थितोऽपि बहिस्तदप्येकमेव चक्षुरित्यर्थः ॥ ३४ ॥

अध्यायार्थमुपसंहरति । वैतसेन इति । सुद्युम्नभावेनोमावनं प्रविष्टस्य वीता सेना स्त्रीभावप्राप्ता यस्य तस्य स्त्रीभावं प्राप्तस्य पुत्रो वैतसेनः पुरूरवाः एवमुक्तप्रकारेणोर्वश्या लोकास्तथानाद्यलोकनात्ता निस्पृहस्ततोऽपि सत्सङ्गादपि हेतोर्मुक्तसङ्गः सन्नात्मारामो भूत्वा यथेष्टं चचारेति ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षड्विंशोऽध्यायः ॥ २६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

प्राणिनां बहुत्वात् प्राणा इति बहुवचनम् । अन्नमित्येकत्व सामान्याभिप्रायेण जीवनमिति व्याख्यापि तथैव प्राणा इत्येकवचनान्तोऽपि क्वचित् पाठः । यथा तथा शब्दौ गम्यौ ॥ ३३ ॥

देवतावत्तद्वत् पूज्याः । बान्धवा हितकारिणः "एक एव परो बन्धुर्विषमे समुपस्थिते । गुरुः सकलधर्मात्मा यत्राकिञ्चनगो हरि"रित्युक्तेः । आत्मा तद्वल्लिरुपाधिप्रियः । एवं व्यस्ततया तत्तद्गुणवत्त्वामुक्त्वा सामस्त्येन सर्वगुणवत्त्वामाह अहमेव चेति ॥ ३४ ॥

न केवलं प्राचीनसंस्कार एव विरागे हेतुः किन्त्वर्वाचीनात् सत्सङ्गादपीति भावार्थः । एवमस्मिन्नपि प्रकरणे सत्सङ्गलब्धा भक्तिरेवाभिधेयेति ज्ञेयम् ॥ ३५ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
षड्विंशोऽध्यायः ॥ २६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अस्मात् संसारात् अरणं गतिः ॥ ३३ ॥

सन्त आत्माहमेव च सन्तः सर्वे हितैषित्वतुल्याः मया च तुल्या इत्यर्थः ॥ ३४ ॥

आत्मारामः अध्यात्मनिष्ठायुक्तः ॥ ३५ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
षड्विंशोऽध्यायः ॥ २६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च अन्नमिति प्राणिनां जिजीविषूणामन्नं प्राणाः जीवितम् आर्तानां तापत्रयपीडितानामहमीश्वरः शरणं रक्षिता प्रेत्य परलोके धर्मः शरणं रक्षिता नृणामैहलौकिकानां वित्तं धनं शरणं तथाऽस्मात्संसाराद्बिभ्यतः पुरुषस्य सन्तः साधवः अरणं शरणं रक्षकमिति यावत् ॥ ३३ ॥

---

१ सन्ताऽत इति विज० सन्तोऽस्मात् इति शुकपक्षीयधीरद्रा० पाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ते च न साक्षाद्रक्षां किं तु ज्ञानोपदेशद्वारेत्यभिप्रेत्याह । सन्त इति । चक्षूंषि चिदचिदीश्वरयाथात्म्यज्ञानात्मकानि दिशन्ति प्रयच्छन्ति अर्कस्तु समुत्थितः अभ्युदित एव सन् बहिरेव चक्षुर्दिशति मद्दर्शनसाधनं करोतीत्यर्थः । अतः सन्तो देवता बान्धवाश्च तद्वत्पूज्या उपकार्याश्चेत्यर्थः । किं बहुना सन्त आत्मा ममात्मभूता इत्यर्थः । ज्ञानी त्वात्मैव मे मतामिति मद्वचःप्रामाण्या-दिति भावः । अतोऽहमेव सन्तः मद्वद्रक्षणीया सेवनीया इत्यर्थः ॥ ३४ ॥

इतिहासमुपसंहरति । वैतसेन इति । सुद्युम्नभावेनोमावन प्रविश्य स्त्रीभावं प्राप्तस्य वीतसेनस्य पुत्रो वैतसेनः पुरूरवाः सङ्गात्स्त्रीणां स्त्रैणानां सङ्गान्मुक्तः आत्मारामो महीमेतां चचार इत्याश्चर्यं एवमतिसक्तस्यापि ऐलस्यासङ्गस्ततो मुक्तिश्चाभूदिति विस्मीयते इति ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

षड्विंशोऽध्यायः ॥ २६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सत्स्वपि प्रधानः सन्नहमेवेति सोदाहरणमाह । अन्नमिति । लुब्धोपमेयं क्षुधितानामन्नं प्राणो यथा प्रकृष्टचेष्टाप्रदं यथा-प्रेत्य मरणानन्तरं धर्मो वित्तं नृणां सुखाय स्यात्तथा भीतानां शरणं रक्षिताहमेव यद्वा संसाराद्बिभ्यतो जनस्यारणां शरणं सन्त इति ॥ ३३ ॥

तदुपपादयति । सन्त इति । यथा समुत्थित उदितोऽर्को बहि-श्चक्षुर्दिशति तथा सन्तः आन्तरं चक्षुर्दिशन्ति बहुवचनादादि-त्यादभिकप्रयोजकत्वं सूचयति सत्प्रधानो हरिरित्यस्यावगतिः कथमभूदित्यत आह । देवता इति । देवतावद्यो ऽहमेवेत्यनेन सत्प्रधा-नत्वमवगतं हरेरिति

विष्णोश्च सत्प्रधानत्वान्न सतां विद्यते परम् ।

इत्याहुर्वेदविदुषः स हि सर्वेश्वरेश्वरः ॥

इतिवाक्यं चशब्देन सूचयति ॥ ३४ ॥

स्वाकमर्थमितिहासेन संगमयति । चैतसेति । चैतसेवं निरु-व्येवेति शेषः ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

षड्विंशोऽध्यायः ॥ २६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ननु भयनिवारकानां शरणं चेत् किं सर्वैरित्याशङ्क्याह । सन्त इति ॥ ३४ ॥

एवमभीष्टं वर्णयित्वा प्रसङ्गमुपसंहरति । वैतसेन इति ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

षड्विंशोऽध्यायः ॥ २६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यथा प्राणिनामन्नार्थिनामन्नमेव प्राणाः अन्नं विना प्राणा न तिष्ठन्ति तथैव भक्तीच्छूनां सन्त एव भक्तिः तान् विना भक्तिर्न सिद्ध्यति यथैवार्तानामभयार्थानामहमेव शरणं रक्षकस्तथैव भक्तीच्छूनां सन्त एव रक्षकाः यथैव नृणां प्रेत्य मृत्वा काल-पाशाद्बिभ्यतां धर्म एव वित्तं शरणं तथैव नरस्य भज-नमार्गं प्राप्य वर्तमानस्य अर्वाक् इतस्ततः कामक्रोधादिषड्वर्ग-पतिपाशाद्बिभ्यतः सन्तः एव भक्तिमार्गरक्षकाः ॥ ३३ ॥

किं बहुना सतां मार्गं प्रतिष्ठासूनां नृणां सन्त एव सर्वनिर्वाहका इत्याह । सन्त एव मां साक्षात् दर्शयन्तु चक्षूंषि नवनवभजनानि दिशन्ति ददति किञ्च सूर्यं विना चक्षुर्गिरपि न कार्यनिर्वाहोऽस्तीति चेत् सन्त एव बहिः स्थितः समयगुत्थितोऽर्कः भजनचक्षुःप्रकाशका इति भावः । तस्माद्भक्ति-वर्त्मचारिणां सन्त एव देवता न त्विन्द्राद्याः सन्त एव बान्धवा न तु पितृपितृव्यमातुलादयः सन्त एव आत्मा प्रेमास्पदं न तु देहो जीवात्मा वा एवं सन्त एवाहमिष्टदेवः न तु तदंस्यककृत्वा प्रतिमारूपोऽहमपीति भावः ॥ ३४ ॥

अध्यायार्थमुपसंहरति । वैतसेन इति । धीता स्त्रीत्वप्राप्त्या वैकल्य प्राप्ता सेना यस्य स वीतसेनः सुद्युम्नो नवमस्कन्धे ख्यातस्तस्य पुत्रो वैतसेनः पुरूरवाः एवमुक्तप्रकारेण ततोऽपि उर्वशीलोकादपि एतां महीं चचार यत उर्वश्या लोकात् स्थानाद्वा लोकनाद्वा निस्पृहः ॥ ३५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

एकादशे तु षड्विंशः सङ्गतः सङ्गतः सताम् ॥ २६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यथा प्राणिनां मनु[illegible]नामन्नं तत्कृष्टं द्रव्यं प्राणो जीवनं यथाऽऽर्तानां ब्रह्मरुद्रादीनां मधुकैटभकालासुरादिभ्यः संक्लिश्यमानानामहं शरणम् रक्षिता यथा च प्रेत्य परलोके धर्म एव वित्तं सुखसाधनं तथाऽर्वाक् संसारपाताद्बिभ्यतः पुंसः सन्तोऽरणं शरणम् ॥ ३३ ॥

चक्षूंषि आत्मानात्मपरमात्मज्ञानानि सन्तो दिशन्ति अर्कः पुनः समयगुत्थितोऽपि बहिस्त्वग्रापेक्षमेव चक्षुर्दिशति अतो देवतादिवत्सन्तः पूज्या इत्याह । देवा इत्यादि ॥ ३४ ॥

अध्यायार्थमुपसंहरति । वैतसेन इति । तत्र सर्वकर्मभ्यः प्रकारे-णोमावनप्रवेशाद्धीता पुरुषभावाद्विगता सेना यस्य स वीतसेनः सुद्युम्नस्तस्यापत्यं वैतसेनः पुरूरवाः उर्वश्याः लोकात् निर्विण्णः मुक्तिसाधनसंपन्नः महीं चचार ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीय

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

षड्विंशाध्यायार्थप्रकाशः ॥ २६ ॥

भाषा टीका।

प्राणियों का प्राण जैसे अन्न है जैसे आर्तों का रक्षक मै हूं धर्म जैसा मनुष्यों का परलोक मे धन है तैसही संसार से डरने वालोंके वास्ते संतही रक्षक हैं ॥ ३३ ॥

जैसे बाहिर उदय हुआ सूर्य है तैसे संत भीतर के नेत्र देने वाले हैं संतही देवता हैं बांधव हैं आत्मा हैं मेरारूप भी संतही हैं ॥ ३४ ॥

तदनन्तर इस प्रकार से पुरूरवा राजा उर्वशी के लोक से निरपेक्ष होकर संसार से सङ्ग छोड़कर आत्मा राम हो-कर इस पृथिवीमे विचरता भया ॥ ३५ ॥

इति श्रीमद्भागवत महापुराण एकादशस्कन्ध

छब्बीस में अध्याय की

भाषा टीका समाप्त ॥ २६ ॥

———

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे षड्विंशोऽध्यायः ॥ २६ ॥



## अथ सप्तविंशोऽध्यायः ।

———:*:———

उद्धव उवाच ॥

क्रियायोगं समाचक्ष्व भवदाराधनं प्रभो! ।
यस्मात्त्वां ये यथाऽर्चन्ति सात्वताः सात्वतर्षभ! ॥ १ ॥
एतद्वदन्ति मुनयो मुहुर्निःश्रेयसं नृणाम् ।
नारदो भगवान् व्यास आचार्योऽङ्गिरसः सुतः ॥ २ ॥
निःसृतं ते मुखाम्भोजाद्यदाह भगवानजः ।
पुत्रेभ्यो भृगुमुख्येभ्यो देव्यै च भगवान् भवः ॥ ३ ॥
एतद्वै सर्ववर्णानामाश्रमाणां च संमतम् ।
श्रेयसामुत्तमं मन्ये स्त्रीशूद्राणां च मानद ! ॥ ४ ॥
एतत्कमलपत्राक्ष! कर्मबन्धविमोचनम् ।
भक्ताय चानुरक्ताय ब्रूहि विश्वेश्वरेश्वर! ॥ ५ ॥

श्रीभगवानुवाच ॥

नह्यन्तोऽनन्तपारस्य कर्मकाण्डस्य चोद्धव ! ।
संक्षिप्तं वर्णयिष्यामि यथावदनुपूर्वशः ॥ ६ ॥
वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः ।
त्रयाणामीप्सितेनैव विधिना मां समर्चयेत् ॥ ७ ॥
यदा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पूरुषः ।
यथा यजेत मां भक्त्या श्रद्धया तन्निबोध मे ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सप्तविंशे क्रियायोगः सद्यश्चित्तप्रसादकः ।
सर्वकामाप्तिहेतुश्च साङ्गः प्रोक्तः समासतः ॥
रागाद्याकुलचित्तानां कुतोऽसङ्गादिसम्भवः ।
इति कृष्णार्चनं भद्रमनुस्मृत्यानुपृच्छति ॥

क्रियायोगमिति भगवदाराधनरूपम् । यस्मादिति कारणाधिष्ठानादिप्रश्नः सर्वकारकाणां निमित्तत्वस्याविशिष्टत्वात् यथेति कस्मिन्नधिष्ठानादौ केन प्रकारेणेति प्रश्नः ये अधिकारिणः सात्वता भक्ताः ॥ १ ॥

अत्र पुनर्विशेषतः प्रश्ने कारणमाह चतुर्भिः निःश्रेयसकरं वदन्ति आङ्गिरसः सुतो बृहस्पतिः ॥ २ ॥

निःसृतं त्वयोपदिष्टमित्यर्थः । देव्यै पार्वत्यै ॥ ३ ॥

सर्ववर्णानां त्रैवर्णिकानाम् ॥ ४ ॥

विश्वेश्वरा ये तेषामीश्वर ! ॥ ५ ॥

नास्त्यन्तो ग्रन्थतः पारं चानुष्ठानतो यस्य तस्य ॥ ६ ॥

वैदिक एव मन्त्रो वैदिकान्येवाङ्गानि च यस्मिन् पुरुषस्कार्यो स वैदिकः एवं तान्त्रिकोऽपि मिश्रोऽप्युभयाङ्गैः मखः पूजा ॥ ७ ॥

यदा त्रैवर्णिको यजेत तदा गर्भाष्टमैकादशद्वादशाब्दादिकालस्वनिगमेन स्वाधिकारप्रवृत्तेन वेदेनोक्तं द्विजत्वमुपनयनम् ॥ ८ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मन्दमतीनां तदुक्तानुष्ठानं दुरोत्सारितमित्यतो नादरणीयमिति न मतिं कुरु किं तु यत्संक्षिप्योक्तं तदुत्तरप्रश्नपरिहारत्वेन वक्ष्यामीत्याह । महीति । कर्मकाण्डस्य पञ्चरात्रागमस्य चान्यो न समुच्चये किं तु केषांचिद्देवानन्तपारत्वं न सर्वेषामस्मदादिबुद्धेर्विषयत्वादित्यभिप्रायः ॥ ६ ॥

वैदिको वेदाधिकारिविषयोऽग्निष्टोमादिस्तान्त्रिकः तन्त्राधिकारिविषयः पुष्पाञ्जल्यादिर्मिश्रः स्त्रीशूद्रादिविषयो नामसंकीर्तनादिः मखो यागः पूजालक्षणः तत्तदधिकारिणामाह । त्रयाणामिति । ईप्सितेन योग्येन ॥ ७ ॥

स्वनिगमेन स्वशाखया विहितं यथा तथा द्विजत्वमुपनयनं प्राप्य ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवं तावत् सङ्गान्मोक्तुमिच्छूनां रीतिं श्रुत्वा निष्कामानामपि तस्य परमार्थपर्यवसानं यथा स्यात्तथा पृच्छति । क्रियायोगमिति ॥ १ ॥

प्रमाणयति । एतदिति द्वाभ्याम् । आङ्गिरसः सुत इति । तस्य भगवद्धर्मोपदेशे ह्यगुरुत्वं व्यञ्जयति युक्तञ्च तत् । श्रीभागवते तस्य श्रीसङ्कर्षणसंप्रदायित्वात् ॥ २ ॥

न च वीतसङ्गानां स्मरणादिकं नरमात्राणामेव स्यान्न पुनरेतदिति वाच्यं यत एतदिति तेषामेव संमतत्वादिति भावः ॥ ३—४ ॥

विश्वेश्वराणां महापुरुषादीनामपीश्वरः स्वयं भगवत्त्वात् ॥ ५ ॥

यद्यपि तद्विदश्यमेव तथापि विस्तरत्वादेव मया स्वयं नोक्तं सम्प्रतितु भवदिच्छां ज्ञात्वा संक्षिप्यैव वर्णयिष्यामीत्याह । नह्यन्त इति ॥ ६ ॥

ईप्सितेनैवेति । स्वस्वाधिकारप्राप्तत्वा तत्रापि स्वश्रद्धानुसारेणेत्यर्थः । ततः स्त्रीशूद्राणां केवलस्तान्त्रिकः अन्येषां त्वन्यतरो मिश्रो वेति विवेकः ॥ ७ ॥

तत्र तदिच्छानुसारेण स्वधर्मनिष्ठानेवाधिकृत्य तत्र च मुख्यतया द्विजमेवाधिकृत्योपदिशन्नन्यानपि यथायथमुपदिशति यदेति ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

क्रियायोगाभिधा भक्तिः सप्तविंशेऽर्चनात्मिका ।
नानोपचारैरर्चायां स्वधर्मसहितोच्यते ॥

उक्तलक्षणसत्सङ्गसहिता भक्तिः पुत्रकलत्राद्यासक्तचित्तैर्दुर्लभेत्यतस्तेषामपि निस्तारिकामागमोक्तार्चनभक्तिमनुसृत्य पृच्छति । क्रियायोगमिति । यस्मात् यं क्रियायोगमाश्रित्य ॥ १ ॥

एतत् त्वदर्चनम् ॥ २—४ ॥

ननु त्वं मद्भक्तः परमानुरागी भवसि तवानेन किं तत्राह । भक्तायापि अनुरक्तायापि ब्रूहि ॥ ५ ॥

मदर्चनलक्षणस्य कर्मकाण्डविशेषस्य नास्त्यन्तः यतोऽनन्तपारस्य नास्त्यन्तः शास्त्रतः पारं चानुष्ठानतोऽपि यस्य ॥ ६ ॥

वैदिक एव मन्त्रो वैदिकान्येवाङ्गानि च यस्मिन् पुरुषसूक्तादौ स वैदिकः एवं तान्त्रिकः गौतमीयतन्त्राद्युक्तः मिश्रोऽष्टाक्षरादिरुभयोक्तः मखः पूजा त्रयाणां मध्ये यदीप्सितं तेनैव ॥ ७ ॥

स्वनिगमेन स्वाधिकारप्रवृत्तेन वेदेनोक्तम् द्विजत्वं प्राप्य पुरुषः यदा यथा यजेत तन्निबोधेत्यन्वयः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अध्याये सप्तविंशे तु पुरुषार्थप्रसिद्धये ।
अर्चामाह दयासिन्धुः स्वं स्वचरणार्चनम् ॥

सन्तोऽवाग्विषयतोऽस्यामित्यनेन सन्तो भवत्पादपद्मार्चनोपदेशतः संसारव्यालगृहीतं जनं मोचयन्तीति सूच्यते तद्भवदीयार्चनप्रकारं स्वमुखेनैव समाचक्ष्वेति पृच्छति । क्रियायोगमिति । येऽधिकारिणः सात्वताः भागवताः यस्माद्दाराधनकरणाभिज्ञानादिनः यथा त्वामर्चन्ति तथाभूतं भवदाराधनरूपं क्रियायोगं समाचक्ष्वेत्यन्वयः सात्वता अपि भवदुपदिष्टेनैव क्रियायोगेन भवन्तं यजन्तीति सात्वतधर्मेति शब्दोपलाभिप्रायः ॥ १ ॥

एतद्भवदाराधनं निःश्रेयसकरं वदन्ति आङ्गिरसः सुतः बृहस्पतिः ॥ २ ॥

ते मुखाम्भोजान्निःसृतं श्रुत्वेति शेषः देव्यै उमायै ॥ ३ ॥

स्त्रीशूद्राणां चेति पृथगुक्तिर्वर्णेषु भगवतः कृपाधिक्यं द्योतयति विश्वेश्वराणां ब्रह्मरुद्रादीनामपीश्वर ! ॥ ४ ॥ ५ ॥

अनन्तपारस्य नास्त्यन्तः पारं ग्रन्थतोऽनुष्ठानतश्च कर्मकाण्डस्य मत्पूजाविधानस्य ॥ ६—७ ॥

स्वनिगमेन स्वाचारप्रकृतेन अष्टवर्षं ब्राह्मणमुपनयीतेत्यादिवेदोक्तं द्विजत्वमुपनयनम् ॥ ८ ॥

---

### भाषा टीका ।

उद्धवजी बोले हे यादव भक्तों के श्रेष्ठ ! हे प्रभो जो पंचरात्र वाले सात्वत भक्त आप का जैसे अर्चन करते हैं वह आप का आराधन रूप जो क्रियायोग है तिसको आप मेरे से कहिये ॥ १ ॥

यह आप का पूजन सब मनुष्यों का वारम्वार मोक्षादि देने वाला है करके नारद व्यास भगवान् तथा अंगिरा के पुत्र बृहस्पति आचार्य आदिक सब मुनि कहते हैं ॥ २ ॥

आप के मुख कमल से निकले हुये तिस पूजनको भृगु आदि पुत्रों के आगे भगवान् ब्रह्मा ने कहा है तथा महादेव जी ने अपनी प्रिया पार्वती जी से कहा है ॥ ३ ॥

हे मानद ! यह आपका पूजन सब वर्णां आश्रम वालों को संमत कल्याण दायकों मे श्रेष्ठ है ऐसा मेरे को विश्वास है औ स्त्री शूद्रों को भी उनके धर्म के अनुसार पूजन करना कल्याण कारी है ॥ ४ ॥

हे कमलपत्राक्ष ! हे योगेश्वरों के ईश्वर मैं आपका

अर्चायां स्थण्डिलेऽग्नौ वा सूर्ये वाऽप्सु हृदि द्विजे ।
द्रव्येण भक्तियुक्तोऽर्चेत् स्वगुरुं माममायया ॥ ९ ॥
पूर्वं स्नानं प्रकुर्वीत धौतदन्तोऽङ्गशुद्धये ।
उभयैरपि च स्नानं मन्त्रैर्मृ[1]द्ग्रहणादिना ॥ १० ॥
सन्ध्योपास्त्यादिकर्माणि [2]वेदेनाऽऽचोदितानि मे ।
पूजान्तैः कल्पयेत् सम्यक् सङ्कल्पः कर्म [3]पावनीम् ॥ ११ ॥
शैली दारुमयी लौही लेप्या लेख्या च सैकती ।
मनोमयी मणिमयी प्रतिमाऽष्टविधा स्मृता ॥ १२ ॥
चलाचलेति द्विविधा प्रतिष्ठा जीवमन्दिरम् ।
उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने ॥ १३ ॥
अस्थिरायां विकल्पः स्यात् स्थण्डिले तु भवेद्द्वयम् ।
स्नपनं त्वविलेप्यायामन्यत्र परिमार्जनम् ॥ १४ ॥
द्रव्यैः प्रसिद्धैर्मद्यागः प्रतिमादि[4]ष्वमायिनः ।
[5]भक्तस्य च यथा लब्धैर्हृदि भावेन चैव हि ॥ १५ ॥
स्नानालङ्करणं प्रेष्ठमर्चायामेव तूद्धव ! ।
स्थण्डिले तत्त्वविन्यासो वह्नावाज्यप्लुतं हविः ॥ १६ ॥

भाषा टीका ।

अनुरक्त भक्त हूं सो मेरे अर्थ कर्म बन्धों के छुटाने वाले भाव के पूजन को कहिये ॥ ५ ॥

श्रीभगवान् बोले शब्द मे तथा अर्थ मे अनंत पारवाले इस पूजनादि कर्म कागडका अन्त नहीं है तो भी हे उद्धव ! क्रम पूर्वक संक्षेप से मै इसको वर्णन करूंगा ॥ ६ ॥

वैदिक तांत्रिक मिश्र ऐसे तीन प्रकार से मेरा पूजन रूप यज्ञ है तीनों मे जिस से इच्छा होवे तिसी विधि से मेरा पूजन करै ॥ ७ ॥

अब पुरुष त्रैवर्णिक अपने वेद शाखा के अनुसार यज्ञोपवीत संस्कार को प्राप्त होकर फिर श्रद्धा पूर्वक मेरा जैसे पूजन करैं तिस बात को तुम श्रवण करो ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अर्चायां प्रतिमादौ ॥ ९ ॥

स्नाने विशेषमाह । उभयैर्वैदिकैस्तान्त्रिकैश्च मन्त्रैः ॥ १० ॥

किं च सन्ध्योपासनादीनि कर्माणि मच्चोदितानि साकल्येन विहितानि यस्य सन्ति तैः सह मे पूजां कुर्यात् न तु तानि परित्यजेदित्यर्थः । सम्यक् परमेश्वरविषय एव सङ्कल्पो यस्य तथाभूतः सन् कर्मपावनीं कर्मनिर्हारिणीम् ॥ ११ ॥

अर्चाभेदानाह सार्धेन । शैली शिलामयी लौही सुवर्णादिमयी लेप्या मृच्चन्दनादिमयी हृदि पूजायां मनोमयी ॥ १२ ॥

प्रकर्षेण तिष्ठत्यस्यामिति प्रतिष्ठा प्रतिमैव जीवस्य भगवतो मन्दिरम् यद्वा प्रतिष्ठया कलान्यासेन भगवन्मन्दिरम्भवतीति प्रतिमाभेदेन विशेषमाह सार्धेन उद्वासो विसर्जनम् ॥ १३ ॥

अस्थिरायामर्चने विकल्पः शालग्रामे न कुर्यात्सैकत्यां कुर्यादन्यत्र कुर्याद्वा न वेति अविलेप्यायां मृन्मयलेख्यव्यतिरिक्तायाम् अन्यत्र विलेप्यायां लेख्यायां च परिमार्जनमेव ॥ १४ ॥

इदानीं सकामनिष्कामभेदेन विशेषमाह । द्रव्यैरिति । प्रकर्षेण सिद्धैः सुशोभनैः अमायिनो निष्कामस्य भक्तस्य तु यथा लब्धैः यत्र चन्दनादि सर्वथा न लभ्यते तत्र हृदि भावेन भावनया यद्वा हृदि चेन्मद्यागस्तदा भावेन मनोमयैर्द्रव्यैरित्यर्थः ॥ १५ ॥

अधिष्ठानभेदेन प्रधानोपचारमाह सार्धेन । स्नानेति । तत्त्वविन्यासो यथा स्थानमङ्गप्रधानदेवतानां तत्तन्मन्त्रैः स्थापनम् ॥ १६ ॥

१ मृद्ग्रहणादिभिः २ वेदतन्त्रोदितानि मे ३ पावनः ४ ममायया ५ भक्त्याचैव इति विज० पाठः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जीवमन्दिरं देहः इदमपि चलान्तर्भूतास्थिरायां प्रतिमायामर्चने उद्वासावाहने न स्तः ॥ १३ ॥

अन्यत्र शिलादिष्वेव स्नपनं विलेप्यायां तु वस्त्रादिस्थयपिण्डाद्यावपि परिमार्जनं स्नपनमित्युच्यते ॥ १४ ॥

प्रसिद्धैस्तन्त्रेषु प्रशस्तत्वेन निरूपितैः सामग्र्यभावे यथालब्धैः हृदि भक्त्या भावेन ध्यानेन द्रव्यध्यानसमुच्चये च शास्त्रः एवशब्दो भक्तेः सार्वत्रिकत्वे द्विशब्दो ज्ञानाद्याधिक्ये ॥ १५ ॥

तत्त्वस्य हरेः सच्चिदानन्दरूपस्य विन्यासः सन्निधानं तत्त्वानां प्राणप्रश्नादीनां विन्यासो वा ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्रापि शक्त्यनुसारेण पूजाधिष्ठानं विकल्पयति । अर्चायामिति । प्रथमं स्वर्चायामेव विधिः अशक्त्यैव तूत्तरोत्तरत्रेति भावः ॥ ९—११ ॥

प्राधान्यादर्चाया एव भेदानाह । शैलीति । सैकता सैकतीत्यर्थः । एषा तु सकामानामेव न तु प्रीतीच्छूनां तद्रक्षणायास्त्वरायोः प्रीतिविरोधात् ॥ १२ ॥

चलाचलस्वरूपकं द्विविधा प्रतिष्ठा प्रतिमाजीवमन्दिरं यः सर्वेषां जीवानामाश्रयोऽहं तद्रूपमेव भावयेदित्यर्थः । वक्ष्यते च स्वलङ्कृतं मां प्रपूजयेदिति अलङ्कुर्वीत सप्रेम मद्भक्तो मां यथोचितमिति शिरोमत्पादयोः कृत्वेति च ॥ १३ ॥

स्थिरा कालान्तरस्थायी शैलीप्रभृतिः तस्यां न स्त इति प्रतिष्ठासमये नित्यस्थायित्वेनावाहनात् अस्थिरा सैकती काचिल्लुप्या च तत्र विकल्प इति सा यदि कथं चिरकालेन विहितानि स्थिरा स्यात्तदा तस्यामपि न ते स्तः किमुत स्थिरायामित्यर्थः ॥ १४ ॥

अविलेप्यायामिति लेप्याया दारुमय्याश्चोपलक्षणम् उपलक्षणत्वात्सर्वा दारुमयी गृह्यते निम्बुकसारादिमय्याः स्नपनसम्भवात् प्रधानदेवतानां तत्तन्मन्त्रैः स्नपनम् उपस्थानादर्थाद्विना पूजनं सर्वत्र गृह्यते ॥ १५ ॥

कामिनामावश्यकता कापट्यसम्भवात् भक्तस्य तु न सा विधीयते तदसम्भवादित्याह । अमायिन इति । अत्र अर्चायामेव सेवकस्य मम च प्रेमातिशयेन प्रियम् ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अर्चायां प्रतिमायाम् ॥ ९ ॥

उभयैर्वैदिकैस्तान्त्रिकैश्च मन्त्रैः वेदेनाचोदितानि शास्त्रविहितानि यानि तैः सह पूजां कल्पयेत् कुर्यात् स एव सम्यक् सङ्कल्पः पूर्णमनोरथः कर्मपावनीं कर्मनिर्हारिणीम् ॥ १० ॥११॥

प्रतिमाभेदानाह । शैली शिलामयी लौही स्वर्णादिमयी ॥ १२ ॥

प्रकर्षेण स्थीयतेऽस्यामिति प्रतिष्ठा प्रतिमा जीवमन्दिरं सर्वजीवानामाश्रयः साक्षादहमेवेत्यर्थः । स चाचला श्रीजगन्नाथादिः चला श्रीमुकुन्दादिः उद्वासो विसर्जनं च आवाहनं च ते स्थिरायामचलायां च न स्त इति प्रतिष्ठासमये एव नित्यस्थायित्वेनावाहनात् ॥ १३ ॥

अस्थिरायामस्थैर्यस्वभावायां सैकत्यां लेप्यायां च विकल्पः सा यदि कालचिह्नानि स्थिरीकृता स्यात्तदा भक्तिविश्वासभेदवशात् कश्चिन्न कुरुते अन्यथा तु कुरुते च शालग्रामे तु नैव कुर्यात् स्थापितस्य स्थापितस्यैव स्थित्युपलक्षणं सैकत्यामपि कुर्यादेवेत्यर्थः । अविलेप्यायां लेप्यलेख्यमूर्तिव्यतिरिक्तायां स्नपनमन्यत्र लेप्यलेख्ययोस्तथा दारुमय्यां च परिमार्जनमेव ॥ १४ ॥

प्रसिद्धैः प्रकर्षेण धनादिसिद्धैः अगरुघृतचन्दनकुङ्कुमादिभिः अमायिनो निस्पृहस्य भक्तस्य तु यथालब्धैर्वस्तुच्छया प्रातिद्रव्यैर्हृदि भावेन भावनया च मनसैवोपस्थापितवस्तुभिरपि सुरभिपयःपरमान्नादिभिरर्पयेत्यर्थः ॥ १५ ॥

तत्त्वानामङ्गप्रधानदेवतानां विशेषतो यथास्थानन्यासस्तत्तन्मन्त्रैः स्थापनमात्रं सरत्नकुरत्नादिकमाज्येन प्लुतं सिक्तं हविर्दिनमादिकं वा सिद्धं वस्तु ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अर्चायां प्रतिमादौ ॥ ९ ॥

उभयैर्वैदिकैस्तान्त्रिकैश्च ॥ १० ॥

सन्ध्योपासनादिकर्माणि वेदेन प्राचोदितानि साक्षाद्वेदविहितानि यस्य यानि तैः सह कर्मपावनीं कर्मनिर्हरणीं मे पूजां कल्पयेत् कुर्यात् सम्यक् फलाभिसन्धिरहितः सङ्कल्पो यस्य स तथाभूतः सन् ॥ ११ ॥

अर्चामनेकधा दर्शयति । शैलीति सार्धेन । शैली पारिजातादिशिलामयी तदुक्तं पारिजातं प्रति श्रीकृष्णेन—

स्वरत्नोऽर्मिश्च प्रतिमां कारयित्वेह भक्तितः ।
शुश्रूषन्ति तु ये नित्यं मम यान्ति ते गतिम् ॥

इति लौही सुवर्णादिमयी लेप्या मृच्चन्दनादिमयी अजीवस्योपासकाविर्भावस्योपास्यस्य भगवतः प्रतिष्ठया मन्दिरं स प्रतिमेत्यर्थः ॥ १२ ॥ १३ ॥

अस्थिरायां विकल्पः कुर्यान्न वेत्यर्थः । शालग्रामशिलायां तु प्रतिष्ठा आवाहन विसर्जनं च नास्ति पुराणान्तरे—

शालग्रामशिलायास्तु प्रतिष्ठा नैव विद्यते । इति
शालिग्रामार्चने नैव ह्यावाहनविसर्जने ॥
शालिग्रामे तु भगवानाविर्भूतो यथा हरिः ।
न तथान्यत्र सूर्यादौ वैकुण्ठे चैव सर्वगः ॥

इति च अविलेप्यायां लेप्यलेख्यसैकतीव्यतिरिक्तायाम् ॥ १४ ॥

यद्वा प्रतिमादिषु मद्यागस्तदा प्रसिद्धैर्द्रव्यैः तत्रापि अमायिनः मायिकफलवासनाशून्यस्य मद्भक्तस्य च यथालब्धैः यदा तु हृदि मद्यागस्तदा तु भावेन मनोमयेन द्रव्येणैवेत्यर्थः ॥ १५ ॥

अधिष्ठानभेदेन प्रधानोपचारं दर्शयति । स्नानेति सार्धेन तत्त्वस्य मन्त्रमूर्तेः स्थापनं तच्च श्रीमद्गोपालतापिन्यादिष्वाख्यानेषु पूर्वैः प्रपञ्चितम् ॥ १६ ॥

---

सूर्ये चाभ्यर्हणं प्रेष्ठं सलिले सलिलादिभिः ।
श्रद्धयोपाहृतं प्रेष्ठं भक्तेन मम वार्यपि ॥ १७ ॥
भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ।
गन्धो धूपः सुमनसो दीपोऽन्नाद्यं च किं पुनः ॥ १८ ॥
शुचिः संभृतसंभारः प्राग्दर्भैः कल्पितासनः ।
आसीनः प्रागुदग्वाऽर्चेदर्चायामथ संमुखः ॥ १९ ॥
[1]कृतन्यासः कृतन्यासां मदर्चां पाणिना मृजेत् ।
कलशं प्रोक्षणीयं च यथावदुपसाधयेत् ॥ २० ॥
तदद्भिर्देवयजनं द्रव्याण्यात्मानमेव च ।
प्रोक्ष्य पात्राणि त्रीण्यद्भिस्तैस्तैर्द्रव्यैश्च साधयेत् ॥ २१ ॥
पाद्यार्घाचमनीयार्थं त्रीणि पात्राणि देशिकः ।
हृदा शीर्ष्णाऽथ शिखया गायत्र्या चाभिमन्त्रयेत् ॥ २२ ॥
पिण्डे वाय्वग्निसंशुद्धे हृत्पद्मस्थां परां मम ।
अण्वीं जीवकलां ध्यायेन्नादान्ते सिद्धभाविताम् ॥ २३ ॥
तयाऽऽत्मभूतया पिण्डे व्याप्ते संपूज्य तन्मयः ।
आवाह्यार्चादिषु स्थाप्य न्यस्ताङ्गं मां प्रपूजयेत् ॥ २४ ॥

भाषा टीका ।

राम कृष्णादि मूर्ति में या वेदी में वा अग्नि में वा सूर्य में या जल में या हृदय में या ब्राह्मण में उपयोगी द्रव्य द्वारा भक्तियुक्त होकर मेरा तथा अपने गुरू का निष्कपट होकर पूजन करै ॥ ९ ॥

पहिले अंग की शुद्धि के लिये दन्तधावन करके स्नान कर तिसमे मृत्तिकादिक लगाके वैदिक तथा तान्त्रिक मन्त्रों से स्नानादिक क्रिया करै ॥ १० ॥

जैसे मेरे आज्ञा रूप वेदों ने कहा है तैसे सन्ध्योपासनादि कर्मों को सङ्कल्प पूर्वक करै उन पदार्थों से कर्मों को पवित्र करने वाली पूजा को करै ॥ ११ ॥

शिला की काष्ठ की सुवर्णादिक की लेपन की चित्र की बालू की पाषाण की हृदय में मनोमयी ऐसी आठ प्रकार की मूर्त्ति की पूजा होता है ॥ १२ ॥

चल तथा अचल दो प्रकार की मूर्त्ति होती हैं सब जीवों का प्रतिष्ठा रूप परमात्मा का मंदिर है हे उद्धव ! स्थिर मूर्ति मे आवाहन तथा विसर्जन दोनों नहीं होते हैं ॥ १३ ॥

चल मूर्ति मे आवाहन विसर्जन कहीं होता है कहीं नहीं होता है वेदी मे दोनों होते हैं बिना लिपी मे स्नान होता है और लिखी मे मार्जन होता है ॥ १४ ॥

निष्कापटी होकर प्रसिद्ध द्रव्यों से प्रतिमादिकों में मेरा यजन करै भक्तहोवे तो यथालाभ पदार्थों से पूजन करै हृदयमे तो भावही से करै ॥ १५ ॥

हे उद्धव ! स्नान सुंदर प्रिय अलंकारादिक तो मूर्ति में ही होते हैं वेदिमे तो तत्वों का न्यास होताहै अग्निमे तो घृत मिश्रित हविस पूजन होता है ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अभ्यर्हणमुपस्थानादीनि सलिलादिभिस्तर्पणादिना यजनम् सर्वसाधारणमाह । श्रद्धयेति ॥ १७–१८ ॥

एवमधिकारादिव्यवस्थामुक्त्वा इदानीं पूजाप्रकारमाह । शुचिरिति । सम्भृताः सम्भाराः पूजासाधनानि येन सः प्रागग्रैर्दर्भैः यद्वा प्रागेव सम्भृतसम्भारः सन्नासीनः तत्रासीनः सन् पश्चात्सम्भारार्थं वारंवारमुत्थितिर्दित्यर्थः । प्राङ्मुखः उदङ्मुखो वा आसीनः अर्चायां तु स्थिरायां सम्मुखोऽर्चाभिमुख उपविष्टः सन् ॥ १९ ॥

अनन्तरं गुर्वादिनमस्कारपूर्वकं यथोपदेशं स्वाङ्गे न्यासः कृतो मूलमन्त्रन्यासो यस्यां तां ममार्चामामृज्यान्निर्माल्यापकर्षणादिना शोधयेत् कलशं पूर्णकुम्भम् प्रोक्षणीं च प्रोक्षणोदकपात्रमुपसाधयेच्चन्दनपुष्पादिभिः संस्कुर्यात् ॥२०॥

[1] कृतन्यासो मदर्चां च पाणिनाभिमृजेद्बुधः इति विज० पाठः ।

## श्रीधरस्वामिकृतभावार्थदीपिका ।

तदद्भिः प्रोक्षणीयाद्भिर्देवयजनं देवपूजास्थानम् पाद्यार्घ्यार्थं त्रीणि पात्राणि कलशोदकैः पूरितानि तैस्तैर्द्रव्यैः साधयेत् तत्र पाद्यादिद्रव्याणि—

पाद्ये श्यामाकदूर्वाब्जविष्णुक्रान्तादिरिष्यते ।
गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपाः ॥
दूर्वा चेति क्रमादर्घ्यद्रव्याष्टकमुदीरितम् ।
जातीलवङ्गकक्कोलैर्मतमाचमनीयकम् ॥
इति ॥ २१ ॥

तानि च त्रीणि यथाक्रमं हृदयादिमन्त्रैर्गायत्र्या च सर्वाण्यभिमन्त्रयेत् ॥ २२ ॥

तदनन्तरं पिण्डे देहे वाय्वग्निसंशुद्ध इति । कोष्ठगतेन वायुना शोषिते आधारगतेनाग्निना दग्धे पुनर्ललाटस्थचन्द्रमण्डलामृतप्लावनेनामृतमये जाते तस्मिन् हृत्पद्मस्थां परां श्रेष्ठां जीवकलां श्रीनारायणमूर्तिं ध्यायेत् कथम्भूताम् नादान्ते सिद्धैर्भाविताम् प्रणवस्याकारोकारमकारबिन्दुनादाः पञ्चांशास्तत्र नादान्ते सिद्धैर्ध्याताम् तथा च श्रुतिः—

"यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः" ॥
इति ॥ २३ ॥

तयाऽऽत्मभूतया स्वेनैव भावेन चिन्तितया अमृतमये पिण्डे दीपेन प्रभया गृह इव व्याप्ते सति तस्मिन्नर्चादौ मानसैरुपचारैः सम्पूज्य तन्मयः सन्नर्चादिष्वावाह्य स्थापनमुद्रया स्थापयित्वा ॥ २४ ॥

———

## श्रीराधारमणदासगोस्वामिविरचिता— दीपिकादीपनी टिप्पणी ।

सूर्ये चेत्यर्द्धकम् । उपस्थानं स्तुतिः अर्घ्यादीत्यादिना पाद्याद्युपचारग्रहः । तर्पणादिनेत्यादिना पुष्पाद्युपचारग्रहः ॥१७॥

सर्वत्र सर्वेष्वर्चाद्यधिष्ठाने साधारणं समानमुपचारमाह । अर्धेन श्रद्धयेति । श्रद्धया आदरेण । अन्नं भोज्यमद्यं भक्ष्यम् ॥१८॥

अधिकारादिव्यवस्थामिति । सकामस्य विहितसर्वद्रव्यैरेवाधिकारः नतु हीनद्रव्यैरेव निष्कामस्य तु यथालब्धैरपीति अधिकारव्यवस्था । आदिना अधिष्ठानभेदेनोपचारव्यवस्था सर्वसाधारणोपचारव्यवस्था च गृह्यते । पूर्वार्धे मध्यपदलोपाभ्युपगमेऽपि सम्भाराः पूजाकाले तत्पूर्वं वा संपादनीया इति संबन्धं यद्वेति ॥ १९ ॥

स्वाङ्गेषु कृता केशवादिन्यासा येन सः । तथा मूलमन्त्रेण द्वादशाक्षरेण अष्टादशाक्षरेण वा ॥ २० ॥

साधयेत् योजयेत् । विष्णुक्रान्ता अपराजिता । आदिना तुलसीचन्दनग्रहः ॥ २१ ॥

देशिकः पूजकाचार्यः । हृदयादिमन्त्रैरिति । हृदयाय नमः शिरसे स्वाहा शिखायै वषट् इति मन्त्रैः ॥ २२ ॥

भूतशुद्धिमाह । कोष्ठगतेनेति । अत्र मन्त्रविधिपूर्वकोऽयं । पापपुरुषरूपे पिण्डे वायुना शोषिते इति धूम्रवर्णेन परमशोषकेण पूर्वं वामनासापुटे चिन्तितेन षोडशवारं जप्तेन पश्चान्मनसा नाभिमण्डलं नीतेन पुनः चतुःषष्टिवारं जप्तेन यं बीजेन कुम्भकं कृत्वोत्थापितो यो वायुस्तेन शोषिते इति पश्चाद्रमिति वह्निबीजेन मूलाधारगतवह्न्युत्थापकेन वायुसखस्तया दक्षिणनासापुटे चिन्तितेन षोडशवारं जप्तेन पुनः मूलाधारं नीत्वा चतुःषष्टिवारं जप्तेन कुम्भकं कृत्वोत्थापितो यो वह्निस्तेन दग्धे इति । पश्चात् वमिति चन्द्रबीजेन वामनासापुटे चिन्तितेन षोडशवारं जप्तेन पुनर्ललाटस्थचन्द्रं प्रति नीत्वा चतुःषष्टिवारं जप्तेन कुम्भकं कृत्वोत्थापितं यच्चन्द्रमण्डलस्थममृतं तत्प्लावेनामृतमये जाते तत्पूजोपयोगिदेहे नारायणमूर्तिं ध्यायेदिति तथा च नारायणमूर्तेर्नादान्तस्थे प्रमाणं श्रुतिस्तत्र स्वरः प्रणवान्तनादरूपः वेदस्यादावन्ते च स इति तदुच्चारणानन्तरमेव लयस्योच्चारणात् समापनाच्च प्रकृतिलीनस्य स्वरूपलीनस्य सतः यः परोऽधिष्ठाता स महेश्वरः श्रीनारायणः ॥२३॥

स्वेनैकभावेनेति । स्वस्य तदंशत्वात्तद्व्याप्यत्वात्तदायत्तवृत्तिकत्वात् कामुकाः कामिनीमयमितिवत्तदाविष्टत्वाच्च स्वस्वरूपेण सहाभेदेन चिन्तयेदित्यर्थः । भेदस्यौपाधिकत्वे ध्यातृध्येयभावस्य पूज्यपूजकभावस्य च कण्ठोक्तस्य व्याकोपात् व्याख्यान्तरमुपेक्षितम् । तस्मिन्नेव पिण्ड एव । तन्मयः श्रीमयोऽयं जात इतिवत् तदाविष्टः । मामिति अर्चायां सर्वत्राऽस्मच्छब्दसामानाधिकरण्येनाभेदोक्त्या शिवाद्युपासनादि सर्वथा परिहृतं शिवाद्युक्तिः कृता किम्वा प्रतिमायां हरेर्मयेत्यादिना तन्निषेधात् ॥ २४ ॥

———

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रोक्षणीयमिति कलशविशेषणम् ॥ २०—२१ ॥

हृदा शीर्ष्णा च शिखया हृदयशिरःशिखामन्त्रैः ॥ २२ ॥

पिण्डे इति । प्लावनस्याप्युपलक्षणार्थौ वाय्वग्निशब्दौ शोषणदाहनप्लावनैः शोधिते शरीरे इत्यर्थः । मम अपरां जीवकलां ध्यायेदिति देहादिविलक्षणामपरां जीवकलां मदीयां ध्यायेत् ॥२३—२४

———

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सूर्ये चेति । अभ्यर्हणम् उपस्थानेनार्हणं स्तुतिभिराराधनमित्यर्थः । सलिले तु सलिलादिभिः अर्घ्यमाल्यादिभिः आदिशब्देन गन्धपुष्पाक्षतादिसंग्रहः तर्पणादिभिरिति केचित् सर्वत्र साधारणमाह । श्रद्धयेति । भक्तियुक्तेन भक्त्या समर्पितं वारि जलमपि प्रेष्ठं मम भवति ॥ १७ ॥

किं पुनः गन्धाद्यन्यतमं सुमनसः पुष्पाणि अन्नाद्यमित्याद्यशब्देन पेयताम्बूलादिसंग्रहः यद्वा अन्नं ततोऽप्यन्यदद्यं भवतीत्यर्थः ॥ १८ ॥

अथ पूजाक्रमं प्रपञ्चयति । शुचिरित्यादिना । संभृताः संपादिताः सम्भाराः पूजोपकरणानि येन सः प्रागग्रैर्दर्भैः कल्पितमासनं यस्य सः प्रागुदग्वा प्राङ्मुख उदङ्मुखो वा अथवार्चासंमुखोऽभिमुखः आसीनो वारम्वारमनुतिष्ठन्नर्चयेत् ॥ १९ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रथमं स्वाङ्गेषु कृतो न्यासः मातृकाप्रणवमूलमन्त्रन्यासो येन सः कृतः न्यासः स एव यस्यां तां मदर्चां मत्प्रतिमां पाणिना मृजेत्परिमृजेत् प्रोक्षणीयमिति कलशविशेषणं पृथक् प्रोक्षणकलशपरं वा यथावदात्मनो वामपार्श्वे उपसादयेन्निदध्यात् ॥ २० ॥

तदद्भिः कलशोदकैः देवयजनं यागभूमिं द्रव्याणि साधनान्यात्मानं स्वदेहं पाद्यादीनि त्रीणि पात्राणि च प्रोक्ष्य ततोऽद्भिः कलशोदकैस्तैस्तैर्द्रव्यैस्तुलसीदूर्वाङ्कुरविष्णुक्रान्तासिद्धार्थकचन्दनादिभिश्च साधयेत्पूरयेदित्यर्थः । पात्राणां च त्रित्वोक्तिरावश्यकत्वद्योतनार्था शुद्धोदकसर्वौषधिकस्नानीयोदकादिपात्राणामपि तत्र तत्रोक्तत्वात् ॥ २१ ॥

कानि पुनस्तानि पात्राणीत्यतस्तान्युद्दिशन् संस्कारान्तरमाह । पाद्येति । देशिकः आराधकः पाद्याद्यर्थं यानि त्रीणि पात्राणि तानि हृदादिभिरभिमन्त्रयेत् तत्र हृत् हृदयमन्त्रः शिरः शिरोमन्त्रः शिखा शिखामन्त्रः गायत्री विष्णुगायत्री ॥ २२ ॥

अथ देहसंस्कारमाह । पिण्ड इति । वाय्वग्निशब्दौ शोषणदहनपरौ तौ च्यावनप्लावनादेरुपलक्षणार्थौ शोषणदहनप्लावनैः शोधिते शरीरे इत्यर्थः । तस्मिन् यत् हृदयपद्मं तत्स्थां मम मदीयां महात्मिकामिति यावत् परां दहनेन्द्रियादिविलक्षणामणुस्वरूपां नाद उदात्तस्वरयुक्तः प्रणवस्तस्यान्तो मकारः तत्प्रतिपाद्यतया सिद्धैर्योगिभिर्भावितामनुभावितां जीवकलां जीवस्वरूपात्मिकां कलां ध्यायेत् कलाशब्दोऽत्र विद्याद्यपर्यायः स च ज्ञानमाह ज्ञानस्वरूपामित्यर्थः । न त्वंशभूतामिति ममेत्यनेनैव तल्लाभात् ॥ २३ ॥

आत्मभूतया स्वरूपभूतया तया जीवकलया पिण्डे शरीरे व्याप्ते दीपप्रभया गेह इव धर्मभूतज्ञानद्वारा व्याप्ते सति व्याप्तं शरीरं ध्यात्वेत्यर्थः । स्वपूजायतनस्य मामित्यपकर्षेण सम्बन्धः इत्थं संस्कृतशरीरे इत्येव तावन्मानसोपचारैर्मामभ्यर्च्येत्यर्थः ततोऽर्चादिष्वावाह्य मां समभ्यर्च्येत् न्यासादिकं आवाहनादिसंग्रहः अर्चायाम्प्रतमेवावाह्य स्थाप्य च इव संनिधापनादीनामप्युपलक्षणम् आवाहनाविधिमुद्राप्रदर्शनतावाहनादिकं कृत्वेत्यर्थः । न्यस्तान्यङ्गानि हृदयाद्यङ्गमन्त्रदेवता यस्य तं मां प्रपूजयेदित्यर्थः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वर्थं पुष्पादिभिरध्यर्हणां प्रेष्ठम् अतिशयितप्रीतिजनकं सर्वकर्माङ्गत्वेनपूर्वकमुपाहृतं प्रेष्ठमित्याह । अर्चयेदिति ॥ १७—१८ ॥

प्रागुदग्वासीनः सम्मुखः अभिमुखः ॥ १९ ॥

कृतपञ्चाङ्गन्यासः कलशमर्घ्यादिकपात्रं प्रोक्षणीयं पुष्पादिपात्रम् ॥ २०—२१ ॥

देशिको मन्त्रज्ञः हृदादिमन्त्रैर्नमआदिलक्षणैः ॥ २२ ॥

ध्येयस्वरूपमाह । पिण्ड इति । प्राणायामेऽर्चाविधानतादर्चाप्रसंगाद्धेत पिण्डे देहे हृत्पद्मस्थां जीवः कला यस्याः सा जीवकला तां बिम्बस्वरूपामित्यर्थः । हरिरूपाया हरेर्मूर्तिर्जीवो यत्प्रतिबिम्बकः । यद्वशो वर्तते जीवः सा तु जीवकला स्मृतेति वचनात् ध्यायेत् नादान्ते सिद्धभाविताम् नादः शब्दः अन्तोऽव-

सानं सर्वात्मना शब्दोऽनुच्चारणात् शब्दागोचरतया सिद्धैः सनकादिभिरुपासितां शब्दैः सर्वात्मनानुक्तेनादान्तत्वात् सा मतेत्युक्तेः ॥ २३ ॥

आत्मव्याप्तिभूता नित्यं वर्तमाना या जीवकला तया शरीरव्यापिन्या भगवन्मूर्त्या व्याप्ते पिण्डे देहे स्वस्य सम्यक् प्रतिपत्तिं कृत्वा तन्मयः एवं ध्यानेन भगवत्प्रधानो भूत्वा अर्चादिषु आवाह्य संस्थाप्य संनिरुध्य न्यस्ताङ्गं मातृकादिमन्त्राक्षरैर्न्यस्ततत्त्वदेवं मां प्रपूजयेदित्यन्वयः—

व्याप्तो भूतश्च नित्यं यदात्मभूतो हरिस्ततः ।
जीवस्य तत्प्रधानत्वं तन्मयत्वमुदाहृतम् ॥

इति वचनात् अत सातत्यगमन इति धातोः मनुप्रत्ययादात्मेति रूपम्—

व्याप्तोऽपि भगवान्विष्णुर्देहे सर्वगतत्वतः ।
भक्तस्य फलदो यस्माद्व्याप्तिकृत्तस्य तेन सः ॥

इति अनेन मयि स्थितस्य स्वयमेव स्वात्मानमावाहयत्यर्थं त्वहं तदधीनतयावाहनादि करोमीत्याद्युक्तं भवति ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सूर्येत्यर्धकम् ॥ १७ ॥

श्रद्धयेति सार्धकं गन्ध इत्यर्धस्य श्रद्धयेत्यर्धेनान्वयः तस्य भक्तस्य निष्कञ्चनत्वेऽपि मम सेवायामाग्रहश्चेत्तदा गन्धादिकं प्रेष्ठमिति पुनः किं वक्तव्यमित्यर्थः ॥ १८ । १९ ॥

कृतन्यास इति । केशवादिन्यासादीनां परमधर्माङ्गत्वविधानं तत्र तत्तन्मूर्तिध्यानेन तत्तन्मन्त्रांश्च जपत्वैव तत्तदङ्गरूपत्वमात्रं कुर्यात् न तु तत्तन्मन्त्रदेवतात्वेन तत्र स्वस्य ध्यायेत् भक्तानां तदनौचित्यात् भूतशुद्ध्यादिकं त्वेवं ज्ञेयं तत्र भूतशुद्धिर्निजाभिलषितभगवत्सेवौपयिकतत्पार्षददेहभावनापर्यन्तैव तत्सेवैकपुरुषार्थिभिः कार्या निजानुकूल्यात् एवं यत्र आत्मनो निजाभीष्टदेवतारूपत्वेन चिन्तनं विधीयते तत्र तत्रैव पार्षदत्वविग्रहत्वं ग्राह्यम् अहंग्रहोपासनायाः शुद्धभक्तैर्विद्विष्टत्वात् एकत्वं च तत्र साधारणप्रायत्वेन मदीयत्वचिच्छक्तिवृत्तिशुद्धसत्त्वांशविग्रहत्वात्पार्षदानामिति ॥ २० ॥

तदद्भिरिति युग्मकम् ॥ २१—२२ ॥

पिण्ड इति तैः तत्र शून्यो न्यासः प्रणवान्तनादरूपः देहस्था द्वादशान्ते च सा इति तदुच्चारणानन्तरमेव चेद्रूपोच्चारणात् समापनाच्च प्रकाशितस्य स्वस्वरूपलीनस्य मतः परः भाविता ॥ २३ ॥

आत्मभूतया परमात्मरूपया आवाह्य तदेकान्त्येन निभाव्यापि मां स्वयं भगवल्लक्षणसमवेतं चिन्तितमर्चादिक पूजयेत् ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मध्वर्हणम् अर्घ्योपचारादि सलिलेन सलिलादिभिरेव यजनम् ॥ १७ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सुमनसः पुष्पाणि ॥ १८ ॥

इदानीं पूजाप्रकारमाह । शुचिरिति प्रागुदग्वा प्राङ्मुख उदङ्मुखो वा अर्चायामचलायां तु सम्मुखः अर्चाभिमुखः ॥ १९ ॥

ततश्च गुर्वादिनमस्कारपूर्वकं यथोपदेशं अस्मिन् कृतन्यासः कृतो मूलमन्त्रेण न्यासो यस्यां तां ममार्चाम् आमृजेत् निर्माल्यादिदूरीकरणेन शोधयेत् प्रोक्षणीयं प्रोक्षणीोदकपात्रम् उपसाधयेत् पुष्पादिभिः संस्कुर्यात् ॥ २० ॥

तदद्भिः प्रोक्षणीयाभिरद्भिर्देवयजनं देवपूजास्थानं तैस्तैर्द्रव्यैरिति पाद्यं श्यामकदूर्वाब्जविष्णुक्रान्ताभिरिष्यते——

गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपाः ।
दूर्वा चेति क्रमादर्घ्यद्रव्याष्टकमुदीरितम् ॥
जातीलवङ्गकक्कोलैर्मतमाचमनीयकम् ।

इति ॥ २१ ॥

तानि च त्रीणि पात्राणि देशिकः पूजकः क्रमेण हृदयादिमन्त्रैर्गायत्र्या च ॥ २२ ॥

ततश्च पिण्डे देहे वाय्वग्निसंशुद्धे इति कोष्ठगतेन वायुना शोषिते आधारगतेनाग्निना दग्धे पुनर्ललाटस्थचन्द्रमण्डलामृतप्लावनेनामृतमये जाते तस्मिन् हृत्पद्मस्थां परां श्रेष्ठां जीवः कला यस्यास्तां । श्रीनारायणमूर्त्तिं ध्यायेत् । नादान्ते इति प्रणवस्याकारोकारमकारबिन्दुनादाः पञ्चांशास्तत्र नादान्ते सिद्धैर्ध्यातम् । तथाच श्रुतिः । यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठित इति ॥ २३ ॥

तया भगवन्मूर्त्या आत्मभूतया परमात्मस्वरूपया स्वप्रभाभिः पिण्डे देहे दीपेन स्वप्रभाभिर्गेहे इव व्याप्ते सति प्रथमं संपूज्य मानसैरुपचारैरभ्यर्च्य तन्मयः सन् अर्चादिषु आवाह्य स्थापयित्वा न्यस्ताङ्गं मां मदङ्गन्यासान् कृत्वेत्यर्थः ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सूर्ये चेति । सलिले च सलिलादिभिः अभ्यर्हणं यजनं प्रष्ठम् ॥ १७ ॥

सर्वत्र किञ्चिदपि जलादिकं मद्भक्तेन श्रद्धया निवेदितं मम प्रीतिकरं भवति किं पुनर्यथोचितं सुगन्धादिकं प्रीतिकरं भवतीति वक्तव्यम् अभक्तनिवेदितं तु भूर्य्यपि मम प्रीतये न भवति किं तन्निवेदितेन स्वल्पेनेत्याह सार्द्धेन भक्तयेति ॥ १८ ॥

शुचिरिति । अथ शुचिः सन्नर्चेत् अर्चनप्रकारमाह । प्राक् सम्भृतसम्भारः दर्भैः कल्पितासनः प्राङ्मुख उदङ्मुखो वा आसीनः सन् अर्चायां स्थिरायां तु सम्मुखः अर्चाभिमुखः उपविष्टः सन् अर्चेत ॥ १९ ॥

कृतन्यासः गुर्वादिप्रणामपूर्वकम् कृतो यथोपदेशं न्यासो येन सः कृतो मूलमन्त्रेण न्यासो यस्यां तां ममार्चां प्रतिमां पाणिना चन्दनादिसंस्कृतेन स्वहस्तेन आमृजेत निर्माल्याद्यपकर्षणादिना शोधयेत कलश प्रोक्षणीयं प्रोक्षणार्थजलपात्रं च उपसाधयेत चन्दनपुष्पादिभिः संस्कुर्यात् ॥ २० ॥

तदद्भिः प्रोक्षणीयाद्भिर्देवयजनं देवजनस्थानं द्रव्याणि पुष्पादीनि आत्मानं स्वशरीरं च प्रोक्ष्य पाद्यपात्रमर्घ्यपात्रमाचमनपात्रमित्येवं त्रीणि पात्राणि स्थापितानि अद्भिः कलशोदकैस्तैस्तैः प्रसिद्धैर्द्रव्यैश्च साधयेत्—

पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्तादिरिष्यते ।
गन्धपुष्पाक्षतयवाः कुशाश्च तिलसर्षपाः ॥
दूर्वाचेति क्रमादर्घ्यं द्रव्याष्टकमुदाहृतम् ।
जातीलवङ्गकक्कोलैर्मतमाचमनीयकम् ।
द्रव्याभावे तु सर्वेषु तुलसीं योजयेत्पुनः ॥ २१ ॥

देशिकोऽर्चकः हृदयादिभिस्त्रिभिर्मन्त्रैस्तानि त्रीणि पात्राणि यथाक्रमं गायत्र्या च सर्वाण्यभिमन्त्रयेत् ॥ २२ ॥

तदनन्तरं पिण्डे देहे वायुना शोषिते अग्निना दग्धे पुनर्ललाटस्थचन्द्रमण्डलामृतप्लावनेनामृतमयत्वेन भाविते तदुक्तम्—

इडावक्त्रे धूम्रं सततगतिबीजं सबलकम् ।
स्मरेत् पूर्वं मन्त्री सकलभुवनोच्छोषणकरम् ॥
स्वकं देहं तेन प्रततपवनापूर्य सकलम्—
विशोष्य व्यामुञ्चेत्पवनमथ मार्गेण गमने ॥

तेनैव मार्गेण विलीनमारुतं बीजं विचिन्त्यारुणमाशुशुक्षणेः आपूर्य देहं परिदह्य यामतो मुञ्चेत्समीरं सहभस्मना बहिः टपरमतीव शुभ्रमृतांशु पर्यन्त विधुनवतु ललाटचन्द्रममुतः सकलार्णमयीम् लवरजवाभिपात्य रचयेत्तया सकलं वपुरमृतौघवृष्टिमथ ककराङ्कमिदमिति तत्र हृत्पद्मस्थाम् अपरां अणुरेष आत्मेति श्रुतेः अणुपरिमाणां परामुत्कृष्टाम् अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परामिति स्मृतिप्रसिद्धाम् जीवकलां जीवभूतां प्रकृतिम् नादः उदात्तस्वरयुक्तः प्रणवस्तदन्ते मकारे प्रतिपाद्यतया सिद्धैः प्रणवार्थज्ञैर्भावितां ध्यायेत् उपासकस्वरूपं चिन्तयेदित्यर्थः ॥ २३ ॥

तया आत्मभूतया उपासकस्वरूपभूतया अणुस्वरूपयापि धर्मभूतज्ञानेन पिण्डे व्याप्ते—

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ! ॥

इति स्मृतेः मामुपास्यं सम्पूज्य तन्मयस्तदात्मकः अर्चादिषु आवाह्यस्थापनमुद्रया समावाह्य संस्थापयित्वा न्यस्ताङ्गं न्यस्ताङ्गन्यासं प्रपूजयेत् ॥ २४ ॥

---

भाषा टीका ।

सूर्य के विषे उपस्थानादिकही पूजन है जल में तर्पणादिक से पूजन है श्रद्धा से मेराभक्त मेरे को जल मात्र देवे तो मेरे को अति प्रिय है ॥ १७ ॥

अभक्त का दिया बहुत भी मेरे सन्तोष के वास्ते नहीं होता है गंध चन्दन धूप पुष्प दीप तथा अन्नादि भोजन जो भक्तने दिया हो तो फिर क्या कहना है ॥ १८ ॥

अब पूजा करने वाला पहिले पवित्र होकर पूजाकी सब सामग्री पास में रखकर पूर्व भाग में अग्र भाग वाले

पाद्योपस्पर्शार्हणादीनुपचारान् प्रकल्पयेत् ।
धर्मादिभिश्च नवभिः कल्पयित्वाऽऽसनं मम ॥ २५ ॥
पद्ममष्टदलं तत्र कर्णिकाकेसरोज्ज्वलम् ।
उभाभ्यां वेदतन्त्राभ्यां मह्यं तूभयसिद्धये ॥ २६ ॥
सुदर्शनं पाञ्चजन्यं गदासीषुधनुर्हलान् ।
मुसलं कौस्तुभं मालां श्रीवत्सं चानुपूजयेत् ॥ २७ ॥
नन्दं सुनन्दं गरुडं प्रचण्डं चण्डमेव च ।
महाबलं बलञ्चैव कुमुदं कुमुदेक्षणम् ॥ २८ ॥
दुर्गां विनायकं व्यासं विष्वक्सेनं गुरून् सुरान् ।
स्वे स्वे स्थाने त्वभिमुखान् पूजयेत्प्रोक्षणादिभिः ॥ २९ ॥
चन्दनोशीरकर्पूरकुङ्कुमागुरुवासितैः ।
सलिलैः स्नापयेन्मन्त्रैर्नित्यदा विभवे सति ॥ ३० ॥
स्वर्णघर्मानुवाकेन महापुरुषविद्यया ।
पौरुषेणापि सूक्तेन सामनीराजनादिभिः ॥ ३१ ॥
वस्त्रोपवीताभरणपत्रस्रग्गन्धलेपनैः ।
अलं कुर्वीत सप्रेम मद्भक्तो मां यथोचितम् ॥ ३२ ॥

भाषा टीका ।

कुशों का आसन बिछाकर पूर्व को वा उत्तर को मुख करके बैठे यदि स्थिर प्रतिमा हो तो उसके सन्मुख ही बैठकर पूजन करे ॥ १९ ॥

अपने शरीर में अंगादि न्यास करे फिर भगवन्मूर्ति में भी अंगादि न्यास करे फिर मेरी मूर्ति को हस्त से मार्जन करे फिर प्रोक्षण जल के कलश को मंत्रों से सिद्ध करे ॥ २० ॥

उस पुण्याहवाचन के कलश के जलसे भगवन्मन्दिर और पूजा द्रव्य अपना शरीर इन सबों को प्रोक्षण करे फिर पाद्य अर्घ आचमन के तीनों पात्रों में जल भर के उनमें जो जो पुष्प चंदनादि पदार्थ लिखे हैं तिनको डाले ॥२१॥

पूजा करने वाला पूर्वोक्त उन तीनों पात्रों को हृदय शिर शिखाओं विष्णु गायत्री इन मन्त्रों से अभिमन्त्रण करे ॥ २२ ॥

भूत शुद्धि के क्रम से वायु अग्नि से शुद्ध अपने शरीर के मध्य हृदय कमल में स्थित जो हमारी सूक्ष्म जीव कला है जिस को कि सिद्ध लोग प्रणव के नाद के अन्त में ध्यान करते हैं तिसका ध्यान करे ॥ २३ ॥

इस आत्मा के ज्ञान से जब सब शरीर व्याप्त होजावे तब भगवन्मय होकर परमात्मा का आवाहन करे फिर मूर्ति आदि में स्थापन कर के अङ्गन्यास कर के मेरा पूजन करे ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कथं पूजयेत्तत्राऽऽह । पाद्येति द्वाभ्याम् । धर्मादिभिर्ममाऽऽसनं तत्र पद्मं च कल्पयित्वोभाभ्यां वेदतन्त्राभ्यामुभयसिद्धये मह्यं पाद्यादीनुपचारान्प्रकल्पयेदित्यन्वयः उपस्पर्श आचमनमर्हणम-र्घ्यम् उभयसिद्धये वेदतन्त्रोक्तभुक्तिमुक्तिप्राप्तये अयमर्थः धर्म-ज्ञानवैराग्यैश्वर्याण्यासनपर्यङ्कस्याग्न्यादिचतुष्कोणेषु पादाः अध-र्मादीनि पूर्वादिदिक्षु गात्राणि त्रयो गुणाः पट्टिकाः तत्र पूर्वादिक्रमेण मध्ये च विमलोत्कर्षिणी ज्ञाना क्रिया योगा प्रह्वी सत्येशानाऽनुग्रहेति न व शक्तयः एवं यथोपदेशं धर्मा-दिभिर्नवभिः शक्तिभिश्चाऽऽसनं कल्पयित्वेति कर्णिकया केसरैश्चत्रस्य सूर्यादिमण्डलैश्चोज्ज्वलमित्यर्थः ॥ २५—२६ ॥

आयुधादिपूजामाह । सुदर्शनमिति त्रिभिः । तत्र न्यस्ताङ्गाभि-रङ्गावरणपूजा सूचिता आसनेनैव शक्त्यावरणमित्युक्तम् ततः सुदर्शनादिमुसलान्तान्यायुधान्यष्टदिक्षु कौस्तुभमालाश्रीव-त्सानुरसि ॥ २७ ॥

नन्दादीन् पार्षदानष्टदिक्षु गरुडं पुरतः ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दुर्गादीनि कोणेषु गुरून्वामतः सुरानिन्द्रादिलोकपालान्पूर्वादिदिक्षु एवमेतान्देवस्याभिमुखान्प्रोक्षणादिभिः अर्घादिभिः पूजयेदित्यर्थः ॥ २९ ॥

पाद्यादीनुपचारान्प्रकल्पयेदित्युक्तं तानेव गुणविधिभिः प्रपञ्चयति । चन्दनेति षड्भिः ॥ ३० ॥

मन्त्रानाह स्वर्णघर्मानुवाकः—

सुवर्णं घर्मं परिवेदवेनमि' त्यादिः महापुरुषविद्या ।
जितं ते पुण्डरीकाक्ष ! नमस्ते विश्वभावन ! ॥
सुब्रह्मण्य ! नमस्तेऽस्तु महापुरुषपूर्वज ! ।

इति पौरुषं सूक्तं सहस्रशीर्षेत्यादि नीराजनादीनि सामानि इन्द्र नरो नेमधिता हवन्त इत्यस्यामृचि गीतानि आदिशब्देन रौहिणादीनि ॥ ३१ ॥

वस्त्राद्युपचारेष्वलङ्कारवत्सुवर्णं गुणं विधत्ते । वस्त्रेति । पत्राणि कपोलवक्षःस्थलादिषु लिखिताः पत्रभङ्गाः मङ्गलत्वेनसप्रेम यथा भवति तथा ॥ ३२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

पाद्येति युग्मकम् । तदाह कथंभावाकाङ्क्षायामिति कर्तव्यतामाहेत्यर्थः तत्र आसने आग्नेयादीत्यादिना नैर्ऋतवायव्येशानपरिग्रहः अधर्मादीनीति । अधर्मोऽज्ञानावैराग्यानैश्वर्याण्यधार्मिकादिषु तत्तदन्तर्यामिशक्तिरूपाणि पूर्वादिदिक्षु गात्राणि तदुक्तं नारदपञ्चरात्रे । अधर्मादिचतुष्कन्तु अत्रैयासि नियोजनर्भित अन्यथाऽप्राकृतासने तेषां सन्निवेशानुपपत्तेः । सत्त्वादयो न सन्तीह यत्र च प्राकृता गुणाः इत्युक्तेरप्राकृता अपि ते सन्त्येवेति गम्यते विशेषणानां व्यावर्त्यत्वनियमादिति त्रयो गुणा अप्रकृता एव व्याख्येयाः पूर्वहेतोरेव । तत्र आसनस्य पद्मे पूर्वादिकमेणेति । पूर्वाद्यष्टदिक्षु यथासङ्ख्य विमलाद्यारभ्येशानपर्यन्ता अष्टौ शक्तयः मध्ये उपवेशस्थाने त्वनुग्रहेत्यर्थः । तत्र विमला कीर्त्याख्या । उत्कर्षणी उत्कर्षहेतुश्रेयाऽपरपर्याया । ज्ञाना ज्ञानशक्तिः संविदपरपर्याया । विशुद्धसत्त्वाख्या क्रियाह्लादिनी । योगा योगमाया । प्रह्वी निखिलानन्तसामर्थ्यहेतुः । सत्या सन्धिन्यपरपर्याया यया भद्रपीठोऽपि भगवान् सत्तां दधाति धारयति च सर्वदेशकालद्रव्यादि व्याप्तिकरीति यावत् । ईशाना सर्वाधिकारिताशक्तिहेतुः । अनुग्रहा भक्तविषयकाऽपारकृपाशक्तिहेतुरिति भगवत्सन्दर्भात् तल्लक्षणानि ज्ञेयानि कर्णिकायां न्यसेत् सूर्यं सोमाग्नीनुत्तरोत्तरमित्युक्तेः केसरशब्दस्य तत्रस्थसूर्यादिमण्डले लक्षणाति इत्यर्थ इत्युक्तम् ॥ २५ ॥ २६ ॥

अङ्गावरणानां केसरादीनां पूजा चोनितेति आवरणपूजा प्रसङ्गादत्र व्याख्यातम् ॥ २७ ॥

नन्दादीनिति युग्मकम् ॥ २८

दुर्गादीनि कोणेष्विति दुर्गां वह्निकोणे पूजयेत् विनायकं गणेशं नैर्ऋत्ये । व्यासं वायव्ये । विश्वक्सेनमैशाने किन्तु नेऽप्राकृता व्याख्येयाः विश्वक्सेनसाहित्यात् न यत्र माये-त्यादिना प्रकृतिकार्यमात्रस्य तत्र निषेधाच्च व्यासविभागस्य मूलेऽनुक्तेरित्यर्थ इत्युक्तम् ॥ २९ ॥

तानेव उपचारानेव गुणविधिभिरिति अङ्गप्रधानसम्बन्धबोधको विधिर्गुणविधिरिति तल्लक्षणं यथाग्निहोत्रं जुहोतीत्युत्पत्तिविधिना विहितं होममुद्दिश्य दध्ना जुहोतीत्यादि गुणविधिर्भवेदध्यादिलक्षणगुणमात्रविधानं तथात्र पूर्वप्रोक्तस्नानजलादीनुद्दिश्य चन्दनादिगुणमात्रविधानमस्योभयविधाने वाक्यभेदः प्रसज्ज्येत तदुक्तं भट्टैः सर्वत्राख्यातसम्बन्धे श्रूयमाणे पदान्तरे । विधिशक्त्युपसंक्रान्तेः स्वाज्ञातोरनुवाद्यतेति ॥ ३० ॥

मन्त्रान् पाद्याद्युपचारेष्वङ्गरूपान् । स्वर्णघर्मानुवाकस्तन्नामकं वैदिकं सूक्तम् । सुवर्णं कुङ्कुमादिवासितत्वेन सुवर्णतुल्यजलादि भगवतो घर्मपरिवेदनं प्रस्वेदविनाशकमिति मन्त्रार्थः नेमधिता इति वक्तव्ये मे मधिता इत्यार्षम् अतिशयस्नानवासर इन्द्रं परमेश्वरमुद्दिश्य हवन्त होमोपलक्षितयागं कुर्वन्तीत्यर्थः । अत्र मेधतिर्ज्ञानार्थः ॥ ३१ ॥

वस्त्राद्युपचारेष्विति । पूर्वोक्तवस्त्राद्युपचारानुवादेनालङ्कारवत्सुवर्णगुणमात्रम् विधत्त इत्यर्थः । यथोचितं सौन्दर्यानुरूपम् ३२

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

धर्मादिभिश्च नवभिरिति । धर्मादिभिरष्टभिः विमलादिभिर्नवभिः ॥ २५ ॥ ४१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कथमित्यत आह । पाद्येति । इदं व्युत्क्रमेण योज्यं धर्मादिभिरित्यादिशब्देन ज्ञानवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्यसङ्ग्रहः एते पीठस्य पादाः एभिः सहिते पीठे नवभिः विमलोत्कर्षिणीज्ञाना क्रिया योगा ततः परम् । प्रह्वीसत्या तथेशानानुग्रहा नव मूर्तय इत्युक्ताभिर्मूर्तिभिर्युक्तमित्यर्थः । कर्णिकया केसरैश्चोज्ज्वलम् अष्टौ दलानि यस्य तत्पद्मं मध्यासनं कल्पयित्वा तत्र तस्मिन्नर्हां पाद्यादीनुपचारान् प्रकल्पयेत् तत्रोपस्पर्शनमाचमनम् अर्हणमर्ध्यमुभाभ्याम् नेदपञ्चरात्रोक्ताभ्याम् विधिभ्याम् मन्त्राभ्याम् वा उभयसिद्धये स्वर्गापवर्गसिद्धये महां प्रकल्पयेदिति पूर्वेण सम्बन्धः ॥ २५—२६ ॥

अङ्गायुधादिपूजामाह । सुदर्शनमिति ॥ २७ ॥

अथ पार्षदार्चनमाह । नन्दमिति । एते भगवत्पार्षदाः ॥ २८ ॥

सुरा इन्द्रादयः तांश्च स्वस्वस्थानेषु ममाभिमुखान्प्रोक्षणादिभिः पूजयेत् आदिशब्देन पाद्यादिसङ्ग्रहः तत्र न्यस्ताङ्गमिलङ्कावरणपूजा सूचिता धर्मादिभिश्च नवभिरिति पीठदेवतापूजा सुदर्शनादीनि सुशलान्तान्यायुधान्यष्टदिक्षु कौस्तुभवनमालाश्रीवत्सानुरसि नन्दादीनष्टदिक्षु गरुडं पुरतः दुर्गादीन् कोणेषु गुरून्भगवतो दक्षिणपार्श्वे इन्द्रादीन् प्रागाद्यष्टदिक्षु दुर्गाया भगवन्मायाऽभिमानिदेवतात्वाद्विनायकस्य विष्वक्सेनपार्षदत्वाद्व्यासस्य वेदशाखावि-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अजनेन तत्प्रवर्त्तकत्वोपकारयोगात्सुराणां भगवद्विभूतित्वाच्च परिवारेषु पूजा विहिता ॥ २९ ॥

अथ चन्दनादिभिर्वासितैः परिमलितैर्मन्त्रैः स्वर्णघर्मानुवाकादिमन्त्रपाठसहितैः स्नापयेद्विभवे सति नित्यमित्थं स्नापयेदन्यथा यथासम्भवैश्चन्दनादिवासितैरित्यर्थः ॥ ३० ॥

मन्त्रानाह । स्वर्णेति तत्र स्वर्णघर्मानुवाकः सुवर्णं घर्मं परिवेद वेनमित्यादि महापुरुषविद्या जितं ते पुण्डरीकाक्ष ! नमस्ते विश्वभावन ! नमस्तेऽस्तु हृषीकेश ! महापुरुष पूर्वजत्ययं मन्त्रः पौरुषं सूक्तं प्रसिद्धं सामनीराजनादिभिः इद्र मघोने भणिताद्वन्न इत्याद्या ऋचो नीराजनादयः आदिशब्देन रोहिणादयः सामाभ्यामिश्रैस्तैर्मन्त्रैः स्नापयेदिति सम्बन्धः ॥ ३१ ॥

वस्त्रेति । पत्राणि तुलसीदलानि सप्रेम प्रेम्णा सहितं यथा तथा मां यथोचितमलङ्कुर्वीत ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

धर्मादिभिः विमलादिभिः नवभिः शक्तिभिश्चासनं पीठं कल्पयित्वा ॥ २५ ॥

तत्र धर्मादिकल्पिते पीठे अष्टदलं पद्मं ध्यात्वा तत्र प्रकृतिसन्निहिते पद्मे मां पूजयेत् वेदतन्त्राभ्यां महां महनीयं पूजायिमुभयसिद्धये वेदतन्त्रप्रोक्तफलसिद्धये ॥ २६ ॥

सम्वनन्तरम् ॥ २७—२८ ॥

मध्याबाहितप्रधानदेवताभिमुखान् प्रोक्षणीयादिभिः मध्र्यादिभिः ॥ २९—३० ॥

स्वरय सूक्तेन विष्णुसूक्तेन घर्मानुवाकेन घर्मामसन्नाद्भि:ते ध्वायतुरित्यादिसूक्तेन महापुरुषविद्यया जितं ते पुण्डरीकाक्षेत्यादिकया पौरुषेण सूक्तेनापि साम सूक्त समुद्रादूर्मिरिति पावीर्यादित्यादिसूक्तं स्तूयमान सूक्तं नीराजनम्—

निशर्यं रञ्जयेच्चस्मात्पार्थानां तु मण्डलम् ।
विष्णोर्नीराजनं तस्मात्कथितं समुदाहृतम् ॥

इति वचनात् आदित्यश्लोकेन्द्रा जपानि कुर्यात् ॥ ३१—३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

धर्मेति युग्मकम् केचित्तु श्रीनारदपञ्चरात्रदृष्ट्या धर्मादीन्यन्यथैव व्याचक्षते यथोक्तं तत्रैव—

अधर्मादिचतुष्कं तु आग्नेयादि नियोजनमिति ।
सधर्मिकादिषु तत्तदन्तर्यामिशक्तिरधर्मादीनामित्यर्थः ॥२५॥२७॥

नन्दादीति युग्मकं तत्र दुर्गाद्या विष्वक्सेनादिवद्भगवतो नित्यवैकुण्ठभक्ताः ततश्च ते गणेशदुर्गाद्या ये परे माया शक्त्यात्मका गणेशदुर्गाद्यास्तेतु न भवन्ति न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिता इति द्वितीयोक्तेः ततो भगवत्स्वरूपभूतशक्त्यात्मका एव ते एत एव श्रीकृष्णस्वरूपभूते श्रीमदष्टादशाक्षरादिमन्त्रगणेऽपि दुर्गानाम्नो भगवद्भक्त्यात्मकस्य स्वरूपभूतशक्तिवृत्तिविशेषस्याधिष्ठातृत्वं श्रुतितन्त्रादिषु दृश्यते यथा नारदपञ्चरात्रे श्रुतिविद्यासंवादे

भक्तिर्भजनसम्पत्तिर्भजते प्रकृतिः प्रियम् ।
ज्ञायतेऽत्यन्तदुःखेन सेयं प्रकृतिरात्मनः ॥
दुर्गेति गीयते सद्भिरखण्डरसवल्लभेति ।
अस्या आवारिका शक्तिर्महामायेति कथ्यते ॥
यया मुग्धं जगत्सर्वं सर्वे देहाभिमानिनः ।

इति अत एव श्रीमगवद्भेदेनैवोक्तं गौतमीयकल्पे यः कृष्णः सैव दुर्गा स्यात्या दुर्गा कृष्ण एव स इति स्वमेव परमेशानि ! अस्याधिष्ठातृदेवत्वेनैवाचिकं तु विराट्पुरुषमहापुरुषयोरिव केषांचिद्भेदोपासनाविवक्षयैवोक्तं सा हि मायांशरूपा तद्बहिः प्राकृतेऽस्मिल्लोके मन्त्ररक्षालक्षणमेवार्थं नियुक्ता चिच्छक्त्यात्मकदुर्गाया दासीयते ननु सैवाधिष्ठात्री मायातीतवैकुण्ठावरणकथने यथोक्तं पाद्मोत्तरखण्डे—

सत्त्वाच्युतानन्त दुर्गाविष्वक्सेनगजाननाः इत्याद्युक्त्वा ।
नित्याः सर्वे परे धाम्नि ये चान्ये च दिवौकसः ॥
ते वै प्राकृतनाकेऽस्मिन्ननित्यास्त्रिदिवेश्वराः ।
नेह नाके महिमानः सचन्त इति वै श्रुतिः ॥

इति भगवदंशरूपत्वं च तेषामुक्तं त्रैलोक्यसंमोहनतन्त्रे

सर्वत्र देवदेवोऽसौ गोपवेशधरो हरिः ।
केवलं रूपभेदेन नामभेदः प्रकीर्त्तितः ॥

इति अतो नाममात्रसाधारण्येनानन्यभक्तैर्न विभेतव्यं किंतु भगवतो नित्यवैकुण्ठभक्तत्वाद्विष्वक्सेनादिवत्सत्कार्या एव ते अर्चयित्वा तु गोविन्दं तदीयान्नार्चयेत्तु य इत्यादिवचनेन तत्सत्कारे दोषश्रवणात् अत्र विशेषो भक्तिसन्दर्भे दृश्यः अथ श्रीभगवद्धामे श्रीगुरुपादुकापूजनमेव संगच्छते यथा य एव भगवानत्र दर्पणरूपतया भक्तावतारत्वेन श्रीगुरुरूपो भवेत् स एव तत्र सर्वाधिरूपतया स्वनामप्रदेशे साक्षादवतारत्वेनापि तद्रूपो वर्त्तते इति ॥ २८—३१ ॥

श्रीगोपालपूजायामपि यज्ञोपवीतार्पणं विहितमस्ति यथोक्तं गौतमीयतन्त्रे यज्ञसूत्रं ततो दद्यादथवा स्वर्णनिर्मितमिति नारसिंहे

त्रिवृत्तन्तुयुक्तं च पीतं च पट्टसूत्रादिनिर्मितम् ।
यज्ञोपवीतं गोविन्दं दत्त्वा वेदान्तगो भवेत् ॥ ३२ ॥ ३३॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उपस्पर्शम् आचमनम् अर्हणमर्घ्यं प्रकल्पयेत् समर्पयेत् धर्मादिभिराग्नेयादिकोणेषु धर्मज्ञानवैराग्यैश्वर्यैः पूर्वादिदिक्षु तेषामधर्मादिभिश्च तन्मध्ये नवभिः शक्तिभिर्विमलाद्याभिश्च सहासनं योगपीठं तथाष्टदलं पद्मं च कल्पयित्वा वेदतन्त्राभ्यां वेदोक्तेन च तन्त्रोक्तेन च प्रकारेण उभयसिद्धये भुक्तिमुक्तिप्राप्तये मह्यमुपचारान् दद्यात् २५ ॥ २६ ॥

सुदर्शनादिमुसलान्तान्यायुधान्यष्टदिक्षु कौस्तुभमालां श्रीवत्सञ्चोरसि पूजयेत् ॥ २७ ॥

स्वे स्वे स्थाने त्वभिमुखानिति नन्दादीन् पार्षदान् अष्ट

पाद्यमाचमनीयं च गन्धं सुमनसोऽक्षतान् ।
धूपदीपोपहार्याणि दद्यान्मे श्रद्धयाऽर्चकः ॥ ३३ ॥
गुडपायससर्पींषि शष्कुल्यापूपमोदकान् ।
संयावदधिसूपांश्च नैवेद्यं सति कल्पयेत् ॥ ३४ ॥
अभ्यङ्गोन्मर्दनादर्शदन्तधावाभिषेचनम् ।
अन्नाद्यगीतनृत्यादि पर्वणि स्युरुतान्वहम् ॥ ३५ ॥
विधिना विहिते कुण्डे मेखलागर्तवेदिभिः ।
अग्निमाधाय परितः समूहेत्पाणिनोदितम् ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विक्षु गरुडं पुरतः दुर्गादीन् कोणेषु गुरून् वामतः सुनन्द्रादिलोकपालान् पूर्वादिदिक्षु प्रोक्षणादिभिः प्रोक्षणपूर्वकार्घ्यादिभिः ॥ २८—३० ॥

केन मन्त्रेण पूजयेत्तत्राह । स्वर्णघर्मानुवाकेन सुवर्णं घर्मं परिवेदनमित्यादिना । महापुरुषविद्यया जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावनेत्यादिकया पौरुषेण सूक्तेन सहस्रशीर्षेत्यादिना सामनीराजनादिभिः इन्द्रं नरो मे मथिता इत्यस्यामृचि गीतैः साविद्यावेन रौहिणयाद्यैः ॥ ३१ ॥

पत्रस्रक् तुलसीपत्रमाला ॥ ३२ ॥ ३३ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्र प्रकारमाह । पाद्येति द्वाभ्याम् । धर्मज्ञानवैराग्यैश्वर्यैरासनपीठस्याग्नेयादिचतुष्कोणेषु पादभूतैरधर्माऽज्ञानाऽवैराग्याऽनैश्वर्यैः पूर्वादिदिक्षु गात्रभूतैश्च कारणत्रिभिर्गुणैः पट्टिकारूपैः पूर्वादिक्रमेण मध्ये च नवभिर्विमलोत्कर्षिणी ज्ञाना क्रिया योगा प्रह्वी सत्या ईशानाऽनुग्रहा एताभिर्यथोपयोगं योजिताभिः शक्तिभिश्च ममासनं तत्राष्टदलं कर्णिकायाः केसरैस्तत्रस्थसूर्यसोमाग्निमण्डलैश्चोज्ज्वलं पद्मं च कल्पयित्वा उभयासक्तये भुक्तिमुक्तिसिद्धये वेदतन्त्राभ्यां पाद्योपस्पर्शार्हणादीनुपचारान्मह्यं प्रकल्पयेदिति द्वयोरन्वयः उपस्पर्शः आचमनम् अर्हणमर्घ्यम् ॥ २५ ॥ २६ ॥

आयुधादिपूजामाह । सुदर्शनमिति त्रिभिः ॥२७——२९॥

उपचारान्दर्शयति । चन्दनेति षड्भिः ॥ ३० ॥

मन्त्रान्दर्शयति । तत्र स्वर्णघर्मेति । स्वर्णघर्मानुवाकेन सुवर्णं घर्मं यदि परिवेदनमित्यादिना महापुरुषविद्यया—

जितन्ते पुण्डरीकाक्ष ! नमस्ते विश्वभावन ! ।
नमस्तेऽस्तु हृषीकेश ! महापुरुषपूर्वज ।

इत्यनया पौरुषेण सूक्तेन सहस्रशीर्षेत्यादिना सामनीराजनादिभिः इन्द्रं नरो मे मथिताहमस्य इत्यादिभिः ॥ ३१ ॥

पत्राणि कपोलवक्षस्थलादिषु लिखिताः पत्रभङ्गाः ॥ ३२ ॥

भाषा टीका ।

पूजा करते समय पाद्य आचमन अर्घ आदिक षोडश उपचारों को करै तिस से पहिले धर्म ज्ञान आदिक नौ तत्वों से न्यास करके मेरा आसन कल्पना करै ॥ २५ ॥

उस आसन के ऊपर अष्ट पत्रों की पद्म की कल्पना करै उस पद्म की कर्णिका केसर की उज्वलता की भावना करै उस आसन पर भुक्ति मुक्ति दोनों के सिद्धि के लिये वेद तथा पञ्चरात्र तन्त्र से मेरा यजन करै ॥ २६ ॥

सुदर्शनचक्र शंख गदा खड्ग बाण धनुष हल मुसल इन आठ आयुधों का कौस्तुभ मणि का वनमाला का श्रीवत्सचिन्ह का भगवान् के अनन्तर पूजन करै ॥ २७ ॥

नन्द सुनन्द गरुड चण्ड प्रचण्ड महाबल बल कुमुद कुमुदेक्षण ॥ २८ ॥

दुर्गा विनायक वेद व्यासजी विष्वक्सेनजी अपने गुरु तथा और देवता इन सबों को अपने अपने स्थान में स्थापित कर के भगवत् सन्मुख उन को रखकर उन का भी प्रोक्षणादिकों से पूजन करै ॥ २९ ॥

यदि संपत्ति होवे तो चन्दन खस खस कुसुम्भ कपूर अगर इन से सुसुगन्धित जलों से मन्त्रों द्वारा नित्य प्रति स्नान करावे ॥ ३० ॥

स्वर्ण घर्म नामा जो वेद का अनुवाक तिस से जितं ते स्तोत्र से पुरुष सूक्त से सामनीराजन मंत्रों से स्नानादि पूजन करै ॥ ३१ ॥

उत्तम वस्त्र यज्ञोपवीत आभरण तुलसी पत्र पुष्प माला चंदन लेपन इन सबों से मेरा भक्त प्रेम पूर्वक यथोचित मेरा पूजन करै ॥ ३२ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

यथोचितमलंकुर्वीतेत्युक्तार्थम् सर्वसाधारणं भक्तलक्षणं गुणं विधत्ते । पाद्यमिति ॥ ३३ ॥

परिस्तीर्याथ पर्युक्षेदन्वाधाय यथाविधि ।
प्रोक्षण्याऽऽसाद्य द्रव्याणि प्रोक्ष्याग्नौ भावयेत माम् ॥ ३७ ॥
तप्तजाम्बूनदप्रख्यं शङ्खचक्रगदाम्बुजैः ।
लसच्चतुर्भुजं शान्तं पद्मकिञ्जल्कवाससम् ॥ ३८ ॥
स्फुरत्किरीटकटककटिसूत्रवराङ्गदम् ।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥ ३९ ॥
ध्यायन्नभ्यर्च्य दारूणि हविषाभिघृतानि च ।
प्रास्याज्यभागावाघारौ दत्त्वा चाज्यप्लुतं हविः ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नैवेद्ये वैभवलक्षणं गुणं विधत्ते गुडपायसमिति । शष्कुल्यस्तैलपक्वविशेषाः आपूपाः अपूपानां मण्डकादीनां समूहाः सूपा व्यञ्जनानि सति विभवे इति शेषः ॥ ३४ ॥

कालभेदेन गुणं विधत्ते अभ्यङ्गेति । अभिषेचनं पञ्चामृतादि स्नपनम् अन्नाद्येति । अन्नं भोज्यमाद्यं भक्ष्यम् पर्वपर्वकादश्यादौ अन्वहं प्रत्यहं वा विभवे सति ॥ ३५ ॥

फलभूयस्त्वार्थिनोऽग्नावपि पूजाप्रकारमाह । विधिना स्वगृह्योक्तप्रकारेण मेखलादिभिरुपलक्षिते विहिते निर्मिते तदुक्तं "वितस्तिरोच्छ्रायवर्तिकतस्रो मेखलाश्चतुरङ्गुलाः । हस्तमात्रो भवेत्कुण्डः मध्ये निर्मेदिका तथे"त्यादि उदितं प्रज्वलितमग्निं परितः समूहेदेकत्र मेलयेत् ॥ ३६ ॥

दर्भैः परिस्तीर्य परितः प्रोक्षयेत् अन्वाधायान्वाधानसंस्कारं व्याहृतिभिः समित्प्रक्षेपादिरूपं कर्म कृत्वा अग्नेरुत्तरतो द्रव्याणि होमोपयोगीन्यासाद्य निधाय प्रोक्षण्या प्रोक्षणीपात्रोदकेन प्रोक्ष्याग्नौ मां ध्यायेत् ॥ ३७ ॥

शङ्खादिभिर्लसन्तः शोभमानाश्चत्वारो भुजा यस्य तम् ॥ ३८ ॥

स्फुरन्ति किरीटादीनि यस्य तम् ॥ ३९ ॥

हविषा घृतेनाभिघृतानि संसिक्तानि दारूणि शुष्कसमिधः प्रास्य प्रक्षिप्य आघारौ तत्संज्ञकौ यागौ एवमाज्यभागौ च दत्त्वा तदनु हुनेदित्यर्थः । तत्राघारौ प्रजापतये स्वाहेन्द्राय स्वाहेति चोत्तरदक्षिणपरिध्यादिमारभ्याग्निमध्यादापरिध्यन्तं घृतधारारूपौ आज्यभागौ अग्नये स्वाहा सोमाय स्वाहेत्येवं होमरूपौ ॥ ४० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

उक्ता ये ये पाद्यार्घ्यादयस्तेषु सर्वेषु साधारणं तुल्यं श्रद्धालक्षणम् आदरविश्वासात्मकं गुणमङ्गं विधत्ते ॥ ३३ ॥

नैवेद्ये तदनुवादेनेत्यर्थः । गुणमङ्गं शष्कुल्यः कर्णाकाराः तैलेति स्वदेशरीत्युद्देशेन वस्तुतस्तु घृतेति बोध्यं मण्डका गौडदेशे प्रसिद्धा आमिक्षाविकाराः वस्तुतस्तु आपूपा पूआ इति ख्याताः तत्रापि भक्ष्याभक्ष्यविधिः श्रीहरिभक्तिविलासे द्रष्टव्यः ॥ ३४ ॥

कालभेदेन एकादश्यादिपर्वविशेषेण भोज्यं खिचलान्नादि । भक्ष्यं लड्डुकादि ॥ ३५ ॥

स्वगृह्येति स्ववेदसूत्रोक्तविधिना तत् होमकुण्डनिर्माणम्। मेखलाः सीमासूत्राणि सोपानतुल्यानि ॥ ३६ ॥

अग्नौ मां तदन्तर्यामिरूपं ध्यायेत् ॥ ३७ ॥

तप्तजाम्बूनदेति सार्द्धत्रिकम् ॥ ३८ ॥ ३९ ॥

उत्तरमेखलासन्धिमारभ्य दक्षिणमेखलासन्धिपर्यन्तं दक्षिणमेखलासन्धिमारभ्योत्तरमेखलासन्धिपर्यन्तमित्यर्थः ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततोऽर्चको मे मह्यं भक्त्या पाद्यादीनि दद्यात् ततः सुमनसः पुष्पाणि उपहार्य नैवेद्यम् ॥ ३३ ॥

तदुपलक्षयति । गुडेति । तत्र शष्कुल्यः घृतपक्वविशेषाः अपूपाः संयावा यवगोधूमपिष्टमयाः भक्ष्याः सूपाश्चैतेषां निवेदनं परिकल्पयेदिति सम्बन्धः सति विभवे इति शेषः ॥ ३४ ॥

कालभेदेनोपचारविशेषान् विधत्ते । अभ्यङ्गेति । अभिषेचनं पञ्चामृतैः स्नापनं पर्वण्येकादश्यादौ विभवे सत्यन्वहं कुर्यादित्यर्थः ॥ ३५ ॥

अग्नावपि पूजाप्रकारमाह । विधिनेति । विधिना तन्त्रोक्तविधिना विहिते निर्मिते कुण्डे स्थण्डिले वाऽग्निमाधाय निधाय उदितं प्रज्वलितमग्निं परितः पाणिना समूहेदेकत्र नयेत् ॥ ३६ ॥

दर्भैः परिस्तीर्य पर्युक्षेत् परिषिञ्चेत् ततो यथाविध्यन्वाधाय स्वगृह्योक्तविधिना आधाय समिदग्निप्रमुखस्य कर्मणः पूर्वं कृत्वा प्रोक्षण्या प्रोक्षणीपात्रोदकेन द्रव्याणि आज्यचर्वादिप्रभृतीनि करणानि प्रोक्ष्याग्नौ मां भावयेत् ॥ ३७ ॥

कथम्भूतं तप्तहेमाभं चक्रादिभिर्लसन्तः चत्वारो भुजा यस्य तं शान्तं शुभरूपम् ॥ ३८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्फुरन्ति किरीटादीनि यस्य तं श्रीवत्सो वक्षसि यस्य तं भ्राजन् दीप्यमानः कौस्तुभो यस्य तं वनमाला अस्यास्तीति तथा तं श्रीहार्यादिस्वाम्मत्वर्थीय इतिः ॥ ३६ ॥

ध्यायन्निति । इत्थम्भूतं ध्यायन्नभ्यक्तं दारूणि इध्मदारूणि अभिघृतानि हवींषि देवतोद्देश्यानि प्राक्याग्नावाधाय आघारौ तत्संज्ञकौ आज्यभागावाज्याहुती दत्त्वा जुहुयादित्यर्थः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

संयावं गोधूमपायसं राजान्नं वा वित्ते सति ॥ ३४ ॥ ३५ ॥

मेखलागर्तवेदिभिः सह विहिते उदिते ज्वलितम् ॥ ३६—३९ ॥

हविषा सर्पिषाभियुतानि मिश्रितानि दारूणि समिधः प्रास्य हुत्वा आघारं कोणात् कोणं प्रतिहुत्वार्चाविधानतः पूजाविधानतः ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शष्कुल्यः कर्णाकारा घृतादिपक्वाः आपूपाः पूपा इति ख्याताः आपूपिकमिति वक्तव्ये आपूपमित्यार्षं नैवेद्यं विशेषश्च गौतमीये—

निवेदयेदुत्तमान्नं न कदन्नं कदाचन ।
उत्तमं विधिना प्राप्तमथवा यद्याचितम् ॥
शिलोञ्छविधिना प्राप्तं स्वार्जितोपार्जितं वाथ
कृष्णाय परिकल्पयेत् ॥
शूद्राल्लब्धं कुवाल्लब्धमथ मार्जारिकाचितम् ।
इत्याद्यन्नं कदन्नं तु दानात्नरकमावहेत् ॥

हारीतस्मृतौ नाभक्ष्यं नैवेद्यार्थे भक्ष्येऽप्याज्यमाहिषीक्षीरं पञ्चनखमत्स्यांश्च विष्णुधर्मोत्तरे—

अभक्ष्यमप्राणहृद्यं च नैवेद्यं न निवेदयेत् ।
केशकीटावपन्नं च तथाचाविहितं च यत् ॥

अभक्ष्यनियमश्च श्रीहरिभक्तिविलासे द्रष्टव्यः ॥ ३४—३६ ॥

आग्नौ तदन्तर्यामिरूपं मां विभावयेत् ॥ ३७-४१ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गुडविकारान् मत्स्यण्डीफाणितादीन् पायसं परमान्नं शष्कुल्यः कर्णाकाराः घृतपक्वाः गुभा इति ख्याताः पूपाः पुआ इति ख्याताः सति विभवे इति शेषः ॥ ३४ ॥

अङ्गपङ्क्तिं प्रथमं दन्तधावनं ततः सुगन्धितैलेनाभ्यङ्गः ततः कुङ्कुमकर्पूरचूर्णादिभिरुन्मर्दनं ततः पञ्चामृताद्यैः सुगन्धिजलेन चाभिषेचनं ततोऽत्रानुक्तमपि अनर्घ्यकौशेयवस्त्ररत्नालंकारचन्दनमाल्यानुलेपनादिकं तत आदर्शो दर्प्यः ततो गन्धपुष्पधूपदीपाचमनीयानि देयानि अन्नाद्यानि चतुर्विधभक्ष्याद्यसगन्धजलताम्बूलमालारात्रिकपुष्पशय्याव्यजनादिकं ततो वाद्यगीतनृत्यानि स्युः पर्वयुत्सवे सति उत विभवे सत्यन्वहमपि स्युः ॥ ३५ ॥

फलभूयस्त्वार्थिनोऽग्नावपि पूजाप्रकारमाह । विधिनेति । "विस्तारोच्छ्रायतस्तिस्रो मेखलाश्चतुरङ्गुलाः । हस्तमात्रो भवेत् कुण्डः सर्वोनिर्भवेदिका तथे"ति विधिः उदितं प्रज्वलितमग्निं समूहेत् एकत्र मेलयेत् ॥ ३६ ॥

ततश्च दर्भैः परिस्तीर्य आवृत्य परितः प्रोक्षयेत् अन्वाधाय अन्वाधानसंज्ञकं व्याहृतिभिः समित्प्रोक्षणादिरूपं कर्म कृत्वा आसाद्य अग्नेरुत्तरतो निधाय प्रोक्षण्या प्रोक्षणीपात्रोदकेन प्रोक्ष्य मामन्तर्यामितया वह्नौ वर्त्तमानम् ॥ ३७-३९ ॥

हविषा अभिघृतानि सिक्तानि घृतसेचनेन प्रास्य अग्नौ प्रक्षिप्य आघारौ तत्संज्ञकौ यागौ एवमाज्यभागौ च दत्त्वा तदर्थां आहुतीर्दद्यादित्यर्थः । आज्यप्लुतं घृतसिक्तं हविस्तिलादिकं बाह्यियं षोडशर्चो यद्दिमस्तेन पुरुषसूक्तेन च अवदानतः प्रत्यृचमाहुतिग्रहणेनेत्यर्थः ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अक्षतान् साङ्गोपाङ्गान् ॥ ३३—३४ ॥

अभिषेचनं पञ्चामृतादिस्नपनम् अन्नं भोज्यम् अद्यं भक्ष्यम् विभवे सत्यन्वहम् ॥ ३५ ॥

फलभूयस्त्वार्थिना त्वग्नावपि मम पूजा कार्येत्याशयेनाह विधिनेति सार्द्धैः षड्भिः विधिना शास्त्रोक्तप्रकारेण मेखलागर्तवेदिभिः विहिते रचिते कुण्डे उदित प्रज्वलितम् परितः समूहेत् एकत्र मेलयेत् ॥ ३६ ॥

अथानन्तरं परिस्तीर्य पर्युक्ष्य परितः प्रोक्षयेत् अन्वाधाय व्याहृतिभिः समित्प्रक्षेपादिरूपमन्वाधाननामकं कर्म विधाय द्रव्याणि होमाङ्गानि आसाद्य अग्नेरुत्तरतो निधाय प्रोक्षण्या तज्जलेन प्रोक्ष्य अग्नौ मां भजेत ध्यायेत् ॥ ३७ ॥

कथम्भूतं शङ्खादिभिर्लसन्तः शोभमानाश्चत्वारो भुजा यस्य तम् ॥ ३८ ॥

स्फुरन्ति सुप्रभाभिः किरीटादीनि यस्य तम् ॥ ३९ ॥

हविषा घृतेन अभिघृतानि तत्सम्बन्धीनि दारूणि समिधः प्रास्य प्रक्षिप्य अग्निनेत्रे प्रजापतये स्वाहा इन्द्राय स्वाहेति घृतक्षरणरूपावाघारौ अग्नये स्वाहा सोमाय स्वाहेति होमरूपावाज्यभागौ च दत्त्वा तदर्थमाहुतीर्जुहुयादित्यर्थः ॥ ४० ॥

---

भाषा टीका ।

पूजा करने वाला पुरुष हमारे लिये पाद्य आचमन चन्दन दोष रहित पुष्प धूप दीप नैवेद्य इन पदार्थों को श्रद्धा से अर्पण करे ॥ ३३ ॥

गुड है जिसमें घृत पूरी मालपूआ लड्डू मीठी थूली दही दाल आदिक यदि धन होवे तो ऐसे नैवेद्यों को अर्पण करे ॥ ३४ ॥

जुहुयान्मूलमन्त्रेण षोडशर्चाऽवदानतः ।
धर्मादिभ्यो यथान्यायं मन्त्रैः स्विष्टकृतं बुधः ॥ ४१ ॥
अभ्यर्च्याथ नमस्कृत्य पार्षदेभ्यो बलिं हरेत् ।
मूलमन्त्रं जपेद्ब्रह्म स्मरन्नारायणात्मकम् ॥ ४२ ॥
दत्त्वाऽऽचमनमुच्छेषं विष्वक्सेनाय कल्पयेत् ।
मुखवासं सुरभिमत्ताम्बूलाद्यमथार्हयेत् ॥ ४४ ॥
उपगायन् गृणन्नृत्यन् कर्माण्यभिनयन्मम ।
मत्कथाः श्रावयन् शृण्वन् मुहूर्तं क्षणिको भवेत् ॥ ४४ ॥
स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपि ।
स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत् ॥ ४५ ॥
शिरो मत्पादयोः कृत्वा बाहुभ्यां च परस्परम् ।
प्रपन्नं पाहि मामीश ! भीतं मृत्युग्रहार्णवात् ॥४६ ॥
इति शेषां मया दत्तां शिरस्याधाय सादरम् !
उद्वासयेच्चेदुद्वास्यं ज्योतिर्ज्योतिषि तत्पुनः ॥ ४७ ॥
अर्चादिषु यदा यत्र श्रद्धा मां तत्र चार्चयेत् ।
सर्वभूतेष्वात्मनि च सर्वात्माऽहमवस्थितः ॥ ४८ ॥

भाषा टीका ।

उबटन लगाना तैल मर्दन दर्पण दिखाना पंचामृतादि अभिषेक करना और मन्त्रादिकों का भोग देना गान करना नृत्य करना ये सब यदि रोज होवै या एकादशी आदि पर्व के दिन होवैं ॥ ३५ ॥

फिर मेखला गर्त वेदि आदिकों से बने हुये कुंड में अग्नि का स्थापन करके चेतन किये अग्नि को चारों तरफ से हाथ से बटोरै ॥ ३६ ॥

फिर चारों ओर कुशों से परिस्तरण करै फिर अन्वाधान विधि से सेचन करके होम के सब पदार्थों को प्रोक्षणी के जल से प्रोक्षण करै फिर, उस अग्नि में मेरा ध्यान करै ॥ ३७ ॥

तपाये हुए सुवर्ण सरीखी कांति वाले शंख चक्र गदा पद्म इनसे शोभित चार भुजा वाले पद्म के केसर सरीखे वर्ण पीत वस्त्र को पहिरे हुये ॥ ३८ ॥

प्रकाश मान किरीट कड़ा कौंधनी उत्तम बाजुबंद इन से शोभित हृदय में श्रीवत्स चिन्ह से शोभित कौस्तुभ युक्त वन माला युक्त ॥ ३९ ॥

ऐसी मूर्ति का ध्यान करके पूजन करके घृत में डुबाई हुई समिधाओं को अग्नि में रख कर मंत्र से दक्षिण परिधि से लेकर उत्तर तक घृत की धारा छोड़ना आघार फिर दूसरे एक मंत्र से होम करना आज्यभाग इन को कर के फिर घृत में भीजी हुई हविष पदार्थ को अग्नि में अष्टाक्षर नारायण मंत्र से होम करै ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मूलमन्त्रेणाष्टाक्षरेण तथा षोडश ऋचो यस्मिंस्तेन पुरुषसूक्तेन चावदानतः प्रत्यृचमाहुतिप्रदानेनेत्यर्थः । पुरुषसूक्तनारायणपक्षे त्वेष मूलमन्त्रस्तेनैव प्रत्यृचमवदानेन होम इति मन्त्रैः स्वाहान्तैर्नाममन्त्रैः यथान्यायं पूजाक्रमेण भगवते स्विष्टकृते स्वाहेत्येवं स्विष्टकृतं च हुत्वा ॥ ४१ ॥

ततो वह्निस्थं भगवन्तमन्तर्यामिणमभ्यर्च्य नमस्कृत्य पार्षदेभ्यो नन्दादिभ्योऽष्टदिक्षु बलिं हरेत् ततः पूजास्थानमागत्य देवस्याग्रे समुपविश्य यथाशक्ति मूलमन्त्रं जपेत् ॥ ४२ ॥

तत्र उपयुक्त भगवतो भोजनममृतमिति ध्यात्वा आसनं दत्त्वा उच्छेषं विष्वक्सेनाय कल्पयित्वा तदनुज्ञया पश्चात्स्वयं भुञ्जीत ततः सुरभिमत्सुगन्धयुक्तताम्बूलाद्यं मुखवासं दत्त्वाऽथ पुनरप्यर्हयेत्पुष्पाञ्जलिना पूजयेत् ॥ ४३ ॥

अभिनयन्स्वाङ्गैरनुकुर्वन् क्षणिको नैरन्तर्यं परित्यज्य तत्परो भवेत् ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्तवस्तोत्राणां भेदं दर्शयति । पौराणैः प्राकृतैरपीति ॥ ४५ ॥

कथं प्रणमेदित्यपेक्षायामाह । शिर इति । बाहुभ्यां दक्षिणोत्तराभ्यां परस्परं मम दक्षिणोत्तरौ पादौ गृहीत्वा बद्ध्वा पृष्ठतः परस्परं निबद्धाभ्यां कृतापराध इव प्रपन्नमित्यादिविज्ञप्त्या च प्रणमेत् ॥ ४६ ॥

ततः शेषाग्रहणपूर्वकं वैकल्पिकोद्वासनप्रकारमाह । इतीति अनयैव प्रार्थनया शेषां निर्माल्यं मया दत्तां ध्यात्वा शिरस्याधाय धृत्वा यद्युद्वासयेत्तर्हि प्रतिमायां यत्स्थितं ज्योतिस्तत् पुनरपि हृत्पद्मस्थज्योतिष्येवोद्वास्यमुद्वासनीयम् ॥ ४७ ॥

एतेष्वधिष्ठानेषु किं मुख्यमित्यपेक्षायामाह । अर्चादिष्विति । यदा यत्र श्रद्धा तदा तत्र नत्वधिष्ठाने मुख्यामुख्यत्वम् कुतः यतः सर्वभूतात्मेति ॥ ४८ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी

अष्टाक्षरेण ॐ नमो नारायणायेति मन्त्रेण नाममन्त्रैरिति धर्माय स्वाहेत्यादिमन्त्रैः स्विष्टकृतम् तत् संज्ञकं कर्म यथा स्यात्तथा हुत्वेति शेषः चोऽत्र धर्मादिनिमित्तकहोमं समुच्चिनोति ॥ ४१ ॥

मूलमन्त्रमिति सार्द्धकम् । नारायणात्मकं नारायणरूपं गुरुं स्मरन्निति स्मरणं निर्विशेषस्मरणं व्यावर्त्तयति ततो मन्त्रजपानन्तरम् उभयत्र प्रतिमायां वन्हौ च ताम्बूलाद्यमित्याद्यशब्देन कर्पूरखदिरचूर्णपूगपरिग्रहः ॥ ४२ ॥ ४३ ॥

क्षणिकमिति गोपीवद्वियोगदशामवलम्ब्योक्तम् ॥ ४४ ॥

पौराणैः प्राचीनैरार्षैरित्यर्थः प्राकृतैरर्वाचीनैस्तत्र स्तवानां प्राकृतत्वं भावसाधनत्वेन तथा प्रतीतिः स्तोत्राणां पौराणत्वं करणसाधनत्वेन तथा प्रतीतिरित्यर्थक्रमेण व्याख्येयम् ॥४५॥

"अग्रे पृष्ठे वामभागे समीपे गर्भमन्दिरे । जपहोमनमस्कारान् न कुर्यात् केशवालये" इत्यतिनिकटे प्रणामनिषेधाद्द्वितीयपक्षमाह यद्वेति ॥ ४६ ॥

उद्वासयेद्विसर्जयेत् ॥ ४७ ॥

अर्चादिष्वित्यादिना मूर्त्यन्यादिपरिग्रहः । प्रह्लादादिश्रद्धया हिरण्यकशिपुस्तम्भादौ सुलभत्वदर्शनात् सर्वभूतात्मेत्युक्तम् ॥ ४८ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

धर्मादिमन्त्रैः धर्मादिभ्यश्च यथान्यायं हविर्जुहुयादिति शेषः पुनः स्विष्टकृतं कुर्यात् ॥ ४१ ॥

नारायणात्मकं मूलमन्त्रमष्टाक्षरम् ॥ ४२—४६ ॥

ज्योतिरर्चारूपं ज्योतिः ज्योतिषि अन्तरात्मनि ॥४७—५१॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो मूलमन्त्रेण श्रीमदष्टाक्षरस्वाहान्तेन षोडश चावदानानि पुरुषसूक्तस्य षोडशभिः ऋग्भिर्वान्यवदानानि तैश्चाज्यप्लुतं हविर्जुहुयात् ततो यथान्यायं धर्मादिभ्योऽङ्गदेवता आवरणदेवता अस्त्राणि भूषणानि पार्षदाश्च संगृह्यन्ते ततः स्विष्टकृत् जुहुयात् ॥ ४१ ॥

ततो वन्हावाहितं भगवन्तमभ्यर्च्य पार्षदेभ्यो नन्दादिभ्यः बलिं हरेदष्टदिक्षु दद्यात् नारायणात्मकमिति मन्त्रदेवतयोरैक्यभावना विधीयते ब्रह्म स्मरन्मामनुध्यायन् ॥ ४२ ॥

ततो विष्वक्सेनायाचमनं समर्प्य उच्छेषं भगवन्निवेदितं कल्पयेत्समर्पयेत् ततः सुरभिमत्कर्पूरादियुक्तं ताम्बूलादिकं मुखवासं समर्पयेत् अथार्हयेत्पुनः पुष्पाञ्जलिना पूजयेत् ॥ ४३ ॥

मम कर्माणि चरितानि मुहूर्त्तं क्षणोऽस्यास्तीति तथा मत्वर्थीयष्ठक् मुहूर्त्तं क्षणमवसरमित्यर्थः ॥ ४४ ॥

उच्चावचैर्नानाविधैर्वेदोक्तैः पुराणोक्तैः प्राकृतैर्द्राविडादिगानात्मकैः ॥ ४५ ॥

कृत्वा निधाय मृत्युग्रहार्णवान्मृत्युव्यालतुण्डात्संसाराद्भीतं तत्र ग्रहः पिशाचः गृहेति पाठे तेन संसारो लक्ष्यते मृत्युतुण्डादर्णवतुल्याच्च गृहादित्यर्थः ॥ ४६ ॥

मया दत्तां दत्तामिव भावितां शेषां मदुपभुक्ततुलसीं सादरं यथा तथा शिरस्याधाय धृत्वा उद्वास्यं चेत् ज्योतिर्मयरूपम् उद्वासयेत् कुत्रेत्यत आह । तज्ज्योतिः पुनर्ज्योतिष्यन्तरात्मनि उद्वासयेत् ॥ ४७ ॥

इत्थमर्चाद्यन्यतमे श्रद्धानुसारं तत्र मामर्चयेत् इत्थं भावं बोधयत्याह । सर्वभूतेष्विति । आत्मनि स्वस्मिंश्चाहमवस्थितः अन्तः प्रविश्य धारकत्वेन स्थितः अत एव सर्वात्मा सर्वशरीरकः ॥ ४८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

धर्मादिमन्त्रैः धर्मादिभ्यश्च यथान्यायं हविर्जुहुयादिति शेषः पुनः स्विष्टकृतं कुर्यात् ॥ ४१ ॥

अभ्यर्चायामिति पाठे अभिमुखो भूत्वा अर्चायां सन्निहितं भगवन्तं नमस्कृत्येत्यर्थः ॥ ४२ ॥

सुरभिमन्मुखवासताम्बूलादि च दत्वानन्तरं चामराद्युपचारैः अर्हयेत्सम्भावयेत् ॥ ४३ ॥

न केवलम् उपगायन् गृणन्नृत्यंश्च किन्तु मम कर्माणि अन्यैः कीर्तयित्वाभिनयन् सर्वेषां प्रकाशयन् अर्थान्तरं चाह । मत्कथा इति । अनेनाभिनयशब्दार्थोऽपि निवृत्त किमुक्तं स्यादत्राह । मुहूर्त्तक्षणिक इति । मत्कथाश्रवणेन मुहूर्त्तं [illegible] मत्कर्मानिवर्त्तितानन्द[illegible]भवेदित्यर्थः ॥ ४४ ॥

स्तवैर्मुक्तकस्तोत्रकानन्तधनैः ॥ ४५ ॥

परस्परं बद्धाभ्यां बाहुभ्यां [illegible] मत्पादयोः कृत्वा ॥ ४६ ॥

शेषां मालाचन्दनादिदानं शेषेऽस्मिन् [illegible] उपयुक्तः माल्यानुलेपनादिदाने इत्यमीति यादवः ॥ ४७ ॥

एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः ।
अर्चन्नुभयतः सिद्धिं मत्तो विन्दत्यभीप्सिताम् ॥ ४९ ॥
मदर्चां सम्प्रतिष्ठाप्य मन्दिरं कारयेद्दृढम् ।
पुष्पोद्यानानि रम्याणि पूजायात्रोत्सवाश्रितान् ॥ ५० ॥
पूजादीनां प्रवाहार्थं महापर्वस्वथान्वहम् ।
क्षेत्रापणपुरग्रामान् दत्त्वा मत्सार्ष्टितामियात् ॥ ५१ ॥
प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम् ।
पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियात् ॥ ५२ ॥
मामेव नैरपेक्ष्येण भक्तियोगेन विन्दति ।
भक्तियोगं स लभते एवं यः पूजयेत माम् ॥ ५३ ॥
यः स्वदत्तां परैर्दत्तां हरेत सुरविप्रयोः ।
वृत्तिं स जायते विड्भुग्वर्षाणामयुतायुतम् ॥ ५४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सुगन्धयुक्ताम्बूलाद्यं मुखवासं दत्त्वा अथ पुनरर्हयेत् पुष्पाञ्जलिनार्चयेत् ॥ ४३ ॥

अभिनयन् स्वाभिप्रायमाविष्कुर्वन् क्षणिको लब्धावकाशः ॥ ४४ ॥

प्राकृतैरपि स्तोत्रैः स्तुत्वा हे भगवन् ! प्रसीदेति विज्ञाप्य दण्डवन्नमेत् ॥ ४५ ॥

प्रणामप्रकारं दर्शयति । शिर इति । शिरः मत्पादयोर्मध्यगं कृत्वा बाहुभ्यां च परस्परं मम दक्षिणोत्तरौ पादौ गृहीत्वा मृत्युग्रहार्णवात् मृत्युः जन्ममरणप्रवाहलक्षणः संसारः स एव व्यामोहकत्वाद्ग्रहः पिशाचः दुस्तरत्वादर्णवस्तस्मात्प्रीतिं हे ईश ! प्रपन्नं त्वां शरणं प्राप्तं मां पाहीति विज्ञप्त्या च प्रणमेत् ॥ ४६ ॥

शेषां निर्माल्यं मया दत्तां ध्यात्वा शिरस्याधाय नमस्कारेण स्वीकुर्यादित्यर्थः । ज्योतिर्मद्रूप ज्योतिषि स्वान्तर्यामिणि मयि उद्वासयेत् ततो भुञ्जीत ॥ ४७—४८ ॥

भाषा टीका ।

फिर मूल मंत्र से तथा पुरुष सूक्त की षोडश ऋचाओं से आहुति करके धर्मादिकों को अपने नाम मन्त्रों से होम करै फिर अन्त में स्विष्टकृत नाम का होम करै ॥४१॥

फिर हमारा पूजन करके नमस्कार करके पार्षदों को भाग देवै फिर नारायण रूप ब्रह्म का स्मरण करके मूल मंत्र का जप करै ॥ ४२ ॥

फिर भगवान् को आचमन कराकर बाकी प्रसाद विश्वक्सेनजी को अर्पण करै फिर भगवान् को मुख का सुगंधि पान सुपारी आदिक देवै ॥ ४३ ॥

फिर गान करै नृत्य करै कथा कहै मेरे चरित्रों का अनुकरण करै मेरी कथा सुनावै सुनै फिर मुहूर्त भर प्रेम में निमग्न होजावै ॥ ४४ ॥

छोटे बड़े स्तोत्र पुराणों के अथवा भाषा के स्तोत्रों से स्तुति करके फिर हे भगवन् प्रसन्न होवो ऐसा कहकर दंड की नाईं पृथिवी पर गिरके प्रणाम करै ॥ ४५ ॥

मेरे चरण की तरफ शिर रखकर दोनों भुजों को परस्पर जोड़ कर कहै कि हे ईश ! इस संसार रूपी घोर पिशाच या समुद्र से मेरी रक्षा करो ॥ ४६ ॥

इस प्रकार करके फिर मानो मेरी दी हुई प्रसादी को आदर पूर्वक मस्तक पर रक्खै और जब चल मूर्ति बिना प्रतिष्ठा की होवै तो अपने हृदय जोति ही में उस मूर्ति की ज्योति का विसर्जन कर देवै ॥ ४७ ॥

मूर्ति आदिकों में जब जहां श्रद्धा होवै तब तहां मेरा पूजन करै सर्व भूतों में तथा अपने आत्मामें मैं सर्वत्र ही पूर्ण हूं ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

उभयतः इहामुत्र च ॥ ४९ ॥

समर्थं प्रत्याह । मदर्चामिति त्रिभिः । पुष्पोद्यानानि च कारयेत् पूजायात्रोत्सवाश्रितान् पूजा प्रत्यहम् यात्राविशिष्टे पर्वणि बहुजनसमागमः उत्सवो वसन्तादिमहोत्सवः तदाश्रितान् क्षेत्रादीन् दत्त्वा ॥ ५० ॥

पूजायात्रोत्सवाश्रितानित्यस्य विवरणम् पूजादीनामिति । प्रवाहार्थं सन्ततानुवृत्त्यर्थम् मत्सार्ष्टितां मत्समानैश्वर्यम् ॥ ५१ ॥

कर्तुश्च सारथेर्हेतोरनुमोदितुरेव च।
कर्मणां भागिनः प्रेत्य भूयो भूयसि तत्फलम् ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे श्रीभगवदुद्धवसम्वादे
सप्तविंशोऽध्यायः ॥ २७ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

प्रतिष्ठादीनां स्वतन्त्रसमस्तानां फलमाह। प्रतिष्ठयेति। मत्साम्यतां मया साम्यमित्यर्थः ॥ ५२ ॥

सकामं प्रत्युक्तमहैतुकभक्तं प्रत्याह। मामेवेति। अहैतुको भक्तियोग एव कथं भवति तत्राऽऽह। भक्तियोगमिति ॥ ५३ ॥

दातुः फलमुक्तमपहर्तारं निन्दति। य इति। विड्भुक् विष्ठाभोजी कृमिः ॥ ५४ ॥

कर्तुर्यत्फलं तदेवाऽन्येषामपीत्याह। कर्तुरिति। सारथेः सहकारिणो हेतोः प्रयोजकस्याऽनुमोदितुश्च प्रेत्यैतत्फलमित्यन्वयः। कुतः यतः कर्मणामेते भागिनो भागार्हाः तत्रापि विशेषमाह। भूयसि कर्मणि सारथ्यादौ च भूयोऽधिकं फलमिति ॥ ५५ ॥

यः पत्रादिमात्रेण पूजितो यः परं पदम्।
प्रागेव दिशति प्रीतः स कृष्णः शरणं मम ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
सप्तविंशोऽध्यायः ॥ २७ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपनी टिप्पणी।

क्रियायोगपथैः मदर्चनलक्षणोपायप्रकारैः ॥ ४९ ॥

मन्दिरं कारयित्वा मदर्चां मत्प्रतिष्ठापयेदिति वाच्ये वैपरीत्योक्तिर्मन्दिरेऽनद्यार्चाप्रतिष्ठापनस्थापनाय मत्पादयोर्ग्रमतो यदा मदर्पितिवत्। विशिष्टपर्वणि अक्षयतृतीयादौ वसन्तादौत्सवादिना ह्योलिकाहिन्दोलादिमहः। तदाश्रितान् ते पूजादय आश्रिता अधीना येषां क्षेत्रादीनां तान् दद्यादिति परतोऽन्वयाऽभ्युपगमः ॥ ५० ॥

विभवे सत्यन्वहम् ॥ ५१ ॥

साम्यमित्यार्षम् अतएव इत्यर्थं इत्युक्तम् ॥ ५२ ॥

नैरपेक्ष्येण शक्तिं विना सालोक्यादि सुखेऽस्थानपेक्ष्येण। एवं निष्कामतया भक्तियोगं प्रेमाणम् ॥ ५३ ॥

सुरविप्रयोरिति। सामान्योक्तिर्बहिर्मुखानामपि तत्प्रसाधवाऽर्थम् ॥ ५४ ॥

तत्रापि तुल्यफलत्वेऽपि ॥ ५५ ॥

कीर्तनात्मकयज्ञेन यः सन्तुष्टः शुनोऽपि हि।
तं चैतन्यं प्रपद्येऽहं गान्धर्वीभावकान्तिकम् ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
सप्तविंशोऽध्यायः ॥ २७ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

मया साम्यं यस्य स मत्साम्यः तस्य भावो मत्साम्यता नैरपेक्ष्येण ॥ ५२—५३ ॥

विड्भुग् अमेध्यभोजी ॥ ५४ ॥

सारथेर्हेतोः सहकारितया हेतुभूतस्य भूयः भूयिष्ठम् ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
सप्तविंशोऽध्यायः ॥ २७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

उपसंहरति। एवमिति। क्रियायोगानां पथिभिर्मार्गैः प्रकारैरिति यावत् उभयतः इहामुत्र चाभीप्सितां सिद्धिं फलं विन्दति लभेत ॥ ४९ ॥

शाक्तं प्रत्याह। मदर्चामिति। नागदृढं मन्दिरं कारयेत्तत्र मदर्चां मत्प्रतिमां प्रतिष्ठाप्य पुष्पोद्यानानि च कारयेत् ॥ ५० ॥

महापर्वस्वन्वहं च पूजादीनां प्रवाहार्थं सन्ततानुवृत्त्यर्थं पूजार्थानिमान् क्षेत्रादीन् दत्त्वा आराधयेदिति शेषः। मह्यमिति वा मत्सार्ष्टितां मत्समानैश्वर्यं प्राप्नुयात् तत्र यात्राविशेषेषु पर्वसु महाजनसमागम उत्सवो वसन्तादिमहोत्सवः तैराश्रितांस्तद्युक्तानित्यर्थः। तान् क्षेत्रादीन् इति सम्बन्धः ॥ ५१ ॥

सार्वभौमं सर्वपृथ्वीपतित्वं मन्दिरनिर्माणेन त्रिभिः प्रतिष्ठामन्त्रपूजनैः मत्साम्यतां मत्साधर्म्यमिति यावत् ॥ ५२ ॥

यस्तु नैरपेक्ष्येण फलाभिसन्धिविरहेण मामित्थं पूजयेत्स भक्तियोगं लभते तेन च भक्तियोगेन मामेव विन्दते प्राप्नोति ॥ ५३ ॥

दत्त्वा मत्सार्ष्टितामियादिति दानफलमुक्तं किं तदपहारफलमित्यत आह। य इति। सुरविप्रयोर्देवब्राह्मणयोः विड्भुगमेध्यभोजी ॥ ५४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न केवलमिदं फलं दात्रपहर्त्रोरेवापि त्वन्येषामपि केषांचिदित्याह । कर्तुरिति । कर्तुः प्रयोजकस्य सारथेः सहकारिणः हेतोः प्रयोजकस्यानुमोदितुश्चैतत्फलं कुतः यतः कर्मणां दानापहाररूपाणां भागिनः भोगिन इति पाठे तत्फलभोगिनः तत्रापि विशेषमाह । तत्फलं दानापहारादिफलं प्रेत्य परलोके भूयो भूयः उत्तरोत्तरं भूयिष्ठमित्यर्थः ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
सप्तविंशोऽध्यायः ॥ २७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मर्चानुभावतः प्रतिमासामर्थ्यात् ॥ ४९—५० ॥

प्रवाहरूपेण प्रवर्तनार्थं प्रतिष्ठागृहकरणपूजानां फलतारतम्यमाह । प्रतिष्ठयेत्यादिना । मत्साम्यतां नित्यं स्वानन्दानुभवरूपताम् ॥ ५१ ॥ ५२ ॥

ज्ञानं विना प्रतिष्ठादिभिरेव साम्यता कथं स्यादत्राह । मामेवेति । नैरपेक्ष्येण भक्तियोगेनैव मां विन्दति । साम्यं लभते—

नित्यः स्वयं हरेः साम्यं न तादृशसुखात्मता ।
सर्वोत्तमस्तदानन्दः कथं कस्यचिदाप्यते ॥
आधिपत्यं त्रिलोकस्य योग्यानामिन्द्रता स्मृता ।
अयोग्यानां त्रिलोकेऽपि पूज्यत्वं समुदाहृतम् ॥
तद्भक्तिपरया भक्त्या विष्णोरालयकारिणः ।
ततोऽप्युद्रिक्तया भक्त्या विष्णुं पूजयतः सदा ॥
प्राप्यते ब्रह्मलोकस्तदुद्रिक्तश्च मुच्यते ।

इति मानातिशयोऽवगन्तव्यः नन्वेवं तर्हि प्रतिमादिपूजा व्यर्थेति तत्राह । एवमिति । य एवं मां पूजयेत्स भक्तियोगं लभते तेन मामाप्नोतीति शेषः । अनेन ज्ञानभक्तिद्वारेण भगवत्प्राप्तिरित्युक्तं भवति ॥ ५३ ॥

देवस्वापहरणे महान्दोष इत्याह । य इति ॥ ५४ ॥

न केवलं प्रतिमादिपूजाकर्तुरुक्तं फलं साहाय्यकर्तॄणां यथायोग्यं फलं भवतीत्याह । कर्तुरिति । सारथेः कार्यहेतोः प्रेत्य कर्मणां फलभागिनो भवन्तीत्यर्थः । फलतारतम्यमाह । भूय इति । भूयसि महति । तत्फलं भूयो भवति ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
सप्तविंशोऽध्यायः ॥ २७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मन्दिरं कारयित्वा मदर्चां संप्रतिष्ठापयेदिति वाक्ये वैपरीत्योक्तिस्तत्राग्रतकृतप्रतिष्ठापनज्ञापनाय ॥ ५०—५२ ॥

नैरपेक्ष्येण भक्तिं विना फलान्तरशून्येन । एवमित्यपि नैरपेक्ष्येणैवेत्यर्थः ॥ ५३ ॥ ५४ ॥

न केवलं दात्रपहर्त्रोरेव तत्तत्फलमपि तु तत्तत्सहायादीनामपीत्याह । कर्तुरिति ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
सप्तविंशोऽध्यायः ॥ २७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उभयतः इहामुत्र च ॥ ४९ ॥

समर्थं प्रत्याह । पूजा प्रात्यहिकी यात्रा अष्टम्याद्यासु उत्सवो वसन्तादिमहोत्सवश्च तान् अस्माकमयं भार इति मद्भावेन आश्रिता ये धार्मिका धनिनस्तान् मन्दिरादिकान् कारयेत् ॥ ५० ॥

न धनिनोऽपि कृतार्था भवन्तीत्याह । पूजादीनामिति । मत्सार्ष्टितां मत्समानैश्वर्यम् ॥ ५१ ॥

प्रतिष्ठादीनां पार्थक्येन सामस्त्येन च फलमाह । प्रतिष्ठया भगवत्प्रतिमास्थापनेन सद्मना मन्दिरनिर्माणेन पूजादिनिर्वाहेण मत्साम्यतां मत्स्वारूप्यं स्वार्थे ष्यञ् ॥ ५२ ॥

यस्तु नैरपेक्ष्येण ज्ञानकर्मकामनान्तरराहित्येनैव एवं मां पूजयेत् अर्चनं कुर्यात् यद्वा धनक्षेत्रापणादिदानेन पूजां कारयेत् स भक्तियोगं प्रेमाणं लभते ततश्च भक्तियोगेन प्रेम्णा मामेव विन्दति ॥ ५३ ॥

भगवत्पूजार्थं धनक्षेत्रादि दातुर्द्विविधं फलमुक्तं तदपहर्तुः फलमाह । य इति ॥ ५४ ॥

अपहर्तुर्यत् फलं तदेव तत्सहायादीनामपीत्याह । कर्तुरिति । सारथेः सहकारिणः हेतोः प्रयोजकस्य अनुमोदितुश्च प्रेत्य मरणानन्तरं तत्फलमित्यन्वयः कुतः यतः कर्मणामेते भागिनः भागार्हाः तत्रापि विशेषमाह । भूयसि कर्मणि सारथ्यादौ भूयोऽधिकमेव फलम् ॥ ५५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशे सप्तविंशः सङ्गतः सङ्गतः सताम् ॥ २७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उभयतः इहामुत्र च ॥ ४९ ॥

शक्तौ सत्यां कृत्यमाह । मदर्चामिति त्रिभिः । पूजायात्रोत्सवाश्रितान् निर्वाहकान् क्षेत्रादीन् दद्यादिति शेषः ॥ ५० ॥

तत्सम्भोगफलमाह । पूजादीनामिति । मत्सार्ष्टितां मत्समानैश्वर्यम् ॥ ५१ ॥

प्रतिष्ठादीनां फलमाह । प्रतिष्ठयेति ॥ ५२ ॥

निष्कामस्तत्फलाभिसन्धिशून्येन भक्तियोगेन मां प्राप्नोतीत्याह । मामिति । तादृशं भक्तियोगं मयि मत्पूजनजन्येन मदनुग्रहेणैव प्राप्नोतीत्याह । भक्तियोगमिति ॥ ५३ ॥

अभक्तौ सहायकारित्वे अभक्तस्य च फलमुक्त्वा अभक्तौ विघ्नकर्तृतत्सहकार्यादीनां च फलमाह । य इति द्वाभ्याम् ॥ ५४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सारथेः सहकारिणः हेतोः प्रयोजकस्य अनुमोदितुश्च तत्फलं पूर्वोक्तफलं भवति यतः कर्मणामेते भागिनः भागार्हाः किं च भूयसि अपराधे भूयोऽधिकमेव फलम् ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

सप्तविंशाध्यायार्थप्रकाशः ॥ २७ ॥

———

भाषा टीका।

पुरुष मात्र इस प्रकार से वैदिक और तान्त्रिक क्रिया योग मार्गों से पूजन करता रहै तो मेरे से भुक्ति मुक्ति रूप दोनों मन वांछित सिद्धी को प्राप्त होता है ॥ ४९ ॥

बड़ा पुख्ता मंदिर बनाकर मेरी मूर्ति का स्थापन करे नित्य की पूजा यात्रा उत्सवों के चलने के वास्ते मनोहर फूलों के बगीचा जमीन आदिक लगा देवे ॥ ५० ॥

नित्य प्रति अथवा पर्वादिकों में पूजा तथा उत्सवों के चलने के वास्ते कोई खेत वा दुकान सहर ग्राम इनको मंदिर में जो अर्पण करता है सो सकाम हो तो मेरे तुल्य ऐश्वर्य को पाता है ॥ ५१ ॥

मंदिर की प्रतिष्ठा करने से सार्वभौम पद मिलता है मंदिर के बनाने मात्र से त्रिभुवन का सुख मिलता है पूजादिक मात्र करने से ब्रह्म लोक मिलता है तीनों काम करे तो मेरी साम्य मुक्ति को प्राप्त होता है ॥ ५२ ॥

निरपेक्ष भक्ति योग से इन कामों को करे तो ऐसा पूजा करने वाला जो पुरुष सो मेरे भक्ति योग को प्राप्त होकर मेरे को प्राप्त होता है ॥ ५३ ॥

जो कोई अपनी दिई वा दूसरे की दिई हुई ब्राह्मण की वा देवता की जीविका को हरण करेगा वह तो हजारों वर्ष तक विष्ठा का खाने वाला कीड़ा होजावगा ॥ ५४ ॥

इन दोनों तरह के कामों में जो करने वाला है वा जो किसी प्रकार से कारण है या इस बात का संमति अनुमोदन करता है वे सब मनुष्य परलोक में इन कर्मों के फलों को पाते हैं परन्तु जिसकी अधिक सहायता होती है उसको अधिक फल होता है ॥ ५५ ॥

इति श्रीमद्भागवत एकादशस्कंध

सत्ताईस में अध्याय की

भाषा टीका समाप्त ॥ २७ ॥

———

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे सप्तविंशोऽध्यायः ॥ २७ ॥



## अथ अष्टाविंशोऽध्यायः ।

—:*:—

श्रीभगवानुवाच ॥

परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् ।
विश्वमेकात्मकं पश्यन् प्रकृत्या पुरुषेण च ॥ १ ॥
परस्वभावकर्माणि यः प्रशंसति निन्दति ।
स आशु भ्रश्यते स्वार्थादसत्यभिनिवेशतः ॥ २ ॥
तैजसे निद्रयापन्ने पिण्डस्थो नष्टचेतनः ।
मायां प्राप्नोति मृत्युं वा तद्वन्नानार्थदृक् पुमान् ॥ ३ ॥
किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत् ।
वाचोदितं तदनृतं मनसा ध्यातमेव च ॥ ४ ॥
छायाप्रत्याह्वयाभासा ह्यसन्तोऽप्यर्थकारिणः ।
एवं देहादयो भावा यच्छन्त्यामृत्युतो भयम् ॥ ५ ॥
आत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः ।
त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ॥ ६ ॥
तस्मान्नह्यात्मनोऽन्यस्मादन्यो भावो निरूपितः ।
निरूपितेयं त्रिविधा निर्मूला भातिरात्मनि ।
इदं गुणमयं विद्धि त्रिविधं मायया कृतम् ॥ ७ ॥
एतद्विद्वान्मदुदितं ज्ञानविज्ञाननैपुणम् ।
न निन्दति न च स्तौति लोके चरति सूर्यवत् ॥ ८ ॥

---

**श्रीधरस्वामिकृतभावार्थदीपिका ।**

अष्टाविंशे तु यः पूर्वं विस्तरेणोपवर्णितः ।
ज्ञानयोगः पुनः सोऽसौ समाहृत्य निरूप्यते ॥

इदानीमतिविस्तरेणोक्तं ज्ञानयोगं संक्षेपेण वक्तुमाह । परेषां स्वभावान् शान्तघोरादीन् कर्माणि च । तत्र हेतुः विश्वमिति ॥ १ ॥

विपक्षे दोषमाह । परेति । स्वार्थात् ज्ञाननिष्ठालक्षणात् भ्रश्यति । मिथ्याभूते द्वैतेऽभिनिवेशात् ॥ २ ॥

भ्रंशमेव दृष्टान्तेन दर्शयति । तैजसे राजसाहङ्कारकार्ये इन्द्रियगणे निद्रया आपन्नेऽभिभूते सति । पिण्डस्थो जीवः स्वप्नरूपां केवलं मनोमात्रेण मायां प्राप्नोति ततो मनस्यपि लीने सति नष्टचेतनः सन्मृत्युं वा मृत्युतुल्यां सुषुप्तिं वा प्राप्नोति । यथा तद्वदेव नानार्थदृक् द्वैताभिनिवेशी विक्षेपं लयं च प्राप्नोति । यथा प्राज्ञस्वरूपकाद्विश्वस्य भोगलक्षणो भ्रंश एवमनात्मस्वरूपकादात्मनोऽपि स्वरूपभ्रंश इति भावः ॥ ३ ॥

द्वैतासत्यतया स्तुतिनिन्दयोर्निर्विषयत्वं प्रपञ्चयति सार्धैः षड्भिः किं भद्रमिति । अवस्तुनो द्वैतस्य मध्ये किं भद्रं किं वाऽभद्रं कियद्भद्रं कियद्वाऽभद्रमित्यर्थः । अवस्तुत्वमेवाऽऽह । वाचेति । बाह्येन्द्रियोपलक्षणमेतत् वाचा उदितमुक्तं चक्षुरादिभिश्च यद्दृष्टं तदनृतमिति ॥ ४ ॥

नन्वेवं सति देहादिभावानामप्यसत्त्वात्कथं भयहेतुत्वं तत्र दृष्टान्तमाह । छाया प्रतिबिम्बः प्रत्याह्वयः प्रतिध्वनिः आभासः

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

परमात्मानात्मकं व्याप्तमेकात्मकं पश्यन् स यथार्थज्ञानी भवि-तेत्यतो न दुर्लभ इति अनेन तथा पश्यत एव यथार्थज्ञानं भवतीत्युक्तं भवति

न प्रशंसेत निन्द्यांस्तु प्रशंस्यांश्चैव निन्दयेत्।
उभयं यः करोत्यनद्धस्त्वात्स पतत्यधः॥
यः प्रशंस्यान्न प्रशंसेन्निन्द्यो येन न निन्द्यते।
सोऽपि तद्वद्धो याति यतोऽरिवदुदासकः॥

इति वाक्यात् परस्वभावकर्मणां प्रशंसा निन्दा च न कार्येति प्रतीतार्थः किं न स्यादितीयं शङ्का दूरोत्सारितेति ज्ञातव्यम्॥ १॥

उक्तार्थानङ्गीकारे बाधकमाह। परस्वभावेति। परोऽन्यो हरि विमुखत्वेन निन्द्यस्तस्य स्वभावकर्माणि स्तौति परो वर्णाश्र-मतुल्यः श्रीहरिपरायणः तस्य स्वभावकर्माणि निन्दति स पुरुषः असत्याभिनिवेशतो मिथ्याज्ञानाभिनिवेशतः स्वस्थानाद्भ्रश्यते अन्धं तमो यातीत्यन्वयः यः प्रशंस्यान्न प्रशंसेदित्यादेरस्याप्युक्त एवार्थः॥ २॥

असत्याभिनिवेशे निमित्तमाह। तैजस इति। निद्राशब्देन निद्रा सुनिद्रेति द्विविधा निद्रोच्यते तत्र निद्रा स्वापापरपर्याया: सुनिद्रा मरणकालीना तथा चैवमस्य श्लोकस्यार्थः तैजसे तैज-साहंकारकार्ये श्रोत्रादीन्द्रियगणे मनसि च निद्रया दैवाधीनस्वा-पेनापन्ने सुप्ते सति पिण्डस्थो जीवो नष्टचेतनः सुप्तो भवति तदा स्वापे जाग्रतामन्वीश्वरेच्छया प्रबोधितमनोगतसंस्कारज-न्यत्वान्मायां स्वप्नं प्राप्नोति सुनिद्रयापन्नो मृत्युं मरणम् प्राप्नोति नानाविधसंस्काराविष्टमनः स्वप्नदशायां नानार्थप्रदं दृष्टं हि जाग्रदाद्यवस्थायां किमु वर्णनमिति भावेनाह। नार्थेति तन्मन एव नानार्थं नानाविधविषयप्रत्यायकं हि प्रसिद्धत्वान्मन एव मिथ्याप्रत्ययानिमित्तमिति भावः

तैजसाहंकृतजाते इन्द्रियग्रामके परात्।
निद्रया वशमापन्ने जीवः स्यान्नष्टचेतनः॥
अतो विष्णोर्वशे सर्वं तेन व्याप्तमिति स्मरेत्।

इति निद्रा चैव सुनिद्रा च द्विधा निद्रा प्रकीर्तिता तत्र निद्रा भवेन्नित्या सुनिद्रा मृतिकालगेति मनोमात्रस्वरूपत्वात् स्वप्नो मायेति कथ्यते इत्येतद्वाक्यैकत्र एवार्थोऽङ्गीकार्य इति॥ ३॥

अतत्त्वतो नित्याप्रतिहतज्ञानस्वजानतो द्वैतस्याशुभस्य मिथ्याज्ञानिनः पुंस आशीर्वादादिना किं भद्रं भवति काल-गुणात् स्वाद्गुणाद्वा भवति चेदपि तत्कियदेवाल्पमेव भद्रवद-भद्रमपि विनाशापादकं न भवतीत्याह। किमभद्रमिति। नित्यमशु-भात्मनः तस्य विशेषतः अभद्रं किं न किमपि भवति चेदपि तत्कियदेव यतस्ततोऽपि मायावादिनः स्वयोग्याद-धिकेन न भवतीति यस्मात्तस्मादशुभं जीवमुद्दिश्य सज्जन वाचोदितमुक्तं मनसा शुभाशिषं भवत्विति ध्यातं चिन्तितमपि अनृतमसत्यमेव विनाशापादकं न भवतीत्यर्थः। अनेन वैष्णवेना-वैष्णवमुद्दिश्य तत्प्रशंसाशिवदाशीर्वादादिकं न कर्तव्यमित्युक्तं भवति "उच्यते ध्यायते वापि कुतरं प्रति यच्छुभम्। असत्यमेव भवति स्वभावोऽसत्त्वमेव च" इति वचनात् द्वैतनिषेधोऽत्र किमत इत्यन्यथा व्याख्यानं चशब्दसूचितेन एकं तु शुभमुद्दिश्य-अशुभं द्वैतमुच्यते। पुंसोऽशुभस्य किं भद्रं किमभद्रं विशेषतः सर्वदा शुभरूपत्वाद्विशेषोऽस्त्यत एव हीति वाक्येन निरस्त-त्वादुपेक्षणीयमिति भावः॥ ४॥

ननु स्वभावतोऽशुभजीवस्य सदाप्यशुभरूपत्वात् अन्यस्मा-च्छुभाशुभयोरत्यन्तपरत्वात्तद्विषयशुभवचनादेरप्यनृतत्वादशुभदेहा-दिकमपि नाशुभकारणमिति तत्राह। छायाप्रत्युदकाभासादिति। हि शब्दो याथार्थ्ये यथा छायाप्रत्युदकाभासा जीवमपेक्ष्यासत्तोऽपि निःशक्ता अर्थकारिणोऽर्थक्रियाकारिणो दृष्टाः एवं देहा-दयो भावा अभद्रा अप्यामृत्युनोऽन्धतमः प्रवेशपर्यन्तं भय-मित्युपलक्षणं शुभाशुभफलं यच्छन्ति अशुभजीवानामिति शेषः नीहारः प्रत्युदकं च धूममप्युपलक्षयति इत्यतः प्रत्युदकं नीहारः आभासाः सूर्यकान्तादयः नेदं रजतमिति यथैव छायेति बाधकप्रत्ययानुदयात् एतद् दृष्टान्तेन न देहादीनां मिथ्यात्वं-विवक्षितं किन्तु निःशक्तित्वमेव स्वापेक्षया जीवं देहादिनिःशक्त-त्वादसत्त्वमपि पुनः शुभाशुभं नृणां यच्छत्येव शुभाशुभं छाया-नीहारकाभासा निःशक्ता अपि कार्यदाः एवं शुभादिदेहादेर्मं-वेऽकार्ये शुभादिकम् एतद्वचनाद्भवमभयामिति वा पदच्छेदः॥ ५॥

सत्यसङ्कल्पेन सत्यकर्मणा निरस्तकुहकेन परमेश्वरेण सृष्टत्वा-दिदं सर्वं सत्यं न मिथ्याभूतमिति भावेनाह। आत्मैवेति। प्रकृत्या-द्युपसर्जनं विना सर्जनादिकर्तुः समर्थ इत्यर्थं एवशब्दः परमात्मै-वेदं सर्वं सृजति त्राति हरति विश्वात्मा स्वयमेव आत्मनैव सृज्यते त्रायते ह्रियते च दीपाद्दीपान्तरवत् ईश्वर इत्यनेन कर्मकर्तृत्वविरोधं परिहरति प्रभुरित्यनेन च मनुष्यत्वेनावगतं कार्यं स्यादित्यामीति चिन्तनमेवात्मनस्त्राणं नान्यदन्तर्गतस्वामित्वात्समर्थत्वाच्चेति सृजति दीपाद्दीपान्तरं यद्वत्सृष्टिरस्य कीर्त्यते एतावत् काव-माशिष्य मानुष्योपनीतचिन्तनं विष्णोस्त्राणं समुद्दिष्टं स्वस्यैव स्वेच्छयैव तु दीपाद्दीपान्तरस्यैव हर्का भावश्च संहृतिरिति वचनात् अविद्यया छिन्नमतिः आत्मानं सृजतीत्यादिदुर्मतं निरस्तमि-त्यादिवोऽसत्त्वं ह्रियत इत्यनेन दीपान्तरस्य दीप इवैकीभावः संहार इति दर्शयति—

पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥

इति श्रुतेः॥ ६॥

ननु हिरण्यगर्भादेः सृष्ट्यादिव्यापारानि वेदे जपति कथं हरेरेव सृष्ट्यादिकमवधीयत इति शङ्कां भिक्षु कुर्वन्निव परिहरन्नुपसंहरति। तस्मादिति। यस्मात्त्रिरवकाशप्रमाणबला-द्धरिरेव सृष्ट्यादिकर्ता तस्मादमुष्मात् आत्मनो हरेरन्यो भावः सृष्ट्यादिकर्ता न निरूपितः कुत्रापि वद इत्यन्वयः ननु पितेव पुत्रादेर्देहेरपि सृष्ट्यादिकर्तारन्यः किं न स्यादित्यतो वाह तस्मादिति यस्मात्स्वात्मनैव स्वयं सृज्यते इत्यादिकं प्रामाणिकं तस्मादात्मनः परमेश्वरस्य भावः सृष्ट्यादिकर्तामुष्मादन्यो नास्ति—

सृष्टिस्थितिश्च संहारो भावनं समुदाहृतम्।
तद्यः करोति पुरुषः स भाव इति कीर्तितः॥

इतिवचनात् भावःशब्दस्य सृष्ट्यादिकर्तृत्वशब्दवाच्यत्वं सिद्धम् अनेनोक्तशङ्कायाः कः परिहार आयात इति तत्राह। निरू-पितेति। अन्यत सृष्टिस्थितिसंहार इति त्रिविधा मतिर्विद्वद्भिर्नैव

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निरूपिता निर्मूला प्रमाणवर्जिता—

अन्यस्मात्सृष्टिसंहारौ स्थितिश्च परमात्मनः ।

निरूपिता न विद्भिः प्रमाणाभावतो हरेरिति विद्भिरिति विशेषणादासुरमत एव तथा प्रतिभानमिति ज्ञायते परमात्मनः सत्त्वादिगुणराहित्यादन्यतः सृष्ट्यादिकं न युक्तं गुणस्य गुणवत्त्वादन्यतो युज्यत इत्याशयेनाह । इदमिति । मायया हरेरिच्छया कृतमिदं त्रिविधं सृष्टिस्थितिसंहारा इति त्रित्वसंख्याविशिष्टमात्मनि जीवे गुणमयं सत्त्वादिगुणाधीनं विद्धि न परमात्मन इति शेषः—

गुणसम्बन्धयोग्यानामुत्पत्त्याद्याः स्युरन्यतः ।

सर्वदा निर्गुणस्यास्य सर्गाद्याः स्युः कुतोऽन्यतः ॥

इति अतो विशेषः कल्प्यत इति अनेन सत्त्वादिगुणेषु कारणत्वेन सिद्धेषु कथमन्यो भावो नास्तीति समञ्जसं स्यादितीममाशङ्कां परिहृता विद्धीति पुरुषार्थोपायाङ्गत्वादिदमेवावश्यं ज्ञेयमिति निर्धारयति मायेत्यनेन गुणानामचेतनत्वेन अतः प्रवृत्त्यनुपपत्तेः कार्येषु प्रवर्तकत्वेन हरेर्मुख्यकारणत्वमेव धृतम् ॥७॥

परस्वभावेत्यादिशिक्षितज्ञानफलमाह । एतद्विद्वानिति । मदुदितमेतद्विद्वान् ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ तादृशे भक्तियोगे वाह्यरपि परित्याजयितुमथवा भक्तियोगस्य सुगमतां सुफलतां च दर्शयिष्यन् दुर्गमादिरूपं ससाधनं ज्ञानमाह । परस्वेति । प्रकृत्या पुरुषेण सह विश्वमेकात्मकमिति आद्यावन्ते जनानां सद्बहिरन्तःपरावरमित्यादिसप्तमस्कन्धगतव्याख्यानरीत्या वस्तुतस्तु तत्सर्वावयवी यः परमात्मा स एवैक आत्मा यस्य तथाभूतं पश्यन् वक्ष्यते च ज्ञाने विवेक इत्यादिष्याम ॥ १

स्वार्थात्परमात्माभिनिवेशात् असति ततोऽन्यस्मिन् कल्पिते नानावयविनि ॥ २ ॥

किञ्च तैजस इति । परमात्मैकदृष्ट्यभावेन नानार्थदृक् पुमान् कदाचिद्बहिर्नष्टचेतनः सन् मायां लौकिकमायामयतुल्यं मायामयभगवदचिन्त्यशक्तिमयं स्वप्नं यद्वत्प्राप्नोति कदाचिद्बहिरन्तरपि नष्टचेतनः सन् मृत्युं मृत्युतुल्यं सुषुप्तं वा यद्वत्प्राप्नोति तद्वदेव मायां तादृशं जन्मादिरूपदेहाद्यभिनिवेशं मृत्युदेहपरित्यागं च प्राप्नुवन् भ्रमतीत्यर्थः ॥ ३ ॥

नानात्वितोऽपि ह्याभास इति सप्तमाभ्याख्यानरीत्यैव पृथगर्थावलम्बनाद्वैतस्यावस्तुतया स्तुतानिन्दयोर्निर्विशेषत्वं प्रपञ्चयति सार्द्धैः षड्भिः । किं भद्रमिति । तत्परमात्मचैतन्यादन्यत् अन्वयधिरूपं द्वैतम ॥ ४ ॥

ननु यदि परमात्मैव सर्वत्रावयवी ततोऽन्यत्रास्त्येव तर्हि कथं शशविषाणतुल्ये तस्मिन्नभिनिवेशः स्यात् तेन वा कथं भूत इत्याशङ्क्याह । छायेति ॥ ५ ॥

विश्वस्यैकात्मकत्वं योजयति । आत्मैवेति द्वयेन । प्रभुः तत्तच्छक्तियुक्त आत्मा स्वयमेव तदिदं विश्वमयनिरूपं सृजति अतः स्वमनः सृज्यते प्रकाश्यत इत्यर्थः एवं त्राति त्रायत इत्यादि ॥ ६ ॥

तस्माद्विश्वस्मिन् यः कश्चिदपि भावः स परमात्मनो नान्यो निरूपितः कारणं विना कार्यस्यासिद्धत्वादिति भावः । तर्हि तस्यैव विकारित्वं स्यादित्याशङ्क्याह । अन्वस्मादिति । तथाप्यचिन्त्यशक्त्या निर्विकारत्वेन स्वत एव तत्सद्भावात् तस्यात्मत्वमिति भावः । यात्रिविधमाध्यात्मिकादिरूपा त्रिविधा भातिः प्रतीतिरुक्ततोऽन्यत्वेनाविर्भावभिर्निरूपिता साप्यात्मनि शुद्धे निर्मूलैव वस्तुतस्तत्पृथग्भावाभावादिति भावः ॥ ७ ॥

कथं तत्राह । इदमिति सार्द्धकं तस्मादुपक्रान्तमेव फलितमित्याह । एतदिति ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अष्टाविंशे ज्ञानयोगं जगन्मिथ्यात्ववादिनाम ।

अद्वैतदर्शिनां प्रावदत् प्रभुः सर्वमतं ब्रुवन् ॥

वेदान्तसंक्षेपाधिकविंश ईरिते मते जगत् स्यात् सदसद्वयुमे । किमस्ति नास्ति व्यपदेशभूषितमित्युक्तिरस्त्येव विशेहेरपि । अद्वैतदर्शिनो ज्ञानिनो हि द्विविधा भवन्ति । विश्वस्यास्य परब्रह्मोपादानकत्वेऽवश्यं व्याख्येये परिणामवादे ब्रह्मणो विकारप्रसक्तेस्तमनङ्गीकृत्य विवर्त्तवादमेवाङ्गीकुर्वाणा ब्रह्मणो निर्विकारत्वं विश्वस्यास्य तु मिथ्यात्वमाचक्षते खल्वेके । अन्ये तु प्रकृतेः स्वशक्तित्वात्तद्द्वारैव परब्रह्मणो जगदुपादानत्वमतस्तस्याः किल विकारित्वेऽपि स्वरूपतस्तदतीतस्य परब्रह्मणो निर्विकारत्वमेवेति परिणामवादे किल न कापि क्षतिः । तथाचोक्तं भगवता । प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः । सतोऽभिव्यञ्जकः कालो ब्रह्म तत्रितयं त्वहमित्यतः सत्यपि द्वैते प्रकृतिकार्याणां तदनन्यत्वात् प्रकृतेश्च परमेश्वरानन्यत्वात् परमेश्वरस्य तु बहुमूर्त्तित्वेऽप्यैक्याद्द्वैतमेव ब्रह्मेत्याहुः उभयेषामेव ज्ञानित्वेऽप्युत्तरे एव श्रीभागवतसंमतमताः । पूर्वेषामपि मध्ये ये भगवद्विग्रहभक्तधामनामादीनितिरिक्तपदार्थानामेव मिथ्यात्वं व्याचक्षते तेषां मतमातिभरतचार्वितादौ क्वचित् क्वचिदुट्टङ्कितमिति तन्मतमपि सर्वमतोजिज्ञासुमुद्धवमाह । परस्वभावकर्माणीति पञ्चभिः । ततः परमध्यायपरिसमाप्तिपर्यन्तं विवर्त्तवादिनां परिणामवादिनाञ्च मते व्याख्यानं तुल्यमेव किन्तु असद्वादिशब्दैर्विवर्त्तवादिनां मते अवश्यैवोच्यते परिणामवादिनः मते तु असर्वकालव्यापकं वस्तूच्यत इत्येतावानेव भेदः द्रष्टव्यः कार्याणां सत्त्वेऽप्यचिरस्थायित्वमसत्त्वमेवेति परिणामवादिनः कार्याणां मिथ्यात्वमेवासत्यत्वमिति विवर्त्तवादिनः आहुरिति तत्र तत्र विवेचनीयमिति ॥ १ ॥

विपक्षे दोषमाह । परेति । स ज्ञानी स्वार्थात् ज्ञाननिष्ठालक्षणात् असति मिथ्याभूते द्वैतेऽभिनिवेशात् ॥ २ ॥

भ्रंशमेव दृष्टान्तेन दर्शयति । तैजसे राजसाहङ्कारकार्ये इन्द्रियगणे निद्रया स्वापेन व्यापन्ने अभिभूते सति पिण्डस्थो जीवः केवलं मनोमात्रेण मायां स्वप्नरूपां प्राप्नोति ततो मनस्यपि लीने सति नष्टचेतनः सन् मृत्युं वा मृत्युतुल्यां सुषुप्तिं वा प्राप्नोति यथा तद्वदेव नानार्थदृक् द्वैताभिनिवेशी विक्षेपं लयञ्च प्राप्नोतीति ॥ ३ ॥

प्रत्यक्षेणानुमानेन निगमेनाऽऽत्मसंविदा ।
आद्यन्तवदसज्ज्ञात्वा निःसङ्गो विचरेदिह ॥ ९ ॥

श्रीमच्छुकदेवकृततदेकतसिद्धान्तप्रदीपः ।

ज्ञानेन छायायाश्च तरक्षुबुद्ध्या पलायनपतनादिकार्यं दृश्यते गाधि प्रदानादिप्रतिध्वनेः कार्यं मृगमरीचिकाया जलबुद्ध्या धावनरूपं कार्यं दृश्यते एवं देवराजादिदेहादयो भावाः कार्यरूपाः असन्तस्तथा अनित्या अपि ईश्वराधीनं सर्वमिति ज्ञानाभाववतामामृत्युतः मृत्युमभिव्याप्य भयं प्रयच्छन्ति ननूक्तज्ञानवतां देहादिव्यतिरिक्तानां चेतनानां ज्ञानस्वरूपत्वेन भगवदात्मकत्वेन तदधीनत्वेन च सर्वत्र समत्वाच्च भयादिहेतुत्वमतो देहादिभयादिहेतुत्वमुक्तमिति भावः ॥ ५ ॥

एवं नानादेवादिभावदर्शनस्य भयहेतुत्वं भूत्वा यथा येन ज्ञानेन भयं न भवेत्तदेवादिश्यतामित्युद्धवविवक्षां ज्ञात्वा विश्वभक्तात्मकं पश्यन्निति बहुक्तं तदेव विवृणोति । आत्मैवेति । यस्मात्सर्वं ब्रह्मात्मकं जगत्तस्मादात्मैव परमात्मैवेदं विश्वं सृजति पाति हरति विश्वात्मा च स्वात्मनैव सृज्यते त्रायते ह्रियते एवकारः कारकापेक्षां निराकरोति ईश्वर इत्यनेन कर्तृत्वविरोधः परिहृतः प्रभुरित्यनेन तस्य सर्वरूपत्वेऽपि सर्वदोषास्पृष्टस्वभावत्वं द्योतितम् अनेन परमात्मनो जगज्जन्माद्यभिन्ननिमित्तोपादानकारणत्वमप्युक्तं "यतो वा इमानि भूतानि जायन्ते सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत जन्माद्यस्य यतः तदनन्यत्वमारम्भणशब्दादिभ्यः प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्,, इत्यादिश्रुतिसूत्रेभ्यः ॥ ६ ॥

इत्थं सर्वज्ञः करुणासागरो भगवानुद्धवमुपलक्ष्य सर्वमुमुक्षुहिताय सर्वशास्त्रसिद्धान्तमुपदिश्येदानीमकोऽद्वितीयो निर्विशेषचिन्मात्रः शुद्धबुद्धात्मा निष्क्रियत्वात्सृष्ट्यादिकर्ता किं तु तत्स्थानादिमायाकल्पित ईश्वराख्य एवोपाधिभूतरजःसत्त्वादिगुणकृतब्रह्मविष्णुरुद्ररूपैर्जगत्सृष्टिस्थितिसंहारान् करोतीति केषांचिन्मतं निराकुर्वन्नाह । तस्मादिति । यस्मात्प्रबलश्रुत्यादिप्रमाणबलात् परमात्मैव सृष्ट्यादिकर्ता परमार्थभूतश्च तस्मादमुष्मादात्मनः सृष्ट्यादिकर्तुरीश्वरोऽन्यो भावः सृष्ट्यादिकर्तृत्वशून्यः सत्यो नाहि निरूपितः व्यासादिभिरिति शेषः मुमुक्षूणां मोक्षफलार्थं ब्रह्मजिज्ञासां विधाय तज्ज्ञानार्थं जगज्जन्मादिकारणत्वस्यैव ब्रह्मलक्षणस्य सूत्रितत्वात् अन्यस्मादिति पाठेतु अन्यस्मान्मायासद्गुणकालकर्मादिविलक्षणादात्मनोऽन्यो भावः मायाकल्पित ईश्वराख्यः सृष्ट्यादिकर्ता नहि निरूपितः कुत्रापि शास्त्रे इत्यर्थः उभयस्मिन्नपि पाठे आत्मनि परमात्मनि इयं त्रिविधा भातिर्माया ब्रह्मविष्णुरुद्रात्मिका त्रिविधकारणा प्रतीतिर्निरूपिता मायावादिभिरिति शेषः निर्मूला सर्वप्रमाणशून्या तस्माज्जीवानां परतत्त्वविमुखीकरणाय तेषां प्रवृत्तिरिति भावः अथवा सर्वात्मकत्वाद्यत परमात्मन एव सर्वविधकारणत्वं तस्मादमुष्मादात्मनोऽन्यो भावोऽब्रह्मात्मकपदार्थः कश्चिन्न निरूपितः एवं सर्वकारणरूपे आत्मनि सति समवाय्यसमवायि निमित्तभेदेन त्रिविधा भातिर्मतिस्तार्किकैर्निरूपिता निर्मूला श्रुतिप्रमाणशून्येत्यर्थः ॥ ७ ॥

नन्वेकेश्वरकृतमेवेदमिति चेत्कथं शान्तघोरादिरूपभिन्नमिदमपेक्षायामाहार्द्धेन । इदमिति त्रिविधं देवासुरमनुष्यादिरूपभिन्नं विश्वं मायया ईश्वरशक्त्या कृतं गुणमयं सत्त्वादिगुणपरिणामविशिष्टं गुणत्रयपरिणामित्वादेव स्वरूपस्वभावभेदमित्यर्थः । उपदिष्टविषयकयथावज्ज्ञानस्य माहात्म्यं कथयन्नुपसंहरति द्वाभ्याम् एतन्मदुदितं मयोक्तं ज्ञानविज्ञानयोर्नैपुण्यं निष्कर्षार्थरूपं विद्वान् विशेषेण जानन् मूकवत् समचित्तः स्तुतिनिन्दारहितः सन् लोके चरति ॥ ८ ॥

---

भाषा टीका ।

श्रीभगवान् बोले दूसरे के स्वभाव कर्मों को न प्रशंसा करे न निंदा करे सब संसार को प्रकृति पुरुष से एक रूप देखना चाहिये ॥ १ ॥

दूसरे के कर्म स्वभाव की जो निंदा करता है या प्रशंसा करता है सो शीघ्र ही असत् पदार्थ में अभि निवेश होने से अपने मार्ग से भ्रष्ट होजाता है ॥ २ ॥

अहंकार वर्ग जब निद्रा युक्त होजाता है तब शरीर में रह कर भी चेतना से नष्ट होजाता है तब माया को प्राप्त होता है या मृत्यु को प्राप्त होता है तिसी प्रकार से नाना बुद्धि वाला पुरुष होता है ॥ ३ ॥

अवस्तु जो भेद है तिस में क्या अच्छा है क्या कितना बुरा है वचन से जो कहा जाता है सो अनित्य है जो मन से ध्यान किया जाता है सोभी वैसाही है ॥ ४ ॥

पुरुष की छाया तथा प्रति ध्वनि आभास ए सब नहीं रह कर भी कार्यकारी होते है इसी प्रकार से देहादिक भाव भी मरण पर्यंत भय को दिखाते हैं ॥ ५ ॥

यह सब संसार परमात्मा ही है वही प्रभु सृजने वाला वही सृजा जाता है वही रक्षा करता है वही रक्षा किया जाता है वही विश्वात्मा हरण करता है वही ईश्वर हरण किया जाता है ॥ ६ ॥

तिससे इस आत्मा से अन्य से कोई भी भाव मात्र नहीं निरूपण किया जाता है यह तीन प्रकार की अध्यात्मादि जो निरूपण है सो आत्मा में निर्मूल मालूम पड़ती है यह तीन प्रकार का सब माया से किया हुआ संसार गुण मय है ऐसा जानो ॥ ७ ॥

मेरे कहे हुये इस ज्ञान को जानने वाला ज्ञान विज्ञान में कुशलता वाला विद्वान् न निन्दा करता है न स्तुति करता है लोक में सूर्य सरीका विचरता है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एतन्निष्ठाप्राप्त्युपायमाह । प्रत्यक्षेणेति । यदाद्यन्तवत् द्वैतं तदसदिति ज्ञात्वा निःसङ्गो विचरेत् आद्यन्तवत्त्वे प्रमाणानि प्रत्यक्षेण घटादि अनुमानेन सावयवत्वेन इदं

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वेत्यनुमानादवयवान्तराणामनात्मत्वसिद्धिः न जायते म्रियते इत्यादिनिगमः देहस्यावस्थाभेदे सत्यप्यहमित्येकरूपात्मानुभवादपि देहस्यानात्मत्वसिद्धिः ॥ ९ ॥

यदि देहात्मानौ मिथोऽत्यन्तविलक्षणौ कस्य तर्हि सुखदुःखानुभवात्मकः संसार इति पृच्छति । नैवेति । आत्मनो न संसृतिः स्वतः शुद्धस्वरूपत्वात् नैव देहस्य जडत्वादिति भावः अनात्मस्वदृशोर्जडाजडयोरत्र हेतुर्द्रष्टृदृश्ययोर्देहात्मनोर्मध्ये हे ईश ! कस्य स्यात्संसृतिरित्यनुषज्यते न कस्यापीत्यत आह । उपलभ्यत इति । सुखदुःखानुभवो दृश्यते ह्यतः प्रत्यक्षविरोधान्न संसृति रपन्होतुं शक्यैति भावः ॥ १० ॥

संसृत्यसम्भावनायां हेतुत्वेनात्मानं विशिनष्टि । आत्मेति । स्वयं शब्दः पूर्वोत्तराभ्याम् सम्बध्यते स्वयमात्मना शुद्धः स्वभावतः शुद्ध इत्यर्थः स्वयंज्योतिः । स्वयं प्रकाशः अनन्याधीनप्रकाशः अनावृतः कर्मरूपावरणरहितः अगुणः सत्त्वादिगुणानाश्रयः अव्ययःजन्ममरणादिविकाररहितः देहस्त्वचिज्जडः विजातीययोरपि देहात्मनोरविभागेनावस्थितौ दृष्टान्तोऽग्निवद्दारुवदिति । कस्येह संसृतिः अजडत्वाच्चात्मनः स्वतः शुद्धत्वाशुद्धस्यापि देहस्य जडत्वान्न कस्यापि संसृतिः स्यादिति प्रश्नार्थः ॥ ११ ॥

स्वतः शुद्धत्वाच्चात्मनः प्रकृतिसम्बन्धेनाशुद्धत्वात्संसार इति परिहरति । यावदिति यावदात्मनो देहादिभिः सन्निकर्षणां सम्बन्धः तावदपार्थोऽप्यात्मनि स्वत एवाऽविद्यमानोऽपि संसारः तदावहो देवाद्याकारः फलवान्विद्यमानकल्पः सुखदुःखजनकः कुतः अविवेकतो देहादिविलक्षणात्मस्वरूपाज्ञानात् अविवेककृतदेहादिसम्बन्धादेव तस्याशुद्धिरिति भावः अविवेकिन इति पाठे तदात्मनो विशेषणं अविवेकादिभिः सन्निकर्षणा ततः संसारः फलवान् अविद्यासञ्चितं कर्मेति वचनादविवेकस्य प्रकृतिसम्बन्धहेतुत्वं कर्मद्वाराऽवगन्तव्यम् एवं चाहङ्कारममकारकृतपुण्यपापाधीनप्रकृतिसम्बन्धात्संसार इत्यभिप्रायः ॥ १२ ॥

— —

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मूर्खवदित्युक्तं दार्ष्टान्तिके कथमित्यतो विवृणोति । प्रत्यक्षेणेति । प्रत्यक्षादिप्रमाणबलेनेदं गुणमयमाद्यन्तवत्त्वादसदसमर्थमस्वतन्त्रमिति ज्ञात्वा—

असमर्थमसत्प्रोक्तं समर्थं सत्प्रकीर्तितम् ॥

इतिवचनात् असत्त्वं न शून्यत्वमत्राभिप्रेतम् इह जगति निःसङ्गो निर्लेपः निगमेन वेदेनात्मसंविदा साक्षिणा ॥ ९ ॥

स्वप्रकाशत्वेन देहपरमात्मनोः जडत्वेन संसारासम्भवं जानन्नप्युद्धवो विवेकार्थं लोकदयालुः पृच्छति । नैवेति । निःसङ्ग इत्यनेन प्रकृतः सङ्गलक्षणः संसारः कस्यात्मनो हरेरुत देहस्य द्रष्टृदृश्ययोरुभयोरपि न सम्भवति अनात्मस्वदृशोरनात्मत्वाज्जडत्वात् दृश्यस्य स्वदृक्त्वात् स्वयं प्रकाशत्वात् द्रष्टुरतः कस्येयं संसृतिरुपलभ्यते ॥ १० ॥

देहस्यैव हरेरियमपि न युज्यत इत्याह । आत्मेति । अग्निवदीश्वरः दारुवद्देहः जीवपक्षस्तु परमात्मकोटावन्तर्भूतत्वान्न पृथगुक्तः कथ्यति पुनरुक्तिरवश्यपरिहारवक्तव्यायां ॥ ११ ॥

जीवस्यैव संसृतिरिति भावेनाह । यावदिति । आत्मनो जीवस्य यावद्देहेन्द्रियप्राणैः सन्निकर्षणां सम्बन्धः तावत्संसारः कथं स्यात उक्तमविवेकिन इति नित्यानन्दादपार्थोऽपि अविवेकिनः इति विशेषणाद्विवेकिनो मोक्षहेतुत्वात्फलवानपि—

फलवान्मोक्षहेतुत्वान्नित्यानन्दादपार्थकः ।
जीवात्मनस्तु संसारः स्वप्नवच्चाज्ञतत्वतः ॥

इति वचनात् ॥ १२ ॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अत्र द्विविधं द्वैतम् अयथार्थरूपं परमात्मेतरकल्पितावयविरूपं चेति तत्र पूर्वं जन्मनाशवत् उत्तरं त्वसदेवेत्युभयत्रापि तद्विलक्षण आत्मा न सक्तः ततस्तत्सङ्गं त्यजेदित्युपसंहरति । गत्यधीणेति । आद्यन्तवत् जन्मनाशवत् ॥ ९ ॥

यद्येवं जीवस्य संसारनाशार्थमुपदेशोऽयं कृतस्तत्राशङ्कते नैवेति ॥ १०–११ ॥

सिद्धान्तयति । यावदिति । सन्निकर्षणां संबन्धः अत्र हेतुः अविवेकिनः अत्राविवेकित्वं भयं द्वितीयाभिनिवेशतः स्यादित्यनुसारेणेश्वराज्ञानाभावलक्षणमायाकृत आत्मज्ञानलोपोऽत्राभिमतः ज्ञातव्यः ॥ १२ ॥

———

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रत्यक्षेणाद्यन्तवत् घटादि अनुमानेनाद्यन्तवत् दृश्यं पृथिव्यादि निगमवाक्येनाप्रत्यक्षमाद्यन्तवदाकाशादि आत्मसंविदा स्वानुभवेन सर्वं चिद्भिन्नं दृश्यमाद्यन्तवदसञ्ज्ञात्वा ज्ञात्वा इत्यर्थः ॥ ९ ॥

ननु आद्यन्तयोरसत्त्वेऽपि मध्ये यावत् सत्त्वं प्रतीयते तावत् कस्य संसारः स्यात् द्रष्टुर्दृश्यस्य वेत्याह । नैवेति । द्रष्टृदृश्ययोः द्रष्टा जीवः दृश्यो देहस्तयोर्द्वयोरपि संसृतिर्न सम्भवति कुत अनात्मस्वदृशोः देहो ह्यनात्मा जडः तस्य संसारदुःखस्यासम्भवात् जीवो हि स्वदृक् स्वतः सिद्धज्ञानः तस्य ज्ञानलोपासम्भवात् मास्तु द्वयोरपि तत्राह । उपलभ्यत इति ॥ १० ॥

एतत्प्रपञ्चयति । आत्मेति । अव्यय इति नाशाद्यभावः अगुण इति रागाद्यभावः शुद्ध इति पापपुण्याद्यभावः स्वयं ज्योतिरित्यज्ञानाभावः अनावृतः न केनाप्यावृतो वस्तुतो न बद्ध इति बन्धाभावः अग्निवत् अचित् अचेतनः अयं भावः यथैवाग्निर्दारुणा भेदेनानुपलम्भेऽपि दारु प्रकाश्यमेव अग्निः प्रकाशकः तथा देहात्मनोरपि देहः प्रकाश्य एव जीवात्मा प्रकाशकः किं तु स्वपरमात्मप्रकाशित एव प्रकाशकः संसृतिस्तयोरन्यतरस्यापि न घटत इति ॥ ११ ॥

सत्यं जीवस्याविवेक एव संसारालम्बनमित्याह पञ्चभिः । यावदिति । संनिकर्षणां सम्बन्धः तावदेव अपार्थो मिथ्याभूतोऽपि संसारः फलवान् फलति तन्वसङ्गस्य कुतः सम्बन्धस्तत्राह । अविवेकिनः अज्ञानकृत इत्यर्थः ॥ १२ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

व्यतिरेकाभ्यां दर्शयति । शोकेति । सुषुप्त्यादौ देहाद्यदर्शनादहं सुखीत्यबाधितं सुखीतिप्रतीत्यभावाच्च दृश्यत्वाच्च सुखादीनां कृशत्वादिवद्दृष्टृधर्मत्वानुपपत्तेरिति भावः । उक्तं च—

सुप्तेऽहमि न दृश्यन्ते सुखदुःखप्रवृत्तयः ॥
अतस्तस्यैव संसारो न मे संसृतिसाक्षिणः ।

इति ॥ १५ ॥

ननु यद्यहङ्कारस्य संसारस्तर्हि मुक्तिरपि तस्यैवेति मुक्तावहङ्कारावशेषः प्रसज्येत तत्राऽऽह । देहेति । देहादिष्वभिमानो यस्य सः आत्मैव तेषामन्तर्हितो जीवः स एव गुणकर्ममयी मूर्तिर्यस्य सः एवं च सूक्ष्मोपाधिभिर्बहुधैव सूत्रादिशब्दैर्गीतः संसारे परमेश्वराधीनः सर्वतो धावत्यतो नायं दोष इति भावः ॥ १६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

असतः स्वस्वरूपत्वेन मिथ्याभूतस्येत्यर्थः । तत्र तस्याभासाङ्गायां दृष्टान्तमाह ॥ १३ ॥

कथञ्चित् देहारम्भककर्मानुसारेण । विषयस्फूर्तिभोजनादिकाले अन्नादिज्ञानम् ॥ १४ ॥

अहङ्कारस्यैव संसारस्तत्सम्बन्धः तदभावे तदभावो दर्शितः केचनाऽऽहाम । नात्मन इत्यस्याभिप्रायं व्यञ्जयति सुषुप्त्यादाविति । तेषां शोकादीनाम् । दृश्यत्वाच्च प्रत्यक्षादिभिर्ज्ञातत्वाच्च यथा कृशत्वादि दृश्यते । तस्माद्दृश्यात्मधर्मत्वम् न तेषामुपपद्यत इत्यर्थः ॥ १५ ॥

तस्यैवाहङ्कारस्यैव । स देहाद्यभिमानवानात्मैव तेषां देहादीनामन्तःस्थितो जीव इत्युक्त्या स्वरूपभूतास्मदर्थत्वं जीवस्य व्यञ्जितम् । अत एवाभिमन्तुर्जीवत्वादेव । ततः अहङ्कारादीनां कल्पितत्वादेव अयं प्राकृताहङ्कारान्योऽयलक्षणः । तथा च जीवस्यैव ब्रह्मत्वेन मुक्तौ स्थितिर्नाहङ्कारादीनामित्यर्थः ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अर्थे हीति । देवत्वाद्याकारे आत्मन्यविद्यमानेऽपि स्थूलोऽहमित्याद्यध्यासात्संसारः विषयान् ध्यायतः पूर्वानुभवसंस्कारतः स्वप्ने स्वाप्नदेहस्यानात्मत्वं सम्प्रतिपन्नं तथापि तस्यात्मत्वाध्यासात्तादात्विकदुःखानुभवस्तद्वदित्यर्थः ॥ १३ ॥

प्रबोधदशायां स्वप्नदेहस्यानात्मत्वसम्प्रतिपत्तिः तद्देहापगमेन तदभिमानप्रयुक्तदुःखाभावं च दर्शयति । यथाहीति । प्रस्वापशब्दः स्वप्नपरः देहात्माभिमानद्वारा बह्वनर्थकरत्वं विवक्षितं न मोहाय कल्पते आत्माभिमानप्रयुक्तानर्थाय न प्रकल्पत इति भावः ॥ १४ ॥

अहङ्कारस्य दृश्यन्ते इत्युपचारात् व्यपदेशः दुःखाज्ञानमयाः धर्माः प्रकृतेस्ते नचात्मन इतिवत् अनात्मन्यात्माभिमानप्रयुक्ताः शोकादयः न त्वात्मनः स्वाभाविका इत्यर्थः ॥ १५ ॥

संसारस्य हेतुत्वे अहङ्कारस्य प्राधान्यमुक्तं संसृतिहेतून् सङ्कलय्य दर्शयति । देहेन्द्रियेति । अभिमानः अनात्मन्यात्मबुद्धिः जीवस्य संसृतिहेतुत्वं कर्मानुष्ठातृतया अन्तरात्मा परमात्मा तस्य संसृतिहेतुत्वं कर्मफलप्रदातृतया गुणकर्ममूर्तिः गुणाश्च कर्माणि च मूर्तिश्च यस्य विधेयानि स गुणकर्ममूर्तिरिति अन्तरात्मविशेषणं गुणकर्म मूर्तीति पाठे गुणाश्च कर्माणि च मूर्तिश्च गुणकर्ममूर्त्तिः मूर्त्तिशब्दो मनुष्यत्वादिजातिपरः देहस्य प्रथममुक्तत्वात् सूत्रं महान् सूत्रभूताहङ्कारादिकार्यस्याधारकभूतो महान् ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आत्मन्यविद्यमानादपि देवमनुष्याद्याकारात्संसृतिरित्येतदेव दृष्टान्तमुखेन उपपादयति अर्थ इति । अर्थे देवमनुष्याद्याकारेऽविद्यमानेऽप्यात्मन्यसत्यपि विषयान् ध्यायतोऽस्य संसृतिर्न निवर्तते स्थूलोऽहं कृशोऽहं ममैते कलत्रादयो ममैते प्रतिकूलाः शत्र्वादय इमे त्वनुकूला इत्येवं ध्यायत इत्यर्थः । यथा स्वप्नेऽनर्थागमः स्वाप्नदेहस्यानात्मत्वं सम्प्रतिपन्नं तथापि तस्यात्मत्वाध्यासादनर्थागमस्तादात्विकदुःखानुभवो भवति तद्वदित्यर्थः ॥ १३ ॥

स्वाप्नदेहस्यानात्मत्वसम्प्रतिपत्तिः तद्देहापगमे तु तदभिमानप्रयुक्तदुःखाभावं च दर्शयति । यथा हीति । प्रस्वापशब्दः स्वप्नपरः तस्य देहात्माभिमानद्वारा बह्वनर्थकरत्वं विवक्षितं स एव प्रस्वाप एव प्रतिबुद्धस्य तस्मादुत्थितस्य मोहाय न कल्पते तद्देहात्माभिमानाय न कल्पते तद्देहात्माभिमानरूपमोहजननद्वारा सुखदुःखकृत् न भवतीत्यर्थः ॥ १४ ॥

दृष्टान्तेनाभिप्रेतमर्थं दार्ष्टान्तिके दर्शयति । शोकेति । शोकादयो जन्ममृत्यू चाहङ्कारस्याहङ्कारयुक्तस्यात्मनः न तु तद्वियुक्तस्य मत्वर्थीयार्शआद्यजन्तोऽत्राहङ्कारशब्दः अनात्मन्यात्माभिमानहेतुः प्रकृतिपरिणामविशेषोऽहङ्कारस्तत्प्रयुक्ताः शोकादयो नत्वात्मनः स्वाभाविका इत्यर्थः । दुःखाज्ञानमया धर्माः प्रकृतेस्ते नचात्मन इत्यादिष्वप्ययमेवार्थः ॥ १५ ॥

अहङ्कारस्य दृश्यन्त इत्यहङ्कारस्य संसृतिहेतुत्वेन प्राधान्यमुक्तम् अथ संसृतिहेतून् सर्वान् सङ्कलय्य दर्शयति । देहेति । अभिमानः अनात्मन्यात्मबुद्धिः जीवस्य संसृतिहेतुत्वं कर्मानुष्ठातृतया अन्तरात्मा परमात्मा तस्य संसृतिहेतुत्वं कर्मफलप्रदत्वेन गुणकर्ममूर्तिरिति व्यस्तपदेन द्वितीया गुणाः सत्त्वादयः कर्माणि पुण्यपापात्मकानि च मूर्तयश्च मूर्तिशब्दो देवत्वमनुष्यत्वादिजातिपरः देहस्य पृथगुक्तत्वात् सूत्रं महान्सूत्रभूतोऽहङ्कारादिकार्यतत्त्वाधारभूतो महानित्यर्थः उरुधा बहुधा इतिशब्दो हेत्वर्थः उरुधैव एतस्य इत्यर्थः । संसारः कालतन्त्रः कालवशः कालोऽपि हेतुरिति भावः आधावति प्रवर्तते ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

संसृत्यभावस्यैव फलरूपत्वाभिधर्ष एव संसार इति अवधारयति । अर्थे पीति । अपिशब्दोऽल्पफलार्थः "उच्यते निष्फलत्वं यदल्पफलकं भवे"दिति वचनात् अर्थे अविद्यमानेऽपि अल्पात्मप्रयोजनाभावेऽपि पुंसः संसृतिर्न निवर्तते तत्रैव निमित्तं ध्यायतो विषयानिति कथमिव अस्य स्वप्नदर्शिनो यथानर्थागम

अमूलमेतद्बहुरूपरूपितं मनोवचःप्राणशरीरकर्म ।
ज्ञानासिनोपासनया शितेन च्छित्त्वा मुनिर्गां विचरत्यतृष्णः ॥ १७ ॥
ज्ञानं विवेको निगमस्तपश्च प्रत्यक्षमैतिह्यमथानुमानम् ।
आद्यन्तयोरस्य यदेव केवलं कालश्च हेतुश्च तदेव मध्ये ॥ १८ ॥
यथा हिरण्यं स्वकृतं पुरस्तात्पश्चाच्च सर्वस्य हिरण्मयस्य ।
तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्वत् ॥ १९ ॥
विज्ञानमेतत्त्रियवस्थमङ्ग ! गुणत्रयं कारणकार्यकर्तृ ।
समन्वयेन व्यतिरेकतश्च येनैव तुर्येण तदेव सत्यम् ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वसम्बन्धानां तत्रान्तर्गतत्वात्तया निर्दिष्टक्रमप्रयुक्ता एव जीवस्य शोकादयो भवन्ति न स्वाभाविकाः अन्यथा तन्निवृत्तिसाधनविधायकशास्त्रवैयर्थ्यं स्यात् न च तत्केवलाहङ्कारस्यैवेति वक्तुं शक्यते तस्यापि जडत्वात् अङ्गीकारे च तस्यैव मुक्तिः स्यान्न त्वात्मनः अहङ्कारकृतं बन्धमात्मनोऽर्थे विपर्ययमिति इत्संगीते लौकिकविरोधाच्च दृश्यन्ते ह्यनेन केनचित्पुरुषेण दण्डयोग्यं कर्म कृतं स राजपुरुषैर्दण्डाय नीयते तदा तत्पितृभ्रात्रादयोऽभिमन्युः स्वे मृते वा भवमेव दुःखिता मृतास्त्याकारेण तदन्तर्भावं भजन्ति चेत्तर्हि तेऽपि बध्यन्ते यस्तु तत्राहंममताशून्यस्तटस्थः पश्यति स न बध्यते इति लोकप्रसिद्धिः सूचिता ॥ १५ ॥

एवमात्मनः संसारं प्रत्यहङ्कारस्य प्रधानकारणत्वमुक्तमिदानीं प्राधान्यादेव तस्य सर्वरूपतां प्रतिपादयति । देहेन्द्रियेति । सर्वेषां भूतानामन्तर्हृदयेऽन्तर्ति प्राप्नोतीत्यन्तरात्मा अहङ्कारः कालतन्त्रः कालरूपेश्वराधीनः संसारे आधावतीत्यन्वयः सुखदुःखादिफलभोगार्थमासमन्तात्स्वर्गादिमधः शीघ्रं गच्छतीत्यर्थः । ननु स्वर्गनरकादिषु तत्फलभोगाय जीव एव गच्छतीति सर्वैः प्रतिपाद्यते कथमहङ्कार इत्युच्यते इति चेत्सत्यं सोऽप्यहङ्कारप्रयुक्त एवेत्याह । देहेन्द्रियेति । देहेन्द्रियप्राणमनस्सु अभिमानो यस्य स तथा तत्रात्मबुद्धिरित्यर्थः स एव जीवो देहाद्यहङ्कारवानेव पुण्यादिकर्मफलभोक्ता न तु तत्राभिनिवेशशून्यः तथा चागतमहङ्कारस्यैव प्राधान्यं स्यादेतत्तथापि कथमहङ्कारस्य व्याप्तिरित्यपेक्षायामाह । गुणकर्ममूर्तिरिति । सात्त्विकादिगुणाभिभूतकर्मभिर्मूर्तिर्व्यक्तिरिति भावो यस्य तथा सः निर्हिंसकयज्ञदानादिकर्मप्रवृत्त्या सात्त्विकः दृष्टाद्दृष्टादिकर्मप्रवृत्त्या राजसः द्यूतादिहिंसादिकर्मप्रवृत्त्या तामसोऽहङ्कारो बोध्यः इति भावः किं च महतः कार्यत्वात् त्रिविधो महानप्ययमेवेत्याह । सूत्रं महानिति । क्रियाशक्तिप्रधानज्ञानशक्तिप्रधानात्मक इत्यर्थः । इत्युक्तप्रकारेणोरुधा गीतः बहुप्रकारेणाहङ्कारो गीतः उरुधेवाति पाठान्तरं तस्मादहङ्कारकृत एवात्मनो बन्धो नान्यथेति सिद्धम् ॥ १६ ॥

भाषा टीका ।

नित्य अर्थ न रहने पर भी अनेक प्रकार विषयों के ध्यान करने वाले का संसार नहीं निवृत्त होता है जैसे कि ध्यान से स्वप्न में अनर्थ की प्राप्ति होती है १३ ॥

जैसे कि निद्रा से नहीं जगने वाले पुरुष को स्वप्न बहुत अनर्थ कारी होता है वही स्वप्न जागने वाले को मोह कारक नहीं होता है ॥ १४ ॥

शोक हर्ष भय क्रोध लोभ मोह स्पृहादिक तथा जन्म मृत्यु ए सब अहंकार के संबंध से दीखते हैं आत्मा के स्वरूप कृत नहीं हैं ॥ १५ ॥

देह इंद्रिय प्राण मन इन के साथ अभिमान करने वाला जीव मध्य में रहकर गुण की मूर्ति बन जाता है वही सूत्रोपाधि महान् उपाधि से बहुत प्रकार से शास्त्रों में गाया जाता है काल रूप परमात्म के अधीन हो कर संसार में दौड़ता रहता है ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवमहङ्कारकृतं बन्धमुपपाद्येदानीं ज्ञानेन तन्निवृत्तौ मुक्तिरित्याह । अमूलमिति । वस्तुतो मूलशून्यमज्ञानतस्तु बहुभी रूपैर्देवादिशरीरै रूपितं प्रकाशितमेन्द्रजालिकतुल्यमिति वा किञ्चेत्याह । मन इति । मनआदीनां द्वन्द्वः यद्वा मनआदिषु स्थितमिति कर्म अहङ्कारं गुरोरुपासनया निशितेन तीक्ष्णेन ज्ञानखड्गेन छित्त्वा १७ ॥

तदेव ज्ञानं स्वरूपसाधनफलैर्निरूपयति । ज्ञानमिति । विवेको ज्ञानम् साधनान्याह । निगमो वेदः तपः स्वधर्मः प्रत्यक्षं स्वानुभवः ऐतिह्यमुपदेशः अनुमानं तर्कः फलमाह । आद्यन्तयोर्यद्रूपं जगतो मध्येऽपि तदेव केवलं न तु जगदिति । किं तत्कालः कलयति प्रकाशयति यस्तथा हेतुः कारणं च यत् तदेव एतदुक्तं भवति यद्रूपं विश्वस्य कारणं प्रकाशकं च ब्रह्म तदात्मकमेवेतस्मात् ततः पृथगित्येवं निश्चयफला निगमादिसाधनैर्जायते यो विवेकस्तज्ज्ञानमिति ॥ १८ ॥

त्रिपदस्थामिति विज० पाठः ।

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

स्वरूपमिन्द्रियवर्गगोचरं शरीरविकारं चित्रं भाति अतो भाति पूर्वोक्तप्रकृतदेहसंसर्गात् तन्मिश्रतया भाति न तु स्वाधरैकतयाऽवभासत इत्यर्थः । ब्रह्मभूयाय कल्पते ब्रह्मणो हि प्रतिष्ठाहमिति परिशुद्धात्मनि ब्रह्मशब्दः प्रयुज्यते ॥ २२ ॥

एवमिति । स्फुटब्रह्मविवेकधीः विवेकहेतुभूतं स्फुटतरपरिशुद्धात्मस्वरूपज्ञानवान् परापवादेन देहेन्द्रियप्राणानामात्मत्वापवादेन अखिलकामुकेभ्यः उपायभेदफलकामिभिः सङ्गं न कुर्यात् ॥ २३ ॥

परापवादमेव विवृणोति । नात्मा वपुरिति पार्थिवं वपुर्नात्मा देवशब्दवाच्यानीन्द्रियाणि नात्मेत्येवं योजनीयं मनोऽन्नमात्रमन्नाप्यायितं नात्मा "अन्नमयं हि सोम्य ! मन" इति हि श्रुतिः धिषणा ज्ञानं सत्त्वं बुद्ध्याख्यमन्तःकरणम् अर्थमात्रं वपुरादीनामर्थतः साम्यमस्ति अनात्मत्वेन साम्यमस्तीत्यर्थः ॥ २४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कस्तर्हि तन्निवृत्त्युपाय इत्यत आह । अमूलमिति । बहुभिरेहादिभी रूपैर्हेतुभिः रूप्यत इति तथा तन्मनआदीनां कर्म मनआदिभिः कृतं कर्मेत्यर्थः । तद्गतसंसृतिमूलममूलं यथा तथा ज्ञानासिना छित्त्वा कथंभूतेनोपासनया महोपासनया शितेन संततानुवृत्तेन छित्त्वेत्यस्य छेदनायोपक्रमेत्यर्थः । जीवदशायां निर्मूलच्छेदनासंभवात् न तृष्णा शब्दादिविषु यस्य स अतृष्णः मुनिः शुभाश्रयमननशीलः गां भूमिं विचरेदित्यर्थः । ज्ञानोपासनं तन्निवृत्तिहेतुरिति भावः ॥ १७ ॥

कीदृशं तज्ज्ञानं कानि पुनस्तस्य साधनानीत्यत आह । ज्ञानं विवेको निगम इति । कार्यकारणयोरभेदाभिप्रायकं सामानाधिकरण्यं विवेकादिना ज्ञानं निष्पाद्यत इत्यर्थः । तत्र नित्यत्वादिभिरात्मनोः परस्परव्यावर्तकधर्मेण निरूपणं विवेकः तपः कर्मयोगः निगमः शास्त्राध्ययनजं ज्ञानम् आत्मानात्मनोरन्तरमेवं तथा चानुभवः प्रत्यक्षमैतिह्यमुपदेशः अनुमानं कृष्यादिदृष्टान्तेन कर्मफलानित्यत्वानुमानम् एवं साधनान्युक्तानि । अथ ज्ञानाकारमभिनवेन निरूपयति सार्धैश्चतुर्भिः । आद्यन्तयोरिति । अस्य देहस्याद्यन्तयोर्यत्केवलं शरीररहितं मध्येऽपि तदेवात्मस्वरूपं न तु शरीरमात्मेत्येवं विधं ज्ञानमित्यर्थः । कालश्चेति चकारार्थोऽवधारणार्थको वा काल एव हेतुः बहु स्यामिति भगवत्सङ्कल्पकाल एवैवं विधस्यात्मनो देहसम्बन्धनिमित्तमित्यर्थः ॥ १८ ॥

तदेव ज्ञानं दृष्टान्तेन दर्शयति यथेति । सुकृत सुष्ठु कृतं सम्यक्पुटपाकशोधितमित्यर्थः । तत्संबद्धस्य हिरण्मयस्य कटकमुकुटादेः पुरस्तात्पश्चाच्चापि मध्येऽपि तदेव नानापदैर्यैर्नानानामभी रजतादिमिश्राभिसम्बन्धैर्व्यवहार्यं भवति विशुद्धहिरण्यं कटकमुकुटादिनिर्माणदशायां रजतादिमिश्रं क्रियते तन्मिश्रमपि भूषणावस्थं हिरण्यमिति व्यवह्रियते स च व्यवहारो भ्रान्तिमूलः निरूपकैस्तु रजतादिमिश्रणात्पूर्वमग्निशोधनात्पश्चाच्च यत्केवलं हिरण्यं तदेव मध्येऽपि हिरण्यशब्दवाच्यं न तु रजतांशोऽपीति व्यवह्रियते स च भ्रान्तिमूलः तद्वदेव अहमहमर्थोऽप्यात्मा अस्य देहस्य पुरस्तात्पश्चाच्च मध्येऽपि स एव देहसम्बन्धात्पूर्वापरकालयोरिव मध्येऽपि देहविलक्षण एवं देहसम्बन्धेनमाहमिति प्रतीतिस्तु भ्रान्तिरेवेत्यर्थः । दार्ष्टान्तिकसामञ्जस्याद्दृष्टान्ते शोधनान्तरमिश्रणमवगम्यते ॥ १९ ॥

किञ्च विज्ञानमिति । कारणमिन्द्रियवर्गः कार्यं शरीरं कर्तृ महत्तत्त्वकार्यमनात्मन्यात्माभिमानहेतुरहङ्कारतत्त्वमिति त्रिवृदर्थं त्रिधावस्थितं चकारस्य पृथक् पाठश्छन्दोऽनुरोधात् अङ्ग हे उद्धव ! गुणत्रयं त्रिगुणपरिणामात्मकमचेतनं समन्वयेन व्यतिरेकतश्चान्वयव्यतिरेकाभ्यां येन तुर्येणोक्तावस्थात्रयरहितेनात्मतत्त्वेन प्रवर्तत इति शेषः तदेवात्मतत्त्वं सत्यमपरिणामीत्येवं विधमप्येतज्ज्ञानोपासनोपासनयेत्युक्तं विज्ञानमित्यर्थः । त्र्यवस्थमित्यस्य उत्पत्तिस्थितिनिधनात्मकावस्थात्रयभागिनि वार्थः । तत्रात्मनि देहान्तरान्वयेन सतीन्द्रियादीनां प्रवृत्तिरित्यन्वयः तदपगमे तु न प्रवृत्तिरिति व्यतिरेकः ॥ २० ॥

न यदिति । यच्छरीरं पुरस्तादुत्पत्तेः पूर्वकाले नात्मा भवति उतापि च पश्चान्नाशानन्तरमपि नात्मा तन्मध्येऽपि नात्मा भवति स्थूलोऽहमिति व्यवहारमात्रं स एव व्यवहारो भ्रान्तिमूलक इत्यर्थः भूतदेहस्य पूर्वापरकालयोरपि विद्यमानं यदात्मतत्त्वं परेण प्रमाणेन प्रसिद्धं तदेव स्यात् सदेकरूपं स्यादिति च तत् ज्ञानासिनेत्युक्तं ज्ञानमिति मे मनीषा मतिः मे मतमित्यर्थः ॥ २१ ॥

किञ्च अविद्यमान इति । वैकारिकः प्रकृतिविकारभूतः राजसः रजोगुणोद्रिक्ततया प्रवृत्तिस्वभावः एव सर्गः शरीररूपसृज्यपदार्थः अविद्यमानोऽप्यात्मनि स्वत एवाविद्यमानोऽप्यवभाति स्वाभिमानविषयतया प्रतीयते ब्रह्म परिशुद्धं जीवात्मस्वरूपं तु स्वयंज्योतिरतो विभाति अत इति ल्यब्लोपे कर्मणि पञ्चमी इमं असन्तमपोह्य पुनरावृत्तं यथा तथा निर्धूयेत्यर्थः । स्वयंज्योतिः स्वयंप्रकाशमवभासते ब्रह्मप्रकृतिस्तु इन्द्रियार्थात्मविकारचित्रमिन्द्रियाणामर्थाः शब्दादिविषयास्तदात्मना तद्रूपा ये विकारास्तैश्चित्रं भातीत्येवं भिन्नमपि तद्विज्ञानमित्यर्थः । अत्राद्यो ब्रह्मशब्दो मुक्तात्मस्वरूपपरः ब्रह्मभूयाय कल्पते ब्रह्मणो हि प्रतिष्ठाहमिति परिशुद्धात्मनि तत्प्रयोगदर्शनात् द्वितीयस्तु प्रकृतिपरः तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते मम योनिर्महद्ब्रह्मेति प्रकृतावपि तत्प्रयोगदर्शनात् ब्रह्मात्मस्वरूपं देहसंसर्गात्तन्मिश्रतयावभाति न तु स्वातन्तया शुद्धात्मस्वरूपेण तद्भावात्पृथग्भावेन भासत इत्यर्थः ॥ २२॥

तत्राद्यन्तयोरस्येत्यनेन अमूलनिवृत्त्युपायतयोक्तस्य ज्ञानस्य देहपूर्वोत्तरमध्यकालत्रयानुवृत्तदेहविलक्षणात्मस्वरूपविषयाकारात्मकत्वाकारः उक्तः यथा हिरण्यमित्यनेन देहसंसर्गेणाहमिति प्रतीतिर्भ्रान्तिरूपत्वनिर्णयात्मकत्वाकारः विज्ञानमेतदित्यनेन त्र्यवस्थयान्वयव्यतिरेकाभ्यामात्मनो देहादिप्रवर्तकत्वविचारात्मकत्वाकारः न यत्पुरस्तादित्यादिना देहस्यानात्मत्वनिश्चयाकारः अविद्यमान इत्यनेन तु परिशुद्धात्मस्वरूपस्वयंप्रकाशत्वाभासविचारात्मकत्वाकारः तदेवमुक्तविधस्य ज्ञानस्य अमूलनिदानभूतदेहात्माभिमानच्छेदकत्वमुक्तम् अथाध्यायान्तेऽपि तदुच्छेदकानि वदन् तदुपसंहरतीत्याह एवमिति इत्थं स्फुटं यथा तथा ब्रह्मविवेकहेतुभिः ब्रह्मणः परमात्मनो विवेकहेतुभ्यां प्रकृतिपुरुषाभ्यां वैलक्षण्यनिर्णायकहेतुभिर्विचारात्मकैर्ज्ञानैर्विवेकादिना निपुणेन परापवादेन आत्मनि संमोहं छित्त्वा अस्य पुंसः स्वानन्दतुष्टः ब्रह्मात्मस्वरूपानुभवानन्दतुष्टः अखिलकामुकेभ्य उपारमेताखिले-

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हिरण्मयस्य कटककुण्डलादेः पुरस्तात् पश्चाच्च वर्तमानं यत्तदेव मध्येऽपि नानापदेशैः कुण्डलादिनामभिर्व्यवहार्यमाणमपि न वस्तुतस्तदन्यत् तद्वदेवाहमस्य विश्वस्य पुरस्तात् पश्चान्मध्येऽपि ॥ १९ ॥

तदेवं कार्यस्य कारणमात्रात्मकतामुक्त्वा प्रकाश्यस्य प्रकाशकमात्रात्मकतामाह । चिज्ज्ञानं बुद्धितत्त्वं तिस्रो जागराद्या अवस्था यत्र तत् त्रिवृदकं व्याख्यानलब्धोर्मतेन यकारत्रयप्रधानं तदवस्थाकारणभूतं सद्गुणत्रयं यच्च कारणकार्यकर्तृकारणमध्यात्मं कार्यमधिभूतं कर्तृ अधिदैवम् एवं गुणत्रयकार्यभूतं त्रिविधं जगत् एतत् येन तुर्येण सामान्यज्ञानमात्रेण समन्वयेन भवति येनानुगतं प्रकाशत इत्यर्थः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति तथा चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुरिति श्रुतेः ननु विशेषविज्ञानव्यतिरेकेण न तुर्यमुपलभामहे तत्राह । व्यतिरेकतः समाध्यादौ यदस्ति तदेव सत्यम् ॥ २० ॥

एवं कालत्रयेऽप्यव्यभिचारिणः सत्यत्वमुक्त्वा व्यभिचारिणस्त्वसत्यतामाह । न यदिति । मध्ये च तत्पृथक् नास्ति किं तु व्यपदेशमात्रं नाममात्रं कुतः यतो यद्यत् परेण अन्येन भूतं जातं प्रसिद्धं प्रकाशितं च तत्तदेव कारणं प्रकाशकं तावन्मात्रं स्यात् ततः पृथगिति मे मनीषा बुद्धिः ॥ २१ ॥

एवं सामान्यतः कार्यप्रकाश्ययोः कारणप्रकाशकाभ्यामभेदं व्युत्पाद्य प्रस्तुते तदुभयाविवेकपूर्वकं प्रपञ्चस्य ब्रह्मोद्भवमाह । अविद्यमानः प्रागसन्नपि योऽयमवभासते विद्यमानत्वेन भाति वैकारिकः विकारेभ्यो महदादिभ्यो जातः स एष राजससर्गः रजोद्वारेण ब्रह्म तु स्वयं स्वतः सिद्धं न तु कार्यं ज्योतिः प्रकाशकम् अतो हेतोः इन्द्रियाणि च अर्थास्तन्मात्राणि च आत्मा मनश्च विकाराः पञ्चभूतानि च एतैश्चित्रं विश्वमिदं ब्रह्मैव भातीति ॥ २२ ॥

एवं प्रत्यक्षैतिह्यानुमानैः स्फुटं यथा स्यात्तथा ब्रह्मविवेकहेतुभिः तथा परस्परदेहादेरपवादेन आत्मत्वनिरासेन कौशेन विशारदेन निपुणेन आत्मविषयकसन्देहं छित्त्वा स्वानन्दतुष्टः सर्वाखिलेभ्यः कामुकेभ्यः इन्द्रियेभ्यः उपारमेत निःसङ्गो भवेत् ॥ २३ ॥

परापवादं प्रपञ्चयति । वपुरात्मा न भवति कुतः पार्थिवं पार्थिवत्वाद्घटवत् तथा इन्द्रियाणि तदधिष्ठातारो देवाः धिषणा बुद्धिः सत्त्वं चित्तम् अहङ्कृतिरित्येते आत्मा न भवन्ति कुतः असमात्मन अन्योन्यापेक्ष्यत्वात् शरीरवत् वायुर्जलं हुताशस्तेजः खं क्षितिरिति पञ्चभूतानि अर्थाः शब्दादयः प्रकृतिश्च आत्मा न जडत्वाद्घटवदिति ॥ २४ ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्यादेतदर्थकारणस्याज्ञस्य कथं निवृत्तिः स्यादिति चेत्तत्राह । अमुष्यामिति । मुनिरेतत् ज्ञानासिना छित्त्वाऽतृष्णः सन् गां विचरतीत्यन्वयः मुनिरुक्तबन्धस्वरूपविमर्शनशीलः एतच्छब्देन बन्धकारणमुक्तं कारणनाशे कार्यनाशः स्वयमेव भवतीति भावः । अमूलमिति क्रियाविशेषणं तथा चोपासनया भगवदाराधनेन तीक्ष्णीकृतेनासिनैतद्बन्धकारणममूलं यथा स्यात्तथा छित्त्वेत्यर्थः तन्मूलमज्ञानं यथा नावशिष्येतेति भावः । कथंभूतं तद्बहुरूपरूपं बहूनि रूपाणि रूपयतीति तथा बहुभिरूपैरूप्यत इति वा तदेवाह । मनोवचःप्राणशरीरकर्मेति । मनआदिष्वनात्मसु कल्पितं तथा स अहं मन्ता वक्ता स्थूलः कृश इत्याद्याकारेण जायमानमित्यर्थः ॥ १७ ॥

ज्ञानासिना छित्त्वेत्युक्तं तदेव ज्ञानं स्वरूपसाधनफलनिर्देशेनाह । ज्ञानमिति । ज्ञानस्य स्वरूपं विवेकः चिदचिज्जडत्वनित्यत्वादिभिः परस्परं व्यावर्तकधर्मैरात्मानात्मनोर्निरूपणं सर्वज्ञत्वाल्पज्ञत्वस्वतन्त्रत्वादिभिः परस्परव्यावर्तकधर्मैः प्रत्यगात्मपरमात्मनोर्वा निरूपणं विवेकः ननु सम्यगज्ञातमेव वस्तु विवेक्तुं शक्यते न त्वज्ञातं जीवात्मपरमात्मनोः स्वरूपगुणादिज्ञानाभावात्कथं तद्विवेकः स्यादिति चेत्तत्राह । निगमइति । निगमो वेदस्तज्ज्ञापकोऽस्ति तस्मादेव तत्स्वरूपादिज्ञानं स्यादित्यर्थः स्यादेतत् दुर्वार्थत्वादतिगूढत्वात्कथं तज्ज्ञानमित्यत आह । तपइति । तपः स्वधर्मवर्तित्वं वर्णाश्रमादिस्वधर्माचरणादन्तःकरणशुद्ध्या वेदार्थज्ञानं भवेदित्यर्थः । कीदृशं तदित्यपेक्षायामाह । प्रत्यक्षमिति अन्तः प्रत्यक्षं स्वानुभवगम्यमित्यर्थः । ननु वेदेऽपि सविशेषशुद्धमत्वकारणाकारणवाच्यावाच्यत्वादिविवादबाहुल्यश्रवणात्कथं तदर्थैकत्वनिश्चय इति चेत्तत्राह । ऐतह्यं सदाचार्यादिसम्प्रदायपरम्परागतत्वं तदेव वेदार्थनिश्चायकं वेदार्थनिश्चयार्थं सत्सम्प्रदायाश्रयणं कर्तव्यमिति भावः । सदाचार्यस्तु भगवता स्वयमेव निर्दिष्टः एतावान्योग आदिष्टो मच्छिष्यैः सनकादिभिरित्यादिना अनुमानं सदाचार्योपदिष्टस्य तत्त्वस्य स्वानुभवविषयीकरणाय लौकिकव्याप्तिसादृश्येन ग्रहणं साधनमुक्तं फलितार्थमाह । अस्य जगत आद्यन्तयोरुत्पत्तेः पूर्वं प्रलयसमये च यदेव केवलं स्वतन्त्रं तदेव सृष्टिप्रलयमध्येऽपि स्वतन्त्रं प्रवर्तते न तु जगत्कदापि स्वतन्त्रमिति भावः । किन्तदित्यत आह । काल इति । जीवानां मार्गणोद्बोधकः शुभाशुभतत्कर्मफलभोगसमयगणकः कल संख्याने धातोः कलयति गणयतीति कालरूप ईश्वर इत्यर्थः कः कालः कालः कलयतामहमिति भगवदुक्तेः किञ्च हेतुः स च चेतनाचेतनात्मिकानां सूक्ष्मावस्थापन्नानां स्वस्वाभाविकानां तत्तत्स्वरूपकार्याणां वा स्थूलतया प्रकाशकः स्वस्वानादिकर्मसंस्कारवशीभूतात्यन्तसंकुचितभोगस्मरणानहंज्ञानधर्माणां चेतनानां कर्मफलभोगार्हज्ञानशक्तिप्रकाशेन तत्तत्कर्मफलभोगसाधनैः सह योजयिता चेत्यर्थः चकाराभ्यां मध्यपालकः भोगावसाने संहर्ता च वाच्यः ॥ १८ ॥

जगत आदावन्ते च मध्ये च कारणभूतस्य ब्रह्मण एव स्वातन्त्र्यमुक्तं तदेव दृष्टान्तेनोपपादयति । यथेति । यथा शुद्धमेव हिरण्यं कटककुण्डलमुकुटादिनिर्माणावस्थायां सुकृतं स्वर्णकारैः सुष्ठु रजतादिभिर्मिश्रितमपि कृतं सर्वस्य हिरण्मयस्य भूषणमात्रतः पुरस्तात् रजतादिमिश्रणात्पूर्वं पश्चाच्च क्रियाविशेषेऽग्निना संशोधनात्केवलं हिरण्मयमेव व्यपदिश्यते । मध्ये च रजतादिमिश्रितभूषणाद्यवस्थायां कटककुण्डलादिनानाव्यपदेशैस्तदेव हिरण्मयमेव व्यपदिश्यते न तु रजतताम्रादि तद्वत् । जगतः आदावन्ते च

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तत्तदन्तर्यामितया वर्तमानः सुरनरादिनामाऽव्यपदेश्यैः स्वतन्त्रोऽहमेव व्यपदेश्यो विवेकिभिर्ज्ञातव्य इत्यर्थः। भगवतः सर्वत्र व्याप्तिरेव सर्वाभेदव्यपदेशहेतुः सर्वं समाप्नोषि ततोऽसि सर्व इत्यर्जुनोक्तेः ॥ १९ ॥

एवं चिज्जडाभिन्नजगतः परमात्मस्वरूपाविवेकमुक्त्वा इदानीं जीवात्मस्वरूपविवेकमाह। विज्ञानमिति। हे भद्रोद्धव! एतद्विज्ञानं प्रत्यगात्मस्वरूपं त्रिपदस्थं त्रीणि पदान्यर्थाः शब्दार्थयोरभेदविवक्षया पदेत्युक्तं पद्यन्ते गच्छन्तीति पदान्यवस्थानि तेषु त्रिष्ववस्थितेषु स्थितमित्यर्थः। किन्तत्त्रयं तदाह गुणत्रयं गुणत्रयकार्यमित्यर्थः। किं तत्कार्यं तदाह। कारणकार्यकर्तृ कारणमिन्द्रियवर्गः कार्यं शरीरं कर्तृ अहंकारस्तत्त्रयस्थं तत्तद्रूपतया रूपाद्याकारेण स्थूलकृशत्वादिधर्मेण ईश्वरत्वभोगित्वसुखित्वदुःखित्वादिभिश्चोक्तत्रिपदार्थधर्मैर्भिन्नमिवाहितं तथापि विवेचनीयमिति भावः विवेचनमेवाह। समन्वयेनेति उक्तकारणादित्रयं समन्वयेन व्यतिरेकतश्च येनैव तुर्येणावस्थात्रयातीतेनात्मस्वरूपेण प्रवर्तते इति शेषः। तदेव सत्यमविनाशि नित्यं वस्त्वित्यर्थः। त्रिवचस्यामिति पाठे तु चकारस्य पृथक् पाठश्छन्दोऽनुरोधात् तद्व्यवस्थामिति ज्ञेयम् एतद्विज्ञानं व्यवस्थं त्रिषु कालेष्वनवस्थितं नित्यस्वरूपमित्यर्थः। अन्वयसमानं देहेन्द्रियादिसंघातस्तुरीयाभिन्नत्वेन सत्यः प्रवृत्तिमत्वात् क्षुधाकालाद्यधीनत्वकादिप्रवृत्तिवदादिति जाग्रदवस्थायामन्वयः आत्मसंबन्धाभावे प्रवृत्त्यभावादसत्त्वं सुषुप्त्यादाविति व्यतिरेकः ॥ २० ॥

देहस्याचेतनत्वम् आत्मनश्च विज्ञानात्मत्वमुपपादयति। नेति यत् भूतं पृथिव्यादिभूतमयं शरीरं पुरस्तादुत्पत्तेः पूर्वं न तत्स्यात् विज्ञानं न स्यात् यच्च पश्चात् विज्ञानं स्यात् तन्मध्येऽपि न विज्ञानं स्यात् कथं तर्हि यज्ञदत्तो जानातीति व्यवहार इत्यत आह। व्यपदेशमात्रमिति। यज्ञदत्तादिनामके भूते ज्ञातृत्वोपचार इत्यर्थः। कस्तर्हि ज्ञानात्मा इत्यत्राह। परेण श्रुत्यादिप्रमाणेन प्रसिद्धं प्रकर्षेण सिद्धं तदेव तत् स्याद्विज्ञानात्मस्वरूपं स्यात् विज्ञानं यत् न जायते म्रियते वा विपश्चित् न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूय इत्यादिश्रुतिस्मृतिभ्यः ॥ २१ ॥

ननु यदुक्तं विज्ञानात्मनो देहादिविलक्षणत्वेन प्रसिद्धत्वमिति न तथा प्रतीयते किन्तु देवदत्तादि नामकब्राह्मणक्षत्रियादिदेहात्मनैव भातीति चेत्तत्राह। अविद्यमान इति। वैकारिकः प्रकृतिविकारभूतो राजस एव सर्गः देवादिदेह. यद्यपि सर्वं देवमनुष्यादिदेहादि त्रिगुणात्मकान्तथापि राजसोद्रिक्ततया प्रकृतिविशेषत्वमात्राद्राजस इति निर्दिष्टः स आत्मनि स्वतो नित्यतया अविद्यमानोऽपि अवभासते स्वरूपज्ञानहीनानामिति शेषः स्वरूपं निर्दिशति। ब्रह्मेति। ब्रह्मत्वमेव दर्शयति। स्वयञ्ज्योतिः स्वयं प्रकाशः अतो देहाद्यभिमानात् ब्रह्मेन्द्रियार्थात्मविकारैश्चित्रं भाति ब्रह्म मूलप्रकृतिः मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहमिति ब्रह्मशब्दस्य मूलप्रकृतेरपि वाचकत्वात् इन्द्रियाणि श्रोत्रादीनि अर्थाः शब्दादयः आत्मा देहः विकाराः कौमाराद्यवस्था एतैश्चित्र भाति ॥ २२ ॥

एवमहङ्कारादिमुक्त्वा तदनुवादपूर्वकं मुमुक्षुणा ज्ञात्वा यदवश्यं कर्तव्यं तच्छिक्षयति। एवमिति। आत्मस्वरूपस्य देहादिविलक्षणत्वेऽपि अज्ञानां देहेन्द्रियविषयादिविविधत्वेन भासते मुमुक्षुर्विचारेण सन्देहनिवर्तने समर्थेन सन्देहेन गुरुणा हेतुभूतेन स्फुटं यथा स्यात्तथा ब्रह्मविवेकहेतुभिः शुद्धात्मस्वरूपविवेकहेतुभिर्निगमादिभिः परापवादेन देहेन्द्रियादेरात्मात्वनिराकरणेनात्मनः स्वस्थ सन्देहं छित्त्वा स्वानन्दतुष्टः सकलविषयकामुकेभ्यस्तुच्छसुखेभ्यः शब्दादिविषयेभ्य उपारमेत निवृत्तो भवेत् तेषूपादेयबुद्धिं न कुर्यादित्यर्थः ॥ २३ ॥

परापवादमेव कृपया स्वयमेव विशदं दर्शयति। नात्मेति। नेति प्रत्येकमन्वेतव्यं तथाहि वपुरात्मा न पार्थिवमिति हेतुगर्भितं विशेषणं पार्थिवत्वात् घटादिवदित्यर्थः। इन्द्रियाणि आत्मा न भवन्ति करणत्वात् हिशब्देन सर्वत्र हेतुर्बोध्यः देवास्तदधिष्ठातारो नात्मा भवन्ति इन्द्रियमात्रप्रवर्तकत्वात् इन्द्रियैः सहैतेषु मतेष्वप्यात्मसत्वात् असुः प्राणो नात्मा वायुत्वात् व्यजनवायुवत् मनो न अन्नमात्रं विशेषणम् अन्नमात्रत्वात् शरीरवत् "अन्नमयं हि सोम्य मन" इति श्रुतेः अन्तःकरणत्वाच्च धिषणा बुद्धिः सत्त्वं चित्तं च अहंकृतिरहंकारश्च नात्मा अन्तःकरणत्वात् मनोवत् वायुर्जलं हुताशोऽग्निः खमाकाशः क्षितिरिति पञ्च भूतानि अर्था विषयाः अर्थसाम्यं प्रकृतिश्च नात्मा जडत्वात् शरीरवत् ॥ २४ ॥

---

भाषा टीका।

यह सब संसार अज्ञान मूलक है बहुत रूपों से विभिन्न है जिस से कि मन वचन प्राण शरीर कर्म रूप है ज्ञानरूप तीक्ष्ण तरवार से इसको काटकर मुनि होकर तृष्णा को छोड़कर पृथिवी में विचरता रहे ॥ १७ ॥

ज्ञान विवेक वेद तप प्रत्यक्ष ऐतिह्य और अनुमान इन प्रमाणों से ऐसा जाने कि जो जिसके आदि अन्त में होता है सोई काल हेतु रूप से मध्य में भी है ॥ १८ ॥

जैसे सुवर्ण पहिले सुन्दर रहता है कड़ा कुंडलादिबन ने पर भी वैसा ही रहता है सोई मध्य में भी व्यवहार के वास्ते नामादिक से रहता है तैसे नाना प्रकार से हमारा शरीर रूप जगत् भी है ॥ १९ ॥

हे उद्धवजी तीन अवस्था वाला यह विज्ञान है तीनों गुण मय जगत् कारण कार्य कर्ता रूप है सो अन्वय से तथा व्यतिरेक से जिस तुर्य परमात्मा से व्याप्त है उसी को सब सत्ता जानो ॥ २० ॥

जो देहादिक उत्पत्ति से पहिले नहीं हैं नष्ट होने पीछे भी नहीं रहते हैं बीच में केवल व्यवहार के लिये मात्र रहते हैं जो उत्पत्ति मान पदार्थ अन्य से प्रकाशित होता है सो अनित्य है तिस में जो सदा रहनेवाला आत्मा सोई सत्य है ऐसा मेरा मत है ॥ २१ ॥

जो यह राजस अहंकार का सर्ग है सो नहीं रहने पर भी भान होता है इस से पृथक् स्वयं ज्योति आत्मा प्रकाशमान होता है और जगत् तो प्रकृति विकार इन्द्रिय शब्दादि अर्थ आदि षोडश विकारों से विचित्र रूप है ॥ २२ ॥

इस प्रकार से ब्रह्म के विवेक होने के हेतुओं से अति निपुण आत्मा से व्यतिरिक्त के आत्मत्व निषेध करके

समाहितैः कः करणैर्गुणात्मभिर्गुणो भवेन्मत्सुविविक्तधाम्नः ।
विक्षिप्यमाणैरुत किंनु दूषणं घनैरुपेतैर्विगतै रवेः किम् ॥ २५ ॥
यथा नभो वाय्वनलाम्बुभूगुणैर्गतागतैर्वर्तुगुणैर्न सज्जते
तथाऽक्षरं सत्त्वरजस्तमोमलैरहम्मतेः संसृतिहेतुभिः परम् ॥ २६ ॥
तथाऽपि सङ्गः परिवर्जनीयो गुणेषु मायारचितेषु तावत् ।
मद्भक्तियोगेन दृढेन यावद्रजो निरस्येत मनःकषायः ॥ २७
यथाऽमयोऽसाधु चिकित्सितो नृणां पुनः पुनः संतुदति प्ररोहन् ।
एवं मनोऽपक्वकषायकर्म कुयोगिनं विध्यति सर्वसङ्गम् ॥ ५८ ॥
कुयोगिनो ये विहितान्तरायैर्मनुष्यभूतैस्त्रिदशोपसृष्टैः ।
ते प्राक्तनाभ्यासबलेन भूयो युञ्जन्ति योगं न तु कर्मतन्त्रम् ॥ २९ ॥
करोति कर्म क्रियते च जन्तुः केनाप्यसौ चोदित आनिपातात् ।
न तत्र विद्वान् प्रकृतौ स्थितोऽपि निवृत्ततृष्णः स्वसुखानुभूत्या ॥ ३० ॥
तिष्ठन्तमासीनमुत व्रजन्तं शयानमुक्षन्तमदन्तमन्नम् ।
स्वभावमन्यत्किमपीहमानमात्मानमात्मस्थमतिर्न वेद ॥ ३१
यदि स्म पश्यत्यसदिन्द्रियार्थं नानाऽनुमानेन विरुद्धमन्यत् ।
न मन्यते वस्तुतया मनीषी स्वाप्नं यथोत्थाय तिरोदधानम् ॥ ३२ ॥

भाषा टीका ।

के ज्ञान से आत्मा के विषय जो संदेह है तिस को छेदन करके अपने आत्मस्वरूप में आनन्द होकर सब कामनाओं को छोड़ कर संसार से निवृत्त होजावे ॥ २३ ॥

पृथिवी का विकार शरीर आत्मा नहीं है इंद्रिय आत्मा नहीं हैं इंद्रिय के देवता आत्मा नहीं है प्राण आत्मा नहीं है वायु जल अग्नि मन अन्न बुद्धि अंतःकरण अहंकार तथा आकाश पृथिवी एसब आत्मा नहीं हैं क्योंकि ए सब समान से प्राकृति के कार्य हैं ॥ २४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं विवेकज्ञानवतो मुक्तस्य नेन्द्रियादिकृतगुणदोषसंबन्ध इत्याह । समाहितैरिति । मत्सुविविक्तधाम्नः मम सुष्ठु विविक्तं धाम स्वरूपं येन तस्य प्रकाशकस्य प्रकाश्यगुणदोषा न भवन्तीति रविदृष्टान्तेनोक्तम् ॥ २५ ॥

असङ्गब्रह्मत्वेनावस्थितस्य न केऽपि गुणदोषा इत्याकाशदृष्टान्तेनाऽऽह । यथेति । वाय्वादीनां शोषणदहनक्लेदनरजोधूसरत्वादिभिर्गतागतैरागमापायिभिर्ऋतुगुणैः शीतोष्णादिभिर्वा अहम्मतेरहङ्कारात्परमक्षरं संसृतिहेतुभिर्न युज्यते यथा अहङ्कारस्य संसृतिहेतुभिरिति ॥ २६ ॥

मुक्तवदमुक्तज्ञानी न यथेष्टमाचरेदित्याह द्वाभ्याम् । तथाऽपीति । गुणेषु विषयेषु रजो रागः मनसः कषाय इति दुर्निरासतामाह ॥ २७ ॥

तदेव दृष्टान्तेनोपपादयति । यथेति । नृणामामयो रोगः असाध्वसम्यक् यथा भवति तथा अपक्वकषायकर्म अदग्धाः कषाया रागादयस्तन्मूलानि कर्माणि यस्मिंस्तत् अत एव सर्वसङ्गं सर्वेषु पुत्रादिषु सज्जमानं मनः कुयोगिनमसम्यक्ज्ञानिनं विध्यति भ्रंशयति ॥ २८ ॥

ननु कथञ्चिद्विषयसङ्गे यदि योगभ्रंशः स्यात्तर्हि सोपायेन योगमार्गेण तत्राऽऽह । कुयोगिन इति । मनुष्यभूतैर्बन्धुशिष्यादिरूपैस्त्रिदशैरुपसृष्टैः प्रेरितैः तथा च श्रुतिः 'तस्मात्तेषां न प्रियं यदेतन्मनुष्या विदुरिति भूयो जन्मान्तरे न तु कर्मतन्त्रं कर्मविस्तारम् ॥ २९ ॥

ननु विदुषामपि सर्वथा कर्म दुष्परिहरमिति पुनः संसारः स्यादत आह । करोतीति । विदुषोऽन्योऽसौ जन्तुर्देह एव भोजनादि कर्म करोति क्रियते विक्रियते च तेन कर्मणा दुःखाद्यपि प्राप्नोतीत्यर्थः । केनापि संस्कारादिना चोदितः आनिपातान्मरणपर्यन्तं करोति विद्वांस्तु प्रकृतौ देहे स्थितोऽपि कर्मणि न विक्रियते निरहंकारित्वात् हर्षविषादादिभिः संसारं न प्राप्नोति ॥ ३० ॥

किञ्च आस्तां तावद्दैहिककर्मभिर्विकारशङ्का यतो देहमप्यसौ

श्रीधरस्वामिकृतभावार्थदीपिका ।

न पश्यतीत्याह । तिष्ठन्तमिति । स्वगतं मूत्रयन्तम् स्वभावप्राप्तमन्यदपि दर्शनस्पर्शनादि ईहमानं कुर्वन्तमात्मानं देहम् ॥ ३१ ॥

नन्विन्द्रियवतः सर्वथा कथमदर्शनं सम्भवति तत्राऽऽह । यदि स्मेति । यद्यप्यसतां बहिर्मुखानामिन्द्रियाणामर्थं पश्यति तथाऽपि नानात्वान्मिथ्यात्वप्रत्ययादित्यनुमानेन विरुद्धं बाधितं सदन्यदात्मव्यतिरिक्तं मनीषी वस्तुतया न मन्यते स्वप्नादुत्थाय प्रबुध्य संस्कारमात्रेण स्वाप्नं विषयं स्फुरन्तमत एव स्वयमेव तिरोभवन्तं यथा तद्वत् ॥ ३२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

गुणात्मभिर्विषयाविष्टस्वभावैः ॥ २५ ॥

प्रकाशकस्य शुद्धसत्त्वपदार्थस्य प्रकाश्यानामिन्द्रियादीनामुपरतिविक्षेपादयो गुणदोषा न भवन्ति पूर्वार्धे अहम्मतेरिति पदस्वारस्यानपतितत्वं कस्य संसृतिरेतुमिरित्यपेक्षा जातो यद्वेति ॥२६॥

तथापि सम्यग्ज्ञानिनो गुणदोषाभावेऽपि रागोऽत्र विषयप्रीतिः दुर्निरासतामिति यथा कषायो दुर्निवर्त्यस्तथा रागस्यापि दुर्निवार्यतामाह ॥ २७ ॥

एतदेव मनःकषायस्य दुर्निरासत्वमेव अत एव अपक्वकषायकर्मत्वादेव ॥ २८ ॥

सोपायेन विषयदोषदर्शनादिसहितेन मनुष्या एतद्ब्रह्म विदुरिति यत् तद्ब्रह्मज्ञानं यस्मात् स्वापकर्षाद्धेतोः एषां देवानां न प्रियमिति श्रुत्यर्थः ॥ २९ ॥

विदुषामपि सिद्धानामपि निरहङ्कारत्वाद्देहाभिमानराहित्यात् तत्र हेतुः निवृत्तेत्यादि ॥ ३० ॥

विकारशङ्का हर्षविषादादिशङ्का असौ सिद्धः ॥ ३१ ॥

नानानुमानेन नानात्वेन हेतुना धर्मिमथ्या न तत्त्वाना न यथा प्रत्येति व्यतिरेकव्याप्तिः बाधितं मिथ्यात्वेन ज्ञातम् अत एव संस्कारमात्रेण स्फुरद्रूपत्वादिव ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

साक्षात्कृतपरिशुद्धात्मस्वरूपस्य प्रतिपत्तिमाह । समाहितैरिति समाधिदशायामात्मनि नापूर्वगुणाधानं पूर्वमव्युत्थाने न दोषाधानं दोषाणामौपाधिकत्वात् मनःसर्वावस्थास्वेकरूप एवात्मेत्यर्थः ॥२५॥

अहंमतेः अक्षरमहंशब्दवाच्यमात्मतत्त्वं संसृतिहेतुत्वेन मतेः सत्त्वादिभिर्न सम्बध्यत इत्यर्थः । यद्वा अहंमतेरनात्मन्यात्माभिमानविषयभूतेः ॥ २६ ॥

गुणेषु शब्दादिगुणेषु मायारचितेषु प्रकृत्युपपादितेषु ॥ २७॥

तुदति व्यथयति कर्मसङ्गं कर्माणि सङ्गयुक्तम् ॥ २८ ॥

त्रिदशोपसृष्टैः दैविकैः उपसर्गैः उपद्रवैः ते प्राक्तनेति प्राक्तनाभ्यासवशेन योगं न युञ्जन्ति अपितु कर्मतन्त्रमेव युञ्जन्तीत्यर्थः ॥ २९ ॥

क्रियते कार्यते आनिपातात् आशरीरपातात् प्रकृतौ स्थितोऽपि निवृत्ततृष्णो विद्वान् तथा न कार्यत इत्यर्थः ॥ ३० ॥

शयनासनादिषु तथा क्रियमाणेष्वपि कथं कर्तृत्वाभाव इत्यत आह । तिष्ठन्तमिति । स्वदेहगतस्थित्यागमनादिव्यापारमात्मधर्मत्वेन न वेद ॥ ३१ ॥

नाभिमन्यते तथाभिमानरूपमज्ञानम् ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उपारमेत स्वानन्दतुष्टोऽखिलकामुकेभ्य इति परापवादेन स्वात्मसाहस्यानन्दतुष्टस्याप्यखिलकामिभिः सङ्गस्य परिहार्यत्वमुक्तं तत्रैवं भूतस्य तत्सङ्गेऽपि न कोऽपि दोष इत्याशङ्क्य द्वाभ्याम् । समाहितैरिति । अत्र यद्यपीत्यादिः मत्सुविविक्तधाम्नः मम सुष्ठु विविक्तं धाम स्वरूपं येन तस्य मद्भावं तथा प्रकृतिविलक्षणतया च आत्मस्वरूपविवेचनशीलस्येत्यर्थः । गुणात्मभिः सत्त्वादिगुणपरिणामात्मकैः करणैरिन्द्रियैः समाहितैः को गुणो भवेत् इन्द्रियसमाधानेनात्मध्यानपूर्वः कोऽपि गुणो न भवेदित्यर्थः । विक्षिप्यमाणैरपि करणैः किन्तु दूषणं न कोऽपि दोषश्च भवेदित्यर्थः । तत्र दृष्टान्तः घनैर्मेघैरुपेतैर्विगतैर्वा रवेः किं नु दोषो नापि गुणश्च यथा तद्वत् ॥ २५ ॥

ननु परमार्थतो रवेर्घनानां च न सङ्गोऽस्ति अतस्तेन तत्र गुणदोषाविति युक्तं दृष्टान्तिके तु सोऽस्त्येवेति तद्भावाभावाभ्यां गुणदोषौ स्त एव इत्यतो नभोदृष्टान्तेनैतौ निषेधयति । यथेति । वाय्वादीनां गुणैः शोषणदहनक्लेदनरजोधूसरत्वादिभिः अनुगुणैः शीतोष्णादिभिर्वा यथा नभो न सज्जते निर्लेपस्वभावत्वादिति भावः । तथा परं प्रकृतिविलक्षणमक्षरं सर्वैकरूपमहमहंशब्दवाच्यमात्मस्वरूपमपि संसृतिहेतुत्वेन तैः सत्त्वादीनां गुणैः कार्यैर्न बध्यत इत्यर्थः । अतः कामुकैः सङ्गो न दोषायेति भावः ॥ २६ ॥

एवमप्युपायनिष्पत्तिदशायां तद्विरोधित्वात्सङ्गः परिहार्य इति परिहरति । तथापीति । मायारचितेषु प्रकृत्युत्पादितेषु शब्दादिगुणेषु सङ्गः परिवर्जनीयस्तावदित्यभिप्रेतमर्थमाह । यावदिति यावन्मद्भक्तियोगेन मनः कषायः कषायरागवद्दुर्मोच्यरजस्तत्कार्यभूतकामक्रोधादिर्निरस्येत रजोनिरसनभूतेन दृढो भक्तियोगो निष्पद्यते ऽस्तन्निष्पत्त्यर्थं तद्विरोधिरजोनिरसनहेतुभूतोपायस्येनासङ्गेन भावितव्यमित्यर्थः ॥ २७ ॥

एतदेव सदृष्टान्तमुपपादयति । यथेति । नृणामामयो रोगः असाध्यस्सम्यग्यथा तथा निश्चिकित्सितः प्रतिकृतः पुनः पुनः प्ररोहन् देहान् सन्तुदति व्यथयति तथाऽपक्वकषायवद्दुर्मोच्यकर्मपुण्यापुण्यात्मकपापादिविरोधिप्राचीनं कर्म यस्य स चासौ कुयोगी तं मनःसर्वसङ्गं विषयेषु सक्तं सन्निघ्नाति योगाद्भ्रंशयतीत्यर्थः ॥ २८ ॥

कुयोगिनः योगभ्रष्टयोगिविरोधित्वमुपपादयति । कुयोगिन इति । त्रिदशैः परममुक्तिमार्गविघ्नभूतैर्वैकपदस्थैः अवितैः संभ्रुष्यरूपैः कामिभिः सज्जमानैर्विहिताः कारिताः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अन्तराया येषां ते कुयोगिनः प्राक्तनाभ्यासविषयवेगेन चिराभ्यस्तविषयवासनामनु भूयो योगं न युञ्जन्त्यपि तु कर्मतन्त्रमेव युञ्जन्ति ततः संसरन्तीति भावः ॥ २९ ॥

कर्मतन्त्रं युञ्जन्तीत्येतदेवोपपादयति । करोतीति । आनिपाताच्छरीरपाताविधि जन्तुः स्वयमपि कर्म करोति केनापि जन्मवन्तदेशादियोगितोऽसौ जन्तुः क्रियते कार्यते च स्वेच्छयापरेच्छया वा कुर्वन्नेवास्त इत्यर्थः । ननु सङ्गपरिहरतोऽपि यदि काम्यकर्मतन्त्रं दुष्परिहरमेवेति सोऽपि ततः संसरेदित्यत आह । न तथेति । विद्वान् सङ्गस्योक्तविधानयोग्यहत्वं जानन्नत एव स्वसुखानुभूत्या स्वानन्दानुभवेन निवृत्तशब्दादिविषयाभिलाषनतसङ्गः प्रकृतौ देहे स्थितोऽपि न तत्र स्थितः कुर्वन्नकुर्वन्कल्प इत्यर्थः ॥ ३० ॥

ननु शयनासनादिषु क्रियमाणेष्वपि कथमकर्तृत्वाभाव इत्यत आह । तिष्ठन्तमिति । उत्सृजन्तं रेतोमूत्रं निःसृजन्तमश्नन्तं भुञ्जानं स्वभावप्राप्तमन्यदपि दर्शनस्पर्शनादि यत्किञ्चिदीहमानं कुर्वाणमात्मानमात्मस्थमतिर्न वेद आत्मन्या आत्मनिरपेक्षमतिर्यस्य सः हेतुगर्भमिदम् अतो न वेद नाभिमन्यते स्वदेहस्य स्थितिगमनादिव्यापारमात्मस्थत्वेन नाभिमन्यते तथाभिमानराहित्यमेवाकर्तृत्वमित्यर्थः ॥ ३१ ॥

किञ्च यदि कर्मेति मनीषी विद्वान् विरुद्धं प्रतिकूलमिन्द्रियार्थं शब्दादिविषयमन्यदसच्छरीरं वा अनुकूलमिन्द्रियार्थजातं वा यद्यपि पश्यति तथाप्यनुमानेनानित्यत्वानुमानेन वस्तुतया नित्यतया न मन्यते यथा स्वप्नादुत्थाय तिरोदधानं स्वाप्नार्थजातं स्थापि तथा नाभिमन्यते तद्वदित्यर्थः ॥ ३२ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इन्द्रियसमाधानविक्षेपयोर्हरिप्रियाप्रियसाधनत्वेनोच्यमानत्वात्ताभ्यां हरेरपि गुणदोषौ स्यातां किन्नेत्याह समाहितैरिति गुणात्मभिः शब्दादिविषयमनस्कैः पुरुषैः स्वविषयत्वेन समाहितैरेकाग्रचित्तत्वेन स्थापितैः करणैरिन्द्रियैः मत्सुविविक्तधाम्नः तेभ्य इन्द्रियेभ्यो विषयेभ्यश्च पृथग्भूतस्वरूपस्य प्राकृतेन्द्रियरहितस्य भगवतः को गुणो भवेत् न कोऽपि विषयेषु विक्षिप्यमाणैरितस्ततः आकृष्यमाणैरिन्द्रियैर्हरेः किं दूषणं न किमपि दूषणम् अत्रोदाहरणमाह । घनैरिति । आह्लादरूपैर्घनैरुपेतैः मनोह्लादगुणरूपस्य रवेः किम्भवेत् न किमपि प्रयोजनं विगतैर्दोषोऽपि भवेत्किं न भवेदेव यथा रवेः गुणदोषाभावेऽपि अन्येषां घनैरुपेतैश्छायया सुखं भवेत् विगतैस्तापेन दुःखं भवेत् तथा समाहितकरणैः समाधानकर्तुः सुखं विक्षिप्तैर्दुःखं भवेदिति भावः—

समाहितोऽपि जीवेन विक्षिप्ते वा न तु क्वचित् ।

विशेषो विद्यते विष्णोस्तथापि तु समाहितं ॥

प्रीतो भवति वैभिन्त्यं सर्वधर्मकृतोऽपि चेति एतदुक्तार्थे मानम् ॥ २५ ॥

ननु हरेरपि सत्त्वादिगुणकार्येषु देहादिषु स्थितस्य तत्कृतगुणदोषौ जीववत्किल स्यातामित्याशङ्क्य आकाशवदसङ्ग एव न दोषवानित्याह । यथेति । यथा नभो वाय्वादीनां गुणैः स्पर्शादिभिर्न सज्जते तत्कृतविशेषवन्न भवति वायुरूक्षादयः । अत्र नभसि गतागतैश्च देहादिभूतकार्यैर्गुणैश्च सत्त्वादिगुणतत्कार्याणामसारतया तदन्तर्वर्तमानमक्षरं ब्रह्म संसृतिहेतुभिः सत्त्वादिगुणैस्तत्कार्यैः रागादिदोषैश्चासङ्गतमसम्बद्धमेव अत्र हेतुः । परमिति सत्त्वादिगुणेभ्यः उत्तमत्वेन विलक्षणमनेन निःसङ्गत्वेन मनः समाधानासमाधानाभ्यां हरेर्गुणदोषाभावेऽपि विषयसङ्गाज्जीवस्य तौ स्यातामिति दर्शितम् ॥ २६ ॥

तर्हि मुमुक्षोः साधनविधानं व्यर्थमिति न मन्तव्यं सर्वदोषाणां सङ्गमूलत्वात्स एव मुमुक्षुणा पुरुषेण निर्मूलनीय इत्याह । तथापीति । हरेर्गुणदोषाभावेऽपि तावन् मायारचितेषु प्रकृतिनिर्मितेषु गुणेषु विषयेषु सङ्गः परितो वर्जनीयः कियन्तं कालं वर्जनीयोऽन्यथा स्त्रीभिर्नायानैर्वेत्यादि श्रुतिः सगुणाविषया इत्यादित्यतोऽवधिमाह । सद्भक्तीति । दृढेन सद्भक्तियोगेन यावद्रजस्तमश्च तज्जनितं कषायं कर्षणमायते गच्छतीति कषायं पापं च निरस्येत मुक्तिपर्यन्तमिति शेषः । अवगमाविति धातुः ॥ २७ ॥

व्यतिरेके दोषमाह । यथेति । यथा नृणामसाधुचिकित्सित आमयः सम्यक् चिकित्साभावात्पुनः पुनः प्ररोहमङ्कुरीकुर्वन्नामयिनं सन्तुदति एवमपक्वकषायकर्म सर्वेषु विषयेषु सङ्गो यस्य तत्सर्वसङ्गं मनः कुयोगिनम् अपरिपक्वयोगयुक्तं पुरुषं विध्यति तस्य भगवद्ध्यानविघ्नं करोति पुनः पुनर्विषयाभिलाषप्ररोहादिति भावः ॥ २८ ॥

नन्वेवं तर्हि अपरिपक्वयोगवतामसाधिकर्ममूलान्तरायविहतानां योगापरिपाकेन भगवत्प्राप्तिरपायितेति तत्राह । कुयोगिन इति । कुयोगिनो ध्यानपरिपाकरहितास्त्रिदशोपसृष्टैराधिदैविकैर्मनुष्यभूतैर्मनुष्यैर्मित्रामित्राध्यात्मिकैर्भूतैराधिभौतिकैरन्तरायैर्विहता हि तस्मात्तस्मात्ते अपक्वयोगिनः प्राक् पूर्वजन्मनि कृतध्यानाभ्यासबलात्तत्त्वेन योगं ध्यानं युञ्जन्ति कुर्वन्ति भूयो मत्प्रसादेन तत्परिपाकेन मामवाप्नुवन्तीति शेषः कर्मवज्ञयातन्त्रं साधनं नानुतिष्ठन्तीत्यन्वयः । अतो मद्योगाभ्यासो न व्यर्थो न मत्प्राप्तिश्चेति भावः ॥ २९ ॥

नन्वत्र कैश्चित्कर्मैव पूर्वाभ्यासिनावशैः क्रियते न योगोऽभ्यस्यते कैश्चित्पूर्वाभ्यासेन योग एवाभ्यस्यते न कर्म क्रियत इत्यत्र वासनातिरिक्तप्रयोजकेन भाव्यं स क इति चोद्यं परिहरति । करोतीति । योग्ययोगिलक्षणो जन्तुर्जीवः कर्म करोतीति प्रत्यक्षं तत्रासौ केनापि पुरुषेण चोदितः प्रेरित एव क्रियते कार्यते आनिपाताच्छरीरपातपर्यन्तमनेन वासनाद्यतिरिक्तप्रयोजककर्तास्तीत्यवगतं स च पूर्णानन्दो हरिरेव एष उ एव साधु कर्म कारयति । "यदेष आकाश आनन्दो न स्यात "इति श्रुतेः ननु तर्हि विद्वदविदुषोः को विशेष इत्यत्राह । न तथेति । इदं सर्वं विद्वान्प्रकृतौ प्रकृतिविकृतमहदादिविकृतपञ्चभूतैर्निर्मितदेहे स्थितोऽपि स्वसुखानुभूत्या भगवदनुग्रहाविर्भूतस्वरूपानुभवानन्देन विषयेभ्यो निवृत्ततृष्णः कर्माणि कुर्वन्नपि तत्र कर्मसु न सज्जत इति शेषः ॥ ३० ॥

अधुना योगिनोऽसम्प्रज्ञातसमाध्यवस्थामाह । तिष्ठन्तमिति । मम देहे तिष्ठन्नासीनो व्रजञ्छयान इत्यादिक्रियाः कुर्वन्हरिरेवेत्यात्मस्थमतिः परमात्मन्येव स्थितमतिरतिष्ठन्तमासीनमित्यादिक्रियाकरमात्मानं देहं न वेद किम्बहुना पारतन्त्र्यातिशयेन परमा-

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विविक्तस्वरूपत्वादेवात्मन्यहङ्कारशून्यस्य विवेकिनः सत्त्वादिगुणसङ्कदोषोऽपि नास्तीत्याकाशदृष्टान्तेनाह । यथेति । यथा नभः आकाशं वाय्वनलाम्बुभूगुणैः स्पर्शरूपरसगन्धैर्गतागतैरागमापायिभिः ऋतुगुणैः शीतोष्णवर्षादिभिर्वा न सज्जते तथा कूटस्थमात्मस्वरूपं संसृतिहेतुभूतैः सत्त्वरजस्तमोमलैर्न सज्जते कुतः यतोऽहम्मतेरहङ्कारात्परं तस्य परत्वज्ञानादित्यर्थः । यद्यपि सत्त्वं तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयमिति वचनाभिमंशमनामयं च "तथापि सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ" इति बन्धहेतुत्वोक्तेर्बन्धहेतुतृष्णासङ्गप्रमादालस्यादिरजस्तमोमलवत्सु सुखसङ्गस्यापि बन्धहेतुत्वाविशेषान्मलत्वेन विवक्षितत्वात्सत्त्वस्यापि ग्रहणमिति भावः ॥ २६ ॥

सूर्याकाशदृष्टान्ताभ्यां ज्ञानिन इन्द्रियसत्त्वादिगुणदोषसम्बन्धाभाव उक्तः सतु हरिभक्त्यासम्यक्शोधितमनस्कस्यैव साधाम्यज्ञानिनस्तु सङ्गो वर्ज्य एवेत्याह । तथापीति । यद्यपि ज्ञानिन इन्द्रियसत्त्वादिगुणदोषसम्भावो न तथापि मनःकषायः अपक्वतामेव दर्शयति रजः विषयेषु रागः दृढेन मद्भक्तियोगेन यावन्निरस्येत निःशेषशमं अस्येत छिद्येत तावन्मायारचितेषु गुणेषु शब्दादिविषयेषु सङ्गः परिवर्जनीय इत्यर्थः ॥ २७ ॥

नृणामामयो रोगः असाधु यथा यथावत् चिकित्सितः न निर्मूलित इत्यर्थः । प्रबाधन् पुनः पुनः बाधमानः अनुवर्तते व्यथयति एवं तद्वत् अपक्वकषायकर्म न पक्वा दग्धाः कषायाः फलाभिसन्धिरूपा येषां तथाभूतानि कर्माणि यस्य तत् अत एव सर्वसङ्गसर्वविषयेऽभिलाषो यस्य एवं भूतं मनः कुयोगिनमदृढभक्तियोगाभावात्परिपक्वयोगयुक्तं पुरुषं विध्यति ताडयति ॥ २८ ॥

यद्यपक्वयोगि । ...रायहताश्चेत्तर्हि तस्तवामेव पुनर्योगं कर्म वान्यद्वा कमुपायं कुर्वन्तीत्यपेक्षायामाह । कुयोगिन इति । ये कुयोगिनः ध्यानपरिपाकरहिताः त्रिदशोपसृष्टैर्देवैः प्रेरितैर्मनुष्यभूतैः स्त्रीपुत्रमित्रशिष्यादिरूपैः स्वस्वरायैर्मार्गयत्प्राप्तैर्विघ्नभूतैर्विहताभ्रंशिताःतथा श्रुतेःयस्मात्तेषां न प्रियमन्यदेतन्मनुष्या विदुरिति ते जन्मान्तरे प्राक्तनाभ्यासबलेन पूर्वजन्मकृतयोगाभ्यासबलेन भूयः पुनरपि योगं युञ्जति न कर्मतन्त्रं कर्मसाधनं न कुर्वन्ति कतिपयजन्मभिर्ध्यानयोगेन मामेव प्राप्नुवन्ति न नश्यन्तीति भावः ॥ २९ ॥

ननु यदुक्तं योगं युञ्जति न कर्मतन्त्रमिति तदनियतकर्मकरणाकरणयोर्जीवितन्त्रत्वाभावात् योगयोगेऽपि कश्चित्कर्मैवावशः करोति कश्चिन्न करोति तस्मात्प्रयोजककर्तान्य एवानुमीयते तेन कर्मैव भाव्यते तेन कर्मैव कार्यते चेत्कथमुक्तार्थसिद्धिरिति चेत्तत्राह । करोतीति जन्तुर्जीवः कर्म करोति तत्रास्मौ केनापि पुरुषेण चोदितः प्रेरित एव क्रियते कार्यते आनिपातात् शरीरपातपर्यन्तम् एतेन प्रयोजकोऽन्यः स्वतन्त्र सिद्धः स सर्वेश्वरो हरिरेव स कारयेत्पुण्यमथापिपापं न तावता देववानीशितापि इति श्रुतेः अज्ञो जन्तुरनीशश्च स्वात्मनः सुखदुःखयोः ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वेति स्मृतेश्च विद्वान् हेयवस्तुस्वरूपगुणादर्शित्वात् प्रकृतौ प्रकृतिकार्ये देहे स्थितोऽपि तत्र कर्माणि न क्रियते तेन कार्येते तेनेश्वरेण न प्रयुज्यते इत्यर्थः । यतः स्वसुखानुभूत्या स्वस्य ध्येयस्य स्वरूपगुणादिविषयकसुखानुभवेन निवृत्ततृष्णः कर्मफलादौ वासनाशून्यः ॥ ३० ॥

निवृत्ततृष्णत्वे हेतुं दर्शयन् तस्य योगारूढत्वमाह । तिष्ठन्तमिति । स्थित्यादिक्रियां कुर्वन्तम् उपविशन्तमिति पाठान्तरं भुञ्जानमित्यर्थः । स्वभावस्य प्रियाप्रियवस्तुग्राहकत्वादिकमपीहमानं येषां कुर्वन्तमात्मानं देहं न वेद नानुसन्धत्ते कुतः यत आत्मस्थमतिः आत्मा ध्येयस्वरूपसौन्दर्यमाधुर्यवात्सल्यादिगुणनिधिः सर्वेश्वरस्तस्मिन् स्थिता मतिर्वचनासाधारणभूता बुद्धिर्यस्य सः ॥ ३१ ॥

नन्विन्द्रियाणां पराक् दर्शनादिस्वभाव एव पराञ्चि खानि व्यतृणत्स्वयम्भूरिति श्रुतेः तद्वतः पुरुषस्य कथं सर्वथा दर्शनं सम्भवतीत्यत आह । यदीति । परमात्मध्याननिष्ठो विद्वान् बाह्यपदार्थं न पश्यति तथापीन्द्रियाणां बहिर्मुखस्वभावत्वेनासत्त्वाद्दुष्टत्वाद्यादि कदाचिदसदिन्द्रियार्थमसन्तं बहिर्मुखाणामिन्द्रियाणामर्थं रूपादिविषयं पश्यति चेदिति सम्भावनायां पश्यतीति सम्भाव्यते तथापि आनन्दघनध्येयरूपादन्यत् नानानुमानेन विरुद्धं सुखं विपरीतं सुखं वस्तुतया नित्यकरसतया न मन्यते यतो मनीषी नित्यानित्यपदार्थमननशीलः तत्र दृष्टान्तः स्वाप्ने यथा स्वप्नावस्थायां वस्तुत्वेन पश्यन्नपि स्वप्नादुत्थाय तदेव स्वाप्नं विषयं हस्त्यश्वरथादिकं तिरोदधानं नश्यन्तं वस्तुतया न मन्यते तद्वत् ॥ ३२ ॥

---

भाषा टीका ।

जिस पुरुष का चित्त मेरे सुन्दर रूप के ध्यान होनेसे मेरे में लगा है उसको गुणमय बहुत इन्द्रियों के संयम करने से क्या प्रयोजन होगा तैसेही उसकी इन्द्रियों का विक्षेप होने से भी क्या दोष है जैसे कि मेघोंके रहने से या जाने से सूर्यको कुछ दोष गुण नहीं होता है ॥ २५ ॥

जैसे आकाश जो है सो वायु अग्नि जल पृथिवी इन के आने जाने से भी उनके गुणोंमें नहीं लिप्त होता है तैसे अक्षर आत्मस्वरूपको अहङ्कार वाले के होने वाले मलों से कुछ दोष नहीं होता है क्यों कि वह अलग है ॥ २६ ॥

ऐसा होनेपर भी माया से रचित जो विषय हैं उनका संग पहिलेही छोड देना चाहिये जब तक कि मेरी दृढभक्ति से रजोगुण का मलम छूट न जावे तब तक खोटे संगो से वर्जित रहना चाहिये ॥ २७ ॥

जिस तरह से रोगको अच्छे चिकित्सामे नाश न किया हो तो वह रोग फिर फिर पैदा होकर उसको दुखी करता है इसी प्रकार से कुयोगि पुरुषका मन संगों में लगा जो मन सो कषाय कर्मों के पक्व न होने से सब वखत दुःख देता रहता है ॥ २८ ॥

जो पहिले जन्म के योग मे भ्रष्ट भये हैं उनको देवतों ने विघ्न करने को स्त्री पुत्रादिको मे लगा दिया है ऐसे योगि विघ्नों से युक्त हो गये हैं तो भी वे लोग पूर्व जन्म के योगाभ्यास के बल से फिर भी योग ही मे युक्त होते हैं कर्म में नहीं लगते हैं ॥ २९ ॥

मनुष्य कर्म को करता है आप भी किया जाता है किसी परमात्मा से प्रेरित होकर ऐसा करता रहता है जन्मभर उसी देह मे रहने पर भी विद्वान् पुरुष तो

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनीटिप्पणी ।

मिति न बन्धमोक्षयोरात्मधर्मत्वम् । अतो बन्धमोक्षयोर्योगेन-दृश्याभावादात्मनो विकार इत्यर्थः ॥ ३३ ॥

एतदेव मुक्तेरारोपिताज्ञाननिवृत्तिरूपत्वमेव । मे मनुमन्व-च्छिन्नी समीक्षा सम्यग् ज्ञानं आत्मविद्येति फलितोऽर्थस्तस्या एव सम्यग् ज्ञानत्वात् मूले पुरुषस्य जीवस्य या बुद्धिः स्वरूपभूतं ज्ञानं तस्यास्तमिस्रमावरकमज्ञानं इत्यास तु स्वरूपं करोति ॥ ३४ ॥

प्रपञ्चयति चतुर्विधक्रियाफलाभावेन विवृणोति एतच्छब्द-व्यापरोक्षाधीत्वे समीपतरवर्तित्वेनदो रूपमिति मानम् । भगि-शब्दः शक्तिविशेषः । महानुभूतिरिति महती देशकालपरिच्छेदशून्या अनुभूतिः स्वरूपज्ञानं यस्य स तथा । कालपरि-च्छेद एव जन्मान्तराहित्वविपरिणामापक्षयनाशाः सम्भवन्ति न तु तदभावे तथा देशपरिच्छेद एव वृद्धिः सम्भवति न तु तदभावे इति तथा व्याख्यातम् । एकः सजातीयभेदशून्यः अद्वितीयो विजातीयभेदशून्यः इति पदद्वयं कर्तृपदद्वयेन वा भगवान् विकारनिमित्तत्वाभ्यस्य सजातीयस्य विजातीयस्य चाभावात् कोऽपि विकार उत्पत्तावस्तीति दर्शयति । श्रुतिविषयस्य श्रुतिप्रकाश्यत्वं । मनोगत्वेन अनन्तत्वादवि-षयत्वेन । तथा च अनन्तत्वेनाविषयत्वे प्रमाणं श्रुतिः अप्रा-प्यावधिमनुपलभ्य भान्ता वाच उपनिषदो मनसा सह यतो ब्रह्मणः आकाशाभिवर्तन्त इति वागाद्यविषयं नाहित्यर्थः । तत्र अवि-षयत्वे । तथा च वागादीनां तत्प्रेरितत्वे प्रमाणं श्रुतिः तल-वकारोपनिषत् । कश्चित् प्रतिपन्नो ब्रह्मजिज्ञासुः जडानां मन-आदीनां प्रवृत्त्यन्यथानुपपत्त्या तत् प्रवर्तकपरमात्मबुभुत्सया पृच्छति । केनेति मनः कर्तृ केन देवेन प्रेषितं सत् इषितम् इष्टं स्वस्वसाधुविषयं प्रति पतति गच्छति मनसः करणत्वा-दस्वत्वं तत् प्रेरकेण केनचिज्जीवभिन्नेन कर्त्रा भाव्यं निगृह्य-तापि जीवेन निग्रहीतुमशक्यत्वात् मनोवशोऽन्येषामयञ्च देवा इत्युक्तेः । इषितमितीडागमश्छान्दसः । प्रथमः पञ्चानां मध्ये मुख्यः प्राणः केन कर्त्रा युक्तः प्रेरितः सन् प्रैति याति स्वव्यापारं करोतीत्यर्थः इमां लौकिकीं च वाचं केनेषितां प्रेरितां वदन्ति जीवा इति शेषः । चक्षुः श्रोत्रमिति प्राणवक्तृत्वाद्द्वन्द्व-कवद्भावः । सम्बुद्धौ भो देशिक ! को देवो युनक्ति नियुङ्क्ते प्रेरयतीत्यर्थः । इदमुपलक्षणं शेषकरणानाम् । एवं शिष्येणानुयुक्त आचार्य उवाचेति गम्यं श्रोत्रस्येति अतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्तीति आचार्यः श्रुतिशेषो ज्ञेयः । यत् यः श्रोत्रस्य श्रोत्रं शब्दावभासकत्वशक्तिप्रदः मनसो मनः मननशक्तिप्रदः वाचो वागिन्द्रियस्य वाक् शब्दो-च्चारणशक्तिप्रदः । वाचमित्यपि पाठोऽर्थः स एव प्राणस्य प्राणः प्राणनशक्तिप्रदः चक्षुषश्चक्षुः दर्शनशक्तिप्रदः स श्रोत्रा-दीनां नियन्ता त्वया पृष्टो देव इत्यन्वयः । धीराः धीमन्तः श्रोत्रादि-प्रेरकत्वेन परमात्मानं जानन्तः अस्माल्लोकाल्लौकिकदेहात् प्रेत्योत्-क्रमणं विधाय अतिमुच्य लिङ्गदेहं च हित्वा अमृता मुक्ता भवन्तीत्यर्थः ॥ ३५ ॥

अद्वितीयत्वं ज्ञानिनां भेदस्फूर्तिराहित्यमुपपादयितुम् उप-पत्त्या युक्त्या साधयितुं विकल्पो भेदः । नाशयो नास्तीति आत्मन एवाश्रयत्वाद्विषयत्वेऽप्युपेते यथोक्तम् आश्रयत्वविषयत्व-भागिनी निर्विभागचितिरेव केवलेति इह ब्रह्मणि किञ्चन नाना भेदो नास्ति अपवादार्थं कल्पिताकारपरां श्रुतिमाह इन्द्र इति । इन्द्रः परमेश्वरः मायाभिः कल्पितोपाधिभिः पुरुरूपः देवनरादिबहुरूपः ईयते प्रतीयते वस्तुत एकमेवाद्वैतमित्यर्थः । अस्येन्द्रस्य दशसंख्या इन्द्रियलक्षणा विषयाहरणाश्वस्य प्राणि-भेदात् शता शतसंख्याश्च युक्ताः संयुक्ताः प्रेरिता अद्वयत्वेन स्वतः प्रवृत्त्यसम्भवात् अधीनाः सन्तीत्यर्थः यथोक्तं शाङ्करशा-रीरके ये हि परविद्याधिकारे केचित् प्रपञ्चा उच्यन्ते यथा युक्ता ह्यस्य हरयः शता दशेत्ययं वै हरयो ऽयं वै दश च शतानि सहस्राणि बहूनि चानन्तानि चेत्येवमादयः ते भवन्तु प्रविलयार्थाः तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमित्युपसं-हारात् इति । व्याख्यातञ्च तट्टीकायां रत्नप्रभायाम् । अस्य जीवमात्रं प्राप्तस्येश्वरस्य दश हरयो विषयाहरणाद्दशेन्द्रियाणि प्राणिभेदापेक्षया शतानि सहस्राणि च तेषामीश्वराद्भेदमाश-ङ्क्याह । अयमिति । ईश्वर एव हरय इत्यर्थ इति । इत्यभेदा-भिप्रेत्ययं श्रुतिः भेदस्याभावात्वतत्त्वे उदाहृतेति ज्ञेयम् ॥ ३६ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आत्मा न गृह्यते पूर्वमिव स्थूलोऽहमित्यादि देहाकारो न गृह्यते नापि विसृज्यः नच सर्गसंहारादिभाक् स्यात् ॥ ३३ ॥

ननु संनिधत्ते सम्यक् निधत्ते तमो नाशयत्यापयति किन्तु इत्यादेष मे समीक्षा मद्विषयज्ञानम् ॥ ३४ ॥

परिशुद्धो जीवात्मा महानुभूतिः अपरिच्छिन्नधर्मभूतज्ञानः सकलानुभूतिः सर्वार्थगोचरज्ञानवान् एकः अनेकात्मकत्वाभावा-देकः अद्वितीयः अत एव यवस्मां अभिरामः देवमनुष्यादिशब्दा-नामविषयतया अद्विरतिहेतुभूतः ईदृता चेष्टमानेन वागरव: वागिन्द्रियाणि प्राणाश्च चरन्ति व्याप्रियन्ते ॥ ३५ ॥

केवले शरीररहिते आत्मनि विकल्पः देवत्वमनुष्यत्वाद्याकारो वा तदधात्मनः अथवास्य पक्षत्वमलश्यो नास्ति तमात्मानं नाना-दृते प्रमाणादने न पश्यतीत्यर्थः ॥ ३६ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च पूर्वमिति गुणकर्मचित्रं सत्त्वादिगुणानुगुणैः कर्मभिः पुण्यापुण्यात्मकैर्मिश्रं नानाविधमङ्ग देवमनुष्यादिशरीरमज्ञानं च देहात्माभिमानरूपं पूर्वं ज्ञानोत्पत्तेः प्रागात्मनि अविविक्तं यथा तथा गृहीतं तत्पुनर्ज्ञानोदयानन्तरमीक्षया मद्विषयज्ञानेन निवर्तते निष्पत्तिपर्यन्तेक्षया निवर्तते इत्यर्थः । आत्मा न गृह्यते पूर्वमिव स्थूलोऽहमित्यादिदेहाकारेण न गृह्यते नापि विसृज्यः नच संहारादिभाक् स्यात् न च पुनरावर्तते इति श्रुतेरिति भावः ॥ ३३ ॥

ईक्षाया अज्ञाननिवर्तकत्वं दृष्टान्तेन प्रपञ्चयति । यथाहीति । तमोऽन्धकारादिहन्यादेन ननु सान्निध्यं सान्निधापयति नाव-ष्टापयति एवं सती विद्यमाना मे समीक्षा मद्विषयं ज्ञानं पुरुषस्य

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

बुद्धेरन्यमिव स्थूलोऽहमित्यादिबुद्धिमित्यर्थः । तन्मूलां संसृतिं च हन्यादिति भावः ॥ ३४ ॥

तद्विघाते कथंभूतोऽवतिष्ठत आत्मेत्यत्राह । एष इति । एष परिशुद्धो जीवात्मा स्वयंज्योतिः स्वयंप्रकाशोऽजः जन्मादिविकाररहितोऽप्रमेयः प्रत्यक्षादिभिः प्रमातुमशक्यः महानुभूतिरपरिच्छिन्नधर्मभूतज्ञानः सकलानुभूतिः सर्वार्थगोचरज्ञानवान् एकः अनेकद्रव्यात्मकत्वाभावादेकः अद्वितीयः प्राकृतदेहरहितः अत एव वचसां विरामः देवमनुष्यादिशब्दानामविषयतया तन्निवृत्तिहेतुभूतः येनेषिताः प्रेरिताश्चोदिता वागसवश्चरन्ति व्याप्रियन्ते स एष इति पूर्ववदन्वयप्रदर्शनम् ॥ ३५ ॥

छित्त्वात्मसम्मोहमज्ञानमात्मनि तमिस्रं पुरुषस्य बुद्धेरित्यादौ संसृतिनिदानतया व्याउपवर्णितः आत्मसम्मोहः कियानित्यतस्तं निष्कृष्य दर्शयति । एतावानिति । अवस्तुनः प्रकृत्यवस्तुनः देहगतः विकल्पः देवाद्याकारः यस्यात्मनो नास्ति तं स्वमात्मानमृते विना विहाय विस्मृत्येति यावत्केवले ज्ञानैकस्वरूपे तस्मिन्नात्मनि विकल्पः देवोऽहं मनुष्योऽहं कृशोऽहमित्याऽदिरूपोऽभिमान एव इति यत् ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु जगत्स्वातन्त्र्यप्रतीतौ किंकारणमित्याशङ्क्याज्ञानं कारणमित्याशयेनाह । पूर्वमिति । ज्ञानोदयात्पूर्वमात्मनि परमात्मनि अज्ञानं गृहीतं परमात्मस्वरूपविषयत्वेनाज्ञानमार्जितं जीवेनेति शेषः । न केवलं तत्स्वरूपविषयमेवेत्यत उक्तं गुणकर्मचित्रमिति भगवतो गुणविषयत्वेन कर्मविषयत्वेन च चित्रं नानाविधम् ज्ञानसद्भावे प्रमाणमाह । अविविक्तमिति । एतमहं जानामीति विवेकशून्यं तन्वेतदज्ञाननिवृत्तौ का प्रतिपत्तीति तत्राह । अङ्गेति । अङ्गेत्यामन्त्रणेन भयं माकार्षीरित्याह पुनः पुनरीक्षया हरेः स्वरूपस्य गुणानां कर्मणां चाक्षोत्यक्षणोपासनाजनितेन तदज्ञानं निवर्तते पुनस्तदज्ञानं न गृह्णाति ज्ञानोदयानन्तरम् आत्मा परमात्मापि न विसृज्यः स्वस्वरूपसुखाविष्कारादिलक्षणापरोक्षीकृतो न परोक्षीभवति । तस्य जगत्स्वातन्त्र्यं च न प्रतीयेत इत्यर्थः—

अन्यैर्ज्ञातेऽपि चाज्ञाते न विशेषो हरेः कथञ्चित् ।
तेषामेव विशेषः स्यादज्ञानापगमेन तु ॥

इति वचनाज्जीवस्यैव विशेषो न हरेर्विशेष इति च ज्ञातव्यं ज्ञानार्थिनेति भावः ॥ ३३ ॥

मम साक्षात्कारेणाज्ञानं निवर्तते इत्युक्तं तत्र तेन मम कश्चन विशेषो नास्तीति समर्थितं सोदाहरणमाह । यथेति । हि शब्दः सादिसूचको यथा भानोः सूर्यस्य उदयो नृचक्षुषां तमो निहन्यात्तत् तमः संविधत्ते कमप्यतिशयं नाधत्ते एवं वैराग्यादिसाधनसामग्र्या निपुणा सती मे समीक्षा पुरुषस्य सर्वदा श्रीनारायणशरणं गतस्य बुद्धेस्तामिस्रं हन्यात् न तु मम कञ्चनविशेषं कुर्यात् ॥ ३४ ॥



बहुधा भूतपरमात्मस्वरूपस्यापि तव स्वरूपे कीदृशमित्युक्तवस्यान्तरं चोद्यं परिहरति । एष इति । एषोऽहं स्वयंज्योतिः स्वत एव पूर्णप्रकाशः अतः एवाजः अत एवाप्रमेयः महती अनुभूतिर्ज्ञानं यस्य स महानुभूतिः सर्वज्ञ इत्यर्थः । सकलानुभूतिः पूर्णसुखानुभव एकः ज्ञानानन्दादिगुणाभिन्नत्वात्स्वगतभेदरहितः अद्वितीयः सर्वोत्तमः अप्रमेयत्वाद्वेदादिवाचामगोचरः वाचामगोचरश्चेत्तर्हि यज्ञाप्तं कथं वदिष्यसीति तत्राह । येनेति । वाग्वचना वैदिकलौकिकसर्ववाग्व्यवहारा येनेरिताः वर्तन्त इत्यनेन भगवदनुगृहीतवाग्व्यवहारविषयत्वेन तज्ज्ञानमुदेतीति ज्ञातव्यम्

ज्ञानानन्दाद्यभिन्नत्वादेकः सर्वोत्तमत्वतः ।
अद्वितीयो महाविष्णुः पूर्णत्वात्पुरुषः स्मृतः ॥

इति वचनात् ॥ ३५ ॥

एवं ज्ञानं ज्ञेयस्वरूपं निरूप्य मिथ्याज्ञानस्वरूपं तत्कारणमज्ञानस्वरूपं च विविच्य निरूपयति । एतावानिति । वस्तिकल्पः प्रमाणविरुद्धं कल्पनं जीवस्वातन्त्र्यं परमात्मास्वातन्त्र्यं जीवपरामैक्यादिविषयोऽयम् एतावानात्मसम्मोहः मनोभ्रमः भ्रमत्वं चाधकज्ञानानिवर्त्यं तत्कथमत्राह । केवल इति । आत्मा जीवः केवले स्वतन्त्रे प्रभूते नित्यमुक्ते परमात्मनि स्थितं महाधारतया स्थितं स्वमात्मानं स्वस्वभावं कदाचिदनपनोद्यस्वातन्त्र्यमचलं स्थिरं न पश्यति । यद्यावदात्मनो न निवर्तेत इत्यतः स्वस्वभावाज्ञानं निमित्तं तन्निवृत्तौ भ्रमो निवर्तेत इति निश्चीयते "एतावानात्मसम्मोहो यद्विकल्पस्य कल्पनं यत्परात्माभयात् जीवाभिन्नत्वेन न पश्यती"ति वचनात् नाद्वैतज्ञानेन भेदभ्रमो निवर्तेत इत्यर्थः ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नन्वेवं गुणकर्मणोः प्रहणात्यागनक्षणपदार्थो विकारि सम्भाव्येत अज्ञानमात्रतः सम्बन्धात्तयोरित्याह । पूर्वमिति ॥ ३३ ॥

तस्य च मद्दर्शनस्य प्रकाशो मदनुग्रहेणाज्ञाननाशोपात् स्वत एव भवतीति दृष्टान्तेनाह । यथा हीति । ननु पूर्ववत् यत्तेजोऽयलक्षणं सद्वस्तु तत्पुनर्विधत्त इत्यर्थः । मे समीक्षा कृपादृष्टिः ॥ ३४ ॥

ततस्तत्पदार्थस्यापि प्रकाशकतस्तत्सर्वप्रकाशमात्मसाक्षात्कारस्य स्वयमेव स्यादित्याह । एष इति । तद्विज्ञाने सर्वविज्ञानात् सकलानुभूतिः तत्र हेतुर्महानुभूतिरिति ॥ ३५ ॥

ननु भ्रम एव ब्रह्मणः शुद्धं तत्पदार्थमाश्रित्य द्वैतं कल्पयति यथोक्तं "आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवले"ति तर्हि कथं भ्रममयोपाधिकस्येश्वराख्यस्य ब्रह्मण एव तदानुग्रहेणान्यस्य भ्रमोऽपयास्यतीति कश्चिद्विप्रतिपद्यते तत्र किमुच्यते तत्राह । एतावानिति । विविधं कल्प्यते येन सविकल्पो भ्रमः यतः केवले इतरसम्बन्धसम्भावनारहितस्यानलस्यो न विद्यते स्वमात्मानं जीवमृते यस्य भ्रमस्यावलम्बो न विद्यते तदुक्तं वैष्णवे—

ह्लादिनी सन्धिनी संवित्त्वय्येका सर्वसंस्थितौ ।
ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते ॥

इति सर्वज्ञसूक्तं च—

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

केचिन्मीमांसकाः । बाधाऽयोगाभिरूप्यत्वासम्भवात् वेदान्तार्थानां तत्त्वमसि ब्रह्माहमस्मीत्यादि वेदान्तार्थानां क्रतुयंगस्तदर्थस्तदङ्गभूतः कर्त्ता यजमानस्तत्प्रतिपादनपरत्वेन तत्प्रशंसापरत्वेनार्थवादत्वात् गुणवादरूपार्थवादत्वात् । यथादित्यो यूप इत्यत्र यूपस्यादित्यत्वं प्रत्यक्षबाधितं तदोज्ज्वलत्वबहुलितोहकत्वादिगुणमादाय प्रशंसामात्रं यूपस्य तथा जीवस्येश्वरत्वं प्रत्यक्षबाधितं कर्मवश्यत्वात् किन्तु ब्रह्मादि ज्ञातृत्वगुणमादाय तस्येश्वरत्वेन स्तुतिमात्रं क्रियत इत्यर्थः । तन्मतं मीमांसकमतं नाम ब्राह्मणादि रूपं द्विपदत्वादि । अत्र द्वैतस्य सत्यत्वप्रतिपादने । अयं ब्रह्मात्मवादः । अर्थवादः यजमानस्तुतिमात्रम् । तादृशप्रतीतेः पण्डितमानिप्रतियोगित्वे हेतुमाह यत इति । विनाऽन्वयेन विध्येकवाक्यत्वप्रयोजनासम्भवादित्यर्थः । तथाहि । वेदान्तानामर्थवादत्वप्रतीतेरपार्थत्वं दर्शयति । न तावदिति । यथा वायुर्वै क्षेपिष्ठा देवता वायुरेवैनं भूतिं गमयतीत्याद्यर्थवादानां यतो वायुः प्रशस्तोऽतो वायव्यं श्वेतमालभेतेत्यनेन प्रकारेण विध्येकवाक्यत्वं न तथा वेदान्तवाक्यानां विध्येकवाक्यत्वं सम्भवति तादृशविध्यभावात् यतो विध्येकवाक्यत्वादर्थवादत्वं स्यात् सङ्गच्छेतेति तथा प्रतीतेरपार्थत्वं दर्शितम् । न चाग्नेयोऽष्टाकपालो भवतीत्येव विधिः कल्प्यः परमानन्दप्रतिपादनस्य तुच्छकर्मविध्यङ्गत्वानौचित्यादित्याह । न चेति । बाधितत्वाभिमतत्वात् ॥ ३७ ॥

सपरिकरत्वं परिकरोऽत्र बाधकस्य निरासः साधकस्य कथनं तत् सहितम् । तन्निष्ठस्य ज्ञानयोगनिष्ठस्य अन्तरा ज्ञाननिर्वाहमध्य एव तत्र तेषूपसर्गेषु । प्रतीकारो दूरीकरणोपायः ॥ ३८ ॥

सोमसूर्यादीत्यादिनाऽग्न्यादिधारणापरिग्रहः सन्तापशीत्यादीनित्यादिना वनाग्न्यादीनां ध्वंसस्तम्भनपरिग्रहः । तदुक्तं धारणासिद्धिप्रसङ्गे अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुरिति ॥ ३९ ॥

योगेश्वरा भक्तास्तेषामनुवृत्त्यानुगत्येन ॥ ४० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पञ्चवर्णा पञ्चभूतारब्धत्वात्पञ्चविधं देवादिनामरूपेण ग्राह्यं शरीरम् अर्थेनाप्यर्थवादोऽयम् अर्थः स्वर्गादिपुरुषार्थः शरीरं च भोग्यविषयैः सह अबाधितं नित्यमिति द्वयमित्यर्थः । शरीरनित्यत्वं भोगनित्यत्वं चार्थवादमात्रं वस्तुतस्तदुभयमपि न नित्यमित्यर्थः ॥ ३७—३९ ॥

योगेश्वरानुवृत्त्या योगनिष्ठसदाचारानुवृत्त्या ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथा देवमनुष्यादिनामरूपैर्ग्राह्यं पञ्चवर्णं पञ्चभूतारब्धत्वात् पञ्चविधं शरीरं ऽपर्थेनापि ऽपर्थेन सह बाधितं नित्यमिति यत्कल्पनानात्मसम्मोह इति सम्बन्धः विविधोऽर्थो ऽपर्थः स्वर्गादिपुरुषार्थः भोग्यविषयैः सह शरीरं नित्यमिति तथा देवोऽहं कश्चोऽहमित्येतद्द्वयं पण्डितमात्मानं मन्यमानानामर्थवादस्तन्मात्रं वस्तुत उभयमपि भ्रान्तिरूपमित्यर्थः ॥ ३७ ॥

निवर्तते तत्पुनरीक्षयैवेति निष्पत्तिपर्यन्तेक्षया नापि विसृज्य इत्युक्तं तत्राधिव्याध्यादिभिर्विघ्नैर्योगानिष्पत्तिमाशङ्क्य तत्प्रतिक्रियामुपदिशति । योगिन इति । न पक्वः परिनिष्पन्नो योगोऽस्य तस्य योगिनः योगं युञ्जतः कुर्वतः सतः कायो देहः उत्थितैरुत्पन्नैरुपसर्गैरुपद्रवैः रोगादिभिर्विहन्येत तत्रायं विधिः प्रतीकारो विहितः ॥ ३८ ॥

योगधारणया सोमसूर्यादिधारणया कांश्चित्सन्तापशीत्यादीन् आसनैर्वायुधारणाभिर्वातादिरोगान् तपोमन्त्रौषधैः पापग्रहसर्पादिकृतान् ॥ ३९ ॥

ममानुध्यानादिभिः कामादीन् योगीश्वरानुवृत्त्या योगनिष्ठसदाचारानुवृत्त्या दम्भादीन् इत्थं शुभैरुपायैरशुभदानुपसर्गान् हन्यात् एवमुपसर्गान्निहत्य योगं निष्पादयेदिति भावः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतोऽपि पञ्चविधभेदभ्रमः अद्वैतज्ञानेन निवर्तत इत्युपदेशो न विदुषां परिषदि स्वारस्यमाधत्त इति भावेनाह । नामाकृतिभिरिति । नामाकृतिमितैर्नामरूपैर्ग्राह्यं द्वयं पञ्चवर्णं पञ्चभूतात्मकप्रपञ्चभेदात्मनावर्तनीयं जगत्सदबाधितमद्वैतज्ञानबाध्यं न भवति जगदबाधितमित्यर्थः अपार्थो वादो न भवति किन्त्वर्थवादः यथार्थवाद एव कुतः सूरयो जीवं परमात्मानं च द्वयं स्थिरस्वरूपाविशिष्टं विन्दन्ते लभन्त इति भावः । अनेन जगत् ज्ञानबाध्यमिति वदन्तोऽपण्डिताः अन्ये तु पण्डिता इत्युक्तं भवति—

पञ्चभूतात्मकं विश्वं भ्रान्तिसिद्धमपण्डिताः ।
वदन्ति पण्डितास्त्वद्धा जगदाहुरबाधितम् ॥
प्रवाहरूपेण सदा विष्णोरिच्छावशोदितः ।

इति वचनात् ॥ ३७ ॥

पूर्वमन्तरायहतयोगाः कुयोगिनो जन्मान्तरेऽपि योगमभ्यस्यन्तीत्युक्तमधुना तस्मिन् जन्मन्येव प्राप्तयोगान्तरायपरिहारं वक्तुमाह । योगिन इति । काम्ये योगाभ्याससंविहितसमये प्रभातादिकालेषु योगं युञ्जत उपसर्गरुपद्रवैर्विघ्नैर्बाध्यमानः ॥ ३८ ॥

कोऽयमिति तमाह । योगधारणयेति । योगधारणया यमनियमादीनामावर्तनेन ॥ ३९ ॥

मनुध्यानेन तत्तदन्तरायविहननपरिहारसमर्थहरिस्मरणेन नामसंकीर्तनादिभिरित्यनेनाधिकारिणः कालविशेषांश्च सूचयति । अशुभान्विघ्नान् ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ननु द्वैतं यदि स्वस्वरूपे आरोपितं स्यात् तदैवेश्वरानुग्रहेण तज्ज्ञाने सति तत्र मिथ्या ज्ञायेत नत्वेवं किन्तु तण्डुलपाकवत्संयुक्तमेव ततः कथं ज्ञानमात्रेणापगच्छेदित्येक आक्षिपन्ति तथा जीवेनाज्ञानारोपितत्वेऽपि वाणिज्यादिवस्यरजतवद्द्वैतं नाम वस्तु पृथगाहित क्रियनादित एव पूर्वपूर्वभ्रमजमुत्तरत्रारोप्यते

केचिद्देहमिमं धीराः सुकल्पं वयसि स्थिरम् ।
विधाय विविधोपायैरथ युञ्जन्ति सिद्धये ॥ ४१ ॥
न हि तत्कुशलादृत्यं तदायासो ह्यपार्थकः ।
अन्तवत्त्वाच्छरीरस्य फलस्येव वनस्पतेः ॥ ४२ ॥
योगं निषेवतो नित्यं कायश्चेत्कल्पतामियात् ।
तच्छ्रद्दध्यान्न मतिमान् योगमुत्सृज्य मत्परः ॥ ४३ ॥
योगचर्यामिमां योगी विचरन्मदपाश्रयः ।
नान्तरायैर्विहन्येत निःस्पृहः स्वसुखानुभूः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे परमार्थनिर्णयोनाम
अष्टाविंशोऽध्यायः ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गुणचिन्तनेन नामसंकीर्तनादिभिः वाग्ज्ञानपशब्दोच्चारणादीन् योगेश्वरानुवृत्त्या अधृतिसङ्गादीन् शनैरुद्वेगं न कुर्यादित्यर्थः ॥४०॥

———

भाषा टीका ।

जो कि देहादिक नाम रूप से ग्रहण किया जाता है पांच तत्त्व का बना है वह भी सत्य ही आत्मासा है इस प्रकार का जो व्यर्थ से भी अर्थ वाद रूप भेद है वह केवल अपने को पंडित मान ने वालोंका है ॥ ३७ ॥

जो पुरुष योग में सिद्ध नहीं है उसका शरीर उसी में से उत्पन्न होने वाले रोगादिकों से नष्ट होजायगा तो योग में विघ्न होगा तिस के लिये यह विधि विधान किया है ॥ ३८ ॥

तिस में शीतोष्णादि दोषों को सूर्यादिक की धारणा से रोगों को आसन धारणादिकों से दूर करै पाप ग्रह सर्पादिक दोषों को तप मन्त्र औषधों से नाश करै ॥ ३९ ॥

कामादिक दोषों को मेरे नाम संकीर्तन ध्यानादिकों से नाश करै अथवा दम्भादि दोषों को जो कि अशुभ दायक है उनको योगेश्वरों के सेवन कर के नाश करै ॥ ४० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्येतु देहसिध्यर्थमेवैतत्सर्वं कुर्वन्ति । तद्दूषयति । केचित्पुनरेतैरन्यैश्चोपायैर्देहमेव सुकल्पं जरारोगादिरहितं वयसि तारुण्ये स्थिरं च कृत्वा अद्भुतपरकायप्रवेशादिसिद्धये तत्तद्धारणारूपं योगं युञ्जन्ति न तु ज्ञाननिष्ठारूपम् ॥ ४१ ॥

कुशलैः प्राज्ञैरादरणीयं न भवति । वनस्पतिवद्दारमैवस्थायी शरीरं तु फलवन्नश्वरमित्यर्थः ॥ ४२ ॥

ननु कथंचित् समाध्युक्तत्वेनापि प्राणायामादियोगे क्रियमाणे जरारोगाद्यभावो दृश्यते सत्यम् तथापि समाधिमुत्सृज्य न तत्र सज्जेतेत्याह । योगमिति । तत् तां देहसिद्धिं न श्रद्दध्यान्न विश्वसेत् ॥ ४३ ॥

तदेवं विघ्नप्रतीकारैर्योगं कुर्यादित्युक्तं मच्छरणस्य तु न विघ्नशङ्कापीत्याह । योगचर्यामिति । विचरन् स्वसुखं अनुभवतु भूर्निर्यस्य सः स्पृहा मूला हि विघ्नाः सा च मदपाश्रयस्य निवर्ततेऽतोऽन्तरायैर्विहन्तः स्वानन्दपूर्णो भवतीति ॥ ४४ ॥

समाहृत्य स्वयोगं तु भगवन्तोपनिषद्रसम् ।
सख्ये मुख्यतमां भक्तिं मुक्तौ पुनरुपादिशत् ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टाविंशोऽध्यायः ॥ २८ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

अन्ये सकामा एतत् सोमसूर्यादिधारणाम । तद्देहसिद्धिप्रयोजनं दूषयति द्वाभ्यामिति चपः ॥ ४१ ॥

मूर्ख तादृति देहसिद्धिपरगाम ॥ ४२ ॥

तत्र देहसिद्धौ कल्पतां जरारोगादिरहितताम् ॥ ४३ ॥

मच्छरणस्य मद्भक्त्यैकनिष्ठस्य । सा च स्पृहा । अतः स्पृहाराहित्यात् । समाहृत्य संक्षेपेण वर्णयित्वा ॥ ४४ ॥

येनाज्ञानं विनश्येत विना यत्नं हि देहिनाम् ।
तन्नामकीर्तनं येन दत्तं गौरं भजामि तम् ॥

इति श्रीमद्भागवते एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
अष्टाविंशोऽध्यायः ॥ २८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

केचिदिति। वयसि स्थितं वृद्धशरीरमपि मन्त्रौषधादिभिः पटुतरं विधाय युञ्जन्ति ॥ ४१ ॥

नहि तत्कुशलं तत्र कुशलं न तत्कुशला इति पाठे तत्र न कुशला इत्यर्थः। यदायासः देहस्थितिकरणायासः अनर्थकः निष्फलः ॥ ४२ ॥

करणपाटवसद्भावेऽप्यायुषो मन्त्रौषधादिभिः संपाद्यत्वाभावात् मद्देहदृढीकरणे कालक्षेपमपहाय तस्मिन्नपि कालेऽपि योगः कर्तव्य इत्यर्थः ॥ ४३ ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धव्याख्याने
श्रीसुदर्शनसूरिकृतशुकपक्षीये
अष्टाविंशोऽध्यायः ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अन्ये तु देहसिद्ध्यर्थमेवैवं कुर्वन्ति तद्दूषयति। केचिदिति। वयसि स्थितं वृद्धशरीरमपि मन्त्रौषधादिविविधोपायैः सुकल्पं पटुतरं विधाय सिद्धये कायसिद्धयेऽन्तर्धानपरकायप्रवेशादिसिद्धये योगं युञ्जन्तीति यत् ॥ ४१ ॥

तत्कुशलैः प्राज्ञैर्नाहत्यं नादरणीयं कुतः यतस्तदायासः देहदृढीकरणायासः अपार्थको विफलः कुतः अन्तवत्त्वाच्छरीरस्य करणपाटवसद्भावेऽप्यायुषो मन्त्रौषधादिभिः सम्पाद्यत्वाभावात् अतो देहदृढीकरणकालक्षेपमपहाय तस्मिन्नपि काले योगः कर्तव्य इति भावः। फलस्येव वनस्पतेरिति फलमत्र दृष्टान्तः वनस्पतेरित्यनेन दार्ष्टान्तिकस्य आत्मनो नित्यत्वसूचनार्थम् ॥ ४२ ॥

कश्चित्समाध्युक्तत्वेनापि प्राणायामादिषु क्रियमाणेषु जरारोगाद्यभावो दृश्यते सत्य तथापि समाधिमुत्सृज्य न तत्र सज्जेतेत्याह। योगमिति। कल्पतां पटुतरत्वमवाप्याप्यनुपात्तां देहस्थितिम् न श्रद्दध्यात् विश्वसेत् ॥ ४३ ॥

मत्प्रपन्नस्य विघ्नशङ्केव नास्तीत्याह। योगचर्यामिति। विचरन्मदर्थमनुपाश्रयः अहमेवोपाश्रयः शरणं यस्य सः अत एवाणिमादिषु निःस्पृहः स्वसुखं मदेकान्तैकरसस्वात्मसुखमनुभवतीति तथा अन्तरायैर्न विहन्येत ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अष्टाविंशोऽध्यायः ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

रसायनादिनानाविधोपायैः शरीरस्य नाशाद्यन्तरायपरिहारस्य सुखकत्वेन निःश्रेयससाधनत्वाभावार्थं योगप्रारम्भणादिविधानमाह। केचिदिति। केचिदविवेकिनः परेण भ्रान्त्या सुकल्पमिन्द्रियसामर्थ्योपेतं वयसि स्थितं तारुण्यवयसोपेतम् अत शरीरस्य चिरस्थायित्वानन्तरं योगसिद्धये युञ्जन्ति मत इत्यन्वयः ॥ ४१ ॥

तेषामविवेकित्वं कुत इति तत्राह। नहीति। तदायासः तस्य देहस्य पोषणायासः अपार्थकत्वमाह। अन्तवत्त्वादिति ॥ ४२ ॥

योगस्य शरीररक्षणयोग्यत्वाभावात्तदायासस्य तत्फलत्वात्तु वैयर्थ्यं शरीररक्षणायासस्येत्याशङ्क्याह। योगमिति। नित्यं योगं भगवद्ध्यानलक्षणं रसायनं निषेवतः सेवमानस्य पुंसः अद्यापि कायः कल्पतां समर्थत्वमियात्प्राप्नोति तर्हि स मतिमान् योगमेव श्रद्दध्यात् न योगमुत्सृज्यान्यत्र रसायनादौ श्रद्धां न कुर्यादित्यन्वयः। मत्पर इत्यनेन मतिमत्त्वं विवृतम्। अनेन योगस्यापि शरीररक्षणफलत्वात् रसायनादौ प्रवर्तमाना अविवेकिनोऽसौ मतिर्मद्भक्तियोग एवाऽऽयमनीय इति सिद्धम् ॥ ४३ ॥

अतः युक्तयोगान्तरायपरिहारमाचरन्नेव योगपारं गमिष्यतीति भावेनाह। योगचर्यामिति। स्वसुखं स्वस्वरूपसुखमनुभवतीति स्वसुखानुभूतिरित्यनेन योगः सर्वोपायेनात्मपुरुषार्थसाधनमित्युक्तं भवति ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टाविंशोऽध्यायः ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
अष्टाविंशोऽध्यायः ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

केचित्पुनर्विविधोपायैरेतैरन्यैश्चोपायैर्देहमेव सुकल्पं जरारोगादिरहितं वयसि तारुण्ये स्थिरं च कृत्वा अन्तर्धानपरकायप्रवेशादिसिद्धये तत्कारणरूपयोगं युञ्जन्ति नतु ज्ञाननिष्ठारूपम् ॥ ४१ ॥

कुशलैः प्राज्ञैरादरणीयं तन्न भवति वनस्पतिवदात्मैव स्थायी शरीरं तु फलवन्नश्वरमित्यर्थः ॥ ४२ ॥

तत् कायकल्पत्वम् ॥ ४३ ॥ ४४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
एकादशेऽष्टाविंशोऽयं सङ्गतः सङ्गतः सताम् ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

महाफलार्थमिमं योगं नश्वरं देहार्थं युञ्जतः पुरुषान् दूषयति केचिदिति। द्वाभ्याम्। केचिद्दुर्मेधसो विविधोपायैरिमं देहं यानादिनाशैर्बाधार्यं सुकल्पमिन्द्रियादिसामर्थ्योपेतं वयसि तारुण्ये स्थिरं विधाय तदनन्तरं सिद्धये परकायप्रवेशपरास्कन्दनाद्यभिज्ञानाद्यर्थं युञ्जन्ति तत्कारणरूपयोगं कुर्वन्ति ॥ ४१ ॥

तत्तेषां योगकरणं कुशलानां विवेकिनामादरणीयं न भवति हि यतः तदायासः नश्वरदेहार्थमायासः अपार्थकः तत्र हेतुः

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शरीरस्यानित्यत्वात् तत्र दृष्टान्तः वनस्पतेः फलस्येव वनस्पतिस्थानीय आत्मैवेत्यर्थः ॥ ४२ ॥

स्यादेतत्परमार्थार्थमपि योगं कुर्वतो यदि कदाचिद्योगप्रमादात् कायकल्पतादिः स्यात्तर्हि किं कुर्यादित्यत्राह । योगमिति योगमस्मद्ध्यानलक्षणं महारसायनं नित्यं निषेवतः पुंसो यदि कायः कल्पतां समर्थत्वमियात् प्राप्नुयात्तर्हि स मतिमान् योगमुत्सृज्य त्यक्त्वा कायकल्पत्वमेवफलं जातमिति न श्रद्दध्यात् मत्परः अहमेव परं फलं यस्य सः ॥ ४३ ॥

योगिनां योगान्तरायप्रतिकाराउक्त्वा प्रधानप्रतीकारमाहायोगचर्यामिति । इमामुक्तप्रकारां योगचर्यां विशेषेण चरन् अन्तरायैर्न विहन्येत यतो मदपाश्रयः मत्पराश्रय इतिपाठः एतेन भगवदाश्रयणमेव सर्वविघ्ननाशनमुक्तं तद्व्यतिरेकेण योगकुशलोऽपि साधनान्तरसम्पन्नोऽपि विघ्नाभिभूतः स्यादेव भगवदाश्रयत्वे गमकमाह । निस्पृहः चतुर्दशलोकवृत्तिसुखेषु स्पृहारहितस्तर्हि किं तस्य योगफलमत आह । स्वसुखानुभूः स्वस्य स्वयस्य स्वरूपगुणादिसुखमनुभवतीति तथा सः ब्रह्मानन्दानुभवितेत्यर्थः ॥ ४४ ॥

गुरुहार्यमिमं यो मे कृपयायोत्सयद्धरेः ।
चक्रावतार आचार्येतं श्रीनिम्बार्कमाश्रये ॥
इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टाविंशाध्यायार्थप्रकाशः ॥ २८ ॥

भाषा टीका ।

कोई धीर पुरुष तो वृद्ध होने पर भी इस देह को अनेक प्रकार के उपायों से सुंदर समर्थ युवा स्थिर कर के सिद्ध करने की युक्ति करते हैं ॥ ४१ ॥

यह सब बात अति निपुण पुरुषों के आदर के योग्य नहीं है क्योंकी शरीर तो कभी न कभी नाश होने ही वाला है तो यह परिश्रम व्यर्थ है जैसे कि वृक्ष में फल अनित्य हैं तैसे आत्मा का देह अनित्य है ॥ ४२ ॥

नित्य योग सेवन करने वाले पुरुषका शरीर यदि दृढ समर्थ भी होजावै तौभी बुद्धिमान् उस पर श्रद्धा न करै किंतु उस सिद्धि को छोड़ कर मेरे में ही मन को लगावै ॥ ४३ ॥

मेरे में भक्ति रूप योग के करने वाला तो निस्पृह होने से सब विघ्नों से रहित हो जावैगा और मेरे आश्रय से रहैगा तो उस के कोइ विघ्न न होंगे सो संसार में परमात्म सुख का अनुभव करताहुआ विचरता रहैगा ॥ ४४ ॥

इति भागवत एकादश स्कन्ध
अट्ठाईस में अध्याय की
भाषा टीका समाप्त ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे अष्टाविंशोऽध्यायः ॥ २८ ॥



## अथ एकोनत्रिंशोऽध्यायः।

———:*:———

। उद्धव उवाच ।

सुदुस्तरामिमां मन्ये योगचर्यामनात्मनः ।
यथाऽञ्जसा पुमान् सिध्येत्तन्मे ब्रूह्यञ्जसाऽच्युत ! ॥ १ ॥
प्रायशः पुण्डरीकाक्ष! युञ्जन्तो योगिनो मनः ।
विषीदन्त्यसमाधानान्मनोनिग्रहकर्शिताः ॥ २ ॥
अथात आनन्ददुघम्पदाम्बुजं हंसाः श्रयेरन्नरविन्दलोचन !।
सुखं नु विश्वेश्वरयोगकर्मभिस्त्वन्माययाऽमी विहता न मानिनः ॥ ३ ॥
किं चित्रमच्युत ! तवैतदशेषबन्धो ! दासेष्वनन्यशरणेषु यदात्मसात्त्वम् ।
योऽरोचयत् सह मृगैः स्वयमीश्वराणां श्रीमत्किरीटतटपीडितपादपीठः ॥ ४ ॥
तन्त्वाखिलात्मदयितेश्वरमाश्रितानां सर्वार्थदं सुकृतविद्विसृजेत को नु ।
को वा भजेत्किमपि विस्मृतयेऽनुभूत्यै किम्वा भवेन्न तव पादरजोजुषां नः ॥ ५ ॥
नैवोपयन्त्यपचितिं कवयस्तवेश! ब्रह्मायुषापि कृतमृद्धमुदः स्मरन्तः ।
योऽन्तर्बहिस्तनुभृतामशुभं विधुन्वन्नाचार्यचैत्यवपुषा स्वगतिं व्यनक्ति ॥६॥

श्रीशुक उवाच ॥

इत्युद्धवेनात्यनुरक्तचेतसा पृष्टो जगत्क्रीडनकः स्वशक्तिभिः ।
गृहीतमूर्तित्रय ईश्वरेश्वरो जगाद सप्रेम मनोहरस्मितः ॥ ७ ॥

श्रीभगवानुवाच ॥

हन्त ते कथयिष्यामि मम धर्मान् सुमङ्गलान् ।
यान् श्रद्धया चरन्मर्त्यो मृत्युं जयति दुर्जयम् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ऊनत्रिंशे तु यः पूर्वं विस्तरेण निरूपितः ।
भक्तियोगस्तमेवाऽऽह स्वभक्ताय समासतः ॥
अतिक्लेशमिवाऽऽश्रय योगस्यर्द्धिकसम्पदि ।
सुखोपायं पुनः कृष्णमुद्धवः परिपृच्छति ॥

अनात्मनोऽवशीकृतमनसः अञ्जसा अप्रयासेन यथा सिध्येत् तथा अञ्जसा सुसाध्यं यथा तथा मे ब्रूहि ॥ १ ॥
सुदुष्करतां प्रपञ्चयति । प्रायश इति । मनो युञ्जन्तो निगृह्णन्तो विषीदन्ति क्लिश्यन्ति कुतः असमाधानादनिग्रहात् कथं मनसो निग्रहे च कर्शिताः श्रान्ताः सन्तः ॥ २ ॥

यस्मादेवं केवलं विषीदन्ति । अथातः अत एव ये हंसाः सारासारविवेकचतुरास्ते आनन्ददुघं समस्तानन्दपरिपूरकं तव पदाम्बुजमेव सुखं यथा भवति तथा तु निश्चितं श्रयेरन् भजन्ते अमी तु त्वन्मायया विहताः के ये योगकर्मभिर्मानिनः सन्तो न श्रयन्ते यद्वा अमी त्वद्भक्तास्त्वन्मायया न विहता अत एव योगकर्मभिः कृत्वा मानिनो न भवन्ति । अन्ये तु त्वन्मायया मोहिताः सन्तो वयं योगज्ञा वयं कर्मकुशला इति केवलं गर्विता भवन्ति । न तु सुखभाज इत्यर्थः ॥ ३ ॥
त्वद्भक्तास्तु त्वत्प्रसादेन कृतार्था भवन्तीति नात्र चित्रमित्याह किमिति । अनन्यशरणेषु दासेषु तवाऽऽत्मसात्त्वं तदधीनत्वं यद्यथा

## श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्दगोपीवल्लिप्रभृतिभिस्त्वेतत्किञ्चित्कं नाश्चर्यमित्यर्थः । यतो यो भवान् श्रीरामरूपेण मृगैर्वानरैः सह सौहृदं सख्यमिति यावत् अरोचयत प्रीत्या कृतवान् कथं भूतः ईश्वराणां ब्रह्मादीनां यानि श्रीमन्ति किरीटानि तेषां तटाग्रप्राग्भिः तैः पीडितं विलुठितं पादपीठं यस्य सः तथा भूतोऽपि सन् ॥ ४ ॥

अतस्त्वां परित्यज्य को नामान्यत्संश्रयेदित्याह । तन्त्वेति । तमेवं भूतं त्वां को नु विसृजेत् भजेत् कथं भूतः अकृतवित् बलिप्रह्लादादिषु त्वया कृतमनुग्रहं जानन् यद्वा स्वस्मिन्नेवान्तर्यामितया कृतमुपकारं विद्वान् तदेवाऽऽह । अखिलस्याऽऽत्मदयितेश्वरम् अखिलस्य जगत आत्मानं चेतयितारमात्मत्वादेव दयितं प्रेष्ठं सुसेव्यमीश्वरत्वादवश्यं भजनीयम् किञ्च आश्रितानां सर्वार्थदम् तर्हि किं फलोद्देशेनाहं सेव्यः नहि नहि किमप्यनिरुक्तं त्वद्व्यतिरिक्तं स्वर्गादि त्वया दत्तमपि को वा भजेत्सेवेत कथं भूतं तत् यत्केवलं भूत्यै इन्द्रियभोगाय अनु अनन्तरमेव त्वद्विस्मृतये भवति यद्वा त्वद्व्यतिरिक्तं किमपि देवतान्तरं धर्मज्ञानादिसाधनं वा भूत्यै ऐश्वर्याय संसारस्य विस्मृतये मोक्षाय को वा भजेन्न कोऽपि ननु तत्साधनं विना भोगमोक्षादिफलं कथं स्यात्तत्राऽऽह । किंवेति । तदुक्तम् या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये

तया विना तदाप्नोति नरो नारायणाश्रय इति ॥ ५ ॥

आस्तामन्यभजनवार्ता त्वत्कृतोपकारस्य त्वय्यात्मनिवेदनेनैव निष्कृतिर्नास्त्येवेत्याह । नैवेति । अपचितिं प्रत्युपकारमानृण्यमिति यावत् कवयो ब्रह्मविदोऽपि नैव प्राप्नुवन्ति यतः त्वत्कृतमुपकारं स्मरन्तः ऋद्धमुद उपचितपरमानन्दाः तदुपकारमेवाऽऽह । यो भवान् बहिराचार्यवपुषा गुरुरूपेणान्तश्च चैत्यवपुषाऽन्तर्यामिरूपेणाशुभं विषयवासनां विधुन्वन्निरस्यन् स्वगतिं निजं रूपं प्रकटयति ॥ ६ ॥

तस्य तव ईश्वरेश्वरत्वे हेतुः जगत्क्रीडनकं क्रीडोपकरणं यस्य सः ननु जगत्सृष्ट्यादिना ब्रह्मेशादयः क्रीडन्ति तत्राऽऽह स्वशक्तिभिः सत्त्वादिभिर्गृहीतं मूर्तित्रयं येन सः सप्रेम प्रेमसहितं मनोहरं स्मितं यस्य सः सप्रेम यथा तथा जगादेति वा ॥ ७ ॥

इन्तेति सहर्षसंबोधनम् सुमङ्गलान् सुखरूपान् मृत्युं संसारम् दुर्जयमन्यैरुपायैः ॥ ८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता—
### दीपिकादीपनी टिप्पणी

तमेव भक्तियोगमेव । समासतः संक्षेपतः । पूर्वाध्यायेन महास्याध्यायस्य सङ्गतिमाह । अतिक्लेशामिवेति । भक्तिमिश्रयोगे क्लेशाभावादित्युक्तम् । इमां निरन्तराध्यायोक्तां योगचर्यां योगपरिपाटीम् ॥ १ ॥

युञ्जन इति द्वितीया प्रथमार्थे । भक्तिप्रधानतया तु न क्लिश्यन्ति किन्तु भक्त्युपसर्जनतयैवेति भावः इत्युक्तम् ॥ २ ॥

मूर्खे तवेति सम्बन्धिपदानुक्तिः [illegible] नामिमवत्यङ्गभावो । पूर्वार्धे भक्तास्यादृश्यानपातितस्य अवेदमित्यावृत्तिगौरवं तुकाराध्याहारः भक्तानामुत्कर्षो [illegible] यद्वेति । अत एव मायया विहतत्वादेव । अन्ये त्वभक्ता इति आर्थिकार्थतया व्याख्यानादित्यर्थं इत्युक्तम् । भक्तानां मायिकत्वाभावे तु भगवतो निरुपाधिकनिजजनविषयककृपायां एव पुरुषार्थसाधनं प्रति हेतुत्वं न स्वस्मत्प्रयत्नस्येति दैन्यमेव हेतुर्बोध्यः ॥ ३ ॥

अनन्यशरणेषु योगज्ञानकर्माद्याश्रयान्तररहितेषु । रामरूपेणेत्यत्र साक्षाद्रूपेणापि वृन्दावनचारिभिर्वानरैः सख्ये व्याख्येयम् एवं विहारैः कौमारैः कौमारं जहतुरित्यत्र मर्कटोत्प्लवनादिभिरित्युक्तेः । तस्माद्भक्तेरेव मुख्यत्वं प्रतिभातीति तामेव ब्रूहीति भावः ॥ ४ ॥

अतो भक्तानामात्मसात्करणात् । अन्यत् स्वर्गादिकं धर्मज्ञानादिसाधनं च । पूर्वार्धे येषु स्त्रीषु त्वदीयेषु बल्यादिषु इति व्याख्याने यच्छब्देन वाक्ये यः कर्ता तस्यैव परामर्शकत्वमिति नियमव्याघातात् यद्वेति । तदेव उपकारित्वमेव । यदि सर्वार्थदोऽसि तर्हि अनिरुक्तं सदसज्ज्ञानानिर्वचनीयम् । अविक्रिमतं तं परिपूर्णकाममित्यादौ देवतान्तरभजनादैकान्तिनां निषिद्धत्वाद्यथान्तरमाह । यद्वेति । तथा साधनसम्पत्त्या ॥ ५ ॥

निष्कृतिमानृण्यम् । यावदिति नातः परम्पदार्थविवरणामित्यर्थः । एवं सर्वत्र । विषयवासनां त्वद्भक्तिप्रतियोगिनीं निजं रूपं स्वस्वरूपानुभवम् ॥ ६ ॥

ईश्वरेश्वर ! ईश्वरस्य प्रकृतिप्रवर्तकस्य महापुरुषस्यापीश्वर इति स्वयं भगवत्त्वं व्यञ्जितम् ॥ ७ ॥

अन्यैर्योगादिभिः ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १ । २ ॥

तव पादाम्बुजं हंसा योगकर्मभिः सुखेन भजेरन् त्वन्मायया न विहताः किन्तु मानिन एव विहताः ॥ ३ ॥

मृगैः सहेति वासमिति शेषः वृन्दावने हि मृगा अप्याकृष्टा वशत्वेन ॥ ४ ॥

सुकृताविस्कृतज्ञः विस्मृतये तद्विस्मरणाय किं स्यात् किञ्चिदपि त्वद्विस्मरणकारणं तव पादरजोजुषां नाश्रितं किमन्यतो भजेत् न किञ्चिदन्यद्भूयमित्यर्थः ॥ ५ ॥

अपचितिम् अवमानम आचार्यचैत्यवपुषा बहिराचार्यवपुषाऽन्तश्चैत्यवपुषा ध्येयदिव्यविग्रहेण अशुभं विधुन्वन् इत्यर्थः ॥ ६ ॥ ७ ॥

मृत्युं संसारम् ॥ ८—१२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सत्यं त्वदुपाश्रयस्य योगचर्या नान्तरायैर्विहन्यते इति तथापि दुष्करत्वमतः सुलभं त्वत्प्राप्तिसाधनमुपदिशेत्याह । सुदुश्चरामिति अनात्मनः अजितेन्द्रियस्येमां योगचर्यां सुदुश्चरां मन्येऽतो यथा

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अञ्जसानायासेन पुमान् सिध्येन्मुच्येत तत्साधनमञ्जसा स्फुटं ब्रूहि ॥ १ ॥

सुदुस्तरत्वं स्फुटीकरोति। प्रायश इति। मनो युञ्जन्तः स्ववशीकुर्वाणाः अत एव मनोनिग्रहार्थमुपवासादिभिः कर्शिताः अत एव मनसोऽसमाधानाच्च प्रायशः सीदन्ति ॥ २ ॥

अथातोऽत एव हंसाः केचित्सारासारविवेकिनः आनन्ददुघमानन्दावहं तव पदाम्बुजं सुखं यथा तथा भजेरन् प्रपद्यन्ते हे विश्वेश्वर! अमी त्वन्मायया विहता वञ्चिता न भवन्ति कुतः यतस्ते योगैः कर्मभिश्च न मानिनः योगादिप्रयुक्तगर्वरहिताः अन्ये तु मानिनो विहता भवन्तीति भावः ॥ ३ ॥

अहो चित्रमेतत् मत्संश्रयमात्रेण मन्मायया न विहता इत्यत्र नैवमित्याह। किञ्चित्रमिति। अच्युत! आश्रितान्न च्यावयतीति तथाभूत! एतत् त्वदाश्रयणमात्रेण स्वमायायास्तारयसीत्येतत् न अन्यच्छरणं येषां तेषु दासेष्वात्मसात्त्वं तदधीनत्वं च तव चित्रं किं न चित्रमित्यर्थः। तत्र हेतुत्वेन विशिनष्टि। स्वयमीश्वराणां ब्रह्मादीनां श्रीमद्भिः किरीटानां तटैः कोटिभिः पीडितं संघृष्टं पादपीठं यस्य तथाभूतोऽपि मृगैः सह साहित्यं साहाय्यमिति यावत् यो भवानरोचयत् वृन्दावने वंशस्वनेनाकृष्टा मृगाः सहावसन्निति भावः यद्वा श्रीरामावतारे वानरैः सह सख्यमरोचयदित्यर्थः अनेनाश्रयणापयुक्तं सौशील्यमभिहितं स्वयमित्यादिना परत्वमशेषबन्धो इत्यनेन सौलभ्यं वात्सल्यं च ॥ ४ ॥

अथान्यैरप्याश्रयणापयुक्तैर्गुणैर्विशिंषन् समाश्रयणीयत्वातिशयमाविष्करोति। तं त्वेति। तं परत्वसौलभ्यवात्सल्यसौशील्यादियुक्तमखिलानामात्मनामात्मानमत एव दयितं प्रियतममीश्वरं स्वामिनमाश्रितानां सर्वार्थदमभिलषितपुरुषार्थदम् अनेन ज्ञानशक्तिपूर्णत्वापरगुणाश्रयत्वं सूचितं तेन विना तदसम्भवात् स्वकृतवित्त्वदुपकारज्ञः पुमान् को वा विसृजेत् कृतज्ञानां त्वमेव सेव्य इति भावः। उपकारस्त्वग्रे स्फुटीभविष्यति को वा कश्च पुमान् किमपि त्वत्तोऽन्यद्दैवं भजेत् किं किमर्थं विस्मृतये विगता स्मृतिर्यस्याः तस्यै विभूतये ऐश्वर्यायात्मविस्मृत्यापादकायैश्वर्यायेत्यर्थः। नन्वारोग्यभोगादिश्रेयसे भास्करहुताशनादिदेवतान्तरं सेव्यमित्यत आह किं वेति तव पादरजोजुषां चरणपरागं सेवमानानां नोऽस्माकं किं वा श्रेयो न भवेदभिलषितं यत्सर्वमपि सुलभमेवेति भावः। अनेन सर्वार्थदमित्येतद्विवृतम् ॥ ५ ॥

कोऽसावुपकारः सुकृतविदित्यत्राभिप्रेत इत्यत्र तमप्रत्युपकार्यं वदन् विवृणोति। नैवेति। हे ईश! कवयो ब्रह्मविदः तव कृतं त्वत्कृतमुपकारं स्मरन्तः ऋद्धमुदः उत्कटहर्षाः ऋद्धमुद इति पाठे उपचितपरमानन्दाः अपचितिं प्रत्युपकृतिं ब्रह्मायुषापि नैवोपयन्ति नैव प्राप्नुवन्ति उपकारं दर्शयति। यो भवान् बहिराचार्यवपुषा अन्तश्चैत्यवपुषा चित्तगतं चैत्यं हार्दि तेन वपुषा हृदि चिन्त्यमानेन रूपेणेत्यर्थः। तनुभृतामशुभमशिवं विधुन्वन् दूरीकुर्वन् स्वगतिं स्वयाथात्म्यं व्यनक्ति व्यक्तं करोतीति ॥ ६ ॥

जगत्क्रीडनकं क्रीडोपकरणं यस्य सः स्वशक्तिभिः स्वाम्याधारिणीभिः सृष्टिस्थितिसंहारसामर्थ्यात्मिकाभिः शक्तिभिर्गृहीतं मूर्तित्रयं ब्रह्मविष्णुशिवात्मकं येन सः स्वात्मकं ब्रह्मरुद्रमूर्तिद्वयं स्वावताररूपं श्रीविष्णुमूर्तिश्चेति मूर्तित्रयं परिगृहीतवानित्यर्थः° अत एवेश्वराणां ब्रह्मादीनामपीश्वरो भगवान् प्रेरकश्च सहितं मनोहारि स्मितं यस्य स जगाद ॥ ७ ॥

त्वयोक्तं मत्संश्रयणेनैव सिद्धिसाधनमित्यभिप्रेत्य समाश्रितानामावश्यकान् धर्मान् वक्तुं प्रतिजानीते। हन्तेति। सहर्षसंबोधनद्योतकं हन्तेतिपदं ते तुभ्यं कथयिष्यामि मम धर्मान् भागवतधर्मान् सुमङ्गलावहान् मङ्गलत्वमेवाविष्कर्तुमाह। यानिति। यान् धर्मानाचरन्ननुतिष्ठन् सुदुर्जयमपि मृत्युं मृत्यूपलक्षितं संसारं जयति ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

निर्विघ्नयोगाचरणसाधनं हरेर्भक्तानुकम्पितत्वं कथितत्तत्त्वज्ञानप्रशंसा तन्निरतानां श्रेयस्त्वमुद्धवस्य हरौ भक्त्यतिशयवत्त्वं तस्य भगवद्भक्तिप्राप्तिं च कथयत्यस्मिन्नध्याये आदावुद्धव उक्तयोगाचरणस्य अशक्यत्वं मनसि कृत्वा तत्सुलभुपायं पृच्छति। सुदुस्तरामिति। अनात्मनो मनोजयरहितस्याधीरस्य वा पुमान् यथा भवदुक्तोपायेन सिध्येत्पुरुषार्थवान् भवेत्तथा तद्योगसाधनं मे ब्रूहीत्यन्वयः ॥ १

तदकथने कोऽनर्थ इति तत्राह। प्रायश इति। मौनसंयमाद्यैः कर्शिता विषीदति विशेषात् क्लिष्टं भवति योगाचरणसाधनेऽशक्ते मनो विषीदति ॥ २ ॥

अथो तस्मात्तज्ज्ञाः परमहंसा एव भवदुक्तयोगाधिकारिण इति भावेनाह। अथो इति। योगकर्मभिः योगाख्यकर्मभिः अत एव मानिनो ज्ञानिनस्त्वन्मायया अहङ्कारादिरूपया न विहता इत्यर्थः ॥ ३ ॥

प्रकृतौ स्थितस्यापि प्रकृत्याविहतत्वं त्वद्दासेषु चित्रमिति विज्ञापयति। किं चित्रमिति। त्वमनन्यशरणेषु आत्मवत् इति वदतोऽच्युत अशेषबन्धोस्तवैतच्चित्रं किमेतत्कुत्र दृष्टमिति तत्राह। य इति। ईश्वराणां ब्रह्मादीनां श्रीमत्किरीटमणिसंघट्टितपादपीठः स्वयं यो गोकुले पशुभिः पशुपालैश्च सहात्मत्वेन रोचयः प्रकाशितवान् तस्य तव दासेष्वात्मत्वं किमित्यन्वयः ॥ ४ ॥

भगवद्भक्तमाहात्म्यं तन्माहात्म्याविनाभूतमुक्तं तद्विशदयन् सारासारज्ञानमाह। तन्त्वेति। यो ब्रह्मादिशिरःश्रीमत्किरीटमणिघट्टितपादपीठः तं त्वां सुकृतवित् सुष्ठु कृतोपकारज्ञः कः विसृजेत् कीदृशं त्वाम् अखिलानामात्मनां जीवानां दयितं प्रेमास्पदम् ईश्वरम् अणिमाद्यैश्वर्याकारम् आश्रितानां सर्वार्थदम् अभीष्टाशेषपुरुषार्थदं किञ्च को वा पुरुषः किमप्यन्यदैवं भजेत् यदि भजेत्तर्हि असौ विस्मृतविस्मृतिसारकः चित्तवृत्तिविस्मृतिमुपपादयति। किंवेति। तव अखिलाशेषभाग्यभजनं पादरजामृतात्मा न भवेत् किञ्चा नैव प्रवृत्तोऽसौ पशुरेवेत्यर्थः ॥ ५ ॥

एवमनिमित्तबन्धुत्वेन सर्वस्मादुपकारस्य भवतः प्रत्युपकारं कर्तुं कवयोऽपि न समर्था इत्याह। नैवेति। त्वत्कृतं स्मरन्तः कवयो ब्रह्मादयोऽपि तवापचितिं प्रत्युपकारं नैवोपयान्ति क्रियमाण उपकारः कीदृश इति तं प्रकारमाह। य इति। तनुभृतामन्तर्बहिः स्थितमशुभं विधुन्वन् परमाचार्यश्चैत्यः चित्तस्थश्चाचार्यचैत्यः ब्रह्मा तद्यान्तर्यामिवपुषा स्वगतिं स्वयोग्यज्ञानं व्यनक्ति व्यक्तीकरोति आचार्यस्य चित्तस्थवपुषेति वा ॥ ६ ॥

यावत्सर्वेषु भूतेषु मद्भावो नोपजायते ।
तावदेवमुपासीत वाङ्मनःकायवृत्तिभिः ॥ १७ ॥
सर्वं ब्रह्मात्मकं तस्य विद्ययाऽऽत्ममनीषया ।
[1]परिपश्यन्नुपरमेत् सर्वतो मुक्तसंशयः ॥ १८ ॥
अयं हि सर्वकल्पानां सध्रीचीनो मतो मम ।
मद्भावः सर्वभूतेषु मनोवाक्कायवृत्तिभिः ॥ १९ ॥
नह्यङ्गोपक्रमे ध्वंसो [2]मद्धर्मस्योद्धवाण्वपि ।
मया व्यवसितः सम्यङ्निर्गुणत्वादनाशिषः ॥ २० ॥
यो यो मयि परे धर्मः कल्प्यते निष्फलाय चेत् ।
तदायासो निरर्थः स्याद्भयादेरिव सत्तम ! ॥ २१ ॥
एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम् ।
यत्सत्यमनृतेनेह मर्त्येनाप्नोति मामृतम् ॥ २२ ॥
एष तेऽभिहितः कृत्स्नो ब्रह्मवादस्य संग्रहः ।
समासव्यासविधिना देवानामपि दुर्गमः ॥ २३ ॥
अभीक्ष्णशस्ते गदितं ज्ञानं विस्पष्टयुक्तिमत् ।
एतद्विज्ञाय मुच्येत पुरुषो नष्टसंशयः ॥ २४ ॥

भाषाटीका ।

ब्राह्मण मे अन्त्यज मे चोर मे ब्राह्मणप्रतिपालक मे सूर्य मे चिनगारी मे शान्त मे हिंसक मे इन सबों मे समान दृष्टि करने वाला जो है सो ही पण्डित है ॥ १४ ॥

निरन्तर सब मनुष्यों मे मेरी भावना करने वाले पुरुष को थोड़े ही काल मे स्पर्धा जीतनेकी इच्छा गुणों की निन्दा तिरस्कार अहङ्कार ए सब दुर्गुण शीघ्रही नष्ट हो जाते हैं ॥ १५ ॥

अपनी हंसी करने वाले कुटुम्बियों को छोड़कर और देह मे लज्जा की दृष्टि को छोड़कर कुत्ता चाण्डाल गर्दभ पर्यन्त सब प्राणियों के अर्थ पृथिवी मे दण्ड की नांई गिरकर प्रणाम करा करै ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं पञ्चभिः श्लोकैरुक्तायाः समदृष्टेरवधिमाह द्वाभ्यां यावदिति ॥ १७ ॥

तस्य एवं कुर्वतः पुंसः सर्वं ब्रह्मात्मकमेव भवति कुत आत्ममनीषया सर्वत्रेश्वरदृष्ट्या या विद्या तया अतः परितो ब्रह्मैव पश्यन् सर्वतः क्रियामात्रादुपरमेत् ॥ १८ ॥

किमयमेवोपायोऽस्ति वा अन्योऽपीत्यपेक्षायां सन्ति बहवः समीचीनस्त्वयमेवेत्याह । अयं हीति ॥ १९ ॥

भगवद्धर्मलक्षणोपायस्य समीचीनत्वमेवोपपादयति द्वाभ्याम् नहीति । अङ्ग हे उद्धव । अनाशिषो निष्कामस्य मद्धर्मस्योपक्रमे सत्यणवपि विघ्नेऽपि वैगुण्यादिभिर्नाशो नास्त्येव यतो मयैव निर्गुणत्वादयं धर्मः सम्यग्व्यवसितो निश्चितो नतु मन्वादिमुखेन कथंचित् ॥ २० ॥

किञ्च य इति । अयमर्थः किं वक्तव्यं मद्धर्मस्य न ध्वंस इति यतो लौकिकोऽपि यो यो निरर्थो व्यर्थ आयासः सोऽपि मयि परे निष्फलाय चेत्कल्पते निष्कामतयाऽर्पितश्चेत्तर्हि धर्म एव स्यात् निरर्थायासे दृष्टान्तः यथा भयशोकादेर्हेतोः पलायनाक्रन्दनादिक्लेशस्तद्वत् ॥ २१ ॥

अतो मद्भजनमेव बुद्धेर्विवेकस्य मनीषायाश्चातुर्यस्य च फलमित्याह । एषेति । तामेव दर्शयति । सत्यमनृतं मामनृतेनासत्येन मर्त्येन विनाशिना मनुष्यदेहेन इहास्मिन्नेव जन्मनि प्राप्नोतीति यत्सैव बुद्धिर्मनीषा चेति । बुद्धिर्विवेकः मनीषा चातुर्यम् ॥ २२ ॥

महाप्रकरणार्थमुपसंहरति द्वाभ्याम् । एष इति ॥ २३—२४ ॥

१ पश्यन् परम व्योमनीति शुकपक्षीय० पाठः २ मधूद्धवाण्वपीति वि० पाठः ३ भयादेरिव इति विज० पाठः ।

श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

मद्भावो मम श्रीकृष्णरूपस्य भावना ॥ १७ ॥

ब्रह्मात्मकं कथमस्यावतारस्य ब्रह्मता भवतीति गोपाङ्गनापतिर्भुतिप्रसिद्धब्रह्मसंज्ञकनराकृतिपरब्रह्मस्फूर्त्यात्मकं भवति॥१८॥

कल्पानामुपायानां मध्ये ॥ १९ ॥

मद्धर्मस्य भवणकीर्त्तनादेः ॥ २० ॥

निष्फलाय लौकिकवैदिकफलाभावाय । धर्म एव आरोपितभगवद्धर्म एव स्यात् तदा नहि । भयशोकादेरिति यथा मृत्युभयात् पलायनं व्यर्थं मरणावश्यम्भावित्वात् यथा च बन्धुमरणशोकात् आक्रन्दनं व्यर्थं मृतस्य जीवनाऽसम्भवात् आदिना द्रव्यनाशानन्तरं तत् स्मृतिक्लेशपरिग्रहः ॥ २१ ॥

यतो भगवद्धर्मलक्षणोपायस्य समीचीनत्वमतः । बुद्धिमनीषयोर्व्याख्यानमेवाभासेऽपि कृतमिति ज्ञेयम् । सत्यं सर्वसत्ताहेतुम् । अमृतं सर्वानन्दहेतुम् । मां श्रीकृष्णाख्यं स्वयं भगवन्तम् ॥ २२ ॥

ब्रह्मवादः नराकृतिब्रह्मविषयकसिद्धान्तकथारूपः संग्रहो निर्यासः समासविधिना एषा बुद्धिमतामित्यादि संक्षिप्तप्रकारेण । व्यासविधिना त्वन्तु सर्वं परित्यज्येत्यादि महाप्रकरणात्मकविस्तृतप्रकारेण च । देवानां सत्त्वप्रकृतीनामपि दुर्गमो दुर्लभः । देवानां शुद्धसत्त्वानामित्यादि वक्ष्योक्तेः ॥ २३ ॥ २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एवमुपासीत पुरुषेदशवर्मादिभिः उपासीत ॥ १७ ॥

सर्वं ब्रह्मात्मकमिति लीलाविभूतेर्ब्रह्मात्मकत्वमुक्त्वा त्रिपाद्विभूतेस्तदात्मकत्वमाह । परमे व्योम्नीति ब्रह्म पश्यन्नित्यर्थः सर्वं ब्रह्मात्मकं पश्यन् मुक्तबन्धनः परमे व्योम्नि तिष्ठेदित्यध्याहृत्य वा योजना ॥ १८—१९ ॥

मद्धर्मस्याण्वपीति क्रियाविशेषणं न ध्वंसः न निष्फलत्वम् अनाशिषो मद्धर्मस्य निर्गुणत्वात् गुणारम्भहेतुत्वाभावात् ॥ २० ॥

तदायासो निरर्थः स्यादिति आयासस्य निरर्थकतया अनुष्ठानाभावेन शास्त्रप्रामाण्यं स्यादिति भावः ॥ २१ ॥

अनृतेन अनित्येन शरीरेण ॥ २२—२५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थमनुष्ठानस्यावधिमाह । यावदिति । नोपजायेत दृढतरो न जायेत तावत्तत्र वाग्बुद्धिः सर्वभूतान्युद्दिश्य भगवते नम इत्युच्चारणं मनोवृत्तिरीश्वरो जीवकलेवरयुक्तो कायवृत्तिर्दण्डवत्प्रणामं कुर्वीत ॥ १७ ॥

ततः किमत आह । सर्वमिति । तदर्थमुपासीनस्य सर्वं ब्रह्मात्मकमेव दृढतराध्यवसायविषयं भवति ततोऽपि किमत आह । विद्ययेति । आत्ममनीषया सर्वस्य परमात्मकत्वबुद्धिरूपया विद्यया परिपश्यन्नयं पुमान्मुक्तः संशयो येन सः किमात्मैव देहः किंवा ततोऽन्यः किञ्जीवः स्वतन्त्रः किंवा परमात्मपरतन्त्र इत्येवं विधः संशयोऽत्र विच्छिन्नः सर्वतः सर्वस्मात्संसृतिनिमित्तादुपरमेत् मुक्तो भवेदित्यर्थः ॥ १८ ॥

एष एवोत्तमोपाय इत्याह । अयमिति । कल्प्यते एभिः फलमिति कल्पा उपायाः तेषां मध्ये अयमेव सध्रीचीनः समीचीनः इति मम मतः कोऽसौ यो मनोवाक्कायवृत्तिभिः सर्वभूतेषु मद्भावः ॥ १९ ॥

सध्रीचीनत्वमेवोपपादयति । नहीति । मद्धर्मस्य सर्वात्मकब्रह्मोपासनाख्यधर्मस्योपक्रमे सति हे उद्धव ! ईषदपि न ध्वंसः न फलं विना भावः मया व्यवसितः निश्चितः तथोक्तं गीतासु नहि कल्याणकृत्कश्चिद्दुर्गतिं तात ! गच्छतीत्यादिना नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते इत्यनेन च कुतः अनाशिषः निष्कामस्य मद्धर्मस्य निर्गुणत्वाद्गुणारम्भहेतुत्वाभावात् अपरोक्ष्यपर्यन्तमद्धर्मस्योपक्रान्तमात्रस्य सद्यः कालान्तरे वा गुणत्रयसम्बन्धराहित्यावहत्वस्वभावत्वादिति भावः । किंपुनर्वक्तव्यं नितरामनुष्ठितस्य मद्धर्मस्य न ध्वंस इति ॥ २० ॥

यतः लोके यो यो व्यापारो निरर्थकः निष्प्रयोजनः चिन्तितनिमित्तादिरूपः तथा केवलभावात्मकश्च स्यात्सोऽपि मयि परस्मिन्परमपुरुषे निष्फलाय कल्प्यते फलाभिसन्धिविरहाय मदर्पणतया कायेन वाचा मनसेन्द्रियैर्वा इत्याद्युक्तरीत्यानुसंहितमर्पितं यावत् धर्म एव फलाविनाभूत एव भवतीत्यर्थः । तत्र दृष्टान्तः भयादिरिति हे सत्तम ! यथा भयादेः कस्माद्धेतुकस्य भगवत्त्व तेनत्यर्थं भागवतगोपीभ्यादिकृतरागद्वेषादिसंग्रहः इति ॥ २१ ॥

यत एवमतः केनापि मार्गेण मत्प्राप्तिरेव नृजन्मनः फलमित्याह । एषेति । बुद्धिरध्यवसायः मनीषा हिताहितविमर्शः मनीषिणां मनीषा बुद्धिमतां बुद्धिश्चैव कोऽर्थो यदनृतेनानित्येन मर्त्येन मनुष्यशरीरेण ऋतं नित्यं सत्यं स्वभावतो निर्विकारं मां प्राप्नोतीति मत्प्राप्तिसाधनं साधयतीति यथा ॥ २२ ॥

महाप्रकरणार्थमुपसंहरति साधेन । एष इति । ब्रह्मवादस्य वेदान्तसिद्धार्थकथनस्य संग्रहः समासव्यासविधिना संग्रहनिस्तरप्रदर्शनेन सङ्क्षेपतो विस्तरतश्च हे साधो ! ते तुभ्यमभिहितः ॥ २३ ॥

तत्रापि प्रधानार्थस्य वाक्यार्थोपासनकृत्कार्थितत्त्वमाह । अभीक्ष्णश इति । विस्पष्टयुक्तिभिश्च यथा तथाऽभीक्ष्णशः पुनः पुनः ज्ञानं च कथितं ज्ञानं चात्र चिदचिदीश्वरस्वरूपस्वभावविवेचनात्मकज्ञानं परमात्मोपासनात्मकं च तस्य कथितत्वं नाम तत्प्रकारकथनं तस्य फलमाह । एतदिति । एतज्ज्ञानयाथात्म्यं विज्ञाय नरः मनीषी उक्तविधो यस्य स पुरुषो मुच्येत संसृतेरिति शेषः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतदुपासनावधिमाह । यावदिति । यावत्सर्वेषु भूतेषु विष्णुवर्तीति मद्भावो मद्विषयं ज्ञानं नोपजायते तावद्वाङ्मनःकायवृत्तिभिरेनमुपासीतेत्यन्वयः ॥ १७ ॥

एवमुपासानस्य परोक्षज्ञानिनो मतिप्रकारमाह । सर्वमिति । तस्योपासकस्य सर्वं जगत् ब्रह्मात्मकं ब्रह्मणाऽस्य स्वीकृतमधीनत्वेन वर्तितमिति मननं हरेः प्रीतिजनकमित्यर्थः—

ब्रह्मणाप्तमिदं सर्वं यत्किञ्चित्सचराचरम् ।
इति पश्यति यो विद्वान् स हि ब्रह्मात्मवित्तमः ॥ इति

विशिष्टवचनात्र ब्रह्मैक्यमुच्यत इतिसिद्धं फलमाह । विद्ययेति विद्यया ज्ञानेनात्ममनीषया स्वरूपभूतबुद्ध्या वाऽच्युतं परमात्मानं स्वात्मादेः परमर्थं परिपश्यतीत्यन्वयः चशब्देनान्यमीशमिति श्रुतिं प्रमाणयति ॥ १८ ॥

अन्येनापि मुक्तिः स्यात्किमनेनेति तत्राह । अयंहीति । सर्वकल्पानां सर्वमोक्षोपायानां मध्येऽयमुपायो हि सध्रीचीनो मत इति मम सिद्धान्त इत्यनेनाभिमुख्यत्वेनान्योक्तानामानाप्तत्वं सूचयति । मयामिति । क इत्यत उक्तं मद्भाव इति ॥ १९ ॥

अङ्गोद्धवास्य धर्मस्योपक्रमे कृतेऽपि तन्मात्रस्य ध्वंसो नाशो नैव भवति अस्य धर्मस्य कर्तुः मनागपि अणुमात्रोऽपि धूमादि आयासलक्षणो नास्ति कुतः मदाशिषः निष्कामस्य मद्धर्मस्य निर्गुणत्वान्मुक्तिसाधनत्वान्मया सम्यग्व्यवसितं निश्चितमतो नान्यधर्मसमो मद्धर्म इत्यर्थः ॥ २० ॥

अस्यैवोत्तमत्वमुपपादयति । यो वा इति । अन्यैर्वक्ष्यमाणेन क्रियमाणो यो यो धर्मः ध्यानार्चनादिलक्षणः क्रियते पुंभिरिति शेषः स ते नव निष्फलाय कल्पते एतदेवाह । वृथायास इति । वृथायासतन्त्र क्रियमाणप्रयत्ना निरर्थः स्यात् कथमिव भयादेरिव दुर्नयरूपधर्मस्येव—

भयादिर्दुर्नयः प्रोक्तो वृथायं सोऽपि सर्वदा ॥

इतिवचनात् ॥ २१ ॥

बुद्धिमतां निश्चयज्ञानवतां बुद्धिर्निश्चयात्मिका मनीषिणां मनसा साकल्याभावतां मनीषा मनस्वामात्मेष्वेषणामेतत् अनृतेन क्षणिकेन अन्यथा भवता अत एव मर्त्येन शरीरादिलक्षणजगता ऋतं शाश्वदेकप्रकारं सत्यं ब्रह्म मामाप्नोतीति यत्तस्मात्—

एकदा ज्ञानरूपेण यत्तु तिष्ठति सर्वदा ।
चपलत्वादसत्यमपि ह्यनृतं जगदुच्यते ॥

इति—

सर्वदैकप्रकारत्वात्सत्यं ब्रह्म सदोच्यते ।

इतिवाक्यद्वयेन सत्यानृतशब्दयोरुक्त एवार्थ इति ॥ २२ ॥

सुगमो योगो वक्तव्य इति त्वया पृष्टेन मया योग उक्त इत्युपसंहरति । एष इति ॥ २३ ॥

ब्रह्मवादः संसारमोचकं ब्रह्म ज्ञानमेवेत्याशयेनाह । अभीक्ष्णश इति ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मद्धर्मस्य तु विघ्न एव नास्ति कुतः सदापचिन्तनादित्याशयेनाह । नह्यङ्गेति ॥ २० ॥

आस्तां तावत्साक्षाद्धर्माणां वार्ता आरोपितरूपाणामपि माहात्म्यं श्रूयतामित्याह । यो वा इति । मयि मदर्पितत्वेन कृतो यो धर्मो वेदविहितः स यदि निष्फलाय फलाभावाय कल्पते फलकामनया नार्प्यत इत्यर्थः । तदा तत्र तत्प्रायासः आभिरनिरर्थः स्यात् ऽपार्थो न भवति निष्फलायेति विशेषणं फलभोगादिरूपतद्धृत्त्यन्तरायाभावेन प्रतिरथमातिशयतात्पर्य्यं तत्रानिरर्थत्वे कैमुत्येन श्रीकृष्णाख्यस्य स्वरूपासाधारणभजनीयताऽत्र उक्तो दृष्टान्तः भयादिवदिति यथा कंसादौ मत्सम्बन्धमात्रेण भयादेरपायासो निरर्थो न भवति मोक्षसम्पादकत्वादित्यर्थः ॥ २१ ॥

सत्यापिकाया भक्तेश्च युक्तमेव तत्रैतादृशं माहात्म्यमित्याह । एषेति । सत्यं सर्वसत्ताहेतुममृतं सर्वानन्दहेतुं च मां श्रीकृष्णाख्यं स्वयं भगवन्तम् ॥ २२ ॥

एष पूर्वोक्तलक्षणो भक्तियोगः तत्प्राप्त्युक्त एव समासविधिना एषा बुद्धिमतामित्यादिरूपेण व्यासविधिना त्वं तु सर्वं परित्यज्येत्यादिमहाप्रकरणेन देवानां सत्त्वप्रकृतीनामपीत्यर्थः यदुक्तं षष्ठे—

देवानां शुद्धसत्त्वानामृषीणाममलात्मनाम् ।
भक्तिर्मुकुन्दचरणे न प्रायेणोपजायते ॥

इति ज्ञानमिति यदुक्तं तस्य तु नाहं साक्षात्फलं किन्तु मुक्तिमात्रमित्यादि अभीक्ष्णश इति ॥ २३ । २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एवं दण्डवत्प्रणामपर्यन्तमेव क्रियाकलापपर्यन्तमित्यपेक्षयाऽऽह यावदिति । न उपरमेदधिकेन ज्ञानेन स्वाभाविकी न गर्भीदित्यर्थः तावदेव परमात्मने नम इति वाचा तथैव मनसा कायकर्मभिः कायव्यापारैश्च एवमुपासीत दण्डवत्प्रणामैः कुर्यात् ॥ १७ ॥

ततश्च आत्ममनीषया सर्वत्रेश्वरदृष्ट्या विद्या उपासना तया तस्य सर्वमेव ब्रह्मात्मकं भवति अत परिपश्यन् परितो ब्रह्मैव पश्यन् सर्वतः क्रियामात्रादुपरमेत् ॥ १८ ॥

ज्ञानिनां ब्रह्मप्राप्तिसाधनः परः सुगमः समीचीनश्चोपायोऽनाकर्तीत्याह । अयं हीति ॥ १९ ॥

भक्तिसारं त्रिभिः श्लोकैर्ज्ञानसारमथाष्टभिः ।
प्रोच्यान्ते पुनरप्याह भक्तिसारोत्तमात्रिभिः ॥

धर्मान्तरस्य खल्वारब्धस्य परिसमाप्तिपर्यन्तं निर्विघ्नत्वेन साङ्गोपाङ्गत्वे वृत्ते एव फलजनकता अन्यथा तु वैयर्थ्यमेव यथा न तथा भक्तिलक्षणस्य धर्मस्य नियमः अस्य पुनरारम्भमात्र एव परिसमाप्त्यभावेऽप्यङ्गहानितोऽपि न वैयर्थ्यमित्याह । नह्यङ्गेति । अङ्ग हे उद्धव । मद्धर्मस्य भक्तिलक्षणस्य उपक्रमे प्रारम्भे सति यद्वा अङ्गस्याप्युपक्रमे सति परिसमाप्त्यभावेऽपि अणवपि ईषदपि ध्वंसो वैगुण्यादिभिर्नाशो नास्ति यतो भक्तिलक्षणोऽयं मद्धर्मो निर्गुणः नहि गुणातीतस्य वस्तुनो ध्वंसः सम्भवेत् यस्मादयमनाशी यो निष्कामभक्तस्य धर्मो मया सम्यग्व्यवसितः अणुमात्रोऽप्यस्य धर्मः सम्यक् सम्पूर्ण एव निश्चितः नात्रकारणं प्रष्टव्यमिदं मम परमेश्वरस्यैवाति भावः । अत्र धर्मपदेन ज्ञानलक्षणो धर्मो न व्याख्येयः तस्य निर्गुणत्वाभावात् कैवल्यं सात्त्विकं ज्ञानमिति भगवदुक्तेः ॥ २० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भक्तिर्यदि सर्वथैव निष्कपटा स्यात्तदा सा विनापि प्रयत्नेन प्रतिक्षणं स्वयमेव सम्पद्यत इत्याह। यो वै इति। यो यो धर्मः श्रवणकीर्तनादिर्मयि विषये निष्फलाय ऐहिकप्रतिष्ठादिसुखपारत्रिकस्वर्गमोक्षादिसुखकामनाराहित्याय स्यात्तस्य आयासःतत्सिद्ध्यर्थं प्रयत्नो निरर्थः व्यर्थः समर्थः स्वयमेवानायासेनैव भवति किन्तदर्थं प्रयत्नेनेत्यर्थः।गोजनाऽज्ञानादिने चिन्तां वृथा कुर्वन्ति वैष्णवाः योऽसौ विश्वंभरो देवः कथं भक्तानुपेक्षते इतिवत् यथा भयशोकादिहेतोरायासो व्यर्थ एव स स्वविषयं प्राप्य स्वयमेव भवेत् यथा तथैव मां स्वविषयं प्राप्य भजनमपि स्वयमेव भवेदित्यर्थः। यद्यपि निष्कपटोऽपि भक्तो मद्भक्त्यर्थं सततं प्रयतते स च प्रयत्नस्तस्य भक्तौ रागातिशयमेव व्यनक्तीति यत्नो महान् गुण एव ज्ञेयः॥ २१॥

ननु कथं तद्यपि त्वदुक्तौ जनाः प्रायः प्रतिष्ठादिसापेक्षा एव भवन्ति तत्र तादृशबुद्धिविवेकाद्यभाव एव हेतुरित्याह। एषेति। बुद्धिमतामप्येव बुद्धिर्बुद्धित्वं त्वतिकाठिन्याच्छ्रेऽपि सञ्चरिष्णुर्वाच्चारात्ति भावः। मनीषिणां चातुर्यवतामप्येव मनीषा न त्वेकेनापि कपर्दकेन स्वर्णमुद्रोपार्जनचातुर्यमिति भावः। सैव का आविष्कृत आह। यदिति। इह भारतभूमौ मा माम् अमृतं मृतिराहितं नित्यस्वरूपं मर्त्येन मरणधर्मेण शरीरेणाभिव्याप्नोति भक्तिमात्रेणैव वशीकरोति। तथा मर्त्येन मृतकतुल्यत्वादपि बीभत्सेन प्राकृतेन मा माम् अमृतम् अप्राकृतं सुधास्वरूपम्। तथा अनृतेन जीवस्य वस्तुतस्तु सम्बन्धाभावादसत्येन सत्यं सर्वकालसत्ताकं मां प्राप्नोति। अयम् भावः योऽहि कपर्दकं दत्त्वा सहस्रं कपर्दकमूल्यं वस्तु यद्ग्रहीतुं शक्नोति एव एव परमबुद्धिमान् अतिचतुर उच्यते। यस्तु तेन स्वर्णमुद्रामुपार्जयति स ततोऽपि यस्तु हीरकादिरत्नं स ततोऽपि। तत्राप्यभ्रान्तादतिचतुरादेव पुरुषात् स ततोऽपि। यस्तु चिन्तामणिकामधेन्वादिकं तद्धासुर्यन्तु चक्रुवशकं भारतभूमिवासी मर्त्यः पुनरपि दुर्जातिरपि स्फुटितैककपर्दकमूल्यत्वेनाप्यसम्भावितम्। कौरूप्यजरारोगादिपूर्णमपि स्वशरीरं मह्यं दत्त्वा अप्राकृतमाधुर्यासिन्धुं मामेव गृह्णाति। मया पुनरपि चतुर्दशिरोमणिनापि दत्तं तदेव प्राप्य कौस्तुभकिरीटादिकचकाद्यनर्घरत्नालङ्कारभूषितमपि स्वं तस्मै हर्षादिव दीयते इत्यहो बुद्धिमत्त्वमहो चातुर्यमहत्त्वं भारतभूवासिनः कस्यचित् कस्यचिदिति तत्र श्रवणकीर्तनस्मरणपरिचर्याद्यर्थं श्रोत्रादीनां विनियोग एव भगवते शरीरदानं ज्ञेयं किञ्च। एको रसनैव तत्कीर्तननिरता कर्णौ वा श्रवणनिरतौ करौ वा परिचर्यानिरतौ चरणावपि स आत्मानं ददातीति। शरीरैकदेशदानेनापि स लभ्यते इति कः खलु बुद्धिचातुर्यवानेवं न कुर्यादिति।

सर्वोपदेशसारोऽयं श्लोकश्चिन्तामणिः प्रभोः ।
हृदये यस्य राजेत स राजेद्भुक्त मुक्तिर्मनिः ॥ २२ ॥

महाप्रकरणार्थमुपसंहरति। एष इति द्वाभ्याम्॥ २३॥२४॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

यावत्सर्वेषु भूतेषु मद्भावो मदात्मकत्वनिष्ठा न जायते तावद्वाच्यवायवङ्गगोचरं वागादिवृत्तिभिरुपासीत तथाच्यवायवङ्गगोचरमुद्दिश्य श्रीकृष्णाय नमः इतिवाग्वृत्तिर्मनसा प्रणामाद्यावरणं मनोवृत्तिः दण्डवत्प्रणामादि कायवृत्तिः॥ १७॥

तदवाच्यवायवङ्गगोचरं मदूपस्योपासीनस्य सर्वं ब्रह्मात्मकं स्यात् तदनन्तरमात्ममनीषया सर्वं ब्रह्मात्मकमित्येवं भूतया सर्वत्र ब्रह्मदृष्ट्या विद्यया ज्ञानेन मुक्तसंशयः हेयोपादेयविषयकसंशयशून्यः परिपश्यन् उपादेयं मां ध्यायन् सर्वतः हेयादुपरमेत् ॥ १८॥

कल्पन्ते फलानि यैरिति कल्पा उपायाः तेषां मध्ये सध्रीचीनः समीचीनः॥ १९॥

समीचीनत्वमेव दर्शयति। नह्यंगेति। मद्धर्मस्य सर्वत्र मदुपासनस्योपक्रमे सति अण्वपि किञ्चिदपि ध्वंसो नास्ति यतोऽसौ निर्गुणत्वात् प्राकृतगुणसम्बन्धवर्जितः निर्गुणो मद्भावलक्षणत्वात्धर्मोऽपि निर्गुणस्तस्य भावस्तत्त्वं तस्मादनाशिषः त्रैगुण्यफलवासनाशून्यः अतश्च मया व्यवसितो निश्चितः ॥ २०॥

किंबहुना योऽयमायासः वागादिव्यापारः निरर्थो फलाय अकामतया यदि परे परमेश्वरे मयि कल्प्येत अर्पितश्चेत्स धर्मो भवत्स्वमात्मनस्वर्णादेव अनिरर्थः सफल एव स्यात् तत्र दृष्टान्तमाह। भयादेरिव भयाद्यथा "कौरवाणां मध्ये मां किं न जानासि केशव" इति द्रौपद्याः भगवति समर्पणप्रसिद्ध आयासोऽर्पितः स च धर्म एव अत्रापि वैराटिगजपत्न्यादिभिः कृताः सुप्रसिद्धाः आदिना कामात् वैरम्भया कृतो बोध्यः ॥ २१॥

अनृतेनानित्येन ॥ २२॥

महाप्रकरणार्थमुपसंहरति। एष इत्यादिना। ब्रह्मवादस्य वेदान्तस्य संग्रहः सारः समासव्यासविधिना संक्षेपविस्ताररूपप्रकारेण ॥ २३॥

अभीक्ष्णशः पुनः पुनः ॥ २४॥

---

भाषा टीका।

जब पर्यन्त सबभूतों में मेरी भावना नहीं होजावे तावत्पर्यन्त वाणी से मन से शरीर की वृत्ति से इसी प्रकारसे उपासना करता रहै॥ १७॥

जिसको सर्वत्र मेरा भाव होगया है उसको सबही ब्रह्मात्मक है इसी से अपनी दिव्य बुद्धि से ज्ञान विद्या से सब को ब्रह्मात्मक देखता हुआ सब कर्मों से संशय को छोड़कर संसार से निवृत्ति होजावे॥ १८॥

सब प्रकार के उपायों में यही सुंदर उपाय है यह मेरा मत है जोकि सब भूतों में मन वचन देहकी वृत्तियों से मेरी भावना करना ॥ १९॥

हे उद्धवजी! मेरे इस धर्म के आरम्भ में थोड़ाभी नाशहोनेका विघ्न नहीं है मैंने निश्चय कररक्खा है सो सुन्दर है प्राकृत गुण से रहित होनेसे कामना रहित है॥ २०॥

परमात्मा मेरे विषे जो भी धर्म निष्पक्ष रूपसे सी कल्पना

सुविविक्तं तवप्रश्नं मयैतदपि धारयेत्।
सनातनं ब्रह्म गुह्यं परं ब्रह्माधिगच्छति ॥ २५ ॥
य एतन्मम भक्तेषु संप्रदद्यात्सुपुष्कलम्।
तस्याहं ब्रह्मदायस्य ददाम्यात्मानमात्मना ॥ २६ ॥
य एतत्समधीयीत पवित्रं परमं शुचि।
स पूयेताहरहर्मां ज्ञानदीपेन दर्शयन् ॥ २७ ॥
य एतच्छ्रद्धया नित्यमव्यग्रः शृणुयान्नरः।
मयि भक्तिं परां कुर्वन् कर्मभिर्न स बध्यते ॥ २८ ॥
अप्युद्धव! त्वया ब्रह्म सखे! समवधारितम्।
अपि ते विगतो मोहः शोकश्चासौ मनोभवः ॥ २९ ॥
नैतत्त्वया दाम्भिकाय नास्तिकाय शठाय च।
अशुश्रूषोरभक्ताय दुर्विनीताय दीयताम् ॥ ३० ॥
एतैर्दोषैर्विहीनाय ब्रह्मण्याय प्रियाय च।
साधवे शुचये ब्रूयाद्भक्तिः स्याच्छूद्रयोषिताम् ॥ ३१ ॥
नैतद्विज्ञाय जिज्ञासोर्ज्ञातव्यमवशिष्यते।
पीत्वा पीयूषममृतं पातव्यं नावशिष्यते ॥ ३२ ॥

भाषा टीका।

किया जाय सोभी जैसे भयादिकों का परिश्रम व्यर्थ है तैसे वह धर्मभी लौकिक फलदायक नहीं होता है ॥ २१ ॥

यही बुद्धिमानों की बुद्धि है यही चतुरों की चतुराई है जोकि इस अनित्य शरीर से भी सत्य स्वरूप मेरेको प्राप्त हो जाय ॥ २२ ॥

यह मैने सम्पूर्ण ब्रह्म कथन संग्रह कह दिया है यह जो संक्षेप विस्तार से कह दिया है सो देवताओं को भी दुर्लभ है ॥ २३ ॥

निरन्तर तुमारे अर्थ यथार्थ युक्तिवाला ज्ञान मैंने कहाहै इसको जानने से मनुष्य सब संशयों से रहित होजाता है तब संसार से मुक्त होता है ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

आस्तां तावज्ज्ञानमेतदनुसन्धानकथनपठनश्रवणपरायणानाम-प्येतदेव फलं भवतीत्याह चतुर्भिः। सुविविक्तमिति। मया सुवि-विक्तं दत्तोत्तरमेतदाख्यानमपि यो धारयेदनुसन्दध्यात्स ब्रह्म गुह्यं वेदेऽपि रहस्यम् ॥ २५ ॥

सुपुष्कलं यथा भवति तथा ब्रह्मदायस्य ब्रह्म ददातीति तथा तस्य ज्ञानदातुः ॥ २६ ॥

समधीयीत उच्चैः पठेत् परमं शुचि अन्येषामपि शोध-कम् पूयेत शुध्येत् ॥ २७—२८ ॥

सम्यक् ज्ञानानुत्पत्तौ पुनरुपदेक्ष्यामीत्याशयेन पृच्छति अपीति। अपि किम् ॥ २९ ॥

उपधारितमाकर्ण्य ऽऽह। नैतदिति। शठाय वञ्चकाय ॥ ३० ॥ शूद्राणां योषितां च यदि भक्तिः स्यात्तर्हि ब्रूयात् ॥ ३१ ॥ एतज्ज्ञानेन पुमान्कृतार्थो भवतीत्याह। नैतदिति। अत्र दृष्टान्तमाह। पीत्वेति। पीयूषं स्वादु ॥ ३२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी

नव प्रश्नो यत्र यथा दत्तानि उत्तराणि यस्मिन्निव्येतदु-पमाख्यानस्य विशेषणं धारयेत् अनुसन्धानं कुर्यात् ॥ २५ ॥

सम्प्रदद्यात् कथयेत्। आत्मना स्वयम् आत्मानं ददामि वशीकरोमि ॥ २६ ॥

उच्चैः पठेदिति अर्थमबुद्ध्वापि। पवित्रं स्वयं दोषमात्र-रहितम्। अन्येषां श्रोतॄणां तत्सवर्णाभ्यसतामपि। स्वयं

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

स्वबहयं शुद्धेनैव नाम्नाश्रयेमिति भावः । न केवलमेतावत् भ्युत्पन्नान् प्रति ज्ञानदीपेन मां दर्शयंश्च भवतीति ॥ २७ ॥

श्रद्धापूर्वकं नित्यश्रोतृणां तु फलविशेषमाह । य इति ॥ २८ ॥

पुनरुपदेक्ष्यामीति करुणाऽप्रतामिष्याश्रिता मोहो माविकवीद्यादर्शनजो भ्रमः शोकः पुनर्मद्प्राप्तिजं दुःखम् ॥ २९ ॥

उपधारितं सम्यग् ज्ञातम् । अशुश्रूषोरशुश्रूषवे ॥ ३० ॥

एतैर्दाम्भिकत्वादिभिः यदि भक्तिः स्यात्तर्हि शूद्रयोषिद्भ्योऽपीत्यर्थः । इति सर्वेषामधिकारित्वं दर्शितम् ॥ ३१ ॥

एतस्य भक्तितात्पर्यकाध्यायस्य । अत्र ज्ञातव्यावशेषाभाव ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अध्यायस्य ज्ञानप्रदीपकस्य ॥ २६-३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तमेवाह । सुविविक्तमिति । तव प्रश्नं पृष्टं मया सुविविक्त सुष्ठु विविक्त्योपपादितमेतद्येन विचारितं धृतं स्यात् स सनातनं ब्रह्म गुह्यं वेदान्तरहस्यं परं ब्रह्माधिगच्छन् प्राप्नोति ॥ २५ ॥

किञ्च एतन्मया सुविविक्तं यो मद्भक्तेषु प्रदद्यात्तेभ्य उपदिशेदित्यर्थः । भक्तिरिहानुकूल्यं तस्य ब्रह्मदायस्य ब्रह्मप्रदेष्टुरात्मनो मां ददामि तद्वशीकरोमीत्यर्थः ॥ २६ ॥

य एतादिति । पवित्रमात्मशुद्ध्यावहं शुचि शृण्वतामपि शुद्ध्यावहम् एतद्यः समधीयीत पठेत् सोऽहरहर्ज्ञानदीपेनादरदः प्रवृत्तं ज्ञानमेव दीपः तेन मां दर्शयन् निवृत्तप्रेरणात्मकमन्तादृशः कर्तारं ज्ञाता पश्यामीत्यर्थः । योगपरिशुद्धेन मनसा साक्षात्कुर्वन्नीति भावः । पूर्वेत सत्प्राप्तिप्रतिबन्धकैर्विरहितः शुद्धो भवेदित्यर्थः ॥ २७

य एतादिति । अव्यग्रः समाहितः कुर्वन् जनयन् करोतिरुत्पादनार्थः कर्मभिर्मत्प्राप्तिप्रतिबन्धकैर्न बध्यते ॥ २८ ॥

इत्थं बहुधोपदेशेन कृतेन सम्यग्ज्ञानानुत्पत्तौ पुनरुपदेक्ष्यामीत्यभिप्रेत्य पृच्छति । अपीति । हे उद्धव । हे सखे । ब्रह्मशब्दवस्तुस्वानादीनामप्युपलक्षकः समवधारितं सम्यगवधृतं किम् अविशङ्कः प्रश्नयोगतः नावधारितं चेत्पुनरुपदेक्ष्यामीति भावः एवमग्रे मोहः देहात्मभ्रमः स्वतन्त्रात्मभ्रमादिरूपो मनोभवो मनसि भवः शोकस्तापत्रयजन्यः ज्ञानाभावप्रयुक्तश्च ॥ २९ ॥

मद्भक्तेषु सद्वदस्यादित्युक्ते दम्भकेभ्यो नोपादिशेदित्यवगम्यते तत्स्पष्टमेवाह । नैतदिति । नास्तिकाय शास्त्रार्थविश्वासरहिताय शठाय मूर्खाय नैतद्दातव्यं नोपादिश्यताम् ॥ ३० ॥

किन्त्वेतैर्दाम्भिकतादिभिर्दोषैर्विहीनाय ब्रह्मण्याय ब्राह्मणेषु साधवे प्रियाय स्वहितम्प्रीतियुक्ताय साधवे परोपकर्त्रे यदि शूद्रस्य योषितश्च भक्तिः भवेत् स्यात्तर्हि ताभ्यामपि ब्रूयात् ॥ ३१ ॥

एतज्ज्ञानेन पुमान् कृतार्थो भवतीत्याह । नेति । अत्र दृष्टान्तमाह । पीत्वेति । पीयूषं स्वादु ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सुविविक्तं तव प्रश्नमवधार्य मयोक्तं सनातनं ब्रह्म गुह्यं वेदरहस्यं परिहारमपि धारयन् पुरुषः परं ब्रह्म जानाति ज्ञात्वा प्राप्नोति चेत्यन्वयः ॥ २५ ॥

प्रवचनमतफलमाह । य एतदिति । सुपुष्कलं यावदपेक्षितं तावज्ज्ञानं प्रदीप इव दावः पितृधनं यस्य स यद्वा प्रदक्ष्यायोऽर्थागमो यस्य स तथा तस्य आत्मना प्रसन्नेन मनसा आत्मानं मद्विषयं ज्ञानं दत्त्वा मत्स्वरूपं ददामि ॥ २६ ॥

अध्येतुः फलमाह । य इति । मां दर्शयन् ॥ २७ ॥

श्रोतुः फलमाह । य इति ॥ २८ ॥

अज्ञातांशं सम्यग्वक्तुं श्रोतृज्ञाने अवधृतिं पृच्छति । अपीति समुपधारितमपि किं मोहश्च विगतोऽध्वसो मनोभवः मनःशुद्धत्वेन जातः शोकश्च नष्टः किम् ॥ २९ ॥

एतस्य ज्ञानस्योपदेष्टुर्महाफलसम्भवेऽपि योग्यायैवोपदेष्टव्यं नायोग्यायेत्याह । नैतदिति ॥ ३० ॥

शूद्राणां योषितां च यदि भक्तिः स्यात्तर्हि तेभ्योऽपि ब्रूयादित्यन्वयः ॥ ३१ ॥

इदमेव मुक्तिसाधनं नान्यदित्याशयेनाह । नैतदिति ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

समुदायस्य तु पौर्वापर्येणानुसन्धानेऽपि फलं तु मल्लक्षणां साधनासिद्धभक्तेन सार्थमविशेषं स्यान्मम स्वरूपसुपातादित्याह । सुविविक्तमिति । ब्रह्म गुह्यं परं ब्रह्माणि मामित्यर्थः । गूढं परं ब्रह्म मनुष्यलिङ्गमिति श्रीनारदोक्तेः ॥ २५ ॥

मद्भक्तसात्करणं तु तावदेवेति किं वक्तव्यं यतः । य एतादिति ददामि वशीकरोमि ॥ २६ ॥

अर्थानुसन्धानकेवलं पठतः फलमाह । य एतदिति । परमं शुचि दोषमात्ररहितं परमं पवित्रं वक्तृश्रोतृणां सर्वदोषनिवारकं च अतः स स्वयं पूतनैव नाम्नाश्रयेमिति भावः न केवलमेतावत् व्युत्पन्नान् प्रति मां ज्ञानदीपेन दर्शयंश्च भवतीति ॥ २७ ॥

श्रद्धापूर्वकं नित्यश्रोतृणां तु फलविशेषमाह । य इति ॥ २८ ॥

अथ करुणया स्वयं सान्त्वयति । अपीति । मोहः मदीयानामेवान्यथा भाव जातः शोकः पुनर्मत्प्राप्त्यभावेन जातः अयं भावः भगवता सह मम योऽयं सम्बन्धस्तच्छूयमाणादिनेऽपि यदि तत्तद्रूपं फलं तदा तत्र कः सन्देहः कोऽन्येषां महत्प्रभावाणामिति ॥ २९ ॥

तत्र सप्रतीतिकमाक्षेपव्यतिरेकान्वयाभ्यामुपदेशानुपदिशति । नैतदिति द्वाभ्याम् ॥ ३० ॥

किं बहुनेत्याह । भक्तिरिति । शूद्रयोषिद्भ्योऽपीत्यर्थः इति सेवामप्यधिकारो दर्शितः ॥ ३१ ॥

यस्मादेवं भक्तिरेवात्र साधनं फलं तस्मान्निगमयति नैतदिति । पीयूषकथामृतं परमोत्तममिति गम्यते ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तव प्रश्नं मया सुविविक्तं यद्गोप्यं यो धारयेत् एतदुपाख्यानमपि यो धारयेत् ब्रह्मगुह्यं वेदरहस्यं परब्रह्मस्वरूपम् ॥ २५ ॥

ज्ञाने कर्मणि योगे च वार्त्तायां दण्डधारणे ।
यावानर्थो नृणां तात! तावांस्तेऽहं चतुर्विधः ॥ ३३ ॥
मर्त्यो यदा त्यक्तसमस्तकर्मा निवेदितात्मा विचिकीर्षितो मे ।
तदाऽमृतत्वं प्रतिपद्यमानो मयाऽऽत्मभूयाय च कल्पते वै ॥ ३४ ॥

। श्रीशुक उवाच ।

य एवमादर्शितयोगमार्गस्तदोत्तमश्लोकवचो निशम्य ।
बद्धाञ्जलिः प्रीत्युपरुद्धकण्ठो न किञ्चिदूचेऽश्रुपरिप्लुताक्षः ॥ ३५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सुपुष्कलं यथा स्यात्तथा ब्रह्मणि दायो यस्य ब्रह्म ददातीति ब्रह्मदायः तदर्थेऽपि चतुर्थ्यर्थे षष्ठी ॥ २६—२७—२८ ॥

नित्यसिद्धस्य निस्त्रैगुण्यस्यापि उद्धवस्य ज्ञानादिग्राहणार्थं स्वशक्त्यैव मोहमुत्पाद्य ज्ञानाद्युपदेशेन पुनस्तं निराकृत्य लीलया पृच्छति । अपीति ॥ २९ ॥

अशुश्रूषोरभक्ताय शृण्वते ॥ ३० ॥

शूद्राणां योषितां च यदि भक्तिः स्यात्तर्हि तेऽप्यनायासेन ब्रूयात् ॥ ३१—

यद्यपि भक्त्यैव कृतार्थस्य मद्भक्तस्य ज्ञानेन नास्ति प्रयोजनं तदपि ज्ञानं नाम कीदृशमिति कदाचित् कस्यचिद्भक्तस्य यदि जिज्ञासा स्यात्तदा तेन ह्येवमेव द्रष्टव्यमत्र ज्ञानस्यापि सत्त्वादित्याह । नैतदिति । पीयूषं सुधां पीत्वा पातव्यम् अमृतं पेयममृतानन्तरं नावशिष्यते ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किञ्च सनातनत्वे हेतुमाह । ब्रह्म गुह्यं वेदरहस्यं तव प्रश्नं प्रश्नजातं मया सुविविक्तं सुष्ठु दत्तोत्तरं च एतदाख्यानं यो धारयेत् अनुसन्दध्यात् स परं ब्रह्म मामधिगच्छति ॥२५॥

किञ्च यथा सुपुष्कलं यथा भवति तथा मम भक्तेषु सम्प्रदायानुपदिशेत् तस्य ब्रह्मणामित्रोपदेशद्वारा ददातीति ब्रह्मदायस्य आत्मनः स्वस्य आत्मानं देहमपि ददामि ॥ २६ ॥

किञ्च यः परमं पवित्रं निरतिशयं शुद्धं शुचि अन्येषां शोधकमेतदाख्यानं समधीयीत सम्यक् पठेत् स पूयेत शुद्ध्येत् मां ज्ञानदीपेन जनानां प्रति दर्शयन्नित्यनेन जनानामपि पवित्रीकुर्यादिति सूचयति ॥ २७ ॥

किञ्च यः श्रद्धातारतम्येन यथा शृणुयात्तथैव सकर्मभिर्न बध्यते मुक्तो भवतीत्यर्थः ॥ २८ ॥

मोहः देहादावहं ममाभिमानः ॥ २९ ॥ ३० ॥

शूद्रस्य योषितां च यदि भक्तिः स्यात्तदा ब्रूयात् ॥ ३१ ॥

पीयूषं स्वादु ॥ ३२ ॥

---

भाषा टीका ।

गुह्य पूछे हुये इस प्रश्नों को मैंने अच्छे प्रकार से कह दिया है इस प्रसंग को जो पुरुष अच्छे प्रकार से धारण करैगा सो वेदों में गुप्त सनातन ब्रह्म को प्राप्त हो जावैगा ॥ २५ ॥

जो पुरुष इस परिपूर्ण ज्ञानोपदेश को मेरे भक्तों के अर्थ प्रदान करैगा उस ब्रह्म ज्ञान देने वाले पुरुष के अर्थ मैं अपने इच्छा ही से अपने स्वरूप को देदेउंगा ॥ २६ ॥

इस परम पवित्र शुद्ध उपदेश को जो पुरुष अच्छे प्रकार से अध्ययन करैगा वह पुरुष ज्ञान रूपी दीपक से मेरे को प्रकाश करता हुआ आप पवित्र होगा तथा औरों को भी पवित्र करैगा ॥ २७ ॥

जो मनुष्य श्रद्धा से स्थिर होकर नित्य प्रति इस ज्ञान को श्रवण करैगा वह पुरुष मेरे विषे परम भक्ति को प्राप्त होकर संसार के कर्म बंधों से छूट जावैगा ॥ २८ ॥

हे सखे उद्धव! तुमने इस ब्रह्म ज्ञान के अच्छे तरह से जान लिया कि नहीं और क्या तुमारे मन में होने वाला जो शोक तथा मोह चलागया कि नहीं ॥ २९ ॥

इस ज्ञान को तुम दंभ करने वाले को नास्तिक को धूर्त को सुनने की श्रद्धा न रखने वाले को भक्ति न करने वाले को कभी नहीं देना ॥ ३० ॥

इन दोषों से जो रहित होवे ब्राह्मणों का पूजक होवे अपना प्रिय होवे साधु होवे शुद्ध होवे भक्ति वाला शूद्र या स्त्री भी होवे तो इन सभों को देना चाहिये ॥ ३१ ॥

जिज्ञासु पुरुष को इस के जान लिये पीछे फिर कुछ भी जानने को नहीं बाकी रहाता है जैसे कि पीने ही योग्य अमृत के पीने पर फिर कुछ भी पीने योग्य नहीं रहता है ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु सन्ति बहूनि तत्तत्फलसाधनानि सत्यम् अनन्यभक्तानां भक्तस्य तु सर्वमहमेवातो मदेकशरणो भवेत्याह । ज्ञान इति । ज्ञानादौ यावान् धर्मादिलक्षणश्चतुर्विधोऽर्थस्तावांस्तत्सर्वोऽपि तेऽहमेव तत्र ज्ञाने मोक्षः कर्मणि विहिते धर्मः कर्मण्येव स्वाभाविके तु कामः योगे स्वणिमादिसिद्धयः वार्त्तायां कृष्या·

विष्टभ्य चित्तं प्रणयावघूर्णं धैर्येण राजन् ! बहु मन्यमानः ।
कृताञ्जलिः प्राह यदुप्रवीरं शीर्ष्णा स्पृशंस्तच्चरणारविन्दम् ॥ ३६ ॥

उद्धव उवाच ॥

विद्रावितो मोहमहान्धकारो य आश्रितो मे तव सन्निधानात् ।
विभावसोः किं नु समीपगस्य शीतं तमो भीः प्रभवन्त्यजाद्य ! ॥३७ ॥
प्रत्यर्पितो मे भवताऽनुकम्पिना भृत्याय विज्ञानमयः प्रदीपः ।
हित्वा कृतज्ञस्तव पादमूलं कोऽन्यत्समीयाच्छरणं त्वदीयम् ॥ ३८ ॥
वृक्णश्च मे सुदृढः स्नेहपाशो दाशार्हवृष्ण्यन्धकसात्वतेषु ।
प्रसारितः सृष्टिविवृद्धये त्वया स्वमायया ह्यात्मसुबोधहेतिना ॥ ३९ ॥
नमोऽस्तु ते महायोगिन् ! प्रपन्नमनुशाधि माम् ।
यथा त्वच्चरणाम्भोजरतिः स्यादनपायिनी ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तावर्थः इयदर्मीतावैश्वर्यमिति सिद्ध्यैश्वर्ययोरपि कामास्तेषां स्वाध्यायानुविंध्यम ॥ ३३ ॥

कुत इत्यत आह । मर्त्य इति । यदा त्यक्तसमस्तकर्मा मय्येव निवेदितात्मा भवति तदाऽसौ मे विचिकीर्षितो विशिष्टः कर्तुं मिष्टो भवति ततश्चामृतत्वं मोक्षं प्रतिपद्यमानो मयात्मभूयाय मदैक्याय मत्समानैश्वर्यायेति यावत् कल्पते योग्यो भवति वै ध्रुवम् ॥ ३४ ॥

आदर्शितो योगमार्गो यस्मै सः ॥ ३५ ॥

प्रणयेनावघूर्णं क्षुभितं चित्तं धैर्येण विष्टभ्य बहुमन्यमान आत्मानं कृतार्थं मन्यमानः ॥ ३६ ॥

मे मया य आश्रित आसीत्स तव सन्निधानेनैव विद्रावितः प्रभवन्ति किं नु बाधाय समर्था भवन्ति अजाद्य ! ब्रह्मणोऽपि जनक ! ॥ ३७ ॥

किञ्च यद्यपि तव सन्निधानादेव गतस्तथाप्यनुकम्पिना भवता विज्ञानमयः प्रदीपश्च प्रत्यर्पितः स्वमाययाऽपहृतः पुनः समर्पितोऽतस्तव कृतज्ञः यस्त्वया कृतमनुग्रहं जानाति स को नाम त्वदीयं पादमूलं हित्वाऽन्यच्छरणं समीयाद्गच्छेत् ॥ ३८ ॥

किञ्च दाशार्हादिषु त्वया यः स्वमायया स्नेहपाशः प्रसारितः स त्वयैवाऽऽत्मतत्त्वज्ञानखड्गेन वृक्णश्छिन्नः ॥ ३९ ॥

एवं यद्यपि त्वया बहूपकृतं तथाऽप्येतावत्प्रार्थये इत्याह । नमोऽस्त्विति । अनुशाधि अनुशिक्षय अनुशासनीयमाह । यथेति । मुक्तावप्यनपायिनी ॥ ४० ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

तत्तत्फलसाधनानि मोक्षधर्मादिफलसाधनानि । ज्ञानकर्मादीनि । ततो भक्तस्य मदेकधनत्वात् । अर्थः फलम् । तत्र ज्ञानादि मध्ये ॥ ३३ ॥

कुत इति कर्मादेतोः कृतार्थत्वमित्यर्थः । मोक्षं संसारान्मुक्तिम् ॥ ३४ ॥

आ दर्शितः सम्यग् दर्शितः योगमार्गः स्वसंयोगमार्गः ॥३५॥

प्रणयेन वियोगदुःखात्मकतया परिणतेन गाढविश्रम्भमयात्मकस्नेहविशेषेणाताख्योपदेशप्रसादबाहुमानमनेन कृतार्थं मन्यमानः ॥ ३६ ॥

मोहः पुनस्त्वत्प्राप्त्यसम्भावनादिरूपः मया कर्त्रा आश्रितः स्वीकृतः । सन्निधानेनैव कृपावलोकनाद्यमृतवर्षिसान्निध्यप्रभावेनैव । किमुत तादृशोपदेशादिलक्षणकारार्थः ॥ ३७ ॥

विज्ञानमयः तादृशोपदेशेन नित्यलीलानुभवमयः । स्वमायया प्रकटलीलाया वियोगलीलादर्शनमेवच्छायया त्वयापहृतः पुनरुपदेशेनार्पित इति प्रतिशब्दस्याभिप्रायो व्याख्यातः । अतोऽपहृतस्यापि पुनः समर्पणात् ॥ ३८ ॥

स्नेहपाशः भवत्सम्बन्धमन्तरा केवलं स्वसंबन्धमयः किन्तु भवत्सम्बन्धेन तु स्वीकृत एव तदीयनित्यपरिकरे स्नेहाभावे भक्तकपूजाऽभ्यधिकेति भवद्विरहा तु गोविन्दं तदीयास्वाद्येषु च इत्यादि वचनव्याकोपापत्तेः ३९ ॥

मुक्तावप्यनपायिनीत्युक्त्या नारदवैकल्पमुक्तिरूपं स्वाद्यस्याम विवेकाभावाद्रतिर्न स्यात् किन्तु प्रेमसेवोपयोगिनी स्यात् । विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिणः इत्युक्तेरित्यभिप्रेतम् ॥ ४० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ज्ञानकर्मादीनां यावानर्थः तावानर्थो नाम चतुर्विधः पुरुषार्थश्चतुष्टयादन्यत्प्रयोजनान्तरं नास्तीत्यर्थः ॥ ३३ ॥

आत्मभूयाय आत्मभावाय भावश्च स्वभावः मत्साम्यापत्त्यर्थः । यद्वा । आत्मशब्दः स्वभाववाची भूयाय शरीरसम्बन्धविरहेणावस्थानाय मोक्षायेत्यर्थः ॥ ३४–३५ ॥

अन्धकारः किमागमिष्यतीति भावः ॥ ३६–३८ ॥

मयं प्रसारितः स्नेहपाशः आत्मसुबोधहेतिना आत्मज्ञानशस्त्रेण वृष्ण्यः छिन्नः ॥ ३९–४१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सर्वमोक्षशास्त्रार्थसारसंग्रहोऽयमेवेत्याह । ज्ञान इति । वार्त्तायां कृष्यादौ दण्डधारणाशब्देन सामाद्युपाया लक्ष्यन्ते ज्ञानमात्मोपासनं नृणां ज्ञानादिषु क्रियमाणेषु यावान् पुरुषार्थः क्रियाश्चतुर्विधः धर्मार्थकाममोक्षरूपः तावान् सर्वोऽपि ते त्वादृशस्य भक्तस्याहमेव तत्र ज्ञाने मोक्षः कर्मणि धर्मः योगेऽणिमादयः वार्त्तायां दण्डधारणे चार्थः ततः कामः अणिमादयोऽपि कामान्तर्भूताः एवं चतुर्विधः पुरुषार्थोऽहमेव मामृतेन कञ्चन वाञ्छतीति भावः ॥ ३३ ॥

इत्थमनन्यप्रयोजनो मत्प्रपन्नो मत्साधर्म्यमुपैतीत्याह मर्त्य इति विचिकीर्षितः विलक्षणं कर्तुमिष्टः अनुजिघृक्षोरिति यावत् मे मह्यं यदा निवेदितः सोऽमित्यात्मानं युञ्जीतेत्युक्तरीत्या समर्पितः आत्मा येन सः न्यस्तात्मरक्षाभर इत्यर्थः । त्यक्तानि समस्तान्यमदाराधनात्मकानि कर्माणि येन तथाभूतो भवति तदा मया हेतुभूतेनामृतत्वं मुक्तिं प्रतिपद्यमानः आत्मभूयायात्मभावाय कल्पते भावश्च स्वस्वभावः स्वाभाविकापहतपाप्मत्वादिर्भावाय कल्पत इत्यर्थः । यद्वात्मनो मम भावाय प्रकाराय मत्साधर्म्यायेत्यर्थः ॥ ३४ ॥

स इति । स उद्धवः आदर्शितो योगमार्गो न्यासोपासनात्मकज्ञानयोगमार्गौ यस्य सः उत्तमश्लोकस्य भगवतो वचो मर्त्यो यदेत्यादि तदनन्तरवचो निशम्य प्रीत्यावरुद्धः कण्ठो यस्य स आनन्दाश्रुनिरुद्धकण्ठ इत्यर्थः । अत एवाश्रुभिः परिप्लुते अक्षिणी यस्य सः तावत्किञ्चिदपि नोचे ॥ ३५ ॥

ततः प्रणयेनावघूर्णं क्षुभितं चित्तं शनैर्धैर्येण विष्टभ्य स्ववशीकृत्य हे राजन् ! बहुमन्यमानः आत्मानं कृतकृत्यं मन्यमानः यदुप्रवीरं श्रीकृष्णं प्राह कथम्भूतः सन् धीरः प्राञ्जलिः शिरसा तस्य यदुप्रवीरस्य चरणाम्बुजं स्पृशन् ॥ ३६ ॥

उक्तिमेवाह । विद्रावित इत्यादिना । तावदच्युतस्त्वया ब्रह्मोति प्रदर्शयोत्तरमाह । विद्रावित इति । यो मे मया आश्रितः मोह एव महानन्धकारस्स तव संनिधानादेव विद्रावितः हे अजाद्य ! अजस्य ब्रह्मणोऽपि जनक विभावसोः सूर्यस्य समीपं प्राप्तस्य पुंसः शीतं तमोऽन्धकारः भीस्तत्प्रयुक्तं भयमन्धकारे किमागमिष्यतीति भयं चेत्यर्थः । किं प्रभवन्ति स्वकार्यकरा भवन्ति किमित्यर्थः ॥ ३७ ॥

यद्यपि सन्निधानादेव विद्रावितस्तथाप्यनुकम्पिना हेतुगर्भमिदम् अतो भवता विज्ञानरूपः प्रदीपो भूत्वा मे मह्यं प्रत्यर्पितः । स्वमाययापहृतः पुनः समर्पितः । अनेन जीवानां स्वभावतः सूक्ष्मार्थदर्शित्वं भगवन्मायया तत्तिरोधानं च सूच्यते अत इत्थमुपकुर्वन्तं त्वां जानन् को वा पुमांस्त्वदीयं पादमूलं हित्वाऽन्यच्छरणं प्राप्नुयात् ॥ ३८ ॥

किञ्च वृष्ण्य इति । दाशार्हादिषु सृष्टिविवृद्धये संसृतिवृद्धये यस्त्वया कृतो स्वमायया मे सुदृढः । स्नेहपाशः प्रसारितः स भवतैवात्मसुबोधहेतिना आत्मज्ञानहेतिना वृष्ण्यादिषु छिन्नश्च ॥ ३९ ॥

इद तु ममाभिलषितमिति नमस्कुर्वन्नाह । नम इति । त्वच्चरणाम्भोजे रतिर्भक्तिरनुरागात्मिका यथा स्यात्तथा मां प्रपन्नमनुशाधि शिक्षयानुगृहाणेत्यर्थः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तर्हि लोका एतत्किमिति न विविदिषन्तीति तत्राह । यावानिति । नृणां यावान् ज्ञातव्यार्थो भवेत्तावांश्चतुर्विधो मोह इत्येतदुपलक्षणं पञ्चपर्वाविद्याप्रतिरुद्धत्वान्न ज्ञातुमिच्छन्तीत्यर्थः ॥ ३३ ॥

नन्वेवं चेद्विविदिषाभावेन कथञ्चनुदयो मुक्तेरत्राह । मर्त्य इति । अयं मोक्षं प्राप्नोत्विति मोक्षोपायं प्रति मे मया विकीर्षितो भवेत् यदा मदुद्देशेन मर्त्यस्त्यक्तसमस्तकर्मा हरिरेव मयि निधत्वा सर्वं कर्म करोति अहं तदधीन एव कर्म करोमि न स्वतन्त्र इति इत्येव निवेशितात्मा च भवति तदाऽमृतत्वं प्रतिपद्यमानः प्राप्तुं योग्यो भवन्नसौ मयात्मभूयाय निर्दुःखानन्दानुभवरूपमोक्षायैव कल्पत इत्यन्वयः "यमेवैष वृणुते तेन लभ्य" इति श्रुतेः ॥ ३४ ॥

उद्धवस्य भक्त्यतिशयलक्षणमाह । स एवमिति ॥ ३५ ॥ ३६ ॥

अप्युद्धवेत्याद्युक्तं परिहरति । विद्रावित इति । यो मोहमयान्धकारो मे मन आश्रितः स एव तव सान्निध्यान्मोहान्धकारापगमः कथमत्राह । विभावसोरिति । हे ऽजाद्य ! तमश्चाभिप्रभवति किन्तु नैव ॥ ३७ ॥

हरेः स्वात्मन्यनुकम्पातिशयं हेतुं करोति । प्रत्यर्पितेति । हिशब्दो हेतौ अनुकम्पिना मयि प्रवर्धितेति मन्ये विज्ञानमयःप्रदीपो दत्तो हि यस्मात्त्वमाश्रितेति शेषः । अतः सर्वस्माद्युपकारकत्वात्त्वामेव निषेव्य इति भावेनाह । हित्वेति ॥ ३८ ॥

कीदृशो मोहान्धकारो योऽसौ ज्ञानासिना छिन्न इति तत्राह । वृष्ण्यस्वति यः सृष्टिविवृद्धये त्वया प्रसारितो विस्तारितः स एष स्वमायया एनं संसार यामीत्युन्मूलनिजकृच्छ्वा प्रादुर्भूतात्मावबोधाख्यहेत्या वृष्ण्यश्चेत्यन्वयः ॥ ३९ ॥

स्वात्मनो भगवदेकाश्रयत्वं प्रकटयन्नाह । नम इति ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेतत्परोपदेशार्थमेव त्वां प्रत्युपदिष्टं तव तु साधनं साध्यं च सर्वमहमेवेत्याह । ज्ञान इति । तत्र ज्ञाने मोक्षः कर्माणि धर्मः

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

कामश्च योगे नानाविधसिद्धिलक्षणो ऽलौकिकः वार्तायां द्रव्यक्रयादौ च नानाविधलौकिकश्चार्थ इति चतुर्विधत्वं ज्ञेयम् ॥ ३३ ॥

आस्तां तव वार्ता मद्भक्तमात्रस्यापि स्वभक्तो विलक्षणां गतिं ददामीत्याह। मर्त्य इति ॥ ३४ ॥

एवमा समन्ताद्दर्शितो योगस्य येन मार्गो यस्मै सः ॥ ३५ ॥

बहु मन्यमान इति। मुहुरुत्कण्ठाश्रुयोगदुःखावरणाय तादृश। तदुपदेशप्रसादस्य ममयद्भाग्यभावनयात्मानमुल्लासयितुमिच्छन्नित्यर्थः ॥ ३६ ॥

मोहः पुनस्त्वत्प्राप्त्यसम्भावनादिमयः मद्रूपो योऽन्धकारो मयाश्रितः स तव सन्निधानात् कृपावलोकादिवर्षिसान्निध्यप्रभावादेव स्वयं विद्रावितोऽभूत् किमुत तादृशोपदेशादित्यर्थः ॥ ३७ । ३८ ॥

किञ्च सृष्टिविवृद्धये स्वमायया यः स्नेहपाशस्त्वया प्रसारितः स मया त्वदुक्तेनात्मसुबोधहेतिना वृक्णः किन्तु भवत्सम्बन्धेनैव पु स मया स्वीकृत इत्यर्थः। यद्वा मे मम दाशार्हादिषु स्वाभिमानात्पूर्वं स्नेहपाशो वृक्णश्छिन्नोऽपि कंसवधादनन्तरं स्वयमेव स्वमायया भक्तविषयकृपया सृष्टिविवृद्धये जगतः स्वाभिमततादृशस्नेहविवृद्धये प्रसारितः कीदृश्या स्वमायया आत्मसुबोधस्य ब्रह्मानुभवस्यापि हेतिना छेदकरूपयेत्यर्थः। ततः स कथं मया त्यज्यतामिति भावः ॥ ३९ ॥

तथापि परमाभीष्टं तव कृपयैव सम्पत्स्यत इति पुनः सकाकु प्रणमन् प्रार्थयते। नमोऽस्त्विति। मां प्रपन्नमनुशाधि संपादयेत्यर्थः। तस्याश्च प्रपत्तेर्वैशिष्ट्याय स्पृहयन्नाह। यथेति ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

ननु यदि कस्यचिद्भक्तस्य ज्ञानकर्मादिफलेऽपि लिप्सा स्यात्तदा तेन ज्ञानादिकमभ्यसनीयमेवेति तत्राप्येवं लक्ष्यीकृत्य नैवेत्याह। ज्ञाने इति। ज्ञानादौ यावान् अर्थः फलं मोक्षादिश्चतुर्विधः तावान् सर्वोऽपि तव भक्तस्याहमेव भवामि तं तमर्थं सर्वमेव ददामीत्यर्थः। ततश्च किं ज्ञानाद्यभ्यासेनेति भावः तत्र ज्ञाने मोक्षः कर्मणि विहिते धर्मः योगेऽणिमादिसिद्धिलक्षणः कामः वार्तायां कृष्यादौ वणिग्व्यापारे चार्थः यदुक्तं—

या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये।
तया विना तदाप्नोति नरो नारायणाश्रयः॥

इति ॥ ३३ ॥

ननु मया सर्वमतान्यश्रुतानि किन्तु त्वदुक्तानां किं मतं तत् त्वं ब्रूहीत्यपेक्षायां भोः प्रणयिन्नुद्धव! चतुर्विंशेऽध्याये सत्कार्यवादिनां मतमष्टाविंशे तथैवासत्कार्यवादिनां च मतमुक्तं मद्भक्तास्तदविवादिनः सत्यवादिनः सन्तो वस्तुतस्तु तदुभयमतमध्यवर्तिनो नैव भवन्तीत्याह। मर्त्य इति। मनुष्यो यदा यादृच्छिकमद्भक्तकृपाप्रसादात् त्यक्तानि समस्तानि नित्यनैमित्तिककाम्यानि कर्माणि येन सः निवेदितात्मा मत्स्वरूपभूताय मन्मन्त्रोपदेशकाय गुरवे "योऽहं ममास्ति यत् किञ्चिदिह लोके परत्र च। तत् सर्वं भवतो नाथ! चरणेषु समर्पितमिति" वचसा मनसा च समर्पिताहंताममतास्पदो भवति तदा तत्क्षणमारभ्यैव स मर्त्यो मे मया विचिकीर्षितः विशिष्टः कर्तुमिष्टः मत्प्रतिपाद्यमानेन भक्त्याभासेन योगिज्ञानिप्रभृतिभ्योऽपि विलक्षण एव कर्तुमीप्सितः स्यादिति तेन गुणकार्यो न मायाकार्यः सत्यभूत एव नाप्यविद्याकार्यो मिथ्याभूत एव किन्तु मत्कार्यो गुणातीत एव सन्नमृतत्वं मृतं नाशस्तदभावस्तत्त्वं प्रतिपद्यमानः मया सहैव आत्मभूयाय समृद्ध्यै कल्पते योग्यो भवति चकारोऽनुक्तं फलमनुविहितं फलं तु प्रेमवत्पार्षदत्वमिति ॥ ३४ ॥ ३५ ॥

प्रणयेन अवघूर्णमवगतघूर्णात्मकं महाव्यग्रं चित्तं धैर्येण विष्टभ्य तदुत्तमवाक्यमेव यच्चैवममृतमिव बहुमन्यमानः ॥ ३६ ॥

यो मे मया मोहमहान्धकारः आश्रितः सर्वबान्धवविराजितमत्प्रभुसहिता द्वारकेयं परित्यक्तैव सम्प्रति गन्तव्येति विचारमयः स त्वया विद्रावित इति। तृतीयचरणव्यवहितोऽन्वयप्रदर्शनान्तरमनन्वयेऽयं धीर्यान्तरकृत्य प्रदीपम् आविष्करोति द्रष्टुम् आत्मनः परमां स्थितिमिति वचनरचनात्मकमुक्तार्थबाधकस्तत्कथा एतदुक्तत्वात्सर्वत्रैवोक्ता ज्ञेया अतः काकुरवाकूतं श्रीवराहस्य चोत्तमश्लोकस्यैवाह मैत्रेय इतिवत् ॥ ३७ ॥

प्रत्यर्पित इति। मया तुभ्यमात्मबुद्धीन्द्रियादिसहितं शरीरं समर्पितं त्वया तु विज्ञानमयः स्वानुभवमयः प्रदीपः प्रत्यर्पितः अतोऽहं प्रतिक्षणमेव सर्वदेशकालवर्तिनः सपरिकरविशिष्टस्य तव माधुर्यानुभवेन त्वया पूर्णीकृत एव मत्प्रतिबन्धे मत्करणेन यत्त्वं चिकीर्षसि तत्कुरु यत्र क्वापि प्रस्थापयितुमिच्छसि तत्र प्रस्थापय मैत्रेयवदित्याशयेनेति भावः। यतः कृतज्ञस्त्वत्कृतस्य पादमूलं हित्वा अन्यत् त्वदीयमपि स्वकं शरणं स्वगृहमपि को नाम समीयात् गच्छेत् यदि च तत्रापि वर्तमानस्य तव साक्षादनुभवः स्यात्तदा गच्छेदपि न कापि क्षतिः प्रत्युत त्वन्निदेशपालनं चेति भावः ॥ ३८ ॥

ननु तर्हि यादवादिषु स्नेहं हित्वा कथं गन्तुं प्रभविष्यसि तत्राह। वृक्णादिश्चेन्नः प्रथमार्थः दाशार्हादिषु मे द्विविधः स्नेहपाशः तत्र यः स्वमायया त्वया सृष्टिविवृद्धये प्रसारितः दाशार्हादयः सपुत्रपौत्रादिरूपेण पुनरप्येते वर्धन्तां नत्वाशु समस्तसमृद्धयः सन्तु सर्वे दिग्देशव्यापिनो भूयासुरित्याभिमानिकः स्नेहपाशः स मया आत्मसुबोधहेतिना वृक्ण एव यस्तु त्वद्रूपगुणकर्मपरिकरमाधुर्यास्वादमयस्तदनन्यमस्तु स्नेहपाशः स तु मे भूषणभूतो वर्तत एव त्वया ज्ञानदीपार्पणात् यत्रैव यास्यामि तत्रैव वृष्ण्यादिसहितत्वल्लीलाविशिष्टामेव द्वारकां साक्षाद्द्रक्ष्यामि तत्र कृतकार्यं कस्यचिदात्माज्ञाया एवाप्यर्पयामि ॥ ३९ ॥

हे महायोगिन्। महायोगबलेन सर्वत्रैव मां स्वानुभावमयानन्दयितुं प्रभव! ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

किञ्च ज्ञानादौ यावान् चतुर्विधार्थः पुरुषार्थः नृणामधिकारिणामस्ति स चतुर्विधोऽपि ते मद्भक्तस्याहमेवास्मि तत्र ज्ञाने मोक्षः कर्मणि धर्मः वार्तायां कृष्यादौ वणिग्व्यापारे च अर्थः अर्थतः कामः योगेऽणिमादिकः सिद्धयस्तासां

श्रीभगवानुवाच ।

गच्छोद्धव ! मया दिष्टो बदर्याख्यं ममाश्रमम् ।
तत्र मत्पादतीर्थोदे स्नानोपस्पर्शनैः शुचिः ४१ ॥
ईक्षयाऽलकनन्दाया विधूताशेषकल्मषः ।
वसानो वल्कलान्यङ्ग वन्यभुक्सुखनिस्पृहः ४२ ॥
तितिक्षुर्द्वन्द्वमात्राणां सुशीलः संयतेन्द्रियः
शान्तः समाहितधिया ज्ञानविज्ञानसंयुतः ॥ ४३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कामेऽन्तर्भावः त्वद्विधानां भागवतानामहमेव सर्वपुरुषार्थनिर्वाहक इति फलितोऽर्थः ॥ ३३ ॥

मर्त्यः यदा मर्त्यः निवेदितात्मा निवेदितः मय्यर्पितः आत्मा येन सः अत एव त्यक्तानि मत्सम्बन्धवर्जितानि समस्तानि कर्माणि येन सः तदा स मे विचिकीर्षितो विशिष्टं कर्तुमिष्टो भवति ततश्च मया अमृतत्वं मोक्षं प्रतिपद्यमानः आत्मभूयाय मद्भावाय कल्पते योग्यो भवति वै निश्चितम् ॥ ३४ ॥

आ सर्वमुक्तितः दर्शितः योगमार्गः सद्धानध्यानमार्गो यस्मै सः ॥ ३५ ॥

बहु मन्यमानः आत्मानं श्रीकृष्णकृपापात्रं मन्यमानः प्रश्रयेण प्रणयपूर्णितं व्याकुलं चित्तं धैर्येण विष्टभ्य प्राह ॥ ३६ ॥

हे अज हे आद्य ! सर्वकारणकारण ! यो मे मया आश्रितः मोहः देहाद्यहङ्कारादिरूपः आत्मन्यनात्मत्वात्मकत्वरूपश्च स एष महान्धकारः महदज्ञानम् स तव सन्निधानाद्विद्रावितो गतः किन्तु प्रभवन्ति प्रभावं कुर्वन्ति नैव प्रभवन्ति ॥ ३७ ॥

यद्यपि तव सन्निधानाद्विद्रावितस्तथापि प्रदीपः प्रत्यर्पितः कृतज्ञः भवदनुग्रहवित् ॥ ३८ ॥

आत्मसुबोधहेतिना । वृष्णयः सात्वतप्रभृतयस्तु ज्ञानखड्गेन छिन्नः ॥ ३९ ॥

अनुशाधि अनुशिक्षय ॥ ४० ॥

---

भाषा टीका ।

ज्ञान में कर्म में योग में कृष्यादि वृत्ति में नीति शास्त्र में इन सबों में मनुष्यों को जितना प्रयोजन है वह सब धर्म अर्थ काम रूप पुरुषार्थ तो तुमारे वास्ते हमहीं हैं ॥ ३३ ॥

जिस समय मनुष्य संसार के सब कर्मों को छोड़ देता है और मेरेको आत्मनिवेदन करदेता है तब मैं उसको कृतार्थ करने चाहता हूं तब वह मोक्ष को प्राप्त होने योग्य होता है तब मेरे सदृश ज्ञानादि ऐश्वर्य को प्राप्त हो जाता है ॥ ३४ ॥

श्री शुकदेवजी बोले इस प्रकार से योग मार्ग के उपदेश करने से वे उद्धवजी भगवान् उत्तम श्लोक के वचनको श्रवण करने से प्रीति के मारे कण्ठ रुकगया तब हाथ जोड़ कर आंसुओं को भरलाये और फिर कुछभी नहीं बोल सके ॥ ३५ ॥

फिर प्रेमके मारे चञ्चल चित्त को बड़े धैर्य से रोककर हे राजन् ! श्री कृष्णकी कृपा तथा अपने भाग्यका बहुत सन्मान करके फिर हाथ जोड़कर मस्तक से श्रीकृष्ण चरण कमलको स्पर्श करके यदुप्रवीर भगवान् से यह वचन बोले ॥ ३६ ॥

उद्धवजी बोले हे प्रभो ! जो मेरे हृदय में अन्धकार रहाथा सो आप के समीप में बैठते ही सब भागगया हे अज हे आद्य जो पुरुष अग्नि के समीप जाता है उस को क्या ठण्ढ अंधेरा भय कुछ फिर रह सकते हैं नहीं रहते हैं ॥ ३७ ॥

तौ भी आप कृपालु ने मेरे भृत्य के अर्थ विज्ञानमय दीपक देदिया है अब ऐसे आप की कृपाको जाननेवाला जो पुरुष सो आप के चरण कमल के मूल को छोड़कर और किस के शरण जायगा किसी के नहींजायगा ॥ ३८ ॥

अभीतक दाशार्ह वृष्णि अंधक सात्वतों में जो मेरा लौकिक देह संबंधी स्नेहरूपी पाश सो तो कटगया जिसको कि आपूने सृष्टि के बढ़ाने के वास्ते फैलाया था अपनी माया से उसकों आत्मज्ञानरूपी खड्ग से छेदन करदिया है ॥ ३९ ॥

हे महायोगिन् मेरा आप को नमस्कार है मैं आप के शरणागत हूं अब आप मेरे को ऐसा शिक्षा और कृपा करो कि जिस से मुक्ति आदि समय मेंभी नष्ट नहीं होनेवाली आप के चरणारविन्द में परम भक्ति होवे ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदुक्तमोमित्यङ्गीकृत्य तथाऽपि मयाऽऽदिष्टो लोकसंग्रहार्थमेतावत्कुर्वित्याह । गच्छेति । आदिष्टो नियुक्तः ॥ ४१ ॥

स्नानादेः पूर्वमेव मत्पादतीर्थोदकभूताया अलकनन्दाया गङ्गाया ईक्षया वसानः परिदधानः ॥ ४२ ॥

---

मत्तोऽनुशिक्षितं यत्ते विविक्तमनुभावयन् ।
मय्यावेशितवाक्चित्तो मद्धर्मनिरतो भव ।
अतिक्रम्य गतीस्तिस्रो मामेष्यसि ततः परम् ॥ ४४ ॥

श्रीशुक उवाच ।

स एवमुक्तो हरिमेधसोद्धवः प्रदक्षिणं तं परिसृत्य पादयोः ।
शिरो निधायाश्रुकलाभिरार्द्रधीर्न्यषिञ्चदद्वन्द्वपरोऽप्यपक्रमे [1] ॥ ४५ ॥
सुदुस्त्यजस्नेहवियोगकातरो न शक्नुवंस्तं परिहातुमातुरः ।
कृच्छ्रं ययौ मूर्धनि भर्तृपादुके बिभ्रन्नमस्कृत्य ययौ पुनः पुनः ॥ ४६ ॥
ततस्तमन्तर्हृदि संनिवेश्य गतो महाभागवतो विशालाम् ।
यथोपदिष्टां जगदेकबन्धुना ततः समास्थाय हरेरगाद्गतिम् ॥ ४७ ॥
य एतदानन्दसमुद्रसंभृतं ज्ञानामृतं भागवताय भाषितम् ।
कृष्णेन योगेश्वरसेविताङ्घ्रिणा सच्छ्रद्धयासेव्य जगद्विमुच्यते ॥ ४८ ॥
[2] भवभयमपहन्तुं ज्ञानविज्ञानसारं [3] निगमकृदुपजह्रे भृङ्गवद्वेदसारम् ।
[4] अमृतमुदधितश्चापाययद्भृत्यवर्गान् पुरुषमृषभमाद्यं [5] कृष्णसंज्ञं नतोऽस्मि ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे उद्धवनिर्याणं नाम
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

युज्यमानायां शीतोष्णादिविषयाणाम् सुखोत्थे आर्जवादिस्वभावः ॥ ४३ ॥

ते त्वया विविक्तं सुविचारितम् तिस्रस्त्रिगुणात्मिका गतीरतिक्रम्य ॥ ४४ ॥

हरिमेधसा संसारं हरति मेधा यस्य तेन श्रीकृष्णेन अद्वन्द्वपरोऽपि सुखदुःखाविनिर्मुक्तोऽपि अपक्रमे निर्गमनसमये ॥ ४५ ॥

किञ्च सुदुस्त्यजः स्नेहो यस्मिन्स्तेन वियोगात्कातरो भीतोऽत एव तं परिहातुमशक्नुवन्नातुरोऽतिविह्वलः सन् कृच्छ्रं कष्टं ययौ प्राप ततश्च भर्तृपादुके तेनैव कृपया दत्ते मूर्ध्नि बिभ्रदिति निर्बन्धरूपया तदाज्ञया तत्पुनः पुनर्नमस्कृत्य ययौ अत्र च 'पृष्ठतोऽन्वगमं भर्तुः पादविश्लेषणाक्षम' इत्यादितृतीयस्कन्धोपक्रमोक्तानुसारेण बदरिकाश्रमं गच्छन् भगवतः प्रभासयात्रामुपश्रुत्य शनैः पृष्ठतो गतः समुपसंहृतनिजकुलं भगवन्तमेकान्ते दृष्ट्वा तत्कालप्राप्तेन मैत्रेयेण सह पुनः कृपया भगवतोपदिष्टं तत्त्वमाकर्ण्य तदाज्ञातो ययाविति द्रष्टव्यम् ॥ ४६ ॥

विशालां बदरिकाश्रमं गतः सन्हरेर्गतिमगात् कथं भूतां तेनैव जगदेकबन्धुना यथोपादिष्टाम् "तदाऽमृतत्वं प्रतिपद्यमानो मयात्मभूयाय च कल्पते वै अतिक्रम्य गतीस्तिस्रो मामेष्यसि ततः परम्" इत्येवमुक्तप्रकाराम् ॥ ४७ ॥

आनन्दसमुद्रो भगवद्भक्तिमार्गस्तस्मिन्सम्भृतमेकीकृतमेतद्यः सच्छ्रद्धया आसेव्य ईषदपि सेवित्वा वर्तते स विमुच्यते इति किं वक्तव्यं तत्सङ्गाज्जगदपि विमुच्यत इत्यर्थः ॥ ४८ ॥

एवं कृतोपदेशं जगद्गुरुं प्रणमति । भवभयमिति । भवः संसारो भयं च जरारोगादिनिमित्तं तदुभयं निवृत्तानां प्रवृत्तानां च भृत्यवर्गाणां यथायोग्यमपहन्तुं योऽमृतमब्धिमुपजह्रे उद्धृतवान् तदेवाऽऽह । वेदसारमेकम् किं तत् ज्ञानविज्ञानरूपं च तत्सारं श्रेष्ठम् भृङ्गवत् भृङ्गो यथा पुष्पमकोपयन्नेवामृतमुपहरति तथा स्वयं स्वकृतवेदानुसारेणैवोद्धितमर्थं तथाभयं यथायथं भृत्यवर्गानपाययन्तं नतोऽस्मीति ॥ ४९ ॥

येनानुकम्पितं विश्वमुद्धवप्रश्ननिर्णयैः ।
तं वन्दे परमानन्दं नन्दनन्दनरूपिणम् ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम् ।
एकोनत्रिंशोऽध्यायः २९

१ पदद्वन्द्वमयानुचक्रमे इति वि० पाठ  २ भयहन्तु  ३ निगमकृदुपदधे भृङ्गवद्वेदसारम्  ४ अमृतमुदधिकल्पं
५ विष्णुसंज्ञ इति वि०पाठः

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनीटिप्पणी ।

यद्यपि सिद्धस्य तव न साधनापेक्षा तथापि ॥ ४१—४३ ॥

त्रिगुणात्मिका इति । प्रकटलीलायाः प्रपञ्चाप्रपञ्चमिश्रत्वात् । तत्र प्रसिद्धा गतीः स्थानानि तुच्छतया परित्यज्येति यौक्तिकोक्तिः । पञ्चमपुरुषार्थतुरीयातीतगतिकरत्वात् ॥ ४४ । ४५ ॥

अत्र च श्रीमदुक्तयाने । इत्थं विरोधाभावाच समुच्चयेन व्याख्येयम् ॥ ४६ ॥

हरेर्गति तदीयनित्याप्रकटप्रकाशद्वारकाख्यं धाम ॥ ४७ ॥

भक्तिमार्गे ज्ञानामृतस्यैकान्तिकत्वं सर्वत्र कृष्णैकस्फूर्त्या तद्भावभावित्वम् ॥ ४८ ॥

भवभयमित्यर्द्धेन कृष्णावतारचरितमुद्दिश्यते अमृतमित्यर्द्धेन तु अजितावतारचरितम् एवं यद्यप्युभयमपि नमनीयं तथापि कृष्णसंज्ञं नतोऽस्मीत्युक्त्या तस्यैव स्वयं भगवत्त्वेन स्वोपास्यत्वमभिव्यञ्जितम् । तदेव अमृतद्वयमेव । आद्यं सर्वावतारावतारि मूलरूपम् । श्रीस्वामिपादा अपि तस्यैव स्वोपास्यत्वं दर्शयितुं तथैव मङ्गलमासञ्जयन्ति । येनेति । नन्दनन्दनरूपिण मित्येव सार्वत्रिकः पाठः । श्रीकृष्णं नरहरिरूपिणमिति तु मत्सरकल्पितः

येनानुकम्पितं विश्वं कीर्त्तनामृतसंप्लवैः ।
तं वन्दे कृष्णचैतन्यं पामरोद्धारतत्परमिति ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अलकनन्दात्र गङ्गा ॥ ४२—४३ ॥

तिस्रो गतीः सात्त्विकराजसतामसीः ऊर्ध्वं गच्छन्ति सत्त्वस्था इत्युपात्ताः ॥ ४४—४६ ॥

विद्यानां वदरीम अनात्मकामिति पाठे अगात् मनुष्यादित्यर्थः ॥ ४७ ॥

य एतदिति । यः कश्चिदित्यर्थः यद्वा यः स्वदते स मासेव्य-मुच्यते इत्यन्वयः ॥ ४८—४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धव्याख्याने
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथानुगृह्य यावत्प्रारब्धं कार्यमुपादिशति । गच्छेति । आदिष्टोऽनुज्ञातः तत्र बदर्याश्रमे मत्पादतीर्थे मत्पादप्रभवगङ्गाख्यतीर्थे विशेषजले स्नानैरुपस्पर्शनैराचमनैश्च शुचिः ॥ ४१ ॥

अलकनन्दाया गङ्गाया ईक्षया दर्शनेन विधूतमशेषं कल्मषं यस्य सः वल्कलानि वसानः परिदधानः अङ्ग हे उद्धव ! वन्यानि वनप्रभवाणि कन्दमूलादीनि भुङ्क्ते इति तथा सुखेनात्मानुभवसुखेन निस्पृहः विषयाभिलाषरहितः ॥ ४२ ॥

द्वन्द्वमायायां शीतोष्णादिविषयायां तितिक्षुस्तान्सहमान इत्यर्थः सुशील आर्जवादिस्वभावयुक्तः संयतेन्द्रियः जितबाह्येन्द्रियः शान्तः जितान्तरिन्द्रियः ज्ञानं तत्त्वत्रययाथात्म्यविषयकमात्मकं विज्ञानं अङ्गोपासनात्मकं ताभ्यां संयुतः ॥ ४३ ॥

तुभ्यं मत्तो मत्सकाशादनुशिक्षितं विविक्तं विविच्य ज्ञापितं च तदनुभावयन् चित्ते स्थिरीकुर्वन् मय्यावेशिता वाक् चित्तं च येन सः तत्र वाचेशो नाम अगुणानुकीर्त्तनं मद्धर्मनिरतः कायेन मदाराधनं कुर्वन्नित्यर्थः एवं मनो वाक्काय वृत्तयोऽभिहिताः एवं भूतो भवान् प्रारब्धान्ते तिस्रः ऊर्ध्वं गच्छन्ति सत्त्वस्था इत्यादिनोक्ताः सात्त्विकराजसतामसगतीरतिक्रम्य ततः परं प्रकृतिमण्डलात्परास्थितं नित्यमुक्तोपभोग्यं मामेष्यसि प्राप्स्यसि ॥ ४४ ॥

स इति । हरिमेधसा हरति यद्विषया मेधा बुद्धिः संसारमिति तथा तेन भगवतेत्थमुक्तः स उद्धवः तं भगवन्तं प्रदक्षिणं तथा परिसृत्य परिक्रम्य पादयोः शिरो निधायाद्वन्द्वपरः प्रियसंयोगवियोगप्रयुक्तहर्षशोकरहितोऽप्युपक्रमे निर्गमसमयेऽश्रुकलाभिरश्रुबिन्दुभिर्न्यषिञ्चत् तत्र हेतुरार्द्रधीर्भगवदनुरागातिशयस्निग्धहृदयः ॥ ४५ ॥

सुदुस्त्यजः स्नेहो यस्मिंस्तस्य भगवतो वियोगेन समनन्तरभाविना कातरो भीतः अत एवातुरो दीनः अत एव तं भगवन्तं परिहातुं त्यक्तुं तावदशक्नुवन्नसमर्थः कृच्छ्रं सङ्कटं भर्तुः पादुके पुनःपुनर्मूर्द्धनि शिरसि बिभ्रत्पूर्वमगमत्कृच्छ्रं सङ्कटं यथा तथा ययौ ॥ ४६ ॥

कथं ययौ गत्वा च किं तत्राकरोदित्यत आह । तत इति तं भगवन्तं हृदि सन्निवेश्य ध्यानेन हृदिस्थं कृत्वा विशालां बदर्याश्रमं गतः तत्र जगदेकबन्धुना यथोपदिष्टं तथा तपः समास्थाय हरेर्गतिमगात् अतिक्रम्य गतीस्तिस्रो मामेष्यसि ततः परमिति भगवत्सङ्कल्पस्य दृढतरत्वज्ञापनायागादिति भूतनिर्देशः अन्यथा मोक्षधर्मेष्वपि मन्यूनो यदुष्वर्दितः प्रभुः । अतो मद्युनं लोकं ग्राहयन्निह तिष्ठतु इति तृतीयेन सह विरोधापत्तेः ॥ ४७ ॥

भगवदुद्धवसंवादश्रवणफलमाह । य एतदिति । योगीश्वरैः संसेविताङ्घ्री यस्य तेन भगवता आनन्दसमुद्रात्संभृतं निरतिशयानन्दपरब्रह्मस्वरूपावेदकनिगमान्तसमुद्रात्समुद्धृतं ज्ञानामृतं ज्ञानामृतवर्षुकं भागवतायोद्धवाय भाषितमेतद्यः पुमानासेव्य वर्त्तते तत्सम्बन्धाज्जगदपि मुच्यते किं पुनः स विमुच्यते इत्यर्थः ॥ ४८ ॥

इत्थमुपदेशेन महोपकर्त्तारं भगवन्तं प्रणमति मुनिः भवभयमिति । यो निगमकृद्वेदकृत "तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतदृग्वेद" इति श्रुत्युक्तरीत्या निःश्वसितमुखेन निखिलनिगमाभिव्यक्ता भगवान् ज्ञानविज्ञाने एव सारः प्रधानप्रतिपाद्यो यस्मिंस्तममृतरूपं वेदसारमुदधितः वेदान्तोदधेरुद्धृतवान् भृत्यवर्गमपाययच्च तमाद्यं जगत्कारणं श्रीकृष्णसंज्ञं परमपुरुषं नतोऽस्मि ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आनन्दसमुद्रो भगवद्भक्तियोगस्तेन सम्भृतं सञ्चक्रे धृतमेतद् यः सश्रद्धया आसेवत ईषदपि सेवितवान् वर्त्तते स विमुच्यत इति किंवक्तव्यं तत्संगेन जगदपि विमुच्यते इत्यर्थः ॥ ४८ ॥

सर्वान्ते जगद्गुरुं प्रणमति । भवभयमिति । वेदेभ्यःसारं उपजह्रे उद्धृतवान् नन्वन्ये मुनयो दर्शनकर्त्तारो वेदसारमुपजीव्य रचयन्ते दुर्गमस्य वेदस्य तात्पर्यं न सम्यगभिजानन्तीति न तद्वाक्यं विश्वस्यते एवं भगवांस्तु न तथेत्याह । निगममकृदिति । योहि यच्छास्त्रस्य कर्त्ता स एव अत्यतिदुर्गमस्यापि तस्यार्थं जानात्येवेति भावः । भृङ्गवदिति वेदपुष्पोद्यानस्य मकरन्दमित्यर्थः भृत्यवर्गान् अपाययत् अभक्तानसुरांस्तु वञ्चयामासेति दृष्टान्ताभिप्रायेणाह । अमृतमुदधितश्च उदधिसारमित्यर्थः । मोहिनीरूपेण भृत्यवर्गान् देवानेव अपाययत् असुरांस्तु वञ्चयामासेव तं नतोऽस्मि ॥ ४९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशस्योनत्रिंशः सङ्गतः सङ्गतः सताम् ॥ २९ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आदिष्टो नियुक्तः ॥ ४१ ॥

वसान० परिदधानः ॥ ४२ ॥

द्वन्द्वमात्राणां शीतोष्णादिविषयाणाम् ॥ ४३ ॥

त्रिगुणात्मिकाः गम्यन्ते इति गतयः प्राकृताः भूमवस्ता अर्चिरादिमार्गेणातिव्रज्य अतिक्रम्य मां मुक्तोपसृप्यमेष्यसि प्राप्स्यसि ॥ ४४ ॥

संसारं हरति मेधा यस्य चरणारविन्दानुरक्ता तेन श्रीकृष्णेन अपक्रमे निर्गमनसमये ॥ ४५ ॥

सुदुस्त्यजः स्नेहो यस्मिन् तेन श्रीकृष्णेन यो वियोगस्तस्मात्कातरो भीतः कृच्छ्रमतिसङ्कटं यथा तथा ययौ ॥ ४६ ॥

विशालां बदरिकाश्रमं गतः सन् अतिश्रव्य गतीस्तिस्रो मामेष्यसीत्युपदिष्टां गतिमगात् ॥ ४७ ॥

आनन्दसमुद्रो वेदस्तस्य सारांशेन सम्भृतम् एतच्छ्रद्धयासेव्य जगत् यः कश्चित् अल्पमात्रोऽपि विमुच्यते किम्पुनर्विशिष्टो जन इत्यर्थः ॥ ४८ ॥

सर्वमुमुक्षूपदिष्टं भगवत्प्रोक्तं तत्त्वं राजर्षिं प्रत्युपदिश्याथ सर्ववेदैकवेद्यं सर्वोपास्यं सर्वोपकारिणं श्रीकृष्णं श्रीशुकः प्रणमति । भवभयमिति । अहं पुरुषं नतोऽस्मि न तु बहवः पुरुषाः सन्ति तत्र कस्तवाभिप्रेतः इत्यत आह । ऋषभं सर्वश्रेष्ठं सर्वेश्वरमित्यर्थः । सर्वेश्वरत्वमाह । आद्यमिति । परमकारणमित्यर्थः कारणं तु ध्येयमिति श्रुतेः तमेव प्रकटमाह कृष्णसंज्ञमिति कृष्ण एव परो देवस्तं ध्यायेदिति श्रुते मत्तः परतरं नान्यदिति श्रीमुखोक्तेश्च तस्यैव सर्वकारणत्वमुपपादयन् मुमुक्षुबुभुक्षुहितकारित्वं दर्शयति । निगमकृदिति । यः सृष्ट्यादिनिर्वाहकं निगममपि स एव कृतवान् "अस्यमहतो भूतस्य निश्वसितमेतदृग्वेद" इत्यादिश्रुतेः एतावता निगमस्य नित्यत्वं न गतम् प्रद्योतितत्वन्यायेन तन्नित्यत्वाविरोधः सर्वकारणत्वमन्यत् निरुक्तं नास्तीति योऽयं "जन्माद्यस्य यत" इति जिज्ञास्यसूत्रयोक्तेः भवभयमित्यत्र इन्द्रेकवत् यः मुमुक्षूणां भवं जन्ममरणलक्षणसंसारमपहन्तुं ज्ञानविज्ञानसारं ज्ञानं सर्वकारणसर्वशक्तिपरमात्मविषयकं विज्ञानं तदन्तर्गतचिदचित्पदार्थविषयकं विविधं ज्ञानं तयोर्विस्तरतो निगमप्रोक्तयोः सारम् आधुनिकशङ्कां वारयति । निगमसारमुपजह्रे उद्धृतवान् मुमुक्षूणां भवभयहन्तुमुदधितश्चामृतमुपजह्रे तदुभयं भृत्यवर्गानुभयविधान् यथायथमपाययत्तमिति सम्बन्धः ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे ।
एकोनत्रिंशाध्यायार्थप्रकाशः ॥ २९ ॥

---

### भाषाटीका ।

श्री भगवान् बोले हे उद्धव ! मैं तुमको आज्ञा देता हूं सो तुम मेरे निवास बदरी का श्रम को जाओ उहां पर मेरे चरण के जल श्री गङ्गाजी के स्नान आचमनादिकों से पवित्र हो जाओगे ॥ ४१ ॥

वहीं अलक नन्दा नामक गङ्गा के दर्शन के होने मात्र से सब पापों के नष्ट हो जाने से निर्मल हो जाओगे फिर वहां पर वृक्ष के वकला को वस्त्र बनाकर पहरना जङ्गली कन्द मूलादिकों का भोजन करना सब संसारी देह सुखों की इच्छा को छोड देना ॥ ४२ ॥

शीत उष्ण आदिक इन्द्रियों के द्वंद्व विषयों का सहन करना सुन्दर शील स्वभाव को धारण करना बाहेर भीतर की दोनों प्रकार की इन्द्रियों को निवयन करके रखना शान्त चित्त होकर रहना चित्त को सावधान रखना बुद्धि से शास्त्र ज्ञान तथा अनुभव ज्ञान योग शक्ति से जो ज्ञान तिससे संयुक्त रहना ॥ ४३ ॥

मेरे से जो कुछ ज्ञान तुमने शीखा है तिस ज्ञान को एकान्त मे शुद्ध भाव से विचार करते रहना फिर मेरे मे वाणी तथा चित्त इनके सहित सब इन्द्रियों की वृत्तियों को अर्पण कर देना इस प्रकार से मेरे ही धर्म मे निरत होजाना इस प्रकार के अनुष्ठान करके रहने से फिर तुम सत्व गुण रजो गुण तमो गुण तीन गुणों के फल से जो लोक मिलते हैं तिनको न जाकर निर्गुण मेरे धाम को प्राप्त हो जाओगे ॥ ४४ ॥

श्रीशुकदेव जी बोले सब संसार के सब दुःखों के हरण करने की जो बुद्धि तिस के समर्थ श्री कृष्ण भगवान् के ऐसे कहने से उद्धवजी ने श्री कृष्ण चन्द्र की प्रदक्षिणा किया फिर चरणमें गिर कर के चरणो मे शिर रख कर आसुओ के समूह से चरणों का अभिषेक करा दिया और अत्यन्त अधीरज हो गये यद्यपि रागद्वेषादि के द्वन्द्वो से रहित थे तथापि श्रीकृष्ण चरण को छोड कर जाने मे दुःखित हो गये ॥ ४५ ॥

### भाषा टीका ।

कभी भी नहीं छोड़ सकने योग्य स्नेह से वियोग होना जान कर दुखित हो गये श्रीकृष्ण के संग को छोड़ कर रहने को असमर्थ होने से कातर हो गये तब कृपा कर के भगवान् ने अपने चरण कमल की जो पादुका दीनी उनको मस्तक मे धारण कर के वारंवार लोट पोट कर नमस्कार कर कर के किसी तरह से चले गये ॥ ४६ ॥

तिस के अनन्तर उन श्रीकृष्ण जी को अपने हृदय मे ध्यान से स्थापन कर के वे महाभाग भक्त उद्धव जी बदरी विशालापुरी को गये वहां जा कर जगत के निर्हेतुक एक बन्धु श्रीकृष्णजी ने जो कहा था तिस अनुष्ठान को कर के निवास कर के अन्त मे भगवान की परमगती को प्राप्त हो गये ॥ ४७ ॥

जो कोई पुरुष आनन्द समुद्र को मन्थन कर के श्री हरि कृष्णचन्द्र के कहे हुये ज्ञान रूप अमृत जिस को कि श्री उद्धव भागवत के अर्थ जो श्रीकृष्ण सब योगीं यों द्वारा चरण मे से वित हैं तिनने कहा है इस को जो श्रद्धा से श्रवण करे तो सब ही संसारि मुक्त हो जावे ॥ ४८ ॥

सब संसार के भय के दूर करने के वास्ते सारा वेदों के बनाने वाले भगवान ने भ्रमर की नाई ज्ञान विज्ञान रूपी इस वेदसार का उद्धार किया है और मोहिनी रूप मे समुद्र मे से अमृत को निकाल कर भृत्यों को पिवाया है आद्य पुरुष श्रेष्ठ उन श्री कृष्णचन्द्र को मैं नमस्कार करता हूं ॥ ४९ ॥

इति श्री भागवत एकादश स्कन्ध उन्तीस में अध्याय की

भाषा टीका समाप्त ॥२९॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे एकोनत्रिंशोऽध्यायः ॥ २९ ॥



## अथ त्रिंशोऽध्यायः ।

—:*:—

राजोवाच ।

ततो महाभागवत उद्धवे निर्गते वनम् ।
द्वारवत्यां किमकरोद्भगवान् भूतभावनः ॥ १ ॥
ब्रह्मशापोपसंसृष्टे स्वकुले यादवर्षभः ।
प्रेयसीं सर्वनेत्राणां तनुं स कथमत्यजत् ॥ २ ॥
प्रत्याक्रष्टुं नयनमबला यत्र लग्नं न शेकुः कर्णाविष्टं न सरति ततो यत् सतामात्मलग्नम् ।
यच्छ्रीर्वाचां जनयति रतिं किं नु मानं कवीनां दृष्ट्वा जिष्णोर्युधि रथगतं यच्च तत्साम्यमीयुः ॥ ३ ॥

। ऋषिरुवाच ।

दिवि भुव्यन्तरिक्षे च महोत्पातान् समुत्थितान् ।
दृष्ट्वाऽऽसीनान् सुधर्मायां कृष्णः प्राह यदूनिदम् ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रिंशे तु प्रागुपाक्षिप्तमौसलव्याजतो हरिः ।
स्वधाम गन्तुमन्विच्छन् संजहार निजं कुलम् ॥
विरागाय पुराऽघोरमुपाक्षिप्तं हि मौसलम् ।
कथावसाने तत्रैव विशेषं परिपृच्छति ॥

तत इति त्रिभिः ॥ १ ॥

ब्रह्मशापोपसंसृष्टे कुले सति अयं भावः भगवति नहि शापः प्रभवति यादवत्वानुकरणाच्च सोऽपि कथञ्चिन्मान्यः अतः किमकरोदिति । तदेतदुक्तं कथमत्यजदिति । सर्वनेत्राणामिति । सर्वेन्द्रियोपलक्षणम् ॥ २ ॥

तत्प्रपञ्चयति । प्रत्याक्रष्टुमिति । यस्मिन् रूपे लग्नं नयनं प्रत्याक्रष्टुं परावर्तयितुमबला न शेकुः यच्च कर्णाविष्टं कर्णरन्ध्रेण प्रविष्टं सत् सतामात्मनि लग्नं लिखितमिव तिष्ठति । ततो न निर्गच्छति । यस्य श्रीः शोभा सङ्कीर्त्यमाना कवीनां वाचां रतिमुल्लासविशेषं जनयति । तेषां मानं जगत्पूज्यतां जनयतीति किन्तु वक्तव्यम् यच्च जिष्णोः रूपं जिष्णोरर्जुनस्य रथे स्थितं दृष्ट्वा युधि मृतास्तत्साम्यं सारूप्यमीयुः प्राप्तास्तत्केन रूपेणात्यजदित्यन्वयः ॥ ३ ॥

दिवि सूर्यपरिवेषादीन् भुवि भूकम्पादीनन्तरिक्षे दिग्दाहादीन् महोत्पातान् स्वयमेवोत्पादितत्वादस्यैतुष्प्रतीकारान् ॥ ४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपनी टिप्पणी

संजहार संहारमुद्रयान्तर्धापितवान् । उपक्षिप्तमुपक्रान्तम् । तत्रैव मौसलवृत्त एव ॥ १ ॥

श्लोकद्वयोक्तप्रश्नस्य तात्पर्यार्थमाह । अयं भाव इति । कथमत्यजत् । वस्तुतस्तु नात्यजदेव किन्तु लौकिकदृष्ट्या मायिकचरित्रं किमप्यकरोदेव तद्ब्रूहीत्यर्थः ॥ २ ॥

तत्तनोः सर्वेन्द्रियप्रेष्ठत्वं प्रपञ्चयति त्यागासम्भवे हेत्वभिधानेन विस्तारयति अबला अत्र गोप्यः । गोपीनां परमानन्द आसीद्गोविन्ददर्शने । क्षणं युगशतमिव यासां येन विना सेवेत्यादिभिस्तासामेव तथा प्रसिद्धेः । तद्रूपं कथमन्यथा स्यात् प्रणयरसनया धृताङ्घ्रिपद्म इत्यादि विरोधादित्येको हेतुः । सतामात्मारामगुरूणां सनकादीनामात्मनि ब्रह्मानन्दानुभवेऽपि सतामिव इति तत्त्यागे सम्भवति चित्तं ब्रह्मसुखस्पृष्टं नैवोत्तिष्ठति कर्हिचिदिति न्यायेन तत्र तत्त्यागात्तु चित्तं न लग्नं स्यादिति द्वितीयो हेतुः कीर्त्यमाना इत्यर्थाद्व्याहृतं किन्तु मानमित्येव पाठः अग्रे तथा व्याख्यानात् । कवीनां व्यासादीनामित्यन्यथा तेषां नश्वरकीर्तनेऽकवित्वं प्रसज्येत इति तृतीयो हेतुः । सर्वतोऽपि गरिष्ठं तुरीयं हेतुमाह । यच्च विष्णोः रूपमित्यादिना ततमात्रस्य तत्सेवया प्रतीतं ते सार्ष्ट्यादिचतुष्टयम् । नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविप्लुतमित्यादिनाऽकालविप्लुतत्वाभिधानात् तद्रूपस्य

श्रीभगवानुवाच !

एते घोरा महोत्पाता द्वार्वत्यां यमकेतवः ।
मुहूर्तमपि न स्थेयमत्र नो यदुपुङ्गवाः ! ॥ ५ ॥
स्त्रियो बालाश्च वृद्धाश्च शंखोद्धारं व्रजन्त्वितः ।
वयं प्रभासं यास्यामात्र प्रत्यक्सरस्वती ॥ ६ ॥
तत्राभिषिच्य शुचय उपोष्य सुसमाहिताः ।
देवताः पूजयिष्यामःस्नपनालपनार्हणैः ॥ ७ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

व्याजात् श्रेयस्सीमिति विशेषणापदं एवान्वितस्त्यागोऽयं ज्ञेयः अत्रैवं कनककलशं पाम्यस्स्वजनेत्युक्ते सारवद्धनस्समाश्रितानां कृतस्य कलशस्य महत्त्वं यथा प्रतीयते इति ॥ १ ॥ २ ॥

ततोऽस्त्यागेऽनुपपत्तिर्दर्शयति । प्रत्याकृष्टुमिति । यत्र वपुषि न्यस्तं नयनं प्रत्याकृष्टुं परावर्त्तयितुम् भवबन्धात्तन्निरसप्रेयस्यो कविमयवाचा न शेकुः यच्च कर्णाविष्टं भवणद्वारा कर्णारन्ध्रे प्रविष्टं सतां मनश्चित्तानामात्मारामाणामात्मनि यत्र खिलितमिव लिखित सतो न सरति यच्च श्रीः शोभा वर्ण्यमाना कवीनां व्यासादीनां वाचां रतिमुत्कर्षसविशेषं सञ्जनयति यच्च जिष्णोः अर्जुनस्य रथगतं युधि दृष्ट्वा साऽपमीयुः सायुज्यं प्राप्ताः अत स्तद्वपुर्गुणातीतं साक्षात्भूत्वैव भवेत् न हि गुणमयवस्तुदर्शनेन सायुज्यं भवेत् अत एव श्रुतिभिरुक्तम् —

निभृतमरुन्मनोक्षदृढयोगयुजो हृदि यन्मुनय
उपासते तदरयोऽपि ययुः स्मरणात् ॥

इति नापि गुणमयं स्नानमात्मारामाणामात्मलग्नं तिष्ठेत् नापि नित्यप्रेयस्यो लक्ष्म्याद्याद्यास्तिनीशक्तयः प्राकृते लग्नासक्तिमिति तस्मात्तद्वपुस्त्यागं वर्णयन्तो मुनयस्तन्मायामोहिता एवेति ॥ ३-४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्रिंशेऽध्याये यादवानां परलोकगमनं निरूप्यते यदुवगमनानन्तरं भगवान् किङ्कृतवानिति पृच्छति । नत इति द्वाभ्याम् । उद्धवे निर्गते सति द्वारवत्यां स्वकुलरक्षार्थं भगवान्सर्वं कर्त्तुं समर्थः किमकरोत् ॥ १ ॥

अथवा स्वकुलरक्षणादपि स्वानन्यमुनिजनशापेनेतरथोपसंसृष्टे स्वकुले सति तनु शरीरवत्प्रियतरां सर्वनेत्राणां सर्वकरणानां प्रेयसीं यस्य पृथिवीशरीरमिति श्रुतेः भूलोकम् द्वारवतीं वास्यजदित्यर्थः तत्परित्यागप्रकारं पृच्छति । कथमिति । केन प्रकारेणात्यजत् ॥ २ ॥

अतिदारुणमोसलप्रसङ्गमवधार्य कल्याणप्रदं श्रीकृष्णरूपं त्रैकालिकानां भक्तानां दर्शनध्यानवर्णनादिविषयं परममङ्गलं नित्यं स्वाभाविकं कान्त्यादिगुणगणालङ्कृतं स्तौति । प्रत्याकृष्टुमिति । सनकाः श्रीकृष्णप्रियाः यत्र यस्मिन् श्रीकृष्णरूपे अस्यन्तं शास्त्रश्रवणद्वारा कर्णाविष्टं भवति सतां सूरीणां आत्मलग्नं स्यात् ततः न सरति सदा पश्यन्ति सूरय इति श्रुतेः आत्मनः स्थातुः स्थेयस्य श्रीकृष्णरूपस्य च नित्यत्वात् कवीनां कान्तदर्शीनां सत्पुण्डरीकनयनामित्यादीनां मन्त्राणामृषीणां च तन्ममाप्यात्मलग्नं भवत्विति शेषः ॥ ३ ॥

उत्तरमाह । दिवि भूम्यपरिवेषादीन् भुवि भूकम्पादीन् अन्तरिक्षे दिग्दाहादीन् महोत्पातान् दृष्ट्वा इदं वक्ष्यमाणं द्वारकापरित्यागादिकम् ॥ ४ ॥

भाषा टीका ।

महाराज परीक्षित जी बोले तदनन्तर महा भागवत उद्धवजी जब वनको चले गये तब सब भूतों के पालन करनेवाले भगवानने क्या किया ॥ १ ॥

जब अपने कुल ब्राह्मणों के शाप से युक्त हो गया तब यादवों के पति भगवान् ने सब संसारियों के नेत्रों की प्रिय अपनी मूर्ति को कैसे त्याग किया ॥ २ ॥

जिस मूर्ति में लगे हुवे नयनों को सब संसार की स्त्री खैंच नहीं सकती रहीं जिस श्री मूर्ति के गुणोंको कान के रस्ता प्रवेश होने से सत् पुरुषों के मनमें लगजाने से वहां से निकलती नहीं है जिस मूर्ति की शोभा के वर्णन करने से कविजनों की वाणी सब को आनन्दित कर देती है और उन कवियों के मान प्रतिष्ठा का तो कहना ही क्या है भारत के युद्ध में अर्जुन के रथ पर जिस मूर्ति का दर्शन कर के मरनेवाले उन्हीं कृष्णचन्द्र के ऐश्वर्य को प्राप्त होगये उस मूर्ति को कैसे अन्तर्धान किया ॥ ३ ॥

श्री शुकदेव जी बोले द्वारका के मध्य में आकाश में सूर्य का मण्डल होना पृथ्वी में भूकम्पादि होना अन्तरिक्ष में दिशाओं का दाह होना आदिक असकुनों को देखकर सुधर्मा सभा में बैठे हुवे यादवों को देखकर श्री कृष्णचन्द्र इस वचन को बोले ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यमस्य केतवो ध्वजा इव मृत्युसूचका इत्यर्थः । घोरा स्मामिः ॥ ५ ॥

ता वज्रकल्पा ह्यभवन् परिघा मुष्टिना भृताः ।
जघ्नुर्द्विषस्तैः कृष्णेन वार्यमाणास्तु तं च ते ॥ २१ ॥
प्रत्यनीकं मन्यमाना बलभद्रं च मोहिताः ।
हन्तुं कृतधियो राजन्नापन्ना आततायिनः ॥ २२ ॥
अथ तावपि संक्रुद्धावुद्यम्य कुरुनन्दन ! ।
एरकामुष्टिपरिघौ चरन्तौ जघ्नतुर्युधि ॥ २३ ॥
ब्रह्मशापोपसृष्टानां कृष्णमायावृतात्मनाम् ।
स्पर्धा क्रोधः क्षयं निन्ये वैणवोऽग्निर्यथा वनम् ॥ २४ ॥
एवं नष्टेषु सर्वेषु कुलेषु स्वेषु केशवः ।
अवतारितो भुवो भार इति मेनेऽवशेषितः ॥ २५ ॥
रामः समुद्रवेलायां योगमास्थाय पौरुषम् ।
तत्याज लोकं मानुष्यं संयोज्यात्मानमात्मनि ॥ २६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ये चान्ये निशठादयः तेऽपि मुकुन्देनस्वमायया विमोहिता मतत्वमद्रा ये मदेनतमसा बलात्कारिताः अन्योऽन्यमासाद्य जघ्नु हंत वत्सः ॥ १७ ॥

तदा दाशार्हादयोऽपि दुर्वाररोषाः सौहृदं परित्यज्य मिथो जघ्नुः ॥ १८ ॥

सौहृदं परिहृत्येतदेव विशदयति । पुत्रा इति । भ्रात्रादिभिस्सह प्रतिसम्बन्धिभिः इत्यध्याहारः तथा ज्ञातयो ज्ञातीन् जघ्नुः सखिवत् प्रादेवे परस्परहितैषित्वं मित्रत्वं तदभावे तत्वं सुहृत्वमिति भेदः ॥ १९ ॥

शरेष्वतिहीयमानेष्वभग्नेषु सत्सु मुष्टिभिरेरकाः विप्रशापाव- तेनवीर्यपूर्णप्रभवान् दुर्गाविशेषान् जहुर्भूर्जवन्तः ॥ २० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अन्धकुरा इति केचिद्यादवविशेषाः ॥ १८ । १९

एरकाः समुद्रतीरस्थः सूचीमुखतृणानि जम्बूकरूपाटवम् ॥२०॥ २१—२२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मदेनमदमत्तता अन्योऽन्यं कारिताः यद्वा मन्धकारमिता अन्धकारः सञ्जातो येषां ते तारकादि ॥ १७—१९ ॥

जहुर्जगृहुः ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मदान्धेन मदमत्तता बलात्कारिताः ॥ १७ ॥

मधुरा माधुराः सुरसेनाश्च ततहैसीयाः ॥ १८ ॥
प्रवृत्तिमश्च भ्रातरः इत्यादिश्लोकम् ॥ १९ ॥
धन्वसु धनुःषु जग्मुः जगृहुः ॥ २० ॥

भाषा टीका ।

और भी जो निशठ उल्मुकादिक सहस्रजित शतजित भानु आदिक सब मद से अन्ध होकर मुकुन्द की इच्छा से मोहित होने से एक को एक मारने भये ॥ १७ ॥

दाशार्ह वृष्णि अंधक भोज सात्वत मधु अर्बुद माथुर सूरसेन विसर्जन कुकुर कुंति ए सब आपस में मित्रता को छोड़कर युद्ध करते भये ॥ १८ ॥

पुत्र तो पिता के साथ भ्राता भ्राता के साथ बहनोई भेवता काका मामा इनके साथ भन लड़े मित्र मित्रों के साथ सुहृद सुहृदों के साथ ज्ञाती ज्ञातियों के साथ सब मोहित होकर सबको सब मारते भये ॥ १९ ॥

जब बाण चुक गये तथा धनुष टूट गये और भी सब शस्त्रहीन होगये तब उन सबों ने मुठियों से पटेरा का घास उखाड़ा ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

परिघा लोहदण्डाः भृताः धृताः तत्र श्रीकृष्णमपि ॥ २१ ॥
प्रत्यनीकं प्रतिपक्षम् एरकामुष्टिरूपौ परिघौ उद्यम्य ॥ २२—२३ ॥
स्पर्धानिमित्तः क्रोधः कुलं क्षयं निन्ये ॥ २४—२५ ॥
पौरुषं योगं परमपुरुषध्यानलक्षणम् तमास्थाय । संयोज्येति । मानुष्यं लोकं भूर्लोकं मनुष्यरूपतां वा ॥ २५ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

एरकायुक्तमुष्ट्यावयवपरिघैः ॥ २३—२५ ॥

पौरुषं पूर्णषड्गुणभगवद्विषयं योगं ध्यानं समास्थाय सम्यग्भक्त्यभिचित्तत्वेन कृत्वा योगं योगनामानं विष्णुमाविश्यात्मानं अन्तर्यामिण्यात्मनि ध्याते भगवद्रूपे संयोज्यैकीभवतीति संक्षिप्य देहं तत्याजे इत्यन्वयः। आत्मने पदप्रयोगेण सुखेन देहत्यागं सूचयति ॥ २६—२७ ॥

भगवता देहं त्यक्त्वा दिवं न गतं तत्प्रदर्शनमसुरजनमोहनार्थं कृतमिति ज्ञापयन् शुको हरेस्तदानींतनस्वरूपप्रकारं ब्रूते बिभ्रदिति ॥ २८—३२ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अप्ययापेति स्वयं नित्यं धामेति यावत्तावोऽर्थः इष्टान्ते च अपनं तल्लोकव्यतिरिक्तमागन्तुकं मनुष्यादिकं विद्राव्य तन्निवासमेव आपयति तथा ॥ २३ ॥ २४ ॥

भुवो भार इति व्यक्तवानमेवाहित नांस्त्यक्त्वा स्वयमन्तर्धानं कुर्वाणास्ते पृथिव्या दुर्भरा एव स्युरिति ॥ २५ ॥

पुरुषस्य श्रीकृष्णस्य योगं नित्ययोगमास्थाय निर्धार्यं आत्मानं प्रकटलीलायां प्रकाशमानमात्मनि अप्रकटलीलायां प्रकाशमाने संयोज्य अभिन्नत्वेन विभाव्य भूर्लोकं तत्याज ॥ २६ ॥

रामनिर्याणमिति याद्भिः ॥ २७ ॥ ३९ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

परिघा इव भूताः भूताः तं कृष्णमपि ॥ २१ ॥ २२ ॥

उभयं उद्यतौ भूत्वा एरकामुष्टय एव परिघा यथोक्तौ ॥ २३—२५ ॥

मानुष्यं भूर्लोकं मनुष्यशरीरं वा ॥ २६ ॥

रामनिर्याणमित्यादिकं स्वमतमेव रामस्य निर्याणं स्वरूपेण महावैकुण्ठं प्रति गमनं स्वांशरूपेण पातालतलगमनं च २७॥२८॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

भूताः भूताः ॥ २१—२२ ॥

एरकामुष्टिरूपौ परिघौ वा हृदयङ्गौ यथोक्तौ ॥ २३ ॥

स्वधिया यः क्रोधः स स्वयं नित्येव कुलमिति शेषः २४ २५

रामः स्वयं सङ्कर्षणांशतः शेषकलांशमथ भगवल्लीलावशार्थं प्रविष्टः स्वैवैकांशेन विभूना जगती जगतः पतिरित्युक्तत्वात् लीलासमाप्तौ शेषः समुद्रं प्रविश्य स्वस्थानं गत इति च मौसलपर्वणि प्रसिद्धं सङ्कर्षणस्यांशिनः नित्यशरीरिणः भगवति स्वयंरूपे वासुदेवे श्रीकृष्णे लोकपरित्यागपूर्वकं प्रवेशमाह। राम इति। पौरुषं योगं परमपुरुषश्रीकृष्णध्यानलक्षणमास्थाय तदेव विधूयेति। आत्मनि। अंशिनि वासुदेवे श्रीकृष्णे वासुदेवकलानन्त इत्युक्तत्वात् आत्मानमंशभूतं संयोज्य लोकं नरलोकं तत्याज यथानां लोकदिदृक्षायै अग्निवज्वलनलक्षणधर्मविशेषविशिष्टे यज्ञाभरणादिकमुपशरीरं ध्यानविशेषं विधायेति चाध्यं



एवं प्रद्युम्नांशभूतः कामः स्वस्थानं गतः प्रद्युम्नः श्रीकृष्णे प्रविवेश तथानिरुद्धोऽपि श्रीकृष्णावेशेन स्वस्थानं प्राप्त इति ज्ञेयम् ॥ २६ ॥

अश्वत्थमूले भूतले ॥ २७ ॥

बिभ्रच्चतुर्भुजं रूपमिति। स्वानन्दवशासानां तृतीयस्कन्धोक्तरीत्योपदेशं प्राप्यापि भगवति स्नेहातिशयेन मैत्रेयसमीपे पुनर्लीलामाधुर्यरसास्वादनकामनया पुनः प्राप्तस्वोद्धवस्य मैत्रेयादीनां च विनाविशेषजननाय द्विभुजेनैव रूपेण भ्राजिष्णु परमज्योतिर्मयं चतुर्भुजं रूपं बिभ्रत्सत् निषसाद कायस्तु चतुर्भुजं रूपं विहाय नैमित्तिकं द्विभुजरूपमङ्गीकरणं प्रादुर्भावः द्विभुजं नराकारं रूपं विहाय स्वाभाविकचतुर्भुजरूपमङ्गीकरणमन्तर्धानमिति वदन्ति तेऽन्येव प्रत्युक्ताः किन्न तत्र हि। चतुर्भुज इत्यादौ श्रीमन्निर्णीतश्रावणाय द्विभुजरूपेण चतुर्भुजरूपप्रदर्शनेऽपि तदुक्तरीत्यैव चतुर्भुजरूपस्यापि द्विजरूपकार्यत्वं च पुनः पुनः आविर्भावतिरोभावश्चापद्यत तस्मात्त उपेक्षणीयाः ॥ २८ ॥

भाषा टीका।

ये घांस वज्र सरी के होगये भगवन्माया से मुठि में लेते मात्र परिघ आयुध होगये उनहीं से शत्रु होकर मारने लगे श्रीकृष्णजी ने मना किया तो उनको भी वे उन्मत्त मारने लगे ॥ २१ ॥

वे लोग बड़े मोहित होकर रामकृष्ण दोनों को विरोधी समझने लगे और शस्त्र लेकर मारने की बुद्धि करने लगे ॥ २२ ॥

इसके अनन्तर हे कुरु नंदन परीक्षित् जी वे भी रामकृष्ण दोनों पटेरा घांस की मूठी को परिघ आयुध बनाकर उन सबों को मारते हुये उस युद्ध में विचरने लगे ॥ २३ ॥

ब्राह्मणों के शाप से युक्त हुये विशेष करके श्रीकृष्ण की माया से मोहित उन यादवों को स्पर्धा क्रोधने क्षय कर दिया जैसे कि बांसों का अग्नि सब बनको नाश कर देता है ॥ २४ ॥

इस प्रकार से अपने सब कुलों के नष्ट होजाने से केशव भगवान् भी समझा की जो पृथ्वी का भार भारत पीछे बाकी था सो भी उतर गया है ॥ २५ ॥

श्रीबलरामजी ने तो समुद्र के किनारे जाकर परमात्मा का ध्यान रूप योग को धारण करके परमात्माने मन लगाकर मनुष्य लोक को त्याग दिया ॥ २६ ॥

श्रीबलरामजी का जाना देखकर देवकी सुत श्रीकृष्ण भगवान् भी एक पीपल के पेड़ का आश्रय लेकर मौन होकर पृथिवी पर ही बैठ गये ॥ २७ ॥

उस समय चतुर्भुज रूप को धारण किया और अपनी प्रकाशमान प्रभा के द्वारा सब दिशाओं के अंधकार को रात्रि में भी दूर करते हुये ऐसे प्रकाशित भये जैसे बिना धुआं का दीप्त अग्नि होवै ॥ २८ ॥

श्रीवत्साङ्कं घनश्यामं तप्तहाटकवर्चसम् ।
कौशेयाम्बरयुग्मेन परिवीतं सुमङ्गलम् ॥ २९
सुन्दरस्मितवक्त्राब्जं नीलकुन्तलमण्डितम् ।
पुण्डरीकाभिरामाक्षं स्फुरन्मकरकुण्डलम् ॥ ३० ॥
कटिसूत्रब्रह्मसूत्रकिरीटकटकाङ्गदैः ।
हारनूपुरमुद्राभिः कौस्तुभेन विराजितम् ॥ ३१ ॥
वनमालापरीताङ्गं मूर्तिमद्भिर्निजायुधैः
कृत्वोरौ दक्षिणे पादमासीनं पङ्कजारुणम् ॥ ३२ ॥
मुसलावशेषायःखण्डकृतेषुर्लुब्धको जरा ।
मृगास्याकारं तच्चरणं विव्याध मृगशङ्कया ॥३३ ॥
चतुर्भुजं तं पुरुषं दृष्ट्वा स कृतकिल्बिषः ।
भीतः पपात शिरसा पादयोरसुरद्विषः ॥ ३४ ॥
अजानता कृतमिदं पापेन मधुसूदन! ।
क्षन्तुमर्हसि पापस्य उत्तमश्लोक मेऽनघ! ॥ ३५ ॥
यस्यानुस्मरणं नृणामज्ञानध्वान्तनाशनम् ।
वदन्ति तस्य ते विष्णो मयाऽसाधु कृतं प्रभो! ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवानुवर्णयति । श्रीवत्साङ्कमिति चतुर्भिः ॥ २९ ॥

सुन्दरस्मितं वक्त्राब्जं यस्मिंस्तत् पुण्डरीकवदभिरामे सुन्दरे अक्षिणी यस्मिंस्तत् ॥ ३०—३१ ॥

वनमालापरीतान्यङ्गानि यस्मिंस्तत् निजायुधैश्च परीताङ्गम् पङ्कजारुणं वामं पादं दक्षिणे ऊरौ कृत्वा आसीनं रूपं बिभ्रदिति पूर्वेणान्वयः ॥ ३२ ॥

जरा नाम कश्चिल्लुब्धको मृगयुः मृगास्यमिवाकारो यस्य तं चरणम् ॥ ३३—३७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

रूपं विशिनष्टि । श्रीवत्साङ्कमिति । श्रीवत्सः अङ्कश्चिह्नं उरसि यस्य तत् घनो नीलमेघस्तद्वत् श्यामं तप्तसुवर्णस्येव वर्चो यस्य तेन कौशेयाम्बरयुग्मेन परिवीतं परितः कटिप्रदेशे उपरि चावृतं सुमङ्गलं निरतिशयसुन्दरम् ॥ २९ ॥

सुन्दरस्मितवक्त्राब्जं यस्मिन् पुण्डरीकवदभिरामे सुन्दरे अक्षिणी यस्मिंस्तत् ॥ ३० ॥

कटिसूत्रादिभिर्विराजितं तत्र मुद्रा अङ्गुलीयकं योगमुद्रा वा ॥ ३१ ॥

वनमालया परीतान्यङ्गानि यस्मिंस्तत् मूर्तिमद्भिः स्वासाधारणरूपधरैर्निजायुधैश्चक्रशङ्खादिभिर्विराजितं दक्षिणे ऊरौ पङ्कजवदरुणं पादं वामं कृत्वा निषण्णमासीनं रूपं बिभ्रदिति पूर्वेणान्वयः ॥ ३२ ॥

तत्र जरा नाम लुब्धकः मृगास्यस्येवाकारो यस्य तं तस्य भगवतश्चरणं मृगास्यमिति शङ्कया विव्याध मुसलावशेषायःखण्डकृतेषुणा ताडितवानित्यर्थः ॥ ३३ ॥

ततश्च चतुर्भुजं तं कृष्णं परमपुरुषं ज्ञात्वा कृतकिल्बिषः कृतापराधः हतुगर्भामिदम् अतो भीतः असुरद्विषः भगवतः पादयोः शिरसा स्पृशन्निति शेषः ॥ ३४ ॥

उक्तिमेवाह । अजानतेति । हे मधुसूदन ! अजानता तत्र हेतुः पापेन पापात्मना इदमागः कृतं हे उत्तमश्लोक ! हे अनघ पापस्य मे मया कृतं क्षन्तुमर्हसि ॥ ३५ ॥

यस्य तवानुस्मरणमात्रमेवाज्ञानमेवान्धकारस्तस्य नाशकं वदन्ति वृद्धाः तस्य तवाहं हे विष्णो मया अत्र असाधु कृतं हे प्रभो ! ॥ ३६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्र श्रीकृष्णोऽसुरजनमोहकरीं मायां प्रकटयति । जराख्यव्याधेनेत्याह । मुसलेति । मुसलावशेषायःखण्डेन कृत इषुः शरो यस्य स मुसलावशेषायःखण्डकृतेषुः चूर्णितमुसलावशिष्टायःखण्डेन कृतशरधारीत्यर्थः । मृगाकारं मृगास्यबुद्धिजनकम् ॥ ३३—३४ ॥

अजानता मया ॥ ३५ ॥

असाध्वनुष्ठितम् ॥ ३६ ॥

तन्माऽऽशु जहि वैकुण्ठ ! पाप्मानं मृगलुब्धकम् ।
यथा पुनरहं त्वेवं न कुर्यां सदतिक्रमम् ॥ ३७ ॥
यस्याऽऽत्मयोगरचितं न विदुर्विरिञ्चो रुद्रादयोऽस्य तनयाः पतयो गिरां ये ।
त्वन्मायया पिहितदृष्टय एतदञ्जः किं तस्य ते वयमसद्गतयो गृणीमः ॥ ३८ ॥

श्रीभगवानुवाच ।

माभैर्जरे त्वमुत्तिष्ठ काम एष कृतो हि मे ।
याहि त्वं मदनुज्ञातः स्वर्गं सुकृतिनां पदम् ॥ ३९ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तप्तहाटकमयानां भूषणानां वर्षो यस्मिन्तत् ॥ २९–३२ ॥

अत्र जरासंधः विद्ध्वाऽस्मि मृगो मया विद्ध इति लुब्धकस्याभिमानस्तथैवं प्रयुक्तं वस्तुतस्तु तदायः शरश्चरणं पस्पर्श मात्रं न तु विव्याध तदङ्गस्य सच्चिदानन्दस्वरूपत्वात् अन्यथाभीतः पपात शिरसापादयोरित्यत्र पादाङ्गुष्ठं निष्कासयामास चेत्युक्तं स्यात् ॥ ३३ ॥

कृताकिंचन इति न प्रति शरनिक्षेपात् ॥ ३४ ॥

क्षमाय क्षन्तुमर्हसि अनघेति तव चरणं सर्वं कृपया गेवाः भूर्दृति मम क्षमापणं योग्यतेति भावः ॥ ३५–३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

तदेव रूपं दर्शयति । श्रीवत्साङ्कमिति चतुर्भिः ॥ २९ ॥

सुन्दरं मनोहरं स्मितं मन्दं हसितं यस्मिन् तद्वक्त्राब्जं मुखं यस्मिन् रूपं तत् नीलैः कुन्तलैर्मण्डितमलङ्कृतं पुण्डरीकवदभिरामे सुन्दरतरे अक्षिणी यस्मिन् तत् स्फुरती दीप्यमाने मकराकारे कुण्डले यस्मिन् तत् ॥ ३० ॥

कटिसूत्रादिभिर्विराजितम् ॥ ३१ ॥

वनमालया च निर्वीतान्यङ्गानि यस्मिन् तत् पङ्कजवत् अरुणं वामं पादं दक्षिणा ऊरौ कृत्वा आसीनम् एवं भूतं रूपं बिभ्रन् सन् अश्वत्थोपस्थे निषसादेत्यन्वयः ॥ ३२ ॥

जरासंज्ञकः कश्चिल्लुब्धको मृगयुः मृगाकारमुखाकारो यस्य तं चरणं मृगशङ्कया विव्याध अपमर्थ. एवं भूतायां महायशरीरैरावृतायां नदीगैः छत्रचामरमुकुटकुण्डलाद्यैः पूर्णायां रणभूमौ सामान्यस्य जीवस्य मृगवधे प्रवृत्त्यसम्भवात् श्रीकृष्णाङ्घ्रौ मृगाऽसम्भावनाच्च बध्यमानापराधित्वासम्भवाच्च कश्चित् श्रीकृष्णपार्षद एव मुनिशापं स्वानिवर्त्येऽपि स्वापादाने मुसलाग्रशेषबाणरूपलोहमात्रेणासत्यं कर्तुं ब्रह्मणोद्देशेन भगवता नियुक्तस्तत्र तत्र नलिनीं जराकृतेण पश्यन् श्रीभगवन् रममाणो मत्वार्त् कृत्यैव समागत ॥ ३३–३६ ॥

---

भाषा टीका ।

जिस रूप में श्रीवत्स चिन्ह की शोभा है तपाये सुवर्ण सरीका जिसका तेज है जो श्याम वर्ण है पीताम्बर दो वस्त्रों से जो रूप शोभित है सुन्दर मंगल दायक है ॥ २९ ॥

सुन्दर मंद हास युक्त जिस रूप का मुख कमल है नील केशों से मंडित जिसमें मस्तक है पुंडरीक कमल सरीके जिसके मनोहर नेत्र हैं प्रकाशमान जिसके मकर कुंडल हैं ॥ ३० ॥

तथा कटि सूत्र और यज्ञोपवीत किरीट कड़ा बाजूबंद हार नूपुर कौंधनी मुद्रिका कौस्तुभ से जो रूप विराजित है ॥ ३१ ॥

वनमाला से जिस रूप के सब अंग व्याप्त हैं और मूर्ति धारि अपने शंख चक्रादि सब आयुधों से जो रूप सेवित है ऐसे रूप को धारण करके श्रीकृष्णचन्द्रजी कमलसरीके अपने चरण को दाहिने जंघा पर रखकर बैठ गये ॥ ३२ ॥

द्वारका में मुसल के रेत से पीछे जो टुकड़ा समुद्र में फेंका था उसको किसी मछली ने खाला था उसी मछली को मारकर उस लोहा के बाण बनाकर जरा नामा एक व्याध उहां गया सो वन के ओट में चरण को मृग का मुख समुझ कर उसने उस बाण को मृग जानकर चलाया ॥ ३३ ॥

फिर पास में जाकर चतुर्भुज पुरुष का दर्शन करके अपने किये अपराध से डरकर मस्तक नवाकर असुर संहारक भगवान के चरणों में गिर पड़ा ॥ ३४ ॥

फिर बोला कि हे मधुसूदन मैंने नहीं जानकर पाप अपराध किया है सो हे उत्तम श्लोक मेरे अपराध को आप क्षमा कीजिये ॥ ३५ ॥

जिन आप का स्मरण सब मनुष्यों के अज्ञान अंधकार को नाश करनेवाला है ऐसा सब शास्त्र तथा महात्मा कहते हैं हे प्रभो ! तिन का मैंने अपराध किया है ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अज्ञानापकृतमेतत्तव नापराध इतिवेदन आह । यस्य तवाऽऽत्मयोगरचितं स्वाधीनमायया रचितं विरिञ्चः अस्य तनया

इत्यादिष्टो भगवता कृष्णेनेच्छाशरीरिणा ।
त्रिः परिक्रम्य तं नत्वा विमानेन दिवं ययौ ॥ ४० ॥
दारुकः कृष्णपदवीमन्विच्छन्नधिगम्य ताम् ।
वायुं तुलसिकामोदमाघ्रायाभिमुखं ययौ ॥ ४१ ॥
तं तत्र तिग्मद्युभिरायुधैर्वृतं ह्यश्वत्थमूले कृतकेतनं पतिम् ।
स्नेहप्लुतात्मा निपपात पादयो रथादवप्लुत्य सबाष्पलोचनः ॥ ४२ ॥
अपश्यतस्त्वच्चरणाम्बुजं प्रभो ! दृष्टिः प्रणष्टा तमसि प्रविष्टा ।
दिशो न जाने न लभे च शान्तिं यथा निशायामुडुपे प्रनष्टे ॥ ४३ ॥
इति ब्रुवति सूते वै रथो गरुडलाञ्छनः ।
खमुत्पपात राजेन्द्र ! साश्वध्वज उदीक्षतः ॥ ४४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यद्वाक्यतश्च ये वाचो गिरोऽपतयो वेदद्रष्टारस्तेऽपि न विदुः तस्य तेऽविज्ञातमायस्य एतद्ब्रह्मशापादि अञ्जसा असद्गतयः पापयोनयो वयं किं गृणीमः कथं वर्णयामः अतस्तदावतामाशुमां जहीति भावः ॥ ३८—३९ ॥

इच्छाशरीरिणेत्यस्यायं भावः । शुद्धसत्त्वमयीं निजां मूर्तिमन्तर्धाय तत्प्रतिकृत्यैव विडम्बनमात्रमिति एतदेव स्फुटीकरिष्यति देवादयो ब्रह्ममुख्या इत्यादिना ॥ ४०—४१ ॥

तदानीं तत्र दृष्ट्वा तस्य पादयोर्निपपात ॥ ४२—४३ ॥

उदीक्षत उदीक्षमाणस्य सूतस्य सतः ॥ ४४—४५ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

एवं परिकरेषु परोक्षवादं व्याख्याय स्वस्मिन् कस्यापि सन्देहाभावादिच्छाशरीराभिप्रायेण मायिकचरितं प्रत्याययन् तत्रापि स्वामिभिरेव व्याख्यास्यमानत्वात् व्याख्यायते इति श्रीमद्भक्तानां साक्षात्तद्दर्शनासम्भवात् विराड्विदुषामित्युक्तमर्थं भाव इत्यादि व्याख्यातम् । एतदेवान्तर्धानमेव ॥ ४० ॥ ४१ ॥

तत्राश्वत्थमूले इत्युत्थ्याहृतम् ॥ ४२—४४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अञ्जः अञ्जसा असद्गतयः तादृशबुद्धिरहिताः ॥ ३८—५० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततस्तमागत्य वैकुण्ठ पाप्मानं मृगलुब्धकं ह्यश्वत्थप्रलोभनेन मृगघातकं मामाशु जहि हन्याः किं नत इत्यत आह । यथेति । पुनरेवंविधं सत्क्वपराधं यथा न कुर्याम् ॥ ३७ ॥

पाप्मानं मृगलुब्धकमित्यात्मनोऽति हीनत्वमावेद्य तव पारमं वाचामगोचर इत्याह । यस्येति ब्रह्मरुद्रादयः ये वा स्य ब्रह्मणस्तनयाः कथंभूताः गिरां पतयः वेदार्थद्रष्टारः तेऽपि यस्य तवात्मयोगरचितमात्मीयसङ्कल्पेनोपात्तम् इदं रूपं न विदुः एतद्व्यतारहस्यं च न विदुरित्यर्थः । तत्र हेतुत्वेन तान्विशिनष्टि यस्य तव मायया पिहितदृष्टयः छादितदृष्टयः प्रलुप्तज्ञानाहतस्य ते तदेतद्रूपम् असद्गतयः लुब्धकादयस्तोऽञ्जसा किं कथं वर्णयामः ॥ ३८ ॥

एवमुक्तो भगवानाह । मा भैरिति । हे जरे ! एष त्वया कृतः सारभूतो मे कामः काम्यते इति कामः मदिच्छाप्रयुक्त इत्यर्थः । त्वन्तु मयानुज्ञातः सुकृतिनां पदं स्वर्गं याहि ॥ ३९ ॥

इच्छाशरीरिणा स्वेच्छोपात्तविग्रहेण न तु कर्मायत्तशरीरिणा भगवतेत्थमादिष्टः तं कृष्णं त्रिः परिक्रम्य नत्वा च विमानेन तदैव देवप्रापितेन दिवं स्वर्गं ययौ गतः ॥ ४० ॥

अभिव्यक्तानन्तगन्धतुलसिकाया आमोदो यस्मिन्स्तमाघ्राय तं कृष्णमधिगम्य यतो निःसरति वायुस्तत्र दृष्टिदृश्यास्वाद्य तदभिमुखं ययौ ॥ ४१ ॥

तिग्मा तीक्ष्णाऽग्निशायिता द्युतिर्यस्य कृतं केतनमाश्रयो येन तं निजायुधैर्वृतं पतिं श्रीकृष्णमवलोक्येति शेषः स्नेहेन प्लुतः व्याप्तः आत्मा मनो यस्य बाष्पसहिते लोचने यस्य स रथादवप्लुत्य पादयोर्निपपात आह चेति शेषः ॥ ४२ ॥

दशितमेवाह । अपश्यत इति । हे प्रभो ! तव चरणाम्बुजमपश्यतो मम दृष्टिः प्रणष्टा तमसि प्रविष्टाऽतो दिशोऽपि न जाने नापि च शान्तिं चित्तप्रसादं लभे लब्धवानस्मि यथोडुपे चन्द्रे प्रणष्टे सति दृष्टिः प्रणष्टा तमसि प्रविष्टा च भवति तद्वत् प्रणष्टत्वस्यैव विवरणं तमसि प्रविष्टेति ॥ ४३ ॥

इतीति गरुडलाञ्छनः गरुडध्वजः साश्वः सध्वजश्च रथो हि

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दारुकाय भगवत्स्थानुस्मरणात् ऊर्ध्वमन्तर्हितरथः दर्शितः दारुक-रथोर्ध्वं पश्यतः सतः ॥ ४४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तं मृगलुब्धकं मृगलोभिनमिति ॥ ३७ ॥

तत्र कृतब्रह्महत्यादिदोषपरिहारस्याभावेऽप्यत्र कृतदोषपरिहारो नाहत्येव तेनाभ:पात एवातो मद्वच एव श्रेयानिति भावेनाह । यस्येति । विरिञ्चरुद्रादयोऽस्य विरिञ्चस्य तनया मरीच्यादयो गिरां पतयः बृहस्पत्यादयः ते एते यस्य तवात्मयोगरचितं स्वरूपमामर्थ्यं पापेन कृतं सुदृष्टादिकं न विदुः तत्र निमित्तमाह । त्वन्मायेयेति । त्वन्मायया बन्धकरूपया विहतदृष्टयः प्रलुप्तज्ञानाः अस्मात्समाहितेति शेषः मनस्तनयोऽप्रशस्तरूपाश्रयो निर्गताः अत एव ज्ञान-शून्याः वयं तस्य ते तवएतच्चरितमञ्जो गृणीमः किं नैव ज्ञातुं शक्ता इत्यतः एतत्स्तुत्यादिकर्मणात्वेतत्पापपरिहारो वाचाज्ञानादथः पानात्पूर्वमेव माञ्जहीथः सुमनय इति कोचित्पठन्ति अनेन किमुत्यल्पायो दर्शित इति ज्ञायते ॥ ३८ ॥

भगवान् भक्तवत्सलत्वात्त्वयि भक्तिरेवाखिलपापध्वंसिनीति भावं कृत्वा वक्ति । माभैरिति । मामैभयं माकार्षीः एष कृतः सरवेधो मे कामः कामितः काङ्क्षित इत्यर्थः । दिव्याश्देन तुष्ट-जनमोहनं प्रयोजनं सूचयति । ननः किमस्मै फलं ददासीति तत्राह । याहीति । सुकृतिनां पदमित्यनेन इदमपि सुकृतमेवा-स्त्विति दर्शयति ॥ ३९ ॥

नेदं प्राकृतपुरुषाकल्पकाश्मरेऽपि संदेहकरामिति भावेनाह । इतीति ॥ ४० ॥

प्राग्निरुद्धं समादाय कथाशेषं प्रस्तौति । दारुक इति । मन्विषदारुकेषणां कुर्वन् तं कृष्णं नाधिगत्यापिजाय पुनस्तुलसिकामोदः यस्य स तथा तं वायुमाघ्राय ज्ञात्वा तुलसिकामोदवायवभिमुखम् ॥ ४१ ॥

तत्राश्वत्थमूले कृतकेतनं तं कृष्णं दृष्ट्वा ॥ ४२ ॥

प्रभो ! ते तव चरणाम्बुजमदृश्यतो मम दृष्टिः प्रनष्टा प्रक्लं-गता इदयमानायाः कथं नाथ इत्यतउक्तं तमसीति । फलमाह । शान्तिः मङ्गलं शान्तिः प्रशममङ्गलं इतिवादवः उडुपे चन्द्रे प्रनष्टे अस्तङ्गते मत्रोडुभिः सचन्द्रस्यादर्शनं विवक्षितम् अन्यथा नक्षत्रप्रकाशेनापि दिगादिविवेकोपपत्तेरित्यत उडुपपदप्रयोग इति प्राहाश्रित इतिपाठे पादप्रपन्नः सुतः कृष्णमाह । योऽहन्ते चरणाम्बुजमाश्रितः तस्य मे दृष्टिः प्रणष्टेति योजना ४३ ॥

इदमत्यतिमाहात्म्यं हरेरिति भावेनाह । इतीति । उदीक्षितः इरिणा ऊर्ध्वं गतो रथः अत्र चेतनानियतरथाद्यचेतनमप्रवृत्तिदर्शां लौकिकानां भगवन्माहात्म्यबुद्धिरितरेषां ज्ञानिनां प्रेमलक्षणसंज्ञवा गति पश्यतां चैतन्यात्मकानि अच्युतरथादीनि इत्यहो विश्वमूर्तेर्माहात्म्यमिति ज्ञातव्यम् ॥ ४४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इच्छाशरीरिणेति । इच्छाधीनं शरीरं यस्य तेन तदिच्छयैव तद्विमानं भजत इति तत्र साम्यस्कारस्यं साम्यमिति भावः ॥ ४० । ४३ ॥

इति ब्रुवतीति । यद्यपि इदान रथानुपविश्यतो मत्तः सम्मुनो अपरिच्छन्नशरीरस्येनत दारुकस्यापि रथादिवदेवागमनमुक्तं तथाप्यत्र तस्य रथस्यं तदेकनिर्वाह्योत्तरकर्मसंपादनाभिप्रायेणैवेति गम्यते ॥ ४४ ॥ ४५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

दैवादेव चरणे त्वया नाभूत् त्वया तु हिंसनबुद्ध्यैव शरः निक्षिप्त एवेति चेत्तत्राह । तत्स्मात्त्मा मां मा जहि अत्र निरक्षोचने रथारथीत्युक्तानिव भवतम्—

भगवान् स्वात्ममायाया गतिं तामवलोक्य सः ।
सरस्वतीमुपस्पृश्य वृक्षमूलमुपाविशत् ॥

इति तृतीयोक्ते सूद्द्वांसमप समयेऽपि देवस्तूनां पारस्पारिकसां-ग्रामिकवधोऽभूत्तत्रैव भगवांस्तत्रैव सरस्वतीतीरे उपविवेश तदैव-लुब्धको मृगवधार्थमागत इति श्रूयते एतच्च नोपपद्यते यदूपञ्चाशत्कोट्यधिकानां यदूनां तत्र एव महासंग्रामिके वधे सति तत्पदैरो रुधिरनदीप्लाविते महाकोलाहलव्याप्ते च सति तत्रैव लुब्धकस्य मृगमारणार्थकागमनं कथं सम्भवेत् कथं वा भीरुजातीनां मृगाणां तत्र स्थिति सम्भावनातो यदूनां तात्कालिको वधो मिथ्या भूतोऽपि भगवता अर्जुनादीन् प्रति प्रत्यायितो युधिष्ठिरादीनां भक्तानां करुणारसमयः प्रेमविवर्तनार्थं वैराग्यार्थं च तद्वचनात् प्रति धर्मसंकोचककुमतोत्थापनार्थं वस्तुतस्तु सर्पान पीत्वा देवस्वन्तर्हितेषु तत्र निःशब्दे निर्जने प्रदेशे लुब्धक आगत इति तत्त्वम् ॥ ३७ ॥

गिरां पतयो वेदव्यासादयोऽपि न विदुस्तस्य तव एतत् आत्मयोगरचितमसञ्जःशाघिमस्मद्बुतया दुर्जातयो वयं किं गृणीम॥३८

एव मे काम एव ब्रह्मशापो मया त्वं कृतं कृतेऽयेति माईवन्त्वत्यर्थः स्वर्गमप्राकृतं सुकृतिनां प्राप्तसुकृतवतां भक्तानां पदं वैकुण्ठं याहि सुकृतिनामितिप्रसंसायां मत्वर्थीयः ॥ ३९ ॥

इच्छाशरीरिणा इच्छयैव प्राप्तशरीरधारी भवेयतस्तेन ॥ ४०—४५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्तस्मात् मामान् माशु जहि यद्वा माशु मा जहि किन्त्वनेन देहेनैव मृगतो नियोज्यपुनर्नरके घोरे निपातय इति भावः ॥ ३७ ॥

तन्वेवं वादिन न त्वां पीडयामि किन्तु तव वाक्यं ममापि प्रीतिकरमतोऽन्यदपि मन्त्रिपतं किञ्चिद्गृहीयत आह । यस्येति । यस्य तव आत्मयोगरचितम् स्वसङ्कल्परचितम् एतच्चरितम् विरिञ्चयः प्रस्य तनयाः रुद्रादयश्च ये चान्ये गिरांपतयो वेदार्थद्रष्टारः तेऽपि न विदुः यतस्त्वन्मायया पिहितदृष्टयः तस्य ते असद्गतयः पापयोनयो वयम् सञ्जसा किं गृणीमः कथं वर्णयामः ॥ ३८ ॥ ३९ ॥

इच्छयैव द्दृश्यमदृश्यं च भवति द्विभुजं चतुर्भुजमनन्तं भवति वामनरूपादिरूपं भवति विश्वरूपं भवति एकधा भवति शतधा सहस्रधा च भवतीत्यर्थानिच्छानुरूपशरीरिणेत्यर्थः ॥ ४० ॥

तमन्वगच्छन् दिव्यानि विष्णुप्रहरणानि च ।
तेनातिविस्मितात्मानं सूतमाह जनार्दनः ॥ ४५ ॥
गच्छ द्वारवतीं सूत ! ज्ञातीनां निधनं मिथः ।
सङ्कर्षणस्य निर्याणं बन्धुभ्यो ब्रूहि मद्दशाम् ॥ ४६ ॥
द्वारकायां च न स्थेयं भवद्भिश्च स्वबन्धुभिः ।
मया त्यक्तां यदुपुरीं समुद्रः प्लावयिष्यति ॥ ४७ ॥
स्वं स्वं परिग्रहं सर्वे आदाय पितरौ च नः ।
अर्जुनेनाविताः सर्वे इन्द्रप्रस्थं गमिष्यथ ॥ ४८ ॥
त्वं तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः ।
मन्मायारचनामेतां विज्ञायोपशमं व्रज ॥ ४९ ॥
इत्युक्तस्तं परिक्रम्य नमस्कृत्य पुनः पुनः ।
तत्पादौ शीर्ष्ण्युपाधाय दुर्मनाः प्रययौ पुरीं ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे यादवान्तर्धानं नाम
त्रिंशोऽध्यायः ॥ ३० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दारुकः श्रीकृष्णसारथिः अन्विच्छन् अन्वेषयन् ॥ ४१ ॥
तं श्रीकृष्णं पतिं तत्र दृष्ट्वा पादयोर्निपपात ॥ ४२—४३ ॥
उदीप्लुतः पश्यतः सतः ॥ ४४—४५ ॥

---

भाषा टीका ।

हे वैकुण्ठ ! जिसमें ऐसे पापी हिंसक लुब्धक मेरे को आप जल्दी से मार दीजिये जिससे कि मैं फिर इस प्रकार का महापुरुषों का अति क्रमण नहीं करूं ॥ ३७ ॥

जिन आपके आत्म योग से रचित कार्य को ब्रह्मा-रुद्र आदि के जो जो इस जगत् के पति हैं जो वेदों के जानने वाले हैं वे नहीं जानते हैं उन सबों की दृष्टि आपकी माया से लुप्त हो गई है तब इस आपकी लीला को सहज से खोटे मार्ग वाले हम लोग कैसे जान सकते हैं ॥ ३८ ॥

श्रीभगवान् बोले हे जरा ! तु मत डर यह कार्य सब मैंने किया है अब तु मेरी आज्ञा से धर्मात्मा लोगों के जाने लायक स्वर्ग स्थान को चला जा ॥ ३९ ॥

इच्छा से शरीर धारी भगवान् की ऐसी आज्ञा होते मात्र उस जरा ने भगवान् के चरण पकड़कर प्रणाम किया उसी क्षण आकाश से विमान आया तब उसपर बैठकर वह स्वर्ग को चलागया ॥ ४० ॥

उधर दारुक सारथि भी कृष्ण भगवान् को ढूंढता हुआ नहीं मिलने पर तुलसी की सुगंधी के वायु को सूंघकर भगवान् के सम्मुख चला आया ॥ ४१ ॥

उहां पर उस दारुक सारथी ने देखा कि बड़े तेज वाले आयुधों से भगवान् आवृत हो रहे हैं औ पीपल के पेड़ के नीचे उनने निवास किया है तैसे ही अपने पति को देखकर रथ से उतर कर स्नेह से अत्यन्त व्याप्त होकर आखों में आंसुओं को भरकर चरणों में गिरपड़ा ॥ ४२ ॥

फिर बोला कि हे प्रभो ! आपके चरण कमल के न देखने से मेरी दृष्टि नष्ट होगई सब अंधेरा हो गया मेरे को कोई दिशा नहीं मालूम पड़ी कहीं शान्ति नहीं मिली जैसे रात्रि में चन्द्रमा के डूबने से होता है ॥ ४३ ॥

उस सारथि के ऐसे कहते ही सारथी के अधीन जो गरुड के ध्वजा का रथ था सो शीघ्र ही आकाश को चला गया हे राजेन्द्र ! उसके देखते देखते घोड़ा ध्वजा आदि के सब साथ ही चले गये ॥ ४४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

निर्याणं योगमार्गेण मद्दशामितीच्छाशरीराभिप्रायेण ॥ ४६–४७ ॥
अविता रक्ष्यमाणा इन्द्रप्रस्थं गमिष्यथेति ब्रूहीति पूर्वेणान्वयः ॥ ४८ ॥
मन्मायारचनामेतां विज्ञायेति निजमूर्तेरन्तर्हितत्वाच्छ्रुत्वा शोकं माकुर्वित्यर्थः ॥ ४९ ॥
कुलस्य निधनत्वाद्दुर्मनाः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
त्रिंशोऽध्यायः ॥ ३० ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनीटिप्पणी ।

तं रथमनु । तेन रथादीनामाकाशगमनेन ॥ ४५ ॥
अद्भुतमनु निधनं नितरां धनम् अप्रकटधामगमनम् ॥ ४६ ॥
प्लावयिष्यति अभितः प्लावनेनाऽवरिष्यति ॥ ४७—५० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपन टिप्पणे ।
त्रिंशोऽध्यायः ॥ ३० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धव्याख्याने
श्रीसुदर्शनसूरिकृतशुकपक्षीये
त्रिंशोऽध्यायः ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः विष्णुप्रहरणानि भगवदायुधानि चक्रादीन्यपि तं रथमन्वगच्छन् तेनायुधानामूर्ध्वगमनेनातीव विस्मित आत्मा मनो यस्य तं सूतम् ॥ ४५ ॥

उक्तिमेवाह । गच्छेति चतुर्भिः । हे सूत ! मिथो युद्धेन ज्ञातीनां निधनं सङ्कर्षणस्य रामस्य निर्याणं मद्धामैवमवस्थितिरिति च बन्धुभ्यो ब्रूहि ॥ ४६ ॥

द्वारकायां चेति स्वबन्धुभिः ॥ ४७ ॥

तर्हि किं विधेयं क गन्तव्यमत आह । स्वं स्वमिति । परिग्रहं देहानुबन्धि नोऽस्माकं पितरौ देवकीवसुदेवौ आदाय सर्वे यूयमर्जुनेनाविता रक्षिताः सन्त इन्द्रप्रस्थं गमिष्यथ ॥ ४८ ॥

तर्हि मम का गतिरित्यत्राह । त्वमिति । त्वन्तु मद्धर्मं भागवतधर्ममास्थायानुष्ठाय ज्ञाननिष्ठः मद्भक्तियोगनिष्ठः उपेक्षकः सर्वेष्विति शब्दादिविषय एतां जगतीं मन्मायया रचितां विज्ञाय उपशमं रागाद्यकलुषतां व्रज प्राप्नुहि ॥ ४९ ॥

तं श्रीकृष्णं परिक्रम्य तस्य पादौ शिरस्युपाधाय दुर्मनाः दुःखितमनाः भगवद्वियोगादिति भावः । पुरीं द्वारकां ययौ ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
त्रिंशोऽध्यायः ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तेन रथादिगमनेन ॥ ४५—४८ ॥

पुत्राद्युपेक्षकः एतां संसारवृत्तिं मन्मायया मदिच्छया रचना प्रकारो यस्याः सा मन्मायारचना ताम् ॥ ४९ ॥

दुर्मनाः दुःखितान्तःकरणः पुरीं द्वारवतीसंज्ञाम् ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
त्रिंशोऽध्यायः ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

निधनमिति यादवानां नितरां धनम् अप्रकटलीलासम्बन्धप्राप्ति देशान्तरवद्गुणातिशयत्वात् ॥ ४६ ॥

समुद्रः प्लावयिष्यतीति यदितः प्लावनमपि तेषां काल-मायैव प्लावनमात्रमुक्तम् ॥ ४७ ॥ ४८ ॥

अथ दारुकसान्त्वनाय मौसलार्जुनपराभवपर्यन्ताया लीलाया मायेन्द्रजालवद्दर्शितत्वमुपदिशति । त्वमिति । त्वन्तु दारुको ज्ञाननिष्ठो मदीयलीलातत्त्वज्ञः मद्धर्मे मम सम्यक्प्रतिपालयितृत्वरूपं चतुर्थपरिकरभंगिरूपं च आस्थाय मदुपाय विज्ञाय एताम् अधुना प्रकाशितां सर्वामेव मौसलादिलीलां मम माययैव इन्द्रजालवद्रचितां विज्ञाय उपेक्षको बहिर्दृष्ट्या जाते शोकमुपशमाय उपशमं चित्तशान्तिमिति व्रज प्राप्नुहि तृतीयेनान्ते तावन्मुक्तं नाम तव तथा मोहो न युक्त एवेति व्यञ्जितम् अत्र श्रीदारुकस्य स्वयं वैकुण्ठादवतीर्णत्वेन सिद्धत्वा-देतादृशलीलानां सन्निहितार्थया मायान्वया व्यावहारिकमेव प्रय-मप्रतीतिविषय इति विवेकस्थं दृश्यते चैवं परिपाटी स्वर्ग-पर्वणि प्रतीतिः श्रीभीमादिनरकं श्रीयुधिष्ठिरं प्रति धर्मराजवचनम्—

नच ते भ्रातरः पार्थ ! नरकस्था विशां पते ! ।
मायैषा देवराजेन महेन्द्रेण प्रयोजिता ॥ इति ॥ ४९ ॥

तथापि बहिर्दृष्ट्या दुर्मनाः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
त्रिंशोऽध्यायः ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

गच्छेति रथस्य वैकुण्ठप्रस्थापनेऽपि सारथेस्तस्य वैकुण्ठाप्रस्थापनं सर्वत्र तात्कालिकवृत्तज्ञापनार्थं तथा वैकुण्ठादागतस्य तस्येह नित्यपार्षदानामुद्धवादीनां संगतः प्रेम्णेति दृष्टिं दृष्ट्वा द्वारकाया अप्रकटप्रकाशगतलीलायामेव प्रवेशनार्थं चेति गम्यते मद्धामेति ब्रुवन् भाविनीमवस्तुभूतां लीलां सूचयति ॥ ४६—४८ ॥

ननु सच्चिदानन्दात्मकस्य स्वविग्रहस्य रामादिविग्रहस्य चैतादृशः प्रकारोऽयं क इति कृपयामामाश्वासयन्नाह । मन्मायेति एतां प्रख्याप्यमानां लीलाम् ॥ ४९—५० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
त्रिंश एकादशेऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निर्याणमुक्तप्रकारम् ॥ ४६—४७ ॥

अविताः रक्षिताः इन्द्रप्रस्थं गमिष्यथेति ब्रूहीति पूर्वेण सम्बन्धः ॥ ४८ ॥

एतां प्राकृतविभूतिं मन्मायारचनां विज्ञाय शमं शान्तिं व्रज प्राप्नुहि ॥ ४९ ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रिंशाध्यायार्थप्रकाशः ॥ ३० ॥

भाषा टीका ।

उस रथ के पीछे विष्णु भगवान् के सब दिव्य चक्रादिक आयुध भी चले गये इस चरित्र को देखकर अत्यन्त विस्मित भये अपने सारथि को देखकर जनार्दन भगवान् बोलते भये ॥ ४५ ॥

हे सात्यकी सारथि! तुम अभी द्वारका को जाओ वहां जाकर सब से इन बन्धुओं के आपस से अन्तर्धान न होने का समाचार कहो और सब बन्धुओं से बलदेवजी के जाने का हाल और हमारी भी इस स्थिति को कहो ॥ ४६ ॥

और तुम लोगों को बन्धुओं के सहित किसी को द्वारका में नहीं रहना चाहिये जिस वक्त मैं पृथिवी में अन्तर्धान होऊंगा उसी वक्त द्वारका को समुद्र डुबा देवेगा ॥ ४७ ॥

तुम सब लोग अपने कुटुम्बों को साथ में लेकर निकला रक्षा में अर्जुन तुमारी रक्षा करते रहेंगे तब दिल्ली को चलेजाना ॥ ४८ ॥

हे सारथि तुम तो हमारे भागवत धर्मों को आश्रय कर के ज्ञान में निष्ठा रखो संसार की उपेक्षा करो यह सब युद्धादिक होना हमारी इच्छा मात्र जानो इसका कोई शोच मत करो और शांति को प्राप्त होजाओ ॥ ४९ ॥

भगवान् के ऐसे कहने से सारथी ने श्रीकृष्ण भगवान् की प्रदक्षिणा करके वारम्वार नमस्कार किये फिर उन के चरणारविन्द को मस्तक में लगाकर वियोग से दुःखित होकर द्वारका को चले गये ॥ ५० ॥

इति श्री भागवत एकादश स्कन्ध तीस में अध्याय की

भाषा टीका समाप्त ॥ ३० ॥

———

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे त्रिंशोऽध्यायः ॥ ३० ॥



## अथैकत्रिंशोऽध्यायः ॥

—:*:—

। श्रीशुक उवाच ।

अथ तत्रागमद्ब्रह्मा भवान्या च समं भवः ।
महेन्द्रप्रमुखा देवा मुनयः सप्रजेश्वराः ॥ १ ॥
पितरः सिद्धगन्धर्वा विद्याधरमहोरगाः ।
चारणा यक्षरक्षांसि किन्नराप्सरसो द्विजाः ॥ २ ॥
द्रष्टुकामा भगवतो निर्याणं परमोत्सुकाः ।
गायन्तश्च गृणन्तश्च शौरेः कर्माणि जन्म च ॥ ३ ॥
ववृषुः पुष्पवर्षाणि विमानावलिभिर्नभः ।
कुर्वन्तः सङ्कुलं राजन् ! भक्त्या परमया युताः ॥ ४ ॥
भगवान् पितामहं वीक्ष्य विभूतीरात्मनो विभुः ।
संयोज्याऽऽत्मनि चाऽऽत्मानं पद्मनेत्रे न्यमीलयत् ॥ ५ ॥
लोकाभिरामां स्वतनुं धारणाध्यानमङ्गलम् ।
योगधारणयाऽऽग्नेय्याऽदग्ध्वा धामाविशत्स्वकम् ॥ ६ ॥
दिवि दुन्दुभयो नेदुः पेतुः सुमनसश्च खात् ।
सत्यं धर्मो धृतिर्भूमेः कीर्तिः श्रीश्चानु तं ययुः ॥ ७ ॥
देवादयो ब्रह्ममुख्या न विशन्तं स्वधामनि ।
अविज्ञातगतिं कृष्णं ददृशुश्चातिविस्मिताः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकत्रिंशे स्वकं धाम जगाम भगवानितः ।
तमेवानु ययुः प्रीत्या वसुदेवादयस्ततः ॥
देवान् यदूंस्तथा दारान् मृषा देहाग्निदाय च ।
श्रीकृष्णः स्वेच्छया धाम स्वतन्त्रैव समाविशत् ॥

मुनयः सनकादयः प्रजेश्वरा मरीच्यादयः ॥ १ ॥

द्विजा गरुडलोकनिवासिनः पक्षिणः मैत्रेयादयो वा ॥ २ ॥

भगवतो निर्याणं द्रष्टुकामाः अन्तः परमोत्सुका अत्रागमन् देवानामौत्सुक्यकृतं महोत्सवमाह सार्धेन । गायन्तश्चेति ॥ ३–४ ॥

विभूतीरिन्द्रादीं स्व पद्मनेत्रे न्यमीलयदित्यत्राऽयं भावः पूर्वं ब्रह्मादिभिः 'सर्वात्मन् लोकपालान्नः पाहि वैकुण्ठ ! किङ्करान्' इति प्रार्थितत्वाद्विभूतीश्च स्वं स्वं लोकं प्रति नेतुमागतत्वाद्ब्रह्मादिषु च तेषु दाक्षिण्यवात्सल्यव्यक्तिं समाधिमिव कुर्वन्नेव न्यमीलयदिति ॥ ५ ॥

योगिनामिव स्वकलत्रभूत्युग्मं धारयति । लोकाभिरामामिति । प्रथमार्थः योगिनो हि स्वकलेवरमुत्सृज्य स्वां तनुमाग्नेय्या योगधारणया दग्ध्वा लोकान्तरं प्रविशन्ति भगवांस्तु न तथा किन्त्वदग्ध्वैव स्वतनुसहित एव स्वकं धाम वैकुण्ठाख्यमविशत् तत्र हेतुः लोकाभिरामाम् लोकानामभिरामोऽ

सौदामन्या यथाऽऽकाशे यान्त्या हित्वाऽभ्रमण्डलम् ।
गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः ॥ ९ ॥
ब्रह्मरुद्रादयस्ते तु दृष्ट्वा योगगतिं हरेः ।
विस्मितास्तां प्रशंसन्तः स्वं स्वं लोकं ययुस्तदा ॥ १० ॥
राजन्परस्य तनुभृज्जननाप्ययेहा मायाविडम्बनमवेहि यथा नटस्य ।
सृष्ट्वाऽऽत्मनेदमनुविश्य विहृत्य चान्ते संहृत्य चाऽऽत्ममहिनोपरतः स आस्ते ॥ ११ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

संविहानात् यदि नरत्वं वह्निना स्वतनोर्दाहसामर्थ्यं दर्शयामासेति तात्पर्यं वह्निमध्य इमरेद्रूपं ममैतद्ध्यानमङ्गलमिति तनु-कोरिति व्याख्यातेन ॥ ५ ॥ ६ ॥

लब्धममोदया ययुरिति तत्परिभावकमाना कुमतानां तदैवो-त्थानाभिति भावः ॥ ७ ॥

तदा श्रीभगवत्यन्तर्हिते सति सर्वेषा अपि कुत्र गत इति वितर्कयन्तोऽपि ब्रह्ममयाद्या देवाः स्वधाम गच्छन्तं तं कृष्णमाव-तासगति ददृशुः तस्य गतिं न ददृशुरिति फलितोऽर्थः कश्चित् कीदृक्कीदृक्कीदृग्ददृशुर्येनतोऽपि विस्मिता बभूवुरित्यर्थः ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एकत्रिंशाध्याये श्रीमद्भगवतः परमधामगमनोत्सवो निरूप्यते मुनयः श्रीसनत्कुमारनारदादयः प्रजेश्वराः मरीच्या-दिसहिताः ॥ १ ॥

द्विजाः मैत्रेयादयः ॥ २ ॥

भगवतो निर्याणं परमधामगमनं द्रष्टुकामाः सन्तः परमो-त्सुकास्तत्रागमन् तत्कृतं महोत्सवमाह । गायन्त इति सार्द्धेन ॥ ३—४ ।

विभूतीः इन्द्रादीन् ॥ ५ ॥

ननु पितामहादिसमीपे मीलितपद्मनेत्रो हरिः किं कृतवान् इत्यत आह । लोकाभिरामामिति । पुरुषार्थसाधनध्यानतया जना-भिरामां स्वस्यापि विहारस्थानतया तनुधरेषु विष्णुधारणा-ध्यानादिना मङ्गलप्रदां भूमिं स्ववियोगाग्निना दग्ध्वा सन्तापयित्वा स्वकं धाम आविशत् ननु केन प्रकारेणाविशदत आह । योगधा-रणयेति । आग्नेय्या आग्नेय्युपमया यथाग्निः विद्युद्वा दृश्यत एव क्षणेन स्वक्रियया दृश्यो भवति एवं भूतया योगधारणया स्वसंकल्पक्रियया दृश्येनैव प्रागवस्थितेन रूपेणाऽदृश्योऽभवदि-त्यर्थः ॥ ६ ॥

एवं भूते परमाद्भुते भगवद्गमने महोत्सवमाह । दिवीति । इत्थं-भूतस्य विवरणं सत्यमित्यादि ॥ ७ ॥

योगधारणयाऽऽग्नेय्याऽनेनाविज्ञातगतित्वं दर्शितं तदेव स्पष्टयति । देवा इति द्वाभ्याम् । अविज्ञातगतिं कृष्णं स्वधामनि विशन्तं ददृशुः अतो विस्मिता आसन् ॥ ८—१० ॥

भाषा टीका ।

श्रीशुकदेवजी बोले इसके अनन्तर जहाँ पर ब्रह्मा तथा पार्वती के सहित महादेवजी इन्द्रादिक सब देवता प्रजा पतियों के सहित मुनिगण ॥ १ ॥

पितर सिद्ध गन्धर्व विद्या धर महोरग चारण यक्ष राक्षस किन्नर अप्सरा गरुडलोक के पक्षि ॥ २ ॥

ये सब लोग भगवान् के गमन के दर्शन में बड़े आनंदित होकर आये और भगवान् के जन्म कर्म के चरित्रों को गाते कीर्तन करते हुए ॥ ३ ॥

अपने विमानों के समूहों से आकाश को व्याप्त करते हुवे हे राजन् परम भक्ति से युक्त होकर फूलों की वर्षा करने लगे ॥ ४ ॥

सर्व व्यापक भगवान् ने भी ब्रह्मा तथा अपनी इन्द्रादि-विभूतियों को देखकर अपने स्वरूप में मन लगाकर दोनों नेत्र कमलों को बंद कर लिये ॥ ५ ॥

सब लोगों के मन को हरन करने वाली मूर्ति जोकि धारणा तथा ध्यान में मङ्गल दायक है उस मूर्ति को अग्नि सम्बन्धि योगियों की धारणा से भी नहीं जलाकर इसी स्वरूप से अपने धाम को चले गये ॥ ६ ॥

स्वर्ग में देवताओं के नगारा बजे आकाश में से फूलों की वर्षा होने लगी उन्हीं के साथ धर्म सत्य धृति कीर्ति श्री ए सब भूमी में से उनके पीछे चल गये ॥ ७ ॥

ब्रह्मादिक देवता जिनकी गति को कोई नहीं जानता है उनको अपने धाम को जाते समय में नहीं जानसके तो बड़े विस्मय युक्त हो गये ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अविज्ञातगतित्वं दृष्टान्तेन स्पष्टयति । सौदामन्या गतिर्यथा मर्त्यैर्न लक्ष्यते दैवैस्तु लक्ष्यते तथा भ्रमण्डलं हित्वा गच्छतः श्रीकृष्णस्य गतिर्दैवैरपि न लक्ष्यते किन्तु तत्पार्षदैरेवेत्यर्थः ॥ ९—१० ॥

तत्र स्म त्वरिता जग्मुः कृष्णविश्लेषविह्वलाः ।
असवः शेरते यत्र ज्ञातयो घ्नन्त आननम् ॥ १७॥
देवकीरोहिणी चैव वसुदेवस्तथा सुतौ ।
कृष्णरामावपश्यन्तः शोकार्ता विजहुः स्मृतिम् ॥१८॥
प्राणांश्च विजहुस्तत्र भगवद्विरहातुराः ।
उपगुह्य पतींस्तात ! चितामारुरुहुः स्त्रियः ॥ १९ ॥
रामपत्न्यश्च तद्देहमुपगुह्याग्निमाविशन् ।
वसुदेवपत्न्यस्तद्गात्रं प्रद्युम्नादीन् हरेः स्नुषाः ।
कृष्णपत्न्योऽविशन्नग्निं रुक्मिण्याद्यास्तदात्मिकाः ॥ २० ॥
अर्जुनः प्रेयसः सख्युः कृष्णस्य विरहातुरः ।
आत्मानं सान्त्वयामास कृष्णगीतैः सदुक्तिभिः ॥ २१ ॥
बन्धूनां नष्टगोत्राणामर्जुनः सांपरायिकम् ।
हतानां कारयामास यथावदनुपूर्वशः ॥ २२ ॥
द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत्क्षणात् ।
वर्जयित्वा महाराज ! श्रीमद्भगवदालयम् ॥ २३ ॥
नित्यं सन्निहितस्तत्र भगवान् मधुसूदनः ।
स्मृत्याऽशेषाशुभहरं सर्वमङ्गलमङ्गलम् ॥ २४ ॥

भाषा टीका ।

जैसे कि आकाश में मेघ को छोड़ कर के जाती हुई बिजुली की गति को मनुष्य नहीं जान सकते हैं तैसे श्रीकृष्ण जी की गति को किसी देवतों ने नहीं जाना ॥ ९ ॥

वे ब्रह्म रुद्रादिक श्रीहरि की उस योग गति को देख कर विस्मित हो कर उस बात की प्रशंसा करते हुये अपने अपने लोकों को चले गये ॥ १० ॥

हे राजन् ! इन परम पुरुष भगवान् के जन्म की तथा अन्तर्धान की चेष्टा है सो केवल जैसे नट का चरित्र तैसे मनुष्यों के वास्ते एक आश्चर्य शक्ति से है जोकि आदि में इस जगत्को माया से सृज कर के फिर विहार कर के अन्त में संहार कर के अपने महिमा से निवृत्त हो कर रहते हैं ॥ ११ ॥

जो भगवान् यम लोक को ले गये मनुष्य शरीर वाले गुरु पुत्र को ले आये जो शरण रक्षक तुम्हारी माता के गर्भ में ब्रह्मास्त्र से तुम्हारी रक्षा करते भये जिन ने बाणासुर के युद्ध में काल के भी जीतने वाले महादेव जी को जीत लिया और जिनने मृगलुब्धक को भी देह सहित स्वर्ग मे भेज दिये वे क्या अपने शरीर के रक्षा करने में समर्थ नहीं रहे ॥ १२ ॥

तो भी सब संसार के उत्पत्ति स्थिति प्रलय के सब कामों के करने मे किसी की अपेक्षा नहीं करनेवाले भगवान् हैं क्यों की वे सर्व शक्ति धारी हैं ऐसे होने पर संसार में मर्त्य शरीर जो सब मनुष्यों के हैं उन में कुछ सार नहीं है इस बात के दिखाने के लिये अपनी स्वरूप गति को जताने के लिये यहां पर प्रगट से अपने निजदेह को नहीं दिखाना चाहा ॥ १३ ॥

जो पुरुष प्रातःकाल में उठ कर इस लीला को श्रीकृष्ण का प्रयाण को नियम से कीर्तनकरैगा सो उत्तम गति को प्राप्त होगा ॥ १४ ॥

दारुक ने द्वारका में जा कर वसुदेव तथा उग्रसेन के आगे जो हाल प्रभास का सब चरणों में गिर कर कहा श्रीकृष्ण के वियोग से आंसुओं से उन के चरणों को भिगा दिया ॥ १५ ॥

हे राजन् ! सब वृष्णियों का अन्तर्ध्यान होना कह दिया इस बात को सुन कर द्वार के सब मनुष्य शोक से मूर्छित हो कर गिर पड़े ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कृष्णरामौ सुतावपश्यन्त ॥ १८—२०॥

स्त्रीबालवृद्धानादाय हतशेषान् धनञ्जयः ।
इन्द्रप्रस्थं समावेश्य वज्रं तत्राभ्यषेचयत् ॥ २५ ॥
श्रुत्वा सुहृद्वधं राजन्नर्जुनात्ते पितामहाः ।
त्वां तु वंशधरं कृत्वा जग्मुः सर्वे महापथम् ॥ २६ ॥
य एतद्देवदेवस्य विष्णोः कर्माणि जन्म च ।
कीर्तयेच्छ्रद्धया मर्त्यः सर्वपापैः प्रमुच्यते ॥ २७ ॥
इत्थं हरेर्भगवतो रुचिरावतारवीर्याणि बालचरितानि च शन्तमानि ।
अन्यत्र चेह च श्रुतानि गृणन्मनुष्यो भक्तिं परां परमहंसगतौ लभेत ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे यादवान्तर्धानं नाम
एकत्रिंशोऽध्यायः ॥ ३१ ॥
समाप्तोऽयमेकादशस्कन्धः ॥ ११ ॥

भाषा टीका ।

द्वार का को जब हरिने त्याग किया तब क्षण मात्र में समुद्र ने सब द्वारिका को डुबा दिया है महाराज श्रीमान् भगवान् के मंदिर को छोड दिया ॥ २३ ॥

क्योंकि स्मरण करने से सब के पापों के हरने वाले सब मंगल करने वाले भगवान् जहां सन्निहित रहते हैं तिस से उन के स्थान को समुद्र ने छोड दिया है ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आदित आरभ्य श्रीकृष्णचरितकीर्तनस्य फलमाह । य एत-दिति द्वाभ्याम् ॥ २७ ॥

शंतमानि परममङ्गलानि परमहंसगतौ श्रीकृष्णे ॥ २८ ॥

एवमेकादशस्कन्धभावार्थस्य प्रदीपिका ।
स्वानन्दधाम्नमीतेन श्रीधरेण प्रकाशिता ॥
इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनीटिप्पणी ।

वस्तुतस्तु हतशेषान् ज्ञानावशिष्टान् । तत्र स्त्रीबालवृद्धेषु ॥२५॥

सुहृदां न सान्त्वनं दधातीति सुहृद्वधं नित्यलीलाख्यानं श्रुत्वा तत्रैव गमनाय सत्वराः सन्तो महापथं तद्ध्यानोपयुक्तं स्थानं जग्मुरिति वास्तवोऽर्थः वः सान्त्वने च धातोरिति मेदिनी ॥ २६ ॥

बालचरितार्थपोषकं फलमाह । य एतदिति द्वाभ्याम् ॥ २७ ॥

अन्यत्र परलोके इह च लोके परममङ्गलानीति योज्यम् ॥२८॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

परमहंसगतौ परमहंसानामाचार्यविषय इति शेषः ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धव्याख्याने
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्त्रीबालेति । स्त्रीरूपान् बालान् वृद्धांश्च जनान् हतशेषानग्नि प्रविष्टाभ्योऽवशिष्टानादायेत्यर्थः । ननु स्त्रीबालान् वृद्धांश्च पुरुषानित्यर्थः । जनविध्वंस यो मन्दा ! मुसलं कुलनाशनमिति कृत्स्नकुलनाशकत्वाभिधानात् पुमान्तरस्याशेषानयनेः तत्र द्वारकायां वज्रं नाम यादवमभ्यषेचयत् सतु भगवत्संकल्पेनावशेषित इति भावः ॥ २५ ॥

श्रुत्वेति । त इति राजानं प्रति शुकोक्तिः पितामहो युधिष्ठिरः वंशधरं वंशप्रवर्तकं कृत्वा महापथं स्वर्गतः ॥ २६ ॥

दशमैकादशस्कन्धद्वयार्थकीर्तनादिफलमाह । य इति द्वाभ्याम् । सर्वपापैर्भक्तियोगोत्पत्तिप्रतिबन्धकैः ॥ २७ ॥

इत्थमिति । इत्थं भगवतो यो रुचिरोऽवतारः तस्य वीर्याणि वीर्यप्रकाशकानि बालचरितानि शंसितानि चेति अत्यन्तहारपोगदककैशो

[illegible]

# विज्ञापनम् ।

## परपक्षगिरिवज्रः ।

अयि विचक्षणाः! मद्यातिप्रहर्षसमयो वरीवर्त्ति यदहं तत्रभवद्भ्यो भवद्भ्योऽद्भुतग्रन्थं निवेदयामि यद्ग्रन्थान्वेषणं सहस्राणि विद्वांसोऽकार्षुः चातकास्स्वातिबिन्दुमिव, तथाऽपि तद्ग्रन्थदर्शनमपि दुर्लभमभूत् तत्पाठनविचारणादि तु दूरापास्तमेवासीत् तमेव ग्रन्थमत्यानन्देन समस्तभारतवासिनां श्रीमतां सेवायां निवेदयामि यं ग्रन्थं 'शारीरकहार्दसंचयनामकं' कथयन्ति, केचित्तु परपक्षगिरिवज्राख्यम् अध्यासगिरिवज्राख्यमपि कुर्वन्ति, एष ग्रन्थो वेदान्तिनां शिरोधार्यो ऽस्ति, किञ्च सर्वमनीषिणामेतत्सुविदितमस्ति, निगमकल्पतरो रसमयफलं वेदान्तशास्त्रमेवास्ति, यद्यपि वेदान्तशास्त्रस्य स्वस्वसिद्धान्तानामनुकूला अनेके ग्रन्था मुद्रितास्सन्ति, तथापीदृशः को ऽपि ग्रन्थोऽद्यावधि न मुद्रितो ऽस्ति, यद्ग्रन्थावलोकनेनैव सर्वं सिद्धान्तज्ञानं भवति, एतस्मिन् ग्रन्थेऽद्भुतचमत्कारोऽस्ति एतदवलोकनेनैव सर्वशास्त्रसिद्धान्तज्ञानपूर्वकमसत्यासत्यविचारो भवति, अन्यवेदान्तग्रन्थस्यावलोकनावश्यकता ऽपि न भवति, सर्वेषां विपश्चितामेतत्ग्रन्थावलोकनेन पूर्णानन्दावाप्तिर्भवति, एष च ग्रन्थो विदुषां पठनपाठनादिषु प्रचारणीयो ऽस्ति, किम्बहुलेखनेनैतद्ग्रन्थावलोकयितॄणां ब्रह्मानन्दास्वादसमुद्रस्तरङ्गित इव भवति, एतद्ग्रन्थावलोकनेन विद्वन्मण्डल्यां वाग्विलासे सङ्कोचः कदा ऽपि न भवति, एष च ग्रन्थो निम्नलिखितप्रकरणैर्विभूषितो ऽस्ति, एतस्मिन् ग्रन्थे चत्वारो ऽध्यायास्सन्ति, तत्र प्रथमे ऽध्याये विषयसम्बन्धगिरिनिपात-प्रयोजनाधिकारिगिरिनिपात-अध्यासगिर्यधिष्ठानगिरिनिपातादीनि महानिम्नतराणि त्रयोविंशतिः प्रकरणानि सन्ति. द्वितीये चाध्याये जिज्ञास्योपपत्तिगिरिनिपातादीनि दश प्रकरणानि सन्ति तृतीयेऽध्याये साङ्ख्यगिरिनिपातादीनि दश प्रकरणानि सन्ति चतुर्थेऽध्याये जीवन्मुक्तिगिरिनिपातो ऽस्ति, एवं चत्वारिंशत्प्रकरणैर्विभूषितो ऽष्टसहस्रश्लोकसंख्यापरिमितो ग्रन्थोऽस्तीति विज्ञेयं मनीषिभिरिति शम ॥ मूल्यम् रौप्यकत्रयम् ३)

पूज्यपादश्रीविश्वनाथचक्रवर्तिविरचितम्

## श्रीकृष्णभावनामृतम् ।

श्रीकृष्णभावनामृतम् श्रीकृष्णचन्द्राष्टकालिकसेवानिरूपणपरम् क्रीडानिकुञ्जस्थ किङ्करीशुकशारिकादीनां परस्परसेवानिरूपणापरसुस्पष्टव्याख्यात्मकं महाकाव्यम् तदनुगुणामिताक्षरसंस्कृतटीकया समलङ्कृतम्, मूल्यम् रौप्यकत्रयम् ३)

श्रीमद्भागवत सम्बन्धीय नियमावली ।

इतने बड़े परिश्रम और अध्यवसाय पर भी सर्व साधारण के सुलभ संग्रह के अर्थ पूर्ण ग्रंथ का मूल्य केवल ५०) रुपया अग्रिम रखा गया है राजा महाराजा और सम्मान्य मनुष्यों के सन्मान रक्षा के लिये उनसे केवल १००) रु० मात्र लिया जायगा डाकमहसूल २४) रु० अलग पड़ेगा यह भागवत दशटीकोपेत है ।

असमर्थ ग्राहकों से चार किस्तों में रुपया लिया जायगा—प्रथम किस्त १२) रु० पञ्चमस्कन्ध तक, द्वितीय किस्त १२) षष्ठस्कन्ध तक, तृतीय किस्त १२) सप्तमस्कन्ध तक, चतुर्थ किस्त १४) दशमस्कन्ध तक और डाक महसूल २४) द्वादशस्कन्ध तक लियाजायगा।

## श्रीजगन्नाथवल्लभनाटकम् ।

इह खलु जगति विद्यास्थानेष्वनेकेषु पठनीयेषु सत्स्वपि शास्त्रान्तराणां सहिष्णुवेद्यत्वेन सूक्ष्ममतिवेद्यत्वेन च नेष्वल्पजनादरणीयेषु जातेषु इदानीं स्थूलमतिवेद्यत्वेन सुकुमारवेद्यत्वेन च काव्यनाटकादीन्येव मनुष्याणां समययापनयोग्यानि तानि च भगवद्विषयकाणि चेद्भुक्तिमुक्तिप्रदानीति विचार्येदानीं जगन्नाथवल्लभनाटकं सर्वजनसौकर्याय प्रकाशितम् इदं च नाटकं श्रीराधाकृष्णरहस्यक्रीडा विषयं प्रतापरुद्रनृपतितोषार्थं रामानन्दराय कविना निर्मितम्. अत्र च पञ्चाङ्काः सन्ति तत्र प्रथमेऽङ्के नटनटीसूत्रधाराणां संवादपूर्वकप्रस्तावनानन्तरं श्रीराधाकृष्णमदनिका विदूषकाणां वृत्तान्तैः पूर्वरागनिरूपणम् १ द्वितीये च भावपरीक्षादिनिरूपणम् २ तृतीये भावप्रकाशादिनिरूपणम् ३ चतुर्थे श्रीराधिकाया अभिसरणक्रियानिरूपणम् ४ पञ्चमे श्रीराधाकृष्णयोः सङ्गमनिरूपणम् अस्मिन् ग्रन्थे मध्ये मध्ये गीतगोविन्दवद्रागपद्यान्यपि विद्यन्ते मूल्यम् द्वादश आणकाः ।।।)

## वेदान्तसारः ।

भो भो वेदवेदान्तसकलशास्त्रपारावारपारङ्गताः!

विदितमेव भवतां श्रीमद्वैयासिकसूत्रार्थयाथात्म्यप्रतिपादको बालानामपि वेदान्तार्थसंशयनिवारणकरो वेदान्तसारो नाम ग्रन्थरत्नम्. स चेदानीं सुललितैर्नागराक्षरैरपूर्वतया मुद्रितस्सन् जाज्वलीति. अतस्सर्वेऽप्येतद्ग्रन्थरत्नं केवलेन सार्द्धरूपकमूल्येन गृहीत्वा मनोनयनानन्दं प्राप्नुवन्तु भवन्तः। अस्य मू० १॥)

**श्रीश्रीनिम्बार्कदर्शनम्**--भो भोः परिनिष्ठितविद्वांसः! अस्मन्मुद्रणालये यथावधि काव्यमुद्रितम् भाष्यत्रयोपेतम् 'श्रीमन्निम्बार्कदर्शनम्' समग्रं सम्मुद्रितं तत्त्वर्यतां ग्रहणोत्सुकैः पञ्चमुद्रा-मूल्येन, पश्चादधिकेन लभ्येत इति विदन्तु मू० ५)

श्रीमद्भागवत कार्यालय—श्रीदेवकीनन्दन प्रेस
श्रीवृन्दावन—जिला मथुरा । } विद्वज्जन कृपाकाङ्क्षी—श्रीनित्यस्वरूप ब्रह्मचारी ।

 श्री १०८ श्रीराधारमणो जयति। द्वादशस्कन्धः

महर्षिप्रवर श्रीकृष्णद्वैपायनप्रणीतम्

# श्रीमद्भागवतम्।

श्रीश्रीपादश्रीधरस्वामिकृतभावार्थदीपिका, श्रीमद्विशिष्टाद्वैतसिद्धान्तनिर्वाहकाचार्यप्रवर श्रीसुदर्शन-
सूरिकृतशुकपक्षीयसमाख्यटीका, तदनुगामिश्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका,
श्रीमन्मध्वसिद्धान्तधुरन्धर श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली, श्रीमद्विष्णुस्वामिसिद्धान्त-
निर्वाहकाचार्यप्रवरश्रीमद्वल्लभाचार्य्यकृतसुबोधिनी, श्रीगौडीयवैष्णवाचार्य्यप्रवरश्रीमज्जीव-
गोस्वामिकृतक्रमसन्दर्भाख्यटीका, तदनुगामिश्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थ-
दर्शिनी, श्रीनिम्बार्कसम्प्रदायि—श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपाख्यटीका
इत्यष्टभिर्व्याख्याभिर्भाषानुवादेन च समलङ्कृतम्।

तदिदम्

परमहंसपरिव्राजकाचार्य्यपूज्यपादश्रीमत्स्वामिप्रकाशानन्दसरस्वतीप्रवरशिष्येण,

**श्रीनित्यस्वरूपब्रह्मचारिणा**

सम्पादितम्।

वङ्गदेशान्तर्गत ताडास भूपति **श्रीराधाविनोद** प्रेम सेवा परायण **राजर्षिराय-**

**"श्रीवनमालिराय बहादुरस्य"**

सम्पूर्णसाहाय्येन

प्रकाशितञ्च।
तत्र
श्रीवृन्दावन श्रीरङ्गमन्दिरस्थ पं० भागवताचार्य द्वारा

तथा

काञ्चीमण्डलान्तर्वर्ति 'कान्दूर' प० श्रीरङ्गाचार्यद्वारा च संशोध्य
**श्रीवृन्दावनधामनि**

स्वकीये **"श्रीदेवकीनन्दन"** यन्त्रालये

मुद्रापितम्।

सम्वत् १९६४

# श्रीमद्भागवतम् ।

## द्वादशस्कन्धः ।

### प्रथमोऽध्यायः ।

ॐ नमो भगवते वासुदेवाय ।

राजोवाच ।

स्वधामानुगते कृष्णे यदुवंशविभूषणे ।
कस्य वंशोऽभवत्पृथ्व्यामेतदाचक्ष्व मे मुने ! ॥ १ ॥

श्रीशुक उवाच ।

योऽन्त्यः पुरञ्जयो नाम भविष्यो बारहद्रथः ।
तस्यामात्यस्तु शुनको हत्वा स्वामिनमात्मजम् ॥ २ ॥
प्रद्योतसञ्ज्ञं राजानं कर्ता यत्पालकः सुतः ।
विशाखयूपस्तत्पुत्रो भविता राजकस्ततः ॥ ३ ॥
नन्दिवर्द्धनस्तत्पुत्रः पञ्च प्रद्योतना इमे ।
अष्टत्रिंशोत्तरशतं भोक्ष्यन्ति पृथिवीं नृपाः ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

श्रीगणेशाय नमः ।

श्रीगुरुं परमानन्दं वन्दे स्वानन्दविग्रहम् ।
यस्य सन्निधिमात्रेण चिदानन्दायते वपुः ॥
जयन्ति श्रीपरानन्दकृपापाङ्गलवदृशः ।
या नित्यमनुवर्तन्ते सम्पदो विगतापदः ॥
उक्ताश्रयोदशाध्यायैर्द्वादशे त्वाश्रयः सतः ।
अधिष्ठानावधित्वाभ्यामाश्रयश्चेश्वरः सतः ॥
उक्तो लयावधित्वेन प्राकृतात्यन्तिके लये ।
अधिष्ठानतया चोक्तो महापुरुषवर्णने ॥
तत्रादौ षड्भिरध्यायैः शुकः प्राह परीक्षिते ।
शेषैस्तत्राखिलान्याह सूतः पृष्टोऽथ सत्रिभिः ॥
स्वाश्रयश्रवणे कार्यो न विलम्बो मनीषिणा ।
इत्येतत्कालवैषम्यं चतुर्भिस्तावदुक्तवान् ॥
तत्र तु प्रथमे भाविमागधान्वयभूमिपान् ।
कलिप्रभावतः प्राह सङ्करादिमलीमसान् ॥
एतत्प्रभृति सोमवंशे मुकुन्दः स्वैरक्रीडां वर्णितोऽथो स एव ।
वंशो भावी वर्ण्यते कृष्णभक्तिं मुक्त्वा मुक्त्यै धर्मं नास्तीति वक्तुम् ॥

तदेवं वैवस्वतमनुवंशे सोमवंशप्रस्तावेन श्रीकृष्णावतारचरितानि सप्रपञ्चमनुवर्णितानि; अथेदानीं भावी सोमवंशः कलौ विजातीयसङ्करादिमलीमसो वैराग्यद्वारा श्रीकृष्णैकभक्तिनिगमनायानुवर्ण्यते तत्र तु सोमवंशशाखासु चिरकालानुवर्तितया मागधवंशोऽनुक्रम्यते—तत्र पूर्ववंशे उपरिचरोवसुसुतस्य बृहद्रथस्तस्य जरासन्धस्तस्य सहदेवः पुत्रोऽभूदित्युक्तं नवमस्कन्धे, तत्रैव सहदेवान्मार्जारिस्ततः श्रुतश्रवा इत्यादयो रिपुंजयान्ता विंशतिर्भाविनो राजानो निरूपिताः तत्र राजा पृच्छति—स्वधामेति ॥ १ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

इदानीं तदुपरितनं वंशं सङ्करादिदोषैः प्रपञ्चयति—योऽन्त्य इति । रिपुञ्जय एव पुरञ्जयः स्वामिनं पुरञ्जयम् हत्वा स्वपुत्रं प्रद्योतसंज्ञम् राजानं करिष्यति यस्य पालको नाम सुतो भविष्यति ॥ २ ॥ ३ ॥

प्रद्योतनाः प्रद्योतसंज्ञाः ॥ ४—८ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

श्रीमते रामानुजाय नमः ।

१—३ ॥

अष्टात्रिंशोत्तरं शतमिति कालावधिरुक्तः ॥ ४—१८ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्रीमते रामानुजाय नमः ।

तदेवं नवमस्कन्धेनोपक्रान्तसूर्यवंशावलिं तदनन्तरापतितसोमवंशावलिं च श्रीकृष्णावतारपर्यन्तां निरूप्य भगवतोऽवतारप्रभृतीनि स्वधामगमनान्तानि चरितानि दशमैकादशाभ्यां निरूपितानि अथ भाविसोमवंशपरम्परोत्तरावधि बुभुत्सया पृच्छति राजा—स्वधामानुगत इति । यदुवंशस्य भूषणावतंसभावेन श्रीकृष्णे स्वधाम स्वस्थानमनुगते सति ततः यदुवंशजानां सोमवंश्यानाम् उक्तानां मध्ये कस्य वंशोऽभवद्वंशपरम्परा प्रावर्तत तदेतन्मुने ! ममाचक्ष्व ॥ १ ॥

बार्हद्रथवंशोऽभवदित्यभिप्रेत्य भाविनं तम् अनुवर्णयितुमारभते, योऽन्त्यः पुरञ्जयो नामेत्यादिना । पुरोर्वंशे उपरिचरोवसुस्तस्य बृहद्रथः तत्सुतो जरासन्धः तस्य सहदेवस्तस्य मार्जारिः तस्य श्रुतश्रवः प्रभृतयः पुरञ्जयान्ताः सुताः विंशतिसङ्ख्या भाविनो नवमस्कन्ध एवोक्ताः योऽन्त्यः कनीयान् पुरञ्जयो नाम बार्हद्रथवंश्यो भविता तस्य पुरञ्जयस्यामात्यः यः शुनको नाम स स्वामिनं पुरञ्जयं हत्वा ॥ २ ॥

तस्यात्मजम् प्रद्योतनामानं राजानं कर्ता करिष्यति यस्य प्रद्योतस्याऽलकः सुतः तं राजानं कर्तेति पूर्वेण सम्बन्धः तत्पुत्रः अलकपुत्रः विशाखयूपः ततो राजको भविष्यति ॥ ३ ॥

तत्पुत्रो राजकपुत्रः नन्दिवर्द्धनः तस्य पुत्राः पञ्च प्रद्योतनाः प्रद्योतनसंज्ञकाः त इमे नृपा अष्टात्रिंशोत्तरशतम् इत्यस्य समा इति शेषः । अयं कालावधिः एतमप्यपि भोक्ष्यन्ति पालयिष्यन्ति ॥ ४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रीहनुमते नमः ।

पद्मावासालयं नत्वा पद्मभूपूर्वस्वर्गीड्यम् ।
द्वादशस्कन्धं व्याकुर्वे द्वादशात्मप्रीत्यै नित्यम् ॥

॥ १ ॥

श्रीनारायणकलत्रशिष्टवंशादिकथनेन तन्माहात्म्यमेव कथयत्यस्मिन् स्कन्धे; तत्र प्रथमेऽध्याये वंशशेषं कथयति—य इति अन्त्यः वंशावसानभवः कस्य वंशान्ते भव इत्यत उक्तं बार्हद्रथ इति स्वामिनं रिपुञ्जयमात्मजं स्वस्येति शेषः ॥ २ ॥

यद्यस्य प्रद्योतस्य सुतः पालको नाम यस्मादित्यस्यानन्वयात्तथा तत्षष्ठी बहुत्वे, यः पालको यस्य यत्पालकः स तस्य सुत इति ॥ ३ ॥

प्रद्योतनेन साकं पञ्च तेषां राज्यावधिकालमाह—अष्टेति । भोक्ष्यन्ति पालयिष्यन्ति "भुञ्जो नवने" ( १ । ३ । ६६ ) इत्यनः परस्मैपदं पूर्ववंशावैलक्षण्यप्रद्योतनार्थो वा व्यत्यासः ॥ ४—७ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रीराधाकृष्णाभ्यां नमः ।

द्वादशक्रमसन्दर्भे सन्दर्भाणां समाहृतिः ।
क्रियते यत्प्रवेशेन स मेऽनन्यगतेर्गतिः ॥

१ ॥

तदेवमेकादशस्कन्धपर्यन्तग्रन्थेन निजाभीष्टं श्रीकृष्णलक्षणमाश्रयं यथावन्निरूप्य पुराणोपसंहाराय द्वादशस्कन्ध आरभ्यते यत्र तदन्तर्धाने लोकानां दुःखमेव स्यादिति दर्शयित्वा कथञ्चित्तं भजतां तु निस्तारः स्यादिति दर्शयिष्यते श्रीशुक उवाच योऽन्त्यो रिपुञ्जय इत्यादिना ॥ २—२४ ॥

———

श्रीविश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

श्रीकृष्णचैतन्यचन्द्राय नमः ।

प्रणम्य श्रीगुरुं भूयः श्रीकृष्णं करुणार्णवम् ।
लोकनाथं जगच्चक्षु श्रीशुकं तमुपाश्रये ॥
गोपरामाजनप्राणप्रेयसेऽतिप्रभूष्णवे ।
तदीयप्रियदास्याय मां मदीयमहं ददे ॥
त्रयोदशभिरध्यायैर्द्वादशे तु चतुर्विधः ।
निरोध उक्तः श्रीकृष्णकथाप्यत्रोपसंहृता ॥
त्रिभिरादौ कलेर्धर्म द्रौहिणाः कथ्यते कथा ।
एकेन प्रलयस्याथ द्वाभ्यां शुकपरीक्षितोः ॥
पुराणस्य तथैकेन मार्कण्डेयस्य च त्रिभिः ।
सूर्यस्याख्यानवृन्दस्य शास्त्रपूर्तेः क्रमात्त्रिभिः ॥
तत्र तु प्रथमे भाविभूमिपानां कथोच्यते ।
मागधान्वयजातानां कलिकल्मषशालिनाम् ॥

१ ॥

तदेवं चन्द्रवंशावतंसस्य श्रीकृष्णचन्द्रस्य चरितामृतकथासिन्धुः स्कन्धद्वयेन वर्णितस्तत्रैव लोकान् निमज्यानन्दयितुं इदानीं तेषां ततोऽन्यत्र वैराग्यमुत्पादयितुं तस्यैव चन्द्रवंशस्यान्तिमो भागो वर्ण्यते; तत्र चन्द्रवंशशाखायां पुरोर्वंशे उपरिचरोवसुः तस्य पुत्रो बृहद्रथः तस्य जरासन्धः तस्य सहदेवः पुत्रोऽभूदित्युक्तं नवमस्कन्धे, पुनश्च तत्रैव सहदेवस्य मार्जारिस्तस्य श्रुतश्रवा इत्येवं रिपुञ्जयान्ता विंशतिर्भाविनो राजानो निरूपिताः अत्र स्कन्धे तदुपरितनं वंशं सङ्करादिदोषैर्मलिनीभूतं वर्णयति, योऽन्त्य इति । रिपुञ्जय एव पुरञ्जयः

शिशुनागस्ततो भाव्यः काकवर्णस्तु तत्सुतः ।
क्षेमधर्मा तस्य सुतः क्षेत्रज्ञः क्षेमधर्मजः ॥ ५ ॥
विधिसारः सुतस्तस्याऽजातशत्रुर्भविष्यति ।
दर्भकस्तत्सुतो भावी दर्भकस्याजयः स्मृतः ॥ ६ ॥
नन्दिवर्द्धन आजेयो महानन्दिः सुतस्ततः ।
शिशुनागा दशैवैते षष्ठ्युत्तरशतत्रयम् ॥ ७ ॥
समा भोक्ष्यन्ति पृथिवीं कुरुश्रेष्ठ ! कलौ नृपाः ।
महानन्दिसुतो राजन् ! शूद्रीगर्भोद्भवो बली ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

बार्हद्रथः बृहद्रथवंश्यः स्वामिनं रिपुञ्जयं हत्वा स्वपुत्रं प्रद्योतं राजानं करिष्यति यत् यस्य प्रद्योतस्य सुतः पालकः पालकसंज्ञः प्रद्योतवंश्यत्वात् प्रद्योतनाः ॥ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीनिम्बार्काय नमः ।

श्रीकृष्णं यदनुध्यानान्मुक्तबन्धः परं व्रजेत् ।
नत्वा तं द्वादशे स्कन्धे प्रदीपोऽयं विरच्यते ॥
अवशिष्टो निरोधोऽत्र वर्ण्यते विविधस्तथा ।
प्रासङ्गिकश्च वस्त्वर्थस्तत्तत्प्रश्नानुसारतः ॥

नवमस्कन्धे सूर्यवंशादूर्ध्वं इलाद्वारा सोमवंशावलिः प्रोक्ता तत्र श्रीमत्पुरुषोत्तमप्रादुर्भावो वर्णितस्तच्छ्रवणजन्यप्रमोदातिशयेन तत्स्वरूपगुणादिबुभुत्सु राजानं प्रति तस्यावश्यभूतस्य भगवतः श्रीकृष्णस्य क्रममुल्लङ्घ्य स्वरूपगुणादिबोधिका लीला स्कन्धद्वयेन निरूपिता एकादशे मुक्तिश्च वर्णिताऽधुनाऽस्मिन् स्कन्धे निरोध उच्यते, तत्र सर्वस्य प्राकृतपदार्थस्य कालतो निरोध विषयत्वात्सर्वतो विरक्तः सन् हरिभजनेन आत्यन्तिक संसृत्युपरमपर्यायं मुक्तिं सम्पादयेदिति निरूप्यते त्रिभिरध्यायैः तत्र तावत् भाविसोमवंशावलिं पृच्छति-स्वधामानुगत इति । यदुवंशस्य विभूषणे आभरणे भुक्तिमुक्तिप्रदत्वे विनोदप्रद इत्यर्थः । स्वधाम अप्राकृतं लोकं गते सति यादवानां मध्ये कस्य वंशश्चिरकालस्थायित्वेनाऽभवत् एतन्मे आचक्ष्व ॥ १ ॥

उत्तरमाह—य इति । सोमवंशे यदुस्तत्पुत्रो पुरुस्तद्वंशे उपरिचरो वसुस्तस्य बृहद्रथस्तस्य जरासन्धस्ततसुतः सहदेवः इत्युक्तं नवमस्कन्धे, सहदेवान्मार्जारिस्ततः श्रुतश्रवा आदयो रिपुञ्जयान्ता विंशतिसङ्ख्याकाः भविष्या राजानस्तत्रैवोक्ताः तत्र योऽन्त्यो रिपुञ्जय एव पुरञ्जयस्तस्यामात्यः शुनको नाम-स्वामिनं पुरञ्जयं हत्वा आत्मजं स्वपुत्रम् ॥ २ ॥
प्रद्योतसंज्ञं राजानं कर्त्ता कारिष्यति ॥ ३ ॥
प्रद्योतनाख्याः अष्टत्रिंशोत्तरशतं समा इति शेषः ॥ ४ ॥

———

भाषा टीका ।

श्रीवटपत्रशायिने नमः ।

अशेषनिर्ज्जरव्रातकिरीटद्युतिकर्बुरम् ।
प्रीत्या श्रीरुक्मिणीकान्तचरणं शरणं वृणे ॥ १ ॥
द्वादशस्कन्धभावार्थबोधिनीं भक्ततोषिणीम् ।
टीकां भागवताचार्यः कुर्वे स्वच्छार्यभाषया ॥ २ ॥

राजोवाच ।

राजापरीक्षित्‌बोले, कि—हे मुने ! यदुवंश के विभूषण श्रीकृष्णचन्द्र महाराज, जब अपने धाम को पधारे तिसके पश्चात् इस पृथ्वी में किसका राज्य हुआ, सो आप कृपा कर मेरे आगे वर्णन करिये ॥ १ ॥

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि—हे राजन् ! बृहद्रथ के वंश में एक * पुरञ्जय नामवाला राजा होगा, उसका मंत्री शुनक अपने स्वामी राजा पुरंजय को मार कर प्रद्योत नामक अपने पुत्र को राजा करेगा, उस प्रद्योत का पुत्र पालक होगा, तिसका पुत्र विशाखयूप होगा, तिस से राजक नामवाला पुत्र उत्पन्न होगा, तिस राजक से नन्दिवर्द्धन पुत्र होगा, ये प्रद्योत से लेकर नंदिवर्द्धन पर्यन्त पांच राजा प्रद्योतन के वंशवाले एकसौ अड़तीस १३८ वर्ष तक इस पृथिवी पर राज्य करेंगे ॥ २—४ ॥

* नवमस्कन्ध के बाईसवें अध्याय में यहकथा है, कि—चन्द्रवंशी राजा पुरुके वंश में उपरिचर वसु हुए, तिनके बृहद्रथराजा हुए तिनके जरासन्ध, तिनके सहदेव नामक पुत्र हुए, उस सहदेवके मार्जारि तिनके श्रुतश्रवा इसरीतिसे सहदेवकी बीसवीं पीढ़ीमें रिपुञ्जय नामक (शुकदेवजी के कथन समय में भावी) राजा हुए, उनहिरिपुञ्जय काही पुरञ्जय यह भी नाम है, उसी रिपुञ्जय से आगे जो राजा हुए, तिनका निरूपण इस स्कन्ध में करते हैं ॥

महापद्मपतिः कश्चिन्नन्दः क्षत्रविनाशकृत् ।
ततो नृपा भविष्यन्ति शूद्रप्रायास्त्वधार्मिकाः ॥ ९ ॥
स एकच्छत्रां पृथिवीमनुल्लङ्घितशासनः ।
शासिष्यति महापद्मो द्वितीय इव भार्गवः ॥ १० ॥
तस्य चाष्टौ भविष्यन्ति सुमाल्यप्रमुखाः सुताः ।
य इमां भोक्ष्यन्ति महीं राजानः स्म शतं समाः ॥ ११ ॥
नव नन्दान् द्विजः कश्चित्प्रपन्नानुद्धरिष्यति ।
तेषामभावे जगतीं मौर्या भोक्ष्यन्ति वै कलौ ॥ १२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्दो नाम कश्चिन्महापद्मसङ्ख्यायाः सेनायाः धनस्य वा पतिर्भविष्यति अत एव महापद्म इत्यपि तस्य नाम ॥ ९ ॥

एकमेव छत्रम् यस्यां तां पृथिवीम् शासिष्यति पालयिष्यति क्षत्रोत्सादने दृष्टान्तः भार्गवः परशुराम इव ॥ १० ॥

समाः सम्वत्सरान् ॥ ११ ॥

नवनन्दाञ्नन्दं च तत्पुत्रांश्चेत्येवं नव प्रपन्नान् शरणागतान् विश्वस्तान् विश्वासाख्यो द्विजः कौटिल्यवात्स्यायनादिपर्यायश्चाणक्यः उद्धरिष्यत्युन्मूलयिष्यति मौर्या मौर्यसंज्ञाः ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः प्रद्योतनेभ्यः शिशुनागो भविता तत्सुतः शिशुनागसुतः काकवर्णः तस्य काकवर्णस्य सुतः क्षेमधर्मा तस्माज्जातस्तु क्षेत्रज्ञः ॥५॥

विधिसार इति तस्य क्षेत्रज्ञस्याजातशत्रुरित्यस्य विधिसारादित्यादिः तत्सुतः अजातशत्रुसुतः ॥ ६ ॥

नन्दिवर्द्धन इति आजेयः अज यस्यात्मजः तत्सुतः नन्दिवर्द्धन सुतः ॥ ७ ॥

कुरुश्रेष्ठेति सम्बोधनं महानन्दिसुत इति हे राजन् ! ॥ ८ ॥

महापद्मपतिरिति अन्वर्थं नाम महापद्मसङ्ख्यायाः सेनाया धनस्य वा पतिरिति स च (शूद्रा) शूद्रीगर्भोद्भवः बली अधिक बलयुक्तश्च क्षत्रकुलविनाशकश्च नन्द इति तस्यैव नामान्तरं यतोऽयं शूद्रीगर्भोद्भव अतएव तत आरभ्य नृपाः शूद्रप्राया अधार्मिकाश्च भविष्यन्ति ॥ ९ ॥

स इति महापद्म इति नामैकदेशग्रहणां महापद्मपतिः अनुल्लङ्घितशासनः प्रजाभिरनुल्लङ्घितमात्मशासनं यस्य सः एकमेव छत्रं यस्यां तथाभूतां पृथ्वीं शासिष्यति पालयिष्यति द्वितीयो भार्गवः परशुराम इव ॥ १० ॥

तस्येति तस्य महापद्मपतेः सुतान्विशिनष्टि—च इति सहस्रं संवत्सरान् ॥ ११ ॥

नवनन्दानिति नन्दशब्दस्तत्सुतपरश्च "आत्मा वै पुत्रः" इति श्रुत्यनुरोधात् अतएव नन्दानिति बहुवचनेन चेति विशेषणं च तान् प्रपन्नान् विश्वस्तान् कश्चिद्विश्वस्तघातुकः कौटिल्यवात्स्याय नामको द्विज उद्धरिष्यति उन्मूलयिष्यति नाशयिष्यति यावत् ततस्तेषां सपितृकाणां सुमाल्यप्रमुखानामभावे नेष्वतिक्रान्तेष्वित्यर्थः । एवं सोमवंशे समाप्ते मौर्यसञ्ज्ञा भोक्ष्यन्ति ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

महानन्दिं विशिनष्टि-महानन्दिरिति ॥ ८ ॥

महानन्दिवंशभवः क इति । कश्चिदिति महापद्मसङ्ख्यया सङ्ख्याता सेना महापद्मा तस्याः पतिः कुलक्षत्रविनाशकृत् ततः कुलक्षत्राभावात् ॥ ९ ॥

स महापद्मो नाम्ना नन्दः ॥ १०-११ ॥

नन्देन सह नवसङ्ख्याकान्नन्दान्नन्दवंशजानुद्धरिष्यत्यापद् इति शेषः । मौर्या मुरवंशजाः हीनजातयः कैवर्त्ताः ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आजेयः अजस्य सुतः एकारमध्यत्वमार्षम् ॥ ७ ॥ ९ ॥

स नन्दः महापद्मपतित्वान्महापद्मसङ्ख्यायाः सेनायाः धनस्य वा पतित्वान्महापद्मः क्षत्रविनाशकत्वे दृष्टान्तः भार्गवः परशुराम इव ॥ १०—११ ॥

नवनन्दान् नन्दं च तत्पुत्रानष्टौ चेत्येवं नव प्रपन्नान् विश्वस्तान् द्विजश्चाणक्यः उद्धरिष्यति उन्मूलयिष्यति मौर्याः मौर्यवंशसञ्ज्ञाः ॥ १२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ततः प्रद्योतानन्तरम् ॥ ५ ॥

अजेयः अजेयस्य सुतः ॥ ७—८ ॥

महापद्मपतिः महापद्मसङ्ख्यायाः सेनायाः धनस्य वा पतिः कश्चिन्नन्दनामकः क्षत्रविनाशकृत् भविष्यति तत आरभ्य नृपाः शूद्रप्रायाः भविष्यन्ति ॥ ९ ॥

स नन्दः महापद्म इत्यपि तस्यैव नामान्तरम् न उल्लङ्घितं शासनमाज्ञा यस्य स एकमेव छत्रं यस्यां तां शासिष्यति पालयिष्यति द्वितीयो भार्गवः परशुराम इव ॥ १० ॥

स एव चन्द्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति ।
तत्सुतो वारिसारस्तु ततश्चाशोकवर्धनः ॥ १३ ॥
सुयशा भविता तस्य सङ्गतः सुयशःसुतः ।
शालिशूकस्ततस्तस्य सोमशर्मा भविष्यति ॥ १४ ॥
शतधन्वा ततस्तस्य भविता तद्बृहद्रथः ।
मौर्या ह्येते दश नृपाः सप्तत्रिंशच्छतोत्तरम् ॥ १५ ॥
समा भोक्ष्यन्ति पृथिवीं कलौ कुरुकुलोद्वह ! ।
( हत्वा बृहद्रथं मौर्यं तस्य सेनापतिः कलौ ।
पुष्यमित्रस्तु शुङ्गाह्वः स्वयं राज्यं करिष्यति ) ॥०॥ विज०।
अग्निमित्रस्ततस्तस्मात् सुज्येष्ठोऽथ भविष्यति ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्य नन्दस्य समाः सम्वत्सरान् ॥ ११ ॥

नन्दानिति एको नन्दः अष्टौ सुमाल्यप्रमुखास्तत्पुत्राः एवं नवसङ्ख्याकान् प्रजाः नन्दयन्तीति नन्दास्तान् प्रजापालनपरान् प्रपन्नान् विश्वस्तान् कश्चित् विश्वस्तघातकः कौटिल्यवात्स्यायननामकब्राह्मणः उद्धरिष्यति उन्मूलयिष्यति मौर्या मौर्यनामकाः जगतीं भोक्ष्यन्ति ॥ १२ ॥

भाषा टीका ।

तिसके पश्चात् शिशुनाग नामक राजा होगा, तिसका पुत्र काकवर्णा राजा होगा, उसका पुत्र क्षेमधर्मा राजा होगा, तिसका सुत क्षेत्रज्ञ राजा होगा ॥ ५ ॥

क्षेत्रज्ञ का विधिसार पुत्र होगा, तिसका अजातशत्रु नाम पुत्र राजा होगा, तिसका पुत्र दर्भक होगा तिसका अजय नामक पुत्र राजा होगा ॥ ६ ॥

अजय का पुत्र नंदिवर्द्धन, तिसका पुत्र महानंदि होगा, हे राजन् ! कलियुग में इस प्रकार शिशुनाग वंशी ये दश राजे तीनसौसाठ ( ३६० ) वर्ष पर्यन्त पृथिवी के राज्य को भोगेंगे ॥ और हे राजन् ! महानंदि का पुत्र एक शूद्री के गर्भ से पैदा होगा और बड़ा बली होगा ॥ ७—८ ॥

और वह महापद्म सेना का अथवा महापद्म संख्या वाले द्रव्य का पति होगा और उसका नन्द ऐसा नाम होगा वह क्षत्रियों के वंश का नाश करने वाला होगा । उससे पीछे राजा लोग शूद्रप्राय और अधार्मिक होंगे ॥ ९ ॥

वह महापद्म अर्थात् नन्द एक छत्र पृथिवी पर राज्य करेगा और उसकी आज्ञा को कोई भी उल्लंघन नहीं कर सकेगा, जिस प्रकार परशुराम जी ने पृथिवी का शासन किया, वैसेही वह भी पृथिवी का शासन करेगा ॥ १० ॥



सुमाल्य से आदि लेकर उस नन्द के आठ पुत्र होंगे जो कि-राजा होकर इस पृथिवी पर सौ वर्ष तक राज्य करेंगे ॥ ११ ॥

उस समय कोई एक चाणिक्य नामा ब्राह्मण, पिता पुत्र सहित उन नवों नन्दों को विश्वास देकर राज्य से उखाड़ देगा, जब वे नव नन्द नहीं रहेंगे, तब उनके अभाव काल में कलि में पृथिवी को मौर्य लोग भोगेंगे ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कथं भोक्ष्यन्ति ? तदाह—स एवेति । चन्द्रगुप्तं मौर्यप्रथमम् ॥ १३ ॥ १४ ॥

तेषां प्रथमो दशरथः पराशरादिभिरुक्तोऽत्राप्यनुसन्धेयः तेन सह मौर्या दश सप्तत्रिंशच्छतोत्तरं सप्तत्रिंशदुत्तरं शतं समाः ॥ १५—१७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

के पुनस्ते मौर्याः ? कथं च भोक्ष्यन्ति ? तदाह—स एवेति त्रिभिः, यस्तेषां नन्दानामुद्धर्त्ता द्विजः स एव मौर्यसंज्ञं प्रथमं चन्द्रगुप्तसंज्ञं नाम स्वसुतम् राज्येऽभिषेक्ष्यति तत्सुतः चन्द्रगुप्तसुतः ततः वारिसारानन्तरं तत्सुतो ऽशोकवर्धनस्सुतः ॥ १३ ॥

तस्याऽशोकवर्धनस्य ॥ १४ ॥

ननु तु मौर्या इति यद्यपि चन्द्रगुप्तादयो नवैव तथापि पराशरादिभिश्चन्द्रगुप्तादिषु दशरथ एक उक्तः तदभिप्रायेण एते दशेत्युक्तम् । यद्वा, चन्द्रगुप्तस्य यः पिता तेन सह दशेत्युक्तम् सप्तत्रिंशच्छतात्परं सप्तत्रिंशदुत्तरशतं समा इत्यर्थः । कुरुकुलोद्वहेति सम्बोधनम् ॥ १५ ॥

अग्निमित्र इति । मौर्येष्वन्त्यकस्य बृहद्रथस्य सेनानीः पुष्यमित्रो नाम स्वामिनं हत्वा राज्यं करिष्यति अग्निमित्रादयो नव

वसुमित्रो भद्रकश्च पुलिन्दो भविता ततः ।
ततो घोषः सुतस्तस्माद्वज्रमित्रो भविष्यति ॥ १७ ॥
ततो भागवतस्तस्माद्देवभूतिरिति श्रुतः ।
शुङ्गा दशैते भोक्ष्यन्ति भूमिं वर्षशताधिकम् ॥ १८ ॥
ततः काण्वानियं भूमिर्यास्यत्यल्पगुणान् नृप ! ।
शुङ्गं हत्वा देवभूतिं कण्वोऽमात्यस्तु कामिनम् ॥ १९ ॥
स्वयं करिष्यते राज्यं वसुदेवो महामतिः ।
तस्य पुत्रस्तु भूमित्रस्तस्य नारायणः सुतः ॥ २० ॥
( सुशर्माख्यो ऽथ नृपतिः कण्वानां भविता ततः ) । (विज०)
( नारायणस्य भविता सुशर्मा नाम विश्रुतः ॥ ) सिद्धान्तप्रदीपे० )
काण्वायना इमे भूमिं चत्वारिंशच्च पञ्च च ।
शतानि त्रीणि भोक्ष्यन्ति वर्षाणां च कलौ युगे ॥ २१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नवंश्या दशैते शुङ्गसञ्ज्ञाः वर्षशताधिकं द्वादशाधिकं वर्षशतं भोक्ष्यन्ति इति सम्बन्धः ॥ १६—१८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कथं भोक्ष्यन्तीत्यत आह—स एवेति । स एव नवनन्दाख्यार्थः ॥ १३—१४ ॥

मौर्यसंज्ञा अपि मौर्याः ॥ १५—१६ ॥

वंशाठ्यत्वात्सं कथयति—हत्वेति । पुष्यमित्र इत्यादि जातिप्रयुक्तं नाम शुङ्ग इत्यादि विशेष नाम ॥ ० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कथं भोक्ष्यन्ति? इत्यत आह—स एवेति । चन्द्रगुप्तं मौर्येषु प्रथमं ततश्चेति चकारात् विष्णुपुराणोक्तो दशरथो ज्ञेयः ॥ १३—१४ ॥

तत्तदनन्तरं राजा सप्तत्रिंशदुत्तरशतं समाः ॥ १५ ॥

बृहद्रथस्य सेनापतिः स्वामिनं हत्वा राज्यं करिष्यति स पुष्यमित्रो नाम शुङ्गानां प्रथमः ततोऽग्निमित्रादयो नव इत्येवं शुङ्गा दश द्वादशाधिकं वर्षशतम् ॥ १६—१८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कथ भोक्ष्यन्ति? के च ते मौर्याः? तदाह, स इति सार्द्धैस्त्रिभि. । चन्द्रगुप्तं मौर्यम् ॥ १३ ॥ १४ ॥

चन्द्रगुप्तादयो द्विजेन सहिता दश मौर्याः सप्त त्रिंशच्छतोत्तरं सप्तत्रिंशदुत्तरं शतम् ॥ १५ ॥ १६—१७ ॥

---

भाषा टीका ।

वही ब्राह्मण चाणिक्य प्रथममौर्यराजा चन्द्रगुप्त को राज्य पर अभिषेक करेगा, उसका पुत्र वारिसार राजा होगा, तिसका अशोकवर्द्धन पुत्र राजा होगा ॥ १३ ॥

उस अशोकवर्द्धन का पुत्र सुयशा नामक राजा होगा, तिस सुयश का सुत सङ्गत राजा होगा, तिसका पुत्र शालिशूक राजा होगा, तिसका पुत्र सोमशर्मा राजा होगा ॥ १४ ॥

तिसके पश्चात् सोमशर्मा का पुत्र शतधन्वा राजा होगा तिसका पुत्र बृहद्रथ राजा होगा, ये दश राजा लोग मौर्य होंगे । और हे कुरुकुलोद्वह ! राजन् ! ये लोग एकसौ सैंतीस (१३७)वर्ष तक कलियुग में पृथिवी पर राज्य करेंगे बृहद्रथ का सेनापति पुष्पमित्र ही शुङ्गलोगों में प्रथम राजा होगा तिसका अग्निमित्र, तिसका सुज्येष्ठ पुत्र होगा ॥ १५ ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

बृहद्रथस्य सेनापतिः पुष्पमित्रो नाम स्वामिनं बृहद्रथं हत्वा राज्यं करिष्यति स च शुङ्गानां प्रथमः ततोऽग्निमित्रादयो नवेत्येवम् शुङ्गा दश वर्षशताधिकं द्वादशाधिकं वर्षशतम् ॥ १८ ॥

कथं कथवान् यास्यति ? तदाह–शुङ्गमिति । परस्त्रीकामिनं देवभूतिनामानं शुङ्गम् हत्वा तदमात्यो वसुदेवनामा कण्वो राज्यं करिष्यति ॥ १९ ॥

हत्वा काण्वं सुशर्माणं तद्भृत्यो वृषलो बली ।
गां भोक्ष्यत्यन्ध्रजातीयः कञ्चित्कालमसत्तमः ॥ २२ ॥
कृष्णनामाऽथ तद्भ्राता भविता पृथिवीपतिः ।
श्रीशान्तकर्णस्तत्पुत्रः पौर्णमासस्तु तत्सुतः ॥ २३ ॥
लम्बोदरस्तु तत्पुत्रस्तस्माच्चिबिलको नृपः ।
मेघस्वातिश्चिबिलकादटमानस्तु तस्य च ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

काण्वानां चतुर्थः सुशर्मा ज्ञेयः ॥ २० ॥

इमे वसुदेवादयः काण्वायना वर्षाणां त्रीणि शतानि पञ्चचत्वारिंशद्वर्षाणि च भूमिं भोक्ष्यन्ति ॥ २१ ॥

काण्वानामन्तिमं सुशर्माणं हत्वा बली नामा तद्भृत्यो गां भोक्ष्यति ॥ २२—२५ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कण्वानीति बहुवचनं तत्सन्तानस्यापि विवक्षा निबन्धनम् ॥ १९ ॥

तस्य कण्वस्य ॥ २०—२७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः काण्वानिति । हे नृप ! अल्पगुणान् गुणहीनान् काण्वसंज्ञान् यास्यति तदधीना भविष्यति तैः पालिता भविष्यतीति यावत् के पुनस्ते काण्वाः ? कथं च तान्यास्यतीत्यत्राह—शुङ्गमिति सार्धद्वयेन । यः शुङ्गसंज्ञो देवभूतिस्तं कामिनं व्यसनिनं लालसं हत्वा तदमात्यः काण्वः वसुदेवो नाम स्वयमेव करिष्यति महामत इति पाठे सम्बोधनं तस्येति इमे वसुदेवादयः काण्वायनसंज्ञाः पञ्चचत्वारिंशदधिकशतत्रयं समा भोक्ष्यन्तीत्यर्थः । अत्र नारायणस्य सुतः सुशर्मानामा द्रष्टव्यः "हत्वा काण्वं सुशर्माणम्" इत्युत्तरग्रन्थानुरोधात् ॥ १६—२१ ॥

तद्भृत्यः सुशर्मणो भृत्यः बली बलीकनामा गां पृथिवीं कञ्चित्कालमिति अत्यल्पत्वात्तद्भोगकालस्यानादरेण सङ्ख्या न कृता ॥ २२ ॥

कृष्णनामेति तद्भ्राता बलीकभ्राता ॥ २३ ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

॥ १७ ॥

शुङ्गाः शुङ्गवंशजाः ॥ १८ ॥

कण्वाः शुङ्गवंशजाः तान्नृपान्यास्यति अल्पगुणा शौर्याद्यादिगुणसम्पत्तिरहिताः कथं कण्वान्यास्यतीत्यत आह-शुङ्गमिति । शुङ्गं शुङ्गाख्यं राजानं देवभूतिं हत्वा नाम्ना वसुदेवः कण्वः तस्य शुङ्गस्यामात्यः कामिनं प्राग्वक्ष्यमाणसक्तम् ॥ १९ ॥

काण्वायनाः कण्ववंशभवाः कण्वानां चतुर्थः सुशर्मा इमे च वसुदेवादयः काण्वायनाः वर्षाणां त्रीणि शतानि पञ्चचत्वारिंशद्वर्षाणि च भूमिं भोक्ष्यन्ति तस्य सुशर्मणो भृत्यः ॥ २०—२२ ॥

तस्य वृषलस्य भ्राता ॥ २३ ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कथं काण्वान् यास्यति ? तत्राह शुङ्गमिति । परस्त्रीकामिनं देवभूतिनामानं शुङ्गं हत्वा ॥ १९—२० ॥

वसुदेवादयः काण्वायनाः ॥ २१ ॥

सुशर्माणमिति काण्वानामन्तिमः सुशर्मा ज्ञेयः बली बलिसंज्ञः ॥ २२—२५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हत्वेते इति । बृहद्रथनामकस्य मौर्यस्य सेनापतिः पुष्पमित्रसंज्ञः बृहद्रथं हत्वा राज्यं करिष्यति स शुङ्गानां प्रथमः तद्वंश्या अग्निमित्रादयो नव एवं शुङ्गा दशसङ्ख्याकाः वर्षशताधिकं द्वादशवर्षाधिकं शतम् ॥ १८ ॥

अल्पगुणान् वीर्यशौर्यादिगुणलेशयुक्तान् कण्वसंज्ञान् यास्यति कथं यास्यति ? तत्राह—शुङ्गमिति । वसुदेवसंज्ञः कण्वः ॥ १९ ॥ २० ॥ २१ ॥

बलीनामा ॥ २२—२५ ॥

---

### भाषा टीका ।

सुज्येष्ठ का पुत्र वसुमित्र राजा होगा, तिसका भद्रक, तिसका पुलिन्द पुत्र होगा, तिसका सुत घोष, और घोष का पुत्र वज्रमित्र राजा होगा ॥ १७ ॥

तिस वज्रमित्र से भागवत, भागवत से देवभूति पुत्र होगा ये शुङ्ग लोग दशहों भी एक सौ बारह ११२ वर्ष पर्यन्त इस पृथिवी के राज्य को भोगेंगे ॥ १८ ॥

हे नृप ! तिसके पश्चात् यह भूमि अल्प गुणवाले काण्व

अनिष्टकर्मा हालेयस्तलकस्तस्य चाऽऽत्मजः ।
पुरीषभीरुस्तत्पुत्रस्ततो राजा सुनन्दनः ॥ २५ ॥
चकोरो बहवो यत्र शिवस्वातिररिन्दमः ।
तस्यापि गोमतीपुत्रः पुरीमान् भविता ततः ॥ २६ ॥
मेदशिराः शिवस्कन्दो यज्ञश्रीस्तत्सुतस्ततः ।
विजयस्तत्सुतो भाव्यश्चन्द्रविज्ञः सलोमधिः ॥ २७ ॥
एते त्रिंशन्नृपतयश्चत्वार्यब्दशतानि च ।
षट्पञ्चाशच्च पृथिवीं भोक्ष्यन्ति कुरुनन्दन ! ॥ २८ ॥
सप्ताभीरा आवभृत्या दश गार्दभिनो नृपाः ।
कङ्काः षोडश भूपाला भविष्यन्त्यतिलोलुपाः ॥ २९ ॥
ततोऽष्टौ यवना भाव्याश्चतुर्दशतुरुष्ककाः ।
भूयो दश गुरुण्डाश्च मौना एकादशैव तु ॥ ३० ॥
एते भोक्ष्यन्ति पृथिवीं दशवर्षशतानि च ।
नवाधिकां च नवतिं मौना एकादश क्षितिम् ॥ ३१ ॥
भोक्ष्यन्त्यब्दशतान्यङ्ग ! त्रीणि तैः संस्थिते ततः ।
किलिकिलायां नृपतयो भूतनन्दोऽथ वङ्गिरिः ॥ ३२ ॥

भाषा टीका ।

लोगों पर आवगी, उस समय बड़ा बुद्धिमान् कणव जो वसुदेव नामवाला, देवभूति शुङ्ग का मन्त्री होगा, वह परस्त्री लम्पट ऐसे अपने स्वामी देवभूति शुङ्ग को मारकर स्वयं आपही राज्य करेगा, तिस का पुत्र भूमित्र राजा होगा तिसका पुत्र नारायण नामक राजा होगा ॥ १९ ॥ २० ॥

ये चारों कणववंशी राजा कलियुग मे तीन सौ पैता- लीस ३४५ वर्ष पर्यन्त पृथिवी का राज्य करेंगे ॥ २१ ॥

तदनन्तर सुशर्मा नामवाले काणव राजा का सेवक वृषल ( नीच जाति ) बली बड़ा दुष्ट अन्ध्रजाति वाला, उसी अपने स्वामी सुशर्मा को मार कर कुछ काल पृथिवी का राज्य करेगा ॥ २१ ॥

तिसके पीछे उसका भ्राता कृष्ण नाम वाला पृथिवी का पति होगा, तिसका पुत्र श्रीशान्तकर्ण नाम वाला होगा, तिसका सुत पौर्णमास राजा होगा, ॥ २३ ॥

तिसका पुत्र लम्बोदर राजा होगा, तिसका पुत्र विकल नाम वाला राजा होगा, विकल से मेघ स्वाति पुत्र होगा, मेघ स्वातिका पुत्र अटमान नामक राजा होगा ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यत्र येषु बहुसङ्ख्येष्वपि चरमः शिवस्वातिनामा भविता ॥ २६ ॥ २७ ॥ २८ ॥

आवभृत्याः अवभृतिर्नगरी तद्राजानः ॥ २९ ॥ ३० ॥

एते आभीरादयो मौनव्यतिरिक्ताः पञ्चषष्टिर्नृपा एकोन- शताधिकं वर्षसहस्रं पृथिवीं भोक्ष्यन्ति ततः पूर्वोक्ता एकैका- दशमौनास्त्रीण्यब्दशतानि क्षितिं भोक्ष्यन्ति ॥ ३१ ॥

तैः संस्थिते तेषु मृतेषु किलिकिलायां पुर्यां नृपतयो भविष्यन्तीत्युत्तरेणान्वयः ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एत इति एतद्व्यतिरिक्तनृपतिपरः अनन्तमेव मौनानां पृथक् उक्तत्वात् इति ॥ २८—४३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अनिष्टकर्मेति । तस्यात्मजस्त्वनिष्टकर्मा सुत इति पूर्वेण सम्बन्धः हालेयोऽनिष्टकर्मणः सुत इति ॥ २५ ॥

चकोर इति यत्र येषु बहीकसंज्ञेषु शिवस्वातिर्नाम चरमो

**शिशुनन्दिश्च तद्भ्राता यशोनन्दिः प्रवीरकः ।**
**इत्येते वै वर्षशतं भविष्यन्त्यधिकानि षट् ॥ ३३ ॥**

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भविता इत्यर्थः । अरिन्दमेति सम्बोधनं सविसर्गपाठे शिवस्वाते विशेषणम् ॥ २६ ॥ २७ ॥

एत इति । एते बलीकनामानः पञ्चविंशतिनृपतयः पृथिवीं भोक्ष्यन्तीति सम्बन्धः । वर्षसङ्ख्यामाह—त्रिशतानि चत्वारि शतानि षट्पञ्चाशच्चेति षडशीत्युत्तरचतुःशतं वर्षाणीत्यर्थः ॥ २८ ॥

सप्तेति । ततः सप्ताभीरसङ्ख्या आढ्या इति उत्तरेणान्वयः । तान् विशिनष्टि—आवभृत्या अवभृतिनगरी तस्या राजानः आवभृत्य-सङ्ख्या वा सप्त आढ्याः तान् विशिनष्टि, आभीराः आभीरजातीयाः ततो दश गर्दभिनः ततः कङ्काः एवमप्रेऽपि राज्यं लोलुपाः कामिनः ॥ २९–३० ॥

एते भोक्ष्यन्तीति । मौना एकादश क्षितिम् इति मौनानां कालावधेः पृथगेव वक्ष्यमाणत्वादेन इत्यनेन तेभ्योऽन्ये परामृश्यन्ते दशवर्षशतानि नवाधिकानि च भवन्ति इत्येकानैकादशशतवर्षाणि इत्यर्थः ॥ ३१ ॥

अङ्ग हे राजन् ! संस्थिते इति भावे क्तः तैर्मौनैः संस्थायां तत्कर्तृके मरणे तेषु मृतेषु नैष्यति यावत् किलकिलाख्या पुरी तस्यां भूतनन्द इत्यादयो नृपतयः भूतनन्दादयो षडुत्तरशतं वर्षाणि भोक्ष्यमाणा भविष्यन्ति ॥ ३२ ॥ ३३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हालेयः इलान्मेयः ॥ २५—३० ॥

एते आभीरादयो मौनव्यतिरिक्ताः पञ्चषष्ठिनृपा एकोनशताधिकं वर्षसहस्रं पृथिवीं भोक्ष्यन्ति ततः पूर्वोक्ता एव एकादश मौनाः त्रीण्यब्दशतानि क्षितिं भोक्ष्यन्ति मौनाः मौनकुले जाताः एकादश त्रीणि अब्दशतानि ॥ ३१ ॥

कुले मौनकुले संस्थिते नष्टे किलिकिलायां नगर्यां तस्य शिशुनन्देर्भ्राता भूतवंशोपनन्दरेर्युक्ताः षट् षट् वर्षाण्यधिकानि ॥ ३२ ॥ ३३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अनिष्टकर्मेति हालेयस्य विशेषणम् ॥ २५ ॥

नव येषु नवसु मनुकेषु नवमः शिवस्वातिरित्यर्थः । इति-द्वाविंशतिः गोमतीपुत्रपुरीमन्तौ द्वौ ॥ २६ ॥

अन्ये चाल्पादिसन्तोमधिपर्यन्ताः पृथक् पृथगयथा इति विग्रह ॥ २७—४३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

त्र येषु बहुसन्ध्येषु नवसु नवमः शिवस्वातिनामा भवति ॥२६-२८॥
आवभृत्या अवभृतिनगरी तत्र भवाः ॥ २९—३० ॥



एते मौनव्यतिरिक्ताः आभीरादयः पञ्चषष्ठिनृपाः मौनास्त्वेकादश त्रीण्यब्दशतानि ॥ ३१ ॥
तैर्मौनैः संस्थिते मृते सति किलकिलायां पुर्याम् ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यत्र येषु चकोरः प्रनवमः कैश्चिद्गुणैः श्रेष्ठ इत्यर्थः ॥२६–२७॥
एते बलिप्रभृतयो नृपतयः पृथिवीं त्रिशतचत्वारिंशच्छतानि च षट् पञ्चाशच्च भोक्ष्यन्ति ॥ २८ ॥
आवभूतिनगरी तद्राजानः आवभृत्याः ॥ २९ ॥ ३० ॥
एते मौनव्यतिरिक्ताः आभीरादयः पञ्चषष्ठिनृपाः शतवर्षशतानि नवाधिकां नवति च भोक्ष्यन्ति एकादश मौनास्तु ॥ ३१ ॥
त्रीणि अब्दशतानि भोक्ष्यन्ति तैर्मौनैः किलकिलायां पुर्यां नृपतयो भविष्यन्तीत्युत्तरेणान्वयः ॥ ३२ ॥

---

भाषा टीका ।

तिसका पुत्र अनिष्टकर्मा, तिसका पुत्र, हालेय, तिसका पुत्र तलक, तिसका पुत्र पुरीषभीरु तिसका पुत्र सुनन्दन राजा होगा ॥ २५ ॥

हे रिपुदमन ! सुनन्दन का चकोरक पुत्र होगा, तिस चकोरक के बहु संज्ञक नव पुत्र होंगे, तिनमें नवम शिव-स्वाति पुत्र होगा, शिवस्वाति का गोमतीपुत्र तिससे पुरीमान् पुत्र होगा ॥ २६ ॥

तिसके मेदशिरा, तिसके शिवस्कन्ध, तिसका पुत्र यज्ञश्री, तिसका पुत्र विजय, तिसका चन्द्रविज्ञ, तिसका सलोमधि पुत्र होगा ॥२७ ॥

हे कुरुनन्दन ! ये तीस ३० राजालोग चारसौछप्पन ४५६ वर्ष तक इस पृथिवी के राज्य का भोगेंगे ॥ २८ ॥

तदनन्तर अवभृति नगरी के सप्त ७ राजा आभीर जाति के (अहिर) होंगे, तिनके पीछे दश १० राजा गार्दभिन् होंगे, तदनन्तर सोलह १६ कङ्क नामक राजा होंगे, और ये बड़े लोलुप अर्थात् लोभी व्यभिचारी होंगे ॥ २९ ॥

तिनके पीछे आठ ८ यवन राजा होंगे, तिनके पश्चात् चौदह १४ तुरुष्क राजा होंगे, तिन के पीछे दश १० गुरुण्ड राजा होंगे, तिन के पीछे ग्यारह ११ मौन लोग राज्य करेंगे ॥ ३० ॥

ये आभीरों से लेकर गुरुण्ड पर्यन्त मौनों को छोड़कर सब पैंसठ ६५ राजा लोग एकसहस्र निन्यानवे १०९९ वर्ष पर्यन्त राज्य करेंगे, और एकादश मौनलोग जो हैं, सो तो इस पृथिवी को तीनसौ ३०० वर्षतक भोगेंगे, जब ये मौन लोग मरजांयगे तिसके पीछे किलकिला नगरी में राजालोग होंगे, तहां प्रथम भूतनन्द राजा होगा, तिसके पीछे वंगिरि नामक राजा होगा ॥ ३१—३२ ॥

---

श्रीवल्लभाचार्यकृतभावार्थदीपिका ।

अधिकानि च षड्वर्षाणि ॥ ३३ ॥

तेषां त्रयोदश सुता भवितारश्च बाह्लिकाः ।
पुष्पमित्रोऽथ राजन्यो दुर्मित्रोऽस्य तथैव च ॥ ३४ ॥
एककाला इमे भूपाः सप्तान्ध्राः सप्त कोसलाः ।
विदूरपतयो भाव्या निषधास्तत एव हि ॥ ३५ ॥
मागधानां तु भविता विश्वस्फूर्जिः पुरञ्जयः ।
करिष्यत्यपरो वर्णान् पुलिन्दयदुमद्रकान् ॥ ३६ ॥
प्रजाश्चाब्रह्मभूयिष्ठाः स्थापयिष्यति दुर्मतिः ।
वीर्यवान् क्षत्रमुत्साद्य पद्मवत्यां स वै पुरि ।
अनुगङ्गामाप्रयागं गुप्तां भोक्ष्यति मेदिनीम् ॥ ३७ ॥
सौराष्ट्रावन्त्याभीराश्च शूरा अर्बुदमालवाः ।
व्रात्या द्विजा भविष्यन्ति शूद्रप्राया जनाधिपाः ॥ ३८ ॥
सिन्धोस्तटं चन्द्रभागां कौन्तीं काश्मीरमण्डलम् ।
भोक्ष्यन्ति शूद्रा व्रात्याद्या म्लेच्छाश्चाऽब्रह्मवर्चसः ॥ ३९ ॥
तुल्यकाला इमे राजन् ! म्लेच्छप्रायाश्च भूभृतः ।
एतेऽधर्मानृतपराः फल्गुदास्तीव्रमन्यवः ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तेषां भूतनन्दादीनां यथायथं बाह्लिकनामानस्त्रयोदश सुताः भविष्यन्ति अथ पुष्पमित्रो नामाऽन्यो राजन्यः अस्य च दुर्मित्रो नामपुत्रः ॥ ३४ ॥

तथा आन्ध्राः कोसलाः विदूरपतयो निषधाश्च एते च तत्तद्देशनामभिः प्रख्यातास्तुल्यकालाः सप्तसु मण्डलेषु भूपास्तत एव तेऽपि बाह्लिकेऽप्य एव भाव्या भविष्यन्ति ॥ ३५ ॥

ततश्च मागधानां तु राजा विश्वस्फूर्जिर्नाम भविता स च पूर्वोक्तात्पुरञ्जयादपरः पुरञ्जय इति प्रसिद्धः सन् वर्णान् ब्राह्मणादीन् पुलिन्दयदुमद्रकसङ्घान् म्लेच्छप्रायान् करिष्यति अपरानिति पाठे अन्यान्पुलिन्दादिसङ्घान्वर्णान्करिष्यतीत्यर्थः ॥ ३६ ॥

किञ्चैवं कृत्वाऽब्रह्मभूयिष्ठा अब्रह्मण्यप्रचुराः सतीः प्रजाः स्थापयिष्यति पालयिष्यति स च पद्मवत्यां पुरि वसन् अनुगङ्गां गङ्गाद्वारमारभ्य प्रयागपर्यन्तं गुप्तां पालितां मेदिनीं भोक्ष्यति ॥ ३७ ॥

तदनन्तरं च सौराष्ट्रादिदेशवर्तिनो द्विजा व्रात्या उपनयनरहिता भविष्यन्ति ॥ ३८ ॥

अब्रह्मवर्चसः वेदाचारशून्याः ॥ ३९ ॥

इमे च म्लेच्छप्राया भूभृतस्तुल्यकाला भविष्यन्ति । किञ्च, एते सर्वेऽधर्माऽनृतपरा अधर्मेऽनृते च परिनिष्ठिताः फल्गुदा अल्पदातारः ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तेषां भूतनन्दादीनां बाह्लीकसङ्ख्यास्त्रयोदश सुताः भवितारो भविष्यन्ति इति तथा पुष्पमित्रो नामाऽन्यो राजन्यः अस्य दुर्मित्रनामा पुत्रः ॥ ३४ ॥

तथान्ध्राः कोसलाः वैदूरपतयः निषधाश्च तत्तद्देशनामभिः प्रख्याताः सप्तसु मण्डलेषु भूपास्तत एव बाह्लीकेऽप्य एव भविष्यन्ति ते तेभ्यो जनिष्यन्त इत्यर्थः ॥ ३५ ॥

मागधानामिति ततस्तु मागधानां राजा विश्वस्फूर्जिर्नाम भविता स च पूर्वोक्तात्पुरञ्जयादितिप्रसिद्धः सन् वर्णान् ब्राह्मणादीन् पुलिन्दयदुमद्रकसङ्घान् म्लेच्छप्रायान् करिष्यति अपरानिति पाठे अन्यान् पुलिन्दसङ्घान् करिष्यतीत्यर्थः ॥ ३६ ॥

स चैवं कृत्वा प्रजाः अब्रह्मभूयिष्ठा अब्रह्मण्यप्रचुरान् स्थापयिष्यति पालयिष्यति । किञ्च, वीर्यवानिति स वै विश्वस्फूर्जिः क्षत्रमुत्साद्य निर्मूल्य पद्मवत्यां पुरि वसन्निति शेषः अनुगङ्गां गङ्गाद्वारमारभ्य प्रयागपर्यन्तां गुप्तां मेदिनीं भोक्ष्यति तदनन्तरं च सौराष्ट्रादिदेशवर्तिनो द्विजा व्रात्याः उपनयनादिसंस्काररहिताः अत एव शूद्रप्राया भविष्यन्ति जनाधिपेति सम्बोधनं जनाधिपा इति पाठे ते शूद्रप्रायाः शूद्रप्रचुरा भविष्यन्तीत्यर्थः ॥ ३७ ॥ ३८ ॥

सिन्धोरिति । व्रात्याद्यां व्रात्या आद्या येषां ते शूद्रा म्लेच्छाश्च अब्रह्मवर्चस इति अस्यामर्थेऽप्युचितत्वात्तद्व्रात्यादिविशेषणं चन्द्रभागा

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

नदी तया तत्तीरं लक्ष्यते कौन्तीम्। देशात् कौन्तीमिति पाठे कुन्तिदेशेषु भवां कौन्तीमिति चन्द्रभागाविशेषणम् ॥ ३९ ॥

तुल्यकाला इति। एते म्लेच्छप्रायाः भूभृतस्तुल्यकाला भविष्यन्तीत्यर्थः। किञ्च, एते इति अधर्मे अनृते च परिनिष्ठिताः फल्गुदाः अल्पदातारः तीव्रः क्रमो मन्युर्येषां ते स्त्रीबालेति परदारधनयोराहृता आदरयुक्ताः तद्ग्रहणशीला इत्यर्थः। उदितास्तमितप्राया: उदितप्रायाश्चास्तमितप्रायाश्च क्षणे तुष्टाः क्षणे रुष्टा इत्यर्थः। अल्पसत्त्वा अल्पबला अल्पायुषश्च असंस्कृताः गर्भाधानादिसंस्काररहिताः प्रजा इति एवंविधाः ते प्रजाः भक्षयिष्यन्ति पीडयिष्यन्ति ॥ ४०—४२ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

बाह्लीकाः बाह्लीकदेशपतयः ॥ ३४ ॥

तथा आन्ध्रा अन्ध्रदेशपतयः कोसलाः कोसलविषयपतयः वैदूरयः वैदूराख्यनगरपतयो निषधाश्च एते तत्तद्देशनामभिः प्रख्याताः तुल्यकालाः खण्डमण्डलेषु भूपाः तत एव तेभ्यो बाह्लीकेभ्य एव भाव्या भविष्यन्ति ॥ ३५ ॥

ततश्च नैषधानां विषयाणां राजा पुरञ्जयः शत्रुग्रामिणि-शेषः। स पुलिन्दयदुमद्रकानवराणीयान् वर्णान् करिष्यति किं बहुना सर्वाः प्रजाश्चापि विषयिताः ॥ ३६ ॥

ब्रह्मभूयिष्ठाः बहुलवेदविदः स्थापयिष्यति स्थिरीकरिष्यति अनुगङ्गं गङ्गासमीपे आप्रयागं प्रयागाख्यक्षेत्रपर्यन्तं दीर्घां मेदिनीं पद्मवत्यां पुरि स्थितिं कृत्वा आप्रयागं गुप्तां पालिताम् ॥ ३७ ॥

तदनन्तरं सौराष्ट्राश्च आवन्त्याश्च आभीराश्च शूद्राश्च अर्बुदाश्च मालवाश्च व्रात्याः संस्कारहीनाः द्विजाः शूद्रप्रायाः जनाधिपतयो भविष्यन्ति ॥ ३८ ॥ ३९ ॥

किञ्च, एते सर्वे अधर्मानृतपराः अधर्मे अनृते च परिनिष्ठिताः फल्गुदाः अल्पदातारः ॥ ४० ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

षड्वर्षाणि अधिकानि भविष्यन्ति भावीनि उषाय सोऽधवान्ति पालयिष्यन्ति ॥ ३३ ॥

तेषां भूतनन्दादीनां त्रयोदश बाह्लिकनामानो भविष्यन्ति अथैषामेव एव पुष्यमित्रः क्षत्रियोऽस्य दुर्मित्रो नाम पुत्रः ॥ ३४ ॥

एककालाः खण्डमण्डलपतयः ॥ ३५ ॥

ततश्च मागधानां मध्ये कश्चिद्विश्वस्फूर्जिर्नाम पुरञ्जयः पुराञ्जयापरः प्राचीनपुरञ्जयो द्वितीय इवेत्यर्थः। वर्णान् ब्राह्मणादीन् पुलिन्दयदुमद्रकसञ्ज्ञान् म्लेच्छप्रायान् करिष्यति ॥ ३६ ॥

अब्रह्मभूयिष्ठाः वेदरहिताः बहुनराः क्षत्रं पुण्यक्षेत्रम् उत्साद्य तत्सन्नं कृत्वा ॥ ३७ ॥

ततश्च सौराष्ट्रादिदेशवर्तिनो द्विजा व्रात्याः संस्कारहीनाः भविष्यन्ति ॥ ३८—४३ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एते भूतनन्दादयः ॥ ३३ ॥

तेषां भूतनन्दादीनां बाह्लिकाः तन्नामानः अथाऽन्यो राजन्यः पुष्यमित्रो भविष्यति अस्य पुष्यमित्रस्य दुर्मित्रः पुत्रो भविष्यति ॥ ३४ ॥

तत एव हि तेभ्यो बाह्लिकसङ्घेभ्य एवान्ध्रादयः तत्तद्देशनामभिः प्रख्याताः एककालाः तुल्यकालाः भूपाः तत्तद्भूमिप्रदेशपालकाः भाव्याः भविष्यन्ति ॥ ३५ ॥

ततश्च पुरञ्जयः पूर्वोक्तात्पुरञ्जयादितरः अथोत्तरततिप्रसिद्धः विश्वस्फूर्जिर्नाम मागधानां राजा भविता सतु वर्णान् ब्राह्मणादीन् पुलिन्दयदुमद्रकान् म्लेच्छप्रायान् करिष्यति ॥ ३६ ॥

एवं कृत्वा विश्वस्फूर्जिः पद्मवत्यां पुरि वसन् अब्रह्मभूयिष्ठाः अत्रैवर्णप्रचुराः प्रजाः स्थापयिष्यति यतो दुर्मतिः कलिविदूषितमतिः नन्वन्ये क्षत्रियास्तं कुतो न वारयिष्यन्तीत्यत आह, वीर्यवान् क्षत्रमुत्सादयति ॥ ३७ ॥

अनुगङ्गां गङ्गाद्वारमारभ्य आप्रयागं प्रयागपर्यन्तां गुप्तां पालितां मेदिनीं भोक्ष्यति तदनन्तरं सौराष्ट्रादिदेशवर्तिनो द्विजाः व्रात्याः उपनयनादिसंस्काररहिताः भविष्यन्तीत्यप्रमेयान्वयः ॥ ३८ ॥

द्विजाः त्रैवर्णिका व्रात्याः असंस्कृताः सन्तः शूद्रप्रायाः भविष्यन्ति ॥ ३९ ॥

अब्रह्मवर्चसः वेदोक्तक्रियाशून्यत्वात् इति च म्लेच्छप्रायाः भूभृतस्तुल्यकाला भविष्यन्ति ॥ ४० ॥ ४१ ॥

———

भाषा टीका।

फिर तिस बंगिरि के पीछे बंगिरि का भ्राता शिशुनन्दि राजा होगा, और शिशुनन्दि के अनन्तर यशोनन्दि राजा होगा, यशोनन्दि के पीछे प्रवीरक राजा होगा, ये भूतनन्द से लेकर सब राजा लोग पृथिवी पर एकसौ छै १०६ वर्ष पर्यन्त राज्य करेंगे ॥ ३३ ॥

तदनन्तर इन भूतनन्दादि कों की सन्तान तेरह १३ पुत्र होंगे, उनका नाम बाह्लिक पड़ेगा, उसी समय अन्य एक पुष्यमित्र नामक राजा होगा, तिसका पुत्र दुर्मित्र राजा होगा ॥ ३४ ॥

और उनही बाह्लिकों की सन्तान सात आन्ध्र, सात कोसल, तथा विदूरपति, और नैषध, इस प्रकार देश के नामों से प्रसिद्ध भार खंड मंडल के अधिपति होंगे ॥ ३५ ॥

मगधदेशों का राजा विश्वस्फूर्जित नामक दूसरा पुरञ्जय होगा, और वह ब्राह्मणादि वर्णों को पुलिन्द, यदु, मद्रक संज्ञा-वाले म्लेच्छ प्राय कर देगा, ॥ ३६ ॥

और वह दुर्मति, जिसमें प्राय करके त्रैवर्णिक लोग नहीं ऐसी नीच प्रजा का पालन करेगा, बड़ा पराक्रमी होगा और क्षत्रियों को उखाड़ कर पद्मावती पुरी में रह कर हरिद्वार से प्रयाग पर्यंत पृथिवी का राज्य करेगा ॥ ३७ ॥

स्त्रीबालगोद्विजघ्नाश्च परदारधनादृताः ।
उदितास्तमितप्राया अल्पसत्त्वाल्पकायुषः ॥ ४१ ॥
असंस्कृताः क्रियाहीना रजसा तमसावृताः ।
प्रजास्ते भक्षयिष्यन्ति म्लेच्छा राजन्यरूपिणः ॥ ४२ ॥
तन्नाथास्ते जनपदास्तच्छीलाचारवादिनः ।
अन्योन्यतो राजभिश्च क्षयं यास्यन्ति पीडिताः ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् द्वादशस्कन्धे राजवंशानुकीर्त्तनं नाम
प्रथमोऽध्यायः ॥ १ ॥

---

भाषा टीका ।

सौराष्ट्र ( सोरठ ) देश के अवन्तिदेश के शूद्र, अर्बुद, और मालव देश के ब्राह्मण से लेकर तीनों वर्ण उपनयनादि संस्कारों से हीन होकर पतित होजावेंगे और वहां के राजा लोग शूद्र प्राय होजावेंगे ॥ ३८ ॥

सिन्धुनदी के किनारे २ तथा चन्द्रभागा के किनारे २ कौन्ती देश और काश्मीर मण्डल इन देशों को शूद्र पतित म्लेच्छादिक जो ब्रह्म तेज से हीन हैं वे राजा लोग भोगेंगे ॥ ३९ ॥

हे राजन्! वे सब राजा लोग एकही काल में म्लेच्छ प्राय होंगे, वे सब अधर्म और असत्य परायण होंगे, एवं थोड़ा दान करने वाले होंगे, और तीव्र क्रोधी होंगे ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

उदितास्तमितप्रायाः हर्षशोकादिबहुलाः ॥ ४१ ॥

असंस्कृताः गर्भाधानादिसंस्काररहिताः प्रजाः भक्षयिष्यन्ति धनाद्यपहारादिना पीडयिष्यन्ति ॥ ४२ ॥

किञ्च, तन्नाथाः ते नाथा येषां ते जनपदा देशवर्तिनो मनुष्यास्तच्छीलाचारवादिनस्तेषामिव शीलमाचारो वादश्च तद्वन्तः ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने
शुकपक्षीये द्वादशस्कन्धे
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तन्नाथा इति ते म्लेच्छा नाथा येषां ते जनपदादेशवर्तिनः तेषामेव शीलं स्वभावः आचारो वादश्च येषां सन्तीति तथाऽन्योन्यतः राजतः राजभिश्च पीडिताः नाशं यास्यन्ति ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उदितास्तमितप्रायाः बहुधं सूर्योदयमस्तङ्गतमेव जानन्ति नापरम् अल्पकालावस्थायिनो वा ॥ ४१ ॥

असंस्कृताः गर्भाधानादिसंस्कारहीनाः प्रजाः भक्षयिष्यन्ति धनाद्यपहारादिना पीडयिष्यन्ति ॥ ४२ ॥

किञ्च, एवंविधाः ये त एव नाथा येषां ते तन्नाथा जनपदा देशवर्तिनो मनुष्याः तच्छीलाचारवादिनः तेषां शीलम् आचारश्च वादश्च तद्वन्तः ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इतिश्रीमद्भागवते महापुराणे द्वादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
प्रथमोऽध्यायः १ ॥

## द्वितीयोऽध्यायः ।

श्रीशुक उवाच ।

ततश्चाऽनुदिनं धर्मः सत्यं शौचं क्षमा दया ।
कालेन बलिना राजन्नङ्क्ष्यत्यायुर्बलं स्मृतिः ॥ १ ॥
वित्तमेव कलौ नृणां जन्माऽऽचारगुणोदयः ।
धर्मन्यायव्यवस्थायां कारणं बलमेव हि ॥ २ ॥
दाम्पत्येऽभिरुचिर्हेतुर्मायैव व्यावहारिके ।
स्त्रीत्वे पुंस्त्वे च हि रतिर्विप्रत्वे सूत्रमेव हि ॥ ३ ॥
लिङ्गमेवाऽऽश्रमख्यातावन्योन्यापत्तिकारणम् ।
अवृत्त्या न्यायदौर्बल्यं पाण्डित्ये चापलं वचः ॥ ४ ॥
अनाढ्यतैवासाधुत्वे साधुत्वे दम्भ एव तु ।
स्वीकार एव चोद्वाहे स्नानमेव प्रसाधनम् ॥ ५ ॥
दूरे वार्ययनं तीर्थं लावण्यं केशधारणम् ।
उदरम्भरता स्वार्थः सत्यत्वे धार्ष्ट्यमेव हि ॥ ६ ॥
दाक्ष्यं कुटुम्बभरणं यशोऽर्थे धर्मसेवनम् ।
एवं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमण्डले ॥ ७ ॥
ब्रह्मविट्क्षत्रशूद्राणां यो बली भविता नृपः ।
प्रजा हि लुब्धै राजन्यैर्निर्घृणैर्दस्युधर्मभिः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वितीये तु कलेर्दोषवृद्धौ कल्क्यवतारतः ।
अधर्मिष्ठे जने नष्टे पुनः कृतयुगागमः ॥

कलिधर्मान्प्रपञ्चयति—ततश्चेत्यादिना ॥ १ ॥

धर्मन्याययोर्व्यवस्थायां बलमेव ॥ २ ॥

दाम्पत्ये भार्यापतिभावेऽभिरुचिरेव हेतुर्न कुलगोत्रादिः व्यावहारिके क्रयविक्रयादौ स्त्रीत्वे पुंस्त्वे च तयोः श्रेष्ठ्ये रतिकौशलमेव हेतुर्न कुलमाचारो वा ॥ ३ ॥

आश्रमाणां ख्यातौ ज्ञाने लिङ्गमेव दण्डाजिनादिकं हेतुर्न त्वाचारविशेषः अन्योन्यापत्तिकारणं चाऽऽश्रमादाश्रमान्तरप्राप्तौ च कारणम् यद्वा बहूदकहंसादीनामन्योन्यापत्तौ नमस्कारादिव्यवहारे कारणम् । अवृत्त्या, मुद्रार्पणादिदानासामर्थ्येन न्याये दौर्बल्यं पराजयः, चापलं वचो बहुभाषणम् ॥ ४ ॥

असाधुत्वे चौर्याद्यभियोगे प्रसाधनमलङ्कारः ॥ ५ ॥

दूरे वर्तमानं वार्ययनं जलाशयस्तीर्थं न तु गुर्वादि स्वार्थः पुरुषार्थः ॥ ६ ॥ ७ ॥ ८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

१ ॥ २ ॥

रुचिर्हेतुः नत्वाभिजात्यादि मा च व्यावहारिकी लोकव्यवहारसिद्धा मायैव विवेकप्रतिबन्धिनी स्त्रीत्वे चेति स्त्रीत्वपुंस्त्वयोर्हेतुर्नास्ति स्त्रीत्वपुंस्त्वैकान्तगुणकुलयोगो हेतुः किन्तु प्रतिरतिरेव सम्भोग एव इत्यर्थः ॥ ३ ॥

अवृत्तिः दारिद्र्यम् ॥ ४ ॥

स्वीकार एव न तु शास्त्रीयविधिविशेषः इत्यर्थः ॥ ५ ॥

क्षुत्तृड्भ्यां व्याधिभिश्चैव सन्तप्स्यन्ते च चिन्तया ।
त्रिंशद्विंशतिवर्षाणि परमायुः कलौ नृणाम् ॥ ११ ॥
क्षीयमाणेषु देहेषु देहिनां कलिदोषतः ।
वर्णाश्रमवतां धर्मे नष्टे वेदपथे नृणाम् ॥ १२ ॥
पाषण्डप्रचुरे धर्मे दस्युप्रायेषु राजसु ।
चौर्यानृतवृथाहिंसा नानावृत्तिषु वै नृषु ॥ १३ ॥
शूद्रप्रायेषु वर्णेषु छागप्रायासु धेनुषु ।
गृहप्रायेष्वाश्रमेषु यौनप्रायेषु बन्धुषु ॥ १४ ॥
अणुप्रायास्वोषधीषु शमीप्रायेषु स्थास्नुषु ।
विद्युत्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु ॥ १५ ॥
इत्थं कलौ गतप्राये जने तु खरधर्मिणि ।
धर्मत्राणाय सत्त्वेन भगवानवतरिष्यति ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

क्षीयमाणेष्वित्यादीनामित्थं कलौ गतप्राय इति पञ्चमेनान्वयः क्षीयमाणेष्वल्पप्रायेषु ॥ १२ ॥

दस्युप्रायेषु चोरतुल्येषु चौर्यानृतवृथाहिंसाद्या नाना वृत्तयो येषां तेषु ॥ १३ ॥

छागप्रायासु प्रमाणतः क्षीरतश्चाजातुल्यासु ॥ १४ ॥

अणुप्रायासु श्यामाकतुल्यासु स्थास्नुषु वृक्षेषु विद्युत्प्रायेषु तडिद्बहुलेषु शून्यप्रायेषु धर्मादिरहितेषु सद्मसु गृहेषु ॥ १५ ॥

जने तु खरधर्मिणि दुःसहचेष्टिते कलौ गतप्राये समाप्तप्राये ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आच्छिन्नाः अपहृता दाराः द्रविणानिचया यासां ताः प्रजाः गिरिकाननं वासयन्ति तत्र शाकादिभोजनाः तत्र क्षौद्रं मधु आदिर्बीजम् ॥ ९ ॥

तत्रानावृष्ट्या यः दुर्भिक्षकरः शाकाद्यभावकरः कालस्तेन यद्वा दुर्भिक्षे यः करः स्वामिग्राह्यो भागः तेन पीडिताः शीतादिभिरन्योन्यतश्च पीडिताः नश्यन्ति प्रावृषि हिममेव केवलं न तु वृष्टिरित्यभिप्रायेण प्रावृडित्युक्तं तृतीयान्तानामसामर्थ्येऽपि सामर्थ्यात्पीडिता इत्यनेन सम्बन्धः । तत्र सन्तापस्त्रिविधः तापः इत्थं पीडितानां नृणां परमायुर्विंशतिस्त्रिंशद्वर्षाणि ॥ १० ॥ ११ ॥

क्षीयमाणेष्विति-सप्तम्यन्तानाम् इत्थं कलौ गतप्राये सतीति पञ्चमेन सम्बन्धः । वर्णाश्रमाचाराढ्यानामपि वेदपथे वेदमार्गे तदुक्ते धर्मे च नष्टे सति ॥ १२ ॥

राजसु दस्युप्रायेषु सत्सु तदेव विवृणोति—चौर्येति चौर्यादिना वृत्तयो येषां तेषु ॥ १३ ॥

धेनुषु छागप्रायासु प्रामाणतः क्षीरतश्चाजातुल्यासु आश्रमेषु गृहप्रायेषु तद्वन्मैथुनधर्मपरेषु सत्सु बन्धुषु यौनप्रायेषु योनिसम्बन्धमात्रप्रधानेषु ॥ १४ ॥

ओषधीषु धान्येष्वणुप्रायासु अतिसूक्ष्मासु स्थास्नुषु वृक्षेषु शमीप्रायेषु परिमाणतः छायातः फलतश्च तुल्येषु इत्यर्थः मेघेषु विद्युत्प्रायेषु तडिद्बहुलेषु सद्मसु गृहेषु शून्यप्रायेष्वतिथिभोजनादिधर्मरहितेषु सत्सु ॥ १५ ॥

इतीत्थं खरधर्मिणि दुःसहचेष्टिते कलौ सत्त्वेन शुद्धसत्त्वमयेन देहेन ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आच्छिन्नदारद्रविणाः बलादाकृष्टभार्यावित्ताः क्षौद्रं मधु "मधु मद्यं मधुक्षौद्रं मधुपुष्परसं विदुः" इत्यभिधानं शाकादिभोजनं येषां ते तथा ॥ ९ ॥

दुर्भिक्षकरनिमित्तपीडिताः हिमं नीहारः ॥ १० ॥

तृषया तृष्णया व्याधिभिः कुष्ठादिभिः ॥ ११ ॥ १२ ॥

चौर्याद्यर्थं नानावृत्तयो येषां ते तथा ॥ १३ ॥

छाग अत्र तुगभावो विकृतवत्वात्तं प्रति गृहभावना एव बन्धुत्वं योनिसम्बन्धमात्रम् ॥ १४ ॥

अणुप्रायेषु कणमात्रप्रचुरासु जनशून्यप्रायेषु ॥ १५ ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्थास्नुषु वृक्षेषु ॥ १५ ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आदिर्बीजम् ॥ ९ ॥ १० ॥ ११ ॥

क्षीयमाणेष्वित्यादिसप्तम्यन्तानामित्थं कलौ गतप्राये इति पञ्चमेन सम्बन्धः ॥ १२—१४ ॥

स्थास्नुषु वृक्षेषु ॥ १५ ॥

खरधर्मिति खरधर्मघातके गतप्राये समाप्तप्राये सत्त्वेन

चराचरगुरोर्विष्णोरीश्वरस्याखिलात्मनः ।
धर्मत्राणाय साधूनां जन्म कर्मापनुत्तये ॥ १७ ॥
शम्भलग्राममुख्यस्य ब्राह्मणस्य महात्मनः ।
भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति ॥ १८ ॥
अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः ।
असिनाऽसाधुदमनमष्टैश्वर्यगुणान्वितः ॥ १९ ॥
विचरन्नाशुना क्षोण्यां हयेनाप्रतिमद्युतिः ।
नृपलिङ्गच्छदो दस्यून् कोटिशो निहनिष्यति ॥ २० ॥
अथ तेषां भविष्यन्ति मनांसि विशदानि वै ।
वासुदेवाङ्गरागातिपुण्यगन्धाऽनिलस्पृशाम् ।
पौरजानपदानां वै हतेष्वखिलदस्युषु ॥ २१ ॥
तेषां प्रजाविसर्गश्च स्थविष्ठः सम्भविष्यति ।
वासुदेवे भगवति सत्त्वमूर्त्तौ हृदि स्थिते ॥ २२ ॥
यदाऽवतीर्णो भगवान् कल्किर्धर्मपतिर्हरिः ।
कृतं भविष्यति तदा प्रजासूतिश्च सात्त्विकी ॥ २३ ॥
यदा चन्द्रश्च सूर्यश्च तथा तिष्यबृहस्पती ।
एकराशौ समेष्यन्ति तदा भवति तत्कृतम् ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निवस्यभूतेन सत्त्वगुणेनोपलक्षित अवतरिष्यति प्रादुर्भविष्यति ॥ १८ ॥

भाषा टीका ।

वृष्टि न होने से दुर्भिक्ष और कर से पीड़ित होकर प्रजा अति दुःखित होकर, शीत, वात, आतप, वर्षा, हिम, इन हेतुओं से तथा परस्पर में क्लेश पाकर प्रजा के लोग नष्ट होवेंगे ॥ १० ॥

क्षुधा, तृषा, व्याधि, सन्ताप, और चिन्ता से बहुत लोग नष्ट होजायगे, और कलियुग में तीस वर्ष बीस वर्ष पर्यन्त ही मनुष्यों की बड़ी आयु कहावेगी ॥ ११ ॥

इस प्रकार जब कलियुग के दोषों से देह धारियों के देह भी क्षीण होने लगेंगे, और मनुष्यों के वर्णाश्रमों के धर्म नष्ट हो जांयगे तथा वेद का मार्ग जब नष्ट होजायगा ॥ १२ ॥

धर्म जब पाषंड प्रचुर हो जायगा, राजा लोग जब चोरप्राय हो जांयगे, एवं चोरी, झूँठ, व्यर्थ हिंसा इत्यादिक में निरत नाना प्रकार की जब मनुष्यों की वृत्ति होजायगी ॥ १३ ॥

सब वर्ण जब शूद्रप्राय हो जांयगे, और गावें जब बकरी सदृश हो जांयगी, आश्रम जब गृहप्राय हो जांयगे, और योनि सम्बन्धि मात्र जब बन्धु हो जांयगे ॥ १४ ॥

औषधि जब अणुप्राय हो जांयगी, वृक्ष जब शमीप्राय हो जांयगे, वर्षा समय में बिजुली मात्र का जब अधिक कौंधा हुआ करेगा, और वर्षा कुछ न होगी, गृहस्थ लोगों के गृह जब किसी कारणों से शून्य प्राय हो जांयगे, ॥ १५ ॥

तब चराऽचर गुरु अखिलात्मा सम्पूर्ण जगत के नियन्ता ऐसे श्रीविष्णु भगवान् का अवतार, साधु जनों के धर्म की रक्षा के लिये और उनके कर्म छुड़ाने के लिये, अर्थात् मोक्ष देने के लिये होगा ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एतत्प्रपञ्चयति-चतुर्भिः । चराचरगुरोरीश्वरस्येति च धर्मत्राणे हेतुः गुरुत्वेश्वरत्वयोरुपपादानमखिलस्य विश्वस्याऽऽत्मनः कारणस्येति एवम्भूतस्य विष्णोर्जन्म साधूनां धर्मत्राणाय धर्मत्राणप्रयोजनमाह—कर्मापनुत्तये मोक्षाय ॥ १७ ॥

शम्भलग्रामे मुख्यस्य प्रधानस्य नाम्ना विष्णुयशसो ब्राह्मणस्य भवने गृहे ॥ १८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

धर्मत्राणप्रकारमाह—अश्वमिति । असाधवो दम्यन्ते येन तमश्वमारुह्यासिना दस्यून् कोटिशो निहनिष्यतीत्युत्तरेणान्वयः । असाधुदमन इति पाठे कल्किविशेषणम् अणिमाद्यैश्वर्याणि गुणाश्च तत्संकल्पमात्रादेव तैरन्वितः ॥ १९ ॥

तत्प्रपञ्चः आशुना शीघ्रगामिना तेन हयेनाश्वेन क्षोण्यां पृथिव्यां विचरन् नृपलिङ्गच्छदो राजवेषच्छन्नान् ॥ २० ॥

ततश्च पुनः कृतयुगप्रवृत्तिं वक्तुमाह—अथेति, सार्द्धाभ्याम् । तेषां पौरजानपदानां मनांसि विशदानि भविष्यन्ति तत्र हेतुः वासुदेवस्याङ्गरागेण चन्दनादिनाऽतिपुण्यगन्धो योऽनिलस्तं स्पृशन्तीति तथा तेषाम् ॥ २१ ॥

स्थविष्ठः स्थूलः ॥ २२ ॥

कृतयुगप्रवृत्तिमाह——यदावतीर्ण इति । प्रजानां सूतिः प्रसूतिः ॥ २३ ॥

तदवतारकालोपलक्षणमाह—यदा चन्द्रश्चेति । तिष्यः पुष्यः अयमर्थः चन्द्रसूर्यबृहस्पतीनां यदा पुष्यनक्षत्रे योगस्तदा तत् कृतयुगं भविष्यति यद्यपि च प्रतिद्वादशाब्दं कर्कराशौ बृहस्पतौ वर्तमाने द्वित्रास्वमावास्यासु तेषां त्रयाणामपि पुष्ययोगः सम्भवति तथाऽपि तेषां सह प्रवेशो ऽत्र विवक्षितः समेष्यन्तीति वचनात् अतो नातिप्रसङ्गः ॥ २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आशुना आशुगतिना ॥ २०—२७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

धर्मत्राणायेत्यनेन धर्मपरित्राणमेवावतारप्रयोजनम् इत्युक्तं तदेव सहेतुकमुपपादयति—चराचरगुरोरिति । विशेषणानि हेतुगर्भविशेषणानि गुरुशब्देन हितप्रवर्तकत्वमभिप्रेतं तस्य सर्वविषयकत्वस्फोरणायाखिलात्मन इत्युक्तम् आत्मत्वं न केवलमन्तःप्रविश्य धारकत्वमेवापितु तत्प्रशासनगर्भमिति द्योतनायेश्वरस्येत्युक्तम् एवम्भूतस्य विष्णोर्जन्मावतारः साधूनां धर्मत्राणाय तत्प्रयोजनमाह—कर्मापनुत्तय इति । निःश्रेयसप्रतिबन्धिकर्मनिवर्तनाय यद्वा दुष्कर्मनिवर्तनाय वा "विनाशाय च दुष्कृताम्" इत्युक्तेः ॥ १७ ॥

कावतरिष्यति ? किन्तस्य नाम ? इत्यत आह-शम्भलेति । शम्भलग्रामे मुख्यस्य श्रेष्ठस्य विष्णुयशसः भवने गृहे कल्किरूपेणावतरिष्यति ॥ १८ ॥

तस्य चेष्टितमनुवर्णयति द्वाभ्याम्-अश्वमिति । देवदत्तनामानम् आशु गच्छतीति तथा तमश्वमारुह्यासिनाऽसाधून् दमयतीति तथा दस्यून् कोटिशो निहनिष्यतीति उत्तरेण सम्बन्धः । अष्टैश्वर्याण्यणिमादीनि गुणाः शौर्यधैर्यादयः तैरन्वितः आशुना आशुगतिनाऽश्वेन क्षोण्यां पृथिव्यां विचरन् नृपलिङ्गच्छदः राजवेषच्छन्नान् ॥ १९—२० ॥

अथेति । अखिलेषु दस्युषु हतेषु सत्सु अथ तेषां पौरजानपदानां वासुदेवस्य कल्केः अङ्गरागः तस्य योऽतिशयितः पुण्यगन्धवायुः तं स्पृशन्तीति तथा तेषां हेतुगर्भमिदम् अतः मनांसि विशदानि निर्मलानि भविष्यन्ति ॥ २१ ॥

तेषां विशदमानसानां प्रजाविसर्गः पुत्रादिरूपः प्रपञ्चः स्थविष्ठः स्थूलः सम्भविष्यति वासुदेव इति हृदि स्थित इत्यस्य मनश्च सात्विकं भविष्यतीति शेषः ॥ २२ ॥

तदा पुनः कृतयुगप्रवृत्तिमाह—यदेति । धर्मपतिर्धर्मगोप्ता कल्किरूपेणावतीर्णः तदा कृतयुगं भविष्यति तदा प्रजानां सूतिः प्रसूतिः सात्त्विकी सत्त्वगुणप्रधाना ॥ २३ ॥

कृतयुगप्रवृत्तिकालोपलक्षणमाह—यदेति । तिष्यः पुष्यः यदा सूर्यादयस्त्रयः एकराशौ सङ्गता भवन्ति तदा ततः कृतयुगं प्रवर्तेत इत्यर्थः । यद्यपि प्रतिद्वादशाब्दं कर्कटराशौ बृहस्पतौ वर्तमाने द्वित्रास्वमावास्यासु तेषां त्रयाणामपि पुष्ययोगस्सम्भवति तथापि तेषां सह प्रवेशोऽत्र विवक्षितः "समेष्यन्ति" इति वचनात् अतो नातिप्रसङ्गः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विष्णोर्जन्म कर्म च साधूनां धर्मत्राणाय दुष्कर्मापनुत्तये च स्यादिति शेषः ॥ १७ ॥

शम्भलग्रामे मुख्यस्य प्रधानस्य नाम्ना विष्णुयशस ब्राह्मणस्य भवने गृहे ॥ १८ ॥

आशुगं शीघ्रगामिनम् ॥ १९ ॥

नृपलिङ्गच्छदः राजलक्षणाच्छन्नान् ॥ २० ॥

वासुदेवस्याङ्गरागस्य चन्दनाद्यनुलेपनस्य प्रशस्तपुण्यगन्धेन युक्तं वायुं स्पृशन्तीति वासुदेवाङ्गरागातिपुण्यगन्धानिलस्पृशः तेषाम् ॥ २१ ॥

प्रजाविसर्गः सन्ततीनामुत्पत्तिः स्थविष्ठः बहुलः ॥ २२ ॥

प्रजासूतिः सन्तानोत्पत्तिः ॥ २३ ॥

कृतप्रारम्भे लक्षणान्तरमाह—यदेति । तिष्यः पुष्यः चन्द्रसूर्यबृहस्पतीनां यदा पुष्यनक्षत्रयोगः तदा कृतयुगं भविष्यति यद्यपि प्रतिद्वादशाब्देऽर्कराशौ बृहस्पतौ वर्तमाने द्वित्रास्वमावास्यासु तेषां त्रयाणामपि पुष्ये योगः सम्भवति तथापि तेषां सह प्रयोगोऽत्र विवक्षितः "समेष्यन्ति" इति वचनात् ॥ २४ ।

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विष्णोर्जन्म भविष्यति साधूनां कर्मापनुत्तये मोक्षाय ॥ १७ ॥ १८ ॥

देवैः प्रस्थापितत्वाद्देवदत्तम् ॥ १९ ॥

आशुना शीघ्रगामिना असाधवो दम्यन्ते येन तमसाधुदमनं नृपलिङ्गच्छदः राजवेषच्छन्नान् ॥ २० २१ ॥

स्थविष्ठः धर्मनिष्ठतया स्थूलतरः ॥ २२ ॥

सूतिः प्रसूतिः ॥ २३ ॥

सत्ययुगारम्भकालं लक्षयति-यदेति । तिष्यः पुष्यः अयमर्थः चन्द्रसूर्यबृहस्पतीनां यदा पुष्यनक्षत्रे योगस्तदा कृतयुगं भविष्यतीति यद्यपि प्रतिद्वादशाब्दं कर्कटराशौ बृहस्पतौ वर्तमाने द्वित्रासु अमावास्यासु तेषां त्रयाणामपि पुष्ययोगः सम्भवति

येऽतीता वर्तमाना ये भविष्यन्ति च पार्थिवाः।
ते त उद्देशतः प्रोक्ता वंशीयाः सोमसूर्ययोः ॥ २५ ॥
आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम्।
एतद्वर्षसहस्रं तु शतं पञ्चदशोत्तरम् ॥ २६ ॥
सप्तर्षीणां तु यौ पूर्वौ दृश्येते उदितौ दिवि।
तयोस्तु मध्ये नक्षत्रं दृश्यते यत्समं निशि ॥ २७ ॥
तेनैव ऋषयो युक्तास्तिष्ठन्त्यब्दशतं नृणाम्।
ते त्वदीये द्विजाः काले अधुना चाश्रिता मघाः ॥ २८ ॥
विष्णोर्भगवतो भानुः कृष्णाख्योऽसौ दिवं गतः।
तदाऽविशत्कलिर्लोकं पापे यद्रमते जनः ॥ २९ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

तथापि तेषां सह प्रवेशोऽत्र विवक्षितः "समेष्यन्ति" इति वचनात् अतो नातिप्रसङ्गः ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एतत्प्रपञ्चयति—चराचरगुरोरिति चतुर्भिः। साधूनां बुभुक्षूणां मुमुक्षूणां च धर्मत्राणाय स्वर्गादिसाधनरक्षणाय कर्मोपनुत्तये मोक्षाय च विष्णोर्जन्म ॥ १७ ॥ १८ ॥

देवदत्तसञ्ज्ञम् असाधवो दस्यवो दम्यन्ते येन तमाशुगं शीघ्रगम् अश्वमारुह्य दस्यून् निहनिष्यतीत्युत्तरेण सम्बन्धः। अष्टैश्वर्यैः अणिमादिभिः गुणैः सत्यसङ्कल्पादिभिश्च अन्वितः ॥ १९ ॥

आशुना शीघ्रगामिना नृपलिङ्गच्छदः नरपालवेषच्छन्नान् ॥ २० ॥

तदनन्तरं पुनः कृतयुगप्रवृत्तिं वक्तुमाह—अथेति, सार्द्धद्वाभ्याम्। अखिलेषु दस्युषु हतेषु वासुदेवे हृदि स्थिते च सति तेषां वासुदेवस्य अङ्गरागस्तस्यातिपुण्यगन्धवायुं स्पृशन्तीति तथा तेषां पौरजानपदानां मनांसि विशदानि निर्मलानि भविष्यन्ति प्रजानां पुत्रपौत्रादीनां विसर्गश्च स्थविष्ठः स्थूलो भविष्यतीति सार्द्धद्वयोरन्वयः ॥ २१ ॥ २२ ॥

कृतयुगप्रवृत्तिमाह—यदेति। प्रजानां सूतिं प्रसूतिं सात्त्विकीं सत्त्वगुणप्रधाना ॥ २३ ॥

कृतयुगप्रवृत्तिकालोपलक्षणमाह—यदेति। तिष्यः पुष्यः समेष्यन्ति युगपत्प्रवेशं करिष्यन्ति ॥ २४ ॥

---

भाषा टीका।

इस प्रकार जब कलियुग प्राय करके बहुत बीत जायगा, और मनुष्य जब गर्दभ के सदृश चेष्टा वाले हो जावगे, तब धर्म की रक्षा के अर्थ भगवान् सत्त्व गुण से अवतार लेवेंगे ॥ १७ ॥

शम्भल ग्राम के विषै मुख्य महात्मा विष्णुयशा ब्राह्मण के गृह में कल्कि अवतार धारण कर भगवान् प्रकट होवेंगे ॥ १८ ॥

और देवताओं के दिये हुये शीघ्र गामी घोड़ा पर बैठ कर, अष्ट ऐश्वर्य गुण युक्त जगत्पति कल्कि भगवान् हाथ में खड्ग लेकर दुष्टों का दमन करेंगे ॥ १९ ॥

अतुल कान्ति वाले श्रीकल्कि भगवान् शीघ्र गामी घोड़ा पर बैठकर विचरते हुए राजाओं के वेष धरने वाले किरोड़ो चोट्टों को मारेंगे ॥ २० ॥

जब सब चोट्टे दुष्ट लोग नष्ट होजांयगे तब श्रीवासुदेव भगवान् के श्रीअङ्ग के चन्दन की सुगन्ध को लेकर जो पवन चलेगा, उस पवन के स्पर्श मात्र से पुरवासी देशवासी लोगों के मन निर्मल पाप रहित होजांयगे ॥ २१ ॥

जब सत्त्व मूर्ति भगवान् वासुदेव उन लोगों के हृदय में विराजेंगे, तब उनकी सन्तान सतयुग सदृश दीर्घ और स्थूल होनें लगेगी ॥ २२ ॥

जब धर्म के पति श्रीकल्कि भगवान् अवतार लेवेंगे, उसी समय से सतयुग हो जावेगा, और प्रजा की पैदा इस सात्त्विकी हो जावेगी ॥ २३ ॥

यह नियम है, कि—जब चन्द्र सूर्य और बृहस्पति, पुष्य नक्षत्र के साथ योग होता है, अर्थात् एक राशि में चारों जब एकही साथ प्रविष्ट होकर, स्थित होते हैं तबही कृत युग होता है ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

एवं नवमस्कन्धमारभ्यानुक्रान्तं वैवस्वतमनोर्वंशद्वयं निगमयति—येऽतीता इति। उद्देशतः संक्षेपतः ॥ २५ ॥

यावत्स पादपद्माभ्यां स्पृशन्नास्ते रमापतिः ।
तावत्कलिर्वै पृथिवीं पराक्रान्तुं न चाशकत् ॥ ३० ॥
यदा देवर्षयः सप्त मघासु विचरन्ति हि ।
तदा प्रवृत्तस्तु कलिर्द्वादशाब्दशतात्मकः ॥ ३१ ॥
यदा मघाभ्यो यास्यन्ति पूर्वाषाढां महर्षयः ।
तदा नन्दात्प्रभृत्येष कलिर्वृद्धिं गमिष्यति ॥ ३२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कलियुगावान्तरविशेषं वक्तुमाह—आरभ्येत्यादिना । वर्षसहस्रं पञ्चदशोत्तरं शतं चेति कयापि विवक्षयाऽवान्तरसङ्ख्येयम् वस्तुतस्तु परीक्षिन्नन्दयोरन्तरं द्वाभ्यां न्यूनं वर्षाणां सार्धसहस्रं भवति यतः परीक्षित्समकालं मागधं मार्जारिमारभ्य रिपुञ्जयान्ता विंशतिराजानः सहस्रसंवत्सरं भोक्ष्यन्तीत्युक्तं नवमस्कन्धे "ये बार्हद्रथभूपाला भाव्याः साहस्रवत्सरम्" इति ततः परं पञ्चप्रद्योतना अष्टत्रिंशोत्तरं शतम् शिशुनागाश्च षष्ट्युत्तरशतत्रयं भोक्ष्यन्ति पृथिवीमित्यत्रैवोक्तत्वात् ॥ २६ ॥

कलेः प्रवृत्तिं वृद्धिं च निरूपयितुं कालज्ञानोपलक्षणमाह—सप्तर्षीणामिति । अयमर्थः प्रागग्रशकटाकारं तारासप्तकं सप्तर्षिमण्डलम् तत्र किञ्चिदुन्नतेषाऽग्रस्थानीयो मरीचिः ततः पश्चाद्यानयुगकन्धराकारो वसिष्ठः समार्यः ततः पश्चादीषदुन्नतेषामूलस्थानीयोऽङ्गिराः ततः पश्चाच्चतुरस्रतारचतुष्के ईशान्यामत्रिः ततो दक्षिणतः पुलस्त्यः पुलस्त्यात्पश्चिमतः पुलहः तत उत्तरतः क्रतुः एवं स्थिते तेषां मध्ये यौ पूर्वौ उदयसमये प्रथममुदितौ दृश्येते पुलहक्रतुसंज्ञौ तयोस्तु मध्ये तयोस्तु पूर्वयोस्तु मध्ये यत्समं दक्षिणोत्तरे रेखायां समदेशावस्थितमश्विन्यादिषु यदन्यतमं नक्षत्रं दृश्यते तेन तथैव युक्ता नृणामब्दशतं तिष्ठन्ति ते च द्विजास्त्वदीये कालेऽधुना मघाश्रिता वर्तन्ते ॥२७॥ २८ ॥

तेषु मघासु वर्तमानेषु सत्सु यदा विष्णोर्भानुर्भातीति भानुः शुद्धसत्त्वात्मको देहो दिवं वैकुण्ठं गतस्तदा कलियुगमविशत् यस्मिन् युगे जनः पापे रमत इति कलियुगस्य लक्षणम् ॥ २९ ॥

ननु, श्रीकृष्णे पृथिव्यां वर्तमानेऽपि सन्ध्यारूपेण कलिः प्रविष्ट एवाऽऽसीत् सत्यम् तथापि तावत्तस्य पराक्रमो नाभवदित्याह—यावदिति । पराक्रान्तुमभिभवितुम् ॥ ३० ॥

अतो यथोक्त एव कलिप्रवेशकाल इत्याह—यदा देवर्षय इति द्वादशाब्दशतात्मक इति । दिव्येन मानेन सन्ध्यासन्ध्यांशाभ्यां सह यो द्वादशाब्दशतात्मकः स कलिस्तदा सन्ध्यामतिक्रम्य प्रविष्ट इत्यर्थः ॥ ३१ ॥

कलेः प्रवेशकालमुक्त्वा तस्य वृद्धिकालमाह—यदेति । तदा प्रद्योतनात्प्रभृति वृद्धिं गच्छन्नन्दात्प्रभृत्यतिवृद्धिं गमिष्यतीत्यर्थः ॥ ३२ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ते द्विजाः सप्तर्षयः ॥ २८ ॥

तेषु मघासु वर्तमानेषु सत्सु यदा विष्णोर्भानुः शुद्धसत्त्वात्मको देहः दिवं वैकुण्ठं गतः तदा कलियुगोऽविशत् यत् यस्मिन् युगे जनः पापे रमते इति कलियुगस्य लक्षणम् ॥ २९—४४ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्कन्धत्रयार्थमुपसंहरति—येऽतीता इति । सोमसूर्ययोर्वंश्या वंशप्रभवाः ते तुभ्यम् उद्देशतः उत्पत्तिक्रमतः संक्षेपतो वा प्रोक्ताः ॥२५॥

भवज्जन्मप्रभृति यावत्सोमवंशसमाप्ति कियान् कालो भविष्यति इत्यभिप्रायमाशङ्क्याह—आरभ्येति । नन्दाभिषेचनपर्यन्तेन सोमवंश्यानुवृत्तिरन्तो यावन्नन्दाभिषेचनमित्युक्तम् एतदन्तरं वर्षाणां पञ्चदशोत्तरशतं सहस्रञ्चेत्यर्थः । वर्षसहस्रं पञ्चदशोत्तरं शतं चेति कयापि विवक्षयाऽवान्तरसङ्ख्येयं वस्तुतः परीक्षिन्नन्दयोरन्तरं द्वाभ्यां न्यूनं वर्षाणां सार्धसहस्रं भवति यतः परीक्षित्समकालं मागधं मार्जारिमारभ्य रिपुञ्जयान्ता विंशतिराजानः सहस्रसंवत्सरान् भोक्ष्यन्तीत्युक्तं नवमस्कन्धे "ये बार्हद्रथभूपाला भाव्याः साहस्रवत्सरम्" इति, ततः परं च प्रद्योतना अष्टत्रिंशोत्तरं शतं शिशुनागाश्च षष्ट्युत्तरशतत्रयं भोक्ष्यन्ति पृथिवीमित्यत्रैवोक्तत्वात् ॥ २६ ॥

कदा तर्हि कलियुगारम्भ इत्यभिप्रायमाशङ्क्य तद्वृद्धिकालं च विवक्षुस्तावत्तदारम्भकालमुपलक्षयन्नाह— सप्तर्षीणामिति द्वाभ्याम् । अयमर्थः प्रागग्रशकटाकारं तारासप्तकं सप्तर्षिमण्डलं तत्र किञ्चिदुन्नतेषाग्रस्थानीयो मरीचिस्ततः पश्चाद्यानयुगकन्धराकारो वसिष्ठः समार्यस्ततः पश्चादीषदुन्नतेषामूलस्थानीयोऽङ्गिराः ततः पश्चाच्चतुरस्रतारचतुष्के ईशान्येऽत्रिः ततो दक्षिणतः पुलस्त्यः पुलस्त्यात्पश्चिमतः पुलहः तत उत्तरतः क्रतुः एवंस्थिते तेषां मध्ये यौ पूर्वौ उदयसमये प्रथममुदितौ पुलहक्रतुसंज्ञौ तयोस्तु मध्ये तयोः पूर्वयोस्तु मध्ये यत्समं दक्षिणतः समदेशावस्थितमश्विन्यादिषु यदन्यतमं नक्षत्रं दृश्यते तेन तथैव युक्ता ऋषयः नृणामब्दशतं तिष्ठन्ति ते च द्विजा ऋषयः त्वदीये काले अधुना मघामाश्रित्य वर्तन्ते पूर्वयोर्मघानां च साक्षाद्वाच्यत्वपक्षाभावात् कलियुगारम्भकाल इति सूचितं तदग्रे स्पष्टमेव वदिष्यति ॥ २७ ॥ २८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कदा तर्हि युगाभिमानिपुरुषप्रवेश इत्यतस्तमुपलक्षयन्नाह—विष्णोरिति । भानुः भातीति भानुः प्रकाशबहुलः कृष्णाख्यो भगवतो देहः यदा दिवं वैकुण्ठं गतस्तदा कलिरिमं लोकम् अविशत् यद्यस्माद्युगाभिमानिपुरुषाक्रान्तो जनः पापे रमते युगसन्धौ हि भगवदवतारः प्रवृत्तेऽपि कलौ युगे भगवतः स्वधामानुगमनात् पूर्वं कलिपुरुषो न प्रबभूवेत्यनेन सूच्यते ॥ २९ ॥

तदेव स्पष्टमेवाह—यावदिति । सः श्रीकृष्णः कलिपुरुषः पृथिवीं पराक्रान्तुमभिभवितुं नाशकत्स्वकार्यक्षमो बभूवेत्यर्थः ॥ ३० ॥

सूचितमर्थं स्पष्टमाह—यदा देवर्षय इति । मघासु विचरन्ति तासां समजवे चरितुमारब्धवन्त इत्यर्थः । तदा कलियुगं तस्य परिमाणं द्वादशाब्दशतात्मकम् इति दिव्येन मानेन सन्ध्यासन्ध्यांशाभ्यां सह यो द्वादशाब्दशतात्मकः स कलिः प्रवृत्त इति सम्बन्धः ॥ ३१ ॥

कदा तर्हि कलिधर्माभिवृद्धिरित्यतस्तामुपलक्षयन्नाह—यदा मघाभ्य इति, मघाभ्य इति पञ्चमी तत्समन्देशं विहाय पूर्वाषाढानां ( पूर्वफल्गुन्योः ) समदेशं यास्यन्ति तदा ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवं नवमस्कन्धमारभ्यानुक्रान्तं वैवस्वतमनोर्वंशद्वयमुपसंहरति—येऽतीता इति । उद्देशतः सङ्क्षेपतः ॥ २५ ॥

कलियुगावान्तरविशेषमाह—आरभ्येति । वर्षसहस्रं पञ्चदशोत्तरशतं चेति कयापि विवक्षयाऽवान्तरसङ्ख्येयं वस्तुतः परीक्षिन्नन्दयोरन्तरं द्वाभ्यामूनं वर्षाणां सार्द्धसहस्रं भवति यतः परीक्षित्समकालं मागधमार्जारिमारभ्य रिपुञ्जयान्ता विंशति राजानः सहस्रवत्सरं भोक्ष्यन्तीत्युक्तं नवमस्कन्धे "ये बार्हद्रथभूपाला भाव्याः साहस्रवत्सरम्" इति ततः परं च प्रद्योतना अष्टत्रिंशदुत्तरं शतं शिशुनागाश्च षष्ट्युत्तरशतत्रयं भोक्ष्यन्ति पृथिवीमित्यत्रैवोक्तम् ॥ २६ ॥

कलेः प्रवृत्तिं वृद्धिं च निरूपयितुं कालज्ञानोपलक्षणमाह, सप्तर्षीणामिति । अयमर्थः प्रागग्रं शकटाकारं तारासप्तकं सप्तर्षिमण्डलं तत्र किञ्चिदुन्नतरेखाया अग्रस्थानीयो मरीचिः ततः पश्चाद्दानप्रयुगस्थराकारो वसिष्ठः सभार्यः ततः पश्चादङ्गिरा मुख्य एतेषां मूलस्थानीयोऽङ्कुराः ततः पश्चाच्चतुरस्रताराचतुष्कं ईशान्येऽत्रिः ततो दक्षिणतः पुलस्त्यः पुलस्त्यात्पश्चिमतः पुलहः तत उत्तरतः क्रतुः एवं स्थिते तेषां मध्ये यौ पूर्वौ उदयसमये प्रथममुदितौ पुलहक्रतुसञ्ज्ञौ तयोस्तु मध्ये तयोः पूर्वयोश्च मध्ये यत्समं दक्षिणतः समदेशावस्थितमश्विन्यादिषु यद्यत्तमं नक्षत्रं दृश्यते ॥ २७ ॥

तेन तथैव युक्ताः नृणामब्दशतं तिष्ठन्ति ते च द्विजास्त्वदीये काले अधुना(म)घाम आश्रिता वर्त्तन्ते ॥ २८ ॥

तेषु ऋषिषु मघासु वर्त्तमानेषु सत्सु ॥ २९ ॥

पराक्रान्तुं स्वसामर्थ्यं दर्शयितुम् ॥ ३० ॥

कियन्त कालं विचरणमित्यत उक्तं द्वादशेति ॥ ३१ ॥

अस्तु कलेः परं कञ्चित्कालं स्थित्वा पश्चाद्वृद्धिः सा कदेति तत्राह—यदेति, ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विष्णोरिति यदा गुणावतारस्य विष्णोस्तदंशत्वाद्रश्मिस्थानीयस्य कृष्णाख्यो भानुः सूर्यमण्डलस्थानीयः दिवं प्रापञ्चिकलोकागोचरं मथुरादीनामेव प्रकाशविशेषरूपं वैकुण्ठलोकं गतः तदा कलिर्लोकमविशत् एषां च प्रकाशः पृथिवीस्थोऽयं तदन्तर्ज्ञानशक्त्या नामस्पृशन्नेव विराजते अतस्तथा न स्पृश्यते पृथिव्यादिभूतमयैरस्माभिर्यथा हेतुमहाकदम्बादिरिव वस्तु प्रापञ्चिकलोकगोचरो मथुरादिप्रकाशः सोऽयं कृपया पृथिवीस्पृशन्नेवावतीर्णः अतस्तथा स्पृश्यते तादृशैरस्माभिर्दृश्यमानकदम्बादिरिव अस्मिंश्च प्रकाशे यदावतीर्णो भगवांस्तदा तत्स्पर्शेनापि तत्स्पर्शास्तांस्पृशन्नेवास्ते स्म सम्प्रति तदस्पृष्टप्रकाशे विहरमाणः पुनरस्पृशन्नेव भवति यद्यप्येवं तथापि द्वयोर्भेदेन कश्चिद्भेदेन विवक्षा तत्रतत्रावगन्तव्या ॥ २९ ॥

तदेतदभिप्रेत्याह—यावदिति । पराक्रान्तुमित्यनेन तत्पूर्वमपि किञ्चित्कालं व्याप्य प्रविष्टोऽस्तीति ज्ञापितम् ॥ ३०-४४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नवमारभ्योपक्रान्तां कथामुपसंहरति—येऽतीता इति ॥ २५ ॥

एतद्वर्षसहस्रमित्यत्रैव सङ्ख्या प्रामाणिकत्वात् परीक्षित्समकालवर्तिमार्जारिप्रभृतीनामानन्त्यात् भोगकालसङ्ख्या तु किञ्चिन्न्यून सार्धसहस्रं वर्षाणि भवन्ति तत्तेषां खण्डखण्डप्रतीतानि धिताद्यानन्तर्येण सङ्ख्यानीति ज्ञेयम् ॥ २६ ॥

अथ कलेरुत्पत्तिकालं वृद्धिकालं च निरूपयितुं कालज्ञानविशेषमाह—सप्तर्षीणामित्विति । प्रागग्रं शकटाकारतारासप्तकं सप्तर्षिमण्डलं तत्रोदयसमये पूर्वौ प्रथममुदितौ पुलहक्रतुसञ्ज्ञौ यौ निशि दृश्येते तयोर्मध्यगतमश्विन्याद्यन्यतममेकैकं नक्षत्रं तिष्ठति एकैकं शतवर्षं व्याप्य तेन तेनैव युक्ता ऋषयस्तिष्ठन्तीति नियमः अधुना तु ते मघाश्रिता वर्त्तन्ते इति तेनाश्लेषाश्रितेषु तेषु श्रीकृष्णप्रादुर्भावः मघाश्रितेषु तेषु तदन्तर्धानं कलिप्रवेशश्च पूर्वाषाढाप्राप्तेषु कलेर्वृद्धिरित्युत्तरग्रन्थदृष्ट्या ज्ञेयम् ॥ २७ – २८ ॥

तत्रापि मघास्वेव यदा भगवतो भानुः श्रीकृष्णस्य किरणरूपो वैकुण्ठनाथः दिवं वैकुण्ठं गतः कृष्णाख्यः कृष्णस्येशात्मस्वरूपत्वादित्येष सः भातीति भानुः शुद्धसत्त्वात्मको देह इति स्वामिचरणाः ॥ २९ ॥

ननु द्वापरस्य सन्ध्यांशशेषे भगवदवतारमध्य एव यदा दुर्योधनो द्यूतं प्रवर्त्तयामास ततो द्रौपदीवस्त्राकर्षणसमये न भगवद्दृष्टः कलिः पृथिव्यामधिकर्तुं प्रथमशुभमुहूर्तं अकार्षीत भूतं सत्यं तदपि स तदा ऽकिञ्चित्कर एवासीदित्याह—यावदिति । कृष्णावतारमध्ये किल "चतुर्भिर्वर्त्तसे येन पादैर्लोकसुखावहैः" इति पृथिव्युक्तेस्त्रेतायुगतोऽपि धर्मस्य प्राबल्यात् कुतः कलेस्तदा पराक्रम इति भावः ॥ ३० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अतो मघास्थेषु ऋषिषु कृष्णान्तर्धानसमयसमनन्तरमेव एव कलिः प्रविष्ट इत्याह—यदेति। द्वादशाब्दशतात्मक इति-द्विध्येन मानेन सन्ध्यासन्ध्यांशाभ्यां सहेत्यर्थः॥ ३१॥

कलेर्वृद्धिकालमाह—यदेति,॥ ३२॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

नवमस्कन्धमारभ्य मनोर्वंशम्—

"श्रूयतां मानवो वंशः प्राचुर्येण परन्तप!।
न शक्यते विस्तरतो वक्तुं वर्षशतैरपि"॥

इत्यादिनोपक्रान्तं वंशद्वयमुपसंहरति-ये इति। उद्देशतः सङ्क्षेपतः॥ २५॥

प्रथमाध्याये नन्दाभिषेचनानन्तरं यदुक्तं "ततो नृपा भविष्यन्ति शूद्रप्रायास्त्वधार्मिकाः" इति तत्र नन्दाभिषेचनात् पूर्वस्मिन् काले नृपा शुद्धाः एव स कालो मज्जन्मारभ्य नन्दाभिषेचनपर्यन्तः कतिसम्वत्सरात्मक इत्येवाभिवाञ्छितुमाकांक्षयाह आरभ्येति। वर्षाणां सहस्रं दशोत्तरं पञ्चगुणं शतञ्च एतत् दशाधिकं सार्द्धसहस्रं वर्षाणां भवतीत्यर्थः। अभिमन्युसमकालो जरासन्धसुतः सहदेवः परीक्षित्समकालः सहदेवसुतो मार्जारिस्तमारभ्य रिपुञ्जयान्ताः विंशतिराजानः सहस्रसम्वत्सरं भोक्ष्यन्तीत्युक्तं नवस्कन्धे "ये बार्हद्रथभूपाला भाव्याः साहस्रवत्सरम्" इति ततः पञ्चप्रद्योतनाः अष्टत्रिंशोत्तरशतं दश शिशुनागाश्च षष्ट्युत्तरशतत्रयं भोक्ष्यन्ति पृथिवीमित्यग्रेवोक्तत्वात् द्वादशसम्वत्सराणां शिशुनागराजभ्रंशनन्दाभिषेचनयोरन्तरालिकत्वाद्योक्तसम्वत्सरसङ्ख्या सम्यक् सङ्गच्छते पञ्चशब्दस्य पञ्चगुणे व्याख्यां विनोक्तसङ्ख्याविरोधः स्यात्॥२६॥

कदा कलेः प्रवृत्तिः वृद्धिश्चेत्याकाङ्क्षायां तत्प्रवृत्तिं वृद्धिं च वक्तुं कालज्ञानोपलक्षणमाह—सप्तर्षीणामिति द्वाभ्याम्। अत्रेदं बोध्यम् प्रागग्रशकटाकारं तारासप्तकं सप्तर्षिमण्डलं तत्र किञ्चिदुन्नतरेखाग्रस्थानीयो मरीचिस्ततः पश्चादानम्रयुगकन्धराकारो वसिष्ठः सभार्यस्ततः पश्चादीषदुन्नतरेखामूलस्थानीयो-ऽङ्गिराः ततः पश्चाच्चतुरस्रतारचतुष्कं ईशानेऽत्रिस्ततो दक्षिणतः पुलस्त्यस्ततः पश्चिमतः पुलहस्तत उत्तरतः क्रतुः इत्थं संस्थितानां सप्तर्षीणां तु मध्ये यौ पूर्वौ उदितौ पुलहक्रतुसंज्ञौ दृश्येते तयोस्तु मध्ये यत्समं दक्षिणतः समदेशावस्थितमश्विन्यादिषु यदन्यतमं नक्षत्रं दृश्यते॥ २७॥

तेन तथैव युक्ता ऋषयो नृणामब्दशतं तिष्ठन्ति ते च द्विजा त्वदीये कालेऽधुना मघामाश्रिताः सन्ति॥ २८॥

यदा मघामाश्रित्य मुनयः संस्थितास्तदा असौ शास्त्रविषय भूतः मम दृग्गोचरः सत्रैव सर्वोत्तमत्वेन भातीति कृष्णाख्यो भानुः दिवं निजलोकं गतः तदैव च लोकं कलिराविशत् यत् येन हेतुभूतेन यस्मिन्ना जनः पापे रमते ननु कालि-कालान्तरतया किं लोकं [illegible] आह यत यः कलिभङ्ग यतो विष्णोरेव [illegible] इत्यर्थः॥ २९॥

कृष्णाधीनत्वमेव कलेर्दर्शयति-यावदिति। अयमर्थः श्रीकृष्णाग्रे तदाज्ञाया सन्ध्याद्यपेक्षया शनैः प्रविष्टोऽपि पराक्रान्तुमभिभवितुं तु नाशक्नोत्ततस्तत्त्वं इत्यर्थः॥ ३०॥

तस्माद्यथोक्त एव कलिप्रवृत्तिकाल इत्याह-यदेति॥ ३१॥

कलेः प्रवृत्तिकालमुक्त्वा वृद्धिकालमाह—यदेति॥ ३२॥

---

### भाषा टीका।

हे राजन्! जो व्यतीत होचुके, और जो वर्तमान हैं, और जो आगे होने वाले हैं, उन चन्द्रवंशी और सूर्यवंशी राजाओं का वर्णन हमने तुम्हारे सम्मुख नवम स्कन्ध से लेकर अब पर्यंत किया॥ २५॥

राजन्! तुम्हारे जन्म से लेकर जबतक नंदों का अभिषेक होगा, तब तक एक सहस्र एक सौ पंद्रह १११५ वर्ष बीतेंगे (अथवा १५१० वर्ष बीतेंगे)॥ २६॥

आकाश में सप्त ऋषियों के मध्य में उदय काल में जो पूर्व को पुलह और क्रतु ये दो ऋषियों के नक्षत्र देख पड़ते हैं उनके मध्य में उनके समान अश्विनी आदि में से जो नक्षत्र रात्रि में देख पड़ता है॥ २७॥

उसी नक्षत्र से युक्त होकर मनुष्यों के सौ १०० वर्ष तक सप्तऋषि उसी एक नक्षत्र पर स्थित रहते हैं। ये सप्त ऋषि अब इस तुम्हारे समय में मघा नक्षत्र पर हैं॥ २८॥

भगवान् श्रीविष्णु का कृष्ण नामक दिव्य देह जिस समय पर वैकुंठ गमन करता भया, उसी समय से कलियुगभी लोक में प्रवेश करचुका है, क्योंकि—मनुष्यों का चित्त पाप में रमता है॥ २९॥

जब तक रमापति श्रीकृष्णचन्द्र अपने श्रीचरण कमलों से पृथिवी का स्पर्श करते हुए विराजते थे, तब तक कलियुग पृथिवी में अपना पराक्रम करने को समर्थ नहीं हुआ॥ ३०॥

जिस समय से सातों देव ऋषि मघा नक्षत्र पर विचरते हैं तब ही से यह देवताओं के प्रमाण से बारह सौ १२०० वर्ष तक रहने वाला कलियुग प्रवृत्त होता है॥ ३१॥

जब सप्त ऋषि लोग मघा से पूर्वाषाढ़ नक्षत्र पर आवेंगे तब नन्दों के अभिषेक से लेकर यह कलि वृद्धि को प्राप्त होवेगा॥ ३२॥

यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदाऽहनि ।
प्रतिपन्नं कलियुगमिति प्राहुः पुराविदः ॥ ३३ ॥
दिव्याब्दानां सहस्रान्ते चतुर्थे तु पुनः कृतम् ।
भविष्यति यदा नृणां मन आत्मप्रकाशकम् ॥ ३४ ॥
इत्येष मानवो वंशो यथा सङ्ख्यायते भुवि ।
तथा विट्शूद्रविप्राणां तास्ता ज्ञेया युगे युगे ॥ ३५ ॥
एतेषां नामलिङ्गानां पुरुषाणां महात्मनाम् ।
कथामात्रावशिष्टानां कीर्तिरेव स्थिता भुवि ॥ ३६ ॥
देवापिः शन्तनोर्भ्राता मरुश्चेक्ष्वाकुवंशजः ।
कलापग्राम आसाते महायोगबलान्वितौ ॥ ३७ ॥
ताविहैत्य कलेरन्ते वासुदेवानुशिक्षितौ ।
वर्णाश्रमयुतं धर्मं पूर्ववत्प्रथयिष्यतः ॥ ३८ ॥
कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ।
अनेन क्रमयोगेन भुवि प्राणिषु वर्तते ॥ ३९ ॥
राजन्नेते मया प्रोक्ता नरदेवास्तथाऽपरे ।
भूमौ ममत्वं कृत्वाऽन्ते हित्वेमां निधनं गताः ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु यदा कलेर्लिङ्गमुपलभ्यं तदैव प्रविष्ट इति युक्तम् ततः पूर्वमेव प्रवेशस्ततः परं वृद्धिरित्यत्र किं प्रमाणम् ? तत्राऽऽह—यस्मिन्निति । प्रतिपन्नं प्रविष्टमिति ज्ञातम् पुराविदः पूर्वज्ञातारः ॥ ३३ ॥

कलेरनन्तरं कृतयुगप्रवेशमाह—दिव्याब्दानामिति । चतुर्थे कलौ प्रवेशनादब्दपरिमितेनांशेनाऽपि सहातीते सतीत्यर्थः । कृतयुगप्रवेशचिह्नमाह—यदा नृणां मन आत्मप्रकाशकं भविष्यति तदेति ॥ ३४ ॥

राजवंशोक्तां स्थितिं ब्राह्मणादिवंशेष्वप्यतिदिशति—इत्येष इति । यथा याभिरवनीभावस्थाभिः तास्ता भवस्थाः वंशा इति वा पाठः ॥ ३५ ॥

एतत्कीर्तनस्य वैराग्योपयोगितामाह—एतेषामिति । नामैव लिङ्गम् ज्ञापकम् येषां तेषां कथामात्रेणैवावशिष्टानां कीर्तिरेव स्थिता न तु राज्यं पुत्रादयो वा ॥ ३६ ॥

कलावुत्सन्नानां राजवंशानां पुनः प्रवृत्तिप्रकारमाह—देवापिः सोमवंशजः मरुस्तु सूर्यवंशजः कलापग्रामो नाम योगिनामावासः प्रसिद्धः ॥ ३७ ॥ ३८ ॥

रं प्रतिचतुर्युगं दर्शयति—कृतमिति ॥ ३९ ॥

एतेषां नामलिङ्गानामित्यादि यदुक्तं तत्प्रपञ्चयति—राजन्नि पञ्चभिः ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पराक्रान्तुं न चाशकदित्यनेन प्रविष्टस्यापि कलिपुरुषस्य भगवत्पादपद्मस्पर्शप्रभावात्स्वकार्याक्षमत्वमुक्तं तत्राभिज्ञान्सम्वादयति यस्मिन्निति । यस्मिन्नहनि जातः तस्मिन्नेवाहनि तदापि तस्मिन्नेव क्षणे कलियुगे प्रतिपन्ने स्वकार्यकरणे प्राप्तं प्राहुः पुराविदः कालाभिज्ञाः ॥ ३३ ॥

कलेरनन्तरं कृतयुगप्रवेशमाह—दिव्याब्दानामिति । चतुर्थे कलौ युगे दिव्यानामब्दानां यत्सहस्रं तदन्ते दिव्येन मानेन सहस्राब्दपरिमिते चतुर्थे युगेऽतिक्रान्ते सति इत्यर्थः । द्वादशाब्दशतात्मक इति सन्धिभ्यां सङ्ख्योक्तम् अत्र तु स विना मध्यकालपरिमाणमुक्तम् इत्यतो न विरोधः कृतयुगारम्भकालमुपलक्षणेनाह—यदा नृणां मन आत्मप्रकाशकमित्यात्मस्वरूपगोचरत्वं भविष्यति तदा कृतयुगं भविष्यतीत्यर्थः ॥ ३४ ॥

तत्र प्रजाः कीदृश्यः इत्यभिप्रायमाशङ्क्याह—इत्येष इति । इत्थम्भूत एष मानवः वैवस्वतमनुवंशः यथासङ्ख्यायते [illegible]

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हीयाऽवस्थाभिः सम्यक् वर्धयते कल्पते तथा विट्शूद्रविप्राणां तास्ता अवस्था युगे युगे बोध्या इत्यर्थः ॥ ३५ ॥

किं बहुना वंशानुकीर्तनेनेति तदस्यफलं दर्शयति-एतेषामिति । नामलिङ्गशब्दो मत्वर्थीयाऽर्शआद्यजन्तः एवंविधनामरूपवताम् इत्यर्थः महात्मनाम् इत्यनेन तत्र केषाञ्चिद्भागवतत्वं मत एव तच्चरितस्यावश्यश्रोतव्यत्वादिकञ्च सूच्यते कथामात्रशेषावशिष्टानां नतु नामरूपाऽऽभ्यामनेन तयोरनित्यत्वं सूच्यते तेन च तात्पर्यालोचनतया वैराग्यहेतुत्वं फलितं कीर्तिरेव स्थिता भुवीत्यनेनावश्यम् राजभिः कीर्तिमार्गमर्जितव्यम् इति व्यज्यते ॥ ३६ ॥

ननु, कलापुरस्थराजवंश्यतद्धर्मयोः कुतः पुनः कृते प्रवृत्तिरित्यभिप्रायमालक्ष्याह-देवापिरिति । शान्तनोर्भ्राता देवापिनाम सोमवंश्यः मरुनामेक्ष्वाकुवंश्यजः सूर्यवंश्य इत्यर्थः । तावुभावधुना कलापग्रामे आसाते कलापग्रामो बदर्याश्रमस्थो योगिनामावासः प्रसिद्धः कथम्भूतौ महता योगबलेनान्वितौ ॥ ३७ ॥

ततः किमत आह-ताविति । कलेरन्तः कृतयुगादिः तदा भगवता अनुशिक्षितौ उपदिष्टवर्णाश्रमधर्मौ आदिष्टौ चेह लोके प्रत्यागत्य वर्णाश्रमधर्मं पूर्ववत्प्रवर्तयिष्यतः प्रकटीकरिष्यतः ॥ ३८ ॥

प्रतिचतुर्युगरीतिः कीदृशीत्यभिप्रायमालक्ष्याह-कृतमिति । अनेन क्रमयोगेन निरूपितचतुर्युगक्रमयोगरीत्यैव प्रतिचतुर्युगं प्राणिषु वर्तते निमित्ततया प्रवर्तत इत्यर्थः । इयमेव रीतिः प्रतिचतुर्युगमिति भावः यद्यप्यत्र त्रेताद्वापरयोः प्रकारो नोक्त इत्यनेन क्रमयोगेनेत्यसकृतं तथाप्याद्यन्तयुगरीतिनिरूपणे मध्ययोरपि युगयोर्निरूपितप्रायत्वेनेत्यभिप्रायेण तथोक्तम् ॥ ३९ ॥

कथामात्रावशिष्टानाम् इत्यनेन सूचितं विवृणोति-राजन्निति । हे राजन् ! एते मयाऽधुना निरूपिता वैवस्वतमन्वन्तराऽवस्थाश्च राजानस्तावद्भूमौ ममत्वं ममताबुद्धिं कृत्वाऽन्ते तद्भोगनिमित्तपुण्यावसाने निधनं नाशङ्गताः तेनैव ममत्वेन युता निरयं प्राप्ता इति भावः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृष्णस्य स्वर्गारोहणानन्तरं कलिप्रकाशं हित्वा पश्चादाविष्टः किं करिष्यत तस्मिन्नेवाहनीति सन्देहं व्यवच्छिनत्ति-यस्मिन्निति ॥ ३३ ॥

ततः कियान् कालः कृतप्रारम्भायेति तत्राह-दिव्येति । यदा यस्मिन् कृतयुगे आत्मप्रकाशकं परमात्मप्रकाशकं भवतीति शेषः ॥ ३४ ॥

इतिशब्दः समाप्तिप्रश्नान्तं कथितः एष मानवो वंशः वैवस्वतमनुसम्बन्धी भुवि यथा सङ्ख्यायते तथा विट्शूद्रविप्राणां वंशा अपि युगे युगे ज्ञेयाः बोद्धव्याः इत्यतिदेशोयम् ॥ ३५ ॥

एतेषां सत्त्वे किंज्ञापकमत्राह—एतेषामिति । नामलिङ्गयुक्तानां अनेनैतिह्यं प्रमाणमुक्तं भवति ॥ ३६ ॥

कृते धर्मप्रतिष्ठापकः क इति तत्राह-देवापिरिति । महायोगबलान्वितौ महाज्ञानबलयुक्तौ अणिमाद्यैश्वर्ययुक्तौ वा ॥ ३७ ॥ ३८ ॥

कलियुगान्तमाह—कृतमिति ॥ ३९ ॥

एषामज्ञानमाह-राजन्निति ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, कलेः प्रथमसन्ध्यायां कृष्णोऽवतीर्ण इति नवीना वदन्ति तत्रेत्याह-यस्मिन्निति । अतो युगानां पूर्वयुगसन्ध्यांशशेष एव आरम्भसमय इति यो नियमः सोऽपि कलेर्भगवत्प्रभावादपूर्व एवाभूदिति भावः ॥ ३३ ॥

कृतयुगप्रवेशकालमाह-दिव्येति । चतुर्थे कलौ तदीयसन्ध्यांशशेषसमय इत्यर्थः ॥ ३४ ॥

मानवो वंशो यथा सङ्ख्यायते मनुवंश्यानां यावत्यः सङ्ख्या यथोक्ता इत्यर्थः । तथैव तत्र तत्रत्यानां वैश्यादीनां वैश्यादिवंश्यानामपि तावत्यः सङ्ख्या अनुक्ता अपि ज्ञेयाः ॥ ३५ ॥

नामैव लिङ्गं ज्ञापकं येषाम् ॥ ३६ ॥

कलापुरस्थानां राजवंश्यानां पुनः प्रवृत्तिप्रकारमाह-देवापिः सोमवंश्यजः ॥ ३७ - ३८ ॥

इममेव प्रकारं प्रतिचतुर्युगं दर्शयति-कृतमिति ॥ ३९ - ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यदुक्तं कृष्णाख्योऽसौ दिवङ्गतः तदाविशत्कलिर्लोकमिति तत्रापि कस्मिन्दिने कलिः प्रवृत्त इत्यत्राह—यस्मिन्निति । यस्मिन्नहनि कृष्णो दिवं यातः तस्मिन्नेवाहनि तत्रापि तत्रैव तस्मिन् क्षण एव प्रतिपन्नं प्रवृत्तं कलियुगं भवतीति पुराविदः पूर्वज्ञातारः प्राहुः ॥ ३३ ॥

कलेरनन्तरं कृतयुगप्रवृत्तिं दर्शयति-दिव्याब्दानामिति चतुर्थे कलौ दिव्यानामब्दानां यत्सहस्रं तदन्ते पुनः कृतं भविष्यति सहस्रमिति मुख्यकलियुगाभिप्रायं तच्च सन्ध्यासन्ध्यांशवत्त्वस्य संवत्सरशतद्वयस्याप्युपलक्षणम् द्वादशाब्दशतात्मक इत्युक्तत्वात् तत्प्रवृत्तिचिह्नमाह—यदा नृणां मनः आत्मप्रकाशकं भविष्यति तदा ॥ ३४ ॥

राजवंशोक्तां स्थितिं वर्णान्तरेष्वप्यतिदिशति—इत्येष इति । मानवो वैवस्वतमनुवंशः इक्ष्वाकुप्रभृतिद्वारा ऐलप्रभृतिद्वारा च यथा उत्तममध्यमाधमाभिरवस्थाभिः सम्यक् वर्धयते कल्पते तथा विट्शूद्रविप्राणां युगे युगे वंशाः ज्ञेयाः ॥ ३५ ॥

प्राकृतदेहगेहादीनामनित्यतां वैराग्योत्पादनायाह—एतेषामिति । एतेषां पूर्वोक्तानां महात्मनां स्वधर्मनिष्ठानां श्रोतव्यकीर्तीनां नामलिङ्गानां नामरूपवतां मत्वर्थीयार्शआद्यजन्तो नामलिङ्गशब्दः कथामात्रेणावशिष्टानां कीर्तिरेव भुवि स्थिता नतु देहगेहादिकम् ॥ ३६ ॥ ३७ ॥

ननु, कलापुरस्थानां राजवंश्यादीनां कृते पुनः प्रवृत्तिः कुत इत्यत्राह देवापिरिति ॥ ३८ ॥

अयमेव युगप्रतिप्रकारः आगतानागतेषु सर्वेषु युगेषु बोध्य इत्याह—कृतमिति ॥ ३९ ॥

कृमिविड्भस्मसञ्ज्ञाऽन्ते राजन्नाम्नोऽपि यस्य च ।
भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥ ४१ ॥
कथं सेयमखण्डा भूः पूर्वैर्मे पुरुषैर्धृता ।
मत्पुत्रस्य च पौत्रस्य मत्पूर्वा वंशजस्य वा ॥ ४२ ॥
तेजोऽबन्नमयं कायं गृहीत्वाऽऽत्मतयाऽबुधाः ।
मही ममतया चोभौ हित्वाऽन्तेऽदर्शनं गताः ॥ ४३ ॥
येये भूपतयो राजन्भुञ्जन्ति भुवमोजसा ।
कालेन ते कृताः सर्वे कथामात्राः कथासु च ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां द्वादशस्कन्धे कलिधर्म्मो नाम
द्वितीयोऽध्यायः ॥ २ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एतेषां नामविज्ञानानीति श्लोकार्थं प्रपञ्चयति—राजन्निति पञ्चभिः । अपरे विट्शूद्रविप्राः ॥ ४० ॥

---

भाषा टीका ।

जिस समय जिस दिन श्रीकृष्ण भगवान् स्वधाम को पधारे उसी दिन उसी समय कलियुग आकर प्राप्त हुआ इस प्रकार पहिले जानने वाले लोग कहते हैं ॥ ३३ ॥

देवताओं के सहस्र वर्ष बीतने पर जितना कि—कलियुग का परिमाण है, जिसके पश्चात् फिर सतयुग होवेगा, और उस सतयुग के होने का यही मुख्य निशान होगा, कि—मनुष्यों के मन में आत्मा का स्वरूपज्ञान होजायगा ॥ ३४ ॥

जैसे इस भूमि में यथाक्रम हमने तुम्हारे सामने मानववंश का वर्णन किया, उसीप्रकार वैश्य शूद्र और ब्राह्मणों के वंश की भी जिस २ युग में सह २ व्यवस्था जानना चाहिये ॥ ३५ ॥

एक नाम मात्रही जिन का ज्ञापक ( जताने वाला ) रह गया ऐसे इन महात्मा पुरुषों की केवल कथा मात्रही अवशिष्ट रहगई, और कीर्त्ति उन लोगों की भूमि में अब तक विद्यमान है ॥ ३६ ॥

शन्तनु महाराज के भ्राता चन्द्रवंशी राजा देवापि, और इक्ष्वाकु वंशी राजा मरु, ये दोनों उत्तर में बदरिकाश्रम के समीप महान् योग के बल से कलाप ग्राम में अभी तपस्या कर रहे हैं ॥ ३७ ॥

ये दोनों श्रीवासुदेव भगवान् की शिक्षासे इस कलियुग के अन्त में वर्णाश्रमधर्म की पूर्व सदृश प्रथा बांधेंगे ॥ ३८ ॥

कृतयुग, त्रेता, द्वापर, कलियुग, ये चारों युग पृथिवी में इसी क्रमसे प्राणियों में वर्त्तते हैं ॥ ३९ ॥

हे राजन् ! ये जो हमने तुम्हारे सामने राजा लोग कहे, और इन से अतिरिक्त अन्य बहुत से राजा लोग, इस भूमि में ममत्व कर अन्त में इस को छोड कर मरण को प्राप्त हो गये ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ममत्वं कृत्वेत्यनेन सूचितां भूतद्रोहप्रवृत्तिं निन्दति—कृमीति । राजन्नाम्नो राजेति नाम यस्य तस्यापि देहस्यान्ते कृमयो विष्ठा भस्मेति वा संज्ञा भविष्यति तत्कृते तदर्थं यो भूतध्रुक् भूतेभ्यो द्रुह्यति स किं स्वार्थं वेद ? किन्तु नैव वेद कुतः इत्यपेक्षायां हेतुत्वेन भूतद्रोहं विशिनष्टि—यतो भूतद्रोहान्निरयो भवति ॥ ४१ ॥

ममत्वप्रकारं प्रपञ्चयति—कथमिति । सेयमखण्डा भूमिः पूर्वैर्धृता सती इदानीं मत्पूर्वा च सती मत्पुत्रादेः कथं स्यादिति स्थेयम ॥ ४२ ॥

उभौ महीं कायं च अदर्शनं मृत्युम ॥ ४३ ॥

उपसंहरति-येये इति । ते सर्वे च कथासु क्रियमाणासु कथामात्राः कालेन कृताः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम
द्वितीयोऽध्यायः ॥ २ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने

शुकपक्षीये द्वादशस्कन्धे

द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एतदेव विशदयति—कृमीति । यस्य राजताख्योऽपि शरीरस्यान्ते कृमयो विड् भस्मेति वा संज्ञा भविष्यति तत्कृते तदर्थं भूतेभ्यो द्रुह्यतीति तथा स किं स्वार्थं स्वाहितं वेद ? तत्र हेतुत्वेन भूतद्रोहं विशिनष्टि—यतो भूतद्रोहान्निरयो भवति ॥ ४१ ॥

ममतां कर्तव्यमुक्तं ममताप्रकारं प्रपञ्चयति—कथमिति । येयमखण्डा भूमिर्मम पूर्वजैर्धृता सती मदनन्तरं मत्पूर्वमहमेव पूर्वो भर्ता यस्यास्तथाभूता सती मत्पुत्रादेः कथं स्यादित्येवम् ॥ ४२ ॥

किञ्च, तेज इति । अबुधाः देहातिरिक्तात्मज्ञानविधुरा अत एव तेजोऽन्नपरिणामरूपं कायम् शरीरमात्मतया गृहीत्वाऽभिमत्य महीं तु ममतया गृहीत्वा उभौ पृथ्वीकायौ हित्वाऽन्ते प्रारब्धान्तेऽदर्शनम् क्षयङ्गताः प्राप्ताः ॥ ४३ ॥

कथामात्रावशिष्टानाम् इत्यस्य प्रपञ्चमुपसंहरति—ये य इति । हे राजन् ! ये ये राजानो भुवमोजसा पौरुषेण भुञ्जन्ति ते सर्वे कालेन कृताः समाप्ताः कथासु क्रियमाणासु कथामात्ररूपाः कृताश्च ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां

द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

राजन्नाम्नोऽपि यस्य शरीरस्यान्ते नाशे कृमिविड्भस्मसंज्ञा तादृशं शरीरं प्राप्य भूतध्रुक् स्वार्थं मनुते न परप्रयोजनं यतो भूतद्रोहान्निरयो भवति तं वेद किन्न तदैव यस्य पुरुषशरीरस्यान्ते इति वा ॥ ४१ ॥

स्वार्थमननप्रकारमाह—कथमिति । मदन्तस्यां मत्वानीति भूः येयं मत्पूर्वैः पुरुषैः धृता सेयं भूमिरखण्डा राजान्तराधिकृता कथं स्यान्मत्पुत्रस्य मत्पौत्रस्य च मद्वंशस्य अहं पूर्वो यस्याः सा मत्पूर्वा च कथं स्यादिति मत्वा ॥ ४२ ॥

तेजोऽन्नमिदं कायमात्मतया नित्यत्वेन मुधा गृहीत्वा अमी राजानो ममत्वेन गृहीत्वा उभौ महीं च देहं च हित्वा अदर्शनं मरणं गता भवन्तीत्यन्वयः ॥ ४३ ॥

स्वाश्रयं तेष्वेकोऽपि नास्तीत्याशयेनाह—य इति । पुराणादिगतकथासु कथामात्राः सर्वात्मना कथैव येषां ते तथाकृताः स्वरूपतो न सन्तीति शेषः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इतिश्रीमद्भागवते महापुराणे द्वादशस्कन्धीये

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

द्वितीयोऽध्यायः २ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

राजन्नाम्नोऽपि देहस्य अन्ते मरणे सति कृम्यादिकमेव नाम भवेत् तस्य देहस्य कृते ॥ ४१ ॥

ममत्वप्रकारमभिनयेन दर्शयति—कथमिति । मत्पूर्वा च सती मत्पुत्रादेः कथं स्यादित्येवम् ॥ ४२ ॥

कायम् आत्मतया महीं च ममतया गृहीत्वा उभौ महीकायौ अदर्शनं मृत्युम् ॥ ४३ – ४४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

द्वादशस्य द्वितीयोऽयं सङ्गतः सङ्गतः सताम् ॥ २ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं निधनार्हदेहादिमतो देहाद्यर्थमकृत्यकारिणो मूर्खत्वं नरकार्हत्वञ्चाह—कृमीति । राजेति नाम यस्य तस्यापि देहस्यान्ते कृम्यादिसंज्ञा भविष्यति तत्कृते देहस्य कृते यो भूतध्रुक् प्राणिद्रोही द्रुह्यति स भूतद्रोही किं स्वार्थं वेद न किमपि तत्र स्वार्थः परार्थो नास्ति अपितु यतो भूतद्रोहान्निरय एव ॥ ४१ ॥

भूमौ ममत्वं कुर्वन्ति यदुक्तं तत्प्रपञ्चयति—कथमिति । या मे मम पूर्वैर्धृता सेयमखण्डा सकला मत्पूर्वा अहं पुत्राद्यपेक्षया पूर्वः भर्ता यस्यास्तथाभूता सती मत्पुत्रादेः कथं स्यादिति ॥ ४२ ॥

किञ्च कायमात्मतया महीं ममतया च गृहीत्वा अन्ते जीवनान्ते उभयं हित्वा अदर्शनं क्षयं गताः यतोऽबुधाः ॥ ४३ ॥

उक्तां देहगेहाद्यनित्यतामुपसंहरति—ये इति । ये ये भुवम् ओजसा पौरुषेण भुञ्जन्ति ते सर्वे कथासु क्रियमाणासु कथामात्राः कालेन कृताः अतः सर्वं प्राकृतं देहादिकं निरोधविषयमतस्तत्र विरक्तः सन् हरिं भजेदिति फलितोऽर्थः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

द्वितीयाध्यायार्थप्रकाशः ॥ २ ॥

---

भाषा टीका।

जिस देह का राजा यह नाम है, अन्त में उसी देह की कृमि, विष्ठा, और भस्म, ये तीन संज्ञा होती हैं, उसी देह के निमित्त यह पुरुष प्राणियों से द्रोह करता है, वह क्या स्वार्थ जानता है,? किन्तु नहीं जानता, क्योंकि? जिस भूत द्रोह करने से इसको नरक होता है ॥ ४१ ॥

राजा लोग ऐसा विचार करते है, कि—यह अखण्ड भूमि का राज्य हमारे पहिले पुरुषाओं ने भोगा, और आज कल हम भोगते हैं परन्तु यह हमारे पुत्र पौत्र और वंश के इस राज्यको किस प्रकार निर्विघ्न भोगेंगे ॥ ४२ ॥

हे राजन्! इस प्रकार लोभ विचार करते हुए निर्बुद्धि लोगों ने जिस तेज जल अन्नमय शरीर को आत्मा करके मान रखा है उस देह को, और जिसको "यह मेरी है" इस प्रकार मान रखा है, उस पृथिवी को इन दोनों को भी छोड़कर आप ही अदर्शन को प्राप्त हो गये और हो जाते हैं ॥ ४३ ॥

हे राजन्! जिन २ राजा लोगों ने भूमि (धन) को बलात्कार (जबरदस्ती) से भोगा है, उनही राजाओं की काल कथाओं के बीच में कथा मात्र अवशिष्ट रही है ॥ ४४ ॥

इति श्रीमद्भागवत द्वादशस्कन्ध में द्वितीय अध्यायकी,

श्रीवृन्दावनस्थ पं० भागवताचार्यकृत

भाषा टीका समाप्त ॥ २ ॥

—————

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

—————

# तृतीयोऽध्यायः ।

श्रीशुक उवाच ।

दृष्ट्वाऽऽत्मनि जये व्यग्रान्नृपान् हसति भूरियम् ।
अहो मां विजिगीषन्ति मृत्योः क्रीडनका नृपाः ॥ १ ॥
काम एष नरेन्द्राणां मोघः स्याद्विदुषामपि ।
येन फेनोपमे पिण्डे येऽतिविश्रम्भिता नृपाः ॥ २ ॥
पूर्वं निर्जित्य षड्वर्गं जेष्यामो राजमन्त्रिणः ।
ततः सचिवपौराप्तकरीन्द्रानस्य कण्टकान् ॥ ३ ॥
एवं क्रमेण जेष्यामः पृथ्वीं सागरमेखलाम् ।
इत्याशाबद्धहृदया न पश्यन्त्यन्तिकेऽन्तकम् ॥ ४ ॥
समुद्रावरणाञ्जित्वा मां विशन्त्यब्धिमोजसा ।
कियदात्मजयस्यैतन्मुक्तिरात्मजये फलम् ॥ ५ ॥
यां विसृज्यैवमनवस्तत्सुताश्च कुरूद्वह ! ।
गता यथागतं युद्धे तां मां जेष्यन्त्यबुद्धयः ॥ ६ ॥
मत्कृते पितृपुत्राणां भ्रातॄणां चापि विग्रहः ।
जायते ह्यसतां राज्ये ममताबद्धचेतसाम् ॥ ७ ॥
ममैवेयं मही कृत्स्ना न ते मूढेति वादिनः ।
स्पर्द्धमाना मिथो घ्नन्ति म्रियन्ते मत्कृते नृपाः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तृतीये भूमिगीतैश्च राज्ञां दोषादि वर्ण्यते ।
कलौ च दोषभूयिष्ठे दोषहन्त्री हरेर्नतिः ॥

देहेऽहन्तां भूमौ च ममतां कुर्वन्त्यतोऽबुधा इत्युक्तं तदेव भूमिगीतैः प्रपञ्चयति—दृष्ट्वेत्यादिना । आत्मनि पृथिव्यां जये व्यग्रानुद्युक्तान् हासप्रकारमेवाह—अहो इति । मा माम् ॥ १ ॥

येन कामेन फेनोपमे पिण्डे देहेऽतिविश्रम्भिता विश्वासं नीता ये तेषां नरेन्द्राणामेष कामो मोघ एव स्यात् ॥ २ ॥

काममेव दर्शयति—द्वाभ्याम् पूर्वमिति । इन्द्रियाणामजयतश्च न राज्यप्राप्तिः स्यादिति प्रथममिन्द्रियषड्वर्गं निर्जित्य राजमन्त्रिणो जेष्यामो वशीकरिष्यामः सचिवा अमात्याः करीन्द्रा हस्तिपास्तांश्च जेष्यामः कण्टकान् प्रतिपक्षान् अस्य अपास्य अथ कण्टकानिति वा पाठः ॥ ३-४ ॥

एवं केचिदाशाबद्धहृदया एवं केचिन्मां पुनर्जित्वाऽपि तृष्णया अब्धिं विशन्ति तदेवमिन्द्रियजयेन ये राज्यं साधयितुमिच्छन्ति तेऽतिमन्दा इत्याह—कियदिति ॥ ५ ॥

अन्तकं न पश्यन्तीत्युक्तं तदेवाऽऽह—यामिति । कुरूद्वहेति भूमिगीतं कथयन् शुकः सम्बोधयति कुलोद्वह इति तु पाठः सुगमः ॥ ६ ॥

अबुद्धय इत्युक्तम् तत्प्रपञ्चयति ॥ ७ ॥ ८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १ ॥
पिण्डे शरीरे ॥ २ ॥
अब्धिं विशन्ति द्वीपान्तरानभिजयन्ति ॥ ३—१३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

प्रपञ्चितां ममतां महीहासेन सम्वादेन वैराग्यमुत्पादयन् कलिदोषाणां प्रपञ्चं तन्निरसनोपायमुपदिशति तृतीयेन—दृष्ट्वात्म-विजय इत्यादिना। आत्मनि भूमौ निमित्ते यो विजयः तस्मिन् व्यग्रानुत्सुकान् दृष्ट्वा इदं भूर्हसति, हासमेव प्रपञ्चयति—अहो इत्यादिभिः सार्धद्वादशभिः। मृत्योः क्रीडनकास्तद्धर्मा इमे नृपाः मां विजिगीषन्ति विजयेन मां भोक्तुमिच्छन्तीत्यर्थः ॥ १ ॥

काम इति विदुषामपि। पित्रादिदृष्टान्तेन मृत्युवश्यतां पश्यतामपि अयं कामः विजिगीषात्मकेच्छाविशेषः मोघः व्यर्थः मोक्षस्य हेतुतया कामं विशिनष्टि—येन कामेन फेनोपमे अशुद्धबुद्बुदतुल्ये पिण्डे शरीरे ये नृपाः अतीव विस्रम्भिताः विश्वासं नीताः तेषां नरेन्द्राणामिति पूर्वेणान्वयः ॥ २ ॥

विजिगीषुतां प्रपञ्चयति—सार्धश्लोकाभ्यां पूर्वमिति। इन्द्रिय-षड्वर्गस्य न राज्यप्राप्तिः स्यादिति तावत् षड्वर्गम् इन्द्रियषट्कं जित्वा तद्द्वारा देवताप्रसादमधिगत्येति भावः। क्रमेण राजमन्त्रि-प्रकृतीनश्च भूमण्डलस्य कण्टकतुल्यान् जेष्यामः तत्र सचिवा अमात्या अवान्तरव्यापारिणः पौराः पुरे भवाः तेषामाप्ताः करीन्द्रा हस्तिपाश्च तान् ॥ ३ ॥

ततः सागराः मेखला यस्यास्तां मेखलयेव सागरेण परिवृताम् इत्यर्थः। पृथ्वीं जेष्यामः स्वाधीनां करिष्यामः इतीत्थं-भूताशया बद्धम् हृदयम् येषां ते अन्तिके समीपे वर्तमानमन्तकं मृत्युं न पश्यन्ति नावलोकयन्ति किन्तु मां समुद्रावरणां जित्वा ततोऽब्धिं विशन्ति द्वीपान्तराणि प्रविशन्ति तान् विजिगीषन्ति इत्यर्थः। तावत्कृतस्येन्द्रियजयस्य नेदं फलमित्याह—कियदिति। एतत् कृत्स्नभूमण्डलस्य सप्तद्वीपस्यात्माधीनताप्रापण-मित्येतत् कियत्फलं न किञ्चिदेवेत्यर्थः। तत्फलस्य नश्वरत्वा-दिति भावः। किं तर्हि फलमित्यत आह—मुक्तिरात्मजयं तावत् फलमिति ॥ ४ ॥ ५ ॥

एतदेवोपपादयति—यामिति। कुरूद्वहेति सम्बोधनं भूमिगीतिं कथयन् शुकः सम्बोधयति कुरूद्वहेत्यपि पाठः सुगमः। तत्-सुता मनुपुत्राश्च यां मां विसृज्यैव गताः मृताः तथा तां विजित्य विसृष्टामपि अबुद्धयो बुद्धिरहिताः युद्धे जेष्यन्ति युद्धेन वशी-करिष्यन्तीत्यर्थः। गतमित्यस्य तैरिति शेषः। तेऽप्येवमेव गमिष्य-न्तीत्यर्थः। अत्यन्तसादृश्येनाभेदमारोप्य गतमिति भूतनिर्देशः ॥ ६ ॥

अबुद्धितां प्रपञ्चयति मत्कृते इति। मत्कृते मदर्थं विग्रहः विरोधः जायते तत्र हेतुत्वेन तान् विशिनष्टि राज्ये ममताभिमानेन बद्धं चेतो येषां तेषामत एव चासतां दुरात्मनाम् ॥ ७ ॥

ममताबद्धचेतस्त्वमेवाभिनयेन दर्शयन्ती तत्प्रयुक्तममत्कर्म दर्शयति—ममैवेति। हे मूढ न तवेयं भूमिर्न भवति किन्तु ममैवेति वादान् कुर्वन्तः मिथः घ्नन्ति ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

चतुर्युगधर्मविभागः कलिदोषपरिहारश्चेत्येतद्द्वयमस्मिन्नध्याये [illegible] श्रीभूमिगीतेन भूमेः [illegible] दृष्ट्वेति। आत्मनो नितरां जये [illegible] ॥ १ ॥

मौढ्यत्वमुपपादयति, येनेति ॥ २ ॥

कीदृशस्तेषां कामः? इति तत्राह—पूर्वमिति। षड्वर्गं सन्ध्यादि-षड्गुणं निर्जयो नामोत्कर्षः षाड्गुण्यविषयं वा अनेन भूम्येक-साधनाग्रहं सूचयति—राजमन्त्रिणः राजा च मन्त्रिणश्च राज-मन्त्रिणः मन्त्री बुद्धिसहायः स्यादिति ततो मन्त्रिजनानन्तरं सचिवः कर्मसहायः "अमात्याः कर्मसचिवाः" इत्यमरः। आप्ताः विश्वस्ताः अथ पश्चात्कण्टकान् क्षुद्रशत्रून् ॥ ३ ॥

एवं क्रमेण राज्ञो जित्वा पृथ्वीं जेष्यामः वशीकरिष्यामः इत्याशयातितृष्णया अन्तकं मृत्युम् ॥ ४ ॥

एवं केचित्पुनः मां जित्वाऽप्यतितृष्णयाऽब्धिं विशन्तीत्यनेन द्वितीयादिजयाद्यं सूचयति—भूजयादिना न किमपि प्रयोजनमपि त्वन्ततोऽनर्थ एवावशिष्यते मनोजयफलापेक्षयेत्याह—किय-दिति। आत्मजयस्य मनोजयस्य फलापेक्षयैतद् भूजयादिकं कियत् फलम् आत्मजयं किं फलं येनायमेव साध्यः स्यादिति तत्राह मुक्तिरिति आत्मजये मुक्तिरेव फलं यस्मात्तस्मादिति शेषः ॥ ५ ॥

इतोऽपि मज्जयकामा अज्ञा एवेत्याह—यामिति। मनवस्तत्-सुताश्च यां मां विसृज्य यथा गता याताः अबुधयः तां मां जेष्यन्तीत्यन्वयः आत्मजयवतां त्यागशक्तिरन्येषामन्यथेति सूच-यति ॥ ६ ॥

न केवलमितरेषां मत्कृते विग्रहोऽपि तु शरीरसम्बन्धिनामपि स्यादित्याह—मत्कृत इति, अपिशब्दः पुत्रादीनामित्यनेन सम्ब-न्धयितव्यः अयमपि प्रायिक इत्याह—असतामिति। असतामप्रशस्त-कर्मणाम् ॥ ७ ॥

किं प्रकारो विग्रह इति तत्राह—ममेति ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

॥ १-८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

तृतीये तु भुवो हास्यं धर्मपादव्यवस्थितिः।
कलेर्दोषा वाधहारि हरिस्मरणमुच्यते ॥

कथं सेयमखण्डा भूरित्यनुध्यानां मनोरथ उक्तस्तमेव पृथिव्या-वर्णनेन प्रपञ्चयति—दृष्ट्वेति। मा माम ॥ १ ॥

येन कामेन पिण्डे देहे ॥ २ ॥

काममेव दर्शयति—पूर्वमिति द्वाभ्याम्। तत्रेन्द्रियार्थषट्कस्य राज्यप्राप्तिर्न स्यादतः प्रथममिन्द्रियषड्वर्गं जित्वा अस्य मत्प्रति-पक्षनृपस्य ॥ ३ ॥ ४ ॥

मां पृथ्वीं जित्वा अतितृष्णया अब्धिं विशन्ति तद्द्वीपान्तरमा-न्याहर्तुमिति भावः। एवमिन्द्रियजयेन ये साधयितुमिच्छन्ति ते मन्दा इत्याह—कियदिति, ॥ ५ ॥

यथागतं यथाज्ञानं स्वस्वज्ञानमनतिक्रम्य विरक्ता मुक्त्वा वनं गता इत्यर्थः। तां मामेते मन्दा युद्धे जेष्यन्ति ॥ ६-८ ॥

---

पृथुः पुरूरवा गाधिर्नहुषो भरतोऽर्जुनः ।
मान्धाता सगरो रामः खट्वाङ्गो धुन्धुहा रघुः ॥ ९ ॥
तृणबिन्दुर्ययातिश्च शर्यातिः शन्तनुर्गयः ।
भगीरथः कुवलयाश्वः ककुत्स्थो नैषधो नृगः ॥ १० ॥
हिरण्यकशिपुर्वृत्रो रावणो लोकरावणः ।
नमुचिः शम्बरो भौमो हिरण्याक्षोऽथ तारकः ॥ ११ ॥
अन्ये च बहवो दैत्या राजानो ये महेश्वराः ।
सर्वे सर्वविदः शूराः सर्वे सर्वजितोऽजिताः ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

"तेजोऽबन्नमयं देहं गृहीत्वाऽऽत्मतया ऽबुधाः" इत्यत्रोक्तमबुधत्वं प्रपञ्चयन् कलिदोषान् नजिघृक्षुपायमाह–तृतीयेनाध्यायेन दृष्ट्वेति। आत्मनि भुवि वो जयः तत्र ऽव्यग्रान् ऽव्याकुलान् दृष्ट्वा इयं भूर्हसति हासप्रकारमाह–अहो इति सार्द्धैर्द्वादशभिः ॥ १ ॥

येन कामेन पिण्डे देहे अतिविश्रम्भिताः अतिविश्वासं नीताः स एव नरेन्द्राणां विदुषामपि किमुत मूर्खाणां कामः विजिगीषालक्षणः मोघो ऽव्यर्थः एव स्यात् ॥ २ ॥

काममेव दर्शयति–आदौ पूर्वमिति । "नचाविनिर्जितषड्वर्गो राजा वै राज्यमर्हति" इत्यतः पूर्वं षड्वर्गमिन्द्रियषट्कं निर्जित्य ततः क्रमेण राजमन्त्र्यादीन् अस्य भूविजयस्य कण्टकतुल्यान् जेष्यामः वशीकरिष्यामः तत्र सचिवाः अमात्याः पौराः पुरे भवाः राजहितैषिणो धनिनः आप्ताः राजपूज्याः करीन्द्राः हस्तिपाः ॥ ३ ॥ ४ ॥

हेवारकेचिन्मां जित्वापि सन्तोषं न कुर्वन्तीत्याह–क्रमेण समुद्रावरणामिति। षड्वर्गजयस्य नैवं फलं किन्तु मुक्तिरिति दर्शयति–कियादिति । एतत् भूविजयादिकम् आत्मजयस्य इन्द्रियमनोजयस्य कियत्फलं न किञ्चदपि ॥ ५ ॥

हे कुरूद्वह ! युधिष्ठिर ! रूपेण कुरूनुद्वहतीति स तथा हे अर्थ अनेन धर्म प्रति भूमिगीतं भूम्योपादिष्टमिति गम्यते ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

भाषा टीका ।

श्रीशुक उवाच ॥

श्रीशुकदेव जी बोले, कि—हे राजन् ! यह पृथिवी अपने (पृथिवी के) जीतने में व्यग्र होने वाले राजाओं को देखकर हँसती है, कि—अहो ! ये मृत्यु के खिलोने मेरे जीतने की इच्छा करते हैं ॥ १ ॥

वह राजा लोगों का मनोरथ व्यर्थ होजाता है, राजाओं की तो बात ही क्या है, किन्तु बडे २ विद्वानों का भी वह मनोरथ व्यर्थ हो जाता है, जिस मनोरथ से फेन के ढेल सदृश इस पिण्ड (शरीर) में बडे२ राजा लोग विश्वास को प्राप्त हुए हैं ॥ २ ॥

राजा लोग क्या मनोरथ करते हैं, कि—हम प्रथम तो षट् इन्द्रिय रूप शत्रुओं को जीतेंगे क्योंकि जो इन्द्रिय लम्पट होगा उसको राज्य की प्राप्ति कैसे हो सकती है। फिर इन्द्रियों को जीतकर राजमन्त्रियों को वश करेंगे, तदनन्तर सचिव (अमात्य) लोगों को वश करेंगे (यहां पर सलाह देनेवाले मन्त्री और सचिव वह जिसको दीवान कहते हैं) इन को वश करके पुरवासी आप्तजन और महावत प्रभृति कामवाले लोगों को वश करेंगे, जिसके पश्चात् राज्य में जो कण्टक रूप होंगे तिन्हों को निकास कर अलग करेंगे ॥ ३ ॥

इस प्रकार समुद्र जिसकी मेखला है उस समग्र पृथिवी को जीतेंगे—इस प्रकार की आशा से जिन्हों का हृदय बँध रहा है वे लोग अपने समीप ही में आनेवाले काल को नहीं देखते हैं ॥ ४ ॥

कितने एक राजा लोग समुद्रसे घिरी हुई भी पृथिवी को जीतकर द्वीपांतर की विजय अथवा रत्नों के लोभ से समुद्र में प्रवेश करते हैं। परन्तु जब मन को जीत लिया तब पृथिवी को जीतना तुच्छ है क्योंकि ? मन के जीतने से तो मुक्ति पर्यंत फल मिल-सकता है ॥ ५ ॥

जिस मेरे लिये छोड़कर मनुलोग और उन के पुत्र-लोग प्रियव्रतादि जैसे आये वैसे ही चले गये, तिस मेरे को ये निर्बुद्धि क्षुद्र राजा लोग क्या जीतेंगे ॥ ६ ॥

मेरे लिये ही पिता पुत्र और भ्राताओं का भी विग्रह (लडाई) होजाता है, यदि अभक्त हों तो, क्यों कि ? उन-का चित्त ममता से बन्धा हुआ रहता है ॥ ७ ॥

हे मूढ ! यह समग्र पृथिवी हमारी है तेरी नहीं इस प्रकार कहते हुए परस्पर में स्पर्द्धा करते हुवे राजा लोग मारते हैं और मरते हैं ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

रामो नाम कश्चिद्राजा । यद्वा, लोकरक्षया दाशरथिरेव निर्दिष्टः ॥ ९ ॥ १० ॥

लोकं रावयति रोदयतीति लोकरावणः ॥ ११ ॥ १२ ॥

ममतां मय्यवर्तन्त कृत्वोच्चैर्मर्त्यधर्मिणः ।
कथाऽवशेषाः कालेन ह्यकृतार्थाः कृता विभो ! ॥ १३ ॥

कथा इमास्ते कथिता महीयसां विताय लोकेषु यशः परेयुषाम् ।
विज्ञानवैराग्यविवक्षया विभो ! वचोविभूतीर्न तु पारमार्थ्यम् ॥ १४ ॥

यस्तूत्तमश्लोकगुणानुवादः सङ्गीयतेऽभीक्ष्णममङ्गलघ्नः ।
तमेव नित्यं शृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समानः ॥ १५ ॥

राजोवाच ।

केनोपायेन भगवन् ! कलेर्दोषान् कलौ जनाः ।
विधमिष्यन्त्युपचितांस्तन्मे ब्रूहि यथा मुने ! ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मयि उच्चैर्ममतां कृत्वा येऽवर्तन्त ते कालेन कथावशेषाः कृताः विभो इति सम्बोधनं कुरुश्रेष्ठेतिवत् ॥ १३ ॥

राजवंशानुकथनस्य तात्पर्यमाह—कथा इमा इति । विज्ञानं विषयाऽसारताज्ञानं ततो वैराग्यं तयोर्विवक्षया परेयुषां मृतानां वचोविभूतीर्वाग्विलासमात्ररूपा न तु पारमार्थ्यं परमार्थे युक्तं कथनं न भवतीत्यर्थः ॥ १४ ॥

कस्तर्हि पुरुषाणामुपादेयः परमार्थस्तमाह—यस्त्विति । नित्यं प्रत्यहम् तत्राऽप्यभीक्ष्णम् ॥ १५ ॥

कलिदोषोपचये सति भक्तेरसम्भवं मन्यमानः पृच्छति—केनोपायेनेति । विधमिष्यन्ति नाशयिष्यन्ति यथा यथावत् ॥ १६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

न तु पारमार्थ्यात् न तु पुरुषार्थभूतत्वादित्यर्थः ॥ १४ ॥
यस्त्विति तथा विशेष्यम् ॥ १५—१६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतरैरजिताश्च के पुनस्ते नृपा इत्यतस्तान् कांश्चिद्दर्शयति, पृथुरिति । अर्जुनः कार्तवीर्यः रामो नाम कश्चिद्राजा नतु दाशरथिः धुन्धुहा धुन्धुमारः ॥ ९ ॥ १० ॥

लोकं रावयति मारयतीति लोकरावणो रावणः भौमो नरकासुरः ॥ ११ ॥

ये केऽप्यन्ये दैत्या राजानश्च महीश्वराः पृथिवीपतयः ते सर्व एव यद्यपि सर्वतः इतरैरजिताश्च ॥ १२ ॥

मय्यप्युच्चैरधिकां ममतां कृत्वाऽवर्तन्त कञ्चित्कालमिति शेषः मर्त्यधर्मिण इति हेतुगर्भम् अतः कालेनाकृतार्थाः असमापितभोगाभिलाषाः कृताः विभो इति सम्बोधनं कुरुश्रेष्ठेतिवद्द्रष्टव्यम् (बोध्यम्) ॥ १३ ॥

राजवंशानुकीर्तनस्य तात्पर्यफलमाह—कथा इति । लोकेषु यशोऽभिताय विस्तार्य परेयुषां परलोकं प्राप्तानां महीयसां माहात्म्ययुक्तानाम् इमाः कथाः ते तुभ्यं कथिताः विज्ञानवैराग्यविवक्षया विज्ञानं विषयाणामसारत्वज्ञानं ततो वैराग्यं तयोर्विवक्षया कथिता इति सम्बन्धः तत्र हेतुत्वेन कथा विशिनष्टि—वचोविभूतीः उत्तरार्धेन प्रथमार्धे द्वितीया वाग्वैभवविषयाः अनेन विशेषणेनाभिप्रेतं विशदयति, नतु पारमार्थ्यमिति परमोऽर्थः पुरुषार्थः तस्य भावः पारमार्थ्यं तन्नतु नहीत्यर्थः न ह्यभिभुक्तेषु भोग्येषु पारमार्थ्यमिति भावः ॥ १४ ॥

कस्तर्हि परमार्थोपाय इत्यत आह—यस्त्विति । सङ्गीयते इत्यस्य सद्भिरित्यादिः उत्तमश्लोकस्य भगवतो गुणानामनुवादः सच अमङ्गलं संसृत्यापादकमशुभं कर्म हन्तीति तथा तमेवमन्वहं तत्राप्यभीक्ष्णं शृणुयात् श्रवणप्रयोजनं श्रवणाधिकारिणं विशिनष्टि—कृष्णेऽमलां भक्तिमभीप्समानः अमलामनन्यप्रयोजनां भक्तिमभीप्समानः कामयमानः श्रवणपरम्परया भगवति दृढा भक्तिर्भविष्यतीति भावः ॥ १५ ॥

तदा नन्दात्प्रभृति एव कलिर्वृद्धिं गमिष्यतीत्युक्तं तत्रावसरनिरूपणानन्तरं के पुनस्ते कलिवृद्धिप्रयुक्तदोषाः ? कश्च निस्तरणोपायः ? के पुनस्तद्युगासाधारणगुणाः ? यावदेतच्चतुर्युगप्रवृत्तिस्ततः कथं वा प्रलयः ? स च कति विधः ? इति पृच्छति राजा—केनेति द्वाभ्याम् । हे भगवन् ! कलौ युगे उपचितान् कलेर्दोषान् केनोपायेन साधनेन विधमिष्यन्ति नाशयिष्यन्ति तत्साधनं मे मह्यं यथावद्ब्रूहि ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्र कांश्चिन्नृपान् निर्दिशति—पृथुरित्यादिना ॥ ९—१२ ॥

एते मर्त्यशरीरधर्मिणः सर्वेऽप्यमर्त्यायां नित्यायां मयि विषये ममतां कृत्वा अकृतार्थाः असाधितपुरुषार्थाः कालेन वाचिना कथावशेषाः कृताः हि यस्मात्तस्मादमीषाम् अज्ञानमहो अत आत्मजयेन भाव्यमित्यर्थः ॥ १३ ॥

निगमयति—कथा इति । लोकेषु यशो विताय विस्तार्य परेयुषां लोकं प्राप्तानां महीयसां मन्वादीनाम् उत्तमानां पुरुषाणामिमाः

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कथास्ते कथिता मयेतिशेषः। किमर्थं कथिता इति तत्राह—विज्ञानेति। वचोविभूतिःवचसां विभूतयो विविधभवनविषया वा विज्ञानवैराग्य-विवक्षया श्रोत्रस्य पुंसो विज्ञानवैराग्ये स्यातामित्यभिप्रेत्य विभुता: ननु पारमार्थ्यं परमार्थं उत्तमार्थो वेद मुक्त्यर्थो भगवांस्तत्-सम्बन्धविवक्षया नैव तस्य विधिनिषेधाविषयत्वात् विज्ञानादिवि-क्षया अपि मयुक्त एव प्राप्तो नान्योक्त इत्याह—वचोविभूतीरिति । अन्यवाचो विभूतयो वचसां बहुत्वाच्च पारमार्थ्यमुत्तम-पुरुषार्थसाधनज्ञानमुद्दिश्य न भवन्तीत्यर्थः । "वाचो विग्लापनं हि तत्" इति श्रुतेः ॥ १४ ॥

कुत इतरा वाचो विभूतयः पुरुषार्थोपयोगिन्यो न स्युरित्यत आह—यत्रेति । यत्र यस्यां वाचि उत्तमश्लोकगुणानुवादः सङ्गीयते पुरुषस्तामेव वाचं शृणुयात् शृणोतीत्यर्थः । श्रीहरिभक्त्यु-त्पादकत्वादितरा वाचो हेया इत्यर्थः "अन्या वाचो विमुञ्चथ" इति श्रुतेः ॥ १५ ॥

ज्ञातकलिदोषपरिहारोऽपि राजा लोकोपकाराय पृच्छति—केनेति । कलौ कलेः दोषान् विधमिष्यन्ति परिहरिष्यन्ति उपचितान् सञ्चितान् तदुपायस्वरूपं वद यथावत् ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पृथुरिति पञ्चकम् ॥ ९ ॥ ११ ॥

अन्ये चेति चकारादन्ते च मयि ममतां कृत्वा मत्य-वर्तन्त तत्र ये महेश्वरा भगवदवतारा भागवता वा ते सर्वे सर्वविदः शूराश्च ज्ञानक्रियाशक्तिभ्यां परमपर्याप्ता इत्यर्थः । अत एव सर्वजितः स्वयमजिताश्च सर्वशब्दश्चात्र तदितरहर्षे-णातिशायित्वविवक्षया च ॥ १२ ॥

ये तु तत्र मर्त्यधर्मिणो मत्स्वभावासक्तास्ते कालेना-कृतार्थाः कथामात्रावशेषिताश्च कृता इत्यर्थः ॥ १३ ॥

तदेव व्यनक्ति—कथा इमा इति द्वाभ्याम् । महीयसां भग-वदवतारभागवतेभ्य इतरेषां महाराजानाम् ॥ १४ ॥

उत्तमश्लोकानां भगवदवताराणां भागवतानां च गुणा-ऽनुवादो यस्तमेव नित्यं शृणुयात् तत्र स्वनिश्चयेनाग्रहं कुर्या-दित्यर्थः । सर्वस्य तस्यापि परमं फलमाह—कृष्ण इति । कृष्णे "कृष्णस्तु भगवान् स्वयम्" इत्यादिना प्रसिद्धे श्रीगोपाल इत्यर्थः ॥ १५—१९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

रामो नाम कश्चिदन्यो राजा न तु दाशरथिरिति स्वामि-चरणाः ॥ ९—१२ ॥

मयि उर्व्यां ममतां कृत्वा येऽवर्तन्त ते काले कथावशेषा अभूवन् किन्तु तेन अकृतार्थाः अपितु कृतार्थाः एव प्राप्तकामा-भीष्टा एव कृताः पर्याप्ताः पूर्णाः एवं रूपगुणादिभि-स्तद्वृत्ति ते कथावशेषा अभूवन् मर्त्याचीनास्त अकृतार्थां धनादि-

विरक्तव्यूहोः विभुतेति भावः । पुनश्चौपचारिकः कृतं "पर्याप्तिः परिपूर्णता" इत्यमरः ॥ १३ ॥

राजवंशकथनस्य तात्पर्यमाह—कथा इति । महीयसां प्रिय-व्रतादीनां परेयुषां परं श्रीभगवत्समीपं प्राप्तानां किमर्थं कथितास्तत्राह—विज्ञानं तेषां भगवदनुभवः वैराग्यं च तयो-र्विवक्षया तेषां तथाचरणम् श्रोतुजना अपि शिक्षन्त्विति भावः । हे विभो ! इति त्वमपि तादृश एको भवसीति भावः किञ्च इमाः कथा वचोविभूतीर्वचसां विभूतयो न भवन्ति किन्तु पारमार्थ्यम् आसां कथानां परमार्थतैव ज्ञेयेत्यर्थः ॥ १४ ॥

तस्मान्महीयसां तेषां कथा नित्यम् शृणुयादेव कृष्णगुणा-ऽनुवादेतु तेभ्यो महद्भ्योऽप्यधिकतमानां कृष्णलीलापरि-कराणां महतां कथाभिर्विचित्रे नित्यमेवं शृणुयादित्याह—य इति । उत्तमश्लोकस्य भगवतो गुणानुवादस्तेषु तेषु स्कन्धेषु क्वचित् क्वचिद्दशमे तु सर्वत्रैव तं नित्यमेव अभीक्ष्णमेव भक्तिमभी-प्समान एव शृणुयादित्यवधारणानुरूपम् ॥ १५ ॥

विधमिष्यन्ति नाशयिष्यन्ति वद यथावत् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मयि ममतां कृत्वा उर्व्यधिपतित्वेनाऽवर्तन्त हे विभो ! विष्णुमूर्ते धर्म ! ॥ १३ ॥

याबद्विषयाणामनित्यताज्ञानं ततो वैराग्यं च न स्यात्ताव-त्तत्साधनभूताः राजवंशकथाः श्रोतव्याः तयोः सिद्धौ तु विशेषतो नित्यं श्रीकृष्णभक्तिसिद्धये तच्चरितं श्रोतव्यमित्याह, कथा इति द्वाभ्याम् । लोकेषु परशिक्षायै यशोवितान विस्तार्य परेयुषां परलोकं गतानां महीयसां महानुभावानाम् इमाः कथाः हे विभो ! राज्यादिवासनात्यागे समर्थ ! ते तुभ्यं विज्ञानं वैराग्य-विवक्षया विज्ञानं विविधानां विषयाणामनित्यताज्ञानं विषयेभ्यो वैराग्यं च तयोर्विवक्षया कथिताः कथानां सत्यतामाह, महा-मुनीनां व्यासादीनां वचोविभूतीः वाग्वैभवविषयाः जानीहि । ननु, प्राप्ततमयायाविभूतिभूतानां हरिभक्तिसाधनत्वमप्यस्तु नेत्याह, न तु पारमार्थ्यमिति । परमार्थः मुक्त्युपायरूपश्रीकृष्ण-भक्तिसाधनं तस्य भावस्तत्त्वम् राजकथानां विज्ञानवैराग्य-साधनत्वं न तु मुक्तिप्रदभक्तिसाधनत्वमित्यर्थः । सामान्यत इद-मुक्तम् अम्बरीषादिकथाश्रवणस्य हरिभक्तिजनकत्वात् ॥ १४ ॥

तर्हि कृष्णभक्तिसाधनं किं तत्राह—यस्त्विति । अमङ्गलं हन्तीति अमङ्गलघ्नः य अभीक्ष्णं पुनःपुनः सम्यक् गीयते वेदैर्मुनिभिश्च तमेव नित्यमनिशं तत्राप्यभीक्ष्णम् ॥ १५ ॥

श्रीकृष्णभक्तिरेव परमपुरुषार्थ इति निर्णीतमतस्तदनुष्ठान-सिद्ध्यर्थं कलिदोषप्रणोपायं युगादिकं च पृच्छति केनेति द्वाभ्याम्, ॥ १६ ॥

---

भाषा टीका ।

पृथु, पुरूरवा, गाधि, नहुष, भरत, सहस्रबाहु, मान्धाता सगर, परशुराम, खट्वाङ्ग, धुन्धुहा, रघु, ॥ ९ ॥

युगानि युगधर्मांश्च मानं प्रलयकल्पयोः ।
कालस्येश्वररूपस्य गतिं विष्णोर्महात्मनः ॥ १७ ॥

श्रीशुक उवाच ।

कृते प्रवर्तते धर्मश्चतुष्पात्तज्जनैर्धृतः ।
सत्यं दया तपो दानमिति पादा विभोर्नृप ! ॥ १८ ॥
सन्तुष्टाः करुणा मैत्राः शान्ता दान्तास्तितिक्षवः ।
आत्मारामाः समदृशः प्रायशः श्रमणा जनाः ॥ १९ ॥
त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः ।
अधर्मपादैरनृतहिंसाऽसन्तोषविग्रहैः ॥ २० ॥
तदा क्रियातपोनिष्ठा नाऽतिहिंस्रा न लम्पटाः ।
त्रैवर्गिकास्त्रयीवृद्धा वर्णा ब्रह्मोत्तरा नृप ! ॥ २१ ॥
तपःसत्यदयादानेष्वर्द्धं ह्रसति द्वापरे ।
हिंसातुष्ट्यनृतद्वेषैर्धर्मस्याधर्मलक्षणैः ॥ २२ ॥
यशस्विनो महाशालाः स्वाध्यायाध्ययने रताः ।
आढ्याः कुटुम्बिनो हृष्टा वर्णाः क्षत्रद्विजोत्तराः ॥ २३ ॥
कलौ तु धर्महेतूनां तुर्यांशोऽधर्महेतुभिः ।
एधमानैः क्षीयमाणो ह्यन्ते सोऽपि विनङ्क्ष्यति ॥ २४ ॥

भाषा टीका ।

तृणबिन्दु, ययाति, शर्याति, शन्तनु, गय, भगीरथ, कुवलयाश्व, ककुत्स्थ, नैषध, नृग, ॥ १० ॥

हिरण्यकशिपु, वृत्रासुर, लोकों को रुलाने वाला रावण, नमुचि, शम्बरासुर, भौमासुर, हिरण्याक्ष, और तारकासुर ॥११॥

और बहुत से दैत्य लोग, राजा लोग, जो कि—बड़े ईश्वर ( समर्थ ) कहलाते थे, वे सबही सब को जीतनेवाले और आप किसीसे न जीते जावें ऐसे प्रतापी हुवे ॥ १२ ॥

और वे सब ही मेरे विषें बड़ा ममत्व रखकर वर्त्तते रहे। परन्तु हे राजन्! पृथिवी कहती है, कि—उन सबों को कालने, अकृतार्थ ही करके कथा मात्र में अवशिष्ट रहने दिये और उनका नाम निशान कुछ नहीं रहने दिया ॥ १३ ॥

इस लोक में अपने यश को विस्तारकर परमात्मा को प्राप्त होनेवाले महात्पुरुषों की ये कथा हमने विज्ञान और वैराग्य के कहने की इच्छा से कहीं, हे विभो! राजन्! यह लौकिक वैभव तो केवल वाणी काही विलास है कुछ स्थिर स्वभाव से रहने वाला नहीं है ॥ १४ ॥

जो पुरुष श्रीकृष्णचन्द्र के विषय में निर्मल भक्ति की चाहना करने वाला हो तो निरन्तर अमङ्गलों ( अशुभों ) का नाश करने वाला उत्तमश्लोक श्रीकृष्णचन्द्र का जो गुणानुवाद गाया जाता है, उसी गुणानुवाद को निरन्तर श्रवण करे ॥ १५ ॥

राजोवाच ।

राजा बोले, कि—हे मुने! हे भगवन्! कलियुग के मनुष्य बढ़े हुए कलि दोषों को किसप्रकार दूर करेंगे वह उपाय आप यथा योग्य कहिये ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कलियुगे कः परो धर्म इति । बुभुत्सया पृच्छति—युगानीति । बुद्धीत्यनुषङ्गः, आत्यन्तिकप्रलयजिज्ञासया पुनः पृच्छति प्रलय-कल्पयोः संहारस्थितिकालयोः मानं बहिर्मुखः प्रश्न इत्याह—कालस्येति ॥ १७ ॥

तत्र युगधर्मांस्तावदाह—कृत इति । तज्जनैस्तत्कालीनैर्जनैः दानमरागद्वेषतयाऽभयदानं तदेव प्रथमस्कन्धे शौचशब्देनोक्तं विभोः सम्पूर्णस्य धर्मस्य ॥ ॥ १८ ॥

तदानीन्तनजनानाह—सन्तुष्टा इति । मैत्रा भूतमैत्रीयुक्ताः श्रमणा आत्माभ्यासवन्तः ॥ १९ ॥

## श्रीधरस्वामिकृतभावार्थदीपिका।

अनृतेन सत्यं हिंसया दया असन्तोषेण तपः विग्रहेण दानमिति यथाक्रमं योज्यम् ॥ २० ॥

ब्रह्मोत्तरा ब्राह्मणाधिकाः ॥ २१ ॥

हिंसाऽतुष्ट्यनृतद्वेषैरित्यत्र क्रमो न विवक्षितः धर्मस्यार्धं ह्रसति क्षीयते अधर्मस्य लक्षणैस्त्रिभिः पादैरित्यर्थः ॥ २२ ॥

बह्वाशिनः कीर्तिप्रियाः क्षत्रद्विजोत्तराः क्षत्रियब्राह्मणप्रधानाः ॥ २३ ॥

कलौ धर्मपादानां तुर्यांशस्तुर्यांशोऽवशिष्यते ॥ २४ ॥

---

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अधर्मपादैरिति असन्तोषो नाम लोभकार्यो दानप्रतिभटः क्रोधकार्यो विग्रहः, तत्प्रतिभटकामविकाराणामप्युपलक्षणार्थो विग्रहः कामस्यापि तपः प्रतिभटत्वात् ॥ २० ॥ २१ ॥

हिंसातुष्ट्यनृतद्वेषैरिति अतुष्टिरभिसन्धिः द्वेषं विग्रहमूलमन्तर्भेदम् ॥ २२ ॥

महाशाला महागृहाः ॥ २३—४३ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

प्रलयस्य मानं वैविध्यं मानं निशामयेति-कालस्येति। ईश्वरस्य रूपं शरीरं तस्य कालस्य गतिं प्रवृत्तिं ब्रूहीति सम्बन्धः महात्मन इति विशेषणसामर्थ्यादीश्वरस्यैव विशेषणम् ॥ १७ ॥

तत्र तावद्युगधर्मानाह-कृत इत्यादिना यन्नामधेयमित्यतः प्राक्तनेन। चत्वारः पादा यस्य स चतुष्पाद्धर्मः तज्जनैः कृतयुगजनैर्धृतः प्रवर्त्तते के पुनस्ते पादाः इत्यत आह-सत्यमिति। हे नृप विभोः पूर्णस्य धर्मस्य ॥ १८ ॥

कार्तयुगान् जनान् वर्णयति-सन्तुष्टा इति । अस्य दैवाल्लब्धेनेत्यादिः करुणाः परदुःखनिराचिकीर्षवः भूतमैत्रीयुक्ताः तितिक्षवः द्वन्द्वसहिष्णवः समदृशः जातिगुणादितारतम्यानादरेण सर्वस्य श्रीभगवदात्मकत्वदर्शिनः श्रमणाः तपश्चर्यादिप्रयुक्तकायक्लेशयुक्ताः ननु सर्वेऽप्येवंविधाश्चेन्मुक्ता एव स्युरिति न युगान्तरप्रवृत्तिरित्याशङ्कस्य व्यावृत्तये प्रायश इत्युक्तम् एवंविधा इत्यर्थः ॥ १९ ॥

त्रेतायामिति अधर्मस्य पादैरनृतादिभिर्धर्मस्य पादानां तुर्यांशः शनैर्हीयते प्रतिपादं चतुर्थांशः क्षीयते असन्तोषेति छेदः विग्रहः भूतविरोधः क्रमेणैतैः सत्यादीनां तुरीयांशा हीयन्त इत्यर्थः ॥ २० ॥

तात्कालिकान् जनानाह-तदेति। न लम्पटाः नातीव विषयलोलुपाः ब्रह्मोत्तरा ब्राह्मणाधिकाः त्रयीवृद्धाः वैदिककर्मवृद्धाः ॥ २१ ॥

द्वापरे युगे अधर्मस्य लक्षणैस्त्रिभिः पादैरिति यावत् हिंसादिभिस्त्रिभिर्धर्मस्य पादेषु पादादिष्वर्धम् अर्धं ह्रसति हिंसातुष्ट्यनृतद्वेषैरिति क्रमो न विवक्षितः अनृतेन सत्यं हिंसया दया असन्तोषेण तपः विग्रहेण दानम् इति यथार्हं योज्यम् ॥ २२ ॥

[illegible] इति । महाशीलाः [illegible] महाभोगिनः क्षत्रद्विजोत्तराः क्षत्रियब्राह्मणप्रधानाः ॥ २३ ॥

कलाविति। एवमनेन क्रमेण युगान्तरेषु धर्महासे धर्मपादानां तुर्यांशः कलाववशिष्यते सोऽप्येधमानैरधर्मपादैरधर्मस्य हेतुभिः पादैरहरहः क्षीयमाणोऽन्ते सावशेषं विनङ्क्ष्यति ॥ २४ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

कालस्य विष्णोर्गतिं गमनप्रकारं च ॥ १७ ॥

सूचीकटाहन्यायेन युगधर्मस्वरूपमाहो वक्ति-कृत इति। तज्जनैः कृतयुगजनैः के चत्वारः पादाः ? इत्यत आह-सत्यमिति । विभोर्धर्मस्य ते पादाः ॥ १८ ॥

तत्राश्रमिणां स्वभावमाह-सन्तुष्टा इति।समदृशः बन्धुबान्धवेष्वपि ज्ञानिनः करुणावन्तीति करुणाः आश्रमिण इत्यनेन भार्यावियोगमाह-नित्यगृहस्था इत्यर्थः ॥ १९ ॥

तुर्यांशश्चतुर्थांशो दानलक्षणः पादो हीयते ह्रसति पादहानौ प्रतिपक्षमाह-अधर्मेति, ॥ २० ॥

तदा त्रेतायां यज्ञादिक्रिया तपोनिष्ठा भवन्ति न लम्पटाः विषयरागिणो न भवन्ति त्रैवर्णिकाः त्रिवर्गसहिताः त्रयीवृद्धाः वेदविद्यायां विशारदा त्रैविद्या इत्यर्थः ब्रह्मोत्तराः ब्राह्मणाधिकाः ॥ २१ ॥

अधर्मलक्षणैः अधर्मस्वरूपपादैः हिंसातुष्ट्यनृतद्वेषैः हिंसातुष्ट्यनृतलक्षणद्वैधं द्वित्वं येषां ते तथा तैः अतुष्टियुतमनृतमतुष्ट्यनृतं धर्मस्य तपःसत्यदयादानेषु पादेष्वर्धं ह्रसति अनेन द्वापरशब्दो निरुक्तः ॥ २२ ॥

महाशाला इत्यनेन यज्ञकर्तारः ॥ २३ ॥

पर्यासो निरासः सोऽपि सत्यलक्षणोऽपि धर्मो वा ॥ २४ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

त्रेतायामित्यादिकं प्रथमस्कन्धसन्दर्भानुसारेण स्पष्टं ज्ञेयम् ॥ २०-३१ ॥

---

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

युगानीति ब्रूहीत्यनुषङ्गः प्रलयकल्पयोः संहारस्थितिकालयोः नचायं बहिर्मुखः प्रश्न इत्याह—कालस्येति, ॥ १७ ॥

प्रथमयुगधर्मानाह-कृत इति। तज्जनैस्तत्कालभवैर्लोकैः धृतो भृतः दानमिति "दैप् शोधने" इत्यस्मात् शौचमित्यर्थः। तथैव प्रथमस्कन्धोक्तेः ॥ १८ ॥

श्रमणाः आत्माभ्यासवन्तः ॥ १९ ॥

अनृतेन सत्यम् हिंसया दया असन्तोषेण तपः विग्रहेण शौचम् ॥ २० ॥

ब्रह्मोत्तराः ब्राह्मणाधिकाः ॥ २१ ॥

हिंसेत्यत्र क्रमो न विवक्षितः ॥ २२—२३ ॥

तस्मिन् लुब्धा दुराचारा निर्दयाः शुष्कवैरिणः ।
दुर्भगा भूरितर्षाश्च शूद्रदासोत्तराः प्रजाः ॥ २५ ॥
सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः ।
कालसञ्चोदितास्ते वै परिवर्तन्त आत्मनि ॥ २६ ॥
प्रभवन्ति यदा सत्त्वे मनोबुद्धीन्द्रियाणि च ।
तदा कृतयुगं विद्याज्ज्ञाने तपसि यद्रुचिः ॥ २७ ॥
यदा धर्मार्थकामेषु भक्तिर्भवति देहिनाम् ।
तदा त्रेता रजोवृत्तिरिति जानीहि बुद्धिमन् ! ॥ २८ ॥
यदा लोभस्त्वसन्तोषो मानो दम्भोऽथ मत्सरः ।
कर्मणां चापि काम्यानां द्वापरं तद्रजस्तमः ॥ २९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

धर्महेतूनां सत्यादीनाम् अधर्महेतुभिरनृतादिभिः ॥ २४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

युगानि मानतः ब्रूहीत्यनुषङ्गः महात्मनः परमात्मनः ईश्वरान् ब्रह्मादीन् तत्तत्काले तत्तदधिकारे रूपयति निरूपयति तस्य विष्णोः यः शक्तिभूतः कालस्तस्य च गतिं ब्रूहीत्यन्वयः । यद्वा, चेतनेन रूपेण भिन्नोऽपि भगवच्छक्तित्वात्तदभिन्नोऽतस्त्रीणि विशेषणानि कालस्यैव ॥ १७ ॥

तत्र युगधर्मान् तत्तद्युगजनांश्चाह-कृत इत्यादिना । चतुष्पात् चत्वारः पादा यस्य स तथा तज्जनैः कृतजनैः विभोः सम्पूर्णस्य धर्मस्य सत्यादयः पादाः अमणाः तत्तत्स्थाने कृतधर्माः ॥ १८—२० ॥

ब्रह्मोत्तरा ब्राह्मणाधिकाः ॥ २१ ॥

अधर्मस्य तप आदिषु पादेषु अर्द्धं ह्रसति क्षीयते तत्र असन्तुष्ट्या असन्तोषेण तप अनृतेन सत्यम् हिंसया दया द्वेषशब्देन तत्कार्यभूतो विग्रहो गृह्यते कार्यकारणयोरभेदात् तेन दानमित्यर्थः ॥ २२ ॥

क्षत्रद्विजाः उत्तमाः प्रधानाः येषु ते ॥ २३ ॥

कलौ तु धर्मस्य हेतूनां पादानां तुर्यांश एव शेषः । सोऽपि अधर्मस्य हेतुभिः पादैः प्रत्यहम् एधमानैः क्षीयमाणः अन्ते विनङ्क्ष्यति ॥ २४ ॥

———

भाषा टीका ।

तथा युग और युगन के धर्म, तथा प्रलय और कल्प का प्रमाण, तथा महात्मा परम समर्थ श्रीविष्णु रूप काल की गति को यथावत् निरूपण करिये ॥ १७ ॥

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले कि—सतयुग के विषय धर्म चारों चरणों से प्रवृत्त होता है, सतयुग के लोग उस धर्म को धारण करते हैं, हे राजन् ! सत्य दया तप और दान यही धर्म के चारों चरण हैं, ॥ १८ ॥

सतयुग में प्राय करके सब जन सन्तुष्ट दयावान् मैत्र शान्त दांत तितिक्षु आत्माराम समदृष्टि और परिश्रमशील होते हैं ॥ १९ ॥

त्रेतायुग में धर्म के चरणों में से धीरे २ चतुर्थांश हीन होजाता है वह भी अधर्म के जो झूंठ हिंसा असन्तोष और विग्रह ये चार चरण हैं तिनसे होता है ॥ २० ॥

हे राजन् ! उस समय मनुष्य क्रिया और तप में निष्ठा वाले तथा न अति हिंसक और न अति लम्पट तथा धर्म अर्थ कामरूप त्रिवर्ग के सेवन करनेवाले वेदत्रयी के जानने वाले ब्राह्मण जिनमें अधिक ऐसे वर्ण होते हैं ॥ २१ ॥

द्वापर में धर्म के जो तप सत्य दया दान ये चार चरण हैं तिनमें से अधर्म के हिंसा असन्तोष अनृत और द्वेष इन चार चरणों से अर्ध अर्थात् दो चरण ह्रास को प्राप्त होते हैं ॥ २२ ॥

उस समय यशस्वी महाशीलवाले स्वाध्याय अध्ययन में निरत आढ्य कुटुम्बी क्षत्रिय ब्राह्मण प्रधान जिनमें ऐसे चारों वर्ण हर्षित रहते हैं ॥ २३ ॥

और कलियुग में तो अधर्म के हेतु अधर्म के चारों चरणों से क्षीण होता हुआ धर्म के चरणों में चतुर्थांश अवशिष्ट रहता है, सो भी अन्त में अर्थात् घोर कलियुग में नाश को प्राप्त होगा ॥ २४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

शूद्रदासोत्तराः शूद्रकैवर्तादिप्रधानाः ॥ २५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

युगानामेवम्भूतवैरूप्ये कारणमाह—सत्त्वमिति पञ्चभिः ॥ २६ ॥

मनश्च बुद्धिरिन्द्रियाणि च सत्त्वे यदा प्रभवन्त्यतिशयेन वर्तन्ते ॥ २७ ॥

यदा धर्मादिषु भक्तिः प्रीतिस्तदा रजोवृत्तिप्रधानं त्रेतायुगमिति जानीहि ॥ २८ ॥

काम्यानां कर्मणां विषये यदा प्रीतिस्तदा रजस्तमःप्रधानं द्वापरं जानीहीति पूर्वेणानुषङ्गः ॥ २९ ॥

विषादनं दुःखम् ॥ ३० ॥

कलिदोषान् प्रपञ्चयति—यस्मादित्यादिना । यस्मात्कलेर्हेतोः क्षुद्रदृशो मन्दमतयः क्षुद्रभाग्या अल्पभाग्याः महाशनाः बह्वाहाराः वित्तहीना अपि कामिनश्च स्त्रियश्च पुंश्चल्यः असतीरसत्यः ॥ ३१ ॥

दस्यव उत्कृष्टाः प्रचुरा येषु ते ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथाह—तस्मिन्नित्यादिना । शुष्कवैरिणः निर्हेतुकवैरिणः दुर्भगा भाग्यहीनाः भूरिः तर्षो अर्थकामतृष्णा येषां ते शूद्रदासोत्तराजनाः शूद्रा दासाः कैवर्तादयश्च ते उत्तराः प्रधाना येषां ते प्रजा इत्यपि पाठः यद्वा शुष्कवैरिण इति लिङ्गव्यत्यय आर्षः ॥ २५ ॥

किं तर्हि युगेष्वेवंविधवैरूप्ये कारणमित्यपेक्षायां "कलौ कृतयुगं तस्य कलिस्तस्य कृते युगे । यस्य चेतसि गोविन्दो हृदि यस्य न केशवः ॥ इत्युक्तरीत्या कालानुगुणसत्त्वादिगुणोल्लासह्रासप्रयुक्तकार्यवैविध्यमेवेत्याह—सत्त्वमिति पञ्चभिः । इत्यन्तं ततः किमत आह—कालसञ्चोदिता इति । ते सत्त्वादयो गुणाः कालेन सञ्चोदिता आत्मनि परिवर्तन्ते ह्रासोल्लासाभ्यां मनसि तत्तत्कार्यकराः प्रवर्तन्त इत्यर्थः ॥ २६ ॥

तत्र मनश्च तद्वृत्तीनि बुद्धीन्द्रियाणि च यदा सत्त्वे प्रभवन्त्यतिशयेन वर्तन्ते उद्रिक्तसत्त्वप्रधाना भवन्तीत्यर्थः । तदा कृतयुगं विद्याज्ञानादावत् यतनः सत्त्वोल्लासकार्ये ज्ञाने तपसि च कार्तयुगधर्मे रुचिः कार्यविशेषेणैव कालविशेषानुमानमिति भावः ॥ २७ ॥

यदा कर्मस्वितिभक्तिरभिरुचिः तदा रजोवृत्तिप्रधानं त्रेतायुगमिति जानीहि बुद्धिमन्निति सम्बोधनम् ॥ २८ ॥

यदा लोभ इति मानो गर्वः स चोत्तमेष्वप्यनतिहेतुश्चित्तविकारः कर्मणामिति विषयविषयिभावसम्बन्धे षष्ठी अनुषक्तेन भक्तिपदेन सम्बन्धः काम्यकर्मस्वभिरुचिरित्यर्थः तत्तदा रजस्तमोवृत्तिप्रधानं द्वापरयुगं जानीहि इति पूर्वेण सम्बन्धः ॥ २९ ॥

यदेति । माया कापट्यं विषादनमान्तरं दुःखं शोको बाह्यमधुविमोचनादिरूपं दैन्यं कार्पण्यं तदा तामसः केवलतमोगुणवृत्तिप्रधानः कलिः स्मृतः ॥ ३० ॥

अथ कलिं विशिषंस्तद्दोषान्प्रपञ्चयति—यस्मादित्यादिना । यस्मात् मर्त्याः वक्ष्यमाणविधाः स कलिरिति पूर्वेण सम्बन्धः क्षुद्रदृशः मन्दमतयः क्षुद्रभाग्या अल्पभाग्याः असतीरसत्यः "दुःशीला कर्कशा चण्डी नित्यं कलहकारिणी" इत्युक्तविधाः ॥ ३१ ॥

जनपदाः देशवासिनः दस्युभिश्चोरादिभिरुत्कृष्टाः उपद्रुताः प्रजाभक्षाः प्रजापीडनपराः द्विजाश्च शिश्नोदरपोषणपराः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शुष्कवैरिणः निष्प्रयोजनवैरिणः शूद्रदासोत्तराः प्राधान्येन शूद्राणां दासाः ॥ २५ ॥

सत्त्वादयो गुणा आत्मनि मनसि परिवर्तन्ते पर्यायेण वर्तन्ते ॥ २६ ॥

कथं तत्राह—प्रसीदन्तीति । यदा सत्त्वं प्रसीदति तदा मन आदीनि प्रसन्नानि भवन्ति तद्गुणान्तरमाह—ज्ञान इति । यद्यदा ज्ञानादिरुचिस्तदा कुत एतत्कल्प्यत इत्यत्राह—यदेति । मन आदिप्रसादेन ज्ञानाद्यभिरुचिर्ज्ञायत इति यद्यस्मात्तस्मात् इति ॥ २७ ॥

देहिनां यदा काम्यत इति कामास्तेषु कर्मसु यशांसि चापादनीयानीति स्नेहविशेषो भवति तदा बुद्धिमान् रजोवृत्तित्रेतेति जानीत जानातु ॥ २८ ॥

यदा आत्मनि लोभादयो दृश्यन्ते तदा रजस्तमः रजस्तमोगुणवृत्तियुतं द्वापरं जानातु ॥ २९ ॥

यदा मायादयो दृश्यन्ते यत्र स कलिस्तामसस्तमोगुणवृत्तिमानित्युपलक्ष्यते विषादनं खिन्नगमनता ॥ ३० ॥

यस्मात् कलिदोषात् क्षुद्रदृशः अल्पज्ञानाः लोकोपद्रवकर्मज्ञाना वा वृत्तिहीना जीवनोपायरहिताः असतीरसत्यः ॥ ३१ ॥

दस्यूत्कृष्टाः दस्यूपद्रुताः "कृषहिंसायाम्" इति धातुः ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दस्यूत्कृष्टा दस्यव एव उत्कृष्टाः प्रधाना येषु ते ॥ ३२—४३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

शूद्रदासोत्तरा शूद्रकैवर्तप्रधानाः ॥ २५ ॥

यथा एकस्यापि अहस्य सूर्यादेर्दशायां सर्वेषां प्राणिनां मन्तर्दशा भवन्ति तथैकैकस्यापि युगस्य मध्ये चत्वारि युगानि निष्पद्यन्तः कलिमध्येऽपि कदाचित् कदाचिच्च धर्मह्रासक्रमादेकैकस्मिन् पुंस्यप्येव द्रष्टव्यमित्याह—सत्त्वमिति । आत्मन्यन्तःकरणे परिवर्तन्ते यातायातं कुर्वन्ति ॥ २६ ॥

एतद्विवृणोति—प्रभवन्तीति । सत्त्वे निष्कामधर्मे ॥ २७ ॥

काम्येषु सकामधर्मेषु भक्तिः प्रीतिः ॥ २८ ॥

यदा काम्यानां कर्मणां काम्येषु कर्मस्वित्यर्थः । चकाराद्धर्मेष्वपि प्रीतिस्तदा रजस्तमःप्रधानं द्वापरं जानीहि तत्र लोभादयो भवन्तीत्यन्वयः ॥ २९ ॥

यदा केवलेष्वधर्मेष्वेव प्रीतिस्तदा तामसः प्रसिद्धः कलिरेव तदा मायाऽनृतादयः विषादनं विषादः ॥ ३० ॥

अथ कलेर्दोषान् प्रपञ्चयति—यस्मादिति यस्मात्कलेर्हेतोः ॥ ३१ ॥ ३२ ॥

अव्रता वटवोऽशौचा भिक्षवश्च कुटुम्बिनः ।
तपस्विनो ग्रामवासा न्यासिनोऽत्यर्थलोलुपाः ॥ ३३ ॥
ह्रस्वकाया महाहारा भूर्यपत्या गतह्रियः ।
शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाहसाः ॥ ३४ ॥
पणयिष्यन्ति वै क्षुद्राः किराटाः कूटकारिणः ॥
अनापद्यपि मंस्यन्ते वार्तां साधु जुगुप्सिताम् ॥ ३५ ॥
पतिं त्यक्ष्यन्ति निर्द्रव्यं भृत्या अप्यखिलोत्तमम् ।
भृत्यं विपन्नं पतयः कौलं गाश्चापयस्विनीः ॥ ३६ ॥
पितृभ्रातृसुहृज्ज्ञातीन् हित्वा सौरतसौहृदाः ।
ननान्दृश्यालसम्वादा दीनाः स्त्रैणाः कलौ नराः ॥ ३७ ॥
शूद्राः प्रतिग्रहीष्यन्ति तपोवेषोपजीविनः ।
धर्मं वक्ष्यन्त्यधर्मज्ञा अधिरुह्योत्तमासनम् ॥ ३८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शूद्राः वाणाः कैवर्तादयश्च उत्तराः प्रधानाः यासु ताः शूद्रदासा इतिपाठे तु शूद्राः दासाः भृत्यभूताः भार्यापुत्रादय एव प्रधाना यासु न तु गुर्वादयस्ताः ॥ २५ ॥

युगानामुक्तेषवसेव कारणमाह-सत्त्वमिति । आत्मनि मनसि परिवर्तन्ते अतः पुरुषेऽपि दृश्यन्ते ॥ २६ ॥

प्रभवन्ति प्रवर्तन्ते ॥ २७ ॥

भक्तिरुचिः ॥ २८ ॥

काम्यानां कर्मणां यदा रुचिः ॥ २९ ॥

माया वञ्चना: तन्द्राऽनवहितता विषादनमन्तर्दुःखित-त्वम ॥ ३० ॥

अथ कलेर्दोषान् विस्तरेणाह-यस्मादित्यादि चतुर्दशभिः । यस्मात् कलेर्हेतोः मर्त्याद्याः वक्ष्यमाणप्रकाराः भविष्यन्ति स कलिः स्मृत इति पूर्वेण सम्बन्धः । क्षुद्राः अधर्मैकविषया दृक् दृष्टिर्येषां ते क्षुद्रमल्पं भाग्यं येषां ते महदशनं भोजन येषां ते असतीर्धर्मबाह्याः स्त्रीः समाश्रित्य सत्योऽपि स्वैरिण्यः स्वेच्छाचारिण्यो भविष्यन्ति ॥ ३१ ॥

दस्यवः उत्कृष्टाः बलोत्कटाः येषु ते पाषण्डैः स्वच्छकधर्माभासैः दूषिताः अभिभूताः ॥ ३२ ॥

---

### भाषा टीका ।

तिस कलियुग में प्रजा के लोग बड़े लोभी दुराचारी शुष्क वैर करने वाले भाग्यहीन और बहुत तृष्णा वाले होंगे, तथा उन्हों में शूद्र और कैवर्त इत्यादि लोग प्रधान होंगे ॥ २५ ॥

सत्त्व रज और तम ये तीनों गुण पुरुष में देख पड़ते हैं ये गुण काल मे प्रेरित होकर आत्मा में परिवर्तन कोप्राप्त हुआ करते हैं ॥ २६ ॥

बस यही पहिचान है, कि-जिस समय मन बुद्धि और इन्द्रियें सत्त्व गुण मे वर्तती हैं उसी समय में ज्ञान और तप में रुचि होती है, उसी समय सतयुग जानना चाहिये ॥ २७ ॥

हे बुद्धिमन् ! राजन् ! जिस समय पर काम्य कर्मों में रुचि होती है, उस समय रजोगुण की वृत्ति जानना और उसी समय को त्रेताभी जानना चाहिये ॥ २८ ॥

जिस समय लोभ असन्तोष मान दम्भ और मत्सर एवं काम्य कर्मों में रुचि होती है उसी, समय को रजोगुण तमोगुण मिश्रित द्वापर जानना ॥ २९ ॥

और जिस समय में कपट, झूठ, आलस्य, निद्रा, हिंसा दुःख, शोक, मोह, भय, और दीनता होवे; उसी समय में केवल तमोगुण की वृत्ति वाला कलियुग जानना ॥ ३० ॥

जिस कलि के प्रताप से मनुष्य क्षुद्र दृष्टि वाले, क्षुद्र भाग्य वाले, बहुत खाने वाले, कामी और धनहीन होवेंगे और स्त्रियें बड़ी खोटी व्यभिचारिणी होवेंगी ॥ ३१ ॥

देशों में चोर बहुत होजांयगे वेद पाखण्ड से दूषित हो जांयगें, राजा लोग प्रजा को भक्षण करने वाले होवेंगे, ब्राह्मण लोग शिश्नोदर परायण हो जांयगे ॥ ३२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अव्रता विहिताचारशून्याः अशौचाः शौचशून्याश्च वटवो ब्रह्मचारिणो भविष्यन्ति कुटुम्बिनश्च गृहस्थाः स्वयं भिक्षाटन-

नित्यमुद्विग्नमनसो दुर्भिक्षकरकर्शिताः ।
निरन्ने भूतले राजन्ननावृष्टिभयातुराः ॥ ३९ ॥
वासोऽन्नपानशयनव्यवायस्नानभूषणैः ।
हीनाः पिशाचसन्दर्शा भविष्यन्ति कलौ प्रजाः ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

चरा भविष्यन्ति नतु भिक्षां दास्यन्ति, तपस्विनो वनस्थाः वनं हित्वा ग्रामवासा भविष्यन्ति न्यासिनो यतयोऽर्थलोलुपा भविष्यन्ति ॥ ३३ ॥

पुनरपि स्त्रीणां स्वभावमाह—ह्रस्वकाया इति । कटुकभाषिण्योऽप्रियवादिन्यः चौर्यं च माया कपटमुरु च साहसं यासां ताः ॥ ३४ ॥

किञ्च किराटा वणिजः पणयिष्यन्ति क्रयविक्रयादिव्यवहारं प्रवर्तयिष्यन्ति किञ्च सर्वे जना अनापद्यपि जुगुप्सितां निन्दितां वार्तां वृत्तिं साधु मंस्यन्ते ॥ ३५ ॥

सर्वोत्तममपि पतिं द्रव्यहीनं भृत्यास्त्यक्ष्यन्ति पतयश्च विपन्नं रोगादिभिर्व्यापारासमं कौलं कुलपरम्परायातं त्यक्ष्यन्ति अपयस्विनीर्दुग्धदोहाः ॥ ३६ ॥

सौरतं सुरतनिमित्तं सौहृदं येषां ते अत एव नतान्ध्वरोऽत्र भार्याभगिन्यः श्याला भार्याभ्रातरस्तैः सम्वादो मन्त्रालोचनं येषां ते ततन्ध्र इति वा पाठः ॥ ३७—३८ ॥

पिशाचसन्दर्शाः पिशाचसदृशाः ॥ ४० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

बटवो ब्रह्मचर्याश्रमिणः अव्रताः स्वाश्रमोचितव्रतहीनाः अशौचाः शौचहीनाश्च भविष्यन्ति कुटुम्बिनो गृहस्थाः भिक्षवः भिक्षाटनपराः तपस्विनो वानप्रस्थाः ग्रामो वासो येषां ते वासशब्दोऽधिकरणघञन्तः न्यासिनः तुर्याश्रमिणः अर्थलोलुपाः वित्ताभिलाषिण इत्यर्थः ॥ ३३ ॥

पुनरपि स्त्रीणां स्वभावमाह—ह्रस्वकायाः अल्पपरिमाणाः भूरीण्यपत्यानि यासां ताः त्यक्तलज्जाः कटुकभाषिण्यः अप्रियवादिन्यः चौर्यं च माया कापट्यं च उरु साहसञ्चेति द्वन्द्वः ततो मत्वर्थीयोच् ॥ ३४ ॥

किराटाः वणिजः संहृत्य व्यापारिणः पणयिष्यन्ति क्रयविक्रयादिव्यापारं प्रवर्तयिष्यन्ति क्षुद्राः सन्ति व्यवहारास्ते क्षुद्रचेष्टा भवन्ति किञ्च अनापद्यपि जुगुप्सितां निन्दितां वृत्तिं साधु मन्यन्ते ॥ ३५ ॥

अखिलोत्तमं सर्वोत्तममपि पतिं स्वामिनं भृत्यास्त्यक्ष्यन्ति तथा पतयोऽपि भृत्यं विपन्नं रोगादिभिर्व्यापारासमं त्यक्ष्यन्ति कौलं कुलपरंपरागतं महाभागवतं धर्मं गाश्चापयस्विनीः दुग्धदोहाः त्यक्ष्यन्ति इति सम्बन्धः ॥ ३६ ॥

पिबेति । सौरतं सुरतनिमित्तं सौहृदं येषां ते अत एव ततन्ध्रहरो ऽत्र भार्याभगिन्यः श्यालाः भार्याभ्रातरश्च तैः सम्वादो मन्त्रालोचनं येषां ते कुतः स्त्रैणाः स्त्रीवश्याः ॥ ३७ ॥

शूद्रा इति । तपोवेषेणोपजीवन्तीति तथा प्रतिग्रहीष्यन्ति तथाऽधर्मज्ञा अत्युत्तममासनमधिरुह्य धर्मं वक्ष्यन्त्युपदेक्ष्यन्तीत्यर्थः । अत्रावतारात्प्र इत्यनेनाभिमिणां कलिकृतदोषकीर्तनं निहासर्वाकृतन्यायेन ह्रस्वकाया इति तत्कृतस्त्रीदोषकथनं तत एकेन तत्कृतवर्णदोषकीर्तनं ततो द्वाभ्यां चातुर्वर्ण्यदोषकथनं तत एकेन शूद्रदोषकीर्तनम् इति विभागः ॥ ३८ ॥

अथ चातुर्वर्ण्यसाधारणान् तत्कृतदोषानाह—नित्यमिति षड्भिः । उद्विग्नमनसः स्वचलमानसाः भीतमानसा वा निरन्नेऽन्नरहिते दुर्भिक्षेण करेण स्वामिग्राह्यभागेन च कर्शिताः पीडिताः अनावृष्टिभयेनात्यातुराः दुःखिताः ॥ ३९ ॥

वास इति व्यवायो मैथुनं वास आदिभिर्हीना पिशाचसन्दर्शाः पिशाचसदृशाः ॥ ४० ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

बटवो ब्रह्मचारिणः अव्रताः महाव्रतादिव्रतहीनाः प्राप्तकालोचितव्रतहीना वा ॥ ३३ ॥

भूर्यपत्याः बहुसन्तानाः ॥ ३४ ॥

क्षुद्राः दरिद्राः किराटाःपरिणामफलानि पणयिष्यन्ति विक्रेष्यन्ति कूटकारिणः धातुवादकरणशीलाः वार्तां कुसीदादिवैश्यवृत्तिम् ॥ ३५ ॥

अखिलोत्तमं कुलादिनेति शेषः कौलं कुले विद्यमानं विपन्नम् आपदं प्राप्तं भृत्य पतयस्त्यक्ष्यन्ति अपयस्विनीः क्षीररहिता गाश्च त्यक्ष्यन्तीति शेषः ॥ ३६ ॥

सौरतं सुरतसम्बन्धविषये सौहृदं प्रेम येषां ते तथा श्वशुरश्यालाभ्यां सह सम्यक् वादो येषां ते तथा ॥ ३७—३८ ॥

पिशाचवत्सन्दर्शो दर्शनं येषां तथा ॥ ४० ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

बटवो ब्रह्मचारिणः अव्रताः व्रतहीनाः शौचहीनाश्च भविष्यन्ति कुटुम्बिनो गृहस्था भिक्षवः भिक्षाटनपराः न तु भिक्षां दास्यन्ति तपस्विनो वानप्रस्थाः वनं हित्वा ग्रामवासाः ग्रामे गृहस्थानेव स्वतपो दर्शयिष्यन्तीत्यर्थः । न्यासिनो यतयः अत्यर्थलोलुपाः वित्तसङ्ग्रहे प्रयतिष्यन्ते ॥ ३३ ॥

पुनरपि स्त्रियो वर्णयति—ह्रस्वेति ॥ ३४ ॥

कलौ काकिणिकेऽप्यर्थे विगृह्य त्यक्तसौहृदाः ।
त्यक्ष्यन्ति च प्रियान् प्राणान् हनिष्यन्ति स्वकानपि ॥ ४१ ॥
न रक्षिष्यन्ति मनुजा स्थविरौ पितरावपि ।
पुत्रान् सर्वार्थकुशलान् क्षुद्राः शिश्नोदरम्भराः ॥ ४२ ॥
कलौ न राजन् ! जगतां परं गुरुं त्रिलोकनाथानतपादपङ्कजम् ।
प्रायेण मर्त्या भगवन्तमच्युतं यक्ष्यन्ति पाषण्डविभिन्नचेतसः ॥ ४३ ॥
यन्नामधेयं म्रियमाण आतुरः पतन्स्खलन्वा विवशो गृणन् पुमान् ।
विमुक्तकर्मार्गल उत्तमां गतिं प्राप्नोति यक्ष्यन्ति न तं कलौ जनाः ॥ ४४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किराटा वणिजः कूटकारिणः अधर्मेण कपटं कृत्वा पण्यायिष्यन्ति व्यवहारं प्रवर्त्तयिष्यन्ते किञ्च सर्वे एव वर्णाः अनापद्यपि जुगुप्सितां वार्त्तां साधु मंस्यन्ते ॥ ३५ ॥

अखिलोत्तममपि पतिं निर्द्रव्यं भार्य्यास्तथा भृत्या अपि त्यक्ष्यन्ति पतयश्च विपन्नं रोगादिग्रस्तं भृत्यं कौलं कुलपरम्परागतमपि त्यक्ष्यन्ति गाश्च दुग्धत्वादपयस्विनीस्त्यक्ष्यन्ति ॥ ३६ ॥

ननान्दरोऽत्र भार्य्याभगिन्यः ॥ ३७—४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

बटवो ब्रह्मचारिणः अव्रता विहितव्रतहीनाः तत्र नैष्ठिकानामाह—अशौचाः बाह्याभ्यन्तरशौचहीनाः कुटुम्बिनो गृहस्थाश्च भिक्षवः तपस्विनो वानप्रस्था ग्रामे वासो येषां ते तथा न्यासिनः संन्यासिनः अर्थेष्विन्द्रियार्थेषु लोलुपाः लम्पटाः भविष्यन्ति ॥ ३३ ॥

पुनस्त्रीस्वभावमाह—हृस्वकाया इति ॥ ३४ ॥

किराटाः वणिजः क्रयविक्रयादिव्यवहारं प्रवर्त्तयिष्यन्ति अनापद्यतिजुगुप्सितां वार्त्तां वृत्तिं साधु मंस्यन्ते ॥ ३५ ॥

भृत्याः निर्द्रव्यम् अखिलोत्तममपि तत्रापि कौलं परम्पराप्राप्तं पतिं पतयोपि विपन्नं दुःखत्वादिना कार्यानर्हं भृत्यं च त्यक्ष्यन्ति अपयस्विनीः दुग्धदोहाः त्यक्ष्यन्ति ॥ २६ ॥

सौरतं सुरतहेतुकं सौहृदं येषां ते ननान्दरोऽत्र भार्याभगिन्यस्ताभिः श्यालैश्च सम्वादो मन्त्रालोचनं येषां ते ॥ ३७ ॥ ३८ ॥ ३९ ॥

पिशाचानामिव सम्यक् दर्शः दर्शनं यासां ताः ॥ ४० ॥

---

भाषा टीका ।

ब्रह्मचारि लोग शौच और शास्त्र विहित आचार से शून्य होजावें गे, और कुटुम्बी अर्थात् गृहस्थ लोग भिक्षुक होकर भिक्षाटन करेंगे आप भिक्षा न देवें गे, तपस्विलोग वनवास को छोड़ कर ग्राम वास करेंगे, एवं संन्यासी लोग धनी और द्रव्य के बड़े लोभी हुआ करेंगे ॥ ३३ ॥

और फिर स्त्रियें कैसी होंगी कि—ह्रस्वकाय वाली अर्थात् कद की छोटी पर आहार बहुत करेंगी और उनों के लड़के लड़की बहुत होंगे और वे स्त्रियें बड़ी निर्लज्ज होंगी, सदा कटुभाषण करने वाली तथा चोरी कपट और बड़े साहस करने वाली होंगी ॥ ३४ ॥

और कपट करनेवाले क्षुद्र बनिये लोग नये २ क्रय विक्रय के व्यवहारों को प्रवृत्त करेंगे, तथा सब लोग अनापत्ति समय में भी निन्दितवृत्ति को अच्छी समुझेंगे ॥ ३५ ॥

नौकर चाकर लोग अपने उत्तम स्वामी (मालिक) को धन हीन होनेपर त्यागदिया करेंगे, तथा स्वामी लोग भी परम्परा से सदा के काम करनेवाले नौकरों को आपत्तिग्रस्त होनेपर त्यागदिया करेंगे, एवं दुग्ध नहीं देनेवाली गायों को पति लोग त्याग देंगे ॥ ३६ ॥

पिता, भ्राता, सुहृद, और ज्ञाति के लोगों को छोड़कर मैथुन के निमित्त सौहृद करेंगे, और कलियुग में मनुष्य स्त्रीपरायण होकर साली और श्याले से सलाह किया करेंगे, और उनके सामने दीन हुआ करेंगे ॥ ३७ ॥

तप के वेष से जीवन करनेवाले शूद्र लोग प्रतिग्रह [ दान ] लिया करेंगे, और वह शूद्र लोग धर्म को न जानकर भी उत्तम ऊंचे आसन पर बैठ कर धर्म का उपदेश करेंगे ॥ ३८ ॥

प्रजा के लोग दुर्भिक्ष और कर से पीड़ित होकर नित्य ही उद्विग्न मनवाले रहेंगे, हे राजन् ! भूतल में अन्न तो रहेगा नहीं तब निरन्न भूतल में अनावृष्टि के भय से लोग व्याकुल रहेंगे ॥ ३९ ॥

कलियुग में प्रजा के लोग वस्त्र, अन्न, पान, शयन, विहार मैथुन, स्नान, भूषण, इन सबों से वंचित ( हीन ) होकर पिशाच के सदृश होजायंगे ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

काकिणिके विंशतिवराटकामात्रेऽप्यर्थे विषयभूते विगृह्य वैरं कृत्वा ॥ ४१ ॥ ४२ ॥

महान्तमनर्थमाह द्वाभ्यां—कलाविति । त्रिलोकनाथैरानतं नमस्कृतं पादपङ्कजं यस्य तं न यक्ष्यन्ति न पूजयिष्यन्ति पाषण्डैर्विभिन्नमन्यथा कृतं चेतो येषां ते ॥ ४३ ॥

पुंसां कलिकृतान् दोषान् द्रव्यदेशात्मसम्भवान् ।
सर्वान् हरति चित्तस्थो भगवान् पुरुषोत्तमः ॥ ४५॥
श्रुतः सङ्कीर्तितो ध्यातः पूजितश्चाऽऽदृतोऽपि वा ।
नृणां धुनोति भगवान् हृत्स्थो जन्मायुताशुभम् ॥ ४६ ॥
यथा हेम्नि स्थितो वह्निर्दुर्वर्णं हन्ति धातुजम् ।
एवमात्मगतो विष्णुर्योगिनामशुभाशयम् ॥ ४७ ॥
विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजप्यैः ।
नात्यन्तशुद्धिं लभतेऽन्तरात्मा यथा हृदिस्थे भगवत्यनन्ते ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विवशो गृणन् सन् विमुक्ताः कर्मरूपा अर्गलाः प्रतिबन्धा यस्य सः ॥ ४४ ॥

तदेवं कलिदोषान् प्रपञ्च्य प्रस्तुतं तन्निस्तारोपायमाह, पुंसामिति षड्भिः । द्रव्यदेशात्मभिः सम्भवो येषां तान् चित्तस्थश्चित्ते स्फुरितः ॥ ४५ ॥ ४६ ॥

अयमेवोपायो नान्य इति सदृष्टान्तमाह—यथेति । धातुजं ताम्रादिसंश्लेषजातं हेम्नो दुर्वर्णं मालिन्यं तत्र स्थितो वह्निरेव हन्ति हरति, न तु तोयादि एवं योगिनामपि विष्णुरेव न तु योगादिकमित्यर्थः ॥ ४७ ॥

एतदेव विवृणोति—विद्येति । विद्या देवतोपासना ॥ ४८ ॥ ४९ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विमुक्तकर्माशयः निमुक्तकर्मवासनः ॥ ४४—४६ ॥

दुर्वर्णं रजतम् ॥ ४७—४९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कस्मिन्निति । काकिणिके वराटिकामात्रेऽप्यर्थे विषये विगृह्य विरोधं कृत्वाऽतः त्यक्तं सौहृदं यैः ते ॥ ४१ ॥

नेति । स्थविरौ वृद्धौ अनेन "वृद्धौ च मातापितरौ" इत्यादिशास्त्रोक्तकृत्यं सूचितं सर्वार्थेषु कुशलानपि पुत्रान् रक्षिष्यन्त्यपि तु तेभ्यो विमुखा वर्तिष्यन्त इति भावः ॥ ४२ ॥

बहुधान्ततमर्थमाह—कलौ नेति द्वाभ्यां । हे राजन् ! त्रैलोक्यपतिभिः ब्रह्मादिभिः आनतं नमस्कृतं पादपद्मं यस्य तम् अच्युतं न यक्ष्यन्ति नाराधयिष्यन्ति तत्र हेतुः पाषण्डैर्विभिन्नमन्यथा कृतं चेतो येषां ते ॥ ४३ ॥

यन्नामधेयमिति । म्रियमाणाद्यन्यतमः पुमान् यस्य भगवतो नामधेयं गृणन् कीर्तयन्विमुक्ताः कर्मरूपा अर्गलाः प्रतिबन्धाः यस्य सः उत्तमां गतिं मुक्तिं प्राप्नोति तं भगवन्तं न यक्ष्यन्ति यत्रातुरो रोगादिपीडितः पतन्स्खलन् पतितो विवशितः स्वस्थचित्तेन स्ववर्णाश्रमाचारविधुरः तत्र म्रियमाणो मरणातुरस्तमेवोत्तमां गतिं प्राप्नुवन्ति इतरेषामप्रयाणानुवृत्तेः कीर्तनेति भावः । यद्वा, आतुराद्यन्यतमोऽपि म्रियमाणो गृणन् प्राप्नोतीति सम्बन्धः ॥ ४४ ॥

तदेवं कलिदोषान् प्रपञ्च्य तन्निस्तारोपायमाह—पुंसामिति षड्भिः । द्रव्यदेशात्मभिः सम्भवो येषां तान् तत्र द्रव्यदेशौ निमित्तौ आत्मा विषयप्रवणं मनः चित्तस्थः ध्यानेन चित्ते स्थिरीकृतः हरति नाशयति ॥ ४५ ॥

कथं चित्तस्थो भवतीत्यत आह—श्रुत इति । श्रवणादिविषयः सन् हृत्स्थो भवति ततो जन्मायुतस्यापि अशुभं जन्मायुतार्जितमपि पापमित्यर्थः धुनोति नाशयति ॥ ४६ ॥

तदेव दृष्टान्तेनोपपादयति—यथेति । धातुस्ताम्रादिः तत्संश्लेषजातं हेम्नो दुर्वर्णं तत्र स्थितो वह्निर्हरति, एवं योगिनामात्मस्थितो मनसि स्थितो विष्णुरशुभाशयं हन्ति आशयो मनस्तद्गतं मालिन्यं हन्तीत्यर्थः ॥ ४७ ॥

इतोऽन्य उपायो नास्ति इत्याह—विद्येति । यथा त्रिविधपरिच्छेदरहितेऽच्युपासकानुग्रहार्थं हृदिस्थे सत्यन्तरात्मा मनोऽत्यन्तशुद्धिं लभते तथा विद्यादिभिर्न लभते तत्र विद्या शास्त्राध्ययनं तपोऽनशनादि वर्णाश्रमधर्मो वा प्राणनिरोधः प्राणजयः मैत्री अहिंसा व्रतम् एकादशीव्रतादि जप्यं मन्त्रजपः ॥ ४८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विगृह्य विग्रहं वैरं कृत्वा काकिणिकेऽर्थे अल्पद्रव्यधनविषये ॥ ४१ ॥ ४२ ॥

पाषण्डशास्त्रेणाहितविपर्ययेण विभिन्नचेतसः व्यामोहितचित्ताः ॥ ४३ ॥

किं माहात्म्योऽयं भगवान् येन तद्यजनं सप्रयोजनं स्यादिति तत्राह—यन्नामधेयमिति । विमुक्तं कर्मलक्षणमर्गलं तालकीलं यस्य स तथा विध्वस्तकर्मबन्धन इत्यर्थः ॥ ४४ ॥

केनोपायेनेत्यादिना पृष्टं परिहर्तुमाह—पुंसामित्यादिना । द्रव्यदेशात्मसम्भवान् द्रव्यदेशस्वभावोद्भूतान् किमपि नावशिष्यतेऽतः सर्वमित्युक्तम् ॥ ४५ ॥

चित्तस्थितिमात्रे नानासाधनमाह—श्रुत इत्यादिना । अशुभम्-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इत्युपलक्षणं प्रथमकर्मभोगावसानप्रारब्धभक्तिलक्षणपवित्राशुभमित्यर्थः ॥ ४६ ॥

मन्दाधिकारिणः चित्तप्रवृत्त्यर्थं सदृष्टान्तमाह—यथेति। धातोर्हेम्नः अहाहृताहोषा दुर्वर्णमित्यनेन गृह्यन्ते धातुजं गैरिकसमुद्भवं वा आत्मगतः चित्तगतः अशुभाशयं पापराशिं पापसंपृक्तकर्मणो वा ॥ ४७ ॥

विद्यादिनान्तःकरणशुद्ध्या श्रेयः स्यात्किमित्यत्रेत्यपेक्ष्य हरिर्यतीति तत्राह—विद्येत्यादिना। प्राणनिरोधः प्राणायामः अन्तरात्मा अन्तःकरणं हृदिस्थे सति ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तदानीं पाषण्डनिभिन्नचेतस्त्वेन तथाजनवैमुख्यं तु तन्नामविमुखानामेव स्यादित्यभिप्रेत्य प्रायेणेत्येव व्यनक्ति—यन्नार्पेति। नामाभावेनोपसंहरिष्यते—कलेरित्यादिद्वाभ्याम् ॥ ४४ ॥

यदेव नाम भगवद्रूपेण स्फुरन् नाविद्यधातीत्याह—पुंसामिति ॥ ४५ ॥

भगवतः स्वभाव एव तादृश इत्याह—श्रुत इति त्रिभिः ॥ ४६ ॥

तत्स्वभावत्वं नान्यत्र सम्भवतीत्याह—यथेति द्वाभ्याम्। ॥ ४७—४८ ॥

---

श्रीविश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

काकिणिके विंशतिवराटिकामात्रेऽपि अर्थविषये विगृह्य कलहं कृत्वा ॥ ४१—४२ ॥

किञ्च, कलेः सन्ध्यानन्तरं तु महान्तमनर्थमाह—कलाविति। द्वाभ्याम् ॥ ४३—४४ ॥

यदुक्तं केनोपायेन कलिदोषान् नाशयिष्यन्ति तत्रोत्तरमाह—पुंसामिति। द्रव्यदेशमनःशुद्ध्यभावेन सम्भवो येषां तान् चित्तस्थः स्मृतः सन् न केवलमनागत दोषान् हरति अपितु प्राचीनार्वाचीनं सर्वमपि पापमित्याह—श्रुत इति ॥ ४५-४६ ॥

किञ्चान्तःकरणशुद्धौ भगवत्स्मरणादिरेवोपायो नान्य इति सदृष्टान्तमाह—यथेति। धातुजं ताम्रादिसंश्लेषजातं हेम्नो दुर्वर्णं मालिन्यं तत्र स्थितो वह्निरेव हरति न तु तोयादि एवं योगिनामपि विष्णुरेव न तु यमनियमादिकम् ॥ ४७ ॥

एतद्विवृणोति—विद्येति ॥ ४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

काकिणिके विंशतिवराटिकामात्रे ऽप्यर्थे विगृह्य विरोधं कृत्वा ॥ ४१ ॥ ४२ ॥

प्रायेणेत्यनेन भगवदनुगृहीताः केचित्तमाराधयिष्यन्त्यपीति सूचितम् ॥ ४३ ॥

विमुक्तो विमुक्तः कर्मार्गलैः कर्मरूपः अर्गली बन्धः ॥ ४४ ॥

अथ कलिदोषनिस्तारोपायं दर्शयति—पुंसामिति षड्भिः। द्रव्यैः अयुक्तान्नादिभिः देशैः युक्तस्थलैः आत्मना अशिवेन मनसा सम्भवो येषां तान् ॥ ४५ ॥ ४६ ॥

आत्मगतः मनोगतः अशुभाशयमशुभयुक्तं मनः शोधयतीति शेषः ॥ ४७ ॥

विद्या शास्त्राध्ययनम् तपः वर्णाश्रमधर्मः प्राणनिरोधः प्राणजयः मैत्री सर्वेषु दया अन्तरात्मा मनः ॥ ४८ ॥ ४९ ॥

---

भाषा टीका।

कलि में एक दमड़ी के वास्ते भी लड़ाई कर अपने सुहृदपने को छोड़ दिया करेंगे। और एक दमड़ी के वास्ते ही प्रियप्राणों को त्याग देवेंगे, और अपने लोगों को भी मारेंगे मरने मारने पर त्यार रहेंगे ॥ ४१ ॥

कलि के मनुष्य अपने माता पिताओं का अति वृद्ध होने पर भी पालन नहीं करेंगे, अपने पुत्र स्वयं कार्य में कुशल होंगे तो भी उनका पालन नहीं करेंगे। क्योंकि ? जन निशिदिन शिश्नोदर परायण होंगे ॥ ४२ ॥

हे राजन्! एक और बड़ा अनर्थ होगा, कि—कलियुग में जगत् के परम गुरु, और त्रिलोकी के नाथ जो ब्रह्म रुद्र इन्द्रादिक हैं वे भी जिनके श्रीचरणकमल को सदा नमस्कार करें, ऐसे अच्युत भगवान् श्रीविष्णु का मनुष्य लोग पाषण्डमे विभिन्न चित्तवाले होकर प्रायकर नहीं पूजन करेंगे ॥ ४३ ॥

आतुर पुरुष मरने समय, गिरने पर,, खिसलने पर,, विवश होकर भी जिन भगवान् के श्रीनाम का ग्रहण करता हुआ, कर्म की अर्गला ( बेड़ी ) से छूटकर उत्तम गति को को प्राप्त होता है, कलियुग में उनही श्रीविष्णु भगवान् को मनुष्य नहीं पूजेंगे ॥ ४४ ॥

द्रव्य देश और आत्मा से होने वाले कलिकृत पुरुषों के सम्पूर्ण दोषों को श्रीपुरुषोत्तम भगवान् चित्त में स्थित होकर हरते हैं ॥ ४५ ॥

श्रवण करने से, कीर्त्तन करने से, ध्यान करने से, पूजन करने से भगवान् हृदय में स्थित होजावें, तब मनुष्यों के कोटों जन्म के पापों का तत्काल में नाश कर देते हैं ॥ ४६ ॥

जैसे कि—अग्नि, स्वर्ण के तपाने से स्वर्ण के भीतर में आकर अन्य धातु के खोटे वर्ण को नष्ट करता है। इसीप्रकार योगियों के हृदय में स्थित होकर श्रीविष्णु भगवान् योगिजनों के खोटे अन्तःकरण को शुद्ध करते हैं ॥ ४७ ॥

विद्या, तप, प्राणायाम, मैत्री, तीर्थस्नान, व्रत, दान, जप, इन सबों से मन उस प्रकार की शुद्धि को नहीं प्राप्त होता है, जैसा कि—अनन्त भगवान् श्रीविष्णु के हृदय में स्थित होने से शुद्ध होता है ॥ ४८ ॥

---

तस्मात्सर्वात्मना राजन् ! हृदिस्थं कुरु केशवम् ।
म्रियमाणो ह्यवहितस्ततो याति परां गतिम् ॥ ४९ ॥
म्रियमाणैरभिध्येयो भगवान् परमेश्वरः ।
आत्मभावं नयत्यङ्ग ! सर्वात्मा सर्वसंश्रयः ॥ ५० ॥
कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः ।
कीर्तनादेव कृष्णस्य मुक्तसङ्गः परं व्रजेत् ॥ ५१ ॥
कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः ।
द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात् ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां द्वादशस्कन्धे युगानुवर्णनं नाम
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मभावं स्वस्वरूपम् ॥ ५० ॥

इदानीं कलिं स्तौति द्वाभ्याम्–कलेर्दोषनिधे राजन्निति ॥ ५१॥

तत्सर्वं हरिकीर्तनादेव कलौ भवति नान्यस्मिन् युगे उक्तं च—

"ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम् ॥

इति ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आत्मभावम् आत्मस्वभावं साम्यापत्तिरित्यर्थः । "तद्भावभावमापन्नः" इत्यादिश्लोकार्थात् तत्र हि भावशब्दः स्वभाववाची अन्यथा द्वितीयभावशब्दानन्वयात् ॥ ५०—५२ ॥

इति श्रीमद्भागवतव्याख्याने
शुकपक्षीये द्वादशस्कन्धे
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उपायोपदेशमुपसंहरति–तस्मादिति । हि यस्मात्ततो ह्यवधानादवहितचित्तो म्रियमाणः परां गतिं याति तस्मात्त्वं हृदिस्थं केशवं कुरु इत्यर्थः ॥ ४९ ॥

इममेवार्थं दृढीकर्तुं पुनरप्याह–म्रियमाणैरिति । आत्मभावमात्मस्वभावं साम्यापत्तिमित्यर्थः । "तद्भावभावमापन्नः" इत्यादिश्लोकार्थात् तत्र हि प्रथमभावशब्दः स्वभाववाची अन्यथा द्वितीयभावशब्दानन्वयात् भक्तान् सम्याधनयोन्तकं स्वभावं नयतीत्यत्र हेतुत्वेन तं विशिनष्टि–सर्वात्मा सर्वेषामात्मनामात्मा आत्मनो हि शरीरं निरतिशयप्रियमतस्तद्गतमनर्थं दूरीकरोतीति भावः । अनेन प्राप्यत्वोपयुक्तनिरतिशयपुरुषार्थरूपत्वमुक्तम् आत्मा हि निरतिशयप्रीतिविषयः प्रापकत्वोपयुक्तं सौलभ्यमाह–सर्वसंश्रय इति । आत्मत्वादेव सर्वैः संश्रीयते इति संश्रयः आत्मा हि सर्वस्यैव सुलभ इति भावः ॥ ५० ॥

अथ बहुदोषाकरोऽपि कलिः सर्वथा भगवत्प्राप्ति निरुन्ध्यादित्यभिप्रायमाशङ्क्याह—कलेरिति । दोषनिधेरपि कलेः कश्चिदनितरसाधारणो महान् गुणोऽस्ति, कोऽसौ ? भगवतः कीर्तनादेव मुक्तबन्धः निरस्तप्राप्तिप्रतिबन्धकः परं परमपुरुषं व्रजेदित्यर्थः ॥ ५१ ॥

कृतादिषु ध्यानयागार्चनानां यत्फलं तत्सर्वं कलौ हरिकीर्तनादेव भवति कीर्तनं स्वप्राप्त्युपायानुवृत्तमित्यवगन्तव्यम् ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उपसंहरति—तस्मादिति ॥ ४९ ॥

आत्मभावम् आत्मनि भक्तिं नयति प्रापयति सर्वभावस्य इति सर्वात्मा सर्वस्य सम्भवो यस्मात्स सर्वसम्भवः ॥ ५० ॥

कलिः केवलं न दोषाकर एवापि तु गुणाकरोऽपि भवति दोषोपचितद्रव्यवदित्याह–कलेरिति ॥ ५१ ॥

ध्यानादिसाधनमन्तरेण कीर्तनमात्रेण संसारबन्ध-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निर्मोकः कथमित्याशङ्क्य तत्तद्युगेषु भगवत्फलप्रदत्वेन मुक्तमित्थमित्याह—कृत इति । कृते वर्त्तमानस्येत्यर्थः ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवं तत्पृष्टार्थान् सर्वान् समापयिष्यंस्तत्कर्त्तव्यमुपदिशति—तस्मादिति । सर्वात्मना सर्वेणैव प्रयत्नेन तत्रैव कैमुत्येन हेतुमाह—म्रियमिति । हि यस्मादन्योऽपि यः कश्चित् म्रियमाणोऽवहितः तस्मिन् कृतावधानश्चेत्तदा तन्मात्रादेव परां सर्वोत्कृष्टां गतिं याति त्वं पुनस्तस्य परमान्तरङ्गः किमुतेत्यर्थः ॥ ४९—५० ॥

अत एवान्यैरपि म्रियमाणैरभिध्येयः आत्मभावं परमप्रेम्णा आत्मतुल्यतां कलिदोषप्रशमनत्वेन नामकीर्त्तनस्मरणमाहात्म्यमुक्त्वोपसंहरति—कलेरिति । स च भयोऽतिक्रमहेतूनां दोषाणां निधेरपि कलेरेको गुणः कीर्त्तनादररूपो महानस्ति कंसादेः श्रीनारदादेर इव अनन्तस्य विशेषसामाभावात् सिद्धत्वेव नाम कीर्त्तयितेत्याह—कीर्त्तनादेवेति,॥ ५१ ॥

कीर्त्तनं हि कलावपि सर्वगुणावाप्तिरित्याह—कृत इति । यद्यत् कृतादिषु तेन तेन साधनेन स्यात् तत् तद्धिस्तेकश्येषात्तत्सर्वं प्राप्नोतीत्यर्थः । अत एवोक्तमन्यत्र—

"ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम् ॥

इति ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
तृतीयोऽध्यायः ३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यतो म्रियमाणोऽप्यजामिलादिसदृशोऽपि जनः अवहितः न विद्यते ऽवहितम् अवहितं अवधानं यस्य तथाभूतोऽपि ततः कथयात् यथाकथञ्चिदपि स्मृतात् अभिध्येयः ध्यातुं शक्यश्चेत्तदा आत्मभावम् आत्मनि प्रेमाणं नयतीति तान् प्रापयति ननु तत्समये भगवद्ध्यानं तेषां कथं ज्ञेयं स्यात्तत्राह—सर्वात्मा लोकान् जानेतुनाम सतु जानाति एवेत्यर्थः । ननु कथं सकृद्ध्यानमात्रादेव प्रेमाणं ददाति तत्राह सर्वेषां भाव्यानां च सम्भवो यस्मात् सः महोदारस्य तस्य किमेतावत्रमिति भावः ॥ ४९—५० ॥

इदानीं कलेः सर्वेऽपि गुणेषु श्रैष्ठ्यमाह—कलेरिति द्वाभ्याम् । दोषाणां निधेरपि कलेरेको गुणो राजवत् विराजमानो राजेवास्ति यथा एक एव राजा असङ्ख्यानपि दस्यून् हन्ति तथैवैक एव गुणः सर्वानप्युक्तवक्ष्यमाणदोषान् हन्तीति भावः स एव कः ? तत्राह—कीर्त्तनादेवेति । नात्र ध्यानादेरपेक्षेत्यर्थः । यद्वा कीर्त्तनादेव किमुत कीर्त्तनसहितध्यानादिभ्यः परं सर्वोत्कृष्टपुरुषार्थं प्रेमाणम् ॥ ५१ ॥

सर्वयुगगतानि भगवत्प्राप्तिसाधनानि कलिरेक एव ददाति तत्रापि स्वयमप्रयत्नादेकस्मात् सर्वयुगमात् कीर्त्तनादेव ददातीत्याह—कृते इति । तत्सर्वं हरिकीर्त्तनादेव भवति ॥ ५२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
द्वादशस्य तृतीयोऽयं सङ्गतः सङ्गतस्सताम् ॥ ३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मभावं स्वसाम्यम् ॥ ५० ॥

अथ कलेर्महान्तं गुणमाह—कलेरिति द्वाभ्याम् ॥ ५१ ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
तृतीयाऽध्यायार्थप्रकाशः ॥ ३॥

---

भाषा टीका ।

हे राजन् ! तुम तो अब मरनेवाले हो, तस्मात् सर्व प्रकार से श्रीकेशव को सावधान होकर हृदय में स्थित करो, तिसीसे उत्कृष्ट गति को प्राप्त होवोगे ॥ ४९ ॥

म्रियमाण लोगों को अवश्य ही श्रीविष्णु भगवान् का ध्यान करना चाहिये । हे राजन् ! वे सर्वात्मा और सर्व के आश्रय श्रीविष्णु भगवान् अपने जन को अपने सदृश कर लेते हैं ॥ ५० ॥

हे राजन् ! यह कलियुग दोषों का भण्डार है, परन्तु इसका एक बड़ा ही उत्तम गुण है, कि—पुरुष श्रीकृष्ण के कीर्त्तन मात्र करने से मुक्तसङ्ग होकर परमात्मा को प्राप्त हो जाता है ॥ ५१ ॥

देखो कृतयुग में जो फल श्रीविष्णु भगवान् के ध्यान करनेवाले को होता रहा, और त्रेतायुग में यज्ञों से श्रीविष्णु भगवान् की पूजा करनेवाले को जो फल होता रहा, और द्वापर युग में जो श्रीहरि की परिचर्या से फल प्राप्त होता रहा, वे तीनों युगों के तीन प्रकार के फल कलियुग में केवल एक श्रीकृष्ण के कीर्त्तन मात्र से प्राप्त होते हैं ॥ ५२ ॥

इति श्रीमद्भागवत द्वादशस्कन्ध में तृतीय अध्यायकी,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्ता ॥ ३ ॥

---

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥



## चतुर्थोऽध्यायः ।

श्रीशुक उवाच ।

कालस्ते परमाण्वादिर्द्विपरार्धावधिर्नृप !।
कथितो युगमानं च शृणु कल्पलयावपि ॥ १ ॥
चतुर्युगसहस्रं च ब्रह्मणो दिनमुच्यते ।
सङ्कल्पो यत्र मनवश्चतुर्दश विशाम्पते !॥ २॥
तदन्ते प्रलयस्तावान् ब्राह्मी रात्रिरुदाहृता ।
त्रयो लोका इमे तत्र कल्पन्ते प्रलयाय हि ॥ ३ ॥
एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक् ।
शेतेऽनन्तासनो विश्वमात्मसात्कृत्य चाऽऽत्मभूः ॥ ४ ॥
द्विपरार्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः ।
तदा प्रकृतयः सप्त कल्पन्ते प्रलयाय वै ॥ ५ ॥
एष प्राकृतिको राजन्! प्रलयो यत्र लीयते ।
आण्डकोशस्तु सङ्घातो विघात उपसादिते ॥ ६ ॥
पर्जन्यः शतवर्षाणि भूमौ राजन्न वर्षति ।
तदा निरन्ने ह्यन्योऽन्यं भक्षमाणाः क्षुधाऽर्दिताः ॥ ७॥
क्षयं यास्यन्ति शनकैः कालेनोपद्रुताः प्रजाः ।
सामुद्रं दैहिकं भौमं रसं साम्वर्तको रविः ॥ ८ ॥

---

श्रीधरस्वामीकृतभावार्थदीपिका ।

चतुर्थे तु चतुर्धोक्ता लया नैमित्तिकादयः ।
तत्र संसारनिस्तारो हरिकीर्त्यैव वर्ण्यते ॥

कलिदोषनिवर्तकं हरिनामसङ्कीर्तनादिकं स एव च कलौ परमो धर्म इति प्रश्नद्वयस्योत्तरमुक्तम् । यच्चान्यत्पृष्टं प्रलयकल्पयोर्मानं ब्रूहीति तदिदानीं तृतीयस्कन्धोक्तकालमानानुवादपूर्वकं निरूपयति—काल इति । "स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम्" इत्यादिना कालः कथितः "चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् । सङ्ख्यातानि सहस्राणि द्विगुणानि शतानि च" इति युगमानं कथितम् ॥ १ ॥

तत्र कल्पमानमाह—चतुर्युगेति । यत्र चतुर्दश मनवः क्रमेण भवन्ति ॥ २ ॥

प्रलयस्तु चतुर्विधः नैमित्तिकः प्राकृतिक आत्यन्तिको नित्यश्चेति तत्र नैमित्तिकं प्रलयं मानसहितमाह—तदन्त इति द्वाभ्याम् । तावान् चतुर्युगसहस्रप्रमाणः सैव ब्राह्मी रात्रिः ॥ ३ ॥

नैमित्तिकत्वं दर्शयति, यत्र यदा विश्वसृक् श्रीनारायणो विश्वमात्मसात्कृत्य स्वस्मिन्नुपसंहृत्य शेते आत्मभूर्ब्रह्मा च तस्मिन् शेते तयोरभेदविवक्षया वा ब्रह्मण एवानन्तासनत्वमुक्तं ब्रह्मणो निद्रां निमित्तीकृत्य प्रवर्तमानो लोकत्रयप्रलयो नैमित्तिक इत्यर्थः ॥ ४ ॥

प्राकृतिकं प्रलयमाह—द्वाभ्याम् । द्विपरार्धे तु ब्रह्मण आयुषि सप्तप्रकृतयो महदहङ्कारपञ्चतन्मात्राणि ॥ ५ ॥

सङ्घातो महदादिविकारभूतः प्रकृतीनां तत्कार्यब्रह्माण्डस्य च प्रलयात्प्राकृतिक इत्यर्थः । विघातं विघातकारणे उपसादिते सति ॥ ६ ॥

## श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवाऽऽह–पर्जन्य इत्यादिना । बुद्धीन्द्रियार्थरूपेणोत्पन्नः प्राकृतेन ग्रन्थेन ॥ ७ ॥

सामुद्रादिकं सर्वरसं रविः पिबते आकर्षति ॥ ८ ॥ ९ ॥

---

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—३ ॥

आत्मभूशब्दस्य चतुर्मुखपरत्वे तस्यानन्तासनत्वं प्रासादखट्वापर्यङ्कन्यायादुपपद्यते "कृष्णनाभिहृदोद्भूतकमलोदरशायिने" इत्यनन्तशायनभगवन्नाभिपद्मशायित्वं स्मर्यते ब्रह्मणः ॥ ४ ॥

सप्तप्रकृतयः महदहङ्काराकाशादयः ॥ ५ ॥

यत्र प्रलये अण्डकोशो लीयत इत्यन्वयः । विघाते शैथिल्ये ॥ ६-६ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ यत्पृष्टं प्रलयकल्पयोर्मानं ब्रूहीति तत्तृतीयस्कन्धोक्तकालस्वरूपानुवादपूर्वकं निरूपयितुमारभते–काल इति । ते तुभ्यं कथित इति सम्बन्धः । परमाणुः आदिर्यस्य द्विपरार्द्धमवधिरुत्तरावधिर्यस्य सः कालः कथितः "स कालःपरमाणुर्वै यो भुङ्क्ते परमाणुताम्" इत्यादिना कथितः तथा "चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् । सङ्ख्यातानि सहस्राणि द्विगुणानि शतानि च" इति युगमानं च कथितम् इत्यर्थः । इदानीं कल्पलयावपि शृणु तयोर्मानं शृणु इत्यर्थः ॥ १ ॥

अत्र तावत्कल्पमानमाह–चतुर्युगसहस्रमिति । कल्पो द्विविधः दैनन्दिनो महांश्चेति तत्राद्यो ब्रह्मणो दिनात्मक एव कल्प इत्यभिधीयते तं निर्दिशति–हे विशाम्पते ! यत्र कल्पे चतुर्दश मनवः क्रमेण भवन्ति मन्वन्तरमानं तु "स्वं स्वं कालं मनुर्भुङ्क्ते युगानामेकसप्ततिम्" इति तृतीयस्कन्ध एवोक्तमप्यनुसन्धेयम् इति ॥ २ ॥

प्रलयस्तु चतुर्विधः, नैमित्तिकः प्राकृतिकः आत्यन्तिको नित्यश्चेति । तत्र नैमित्तिकं प्रलयं निरूपयति—तदन्ते इति द्वाभ्याम् । तदन्ते चतुर्युगसहस्रान्ते प्रलयस्तावान् चतुर्युगसहस्रपरिमाणः सैव ब्राह्मी रात्रिः दिनान्ते चतुर्युगसहस्रान्ते निवृत्तजगद्व्यापारः चतुर्मुखश्शेते स नैमित्तिकः प्रलय इत्यर्थः । तदेवाह–त्रय इति । यत्र रात्रौ इमे भूरादयस्त्रयो लोकाः प्रलयाय कल्पान्ते प्रलीना भवन्तीत्यर्थः ॥ ३ ॥

एष नैमित्तिकः प्रलयः प्रोक्तः तत्र नैमित्तिकशब्दस्य प्रवृत्तौ निमित्तमाह—यत्र विश्वसृगिति । विश्वसृजः शयननिमित्तकत्वादस्य प्रलयस्य नैमित्तिकत्वं कथम्भूतः शेते इत्यत्राह—अनन्तः शेषः आसनं शय्या यस्य सः विश्वमात्मसात्कृत्य आत्मगतं कृत्वा स्वस्मिन्नुपसंहृत्येति यावत् । अत्र विश्वसृगात्मभूशब्दयोश्चतुर्मुखपरत्वेऽपि तस्यानन्तशयत्वं प्रासादखट्वापर्यङ्कन्यायादुपपद्यते "कृष्णनाभिहृदोद्भूतकमलोदरशायिनः" इत्यनन्तशायनभगवन्नाभिपद्मशायित्वं ब्रह्मणः स्मर्यते इति ॥ ४ ॥

एवं दैनन्दिनकल्पः नैमित्तिकप्रलयश्च निरूपितः अथ महाकल्पं प्राकृतप्रलयं च निरूपयति–द्विपरार्द्ध इति । द्विपरार्द्धं इत्यनेनायमेव महाकल्प इति सूचितम् सप्तप्रकृतयः महदहङ्कारौ भूतपञ्चकञ्चेति सप्त अयं सप्तप्रकृतीनां लयात्मकत्वात् प्राकृतिको लय इत्युच्यत इत्यर्थः ॥ ५ ॥

प्रकृतयः सप्त कथं लीयन्ते इत्यत्र तत्प्रकारं वक्तुं प्रस्तौति यत्र लीयते इत्यादिना । विघाते विनाशनिमित्ते उपस्थिते उपगते सति सङ्घातः प्रकृतिसप्तकसङ्घातः परिणामरूपोऽण्डकोशः यत्र प्राकृतिके प्रलये लीयते ॥ ६ ॥

कोऽसौ विघात इत्यत आह–पर्जन्य इति । अवर्षतीति सप्तम्यन्तं शतवर्षाणि पर्जन्ये ऽवर्षति सतीत्यर्थः । निरन्नेति निरन्नस्यास्य आर्षः अन्योन्यं भक्षयमाणाः प्रजा एवमुपद्रुताः कालेन शनैः क्षयं यास्यन्तीति सम्बन्धः । सामुद्रमिति समुद्रादिषु भवं रसं जलं सावर्तको रविः प्रलयादित्यः ॥ ७ ॥ ८ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवत्कटाक्षप्रेक्षणाल्लप्तकल्पप्रलयप्रकारं तत्स्वरूपं भागवतप्रवृत्तिं च कथयत्यस्मिन्नध्याये तत्रादावुक्तमनूद्य वक्तव्यं प्रतिजानीते—काल इति कथितस्तृतीयस्कन्धे । अथ कल्पप्रलययोरपि कालाधीनत्वेन तत्स्वरूपश्रवणानन्तरम् ॥ १ ॥

यत्र दिने ॥ २ ॥

यस्य दिनस्यान्ते ब्राह्मी ब्रह्मसम्बन्धिनी यत्र रात्रौ ॥ ३ ॥

यत्र प्रलये आत्मसात्कृत्य आत्मनि निधाय ॥ ४ ॥

सप्त प्रकृतयः महदहङ्कारावाकाशादिपञ्चभूतानि ॥ ५ ॥

यत्र प्रकृतिप्रलये सङ्घातश्चतुर्विंशतितत्त्वसमूहात्मकः, प्रलयप्रकारमाह—विघात इति । विघाते प्रलये उपस्थिते आसन्ने सति ॥ ६—७ ॥

"कल द्रवणे" इति धातोः कालेन द्रवणहेतुना सामुद्रं समुद्रस्य विद्यमानं रसं जलं दैहिकं देहस्य विद्यमानं रसं रेतोलक्षणं वीर्यं भौमं रसं तिक्तादिलक्षणम् ॥ ८ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—३ ॥

एष नैमित्तिक इत्युपलक्षणं मन्वन्तरनिमित्तत्वमपि तदन्तर्भूतं ज्ञेयम् ॥ ४—२२ ॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नैमित्तिकाद्यान् प्रलयांश्चतुर्थे चतुरः क्रमात् ।
उक्त्वोपसञ्जहार श्रीशुकः कृष्णकथामृतम् ॥

यत् पृष्टं प्रलयकल्पयोर्मानं ब्रूहीति तत्र तृतीयस्कन्धोक्तकालानुवादपूर्वकमाह—काल इति, ॥ १ – २ ॥

तावान् चतुर्युगसहस्रप्रमाणः ॥ ३ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

प्रलयाख्यत्वादस्तत्रैव प्रलयो नैमित्तिकः प्रथमः विश्वसृक् श्रीनारायणः आत्मसात्कृत्य स्वस्मिन्नुपसंहृत्य शेते आत्मभूर्ब्रह्मा च तस्मिन् प्रविश्य शेते अत एव ब्रह्मणो निद्रां निमित्ती-कृत्य प्रवर्त्तमानो लोकत्रयप्रलयो नैमित्तिकः एष एव दैनन्दिन-प्रलयश्चाख्यश्च ॥ ४ ॥

प्राकृतिकं प्रलयमाह-द्विपरार्द्धेति द्वाभ्याम्। आद्यः परार्द्धो-ऽपक्रान्त एव द्वितीयेऽपि परार्द्धे अतिक्रान्ते सति ब्रह्मण आयुः-समाप्तौ सत्यां सप्तप्रकृतयो महदहङ्कारतन्मात्रपञ्चकानि ॥ ५ ॥

प्रकृतेः सकाशादुत्पन्नवस्तूनां प्रकृतावेव प्रवेशात् प्राकृतिकः सङ्घातः महदादितत्त्वसमूह एवाण्डकोशः विघाते विघात-काल उपसन्ने सति ॥ ६ ॥

तत्र प्रकारमाह—पर्जन्य इति, ॥ ७-८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एवं राजदेहाद्युपलक्षितं सर्वं प्राकृतं निरोधविषयमुक्त्वाऽथ निरोधं प्रपञ्चयति। चतुर्थाध्यायेन, तत्र तावत् यत्पूर्वं कलिदोष-निवृत्त्युपायादिकं तदुत्तरं दत्त्वा यच्च पृष्टं युगानित्यत्वेन युग-मानमिति प्रलयकल्पयोर्मानं, कालस्य च गतिं ब्रूहीति, तदुत्तरमाह-काल इति। ते तुभ्यं "सकालः परमाणुर्वै यो भुङ्क्ते परमाणुताम्" इत्यादिना तृतीयस्कन्धे कालः कथितः "चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम्। संख्या-तानि सहस्राणि द्विगुणानि शतानि च" इति युगमानं च कथि-तम् अधुना कल्पलयावपि शृणु तयोर्मानं शृणु इति यावत् ॥१॥

तत्र तावत्कल्पमानमाह- चतुर्युगसहस्रमिति, ॥ २ ॥

प्रलयस्तु चतुर्विधः, नैमित्तिकः प्राकृतिकः आत्यन्तिको नित्यश्च. तत्र तावन्नैमित्तिकं प्रलयं मानसहितमाह-तदन्त इति। तदन्ते तस्य चतुर्युगसहस्रात्मकस्य ब्रह्मणो दिनस्यान्ते तावान् चतुर्युगसहस्रप्रमाणः प्रलयः सैव ब्राह्मी रात्रिः ॥ ३ ॥

यत्र विश्वसृक् श्रीनारायणः अनन्तः शेषः आसनं शय्या यस्य सः विश्वं लोकत्रयमात्मसात्कृत्य स्वस्मिन्नुपसंहृत्य शेते आत्मभूः ब्रह्मा च तस्मिन् शेते स च श्रीमन्नारायणो ब्रह्मणो निद्रां निमित्तीकृत्य प्रवर्त्तमानो लोकत्रयप्रलयो नैमित्तिक इत्य-भिधीयते कल्पान्ते श्रीनारायणे ब्रह्मादीनां प्रवेश उक्तो हरिवंशे

"ब्रह्माणमग्रतः कृत्वा प्रसन्नं विश्वतो मुखम्।
सर्वे देवगणाश्चैव त्रयस्त्रिंशच्च छन्दजाः।
प्रविशन्ति महायोगं हरिं नारायणं प्रभुम्" ॥

इति ॥ ४ ॥

अथ प्राकृतिकं प्रलयमाह-द्विपरार्द्धे इत्यादद्वाभिः। महदहङ्कारो पञ्चतन्मात्राणि चेत्येवं सप्त ॥ ५ ॥

एष वक्ष्यमाणकार्यकारणात्मकायाः प्रकृतेर्वक्ष्यमाणेन प्रका-रेण परे ब्रह्मणि लयात् प्राकृतिको लय इत्यभिधीयते इत्याह-एष इति विघाते विनाशनिमित्ते उपसादिते कालेन प्रापिते सति सप्तप्रकृतिसङ्घातः अण्डकोशः लयं गन्तुमुपक्रमते इति शेषः ॥६॥

तद्वदाह-पर्जन्य इत्यादिना ॥ ७ ॥

पिबते आकर्षति ॥ ८-९ ॥

---

भाषा टीका।

श्रीहरये नमः।

श्रीशुक उवाच।

श्रीशुकदेवजी बोले, कि—हे राजन्! परमाणु से लेकर द्विपरार्द्ध पर्यन्त कालका वर्णन तथा युगों का परि-माण हमने तुमारे आगे तृतीय स्कन्ध में वर्णन किया, अब तुम सावधान होकर कल्प और प्रलय का श्रवण करो ॥ १ ॥

एक सहस्र चतुर्युगी को ब्रह्माजी का दिन कहते हैं, और उसी का नाम कल्पभी है, हे राजन्! जिसमें, कि-चतुर्दश १४ मनु राज करते हैं ॥ २ ॥

तिसके अन्त में उतनाही भारी प्रलय होता है, जिसको ब्रह्माजी की रात्रि कहते हैं उस समय में भूलोक भुवर्लोक और स्वर्ग लोक इन तीनों लोकों का प्रलय होजाता है ॥ ३ ॥

यही नैमित्तिक प्रलय कहा जाता है, इसी नैमित्तिक प्रलय में श्रीनारायण सम्पूर्ण विश्वको अपने विषय में उप संहार करके श्रीशेषभगवान् पर आसन लगा कर शयन करते हैं, और उन श्रीनारायण के विषय ही ब्रह्माजी शयन करते हैं, ब्रह्माकी निद्राको निमित्त मानकर निद्रापर्यन्त वह प्रलय होता है इसी से यह नैमित्तिक प्रलय कहा जाता है ॥ ४ ॥

परमेष्ठी श्रीब्रह्माजी का जब द्विपरार्द्ध अतिक्रान्त हो जाता है तब, अर्थात् ब्रह्मा के आयु पूर्ण होने पर, सातों प्रकृति प्रलय को प्राप्त होती है, महत्तत्त्व अहङ्कार और शब्दादि तन्मात्रा ये सातों अपने २ कारणों में लीन होजाते हैं ॥ ५ ॥

हे राजन्! यह सब प्रकृतियों के लीन होने से प्राकृतिकप्रलय कहा जाता है, और इस प्रलय में कारणों का नाश प्राप्त होने से ब्रह्माण्ड रूप कार्य का भी प्रलय हो जाता है ॥ ॥

हे राजन्! जब प्रलय होता है तब प्रथम तो सौ १०० वर्ष तक मेघ नहीं वर्षते हैं, उस समय निरन्न इस संसार में क्षुधासे व्याकुल होकर जन्तु परस्पर में भक्षण करने लगते हैं ७ ॥

उस कालके उपद्रव से प्रजा लोग धीरे २ नाश को प्राप्त होते हैं। उस समय प्रलय कालके सूर्य भी अपनी तीक्ष्ण किरणों से समुद्र सम्बन्धि देह सम्बन्धि भूमि सम्बन्धि तीनों रसों को शोष लेते हैं ॥ ८ ॥

---

रश्मिभिः पिबते घोरैः सर्वं नैव विमुञ्चति ।
ततः सम्वर्तको वह्निः सङ्कर्षणमुखोत्थितः ॥ ९ ॥
दहत्यनिलवेगोत्थः शून्यान्भूविवरानथ ।
उपर्यधः समन्ताच्च शिखाभिर्वह्निसूर्ययोः ॥ १० ॥
दह्यमानं विभात्यण्डं दग्धगोमयपिण्डवत् ।
ततः प्रचण्डपवनो वर्षाणामधिकं शतम् ॥ ११ ॥
परः साम्वर्तको वाति धूम्रं खं रजसाऽऽवृतम् ।
ततो मेघकुलान्यङ्ग ! चित्रवर्णान्यनेकशः ॥ १२ ॥
शतं वर्षाणि वर्षन्ति नदन्ति रभसस्वनैः ।
तत एकोदकं विश्वं ब्रह्माण्डविवरान्तरम् ॥ १३ ॥
तदा भूमेर्गन्धगुणं ग्रसन्त्याप उदप्लवे ।
ग्रस्तगन्धा तु पृथिवी प्रलयत्वाय कल्पते ॥ १४ ॥
अपां रसमथो तेजस्ता लीयन्तेऽथ नीरसाः ।
ग्रसते तेजसो रूपं वायुस्तद्रहितं तदा ॥ १५ ॥
लीयते चानिले तेजो वायोः खं ग्रसते गुणम् ।
स वै विशति खं राजंस्ततश्च नभसो गुणम् ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनिलवेगोत्थो वायुवेगोद्भूतः अनिलवेगो वा इति पाठे अनिलेन वेगो यस्य सः वा: रविणा रश्मिभिः पीतमुदकं च दहतीत्यर्थः । अनिलवेगो धे इति तु पाठः सुगमः भूविवरान् पातालादीन् शून्यान् रविणा दैहिकरसाकर्षणात्प्राणरहितान् शिखाभिर्ज्वालाभिः ॥ १० ॥

किञ्चिदधिकं वर्षाणां शतं सम्वर्तकः प्रलयहेतुकः परो वायुर्वाति तदा रजसाऽऽवृतं खं धूम्रं भवति ॥ ११ ॥ १२ ॥

रभसस्वनैस्तीव्रगर्जितैः ब्रह्माण्डविवरान्तरं ब्रह्माण्डविवरमध्यगतं विश्वमेकोदकमेकार्णवोदकव्याप्तं भवति ॥ १३ ॥

उदप्लवे उदकेनाप्लवे सति प्रलयत्वायाभावाय ॥ १४-१६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भूविवराणि पातालादीनि ॥ १०—१४ ॥
तेजः ग्रसतीत्यन्वयः । ता आपः ॥ १५-१६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दुःसहैः रश्मिभिः पिबते न त्वधुनेव पीत्वा विमुञ्चतीत्यर्थः । तत इति अनिलवेगोत्थः वायुवेगोत्थः प्रलयाग्निः अनिलवेगोऽधारिति पाठे चार्जवं रविणा पीतावशिष्टोदकं च दहतीत्यर्थः । नैरुक्तपाठस्तु सुगमः । अनिलेन वेगो यस्य स इति पाठद्वयेऽप्यर्थः । ततः शून्यान् त्रिलोकान् भूविवरान् पातालादीनि च दहतीति सम्बन्धः इत्थमुपर्यधः समन्ताच्च वह्निसूर्ययोः शिखाभिर्ज्वालाभिर्दह्यमानं ब्रह्माण्डं दग्धगोमयपिण्डवद्विभाति वर्तिष्यते तत इति वर्षाणामधिकं शतं किञ्चिदधिकं वर्षाणां शतमित्यर्थः । प्रचण्डोऽनिलः ॥ ९—११ ॥

परः बलीयान् सांवर्तकः प्रलयवायुर्वाति तदा रजसावृतं खमाकाशं धूम्रं भविष्यति ततो मेघकुलानीति । अङ्ग,हे राजन् ! रभसस्वनैः तीव्रगर्जितैर्नदन्ति गर्जितानि करिष्यन्ति चेत्यर्थः । व्यत्ययेन तृतीया तदा ब्रह्माण्डविवरं मध्यगतं विश्वम् एकोदकम् एकार्णवोदकव्याप्तं भविष्यति तदेत्थम् उदप्लवे उदकप्लवरूपे सति जगति भूमेर्गन्धगुणमापो ग्रसन्ते(न्ति) सोऽप्सु लीयते इत्यर्थः । ग्रस्तः गन्धो यस्याः सा पृथिवी प्रलयत्वायाभावाय कल्पते ॥ १२—१४ ॥

अपामिति । अथोऽनन्तरमपां रसगुणं तेजो ग्रसतीति वचनविपरिणामेनानुषक्तेन सम्बन्धः । अथ नीरसास्ता आपः लीयन्ते तेजसीति विभक्तिविपरिणामेनान्वयेन सम्बन्धः ततस्तेजसो रूपं वायुर्ग्रसते तदा तद्रहितं तेजः वायौ लीयते

शब्दं ग्रसति भूतादिर्नभस्तमनुलीयते।
तैजसश्चेन्द्रियाण्यङ्ग! देवान्वैकारिको गुणैः॥ १७॥
महान् ग्रसत्यहङ्कारं गुणाः सत्त्वादयश्च तम्।
ग्रसतेऽव्याकृतं राजन्! गुणान्कालेन चोदितम्॥ १८॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

इत्युत्तरेण सम्बन्धः। वायोर्गुणं स्पर्शं खमाकाशो ग्रसेत॥ स वै स्पर्शरहितो वायुः हे राजन्! खमाकाशं विशति तत्र लीयत इत्यर्थः। ततश्च नभसो गुणं शब्दं भूतादिस्तामसाहङ्कारो ग्रसति ग्रस्तु अनुगुणग्रसनानन्तरं तस्मिन् भूतादौ लीयते इत्यर्थः॥ तैजसश्चेति। चकारः साहित्यद्योतकः राजसाहङ्कारसहितः वैकारिकः सात्त्विकाहङ्कारः गुणैर्वृत्तिभिः सह देवानिन्द्रियाणि ज्ञानेन्द्रियाणि ग्रसते ततोऽहङ्कारत्रिविधं महान् ग्रसते ततः सत्त्वादयो गुणाः तं महान्तं ग्रसन्ति गुणा ग्रसन्तीत्युपचारः गुणमयी प्रकृतिरेव महान्तं ग्रसतीत्यर्थः। ग्रसत इति। हे राजन्! कालेन चोदितम् अव्याकृतं प्रधानं गुणान् ग्रसति विषमान् गुणान् समीकरोति समीकृतगुणं भवतीति यावत् तन्महदादिनामरूपविभागरहितं गुणसाम्यावस्थं प्रधानमव्याकृतशब्देनाभिधीयते॥ १५—१८॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

सांवर्तकः प्रलयकालीनः॥ ९॥

सप्तभूम्यान् प्राणिरहितान् भूविवरान् पातालादीन्॥१०-११॥

रजसावृतं खं धूम्रवर्णं चित्रवर्णानि नीलादिनाना विधानि॥ १२॥

ब्रह्माण्डविवरान्तरं ब्रह्माण्डबिलविशेषं ब्रह्माण्डबिलोदरं वा एकोदकम् उदकात्मकं भवति॥ १३॥

पञ्चभूतगुणलयप्रकारमाह—तदेति। उपप्लवे प्रलये॥ १४॥

नीरसाः आपः तद्रहितं रूपरहितम्॥ १५॥

तेजो वायौ लीयते स वायुः खं विशति तदनु शब्दगुणग्रसनानन्तरं तैजसानीन्द्रियाणि तैजसाहङ्कारे लीयन्ते इति शेषः॥ १६॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

विकर्षते आकर्षति॥ ९—१०॥

किञ्चिदधिकं वर्षाणां शतं व्याप्य वाति तदा रजसाऽऽवृतं खं धूम्रं भवति॥ ११—१३॥

प्रलयत्वाय प्रकृष्टो लयो यस्याः सा प्रलया तस्या भावः प्रलयत्वं तस्मै नाशायेत्यर्थः॥ १४॥

अपां रसं तेजो ग्रसति॥ १५—१६॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

शिखाभिः ज्वालाभिः॥ १०-११॥

परः महाबलः रजसाऽऽवृतं खं धूम्रं भवति॥ १२॥

रभसस्वनस्तनितैः घोरगर्जितैः॥ १३॥

उदप्लवे उदकेन प्लाविते सति प्रलयत्वाय कारणभावाय॥ १४—१५-१६॥

भाषा टीका।

और वर्षा के समय पर उस सर्व रस को नहीं छोडते हैं, किन्तु थोडा २ वर्षते हैं। तब उस समय श्रीसङ्कर्षण देव के मुखसे प्रलय काल का अग्नि प्रकट होता है॥ ९॥

और पवन के वेग से बढा हुआ वह अग्नि शून्य सप्त पातालों को जला देता है, उस समय ऊपर नीचे और चारों तरफ अग्नि और सूर्य की शिखाओं से॥ १०॥

जला हुआ वह ब्रह्मांड जले हुये गोबर के कण्डे सदृश देख पडता है, तिस्के पश्चात् कुछ अधिक सौ १०० वर्ष तक बडा प्रचण्ड पवन॥ ११॥

अर्थात् प्रलय काल का संवर्तक नामक वायु रज से आकाश को धूमल करता हुआ बहता है, तिस्के अनन्तर चित्र विचित्र वर्ण वाले अनेक मेघों के समूह॥ १२॥

सौ वर्ष पर्यंत आकाश में घोर शब्द कर वर्षा करते हैं। उस समय में सब विश्व ब्रह्मांड के भीतर और बाहर जलमय होजाता है॥ १३॥

ब्रह्मांड को जल में डूब ने पर पृथिवी के गन्ध रूप गुण को जल ग्रसलेते हैं। जब पृथिवी के गन्ध का ग्रास होजाता है, तब वह पृथिवी अपने कारण में लीन हो जाती है॥ १४॥

ऐसेही जलों के रस को तेज ग्रस लेते हैं तब वे जल भी निरस होकर अपने कारण में लीन होजाता है। इसी प्रकार तेज के रूप को वायु ग्रस लेता है तब वह तेज उस रूपसे रहित होजाता है॥ १५॥

और रूप रहित होकर वह तेज अनिल में लीन हो जाता है। तब वायु के स्पर्श गुण को आकाश ग्रस लेता है। हे राजन्! तब वह वायु आकाश में लीन होजाता है तिस्के पश्चात् आकाश का जो शब्द गुण है॥ १६॥

श्रीवल्लभाचार्यकृतभावार्थदीपिका।

भूतादिस्तामसोऽहङ्कारः गुणैर्वृत्तिभिः सह॥ १७॥

अव्याकृतं प्रधानम्॥ १८॥

न तस्य कालावयवैः परिणामादयो गुणाः ।
अनाद्यनन्तमव्यक्तं नित्यं कारणमव्ययम् ॥ १९ ॥
न यत्र वाचो न मनो न सत्त्वं तमो रजो वा महदादयोऽमी ।
न प्राणबुद्धीन्द्रियदेवता वा न सन्निवेशः खलु लोककल्पः ॥ २० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्य तु लयो नास्तीत्याह—न तस्येति । कालावयवैरहोरात्रादिभिः गुणा भावविकाराः परिणामो विपरिणामः अव्यक्तमभिव्यक्तिविकारशून्यं नित्यं सर्वदैकरूपं ह्रासवृद्धिरहितमित्यर्थः । अव्ययमपक्षयशून्यं सर्वत्र हेतुः कारणमिति ॥ १९ ॥

किञ्च, वागादिगोचरस्य सविशेषस्य विकारा भवन्तीदन्तु न तथेत्याह—न यत्रेति द्वाभ्याम् । लोककल्पो लोकरूपः सन्निवेशो रचनाविशेषो नास्ति ॥ २० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

देवान् ज्ञानेन्द्रियाणि अहङ्कारो प्रसूत इत्यध्याहारः गुणा प्रसूयन्त इत्युपचारः गुणमयी प्रकृतिरेव प्रसूते महान्तमव्याकृतं गुणान् प्रसूते इति विषमान् गुणान् समीकरोतीत्यर्थः ॥ १७—१८ ॥

परिणामशब्दो वृद्धेः पूर्वावस्थापरः ॥ १९ ॥

न यत्रेति जाग्रत् इत्यादि वचस्तद्गोचरं मनश्च न प्रवर्तेत इत्यर्थः । सत्त्वादिशब्दैर्विषमावस्थं गुणत्रयं विवक्षितम् ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, तत् क्व लीयते ? इत्यभिप्रायमाशङ्क्य परस्मिन् देवे एवेति वदन् तस्यापि काचित्लयशङ्कां वारयितुं परमात्मस्वरूपं शोधयति—न तस्येति त्रिभिः । यच्छब्दस्य "तन्मूलभूतं पदमामनन्ति" इति तृतीयेन सम्बन्धः । पदशब्देनाऽव्याकृतशब्दवाच्यानं विवक्षितम् अव्यक्तस्य लयो नामाऽविभक्तनामरूपतया तमोवस्थापत्तिः यस्य परमात्मस्वरूपस्य कालावयवैरहोरात्रादिभिः परिणामादयो गुणा न सन्ति परिणामशब्दो वृद्धेः पूर्वावस्थापरः तत्र हेतुरनाद्यन्तमाद्यन्तरहितमत एवाऽव्यक्तं व्यक्तैरिन्द्रियैर्न व्यज्यत इति तथा नित्यमित्यनाद्यन्तत्वस्यैव विवरणम् । यद्वा, स्वरूपतः स्वभावतश्च नित्यं कारणमव्यक्तादिपृथिव्यन्तजगत्कारणम् अनेनाऽव्यक्तलयस्यानत्वयोग्यत्वं सूच्यते तथाऽप्यव्ययं कार्यगतैर्दोषैर्न व्येति न वैविध्यं गच्छतीति तथा ॥ १९ ॥

किञ्च, न यत्रेति जायते वर्द्धते इत्यादिवाचः तद्गोचरं मनश्च यत्र न वर्तन्ते यत्र स्वरूपे सत्त्वादयो न सन्ति सत्त्वादिशब्दैः साम्य वैषम्यावस्थं गुणत्रयं विवक्षितम् अनेन गुणत्रयवद्द्रव्यव्युदासः देवताशब्दो ज्ञानेन्द्रियपरः इन्द्रियशब्दः कर्मेन्द्रियपरः महदादयो न सन्तीत्यनेन कर्मायत्तमहदादिसङ्घातात्मकदेहसम्बन्धव्युदासः करणायत्तज्ञानव्युदासो वा, लोकाः कल्प्यन्ते यत्र स लोककल्पः सन्निवेशः ब्रह्माण्डात्मकः यत्र नेत्यनेन सन्निवेशस्य परमात्मस्वरूपगतत्वव्युदासः । तस्य प्रकृतिस्वरूपगतत्वादिति भावः ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वैकारिका देवाः वैकारिकाहङ्कारं स्वगुणैः सह ॥ १७ ॥

तं महान्तं बीजं व्यञ्जकम् अव्याकृतं मूलप्रकृतिः कालेन हरिणा चोदितं प्रेरितं सत्त्वादिगुणान् प्रसूते ॥ १८ ॥

मूलप्रकृतिस्वरूपं वक्ति—न तस्येति । तस्याव्यक्तस्य त्रुटिलवादिकालावयवैः परिणामादयो गुणा न सन्ति तदव्यक्तं मूलप्रकृतिं विश्वसृजां कारणम् आमनन्तीति शेषः इतरविशेषणानुक्तयः समानमित्याशयेनाह—अनादीति, ॥ १९ ॥

कालेनेत्युक्तस्य हरेः स्वरूपं दर्शयति—न यत्रेति । वागादयो यत्र कञ्चन विशेषं नापादयन्तीति शेषः ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भूतादिस्तामसोऽहङ्कारः तैजसोऽहङ्कार इन्द्रियाणि प्रसूते महान् अहङ्कारं गुणैस्त्रिवृद्भिः सह प्रसूते तं महान्तम् ॥ १७ ॥

अव्याकृतं प्रधानम् ॥ १८ ॥

तस्य प्रधानस्य कालावयवैरहोरात्रैः परिणामो विपरिणामस्तुर्यो विकारः अनादीति प्रथमो विकारो जन्मनः अनन्तमित्यन्तो न अव्यक्तमित्यभिव्यक्तिलक्षणविकारो न नित्यं सर्वैकरूपमिति वृद्धिर्न अव्ययमित्यपक्षयो नेति विकारषट्कं निषिद्धम् ॥ १९ ॥

किञ्च, रागादिगोचरस्य सविकारस्य विकारा भवन्ति इदं तु न तथेत्याह—न यत्रेति द्वाभ्याम् । लोककल्पः लोकरूपसन्निवेशो रचनाविशेषः ॥ २०—२१ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भूतादिस्तामसोऽहङ्कारः गुणैस्त्रिभिः सह तैजस इन्द्रियाणि प्रसूते अनेनेन्द्रियाणां स्वरूपतोऽणुत्वेऽपि वृत्तितः किञ्चिद्व्यापकत्वमिति सूचितम् ॥ १७ ॥

अव्याकृतं मूलप्रकृतिः भगवच्छक्तिः गुणान् सत्त्वादीन् प्रसूते समीकरोति अत्र चकारात् पुरुषाव्यक्तयोरिति वक्ष्यमाणस्याप्ययमर्थो बोध्यः प्रकृतिः परे देवे लीयते इति तथाचाह यत् सुबालोपनिषदि "पृथिव्यप्सु लीयते आपस्तेजसि तेजो वायौ

न स्वप्नजाग्रन्न च तत्सुषुप्तं न खं जलं भूरनिलोऽग्निरर्कः ।
संसुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनन्ति ॥ १२ ॥
लयः प्राकृतिको ह्येष पुरुषाव्यक्तयोर्यदा ।
शक्तयः सम्प्रलीयन्ते विवशाः कालविद्रुताः ॥ २२ ॥
बुद्धीन्द्रियार्थरूपेण ज्ञानं भाति तदाश्रयम् ।
दृश्यत्वाव्यतिरेकाभ्यामाद्यन्तवदवस्तु यत् ॥ २३ ॥
दीपश्चक्षुश्च रूपं च ज्योतिषो न पृथग्भवेत् ।
एवं धीः खानि मात्राश्च न स्युरन्यतमादृतात् ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रलीयते वायुराकाशे प्रलीयते आकाशं इन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति महानव्यक्ते अव्यक्तमक्षरे अक्षरं तमसि तमः परे देवे एकीभवति" इति । अत्रा-ऽऽख्यान्तः सुगमोऽन्वयः परन्तु पाठक्रमादर्थक्रमस्य बलीयस्त्वेन आकाशस्तन्मात्रेषु तन्मात्राणि भूतादौ तामसाहङ्कारे इन्द्रियाणी-न्द्रियेषु कार्यकारणयोरभेदात्स्वकारणे राजसाहङ्कारे लीयन्ते इत्यन्वयः । तत्र तन्मात्रेष्विति बहुवचनं पृथिव्यादीनामपि गन्धादिद्वारा लयदर्शनार्थम् इन्द्रियेष्विति बहुवचनात् सात्त्विकाहङ्कारे देवताः मनश्च लीयन्ते इति भावः । त्रिविधोऽप्यहङ्कारो महति महानव्यक्ते लीयते अव्यक्तमक्षरे इत्यत्र गुणसाम्यगुणवैषम्यकार्योन्मुखत्वाभेदेन तमोऽक्षरमव्यक्तमिति प्रकृतेरेवावस्थात्रयम् तथाचाव्यक्तमक्षरे लीयते इति कार्योन्मुख्यावस्थां परित्यज्य गुणवैषम्यावस्थां प्राप्नोति प्रकृतिरक्षरं तमसीति गुणवैषम्यावस्थां परित्यज्य गुणसाम्यावस्थां प्राप्ता सती परे देवे परब्रह्मणि श्रीपुरुषोत्तमे एकीभवति सूक्ष्मशक्तिरूपतयाऽवतिष्ठत इत्यर्थः ॥ १८ ॥

तत्सर्वकारणं परदेवाख्यं तत्त्वं कीदृशमित्याकाङ्क्षायां तत्स्वरूपं निरूपयति—न तस्येति त्रिभिः । अनाद्यन्तमत एव नित्यम् ॥ १९ ॥

वाचो मनश्च इयत्ताबोधकतया यत्र न प्रवर्तन्ते । किञ्च, यत्र सत्त्वादयः सन्निवेशान्ताः प्रातिकूल्येन प्रवर्तन्ते इत्यर्थः । लोकाः भूरादयः कल्प्यन्ते यत्र स लोककल्पः सन्निवेशः ब्रह्माण्डात्मकः ॥ २० ॥

---

भाषा टीका ।

उस आकाश के शब्द गुण को तामस अहङ्कार ग्रस लेता है, तब आकाश तामस अहङ्कार में लीन होजाता है हे राजन्! राजस अहंकार वृत्तियों सहित इन्द्रियों को ग्रस लेता है, तथा इन्द्रियों के अधिष्ठातृ देवताओं को सात्त्विक अहंकार ग्रस लेता है ॥ १७ ॥

उस अहंकार को महत्तत्त्व ग्रस लेता है, तब वह त्रिविध अहंकार महत्तत्त्व में लीन होजाता है, और स्वभाविक जो गुण हैं, वे महत्तत्त्व को ग्रस लेते हैं तब महत्तत्त्व गुणत्रय में लीन होजाता है। हे राजन्! तदनन्तर काल से प्रेरित प्रकृति, तीनों गुणों को ग्रस लेती है, तब तीनों गुण प्रकृति में लीन हो जाते हैं ॥ १८ ॥

अब जिस परमात्मा में प्रकृति लीन होती है वहभी क्या किसी में लीन होता है, कि—नहीं? इस प्रकार के संशयको दूर करने के लिये, परमात्मा के स्वरूप का निरूपण करते है, वह परमात्मा का स्वरूप कैसा है, कि—जिस परमात्म स्वरूप के क्षण दिन मास वर्षादि कालके अवयवों से परिणामादिक गुण नहीं हैं, क्योंकि? वह आदि अन्त शून्य है, और इन्द्रियादि करणों से व्यक्त नहीं होता है, तथा स्वरूप और स्वभाव से नित्य है। और अव्यय है अर्थात् कायगत दोषों से विविध भाव को नहीं प्राप्त होता है, ऐसा वह परमात्म स्वरूप है ॥ १९ ॥

फिर वह परमात्म स्वरूप कैसा है, कि—जिसमें जायते वर्द्धते इत्यादि वाणी नहीं वर्तती है, और उस वाणी के गोचर मन भी जहां नहीं वर्तता है । और जिसमें सत्त्व रज तम और महदादि प्रकृति के विकार नहीं हैं, तथा प्राण बुद्धि कर्मेन्द्रिय ज्ञान इन्द्रिय ये कुछ नहीं है, और जिसमें इन लोकों की कल्पना है वह ब्रह्मांड भी नहीं है ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वप्नजाग्रत् स्वप्नजागरावस्थायुक्तं सुषुप्तवदिन्द्रियाभावात् शून्यसादृश्यं हेतुः अप्रतर्क्यं न पुनः शून्यमेवेत्याह—नेति, ॥ २१ ।

उपसंहरति—लय इति । शक्तयः सत्त्वादयः ॥ २२ ॥

आत्यन्तिकं लयमाह—बुद्धीन्द्रियेति द्वादशभिः । आत्यन्तिकलयो मोक्षः स च ब्रह्मज्ञानेन सर्वप्रपञ्चलयात्मकः न च प्रपञ्चस्याऽऽत्मव्यतिरेके लयः सम्भवतीति ज्ञानरूपाद् ब्रह्मणः पृथग्भूतस्य तत्त्वासत्त्वमुपपादयति—बुद्धिश्चेन्द्रियाणि चार्थाश्चेति ग्राहककारणग्राह्यरूपेण तेषामाश्रयभूतं ज्ञानमेव भाति न पृथक्

श्रीधरस्वामिकृतभावार्थदीपिका।

तत्र हेतुमाह—दृश्यत्वाद्व्यतिरेकाभ्यामिति। यतो यदाद्यन्तवत्तद्-वस्तु यथैवं प्रयोगः विमतं सत्यं भवति दृश्यत्वात्कारणाव्यतिरेकादाद्यन्तवत्त्वाच्च रज्जुसर्पादिवदिति ॥ २३ ॥

तत्राव्यतिरेकं दृष्टान्तेन प्रपञ्चयति—दीप इति। दीपचक्षूरूपाणां तेजोविशेषाणां तेजसो यथा न व्यतिरेकस्तथा धीः कर्माणि करणानि मात्रा विषयाः ऋतात् ब्रह्मणः पृथक् न वस्तुभूतकार्यत्वात्। नन्वेवं कार्यकारणयोरभेदे कार्यासत्त्वे कारणस्याप्यसत्त्वं प्रसज्येत तत्राऽऽह—अन्यतमादिति। कार्याद्त्यन्तव्यतिरेकाद् ब्रह्मणः प्रपञ्चाद् ब्रह्मणोऽस्ति व्यतिरेकः प्रपञ्चस्य तु ततो नास्ति व्यतिरेक इत्यर्थः ॥ २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

पदं व्यवस्थानम् ॥ २१ ॥

पुरुषस्य क्षयोऽत्यन्तज्ञानसङ्कोचः अव्यक्तस्य क्षयो नाम अविभक्ततमोऽवस्थापत्तिः शक्तयः परमात्मनोऽपृथक्सिद्धविशेषणतया शक्तिशब्दवाच्याः सर्वपदार्थाः ॥ २२ ॥

बुद्धीन्द्रियार्थरूपेणेत्यादिबुद्धीन्द्रियार्थेति पूर्वश्लोके शक्तिशब्देनोक्तसर्वपदार्थानां परमात्मन्यपृथक्सिद्धविशेषणत्वमेव प्रपञ्चयत्यनेन श्लोकेन ज्ञानशब्दः परमात्मवाची "सत्यं ज्ञानम्" इति प्रयोगात्। बुद्ध्यादिसर्ववस्त्वाश्रयः परमात्मा बुद्धीन्द्रियादिसर्ववस्तुशरीरतया भाति प्रामाणिकैस्तथा ज्ञायत इत्यर्थः। तत्र हेतुमाह—दृश्यत्वाव्यतिरेकाभ्यामिति। परमात्मशरीरत्वेन "यस्य चक्षुः शरीरम्" इत्यादि प्रमाणैर्ज्ञायमानत्वात् अत एव परमात्मानं विना अवस्थानायोगाच्च स एव तच्छरीरको भातीत्यर्थः। परमात्मशरीरत्वेऽपि शरीरशरीरिणोः स्वभावभेदमाह—आद्यन्तवदवस्तु तदिति। बुद्धीन्द्रियादिकं न परमात्मस्वरूपवत्स्थिरम् अपि त्वाद्यन्तवत् तस्मादचिद्वस्तुस्वरूपान्तर्भूतमित्यर्थः ॥ २३ ॥

एवं सर्ववस्तुशरीरत्वादपृथग्भाव उक्तः विश्वशरीरस्य तस्य कारणत्वादुपकारकत्वादाधारत्वाच्च अव्यतिरेकमाह—दीप इति। तेजः कार्यं दीपः तेजोऽनुग्राह्यं चक्षुः इन्द्रियाणि ह्यहङ्कारकाणि तेजस्याश्रितं रूपम् अतो दीपादेर्न तेजो हित्वा वस्थानं धीशब्दोपलक्षितं बुद्धिरूपान्तःकरणं बुद्धीन्द्रियार्थरूपेणेति पूर्वमुक्तत्वात् एवमिन्द्रियान्तःकरणविषयाणां परमात्मसृष्टत्वात् तदनुग्राह्यत्वात् तदाश्रितत्वाच्च अन्यतमात् बुद्ध्यादिभ्यो विलक्षणतमात् ज्योतिःशब्दवाच्यात् परमात्मनः ऋते तेषां नाऽवस्थानमित्यर्थः ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

नेति। स्वप्नजाग्रज्जीवस्वप्नजागरादिरूपसङ्कोचविकाशादिधर्मभूतज्ञानाऽनाश्रयं नित्यासङ्कुचितज्ञानाश्रयमिति यावत् न च तत् [illegible] हितं क्षयादपि सुषुप्तावत्यन्तज्ञानसङ्कोच- [illegible] इत्यर्थः। न चास्य [illegible] अनेन [illegible]। न च [illegible] यो न सर्वज्ञादिना न च सत्सुषुप्तमित्यनेन जीवचैतन्यानुकम् इत्थं जीवजडाभ्यां विलक्षणं परमात्मस्वरूपं [illegible] किं बहुनेत्यभिप्रेत्याह—संसुप्तवच्छून्यवदप्रतर्क्यं यथा संसुप्तस्तथा शून्यशब्देनाकाशो विवक्षितः तत्र च संसुप्ते हि जीवे देहान्तरसंस्थितेऽपि बाह्याभ्यन्तरप्राणपरस्परादिविभागसुखदुःखादिविकारानवभासः आकाशस्य सर्वगतत्वेऽपि स्वगतदोषास्पर्शश्च दृष्टः एवं परमात्मस्वरूपमपि चिदचिदात्मकजगदन्तरात्मतयावस्थितमपि बाह्याभ्यन्तरविकारविधुरमाकाशवन्निर्लेपमित्यर्थः। अप्रतर्क्यं जडजीवसजातीयत्वेन तर्कयितुमशक्यं तदेतन्मूलं सर्वकारणं परमात्मस्वरूपं पदमव्ययकव्यवस्थानमामनन्ति वेदान्ता इति शेषः। "महानव्यक्ते लीयते अक्षरं तमसि लीयते तमः परे देव एकीभवति" इत्याद्या वेदान्ताः उपपादितजडजीववैजात्यस्याप्रतर्क्यमित्युपसंहार इत्यतो न पौनरुक्त्यम् ॥ २१ ॥

प्राकृतिकप्रलयनिरूपणमुपसंहरति—क्षय इति। यदा पुरुषाव्यक्तयोर्लयः यदा च शक्तयः पृथिव्यादिमहदन्ताः कालेन विधुताः चालिताः (चोदिताः) स्वस्वकारणेषु प्रलीयन्ते स एव प्राकृतिको लय इत्यर्थः। तत्र पुरुषस्य क्षयो नामात्यन्तज्ञानसङ्कोचेन परमात्मसंश्लेषविशेषः अव्यक्तस्य क्षयस्तु अविभक्ततमोऽवस्थापत्तिरूप इत्युक्त एव क्षयो नामाविभक्तनामरूपतमोऽवस्थाप्राप्तिरेवेति तदर्थः। शक्तिशब्देन पृथिव्यादिसर्वपदार्थानां परमात्मानं प्रत्यपृथक्सिद्धविशेषणत्वं सूचितम् कार्योपयुक्तमपृथक्सिद्धविशेषणं शक्तिः ॥ २२ ॥

एतदेव स्वरूपं प्रपञ्चयति—बुद्धीन्द्रियार्थरूपेणेति। ज्ञानशब्दः परमात्मवाची "सत्यं ज्ञानमनन्तम्" इति प्रयोगात् बुद्धीन्द्रियार्थरूपेण बुद्ध्यादयो रूपं शरीरं यस्य तस्य भावस्तत्ता तया बुद्ध्यादिसर्ववस्तुशरीरकतया एवेत्यर्थः। तदाश्रयं बुद्ध्यादिसर्ववस्त्वाश्रयम् अनेन धारकत्वमुक्तम् पूर्वेण तु नियन्तृत्वं नियाम्यं हि शरीरं भाति प्रामाणिकानामिति शेषः। प्रामाणिकैस्तथा ज्ञायत इत्यर्थः। अत्र हेतुमाह—दृश्यत्वाव्यतिरेकाभ्यामिति "यस्य चक्षुः शरीरम्" इत्यादिप्रमाणैः परमात्मशरीरत्वेन ज्ञायमानत्वादत एव परमात्मानं विनाऽवस्थानायोगाच्च स एव तच्छरीरको भातीत्यर्थः। परशरीरत्वेऽपि शरीरशरीरिणोः स्वभावभेदमाह—आद्यन्तवदवस्तुदिति। बुद्धीन्द्रियादिकं न परमात्मस्वरूपवत्स्थिरमपि त्वाद्यन्तवदत एव तदवस्तु न वसत्येकरूपेणेत्यवस्तु सततपरिणामि ॥ २३ ॥

एवं सर्ववस्तुशरीरकत्वादपृथग्भाव उक्तः। अथ विश्वशरीरकस्य तस्य कारणत्वादुपकारत्वाद्धारकत्वाच्चाव्यतिरेकमाह—दीप इति। तेजःकार्यं हि दीपः तेजोऽनुग्राह्यं चक्षुः इन्द्रियाणि तेजःकारणभूताहङ्कारकार्याणि इति यच्चाश्रितं रूपं तद्धर्मः अतो दीपादेर्न तेजो हित्वाऽवस्थानं दीपशब्दोपलक्षितं बुद्धिरूपान्तःकरणं बुद्धीन्द्रियार्थरूपेणेति पूर्वमुक्तत्वात् एवम् इन्द्रियान्तःकरणविषयाणां परमात्मसृष्टत्वात्तदनुग्राह्यत्वात्तदाश्रितत्वाच्चान्यतमाद्बुद्ध्यादिभ्योऽपि विलक्षणतमाज्ज्ञानशब्दवाच्यात्परमात्मन ऋते तेषां नावस्थानम् इत्यर्थः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्मिन् कार्यान्वितत्वमपि व्यतिरेकेण प्रतिपादयति-यदिति । अयमर्थः यद्यप्युच्यते पूर्वं सूक्ष्माकारेणापि जगन्नासीत् किन्तु तदेव शक्त्या निमित्तभूतया विशेषाकारेण जगद्रूपेण परिणतमिति तदसत् यदेवं सामान्यविशेषाभ्यामुपलभ्येत स भ्रमो विवर्त्तवाद एव तत्र हि शुद्धब्रह्मैवाज्ञानरूपया शक्त्या जगत्तया विवृतमिति मतं न चास्माकं तदभ्युपपत्तिः परिणामवादस्य सत्कार्यतापूर्वकत्वादित्यर्थः । नन्वपूर्वमेव कार्यमारम्भविवर्त्तवादिनामिव युष्माकमपि जायतां तत्राह, यदाद्यन्तवत् अपूर्वं कार्यं तत्पुनरवस्तुनिरूपणासहमित्यर्थः । तत्र हेतुः अन्योन्याश्रयात् यावत्कार्यं न जायते तावत्कारणत्वं मृच्छुक्त्यादेर्न सिद्ध्यति कारणत्वासिद्धौ च कार्यं न जायत एवेति परस्परसापेक्षत्वदोषात् अतः कारणतासिद्ध्यै कार्यशक्तिस्तत्रावश्यमभ्युपगन्तव्या सा च कार्यसूक्ष्मावस्थैवेति कार्यान्वितत्वं सिद्ध्यति तथापि स्थूलरूपतापादकत्वान्मृदादेः कारणत्वमपि सिद्ध्यतीति भावः ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यत्तु विश्वस्तैजसः प्राज्ञः इति जीवस्य नानात्वं तत्तु बुद्धिवृत्तीनां त्रितयत्वात्तस्यापि त्रितयत्वं मिथ्यैवेत्याह-बुद्धेरिति । जागरस्वप्नसुषुप्तयस्तिस्रो वृत्तयो बुद्धेरेवेत्युच्यन्ते अतस्तदध्यासात् प्रत्यगात्मनि जीवेऽपि विश्वतैजसप्राज्ञसंज्ञाभिर्नानात्वं मायामात्रं मिथ्यैवेत्यर्थः ॥ २५ ॥

परिणामवादे कार्यकारणाव्यतिरेको दर्शितः अथारम्भवादे विश्वस्याद्यन्तवत्त्वं तत्कारणस्य परमेश्वरस्य सत्यत्वं च क्रमेण दर्शयति—यदेति द्वाभ्याम् । भवन्ति नश्यन्ति तथैव ब्रह्मणीदं विश्वं भवति न भवति च अत्र व्योम्नीति दृष्टान्तेन परमात्मनो निर्लेपता दर्शिता अवयवीति यत्सावयवं तदाद्यन्तवत् घटादिवदित्यर्थः । अत उदयाप्ययात् आद्यन्तवद्विश्वं न सर्वदा सत्यमित्यर्थः ॥ २६ ॥

किञ्च, सर्वेषामवयविनाम् अवयवः कारणं सत्यं लोके तथा दर्शनादित्याह-विनेति । अङ्ग हे राजन् ! हि यस्मात् अर्थेनावयविना विनापि पृथगेवावयवाः प्रतीयन्ते यथा पटस्यावयवाः तन्तवः यस्मात् पृथक् प्रतीयन्ते तद्वत् अत्र "कार्यकारणवस्त्वैक्यदर्शनं पटतन्तुवत्" इति सप्तमोक्तेः सिद्धान्तितं ब्रह्मैक्यं तु लभ्यत एव ॥ २७ ॥

विवर्त्तवादे तु ब्रह्मकार्यं जगदसत्यं यथा तथा ब्रह्मणः कारणत्वादिकमप्यसत्यमित्याह-यदिति । सामान्यं कारणं विशेषः कार्यं ताभ्यां यदुपलभ्यते स भ्रमः कुतः ? अन्योन्यापाश्रयात् परस्परापेक्षत्वेन निरूपणासहत्वादित्यर्थः । अयमर्थः, यथा रज्जुरेवाज्ञानेन सर्पत्वेन विवर्त्तते तत्र रज्जुः कारणं सर्पः कार्यः सतु मिथ्यैव तथैव सामान्यं ब्रह्मैव अज्ञानेन जगद्रूपतया विवृत्तं तत्र जगतः कार्यस्याभावे तदपेक्षतया सिद्धं ब्रह्मणः कुतः कारणत्वमिति ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं प्राग्भ्यां श्लोकाभ्यामाविर्भावस्य ब्रह्मकार्यस्यानित्यत्वं नित्यत्वं च दर्शितमथ चेतनस्यापि कार्ये विश्वस्मिन् स्थितस्य विश्वसृष्ट्यादौ ज्ञानविकाससङ्कोचौ भवतः बन्धनभूमतया न तु तत्स्वरूपे किञ्चिद्विकारादिकमस्तीति जागरणादिप्रदर्शनेन सूचयति—बुद्धेरिति । नानात्वं जाग्रतत्वसुप्तत्वादि ॥ २५ ॥

ननु, भवतु जीवो निर्विकारस्वरूपः ब्रह्मणि तु जगत्संसर्गजा दोषा बलादेव भविष्यन्ति जगदुपादाननिमित्तकारणत्वादित्येवं तत्राह-यदेति । भवन्ति उत्पद्यन्ते न भवन्ति विलीयन्ते तस्येनावता दोषभाग्भवति तथा भवयविब्रह्मणः परस्परप्रकृतिद्वयसंयुक्तमिदं विश्वं ब्रह्मणि उदयाद्भवति यथाभ भवति ज्ञानसङ्कोचविकासबन्धमोक्षादयो धर्माः ब्रह्मांशभूतजीवविषयाः विकारत्वादयो धर्माः ब्रह्मशक्तिरूपप्रकृतिविषयाः विश्वसृजननियमनपालनादयः सत्यत्वज्ञानत्वानन्दत्वानिर्विकारत्वादयो धर्माः ब्रह्मविषया इति विवेकः ॥ २६ ॥

अथ सत्कार्यवादं निराचिकीर्षुः अङ्गनात् श्रीप्रभृतयोऽप्यतमाः न कुर्युरिति प्रागुक्तं सत्कार्यवादं पुनर्द्रढयति-सत्यमिति । हे अङ्ग विष्णुदत्त ! सर्वेषामवयविनां रथप्रासादादीनाम् पटस्य तन्तव इव कारणभूताः अवयवाः सत्यं प्रोक्ताः ते एव अवयव्यवस्थां प्राप्नुवन्ति, तान्परपेक्ष्य अवयविनो नोत्पद्यन्ते इति भावः । अन्यथा अर्थेन अवयवभूतेन विनैव रथादयः प्रतीयेरंस्तु निर्बीजाः भवन्ति प्रतीयन्ते यावदेवम् इह प्रकृतेऽपि ईशस्य ये सन्मूलमेव कार्यमुत्पद्यते तथा च श्रुतिः "सन्मूलाः सोम्येमाः प्रजाः" इत्यादि ॥ २७ ॥

ननु, वायवीयतैजसाप्यपार्थिवपरमाणूनां यदि श्रुतिबलाज्जगत्कारणतया नाङ्गीक्रियते किन्तु सर्वात्मत्वश्रोतनार्थं ब्रह्मैव जगत्कारणतयाङ्गीक्रियते तदापि सर्वात्मत्वं ब्रह्मणो न सङ्गच्छते कार्यकारणयोरत्यन्ताभिन्नत्वादित्यत आह-यदेति । अन्योन्यापाश्रयात् परस्परानाश्रयात् [illegible] व्यवहारादिस्तत्र कार्यकारणयोरितरेतरः [illegible] घटबुद्धौ मृत्पिण्डः आश्रयः न च मृत्पिण्डबुद्धौ घटः [illegible] उत्पाद्यमाना तदर्थतया न मृत्पिण्डस्फूर्तिरित्यादि स्वयमूह्यम् तस्मादन्योन्यापाश्रयाद्धेतोः सामान्यविशेषाभ्याम् सामान्यं कारणं मृत्पिण्डादिर्विशेषः कार्यं घटादि ताभ्यां व्यवहियमाणाभ्याम् यत् यस्तयोरत्यन्तभेदबोधःउपलभ्येत स वैशेषिकाणां भ्रमः मृत्पिण्डं विना घटलाभाभावात् अतोऽसत्कार्यवादो मुमुक्षुभिर्हेय इति भावः । ननु, तर्हि कार्यस्य जगतोऽपि ब्रह्मत्वात्तत्परित्यागपूर्वकं ब्रह्मभावापत्तिर्मुक्तिरिति कोऽयं दुराग्रहः ? इत्यत आह, सर्वमाद्यन्तवद्वस्तु यदिति । वस्तु कारणं तद्भिन्नमस्तु कार्यं यत् तत्सर्वमाद्यन्तवदतो नित्यब्रह्मभावप्राप्तिरिष्टेति भावः ॥ २८ ॥

---

भाषा टीका ।

बुद्धि अर्थात् जीवात्माके धर्म भूतज्ञान की जागरण, स्वप्न और सुषुप्ति, ये तीन अवस्था हैं, हे राजन् ! ये ये तीन अवस्था प्रत्यगात्मा ( जीव ) में प्रकृति के सम्बन्ध होने से

विकारः ख्यायमानोऽपि प्रत्यगात्मानमन्तरा ।
न निरूप्योऽस्त्यणुरपि स्याच्चेच्चित्सम आत्मवत् ॥ २९ ॥
नहि सत्यस्य नानात्वमविद्वान् यदि मन्यते ।
नानात्वं छिद्रयोर्यद्वज्ज्योतिषोर्वातयोरिव ॥ ३० ॥
यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु ।
एवं वचोभिर्भगवानधोक्षजो व्याख्यायते लौकिकवैदिकैर्जनैः ॥ ३१ ॥
यथा घनोऽर्कप्रभवोऽर्कदर्शितो ह्यर्कांशभूतस्य च चक्षुषस्तमः ।
एवं त्वहं ब्रह्मगुणस्तदीक्षितो ब्रह्मांशकस्याऽऽत्मन आत्मबन्धनः ॥ ३२ ॥

भाषा टीका ।

हैं, ये तीनों अवस्था प्रकृति विनिर्मुक्त आत्मा की नहीं हैं ॥ २५ ॥

जैसे, कि—आकाश में जलधर ( मेघ ) होते हैं, और विलीन होजाते हैं, परन्तु उनके होने न होने से आकाश में कुछ विकार नहीं होता, किन्तु वह स्वरूप से निर्मल ही रहता है। इसी प्रकार अवयवि यह विश्व भी परमात्मा के विषें उदय होने से होता है, क्षय होने से नहीं होता है, परन्तु इस विश्व के होने न होने से कुछ परमात्मा के स्वरूप में विकार नहीं होता है, किन्तु विशेषणांशमें ही विकार है, तस्मात् श्रुतिप्रतिपाद्य परमात्मा का स्वरूप निर्मल ही है ॥ २६ ॥

लोक में सब अवयवियों के अवयव कारण होने से सत्य कहलाते हैं, परन्तु वे अवयव अवयविदशापत्ति-काल में अवयविरूप अर्थ के बिना प्रतीत नहीं होते हैं। हे राजन् ! जैसे, कि—पटके तन्तु पटावस्था को प्राप्त होने पर पट से अलग नहीं देख पड़ते हैं, परन्तु वह पट रूप कार्य कुछ तन्तुओं से पृथक् नहीं है, किन्तु उस अवस्था को प्राप्त होने वाले तन्तुओं का नाम ही पट है। उसी प्रकार प्रमाण सिद्ध चेतन अचेतन ईश्वर इन तीनों का समुदाय रूप सत्य पदार्थ ही विलक्षण परिणाम को प्राप्त होकर कार्य रूप होने से जगत् कहाता है। तस्मात् कार्य और कारण दोनो सत्यही है असत्य नहीं ॥ २७ ॥

लोक में घट और मृत्तिका इन दोनों के वाचक शब्द भी भिन्न हैं, और इनकी बुद्धि भी भिन्न भिन्न ही होती है। तस्मात् कार्य कारण का भेद ही सिद्ध है, फिर अभेद कैसा ? तहां कहते हैं, कि—सामान्य शब्द हुआ मृत्तिका, और विशेष शब्द हुआ घट, तहां ऐसा व्यवहार होता है, कि—यह घड़ा मिट्टी है, इस में वस्तु का नाम तो मिट्टी हुआ और अवस्था का नाम घड़ा हुआ, अब मिट्टी और उसके विशेषाकार से घड़ा कोई और ही द्रव्यान्तर है, यही बड़ा भ्रम है। क्यों कि ? सामान्य और विशेष को अन्योन्याश्रय होने से सामान्य वस्तु गत विकार की अपेक्षा से विशेष कुछ द्रव्यान्तर नहीं हो सकता है, घट ऐसा व्यवहार और बुद्धितो अवस्था को लेकर भी हो सकते हैं। इस प्रकार अवयवि यह शरीर प्रकृति ही ठहरता है, और आदि अन्त वाला है इसी से यह आत्मा नहीं हो सक्ता है किन्तु आत्मा से भिन्न है ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवमनेकैर्हेतुभिः प्रपञ्चस्याऽसत्त्वं साधितम् तत्र शङ्का ननु, प्रपञ्चस्यापि प्रकाशमानत्वादात्मवत्सत्त्वं किं न स्यादिति तत्राऽऽह—विकार इति । ख्यायमानः प्रकाशमानोऽपि विकारः प्रपञ्चः प्रत्यगात्मप्रकाशं विनाऽणुमात्रोऽपि न निरूप्योऽस्ति तं विना निरूप्यः स्याच्चेत्तर्हि सोऽपि चित्समः स्याच्चिद्रूपेणाऽऽत्मना समः स्वप्रकाशो भवेत् तथा च सति सोऽप्यात्मवत्त्वात् एकरूपः स्यादित्यर्थः ॥ २९ ॥

कुत इत्यत आह—नहीति । ननु, सत्यस्याप्यात्मनो जीवब्रह्मरूपं नानात्वमस्त्येव तत्राऽऽह—यद्येवं नानात्वं मन्यते तर्ह्य-विद्वान् कथं तर्हि तयोर्भेदव्यवहारः ? उपाधिकृत इत्याह—नानात्व-मिति । तत्र छिद्रयोर्घटाकाशमहाकाशयोरिवेति परिच्छेदा-परिच्छेदे दृष्टान्तः । ज्योतिषोराकाशजलस्थयोः सूर्ययोरिवेत्यु-पाधिकृतविकारसदसद्भावे वा तयोर्बाह्यशरीरस्थयोर्वाय्वोरिवेति क्रियाभेदे ॥ ३० ॥

ब्रह्मण एव प्रपञ्चव्यवहारालम्बनत्वं दृष्टान्तेन स्पष्टयति-यथेति । क्रियाभिस्तत्तद्रचनाभेदैर्बहुधा कटककुण्डलादिरूपेण लौकिकवैदिकैर्वचोभिः जनैरहङ्कारोपहितैः ॥ ३१ ॥

नन्वहङ्कारस्य कथं ब्रह्मस्वरूपावरणेन भेदव्यवहारहेतुत्वम् ? तस्य स्वकारणभूतब्रह्मावरकत्वासम्भवादावरणे वा स्वस्यापि प्रकाशासम्भवादित्याशङ्क्य सदृष्टान्तमाह-यथेति । अर्करश्मय एव मेघरूपेण परिणता वर्षन्ति—

"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥"

इत्यादिवचनात्तस्मादर्कप्रभवः अर्केणैव दर्शितः प्रकाशितश्च

## श्रीधरस्वामिकृतभावार्थदीपिका ।

तमः चक्षुषोऽर्कदर्शनप्रतिबन्धको भवति अहमहङ्कारो ब्रह्मगुणः ब्रह्मकार्यभूतस्तद्दीपितस्तेनैव प्रकाशितश्चाऽऽत्मनो जीवस्याऽऽत्मबन्धनो ब्रह्मरूपदर्शनप्रतिबन्धको भवति ॥ ३२ ॥

---

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

देहाकारा आत्मनि न सन्तीत्याह—विकार इति । जातिगुणक्रियाऽवयवजन्मवृद्ध्यादिरूपः अल्पोऽपि विकारो न निरूप्यः आत्मधर्मतया न चिन्त्यः तथा निरूप्यत इति मन्यमानोऽल्पबुद्ध्या नात्मविदित्यर्थः ॥ २९ ॥

औपाधिकानां जात्यादिभेदानां जीवात्मन्यविद्यमानत्वमाह—नहीति । सत्यशब्दो जीवपरः "तदनुप्रविश्य सच्च त्यच्चाऽभवत्, सत्यं चानृतं च सत्यमभवत्" इति प्रयोगात् "प्राणा वै सत्यम्" इति प्रयोगाच्च नहि परिशुद्धजीवात्मस्वरूपस्य देवमनुष्यादिनानात्वमिति अस्तीति ज्ञानविज्ञानेन, औपाधिकभेदस्य स्वरूपस्पर्शित्वं तेजोवायुज्योतिश्छिद्राणि दृष्टान्तयति—नानात्वाभात । पूर्वापरदेहवर्तितयाभिन्नत्वेन प्रतीयमानयोरात्मनोरभेदे दृष्टान्तः छिद्रयोरिति द्विवचनात् इयान् विशेषः भिन्नकालोपाधिकृतभेदराहित्ये तुल्यकालोपाधिकृतभेदराहितवस्तु दृष्टान्ततमिति केषुचित् कोशेषु दृष्टत्वात् बुद्धीन्द्रियार्थरूपेणेति श्लोकाष्टकं व्याख्यानम् ॥ ३० ॥

व्यावहारिकैश्वर्यं क्रियार्हपरिणामं दृष्टान्तेन परिहरति—यथा हिरण्यमिति । यथा क्रियार्हत्वात् हिरण्यबहुत्वं सत्यम् एवं प्रामाणिकत्वात्परमात्मबहुत्वमपि सत्यमित्यर्थः ॥ ३१ ॥

आत्यन्तिकं प्रलयं वक्तुमुपक्रमते—यथा घन इति । धूमादिमिश्रतमोविकाररूपत्वात् मेघस्यार्कप्रभवत्वम् आदित्याधिष्ठितत्वात् चक्षुषः आदित्यांशत्वं तम इति तिरोधायकत्वमुच्यते अहंशब्दोऽहमभिमानविषयदेहपरः उत्तरत्राहङ्कारशब्देन निर्देशात् ब्रह्मगुणः परमात्मविशेषणभूतः आत्मबन्धनः ज्ञानप्रतिबन्धकः यथार्कांशस्य चक्षुषोऽर्कदर्शनं तत्प्रभवो मेघः प्रतिबध्नाति एवं परमात्मांशभूतस्य जीवस्य परमात्मदर्शनं तद्गुणभूतो देहः प्रतिबध्नातीत्यर्थः ॥ ३२ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च न देहाकारा आत्मनि सन्तीत्याह—विकार इति । विकारः जातिगुणक्रियाजन्मवृद्ध्यादिविकारः ख्याप्यमानः आत्मनि देहात्माभिमानिनां प्रतीयमानोऽपि प्रत्यगात्मानमन्तरा न विनैव भवति न तस्मिन्नस्तीत्यर्थः । तदाह—नेति । न तस्मिन् विकारो निरूप्योऽस्तीत्यर्थः । विपर्ययेऽनिष्टमापादयति—स्यादित्यादिना । चेदणुरल्पोऽपि विकारः आत्मनि स्यात्तर्ह्यात्मत्वात् प्राज्ञत्वे मनुष्यमुक्ताऽऽत्मापि तत्समः देहसमः मच्छिन्नात्मैव एव स्यादित्यर्थः । चित्समः आत्मवादिति पाठान्तरं तदा विकारोऽप्यात्मस्वरूपवत्सदैकरूपः चित्समः ज्ञानात्मकात्मस्वरूपतुल्यः तद्वत्स्वयं प्रकाशश्च स्यात् मुक्तावप्येकरूपतया स्वप्रकाशतया च प्रतीयेतेत्यर्थः । न हि तथा प्रतीतिः प्रमितेति भावः ॥ २९ ॥

ननु, ख्याप्यमानोऽपि विकारः कुत आत्मनि नेत्युच्यते इत्यत्र औपाधिकत्वादित्याह—नहीति । सत्यशब्दोऽत्र जीवपरः "तदनुप्रविश्य सच्च त्यच्चाभवत् विज्ञानं चाविज्ञानं च सत्यं चानृतं च" इति "प्राणा वै सत्यम्" इति च प्रयोगात् नहि परिशुद्धजीवात्मस्वरूपस्य देवमनुष्यादिनानात्वमस्ति यद्यपि यच्चेदं नानात्वं मन्यते तर्हि न स विद्वान् देहविलक्षणात्मयाथात्म्यविदपि तु देहात्माभिमानीति भावः । औपाधिकभेदस्य जीवस्वरूपास्पर्शित्वे नभस्तेजोवायवो दृष्टान्ताः इत्यभिप्रायेणाह—छिद्रयोरिति । यद्यपि छिद्रयोराकाशयोर्ज्योतिषोर्वाय्वोश्च यथा न नानात्वं तद्वदात्मनोः पूर्वापरदेहवर्तितयाऽभिन्नत्वेन प्रतीयमानयोरात्मनोरभेदे दृष्टान्तत्वाभिप्रायेण छिद्रयोरित्यादिद्विवचननिर्देश इयान् विशेषः भिन्नकालोपाधिभेदराहित्ये तुल्यकालौपाधिकभेदरहितं वस्तु दृष्टान्ततमिति छिद्रयोरिति द्विवचनान्तेन मेघाद्युपहिताकाशद्वयौ विवक्षितौ घटाकाशमहाकाशौ वा ज्योतिश्शब्देन सूर्यादिबिम्बप्रतिबिम्बौ वातशब्देन बाह्यशारीरौ ॥ ३० ॥

एवमात्मनो देहाद्यावृत्ताकारत्वप्रतिपादनेनैव देहस्यापि ततो व्यावृत्ताकारत्वमर्थसिद्धं तादृशी परमात्मनोऽव्यावृत्ताकारतातु "न तस्य कालावयवैः" इत्यादिभिस्तैस्तैः प्रतिपादितैव अर्थोपपादितं चिदचिद्विशिष्टस्य विचित्रजगद्रूपेण परिणामं कार्यकारणयोरनन्यत्वं चोपसंहरन् कार्यमिथ्यात्वपक्षप्रतिक्षेपाय तात्पर्यतश्च सदृष्टान्तमाह—यथा हिरण्यमिति । व्यवहारवर्त्मसु व्यवहारमार्गेषु निमित्तभूतेषु व्यवहारशब्दः प्रयोजनस्याप्युपलक्षणार्थः कुण्डलमानय कटकमानय बिभृहीत्यादि व्यवहारार्थं धारणादिप्रयोजनार्थञ्चेत्यर्थः । कलाभिः रचनाविशेषैः कमेव सुवर्णं बहुधा कुण्डलादिरूपेण (भेदेन) नृभिः समीयते प्रमीयते रचनाविशेषादि क्रियार्हत्वाद्धारणादिप्रयोजनार्हत्वाच्च कटकादिकं सत्यमेव कारणात् सुवर्णात् अनन्यच्च नहि शुक्तिरजतादिकमर्थक्रियार्हमिति भावः एवं सूक्ष्मचिदचिद्विशिष्टो भगवानेक एव लौकिकैर्वैदिकैश्च वचोभिर्जगन्निर्दिष्टचिदचिन्मिश्रव्यापकेन विविधभावापन्नेन चिदचिज्जगद्रूपेण परिणतः कथ्यते "कटकमुकुटकर्णिकादिभेदैः कनकमभेदमपीष्यते यथैकम् । सुरनरपशुपादपादिभेदैर्हरिरजितोऽपि उदीर्यते तथैकः" इत्यादीनि लौकिकवचांसि "यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यम्" इत्यादीनि वैदिकानि । आगत्वानित्यनेन कारणत्वाशङ्कितहेयास्पदत्वव्यावृत्तिः सूच्यते ॥ ३१ ॥

अथ मोक्षोपायोपसंसृतिबन्धनिवृत्तिरात्यन्तिकः प्रलय इति विवक्षुस्तावत् कोऽसौ देहाद्यावृत्तस्यात्मनो बन्ध इत्यत्राह—यथेति । मेघस्यार्कप्रभवत्वमर्करश्मिभिन्नधूमादिसमाहृतरूपत्वात्—गन्तव्यम् आदित्याधिष्ठितत्वाच्चक्षुषोऽर्कांशत्वं यथा अर्कप्रभवोऽर्कस्यैव प्रकाशनश्च मेघोऽर्कांशभूतस्य चक्षुषस्तमः तमोवदर्कदर्शनप्रतिबन्धकतिरोधायक इति यावत् । अहंशब्दोऽत्र देहात्माभिमानिनामहमभिमानविषयत्वाद्देहपरः ब्रह्मगुणः परमात्मविशेषणभूतः तद्धीनत्वेन परमात्मना प्रकाशितः ब्रह्मांशरूपस्यात्मनः जीवस्यात्मबन्धनः ज्ञानप्रतिबन्धकः यथा अर्कांशस्य चक्षुषोऽर्कदर्शने तत्प्रभवो मेघः प्रतिबन्धकः एवं परमात्मशरीरभूतस्य जीवस्य परमात्मदर्शने तद्गुणभूतो देहः प्रतिबध्नातीत्यर्थः । तत्प्रतिबन्ध एव संसृतिप्रतिबन्धो नामेति भावः ॥ ३२ ॥

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यथाऽवयवावयविनोरभेदो दुरवबोधः एवं पदार्थानामनन्तत्वात्स्वरूपभेदोपि परमात्मानमन्तरेण दुर्बोध इत्याशयेनाह· विकार इति । वि निषेधे पृथग्भाव इत्यतः पृथक्कारो नानाविधो भेदः प्रत्यगात्मानं साक्षीभूतं श्रीनारायणम् अन्तरेणाणुरूपोपि निरूप्यो नास्ति स एव निरूपयितुं शक्तः नासत्त्वाभेत्याह· ख्यायमान इति । प्रतीयमानस्यासत्त्वं जुगुप्सितं प्रमाणविरोधादित्यपिशब्दः ॥ २९ ॥

नन्वेकस्य प्रतिमानं तु कृतकाश्च विशिष्यत इतिवाग्भिधीयते योग्य इति तत्राह—नहीति । यद्यविद्वान् ब्रह्मरूपाणां नानात्वं मन्यते तर्ह्यपि सत्यस्य ब्रह्मणो रूपाणां नानात्वं सत्यं न भवति अविद्वन्मतत्वात् । ननु, "युक्ता ह्यस्य हरयः शतादश" इति श्रुतेः । कथं सत्यं नेत्यत्राह—नानात्वमिति । नेत्यनुवर्तते छिद्रयो र्बाह्यान्तःस्थाकाशयोः यद्वद्यथा नानात्वं नास्ति एक एव महाकाशो घटे जायमाने बहिरन्तश्चेति द्वित्वसंख्यामुपैति उत्पद्यमानो नीलिमाकारोप्याकाशो भिन्नमेति तत्र प्रागुक्तो हरेरुपमिति यातः पश्चादुक्ता जीवानामित्यर्थविशेषो हिशब्देनोपात्तः । उक्तञ्च—

"महाकाशो बहिस्थश्च घटाद्यन्तःस्थ एव च ।
द्वेधा समुदितोऽन्यो च द्वावाकाशौ प्रकीर्तितौ ॥
घटरूपस्तदन्यश्च महाकाशात्परो लघुः ।
महाकाशवदेवात्र परमात्मा सनातनः ॥
घटान्तःस्थमहाकाशप्रतिमोन्तर्गतो विभुः ।
घटस्यान्तर्गताकाशो महाकाशात्परो मतः ॥
तद्वदेवावराः सर्वे जीवा मुक्त्युपयोगिनः ।
तमोगाश्चैव ये सर्वे घटरूपस्तथाऽपराः" ॥ इति ।

ज्योतिषोरधिदैवाध्यात्मसञ्ज्ञयोः "सहस्रं वा आदित्यस्य रश्मय आसु नाडिष्वाततः" इति श्रुतेर्वा तयोर्वा नप्राणसञ्ज्ञयोः "अधिदैवमथाध्यात्मम्" इति श्रुतेश्च । अत्रापि विशेषः पूर्ववदवगन्तव्य इति ॥ ३० ॥

बहुत्वसङ्ख्यावाचिन्याः श्रुतेः किं विनिगमकमत्राह—यथेति । बहुधा कटककुण्डलाद्यात्मना हेम नानासञ्ज्ञाविषयं समीयते तथा भगवानपि देवो नरो वराहः शुक्लः पीतो ह्रस्वोऽणुर्दीर्घो महानिति विविधाकारेण व्याख्यायते प्रकाश्यत इति ॥ ३१ ॥

हरेस्तत्त्वस्वरूपं निरूप्य संसारप्रकारमाह—यथेति । अर्कशब्दे नात्र तेजोवायवो वच्यन्ते तेजःसम्बन्धेन धूम उपलक्ष्यते अर्कप्रभवः धूमतेजोजलमरुद्भ्यः प्रभव उत्पत्तिः यस्य स तथा अर्केण नभसि दर्शितः सूर्यप्रकाशे सत्येव दृश्यते नान्यथा यथा घनः सूर्यदर्शनप्रतिबन्धकः "आपो वा अर्कः" इति श्रुतेः । यथाकांशस्य चक्षुषस्तमः सूर्यदर्शने प्रतिबन्धकम् "आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्" इति श्रुतेः । एवमेवाहङ्कारो ब्रह्मापेक्षया गुणोऽमुख्यः तदीक्षितः तेन प्रकाशितः ब्रह्मांशकस्य जीवस्य "पादोऽस्य विश्वा भूतानि" इतिश्रुतेः । ब्रह्मणो भिन्नांशस्य आत्मनो जीवस्यात्मानं भाति ज्ञानं बध्नातीत्यात्मबन्धनः " आत्मा देहे धृतौ जीवे" इत्यादौ यादवप्रकाशेन मतो प्रयुक्तत्वात् "तद्ब्रह्म वेदाहं ब्रह्मास्मि" इति श्रुतेः । ब्रह्मणो विशेषभूत इति वा ॥ ३२ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवं स्वाभाविकशक्तिमयमेव परमात्मनोऽनन्यत्वमुपसंहरति, विकार इति । यद्यपि ख्यायमानः प्रकाशमान एव तथापि स्वल्पोपि विकारः प्रत्यगात्मानं विना तद्व्यतिरेकेण कतरयतया न निरूप्योऽस्ति तदुक्तं तदनन्यत्वाविवरण एव यदि च तं विनापि स्यात् तदा चित्समः स्यात् चिद्रूपेण समः स्वप्रकाश एवा ऽभविष्यत् आत्मवत् परमात्मवदिति विकारस्यावश्यम्भाविष्यत् ॥ २९ ॥

ननु, यदि परमात्मानं विना विकारो नास्ति तर्हि परमात्मनः सोपाधित्वे निरुपाधित्वं न सिद्ध्यति तस्मात् सोपाधेर्निरुपाधिरन्य एव किमित्यत्राह—नहीति । सत्यस्य परमात्मनो नानात्वं न हि विद्यते यदि तस्य नानात्वं मन्यते तर्ह्यविद्वान् यतस्तस्य निरुपाधित्वसोपाधित्वलक्षणं नानात्वं महाकाशघटाकाशयोर्यद्वत् तद्वत् गृहाङ्गणगतस्वेन्द्यापि तेजसोरिव बाह्यशारीरवाय्वोरिव चेति ॥ ३० ॥

यस्माद्विकारः ख्यायमानोपि प्रत्यगात्मानमन्तरा न निरूप्योऽस्त्यणुरपि तस्मात् सर्वशब्दवाच्योपि स एवेति सदृष्टान्तमाह—यथा हिरण्यमिति । क्रियाभिस्तत्तद्वचनाभेदैः बहुधा कटककुण्डलादिरूपेण यथा सुवर्णमेव वचोभिस्तत्तन्नामभिः प्रतीयते तथा लौकिकवैदिकैः सर्वैरेव वचोभिर्भगवानेव व्याख्यायते तदुक्तं "सर्वनामाभिधेयश्च सर्ववेदेडितश्च सः" इति स्कान्दे ॥ ३१ ॥

तदेवं जगतः परमात्मस्वाभाविकशक्तिमयत्वमुक्त्वा तेन च जीवकर्तृकेन ज्ञानेन तद्भासनासामर्थ्यं व्यज्य मोक्षार्थं तदध्यासपरित्यागमुपदेष्टुं परमात्मशक्तिमयस्यापि तस्योपाध्यध्यासात्मकत्वादहङ्कारस्य जीवस्वरूपप्रकाशावरकत्वरूपं दोषं सदृष्टान्तमुपपादयति—यथा घन इति । अर्करश्मय एव मेघरूपेण परिणता वर्षन्ति—

"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" ॥

इत्यादिवचनात्तस्मादयमर्थः यथार्कप्रभवः अर्केणैव प्रदर्शितः प्रकाशितश्च घनो निबिडो मेघः अर्कांशभूतस्य चक्षुषस्तमो दिवि भूमौ च महान्धकाररूपो भवति एवम् अहं प्राकृताहङ्कारः ब्रह्मगुणः परमात्मशक्तिकार्यभूतः तदीक्षितः तेनैव प्रकाशितश्च ब्रह्मांशकस्य तटस्थशक्तिरूपकत्वात् परमात्मनो यो हीनांशस्तस्य आत्मनो जीवस्याऽऽत्मबन्धनः स्वरूपप्रकाशावरको भवति ॥ ३२ ॥

---

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किञ्च विकारः ख्यायमानः विकारत्वेन प्रसिद्ध्यमानोऽयं प्रपञ्चः प्रत्यगात्मानं परमात्मानं विना अणुरपि न निरूपणीयः किन्तु सर्वः परमात्मैव परमात्मन्येव प्रपञ्च आरोपितः यथा मरीचिकायां जलत्वेन प्रसिद्धं वस्तु तेजो विना अणुमात्रमपि न निरूप्यं किन्तु सर्वं तेज एव तेजस्येव जलत्वमारोप्यत इत्यर्थः । ननु, च काश्चिद्विकारत्वेन प्रसिद्ध्यमानमपि पदार्थश्चिद्वत् सत्य एवेक्ष्यते यथा भक्तिः

श्री[illegible]सारार्थदर्शिनी।

[illegible]तोऽहिर्मगधापुरी च तथा हि "ब्रह्मयं भक्तियोगस्य निर्गुणस्येत्युदाहृतम्" इति "मन्निकेतं तु निर्गुणः" इति "प्रतिबोधं तु निर्गुणम्" इति "निर्गुणो मदपाश्रयः" इति "मत्सेवां निर्गुणां स्मृतम्" इत्यादिभगवदुक्तेर्भक्त्युपकरणीभूताः पदार्थमात्र एव निर्गुणाः तथा "साक्षौ मथुरे साक्षाद्ब्रह्मगोपालपुरीहि" इति सच्चिदानन्दैकरसे भक्तियोगे तिष्ठतीति च गोपालतापनीश्रुतेः। भगवदुक्तो भक्तियोगश्च निर्गुण एवातः परमसत्य एवेति तत्राह—त्याबोहिति। यदि निर्गुणत्वेन निरूप्यो भवति तर्हि सोऽपि चित्सम: "सीतासासीतथा समा" इतिवदभेदे उपमाविवक्षेत्यर्थः। आत्मवत् परमात्मेव निर्गुणः परमात्मविलासत्वात्परमात्मैव स एक एवेत्यर्थः॥ २९॥

ननु, केन प्रकारेणैकत्वं मन्तव्यम्? तत्राह—नहीति। सत्यस्य परमसत्यस्य चिद्वस्तुनो नानात्वं नहि नैवास्ति तदपि यदि नानात्वं मन्यते तर्ह्यविद्वान् यथा छिद्रयोर्घटद्वये इवमेकथाकाशमिदमपरमाकाशमिति एवं ज्योतिषोर्वापिद्वयगतयोर्वानयोर्देहद्वयगतयोः प्राणयोरिति॥ ३०॥

तदेवं सुषिसमयेऽपि प्रपञ्चस्य नानाव्यवहारालम्बनत्वे दृष्टान्तं ब्रह्मैव आभीवादित्याह—यथेति। क्रियाभिस्तत्तद्घटनाभेदैः बहुधा कटककुण्डलादिरूपेण एवं लौकिकवैदिकैर्वचोभिः॥ ३१॥

ननु, यद्येवं सर्वमेव ब्रह्मकार्यत्वात् ब्रह्मैव तर्हि ब्रह्मकार्याहङ्कारेणासत्त्वेन ब्रह्मांशभूतादिश्चित्कणाः सत्या जीवाः कथमाब्रियन्ते ते वा तदावृताः कथं मुह्यन्तीति तत्र सदृष्टान्तमाह—यथेति। अर्कोद्भव एव मेघरूपेण परिणता वर्षन्ति—

"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः"॥

इत्यादि वचनात् तस्मादर्कप्रभव एव घनः अर्केणैव दर्शितः प्रकाशितश्च सन् चार्कांशभूतस्य चक्षुषस्तमः आवरकः एवमेव अहम् अहङ्कारः आत्मनि जीवस्य आत्मबन्धनः आत्मना स्वेनैव जीवं बध्नातीत्यर्थः॥ ३२॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एवं ज्ञानस्वरूपादिशब्दवाच्यः सर्वात्मा सर्वकारणम् भगवान्नित्यप्रकटाख्ये मुक्तो गत्वा निरूपितः अथ बुद्धजागरणादिनापि निरूपितोऽपि गन्ता तार्किकाद्युक्तजीवस्वरूपतद्धर्मभूतज्ञानश्रवणेन मुमुक्षोः—

"अन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते।
किं तेन न कृतं पापं चोरेणात्मापहारिणा"॥

इति शास्त्रोक्तोऽनर्थो माभूदिति तं स्वरूपतो धर्मतश्च निरूपयति—विकार इति द्वाभ्याम्। तत्र तार्किकादयः आत्मा जडः ज्ञानगुणकः तज्ज्ञानं च नीलं पीतमित्येवं जायते नश्यति च तन्निराकरोति विकारः ज्ञानविकारः नीलपीताद्याकारैः व्यायमानोऽपि तार्किकादिभिः प्रत्यगात्मानमन्तरा जीवमध्ये अणु अपि न निरूप्यो भवति इत्याबोहिति असन्देहे सन्देहवचनं तार्किकादीनां शनैः प्रबोधनार्थम् "न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इत्यादिश्रुतिप्रोक्तो गुणः इत्याबोहिति स चित्समः चित् "चेतनश्चेतनानाम्" इति श्रुतिप्रोक्तः ज्ञानस्वरूपः प्रत्यगात्मा तत्तुल्यः ज्ञानात्मक एव मन्तव्यः किञ्च, आत्मवत् "नित्यो नित्यानाम्" इति श्रुतिप्रोक्तो नित्यः आत्मा प्रत्यगात्मा तद्वन्नित्य एव मन्तव्यः ननु नीलपीतादिनानाकार इत्यर्थः॥२९॥

नन्वेकस्यैव ब्रह्मणः किं महाकाशघटाकाशन्यायेन बिम्बप्रतिबिम्बादिन्यायेन वा महावातावयवातन्यायेन वा नानात्वं नेत्याह—सत्यस्य ब्रह्मणो नानात्वं स्वरूपतो न हि घटेत अभेद्यत्वात् यदि छिद्रयोः महाकाशघटाकाशयोर्यद्वत् नानात्वं तद्वत् यथा ज्योतिषोः सूर्यादिबिम्बप्रतिबिम्बयोरिव वातयोः महावातावयवातयोरिव नानात्वं मन्यते तदा अविद्वान् स्यात् प्रथमदृष्टान्तेन घटावच्छिन्नाकाशवदुपाध्यवच्छिन्नब्रह्मप्रदेशभूतजीवस्वीकारे जीवोत्क्रान्त्यादिविधायकशास्त्रव्याकोपादिदोषप्रसङ्गात् द्वितीयदृष्टान्तेन सूर्यादिप्रतिबिम्बवत् ब्रह्मप्रतिबिम्बरूपजीवस्वीकारे व्यापकप्रतिबिम्बाऽनुपपत्त्यादिदोषापातात् तृतीयदृष्टान्तेन बृहद्दलवायुभेदवत् परजीवभेदस्वीकारे असत्त्वसावयवद्रव्यस्य वायोर्नानात्वं सम्भवति निरवयवे अखण्डैकरूपे नानात्वासम्भवात् अवच्छेदप्रतिबिम्बादौ पराभिमताध्यासगिरिवज्रादौ विस्तारतो निराकृतौ ग्रन्थविस्तरभयादत्रोपरम्यते तस्माज्ज्ञानगुणकः ज्ञानस्वरूपः भगवदंशभूतो जीव इति भावः॥ ३०॥

ननु, तर्हि ब्रह्मणः सकाशाज्जीवो भिन्नोऽभिन्नो वेति संशये जीवस्यैव का कथा यथा जलधरा व्योम्नि इत्यन्तोक्तस्य चेतनाचेतनस्य सर्वस्य विश्वस्य ब्रह्मकार्यस्य ब्रह्मभिन्नाऽभिन्नत्वं सर्वशास्त्राचार्यसम्मततया प्रतिपादयति—हिरण्यमिति। यथा व्यवहारवर्त्मसु पदार्थक्रयविक्रयमार्गेषु कारणतया एकमेव हिरण्यं क्रियाभिः कटककुण्डलादिरचनाव्यापारैर्बहुधा नृभिः समीयते एवं सर्वज्ञः सर्वशक्तिः सर्वकारणो भगवान् विश्वभिन्नाऽभिन्नतया "एकः सन्बहुधा व्यचचार" इत्यादिवैदिकवचोभिः

"अनेकमेकं बहुधावदन्ति श्रुतिस्मृतिन्यायनिबद्धचेताः।
आहुर्यमात्मानमजं पुराविदो द्रष्टुं तमीशं प्रतिसंयतात्म" ॥

एकत्वमेव द्वयमद्वयं च—

इत्यादिभिर्लौकिकैः पौराणैर्वचोभिर्जैनैस्तत्त्वविद्भिर्यो व्याख्यायते इत्यन्वयः सूत्रकृतापि बहूनि सूत्राणि "उभयव्यपदेशात्त्वहिकुण्डलवत्" (३।२।२८) इत्यादीन्युक्तानि॥ ३१॥

एवं सर्वस्य ब्रह्मात्मकत्वं विजानतोऽहङ्कारादिदोषापगमे ब्रह्मध्यानेन तद्भावापत्तिलक्षणां नित्यप्रलयापरपर्यायं मोक्षं वक्तुं महङ्कारबन्धनं तन्निवृत्तिप्रकारं चाह—यथेति द्वाभ्याम्। यथा घनः अर्कप्रभवः अर्केण प्रवर्तितः अर्कदर्शितः अर्केणैव दर्शितश्च अर्कांशभूतस्य अर्कदैवत्यस्य चक्षुषस्तमो भवति अर्कादिदर्शनप्रतिबन्धको भवति एवमहमहङ्कारः देहेन्द्रियादावहंममाभिमानरूपः अन्तःकरणवृत्तिविशेष इत्यर्थः। ब्रह्मगुणः ब्रह्मशक्तिगुणप्रभवः "नर्दाक्षितस्तेनैवानादिकर्मप्रवाहतन्त्रप्रकाशितः एव परस्यांशः" "ममैवांशो जीवलोके जीवभूतः सनातनः" इति श्रुतिस्मृतिप्रसिद्धस्य ब्रह्मांशकस्यात्मनो जीवस्य आत्मबन्धकः आत्मविषये ब्रह्मभावापत्तौ प्रतिबन्धकः॥ ३२॥

---

घनो यदाऽर्कप्रभवो विदीर्यते चक्षुः स्वरूपं रविमीक्षते तदा ।
यदा ह्यहङ्कार उपाधिरात्मनो जिज्ञासया नश्यति तर्ह्यनुस्मरेत् ॥ ३३ ॥
यदैवमेतेन विवेकहेतिना मायामयाऽहङ्करणात्मबन्धनम् ।
छित्त्वाऽच्युतात्मानुभवोऽवतिष्ठते तमाहुरात्यन्तिकमङ्गसम्प्लवम् ॥ ३४ ॥
नित्यदा सर्वभूतानां ब्रह्मादीनां परन्तप ! ।
उत्पत्तिप्रलयावेके सूक्ष्मज्ञाः सम्प्रचक्षते ॥ ३५ ॥
कालस्रोतोजवेनाशु ह्रियमाणस्य नित्यदा ।
परिणामिनामवस्थास्ता जन्मप्रलयहेतवः ॥ ३६ ॥

भाषा टीका ।

जाति गुण क्रिया जन्म वृद्धि इत्यादि जो विकार प्रतीत होते हैं, वे जीवात्मा के नहीं किन्तु देह के हैं, अतएव आत्मा के विकार कोई अणुमात्र भी नहीं निरूपण कर सक्ता है। यदि आत्मा का भी कोई विकार निरूपण करें तो वह विकार भी आत्मा के सदृश स्वयं प्रकाश होगा, सो है नहीं तस्मात् स्वरूप में विकार नहीं है ॥ २९ ॥

सत्यशब्दवाच्य जीवात्मा के देव, तिर्यक्, मनुष्य, स्थावर, इत्यादिक नानाप्रकार के भेद नहीं है, यदि कोई इन भेदों को आत्मा के माने तो वह तत्ववेत्ता नहीं है। देहादिकृत औपाधिक भेद जीवात्मा को स्पर्श नहीं करते हैं इसमें तीन दृष्टान्त हैं। जैसे घट मठ के भेद से वास्तव घटाकाश मठाकाश का भेद नहीं होसक्ता है। जैसे, दीपक और मिसाल के भेदसे अग्निका भेद नहीं होसक्ता है, जैसे वेणु के षड्ज निषादादि भेद से वायु का भेद नहीं होसक्ता है, इसी प्रकार देव मनुष्यादि शरीर भेद होने से आत्म वस्तु का भेद नहीं, किन्तु आत्मा सब एकाकार ही हैं ॥३०॥

जैसे मनुष्य कटक कुण्डलादि रचना विशेष होने से सुवर्ण को व्यवहार के लिये और धारणादि प्रयोजन के लिये, उन २ नामों से पृथक् २ बोलते हैं। इसी प्रकार चेतनाचेतनविशिष्ट एक भगवान् श्रीअधोक्षज कोही लौकिक वैदिक जन भिन्न भिन्न नामों से व्यवहृत करते हैं, वास्तव में वही एक विशिष्ट तत्व श्रीविष्णु मात्र ही है ॥ ३१ ॥

परन्तु जैसे सूर्य की किरणों के सहकार से उत्पन्न हुआ, अत एव सूर्य से उत्पन्न भया कहो ऐसा जो मेघ है, वह सूर्य से प्रकाशित होकर सूर्य का अंशभूत जो चक्षु है उस को सूर्य के दर्शन में प्रतिबन्धक होता है। इसी प्रकार अहंशब्दवाच्य यह देहाभिमानी जीव का जो देह है, वह भी परमात्मा का विशेषण होने से ब्रह्म का गुण रूप भया, और वह देह परमात्मा के ईक्षण से प्रकाशित हुआ है, तौभी ब्रह्मात्मक इस जीवात्मा के ब्रह्मविषयक ज्ञान का प्रतिबन्धक होता है ॥ ३२ ॥

———

श्रीधरस्वामीकृतभावार्थदीपिका ।

अत एवाहङ्कारनाशे स्वरूपदर्शनं भवतीति तमेव दृष्टान्तेनाह—घन इति । आत्मन उपाधिः जिज्ञासया विचारेण तर्हि तदाऽनुस्मरेत् ब्रह्माहमिति पश्यतीत्यर्थः ॥ ३३ ॥

सोऽयमात्यन्तिकः प्रलय इत्युपसंहरति—यदैवमिति । विवेकहेतिना ज्ञानशस्त्रेण अहङ्करणमेवाऽऽत्मबन्धनम् अच्युतं परिपूर्णमात्मानमनुभवतीति तथा ॥ ३४ ॥

नित्यप्रलयमाह—नित्यदेति ॥ ३५ ॥

कुत इत्यत आह—कालेति । परिणामिनां नदीप्रवाहप्रदीपज्वालादीनां वा उत्पत्त्यादिवावस्थास्ताः कालरूपस्रोतसो वेगेनाऽऽशु ह्रियमाणस्य देहादेर्दृश्यमानास्ता एव नित्यदा जन्मप्रलयहेतवो भवन्ति । ननु, देहः प्रतिक्षणं प्रध्वंसी प्रतिक्षणमवस्थाभेददर्शनात्प्रदीपादिवदित्यनुमानम् ॥ ३६ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मेघविनाशे चक्षुषो रविदर्शनवद्देहतिरोधानविगमे जीवस्य परमात्माऽवलोकनमित्याह—घनो यदेति । यदा ह्यहमिति । अत्राप्यहङ्कारशब्दोऽहम्बुद्धिगोचरदेहपरः "मायामयाहङ्करणात्मबन्धनम्" इत्यनन्तरोक्तेः ॥ ३३ ॥

अच्युतेति अच्युते स्वान्तरात्मनि अनुभवो यस्य सोऽच्युतात्माऽनुभवः आत्यन्तिकः सम्प्लवः प्रलयः मोक्षः ॥ ३४ ॥

नित्यदेति सूक्ष्मपरिणामयोगः प्रलयो विवक्षितः परिणामिशब्देन शरीरं विशेष्यम् ॥ ३५ ॥

अवस्था जन्मप्रलयहेतवः ॥ ३६ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मेघविनाशे चक्षुषो रविदर्शनवद्देहतिरोधानविगमे जीवस्य परमात्मावलोकनमित्याह—घनो यदेति । विदीर्यते वायुना विदीर्यते तदा चक्षुःस्वरूपं रविं पश्यति एवं यदा अहङ्कारः अहङ्कारपरिणामात्मकः अहमभिमानविषयो

अनाद्यन्तवताऽनेन कालेनेश्वरमूर्तिना ।
अवस्था नैव दृश्यन्ते वियति ज्योतिषामिव ॥ ३७ ॥
नित्यनैमित्तिकश्चैव तथा प्राकृतिको लयः ।
आत्यन्तिकश्च कथितः कालस्य गतिरीदृशी ॥ ३८ ॥
एताः कुरुश्रेष्ठ! जगद्विधातुर्नारायणस्याऽखिलसत्त्वधाम्नः ।
लीलाकथास्ते कथिताः समासतः कार्त्स्न्येन नाजोऽप्यभिधातुमीशः ॥ ३९ ॥
संसारसिन्धुमतिदुस्तरमुत्तितीर्षोर्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ।
लीलाकथारसनिषेवणमन्तरेण पुंसो भवेद्विविधदुःखदवार्दितस्य ॥ ४० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्यन्तिकप्रलयमाह—यादेति । यदा च अहङ्कारनाशानन्तरं एवमुक्तप्रकारेण आत्मपरमात्मयाथात्म्यविवेकशस्त्रेण मायामयं अहङ्करणमेव आत्मबन्धनं यस्मिन् तच्च तच्च तत् कार्यकारणप्रकृतिमयदेहं छित्वाऽतिक्रम्य अच्युतानुभवः अवतिष्ठति हे अङ्ग, विष्णुदत्त ! तं मोक्षमात्यन्तिकसंप्लवमाहुः ॥ ३४ ॥

अथ नित्यं प्रलयमाह–नित्यदेति । ब्रह्मादीनां चतुर्मुखशरीरादीनाम् नित्यं प्रतिक्षणम् ॥ ३५ ॥

अनुमानेन देहादीनां नित्यं प्रलयं ज्ञापयति, कालेति । परिणामिनां प्रतिक्षणं जन्मप्रलयवतां नदीप्रवाहदीपज्वालादीनां याः प्रत्यक्षाः अवस्थाः ताः कालस्रोतोजवेन ह्रियमाणस्य कालरूपस्रोतोवेगेन चाल्यमानस्य देहादेः प्रतिक्षणं जन्मप्रलययोः साध्ययोर्हेतवः साधका ज्ञेयाः देहादिः सर्वोऽपि प्रपञ्चः प्रतिक्षणमुत्पत्तिसंहारवान् भौतिकत्वात् दीपप्रवाहादिवदनुमानम् ॥ ३६ ॥

---

भाषा टीका ।

जब सूर्य से उत्पन्न होने वाला मेघ विदीर्ण होजाता है, तब चक्षु सूर्य के स्वरूप को देखताहै । इसी प्रकार जब अहङ्कार का परिणाम रूप, और अहन्ता के अभिमानका विषय यह देह रूप उपाधि, ब्रह्मकी जिज्ञासा से नष्ट होजाता है । अथवा निःशेषण मात्र अहन्ता का नाश होने से देह का नाश जब होजाता है, तब वह आत्मा उसी देह वा देहान्तर से परमात्मा की उपासना कर परमात्माको देखता है ॥ ३३ ॥

इस प्रकार पूर्व श्लोक में संसार का बन्धन रूप इस देह का निरूपण कर अब उक्त देह रूप उपाधि के विलय को अर्थात् मोक्ष को ही आत्यन्तिक प्रलय कहते हैं, यही श्रीशुकदेवजी निरूपण करते हैं, कि—हे राजन् ! जब यह जीव विवेकादि साधन सप्तक से प्राप्त जो भगवदुपासना रूप शस्त्र तिस से देह सम्बन्ध रूप आत्मा के बन्धन का छेदन कर जब अपने अन्तर्यामि के अनुभव में मग्न होकर स्थित रहता है, उसी को यथार्थ ज्ञानीलोग आत्यन्तिक प्रलय कहते हैं ॥ ३४ ॥

अब श्रीशुकदेवजी नित्यप्रलय का निरूपण करते हैं, श्रीशुकदेवजी कहते हैं, कि—हे परन्तप ! हे राजन् ! ब्रह्मादि स्थावरान्त सम्पूर्ण प्राणियों के शरीरों में उनको सततपरिणाम स्वभाव वाले होने से, उत्तरोत्तर अवस्था प्राप्तिरूप उत्पत्ति और पूर्व पूर्व अवस्था का परित्याग रूप प्रलय, ऐसे नित्य उत्पत्ति प्रलय सदा हुआ करते हैं, इस प्रकार कोई सूक्ष्मज्ञ लोग कहते हैं ॥ ३५ ॥

काल के प्रवाह के वेग से सदा चलायमान परिणामि पदार्थों की नीच २ अवस्था ओं हैं वेही जन्म और प्रलय के हेतु होती हैं, नदी के वेग से चलायमान बालु कंकर पत्थर की नीच ऊंच अवस्था की तरह ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, यदि प्रतिक्षणमवस्था भवन्ति तर्हि किं न दृश्यन्ते अतो हेतुरसिद्ध इत्याशङ्क्याऽऽह–अनाद्यन्तवता कालेन जायमाना अवस्था नैव लक्ष्यन्ते आकाशे गच्छतां ज्योतिषां चन्द्रादीनां गमनावस्थाविशेषाः यथा नैव लक्ष्यन्ते तद्वत्, अतो यथा तेषां प्रदेशान्तरप्राप्त्या प्रतिक्षणं गत्यवस्थाः कल्प्यन्ते तद्वदत्रापि बाल्यतारुण्यादिदर्शनेन मध्यवर्तिन्योऽवस्थाः कल्प्यन्त इति हेतुरसिद्ध इत्यर्थः ॥ ३७ ॥

उपसंहरति—नित्य इति, ॥ ३८ ॥

पुराणार्थमुपसंहरति—एता इति । लीलाविषयाः कथा अजो ब्रह्माऽपि कार्त्स्न्येनाभिधातुं नेशः ॥ ३९ ॥

ननु, यदि साकल्येनाभिधातुं न शक्यन्ते तर्हि किं तदभिधानेन तत्राऽऽह–संसारेति । विविधं दुःखमेव दवो दावानलस्तेनार्दितस्य पीडितस्यात उत्तितीर्षोः पुंसो भगवतो याः लीलास्तासां कथास्तासां रसस्तन्निषेवणमन्तरेणान्यः प्लवः तरणसाधनं न भवेत् उपायान्तरासम्भवात्तत्कथाश्रवणमेव यथाशक्ति निषेव्यमित्यर्थः ॥ ४० ॥

---

पुराणसंहितामेतामृषिर्नारायणोऽव्ययः ।
नारदाय पुरा प्राह कृष्णद्वैपायनाय सः ॥ ४१ ॥
सवै मह्यं महाराज! भगवान्बादरायणः ।
इमां भागवतीं प्रीतः संहितां वेदसम्मिताम् ॥ ४२ ॥
एतां वक्ष्यत्यसौ सूत ऋषिभ्यो नैमिषालये ।
दीर्घसत्रे कुरुश्रेष्ठ! सम्पृष्टः शौनकादिभिः ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे पारमहंस्यां
संहितायां वैयासिक्यां द्वादशस्कन्धे
चतुर्थोऽध्यायः ॥ ४ ॥

की अवस्था देखने में नहीं आती है। जैसे, कि—आकाश में चन्द्रादि ज्योतिश्चक्रपदार्थों का परिस्पन्द अर्थात् किञ्चित् २ चलना नहीं मालूम होता है, परन्तु जब दूर का अन्तर होता है तब गमन का अनुमान होजाता है, कि-यदि सूक्ष्म क्रम से गमन न होता तो वह दूरका अन्तर कैसे होता, इसी प्रकार प्राणियों के देहादिकों का उपचय (वृद्धि) भी क्षण क्षण का नहीं मालूम पड़ता है, अधिक बढ़ने पर क्षण २ की वृद्धि का अनुमान होजाता है ॥ ३७ ॥

हे राजन्! यह नित्य, नैमित्तिक, प्राकृतिक और आत्यन्तिक चार प्रकार का प्रलय हमने कहा, और कालकी गति ऐसी सूक्ष्म है सो भी कही ॥ ३८ ॥

हे कुरुश्रेष्ठ! राजन्! वे सब जगत् के विधाता अखिल सत्त्व धाम श्रीनारायण की लीला कथा हमने तुमसे संक्षेप वर्णन की है, और पूर्ण रीति से कहने को तो ब्रह्माभी समर्थ नहीं है ॥ ३९ ॥

विविधदुःख रूप दवाग्नि से आर्त्त और अति दुस्तर संसार समुद्र को तरने वाले पुरुष को भगवान् श्रीपुरुषोत्तम की लीला कथा के रस का निरन्तर सेवन के विना और कोई प्लव अर्थात् तरने का साधन नहीं होसका है ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

श्रोतुरादरदार्ढ्याय सम्प्रदायप्रवृत्तिमाह-पुराणसंहितामिति-त्रिभिः ॥ ४१ ॥

स वै बादरायणः प्रीतः सन्मह्यमिमां संहितां प्राहेति पूर्वेणान्वयः ॥ ४२ ॥

असौ सूत इति पुरतः स्थितमङ्गुल्या निर्दिशन्नाह-नैमिषालये नैमिषारण्यस्थाने ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने
शुकपक्षीये द्वादशस्कन्धे
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्रोतुरादरदार्ढ्याय सम्प्रदायप्रवृत्तिमाह-त्रिभिः । पुराणसं-
मिति । एतां भागवतीमृषिः सर्वज्ञो नारायणोऽनिरुद्धरूपी न-
दाय प्राह चतुर्मुखद्वारा चतुःश्लोकीरूपेण प्राहेत्यर्थः । ब्रह्मा अ-
चतुर्मुखशरीरकः अथवा पूर्वं चतुर्मुखेनोपदिष्टां चतुःश्लो-
बदर्याश्रमवासी नारायणोऽपि प्राहेत्यर्थः अन्यथा द्वितीयस्कन्ध
सन्दर्भविरोधात्स नारदः कृष्णद्वैपायनाय ॥ ४१ ॥

स कृष्णद्वैपायनः बादरायणो व्यासः इमामष्टादशसा-
हस्रसङ्ख्यां निर्माणविशेषः वेदसम्मितां वेदतुल्यां
प्राह ॥ ४२ ॥

अथ भाविनीं प्रवृत्तिमाह-एतामिति । असौ सूत इति पु-
रःस्थितस्याङ्गुल्या निर्देशः नैमिषालये नैमिषारण्यक्षेत्रे ॥ ४३ ॥

इतिश्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कथारसनिषेवणाय भागवतपुराणमेव मुख्यसाधनमित्यभि-
तस्यातिमूलत्वज्ञापनाय मूलं दर्शयति, पुराणेति ॥ ४० ॥

संहिताया वेदसंहितात्वज्ञापनाय वेदसम्मितामिति ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
चतुर्थोऽध्यायः ॥ ४ ॥

(* विजयध्वजटीकायामध्यायोऽनुसमाप्यते ।)

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

श्रीगुरुसम्प्रदायं शुद्धमविच्छिन्नमनुसृत्यैवैतत् पठनपाठन श्रवण श्रावणादिकं कार्यमित्यभिप्रायेणाह-पुराणेति । ऋषिर्नारायणो ब्रह्मणे इत्यध्याहार्यं स च ब्रह्मा मह्यम् अपराभासाशङ्किरहितो नारदाय पुराणसंहितामेतामिति इमां भागवतीमिति वाक्यभेदान्न पौनरुक्त्यम् ॥ ४१—४२ ॥

असौ सूत इति पुरःस्थितमङ्गुल्या निर्दिशति ॥ ४३ ॥

इति सारार्थदर्शिन्याम् हर्षिण्याम् भक्तचेतसाम् ।
द्वादशस्य चतुर्थोऽपि सतङ्गः सङ्गतः सताम् ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवत्प्रोक्तत्वेन परमं श्रैष्ठ्यमाह—पुराणसंहितामिति ॥ ४१ ॥

वेदसम्मितां वेदतुल्यां स द्वैपायनः मह्यमाह ॥ ४२ ॥

अनयैव सूतशौनकादिद्वारा प्रवृत्ता अतः पवित्रीभविष्यती-त्याशयेनाह-एतामिति । असौ पुरतो विराजमानः ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे ।
चतुर्थोऽध्यायः ॥ ४ ॥

---

भाषा टीका ।

हे राजन्! इस श्रीभागवत पुराण की संहिता को पहिले श्रीनारायण आद्य ऋषि नारद जी को कहते हुए, और वे श्रीनारद जी हमारे पिता श्रीकृष्णद्वैपायन महर्षि को कहते हुए ॥ ४१ ॥

हे राजन्! भगवान् श्रीबादरायण इस वेद सम्मित संहिता को प्रसन्न होकर मेरेलिये पढ़ाते हुए ॥ ४२ ॥

हे कुरुश्रेष्ठ! अब इस आगे संहिता को नैमिषारण्य में शौनकादिक के पूछने पर यह सूत दीर्घसत्र में ऋषियों को इसी भागवत को वर्णन करेगा ॥ ४३ ॥

इति श्रीमद्भागवत द्वादशस्कन्ध में चतुर्थो अध्यायकी,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्ता ॥ ४ ॥

---

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥



# पञ्चमोऽध्यायः ।

श्रीशुक उवाच ।

अत्रानुवर्ण्यतेऽभीक्ष्णं विश्वात्मा भगवान् हरिः ।
यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भवः ॥ १ ॥
त्वं तु राजन्मरिष्येति पशुबुद्धिमिमां जहि ।
न जातः प्रागभूतोऽद्य देहवत्त्वं न नङ्क्ष्यसि ॥ २ ॥
न भविष्यसि भूत्वा त्वं पुत्रपौत्रादिरूपवान् ।
बीजाङ्कुरवद्देहादेर्व्यतिरिक्तो यथाऽनलः ॥ ३ ॥
स्वप्ने यथा शिरश्छेदं पञ्चत्वाद्यात्मनः स्वयम् ।
यस्मात्पश्यति देहस्य तत आत्मा ह्यजोऽमरः ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

"पञ्चमे तु समासेन परब्रह्मोपदेशतः ।
राज्ञस्तक्षकसन्दंशान्मृत्युभीतिनिवारणम्" ॥

एतत्पुराणं शृण्वन्नभयं प्राप्नोतीत्यभिप्रेत्य पुराणार्थमनुस्मारयति—अत्रेति । अयं भावः जगतः कर्ता ब्रह्माऽपि यस्य प्रसादजः प्रसादोऽत्र रजोवृत्तिर्हर्षः ततो जातत्वात्परतन्त्रः सर्वसंहर्ता रुद्रश्च यस्य क्रोधसम्भवो स न तु स्वतन्त्रः स विश्वस्याऽऽत्मा नियन्ता भगवानत्रानुवर्ण्यते अत एवंभूतं भगवन्तं शृण्वतः कुतोऽन्यस्माद्भयशङ्केति ॥ १ ॥

त्वं पुनः कृतार्थ एवेत्यनुस्मारयति त्वन्त्विति । पशुबुद्धिमविवेकम् यस्मान्न नङ्क्ष्यसि कुत ? इत्यत आह—न जात इति । यथा देहः प्रागभूत पश्चाच्च जातो नङ्क्ष्यति न चैवं त्वं पूर्वं नाभूर्न चाद्य जातोऽस्यतो न नङ्क्ष्यसि ॥ २ ॥

ननु, बीजादङ्कुरवत्त्वत्तस्मात्पुत्ररूपेणापि स्वयमेव भवति यथाऽऽह श्रुतिः "अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे । आत्मा वै पुत्रनामाऽसि स जीव शरदः शतम्" इति ततः पुनरङ्कुराद्बीजमिव पौत्रादिरूपेणापि स्वयमेव भवति "पिता पुत्रेण पितृमान्योनियोनौ" इति श्रुतेः । अतस्तेषु नश्यत्सु कथं न नङ्क्ष्यामीति चेत्तत्राऽऽह, न भविष्यसीति । भूत्वा पुत्रपौत्रादिरूपवान्बीजाङ्कुरवन्न भविष्यसि यस्माद्देहादेर्व्यतिरिक्तस्त्वं यथाऽनलः काष्ठात् देहाद्देही जायते नाऽऽत्मेति भावः ॥ ३ ॥

जन्मादीनां देहधर्मत्वं दृष्टान्तेन प्रपञ्चयति, स्वप्ने यथाऽऽत्मनः शिरश्छेदं स्वयं पश्यति एवं जागरणेऽपि यथा यस्माद्देहस्य पञ्चत्वादिकं पश्यति ततस्तद्द्रष्टाऽऽत्मन इदं भ्रममात्रम् वस्तुतश्चाऽऽत्माऽजोऽमरश्चेत्यर्थः तदुक्तम्—

"आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ ।
न भवाप्ययवस्तूनामभिज्ञोऽद्वयलक्षणः" ॥

इत्यादि ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—२ ॥

भूत्वा पुत्रपौत्रादिरूपवान् न च भविष्यसि न पुनर्जननं बीजाङ्कुरन्यायेन सन्तानोत्पादकश्च न भविष्यसीत्यर्थः यथाऽनलः काष्ठादिति शेषः ॥ ३ ॥

स्वप्ने देहादन्यात्माविवक्षया इत्यर्थः ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं भागवतीं संहितां संश्राव्य अथ स्वमन्तव्यं प्राधान्येन प्रतिपाद्यं निष्कृष्य दर्शयन्देहात्मयाथात्म्यविमर्शनपूर्वकं सशरीरक परब्रह्मानुसंधाननिष्ठो ऽस्पृष्टलौकिकदुःखो मुक्तो भविष्यसीत्याह पञ्चमेन । अत्रेत्यादिना—अत्रास्यां संहितायां हरिराश्रितबन्धहरो भगवाननुवर्ण्यते ननु: किमत इत्यत्र तस्यैव "कारणं तु ध्येयः" इत्युक्तरीत्या तस्य ध्येयत्वज्ञापनाय सर्वकारणत्वमाह—यस्येति । यस्य हरेः सोऽनुवर्ण्यत इति सम्बन्धः ॥ १ ॥

निष्कृष्य त्याज्योपादेयविभागमाह—त्वन्त्विति । अनासन्नमरणानां तु सत्युपायाभासन्नमरणत्वं इति तु शब्दाभिप्रायः हे राजन् ! मरिष्ये इत्येवंविधां पशुबुद्धिमविवेकं जहि अहं प्रत्ययवेद्यस्यात्मनो नित्यत्वान्मरणाभावादिति भावः तदाह—नजातइति

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

"अहो बत श्वपचोऽतो गरीयान् यज्जिह्वाग्रे वर्त्तते नाम तुभ्यम्" इति यन्नाम सकृत् श्रवणात् पुल्कसोऽपि विमुच्यते संसारादित्यादिभ्यः किञ्चिन्मात्रयापि भक्त्या मोक्ष इति तथा "तापत्रयेणाभिहतस्य घोरे सन्तप्यमानस्य भवाध्वनीह" पश्यामि नान्येनोपायेन संसारादपि मोक्ष इत्यपि निर्द्धारितम् । किञ्च, "भक्त्या तयैव परया निर्वृत्या ह्यपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितो प्रत्याद्रियन्ते भगवद्विरहेणैव परिसमाप्तसर्वार्था" इति "मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते" इति "न परिवाञ्छन्ति कञ्चिदपवर्गमपि" इति "सा ब्रह्मणि स्वमहिमन्यपि नाथ माऽभूत्" इति "स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः" इत्यादिवाक्यैश्चतुर्थं पुरुषार्थमपि निरस्कृत्य भक्तेरेव पुरुषार्थशिरोमणित्वं च मया ख्यापितं किञ्च, मुक्तन्तरवाक्यस्य प्रामाण्यमापेक्षिकमेव महाभक्तस्य तु प्रामाण्यमात्यन्तिकमेवेति सर्वत्र वैकुण्ठेऽपि प्रसिद्धिर्भूयसी "परोक्षवादा ऋषयः परोक्षं मम च प्रियम्" इति भगवदुक्तेर्महारहस्योद्घाटनपटिष्ठा भूत्वा भगवत्प्रियङ्कुर्वाद्यहमप्यद्य तदधुना किं करिष्ये पुराणार्थश्च समालोकित एव त्वधुनापि भक्तेर्महामहिमानं संवरितुं चलिष्ये यथा कश्चिन्महारत्नमानिगार्थं रत्नसत्त्वेन सर्वेषाकारान् सन्दर्श्यापि पुनः किञ्चित्परामृश्य तदञ्चितं सम्पुटगतं कृत्वा महाकोशाभ्यन्तरे स्थाप्य रत्नान्तरं बहिः प्रकाशयन्नेवास्माकं सर्वार्थसिद्धिरिति ब्रूते तथैवाधुना राजानमहं ज्ञानमुपदेक्ष्यामि यथा भगवन्मयेऽत्र शुकः परीक्षिते ज्ञानमेवोपदिष्टवानिति भगवन्मायाप्रभावाज्ज्ञानमेवोत्कृष्टं भक्तिस्तु तत्साधनमेवेति मन्यन्ते किञ्च भक्तिविरक्तान् जनान् प्रतिप्रादुर्भूय भगवांस्तान् परीक्षमाणो मोक्षं गृहाणेति यथा ब्रूते तथैवाहमत्र ज्ञानोपदेशेनास्य मच्छिष्यस्य परीक्षितो भक्तिसूक्ष्मोत्पत्तिं च परीक्षिष्ये परीक्षा च सर्वज्ञेनापि जगत्यस्मिन् परीक्षिद्भक्तिनिष्ठाज्ञापनार्था ज्ञेया किञ्च भक्तिज्ञानयोः फलमन्ततो मुक्तिरेव केवलामित्यनभिज्ञव्याख्यानं नैव मदभिप्रायसम्बन्धं ज्ञेयं यतो—

"राजन् ! पतिर्गुरुरलं भवतां यदूनाम्-
दैवं प्रियः कुलपतिः क्व च किङ्करो वः ॥
अस्त्वेवमङ्ग ! भगवान् भजतां मुकुन्दो-
मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम्" ॥

इत्युक्तवता मया मुक्तेः सकाशादपि भक्तेरुत्कृष्टफलत्वस्य प्रतिपादितत्वात् न चोपदेष्टव्येनानेन ज्ञानेन परीक्षितो निर्वाणमुक्तिप्राप्तिरेवेत्याशङ्कनीयम्—

"स वै महाभागवतः परीक्षित्-
येनापवर्गाख्यमदभ्रबुद्धिः ॥
ज्ञानेन वैयासकिशब्दितेन—
भेजे खगेन्द्रध्वजपादमूलम्" ॥

इति मदभिप्रायाभिज्ञेनानेन मच्छिष्येण सूतेनाग्रे वक्ष्यमाणत्वात् यथापि "राजन्! पतिर्गुरुरलम्" इत्यत्र भवद्वचस्तु स्वभक्तियोगं ददातीति परीक्षितः प्रेमभक्तिप्राप्तिरभिव्यञ्जितैव न चोपदिश्यमानेनानेनैव देहादिव्यतिरिक्तात्मज्ञानेन ब्रह्मानुभवः सिद्ध्येत् किं तस्यापि ज्ञानस्य भक्त्या निर्जयेनैव यदुक्तं भगवता

"द्रव्यं दिशः फलं कालो ज्ञानं कर्म च कारकः ।
श्रद्धावस्थाकृतिर्निष्ठा त्रैगुण्यः सर्व एव हि ।
सर्वे गुणमया भावाः पुरुषाव्यक्तधिष्ठिताः ।
दृष्टं श्रुतमनुध्यातं बुद्ध्या वा पुरुषर्षभ ॥
एताः संसृतयः पुंसो गुणकर्मनिबन्धनाः ।
येनेमे निर्जिताः सौम्य ! गुणा जीवेन चित्तजाः ॥
भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते" ॥ इति

किञ्च, भगवद्भक्तस्य मोक्षकामत्वेऽपि नास्ति ज्ञानेन प्रयोजनं यदुक्तं स्वयं भगवता—

"ज्ञाने कर्मणि योगे च वार्त्तायां दण्डधारणे ।
यावानर्थो नृणां तात ! तावांस्तेऽहं चतुर्विधः" ॥ इति

तस्मादहं तेन सर्वान्ते ज्ञानोपदेशेनास्य शास्त्रस्य स्पष्टतयैव मोहिनीसाधर्म्यं प्रतिपादयिष्ये यथा ह्यसुराः प्रेमसुधया वञ्चिता एव भवेयुरिति अपि च ज्ञानोपदेशात् प्रागेकवाक्यं पुनरुक्तञ्जनया कृत्वा भक्तान् प्रीणयितुं भक्तिरसप्रक्षिप्तमेव करिष्ये, तदनन्तरं ज्ञानोपदेशवाक्यान्यपि यानि भक्तिप्रतिकूलानि वक्ष्ये तान्यप्यन्तर्भूतभक्त्यनुकूलार्थान्येव करिष्ये इत्यादिविचार्याह—अत्रेति । अत्र समासीकृते अस्मिन् पुराणशास्त्रे इत्यर्थः । यस्य हरेः प्रसादजो ब्रह्मेति प्रसादस्य सत्त्वगुणत्वात् ब्रह्मणस्तु रजः सम्भवत्वादेतच्च सङ्गच्छते तथा रुद्रक्रोधसमुद्भव इति भगवतो निर्गुणत्वात् स्वरूपस्य तामसः क्रोधोऽपि न सम्भवेत् यद्रूपो रुद्रः व्याप्तस्मात्प्रकर्षमिदमतिशयोक्त्या अर्थान्तरतात्पर्यकं ज्ञेयं तथैवं निर्गुणस्य भगवतः स्वभक्तसेविनि जने प्रसादः स्वभक्तद्रोहिणि क्रोधश्च दृष्टौ च भक्तवत्सलस्य तस्य शुद्धसत्त्वस्वरूपावेवाक्ष एव व्याख्येयं यस्य प्रसादजः यस्य प्रसादोत्थो भाग्यविशेषो ब्रह्मवोक्तममरसाध्यसाधनोत्पत्तिहेतुरतस्तद्धर्ममेव भक्तैर्यतनीयं तथापोक्तसाध्यसाधनविनाशहेतुर्भगवत्कोप एवेत्यतस्तदनुरूप एव यतनीयमित्येतत् पुराणतात्पर्यमवच्छेयमिति भावः । ननु, यदि श्रीशुकदेवेन श्रीभागवतपुराणमिदमत्र समासीकृतं कथं तर्हि प्रथमस्कन्धस्यापि तत्रारम्भस्य च श्रीभागवतत्वम् उच्यते ? सत्यम् यथा प्रागुत्तरकल्पस्य ...ऽपि यदुत्वमेव नाटकशास्त्रस्य यथा प्राक् पश्चात्तनयोः प्रस्तावनाशीर्वादयोरपि नाटकत्वमेव तथैव प्रथमद्वादशाध्याययोरपि श्रीभागवतत्वं यथा च—

"गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः ।
या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता" ॥

इत्यष्टादशाध्यायगीतायाः सर्वस्या भगवत्प्रोक्तत्वाभावेऽपि भगवत्प्रोक्तत्वमुच्यते तथैवास्य द्वादशस्कन्धस्य श्रीभागवतस्य सर्वस्य शुकप्रोक्तत्वाभावेऽपि शुकप्रोक्तत्वमिति समाधिः ॥ १ ॥

अथ ज्ञानोपदेशः त्वं त्विति तु भिक्षोपक्रमे मरिष्येनीत्यापि मरिष्यामीति पशूनामिव बुद्धिं जहि विवेकेन नाशयेति—

"तं मोपयातं प्रतियन्तु विप्रा—
गङ्गा च देवी धृतचित्तमीशे ।
द्विजोपसृष्टः कुहकस्तक्षको वा—
दशत्वलं गायत विष्णुगाथाः" ॥ इति ।

श्रीभागवतश्रवणात्पूर्वमेव प्रतिज्ञातवतस्तस्य पशुबुद्धेः प्रसक्तिरेव नास्तीत्यतस्तन्निवर्त्तको ज्ञानोपदेशो न राजानं प्रति-

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अत्रमेव किन्तु ये पशुबुद्धयोऽन्ये तानेव प्रति तदपि राजन्निति सम्बोधनं तु तमेव लक्ष्यीकृत्यान्यविषयकस्याप्युपदेशस्य वक्तुमो- चित्यात्स्यैव तच्छिष्यत्वात् यथा सर्वविषयकोऽप्युपदेशो गीताया- मर्जुनं लक्ष्यीकृत्यैवोक्तं विवेकमेवाह, न जात इति । यथा देहः प्रागभूत एव इदानीं जातोऽस्य नङ्क्ष्यति न तथा त्वं जातः नापि प्रागभूतः नाप्यनङ्क्ष्यसि त्वं जीवात्मा जडादुपाधेः पृथगेवासीति नावं भक्तिप्रतिकूलोऽर्थः ॥ २ ॥

यथा देहो भूत्वा पुनर्भवति न तथा त्वमात्मा इत्याह—नेति । पुत्रपौत्रादिरूपवानिति यथाह श्रुतिः—

"अङ्गादङ्गात् सम्भवसि हृदयादभिजायसे ।
आत्मा वै पुत्रनामासि सञ्जीव शरदः शतम्" ॥ इति

बीजाङ्कुरवत्स्वयमेव पुत्रो भवति ततः पुनरङ्कुरात् बीजमिव पौत्रोऽपि स्वयमेव भवति तथात्वं न भविष्यसि यस्मा- देहादेरुपाधेर्जडात्त्वमात्मा व्यतिरिक्तः यथा अनलः काष्ठात् देहा- द्देहो जायते नात्मेति भावः ॥ ३ ॥

जन्ममरणाद्यवस्थावतो देहादात्मनः पार्थक्यं दृष्टान्तेन स्पष्ट- यति, स्वप्ने इति । नहि स्वस्य शिरश्छेदं स्वयं पश्येत् अत आत्मा ततः पृथगेव न दृष्टा तथैव जागरेऽपि तस्मात्पृथग्भूत एव आत्मनो देहस्य पञ्चत्वादिपश्यति ततो हेतोरात्मा अजो जन्मरहितः अमरो मृत्युरहितश्च ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथेदं बोध्यं निष्कामकर्मयोगेन शुद्धान्तःकरणः भगवद्वि- षयकं ज्ञानं ततो भगवद्भक्तिं तदनन्तरमत्र ब्रह्मसमश्नुत इतिश्रुते चरमकलेवरे एव भगवन्तं ध्याने प्राप्नोति चरमकलेवरत्यागान- न्तरं च भगवद्भक्त्यैव भगवद्भावापत्तिलक्षणां मोक्षं प्राप्नोति मुमुक्षुः इति श्रीमुखेनैवोक्तम्–

"योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया ।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कर्हिचित्" ॥

इति "भक्तियोगेन मन्निष्ठो मद्भावायोपपद्यते" तत्र देहत्यागानन्तरं भक्त्या भगवद्भावापत्तिः षष्ठेऽध्याये राज्ञः स्फुटीभविष्यति इहतूक्त- साधनबलेन निर्भयः सन् अस्मिन्कलेवरे एव श्रीकृष्णं परमात्मानं प्राप्नुहीत्याह राजानं प्रति भगवान् शुकः— अत्रेति अत्रास्मिन् महापुराणे हरिः स्वानन्यभक्तक्लेशहरः वर्ण्यते भगवान् स्वाभाविकषडैश्वर्यसम्पन्नः यस्य प्रसादजः ब्रह्मा रुद्रश्च क्रोधसमुद्भवः सर्वेश्वरः समानातिशयशून्य इत्यर्थः विश्वात्मा चेतनाचेतनात्मयोरन्तरं वक्ष्यमाणायाः समुदायभूतस्य आत्मा कारणं यद्विज्ञानेन सर्वमात्मानात्मस्वरूपादिकं विज्ञातं भवति सः भगवान् श्रीकृष्णः अभीक्ष्णं पुनः पुनः नवभिर्लक्षणैः साक्षाच्च अनुवर्ण्यते ॥ १ ॥

तस्यैवांशभूतस्त्वं परमात्मानं बुद्ध्वा तद्विषयकज्ञानभक्ति बलेन तमेव परमात्मानं ध्यानेन प्राप्नुहि तथाभूतं त्वां सर्पस्य तु का कथा मृत्युरपि धर्षयितुं न शक्नुयादित्याह–त्वन्त्विति सार्द्धैस्त्रिभिः । तुशब्दः प्रागविद्यस्य राज्ञः भक्तिश्रद्धयो वैलक्षण्यं सूचयति इमामनादितः प्रवृत्तामात्मानात्मनोऽविवेकरूपां मृत्त प्रवृत्तसम्बन्धाभावेन विवेके जातेऽपि संस्कारवशात्पुनःस्फुरितां भविष्ये इति पशुबुद्धिमेवमाहि त्यज सन्निधरार्थः । आत्मानात्म- विवेकं पूर्वत्र नानाख्यानेषूपदिष्टमनुस्मारयति प्रागभूत्वा अविद्य- मानः न जातः नापि देहवत् नङ्क्ष्यसि मरिष्यसि ॥ २ ॥

किञ्च भूत्वा उत्पद्य बीजाङ्कुरवत् पुत्रपौत्रादिरूपवान् त्वं न भविष्यसि यतः यथा दाह्यवस्तुप्रकाशकः अग्निर्व्यति- रिक्तः तथा देहेन्द्रियमनोबुद्धिप्राणादिरूपस्तेषां प्रकाशकस्त्वं व्यतिरिक्तोऽसि अयमर्थः आत्मा ह्यविकारी पुत्रादिरूपेण न विक्रि- यते किन्त्वात्माधिष्ठितो देह एव विक्रियते " अङ्गादङ्गात्सम्भ- वसि हृदयादभिजायसे । आत्मा वै पुत्रनामासि सञ्जीव शरदः शतम " इतिश्रुतेः ॥ ३ ॥

देहादेर्व्यतिरिक्तत्वमेवाह–स्वप्ने इति । स्वप्ने यथा आत्मनः स्वात्मदेहात्पृथग्भूत एव शिरश्छेदं स्वयं पश्यति एवं जागरेऽपि देहात्पृथग्भूत एव आत्मनो यो देहस्तस्य पञ्चत्वादि पश्यति ततो हेतोरात्मा अजः जन्मशून्य अमरः मृत्युवर्जितश्च ॥ ४ ॥

---

भाषा टीका ।

श्रीशुकउवाच ।

श्री शुकदेवजी बोले, कि—इस भागवत संहिता में निर- न्तर विश्वात्मा भगवान् श्री हरि का वर्णन किया है जिस परमात्मा के हर्ष से श्रीब्रह्मा जी उत्पन्न हुए, और जिन के क्रोधसे सर्व संहार करने वाले श्रीरुद्रदेव उत्पन्न हुए हैं ॥ १ ॥

हे राजन् ! तुम तो अब " मैं मरूंगा " इस पशु बुद्धि को छोड़ दो । जैसे यह देह पहिले कभी न हुआ रहा, और अब उत्पन्न भया है, और नष्ट होजायगा, इसी तरह तू अर्थात् तेरा आत्मा न कभी पहिले उत्पन्न हुआ न अब उत्पन्न हुआ है, और न अब कभी नष्ट होवेगा ॥ २ ॥

हे राजन् ! तुम पुत्र पौत्रादि रूप वाले होकर बीजांकुर की तरह जैसे बीज से अंकुर होता है ऐसे नहीं उत्पन्न होओगे, तुमतो देहादिक से व्यतिरिक्त हो, जैसे—काष्ठ से अग्नि पृथक् है कुछ उत्पन्नहीं होता है इसी प्रकार देहसे देहही उत्पन्न होता है आत्मा नहीं ॥ ३ ॥

आत्मा तो देहसे भिन्नही है जैसे प्राणी स्वप्न समय में अपने स्वप्न देहका शिर छेदन मरण आपही देखता है तो देखने वाला मरने वाले से अन्य है । इसी प्रकार इस विद्य- मान देह से भी आत्मा अन्य है, क्योंकि ? जिसहेतु से इस देह काभी मरणादिक यह देखता है तिसी हेतुसे देह जन्म मरण वाला है और अजन्मा आत्मा अजर अमर है ॥ ४ ॥

---

घटे भिन्ने यथाऽऽकाश आकाशः स्याद्यथापुरा ।
एवं देहे मृते जीवो ब्रह्म सम्पद्यते पुनः ॥ ५ ॥
मनः सृजति वै देहान् गुणान् कर्माणि चाऽऽत्मनः ।
तन्मनः सृजते माया ततो जीवस्य संसृतिः ॥ ६ ॥
स्नेहाधिष्ठानवर्त्यग्निसंयोगो यावदीयते ।
ततो दीपस्य दीपत्वमेवं देहकृतो भवः ।
रजःसत्त्वतमोवृत्त्या जायतेऽथ विनश्यति ॥ ७ ॥
न तत्राऽऽत्मा स्वयञ्ज्योतिर्यो व्यक्ताव्यक्तयोः परः ।
आकाश इव चाधारो ध्रुवोऽनन्तोपमस्ततः ॥ ॥ ८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यस्माद्देहोपाधिकोऽयमात्मनो जन्मादिसंसारभ्रमस्तस्मादुपाधिनिवृत्तौ मुच्यत इति सदृष्टान्तमाह-घट इति । यथा पुरा घटोपाधेः पूर्वमिव पुनर्घटे भिन्ने तदन्तर्वर्त्यवकाश आकाश एव स्याद्यथा एवं देहे मृते तत्त्वज्ञानेन लीने सति ॥ ५ ॥

ज्ञानेन लयं भावयितुं मायाकृतमात्मनो देहाद्युपाधिसम्बन्धप्रकारमाह—मन इति । मन आत्मनो देहादीन्सृजति तच्च मनो माया सृजति ततो मायाद्युपाधिसमुदायाज्जीवस्य संसृतिर्भवतः ॥ ६ ॥

यस्मादुपाधिनिबन्धनो जीवस्य संसारोऽतस्तन्नाशे जीवत्वं गच्छतीत्येतदेव सदृष्टान्तमाह, सार्द्धेन स्नेहेति । दीपस्य ज्योतिषो दीपत्वं ज्वालारूपः परिणामः तत्र तैलस्थानीयं कर्म तदधिष्ठानस्थानीयं मनः वर्तिस्थानीयो देहः अग्निसंयोगस्थानीयश्चैतन्याध्यासः दीपस्थानीयः संसार इति योज्यम् देहकृतः देहनिबन्धनः यद्वा, देहकृतो मनसो न त्वात्मनः ॥ ७ ॥

अतो दीपवत्संसार एव नश्यते न त्वात्मा ज्योतिर्यदित्याह, नेति । ननु, तत्र प्रतीयमान आत्मा कुतः? इत्यत आह, य इति । व्यक्ताव्यक्तयोः स्थूलसूक्ष्मदेहयोः परोऽन्यः यतः स्वयञ्ज्योतिः परत्वं प्रपञ्चयति, आकाश इवेति । आधारो देहादेः प्रपञ्चस्य ध्रुवो निर्विकारः नास्त्यन्त उपमा च यस्य सोऽनन्तोपमः ततो विभुः ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यथा पुरास्यात् निरुपाधिकः स्यात् एवं जीवो ब्रह्म सम्पद्यते परिशुद्धावस्थो भवतीत्यर्थः । ब्रह्मशब्दोऽत्र मुक्तात्मवाची "ब्रह्मभूयाय कल्पते, ब्रह्मणो हि प्रतिष्ठाहम्" इति प्रयोगात् ॥ ५ ॥

मनः सृजतीति मनसो देहादिसृष्टिहेतुत्वं पुण्यपापद्वारेत्याह-कर्माणि चेति । माया प्रकृतिः ॥ ६ ॥

एवं देहकृतो भव इति कर्मारब्धदेहेन्द्रियाद्यभिमानको भवति इत्यर्थः । रजः सत्त्वं तमोवृत्त्या गुणत्रयसंसर्गादात्मनो जन्ममरणादिः स्वतस्तु तद्विलक्षणो नित्य इत्यर्थः ॥ ७ ॥

परः जीवादन्यः ॥ ८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अस्त्वेवं ततः किमित्यत्रैवंविधविवेकयुक्तस्य मुक्तिरेव स्यादित्याह-घट इति । यथाऽऽकाशः घटोपहिताकाशः घटे भिन्ने सति यथापुराऽऽकाशः स्यात्पूर्ववन्निरुपाधिक आकाशः स्यादेवं जीवोऽपि देहे मृते परमात्मोपासनया निरवशेषं प्रकृतिसम्बन्धविगमे सति ब्रह्म सम्पद्यते सशुद्धावस्थो भवतीत्यर्थः । ब्रह्मशब्दोऽत्र मुक्तात्मवाची "ब्रह्मभूयाय कल्पते, ब्रह्मणोऽपि प्रतिष्ठाहम्" इति प्रयोगात् ॥ ५ ॥

कथमनादिबन्धस्य निवृत्तिरित्यत्रोपाधिकत्वादित्यभिप्रेत्य तमुपपादयति-मन इति । गुणान् सत्त्वादिगुणमयानात्मनो जीवस्य देहान् सृजति मनसो देहसृष्टिहेतुत्वं पुण्यपापद्वारेत्याह, कर्माणीति । तन्मनः कर्म माया सृजति ततो माया मनो देहकर्मभ्यः जीवस्य संसृतिर्भवति ॥ ६ ॥

एतदेव सदृष्टान्तमुपपादयति सार्द्धेन स्नेहेति । दीपस्य ज्योतिषः दीपत्वं ज्वालारूपपरिणामः तत्र तैलस्थानीयं कर्म तदधिष्ठानस्थानीयं मनः वर्तिस्थानीयो देहः अग्निसंयोगस्थानीयो देहात्माभिमानः दीपस्थानीयः संसारः इति योज्यम् एवम्भवः संसारः देहकृतः कर्मारब्धदेहेन्द्रियाद्यभिमोग इत्यर्थः । अतो रजस्सत्त्वतमोवृत्त्या गुणत्रयसंसर्गादुपाधेरात्मनो जन्ममरणादि स्वतस्तु तद्रहितोऽस्तीत्यर्थः । तदेवाह नेति तत्र देहे जायमाने नश्यति च सत्यात्मा न जायते न नश्यति च तत्र हेतुः व्यक्ताव्यक्तयोः परः व्यक्तं शरीरमव्यक्तं मूलप्रकृतिः ताभ्यां परोऽन्यः तत्र हेतुः स्वयञ्ज्योतिः स्वयम्प्रकाशः विजातीयत्वादिति भावः ॥७॥८॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अधुना प्रसङ्गात्सामान्यविशेषमरणावस्थामाह—घट इति । घटे भिन्ने कपालीभूते घटाकारपरिमितो घटाकाशो नीलिमाकारबहिस्थाकाशः स्यात्पुरा यथा तथेत्यर्थः । एवं देहे मृते सति जीवः संसारी ब्रह्मत्वं यथा कर्मस्वर्गनरकादिकं सम्पद्यते घटान्तस्थमहाकाशैकदेशे बहिस्थव्याप्ताकाशो भवति

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यथा तथा पुरा जीवः मायाधारकः परमात्मान्तर्यामी ब्रह्मत्वाख्यस्वरूपमाप्नोति घटान्तर्गताकाशः पुरा यथा महाकाशाधीनः पश्चादपि तदधीनतामापद्यते तथा चरमदेहान्तलिङ्गशरीरे मृते नष्टे जीवो मुक्तियोग्यः । आत्मा परं ज्योतिः सम्पद्यते अयमर्थो "महाकाशो बहिःस्थश्च घटाद्यन्तस्थ एव च" इति तत्त्वसंहितावचनादवगन्तव्य इति ब्रह्म मोक्षं पुनरावृत्तिशून्यं वा ॥ ५ ॥

प्रकारान्तरेण संसारावस्थामाह—मन इति । आत्मनो जीवस्य मनः सुरनरादिदेहान्गुणान्कर्माणि आवृत्तिहेतुभूतानि पुण्यपापलक्षणानि च सृजति आपादयति शब्दादिविषयासक्तिहेतुभूतानि वा एवंविधं मनः सत् किं तत्राह, तदिति । माया प्रकृतिः तन्मन उत्पादयति सृजन् इत्यात्मनेपदप्रयोगेण भिन्नं मन इति सूचयति मनो जडमनसां जीवस्य संसारो वर्तत इति शेषः ॥ ६ ॥

कियन्तं कालं जन्मात्मकः संसार इति तत्राह—स्नेहेति । यावन्तं कालं तैलादिस्नेहद्रव्याधिष्ठानवर्तिकाग्निसंयोगस्तावन्तं कालं दीपस्य दीपत्वं प्रकाशसामर्थ्यम् एवं देहकृतो देहादिकर्मनिमित्तकृतो भव इत्यन्वयः । तैलाद्यभावेन यथा दीपादेः शून्यता एवं जीवस्यापि देहाद्यभावेन शून्यत्वमाशङ्क्याह, रज इति । मनसो रज आदिगुणोपजीवनेन देहाजायते (१) इत्यादि ॥ ७ ॥

तत्र तदवस्थायामपि योऽव्यक्ताव्यक्तयोर्देहप्रकृत्योः परो विलक्षणः स आत्मा जीवो न जायते न वर्द्धते न नश्यति कुतः? स्वयञ्ज्योतिर्ज्ञानात्मा इदानीमुपादितप्रकारं विवृत्तं, आकाशवत् । आकाशवत्ततो व्याप्तो ध्रुवाधारो नित्याधारो ध्रुवो नित्यश्च अनन्तगुणः तद्वद्वस्तुपरिमाणपरिमितिश्च ॥ ८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

देह इति देहद्वयम् इत्यर्थः । ब्रह्मत्वं सम्पद्यते यथार्थं प्राप्नोति ॥ ५ ॥

मायादीनां स्रष्टृत्वं यत् किञ्चित्कर्तृत्वात् ॥ ६ ॥

दीपस्य ज्योतिषो दीपत्वं स्नेहाद्यधिष्ठातृत्वेन विकारित्वम् अर्थः । ततस्तस्मात् स्वयञ्ज्योतिरादिरूपत्वादनन्तोपमः अनन्तगुणः "स्वस्थो भयार्थो" इति श्रुतेः ॥ ७—८ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

देहद्वयात्मनो लिङ्गशरीराख्यात्मो युज्यते यः ज्ञाने सति निवृत्तस्य एकात्मवादिनां दृष्टान्तमाह—घट इति । भिन्ने विदीर्णे पुरेति घटोत्पत्तेः पूर्वं यथा महानेवाकाशस्तथैव घटे भग्नेऽपि । एवं देहे मृते ज्ञानेन क्षीणे सति प्रकटोर्यो यथा जीवात्मा परमात्मापि तावुभावपि देहावृत्तौ द्वावेते लिङ्गभङ्गे सत्यपि मुक्तौ स्यातामिति कथं नोच्यते तत्र परमात्मन आवरणाभावेऽपि नास्तीति सदृष्टान्तमाह, घट इति । यथा पुरेति घटे वर्तमानेऽपि आकाश एव यथा अनावृतस्तथैव घटे भग्नेऽपीत्यर्थः । आकाशस्य घटान्तर्बहिर्भेदेऽपि वर्तमानत्वादाकाशं घटः कथमावृणोतीति भावः । एवं देहे अमृते वर्तमानेऽपि अजीवो जीवभिन्नः परमात्मा ब्रह्म सर्वव्यापकः सदैव सम्पद्यते विराजते ॥ ५ ॥

ज्ञानेन क्षयं सम्भावयितुं मायाकृतमात्मनो देहाद्युपाधिसम्बन्धप्रकारमाह—मन आत्मनो देहादीन् सृजति यदुक्तं "यतो यतो धावति दैवचोदितं मनोविकारात्मकम्" इत्यादि तच्च मनो माया सृजति ततो मायाद्युपाधिसमुदायात् ॥ ६ ॥

एतदेव सदृष्टान्तमाह—स्नेहेति । दीपस्य ज्योतिषः दीपत्वं ज्वालारूपः परिणामः तत्र तैलस्थानीयं कर्म तदधिष्ठानस्थानीयं मनः वर्तिस्थानीयो देहः अग्निसंयोगस्थानीयश्चैतन्याध्यासः दीपस्थानीयः संसार इति योज्यं देहकृतो देहसंयोगनिबन्धनोऽयं भवः संसारः ॥ ७ ॥

अतो दीपवत् संसार एव नश्यति न त्वात्मा ज्योतिर्वदित्याह—नेति । ननु तत्र प्रतीयमान आत्मा कुतः? इत्यत आह य इति व्यक्ताव्यक्तयोः परः स्थूलसूक्ष्मदेहाभ्यामन्यः यतः स्वयञ्ज्योतिः त एव हेतोः आधारो देहस्य प्रपञ्चस्य ध्रुवो निर्विकारः नास्त्यन्तः उपमा च यस्य सोऽनन्तोपमः पक्षे यः खलु व्यक्ताव्यक्तयोः कार्यकारणयोः परः कारणरूपः परमात्मा सतु आकाश इव सर्वाधार इत्यादि ॥ ८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवंभूतात्मानात्मविवेकेन भागवतः प्रथमं निर्बन्धनं स्वरूपं प्राप्नोति पुनः ब्रह्मसम्पद्यतेत्याह—घट इति । घटे भिन्ने सति तदावृतः आकाशः यथा पुरा अनावृतः आकाशः तथैव स्यात् एवं देहे मृते अत्र देहशब्देन तत्कारणभूता प्रकृतिर्गृह्यते तस्यामुपरतायामित्यर्थः ।—

"यद्यपापरता देवी माया वैशारदी मतिः ।

सम्पन्न एवेति विदुर्महिम्नि स्वे महीयते" ॥

इत्युक्तत्वात् जीवः स्यात् निरावरणः स्यात् पुनः स एव निर्बन्धनो जीवः ब्रह्म ब्रह्मसाम्यं प्राप्नोति "निरञ्जनः परमं साम्यमुपैति" इति श्रुतेः ॥ ५ ॥

प्रकृतौ उपरतायां स्वस्वरूपं सम्पद्यत इत्युक्तं तत्र प्रकृतिकृतएव जीवस्य संसार इति हेतुमाह—मन इति । अन्यतः माया एव महदादिद्वारा सृजति तदेव स्वप्रकाशवरके गुणान् सङ्कल्परूपान् कर्माणि देहांश्च सृजति—

"यतो यतो धावति दैवचोदितं मनो विकारात्मपि पञ्चसु ।

गुणेषु मायारचितेषु देह्यसौ प्रपद्यमानः सह तेन जायते" ॥

इत्युक्तत्वात् एवं ततो देहशब्देन गृहीतायाः प्रकृतेरेव जीवस्य संसृतिः ॥ ६ ॥

एतदेव दृष्टान्तेनाह—स्नेहेति । स्नेहादीनां संयोगो यावदीयते तावदेव दीपस्य दीपत्वं संयोगापगमे तु नष्टभाव एव एवं देहकृतो भवः कार्यकारणरूपः प्रकृतिकृतो भवजन्ममरणप्रवाहरूपः संसारः ॥ ७ ॥

(१) पचते नश्यतीत्यादिशब्दार्थः ।

एवमात्मानमात्मस्थमात्मनैवाऽऽमृश प्रभो ! ।
बुद्ध्याऽनुमानगर्भिण्या वासुदेवानुचिन्तया ॥ ९ ॥
चोदितो विप्रवाक्येन न त्वां धक्ष्यति तक्षकः ।
मृत्यवो नोपधक्ष्यन्ति मृत्यूनां मृत्युमीश्वरम् ॥ १० ॥
अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम् ।
एवं समीक्षन्नात्मानमात्मन्याधाय निष्कले ॥ ११ ॥
दशन्तं तक्षकं पादे लेलिहानं विषाननैः ।
न द्रक्ष्यसि शरीरं च विश्वं च पृथगात्मनः ॥ १२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स च देहः प्रकृतिरेव मनुष्यदेवतिर्यगादिशरीराकारेण रजःसत्त्वतमोवृत्त्या जायते विनश्यति च मायामोहितो जीवस्स्वज्ञानात् जातोऽस्मि मरिष्ये इति मन्यते वस्तुतस्तु यः तत्र मनुष्यादि शरीरे आत्मा जीवः स न जायते न विनश्यति मनुष्यादिदेहस्तत्प्रकाशकः स स्वयञ्ज्योतिः यतो व्यक्ताऽव्यक्तयोः कार्यकारणयोः शरीरप्रकृत्योः परः ताभ्यामन्यः आकाश इव असङ्गत्वात् आधारः देहादिधारकत्वात् ध्रुवो नित्यस्ततो हेतोरनन्त आद्यन्तशून्यः अव्ययः अविकारी ॥ ८ ॥

---

### भाषा टीका ।

अस्तु, देह से आत्मा भिन्नहुआ तिससे क्या हुआ, तहां कहते हैं कि—इसप्रकार के भेदज्ञानवाले विवेकी मुक्त हो जाता है, जैसे कि—घट के भीतर का आकाश घट के फूटने पर निरुपाधिक आकाश हो जाता है, इसी प्रकार परमात्मा की उपासना से अपुनर्भावी देह सम्बन्ध नष्ट होने पर अर्थात् प्रकृति सम्बन्ध छूटने पर वह जीव ब्रह्म हो जाता है, अर्थात् जीव मुक्त हो जाता है इस जगह ब्रह्म शब्द मुक्त का वाचक है जैसे, कि—"ब्रह्म भूयाय कल्पते, ब्रह्मणो हि प्रतिष्ठाऽहम्,, इन प्रमाणों में है ॥ ५ ॥

सत्त्वादि गुण मन देहों को मन सृजता है, और अपने कर्मों को सृजता है, और उस मन को माया जो प्रकृति है वह सृजती है, तिन माया मन देह और कर्मों से इस जीव को संसार होता है ॥ ६ ॥

जब तक तेलके अधार दीपक में बत्ती और अग्नि का संयोग रहता है, तबही तक दीपक में दीपपना है, इसी प्रकार यह देह कृत संसार है, इहां पर तेल के ठिकाने पर देह है, अग्नि संयोग के ठिकाने हर देहात्माभिमान है, दीपक के ठिकाने पर वह संसार है। इस प्रकार जब तक वह कर्मारब्ध देह की प्राप्त होती रहती है तबहीं तक संसार है इसीसे तीनों गुणों का सम्बन्ध रूप उपाधि से आत्मा का जन्म मरणादिक है अतः तो आत्मा जन्ममरणादिक से रहित है गुणत्रय के सम्बन्ध ही से जन्म लेता है और मरता है ॥ ७ ॥

इस प्रकार देहके उत्पन्न होनेपर और नष्टहोने पर आत्मा न उत्पन्न होता है न नष्ट होता है, क्योंकि ? वह, व्यक्त शरीर और अव्यक्त मूल प्रकृति इन दोनों से अन्य है। अन्यभी क्योंहै, कि—आत्मा तो स्वयं ज्योति अर्थात् स्वयं प्रकाश है, और शरीर प्रकृति ये दोनो नहीं है। इसमें दृष्टान्त यह है, कि—जैसे घटादि उपाधि का आधार आकाश है उसी तरह यह आत्मा शरीरका धारक है, स्थिर है, अनन्त है अतएव अव्यय अर्थात् स्वरूप से ही विकार रहित है ॥ ८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अतस्त्वमेवं चिन्तयेत्याह—एवमिति। आत्मस्थं देहाद्युपाधि विगतम् आमृश विचारय अनुमानगर्भिण्या बुद्ध्याऽन्वयव्यतिरेकयुक्तया ॥ ९ ॥

एवं च सति त्वां तक्षको न दहेदित्याह—चोदित इति तत्र हेतवः मृत्यव इति मृत्युहेतवः ॥ १० ॥

विमर्शप्रकारं दर्शयंस्तक्षकादर्शनं दर्शयति—द्वाभ्याम्। योऽसौ ब्रह्मैव यद्ब्रह्म तदहमेवेति समीक्षन् तत्राहं ब्रह्मेति भावनया जीवस्य शोकादिनिवृत्तिः ब्रह्माहमिति भावनया च ब्रह्मणः पारोक्ष्यनिवृत्तिर्भवतीति व्यतिहारो दर्शितः निष्कले निरुपाधौ आत्मनि ब्रह्मणि ॥ ११ ॥

विषयुक्तैराननैर्दशन्तं प्रसन्तं तक्षकम् लेलिहानं सर्पम् वा लेलिहानं जिह्वाभिरोष्ठप्रान्तं सन्निरेषमास्वादयन्तम् आत्मना पृथक् ॥ १२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

परमात्मानं जीवम् आत्मस्थं परमात्मस्थम् ॥ ९ ॥

न त्वां धक्ष्यति तव दाहवेदना भविष्यतीत्यर्थः। मृत्यव इति ईश्वरो मृत्युः मृत्युं तं यथा मृत्युर्धक्ष्यति एवं तक्षकादि नेत्यर्थः ॥ १० ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अहमिति ब्रह्माहमिति च तात्पर्यभेदेन विशेषणप्रधानो विशेष्यप्रधानश्च निर्देशभेदः परं पदं परमप्राप्यम् ॥ ११ ॥

न द्रक्ष्यसीति भगवत्सम्मुखाहृतत्वद्गततया दुःखादिहेतुभूतमन्यद्वेत्स्यसीत्यर्थः ॥ १२ ॥ १३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नभ इवात्मः—आकाश इवेति । यथा घटाद्युपाधिराकाशः परस्तद्वाधारः देहस्य धारकः अनन्तः स्वभावतोऽपरिच्छिन्नः अव्ययः स्वरूपतो विकाररहितः ततः किमत आह—एवंविधमिति । एवंविधमात्मस्थं परमात्मस्थं देहस्थं वा आत्मानम् आत्मनैवा मृश विचारय प्रत्यक्षत्वादात्मनैवात्मयुक्तिः ॥ ९ ॥

बुद्ध्येति—अनुमानगर्भितया अनुमीयतेऽनेन सूक्ष्मार्थम् इत्यनुमानं शास्त्रं तद्गर्भितया शास्त्रजन्यज्ञानयुक्तयेत्यर्थः । युक्तया आत्मविमर्शनात्मिकया वासुदेवानुचिन्तया वासुदेवानुचिन्तारूपया बुद्ध्या वा उपलक्षितं त्वां विप्रवाक्येन प्रचोदितोऽपि तक्षकः न धक्ष्यति नच वेक्ष्यते न जनायिष्यति इत्यर्थः मृत्यव इति । ईश्वरो हि मृत्यूनां मृत्युरनन्त मृत्यवः मृत्युहेतवः न धक्ष्यन्ति एवं तद्भावमपीत्यभिप्रायः ॥ १० ॥

अहमितिअहं ब्रह्मेति ब्रह्माऽहमिति च तात्पर्यभेदेन विशेषणप्रधानो विशेष्यप्रधानश्च निर्देशभेदः परं धाम परम पदमिति च ब्रह्मविशेषणं परमं पदं प्राप्य एवमित्थं समीक्षन् सन्दधानः निष्कले प्राकृतशरीररहिते आत्मनि परमात्मन्यात्मानं प्रत्यगात्मानमाधाय परमात्मशेषतैकरसं ध्यायेत्यर्थः । यद्वा, अनादि मायाविद्यया आनन्दात्म बुद्ध्यभिभूतनिजस्वरूप राजानं नित्यं श्रीभगवच्छेषभूतमात्मानं देहवैलक्षण्यं गुणत्रयातीतं जडविलक्षणं सदैव चेतनं नित्यं सदा परमात्मस्वरूपाधीनस्वरूपं विशेषेणोपदिशति—अहं ब्रह्मेत्यादिना । धाम निरुपाधिकचेतनं प्रकाशवदुत्तमं तेजोमयं ज्योतिःस्वरूपं परमं श्रेष्ठं जडविलक्षणम् अत एव जडवर्गादिनिकृष्टमपि पदं स्वरूपं यस्य तत् अहम् अहन्तत्वं जीवस्वरूपं ब्रह्मपरं प्रधानं श्रेष्ठं मान्यं पूज्यं सेव्यं यस्य तत् अत एव ब्रह्माहं ब्रह्मणः अहं ब्रह्माहं ब्रह्मणः परमात्मनः शेषिण एवाहं शेषो नान्यस्य नादितरस्य स्वरूपस्यापि चेतनाचेतनस्य * शेषत्वादिति तदभिप्रायः अत च शेषी ब्रह्मैव परमात्मैव मान्यः । तथा सति सर्वेऽपि शेषिण एव स्युः अतो न शेषस्य शेषीति श्रुतावेक एव शेषी वर्णितः "एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन" "न तत्समश्चाभ्यधिकश्च दृश्यते" इत्यादि श्रुतिः । "न त्वत्समो-ऽस्त्यभ्यधिकः कुतोऽन्यः" इत्यादि श्रीगीतोपनिषत्सु च शेषी एक एव श्रीमन्नारायणः शेषास्तु बहव एवेति सर्वशेषिणो नियन्तुः आत्मा शेषभूतैस्सदैव पालनीय इति सूक्ष्मदशात्मधारजीवः । अन्यथा शेषस्वरूपमेव न सिद्ध्यतीति दिक् एवञ्च सर्वस्य

* शेषस्य शेषो न भवति शेषिण एव शेषो भवति न शेषस्य शेषः इति रहस्यामिति दिक् ।

शेषी परब्रह्मश्रीमन्नारायण एव मान्य इति यथा राजपुरुष इत्यादौ षष्ठीसमासवदिदं तत्पुरुषत्वाभावात्वं प्रसिद्धम् तत्र भेदवादिनः स्वात्मा एवेति परब्रह्मपराधीनमेतादृशस्वरूपं जीवात्मत्वं वशीकृत्य स्वरूपे निष्कले आत्मनि जीवस्वरूपे आत्मान्तर्यामिणं परमात्मानं श्रीमन्नारायणं निजस्वामिनं श्रीरमानाथं निजनाथं (परमात्मस्वरूपे वा आत्मानं स्थाप्य शेषभूतं) समीक्षन् सम्यक् पश्यन् निजस्वामिनमेवैकभावेन सततमालोकयन् ध्यानेन दृशा प्रत्यक्षमिव कुर्वन् विश्वासश्रद्धावैराग्यज्ञानानुरागभक्तियत्नैः प्रत्यक्षमेव कुर्वन्नप्यहं जडदेहादिविलक्षणो निर्गुणः शुद्धो मुक्तस्वरूपविशात्मान्यहं न स्वयं ब्रह्मा ब्रह्माहमस्मि किन्तु स्वयं ब्रह्मणः सर्वशेषिणः श्रीस्वामिनो दास एवाहमस्मि इति मत्वं श्रीनिवासार्थसारोऽयमर्थः । एतादृशभावपूर्वकं श्रीभगवद्ध्यानानुरागी त्वं देहं स्थूलदेहं दशन्तं तक्षकं स्थूलं सूक्ष्मञ्च शरीरमुभयमेवोत्पादकमविद्याप्रधानादिकं सर्वं जगद्विश्वं च नाशाशाविकरं कालं च न द्रक्ष्यसि अनेन श्रीभगवद्व्यतिरिक्तं किमपि न द्रक्ष्यसि परमात्मानमेव नित्यमात्मान्तर्यामिणं परमात्मनि व्यापके श्रीस्वामिनि वा नित्यं स्थापयन्नुतं सदा शेषरूपं निजस्वरूपं सम्यगालोचयिष्यसीति सर्वमकूलमनवद्यम् ॥ ११ ॥

दशन्तमिति । विषयुक्तैराननैर्मुखैर्लेलिहानमास्वादयमानं दशन्तं च तक्षकमात्मनः परमात्मनः पृथक्स्थितं शरीरं विश्वं च न द्रक्ष्यसि भगवत्सम्मुखाहृदे मग्नतया दुःखादिहेतुभूतमन्यच्च वेत्स्यसीत्यर्थः ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवंविधमीहात्म्योपेतमात्मस्थं स्वहृदयकुहरान्तर्गतमात्मानं परमात्मानमात्मनैव मनःप्रयत्नेनामृश स्वरूपाङ्गस्थायीपास्व प्रभो इत्युपास्तिसामर्थ्यमाह—दुर्मरणाविषदुष्टस्य मम देहत्यागेऽपि मोक्षोऽस्तीति न चिन्तयेत्याशयेनाह, बुद्ध्येति । आत्मा स्वकीयनरकुत्सितस्थानाकारान्नित्याभिवृद्धिकरणं मेयत्वात्परमवादीति वेदः स्वस्वेतरदुर्गतिस्थानाकारान्नित्याभिवृद्धिकरणं मेयत्वात् घटवदित्यनुमानगर्भितया वासुदेवानुचिन्तया हरेर्निरन्तरमुपासनया वर्तमानं त्वाम् ॥ ९ ॥

विप्रकुमारवाक्येन चोदितः प्रेरितस्तक्षको न धक्ष्यति वक्रदृष्टं नापादयतीत्यन्वयः । मृत्यूनां मारकाणां मृत्युं मारकम् ईश्वरम् उप समीपे स्थितं मृत्यवो न सर्पन्ति त्वां न प्राप्नुवन्ति ॥ १० ॥

दंशदोषापकर्षणे प्रकारान्तरेणोपायमाह—अहमिति । न दृश्यत इत्यहं न हीयत इति वा कदापि न जहाति स्वशक्तिमिति वा परं ब्रह्मणीश्वरं विहाय कदापि न तिष्ठत्यस्मात्तत्त्वाद्यादिस्यर्थः उपासनाफलमाह—एवमिति । एवंविधस्वं निष्कले आत्मनि परमात्मानं समाधाय संयुज्य समीक्ष्य सम्यक् ध्यायन् ॥ ११ ॥

विषयुक्ताननैः पदे दशन्तं तक्षकं लेलिहानं सर्पं न द्रक्ष्यसि इतरसर्पवदिति शेषः आत्मनो हरेः पृथक् स्थातोऽवेक्ष्य दिपतं विश्वं शरीरं च न पश्यसीत्यन्वयः ॥ १२ ॥

पूर्वोक्तानिर्वेदमेवाभिव्यनक्ति—एवमिति । आत्मानमन्तर्भूतं भगवत्पार्षदरूपात्मकम् आत्मना जीवस्वरूपेण सहात्मस्थं बुद्धयामृश्य कीदृश्या पूर्वोक्तानुमानगर्भितया तथा वासुदेवस्यानुगतचिन्ता यस्यां तया ॥ ९ ॥

त्वां पूर्वोक्तरूपं यतो मृत्यव इति ॥ १० ॥

कुतोऽहमीश्वरः तदेकपार्षदत्वाभिमानेन तच्छक्त्यैव स्वशक्त्यभिमानेन वा तदभेदाभिमानादित्याह—अहं ब्रह्मेति युग्मकेन। निष्कले मायातीते आत्मनि ब्रह्मणि आधाय निधाय आत्मनः पृथक् स्वच्छरीरं विश्वं च तत्र द्रक्ष्यस्येवेति किमुत तदपकारेण आपकारम् मन्यस इति ॥ ११ ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आत्मस्थं देहाद्युपाधिस्थितम् आत्मना मनसा आमृश्य विचारय बुद्ध्यादिप्रवर्तकत्वेन यदात्मनोऽनुमानं तदेव गर्भेऽन्तर्युक्तया बुद्ध्या साध्यवसायवत्या सह वासुदेवस्यानुचिन्ता यस्यां तथा स्वामात्मानं देहात्पृथग्भूतं तक्षकस्य का वार्त्ता स्वमृत्यवोऽपि मूर्तिमन्तः पक्षे ईश्वरम् वपाधिमुक्तत्वाद्देहाद्यपरतन्त्रं मृत्यूनां मत्युन्तरायाणां मृत्युं नाशहेतुं त्वां प्राप्य मत्युन्तराया ब्रह्मशापाद्य एव वैयर्थ्यान्नष्टा एव बभूवुरित्यर्थः ॥ ९—१० ॥

विमर्शप्रकारं दर्शयन् तक्षकादर्शनं दर्शयति—द्वाभ्याम्। योऽहं स ब्रह्मैव ब्रह्मैवाहं न संसारीति भावनया शोकादिनिवृत्तिः ब्रह्माहमिति अहमेव ब्रह्मेति भावनया च ब्रह्मणः पारोक्ष्यनिवृत्तिर्भवतीति व्यतिहारो दर्शितः निष्कले निरुपाधौ आत्मनि ब्रह्मणि पक्षे अहं धाम सुदर्शनमस्य परमेश्वरस्य त्विट् कणाश्चित्कणा एवेत्यर्थः । गृहदेहत्विट् प्रभावा धामानि” इत्यमरः कीदृशं ब्रह्म परं “नारायणपरो विप्रः” इतिवत् ब्रह्मोपासकमित्यर्थः । अत एव ब्रह्माहं ब्रह्मणः परमेश्वरस्यैवाहमिति षष्ठीतत्पुरुषः एवं परमं पदं ब्रह्म स्वरूपं चरणारविन्दं वा समीक्ष्य आत्मानमात्मनि परमात्मनि कृष्णे निष्कले निष्को यस्तोऽलङ्कारस्तद्वति ॥ ११ ॥

विषानलैर्विषयुक्तैराननैः दशन्तं लेलिहानं जिह्वाभिरोष्ठप्रान्तं सनिष्पेषमास्वादयन्तं तक्षकं न द्रक्ष्यसि नापि तेन दष्टं शरीरं च आत्मनः पृथग्भूतं विश्वं च पक्षे श्रीकृष्णचरणारविन्दसाक्षात्कारानन्दमूर्च्छां प्राप्तस्त्वं न द्रक्ष्यसीति ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, प्रकृतिबन्धनिवृत्त्यनन्तरं निर्बन्धनो ब्रह्म प्राप्नोतीति यदुक्तं तत्प्राप्तये अधुना मया किमनुष्ठेयमत्राह—एवमिति । अनुमीयते अनुमयविषयीक्रियते वेदार्थभूतो भगवान् येन तदनुमानं वेदः तद्गर्भितया तदर्थशालिन्या बुद्ध्या भगवद्ध्यानेन वासुदेवानुचिन्तया वासुदेवानुचिन्तनेनैव च आत्मनः “एष ते आत्मान्तर्याम्यमृत” इति श्रुतिप्रोक्तमात्मानं आत्मनि जीवेन आत्मना निर्मलेन मनसा एव यथोपदिष्टम् आमृश्य विचारय अत्र “ब्रह्म समश्नुते” इति श्रुत्युक्तं ब्रह्मप्राप्तुरीति भावः । प्रभो इति सम्बोधनं उक्तार्थं द्योतयति ॥ ९ ॥

एवं कुर्वाणं त्वां न कोपि धर्षयिष्यतीत्याह—चोदितम् इति । ईश्वरं समर्थम् ॥ १० ॥

ननु, येन सम्बन्धेन स विमर्शनीयः स सम्बन्धो भवता वक्तव्य इत्यतः “आत्मेतितूपगच्छन्ति ग्राहयन्ति च” (४।१।३) इति सूत्रकारोक्तम् वेतृवेद्ययोस्तादात्म्यसम्बन्धमाह—अहमिति । अहमणुस्वरूपः जीवः “अणुर्ह्येष आत्मा” एष परस्यांशः “ममैवांशो जीवलोके जीवभूतः सनातनः” इति श्रुतिस्मृतिप्रोक्तः। परं पूर्णं ब्रह्मैव अंशस्य स्वरूपतो भिन्नत्वेपि अंशिव्यतिरिक्तस्थितिप्रवृत्त्याद्यभावेन तदभिन्नत्वात् अनेन “द्वितीयाद्वै भयं भवति” इति भयशोकादिनिवृत्तिर्जीवस्य भवति परमं पदं ब्रह्म चाहम् अंशिनः स्वरूपतोऽनन्तत्वेपि सर्वात्मत्वेन अंशवियुक्तत्वाभावात् अनेन ब्रह्मणः स्वांशे जीवे नित्यप्राप्त्या पारोक्ष्यनिवृत्तिर्भवति एष एव जीवब्रह्मणोः भिन्नाभिन्नसम्बन्धः सूत्रकारेण कारत्स्न्यकृष्णोडुलोमयादिभिस्तस्तथा बहुधा प्रतिपादितः सर्वश्रुतिसङ्गत्यर्थम् “अंशो नानाव्यपदेशात् अन्यथा चापि दाशकितवादित्वमधीयत एके” इत्यत्र स्वमतत्वेन च दृढीकृतः एवं निष्कले निर्मले आत्मनि स्वस्मिन् धर्तरि आत्मानं धयम् आधाय समीक्षन् सन्दधानः तक्षकादीन् न द्रक्ष्यसीत्याभिप्रेण सम्बन्धः ॥ ११ ॥

लेलिहानं जिह्वाभिरोष्ठप्रान्तं सनिष्पेषमास्वादयन्तम् विषयुक्तैराननैर्दशन्तं तक्षकम् आत्मनः पृथग्भूतं शरीरं च किं बहुना विश्वं च न द्रक्ष्यसि परमानन्दतादात्म्यं प्राप्तत्वात् ॥ १२ ॥

---

भाषा टीका ।

हे प्रभो ! शास्त्रानुसारिणी बुद्धिसे और श्रीवासुदेवके अनुचिन्तन से इस प्रकार के शरीरस्थ आत्मा को अपने मनही से विचारो, कि—तुम शरीर हो वा शरीर से अन्य हो ॥ ९ ॥

जब तुम वासुदेवका चिंतमन करोगे तब तुमको विप्रवाक्य से प्रेरित वह तक्षक सर्प नहीं जलावेगा क्योंकि ? ईश्वर तो मृत्युओं काभी मृत्यु है, मृत्युओं के हेतु जोहै वे ईश्वर को नहीं जला सके हैं, इसी प्रकार ईश्वर में भावना करने वालों को भी नहीं जला सके हैं ॥ १० ॥

अहंशब्दवाच्य जीव जो मैं हूं सो ब्रह्मपर हूं अर्थात् ब्रह्मपरायण हूं और उत्कृष्ट ब्रह्मका धाम अर्थात् निवास हूं अन्तर्यामि होकर भगवान् मेरे विषै रहते हैं, अत एव उत्कृष्ट पद नाम स्वरूपवालाहूं इसीसे ब्रह्मका मैं हूं इस प्रकार आत्मा को अच्छी तरह जानकर प्राकृत शरीर रहित परमात्मा के विषै अपने आत्माको जबतूं लगा देगा अर्थात् मैं परमात्मा का ही एक अनन्य सेवक हूं इस प्रकार का जब ध्यान करेगा ॥ ११ ॥

तब विषहरे मुखों से तेरे पाद में डसने वाले सर्पको

एतत्ते कथितं तात ! यथाऽऽत्मा पृष्टवान्नृप ! ।
हरेर्विश्वात्मनश्चेष्टां किं भूयः श्रोतुमिच्छसि ॥ १३ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां द्वादशस्कन्धे ब्रह्मोपदेशो नाम
पञ्चमोऽध्यायः ॥ ५ ॥

भाषा टीका ।

और आत्मा से पृथक् स्थित शरीर और विश्वको तू नहीं देखेगा ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

हरेश्चेष्टामात्मा त्वं यत्पृष्टवांस्तदेतत्ते कथितम् शिष्यस्य कृतार्थतापरीक्षणाय पृच्छति, किमिति ॥ १३ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
पञ्चमोऽध्यायः ॥ ५ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

इति श्रीमद्भागवतव्याख्याने द्वादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
पञ्चमोऽध्यायः ॥ ५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अखिलप्रश्नोत्तरं निगमयति-एतदिति । हे तात ! हे नृप ! हरेश्चेष्टां प्रति यद्यदात्मा त्वं पृष्टवान् तत्सर्वं ते तुभ्यं कथितं कृतार्थता परीक्षायै पृच्छति-किं भूय श्रोतुमिच्छसीति । भूयः पुनः ॥ १३ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
पञ्चमोऽध्यायः ॥ ५ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अवान्तरप्रमेयमुपसंहरति-एतदिति । चेष्टेति पाठे सा कथितेति शेषः ॥ १३ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
पञ्चमोऽध्यायः ॥ ५ ॥
(विजयध्वजरीत्या चतुर्थः ॥)

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

लीलाकथैकरसिकस्य तस्य पूर्वोक्ते तु नातिरुचिमालक्ष्य तथोपसंहरति-एतत्त इति । ते तुभ्यमेतत् "त्वं तु राजन् मरिष्येति" इत्यादिना कथितम् । ननु, ममानभीष्टमनुपक्रान्तं च तत् कथं कथितं तत्राह—आत्मकस्य विद्वात्मनिष्ठस्य ममां चापृष्टवान् परीक्षितोऽस्यात्मज्ञानं जातमस्ति नवेति सन्दिह्य जानतमेवमपि यज्ज्ञातुमिष्टवानित्यर्थः । अहं त्वयानुवर्णयेत इत्यादिनोपक्रान्तं श्रीभगवन्महिमानमेव पुनरपि वर्णयिष्यामीत्याह—हरेरिति । विश्वात्मन इति किं त्वदेहात्मनः स्वरूपादिवर्णनेनेति भावः । अस्मिन् प्रकरणे श्रीशुकदेवोपदेशे भक्तावेव तात्पर्यं ज्ञाने वेति सन्दिहानं प्रति पूर्वविचारयते तत्र "अथानुवर्णयेऽभीक्ष्णम्" इत्याद्युपक्रमे "एतत्ते कथितं तात" इत्याद्युपसंहारेऽपि तादृशमहिमस्वन पूर्वोक्तलीलाकथाश्रवणस्यैव प्राधान्यात् ततोऽनुपक्रमोपसंहार-निर्दिष्टत्वाज्ज्ञानोपदेशितभक्तेरत्रापि प्राधान्यं वस्तु तन्मध्ये "त्वं तु राजन् मरिष्येति" इत्यादिना ज्ञानोपदेशः स च तस्य प्राणेव गता वा भक्तिनिष्ठा तस्याः सङ्गमपि दर्शयेत्येप्रकटनार्थ एव एकान्तभक्तेषु भगवता मोक्षपरच्छन्दनवत् पूर्वमपि तन्नि-ष्ठया स्वत एव मरणभयपरित्यागात् अनन्तरं च श्रुत्वापि तज्ज्ञानोपदेशं स्वस्य भक्तिनिष्ठाया एव स्वयं दर्शयिष्यमाणत्वात् तत्र प्राचीना तन्निष्ठा यथा प्रथमे "कृष्णाङ्घ्रिसेवामभिमन्य-मानः" इति "ध्यायन् मुकुन्दाङ्घ्रिमनन्यभावः" इत्यादि तन्निष्ठयैव तत्कृतपरित्यागो यथा तत्रैव "द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं गायत विष्णुगाथाः" इति तज्ज्ञानोपदेशश्रवणानन्तरमपि तादृशस्वनिष्ठायाः स्वयंदर्शनं यथा तत्र तावत्पद्यत्रयेण तदा ज्ञानोपदेशं बहु मत्वा भगवल्लीलया भक्त्या एव स्वकृतार्थत्व-मुक्तं षष्ठाध्यायारम्भे "सिद्धोऽस्म्यनुगृहीतोऽस्मि" इत्यादि "नास्त्यज्ञान-मिदृशमन्ये" इत्यादि "पुराणसंहिताम्" इत्यादि पुनश्चैकेन पद्येन तत्त्वाङ्गारेणाशेषाङ्गीकृतस्य ब्रह्मज्ञानस्य तक्षकादिभयनिवृत्ति-हेतुत्वमुक्त्वाऽप्यन्येन तदूर्ध्वमधोक्षज एव नाकृतकमोक्षनाम-कीर्तनध्यानवेशानुज्ञा प्रार्थिता "भगवंस्तक्षकादिभ्यः" इत्यादिना "अनुजानीहि मां ब्रह्मन्" इत्यादिना अथ पुनरन्येन पद्येनाज्ञान-निरासज्ञानविज्ञाननिदिध्यस मत्तत्पादारविन्दवर्णनमुखान्तर्मूर्तिव मम स्फुरतीति ख्यापितम् "अज्ञानञ्च निरस्तं मे ज्ञानविज्ञाननिष्ठया ! भवता दर्शितं क्षेमं परं भगवतः पदम्" इति अत्र पद्यद्वयस्य चरणारविन्दाभिधायकत्वे "ज्ञानेन वैराग्ययुक्तेन भक्तिप्रधानेन गोज स्त्रीरेन्द्र-ध्वजपादमूलम्" इत्येवादिना प्रथमं साधकं तदेतत्प्रकरणार्थेऽस्तु श्रीसूतेनैव स्पष्टीकृतः—

"ब्रह्मकोपोत्थितात् यस्मात्तक्षकात्प्राणविप्लवात् ।
न सम्मुमोहोरुभयाद्भगवत्यर्पिताऽऽशयः" ॥
नोत्तमश्लोकवार्तानां जुषतामत्कथामृतम् ।

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

स्यात्सम्भ्रमोऽन्तकालेऽपि स्मरतां तत्पदाम्बुजम्" ॥

इति । तथा पूर्वं द्वादशस्य तृतीये प्रथमस्कन्धान्तस्यस्य—

"अतः पृच्छामि संसिद्धिं योगिनां परमं गुरुम् ।
पुरुषस्येह यत्कार्यं म्रियमाणस्य सर्वथा" ॥

इत्यस्य राजप्रश्नस्योत्तरत्वेन भगवन्नामकीर्त्तने एव स्वयं श्रीशुकदेवेनाप्युपदिष्टे—

"तस्मात् सर्वात्मना राजन्! हृदिस्थं कुरु केशवम् ।
म्रियमाणो ह्यवहितस्ततो याति परां गतिम् ।
म्रियमाणैरभिध्येयो भगवान् परमेश्वरः ।
आत्मभावं नयत्यङ्ग! सर्वात्मा सर्वसम्भवः ॥
कलेर्दोषनिधे राजन्!" ।—

इत्यादिना । ततस्तत्र केशवे अवहितः कृतावधान आत्मभावं आत्मनो भक्तिम् अस्तु तावदायाससाध्यं ध्यानं हि यस्मादनायास साध्यात् कीर्त्तनादित्यर्थः । द्वितीयस्कन्धेऽपि "नह्यतो ऽन्यः शिवः पन्थाः" इत्यादिना "एवमेतन्निगदितम्" इत्यन्तेन ग्रन्थेन नानाङ्गवान् शुद्धभक्तियोग एव तत्रोत्तरत्वेन पर्यवसितः तत्र "पिबन्ति ये भगवतः" इत्यादिना लीलाकथाश्रवण एव तत्पर्यवसानं दृश्यते तस्मात् साधूक्तं "त्वन्तु राजन् मरिष्येति" इत्यादिकं तद्भक्तिनिष्ठा-प्रकरणार्थमेवेति अतो भक्त्यैव तदुपदेशस्य तात्पर्यम् अत एव द्वितीयस्याऽष्टमे राजप्रार्थना च नान्यथा स्यात् "कृष्णे निवेश्य निःसङ्गमनस्त्यक्ष्ये कलेवरम्" ॥ १३ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
पञ्चमोऽध्यायः ॥ ५ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एतत् अज्ञानं त्वया सम्प्रश्नपूर्वमपि ते कथितं यच्चेः शेषां लीलाम् आत्मा त्वं पृष्टवान् मां पूर्वमपृच्छः तां तु पूर्वमेवाबोधमिति शेषः । शिष्यस्य तस्य पूर्णत्वज्ञापनाय पृच्छति, किमिति ॥ १३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
द्वादशे पञ्चमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ५ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वप्रश्नोत्तरमुपसंहरति-एतदे इति । तन्मुखेनैव तत्कृतार्थतां श्रोतुमाह किम्भूयः श्रोतुमिच्छसीति ॥ १३ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
पञ्चमाऽध्यायार्थप्रकाशः ॥ ५ ॥

———

भाषा टीका ।

हे तात! हे राजन्! जो तुमने विश्वात्मा श्रीहरिकी लीला का प्रश्न किया रहा, सो हमने तुमारे सामने कहा अब तुम और क्या सुनने की इच्छा करते हो सो कहो ॥ १३ ॥

इति श्रीमद्भागवत द्वादशस्कन्ध में पांचमें अध्यायकी,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्ता ॥ ५ ॥

———

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥



## षष्ठोऽध्यायः ।

सूत उवाच ।

एतन्निशम्य मुनिनाऽभिहितं परीक्षिद्व्यासात्मजेन निखिलात्मदृशा समेन ।
तत्पादमूलमुपसृत्य नतेन मूर्ध्ना बद्धाञ्जलिस्तमिदमाह स विष्णुरातः ॥ १ ॥

राजोवाच ।

सिद्धोऽस्म्यनुगृहीतोऽस्मि भवता करुणात्मना ।
श्रावितो यच्च मे साक्षादनादिनिधनो हरिः ॥ २ ॥
नात्यद्भुतमहं मन्ये महतामच्युतात्मनाम् ।
अज्ञेषु तापतप्तेषु भूतेषु यदनुग्रहः ॥ ३ ॥
पुराणसंहितामेतामश्रौष्म भवतो वयम् ।
यस्यां खलूत्तमश्लोको भगवाननुवर्ण्यते ॥ ४ ॥
भगवंस्तक्षकादिभ्यो मृत्युभ्यो न बिभेम्यहम् ।
प्रविष्टो ब्रह्मनिर्वाणमभयं दर्शितं त्वया ॥ ५ ॥
अनुजानीहि मां ब्रह्मन् वाचं यच्छाम्यधोक्षजे ।
मुक्तकामाशयं चेतः प्रवेश्य विसृजाम्यसून् ॥ ६ ॥
अज्ञानं च निरस्तं मे ज्ञानविज्ञाननिष्ठया ।
भवता दर्शितं क्षेमं परं भगवतः पदम् ॥ ७ ॥

सूत उवाच ।

इत्युक्तस्तमनुज्ञाप्य भगवान् बादरायणिः ।
जगाम भिक्षुभिः साकं नरदेवेन पूजितः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

षष्ठे परीक्षितो मोक्षः सर्पहोमादितत्सुतात् ।
वेदशाखाविभागोक्तौ त्रिवेदिव्यासवर्णनम् ॥

एतत्पुराणं निशम्य निखिलात्मा हरिस्तं पश्यति निखिलं चाऽऽत्मनि पश्यतीति तथा तेन अतः समेन नतेनाऽवनतेन मूर्ध्ना तत्पादतलमुपसृत्य तत्पादौ शिरसि(नि) विधायेत्यर्थः ॥१॥

सिद्धः कृतार्थोऽस्मि यतोऽनुगृहीतोऽस्मि अनुग्रहमेवाऽऽह—यद्यस्माच्छ्रावितः यद्ब्रह्मप्राप्तिसाधनं च भावितम् ॥ २ ॥

करुणात्मनामभिनन्दति—आश्चर्यम्, नात्यद्भुतमिति ॥ ३ ॥

अश्रौष्म श्रुतवन्तः भवतः सकाशात् ॥ ४ ॥

सिद्धोऽस्मीत्युक्तं तदेवाऽऽविष्करोति, भगवन्निति। यत्त्वया दर्शितं ब्रह्म प्रविष्टः कथम्भूतम्? अभयम् यतो निर्वाणं कैवल्यरूपम् ॥ ५ ॥

किं भूयः श्रोतुमिच्छसीति यदुक्तं तत्र सिद्धोऽहं न किञ्चिच्छ्रोतुमिच्छामि केवलमनुज्ञां देहीत्याह, अनुजानीहीति। वाचमित्युपलक्षणं सर्वेन्द्रियाणां वाचं नियम्य किं करिष्यामि तदाह, मुक्ताः कामाशयाद्वासना येन तच्चेतोऽधोक्षजे प्रवेश्याऽसून्विसृजामि ॥ ६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, किं प्रायश्चत्यागेन किञ्चित्कालं ध्याननिष्ठो भवेति चेत्तत्राऽऽह, ब्रह्माणं चेति । अकाराद्यक्षरसंस्कारश्च तत्र स्वरूपत्वेनेत्याह, भवतेति ॥ ७—८ ॥

———

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—४ ॥

ब्रह्मनिर्वाणम् आनन्दरूपं ब्रह्म ॥ ५—१० ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आत्मनः सिद्धार्थतां कृतकृत्यतां चाविष्कुर्वन्नाह राजेत्याह सूतः—एतदिति । मुनिना शुकेनाभिहितम् एतत् किं भूयः श्रोतुमिच्छसीत्युक्तिश्रवणस्य कथम्भूतेन समेनेति भावप्रधानो निर्देशः साम्येन निखिलात्मनः पश्यतीति तथा तेन मतेन नम्रेण मूर्ध्ना तस्य पादपद्ममुपसृत्य संस्पृश्य स विष्णुरातः परीक्षित् तं मुनिं प्रति इदं वक्ष्यमाणमाह ॥ १ ॥

उक्तिमेवाह—सिद्ध इति । सिद्धोऽस्मीति सिद्धार्थोऽस्मि कुतः यतः भवताऽनुगृहीतोऽस्मि कोऽसावनुग्रहः ? मे मह्यमनादिनिधनो हरिः यशोदास्तनप्राप्त्युपायश्च आवित इति शेषः ॥ २ ॥

कृतार्थतामाविष्करोति—नेति । अच्युतं आत्मा मनो येषां तेषाम् अत एव महतां यत् वात्सल्यसौशील्यादिगुणोत्कृष्टानां भवतामिदं नात्यद्भुतं किन्तु यदज्ञेष्वस्मत्स्वेव तापत्रयतप्तेषु भूतेष्वनुग्रह इत्येतत् ॥ ३ ॥

पुराणसंहितामिति । भवतः सकाशादस्माभिः श्रुतवन्तः कथम्भूतां यस्यां संहितायाम् ॥ ४ ॥

सिद्धोऽस्मीत्येतदुपपादयति—भगवन् ! इति । अभयहेतुत्वेनात्मानं बिभेमि, त्वया दर्शितमभयं निर्वाणमानन्दरूपं ( मात्रं ) ब्रह्म प्रविष्टः तदनुभवमग्न इत्यर्थः ॥ ५ ॥

तदुक्तं किं भूयः श्रोतुमिच्छसीति तत्र सिद्धोऽहं न किञ्चिच्छ्रोतुमिच्छामि किन्त्वनुज्ञां देहीत्याह—अनुजानीहि हे ब्रह्मन् ! वाचं यच्छामि मौनं बिभर्मि मुक्ताः कामाः आशया तद्वासनाश्च यस्मात्तथोक्तः अधोक्षजे निवेश्यासून् प्राणान् विसृजामि तदर्थं मामनुजानीहि ॥ ६ ॥

पुनस्सिद्धार्थतामेवाविष्करोति—अज्ञानमिति । ज्ञानमुपदेशजन्यं विज्ञानं भगवदनुभवात्मकं तन्निष्ठयाऽज्ञानं देहात्मभ्रमजन्यमात्मभ्रममूलं निरस्तं भवता त्वेमं केवलं सुखरूपं भगवतः पदं स्वरूपं यतो दर्शितम् ॥ ७ ॥

इतीति । तं राजानमनुज्ञायानुज्ञाप्य नरदेवेन राज्ञा पूजितः भिक्षुभिः मुनिभिः सह जगाम ॥ ८ ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रीनारदस्यानुग्रहेण परीक्षितो देहवियोगलक्षणं मरणं जनमेजयस्य पितुर्भक्तिप्रदर्शनाय सर्पयागः तक्षकस्य च तक्षकस्य स्वविमानपातोपेक्षा कथयत्यस्मिन्नध्याये ; तत्रादौ परीक्षितः शुकानुज्ञानदानप्रार्थनाप्रकारं वक्तुमाह—एतदिति । एनस्तुराजं निखिलं पूर्णमात्मानं पश्यतीति निखिलात्मदृक् तेन समस्तस्वामिदृशा वा ॥ १ ॥

सिद्धः सम्पादितपुरुषार्थदेहः ॥ २ ॥

दीनेष्वनुग्रह इति वर्त्तावहम् ॥ ३ ॥

कोऽयमनुग्रह इति तमाह—पुराणेति ॥ ४ ॥

भयाभावे निमित्तमाह—प्रविष्ट इति । निर्वाणमानन्दं प्राकृतशरीररहितं वा ॥ ५ ॥

कामानामाशयः शयनं यस्मात्तथाविधचेतो निगृह्याऽधोक्षजे प्रवेक्ष्ये ॥ ६ ॥

क्षेमं मङ्गलं "क्षेमो ना प्रासरत्नायां मोक्षेऽस्त्रियां तु मङ्गले" इति यादवः ॥ ७—८ ॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १ ॥

सिद्धोऽस्मीत्यादि । किञ्च, अच्युतात्मनाम् अच्युत एवात्मा स्वभावो येषां तेषां महतामात्मारामाणामपीति तद्भावभावितत्वादनुग्रहादयो गुणा युक्ता एव तस्मात्तात्यद्भुतमित्यर्थः ॥ २ ॥ ४ ॥

यस्मादस्मि तस्मादेव भगवन्निति अधुना तु वपुर्विहितं तत्र मम ज्ञानमेवेत्याह—प्रविष्ट इति निर्वाणं परमानन्दस्वरूपं ब्रह्म सर्वतो बृहद्भगवत्तत्त्वं प्रविष्टस्तस्मिन्नाविष्ट इत्यर्थः ॥ ५ ॥

अधोक्षजे श्रीकृष्णे "अधोऽक्षेन शयानेन" इत्यादि श्रीहरिवंशोक्तेः ॥ ६ ॥

भगवतःपदमित्यत्र पदशब्दस्य चरणारविन्दवाचकत्वं "ध्यानेन वैयासकिशब्दितेन भेजे खगेन्द्रध्वजपादमूलम्" इत्येवाक्ति प्रथमं साधकम् ॥ ७—८ ॥

———

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

षष्ठे कृष्णपदप्राप्तिराज्ञोऽथ जनमेजयात् ।
सर्पहोमस्ततो वेदव्यासशाखोपवर्णनम् ॥

निखिलात्मा श्रीकृष्णस्तं पश्यतीति तेन यद्वा, निखिलानामात्मानं मनः पश्यतीति तेन तात्कालिकेन ब्रह्मज्ञानोपदेशेन तत्रस्थानां केषाञ्चित् ज्ञानिनामपि मनः आनन्दितमिति भावः । यतः समेन ॥ १ ॥

सिद्धोऽस्मि कृतार्थोऽस्मि मे साक्षादिति गर्भे वाद्ये च साक्षात्कृतो यो हरिः श्रीकृष्णः स एव आवितस्त्वया स एव मया श्रुतः ॥ २ ॥

अच्युत एव आत्मा मनो येषां तेषाम् ॥ ३ ॥

ननु, मत्तः श्रुतस्यास्य शास्त्रस्य कः अवयवार्थस्त्वया अवधारितः

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

इत्यपेक्षायामाह—पुराणेति । भगवाननुवर्ण्यते इत्यन्यवर्णनमपि तस्योपस्कारार्थत्वेन तदङ्गत्वात् भगवदनुवर्णनत्वमेवेति भावः ॥ ४ ॥

किन्त्वेकमेव वाक्यं मन्मनोऽभिज्ञेन त्वया मां प्रति नोक्तं यदपि तद्व्याख्यातुमस्मिताद्वेवासह्यमभूदित्याह—हे भगवन् ! सर्वज्ञ ! भवित्तस्य भक्तस्यैकान्तिकत्वं जानन्नपि किमेवमुपदिशसीति भावः । तक्षकादिभ्यस्तथा विविधजन्मान्तरप्राप्तेभ्यो मृत्युभ्यः सकाशादहं न बिभेमि किन्तु त्वया दर्शितमभयं ब्रह्म निर्वाणं प्रविष्टः सन्नेव बिभेमीत्यर्थः । यत्र गृहे स्थितो नानोपद्रवेभ्यो न बिभेमि किन्तु वनं प्रविष्टः सन्नेवेति वत् तस्माद्वनं न प्रवेक्ष्यामीति तत्राभिप्रायः तथैवात्रापि तक्षकादिभ्यः पुनः पुनर्मृत्युभ्यश्च सकाशादपि त्वया दर्शितादब्रह्मनिर्वाणान्मम महाभयमिति वाक्यार्थः । तेन पञ्चमस्कन्धवाक्याद्भगवदीयत्वेनैव समाप्तसर्वार्थानां "नारायणपराः सर्वे न कुतश्चनबिभ्यति । स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः" इत्युक्तवता भगवता श्रीमन्महारुद्रेणैव प्रकटिताभिप्रायाणामस्माकं भक्तानां निर्वाणमोक्षः कलङ्कसम एव तत्रापि "पुनश्च भूयाद्भगवत्यनन्ते रतिः प्रसङ्गश्च तदाश्रयेषु । महत्सु यां यामुपयामि सृष्टिं मैत्र्यस्तु सर्वत्र नमो द्विजेभ्यः" इति प्रायोपवेशारम्भत एव प्रतिज्ञातवन्तं मामपि ब्रह्मनिर्वाणमुपवेशयसीति श्रीमुनीन्द्रे ईर्ष्यैव ध्वनिता तथापि तस्य तद्भक्तिनिष्ठां परीक्ष्यमाणस्य सुखमेवाभूत् यथा रासारम्भे भावं तद्द्रुवन्तीनां व्रजसुन्दरीणामीर्ष्यया कृष्णस्य अत्र किञ्चिदाक्षेपवाक्यमेव "स्वामिन्निम वक्ति वितुर्णा समवायोऽत्र निष्ठाति" इति "आत्मीयां मतिमाशाय स्थितिमत्र विधेहि तत्" इत्यस्य पूर्वार्द्धान्ते यथा किञ्चित्त्वाक्षेपवाक्यं काव्यप्रकाशटीकाकारैस्तथा व्याख्यानात् व्याख्यान्तरं तु शास्त्रस्य मोहिनीत्वप्रतिपादकं भक्तैरग्राह्यम् ॥ ५ ॥

तस्मात् कृपया मामेतद्वेवाह्नापयन्नेवेतत् प्रतिकूलमित्याह—अनुजानीहि अनुज्ञां देहीत्यर्थः । अधोक्षजे श्रीकृष्णे मुक्तकामाशयं त्यक्तकामवासनम् ॥ ६ ॥

ज्ञानं भगवद्विषयकं विज्ञानं तदैश्वर्यमाधुर्यानुभवः ज्ञानविज्ञाननिष्ठा तव कुतो जातेत्यत आह, भवतेति । परं स्वरूपं चरणकमलं धाम वा ॥ ७ ॥

भिक्षुभिः सर्वमुनीन्द्रैः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

षष्ठाध्याये श्रीशुकस्य गमनं राज्ञो मुक्तिः सर्पसत्रवेदशाखाप्रवृत्तिश्च वर्ण्यते—एतदिति । निखिलात्मानं सर्वात्मानं श्रीकृष्णं पश्यतीति संस्तेन ॥ १ ॥

चकारात् तत्प्राप्तिसाधनं च भावितम् ॥ २—३ ॥

अश्रौष्म श्रुतवन्तः ॥ ४

त्वया दर्शितं ब्रह्म श्रीकृष्णाख्यं निर्वाणं समानातिशयानन्दरूपम् ॥ ५ ॥

यदुक्तं किं भूयः श्रोतुमिच्छसि" इति तत्र ब्रह्मणि प्राप्तनिष्ठत्वात् किञ्चिच्छ्रवणेच्छाऽभावो ऽस्तु ता देहीत्याह—अनुजानीहीति । वाचं वागिन्द्रियोपलक्षितानि सर्वाणीन्द्रियाणि यच्छामि निरुद्धानि करोमि अधोक्षजे श्रीकृष्णे चेतः प्रवेश्य असून् विसृजामि ॥ ६ ॥

भगवतः परं प्रकृतिमण्डलाद्दूरदेशीयं पदं स्थानं दर्शितमस्मि लोकं तं गोपानां तमसः परमित्यादिषु भवतः दर्शितमेव देहं हित्वा तत्र यास्यामीति भावः ॥ ७—८ ॥

---

### भाषा टीका ।

त्रिवेदिव्यासकर्त्रे श्रीकृष्णमुनये नमः ।

सूत उवाच ।

श्रीसूतजी बोले, कि—सब आत्मा को समता से देखने वाले, व्यासनन्दन श्रीशुकदेवजी के कथन को सुनकर विष्णुरात राजा परीक्षित । श्रीशुकदेवजी के चरण कमल के समीप आकर मस्तक झुकाकर अंजलि जोड़कर ऐसे बोलते हुए ॥ १ ॥

राजोवाच ।

राजा बोले, कि—हे भगवन् ! करुणा रस परिपूरित हृदय ! आप के अनुग्रह से मैं सब कृतार्थ हुआ । क्योंकि ? जो आपने साक्षात् अनादिनिधन श्रीहरि का श्रवण कराया है ॥ २ ॥

अच्युत श्रीकृष्ण में मन लगाने वाले आप सदृश महात्माजनों की यह बात, कुछ मैं अद्भुत नहीं मानता हूं । जो कि—संसार के तापों से तपे हुए मेरे सदृश अज्ञ प्राणियों पर अनुग्रह करना । यह तो भगवज्जनों का काम ही है ॥ ३ ॥

यह श्रीमद्भागवत महापुराण की संहिता मैंने आप से श्रवण करी, कि—जिसमें उत्तमश्लोक श्रीभगवान् ही का वर्णन किया गया है ॥ ४

हे भगवन् ! मैं तक्षकादि रूप मृत्युओं से नहीं डरता हूं क्योंकि ? मैं आनन्द मात्र ब्रह्म के विषै प्रविष्ट होगया अर्थात् ब्रह्मानुभव में मग्न होरहा हूं जोकि, अभय ब्रह्म आपने दिखाया है ॥ ५ ॥

हे ब्रह्मन् ! अब आप मुझे आज्ञा दीजिये मैं अपनी वाणी का उपराम करूं । और सम्पूर्ण कामनाओं से मुक्त ऐसे अपने चित्तको अधोक्षज श्रीकृष्ण में लगा कर प्राणों का त्याग करूं ॥ ६ ॥

और ज्ञान विज्ञान की निष्ठा से मेरा अज्ञान निवृत्त हो गया, आपने परम क्षेम रूप उत्कृष्ट भगवान् का पद दिखादिया है ॥ ७ ॥

सूत उवाच ।

श्रीसूतजी बोले, कि—हे शौनकादिऋषियो ! जब राजा ने श्रीशुकदेवजी से ऐसी प्रार्थना करी, और विधिपूर्वक पूजन किया, तब भगवान् श्रीव्यासनन्दन नरदेव से पूजित होकर

परीक्षिदपि राजर्षिरात्मन्यात्मानमात्मना ।
समाधाय परं दध्यावस्पन्दासुर्यथा तरुः ॥ ९ ॥
प्राक्कूले बर्हिष्यासीनो गङ्गाकूल उदङ्मुखः ।
ब्रह्मभूतो महायोगी निःसङ्गश्छिन्नसंशयः ॥ १० ॥
तक्षकः प्रहितो विप्राः ! क्रुद्धेन द्विजसूनुना ।
हन्तुकामो नृपं गच्छन् ददर्श पथि कश्यपम् ॥ ११ ॥
तं तर्पयित्वा द्रविणैर्निवर्त्य विषहारिणम् ।
द्विजरूपप्रतिच्छन्नः कामरूपोऽदशन्नृपम् ॥ १२ ॥
ब्रह्मभूतस्य राजर्षेर्देहोऽहिगरलाग्निना ।
बभूव भस्मसात्सद्यः पश्यतां सर्वदेहिनाम् ॥ १३ ॥
हाहाकारो महानासीद्भुवि खे दिक्षु सर्वतः ।
विस्मिता ह्यभवन् सर्वे देवासुरनरादयः ॥ १४ ॥
देवदुन्दुभयो नेदुर्गन्धर्वाप्सरसो जगुः ।
ववृषुः पुष्पवर्षाणि विबुधाः साधुवादिनः ॥ १५ ॥
(१)जन्मेजयः स्वपितरं श्रुत्वा तक्षकभक्षितम् ।
यथा जुहाव सङ्क्रुद्धो नागान्सत्रे सहद्विजैः ॥ १६ ॥

भाषा टीका ।

राजा को आज्ञा देकर अनेक सन्यासी विरक्त भागवत पर महंसों के सहित वहां से सिधारते हुए ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मना बुद्ध्या आत्मानं मन आत्मनि प्रत्यक् प्रकाशे समाधाय परमात्मानं दध्यौ अस्पन्दासुः लीनप्राणः यथा तरुः स्थाणुः ॥ ९ ॥

तमेव विशिनष्टि–प्राक्कूले प्रागग्रे बर्हिषि दर्भे ॥ १० ॥

तदेवं ब्रह्मभूते तस्मिंस्तक्षकागमनादिकं पिष्टपेषणमिवाभवदिति दर्शयति–तक्षक इति त्रिभिः । हे विप्राः ! ॥ ११ ॥

तं विषचिकित्सया परीक्षिद्रक्षणेन द्रव्यार्जनायागच्छन्तम् तत्र स्वाशीदग्धवटवृक्षस्य भस्मीभूतस्य पुनरङ्कुरादिक्रमेणोत्थापनाद्विषहारिणं तदपेक्षितद्रविणैः सन्तर्प्य ततो निवर्त्य द्विजरूपेण तिरोहितः सन्नदशत् ॥ १२ ॥

तच्च पुत्रकत्वमिव जातमित्याह–ब्रह्मभूतस्येति ॥ १३ ॥

तत्र तेषां सर्वेषां दुःखं च ततः परमुत्सवं चाऽऽह, द्वाभ्याम् । हाहाकार इति ॥ १४—१५ ॥

प्रासङ्गिकमाह–जन्मेजय इत्यादि । सर्पाभिचारसत्रे द्विजैः सह वर्तमानो यथावदाजुहाव जुहावेति वा सर्वसर्पावाहने कारणमाह–सङ्क्रुद्ध इति ॥ १६—१७—१८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विप्रा इति सम्बोधनम् ॥ ११—२९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

परीक्षिदपि इति । आत्मनि परमात्मन्यात्मानमात्मनैव[समाधाय परमात्मशेषतैकरसं स्वात्मानमेवं ध्यात्वेत्यर्थः ॥ ९ ॥

गङ्गातीरे प्रागग्रदर्भेषु उदङ्मुख आसीनः यथा तरुस्तद्वदस्पन्दासुः तिरोहितसर्वेन्द्रियव्यापारः निःसङ्गः देहतदनुबन्ध्यभिमानरहितः छिन्नाः संशयाः देहात्मजीवपरमात्मभेदाभेदादिसंशयाः येन सः महायोगी महासमाधियुक्तः ब्रह्मभूतः संशुद्धावस्थः ब्रह्मशब्दो मुक्तावस्थजीवपरः मुक्तोऽभवदिति यावत् ॥ १० ॥

तदा हे विप्राः ! क्रुद्धेन द्विजसूनुना प्रचोदितः तक्षकः नृपं हन्तुकामो गच्छन् पथि काश्यपं ददर्श ॥ ११ ॥

तं विषचिकित्सया परीक्षिद्रक्षणेन [निर्धार्य तत]द्रव्यार्जनाय गच्छन्तं स्वाशीदग्धवृक्षस्य भस्मीभूतस्य पुनरङ्कुरादिक्रमेणोत्पाद

---

(१) जनमेजय इति विज० वीर०

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

नाग्निपहारिण्यं तदपेक्षितद्रविणैः सन्तर्प्य निवर्त्य द्विजरूपेण तिरोहितः समदशत् ॥ १२ ॥

निर्जीवस्य शरीरस्य दंशनेन भस्मीकरणं पुत्रकृत्यमिव जातमित्याह--ब्रह्मभूतस्येति। मुक्तावस्थां प्राप्तस्य राजर्षेर्देहः सर्वदेहिनां पश्यतां सतां सद्य एव गरलाग्निना भस्मसादभवत् ॥१३॥

तत्क्षणं सर्वेषां दुःखं ततः परमुत्सवञ्चाह--द्याऽभ्याम्। हाहाकार इति। भुवि खे आकाशे सर्वतः सर्वासु दिक्षु ॥ १४ ॥

देवदुन्दुभयः इति स्वयमेव दध्वनुः ॥ १५ ॥

प्रासङ्गिकमाह--जनमेजय इत्यादिना। तदा सत्रे कोपेन प्रारब्धे सर्पाभिचारयोगे सर्पानाजुहाव मन्त्रैराचकर्ष सर्वसर्पाह्वाने कारणं तक्षकसङ्कुलम् इति ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अस्पन्दासुर्निश्चलेन्द्रियः विषयव्यापारशून्येन्द्रिय इत्यर्थः ॥ ९ ॥

ब्रह्मणि भूतः ॥ १० ॥

हे विप्राः ! ॥ ११ ॥ १२ ॥

अहिगरलाग्निना सर्पविषाग्निना ॥ १३—१५ ॥

कथान्तरमारभते—जनमेजय इत्यादिना ॥ १६ ॥ १७ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

परमधोत्तमं महाख्यं श्रीकृष्णमेव दध्यौ ब्रह्मभूतः प्रसङ्गत्यादिरीत्या ब्रह्मभूतः ॥ ६—२९ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

आत्मना बुद्ध्या आत्मानं श्रीकृष्णम् आत्मनि मनसि परम् अतिशयेन अस्पन्दासुः अन्तरेव लीनप्राणाः ॥ ९ ॥

प्राक्कूले बर्हिषि प्रागग्रे दर्भे त्रिगुणातीतत्वाद्ब्रह्मभूतः "तासां मध्ये साक्षाद्ब्रह्म गोपालपुरी हि" इतिवत् ॥ १० ॥

तदेवं ब्रह्मभूते तस्मिन् तक्षकागमनादिकं पितृपैतामहमभवदिति दर्शयति तक्षक इति त्रिभिः ॥ ११ ॥

तं निवर्त्य निजविद्यया परीक्षिद्रक्षणेन द्रव्यार्जनायागच्छन्तं तत्र स्वार्जितद्रव्यस्य भस्मीभूतस्य पुनरङ्कुरादिकोऽगणतया तस्मात् निपतन्तमिव तदपेक्षितद्रविणैः सन्तर्प्य ततो निवर्त्य द्विजरूपेण तिरोहितः समदशत् ॥ १२ ॥

तत्र पुत्रकृत्यमित्याह--ब्रह्मभूतस्येति ॥ १३—१५ ॥

यथा यथावत् निस्सर्पमिदं जगत् करिष्य इति वदन् क्रुद्धः द्विजैः सह स्थितः सन् ॥ १६—२० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अस्पन्दासुः जितप्राणः ॥ ९ ॥

प्राक्कूले बर्हिषि प्रागग्रे दर्भे ब्रह्मभूतं प्राधान्यं प्राप्तं येन सः ॥ १०-११-१२ ॥

प्रकृतेः परं ब्रह्मप्राप्तस्य देहो भस्मसाद्बभूव राजर्षिस्तु "एतां गतिं भागवतो गतो यः स वै पुनर्नेह विषज्जतेऽङ्ग" इति श्रीशुकप्रोक्तेन मार्गेण प्रकृतेः परं लोकं परं विरजस्कं विशोकं यास्यत्ययं भागवतप्रधानः इति सर्वेषां महामुनीनां वचनादित्यर्थः ॥ १३--२१ ॥

---

### भाषा टीका।

राजऋषि परीक्षित् भी अपने आप अपने मनको परमात्मा के विषे लगाकर वृक्ष के तरह निष्पन्दश्वास वाले होकर परमात्मा का ध्यान करने लगे ॥ ९ ॥

श्रीविष्णुपदी के पूर्व किनारे पर उत्तर दिशा को मुखकर कुशाके आसन पर बैठकर, समस्त संगों को त्यागकर संशय जिनके सब दूर हुए, ऐसे महायोगी राजा परीक्षित ब्रह्मभूत अर्थात् मुक्तप्राय होकर श्रीकृष्ण का ध्यान करते हुए ॥ १० ॥

सूत पौराणिक बोले, कि—हे विप्रहो ! क्रुद्ध ब्राह्मण के पुत्र के शाप से प्रेरित राजा को मारने की कामना वाला तक्षक सर्प राजा को डसने को चला, तहां मार्ग में तक्षक ने कश्यप को देखा ॥ ११ ॥

तक्षक ने ब्राह्मण से पूछा कि-कहां जाते हो विप्र बोला, कि—राजा परीक्षित को सर्प के विष से जिवाकर द्रव्य लाऊंगा, तब तक्षक ने कहा कि-यदि तुमारी इतनी शक्ति है तो मैं इस हरे भरे वट के पौदे को डसता हूं तुम अच्छा करो इतना कहकर तक्षक ने वट के वृक्ष में दंत लगाये कि वट का वृक्ष सूख गया, ब्राह्मण ने अपनी विद्या से वृक्ष को हरा कर दिया। तब तक्षक को यह विश्वास हुआ कि यह ब्राह्मण अवश्य ही राजा को अच्छा कर देगा तब मेरा काटनाहूं निष्फल होगा, ऐसा विचार तक्षक ने जेपेक्षित द्रव्य देकर तृप्त कर उस विपहरने वाले ब्राह्मण को निवृत्त किया। और यथेष्ट रूप धारण करने वाले उस तक्षक ने ब्राह्मण का रूप लेकर राजा के समीप जाकर छिपकर राजा को डस लिया ॥ १२ ॥

उस समय पर मुक्त स्वरूप राजऋषि परीक्षित का देह सर्प के विष की अग्नि से, सब प्राणियों के देखते २ तत्काल भस्म होगया ॥ १३ ॥

उस समय पृथिवी आकाश और सब दिशाओं में बड़ा हा हा कार शब्द मचगया। और देव असुर मनुष्य आदि सब ही लोग विस्मय को प्राप्त होते हुए ॥ १४ ॥

आकाश में देवताओं के दुन्दुभि बाजने लगे, गन्धर्व गान करने लगे, अप्सरा पुष्पों की वर्षा करने लगीं, देव लोग जय जय शब्द करने लगे, ॥ १५ ॥

परीक्षित् महाराज के पुत्र राजा जनमेजय ने अपने पिता को तक्षक सर्प से भक्षित सुन कर बड़ा क्रोध किया, और ब्राह्मणों के साथ सर्प यज्ञ में सर्पों का अच्छी तरह हवन करने लगा ॥ १६ ॥

सर्पसत्रे समिद्धाग्नौ दह्यमानान् महोरगान् ।
दृष्ट्वेन्द्रं भयसंविग्नस्तक्षकः शरणं ययौ ॥ १७ ॥
अपश्यंस्तक्षकं तत्र राजा पारीक्षितो द्विजान् ।
उवाच तक्षकः कस्मान्न दह्येतोरगाधमः ॥ १८ ॥
तं गोपायति राजेन्द्र ! शक्रः शरणमागतम् ।
तेन संस्तम्भितः सर्पस्तस्मान्नाऽग्नौ पतत्यसौ ॥ १९ ॥
पारीक्षित इति श्रुत्वा प्राहर्त्विज उदारधीः ।
सहेन्द्रस्तक्षको विप्राः ! नाग्नौ किमिति पात्यते ॥ २० ॥
तच्छ्रुत्वाऽऽजुहुवुर्विप्राः सहेन्द्रं तक्षकं मखे ।
तक्षकाऽऽशु पतस्वेह सहेन्द्रेण मरुत्वता ॥ २१ ॥
इति ब्रह्मोदिताक्षेपैः स्थानादिन्द्रः प्रचालितः ।
बभूव सम्भ्रान्तमतिः सविमानः सतक्षकः ॥ २२ ॥
तं पतन्तं विमानेन सह तक्षकमम्बरात् ।
विलोक्याङ्गिरसः प्राह राजानं तं बृहस्पतिः ॥ २३ ॥
नैष त्वया मनुष्येन्द्र ! वधमर्हति सर्पराट् ।
अनेन पीतममृतमथवा अजराऽमरः ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कस्मात्तक्षको न दह्यतेत्युक्ताः सन्तो द्विजा ऊचुः तमिति तेनेन्द्रेण असौ सर्पः ॥ १९ ॥

ऋत्विजः प्रत्याह–सहेन्द्र इन्द्रसहितः किमिति न पात्यते ॥२०॥

तद्राज्ञो वचः श्रुत्वा आजुहुवुः साक्षेपमाह्वानं दर्शयति–तक्षकेति । इहाग्नावाशु पतस्व मरुत्वता मरुद्गणवतेन्द्रेण सह ॥ २१ ॥

ब्राह्मणोक्तैराक्षेपैः परुषवाक्यैः ॥ २२ ॥

तं तक्षकम् आङ्गिरसः पुत्रो बृहस्पतिः प्राह ॥ २३—२४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सर्पसत्र इति । समिद्धे प्रज्वलिते दह्यमानान्दृष्ट्वा तक्षकाख्यः सर्पः इन्द्रं शरणं ययौ ॥ १७ ॥

अपश्यन्निति । पारीक्षितः परीक्षितः पुत्रः तक्षकमपश्यन् उवाच उक्तिमेवाह तक्षक इति ॥ १८ ॥

इत्थं पृष्टाः प्राहुः विप्राः किमिति हे राजेन्द्र ! तं तक्षकं शरणं गतं शक्र इन्द्रः गोपायति रक्षति तस्मात्तेन शक्रेण संस्तम्भितः निवारितोऽसौ तक्षकः सर्पोऽग्नौ न पतति ॥ १९ ॥

इति विप्रवचः श्रुत्वा पारीक्षित उदारधीः विपुलबुद्धिः पुनः ऋत्विजः प्राह तदेवाह—सहेन्द्र इति । हे विप्राः ! इन्द्रसहितः तक्षकः किमिति न पात्यते ॥ २० ॥

तत्पारिक्षितोक्तं श्रुत्वा विप्राः ऋत्विजः मखे यागे सहेन्द्रं तक्षकमाजुहुवुः आह्वानप्रकारं दर्शयति—तक्षकेति । हे तक्षक मरुत्वता मरुद्गणावृतेनेन्द्रेण सहाग्नावाशु पतस्वेति ॥ २१ ॥

इत्थंभूतैः ब्रह्मणोदिताक्षेपैर्ब्राह्मणोक्तपरुषवाक्यैः सविमानः सतक्षकः स्थानात् प्रच्यावितः सम्भ्रान्तमतिर्भीतचित्तो बभूव ॥ २२ ॥

तमिति । तमिन्द्रमम्बरात्पतन्तमभिलोक्याङ्गिरसः पुत्रो बृहस्पतिः राजानं जनमेजयं प्राह ॥ २३ ॥

तदाह चतुर्भिः—नेति । हे मनुष्येन्द्र ! एषः सर्पराट् तक्षकः त्वया वधं नार्हति न वध्य इत्यर्थः । तत्र हेतुः अनेन तक्षकेण ॥२४॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्र यज्ञे कुण्डाग्नौ ॥ १८ ॥ १९ ॥

हे विप्राः ! पात्यतामिति शेषः ॥ २० ॥

मरुत्वता मरुद्भिर्युक्तेन ॥ २१ ॥

ब्रह्मोदिताक्षेपैः ब्राह्मणोत्कर्षणमन्त्रवचनैः ॥ २२ ॥

आङ्गिरसोऽङ्गिरो गोत्रप्रभवः किमित्यत्रेन्द्रस्योपेक्षाकारि-त्वपातेन हीन्द्रस्य ब्राह्मणेभ्योऽभिभवो भवेद्देवोत्तमत्वादिति शङ्का न कार्या जनमेजयस्य स्वसन्तानोद्भवत्वेन तत्प्रीतिकामेनेन्द्रेणैव मुपेक्षा कृता—

जीवितं मरणं जन्तोर्गतिः स्वेनैव कर्मणा ।
राजंस्ततोऽन्यो नान्यस्य प्रदाता सुखदुःखयोः ॥ २५ ॥
सर्पचौराग्निविद्युद्भ्यः क्षुत्तृड्व्याध्यादिभिर्नृप ! ।
पञ्चत्वमृच्छते जन्तुर्भुङ्क्त आरब्धकर्म तत् ॥ २६ ॥
तस्मात्सत्रमिदं राजन् ! संस्थीयेताऽऽभिचारिकम् ।
सर्पा अनागसो दग्धा जनैर्दिष्टं हि भुज्यते ॥ २७ ॥
सूत उवाच ।
इत्युक्तः स तथेत्याह महर्षेर्मानयन् वचः ।
सर्पसत्रादुपरतः पूजयामास वाक्पतिम् ॥ २८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

"अनन्तानोद्भवं कीर्त्या याजयन् जनमेजयम् ।
शक्तोऽप्यशक्तवद्दृष्टिरिन्द्र आसीदुपेक्षकः ॥
एवमेव ऋषीणां च कीर्तिं योजयताऽमुना ।
कृतोपेक्षा महेन्द्रेण किमु विष्णुः परात्परः ॥
तस्माद्विष्णोरशक्यं न भूतभव्यभवत्स्वपि ।
तथापि गुणैरेव पूर्णो नारायणः सदा" ॥ इति ॥ २३ ॥
अथ तस्मात् ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मरुत्वतेति । अरे इन्द्र ! तव देवेन्द्रोऽहमिति गर्वोऽस्ति तस्मात्त्वां देवैरपि समं पातयाम इति भावः "मरुतौ पवनामरौ" इत्यमरः ॥ २१ ॥

भ्रष्ट प्राणाः खलु गता एवेति सम्भ्रान्ता व्याकुला मतिः यस्य सः ॥ २२ ॥

आङ्गिरसः अङ्गिरसः पुत्र इति गौरवव्यञ्जना एव सतक्षक इन्द्रः ॥ २३ ॥

मनुष्येन्द्रेण त्वया देवेन्द्रस्य वधानौचित्यात् सर्पेण तक्षकेण सह राजन इति सः अथ अत एव वै निश्चितम् अजरामरः ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अद्योदिताक्षेपैः ब्राह्मणोक्तपरुषवाक्यैः ॥ २२ ॥
आङ्गिरसः पुत्रः बृहस्पतिः ॥ २३—२५ ॥

भाषाटीका ।

दीप्ताग्नि वाले सर्पयज्ञ में बड़े २ सर्पों को जलते हुए देखकर तक्षक बड़ा घबड़ाया, और इन्द्र के शरण आता हुआ ॥ १७ ॥

परीक्षित् के पुत्र राजा जनमेजय उस जगह तक्षक को न देखकर ब्राह्मणों से बोले, कि—सर्पों में अधम यह तक्षक क्यों नहीं जलता है ॥ १८ ॥

तब ब्राह्मण लोग राजा से बोले, कि—हे राजेन्द्र ! वह तक्षक इन्द्र के शरण गया है, इस कारण इन्द्र उसकी रक्षा कर रहा है । इन्द्र के स्तंभन करने से वह अग्नि में नहीं पड़ता है ॥ ॥ १९ ॥

उदार बुद्धि वाले जनमेजय ऐसा सुनकर ऋत्विजों से बोले, कि—हे विप्रो ! तो फिर इन्द्र सहित तक्षक को क्यों नहीं अग्नि में गिराते हो, ऐसा मंत्र पढ़ो कि—जिसमें तक्षक सहित इन्द्र का सिंहासन कुंड में पड़े ॥ २० ॥

राजा के उस वचन को सुन कर ब्राह्मण लोग उस यज्ञ में इन्द्र सहित तक्षक के हवन करने को मंत्र पढ़ते हुए । ब्राह्मण लोग मंत्र में बोले, कि—हे तक्षक ! तू देवताओं के स्वामी इन्द्र सहित शीघ्र पड़ ॥ २१ ॥

इस प्रकार के ब्राह्मणों के परुष ( कठिन ) वाक्यों से इन्द्र भी विमान और तक्षक सहित चलायमान भया, और घबड़ाया ॥ २२ ॥

इन्द्र को आकाश से तक्षक और विमान सहित गिरते हुए देखकर, अंगिरा के पुत्र बृहस्पतिजी महाराज राजा जनमेजय से कहने लगे ॥ २३ ॥

देवगुरु बृहस्पतिजी बोले, कि—हे मनुष्येन्द्र ! आपको इस सर्प का वध करना उचित नहीं, क्योंकि-इसने अमृत पान किया है इसी से यह अजर अमर हुआ है ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

भवतु नामाऽजरामरस्तथाऽपि पितृमारकं वध्यामीति चेत्तत्राऽऽह-जीवितमिति । गतिः परलोकः अतो दुर्मरणनिमित्ता पितुर्दुर्गतिरनेन कृतेत्यपि न शङ्कनीयमित्यर्थः ॥ २५ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कथमन्यः सुखदुःखप्रदाता नास्ति सर्पादीनामुपलभ्यमानत्वादिति चेत्तत्राऽऽह—सर्पादिना जन्तुः पञ्चत्वं मृत्युमृच्छति प्राप्नोतीति यत्तदारब्धं कर्मैव भुङ्क्ते स्वकर्मप्रयुक्ता एव सर्पादयो न स्वतन्त्रा इति भावः ॥ २६ ॥

संस्थीयेत समाप्यताम् आभिचारिकं हिंसाफलम् दिष्टं प्राचीनं कर्म अतः सर्पादिप्रयुक्तस्य तवाप्ययं नापराध इति भावः ॥ २७ ॥

वाक्पतिं बृहस्पतिम् ॥ २८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पितृघातकतक्षकविषयकोपशान्तये तत्त्वमुपदिशति—जीवितमिति । जन्तोः प्राणिनः गतिः स्वर्गनरकादिगतिश्च अतो हे राजन् ! तेन स्वकर्मणा विना सुखदुःखप्रदः नान्योऽस्तीत्यर्थः ॥ २५ ॥

नन्वपरोक्षं तक्षकेण मत्पिता दग्धो दृष्टः ततु कर्मणोत्यत आह—सर्पेति । सर्पादिभिः जन्तुः मरणमृच्छति प्राप्नोति इति यत्तदारब्धं कर्मैव भुङ्क्ते स्वकृतकर्मप्रयुक्ताः सर्पादयो न स्वतन्त्रा इति भावः ॥ २६ ॥

तस्मादिति । यत एवं तस्मात्से राजन् ! इदमाभिचारिकं सत्रं संस्थीयेत समाप्यतां वृथा निरपराधाः सर्पा दग्धाः, कुतः ? हि यस्माज्जनैर्दिष्टं प्रारब्धमेव भुज्यते ॥ २७ ॥

इतीति स जनमेजयः महर्षेर्बृहस्पतेर्वचो मानयंस्तथेत्याह, सर्पसत्रं समाप्यताम् इत्याह, सर्पसत्रादिति वाक्पतिं बृहस्पतिम् ॥२८॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मरणं देहवियोगलक्षणं गतिः परलोकप्राप्तिलक्षणा स्वेन स्वतन्त्रेण हरिणैवाङ्गीकृतेन स्वानुष्ठितेन कर्मणा तेन स्वकर्मोद्बोधकेन हरिणा विना सुखदुःखयोः प्रदाताऽन्यो नास्ति ॥ २५ ॥

कर्मणः कारणत्वे सर्पादिना मृतो विष्णुमित्र इति कथमुपपद्येतेत्याशङ्क्य तेऽपि कर्म निमित्तीकृत्य कारणमिति भावेनाह—सर्पेति । आदिशब्देन वृक्षादिभ्यः पतनं गृह्यते सुखादिभोगहेतुत्वाच्च कर्मप्रधानकारणमित्याह—भुङ्क्त इति ॥ २६ ॥

फलितमाह—तस्मादिति । संस्थीयेत समाप्तं भवतु आभिचारिकं जनोपद्रवकारकं कर्म एकस्यापराधेनानपराधिबहुजननाशेन पापमेव स्यादिति भावेनाह—सर्पा इति । ननु, तज्जातित्वात्तक्षकापराध एषामपराधस्तस्मादनागसो न स्युः "एकः पापानि कुरुते फलं भुङ्क्ते महाजनः" इत्याशङ्क्य तक्षकस्याप्यपराधो नास्ति दैवेन तद्दर्शनेन स्वकृतकर्मपूर्वकेण परीक्षितो मरणस्य कॢप्तत्वादिति भावेनाह, जनैरिति । दिष्टं दैवकृतं कर्मफलम् ॥ २७ ॥

इत्यादियुक्तिपूर्वकेण वचसा वाक्पतिं बृहस्पतिं "वाग्वै बृहती" इतिश्रुतेः तद्बृहतोः करपत्योश्चोरदेवतयोरिति सुट् तलोपश्च ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हे राजन् ! त्वं पितृशोकादेवं यद्वयवस्यसि तत्र तत्त्वं शृण्वित्याह—जीवितमिति । गतिः स्वर्गादिः जन्तोरिति निकृष्टजीवस्यैवेयं व्यवस्था न च पितुस्तु जीवितमरणमगवद्धामप्राप्तये भगवत्कृता एव तथाहि स्वहस्तेनैव द्रौपदसुतो रक्षणं मुनिशापद्वारा निधनप्रापणं स्वप्रभुशुकोपदेशद्वारा स्वपदप्रापणमिति तस्यैतानि कर्माणि तक्षकस्तु नाममात्रेणैव निमित्तमिति भावः ॥ २५ ॥

प्राकृत एव लोकः सर्पादिभिः कर्मवशान्मरणं प्राप्नोति नतु त्वत्पिता महाभक्तराज इत्याह—सर्पेति । जन्तुरिति निकृष्टजीवः ॥ २६ ॥

संस्थीयेत समाप्यतां यत आभिचारिकं निन्द्यं वृथैव एतावन्तः सर्पा दग्धाः तत्रापि न च नापराध इत्याह—जनैरिति । दिष्टं प्राचीनं कर्म सर्पैरपि स्वप्रारब्धफलं भुक्तमिदमिति भावः ॥ २७—२८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पञ्चत्वं मरणं सर्पादिरूपो यत ऋच्छति प्राप्नोति तत् प्रारब्धं कर्म भुङ्क्ते स्वारब्धं कर्म प्रेरिता एव सर्पादयो मारका इति भावः ॥ २६ ॥

तस्मात्तव पितुर्मरणस्य तत्कर्मफलत्वात् आभिचारिकं हिंसाफलं सत्रं संस्थीयेत समाप्यतां जनैः सर्वैरपि दिष्टं पूर्वकृतं कर्म भुज्यते, सर्पा अपि स्वादिष्टवशान्मृता इति भावः ॥ २७ ॥

वाक्पतिं बृहस्पतिम् ॥ २८ ॥

---

### भाषा टीका ।

हे राजन् ! जन्तु का जीवन मरण और गति ये सब अपने कर्मसे ही होती हैं तिसी से तुम यह जानो कि—दूसरा दूसरे के सुख दुःख का देने वाला कोई नहीं है ॥ २५ ॥

हे नृप ! सर्प, चोर, अग्नि, बिजुली, क्षुधा, तृषा व्याधि, इत्यादिकों से जो प्राणी मृत्युको प्राप्त होता है, सो तुम यही जानो कि—वह अपने किये हुए प्रारब्ध कर्म कोही भोगता है ॥ २६ ॥

हे राजन् ! तस्मात् अब तुम यह शत्रुओं के मारने वाला यज्ञ समाप्त करो, बहुत से निरपराधी सर्प इसमे जलगये । और जन भी अपने प्रारब्धही को भोगते हैं इसमे इनका कुछ दोष नहीं है ॥ २७ ॥

जब बृहस्पतिजी ने इस प्रकार राजा को समझाया तब राजा जनमेजयभी महर्षि के वचन को मानते हुए यों बोले कि—महाराज ! जो आपकी आज्ञा, हम इस यज्ञ से उपरत हुये ऐसे कहकर राजा सर्पों के यज्ञ से उपराम को प्राप्त होकर बृहस्पति जीका पूजन करते हुए ॥ २८

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ननु, कथं विदुषामप्येवं सम्मोहनं यतो ब्रह्मब्रह्मोपासनपरी-क्षिता मृत्युः अनमेजयकोपाच्च सर्पाणामित्यादि तत्राह—सैवेति। बाध्यबाधकेति भावप्रधानो निर्देशः बाध्यत्वबाधकत्वे स्वरूप-स्याविर्भावयति तथा तत्त्वं न साक्षात्किन्तु जीवमोहनद्वारेणे-त्यभिप्रेत्याह—यथेति। यथा मायया निद्रामभूतया भूतेषु क्रीडाविष-येषु गुणवृत्तिभिः क्रीडादिभिरप्यात्मा मुह्यति (ते) ॥ २९ ॥

विष्णोर्महामायेति सम्बन्धोक्त्या तस्यापि तया मोहाविशङ्कां वारयन् समाधिदशायामनुसन्धेयं परमात्मस्वरूपमाह—न यत्रेति। आत्मवादिभिः परमात्मस्वरूपनिरूपकैः सकृदप्यात्मवादे परमात्म स्वरूपनिरूपणे क्रियमाणे दुर्विभाव्यतया दुर्विभाव्यत्वेन न विभाव्यते न स्वकार्यकरणेनावतिष्ठते सा माया यत्र परमात्म-स्वरूपे न स्वकार्यक्षमेति किम्पुनर्वक्तव्यमित्यर्थः। किं च यद्यत्र परमात्मनि तदाश्रयः मायाश्रयः मायाप्रयुक्तमोहमूलकः विविधो विकारः कुतर्करूपो नास्ति तस्य तदविषयत्वादिति भावः। यद्यत्र सङ्कल्पविकल्पाभ्यां वर्तेत इति तथा मनश्च नास्ति न तद्विषयीकरोति निवृत्तसङ्कल्पविकल्पयोगपार्श्वस्थ-मनोविषयत्वादिति भावः ॥ ३० ॥

किञ्च नेति सृज्यं शरीरं सृजतीति सृजत् कर्म तेन सह सृज्यं यत्र नास्ति कर्म तदावृत्तं शरीरं च यत्र नास्ती-त्यर्थः। उभयोः कर्म तत्कल्पितदेहयोः परं ताभ्यां साध्यं सुख-दुःखादिरूपं फलं च यत्र नास्तीत्यर्थः। यच्च देवमनुष्यादि शब्दजातं च यत्र न वर्तते तदित्थम्भूतं परमात्मस्वरूप-मित्यर्थः। ततः किमत आह—जीवः स्वयं त्रिभिरन्वितोऽपि गुण-त्रयवश्योऽपि तन्मुनिः तादृशपरमात्मस्वरूपमननपरः एतत्पूर्वोक्त्या-द्यधिकरणं निषिध्य परिहृत्य ऊर्मिषट्कमशनायापिपासाशोकमोह-जरामृत्यूंश्च निषिध्य विरमेत् समाहितमनस्कतया निवृत्तव्यापारो भवेत् उत्सादितबाध्यबाधकमिति क्रियाविशेषणं पर-स्परम् उद्भवाभिभवहेतुभूतं गुणत्रयं यथोत्सादितं स्यात्तथा निषि-ध्येत्यर्थः ॥ ३१ ॥

किञ्च तदेव वैष्णवं पदं परमामनन्ति वैष्णवमित्यभेदसम्बन्धे विशेषणं परं प्रकृतिपुरुषविलक्षणं परं सर्वोत्कृष्टं वा पद्यत इति पदं स्वरूपं किं तत् यत्नेतिनेति प्रकृतिप्राकृतजडा-जडवस्तु यादृशं तादृशं न भवतीत्यत उत्सिसृक्षवः तद्व्यतिरिक्त-चेतनाचेतनं स्यावर्तयितुमिच्छवः दौरात्म्यं रागद्वेषादिकमहं ममाभिमानं वा विसृज्य अनन्यसौहृदाः नान्यस्मिन् भगवद्व्यतिरिक्ते सौहृदं येषां ते हृदोपगृह्य ध्यानादिनासंश्लिष्य समाहितैः समाधिनिष्ठैरवसितं निश्चितम् ॥ ३२ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

सुखादेर्जीवादृष्टमेव मुख्यं कारणं नान्यादिनाशङ्कां परिह-रति—सैवेति। यादृशोद्बोधिका सैषा महामाया महदपरिमितं माहात्म्यं तस्य विष्णोस्तस्मात् दुर्गाख्योच्यते वाच्ये स्थितत्वात् वाच्यात्मत्वेन जानाति गुणादिगुणवृत्तिभिः कार्यैः विष-यीभिरव्यापारैरिति शेषः ॥ २९ ॥

मुख्यात्मा परमात्मेति शङ्कामपाकरोति—नेति। आत्मवादि-उपनिषद्विचारचतुरैः पुरुषैः असकृद्बहुवारमात्मवादे परमात्म-विचारे कृते सति मायामोहनशक्तिर्यत्र हरौ न विराजते मोहकत्वं न प्रवर्तते अन्यैर्दुर्विभाव्यतया स्थिता उपक्रमादितात्पर्यलिङ्गैः क्रियमाणा एव विचारो निर्णायको ननु यथा प्रतीतार्थं इत्या-नेति। विविधो यद्विवादः तदाश्रयो ब्रह्मविषयो न भवति "यद्वाचा-नभ्युदितम्" इति श्रुतेः। तर्हि मननसमर्थस्य मनसो विषय-स्यादित्याह—मनश्चेति। कोऽयमर्थः मनोऽपि यद्ब्रह्म न विषयीकरोति "यन्मनसा न मनुत" इति श्रुतेः। सङ्कल्पविकल्पाभ्यां वृत्तिर्यस्य तत्तथा अनेन मनसोऽस्थिरत्वेन विषयीकरणसामर्थ्यं नास्तीति सूचितं "मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति" इति श्रुतेः। वचो विषयो नेति किमु वक्तव्यमिति कैमुत्यन्यायोऽत्रापि। अत्र वागादिशब्देन तदभिमानिदेवता व्यपदिश्यन्ते तासां अस्व-त्वेन प्रवृत्त्यनुपपत्तेः ॥ ३० ॥

सृज्यं विश्वं यत्र न वर्तते बाधकतयेति शेषः। उभयोः देवासुरयोः परं विलक्षणम् आनन्दलक्षणं श्रेयः सृजता स्वत-येन वैषम्यनैर्घृण्ये नाप्येते इति शेषः। त्रिभिः सत्त्वादिगुणैः धर्मार्थकामैर्वान्वितो जीवः स्वयं च यत्र न कश्चन विशेष-मापादयतीति शेषः। यस्त्वेनत् ब्रह्म जानाति तन्मुनिः स ज्ञानी षडूर्मीन्निषिध्य विरमेत कृत्यादिति शेषः कीदृशं ब्रह्म उत्सा-दितबाध्यबाधकम् उत्सादितौ बाध्यबाधकौ येन तत्तथा ॥ ३१ ॥

किन्नामधेयं ब्रह्मेति तत्राह—परं पदमिति। यत्नेति नेति इत्यनवधिसमृक्षवो विलक्षणाः यदेवं स्थितं तद्वैष्णवं पदमाम-नन्ति वदन्तीत्यन्वयः। कीदृशं तद्धिमनेव समाहितैः करणो-रवसितं सम्यग्वशीकृतम् ॥ ३२ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

कथं तर्हि विष्णुर्दम्भीवेन तस्य महामायेत्युच्यते तत्राह—न यत्रेति। यत्र विष्णौ यस्य विष्णोः सन्निधाने निमित्ते मा ईषत् विराजिता यत्किञ्चित् लब्धसामर्थ्यापि दम्भी दम्भवानयमित्याभिया न भवति किन्तु तस्मिन् दम्भादर्शनात् लज्जितैव भवतीत्यर्थः। माया हि सदम्भ एव निरर्गला भवतीति तदुक्तं "विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया" इति किञ्चात्मवादिभिरात्मवादे कर्तव्ये यत् यत्र तदाश्रयो विविधो विवादो न विद्यते आत्मनः परत्वादिति भावः। अतो मनश्चेति ततस्तु सुतरां विवादा-भाव इति भावः। तदेवं तत्सान्निध्यमात्रेण स्थिता न तु तत् सम्मता तस्यामनासक्तत्वात् तस्येति स्थितम् ॥ ३० ॥

मायाश्रयव्यवधानमसत्त्वं विवृणोति—न यत्र सृज्यमिति। जीवस्वरूपमित्यन्वयः निगमयति तत्पूर्वनिर्दिष्टमेतत्प्रकारमुत्सा-दितबाध्यबाधकं विष्णुतत्त्वमिति तदेतन्मननेनोर्मीन् माया-दीन्निषिध्य मुनिर्विरमेत् तस्मादन्यत्र स्वयमेव विरतो भवति न तु यत्नान्तरेणेत्यर्थः ॥ ३१ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पुनस्तदेव विवृणोति—परऽपदमिति । अतत् विष्णुस्वरूपव्यतिरिक्तं दौरात्म्यं तस्मिन् सौहृदाभावं समाहितैरनादिमत् समाहितान्तःकरणैः आत्मारामैरपि वा सर्वासि तमनुभूतम् ॥ ३२ ॥

—————

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, कथं विदुषामप्येवं सम्मोहः ? यतो जनमेजयस्य कोपात् सर्पाणां बाधकत्वमासाद्य विदुषामपि विप्राणामाभिचारिके सत्रे प्रवर्त्तनमिति तत्राह—मैषेति । महता महत्त्वं दर्शयति, अलक्षणा न लक्ष्यत इत्यलक्षणा अवतर्क्येत्यर्थः । यया मायया विद्वांसोऽपि बाधितुमशक्तया मुह्यन्ति, के ते ? इत्यत आह, अस्यैव विष्णोरात्मभूता आत्मांशभूताः प्राणिनः भूतेषु प्राणिषु विषयेषु वा गुणवृत्तयः क्रोधद्वेषाद्यात्मना विमुह्यन्ति ॥ २९ ॥

ननु, यदि क्रोधद्वेषादिमत्सु सर्वजीवेष्वेवास्या मायाया मोहनादिकर्तृत्वाधिकारस्तर्हि कुत्र नाधिकार इति चेत् "विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया 'विमोहिता विकत्थन्ते ममाहमिति दुर्धियः'" इति ब्रह्मोक्तेर्भगवति विष्णौ भागवते च लोकेऽस्या नैवाधिकारः सत्यं कीदृशं तर्हि विष्णोः स्वरूपमित्यपेक्षायामाह—न यत्रेति त्रिभिः । यत्र विष्णुस्वरूपे माया न प्रभवति कीदृशी इमिर्ति इत्यस्मात् पुरुषे इणौ गमने आक्रम इत्यर्थः अथवा निर्भयैव विराजिता "इण् गतौ" इत्यस्य विष्णौ तद्भक्ते च इत्थमाभावात् तत्र सभयाविराजमानैव भवतीति भावः तथा आत्मवादिभिरपि अभक्तैः पुनः पुनः आत्मवादे प्रवर्तिते सति यत् यत्र विष्णुस्वरूपे स्फुरति सति विवादो नास्ति कीदृशः तदाश्रयः तां मायामेवाश्रयत इति सः यदुक्तं "यच्छक्तयो वदतां वादिनां वै विवादसंवादभुवो भवन्ति" इति तथा सङ्कल्पविकल्परूपा मायिक्यो वृत्तयो यस्य तथाभूतं मनोऽपि यत्र नास्ति ॥ ३० ॥

यथा यत्र स्फुरिते सति सृज्यं वस्तु सृजता कारणवर्गेण सह न स्फुरतीत्यर्थः । यतः उभयोः परं सृज्यस्रष्ट्र्योः पृथग्भूतं तस्य रूपं यथा यत्र स्फुरिते सति भेदश्च स्वर्गादिफलमपि न स्फुरति तथा त्रिभिर्गुणैर्जागरादिभिर्वा अन्वितो अहङ्कारात्मको जीवोऽपि न तत् तस्मादेतत् विष्णुस्वरूपम् उत्साहिता निरस्ता बाध्या जीवा बाधका गुणाश्च यस्मिंस्तथाभूतम् ननु, तर्ह्येतत् कः प्रकाशयेत् तत्राह, निषिद्ध्येति स्वभक्तहृद्गतान् ऊर्मीन् कामक्रोधादीन् स्वयमेव तत्र विशापयन् रमेत- तात्पर्यसिद्धम् ॥ ३१ ॥

तद्वैष्णवं पदं विष्णोः स्वरूपम् आमनन्ति भक्ताः पुनः पुनः स्मरन्ति कीदृशा दौरात्म्यम् अहममेति दौर्जन्यं विसृज्य नेति नेति नैतदनुकूलं नैतदनुकूलमिति कृत्वा असत् तद्व्यतिरिक्तं देहगेहपुत्रकलत्रादिकम् अहं ममतास्पदं च उत्सिसृक्षवः क्रमेण त्यक्तुमिच्छवः यतोऽनन्येषु एकान्तिकभक्तेष्वेव सौहृदं येषां ते अतः समाहितैरेकाग्रचित्तैरेव भक्तैर्हृदा मनसा उपगुह्य अवासितं तद् वैष्णवं पदमवगतं भाव्यैः ॥ ३२ ॥



### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, शृङ्गिकोपात् परीक्षितो मृत्युः जनमेजयकोपात् सर्पाणां च मृत्युरित्येवंभूते मोहे को हेतुरत्राह—मैषेति । यया अस्य विष्णोः आत्मभूताः आत्मन उत्पन्नाः तदंशभूताः जीवाः गुणवृत्तिभिः कामादिभिः भूतेषु देहेषु मुह्यन्ति बाध्यबाधकतां प्राप्नुवन्ति सा एषा मोहहेतुभूता विष्णोरेव महामाया ननु तत्संहर्त्री सर्वे कुतो न जानन्तीत्यत आह—अलक्षणापापादि॰ रूपेण पुण्यादिरूपेण च अनुकूलतया प्रतीयमानापि मोहकतया न लक्ष्यते इत्यलक्षणा । ननु, एवम्भूतामहितकरीं कथञ्चिज्ज्ञात्वा कुतो न निवारयन्त्यत आह—अबाधयेति । विष्णुकृपां विना बाध्येत्यर्थः ॥ २९ ॥

कथं तर्हि महामायातो जीवस्य विमुक्तिरित्यत्र हरौ निष्ठातिशयेनेत्याह—न यत्रेत्यादिना । यत्र जीवे अनादित आश्रया विराजितापि माया न आत्मवादिभिः सकृदपि आत्मवादे आत्मनः परमात्मनः यदि स्वरूपगुणादिनिर्णये क्रियमाणे इति हेतोः इयमी न हेयः अथवा अर्थः यस्य विष्णोः स्वरूपगुणादिनिर्णये क्रियमाणे मायायुक्तोऽपि अनन्यगतो इयमी न भवति किन्तु साधुरेव भवति "अपि चेत्सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मन्तव्यः" इति श्रीमुखवचनात् यत् यस्मिन् परमात्मनि तदाश्रयः मायाश्रयः विविधो विवादोऽपि नास्ति सर्ववेदैकवेद्यत्वात् सङ्कल्पविकल्पवृत्ति मनुष्यं मनस्तदपि यस्मिन् न प्रवर्तते तस्मिन् परमात्मनि विष्णौ यदा जीवो विरमेत् तदा मायाविनिर्मुक्तो भवेदिति द्वयोरन्वयः ॥ ३० ॥

तस्मिन् विष्णौ जीवः ऊर्मीन् शोकमोहादीन् निषिध्य मुनिः मननशीलः सन् विरमेत विशेषतो रमेत सम्बुध्येत इति शेषः । ननु जीवस्यैतद् देहादिकं प्रियं भवतीत्यत आह—सृजतीति । सृजत् विश्वसृङ्गणाः तेन सह इदं सृज्यं विश्वं यत्र यस्मिन् चिन्त्यमाने श्रेयो हितं न भवति । किञ्च, तयोः सृज्यस्रष्ट्रोः परं कारणं प्रधानमपि न श्रेयो भवति तदा त्रिभिरन्वितः कफवातपित्तसमन्वितोऽतिमलिनो देहः श्रेयान् नेति किमु वक्तव्यम् । ननु, स्वस्वरूपानन्देनैव कृतार्थतासिद्धौ किं तत्र रमणेनेत्यत आह—अर्ह्यमिति । एतत् सुखत्वेन प्रसिद्धम् उत्साहितौ बाध्यबाधकभावौ यस्मात् अदम् अस्मच्छब्दार्थभूतं जीवतत्त्वमपि यस्मिन् विचार्यमाणे श्रेयो न "सर्वेषामपि वस्तूनां नृप स्वात्मैव वल्लभः । इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैव हि ॥ तस्यापि भगवान् कृष्णः किमतद्वस्तु रूप्यताम् । कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्" इति श्रीशुकवचनाच्च ॥ ३१ ॥

किं तत्परमात्मस्वरूपमित्यत आह—परमिति । दौरात्म्यं दुहादि अहंममाभिमानं विसृज्य हृदा उपगुह्य ध्यानादिनिरोधं कृत्वा यत् यैः समाहितैरध्यासितं निश्चितं तत् एव सुज्ञानभगवत्तत्त्वाः नान्यत्र भगवद्व्यतिरिक्ते सौहृदं येषां ते अतत् भगवद्व्यतिरिक्तम् उत्सिसृक्षवः परं क्षराक्षराद्भ्यां विलक्षणम्—

"यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" ॥

इति समुदाहृतं वैष्णवं पदं विष्णुस्वरूपमामनन्तीत्यन्वयः ॥ ३२ ॥

—————

त एतदधिगच्छन्ति विष्णोर्यत्परमं पदम् ।
अहं ममेति दौर्जन्यं न येषां देहगेहजम् ॥ ३३ ॥
अतिवादांस्तितिक्षेत नावमन्येत कञ्चन ।
न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥ ३४ ॥
नमो भगवते तस्मै कृष्णायाकुण्ठमेधसे ।
यत्पादाम्बुरुहध्यानात्संहितामध्यगामिमाम् ॥ ३५ ॥

शौनक उवाच ।

पैलादिभिर्व्यासशिष्यैर्वेदाचार्यैर्महात्मभिः ।
वेदाश्च कतिधा व्यस्ता एतत्सौम्याभिधेहि नः ॥ ३६ ॥

सूत उवाच ।

समाहितात्मनो ब्रह्मन् ! ब्रह्मणः परमेष्ठिनः ।
हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ॥ ३७ ॥
यदुपासनया ब्रह्मन्! योगिनो मलमात्मनः ।
द्रव्यक्रियाकारकाख्यं धूत्वा यान्त्यपुनर्भवम् ॥ ३८ ॥

भाषा टीका ।

यह वही श्रीविष्णु भगवान् की बड़ी भारी प्रबलकर्य माया है, कि—जिस माया के प्रभाव से उनही परमात्माके अंश रूप विचारे जीव, काम क्रोधादिकों से देहों में मोहित होजाते हैं ॥ २९ ॥

तो फिर उस माया की और माया के कार्यों की निवृत्ति किस प्रकार होसकी है ऐसी शंका में श्रीविष्णु भगवान् के भजन से ही सर्व अनर्थों की निवृत्ति होसकी है, इस तरह के सिद्धांत कहने को प्रथम श्रीविष्णु के स्वरूप का निरूपण करते हैं—कि, जिन श्रीविष्णु भगवान् के स्वरूप के विषे आत्मावाद के विषैं अर्थात् आत्मनिरूपण में दुर्विभाव्य जो माया है, वह अभय होकर नहीं बिराजती है। क्योंकि? ब्रह्माजी ने कहा है कि—हे नारद ! उस वासुदेव भगवान् को नमस्कार है, जिसकी दुर्जयमाया से मुझे जगद्गुरु कहते हैं-और जिस माया से विमोहित दुर्बुद्धि लोग मैं मेरा ऐसा प्रलाप करते हैं। वह माया जिन श्रीविष्णु भगवान् की दृष्टि के सामने खड़े होने को भी लज्जित होती है। और जिन परमेश्वर के विषय में मोहकृत विविध प्रकार का विकार नहीं हैं। तथा सङ्कल्प विकल्प रूप वृत्तियों वाला मन भी जिनको नहीं ग्रहण कर सका है ॥ ३० ॥

जिस परमात्म के विषे कर्माधीन देह सहित कर्म नहीं है। और वह कर्म और देह दोनो से पर है, जिसको वाणी भी नहीं ग्रहण करती है कर्म देह वाणी युक्त अहङ्कार प्रधान जीव जिसको नही देख सका है, जिस परमात्मस्वरूप में बाध्य बाधक सब दूर हैं। पुरुष मनन शील हो कर अहंकारादिकों का निषेध कर उसी परमात्मा में विशेष रमण करै, अर्थात् सर्वदा श्रीविष्णुपरायण हो जावै ॥ ३१ ॥

जिसका यह स्वरूप निरूपण किया परमात्म व्यतिरिक्त वस्तु के परित्याग करने वाले लोग,उसी को विष्णुसम्बन्धि परम पद कहते हैं, क्योंकि-वे महात्माजन दुरात्मता को छोड़ कर उसी मार्ग में सौहृद करने वाले हैं, समाहित अन्तःकरणों से वे साधुजन स्वरूप का निश्चय कर हृदय में छुपा कर उसी तत्त्व का ध्यान करते हैं ॥ ३२ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

एतत्प्राप्तावधिकारिणो दर्शयति—एतदिति । देहजमहमिति गेहजं ममेति ॥ ३३ ॥

तत्प्राप्त्युपायमाह—अतिवादानिति, ॥ ३४ ॥

शास्त्रसमाप्तौ गुरुं प्रणमति—नम इति । कृष्णाय व्यासाय अध्यगामधिगतवानहम ॥ ३५ ॥

इमां संहितामध्यगामित्युक्तं तत्र पुराणसंहिताविभागं विशेषतो बुभुत्सुर्वेदविभागमपि प्रसङ्गात्पृथक् पृच्छति—पैलादिभिरिति । हे सौम्य !॥ ३६ ॥

तत्र प्रथमं वेदाविर्भावप्रकारमाह-समाहितात्मन इत्यष्टभिः

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उरुक्रमस्य त्रिविक्रमस्य इत्यन्वये—न इति । अधिगच्छन्तीति अप-
मितिनिषेधार्थः द्वौ अंगमिति द्वौ राज्ञयवच्छेदार्थः ॥ ३३ ॥

किञ्चैतद्विष्णुस्वरूपं कान्त्यपराधे सति तिरोहितं भवेदतः अप-
राधानुदये प्रकारं शिक्षयति, अतिवादान् कटूक्तीः तितिक्षे-
तैव ननु तथैव कटुप्रत्युत्तरं दद्यादित्यर्थः । इमं साधकदेहम्
आश्रित्येति साधकदशायामपि स्वस्वधर्मायं मम सिद्धदेहं
आश्रित्य तु स्वधर्मायोग आविपक्षेण सह वैरं न कुर्यादिति रागानु-
गीयरसिकभक्ता अभिप्रायमाहुः कञ्चन प्रथमन्तारमपि ॥ ३४ ॥

शास्त्रं समाप्य स्वगुरुदेवं भगवन्तं प्रणमति, नम इति । अध्यगां
श्रीशुकमुखादधिगतवानस्मि ॥ ३५ ॥

संहितामध्यगामिति श्रुत्वा संहिताविभागं बुभुत्सते, पैला-
दिभिरिति ॥ ३६ ॥

वेदकल्पतरोः फलं साधुतया निरूप्य शाखा अपि सङ्क्षे-
पतो निर्दिशंस्तस्य प्रथममाविर्भावप्रकारमाह—समाहितेत्यष्टभिः ।
ब्रह्मणो हृदि य आकाशस्तस्मान्नादोऽभूत् यः कर्णपुटपिधानेन
श्रोत्रवृत्तिनिरोधाद्वस्मदादिभिरपि विभाव्यते निरूप्यते ॥ ३७ ॥

यस्य नादस्योपासनया द्रव्यक्रियाकारकाणि अभिभूतानीति
आत्मना अस्य तं मलं धूत्वा मोक्षायस्था ॥ ३८ ॥

ततो नादात् त्रिवृत् अकारोकारमकारात्मकः अव्यक्तो-
ऽव्यक्तः प्रभवो जन्म यस्य सः स्वराट् साक्षात्परमेश्वर एव
यत् यो भगवदादित्रयस्य लिङ्गं गमकं मक्षज्ञानियोगिभि-
रुपास्यत्वात् लिङ्गशब्दविशेषणत्वात्तदित्यस्य नपुंसकत्वम् ॥ ३९ ॥

भगवदादिशब्दवाच्यः स परमेश्वर एव कस्तत्राह—शृणोतीति ।
य इमं स्फोटमव्यक्तं नादात्मकमोङ्कारं शृणोति सः । ननु, जीव एव
शृणोति नेत्याह, सुप्तश्रोत्रे कर्णपिधानादिना श्रोत्रे अक्षणो
निद्रयं सुप्ते भाति प्रवृत्तिकेऽपि सति यः शृणोतीत्यर्थः । जीवस्तु
करणाधीनज्ञानत्वात्र तदा श्रोता किन्तु परमात्मैव तस्य
श्रोता तदपि जीवस्य या तदुपलब्धिः सा परमात्मद्वारिके-
वेति ज्ञेयम् । यतः स परमेश्वरः कुत्स्यद्क् शून्येऽपीन्द्रिये वर्गे दृग् ज्ञानं
यस्य सः तथाहि सुप्तो यदा शब्दं श्रुत्वा प्रबुध्यते न तदा
जीवः श्रोता लीनेन्द्रियत्वात् अतो यस्तदा शब्दं श्रुत्वा जीवं
प्रबोधयति स परमात्मैव कोऽसावोङ्कारस्तं निर्दिशति, यस्येन ।
येन वाक् वेदलक्षणा बृहती व्यज्यते यस्य च हृदयाकाशे
आत्मनः सकाशादभिव्यक्तिः ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ते एव पतत् शास्त्रसिद्धं विष्णुस्वरूपं गच्छन्ति ॥ ३३ ॥

प्राप्तिसाधनविशेषमाह—अतिवादानिति ॥ ३४ ॥

शास्त्रसमाप्तौ गुरुप्रणामात्मकमङ्गलमाचरति—नम इति ।
अध्यगामधिगतवानस्मि ॥ ३५ ॥

इमां संहितामध्यगामिति श्रुत्वा पुराणसंहिताविभागं श्रोतुं
तावन्मूलभूतस्य वेदस्य विभागं पृच्छति शौनकः—पैलादिभि-
रिति ॥ ३६ ॥

वेदविभागं वक्तुं वेदाविर्भावप्रकारमाह—समाहितात्मन इत्य-
भिः । परमेष्ठिनः चतुर्मुखस्य हृदि य आकाशस्तस्मान्नादः अभूत्
यः वृत्तिरोधात् श्रोत्रवृत्तिनिरोधात् अधुनापि विभाव्यते श्रूयते
इत्यर्थः ॥ ३७ ॥

यदुपासनया यस्य नादस्योपासनया परब्रह्मविषयकज्ञान-
मप्युदयं यातीत्यध्याहारो बोध्यः । द्रव्यक्रियाकारकाणि आधिभूता-
ध्यात्माधिदैवतानि आत्मना यस्य तं मलं धूत्वा अपवर्गं अपुनर्भवं
मोक्षम् ॥ ३८ ॥

ततो नादतः त्रिवृत् त्रयाणामकारोकारमकाराणां वृत्तिर्यस्मिन् स ओङ्कारः अभवत् तस्य पूर्वसिद्धत्वमाह—अव्यक्तात्
सर्वकारणकारणात् भगवतः प्रभवः प्रादुर्भावो यस्य सः अन-
एवस्मिन् कारणे नाव्यक्तया राजते इति स्वराट् यत् यतः परमे
पदान्तिः परलोके तिष्ठतीति परमेष्ठी श्रीपुरुषोत्तमस्तस्य भग-
वतः तत् लिङ्गं ज्ञापकं लिङ्गशब्दविशेषणत्वात्तदित्यस्य नपुं-
सकत्वम् ॥ ३९ ॥

कथम्भूतस्य य इमं स्फोटमव्यक्तमोङ्कारं शृणोति तस्य ।
ननु, जीवोऽपि कर्णपुटपिधाने शृणोति सत्यं स तु कर्णपुट-
पिधानेऽपि अश्रुतमेव श्रोत्रेण शृणोति भगवांस्तु सुप्तश्रोत्रे च
शृणोति यतः शून्यदृक् शून्येऽपीन्द्रियवर्गे ज्ञानं यस्य सः कथं-
भूतः स ओङ्कारः येनोङ्कारेण वाक् बृहती व्यज्यते यस्य आकाशे
हृदयाकाशे आत्मनः परमात्मनः सकाशात् व्यक्तिरभि-
व्यक्तिः सः ॥ ४० ॥

---

भाषा टीका ।

जो यह श्रीविष्णु का उत्कृष्ट पद है तिसको वही लोग
प्राप्त होते हैं, जोकि—देह गेहादिकों में, मैं मेरा पने रूप-
दुर्जनता का स्पर्श भी नहीं करते हैं ॥ ३३ ॥

जो उस पद को चाहे तो अन्यों के खोटे वाक्यों को सुन
कर सहन करे, किसी का अपमान न करे, और इस
अस्थिर देह को पाकर किसी से वैर न करे ॥ ३४ ॥

उस अकुण्ठ बुद्धि वाले श्रीकृष्ण मुनि व्यास भगवान् को
नमस्कार है जिनके चरण कमलके ध्यान से मैंने इस संहिता का
अध्ययन किया है ॥ ३५ ॥

शौनक उवाच ॥

शौनक महर्षि बोले, कि—श्रीव्यासजी महाराज के शिष्य
वेदाचार्य पैलादिक महात्माओं ने वेदों के कितने प्रकार के
विभाग किये । हे सौम्य ! यह हमारे लिये कथन की-
जिये ॥ ३६ ॥

सूत उवाच ।

श्रीसूत पौराणिक बोले, कि—हे ब्रह्मन् ! हे श्रीशौनकजी !
परमेष्ठी श्रीब्रह्माजी ने जब मन का समाधान किया, तब उनके
हृदयाकाश में नाद उत्पन्न हुआ । जो कि—कान बंद करने
पर हम लोगों को भी मालूम होता है ॥ ३७ ॥

हे शौनक ! जिसकी उपासना से योगीजन द्रव्य क्रिया
कारक नाम वाले अपने आत्माके मलको दूरकर मोक्षको
प्राप्त होते हैं ॥ ३८ ॥

स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः ।
स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम् ॥ ४१ ॥
तस्य ह्यासंस्त्रयो वर्णा अकाराद्या भृगूद्वह ! ।
धार्यन्ते यैस्त्रयो भावा गुणनामार्थवृत्तयः ॥ ४२ ॥
ततोऽक्षरसमाम्नायमसृजद्भगवानजः ।
अन्तस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम् ॥ ४३ ॥
तेनाऽसौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः ।
सव्याहृतिकान्सोङ्कारांश्चातुर्होत्रविवक्षया ॥ ४४ ॥
पुत्रानध्यापयत्तांस्तु ब्रह्मर्षीन् ब्रह्मकोविदान् ।
ते तु धर्मोपदेष्टारः स्वपुत्रेभ्यः समादिशन् ॥ ४५ ॥
ते परम्परया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः ।
चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः ॥ ४६ ॥
क्षीणायुषः क्षीणसत्त्वान् दुर्मेधान् वीक्ष्य कालतः ।
वेदान् ब्रह्मर्षयो व्यस्यन् हृदिस्थाऽच्युतचोदिताः ॥ ४७ ॥
अस्मिन्नप्यन्तरे ब्रह्मा भगवाँल्लोकभावनः ।
ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये ॥ ४८ ॥

भाषा टीका ।

उस नाद से तीन मात्रा का ( अ उ म ) इन तीन अक्षरों के विभाग वाला ॐकार प्रकट हुआ । जो कि—अव्यक्त से प्रकट होता है, वह कैसा है, कि—हृदय में स्वयं प्रकाशमान है, और परब्रह्म परमात्मा श्रीभगवान् का वाचक है ॥ ३९ ॥

वह परमात्मा कौन है ? कि—जो इस स्फोट शब्द को श्रोत्र इन्द्रिय के नहीं बंद करने पर भी सुनता है । क्योंकि उसका ज्ञान तो इन्द्रियों के सापेक्ष नहीं है । वह ओंकार भी कौन है ? तहां कहते हैं, कि-जिससे वाणी व्यञ्जित होती है, और जिसका प्राकट्य हृदयाकाश में आत्मा से होता है ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च, स्वधाम्नः स्वस्याऽऽश्रयः कारणं यद्ब्रह्म तस्य । किञ्च, परमात्मांशभूतसमस्तदेवतावाचकोऽपीत्याशयेनाह-स इति । सर्वमन्त्राणामुपनिषद्रहस्यम् सूक्ष्मरूपमित्यर्थः । तत्र हेतुः वेदानां बीजं कारणम् बीजत्वेऽप्यविकारितामाह-सनातनं सदैकरूपम् तस्य ब्रह्मरूपत्वात् ॥ ४१ ॥

इदानीं ततः सर्वप्रपञ्चोत्पत्तिप्रकारमाह-तस्य हीति । त्रय-स्त्रिसंख्यायुक्ता भावा यैरकारोकारमकारैर्धार्यन्ते तत्कारणत्वात् तानेवाऽऽह—गुणाः सत्त्वादयः नामानि ऋग्यजुःसामानि अर्था भूर्भुवःस्वर्लोकाः वृत्तयो जाग्रदाद्याः ॥ ४२ ॥

ततस्तेभ्यो वर्णेभ्यः अक्षराणां समाम्नायं समाहारं तमेवाऽऽह—अन्तस्था यरलवाः ऊष्माणः शषसहाः स्वरा अकारादयः स्पर्शाः कादयः ह्रस्वदीर्घौ च आदिशब्दाज्जिह्वामूलीयादयः त एव लक्षणं स्वरूपम् यस्य तम् ॥ ४३ ॥

विभुश्चतुर्मुखस्वरूपो भगवान् असृजदिति पूर्वेणैवाऽनुषङ्गः चातुर्होत्रविवक्षया चत्वारो होत्राणि लक्षिता ऋत्विजश्चतुर्होतारस्तैरनुष्ठेयम् होत्राध्वर्यवादिकं कर्म चातुर्होत्रं तद्विवक्षया ॥ ४४ ॥

पुत्रान् मरीच्यादीन् तान्वेदान् ब्रह्मकोविदान् वेदोच्चारणनिपुणान् ॥ ४५ ॥

एवं चतुर्युगेषु प्राप्ताः द्वापरादौ द्वापरमादिर्यस्य तदन्त्यांशलक्षणस्य कालस्य तस्मिन् द्वापरान्तं वेदविभागप्रसिद्धेः शान्तनुसमकालं व्यासावतारप्रसिद्धेश्च व्यस्ता विभक्ताः ॥ ४६ ॥

तत्र हेतुः क्षीणायुषो जनान् तर्हि पुरुषबुद्धिप्रभवत्वादनादरणीयत्वं स्यादित्याशङ्क्याऽऽह—हृदिस्थेति, ॥ ४७ ॥

एवं सामान्यतो वेदविभागक्रममुक्त्वा वैवस्वतमन्वन्तरे विशेषतो निरूपयितुमाह—अस्मिन्नपीति ॥ ४८ ॥

पराशरात्सत्यवत्यामंशांशकलया विभुः ।
अवतीर्णो महाभाग ! वेदं चक्रे चतुर्विधम् ॥ ४९ ॥
ऋगथर्वयजुःसाम्नां राशीनुद्धृत्य वर्गशः ।
चतस्रः संहिताश्चक्रे मन्त्रैर्मणिगणा इव ॥ ५० ॥
तासां स चतुरः शिष्यानुपाहूय महामतिः ।
एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ विभुः ॥ ५१ ॥
पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह ।
वैशम्पायनसञ्ज्ञाय निगदाख्यं यजुर्गणम् ॥ ५२ ॥
साम्नां जैमिनये प्राह तथा छन्दोगसंहिताम् ।
अथर्वाङ्गिरसीं नाम स्वशिष्याय सुमन्तवे ॥ ५३ ॥
पैलः स्वसंहितामूचे इन्द्रप्रमितये मुनिः ।
बाष्कलाय च सोऽप्याह शिष्येभ्यः संहितां स्वकाम् ॥ ५४ ॥
चतुर्धा व्यस्य बोध्याय याज्ञवल्क्याय भार्गव ! ।
पराशरायाग्निमित्रे इन्द्रप्रमितिरात्मवान् ॥ ५५ ॥
अध्यापयत्संहितां स्वां माण्डूकेयमृषिं कविम् ।
तस्य शिष्यो देवमित्रः सौभर्यादिभ्य ऊचिवान् ॥ ५६ ॥

भाषाटीका ।

हृदयमें स्थित श्री अच्युत भगवान् की प्रेरणा से महर्षियों ने जन्तुओं को काल के प्रभाव से क्षीण आयु और क्षीणपराक्रम वाले तथा अल्प बुद्धि वाले देखकर वेदों का विभाग किया ॥ ४७ ॥

हे ब्रह्मन् ! इस मन्वन्तर में भी धर्मकी रक्षा के लिये ब्रह्मरुद्रादि लोकपालों की प्रार्थना से लोक की रक्षा करने वाले भगवान् ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अंशो माया तस्या अंशः सत्त्वं तस्य कलयांऽशेनावतीर्णः सन् ॥ ४९ ॥

चातुर्विध्यमेवाह—ऋगिति । ऋगादिमन्त्राणां राशीन् वर्गशः स्वस्वप्रकरणभेदेनोद्धृत्य यथाऽनेकविधमणिराशेर्मणिगणाः पद्मरागादयो विविच्योद्ध्रियन्ते तद्वदुद्धृत्य तैर्मन्त्रैश्चतस्र ऋगादिसंहिताश्चक्रे ॥ ५० ॥

तासां संहितानां मध्ये एकैकाम् ॥ ५१ ॥

बह्वृक्समुदायरूपत्वाद्बह्वृचाख्याम् नितरां प्रश्लेषेण गद्यमानत्वान्निगदाख्यम् ॥ ५२ ॥

छन्दः सुगीयमानत्वाच्छन्दोगाख्यां संहिताम् ॥ ५३ ॥

तत्र ऋग्वेदशाखाविभागमाह-पैल इति । स्वसंहितां द्विधा विभज्य इन्द्रप्रमितये बाष्कलाय ऊचे, स बाष्कलोऽपि स्वकां संहितां चतुर्धा व्यस्य बोध्यादिभ्यः शिष्येभ्य आह, हे भार्गव ! इन्द्रप्रमितिरपि स्वां संहितां स्वसुतं माण्डूकेयमध्यापयामास तस्य माण्डूकेयस्य शिष्यो देवमित्रः ॥ ५४—५५—५६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अतः सत्यवत्यामंशांशकलयावतीर्णः हे महाभाग, शौनक ! ॥ ४९ ॥

चातुर्विध्यमेवाह—ऋगिति । ऋगादीनां राशीन् स्वयं साक्षात्कृत्येति शेषः । वर्गशः प्रकरणभेदेन राशिभ्यः उद्धृत्य चतस्रः संहिताश्चक्रे राशेरुद्धृत्येति पाठः सुगमः दृष्टान्ते तथा दर्शनात् । यथानेकविधमणिराशेर्मणिगणानुद्धृत्य माषाः कुर्वन्ति तद्वत् ॥ ५० ॥

अथ तासां संहितानां चतसृणां मध्ये एकैकां संहितां चतुरः शिष्यानुपाहूय तत्रैकैकस्मै एकैकां संहितां महामतिः पाराशर्यः ददौ उपदिष्टवान् ॥ ५१ ॥

कस्मै कां ददौ इत्यत्राह—पैलायेति श्लोकाभ्याम् । अनेकऋक्समुदायरूपत्वाद्बह्वृचाख्याम् "तेषां ऋग्यत्रार्थवशेन पाद-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

व्यवस्था" इति ऋग्लक्षणं तेषां मन्त्रब्राह्मणात्मकवेदैकदेशरूपाणां मध्ये यत्र वेदवाक्यमध्येऽर्थवशेन विशिष्टैकार्थप्रतिपादकत्वेऽपि वाक्यान्तरार्थभेदव्यावृत्तपादव्यवस्था सा ऋगिति तदर्थः । यजुर्लक्षणञ्च नितरां गद्यमानत्वाभिगदात्वपरत्वं यद्यपि ऋक्सामाभ्यामन्यदप्रश्लिष्टपठितं मन्त्रजातं तदेव यजुस्तया च सूत्रितम् "शेषे यजुःशब्दः" इति "उच्चैर्ऋचा क्रियते उपांशु यजुषा" इति यजुष उपांशुपाठस्यैव श्रवणान्निगदत्वसंज्ञाविरोधश्च तथापि निगदत्वमत्र न यजुषः लक्षणम् उच्यते किन्तु यजुस्संज्ञेष्वेव केषुचिन्मन्त्रेषु परसम्बोधनरूपेषु "प्रोक्षणीरासादय" इत्येवमादिषु परसम्बोधनाय नितरां गद्यन्ते इति व्युत्पत्त्या वाचनिकोपांशुत्वबाधेन कार्यवशादुच्चैर्धर्मयोग उक्तः ॥ ५२ ॥

साम्नामिति । अत्र गीत्याधारभूता ऋचः सामशब्दविवक्षिताः "गीतिषु सामा" इति गीतिमात्रस्य सामत्वसूत्रणात्साम्नां सम्बन्धिनीं छन्दोगसंहितां छन्दोगाख्यां संहितां जैमिनये प्राह अथर्वाङ्गिरसं नाम शाखां सुमन्तवे पैलादयोऽपि स्वशाखां स्वशिष्येभ्यः ऊचुरित्याह—पैल इति । स्वसंहितां बह्वृचाख्यां द्विधा विभज्य स्वपुत्राय इन्द्रप्रमितये शिष्याय बाष्कलाय ऊचे स च बाष्कलोऽपि स्विकां संहिताम् ॥ ५३ ॥ ५४ ॥

चतुर्धा व्यस्य विभज्य हे भार्गव ! बोध्यादिभ्यः चतुर्भ्यः प्राह आत्मवान् धीमानिन्द्रप्रमितिरपि ॥ ५५ ॥

स्वां संहितां स्वसुतं कविं विद्वांसं मण्डूकेयमृषिमध्यापयामास तस्य माण्डूकेयस्य शिष्यो वेदमित्रः सौभर्यादिभ्यः शिष्येभ्यः ॥ ५६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतदेव विवृणोति—ऋगिति । ऋगादीनां राशीन्वर्गशो वर्गचतुष्टयीकृत्य चतस्रः संहिताश्चक्रे सूतैः व्यूनान् ॥ ५० ॥

तासां संहितानां मध्ये एकैकाम् ॥ ५१ ॥

एकैकामित्युक्तं विशिनष्टि, पैलायेति ॥ ५२ ॥

तथा साम्नामृचां छन्दोगसंहितां जैमिनये प्राह ॥॥५३—५४॥

इन्द्रप्रमितिरपि स्वसंहितां चतुर्धा व्यस्य विभज्य शिष्यान् नाम्ना निर्दिशति—बोध्यायेति । हे भार्गव ! इन्द्रप्रमितिरपि आत्मवान्परमात्मज्ञानी ॥ ५५ ॥

कविनाम्ना माण्डूकेयमृषिं च स्वसंहिताम् अध्यापयत्तस्य माण्डूकेयस्य ॥ ५६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अंशो महापुरुषः तस्यांशो विष्णुः तस्य कलया अंशेन विभुः भगवान् ४९-६५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, ब्रह्मणैव चतुर्भिर्मुखैश्चत्वारो वेदाः प्रथममेव कृतास्तत् कथमुच्यते वेदं व्यासो चतुर्विधमिति ? तत्राह—ऋग्यजुरिति । राशीन् कृत्वा वर्गोद्धृतत्वप्रकरणमेदैर्विभज्य इत्येति यथा मणिकोषेऽपि पद्मरागहीरकादय उद्धृत्य विविच्य पृथक् पृथक् कुर्वन्ति इति चतस्रः ऋगादिसंहिताः ॥ ५० ॥ ५१ ॥

बह्वृचाख्याम् ऋक् संहितां नितरां गद्यमानत्वाभिगदाख्यम् ॥ ५२ ॥ ५३ ॥

तत्र ऋग्वेदशाखाविभागमाह—पैल इति । स्वसंहितां द्वेधा विभज्य इन्द्रप्रमितये बाष्कलाय ऊचे स बाष्कलोऽपि चतुर्धा स्वसंहितां व्यस्य बोध्यादिभ्यश्चतुर्भ्यः स्वशिष्येभ्य प्राह हे भार्गव ! हे शौनक ! इन्द्रप्रमितिरपि स्वसंहितां स्वसुतं माण्डूकेयमध्यापयामास तस्य माण्डूकेयस्य शिष्यो देवमित्रः ॥ ५४—५६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवानवतीर्णः इत्यत्र ज्ञापकमाह—अंशांशकलया अंशानां स्वासाधारणधर्मज्ञानवैराग्यादिभगानामंशकलयोपलक्षितो विष्णुः विष्णुरेवावतीर्णः इत्यर्थः ॥ ४९ ॥

चातुर्विध्यं दर्शयति—ऋगिति । ऋगादिमन्त्राणां राशीन् वर्गोद्धृतप्रकरणमेदैरुद्धृत्य तैः राशिभूतैर्मन्त्रैश्चतस्रः संहिताश्चक्रे यथा मणिगणाः पद्मरागादयः नानाविधमणिमञ्जूषातः उद्धृत्य पृथक् पृथक् क्रियन्ते तद्वत् प्रणमन्भगवतैव सर्ववेदाः बीजान्तर्गतशाखा इव ब्रह्माणं प्रति सूक्ष्मबीजोपदेशेन कथिताः तेन मरीच्यादिभ्यः अङ्कुरवत् किञ्चित्प्राकट्येनोपदिष्टाः भगवता श्रीवेदव्यासेन तु यथेष्टं विभक्ता इत्यर्थः । अतः "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति "तेनासौ चतुरो वेदान् चतुर्भिर्वदनैर्विभुः" इति च सङ्गच्छते ॥ ५० ॥

तासां संहितानां मध्ये एकैकामेकैकस्मै ददौ ॥ ५१ ॥

तदेवाह—पैलायेति द्वाभ्याम् । ऋक्समुदायरूपत्वाद्बह्वृचाख्यामृक्संहिताम् ऋग्लक्षणम् तेषामृक् यत्रार्थवशेन पादव्यवस्थेति तेषां वेदवाक्यानां मध्ये यत्रार्थवशेन विशिष्टैकार्थप्रतिपादकत्वेऽवान्तरार्थभेदव्यावृत्तपादव्यवस्थाऽस्ति सा ऋगित्यर्थः । नितरां गद्यमानत्वान्निगदाख्यं यजुर्गणम् अयमर्थः ऋक्सामाभ्यामन्यत् यदप्रश्लिष्टपठितं मन्त्रजातं तद्यजुः तथाह सूत्रकारः "शेषे यजुःशब्दः" इति तत्र यजुषः उपांशुपाठः उच्चैर्ऋचा क्रियते उपांशुयजुस्संज्ञेषु केषुचिन्मन्त्रेषु प्रोक्षणीः प्रासादयेत्येवम्प्रभृतिषु परसम्बोधनाय वाचनिकोपांशुत्वाबाधनार्थो नितरां गद्यते इत्युच्चैरुच्चारणात्मको धर्मयोगो निगदाख्यमिति पदेनोक्तः ॥ ५२ ॥

गीत्याश्रयः ऋचः सामानि तथाह सूत्रकारः "गीतिषु साम" इति तेषां साम्नां सम्बन्धिनीं छन्दोगाख्यां संहिताम् ॥ ५३ ॥

तत्र पैलनिर्दिष्टकृतऋग्वेदशाखाविभागमाह—पैल इति । पैलः स्वसंहितायां द्विधा विभज्य इन्द्रप्रमितये बाष्कलाय च ऊचे सोऽपि बाष्कलोऽपि ॥ ५४—५५ ॥

तस्य माण्डूकेयस्य शिष्यो देवमित्रः ॥ ५६ ॥

---

शाकल्यस्तत्सुतः स्वां तु पञ्चधा व्यस्य संहिताम् ।
वात्स्यमुद्गलशालीयगोखल्यशिशिरेष्वधात् ॥ ५७ ॥
जातूकर्ण्यश्च तच्छिष्यः सनिरुक्तां स्वसंहिताम् ।
बलाकपैजवैतालविरजेभ्यो ददौ मुनिः ॥ ५८ ॥
बाष्कलिः प्रतिशाखाभ्यो वालखिल्याख्यसंहिताम् ।
चक्रे वालाय निर्भज्य कासारश्चैव तां दधुः ॥ ५९ ॥
बह्वृचाः संहिता ह्येता एभिर्ब्रह्मर्षिभिर्धृताः ।
श्रुत्वैतच्छन्दसां व्यासं सर्वपापैः प्रमुच्यते ॥ ६० ॥
वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन् ।
यच्चेरुर्ब्रह्महत्यांहः क्षपणं स्वगुरोर्व्रतम् ॥ ६१ ॥
याज्ञवल्क्यश्च तच्छिष्य आहाहो भगवन् ! कियत् ।
चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम् ॥ ६२ ॥
इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया ।
विप्रावमन्त्रा शिष्येण मदधीतं त्यजाश्विति ॥ ६३ ॥
देवरातसुतः सोऽपि छर्दित्वा यजुषां गणम् ।
ततो गतोऽथ मुनयो ददृशुस्तान्यजुर्गणान् ॥ ६४ ॥

भाषा टीका ।

हे महाभाग ! परम समर्थ श्रीनारायण अपने अंशांश-कला करके अर्थात् आवेशावतार लेकर पराशर ऋषिसे सत्यवती देवी के विषे अवतार लेकर एक वेद के चार-विभाग करते हुए ॥ ४९ ॥

ऋग्वेद अथर्ववेद, यजुर्वेद, सामवेद, इस प्रकार ऋक् आदि मन्त्रों को प्रकरण भेदों से अलग २ निकाल कर ऋगादि पृथक् २ चार संहिता करदी । जैसे कि-गानोपयुक्त मंत्रों के समुदाय को एकत्र कर साम संहिता करी इत्यादि ॥ ५० ॥

हे ब्रह्मन् ! तत्पश्चात् व्यासजी ने चार शिष्यों को बुलाकर उन-चारों संहिताओं में से एक एक संहिता एक २ शिष्य को पढ़ाई ॥ ५१ ॥

पैल नामक शिष्य को बह्वृच जिसका नाम ऐसी आद्य-संहिता पढ़ाई, और वैशंपायन को निगद जिसका नाम ऐसी यजुर्वेद की संहिता पढ़ाई ॥ ५२ ॥

तथा जैमिनि को छन्दोग जिसका नाम ऐसी सामवेद की संहिता पढ़ाई, और अथर्व की आंगिरसी संहिता अपने शिष्य सुमन्तु को पढ़ाते हुए ॥ ५३ ॥

पैल मुनि ने ऋक् संहिता को दो शाखाकरके अपने शिष्य इन्द्रप्रमिति और बाष्कल को पढ़ाई । बाष्कल ने भी अपनी संहिता को अपने शिष्यों को पढ़ाई ॥ ५४ ॥

हे भार्गव ! बाष्कलने अपनी संहिता के चार विभाग किये, और बोध्य, याज्ञवल्क्य, पराशर, अग्निमित्र इन चार शिष्यों को पढ़ाई ॥ ५५ ॥

जितमनस्क इन्द्रप्रमिति ने भी अपनी संहिता को माण्डूकेय ऋषि को पढ़ाई, जो कि-श्रेष्ठ कवि थे । और माण्डूकेय के शिष्य देवमित्र ने सौभरि प्रभृतियों को अध्ययन कराया ॥ ५६ ॥

---

श्रीश्रीधरस्वामिकृतभावार्थदीपिका ।

तत्सुतो माण्डूकेयसुतः शाकल्यो वात्स्यादिषु पञ्चस्वधात् तानध्यापयामासेत्यर्थः ॥ ५७ ॥

तच्छिष्यः शाकल्यशिष्यः स्वसंहितां त्रेधा विभज्य चतुर्थं वैदिकपदार्थव्याख्यानरूपं निरुक्तं च कृत्वा बलाकादिभ्य-श्चतुर्भ्यो ददौ ॥ ५८ ॥

बाष्कलिः पूर्वोक्तस्य बाष्कलस्य पुत्रः प्रतिशाखाभ्य उक्त-सर्वशाखाभ्यः वालायन्यादयस्तामावधुरधीतवन्तः ॥ ५९ ॥

ऋक् शाखोपसंहारपूर्वकं तच्छ्रवणफलमाह-बह्वृचा इति । एतच्छन्दसामेतेषां छन्दसाम् ॥ ६० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

यजुर्वेदे तैत्तिरीयशाखोत्पत्तिप्रस्तावमाह—वैशम्पायनशिष्या इत्यादिना। चरकनामनिरुक्तिमाह—यच्चेरुरिति। यद्यस्माद्‍ब्रह्महत्याख्यमंहः क्षपयतीति तथा तस्य गुरोरनुष्ठेयं व्रतं तच्चरणाच्चरका इत्यर्थः॥ ६१॥

तच्छिष्यो वैशम्पायनशिष्यः अल्पसाराणामेतेषां चरितेन कियत् सुदुश्चरमहं चरिष्यामीति॥ ६२॥

विप्राणामवमन्त्राऽवज्ञाकर्त्रा मत्तोऽधीतमाशु त्यजेति॥ ६३॥

देवरातसुतो याज्ञवल्क्यः॥ ६४॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

चरकाध्वर्यवः अध्वर्युशाखाध्ययनादध्वर्यवः चरकशब्दनिरुक्तये चेरुरिति॥ ६१॥

अल्पसाराणां अल्पतपसामितरशिष्याणाम्॥ ६२—६६॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तत्सुतः मण्डूकेयसुतः शाकल्यस्तु स्वां संहितां पञ्चधा विभज्य वात्स्यादिषु पञ्चस्ववात् तानध्यापयामासेत्यर्थः॥ ५७॥

तच्छिष्यः शाकल्यशिष्यो जातूकर्ण्यस्तु सनिरुक्तां संहितां विभज्य निरुक्तं नाम वैदिकपदव्याख्यानं तेन साकं चतस्रो विभज्येत्यर्थः। बलाकादिभ्यश्चतुर्भ्यो ददौ॥ ५८॥

बाष्कलिः पूर्वोक्तबाष्कलस्य पुत्रः प्रतिशाखाभ्य उक्तसर्वशाखाभ्य उद्धृत्येति शेषः। बालखिल्याख्यां शाखां चक्रे तां च पैलायन्यादयः जगृहुः॥ ५९॥

एवमृक्शाखाविभागप्रकारमभिधाय तच्छ्रवणफलमाह—बह्वृच इति। एतच्छन्दसाम् एतेषां छन्दसां व्यासं विभागं श्रुत्वा सर्वैः पापैः प्रमुच्यते॥ ६०॥

अथ तैत्तिरीयशाखोत्पत्तिं प्रस्तौति—वैशम्पायनशिष्या इति। चरकाध्वर्यवः अध्वर्युशाखाध्ययनादध्वर्यवश्चरकाश्चासन्। तत्र चरकशब्दं निर्वक्ति—ये चेरुरिति। ब्रह्महत्यारूपम् अंहः पापं क्षपयतीति तथा तत्स्वगुरोरनुष्ठेयं व्रतं चेरुः व्रतचरणाच्चरकसंज्ञाश्चाभवन् इत्यर्थः॥ ६१॥

याज्ञवल्क्य इति। तच्छिष्यः वैशम्पायनशिष्यः याज्ञवल्क्यः अयं पूर्वोक्तादन्यः आह—गुरुमिति शेषः। उक्तिमेवाह—अहो इत्यादिना सुदुश्चरम् इत्यन्तेन। हे भगवन्! अहो अल्पसाराणां अल्पतपसामेतेषां चरितेन कियदहन्तु सुदुष्करं व्रतं चरिष्यामीति॥ ६२॥

इत्युक्त इति। विप्रावमन्त्रा विप्रावमानकर्त्रा हेतुगर्भमिदं शिष्येण याज्ञवल्क्येनेतीत्थमुक्तः कुपितो गुरुस्त्वाह, किमिति त्वयाऽलं याहि मदधीतं मत्तोऽधीतमाशु त्यजेति॥ ६३॥

अथ देवरातसुतो याज्ञवल्क्यः यजुषां गणं छर्दित्वोऽङ्गीकं गतः॥ ६४॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

तस्य सुतो वेदमित्रः पुत्रः वात्स्यादिषु पञ्चसु प्रवाद अवदत्॥ ५७॥

तस्य शाकल्यस्य शिष्यः सनिरुक्तां निरुक्तसहिताम्॥ ५८॥

बाष्कलिः पूर्वोक्तबाष्कलपुत्रः प्रतिशाखाभ्यः पूर्वोक्तसर्वशाखाभ्यः उद्धृत्य बालखिल्याख्यसंहितां चक्रे तां नाम्ना बालखिल्यसंहितां बालायनिप्रभृतयो जगृहुः अधीतवन्तः॥ ५९॥

उक्ता एताः संहिता नाम्ना विशिनष्टि—बह्वृचा इति। ऋग्वेदसंहिताः किमनेन छन्दसां व्यासेन श्रुतेनाधीतेन निःश्रेयसानुपयुक्तेनेति तत्राह, श्रुत्वेति॥ ६०॥

चरकास्तीर्थसेवकाः अध्वर्यवो यज्ञकर्मणि निपुणाः ऋत्विग्विशेषाः॥ ६१॥

तस्य वैशम्पायनस्य शिष्यो याज्ञवल्क्यो गुरुमित्याह—हे भगवन्गुरो! ब्रह्महत्यांहःक्षपणाय व्रतं चेरुरिति यस्मात्तस्मादेहः प्रत्यल्पसाराणामेतेषां चरितेन कियत्किम्प्रयोजनं स्यादहं दुश्चरं व्रतं चरिष्ये करिष्यामीति॥ ६२॥

ततो गुरुणा किमुक्तमत्राह—इतीति। विप्रावमन्त्रा ब्राह्मणावज्ञाकर्त्रा शिष्येण त्वयाऽलं इतो याहि किं च मदधीतं आशु त्यज उत्सृजेति॥ ६३॥

देवरातसुतः याज्ञवल्क्यः ततो गुरुकुलात्॥ ६४॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

तत्सुतः माण्डूकेयसुतः शाकल्यः वात्स्यादिषु पञ्चस्वदात् तान् अध्यापयामास॥ ५७॥

तच्छिष्यः शाकल्यशिष्यः स्वसंहितां त्रेधाविभज्य चतुर्थं वैदिकपदार्थव्याख्यानरूपं निरुक्तं च कृत्वा बलाकादिभ्यश्चतुर्भ्यो ददौ॥ ५८॥

बाष्कलिर्बाष्कलपुत्रः प्रतिशाखाभ्यः शाखाभ्यः शाखाभ्यः सङ्गृह्य॥ ५९॥

यजुर्वेदे तैत्तिरीयकशाखोत्पत्तिप्रकारमाह—वैशम्पायनेति। चरकनामनिरुक्तिमाह, यच्चेरुरिति। ब्रह्महत्यारूपमंहः क्षपयतीति तथा तस्य गुरोरनुष्ठेयं व्रतं तच्चरणाच्चरकाश्च ते अध्वर्यवश्चेति ते तथा॥ ६१॥

याज्ञवल्क्योऽपि तच्छिष्यः वैशम्पायनशिष्यः अल्पसाराणामेषां चरितेन प्रायश्चित्ताचरणेन कियत् एते सुखं तिष्ठन्तु अहमेक एव तपः समर्थश्चरिष्यामि॥ ६२॥

कुपित इति यतो गर्ववशात् एतान् विनीतानपि अल्पसारानुक्त्वा आक्षिपसि तस्मात् याहि इतोऽपसर त्वया शिष्येण ममालं ततश्च भवत्वहं यामीत्युक्त्वा जिगमिषन्तं तं पुनराह—मदधीतमिति॥ ६३॥

देवरातसुतो याज्ञवल्क्यः॥ ६४॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

शाकल्यस्तत्सुतः माण्डूकेयसुतः॥ ५७॥

तच्छिष्यः शाकल्यशिष्यः जातूकर्ण्यश्च स्वसंहितां त्रेधा

यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाऽऽददुः ।
तैत्तिरीया इति यजुःशाखा आसन्सुपेशलाः ॥ ६५ ॥
याज्ञवल्क्यस्ततो ब्रह्मन् ! छन्दांस्यधिगवेषयन् ।
गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् ॥ ६६ ॥

याज्ञवल्क्य उवाच ।

ओं नमो भगवते आदित्यायाऽखिलजगतामात्मस्वरूपेण कालस्वरूपेण च चतुर्विधभूतनिकायानां ब्रह्मादिस्तम्बपर्यन्तानामन्तर्हृदयेषु बहिरपि चाकाश इवोपाधिनाऽव्यवधीयमानो भवानेक एव क्षणलवनिमेषावयवोपचितसम्वत्सरगणेनापामादानविसर्गाभ्यामिमां लोकयात्रामनुवहति ॥ ६७ ॥

यदु ह वाव विबुधर्षभ ! सवितरदस्तपत्यनुसवनमहरहराम्नायविधिनोपतिष्ठमानानामखिलदुरितवृजिनबीजावभर्जन ! भगवतः समभिधीमहि तपन ! मण्डलम् ॥ ६८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विभक्तां निरुक्तेन वैदिकपदार्थव्याख्यानेन चतुर्थेन संहितायां चतुर्भ्यो बलाकादिभ्यो ददौ ॥ ५८ ॥

बाष्कलिर्बाष्कलस्य पुत्रः बालायनिः भज्यः कासारश्च एते त्रयो दधुः आदधुः अधीतवन्तः ॥ ५९ ॥ ६० ॥

यजुर्वेद तैत्तिरीयशाखोत्पत्तिं दर्शयति, वैशम्पायन इत्यादिना । अध्वर्युशाखाध्ययनादध्वर्यवः यत् यस्मात् ब्रह्महत्यारूपमंहः पापं क्षपयतीति ब्रह्महत्यांहःक्षपणं गुरोरनुष्ठेयं व्रतं चरुरनन्तरमाचरकाः अभवन् तादृशव्रतचरणाच्चरकसंज्ञाश्चाभवन्नित्यर्थः ॥ ६१ ॥

तच्छिष्यः वैशम्पायनशिष्यः याज्ञवल्क्यः आह गुरुमिति शेषः । अल्पसाराणामल्पतपसाम् एतेषां भवच्छिष्याणां चरितेन व्रताचरणेन कियत् अहमेकः सुदुष्करं व्रतं चरिष्ये चरिष्यामि ॥ ६२ ॥

याज्ञवल्क्येन इत्येवमुक्तः गुरुः कुपित आह—विप्रावमन्त्रा—निष्कारणं विप्रावज्ञाकर्त्रा शिष्येण ममाऽलम् अतो मदधीतं मत्तोऽधीतमाशु त्यज याहि आश्रमादपसर ॥ ६३ ॥

देवरातस्य सुतः स याज्ञवल्क्योऽपि यजुषां गणं छर्दित्वा उद्वम्य ततः आश्रमात् ॥ ६४ ॥

भाषाटीका ।

मांडूकेय के पुत्र शाकल्य ने अपनी पठित संहिता के पांच ५ विभाग कर वात्स्य, मुद्गल, शालीय, गोखल्य, और शिशर, इन्हों को पढ़ाई ॥ ५७ ॥

शाकल्य के शिष्य जातूकर्ण्य ने अपनी संहिता के तीन विभाग करे, और वैदिक पदार्थों के व्याख्यान रूप निरुक्त चौथा करके बलाक, पैज, वैताल, विरज, इन चारों शिष्यों को पढ़ाई ॥ ५८ ॥

बाष्कल के पुत्र बाष्कलि जी उक्त सम्पूर्ण शाखाओं से बालखिल्याख्य संहिता करते हुए, जिस संहिता को बालायनि, भज्य और कासार ने धारण करी ॥ ५९

बहुत ऋचाओंवाली इन संहिताओं को इन पूर्वोक्त ब्रह्मऋषियों ने धारण करी, इस वेदके विभाग को सुनकर पुरुष समस्त पापों से छूटजाता है ॥ ६० ॥

वैशंपायन के शिष्य चरक अध्वर्यु होते हुए, उनका चरक नाम क्यों हुआ, कि—उन्होंने अपने गुरुके ब्रह्महत्याके पाप के छुटाने वाला व्रतका आचरण किया ॥ ६१ ॥

वैशंपायन के शिष्य याज्ञवल्क्य बोले, कि—हे भगवन् ! इन अल्पतप वाले आप के शिष्योंके व्रताचरण से क्या होना है, मैं बड़ दुष्कर व्रतका आचरण करूंगा ॥ ६२ ॥

याज्ञवल्क्य ने ऐसा कहा तब गुरु वैशंपायनजी कुपित होकर बोले, कि—जो ब्राह्मणों के अपमान करने वाले मेरे सरीखे शिष्य से हम को कुछ प्रयोजन नहीं, तूने जो हम से पढा है उसे जल्दी त्यागकर ॥ ६३ ॥

इतनी बात को सुनकर याज्ञवल्क्य ने भी उन यजुर्गणों का छर्दन ( वान्ति-उलटी ) कर दिया । तदनन्तर मुनि लोगों ने उन यजुर्गणों को देख ॥ ६४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

छर्दितस्याऽऽदानं विप्ररूपेणानुचितमिति तित्तिराः पक्षिविशेषा भूत्वाऽऽददुः ततश्च तैत्तिरीया इति प्रसिद्धाः सुपेशला अतिरम्याः बहुवचनमवान्तरभेदविवक्षया ॥ ६५ ॥

काण्वमाध्यन्दिनादिशाखाप्रसङ्गमाह—याज्ञवल्क्य इत्यादिना । गुरोर्वैशम्पायनस्य व्यासेन विभज्यानुक्तत्वादविद्यमानान्यधिकानि गवेषयन् मृगयन् सूपतस्थे सम्यक् तुष्टाव ईश्वरमृगादिवेदानां तथा च श्रुतिः "ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः" इति ॥ ६६ ॥

नमो भगवते तुभ्यमादित्याय यो भवानेक एवेमां लोकयात्रामनुवहतीत्यन्वयः । तदेव दर्शयति—अखिलजगतामात्मस्वरूप-

य इह वाव स्थिरचरनिकराणां निजनिकेतनानां मनइन्द्रियासुगणाननात्मनः स्वयमात्माऽन्तर्यामी प्रचोदयति ॥ ६६ ॥

य एवेमं लोकमतिकरालवदनान्धकारसञ्ज्ञाजगरग्रहगिलितं मृतकमिव विचेतनमवलोक्यानुकम्पया परमकारुणिक ईक्षयैवोत्थाप्याहरहरनुसवनं श्रेयसि स्वधर्माख्यात्मावस्थाने प्रवर्तयत्यवनिपतिरिवासाधूनां भयमुदीरयन्नटति ॥ ७० ॥

परित आशापालैस्तत्र तत्र कमलकोशाञ्जलिभिरुपहृतार्हणः ॥ ७१ ॥

अथ ह भगवंस्तव चरणनलिनयुगलं त्रिभुवनगुरुभिर्वन्दितमहमयातयामयजुःकाम उपसरामीति ॥ ७२॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

प्राणिनां हृदयेषु कालस्वरूपेण च बहिरपि वर्तमान इति सकलजगतामित्यस्य प्रपञ्चः चतुर्विधेति हृदयान्तर्वर्तित्वेऽपि जीववत्तेनोपाधिनाऽव्यवधीयमानो अनाच्छाद्यमानः । कालस्वरूपेण चेत्यस्य प्रपञ्चः क्षणेति क्षणलवादयो येऽवयवास्तैरुपचिताः सम्वत्सरास्तेषां गणेन प्रत्यहमपामादानं शोषणं विसर्गो वृष्टिस्ताभ्याम् अनेन गायत्रीप्रथमपादोक्तवरेण्यत्वमनुवर्णितम् ॥ ६७ ॥

द्वितीयपादार्थानुवर्णनेन स्तौति—यदु हेति । हे विबुधर्षभ ! हे सवितः ! यद्यदो भगवतस्तव मण्डलं तपति तत्समभिधीमहीति सम्यगाभिमुख्येन ध्यायेम पुनस्तस्यैव सम्बोधनं प्रत्यहं त्रिषवणं वैदिककर्ममार्गेण स्तुवतां भक्तानां यान्यखिलानि दुरितानि तत्फलानि च वृजिनानि दुःखानि तेषां बीजमज्ञानं च तेषामवभर्जन ! विनाशक ! हे तपन ! इति ॥ ६८ ॥

तृतीयपादेन स्तौति—य इहेति । यो भवान् स्थावरजङ्गमसमूहानां स्वाश्रयाणां जीवानां मनइन्द्रियप्राणगणाननात्मनो जडान् स्वयमात्मैवान्तर्यामी सन् प्रचोदयति प्रवर्तयति ॥ ६९ ॥

तृतीयपादमेव मण्डलस्थपरतया व्याचक्षाणः स्तौति—य एवेति । य एक एव भगवानतिकरालवदनो योऽन्धकारसञ्ज्ञोऽजगरग्रहस्तेन गिलितमत एव मृतकमिव विचेतन स्वधर्माख्यं यदात्मावस्थानं प्रत्यक्प्रवणत्वं तदेव श्रेयस्तस्मिन्प्रवर्तयति किञ्च, यो भवानवनिपतिरिवाटति गच्छति ॥ ७० ॥

आशापालैरिन्द्रादिभिः कमलकोशयुक्तैस्तत्पुटपैर्वाऽञ्जलिभिरुपहृतार्हणो दत्तार्घः ॥ ७१ ॥

यत एवम्भूतस्त्वमथातः ह स्फुटमयातयामान्यन्यैर्यथावदविज्ञातानि यजूंषि तत्कामोऽहमुपसरामि भजामि ॥ ७२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

नम इत्यादि आदित्यमण्डलान्तर्वर्तिभगवत्स्तुतिः ॥ ६७ ॥

यदु हेति यन्मण्डलन्तपति इह स्थितोऽन्तर्यामी देहेन्द्रियासुगणाननात्मनश्च प्रचोदयतीत्यन्वयः ॥ ६८ ॥

स्थिरचरनिकराणामित्यादिष्टकर्मावस्था य एवेति तस्य तव चरणयुगलमुपसरामीत्यन्वयः ॥ ६९—८० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ मुनयः छर्दितमामादानं विप्ररूपेणाऽनुचितम् इति मन्वानाः तित्तिरारूपपक्षिविशेषा भूत्वा तल्लोलुपतयाऽऽददुः जगृहुः अतो यजुःशाखाः तैत्तिरीयसंज्ञा आसन् सुपेशलाः अतिरम्याः बहुवचनमवान्तरभेदविवक्षया ॥ ६५ ॥

कारणमाध्यन्दिनशाखाप्रवृत्तिं प्रस्तौति—याज्ञवल्क्य इत्यादिना । हे ब्रह्मन् ! गुरोरधीतानि छन्दांस्यधिगन्तव्यानि अनपेक्षमाणः अपश्यन् छर्दितत्वादिति भावः अर्कमादित्यमण्डलान्तर्वर्तिनमीश्वरम् सुष्ठु उपतस्थे तुष्टाव ॥ ६६ ॥

स्तुतिमेवाऽऽह—ॐ नम इत्यादिना । यो लोकयात्रामनुवहति तस्मै भगवते आदित्याय तुभ्यं नमः इति सम्बन्धः । तमेव दर्शयति—अखिलेत्यादिना । अखिलजगदात्मत्वमेव प्रपञ्चयति—चतुर्विधभूतनिकायानां देवमनुष्यपशुपादपभेदेन जरायुजाण्डजस्वेदजोद्भिज्जरूपेण वा चतुर्विधं भूतसमुदायानां किं बहुना ब्रह्मादिस्तम्बपर्यन्तानामन्तर्हृदयेष्वाकाश इव व्यपगतोपाधिना ब्रह्मादिस्तम्बपर्यन्तेनाऽव्यवधीयमान अनपोद्यमान अस्पृष्टव्यापकगतदोष इत्यर्थः । कालरूपतां प्रपञ्चयति—बहिः क्षणादिभिरवयवैरुपचितेन सम्वत्सरगणेन तोयादानविसर्गाभ्यामिमां लोकयात्रां लोकवृत्तिमनुवहति निर्वहति ॥ ६७ ॥

अखिलजगदात्मकस्वरूपेणात्मनेनान्तःप्रविश्य प्रेरकत्वरूपो गायत्रीप्रथमपादस्य सवितृशब्दार्थ उक्तः । अथ द्वितीयपादस्य भर्गशब्दार्थवर्णनेन स्तौति—यदु ह वेति । उह वावेति प्रसिद्धिद्योतको निपातसमुदायः भगवतस्तव यन्मण्डलमयं तपति तत्समभिधीमहीति सम्बन्धः । अभिधीमहि सुष्ठु ध्यायेमेत्यर्थः । हे विबुधर्षभ ! हे सवितः ! हे तपनेति त्रीणि सम्बोधनानि मण्डलं विशिनष्टि—अहरहरनुसवनम् त्रिसन्ध्यमाम्नायविधिना वैदिकमार्गेण उपतिष्ठमानानां जनानां यान्यखिलानि दुरितानि पापानि वृजनानि तन्मूलानि दुःखानि च तान्येव बीजानि । यद्वा, दुरितानां बीजमज्ञानं च भर्जयतीति भर्जन तद्भर्गः तेजो यस्य तत् ॥ ६८ ॥

अथ तृतीयपादार्थमर्थधीप्रचोदयितृत्वकथनेन स्तौति, यदु ह वावेति उह वावेति । पूर्ववत् यो भवान्निजनिकेतनानां स्वशरीराणां स्थावरजङ्गमसमूहानां मन इन्द्रियप्राणगणात्मनो जीवांश्च स्वयमात्माधारकोऽन्तर्यामी च सन् प्रचोदयति ॥ ६९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

चतुर्विधपुरुषार्थप्रदत्वमाविःकुर्वन्स्वाभिप्रेतं निवेदयति—य एवेति । अतिकरालवदनो योऽन्धकारसंज्ञोऽजगरग्रहस्तेन गृहीते गिलितमत एव मृतकमिवाचेतनं निःसञ्ज्ञमिमं लोकम् अवलोक्यानितरसाधारणया कृपादृष्ट्या उत्थाप्य अहरहस्त्रिसन्ध्यं स्वधर्माख्यावस्थाने स्वधर्माख्यं स्वाराधनधर्माख्यं यदात्मावस्थानं चित्तसमाधानं तस्मिन् श्रेयसि प्रवर्त्तयिष्यति यश्च भयानकनीपतिरिवानिमिषाणां देवानामधिपतिरसाधूनां दुष्टसत्त्वानां भयमुदीरयन्नुत्पादयन्नटति यश्च परित आशापालैर्दिक्पालैः कर्तृभिः कमलकोशाञ्जलिभिः कमलकोशाकारैरञ्जलिभिरुपहृतं समर्पितमर्हणम् यस्य सः अस्तीति पूर्वेणान्वयः ॥ ७० ॥ ७१ ॥

अथ ह ननु, खलु हे भगवंस्त्रिभुवनगुरुभिर्ब्रह्मादिभिरभिवन्दितमुक्तविधस्य पादकमलयुगलमहमयातयामयजुःकामः अयातयामान्यन्यैरविदितानि यजूंष्यहमुपसरामि भजामीत्युपसरणे ॥ ७२ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तल्लोलुपतया यजुर्गणग्रहणोत्कण्ठावत्त्वेनादधुः स्वीचक्रुः ॥ ६५ ॥

कुर्वाणस्वाधिगतविषयसम्पत्तेः मृगयमार्कं परमानन्दस्वरूपस्वादित्रिदशमार्चिताख्य सूर्यान्तर्यामित्वाच्च तन्नामानमीश्वरं नारायणं सुषुप्तत्त्वे तुष्टाव ॥ ६६ ॥

ॐ प्रणवाङ्के "ॐ नमो भगवते आदित्याय" इति यावत् "अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणा" इति श्रुतेः गुणैरनन्तत्वादोङ्कारस्योत्पत्त्येवार्थः इममेवार्थं सूचयति, भगवत इति । भगवते षड्गुणपूर्णाय अथ चासिद्धादिविविदानीमन्तो भगवानित्याह, आदित्याय आदिभवाय पुरातनाय । यद्वा, अस्यापि ऐश्वर्याय एतत् रूपमुपपादयति—अखिलेति । यो भगवान् ब्रह्मादिस्तम्बपर्यन्तानां अण्डजादिभेदेन चतुर्विधभूतसमूहानां हृदयेष्वन्तरखिलजगदात्मस्वरूपेण समस्तजगदन्तर्यामिस्वरूपेण स्थितो बहिरपि क्षणलवनिमेषाद्यवयवोपचितसंवत्सरगणलक्षणेन कालरूपेणाकाश इव व्यवधीयमानः तोयादानविसर्गाभ्यां प्रत्यहन्तोयस्य आदानं शोषणं विसर्गो वृष्टिस्ताभ्यामिमां लोकयात्रामनुवहति । यद्वा, घटाद्युपाधिनाकाश इव सुरनरादिशरीरोपाधिना व्यवधीयमानः परिच्छिद्यमान इति ॥ ६७ ॥

हे विबुधर्षभ ! हे सवितः ! तव यद्रोमण्डलमनुसवनं तपति प्रकाशते इह वा वेत्यलङ्कारार्थः हे तपन ! प्रकाशनशील ! तत्समभिधीमहि सम्यक्चिन्तयामः कीदृशं मण्डलमहरहराम्नायविधिना वेदोक्तप्रकारेणोपतिष्ठमानानां सेवमानानामखिलानां दुरितानां दुष्पापानां दुःसहानां वृजिनानां दुःखानां बीजानि दुष्कर्माणि अवभर्जयितुं शीलमस्यास्तीति अस्मिन्नेवार्थे ण्यन्तप्रत्ययः ॥ ६८ ॥

इह भुवि यो नाम स्वनिकेतनानां स्वाश्रयाणां स्थिरचरनिकराणामात्मा स्वामी अन्तः स्थित्वा सुखप्रेरकश्च तत्तन्मनसोऽर्पितस्वभावः स्वयं तेषामनात्मन अचेतनप्रायान् मनइन्द्रियासुगणान्प्रचोदयति प्रेरयति अनेन विशेषणद्वयेन "तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्" इत्ययं विवृतः यो नो धियो ज्ञानसाधनत्वादिन्द्रियाणि प्रचोदयात्तस्य सवितुर्जगत्स्रष्टुः भर्गः सकलदुःखबीजभर्जनकं वरेण्यं रमणीयं

तन्मण्डलं धीमहीति "आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च" इति ॥ ६९ ॥ ७० ॥

अतिकरालं वदनं यस्य स तथा स एवान्धकारः अज्ञानसम्पातकस्तदात्मना ऽजगरग्रहेण गृहीतं ग्रस्तं मृतकमिव शववदचेतनकल्पमिमं लोकं जगदवलोक्य द्रवीकृतचित्तवृत्त्या परमकारुणिको यो भवानीक्षणेनैव कटाक्षनिरीक्षणेनैव समुत्थाप्यानुदिनमात्मनः परमात्मनोऽवस्थानं प्रापयंस्तथा तस्मिन्स्वधर्माख्ये श्रेयसि प्रवर्तयत्येव "चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः" इति श्रुतेः । कालप्रणायको यश्च भवानाशापालैरिन्द्रादिभिः कमलकुड्मलाञ्जलिभिरनघ तत्र समुपचितोऽसाधूनां मरणभयमुदीरयन् परितः अटति परिवर्तते "आप्रा द्यावापृथिवी अन्तरिक्षम्" इति श्रुतिः । तस्मै तुभ्यं नम इति पूर्वेणान्वयः ॥ ७१ ॥

स्वाभिप्रायमुद्घाटयति—अथेति । यस्मादयातयामयजुष्कामोऽहं तस्मात्त्रिभुवनगुरुभिरभिवन्दितं तव चरणनलिनयुगलमुपसरामि शरणं गतोऽस्मीति दुष्टावित्यर्थः ॥ ७२ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ईश्वरमिति तदन्तर्यामिरूपेण भाव्यमानमित्यर्थः ॥ ६६—७३ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

छन्दांस्यादाय तित्तिरिरूपेणायुक्तमिति तित्तिरयो पक्षिविशेषा भूत्वा आददुः ततश्च तैत्तिरीया इति ख्याताः ॥ ६५ ॥

अधिगन्तव्यम् अविन्दन् गुरोर्वैशम्पायनस्यापि अविद्यमानानि तेनाप्यनधिगतानीत्यर्थः ॥ ६६ ॥

यो भगवानेक एव इमां लोकयात्रामनुवहति तस्मै आदित्याय अखिलजगतां भगवते श्रीमते नम इत्यन्वयः "भगं श्रीकाममाहात्म्य" इत्यमरः चतुर्विधभूतनिकायानाम् अन्तर्बहिरपि क्रमेणात्मस्वरूपेण कालस्वरूपेण च वर्तमान इत्यर्थः।हृदयान्तर्वर्तित्वेऽपि जीववत्तेन उपाधिना अव्यवधीयमानः अनाच्छाद्यमानः आकाशवत् क्षणलवाद्यो येऽवयवास्तैरुपचिताः संवत्सरास्तेषां गणेन प्रत्यहमेव अपाम आदान शोषणं विसर्गो वृष्टिस्ताभ्याम् ॥ ६७ ॥

हे विबुधर्षभ ! सवितः ! यन्मण्डलं तपति अदः समभिधीमहि अनुसवनं प्रतिसमयम् अहरहः प्रत्यहं च आम्नायविधिना वैदिकमार्गेण उपतिष्ठतां स्तुवतां यान्यखिलानि दुरितानि तत्फलानि वृजिनानि दुःखानि च तेषां बीजमज्ञानं च तेषामवमर्जन ! विनाशक ! हे तपन ! ॥ ६८ ॥

अनात्मनो जडान् प्रचोदयति प्रवर्तयति ॥ ६९ ॥

ईक्षणेनोत्थाप्य पूर्वाद्राविदित्य ईक्षणप्रदानेनैवेत्यर्थः। स्वधर्माख्यं यत् आत्मावस्थानम् आत्मोपासनं तत्र ॥ ७० ॥

आशापालैर्दिक्पालैरिन्द्रादिभिः कमलकोशयुक्तैस्तत्तुल्यैर्वा अञ्जलिभिरुपहृतार्हणः दत्तार्घ्यः ॥ ७१ ॥

अयातयामानि ऊर्जस्वलानि अन्यैरप्यनुपलक्ष्याणीत्यर्थः । यानि यजूंषि तत्कामोऽहमुपसरामि भजामि ॥ ७२—७३ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

आर्दितस्य यजुर्गणस्य विप्ररूपेणादानमयुक्तमतास्तित्तिराः पक्षिविशेषा भूत्वा आदृत्य जगृहुः, अतो यजुःशाखाः तैत्तिरीयाः इति प्रसिद्धाः सुपेशलाः सुरम्याः बहुवचनमवान्तरभेदाभिप्रायम् ॥ ६५ ॥

काण्वमाध्यन्दिनादिशाखाप्रवृत्तिप्रकारमाह—याज्ञवल्क्य इत्यादिना । ततः गुरोराश्रमान्निर्गमनानन्तरं श्रीव्यासेन विभज्यानुपदिष्टत्वाद्गुरोर्वैशम्पायनस्य अविद्यमानानि अधिगवेषयन् अधिकानि अन्विष्यन् अर्कमीश्वरमिति "एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यकेशः हिरण्यश्मश्रुः आप्रणखात् सुवर्णः" इति श्रुत्युक्तान्तरात्मानं भगवन्तमित्यर्थः । उपतस्थे सम्यक् तुष्टाव अनेन समर्थो याज्ञवल्क्यः क्रोधामासमभिषेणायातयामयजुरानयने गुरुणैव प्रवर्त्तित इति ज्ञायते अन्यथा "नाराधयेऽपयाति गुरोः प्रत्युतस्य दुर्मुखेः । कमलं जलादपेतं संशोषयति रविर्न पोषयति" इत्यादि शास्त्रविरोधः स्यात् ॥ ६६ ॥

यो भगवान् एकः निःसमातिशयः इमां लोकयात्रामनुवहति तस्मै भगवते आदित्याय नमः इत्यन्वयः । आदित्यशब्देनात्र सूर्यमण्डलाभिमानिदेवतान्तरात्मा सर्वशक्तिः सर्वात्मा श्रीवासुदेवो गृह्यते तदेव स्फुटतया दर्शयति—यः चतुर्विधभूतनिकायानां जरायुजाण्डजस्वेदजोद्भिज्जप्राणिसमुदायानाम् ब्रह्मादिस्तम्बपर्यन्तानां किं बहुना निखिलजगतामनेककोटिब्रह्माण्डानाम् अन्तर्हृदयेषु बहिरपि च आत्मस्वरूपेण असाधारणेन रूपेण आकाश इव वर्त्तमानः उपाधिना चतुर्विधभूतनिकायेन ब्रह्मादिस्तम्बपर्यन्तेन चाखिलैर्जगद्भिश्च अव्यवधीयमानः अनाच्छिद्यमानश्च इमां लोकयात्रामनुवहति निर्वहति केनानुवहतीत्यत आह—कालरूपेणेति । तदेव प्रपञ्चयति, क्षणेति । क्षणलवादिभिरवयवैरुपचितानां सम्वत्सराणां गणेन प्रत्यब्दम् अपामादानविसर्गाभ्यां जलग्रहणत्यागाभ्याम् अनेन गायत्रीप्रथमपादगतसवितृपदार्थो वर्णितः ॥ ६७ ॥

द्वितीयपादगतभर्गशब्दार्थं दर्शयन् स्तौति—यदुहेति । हे विबुधर्षभ ! सुवते विश्वं यतस्तत्सम्बोधने हे सवितः ! अहरहः प्रतिदिनम् अनुसवनं प्रतिसमयं त्रिकालमित्यर्थः आम्नायविधिना वेदविधिना उपतिष्ठतां स्तुवताम् हे अखिलदुरितवृजिनबीजावभर्जन ! हे सकलपापमूलविनाशक ! हे तपन ! उह वावेति प्रसिद्धिद्योतको निपातसमूहः "तस्य भासा सर्वमिदं विभाति"

"यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" ॥

इत्यादिशास्त्रप्रसिद्धं यत् भगवतस्तव मण्डलमदस्तपति तत्समभिधीमहि सम्यगाभिमुख्येन ध्यायेम ॥ ६८ ॥

तृतीयपादार्थं सर्वधीप्रेरकत्वं दर्शयन् स्तौति, य इति । यो भवान् निजनिकेतनानाम् "अन्तः प्रविष्टः शास्ता जनानाम्" इत्येवं स्वाश्रयस्थानां स्थिरचरनिकराणां स्थावरजङ्गमयूथानां मनआदिगणान् अनात्मनः जडान् स्वयमात्मनैवान्तर्यामी सन् प्रचोदयति ॥ ६९ ॥

तस्य सदापकारकस्य कारुणिकस्य सर्वाभिवन्दितं चरणं यजुःकामः शरणङ्गतोऽस्मीत्याह—य एवेत्यादिना । उपसरामीत्यनेन यो भवान् अतिकरालवदनेन अन्धकारसञ्ज्ञेन अज्ञानाख्येन अजगरग्रहेण गिलितं कवलीकृतम् अतो मृतकमिव विचेतनं निःसत्त्वम् इमं लोकम् अवलोक्य उत्थाप्य "अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्" इति स्वधर्माख्ये आत्मावस्थाने परमात्मप्रणाशे अर्थात् प्रवर्त्तयति यश्च भवान् अवनिपतिरिव असाधूनां भयमुदीरयन् अटति ॥ ७० ॥

यश्च आशापालैः दिक्पालकैरिन्द्रादिभिः कमलकोशाञ्जलिभिः पद्मकोशयुक्ताः तत्तुल्या वा अञ्जलयो येषां तैः उपहृतार्हणः उपहृतं समर्पितमर्हणं यस्य स तथा ॥ ७१ ॥

अथ अतो हेतोः भगवतस्तव चरणनलिनयुगलं त्रिभुवनगुरुभिर्ब्रह्मादिभिर्वन्दितम् अयातयामयजुःकामः अन्येषांयथावद्विज्ञाततयाऽगतसाराणि यजूंषि तत्कामोऽहं उपसरामि शरणं व्रजामि ॥ ७२ ॥

---

भाषा टीका।

और वे मुनि लोग उन यजुर्वेद के मन्त्रों को उन मन्त्रों के लोभसे तीतर पक्षी होकर चुगते हुए, तबसे वे अतिरम्य तैत्तिरीय शाखा होती हुई ॥ ६५ ॥

सूतजी बोले, कि—हे ब्रह्मन् ! उस समय से याज्ञवल्क्य भी उन वेदोंकी तलाश में रहे जो कि—गुरुके पास नहीं विद्यमान रहे, ऐसे मन्त्रों को ढूंढते हुए सूर्य भगवान् का उपस्थान करते हुए ॥ ६६ ॥

याज्ञवल्क्य उवाच

श्रीसूर्यनारायण की स्तुति करते हुए याज्ञवल्क्य महर्षि बोले, कि—उन श्रीआदित्य भगवान्को नमस्कार है, जो कि—ब्रह्मा से आदि लेकर तृण पर्यंत चतुर्विध प्राणियों के हृदयमें आत्मस्वरूपसे और बाहर क्षण लव निमेष रूप अव यवों से बढ़े हुए सम्वत्सरोंके समुदायात्मक काल रूप से आप एकही उपाधि से रहित आकाश की तरह व्याप्त होकर समय २ पर जलों के सुखाने और बर्षानेसे इस लोक की यात्राको चलाते हो ॥ ६७ ॥

हे देवन में श्रेष्ठ ! हे सवितृदेव ! लोग त्रिकाल प्रतिदिन आम्नाय विधि से आप को उपस्थान देते हैं, आप उन्हीं के खोटे कर्म और उनके फल जो दुःख तिन के बीज रूप अज्ञान के नाश करने वाले हो । हे तपन ! यह जो आपका मण्डल तप रहा है, हम उसी का समीचीन प्रकार से ध्यान करते हैं ॥ ६८ ॥

जो श्रीआदित्य भगवान् अपने निवास स्थान रूप स्थावर जङ्गम प्राणि समुदायों के जड़रूपी मन इन्द्रिय और प्राणों को स्वयं आत्मा अन्तर्यामी रूप से प्रेरणा कर के चलाते हैं तिन सूर्यनारायण को नमः हो ॥ ६९ ॥

जो सूर्य भगवान् अति करालवदन अन्धकार नामक अजगर से ग्रसित अत एव मृतक विचेतन सदृश इसलोक को

सूत उवाच ।

एवं स्तुतः स भगवान् वाजिरूपधरो हरिः ।
यजूंष्ययातयामानि मुनयेऽदात्प्रसादितः ॥ ७३ ॥
यजुर्भिरकरोच्छाखा दशपञ्च शतैर्विभुः ।
जगृहुर्वाज[1]संन्यस्ताः काण्वमाध्यन्दिनादयः ॥ ७४ ॥
जैमिनेः सामगस्यासीत्सुमन्तुस्तनयो मुनिः ।
[2]सुन्वांस्तु तत्सुतस्ताभ्यामेकैकां प्राह संहिताम् ॥ ७५ ॥
सुकर्मा चापि तच्छिष्यः सामवेदतरोर्महान् ।
सहस्रसंहिताभेदं चक्रे साम्नां ततो [3]द्विजः ॥ ७६ ॥

भाषा टीका ।

अवलोकन कर, परम कारुणिक कृपा कर अपनी दृष्टी से सबों को उठाकर मिशिदिम भूपति के तरह स्वधर्म स्थितिरूप भेव में प्रवृत्त करते हैं । और दुष्टों को भय दिखाते हुए, राजा के तरह पर्यटन करते हैं ॥ ७० ॥

और जहां २ पर्यटन करते हैं उस २ जगह दिक्पाल लोग कमल के कली सदृश अञ्जलि जोड़कर आप को भेट देकर पूजन करते हैं ॥ ७१ ॥

अब हे भगवन् ! त्रिभुवन गुरुओं से वन्दित आप के दोनों चरण कमलों की, अयातयाम नवीन यजुर्वेद के मन्त्रों की कामना वाला मैं शरण लेता हूं आप मेरा मनोरथ पूर्ण करें ॥ ७२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं स्तुतः प्रसादितश्च ॥ ७३ ॥

पञ्चदश शाखाः याः शतैरपरिमितैर्यजुर्भिरकरोत् स तैरिति पाठे स एव याज्ञवल्क्यस्तैर्यजुर्भिरकरोदिति जगृहुरधीतवन्तः दक्षिणाऽश्वरूपेण वाजेभ्यः केसरेभ्यो वाजेन वेगेन वा संन्यस्ताश्च ताः शाखा वाजसनीसंज्ञाः शाखा इति वा ॥ ७४ ॥

सामशाखाविभागमाह—जैमिनेरिति । तत्सुतः सुमन्तुसुतः ताभ्यां पुत्रपौत्राभ्यां क्रमेणैकैकां प्राह ॥ ७५ ॥

तच्छिष्यो जैमिनेः शिष्यः महामतिमेधावी सहस्रसंहिता रूपं भेदं चक्रे साम्नां तं संहिताभेदम् ततस्तदनन्तरम् ॥ ७६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमिति स्तुतः प्रसादितश्च हरिराद्विशरीरकः भगवान् वाजिरूपधरोऽश्वरूपधरो मुनये याज्ञवल्क्यायाऽदात् उपदिदेश ॥ ७३ ॥

यजुर्भिरिति विभुर्याज्ञवल्क्यः शतैरपरिमितैर्यजुर्भिर्दशपञ्च-पञ्चदश शाखा अकरोत् स तैरिति पाठे तु स विभुस्तैर्वाजि-रूपेण हरिणा दत्तैर्यजुर्भिरकरोत्ततो वाजिना संन्यस्ताः सम्य-ग्याज्ञवल्क्ये निहिताः शाखास्ततस्ताः काण्वा माध्यन्दिनाश्च जगृहुरधीतवन्तः ॥ ७४ ॥

जैमिनेः साम्नां विभागमाह-जैमिनेरिति । सामगस्य जैमिने मुनेस्तनयः सुमन्तुर्नामासीत्तत्सुतः सुमन्तुसुतः सुन्वांस्ताभ्यां तत्पुत्रपौत्राभ्यां चतुर्वेदस्तमिदं द्वेधा विभज्यैकैकां प्राहे-त्यर्थः ॥ ७५ ॥

तस्य जैमिनेः शिष्यः महान् माहात्म्ययुक्तः सुकर्मा नाम सामवेद एव तरुस्तस्मात्साम्नां सहस्रं संहितानां शाखानां भेदं चक्रे हे द्विज ! ॥ ७६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वाजिरूपधरः अश्वरूपधरः अयातयामानि अगतसाराणि वीर्यवन्तीत्यर्थः ॥ ७३ ॥

वाजसनः सूर्यस्तत आगताः शाखा वाजसन्यः ताः शाखाः काण्वादयो माध्यन्दिनादयश्च ॥ ७४ ॥

साम गायतीति सामगः तस्य जैमिनेस्तनयः सुमन्तुर्नाम तस्य सुमन्तोः सुतः सुन्वान्नाम ताभ्यां सुमन्तुसुन्वद्भ्यां पुत्रपौत्राभ्यां क्रमशएकामेकां प्राह ॥ ७५ ॥

सुकर्मापि तस्य जैमिनेः शिष्यः महामतिप्रज्ञावान् सामवे-दाख्यतरोः साम्नां सहस्रं संहितारूपं भेदं चक्रे ॥ ७६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वाजसन्यस्ता इत्यत्र प्रथमे व्याख्याने "वा पदान्तस्य" इत्यनु-स्वारस्य मकारः व्याख्यान्तरे "समानि च" इति द्विरत्वम ॥ ७४-८० ॥

(१) वाजिसंन्यस्ता इति (२) सुतन्वांस्तत्सुत इति च वीर० पा० सुमन्वानिति विज० पा० (३) द्विजाः ! इति वीर० पा०

हिरण्यनाभः* कौशल्यः* पौष्यञ्जिश्च सुकर्मणः ।
शिष्यौ जगृहतुश्चान्य आवन्त्यो ब्रह्मवित्तमः ॥ ७७ ॥
उदीच्याः सामगाः शिष्या आसन्पञ्च शतानि वै ।
पौष्यञ्ज्यावन्त्ययोश्चापि[1] तांश्च प्राच्यान्प्रचक्षते ॥ ७८ ॥
[?]लौगाक्षिर्माङ्गलिः कुल्यः[2] कुशीदः कुक्षिरेव च ।
पौष्यञ्जिशिष्या जगृहुः संहितास्ते शतं शतम् ॥ ७९ ॥
कृतो हिरण्यनाभस्य चतुर्विंशतिसंहिताः ।
शिष्य ऊचे स्वशिष्येभ्यः शेषा आवन्त्य आत्मवान् ॥ ८० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां द्वादशस्कन्धे ब्रह्मोपदेशो नाम
षष्ठोऽध्यायः ॥ ६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पञ्चदश शाखाः शतैरपारिमितैर्यजुर्भिरकरोदिति स तैरिति बन्ह्य पाठे स विभुर्याज्ञवल्क्यस्तैर्यजुर्भिरकरोत् वाजेभ्यः सूर्याश्व-केशरेभ्यः सम्यक् सयन्तीति वाजसन्यः शाखास्ताः काण्वा-द्यो मुनयो जगृहुरधीतवन्तः ॥ ७४ ॥

सामवेदशाखाविभागमाह—जैमिनेरिति । तत्सुनः सुमन्तुसुतः जैमिनिस्ताभ्यां पुत्रपौत्राभ्यां क्रमेणैकैकां प्राह ॥ ७५ ॥

तच्छिष्यः जैमिनेः शिष्यः सामवेदतरोः सामवेदतरुसम्बन्धी तच्छिष्यो महानभूदित्यर्थः । अत एव साम्नामेव संहिताभेदं चक्रे हिरण्यनाभः कौशल्यः कोशलदेशोद्भवः पौष्यञ्जिश्च सुकर्मणः शिष्यौ अन्य आवन्त्यश्च तच्छिष्यः सोऽपि जग्राह ॥ ७६—७७ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स प्रपन्नजनप्रभावो रविः एवं स्तुतः प्रसादितश्च वाजि-रूपधरोऽश्वरूपधरः मुनये याज्ञवल्क्याय यजूंषि प्रदादुप-दिष्टवान् ॥ ७३ ॥

वाजिरूपिणा वाजेभ्यः सम्यक्ताः याज्ञवल्क्यं गूढतया सम्प्रग्राहिताः विभुः पूर्णज्ञानः याज्ञवल्क्योऽपि प्रकटतया शतै-र्बहुभिर्यजुर्भिः दशपञ्च पञ्चदश शाखाः अकरोत् । जगृहुः अधी-तवन्तः ॥ ७४ ॥

सामवेदशाखाविभागमाह—जैमिनेरित्यादिना । तत्सुतः सुम-न्तुसुतः ताभ्यां पुत्रपौत्राभ्याम् ॥ ७५ ॥

तच्छिष्य जैमिनेः शिष्यः सुकर्मा सामवेदतरोः सहस्र संहिता रूपं भेदं चक्र हे द्विजाः ! ततो हेतोः साम्नां महान् विस्तर इति शेषः ॥ ७६ ॥

भाषा टीका ।

सूत उवाच

श्री सूतजी बोले, कि—इस प्रकार याज्ञवल्क्य ने स्तुति से जब सूर्यको प्रसन्न किये, तब सूर्य भगवान् वाजि ( घोड़े ) का रूप धारण कर याज्ञवल्क्य को अयातयाम (ताजे) यजुर्वेद के मन्त्र देते हुए ॥ ७३ ॥

वे याज्ञवल्क्य उन यजुर्मन्त्रों से पांच शाखा करते हुए उन वाजसनी संहिताओं को काण्व और माध्यन्दिनोंने ग्रहण करीं ॥ ७४ ॥

सामगान वाले जैमिनि के पुत्र सुमन्तु मुनि हुए । सुमन्तु के पुत्र सुन्वान् हुए, इन दोनों पुत्र पौत्रों को जैमिनि ने एक २ संहिता पढ़ाई ॥ ७५ ॥

तिस के अनन्तर जैमिनि के महान् शिष्य सुकर्माने साम वेदरूप वृक्ष की सहस्र शाखा, संहिताओं का भेद किया ॥ ७६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

सुकर्मणः शिष्य एकः कौशल्यो हिरण्यनाभः पौष्यञ्जिर्नामै-कस्तौ जगृहतुः आवन्त्यश्चान्यस्तस्यैव शिष्यः सोऽपि जग्राह॥७७॥

पौष्यञ्ज्यावन्त्ययोरपि चकाराद्धिरण्यनाभस्यापि पञ्चशता-नि शिष्या आसन् ते तावतीः शाखा यथायथं जगृहुः तानु-दीच्यान्प्राच्यांश्च प्रचक्षत इत्यर्थः । यथो-क्तं वैष्णवे—

"उदीच्याः सामगाः शिष्यास्तस्य पञ्चशतं स्मृताः ।
हिरण्यनाभात्तावत्यः संहिता यैर्द्विजोत्तमैः ॥

*कौसल्य. * पौष्पिञ्जश्चेति वीर० पा० (१)तांश्चोदीच्यान्(२)कुसीदः इति वीर० विज० पाठ (?) लोकाक्षिर्लौङ्गाक्षिः कल्प इति वीर पाठ ०

श्रीधरस्वामिकृतभावार्थदीपिका ।

गृहीतास्तेऽपि चोच्यन्ते पण्डितैः प्राच्यसामगाः" ।

इति ॥ ७८ ॥

पुनरप्येतेषां त्रयाणां सुकर्मणः शिष्याणां शिष्यान्तरैः शाखाबाहुल्यं दर्शयति-लौगाक्षिरिति द्वाभ्याम् ॥ ७९ ॥

कृतो नाम हिरण्यनाभस्य शिष्यः स्वशिष्येभ्य ऊचे शेषा अन्या अपि याः प्रसिद्धाः शाखास्ता आवन्त्यः स्वशिष्येभ्य ऊच इति ॥ ८० ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

इति श्रीमद्भागवतव्याख्याने द्वादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हिरण्यनाभ इति कौसल्य इति हिरण्यनामविशेषणं पौष्पिञ्जो नामैकः तौ सुकर्मणः शिष्यौ जगृहतुः, तथा आवन्त्यश्चान्यस्तस्यैव शिष्यः सच ब्रह्मवित्तमः सोऽपि जग्राहेत्यर्थः ॥ ७७ ॥

उदीच्या इति पौष्पिञ्ज्यावन्त्ययोश्चापि अपि शब्दाद्धिरण्यनाभस्यापि पञ्चशतानि शिष्या आसन् तांश्चोदीच्यान् सतः कांश्चित् प्राच्यांश्च प्रचक्षत इत्यर्थः यथोक्तं वैष्णवे—

"उदीच्याः सामगाः शिष्यास्तस्य पञ्चशतं स्मृताः ।
हिरण्यनाभश्चावन्त्यः संहिता यैर्द्विजोत्तमैः ॥
गृहीतास्तेपि चोच्यन्ते पण्डितैः प्राच्यसामगाः" ।

इति ॥ ७८ ॥

पुनरप्येतेषां त्रयाणां सुकर्मणः शिष्यान्तरैः शाखाबाहुल्यं दर्शयति-लोकाक्षिरिति द्वाभ्याम् । लोकाक्ष्यादयश्चत्वारः पौष्पिञ्जशिष्याः शतं शतं संहिता जगृहुरित्यर्थः ॥ ७९ ॥

कृतो नाम हिरण्यनाभस्य शिष्यः स च स्वशिष्येभ्यश्चतुर्विंशति-संहिता ऊचे शेषा अन्या अपि याः प्रसिद्धाः शाखास्ता आवन्त्यः स्वशिष्येभ्यः ऊचे ॥ ८० ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कौसल्यः कोसलपुत्रः हिरण्यनाभश्च पौष्पिञ्जिश्च सुकर्मणः शिष्यौ जगृहतु. सामशाखामितिशेषः । अन्य आवन्त्य उदीच्यश्च सामशाखां जगृहतुरिति शेषः । पौष्यञ्ज्यावन्त्ययोश्चाऽपि सामगाः पञ्चशतानि शिष्या आसन् ॥ ७७—७८ ॥

तेषां समुदितानां मतानां नामानीति पौष्यञ्जिशिष्या लौगाक्ष्यादयः नाम्ना शतं शतं संहिता जगृहुः ॥ ७९ ॥

हिरण्यनाभस्य शिष्यः नाम्ना कृतः चतुर्विंशतिसंहिताः स्वशिष्येभ्य ऊचे शेषा अन्याः संहिता आत्मज्ञानवानावन्त्यः स्वशिष्येभ्य ऊचे ॥ ८० ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
षष्ठो ऽध्यायः ॥ ६ ॥
( विजयध्वजतीर्थीयरीत्याऽत्राध्यायो न समाप्यते )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तत्र हिरण्यनाभस्य पञ्चशतानि शिष्या उदीच्या आसन् पौष्यञ्ज्यावन्त्ययोरपि तावन्त एव शिष्यास्तांस्तु प्राच्यान् प्राच्यसामगान् ते च ते च तावतीः शाखा जगृहुः ॥ ७८—७९ ॥

पुनरपि पौष्यञ्जिशिष्या लोकाक्ष्यादयः पञ्च पुनरपि हिरण्यनाभस्य शिष्यः कृतः शेषा अन्या अपि या शाखा प्रसिद्धास्ता अवन्त्यः स्वशिष्येभ्य ऊचे ॥ ८० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
षष्ठोऽध्यायो द्वादशस्य सङ्गतः सङ्गतः सताम् ॥ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तमेव महान्तं विस्तरं दर्शयति-हिरण्यनाभ इत्यादिना । सुकर्मणः हिरण्यनाभः पौष्पिञ्जिश्चेति द्वौ शिष्यौ कौशल्य इति हिरण्यनाभविशेषणं तौ जगृहतुः सामवेदस्यैः शाखा इति शेष. । अन्यो ब्रह्मवित्तमः आवन्त्यः सुकर्मणः शिष्यो जग्राह॥७७॥

पौष्यञ्ज्यावन्त्ययोश्चकाराद्धिरण्यनाभस्य च पञ्चशतानि शिष्याः आसन् ते तावतीः शाखाः यथायथं जगृहुः तानुदीच्यान् सतः कालयोगात् प्राच्यान् प्रचक्षते यथोक्तं वैष्णवे—

"उदीच्याः सामगाः शिष्यास्तस्य पञ्चशतं स्मृताः ।
हिरण्यनाभात्तावन्त्यः संहितास्तैर्द्विजोत्तमैः ॥
गृहीतास्तेऽपि प्रोच्यन्ते पण्डितैः प्राच्यसामगाः" ।

इति ॥ ७८ ॥

पुनरपि सुकर्मणः शिष्याणां त्रयाणां शिष्यान्तरैः शाखाबाहुल्यं दर्शयति-लोकाक्षिरिति द्वाभ्याम् ॥ ७९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

शेषाः अन्याः अपि प्रसिद्धाः आवन्त्याः आशिष्येभ्य ऊचे ॥८०॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षष्ठाऽध्यायार्थप्रकाशः ॥ ६ ॥

---

भाषा टीका।

सुकर्मा के हिरण्यनाभ नामक कौसल्य और पौष्यञ्जि ये दोनों शिष्य तथा वेद पढने में कुशल आवन्त्य एक शिष्य, वे तीनों शिष्य उन संहिताओं को पढ़ते हुए ॥ ७७ ॥

पौष्यञ्जि आवन्त्य और और हिरण्यनाभ के सामगान वाले उदीच्य पांच सौ५००शिष्य हुए, उन्हों ने इन संहिताओं को पढ़ा। फिर उन्ही उदीच्य शिष्यों को प्राच्यभी कहने लगे ॥ ७८ ॥

लौगाक्षि माङ्गलि कुल्य कुसीद कुक्षि ये पौष्पञ्जि के पांचो शिष्य सौ सौ संहिता ग्रहण करते हुए ॥ ७९ ॥

हिरण्यनाभ का कृत नामक शिष्य चौबीस संहिताओं को अपने शिष्यों को पढ़ाता हुआ। शेष संहिताओं को वशीकृतमनवाले आवन्त्य ने अर्थात् अवंती पुरी के रहनेवाले शिष्य ने अपने शिष्यों को पढ़ाई ॥ ८० ॥

इति श्रीमद्भागवत महापुराण द्वादशस्कन्ध में षष्ठ अध्याय की
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्त ॥ ६ ॥

---

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे षष्ठोऽध्यायः समाप्तः ॥ ६ ॥



## सप्तमोऽध्यायः ।

सूत उवाच ।

अथर्ववित्सुमन्तुश्च शिष्यमध्यापयत्[1] स्वकाम् ।
संहितां सोऽपि पथ्याय वेददर्शाय चोक्तवान् ॥ १ ॥
शौक्लायनिर्ब्रह्मबलिर्मोदोषः पिप्पलायनिः ।
वेददर्शस्य शिष्यास्ते पथ्यशिष्यानथो शृणु ।
कुमुदः शुनको ब्रह्मन् ! जाजलिश्चाप्यथर्ववित् ॥ २ ॥
बभ्रुः शिष्योऽथाङ्गिरसः सैन्धवायन एव च ।
अधीयेतां संहिते द्वे सावर्ण्याद्यास्तथाऽपरे ॥ ३ ॥
नक्षत्रकल्पः शान्तिश्च कश्यपाङ्गिरसादयः ।
एते आथर्वणाचार्याः शृणु पौराणिकान्मुने ! ॥ ४ ॥
त्रय्यारुणिः कश्यपश्च सावर्णिरकृतव्रणः ।
[2]वैशम्पायनहारीतौ षड्वै पौराणिका इमे ॥ ५ ॥
अधीयन्त व्यासशिष्यात् संहितां मत्पितुर्मुखात् ।
एकैकामहमेतेषां शिष्यः सर्वाः समध्यगाम् ॥ ६ ॥
कश्यपोऽहं च सावर्णी रामशिष्योऽकृतव्रणः ।
अधीमहि व्यास[3]शिष्याच्चतस्रो मूलसंहिताः ॥ ७ ॥
पुराणलक्षणं ब्रह्मन् ! ब्रह्मर्षिभिर्निरूपितम् ।
शृणुष्व बुद्धिमाश्रित्य वेदशास्त्रानुसारतः ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सप्तमेऽथर्वविस्तारः पुराणाख्यसमं ततः ।
पुराणलक्षणादीनि फलं भागवतश्रुतेः ॥

क्रमप्राप्तमथर्ववेदविभागमाह—अथर्वविदिति । शिष्यं कबन्धनामानं स्वकां स्वकीयां संहितां सोऽपि शिष्योऽपि तां द्विधा विभज्य तदुक्तं वैष्णवे—

"अथर्ववेदं स मुनिः सुमन्तुरमितद्युतिः ।
शिष्यमध्यापयामास कबन्धं सोऽपि च द्विधा ॥
कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवान्" ।

इति ॥ १ ॥

तत्र वेददर्शः स्वसंहितां चतुर्धा विभज्य चतुरः शिष्यानध्यापयामास पथ्यश्च त्रिधा विभज्य त्रीनित्याह—शौक्लेति शौक्लायनिरिति ॥ २ ॥

आङ्गिरसः शुनकस्य शिष्यो बभ्रुः सैन्धवायनश्च तदुक्तम्—

"शुनकस्तु द्विधा कृत्वा ददावेकां तु बभ्रवे ।
द्वितीयां संहितां प्रादात्सैन्धवायनसंज्ञिने" ॥

इति । सावर्ण्याद्याः सैन्धवायनादीनां शिष्याः ॥ ३ ॥

नक्षत्रकल्पः शान्तिकल्पश्चेति द्वौ तदुक्तम्—

"नक्षत्रकल्पो वेदानां संहितानां तथैव च ।
चतुर्थः स्यादाङ्गिरसः शान्तिकल्पश्च पञ्चमः" ॥

(१) स्विकामिति वीर० पा०। (२) शिंशपायनहारीताविति विज० पा०। (३) पुत्रादिति वीर० विज० पा०।

श्रीधरस्वामिकृतभावार्थदीपिका ।

इति । नक्षत्रकल्पादीनां कर्तारस्तत्तन्नामाभिरुच्यन्ते ॥ ४—५ ॥

मत्पितुर्मुखादिति प्रथमं व्यासः षट्संहिताः कृत्वा मत्पित्रे रोमहर्षणाय प्रादात् तस्य च मुखादेते त्रय्यारुण्यादय एकैकां संहितामधीयन्त एतेषां चयाणां शिष्योऽहं ताः सर्वाः समधीतवान् ॥ ६ ॥

रामशिष्यो योऽकृतव्रण एवं चत्वारो वयम् मूलसंहिता इत्यनेन ततः संहिता बाहुल्यं सूचितम् ॥ ७ ॥

शुकपरीक्षित्संवादे निरूपितमपि पुराणलक्षणं तद्भेदकथनाय दर्शयति, पुराणेति ॥ ८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—१० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ क्रमप्राप्तमथर्ववेदविभाग माह—अथर्वविदित्यादिना । शिष्यं कबन्धनामानं स्विकां संहितामध्यापयत्सोऽपि शिष्योऽपि तां द्विधा विभज्य तदुक्तं वैष्णवे—

"अथर्ववेदं स मुनिः सुमन्तुरमितद्युतिः ।
शिष्यमध्यापयामास कबन्धं सोऽपि च द्विधा ॥
कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवान्" ॥

इति ॥ १ ॥

स्वसंहितां चतुर्धा विभज्य शौक्लायन्यादींश्चतुरोऽध्यापयामास पथ्यस्तु त्रिधा विभज्य त्रीनित्याह—सार्धेन, शौक्लायनिरिति । हे ब्रह्मन् ! ॥ २ ॥

तत्र शुनकेन द्विधा विभक्तां स्वसंहितां ततो बभ्रुः सैन्धवायनावधीतवन्तौ इत्याह—बभ्रुरिति । बभ्रुः सैन्धवायनश्चाङ्गिरसगोत्रप्रभवः शौनकशिष्याविव्यर्थः । सावर्ण्याद्याः सैन्धवायनबभ्र्वोः शिष्याः ॥ ३ ॥

आद्यशब्दविवक्षितानाह—नक्षत्रकल्प इति । नक्षत्रकल्पः शान्तिश्च नक्षत्रकल्पः शान्तिकल्पश्चेति द्वौ तदुक्तं "नक्षत्रकल्पो वेदश्च शान्तिकल्पस्तथैव च" इति काश्यपाः कश्यपगोत्रोद्भवाः आङ्गिरसाः तद्गोत्रोद्भवाः एते नक्षत्रकल्पादीनां कर्तृत्वात्तत्तन्नामभिरुच्यन्ते ते आथर्वणाचार्या अथर्ववेदशाखाविभागजननेन तत्प्रवर्तका इत्यर्थः । इत्थं वेदसंहिताविभागमभिधायाथ पुराणसंहिताप्रपञ्चशुश्रूषमाणस्य तावत्तत्प्रवर्तकान् श्रोतुं प्रचोदयति—शृणु पौराणिकान्मुने इति । हे मुने ! ॥ ४ ॥

के पुनस्ते इत्यत्राह—त्रय्यारुणिरिति । त्रय्यारुण्यादय इमे षट् मत्पितुर्मुखादेकैकां संहितां पुराणसंहितामधीयन्त मत्पितुर्मुखादित्यनेन भगवद्बादरायणः षट् संहिता रोमहर्षणाय प्रोवाच तस्मादेते षडध्यैषत इति सूच्यते महन्तु एतेषां चयाणां शिष्यो भूत्वा सर्वाः षडपि संहिता अध्यगामधीतवानस्मि ॥ ५ ॥ ६ ॥

किञ्च, काश्यप इति रामस्य भार्गवस्य शिष्यो योऽकृतव्रणाः न एते चत्वारो वयं व्यासपुत्रात् श्रीशुकाच्चतस्रो मूलसंहिता अधिमहि ॥ ७ ॥

अधीमहि मूलसंहिता इत्यनेन पुराणसंहिताबाहुल्यं सूच्यते तदग्रे स्पष्टीकरिष्यन् तावत् शुकपरीक्षित्संवादानिरूपितमपि पुराणलक्षणं तद्भेदकथनाय दर्शयति, पुराणेत्यादिना । वेदव्यासानुसारेण निरूपितं पुराणलक्षणं बुद्धिमाभिश्च शृणु अवहितमनाः शृणु इत्यर्थः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सोऽपि सुमन्तोः शिष्योऽपि पथ्याय ॥ १ ॥

कुमुदादयः पथ्यशिष्याः ॥ २ ॥

बभ्रुसैन्धवायनौ पथ्यशिष्यस्य आङ्गिरसोऽङ्गिरोगोत्रे विद्यमानस्य शुनकस्य शिष्यौ अधीयेताम् अधीतवन्तौ—

"शुनकस्तु द्विधा कृत्वा ददावेकान्तु बभ्रवे ।
द्वितीयां संहितां प्रादात्सैन्धवायनसञ्ज्ञिने" ॥

इति । सावर्ण्याद्याश्च सैन्धवायनादीनां शिष्याः ॥ ३ ॥

आथर्वणाचार्याः अथर्ववेदाचार्याः पाठतोऽर्थतश्चाथर्ववेदप्रवर्तका इत्यर्थः । पौराणिकान् पुराणाचार्यान् ॥ ४–५ ॥

मत्पितुर्मुखात्पुराणसंहितामधीयन्त त्रय्यारुण्यादयः कथम् एकैकामधीतवन्तः त्वन्तु कथं सर्वानधीतवानिति ? तत्राह, अहमिति । अहमेतेषां शिष्यः सर्वां पुराणसंहितामपठम् ॥ ६ ॥

व्यासपुत्राच्छ्रीशुकात् ॥ ७ ॥

प्रसङ्गात्पुराणलक्षणं वक्तुं प्रतिजानीते, पुराणेति ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

१—३ ॥

पञ्चमवेदस्य विभागज्ञापनार्थमाह—शृणु पौराणिकानिति ॥ ४ ॥ ५ ॥

एकैकामिति त्रिभिस्त्रिभिर्मिलित्वैकत्वं त्रिषडिति वक्ष्यमाणात् तत्र ब्राह्मं पाद्मं वैष्णवमिति मिलित्वैकत्वादिक्रमात् अवान्तरसंहिता तु कचिदेका यथा श्रीभागवतस्य परमहंससंहितात्वं कचिदेकैकस्यैव विभागशः यथा स्कान्दस्य सनत्कुमारप्रोक्तसंहितानामादिका श्रीशुकात्तु श्रीभागवतस्य पश्चात्प्राप्तिः सूर्यादेव यजुर्भागस्य वाजसनेयस्य ज्ञेयम् ॥ ६ ॥

मूलसंहिता इति तिस्रितिहासविशेषापेक्षया ज्ञेयम् बहूनामन्येषाम् इतिहासानां मूलत्वात् मूलम् इदं च परिशेषण लक्ष्यते "इतिहासपुराणानां पिता मे रोमहर्षणः" इत्युक्तेः ते च महाभारताद्याः शृणु पौराणिकानिति तूपलक्षणतयोक्तम् ॥ ७ ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सप्तमेऽथर्वणो व्यासं पुराणस्य च तस्य च ।
लक्षणानि दश प्रोच्य तत्य सङ्ख्या च कथ्यते ॥

शिष्यं विष्णुपुराणोक्तं कबन्धसञ्ज्ञम् ॥ १–२ ॥

आङ्गिरसः शुनकस्य शिष्यो बभ्रुः सावर्ण्याद्याः सैन्धवायनादीनां शिष्याः ॥ ३—५ ॥

मत्पितुः रोमहर्षणस्य एतेषां चयाणामप्यहं शिष्यः ॥ ६–७ ॥

**[1]सर्गोऽस्याथ विसर्गश्च वृत्तिरक्षान्तराणि च ।**
**वंशो वंश्यानुचरितं संस्था हेतुरपाश्रयः ॥ ९ ॥**
**दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः ।**
**केचित्पञ्चविधं ब्रह्मन् ! महदल्पव्यवस्थया ॥ १० ॥**

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

व्यासशिष्यात् लोमहर्षणात् ब्रह्मर्षिभिः श्रीशुकचरणोरुपक्रमे यदुक्तं प्रायेण तदेवोपसंहारेऽप्युच्यते ॥ ८—९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सप्तमे क्रमप्राप्तमथर्ववेदविभागं पुराणविभागं तल्लक्षणादिकं चाह—अथर्वविदित्यादिना । सुमन्तुः स्वकां स्वकीयां संहितां शिष्यं कबन्धमध्यापयत् सोऽपि कबन्धोऽपि तां द्विधा विभज्य पथ्याय वेददर्शाय चोक्तवान् तथोक्तं विष्णुपुराणे-

"अथर्ववेदं सुमतिः सुमन्तुरमितद्युतिः ।
शिष्यमध्यापयामास कबन्धं सोऽपि तं द्विधा ॥
कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवान्" ।

इति ॥ १ ॥

तत्र वेददर्शः संहितां चतुर्धा विभज्य शौक्लायन्यादीन् पथ्यस्तु त्रिधा विभज्य कुमुदादीन् अध्यापयामासेत्याह-शौक्लायनिरिति सार्द्धेन ॥ २ ॥

आङ्गिरसः शुनकस्य शिष्यः तदुक्तम्—

"शुनकस्तु द्विधा कृत्वा ददावेकां तु बभ्रवे ।
द्वितीयां संहितां प्रदात्सैन्धवायनसञ्ज्ञिने" ॥

इति । सावर्ण्याद्याः सैन्धवायनादिशिष्याः ॥ ३ ॥

आदिशब्देन निर्दिष्टान् स्फुटतया दर्शयति—नक्षत्रकल्प इति ॥ ४—५ ॥

मत्पितुः रोमहर्षणस्य अहं तु एषां षण्णां शिष्यः सर्वाः षडपि संहिताः अध्यगाम् अधीतवान् ॥ ६ ॥

व्यासशिष्यात् रोमहर्षणादेव एतेन संहिताबाहुल्यं सूचितम्॥७॥

"अत्र सर्गो विसर्गश्च स्थानपोषणमूतयः ।
मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः" ॥

इत्यनेन द्वितीयस्कन्धे श्रीशुकपरीक्षित्संवादे निरूपितमपि पुराणलक्षणं तद्भेदकथनाय पुनरपि निरूपयति—पुराणलक्षणमिति ॥ ८ ॥

---

भाषा टीका ।

सूत उवाच ।

सूतजी बोले, कि—अथर्व के वेत्ता सुमंतु ऋषि अपने शिष्य कबन्ध को अपनी संहिता पढाते हुये, और वे कबन्ध भी अपने शिष्य पथ्य और वेददर्श को विभाग करके संहिता को पढाते हुये ॥ १ ॥

वेददर्श के शौक्लायनि, ब्रह्मबलि, मोदोष, और पिप्पलायनि, ये चार शिष्य हुए, अर्थात् इन चारों शिष्यों को वेददर्श ने विभाग कर अपनी संहिता पढाई । हे ब्रह्मन् ! अब पथ्य के शिष्यों को सुनो कुमुद शुनक और जाजलि ये तीनो पथ्य के शिष्य अथर्व वेत्ता हुए ॥ २ ॥

शुनक के शिष्य आंगिरस बभ्रु और सैन्धवायन दो हुए उन्होंने दो संहिताओं का अध्ययन किया । और इसी प्रकार सावर्णि प्रभृति और बहुत से सैन्धवायनादि को के शिष्य हुए ॥ ३ ॥

नक्षत्रकल्प और शांतिकल्प के करने वाले इन्हीं नामों से विख्यात कश्यप आंगिरस प्रभृति और भी हुए, ये सब अथर्वण वेद के आचार्य हुए, हे शौनक ! अब तुम पौराणिकों का श्रवण करो ॥ ४ ॥

त्रय्यारुणि, कश्यप, सावर्णि, अकृतव्रण, वैशंपायन, और हारीत, ये छै पौराणिक हुए ॥ ५ ॥

इन छहोंने व्यासजी के शिष्य मेरे पिता रोमहर्षण के मुख से एक २ संहिता का अध्ययन किया, और इन छहों का शिष्य मैं हुआ, मैंने इन्हों से सब ६ संहिताओं का अध्ययन किया है ॥ ६ ॥

कश्यप और मैं तथा सावर्णि और परशुरामजी का शिष्य-अकृतव्रण हम इन चारों ने व्यासजी के शिष्य हमारे पिता के अथवा शुकदेवजी के समीप से चार मूल संहिताओं का अध्ययन किया ॥ ७ ॥

हे ब्रह्मन् ! शुकपरीक्षित के सम्वाद में पुराण का लक्षण ब्रह्मर्षि श्रीशुकदेवजी ने निरूपण किया है । अब तुम बुद्धि का आश्रय लेकर वेद शास्त्र के अनुसार पुराण का लक्षण सुनो ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अस्य [illegible]

"[illegible] सर्गो विसर्गश्च स्थानं पोषणमूतयः ।
मन्व[illegible]शानुकथा निरोधो मुक्तिराश्रयः" ॥

इत्यत्रोक्तं स्थानपोषणे वृत्तिरक्षाशब्दाभ्यामुक्तेन मन्वन्तराणि सद्धर्माणि [illegible]नुचरितमितीशानुकथाः संस्था निरोधः मनोनैवाऽस्वा[illegible] मुक्तिरप्युक्ता । हेतुशब्देन जीवाश्रय-नामनाशऽ[illegible] गृहीताः ॥ ९ ॥

दशभिर्लक्षणैर्युक्तं महापुराणं विदुः केचित्पञ्चविधम्,

(१) सर्गश्चैव विसर्गश्चेति विज० पा० ।

अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः ।
(१)भूतमात्रेन्द्रियार्थानां सम्भवः सर्ग उच्यते ॥ ११ ॥
पुरुषानुगृहीतानामेतेषां वासनामयः ।
* विसर्गोऽयं समाहारो(२) बीजाद्बीजं चराचरम् ॥ १२ ॥

**श्रीधरस्वामिकृतभावार्थदीपिका ।**

"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चेति पुराणं पञ्चलक्षणम्" ॥
इति महत्पुराणमल्पं चेति व्यवस्थया यत्र दशापि लक्षणानि (पृथक्) पृथग्निरूप्यन्ते तन्महापुराणम् यत्र त्वन्येषां पञ्चस्वेवान्तर्भावस्य विवक्षा तदल्पमिति व्यवस्थयेत्यर्थः ॥ ॥ १० ॥

सर्गादिलक्षणानि व्याचष्टे—अव्याकृतेत्यादिना । अव्याकृतस्य प्रधानस्य गुणानां क्षोभाद्यो महांस्तस्मात्त्रिवृदहङ्कारस्तस्माद्भूतमात्राणां सूक्ष्माणामिन्द्रियाणां च तदर्थानां च स्थूलानां देवतानां च सम्भवः सर्गः कारणसृष्टिः सर्ग इत्यर्थः । उच्यत इति यथाऽपेक्षमुत्तरत्राप्यनुषङ्गः ॥ ११ ॥

विसर्गं व्याचष्टे—पुरुषेणेश्वरेणानुगृहीतानामेतेषां महदादीनाम् पूर्वकर्मवासनाप्रधानोऽयं समाहारः कार्यभूतश्चराचरप्राणिरूपो बीजाद्बीजमिव प्रवाहापन्नो विसर्ग उच्यत इत्यर्थः ॥१२॥

---

**श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।**

अव्याकृतगुणक्षोभात् मूलप्रकृतेर्गुणक्षोभात् अहमः अहङ्कारस्य ॥ ११ ॥

विसर्गोऽयमिति तत्त्वसमुदायात्मकं बीजात् बीजकारणात् कारणरूपेण सन्तन्यमानं स्थावरजङ्गमात्मकं च यत्कार्यजातं स विसर्ग इत्यर्थः ॥ १२ ॥

---

**श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।**

किन्तदित्यत्राह—सर्गश्चेति द्वाभिः । सर्गादिभिर्लक्षणैर्युक्तं तदेव पुराणमिति तद्विदः पुराणलक्षणविदः विदुः अत्र स्थानपोषणे वृत्तिरक्षाशब्दाभ्यामुच्येते अन्तराणि मन्वन्तराणि वंशो वंश्यानुचरितं च संस्था निरोधः अनेनैवात्यन्तिकप्रलयरूपा मुक्तिरप्युक्ता हेतुशब्देनोतयः पृथग्गृहीताः कचिदिति हे ब्रह्मन् ! महदल्पव्यवस्थया कचित्पञ्चविधञ्च लक्षणम्, महापुराणस्योक्तानि दशलक्षणानि अल्पपुराणन्तु—
"सर्गश्च प्रतिसर्गश्च वंशोमन्वन्तराणि च ।
वंश्यानुचरितञ्चैव पुराणं पञ्चलक्षणम्" ॥
इत्युक्तविधमित्यर्थः ॥ ९ ॥ १० ॥

क्रमेण सर्गादीनां स्वरूपं निरूपयति, अव्याकृतेत्यादिना । अव्याकृतस्य मूलप्रकृतेर्गुणानां सत्त्वरजस्तमसां क्षोभाद्यो महान् गुणत्रयपरिणामरूपः तस्मादहङ्कारः तथाभूतः तस्माच्च भूतानामाकाशादीनां तत्सूक्ष्माणां शब्दादीनां इन्द्रियाणां चेतयानां वस्तूनां सम्भवः स सर्ग इत्युच्यते ॥ ११ ॥

विसर्गं निरूपयति—पुरुषानुगृहीतानामिति । पुरुषेण परमपुरुषेणानुगृहीतानामाहितसृष्टिसामर्थ्यानाम् एतेषां महदादितत्त्वानां यः समाहारः सङ्घातपरिणामः स विसर्गः । इत्यर्थः कोऽसौ समाहारः इत्यतस्तं दर्शयति, चराचरात्मकमिति । चराचरात्मकं जगदेव तत्समाहारः इत्यर्थः । तत्र दृष्टान्तः बीजाद्बीजमिति । कारणबीजात् कार्यबीजमिव कारणादव्याकृतान्महदादिक्रमेण चराचरात्मकं यत्कार्यजातं स विसर्ग इत्यर्थः । विसर्गस्य जीवकर्मवासनाप्रयुक्तत्वात् वासनामयत्वम् ॥ १२ ॥

---

**श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।**

वृत्तिश्च रक्षा च अन्तराणि च वृत्तिरक्षाऽन्तराणि ॥ ९ ।

पुराणस्य महदल्पव्यवस्थया कचित्स्थले पञ्चविधं पञ्चलक्षणप्रकारोपेतम् ॥ १० ॥

तत्र सर्गादिकं क्रमेण लक्षयति—अव्याकृतेति । अव्याकृतगुणक्षोभात्प्रकृतिगुणानामन्योन्यसंयोगलक्षणक्षोभजान्महतः महत्तत्त्वस्य वैकारिकादिभेदेन त्रिवृतोऽहमः अहङ्कारस्य भूतसूक्ष्मेन्द्रियार्थानां पञ्चभूतसूक्ष्मेन्द्रियविषयाणां सम्भवो जन्मभूतमात्रेन्द्रियार्थधियां जन्मेत्यधस्तादुक्तम् ॥ ११

पुरुषेण भगवतानुगृहीतानामनुप्रवेशलक्षणानुग्रहवतामेतेषां तत्त्वानां सकाशाद्वासनामयो यः समाहारस्तत्तत्कर्मवासनानुसृतिः सृष्टिः सविसर्गो जीवः अजीवश्च चेतनाचेतनलक्षणः चराचरः चराचरात्मको ब्रह्माण्डसर्गः "ब्रह्मणो गुणवैषम्याद्विसर्गः पौरुषः स्मृतः" इति ॥ १२ ॥

---

**श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।**

सर्गोऽस्येत्यादिकं द्वितीयस्कन्ध एव व्याख्यातम् ॥ ९—१५॥

---

**श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।**

कचित् पञ्चविधमिति—
"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चेति पुराणं पञ्चलक्षणम्" ॥
इति । महत् अल्पं चेति व्यवस्थया यत्र दशापि लक्षणानि पृथङ् निरूप्यन्ते तन्महापुराणं यत्र त्वन्येषां पञ्चस्वेवान्तर्भावो विवक्षितस्तदल्पमिति व्यवस्थयेत्यर्थः ॥ १० ॥

( १ ) भूतसूक्ष्मेन्द्रियार्थानामिति * विसर्गो य इति च वीर० विज० पा० । ( २ ) जीवोऽजीवश्चराचर इति विज० पा० ।

वृत्तिर्भूतानि भूतानां चराणामचराणि च ।
[1]कृतास्तेन नृणां तत्र कामाच्चोदनयाऽपि वा ॥ १३ ॥
रक्षाऽच्युतावतारेहा विश्वस्यानुयुगे युगे ।
तिर्यङ्मर्त्यर्षिदेवेषु हन्यन्ते यैस्त्रयीद्विषः ॥ १४ ॥
मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वराः ।
ऋषयोंऽशावतारश्च हरेः षड्विधमुच्यते ॥ १५ ॥
राज्ञां [2]ब्रह्मप्रसूतानां वंशस्त्रैकालिकोऽन्वयः ।
[3]वंशानुचरितं तेषां वृत्तं वंशधराश्च ये ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तत्र सर्गं व्याचष्टे—अव्याकृतस्य प्रधानस्य गुणानां क्षोभात् यो महान् तस्मात् यस्त्रिवृदहङ्कारस्तस्मात् भूतमात्रादीनां सम्भवः सर्गः अत्रार्थशब्देन देवताः ज्ञेयाः कारणसृष्टिः सर्ग इत्यर्थः । उच्यत इति यथापेक्षमुत्तरत्राप्यनुषङ्गः ॥ ११ ॥

विसर्गं व्याचष्टे, पुरुषेणेश्वरेणानुगृहीतानामेतेषां यः समाहारः कार्यभूतः समष्टिव्यष्टिजीवोपाधिरूपः, कीदृशः ? वासनामयः सदसद्वासनाप्रधानः स विसर्गः तत्र चराचरं जङ्गमस्थावरात्मकं जगदिदं बीजाद्बीजमिव प्रवाहापन्नं भवति ऊतयः कर्मवासनाः इति पूर्वव्याख्याता या ऊतिः सात्र विसर्गे एवान्तर्भाविता ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अस्य विश्वस्य सर्गः ॥ १ ॥ विसर्गः ॥ २ ॥ वृत्तिर्वृत्तिः ॥ ३ ॥ रक्षापोषणलक्षणा ॥ ४ ॥ अन्तराणि मन्वन्तराणि ॥ ५ ॥ वंशो वंश्यानुचरितमीशानुकथा ॥ ६ ॥ संस्था निरोधः ॥ ७ ॥ संस्थाशब्देनात्यन्तिकप्रलयरूपा मुक्तिरप्युक्ता ॥ ८ ॥ हेतुशब्देन जीवाश्रयवासनाशब्दवाच्या ऊतयो गृहीताः ॥ ९ ॥ अपाश्रयो ब्रह्म ॥ १० ॥ ९ ॥

एतैर्दशभिः सर्गादिभिर्लक्षणैर्युक्तं तद्विदः पुराणलक्षणविदः पुराणं विदुः केचित्तु—

"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंश्यानुचरितं चेति पुराणं पञ्चलक्षणम् ॥"

इति पञ्चविधं पुराणं विदुः एतदुभयं महदल्पविवक्षया बोध्यं दशलक्षणयुक्तं महापुराणं यत्र तु पञ्चस्वेवान्येषां यथायथमन्तर्भावस्तत्पञ्चलक्षणयुक्तमल्पपुराणमित्यर्थः ॥ १० ॥

सर्गं विवृणोति-अव्याकृतेति । अव्याकृतस्य भगवच्छक्तेः प्रकृतेर्गुणक्षोभात् त्रिवृत् महान् महतः त्रिवृदहं त्रिवृतोऽहमः भूतसूक्ष्मेन्द्रियरूपाणाम् आकाशादिभूतानां सूक्ष्माणां तन्मात्राणामेकादशेन्द्रियाणां च अर्थानां पदार्थानां सम्भवः सर्गः उच्यते ॥ ११ ॥

विसर्गं विवृणोति-पुरुषानुगृहीतानामिति । पुरुषेण परमेश्वरेण अनुगृहीतानां तत्प्रसादाल्लब्धसृष्टिसामर्थ्यानामेतेषाम् जीवानां वासनामयः पूर्वकर्मवासनाप्रधानः अयं समाहारः कार्यभूतः चराचरं जङ्गमाजङ्गमरूपः बीजाद्बीजमिव प्रवाहरूपो विसर्गो ज्ञेयः ॥ १२ ॥

भाषा टीका ।

सर्ग विसर्ग वृत्ति रक्षा मन्वन्तर वंश वंश्यानुचरित संस्था हेतु और आश्रय ॥ ९ ॥

इन दश लक्षणों से युक्त जो होवे पुराणवेत्ता लोग उसको पुराण कहते हैं । हे महान् ! कोई महर्षि लोग कहते हैं, कि—जो दश लक्षण युक्त होवे वह महापुराण है और जो पंच लक्षण युक्त है वह अल्प पुराण है, इस व्यवस्था से कहते हैं ॥ १० ॥

प्रकृति के गुणों के क्षोभ होने से महत्तत्त्व उत्पन्न हुआ तिस से त्रिवृत जो अहंकार उत्पन्न हुआ तिस त्रिगुण विशिष्ट त्रिविध अहंकार से भूतों की सूक्ष्मावस्था तन्मात्रा और पञ्चभूत तथा इन्द्रिय और देवता इन कारणों की सृष्टिका नाम सर्ग है ॥ ११ ॥

ईश्वरसे अनुगृहीत महदादि कों का वासनामय अर्थात् पूर्व कर्म प्रधान जैसे बीजसे बीज उत्पन्न होता है इस प्रकार प्रवाह को प्राप्त होनेवाली कार्यभूतचराचर प्राणियों की सृष्टि का नाम विसर्ग है ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

चराणां भूतानां सामान्यतोऽचराणि चकाराच्चराणि च [कामात्] वृत्तिः तत्र नृणां तेन स्वभावेन कामाच्चोदनयाऽपि वा या नियता वृत्तिर्जीविका कृता सा वृत्तिरुच्यत इत्यर्थः ॥ १३ ॥

तिर्यङ्मर्त्यर्षिदेवेषु येऽच्युतावतारास्तेषामीहा लीला सा विश्वस्य रक्षोच्यत इत्यर्थः । यैरवतारैरिति समासान्निष्कृष्य कथंचित्सम्बन्धः त्रयीद्विषो दैत्याः ॥ १४ ॥

षड्विधं मन्वन्तरमुच्यते ; षड्विधत्वमेवाह-मनुरिति । मन्वादयः षडेते यदा स्वस्वाधिकारेण यदा प्रवर्तन्ते तन्मन्वन्तरमित्यर्थः ॥ १५ ॥

( १ ) कृतेश्चेनेति ( २ ) मनुप्रसूतानामिति भिज० पा० ( ३ ) वंश्यानुचरितमिति पा० ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

वंशमाह—राज्ञामिति । ब्रह्मणः सकाशात्प्रसूतिर्येषां शुद्धाना-मित्यर्थः । तेषामन्वयो वंशः [ तत्र भवा वंश्याः ] तेषां वृत्तम् वं च तद्वंशधरास्तेषां च वृत्तं वंशा [ श्या ] नुचरितम् उच्यते ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वृत्तिरिति । चराणां भूतानाम् अचराणि भूतानि वृत्तिर्जीवनो-पाय इत्यर्थः । कृतेति सा च वृत्तिः केवलं रागप्राप्ता शास्त्राविरुद्धा चेत्यर्थः ॥ १३ ॥

अवतारेहा अवतारचेष्टा यैः अवतारैः ॥ १४ ॥

मन्वन्तरमेव मन्वादिभिः षड्विध वंशधराः पुत्रपौत्रादयः ॥ १५—१८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वृत्तिं निरूपयति——वृत्तिरिति । चराणां भूताना-मचराणि भूतानि वृत्तिर्जीवनोपाय इत्यर्थः । साधर्शनेश्वरेण कृता सा च नृणां कामाद्रागात्तत्रापि चोदनया विधिना न केवलं रागप्राप्ता शास्त्राविरुद्धा चेत्यर्थः । कृताश्चेनेतिपाठे स्वेने-श्वरेणैव कृतेत्यर्थः ॥ १३ ॥

अथ रक्षामाह—प्रतियुगं तिर्यगादिष्वच्युतस्यावतारस्तच्चेष्टा विश्वस्य रक्षेत्यर्थः । अवतारचेष्टितानां विश्वरक्षारूपत्वं दर्शयति, हन्यन्त इति । यैरवतारचेष्टितैस्त्रयीद्विषः वैदिकधर्म-विरोधिनः हन्यन्ते ॥ १४ ॥

अन्तराणि लक्षयति, मन्वन्तरमिति । षड्विधं मन्वन्तरमुच्यते इति सम्बन्धः मन्वादयः षड्ते यत्र तन्मन्वन्तरम् उच्यतेत्यर्थः । षड्विधत्वमेवाह, मनुरिति । हरेरंशावतारास्चेति सम्बन्धः सुरेश्वरा इन्द्राः ॥ १५ ॥

वंशमाह—राज्ञामित्यर्द्धेन । मनोः प्रसूतानां राज्ञां यः त्रैका-लिकः कालत्रयगोचरोऽन्वयः स वंशः इत्यर्थः । तदनुचरित-मेवाह, वंशानुचरितमिति । ये च वंशधराः वंशनिर्वाहकाः तेषां वृत्त वंशानुचरितम उच्यत इत्यर्थः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पञ्चानां भूतानां पञ्चभूतान्येवान्योन्यं वृत्तिर्जीवनमन्नमित्यर्थः । तेजोवृत्तिः पार्थिवानि दारूणीत्यादि । यद्वा, भूतानां पिशाचानां भूतानि मनुष्यलोकस्थानि शरीररुधिराणि "पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः" इत्यमरः । चराणां गतिमताम् अचराणि स्थावरतुल्यानि व्रीह्यादीनि वृत्तिः ईशेन हरिणा कृता कल्पिता

"अहस्तानि सहस्तानां अहस्तानि चतुष्पदाम् ।
अगूनि तात ! महतां जीवो जीवस्य जीवनम्" ॥

इत्युक्तम् । तत्र स्थितिर्नृणां वृत्तिः कामादिच्छातः फलमूलादीनि चोदनया विधिना तत्तत्क्रियानुसारेण विहिता चरुपुरोडा-शादिलक्षणा ॥ १३ ॥

युगेयुगे विश्वस्य अनुयोग्या अच्युतावतारेहा हरेरवता-रेण चेष्टापरिरक्षणं रक्षा "यदा यदा हि धर्मस्य" इति गीतायां कुर्वन्ति तत्राह—तिर्यगिति । यैरवतारैस्त्रयीद्विषः वेदवैरिणोऽसुरा हन्यन्ते तेषां चरितवर्णनं रक्षणमित्यर्थः । "स्थितिर्वैकुण्ठविजयः" इति पोषणं तदनुग्रह इति च ॥ १४ ॥

एतन्मन्वन्तरं षड्विधमुच्यते षण्णां कथाकथनं मन्वन्तर-मित्यर्थः । तत्रांशकानामिति शेषः । मन्वन्तरेषु सद्धर्मा इति मन्वादिधर्मकथनमित्यर्थः ॥ १५ ॥

मनुप्रसूतानां राज्ञामन्वयो वंश इत्युच्यते कीदृशस्त्रैकालिको भूतभविष्यद्वर्तमानविषयः एतत्कथनमत्रेति वंशस्यानुचरित नाम तेषां राज्ञां वृत्तिकथनं ये वंशधरा तत्सम्बंधे भूपवन्त-स्तेषां च वृत्तम् ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ब्रह्मप्रसूतानां ब्रह्मन आरभ्यानामित्यर्थः ॥ १६॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पूर्वोक्तं स्थानं पालनमेवात्र वृत्तिशब्देनोच्यते तां व्याचष्टे-वृत्तिरिति । चराणां भूतानां सामान्यतोऽचराणि चकारा-च्चराणि च कामाद्वृत्तिः तत्र नृणां स्वेन स्वभावेन कामात् चोदनयापि वा या नियता वृत्तिर्जीविका कृता सा वृत्ति-रुच्यत इत्यर्थः । तेषां चराचराणामाश्रयः सर्वैव पृथ्वीति वृत्तिप्रसङ्ग एव भूगोलचक्र पञ्चमस्कन्धे निरूपितम् ॥ १३ ॥

"पोषणं तदनुग्रहः" इति पूर्वलक्षितं पोषणमेवात्र रक्षा-शब्देनोच्यते तां व्याचष्टे—रक्षेति । तिर्यगादिषु या अच्युतस्या-वतारेहा अवतारकरणं सैव रक्षा कुत इत्यत आह, यैरवतारै-स्त्रयीद्विषो हन्यन्ते इत्यतो दुष्टनिग्रहात् स्वभक्तरक्षणमेव रक्षेत्यर्थं गम्यते । उपलक्षणमेतदन्यथापि महाभयात् स्वभक्त-रक्षणं रक्षोच्यते अत एव षष्ठे अजामिलादिभक्तानां रक्षोक्ता ॥ १४ ॥

मन्वन्तराणि सद्धर्म इति पूर्वलक्षितं मन्वन्तरं व्याचष्टे—मन्व-न्तरमिति । विदधति स्वस्वकृत्यं कुर्वन्तीति विधा मन्वादयस्ते षट् यत्र तत् षड्विधं षडङ्गमित्यर्थः । मन्वादयः षडेते स्वस्वाधिका-रेण यत्र प्रवर्त्तन्ते तन्मन्वन्तरमित्यर्थः ॥ १५ ॥

वंशं व्याचष्टे—राज्ञामिति । ब्रह्मणः सकाशात् प्रसूतिर्येषां तेषामन्वयो वंशः वंशानुचरितं व्याचष्टे—तेषां मध्ये ये वंश-धराः प्रसिद्धाः प्रियव्रतध्रुवपृथ्वादयस्तेषां वृत्तं चरित्रं वंशा-नुचरितमुच्यते एतद्द्वयं पूर्वमीशानुकथास्वेवान्तर्भावितम् ॥१६॥

---

नैमित्तिकः प्राकृतिको नित्य आत्यन्तिको लयः।
संस्थेति कविभिः प्रोक्ता चतुर्धाऽस्य स्वभावतः ॥ १७ ॥
हेतुर्जीवोऽस्य सर्गादेरविद्याकर्मकारकः।
यं [1]चानुशयिनं प्राहुरव्याकृतमुतापरे ॥ १८ ॥
[2]व्यतिरेकान्वयो यस्य जाग्रत्स्वप्नसुषुप्तिषु।
[3]मायामयेषु तद्ब्रह्म जीववृत्तिष्वपाश्रयः ॥ १९ ॥
पदार्थेषु यथा द्रव्यं [4]सन्मात्रं रूपनामसु।
बीजादिपञ्चतान्तासु ह्यवस्थासु युतायुतम् ॥ २० ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

वृत्तिं विवृणोति-वृत्तिरिति। चराणामचराणि चकाराच्चरा यद्यपि स्वेन स्वकीयेन कर्मफलदात्रा कृता वृत्तिर्भवेत्तथापि तत्र नृणां कामात् रागतः चोदनयापि वा प्रवृत्तिरिति शेषः ॥ १३ ॥

रक्षां विवृणोति—रक्षेति। अच्युतावतारशब्दस्येहाशब्देन समासः कुम्भकुम्भयास्कृतः पादयोजनायान्तु समासो विच्छिन्नः तथाच मनु युगेयुगे प्रतियुगं तिर्यङ्मर्त्यर्षिदेवेषु वर्तमानैः यैरच्युतावतारैः त्रयीद्विषः हन्यन्ते तेषामच्युतावताराणां ईहा लीला अस्य विश्वस्य रक्षेति पदयोजना ॥ १४ ॥

अन्तराणि एकमन्वन्तरकथनेन विवृणोति—मन्वन्तरमिति ॥ १५ ॥

वंशं वंश्यानुचरितं च विवृणोति-राज्ञामिति। ब्रह्मणः सकाशात् प्रसूतिर्येषां तेषां राज्ञां त्रैकालिकोऽन्वयः वंशः तत्र भवा वंशधराः वंश्याः तेषां वृत्तं वंश्यानुचरितम् एतदुभयमीशानुकथेत्युच्यते ॥ १६ ॥

---

### भाषाटीका।

चर भूत प्राणियों की जीविका सामान्य रीति से अचर है और चर जो हैं वह जीविका कामना से है परन्तु मनुष्यों की स्वभाव से कामना से अथवा विधि से जो नियत जीविका है, उसीको वृत्ति कहते है ॥ १३ ॥

युग २ में तिर्यङ् मनुष्य ऋषि और देवताओं में विश्वके पालन करने के लिये श्रीहरि जो अवतार लेने की चेष्टा है, उसीको रक्षा कहते हैं। जिन अवतारों को धारण कर वेद त्रयी के द्वेषियों को भगवान् मारते है ॥ १४ ॥

मनु, देवता, मनुपुत्र, इन्द्र, ऋषि, और श्रीहरि के अंशावतार यह छै प्रकार का मन्वन्तर कहा जाता हैं ॥ १५

ब्रह्माजीसे उत्पन्न होने वाले राजाओं की सर्व कालकी वंश परंपरा का नाम वंश है। और उन राजाओं के तथा उनके वंश धारण करने वाले पीछे के राजाओं के जो चरित्र हैं उनको वंश्यानु चरित कहते हैं ॥ १६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

अस्य विश्वस्य स्वभावतो मायातो निष्पन्नस्य यद्वा, मायातो यश्चतुर्विधो लय इति ॥ १७ ॥

अस्य जगतः सर्गादेर्हेतुर्निमित्तं जीवः सोऽत्र हेतुरुच्यत इत्यर्थः। तस्य निमित्ततामाह-अविद्यया कर्मकारकः कर्मकर्ता जीवादृष्टप्रयुक्तत्वाद्विश्वसर्गादेः स तु तत्र हेतुरित्यर्थः। तमनुशायी निमित्तमिति केचित् अव्याकृतमित्यपरे तत्राऽऽह, यमिति। चैतन्यप्राधान्येनानुशायिनमुपाधिप्राधान्यविवक्षयाऽव्याकृतम् ॥ १८ ॥

अपाश्रयमाह-व्यतिरेकेति। जाग्रदादिष्ववस्थासु जीवतया वर्तन्त इति जीववृत्तयो विश्वतैजसप्राज्ञास्तेषु मायामयेषु साक्षितयाऽन्वयः समाध्यादौ च व्यतिरेको यस्य तद् ब्रह्म संसारप्रतीतिबाधयोरधिष्ठानावधिभूतमपाश्रय उच्यत इत्यर्थः ॥ १९ ॥

एतदेव सदृष्टान्तं प्रपञ्चयति-पदार्थेषु घटादिषु द्रव्यं मृदादि यथा युतमन्वितमयुतं च बहिरप्यवस्थानात् रूपनामसु च सन्मात्रं सत्तामात्रं यथा एवं बीजं गर्भाधानमादिर्यासां पञ्चताऽन्तो यासां तासु देहावस्थासु तथाऽऽत्मस्वरूपाधिष्ठानत्वेन साक्षित्वेन च युतमयुतं च यत्तदपाश्रय इति ॥ २० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

व्यतिरेकेति। मायामयेषु प्रकृतिसम्बन्धः कार्येषु जाग्रदाद्यवस्थाविशेषेषु यस्य ब्रह्मणो जीववृत्त्या अन्वयव्यतिरेकौ अनवस्थानिवर्तकतया अवस्थानादन्वयः अवस्थान्तरस्पृष्टत्वात् व्यतिरेकः सर्वाधारत्वात् व्यपाश्रय इत्यर्थः ॥ १९ ॥

ब्रह्मणस्तत्त्वचिदचिद्विशिष्टरूपेण सर्वान्वयादन्वयः। स्वेन रूपेण तानिव्यतिरेकस्तु केवलं भवति। पदार्थेष्विति बीजादिपञ्चतान्तासु जन्मादिविनाशपर्यन्तावस्थानामरूपान्वितेषु घटपटादिपदार्थेषु द्रव्यमात्रं जन्माद्यवस्थाभिः युतायुतं द्रव्यं घटत्वादिविशिष्टरूपेण जन्मादियुतं तदुपादानद्रव्यावस्थायां विशेष्यमात्ररूपेण जन्मादिरहितत्वं तदयुतमित्यर्थः। नहि कटककुण्डलनाशे कनकस्यापि विनाशः ॥ २० ॥

---

(१) अनुशायिन मिति। (२) व्यतिरेकान्वयाविति। (४) तन्मात्रमिति च वी०रा० विज० पा०। (३) मायामयास्विति विज० पा०।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

संस्थामाह, नैमित्तिक इति । स्वभावतः कालकर्मस्वभावाद्वस्य विश्वस्य सर्गादेः चतुर्धा चतुर्विधः नैमित्तिकादिरूपो लयः संस्थेति कविभिः प्रोक्तः ॥ १७ ॥

हेतुं निरूपयति, हेतुरिति । अविद्याकर्मकारकः अज्ञानमूलकं पुण्यापुण्यात्मकं कर्म करोतीति तथा स जीवः एकस्य आत्माभिप्रायकम् अस्य विश्वस्य सर्गादेर्हेतुर्जीवस्य कर्मफलानुभावार्थत्वात्सर्गादेस्तन्निमित्तत्वं तस्मात् स हेतुरित्यर्थः । हेतुस्वरूपपनाय जीवं विशिनष्टि, यमिति । अनुशयी भुक्तफलकर्मावशेषः सोऽस्यास्तीति अनुशयी तथाभूतं यं जीवं प्राहुः भुक्तावशेषकर्मवासनाप्रयुक्तं प्राहुः उतापि चापरेऽव्यक्तमव्याकृतं देवादिनामरूपरहितं प्राहुः सृष्टेः पूर्वं देवादि[वासना]नामरूपरहितं प्राहुः सृष्टेः पूर्वं देवादिनामरूपरहिता वासनायुक्ताः जीवा अस्य सर्गादेर्निमित्तमिति सहेतुरित्यर्थः ॥ १८ ॥

अथापाश्रयमाह–व्यतिरेकान्वयाविति मायामयेषु प्रकृतिकार्येषु शरीरेषु जाग्रदादिषु जीवस्य वृत्तिषु यस्यान्वयव्यतिरेकौ तद्ब्रह्मापाश्रयः सर्वाधारत्वादपाश्रय इत्युच्यत इत्यर्थः ब्रह्मणो जीववृत्तिनिर्वाहकतयाऽवस्थानाच्चान्वयः । अवस्थाभिरस्पृष्टत्वाद्व्यतिरेकश्च भवति, ब्रह्मणस्तत्तदवस्थाविशिष्टतारूपेण सर्वावस्थान्वयः स्वेन रूपेण ताभिर्व्यतिरेकश्चेत्युक्तं भवति ॥ १९ ॥

अत्र दृष्टान्तमाह–पदार्थेष्विति । बीजादिपञ्चत्वान्तास्ववस्थासु जन्मादिविनाशान्तासु अवस्थासु रूपनामसु नामरूपवत्सु पदार्थेषु घटपटादिषु यद्द्रव्यं तन्मात्रं तद्द्रव्यमात्रं जन्माद्यवस्थाभिर्युतायुतं तत्तदादिविशिष्टतारूपेण जन्मादियुतं तत्प्रहाणदशाय विशेष्यमात्ररूपेण जन्मादिरहितं च तद्वदित्यर्थः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अस्य जगतः स्वभावतश्चतुर्धा लयः संस्थेति कविभिः प्रोक्ता ॥ १७ ॥

यं च प्रलये परमात्मानमनुविश्य शायिनं स्वपन्तमाहुः अपरे अव्याकृतम् अव्याकृताकाशवदविकारं प्राहुः सोऽविद्यया कर्मकारकः कर्मकर्ता अस्य जगतः सर्गादिनिमित्तभूतो जीवो हेतुरित्युच्यते जीवसमुदायः सुखदुःखप्राप्तये तं हेतुं कृत्वा जगतः सृष्ट्यादिकं प्रवर्तत इति "निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः" इति ॥ १८ ॥

अपाश्रयं वक्ष्यति—व्यतिरेकान्वयाविति । अपगत आश्रयो यस्य स तथा अद्वितीय इत्यर्थः । अद्वितीयत्वं कथमुच्यते अन्वयव्यतिरेकाभ्यां ज्ञायत इति यस्य हरेर्जीववृत्तिषु जीवानां जीवनोपायभूतासु जाग्रत्स्वप्नसुषुप्तिषु व्यतिरेकान्वयौ स्तः जाग्रदाद्यभावेऽपि विद्यत इति व्यतिरेकः तद्भावेऽप्यस्तीत्यन्वयः मायामयासु श्रीहरीच्छारचितासु तद्ब्रह्मव्यपाश्रय इत्युच्यते ॥ १९ ॥

प्रकारान्तरेण आश्रयं वक्ष्यति–पदार्थेष्विति । रूपनामयुक्तेषु पदार्थेषु यद्द्रव्यमुपादानादिकारणभूतं प्रकृत्याख्यं तन्मात्रं पदार्थस्वरूपं तस्मिन् द्रव्ये बीजादिपञ्चतान्तासु जन्मादिमरणाव-स्थासु अवस्थासु युतायुतम् अन्वयव्यतिरेकाभ्यां वर्तते तद्ब्रह्मापाश्रयम् यद्वा, रूपनामप्रपञ्चपदार्थेषु युतायुतमन्वयव्यतिरेकलक्षणानुमानेन वस्तुमात्रं विज्ञानानन्दमात्रं द्रव्यं द्रुतं ज्ञेय यत् बीजत्वाद्यवस्थासु वस्तुतः पञ्चत्वावसानलक्षणावस्थासु युतायुतं वर्तते तद्ब्रह्मेति ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्वभावतो मायाख्यस्वाभाविकशक्तितः ॥ १७–२२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पूर्वोक्तनिरोधशब्दवाच्यां संस्थां व्याचष्टे–नैमित्तिक इति । अस्य विश्वस्य स्वभावतः स्वस्य भावेषु कारणेषु पृथिव्यादितत्त्वेषु क्रमेण लयः संस्थोच्यते ॥ १७ ॥

हेतुं व्याचष्टे–अस्य जगतः सर्गादेर्हेतुर्निमित्तं जीवः स च अविद्याकर्मकारकः अविद्यया कर्मकर्ता जीवार्थमेव भगवता विश्वस्य सर्गादेः कृतत्वात् जीवो निमित्तमिति भावः । अत एवम् अनुशायिनं मायिकोपाधिमनुशयानं मायिकशरीरवन्तमेवैके प्राहुः अपरे भक्तास्तु आविद्यककर्मकर्तारं जीवं साधुसङ्गवशाद्भक्तिमार्गस्थत्वे सति अव्याकृतम् अप्राकृतं चिन्मयपार्षदशरीरवन्तमपि प्राहुः अत्रार्थे उदाहरणः यदुक्तं नारदेन—

"प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम् ।
आरब्धकर्मनिर्वाणो न्यपतत् पाञ्चभौतिकः" ॥ इति ॥

अत एवोक्तं वेदस्तुत्यारम्भे—

बुद्धीन्द्रियमनःप्राणान् जनानामसृजत्प्रभुः ।
मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च ॥ इति ॥

आत्मने कल्पनाय बुद्धीन्द्रियमनःप्राणान् स्वं प्रापयितुमिति तत्रार्थः एतन्मत एव नवम लक्षणे पूर्वोक्तं "मुक्तिर्हित्वाऽन्यथा रूपं स्वरूपेण व्यवस्थितिः" इति विशेषेण चिद्घनशरीरत्वेनावस्थितिरिति तत्र व्याख्या ॥ १८ ॥

अपाश्रयं व्याचष्टे—व्यतिरेकेति । जाग्रत्स्वप्नसुषुप्तिस्ववस्थासु तथा मायामयेषु सर्वेष्वेव पदार्थेषु यस्य हेतुतया अन्वयः तेभ्यो व्यतिरेकश्च तद्ब्रह्माऽपाश्रय उच्यते ॥ १९ ॥

एतदेव सदृष्टान्तं प्रपञ्चयति–पदार्थेषु घटादिषु द्रव्यं मृदादिवयायुतम् अन्वितम् अयुतं च बहिरवस्थानात् रूपनामसु वाच्यवाचकवस्तुषु यथा तन्मात्रं [गर्भादिकञ्च] तन्मात्रकारणं तामसाहङ्कारश्च तथैव बीजादिपञ्चतान्तासु बीजकृष्यागमादियांसां पञ्चता अन्तो यासां तासु देहावस्थासु अधिष्ठितत्वेन साक्षित्वेन च युतमयुतं च यत्तदपाश्रयः ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

संस्थां विवृणोति—नैमित्तिक इति । स्वभावतः स्वकीयो यो भावः "सदेव सोम्येदमग्र आसीत्" इत्यादिषु सदादिशब्दनिर्दिष्टः परमकारणभूतः परमात्मा तस्माद्धेतुभूतात् अस्य कार्यजातस्य चतुर्धा लयः कविभिः संस्था प्रोक्ता ॥ १७ ॥

विरमेत यदा चित्तं हित्वा[१]वृत्तित्रयं स्वयम् ।
योगेन वा तदाऽऽत्मानं [२]वेदेहाया निवर्तते ॥ २१ ॥
एवं लक्षणलक्षण्याणि पुराणानि पुराविदः ।
मुनयोऽष्टादश प्राहुः क्षुल्लकानि महान्ति च ॥ २२ ॥
ब्राह्मं पाद्मं वैष्णवं च शैवं लैङ्गं सगारुडम् ।
नारदीयं भागवतमाग्नेयं स्कान्दसञ्ज्ञितम् ॥ २३ ॥
भविष्यं ब्रह्मवैवर्तं मार्कण्डेयं सवामनम् ।
वाराहं [३]मात्स्यं कौर्मं च ब्रह्माण्डाख्यमिति त्रिषट् ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हेतुर्विवृणोति—हेतुरिति । अस्य विश्वस्य सर्गादेः जीवो । हेतुर्निमित्तम्—

"बुद्धीन्द्रियमनःप्राणान् जनानामसृजत्प्रभुः ।
मात्रार्थं च भवार्थञ्च आत्मने कल्पनाय च"

इत्यादौ जीवानामेवोपकारार्थं भगवान् विश्वं करोतीति प्रदर्शितम् जीव इत्यत्र एकवचनं जातौ "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इत्यादि बहुत्वश्रवणात् जीवस्य सर्गादिनिमित्तत्वं हेतुगर्भेण विशेषणेन दर्शयति, अविद्याकर्मकारक इति । विशेषणेन ताद्रूशो मुमुक्षुः सूचितस्तम् अविद्याकर्मकारक इति अविद्यया अज्ञानेन पुनः पुनर्जन्ममरणप्रदानि कर्माणि करोतीति तथा अज्ञानमूलकर्मकर्तृत्वेन हेतुमाह-यमनुशायिनं प्राहुरिति । अनुशायशब्देन जीवनिमोहहेतुभूता नानावासनाप्रदा अनाद्यविद्योच्यते तद्युक्तं य बद्धजीवम् 'अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितम्मन्यमानाः' इत्यादिना प्राहुः अविद्याकर्मकारकविशेषणेन ताद्रूशो मुमुक्षुः सूचितस्तम् अपरे अव्याकृतं प्राकृतप्रपञ्चरहितं "निरञ्जनः परमं साम्यमुपैति" इत्यादिना प्राहुः बुभुक्षुर्मुमुक्षुश्च विश्वसर्गादौ हेतुरित्यर्थः ॥ १८ ॥

अपाश्रयमाह-व्यतिरेकान्वयाविति द्वाभ्याम् । यस्य जाग्रदादिषु जीववृत्तिषु जीवविषयावस्थास्तु जीवाख्यशक्त्या मायामयेषु महदादिदेहान्तपर्यन्तेषु च मायाख्यशक्त्यान्वयः स्वरूपेण व्यतिरेकोऽनन्वयश्च तद्ब्रह्म बृहत्स्वरूपगुणशक्त्याद्याश्रयो भगवान् श्रीपुरुषोत्तमः अपाश्रयः स्वयं सर्वाश्रयः आश्रयान्तरशून्यः आश्रय इत्यर्थः ॥ १९ ॥

उक्तार्थं दृष्टान्तेन स्पष्टयति-पदार्थेष्विति । यथा पदार्थेषु वृक्षादिषु बीजादिमध्यमान्तासु तत्तदवस्थासु च तन्मात्रं तत्तत्पदार्थमात्रं द्रव्यं महदादियुतं समन्वितम् अयुतं च वृक्षे उत्पन्ने विनष्टे च मृदोऽनुत्पन्नत्वादविनष्टत्वात् आधारत्वादिना बहिरस्यवस्थानाच्च तथा रूपनामसु वाच्यवाचकेषु कार्यरूपेषु चिदचिच्छक्तिभ्यां युतमन्वितं स्वरूपेणायुतं तत्सङ्गविरहितं चतुर्ब्रह्म अपाश्रयः जगज्जन्मादिभिन्न श्रीपुरुषोत्तमाख्यं ब्रह्मानन्याश्रयमिमित्यर्थः २० ॥

———

भाषा टीका ।

पूर्वोक्त नैमित्तिक, प्राकृतिक, नित्य, और आत्यन्तिक इस चार प्रकार के प्रलय को ही कवि लोग संस्था कहते हैं। वह स्वभाव से चतुर्विध कही गई है ॥ १७ ॥

अज्ञान से पुण्य पाप रूप कर्म करनेवाले जीव को ही इस सृष्ट्यादि का हेतु कहते हैं। जिस अनुशायी को अर्थात् प्रलयकाल में परमात्मा जलशायी के पीछे शयन करनेवाले को कोई लोग अव्याकृत भी कहते हैं अर्थात् देव मनुष्यादि नाम रूप विभाग रहित कहते हैं ॥ १८ ॥

मायामय अर्थात् प्रकृति के कार्यरूप शरीरों में जो जाग्रत, स्वप्न, सुषुप्ति, ये जीव की वृत्ति हैं। उन वृत्तियों में जिसका अन्वय व्यतिरेक है, वही ब्रह्म सबका आधार होने से आश्रय कहा जाता है। ब्रह्म को जीव की जाग्रदादि अवस्थाओं का निर्वाहक होने से उन अवस्थाओं में ब्रह्म का अन्वय है। और उन अवस्थाओं का ब्रह्म को स्पर्श न होने से व्यतिरेक है ॥ १९ ॥

इसमें यही दृष्टांत है, कि—जैसे नामरूप वाले घटादि पदार्थों में बीज से लेकर अर्थात् उत्पत्ति से नाश पर्यन्त अवस्थाओं में वह मृत सुवर्णादि द्रव्य, नाम रूप के मेलजाप होने से उन अवस्थाओं मे युक्त भी है, और अपने स्वरूप से अयुक्त भी है। इसी प्रकार ब्रह्म भी चेतनाचेतन विशिष्ट होने से अभिन्न भी है, और स्वरूप से व्यतिरिक्त भी है ॥ २० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं दशापि लक्षणानि व्याख्याय—

"दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम् । वर्णयन्ति महा-

(१) वृत्तित्रयाश्रयमिति वीर० विज० पा० (२) वेदात्मा तन्निवर्तते, वैदेहाभिनिवर्तते इति वीर० वेदनात्मानिवर्तत इति विज० पा० (३) मात्स्यकौर्म्यञ्चेति वीर० पा० ।

[१)ब्रह्मन्निदं समाख्यातं शाखाप्रणयनं [२)मुनेः ।
शिष्यशिष्यप्रशिष्याणां ब्रह्मतेजो [३)विवर्धनम् ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्यां द्वादशस्कन्धे
सप्तमोऽध्यायः ॥ ७ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्मानः" इति यदुक्तं तदाह—विरमेतेति । यदा सर्गादीनां मायामयत्वानुसन्धानेन वामदेवादेरिव स्वयमेव चित्तं विरमेत दैवेनानुष्ठितेन योगेन वा देवहूत्यादिवत् तदा विरूपाभावादात्मानं वेद तदाऽऽत्माविद्यानिवृत्तेरीहायाः संसाररूपाया निवर्तेत इत्यर्थः ॥ २१ ॥

पुराणविभागवचनावेन तल्लक्षणादिप्रासङ्गिकमुक्त्वा प्रस्तुतमाह, एवं विधैर्लक्षणैर्लक्ष्याणि ॥ २२—२३ ॥

त्रिषड्दश ॥ २४ ॥

उपसंहरति-ब्रह्मन्निति । मुनेर्व्यासस्य शिष्यादीनां च ब्रह्मतेजो ब्रह्मवर्चसं तद्विवर्धनम् श्रोतृणामिति शेषः ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
सप्तमोऽध्यायः ॥ ७ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वृत्तित्रयं स्वयम् अयत्नतः योगेन योगाभ्यासयत्नेन वा वैदेहाय विदेहभावाय मोक्षाय ॥ २१ ॥ २५ ॥

इति श्रीमद्भागवतव्याख्याने द्वादशस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
सप्तमोऽध्यायः ॥ ७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यदुक्तं "दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम्" इति तदाह—विरमेतेति । वृत्तित्रयाश्रयमिति भावप्रधानो निर्देशः यदा चित्तं जाग्रदादिवृत्तित्रयाश्रयत्वं हित्वा स्वयमयत्नतः योगेन योगाभ्यासयत्नेन वा विरमेत विषयेभ्य इति शेषः । तदात्मानमाश्रयाश्रयं वेद आत्मा चित्तं तत् ततः निवर्तते वैदेहाया निवर्तेत इति पाठान्तरं तदात्मानं वेद ततः ईहायाः संसाररूपायाः निवर्तेत इत्यर्थः वैदेहाया निवर्तेत इति पाठान्तरं तदा यस्य चित्तं विरमेत स आत्मानं वेदेति शेषः । ततः वैदेहाय विदेहभावाय प्राकृतदेहाभावायेति यावत् निवर्तते संसारबन्धान्निवर्तेत मुच्यत इत्यर्थः ॥ २१ ॥

तदेवं पुराणसंहिताविभागप्रसङ्गेन तल्लक्षणान्यभिधाय प्रस्तुतमाह—एवमिति । एवंविधैः दशभिः पञ्चभिर्वा लक्षणैः लक्षणानि महान्ति क्षुल्लकानि अल्पानि च महादशपुराणानि पुराणविदः पूर्वकालाभिज्ञा मुनयो विदुः ॥ २२ ॥

कानि पुनस्तान्यष्टादशेत्यत्राह—ब्राह्ममितिद्वाभ्याम् । मात्स्यकौर्मम् इति समाहारद्वन्द्वः मात्स्यं कौर्मं चेत्यर्थः । इतीत्थं त्रिषट् महान्ति ॥ २३—२४ ॥

पुराणवेदसंहिताविभागोपपादनं निगमयति—ब्रह्मन्निति । हे ब्रह्मन् ! मुनेर्बादरायणस्य शिष्याणां प्रशिष्याणां शाखाप्रणयनं वेदपुराणसंहिताप्रवर्तनं तच्च श्रोतृणां ब्रह्मतेजसः ब्रह्मवर्चसः विवर्धनमुद्दीपनमिति फलकीर्तनमिति ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
सप्तमोऽध्यायः ॥ ७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतादृशब्रह्मप्राप्तिः कदा स्यादिति तत्राह—विरमेतेति । वृत्तित्रयाश्रयं जाग्रत्स्वप्नसुषुप्तिलक्षणवृत्तित्रयविरुद्धं चित्तं हित्वा वृत्तित्रयाद्विरमेत उपरतं भवति तदा योगेन ध्यानलक्षणयोगोपासनया निरन्तरं श्रीनारायणकथाश्रवणलक्षणोपासनया चात्मानं परमात्मानं वेद जानाति लभते प्राप्नोति च ततः किमत्राह—नेति । आत्मा जीवः पुनर्निवर्तते नैव "न च पुनरावर्तते न च पुनरावर्तते" इति श्रुतेः ॥ २१ ॥

उपसंहरन्नेव पुराणानां द्विप्रकारत्वं संख्यामाह—एवमिति । क्षुल्लकानि श्लोकसङ्ख्यापरिमितानि अल्पार्थतः कानिचिदर्थतः ग्रन्थतः फलतोऽपि महान्ति ॥ २२ ॥

तानि क्रमेण निर्दिशति—ब्राह्ममित्यादिना ॥ २३ ॥

त्रिषट् महान्ति ॥ २४ ॥

अत्र शिष्यप्रशिष्यैः शाखाप्रणयनं वेदपुराणकर्तुर्ब्रह्मणोऽनभिमतं कृतमिति माशङ्कीत्याह—ब्रह्मन्निति । शिष्यादीनामेतच्छाखाप्रणयनं ब्रह्मणैव समाख्यातं कथितं कीदृशं ब्रह्मतेजो विदीपनं

[१) ब्रह्मन्नेतदिति [२) मुने ! इति च विज० पा० (३] विदीपनमिति वी०रा० विज० पा० ॥

**श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।**

ब्रह्मतेजसः प्रकाशकं निरर्थकं प्रणयनं किमर्थं कृतमित्यतो वाह—ब्रह्मेति ब्रह्मणः परमात्मनस्तेजसः प्रभावस्य विदीपनं प्रकाशनकरम् ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
सप्तमोऽध्यायः ॥ ७ ॥
( विजयध्वजरीत्या षष्ठः ॥ ६ ॥ )

---

**श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।**

तथाच वाराहे—

ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ।
तथान्यं नारदीयं च मार्कण्डेयं च सप्तमम् ॥
आग्नेयमष्टमं प्रोक्तं भविष्यं नवमं तथा।
दशमं ब्रह्मवैवर्त्तं लिङ्गमेकादशं तथा ॥
वाराहं द्वादशं प्रोक्तं स्कान्दं चात्र त्रयोदशम् ।
चतुर्दशं वामनं च कौर्मं पञ्चदशं तथा ॥
मात्स्यं च गारुडं चैव ब्रह्माण्डाष्टादशं तथा ॥

शैवपुराणे—

ब्राह्मं पुराणं तत्राद्यं संहितायां विभूषितम् ।
श्लोकानां दशसाहस्रं नानापुण्यकथायुतम् ॥
पाद्म द्वितीयं कथितं तृतीयं वैष्णवं स्मृतम् ।
चतुर्थं वायुना प्रोक्तं वायवीयमिति स्मृतम् ॥
ततो भागवतं प्रोक्तं भागद्वयविभूषितम् ।
चतुर्भिः पञ्चभिः प्रोक्तं भविष्यं तदनन्तरम् ॥
मार्कण्डेयमथा ह्येवं नारदीयमतः परम् ।
दशमं ब्रह्मवैवर्त्तं लिङ्गमेकादशं स्मृतम् ।
भागद्वयेन लिङ्गं च ततो वाराहमुत्तमम् ।
संयुक्तमष्टभिः खण्डैः स्कान्दं चैवात्र विस्तरम् ॥
ततस्तु वामनं कौर्मं भागद्वयविराजितम् ।
मात्स्यं च गारुडं प्रोक्तं ब्रह्माण्डं च ततः परम् ॥
भागद्वयेन कथितं ब्रह्माण्डमपि संज्ञितम् ।
इदं ब्रह्मपुराणस्य खिलं सौरमनुत्तमम् ॥
संहिताद्वयसंयुक्तं पुण्यं शिवकथाश्रयम् ।
आद्या सनत्कुमारोक्ता द्वितीया सूर्यभाषिता ॥

कूर्मपुराणे—

अन्यान्युपपुराणानि मुनिभिः कथितान्यपि ।

मात्स्ये—

अष्टादशभ्यस्तु पृथक् पुराणं यत्प्रदृश्यते ।
विजानीध्वं द्विजश्रेष्ठास्तदेतेभ्यो विनिर्गतः ॥
पञ्चाङ्गानि पुराणं स्यादाख्यानमितरं स्मृतम् ।
पाद्मे पुराणे या प्रोक्ता नरसिंहोपवर्णना ॥
तच्चाष्टादशसाहस्रं नारसिंहमिहोच्यते ।
यत्र साम्बं पुरस्कृत्य भविष्येऽपि कथानकम् ॥
प्रोच्यते तत्पुनर्लोके साम्बमेव मुनिव्रतैः ।
एवमादित्यसंज्ञं च तत्रैव परिपठ्यते ॥ २३ ॥ २४ ॥

शाखाप्रणयनमिति, पुराणेतिहासानां शाखास्थानीयत्वादित्यभिप्रायः शिष्याः साक्षादुपदेश्याः शिष्यप्रशिष्याः शिष्याणां शिष्यपरम्पराः ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
सप्तमोऽध्यायः ॥ ७ ॥

---

**श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।**

एवं दशलक्षणानि व्याख्यायेदानीं "दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम् । वर्णयन्ति महात्मानः" इति यदुक्तं तदाह विरमेतेति "जरयत्याशु या कोषं निगीर्णमनलो यथा" इति न्यायेन केवलया भगवत्कीर्तनादिभक्त्यैव स्वयमेव वृत्तित्रयम् हित्वा चित्तं स्वयमेव विरमेत गुणेभ्यो विरतं स्यात् भगवत्स्वरूपादिवृन्दे विशेषेण रमेत वा योगमार्गादियोगेन वा विरमेत चित्तं निर्वीजं स्यात्तदा आत्मानं वेद परमात्मानमनुभवति तदैव ईहायाः चेष्टाविकारात् कामात् निवर्तेत ॥ २१ ॥ २२ ॥

त्रिपट् अष्टादश ॥ २३

मुनेर्व्यासस्य शिष्याणां शिष्यास्तेषामपि प्रशिष्यास्तेषां शाखाप्रणयनं ब्रह्मतेजो विवर्धनमिति श्रोतृणामिति शेषः ॥२४॥२५॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
द्वादशे सप्तमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ७ ॥

---

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।**

एवं दशलक्षणानि व्याख्याय यदुक्तं "दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम् । वर्णयन्ति महात्मानः" इति तदाह विरमेतेति वाक्यद्वयेन । एवमर्थे एवमुक्तसर्गादिनवलक्षणानां योगेन चिन्तनेन आत्मानं दशममाश्रयं सत्त्वविधिसृष्टिहेत्वादिना प्रधानभूतं परमात्मानं यदा चित्तं वेद वृत्तित्रयं हित्वा तस्मिन्नेव विशेषतोरमेत च तदा ईहायाः संसाररूपायाः निवर्तेत इत्यर्थः सर्गादिश्रवणेन परमात्मज्ञानं तदनन्तरं तस्मिन् रुचिस्तदनन्तरं संसारनिवृत्तिरिति फलितोऽर्थः ॥ २१ ॥

एवमुक्तप्रकारैर्दशलक्षणैर्लक्षिताणि पुराणानि पुराविदः पुराणज्ञाः अष्टादशसंख्याकान्याहुः ॥ २२ ॥

त्रिपट् अष्टादश ॥ २३ ॥ २४ ॥

उपसंहरति—ब्रह्मेति । मुनेः श्रीवेदव्यासस्य ब्रह्मतेजोविवर्धनं श्रोतॄणामिति शेषः ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
सप्तमाध्यायार्थप्रकाशः ॥ ७ ॥

---

## भाषाटीका।

जिस समय पुरुष का चित्त आत्मदादि तीनों वृत्तियों को त्यागकर स्वयं आपही विना ही यत्न किये किंवा योगाऽभ्यास के यत्न से जब विषयों से विराम को प्राप्त होता है, तब यह पुरुष इशाम लक्षण परमात्मा को जान लेता है। और जानकर सांसारिक चेष्टा से निवृत्त होकर मुक्त होजाता है ॥ २१ ॥

पूर्वकाल के ज्ञाता मुनि लोग इन लक्षणों से लक्षित पुराणों को अठारह कहते हैं। उन अठारहों में कोई अल्प पुराण और कोई महापुराण हैं ॥ २२ ॥

ब्राह्म १ पाद्म २ वैष्णव ३ शैव ४ लैङ्ग ५ गारुड ६ नारदीय ७ भागवत ८ आग्नेय ९ स्कान्द १० ॥ २३ ॥

भविष्य ११ ब्रह्मवैवर्त १२ मार्कण्डेय १३ वामन १४ वाराह १५ मात्स्य १६ कौर्म १७ ब्रह्माण्ड १८ ये अठारह पुराण हुए ॥ २४ ॥

हे शौनक! यह मैंने मुनि श्रीव्यासजी के शिष्य प्रशिष्यों के द्वारा ब्रह्म तेज के बढ़ाने वाला वेद की शाखाओं का प्रणयन तुमारे सम्मुख वर्णन किया ॥ २५ ॥

इति श्रीमद्भागवत द्वादशस्कन्ध में सातवें अध्यायकी,

श्रीवृन्दावनस्थ पं० भागवताचार्यकृत

भाषा टीका समाप्ता ॥ ७ ॥

---

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ।

शौनक उवाच ।

सूत ! जीव चिरं साधो ! वद नो वदतांवर ! ।
तमस्यपारे भ्रमतां नृणां त्वं पारदर्शनः ॥ १ ॥
आहुश्चिरायुषमृषिं मृकण्डुतनयं जनाः ।
यः कल्पान्ते उर्वरितो येन ग्रस्तमिदं जगत् ॥ २ ॥
स वा अस्मत्कुलोत्पन्नः कल्पेऽस्मिन् भार्गवर्षभः ।
नैवाधुनाऽपि भूतानां सम्प्लवः कोऽपि जायते ॥ ३ ॥
एक एवार्णवे भ्राम्यन् ददर्श पुरुषं किल ।
वटपत्रपुटे तोकं शयानं त्वेक*मद्भुतम् ॥ ४ ॥
एष नः संशयो भूयान् सूत[१] कौतूहलं यतः ।
तं नश्छिन्धि महायोगिन् ! पुराणेष्वपि सम्मतः ॥ ५ ॥

सूत उवाच ।

प्रश्नस्त्वया महर्षेऽयं कृतो (२)लोकभ्रमापहः ।
नारायणकथा यत्र गीता कलिमलापहा ॥ ६ ॥
प्राप्तद्विजातिसंस्कारो मार्कण्डेयः पितुः क्रमात् ।
छन्दांस्यधीत्य धर्मेण तपः स्वाध्यायसंयुतः ॥ ७ ॥
बृहद्व्रतधरः शान्तो जटिलो वल्कलाम्बरः ।
बिभ्रत्कमण्डलुं दण्डमुपवीतं समेखलम् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टमे तु तपश्चर्या मार्कण्डेयस्य मोहकैः ।
कामादिभिरसंमोहो नरनारायणस्तुतिः ॥

पुराणविभागप्रसङ्गेन पुराणकर्तुर्मार्कण्डेयस्य चरितप्रश्नमाह, सूतेति । त्वमेव वक्तुं योग्य इत्याह तमसि संसारे भ्रमतां पारंगमनप्रवर्तकः ॥ १ ॥

चक्रद्वयमाह—आहुरिति । उर्वरितोऽवशिष्टः येन कल्पान्तेन तत्कथं घटते ? इत्येकः प्रश्नः ॥ २ ॥

प्रलयाभावादप्येतन्न घटत इत्याह—स वा इति । यतो भार्गवर्षभः कोऽपि प्राकृतिको नैमित्तिको वा ॥ ३ ॥

अन्यदप्युपपत्तिमद्धेत्याह—एक एवेति । तोकं बालकम् ॥ ४ ॥

कौतूहलमौत्सुक्यम् तं संशयं न केवलं त्वं महायोगी किन्तु पुराणेष्वपि ख्यातत्वेन सम्मतः ॥ ५ ॥

प्रश्नमभिनन्दति, हे महर्षे ! अयं प्रश्नः यत्र हेतुः नारायणगीता यत्र प्रश्नविषये ॥ ६ ॥

तत्र मार्कण्डेयस्तपसा भगवन्तमाराध्य मायाप्रदर्शनं वव्रे ततश्च तेनैव भगवन्मायया प्रलयकल्पा दृष्टाः नान्यैरित्युत्तरं वक्तुमादित आरभ्य तस्य चरितमाह—प्राप्त इत्यादिना । मार्कण्डेयो मृत्युं जितवान् इति पञ्चमस्कन्धोक्तेनान्वयः । मध्यमग्रन्थेन तस्य धर्मः कथ्यते प्राप्तो द्विजातिसंस्कार उपनयनाख्यो येन सः पितुः सकाशाद्धर्मोपासनादिक्रमात् छन्दांसि वेदान् ॥ ७ ॥

---

* अर्भकम् इति वीर० पा० । [१] जातः कौतूहलमिति विज० पा० । (२) लोकमलापहः इति वीर० पा० ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

बृहद्व्रतधरो नैष्ठिको ब्रह्मचारी सन् ॥ ८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मार्कण्डेयस्य एतत्कल्पप्रसूतत्वे शास्त्रान्तरे परिहारो द्रष्टव्यः एतत्कल्पप्रसूतो मार्कण्डेयोऽन्यो वा इत्यादिभिरविरोध उर्वरितः आपदो निर्मुक्तः ॥ १—१५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पुराणगणनायां मार्कण्डेयपुराणमित्युक्तं तत्र तत्पुराणकर्तुः मार्कण्डेयस्य मुनेश्चरितं बुभुत्सुस्तत्कथनाय सूतं स्तौति शौनकः—सूतेति । हे सूत ! हे साधो ! हे वदतांवर ! चिरञ्जीव नोऽस्माकं वद यद्यच्छुश्रूषितं तद्वदेत्यर्थः । यतस्त्वमपारे तमसि अज्ञाने तत्कार्ये संसारे वा भ्रमतां जनानां नृणां तत्पारं दर्शयतीति तथाभूतस्त्वमेवातो वदेत्यर्थः ॥ १ ॥

किं तच्छुश्रूषितमित्यत्राह—प्राहुरिति । चिरायुषमेव दर्शयितुं विशिनष्टि—यः कल्पान्तेऽप्युर्वरितः अवशिष्टः येन भगवतेदं जगद्ग्रस्तं तच्च ददर्शेति शेषः । यद्वा, येनेदं जगत्कल्पान्ते ग्रस्तं तेनोर्वरितोऽवशेषितो य इति सम्बन्धः । मार्कण्डेयस्य एतत्कल्पप्रसूतत्वे शास्त्रान्तरविरोधपरिहारो द्रष्टव्यः एतत्कल्पप्रसूतो मार्कण्डेयोऽन्यो वास्यादित्यविरोधः ॥ २ ॥

तत्र आत्मनः संशयमुद्घाटयति—स वा इति । हे भार्गवर्षभ स वै मार्कण्डेयः अस्मिन्नेव कल्पे(स्व)अस्मत्कुलोत्पन्नः ततः किमत आह, नैव्रति । अधुनापि भूतानां सम्प्लवः प्रलयः कोपि नैव जायते अस्मिन्नेव कल्पे जातः कथमसञ्जातं सम्प्लवमद्राक्षीदिति संशय इत्यर्थः ॥ ३ ॥

उर्वरितमेव प्रपञ्चयति—एक एवेति । महार्णवे प्रलयार्णवे भ्राम्यन् वटपत्रस्य पुटे तल्पे शयानं तोकम् अर्भकं बालकं पुरुषं ददर्श बालस्याल्पत्वसूचनाय तोकमित्युक्तमतो न पौनरुक्त्यम् ॥ ४ ॥

इत्थं संशयमाविष्कृत्य तन्निरासाय चोदयति—एष इति । एषः "स वा आत्मकुलोत्पन्नः" इत्यादिनोक्तः यतः संशयान्महत्कौतूहलं तद्वृत्तान्तश्रवणौत्सुक्यं भवति तन्नोऽस्माकं संशयं छिन्धि न केवलं त्वं योगी किन्तु पुराणेष्वपि ज्ञातृत्वेन सम्मतः ॥ ५ ॥

इत्थमापृष्टस्तच्चरित्रं विस्तरतो विवक्षुस्तान्प्रश्नमभिनन्दति, सूतः—प्रश्न इति । हे महर्षे ! त्वया कृतोऽयं प्रश्नः लोकस्य मलमपहन्तीति तथा तत्र हेतुः यत्र यत्प्रश्नोत्तरे कलिमलं कलियुगप्रयुक्तं मलमपहन्तीति तथाभूता नारायणकथा गीता भविष्यति ॥ ६ ॥

आदितस्तच्चरित्रं वर्णयति—प्राप्तेत्यादिना यावदध्यायसमाप्ति । मार्कण्डेयो मृत्यु विजिग्ये इति पञ्चमेनान्वयः क्रमाद्गर्भाधानादिसंस्कारक्रमात्प्राप्तः द्विजातिसंस्कारः उपनयनसंस्कारो येन सः धर्मेण शास्त्रोक्तविधिना छन्दांसि वेदानधीत्य तपसा स्ववर्णाश्रमोचितेन स्वाध्यायेन वेदेन च संयुक्तः ॥ ७ ॥

बृहद्व्रतधरः नैष्ठिकब्रह्मचर्यव्रतधरः नियमश्रेये नियमस्य धर्मस्य श्रुतिस्मृत्युक्ते कमण्डलवादिकं बिभ्राणः सन्ध्ययोरुपासनमुपास्य सन्ध्ययोरन्यादिषु हरिमर्चयन् तमात्मा सहदेवं गुरुर्वे भैक्षमाहृत्य तेनानुज्ञातश्चेत्तर्हि बुभुजे सकृदेकवारं वो चेदननुज्ञातश्चेदुपोषितो भवति ॥ ८–१० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अस्मिन्नध्याये मार्कण्डेयकथाव्याजेन हरेर्निरतिशयमाहात्म्यं ब्रूते पुराणविभागप्रसङ्गेन पुराणकर्तुर्मार्कण्डेयस्य चरितं तत्र शौनकः सूतं पृच्छति—सूतेति । वद भगवत्कथाद्योतिनीं कथामिति शेषः ॥ १ ॥

येन कल्पान्तेन इदं जगद्ग्रस्तं तस्मिन् कल्पान्तेऽप्युर्वरितः अवशिष्टः ॥ २ ॥

अस्मत्कुलसम्बन्धित्वात्तच्चरितमवश्यं श्रवणार्हमित्याशयवानाह—स वा इति । तस्य भूतानां मध्ये कोपि सम्प्लवो लयो न जायते लुङ्र्थे लट् पञ्चभूतानां कोपि सम्प्लवो नाद्य इति वा ॥ ३ ॥

तस्यामवस्थायां प्रलय इवार्णवे पुरुषं ददर्श किलेति वा ॥ ४ ॥

यतः संशयान्महाकौतूहलविषयोऽर्थः मम संशयच्छेदनं कथमुपपद्यत इति तत्राह—पुराणेष्विति । ज्ञातृत्वेन सम्मतो भवानिति ॥ ५ ॥

मार्कण्डेयकथाया लोकाज्ञाननिवारणसामर्थ्यं कुतः ? इत्यत्राह, नारायणेति । यत्र मार्कण्डेयकथायां तत्कथाविषयः प्रश्न. ॥ ६ ॥

पितुर्मृकण्डोः प्राप्तद्विजातिसंस्कारः अन्नप्राशनोपनयनान्तब्राह्मणसंस्कारान्प्राप्तः ॥ ७ ॥

बृहद्व्रतधरः ब्रह्मचारिव्रतधरः ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवं नानाप्रभावानां कथामयं पुराणमिदं समाप्यमानं वितर्क्य तत्र निजकुलावतंसतादृशमार्कण्डेयकथामप्रस्तुतां प्रस्तावयति—सूतजीवेत्यादिना ॥ १ ॥

कल्पस्यान्ते उर्वरितः अवशिष्टत्वेन दृष्टः ॥ २ ॥

कल्पान्ततत्वं न घटत इत्याह—स वा इति । कथमस्मिन्नेव कल्प इति श्रायते तत्राह—नैवेति । कल्पान्ते सम्प्लवस्यावश्यं भावित्वात्तत्परम्पराश्रवणाविच्छेदेन सम्प्रति प्राप्तत्वादिति भावः ॥ ३ ॥

कल्पान्ते उर्वरितत्वे किं प्रमाणं तत्राह—एक एवार्णव इति । किल प्रसिद्धौ ॥ ४—५ ॥

इह खलु कल्पे मन्वन्तराण्येवोक्तान्ते सम्प्लवश्च तदन्ते प्रक्षालनमेव यत्तु एक एवार्णवे भ्राम्यन्नित्यादि भवता पृष्टं तत्खलु मायिकमेव सप्तानामपि कल्पानां मायिकत्वे तु क्षणमात्रत्वेन सम्भवाच्चिरजीवित्वविघातः इत्यादिरयुक्तरवितुमाह—प्रश्न इति ॥ ६ ॥

प्राप्तेति पञ्चकम् ॥ ७—९ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अष्टमेऽत्र तपोभङ्गाशक्तिः सर्वोर्चितोच्यते ।
मार्कण्डेयस्य तेनाऽथ नरनारायणस्तुतिः ॥

मार्कण्डेयं सवामर्नामिति मार्कण्डेयपुराणस्यैव स्मृति-

कृष्णाजिनं साक्षसूत्रं कुशांश्च [१]नियमर्द्धये।
अग्न्यर्कगुरुविप्रात्मस्वर्चयन् सन्ध्ययोर्हरिम्॥ ९॥
सायम्प्रातः स गुरवे भैक्ष्यमाहृत्य वाग्यतः।
बुभुजे गुर्वनुज्ञातः सकृन्नो चेदुपोषितः॥ १०॥
एवं तपः स्वाध्यायपरो वर्षाणामयुतायुतम्।
आराधयन् हृषीकेशं जिग्ये मृत्युं सुदुर्जयम्॥ ११॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

प्रथमाष्टमस्य मार्कण्डेयस्य चरितं प्रष्टुमाह—सूतेति। तमसि संसारे॥ १॥

उर्वरितः अवशिष्टः येन कल्पान्तेन॥ २॥

स कल्पान्ते उर्वरित इति प्रसिद्धिः किन्तु अधुनापि सम्प्लवः प्रलयो नास्तीति संशयः॥ ३॥

अत्यद्भुतमघटितमाह—एक एवेति॥ ४॥

यतः संशयादेव कौतूहलं कौतुकं तम संशयं छिन्धि न केवलं त्वं महायोगी किन्तु पुराणेष्वपि ज्ञातृत्वेन सम्मतः॥५-१२॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

मार्कण्डेयं सर्वात्मनामिति मार्कण्डेयपुराणाद्यावर्ताश्रवणेन स्वकुलोत्पन्नत्वेन च तच्चरितश्रवणे जातश्रद्धः शौनकस्तच्चरितं पृच्छति—सूतेति। सोऽस्मद्वंश्यं वद॥ १॥

वक्तव्यमेवाह—मायुरिति। येन कल्पान्तेन इदं जगत् ग्रस्तं तस्मिन् कल्पान्ते यः उर्वरितः एतत् कथं घटते इत्येकः संशयः॥ २॥

स अस्मिन् कल्पे ऽस्मत्कुले भृगुवंशे उत्पन्नः सम्प्रत्यस्मिन् कल्पे कोपि प्राकृतिको नैमित्तिको वा नैवातः क्रमप्राप्तं सम्प्लवमद्राक्षीदिति द्वितीयः संशयः उत्पत्तिस्तु भृगुपुत्रो धाता तत्पुत्रो मृकण्डुस्तत्पुत्रो मार्कण्डेयः तथा भृगुपुत्रश्च्यवनस्तत्पुत्रः प्रमतिस्ततो रुरुशुनकादिक्रमेण शौनक इति॥ ३॥

अत्यद्भुतमाश्चर्यमस्तीत्याह—एक एवेति। यतः संशयतः कौतूहलमौत्सुक्यं तत्संशयं छिन्धि॥ ४—५॥

तत्प्रार्थितेन भगवता स्वयोगमायां तस्मै दर्शयता प्रलयः प्रकाशितस्ततो रक्षितश्च शिववरेण अजरामरत्वादिकं च तस्य जातमित्युत्तरं विवक्षुः प्रश्नमभिनन्दति—प्रश्न इति। तव तु का कथा लोकानामप्यन्येषां भ्रममपहन्तीति स तथा प्रश्नः कुतः किञ्च यत्र प्रश्नविषये कलिमलापहा नारायणकथा गीता भविष्यतीति शेषः॥ ६॥

तच्चरितमाह—यावदध्यायसमाप्ति, प्राप्तेत्यादिना। मार्कण्डेयः मृत्युं जिग्ये इति पञ्चमेन सम्बन्धः॥ ७॥

बृहद्व्रतधरो नैष्ठिकव्रतधरः॥ ८॥

भाषा टीका।

ॐ नरनारायणात्मकाय नमः।

शौनक उवाच

शौनक ऋषिबोले, कि—हे सूतजी! हे साधो? आप बहुत काल पर्यन्त जिओ, हे कहने वालों में श्रेष्ठ! आपजो हम पूछैं सो कहो। क्योंकि? इस अपार अज्ञान रूप अन्धकारमें भ्रमने वाले मनुष्यों को तुमही पार दिखाने वाले हो॥ १॥

मनुष्य, मृकण्ड के पुत्र मार्कण्डेय को बड़े चिरायु कहते हैं जो प्रलय इस जगत् को ग्रस लेता है उस प्रलय के अन्त में भी वो अवशिष्ट रहते हैं। प्रलय में उनका नाश नहीं होता है, वह बातभी कैसे घटती है॥ २॥

यह भार्गव श्रेष्ठ मार्कण्डेय इस कल्प में हमारे कुल में उत्पन्न हुएहैं। और भूत प्राणियोंके मध्य में उनका अबभी किसी प्रकार का नैमितिक वा प्राकृतिक प्रलय नहीं होता है॥ ३॥

जो मार्कण्डेय समुद्र में एकही भ्रमते हुए, वटपत्रके पुटमें शयन किये हुए परमपुरुष को एक अद्भुतबालक रूप में देखते हुए॥ ४॥

हे सूत जी! यह हमको बड़ा संशय है, जिस संशय से यह कौतूहल होरहा है। हे महा योगिन्! आप हमारे इस संशय को दूरकरो, क्योंकि—आप केवल योगी ही नहीं किन्तु पुराणोंके भी एकही ज्ञाता हो॥ ५॥

सूत उवाच

सूतजी बोले, कि—हे महर्षे! यह प्रश्न तुमने लोकों के भ्रम को दूर करने वाला किया है। क्योंकि? जिसमें कलिमल को दूर करने वाली नारायण की कथा गाई गई है॥ ६॥

मार्कण्डेय क्रम से अपने पिता से द्विजातियों के उचित संस्कार को प्राप्त होकर, धर्म से वेदों का अध्ययन कर, तप और स्वाध्याय संयुक्त हुए॥ ७॥

नैष्ठिक ब्रह्मचारी होकर शान्त स्वरूप जटाओं को धारण किये वल्कलाम्बरों को पहने, दंड कमण्डलु और मेखला सहित उपवीत को धारण किये॥ ८॥

श्रीधरस्वामिकृतभावार्थदीपिका।

नियमर्द्धये धर्मवृद्धये अग्न्यादिषु पञ्चसु हरिमर्चयन्॥ ९॥

[१] नियमैर्युत इति विज० पा०

ब्रह्मा भृगुर्भवो दक्षो ब्रह्मपुत्राश्च येऽपरे ।
नृदेवपितृभूतानि तेनासन्नतिविस्मिताः ॥ १२ ॥
इत्थं बृहद्व्रतधरस्तपःस्वाध्यायसंयमैः ।
दध्यावधोक्षजं(१) योगी ध्वस्तक्लेशान्तरात्मना ॥ १३ ॥
तस्यैवं युञ्जतश्चित्तं महायोगेन योगिनः ।
व्यतीयाय महान् कालो मन्वन्तरषडात्मकः ॥ १४ ॥
एतत्पुरन्दरो ज्ञात्वा सप्तमेऽस्मिन् किलान्तरे ।
तपोविशङ्कितो ब्रह्मन्नारेभे तद्विघातनम् ॥ १५ ॥
गन्धर्वाप्सरसः कामं वसन्तमलयानिलौ ।
मुनये प्रेषयामास (२)रजस्तोकमदौ तथा ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

भैक्ष्यं गुर्वर्थमाहृत्य तेनानुज्ञातश्चेत्तर्हि बुभुजे नोचेत्सकृत्कदाचिदुपोषितो भवति ॥ १०—११ ॥

तेन मृत्युजयेन ॥ १२ ॥

ध्वस्ताः क्लेशा रागादयो यस्य तेनान्तरात्मना प्रत्याहृतमनसा ॥ १३—१४ ॥

तस्य तपोनिष्ठामितिहासेन वर्णयति—एतदित्यादिना । अस्मिन् सप्तमे मन्वन्तरे तपसा मत्पदं ग्रहीष्यतीति विशङ्कितः ॥ १५ ॥

मुनये मुनिं भ्रंशयितुम् रजस्तोकमतिप्रथमपत्यं लोभो मदश्च तौ ॥ १६—१७ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

रजस्तोक इति कस्यचिन्नाम ॥ १६—२९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमिति सुदुर्जयं सुतरां दुःखेनापि जेतुमशक्यं मृत्युं जिग्ये जितवानित्यर्थः ॥ ११—१२ ॥

इत्थमिति । योगेन ध्वस्ताः क्लेशाः रागादयो यस्य तेनान्तरात्मना प्रत्याहृतेन मनसाऽधोक्षजं दध्यौ ध्यानवान् ॥ १३ ॥

तस्येति । युञ्जतः समादधतः सतः महान्भूयान् तदेवाह मन्वन्तरषडात्मकः व्यतीयाय व्यतिक्रान्तोऽभूत् ॥ १४ ॥

तस्य तपोनिष्ठादार्ढ्यम् इतिहासेन वर्णयति—एतदित्यादिना । पुरन्दर इन्द्रः एतत्तपश्चर्यां ज्ञात्वा सप्तमेऽस्मिन्मन्वन्तरे वैवस्वतमन्वन्तरे हे ब्रह्मन् तपसा विशङ्कितः किं वायं मत्पदं जिघृक्षेदिति संशयं प्राप्तः तद्विघातनं तपोविघातमारब्धवान् ॥ १५ ॥

गन्धर्वाश्चाप्सरसश्च ताः मुनये मुनिं भ्रंशयितुं गन्धर्वादीन् प्रेषयामास स्वयं रजस्तोकमदौ रजस्तोको लोभस्तस्य रजोगुणप्रभवत्वात्तं च मदं च तौ च प्रेषयामास ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरिं स्मरन्नितिशेषः ॥ ९ ॥

नोचेदनुज्ञाभावे ॥ १०—११ ॥

तेन कर्मणा ॥ १२ ॥

मनोयोगादन्तरात्मनान्तर्यामिणा ध्वस्तक्लेशः ॥ १३—१४ ॥

अस्मिन् सप्तमे मन्वन्तरे तपसो विशङ्कितस्तद्विघातनं तस्य तपसो विघ्नम् ॥ १५ ॥

रजोगुणं लोभमदौ स्वधर्मकर्मदर्पौ च अत्र कामादयो मूर्तिमन्तो निर्दिश्यन्ते ॥ १६—१७—१८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सायं प्रातरिति समावर्त्तनात् पूर्वावस्थायामेव ज्ञेयं वर्षाणामयुतायुतामिति कल्पाभिप्रायेण कल्पजीवित्वात् यावज्जीवमेवाराधयतस्तस्य मृत्युर्न क्षिद्रं प्रापेत्यर्थः । तस्यैवं युञ्जत इति वक्ष्यमाणपद्यद्वयात् ॥ १०—२० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ध्वस्ताः क्लेशा रागादयो यस्य तेन अन्तरात्मना मनसा ॥ १३ ॥ १४ ॥

तपसा तत्पदं ग्रहीष्यतीति विशङ्कितः ॥ १५ ॥

रजस्तस्तोकमपत्यं लोभश्च मदश्च तौ ॥ १६–२० ॥

(१) योगादिति । (२) रजस्तोममदा विति च विज० पा० ।

ते वै तदाश्रमं जग्मुर्हिमाद्रेः पार्श्व उत्तरे ।
पुष्पभद्रा नदी यत्र चित्राख्या च शिला विभो ! ॥ १७ ॥
तदाश्रमपदं पुण्यं पुण्यद्रुमलताऽञ्चितम् ।
पुण्यद्विजकुलाकीर्णं पुण्यामलजलाशयम् ॥ १८ ॥
मत्तभ्रमरसङ्गीतं मत्तकोकिलकूजितम् ।
मत्तबर्हिनटाटोपं मत्तद्विजकुलाकुलम् ॥ १९ ॥
वायुः प्रविष्ट आदाय हिमनिर्झरशीकरान् ।
सुमनोभिः परिष्वक्तो ववावुत्तम्भयन् स्मरम् ॥ २० ॥
उद्यच्चन्द्रनिशावक्त्रः प्रवालस्तबकादिभिः ।
(१)गोपद्रुमलताजालैस्तत्राऽऽसीत्कुसुमाकरः ॥ २१ ॥
अन्वीयमानो गन्धर्वैर्गीतवादित्रयूथकैः ।
अदृश्यतात्तचापेषुः स्वःस्त्रीयूथपतिः स्मरः ॥ २२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नियमर्क्षे धर्मवृद्धये अग्न्यादिषु हरिमर्चयन् ॥ ९ ॥

सायं प्रातश्च भैक्ष्यं गुरवे गुर्वर्थमाहृत्य गुर्वनुज्ञातश्चेत्तर्हि बुभुजे सकृदेकदा नो चेदनुज्ञातस्तदोपोषितो भवति ॥ १० ॥

एवमिति इत्थं तपःस्वाध्यायप्रधानः सुदुर्जयमपि मृत्युं जिग्ये जितवान् ॥ ११ ॥

तेन मृत्युजयेन ॥ १२ ॥

ध्वस्ताः क्लेशा यस्य तेनान्तरात्मना निर्जितेनान्तःकरणेन ॥१३॥

व्यतीयाय व्यतिक्रान्तः ॥ १३ ॥ १४ ॥

तपसा मदीयं पदं ग्रहीष्यतीत्येवं विशङ्कितः अतस्तद्विघातनं तपसो विघ्नमारेभे आरब्धवान् ॥ १५ ॥

रजस्तोकमपत्यं लोभः स च मदश्च तौ ॥ १६ ॥ १७ ॥

———

भाषा टीका ।

और धर्म की वृद्धि के लिये काले मृगचर्म को लिये पश्चात् माला धारण किये, कुश मुष्टि हस्त में लिये, दोनों सन्ध्याओं में अग्नि सूर्य गुरु विप्र और आत्मा में श्रीहरि का पूजन करते हुए ॥ ९ ॥

सायंकाल और प्रातःकाल मौन धारणकर ग्राम से भिक्षा लाकर गुरु को निवेदन करते रहे, और गुरु की आज्ञा से एकबार भोजन करते थे, यदि गुरु आज्ञा न दे तो उपवास करके रहते थे ॥ १० ॥

इस प्रकार तप और स्वाध्यायपरायण होकर लाखों वर्ष तक श्रीहृषीकेश भगवान् का आराधन करते हुए दुर्जय मृत्यु को मार्कण्डेय जी जीत गये ॥ ११ ॥

ब्रह्मा जी भृगु महादेवजी दक्षप्रजापति तथा और सब ब्रह्मा जी के पुत्र एवं नरदेव पितृलोग और समस्त भूत प्राणि उस मृत्यु के जीतने से बड़े विस्मय को प्राप्त होते हुए ॥ १२ ॥

इस प्रकार नैष्ठिक ब्रह्मचर्य व्रत को धारणकर तप स्वाध्याय और संयमों से वह योगी मार्कण्डेय मुनि नष्ट क्लेश वाले अन्तःकरण से अधोक्षज श्रीनारायण का ध्यान करते हुए ॥ १३ ॥

इस तरह उस योगी मार्कण्डेय को महायोग करके श्रीहरि में चित्त लगाते २ इतना भारी काल बीत गया, कि जिसमें छै मन्वन्तर बीत चुके ॥ १४ ॥

तब इस सातवें मन्वन्तर में इन्द्रने इस बात को जान कर उन मार्कंडेय के तप से बड़ी शंका करी । हे ब्रह्मन् ! और उनके तपके विघात करने का प्रारंभ किया ॥ १५ ॥

तब उसी समय इन्द्रने गंधर्व, अप्सरा, कामदेव वसंत-ऋतु, मलयानिल, लोभ, और मद इन सबों को मुनि के समीप भेजे ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदाश्रमपदं प्रविष्टो वायुर्ववाविति तृतीयेनान्वयः । पुण्यैर्द्रुमैर्लताभिश्चाञ्चितं पूजितम् पुण्यद्विजानामृषीणां कुलैराकीर्णम् पुण्या अमला जलाशया यस्मिन् ॥ १८ ॥

मत्तभ्रमराणां सङ्गीतं यस्मिन् मत्तकोकिलानां कूजितं यस्मिन् मत्ता बर्हिण एव नटास्तेषामाटोपो नृत्यसम्भ्रमो यस्मिन् मत्तानां द्विजानां पक्षिणां कुलैराकुलं व्याप्तम् ॥ १९ ॥

(१) गोपद्रुमेत्यादि विज० पा० ।

हुत्वाऽग्निं समुपासीनं ददृशुः शक्रकिङ्कराः ।
मीलिताक्षं दुराधर्षं मूर्तिमन्तमिवानलम् ॥ २३ ॥
ननृतुस्तस्य पुरतः स्त्रियोऽथो गायका जगुः ।
मृदङ्गवीणापणवैर्वाद्यं चक्रुर्मनोरमम् ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

एवम्भूतं तदाश्रमपदं प्रविष्टः सन् वायुर्मलयानिलो ववौ प्रससार उत्तम्भयन्नुद्दीपयन् तत्र वृक्षेषु प्रवेशान्मान्द्यं हिमनिर्झरकणानामादानाच्छैत्यं पुष्पपरिष्वङ्गात्सौगन्ध्यं चोक्तम् ॥२०॥

किञ्च, उद्यंश्चन्द्रो यस्मिंस्तन्निशायाः मुखं रजनीमुखं यस्मिन्नप्रवालस्तबकानामालयः श्रेण्यो येषु तैः गुच्छन्ति विटपैः संश्लिष्यन्तीति गोपाः द्रुमा लताश्च तेषां जालैः समूहैरुपलक्षित आविर्बभूव ॥ २१ ॥

किञ्च, तदा गीतवादित्रयूथकैर्गायकादिसमुदायैरभिर्गन्धर्वैरन्वीयमानः तथा स्वःस्त्रियोऽप्सरसस्तासां यूथस्य पतिः कामः चापमिषुञ्च येन सहस्मरश्च तत्राऽदृश्यत ॥ २२ ॥

दुराधर्षमभिभवितुमशक्यम् ॥ २३—२४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ते वा इति । गन्धर्वादयः हिमाचलस्योत्तरे पार्श्वे तत्रापि यत्र पुष्पभद्रा नाम नदी तत्रापि यत्र च चित्राख्या शिला तत्र तदाश्रमं मार्कण्डेयाश्रमं जग्मुः हे विभो ! इति सम्बोधनम् ॥ १७ ॥

गत्वेति । तस्य मार्कण्डेयस्याश्रमपदं प्रविष्टो वायुर्ववाविति तृतीयेनान्वयः । आश्रमपदं विशिनष्टि—पुण्यं पुण्यावहं पुण्यैर्द्रुमैर्लताभिश्चाञ्चितं पूजितम् आकुलमिति पाठान्तरं पुण्यानां द्विजानामृषीणां कुलैः समूहैराकीर्णं पुण्या अमलाश्च जलाशया यस्मिंस्तत् ॥ १८ ॥

मधुपानमत्तानां भ्रमराणां सङ्गीतं यस्मिन् मत्तकोकिलानां कूजितं यस्मिन् मत्ता बर्हिणो मयूरा एव नटास्तेषामाटोपः सम्भ्रमो यस्मिन् मत्तानां द्विजानां पक्षिणां कुलैः आकुलं व्याप्तम् ॥ १९ ॥

इत्थम्भूतं तदाश्रमपदं मलयानिलः शीतलगिरिनदीशीकराद् आदाय सुमनोभिः कुसुमैः परिष्वक्तः स्मरं काममुत्तम्भयन्नुद्दीपयन् ववौ प्रससार एवं मलयानिलस्य व्यापार उक्तः ॥ २० ॥

अथ वसन्तस्य तमाह-उद्यदिति । उद्यंश्चन्द्रो यस्मिंस्तन्निशावक्त्रं रजनीमुखं यस्मिन् प्रवालानां पल्लवानां स्तबकानां गुच्छानां चालयः श्रेण्यो येषु तैः गोपद्रुमलताजालैः गुच्छन्ते विटपैः संश्लिष्यन्ते इति गोपाः द्रुमाः लताश्चेति तेषां जालैः समूहैरुपलक्षितः कुसुमाकरो वसन्तः तत्र प्रादुर्बभूव ॥ २१ ॥

अथ कामस्य तमाह—अन्वीयमान इति । गीतवादित्राणां मृदङ्गादीनां यूथं येषामस्तीति तथा तैः गन्धर्वैरप्सरोभिः गन्धर्वैरन्वीयमानः युज्यमानः गृहीतधनुर्बाणः स्वर्गस्त्रीणाम् अप्सरसां यूथस्य पतिः स्मरः काम अदृश्यताऽलक्ष्यत ॥ २२ ॥

हुत्वेति । उपासीनं तं मार्कण्डेयं मूर्तिमन्तं पुंविग्रहधारिणम् अनलमिव स्थितं ददृशुः ॥ २३ ॥

ननृतुरिति तस्य मार्कण्डेयस्य अग्रे अथ वाद्यं स्तुतिसूचकं ध्वनिं चक्रुः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आटोपं सविलासनृत्यम् ॥ १९ ॥

उत्तम्भयन्वर्धयन् ॥ २० ॥

उद्यंश्चन्द्रो यस्य स तथा स च निशावक्त्रः प्रदोषो यस्य स तथा कुसुमाकरः वसन्तः प्रवालस्तबकालिभिः भृङ्गैर्गायन् द्रुमलतामुकुलैः सहासीदाविरिति शेषः ॥ २१ ॥

आत्तचापेषुर्धनुर्ज्यासहितबाणः स्वःस्त्रीयूथपतिः स्वर्गस्त्रीगणनाथः ॥ २२ ॥

अग्निं हुत्वोपासीनमग्निसमीपे तिष्ठन्तं दुराधर्षं चलितेन्द्रियं कर्तुमशक्यम् ॥ २३—२५ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

उद्यदिति । गां पृथ्वीं फलपुष्पादिभिः पान्तीति गोपाः सर्वसन्तर्पका ये द्रुमा इत्यर्थः ॥ २१—२४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उद्यंश्चन्द्रो यस्मिंस्तादृशं निशावक्त्रं निशामुखं यस्मिन् सः प्रवालानां स्तबकानामालयो यत्र तैः गाः किरणान् पान्ति रक्षन्ति ये द्रुमा लताश्च तेषां जालैः सह कुसुमाकरो वसन्तः॥२१॥

गीतवादित्रयूथकैः गीतवादित्रयूथवद्भिः अदृश्यत मुनिमनांसि स्वयमेव किञ्चिदन्वभूयतेति उपकल्पयामीति प्रबोध्याहमिति धर्षितोऽपीत्यग्रिमवाक्याद्वगम्यते मत्वर्थीयष्ठन् ॥ २२ ॥

समुपासीनं मुनिम् ॥ २३—२४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तदाश्रमपदं प्रविष्टो वायुर्ववौ इति तृतीयेन सम्बन्धः पुण्यैर्द्रुमैर्लताभिश्च अञ्चितं पूजितम् ॥ १८ ॥

मत्ता बर्हिण एव नटाः तेषामाटोपः सम्भ्रमो यत्र ॥ १९ ॥२०॥

उद्यच्चन्द्रो यस्मिन् तादृक् निशामुखं यस्मिन् स प्रवालानां पल्लवानां स्तबकानां गुच्छानामालयो येषु तैः गाः भ्रमरादिवाणीरूपाः प्रतिध्वनिरूपाश्च पान्तीति गोपाः द्रुमाः लताश्च तेषां जालैः समूहैरुपलक्षितः कुसुमाकरो वसन्तः आसीदाविर्बभूव ॥ २१ ॥

सन्दधेऽस्त्रं स्वधनुषि कामः पञ्चमुखं तदा ।
(१)मधुर्मनो रजस्तोक इन्द्रभृत्या व्यकम्पयन् ॥ २५ ॥
क्रीडन्त्याः पुञ्जिकस्थल्याः कन्दुकैस्स्तनगौरवात् ।
भृशमुद्विग्नमध्यायाः केशविस्रंसितस्रजः ॥ २६ ॥
इतस्ततो भ्रमद्दृष्टेश्चलन्त्या अनुकन्दुकम् ।
वायुर्जहार तद्वासः सूक्ष्मं त्रुटितमेखलम् ॥ २७ ॥
विससर्ज (२)तदा बाणं मत्वा तं स्वजितं स्मरः ।
सर्वं तत्राऽभवन्मोघमनीशस्य यथोद्यमः ॥ २८ ॥
त इत्थमपकुर्वन्तो मुनेस्तत्तेजसा मुने ! ।
दह्यमाना निववृतुः प्रबोध्याहिमिवार्भकाः ॥ २९ ॥
इतीन्द्रानुचरैर्ब्रह्मन् धर्षितोऽपि महामुनिः ।
यन्नागादहमो भावं न तच्चित्रं महत्सु हि ॥ ३० ॥
दृष्ट्वा निस्तेजसं कामं सगणं भगवान् स्वराट् ।
श्रुत्वानुभावं ब्रह्मर्षेर्विस्मयं समगात्परम् ॥ ३१ ॥
तस्यैवं युञ्जतश्चित्तं तपः स्वाध्यायसंयमैः ।
अनुग्रहायाऽविरासीन्नरनारायणो हरिः ॥ ३२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गीतवादित्रयूथकैः गीतवादित्रसमूहवद्भिः ॥ २२—३४ ॥

---

भाषा टीका ।

इन्द्रके भेजे हुए वे सब हिमाद्रिके उत्तर तरफ जहां पुष्पभद्रा नदी और चित्रशिला नामक शिला है, उस जगह मार्कण्डेयके आश्रम को जाते हुए ॥ १७ ॥

महर्षि मार्कण्डेय का वह आश्रम बड़ा रमणीय और रमणीय लताओं से सुशोभित हो रहा, रमणीय पक्षि समूहों से व्याप्त और रमणीय निर्मल जलाशय जिसमें भरे हुए हैं ॥ १८ ॥

मत्त भ्रमर जिसमें गान कर रहे हैं, मत्त कोकिल जहां पञ्चम स्वरसे कूज रहे हैं, मत्त मयूर जहां नृत्य कर रहे हैं इस प्रकार मत्त पक्षियों के समुदायों से वह आश्रम कूज रहा है ॥ १९ ॥

जिस जगह हिमके झिरनाओं के छोटे२ जलकणों को लेकर पुष्पों से आलिंगन करता हुआ वायु आकर काम का उद्दीपन करता हुआ वह रहा है ॥ २० ॥

इस प्रकार के उस आश्रम में रात्रि के आरम्भ समय की शोभा देखो तो चन्द्रमा की चांदिनी प्यारी खिल रही है बड़े छोटे वृक्षों की शाखा परस्पर आलिङ्गन कर रही हैं उन वृक्ष और लताओं के जालों के साथ अर्थात् लताओं के समूहों सहित वसन्त ऋतु वहां प्रकट होता हुआ ॥ २१ ॥

तथा उसी समय पर गाने बजानेवालों के यूथों सहित गन्धर्व लोग जिसके साथ में ऐसा अप्सराओं का यूथपति कामदेव हाथ में धनुष बाण लिये हुए देख पड़ता भया ॥ २२ ॥

इस प्रकार इन्द्र के किंकरों ने वहां जाकर मार्कण्डेय जी को देखा, कि—वे मुनि अग्नि में हवन करके नेत्र बन्द कर श्रीहरि की उपासना कर रहे हैं । और देखने में बड़े दुर्धर्ष मानो मूर्त्तिमान् अग्नि बैठा हो ऐसे देख पड़ते हैं ॥ २३ ॥

उन मुनि के आगे जाकर अप्सरा लोग नृत्य करने लगीं, और गायक गन्धर्व लोग गान करने लगे । बाजे बजानेवाले मृदंग वीणा पणव इत्यादि बाजों को बहुत ही मनोहर बजाने लगे ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

शोषणदीपनसम्मोहनतापनोन्मादनाख्यानि पञ्चमुखानि यस्य तदस्त्रं सन्दधे तदैव मधुर्वसन्तः रजस्तोकश्च पुंस्त्वमार्दवम् अन्ये चेन्द्रभृत्यादयस्तस्य मनो व्यकम्पयन् ॥ २५—२६ ॥

किञ्च, वायुर्मन्दवातोऽनिलः पुञ्जिकस्थल्याः सूक्ष्मं वासो जहार ॥ २७ ॥

(१) मधुर्मन्दो रजस्तोम इति (२) तत इति च विज० पा० ।

### श्रीधरस्वामिकृतभावार्थदीपिका।

सर्वं तेषां कर्म तत्र तस्मिन् मोघं व्यर्थम् अनीशस्य निर्दिंशस्य ॥ २८ ॥

मुनेरपकुर्वन्तः प्रतिकूलमाचरन्तः हे मुने! ॥ २९ ॥

अहमोऽहङ्कारस्य भावं विकारम् ॥ ३० ॥

निस्तेजसं म्लानवदनं स्वराडिन्द्रः ॥ ३१ ॥

नरनारायणरूपो हरिः ॥ ३२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

अहमो भावं अहङ्कारं रागात् न प्राप्तः ॥ ३०—३२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

सन्दध इति। पञ्चारविन्दादीनि मुखानि यस्य तत्कां स्वे धनुषि सन्दधे मधुर्वसन्तः रजस्तोको लोभो मदश्चेति एते इन्द्रभृत्याः व्यकम्पयन्नक्षोभयन् ॥ २५ ॥

क्रीडन्त्या इति पुञ्जिकस्थलीनामाप्सराः तस्याः कन्दुकैः क्रीडन्त्याः स्तनभाराक्रान्तमुद्विग्नमध्यायाः चञ्चन्मध्यायाः केशेभ्यो विस्रंसिता स्रग्यस्यास्तस्याः ॥ २६ ॥

कन्दुकमनुसृत्य इतस्ततो भ्रमन्त्यौ दृष्टी यस्यास्तस्याः अतएव त्रुटिता मेखला यस्मिन् तत्सूक्ष्मं वासो वायुर्जहार ॥ २७ ॥

विससर्जेति। तदा पुञ्जिकस्थल्याः नग्नतादशायां तत्र तस्मिन् मुनौ सर्वमेतत्कृत्यं मोघं व्यर्थमभवत् यथाऽनीशस्य निर्धनस्योद्यमस्तद्वत् ॥ २८ ॥

त इति। हे मुने मुनेः मुनये इत्थमपकुर्वन्तस्तस्य मुनेस्तेजसा दह्यमाना निवर्त्तितुर्निवृत्ता बभूवुः यथाऽर्भकोऽहिं सर्पं प्रबोध्य ततो निवर्त्तते तद्वत् ॥ २९ ॥

चित्रमेतदहो तस्य जितेन्द्रियत्वमिति विस्मयमानमाख्याकयाह—इतीति। हे ब्रह्मन् धर्षितः प्रलोभितोऽपि यदहमोऽहङ्कारस्य भावं विकारं मोहं नागादिति न प्रापेत्येतन्महत्सु न चित्रम् ॥ ३० ॥

दृष्ट्वेति। स्वराडिन्द्रः निस्तेजसं परिम्लानवदनं कामं दृष्ट्वा ब्रह्मर्षेः मार्कण्डेयस्य प्रभावं श्रुत्वा च परं भृशं विस्मयमगात् ॥ ३१ ॥

तस्यैवेति नरनारायणौ नरसहितः श्रीनारायणः ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

पुञ्जिकस्थल्याः अप्सरसां प्रधानायाः कस्याश्चिदप्सरसः केशविस्रंशितस्रजः केशभागात् विस्रंसिता विभ्रष्टा स्रक् यस्याः सा तथा तस्याः ॥ २६ ॥

अनुकन्दुकम् उत्पतत् कन्दुकानुकूलं यथा भवति तथा चञ्चन्त्याः सूक्ष्ममणुतरं त्रुटितमेखलं त्रुटिता छिन्ना मेखला काञ्ची यस्याः तस्याः तत् ॥ २७ ॥

अनीशमना जितम् ॥ २८ ॥

अर्भका अहिं प्रबोध्येव ॥ २९ ॥

अहमोऽहङ्कारस्य भावं नागात् कपालमुक्तनारिकेलफलवद् द्वाभिमानरहित इत्यर्थः ॥ ३० ॥

निस्तेजसं दुर्बलं स्वराडिन्द्रः ॥ ३१ ॥

नरेण युक्तो नारायणः नरनारायणः ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

व्यकम्पयन् विकम्पयितुमारब्धाः ॥ २५ ॥

पुञ्जिकस्थल्यास्तत्साम्याः ॥ २६ ॥ २७ ॥

अनीशस्य अनीश्वरवादिनः उद्यमः पारलौकिकप्रयत्नः ॥ २८ ॥ २९ ॥

धर्षितापि धर्षितुमारब्धोऽपि ॥ ३०—३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

शोषणमोहनसन्दीपनतापनमादनाख्यानि पञ्चमुखानि यस्य तत् मधुर्वसन्तः रजस्तोकश्च पुंस्त्वमार्षे व्यकम्पयन् मनश्चालयामासुः ॥ २५—२७ ॥

अनीशस्य भाग्यरहितस्य ॥ २८ ॥

प्रबोध्याहिमिति न जानीमहे अद्य किं भविष्यतीति भीताः अत्राहिदृष्टान्तेन प्रथमं किञ्चिदुद्भूतं कामं प्रति क्रोधोऽभूत् पश्चाद्विवेकेन कामक्रोधयोरुभयोरप्युपशमः कृत इत्यवसीयते ॥ २९ ॥

अहमोऽहङ्कारस्य ॥ ३० ॥

स्वराट् इन्द्रः ॥ ३१ ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

शोषणदीपनसम्मोहनतापनोन्मादनानि पञ्चमुखानि यस्य तत्पञ्चमुखम् तस्य मनः व्यकम्पयन् मधुर्वसन्तः रजस्तोकश्च पुंस्त्वमार्षम् आत्मइन्द्रभृत्याः मदादयः ॥ २५-२९ ॥

अहमः अहङ्कारस्य भावं विकारं मोहम् ॥ ३० ॥ ३१ ॥

नरनारायणौ नरेण सहितो नारायणः ॥ ३२ ॥

---

### भाषाटीका।

उसी समय कामदेव ने भी अपने धनुष पर पंचमुख का बाण धारण किया, वसन्त और लोभ तथा अन्य इन्द्र के किंकर मुनि के मन को कम्पाने लगे ॥ २५ ॥

उसी समय ऋषि के आगे पुञ्जिकस्थली अप्सरा गेंद हाथ में लेकर खेल रही थी, तब उसके स्तनों के भारीपने से उसका सूक्ष्म कटिभाग टूटा सा जाता जिसकी शोभा न्यारी हो रही, और उसके गेंद के खेल के आवेश में केशों से माला खुल २ कर न्यारी पृथिवी पर गिरने लगी ॥ २६ ॥

गेंद के पटकने पर जहां २ गेंद जाती थी उसी गेंद के पीछे जानेवाली उस पुंजिकस्थली अप्सरा की दृष्टि गेंद

तौ शुक्लकृष्णौ नवकञ्जलोचनौ चतुर्भुजौ रौरववल्कलाम्बरौ ।
पवित्रपाणी उपवीतकं त्रिवृत्कमण्डलुं दण्डमृजुं च वैणवम् ॥ ३३ ॥
पद्माक्षमालामुत जन्तुमार्जनं वेदं च साक्षात्तप (१) एव रूपिणौ ।
तपत्तडिद्वर्णपिशङ्गरोचिषा प्रांशू दधानौ विबुधर्षभार्चितौ ॥ ३४ ॥

ते वै भगवतो रूपे नरनारायणावृषी ।
दृष्ट्वोत्थायाऽऽदरेणोच्चैर्ननामाङ्गेन दण्डवत् ॥ ३५ ॥
स तत्सन्दर्शनानन्दनिर्वृतात्मेन्द्रियाशयः ।
हृष्टरोमाऽश्रुपूर्णाक्षो न सेहे तावुदीक्षितुम् ॥ ३६ ॥
उत्थाय प्राञ्जलिः प्रह्व औत्सुक्यादाश्लिषन्निव ।
नमो नम इतीशानौ बभाषे गद्गदाक्षरः ॥ ३७ ॥
तयोरासनमादाय पादयोरवनिज्य च ।
अर्हणेनानुलेपेन धूपमाल्यैरपूजयत् ॥ ३८ ॥
सुखमासनमासीनौ प्रसादाभिमुखौ मुनी ।
पुनरानम्य पादाभ्यां गरिष्ठाविदमब्रवीत् ॥ ३९ ॥

मार्कण्डेय उवाच ।

किं वर्णये तव विभो ! यदुदीरितोऽसुः संस्पन्दते तमनु वाङ्मन इन्द्रियाणि ।
स्पन्दन्ति वै तनुभृतामजशर्वयोश्च स्वस्याप्यथापि भजतामसि (२)भावबन्धुः ॥ ४० ॥

भाषा टीका ।

के पीछे भ्रमती रही इतने में कटि से अति सूक्ष्म कटिसूत्र के टूटने से अति सूक्ष्म वस्त्र की साड़ी पहिने थी वह शिथिल हुई और कन्दुक क्रीडा के आवेश में उस अप्सरा को खबर नहीं पड़ी इतने में ही मलयगिरि के पवन ने उस सूक्ष्म साड़ी को पुंजिकस्थली के शरीर से उड़ाकर पृथक् करदी ॥ २७ ॥

काम ने जाना कि मैंने अपने कर्त्तव्य से अब ऋषि को जीत लिया, ऐसा मानकर ऋषि के ऊपर अपना बाण छोड़ दिया, परन्तु उन ऋषि के ऊपर तो इनका सब ही प्रयोग निष्फल होगया, जैसे, कि—असमर्थ का उद्यम व्यर्थ हो जाता है ॥ २८ ॥

सूत जी कहने लगे, कि—हे शौनक ! वे इन्द्र के किंकर मुनि का इस प्रकार अपराध करके जब उनके तेज से जलने लगे, तब वहां से निवृत्त हुए ॥ जैसे, कि छेड़े २ बालक सर्प को चैतन्य करके दूर होजावें ॥ २९ ॥

हे ब्रह्मन् ! इस तरह इन्द्र के अनुचरों ने महामुनि श्रीमार्कण्डेय का अपराध भी किया, तो भी जो उनको अहंकार नहीं हुआ यह बात हरिभक्त महात्माओं में कुछ बड़ी विचित्र नहीं है ॥ ३० ॥

इन्द्र भी परिकर सहित कामदेव को बिना तेज का फीका देखकर ब्रह्मर्षि के प्रभाव को सुनकर बड़े विस्मय को प्राप्त होता हुआ ॥ ३१ ॥

तप स्वाध्याय और संयमों से इस प्रकार श्रीहरि में चित्त लगानेवाले उन मार्कण्डेय ऋषि के ऊपर अनुग्रह करने को सर्व दुःख हरन करनेवाले श्रीनरनारायण भगवान् आकर ऋषि को दर्शन देते हुए ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तावनुवर्णयति द्वाभ्याम्-ताविति । रौरवं कृष्णाजिनं वल्कलं चाम्बरं ययोस्तौ पवित्रे पाण्योर्ययोस्तौ त्रिवृत्त्रिगुणं नवतन्तुकमिति वा त्रिवृद्बर्हिः पञ्चमानामित्यादौ नवके प्रयोगात् उपवीतकादीन्दधानौ ॥ ३३ ॥

(१) एकरूपिणाविति वीर०विज० पा० (२) भावबद्ध इति विज० पा० ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

वेत्रं दर्भमुष्टिं किञ्च, साक्षात्तप एव तौ तत्र हेतुः तप-स्तडिद्वर्णौ देदीप्यमानविद्युत्सङ्काशं वस्तिशङ्गं रोचिश्चिन्नेन रूपिणौ मूर्त्तिमन्तौ तादृक्तेजोयुक्तमूर्त्तिभ्यां तपोमयत्वेन प्रकाश-मानावित्यर्थः । प्रांशू उन्नतौ ॥ ३४ ॥

उच्चैर्महताऽऽदरेण ॥ ३५ ॥

तयोः सन्दर्शनेन य आनन्दस्तेन निर्वृता उपशान्ता आत्मेन्द्रियाशया देहेन्द्रियमनांसि यस्य सः न सेहे नाशक्नोत ॥ ३६ ॥

आश्लिष्यन्नाश्लिष्यन्नालिङ्गन्निव ॥ ३७ ॥

पादयोरवनिज्य पादौ प्रक्षाल्य अर्हणेनाऽर्घ्येण ॥ ३८ ॥

पादाभ्यां पादावानम्य गरिष्ठौ पूज्यतमौ तौ प्रति ॥ ३९ ॥

अन्तर्यामिणस्तस्यैव प्राणादिप्रवर्तकत्वादात्मनस्तत्त्वस्तुता चाज्ञानत्वं पश्यन्नाह–किमिति । तत्र त्वां किमहं वर्णये कथं स्तौमि यतोऽत्र त्वयैवोदीरितोऽसुः प्राणः संस्पन्दते प्रवर्तते तमनु च वागादयः स्पन्दन्ति अत्र हेतुः वै अन्वयव्यतिरेकाभ्यां "श्रोत्रस्य श्रोत्रम्"इत्यादिश्रुतिभिश्चैतत्प्रसिद्धमित्यर्थः । न केवलं प्राकृतानां तनुभृतां किं त्वजशर्वयोश्चातः स्वस्य ममापि तथैव एवं यद्यपि न कस्यापि स्वातन्त्र्यमथापि दारुयन्त्रवत्त्वत्प्रवर्तिते-ष्वपि वागादिभिर्भजतां पुंसां मावबन्धुरात्मबन्धुरसि ननु पित्रादिवद्देहमात्रबन्धुः अहो कृपालुता तवेत्यर्थः ॥ ४० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

त्वदुदीरितो येन प्रेरितः असुः प्राणः स्वस्यापि तथापि सर्वस्वा-त्मत्वेपि ॥ ४०–४२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ताविति । तौ नरनारायणौ वीक्ष्य उत्थायेत्युपरितनेनान्वयः कथ-म्भूतौ शुक्लकृष्णौ तत्र नरः शुक्लः श्रीनारायणः कृष्णवर्णः रौरवं कृष्णाजिनं वल्कलं च ते अम्बरे ययोस्तौ पवित्रे पाणयोः ययोस्तौ त्रिवृत् त्रिगुणं तन्तन्तुकमिति वा तदुपवीतं त्रितीनान्तानां दधानावित्युपरितनेनान्वयः ऋजुमवक्रं वैणवं दण्डम् ॥ ३३ ॥

पद्माक्षाणां मालाम् उतापि च जन्तुमार्जनं मशकादिजन्तुप-नोदनवस्त्रं वेदं दर्भमुष्टिं च दधानौ साक्षात्तप एव एकं रूपं मूर्तिस्तयोरस्तीति तथा तपस्तडिद्वर्णौ दीप्यमानतडिद्वर्णसदृशं वस्तिशङ्गरोचिश्चिन्नेन प्रांशू उन्नतौ व्याप्तौ अंशवो ययोस्तौ विबुधश्रेष्ठै-र्ब्रह्मादिभिरर्चितौ ॥ ३४ ॥

ते इति । रूपापेक्षया नपुंसकनिर्देशः वीक्ष्येति उच्चैर्महताङ्गेन देहेन ॥ ३५ ॥

स मार्कण्डेयस्तयोः सन्दर्शनेन यो आनन्दस्तेन निर्वृताः सुखिताः शान्ताश्च आत्मेन्द्रियाशयाः देहेन्द्रियमनांसि यस्य सः हृष्टानि उत्पुलकितानि रोमाणि यस्य सः तावत्तौ नरनारा-यणौ द्रष्टुमपि न सेहे न शशाक ॥ ३६ ॥

उत्थायेति । प्रह्वः नम्रः आश्लिष्यन्निव परिरम्भमाण इव केवलं गद्गदाक्षरं नमो नम इति वाक्यम् ईश्वरौ प्रत्यावभाषे गद्गदाक्षरमिति क्रियाविशेषणम् ॥ ३७ ॥

तयोरिति । आसनाय निधाय पादयोरवनिज्य पादौ प्रक्षाल्या-र्हणेन योग्येनानुलेपनेन चन्दनेन धूपैर्माल्यैः कुसुमैश्च अपूजयत् ॥ ३८ ॥

सुखं यथा तथा आसीनः गरिष्ठौ पूज्यतमौ प्रतीदं वक्ष्य-माणमब्रवीत् ॥ ३९ ॥

उक्तिमेवाह—किमित्यादिना, यावदध्यायसमाप्ति । युवयोर्दर्शनं न मे तपःफलं तस्यापि सर्वेन्द्रियप्राणप्रवो-दयित्रा त्वयैव कारितत्वात् तः केवलं त्वत्कृपाफलमेवेत्यभि-प्रेत्याह–किमिति । हे विभो ! तव त्वां किं वर्णये कथं करोमि यतः स्वस्य मम तनुभृतां किम्बहुना अजशर्वयोः ब्रह्मरुद्रयोश्चासुः प्राणः यतो येन त्वयोदीरितः प्रेरितः संस्पन्दते चलति स्वव्यापारक्षमो भवति तं स्पन्दमानं प्राणमनुसृत्य वागादीनि स्पन्दन्ति अनुशासितत्वलक्षणकस्यात्मनेपदस्यानित्यत्वात्परस्मैपदं यद्येवं तर्हि सर्वोपि त्वामिव किं न मामुपासते इत्यत्राह–अथापीति । प्राणिमात्रस्य प्राणादिप्रचोदयितृत्वेपि भजतां पुंसामेव भावबन्धुर्भावस्यानुरागस्य कृपोभिप्रायविशेषः तं बध्नाति स्थिरी-करोतीति तथा त्वयि किञ्चिदानुकूल्ययुक्तानामेव भावबन्धुस्त्व-मिति भावः ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रुरोर्निर्मितं रौरवं वल्कलं चाम्बरं वा ययोस्तौ ॥ ३३ ॥

जन्तुमार्जनं पिञ्छिकापुञ्जं चामरविशेषमित्यर्थः । वेदं दर्भ-मुष्टिं तपती प्रकाशमाना तडित्सम्पत्तडित् तद्वर्णेन पिशङ्ग-रोचिषा कपिलप्रभया तप एकरूपिणौ प्रांशू अत्युच्छ्रितौ दधानौ जग्मतुरिति शेषः । उपवीतादिकं च दधानौ रूपविशेषणम् ॥ ३४ ॥

तौ नरनारायणावृषी वीक्ष्य ननाम नमने हेतुमाह–ते इति । ते इमे रूपे वै यस्मात्तस्मात् ॥ ३५ ॥

तयोः सन्दर्शनादुत्पन्नेनाऽऽनन्देन नियतात्मेन्द्रियाशया यस्य स तथा ॥ ३६ ॥

गद्गदाक्षरं वचः ॥ ३७ ॥ ३८ ॥

पादाभ्यां पादावुद्दिश्य गरिष्ठौ गुरूणां ब्रह्मादीनामपि गुरू ॥ ३९ ॥

अपरिमितमहिम्नोर्युवयोः पुरतो यत्किञ्चिद्गुणं किं वर्णये न किमपि माहात्म्यानामनन्तत्वात्तदेकदेशमपि वर्णयितुं न शक्तोऽस्मि वागादीन्द्रियाणां त्वन्नियतत्वेन स्वातन्त्र्याभावात्तत्वादिति-शेषः । एतत्कथमित्याशङ्क्य सर्वेन्द्रियनायकः प्राणोपि भग-वन्नियत एव चेष्टते किमुतान्यानीति भावेनाह—त्वदुदीरित इति । येन त्वयोदीरितः प्रेरितोऽसुः प्राणः तमनु प्राणमनु तनु-भृतां मम इन्द्रियाणि मत्प्रेरितानि स्पन्दन्ति चेष्टन्ते किञ्च अजशर्वयोरिन्द्रियाणि येन प्रेरितानि अनेनाजशर्वयोः समत्वेन त्वत्प्रेरितानि विषयेषु प्रवर्तन्ते अतो व्यभिचारी हेतुरिति निरस्तम् अथापि त्वादीन्द्रियप्रवृत्तौ हेतोर्व्यभिचारस्तदवस्थ

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इति मन्दाशङ्कां परिहरति-त्वय्येति । त्वय्येवेन्द्रियाण्यपि त्वत्प्रेरितानि यद्यप्येवं स्वतन्त्रोऽसि स त्वमथापि भजतां पुंसां भाव-बद्धोसि भक्तिबद्धोसि तस्मात्परतन्त्र इव प्रतीयसे भाद-ज्ञानामित्यर्थः ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

उपवीतादिकं दधानौ ॥ ३३—३९ ॥

किं वर्णये इति । तथापि भावेन भक्त्या बन्धुः स्निग्धोऽसि ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

रौरवं कृष्णाजिनं वल्कलम् अम्बरं ययोस्तौ त्रिवृत् त्रिगुणं नवतन्तुकम् उपवीतं दधानौ कमण्डल्वादिकं हस्तेषु दधानौ वंशं वेणुदण्डं जन्तूनां मार्जनं शुद्धिर्यतस्तत् वेदं दर्भमुष्टिमिति केचित् तप एव रूपिणौ तपोमूर्त्ती इत्यर्थः । तपस्तडिद्वर्णं दीप्यमानविद्युत्सदृशा यत् पिशङ्गं रोचिस्तेन प्रांशू समुन्नतौ ॥ ३३ ॥ ३४ ॥ ३५ ॥

न सेहे न शशाक ॥ ३६ ॥

प्रह्वो नम्रः ॥ ३७—३९ ॥

येन त्वयैव उदीरितः प्रेरितोऽसुः प्राणः स्पन्दते प्रवर्त्तते तमनु च वागादीनि स्पन्दन्ते "प्राणस्य प्राणम्" इत्यादिश्रुतिभिर्निश्चितमेवेत्यर्थः । न केवलं प्राकृतानां तनुभृतामपि त्वन्नियामकयो-श्च अतः स्वस्य ममापि यद्यप्येवम् तथापि भजतां जनानां भावेन प्रेम्णा बन्धुर्बन्धुरिव बद्धोऽसि प्राणानुबन्धीन्द्रियादीनाम-स्मस्येव स्वभजनं कारयसि पुनस्तादृशभजनस्य प्रत्युपकारे असमर्थो ऋणीव भूत्वा तत्प्रेमवश्यो भवसीत्यद्भुत तव कृपावैभवमिति भावः ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नरः शुक्लः श्रीनारायणः कृष्णः रौरवं कृष्णाजिनं ते अम्बरं ययोस्तौ त्रिवृत् त्रिगुणं नवतन्तुकं वा उपवीतकं कम-ण्डल्वादिकं च दधानावित्युत्तरेणान्वयः ऋजुमवक्रं दण्डम् ॥ ३३ ॥

जन्तुमार्जनं पिपीलिकामशकादिजन्त्वपनोदकम् तपत् दीप्यमानं तडिद्वर्णसदृशं यत्पिशङ्गरोचिस्तेन साक्षात्तप एव रूपिणौ मूर्त्तिमन्तौ ॥ ३४ ॥

बहुमेहता आदरेण ॥ ३५ ॥

तयोः सन्दर्शनानन्देन निर्वृताः आनन्दिताः आत्मेन्द्रिया-शयाः देहेन्द्रियमनांसि यस्य सः ॥ ३६ ॥

आश्लिषन् आलिङ्गन्निव ॥ ३७—३९ ॥

सर्वचेतनाचेतननियन्तारं भगवन्तं स्तोतुं प्रवृत्तः स्तुतौ आत्मनः सामर्थ्याभावं प्रथमं दर्शयति—किमिति । हे विभो ! सर्वव्यापक । तव अहं किं वर्णये न किमपि वर्णयितुं शक्नो-मीत्यर्थः । यथा व्यापकस्य वह्न्यादेः सकाशात् जातो विस्फुलि-ङ्गादि किमपि न कर्त्तुं शक्नोति तद्वदिति भावः किञ्च अस्य मम तथाऽन्येषामपि तनुभृतां किमुत भजतामपि येषां असुः यमनु वाङ्मनइन्द्रियाणि स्पन्दन्ति एतद्भूतः सर्वेन्द्रिय नायकः प्राणः येन त्वयैवोदीरितः स्पन्दते प्रवर्त्तते अथापि भगवत्प्रवर्त्तितप्राणादिमतां भवदुपास्यानामंशभूतानां भजता-मस्माकं भावबन्धुः भावेन असाधारणेन भक्तप्रियत्वभावेनैव बन्धुर्नेतर्योपि ॥ ४० ॥

---

भाषा टीका ।

वे दोनों नर और नारायण कैसे हैं, कि—एक शुक्ल और एक कृष्ण वर्ण हैं, दोनों नवीन कमल सदृश विशाल लोचनवाले हैं, चार जिनके भुजा, मृगचर्म और वल्कलों के वस्त्र धारण किये, कुशाओं के पवित्रों ( पहितियों ) को हाथों में धारण किये । त्रिगुण यज्ञोपवीत कमंडलु और सरल वेणु का दण्ड इनको भी दोनों स्वरूप धारण किये ॥ ३३ ॥

तथा कमलाक्ष की माला, जन्तु मार्जन और दर्भ की मुष्टि इनको भी धारण किये दोनो साक्षात् तप की मूर्त्ति दीप्यमान विद्युत्सदृश जो कान्ति तिससे उपलक्षित और बड़े उन्नत, तथा बड़े २ देवताओं में श्रेष्ठ जो ब्रह्म रुद्रादि तिनसे पूजित ऐसे उन दोनों को मार्कण्डेय ने देखा ॥ ३४ ॥

साक्षात् ऋषि नर नारायण दोनों उन भगवत्स्वरूपों को देखकर बड़े आदर पूर्वक उठकर मार्कण्डेय महर्षि साष्टांग दण्डवत् करतेहुए ॥ ३५ ॥

भगवान् के दर्शन से उन मार्कण्डेय ऋषि का आत्मा, इन्द्रिय, और अन्तःकरण तीनों आनन्द में निमग्न होगये, उस समय महर्षि को आनन्द से रोमाञ्च हो आये तथा नेत्र आनन्दाश्रुओं से पूरित होगये कि—जिससे यथावत् भगवान् के दर्शन करने को भी मुनि समर्थ न हुए ॥ ३६ ॥

फिर साष्टांग दण्डवत् से उठकर हाथ जोड़ नम्र होकर उत्सुकता के मारे जानो कि भगवान् को आलिंगन ही कर लेंगे इस प्रकार प्रेम से गद्गदाक्षर होकर दोनों जगत् के नियन्ताओं से ऋषि नमो नमः ऐसे बोलते हुए ॥ ३७ ॥

ऋषि दोनों को आसन देकर दोनों के चरणारविन्दों का प्रक्षालनकर अर्घ चन्दन धूप दीप मालाओं से पूजन करते हुए ॥ ३८ ॥

सुख पूर्वक आसनों पर विराजमान अपने ऊपर अति प्रसन्न दोनों आदि मुनियों के चरण कमलों को फिर नम-स्कार करके परमपूज्य अपने दोनों प्रभुओं से मुनि इस प्रकार बोलते हुए ॥ ३९ ॥

मूर्ती इमे भगवतो भगवंस्त्रिलोक्याः क्षेमाय तापविरमाय च मृत्युजित्यै ।
नाना बिभर्ष्यवितुमन्यतनूर्यथेदं सृष्ट्वा पुनर्ग्रससि सर्गमिवोर्णनाभिः ॥ ४१ ॥
तस्यावितुः स्थिरचरेशितुरङ्घ्रिमूलं यत्स्थं न कर्मगुणकालरजः स्पृशन्ति ।
यद्वै स्तुवन्ति निनमन्ति यजन्त्यभीक्ष्णं ध्यायन्ति वेदहृदया मुनयस्तदाप्त्यै ॥ ४२ ॥
नान्यं तवाङ्घ्र्युपनयादपवर्गमूर्तेः क्षेमं जनस्य परितोभिय ईश विद्मः ।
ब्रह्मा बिभेत्यलमतो द्विपरार्धधिष्ण्यः कालस्य ते किमुत तत्कृतभौतिकानाम् ॥ ४३ ॥
तद्वै भजाम्यृतधियस्तव पादमूलं हित्वेदमात्मच्छदि चाऽऽत्मगुरोः परस्य ।
देहाद्यपार्थमसदन्त्यमभिज्ञमात्रं विन्देत ते तर्हि सर्वमनीषितार्थम् ॥ ४४ ॥

भाषाटीका ।

मार्कण्डेय उवाच ।

मार्कण्डेय महर्षि बोले, कि—हे विभो ! मैं आपकी क्या स्तुति करूं ? क्योंकि—जिन कारणों से स्तुति होती वे कारण तो सब आपके आधीन हैं, जिन आपकी प्रेरणा से मुख्य प्राण प्रवृत्त होता है, कि—जिस प्राण के पीछे देहधारियों की वाणी मन और इन्द्रियें अपने २ कार्य में प्रवृत्त होती हैं । अन्य प्राणियों की तो बात ही क्या कहूं परञ्च ब्रह्मा महादेव तथा मेरी भी वाणी मन और इन्द्रियें जिनके चलाने से चलती हैं तथा आप ऐसे कृपालु हैं, कि—हम लोगों के भजन से प्रसन्न हो जाते हैं ॥ ४० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, कथमावां प्राणादिप्रवर्तकौ धर्मपुत्रत्वादावयोरिति चेत्तत्राऽऽह—मूर्ती इति । हे भगवन् ! भगवतस्तव इमे मूर्ती त्रिलोक्याः क्षेमाय पालनाय तापविरमाय च दुःखनिवृत्त्यै मृत्युजित्यै मोक्षाय नतु त्वं कस्यापि पुत्र इत्यर्थः । अत्र दृष्टान्तः यथेदं विश्वमवितुमन्याः स्वतनूर्मत्स्यकूर्मादिलक्षणा नाना अनेकप्रकारा बिभर्षि तद्वत् न केवलं पालनमात्रं तव कर्म किन्तु सृष्टिलयावपीत्याह—सृष्ट्वेति । तत्राप्यन्यनिरपेक्षत्वे दृष्टान्तः ऊर्णनाभिरिवेति ॥ ४१ ॥

यस्मादेवम्भूतस्त्वं तस्मात्तवाङ्घ्रिमूलं भजामीत्याह तस्येति तस्यावितुः पालकस्य स्थावरजङ्गमानामीश्वरस्याङ्घ्रिमूलं भजामीति तृतीयश्लोकस्थपदस्यानुषङ्गः कथम्भूतमङ्घ्रिमूलम् यत्स्थं यत्रस्थितम् कर्मगुणकालानां रजोमलम् अन्ये च पूर्वोक्तास्तापादयो न स्पृशन्ति रुज इति वा पाठः यतो वेदा हृदये येषां ते वेदतात्पर्यविदो मुनयो यदेव स्तुवन्ति नितरां नमन्ति तदाप्त्यै तत्प्राप्तये एव स्तवनादि कुर्वन्ति ॥ ४२ ॥

यतोऽन्यः पुरुषार्थो नास्तीत्याह—नान्यमिति । अङ्घ्र्युपनयादङ्घ्रिभजनप्राप्तेरन्यं क्षेमं न विद्मः परितः सर्वेष्वपि लोकेषु भीर्यस्य तस्य जनस्य तदेवाऽऽह द्विपरार्धे धिष्ण्यं स्थानं यस्य सः ब्रह्माऽपि ते कालस्य त्वद्भ्रूविजृम्भरूपात्कालाद्बलं बिभेति अतः किमुत वक्तव्यं तेन ब्रह्मणा कृतानां भौतिकानां प्राणिनां भयमिति ॥ ४३ ॥

यस्मादेवं तस्मात्तव पादमूलं भजामि कथम्भूतस्य ऋतधियः सत्यज्ञानस्वरूपस्य यद्वा सत्या धीर्यस्य वशिमतया तस्याऽऽत्मगुरोर्जीवनियन्तुरतः कारणात्परस्य किं कृत्वा आत्मच्छदि स्वात्मावरकमपार्थं च निष्फलमसच्च तुच्छमन्त्यञ्च नश्वरमिदं देहादि हित्वा देहादिभजनं त्यक्त्वा भजतत् कथं प्रतीयेत तत्राऽऽह अभिज्ञमात्रम् नहास्यन्तमसत्त्विकल्पात्मत्मात्रम न ततः पृथगस्तीत्यर्थः नन्वपवर्गाय भवतु भजनं फलान्तरार्थं त्वन्यभजनं कार्यमेव तत्राऽऽह तर्हीति यदि त्वां भजति पुरुषस्तर्हि ते त्वत्त एव सर्वं मनीषितमर्थं विन्देतेति ॥ ४४ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

परितोभियः सर्वमुत्तभयस्य जनस्य द्विपरार्द्धकालस्यापि लोकाः कालस्य कालरूपस्य ते त्वत्तः ॥ ४३ ॥

ऋतधियः सत्यसङ्कल्पस्य परस्यात्मगुरोस्तव पादमूलं आत्माभिमतं मूलं भजामि सर्वाभीष्टपुरुषार्थरूपं यत्पादं मुमुक्षु जनो देहादिकमबाध्य विन्देत ॥ ४४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु प्राणादीनामुदीर्यानेश्वरः नाहमित्यत्र भगवदवतारभूतावेव युवामित्यभिप्रयन्नवतारप्रयोजनमाह—मूर्ती इति । हे भगवन् ! भगवतः षाड्गुण्यपूर्णस्यैव इमे मूर्ती अवतारौ किमर्थं त्रिलोक्याः क्षेमाय सुखाय तापविरमाय ज्ञानोपदेशेनाध्यात्मिकादितापविघाताय मृत्युजित्यै मृत्युजयाय मोक्षायेति यावत् अत्र दृष्टान्तान्तरालाभात्स्वदवतारानेव दृष्टान्तयति । नाना बिभर्षि इतियथा नानाविधा अन्यतनूः रामकृष्णादितनूः इदं जगदवितुं रक्षितुं बिभर्षि तद्वत् न केवलं जगद्रक्षैव त्वद्व्यापारः किन्तु सृष्टिसंहारावपीत्याह सर्वं इदं जगत्सृष्ट्वा पुनर्ग्रससि ननु कि

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मच्छिदम् आत्मनाशहेतुम् अत एवापार्थं पुरुषार्थलक्षणप्रयोजनशून्यम् असदसद्रूपम् अनाभिज्ञमात्रं केवलाज्ञाननिर्मितं केवलाविद्याकृतं वा अनेन देहेऽहंभावो भवहेतुस्तदभावो मुक्तिहेतुरिति कथितं भवति ॥ ४४ ॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तद्वै इति तैः अभिज्ञमात्रमित्यस्य टीकायामात्ममात्रमिति आत्मन्यधिष्ठाने भ्रमादेव प्रतीतिर्यस्य तदित्यर्थः ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्मात् स्वभजनं कारयितुं भजनपरिपाके च तद्भक्तप्रेमवशो भवितुं च तवावतारः न केवलमेतदेव निमित्तं जगत्पालनार्थमपीत्याह—मूर्त्ती इमे इति । मृत्युजित्यै मोक्षाय च यथा नाना अन्यतनूर्मत्स्यकूर्माद्या बिभर्षि तथेमामपि तनूं बिभर्षि किञ्च सृष्ट्वा चस्य पालनार्थं तनूं बिभर्षि तत्सर्वं पुनर्ग्रससि च ऊर्णनाभिरिवेत्यद्भुतं तव लीलावैभवमपीति भावः ॥ ४१ ॥

तस्य तवाङ्घ्रिमूलं भजामीति तृतीयश्लोकस्थस्यानुषङ्गः यत्स्थं यदङ्घ्रितलस्थं भक्तजनं कर्मगुणकालाः रजः सुराचारत्वादिमयं मालिन्यं च न स्पृशन्तीति अद्भुतं तव भक्तिवैभवमिति कर्मेति दुष्कृतं सुकृतं प्राचीनमर्वाचीनं वा कृतमपि न स्पृशतीति पुष्करपलाशे जलमिवेति भावः । वदुत्तमार्थं यद्भक्ता अभीक्ष्णं स्तुवन्ति मुनयो मौनव्रता वेदहृदया वेदार्थतात्पर्यज्ञाः तत्प्राप्त्यर्थं ध्यायन्ति ॥ ४२ ॥

अङ्घ्र्युपनयात् चरणप्राप्तेरन्यत् क्षेमं कुशलं परितो भियः संसाराद्बिभ्यतो जनस्य न विद्मः यतो ब्रह्मेत्यादि ते कालस्य कालस्वरूपत्वात् इतः अस्मात् किमुत वक्तव्यं तत्कृतानां तत्कृतानां भौतिकानां प्राणिनां भयमिति ॥ ४३ ॥

अतएव: सत्यज्ञानस्य आत्मच्छदि हित्वा आत्माच्छादकं देहादि देहगेहादिममत्वं त्यक्त्वा अपार्थं निष्फलम् असत् तुच्छं अन्त्यं नश्वरम् एवमन्योऽपि यो भजति स ते त्वामभिज्ञमात्रं भक्तसेवाभिज्ञमेव प्राप्नोति । ननु, तर्हि निष्काम एव मां भजतु सकामस्त्वन्यं तत्राह—तर्हीति । यदि त्वां विन्देत तर्हि सर्वमनीषितार्थं वाञ्छितार्थं विन्देतैव ॥ ४४ ॥

———

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, प्राणप्रवर्त्तको भगवानात्मनैव तापसा विद्धत आह-मूर्त्ती इति । हे भगवन् ! नारायण ! इमे नरनारायणाख्ये मूर्त्ती भगवन् एवाविर्हिते आविर्भावप्रयोजनमाह, त्रिलोक्याः क्षेमाय रक्षार्थं तापविरमाय त्रिविधतापनिवृत्त्यै मृत्युजित्यै संसारनिवृत्तये च तत्र दृष्टान्तमाह, यथेदं विश्वमवितुमन्यस्तनूः मत्स्यकूर्मादिरूपाः नाना बिभर्षि तद्वत् विश्वनिर्गमनप्रवेशस्थानत्वप्रतिपादनेन भगवतां दर्शयति, सर्वं विश्वं सृष्ट्वा पुनर्ग्रसतीति जगत्कारणत्वेऽपि निर्विकारित्वं दृष्टान्तेन द्योतयति ऊर्णनाभिरिति ॥ ४१ ॥

एवम्भूतस्य तवाङ्घ्रिं भजामीत्याह-तस्येति । तस्य अङ्घ्रिमूलं भजामीति तृतीयश्लोकाद्भजामीतेनाध्याहृतेन वा क्रियापदेनान्वय तद्यत्स्थै अङ्घ्रिमूलप्राप्तये ॥ ४२ ॥

अङ्घ्रिप्राप्तेरन्यत्क्षेमं नेत्याह-नान्यमिति । परितो भीर्यस्य तस्य जनस्य यद्वा, परितः सर्वत्र भविता भीर्यस्मात्तस्य तव अङ्घ्र्युपनयात् श्रीमत्पादपद्मप्राप्तेः अन्यत्क्षेमं न विद्मः भगवच्चरणप्राप्तिरेवोपादेयपदार्थं इति द्रढयितुं सर्वं ब्रह्मादिस्तम्बपर्यन्तं कालग्रस्तत्वादनुपादेयमित्याह, ब्रह्मेति । द्विपरार्द्धकालस्थायिधिष्ण्यं स्थानं यस्य सोऽपि ते तव शक्तिरूपस्य कालस्य वेगादिति शेषः । अलं नितरां बिभेति तत्कृतभौतिकानां तेन कृतानां भौतिकानां प्राणिनां भयमिति का कथा ॥ ४३ ॥

तत्तदर्थं पादमूलप्राप्त्यर्थं श्रुता धीर्यस्मात्तस्य तव धीप्रेरकस्य वेदमात्रार्थभूतस्य आत्मनां ब्रह्मादिसर्वजीवानां गुरोः परस्य पूर्णस्य तव पादमूलं भजामि नन्वन्यासक्तस्य मो भजनेकोऽधिकार इत्यत आह, हित्वेति । इदं दृश्यमानमैहिकम् अन्त्यं पारलौकिकम् असद्युक्तम् अत एवापार्थं निष्फलम् आत्माच्छदि आत्माच्छादकं हित्वा उपेक्ष्येवेत्यर्थः । भगवत्प्राप्तिकामो भगवन्तं भजेदिति फलितोर्थः यदि क्षेत्रज्ञस्वरूपमात्रप्राप्तिकामः अर्थप्राप्तिकामो वा तर्हि ते त्वत्त एव अभिज्ञमात्रं क्षेत्रज्ञस्वरूपमात्रं मनीषितार्थं वा विन्देतैव तद्दातापि त्वमेव नान्यः क्षेत्रज्ञस्य त्वदंशत्वात् अर्थस्य सर्वस्य त्वदचिच्छक्तिमयत्वाच्चेति भावः ॥ ४४ ॥

---

### भाषा टीका ।

हे भगवन् ! आप इन दोनों मूर्त्तियों को इस त्रिलोकी के मंगल के लिये, और दुःख दूर करनेके लिये, तथा मोक्ष के लिये, धारण करते हो । तथा इस जगत् की रक्षार्थ और भी नानाप्रकार की मूर्त्तियों को धारण करते हो । और इस जगत् को रचकर ऊर्णनाभि (मकरी) की तरह फिर सबको ग्रस लेते हो ॥ ४१ ॥

जगत् के पालन करनेवाले स्थिर चरों के नियंता ऐसे आप के चरणकमल को मैं भजता हूं । जिस चरणकमल के समीप स्थित रहनेवाले पुरुष को कर्म गुण काल और रजोगुण ये सब स्पर्श नहीं कर सके हैं । और वेद के अभिप्राय जाननेवाले मुनि लोग जिन आप के चरणकमलों की प्राप्ति के अर्थ उनही चरणकमलों की स्तुति करते हैं, नमस्कार करते हैं, पूजन करते हैं, और निरन्तर ध्यान करते हैं ॥ ४२ ॥

हे ईश ! अपवर्ग मूर्त्ति जो आप हो तिन आप के चरणारविंद की प्राप्ति को छोड़कर सर्वत्र भयभीत इस जन को और भी कोई क्षेम है इस बात को मैं नहीं जानता हूं । द्विपरार्द्ध पर्यंत स्थित रहनेवाले ब्रह्माजी भी जिन आप के भृकुटी विलासरूप काल से भयभीतही रहते हैं । और जो बिचारे ब्रह्मा की सृष्टि के प्राणी है उनको भय होवे इसमें क्या आश्चर्य है ॥ ४३ ॥

सत्त्वं रजस्तम इतीश ! तवात्मबन्धो ! मायामयाः स्थितिलयोदयहेतवोऽस्य ।
लीलाधृता यदपि सत्त्वमयी प्रशान्त्यै नान्ये नृणां व्यसनमोहभियश्च याभ्याम् ॥ ४५ ॥
तस्मात्तवेह भगवन्नथ तावकानां शुक्लां तनुं स्वदयितां कुशला भजन्ति ।
यत्सात्वताः पुरुषरूपमुशन्ति सत्त्वं लोको यतोऽभयमुतात्मसुखं न चान्यत् ॥ ४६ ॥
तस्मै नमो भगवते पुरुषाय भूम्ने विश्वाय विश्वगुरवे [१]परदैवताय ।
नारायणाय ऋषये च नरोत्तमाय हंसाय संयतगिरे निगमेश्वराय ॥ ४७ ॥
यं वै न वेद वितथाक्षपथैर्भ्रमद्धीः सन्तं स्वखेष्वसुषु हृद्यपि दृक्पथेषु ।
[२]तन्माययाऽऽवृतमतिः स उ एव [३]साक्षादाद्यस्तवाऽखिलगुरोरु[४]पसाद्य वेदम् ॥ ४८ ॥
यद्दर्शनं निगम आत्मरहःप्रकाशं मुह्यन्ति यत्र कवयोऽजपरा यतन्तः ।
तं सर्ववादविषयप्रतिरूपशीलं [५]वन्दे महापुरुषमात्मनि गूढबोधम् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां द्वादशस्कन्धे नारायणस्तवो नाम
अष्टमोऽध्यायः ॥ ८ ॥

भाषा टीका ।

आत्मा के आवरण करनेवाले तुच्छ मायावान् इस देहादि में आसक्ति छोड़कर, सत्य संकल्प आत्मा के अज्ञान को दूर करनेवाले, ज्ञान स्वरूप परात्पर ऐसे आप के चरणकमल को मैं भजता हूं ॥ यदि पुरुष आप का भजन करता है तब वह आपही से संपूर्ण वांछितार्थ को प्राप्त हो जाता है ॥ ४४॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, ब्रह्मरुद्रावपि ममैव मूर्ती अतो मामेव किमत्यन्तमाग्रहयसे तत्राऽऽह—सत्त्वमिति । यदपि यद्यपि तवैव मायया कृता एता लीलास्त्वयैव धृतास्तथापि या सत्त्वमयी सैव प्रशान्त्यै मोक्षाय न केवलमस्य प्रशान्त्यभावमात्रमन्यतरजने किन्त्वनिष्टं च भवेदित्याह—व्यसनेति ॥ ४५ ॥

तदेव सदाचारेण द्रढयति—तस्मादिति । हे भगवन् ! तव शुक्लां तनुं श्रीनारायणाख्याम् अथ तावकानां च शुक्लां तनुं नरारख्याम् यद्यस्मात्सात्वताः सत्त्वमेव पुरुषस्येश्वरस्य रूपमुशन्ति मन्यन्ते न त्वन्यद्रजस्तमसीति अत्र हेतुः यतः सत्त्वाल्लोको वैकुण्ठाख्यः लोकत्वे सत्यप्यभयम् च भोगे सत्यप्यात्मसुखं च ॥ ४६ ॥

अतस्तं प्रणमति—तस्मै नम इति । हंसाय शुद्धाय संयतगिरे मौनवते अथ च निगमेश्वराय वेदमार्गप्रवर्तकाय ॥४७॥

वेदार्थसम्प्रदायप्रवर्तने हेतुत्वं वदन्नमति—यमिति । वितथाक्षपथैः रूपादिग्रहमार्गैर्भ्रमन्तीविक्षिप्तबुद्धिः पुमान् स्वेन्द्रियादिषु नियन्तृत्वेन सन्तमपि यं त्वां न वेद दृक्पथेषु विषयेषु बुद्धिविक्षेपे हेतुः तन्मायया तस्य तवैव मायया आवृता आत्मनिष्ठा मतिर्यस्य स उ सोऽपि आद्य एव पूर्वमविद्वानेवाऽखिलगुरोस्तव त्वत्प्रवर्तितं वेदमुपसाद्य प्राप्य तं त्वां साक्षाद्वेद ॥ ४८ ॥

वेदेनैव त्वज्ज्ञानमित्युपपादयन्प्रणमति—यस्य तव दर्शनं निगमे भवति कथम्भूतम् ? आत्मनस्तव रहः रहस्यं तस्य प्रकाशकम् अन्यथा दुर्ज्ञेयतामाह—अजपरा ब्रह्ममुख्याः कवयोऽपि साङ्ख्ययोगादिभिर्यतमाना यत्र त्वयि मुह्यन्ति कुतः ? इत्यत आह, सर्वेषां साङ्ख्यादिवादिनां ये वादास्तेषां विषया भेदादयस्तेषां प्रतिरूपं तत्तदनुसारि शीलं स्वभावो यस्य तम । कुतः ? आत्मना देहादिसङ्घातेन निगूढो बोधो यस्य तम एवम्भूतं महापुरुषं त्वां वन्दे ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टमोऽध्यायः ॥ ८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मायामयाः प्रकृतिसम्बन्धिन्यस्तनव इत्यध्याहारः शुक्लां तनुमित्यनन्तरोक्तेः लीलाधृता लीलया धृता अन्ये रजस्तमसी न प्रशान्त्यै याभ्यां व्यसनादिः स्यात् ॥ ४५ ॥

यत्सत्त्वं ते रूपं सात्वता वदन्ति तल्लोकाय आत्मज्ञानाय ज्ञानप्रदमित्यर्थः ॥ ४६ ॥

(१) परदैवताये (२) त्वन्मायया (३) साक्षादाद्यः (४) उपपद्य (५) वन्दामहे इति विज० पा० ।

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आत्मसुखम् आत्मानुभवमेव चाभवं नान्यत् अन्यत् सुखं नर्वामभमित्यर्थः ॥ ४७ ॥

यं वै इति वितथाक्षपथैः असमर्थैः मोघैरिन्द्रियैः विषयेषु भ्रान्तमनाः जन्तुः सर्वपदार्थेषु सन्तमपि न वेद तं त्वामन्यो विलक्षणाधिकारी तवाङ्घ्रिमुपसाद्य त्वां वेद अङ्घ्रिमित्यध्याहारेण योजना । यद्वा, अखिलगुरोरिति द्वितीयार्थे षष्ठी ॥ ४८ ॥

यद्दर्शनमिति यस्य दर्शनोपायभूतो वेदः आत्मरहः प्रकाशनमिति निगमविशेषणम् अजो ब्रह्मा येषां परस्तेऽजपराः निगूढबोधं अपरिच्छेद्यज्ञानवैभवम् ॥ ४९ ॥

इति श्रीमद्भागवतव्याख्याने द्वादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
अष्टमोऽध्यायः ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, ब्रह्मरुद्रावपि ममैव मूर्ती अतस्तौ हित्वा मामेव किमिति भजसे इत्यत आह—सत्त्वमिति । हे ईश ! हे आत्मबन्धो ! जीवबन्धो ! यद्यपि यद्यपि अस्य जगतः स्थितिलयोदयहेतवः तव निमित्तरुद्रब्रह्मतनव इति शिष्टव्यमध्याहर्तव्यं शुक्लां तनुम् इत्यग्रे दर्शनात्ताश्च सत्त्वं रजस्तम इति या तव माया तयैव कृताः लीलाधृताः लीलयैव धृता लीलापदेन विश्वसृष्ट्याद्यनुसरणस्य कर्ममूलत्वव्यावृत्तिः तथापि तत्र सत्त्वमयी या तनुः सैव नृणामुपास्यमाना शान्त्यै मोक्षोपयुक्तशान्तये भवति नान्येऽन्ये ब्रह्मरुद्राख्ये तन्वौ न प्रशान्त्यै भवतः प्रत्युत ताभ्याम् उपास्यत्वेनमोहभियो भवेयुः व्यसनं दुःखं भीर्भयं यद्यप्यत्र स्थितिहेतुभूताया विष्णुवाच्यतनोरपि मायाकृतत्वोक्त्याऽप्राकृतसत्त्वगुणपरिणामरूपत्वमवगम्यते तथ "सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः" इति श्रीभगवद्विग्रहे प्रतिषिद्धं तथाप्यत्र सत्त्वमिति या माया रजस्तमश्चेति च या माया ताभ्यां मायाभ्यां कृता इति योजयम् अत्र सत्त्वशब्देन अप्रमत्तात्मकं सत्त्वं गुणान्तराद्विलक्षणमित्युक्तं शुद्धसत्त्वमयं त्रिगुणात्मकप्रकृतिद्रव्यविलक्षणं विवक्षितम् इत्थं योजनार्थमेव सत्त्वं रजस्तम इति व्यस्तनिर्देशः कृतः प्रबन्धापेक्षयापि "सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहाऽस्य धत्ते" इत्यत्रायमेवार्थः रजस्तमःशब्दाभ्यां सत्त्वमिश्रौ तौ विवक्षितौ ॥ ४५ ॥

यतः सत्त्वमय्येव प्रशान्त्यै न त्वन्ये तस्मान्निपुणबुद्धयस्तामेव उपासते तस्मादिति । अथ ननु, हे भगवंस्तावकानां त्वद्भक्तानां आदर्शिता अस्य तव च दर्शितां शुक्लां शुद्धसत्त्वमयीं तनुं कुशला भजन्ति काऽसौ शुक्ला तव तनुरित्यत्राह, सात्त्वताः पुरुषरूपमुशन्ति सत्त्वं लोका इति सात्वताः पञ्चरात्रसिद्धान्ततत्त्वाभिज्ञा लोका जना नरनारायणाख्यं यत्पुरुषरूपं पुरुषाकृत्यावच्छिन्नं रूपं पुरुषस्य तव रूपं वा सत्त्वं विशुद्धसत्त्वमुशन्ति उपास्यत्वेनेच्छन्ति सैव शुक्ला तनुरित्यर्थः । तद्विधिनाह—यतः पुरुषरूपात्सत्त्वादुपास्यमानादभयं संसृतिभयाभावः ततोऽपि आत्मसुखम् आत्मानुभवसुखं भवाभवद्भ्यत्रयमिभसुखं नास्ति ॥ ४६ ॥

इत्थमनन्तकल्याणगुणगणं स्तोतुमहं न शक्नोमीत्यभिप्रेत्योपस्थितैर्गुणैर्विशिंषन् प्रणमति—तस्मा इति । पुरुषाय पुराविष्णोसि वदासीति तथा चतुर्विधपुरुषार्थप्रदायेत्यर्थः । भूम्ने सर्वान्तरात्मत्वेन भूमगुणविशिष्टायात एव विश्वाय विश्वरूपेणावस्थितायात एव विश्वगुरवे विश्वस्य हितकरायात्मनः शरीरहितावरणाशीलत्वादिति भावः । परदेवतायै इत्यनेन ततोऽधिकदेवतान्तरव्यावृत्तिः नारायणायेत्यनेन प्राप्यत्वं प्रापकत्वं च विवक्षितम् ऋषये इत्यनेन सर्वज्ञत्वं नारायणपदसमभिव्याहृतनरोत्तमशब्देन शिष्याचार्यरूपेणाखिलाध्यात्मविद्याप्रवर्त्तनद्वारा जगदुज्जीवयितृत्वं विवक्षितम् । हंसायेत्यनेनाश्रिताशेषनिराकर्तृत्वं संयतगिर इत्यनेन "सर्वमिदमभ्यात्तोऽवाक्य नादर इत्यत्रेव परिपूर्णताप्रयुक्तमजल्पाकत्वं निगमेश्वरायेत्यनेन वेदाऽऽचार्यत्वं च विवक्षितमिति ॥ ४७ ॥

ननु, त्वम् इव माम् इत्थं भूतं सर्वेऽपि किं न विदन्ति अत आह यं वा इति । तत्कथमयथाऽभूता मृतिर्यस्मात एव वितथैर्मिथ्यैकेरक्षपथैरिन्द्रियमार्गैर्भ्रमन्ती धीर्यस्य सः देहात्माभिमानिनी धीर्यस्येत्यर्थः भ्रमद्भिरिति पाठे विषयप्रावण्येन चलद्भिर्वितथाक्षपथैर्यं त्वां न वेद कथम्भूतमपि स्वकेषु स्वेन्द्रियादिषु स्वकेष्वसुषु प्राणेषु हृदि हृदये स्वपथेषु विषयेषु नियन्तृतया सन्तमपि नहि न कोऽपि वेदेत्याह—यत्नवाखिलगुरोराद्यः प्रथमं त्वत्प्रवर्तितः यः तं वेदमुपसाद्य स्थित इति शेषः स उ एव सन्नपि त्वां साक्षाद्वेद वेदान्तविहितोपासनाविशुद्धमनसा वेदेत्यर्थः ॥ ४८ ॥

वेदेनैव ज्ञानमित्युपपादयन्प्रणमति—यदिति । यस्य दर्शनोपायभूतो निगमो वेद आत्मरहस्यप्रकाशकः अन्यथा दुर्ज्ञेयतामाह—अजपरा इति । अजो ब्रह्मा पर उत्कृष्टःप्रधानो येषां ते ब्रह्ममुख्याः कवयो यतन्तः साङ्ख्ययोगादिभिर्यतमाना अपि । यद्वा, हिरण्यगर्भकपिलादयः योगसाङ्ख्यादितन्त्रप्रणयनेन त्वत्स्वरूपावमर्शनाय यतमाना अपि यत्र त्वाय विषयभूते मुह्यन्ति तमित्थंभूतं सर्वेषामविषयप्रतिरूपशीलं सर्वेषां वादा योगसाङ्ख्यवादाः प्रकृत्युपादानत्वपुरुषनिमित्तत्वादिवादास्तेषां प्रतिक्षेपकं रूपं स्वरूपं शीलं स्वभावः सार्वज्ञसर्वशक्तित्वादिःप्रकृतिपुरुषादिवस्तुस्वभावितो यस्य तमात्मनि स्वस्मिन् गूढस्तैरविज्ञातः बोधः अपरिच्छेद्यज्ञानवैभवो यस्य तं महापुरुषं वन्दे ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अष्टमोऽध्यायः ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

देहाहंभावस्य निमित्ते रजस्तमसी तदभावस्य सत्त्वं स्वाश्रयतामिति भावेनाह—सत्त्वमिति । हे ईश ! आत्मबन्धो ! सत्त्वं रजस्तम इति गुणास्त्वया लीला धृताः जगन्निर्माणक्रीडायै धृताः अङ्गीकृताः । ननु, जीववदीश किङ्कुर्वे शक्ता येन धार्याः स्युरिति तत्राह, स्थितीति । अस्य जगतः स्थित्यादिहेतवः किमात्मका इति तत्राह, मायामया इति । इच्छात्मकाः यद्यपि यद्यपि

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु, तर्हि वेददर्शिन एव मां जानन्तु, तत्र नेत्याह, मुह्यन्तीति । यत्र वेदे अजपराः अजो ब्रह्मा परः श्रेष्ठो येषां ते मुनयोऽपि यजन्तोऽपि भवत्तत्त्वाज्ञानान्मुह्यन्ति निगमस्य परोक्षवादित्वाद्दुरन्वयत्वात्तत्त्वमिति भावः । अत एव हेतुगर्भं विशिनष्टि-मर्त्ये वादा वितर्कादयो निगमोक्तास्तेषां विषयाश्च तेषां प्रतिरूपमेव नत्वनुरूपं शीलं चारित्रं यस्य तम् अत एवात्मन्येव गूढो गुप्तीकृतो बोधः स्वतत्त्वं येन तम् ॥ ४९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

द्वादशेऽष्टमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, ब्रह्मशिवयोरपि भवन्मूर्त्तितया भजनीयत्वे सत्यहमेवैको भजनीयः कुतः ? इत्यत्राह–सत्त्वमिति । ईश ! हे सर्वनियन्तः! आत्मबन्धो ! आत्मनां ब्रह्मादीनामंशभूतानां बन्धुः आश्रयः असि तस्य सम्बोधने हे आत्मबन्धो ! अस्य विश्वस्य यथायथं हेतवः सत्त्वं रजस्तम इति यद्यपि तव मायामयाः लीलाः लीलोपलक्षणा मूर्त्तयः मायामय्यः यद्यपि यद्यपि तवैव त्वयैवांशाऽऽपां स्वतश्च धृताः तथापि सत्त्वमयी प्रशान्त्यै मुक्तये भवति, नान्ये रजस्तमोमय्यौ शान्त्यै न भवत इत्यर्थः । प्रत्युत ताभ्यां नृणां व्यसनादयो भवन्ति सत्त्वमयीत्यनेन श्रियस्यर्थं सत्त्वगुणप्रवर्त्तनपरा अप्राकृतसत्त्वमयी बोध्या नतु प्राकृतसत्त्वगुणकार्यभूतेति बोध्यम् "सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः" इत्यादि वचनात् माया मया इति कश्रियो वान्तीतिनवुक्तम् ॥ ४५ ॥

यस्मादेवं तस्मात् हे भगवन् ! इह भजनभूमौ स्वदयितां भगवत्प्रियां सात्वकानां भवदीयानां च दयितां शुक्लां शुद्धां तमःशब्दवाच्यप्रधानविलक्षणां तव तनु कुशलाः भजन्ति, यत् यतः सात्वताः सत्त्वं शुद्धमप्राकृतं सत्त्वं पुरुषस्य परमपुरुषस्य रूपं विग्रहम् उशन्ति मन्यन्ते भजनफलमाह यतः शुक्लतनुभजनतः भजनकाले एव आत्मसुखम् अत्र "ब्रह्मसमश्नुते" इति ध्येयप्राप्तिसुखम् अभयं सर्वतो हि भयाभावः चरमकलेवरत्यागानन्तरं लोको भगवल्लोको लभ्यते अन्यत्संसारो नेत्यन्वयः ॥ ४६ ॥

नमस्करोति—तस्मायेति ॥ ४७ ॥

तन्वेवस्थमनम्यः कुतो न जानातीत्यत्राह—यमिति । वितथाक्षपथैर्निरर्थकेन्द्रियमार्गैर्भ्रमन्ती धीर्यस्य सः यतस्त्वन्मायया आवृता मतिर्यस्य सः सदेहात्माभिमानीयं स्वकेषु येन्द्रियेषु असुषु प्राणेषु हृद्यपि नियन्तृतया अवतारवेलायां दृक्पथेष्वपि सन्तं न वेद किं बहुना उ प्रसिद्धो यः स आद्यो ब्रह्मापि साक्षात्स्वातन्त्र्येण नैव वेद पुनः अखिलगुरोस्तव वेदमासाद्य वेदेति योजना ॥ ४८ ॥

वेदद्वारा यत्किञ्चिद्ब्रह्मापि जानातीत्युक्तमिदम्तावच्छिन्नतया तु ब्रह्मादयो नैव त्वां जानन्ति तं त्वां वन्दे इत्याह—यदिति । यस्य तव दर्शनं ज्ञानं निगमे एव कीदृशम् आत्मरहः प्रकाशम् आत्मनः परमात्मनस्तव रहस्यप्रकाशकम् यत्र दर्शने त्वयि वा अजपराः ब्रह्मप्रधानाः यतन्तोऽपि मुह्यन्ति अत एव सर्वे वेदाः हैरण्यगर्भपाशुपतादयस्तेषां ये विषयास्तत्प्रतिरूपं प्रतिकूलं नत्वनुकूलं शीलं यस्य तत्त्वाम् आत्मन्येव गूढो बोध इयत्तानवच्छिन्नज्ञानवैभवलक्षणः प्रबोधो यस्य तं महापुरुषं वन्दे ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

अष्टमाऽध्यायार्थप्रकाशः ॥ ८ ॥

---

भाषा टीका ।

हे ईश ! हे आत्मा के सखा ! इस जगत् के पालन संहार और उत्पत्ति करने वाली अपनी इच्छामय सत्व रज और तम ये तीन प्रकार की तनुओं को आप लीला से ही धारण करते हो, परन्तु उनके मध्य में सत्वमयी जो विष्णुतनु है वही मोक्ष देने के लिये समर्थ है, और जो रजोगुणी तमोगुणी ब्रह्मा महादेव रूप दो तनू हैं, वे नहीं । सो इतना ही मात्र नहीं, कि—उन दोनों के भजने से शांति मात्र का अभाव है, किंतु उनके भजने से अनिष्ट भी होता है, क्यों कि ? व्यसन मोह और भय ये भी उनही के भजने का फल होता है ॥ ४५ ॥

तस्मात् हे भगवन् ! इस संसार में जो कुशल जन हैं वे आप की जो शुद्ध सात्विक नारायणाख्य तनु हैं, और भवदीयन के मध्य में जो शुद्ध सात्विक नराख्य तनु हैं तिन हीं का भजन करते हैं, क्योंकि—वो ही उनको प्रिय लगती है । और उसमें कारण यह भी है, कि—जो सात्वत (पंचरात्र) निष्ठ भागवत हैं, वे सत्व को ही परम पुरुष का रूप मानते हैं और रज तम को नहीं । क्यों कि ? जिस सत्व से वैकुण्ठ लोक की प्राप्ति और अभय तथा आत्मसुख की भी प्राप्ति होती है ॥ ४६ ॥

षड्गुण परिपूर्ण, भूमा पुरुष, विश्वरूप, विश्व के गुरु, परदेवत, शुद्धस्वरूप, नियतवाणी वाले, निगमके ईश्वर, ऐसे श्रीनारायण और नरोत्तम जो आद्यऋषी दोनों आप हैं, ति आप को नमस्कार हो ॥ ४७ ॥

असत् इन्द्रियों के मार्गों से विक्षिप्त बुद्धि वाले, औ आप की माया से आवृत मति वाले, पुरुष अपने हृदयाका में, प्राणों में नेत्रों में आप के वर्त्तमान होने पर भी जि आप को नहीं जानते हैं । तथा आपकी माया से विमोहि बुद्धिवाले साक्षात् ब्रह्माजी भी अखिल गुरु उ आप हो तिन से वेदों को प्राप्त होकर के ही ज्ञा हुए हैं ॥ ४८ ॥

बडे २ यत्न करने वाले ब्रह्मा प्रभृति ज्ञानी लोग जि वेद के विषय में मोह को प्राप्त होते हैं वही वेद जि

भाषा टीका।

आपके रहस्य का प्रकाश करने वाला और जिन आपके यथार्थ ज्ञान कराने वाला है, तिन महापुरुषों को मैं वन्दन करता हूं। आप कैसे हैं? कि—सर्व वाद के विषय के अनुकूल स्वभाव वाले हैं अर्थात् जो जैसें निरूपण करें उसको उसी के अनुकूल भान होने वाले हो, फिर आप कैसे हैं, कि? आप ने ही अपने बोध को अर्थात् स्वविषयक ज्ञान को नितराम अत्यंत गूढ करके रखा है, कि—जिसमें आसुर प्रकृति वाले आपको न जान सकें॥४९॥

इति श्रीमद्भागवत द्वादशस्कन्ध में आठवें अध्यायकी,

श्रीवृन्दावनस्थ पं० भागवताचार्यकृत

भाषा टीका समाप्ता॥८॥

———

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे अष्टमोऽध्यायः॥८॥

———:o:———

## नवमोऽध्यायः

—:०:—

सूत उवाच ।

संस्तुतो भगवानित्थं मार्कण्डेयेन धीमता ।
नारायणो नरसखः प्रीत आह भृगूद्वहम् ॥ १ ॥

श्रीभगवानुवाच ।

भो भोः*ब्रह्मर्षिवर्यासि सिद्ध आत्मसमाधिना ।
मयि भक्त्याऽनपायिन्या तपःस्वाध्यायसंयमैः ॥ २ ॥
वयं ते परितुष्टाः स्म त्वद्बृहद्व्रतचर्यया ।
वरं प्रतीच्छ भद्रं ते वरदेशादभीप्सितम् ॥ ३ ॥

ऋषिरुवाच ।

जितं ते देवदेवेश! प्रपन्नार्तिहराच्युत! ।
वरेणैतावताऽलं नो यद्भवान् समदृश्यत ॥ ४ ॥
गृहीत्वाऽजादयो यस्य श्रीमत्पादाब्जदर्शनम् ।
मनसा योगपक्वेन स भवान् मेऽक्षगोचरः ॥ ५ ॥
अथाप्यम्बुजपत्राक्ष ! पुण्यश्लोकशिखामणे ! ।
द्रक्ष्ये मायां यया लोकः सपालो वेदसद्भिदाम् ॥ ६ ॥

सूत उवाच ।

(१)इतीडितोऽर्चितः काममृषिणा भगवान् मुने! ।
तथेति स स्मयन् प्रागाद्बदर्याश्रममीश्वरः ॥ ७ ॥
तमेव चिन्तयन्नर्थमृषिः स्वाश्रम एव सः ।
वसन्नग्न्यर्कसोमाम्बुभूवायुवियदात्मसु ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नवमे भगवन्माया दिदृक्षोर्दर्शने मुहुः ।
मायाधिपयोर्दर्शनाऽभौ च मुनेर्निर्वर्ण्यानिर्गमैः ॥

भगवतः परितोषपूर्वकं तदुपेक्षितवरदानं कथयितुमाह, संस्तुत इत्यादिना ॥ १ ॥

आत्मसमाधिना चित्तैकाग्र्येण ॥ २ ॥

वयं ते परितुष्टाः स्मेति बहुवचनं सर्वदेवाभिप्रायेण वर-देशादित्येकवचनं द्वयोरैक्याभिप्रायेण प्रतीच्छ गृहाण ॥ ३ ॥

वरेण छन्दयता त्वया जितमुत्कर्षो दर्शितः मम तु वराकाङ्क्षा नास्तीत्याह, वरेणेति ॥ ४ ॥

यस्य तव श्रीमत्पादाब्जदर्शनं मनसापि गृहीत्वा प्राप्य कृतार्था अजादयो भवन्ति स भवान्मेऽक्षगोचरो जातोऽस्ति किमतः परं वरेणास्यर्थः ॥ ५ ॥

द्रक्ष्ये द्रष्टुमिच्छामि लोकपालैर्ब्रह्मादिभिः सहितोऽयं लोको जनो यया सद्भिदां सति वस्तुनि भेदम् ॥ ६ ॥

---

*ब्रह्मर्षिवर्योऽसीति वीर० विज० पा० (१) इतीरित इति वि० पा०

ध्यायन् सर्वत्र च हरिं भावद्रव्यैरपूजयत् ।
क्वचित्पूजां विसस्मार प्रेमप्रसरसम्प्लुतः ॥ ९ ॥
तस्यैकदा भृगुश्रेष्ठ ! पुष्पभद्रातटे मुनेः ।
उपासीनस्य सन्ध्यायां ब्रह्मन् ! वायुरभून्महान् ॥ १० ॥
तं चण्डशब्दं समुदीरयन्तं बलाहका अन्वभवन्करालाः ।
अक्षस्थविष्ठा मुमुचुस्तडिद्भिः स्वनन्त उच्चैरभिवर्षधाराः ॥ ११ ॥
ततो व्यदृश्यन्त चतुःसमुद्राः समन्ततः क्ष्मातलमाग्रसन्तः ।
समीरवेगोर्मिभिरुग्रनक्रमहाभयावर्त्तगभीरघोषाः ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

शिशुरूपेण तन्मध्येपि स्वदर्शनानन्दो दास्यत एवेत्यभिप्राय-स्वज्ञकं स्मितम् ॥ ७ ॥

तमेवार्थं मायादर्शनरूपम् ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं संस्तुताद्भगवतः सकाशात् मायादर्शनविषयकं वर लब्ध्वा मुनिना यदनुभूतं तदवमे वर्ण्यते—संस्तुत इति । भृगूद्वहं मार्कण्डेयम् ॥ १ ॥

आत्मसमाधिनाऽऽत्मविषयकसमाधिना ॥ २ ॥

प्रतीच्छ गृहाण ॥ ३ ॥

ते तव जितमुत्कर्षो वर्त्तते ॥ ४ ॥

यस्य तव श्रीमत्पादाब्जदर्शनं मनसापि गृहीत्वा ब्रह्मादयो भवन्ति चतुर्मुखत्वादिभावं प्राप्नुवन्ति यद्वा, ब्रह्मादयः कृतार्था भवन्तीत्यध्याहारः स भवान् मे अक्षगोचरः प्रत्यक्षो जातः किमतः परं वरोऽस्त्यर्थः ॥ ५ ॥

यद्यपि भवदीयं दर्शनमेव वरः अथापि तव मायामाश्चर्य-रूपां शक्तिं द्रक्ष्ये द्रष्टुमिच्छामि यया स पालो लोकपालै-र्ब्रह्मादिभिः सहितो लोको जनः सद्भिदां सतः कारणस्य नाना-धर्म्यारूपं भेदं वेद तां तव मायावैभवदर्शनेन त्वच्छरणो भवि-ष्यामीति भावः—

"स एवमनुभूयेदं नारायणविनिर्मितम् ।
वैभवं योगमायायाः तमेव शरणं ययुः" ॥

इतिवक्ष्यमाणात् ॥ ६ ॥

स भगवान् स्मयन् मन्दहासं कुर्वन् तथेतिस्वीकृत्य प्रागात् ॥७।८॥

---

भाषा टीका ।

ॐवटदलपुटशायिने नमः ।

सूत उवाच ।

सूतजी बोले, कि—बुद्धिशाली मार्कण्डेय ने जब भगवान् की इस प्रकार स्तुति करी, तब नरके सखा श्रीनारायण भगवान्, भृगुकुलोत्पन्न मार्कण्डेय ऋषि पर प्रसन्न होकर बोलते हुए ॥ १ ॥

श्रीभगवानुवाच ।

श्रीभगवान् बोले, कि—हे ब्रह्मर्षिवर्य ! तुम चित्त के एकाग्रपने से और मेरे विषे निर्विघ्न भक्तिसे तथा त[प] स्वाध्याय और संयमों से सिद्ध हुए ॥ २ ॥

हे महर्षे ! हम तुम्हारे नैष्ठिक ब्रह्मचर्यसे अत्यन्त सन्तु[ष्ट] हुए, हम वर देने वालों के ईश हैं, तस्मात् जो तुमको इच्छित वर हो उसे मांग लो तुमारा मङ्गल हो ॥ ३ ॥

ऋषिरुवाच ।

मार्कण्डेय ऋषि बोले, कि—हे देवदेवेश ! हे प्रपन्नार्ति हर ! हे अच्युत ! बस हम इतने ही वरसे परिपूर्ण हैं, कि-जो साक्षात् आपने दर्शन दिये ॥ ४ ॥

हे भगवान् ! ब्रह्मादिक भी समाधिके बीच में परिपक्व मनसे जिन आपके श्रीयुक्त चरणारविन्दों के मानसिक दर्श[न] कोभी प्राप्त होकर कृतार्थ हो जाते हैं, वही साक्षात् आप मेरे नेत्रों के सन्मुख दर्शन दे रहे हो ॥ ५ ॥

हे कमलदल लोचन ! हे पुण्यश्लोकशिखामणे ! तथापि इतना वर मुझे दीजिये, कि—मैं आपकी उसमाया को देखू कि—जिस से लोकपालों सहित सम्पूर्ण लोक सत्पदार्थ [में] भेद अथवा कपट जानते हैं ॥ ६ ॥

सूत उवाच ।

सूतजी बोले, कि—हे मुने ! हे शौनक ! ऋषिने जब भग वान् की इस प्रकार स्तुति और पूजाकरी तब भगवान् भी "तथास्तु" ऐसा कह सुन्दर हंसते हुए बदरिकाश्रमको जाते हुए । कहाभी है, कि—"हासो जनोन्मादकरी च माया" अर्थात् भगवान का हंसनाही तो माया का प्रसार है सो आप हँसकर गये ॥ ७ ॥

ऋषिभी अपने आश्रम में बैठे हुए उसी विचार में रहे कि—माया कब देखूंगा । आश्रम में बसते हुए, अग्नि, सूर्य, चन्द्र जल, पृथिवी, वायु, आकाश, आत्मा, इन सबों में ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

भावद्रव्यैर्मनोमयैर्द्रव्यैः क्वचित्कदाचित्प्रेमप्रसरसम्प्लुतः प्रेमोद्रेकं प्राप्तः ॥ ९ ॥

अन्तर्बहिश्चाद्भिरतिद्युभिः खरैः शतह्रदाभीरुपतापितं जगत् ।
चतुर्विधं वीक्ष्य सहात्मना मुनिर्जलाप्लुतां क्ष्मां विमनाः समत्रसत् ॥ १३ ॥
तस्यैवमुद्वीक्षत ऊर्मिभीषणः प्रभञ्जनाऽऽघूर्णितवार्महार्णवः ।
आपूर्यमाणो वरषद्भिरम्बुदैः क्ष्मामप्यधाद्द्वीपवर्षाद्रिभिः समम् ॥ १४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

भावादर्शनमाह--तस्येत्यादिना ॥ १० ॥

तं वायुमनु बलाहका मेघा अमङ्गलाविर्बभूवुः ते च तडिद्भिः सहिता उच्चैः स्वनन्तो गर्जन्तः अक्षो रथाङ्गं तद्वत्स्थविष्ठा अभितो वर्षधारा मुमुचुः ॥ ११ ॥

चतुर्दिक्षु वर्तमानाः समुद्रा समीरवेगेनोर्मयस्तैर्भूतलं प्रसन्तः उग्रा नक्रा येषु महाभया आवर्ता येषु गभीरो घोषो येषु ते च ते च तेच ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सर्वत्र गोविप्रादिषु हरिं ध्यायन् भावद्रव्यैर्मनोमयैर्द्रव्यैरपूजयत मानसोपचारैः अपूजयदित्यर्थः । क्वचिदिति । भक्तिप्रसरेण प्रीत्यात्मकभक्तिप्रवाहेण सम्प्लुतः ध्यातः तां पूजामपि विस्मृतवान् ॥ ९ ॥

भावादर्शनमुपवर्णयति—तस्येत्यादिना यावदध्यायसमाप्ति । हे भृगुश्रेष्ठ ! तस्य मुनेः मार्कण्डेयस्य उपासीनस्य सतः हे ब्रह्मन् ! महान् वायुरभूत ॥ १० ॥

तमिति । तं वायुमनु बलाहका मेघाः करालाः भयङ्कराः अमङ्गलाविर्बभूवुः ते च तडिद्भिः सहिता उच्चैःस्वनन्तो गर्जन्तः अक्षः शकटाक्षः तद्वत्स्थविष्ठाः अतिस्थूला अभितो वर्षधारा मुमुचुः ॥ ११ ॥

तत इति । चतुर्दिक्षु वर्तमानाः समुद्राः परितः क्ष्मातलं भूमण्डलम् उग्रा नक्रा येषु तैः समीरवेगोत्थितैरूर्मिभिः प्रसन्तः भयानका आवर्ता येषु गभीरो घोषो येषु ते च व्यदृश्यन्त ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किम्बहुना सर्वत्र च ध्यायन् भावद्रव्यैः मनःकल्प्यपुष्पादिद्रव्यैः अर्हिसाद्यैरित्यर्थः । क्वचित्कदाचित् विस्मरणे कारणं भक्तिप्रसरसंप्लुत इति ॥ ९ ॥

वरदानफलं वक्तुमुपक्रमते-तस्येति । तस्याश्रमे महान् वायुरभूत् ॥ १० ॥

तं वायुमन्वनन्तरं, ते बलाहकाः अप्रमिताः अक्षस्थविष्ठाः अक्षो रथाङ्गनीपो दण्डस्तद्वत्स्थूलतमा वर्षधारा मुमुचुः तडिद्भिः सह ॥ ११ ॥

समीरवेगेनोत्थितोर्मिभिः सह उग्रनक्रैर्भयानकस्य भयङ्करस्यावर्तस्य गभीरा गम्भीरा घोषा येषां ते तथा ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भावद्रव्यैर्मनोमयैः ॥ ९ ॥

भावादर्शनमाह-तस्येत्यादिना ॥ १० ॥

अक्षो रथाङ्गं तद्वदतिस्थूलाः ॥ ११ ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भावद्रव्यैर्मनोमयद्रव्यैः ॥ ९—१० ॥

तं वायुमनु बलाहकाः मेघा अभवन् ते च तडिद्भिः सहोच्चैर्गर्जन्तः अक्षवद्रथाङ्गवत् स्थविष्ठाः वर्षधाराः मुमुचुः ॥ ११ ॥

उग्रनक्राश्च महाभयावर्ताश्च गभीरघोषाश्च ते तथा चतुर्दिक्षु वर्तमानाः समुद्राः समीरवेगोर्मिभिः समन्ततः क्ष्मातलमाग्रसन्तो व्यदृश्यन्त ॥ १२ ॥

---

भाषाटीका ।

तथा अन्यत्र सर्वत्र भी श्रीहरि का ध्यान करते हुए, भावमय द्रव्यों से श्रीहरि का पूजन करते हुए । किसी समय में मार्कंडेय जी प्रेम के प्रवाह में डूबकर पूजा के उपचारों को भूलने लग जाते, इस प्रकार अपने आश्रम में निवास करते रहे ॥ ९ ॥

हे शौनकजी ! एक समय पुष्पभद्रा नदी के तट पर सन्ध्या के समय बैठे हुए, मार्कंडेयजी श्रीहरिकी उपासना करते रहे । हे ब्रह्मन् ! इतने में ही बड़ा भारी पवन चलने लगा ॥ १० ॥

बड़े प्रचंड शब्द करने वाले उस पवन के पीछे ही चारों तरफ से बड़े विकराल मेघ घुमड़ आये, और ( चक्र के बीच का काष्ठ जिसमें अरा घुसे हुए रहते हैं उसका नाम अक्ष है ) उस अक्ष के बराबर मोटी धाराओं से वर्षने लगे, बीजलियों के कौंध बड़े जोर शोर से होने लगे, मेघों में कड़कड़ाहट जोर से होने लगा ॥ ११ ॥

तदके पीछे ऋषि क्या देखते हैं, कि—चारों ओर से चारों समुद्र, पवन के वेग से बढ़ी हुई तरंगोंसे इस भूतल को डुबाते हुए चले आते हैं । जिन समुद्रों में बड़े उग्र मकर मच्छ और बड़े भयंकर भँमर पड़ रहे हैं, और बड़ा ही भारी शब्द हो रहा है ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मना सह जरायुजादिचतुर्विधं जगदन्तर्बहिश्चोपतापितं वीक्ष्य क्ष्मां च जलाप्लुतां वीक्ष्य मुनिः समत्रसत्त्रयं प्राप केनो·

सक्ष्मान्तरिक्षं सदिवं सभागणं त्रैलोक्यमासीत्सह दिग्भिराप्लुतम् ।
स एक एवोर्वरितो महामुनिर्बभ्राम विक्षिप्य जटा जडान्धवत् ॥ १५ ॥
क्षुत्तृट्परीतो मकरैस्तिमिङ्गिलैरुपद्रुतो वीचिनभस्वता हतः ।
तमस्यपारे पतितो भ्रमन् दिशो न वेद खं गां च परिश्रमेषितः ॥ १६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिकायाम् ।

एतादृशम् अद्भिः कथम्भूताभिः अतिभूमिमतिक्रान्ता द्यौर्याभिः खरैश्च सूर्यरश्मिभिर्वायुभिर्वेति शेषः । शतह्रदाभिश्च विद्युद्भिः दीर्घत्वमार्षं छन्दोऽनुसारेण ॥ १३ ॥

प्रभञ्जनेनाऽऽघूर्णितं प्रकम्पितं वा उदकं यस्मिन् सः अल्प-याच्छादयामास समं सह ॥ १४ ॥

सक्ष्माऽन्तरिक्षं भूम्यन्तरिक्षस्थप्राणिसहितं सदिवं स्वर्गस्थ-देवसहितं भागणाः ज्योतिर्गणास्तैः सहितं जटा विक्षिप्य विकीर्य ॥ १५ ॥

परिश्रमेण इषितो गतः प्राप्त इत्यर्थः "इषु सर्पणे" इत्य-स्मात् ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

चतुर्विधं देवतिर्यङ्मनुष्यस्थावरात्मकं मनाक् ईषत् ॥१३॥

वाताघूर्णितजलमध्ये निरस्यकार ॥ १४ ॥

समागणं ज्योतिर्गणसहितम् उर्वरितः अवशिष्टः ॥१५-१७॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अन्तर्बहिरिति । खरैरित्यस्य सूर्यरश्मिभिरिति शेषः । शतह्रदाभिर्विद्युद्भिश्छन्दोऽनुसारेण दीर्घत्वमार्षम् अतिद्युभिरतिक्रान्ता द्यौर्याभिस्ताभिरद्भिर्जलैश्चान्तर्बहिरुपितापितं चतुर्विधं देव-तिर्यङ्मनुष्यस्थावरात्मकं जगज्जलाप्लुतां इमां भूमिं च वीक्ष्य मुनिर्विमनाः समत्रसदभैषीत् ॥ १३ ॥

तस्येति । तस्य मुनेरित्थमुद्वीक्षतस्ततः वर्षद्भिरम्बुदैरापूर्यमाणः प्रभञ्जनेन वायुना आघूर्णितं भ्रामितं वा उदकं यस्मिन् ऊर्मिभि-र्भीषणः अर्णवः द्वीपवर्षाद्रिभिस्समं सह सहितामित्यर्थः इमामल्पयात् छादयामास ॥ १४ ॥

सक्ष्मान्तरिक्षमिति । भूम्यन्तरिक्षसहितं सदिवं स्वर्गसहितं सभागणं नक्षत्रगणसहितं त्रैलोक्यमद्भिः आप्लुतमासीत्तदा स मुनिरेक एव उर्वरितः अवशेषितः विक्षिप्ताः जटाः येन सः जड-वदन्धवच्च विचचार ॥ १५ ॥

किञ्च क्षुत्तृड्भ्यां परीतो व्याप्तः तृतीयान्तपाठे मकरादीनां विशेषणं वीचिभिस्तरङ्गैर्नभस्वता वायुना च हतः ताडितः अत एव परिश्रमेणेषितो व्याप्तः दिवमन्तरिक्षं खमाकाशं गां भूमिं च न वेद ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

घनैर्मेघैरभिवृष्टाभिरद्भिरुपतापितमाप्लावितमभितो द्युति-मतीभिः शतह्रदाभिर्विद्युद्भिश्चोपतापितं चतुर्विधं इमामद्भि-जलाप्लुतां वीक्ष्य ॥ १३ ॥

अल्पयात् छादितवांस्तस्य मुनेरुद्वीक्षतः ॥ १४ ॥

सदिवं स्वर्गेण सहितं सभागणं सनक्षत्रगणं जडवत् अन्धवत् ॥ १५ ॥

वीचिनभस्वता तरङ्गवायुना भ्रमन्त्या दिशो यस्य स तथा वृद्धिमागुरिरल्लोपमिति वचनात् टाबन्तो दिशाशब्दः परि-श्रमेषितः दुःखसमुद्रवासी ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अतिक्रान्ता द्यौर्याभिस्ताभिरद्भिः खरैः सूर्यरश्मिभिः शत-ह्रदाभिर्विद्युद्भिः दीर्घत्वमार्षम् ॥ १३ ॥ १४ ॥

सभागणं ज्योतिर्गणसहितम् ॥ १५ ॥

वीचियुक्तेन नभस्वता आहतः प्राप्ताघातः परिश्रमेण इषितः व्याप्तः "इषगतौ" इत्यस्मात् ॥ १६—१९ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अतिद्युभिः अतिक्रान्ता द्यौर्याभिस्ताभिरद्भिः खरैर्वायुभिरिति शेषः शतह्रदाभिर्विद्युद्भिः दीर्घत्वं छान्दसं महात्मना जरायु-जादिचतुर्भेदं जगदन्तर्बहिरुपतापितं जलाप्लुतां इमां च वीक्ष्य विमनाः सन् समत्रसत् ॥ १३ ॥

समं सह अल्पयात् आच्छादयामास ॥ १४ ॥

जटा विक्षिप्य विकीर्य ॥ १५ ॥

परिश्रमेण ईषितः व्याप्तः ॥ १६ ॥

---

### भाषा टीका ।

स्वर्ग का भी उल्लंघन करने वाले जलों से तथा यह तीक्ष्ण पवन और बिजलियों से भाप सहित जरायुजादि चार प्रकार के प्राणियों वाले जगत् को ताप युक्त देखकर, तथा पृथिवी को जल में डूबी हुई देखकर, ऋषि यह दुःखित हुए और त्रास को प्राप्त होते हुए ॥ १३ ॥

उन ऋषि के इस प्रकार देखते २ तरंगों से भयंकर और पवन से घूम रहे जल जिसमें ऐसा वह महासमुद्र, वर्षा

क्वचिन्मग्नो महावर्ते तरलैस्ताडितः क्वचित् ।
यादोभिर्भक्ष्यते क्वापि स्वयमन्योन्यघातिभिः ॥ १७ ॥
क्वचिच्छोकं क्वचिन्मोहं क्वचिद्दुःखं सुखं भयम् ।
क्वचिन्मृत्युमवाप्नोति व्याध्यादिभिरुतार्दितः ॥ १८ ॥
अयुतायुतवर्षाणां सहस्राणि शतानि च ।
व्यतीयुर्भ्रमतस्तस्मिन् विष्णुमायावृतात्मनः ॥ १९ ॥
स कदाचिद्भ्रमंस्तस्मिन् पृथिव्याः ककुदि द्विजः ।
न्यग्रोधपोतं ददृशे फलपल्लवशोभितम् ॥ २० ॥
प्रागुत्तरस्यां शाखायां तस्याऽपि ददृशे शिशुम् ।
शयानं पर्णपुटके ग्रसन्तं प्रभया तमः ॥ २१ ॥
महामरकतश्यामं श्रीमद्वदनपङ्कजम् ।
कम्बुग्रीवं महोरस्कं सुनासं सुन्दरभ्रुवम् ॥ २२ ॥
श्वासैजदलकाभातं कम्बुश्रीकर्णदाडिमम् ।
विद्रुमाधरभासेषच्छोणायितसुधास्मितम् ॥ २३ ॥
पद्मगर्भारुणापाङ्गं हृद्यहासावलोकनम् ।
श्वासैजद्वलिसंविग्ननिम्ननाभिदलोदरम् ॥ २४ ॥

भाषा टीका ।

करने वाले मेघों के सहित द्वीप खंड और पर्वतों सहित पृथिवी को डुबा देता भया ॥ १४ ॥

उस समय पृथिवी, अंतरिक्ष, स्वर्ग, तारागण, और दिशाओं सहित तीनों लोक जल में मग्न हो गये, और वे महामुनि मार्कंडेय जी एकले ही बच रहे, सो वो भी अपने जटाओं को बिखेर कर जड़ और अन्ध की तरह उस जल में भ्रमते रहे ॥ १५ ॥

भूखे प्यासे, और मकर तिमिंगल इत्यादि नाना प्रकार के जल जंतुओं से उपद्रुत, कभी तरंगों की टक्करों से कभी पवन से ताड़ित होते हुए, उस अपार अंधकार में पड़े हुए मारे परिश्रम के थक गये, और उस समुद्र में भ्रमते २ दिशाओं का ज्ञान न रहा, और न आकाश को जानते हुए न पृथिवी को ॥ ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्योन्यघातिभिस्तद्भक्षणार्थं परस्परं युध्यद्भिः ॥ १७—१८ ॥
विष्णुमायावृतात्मन इति स तथा दृष्टवानित्यर्थः ॥ १९ ॥
ककुद्युन्नतप्रदेशे न्यग्रोधपोतं कोमलवटम् ॥ २० ॥
तस्यैशानदिक्शाखायां शिशुमपि ॥ २१ ॥
श्रीमद्रूपं वदनपङ्कजं यस्य तं कम्बुवद्रेखावृता ग्रीवा यस्य तं महोरस्कं विशालवक्षसम् सुनासं शोभना नासा यस्य तं सुन्दरे भ्रुवौ यस्य तम् ॥ २२ ॥

श्वासैरजन्तः कम्पमाना अलकास्तैराभातं शोभितम् कम्बुवत् श्रीयुक्तौ कर्णौ यावदाडिमपुष्पे यस्य तं विद्रुमतुल्याधरभासा ईषच्छोणायितं सुधातुल्यं स्मितं यस्य तम् ॥२३॥

पद्मगर्भवदरुणावपाङ्गौ नेत्रप्रान्तौ यस्य तं हृद्यो हासः स्मितान्तरलोकनं यस्य तम् श्वासैरेजन्त्यश्चलन्त्यो वलयस्त्रिवलितरङ्गास्ताभिः संविग्ना चलिता निम्ना गम्भीरा नाभिर्यस्मिंस्तदश्वत्थपत्रसदृशमुदरं यस्य तम् ॥ २४ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मृत्युमिति ॥ १८—१९ ॥

पृथिव्याः ककुदि उन्नतदेशे फलपुष्पाकरम् आश्रमप्रासी-नम ॥ २० ॥

अन्नादिदं जगत् सकलदेशे विपुलदेशान्तरभावोऽल्पकाले बहु-कालान्तर्भावः तदितरजनानामदर्शनातिरिक्तमुक्तिपदार्थभवनत्वाद्य-सावि बालादिमूर्तेरीश्वरस्य सर्वशक्तित्वादुपपन्नम् ॥ २१-२४ ॥

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

क्वचिदिति । तरलैस्तरङ्गैरन्योन्यघातिभिरन्योन्यं युद्धमानैर्यो-यादोभिः जलजन्तुभिः अयम् भक्षितश्च ॥ १७ ॥

क्वचिन्मोहमिति–मृत्युं मृत्युमिव ॥ १८ ॥

अयुतायुतवर्षाणामिति । विष्णोर्मायया हृतः आत्मा मनो यस्य तस्य मुनेः तस्मिन् जले भ्रमतः सतः महान् कालो व्यतीयायेत्यर्थः ॥ १९ ॥

स इति । पृथिव्याः ककुदि तदुन्नतप्रदेशे फलैः पल्लवैश्च शोभितं न्यग्रोधपोतं कोमलवटवृक्षं ददृशे पश्यति स्म ॥ २० ॥

प्रागिति । तस्य न्यग्रोधपोतस्य प्रागुत्तरस्यामीशान्यां दिशि या शाखा तस्यां शिशुमपि ददृशे, तं विशिनष्टि–शयानमित्यादिना । तमोऽन्धकारं प्रसन्तं निराकुर्वन्तम् ॥ २१ ॥

इन्द्रनीलवच्छ्यामं श्रीमद्रूपं वदनपङ्कजम् यस्य तं कम्बुवत्कण्ठरेखाङ्किता ग्रीवा यस्य तम् महोरस्कं तिलपुष्पवत्सम शोभना नासा यस्य तम् सुन्दरे भ्रुवौ यस्य तम् ॥ २२ ॥

निःश्वासैरजस्रः कम्पमानाः ये अलकाः तैराभातम् (शोभमानम्) शोभितं कम्बुवदन्तर्वलयेन श्रीयंयोस्तौ कम्बुश्रियौ तयोः कर्णयोर्दाडिमपुष्पसदृशमाभरणं यस्य तम् विद्रुम-वदधरस्तस्य भासा ईषच्छोणायितं शुचि शुभ्रं स्मितम् यस्य तम् ॥ २३ ॥

पद्मगर्भविवारुणावपाङ्गौ नेत्रान्तौ यस्य तम् हृद्यम् हास्ययुक्तम् अवलोकनम् यस्य श्वासैरजस्रमवलम्ब्यः वलयः तिर्यङ्निम्नरेखा याभिस्ताभिः संविग्ना चञ्चला निम्ना च नाभिर्यस्मिन् तदश्वत्थस्य पत्रसदृशम् उदरम् यस्य तम् ॥ २४ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तरलैस्तरङ्गैः ॥ १७—१९ ॥

ककुदि उन्नतस्थले ॥ २० ॥

तस्य वटस्य ॥ २१ ॥ २२ ॥

श्वासेन मुखवायुना एजतां कम्पमानानामलकानां व्रातेन मिश्रया श्रिया युक्तं कर्णदाडिमं कर्णाभरणं यस्य स तथा तम् ईषच्छोणाश्लिष्टा ॥ २३ ॥

पद्मगर्भवत् अरुणावपाङ्गौ नेत्रान्तौ यस्य तं श्वासैरजस्रम् अवलम्ब्या वलयस्तिर्यग्रेखास्ताभिः संविग्नगम्भीरा नाभिर्यस्य स तथा चलमुदरं यस्य स तथा श्वासैजद्वलिसंविग्न-निम्ननाभिश्चलोदरश्च स तथा तं दलोदरमिति वा पाठः दल-वदश्वत्थदलवत् पत्रवत् उदरं यस्येति ॥ २४ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अयुतायुतवर्षाणामिति तस्य भानं जातमित्यर्थः १९—३३ ॥ सद्यस्तदन्तर्धाने दृष्टान्तः यथेहेति अनीश ईहायामसमर्थः तेन निर्मिता ईहा वाञ्छा यथा सद्योऽन्तर्धत्तेतथा तस्मादपे स्थादपायादविपर्ययोपि भगवानन्तर्दध इत्यर्थः ॥ ३२—३४ ॥

---

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ककुदि उन्नतप्रदेशे ॥ २०—२२ ॥

श्वासैरजस्रः कम्पमाना अलकास्तैराभातं कम्बुवदन्तर्वलये श्रीर्ययोस्तौ कम्बुश्रियौ तयोः कर्णयोर्दाडिमपुष्पे यस्य तम् ॥२३

श्वासैरजस्रमवलम्ब्यो वलयस्तिर्यग्निम्नरेखास्ताभिः सा संविग्नं चञ्चलं निम्ननाभिगम्भीरनाभिदलोदरं दलमश्वत्थप तद्वदुदरं यस्य तम् ॥ २४ ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्योन्यघातिभिस्तज्जलचारिभिः परस्परं युध्यद्भिः ॥ १७ ॥

मृत्युं विस्मृतिम् ॥ १८ ॥

विष्णुमायया आवृतः आत्मा मनो यस्य ॥ १९ ॥

ककुदि उन्नतप्रदेशे न्यग्रोधपोतं कोमलं वटम् ॥ २० ॥

तस्य न्यग्रोधपोतस्य ॥ २१ ॥ २२ ॥

श्वासैरजस्रैः कम्पमानैरलकैराभातम् शोभितम् कम्बुवत् श्रीर्ययोस्तौ कम्बुश्रियौ तयोः कर्णयोर्दाडिमपुष्पे यस्य त विद्रुमवद्योऽधरस्तद्भासया शोणायितं सुधासदृशं स्मित मन्दहसितम् यस्य तम् ॥ २३ ॥

पद्मगर्भवत् किञ्चिदरुणौ अपाङ्गौ नयनप्रान्तौ यस्य तम् हृद्ये हृदयप्रिये हासावलोकने यस्य तम् श्वासैजद्वलिभि प्राणसञ्चारेण कम्पमानाभिस्तिर्यग्रेखाभिः संविग्नाऽस्थिरा निम्न नाभिर्यस्मिन् तदश्वत्थदलनिभमुदरं यस्य तम् ॥ २४ ॥

---

## भाषाटीका ।

किसी जगह बड़े भँवर में पड़जाने, किसी समय तरंग से ताड़ित होते, और किसी जगह परस्पर में घातकर वाले जलजन्तु भी मुनि को भक्षण करने लगते थे ॥ १७

किसी समय शोक को प्राप्त होते, कभी मोह को कभी दुःख को कभी सुख को, कभी भय को, और कभी व्याधियों से पीड़ित होकर मृत्यु सदृश दुःख को भी प्राप्त होजाते थे ॥ १८ ॥

इस प्रकार श्रीविष्णुकी माया देखने वाले मुनिको उस समुद्रमें भ्रमते २ लाखों क्रोड़ों वर्ष व्यतीत हो गई, ॥ १९ ॥

वह ऋषि किसी एक समय भ्रमते२ एक पृथिवी के टीले पर अति मनोहर फल और पल्लवों से सुशोभित एक बड़ के पोदे को देखते हुए ॥ २० ॥

और बटकी ईशान कोणकी एक शाखामें एक पत्रपुटमें सोये हुए सुन्दर शिशु को देखते हुए, कैसा वह शिशु है, कि—अपनी कान्ति से उस प्रलय कालके अंधेरे को दूर कर रहा है ॥ २१ ॥

चार्वङ्गुलिभ्यां पाणिभ्यामुन्नीय चरणाम्बुजम् ।
मुखे निधाय विप्रेन्द्रो धयन्तं वीक्ष्य विस्मितः ॥ २५ ॥
तद्दर्शनाद्वीतपरिश्रमो मुदा प्रोत्फुल्लहृत्पद्मविलोचनाम्बुजः ।
प्रहृष्टरोमाऽद्भुतभावशङ्कितः प्रष्टुं पुरस्तं प्रससार बालकम् ॥ २६ ॥
तावच्छिशोर्वै श्वसितेन भार्गवः सोऽन्तश्शरीरं मशको यथाऽऽविशत् ।
तत्राप्यदोन्यस्तमचष्ट कृत्स्नशो यथापुराऽमुह्यदतीव विस्मितः ॥ २७ ॥
खं रोदसी भगणानद्रिसागरान् द्वीपान् सवर्षान् ककुभः सुरासुरान् ।
वनानि देशान् सरितः पुराकरान् खेटान् व्रजानाश्रमवर्णवृत्तयः ॥ २८ ॥
महान्ति भूतान्यथ भौतिकान्यसौ कालं च नाना युगकल्पकल्पनम् ।
यत्किञ्चिदन्यद्व्यवहारकारणं ददर्श विश्वं सदिवावभासितम् ॥ २९ ॥
हिमालयं पुष्पवहां च तां नदीं निजाश्रमं तत्र ऋषीनपश्यत् ।
विश्वं विपश्यन् श्वसिताच्छिशोर्वै बहिर्निरस्तो न्यपतल्लयाब्धौ ॥ ३० ॥
तस्मिन् पृथिव्याः ककुदि प्ररूढं वटं च तत्पर्णपुटे शयानम् ।
तोकं च तत्प्रेमसुधास्मितेन निरीक्षितोऽपाङ्गनिरीक्षणेन ॥ ३१ ॥
अथ तं बालकं वीक्ष्य नेत्राभ्यां धिष्ठितं हृदि ।
अभ्ययादतिसंक्लिष्टः परिष्वक्तुमधोक्षजम् ॥ ३२ ॥

भाषा टीका ।

महामरकतमणि के सदृश श्याम और शोभा युक्त वदनकमल जिसका, शङ्ख सरीका विशाल वक्षःस्थल, सुन्दर नासिका और सुन्दर भृकुटि जिसकी ॥ २२ ॥

श्वास से कम्पित हो रही जो अलकावली तिससे शोभित और शंख के तरह भीतर वलय से शोभा वाले दाड़िम के पुष्प सदृश कर्ण हैं जिसके, और प्रवाल ( मूंगा ) के सदृश ओष्ठ की कान्ति से किञ्चित् ललाई को लिये हुए अमृत सदृश मन्द हसन जिसकी ॥ २३ ॥

कमल के गर्भ के सदृश अरुण अपांग ( नेत्र की कोर ) हैं जिसके, और हृदय ग्राही है हास पूर्वक चितवन जिस की, तथा श्वास से चलायमान जो त्रिवली तिससे चञ्चल और गंभीर है नाभि जिसमें ऐसा पीपल के दल सदृश है उदर जिसका ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

चारवोऽङ्गुलयो ययोस्ताभ्यामुन्नीयाऽऽकृष्य धयन्तं पिबन्तम् ॥ २५ ॥

हृत्पद्मं च विलोचनाम्बुजे च प्रोत्फुल्लानि यस्य सः अद्भुतभावाऽस्याश्चर्यरूपस्तेन शङ्कितः सन्नपि तं प्रष्टुं पुरः प्रससार समीपं गतः ॥ २६ ॥

अदः इदं जगद्यथा पुरा प्रलयात्पूर्वं न्यस्तं स्थितं दृष्ट्वा अतीव विस्मितः सन्नमुह्यत ॥ २७ ॥

कृत्स्नशो दर्शनं प्रपञ्चयति—खमित्यादिना । ककुभो दिशः पुराण्याकरांश्च खेटान् कर्षकग्रामान् व्रजान् गोकुलानि आश्रमांश्च वर्णांश्च तेषां वृत्तींश्चेत्यर्थः ॥ २८ ॥

नानायुगानि कल्पांश्च कल्पयति तेषां कल्पनम् इति तथा तं कालं च सदिव परमार्थं इवावभासितं तेनैव ॥ २९—३० ॥

वटं च तोकं च वीक्ष्य तस्य प्रेम्णा सुधातुल्यस्मितयुक्तेनापाङ्गनिरीक्षणेन निरीक्षितः सन् अथ तं बालकमधोक्षजं परिष्वक्तुमभ्ययादिति द्वयोरन्वयः कथम्भूतम्? नेत्राभ्यां हृदि धिष्ठितमधिष्ठितम् ॥ ३१—३२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

चारवः सुन्दर्यः अङ्गुलयो ययोस्ताभ्यां पाणिभ्यां चरणाम्बुजम् उन्नीय उद्धृत्य मुखे निधाय तदङ्गुष्ठं धयन्तं पिबन्तम् इत्थम्भूतम् शिशुं विलोक्य विस्मितो बभूवेत्यर्थः २५ ॥

तद्दर्शनादिति। तस्य शिशोर्दर्शनात् वीतो गतः परिश्रमो यस्य सः प्रोत्फुल्लानि हृत्पद्मं विलोचनाम्बुजे च यस्य स अद्भुत-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भावेनात्याश्चर्यरूपेण शङ्कितोऽपि तं बालकं द्रष्टुं पुरः संसार समीपं गतः इत्यर्थः ॥ २६ ॥

तावत्तदा हे भार्गव ! स मुनिः शिशोः श्वसितेन मशकवदन्तःशरीरमाविशत् शिशोः श्वासवातेन तच्छरीरान्तः प्राविशदित्यर्थः । तत्रापि तद्गर्भेऽप्यदोऽस्थम् अमुष्मादन्यं तं तथाविधं शिशुमचष्ट यथा पुरा तच्छरीरान्तःप्रवेशात्पूर्वं यथा कृत्स्नशः कात्स्न्येनाचष्ट तद्वत् एव दृष्ट्वाऽतीव विस्मितो ऽमुह्यत् ॥ २७ ॥

कृत्स्नशो दर्शनं प्रपञ्चयति—खमिति । खम् आन्तरिक्षं रोदसी द्यावापृथिव्यौ भगणाञ्चक्षत्रगणानद्रींश्च सागरांश्च ककुभो दिशः सुरांश्चासुरांश्च तान् पुराणि हर्षादिमन्ति आकारान् रत्नाद्युत्पत्तिस्थानानि खेटान् कर्षकग्रामान् व्रजान् गोष्ठानि च आश्रमांश्चतुरो वर्णान् तेषां वृत्तीश्चेत्यर्थः ॥ २८ ॥

महान्ति भूतान्याकाशादीनि पञ्चभौतिकानि देवमनुष्यादीनसौ मुनिः नानायुगानि कल्पांश्च कल्पयतीति तथा तं कालं च किं बहुना यत्किञ्चिद्व्यवहारकारणं व्यवहारविषयं विषयापिव्यवहारं प्रति कारणत्वात्कारणमित्युक्तम् स दिवाश्रिमाभिनमश्रानां नित्यमिव प्रतीयमानं विश्वं तत्सर्वं ददर्श ॥ २९ ॥

किञ्च । हिमालयमिति ॥ ऋषी नरनारायणौ ददर्श विश्वं विपश्यन् शिशोः श्वसितात् श्वासाद्बहिर्निरस्तः निष्कासितः पुनः प्रलयाब्धौ न्यपतत् ॥ ३० ॥

पश्यन्निति । तत्पर्णपुटे शयानम् इति वटपत्रपुटे शयानं तोकं शिशुं च पश्यन् तस्य शिशोः प्रेम्णा सुधास्मितेन च युक्तेनापाङ्गनिरीक्षणेन निरीक्षितो बभूवेति शेषः ॥ ३१ ॥

अथेति । नेत्राभ्यां हृदि संस्थितमालिङ्गितुम् च उत्कमधोक्षजं पुनर्बहिः परिष्वक्तुमभ्ययादभिमुखं जगाम ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

धयन्तं पिबन्तम् ॥ २५ ॥

अद्भुतभावेनाश्चर्यलीलाचेष्टया शङ्कितः सन्नपि पुरः प्रससार समीपङ्गतः ॥ २६ ॥

स भार्गवः मार्कण्डेयः तावत्ततः पूर्वमेव श्वसितेनान्तर्गच्छता सह शिशोरन्तःशरीरं मशको यथा तथाविशदित्यन्वयः । तत्रोदरान्ते निश्चयतमदो विश्वं कृत्स्नशोऽचष्ट दृष्टवान् दृष्ट्वा च पुरा यथा बहिर्विस्मितो मुह्यत्तथामुह्यदित्यन्वयः । अत्र मोहो नामाश्चर्यबुद्धिरेव तत्त्वन्यथाज्ञानं तथात्वे प्राचीनाचार्यापुण्यवराशेर्वैयर्थ्यापत्तेरिति ॥ २७ ॥

विश्वं विशिनष्टि—खं रोदसी इत्यादिना । आश्रमवर्णवृत्तयो वार्ताश्च ॥ २८ ॥

महान्ति भूतानि पञ्चभूतानि नानायुगकल्पनं येन स तथा तं कालं च अन्यद्यत्किञ्चिद्व्यवहारकारणं हानोपादानादिसमर्थं तच्चाद्राक्षीत् सदिवसत्त्वेन यथार्थत्वेनैवावभासितं प्रकाशितं मिथ्याभूतत्वेन ॥ २९ ॥

पुनः किमभूदित्याह—विश्वमिति । बहिः श्वसतः शिशोः श्वासेन बहिर्निरस्तो पुनः प्रलयाब्धौ न्यपतत् ॥ ३० ॥

वटं च तोकं च वीक्ष्य तस्य शिशोः प्रेमसुधायाः प्रेमामृताद्युद्भूतस्मितसहितेनापाङ्गनिरीक्षणेन निरीक्षितो ऽभूदित्यन्वयः ॥ ३१ ॥

अथ तं बालकं परिष्वक्तुमभ्यगात् ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मच्चरणाम्बुजे कीदृशं मधु वर्तते यत एतदास्वादनार्थं बहवो भक्ता यतन्ते तस्मादिदमहमप्यास्वाद्य परीक्षेय इतीव धयन्तं पिबन्तम् ॥ २५ ॥

अद्भुतभावेन अत्याश्चर्यस्वरूपेण शङ्कितः नायं प्राकृतो बालक इति प्राप्ताशङ्कोऽपि प्रष्टुम् ॥ २६ ॥

अदः जगत् यथा पुरा प्रलयात्पूर्वम् ॥ २७—२८ ॥

स मार्कण्डेयः दिवा दिवस एव अवभासितं प्रकाशयुक्तं ददर्श पुष्पवहां पुष्पभद्राम् ॥ २९ ॥

लयाब्धौ निपत्य पुनरप्ययुतायुतवर्षपर्यन्तम् कष्टमनुभूय पृथिव्याः ककुदि वटपत्रशायिनं बालं ददर्श तस्य प्रेम्णा सुधातुल्यस्मितयुक्तेनापाङ्गनिरीक्षणेन निरीक्षितः सन् पुनरपि तदीयश्वासेन पूर्ववत् प्रवेशनिर्गमौ एवमेव सप्तकृत्वः प्रवेशनिर्गमावप्रियतयाक्यवश्यया ययौ ॥ ३०—३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

धयन्तं पिबन्तम् ॥ २५ ॥

प्रोत्फुल्लानि हृत्पद्म विलोचने च यस्य सः अद्भुतेनात्याश्चर्येण भावेन शङ्कितः किमयमीश्वर इति शङ्का प्राप्ता यस्य सः तं प्रष्टुम् पुरः समीपं प्रससार ॥ २६ ॥

तत्रापि तच्छरीरमध्येऽपि अदः इदं विश्वम् यथा पुरा प्रलयात्पूर्वम् तथैवाचष्ट अतोऽतीव विस्मितः ॥ २७—२८ ॥

नानायुगानि कल्पांश्च कल्पयतीति स तथा तं च इदमादः एवार्थे सर्वकारणभूतं चकारेण तत्तदाकारेण च भासितम् ददर्श भगवत्कृतम् सर्वम् सत्यमेव सर्वस्य तदात्मकत्वात् ॥२९—३०॥

तस्मिन् लयाब्धौ पृथिव्याः ककुदि वटं तत्पर्णपुटे तोकम् च वीक्ष्य तस्य प्रेम्णा सुधातुल्यस्मितयुक्तेन अपाङ्गनिरीक्षणेन निरीक्षितः सन् तं बालं नेत्राभ्यां हृदि धिष्ठितमपि पुनर्बहिरपि परिष्वक्तुमभ्ययादिति द्वयोरन्वयः ॥ ३१—३२ ॥

---

### भाषा टीका ।

मुनिने और ऐसा उस बालक को देखा, कि सुन्दर मनोहर छोटी २ अगुलियों वाले दोनो हाथों से अपने चरण कमल को ऊंचा उठाकर मुख में अंगुष्ठ देकर पीरहा है । ऐसे उस अद्भुत बालक को देखकर मार्कंडेय जी बड़े विस्मय को प्राप्त हुए ॥ २५ ॥

मुनि का भी सब परिश्रम उस बालक के दर्शन से

तावत्स भगवान् साक्षाद्योगाधीशो गुहाशयः ।
अन्तर्दध ऋषेः सद्यो यथेहानीशनिर्मिता ॥ ३३ ॥
तमन्वथ वटो ब्रह्मन् ! सलिलं लोकसम्प्लवः ।
तिरोधायि क्षणादस्य स्वाश्रमे पूर्ववत्स्थितः ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां द्वादशस्कन्धे मार्कण्डेयोपाख्याने भगवन्मायादर्शनं नाम नवमोऽध्यायः ॥ ९ ॥

भाषा टीका ।

दूर होगया, तथा हृदय कमल और नेत्र कमल प्रफुल्लित होगये, रोमाञ्च खड़े हो गये, और आश्चर्य से शंकित होकर मुनि उस बालक से पूंछने को उसके सन्मुख समीप गये ॥२६॥

इतने में ही भृगु वंशी वह मुनि उस बालक के श्वास के साथ बालक के शरीर में मशक के तरह भीतर चले गये, भीतर भी जाकर इस समग्र जगत को जैसा का तैसा रचा हुआ देखकर बड़े विस्मय को प्राप्त होकर मोहित होते हुए ॥२७॥

मुनिने बालक के उदर में क्या देखा कि—आकाश, द्यावा-पृथिवी, नक्षत्रगण, पर्वत, समुद्र, खण्डोंसहित द्वीप, दिशायें सुर, असुर, वन, देश, सरितायें, पुर, खानें, छोटे२ ग्राम, गोधन के खोड़े, आश्रम और वर्णोंकी जीविकायें ॥ २८ ॥

बड़े २ भूत प्राणी, भौतिक पदार्थ, तथा नाना युग और कल्प जिनमें कल्पना किये जांय इतने बड़े काल को भी बालक के उदर में देखा, अर्थात् उस जगह बहुत काल बीत गया, और भी जो कुछ व्यवहार कारण और सत्य सरीखा भान होने वाला विश्व है, तिसको भी देखा ॥ २९ ॥

जिसमें भी हिमालय पर्वत, और पुष्पभद्रा नदी, और इसके तट पर अपना आश्रम भी मार्कण्डेय ऋषि ने देखा, तथा वहां पर रहने वाले ऋषियों को भी देखे, इस प्रकार इस बालक के उदर में विश्व को देख रहे थे, कि—इतने में ही बालक का बाहर को श्वास निकला उसके साथ निकल फिर भी मार्कण्डेय ऋषि उसी प्रलय के समुद्र में गिरे ॥ ३० ॥

वहां फिर भी पृथिवी के एक टीले पर जमे हुए एक छोटे से वट के वृक्ष को देखते हुए, और उसके पत्र के दूट में सोये हुए एक मनोहर बालक को देखते हुए। और ऋषि उस बालक की प्रेम रूप अमृत युक्त मन्द मुसकानि सहित कटाक्षों के निरीक्षण के पात्र हुए ॥ ३१ ॥

जो बालक अन्तर्यामि रूप से हृदय में विराजमान है इसी नेत्रों से बालक को देखकर ऋषि प्रथम बहुत क्लेश को प्राप्त हुए रहे आदर सहित अधोक्षज के आलिङ्गन करने को उनके समीप गये ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तावत्परिष्वङ्गात्प्राक् पूर्वमेव ऋषेरन्तर्हितो बभूव तदुद्यमवैफल्यं दृष्ट्वा, अनीशो निर्दैवस्तेन निर्मिता ईहा क्रीडा यथेति ॥ ३३ ॥

अन्तर्हितं भगवन्तमनुवटः सलिलं लोकसम्प्लवश्च तिरोधायान्तर्हितः सद्य आश्रम एव यथापूर्वं स्थित इति ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीधरस्वामिकृतभावार्थदीपिकायां नवमोऽध्यायः ॥ ९ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने द्वादशस्कन्धीये श्रीसुदर्शनसूरिकृतशुकपक्षीये नवमोऽध्यायः ॥ ९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तावदिति । तावद्भगवानचिन्त्यानिमित्तानिरवधिकज्ञानशक्त्यादिगुणगणपूर्णः योगाधीशः आश्चर्यशक्तियोगानिर्वाहकः गुहाशयः सर्वान्तरात्मा अन्तर्हितवान् तदा ऋषेरीहा आलिङ्गनेच्छा यथा अनीशनिर्मिता निर्धनेन कृता तद्वदभीष्टार्थः ॥ ३३ ॥

तमिति । तं तिरोहितं शिशुमनु लोकसंप्लवं सलिलं तिरोधाय तत्क्षणात्तस्य मुनेः सकाशाद्वटोऽप्यन्तर्दधे इति पूर्वेण सम्बन्धः । यद्वा, भगवान् सलिलं तिरोधायान्तर्दधे तमनु वटोऽपि अन्तर्दधे इति सम्बन्धः मुनिस्तु स्वाश्रमे पूर्ववत्स्थितः अल्पदेशो विपुलदेशान्तर्गतः अल्पकाले बहुकालान्तर्गतः तदितरजनादृष्टतत्तद्व्यतिरिक्तमूर्तामूर्तपदार्थदर्शनहेतुतत्कालावस्थाविस्मितत्वादिसुविस्मितिसर्वसंभावनस्य सर्वशक्तित्वादुपपन्नम् ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां नवमोऽध्यायः ॥ ९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनीशेनासमर्थेन निर्मिता ईहा मायावशचेष्टा यथा क्षिप्रमन्तर्दधाति तथैवमन्तर्धानश्चेष्यार्थे निदर्शनमिदं न तु मिथ्यात्वे ॥ ३३ ॥

अन्तर्हितं भगवन्तमनु लोकस्य सम्प्लवो यस्मात्तथा तिरोधायि तिरोहितमभूत् ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
नवमोऽध्यायः ॥ ९ ॥
( विजयध्वजतीर्थरीत्याऽष्टमः ॥ ८ ॥ )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अनीशो दरिद्रस्तस्य ईहा धनादिवाञ्छा यथा सद्य एवोत्पद्य सद्य एव लीयते तद्वदित्यर्थः ॥ ॥ ३३ ॥

अपश्यदिति । क्षणमात्रकालमध्ये एव सप्तकल्पसम्प्लवः कायः प्रविष्टोऽभूत्तथैव भगवच्छक्त्यैवेति भावः । तिरोधायीति कर्मकर्तरि णिप् ॥ ३४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
द्वादशे नवमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

बालपरिष्वङ्गं कर्तुमुपक्रान्तवतस्तस्य एवान्तर्दधे तदा ऋषेः ईहा परिष्वङ्गचेष्टा यथा अनीशेनासमर्थेन जीवेन निर्मिता वृथा भवति तथा जाता ॥ ३३ ॥

तं सर्वशक्तिं भगवन्तं कारणमनु तदंशं प्रकाशितं वटादि कार्यजातमन्तर्हितमासीदित्याह—तमन्विति । लोकस्य सम्प्लवः प्रलयश्च ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
नवमाऽध्यायार्थप्रकाशः ॥ ९ ॥

---

इतनी ही देर में योगाधीश गुहाशय वे साक्षात् भगवान्, ऋषि के देखते २ तत्काल अन्तर्धान को प्राप्त हो गये, जैसे कि—मन्द भाग्यवाले पुरुष की निर्मित क्रीडा ॥ ३३ ॥

हे शौनक ! तिसके पश्चात् वह वट और जल, और लोकों का जल में डूबना ये सब ऋषि को क्षणमात्र में अन्तर्हित हो गया और ऋषि अपने आश्रम के विषे पूर्ववत् स्थित होगये ॥ ३४ ॥

इति श्रीमद्भागवत द्वादशस्कन्ध में नवम अध्याय की
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्त ॥ ९ ॥

---

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः ।

सूत उवाच ।

स एवमनुभूयेदं नारायणविनिर्मितम् ।
वैभवं योगमायायास्तमेव शरणं ययौ ॥ १ ॥

मार्कण्डेय उवाच ।

प्रपन्नोऽस्म्यङ्घ्रिमूलं ते प्रपन्नाभयदं हरे ! ।
यन्माययाऽपि विबुधा [१] मुह्यन्ति ज्ञानकाशया ॥ २ ॥

सूत उवाच ।

तमेवं निभृतात्मानं वृषेण दिवि पर्यटन् ।
रुद्राण्या भगवान् रुद्रो ददर्श स्वगणैर्वृतः ॥ ३ ॥
अथोमा तमृषिं वीक्ष्य गिरिशं समभाषत ।
*पश्येमं भगवन् ! विप्रं निभृतात्मेन्द्रियाशयम् ॥ ४ ॥
[२] निभृतोदझषव्रातं वातापाये यथाऽर्णवम् ।
कुर्वस्य तपसः साक्षात्संसिद्धिं सिद्धिदो भवान् ॥ ५ ॥

श्रीभगवानुवाच ।

नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत ।
भक्तिं परां भगवति लब्धवान् पुरुषेऽव्यये ॥ ६ ॥
अथाऽपि संवदिष्यामो भवान्येतेन साधुना ।
अयं हि परमो लाभो नृणां साधुसमागमः ॥ ७ ॥

सूत उवाच ।

इत्युक्त्वा तमुपेयाय भगवान् स सतां गतिः ।
ईशानः सर्वविद्यानामीश्वरः सर्वदेहिनाम् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

दशमे शिव आगत्य मुनेस्तुष्टो वरानदात् ।
तेन साकमतिप्रीत्या समाभाष्य समाजगत् ॥
॥ १ ॥

ज्ञानकाशया ज्ञानवत्प्रकाशमानया स्वप्नदर्शनं विना विद्वांसोऽपि यस्य तव मायया ज्ञानिनो वयमित्यहङ्कारेण विमुह्यन्तीत्यर्थः ॥२॥

श्रीनारायणस्य एव समायाद्दर्शनमात्रं शिवरूपेण साक्षात्कारयामास तदाह-तमेवमित्यादिना । निभृतात्मानं समाहितचित्तम् रुद्राण्या भवान्या ॥ ३ ॥

निभृता निश्चला आत्मेन्द्रियाशया देहेन्द्रियमनांसि यस्य तम् ॥ ४ ॥

निभृतं निश्चलमुदकं झषव्रातश्च यस्मिंस्तम् यस्मिन्हि फल

---

(१) मुह्यन्त्यज्ञानकातराः इति वीर० विज० पा० । (२) निभृतोऽतन्तू(?)प्रिमातस्तपापाये इति च विज० । * पश्येम इति वीर० ।

### श्रीवरस्वामिकृतभावार्थदीपिका ।

साक्षात्कुरु प्रकटीकुरु यतो भवान् सिद्धिदः आशिषोऽभ्युदय-लक्षणाः उत सिद्धिम् अत्र हेतुः भक्तिमिति ॥ ५ ॥ ६ ॥

संवदिष्यामः संवादं करिष्यामः ॥ ७ ॥

सताङ्गतित्वे हेतुः ईशान इति ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मार्कण्डेयस्य तत् कुलप्रसूतत्वे शास्त्रान्तरपरिहारो द्रष्टव्यः एतत् कल्पात् प्रभृतमार्कण्डेयो ऽन्यो वात्मानित्यनिरोध उर्वरितः आपदो निर्मुक्तः ॥ १—१५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं भगवता दत्तं तद्योगमायादर्शनात्मकं वरं प्राप्य ततो रुद्राद्गणचन्द्रिकिल्येवंभाकल्पान्तमायुस्त्रैकालिकं ज्ञानं चिरक्तं ब्रह्मवर्चस्विनं पुराणाचार्यत्वं च लेभ इति वक्तुं प्रस्तौति—स एवमित्यादिना । नारायणेन निर्मितमाश्चर्यशक्त्यैश्वर्यमनुभूय तमेव नारायणमेव तन्मायातरणाय शरणं ययौ ॥ १ ॥

तदेवाह—प्रपन्नोऽस्मीति । प्रपन्नानामभयम् संसृतिभयाभावं प्रयच्छतीति तथा यस्य तव मायया हेतुभूतया यदज्ञानं तेन कातराः विभ्रान्तचित्ताः सन्तो मुह्यन्ति तां तर्तुं प्रपन्नोऽस्मीत्यन्वयः ॥ २ ॥

तमिति । इत्थं निभृतात्मानं समाहितचित्तं मुनिं रुद्रो ददर्शेति सम्बन्धः विहरन्तरिक्षे ॥ ३ ॥

अथेति । उमा रुद्राणी उक्तिमेवाह—पश्यैनमिति । यथा निभृतं निश्चलम् उदकम् झषव्रातश्च यस्मिन् पारावारोऽपारोऽर्णवः समुद्रः ( तथा क्षीरसागरो वा ) तथा निभृतात्मेन्द्रियाशयं निश्चलदेहेन्द्रियमानसं मुनिं पश्येम अस्य मुनेस्तपसः संसिद्धिं फलं कुरु यतो भवान् संसिद्धिदः ॥ ४ ॥ ५ ॥

एवमुक्तः प्राह रुद्रः—नेति द्वाभ्याम् । आशिषः कामानुतापिचः मोक्षमप्ययं ब्रह्मर्षिः नैवेच्छति तत्र हेतुः परामनन्यप्रयोजनां भगवति भक्तिं लब्धवान् न हि भगवदेकान्तभक्ताः किञ्चिदपि वाञ्छन्तीति भावः ॥ ६ ॥

तथापि यद्यप्येवं तथापि हे भवानि साधुनाऽनेन मुनिना सह संवदिष्यामः सम्वादं करिष्यामः किं तावन्मात्रेण तत्रेत्यत्राह, अयं हीति । नृणामयम् अयमेव परमो लाभः कोऽसौ यत्साधुसमागमः न तस्य लाभः किन्त्वस्माकमेवेति भावः । यद्वा अन्योन्यस्य समागमोऽन्योन्यस्य लाभ इति भावः । नृणामिति पारोक्ष्यनिर्देशो लोकपरिपाटीप्रदर्शनाभिप्रायकः ॥ ७ ॥

इतीति । स भगवान् रुद्रः सताङ्गतिस्सर्वविद्यानियामक-त्वात्सर्वदेहीश्वरत्वजगदात्मत्वात्मभूतपरमपुरुषद्वारकाणीति-विवक्षितानि "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" ( १।१।३१ ) इति न्यायानुगतावतारत्वाद्वा तानि विवक्षितानि ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मार्कण्डेयः पुनः किमकार्षीदित्यतः अङ्गवतां हरौ भक्तिसमुद्रेककरीति हाईं शौनकादीनां चोद्यम् परिहरति, स एवमिति । यः पूर्वमप्याश्रमे स्थितः सः योगमायायाः अचिन्त्यमहिम-विभूतेः वैभवं स्वार्जित स्वरूपशक्तेः प्रभावं वा ॥ १ ॥

यस्य हरेर्मायया मोहनशक्त्या विबुधा अज्ञानकातरा इति पदद्वयेनान्योन्याविरुद्धेन मायाशब्दो व्याख्यात इति ज्ञातव्यम् ॥२॥

निभृतात्मानं पूर्णमनसं इरावेव नितरां भृतमनसं वा दिवि व्योम्नि ॥ ३—४ ॥

निभृतो ननु, पूर्ण एव तपाख्ये बर्हिकाले ऋषीणां यानो मनसमूहो यस्य स तथा पूर्वविशेषणार्थे हेतुरयम् अस्य मुनेः ॥५॥

रुद्रः प्रतिवक्ति, नैवेति । मोक्षमपि नेच्छति किमुतान्या आशिषः तत्र हेतुमाह भक्तिमिति ॥ ६ ॥

यद्यप्येवं तथापि भवत्या वचनगौरवात्संवदिष्यामह इत्याशयेनाह—तथापीति । हे भवानीति एतेन साधुना मुनिना सह सङ्कथनेन किं प्रयोजनमत्राह, अयं हीति । साधूनां समागमः सङ्गतिः ॥ ७ ॥

समुपेत्याय सम्प्राप्य अयं साधारणो भगवान् किन्तु देव इत्यत एवंत्याशयेनाह—ईशान इति । अनेन श्रीहरिज्ञानमपि रुद्रप्रसादात्फलवत्स्यादित्युक्तं भवति तत्कुत इत्यत्राह, ईश्वर इति श्रोत्रादीन्द्रियवतां जीवानां शिवाधीनत्वेन तत्तदिन्द्रियसाध्यस्य ज्ञानस्यापि तत्प्रसादायत्तत्वं युक्तम् ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सोमेशदर्शने तस्य स्तुतिस्तेनाभिनन्दनम् ।
मुनेः स्ववरप्राप्तिस्तस्मादष्टम उच्यते ॥

॥ १ ॥

ज्ञानकाशया ज्ञाने वर्तमानेपि काशया प्रकाशितुं समर्थेत्यर्थः । तत्राहमेव प्रमाणमभूवमिति भावः ॥ २—४ ॥

निभृतानि निश्चलीभूतानि उदकानि झषव्राताश्च यत्र सः ॥५॥

(मार्कण्डेयस्य एतत कुलप्रसूतत्वे शास्त्रान्तरपरिहारो द्रष्टव्यः)

आशिषोऽणिमाद्याः सिद्धीः तर्हि मोक्षं देहीति तत्राह—मोक्षमपीति तर्हि भक्तिं देहीति तत्राह भक्तिमिति ॥ ६—७ ॥

सताम् अभीप्सितभक्तिप्रदायित्वाद्गतिः न केवलं सतामेव गतिरपि तु सकामानामपीत्याह—ईशान इति । नात्र चित्रमित्याह—ईश्वर इति ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं भगवद्योगमायावैभवदर्शनं भगवत्प्रसादान्मार्कण्डेयेन लब्धम् अथ द्वशमे शिवप्रसादाल्लब्धं तदुक्तं प्रस्तौति, स एवमित्यादिना । योगमायायाः सत्याश्चर्यरूपायाः भगवच्छक्तेः ॥ १ ॥

ज्ञानकाशया ज्ञाने सत्यपि प्रकाशमानया ज्ञानवतामपि मोहजनकया इत्यर्थः ॥ २ ॥

तयोरागमनं साक्षादीशयोर्जगदात्मनोः ।
न वेद रुद्धधीवृत्तिरात्मानं विश्वमेव च ॥ ९ ॥
भगवांस्तदभिज्ञाय गिरिशो योगमायया ।
आविशत्तद्गुहाकाशं वायुश्छिद्रमिवेश्वरः ॥ १० ॥
आत्मन्यपि शिवं प्राप्तं तडित्पिङ्गजटाधरम् ।
त्र्यक्षं दशभुजं प्रांशुमुद्यन्तमिव भास्करम् ॥ ११ ॥
(१)व्याघ्रचर्माम्बरधरं शूलखट्वाङ्गचर्मभिः ।
अक्षमालाडमरुककपालासिधनुःसह ॥ १२ ॥
बिभ्राणं सहसा भातं विचक्ष्य हृदि विस्मितः ।
किमिदं कुत एवेति समाधेर्विरतो मुनिः ॥ १३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दिवि अन्तरिक्षे ॥ ३ ॥

निभृताः नियमिताः आत्मेन्द्रियाशयाः शरीरेन्द्रियमनांसि येन तम् ॥ ४ ॥

निभृतं निश्चलमुदकं झषव्राताः मीनसमूहो यस्मिन् सः संसिद्धिं साक्षात्कुरु प्रकटीकुरु ॥ ५ ॥

आशिषः सिद्धीः ॥ ६ ॥

संवदिष्यामः संभाषं करिष्यामः ॥ ७ ॥

इत्युक्त्वेत्यादिग्रन्थे श्रीरुद्रस्य भगवत्त्वं सर्वदेहिनामीशितृत्वं सर्वात्मत्वादिकं च श्रीविष्णुप्रसादजं ज्ञेयम् सोऽप्यभीष्टर वृणीष्व "अहमेव पशूनामभिपतिरभवानि "अस्य मे देव मीढ्वो वयो विश्वहा-रत,, इत्यादिश्रुतेः "सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः" इत्यादिप्रागुक्तत्वाच्च भगवान्—

"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति "॥

इत्युक्तलक्षणः सतां साधूनां हरिभक्तप्रवरत्वाद्गतिः सर्वदेहिनां सुरासुरादीनामीश्वरो नियन्ता ॥ ८ ॥

———

भाषा टीका ।

सूत उवाच ॥

सूतजी बोले, कि—वह मार्कंडेय ऋषि नारायण के रचे हुए योग माया के वैभव को इस प्रकार देखकर उनहीं श्रीनारायण की शरण जाते हुए ॥ १ ॥

मार्कंडेय उवाच ।

मार्कंडेयजी बोले कि—हे हरे ! प्रपन्नजनों के अभय देने वाले आपके चरणों की मैं शरण आया हूं, जानवत् प्रकाशमान जिनकी माया से विद्वान् लोग भी मोहित होते हैं ॥ २ ॥

सूत उवाच ॥

सूतजी बोले, कि—श्रीपार्वतीजी सहित वृषभ के ऊपर बैठे हुए आकाश मार्ग में होकर अपने गणों सहित श्रीशिवजी जा रहे थे, उन्होंने, नारायण की शरण प्राप्त होने से इस प्रकार चित्त समाहित करके बैठने वाले मार्कंडेय ऋषि को देखा, ॥ ३ ॥

तदनन्तर श्रीपार्वतीजी ने उस ऋषि को देखकर श्रीशिवजी से कहा, कि—हे भगवन् ! अपने इन्द्रिय और अन्तःकरण का समाधान करके बैठे हुए इस विप्र को तो आप देखो ॥ ४ ॥

जैसे, कि—पवन के अभाव काल में जल और जल जंतु जिसके स्थिर होजाते हैं, ऐसे समुद्र के तरह स्थिर होकर बैठा है । हे भगवन् ! इसके तप की सिद्धि आप करो, क्यों कि, आप साक्षात् सिद्धि देने वाले हो ॥ ५ ॥

श्रीभगवान् उवाच ॥

श्रीमहादेवजी बोले, कि—हे देवि ! यह ब्रह्मर्षि लौकिक मनोरथों को तो क्या परन्तु मोक्ष की भी इच्छा नहीं करता है क्यों कि—अव्यय पुरुष जो साक्षात भगवान् हैं तिनके विषे इसको भक्ति प्राप्त हुई है ॥ ६ ॥

हे भवानि ! तो भी हरिभक्त इस सत् महात्मा से सम्वाद ही करेंगे । क्योंकि ? पुरुषों को इस संसार में यही परम लाभ है, कि—जो साधुजन का समागम प्राप्त हो ॥ ७ ॥

सूत उवाच ॥

सूतजी बोले, कि—इस प्रकार श्रीपार्वतीजी से कहकर भगवान् सन्तों के गति श्रीमहादेवजी, ऋषि के समीप पधारे । आप कैसे हैं, कि—विद्याओं के अधिपति और सर्व प्राणियों के नियन्ता हैं ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

रुद्धा धियोऽन्तःकरणस्य वृत्तयो येन सः ॥ ९—१० ॥

(१) व्याघ्रचर्माम्बरं शूलधनुरिष्वसिचर्मभिः । अक्षमालाडमरुककपालं परशु सह ॥ इति सिद्धा० ॥

नमः शिवाय शान्ताय सत्वाय प्रमृडाय च ।
रजोजुषेऽप्यघोराय नमस्तुभ्यं तमोजुषे ॥ १७ ॥

सूत उवाच ।

एवं स्तुतः स भगवानादिदेवः सतां गतिः ।
परितुष्टः प्रसन्नात्मा प्रहसंस्तमभाषत ॥ १८ ॥

श्रीभगवानुवाच ।

वरं वृणीष्व नः कामं वरदेशा वयं त्रयः ।
अमोघं दर्शनं येषां मर्त्यो यद्विन्दतेऽमृतम् ॥ १९ ॥
ब्राह्मणाः साधवः शान्ता निःसङ्गा भूतवत्सलाः ।
एकान्तभक्ता अस्मासु निर्वैराः समदर्शिनः ॥ २० ॥
सलोका लोकपालास्तान् वन्दन्त्यर्चन्त्युपासते ।
अहं च भगवान् ब्रह्मा स्वयं च हरिरीश्वरः ॥ २१ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

न केवलं तयोरागमनं वेद अपितु आत्मानमहन्तास्पदं विश्वमिदन्तास्पदं च ॥ ९—१३ ॥

सोमया स मार्कण्डेयः उमया सह "सोऽर्चिताऽपचोत्पादपूरणम" (९।१।१३४) इति सलोपः ॥ १४—१६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जगदात्मनो: जगतामात्मप्रियपो: ॥ ९—११ ॥

शूलादिभिः सहाचर्माञ्चार्दान् ॥ १२ ॥

विभ्राणाम् अक्षमालादीनां ग्रन्थिकरम् । सः मार्कण्डेयः उमया सह आगतं ददर्श ॥ १३—१५ ॥

निर्वृतं सुखितम् ॥ १६ ॥

---

भाषाटीका ।

जब श्रीमहादेवजी आये उस समय मार्कण्डेय समाधि में स्थित होने से रुद्ध अन्तःकरण की वृत्ति वाले थे, अत एव आप का और विश्व का भी उनको भान न था, इसी से जगदात्मा साक्षात् श्रीभवानी और शंकर के आगमन को भी ऋषि ने नहीं जाना ॥ ९ ॥

भगवान् श्रीकैलासवासी शिवजी इस बात को जानकर अपनी योग माया के बल से ऋषि के हृदयाकाश में घुस गये, जैसे वायु छिद्र में प्रवेश करे ॥ १० ॥

तब तो ऋषि ने आत्मा में बिजुली सी पीली जटाओं को धारण किये, तीन नेत्र और दसभुजाओं को धारण किये, बड़े उन्नत, उदय को प्राप्त होने वाले भास्कर के सदृश श्रीशिवजी को समाधि में ही देखा ॥ ११ ॥

कैसे देखे, कि—व्याघ्रचर्म का वस्त्र पहिने, त्रिशूल, धनुष, बाण, खड्ग, ढाल, इन सहित रुद्राक्ष माला, डमरू, कपाल, परशु इन सबों को धारण किये ॥ १२ ॥

ऐसे महादेवजी को एका एकी हृदय में भान होते हुए देखकर ऋषि बड़े विस्मय को प्राप्त हुए, "यह क्या है, और कहां से आये" ऐसे विचार कर मुनि समाधि से विरत होगये ॥ १३ ॥

और नेत्र उघाड़ कर गणों सहित और पार्वतीजी सहित त्रिलोक के एक गुरु श्रीरुद्र को देखकर मुनि शिर से नमस्कार करते हुए ॥ १४ ॥

गणों सहित और पार्वतीजी सहित उन श्रीमहादेवजी की स्वागत कुशल पूछकर, आसन पाद्य अर्घ्य चन्दन माला धूप दीप इत्यादि उपचारों से ऋषि पूजा करते हुए ॥ १५ ॥

और ऋषि बोलते भी हुए, ऋषि बोले—कि हे विभो! अपने प्रभाव से पूर्णकाम जो आप हो आपका मैं क्या उपचार करूं, हे त्रिलोक के नियामक! आप से यह सब जगत् सुख को प्राप्त होता है ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

निर्गुणत्वेन त्रिगुणत्वेन च नमस्करोति—नमः शिवाय निर्गुणाय सत्वाय सत्वाधिष्ठात्रे अत एव प्रमृडयति सुखयतीति तथा तस्मै ॥ १७ ॥ १८ ॥

सोऽस्माकं त्रयो ब्रह्मविष्णुमहेश्वराः वरदेशाः वरदेश्वराः ॥ १९ ॥

यद्दर्शनादिना मर्त्योऽमृतं विन्दते स एव अनुग्रहो जगत्त्रयस्याप्यस्मत्कृतः इत्यादि । ते साधवः सदाचाराः शान्ता रागद्वेषरहिता निःसङ्गा निष्कामाः ॥ २० ॥

न केवलं त एव किन्त्वहं चेत्यादि ॥ २१ ॥

श्रवणाद्दर्शनाद्वापि महापातकिनोऽपि वः ।
शुध्येरन्नन्त्यजाश्चापि किमु सम्भाषणादिभिः ॥ २५ ॥

सूत उवाच ।

इति चन्द्रललामस्य धर्मगुह्योपबृंहितम् ।
वचोऽमृतायनमृषिर्नातृप्यत्कर्णयोः पिबन् ॥ २६ ॥
स चिरं मायया विष्णोर्भ्रामितः कर्शितो भृशम् ।
शिववागमृतध्वस्तक्लेशपुञ्जस्तमब्रवीत् ॥ २७ ॥

ऋषिरुवाच ।

अहो ईश्वरलीलेयं दुर्विभाव्या शरीरिणाम् ।
यन्नमन्तीशितव्यानि स्तुवन्ति जगदीश्वराः ॥ २८ ॥
धर्मं ग्राहयितुं प्रायः प्रवक्तारश्च देहिनाम् ।
आचरन्त्यनुमोदन्ते क्रियमाणं स्तुवन्ति च ॥ २९ ॥
नैतावता भगवतः स्वमायामयवृत्तिभिः ।
न दुष्येतानुभावस्तैर्मायिनः कुहकं यथा ॥ ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अभिन्नत्वमित्यर्थः "स ब्रह्मा स शिवः सेन्द्रः" 'अयमात्मा ब्रह्म' सर्वं खल्विदं ब्रह्म" इत्याद्या श्रुतयोऽत्रानुसन्धेयाः तत्तस्मात् वयं युष्मानीमहि भजेम ॥ २२-२५ ॥

भाषा टीका ।

शिव, शान्त, सत्त्वमूर्त्ति, प्रमृड, रजोगुण को सेवन करनेवाले होकर भी अघोर, एसे तमोगुण के सेवन करने वाले आपको नमस्कार हो ॥ १७ ॥

सूत उवाच ॥

सूतजी बोले कि—आदि देव सन्तों के गति भगवान् महादेवजी इस प्रकार स्तुति करने से ऋषि के ऊपर परितुष्ट और प्रसन्न चित्त होकर हंसते हुए ऋषि से बोले ॥ १८ ॥

श्रीभगवान् उवाच ॥

श्रीमहादेवजी बोले कि—हे मुने ! तुम हमसे यथेष्ट वर मांगो हम तीनों देव वर देने वालों के ईश हैं, और हम तीनों का दर्शन अमोघ है, क्योंकि ? मनुष्य हम लोगों से अमृत मोक्ष को प्राप्त होता है ॥ १९ ॥

जो ब्राह्मण साधु शांत निःशंक भूतवत्सल और निर्वैर हैं वे हम तीनों के एकांत भक्त होकर समदर्शी रहते हैं २०

लोकपालों सहित सब लोक उनका वंदन करते हैं, अर्चन करते हैं, और उपासना करते हैं, वे तीन कौन हैं कि—मैं और भगवान् ब्रह्माजी और स्वयं ईश्वर साक्षात् श्रीहरि वे हैं ॥ २१ ॥

वे भक्त जन मेरे विषें अच्युत के विषे तथा ब्रह्माजी के विषें अणुमात्र भी भेद नहीं देखते, एवं अपना और मनुष्यों का भी भेद नहीं देखते तस्मात् तुमारे सदृश भक्तजनों को हम भजते हैं ॥ २२ ॥

जलमय तीर्थ, और प्राणवायु के सम्बन्ध रहित ऐसे देवमूर्त्ति, ये दोनों सेवन करने से बहुत काल में पवित्र करते हैं, और आप लोग तो दर्शन मात्र से ही पवित्र करते हैं ॥ २३ ॥

हम ब्राह्मणों को नमस्कार करते हैं, जो ब्राह्मण चित्त का समाधान कर तप स्वाध्याय और संयमों से त्रयीमय जो हमारा रूप है तिसको धारण करते हैं ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च, श्रवणादित्यादि ॥ २५ ॥

चन्द्रो ललामो भूषणं यस्य तस्य धर्मरहस्ययुक्तममुनारूपं वचः कर्णाभ्यां पिबन्नातृप्यदित्यमिति नामन्वत कर्णयोरमृतायनमिति वाऽन्वयः ॥ २६ ॥

शिवस्य वागेवामृतं तेन ध्वस्तः क्लेशपुञ्जो यस्य सः ॥ २७ ॥

इयं लीला दुर्विभाव्याऽचिन्त्या यया ईशितव्यानि स्वनियम्यानि यानि भूतानि तानि जगदीश्वराः स्वयं नमन्ति स्तुवन्ति चेति ॥ २८ ॥

सृष्ट्वेदं मनसा विश्वमात्मनाऽनुप्रविश्य यः ।
गुणैः कुर्वद्भिराभाति कर्तेव स्वप्नदृग्यथा ॥ ३१ ॥
तस्मै नमो भगवते त्रिगुणाय गुणात्मने ।
केवलायाऽद्वितीयाय गुरवे ब्रह्ममूर्त्तये ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अथवा लोकसंग्रहमात्रमेतदित्याह—धर्ममिति । प्रवक्तारोऽपि यद्वद्धर्मं देहिनां धर्मं ग्राहयितुमाचरन्ति ॥ २९ ॥

नन्वेतत्त्वत्प्रभावतिरस्कारकं कथं मया क्रियते ? तत्राऽऽह, नैतावतेति । एतावता लोकसंग्रहमात्रेण तैर्नमनादिभिः कथम्भूतैः अमायामयी वृत्तिर्येषु तैर्भगवतो मायिनस्तवानुभावो न लुप्येत यतः प्रसिद्धस्य मायिनः कुहकं कपटं यथा तथा एतानि नमनादीनि अतस्तस्य तथा कुहकेऽस्मानुभावो न लुप्यति तद्वत् प्रलुप्येतानुभाव इति पाठे नकारस्य दृष्टान्तेऽप्यनुषङ्गः ॥ ३० ॥

मायाचेष्टितं प्रपञ्चयति—सृष्ट्वेति । स्वप्नदृग्यथेत्यविद्याचेष्टिते दृष्टान्तः ॥ ३१ ॥

त्रिगुणत्वेऽपि न जीववत्तदभिभूताय किन्तु गुणानामात्मने नियन्त्रे ॥ ३२ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मायामयवृत्तिभिः आश्चर्यचेष्टाभिः ॥ २९ ॥

शास्त्ररूपया भगवदात्मकत्वं मन्वान आह-सृष्ट्वेदमिति । दृष्टा-दिवत् स्वप्नदृग्यथेति स्वाप्नपदार्थान्कुर्वन्निव स्थितः कर्मानुगुणैः कर्मपरिणामिभिर्गुणैः विषमसृष्टिं कुर्वद्भिः कुर्वन्निवाभातीत्यर्थः ॥ ३० ॥

ब्रह्ममूर्त्तये वेदनिर्वाहकाय ज्ञानप्रवर्तकाय वा ॥ ३१—३२ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

येषां च दर्शनश्रवणाद्दर्शनाच्छ्रवणाच्च महापातकिनोऽन्त्यजाश्च विशुद्ध्येरन् सम्भाषणादिभिः विशुद्ध्येरन्निति किमु वक्तव्यम् तेभ्यो ब्राह्मणेभ्यो नमस्याम इति सम्बन्धः ॥ २५ ॥

इतीति चन्द्रो ललामं भूषणं यस्य तस्य चन्द्रस्येरयं भूतं धर्मगुह्योपबृंहितं सत्सेवात्मकधर्मरहस्य युक्तं कर्णयोरमृतायमानं वचः पिबन्नातृप्यत् कर्णाभ्यां पिबन्वा ॥ २६ ॥

स इति । स मुनिः विष्णोर्मायया आश्चर्यचेष्टकया चिरं भ्रामितः अत एव नितरां कर्शितश्च शिवस्य वागेव अमृतं तेन ध्वस्तः क्लेशपुञ्जः भ्रमणप्रयुक्तक्लेशसमुदायो यस्य सः तं शिवम् इदं वक्ष्यमाणमब्रवीत् ॥२७॥

तदेवाह-अष्टभिः अहो इति । यदुक्तं "वरं वृणीष्व" अमोघं दर्शनं येषाम्" इति तत्र तद्बहुमानाय किञ्चित्प्रार्थयितुमिच्छुस्तावद्यदुक्तं "ब्राह्मणाः साधवः" इत्यादिना तथा "परस्परं भाषयन्तः श्रेयः परमवाप्स्यथ" इत्युक्तरीत्या अथमन्वाह-अहो इति पञ्चभिः । इयमीश्वराणामीश्वरविभूतिभूतानां यथा चेष्टा शरीरिणां दुर्विभाव्या दुर्विज्ञेया दुर्विभाव्यतामेव प्रकटयति यदतः अयं जगदीश्वराः जगत्प्रभवः अपीशितव्यान्स्वपदानि भूतानि नमन्ति स्तुवन्ति चेत्यात्मनो नैच्यमनुसंहितम् इत्थंभूतैव हि भागवतानां परिपाटी ॥ २८ ॥

कस्तदीशितव्यप्रणामादावभिप्राय इति विचार्य निश्चित्या-ह-धर्ममिति । देहिनां प्रवक्तारः धर्मोपदेशारोऽपि धर्मान् ग्राहयितुं प्रायशोऽनुतिष्ठन्ति क्रियमाणं धर्मं तत्कर्तारं वा अनुमोदन्ते अभिनन्दन्ति स्तुवन्त्यभिनन्दनं सन्तोषः ॥ २९ ॥

नैतावतेति । यद्यप्येवमथाप्येतावता आचारानुमोदन स्तुतिमात्रेण तैरीशितव्यप्रणामस्तुत्यादिभिश्च कथम्भूतैः भगवतः पूज्यस्य अमायामयावृत्तिराश्चर्यमया चेष्टा येषु तैः प्रभावो न लुप्येत न विहन्येत यथा मायिनः लोकप्रसिद्ध-मायाविनः कुहकैश्छद्मव्यापारैस्तस्य प्रभावो न लुप्येत न विहन्येत प्रत्युत स्वमायाविस्वरूपप्रभावाविष्कारः तद्वत् ॥ ३० ॥

शास्त्ररूपया भगवदात्मकत्वं मन्वानः सर्वकारणत्वादिभि-र्विशिषन्प्रणमति—सृष्ट्वेति द्वाभ्याम् । यो मनसा सङ्कल्पमात्रेणैव जगत्सृष्ट्वा आत्मना स्वमात्मान्तःप्रविश्य कुर्वद्भिः पूर्वकर्मवासनानु-गुणपरिणामभिः सत्त्वरजस्तमःपुण्यापुण्यात्मकविषमसृष्टिं कुर्वद्भिर्गुणैः स्वयं कर्तेवाभाति इवशब्देन परमार्थतः पुण्यापुण्यात्मक-कर्मकर्तृत्वाभावः परमात्मनि सूच्यते जीवस्यैव तत्र कर्तृत्वात् अकर्तुरपि कर्तृत्वाभासे दृष्टान्तः—स्वप्नदृग्यथेति । न हि स्वप्नार्थसृष्टिकर्ता स्वप्नं द्रष्टापि तत्कर्मानुगुणतत्तद्देशकालानुभाव्य-तत्कालमात्रावस्थायि स्वाप्नप्रपञ्चस्रष्टा परमपुरुषरूपः "न तत्र रथा न रथयोगा" इत्यारभ्य "सृजते स हि कर्ता" "य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणस्तदूप" इति च श्रवणात् यथा स्वप्नार्थसृष्टिकर्मात्मकत्वेऽपि तद्दर्शिनां तस्याजीवकर्तृत्वा-भिमानस्तथा पुण्यापुण्यकर्तृत्वादेर्जीवगतत्वमजानतां [illegible]-एवं जीवभावेन तत्कर्तृत्वाभिमानमात्रमिति विवक्षितार्थः ॥ ३१ ॥

तस्मै इति । त्रिगुणाय त्रैगुण्यनियन्त्रे महात्मने अप्रतिहतसङ्क-ल्पाय केवलाय निरस्तनिखिलदोषाय अद्वितीयाय अनुरूपवस्त्वन्तर रहिताय ब्रह्ममूर्त्तये वेदनिर्वाहकाय रूपतोऽपि विभवे वा ॥ ३२ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

न केवलं दर्शनाच्छुद्धिरपि तु श्रवणादपीति समुचित-त्वादाह—श्रवणादिति । नष्टाभ्यशुद्धिः कस्मादित्यत आह किञ्चिदिति अधिपदेन नामस्मरणं गृह्यते ॥ २५ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

चन्द्रललामस्य चन्द्रशेखरस्य धर्मगुह्योपबृंहितं धर्मरहस्य-गूढम् अमृतायनम् अमृतवद्रम्यमानं कर्णयोर्हितम् ॥ २६ ॥

मुनिनः समाधेः समाश्रितः अतएव कर्षितः अनेन संयमिनां समाधेरन्यत्सुखं नास्तीति ज्ञापितम् ॥ २७ ॥

इयं चाण्डालगा चेष्टा ईशितव्यानि सर्वाण्डानियम्यानि ब्रह्मकुलानि स्तुवन्ति यस्मात्तस्मात् ॥ २८ ॥

मुनिः स्वयमेव स्तवनादरभिप्रायं वक्ति, धर्ममिति । न केवलं देहिनां धर्मस्य प्रवक्तारः आचरन्ति च आचरतोनुमोदन्ते क्रियमाणं धर्मं स्तुवन्ति च ॥ २९ ॥

ननु, विद्यादिवर्जितानां भवतां धर्माचरणादिना तेजः स्तुतिः स्यादित्यत्राह-नेति । "वृत्तिस्तु ग्रन्थसन्दर्भे" इति वचनात् स्वमायामयवृत्तिभिः स्वेच्छया कृता वृत्तिर्येषां ते तथा तैः स्तवादिनिर्भिन्नैरेतावता कर्मणा भगवतोनुभावः प्रभावो न प्रदुष्येत प्रदुष्टो न भवति कुहकैरिन्द्रजालव्यापारैर्मायिनोनुभावः निश्चयो यथा तथेति ॥ ३० ॥

प्रकारान्तरेण दोषाभावं वक्ति, सृष्ट्वेति । यो भगवान् मनसा स्वेच्छया इदं विश्वं सृष्ट्वान्तर्यामिरूपेणान्तःप्रविश्य दर्शनादिकुर्वाणैर्गुणैरिन्द्रियैरहङ्कृतेति निरूप्य जीव इवाभातीत्येतावता जीववत् दुष्टो न भवति, कथमिव स्वप्नदृग्भगवदिच्छयोद्बोधितमानसवासनया करितुरगादिपदार्थान् सृष्ट्वा यथा तद्वदेव लिप्तो न भवति ॥ ३१ ॥

तस्मै भगवते नम इत्यन्वयः त्रयः सत्त्वादयो गुणा यस्य स तथा तस्मै गुणात्मत्वं दोषत्वेन व्याप्तं स्यादित्यत आह केवलायेति निर्दोषाय निर्दोषत्वं मुक्तस्याप्यस्तीति तत्राह, अखिलेति मायेति । मुक्तनिर्दोषत्वं हरिप्रसादायत्तं न हरेस्तथा तस्य समाधिकशून्यत्वात् कथमयमर्थः सम्पद्यत इत्यत्राह, गुरव इति । ब्रह्मादीनां स्वात्मरहस्योपदेष्टृत्वेन गुरुत्वात्तेषां सिद्ध इत्यर्थः । निराकारस्योपदेष्टृत्वं कथं घटत इति तत्राह, ब्रह्मणे इति । ज्ञानादिगुणाकाराय बृहन्तो ह्यस्मिन् गुणा इति श्रुतार्थास्मरणादिति वचनादाकारः सिद्ध इति ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

धर्मगुह्यं भगवद्भक्तिलक्षणं तेनोपबृंहितम् अत एवामृतायनं परमानन्दस्याप्याश्रयरूपम् अत एव नातृप्यत् ननु स्वस्तुत्येत्यर्थः ॥ २६ ॥

विष्णुमाययेति स्वकार्यार्थमङ्गीकृतयेत्यर्थः । शिवस्याप्यत्र विष्णोर्विदुत्वं व्याख्यातम् इति न भेदो मन्तव्यः ॥ २७—२८ ॥

धर्ममित्यत्र प्राय इति कदाचित्तत्र निजरुच्या च देहिनामिति देहस्य यत्कर्म तदेवात्मन इति मन्यमानानामित्यर्थः । अत एव प्रवक्तारस्तद्व्यतिरिक्ताः ॥ २९ ॥

तेषु मुख्यं भगवन्तमवलम्ब्य तत्र दोषान्तरं निरस्यति-नैताव तेति त्रिभिः । अप्रदोषे हेतुः । स्वेषु भक्तेषु मामाया कृपातन्मयमूर्त्तिभिरिति मम भक्तपरम्परात्मेषा रीतिः प्रवर्त्ततेति कृपया स्वप्रीतिविषयत्वेत्यर्थः । तत्र व्यतिरेकेण दृष्टान्तः मायिनः कुहकं यथा प्रदुष्येत तथेति न दुष्यतेति पाठेपि मायिनः कुहकं यथा दुष्येत तथा न किन्तु न दुष्येतैवेत्यर्थः ॥ ३०—३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

धर्मः एकान्तभक्ता इति नारदमतञ्च परस्येत्यादि गुह्यं मत् युष्मान् वयमीमहीत्यादिनाऽस्यामुपबृंहितं नातृप्यदिति नाथं स्वस्तवोत्थ आनन्दः किन्तु स्तुतिनिर्मिषणात्स्मात् धर्ममेवाशिक्षत्स्मादेतादृशाधर्मवता मया भवितव्यमित्युपदेशाप्त्युरत्य एव ज्ञेयः ॥ २६ ॥ २७ ॥

दुर्विभाव्या मतकर्या ईशितव्यानि [illegible] भूतानि ॥ २८ ॥

अथवा लोकसङ्ग्रहमात्रमेतादित्याह-धर्ममिति । क्रियमाणं धर्मं स्तुवन्तीति धन्योयं धर्मः यः स्वदेवतादृशैर्महद्भिः क्रियते इति धर्मस्तुतिर्धर्मकर्तृत्वेव पर्याप्नोति ॥ २९ ॥

एतावता लोकसङ्ग्रहमात्रेण तैर्ममादिभिस्तवानुभावो न प्रदुष्यति कीदृशैः मायामयैव वृत्तिश्रेष्ठा येषु तैः मायिनः कुहकमिति धनप्राप्तिहेतुना ऐन्द्रजालिकेन केनचित् स्वमुखानुज्ञावितः कश्चिद्वा नरः स्तूयते नमस्क्रियते च तेन तस्यानुभावो न दुष्यतीति न दुष्येतेति पाठे नकारस्य दृष्टान्तेनानुषङ्गः । यद्यपि श्रीरुद्रेण तदीयस्तुत्यादयो न मायया कृतास्तथापि स्वस्तुत्या लज्जितेन मुनिना प्रयुक्तोऽयं दृष्टान्तो नानुपपन्नः ॥ ३० ॥

मनसा सङ्कल्पमात्रेण कुर्वद्भिर्गुणैः स्वीयैः 'जीवमकर्त्तापि कर्त्तेवाभातीति न गुणैर्लेप इति भावः । अविद्यया स्वप्नं सृजतो जीवस्यापि वस्तुतस्तत्सम्बन्धो नास्ति किमुत तस्येति दर्शयन् दृष्टान्तयति स्वप्नदृग् यथेति ॥ ३१ ॥

गुणात्मने गुणनियन्त्रे ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

चन्द्रः ललामः शिरोभूषणं यस्य इति पूर्वोक्तम् धर्मेण साधवः शान्ता इत्यादि स्तुतिमिषेणोपदिष्टेन गुह्येन मध्यच्युतेऽज चेत्यन्नोकेन तत्त्वसम्बन्धरूपरहस्येन च युक्तम् अत एवामृतायनममृतास्पदम् कर्णयोः कर्णाभ्यां पिबन्नपि नातृप्यत् ॥ २६ ॥

शिवस्य वागमृतेन ध्वस्तो निरस्तः क्लेशपुञ्जो यस्य सः ॥ २७ ॥

ईश्वरचर्या ईश्वराणां भवतेऽजस्याच्युतस्य च लीला दुर्विभाव्या दुर्वितर्क्या ईशितव्यानि स्वनियम्यानि ॥ २८ ॥

ईश्वरा सन्तोपीशितव्यानि नमन्तीत्यत्र तदभिप्रायमाविष्करोति, धर्ममिति । देहिनां प्रवक्तारोपि धर्मप्रावर्त्तकारोपि स्वयं गुरवोपीत्यर्थः । तथापि धर्मं ग्राहयितुमाचरन्ति प्रायग्रहणेन "नाहृष्टरसकृदुपदेशात्" (४।११) इति शास्त्राज्ञापालनार्थमप्याचरन्तीति द्योतितम् ॥ २९ ॥

एतावता धर्मग्राहयितृत्वेन हेतुना स्वमायामयाचरणया प्रभा-

कं वृणे नु परं भूमन् ! वरं त्वद्वरदर्शनात् ।
यद्दर्शनात्पूर्णकामः सत्यकामः पुमान् भवेत् ॥ ३३ ॥
वरमेकं वृणेऽथापि पूर्णात्कामाभिवर्षणात् ।
भगवत्यच्युतां भक्तिं तत्परेषु तथा त्वयि ॥ ३४ ॥

सूत उवाच ।

इत्यर्चितोऽभिष्टुतश्च मुनिना सूक्तया गिरा ।
तमाह भगवान् शर्वः शर्वया चाभिनन्दितः ॥ ३५ ॥
(१)कामो महर्षे ! सर्वोऽयं भक्तिमांस्त्वमधोक्षजे ।
आकल्पान्ताद्यशः पुण्यमजरामरता तथा ॥ ३६ ॥
ज्ञानं त्रैकालिकं ब्रह्मन् ! विज्ञानं च विरक्तिमत् ।
ब्रह्मवर्चस्विनो भूयात्पुराणाचार्यताऽस्तु ते ॥ ३७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नावृत्तिर्येषु एवम्भूतैस्तैर्नमनादिभिः भगवतोऽनुभावो न प्रवुष्येत न विहन्येत तत्र दृष्टान्तमाह, मायिनःकुहक यथेति मायिनोः नटादेः कुहकं नाटयादिकं तदनुभावं न दूषयति यथा तद्वत् ॥३०॥

समान्यतः ईश्वराणां स्तुतिं कृत्वा विशेषतो हरिं प्रणमति—सृष्ट्वेति द्वाभ्याम् । यश्च सर्वोपास्यः स्वयं हरिरिति निर्दिष्टः मनसा सङ्कल्पमात्रेणेदं विश्वं सृष्ट्वाऽनुप्रविष्टः गुणैः प्राक्कर्मानुरूपैः सत्त्वादिभिः देवमनुष्यादिविषमसृष्टिं कुर्वन्निव स्वयं विषमसृष्टिकर्त्तेवाभाति तस्मै नम इति द्वयोरन्वयः । अवैषम्यकर्तुरपि वैषम्यकर्तृत्वावभासे दृष्टान्तमाह, स्वप्नदृग्यथेति "य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः तद्ब्रह्म" इति श्रुतिप्रसिद्धः परमात्मा स्वप्नरथादिस्रष्टा भवति भ्रान्त्या तु स्वप्नदृक् जीवस्तत्कर्ता प्रतीयते तद्वदित्यर्थः ॥ ३१ ॥

अत्रिगुणाय त्रिगुणविग्रहादिसम्बन्धशून्याय गुणात्मने गुणनियन्त्रे केवलाय स्वाश्रयाय अद्वितीयाय निःसमानातिशयाय ब्रह्ममूर्त्तये बृहद्विग्रहाय ॥ ३२ ॥

---

भाषाटीका ।

महापातकी लोग भी तथा अन्त्यज चांडाल लोग भी आपके श्रवण और दर्शन से शुद्ध होजाते हैं, फिर सम्भाषणादि से तो कहना ही क्या ॥ २५ ॥

सूत उवाच ॥

चन्द्रललाम श्रीमहादेवजी का धर्म रहस्य युक्त और अमृत के आस्पद ऐसे वचनों को कर्णों के द्वारा पीते हुवे ऋषि तृप्त न हुवे ॥ २६ ॥

वह मार्कंडेय ऋषि बहुत काल से श्रीविष्णु के माया से भ्रमते रहे, इस कारण अत्यन्त क्लेशित रहे । अब शिवजी की अमृत रूप वाणी से ऋषि के सब क्लेश पुंज नष्ट हुए तब ऋषि महादेवजी से बोले ॥ २७ ॥

ऋषिरुवाच ।

मार्कंडेयजी बोले, कि—अहो ! समर्थ ईश्वर लोगों की लीला मनुष्यों की तर्कना में नहीं आसक्ती है । क्योंकि—वे जगदीश्वर होकर भी अपने नियम्यजनों की स्तुति करा करते हैं ॥२८॥

प्रायः करके बड़े ईश्वर लोग अन्य लोगों को धर्म सिखाने के लिये आप धर्म कहते हैं, आचरण करते हैं और अनुमोदन करते हैं, तथा जो कोई आचरण करता है उसकी प्रशंसा भी करते हैं ॥ २९ ॥

अपनी कृपा प्रधान वृत्ति वाले इन आचरणों से आप लोगों का प्रभाव भी दूषित नहीं होता है, जैसे, कि प्रसिद्ध मायावी के कपटाचरण से उसका प्रभाव नहीं दूषित होता है ॥ ३० ॥

जो आप अपने मन से इस विश्व को रचकर आपही इसमें प्रविष्ट होकर कार्य करने वाले गुणों से आप कर्त्ता सदृश मालूम होते हो, जैसे स्वप्न का देखने वाला ईश्वर रचित स्वप्न दृष्ट पदार्थों का कर्त्ता आप ही मालूम होता है ॥३१॥

भगवान् त्रिगुण वाले, गुणात्मक, केवल, अद्वितीय, ब्रह्ममूर्त्ति, ऐसे जो गुरु आप हो तिनको नमस्कार हो ॥३२॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

वरं वृणीष्वेति यदुक्तं तत्राऽऽह—कमिति । वरं दर्शनं यस्य तस्मात् त्वत्तः परं कं नु वरं वृणे यस्य तव दर्शनावलोकनात्पूर्णकामः सर्वानन्दसन्दोहरूपः सत्यकामो यथेष्टं प्राप्तसर्वानन्दः ॥ ३३ ॥ ३४ ॥

वरदानाय स्वयमेव प्रवृत्तः शर्वयोमया चाऽऽभिनन्दितोऽनुमोदितः सन्नाह ॥ ३५ ॥

(१) कामस्तेयं महर्षेऽस्तु इति पाठान्तरम् ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कामोऽयं सर्वोऽप्यस्तु यत्पुण्यं यशः इत्यादिब्रह्मवर्चस्विनस्ते भूयादित्युत्तरेणान्वयः यतस्त्वमधोक्षजे भक्तिमान् ॥ ३६ ॥ ३७ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

शर्वया शर्वपत्न्या ॥ ३४—३५ ॥

ज्ञानं तत्त्वज्ञानं ब्रह्मवर्चस्विनः बृहद्वर्चस्विनः ॥ ३६—४० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यदुक्तं वरं वृणीष्वेति तत्रोत्तरमाह—कमिति । हे भूमन् ! वरदर्षभात् त्वत्तः अतः परमन्यं कं वरं वृणे वरिष्यामि वरं बुद्ध्या संनिधाप्यत इति निर्देशः कृतः वरदर्शनादिति पाठे वरं श्रेष्ठं दर्शनं यस्य तस्मात्त्वत्तः अतदशाब्दविवक्षितं विशिनष्टि, यदीशानः पूर्णकामः इति । यत् यतः पुमान् ईशानः ईश्वरः स्वतन्त्रः अकर्मवश्य इति यावत् पूर्णकामः सत्यकामश्च भवेत्तस्मादत इति सम्बन्धः ॥ ३३ ॥

यद्यप्यतः परो वरणीयो वरो नास्ति तथापि पूर्णकामाभिवर्णकारत्वत एनं वरं वृणे एनावेशाभाव आर्षः कोऽसौ भगवत्यच्युते तत्परेषु तद्भक्तेषु तथा त्वयि च भक्तिमित्यनेन वरमिति सम्बन्धः तत्परेष्वित्यनेन गतार्थत्वेपि पुनस्त्वयीत्युक्तिस्तत्स्वाभाव्यविवक्षया गोबलीवर्दन्यायात्तत्र भगवद्भक्तेषु भक्तिर्नाम भगवद्बुद्धिपूर्तिरित्यनुसन्धानुसन्धानार्थ[illegible]का ॥ ३४ ॥

इतीति । सूक्तया मधुरया शर्वया श[illegible] अभिनन्दितस्तं मुनिमाह ॥ ३५ ॥

उक्तिमेवाह—हाभ्यां काममिति । [illegible] भगवति कामं नितरां श्रोतॄणां पुण्यावहम् वचः ॥ ३६ ॥

त्रैकालिकं भूतादिकालत्रयगोचरम[illegible]ज्ञानं ब्रह्मविज्ञानं ब्रह्मस्वरूपरूपादिगोचरं विज्ञानं विरक्तिमत् विरक्तियुक्तम् ॥ ३७ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यत एवं निरूप्यमाणे हरेरधिकः समो वा नास्ति सर्वप्रेष्ठश्चातस्तद्भक्तिमन्तरेण त्वत्परमन्यं कं वरं वृणे वरं वरेण्यं दर्शनम् ज्ञानम् यस्य स तथा तस्मात् एतदेवाह—यद्दर्शना दर्शनोपदिष्टज्ञानाद्वा पुमान् पूर्णकामः स्यात् अत एव सत्यकामश्च ॥ ३३ ॥

मद्दर्शनात्पूर्णकामत्वे वरं वृणीष्वेति मद्वचनं व्यर्थमभूदिति मा शङ्कीत्याह—वरमिति । यद्यपि वरो न प्रार्थनीयस्तथापि त्वद्वचनसाफल्यायैतं वरं वृणे पूर्णकामाभिवर्धनादिति शेषः कोऽसौ वर इति तत्राह—भगवतीति । तत्परेषु तद्भक्तश्रेष्ठे त्वयि च ॥ ३४ ॥

शर्वया पार्वत्या सह ॥ ३५ ॥

त्वम् अधोक्षजे भक्तिमान् भूया इति शेषः । आकल्पान्तं पुण्यम् यशो ऽजरामरत्वता च भूयास्तेति शेषः ॥ ३६ ॥

किञ्च, वरान्तरं च स्यादित्याह—ज्ञानमिति ॥ ३७ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दोषापदर्शनमेव दर्शयति—सृष्टमिति, युग्मकेन । इदं विश्वं मनसा सङ्कल्पेनैव निमित्तेन गुणैः उपादानैः सृष्ट्वापि तदात्मना स्वयं तदनुप्रविश्य प्रवेशेन व्याप्यापित्वाऽपि तत्तदुपलक्षणत्वेन संहृत्यापि कर्तृवदेवाभाति ननु कर्त्रैवेति तत्र हेतुत्वाय गुणान् विशिनष्टि—कुर्वद्भिरिति । तत्सांनिध्यप्रभावेण चेतना इव गुणा एव सर्वं कुर्वन्ति नतु स्वयमिति सङ्कल्पस्याभासमात्रत्वेन तदसम्बन्धादित्यर्थः । तत्राविद्यया स्वयं सृजतस्तदीयतटस्थांशस्य जीवस्यापि वस्तुतस्तत्सम्बन्धो नास्ति किमुत तस्येति दर्शयन् दृष्टान्तयति—स्वप्नस्येवेति । अतः अमृतामयक्षेमरूपा गुणा यस्य तस्मै गुणा ऐश्वर्यादयोऽपि आत्मानः स्वरूपभूता यस्य तस्मै केवलाय प्रकृतिसङ्गशून्याय अद्वितीयाय स्वतुल्यरहिताय अत एव गुरवे सर्वोपदेष्ट्रे ब्रह्मेति स्वोपदेश्यम् यद्ब्रह्म वेदः तदपि मूर्तिः स्वरूपम् यस्य तस्मै ॥ ३१ (क) ३३ ॥

तथा त्वयीति त्वयि च तत्पर इत्यर्थः—

> "कि वर्णये तव विभो यदुदीरितोऽसुः-
> संस्पन्दते तमनु वाङ्मन इन्द्रियाणि ॥
> स्पन्दन्ति वै तनुभृतामजशर्वयोश्च" ॥

इत्यनेनैव श्रीनारायणार्षे प्रत्युक्तत्वात् ॥ ३४—४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वरं वृणुष्वेति यदुक्तं तत्राह—किमिति । वरो दर्शनम् यस्य तस्मात् सत्यकामः सत्यसङ्कल्प एव तत्परेषु तद्भक्तेषु तथा तद्भक्तश्रेष्ठे त्वयि भक्त्युपदेष्टरि गुरौ तेन त्वयि मे भक्तिस्तद्भक्तत्वेनैवास्तु नत्वीश्वरत्वेनेति भावः ॥ ३३ ॥ ३५ ॥

अयं सर्वोऽपि कामस्ते भवतु यतस्त्वमधोक्षजे भक्तिमान् ॥ ३६—४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

[illegible] प्रत्याह—कमिति द्वाभ्याम् । यदुक्तं वरं वृणीष्व मः [illegible] कमिति तत्र कं परं श्रेष्ठं वरं वृणे यत् यस्य ॥ ३३ ॥

भगवति श्रीहरौ तद्भक्तेषु त्वयि तद्भक्तमुख्ये च ॥ ३४ ॥

[illegible] एव वरं दातुं प्रवृत्तः शर्वयोमया चाप्यभिनन्दितो [illegible]दितः सन् तं मुनिमाह ॥ ३५ ॥

[illegible] सर्वोपि कामस्तेऽस्तु यतस्त्वमधोक्षजे भक्तिमान् यशः [illegible] ब्रह्मवर्चस्विनस्ते भूयादित्यग्रिमेणान्वयः ॥ ३६—३७ ॥

---

सूत उवाच ।

एवं वरान् स मुनये दत्त्वाऽगात् त्र्यक्ष ईश्वरः ।
देव्यै तत्कर्म कथयन्ननुभूतं पुराऽमुना ॥ ३८ ॥
सोऽप्यवाप्तमहायोगमहिमा भार्गवोत्तमः ।
विचरत्यधुनाप्यद्धा हरावेकान्ततां गतः ॥ ३९ ॥
अनुवर्णितमेतत्ते मार्कण्डेयस्य धीमतः ।
अनुभूतं भगवतो मायावैभवमद्भुतम् ॥ ४० ॥
एतत्केचिदविद्वांसो मायासंसृतिमात्मनः ।
अनाद्यावर्तितं नृणां कादाचित्कं प्रचक्षते ॥ ४१ ॥
य एवमेतद्भृगुवर्य ! वर्णितं रथाङ्गपाणेरनुभावभावितम् ।
संश्रावयेत्संशृणुयादुतावुभौ तयोर्न कर्माशयसंसृतिर्भवेत् ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्यां द्वादशस्कन्धे
दशमोऽध्यायः ॥ १० ॥

---

भाषा टीका ।

हे भूमन् ! वर देने वालों में श्रेष्ठ जो आप हैं, तिन आप से अब मैं क्या वर मागूं । क्योंकि-आप के दर्शन मात्र ही से पुरुष पूर्णकाम और सत्य काम होजाता है ॥ ३३ ॥

तथापि परिपूर्ण और मनोरथों के पूर्ण करने वाले आपसे एक वर मागता हूं, कि-मेरी भगवान् के विषें निश्चल भक्ति होय, तथा भगवद्भक्तों में और आप में भी भक्ति होय ॥ ३४ ॥

सूत उवाच ॥

सूतजी बोले, कि—मुनि ने सुन्दर वाणी से इस प्रकार जब पूजन और स्तुति करी, तब श्रीपार्वतीजी सहित महादेवजी प्रसन्न होकर ऋषि से बोलते हुए ॥ ३५ ॥

श्रीमहादेवजी बोले, कि हे महर्षे ! यह मनोरथ तुम्हारा सिद्ध होय । और तुम भगवान् के विषें भक्तिमान् तो होई तथापि तुम्हारा पुण्य यश कल्पान्त तक रहे, तथा तुम अजर अमर होव ॥ ३६ ॥

हे ब्रह्मन् ! तुमको त्रिकाल सम्बन्धि ज्ञान हो, और विरक्ति वाला विज्ञान भी हो, और, ब्रह्मवर्चस् अखंडित रहे । तथा तुम पुराण के आचार्य भी होव ॥ ३७ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेव कर्मतप आदि अमुना पुराऽनुभूतं भगवन्माया-वैभवं तच्च कथयन् ॥ ३८ ॥

अवाप्तो महायोगमहिमा येन सः ॥ ३९ ॥

एतन्मार्कण्डेयस्य चरितं तेनानुभूतं तेऽनुवर्णितम् ॥ ४० ॥

[illegible] भ[illegible]वमत्कुलोत्पन्नस्यास्य सप्तकल्पायुष्ट्वं पूर्वेकस्व-मानं विरुद्धमिव तत्राऽऽह—एतन्मार्कण्डेयेनानुभूतं भगवन्माया-वैभवं नानाकल्परूपं कादाचित्कमीश्वरेच्छया तस्यैवाकस्मिकं नतु सर्वसाधारणम् एतत्केचित्तनादिवद्बुद्धयावर्तितं दैवयुग-सहस्रद्वयमानेन पुनः पुनः परिवर्तितं प्रचक्षते के ते नृणां संसृतिं सर्गप्रलयादिलक्षणामात्मनो भगवतो मायेत्येवमविद्वांसः विद्वांसस्तु मायाशिशोः श्वासेन [illegible] समस्तकुक्षिकतद्वुदर-प्रवेशनिर्गमनः सप्तकल्परत्वं [illegible] श्रेणीति वदन्त्यतो न विरोध इत्यर्थः ॥ ४१ ॥

संशृणुयात् उ इति हर्षे संश्रा[illegible] यो तावुभौ तयोः कर्मवासनाकृता संसृतिर्न भवेदिति [illegible] ॥

इति श्रीमद्भागवते महापुरा[illegible] [illegible]दशस्कन्धे
श्रीधरस्वामिकृतभावार्थदी[illegible]याम्
दशमोऽध्यायः ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एतदिति । केचन संसारानादित्वानभिज्ञाः कादाचित्कत्वमाहुरित्यर्थः ॥ ४१—४२ ॥

इति श्रीमद्भागवतव्याख्याने द्वादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
दशमोऽध्यायः ॥ १० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमिति । सः त्र्यक्षस्त्रिलोचन ईश्वरः रुद्रः मुनये मार्कण्डेयाय वरान्दत्वाऽमुना मुनिना यत् पुरा अनुभूतं तत्कर्म भगवन्मायाप्रदर्शनात्मकं कर्म देव्यै शर्वाण्यै कथयन् अगात् जगाम ॥ ३८ ॥

सोऽपीति । भार्गवोत्तमो मार्कण्डेयः अवाप्तः महायोगवैभवो येन सः हरौ भगवति एकान्तिताम् अनन्यप्रयोजनभक्तिमत्त्वं गतः अधुनापि चरति अद्धा स्फुटं नात्र संशय इति भावः ॥ ३९ ॥

उपसंहरति—अनुवर्णितमिति । यन्मार्कण्डेयस्य तेनानुभूतमद्भुतम् भगवतो मायाया आश्चर्यशक्तेर्वैभवं तत्ते तुभ्यम् अनुवर्णितम् ॥ ४० ॥

प्रसङ्गान्मार्कण्डेयस्य कादाचित्कमायावैभवदर्शनवज्जीवस्यापि संसारः पूर्वमविद्यमान एव कदाचिच्छ्रीभगन्मायया भवतीति केषाञ्चिन्मतं प्रतिक्षिपति—एतदिति । केचिदविद्वांसः संसारानादित्वानभिज्ञाः नृणां जीवानामात्मनो भगवतो मायया संसृतिं कादाचित्कं यथा तथा प्रचक्षते इत्यनुवादः तद्दर्शयति—एतदनाद्यावर्तितमिति । संसरणमित्यध्याहार्यम् एतत्संसरणमनादितया आवर्तितं परिवर्तितं भवत्यन्यथा "न कर्माविभागात्" (२।१।३५) इत्याद्यधिकरणविरोधात् इति ॥ ४१ ॥

प्रकृतमार्कण्डेयचरित्रश्रवणश्रावणादिफलमाह—य इति । भृगुवर्यस्य मार्कण्डेयस्य वर्णितं वृत्तमित्यर्थः । कथंभूतं रथाङ्गपाणेर्भगवतः अनुभावेन भावितम् प्रकाशितम् यः संश्रावयेद्यः शृणुयात्तयोरुभयोः कर्माश्रया कर्मनिमित्ता संसृतिर्न भवेत् ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
दशमोऽध्यायः ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अमुना मार्कण्डेयेन ॥ ३८ ॥

अवाप्तमहायोगमहिमा प्राप्तमहाज्ञानमहिमाप्राप्तमहाणिमादियोगमहिमा वा एकान्ततां नियतभक्तताम् ॥ ३९ ॥

ज्ञानवतो मार्कण्डेयस्य यदेतदनुभूतं हरेर्मायावैभवं तेनुवर्णितमेतन्नृणां मध्ये केचिदविद्वांस आत्मनो हरेर्मायाप्रसृतिसामर्थ्यविस्तारं कादाचित्कं प्रचक्षते अकाले प्रदर्शितत्वेन कादाचित्कं किं न स्यादत्राह—अनादीति । अनादिकालवर्तिनं न नूतनं यद्वोपसंहरति अनुवर्णितमिति मार्कण्डेयस्यैतच्चरितं तेनुवर्णितं किन्तच्चरितमत्राह अनुभूतमिति अन्येषां मतभेदमाह एतदिति ॥ ४०—४१ ॥

इतोऽप्येतच्छ्रेयमिति फलमाह—य इति । अनुभावेन भावितं सन्दर्शितम् तयोरुभयोः श्रावयितृश्रोत्रोः कर्माशयसंसृतिः कर्मण्याशयः तस्मात् देयस्तन्निमित्तसंसारो न भवेदिति स्वरूपमात्र एवोच्यते अस्य श्रीहरिभक्तिर्मुक्त्येहेतुस्ततोऽच्युतो भक्तिमित्याह ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
दशमोऽध्यायः ॥ १० ॥
( विजयध्वजतीर्थीयरीत्या नवमः )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एतत् मार्कण्डेयदृष्टमात्मनो भगवतो मायासंसृतिस्तत्प्रार्थनया मायाप्रसार एव तदेतदपि केचिदविद्वांसः अनादित एवावर्तितं भगवता पुनः प्रापितं कदाचित्कं प्रलयं प्रचक्षते अन्ये तद्द्रष्टाः कल्पास्तु मन्वन्तरावधेयेति भावः ॥ ४१ ॥

उ इति पक्षान्तरे संश्रावयेद्वा तावुभौ तुल्यावित्यर्थः । फलमाह, तयोरिति ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
दशमोऽध्यायः ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एतन्मार्कण्डेयदृष्टम् आत्मनः परमेश्वरस्य मायासंसृतिवैभवमित्यर्थः । भगवतः शिशुस्वरूपस्य परमात्मनःश्वासोच्छ्वासाभ्यां स्वतकृत्वदतदुदरप्रवेशनिर्गमकालात्मकं कादाचित्कमेव केचिदविद्वांसो नृणामनाद्यावर्तितम् अज्ञाताविकं बहुकालत आवर्तितं तदेव युगसहस्रमानेन पुनःपुनरावर्तितं सतकल्पमेव प्रचक्षते ॥ ४१ ॥

हे भृगुवर्य ! अनुभावेन भावितं वासितं श्रावयेत् यश्च शृणुयात्तावुभौ तुल्यावेवेति शेषः अतस्तयोः कर्मवासनामयी संसृतिर्न भवेत् ॥ ४२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
द्वादशे दशमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्य मुनेः कर्मतप आदि यदमुनाऽनुभूतं भगवन्मायावैभवम् तच्च कथयत् ॥ ३८ ॥

अवाप्तः संप्राप्तो महायोगमहिमा येन सः ॥ ३९–४० ॥

एतत् मार्कण्डेयेनानुभूतम् आत्मानः परमात्मनः मायासंसृतिः योगमायायाः वैभवं कादाचित्कं मार्कण्डेयमनोरथपूर्त्यर्थं भगवता कदाचित्तम् प्रलयेव प्रवर्तितम् केचित्तु नृणाम् जीवानाम् हिताय अनादितः भगवता आवर्तितम् प्रचक्षते ऽविद्वांसः ॥ ४१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हे भृगुवर्य, शौनक! एतन्मार्कण्डेयचरितं रथाङ्गपाणेः अनुभावेन भावितम् समर्पितम् यः संशृणुयात् उत संश्रावयेत् ताबुभौ सफलितौ भवेतां इति शेषः। फलमाह—तयोः कर्माशय संसृतिः कर्मवासनाकृतसंसृतिः कर्मवासनाकृतसंसारो न भवेदिति॥ ४२॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

दशमाऽध्यायार्थप्रकाशः॥ १०॥

---

भाषाटीका।

सूत उवाच॥

सूतजी बोले, कि—वे तीन नेत्र वाले ईश्वर, श्रीशिवजी मुनि को इस प्रकार वर देकर, मुनि के प्रथम अनुभूत कर्म को श्रीपार्वतीजी से कहते हुए चले गये॥ ३८॥

और वे भार्गवोत्तम मार्कण्डेयजी भी महा योगमहिमा को प्राप्त होकर, अब भी विचरते रहते हैं॥ ३९॥

हे शौनकजी! हमने यह श्रीमान् मार्कण्डेयजी का वैभव तुमारे सन्मुख वर्णन किया, और जैसा ऋषि ने भगवान् की मायाके अद्भुत वैभव का अनुभव किया सो वर्णन किया॥४०॥

मार्कण्डेय ने जिसका अनुभव किया वह भगवान् की माया का नाना कल्प रूप वैभव कादाचित्क था अर्थात् भगवदिच्छा से केवल मार्कण्डेय ऋषि मात्र के अनुभव गोचर था सर्व साधारण नहीं, इसको भगवन्माया के संसर्ग को नहीं जानने वाले कोई २ अविद्वान् लोग अनादिकाल से प्रवर्तित कल्पों में से सप्तकल्प मार्कण्डेय को बीत चुके ऐसा कहते हैं सो बात नहीं है॥ ४१॥

हे भृगुवर्य! हे शौनक! श्रीहरिके प्रभाव युक्त वर्णन किये हुए इस चरित्र को जो सुनावे और जो सुने उन दोनों श्रोता वक्ताओं को कर्म वासनाकृत संसार नहीं प्राप्त होवे है॥ ४२॥

इति श्रीमद्भागवत द्वादश स्कन्ध में दशमेऽध्याय की

श्रीवृन्दावनस्थ पं० भागवताचार्यकृत

भाषा टीका समाप्ता॥ १०॥

---

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे दशमोऽध्यायः॥ १०॥

---

## एकादशोऽध्यायः ।

—:०:—

शौनक उवाच ।

अथेममर्थं पृच्छामो भवन्तं बहुवित्तमम् ।
समस्ततन्त्रराद्धान्ते भवान् भागवत ! तत्त्ववित् ॥ १ ॥
तान्त्रिकाः परिचर्यायां केवलस्य श्रियःपतेः ।
अङ्गोपाङ्गायुधाऽऽकल्पं कल्पयन्ति यथा च यैः ॥ २ ॥
तन्नो वर्णय भद्रं ते क्रियायोगं बुभुत्सताम् ।
येन क्रियानैपुणेन मर्त्यो यायादमर्त्यताम् ॥ ३ ॥

सूत उवाच ।

नमस्कृत्य गुरून् वक्ष्ये विभूतीर्वैष्णवीरपि ।
याः प्रोक्ता वेदतन्त्राभ्यामाचार्यैः पद्मजादिभिः ॥ ४ ॥
मायाद्यैर्नवभिस्तत्त्वैः सविकारमयो विराट् ।
निर्मितो दृश्यते यत्र सचित्के भुवनत्रयम् ॥ ५ ॥
एतद्वै पौरुषं रूपं भूः पादौ द्यौः शिरो नभः ।
नाभिः सूर्योऽक्षिणी नासे वायुः कर्णौ दिशः प्रभोः ॥ ६ ॥
प्रजापतिः प्रजननमपानो मृत्युरीशितुः ।
तद्बाहवो लोकपाला मनश्चन्द्रो भ्रुवौ यमः ॥ ७ ॥
लज्जोत्तरोऽधरो लोभो दन्ता ज्योत्स्ना स्मयो भ्रमः ।
रोमाणि भूरुहा भूम्नो मेघाः पुरुषमूर्द्धजाः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकादशे तु पूजार्थं महापुरुषवर्णनम् ।
रव्यादेर्व्यूहस्य चाख्यानं प्रतिमासं पृथक् पृथक् ॥
येनामर्त्यत्वमापन्नो मर्त्योऽसौ भार्गवोत्तमः ।
तं पृच्छति क्रियायोगं साङ्गोपाङ्गादिकल्पितम् ॥

अथेति । हे भागवत ! यतो भवान् समस्ततन्त्रराद्धान्ते तत्त्वविद्रहस्यज्ञः ॥ १ ॥

प्रश्नमाह—तान्त्रिका इति । परिचर्यायामुपासनायां विषये केवलस्य चैतन्यघनस्य अङ्गानि पादादीनि, उपाङ्गानि गरुडादीनि, आयुधानि सुदर्शनादीनि, आकल्पाः कौस्तुभादयस्तेषां द्रव्यैकम् तथा कल्पयन्ति यैश्च तन्त्रैः कल्पयन्ति, तन्नो वर्णयेति ॥ २ ॥ ३ ॥

गुरूपदेशगम्यत्वादस्यार्थस्य तन्नमस्कारपूर्वकमाह—नमस्कृत्येति । विभूतीर्विराड्विग्रहाद्याः ॥ ४ ॥

अङ्गादिकल्पनां भूरादिभिर्वर्णयितुं प्रथमं तावद्यथा कल्पयन्तीति प्रश्नस्य वैराजरूपेणोत्तरं वक्तुं विराड्विग्रहमाह, मायाद्यैः प्रकृतिसूत्रमहदहङ्कारपञ्चतन्मात्रैर्नवभिस्तत्त्वैः विकार एकादशेन्द्रियाणि पञ्चमहाभूतानीति षोडश तन्मयो विराट् स प्रसिद्धो निर्मितः यत्र विराजि सचित्के चेतनाधिष्ठिते भुवनत्रयं दृश्यते अनेनाङ्गादिकल्पनासौकर्यं दर्शितम् ॥ ५ ॥

एतद्वै पौरुषं रूपम् पुरुषस्य वैराजस्य रूपमेवेश्वरस्य॥भि-

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भूः पादाविस्यादौ तत्पादादिप्रसिद्ध्यैव भूरादीनां प्राकट्यमभिमततयोपास्यम इत्यर्थः ॥ ६—८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

महापुरुषपूजार्थमङ्गोपाङ्गविभूतयः ।
एकादशो रचिव्यूहकथा अपि निरूपिताः ॥

सद्यस्मत्पूर्वपुरुषो मार्कण्डेयस्ताम्त्रिकं भगवत्पूजाविधौ विशारद आसीदतस्तं पूजाविवेकं जिज्ञासेत्याह—प्रयेति । येन पूजाप्रकारेण स मुनिर्भगवन्तमपरोक्षीचकार इममर्थं पृच्छामः राद्धान्ते सिद्धान्ते ॥ १ ॥

अङ्गानि पाणिपादादीनि उपाङ्गानि गरुडादीनि आयुधानि सुदर्शनादीनि आकल्पाः कौस्तुभादयः तेषां दृग्द्वैकं यत् यथा कल्पयन्ति येन नरैः कल्पयन्ति तन्नो वर्णय सच्चिदानन्दवपुषो भगवतो येषां येषामङ्गानां मायाविभूतयो मायिकप्रपञ्चोऽत्र दृश्यन्ते ताभिरेव पुनस्तत्तदङ्गान्युपासनार्थं कल्पयन्ति इत्यर्थः ॥ ॥ २—३ ॥

गुरूपदेशगम्यत्वादस्यार्थस्य तन्नमस्कारपूर्वकमाह—नमस्कृत्येति ॥ ४ ॥

भगवतो विभूतिभिः कल्पितो विग्रहो विराडेवास्तीत्याह, मायाद्यैः प्रकृतिसूत्रमहदहङ्कारपञ्चतन्मात्रैर्नवभिः विकारा एकादशेन्द्रियाणि पञ्चमहाभूतानि चेति षोडश तन्मयो विराट् स अखिलो निर्मितः यत्र विराजि सचेतके चेतनाधिष्ठिते भुवनत्रयं दृश्यते ॥ ५ ॥

पौरुषं पुरुषस्य भगवतो मायिकं रूपं न तु स्वरूपमित्यर्थः कया कया विभूत्या किं किमङ्गं कल्पितं तदाह—भूरिति । सच्चिदानन्दवपुषो भगवतो पादयोर्या विभूतिर्भूः तयास्य पादौ कल्पिताविति तदभेदविनिर्देशाद्भूरेव पादौ एवं सर्वत्र ज्ञेयम् एवञ्च विराट्पुरुषस्य पादादिभावनया सच्चिदानन्दपुरुषस्य पादादीनि स्मर्त्तव्यानि यथा मत्प्रभुर्भगवान् स्वपादाभ्यां तद्विभूतिं पृथिवीं बिभर्त्ति शिरसा तद्विभूतिं दिवं बिभर्त्ति इत्येवं सर्वाण्येव वस्तूनि नयनमनोगतानि भगवदङ्गान्येव तद्विभूतित्वादित्यतः सर्वभावनापि भगवद्भावनैवेति विवेकः ॥ ६ ॥

प्रजननं मेढ्रम् अपानः पायुः उत्तर ओष्ठो लज्जा अधर ओष्ठो लोभः स्मयो हास्यं भ्रमः माया ॥ ७—८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवदाराधनेन मार्कण्डेयो भगवन्तमपरोक्षीकृतवानतोऽसि हर्षेण भगवदाराधनप्रकारविशेषं पृच्छति—अथेति । इमं वक्ष्यमाणम् हे भागवत ! ॥ १ ॥

केवलस्य वैराजमात्रस्य परिचर्यायां विषये तान्त्रिकाः अङ्गानि पाणिपादादीनि उपाङ्गानि गरुडादीनि आयुधानि सुदर्शनादीनि आकल्पाः कौस्तुभादयः तेषां दृग्द्वैकम् । येऽस्मिन् येषां कल्पयन्ति भावयन्ति तथा नोऽस्माकं वर्णयेत्यभिप्रायः ॥ २ ॥ ३ ॥

गुरुपरम्पराप्राप्यत्वादस्याऽतो तत्प्रणामपूर्वकमाह—नमस्कृत्येति । विभूतीर्विराड्विग्रहाद्याः पद्मजो ब्रह्मा आदिना श्रीसनत्कुमारनारदादयो बोध्यास्ते ॥ ४ ॥

विराडवयवभूतैः भूरादिभिरङ्गादिकल्पनां निरूपयितुं विराड्विग्रहमाह—मायाद्यैः मायासूत्रमहदहङ्कारपञ्चतन्मात्ररूपैर्नवभिः तत्त्वैः एकादशेन्द्रियपञ्चमहाभूतानीति षोडशविकारमयः यत्र सचित्के सजीवे भुवनत्रयं दृश्यते स विराड् निर्मितो भगवतेति शेषः ॥ ५ ॥

पुरुषस्य वैराजस्य विष्णोः एतन्मायामयं रूपम् शरीरम् अङ्गकल्पनामाह—भूःपादावित्यादिना ॥ ६ ॥

प्रजननं मेढ्रम् अपानं गुह्यम् ॥ ७ ॥

उत्तरः ओष्ठो लज्जा अधरः ओष्ठो लोभः स्मयः हास्यं भ्रमो विभ्रमो विलासविशेषः ॥ ८ ॥

---

भाषा टीका ।

शौनक उवाच ।

शौनकजी बोले, कि—हे परम भागवत ! हे सूतजी ! जिस हेतुसे आप समस्तसिद्धान्तके तत्ववेत्ता हो, और बहुत ही इसीसे हम आपसे इस अर्थको पूछते हैं ॥ १ ॥

कि—तान्त्रिक लोग केवल श्रियःपति की परिचर्या में भगवान् के अंग, उपांग, आयुध, भूषण, ये सब जिन तत्वों से जैसे कल्पना करते हैं ॥ २ ॥

हे सूत ! तुम्हारा कल्याण हो क्रिया योगके जानने की इच्छावाले हमलोगों को उस का वर्णन करो, जिस क्रियायोगके नैपुण्य से मनुष्य दिव्य भावको प्राप्त हो जाता है ॥ ३ ॥

सूत उवाच ।

सूतजी बोले, कि—मैं गुरुजनों को नमस्कार कर वैष्णवी विभूति का वर्णन करता हूं जिन विभूतियों को वेद और तन्त्रों से ब्रह्मादिक आचार्योंने वर्णन करी है ॥ ४ ॥

मायादिक नव तत्वों सहित और उनके विकारों सहित निर्मित हुए चेतनतत्व सहित जिस विराट में यह भुवनत्रय देख पड़ता है ॥ ५ ॥

यही पुरुषका रूप है । भूमितो चरण हैं, स्वर्ग मस्तक है, आकाश नाभि है, सूर्य नेत्र हैं, वायु नासिका है, दिशायें कर्ण हैं यही सब प्रभुके अङ्ग हैं ऐसी भावना करे ॥ ६ ॥

प्रजापति ईश्वरका मेढ़ इन्द्रिय है, मृत्यु अपान है, लोकपाल उसके बाहु हैं, चन्द्रमा मन है, यमराज भ्रुकुटि है, ॥ ७ ॥

लज्जा ऊपरका ओष्ठ है, लोभ नीचे का ओष्ठ है, चांदिनी दंत है, स्मय भ्रम है, तथा भूमा पुरुषके वृक्ष रोम हैं, मेघ केश हैं ॥ ८ ॥

---

यावानयं वै पुरुषो यावत्या संस्थया मितः ।
तावानसावपि महापुरुषो लोकसंस्थया ॥ ९ ॥
कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यजः ।
तत्प्रभा व्यापिनी साक्षाच्छ्रीवत्समुरसा विभुः ॥ १० ॥
स्वमायां वनमालाख्यां नानागुणमयीं दधत् ।
वासश्छन्दोमयं पीतं ब्रह्मसूत्रं त्रिवृत्स्वरम् ॥ ११ ॥
बिभर्ति साङ्ख्यं योगं च देवो मकरकुण्डले ।
मौलिं पदं पारमेष्ठ्यं सर्वलोकाभयङ्करम् ॥ १२ ॥
अव्याकृतमनन्ताख्यमासनं यदधिष्ठितः ।
धर्मज्ञानादिभिर्युक्तं सत्त्वं पद्ममिहोच्यते ॥ १३ ॥
ओजःसहोबलयुतं मुख्यतत्त्वं गदां दधत् ।
अपां तत्त्वं दरवरं तेजस्तत्त्वं सुदर्शनम् ॥ १४ ॥
नभोनिभं नभस्तत्त्वमसिं चर्म तमोमयम् ।
कालरूपं धनुः शार्ङ्गं तथा कर्ममयेषुधिम् ॥ १५ ॥
इन्द्रियाणि शरानाहु[१]राकूतीरस्य स्यन्दनम् ।
तन्मात्राण्यस्याभिव्यक्तिं मुद्रयाऽर्थक्रियात्मताम् ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनुक्तमन्यदप्येवमूह्यमित्याह—यावानयं व्यष्टिः पुरुषः स्वमानतः सप्तवितस्तिः संस्थयाऽवयवसन्निवेशेन मितः परिमितः ॥ ९ ॥

भूषणादीन्याह—कौस्तुभेत्यादिना । स्वात्मज्योतिः शुद्धं जीवचैतन्यम् या तस्य कौस्तुभस्य प्रभा तामेव श्रीवत्सं बिभर्ति ॥ १० ॥

त्रिवृत्स्वरं त्रिमात्रं प्रणवम् ॥ ११ ॥

पारमेष्ठ्यं पदं ब्रह्मलोकम् ॥ १२ ॥

अव्याकृतं प्रधानम् यदधिष्ठाय स्थितः तदासनभूतं पद्मं सत्त्वं सत्त्वगुणः ॥ १३ ॥

मुख्यं तत्त्वं प्राणतत्त्वम् "प्राणो वै मुख्यः" इति श्रुतेः । दरवरं शङ्खम् ॥ १४ ॥ १५ ॥

आकूतीः क्रियाशक्तियुक्तं मनः अस्य रथस्याभिव्यक्तिं बहिरभिव्यक्तं रूपम् मुद्रया हस्तयाऽर्थक्रियात्मतां वरदाभयादिरूपत्वं बिभर्ति तत्तन्मुद्रया तथा तथा भावयेदित्यर्थः ॥ १६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

संस्थया अवयवसंस्थानेन ॥ ९ ॥

आत्मज्योतिः स्वशेषभूतम् ज्ञानाकारं जीवात्मरूपं कौस्तुभो जीवगणाभिमानिनी देवतेत्यर्थः । तत्प्रभा जीवस्य ज्ञानप्रभा श्रीवत्सादिषु तत्त्वविन्यासः पुराणान्तरप्रसिद्धोऽपि श्रुतिवैविध्यसम्भवात् तन्मूलतया परिहर्तव्यः ॥ १० ॥

नानागुणमयीं मायां पञ्चभूतात्मककार्यावस्थां प्रकृतिं भूतपञ्चकमयीं वनमालामित्यर्थः । ब्रह्मसूत्रं त्रिवृत् स्वरम् उपवीताभिमानिनी देवतेत्यर्थः ॥ ११ ॥

पारमेष्ठ्यं पदं ब्रह्मलोकं मुख्यं तत्त्वं प्रथमोत्पन्नम् ॥ १२ ॥ १३ ॥

महत्तत्त्वं महान्धे बुद्धिलक्षणाः बुद्धिश्च गदेति शास्त्राऽवगतं दरवरः शङ्खः ॥ १४ ॥ १५ ॥

आकूतिः स्यन्दनं देहाभिमानिनी देवता अभिव्यक्तिः अर्चावतारेषु आह्निकांशः मुद्राज्ञानमुद्राद्यभिमानिनी देवता अर्थक्रियाकारिताभिमानिनी ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अनुक्तमन्यदपि एवमूह्यम् इत्याह—यावानिति । अयम् व्यष्टिपुरुषः यावान्यावदवयवान् यावत्या स्वमानतः सप्तवितस्तिपरिमाणया संस्थयाऽवयवसंस्थानेन मितः परिमितोऽसौ महापुरुषः परमपुरुषोऽपि लोकसंस्थया लोकाभिमानिदेवतात्मकपादाद्य-

(१) आकूतिः स्यन्दनं विभोरिति शुकप० विज० पा० । वीर०

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ब्रह्माण्डसंस्थानेन ( तावान् ) तावद्वयववान् मानं त्वाराधक-बुद्ध्यनुगुणमिति भावः ॥ ९ ॥

तदेवमङ्गोपाङ्गाद्यभिमन्तृत्वानि तत्त्वानीत्युक्त्वा ऽथ भूषणाद्यभिमानिदेवतात्मकमन्तर्यामिणमाह—कौस्तुभव्यपदेशेनेत्यादिना । अजः परमपुरुषः कौस्तुभव्याजेन स्वात्मज्योतिर्बिभर्ति स्वात्म-ज्योतिः अंशभूतं ज्ञानाकारं चिदात्मस्वरूपं कौस्तुभो जीव वर्गाभिमानी देवतेत्यर्थः । तत्प्रभा जीवस्य प्रभा धर्मभूतज्ञानम् इत्यर्थः । व्यापिनी विष्वी तां प्रभुर्भगवानुरसा श्रीवत्सं बिभर्त्ति श्रीवत्सस्तत्प्रभाभिमानिदेवतेत्यर्थः । पुराणान्तरविरोधस्तु श्रुति वैचित्र्यसम्भावनया तन्मूलतया परिहर्तव्यः ॥ १० ॥

नानागुणमयीं पञ्चभूतात्मककार्यावस्थां भूतपञ्चकमयीं स्व-मायां वैषम्यावस्थसत्त्वादिगुणत्रयमयीं वा प्रकृतिं वनमालाख्यां दधद्बिभ्राणः आच्छादकः पूर्ववदभेदनिर्देशाभिप्रायकः पीतं विशङ्कं वासो वस्त्रं छन्दोमयं गायत्र्यादिच्छन्दोमयं वासः छन्दोभिमानिनी देवतेत्यर्थः । त्रिवृत त्रिमात्रमकारोकारमकारात्मकं वा स्वरं प्रणवं ब्रह्मसूत्रं बिभर्त्ति ॥ ११ ॥

साङ्ख्यं च योगञ्चेति द्वन्द्वैकवं तद्द्वयञ्चेत्युभे मकरकुण्डले सर्वलोकोत्तरं पारमेष्ठ्यं पदं ब्रह्मलोकं मौलिं किरीटं बिभर्ति ॥१२॥

यद्येन परमपुरुषेणाधिष्ठितमनन्ताख्यं शेषाख्यमासन-मव्याकृतं मूलप्रकृतिः धर्मसत्त्वं विशुद्धं सत्त्वं तद्धर्मज्ञानादिभि-र्युक्तम् पद्ममुच्यते आदिशब्देन वैराग्यैश्वर्यधर्मज्ञाना-वैराग्यानैश्वर्यविमलोत्कर्षिणीज्ञानाक्रियायोगाप्रह्वीसत्येशानानु-ग्रहाः संगृह्यन्ते ॥ १३ ॥

ओजः इन्द्रियशक्तिः सहो मनःशक्तिः बलं दैहिक तैर्युतं मुख्यं तत्त्वं मुख्यप्राणः "प्राणो वै मुख्यः" इति श्रुतेः । ओज आदीनां प्राणायत्तत्वात्तस्य तद्युक्तत्वम् तत्त्वं गदां दधत् यद्वा, मुख्यतत्त्वं प्रथमोत्पन्नतत्त्वं महत्तत्त्वं बुद्धिरिति यावत् "महान्वै बुद्धिलक्षणः" इत्यादिस्मृतेः तस्यां प्रसृतायामेवौजःप्रभृतीनि भवन्तीति तस्यास्तद्युक्तत्वम् अपां तत्त्वं जलतत्त्वं दरवरः शङ्खः ॥१४॥

नभोनिभो नभोवर्णोऽवतनुर्भगवान्महत्तत्त्वम् असि खड्गं तमोमयं चर्म खेटं च दधदित्यनुषङ्गेनान्वयः । शार्ङ्गं नाम धनुः कालरूपं कालाभिमानिधनुरित्यर्थः । तथा कर्ममयः इषुधीर्बाणकोशो यस्य सः ॥१५॥

इन्द्रियाणीति । इवान् अश्वानाकूतिर्मनः यस्य परमपुरुषस्य स्यन्दनं रथः यद्वा, आकूतिर्देहात्माभिमानो भगवद्रथ इत्यर्थः अस्याभिव्यक्तिरर्चावतारेष्वाहितोशकतन्मात्राणि इन्द्रियार्थाः इन्द्रियप्रयोजनानि इन्द्रियाभिव्यापारा इति यावत् । तन्मात्रा यस्याभिव्यक्तिरिति शब्दादीनामुक्तत्वात्ते अस्य क्रियाः तत्क्रियाभिमन्तव्या इत्यर्थः । मुद्रात्वर्थक्रियात्मतेतिपाठे मुद्रा वरदाभयादिमुद्राभिमानिनी देवता अर्थक्रियात्मना प्रयोजनत्वक्रियास्वरूपतात्वभिमन्तव्या मुद्रयार्थक्रियात्मताम् इति पाठे तया तां बिभर्ति इति शेषः ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सोऽयं पुरुषः ब्रह्माण्डाख्यः लोकसंस्थया यावत्या संस्थया मितः परिमितो ऽसौ 'महान्पुरुषस्तदन्तःस्थपुरुषो भगवानपि तावान् तावत्परिमाणोपेतः ॥ ९ ॥

उपाङ्गान्याह—कौस्तुभेति । अजो विष्णुः आत्मज्योतिः ज्योतिः-स्वरूपः । यद्वा, आत्मीनप्रज्ञाख्यज्योतिः श्रीरित्यध्याहार्य साक्षा-च्छ्रीकृतस्य श्रीवत्सस्य प्रभां व्याप्नोतीति तत्प्रभाव्यापिनीति तादृशं श्रीवत्समुरसा बिभर्ति ॥ १० ॥

स्वां मायां श्रियम् नानावर्णगुणमयीं छन्दोमयम् वेद-स्वरूपं त्रिवृत् त्रिवर्णात्मकं स्वरं प्रणवलक्षणं ब्रह्मसूत्रं दधत् ॥११॥

साङ्ख्यं ज्ञानं योगं कर्म एतद्द्वयाख्ये मकरकुण्डले पार-मेष्ठ्यं पदं स्थानं मौलिं किरीटम् ॥ १२ ॥

यदधिष्ठितमासनं पीठं तदनन्ताख्यम् अव्याकृतं विकाररहितं सत्त्वं सत्त्वगुणाभिमानिनी श्रीः पद्मम् ॥ १३ ॥

मुख्यतत्त्व मुख्यप्राणरूपं गदां दधत् ॥ १४ ॥

नभोनिभमाकाशवर्णाख्यं नभस्तत्त्वरूपमसिं तद्वत् तमो-मय तमोगुणवदाच्छादनकरं चर्म दधत् पुण्यकर्मस्वरूप इषुधीं च ॥ १५ ॥

अस्य हरेः स्यन्दनमाकूतिः पृथिवी अस्याभिव्यक्तिः तन्मा-त्राणि शब्दादीनि इन्द्रियार्थाः कर्मेन्द्रियविषयाः क्रियामताः विसर्गादीनि कर्माणि ज्ञातव्यानि ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कौस्तुभेति । अत्र भूरादीनामिव जीवाख्यस्वात्मज्योतिरादीना-मपि कौस्तुभादिरूपा बहिरङ्गत्वं दर्शितं स्वात्मज्योतिष एवे-न्द्रियद्वारा प्रकाशः श्रीवत्सतया कल्प्यत इत्यर्थः ॥ १०—१५ ॥

आकूतीरिति व्याख्याया क्रियाशक्तियुक्तं मनो यस्य भगवतः स्यन्दनमाहुः तन्मात्राण्यस्य भगवतोऽभिव्यक्तिमाहुः तथास्व-क्रियार्थक्रियात्मतां वरदाभयादिरूपतां मुद्रामाहुः मुद्रामि-वाहुरित्यर्थः । गोपेण गायेत्र इतिवत्तृतीया ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

समष्टिव्यष्ट्योः प्रायेणैक्यात् व्यष्टिपुरुषस्य प्राकृतत्वान्मलिनस्य दर्शनेनैव निर्मलं सच्चिदानन्दमयं पुरुषं परिज्ञापयति—यावानिति । मितः परिमितः ॥ ९ ॥

अङ्गान्युक्त्वा भूषणान्याह—कौस्तुभस्य व्यपदेशेन स्वरूपेण स्वात्मज्योतिः शुद्धजीवचैतन्यं कौस्तुभस्यैव विभूतिं धत्त तथाहि—

"अकारेणोच्यते विष्णुः श्रीरुकारेण कथ्यते ।

मकारस्तु तयोर्दासः पञ्चविंशः प्रकीर्तितः" ॥

इत्यतः स्वदासं भगवान् हृदि धत्ते यदुक्तं "साधवो हृदयं मह्यं साधूनां हृदयं त्वहम्" इति भगवान् भक्तभक्तिमानिति च तत्प्रभा तस्य कौस्तुभस्यैव प्रभाव्यापिनी दक्षिणस्तनोर्ध्वपर्यन्तगामिनी या तामेव श्रीवत्सं दक्षिणावर्तशुभ्रमृणालतन्तुसूक्ष्मरोमावल्याकारं बिभर्ति यस्य विभूतिधर्मः तथैव वामस्तनार्धे लक्ष्मीरेखा

**मण्डलं देवयजनं दीक्षा संस्कार आत्मनः ।
परिचर्या भगवत आत्मनो दुरितक्षयः ॥ १७ ॥**

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

निरूपयाद्यमपि कालकीर्तनेन अनुक्तापि ज्ञेया यथा विभूती राजवादि-स्वरूपत ॥ १० ॥

नानागुणमयीमिति—त्रिगुणात्मिका माया वनमालाख्या विभूतिः वास इति पीतवाससो विभूतिश्छन्दांसि ब्रह्मसूत्रमित्युपवीतस्य विभूतिस्त्रिवृत्स्वरः त्रिमात्रः प्रणवः ॥ ११ ॥

एवमेव सर्वत्र स्वविभूत्या सामानाधिकरण्यं पारमेष्ठ्यं ब्रह्म-लोकम् ॥ १२ ॥

यत् अधिष्ठितः अधिष्ठाय स्थितः तदासनम् अनन्ताख्यम् अव्याकृतं प्रधानमुच्यते इति अनन्तस्यैव विभूतिः प्रधानं जगत् सृष्ट्यादिकारणीभूतं वनमालाविभूतिर्माया तु ततोऽपि सूक्ष्मा ज्ञेया तत्र च धर्मादियुक्तमासनं पद्म तु सत्त्वं सत्त्वगुणः ॥ १३ ॥

मुख्यतत्त्वं प्राणतत्त्वं "प्राणो वै मुख्यः" इति श्रुतेः । इतरं शङ्खम् असिं नभस्तत्त्वं नभासिनम आकाशतुल्यं निर्मलं चर्म तमोमयं तमस्तत्त्वम् ॥ १४—१५ ॥

आकूतिः क्रियाशक्तियुक्तं मनः स्यन्दनं रथः रथस्य विभूतिः मनः तन्मात्राणि शब्दादयो विषयाः अभिव्यक्तिः अस्य अभिव्यक्तेराविर्भावस्य विभूतयः विषयजिघृक्षारूपस्य मनोरथस्य बहिरभिव्यक्तिरूपा एव शब्दादयो विषयाः इन्द्रिय-ग्राह्या इत्यर्थः मुद्रया वरदाभयदानरूपया भूतया अर्थक्रिया बिभर्ति धारणाम् अर्थक्रियालोकव्यवहारस्तत्स्वरूपतां धत्ते वरदत्वस्य अभयदत्वस्य विभूतयस्ता एता अर्थक्रिया इत्यर्थः ॥ १६ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अनुक्तं लोकप्रसिद्धपुरुषवदूह्यमित्याह—यावानिति । अयं लोक-प्रसिद्धः व्यष्टिपुरुषः यावान् सप्तवितस्तिपरिमाणवान् यावत्या संस्थया यावदवयवसंस्थानेन मितः परिमितः तावान् असौ अपि समष्टिरूपोऽपि ॥ ९ ॥

आकल्पोपाङ्गादीनाह—कौस्तुभेत्यादिना । अजः कर्मनिबन्धन-जन्मरहितः भगवान् स्वकीयमंशभूतमात्मज्योतिः जीवात्मतत्त्वं कौस्तुभव्यपदेशेन बिभर्ति तत् तस्य कौस्तुभस्य या प्रभा धर्मभूतज्ञानात्मिका तां श्रीवत्सं बिभर्ति ॥ १० ॥

त्रिवृत्स्वरम् त्रिमात्रम् प्रणवं नानागुणमयीं क्षुभितगुणाम् ॥ ११ ॥

पारमेष्ठ्यं चतुर्मुखलोकम् ॥ १२ ॥

यदधिष्ठितः अधिष्ठाय स्थितस्तदव्याकृतं गुणसाम्यावस्था-पन्नं प्रधानमासनमुच्यते इह आसने धर्मज्ञानादियुतं सत्त्वं सत्त्वगुणः पद्ममुच्यते वैराग्यादिरापदार्थः ॥ १३ ॥

मुख्यतत्त्वं "प्राणो वै मुख्यम्" इति श्रुतिप्रसिद्धम् ॥ १४ ॥

नभोनिभम् नभोवन्निर्मलम् नभस्तत्त्वमेवासिम् ॥ १५ ॥

अस्य श्रीभगवतः आकूतिः क्रियाशक्तिः मनः स्यन्दनं रथः तन्मात्राणि शब्दादयो विषयाः अस्य रथस्याभिव्यक्तिमाहुः मुद्रया सकलमुद्रया धृतया अस्य रथस्य अर्थक्रियासामर्थ्यं गमनादिव्यापाराणाम् आत्मा आश्रयः तत्तान् निग्रहानुग्रह-रूपार्थगमनादिव्यापाराश्रयत्वं रथस्य तन्मुद्रया भावये-दित्यर्थः ॥ १६ ॥

———

भाषा टीका ।

और अनुक्त सब बातें इसी प्रकार जानों, जैसा यह पुरुष अपने परिमाणसे सात वितस्त के अवयवसंनिवेशवाला है । इसी प्रकार परमपुरुष भी अपने परिमाणसे लोकों के सन्नि-वेश से उतने ही परिमाणके हैं ॥ ९ ॥

भगवान् कौस्तुभमणिके नामसे जीव तत्त्वको धारण करते हैं, और विभु श्रीहरि व्यापिनी जो कौस्तुभमणि की प्रभा है, तिसको श्रीवत्सके नाम से वक्षःस्थल में धारण करते हैं ॥१०॥

नाना गुणवाली अपनी मायाको वनमालाके नामसे धारण करते हैं, इसी प्रकार गायत्र्यादि छन्दोमय पीताम्बरको धारण करते हैं, तथा तीन मात्राके प्रणवको ब्रह्मसूत्र [यज्ञोपवीत] करके धारण करते हैं, ॥ ११ ॥

तथा श्रीहरि सांख्य और योग इन दोनों को मकरकुण्डलके नामसे धारण करते हैं, और सर्व लोक को अभय करने वाले ब्रह्मलोक को किरीट के नाम से धारण करते हैं ॥ १२ ॥

प्रधान तत्त्व को अनन्त नामक आसन में ग्रहण किया है, जिसपर विराजे हुए हैं । और धर्मज्ञानादियुक्त जो सत्त्व है, उसको पद्मके नामसे धारण करते हैं ॥ १३ ॥

ओज सह बल इन सहित प्राणतत्त्व को गदाके नामसे धारण करते हैं । जलतत्त्वको शङ्ख, और तेजस्तत्त्वको चक्र के नामसे धारण करते हैं ॥ १४ ॥

आकाशतत्त्वको नन्दक खड्ग के नामसे, अन्धकार को ढाल के नाम से कालतत्त्वको शार्ङ्ग धनुषके नामसे, तथा कर्मको तूणीर (तरकस) के नामसे धारण करते हैं ॥ १५ ॥

परमपुरुष इन्द्रियोंको बाणों के नामसे, मनको रथके नाम तन्मात्राओंको अभिव्यक्ति करके, अर्थ क्रिया को मुद्रा करके, धारण करते हैं ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

मण्डलं देवपूजाभूमिं सुवर्णमण्डलत्वेन मानयेदित्यर्थः । अन्त-र्बहिर्मण्डलं वा दीक्षासंस्कार आत्मनो गुरुकृतां मन्त्रदीक्षा-मेवाऽऽत्मनस्त्वत्पूजायोग्यतां भावयेदित्यर्थः । परिचर्येति भगवत-कृतां परिचर्यां स्वस्य सकलपापक्षयार्थत्वेन भावयेदित्यर्थः ॥ १७ ॥

भगवान् भगशब्दार्थं लीलाकमलमुद्वहन् ।
धर्मं यशश्च भगवांश्चामरव्यजनेऽभजत् ॥ १८ ॥
आतपत्रं तु वैकुण्ठं द्विजा धामाऽकुतोभयम् ।
त्रिवृद्वेदः सुपर्णाख्यो यज्ञं वहति पूरुषम् ॥ १९ ॥
अनपायिनी भगवती श्रीः साक्षादात्मनो हरेः ।
विष्वक्सेनस्तन्त्रमूर्तिर्विदितः पार्षदाधिपः ।
नन्दादयोऽष्टौ द्वास्थाश्च तेऽणिमाद्या हरेर्गुणाः ॥ २० ॥
वासुदेवः सङ्कर्षणः प्रद्युम्नः पुरुषः स्वयम् ।
अनिरुद्ध इति ब्रह्मन्! मूर्तिव्यूहोऽभिधीयते ॥ २१ ॥
स विश्वस्तैजसः प्राज्ञस्तुरीय इति वृत्तिभिः ।
अर्थेन्द्रियाशयज्ञानैर्भगवान् परिभाव्यते ॥ २२ ॥
अङ्गोपाङ्गायुधाऽऽकल्पैर्भगवांस्तच्चतुष्टयम् ।
बिभर्ति स्म चतुर्मूर्तिर्भगवान् हरिरीश्वरः ॥ २३ ॥
द्विजऋषभ स एष ब्रह्मयोनिः स्वयंदृक् स्वमहिमपरिपूर्णो मायया च स्वयैतत् ।
सृजति हरति पातीत्याख्ययाऽनावृताक्षो विवृत इव निरुक्तस्तत्परैरात्मलभ्यः ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

पूर्वमासनपद्ममुक्तमिदानीं करस्थं पद्ममाह—भगवानिति । भगशब्दार्थमैश्वर्यादिषाड्गुण्यम् ॥ १८ ॥

हे द्विजाः! एकवचनान्तो वा पाठः अकुतोभयं कैवल्यं धाम गृहमभजत् । यद्वा, वैकुण्ठस्य विशेषणमकुतोभयं धामेति त्रिवृत् ऋग्यजुःसामरूपो वेदः "सुपर्णोऽसि गरुत्मांस्त्रिवृत्ते शिरः" इत्यादिमन्त्रलिङ्गात् यज्ञं यज्ञरूपं पुरुषम् "यज्ञो वै विष्णुः" इति श्रुतेः ॥ १९ ॥

अनपायिनी हरेः शक्तिः तत्र हेतुः साक्षादात्मनः स्वरूपस्य चिद्रूपत्वात्तस्यास्तदभेदादित्यर्थः । तन्त्रमूर्तिः पञ्चरात्राद्यागमरूपः येऽणिमादयोऽष्टौ गुणास्ते हरेर्द्वारपालाः नन्दादयः ॥ २० ॥

तस्यैव चतुर्व्यूहोपासनामाह—वासुदेवादिशब्दैः पुरुषः श्रीनारायण एव स्वयं मूर्तिभेदैरुपास्य इत्यभिधीयते ॥२१॥

तस्यैवाध्यात्मनि चतुर्धोपासनामाह-स एव भगवान्विश्वादिशब्दैर्वृत्तिभिर्जाग्रदाद्यवस्थाभिः परिभाव्यते तत्र हेतुमुपाधीनाह, अर्था बाह्याः इन्द्रियं मनः आशयस्तदनुभवसंस्कारयुक्तमज्ञानम् ज्ञानं त्रितयसाक्षि तैः ॥ २२ ॥

उक्तचतुर्व्यूहद्वयोपासनेऽपि पूर्वोक्तमङ्गाद्युपासनमाह-अङ्गेति । अङ्गादिभिरुपलक्षितो भगवान् हरिर्वासुदेवादिचतुर्मूर्तिः सन् विश्वादिचतुष्टयं बिभर्ति स्म विश्वादिभावेऽपि तन्नियन्तृत्वस्य न जीवत्वमित्याह—विश्वादिचतुष्टयं बिभ्रदपि भगवानीश्वर एवेति ॥ २३ ॥

तस्यैव ब्रह्मादित्रिमूर्तितामाह-द्विजऋषभेति । स एष एव भगवान् ब्रह्मयोनिर्वेदस्य कारणमित्यादिहेतुत्रयम् वस्तुतो भेदाभावेऽप्येतज्जगत्स्वगतमायया सृजति हरति पातीति कृत्वा आख्यया ब्रह्मादिरूपयाऽनावृताक्षोऽनाच्छन्नज्ञानोऽपि विवृत इव भिन्न इव निरुक्तः शास्त्रेषु ननु भिन्नः तत्र विद्वदनुभवं प्रमाणयति, यतस्तत्परैरात्मत्वेनैव लभ्यत इति ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मण्डलं पद्माद्याकारं देवयजनं यजमानयागभूम्यभिमानिदेवता संस्कारः प्रोक्षणादिः दीक्षा यागदीक्षाभिमानिदेवता परिचर्या यागपरिचर्याभिमानिदेवता दुरितक्षयाभिमानिनी ॥ १७—१८ ॥

द्विजा इति सम्बोधनम् ॥ १९—२१ ॥

वृत्तिभिः स विश्वस्तैजसः प्राज्ञः तुरीय इति परिभाव्यते इत्यन्वयः । विश्वतैजसादि शब्दाः अनिरुद्धादिष्वेव सृष्टिस्थितिसंहृतिमत्सु जाग्रत्स्वप्नसुषुप्त्यभिमानिषु वर्तन्ते तुरीयशब्दो मुक्त्यभिमानिनि वासुदेवे वर्तते तदेवाह—अर्थेन्द्रियाशयज्ञानैरिति । अर्थशब्दो बाह्येन्द्रियार्थावभासकत्वजाग्रदवस्थापरः इन्द्रियशब्देन मनोविषयेन स्वप्नहेतुना स्वप्नावस्थापेक्षं लक्ष्यते मनस्युपरते वासनामात्रावशेषा सुषुप्त्यवस्था आशयशब्देन लक्ष्यते परिशुद्धाऽनवच्छिन्नज्ञानैकाकारावस्था ज्ञान

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पुरन्दरो वान्यतमः किं न स्यादित्यत उक्तमीश्वर इति सोऽपि सदाशिवः स्यादत उक्तं चतुर्मूर्त्तिरिति सोऽष्टमूर्तिरिति प्रसिद्धः ॥ २३ ॥

यद्वेदान्तवेद्यं तदेवात्र पुरुषरूपेणाऽभ्यते तस्मादिदं मुमुक्षुभिः अङ्गोपाङ्गैर्ध्यानमिति श्लोकद्वयेनाह-द्विजवृषभेति । हे द्विजवृषभ ! तत्परैः कतकृत्कैः आत्मलक्ष्यः आत्मनि मनसि लक्ष्यः प्रकाश्यो भवति यद्वा, आत्मनैव स्वानुग्रहेणैव लक्ष्यः प्राप्यः "यमेवैष वृणुते तेन लभ्यः" इति श्रुतेः । किं लक्षणकः कोऽयं पुरुष इति तत्राह-माययेति । स्वया मायया स्वेच्छयैव सृजतीत्याद्यन्वयः निरुक्तः कथं सृजतीति स्रष्टा हरतीति हरः पातीति पाता "स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु" इत्यादेः अत्र किं प्रमाणम् ? तत्राह-ब्रह्मेति । ब्रह्म वेदादिशब्दराशिर्योनिर्ज्ञप्तिकारणं यस्य स तथा वेदादिशब्दराशिवेद्यमर्थं मामित्यर्थः । चतुर्मुखस्यापि सृष्ट्यादिकर्तृत्वस्य प्रसिद्धत्वात्कथं हरेरेवेति निश्चीयते "ब्रह्मा देवानां प्रथमः सम्बभूव" इति श्रुतिरित्यतो वाह-ब्रह्मेति । ब्रह्मणश्चतुर्मुखस्य योनिः कारणं "यो ब्रह्माणं विदधाति" इति श्रुतेः लोकवत्परोपदेशेन कर्मणा न प्रवर्तते किन्तु स्वरूपज्ञानेनेत्यभिप्रायेणाह-स्वयं ज्ञानेति । स्वयं भूतज्ञानत्वेऽपि कर्मपरपक्षाविनाभूतं इत्यत्राह-स्वमहिमेति । "स्वे महिम्नि" इति श्रुतेः । स्वयं प्रकाशमानस्य प्रद्योतमानस्य मेघावरणेनेव हरेर्ज्ञानस्यापि तत्स्यादित्यत्राह, अनावृतात्म इति आवरणरहितदृष्टिः कथं प्रकाश्यत इत्यत्राह-विसृजन इति । स्रष्टा अयमित्युपास्यमानस्य विविधं सृजन इति प्रकाशते संहर्ता अयमिति ज्ञानवतः संहरतीव रक्षतीव इतरश्च उपलक्षणमेतत् यावतान् गुणानुपसंहृत्योपास्ते तत्तद्गुणात्मेन प्रकाशत इति ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

देवस्य यजनं यत्र कुत्रचिद्भगवतः पूजास्थानमेव मण्डलं भगवतो निजस्थानवलयं संस्कारो भगवतः साक्षात्प्राप्तियोग्यता ॥ १७ ॥

भगःप्रापञ्चिकस्तदन्तश्च लीलाकमलं तु तदतीतमयं तथापि प्रभोरभेदमयं भावयेदित्यर्थः ॥ १८ ॥

वैकुण्ठं ब्रह्मलोकोपरिस्थाद्विकुण्ठासुताविर्भावितं तत्पदमस्य विराड्विग्रहातुः श्रीनारायणस्यातपत्रं भावयेदित्यर्थः ॥ १९ ॥

साक्षादात्मनः परमस्वरूपभूतस्य या हरेर्भगवती श्रीः सैव जगतः श्रीरिति भावनमित्यर्थः ॥ २० ॥

वासुदेवादयः साक्षाच्चतुर्व्यूहरूपा इति वासुदेव इत्यादिपद्यद्वयार्थः ॥ २१ ॥ २२ ॥

तेषामर्थादीनां चतुष्टयमङ्गादिरूपेण विवर्तीति अङ्गाङ्गिभेदेनार्थादयोऽप्युपास्या इत्यर्थः ॥ २३ ॥

अस्मै ते उपासनाभेदादस्य माहात्म्यं दर्शयन्ति, द्विजेति । ब्रह्मयोनित्वादिस्वयेश्य स्वरूपशक्तिर्दर्शिता तत्र मायादोषेण विक्षेपतमाशङ्क्याह, मायया चात्मावृतात्म इति तत्र हेतुः स्वया स्वाधीनयेति । मायां विशिनष्टि-एतद्विदं सृजतीत्याद्या क्वाति:

विद्यानिर्वचनात् एकमूर्त्तिरित्यस्य मायात्मकोऽपि अविकृतः सत्ये विकृत इव कश्चिदिव इव निरुक्तः प्रतिपादितः । यतस्तैरात्मनि चित्ते लक्ष्यः अनुभवितुं शक्य इति ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सूर्यस्येव भगवद्विग्रहस्य यन्मण्डलं तत् देवयजनं देवपूजाभूमिं दीक्षा तन्मन्त्रोपदेश एव आत्मनो जीवस्य संस्कारः तन्मन्त्रप्रयोगस्य विभूतिर्जीवसंस्कार इत्यर्थः । परिचर्येति तत्परिचर्यायां जीनतुलसिरूप एव विभूतिः ॥ १७ ॥

भगशब्दस्यार्थम् अर्थचतु(ष्कं)द्वयं लीलाकमलं दधाति लीलाकमलस्य विभूतयः ऐश्वर्यधर्मज्ञानवैराग्याणि प्राकृतानि धर्मयशश्च प्राकृतं चामरव्यजनयोर्विभूती ॥ १८ ॥

हे द्विजाः ! अकुतोभयं धाम वैकुण्ठमेव आतपत्रं छत्रम् अभजेति लोकगतं यत्किञ्चिदभेयत्वं प्रतीयते तत् खलु छत्रस्यैव विभूतिरित्यर्थः । त्रिवृत् ऋग्यजुःसामरूपो वेदः वेदाख्यो यागादिरित्यर्थः ॥ १९ ॥

अनपायिनी एकरूपा साक्षात्स्वरूपभूता शक्तिः अस्याह्लादिनीशक्तेर्विभुर्नाखिलिकः स्वगीयानन्दः ऊर्जः तन्मूर्त्तिः पञ्चरात्रागमरूपः इति पञ्चरात्राद्यागमाः विष्वक्सेनस्य विभूतय इत्यर्थः । हरेर्द्वाःस्था ये नन्दादयस्तेऽष्टिमाद्या गुणा अत्यगता विभूतयः ॥ ॥ २० ॥

द्वाःस्थानुक्त्वा विचतुष्टयगतांश्चतुरो व्यूहानाह-वासुदेव इत्यादि(व्यूह)मूर्त्तिसमूहः स्वयं पुरुषो भगवानेवेत्यन्वयः ॥ २१ ॥

चतुर्णां व्यूहानां विभूतीराह-स इति । अर्थाणां इन्द्रियं मनः आशयस्तदुभयसंस्कारयुक्तं सुखमहमस्वाप्समिति सुखं न किञ्चिदवेदिषमित्याकारकमज्ञानं च तथा ज्ञानं चेति तेषां विश्व इत्याद्या वृत्तयस्ताभिः स भगवानेव परिभाव्यते परिचिन्त्यते चतुर्णां व्यूहानामेव विश्वाद्याश्चतस्रो वृत्तयो नियम्या विभूतय इति भावः । अत्र वासुदेवस्य विश्वः सङ्कर्षणस्य तैजसः प्रद्युम्नस्य प्राज्ञः अनिरुद्धस्य तुरीयो ज्ञानमिति विभूतयो विवेचनीयाः ॥ २२ ॥

व्यञ्जितमेवार्थं स्पष्टयति-अङ्गादिभिः सहित एव चतुर्मूर्त्तिर्भगवान् (तत्) चतुष्टयं विश्वादिचतुष्कं नियामकतया बिभर्ति अङ्गोपाङ्गायुधाकल्पसहितस्यैव वासुदेवस्य विभूतिर्विश्व इत्येवमेव सङ्कर्षणादीनां तैजसाद्या विभूतयः इतिरित्युपासकानां तुरीयहर्ता ईश्वरो विश्वादीनां नियन्ता ॥ २३ ॥

तस्य चतुर्मूर्त्तितामुक्त्वा त्रिमूर्त्तितामाह-हे द्विजऋषभ ! एष भगवान् ब्रह्मणो वेदस्य योनिः प्रकाशकः न चास्य कोऽपि प्रकाशक इत्याह—स्वयं दृक् स्वप्रकाशः तथास्य रात्र इवैश्वर्यार्थिनः कल्पयेदित्याह, स्वमहिमपरिपूर्णः किन्तु क्रीडार्थमेव स्वया स्वशक्त्या मायया मायकया ब्रह्मादिनाम्ना सृजति हरति पाति इत्येवम् अनावृतात्मोऽपि अपरिच्छिन्नात्मोऽपि मायया विकृत इव कृतनिरुद्ध इव निरुक्त इव वस्तुतस्तु निरुक्तं विवरितुं ब्रह्मादिभिरप्ययमशक्य एवेति भावः । तर्हि, किमर्थमेतावानायासः कृतः

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तथाहि, तत्परैस्तद्भक्तजनैरात्मना मनसा एतादृशध्यानेन लभ्य इति अत्र तत्पादादीनां विभूतिभिः पृथिव्यादिभिरैक्यमनुसन्धानमेव तत्पादादिस्मरणं सुखेन भवेत् तथाहि सर्वदा ध्येयस्य भगवच्चरणस्यैव विभूतिरियं पृथ्वी सर्वदा दृश्यते अतः पृथ्वीमाश्रिताः स्थावरजङ्गमाः भगवच्चरणाश्रिता एव ते मया सम्माननीया एव न तु द्वेष्याः तथा भगवद्वक्षसि भूषणस्य कौस्तुभस्य विभूतयः सर्वेऽपि जीवाः अतस्तेषामेकोऽपि मया द्वेष्टुं निन्दितुं वा न युज्यत इत्येवं भावनैवात्र फलं द्रष्टव्यम् ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीभगवतो भक्तमूर्तेः साङ्गोपाङ्गादिभावनाध्यानादिकं सूचयति-मण्डलमिति । मण्डलं स्वर्णमण्डलमुपलक्षणं येन तत् इष्टभक्तादीनां सुवर्णमण्डलहृत्पद्मादिकं देवयजनं देवोपासनस्थानम् दीक्षा गुरुकृता मन्त्रदीक्षा आत्मनः उपासकस्य संस्कारः उपासनायोग्यता फलमाह भगवतः परिचर्या दुरितक्षय इति ॥ १७ ॥

भगशब्दार्थम् ऐश्वर्यादिषाड्गुण्यम् ॥ १८ ॥

आतपत्रं तु वैकुण्ठमभजत् द्विजाः मुनयः अकुतोभयं धाम तद्धामस्थानं भवति त्रिवृद्वेदः ऋग्यजुःसामरूपः सुपर्णाख्यः सुपर्णो इत्याख्या यस्य सः गरुडः यज्ञं विष्णुं पुरुषं वहति ॥ १९ ॥

आत्मनः परमात्मनोऽनपायिनी साक्षाद्भगवती धर्मभूता ज्ञानरूपा शक्तिः श्रीर्लक्ष्मीः विदितः तन्त्रमूर्तिः पञ्चरात्रागमरूपः अणिमाद्याः गुणाः नन्दादयोऽष्टौ द्वाःस्थाः द्वारपालाः मन्तव्याः ॥ २० ॥

वासुदेवः सङ्कर्षणः प्रद्युम्नः अनिरुद्धः इति मूर्तिव्यूहः मूर्तिभेदः पुरुषो वैराजः स्वयमेवाभिधीयते ॥ २१ ॥

अर्थो बाह्य इन्द्रियं मनः आशयः किञ्चिदात्मसुखसंस्पर्शी जाग्रत्स्वप्नसुषुप्तिविस्मृतिलक्षणान्तःकरणवृत्तिभेदः ज्ञानं त्रिस्वनुगतम् तैर्विश्वस्तैजसः प्राज्ञस्तुरीय इति या वृत्तयोऽवस्थास्ताभिर्निजस्थाभिर्नियन्ता स वैराजो भगवान् परिभाव्यते अनुभूयते ॥ २२ ॥

अवस्थाभोक्ता स नेत्याह-अङ्गेति । चतुर्मूर्तिः चतुर्व्यूहरूपोऽयं तत्तदवस्थानियन्तृतया चतुर्मूर्तिर्भगवान् एतच्चतुष्टयमवस्थाचतुष्टयं नियन्तृतया बिभर्ति पुष्णाति न तु भुङ्क्ते तत्र हेतुगर्भाणि विशेषणानि यतः भगवान् षाड्गुण्यनिधिः संसारहारिः ईश्वरः सर्वं कर्तुं समर्थः स अङ्गोपाङ्गायुधाकल्पैर्विभाव्यते इति पूर्वेणान्वयः जीवस्य विश्वाद्यवस्थानियन्ता भगवानित्यर्थः ॥ २३ ॥

एवं परब्रह्मपुरुषोत्तमोपासनायामधिकारसिद्धये तदंशभूत वैराजोपासना आशुकालेव किञ्चिद्विशेषतयाऽत्रवाय तथा हिरण्यविराट्वैराजसंज्ञितं प्राप्य च सर्वशास्त्राणां मूलमनन्ताखिलाद्भुतगुणशक्त्याश्रयं भगवन्तं ब्रह्मादिपदाभिवन्द्य पुरुषोत्तमं प्रतिपादयन्ति तस्य सर्वस्वैकवेद्यत्वं स्वप्रकाशपरिपूर्णत्वविश्वजन्मादिहेतुत्वादीन् गुणानाह-द्विज इति । हे द्विजर्षभ ! शौनक ! योऽस्मिन् पुराणे वैराजादिरूपैः प्रतिपादितः स एव ब्रह्मयोनिः ब्रह्म वेदः योनिः ज्ञापकं प्रमाणं यस्मिन् सः स्वयं दृक् स्वयं प्रकाशः स्वासाधारणेन महिम्ना परिपूर्णः एतत् विश्वं स्वया अचिन्त्यया शक्तिभूतया मायया सृजति पाति हरति च यतोऽस्मादृशाणां ज्ञानेनावृतज्ञानः इतिशब्दः प्रसिद्धौ आख्यया ज्ञानैकवचनम् । प्रसिद्धैर्ब्रह्माकाशप्राणादिनामभिः "बृहत्त्वात् बृंहणत्वाच्च तस्मादुच्यते परं ब्रह्म" आ समन्तात् काशते इत्याकाशः प्रकर्षेण अणतीति प्राणः इत्येवं विभिन्न इव निरुक्तो यः सः तत्परैः परमात्मोपासकैः आत्मनैव लभ्यः प्राप्यः "यमेवैष वृणुते तेन लभ्यः" इति श्रुतेः ॥ २४ ॥

---

भाषाटीका ।

इस प्रकार भावना करता हुआ अधिकारी देवताओं की पूजा की भूमि को सुवर्ण मण्डल करके भावना करे, और गुरुदत्त दीक्षाको आत्माके संस्कार की भावना करे, तथा भगवत्परिचर्या को अपने दुरितक्षय करने वाली है ऐसी भावना करे ॥ १७ ॥

भगवान्, भगशब्द का अर्थ जो षाड्गुण्य है, तिसको लीला कमल करके धारण करते हैं । धर्म और यश को चामर और व्यजन करके सेवा में स्वीकार करते हैं ॥ १८ ॥

हे द्विज ! निर्भय स्थान जो श्रीवैकुंठ है, उसी को भगवान् का छत्र जानो । ऋग यजु सामरूप वेद पक्षी को गरुड में भावना करो, और यज्ञ में पुरुष की भावना करो ॥१९॥

श्रीहरि की अनपायिनी श्री में लक्ष्मीजी की भावना करो, पार्षदों के अधिपति विष्वक्सेन, पांचरात्रादि तन्त्र मूर्ति विदित ही हैं । श्रीहरि के अणिमादिक अष्ट गुण हैं, वे ही नन्दादिक अष्ट द्वारपाल हैं ॥ २० ॥

हे ब्रह्मन् ! पुरुष जो स्वयं श्रीनारायण हैं वे ही वासुदेव, सङ्कर्षण, प्रद्युम्न, अनिरुद्ध, इन चार मूर्त्ति भेदों से उपास्य हैं दूसरा कोई नहीं ॥ २१ ॥

वेही भगवान्, अर्थ, इन्द्रिय, आशय, और ज्ञान, इन उपाधियों से अर्थात् विषयों के द्वारा जाग्रत् स्वप्न सुषुप्ति और तुरीय इन अवस्थाओं से विभावित होते हैं ॥ २२ ॥

अङ्ग उपांग आयुध और भूषण इन से उपलक्षित श्रीहरि वासुदेवादि चतुर्विध मूर्त्ति होकर जाग्रत् आदि चारों अवस्थाओं को धारण करते हैं, और उन अवस्थाओं के नियामक होने से जीवभाव को नहीं प्राप्त होते, किन्तु भगवान् ईश्वर ही रहते हैं ॥ २३ ॥

हे द्विज श्रेष्ठ ! वे ही भगवान् वेद के कारण स्वयं दृष्टा अपनी महिमा से परिपूर्ण श्रीहरि अपनी माया से इस विश्व को रचते हैं, हरते हैं, और पालते हैं, इसी से विविध आख्याओं ( नामों ) को धारण करते हैं, और सदा जिनका ज्ञान आवृत नहीं होता है । अभक्तों को दूर सरीखे कहे जाते हैं परंच भक्तजनों को आत्मा ही में प्राप्त हो जाते हैं ॥ २४ ॥

श्रीकृष्ण ! कृष्णसख ! (१) वृष्ण्यृषभावनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य ! ।
गोविन्द ! (२) गोपवनिताव्रजभृत्यगीततीर्थश्रवः ! श्रवणमङ्गल ! पाहि भृत्यान् ॥ २५ ॥

य इदं कल्य उत्थाय महापुरुषलक्षणम् ।
तच्चित्तः प्रयतो जप्त्वा ब्रह्म वेद गुहाशयम् ॥ २६ ॥ *

शौनक उवाच ।

शुको यदाह भगवान् विष्णुराताय शृण्वते ।
सौरो गणो मासिमासि नाना वसति सप्तकः ॥ २७ ॥
तेषां नामानि कर्माणि संयुक्तानामधीश्वरैः ।
ब्रूहि नः श्रद्दधानानां व्यूहं सूर्यात्मनो हरेः ॥ २८ ॥

सूत उवाच ।

अनाद्यविद्यया विष्णोरात्मनः सर्वदेहिनाम् ।
निर्मितो लोकतन्त्रोऽयं लोकेषु परिवर्तते ॥ २९ ॥
एक एव हि लोकानां सूर्य आत्मादिकृद्धरिः ।
सर्ववेदक्रियामूलमृषिभिर्बहुधोदितः ॥ ३० ॥
कालो देशः क्रिया कर्ता करणं कार्यमागमः ।
द्रव्यं फलमिति ब्रह्मन् ! नवधोक्तो जया हरिः ॥ ३१ ॥
मध्वादिषु द्वादशसु भगवान् कालरूपधृक् ।
लोकतन्त्राय चरति पृथग्द्वादशभि (३) र्गणैः ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यदर्थेदमुपासनमुक्तं तं श्रीकृष्णं प्रार्थयते—कृष्णसख । अर्जुनस्य सखे ! वृष्णिश्रेष्ठ अवनिध्रुहो ये राजन्यास्तेषां वंशस्य दहन ! अनपवर्गमक्षीणं वीर्यं यस्य गोपवनितानां व्रजाः समूहाः भृत्या नारदादयस्तैर्गीतं तीर्थभूतं श्रवः कीर्तिर्यस्य श्रवणमेव मङ्गलं यस्य ॥ २५ ॥

एतज्जपमात्रस्यापि ब्रह्मज्ञानं फलमित्याह—य इति । कल्ये उषःकाले यस्तच्चित्तः प्रयतः शुचिश्च सञ्जप्त्वा गुहाशयं हृदिस्थं ब्रह्म पश्यति ॥ २६ ॥

प्रपञ्चं देवयजनामित्युक्त्वा बुद्धिमागतो मूर्तिव्यूहप्रसङ्गेन रविव्यूहोऽत्र पृच्छ्यते—शुक इति । पञ्चमे यदाह तथाऽन्ये च ऋषयो गन्धर्वा अप्सरसो नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः सप्तेत्यादिना सौरः सूर्यसम्बन्धी सप्तकः सप्तानां गणः ॥ २७ ॥

तेषां सप्तानामधीश्वरैस्तत्तत्पतिभिस्तत्तन्मासाधिकृतसूर्यैर्वा व्यूहं विभागम् ॥ २८ ॥

तत्र तावत् व्यूहं निरूपयितुं प्रथमं सूर्यस्वरूपमाह—अनाद्यविद्यया मायया अयं सूर्यः लोकतन्त्रो लोकयात्राप्रवर्तकः ॥ २९ ॥

ननु तस्य क्रियाभेदोपाधिकमेव नानात्वं न स्वत इत्याह—एक एवेति "सूर्य आत्मा जगतस्तस्थुषश्च" इति श्रुतेः । जगदात्मा आदिकृत् सृष्टिकर्ता हरिरेव सूर्यः स च सर्वासां वेदोक्तक्रियाणां मूलं संक्षेपोपाधिना बहुधोक्तः ॥ ३० ॥

कालरूपधारिणो हरेर्द्वादशादिरूपं भेदं क्रियोपाधिकं दर्शयितुं प्रथमं सर्वकर्मप्रवृत्तये मायाकृतं नवधा भेदमाह—काल इति । कालः प्रातरादिः देशः समादिः क्रिया अनुष्ठानम् कर्ता प्राणादिः करणं स्रुगादिः कार्यं यागादि आगमो मन्त्रादिः द्रव्यं व्रीह्यादिः फलं स्वर्गादि ॥ ३१ ॥

तत्र च कालस्वरूपधारी भगवान् पृथक् चरति मध्वादिषु चैत्रादिषु लोकतन्त्राय लोकयात्रानिर्वाहाय ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अवनिध्रुग्राजन्यवंशदहन ! भूमेरपकारिराजन्यकुलज्वलनदहन

---

(१) वृष्णि वृषभवनीत्यादि । ( २ ) गोविन्दसुरार्तिहरावतारेत्यादि । ( ३ ) गुणैरिति च विज० पा० ।
* विजयध्वजतीर्थरीत्याऽत्रैव द्वादशोऽध्यायसमाप्तिः ।

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

…नाशक अनपवर्गवीर्य अन्तरादिवीर्य इत्यर्थः । येन पावनकीर्तेः …रिः कर्मन्दन इन्वयः ॥ २५—२८ ॥

अविद्यया ज्ञानविरोधिन्या प्रकृत्या तस्य क्रियामूलत्वं …वाधिकतया कालो देशोऽयादि कार्यम् अपूर्वम् आगमः प्रमाणभूतो वेदः देशकालादिपर्यन्तम् सर्वं क्रिया इति सर्वसाधनत्वं च क्रियात्मभूतम् एभिर्विशिष्टा क्रिया इत्यर्थः या क्रियया बहुधोक्तः तत्तद्देवतारूपशरीरकत्वात् बहुधोक्त इत्यर्थः ॥ २९—३१ ॥

मध्वादिषु चैत्रादिमासेषु गणैः प्रत्येकं सप्तसङ्ख्यैः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवं तत्तत्त्वात्मकश्रीभगवदङ्गादीनि निरूप्य कृष्णपदस्याथान्यर्थमुक्त्वा तावत्स्वेष्टदेवतां स्मरन् कल्याणाय प्रार्थयते-श्रीकृष्णेत्यादि—

"कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥

…त्युत्पत्त्या तादृशार्थो बोध्य इत्यर्थः । इमानि नव सम्बोधनानि …द्येन सर्वान्तर्यामित्वं द्वितीयेन सौशील्यं तृतीयेन सौलभ्यं तुरीयेन दुष्कृद्विनाशकत्वं पञ्चमेनापारवीर्यत्वं षष्ठेन सर्वाधारत्वं सप्तमेन साधुपरित्रातृत्वम् अष्टमेन पावनकीर्तिमत्त्वं नवमेनाश्चर्यत्वं श्रोतव्यत्वं विवक्षितम् कृष्णोऽर्जुनस्तस्य सखे ! तथा अवन्यै द्रुह्यन्तीति तथा ते राजन्या एव वंशा वंशानलेनेव दहन नाशन ! यद्वा, अवनिध्रुग्राजन्यानां वंशः सन्तानः तस्य दहन! अनपवर्गवीर्येति पाठः अनपवर्ग्यवीर्येति पाठे परत्वं विवक्षितं गवां द्विजानां सुराणां चार्तिं हरतीति तथाभूतो ऽवतारो यस्य तीर्थं पुण्यावहं श्रवः यशो यस्य श्रवणमात्रेण मङ्गलप्रद ! भृत्यान् सेवकान् रक्ष ॥ २५ ॥

प्रकृतभगवदङ्गादिनिरूपणप्रकरणकीर्तनफलमाह-य इति । कल्ये [प्रातः] प्रभाते उत्थाय इदं महापुरुषस्य लक्षणं चिह्नभूताङ्गोपाङ्गायुधादिनिरूपणपरं प्रकरणं तस्मिन् परमपुरुष एव चित्तं यस्य सः समाहितेन्द्रियश्च यः स जप्त्वा गुहाशयं हृदयगुहायामवस्थितं ब्रह्म वेद यथावज्जानातीत्यर्थः ॥ २६ ॥

अथ कश्चिदध्यायसमाप्तिर्दृश्यते कश्चिन्नेति दृष्टव्यम् पुनरपि आशीर्नामात्मस्य वासुदेवादिव्यूहप्रस्तावमारितात्सूर्योपासकान् व्यूहान् पञ्चमे स्कन्धे दिङ्मात्रेण प्रदर्शितान् विस्तरतो बुभुत्सुः पृच्छति शौनकः-शुक इति द्वाभ्याम् । शृण्वते श्रवणं कुर्वते विष्णुराताय परीक्षिते श्रीशुको यदाह किन्तत् सौरैः सूर्याराधकैः गणैः सप्तकः समानामादित्यानां समूहात्मकः मासिमासि नानावहति नानाविधं कर्म वहतीति येन तथाप्युक्तं पञ्चमे "तथान्ये च ऋषयो गन्धर्वा अप्सरसो नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः सप्त चतुर्दश मासिमासि भगवन्तं सूर्यमात्मानं नानानामानं पृथक् नामानः पृथक् कर्मभिर्द्वन्द्वश उपासते" इति ॥ २७ ॥

तेषामिति सप्तानां सौरगणानाम् अधीश्वरैः नियुक्तानां तत्तत्पतिभिः तत्तन्नामाभिरक्तसूर्यैर्नियुक्तानामित्यर्थः । प्रतिमासं सूर्यं स्वनामभेदाभिप्रायकम् अधीश्वरैरिति बहुवचनं स्वात्मरात्मभूतपरमात्मोपासनार्थं सूर्यस्यापि तेषां नामान्तरेण गणामध्ये प्रविष्टत्वात्तदभिप्रायकं वा अनन्तेन सहैव स्वान्त बहुवन्ते सूर्यात्मनः सूर्यशरीरकस्य हरत्यात्मक तेषां गणानां व्यूहं तन्नामानि कर्माणि च अहुधानानां नोऽस्माकं ब्रूहीति सम्बन्धः ॥ २८ ॥

तत्र व्यूहाभिरूपयितुं तावत्सूर्यस्य तत्त्वमाह-अनादीति । सर्वदेहिनामन्तरात्मतो विष्णोर्मयाऽयया अनाद्यविद्यया आविर्हितया ज्ञानविरोधिन्या प्रकृत्या निर्मितोऽयं सूर्यः लोकतन्त्रः लोकयात्राप्रवर्तको ऽत एव लोकेषु प्रवर्तते परिभ्रमति अनाद्यविद्यया निर्मित इत्यनेन सूर्यबिम्बस्य प्रकृतिपरिणामविशेषात्मकत्वमुच्यते ॥ २९ ॥

तस्य भगवदात्मकत्वं वदन् लोकतन्त्रतामुपपादयति-एक एव हीति । यो लोकानामादिकृत् सृष्टिकर्ता एक अद्वितीयः अन्तर्बहिरन्तररहितः सर्वान्तरात्मा हरिः स एव सूर्यो हरिरेव सूर्यशरीरकत्वेनावस्थित इत्यर्थः । कथम्भूतः सर्वासां वेदक्रियाणां मूलभूतः वैदिकक्रियामूलत्वं कालावच्छेदकतया अवगन्तव्या ऋषिभिः पराशरादिभिर्बहुधा द्वादशधा उदितः उक्तः ॥ ३० ॥

तत्र दृष्टान्तमाह-काल इति । हे ब्रह्मन् ! यथा हरिरेक एव कालादिशरीरकत्वेन नवधा उक्तः तद्वदित्यर्थः । तत्र कालो वसन्तादिः देशः "समे यजेत" इत्याद्युक्तः क्रिया यागादिरूपा करणं साधनं कार्यं च्यावित्कार्यमपूर्वाख्यम् आगमः प्रमाणभूतो वेदः द्रव्यं चरुपुरोडाशादि फलं स्वर्गादि "यथोक्तो बहुधा हरिः" इति पाठान्तरं देशकालादिफलपर्यन्तमिदं सर्वं साधनत्वेन साध्यत्वेन च क्रियात्मभूतम् एभिर्विशिष्टा क्रिया इत्यर्थः । यया क्रियया हरिर्बहुधोक्तः द्रव्यादि शरीरकत्वादिति भावः ॥ ३१ ॥

विवक्षितमर्थं तावत्सङ्क्षेपेणाह—मध्वादिष्विति । मध्वादिषु चैत्रादिषु द्वादशसु मासेषु कालरूपभृत्(कृ) कालावच्छेदकरूपधृत(कृ) भगवान् सूर्यः लोकतन्त्राय लोकयात्रानिर्वाहकाय पृथग्द्वादशभिर्गणैः सह चरति एकैकस्मिन् मासे एकैको गणः प्रतिगणं गणिनस्तु सप्त सप्तेत्यर्थः । यद्यपि पञ्चमे स्कन्धे चतुर्दशोक्ताः तथापि तत्र प्रधानाः सप्त सप्तैवेति तत्र एवोच्यन्ते इति भावः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवमुपासित कुर्वतः फलमाह—य इत्यादिना । कल्ये उषसि महापुरुषलक्षणं अपति स जप्त्वा हृदयगुहायां शेत इति हृदयगुहाशयं ब्रह्म जानाति कुशोशायशोभित यत् ॥ २६ ॥

( विजयध्वजतीर्थरीत्याऽत्रैव दशमाऽध्यायसमाप्तिः)

सर्वोपास्यत्वेनदर्शितस्य कथमेव हरेर्गृहस्थैर्विशेषेण उपासितः कर्तव्येति तादृशाख्यातिप्रकारं कथयत्यस्मिन्नध्याये; तत्र शौनकः पृच्छति—शुक इति । शुको भगवान्विष्णुराताय पृथङ्नामरूपादि सप्तको गणो मासिमासि नानानामानं सूर्यं भगवन्तं निषेवमाणः सौरैः सूर्यस्य विद्यमाने स्यन्दने रथे नाना वसति

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

"तथा अन्ये च ऋषयो गन्धर्वाप्सरसो नागाः" इत्यादि पञ्चमस्कन्धे यदाह ॥ २७ ॥

तदा तेषां पृथङ्नामानि पृथक्कर्माणि चानुकान्यतः अङ्घ्रामानां नोऽस्माक मानि ब्रूहीत्यन्वयः । सूर्यात्मनः सूर्यान्तर्यामिणो हरेर्व्यूहं जातिविशेषं च यद सूर्यात्मनो हरेः परितः स्थितं तेषां व्यूहं पृथक् पृथगिति शेष इति वा ॥ २८ ॥

अयं कल्पा हरेर्बुद्धिपूर्वं प्रणीतत्वान्न मिथ्याभूत इति भावेनाह-अनादीति । लोकं तन्त्रयति व्यापारयतीति लोकतन्त्रो लोकप्रवृत्तिहेतुरयं सूर्यादिः लोकेषु परितो चरन् उदयादिनिमित्तव्यापाराय उदयादिकं गच्छतीत्यर्थः । कीदृशः सर्वदेहिनामात्मनो विष्णोः अनाद्यविद्यया * कारणशून्येच्छया निर्मितः "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति श्रुतेः ॥ २९ ॥

सरतीति सूर्य इति सूर्यप्रादयत्वात्सूर्य इति तच्छब्दप्रवृत्तिनिमित्तस्य तदेकाधीनत्वान्मुख्यकर्ता हरिः एक एवेत्याह, एक एवेति । लोकानामुभयेषाम् आत्मा "सूर्य आत्मा जगतस्तस्थुषश्च" इतिश्रुतिः । दिनस्यादिकृत्"कृतोऽस्त्वहमे" इतिधातोर्दिनादिच्छेद अन्तकर्ता च "प्रातरुत्थायाथ सन्ध्यामुपासीत" इति श्रुतेः सर्ववेदोक्तक्रियामूलमत एव ऋषिभिर्बहुधोदितः उदितामिति पाठे तत्स्वरूपं नानात्वेन कथितम् अत्र द्वादशसूर्येष्वेकः स्वयं हरिरन्यत्रान्तर्यामित्वेनेति विशेषः ॥ ३० ॥

नानात्वमुपपादयति-काल इति । अजया मायया अनाद्यविद्यया भवधोक्तः कालः प्रातरादिः देशः समादिः क्रिया अनुष्ठानं कर्ता ब्राह्मणादिः कारणमिन्द्रियं कार्यं देहः द्रव्य चर्वादि भूतपञ्चकं वा आगमो वेदादिशास्त्रं फलं स्वर्गादि कालादिषु स्थित्वा तत्कर्मकारकत्वेन कालादिशब्दवाच्यत्वेन नवधा हरिरुक्तः इति ज्ञातव्यम ॥ ३१ ॥

एक एव हरिः सर्वं प्रेरयतीत्युक्तं तत्प्रकारं दर्शयति-मध्वादिष्विति । कालरूपधृक् भगवान् लोकतन्त्राय लोकव्यापाराय मध्वादिषु चैत्रादिषु द्वादशभिर्गुणैर्द्वादशभिःकालगुणैः पृथक् पृथक् चरतीत्यन्वयः ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तमेव नामादिग्रहणेन स्तुवन् प्रार्थयते । यद्वा, ममत्वीदृश एव स पुरुषार्थ इति व्यञ्जयन्नादरमेव तं प्रार्थयते—श्रीकृष्णेति । तत्र श्रीकृष्णसखेत्यादिना पुरलीला गोविन्देत्यादिना व्रजलीला तत्र व्रजलीलाया व्यत्ययेनान्ते निर्देशात्तत्रैव निजस्थितिर्दर्शिता तीर्थेत्यादिना तद्द्वयमहिमा गोपाश्च वनिताश्च तद्द्वन्द्वनाश्च व्रजजनश्रवस्था अन्ये च भृत्यास्तदुपासकाश्च तैर्गीतेति विग्रहः वर्तमानेः भृत्यान् तन्मार्गे बहुभयानस्मान् स्वयमेव तत् सिद्धिं सम्पादयति एवं श्रीभागवतश्रवणेन कृतं साधनसाध्यनैपथ्यं दर्शितम ॥ २५ ॥

अत्र श्रीभगवत्तत्त्वं गुहाशयं दुरूहमपि ॥ २६ ॥

---

* अतन न विद्यते आद्यः आदिः कारणं यस्याः सा अनाद्या सा च विद्या चेति तथेति विग्रहः सूचितः ।

शुक इति युग्मकम् । ननु, शुक्लयवनत्त्वस्य तत्सूर्यंगणस्य अभयो कोऽयमाग्रहस्तत्राह-सूर्यस्यात्मा अन्तर्यामी हरिः तस्यैव व्यूहं तत्रैव पर्यवसानादिति भावः । इति गायत्र्युपासना तत्परत्वेन्तं दर्शितम् ॥ २७—२८ ॥

अनादिरविद्या या तया मायया विष्णोरेव सकाशाद्विनिर्गतोऽयं सूर्यः ॥ २९ ॥

अतस्तदनन्यत्वन्यायेन हरिरेव सूर्यः हरेर्विशेषणं"लोकानामेक एवात्मा"इत्यादि अत एव सूर्योऽपि तेषामात्मादिरित्यर्थः ॥ ३०—५० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यदंशस्येदमुपासनमुक्तं तं श्रीकृष्णं स्वेष्टदेवं परिचाययन् प्रार्थयते-श्रीकृष्णेति । कृष्णस्यार्जुनस्य सखे इति पाण्डवेषु स्नेहः स्ववशीकारकः वृष्ण्यृषभेति यादवेषु तत्र किं द्योतकमित्यत आह-अवनिध्रुहो ये राजन्यास्तेषां वंशस्य दहन ! यद्वा, त एव वंशास्तत्परस्परसंमर्दोत्थवह्ने ! केन पाण्डवानां यादवानां च वैरिणः संहृत्य तेषां पालक इति अनपवर्गमक्षीणं वीर्यं पराक्रमो यस्मादिति पाण्डवान् यादवांश्च यो भगवान् सर्वजयिनश्चकारेति भावः । गोविन्देति व्रजस्थलोकेषु ततोऽप्यतिस्नेहः स्वातिवशीकारकः तत्र किं द्योतकमित्यत आह—गोपवनितानां व्रजस्य समूहस्य यो भृत्यः "आसामहो चरणरेणुजुषामहं स्याम्"इत्युक्त्या भीष्मितभृत्यभाव उद्धवस्तेन गीतं "ता नमस्यामिदं जगो" इति श्रीशुकोक्तेर्यद्गीतं तीर्थं जगत्पावनं श्रवो यशस्तदेव श्रवणमङ्गलं कर्णसुखप्रदं यस्य हे तथाभूत ! ॥ २५ ॥

य इदं महापुरुषलक्षणं ब्रह्मतत्त्वस्वरूपं श्रद्धया वेद स गुहाशयं परमात्मानमपि वेदेत्यन्वयः ॥ २६ ॥

हन्तानेन शुकपरीक्षित्संवादमयम् श्रीभागवतशास्त्रमस्मभ्यं कथितं तदनन्तरमस्मत्पूर्वपुरुषस्य मार्कण्डेयस्य चरितं तदनुष्ठितभगवत्पूजनतत्त्वं चास्मत्प्रश्नानुरोधादुक्तम् इदानीं यस्य श्रीभागवतस्य (त) यच्छ्रवणस्य स्वयं भगवतश्च दृष्टान्तश्रीसूर्यः "कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह । कलौ नष्टदृशामेष पुराणार्कोऽधुनोदितः" इत्येतदुक्त्वा "कृष्णाङ्घ्रिमाश्रित्य" इत्युद्धवोक्त्या चावगतं तं द्वादशात्मकम् सकलग्रहराजमधुना द्वादशस्कन्धात्मकपुराणराजममासिसमभे प्रश्नात्तज्ज्ञातुमहमर्हामीति मनसि परामृश्याह-शुक इति । पञ्चमे यथा "तथा अन्ये च ऋषयो गन्धर्वाप्सरसो नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः सप्त" इत्यादिना सौरः सूर्यसम्बन्धी ॥ २७ ॥

सर्वाश्वरैः सर्वाश्वरेण परमेश्वरेणेत्यर्थः । नन्वलं सूर्यनिर्णयेन प्रश्नेन तत्राह—सूर्यात्मनः सूर्यस्वरूपस्य हरेः व्यूहं ब्रूहि ॥ २८ ॥

सच्चिदानन्दस्वरूपस्य स्वयम् भगवतः कृष्णस्य श्रीभागवतस्य च दृष्टान्तीभूतोऽयं सूर्यः प्राकृतो भवितुं नार्हतीति मत्वा इत्याह-अनाद्यविद्ययेति । सर्वदेहिनामात्मनो विष्णोः

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

देवायं निर्मितः विष्णुनैवायं सतेजोमूर्तिः सूर्यो ऽनाद्यविद्यया मायया निर्मितः लोकतन्त्रः लोकयात्राप्रवर्तकः ॥२९॥

एक एव लोकानामात्मा हरिः सूर्यो बहुधा द्वादशधा उक्तः ॥ ३० ॥

न केवलं सूर्यरूपेण बहुधा कर्मप्रवर्त्तनार्थं कालादिरूपेणापि बहुधेत्याह—काल इति । कालः प्रातरादिः देशः वेदिकादिः क्रिया अनुष्ठानं कर्त्ता ब्राह्मणादिः करणं स्रुगादि कार्यं यागादि आगमः मन्त्रादिः द्रव्यं व्रीह्यादि फलं स्वर्गादि ॥ ३१ ॥

कालरूपधारी भगवानेव सूर्यरूपः सन् लोकतन्त्राय लोकयात्रानिर्वाहणाय ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवंविधः कः इत्याकाङ्क्षायां तं प्रतिपादयन् तमेव स्वानन्यभक्तरक्षणे प्रार्थयते—श्रीकृष्ण इति । हे श्रीकृष्ण । श्रीयुक्तसदानन्द । हे कृष्णसख ! अर्जुनसखे हे वृष्णयृषभ ! हे अवनिध्रुग्राजन्यवंशदहन ! अवनिद्रुहो ये राजन्यास्तद्वंशानिगाशक ! हे अनपवर्गवीर्यं नित्यवीर्य, गां वेदलक्षणां वाणीं विन्दयते इति गोविन्दः तस्य सम्बोधने हे गोविन्द ! गोपवनितावजभृत्यगीततीर्थश्रवः गोपवनितानां व्रजैः समूहैः भृत्यैः श्रीनारदादिभिश्च गीतं तीर्थभूतं श्रवः कीर्त्तिर्यस्य हे श्रवणमङ्गल ! श्रवणमेव मङ्गलं यस्य स तथाभूत ! भृत्यान् पाहि नः ॥ २५ ॥

महापुरुषस्य वैराजस्य इदं लक्षणमङ्गोपाङ्गादिरूपम् कल्ये उषःकाले उत्थाय अथवा गुहाशयम् सर्वान्तरात्मानं ब्रह्म वृहत्स्वरूपगुणादिकं भगवन्तम् परवासुदेवं विश्वकारणं द्विजऋषभेति श्लोकद्वयोक्तं वेद ॥ २६ ॥

पञ्चमस्कन्धे श्रीशुकेन संक्षेपत उक्तं सूतमुखाच्छ्रुतमपि मूर्त्तिव्यूहप्रसङ्गेन सूर्यव्यूहं विस्तरतो बुभुत्सुः पृच्छति—शुक इति द्वाभ्याम् । पञ्चमस्कन्धे "तथा अन्ये च ऋषयो गन्धर्वाप्सरसो नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः सप्त" इत्यादिना शुको यत् यमाह स सौरः सूर्यसम्बन्धी गणः सप्तकः सूर्यादिसप्तानां समूहः मासिमासि नाना पृथक् वसति ॥ २७ ॥

तेषामधीश्वरैरनुवृत्तगणमुख्यैः सूर्यैः सम्यक् युक्तानां स्वे स्वे कर्मणि योजितानां नामानि कर्माणि च ब्रूहि सूर्यात्मनः सूर्यावतांशात्मना स्थितस्य व्यूहं विभागं च ब्रूहि ॥ २८ ॥

तत्र व्यूहमेव सूर्यस्वरूपनिरूपणपूर्वकमाह—अनादीत्यादिना । सर्वदेहिनामात्मनो विष्णोरेवायमंशभूतः सूर्यः, ननु अंशभूतस्य क्षेत्रमात्रस्य कथं लोकप्रकाशकत्वम ? तत्राह-अनाद्यविद्ययं अनादिकर्मप्रवाहरूपया "अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते" इति श्रुतिप्रसिद्धया निर्मितः अतः लोकतन्त्रो लोकयात्रानिर्वाहकः सन् लोकेषु परिवर्तते लोकान्प्रकाशयतीत्यर्थः ॥ २९ ॥

आदिकृत् विश्वकर्ता लोकानां चेतनाचेतनानामात्मा हरिरेवैकोऽशात्मना सूर्यः स च सर्ववैदक्रियाणां प्रातरादिकालद्वारा मूलं मूलभूतः ऋषिभिर्बहुधा द्वादशधोदितः कथितः ॥ ३० ॥

न चैकः सूर्यः एव बहुधात्मकः सर्वकालादिकं बहुधात्मकमेवेत्याह—काल इति । अजया इत्युपलक्षणं चेतनाचेतनभूतानां शक्तीनां चेतनाचेतनभूताभिः शक्तिभिः कालादिरूपो नवधा हरिरेवोक्तः तत्र कालः प्रातरादिः देशः समादिः "समे यजेत" इति वचनात् क्रिया अनुष्ठानम् कर्ता ब्राह्मणादिः कारणं स्रुगादि कार्यं यागादि आगमः मन्त्रादिः द्रव्यं व्रीह्यादि फलं स्वर्गादि ॥ ३१ ॥

विवक्षितमाह—मध्वादिष्विति । कालं प्रातरादिकरूपवतीति कालरूपो सूर्यस्तत्र भृण्णोति प्रगल्भते इति कालरूपधृक् भगवान् सूर्यात्मा हरिः मध्वादिषु चैत्रादिद्वादशसु मासेषु स्वात्मकैः द्वादशभिर्गणैः पृथक् पृथक् लोकतन्त्राय लोकयात्रानिर्वाहाय चरति ॥ ३२ ॥

---

भाषा टीका ।

हे श्रीकृष्ण ! हे अर्जुन के सखा ! हे यदूत्तम ! हे पृथिवी के द्रोही हुए राजाओं के वंश की आग ! हे अमित वीर्य वाले ! हे गोविन्द ! हे गोप वनिता और व्रज के दासोंसे गान होने लायक पवित्र कीर्ति वारे ! हे श्रवण में मंगल रूप ! आप हम सब भृत्यों की रक्षा करो ॥ २५ ॥

जो पुरुष प्रातः काल में उठ कर परम पुरुष में चित्त लगा कर इन महा पुरुष के लक्षणों को पवित्र होकर जपे वह अन्तर्यामि ब्रह्म के स्वरूप का ज्ञान वाला होवे ॥ २६ ॥

शौनक उवाच ।

शौनक ऋषि बोले, कि—हे सूत जी ! भगवान् श्रीशुकाचार्य ने सुनते हुए विष्णु रात राजा परीक्षित् के लिये, मास मास में सूर्य के समीप रहने वाले ऋषि गन्धर्व अप्सरा, नाग, यक्ष, राक्षस, देवता, इन सातों का समुदाय कहा है ॥ २७ ॥

तिनके नाम और कर्म अधीश्वर श्रीसूर्य के संयुक्तों के कहो ! क्योंकि ? सूर्यात्मक श्रीहरि के व्यूह श्रवण करने में हम लोगों की बड़ी श्रद्धा है ॥ २८ ॥

सूत उवाच ।

सूत जी बोले, कि—श्रीविष्णु की अनादि माया से निर्मित होकर सब देह धारियों के लोक यात्रा के निर्वाह के लिये ये यह सातों का समुदाय लोकों में परि वर्त्तन होता है ॥ २९ ॥

सूर्यात्मक श्रीहरि सर्व लोकों के एक ही आत्मा हैं सर्व वेद क्रियाओं के मूल हैं, और ऋषियों ने बहु प्रकार गाये हैं ॥ ३० ॥

काल देश क्रिया कर्त्ता करण कार्य आगम द्रव्य और फल में श्रीहरि के माया कृत नव भेद हैं ३१ ॥

काल रूप धारण करने वाले भगवान् सूर्यात्मक श्रीहरि इस लोक तन्त्र के चलाने को चैत्र से आदि लेकर द्वादश मासों में पृथक् २ द्वादश गणों में विचरते हैं ॥ ३२ ॥

---

धाता कृतस्थली हेतिर्वासुकी रथकृन्मुने ! ।
पुलस्त्यस्तुम्बुरुरिति मधुमासं नयन्त्यमी ॥ ३३ ॥
अर्यमा पुलहोऽथौजाः प्रहेतिः पुञ्जिकस्थली ।
नारदः कच्छनीरश्च नयन्त्येते स्म माधवम् ॥ ३४ ॥
मित्रोऽत्रिः पौरुषेयोऽथ तक्षको मेनका हहाः ।
रथस्वन इति ह्येते शुक्रमासं नयन्त्यमी ॥ ३५ ॥
वसिष्ठो वरुणो रम्भा सहजन्यस्तथा हुहूः ।
शुक्रश्चित्रस्वनश्चैव शुचिमासं नयन्त्यमी ॥ ३६ ॥
इन्द्रो विश्वावसुः श्रोता एलापत्रस्तथाऽङ्गिराः ।
प्रम्लोचा राक्षसो [१] वर्यो नभोमासं नयन्त्यमी ॥ ३७ ॥
विवस्वानुग्रसेनश्च व्याघ्र आसारणो भृगुः ।
अनुम्लोचा शङ्खपालो नभस्याख्यं नयन्त्यमी ॥ ३८ ॥
पूषा धनञ्जयो वातः सुषेणः सुरुचिस्तथा ।
घृताची गौतमश्चेति तपोमासं नयन्त्यमी ॥ ३९ ॥
क्रतुर्वर्चा भरद्वाजः पर्जन्यः सेनजित्तथा ।
विश्व ऐरावतश्चैव तपस्याख्यं नयन्त्यमी ॥ ४० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

मासेषु गणानाह-धातेति द्वादशभिः । धाता सूर्यः कृतस्थली अप्सराः हेती राक्षसः वासुकिर्नागः रथकृद्यक्षः पुलस्त्य ऋषिः तुम्बुरुर्गन्धर्वः मधुमासं चैत्रं नयन्त्यनुवर्तयन्ति ॥ ३३ ॥

अथौजा यक्षः प्रहेती राक्षसः नारदो गन्धर्वः कच्छनीरो नागः माधवं वैशाखम् ॥ ३४ ॥

मित्रः सूर्यः पौरुषेयो राक्षसः रथस्वनो यक्षः शुक्रमासं ज्येष्ठम् ॥ ३५ ॥

वरुणः सूर्यः सहजन्यो यक्षः शुक्रो नाम नागः चित्रस्वनो राक्षसः शुचिमासमाषाढम् ॥ ३६ ॥

इन्द्रः सूर्यः विश्वावसुर्गन्धर्वः श्रोता यक्षः एलापत्रो नागः वर्यो राक्षस इति स्वयमेव व्याचष्टे नभो मासम् श्रावणम् ॥ ३७ ॥

विवस्वान् सूर्यः उग्रसेनो गन्धर्वः व्याघ्रो राक्षसः आसारणो यक्षः शङ्खपालो नागः नभस्याख्यं भाद्रपदम् ॥ ३८ ॥

धनञ्जयो नागः वातो राक्षसः सुषेणो गन्धर्वः सुरुचिर्यक्षः तपोमासं माघं मासक्रमातिलङ्घनं कौर्मोक्तादित्यानुक्रमानुसारेण चैत्रादौ तु मासक्रमेणोक्तिः कल्पभेदेनेति ज्ञेयम् ॥ ३९ ॥

क्रतुर्यक्षः वर्चा राक्षसः पर्जन्यः सूर्यः सेनजिदप्सराः विश्वो गन्धर्वः ऐरावतो नागः तपस्याख्यं फाल्गुनम् ॥ ४० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

धाता आदित्यः कृतस्थली अप्सरा हेती राक्षसः वासुकिः भुजङ्गः रथकृत् यक्षः पुलस्त्यः ऋषिः तुम्बरुः गन्धर्वः ॥ ३३ ॥

अथौजा यक्षः प्रहेती राक्षसः नारद ऋषिर्गानकृत् कच्छनीरो नागः ॥ ३४ ॥

अत्रिः ऋषिः पौरुषेयो राक्षसः तक्षको नागः हाहा गन्धर्वः रथस्वनो यक्षः ॥ ३५ ॥

वरुण आदित्यः सहजन्यशुक्रौ यक्षराक्षसौ चित्रस्वनः गन्धर्वः ॥ ३६ ॥

इन्द्र आदित्यः विश्वावसुर्गन्धर्वः श्रोता यक्षः एलापत्रः नागः ॥ ३७ ॥

उग्रसेनव्याघ्रौ यक्षराक्षसौ ३८ ॥

पूषा सूर्यः धनञ्जयो नागः सुषेणो यक्षः सुरुचिर्गन्धर्वः वातो राक्षसः ॥ ३९ ॥

वर्चा आदित्यः पर्जन्यो गन्धर्वः सेनजिद्राक्षसः ऐरावतो नागः ॥ ४० ॥

---

( १ ) स्वयं इति विज० पा० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

के पुनस्ते प्रतिगणं सप्तगणिन इत्यत्राह—धात्रेत्यादिना, धाता आदित्यः कृतस्थली अप्सराः हेती राक्षसः वासुकिः भुजङ्गः रथकृद्यक्षः हे मुने, शौनक ! पुलस्त्य ऋषिः तुम्बुरुर्गन्धर्वः इत्येवं सप्त मधुमासं चैत्रमासं नयन्ति स्वस्वकर्मभिः सूर्यं गमयन्तीत्यर्थः । मधुमासमित्यत्यन्तसंयोगे द्वितीया एवमग्रेपि ज्ञेयम् ॥ ३३ ॥

अर्यमेति । अर्यमा सूर्यः पुलहः ऋषिः रथौजाः यक्षः प्रहेतिः राक्षसः पुञ्जिकस्थली अप्सराः नारदो यक्षः [गन्धर्वः] कच्छनीरो नागः एते माधवम् वैशाखमासम् ॥ ३४ ॥

मित्रः सूर्यः अत्रिः ऋषिः पौरुषेयो राक्षसः तक्षको नागः मेनका अप्सराः हाहाः गन्धर्वः रथस्वनो यक्षः शुक्रमासं ज्येष्ठमासम् ॥ ३५ ॥

वसिष्ठः ऋषिः वरुणः सूर्यः रम्भा अप्सराः सहजन्यो यक्षः हूहूर्गन्धर्वः शुक्रो नागः चित्रस्वनो राक्षसः शुचिमासम् आषाढमासम् ॥ ३६ ॥

इन्द्रः सूर्यः विश्वावसुर्गन्धर्वः श्रोता यक्षः एला[प]पुत्रो नागः अङ्गिरा ऋषिः प्रम्लोचा अप्सराः वर्यो राक्षसः नभोमासम् श्रावणमासम् ॥ ३७ ॥

विवस्वान् सूर्यः उग्रसेनो गन्धर्वः व्याघ्रो राक्षसः आसारणो यक्षः भृगुः ऋषिः अनुम्लोचा अप्सराः शङ्खपालो नागः नभस्याख्यम् भाद्रपदं मासम् ॥ ३८ ॥

पूषा सूर्यः धनञ्जयो नागः वातो राक्षसः सुषेणो गन्धर्वः सुरुचिर्यक्षः घृताची अप्सराः गौतम ऋषिः तपोमासं माघमासं मासक्रमाविवक्षणं तु कूर्मोक्तादित्यक्रमानुसारेण । यद्वा, मासक्रमो न विवक्षितः यथा गणानाम् अथवाऽर्थक्रमानुरोधेन पूषेत्यादिश्लोकद्वयं तदनन्तरश्लोकद्वयात्परतो योज्यं त्वष्टेत्यादिश्लोकद्वयं तु तत्पूर्वश्लोकद्वयात्पूर्वं योज्यम् ॥ ३९ ॥

ऋतुवर्चा राक्षसः भरद्वाजः ऋषिः पर्जन्यः सूर्यः सेनजित् अप्सराः विश्वो गन्धर्वः ऐरावतो नागः तपस्याख्यं फाल्गुनं मासम् ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इदानीं तेषां नामान्याह—धातेत्यादिना । धाता सूर्यः कृतस्थली अप्सराः हेतीराक्षसः वासुकिर्नागः रथकृत्तथा पुलस्त्यः ऋषिः तुम्बुरुर्गन्धर्वः अमी धात्रादयो मधुमासं नयन्ति ते उक्तक्रियाप्रवर्तकत्वेन तन्मासमतिपारयन्ति ॥ ३३ ॥

अर्यमा सूर्यः पुलहः ऋषिः अथौजाः तथा प्रहेतीराक्षसः पुञ्जिकस्थली अप्सराः नारदो गन्धर्वः कच्छनीरो नागः एते माधवमासाधिपतिं माधवनामानं नयन्ति शरणं प्राप्योपासते एवमुत्तरत्राप्यनुसन्धेयम् ॥ ३४ ॥

मित्रः सूर्यः अत्रिः ऋषिः पौरुषेयो राक्षसः तक्षको नागः मेनका अप्सराः हाहा गन्धर्वः रथस्वनस्तथा ॥ ३५ ॥

वसिष्ठ ऋषिः वरुणः सूर्यः रम्भा अप्सराः सहजन्यो राक्षसः हूहूर्गन्धर्वः शुक्रो नागः चित्रस्वनस्तथा ॥ ३६ ॥

इन्द्रः सूर्यः विश्वावसुर्गन्धर्वः श्रोता तथा एलापत्रो नागः अङ्गिरा ऋषिः प्रम्लोचा अप्सराः वर्यो नाम राक्षसः ॥ ३७ ॥

विवस्वानादित्यः उग्रसेनो गन्धर्वः व्याघ्रो राक्षसः आसारणस्तथा भृगुर्ऋषिः अनुम्लोचा अप्सराः शङ्खपालो नागः ॥ ३८ ॥

पूषा आदित्यः धनञ्जयो नागः वातो राक्षसः सुषेणस्तथा सुरुचिर्गन्धर्वः घृताच्यप्सराः गौतम ऋषिः ॥ ३९ ॥

ऋतुरप्सराः वर्चा गन्धर्वः भरद्वाज ऋषिः पर्जन्य आदित्यः सेनजित्तथा विश्वो राक्षसः ऐरावतो नागः ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सौरो गणो मासि मासीति यत् पृष्टं तत्र प्रथमं चैत्रमासस्य सप्तकमाह—धाता सूर्यः कृतस्थली अप्सराः हेतिः राक्षसः वासुकिर्नागः रथकृत् यक्षः पुलस्त्यः ऋषिः तुम्बुरुर्गन्धर्वः ॥ ३३ ॥

अर्यमा सूर्यः पुलह ऋषिः अथौजा यक्षः प्रहेती राक्षसः पुञ्जिकस्थली अप्सराः नारदो गन्धर्वः कच्छनीरो नागः माधवं वैशाखम् ॥ ३४ ॥

मित्रः सूर्यः अत्रिर्मुनिः पौरुषेयो राक्षसः तक्षको नागः मेनका अप्सरा हाहा गन्धर्वः रथस्वनो यक्षः शुक्रमासं ज्येष्ठम् ॥ ३५ ॥

वसिष्ठो मुनिः वरुणः सूर्यः रम्भा अप्सराः सहजन्या राक्षसः हूहूर्गन्धर्वः शुक्रो नागः चित्रस्वनो यक्षः शुचिमासं आषाढम् ॥ ३६ ॥

इन्द्रः सूर्यः विश्वावसुर्गन्धर्वः श्रोता यक्षः एलापत्रो नागः अङ्गिरा मुनिः प्रम्लोचा अप्सराः वर्यो राक्षस इति अयमेव व्याख्यातं नभोमासं श्रावणम् ॥ ३७ ॥

विवस्वान् सूर्यः उग्रसेनो गन्धर्वः व्याघ्रो राक्षसः आसारणो यक्षः भृगुर्मुनिः अनुम्लोचा अप्सराः शङ्खपालो नागः नभस्याख्यं भाद्रपदम् ॥ ३८ ॥

पूषा सूर्यः धनञ्जयो नागः वातो राक्षसः सुषेणो गन्धर्वः सुरुचिर्यक्षः घृताची अप्सराः गौतमो मुनिः तपोमासं माघम् ॥ ३९ ॥

ऋतुर्वसुः वर्चा राक्षसः भरद्वाजो मुनिः पर्जन्यः सूर्यः सेनजित् अप्सराः विश्वो गन्धर्वः ऐरावतो नागः तपस्याख्यं फाल्गुनम् ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तानेव गणान् तेषु मासेषु विभज्य दर्शयन् तेषां नामानि बृहीत्यस्योत्तरमाह—धातेति द्वादशभिः । हे मुने ! अमी मधुमासं चैत्रमासं नयन्ति वर्तयन्ति तत्र धाता सूर्यः कृतस्थली अप्सराः हेती राक्षसः वासुकिः नागः रथकृत् यक्षः पुलस्त्य ऋषिः तुम्बुरुः गन्धर्वः ॥ ३३ ॥

एते अर्यमादयः माधवं वैशाखं नयन्ति तत्र अर्यमा सूर्यः पुलहः ऋषिः अथौजाः यक्षः प्रहेतिः राक्षसः पुञ्जिकस्थली अप्सराः नारदो गन्धर्वः कच्छनीरो नागः ॥ ३४ ॥

अमी शुक्रमासं ज्येष्ठमासं नयन्तीत्यादिके अत आह—मित्रः सूर्यः अत्रिः ऋषिः पौरुषेयो राक्षसः तक्षको नागः मेनका अप्सराः हाहा गन्धर्वः रथस्वनो यक्षः इत्येते ॥ ३५ ॥

अथांशुः कश्यपस्तार्क्ष्य(१) ऋतसेनस्तथोर्वशी ।
विद्युच्छत्रुर्महाशङ्खः सहोमासं नयन्त्यमी ॥ ४१ ॥
भगः स्फूर्जोऽरिष्टनेमिरूर्णा आयुश्च पञ्चमः ।
कर्कोटकः पूर्वचित्तिः (२)पुष्यमासं नयन्त्यमी ॥ ४२ ॥
त्वष्टा ऋचीकतनयः ❋कम्बलश्च तिलोत्तमा ।
(३ब्रह्मापेतोऽथ शतजिद्धृतराष्ट्र इषम्भराः ॥ ४३ ॥
विष्णुरश्वतरो रम्भा(४) सूर्यवर्चाश्च सत्यजित् ।
विश्वामित्रो मखापेत ऊर्जमासं नयन्त्यमी ॥ ४४ ॥
एता भगवतो विष्णोरादित्यस्य विभूतयः ।
स्मरतां सन्ध्ययोर्नॄणां हरन्त्यंहो दिने दिने ॥ ४५ ॥
द्वादशस्वपि मासेषु देवोऽसौ षड्भिरस्य वै ।
चरन् समन्तात्तनुते परत्रेह च (५)सन्मतिम् ॥ ४६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अमी वसिष्ठादयः शुचिमासमाषाढम् नयन्ति वसिष्ठः ऋषिः वरुणः सूर्यः रम्भा अप्सराः सहजन्यो यक्षः हूहू गन्धर्वः शुक्रो नागः चित्रस्वनो राक्षसः ॥ ३६ ॥

अमी इन्द्रादयः नभोमासं श्रावणं नयन्ति इन्द्रः सूर्यः विश्वावसुः गन्धर्वः श्रोता यक्षः एलापत्रो नागः अङ्गिरा ऋषिः प्रम्लोचा अप्सराः वर्यो राक्षसः ॥ ३७ ॥

अमी विवस्वत्प्रभृतयः नभस्याख्यं भाद्रपदं नयन्ति विवस्वान् सूर्यः उग्रसेनो गन्धर्वः व्याघ्रो राक्षसः आसारणो यक्षः भृगुः ऋषिः अनुम्लोचाः अप्सराः शङ्खपालो नागः ॥ ३८ ॥

पूषा सूर्यः धनञ्जयो नागः वातो राक्षसः सुषेणो गन्धर्वः सुरुचिर्यक्षः घृताची अप्सराः गौतम ऋषिः तपोमासं माघमासं क्रमो वा विवक्षितः ॥ ३९ ॥

क्रतुर्यक्षः वर्चा राक्षसः भरद्वाजः ऋषि पर्जन्यः सूर्यः सेनजित् अप्सराः विश्वो गन्धर्वः ऐरावतो नागः तपस्याख्यं फाल्गुणम् ॥ ४० ॥

---

### भाषा टीका ।

तहां चैत्र मास का प्रकार कहते हैं, कि—चैत्रमास को धाता सूर्य, कृतस्थली अप्सरा, हेति राक्षस, वासुकि सर्प, रथकृत यक्ष, पुलस्त्य ऋषि, तुम्बरु गन्धर्व, ये सातों व्यतीत करते हैं अर्थात् चलाते हैं ॥ ३३ ॥

अर्यमा सूर्य, पुलह ऋषि, अथौजा यक्ष, प्रहेति राक्षस, पुंजिकस्थली अप्सरा, नारद गन्धर्व, कच्छनीर नाग, ये सब वैशाख मास को चलाते हैं ॥ ३४ ॥

मित्र सूर्य, अत्रि ऋषि, पौरुषेय राक्षस, तक्षक नाग, मेनका अप्सरा, हाहा गन्धर्व, रथस्वन यक्ष, इतने ज्येष्ठ मास को चलाते हैं ॥ ३५ ॥

वसिष्ठ ऋषि, वरुण सूर्य, रम्भा अप्सरा, सहजन्य यक्ष हूहू गन्धर्व, शुक्र नाग, चित्रस्वन राक्षस, ये सब आषाढ मास को चलाते हैं ॥ ३६ ॥

इन्द्र सूर्य, विश्वावसु गन्धर्व, श्रोता यक्ष, एलापत्र नाग अङ्गिरा ऋषि, प्रम्लोचा अप्सरा, वर्य राक्षस, इतने श्रावण मास को व्यतीत करते हैं ॥ ३७ ॥

विवस्वान् सूर्य, उग्रसेन गंधर्व, व्याघ्र राक्षस, आसारण यक्ष, भृगु ऋषि, अनुम्लोचा अप्सरा, शंखपाल नाग ये सब भाद्रपद मास को चलाते हैं ॥ ३८ ॥

पूषा सूर्य, धनंजय नाग, वात राक्षस, सुषेण गन्धर्व सुरुचि यक्ष, घृताची अप्सरा, गौतम ऋषि, ये सब माघ मास को चलाते हैं, यहां मास के कथन का व्यति क्रम है ॥ ३९ ॥

क्रतु यक्ष, वर्चा राक्षस, भरद्वाज ऋषि, पर्जन्य सूर्य, सेनजित् अप्सरा, विश्व गन्धर्व, ऐरावत नाग, ये सब फाल्गुन मास को चलाते हैं ॥ ४० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अंशुः सूर्यः अंश इति वा पाठः तार्क्ष्यो यक्षः ऋतसेनो गन्धर्वः विद्युच्छत्रू राक्षसः महाशङ्खो नागः सहोमासम् मार्गशीर्षम् ॥ ४१ ॥

---

१ धृतसेनः (२ सहस्याख्यम् (३ ब्रह्मरातः (४)सूर्यवर्चाश्चसत्यको इतीमे विज० पाठाः । ❋कम्बलाश्च इति/५ सद्गतिम् इति च वीर०पा

सामर्ग्यजुर्भिस्तल्लिङ्गैर्ऋषयः संस्तुवन्त्यमुम् ।
गन्धर्वास्तं प्रगायन्ति नृत्यन्त्यप्सरसोऽग्रतः ॥ ४७ ॥
उन्नह्यन्ति रथं नागा ग्रामण्यो रथयोजकाः ।
चोदयन्ति रथं पृष्ठे नैर्ऋता बलशालिनः ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

भगः सूर्यः स्फूर्जो राक्षसः अरिष्टनेमिर्गन्धर्वः ऊर्णो यक्षः आयुर्ऋषिः कर्कोटको नागः ॥ ४२ ॥

त्वष्टा सूर्यः ऋचीकतनयो जमदग्निः कम्बलो नागः ब्रह्मापेतो राक्षसः शतजिद्यक्षः धृतराष्ट्रो गन्धर्वः इषऽभरा आश्विनपालकाः ॥ ४३ ॥

विष्णुरादित्यः अश्वतरो नागः सूर्यवर्चा गन्धर्वः सत्यजिद्यक्षः मखापेतो राक्षसः ऊर्जमासं कार्तिकमासम् ॥ ४४ ॥

एते चादित्यादयः कौर्मे विभज्योक्ताः—

"धाताऽर्यमा च मित्रश्च वरुणश्चेन्द्र एव च ।
विवस्वानथ पूषा च पर्जन्यश्चांशुरेव च ॥
भगस्त्वष्टा च विष्णुश्च आदित्या द्वादश स्मृताः ।
पुलस्त्यः पुलहश्चात्रिर्वसिष्ठोऽथाङ्गिरा भृगुः ॥
गौतमोऽथ भरद्वाजः कश्यपः क्रतुरेव च ।
जमदग्निः कौशिकश्च मुनयो ब्रह्मवादिनः ॥
रथकृच्चारिष्टनेमिर्ग्रामणीश्च रथस्वनः ।
सुबाहुश्चमसः श्रोता वरुणः सेनजित्तथा ॥
तार्क्ष्यश्चारिष्टनेमिश्च शतजित्सत्यजित्तथा ।

एते यक्षाः—

अथ हेतिः प्रहेतिश्च पौरुषेयो वधस्तथा ।
सर्पो व्याघ्रस्तथाऽऽयुश्च वायुर्विद्युद्दिवाकरः ॥
ब्रह्मापेतश्च विप्रेन्द्र ! यज्ञापेतश्च राक्षसः ।
वासुकिः कच्छनीरश्च तक्षकः सर्पपुङ्गवः ॥
एलापत्रः शङ्खपालस्तथैरावतसंज्ञितः ।
धनञ्जयो महापद्मस्तथा कर्कोटको द्विजाः ॥
कम्बलोऽश्वतरश्चैव वहन्त्येनं यथाक्रमम् ।
तुम्बुरुर्नारदो हाहा हूहूर्विश्वावसुस्तथा ॥
उग्रसेनो वसुरुचिर्विश्वावसुरथापरः ।
चित्रसेनस्तथोर्णायुर्धृतराष्ट्रो द्विजोत्तमाः ॥
सूर्यवर्चा द्वादशैते गन्धर्वा गायतां वराः ।
कृतस्थलप्सरो वर्या तथाऽन्या पुञ्जिकस्थली ॥
मेनका सहजन्या च प्रम्लोचा च द्विजोत्तमाः ।
अनुम्लोचा घृताची च विश्वाची चोर्वशी तथा ॥
अन्या च पूर्वचित्तिः स्यादन्या चैव तिलोत्तमा ।
रम्भा चेति द्विजश्रेष्ठास्तथैवाप्सरसः स्मृताः" ॥

इति ॥ ४५ ॥

एतेषां पृथक्कर्माणि निरूपयति—द्वादशस्वपीति त्रिभिः । असौ देवः सूर्यः षड्भिर्गन्धर्वादिभिरस्य जनस्य समन्ताच्चरन् शुभां मतिं तनुत गायद्वर्योऽनेन सूचितः ॥ ४६ ॥

तालुङ्कैः सूर्यप्रकाशकैः । ४७ ॥

उन्नह्यन्ति दृढं बध्नन्ति ग्रामण्यो यक्षाः नैर्ऋता राक्षसाः ॥ ॥ ४८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तार्क्ष्यो यक्षः कृतसेनो गन्धर्वः ॥ ४१ ॥

स्फूर्जो राक्षसः अरिष्टनेमिः यक्षः ऊर्णो गन्धर्वः पूर्वचित्तिः देवस्त्री ॥ ४२ ॥

त्वष्टा आदित्यः कम्बलाख्यो नागः ब्रह्मापेतो राक्षसः शतजित् यक्षः धृतराष्ट्रो गन्धर्वः इषऽभराः इषमास-निर्वाहकाः ॥ ४३ ॥

विष्णुरादित्यः अश्वतरो नागः सत्यजित् यक्षः मखापेतो राक्षसः ॥ ४४—५० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अंशुमान् सूर्यः कश्यप ऋषिः तार्क्ष्यो यक्षः ऋतसेनो गन्धर्वः ऊर्वशी अप्सराः विद्युच्छत्रुः राक्षसः महाशङ्खो नागः सहोमास मार्गशीर्षम् नयन्ति ॥ ४१ ॥

भगः सूर्यः स्फूर्जो राक्षसः अरिष्टनेमिः गन्धर्वः ऊर्णो यक्षः आयुः ऋषिः कर्कोटको नागः पूर्वचित्तिः अप्सराः पुष्यमासं पौषमास नयन्ति ॥ ४२ ॥

त्वष्टा सूर्यः ऋचीकतनयः जमदग्निः ऋषिः कम्बलाख्यो नागः तिलोत्तमा अप्सराः ब्रह्मापेतो राक्षसः ऋतजिद्यक्षः धृतराष्ट्रो गन्धर्वः इषऽभराः एते आश्विनमासनिर्वाहकाः ॥ ४३ ॥

विष्णुरादित्यः अश्वतरो नागः रम्भा अप्सराः सूर्यवर्चा गन्धर्वः सत्यजित् यक्षः विश्वामित्रः ऋषिः मखापेतो राक्षसः ऊर्जमासं कार्तिकमासं नयन्ति ॥ ४४ ॥

अथ व्यूहसमूह[निरूपणा]मुपसंहरन् तत्स्मरणफलमाह—एता इति । हे विप्र ! आदित्यस्वरूपिणो भगवत एताः समाश्रयाः विभूतयः ताः सन्ध्ययोः स्मरतां नृणामंहः पापं हरन्ति ॥ ४५ ॥

अथैषां प्रथक्कर्माण्याह त्रिभिः—द्वादशस्वपीति । असावादित्यरूपो देवः द्वादशस्वपि मासेषु एभिरुक्तैः षड्भिः प्रतिगणमादित्येन विना षड्भवन्तीति षड्भिरित्युक्तम् । तेन सह सप्त भवन्तीति तदभिप्रायेण "मासावहति सप्तकः" इत्युक्तं पुरस्तात् । षड्', वालखिल्यगणेन सह सप्तत्वमिति तेन विनाऽत्र षड्भिरित्युक्तं प्रतिगणमादित्यकीर्तनं तु नामभेदविवक्षया प्राधान्यविवक्षया वा

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विप्रछ्यास्तरेषां स्वान्तरात्मभूतभगवदुपासकत्वविवक्षया मेति विभा वनीयं भमन्तात्परितश्चरन् अस्य जनस्य इह लोके परत्र च लोके मङ्गलानि शुभां गतिं तनुते सन्मतिमिति पाठे इहामुत्र श्रेयोविषयां मतिं तनुत इत्यर्थः ॥ ४६ ॥

सामभिः ऋग्भिः यजुर्भिश्च तल्लिङ्गैः सूर्यप्रकाशकैरमुं सूर्यमृषयः स्तुवन्ति ॥ ४७ ॥

नागाः रथमुन्नह्यन्ति दृढं बध्नन्ति ग्रामण्यो यक्षाः नैर्ऋताः राक्षसाः पृष्ठे पश्चाद्रथं चोदयन्ति गमयन्ति प्रेरयन्ति ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अंशुरादित्यः कश्यप ऋषिः तार्क्ष्यस्तथा ऋतसेनो गन्धर्वः उर्वशी अप्सराः विद्युच्छत्रुः राक्षसः महाशङ्खो नागः ॥ ४१ ॥

भगः आदित्यः स्फूर्जो राक्षसः अरिष्टनेमिर्ऋषिः ऊर्णो गन्धर्वः आयुस्तथा कर्कोटको नागः पूर्वचित्तिरप्सराः ॥ ४२ ॥

त्वष्टा आदित्यः ऋचीकतनयो राक्षसः कम्बलाख्यो नागः तिलोत्तमाऽप्सराः ब्रह्मरात ऋषिः शतजित्तथा धृतराष्ट्रो गन्धर्वः इषं बिभ्रतीति इषम्भराः इषमासप्रयोक्तार इत्यर्थः ॥ ४३ ॥

विष्णुरादित्यः अश्वतरो नागः रम्भाऽप्सराः सूर्यवर्चा गन्धर्वः अश्वो राक्षसः सत्यकस्तथा विश्वामित्र ऋषिः ॥ ४४ ॥

उपसंहरन्नेव तत्कथनप्रयोजनमाह-एता इति । आदित्यान्तर्यामिणो हरेः "ध्येयः सदा सवितृमण्डलमध्यवर्ती" इति वचनमत्रप्रमाणम् ॥ ४५ ॥

एतदभिप्रेत्य पुनरपि लोकद्वयोपभोग्यफलमाह—द्वादशेति । द्वादशसु मासेषु षड्भिर्गणैर्धात्रादिभिः षट्सङ्ख्याकैरुपगतैः सह समन्ताच्चरन् देवोऽस्य सेवकस्येह परत्र च सन्मतिं निर्दुःखत्वानन्दानुभवलक्षणां तनुते यथायोग्यं विस्तृत्य ददातीत्यर्थः ॥ ४६ ॥

इदानीं तेषां कर्माण्याह—सामेति । सामर्ग्यजुर्भिस्तल्लिङ्गैस्तत्तद्योग्यैस्तत्तद्गमकैर्वाक्यैर्वा उन्नह्यन्ति सम्यक्तन्नियोजयन्ति ग्रामण्यस्तथाद्याः नैर्ऋता राक्षसाः ॥ ४७ ॥ ४८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अंशुः सूर्यः अंश इति च पाठः कश्यपो मुनिःताक्ष्र्यो यक्षः ऋतसेनो गन्धर्वः उर्वशी अप्सराः विद्युच्छत्रू राक्षसः महाशङ्खो नागः सहोमासं मार्गशीर्षम् ॥ ४१ ॥

भगः सूर्यः स्फूर्जो राक्षसः अरिष्टनेमिर्गन्धर्वः ऊर्णो यक्षः आयुर्मुनिः कर्कोटको नागः पूर्वचित्तिरप्सराः पुष्यं पौषम् ॥ ४२ ॥

त्वष्टा सूर्यः ऋचीकतनयो जमदग्निर्मुनिः कम्बलाख्यो नागः तिलोत्तमा अप्सराः ब्रह्मापेतो राक्षसः शतजित् यक्षः धृतराष्ट्रो गन्धर्वः इषम्भराः एते आश्विनपालकाः ॥ ४३ ॥

विष्णुः सूर्यः अश्वतरो नागः रम्भा अप्सराः सूर्यवर्चा गन्धर्वः सत्यजित् यक्षः मखापेतो राक्षसः ऊर्जमासं कार्त्तिकम् ॥ ४४—४५ ॥

असौ देवः सूर्यः षड्भिर्गन्धर्वादिभिः स्वविभूतिभिः सह ॥ ४६ ॥

एतेषां पृथक्कर्माणि निरूपयति—सामेति । तल्लिङ्गैः सूर्यप्रकाशकैः ॥ ४७ ॥

उन्नह्यन्ति दृढं बध्नन्ति ग्रामण्यो यक्षाः रथं योजयन्ति चोदयन्ति बलेन नोदनैश्चालयन्ति नैर्ऋताः राक्षसाः ॥ ४८—४९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अंशः सूर्यः कश्यप ऋषिः तार्क्ष्यो यक्षः ऋतसेनो गन्धर्वः उर्वशी अप्सराः विद्युच्छत्रुः राक्षसः महाशङ्खो नागः सहोमासं मार्गशीर्षम् ॥ ४१ ॥

भगः सूर्यः स्फूर्जो राक्षसः अरिष्टनेमिः गन्धर्वः ऊर्णो यक्षः आयुः ऋषिः कर्कोटको नागः पूर्वचित्तिरप्सराः पुष्यमासं पौषमासम् ॥ ४२ ॥

त्वष्टा सूर्यः ऋचीकतनयो जमदग्निः ऋषिः कम्बलाश्वो नागः तिलोत्तमा अप्सराः ब्रह्मापेतो राक्षसः शतजित् यक्षः धृतराष्ट्रो गन्धर्वः इषम्भराः आश्विनपालकाः ॥ ४३ ॥

विष्णुः सूर्यः अश्वतरो नागः रम्भा अप्सराः सूर्यवर्चाः गन्धर्वः सत्यजित् यक्षः विश्वामित्रः ऋषिः मखापेतो राक्षसः ऊर्जमासं कार्त्तिकमासम् ॥ ४४ ॥

सूर्यव्यूहस्मरणफलं दर्शयति—एता इति । विष्णोः आदित्यस्य आदित्याख्यस्य सूर्यान्तरात्मन इति फलितोऽर्थः ॥ ४५ ॥

कर्माणि ब्रूहीत्यस्योत्तरमाह—द्वादशस्विति त्रिभिः । असौ विष्णुः षड्भिः ऋष्यादिभिः सह द्वादशसु मासेषु पृथक् पृथक् धात्रादिसूर्यात्मना चरन् अस्य जनस्य इह परत्र च विषये सन्मतिं तनुते ॥ ४६ ॥

अमुं सूर्यरूपं विष्णुम् ॥ ४७ ॥

नागा वासुकयादयः रथमुन्नह्यन्ति दृढं बध्नन्ति ग्रामण्यो यक्षाः नैर्ऋता राक्षसाः ॥ ४८ ॥

---

भाषाटीका ।

अंशु सूर्य, कश्यप ऋषि, तार्क्ष्य यक्ष, ऋतसेन गन्धर्व, उर्वशी अप्सरा, विद्युतशत्रु राक्षस, महाशंख नाग, ये सब मार्गशीर्ष मास को चलाते हैं ॥ ४१ ॥

भग सूर्य, स्फूर्ज राक्षस, अरिष्टनेमि गंधर्व, ऊर्ण यक्ष, आयु ऋषि, कर्कोटक नाग, पूर्वचित्ति अप्सरा, ये सब पूष मास को चलाते हैं ॥ ४२ ॥

त्वष्टा सूर्य, जमदग्नि ऋषि, कंबलाश्व नाग, तिलोत्तमा अप्सरा, ब्रह्मापेत राक्षस, शतजित यक्ष, धृतराष्ट्र गन्धर्व, ये सब आश्विन मास के निर्वाहक हैं ॥ ४३ ॥

विष्णु सूर्य, अश्वतर नाग, रंभा अप्सरा, सूर्यवर्चा गन्धर्व, सत्यजित यक्ष, विश्वामित्र ऋषि, मखापेत राक्षस, ये सब कार्त्तिक मास को चलाते हैं ॥ ४४ ॥

ये सब आदित्यान्तर्यामी श्रीविष्णु भगवान् की विभूति हैं, ये सब दोनों संध्याओं में स्मरण करने वाले मनुष्यों के रात दिन के पापों का हरण करदेते हैं ॥ ४५ ॥

वालखिल्याः सहस्राणि षष्टिर्ब्रह्मर्षयोऽमलाः ।
पुरतोऽभिमुखं यान्ति स्तुवन्ति स्तुतिभिर्विभुम् ॥ ४९ ॥
एवं ह्यनादिनिधनो भगवान् हरिरीश्वरः ।
कल्पे कल्पे स्वमात्मानं व्यूह्य [1]लोकानवत्यजः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां द्वादशस्कन्धे आदित्यव्यूहविवरणं नाम एकादशोऽध्यायः ॥ ११ ॥

भाषा टीका ।

बारहों महीनाओं के विषे ये श्री सूर्य देव आपसे व्यतिरिक्त गन्धर्वादिकों के साथ चारों तरफ विचरते हुए, परलोक और इस लोक में सुन्दर मति का विस्तार करते हैं ॥४६॥

अब साथ में जाने वाले ऋषि प्रभृतियों का कार्य कहते हैं, कि—ऋषि लोग साम ऋग और यजुः के जो ये देव के प्रकाशक अर्थात् प्रति पादक मंत्र हैं, तिनसे श्रीसूर्य देवकी स्तुति करते हैं। गन्धर्व लोग गान करते हैं, अप्सरा आगे में नृत्य करा करती हैं ॥ ४७ ॥

नाग लोग रथ को बांधते हैं, यक्ष लोग रथ को जोड़ते हैं, और बलशाली राक्षस लोग पिछले भाग से रथ को चलाते हैं ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च, वालखिल्या इति एवं प्रतिमासं त एव स्तुवन्ति विभुं सूर्यम् ॥ ४९ ॥

व्यूह्य विभज्य ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीधरस्वामिकृतभावार्थदीपिकायाम् एकादशोऽध्यायः ॥ ११ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने द्वादशस्कन्धीये श्रीसुदर्शनसूरिकृतशुकपक्षीये एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वालखिल्या इति । पुरतोऽभिमुखं सूर्यमावृत्य स्थिरत्वेन सह यान्ति गच्छन्ति सूर्यं स्तुवन्ति स्तुतिं कुर्वन्ति चेत्यर्थः ॥ ४९ ॥

उपसंहरति—एवमिति । अनादिनिधन आद्यन्तरहितः नित्यो यो भगवानित्थं प्रतिकल्पं स्वमात्मानं प्रकृतिपुरुषशरीरकं स्वमात्मानं व्यूह्यैकादशगणरूपेण विभज्य लोकानवति स्वे स्वे कर्मणि प्रवर्तयति ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवं मासान्तरेष्वपि सन्तीत्याह—वालखिल्या इति ॥४९॥

अध्यायार्थमुपसंहरति—एवमिति । अवति प्रवर्तयति ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

व्यूह्य विभज्य ॥ ५० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशो द्वादशेऽत्र सङ्गतः सङ्गतः सताम् ॥ ११ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विभुं सूर्यरूपं विष्णुम् ॥ ४९ ॥

उपसंहरति—एवमिति । स्वमात्मानं चिदचिच्छक्तिमन्तं विभज्य चिच्छक्तिः क्षेत्रज्ञा आधिदैविकशरीराभिमानी अचि-

(१) लोकांस्तपत्यज इति विज० पा० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

व्यक्तिः एवं धात्रादिशरीरं स्वं तयोर्नियन्ता एवम् स्थूल विभज्य भगवान् श्रीविष्णुर्लोकानवति ॥ ४९ ॥

धात्रादिगतक्षेत्रज्ञानाम् "स एष आदित्ये हिरण्मयः पुरुषो दृश्यते" इत्यादिश्रुत्युक्तसाक्षाद्धिरण्मयपुरुषभूतत्वात् कृतपुण्य पुञ्जत्वं सर्वपूज्यत्वादिकमस्त्येव ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकादशाध्यायार्थप्रकाशः ॥ ११ ॥

भाषा टीका ।

अमल ब्रह्मर्षि साठ हजार बालखिल्य ऋषि, अग्र भाग में सम्मुख हाथ जोड़कर स्तुतियों से विभु श्रीसूर्य नारायण का स्तवन करते हैं॥ ४९ ॥

इस प्रकार अनादि निधन भगवान् ईश्वर श्रीहरि कल्प २ में अपने आत्मा का विभाग करके लोकों का पालन करते हैं ॥ ५० ॥

इति श्रीमद्भागवत द्वादशस्कन्ध में ग्यारहवें अध्याय की
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्त ॥ ११ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे एकादशोऽध्यायः ॥ ११ ॥



## द्वादशोऽध्यायः ।

—:o:—

सूत उवाच ।

नमो धर्माय महते नमः कृष्णाय वेधसे ।
ब्रह्मणेभ्यो नमस्कृत्य धर्मान् वक्ष्ये सनातनान् ॥ १ ॥
एतद्वः कथितं विप्रा विष्णोश्चरितमद्भुतम् ।
भवद्भिर्यदहं पृष्टो नराणां पुरुषोचितम् ॥ २ ॥
अत्र सङ्कीर्तितः साक्षात् सर्वपापहरो हरिः ।
नारायणो हृषीकेशो भगवान् सात्वतां पतिः ॥ ३ ॥
(१)अत्र ब्रह्म परं गुह्यं जगतः प्रभवाप्ययम् ।
ज्ञानं च (२)तदुपाख्यानं प्रोक्तं विज्ञानसंयुतम् ॥ ४ ॥
भक्तियोगः समाख्यातो वैराग्यं च तदाश्रयम् ।
पारीक्षितमुपाख्यानं नारदाख्यानमेव च ॥ ५ ॥
प्रायोपवेशो राजर्षेर्विप्रशापात्परीक्षितः ।
शुकस्यैव च (३)ब्रह्मर्षेः सम्वादश्च परीक्षितः ॥ ६ ॥
योगधारणयोत्क्रान्तिः सम्वादो नारदाजयोः ।
अवतारानुगीतं च सर्गः प्राधानिकोऽग्रतः ॥ ७ ॥
विदुरोद्धवसम्वादः क्षत्तृमैत्रेययोस्ततः ।
पुराणसंहिताप्रश्नो महापुरुषसंस्थितिः ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वादशे तु पुराणोक्तसर्वार्थानुक्रमः कृतः ।
प्रथमस्कन्धमारभ्य प्राधान्येन समासतः" ॥

तदेवास्मिन् पुराणे विस्तरेणोक्तानर्थान्सङ्क्षेपतो वर्णयिष्यन् धर्मादीन् प्रणमति—नम इति । महते हरिभक्तिलक्षणाय ब्राह्मणेभ्यो ब्राह्मणान् सनातनान् धर्मानित्युपलक्षणं पुराणोक्तार्थानाम् ॥ १ ॥

पुरुषत्वे उचितं श्रवणादियोग्यम् ॥ २ ॥

एतत्प्रपञ्चयति—अत्रेति । भगवानैश्वर्यादिषड्गुणः साक्षात् सङ्कीर्तित इति देवताकाण्डार्थः ॥ ३ ॥

ब्रह्मकाण्डार्थमाह—अत्र ब्रह्मेति । गुह्यं निर्गुणम् प्रभवाप्ययम् प्रभवत्यस्मादिति प्रभवम् अप्येत्यस्मिन्नित्यप्ययम् तच्च तच्च अनेनाऽऽश्रयशब्दार्थो दर्शितः । विज्ञानसंयुतमपरोक्षज्ञानपर्यन्तं ज्ञानम् तदुपाख्यानं तज्ज्ञानमुपाख्यायते प्रकाश्यते येन तज्ज्ञानसाधनमित्यर्थः ॥ ४ ॥

कर्मकाण्डार्थमाह—भक्तियोग इति साध्यसाधनरूपः तदाश्रय भक्तियोगेन निष्पादितम् एव स्वाभाविको निरूप्यते । द्वादशस्कन्धप्रकरणार्थाननुक्रामति—पारीक्षितमुपाख्यानं परीक्षिज्जन्मादि तत्प्रस्तावाय नारदाख्यानञ्च ॥ ५ ॥

ब्रह्मर्षेः ब्राह्मणोत्तमस्य इति प्रथमस्कन्धार्थः ॥ ६ ॥

उत्क्रान्तिरर्चिरादिगतिः प्राधानिकः प्रधानकार्यविराड्रूपः सर्गः अग्रत आदितो महदादिक्रमेणेत्यर्थः इति द्वितीयार्थः ॥ ७ ॥

महापुरुषस्य संस्थितिः प्रलये तूष्णीम्भवनम् ॥ ८ ॥

(१) यत्तद्ब्रह्म (२) तदुपाख्यानं (३) ब्रह्मर्षभस्य इति विज० । वीर० पा०

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—४ ॥

अथ नारायणस्य निखिलवेदान्तवेद्यजगत्कारणपरब्रह्मत्वज्ञानाय भक्तिकामो नारायणप्रबन्धमहावाक्यार्थं उक्तः अवान्तरवाक्यार्थं विशेषानाह—परीक्षितिमिति ॥ ५—८ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथैवं कार्त्स्न्येन शास्त्रं शुश्रुषमाणमाश्वस्य सुखमनवगाहयावितः प्रबन्धार्थान् सङ्क्षेपेणानुक्रमिष्यन् तावदस्य प्रबन्धस्य महावाक्यस्यार्थो नारायण एव वेदान्तवेद्यो जगत्कारणभूतः ब्रह्मशब्दाभिधेय इति प्रवक्तुं स्वगुरुदेवतानमस्कारपूर्वकं प्रतिजानीते—नम इति कृष्णशब्देनात्र भगवान्नारायणो बादरायणो वा विवक्षितः तत्राद्ये धर्माय निजरूपधर्माय कृष्णाय द्वितीये धर्मप्रवर्तकाय कृष्णाय भगवद्भक्तिलक्षणधर्माय चेति वा वेधसे ब्रह्मणे चतुर्मुखाय ब्राह्मणेभ्यो नारदव्यासगायत्रीशुकादिभ्यः शाश्वताऽनवच्छिन्नोपदेशपरम्पराप्राप्तान् धर्मानेतत्प्रबन्धप्रतिपाद्यान् भागवतान् धर्मान् वक्ष्यामि सङ्क्षेपेणेति शेषः ॥ १ ॥

महावाक्यार्थमाह—एतदिति । एतत्कथितं परमाद्भुतं पुराणं विष्णोश्चरितं चरित्रत्वप्रतिपादकं तद्विशिनष्टि—यत्प्रश्नं सर्वाङ्गः पृष्टः यत्र नराणां जीवानां पुरुषोचितं पुरुषत्वे मनुष्यत्वे सति उचितं श्रवणादिकोऽयम् ॥ २ ॥

विष्णोश्चरित्रत्वमेवोपपादयति—अत्रेति । अत्र पुराणे श्रवणमात्रेण सर्वाणि पापानि हरतीति तथा हरिरभितबन्धहरः इन्द्रियाधीशः भगवान्षाड्गुण्यपरिपूर्णः भक्तपालकः श्रीनारायणः कीर्त्यते ॥ ३ ॥

तमेव विशिनष्टि—यदिति । गुह्यं वेदान्तरहस्यं जगतः प्रभवाप्ययं प्रभवत्यस्मादिति प्रभवम् अप्येत्यस्मिन्निति अप्ययं तत्र तत्सृष्टिसंहारकारणमित्यर्थः । अथवा अवान्तरवाक्यार्थाननुक्रमिष्यंस्तावत्प्रथमस्कन्धार्थाननुक्रमते—द्वयेन ज्ञानमिति । अत्रेत्यनुषज्यते साधूपाख्यानं साधूनां भवतामुपाख्यानं प्रश्नात्मकमुपाख्यानं विज्ञानसंयुतं ज्ञानं च प्रोक्तं तत्र ज्ञानं प्रकृतिपुरुषविवेचनात्मकं विज्ञानं परमात्मस्वरूपगुणविचारात्मकम् ॥ ४ ॥

तदाश्रयं भक्तियोगाङ्गं वैराग्यं च समाख्यातम् पारीक्षितं परीक्षिज्जन्मादिः तावत्प्रस्तावाय नारदव्याख्यानं च ॥ ५ ॥

राजर्षेः परीक्षितो विप्रशापात्प्रायोपवेशश्च व्याख्यातशब्दस्यानुषक्तस्य यथायोग्यविपरिणामेन निर्यारणस्य प्रथमान्तैः सम्बन्धः अथ द्वितीयस्कन्धार्थाननुक्रामति सार्धेन शुकस्येति । ब्रह्मर्षभस्य ब्रह्मणोत्तमस्य शुकस्य परीक्षिता सह संवाद इति कृत्स्नस्कन्धार्थः ॥ ६ ॥

तद्वान्तरार्थानाह—योगधारणयेति । उत्क्रान्तिरर्चिरादिना गतिः नारदाजयोर्नारदचतुर्मुखयोः संवादः तत्रावतारानुगीतमनुवर्णनम् अनुवादितम् इति पाठे अवतारान्तरानुवादितश्च क्रमतः व्यष्टिसृष्टेः पूर्वं प्राधानिकः प्राकृतः सर्गः महदादितत्त्वसर्गः ॥ ७ ॥

अथ तार्तीयार्थाननुक्रामति—षड्भिः । विदुरोद्धवसंवाद इत्यादि तृतीयतुरीयस्कन्धद्वयस्वरूपप्रदर्शनं पुराणात्मिका या संहिता तस्याः प्रश्नः तदर्थान्तरनः महापुरुषस्य भगवतः संस्थितिः सङ्कुप्रत्येऽवस्थानम् ॥ ८ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उपसंहारमुखेनानुसन्धातुं द्वादशस्कन्धात्मकं भागवतार्थं संक्षिप्य कथयत्यस्मिन्नध्याये—एतद्व इत्यादिना । एतद्विष्णोश्चरितं तद्वक्तव्यत्वे हेतुमाह—मवाङ्घ्रिरिति । प्रश्नेति विस्मितं सूचयति—नराणामिति । नराणां मध्ये सतां पुरुषाणामस्वे श्रोतुमुचितं सम्मताधिकारसामर्थ्यं सूचितम् ॥ १ ॥ २ ॥

श्रोतव्यार्थे मुख्यहेतुमाह—अत्रेति । अत्र श्रीभागवते कस्मात् मुख्यत्वमत्राह—सर्वेति । वृत्रादिसर्वपापहन्तृत्वमिन्द्रस्याप्यस्तीत्यत उक्तं नारायण इति नार्थं साङ्केतिकनारायण इत्याह—हृषीकेश इति हृषीकाणामीशो जीवोऽपि स्यादत आह—भगवानिति ऐश्वर्यादिगुणसमुद्रो हि भगवान् एवंविधो नान्य इत्याह, सात्वतां पतिरिति ॥ ३ ॥

सगुणमेवोक्तं निर्गुणमतं नेत्याह—यत्रेति । जगतः प्रभवाप्ययकृद्यत्परं गुह्यम् ब्रह्म तत्प्रोक्तं तद्विषयज्ञानं सताम् उपाख्यानम् येन तत् ॥ ४ ॥

सा भक्तिराश्रयो यस्य तत्तदाश्रयम् अत्रेत्येतत्प्रतिवाक्यमनुसन्धातव्यम् ॥ ५ ॥ ६ ॥

योगधारणया कलेवरस्य परित्यागेन नारदाजयोर्नारदब्रह्मणोः अवताराणामनुगीतं कथनं प्राधानिकः प्रकृतिसर्गः सिसृक्षुत्वविशेषः ॥ ७ ॥ ८ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कृष्णाय तदाख्ययातिप्रसिद्धाय स्वयम् भगवते वेधसे अवतारादिसर्वविधात्रे तत्र स्वदैन्येन विनयः ब्राह्मणेभ्यो नमस्कृत्येति सनातनान् "कांश्चन नद्या प्रश्नये वार्णायम्" इत्यादिप्रमाणेन प्रसिद्धान् धर्मान् भागवतान् वक्ष्ये इति तत्तत्प्रसङ्गानुक्रमेण तानेव सूचयिष्यामि "पतितः स्खलितः" इत्यादिना च साक्षाद्वक्ष्यामीत्यर्थः ॥ १ ॥

तत्रैव भगवच्चरितश्रवणमेव मुख्यमित्यभिप्रायेण तेनैव महाप्रसङ्गमुपसंहरन् तानानुक्रामितुमुपक्रमते—एतदिति । नराणां मध्ये ये पुरुषास्तेषामेवोचितं ननु ये तेषां मध्ये पशवस्तेषामित्यर्थं इति तदूर्ध्वहमुखेभ्यो गाथिप्रवाहं यथोक्तम् "श्वविड्वराहोष्ट्रखरैः" इत्यादि यद्वा नराणां जीवानां पुरुषे श्रीभगवति यदुचितम् ॥ २ ॥

अत्र श्रीभागवते हरिर्भगवदाद्यवयवानन्ताविर्भावः परमेश्वरत्वानन्यमुख्यत्वेन कीर्त्यते तथापि गुणरूपलीलाभिः साक्षादेव-

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कीर्त्यते तच्च च गाथान्वेन भेदद्वयं दर्शितमित्याह—नारायणः सर्वजीवाश्रयः हृषीकेशस्तदीयसर्वेन्द्रियप्रवर्त्तकश्च परमात्मेत्यर्थः । इत्येको भेदः । द्वितीयमाह—भगवानिति । स च सात्वतां पतिः अयं भगवान् श्रीवासुदेवरूपत्वेन कीर्त्यत इत्यर्थः ॥ ३ ॥

अत्र ब्रह्मेति सार्द्धकम् । अत्र भगवत्तत्त्वकीर्त्तन एव तदीयनिर्विशेषप्रकाशरूपम् यद् ब्रह्म यदेव जगज्जन्मादिना सामान्यतो लक्षितं तदपि प्रोक्तम् ॥ ४ ॥

तदर्थमेव ज्ञानविज्ञानभक्तियोगाः यथोत्तरोत्कर्षसोपानवत् क्रमेण समाख्याताः तदाश्रयं तदुपयोगिवैराग्यं चेति पद्यद्वयेन वेदतात्पर्यरूपो ब्रह्मकाण्डार्थो दर्शितः तदेवं सर्वार्थकं प्रतिपाद्यमुक्त्वा क्रमोक्तमाह—पारीक्षितमिति ॥ ५—२९ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रथमादित आरभ्योपाख्यानविततेः पुनः ।
अनुक्रमः प्रसिद्धानां द्वादशे क्रियते स्फुटम् ॥

महते भक्तिलक्षणाय कृष्णाय तत्प्राप्याय वेधसे सर्वकारणाय ब्राह्मणेभ्यः व्यासादिभ्यस्तत्प्रकाशकेभ्यः द्वितीयार्थे चतुर्थी धर्मान् भगवच्चरित्राणि श्रवणकीर्त्तनादिविषयत्वे सति भगवच्चरितान्येव परमधर्मा भवन्तीति भावः । सनातनान् नित्यान् भगवतो भक्तियोगस्य च तच्चरितानां च निर्गुणत्वादिति भावः ॥ १

नराणां मध्ये ये पुरुषास्तेषामुचितं नतु नराणां मध्ये ये पशवस्तेषामिति यदुक्तम् "श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः" इति ॥ २ ॥

यः सर्वपापहर्तृत्वेन हरिशब्देनोच्यते यश्च नारस्य जीवसमूहस्य आश्रयत्वेन नारायणशब्देनाप्युच्यते यश्च सर्वेन्द्रियाणां प्रवर्त्तकत्वेन हृषीकेशशब्देनोच्यते स एव भगवानत्र द्वादशस्वपि स्कन्धेषु कीर्त्यते स हि क इत्यत आह—सात्वतामुख्यादीनां पतिः ॥ ३ ॥

तदीयनिर्विशेषप्रकाशरूपं यद्ब्रह्म तदपि प्रोक्तं वागादीन्द्रियग्राह्यत्वाभावाद्ब्रह्म तर्हि कथं प्रोक्तं तत्राह—जगतः प्रभव उत्पत्तिरप्ययो लयश्च यतस्तदित्येतत्प्रकारेणैव प्रोक्तं नतु साक्षात् प्रोक्तमिति भावः । तत्प्राप्तिसाधनं ज्ञानं च तदुपाख्यायते प्रकाश्यते येन तज्ज्ञानसाधनं च विज्ञानमपरोक्षानुभवस्तत् सहितं च ॥ ४ ॥

भक्तियोगः साधनरूपः साध्यरूपश्च सम्यगुपक्रमोपसंहाराभ्यामेवाख्यातः तदाश्रयं तदुत्थम् अथ प्रथमस्कन्धत एव प्राकरणिकानर्थाननुक्रामति—पारीक्षितमिति । अत्रानुक्रमणिकाध्याये यत्प्रसिद्धमपि किञ्चित् किञ्चिदुपाख्यानमुल्लङ्घितं नात्रानिष्टमाशङ्कनीयमनुक्रमणिका हि नोक्तसमस्तार्थव्यापिनी भवेत् यत्प्रथमत एव जन्म गुह्याध्यायकथा अतिप्रसिद्धाप्युल्लङ्घिता एवं द्रौणिदर्पदमनीभ्मनिर्याणादिकथा चित्रकेतुत्रिपुरवधादिकथा अम्बरीषादिकथा अघासुरवधब्रह्ममोहनादिकथा बहुश एवोल्लङ्घिता क्वचित् व्युत्क्रमेणाप्युक्ता इति ॥ ५—७ ॥

महापुरुषे पद्मनाभे स्थितिः प्रलये ब्रह्मणस्तदुदरे शयनम् ॥ ८—९ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

द्वादशेऽध्याये श्रीमद्भागवतार्थं श्रीकृष्णं तत्प्रापकान्धर्मांश्च व्याख्यातवान्नरार्थांश्च सङ्क्षेपतो वर्णयिष्यन् धर्मादीन् प्रणमति, नम इति । महते श्रीकृष्णप्रापकाय धर्माय नमः वेधसे सर्वकारणाय धर्मफलभूताय कृष्णाय नमः धर्मप्रवर्त्तकेभ्यः ब्राह्मणेभ्यः श्रीसनकनारदव्यासशुकादिभ्यो नमस्कृत्य सनातनान् गुरुपरम्पराप्राप्तान् धर्मान् कर्मज्ञानभक्त्यादीन् वक्ष्ये श्रीमद्भागवतोक्तार्थसङ्क्षेपेणेति भावः ॥ १ ॥

यद्यहं भवद्भिरहं कस्मिन् युगे प्रवृत्तेयमित्यादिना पृष्टः तदेतदद्भुतं पुरुषोचितं पुरुषाणामुचितं श्रोतुं योग्यं विष्णोश्चरितं प्रतिपाद्यप्रतिपादकयोरभेदविवक्षया श्रीमद्भागवतं महापुराणं वो युष्माकं तथा नराणामन्येषां च हिताय कथितम् ॥२॥

अत्र श्रीमद्भागवते हरिनारायणादिपदाभिधेयः साक्षाद्भगवान् श्रीकृष्णः सम्यक्कीर्तितः ॥ ३ ॥

धर्मानाह—अत्रेति सार्द्धेन । अत्र श्रीमद्भागवते गुह्यं विज्ञानसंयुतं ज्ञानं च प्रोक्तम् कथम्भूतं ब्रह्मपरं परब्रह्मस्वरूपरूपगुणविभूत्यादिविषयम् कथम्भूतं जगतः संसारिणः प्रकृतस्य भवस्य प्रकाश्यते येन तज्ज्ञानसाधनं कर्म च प्रोक्तम् ॥ ४ ॥

भक्तियोगः सम्यगाख्यातः तदाश्रयं भक्तियोगोपकारकं वैराग्यं चाख्यातम् अथ प्रथमस्कन्धतः श्रीमद्भागवतोक्तान् बहूनर्थानाह—पारीक्षितमुपाख्यानमित्यादिना । अत्र केषाञ्चिदर्थानामनुक्तिः केषाञ्चित् व्युत्क्रमोक्तिश्च तत्तत्स्कन्धे प्रसिद्धत्वात् ॥ ५—६—७—८ ॥

———

भाषा टीका ।

सूत उवाच ।

सूतजी बोले, कि—भगवद्भक्तिस्वरूप जो महाधर्म है, तिसको नमस्कार हो, वेधा जो श्रीकृष्ण हैं तिनको नमस्कार हो, अब मैं ब्राह्मणों को नमस्कार करके सनातन धर्मों को अर्थात् सनातन धर्म प्रचुर पुराणोक्त अर्थों को निगमन रूप से कहता हूं । अर्थात् इस अध्याय में संक्षेप से संपूर्ण श्रीमद्भागवत पुराण के अर्थ को कहता हूं ॥ १ ॥

हे विप्र हो ! जो तुमने हमसे प्रश्न किया रहा ( प्रथम स्कन्ध में ) कि, मनुष्यों के मध्य में पुरुष को जो वांछित होय सो कहो, सो हमने श्रीविष्णु का अद्भुत चरित्र आप लोगों से वर्णन किया ॥ २ ॥

इस श्रीभागवत पुराण के विषे सर्व पाप हरण करने वाले साक्षात् श्रीहरि का कीर्त्तन किया गया है, इस पुराण का प्रमेय नारायण हृषीकेश भक्तों के पति साक्षात् भगवान् हैं ॥ ३ ॥

ततः प्राकृतिकः सर्गः सप्त वैकृतिकाश्च ये ।
ततो ब्रह्माण्डसम्भूतिर्वैराजः पुरुषो यतः ॥ ९ ॥
कालस्य स्थूलसूक्ष्मस्य गतिः पद्मसमुद्भवः ।
भुव (१)उद्धरणेऽम्भोधेर्हिरण्याक्षवधो यथा ॥ १० ॥
ऊर्ध्वतिर्यग*वाक्सर्गो रुद्रसर्गस्तथैव च ।
अर्धनारीनरस्याथ यतः स्वायम्भुवो मनुः ॥ ११ ॥
शतरूपा च या स्त्रीणामाद्या प्रकृतिरुत्तमा ।
सन्तानो धर्मपत्नीनां कर्दमस्य प्रजापतेः ॥ १२ ॥
अवतारो भगवतः कपिलस्य महात्मनः ।
देवहूत्याश्च सम्वादः कपिलेन च धीमता ॥ १३ ॥
नवब्रह्मसमुत्पत्तिर्दक्षयज्ञविनाशनम् ।
ध्रुवस्य चरितं पश्चात्पृथोः प्राचीनबर्हिषः ॥ १४ ॥
नारदस्य च सम्वादस्ततः प्रैयव्रतं द्विजाः ! ।
नाभेस्ततोऽनुचरितमृषभस्य भरतस्य च ॥ १५ ॥
द्वीपवर्ष(२)समुद्राणां गिरिनद्युपवर्णनम् ।
ज्योतिश्चक्रस्य संस्थानं पातालनरकस्थितिः ॥ १६ ॥

भाषा टीका।

इस श्रीभागवत के विषे परम गोप्य जगत् की उत्पत्ति और नाश के हेतु, परब्रह्म कीर्त्तित है, ज्ञान और ज्ञान का साधन विशेष ज्ञान सहित निरूपण किया है ॥ ४ ॥

भक्तियोग का इस पुराण में सम्यक् प्रकार निरूपण किया है, तथा भक्ति योग से सिद्ध होने वाले वैराग्य का भी निरूपण किया है। प्रथम से इस पुराण में राजा परीक्षित् का आख्यान है, तिसके प्रस्ताव के लिये श्रीनारदजी का आख्यान है, ॥ ५ ॥

तिसके पीछें विप्र शाप से राजा परीक्षित् का प्रायोपवेश अर्थात् सर्वस्व त्यागकर गंगा तट पर अनशन व्रत लेने का वर्णन किया है । वहां पर ब्रह्मर्षि श्रीशुकदेवजी का और राजा परीक्षित् के सम्वाद का वर्णन है यह प्रथमस्कन्ध की कथा है ॥ ६ ॥

द्वितीय स्कन्ध में योग धारणा से अर्चिरादिगति कही, नारद और ब्रह्माजी का संवाद कहा, अवतारों का चरित वर्णन किया, तथा विराट् रूपकी आदि से सृष्टि कही, यह द्वितीयस्कन्ध का अर्थ भया ॥ ७ ॥

तृतीयस्कन्ध में विदुर और उद्धवजी का संवाद, तदनन्तर मैत्रेय विदुर का सम्वाद, पुराण संहिता का प्रश्न, और प्रलयकाल में भगवान् का निर्व्यापार होकर स्थित होना वर्णन किया है ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

प्राकृतिकः प्रकृतिभवो गुणक्षोभरूपः वैकृतिकाः महदादयश्चकाराद्विकाराश्च ये तेषां सर्गः ॥ ९ ॥

गतिः स्वरूपम उद्धरणे उद्धारणे ॥ १० ॥

अर्धाङ्ग्यां नारी च नरश्च तस्य सर्गः ॥ ११ ॥

सन्तानो धर्मपत्नीनामिति नवब्रह्मसमुत्पत्तिरित्यस्यानन्तरं द्रष्टव्यम इति तृतीयार्थः ॥ १२ ॥ १३ ॥

चतुर्थस्कन्धार्थमाह—नवब्रह्मणां मरीच्यादीनां समुत्पत्तिः सन्तानः ॥ १४ ॥

पञ्चमस्कन्धार्थमाह-ततः प्रैयव्रतं प्रियव्रतस्य चरितम् ॥ १५ ॥

द्वीपाद्युपवर्णनं प्रथमं सङ्क्षेपतस्ततो द्वीपादीनां ये गिरयो नद्यश्च तेषामुपवर्णनम् पातालानां नरकादीनां च संस्थितिः अनेनैव नरकनिवर्तकमजामिलोपाख्यानं गृहीतं ततः परास्यीनम् ॥ १६ ॥

(१) उद्धरणेति वीर० विज० पा० * अथरसर्गं इति वीर० विज० (२ ततो द्वीप समुद्रादि वर्षं नद्याद्यादि पाठान्तरम् ।

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अत्र ब्रह्मा वैराजः पुरुषो देवादिशरीरम् ॥ ६—४१ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्राकृतिकः प्रकृतिगुणक्षोभात्मकः ततो वैकृतिकाः सप्त महदहङ्कारभूतपञ्चकात्मका व्याख्याता इत्यर्थः । ततस्तेभ्यो वैकृतिभ्यो ब्रह्माण्डस्योत्पत्तिः तद्विशिनष्टि यतो यत्र ब्रह्माण्डे ब्रह्मा वैराजः पुरुषः चतुर्मुखाज्जात इत्यर्थः । स्थूलसूक्ष्मस्य परमाणवादिवत्सरान्तसूक्ष्मस्थूलरूपेणावस्थितस्य कालस्य गतिः सर्वेषां सत्वानां सर्वादिभूतानामुत्पत्तिः अम्भोधेर्भुव उद्धरणा उद्धरणम् ॥ ९ ॥ १० ॥

ऊर्ध्वतिर्यगधस्सर्गः देवतिर्यगधोलोकसर्गः मर्त्योऽर्धा नारी नरश्च तयोः समाहारः तस्तस्य सर्गः तद्विशिनष्टि—यतः यत्र नारीनरे स्वायम्भुवो मनुः ॥ ११ ॥

तस्य या पत्नी शतरूपा स्त्रीणामाद्या प्रकृतिराकृतिरत एवोत्तमा तस्य नारीनरस्य सर्ग इति सम्बन्धः ततः कर्दमस्य धर्मपत्नीनामिति बहुवचनं पूज्याभिप्रायकं धर्मपत्न्या देवहूत्याः सन्तानः कलाऽनसूयादिनवकन्यकारूप सन्तानः तथा कपिलाख्यस्य भगवतोऽवतारः कपिलेन साकं देवहूत्याः संवादश्चोक्त इत्यर्थः ॥ १२ ॥ १३ ॥

अथ चतुर्थार्थानुक्रामति—नवब्रह्मसमुत्पत्तिरित्यादिना नारदस्य च संवाद इत्यन्तेन । पञ्चमार्थानुक्रमते प्रैयव्रत इत्यादिना पातालनरकस्थितिरित्यन्तेन । द्विजा इति सम्बोधनं प्रैयव्रतः प्रियव्रतवृत्तान्तः आर्षभस्य भरतस्य चानुचरितमिति सम्बन्धः ॥ १४ ॥ १५ ॥

द्वीपादीनामुपवर्णनम् ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्राकृतिकः प्रकृतिविकृतः ते सप्त महदहङ्कारपञ्चभूतानीति वैकृतिकाः इन्द्रियविषयाः यतो यत्र ब्रह्माण्डं ॥ ९ ॥

पद्मसमुद्भवो नाभेरिति शेषः अम्भोधेर्भुव उद्धरणा उद्धारः ॥ १० ॥

ऊर्ध्वतिर्यगधःसर्गः देवतिर्यगसुरसृष्टिः अर्धनारीनरस्य ब्रह्मणः सकाशात्स्वायम्भुवो मनुर्यथोत्पन्नस्तथा ॥ ११ ॥

या स्त्रीणां मध्ये आद्या प्रकृतिः स्त्री सा शतरूपा च यथोत्पन्ना तथा ॥ १२ ॥ १३ ॥

नवब्रह्मसमुत्पत्तिः नवप्रजापतीनां मरीच्यादीनां सकाशात्सृष्टिः तेषामुत्पत्तिर्वा ॥ १४—१६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भुव उद्धरणामम्भोधेः सकाशात् मकारलोपश्छान्दसः ॥१०॥

मर्त्योऽर्धा नारी च नरश्च तस्य ॥ ११—१३ ॥

नवब्रह्मभ्यः मरीच्यादिभ्यः समुत्पत्तिः ॥ १४—२० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्राकृतिकः प्रकृतिगुणक्षोभरूपः वैकृतिका महदादयः चकाराद्विकाराश्च ये तेषां सर्गः ॥ ९—१०—११—१२ ॥ २३ ॥

नवभ्यो ब्रह्मभ्यः ब्राह्मणेभ्यो मरीच्यादिभ्यः समुत्पत्तिस्तदपत्यसृष्टिः ॥ १४ ॥

प्रैयव्रतं प्रियव्रतचरितम् ॥ १५—२० ॥

---

### भाषा टीका ।

तदनन्तर प्रकृति से होने वाला गुणों के क्षोभरूप सर्गका वर्णन, तिसके पीछे प्रकृति के विकार से होने वाली सप्त पृथिव्यादिविकारों सहित महदादिकोंकी [सृष्टि कही, तिन सबों से मिलकर ब्रह्माण्डकी उत्पत्ति कही, जिसमें विराट् पुरुषने अपने शरीरका अभिमान करलिया ॥ ९ ॥

तत्पश्चात् स्थूल और सूक्ष्म काल की गति कही, श्रीशेषशायन भगवान् की नाभिकमल से ब्रह्मा की उत्पत्ति, समुद्रसे पृथिवी का उद्धार, तथा हिरण्याक्ष का वध कहा ॥ १० ॥

तदनन्तर ऊर्ध्व सृष्टि देवोंकी तिर्यक् सृष्टि पशु पक्षियोंकी अवाक् (नीची) सृष्टि मनुष्योंकी कही, फिर रुद्रकी सृष्टि कही तदनन्तर ब्रह्माके आधे२ अङ्गसे नर नारी की सृष्टि जिन्हों में नर स्वायंभुव मनु हुए, और नारी शतरूपा रानी हुई, जो शतरूपा सबसे प्रथम स्त्रियों में उत्तम प्रकट हुई, फिर कर्दम प्रजापति की धर्मपत्नी श्रीदेवहूति जी की जो कला अनुसूया इत्यादि सन्तान हुई तिसका वर्णन है ॥ ११ ॥ १२ ॥

तदनन्तर श्रीकपिलदेव के अवतार का वर्णन, फिर देवहूति के साथ श्रीकपिलदेव जी के सम्वाद का वर्णन है ॥ १३ ॥

फिर मरीच्यादिक नव. प्रजापतियों की उत्पत्ति [ यह मरीच्यादि नव ब्राह्मणों की उत्पत्ति का कथन, कर्दमजी की सन्तान के कथन के पूर्व जानना चाहिये ] यह तृतीय स्कन्ध की कथा समाप्त हुई ॥ चतुर्थस्कन्ध में प्रथम दक्षप्रजापति के यज्ञ का भङ्ग, फिर ध्रुव जी का चरित्र, पश्चात् पृथु का चरित्र, फिर प्राचीन बर्हि का चरित्र, इस प्रकार चतुर्थ स्कन्ध की कथा समाप्त हुई ॥ १४ ॥

पञ्चमस्कन्ध में पहिले, नारद महर्षि और प्रियव्रत महाराज का सम्वाद, फिर नाभि महाराज का चरित, फिर श्रीऋषभदेव जी का चरित, फिर भरत महाराज के चरित का वर्णन है ॥ १५ ॥

तदनन्तर द्वीप समुद्र आदि खण्ड नदी इनका वर्णन है । फिर ज्योतिश्चक्र की स्थिति, तथा पाताल और नरक की स्थिति का वर्णन हैं ॥ १६ ॥

---

दक्षजन्म प्रचेतोभ्यस्तत्पुत्रीणां च सन्ततिः ।
यतो देवासुरनरास्तिर्यङ्नरखगादयः ॥ १७ ॥
त्वाष्ट्रस्य जन्म निधनं पुत्रयोश्च दितेर्द्विजाः ! ।
दैत्येश्वरस्य चरितं प्रह्लादस्य महात्मनः ॥ १८ ॥
मन्वन्तरानुकथनं गजेन्द्रस्य विमोक्षणम् ।
मन्वन्तरावताराश्च विष्णोर्हयशिरादयः ॥ १९ ॥
कौर्मं धान्वन्तरं मात्स्यं वामनं च जगत्पतेः ।
क्षीरोदमथनं तद्वदमृतार्थे दिवौकसाम् ॥ २० ॥
देवासुरमहायुद्धं राजवंशानुकीर्तनम् ।
इक्ष्वाकुजन्म तद्वंशः सुद्युम्नस्य महात्मनः ॥ २१ ॥
इलोपाख्यानमत्रोक्तं तारोपाख्यानमेव च ।
सूर्यवंशानुकथनं शशादाद्या नृगादयः ॥ २२ ॥
सौकन्यं चाथ शर्यातेः ककुत्स्थस्य च धीमतः ।
खट्वाङ्गस्य च मान्धातुः सौभरेः सगरस्य च ॥ २३ ॥
(१)रामस्य कोशलेन्द्रस्य चरितं किल्बिषापहम् ।
निमेरङ्गपरित्यागो जनकानां च सम्भवः ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

षष्ठार्थमाह-दक्षजन्मेति ॥ १७ ॥

सप्तमार्थमाह-पुत्रयोश्चेति ॥ १८ ॥

अष्टमार्थमाह-मन्वन्तरानुकथनमिति । कचित्कस्यचिदनुक्तिः स्युत्क्रमोक्तिश्च भक्तिरसाकुलत्वेनेति द्रष्टव्यम् ॥ १९ ॥ २० ॥

नवमार्थमाह-राजवंशेति ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

षष्ठार्थाननुक्रामति-सार्द्धेन, दक्षजन्मेति । तत्पुत्रीणां दक्षपुत्रीणां सन्ततिं विशिनष्टि-यतो याभ्यो दक्षपुत्रीभ्यो देवादयो बभूवुरित्यर्थः ॥ १७ ॥

त्वाष्ट्रस्य वृत्रासुरस्य जन्म निधनं मरणं च । अथ सप्तमार्थाननुक्रामति—[पुत्रयोश्चेति] दैत्येश्वरस्येत्यर्द्धेन । हिरण्यकशिपोः प्रह्लादस्य चरितम् ॥ १८ ॥

अष्टमार्थानाह-मन्वन्तरेत्यादिना देवासुरं महायुद्धमित्यन्तेन । विष्णोः हयग्रीवादयः मन्वन्तरेष्ववताराः ॥ १९ ॥

तथा जगत्पतेः कौर्मादीनि रूपाणि दिवौकसां देवादीनाममृतार्थे क्षीरोदमथनम् ॥ २० ॥

नवमार्थाननुक्रमते-राजवंशानुकीर्तनमित्यादिना वृष्णिश्च गोकुले इत्यन्तेन । अत्र कचित्कस्यचिदनुक्तिः व्युत्क्रमोक्तिश्च प्रसिद्धिकृतादनादरादिति ज्ञेयम् तद्वंशो इक्ष्वाकुवंशः ॥ २१ ॥ २२ ॥

सौकन्यं सुकन्याचरितम् ॥ २३—२७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यतः सन्ततेर्देवासुरनरादयः आसन् ॥ १७—१८ ॥

मन्वन्तरानुचरितं मन्वन्तरराजानुचरितम् ॥ १९—२१ ॥

तारोपाख्यानं ताराया देव्या उपाख्यानम् ॥ २२ ॥

सुकन्यायाश्चरितं ककुत्स्थस्य चरितम् ॥ २३—२४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सुद्युम्नस्येत्यत्र उपाख्यानमिति शेषः ॥ २१—२७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सुद्युम्नस्योपाख्यानमिति शेषः ॥ २१—२७ ॥

(१) कौशलेन्द्रस्य चरितं मङ्गलमिति विज० पा० ।

रामस्य भार्गवेन्द्रस्य निःक्षत्रकरणं भुवः ।
ऐलस्य सोमवंशस्य ययातेर्नहुषस्य च ॥ २५ ॥
दौष्यन्तेर्भरतस्यापि शन्तनोस्तत्सुतस्य च ।
ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशोऽनुकीर्तितः ॥ २६ ॥
यत्रावतीर्णो भगवान् कृष्णाख्यो जगदीश्वरः ।
वसुदेवगृहे जन्म ततो वृद्धिश्च गोकुले ॥ २७ ॥
तस्य कर्माण्य(१)पाराणि कीर्तितान्यसुरद्विषः ।
पूतनाऽसुपयःपानं (२)शकटोच्चाटनं शिशोः ॥ २८ ॥
तृणावर्तस्य निष्पेषस्तथैव बकवत्सयोः ।
*(अघासुरासुसंहारः कस्य मायाप्रदर्शनम् ।)
धेनुकस्य सहभ्रातुः प्रलम्बस्य च सङ्क्षयः ॥ २९ ॥
गोपानां च परित्राणं दावाग्नेः परिसर्पतः ।
दमनं कालियस्या(३)हेर्महाहेर्नन्दमोक्षणम् ॥ ३० ॥
व्रतचर्या तु कन्यानां यत्र तुष्टोऽच्युतो व्रतैः ।
प्रसादो यज्ञपत्नीभ्यो विप्राणां चानुतापनम् ॥ ३१ ॥
गोवर्द्धनोद्धारणं च शक्रस्य सुरभेरथ ।
यज्ञाभिषेकं कृष्णस्य स्त्रीभिः क्रीडा च रात्रिषु ॥ ३२ ॥

भाषा टीका ।

षष्ठस्कन्ध में प्रचेताओं से दक्ष का जन्म, दक्षकी पुत्रियों की संतान का वर्णन, जिनसे देव असुर नर तिर्यक् मृग खग आदिक उत्पन्न हुए ॥ १७ ॥

तदनंतर वृत्रासुर का जन्म और मरण का वर्णन है यह षष्ठ स्कन्ध का अर्थ समाप्त भया । सप्तमस्कन्ध में दिति के दोनों पुत्रों का चरित, तथा दैत्येश्वर महात्मा श्रीप्रह्लाद जी का चरित्र है, सप्तमस्कन्ध का अर्थ समाप्त हुआ ॥ १८ ॥

अष्टम स्कन्ध में मन्वंतर का अनुचरित, गजेन्द्र मोक्ष का वर्णन, मन्वन्तरों में श्रीविष्णु के हयग्रीवादि अवतारों का वर्णन है, यहां पर कहीं २ कथा का व्युत्क्रम कहीं २ अनुक्ति भक्ति रस के अनुकूलता से है ॥ १९ ॥

तदनंतर कूर्म चरित, मत्स्य भगवान का चरित्र, नृसिंह चरित, वामनजी का चरित्र, तथा अमृत के लिये देवताओं का समुद्र का मथन, ॥ २० ॥

तथा देवासुर संग्राम का वर्णन है, यह अष्टम स्कन्ध का अर्थ समाप्त भया ॥ नवम स्कन्ध में राजवंशों का कथन है इक्ष्वाकु महाराज का जन्म, और उनके वंश का वर्णन, और सुद्युम्न का चरित्र है ॥ २१ ॥

फिर सुद्युम्न के स्त्री होने का आख्यान, फिर तारोपाख्यान कहा, फिर सूर्य वंश का कथन किया, फिर शशाद और नृग आदि नृपों का आख्यान है ॥ २२ ॥

तदनंतर सुकन्या का आख्यान, शर्यातिका आख्यान, श्रीमान् ककुत्स्थ महाराज का आख्यान, तथा खट्वांग और मान्धाता महाराज का चरित, सौभरि ऋषि का आख्यान, तथा सगर के चरित्र का वर्णन है ॥ २३ ॥

फिर श्रीसूर्योद्वहराम सर्व लोकाभिराम कोशलेन्द्र श्रीरामचन्द्र के पाप नाशक चरितों का वर्णन है ॥ फिर निमि महाराज के अंग का परित्याग, फिर जनक राजों की उत्पत्ति का कथन है ॥ २४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

सोमवंशादिभूतस्यैलस्य चरितम् ॥ २५ ॥

तत्सुतस्य भीष्मस्य ॥ २६ ॥ २७ ॥

दशमार्थमाह—तस्य कर्माणीति । पूतनाया असुभिःसहितस्य स्तन्यपयसः पानम् ॥ २८ ॥

सहभ्रातुः ससखस्य ॥ २९ ॥ ३० ॥ ३१ ॥

यज्ञाभिषेकम् यज्ञः पूजा अभिषेकश्च तयोर्द्वन्द्वैक्यम् ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

(१) उदाराणि इति (२) शकटोत्पाटनम् इति च वीर० पाठः । * इत्यधिकः पठ्यते वीर० । (३) अहो इति वीर० पाठः ।

शङ्खचूडस्य दुर्बुद्धेर्वधोऽरिष्टस्य केशिनः ।
अक्रूरागमनं पश्चात्प्रस्थानं रामकृष्णयोः ॥ ३३ ॥
व्रजस्त्रीणां विलापश्च मथुरालोकनं ततः ।
गजमुष्टिकचाणूरकंसादीनां च यो वधः ॥ ३४ ॥
मृतस्याऽऽनयनं सूनोः पुनः सान्दीपनेर्गुरोः ।
मथुरायां निवसता यदुचक्रस्य यत्प्रियम् ॥ ३५ ॥
कृतमुद्धवरामाभ्यां युतेन हरिणा द्विजाः ।
जरासन्धसमानीतसैन्यस्य बहुशो वधः ।
घातनं यवनेन्द्रस्य कुशस्थल्या निवेशनम् ॥ ३६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ दशमार्थाननुक्रामति-तस्य कर्माणीत्यादिना । विप्रशापापदेशेनेत्यतः प्राक्तनेन ग्रन्थेन ॥ २८ ॥

निष्पेषो वधः अघासुरस्यासुसंहारः प्राणापहारः कस्य चतुर्मुखस्य स्वमायाप्रदर्शनं सहभ्रातुः सबलस्य धेनुकस्य प्रलम्बस्य च सकृत्स्नयः वधः परिसर्पतः दवाग्नेः सकाशाद्गोपानां परित्राणम् दमनमनुशिक्षणमहो इत्याश्चर्यं नन्दस्य वरुणस्य मोक्षणं साकाशादिति शेषः । कन्यानां गोपकन्यानां व्रतचर्या तां विशिनष्टि यतो यस्यां व्रजैरच्युतस्तुष्टः यज्ञपत्नीभ्य इति चतुर्थ्यन्तं प्रसादोऽनुग्रहः शक्रस्येत्यस्य परिभवायेति शेषः यज्ञाभिषेकः यज्ञः पूजा अभिषेकश्च तयोर्द्वन्द्वैकवम् ॥ २९—३३ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सोमवंशोद्भवस्यैलस्यैलापुत्रस्य चरितम् ॥ २५—३० ॥
यत्र व्रतचर्यायाम् ॥ ३१ ॥
यज्ञः पूजा अभिषेकः तयोर्द्वन्द्वैकवम् ॥ ३२—३६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्य वृद्धिश्च गोकुल इति चकाराज्जन्मचेत्यर्थः । अन्यथा वृद्धिस्त्वित्येवोक्तं स्यात् अस्य स्थापनं "नन्दस्त्वात्मज उत्पन्न" इत्यादौ कृष्णसन्दर्भे कृतमेव ॥ २७—३० ॥

विप्रानुतापनं सूक्ष्ममपि अत्राघभावनाय स्मारितं शक्रकर्तृकं सुरभिकर्तृकं च यज्ञाभिषेकम् ॥ ३१—३५ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पूतनाया असुसहितस्य स्तन्यपयसः पानम् शिशोः शिशुना निष्पेषः संमर्दः सहभ्रातुर्ज्ञातिसहितस्य ॥ २८—३१ ॥

शक्रस्य शक्रेण सुरभेः सुरभ्या यज्ञः पूजनमभिषेकश्च तत ॥ ३२—३५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पूतनायाः असुपयःपानं प्राणसहितस्य पयसः पानम् ॥२८॥

निष्पेषः शिशुनामिति शेषः सहभ्रातुः ससखस्य ॥ २९—३१ ॥

यज्ञः पूजा अभिषेकश्च तयोः द्वन्द्वैकवम् ॥ ३२—३६ ॥

भाषाटीका ।

फिर भृगु वंशी श्रीपरशुरामजी का पृथिवी को निःक्षत्रिय करने का वर्णन, चन्द्रवंशी राजा ऐल ययाति और नहुष महाराज का चरित्र ॥ २५ ॥

दुष्यन्त के पुत्र भरतजी का चरित, शंतनु और उनके पुत्र का चरित, तब ययाति के ज्येष्ठ पुत्र महाराज यदु के वंश का कीर्तन यह नवम स्कन्ध की कथा है ॥ २६ ॥

दशम स्कन्ध । जिनके यहां जगदीश्वर भगवान् श्रीकृष्णचन्द्र ने अवतार लिये हैं, उन वसुदेव के गृह में भगवान् के जन्म का वर्णन फिर गोकुल में वृद्धि को प्राप्त हुए ॥ २७ ॥

तिन श्रीगोकुलचन्द्र के अपार कर्मों का कीर्तन है, तहां प्रथम असुर नाश लीला में पूतना के प्राणों का पान करना, फिर शिशुका शकटासुर का उच्चाटन करने का वर्णन ॥ २८ ॥

फिर तृणावर्त कातथा बकासुर वत्सासुर और धेनुकासुर का वध करना, भ्राता सहित प्रलंबासुर का मारना ॥ २९ ।

बढ़ती हुई दावाग्नि से गोप लोगों की रक्षा करना, कालीका दमन और महास से नंद बाबा का छुटावना ॥ ३० ॥

व्रज की कन्याओं का व्रत करना और उस व्रत से श्रीकृष्ण का प्रसन्न होकर चीरहरण करना ॥ फिर श्रीकृष्ण का यज्ञपत्नियों पर प्रसन्न होना, और याज्ञिक माथुर ब्राह्मणों का पश्चात्ताप करना ॥ ३१ ।

फिर श्रीगिरि गोवर्द्धन का उठावना, इन्द्र और सुरभि श्रीकृष्ण का गोविन्दाभिषेक करना, फिर शरद की रात्रि में व्रज की स्त्रियों के संग रास लीला करना ॥ ३२ ॥

आदानं पारिजातस्य सुधर्मायाः सुरालयात्।
रुक्मिण्या हरणं युद्धे प्रमथ्य द्विषतो हरेः॥ ३७॥
हरस्य जृम्भणं युद्धे बाणस्य भुजकृन्तनम्।
प्राग्ज्योतिषपतिं हत्वा कन्यानां हरणं च यत्॥ ३८॥
चैद्यपौण्ड्रक(सा)शाल्वानां दन्तवक्रस्य दुर्मतेः।
शम्बरो द्विविदः पीठो मुरः पञ्चजनादयः॥ ३९॥
महात्म्यं च वधस्तेषां वाराणस्याश्च दाहनम्।
भारावतरणं भूमेर्निमित्तीकृत्य पाण्डवान्॥ ४०॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

द्विषतः शत्रून् प्रमथ्य॥ ३७॥ ३८॥

ये च शम्बरादयस्तेषां माहात्म्यं प्रभावो वधश्च॥ ३९—४०॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

गजः कुवलयापीडाख्यः सान्दीपनेर्गुरोः पुत्रस्य मृतस्य पुनरानयनं यमस्य सकाशादिति शेषः। मथुरायामिति। हे द्विजाः उद्धवरामाभ्यां युतेन हरिणा मथुरायां निवसता यदूनां समूहस्य प्रियं कृतं तथा यवनेन्द्रस्य कालयवनस्य कुशस्थल्यां द्वारकायाम्॥ ३४—३६॥

सुधर्मायाश्चादानमिति संबन्धः। द्विषतश्शत्रून्प्रमथ्य हरेर्हरिणा रुक्मिण्या हरणम्॥ ३७॥

प्राग्ज्योतिषपतिं भौमम्॥ ३८॥

ये शम्बरादयः तेषां माहात्म्यं वधश्चेति संबन्धः॥ ३९॥

निमित्तीकृत्य द्वारीकृत्य॥ ४०॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

दाहनं दहनम्॥ ४०—४१॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

उद्धवरामाभ्यामित्युद्धवस्यापि माहात्म्यं दर्शितम्॥ ३६-३८॥

चैद्यादीनां माहात्म्यं वधश्च येच शम्बरादयस्तेषां चेत्यन्वयः॥ ३९—४१॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

माहात्म्यं चैद्यादीनां पराक्रमः॥ ३९-४१॥ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

द्विषतः रुक्मप्रभृतीन्॥ ३७—३९॥

माहात्म्यम् आसुरः प्रभावः॥ ४०—४१॥

---

भाषा टीका।

फिर दुर्बुद्धि शंखचूड का वध, केशीदमन और अरिष्टासुर का संहार करना, अक्रूर का ब्रज में आना, पीछे श्रीकृष्णचन्द्र और बलदेव जी का मथुरा का प्रस्थान करना॥ ३३॥

फिर ब्रजस्त्रियों के विलाप का वर्णन, तदनन्तर श्रीकृष्ण का मथुरा देखना, फिर कुवलयापीड हाथी मुष्टिक चाणूरमल्ल और कंस राजा इनका वध करना॥ ३४॥

सान्दीपन गुरु के मरे हुए पुत्र को फेरकर ला देना, मथुरा में बसकर उद्धव बलदेव सहित मिलकर यादवों का प्रिय करना। यह पूर्वार्द्ध की कथा समाप्त हुई॥ आगे उत्तरार्द्ध में हे विप्रो! जरासन्ध की लाई हुई सेना का बहुवार वध होना, फिर कालयवन का मुचुकुन्द के द्वारा मारना, और द्वारका के बसाने का वर्णन करना॥ ॥ ३५॥ ३६॥

फिर स्वर्ग से पारिजात वृक्ष और सुधर्मा सभा का ले आना, फिर युद्ध में वैरियों को मथकर श्रीकृष्ण का श्रीरुक्मिणी जी को हरण करना॥ ३७॥

तदनन्तर बाणासुर के युद्ध में महादेव जी का जंभाना, और श्रीकृष्ण का बाणासुर की भुजाओं को काटना, फिर प्राग्ज्योतिषपुर के पति को मारकर कन्याओं का लाना॥ ३८॥

पश्चात् शिशुपाल पौण्ड्रक शाल्व और दुर्मति दन्तवक्र का वध, तथा शम्बर द्विविद पीठ मुर और पञ्चजन इत्यादिकों का माहात्म्य और वध, तथा काशीपुरी का जलाना, और पाण्डवों को निमित्त करके भूमि का भार उतारना यह दशम स्कन्ध की कथा सम्पूर्ण भई॥ ३९॥ ४०॥

---

विप्रशापापदेशेन संहारः स्वकुलस्य च ।
उद्धवस्य च सम्वादो वासुदेवस्य चाद्भुतः ॥ ४१ ॥
यत्रात्मविद्या ह्यखिला प्रोक्ता धर्मविनिर्णयः ।
ततो मर्त्यपरित्याग आत्मयोगानुभावतः ॥ ४२ ॥
युगलक्षणवृत्तिश्च कलौ नृणामुपप्लवः ।
चतुर्विधश्च प्रलय उत्पत्तिस्त्रिविधा तथा ॥ ४३ ॥
देहत्यागश्च राजर्षेर्विष्णुरातस्य धीमतः ।
शाखाप्रणयनमृषेर्मार्कण्डेयस्य सत्कथा ।
महापुरुषविन्यासः सूर्यस्य जगदात्मनः ॥ ४४ ॥
इति चोक्तं द्विजश्रेष्ठाः ! यत्पृष्टोऽहमिहास्मि वः ।
लीलावतारकर्माणि कीर्तितानीह सर्वशः ॥ ४५ ॥
पतितः स्खलितश्चार्तः क्षुत्त्वा वा विवशो ब्रुवन् ।
हरये नम इत्युच्चैर्मुच्यते सर्वपातकात् ॥ ४६ ॥
सङ्कीर्त्यमानो भगवाननन्तः श्रुतानुभावो व्यसनं हि पुंसाम् ।
प्रविश्य चित्तं विधुनोत्यशेषं यथा तमोऽर्कोऽभ्रमिवातिवातः ॥ ४७ ॥
मृषागिरस्ता ह्यसतीरसत्कथा न कथ्यते यद्भगवानधोक्षजः ।
तदेव सत्यं तदुहैव मङ्गलं तदेव पुण्यं भगवद्गुणोदयम् ॥ ४८ ॥

---

भावार्थदीपिका ।

एकादशार्थमाह—विप्रशापेति ॥ ४१ ॥

धर्मविनिर्णयो वर्णाश्रमधर्मविनिश्चयः मर्त्यपरित्यागो मनुष्यरूपस्यान्तर्धानम् ॥ ४२ ॥

द्वादशार्थमाह—युगेति । युगलक्षणं तदनुरूपा वृत्तिश्चेत्यर्थः त्रिविधा प्राकृतिकी नैमित्तिकी नित्या चेति ॥ ४३ ॥

ऋषेर्व्यासस्य सूर्यस्य च विन्यास इत्यर्थः ॥ ४४ ॥

इति चोक्तमिति चकाराद्यदपि वो युष्माभिरिह यत्पृष्टोऽस्मि तदुक्तमिति किमेवं नानार्थकथनेन तत्राऽऽह लीलेति सर्वशः तत्तदर्थकीर्तनद्वारेणेत्यर्थः ॥ ४५ ॥

तत्कीर्तनेनापि किमित्यपेक्षायां तत्फलमाह द्वाभ्याम्—पतितः कूपादिषु स्खलितः सोपानादिषु आर्तो दुःखितः क्षुत्त्वा क्षुतं कृत्वा विवशोऽपि ॥ ४६ ॥

सङ्कीर्त्यमानो यद्वा श्रुतोऽनुभावो यस्य स पुंसां चित्तं प्रविश्य निःशेषं दुःखं विधुनोति इति सतामनुभवं प्रमाणयति अर्को गिरिगुहादिष्वपि तमो न धुनोतीत्यपरितोषाद्दृष्टान्तान्तरमाह—अतिवातोऽभ्रमिवेति ॥ ४७ ॥

हरिसङ्कीर्तनमेव महाफलं तद्व्यतिरिक्तं सर्वं मिथ्यालापमात्रमिति प्रपञ्चयति—मृषागिर इति चतुर्भिः । मृषागिरो मिथ्यावाचः असतीरसत्यः असतां कथा यासु ताः यासु उत्तमश्लोकस्य यशोऽनुगीयत इति यत्तदेव सत्यं तदेव हि मङ्गलम् उह इति हर्षे भगवद्गुणानामभ्युदयो यस्मात्तत् ॥ ४८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मर्त्यशरीरत्यागः ॥ ४२—४३ ॥

महापुरुषविन्यासः देवसंस्थानं सूर्यस्य जगदात्मन इति विन्यास इत्यनुषङ्गः ॥ ४४ ॥

वैभवं प्रपञ्चमित्यर्थः ॥ ४५ ॥

पुराणकथाश्रवणफलं वक्तुं भगवत्कीर्तनश्रवणानुभावमाह, परितः सर्वतः पतितः स्खलितः वचन इत्यध्याहार्यम् ॥ ४६—४७ ॥

भगवद्गुणानामुदयः प्रकारो यस्मिन् तद्भगवद्गुणोदयं नवं नवं इति वचन इति प्रथमाद्यय इति द्वितीयाम् ॥ ४८—४९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एकादशार्थानुक्रमते—विप्रशापेति द्वयेन। अपदेशो व्याजस्तेन ॥ ४१ ॥

संवादं विविधमाह—यत्रेति। धर्मविनिर्णयः वर्णाश्रमधर्मनिर्णयः मर्त्यपरित्यागः मर्त्यलोकपरित्यागः भूमिपरित्याग इति पाठान्तरम् ॥ ४२ ॥

द्वादशार्थानुक्रमते—युगेति। (सार्द्धत्रयेण) युगलक्षणानि तेषु वृत्तयश्च उपप्लवः कलिदोषैरुपद्रवः चतुर्विधः प्राकृतिको नैमित्तिकः आत्यन्तिको नित्यश्चेति चतुर्विधः प्रलयः त्रिविधा प्राकृतिकी नित्या नैमित्तिकी चेति त्रिविधा उत्पत्तिः ॥ ४३ ॥

विष्णुदत्तस्य परीक्षितः महापुरुषविन्यासः अङ्गोपाङ्गादिविन्यास जगदात्मनः लोकयात्राप्रवर्तनेन नियामकस्य सूर्यस्य गणविभागः इत्यर्थः। इति चोक्तमिति चकारादन्यदपि हे द्विजश्रेष्ठाः! यो युष्माभिः यदप्यहं पृष्टोऽस्मि तदुक्तम् इतीत्थम् इह पुराणे सर्वशः कार्त्स्न्येन हरेर्लीलारूपाणि अवतारकर्माणि एव कीर्तितानि ॥ ४४—४५ ॥

एतत्पुराणकथनश्रवणफलं वक्तुं भगवत्कीर्तनश्रवणानुभाव माह—पतित इति। क्षुत्वा क्षुत्कृत्य अवशेति वा पाठः तदा हरये नम इति श्रुत्वेत्यर्थः हरये नम इत्युच्चैर्गृणन्निति सम्बन्धः ॥ ४६ ॥

किञ्च सङ्कीर्त्यमान इति। श्रुतोऽनुभावो यस्य तथाभूतो या हरिः पुंसां सङ्कीर्तयतां शृण्वतामात्मनः चित्तं प्रविश्याशेषं व्यसनं दुःखं तद्धेतुदुरितं वा धुनोति यथाऽर्कः सूर्यस्तमो धुनोति यथावाऽतिवातः चण्डवायुरभ्रं धुनोति तद्वत् ॥ ४७ ॥

किञ्च भगवत्सङ्कीर्तनमेव महाफलं तद्व्यतिरिक्तं सर्वं मिथ्यालापमात्रमिति प्रपञ्चयति चतुर्भिः—मृषागिर इति। यद्यत्र भगवानधोक्षजो न कथ्यते न प्रतिपाद्यते ता मृषागिरः मिथ्यावाचः अस्युतासतीरसत्यः दोषावहाः यत्र गवद्गुणानामुदयः प्रकाशो यस्मिं स्तदेव वाचः सत्यं मङ्गलावहं पुण्यावहं च अत्यादरात्प्रतिपदं तच्छब्दप्रयोगः ॥ ४८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यत्रोद्धववासुदेवसंवादे आत्मविद्याः परमात्मविद्याः अखिला अनुवर्णितवेनोक्ताः वर्णाश्रमविनिर्णयश्चोक्तः ॥ ४२ ॥

युगलक्षणं तदनुरूपा वृत्तिश्च उपप्लवो नाशः राजसादिभेदेनोत्पत्तिस्त्रिविधा प्राकृतिकी नैमित्तिकी नित्या वा ॥ ४३ ॥

विष्णुदत्तस्य परीक्षितः महापुरुषविन्यासः महापुरुषस्याङ्गोपाङ्गादिस्थितिविशेषः सूर्यस्य स्थितिश्च इति समाप्तिपर्यन्तं सर्वमुक्तम् ॥ ४४—४५ ॥

क्षुत्वा क्षुतं कृत्वा ॥ ४६ ॥

अतिशयितो वातः अभ्र सनीरं नीरदमिव ॥ ४७ ॥

अधोक्षजो भगवान् याभिर्गीर्भिर्न कीर्त्यन्ते ता गिरोऽसत्कथाः मृषा निष्फलाः असतीरसत्योऽमङ्गलाः यद्वचो भगवद्गुणोदयं तदेव सत्यं यथोक्तफलम् ॥ ४८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

पतित इति कैमुत्यार्थमुक्तिः ॥ ४६—४६ ॥



श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

मर्त्यस्य मर्त्यलोकस्य परित्यागः आत्मनो योगमायाप्रभावत इति श्लोकेतुर्विलक्षणता व्यञ्जिता ॥ ४२ ॥

युगलक्षणं तदनुरूपा वृत्तिश्च उपप्लवो धर्मविप्लवः त्रिविधा प्राकृती नैमित्तिकी नित्या च ॥ ४३—४५ ॥

एतावत्कथाकीर्तनस्य फलं ब्रूहीति चेत्तत्र कैमुत्येनाह, पतित उच्चप्रदेशादधः प्राप्तः स्खलितः समानप्रदेशेऽप्यपपादविन्यासात्प्राप्ताधःपातः क्षुत्त्वा क्षुतं कृत्वा उच्चैरतिघोरपापादपि ॥ ४६ ॥

चित्तं प्रविश्य व्यसनं धुनोति अर्कस्तम इव तत्र गुहागतं तमो न धुनोतीत्यपरितोषादाह—अतिवातोऽभ्रमिव ॥ ४७ ॥

अस्य शास्त्रस्य कृष्णकीर्तन एव तात्पर्यात्तदन्यकीर्तनमविगीतमपि न कुर्यात् तत्कीर्तनं यत्पशुभिर्विगीतत्वेनोक्तं तदपि कुर्यादित्याह—मृषेति। ताः सत्या अपि गिरो मिथ्या एव प्रिया अपि गिरोऽसतीरसत्यः कटूक्तय एव तथा सतां विदुषामपि कथा असत्कथा एव कुतः यत् यतो भगवान्न कथ्यते इति अतः सत्यवाद्यपि मिथ्यावादी प्रियंवदोऽपि कटुभाषी सत्कथकोऽप्यसत्कथक उच्यते इति भावः। च कल्पितत्वादसत्यापि भगवद्यशोऽश्रेत् तदेव सत्यं महाभ्रमनिवर्तकत्वादमङ्गलमपि तदेव मङ्गलं नान्यत् भगवतः परदारहरणादिकमपुण्यत्वेनाभिमतमपि तदेव पुण्यं यतो भगवतो गुणस्यैव नतु दोषस्योदयो यस्मात्तत् ॥ ४८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

मर्त्यस्य अनित्यलोकस्य परित्यागः ॥ ४२ ॥

युगलक्षणानि तेषु युगलक्षणानुरूपा वृत्तिश्च कलौ नृणाम् उपप्लवः बुद्धिव्यामोहः त्रिविधा प्राकृतिकी नैमित्तिकी नित्या चेति ॥ ४३—४५ ॥

कुत्रचित्युपलक्षणं शृण्वतित्यस्यापि ॥ ४६ ॥

श्रुतोऽनुभावो यस्य सः सङ्कीर्त्यमानः श्रुतानुभावमात्रो वेत्यर्थः। एतदप्युपलक्षणम् "स्मृतो वा ध्यातो वा" इत्यादेः ॥ ४७ ॥

मृषागिरः निरर्थिकाः वाचः असतीः असत्यः असतां कथा यासु ताः यत् यासु भगवान् न कथ्यते सत्यसफलम् भगवद्गुणानामुदयो यस्मात्तत् ॥ ४८ ॥

———

भाषा टीका।

फिर एकादश स्कन्ध में ब्राह्मणों के शाप के मिष से अपने यदुकुल का संहार करना, जिसके पीछे उद्धव और श्रीवासुदेव का अद्भुत सम्वाद है ॥ ४१ ॥

जिस सम्वाद में सम्पूर्ण अध्यात्मविद्या और धर्म का निर्णय किया है। पश्चात् अपने योगप्रभाव से श्रीकृष्ण को मनुष्य लोक का त्यागना, यह एकादश स्कन्ध का अर्थ समाप्त हुआ ॥ ४२ ॥

द्वादश स्कन्ध में युगों के लक्षण और वृत्ति का कथन,

तदेव (१) रम्यं रुचिरं नवन्नवं तदेव शश्वन्मनसो महोत्सवम् ।
तदेव शोकार्णवशोषणं नृणां यदुत्तमश्लोकयशोऽनुगीयते ॥ ४९ ॥
न(य)तद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत (२)कर्हिचित् ।
तद्ध्वाङ्क्षतीर्थं नतु हंससेवितं यत्राच्युतस्तत्र हि साधवोऽमलाः ॥ ५० ॥
स वाग्विसर्गो जनताऽघसंप्लवो यस्मिन् प्रतिश्लोकमबद्धवत्यपि ।
नामान्यनन्तस्य यशोङ्कितानि यच्छृण्वन्ति गायन्ति गृणन्ति साधवः ॥ ५१ ॥
नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् ।
कुतः पुनः शश्वदभद्रमीश्वरे न ह्यर्पितं कर्म (३)यदप्यनुत्तमम् ॥ ५२ ॥
यशःश्रियामेव परिश्रमः परो वर्णाश्रमाचारतपःश्रुतादिषु ।
अविस्मृतिः श्रीधरपादपद्मयोर्गुणानुवादः श्रवणादिभिर्हरेः ॥ ५३ ॥
अविस्मृतिः कृष्णपदारविन्दयोः क्षिणोत्यभद्राणि शमं तनोति च ।
सत्त्वस्य शुद्धिं (४)परमात्मभक्तिं ज्ञानं च विज्ञानविरागयुक्तम् ॥ ५४ ॥
यूयं द्विजाग्र्या बत भूरिभागा यच्छश्वदात्मन्यखिलात्मभूतम् ।
नारायणं देवमदेवमीश(५)मजस्रभावा भजताऽऽविवेश्य ॥ ५५ ॥
अहं च संस्मारित आत्मतत्त्वं श्रुतं पुरा मे परमर्षिवक्त्रात् ।
प्रायोपवेशे नृपतेः परीक्षितः सदस्यृषीणां महतां च शृण्वताम् ॥ ५६ ॥

भाषाटीका ।

कलियुग में मनुष्यों की उन वृत्तियों का व्यत्यय । फिर चार प्रकार के प्रलय और तीनप्रकार की उत्पत्ति का कथन ॥ ४३ ॥

पश्चात् राजर्षि विष्णुरात परीक्षित् का देह त्याग, फिर व्यास जी से वेद की शाखाओं का विभाग, फिर मार्कण्डेय ऋषि की सुन्दर कथा है, महापुरुष श्रीविष्णु के अंग पार्षद आयुध और भूषणों का विन्यास, फिर जगदात्मा श्रीसूर्यनारायण का विन्यास कहा है ॥ ४४ ॥

हे द्विजश्रेष्ठ हो ! जो तुमने प्रश्न किया सो इसप्रकार सम्पूर्ण तुम्हारे आगे वर्णन किया, तथा श्रीकृष्ण की लीला और अवतारों के कर्मों का सर्वत्र कीर्त्तन किया है ॥ ४५ ॥

पुरुष उच्चस्थान से गिरपड़े तब, चलने में खिसल पड़े उस समय में, अथवा आर्त्त होने पर, वा छींक लेकर भी " हरये नमः " इसप्रकार ऊँचे स्वर से यदि उच्चारण करै तो प्राणी सम्पूर्ण पातकों से छूट जाता है ॥ ४६ ॥

श्रीअनन्त भगवान् का कीर्त्तन करने से तथा प्रभाव सुनने से वे आप ही स्वयं चित्त में प्रवेश कर पुरुषों के सम्पूर्ण दुःखों को नष्ट करते हैं । जैसे अन्धकार को सूर्य दूर करता है, तथा जैसे प्रचण्ड पवन मेघ को नष्ट कर देता है ॥ ४७ ॥

जिन वाणियों में भगवान् श्री अधोक्षज नहीं गाये गये, वो वाणी मिथ्या और खोटी हैं, तथा असदालाप रूप हैं और जिनमें भगवद्गुणानुवाद का ही वर्णन है, वो ही सत्य है, वही वाणी मङ्गल रूप है, और वही पुण्य रूप है ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नवन्नवं यथा भवति तथा रुचिरं रुचिप्रदम् महानुत्सवो यस्मात् ॥ ४९ ॥

चित्राणि पदानि यस्मिन् तदपि जगत्पवित्रयतीति तथा तद्धरेर्यशो न प्रगृणाति न वर्णयेत्तद्वचो ध्वाङ्क्षतीर्थं काकतुल्यनराणां रतिस्थानं नतु हंसैर्ज्ञानिभिः सेवितम् तत्र हेतुः यत्रेति ॥ ५० ॥

स वाग्विसर्गः स एव वाचः प्रयोगो जनताऽघसम्प्लवो जनसमूहाघनाशकः यद्यस्मात्साध्वेवान्यैः कीर्त्यमानानि शृण्वन्ति श्रोतरि सति गायन्ति नो चेत्स्वयमेव गृणन्ति ॥ ५१ ॥

(१) पुण्यं । (२) यदि कर्हिचिज्जगत् । (३) यदप्यकारणम् । (४) परमात्म भक्तिं । (५) अचाह्यभावामजनाभिवेश्य । इति विज०पाठाः । अचाह्यभावाभजताभिवेश्य इति वीर० पाठः ।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पुनरपि स्तौति–तदेवेति । तदेव पुण्यं पुण्यकरं रुचिरं सुन्दरं महानुत्सवो येन तत्तथा ॥ ४९ ॥

न यद्वच इत्यादिश्लोकत्रयं व्याख्यातार्थम् ॥ ५०—५२ ॥

ननु, वर्णाश्रमाचारादिना निःश्रेयसं स्यात्तद्वर्णाश्रमाचारयुतो गृहस्थोऽपि विमुच्यत इत्यतोऽच्युतभावेन किं तत्राह—यश इति । यद्यच्युतभाववर्जितस्तर्हि वर्णाश्रमाचारतपःश्रुतादिषु परः परिश्रमः यशःश्रियामेवार्थं तत्त्वात्यन्तिकसिद्धये भवति। ननु, अच्युतभावः केन स्यात्तत्राह—अविस्मृतिरिति । गुणानुवादश्रवणादिभिः कृताच्युतभक्तेः पुंसः श्रीधरपादपद्मयोरविस्मृतिः निरन्तराभ्यासलक्षणां स्मरणं भवति ॥ ५३ ॥

सा कर्तुः किङ्करोति फलमित्याह–अविस्मृतिरिति । सत्त्वस्यान्तःकरणस्य ॥ ५४ ॥

यूयमवाह्यभावा अनन्यभक्ताः अदेवं द्वेषेभ्योऽन्यं नारायणं देवमात्मनि मनस्यभिवेश्य भजतेति यद्यस्मात्स्मान्भूरिभागा अति भाग्यवन्तः ॥ ५५ ॥

अहञ्च भूरिभाग इति स्मनयति–अहञ्चेति, भवद्भिरहञ्चात्मतत्त्वं संस्मारितः ममापीदमात्मतत्त्वमाम्नायतः, प्राप्तमित्याह–श्रुतमिति । प्रसङ्गोऽप्यनुकूल इत्याह—प्रायेति ॥ ५६—५७ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

न यद्वदिति । यत्राच्युतो गीयत इति शेषः ॥ ५० ॥

स वाग्विसर्ग इति प्रथमे व्याख्यातमेव उत्तमगायके सति शृण्वन्ति अस्य तु तादृशत्वे सति गायन्ति तदुभयाभावे शृण्वन्ति गीर्मोन्येवाप्यसन्ति चेत्यर्थः ॥ ५१—५७ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नरास्यमपि प्रसेनमार्गानुगमनभल्लूकबिलप्रवेशादिकं यत् तत् रम्यमेव रुचिरमिति भक्तानामरोचकमपि श्रीजानकीत्यागादिकं रुचिरमेव पुरातनमपि भगवच्चरित्रं नवं नवमेव मारीचानुगमनानन्तरम् रावणकृतसीताहरणादिकं मनसो महोत्सवनाशकमपि महोत्सवकरमेव पतिपुत्रादिवैराग्योत्पादकत्वेन शोकार्णवकरमपि तत् शोकार्णवशोषणमेव ॥ ४९ ॥

न यद्वच इति श्लोकत्रयम् भक्तेरेव सर्वोत्कर्षं व्यापकं महापुराणस्यास्य प्रथमेऽपि शेषेऽपि स्थापितं यथा महामन्त्रः कश्चिदाद्यन्तवर्तिना बीजत्रयेण पुटितस्स्यादिति ॥ ५० ॥ ५१ ॥

अनुत्तमं श्रेष्ठं निष्कामकर्म ॥ ५२ ॥

किञ्च, वर्णाश्रमादिषु यः परो महान् परिश्रमः स यशोयुक्तायाम् श्रियामेव पर्याप्तः प्रायो भवेत् यशःसम्पत्तिसाधक एव नतु भगवत्प्राप्तिसाधक इत्यर्थः । हरेर्गुणानुवादश्रवणादिभिस्तु यः परिश्रमः सतु श्रीधरपादपद्मयोरविस्मृतिर्न भवति विस्मृतिर्यस्मात् सः ॥ ५३ ॥

ततः किमत आह–अविस्मृतिरिति । शमं बुद्धेर्भगवन्निष्ठां "शमो मन्निष्ठता बुद्धेः" इति भगवदुक्तेः ॥ ५४ ॥

तद्देवं न विद्यते देवो यस्य यस्मादिति वा भजतेति सम्भावनायां लोट् ॥ ५५–६१ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत् वचः एव रम्यत्वादिगुणवत् यत् यस्मिन् वचसि ॥४९॥
जगत्पवित्रयतीति तत्तथा ध्वाङ्क्षतीर्थे नराकारकाकसेवितम् ॥५०॥

वाग्विसर्गः स एव वाचकः प्रयोगः ॥ ५१ ॥

निर्गतानि कर्माणि यस्मात्तन्निष्कर्मं तदेव नैष्कर्म्यं केवलक्षेत्रज्ञविषयकं ज्ञानम् निरञ्जनं सर्ववासनाशून्यम् तदप्यच्युतभावेन "देहेन्द्रियमनोबुद्धिप्राणादिभ्यो विलक्षणः" ज्ञानस्वरूपः ज्ञातृत्वादिधर्मकः क्षेत्रज्ञोऽच्युतात्मकः अतोऽच्युत उपास्यश्चेति इत्येवम्भूतेन वर्जितं चेन्न शोभते यदनुत्तमं नात्युत्तमं यस्मात्तदनुत्तमं निष्कामं कर्मापीश्वरेऽनर्पितं चेत्तदपि न शोभते यदा तदा शश्वदभद्रं काम्यं कर्म कुतः शोभते न कुतोऽपीत्यर्थः ॥ ५२ ॥

किञ्च, वर्णाश्रमाचारादिषु परः भगवत्सम्बन्धवर्जितो यः परिश्रमः यशोयुक्तायाः श्रियाः लपयेव चरितार्थो भवति दुःखोदर्कफलो भवतीत्यर्थः । हरेर्गुणानुवादादिभिस्तु श्रीधरपादपद्मयोरविस्मृतिः स्यात् ॥ ५३ ॥

अविस्मृतिफलमाह—अविस्मृतिरिति । शमं श्रीकृष्णप्राप्तिसुखम् ॥ ५४ ॥

देवं सर्वद्योतकमदेवमनन्यद्योत्यम् यतः भजत अतो भूरिभागाः ॥ ५५ ॥

आत्मा सर्वात्मा भगवान् तत्त्वमुपादेयो यस्मिन् तत्पुराणं मे मया परमयः श्रीशुकस्य वक्त्रात् अधुना तु भवद्भिरहं संस्मारितः स्मृतात्मतत्त्वः कृतः ॥ ५६ ॥

---

### भाषा टीका ।

जिस वचन में उत्तम श्लोक का यश गाया जाता है वही रम्य है रुचिर है तथा भक्तों को नवीन २ सदृश जान पड़ता है, और वही सदा मन के महान उत्सवका करने वाला है और वही मनुष्यों के शोक समुद्र को सुखाने वाला है ॥४९॥

चित्रपदों वाला भी जो वचन कदापि जगत्पवित्र श्रीहरि के यश को नहीं कहता है, वह काकों का तीर्थ है, उसका सेवन हंस नहीं करते, क्योंकि? जहां भी अच्युत भगवान् गाये जाते हैं अमल साधुजन उसी में रमते हैं, ॥ ५० ॥

वह वाणी का उच्चारण जनों के पापों का नाश करने वाला है, जिसमें प्रति श्लोक अपशब्द होने पर भी अनंत भगवान् के यश से अंकित नाम गाये जाते हैं और जिसको साधु जन वक्ता के मिलने पर श्रवण करते है, श्रोताओं के मिलने पर कथन करते हैं, दोनों के अभाव काल में आपही मनन करते हैं, ॥ ५१ ॥

ब्रह्म के कथन करने वाला उपाधियों का निवर्तक ऐसा भी ज्ञान हो परंच यदि श्रीकृष्ण के भक्ति से वर्जित होवे

एतद्वः कथितं विप्राः ! कथनीयोरुकर्मणः ।
माहात्म्यं वासुदेवस्य सर्वाशुभविनाशनम् ॥ ५७ ॥
य एवं श्रावयेन्नित्यं यामक्षणमनन्यधीः ।
श्रद्धावान् योऽनुशृणुयात्पुनात्यात्मानमेव सः ॥ ५८ ॥
द्वादश्यामेकादश्यां वा शृण्वन्नायुष्यवान् भवेत् ।
(१)पठत्यनश्नन् प्रयतस्ततो भवत्यपातकी ॥ ५९ ॥
पुष्करे मथुरायां च द्वारवत्यां यतात्मवान् ।
उपोष्य संहितामेतां पठित्वा मुच्यते भयात् ॥ ६० ॥
देवता मुनयः सिद्धाः पितरो मनवो नृपाः ।
यच्छन्ति कामान् गृणतः शृण्वतो यस्य कीर्त्तनात् ॥ ६१ ॥
(२)ऋचो यजूंषि सामानि द्विजोऽधीत्यानुविन्दते ।
मधुकुल्या घृतकुल्याः पयःकुल्याश्च तत्फलम् ॥ ६२ ॥
पुराणसंहितामेतामधीत्य प्रयतो द्विजः ।
प्रोक्तं भगवता [तो] यत्तु तत्पदं परमं व्रजेत् ॥ ६३ ॥
विप्रोऽधीत्याऽऽप्नुयात्प्रज्ञां राजन्योदधिमेखलाम् ।
वैश्यो निधिपतित्वं च शूद्रः शुध्येत पातकात् ॥ ६४ ॥

भाषा टीका ।

तो वह ज्ञान अच्छी प्रकार शोभा को नहीं प्राप्त होता, तथ फिर सर्वोत्तम कर्म भी हो और यदि ईश्वर में अर्पण नहीं किया गया हो, तो वह सदा अमंगल है, इसमें क्या संदेह है ५२

वर्ण आश्रम आचार तप इनमें जो परिश्रम है वह केवल यश से युक्त सम्पत्ति की ही कीर्ति है, और हरि के गुणानुवाद श्रवणादि से श्रीधर के चरण कमल का जो अविस्मरण है वही परमपुरुषार्थ है ॥ ५३ ॥

श्रीकृष्ण के चरणारविन्दों का अविस्मरण ही समस्त अमंगलों को नाश करता है, और शांति का विस्तार करता है, तथा सत्व की शुद्धि परमात्मा की भक्ति और विज्ञान वैराग्य सहित ज्ञान का भी विस्तार करता है ॥ ५४ ॥

हे द्विज श्रेष्ठ हो ! आप लोग बड़े भाग्य शाली हो आप लोग, सम्पूर्ण के आत्म स्वरूप सर्वोपास्य और जिनका अन्य कोई उपास्य नहीं ऐसे श्रीनारायण को अपने आत्मा में ध्यान द्वारा प्रवेश करके निरंतर भावना युक्त होकर उनही को भजो ॥ ५५ ॥

आपने कृपा करिके मेरे लिये उस आत्मतत्वका स्मरण कराया, जो कि—मैंने गंगा तट पर राजा परीक्षित की सभा में बड़े २ ऋषियों के सुनते २ पूर्व काल में श्रीशुकदेव जी के मुख से सुना रहा ॥ ५६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एतत्पुराणकीर्त्तनादिफलं प्रपञ्चयितुमाह-एतदित्यष्टभिः ॥ ५७॥

यामक्षणं याम क्षणं वेत्यर्थः । आत्मानमेव साक्षात्पुनाति नतु स्नानादिवद्देहमात्रम् ॥ ५८—६१ ॥

ऋगाद्यधीत्य द्विजो मधुकुल्यादि यदनुविन्दते तत्फलमेतां पठित्वाऽनुविन्दत इति ॥ ६२ ॥

किञ्च, प्रोक्तमिति ॥ ६३ ॥

राजन्य उदधिमेखलां पृथ्वीं लभेतेत्यर्थः ॥ ६४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कालदेशविशेषयोगात् फलविशेषानाह—श्रद्धावानिति ॥ ५८—६० ॥

फलप्रदानाह-देवता इति ॥ ६१ ॥

फलातिशयमाह-ऋच इति ॥ ६२—६३ ॥

अधिकारानुरूपफलविशेषमाह—विप्र इति । उदधिमेखलां भूमिम् ॥ ६४ ॥

(१) पठत्यनश्नन् प्रयतः पूतो भवति पातकी इति वीर०

(२) ऋषयः इति च ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एतत्पुराणकीर्त्तनादिफलं प्रपञ्चयति—षड्भिः, एतदिति । कथनीयानि उरूणयपरिमितानि कर्माणि चेष्टितानि यस्य तस्य विष्णोः वासुदेवस्य महात्म्यप्रकाशकं वो युष्मभ्यं कथितमेतत्पुराणं सर्वाशुभविनाशकं कीर्त्तयतां सर्वमङ्गलविधानकम् ॥ ५७ ॥

श्रवणफलमाह-य एवमिति । यामं क्षणं चेत्यर्थः स आत्मानं पुनात्येव ॥ ५८ ॥

कालविशेषयोगात्फलविशेषानाह—द्वादश्यामिति । यः पातकवापि प्रयतः समाहितचित्तः अनन्यः प्रयोजनान्तररहितः सन् पठति स पूतो भवति अनश्लन्निति पाठान्तरम् ॥ ५९ ॥

पुष्कर इति यतात्मवान्समाहितमनाः ॥ ६० ॥

सर्वफलसाधनत्वं वदन् फलदानाह-देवतादयः इति । येऽत्र पुराणेऽनुकीर्त्तिताः ते देवादयः गृणतः कथयतः शृण्वतो वा पुरुषस्य कामानिष्टार्थान्यच्छन्ति देवताद्यन्तर्यामी भगवान् यच्छतीति भावः ॥ ६१ ॥

फलातिशयमाह-ऋच इति । वेदत्रयमधीत्य यत्फलं प्राप्नुयान्मधुकुल्यादिरूपो यत्फलं मध्वादिप्रवाहयुक्तास्वर्गाद्यत्फलमित्यर्थः । तत्फलं प्राप्नुयात ॥ ६२ ॥

किञ्चैताम् पुराणसंहितामधीत्य यदुद्गतमनः विष्णोः परमं पदं प्रोक्तं प्रतिपादितं तदुव्रजेत्प्राप्नुयात् ॥ ६३ ॥

अधिकारानुरूपान् फलविशेषानाह-विप्र इति । राजन्यः अम्बुधिमेखलां पृथ्वीं शूद्रः श्रुत्वा पातकान्मुच्येत इत्यर्थः ॥ ६४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यामं क्षणं वा नान्यानन्तरितायां द्वितीया आत्मानम् मनः ॥ ५८ ॥

कालविशेषमाह-द्वादश्यामिति ॥ ५९ ॥

देशविशेषमाह-पुष्कर इति । पुष्करे वराहक्षेत्रे भयात् संसारभयात् ॥ ६० ॥

अत्र ये देवादयः कीर्त्तितास्तेऽपि संहितापाठादिकुर्वतोऽभीष्टानि ददतीत्याह, देवता इति ॥ ६१ ॥

किञ्च, ऋगादीन्यधीत्य यत्फलं स्यात्तदेतत्संहितामधीत्य स्यादित्याह-ऋच इति । मधुकुल्या मधुनद्यः मधुनद्यादिकथनं सुखविशेषार्थम् ॥ ६२ ॥

न केवलमैहिकं फलं किन्तु मुक्तिरपीति कथयति, पुराणेति यद्विष्णोः परमं पदं तद्व्रजेत् ॥ ६३ ॥

अम्बुधिमेखलां भूमिम् ॥ ६४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवमिति-आत्मानमेव पुनाति किं वक्तव्यं कात्स्न्यं सर्वमेव पुनातीत्यर्थः ॥ ५८ ॥

द्वादश्यामेकादश्यां वेति यदा यस्यां व्रतं प्राप्यते तदा तस्यामेवेत्यर्थः ॥ ५९—६३ ॥

विप्रोऽधीत्येत्यादिकं तत्तत्कामाग्रहपराणां प्रवर्त्तनार्थमापातफलम् ॥ ६४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ऋगाद्यधीत्य द्विजो मधुकुल्यादि यदनुविन्दते तत्फलमेतां पठित्वा अनुविन्दते इति ॥ ६२ ॥ ६३ ॥

राजन्य उदधिमेखलां सन्धिरार्षः ॥ ६४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

माहात्म्यं माहात्म्यप्रकाशकं महापुराणं वाक्यवाक्यार्थभेदात् ॥ ५७—६१ ॥

मधुकुल्यादि यदनुविन्दते तत्फलं प्रयतः सावधानः एतामधीत्यानुविन्दते यत्पूर्वत्र बहुशः प्रोक्तं भगवतः पदं तद्व्रजेदिति क्रियाऽऽरम्भयः ॥ ६२—६३ ।

राजन्योदधिमेखलां भुवं सन्धिरार्षः ॥ ६४ ॥

---

भाषाटीका

हे विप्र हो ! कथन करने योग्य हैं चरित्र जिनके ऐसे श्रीवासुदेव भगवान् के सर्व अशुभों को नाश करने वाला यह माहात्म्य हमने तुमसे कहा ॥ ५७ ॥

इसको जो पुरुष नित्य प्रहर भर अथवा क्षण मात्र भी अनन्य बुद्धि होकर श्रवण करावे और जो पुरुष श्रद्धावाला होकर श्रवण करै, वह अपने आत्मा को अवश्य ही पवित्र करता है ॥ ५८ ॥

द्वादशी अथवा एकादशी में श्रवण करने से पुरुष आयुष्य वाला होता है, और जो पुरुष प्रयत्न पूर्वक उपवास करके इस संहिता का पाठ करते हैं, उनके समस्त पातक नष्ट होजाते हैं ॥ ५९ ॥

पुष्कर में मथुरा में अथवा द्वारका में जितेन्द्रिय होकर उपवास करके जो पुरुष इस संहिता का पाठ करते हैं, वे संसार के भय से छूटकर परम धाम को प्राप्त होते हैं ॥ ६० ॥

जो पुरुष इस संहिता का श्रवण करते हैं, कीर्तन करते हैं, तथा मनन करते हैं, देवता मुनि सिद्ध पितर और नृपलोक उनकी कामना को पूर्ण करते हैं ॥ ६१ ॥

द्विज वर्ण, ऋग्वेद यजुर्वेद और सामवेद को पढ़ने से जिस मधु की नदी घृत की नदी और दुग्ध की नदी रूप फल को प्राप्त होते हैं, सो सब इस संहित के पढ़ने से प्राप्त होते हैं ॥ ६२ ॥

हे ब्राह्मण हो ! प्रयत्न पूर्वक इस पुराण संहिता को पढ़कर पुरुष श्रीविष्णु भगवान् के सर्वोत्कृष्ट परमपद को प्राप्त होता है ॥ ६३ ॥

ब्राह्मण, इस संहिता को पढ़कर बुद्धि को प्राप्त होता है, क्षत्रिय, समुद्रान्त पृथिवी के राज्य को प्राप्त होता है, वैश्य, निधि का पति होता है, तथा शूद्र, सम्पूर्ण पातकों से शुद्ध होता है ॥ ६४ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

व्यतिरिक्तसङ्गः अपिशब्दः समुच्चये यद्वा सुलभतरसमाधि-नया साक्षात्कृतान्तरात्मस्वरूपोऽपि भगवल्लीलाभिराकृष्टचित्त इत्यर्थः । तदीयमजितस्वरूपरूपगुणविभूतिप्रकाशकं तत्त्वानां चिद्-चिद्रूपाणाम् अनारोपिताकाराणां दीपमिव प्रकाशकमत एवाखिल-पापघ्नम् इदं पुराणं यः कृपया व्यतनुत प्रकाशितवान् तं व्यास-सूनुं श्रीशुकं नतोऽस्मि ॥ ६८ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्वादशोऽध्यायः ॥ १२ ॥
[ अत्राध्यायो न समाप्यते ]

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतरपुराणेभ्योऽस्य माहात्म्याधिक्यात्फलाधिक्यं माहात्म्याधिक्यं च प्रतिपदं प्रत्यक्षरं च श्रीनारायणस्य गुणगणप्रतिपादकत्वेन-त्याह—कलिमलेति । कलिमलं संसारं च कालयति नाशयतीति कलिमलसंसृतिकालनः इतरत्र पुराणेषु इह पुराणे अशेषमूर्तिः कथाप्रसङ्गैः । ६५ ॥

गुरुनमस्कारानन्तरं तदुपदिष्टस्वरूपं श्रीनारायणं नमति, तमिति । यो भागवतस्याद्यपद्यमारभ्य प्रतिपादितस्तं नतोऽस्मीत्यन्वयः जगदुदया-दिषु आत्मशक्तिं स्वरूपशक्तिम् आत्मतन्त्रं स्वतन्त्रम् अजं सर्वज्ञं देहवत एव ज्ञानोत्पत्तेः अस्य तदभावात् स्वज्ञानेनैव सर्वं जाना-तीति देशतः कालतो गुणतश्चानन्तं द्युपतिभिर्ज्ञानपतिभिरज-शङ्कराद्यैः दुरवसितस्तवम् अनिश्चितस्तुतिम् अच्युतं मायानिमित्त-च्युतिरहितम् ॥ ६६ ॥

उपचितनवशक्तिभिः मूलप्रकृतिमहदहङ्कारमनःपञ्चभूताख्य-नवशक्तिभिः आत्मनि स्वाधारतया उपरचितयाः स्थिरजङ्गमयोः येन स तथा तस्मै उपलब्धिमात्रधाम्ने केवलज्ञानस्वरूपाय सुर-ऋषभाय देवोत्तमाय सनातनाय शब्दमात्रैकविषयाय नमः अनेन श्लोकद्वयेन जन्माद्यस्य यत इत्यादेरर्थो दर्शित इति ॥ ६७ ॥

सूतो ग्रन्थावसानेऽपि गुरुनमस्कारं करोति, स्वसुखेति । स्वा-नन्दयात् स्वः परमात्मा तन्निष्ठं सुखं स्वसुखं तेन निभृतं पूर्णं चेतो यस्य स तथा स्वरूपसुखश्च निभृतज्ञानश्च स्वसुखनिभृत-चेताः चेतो ज्ञानमिति वा तेन सुखेन व्युदस्तान्यभावः निरस्तान्य-विषयबुद्धिः तेन विज्ञानेन निरस्तान्यज्ञान इति वा अपि कृत-कृत्योऽपि अजितस्य हरेरुचिरया लीलया आकृष्टसारः विवशी-कृतचित्तस्थैर्यः तस्य हरेः सम्बन्धि अत एव तत्त्वदीपकं पुराणं व्यतनुत व्याख्यया विस्तृतवान् तं व्याससूनुं शुकं नतोऽस्मि॥६८॥

सत्यं ज्ञानमनन्तमच्युतमजं निर्दुःखसौख्योदधिम्—
निर्दोषामितभेदवेदितमहं वन्दे मुकुन्दं सदा ॥
भक्त्या कमलाब्जजेशगिरिशानन्तादिदेवाः पदम्—
सायुज्यं प्रभरन्त्वनेकविधया सत्यो विरत्या च तम् ॥
व्याख्या भागवतस्य कृष्णरचिता स्वत्प्रीतिकामात्मना—
प्रीतश्चेत्प्रददासि तत्प्रतिनिधिं तज्जीन्वरिष्ये वरान् ॥

प्राङ्क्लिष्टकश्रमतो तव प्रतिभवं पादारविन्दात्मना—
संसक्तिं सुखतीर्थशास्त्रविजराहारस्य पारं तथा ॥
पदरत्नावलीकण्ठे राजतां हि मुरद्विषः ।
यत्नमालेव मालेव मौक्तिकी कृष्णवल्लभा ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्वादशोऽध्यायः ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कलिमलेति । कालनो नाशनः इतरत्र कर्मब्रह्मादिकप्रतिपादक-शास्त्रान्तरे अखिलेशो विराडन्तर्यामी नारायणोऽपि तत्पालको विष्णु-र्वाऽपि न गीयते कश्चिद्गीयते वा तत्रत्वभीक्ष्णं नैव गीयते तुशब्दोऽवधारणे साक्षाच्छ्रीभगवान् पुनरिह श्रीभागवत एवाभीक्ष्णं गीयते नारायणादयो वा यत्र वर्णितास्तेऽप्यशेषा एव मूर्त-योऽवतारा यस्य सः तथाभूत एव गीयते नत्वितरत्रैव तद्-विवेकेनेत्यर्थः । अत एव तत्तत्कथाप्रसङ्गैरप्यनुपदं पदम्पद-मपि अङ्गीकृत्य भगवानेव परि सर्वतोभावेन पठितो व्यक्त-मेवोक्त इति ॥ ६५—६७ ॥

नमस्कुर्वन्नेव वक्तृहृदयनिष्ठापर्यालोचनया समस्तग्रन्थतात्पर्यं निर्धारयति—स्वसुखेति । अत्राखिलवृजिनं तादृशभावस्य प्रतिकूल-मुदासीनं च सर्वं ज्ञेयम् अजितशब्देनात्र श्रीकृष्ण एवेति प्रथमे श्रीबादरायणसमाधौ व्यक्तीकृतोऽस्ति ॥ ६८ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
द्वादशोऽध्यायः ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कालनः विनाशकः अनुपदं प्रतिप्रकरणमेव ॥ ६५ ॥

शास्त्रप्रतिपादितं देवं प्रणमति—तम् अजं नतोऽस्मि किं ब्रह्माणं नमसि न अनन्तं किं प्रधानं न आत्मतत्त्वं चेतन-स्वरूपं किं शुद्धं जीवं न जगदुदयादय आत्मशक्तितो यस्य तं किं दुर्गापतिं शंभुं न द्युपतिभिर्देवैरजाद्यैरपि दुरवसित-स्तवम् अज्ञातस्तुतिकम् अच्युतम् श्रीकृष्णम् ॥ ६६ ॥

तमेव स्वान्तर्यामित्वेन प्रणमति—नवशक्तिभिः प्रकृति-पुरुषमहदहङ्कारतन्मात्ररूपाभिः ॥ ६७ ॥

स्वेष्टदेवं प्रणम्य श्रीगुरुं प्रणमति—स्वसुखेन ब्रह्मानन्देन निभृतं परिपूर्णं चेतो यस्य सः तेन तथात्वेनैव व्युदस्तो दूरीभूतो अन्यत्र भावो मनोव्यापारो यस्य तथाभूतोऽप्यजितस्य कृष्णस्य रुचिरलीलया कर्त्र्या अतिबलवत्या आकृष्टः तस्माद्ब्रह्मा-नन्दात् सकाशादपि स्वस्मिन्नानीतः सारो रसानुभवसाम-र्थ्यम् यस्य सः ब्रह्मरसास्वादादपि लीलारसास्वादे माधु-र्याधिक्यमनुभूय तत्रैव यः प्राप्तनिष्ठोऽभूदिति भावः । तेन लीलारसोऽयं तस्य न समाधिभञ्जकः प्रत्यूह इति व्याख्येयं तथा

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

त्वे सति तेन पुनरपि तादृशसमाध्यर्थमेवायनिष्पन्न ननु तथा कृतं प्रत्युत कृपयाऽन्येभ्योऽपि तादृशलीलारसास्वादादित्सया तत्त्वदीपम् लीलारसतत्त्वप्रकाशकं व्यतनुत अत एवोक्तम् "हरेर्गुणाक्षिप्तमतिर्भगवान् बादरायणिः" इति 'परिनिष्ठितोऽपि नैर्गुण्ये' इत्यादि च॥ ६८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
द्वादशे द्वादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अनुपदं प्रतिप्रकरणम् ॥ ६५ ॥

उक्तमाहात्म्यस्य महापुराणस्य विषयं भगवन्तं नमस्करोति, तमिति द्वाभ्याम्। जगदुद्भवाद्यात्मानस्तत्त्वन्तवः प्रकृत्याद्याः शक्तयो यस्य स तम् ॥ ६६ ॥

उपचिताभिः समृद्धाभिः प्रकृतिपुरुषमहदहङ्कारतन्मात्ररूपाभिः नवशक्तिभिः स्व आत्मन्येव उपरचिताः स्थिताः स्थिरचरमाः आलयो यस्य तस्मै श्रीचरणारविन्दयोरित्यनेन विग्रहः गुणाः "हिरण्मयः पुरुषः" इत्यादिश्रुतिप्रसिद्धाः सूचिताः। स्वरूपगुणान् "अस्थूलः" इत्यादिश्रुतिप्रसिद्धान् सूचयितुं विशिनष्टि-उपलब्धिमात्रधाम्ने इति। उपलब्धिमात्रं स्थूलत्वादिप्राकृतदोषविवर्जितं धाम स्वरूपं यस्य तस्मै ॥ ६७ ॥

हरिं प्रणम्य गुरुं प्रणमति, स्वसुखेति। स्वसुखेन निभृतं परिपूर्णं चेतो यस्य सः तेनैव व्युदस्तो दूरीभूतोऽन्यविषयान् ऐहिकामुष्मिकपदार्थे भावो यस्य तथाभूतोऽपि अजितस्य श्रीकृष्णस्य रुचिराभिः लीलाभिस्तत्स्वरूपगुणाद्यतिशयाख्याभिः आकृष्टः स्वसुखादपहृत्याकृष्य परमस्वरूपगुणाद्यनुभवानन्दे स्थापितः सारः धैर्यं यस्य सः अत एव अन्येष्वपि तादृशानन्दार्थित्वेन यदीयं श्रीकृष्णचरित्रलीलाप्रतिपादकं पुराणं तत्त्वदीपं श्रीकृष्णस्वरूपगुणादिपारम्यप्रकाशकं कृपया यो व्यतनुत तं नतोऽस्मि ॥६८

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वादशाऽध्यायार्थप्रकाशः ॥ १२ ॥

---

भाषा टीका।

कलियुग के मलके समूह को नाश करने वाले श्रीहरि इतर शास्त्र में निरन्तर नहि गाये हैं, और इस श्रीभागवत में तो अशेषमूर्ति श्रीभगवान् कथा प्रसङ्गों के द्वारा पद पद में गाये गये हैं, इसी से यह पुराण सर्वोत्तम है ॥ ६५ ॥

जगत की उत्पत्ति स्थिति और संहार करने वाली जिन की शक्ति है, ब्रह्मा इन्द्र और शङ्करादि देवताओं से जिनकी स्तुति होना दुस्तर है, ऐसे अज अनन्त आत्मतत्त्व जो श्रीअच्युत भगवान् हैं, तिन को मैं नमस्कार करता हू ॥ ६६ ॥

वृद्धिको प्राप्त होने वाली नव शक्तियों से अपने आत्मा ही में रचा है, स्थावर जंगम प्राणियों का निवास स्थान जिन्होंने ऐसे, ज्ञानमात्र स्वरूप वाले, सनातन, देवताओं में श्रेष्ठ, जो श्रीविष्णु भगवान् हैं, तिनको नमस्कार है ॥ ६७ ॥

निज सुख से भरा हुआ है चित्त जिनका, तिसी से दूर हुआ है अन्य में भाव जिनका ऐसे, और पश्चात् श्रीकृष्ण लीला से खींचा गया है, मन जिनका, ऐसे जिन श्रीशुकदेव जी ने कृपाकर श्रीहरि के तत्त्व को प्रकाश करने वाले इस पुराण का विस्तार किया, सम्पूर्ण दुःखों के नाशक उन श्रीव्यासनन्दन को मैं नमस्कार करता हुं ॥ ६८ ॥

इति श्रीमद्भागवत द्वादशस्कन्ध में बारहवें अध्याय की,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्ता ॥ १२ ॥

---

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः ।

—:०:—

सूत उवाच ।

यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवै—

वेदैस्साङ्गपदक्रमोपनिषदैः गायन्ति यं सामगाः ।

ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो—

यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥ १ ॥

पृष्ठे भ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयना—

न्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पान्तु वः ।

यत्संस्कारकलानुवर्तनवशाद्वेलानिभेनाम्भसां—

यातायातमतन्द्रितं जलनिधेर्नाद्यापि विश्राम्यति ॥२॥

पुराणसङ्ख्यासम्भूतिमस्य वाच्यप्रयोजने ।
दानं दानस्य माहात्म्यं पाठादेश्च निबोधत ॥ ३ ॥

ब्राह्मं दशसहस्राणि पाद्मं पञ्चोनषष्टि च ।
श्रीवैष्णवं त्रयोविंशच्चतुर्विंशतिशैवकम् ॥ ४ ॥

दशाष्टौ श्रीभागवतं नारदं पञ्चविंशतिः ।
मार्कण्डं नव वाह्नं तु दशपञ्चचतुःशतम् ॥ ५ ॥

चतुर्दश भविष्यं स्यात्तथा पञ्चशतानि च ।
दशाष्टौ ब्रह्मवैवर्तं लिङ्गमेकादशैव तु ॥ ६ ॥

चतुर्विंशतिवाराहमेकाशीतिसहस्रकम् ।
स्कान्दं दश तथा चैकं वामनं दश कीर्तितम् ॥ ७ ॥

कौर्मं सप्तदशाख्यातं मात्स्यं तत्तु चतुर्दश ।
एकोनविंशत्सौपर्णं ब्रह्माण्डं द्वादशैव तु ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रयोदशे पुराणानां सङ्ख्यामाह यथाक्रमम् ।
दानं दानस्य माहात्म्यं श्रीमद्भागवतस्य च ॥

सर्वपुराणसङ्ख्यादीनुपवर्णयिष्यंस्तत्प्रतिपाद्यं देवं प्रणमति, यमिति । स्तवैर्वेदैश्च स्तुवन्ति स्तुवन्ति उपनिषत्स्वरूपस्याकारान्तरं छन्दोऽनुरोधेन ध्यानेनावस्थितं निश्चलं तद्गतं च यन्मनस्तेन यस्यान्तं न विदुः सुरासुरगणाः ॥ १ ॥

क्षीरोदमथनादौ दुर्धरत्वमेव प्रदर्शयितुं कूर्मावतारमनुस्मार-यन्नाशिषः प्रार्थयते—पृष्ठे भ्राम्यन्नमन्दो मन्दरगिरिर्गरिष्ठो मन्दराचलस्तस्य ग्रावाणस्तेषामग्राणि तैः कण्डूयनात्तेन सुखेन निद्रालोर्निद्राशीलस्य येषां श्वासानिलानां संस्कारास्तेषां कलाः लेशास्तदनुवर्तनवशाज्जलनिधेरम्भसाम् यातायातं न विश्राम्यति । ननु, समुद्रक्षोभादेव तत्र संस्कारवशात्तत्राऽऽह—वेलाम्भसस्य निभेन मिषेण ॥ २ ॥

पुराणसंहितानां सङ्ख्यास्तासां सम्भूतिं समाहारम् अस्य तु श्रीभागवतस्य वाच्यं विषयः प्रयोजनं च दानं च तस्य पाठादेश्च माहात्म्यं निबोधत ॥ ३ ॥

एवं पुराणसन्दोहश्चतुर्लक्ष उदाहृतः ।
तत्राष्टादशसाहस्रं श्रीभागवतमिष्यते ॥ ९ ॥
इदं भगवता पूर्वं ब्रह्मणे नाभिपङ्कजे ।
स्थिताय भवभीताय कारुण्यात्सम्प्रकाशितम् ॥ १० ॥
आदिमध्यावसानेषु वैराग्याख्यानसंयुतम् ।
हरिलीलाकथाव्राताऽमृतानन्दितसत्सुरम् ॥ ११ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथांशतो सर्वशास्त्रसाररूपश्रीमद्भागवतश्रेष्ठ्यं वर्णयिष्यन् तदिष्टदेवभूतभगवन्नतिपूर्वकं पुराणसङ्ख्यासम्भूतिं दर्शयति—नमामि सार्द्धैस्त्रिभिः। स्तुन्वन्ति स्तवन्ति उपनिषच्छन्दस्त्वाकारान्तत्वं छान्दसं स्तुतिगानध्यानविषयत्वेऽपीयत्तानवच्छिन्नत्वं दर्शयति, अन्तं न विदुरिति ॥ १ ॥

भगवतः इयत्तानवच्छिन्नत्वं कैमुतिकन्यायेन द्रढयितुं तदवतारेषु कूर्मावतारस्य दुर्ज्ञेयत्वं दर्शयन् समुद्रमथनच्छलेन अमृतोत्पादनवत्सकलशास्त्रमथनेन श्रीमद्भागवतोत्पत्तिं च द्योतयति, पृष्ठे भ्राम्यत् अमन्दोऽतिमन्थनात् गरिष्ठश्च यो मन्दरस्तस्य ग्रावाग्रैः कण्डूयनात् सुखोत्पादकसङ्घर्षणात् हेतोर्निद्रालोः निद्राशीलस्य श्वासानिलाः वः पान्तु यत् येषां श्वासानिलानां संस्कारकलानुवर्तनवशात् जलनिधेरम्भसामतन्द्रितं निरन्तरं यातायातमद्यापि न विश्राम्यति तत्त्वमसौ गमनागमनं समुद्रक्षोभाद्भवतीत्यत आह, वेलानिभेनेति । वेलाक्षोभस्तस्य निभेन मिषेण अनेन वाक्यप्रजयादिष्वनेनपदार्थेषु यत्र यत्र क्रिया सा भगवत्कर्तृकैवातः स्वभाववादो नाङ्गीकार्य इति द्योत्यते ॥ २ ॥

पुराणानां पृथक् पृथक् याः सङ्ख्यास्तासां सम्भूतिं समाहारम् अस्य श्रीमद्भागवतस्य वाच्यप्रयोजने विषयफले दानं तन्माहात्म्यं पाठादेर्माहात्म्यम् आदिशब्देन श्रवणादे गृहाण ॥ ३ ॥

त्रयोविंशत् त्रयोविंशतिः ॥ ४ ॥

ब्राह्ममाग्नेयं दशपञ्च सहस्राणि चत्वारि शतानि च ॥ ५—८ ॥

---

भाषा टीका ।

सूत उवाच ॥

सूतजी बोले कि—ब्रह्मा वरुण और मरुत् अर्थात् देव लोग दिव्य स्तोत्रों से जिनकी स्तुति करते हैं। तथा साम गान करने वाले, अंग पद क्रम उपनिषदों सहित वेदों से जिनकी स्तुति करते हैं, और ध्यान में स्थित होकर जिन परमात्मा के विषय मन लगाकर योगिजन जिनको देखते हैं, तथा सुर असुर गण जिनके अंत को नहीं जान सकते, ऐसे देव श्रीनारायण को नमस्कार हो ॥ १ ॥

पीठ पर भ्रमते हुए बड़े भारी मंदराचल की शिलाओं के अग्र भाग से गात्र खुजाने के समान निद्रा का अनुभव करने वाले श्रीकच्छपरूप भगवान् के श्वास से निकले हुए पवन, तुम सबों की रक्षा करो, जिस पवन के संस्कार के लेशमात्र अनुवर्तन के वश से समुद्र की लहर के बहाने [मिष] से समुद्र के जलों का आना जाना निरंतर अब भी नहीं विश्राम लेता है ॥ २ ॥

सूतजी दो श्लोकों में मंगला चरण करके बोले कि—हे शौनकादिक हो ! अब तुम पुराणों की संख्या का समाहार और श्रीमद्भागवत का विषय प्रयोजन और दान तथा पाठादि का माहात्म्य श्रवण करो, ॥ ३ ॥

ब्रह्मपुराण दशसहस्र १०००० है, अर्थात् ब्रह्मपुराण के दश सहस्र श्लोक हैं, पद्मपुराण पचपन सहस्र ५५००० है, श्री विष्णु पुराण तेईस सहस्र २३००० है, शैवपुराण चौबीस सहस्र २४००० है ॥ ४ ॥

यह श्रीमत्भागवत पुराण अठारह सहस्र १८०० है, नारद पुराण पचीस सहस्र २५००० है, मार्कंडेय पुराण नव सहस्र ९००० है, अग्नि पुराण पन्द्रह हजार चार सौ १५४०० है ॥ ५ ॥

भविष्य पुराण चौदह हजार पांच सौ १४५०० है, ब्रह्मवैवर्तपुराण अठारह सहस्र १८००० है, लिंग पुराण एकादश सहस्र ११००० है ॥ ६ ॥

वाराह पुराण चौबीस सहस्र २४००० है, स्कन्द पुराण इक्यासीसहस्र एकसौ ८११०० है, वामन पुराण दश सहस्र १०००० है ॥ ७ ॥

कूर्म पुराण सत्रह सहस्र १७००० है, मत्स्य पुराण चतुर्दश सहस्र १४००० है, गरुड पुराण उन्नीस सहस्र १९००० है, और ब्रह्माण्डपुराण द्वादश सहस्र १२००० है, ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

महाभारतं सेतिहासः रामायणं च ऋषिप्रोक्तं काव्यम् अतः पुराणानां सन्दोहः समूहश्चतुर्लक्षसङ्ख्याक एव इदानीमस्य वाच्यप्रयोजनादीन् दर्शयितुमाह—तत्रेत्यादिना ॥ ९ ॥ १० ॥

हरिलीलाकथानां व्रातः समूहः स एवामृतं तेनानन्दिताः सन्तः सुराश्च येन तत् ॥ ११ ॥

सर्ववेदान्तसारं यद्ब्रह्मात्मैकत्वलक्षणम् ।
वस्त्वद्वितीयं तन्निष्ठं कैवल्यैकप्रयोजनम् ॥ १२ ॥
प्रौष्ठपद्यां पौर्णमास्यां हेमसिंहसमन्वितम् ।
ददाति यो भागवतं स याति परमाङ्गतिम् ॥ १३ ॥
राजन्ते तावदन्यानि पुराणानि सताङ्गणे ।
यावन्न दृश्यते साक्षाच्छ्रीमद्भागवतं परम् ॥ १४ ॥
सर्ववेदान्तसारं हि श्रीभागवतमिष्यते ।
तद्रसाऽमृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित् ॥ १५ ॥
निम्नगानां यथा गङ्गा देवानामच्युतो यथा ।
वैष्णवानां यथा शम्भुः पुराणानामिदं तथा ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तन्निष्ठं तद्विषयम् ॥ १२ ॥

प्रौष्ठपद्यां भाद्रपद्याम् हेमसिंहसमन्वितं सुवर्णसिंहासनाऽऽरूढम् ॥ १३ ॥ १४ ॥

तद्रस एवाऽमृतं तेन तृप्तस्य निर्वृतस्य ॥ १५—१७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमिति । अतः पुराणानां सन्दोहः समूहश्चतुर्लक्षसंख्याक एव इदानीन्तस्य वाच्यादीन् दर्शयितुमाह तत्रेत्यादिना ॥ ९ ॥

इदमिति भगवता श्रीनारायणेन सम्प्रदर्शितं चतुःश्लोकरूपेणेति शेषः ॥ १० ॥

यद्यप्यत्राद्विसंख्यासमानेषु पृथगाख्यानैर्नानाविधैराख्यानैः संयुतं तथापि सर्वत्र हरिलीलाकथानां व्रातः समूह एवाऽमृतं तेनाऽऽनन्दिताः सन्तश्च सुराश्च येन तत् ॥ ११ ॥

अनेन वाच्यं प्रधानं सूचितं—तत्स्पष्टमेवाह-सर्वेति । सर्ववेदान्तेषु यत् सारभूतं ब्रह्म आत्मा च तयोर्भावः ब्रह्मात्मत्वं स्वरूपतो गुणतश्च निरतिशयबृहत्त्वमन्तःप्रविश्य प्रशासनेन सतृत्वं च तदेवैकं लक्षणम् असाधारणधर्मो यस्य तत् । यद्वा, ब्रह्मात्मैकत्वलक्षणमिति ब्रह्मात्मशब्दवाच्यम् यदेकं वस्तु तस्य भावस्तत्त्वं तल्लक्षणम् यस्य तदद्वितीयं स्वतुल्यवस्त्वन्तररहितं वस्तुप्रतिपाद्यो विषय इत्यर्थः । तन्निष्ठं तादृशवस्त्वधीनं कैवल्यं प्रकृतिसम्बन्धराहित्यं मुक्तिरिति यावत् तदेवैकं प्रयोजनं वासपाठादिप्रयोजनं यस्य ॥ १२ ॥

( शेषं श्रीधरीयव्याख्यायामेव द्रष्टव्यम् ) ॥ १३—२३ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पुराणानां सन्दोहः समूहः चतुर्लक्षसंख्याक एव ॥ ९-१० ॥

हरिलीलाकथानां व्रातः स एवाऽमृत तेनाऽऽनन्दिताः सन्तः सुराश्च येन तत् तन्निष्ठं तद्विषयम् ॥ ११ ॥

प्रौष्ठपद्यां भाद्रपद्यां हेमसिंहसमन्वितं स्वर्णसिंहासनाऽऽरूढम् ॥ १२—१३ ॥

तद्रस एवामृतं तेन तृप्तस्य ॥ १४—१५—१६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवमिति । तैः मत्स्यपुराणोक्तं निर्णयः—

अष्टादश पुराणानि कृत्वा सत्यवतीसुतः ।
भारताख्यानमखिलं चक्रे तदुपबृंहितम् ॥
लक्षणैकेन तत्प्रोक्तं वेदार्थपरिबृंहितम् ।
वाल्मीकिनापि यत्प्रोक्तम् रामोपाख्यानमुत्तमम् ॥
ब्रह्मणाऽभिहितं तच्च शतकोटिप्रविस्तरात् ।
आहृत्य नारदेनैव वाल्मीकाय पुनः पुनः ॥
वाल्मीकिना च लोकेषु धर्मकामार्थसाधनम् ।
एवं सपादाः पञ्चैते लक्षास्तेऽपरिकीर्तिताः ॥

इति ॥ ९ ॥

इदमिति त्रिकम । गर्भोदकशायिनो नाभिपङ्कजे स्थिताय ब्रह्मणे भगवता श्रीकृष्णेन प्रकाशितं सत्त्व आत्मारामा एव सुराः "इत्थं सतां ब्रह्मसुखानुभूत्या" इत्यत्र सदुक्तत्वात् सर्वेति ब्रह्मात्मनोर्यदेकत्वं तदेव लक्षणं यस्य तदद्वितीयं सर्ववेदान्तसारं वस्तु तन्निष्ठमित्यन्वयः । अयमर्थः "सत्यं ज्ञानमनन्तं ब्रह्म" इति यस्य स्वरूपमुक्तं "येनाश्रुतं श्रुतम्भवति" इति "यद्विज्ञानेन सर्वविज्ञानं प्रतिज्ञाय अखिलजगन्नियामकत्वा एव नानाधर्मा अभ्युपगताः "सदेव सौम्येदमग्र आसीत्" इत्यादिना निखिलजगदेककारणता "स ऐक्षत बहुस्याम्" इत्यनेन सत्यसङ्कल्पता च प्रतिपादिता तेन ब्रह्मणा स्वरूपशक्तिभ्यां बृहत्तमेन अथ कस्मादुच्यते ब्रह्म बृंहति बृंहयति चेति श्रुतिभिः "बृहत्त्वाद्बृंहणत्वाच्च तद्ब्रह्म परमं विदुः" इति विष्णुपुराणादिभिश्च प्रतिपादितेन सार्द्धम् 'अनेन जीवेनात्मना' इत्यादिश्रुतिबोधकरूपायां श्रुतावविद्यमानाभिसन्धान तत्त्वान्निजप्रत्यात्मना निर्देशेन तदात्मांशांशित्वेनैव

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ च "ममैवांशो जीवलोके जीवभूतः सनातनः" इत्यादिप्रतिपादितस्य "अंशो नानाव्यपदेशात्" (२।३।४२) इति न्यायसिद्धस्य जीवात्मनो यदेकत्वं तत्त्वमसीत्याद्यो ज्ञाता तदंशभूता चिद्रूपत्वेन समानाकारता तदेव लक्षणमापाततो ज्ञानं साधकतमं यस्य तथा-भूतम्—

"वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" ॥

इति त्रिधा ऽऽविर्भूतं यत् सर्ववेदान्तसारमद्वितीयं वस्तु तन्निष्ठमिदं पुराणं तथा कैवल्यैकप्रयोजनं केवलः शुद्धः सन् प्रोज्झितकैतवो यो भक्तः स एव धर्मः प्रोज्झितकैतवोऽत्र परम इत्युक्तत्वात् तस्य भावः कैवल्यं मोक्षादिकामरहिता भक्तिः "कैवल्यसम्मतपथस्त्वथ भक्तियोगः" इत्यत्र कैवल्यमित्येन सम्मतः पन्था भक्तियोग इति तैर्व्याख्यातत्वात् अत्र पन्था इति भगवत्प्राप्त्युपाय इत्यर्थः सा भक्तिः प्रेमलक्षणैव तस्यैव तत्र मुख्यत्वात् तस्मात्कैवल्यं भगवत्प्रेमैव पुरुषार्थत्वे प्रतिपाद्यं यस्य तत् सालोक्यसार्ष्टिसारूप्येत्यादिवचनवृन्देऽप्य इति ॥ १०—१२ ॥

तद्दानस्यापि तादृगेव फलमाह—प्रौष्ठपद्यामिति । परमां परमस्य भगवतः सन्निधिरूपां "ज्ञानेन वैयासकिशब्दितेन" इत्यादेः इति ॥ १३ ॥

राजन्त इति । स्वर्णसिंहासनारूढत्वे हेतुतया राजत्वमेव दर्शितम् ॥ १४ ॥

तदेव व्यनक्ति—सर्वेति । तद्रसः श्रीभगवद्भक्तिरसः "पिबत भागवतं रसमालयम्" इत्युक्तेः "नात्यन्तिकं विगणयन्त्यपि" इत्यादेश्च अत एवाह, निम्नगानामिति ॥ १५—१६ ॥

———

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तत्राष्टादशेति यथैवावतारत्वादवतारमध्ये कृष्णं गणयित्वा पुनः"एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्"इति कृष्णस्य पृथग्गणना तथैव पुराणत्वात् पुराणमध्ये श्रीभागवतं गणयित्वा "तत्राष्टादशसाहस्रं श्रीभागवतमिष्यते" इति पुनर्गणना पुराणचक्रवर्तित्वव्यञ्जिका यथा च तत्र स्वयम् पदम् सर्वोत्कर्षव्यञ्जकं तथैवात्रापि श्रीमदिति पदम् इदं प्रक्रान्तं सम्पूर्णमेव ॥ ९ ॥ १० ॥

वाच्यप्रयोजने चाह हरेर्लीलाकथानां व्रातः समूह एव अमृतं तेन मानन्दिताः सन्तो भक्ता एव सुरा येन तदिति लीलाकथाव्रातशब्देन भक्तिरूपं वाच्यं व्यञ्जितम् । स एव अमृतमिति प्रेमरूपं प्रयोजनं च प्रेम्णैव भक्तैरमृतवदास्वाद्यत्वसिद्धे तेन महतामानन्द इति प्रेम्णोऽनुभावः अत्र कथायाममृतत्वारोपेण तत् सम्पदानानां सताम् सुरत्वारोपेण च तत् सम्पदानुः शास्त्रस्यास्य मोहिनीत्वारोपो लभ्यते मोहिन्यैव सुरेभ्योऽमृतदानप्रवृत्तेः ततश्च सुरान् स्वभक्तान् स्वविदुषः प्रतिभूविद्रूपेणैव अन्यजनालक्षितं यथा स्यात्तथा महाविर्भावस्यास्य युष्मदानुकूल्यमेव कर्तव्यं प्रयोजनं चासुरान् वञ्चयित्वा युष्मभ्यममृतप्रदानं यथा चासुरान् स्वतत्त्वमविदुषः प्रत्यापि मूढाश्मनेनैवं स्वपद्ममेव ब्रूते स्म महाविर्भावस्य युष्माकं विजयप्रापणमेव कर्तव्यम् प्रयोजनं च युष्मभ्यममृतप्रदानमितीदं गौणमेव, मुख्यं प्रयोजनं त्वेतदेव यदानन्दचमत्कारं युष्मान् नित्यं प्रापयामि युष्मद्गृहस्थितेनेति तत् प्रथममेतान्निदानान् निकृष्टान् देवान् किञ्चित् परिवेषयामीति तथैवेदं श्रीभागवतं शास्त्रमपि स्वतत्त्वज्ञान् स्वभक्तान् हरिलीलास्यन्दपद्येन स्ववाच्यं स्वप्रयोजनं च "परोक्षवादा ऋषयः परोक्षं च मम प्रियम्" इति भगवदुक्तेर्व्यञ्जनयैव वृत्त्या सर्वलोकालक्षितमुक्त्वा स्वतत्त्वमविदुषः शास्त्रमानिनः प्रकटमेव स्ववाच्यप्रयोजने अन्ये एवाह सर्ववेदान्तानां सारं यत् ब्रह्मणा सह आत्मैक्यमद्वितीयं वस्तु तन्निष्ठं तस्मिन् वाचकत्वेन निष्ठा यस्य तत् कैवल्यमेकं मुख्यं प्रयोजनं यस्य तत् केचित् पुनरेवं व्याचक्षते शास्त्रेऽस्मिन् भक्तिज्ञानयोर्द्वयोरपि मार्गयोरुक्तत्वात् भक्तिप्रेमणी वाच्यप्रयोजने उक्त्वा ज्ञानकैवल्ये अपि वाच्यप्रयोजने आह—सर्ववेदान्तेति । कैवल्यमप्येकं प्रयोजनं यस्य तत् अपरे त्वेवमाहुः शास्त्रेऽस्मिन्नुपक्रम एव "धर्मः प्रोज्झितकैतवोऽत्र परमः" इत्यनेन परमधर्मस्य भक्तेरेव वाच्यत्वावगमात् ईश्वरः "सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः" इत्यनेन प्रेम्ण एव प्रयोजनत्वावगमाच्च तथा सर्वेष्वपि स्कन्धेषु ज्ञानात्तत्साध्यात् [मुक्तेरपि] मोक्षादपि सकाशात् भक्तेरेव प्राधान्यदर्शनात् प्राधान्येन व्यपदेशा भवन्तीति न्यायात् भक्तिप्रेम्णोरेवाभिधेयत्वप्रयोजनत्वे व्यज्येते तस्मान्मोहिनी साधर्म्यप्रापकप्रकटार्थमेतत् पद्यमाऽप्यन्तरेणार्थान्तरेण योजनीयं तद्यथा ब्रह्मात्मैकत्वलक्षणं यद्वस्तु तन्निष्ठं ततोपि निःसृत्य तिष्ठतीति तत्तथा ज्ञानकर्मस्वर्गाद्यभिलाष[युक्त]रहिताः केवला अनन्यभक्तास्तेषां भावः कैवल्यं तदेव प्रयोजनम् यस्य तदिति ॥ ११।१२ ॥

प्रौष्ठपद्यां भाद्रसम्बन्धिन्यामिति तादृश एव श्रीमन्मुनीन्द्र स्व शास्त्रमेतत्समापीकृतमिति पाद्मोत्तरखण्डगतभागवतमाहात्म्ये दृष्टं हेमसिंहसमन्वितमिति सर्वशास्त्रमहाराजस्य पुराणसूर्यस्यास्य साम्राज्यार्थं सिंहासनौचित्यात् सर्वमहाराजस्यैवानुपमानस्य सूर्यस्यापि तदानीं सिंहराशिगतत्वेन सिंहासनाधिरूढता दृष्टैव अस्य सर्वशास्त्रमहाराजत्वमेवाह—राजन्त इति । अन्यानि पुराणान्यपि प्रायस्तावत् शास्त्रराजानि यावदेति श्रीभागवतं तु सम्राडेवातः शास्त्रमहाराजमिति भावः । यद्वा, अस्य पुराणसूर्यत्वमाह—राजन्ते दीप्यन्ते रात्रौ नक्षत्राणीवेति भावः । यावद्राज्यन्ते यावदेति सति सूर्यो न दृश्यते ॥ १३—१४ ॥

सर्ववेदान्तेभ्योऽपि सारं श्रेष्ठं गङ्गेति सर्वपापनाशनत्वेन अच्युत इति सर्वोत्कर्षेण शम्भुरिति सर्वभगवद्धर्मोपदेष्टृत्वेनोपमा ॥ १५—१७ ॥

———

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पुराणानां सन्दोहः समूहः श्रीमद्भागवतस्य सर्वपुराणेभ्यो भगवत्कृतत्वादिना श्रेष्ठ्यं वक्तुमाह—तत्रेति । अष्टादशसाहस्रमुक्तसङ्ख्यापूरकच्छन्दोमानेन ज्ञेयम् ॥ ९ ॥

अत्रेदमवधेयम् उपास्यरूपं तदुपासकरूपं कृपाफलं भक्तिरसः

क्षेत्राणां चैव सर्वेषां यथा काशी ह्यनुत्तमा ।
तथा पुराणव्रातानां श्रीमद्भागवतं द्विजाः ! ॥ १७ ॥
श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियं यस्मिन् पारमहंस्यमेकममलं ज्ञानं परं गीयते ।
तत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं तच्छृण्वन् प्रपठन् विचारणपरो भक्त्या विमुच्येन्नरः॥१८॥
कस्मै येन विभासितोऽयमतुलो ज्ञानप्रदीपः पुरा तद्रूपेण च नारदाय मुनये कृष्णाय तद्रूपिणा ।
योगीन्द्राय तदात्मनाऽथ भगवद्राताय कारुण्यतस्तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि १९॥
नमस्तस्मै भगवते वासुदेवाय साक्षिणे ।
य इदं कृपया कस्मै व्याचचक्षे मुमुक्षवे ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विरोधिरूपश्चेति श्रीमद्भागवतस्यार्थपञ्चकं विषयः "धर्मः प्रोज्झितकैतवः" इत्यत्रोपपादितः तत्र 'यद्विज्ञानेन सर्वं विज्ञातं भवति' इति श्रुतेर्मुख्यो विषयो भगवानिति तत्र चोपास्यं भगवन्तं विषयतयोपासकमधिकारितया विरोधिपदार्थं मुक्तिप्रतिबन्धकतया भक्तिरसं ससाधनं मोक्षोपायतयेति पदार्थचतुष्कं पञ्चमं कृपाफललक्षणं विषयविशेषमेव प्रयोजनत्वेनाह-इदमिति त्रिभि । भवभीताय मोक्षविरोधिसंसारभययुक्ताय ब्रह्मणे सर्वाधिकारिमुख्याय भगवतैवेदं श्रीमद्भागवतं प्रोक्तम् ॥ १० ॥

वैराग्यमुपलक्षणं ज्ञानादिसाधनानां ज्ञानवैराग्यादिभिः साधनैराख्यायते प्रकाश्यते इति वैराग्याख्यानं भक्तिरहस्यं तत्संयुतम् हरेर्मुख्यविषयकथानां व्रातः समूहः स एवामृतं तेनानन्दिताः सन्तः साधवः सुराश्च अधिकारिणो येन तम् ॥ ११ ॥

कथम्भूतं सर्ववेदान्तसारम् यद्वा, सर्ववेदान्तानां सारं मुख्यं प्रतिपाद्यम् अद्वितीयं निःसमानातिशयं ब्रह्मपरमात्मनारायणवासुदेवादिपदाभिधेयं "वेदैश्च सर्वैरहमेव वेद्यः" इति स्वमुखगीतं वस्तु तदिष्टम् ब्रह्म जगत्कारणं सर्वज्ञं सर्वशक्ति 'सत्यं ज्ञानमनन्तम्' वस्तुपदेनोक्तं तत्पदवाच्यम् आत्माणुपरिमाणकोऽल्पज्ञस्त्वंपदार्थः तयोः अंशांशिनोः स्वभावतः एव गुणागुणात्कार्यकारणवत् भिन्नस्वरूपयोः स्वभावतः एवैकत्वं लक्ष्यते ज्ञायते यत्र तत् ब्रह्मजीवयोः द्वैताद्वैतसम्बन्धप्रतिपादकमिदं पुराणमित्यर्थः । अनेन पुराणेन केवलभेदवादिनः तार्किकादयः केवलाभेदवादिनश्च साङ्ख्यादयः निराकृता वेदविरुद्धत्वादिति भावः । कैवल्यं केवलस्य कार्यकारणप्रकृतिसम्बन्धरहितस्य निरञ्जनस्य भावः भगवत्सायुज्यलक्षणः कैवल्यं तदेकप्रयोजनमिदमित्यर्थः ॥ १२ ॥

एवं कर्तृतः विषयप्रयोजनाभ्यां चास्य श्रेष्ठ्यं दर्शितम् इदानीं दानमाहात्म्यादिकथनेनाऽस्य श्रैष्ठ्यमाह—प्रौष्ठपद्यामित्यादिना, प्रौष्ठपद्यां भाद्रपद्याम् हेमसिंहसमन्वितं स्वर्णसिंहासनारूढम् ॥ १३—१७ ॥

---

भाषाटीका ।

इस प्रकार अष्टादश पुराणों का समूह चार लक्ष ४००००० है, तहां यह श्रीमद्भागवत अठारह सहस्र १८००० है ॥९॥

यह श्रीमद्भागवत पूर्व काल में संसार से भयभीत, और अपने नाभिकमल में स्थित, ऐसे ब्रह्माजी को श्रीभगवान् ने कृपा करके प्रकाशित किया रहा ॥ १० ॥

यह पुराण आदि मध्य और अंत में वैराग्य के आख्यानों से संयुक्त है, तथा श्रीहरि की लीला कथाओं के समूह रूप अमृत से साधुजन और देवताओं को आनन्द देने वाला है ॥ ११ ॥

यह सम्पूर्ण वेदान्त का सारभूत है, और परब्रह्म के साथ जीवात्मा के निष्कपट भाव को दर्शाने वाला है, और यह अद्वितीय वस्तु है, तथा परमात्मा का प्रतिपादक है, और इसके पठन श्रवण का मोक्ष ही एक प्रयोजन है, ॥ १२ ॥

भाद्रपदमास की पूर्णमासी में सुवर्ण के सिंहासन पर विराजमान कर जो श्रीभागवत के पुस्तक का दान करता है, वह परमगति को प्राप्त होता है ॥ १३ ॥

अमृत का समुद्र रूप श्रीमद्भागवत पुराण जब तक नहीं सुनने में आता है, तब ही तक सन्तों के समाज में अन्य पुराण शोभा देते हैं, श्रीभागवत के आगे कोई भी नहीं शोभा देते हैं ॥ १४ ॥

यह श्रीमद्भागवत सम्पूर्ण वेदान्त का सार है, इसके रसामृत से जो पुरुष तृप्त है, उसकी अन्यत्र कहीं भी प्रीति नहीं होती है ॥ १५ ॥

जैसे, कि—नदियों के मध्य में श्रीविष्णुपादोदककी श्रीगंगा जी सब से श्रेष्ठ है, जैसे, देवों में भी अच्युत भगवान् सर्वोत्तम है, जैसे विष्णु भक्त वैष्णवों के मध्य में श्रीशंकर श्रेष्ठ हैं, इसी प्रकार पुराणों के मध्य में यह श्रीमद्भागवत पुराण श्रेष्ठ है ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पारमहंस्यं परमहंसैः प्राप्यम् नैष्कर्म्यं सर्वकर्मोपरमः भक्त्या तच्छृण्वन्नादिपरो विमुच्यते ॥ १८ ॥

श्रीभागवतसम्प्रदायप्रवर्तकरूपेण भगवन्तं ध्यायन्नेव ग्रन्थं समाप्नोति-कस्मै ब्रह्मणे अतुलोऽसमः अयम् श्रीभागवतरूपः पुरा कल्पादौ तद्रूपेण ब्रह्मरूपेण नारदाय तद्रूपिणा नारद-

श्रीधरस्वामिकृतभावार्थदीपिका ।

रूपिणा कृष्णाय व्यासाय तद्रूपिणा योगीन्द्राय शुकाय तदात्मना शुकरूपेण तत्परम् सत्यम् श्रीनारायणाख्यं तत्त्वं धीमहि इति गायत्र्यैव यथोपक्रममुपसंहरन् गायत्र्याख्यब्रह्मविद्येयमिति दर्शयति ॥ १९ ॥

तमेव देवतारूपेण गुरुरूपेण च प्रणमति—नम इति, द्वाभ्याम् । व्यासश्चेव व्याख्यातवान् ॥ २०—२३ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पारमहंस्यं परमहंसैः प्राप्यम् ॥ १७—२३ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

किञ्च श्रीभागवतमिति वैष्णवानां प्रियमित्यनेनैव तथा विवक्षितं तत्रानुषङ्गिकं गुणमाह—यस्मिन्निति । विमुच्येत सर्वभक्त्यन्तरायेभ्योऽपि निस्तरेत् ॥ १७—१८ ॥

पूर्वं यस्त्वद्वितीयं तन्निष्ठमिति सामान्यतस्तात्पर्यं दर्शयित्वा जन्माद्यस्येत्याद्युपक्रमपोषकं श्रीभगवत्त्वेन तस्य पर्यवसानं दर्शयन्नुपसंहरति—कस्मा इति । कस्मै ब्रह्मणे महावैकुण्ठं दर्शयता श्रीभगवता येन विभासितः प्रकाशितः नतु तदा विरचितः अयं श्रीमद्भागवतरूपः पुरा पूर्वपरार्द्धादौ तदात्मनेत्यस्योत्तरेणान्वयः तत्र तदात्मना श्रीशुकरूपेणेति गम्यं तद्रूपेणेत्यादिभिस्त्रिभिः पदैर्न केवलं चतुःश्लोक्येव तेन प्रकाशिता अपि तु तत्र तत्राविष्टेनाखण्डमेवेदं पुराणमिति द्योतितम् श्रीमत्कृष्णाद्वैपायनकर्तृकप्रकाशनान्तर्गतमेवेति पृथङ्नोक्ता तत्परं सत्यं भगवदाख्यं तत्त्वं धीमहि "यत्तत्परमनुत्तमम्" इति सहस्रनामस्तोत्रे तच्छब्दस्य तन्नामत्वेन गणितत्वात् परशब्देन च श्रीभगवानेवोच्यते 'आद्योऽवतारः पुरुषः परस्य' इति द्वितीयात् ब्रह्मादीनां बुद्धिवृत्तिप्रेरकत्वेनाभिधानात् गायत्र्यर्थोपलक्षितेन धीमहीति गायत्रीपदेनोपसंहारः ॥ १९ ॥

तदेवं श्रीभागवततात्पर्यत्वेनोपसंहृत्य तं सर्वगुरुं श्रीभगवन्तमेव प्रणमति—नम इति । मुमुक्षवे तद्भक्ति विना सर्वमन्यं त्यक्तुमिच्छवे ॥ २० ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सर्वोत्कर्षमेवोपपादयति—भागवतं पुराणमेव श्रीमत् सर्वशोभायुक्तं न भवन्ति मलाः त्रिगुणोत्था यस्मात्तत् यत् यतो वैष्णवानां प्रियं भक्त्युत्कर्षप्रतिपादकत्वादिति भावः । भक्त्युत्थज्ञानप्राप्तितश्चाभिर्भिज्ञानिभिरस्यैरात्मारामैरप्येतदास्वादनीयमेवेत्याह—यस्मिन्निति । परमहंसेभ्यो हितं पारमहंस्यं स्वार्थे ष्यञ् पारमहंस्यं परं भक्त्युत्थत्वात् श्रेष्ठं ज्ञानसाधकैरप्येतद्वयद्वयसेव्यमित्याह, यत्रेति । नैष्कर्म्यं सर्वकर्मोपरमः ॥ १८ ॥

श्रीभागवतसम्प्रदायप्रवर्तकरूपस्य भगवतो ध्यानलक्षणं मङ्गलमाचरति—कस्मै ब्रह्मणे सर्वनामत्वमार्षम् अयं द्वादशस्कन्धात्मक एव ग्रन्थः पुरा कल्पादौ तद्रूपेण नारदाय तद्रूपिणा कृष्णाय व्यासाय व्यासरूपेण योगीन्द्राय शुकाय तदात्मना शुकरूपेण भगवद्रताय विष्णुराताय तत्परं सत्यं श्रीनारायणस्वरूपं धीमहीति गायत्र्यैव यथोपक्रान्तवांस्तथैवोपसंहरन् गायत्र्याख्यब्रह्मविद्येयमिति दर्शयति ॥ १९ ॥

शास्त्रसमाप्तौ स्वाभीष्टदेवं प्रणमति—नम इति । वासुदेवाय वसुदेवनन्दनाय साक्षिणे इति अहं तस्य भक्तो भक्तिरहितो वा शिष्टो दुष्टो वा तदभिप्रेतमर्थं वक्तुं वेद्मि वा न वेद्मि वा स एव साक्षात्पश्यति तत्कृपैव मे शरणमिति भावः अहं तावत्को वराको ब्रह्मापि तत्कृपां विना श्रीभागवतार्थं न वेत्तीत्याह—य इदमिति । मुमुक्षवे कृपया व्याचचक्षे उपादेशत्येनतदुपदेशात् पूर्वमेव तस्य मुमुक्षा आसीत् एतदुपदेशानन्तरं तु प्रेमण्येवाकाङ्क्षा मोक्षे तूपेक्षैवाजनिष्टेति भावः ॥ २० ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

परमहंसैः हेयोपादेयविवेकिभिर्ग्राह्यम् नैष्कर्म्यं मुक्तिविरोधिकर्मराहित्यम् ॥ १८ ॥

श्रीमद्भागवतसम्प्रदायप्रवर्तकभगवद्ध्यानलक्षणं मङ्गलमाचरति—कस्मै काय चतुर्मुखाय, अतुलः अनुपमः अयम् श्रीमद्भागवतरूपः ज्ञानप्रदीपः पुरा कल्पादौ येन विभासितः तद्रूपेण चतुर्मुखरूपेण नारदाय तद्रूपिणा कृष्णाय पाराशर्याय तद्रूपिणा योगीन्द्राय शुकाय तदात्मना भगवद्राताय परीक्षिते तत्परं पूर्णं सत्यं जगत्कारणं नित्यंपरमात्मस्वरूपं धीमहि ध्यायेम: उपक्रमे उपसंहारे च धीमहीति गायत्रीपदोपन्यासः अस्य शास्त्रस्य गायत्र्यर्थप्रकाशकत्वं सूचयति ॥ १९ ॥ २० ॥

———

भाषा टीका ।

जैसे पुण्यक्षेत्रों के मध्य में श्रीकेशव निर्मित काशी श्रेष्ठ है, हे विप्र हो ! इसी प्रकार पुराण समूहों में यह श्रीमद्भागवत सब से श्रेष्ठ है ॥ १७ ॥

श्रीमद्भागवत जो है, सो निर्मल पुराण है, जो कि वैष्णवों को प्रिय है, और जिसमें केवल पारमहंस्य अमल ज्ञान गाया गया है । जिसमें ज्ञान वैराग्य और भक्ति सहित नैष्कर्म्य प्रकट किया है, उसको भक्ति से सुनता हुआ पढ़ता हुआ विचार करता हुआ इस संसार से मुक्त होजाता है ॥१८॥

अब श्रीमद्भागवत की परंपरा कहते हैं, कि—प्रथम श्रीनारायणने यह अतुल ज्ञान प्रकाश करने वाला पुराण ब्रह्मा को प्रकाशित किया, फिर श्रीनारायण रूप ब्रह्माने नारदमुनि को उपदेश किया, फिर ब्रह्मरूप नारदजी ने कृष्णमुनि श्रीवेद व्यासजी को दिया, पश्चात् नारद रूप व्यासजीने योगीन्द्र श्रीशुक मुनि को दिया, फिर व्यास रूप श्रीशुक ने करुणा करके भगवान राजा परीक्षित को दिया, ऐसे इस पुराण के प्रतिपाद्य शुद्ध विमल विशोक अमृत पर सत्य श्रीहरि का हम लोग ध्यान करते हैं ॥ १९ ॥

योगीन्द्राय नमस्तस्मै शुकाय ब्रह्मरूपिणे ।
संसारसर्पदष्टं यो विष्णुरातममूमुचत् ॥ २१ ॥
भवे भवे यथा भक्तिः पादयोस्तव जायते ।
तथा कुरुष्व देवेश ! नाथस्त्वं नो यतः प्रभो ! ॥ २२ ॥
नामसङ्कीर्तनं यस्य सर्वपापप्रणाशनम् ।
प्रणामो दुःखशमनस्तं नमामि हरिं परम् ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्याम्
अष्टादशसहस्रसंहितायां वैयासिक्यां द्वादशस्कन्धे
त्रयोदशोऽध्यायः ॥ १३ ॥
समाप्तश्चायं द्वादशस्कन्धः ।
हरिः ओम् ॥

भाषा टीका ।

। साक्षी श्रीवासुदेव भगवान् को नमस्कार है, कि-जिनने
राणको मुमुक्षु ब्रह्मा के लिये कथन किया ॥ २० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

भावार्थदीपिकामेतां भगवद्भक्तवत्सलाम् ।
परमानन्दपादाब्जभृङ्गश्रीः श्रीधरोऽकरोत् ॥
स्वबालचपलालापैः स्वलीलापरिनर्तितैः ।
प्रीयतां परमानन्दनृहरिः सद्गुरुः स्वयम् ॥
श्रीपरानन्दसम्प्रीत्ये गुह्यं भागवतं मया ।
तन्मनेऽद्य माख्यातं नतु मन्मतिवैभवात् ॥
क्वेदं नानानिगूढार्थं श्रीमद्भागवतं क्व नु ।
मन्दबुद्धिरहं कृष्णप्रेम किङ्कुं न कारयेत् ॥
इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
त्रयोदशोऽध्यायः ॥ १३ ॥
समाप्तश्चायं द्वादशस्कन्धः ॥ १२ ॥
समाप्ता चेयं भावार्थदीपिका ॥
श्रीकृष्णार्पणमस्तु ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।
( श्रीशुकपक्षीयरीत्या द्वादशभिरध्यायैरेव
समापितोऽयं द्वादशस्कन्धः )॥
श्रीमते रामानुजाय नमः ।

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

योऽसौ तुरङ्गवदनो हृदि सन्निविष्टः—
सञ्चोद्य बुद्धिमसकृत्कृपया स्वया मे ।
व्याख्यापितस्त्वखिलमिन्द्र्यदैवतेन्द्र—
मूर्तिस्तमेनमनघं मनवे परेशम् ॥

* योऽसौ पिशाङ्गपरिधिर्धनमावयुदार—
मन्दस्मिताकलितवीक्षणवीक्षितेन ।
सञ्चोदितेन च मया परिदृष्टमूर्तिः—
स्वप्ने नमामि शरणं वसुदेवसूनुम् ॥
क्वेदं गभीरनिगमान्तरहस्यसारं—
क्वाहं सुमन्दमतिरत्र परं निदानम् ।
वीक्षा यदीयकरुणाकलिता ममैव—
श्रीशैलदेशिकवरं शरणं गतोऽस्मि ॥
चिकीर्षाऽमोघा सा निरवधिकृपालोककलिता—
यया बद्ध्यात्यन्तं विहतिरचनाभाः समगमम् ।
स एव श्रीशैलो गुरुरखिलविद्याजलनिधिः—
मम स्यातां स्वान्तप्रथमकमलं सम्प्रकटयन् ॥
इति श्रीवत्साम्बयपयःपारावारराकासुधाकरस्य श्रीशैलगुरोः
स्तनयेन तच्चरणपरिचर्याप्रसन्नतत्सूक्तिसमधिगतश्रीम-
द्भागवतार्थहृदयेन श्रीवैष्णवदासेन श्रीवीरराघव-
विदुषा विलिखितायां श्रीमद्भागवतचन्द्र-
चन्द्रिकायां व्याख्यायां द्वादशस्कन्धे त्रयोदशोऽध्यायः ॥
( श्रीमद्वीरराघवीयरीत्या द्वादशोऽध्यायः ॥ १२ ॥ )
समाप्तोऽयं द्वादशस्कन्धः ॥ १२ ॥
श्रीमते रामानुजाय नमः ।

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।
इति श्रीमन्महेन्द्रतीर्थपूज्यपादशिष्य-
विजयध्वजतीर्थभट्टारकस्य कृतौ
श्रीमद्भागवतटीकायां पदरत्ना-
वल्यां द्वादशस्कन्धे सुबोधो
त्रयोदशोऽध्यायः ॥ १३ ॥
समाप्तश्चायं द्वादशस्कन्धः ॥ १२ ॥

* काञ्चीकलापपरिधिरिति पाठान्तरम् ।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्रापि स्वोपदेष्टृरूपं प्रणमति, योगीन्द्राय तद्वात्ममेत्युक्तेः तदेवं तस्य मम हि मामं स्मृत्वा कारुण्यं स्मरति, संसारेति । संसरत्यस्मिन्निति संसारः प्रपञ्चः स एव श्रीकृष्णान्तर्द्धाने मोदु-मशक्यत्वात् सर्पः सर्वस्वापिविषधरः तेन दष्टं दंशेनवास्यर्थे तद्विरहदुःखेन पीडितं विष्णुरातं श्रीपरीक्षितं यो ऽमूमुचत् तां पीडां त्यक्तुमुत्कण्ठां प्रेरयामास अनन्तसुखमात्राद्दुःख यत्र तस्मान्मोचनं तत्तदुभाऽयामपि नादृतमिति भावः । तादृशप्रेरिणा च हेतुर्विष्णुरातमित्येव तेन विष्णुना यो रातः स भक्तेभ्यः प्रसादी-कृतः स परमतदीय एवेति ॥ २१—२३ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
त्रयोदशोऽध्यायः ॥ १३ ॥

नामश्चिन्तामणिः कृष्णश्चैतन्यरसविग्रहः ।
पूर्णः शुद्धो नित्यमुक्तोऽभिन्नत्वान्नामनामिनोः ॥

अत एव—

सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।
सन्न्यासकृत् समः शान्तो निष्ठाशान्तिपरायणः ॥
एवं सहस्रनामोक्तः कृष्णचैतन्यसाक्षतः ।
मां पायाद्दपराधेभ्यः स्वप्रेमांशेन तुष्यतु ॥
स्वामिपादैः न यद्व्यक्तं यद्व्यक्तं चास्फुटं क्वचित् ।
तत्र तत्रैव विज्ञेयः सन्दर्भः क्रमसञ्ज्ञकः ॥

इति कलियुगपावनस्वभजनविभजनप्रयोजनावतारश्रीश्रीभग—
वत्कृष्णचैतन्यदेवचरणानुचरविश्ववैष्णवराजसभासभाजनश्री—
मद्रूपसनातनानुशासनभारतीगर्भे श्रीभागवतसन्दर्भे क्रमसन्दर्भो
नाम सप्तमः सन्दर्भः ॥ श्रीवृषभानुनन्दिनी जयताम् ॥

समाप्तश्चायं श्रीभागवतक्रमसन्दर्भः ॥
श्रीकृष्णचन्द्रो जयति ॥
समाप्तोऽयं द्वादशस्कन्धः ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

श्रीगुरुदेवं प्रणमति—योगीन्द्राय भक्तियोगज्ञानयोगकर्मयोगा-ष्टाङ्गयोगविदां महाप्रभवाय ब्रह्मरूपिणे परब्रह्मस्वरूपाय, संसार सर्पदष्टं विष्णुरातमिति यथाऽर्ज्जुनस्य मोहं गीताशास्त्रेण यथोक्तस्य मोहमेकादशेन भगवान्निवर्त्तयामास तथैव परीक्षितः संसारं श्रीशुक इति प्राकृतलोकप्रतीत्यैवोक्तिर्वस्तुतस्तु नयाज्ञा-मेव नित्यपार्षदत्वान्न संसारशङ्कागन्धोऽपि किन्तु जीवहितप्रख्या-पनातुरधर्मधुरन्धराणां महाकृपालूनां महतां कर्मण्येके महासिद्ध-जनभवक्लेशैव हितोपदेशसन्ततिरिति नीतिर्दर्शिता अत एवात्र विष्णुरातमिति प्रयुक्तम् विष्णुना कृपया युधिष्ठिराय रातः दत्तः स्वयं गृहीतो वा यस्तस्य संसारं कः खलु मन्दबुद्धि-राशङ्केतेति भावः । किञ्च, सर्पविषहरा मन्त्रा यथा लोके अर्थज्ञान-मपि नापेक्षन्ते तथैवार्थं जानातु न जानातु वा श्रीभागवतीयाः शब्दा एव संसारविषं निर्मूलयन्तीत्याचार्याभिप्रायो द्रष्टव्यः ॥ २१—२३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
त्रयोदशो द्वादशस्य सङ्गतः सङ्गतः सताम् ॥ १३ ॥
ॐ तत्सत् ॥

नमोऽस्तु गुरवे तस्मै श्रीकृष्णाय नमो नमः ।
कृपार्णवाय श्रीलोकनाथाय प्रभवे नमः ॥
कृष्णचैतन्यगौराङ्ग ! साङ्गोपाङ्गसपार्षद ! ।
निरुपाधिकृपासिन्धो ! प्रेम्णा मां परिपूरय ॥
जय वृन्दावनक्रीडारसिकद्वय ! मां भव ।
स्वप्रियावृगणं गीतमेतत् करुणं भव ॥
अत्यज्ञोऽपि त्वयैवाहं स्वव्याख्यायां प्रवर्त्तितः ।
हे कृष्ण ! श्रीभागवत ! प्रसीद त्वं तदेतया ॥
मद्वर्त्तीरपि गोपाल ! स्वीकृत्य परिपालय ।
पिबतास्तां पयः प्रीत्या स्वभक्तानपि पायय ॥
ऋत्वाक्षिषड्भूमिमिते शाके राधाकुण्डसरस्तटे ।
शुक्लषष्ठ्यां सिते माघे टीकेयं पूर्णतामगात् ॥

टीकेयं वैश्वनाथी भवतु भगवतो भक्तलोकस्य रस्या—
वस्तुशास्त्रागमस्य भास्तो मधुरिमलहरीस्वैनकान्तवृत्तेः ॥
यत्तस्यारोचकत्वे कतिरतिकृतिनः सर्वसाद्गुण्यवगण्या—
दिष्टत्पापिड्भ्यनृत्याद्यनुपदविधुरा स्यात्कमीतुमेव ।
आरम्भे परिणामे च विवर्त्ते ऽपि न हि क्षतिः ।
श्रीमद्भागवते भक्तेः पुरुषार्थशिरोमणेः ॥
व्याख्याऽस्य भक्त्या गम्या सा श्रीगुरोः कृपयेक्ष्यते ।
तस्मान्नमो नमस्तस्मै गुरवे गुरवे नमः ॥
हे भक्ताः ! द्वारि वश्चञ्चदूवालधीरोत्ययं जनः ।
नाथाविचिष्टः श्वेवातः प्रसादं लभतां मनाक् ॥

श्रीगोवर्द्धनाय हरिदासवर्याय नमः ।
श्रीराधाकुण्डाय श्रीकृष्णकुण्डाय नमो नमः
समाप्ता चेयं सारार्थदर्शिनी टीका ॥
शुकशास्त्रं च परिसमाप्तम् ।
श्रीराधायैनमोनमः ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गुरुं प्रणमति–योगीन्द्रायेति । व्याचचक्षे व्याख्यातवान् ॥ २१ ॥ २३

भिन्नाभिन्नं जगद्यस्मात्पृथिव्या औषधादिवत् ।
तं राधामाधवं वन्दे करुणागुणसागरम् ॥
सर्वेश्वरमहं वन्दे श्रीगुरुं तत्पदाश्रयम् ।
पूर्वाचार्यान् सुविख्यातान् श्रुतिस्मृत्यर्थभास्करान् ।
हंससनकदेवर्षिनिम्बार्कप्रमुखान् प्रभून् ।
नैष्ठिकान् वेदसिद्धान्तसम्प्रदायप्रवर्तकान् ॥
समालोक्य मुहुस्तेषां कृतीः सम्यङ्मनोरमाः ।
श्रीभागवतसिद्धान्तप्रदीपोऽयं कृतो मया ॥

श्रीसनकसम्प्रदायप्रवर्त्तकाचार्य श्रीभगवन्निम्बार्कचरणचिन्तक
शुकसुधीप्रणीते श्रीमद्भागवतसिद्धान्तप्रदीपे द्वादशस्कन्धीये
त्रयोदशाध्यायार्थप्रकाशः ॥ १३ ॥
समाप्तोयं द्वादशस्कन्धः ॥ १२ ॥

---

भाषाटीका

ब्रह्मरूप योगीन्द्र श्रीशुकदेवजीको नमस्कार है, जिनने संसार सर्प के डसे हुए राजा परीक्षित् को छुडाया है ॥ २१ ॥

अब श्रीसूतजी ग्रन्थकी समाप्ति में श्रीहरिसे प्रार्थना करते हैं, कि—हे देवेश ! जैसें जन्म जन्म में आपके चरणारविन्दों की भक्ति हमको रहै, ऐसी आप कृपा करो । क्योंकि ? हे प्रभो ! आप हमारे स्वामी हो ॥ २२ ॥

जिनका नाम सङ्कीर्तन ही सम्पूर्ण पापों का नाश करने वाला है, और जिनके विषें प्रणाम करनाही समस्त दुःखोंका शमन करने वाला है, परात्पर उन श्रीहरिको मैं नमस्कार करता हूं ॥ २३ ॥

द्वादशस्कन्धभावार्थबोधिनी भक्तोषिणी ।
भाषा भागवताचार्यकृता सम्पूर्णतामियात् ॥

इति श्रीवृन्दावनरङ्गमन्दिरस्थोभयवेदान्तनिष्णाततार्किककेसरि-
प्रबोधमहोदधि श्रीसुदर्शनाचार्यादधिगतबोधलेशेन,
श्रीबलरामस्वामिचरणाश्रितेन, श्रीवृन्दावनस्थ-
पण्डितभागवताचार्येणकृता श्रीभागवत-
द्वादशस्कन्धे त्रयोदशाध्यायस्य
भाषाटीका समाप्ता ॥ १३ ॥

श्रीरुक्मिणीरमणो जयति ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

समाप्तिं गतश्चायं द्वादशः स्कन्धः ॥ १२ ॥
परिसमाप्तश्चायं श्रीभागवतशास्त्रम् ॥

हरिः ओम् तत् सत्
श्रीकृष्णार्पणमस्तु ॥

संशोधकौ चास्य ग्रन्थरत्नस्य काञ्चीमण्डलान्तर्वर्त्ति 'कान्दूर' पं० श्रीरङ्गाचार्य—'श्रीवृन्दावनस्थ' पं० भागवताचार्यौ ॥

॥ श्रीः ॥

श्रीकृष्णचरणौ नत्वा भुक्तिमुक्तिप्रदायकौ ।
वेदर्तुनन्देन्दुमिते वैक्रमाब्देऽथ फाल्गुने ॥ १ ॥
कृष्णपक्षस्य पञ्चम्यां वृन्दावनशुभस्थले ।
श्रीमन्नित्यस्वरूपाख्यब्रह्मचारिप्रवर्तनात् ॥ २ ॥
अष्टटीकासमायुक्तश्रीमद्भागवतस्य च ।
लक्ष्मणाचार्यविदुषा शोधनं परिपूरितम् ॥ ३ ॥
हरिभक्तिविवर्धनकार्यरतम्
त्विह मुद्रणद्रव्यसुपूर्तिकरम् ॥
हरिरेव विवर्धयतादनिशम्
वनमालिबाहादुररायवरम् ॥ ४ ॥
श्रीमद्भागवतं पूर्णमर्पितं कृष्णपादयोः ।
जनानामघनाशाय सर्वलोके प्रवर्तताम् ॥ ५ ॥

श्रीकृष्णचैतन्यचन्द्राय नमः

श्रीकृष्णार्पणमस्तु

श्रीरस्तु

सं० १९६४ फाल्गुनकृष्ण पञ्चम्यां शनिवासरे समाप्तम् ।





॥श्रीः॥

# विज्ञापनम् ।

## परपक्षगिरिवज्रः ।

अयि विचक्षणाः ! महातिप्रहर्षसमयो वरीवर्त्ति यदहं तत्रभवद्भ्यो भवद्भ्यो ऽद्भुतग्रन्थं निवेदयामि यद्ग्रन्थान्वेषणं सहस्राणि विद्वांसो ऽकार्षुः चातकास्स्वातिबिन्दूनिव, तथा ऽपि तद्ग्रन्थदर्शनमपि दुर्लभमभूत् तत्पाठनविचारणादि तु ,दूरापास्तमेवासीत् तमेव ग्रन्थमत्याऽनन्देन समस्तभारतवासिनां श्रीमतां सेवायां निवेदयामि यं ग्रन्थं 'शारीरकहार्दसंचयनामकं' कथयन्ति, केचित्तु परपक्षगिरिवज्राख्यम् अध्यासगिरिवज्राख्यमपि ब्रुवन्ति, एष ग्रन्थो वेदान्तिनां शिरोधार्य्यो ऽस्ति, किञ्च सर्वमनीषिणामेतत्सुविदितमस्ति, निगमकल्पतरोरसमयफलं वेदान्तशास्त्रमेवास्ति, यद्यपि वेदान्तशास्त्रस्य स्वस्वसिद्धान्तानामनुकूला अनेके ग्रन्था मुद्रितास्सन्ति,, तथापीदृशः को ऽपि ग्रन्थो ऽद्यावधि न मुद्रितो ऽस्ति, यद्ग्रन्थावलोकनेनैव सर्वं सिद्धान्तज्ञानं भवति, एतस्मिन् ग्रन्थेऽद्भुतचमत्कारोऽस्ति एतदवलोकनेनैव सर्वशास्त्रसिद्धान्तज्ञानपूर्वकसत्यासत्यविचारो भवति, अन्यवेदान्तग्रन्थस्यावलोकनावश्यकता ऽपि न भवति, सर्वेषां विपश्चितामेतद् ग्रन्थावलोकनेन पूर्णानन्दावाप्तिर्भवति, एष च ग्रन्थो विदुषां पठनपाठनादिषु प्रचारणीयो ऽस्ति, किम्बहुलेखनेनैतद्ग्रन्थावलोकयितॄणां ब्रह्मानन्दास्वादसमुद्रस्तरङ्गित इव भवति, एतद्ग्रन्थावलोकनेन विद्वन्मण्डल्यां वाग्विलासे सङ्कोचः कदा ऽपि न भवति, एष च ग्रन्थो निम्नलिखितप्रकरणैर्विभूषितो ऽस्ति, एतस्मिन् ग्रन्थे चत्वारो ऽध्यायास्सन्ति, तत्र प्रथमे ऽध्याये विषयसम्बन्धगिरिनिपात-प्रयोजनाधिकारिगिरिनिपात-अध्यासगिर्यधिष्ठानगिरिनिपातादीनि महाविस्तीर्णानि त्रयोविंशतिः प्रकरणानि सन्ति. द्वितीये चाध्याये जिज्ञास्योपपत्तिगिरिनिपातादीनि दश प्रकरणानि सन्ति तृतीयेऽध्याये साङ्ख्यगिरिनिपातादीनि दश प्रकरणानि सन्ति चतुर्थेऽध्याये जीवन्मुक्तिगिरिनिपातो ऽस्ति, एवं चत्वारिंशत्प्रकरणैर्विभूषितो ऽष्टसहस्रश्लोकसंख्यापरिमितो ग्रन्थोऽस्तीति विज्ञेयं मनीषिभिरिति शम् ॥ मूल्यम् रौप्यकत्रयम् ३)

पूज्यपादश्रीविश्वनाथचक्रवर्तिविरचितम्

## श्रीकृष्णभावनामृतम् ।

श्रीकृष्णभावनामृतम् श्रीकृष्णचन्द्राष्टकालिकसेवानिरूपणपरम् क्रीडानिकुञ्जस्थ किङ्करीशुकशारिकादीनां परस्परसेवानिरूपणपर सुस्पष्टपद्यात्मकं महाकाव्यम् तदनुगुणमिताक्षरसंस्कृतटीकया समलङ्कृतम्, मूल्यम् रौप्यकत्रयम् ३)

श्रीमद्भागवत सम्बन्धीय नियमावली ।

इतने बड़े परिश्रम और अध्यवसाय पर भी सर्व साधारण के सुलभ संग्रह के अर्थ पूर्ण ग्रंथ का मूल्य केवल ६०) रुपया अग्रिम रखा गया है राजा महाराजा और संमान्य मनुष्यों के सन्मान रक्षा के लिये उनसे केवल १००) रु० मात्र लिया जायगा डाकमहसूल २४) रु० अलग पड़ेगा यह भागवत दशटीकोपेत है ।

असमर्थ ग्राहकों से चार किस्तों में रुपया लिया जावगा—प्रथम किस्त १२) रु० पञ्चमस्कन्ध तक, द्वितीय किस्त १२) षष्ठस्कन्ध तक, तृतीय किस्त १२) सप्तमस्कन्ध तक, चतुर्थ किस्त १४) दशमस्कन्ध तक और डाक महसूल २४) द्वादशस्कन्ध तक लियाजायगा।

## श्रीजगन्नाथवल्लभनाटकम् ।

इह खलु जगति विद्यास्थानेष्वनेकेषु पठनीयेषु सत्स्वपि शास्त्रान्तराणां सहिष्णुवेद्यत्वेन सूक्ष्ममर्मतिवेद्यत्वेन च तेष्वल्पजनादरणीयेषु जातेषु इदानीं स्थूलमतिवेद्यत्वेन सुकुमारवेद्यत्वेच काव्यनाटकादीन्येव मनुष्याणांसमययापनयोग्यानि तानिच भगवद्विषयकाणिचेद्भुक्तिमुक्तिप्रदानीति विचार्येदानीजगन्नाथवल्लभनाटकं सर्वजनसौकर्यायप्रकाशितम् इदंचनाटकं श्रीराधाकृष्णरहस्यक्रीडा विषये प्रतापरुद्रनृपतितोषार्थेरामानन्दराय कविनानिर्मितम्. अत्रचपंचांकाः संति तत्रप्रथमेऽङ्के नटनटीसूत्रधाराणां संवादपूर्वकप्रस्तावनानन्तरं श्रीराधाकृष्णमदनिका विदूषकाणां वृत्तान्तः पूर्वरागनिरूपणम्१द्वितीयेच भावपरीक्षादिनिरूपणम्२तृतीयेभावप्रकाशादिनिरूपणम्३ चतुर्थे श्रीराधिकायाअभिसरणक्रियानिरूपणम् ४ पंचमे श्रीराधाकृष्णयोः सङ्गमनिरूपणम् अस्मिन् ग्रन्थे मध्ये मध्ये गीतगोविन्दवद्रागपद्यान्यपिविद्यन्ते मूल्यम् द्वादश आणकाः ॥।)

## वेदान्तसारः ।

भो भो वेदवेदान्तसकलशास्त्रपारावारपारङ्गताः !

विदितमेव भवतां श्रीमद्वैयासिकसूत्रार्थयाथात्म्यप्रतिपादको बालानामपि वेदान्तार्थसंशयनिवारणाकरो वेदान्तसारो नाम ग्रन्थरत्नम्. स चेदानीं सुललितैर्नागराक्षरैरपूर्वतया मुद्रितस्सन् जाज्वलीति. अतस्सर्वैर्व्येतद्ग्रन्थरत्नं केवलेन साद्धरूपकमूल्येन गृहीत्वा मनोनयनानन्दं प्राप्नुवन्तु भवन्तः। अस्य मू० १॥)

**श्रीश्रीनिम्बार्कदर्शनम्**--भो भोः परिनिष्ठितविद्वांसः।अस्मन्मुद्रणालये अद्यावधि काप्यमुद्रितम् भाष्यत्रयोपेतम् 'श्रीमन्निम्बार्कदर्शनम्' समग्रं सम्मुद्रितं तत्स्वयंतां ग्रहणोत्सुकैः पञ्चमुद्रा-मूल्येन, पञ्चार्द्धभिकेन लभ्येत इति विदन्तु मू० ५)

श्रीमद्भागवत कार्यालय—श्रीदेवकीनन्दन प्रेस
श्रीवृन्दावन—जिला मथुरा ।

} विद्वज्जन कृपाकांक्षी—श्रीनित्यस्वरूप ब्रह्मचारी ।

श्री १०८ श्रीराधारमणो जयति ।

श्रीमत्पद्मपुराणान्तर्गत—

# श्रीमद्भागवतमाहात्म्यम् ।


यमुनाकूल युगल छवि निरखो
नन्दनन्दन वृषभानु कुमारी

तदिदं,

परमहंसपरिव्राजकाचार्य्यपूज्यपाद श्रीमत्स्वामिप्रकाशानन्दसरस्वतीप्रवराशिष्येण,

श्रीनित्यस्वरूपब्रह्मचारिणा

सम्पादितम् ।

बङ्गदेशान्तर्गत ताडास भूपति श्रीराधाविनोद प्रेम सेवा परायण राजर्षि राय

"श्रीवनमालिराय बहादुरस्य"

सम्पूर्ण साहाय्येन

प्रकाशितञ्च ।

तच्च

काञ्चीमण्डलान्तर्वर्त्ति 'कान्दूर्' पं० श्रीरङ्गाचार्यद्वारा संशोध्य

श्रीवृन्दावनधामनि

स्वकीये "श्रीदेवकीनन्दन" यन्त्रालये

मुद्रापितम् ।

सम्बत् १९६४

॥श्रीः॥श्रीः॥श्रीः॥

श्रीपद्मपुराणान्तर्गत-

# श्रीमद्भागवतमाहात्म्यम्॥

## अथ प्रथमाऽध्यायः प्रारम्भः।

श्लोकः

यं प्रव्रजन्तमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव।
पुत्रेति तन्मयतया तरवोऽभिनेदुस्तं सर्वभूतहृदयं मुनिमानतोऽस्मि १॥

नैमिषे सूतमासीनमभिवाद्य महामतिम्।
कथामृतरसास्वादकुशलः शौनकोऽब्रवीत्॥ २॥

शौनक उवाच।

अज्ञानध्वान्तविध्वंसकोटिसूर्यसमप्रभ।
सूताख्याहि कथासारं मम कर्णरसायनम्॥ ३॥

भक्तिज्ञानविरागाप्तो विवेको वर्धते कथम्।
मायामोहनिरासश्च वैष्णवैः क्रियते कथम्॥ ४॥

इह घोरे कलौ प्रायो जीवश्चासुरतां गतः।
क्लेशाक्रान्तस्य तस्यैव शोधने किं परायणम्॥ ५॥

श्रेयसां यद्भवेच्छ्रेयः पावनानां च पावनम्।
कृष्णप्राप्तिकरं शश्वत्साधनं तद्वदाधुना॥ ६॥

चिन्तामणिर्लोकसुखं सुरेन्द्रः स्वर्गसम्पदम्।
प्रयच्छति गुरुः प्रीतो वैकुण्ठं योगिदुर्लभम्॥ ७॥

सूत उवाच।

प्रीतिः शौनक चित्ते ते ह्यतो वच्मि विचार्य च।
सर्वसिद्धान्तनिष्पन्नं संसारभयनाशनम्॥ ८॥

भक्त्योघवर्धनं यच्च कृष्णसन्तोषहेतुकम्।
तदहं तेऽभिधास्यामि सावधानतया शृणु॥ ९॥

कालव्यालमुखग्रासत्रासनिर्णाशहेतवे।
श्रीमद्भागवतं शास्त्रं कलौ कीरेण भाषितम्॥ १०॥

एतस्मादपरं किञ्चिन्मनःशुद्ध्यै न विद्यते।
जन्मान्तरे भवेत्पुण्यं तदा भागवतं लभेत्॥ ११॥

परीक्षिते कथां वक्तुं सभायां संस्थिते शुके।
सुधाकुम्भं गृहीत्वैव देवास्तत्र समागमन्॥ १२॥

शुकं नत्वा वदन् सर्वे स्वकार्यकुशलाः सुराः।
कथासुधां प्रयच्छस्व गृहीत्वैव सुधामिमाम्॥ १३॥

एवं विनिमये जाते सुधा राज्ञा प्रपीयताम्।
प्रपास्यामो वयं सर्वे श्रीमद्भागवतामृतम्॥ १४॥

क्व सुधा क्व कथा लोके क्व काचः क्व मणिर्महान्।
ब्रह्मरातो विचार्येति तदा देवाञ्जहास ह॥ १५॥

अभक्तांस्तांश्च विज्ञाय न ददौ स कथामृतम्।
श्रीमद्भागवती वार्ता सुराणामपि दुर्लभा॥ १६॥

राज्ञो मोक्षं तथा वीक्ष्य पुरा धाताऽपि विस्मितः।
सत्यलोके तुलां बद्ध्वाऽतोलयत्साधनान्यजः॥ १७॥

लघून्यन्यानि जातानि गौरवेण इदं महत्।
तदा ऋषिगणाः सर्वे विस्मयं परमं ययुः॥ १८॥

मेनिरे भगवद्रूपं शास्त्रं भागवतं क्षितौ।
पठनाच्छ्रवणात्सद्यो वैकुण्ठफलदायकम्॥ १९॥

सप्ताहश्रवणेनैव सर्वथा मुक्तिदायकम्।
सनकाद्यैः पुरा प्रोक्तं नारदाय दयापरैः॥ २०॥

यद्यपि ब्रह्मसम्बन्धाच्छ्रुतमेतत्सुरर्षिणा।
सप्ताहश्रवणविधिः कुमारैस्तस्य भाषितः॥ २१॥

शौनक उवाच।

लोकविग्रहयुक्तस्य नारदस्यास्थिरस्य च।
विधिश्रवे कुतः प्रीतिः संयोगः कुत्र तैः सह॥ २२॥

सूत उवाच।

अत्र ते कीर्तयिष्यामि भक्तियुक्तं कथानकम्।
शुकेन मम यत्प्रोक्तं रहःशिष्यं विचार्य च॥ २३॥

एकदा तु विशालायां चत्वारो ऋषयोऽमलाः।
सत्सङ्गार्थं समायाता ददृशुस्तत्र नारदम्॥ २४॥

कुमार ऊचुः।

कथं ब्रह्मन् दीनमुखः कुतश्चिन्तापरो भवान्।
त्वरितं गम्यते कुत्र कुतश्चागमनं तव॥ २५॥

इदानीं शून्यचित्तोऽसि गतवित्तो यथा जनः।
तवेदं मुक्तसङ्गस्य नोचितं वद कारणम्॥ २६॥

नारद उवाच।

अहं तु पृथिवीं यातो ज्ञात्वा सर्वोत्तमामिति।
पुष्करं च प्रयागं च काशीं गोदावरीं तथा॥ २७॥

हरिक्षेत्रं कुरुक्षेत्रं श्रीरङ्गं सेतुबन्धनम्।
एवमादिषु तीर्थेषु भ्रममाण इतस्ततः॥ २८॥

नापश्यं कुत्रचिच्छर्म मनःसन्तोषकारकम्।
कलिनाऽधर्ममित्रेण धरेयं बाधिताऽधुना॥ २९॥

सत्यं नास्ति तपः शौचं दया दानं न विद्यते।
उदरम्भरिणो जीवा वराकाः कूटभाषिणः॥ ३०॥

मन्दाः सुमन्दमतयो मन्दभाग्या ह्युपद्रुताः ।
पाषण्डनिरताः सन्तो विरक्ताः सपरिग्रहाः ॥ ३१ ॥

तरुणी प्रभुता गेहे श्यालको बुद्धिदायकः ।
कन्याविक्रयिणो लोभाद्दम्पतीनाञ्च कल्कनम् ॥ ३२ ॥

आश्रमा यवनैरुद्धास्तीर्थानि सरितस्तथा ।
देवतायतनान्यत्र दुष्टैर्नष्टानि भूरिशः ॥ ३३ ॥

न योगी नैव सिद्धो वा न ज्ञानी सत्क्रियो नरः ।
कलिदावानलेनाद्य साधनं भस्मतां गतम् ॥ ३४ ॥

*अट्टशूला जनपदाः शिवशूला (१) श्चतुष्पथाः ।
कामिन्यः केशशूलिन्यः सम्भवन्ति कलाविह ॥ ३५ ॥

एवं पश्यन् कलेर्दोषान् पर्यटन्नवनीमहम् ।
यामुनं तटमापन्नो यत्र लीला हरेरभूत् ॥ ३६ ॥
तत्राश्चर्यं मया दृष्टं श्रूयतां तन्मुनीश्वराः ।
एका तु तरुणी तत्र निषण्णा खिन्नमानसा ॥ ३७ ॥
द्वौ वृद्धौ पतितौ पार्श्वे निःश्वसन्तावचेतनौ ।
शुश्रूषन्ती प्रबोधन्ती रुदन्ती च तयोः पुरः ॥ ३८ ॥
दशदिक्षु निरीक्षन्ती रक्षितारं निजं वपुः ।
वीज्यमाना शतस्त्रीभिर्बोध्यमाना मुहुर्मुहुः ॥ ३९ ॥
दृष्ट्वा दूराद्गतः सोऽहं कौतुकेन तदन्तिकम् ।
मां दृष्ट्वा चोत्थिता बाला विह्वला चाब्रवीद्वचः ॥ ४० ॥

बालोवाच ।

भो भो साधो क्षणं तिष्ठ मच्चिन्तामपि नाशय ।
दर्शनं तव लोकस्य सर्वथाऽघहरं परम् ॥ ४१ ॥

बहुधा तव वाक्येन दुःखशान्तिर्भविष्यति ।
यदा भाग्यं भवेद्भूरि भवतो दर्शनं तदा ॥ ४२ ॥

नारद उवाच ।

कासि त्वं काविमौ चेमा नार्यः काः पद्मलोचनाः ।
वद देवि सविस्तारं स्वस्य दुःखस्य कारणम् ॥ ४३ ॥

बालोवाच ।

अहं भक्तिरिति ख्याता इमौ मे तनयौ मतौ ।
ज्ञानवैराग्यनामानौ कालयोगेन जर्जरौ ॥ ४४ ॥
गङ्गाद्याः सरितश्चेमा मत्सेवार्थं समागताः ।
तथापि न च मे श्रेयः सेवितायाः सुरैरपि ॥ ४५ ॥
इदानीं शृणु मद्वार्तां सचित्तस्त्वं तपोधन ।
वार्ता मे विततास्त्यस्ति तां श्रुत्वा सुखमावह ॥ ४६ ॥
उत्पन्ना द्रविडे साऽहं वृद्धिं कर्णाटके गता ।
क्वचित्क्वचिन्महाराष्ट्रे गुर्जरे जीर्णतां गता ॥ ४७ ॥
तत्र घोरकलेर्योगात्पाषण्डैः खण्डिताङ्गका ।
दुर्बलाऽहं चिरं जाता पुत्राभ्यां सह मन्दताम् ॥ ४८ ॥
वृन्दावनं पुनः प्राप्य नवीनेव सुरूपिणी ।
जाताहं युवती सम्यक्प्रेष्ठरूपा तु साम्प्रतम् ॥ ४९ ॥

इमौ तु शयितावत्र सुतौ मे क्लिश्यतः श्रमात् ।
इदं स्थानं परित्यज्य विदेशं गम्यते मया ॥ ५० ॥

जरठत्वं समायातौ तेन दुःखेन दुःखिता ।
साहन्तु तरुणी कस्मात्सुतौ वृद्धाविमौ कुतः ॥ ५१ ॥

त्रयाणां सहचारित्वाद्वैपरीत्यं कुतः स्थितम् ।
घटते जरठा माता तरुणौ तनयाविति ॥ ५२ ॥

अतः शोचामि चात्मानं विस्मयाविष्टमानसा ।
वद योगनिधे धीमन् कारणञ्चात्र किं भवेत् ॥ ५३ ॥

नारद उवाच ।

ज्ञानेनात्मनि पश्यामि सर्वमेतत्तवानघे ।
न विषादस्त्वया कार्यो हरिः शं ते करिष्यति ॥ ५४ ॥

सूत उवाच ।

क्षणमात्रेण तज्ज्ञात्वा वाक्यमूचे मुनीश्वरः ।

नारद उवाच ।

शृणुष्वावहिता बाले युगोऽयं दारुणः कलिः ॥ ५५ ॥
तेन लुप्तः सदाचारो योगमार्गस्तपांसि च ।

जना अघासुरायन्ते शाठ्यदुष्कर्मकारिणः ॥ ५६ ॥
इह सन्तो विषीदन्ति प्रहृष्यन्ति ह्यसाधवः ।
धत्ते धैर्यं तु यो धीमान् स धीरः पण्डितोऽथवा ॥ ५७ ॥

अस्पृश्यानवलोक्येयं शेषभारकरी धरा ।
वर्षेवर्षे क्रमाज्जाता मङ्गलं नापि दृश्यते ॥ ५८ ॥

नत्वामपि सुतैः साकं कोऽपि पश्यति साम्प्रतम् ।
उपेक्षितानुरागान्धैर्जर्जरत्वेन संस्थिता ॥ ५९ ॥

वृन्दावनस्य संयोगात्पुनस्त्वं तरुणी नवा ।
धन्यं वृन्दावनं तेन भक्तिर्नृत्यति यत्र च ॥ ६० ॥

अत्रेमौ ग्राहकाभावान्न जरामपि मुञ्चतः ।
किञ्चिदात्मसुखेनेह प्रसुप्तिर्मन्यतेऽनयोः ॥ ६१ ॥

श्रीभक्तिरुवाच ।

कथं परीक्षिता राज्ञा स्थापितो ह्यशुचिः कलिः ।
प्रवृत्ते तु कलौ सर्वसारः कुत्र गतो महान् ॥ ६२ ॥

दयापरेण हरिणाप्यधर्मः कथमीक्ष्यते ।
इमं मे संशयं छिन्धि त्वद्वाचा सुखिताऽस्म्यहम् ॥ ६३ ॥

नारद उवाच ।

यदि पृष्टस्त्वया बाले प्रेमतः श्रवणं कुरु ।
सर्वं वक्ष्यामि ते भद्रे कश्मलं ते गमिष्यति ॥ ६४ ॥

यदा मुकुन्दो भगवान् क्ष्मां त्यक्त्वा स्वपदं गतः ।
तद्दिनात्कलिरायातः सर्वसाधनबाधकः ॥ ६५ ॥

दृष्टो दिग्विजये राज्ञा दीनवच्छरणं गतः ।
न मया मारणीयोऽयं सारङ्ग इव सारभुक् ॥ ६६ ॥

यत्फलं नास्ति तपसा न योगेन समाधिना ।
तत्फलं लभते सम्यक्कलौ केशवकीर्तनात् ॥ ६७ ॥

एकाकारं कलिं दृष्ट्वा सारवत्सारनीरसम् ।
विष्णुरातः स्थापितवान् कलिजानां सुखाय च ॥ ६८ ॥

---

*अट्टमन्नं शिवो वेदः शूलो विक्रय उच्यते ।
केशो भगमिति प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥

(१) द्विजादयः ।

कुकर्माचरणात्सारः सर्वतो निर्गतोऽधुना।
पदार्थाः संस्थिता भूमौ बीजहीनास्तुषा यथा॥ ६९॥
विप्रैर्भागवती वार्ता गेहेगेहे जनेजने।
कारिता कणलोभेन कथासारस्ततो गतः॥ ७०॥
अत्युग्रभूरिकर्माणो नास्तिका रौरवाजनाः।
तेऽपि तिष्ठन्ति तीर्थेषु तीर्थसारस्ततो गतः॥ ७१॥
कामक्रोधमहालोभतृष्णाव्याकुलचेतसः।
तेऽपि तिष्ठन्ति तपसि तपःसारस्ततो गतः॥ ७२॥
मनसश्चाजयाल्लोभाद्दम्भात्पाषण्डसंश्रयात्।
शास्त्रानभ्यसनाच्चैव ध्यानयोगफलं गतम्॥ ७३॥
पण्डितास्तु कलत्रेण रमन्ते महिषा इव।
पुत्रस्योत्पादने दक्षा अदक्षा मुक्तिसाधने॥ ७४॥
नहि वैष्णवता कुत्र सम्प्रदायपुरःसरा।
एवं प्रलयतां प्राप्तो वस्तुसारः स्थलेस्थले॥ ७५॥
अयन्तु युगधर्मोहि वर्तते कस्य दूषणम्।
अतस्तु पुण्डरीकाक्षः सहते निकटे स्थितः॥ ७६॥

सूत उवाच।

इति तद्वचनं श्रुत्वा विस्मयं परमं गता।
भक्तिरूचे वचो भूयः श्रूयतां तच्च शौनक॥ ७७॥

श्रीभक्तिरुवाच।

सुरर्षे त्वञ्च धन्योऽसि मद्भाग्येन समागतः।
साधूनां दर्शनं लोके सर्वसिद्धिकरं परम्॥ ७८॥
जयति जयति मायां यस्य कायाधवस्ते—
वचनरचनमेकं केवलं चाकलय्य।
ध्रुवपदमपि यातो यत्कृपातो ध्रुवोऽयं—
सकलकुशलपात्रं ब्रह्मपुत्रं नतास्मि॥ ७९॥

इतिश्रीपद्मपुराणे उत्तरखण्डे श्रीभागवतमाहात्म्ये
भक्तिनारदसमागमोनाम
प्रथमोऽध्यायः॥ १॥

---

## अथ द्वितीयोऽध्यायः॥

नारद उवाच।

वृथा खेदायसे बाले अहो चिन्तातुरा कथम्।
श्रीकृष्णचरणाम्भोजं स्मर दुःखं गमिष्यति॥ १॥
द्रौपदी च परित्राता येन कौरवकश्मलात्।
पालिता गोपसुन्दर्यः स कृष्णः क्वापि नो गतः॥ २॥
त्वन्तु भक्ते प्रिया तस्य सततं प्राणतोऽधिका।
त्वयाहूतस्तु भगवान् याति नीचगृहेष्वपि॥ ३॥
सत्यादित्रियुगे बोधवैराग्ये मुक्तिसाधके।
कलौ तु केवलं भक्तिर्ब्रह्मसायुज्यकारिणी॥ ४॥
इति निश्चित्य चिद्रूपः सद्रूपां त्वां ससर्ज ह।
परमानन्दचिन्मूर्तिः सुन्दरीं कृष्णवल्लभाम्॥ ५॥
बद्ध्वाञ्जलिं त्वया पृष्टं किं करोमीति चैकदा।
त्वां तदाऽऽज्ञापयत्कृष्णो मद्भक्तान्पोषयेति च॥ ६॥
अङ्गीकृतं त्वया तद्वै प्रसन्नोऽभूद्धरिस्तदा।
मुक्तिं दासीं ददौ तुभ्यं ज्ञानवैराग्यकाविमौ॥ ७॥
पोषणं स्वेन रूपेण वैकुण्ठे त्वं करोषि च।
भूमौ भक्तविपोषाय छायारूपं त्वया कृतम्॥ ८॥
मुक्तिं ज्ञानं विरक्तिञ्च सहकृत्वा गता भुवि।
कृतादिद्वापरस्यान्तं महानन्देन संस्थिता॥ ९॥
कलौ मुक्तिः क्षयं प्राप्ता पाषण्डामयपीडिता।
त्वदाज्ञया गता शीघ्रं वैकुण्ठं पुनरेव सा॥ १०॥
स्मृता त्वयाऽपि चात्रैव मुक्तिरायाति याति च।
पुत्रीकृत्य त्वयेमौ च पार्श्वे स्वस्यैव रक्षितौ॥ ११॥
उपेक्षातः कलौ मन्दौ वृद्धौ जातौ सुतौ तव।
तथापि चिन्तां मुञ्च त्वमुपायं चिन्तयाम्यहम्॥ १२॥
कलिना सदृशः कोऽपि युगो नास्ति वरानने।
तस्मिन् त्वां स्थापयिष्यामि गेहे गेहे जनेजने॥ १३॥
अन्यधर्मान् तिरस्कृत्य पुरस्कृत्य महोत्सवान्।
तदा नाहं हरेर्दासो लोके त्वां न प्रवर्तये॥ १४॥
तदन्विताश्च ये जीवा भविष्यन्ति कलाविह।
पापिनोपि गमिष्यन्ति निर्भयाः कृष्णमन्दिरम्॥ १५॥
येषां चित्ते वसेद्भक्तिः सर्वदा प्रियरूपिणी।
न ते पश्यन्ति कीनाशंस्वप्नेऽप्यमलमूर्तयः॥ १६॥
न प्रेतो न पिशाचो वा राक्षसो ऽप्यसुरोऽपि वा।
भक्तियुक्तमनस्कानां स्पर्शने न प्रभुर्भवेत्॥ १७॥
न तपोभिर्न वेदैश्च न ज्ञानेनाऽपि कर्मणा।
हरिर्हि साध्यते भक्त्या प्रमाणं तत्र गोपिकाः॥ १८॥
नृणां जन्मसहस्रेण भक्तौ प्रीतिर्हि जायते।
कलौ भक्तिः कलौ भक्तिः भक्त्या कृष्णः पुरः स्थितः॥ १९॥
भक्तिद्रोहकरा ये च ते सीदन्ति जगत्त्रये।
दुर्वासा दुःखमापन्नो पुरा भक्तिविनिन्दकः॥ २०॥
अलं व्रतैरलं तीर्थैरलं योगैरलं मखैः।
अलं ज्ञानकथालापैर्भक्तिरेकैव मुक्तिदा॥ २१॥

सूत उवाच।

इति नारदनिर्णीतं स्वमाहात्म्यं निशम्य सा।
सर्वाङ्गपुष्टिसंयुक्ता नारदं वाक्यमब्रवीत्॥ २२॥

श्रीभक्तिरुवाच।

अहो नारद धन्योऽसि प्रीतिस्ते मयि निश्चला।
न कदाचिद्विमुञ्चामि चित्ते स्थास्यामि सर्वदा॥ २३॥
कृपालुना त्वया साधो मद्बाधा ध्वंसिता क्षणात्।
पुत्रयोश्चेतना नास्ति ततो बोधय बोधय॥ २४॥

सूत उवाच।

तस्या वचः समाकर्ण्य कारुण्यं नारदो गतः।
तयोर्बोधनमारेभे कराग्रेण विमर्दयन्॥ २५॥
मुखं संयोज्य कर्णान्ते शब्दमुच्चैः समुच्चरन्।
ज्ञान प्रबुध्यतां शीघ्रं रे वैराग्य प्रबुध्यताम्॥ २६॥

